# श्रीमद्भगवद्गीता

निम्बार्कभाष्याद्यष्टटीकोपेता

(१) तत्त्वप्रकाशिका

(२) गूढार्थदीपिका

(३) तात्पर्यबोधिनी

(४) सुबोधिनी

(५) भावप्रकाशः

(६) भाष्योत्कर्षदीपिका

(७) परमार्थप्रपा

(८) अर्थसंग्रहः

## द्वितीयो गुच्छः

पुस्तकप्राप्ति स्थानम्:—
गुजराती प्रिन्टिंग प्रेस,
सासुन बिल्डींग, एलफिन्स्टन सर्कल, कोट, मुंबई १.

मू. रु. १२ (१४)

# SHRIMAD-BHAGVAD-GEETA

CONTAINING EIGHT COMMENTARIES OF

KESHAVA KASHMIRI BHATTACHARYA called *Tattva-Prakashika*, MADHU-SOODAN SARASVATI called *Goodhartha-Deepika*, SHANKARANAND called *Tatparya-Bodhini*, SHREEDHARA SWAMI called *Subodhini*, SADANAND called *Bhawa-Prakasha*, DHANAPATI SOORI called *Bhashyotkarsh-Deepika*, DAIVADNYA PANDIT SURYA called *Para-martha-Prapa*, AND RAGHAVENDRA called *Artha-Samgraha*

**First Part of the Second Series**

Containing the First Six Adhyayas

EDITED BY

**SHASTRI JEEVARAMA LALLURAMA**



**Bombay:**

THE GUJARATI PRINT[illegible] ...मितः

खिस्ताब्दः १९१२.

SHAKA 1834

...कं-स्वायत्तम् ।

**Price Rs. ~~3-1~~**

# श्रीमद्भगवद्गीता ।

केशवकाश्मीरिभट्टाचार्यकृत–तत्त्वप्रकाशिका–मधुसूदनसरस्वतीकृत–गूढार्थदीपिका–
शंकरानन्दकृत–तात्पर्यबोधिनी–श्रीधरस्वामिकृत–सुबोधिनी–सदानन्दकृत–
भावप्रकाश–धनपतिसूरिकृत–भाष्योत्कर्षदीपिका–दैवज्ञपण्डितसूर्यकृत–
परमार्थप्रपा–राघवेन्द्रकृता–ऽर्थसंग्रहे–त्यष्टटीकोपेता ।

द्वितीयगुच्छस्य प्रथमो भागः ।

प्रथमादिषडध्यायात्मकः ।

(रैक) जीवरामशास्त्रिभिः संशोधितः ।

मुम्बय्यां
'गुजराती' मुद्रणालयाधिपतिना स्वीये मुद्रणागारे मुद्रयित्वा प्रकाशितः ।
शकः १८३४,          खिस्ताब्दः १९१२.

मूल्यं [illegible] रूपकत्रयम् ।

ॐ

तत्सद्ब्रह्मणे नमः

श्रीवेदव्यासप्रणीतमहाभारतान्तर्गता

# श्रीमद्भगवद्गीता

तत्त्वप्रकाशिका ( निम्बार्क )-मधुसूदनी-शङ्करानन्दी-श्रीधरी-सदानन्दी
( भावप्रकाश )-भाष्योत्कर्षदीपिका-परमार्थप्रपा-मध्वसम्प्र-
दायिनी राघवेन्द्रविवृत्याद्यष्टटीकोपेता ।

## प्रथमषट्कं ( कर्मकाण्डम् )

### प्रथमोऽध्यायः ॥ १ ॥

धृतराष्ट्र उवाच-धर्मक्षेत्रे कुरुक्षेत्रे समवेता युयुत्सवः ॥
मामकाः पाण्डवाश्चैव किमकुर्वत सञ्जय ॥ १ ॥

श्रीकेशवाचार्यविरचिता-तत्त्वप्रकाशिकाटीका

यो मायागुणदोषलेशरहितः स्वाभाविकैः सद्गुणैः
स्वातन्त्र्याखिलविज्ञताद्यगणितैर्युक्तोऽब्जजादिस्तुतः ॥
भक्ताभीष्टप्रदो रमैकरमणो वेदैकगम्यो हि यः
तं वन्दे मनसा गिरा च शिरसा गोपीप्रियं श्रीहरिम् ॥ १ ॥
यस्य श्रीकरुणार्णवस्य करुणालेशेन बालो ध्रुवः
स्वेष्टं प्राप्य समार्यधाम समगाद्रङ्कोऽप्यविन्दच्छ्रियम् ॥
याता मुक्तिमजामिलादिपतिताः शैलोऽपि पूज्योऽभवत्
तं श्रीमाधवमाश्रितेष्टदमहं नित्यं शरण्यं भजे ॥ २ ॥
श्रुतीनां सूत्राणां स्मृतिनिखिलवेदानुवचसां
परं हार्दं युक्तं ह्यखिलचिदचिद्भिन्नमपि च ॥
अभिन्नं स्वाभाव्यादगुणि च परमं ब्रह्मकमिदं
समादिष्टं यैस्तानपि सततमीडे गुरुवरान् ॥ ३ ॥

संसाररोगशमने खलु निम्बवद्यो हार्दान्धकारहरणेऽर्कवदेव यश्च ॥
श्रीकृष्णपादपरिचारणतुष्टचेता निम्बार्कदेशिकवरः स हि मे गतिः स्यात् ॥ ४ ॥
श्रीश्रीनिवासमाचार्यं गुरुं श्रीगङ्गलाभिधम् ॥
प्रणम्य क्रियते गीताव्याख्या तत्त्वप्रकाशिका ॥ ५ ॥

अथ स्वभावतोऽपास्ताखिलाविद्याक्लेशकर्मजन्मादिषड्भावसत्त्वादिगुणकार्यसम्बन्धः सत्यज्ञानानन्तस्वरूपो ज्ञानशक्तिबलैश्वर्यतेजोवीर्यवात्सल्यौदार्यकारुण्यक्षमादयामाधुर्यलावण्यमार्दवाद्यनन्तकल्याणगुणमहोदधिः समस्तक्षेत्रज्ञप्रकृतिकालकर्मनियन्ता अतिशयसाम्यवर्जितो विष्वक्सेनगरुडादिनित्यमुक्तैर्निषेवितो ब्रह्मरुद्रेन्द्राद्यचिन्त्यमहिमा तद्वन्यो वेदान्तैकवेद्यो जगज्जन्मादिहेतुः प्रणतार्त्तिक्षपणस्वभावः उभयविभूतिर्भगवाञ्छ्रीपुरुषोत्तमो देवासुरसंग्रामनिहतावनितलावतीर्णराजन्यरूपदैत्यदानवचमूवृन्दाक्रान्तभूभूरिभारोत्तरणाय ब्रह्मरुद्रादिदेवतावृन्दैः स्तोत्राराधनप्रार्थितो भूभारोत्तारणाय यादवकुल आविर्बभूवेति सर्वजनप्रसिद्धं भगवदवतारप्रयोजनं। नैतद्भगवतो मुख्यं तात्पर्य्यं यतस्तस्य वराहपृथुपरशुरामादिवदंशकलामात्रेणापि भूभारमपहर्तुं समर्थत्वात् 'पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः। विचेष्टयति भूतानि क्रीडन्निव सनातनः॥ कालचक्रं जगच्चक्रं युगचक्रं च केशवः। आत्मयोगेन भगवान्परिवर्तयतेऽनिशम्॥ कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च। ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते' इति महाभारतोक्तात्यद्भुतप्रभावस्य भगवतोऽचिन्त्यशक्तेर्न केवलं भूभारहरणायैवाविर्भावः। किन्तु अक्षपादकणादसाङ्ख्यजैमिन्यादिभिः शास्त्रकृद्भिर्हैरण्यगर्भपाशुपतसौरगाणपतमतवादिभिश्च प्रणीतैः, परतत्त्वापह्नवपरैरन्यविषयैः शास्त्रैः स्वभक्तिज्ञानहीनान्संकीर्णमतीन् जीवान्वीक्ष्य कृष्णद्वैपायनरूपेण परतत्त्वप्रकाशकशारीरकमीमांसादिसच्छास्त्रनिरूपणेनोक्तमतानि निरस्तानि। तथापि भागवतधर्मविरोध्यसुरराजन्यप्राये लोके भागवतधर्मप्रवृत्त्यभावमेवान्वीक्ष्य भवाब्धिपतितजनतातत्तरणासाधारणोपायस्वज्ञानभक्तिप्रवृत्त्यर्थं कलिमलापहराण्यतिमानुषाणि कर्माणि कर्त्तुं स्वदर्शने चातकवदत्युत्कण्ठितचेतसां स्वाश्रितानन्यरसिक[illegible]दागोपीगोपाक्रूरोद्धवादीनामतिकमनीयमाधुर्यलावण्यादिगुणनिधिमूर्त्तिदर्शनमधुराला[illegible]नोऽभिलाषपूर्त्यर्थं च भूभारोद्धरणव्याजेन वसुदेवदेवकीभक्तिवशीभूतोऽजहद्गुणश[illegible]तयोः पुत्रभावेनाविर्बभूव। तथोक्तं श्रीभागवते कुन्तीस्तुतौ पक्षान्तराण्युपन्यस्य 'भवेऽस्मि[illegible]विद्याकामकर्मभिः। श्रवणस्मरणार्हाणि करिष्यन्निति केचन' इत्युक्त्वा तच्छ्रवणादिफलकथनेनास्यैव पक्षस्य सिद्धान्तितत्वात्। तत्र स्वस्वरूपज्ञानोपदेशेन तावभिनन्द्य नन्दव्रजं गत्वा नन्दयशोदादीन्सुखयित्वा पूतनादिकेश्यन्तासुरसंहरणवत्सपालनकालियदमनगोवर्द्धनोद्धरणरासलीलादिव्याजेन चतुर्मुखसहस्राक्षपुष्पधन्वादिगर्वापहरणरूपां निरङ्कुशां पारमेश्वरीं लीलां विधाय लीलयैव कंसादीन्निहत्य पितृविमोचनं गुरोर्विद्याग्रहणं तत्सुतप्रदानेनानृण्यरूपस्वधर्मं च प्रदर्श्य यवनान्निहत्य द्वारकामेत्य तत्र रुक्मिणीहरणमहोक्षदमननरकासुरसंहारणादिनानाश्चर्यविवाहान्कृत्वा यादवकुन्तीसुतादिस्वभक्तोत्कर्षं दर्शयितुं भक्तिकण्टकान् पौण्ड्रकजरासन्धचैद्यशाल्वादीन्भूभाररूपान्हतवान्। अवशिष्टं भूभारमपाकर्तुं दुर्योधनार्जुनभीमादीन्निमित्तीकृत्य महाभारतयुद्धारम्भं कारयामास। तत्र स्वप्रियभक्तकुन्तीसुतानुकम्पयाऽर्जुनसारथ्यमङ्गीकृतवान् तदोभयसैन्यमध्ये स्वजनबन्धुगुरुवधपातकभयेन युद्धान्निवृत्त्य रथोपविष्टं युद्धकरणे कुलघ्नतारूपो महान्दोषो, युद्धत्यागे स्वधर्महानिः स्यादित्युभयथाऽप्यनिष्टमेव कथं मे श्रेयः स्यादिति शोकमोहसागरे निमग्नमर्जुनमुपलक्ष्य सर्वमुमुक्षुभक्तानुकम्पया ज्ञानकर्मोपासनात्मकत्रिकाण्डविषयकसकलवेदसारभूतगीताशास्त्रोपदेशैस्तत उज्जहार। तच्च स्वयमेवार्जुनो वक्ष्यति 'नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादा-

न्मयाऽच्युत । स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव ' इति । तच्च गीताशास्त्रं पञ्चचत्वारिंशदधिक-सप्तशतश्लोकैर्महाभारते भगवता व्यासेन निबद्धं । तदुक्तं भीष्मपर्वणि ' षट्शतानि सविंशानि श्लोकानां प्राह केशवः । अर्जुनः सप्तपञ्चाशत्सप्तषष्टिं तु सञ्जयः ॥ धृतराष्ट्रः श्लोकमेकं गीताया मानमुच्यते' । तत्र शोक-निवृत्तिकारणमात्मस्वरूपगुणादियाथात्म्यज्ञानमेव " तरति शोकमात्मवित् " इति श्रुतेः । आत्मा द्विविधः जीवात्मपरमात्मभेदात् । तत्र जीवक्षेत्रज्ञपुरुषादिशब्दाभिधेयो ज्ञानस्वरूपो ज्ञातृत्वादिधर्माश्रयः सर्वदा परमेश्वरायत्तस्वरूपस्थितिप्रवृत्तिकोऽणुपरिमाणकः प्रतिशरीरं भिन्नो बन्धमोक्षार्हः आद्यः । तद्बन्धहेतुः सत्त्वादिगुणमयप्रधानप्रकृतिमायादिशब्दवाच्यं देहेन्द्रियादिरूपेण परिणतमचेतनद्रव्यम् । सर्वज्ञः सर्वशक्तिः सत्यज्ञानानन्तस्वरूपः सर्वात्मा प्रकृतिपुरुषकर्मकालनियन्ताऽतिशयसाम्यवर्जितः सर्वाऽऽराध्यः स्वतन्त्रसत्ताश्रयः सर्वत्रैकस्वरूपो हरिनारायणादिशब्दाभिधेयः परब्रह्मभूतो भगवान् वासुदेवो द्वितीयः । तत्प्राप्त्यसाधारणहेतुस्तदनन्यभक्तियोग इति साक्षाद्भगवतोपदिष्टं तदेतदध्यायषट्कत्रया-त्मकं गीताशास्त्रमप्रामाण्यकारणबुद्धिमान्द्यदुराग्रहादिदोषचतुष्टयशून्यत्वात्सर्वविदुषां प्रमाणतममत एव तस्य सर्वशास्त्रश्रैष्ठ्यमुक्तं वाराहे ' सारथ्यमर्जुनस्यादौ कुर्वन्गीतामृतं ददौ । लोकत्रयोपकाराय तस्मै कृष्णात्मने नमः ॥ संसारसागरं घोरं तर्तुमिच्छति यो नरः । गीतानावं समारुह्य पारं याति सुखेन सः ॥ गीताज्ञानं श्रुतं नैव सदैवाभ्यासयोगतः । मोक्षमिच्छति मूढात्मा याति बालस्य हास्यताम् ॥ ये शृण्वन्ति पठन्ति च गीताशास्त्रमहर्निशम् । न ते वै मानुषा ज्ञेया देवरूपा न संशयः ॥ धिक्तस्य मानुषं देहं धिग्ज्ञानं धिकुलीनताम् । गीतार्थं यो न जानाति नाधमस्तत्परो जनः ॥ गीतागीतं न यज्ज्ञानं तद्विद्ध्यसुरसंमतम् । तन्मोघं धर्मरहितं वेदवेदान्तगर्हितम् ॥ तस्माद्धर्ममयी गीता सर्वज्ञानप्रयोजिका । सर्वशास्त्रमयी यस्मात्तस्माद्गीता विशिष्यते ॥' इत्यादिना । [illegible] एव बहुभिराचार्यैः स्वस्वमतानुसारेण व्याख्यातमिदं शास्त्रं परन्तु तेषां सर्वज्ञत्वाभावात्तद्व्या-[illegible]रुद्धांशेनापि युक्तत्वान्न सर्वमुमुक्षूपादेयत्वं, किन्तु ' उदयव्यापिनी ग्राह्या कुले [illegible]म्बार्को भगवान्येषां वाञ्छितार्थप्रदायकः ' इति भविष्यपुराणे श्रीव्यासवचना-[illegible]स्यैव भगवच्छब्दाभिहितत्वेन सर्वज्ञत्वात्सर्वेभ्यः प्राचीनाचार्यत्वाच्च तद्व्याख्यानस्यैव सर्वश्रु[illegible]सूत्रा[illegible]विरुद्धत्वेन परमश्रेयोऽर्थिभिरुपादेयत्वं । तस्य त्वतिगम्भीरार्थतया शारीरकमीमांसादिसर्व-वेदान्तोक्तसाधनसम्पन्नसूक्ष्मबुद्ध्यधिकारिकत्वेन मन्दमतीनां तत्र प्रवेशानर्हत्वात्तेषां तदर्थजिज्ञासूनाम-ल्पप्रयत्नानां मुमुक्षूणामुपकारायाञ्जसा तदुक्तार्थोपलब्धये तच्चरणस्मरणैकबलेन तत्कृपालब्धतदुक्तसि-द्धान्तेन मया श्रीभगवद्गीताटीका सुगमा तत्त्वप्रकाशिकाभिधा यथामति विधीयते । तया श्रीवासुदेवो भगवान्प्रसीदतु । तत्र तावद् ' अशोच्यानन्वशोचस्त्वम् ' इत्यारभ्यार्जुनस्य शोकमोहापनोदनाय भगव-दुपदेशं वर्णयितुमर्जुनस्य सहेतुकशोकदर्शनाय प्रथमाध्यायारम्भः । तत्र च स्वपुत्रजयाभिलाषी नष्टदृ-ष्टिरर्जुनस्य गिरीशतोषणदिव्यास्त्रलाभो घोषयात्रायां दुर्योधनस्य गन्धर्वेभ्यो मोचनं विराटनगर उत्त-रगोग्रहे कौरवोष्णीषादिहरणमित्यादिबहुशः श्रुताद्भुतपौरुषशङ्कितात्मा धृतराष्ट्रस्तदनुकम्पया श्रीवेद-व्यासदत्तमहाभारतसर्ववृत्तान्तविषयकज्ञानदृष्टिं सञ्जयं पृच्छति स्मेत्याह वैशम्पायनो जनमेजयं प्रति—धृतराष्ट्र उवाचेति । प्रश्नमेवाह—धर्मक्षेत्र इति । युयुत्सवो योद्धुमिच्छवो मामका मम पुत्रा दुर्योधनादयः पाण्डवाश्च युधिष्ठिरादयः धर्मक्षेत्रे धर्मोत्पत्तिभूमौ " कुरुक्षेत्रं वै देवयजनम् " इति श्रुतेः ' ब्रह्मवेदी कुरु-क्षेत्रं पुण्यं ब्रह्मर्षिसेवितम् । तस्मिन् वसन्ति ये राजन्न ते शोच्याः कथञ्चन ' इत्यादिमहाभारतादिप्र-सिद्धमाहात्म्ये समवेताः किमकुर्वत । उभयसैन्यमध्ये दिव्यास्त्रविदो महाप्रबलवीरान्भीष्मार्जुनादीन्दृष्ट्वा

युद्धव्यवसायं त्यक्त्वा शममास्थिता वा युद्धोद्योगमेव कुर्वन्तः स्थिता इति प्रश्नार्थः । धर्मक्षेत्र इत्यस्य अधार्मिका अपि मत्पुत्राः कपटापहृतं पाण्डवराज्यं पितृवधजन्यकोपाविष्टपरशुरामकृतपितृनिष्कृतिहेतुक्षत्रियवधतद्रुधिरापूरितकुण्डपञ्चकृतर्पितभृग्वादिपितृसन्तुष्टिदत्ततत्प्रार्थितकुण्डतत्क्षेत्रपावनत्ववरयोगादेवयजनभूमित्वात्कुरुराज्ञस्तपसा च जातधर्मोत्पादकत्वतद्वृद्धिहेतुत्वरूपकुरुक्षेत्रप्रभावाद्धर्मबुद्ध्युत्पत्त्या यदि तेभ्य एव दद्युस्तर्हि युद्धं विनैव नष्टप्रायाः स्युः । अथवा पूर्वमेव धार्मिकाः पाण्डवाः धर्मक्षेत्रसंगत्या धर्मवृद्ध्या स्वजनबन्धुजनवधनिमित्तं राज्यं यदि नेच्छेयुश्चेत्तर्हि सपुत्रः सुखी स्यामित्यभिप्रायः ॥ १ ॥

## मधुसूदनसरस्वतीविरचिता—मधुसूदनी टीका

श्रीगणेशायनमः ॥ ॐनमः परमहंसास्वादितचरणकमलचिन्मकरन्दाय भक्तजनमानसनिवासाय श्रीमद्रामचन्द्राय ॥ भगवत्पादभाष्यार्थमालोच्यातिप्रयत्नतः ॥ प्रायः प्रत्यक्षरं कुर्वे गीतागूढार्थदीपिकाम् ॥ १ ॥ सहेतुकस्य संसारस्यात्यन्तोपरमात्मकम् ॥ परं निश्रेयसं गीताशास्त्रस्योक्तं प्रयोजनम् ॥ २ ॥ सच्चिदानन्दरूपं तत्पूर्णं विष्णोः परं पदम् ॥ यत्प्राप्तये समारब्धा वेदाः काण्डत्रयात्मकाः ॥ ३ ॥ कर्मोपास्तिस्तथा ज्ञानमिति काण्डत्रयं क्रमात् ॥ तद्रूपाष्टादशाध्यायैर्गीता काण्डत्रयात्मिका ॥ ४ ॥ एकमेकेन षट्केन काण्डमत्रोपलक्षयेत् ॥ कर्मनिष्ठाज्ञाननिष्ठे कथिते प्रथमान्त्ययोः ॥ ५ ॥ यतः समुच्चयो नास्ति तयोरतिविरोधतः ॥ भगवद्भक्तिनिष्ठा तु मध्यमे परिकीर्तिता ॥ ६ ॥ उभयानुगता सा हि सर्वविघ्नापनोदिनी ॥ कर्ममिश्रा च शुद्धा च ज्ञानमिश्रा च सा त्रिधा ॥ ७ ॥ तत्र तु प्रथमे काण्डे कर्म तत्त्यागवर्त्मना ॥ त्वंपदार्थो विशुद्धात्मा सोपपत्तिर्निरूप्यते ॥ ८ ॥ द्वितीये भगवद्भक्तिनिष्ठावर्णनवर्त्मना ॥ भगवान् परमानन्दस्तत्पदार्थोवधार्यते ॥९॥ तृतीये तु तयोरैक्यं वाक्यार्थो वर्ण्यते स्फुटम् ॥ एवमप्यत्र काण्डानां सम्बन्धोस्ति परस्परम् ॥१०॥ प्रत्यध्यायं विशेषस्तु तत्र तत्रैव वक्ष्यते ॥ मुक्तिसन्धानपर्वेदं शास्त्रार्थत्वेन कथ्यते ॥ ११ ॥ निष्कामकर्मानुष्ठानं त्यागात्काम्यानिषिद्धयोः ॥ तत्रापि परमो धर्मो जपस्तुत्यादिकं हरेः ॥ १२ ॥ क्षीणपापस्य चित्तस्य विवेके योग्यता यदा ॥ नित्यानित्यविवेकस्तु जायते सुदृढस्तदा ॥ १३ ॥ इहामुत्रार्थवैराग्यं वशीकाराभिधं क्रमात् ॥ ततः शमादिसम्पत्त्या संन्यासोनिष्ठितोभवेत् ॥ १४ ॥ एवं सर्वपरित्यागान्मुमुक्षा जायते दृढा ॥ ततोगुरूपसदनमुपदेशग्रहस्ततः ॥ १५ ॥ ततः सन्देहहानाय वेदान्तश्रवणादिकम् ॥ सर्वमुत्तरमीमांसाशास्त्रमत्रोपयुज्यते ॥१६॥ ततस्तत्परिपाकेण निदिध्यासननिष्ठता ॥ योगशास्त्रं तु सम्पूर्णमुपक्षीणं भवेदिह ॥१७॥ क्षीणदोषे ततश्चित्ते वाक्यात्तत्त्वमतिर्भवेत् ॥ साक्षात्कारो निर्विकल्पः शब्दादेवोपजायते ॥ १८ ॥ अविद्याविनिवृत्तिस्तु तत्त्वज्ञानोदये भवेत् ॥ ततआवरणे क्षीणे क्षीयते भ्रमसंशयौ ॥ १९ ॥ अनारब्धानि कर्माणि नश्यन्त्येव समन्ततः ॥ नत्वागामीनि जायन्ते तत्त्वज्ञानप्रभावतः ॥ २० ॥ प्रारब्धकर्मविक्षेपाद्वासना तु न नश्यति ॥ सा सर्वतो बलवता संयमेनोपशाम्यति ॥ २१ ॥ संयमो धारणा ध्यानं समाधिरिति यत्त्रिकम् ॥ यमादिपञ्चकं पूर्वं तदर्थमुपयुज्यते ॥ २२ ॥ ईश्वरप्रणिधानात्तु समाधिः सिध्यति द्रुतम् ॥ ततो भवेन्मनोनाशो वासनाक्षयएव च ॥२३॥ तत्त्वज्ञानं मनोनाशो वासनाक्षयइत्यपि ॥ युगपत्त्रितयाभ्यासाज्जीवन्मुक्तिर्दृढा भवेत् ॥ २४ ॥ विद्वत्संन्यासकथनमेतदर्थं श्रुतौ कृतम् ॥ प्रागसिद्धोयएवांशो यत्नः स्यात्तस्य साधने ॥ २५ ॥ निरुद्धे चेतसि पुरा सविकल्पसमाधिना ॥ निर्विकल्पसमाधिस्तु भवेदत्र त्रिभूमिकः ॥ २६ ॥ व्युत्तिष्ठते स्वतस्त्वाद्ये द्वितीये परबोधितः ॥ अन्ते व्युत्तिष्ठते नैव सदा भवति तन्मयः ॥ २७ ॥ एवंभूतो ब्राह्मणः स्याद्वरिष्ठो ब्रह्मवादिनाम् ॥ गुणातीतः स्थितप्रज्ञो विष्णुभक्तश्च कथ्यते ॥ २८ ॥ अतिवर्णाश्रमी जीवन्मुक्तआत्मरतिस्तथा ॥ एतस्य कृतकृत्यत्वाच्छास्त्रमस्मान्निवर्तते ॥ २९ ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ ३० ॥ इत्यादिश्रुतिमानेन कायेन मनसा

गिरा ॥ सर्वावस्थासु भगवद्भक्तिरत्रोपयुज्यते ॥ ३१ ॥ पूर्वभूमौ कृता भक्तिरुत्तरां भूमिमानयेत् ॥ अन्यथा विघ्नबाहुल्यात्फलसिद्धिः सुदुर्लभा ॥ ३२ ॥ पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोपि सः ॥ अनेकजन्मसंसिद्ध इत्यादि च वचो हरेः ॥ ३३ ॥ यदि प्राग्भवसंस्कारस्याचिन्त्यत्वात्तु कश्चन ॥ प्रागेव कृतकृत्यः स्यादाकाशफलपातवत् ॥ ३४ ॥ न तंप्रति कृतार्थत्वाच्छास्त्रमारब्धुमिष्यते ॥ प्राक्सिद्धसाधनाभ्यासा दुर्ज्ञेया भगवत्कृपा ॥ ३५ ॥ एवं प्राग्भूमिसिद्धावप्युत्तरोत्तरभूमये ॥ विधेया भगवद्भक्तिस्तां विना सा न सिध्यति ॥ ३६ ॥ जीवन्मुक्तिदशायां तु न भक्तेः फलकल्पना ॥ अद्वेष्टृत्वादिवत्तेषां स्वभावो भजनं हरेः ॥ ३७ ॥ आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ॥ कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ ३८ ॥ तेषां ज्ञानी नित्ययुक्तएकभक्तिर्विशिष्यते ॥ इत्यादिवचनात्प्रेमभक्तोयं मुख्यउच्यते ॥ ३९ ॥ एतत्सर्वं भगवता गीताशास्त्रे प्रकाशितम् ॥ अतो व्याख्यातुमेतन्मे मन उत्सहते भृशम् ॥ ४० ॥ निष्कामकर्मानुष्ठानं मूलं मोक्षस्य कीर्तितम् ॥ शोकादिरासुरः पाप्मा तस्य च प्रतिबन्धकः ॥ ४१ ॥ यतः स्वधर्मविभ्रंशः प्रतिषिद्धस्य सेवनम् ॥ फलाभिसन्धिपूर्वा वा साहंकारा क्रिया भवेत् ॥ ४२ ॥ आविष्टः पुरुषो नित्यमेवमासुरपाप्मभिः ॥ पुमर्थलाभायोग्यः सन् लभते दुःखसन्ततिम् ॥ ४३ ॥ दुःखं स्वभावतो द्वेष्यं सर्वेषा प्राणिनामिह ॥ अतस्तत्साधनं त्याज्यं शोकमोहादिकं सदा ॥ ४४ ॥ अनादिभवसन्तानानि ( रू ) गूढं दुःखकारणम् ॥ दुस्त्यजं शोकमोहादि केनोपायेन हीयताम् ॥ ४५ ॥ एवमाकाङ्क्ष्याविष्टं पुरुषार्थोन्मुखं नरम् ॥ बुबोधयिषुराहेदं भगवान् शास्त्रमुत्तमम् ॥ ४६ ॥ तत्राशोच्यानन्वशोचस्त्वमित्यादिना शोकमोहादिसर्वासुरपाप्मनिवृत्त्युपायोपदेशेन स्वधर्मानुष्ठानात्पुरुषार्थः प्राप्यतामिति भगवदुपदेशः सर्वसाधारणः । भगवदर्जुनसंवादरूपा चाख्यायिका विद्यास्तुत्यर्था जनकयाज्ञवल्क्यसंवादादिवदुपनिषत्सु कथं प्रसिद्धमहानुभावोप्यर्जुनो राज्यगुरुपुत्रमित्रादिष्वहमेषां ममैत इत्येवम्प्रत्ययनिमित्तस्नेहनिमित्ताभ्यां शोकमोहाभ्यामभिभूतविवेकविज्ञानः स्वतएव क्षत्रधर्मे युद्धे प्रवृत्तोपि तस्माद्युद्धादुपरराम । परधर्मं च भिक्षाजीवनादि क्षत्रियंप्रति प्रतिषिद्धं कर्तुं प्रववृते । तथा च महत्यनर्थे मग्नोऽभूत् भगवदुपदेशाच्चेमां विद्यां लब्ध्वा शोकमोहावपनीय पुनः स्वधर्मे प्रवृत्तः कृतकृत्यो बभूवेति प्रशस्ततरेयं महाप्रयोजना विद्येति स्तूयते । अर्जुनोपदेशेन चोपदेशाधिकारी दर्शितः । तथा च व्याख्यास्यते स्वधर्मप्रवृत्तौ जातायामपि तत्प्रच्युतिहेतुभूतौ शोकमोहौ ‘ कथं भीष्ममहं संख्ये ’ इत्यादिनार्जुनेन दर्शितौ अर्जुनस्य युद्धाख्ये स्वधर्मे विनापि विवेकं किन्निमित्ता प्रवृत्तिरिति ‘ दृष्ट्वा तु पाण्डवानीकम् ’ इत्यादिना परसैन्यचेष्टितं तन्निमित्तमुक्तम् । तदुपोद्घातत्वेन धृतराष्ट्रप्रश्नः संजयंप्रति धर्मक्षेत्रइत्यादिना श्लोकेन। तत्र धृतराष्ट्रउवाचेति वैशम्पायनवाक्यं जनमेजयंप्रति । पाण्डवानां जयकारणं बहुविधं पूर्वमाकर्ण्य स्वपुत्रराज्यभ्रंशाद्भीतो धृतराष्ट्रः पप्रच्छ स्वपुत्रजयकारणमाशंसन् पूर्वं युयुत्सवो योद्धुमिच्छवोपि सन्तः कुरुक्षेत्रे समवेताः सङ्गताः मामकाः मदीयाः दुर्योधनादयः पाण्डवाश्च युधिष्ठिरादयः किमकुर्वत किं कृतवन्तः किं पूर्वोद्भूतयुयुत्सानुसारेण युद्धमेव कृतवन्तः उत केनचिन्निमित्तेन युयुत्सानिवृत्त्यान्यदेव किञ्चित्कृतवन्तः भीष्मार्जुनादिवीरपुरुषनिमित्तं दृष्टभयं युयुत्सानिवृत्तिकारणं प्रसिद्धमेव । अदृष्टभयमपि दर्शयितुमाह—**धर्मक्षेत्रइति** । धर्मस्य पूर्वमविद्यमानस्योत्पत्तेर्विद्यमानस्य च वृद्धेर्निमित्तं सत्यस्येव क्षेत्रं सर्वश्रुतिस्मृतिप्रसिद्धं बृहस्पतिरुवाच याज्ञवल्क्यं “ यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनम् ” इति जाबालश्रुतेः “ कुरुक्षेत्रं वै देवयजनम् ” इति शतपथश्रुतेश्च । तस्मिन् गताः पाण्डवाः पूर्वमेव धार्मिकाः यदि पक्षद्वयहिंसानिमित्ताद्धर्माद्भीता निवर्तेरंस्ततः प्राप्तराज्या एव मत्पुत्राः। अथवा धर्मक्षेत्रमाहात्म्येन पापानामपि मत्पुत्राणां कदाचिच्चित्तप्रसादः स्यात्तदा च तेऽनुतप्ताः प्राक्कपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युस्तर्हि विनापि युद्धं हताएवेति स्वपुत्रराज्यलाभे पाण्डवराज्यालाभे च दृढतरमुपायमपश्यतोमहानुद्वेगएव

प्रश्नबीजम् । संजयेति च सम्बोधनं रागद्वेषादिदोषान् सम्यग्जितवानसीतिकृत्वा निर्व्याजमेव कथनीयं त्वयेति सूचनार्थम् । मामकाः किमकुर्वतेत्येतावतैव प्रश्ननिर्वाहे पाण्डवाश्चेति पृथङ्निर्दिशन्पाण्डवेषु ममकाराभावप्रदर्शनेन तद्द्रोहमभिव्यनक्ति ॥ १ ॥

## श्रीशङ्करानन्दसरस्वतीविरचिता–शङ्करानन्दी ( तात्पर्यबोधिनी ) टीका

श्रीगणेशायनमः ॥ श्रीसरस्वत्यैनमः ॥ श्रीदक्षिणामूर्तिगुरवेनमः ॥ ॐसत्यं ज्ञानमनन्तं यन्निष्कलं निष्क्रियं परम् ॥ अद्वितीयं निर्विशेषं ब्रह्म तत्समुपास्महे ॥ १ ॥ अधस्तान्मानवं दिव्यमुपरिष्टाद्गजाकृति ॥ परस्तात्तमसस्तेजः पुरस्तादस्तु नः सदा ॥ २ ॥ पञ्चाशद्वर्णरूपेण यया व्याप्तमिदं जगत् ॥ शब्दब्रह्ममयीं वाणीं भजेतां परदेवताम् ॥ ३ ॥ असंस्पृश्यैव प्रकृतिं विकृतिं च गुणैः सह ॥ यः सदा भाति मेन्तस्थस्तं सेवे कृष्णमीश्वरम् ॥ ४ ॥ सनन्दनं श्रीसनकं सनातनं सन्तं कुमारं च सनत्सुजातम् ॥ श्रीवामदेवं च शुकं महान्तं नमामि भक्त्या निजबोधसिद्ध्यै ॥ ५ ॥ भक्त्या श्रीशङ्कराचार्यं तच्छास्त्रं सद्गुरुं मुहुः ॥ नमामि शिरसा नित्यं सम्यग्ज्ञानोपपत्तये ॥ ६ ॥ भक्त्या प्रणम्य स्वगुरुमानन्दात्मसरस्वतीम् ॥ क्रियते श्रीमद्भगवद्गीतातात्पर्यबोधिनी ॥ ७ ॥ इह खलु भगवानमिततपोबलतेजःशक्तिसंपन्नः सर्वविद्यानिधिः सर्वज्ञचूडामणिः साक्षादपरः श्रीमन्नारायणः श्रीकृष्णद्वैपायनः परमकारुणिकाग्रगण्यः स्वयमतिकृपया भविष्यद्विद्वज्जनानामनतिप्रज्ञामाज्ञाय वर्णाश्रमिणां सकलपुरुषार्थसिद्धये तत्सिद्धिसाधनप्रकाशकमनन्तवेदराशिं ऋगादिभेदेन चतुर्धा विभज्य एकैकां शाखां पैलवैशम्पायनादिशिष्यप्रशिष्योपशिष्यपरम्पराद्वारासंवर्धयामास । तत्रापि वेदार्थस्य परमसूक्ष्मत्वादतिगूढत्वाद्दुर्विज्ञेयत्वाच्च तदर्थाधिगमाशक्तानां सत्पुरुषाणां धर्मादिसर्वपुरुषार्थसिद्धये 'भारतं पञ्चमो वेद' इति पञ्चमवेदत्वेन प्रसिद्धां धर्मादिसर्वपुरुषार्थतत्साधनप्रकाशनपरां भारतीं शतसाहस्रीं संहितां प्रवर्तयाञ्चकार । तस्या एतस्या एव संहितायामध्ये केवलं मुमुक्षूणामनाद्यविद्यातत्कार्यनिवृत्तिद्वारा विदेहकैवल्यफलसिद्धये ब्रह्मात्मैकत्वप्रतिपादनपरां कृष्णार्जुनसंवादरूपामद्वैतामृतवर्षिणीं गीतोपनिषन्नाम्नीं ब्रह्मविद्यां श्लोकानां सप्तशत्या अन्तरे च नक्षत्रमालायाश्चन्द्रमण्डलमिव स्थापयामास । तस्या एतस्यास्त्वध्ययने तदर्थग्रहणे तच्छ्रुतिजन्यज्ञाने तत्फलावाप्तौ चाधिकारी सदसद्विवेक्यधर्मभीरुश्चैहिकामुष्मिकसुखविमुखः शमादिषसङ्कपन्नो मुमुक्षुरेवेति निर्धारयितुं ब्रह्मविद्याश्रोतर्यर्जुने सदसद्विवेचनमधर्मभीरुत्वमैहिकामुष्मिकसुखवैमुख्यं शमदमादिसम्पत्तिं च प्रदर्शयितुं प्रथमाध्याय आरभ्यते । तत्रादौ पाण्डवानां धार्तराष्ट्राणां च युद्धाय सन्नद्धानां प्रवृत्तिं श्रोतुकामो धृतराष्ट्र उवाच–धर्मक्षेत्रइति । धर्मप्रधानत्वाद्धर्मप्रदत्वाद्वा धर्मक्षयात्रायतइति वा धर्मक्षेत्रं तस्मिन्धर्मक्षेत्रे वासमात्रेण धर्मतत्फलप्रदे कुरुक्षेत्रे युयुत्सवो युद्धं चिकीर्षवोऽतएव समवेताः समवायं प्राप्ताः सन्नद्धाः मामकाः दुर्योधनादयः पाण्डवाश्च किमकुर्वत किं कार्यं कृतवन्तः सञ्जय ! तद्ब्रूहीत्यर्थः । नन्वत्र युयुत्सवइति विशेषणबलेन समवेतानां तेषां कर्तव्यं कार्यं युद्धमेवेति युद्धस्यैव कर्तव्यत्वे प्रतीयमाने कथं युद्धं प्रवृत्तमिति प्रश्नमुत्सृज्य किमकुर्वत संजयेति धृतराष्ट्रप्रश्नोऽनुपपन्नइति न शङ्कनीयं । धर्मक्षेत्रइत्युक्तत्वात्तत्क्षेत्रमहिम्ना स्वयमेव धर्मपरो भूत्वा दुर्योधनस्तत्पित्र्यं धर्म्यमर्धराज्यं तेषां दत्तवान् वा उत तस्यैव महिम्ना प्रवृद्धधर्मा सन् धर्मपुत्रः स्वजनवधो नरकायेति नरकभयाद्युद्धादुपरतो वा सर्वे युद्धमेव कृतवन्तो वा यत्तत्र प्रवृत्तं तद्वदेत्युपपन्नतरः प्रश्नइत्यर्थः ॥ १ ॥

## श्रीधरस्वामिविरचिता–श्रीधरी ( सुबोधिनी ) टीका

श्रीगणेशाय नमः ॥ श्रीमज्जगद्गुरवे नमः ॥ श्रीकृष्णाय नमः ॥'शेषाशेषमुखव्याख्याचातुर्यं त्वेकवक्त्रतः ॥ दधानमद्भुतं वन्दे परमानन्दमाधवम् ॥ १ ॥ श्रीमाधवं प्रणम्योमाधवं विश्वेशमादरात् ॥ तद्भक्तियन्त्रितः कुर्वे

गीताव्याख्यां सुबोधिनीम् ॥ २ ॥ भाष्यकारमतं सम्यक् तद्व्याख्यातृगिरस्तथा ॥ यथामति समालोड्य गीताव्याख्यां समारभे ॥ ३ ॥ गीता व्याख्यायते यस्याः पाठमात्रादयत्नतः । सेयं सुबोधिनीटीका सदा ध्येया मनीषिभिः ॥ ४ ॥' इह खलु सकललोकहितावतारः सकलवन्दितचरणः परमकारुणिको भगवान् देवकीनन्दनस्तत्त्वज्ञानविजृम्भितशोकमोहविभ्रंशितविवेकतया निजधर्मत्यागपरधर्माभिसन्धिपरमर्जुनं धर्मज्ञानरहस्योपदेशप्लवेन तस्माच्छोकमोहसागरादुद्धार । तमेव भगवदुपदिष्टमर्थं कृष्णद्वैपायनः सप्तभिः श्लोकशतैरुपनिबबन्ध । तत्र च प्रायशः श्रीकृष्णमुखान्निःसृतानेव श्लोकानलिखत् कांश्चित्तत्संगतये स्वयं व्यरचयत् यथोक्तं गीतामाहात्म्ये—'गीता सुगीता कर्तव्या किमन्यैः शास्त्रविस्तरैः ॥ या स्वयं पद्मनाभस्य मुखपद्माद्विनिःसृता' इति तत्र तावत् 'धर्मक्षेत्रे' इत्यादिना 'विषीदन्निदमब्रवीत्' इत्यन्तेन ग्रन्थेन श्रीकृष्णार्जुनसंवादप्रस्तावाय कथा निरूप्यते—धर्मक्षेत्र इति । भो सञ्जय ! धर्मभूमौ कुरुक्षेत्रे मत्पुत्राः पाण्डुपुत्राश्च युयुत्सवः योद्धुमिच्छन्तः समवेताः मिलिताः सन्तः किं कृतवन्तः ॥ १ ॥

## सदानन्दविरचिता-सदानन्दी ( भावप्रकाशः ) टीका

ॐ श्रीगणेशायनमः ॥ ॐ नमः सच्चिदानन्दाय ॥ ॐ नमः सरस्वत्यै ॥ ॐ नमः शिवाय सपरिवाराय ॥ ॐ नमोब्रह्मणे ॥ ॐ नमो ब्रह्मादिभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यो नमो वंशर्षिभ्यो नमो गुरुभ्य आचार्येभ्यः ॥ ॐसत्यं ज्ञानं विशुद्धं परमसुखवपुर्नित्यमुक्तस्वभावं स्वाध्यस्ताज्ञानशक्तिं प्रविशति कलया ब्रह्म यद्वेदवेद्यम् ॥ अन्तर्यामीतिगीतं शतपथवचनैस्तन्महोऽनन्तमीड्यं श्रीमत्कृष्णाभिधानं निखिलभयहरं संश्रयेऽहं हृदिस्थम् ॥१॥ कृष्णाकृष्टा सभायां सपदि कुरुपतेर्यं शरण्यं श्रितासीन्मुक्ता दुःखाद्गजेन्द्रो जलचरविवशो यं स्मरन्पाशमुक्तः ॥ कारागारे निरुद्धाः शरणमुपगता यं नृपा मुक्तबन्धा आसंस्तं श्रीमुकुन्दं सततमहमजं नौमि मुक्तेर्निधानम् ॥ २ ॥ अद्वैतबोधाब्जसहस्ररश्मिः शान्तेर्लतायाः किल कल्पवृक्षः ॥ संसारसन्तापविनाशचन्द्रः कृष्णः सदाह्लादकरो ममास्तु ॥ ३ ॥ नत्वा श्रीभाष्यकारं श्रुतिकमलरविं तन्मते संप्रविष्टान्ब्रह्माद्वैतात्मनिष्ठान्सकलशुभगुणान् श्रीगुरूंश्च प्रणम्य ॥ व्यासं कृष्णावतारं विमलगुणयुतं भूरिभावेन नत्वा गीताभावप्रकाशं स्फुटविमलपदं कृष्णमाराध्य कुर्वे ॥ ४ ॥ सृष्टेः पूर्वं परं ब्रह्म नारायणपदाभिधम् ॥ आसीत्तदीक्षणाज्जातं जगत्सर्वं चराचरम् ॥ ५ ॥ अप एव ससर्जादौ तास्ववात्सीद्यतः स्वयम् ॥ तेन नारायणः प्रोक्तः परब्रह्माख्य ईश्वरः ॥६॥ ससृष्ट्वेदं जगत्सर्वं चिकीर्षुस्तस्य च स्थितिम् ॥ ससर्ज ब्रह्मरूपेण मरीच्यादिप्रजापतीन् ॥ ७ ॥ प्रवृत्तिलक्षणं धर्मं ग्राहयामास तान्मुनीन् ॥ ससंसारस्थितेर्हेतुर्धर्मः स्वर्गादिसाधनम् ॥ ८ ॥ निवृत्तिलक्षणं धर्मं सनकादीनकल्मषान् ॥ सृष्ट्वा तान् ग्राहयामास मोक्षहेतुं सवैदिकम् ॥ ९ ॥ गृहीतो द्विविधो धर्मो मुनिभिस्तत्त्वदर्शिभिः ॥ प्रवर्तितो यथा शास्त्रं लोकेऽस्मिन्नधिकारिषु ॥ १० ॥ कृतादिषु युगेष्वेष धर्मः सद्भिः प्रवर्तितः ॥ क्षीणप्रायोऽभवल्लोके कालेनाचिन्त्यवर्त्मना ॥ ११ ॥ कामादीनां च बाहुल्याद्वैचित्र्यात्कर्मणां तथा ॥ हीयमाने क्षितौ धर्मे वर्धमाने ह्यधर्मके ॥ १२ ॥ धर्मगोप्ता महाविष्णुरादिकर्ता महेश्वरः ॥ स पिपालयिषुर्धर्मं क्षितावववतार ह ॥ १३ ॥ स्वां मायां वैष्णवीं शक्तिं वशीकृत्य गुणात्मिकाम् ॥ अजोऽव्ययोऽक्रियो नित्यः शुद्धो बुद्धः सचेश्वरः ॥ १४ ॥ अनन्तकल्याणगुणो मङ्गलानां परोऽवधिः ॥ स्वेच्छया संबभूवाद्यो देवक्यां वसुदेवतः ॥ १५ ॥ निहत्यासुरपक्षीयान्धर्मशत्रूननेकधा ॥ धर्मः प्रवर्तितो लोके स्वमूर्त्याद्भुतरूपया ॥ १६ ॥ स धर्मो द्विविधोऽपीह वर्धमानो यथा भवेत् ॥ संप्रदायमुखेनैव तथा कार्यं मयाधुना ॥ १७ ॥ इति संचिन्त्य गोविन्दो निमित्तीकृत्य चार्जुनम् ॥ सङ्ग्रामेऽवसरं लब्ध्वा द्विविधं धर्ममीश्वरः ॥ १८ ॥ तस्मादुपदिदेशेड्य उत्तमायाधिकारिणे ॥ धर्मोऽनुष्ठीयमानश्च गृहीतः सन् गुणाधिकैः ॥१९॥ स्वयमेव हि कालेन प्रचयं प्रगमिष्यति ॥ इत्यतोऽर्जुनमुद्दिश्य धर्मं संप्रोक्तवान्हरिः ॥ २० ॥ जन्तूनां शोक-

मोहौ द्वौ संसारानर्थकारणम् ।। ताभ्यामनर्थहेतुभ्यामर्जुनः पाण्डुनन्दनः ।। २१ ।। अभिभूतविवेकः सन्क्षत्रधर्मरणे स्वतः ।। प्रवृत्तोऽपि ततो धर्म्याद्युद्धादुपरराम ह ।। २२ ।। परधर्मं तथा भिक्षाजीवनादिकमाकुलः ।। कर्तुं प्रववृते मोहान्निषिद्धः क्षत्रियस्य यः ।। २३ ।। तथा च सर्वजन्तूनां शोकाद्याविष्टचेतसाम् ।। स्वधर्मत्यागो निन्द्यस्य सेवा च स्वात्स्वभावतः ।। २४ ।। स्वधर्मेऽपि प्रवृत्तानां प्रवृत्तिर्मूढचेतसाम् ।। फलाभिसन्धिपूर्वैव साहङ्कारा च जायते ।। २५ ।। तत्रैवं सति संसारो जन्ममृत्यादिलक्षणः ।। सदानुपरतो नृणां धर्माधर्मनिबन्धनः ।। २६ ।। पुण्यपुञ्जोदयात्कश्चित्तितीर्षुर्दुस्तरं तमः ।। विवेकादियुतो भूत्वा श्रेयोऽभिमुखमाश्रितः ।। २७ ।। दुस्त्यजः शोकमोहादिसंसारोऽयमनर्थकः ।। केनोपायेन हीयेत तापत्रितयसंकुलः ।।२८।। कथं बद्धोऽस्म्यहं केन संसारे विनिपातितः।। केनोपायेन मुक्तः स्यामिति मोक्षोन्मुखं नरम् ।। २९ ।। बुबोधयिषुराहेदं गीताशास्त्रं हरिर्विभुः ।। सर्वलोकहितार्थाय निमित्तीकृत्य पाण्डवम् ।। ३० ।। तमर्थं भगवान्व्यासः सर्वज्ञः सप्तभिः शतैः ।। श्लोकानां भगवद्गीताभिधैर्वेदार्थगोचरैः ।। ३१ ।। निबबन्ध स्वयं साक्षाद्गोविन्दमुखनिःसृतैः ।। प्रसङ्गार्थं स्वयं कांश्चिच्छ्लोकान्व्यरचयन्मुनिः ।। ३२ ।। गीताख्यं तदिदं शास्त्रं कैवल्यैकप्रयोजनम् ।। सर्ववेदार्थसारांशसंग्रहात्मकमुत्तमम् ।। ३३ ।। तत्त्वं श्रीवासुदेवाख्यं ब्रह्मास्य विषयः परः ।। विशिष्टफलसंबन्धाभिधेयान्वितमद्भुतम् ।। ३४ ।। दुर्ज्ञेयार्थमिदं शास्त्रं व्याख्यातं भगवत्पदैः ।। पदशो यस्य विज्ञानात्सर्वसिद्धिर्महात्मनाम् ।। ३५ ।। तन्मतं सम्यगालोच्य तथा तदनुयायिनाम् ।। भृशमुत्सहते चेतो व्याख्यातुं तन्ममाधुना ।। ३६ ।। गद्यैरेव पुराचार्यैर्व्याख्यातं गूढभावतः ।। स्पष्टपद्यैरहं कुर्वे तद्व्याख्यानं यथामति ।। ३७ ।। समस्तं कुमतं यद्यत्कल्पितं मूढबुद्धिभिः ।। श्रुतिस्मृतिनयैस्तत्तन्निरस्तं भगवत्पदैः ।। ३८ ।। तन्निरासाय मे नास्ति प्रवृत्तिरधुना किल ।।भाष्यकारीयसारांशं समादायैव केवलम् ।। ३९ ।। ग्रन्थस्यार्जवभावेन व्याख्यानार्थमहं यते ।। स्वबुद्धिशुद्धये कृष्णपादप्रेमैकयन्त्रितः ।।४०।। एतद्भावप्रकाशाख्यं व्याख्यानं सुगमं परम् ।। मुमुक्षूणामुपादेयं स्वयमेव भविष्यति ।। ४१ ।। तत्र वेदान्तसिद्धान्ताखण्डवाक्यार्थ उत्तमः ।। गीताशास्त्रे विनिर्णीतो व्याख्येयः क्रमशः परः ।। ४२ ।। काण्डत्रयात्मकं गीताशास्त्रं भागवतं मतम् ।। तत्राद्यकाण्डे हरिणा त्वंपदार्थस्य शोधनम् ।। ४३ ।। महामोहसमुच्छेदसिद्ध्यै कृतमादरात् ।। तत्रापि प्रथमेऽध्याये शोकमोहादिकारणम् ।। ४४ ।। ममाहमित्यविद्याख्यं मिथ्याज्ञानं न चेतरत् ।। वैराग्याद्यर्थसंसिद्ध्यै मुनिर्व्यासो जगाविति ।। ४५ ।। तदुच्छेदाय भगवान् द्वितीये स्वात्मबोधनम् ।। कृत्वा तत्रैव जीवानां मोहाधिक्यं विचार्य च ।। ४६ ।। स्वधर्मं बोधयामास निष्कामं कामनिन्दया ।। ईश्वराराधनं धर्ममुपदिश्यातिसाम्यतः ।। ४७ ।। तत्फलं मनसः शुद्धिस्तथा रागादिमार्जनम् ।। ततो ज्ञानसमुत्पत्तिस्तया स्थैर्यं निजात्मनि ।। ४८ ।। द्विप्रकारमिमं धर्मं निःश्रेयसप्रयोजनम् ।। पुरस्कृत्य प्रवृत्तं तद्गीताशास्त्रमशेषतः ।।४९।। उपोद्घाततया प्रोक्तः शास्त्रार्थः प्रथमे खलु ।। द्वितीये सूत्रितः सम्यक्तथैवात्र निदर्श्यते ।। ५० ।। निष्कामकर्मनिष्ठादौ सत्त्वशुद्धिस्ततः परम् ।। ततश्च कर्मसंन्यासो वैराग्यादिपुरःसरः ।। ५१ ।। ततो वेदान्तवाक्यानां विचारसहिता परा ।। भगवद्भक्तिनिष्ठा स्यात्पुरुषार्थैकजन्मभूः ।। ५२ ।। ततस्तत्त्वैक्यविज्ञाननिष्ठा तस्याः परं फलम् ।। अविद्यादिनिवृत्त्या स्याज्जीवन्मुक्तिर्निरङ्कुशा ।। ५३ ।। प्रारब्धभोगपर्यन्ता समताद्यैरलङ्कृता ।। तदन्ते स्याद्विदेहाख्या मुक्तिर्वाचामगोचरा ।। ५४ ।। जीवन्मुक्तिदशायां च पुरुषार्थावलम्बनात् ।। परवैराग्यप्राप्तिः स्याद्वैतृष्ण्याख्यपराभिधा ।। ५५ ।। दैवी संपदुपादेया वैराग्याद्युपकारिणी ।। आसुरी संपद्धेया सर्वश्रेयोविरोधिनी ।। ५६ ।। कारणं सात्त्विकी श्रद्धा प्रधानं दैवसम्पदः ।। राजसी तामसी श्रद्धा हेयासुर्याश्च कारणम् ।। ५७ ।। हेयादेयविभागेन शास्त्रार्थस्याखिलस्य च ।। सूत्ररूपे द्वितीये हि समाप्तिः समुदाहृता ।। ५८ ।। निदर्श्यते तदेवात्र सुखबोधाय सत्तृणाम् ।। योगस्थः कुरु कर्माणीत्यादिना तत्र

सूत्रिता ॥ ५९ ॥ निष्कामकर्मनिष्ठा या सत्वशुद्ध्येककारणम् ॥ सा सामान्येन रूपेण तृतीये संप्रपञ्चिता ॥ ६० ॥ पुनर्विशेषरूपेण चतुर्थे संप्रपञ्चिता ॥ ततो विशुद्धसत्वस्य वैराग्यादिपुरःसरा ॥ ६१ ॥ विहाय कामान्यः सर्वानित्यादौ या च सूत्रिता ॥ कर्मसंन्यासनिष्ठा सा षष्ठे प्रोक्ता च पञ्चमे ॥ ६२ ॥ सङ्क्षेपात्पञ्चमे प्रोक्ता षष्ठे विस्तरशः पुनः ॥ एतावता भगवता त्वंपदार्थो निरूपितः ॥ ६३ ॥ यज्ज्ञानात्तत्पदार्थेऽस्य भक्तिरुत्पद्यते परा ॥ ततो वेदान्तवाक्यानां विचारेण युता पुरा ॥ ६४ ॥ सूत्रिता युक्त आसीत मत्परश्चेति या रतिः ॥ भगवद्भक्तिनिष्ठा सानेकधा प्रतिपादिता ॥ ६५ ॥ मध्यमाध्यायषट्केन पुरुषार्थैकजन्मभूः ॥ तावता तत्पदार्थोऽपि ध्येयो ज्ञेयोऽर्च्य आदरात् ॥ ६६ ॥ मुमुक्षोरुपकाराय हरिणा सन्निरूपितः ॥ अवान्तरफलं तद्वत्सङ्गतिश्चाप्यवान्तरा ॥ ६७ ॥ आदरात्तत्रतत्रैव प्रत्यध्यायं प्रवक्ष्यते ॥ ततस्तत्त्वंपदार्थैक्यरूपाविद्याविरोधिनी ॥ ६८ ॥ वेदाविनाशिनं नित्यमित्यादौ सूत्रिता च या ॥ अद्वैततत्त्वविज्ञाननिष्ठा साऽसौ त्रयोदशे ॥ ६९ ॥ क्षेत्रक्षेत्रज्ञयोः सम्यग्विवेकेन प्रपञ्चिता ॥ फलं च ज्ञाननिष्ठायाः सूत्रिता हरिणा परा ॥ ७० ॥ निस्त्रैगुण्यो भवेत्यादौ निवृत्तिस्त्रिगुणस्य या ॥ सा वै चतुर्दशेऽध्याये जीवन्मुक्तिरितीरिता ॥ ७१ ॥ गुणातीतस्य चिह्नानां कथनेन प्रपञ्चिता ॥ परवैराग्यनिष्ठाया जीवन्मुक्तेरलङ्कृतिः ॥ ७२ ॥ तदा गन्तासि निर्वेदमित्यादौ सूत्रिता च सा ॥ संसारवृक्षविध्वंसद्वारा पञ्चदशे स्मृता ॥ ७३ ॥ दुःखेष्वनुद्विग्नमना इत्यादौ सूत्रिता च या ॥ दैवी संपदुपादेया स्थितधीलक्षणेन हि ॥ ७४ ॥ वशीकाराभिधेयस्य वैराग्यस्योपकारिणी ॥ यामिमां पुष्पितां वाचमित्यादौ सूत्रिता च या ॥ ७५ ॥ आसुरी संपदाहेया वैराग्यादिविरोधिनी ॥ एते उभे भगवता षोडशे संप्रपञ्चिते ॥ ७६ ॥ कारणं सात्विकी श्रद्धा प्रधानं दैवसम्पदः ॥ निर्द्वन्द्वो नित्यसत्त्वस्थ इत्यादौ सूत्रिता परा ॥ ७७ ॥ तद्विरोधिनिरासेन प्रोक्ता सप्तदशे च सा ॥ सफलाज्ञाननिष्ठैवं पञ्चकेन प्रपञ्चिता ॥ ७८ ॥ अष्टादशेन पूर्वोक्तसर्वस्याप्युपसंहृतिः ॥ इत्थं समस्तगीताख्यशास्त्रस्येहार्थसंगतिः ॥ ७९ ॥ द्वितीये सूत्रिता सर्वशास्त्रेऽस्मिन्संप्रपञ्चिता ॥ अशोच्यानन्वशोचस्त्वमित्यारभ्योपदेशनम् ॥ ८० ॥ शोकमोहापनुत्त्यर्थं कृतं भगवता स्फुटम् ॥ सर्वसाधारणो विष्णोरुपदेशो महानयम् ॥ ८१ ॥ संवादः कृष्णयोर्ब्रह्मविद्यास्तुत्यर्थमुच्यते ॥ वैदेहयाज्ञवल्क्यादिसंवादोऽस्ति यथा श्रुतौ ॥ ८२ ॥ शोकोपलक्षितो बन्धस्तन्निवृत्तिकरी त्वियम् ॥ ब्रह्मविद्या पुरा जिष्णोः प्राप्ता मुक्तस्तयेति सः ॥ ८३ ॥ महाप्रयोजना विद्येत्येवं संस्तूयते ततः ॥ अर्जुनस्योपदेशेनाधिकारी दर्शितोऽत्र च ॥ ८४ ॥ उपोद्घाततया तस्य धृतराष्ट्रनृपस्य च ॥ प्रश्नो व्यासप्रसादाप्तविज्ञानं सञ्जयं प्रति ॥ ८५ ॥ धृतराष्ट्रउवाचेति वैशम्पायनगीरियम् ॥ युद्धवृत्तान्तबोधार्थं नृपं जन्मेजयं प्रति ॥ ८६ ॥ श्रुत्वा बहुविधं पूर्वं पाण्डवानां जयं नृपः ॥ स्वपुत्रराज्यविभ्रंशाद्भीतः पप्रच्छ सञ्जयम् ॥ ८७ ॥ ॥ धर्मस्योत्पादके क्षेत्रे धर्मवृद्ध्यैककारणे ॥ श्रुतिस्मृतिप्रसिद्धेऽस्मिन्कुरुक्षेत्रे रणेप्सवः ॥ १ ॥ दुर्योधनादयोऽन्धस्य मम पुत्रास्तथापरे ॥ युधिष्ठिरादयः पाण्डोः पुत्रा राज्यफलेप्सवः ॥ २ ॥ कृतवन्तः किमित्येते संधीभूता हि सञ्जय ॥ धर्मक्षेत्रपदेनोक्तं पाण्डवा धार्मिकाः स्वतः ॥ ३ ॥ हिंसाभिया निवर्तेरन्यदि बन्धुपरिक्षयात् ॥ प्राप्तराज्यास्ततः पुत्रा मदीया इति भूभुजा ॥ ४ ॥ यद्वा वेदे कुरुक्षेत्रं कर्मकाण्डे प्रसिद्धिमत् ॥ अन्यद्देवयजनाख्यं धर्मक्षेत्रमुदाहृतम् ॥ ५ ॥ अविमुक्तं कुरुक्षेत्रं देवानामिति वाक्यतः ॥ अन्यद्ब्रह्मसदनाख्यं मुक्तिक्षेत्रमुदाहृतम् ॥ ६ ॥ यत्र प्राणपरित्यागाज्जन्तुमात्रस्य मोक्षणम् ॥ संसारबन्धतः प्रोक्तं श्रुतौ तत्काशिकाभिधम् ॥ ७ ॥ प्राणप्रयाणसमये श्रीरुद्रस्तारकं पदम् ॥ व्याचष्टे ब्रह्म तेनासौ मोक्षं प्राप्नोति बोधतः ॥ ८ ॥ इत्येवं वाक्यशेषेण कुरुक्षेत्रं विलक्षणम् ॥ अविमुक्तं यतः प्रोक्तमेतद्ब्रह्मावृत्तिसिद्धये ॥ ९ ॥ धर्मक्षेत्रइति प्रोक्तं कुरुक्षेत्रं प्रसिद्धिमत् ॥ भारते सर्ववेदार्थो भारतार्थश्च कृत्स्नशः ॥ १० ॥ गीतायामस्ति तेनेयं सर्वशास्त्रमयी मता ॥ अतो व्याख्यापराप्यत्र

भाति सा हि निदर्श्यते ॥ ११ ॥ आरम्भे भारतस्यापि रूपकद्वयमीरितम् ॥ छान्दोग्यश्रुतिसंसिद्धमथाध्यात्ममितिस्थले ॥ १२ ॥ युधिष्ठिरो धर्ममयो वृक्षस्तस्य प्रकल्पितः ॥ अर्जुनः स्कन्धरूपेण शाखात्वेन वृकोदरः ॥ १३ ॥ माद्रीसुतौ पुष्पफले मूलं कृष्णो द्विजाः श्रुतिः ॥ दैवी संपत्समग्रात्र धर्माद्या मुनिनेरिता ॥१४॥ दुर्योधनो मन्युमयो वृक्षस्तत्र प्रकल्पितः ॥ कर्णश्च स्कन्धरूपेण शाखा शकुनिरीरितः ॥ १५ ॥ दुःशासनः पुष्पफले मूलं स्यात्तत्पितान्धदृक् ॥ आसुरी संपदत्रासौ क्रोधाद्या निखिलेरिता ॥ १६ ॥ इत्थं सम्पद्द्वयं न्यस्य तयोरन्योन्यमाग्रहात् ॥ युद्धं प्रदर्शितं सम्यग्विस्तरान्मुनिना खलु ॥ १७ ॥ प्रतिपाद्यं परं ब्रह्म भारते वेदसंग्रहे ॥ तज्ज्ञानसाधनं धर्मः प्रतिपाद्यो मुनेर्मतः ॥ १८ ॥ दैवी संपदुपादेया पाण्डवानां जयाज्जनैः ॥ आसुरी संपदाहेया धार्तराष्ट्रपराजयात् ॥ १९ ॥ यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ इत्येवं रूपकेणार्थौ भारते मुनिनेरितः ॥ २० ॥ अत्रापि प्रथमे श्लोके तद्रूपकप्रदर्शनम् ॥ गीताशास्त्रसमारम्भे कृतं व्यासेन वेधसा ॥ २१ ॥ कुरूणां करणानां यत्क्षेत्रं देहोऽधिकारिणः ॥ अनुग्राहकभावेन क्षेत्रवत्क्षेत्रमुच्यते ॥ २२ ॥ सर्वेषां चैव धर्माणामुत्पादकतया तथा ॥ अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥ २३ ॥ आत्मज्ञानमयो धर्मः साध्यतेऽत्र मुमुक्षुभिः ॥ क्षयात्समस्तधर्माणामपवर्गैकलाभतः ॥ २४ ॥ त्राणभूतं मुमुक्षोस्तद्धर्मक्षेत्रं शरीरकम् ॥ क्षेत्राणां परमं क्षेत्रं शरीरं क्षेत्रमुच्यते ॥ २५ ॥ वध्यघातकभावेन तस्मिन्क्षेत्रे परस्परम् ॥ रागवैराग्यसंतोषतृष्णादीनां समागमः ॥ २६ ॥ ये स्थिता मामकास्तत्र ह्यविद्यापुरुषोचिताः ॥ अविद्यामयसंकल्पा आसुराः प्रतिबोधिताः ॥ २७ ॥ ममेतिकार्यमित्युक्ता मामका भ्रान्तिशालिनः ॥ कामक्रोधादयः सर्वे महामोहात्मजाः शठाः ॥ २८ ॥ शुद्धिः पाण्डुरिति प्रोक्ता तत्पुत्राः पाण्डवाः स्मृताः ॥ क्षमावैराग्यसंतोषमुखा विद्यामयाः शुभाः ॥ २९ ॥ के कैर्जिता इति प्रोक्तं किमकुर्वत शब्दतः ॥ मुमुक्षोरेष प्रश्नोऽस्ति सञ्जयं ज्ञानिनं प्रति ॥ ३० ॥ यद्वा मोहस्य प्रश्नोऽयं स्वयन्त्रात्ममनः प्रति ॥ इतिरूपकमादाय बोधिता मुनिना जनाः ॥ ३१ ॥ अतएवोपसंहारे सञ्जयोक्तिर्नृपं प्रति ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥ ३२ ॥ तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ तथाछान्दोग्यवेदान्तगिरामप्यत्रसम्मतिः ॥ ३३ ॥ इन्द्रियवृत्तयो देवा असुराश्च श्रुतौ श्रुताः ॥ शास्त्रानुगाः सुराः प्रोक्ता स्वाभाविक्यस्तथाऽसुराः ॥ ३४ ॥ स्वाभाविक्यस्तमोरूपा इन्द्रियाणां प्रवृत्तयः ॥ प्रवृत्ताः शास्त्रसिद्धार्थप्रकाशाभिभवा यताः ॥ ३५ ॥ शास्त्रानुगाः सुरास्तत्र शान्तिदान्तिपुरःसराः ॥ भ्रान्तिसिद्धप्रवृत्तीनामासुरीणां क्षयावहाः ॥ ३६ ॥ अनादिकालमारभ्य देवासुरसमागमः ॥ प्रतिदेहं प्रवृत्तोऽसौ सर्वप्राणिषु सङ्गरः ॥ ३७ ॥ एवमेव मुनेर्भावो दर्शितोऽयमथाधुना ॥ आर्जवेन प्रसङ्गं तं व्याख्यास्यामो यथाक्षरम् ॥ ३८ ॥ १ ॥

## धनपतिविरचिता–भाष्योत्कर्षदीपिका टीका

श्रीगणेशाय नमः ॥ श्रीसरस्वत्यै नमः ॥ श्रीगुरुभ्यो नमः ॥ श्रीमच्छङ्करभगवत्पूज्यपादचरणनलिनाभ्यां नमः ॥ सप्तद्वीपाधरेयं सगिरिवनजला लोकपालाः सलोका ब्रह्माण्डे सन्ति यस्मिन्सलिलहुतभुगाद्यावृते तत्प्रधानात् ॥ यस्माद्व्यक्तसंज्ञाद्भवति गुणमयाद्वेदवेद्यः परो यस्तस्मान्नारायणं तं सुविमलमभयं शङ्करं नौमि सत्यम् ॥ १ ॥ सृष्ट्वेदं श्रुतिगं प्रवृत्तिजनकं धर्मं मरीच्यादिकान्विश्वस्थापनहेतवेऽब्जजतनुः संग्राहयामास यः ॥ सर्वानर्थनिबर्हणं च सनकाद्यान्पूर्वसृष्टानृषीन्वैराग्यादिकलक्षणं शिवमहं तं वासुदेवं भजे ॥ २ ॥ अजन्मा सर्वेषामधिपतिरमेयोपि जगतामधिष्ठाय स्वीयां प्रकृतिमिव देही स्फुरति यः ॥ विनष्टं कालेन द्विविधममृतं धर्ममनघं पुनः प्राहेशं तं विमलशुभदं नौमि परमम् ॥ ३ ॥ ईशावेकात्मकौ लोके सम्प्रदायप्रवर्तकौ ॥ गीताभाष्यप्रकाशेन वन्दे श्रीकृष्णशङ्करौ ॥ ४ ॥ बालस्वामिनमाचार्यं नुमो व्यासमुखान्मुनीन् ॥ विघ्नहर्तॄन्गणेशादीन्पण्डितांश्च विमत्सरान् ॥ ५ ॥ कुमतस्य निरासाय गीताभाष्यकृता स्वयम् ॥ कृष्णात्मना शिवेनादौ व्या-

ख्याता पदशः स्फुटम् ॥ ६ ॥ ततो भाष्यार्थमादाय व्याख्याता बहुभिस्तु सा ॥ यत्तु कैश्चित्क्वचित्प्रोक्तं विरुद्धं भाष्यतोऽखिलम् ॥ ७ ॥ साक्षेपं युक्तिहीनं च तन्निरासाय लेखकम् ॥ अन्तर्यामिस्वरूपोऽसौ मां करोति महेश्वरः ॥ ८ ॥ यद्यपि प्राणिजातस्य प्रेरको जगदीश्वरः ॥ स एवास्ति तथाप्येवं श्रुत्यर्थेन व्यवस्थितिः ॥ ९ ॥ यमधो नेतुमिच्छास्य जायते परमात्मनः ॥ असाधुकर्मनिर्वृत्तौ संप्रेरयति तं तु सः ॥ १० ॥ कारयत्यमलं कर्म यस्येच्छत्यूर्ध्वमास्पदम् ॥ तस्मान्मदात्मना तेन स्वभाष्योत्कर्षदीपिका ॥ ११ ॥ तन्यते स्वस्य भक्तानां सुखदा सुहृदां सताम् ॥ भक्ताभासस्य हीनस्य भक्त्या चोद्वेगदाऽसतः ॥ १२ ॥ इह खलु परमकारुणिकः परिपूर्णानन्दस्वभावः सकलैश्वर्यसम्पन्नस्त्रिगुणात्मिकया स्ववशीकृतया निजमाययोपात्तकायो भगवान्वासुदेवः शोकमोहाभिभूतं जीवनिकायमुद्दिधीर्षुर्यद्गीताशास्त्रं सर्ववेदसारभूतं काण्डत्रयात्मकं तत्त्वंपदाखण्डार्थप्रतिपादकं निजाविग्रहायार्जुनाय ग्राहयामास । तदेव क्रमप्राप्तं दयानिधिर्वेदव्यासो महाभारते निबध्नाति धृतराष्ट्र उवाचेत्यादि । तत्र धृतराष्ट्र उवाच । 'केषां प्रहृष्टास्तत्राग्रे योधा युध्यन्ति सञ्जय । उदग्रमनसः केत्र के वा दीना विचेतसः ॥ के यूयं प्राहरंस्तत्र युद्धे हृदयकम्पिनि । मामकाः पाण्डवानां वा तन्ममाचक्ष्व सञ्जय' इत्यादिना कृतं प्रश्नं वैशम्पायनो जनमेजयं प्रति सङ्क्षिप्योपोद्घाततयानुवदति–धृतराष्ट्र उवाचेति । मामकाः मदीयाः दुर्योधनादयः पाण्डवाः पाण्डुपुत्राः युधिष्ठिरादयः युयुत्सवः योद्धुमिच्छवः । धर्मस्योपचयस्थानत्वात् धर्मक्षेत्रे कुरुक्षेत्रे श्रुतिस्मृतिलोकप्रसिद्धे समवेता मिलिताः सन्तः किमकुर्वत किं कृतवन्तः । स्वधर्मभूतं धर्मयुद्धं कृतवन्तः उताधर्मयुद्धमिति धर्मक्षेत्रपदेन बोधितम् । युयुत्सया समवेता इति मया विस्तरेण श्रुतं तदनन्तरं यथा यत्कृतवन्तः तथा तद्विस्तरेण वदेत्याशयः । भीष्मपतनेन कलहस्यानर्थताबोधकानां भवदादिवाक्यानां सम्यग्जयो जात इति ध्वनयन् सम्बोधयति–सञ्जयेति । रागद्वेषादिदोषान् सम्यग्जितवानसीति कृत्वा निर्व्याजेन त्वया कथनीयमिति सूचनार्थं सञ्जयेति सम्बोधनमिति केचित् । किमा आक्षेपोऽपि ध्वनितः । अयोग्यं कृतवन्तइत्यर्थः । धर्मक्षेत्रे हिंसाप्रधानस्य युद्धस्यानुचितत्वात् । मामका नाम धार्मिकत्वेन तत्सम्भवेऽपि परमधार्मिकत्वेन प्रसिद्धाः पाण्डवाः युधिष्ठिरादयो भीष्मादिपातनं किं कृतवन्त इति द्योतयन्नाह–पाण्डवाश्चेति । पाण्डवेषु ममकाराभावप्रदर्शनेन तेषु द्रोहमभिव्यनक्तीति केचित् । यत्तु पणडवानां जयकारणं बहुविधं पूर्वमाकर्ण्य स्वपुत्रराज्यभ्रंशाद्भीतो धृतराष्ट्रः पप्रच्छ स्वपुत्रजयकारणमाशंसन् धृतराष्ट्र इत्यादिना । किं कृतवन्तः किं पूर्वोद्भूतयुयुत्सानुसारेण युद्धमेव कृतवन्तः उत केनचिन्निमित्तेन युयुत्सानिवृत्त्या अन्यदेव किंचित्कृतवन्तः । भीमार्जुनादिवीरपुरुषनिमित्तं दृष्टभयं युयुत्सानिवृत्तिकारणं प्रसिद्धमेव । अदृष्टभयमपि दर्शयितुमाह–धर्मक्षेत्रइति । तस्मिन्गताः पाण्डवाः पूर्वमेव धार्मिकाः । यदि पक्षद्वयहिंसा निमित्तादधर्माद्भीता निवर्तेरन्ततः प्राप्तराज्या एव मत्पुत्राः । अथवा धर्मक्षेत्रमाहात्म्येन पापिनामपि मत्पुत्राणां कदाचिच्चित्तप्रसादः स्यात्तदा च तेऽनुतप्ताः कपटोपात्तं राज्यं पाण्डवेभ्यो यदि दद्युः तर्हि विनापि युद्धं हता वेति स्वपुत्रराज्यलाभे पाण्डवराज्यालाभे च दृढतरमुपायमपश्यतो महानुद्वेगएव प्रश्नबीजमिति केचिद्वर्णयन्ति तदुपेक्ष्यम् । 'अथ गावल्गणिर्धीमान्समरादेत्य सञ्जयः । प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यतः ॥ ध्यायतो धृतराष्ट्रस्य सहसोपेत्य दुःखितः । आचष्ट निहतं भीष्मं भारतानां पितामहम् ॥ सञ्जयोऽहं महाराज नमस्ते भरतर्षभ । हतो भीष्मः शान्तनवो भारतानां पितामहः ॥ यो ररक्ष समेतानां दशरात्रमनीकहा । जगामास्तमिवादित्यः कृत्वा कर्म सुदुष्करम् ॥ यः स शक्र इवाक्षोभ्यो वर्षन्बाणान्सहस्रशः । जघान युधि योधानामर्बुदं दशभिर्दिनैः ॥ स शेते निहतो भूमौ वातरुग्ण इव द्रुमः' इत्यादिसंक्षेपोक्तिपरपूर्वग्रन्थविरोधात् । ननु संक्षेपेण श्रुतमपि मोहाद्विस्मृत्य धृतराष्ट्रेण प्रश्नः कृत इतिचेन्न प्रश्नस्य पूर्वग्रन्थानुरोधेनास्मदीयोक्तरीत्या सम्यगुपपत्तेः । पूर्वोक्तविरुद्धप्रश्नव्याख्यानकर्तॄणामेव मोहादिति दिक् । यत्त्वन्ये । धर्मक्षेत्रपदं कुरुक्षेत्रपदादविमुक्तक्षेत्रप्रतिपत्तिर्मा

भूदित्येतदर्थमितितन्न । कुरुक्षेत्रादागतं सञ्जयं किमविमुक्तक्षेत्रे समवेता इति संशयरहितं प्रति विशेषणानर्थक्यात् । अन्येषामपि लोकप्रसिद्ध्या पूर्वग्रन्थेन च निर्णयस्य सत्त्वात् ॥ १ ॥

## श्रीमद्दैवज्ञपण्डितवर्यसूर्यविरचिता—परमार्थप्रपा टीका

श्रीविश्वनाथो जयति ॥ संविदानन्दसंदोहसान्द्रमिन्दीवरेक्षणम् ॥ इन्दिरामन्दिरं देवं वन्दे तं नन्दनन्दनम् ॥ १ ॥ अज्ञः सुज्ञत्वसीमामनुभवति भवान्नैति रङ्कोऽपि शङ्कां स्यान्मूको वावदूको व्रजति शिखरिणां पङ्गुरुल्लङ्घ्य सङ्घम् ॥ दुःखाब्धेर्नोपलब्धिः स खलु विजयते यत्कृपापाङ्गसङ्गादन्तर्यामी समीपे मम परमगुरुः श्रीयशोदाकिशोरः ॥ २ ॥ अम्भोधिं कुम्भडिम्भश्चुलकितमकरोन्मूर्ध्नि धत्तेऽतिगुर्वीमुर्वीं दर्वीकरोऽपि प्रदहति दहनो वर्षति प्रावृषेण्यः ॥ मेघौघो वाति वातः प्रतपति तपनो रत्नसूर्भूमिरेभिर्लोकातीतोऽभिनीतो यदुकुलतिलकानुग्रहो निग्रहो वा ॥ ३ ॥ वार्ष्णेयब्रह्मशैलादृजुशतपथगा ज्ञानविज्ञानकूला पार्थस्य प्रार्थनातश्चिरममृतवहा प्रत्यगानन्दसिन्धुम् ॥ संप्राप्तार्थप्रवाहप्रपतितविततावश्वत्थमुन्मूलयन्ती गीता स्फीता निमङ्क्तुः सकलकलिमलं स्वर्धुनीयं धुनीते ॥ ४ ॥ निश्वासो वैश्वरूपो निगम इति जने दुर्गमो भूत्ततोऽसावाविर्भूता विभूतिर्जगदुपकृतये भारती भारताग्रे ॥ सेयं गीताभिनीता स्वयमुपनिषदामर्थमोदाय हार्दं सौहार्दं केवलं नः प्रियविषयमदः किं तु विष्वग्जनस्य ॥ ५ ॥ आचार्याः सन्ति कुत्राप्यतिविमलधियो वेदशास्त्रागमानां दुष्प्रापस्तावदास्ते त्रिजगति नितरामात्मतत्त्वोपदेष्टा ॥ एवं सत्यर्जुनस्याद्भुतविकलवतो वर्ण्यते किन्तु भाग्यं यस्याचार्यस्य हेतोः स्वयमुपनिषदामर्थ आविर्बभूव ॥ ६ ॥ चतुर्वेदाचार्याधिगतभगवद्भावभवनं निदानं विश्रान्तेर्यदनुमतमृक्सामयजुषाम् ॥ अहं गीताभाष्यं तदिह रचये सूर्यविधिविद्यतोऽल्पज्ञप्रज्ञानुभवरसिकानन्दजननम् ॥ ७ ॥ साक्षाद्वैकुण्ठवाचो निजभजनवतां मुक्तिहेतोः प्रवृत्ताः सर्वाम्नायाश्च गीताः सततमथ मिथो या वियुक्ता बभूवुः ॥ ता एकत्रानुयोक्तुं सुरसरित इवान्तर्नियुक्तो विनेत्रा देवेनान्तः प्रवृत्तोस्म्यहमिह भविता तावताहं कृतार्थः ॥ ८ ॥ एतस्मिन् भगवच्छास्त्रे न यौक्तिकमताग्रहः ॥ सर्वोपनिषदध्यात्ममेतदात्मानुभूतिकृत् ॥ ९ ॥

इह खलु सदनुग्रहखलनिग्रहगृहीतविग्रहः परमकारुणिकः परमात्मा दावदहनदन्दशूकशिलावर्षणवस्त्रहरणलाक्षागृहगरदानाद्यनर्थेभ्यः स्वचरणशरणानुद्दधार । ततो दनुजकुलभराकुलमवनीतलमाकलय्य प्रथमतः पूतनादीनसुरान्निरवधीनवधीत् । अनन्तरं कंसचाणूरकालयवनजरासन्धादींश्च । संप्रत्यर्जुनं निमित्तमात्रं कृत्वा कुरुक्षेत्रे क्रूरतमं कौरवकुलं संजिहीर्षुरास्ते । तत्र श्रुतयः "जज्ञान एव व्यबाधत स्पृधः प्रापश्यद्वीरो अभिपौंस्यं रणम् ॥ अवृश्चिदद्रिमव सस्यदः सृजदस्तभ्नान्नाकं स्वपस्यया पृथुम् ॥" अत्र चतुर्वेदस्वामिकृतभाष्यम्—यः परमेश्वरो जज्ञानः प्रादुर्भूतमात्रो मायया बालदशां स्वीकुर्वाणोऽपि सन् स्पृधः स्पर्धां कृतवतः शत्रून्पूतनादीन् कंसान्तान् व्यबाधत बाधितवान् । न केवलं दैत्यानपि तु शक्रादीनां गर्वमपीत्याह । योऽद्रिं पर्वतं गोवर्धनमवृश्चिदुद्दधार । किमुदिश्य । सस्यदो धान्यदातॄन्मेघाननवरतं वर्षमाणानवसृजत् विसर्जितवान् । तेन पृथुं सामर्थ्यवन्तं नाकमिन्द्रलोकं स्वपस्यया मायया अस्तभ्नात् स्तम्भितवान् स्तम्भितशक्तिमकरोत् । अथ यौवनदशायामप्यभिपौंस्यं सर्वपुरुषार्थसाधकं रणं कुरुपाण्डवसंग्रामं वीरोऽपि सन्नपश्यत् ताटस्थ्येन दृष्टवान्न तु स्वयं युयुधे । अत्र वीरपदेन भीष्मपराभूतस्वभक्तपक्षपातादशस्त्रोपि शस्त्रमग्रहीदिति सूचितम् । अथ कंसादिवधार्थं गोकुलान्मथुरामागच्छतोः कृष्णरामयोश्चरितशंसनी श्रुतिस्तैत्तिरीयकब्राह्मणे । ऋग्द्वयम्—"द्वे विरूपे चरतः स्वर्थे अन्यान्या वत्समुपधापयेते ॥ हरिरन्यस्यां भवति स्वभावाञ्छुक्रो अन्यस्यां ददृशे सुवर्चाः ॥ १ ॥ पूर्वापरं चरतो माययैतौ शिशू क्रीडन्तौ परियातो अध्वरम् ॥ विश्वान्यन्यो भुवनानि चष्ट ऋतूनन्यो विदधज्जायते पुनः ॥ २ ॥" भाष्यम्—धनुर्यागोत्सवव्याजेन कृष्णरामयोरानयनार्थं कंसेन प्रेषितः सुष्ठु वर्चो यस्यासौ सुवर्चा अक्रूरश्चरतो विचरतो द्वे विसदृशे रूपे विरूपे ददृशे दृष्टवान् । किंभूते स्वर्थे सुष्ठु अर्थः

प्रयोजनं ययोस्ते । न हि नृसिंहवदेकस्यां मूर्तौ किं तु अन्या अन्या पृथगवस्थिते । पुनः किंभूते वत्सम् उपधापयेते । वत्समिति जात्यभिप्रायेणैकवचनम् । तेन गोसंदोहनावसरे स्वसमीपे वर्तमानैर्गोपैः कृत्वा वत्सान् धापयेते पाययेते अथ विसदृशरूपत्वमेवाह—हरिरिति । अन्यस्यामन्यतमस्यां मूर्तौ हरिद्वर्णत्वाद्धरिः मेघश्यामः कृष्णोऽस्ति तथा अन्यस्यां शुक्रो गौरवर्णो बलदेवोऽस्ति । किंभूतो हरिः स्वभावान् स्वस्य भा स्वभा तद्वान् अलुप्तनिजैश्वर्यवानित्यर्थः । किंभूते रूपे पूर्वापरं चरतः प्रागपरं परिसरणं कुरुतः । परं तु न प्राकृताविन्याह । एतौ कृष्णरामौ मायया कृत्वा शिशू बाल्यदशां प्राप्तौ परमार्थतो विचार्यमाणे वयोऽवस्थारहितौ एवं माययैव रजकवधादिभिः क्रीडन्तौ सन्तौ अध्वरं धनुर्यागस्थानं प्रति परिपततः समन्ततः कुवलयापीडकंसचाणूरादिस्थानानि यातः जग्मतुः । अथ पूर्वं विरूप इत्यनेनाकारतो विसदृशत्वं द्योतितमिदानीं सामर्थ्यतोऽप्याह—अन्य इति । अन्यः कृष्णः विश्वानि सर्वाणि भुवनानि भूर्भुवःस्वरादीनि विचष्टे संकल्पेनैव ज्ञातवान् तथान्यो बलदेवः ऋतून् गर्भान्मत्स्याद्यवतारान् विदधद्वहन् सन् पुनः पुनर्जायते आविर्भवतीति । एवमुभयसेनासंनाहसंनिवेशे आचार्यगोत्रि सुहृद्वधाशङ्कया 'कुलक्षयकृतं दोषं' तथा 'आचार्यान्मातुलान् भ्रातॄन्' इत्यादिवाक्यैर्निर्विण्णं, तथा नित्यानित्यवस्तुविवेकेनैव स्वचरणशरणं, तथा 'अपि त्रैलोक्यराज्यस्य' इत्यादिनेहामुत्रार्थफलभोगविरागवन्तं, तथा 'शिष्यस्तेऽहं शाधि माम्' इति गुरुदैवतवाक्यविश्वासेनैव मुमुक्षाजुषमर्जुनं प्रति वर्णधर्मोचितकर्मोपदेशावसरे 'न काङ्क्षे विजयं कृष्ण' इति, तथा 'एतान्न हन्तुमिच्छामि घ्नतोऽपि' इति, 'श्रेयो भोक्तुं भैक्ष्यमपि' इत्यादिपार्थवाक्यश्रवणात्तमुत्पन्नवैराग्यतया ज्ञानाधिकारिणमवेक्ष्य स्वरूपमप्युपदिष्टवान् । तत्र द्वया ह प्राजापत्यादिबृहदारण्यकोपक्रान्तदैवासुरप्रज्ञानानुसारं व्यासदेवोपि धृतराष्ट्रसञ्जययोः प्रश्नोत्तरपूर्वकं गीताशास्त्रोपक्रममप्यकार्षीत्—धर्मक्षेत्रइत्यादितः । अत्र पूर्वप्रसंगस्तु युद्धोपक्रमे कृष्णार्जुनसंवादावसरे व्यासानुग्रहलब्धदिव्यश्रवणप्रज्ञोत्कर्षः सञ्जयः साक्षात्कृष्णमुखोद्गतानि पद्यानि शृण्वन् हृदि संगृहीतसकलवाक्यसंदर्भः केनचित्कार्येण हास्तिनपुरं प्रत्यागतस्तं धृतराष्ट्रः पृच्छति स्म । तदुक्तं भीष्मपर्वणि—'अथ गावल्गणिर्धीमान् संगरादेत्य सञ्जयः । प्रत्यक्षदर्शी सर्वस्य भूतभव्यभविष्यतः ॥ ध्यायते धृतराष्ट्राय समुपेत्यैबमब्रवीद्' इति । धर्मक्षेत्रे तत्र त्यक्तजीवितानां सद्गतिप्रदे कुरुक्षेत्रे युयुत्सवो योद्धुमिच्छन्तः समवेता मिलिता मामका मत्पुत्राः पाण्डवाश्च किमकुर्वत किं कृतवन्तस्तदाचक्ष्वेति पृष्टः ॥ १ ॥

## राघवेन्द्रविवृतिः ( अर्थसंग्रहः–मध्वसंप्रदायिनी ) टीका

श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः । 'लक्ष्मीनारायणं नत्वा पूर्णबोधान्गुरूनपि । कुर्मः श्रीकृष्णगीताया भाष्याद्युक्तार्थसंग्रहम् ॥ स्त्रीशूद्रब्रह्मबन्धूनां त्रयी न श्रुतिगोचरा । इतिभारतमाख्यानं कृपया मुनिना कृतम्' इति भागवतोक्त्या वेदार्थज्ञानानधिकारिणां स्त्रीशूद्रादीनां धर्मज्ञानद्वारा मोक्षोभवेदिति भगवान्वेदव्यासः संभवसभारण्यविराटोद्योगभीष्मद्रोणकर्णशल्यसौप्तिकस्त्रीशान्त्यानुशासनिकाश्वमेधिकाश्रमवासिमौसलमहाप्रस्थानस्वर्गारोहणभविष्यत्पर्वभेदेनाष्टादशपर्वात्मकं भारतं कृत्वा तत्र भीष्मपर्वणि भारतपारिजातमधुभूतां सर्वभारतार्थसंग्रहभूतां श्रीकृष्णार्जुनसंवादरूपां भगवद्गीतां निबबन्ध । तत्र पूर्वषट्के ज्ञानोपायोक्तिः । द्वितीयषट्के साधनोक्तिः । तृतीयषट्के प्रागुक्तस्य प्रपञ्चनं क्रियत इति विवेकः । तत्राद्याध्यायो द्वितीये कतिपयश्लोकाश्च कृष्णेनार्जुनबोधने प्रसक्तिसंपादनाय प्रवृत्ताः । तत्रायमर्थः धृतराष्ट्र उवाच । किमित्याह—धर्मेति । धर्मसाधनभूमौ कुरुक्षेत्रे युयुत्सवः युद्धमिच्छन्त एव समवेता मिलिताः सन्तो मामकाः मदीयाः दुर्योधनादयः पाण्डवाश्च हे संजय ! किमकुर्वतेति इतिशब्दो योज्यः । पाण्डवानां भगवत्प्रियत्वं सर्वसाक्षिकमप्यजानन्धृतराष्ट्रः स्वपुत्राणां विजयविविदिषया सञ्जयं पप्रच्छेत्यर्थः ॥ १ ॥

**सञ्जय उवाच—दृष्ट्वा तु पाण्डवानीकं व्यूढं दुर्योधनस्तदा ॥**
**आचार्यमुपसंगम्य राजा वचनमब्रवीत् ॥ २ ॥**

**त० टी०**—एवं पुत्रस्नेहनिबद्धहृदयस्य भगवन्मायाभिभूतस्यान्धमात्रस्य धृतराष्ट्रस्य प्रश्ने विदिताभिप्रायस्य सञ्जयस्योत्तरमवतारयति वैशम्पायनः । सञ्जय उवाच—दृष्ट्वेति । पाण्डुपुत्राणामनीकं सैन्यं व्यूढं धृष्टद्युम्नादिभिर्व्यूहरचनया स्थापितं राजा दुर्योधनो दृष्ट्वा आचार्यं धनुर्विद्योपदेष्टारमुपसंगम्य तत्समीपं गत्वा वचनमब्रवीत् । एतेन पाण्डवसैन्यदर्शनजन्यं भयं सूचितम् ॥ २ ॥

**म० टी०**—एवं कृपालोकव्यवहारनेत्राभ्यामपि हीनतया महतोन्धस्य पुत्रस्नेहमात्राभिनिविष्टस्य धृतराष्ट्रस्य प्रश्ने विदिताभिप्रायस्य सञ्जयस्यातिधार्मिकस्य प्रतिवचनमवतारयति वैशम्पायनः तत्र पाण्डवानां दृष्टभयसंभावनापि नास्ति अदृष्टभयं तु भ्रान्त्यार्जुनस्योत्पन्नं भगवतोपशमितमिति पाण्डवानामुत्कर्षस्तुशब्देन द्योत्यते स्वपुत्रकृतराज्यप्रत्यर्पणशङ्कया तु माग्लासीरिति राजानं तोषयितुं दुर्योधनदौष्ट्यमेव प्रथमतो वर्णयति—दृष्ट्वेति । पाण्डवसुतानामनीकं सैन्यं व्यूढं व्यूहरचनया धृष्टद्युम्नादिभिः स्थापितं दृष्ट्वा चाक्षुषज्ञानेन विषयीकृत्य तदा संग्रामोद्यमकाले आचार्यं द्रोणनामानं धनुर्विद्यासम्प्रदायप्रवर्तयितारं उपसंगम्य स्वयमेव तत्समीपं गत्वा नतु स्वसमीपमाहूय । एतेन पाण्डवसैन्यदर्शनजनितं भयं सूच्यते । भयेन स्वरक्षार्थं तत्समीपगमनेपि आचार्यगौरवव्याजेन भयसंगोपनं राजनीतिकुशलत्वादित्याह—राजेति । आचार्यं दुर्योधनोऽब्रवीदित्येतावतैव निर्वाहे वचनपदं संक्षिप्तबह्वर्थत्वादिबहुगुणविशिष्टे वाक्यविशेषे संक्रमितं वचनमात्रमेवाब्रवीन्नतु कञ्चिदर्थमिति वा ॥ २ ॥

**शं० टी०**—पक्षस्तृतीय एव सिद्ध इति सञ्जय उवाच—दृष्ट्वा तु पाण्डवानीकमिति । राजा दुर्योधनस्तदा युद्धसन्नाहकाले व्यूढं व्यूहाकारतामापन्नं पाडवानामनीकं बलं दृष्ट्वा धनुर्विद्याचार्यं द्रोणमुपसङ्गम्य पाण्डवबलोत्कर्षवर्णनेन स्वबलस्य शौर्यबलपौरुषोत्साहोद्रेकं संपादयितुमिच्छयेदं वचनमब्रवीत् ॥ २ ॥

**श्री० टी०**—दृष्ट्वेति । पाण्डवानामनीकं सैन्यं व्यूढं व्यूहरचनया व्यवस्थितं दृष्ट्वा द्रोणाचार्यसमीपं गत्वा राजा दुर्योधनो वक्ष्यमाणं वाक्यमुवाच ॥ २ ॥

**स० टी०**—ममत्वाभिनिविष्टस्य प्रश्नं श्रुत्वा नृपस्य सः ॥ उवाच सञ्जयो वाक्यं दिव्यदृष्ट्या समन्वितः ॥ १ ॥ पाण्डवानां च निर्दौष्ट्यं दौष्ट्यं दुर्योधनस्य च ॥ पाण्डवोत्कर्षता चैव द्योत्यतेऽत्र तु शब्दतः ॥ २ ॥ सैन्यं पाण्डुसुतानां तु दृष्ट्वा दुर्योधनो नृपः ॥ व्यूढं च कृतविन्यासविशेषं शास्त्रदृष्टितः ॥ ३ ॥ संग्रामावसरे द्रोणमाचार्यं भीतमानसः ॥ गत्वा तदन्तिके वाक्यमवदद्राजनीतिवित् ॥ ४ ॥ पाण्डवेषु स्वशिष्येषु प्रियेष्वत्यन्तरागतः ॥ न करिष्यति संग्राममिति बुद्धौ निधाय च ॥ ५ ॥ २ ॥

**भा० टी०**—एवं पृष्टः सञ्जयोऽर्जुनो वीरशिरोमणिरतिकारुणिको युद्धाद्धिंसाप्रधानान्निवृत्तः पुनर्भूभारसञ्जिहीर्षुणा श्रीकृष्णेनोपदिष्टो युद्धं कृतवान् । युधिष्ठिरादयस्तु 'आततायिनमायान्तं हन्यादेवाविचारयन्' इत्यादिक्षत्रधर्मविदस्तत्कृतवन्तः । त्वदीयास्तु क्रूरस्वभावादेवेत्याशयेनाक्षेपं प्रतिक्षिपन् प्रश्नस्योत्तरमाह—दृष्ट्वेत्यादि । तु शब्दः आक्षेपनिरासार्थः । पाण्डवानां सैन्यं व्यूहरचया व्यवस्थितमवलोक्य दुर्योधनो द्रोणाचार्यसमीपं प्रणिपातादिपुरःसरं गत्वा राजनीतिगर्भं वाक्यमब्रवीत् नन्वाचार्यं स्वसमीप आहूय कुतो नोक्तवानित्यत आह—राजेति । वीरपुरुषा अत्यादरेण युद्धे प्रवर्त्या इति राजनीतिकुशल इत्यर्थः । आचार्यमुपसंगम्येत्यनेन दुर्योधनस्य भयोद्विग्नता सूचिता भयोद्विग्नहृदयत्वेपि वचनमर्थसहितं वाक्यमुक्तवानिति सूचनार्थं राजेत्येके यत्तु तत्र पाण्डवानां दृष्टभयसंभावना नास्ति । अदृष्टभयं तु भ्रान्त्या अर्जुनस्योत्पन्नं भगवतोपशमितमिति पाण्डवानामुत्कर्षः तुशब्देन द्योत्यते । स्वपुत्रकृतराज्यसमर्पणशङ्कया तु मा ग्लासीरिति राजानं तोषयितुं दुर्योधनदौष्ट्यमेव प्रथमतो वर्णयति दृष्ट्वेतीति केचित् । तत्तु पूर्वोक्तग्रन्थविरोधादुपेक्ष्यम् ॥ २ ॥

प० टी०–राजा दुर्योधनः पाण्डवानीकं तत्सैन्यं व्यूढं व्यूहरचनया स्थितं दृष्ट्वाचार्यं द्रोणमुपसंगम्य वचनमब्रवीत् ॥ २ ॥

रा० टी०–धृतराष्ट्रप्रश्नस्य सञ्जय उत्तरमुक्तवानित्याह वैशम्पायनो जनमेजयं प्रति संजयउवाचेत्यादिनवभिः श्लोकैः दुर्योधनकृतव्यापारमाह–दृष्ट्वेत्यादिना। दुर्योधनस्तु राजा तदा युद्धार्थं मिलितसमये व्यूढं व्यूहात्मना रचितं पाण्डवसैन्यं दृष्ट्वा तु दृष्ट्वेवेति वा तोरन्वयः। द्रोणाचार्यसमीपमागत्य वचनमुवाच ॥ २ ॥

**पश्यैतां पाण्डुपुत्राणामाचार्य महतीं चमूम् ॥**
**व्यूढां द्रुपदपुत्रेण तव शिष्येण धीमता ॥ ३ ॥**

त० टी०–आचार्यस्यामर्षं जनयितुं तावत्पाण्डवसैन्योत्कर्षमाह–पश्यैतामिति। भो आचार्य! एतां पाण्डुपुत्राणां महतीं चमूं व्यूढां पश्य। युद्धार्थमागतानां युक्तमेव चमूव्यूहरचनमिति चेत्तत्रोक्तमाचार्येति। त्वदाश्रितास्मदुद्योगमप्रतीक्ष्यादावेवोद्युक्ता इति तद्धार्ष्ट्यं पश्येति भावः। ननु तेषामपि मच्छिष्यत्वाज्ज्येष्ठत्वादिगुणवत्त्वाच्च युक्तः प्रथमं तदुद्योग इति चेत्तत्राह–द्रुपदपुत्रेणेति। द्रुपदस्य तव शत्रोः पुत्रेण व्यूढां व्यूहरचनया स्थापितां अतस्त्वया न क्षम्यतामिति भावः। प्रबलेन शत्रुपुत्रेण सेनापतिना सह न सहसा योद्धव्यमिति चेत्तत्राह–तव शिष्येणेति। नहि गुरोरधिकः शिष्यो भवति। एवं चेत्ततः का शङ्का तत्राह–धीमतेति। तव मारणे कृतमतिनेत्यतोनोपेक्षणीय इत्यभिप्रायः। एतेन धर्मक्षेत्रगतस्यापि तव पुत्रस्य धर्मबुद्धिर्नोत्पन्ना। सर्पस्य पयःपानेऽपि न क्रोधहानिः प्रत्युत विषवृद्धिरेव भवति तद्वत्। तस्मात्तद्राज्यप्रत्यर्पणशङ्का त्वया न कार्येति भावः ॥ ३ ॥

म० टी०–तदेव वाक्यविशेषरूपं वचनमुदाहरति–पश्यैतामित्यादिना। तस्य संजनयन्हर्षमित्यतः प्राक्तनेन पाण्डवेषु प्रियशिष्येष्वतिस्निग्धहृदयत्वादाचार्यो युद्धं न करिष्यतीति सम्भाव्य तस्मिन्परेषामवज्ञां विज्ञापयन् तस्य क्रोधातिशयमुत्पादयितुमाह–एतामत्यासन्नत्वेन भवद्विधानपि महानुभावानवगणय्य भयशून्यत्वेन स्थितां पाण्डुपुत्राणां चमूं महतीमनेकाक्षौहिणीसहितत्वेन दुर्निवारां पश्यापरोक्षीकुरु। प्रार्थनायां लोट्। अहं शिष्यत्वात्त्वामाचार्यं प्रार्थयामीत्याह–आचार्येति। दृष्ट्वा च तत्कृतामवज्ञां स्वयमेव ज्ञास्यसीतिभावः। ननु तदीयावज्ञा सोढव्यास्माभिः प्रतिकर्तुमशक्यत्वादित्याशङ्क्य तन्निरसनं तव सुकरमेवेत्याह–व्यूढां तवशिष्येणेति। शिष्यापेक्षया गुरोराधिक्यं सर्वसिद्धमेव। व्यूढां तु धृष्टद्युम्नेनेत्यनुक्त्वा द्रुपदपुत्रेणेति कथनं द्रुपदपूर्ववैरसूचनेन क्रोधोद्दीपनार्थम्। धीमतेति पदमनुपेक्षणीयत्वसूचनार्थं। व्यासंगान्तरनिराकरणेन त्वरातिशयार्थं पश्येति प्रार्थनम्। अन्यच्च हे पाण्डुपुत्राणामाचार्य! नतु मम तेषु स्नेहातिशयात्। द्रुपदपुत्रेण तव शिष्येणेति त्वद्वधार्थमुत्पन्नोऽपि त्वयाध्यापित इति तव मौढ्यमेव ममानर्थकारणमिति सूचयति। शत्रोरपि सकाशात्तद्वधोपायभूता विद्या गृहीतेति तस्य धीमत्त्वम्। अतएव तच्चमूदर्शनेनानन्दस्तवैव भविष्यति भ्रान्तत्वात् नान्यस्य कस्यचिदपि यं प्रतीयं प्रदर्शनीयेति त्वमेवैतां पश्येत्याचार्यप्रति तत्सैन्यं प्रदर्शयन्निगूढं द्वेषं द्योतयति एवंच यस्य धर्मक्षेत्रं प्राप्यापीदृशी दुष्टबुद्धिस्तस्य कानुतापशङ्का सर्वाभिशङ्कित्वेनातिदुष्टाशयत्वादितिभावः ॥ ३ ॥

शं० टी०–उवाच मधुसूदन इत्यत्र श्रीभगवानुवाचेति यथा तथाऽत्रापि दुर्योधनउवाचेति निवेशनीयं परं तथा पाठो न दृश्यते तत्प्रामादिकम्। पश्यैतामिति। हे आचार्य! धीमता सूक्ष्मबुद्धिना तव शिष्येणेति गूढाभिसन्धीदं वचनं द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां शकटपद्माद्याकारेण संभावितामतएव महतीं

द्रष्टॄणां स्तोत्रार्हां पाण्डुपुत्राणां चमूं सेनामेतामदूरवर्तिनीं पश्य योद्धृतेजोबलपौरुषसन्नाहसमुज्जृम्भित विलोकयेत्यर्थः ॥ ३ ॥

**श्री० टी०**–तदेव वाक्यमाह–**पश्यैता**मित्यादिनवभिः श्लोकैः । भो आचार्य ! पाण्डवानां वितता चमूं सेनां पश्य । द्रुपदपुत्रेण धृष्टद्युम्नेन व्यूढां व्यूहरचनया अधिष्ठिताम् ॥ ३ ॥

**स० टी०**–तस्य तेषु यथावज्ञा क्रोधाधिक्यं भवेद्यथा ॥ तथोवाच स पश्येत्यारभ्य श्लोकैस्त्रिभिस्त्रिकैः ॥ १ ॥ अत्यासन्नामिमां सेनामनेकाक्षौहिणीयुताम् ॥ पश्य पाण्डुसुतानां त्वमाचार्यपरमास्त्रवित् ॥ २ ॥ त्वद्वधार्थं प्रजातेन धृष्टद्युम्नेन धीमता ॥ व्यूहनिर्माणतः सम्यक् स्थापिता वैरिणा तव ॥ ३ ॥ अथवा पाण्डुपुत्राणां गुरो पश्यातिरागवान् ॥ यतस्तेषु त्वामित्येवं हार्दं दुर्योधनस्य च ॥ ४ ॥ यस्य प्राप्य कुरुक्षेत्रमाचार्येऽपीदृशी मतिः ॥ किमुवाच्य भवेत्तस्य दौष्ट्यमाहात्म्यमद्भुतम् ॥ ५ ॥ ३ ॥

**भा० टी०**–तदेवोदाहरति–**पश्ये**त्यादिना । एतां भवदादीनतिरथानपरिगणय्य सम्मुखे स्थितां पाण्डुपुत्राणां युधिष्ठिरादीनां चमूं सेनां महतीमनेकाऽक्षौहिणीयुक्तामक्षोभ्यां द्रुपदस्य पुत्रेण धृष्टद्युम्नेन तव शिष्येण बुद्धिमता व्यूढां व्यूहरचनया स्थापितां पश्य । हे आचार्य ! उभयेषामाचार्यस्यापि तव पाण्डवेषु प्रीतिर्न युक्ता यतस्त्वामपरिगणय्य तव संमुखे महती सेना तैः स्थापितेत्याशयः । द्रुपदपुत्रेण तव शिष्येणेति पदद्वयेन द्रुपदपुत्रस्य स्वमृत्योरपि त्वया शिक्षणं कृतमिति मृत्योरपि तव भयं नास्तीति सूचितम् । एतेन स्वमृत्युना सह मया कथं योद्धव्यमिति शङ्कापि परिहृता । शिक्षितमपि मूर्खैण विस्मर्यते इति शङ्कानिरासाय धीमतेत्युक्तं । परपक्षेपि त्वदीयमेव बलमिति सूचयन्नाचार्यस्य तन्निरसनमतिसुकरमिति मन्वानः सन्नाह–व्यूढामित्यादिनेत्येके । द्रुपदपुत्रेणेति कथनं द्रुपदपूर्ववैरसूचनेन क्रोधोद्दीपनार्थं । धीमतेत्यनुपेक्षणीयत्वसूचनार्थम् । पश्येति व्यासंगान्तरनिराकरणेन त्वरातिशयार्थम् । अन्यच्च राजा अवचनमब्रवीत् हे पाण्डुपुत्राणामाचार्य ! न तु मम । तेषु स्नेहाधिक्यात् । द्रुपदपुत्रेण तव शिष्येणेति त्वद्वधार्थमुत्पन्नोपि त्वयाऽध्यापित इति तव मौढ्यमेव ममानर्थकारणमिति सूचयति । शत्रोरपि सकाशात्तद्वधोपायभूता विद्या- गृहीतेति तस्य धीमत्त्वमत एव तच्चमूदर्शनेनानन्दस्तवैव भविष्यति भ्रान्तत्वान्नान्यस्य कस्यचिदपि यं प्रति प्रदर्शनीयेति त्वमेवैतां पश्येत्याचार्यं प्रति निगूढं द्वेषं द्योतयति । एवं च यस्य धर्मक्षेत्रेऽपीदृग्दुष्टबुद्धिस्तस्य कानुतापशङ्केति भाव इति केचित् । अन्यच्चेत्यारभ्य युद्धार्थं प्रार्थनां कुर्वतो दुर्योधनस्य प्रणिपातादिपुरःसरं आचार्यसमीपं गतस्यात्मनः शिक्षितारं रक्षितारं च प्रत्येवमभिप्रायवर्णनं प्रकृतासंगतं नवेति विद्वद्भिर्निर्मत्सरैः पक्षपातवर्जितैर्विचार्यम् । अनुतापशङ्का तु मूलविरुद्धेति तु पूर्वमुक्तमेव । नन्वनेन कृतं प्रतारणं बुद्ध्वैवाचार्येणोत्तरं न दत्तमिति चेन्न । आचार्याभाषणस्य प्रकृतविरुद्धार्थकल्पनां विनैव वक्ष्यमाणरीत्योपपत्तौ तत्कल्पनाया अन्याय्यत्वात् ॥ ३ ॥

**प० टी०**–आचार्य ! महतीं पर्याप्तवेलां पाण्डुपुत्राणां चमूं सेनां पश्य न केवलं सैन्यबाहुल्यमुपयुज्यत इत्याह–व्युढामिति । द्रुपदपुत्रेण धृष्टद्युम्नेन धीमता संनिवेशचतुरेण तत्रापि तव शिष्येण व्यूहरचनया संनिविष्टाम् ॥ ३ ॥

**रा० टी०**–तद्वचनमेवानुवदति सञ्जयः–**पश्यैता**मित्यादिना । हे आचार्य ! तव शिष्येण धीमता धृष्टद्युम्नेन व्यूढां पाण्डुपुत्राणां एतां महतीं चमूं सेनां पश्य ॥ ३ ॥

**अत्र शूरा महेष्वासा भीमार्जुनसमा युधि ॥**
**युयुधानो विराटश्च द्रुपदश्च महारथः ॥ ४ ॥**

**त० टी०**–स्यादेतत्तथाप्येकेन द्रुपदपुत्रेणाधिष्ठितां तेषां चमूमस्मन्मध्ये कश्चिदेकोऽपि जेष्यति, न त्वया तदजेयत्वशङ्का कार्येति चेन्नैक इत्याह–**अत्र शूरा** इत्यादित्रिभिः । अत्रास्यां पाण्डवचम्वामन्येऽपि शूराः सन्ति अतो नैकेन जेतुं शक्या तेषां चमूः । शूरान्विशिष्याह–**महेष्वासा** इति । महान्त इष्वासा धनूंषि येषां ते तथा । किञ्च नाल्पयुद्धकौशलाः किन्तु युधि भीमार्जुनसमाः । तान्निर्दिशति–**युयुधान** इत्यादिना । युयुधानः सात्यकिः । महारथ इति त्रयाणां विशेषणम् ॥ ४ ॥

**म० टी०**–नन्वेकेन द्रुपदपुत्रेणाप्रसिद्धेनाधिष्ठितां चमूमेतां मदीयो यः कश्चिदपि जेष्यति किमिति त्वमुत्ताम्यसीत्यत आह--**अत्र शूरा** इत्यादिभिस्त्रिभिः । न केवलमत्र धृष्टद्युम्न एव शूरः येनोपेक्षणीयता स्यात् । किन्तु अस्यां चम्वां अन्येऽपि बहवः शूराः सन्तीत्यवश्यमेव तज्जये यतनीयमित्यभिप्रायः । शूरानेव विशिनष्टि महेष्वासा इति । महान्तोऽन्यैरप्रधृष्या इष्वासा धनूंषि येषां ते तथा दूरत एव परसैन्यविद्रावणकुशला इति भावः । महाधनुरादिमत्त्वेपि युद्धकौशलाभावमाशङ्क्याह–युधि युद्धे भीमार्जुनाभ्यां सर्वसम्प्रतिपन्नपराक्रमाभ्यां समास्तुल्याः । तानेवाह–**युयुधान** इत्यादिना । महारथ इत्यन्तेन युयुधानः सात्यकिः द्रुपदश्च महारथ इत्येकः अथवा युयुधानविराटद्रुपदानां विशेषणं महारथ इति ॥ ४ ॥

**श्री० टी०**–योद्धृतेजोबलपौरुषसन्नाहमेव प्रकटयति त्रिभिः–**अत्रेति** । अत्र पाण्डवसेनायां ये योद्धारस्ते सर्वे शूराः । विक्रान्तानपि शृणन्तीति शूराः । महेष्वासाः इषवोऽस्यन्ते क्षिप्यन्ते एभिरितीष्वासाः कोदण्डाः महान्तो येषां ते महेष्वासाः । युधि भीमार्जुनसमाः बलेन पराक्रमेण च भीमार्जुनाभ्यां समाः सर्वे तुल्या इत्यर्थः । के ते इत्याकाङ्क्षायां तानेव नाम्ना निर्दिशति–**युयुधानइत्यादिना** । अतिशयेन युद्ध्यतीति युयुधानः सात्यकिः । शत्रून् विशेषेण रटयतीति विराटः । द्रुर्वृक्षः पदं ध्वजे चिह्नं यस्य स द्रुपदो महारथः । ‘ एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ’ इति वचनाद्द्रुपदो महारथः ॥ ४ ॥

**श्री० टी०**–**अत्र शूरा इति** । अत्रास्यां चम्वामिषवो बाणा अस्यन्ते क्षिप्यन्ते एभिरिति इष्वासाः धनूंषि, महान्त इष्वासा येषां ते तथा । भीमार्जुनौ तावदत्रातिप्रसिद्धौ योद्धारौ ताभ्यां समाः शूराः शौर्येण क्षात्रधर्मेण उपेताः सन्ति तानेव नामभिर्निर्दिशति । युयुधानः सात्यकिः ॥ ४ ॥

**स० टी०**–एकेन धृष्टद्युम्नेनाप्रसिद्धेनाश्रितां चमूम् ॥ अस्मदीयोऽपि यः कश्चिज्जेष्यतीति न तर्क्यताम् ॥ १ ॥ यतोऽस्यां शत्रुसेनायां शूरा दृढधनुर्धराः । युद्धे भीमार्जुनाभ्यां ये तुल्याः सङ्ग्रामदुःसहाः ॥ २ ॥ सात्यक्यादित्रयोऽप्येते भीष्म प्रोक्ता महारथाः ॥ ३ ॥ ४ ॥

**भा० टी०**–शत्रुसैन्ये प्रसिद्धान् शूरान्दर्शयन्नुपेक्षणीयत्वं वारयति–**अत्रेति** । महान्त इष्वासा धनूंषि येषां ते । तेषां युद्धाकुशलतां निरस्यति–युधीति । युद्धे भीमार्जुनसमा इति भीमार्जुनाभ्यां तुल्याः । युयुधानः सात्यकिः । महारथ इति सन्निहितस्य द्रुपदस्यैव विशेषणमेकवचनस्वारस्यात् एवमग्रेपि बोध्यं । एतेन युयुधानादीनां महारथ इति विशेषणम् ॥ ४ ॥

**प० टी०**–अत्रास्यां चम्वां शूराः पराक्रमवन्तः महेष्वासाः महान्त इषवो बाणा अस्यन्ते क्षिप्यन्ते यैस्ते तथाविधाः सन्तो युधि सङ्ग्रामे भीमार्जुनसमास्तत्सदृशबलाः सन्ति । अथ तानेवाह–**युयुधान इति** । युयुधानः सात्यकिः विराटस्तथा द्रुपदो द्रौपदीपिता ॥ ४ ॥

**रा० टी०**–अत्र सेनायां महेष्वासाः महाधनुष्काः युधि भीमार्जुनसमाः शूराः सन्ति ते क इत्यतआह–**युयुधान** इत्यादिना । महारथइति प्रत्येकमन्वेति ॥ ४ ॥

धृष्टकेतुश्चेकितानः काशिराजश्च वीर्यवान् ॥
पुरुजित्कुन्तिभोजश्च शैब्यश्च नरपुङ्गवः ॥ ५ ॥

**त० टी०**–धृष्टकेतुः शिशुपालपुत्रः। चेकितानोऽन्यो राजा। काशिराजः प्रसिद्धः। तेषां त्रयाणां विशेषणं वीर्यवानिति। कुन्तिभोजस्य पुरुजिदिति विशेषणम्। शैब्यस्य नरपुङ्गव इति ॥ ५ ॥

**म० टी०**–धृष्टकेतुचेकितानकाशिराजानां विशेषणं वीर्यवानिति। पुरुजित्कुन्तिभोजशैब्यानां विशेषणं नरपुङ्गव इति ॥ ५ ॥

**शं० टी०**–धृष्टकेतुरिति। धृष्टः परभयङ्करः केतुरस्येति धृष्टकेतुः राजविशेषः। चिकितानस्यापत्यं चेकितानो वीर्यवान राजविशेषः। युद्धे पूरून् बहून् जयतीति पुरुजित् कुन्तिभोज : कुन्तीपिता। शिबेर्गोत्रापत्यं शैब्यो राजविशेषः स एव नरपुङ्गवः ॥ ५ ॥

**श्री० टी०**–किञ्च–धृष्टकेतुरिति। चेकितानो नाम एको राजा। नरपुङ्गवः नरश्रेष्ठः शैब्यः ॥ ५ ॥

**स०टी०**–वीर्यवन्तस्त्रयश्चान्ये धृष्टकेतुमुखा नृपाः॥ पुरुजित्प्रमुखाश्चान्ये त्रयोऽपि नरपुङ्गवाः ॥ १ ॥ ५ ॥

**भा० टी०**–धृष्टकेत्वादीनां वीर्यवानिति पुरुजिदादीनां नरपुङ्गव इति पक्षान्तरं प्रत्युक्तम्। आवृत्तेश्च प्रयोजनशून्यगौरवग्रस्तत्वेनाङ्गीकारायोगात्। यदपि अथवा सर्वाणि विशेषणानि समुच्चित्य सर्वत्र योजनीयानीति। तदपि न। महारथ इत्यस्य वीर्यवानित्यस्य च पौनरुक्त्यापत्तेः ॥ ५ ॥

**प० टी०**–चेकितानो राजा कश्चित् स नरपुङ्गवो नरश्रेष्ठः ॥ ५ ॥

**रा० टी०**–वीर्यवानिति विशेषणम्। नरपुङ्गवो नरश्रेष्ठ इत्यपि त्रयाणाम् ॥ ५ ॥

युधामन्युश्च विक्रान्त उत्तमौजाश्च वीर्यवान् ॥
सौभद्रो द्रौपदेयाश्च सर्व एव महारथाः ॥ ६ ॥

**त० टी०**–युधामन्योर्विक्रान्त इति। उत्तमौजसो वीर्यवानिति। सौभद्रोऽभिमन्युः। द्रौपदेयाः प्रतिविन्ध्यादयः पञ्च। चकारादन्येऽपि घटोत्कचादयः सर्व एव महारथाः। अर्जुनादयः प्रसिद्धत्वादतिरथित्वाद्वा महारथेषु न गणिताः। रथार्धरथा अपि न गणिताः। महारथादिलक्षणं च 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः॥ अमितान्योधयेद्यस्तु सम्प्रोक्तोऽतिरथस्तु सः। रथस्त्वेकेन यो योद्धा तन्न्यूनोऽर्धरथः स्मृतः' इति ॥ ६ ॥

**म० टी०**–विक्रान्तो युधामन्युः वीर्यवांश्चोत्तमौजा इति द्वौ। अथवा सर्वाणि विशेषणानि समुच्चित्य सर्वत्र योजनीयानि। सौभद्रोऽभिमन्युः द्रौऽपदेयाश्च द्रौपदीपुत्राः प्रतिविन्ध्यादयः पञ्च। चकारादन्येपि पाण्ड्यराजघटोत्कचप्रभृतयः। पञ्च पाण्डवास्त्वतिप्रसिद्धा एवेति न गणिताः। येगणिताः सप्तदश अन्येपि तदीयाः सर्वएव महारथाः सर्वेपि महारथाएव नैकोपि रथोर्द्धरथो वा। महारथा इत्यतिरथत्वस्याप्युपलक्षणं। तल्लक्षणं च 'एको दशसहस्राणि योधयेद्यस्तु धन्विनाम्। शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः॥ अमितान्योधयेद्यस्तु सम्प्रोक्तोऽतिरथस्तु सः। रथस्त्वेकेन यो योद्धा तन्न्यूनोर्धरथः स्मृतः' इति ॥ ६ ॥

**शं० टी०**–युधामन्युरिति। युधायां युद्धे मन्युः कोपवेगो यस्य स युधामन्युः पाञ्चालः। उत्तममोजो बलं यस्य स उत्तमौजाः पाञ्चालः वीर्यवान्। सौभद्रः सुभद्रापुत्रः। तेजोबलविक्रान्तानपि शत्रून्विविधमीरयति पलाययतीति वीरस्तस्य कर्म वीर्यं तदस्यातीति वीर्यवान्। द्रौपद्याः पुत्रा द्रौपदेयाः प्रतिविन्ध्यादयश्चोक्ताः

सर्वे महारथाः । ' आत्मानं सारथिं चाश्वान् रक्षन्नक्षतमायुधैः । यो युध्यत्ययुतैर्वीरः स महारथ उच्यते ' इत्युक्तलक्षणलक्षितत्वात्सर्वेषां महारथत्वं सिद्धम् ॥ ६ ॥

**श्री० टी०**–युधामन्युश्चेति । विक्रान्तो युधामन्युर्नामैकः सौभद्रोऽभिमन्युः द्रौपदेया द्रौपद्यां पञ्चभ्यो युधिष्ठिरादिभ्यो जाताः प्रतिविन्ध्यादयः पञ्च । महारथादीनां लक्षणम्–' एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान्योधयेद्यस्तु सम्प्रोक्तोऽतिरथस्तु सः । रथी त्वेकेन यो युद्धयेत्तन्न्यूनोऽर्धरथी मतः ' इति ॥ ६ ॥

**स० टी०**–विक्रान्तोऽस्ति युधामन्युरुत्तमौजाश्च वीर्यवान् ॥ अभिमन्युस्तथा पञ्चप्रतिविन्ध्यादयस्तथा ॥ १ ॥ एते सप्तदश प्रोक्ता घटोत्कचमुखास्तथा ॥ सर्वे महारथा एव नैकोऽप्यर्धरथो रथः ॥ २ ॥ अत्यन्तसुप्रसिद्धा ये पाण्डवास्ते महारथाः ॥ एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् ॥ ३ ॥ अस्त्रशस्त्रप्रवीणश्च महारथ इति स्मृतः ॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः ॥ ४ ॥ रथस्त्वेकेन यो योद्धा तन्न्यूनोऽर्धरथः स्मृतः ॥ ५ ॥ ६ ॥

**भा० टी०**–सौभद्रः सुभद्रापुत्रोऽभिमन्युः । द्रौपदेयाः द्रुपदीपुत्राः प्रतिविन्ध्यादयः पञ्च । द्रुपदश्च महारथ इत्युक्तमयुक्तं यतोऽन्येऽपि महारथा भीष्मप्रोक्ताः सन्तीत्याशङ्क्य तदङ्गीकरोति सर्व एवेति निर्दिष्टाश्चकारपरिगृहीताश्च महारथाः । एतल्लक्षणं तु ' एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स वै प्रोक्तो महारथः ॥ अमितान्योधयेद्यस्तु संप्रोक्तोऽतिरथस्तु सः । रथस्त्वेकेन यो युध्येत्तन्न्यूनोर्धरथः स्मृतः ' इति । यद्यपि परपक्षेऽतिरथादयोपि सन्ति तथापि तत्तिरोधानं तवाऽतिरथस्य महारथानां निवारणे सामर्थ्यं नत्वन्येषां अतिरथादीनामित्याचार्यस्योत्साहजननार्थं सर्वेपि महारथा एव न त्वेकोपि रथोर्धरथो वा महारथा इत्यतिरथस्याप्युपलक्षणामिति केचित् ॥ ६ ॥

**प० टी०**–विक्रान्तः पराक्रमी युधामन्युनामकः चपरमुत्तमौजा वीर्यवानेतावर्जुनस्य चक्ररक्षकौ । उक्तंच भीष्मपर्वणि–' पृष्ठगो योऽर्जुनस्यापि युयुधानो महारथः ॥ चक्ररक्षौ च पाञ्चाल्यौ युधामन्यूत्तमौजसौ ॥ ' सौभद्रोऽभिमन्युः । द्रौपदेयाः द्रौपद्यां पञ्चभिर्जाताः पञ्च पुत्राः प्रतिविन्ध्यादयः । एवमुक्ताः सर्वे महारथाः । उक्तं च ' एको दशसहस्राणि योधयेद्यस्तु धन्विनाम् । शस्त्रशास्त्रप्रवीणश्च स महारथ उच्यते ॥ अमितान्योधयेद्यस्तु स प्रोक्तोतिरथाभिधः । एकस्त्वेकेन यो योद्धा स चार्धरथ उच्यते ' इति ॥ ६ ॥

**रा० टी०**–महारथत्वंनाम 'एको दशसहस्राणां योधयेद्यः सधन्विनाम् । शस्त्रशास्त्रप्रवीणश्च महारथ इति स्मृतः ' इत्युक्तरूपम् । विक्रान्तः पराक्रमवान् । सौभद्रः अभिमन्युः । द्रौपदेयाः द्रौपदीपुत्राः ॥ ६ ॥

## अस्माकं तु विशिष्टा ये तान्निबोध द्विजोत्तम ॥
## नायका मम सैन्यस्य संज्ञार्थं तान्ब्रवीमि ते ॥ ७ ॥

**त० टी०**–नन्वेवं परसैन्यमजेयं मन्यसे चेत्तर्हि तैः सह सन्धिरेव क्रियतां किं युद्धाग्रहेणेत्याशङ्क्याह—**अस्माकं त्विति** । तुशब्देन सर्वविद्याश्रयसर्वधनुष्मदाचार्यभूतभवद्विधाश्रयाणामस्माकं नास्ति तदजेयत्वशङ्केत्यात्मनस्तेभ्यो वैशिष्ट्यं द्योतयति । अस्माकं ये विशिष्टा विद्यापौरुषादिनोत्कर्षवन्तस्तान्निबोध यद्विश्वासविषयान् जानीहि । ये च मम सैन्यस्य नायकाः स्वाज्ञया योधयितारस्तान्संज्ञार्थमेते विशिष्टा इति नामभिस्ते तुभ्यं सम्यग्बोधनार्थं ब्रवीमि । द्विजोत्तमेतिशब्दस्य स्तुतिबोधकत्वेऽपि न योत्स्यसे चेत्तर्हि केवलं भोजनार्थं ब्राह्मणोत्तम इति गूढार्थः ॥ ७ ॥

**म० टी०**—यद्येवं परबलमतिप्रभूतं दृष्ट्वा भीतोसि हन्त तर्हि सन्धिरेव परैरिष्यतां किं विग्रहाग्रहेणे-त्याचार्याभिप्रायमाशङ्क्याह—**अस्माकमिति** । तुशब्देनान्तरुत्पन्नमपि भयं तिरोदधानो धृष्टतामात्मनो द्योतयति ।अस्माकं सर्वेषां मध्ये ये विशिष्टाः सर्वेभ्यः समुत्कर्षजुषस्तान्मयोच्यमानान्निबोध निश्चयेन मद्वचनादवधारयेति भौवादिकस्य परस्मैपदिनो बुधेरूपं। ये च मम सैन्यस्य नायका मुख्या नेतारस्तान्संज्ञार्थं असंख्येयेषु तेषु मध्ये कतिचिन्नामभिर्गृहीत्वा परिशिष्टानुपलक्षयितुं ते तुभ्यं ब्रवीमि नत्वज्ञातं किञ्चिदपि तव ज्ञापयामीति द्विजोत्तमेति विशेषणेनाचार्यं स्तुवन्स्वकार्ये तदाभिमुख्यं संपादयति । दौष्ट्यपक्षे द्विजोत्तमेति ब्राह्मणत्वात्तावद्युद्धाकुशलस्त्वं तेन त्वयि विमुखेपि भीष्मप्रभृतीनां क्षत्रियप्रवराणां सत्त्वान्नास्माकं महती क्षतिरित्यर्थः। संज्ञार्थमिति प्रियशिष्याणां पाण्डवानां चमूं दृष्ट्वा हर्षेण व्याकुलमनसस्तव स्वीयवीरविस्मृतिर्माभूदिति ममेयमुक्तिरितिभावः ॥ ७ ॥

**शं० टी०**—एवं पाण्डवसेनानेतॄन्निर्दिश्याथ स्वसेनानेतॄन्निर्दिदिक्षुरिदमाह—**अस्माकंत्विति** । अस्माकं ये तु विशिष्टा विद्याबलपौरुषपराक्रमकुलशीलादिभिः प्रसिद्धाः सैन्यस्य नायका नेतारस्तान् ते संज्ञार्थं मम परमाप्तत्वेन परिज्ञानार्थं ब्रवीमि त्वं निबोध बुद्ध्यस्व द्विजोत्तम ॥ ७ ॥

**श्री० टी०**—**अस्माकमिति** । निबोध बुद्ध्यस्व नायकाः नेतारः सञ्ज्ञार्थं सम्यग्ज्ञानार्थमित्यर्थः ॥७॥

**स० टी०**—दृष्ट्वारिसेनां भीतश्चेत्तर्हि संधिर्विधीयताम् ॥ इत्याशङ्कां स आलक्ष्य गुरोराह वचो नृपः ॥१॥ तुशब्देनान्तरुत्पन्नां भीतिमाच्छादयन्नृपः ॥ द्योतयत्यात्मनो धाष्ट्र्यं गुरोरग्रे महत्तरम् ॥ २ ॥ मध्येऽस्माकं समस्तानां ये विशिष्टगुणान्विताः ॥ तन्मया प्रोच्यमानांस्त्वं मद्वाक्यादवधारय ॥ ३ ॥ मम सैन्यस्य नेतारो ये च तांस्ते ब्रवीम्यहम् ॥ गृहीत्वा नामभिः कांश्चिच्छिष्टाञ्ज्ञापयितुं स्फुटम् ॥ ४ ॥ द्विजोत्तमेति शब्देन ब्राह्मणानामदक्षताम् ॥ सङ्ग्रामे सूचयत्येष दुष्टभावेन भूपतिः ॥ ५ ॥ संज्ञार्थमिति शब्देन प्रियशिष्यचमूं तव ॥ दृष्ट्वा हर्षवशान्मास्तु स्वीयवीरप्रविस्मृतिः ॥ ६ ॥ ७ ॥

**भा० टी०**—ननु ते बहवो महारथा मयैकेनातिरथेनापि कथं निवार्या इत्याशङ्क्यान्येपि तव सहकारिणोस्मत्सैन्ये महाशूराः सन्तीत्याह—**अस्माकमिति** । यद्येवं परकीयबलमतिप्रभूतं प्रतीत्य भीतोसि तर्हि सन्धिरेव तैरिष्यतामलं विग्रहाग्रहेणेत्याशङ्क्याह अस्माकमित्येके अस्माकं सर्वेषां मध्ये विशिष्टा उत्कृष्टा मम सैन्यस्य च मुख्यास्तान्निबोध जानीहि । असङ्ख्येषु मध्ये कतिचिन्नामभिरुक्त्वाऽवशिष्टानुपलक्षयितुं ते तुभ्यं ब्रवीमि विज्ञापनं करोमि न तु किञ्चिदज्ञातं ज्ञापयामि।अत्युत्तमत्वात्तवेत्याशयेनाह—द्विजोत्तमेति। द्विजोत्तमेति ब्राह्मणत्वाद्युद्धाकुशलस्त्वं तेन त्वयि विमुखेऽपि भीष्मप्रमुखाणां क्षत्रियप्रवराणां सत्वान्नास्माकं महती क्षतिरिति दुर्योधनदौष्ट्यमिति केचित् ॥ ७ ॥

**प० टी०**—अथ स्वकीयां सेनामाह—**अस्माकमिति** । अस्माकं सैन्ये ये विशिष्टा विवक्षिताः सन्ति तान्निबोध बुध्यस्व । मम सैन्यस्य नायका नियन्तारः ॥ ७ ॥

**रा० टी०**—**अस्माकं त्विति** । पाण्डवव्यावर्तकस्तुशब्दः । अस्माकं संबन्धिनो विशिष्टाः बलिष्ठाः मम सैन्यस्य नायकाः नेतारो ये तान्निबोध बुद्धिस्थान् जानीहि । ते तव सम्यग्ज्ञानार्थं तान्ब्रवीमि । द्विजोत्तमेत्याचार्यसंबोधनम् ॥ ७ ॥

**भवान्भीष्मश्च कर्णश्च कृपश्च समितिञ्जयः ॥**
**अश्वत्थामा विकर्णश्च सौमदत्तिस्तथैव च ॥ ८ ॥**

**त० टी०**—तानेव निर्दिशति—**भवानिति** । समितिञ्जय इति द्रोणादिकृपान्तानां चतुर्णां विशेषणम् । समितिं संग्रामं जयति तथा सः । उक्तेभ्यश्चतुर्भ्यः किञ्चिन्न्यूनान् दर्शयति—अश्वत्थामे-

**त्यादि। अश्वत्थामा गुरुपुत्रः विकर्णः स्वकनिष्ठभ्राता सौमदत्तिर्भीष्मपितृव्यस्य बाह्लीकस्य पुत्रः सोमदत्तस्तस्य पुत्रः सौमदत्तिर्भूरिश्रवाः ॥ ८ ॥**

**म० टी०**—तत्र विशिष्टान् गणयति भवान् द्रोणः भीष्मः कर्णः कृपश्च समितिं संग्रामं जयतीति समितिंजयइति कृपविशेषणं कर्णादनन्तरं गण्यमानत्वेन तस्य कोपमाशङ्क्य तन्निरासार्थं एते चत्वारः सर्वतोविशिष्टाः । नायकान् गणयति अश्वत्थामा द्रोणपुत्रः भीष्मापेक्षयाचार्यस्य प्रथमगणनवद्विकर्णाद्यपेक्षया तत्पुत्रस्य प्रथमगणनमाचार्यपरितोषार्थं । विकर्णः स्वभ्राता कनीयान् । सोमदत्तस्य पुत्रः श्रेष्ठत्वाद्भूरिश्रवाः । सिन्धुराजस्तथैव चेति क्वचित्पाठः ॥ ८ ॥

**शं० टी०**—के ते इत्यतआह द्वाभ्यां—**भवानिति** । भवान् भीष्मः कर्णः कृपः कृपाचार्यः समितिं वीराणामपि युद्धक्रियां जयतीति समितिंजयो युद्धे दुर्जयोऽश्वत्थामा विकर्णश्च सौमदत्तिः सोमदत्तस्यापत्यं भूरिश्रवाः ॥ ८ ॥

**श्री० टी०**—तानेवाह—**भवानिति** द्वाभ्याम् । भवान्द्रोणः । समितिं सङ्ग्रामं जयतीति तथा । सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः ॥ ८ ॥

**स० टी०**—के ते स्युरित्यपेक्षायां प्राह चत्वार आदरात् ॥ भवत्प्रभृतयः शूराः सर्वे सङ्ग्रामकोविदाः॥१॥ अश्वत्थामादयो ये च तेऽपि शूरा महत्तमाः ॥ २ ॥ ८ ॥

**भा० टी०**—तानेव विशिष्टान् स्वसेनानायकान् परिगणयति—**भवानित्यादिना** । समितिं संग्रामं जयतीति तथा समितिञ्जयपदं मध्यमणिन्यायेनोभयत्र संबध्यते कर्णात्पश्चात्परिगणनेन कृपाश्वत्थाम्नोः कोपो मा भूदिति तयोर्विशेषणत्वेन समितिञ्जयपदोपादानं । विकर्णः स्वभ्राता । सौमदत्तिर्भूरिश्रवाः ॥ ८ ॥

**प० टी०**—तानाह—**भवानिति** । भवान्द्रोणो भीष्मः कृपः कृपाचार्यः समितिं संग्रामं जयतीति तथा सौमदत्तिः सोमदत्तस्य पुत्रो भूरिश्रवाः ॥ ८ ॥

**रा० टी०**—तानाह द्वाभ्यां—**भवानित्यादिना** । समितिंजयः युद्धे जयशीलः सौमदत्तिः सोमदत्तसुतो भूरिश्रवाः ॥ ८ ॥

## अन्ये च बहवः शूरा मदर्थे त्यक्तजीविताः ॥
## नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदाः ॥ ९ ॥

**त० टी०**—**किमेत एव तव विशिष्टा योद्धारो नेत्याह—अन्ये चेति । अन्ये च जयद्रथशल्यप्रभृतयः मदर्थे मत्प्रयोजनाय त्यक्तजीविता जीवितं त्यक्तुं कृतनिश्चयाः । ननु त्वदर्थे त्यक्तजीविता अप्यसमर्थाश्चेत्किं कुर्युरिति चेन्नेत्याह विशेषणाभ्यां द्वाभ्याम्—नानाशस्त्रप्रहरणाः सर्वे युद्धविशारदा इति । नानाशस्त्राणि प्रहरणानि येषां ते तथा युद्धविशारदाः विविधयुद्धमार्गेषु सर्वे निपुणा इत्यर्थः ॥ ९ ॥**

**म० टी०**—सिन्धुराजः जयद्रथः किमेतावन्तएव नायका नेत्याह—अन्ये च शल्यकृतवर्मप्रभृतयः मदर्थे मत्प्रयोजनाय जीवितमपि त्यक्तुमध्यवसिता इत्यर्थेन त्यक्तजीविताइत्यनेन स्वस्मिन्ननुरागातिशयस्तेषां कथ्यते। एवं स्वसैन्यबाहुल्यं तस्य स्वस्मिन् भक्तिं शौर्यं युद्धोद्योगं युद्धकौशलं च दर्शितं शूराइत्यादिविशेषणैः ॥ ९ ॥

**शं० टी०**—**अन्यइति** । अन्ये अवशिष्टा बाह्लीकभगदत्तादयश्च बहवः शूराः शौर्यशालिनः नानाशस्त्रप्रहरणाः नानाविधानि शस्त्राणि शूलचक्रगदाखड्गपरिघादीनि प्रहरणसाधनानि येषां ते नानाशस्त्रप्रहरणास्तत एव युद्धविशारदाः सकलयुद्धेषु निपुणाश्चेति सर्वे मदर्थे मद्विजयसिद्ध्यै त्यक्तजीविताः प्राणत्यागेनापि जयं सम्पादयिष्याम इति निश्चयेन तिष्ठन्तीत्यर्थः ॥ ९ ॥

**श्री० टी०—अन्ये चेति ।** मदर्थे मत्प्रयोजनार्थं जीवितं त्यक्तुमध्यवसिता इत्यर्थः । नाना अनेकानि शस्त्राणि प्रहरणसाधनानि येषां ते युद्धे विशारदाः निपुणा इत्यर्थः ॥ ९ ॥

**स० टी०—**अन्ये शल्यादयोऽनेके शूरा मत्प्रीतिसाधकाः ॥ मत्प्रयोजनसिद्ध्यर्थं जीवितं त्यक्तुमुद्यताः॥१॥ एवं स्वसैन्यबाहुल्यं स्वस्मिंस्तस्य रतिः परा ॥ युद्धोद्योगो रणे दाक्ष्यं चतुर्भिर्दर्शितं पदैः ॥ २ ॥ ९ ॥

**भा० टी०—**गणितुमसंख्यान् सर्वानपि संगृह्णाति—**अन्येचेति ।** बहवोऽपरिमिताः स्वजीविताद्प्यधिका मयि सर्वेषां भवदादीनां प्रीतिरस्तीत्याह—मदर्थ इति । त्यक्तं जीवितं यैस्ते जीवितमपि गच्छाति चेत्तर्हि सर्वेस्त्यज्यतइति भावः । परे महेष्वासा अस्मदीयास्तु नानाशस्त्रप्रहरणा इति स्वकीयानामुत्कर्षं द्योतयन्नाह-नानाविधानि शस्त्राणि खड्गादीनि प्रहरणानि गदादीनि च येषां ते । युद्धाकुशलतानिरासार्थमाह—सर्वे इति । युद्धे विशारदाः विचक्षणाः ॥ ९ ॥

**प० टी०—**अन्ये एतदतिरिक्ता बहवः शूराः सन्ति मदर्थे मत्प्रयोजनाय त्यक्तजीविताः संकल्पितप्राणाः नानाशस्त्रैः प्रहरन्ति युद्ध्यन्ति ते तथा अत एव विशारदाः ॥ ९ ॥

**रा० टी०—**शूरा एवेति वा मदर्थएवेति वाऽवधारणान्वयः । त्यक्तजीविताः प्राणत्यागे कृतनिश्चया इत्यर्थः । प्रह्रियन्ते एभिरिति प्रहरणानि अस्त्राणि । नानाविधानि शस्त्राणि येषां ते नानाशस्त्रप्रहरणाः । युद्धविशारदाः युद्धकुशलाः ॥ ९ ॥

## अपर्याप्तं तदस्माकं बलं भीष्माभिरक्षितम् ॥
## पर्याप्तं त्विदमेतेषां बलं भीमाभिरक्षितम् ॥ १० ॥

**त० टी०—एवं चेत्तर्हि भयाभावात्किमितस्ततो धावसीत्यत आह—अपर्याप्तमिति । तत् यथोक्तयोद्धृविशिष्टं भीष्माभिरक्षितमस्माकं बलं सैन्यमपर्याप्तमपूर्णं मे भाति । एतेषां पाण्डवानां तु बलं भीमेनाभिरक्षितं पर्याप्तं पूर्णं समर्थं मे प्रतिभातीत्यर्थः ॥ १० ॥**

**म० टी०—**राजा पुनरपि सैन्यद्वयसाम्यमाशङ्क्य स्वसैन्याधिक्यमावेदयति—**अपर्याप्तमिति ।** अपर्याप्तमनन्तमेकादशाक्षौहिणीपरिमितं भीष्मेण च प्रथितमहिम्ना सूक्ष्मबुद्धिनाभितः सर्वतो रक्षितं तत्तादृशगुणवत्पुरुषाधिष्ठितमस्माकं बलं । एतेषां पाण्डवानां बलं तु पर्याप्तं परिमितं सप्ताक्षोहिणीमात्रात्मकत्वान्न्यूनं भीमेन चातिचपलबुद्धिना रक्षितं तस्मादस्माकमेव विजयो भविष्यतीत्यभिप्रायः । अथवा तत्पाण्डवानां बलमपर्याप्तं नालं अस्माकमस्मभ्यं । कीदृशं तद्भीष्मोभिरक्षितोस्माभिर्यस्मै यन्निवृत्त्यर्थमित्यर्थः । तत्पाण्डवबलं भीष्माभिरक्षितं । इदं पुनरस्मदीयं बलं एतेषां पाण्डवानां पर्याप्तं परिभवे समर्थं । भीमोतिदुर्बलहृदयो रक्षितो यस्मै तदस्माकं बलं भीमाभिरक्षितं । यस्माद्भीमोऽत्ययोग्यएवैतन्निवृत्त्यर्थं तैरक्षितस्तस्मादस्माकं न किञ्चिदपि भयकारणमस्तीत्यभिप्रायः । एवं चेन्निर्भयोसि तर्हि किमिति बहु जल्पसीत्यतआह । कर्त्तव्यविशेषद्योती तुशब्दः ॥ १० ॥

**शं० टी०—किंच-अपर्याप्तमिति ।** अपर्याप्तं युद्धाय यदनलमस्माकं निरुक्तेभ्यो भिन्नं तद्भीष्माभिरक्षितं भीष्मेणाभितः शरीरवाक्शस्त्रास्त्रबलेन रक्षितं सत् मम जयसम्पादनाय पर्याप्तमेव भवति महापुरुषाश्रयबलात्। तेषां पाण्डवानां तु इदं पुरो दृश्यमानं बलं पर्याप्तमपि भीमेनाभिरक्षितं सदपर्याप्तमेव भवति हीनपुरुषाश्रयादितिभावः । इतोन्यथाव्याख्याने सन्धिः प्रसज्यते तददर्शनादेवमेवयुक्तमिति भाति ॥ १० ॥

**श्री० टी०—**ततः किमित्यत आह—**अपर्याप्तमिति ।** तत् तथाभूतैर्वीरैर्युक्तमपि भीष्मेणाभिरक्षितमप्यस्माकं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति । इदं तु एतेषां पाण्डवानां बलं भीमेनाभिरक्षितं सत् पर्याप्तं समर्थं भाति । भीष्मस्योभयपक्षपातित्वात् । अस्मद्बलं पाण्डवसैन्यं प्रत्यसमर्थम् । भीमस्यैकपक्षपातित्वात् ॥ १० ॥

स० टी०–स्वसैन्याधिक्यमेवाह राजा दुर्योधनोऽधुना ॥ अनन्तं सैन्यमस्माकं संख्यया शूरवत्तया ॥ १ ॥ सर्वतो रक्षितं यस्माद्भीष्मेणोदारबुद्धिना ॥ पाण्डवानां बलं स्वल्पं यत्सप्ताक्षौहिणीयुतम् ॥ २ ॥ रक्षितं सर्वतो यस्माद्भीमेनात्यल्पबुद्धिना ॥ यद्वा पाण्डवसैन्यं तन्निवर्त्यं सूक्ष्मबुद्धिना ॥ ३ ॥ अस्मदीयं तु तत्सैन्यं निवर्त्यं चलबुद्धिना ॥ असमर्थमिदं तेषां बलमस्मत्पराभवे ॥ ४ ॥ समर्थं तु तदस्माकं बलमेतत्पराभवे ॥ इति वान्यत्समानं तत्सर्वमत्रापि योज्यताम् ॥ ५ ॥ निश्चयेन ततोऽस्माकं जय एव भविष्यति ॥ ६ ॥ १० ॥

भा० टी०–स्वोत्कर्षे हेत्वन्तरमाह–**अपर्याप्तमिति**। तत्परेषां बलमस्माकं बलं सैन्यमभिभवितुमपर्याप्तमसमर्थं यतोऽस्माकं बलं भीष्मेण प्रथितमहिम्नाऽतिशूरेण रक्षितम्। इदमस्मदीयं तु बलमेतेषां सैन्यमभिभवितुं पर्याप्तं समर्थं। यतः परेषां बलं भीमेन बालेनाभिरक्षितमित्यर्थः। यद्वा तत्परोक्षं सर्वं विषयीकर्तुं अशक्यमस्माकं बलं भीष्मेण चाभिरक्षितमतोऽपर्याप्तं पर्याप्तुमभिभवितुं क्षोभयितुमशक्यं। एतेषां त्विदं परिदृश्यमानं परिमितमिति यावत्। भीमेन चाभिरक्षितमतः पर्याप्तं पर्याप्तुमभिभवितुं क्षोभयितुं सोढुं च शक्यमित्यर्थः। यद्वा तत्तस्मात् अस्माकमिदं बलमपर्याप्तं परिसमन्तादितस्ततः सर्वं प्राप्तं न भवति किन्तु स्वकीयमेव बहु। एतेषां तु बलं परिसमन्तादितस्ततः प्राप्तं पर्याप्तमतोस्मत्सैन्यं मनो दत्त्वा युद्धं करिष्यतीति कृत्वाऽस्माकं प्राबल्यमिति भावः। अस्माकं किलेदं एकादशाक्षौहिणिपरिमितं बलं भीष्मेण चाभिरक्षितं पर्याप्तं परेषां परिभवे समर्थं। एतेषां पुनस्तदल्पं सप्ताक्षौहिणीपरिमितं बलं भीमेन चपलबुद्धिना कुशलताविकलेन परिपालितमपर्याप्तं अस्मानभिभवितुमसमर्थमित्यर्थः। अथवा तदिदमस्माकं बलमपर्याप्तमनल्पं भीष्मेण चाधिष्ठितं तेषां तु बलं पर्याप्तमल्पं भीमेन चाधिष्ठितमतोऽस्माकमेव जयो भविष्यतीति भावः। अथवा तत्पाण्डवानां बलमस्माकमस्मभ्यं अपर्याप्तं नालं यत एतेषां बलं भीष्माभिरक्षितं भीष्मोभिरक्षितो निवृत्त्यर्थमस्मै ततः इदं पुनरस्मदीयं बलं तेषां परिभवे पर्याप्तं समर्थं यतो भीमोभिरक्षितोस्मैतत् अस्मत्सैन्यनिवृत्त्यर्थं दुर्बलहृदयो भीमः परैरभिरक्षित इत्यर्थ इत्येके। यत्तु तथाभूतैर्युक्तमपि भीष्मेणाभिरक्षितमपि अस्माकं बलं सैन्यमपर्याप्तं तैः सह योद्धुमसमर्थं भाति। इदं त्वेतेषां पांडवानां बलं भीमाभिरक्षितं सत् पर्याप्तं समर्थं भाति। भीष्मस्योभयपक्षपातित्वादितिभावः इति तदुपेक्ष्यं। प्रकरणविरोधात्तदेवं बहुमानयुक्तं राजवाक्यं श्रुत्वा भीष्मः किं कृतवानिति स्वग्रन्थविरोधाच ॥ १० ॥

प० टी०–अथ सैन्यद्वयोपन्यासकरणमाह–**अपर्याप्तमिति**। तदुद्दिष्टमस्माकं बलं सैन्यं भीष्माभिरक्षितमपि अपर्याप्तमसंपूर्णं तैः सह योद्धुमसमर्थम्। तथैतेषां पाण्डवानां बलं भीमाभिरक्षितं सत् पर्याप्तं संपूर्णं योद्धुं समर्थम् ॥ १० ॥

रा० टी०–बलद्वये बलिष्ठपरिगणने पाण्डवविजये मम सन्देहोस्ति। ततो भवदादयः सर्वे बहुसन्नद्धा भवन्त्वितिभावेनाह। **अपर्याप्तमिति**। सेनापतिभूतभीष्माभिरक्षितं अस्माकं तत्प्रागुक्तबलिष्ठोपेतं बलमपर्याप्तं पाण्डवजये न समर्थं प्रतीयते। भीमाभिरक्षितमिदं पाण्डवानां बलं तु पर्याप्तमस्मद्विजये शक्तं प्रतीयते ॥ १० ॥

**अयनेषु च सर्वेषु यथाभागमवस्थिताः ॥**
**भीष्ममेवाभिरक्षन्तु भवन्तः सर्व एव हि ॥ ११ ॥**

त० टी०–तर्हि किं कर्त्तव्यमित्यत आह–**अयनेष्विति**। अयनेषु व्यूहप्रवेशनिर्गमस्थानेषु सर्वे यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थिताः सन्तो भवन्तः सर्व एव हि भीष्मं सेनापतिमेवाभिरक्षन्तु। सेनापतौ रक्षिते सर्वं सैन्यं रक्षितं भवतीति भावः ॥ ११ ॥

म० टी०–समरसमारम्भसमये योधानां यथाप्रधानं युद्धभूमौ पूर्वापरादिदिग्विभागेनावस्थितिस्थानानि यानि नियम्यन्ते तान्यत्रायनान्युच्यन्ते। सेनापतिश्च सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति। तत्रैवंसति यथाभागं

विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थिताः सन्तो भवन्तः सर्वेऽपि युद्धाभिनिवेशात्पुरतः पृष्ठतः पार्श्वतश्चानिरीक्षमाणं भीष्मं सेनापतिमेव रक्षन्तु भीष्मे हि सेनापतौ रक्षिते तत्प्रसादादेव सर्वं सुरक्षितं भविष्यतीत्यभिप्रायः ॥ ११ ॥

**शं० टी०**–तथैवास्तुनाम किमिदानीं कर्तव्यमित्यत आह–**अयनेष्विति** । हि यस्माद्भीष्माधीनो मम जयस्तस्माद्भवन्तो योद्धार एव निरुक्ताः सर्वे अयनेषु चक्रादिव्यूहमार्गेषु यथाभागं विभक्तं स्वं स्वं स्थानं यथातथास्थिताः सन्तो भीष्ममेवाभिरक्षन्तु सेनामुखे युद्ध्यन्तु भीष्ममभितो रक्षन्तु भीष्मस्य परेभ्य उपद्रवो यथा न स्यात्तथा परिवेष्ट्य रक्षणं कुर्वन्तः सन्तएव यूयं युद्धं कुरुतेत्यर्थः ॥ ११ ॥

**श्री० टी०**–तस्मात् भवद्भिरेवं वर्तितव्यमित्याह–**अयनेष्विति** । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं विभक्तां स्वां स्वां रणभूमिमपरित्यज्यावस्थिताः सन्तः सर्वे भीष्ममेवाभितो रक्षन्तु तथाऽन्यैर्युध्यमानः पृष्ठतः कैश्चिन्न हन्येत तथा रक्षन्तु । भीष्मबलेनैवास्माकं जीवितमिति भावः ॥ ११ ॥

**स० टी०**–एवं चेन्निर्भयोऽसि त्वं किं वृथा बहु जल्पसि ॥ इत्यत्राह तुशब्देन कर्तव्यं द्योतयन्नृपः ॥ १ ॥ सङ्ग्रामारम्भसमये युद्धभूमौ यथायथम् ॥ पूर्वादिदिग्विभागेन वीराणां स्थितिभूमयः ॥ २ ॥ नियम्यन्ते हिताः प्रोक्ता अयनानीति तत्र च ॥ सर्वसैन्यमधिष्ठाय मध्ये तिष्ठति सैन्यपः ॥ ३ ॥ यथाभागं विभक्तां स्वां स्वामत्यक्त्वा रणक्षितिम् ॥ भवन्तोऽवस्थिताः सन्तः पुरतः पृष्ठतोऽन्यतः ॥ ४ ॥ निरीक्ष्यमाणं भीष्मं ते सर्वे रक्षन्तु सैन्यपम् ॥ भीष्मे सेनापतौ सर्वं रक्षिते स्यात्सुरक्षितम् ॥ ५ ॥ ११ ॥

**भा० टी०**–तस्माद्भीष्ममेव सेनापतिं गुणभूता भवन्तो रक्षन्त्विवति प्रार्थयते–**अयनेष्विति** । सङ्ग्रामप्रारम्भे योधानां यथाप्रधानं सङ्घचे पूर्वपरादिविभागेन नियतेष्ववस्थितिस्थानेष्वयनेषु तु नाकर्तव्यविशेषो द्योत्यते । यथाभागं विभागेन प्राप्तं स्वस्थानमवस्थिताः सावधानतया स्थिताः सर्व एव भवन्तः सर्वसैन्यमधिष्ठाय मध्ये स्थितं युद्धे व्यग्रं सेनापतिं भीष्ममेवाभिसमन्ताद्रक्षन्तु परबलनिवृत्त्यर्थमस्माभिस्तस्मिन् रक्षिते सर्वमस्मदीयं रक्षितं स्यादित्यर्थः ॥ ११ ॥

**प० टी०**–तस्माद्भवद्भिरेवं कर्तव्यमित्याह–**अयनेष्विति** । अयनेषु व्यूहप्रवेशमार्गेषु यथाभागं रणभूमिं विभज्य स्थिताः सन्तः सर्वेऽपि भवन्तो भीष्ममेवाभितः समन्ततो रक्षन्तु तस्य व्यूहं प्रविष्टस्य पृष्ठिं रक्षन्तु ॥ ११ ॥

**रा० टी०**–हि यस्मादेवमतो भवन्तः सर्वएव सर्वेष्वयनेषु व्यूहप्रवेशमार्गेषु यथाभागमवस्थिताः स्वस्वरणभूमिस्थानेषु दृढमवस्थिताः सन्तः भीष्ममेवाभिरक्षन्तु । अन्यैर्युध्यमानो भीष्मः पृष्ठतोरिभिर्यथा न हन्यते तत्तथा रक्षन्त्विवति द्रोणाचार्यमुक्त्वा विषसाद ॥ ११ ॥

## तस्य सञ्जनयन्हर्षं कुरुवृद्धः पितामहः ॥
## सिंहनादं विनद्योच्चैः शङ्खं दध्मौ प्रतापवान् ॥ १२ ॥

**त० टी०**–एवं शत्रुसैन्यादन्तर्भीतोऽपि शठत्वेनैवाचार्यमुपसृत्य स्वोत्कर्षद्योतकवचनैरतुष्टेनाचार्येणोपेक्षितं राजानं ज्ञात्वा अयनेष्वित्यादिनाऽऽस्माश्रितं ज्ञात्वा राजत्वान्नोपेक्षणीय इति तं भीष्मो हर्षयामासेत्याह–**तस्येति** । तस्य दुर्योधनस्य हर्षं सम्यग्जनयन् प्रतापवान् कुरुवृद्धः पितामहः उच्चैः सिंहनादं विनद्य शङ्खं दध्मौ ॥ १२ ॥

म० टी०–स्तौतु वा निन्दतु वा एतदर्थे देहः पतिष्यत्येवेत्याशयेन तं हर्षयन्नेव सिंहनादं शङ्खवाद्यं च कारितवानित्याह । एवं पाण्डवसैन्यदर्शनादतिभीतस्य भयनिवृत्त्यर्थमाचार्यं कपटेन शरणं गतस्य इदानीमप्ययं मां प्रतारयतीत्यसंतोषवशादाचार्येण वाङ्मात्रेणाप्यनादृतस्याचार्योपेक्षां बुद्ध्वायनेष्वित्यादिना । भीष्ममेव स्तुवतस्तस्य राज्ञो भयनिवर्तकं हर्षं बुद्धिगतमुल्लासविशेषं स्वविजयसूचकं जनयन् उच्चैर्महान्तं सिंहनादं विनद्य कृत्वा । सिंहनादमिति णमुलन्तं । अतोरैपोषं पुष्यतीतिवत्तस्यैव धातोः पुनः प्रयोगः । शङ्खं दध्मौ वादितवान् । कुरुवृद्धत्वादाचार्यदुर्योधनयोरभिप्रायपरिज्ञानं पितामहत्वादनुपेक्षणं नत्वाचार्यवदुपेक्षणं प्रतापवत्त्वादुच्चैः सिंहनादपूर्वकशङ्खवादनं परेषां भयोत्पादनाय । अत्र सिंहनादशङ्खवाद्ययोर्हर्षजनकत्वेन पूर्वापरकालत्वेपि "अभिचरन्यजेत" इतिवज्जनयन्निति शताऽवश्यंभावित्वरूपवर्तमानत्वे व्याख्यातव्यः ॥ १२ ॥

शं० टी०–एवमुक्तवति राज्ञि किमभवदिति धृतराष्ट्रप्रश्ने सञ्जय आह–तस्येति । प्रतापवान् कुरुवृद्धः पितामहो भीष्मः तथैव जयं सम्पादयिष्यामीति सूचयन्निव तस्य दुर्योधनस्य हर्षं सम्पादयन् सिंहनादं विनद्य कृत्वा स्वमुच्चैरुदात्तं शङ्खं दध्मौ पूरयामास ॥ १२ ॥

श्री० टी०–तदेवं बहुमानयुक्तं राज्ञो दुर्योधनस्य वाक्यं श्रुत्वा भीष्मः किं कृतवांस्तदाह–तस्येति । तस्य राज्ञः हर्षं सञ्जनयन कुर्वन् पितामहो भीष्म उच्चैः महान्तं सिंहनादं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

स० टी०–एवं संस्तुवतो भीष्मं राज्ञो विजयसूचकम् ॥ उल्लासं जनयन्नुच्चैः सिंहनादं महारवम् ॥१॥ कृत्वा प्रतापयुक्तत्वाच्छङ्खं वादितवांस्ततः ॥ कुरुवृद्धतयाचार्यभूपयोराशयज्ञता ॥ २ ॥ राज्ञोऽनुपेक्षणं तस्य पितामहतयोच्यते ॥ ३ ॥ १२ ॥

भा० टी०–एवं स्वस्याप्राधान्यं श्रुत्वा तूष्णीं स्थितमाचार्यं तं दृष्ट्वा खिन्नं स्वास्मिन्नातिभक्तिमन्तं दुर्योधनं चालक्ष्य भीष्मस्तस्य हर्षोत्पादने प्रवृत्त इत्याह–तस्येति । दुर्योधनस्य हर्षं बुद्धिगतमुल्लासविशेषं सिंहनादशङ्खशब्दकरणद्वारकं सम्यगुत्पादयंस्तदीयखेदापनयार्थमुच्चैः सिंहनादं विनद्य कृत्वा शङ्खं दध्मौ आपूरितवान् कुरुवृद्धः पितामहः । कुरुवृद्धत्वात् पितामहत्वात् तदुपजीवितया तद्वशत्वाच्च भीष्मस्योक्तार्थे प्रवृत्तिरुचितैवेति भावः । असामर्थ्यं वारयति–प्रतापवानिति । कुरुवृद्धत्वादाचार्यदुर्योधनयोरभिप्रायपरिज्ञानं पितामहत्वादनुपेक्षणं नत्वाचार्यवदुपेक्षणमिति केचित् ॥ १२ ॥

प० टी०–तस्येति । एवमित्यादिभिरुत्तेजनवाक्यैः स्ववीरांस्तीक्ष्णीकृतवतो दुर्योधनस्य हर्षमुत्साहं जनयन् कुरुषु कौरवसैन्येषु वृद्धः पितामहो भीष्मः प्रतापवान् स्वयमुत्साहवान् सिंहवदट्टहासं कृत्वा शङ्खं दध्मौ वादितवान् ॥ १२ ॥

रा० टी०–एवं विषादिनस्तस्य दुर्योधनस्य हर्षं संजनयन् जनयितुं । "लक्षणहेत्वोः क्रियायाः" इति हेतौ शत्रन्तं । प्रतापवान्कुरुवृद्धः पितामहो भीष्मः सिंहनादं उच्चैर्विनद्य शङ्खं दध्मौ । ध्मा शब्दे ॥ १२ ॥

**ततः शङ्खाश्च भेर्यश्च पणवानकगोमुखाः ॥**
**सहसैवाभ्यहन्यन्त स शब्दस्तुमुलोऽभवत् ॥ १३ ॥**

त० टी०–ततो भीष्मस्य सेनापतेः शङ्खशब्दानन्तरं शङ्खभेर्यादयः सहसैव तत्क्षणमेवाभ्यहन्यन्त । कर्त्रविवक्षया कर्मकर्तरिप्रयोगः । शङ्खादीनां स शब्दस्तुमुलो वीरहृदयकम्पनोऽभवत् । पाण्डवास्तु नाकम्पन्तेति भावः ॥ १३ ॥

म० टी०–ततो भीष्मस्य सेनापतेः प्रवृत्त्यनन्तरं पणवाश्चानका गोमुखाश्च वाद्यविशेषाः सहसा तत्क्षणमेव

अभ्यहन्यन्त वादिताः । कर्मकर्तरिप्रयोगः । स शब्दस्तुमुलो महानासीत्तथापि न पाण्डवानां क्षोभो जातइत्यभिप्रायः ॥ १३ ॥

**शं० टी०—ततइति ।** ततः भीष्मशङ्खनिनादेनोत्पन्नरणोत्साहैर्द्रोणादिसर्वसैनिकैः स्वस्वशङ्खाश्च सेनाचरैर्भेर्यश्च पणवानकगोमुखाः पणवाद्या वाद्यविशेषाश्च सहसातित्वरयैव अभ्यहन्यन्त । शङ्खभेर्यादिहननसमुत्पन्नो यः शब्दो ध्वनिः स तुमुलः संकीर्णः सन्महानभूदित्यर्थः ॥ १३ ॥

**श्री० टी०—**तदेवं सेनापतेः भीष्मस्य युद्धोत्सवमालक्ष्य सर्वतो युद्धोत्सवः प्रवृत्त इत्याह—**तत इति** । पणवाः आनकाः गोमुखाश्च वाद्यविशेषाः सहसैव तत्क्षणमेवाभ्यहन्यन्त वादिताः । स च शङ्खादिशब्दस्तुमुलो महानभवत् ॥ १३ ॥

**स० टी०—**ततः सेनापतेः शङ्खवादनानन्तरक्षणे ॥ सहसा शङ्खभेर्याद्या वाद्यभेदाश्च वादिताः ॥ १ ॥ स शब्दोऽपि महानासीत् क्षोभकर्तृतया क्षितौ ॥ २ ॥ १३ ॥

**भा० टी०—तत इति ।** दुर्योधनाभिप्रायानुरोधिभीष्मप्रवृत्त्यनन्तरं शङ्खादयो वाद्यविशेषा भीष्मानुसारिभिः सहसैव झटित्यभ्यहन्यन्ताभिहताः वादिताः । स शब्दस्तुमुलो महान्जातः ॥ १३ ॥

**प० टी०—**तत इत्यादितः श्लोकषट्कं सुगमम् ॥ १३—१८ ॥

**रा० टी०—**ततस्तच्छङ्खध्वानानन्तरं पणवानकगोमुखाः वाद्यविशेषाः सहसैव युगपदेव । तुमुलः सर्वत्र परिपूर्णोऽभवत् ॥ १३ ॥

**ततः श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ ॥**
**माधवः पाण्डवश्चैव दिव्यौ शङ्खौ प्रदध्मतुः ॥ १४ ॥**

**त० टी०—**ततः पाण्डवसैन्यस्य हर्षं द्योतयितुं माधवादीनां शङ्खध्मानमाह—**तत इति** । ततो दुर्योधनसैन्ये शङ्खशब्दप्रवृत्त्यनन्तरं श्वेतैर्हयैर्युक्ते महति स्यन्दने स्थितौ माधवः पाण्डवश्च दिव्यौ शङ्खौ प्रदध्मतुरित्यादिभिः शब्दैस्तज्जयः सूचितः ॥ १४ ॥

**म० टी०—**अन्येषामपि रथस्थत्वे स्थितएव असाधारण्येन रथोत्कर्षकथनार्थं ततः श्वेतैर्हयैर्युक्तइत्यादिना रथस्थत्वकथनं । तेनाग्निदत्ते दुष्प्रधृष्ये रथे स्थितौ सर्वथा जेतुमशक्याविर्त्यर्थः ॥ १४ ॥

**शं० टी०—**एवं दुर्योधनसेनाप्रवृत्तिमुक्त्वा पाण्डवसेनाप्रवृत्तिमाह-**ततइति।**ततो भीष्मादिशङ्खोद्घोषानन्तरमेव श्वेतैर्हयैर्युक्ते महति पूज्ये स्यन्दने रथे स्थितौ माधवः पाण्डवोऽर्जुनश्च दिवि भवौ दिव्यौ शङ्खौ प्रदध्मतुः ॥१४॥

**श्री० टी०—**ततः पाण्डवसैन्ये प्रवृत्तं युद्धोत्सवमाह—**ततइतिपञ्चभिः** । ततः कौरवसैन्यवाद्यकोलाहलानन्तरम् स्यन्दने रथे स्थितौ सन्तौ कृष्णार्जुनौ दिव्यौ शङ्खौ प्रकर्षेण दध्मतुः वादयामासतुः ॥ १४ ॥

**स० टी०—**ततः श्वेतैरिति श्लोके रथस्थत्वस्य कीर्तनात् ॥ माधवार्जुनयोः प्रोक्तमजेयत्वमसह्यता ॥१॥१४॥

**भा० टी०—**स शब्दः परेषां वीररसोद्भावको जातो न तु भयजनक इत्याशयेन तेषां शङ्खपूरणे प्रवृत्तिमाह-**तत इति** । तुमुलशब्दानन्तरं श्वेतैर्हयैः शुक्लवर्णैरश्वैरतिबलपराक्रमैर्युक्तेऽग्निना दत्ते महत्युत्तमे रथे स्थितौ न भयप्रचलितौ माधवो लक्ष्मीपतिः पाण्डवोऽर्जुनश्चैव दिव्यावप्राकृतौ शङ्खौ प्रदध्मतुः पूरितवन्तौ । माधव इति शङ्खशब्देनैव तव पुत्रेभ्यो राज्यलक्ष्मीमाद्दतवानिति सूचनार्थं । पाण्डव इति तदीयराज्यं तस्यैव भविष्यतीति १४

**रा० टी०—**ततः तेषां घोषानन्तरं श्वेतहयैः शुक्लवर्णाश्वैः युक्ते स्यन्दने रथे पाण्डवस्त्वर्जुनः । स्थितावेवेत्यन्वयः ॥ १४ ॥

पाञ्चजन्यं हृषीकेशो देवदत्तं धनञ्जयः ॥
पौण्ड्रं दध्मौ महाशङ्खं भीमकर्मा वृकोदरः ॥ १५ ॥
अनन्तविजयं राजा कुन्तीपुत्रो युधिष्ठिरः ॥
नकुलः सहदेवश्च सुघोषमणिपुष्पकौ ॥ १६ ॥

**त० टी०**–पाण्डवोत्कर्षमेव द्योतयितुं तच्छङ्खनामानि वर्णयति-पाञ्चजन्यमिति द्वाभ्याम् । पाञ्चजन्यदेवदत्तादिनामभिस्तेषां शङ्खा विदितास्तव पुत्रसैन्ये तु कस्यापि नाम्ना प्रसिद्धः शङ्खो नास्ति । किञ्च हृषीकाणामिन्द्रियाणामीशः हृषीकेशो येषां सहायस्तेषामेव जयो भविष्यतीत्यभिप्रायः॥१५॥१६

**म० टी०**–पाञ्चजन्यो देवदत्तः पौंड्रोऽनन्तविजयः सुघोषो मणिपुष्पकश्चेति शङ्खनामकथनं परसैन्ये स्वनामभिः प्रसिद्धा एव तावन्तः शङ्खाः । भवत्सैन्ये तु नैकोपि स्वनामप्रसिद्धः शङ्खोस्तीति परेषामुत्कर्षातिशयकथनार्थं । सर्वेन्द्रियप्रेरकत्वेन सर्वान्तर्यामी सहायः पाण्डवानामिति कथयितुं हृषीकेशपदं । दिग्विजये सर्वान् राज्ञो जित्वा धनमाहृतवानिति सर्वथैवायमजेयइति कथयितुं धनञ्जयपदं । भीमं हिडिम्बवधादिरूपं कर्म यस्य तादृशः । वृकोदरत्वेन बह्वन्नपाकादतिबलिष्ठो भीमसेनइति कथितम् ॥ १५ ॥ कुन्तीपुत्रइति कुन्त्या महता तपसा धर्ममाराध्य लब्धः स्वयं च राजसूययाजित्वेन मुख्यो राजा युधि चायमेव जयभागित्वेन स्थिरो नत्वेतद्विपक्षाः स्थिरा भविष्यन्तीति युद्धिष्ठिरपदेन सूचितं । नकुलः सुघोषं सहदेवो मणिपुष्पकं दध्मावित्यनुषज्यते ॥ १६ ॥

**शं० टी०**–उक्तमेव विस्पष्टयति–**पाञ्चजन्यमिति** । पञ्चजनादुत्पन्नं पाञ्चजन्यं हृषीकेशो दध्मौ । देवैर्दत्तं देवदत्तं शङ्खं धनञ्जयो दध्मौ । लोकभयङ्कराणि कर्माण्यस्येति भीमकर्मा वृकवदुदरं यस्य स वृकोदरो भीमः पौण्ड्रं नाम महाशङ्खं दध्मौ ॥ १५ ॥ **अनन्तविजयमिति** । राजा युधि स्थिरत्वाद्युधिष्ठिरो धर्मपुत्रः अनन्तविजयं अनन्तो नाशरहितो विजयो यस्मात्तमनन्तविजयं नाम शङ्खं दध्मौ सुघोषमणिपुष्पकनामानौ शङ्खौ नकुलः सहदेवश्च दध्मतुरिति शेषः ॥ १६ ॥

**श्री० टी०**–तदेव विभागेन दर्शयन्नाह–**पाञ्चजन्यमिति** । पाञ्चजन्यादीनि श्रीकृष्णादिशङ्खानां नामानि । भीमं घोरं कर्म यस्य सः । वृकवदुदरं यस्य स वृकोदरो महाशङ्खं पौण्ड्रं दध्माविति ॥ १५ ॥ **अनन्तविजयमिति** । नकुलः सुघोषं नाम शङ्खं दध्मौ । सहदेवो मणिपुष्पकं नाम ॥ १६ ॥

**स० टी०**–पाण्डवानां सहायोऽस्ति सर्वेन्द्रियनियामकः ॥ राज्ञो जित्वाखिलान्युद्धे धनमाहृतवाञ्जयः ॥ १ ॥ दिव्यप्रभावौ तावुक्तौ हृषीकेशधनञ्जयौ ॥ केशवार्जुनयोर्युद्धाभिमुख्यं वीक्ष्य हर्षतः ॥ २ ॥ स्वारस्याद्भीमसेनोऽपि युद्धेऽतिरसिको बली ॥ समराभिमुखो ह्यासीदित्याह वचनं वरम् ॥ ३ ॥ रक्षोवधादिकं कर्म यस्य शत्रुभयावहम् ॥ वृकोदरत्वाद्बह्वन्नपाकाद्भीमो महाबलः ॥ ४ ॥ १५ ॥ महता तपसा कुन्त्या लब्धो धर्मात्सुतोषितात् ॥ राजा च राजसूयस्य याजित्वेन स्वयं महान् ॥ १ ॥ जयभागितया युद्धे स्थिरश्चेति युधिष्ठिरः ॥ पाञ्चजन्यादिशङ्खास्ते प्रसिद्धाः स्वस्वनामभिः ॥ २ ॥ उक्ताः पाण्डवसेनायां भवत्सैन्ये न कोऽपि हि ॥ ३ ॥ १६ ॥

**भा० टी०**–हृषीकेश इन्द्रियेश इति पदं पाण्डवानां पाण्यादीन्द्रियेभ्यो बलप्रदः । परेषां तु तेभ्यस्तदप्रदः प्रत्युत हारक इति सूचनार्थं । दिग्विजये गोग्रहे च राज्ञो भीष्मादींश्च जित्वा धनं गोधनं चाहृतवानतः सर्वैरप्ययमजेय इति कथयितुं धनञ्जयपदं । माधवार्जुनयोः शङ्खशब्दं श्रुत्वा संहृष्टो युद्धरसिको भीमसेनोपि शङ्खं वादितवानित्याह–**पौण्ड्रमिति** । अतिरौद्रे दुःशासनरक्तपानादिकर्मणि समर्थस्तेन पीतं च रक्तमपि तदुदरस्थवृकाग्निना जीर्णं भविष्यतीति भीमकर्मा वृकोदर इति पदाभ्यां सूचितं । भीमं हिडिम्बवधादिरूपं कर्म यस्य

तादृशो वृकोदरत्वेन बह्वन्नपाकादतिबलिष्ठ इति कथितमिति केचित् ॥ १५ ॥ एतेषां प्रवृत्तिमनुमोदयन् युधिष्ठिरोपि शङ्खपूरणे प्रवृत्त इत्याह—**अनन्तविजयमिति** । शत्रून् जित्वा निष्कण्टकराज्यलाभस्तस्यैव भविष्यतीति द्योतनार्थं राजेति पदं । कुन्त्या दुःखं राज्यलाभेनापाकरिष्यतीति कुन्तीपुत्रत्वेन ध्वनितम् । युद्धे सर्वाञ्जित्वाऽयमेव स्थिरो भविष्यतीति सूचनाय युधिष्ठिर इति । कुन्तीपुत्रः कुन्त्या महता तपसा धर्ममाराध्य लब्धः । स्वयं राजसूययाजित्वेन मुख्यो राजेति भाव इति केचित् । ज्येष्ठभ्रातॄणां मार्गं नकुलसहदेवावनुसृतवन्तावित्याह—नकुल इति । नकुलः सुघोषं सहदेवो मणिपुष्पकं दध्मावित्यनुषज्यते । शङ्खतच्छब्दकर्तृनामकीर्तनेन परेषामुत्कर्षः सूचितः ॥ १६ ॥

**रा० टी०**—तद्विवृणोति—**पाञ्चजन्यमिति** । हृषीकेशशब्दार्थ उक्तो भाष्ये एकादशे । हृषीकाणामिन्द्रियाणामीशत्वाच्च हृषीकेशइत्यादि । दध्मावित्यन्वयः ॥ १५ ॥ अनन्तविजयं अनन्तविजयाख्यं । नकुलः सुघोषाख्यं शङ्खं सहदेवो मणिपुष्पकाख्यं दध्मुरित्यन्वयः ॥ १६ ॥

**काश्यश्च परमेष्वासः शिखण्डी च महारथः ॥**
**धृष्टद्युम्नो विराटश्च सात्यकिश्चापराजितः ॥ १७ ॥**
**द्रुपदो द्रौपदेयाश्च सर्वशः पृथिवीपते ॥**
**सौभद्रश्च महाबाहुः शङ्खान्दध्मुः पृथक् पृथक् ॥ १८ ॥**

**त० टी०**—अन्येऽपि तत्सैन्ये शङ्खान्दध्मुरित्याह—**काश्यश्चेति** । काश्यः काशिराजः । शिखण्डी द्रुपदपुत्रः भीष्मवधाय तपसोत्पन्नो वाऽपूर्वजन्मा । धृष्टद्युम्नो द्रोणाचार्यवधायाग्निकुण्डादुत्पन्नः । अपराजितः सात्यकिरर्जुनसमः । एतेन भीष्मद्रोणादिसहायेन मत्पुत्रो जेष्यतीति नाऽऽशासनीयमिति ध्वनितम् । स्पष्टार्थमन्यत् ॥ १७ ॥ १८ ॥

**म० टी०**—परमेष्वासः काश्यः महाधनुर्धरः काशीराजः । न पराजितः पारिजातहरणबाणयुद्धादिमहासंग्रामेषु एतादृशः सात्यकिः ॥ १७ ॥ हे पृथिवीपते धृतराष्ट्र ! स्थिरो भूत्वा शृण्वित्यभिप्रायः । सुगममन्यत् ॥ १८ ॥

**शं० टी०**—किञ्च—**काश्यइति** । परमो महानिष्वासो यस्य स काश्यः काशीपतिश्च । 'शिखण्डं श्मश्रुशून्यता' इत्यभिधानात्तदस्यास्तीति शिखण्डी पाञ्चालः । महारथो धृष्टद्युम्नः धृष्टं परधर्षकं द्युम्नं बलं यस्य स धृष्टद्युम्नः सेनापतिः विराटश्च । न पराजितो रिपुभिरपराजितः सत्यकस्यापत्यं पुमान् सात्यकिः ॥ १७ ॥ **द्रुपदइति** । द्रुपदो द्रौपदेयाश्च महाबाहुराजानुबाहुः सौभद्रश्च निरुक्ता योधाः । सर्वशः पृथक्पृथक् शङ्खान्दध्मुः । प्रत्येकं पूरयामासुरित्यर्थः ॥ १८ ॥

**श्री० टी०**—**काश्यश्चेति** । काश्यः काशीराजः । कथम्भूतः । परमः श्रेष्ठः इष्वासो धनुर्यस्य सः ॥ १७ ॥ **द्रुपइति** । हे पृथिवीपते ! हे धृतराष्ट्र ! ॥ १८ ॥

**स० टी०**—महाधनुर्धरः काशिराजश्चान्ये महारथाः ॥ शिखण्डी धृष्टद्युम्नाद्या जयशीलश्च सात्यकिः ॥ १ ॥ दध्मुः शङ्खान्द्रुपदाद्याः शृणु राजन् समाहितः ॥ २ ॥ १७ ॥ १८ ॥

**भा० टी०**—अन्येषामपि तत्पक्षीयाणां सर्वेषामैकमत्यं बोधयंस्तेषां प्रवृत्तिमाह—**काश्यश्चेत्यादिना** । काश्यः काशिराजः परमेष्वासः परमधनुर्धरः सात्यकिश्चापराजितः पराजयमप्राप्तः शिखण्डी च महारथः ॥ १७ ॥ सौभद्रोऽभिमन्युश्च महाबाहुः । परमेष्वासादिविशेषणचतुष्टयं प्रत्येकं सम्बध्यतइत्येके । पृथिवीपतित्वेन पृथिवीवद्दुःखं सोढुं योग्योऽसीति सूचितं । पृथिवीपते धृतराष्ट्र ! स्थिरो भूत्वा शृण्वित्यभिप्राय इति केचित् ॥ १८ ॥

रा० टी०-परमेष्वासो महाधनुष्कः काश्यः । महारथः शिखण्डी च अपराजितः सात्यकिश्च ॥ १७ ॥ पृथिवीपते हे धृतराष्ट्र ! महाबाहुः सौभद्रोऽभिमन्युश्च । शङ्खमिति समुदायाभिप्रायः । स्वस्वशङ्खान्दध्मुरित्यर्थः ॥ १८ ॥

**स घोषो धार्तराष्ट्राणां हृदयानि व्यदारयत् ॥**
**नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥**

**त० टी०-धार्तराष्ट्राणामन्यद्भयं सूचयति-स घोष इति । स पाण्डवसैन्ये वीरकृतशङ्खघोषो धार्तराष्ट्राणां तव ये वीरास्तेषां सर्वेषां हृदयानि व्यदारयत् हृदयविदारणतुल्यां पीडामजनयत् । किं कुर्वन् नभश्च पृथिवीं च व्यनुनादयन् प्रतिध्वनिनाऽऽपूरयन् । यतस्तुमुलोऽतितीव्रः ॥ १९ ॥**

म० टी०-धार्तराष्ट्राणां सैन्ये शङ्खादिध्वनिरतितुमुलोऽपि न पाण्डवानां क्षोभकोऽभूत् । पाण्डवानां सैन्ये जातस्तु स शङ्खघोषो धार्तराष्ट्राणां धृतराष्ट्रस्य तव सम्बन्धिनां सर्वेषां भीष्मद्रोणादीनामपि हृदयानि व्यदारयत् । हृदयविदारणतुल्यां व्यथां जनितवानित्यर्थः । यतस्तुमुलस्तीव्रः नभश्च पृथिवीं च प्रतिध्वनिभिरापूरयन् ॥ १९ ॥

शं० टी०-किंच-सइति । पाञ्चजन्यदेवदत्तपौण्ड्रादिमहाशङ्खेभ्यः समुत्पन्नो यो घोषो महाध्वनिः स सर्वशङ्खनिनादैस्तुमुलः संकीर्णो भूत्वा नभ आकाशं चकाराद्दिशः सर्वाः पृथिवीं चकारात्पर्वतबिलानि व्यनुनादयन् स्वस्वनादानुरूपं प्रतिध्वनयन् तद्ध्वनिना संभूय स्वयं धार्तराष्ट्राणां । अत्र संबन्धार्थेऽण्प्रत्ययः । धृतराष्ट्रस्य पुत्राः पौत्राः सैनिकाश्च सर्वे धार्तराष्ट्राः तेषां हृदयानि हृदयस्थकालखण्डान् व्यदारयद्विदलितवान् । तेन नादेन भग्नहृदया जाता इत्यर्थः ॥ १९ ॥

श्री० टी०-स च शङ्खानां नादस्त्वदीयानां महाभयं जनयामासेत्याह--स घोष इति । धार्तराष्ट्राणां त्वदीयानां हृदयानि विदारितवान् । किं कुर्वन् नभश्च पृथिवीं चैव तुमुलो व्यनुनादयन् ॥ १९ ॥

स० टी०-यः सैन्ये धार्तराष्ट्राणां शङ्खादीनां ध्वनिर्महान् ॥ पाण्डवानां स नैवाभूत्क्षोभको बलिनां सताम् ॥ १ ॥ पाण्डवानां स जातस्तु शङ्खघोषो महत्तरः । तव संबन्धिनां भीष्मद्रोणादीनामपि व्यथाम् ॥ २ ॥ हृदयाणामजनयद्विदारणसमां पराम् ॥ अति तीव्रो नभो भूमिं पूरयन्प्रतिशब्दतः ॥ ३ ॥ १९ ॥

भा० टी०-दुर्योधनादीनां त्वदीयानां शङ्खादिशब्दैः परेषां भयं नोत्पन्नं तेषां तु तैस्त्वदीयानां अत्यन्तं तदुत्पन्नमित्याशयेनाह-सघोष इति । तुमुलः तीव्रः शब्दः धार्तराष्ट्राणां हृदयानि व्यदारयत् विदारणतुल्यां व्यथामजनयत् युक्तं चैतदित्याशयेनाह- नभ इति।नभश्च पृथिवीं चैव व्यनुनादयन् प्रतिशब्देनापूरयन्॥ १९॥

प० टी०-सघोषइति । स पाण्डवसैन्यसंभूतो घोषो धार्तराष्ट्राणां त्वदीयानां हृदयानि व्यदारयत् व्याकुलीकृतवान् । किंभूतस्तुमुलो भयानकः । किं कुर्वन् नभश्च पृथिवीं च व्यनुनादयन् प्रतिशब्देनापूरयन् ॥ १९ ॥

रा० टी०-सघोषस्तुमुलो व्याप्तो भूत्वा नभश्च पृथिवीं च व्यनुनादयंस्तत्र तत्र प्रतिध्वनिं जनयन्नेष धार्तराष्ट्राणां हृदयानि व्यदारयत् । अद्यैव नष्टं कुरुकुलमिति त्वत्पुत्रा मेनिरइत्यर्थः ॥ १९ ॥

**अथ व्यवस्थितान्दृष्ट्वा धार्त्तराष्ट्रान्कपिध्वजः ॥**
**प्रवृत्ते शस्त्रसम्पाते धनुरुद्यम्य पाण्डवः ॥ २० ॥**

**त० टी०-यथा त्वदीयानां भयं प्राप्तं पाण्डवानां न तथा भयं जातं, प्रत्युत शूरत्वं वृद्धमित्याह-अथेति । तुमुलघोषानन्तरं कपिध्वजो गर्जनेन वैरिधैर्यापहारकः कपिर्हनुमान् ध्वजे यस्य सोऽर्जुनः**

**धार्त्तराष्ट्रान् व्यवस्थितान्दृष्ट्वा शस्त्रसम्पाते प्रवृत्ते प्रवर्त्तमाने सति दिग्विजयिनः पाण्डोः पुत्रो गाण्डिवमग्निदत्तं धनुरुद्यम्य ॥ २० ॥**

**म० टी०**–धार्तराष्ट्राणां भयप्राप्तिं प्रदर्श्य पाण्डवानां तद्वैपरीत्यमुदाहरति–**अथेत्यादिना** । भीतिप्रत्युपस्थितेरनन्तरं पलायने प्राप्तेऽपि तद्विरुद्धतया युद्धोद्योगेनावस्थितानेव परान् प्रत्यक्षेणोपलभ्य तदा शस्त्रसम्पाते प्रवर्तमाने सति वर्त्तमाने क्तः । कपिध्वजः पाण्डवः हनूमता महावीरेण ध्वजरूपतयानुगृहीतोऽर्जुनः ॥२०॥

**शं० टी०**–"तद्यथेह कर्मचितो लोकः क्षीयते सस्यमिव मर्त्यः पच्यते सस्यमिवाजायते पुनः । अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्युं ते पुनरेवापि यन्ति । श्वोभावामर्त्यस्य यदन्तकैतत् पराचः कामाननुयान्ति बाला इति । कर्मणा पितृलोको विद्यया देवलोक इति । अन्धं तमः प्रविशन्ति येऽविद्यामुपासते । ततोभूयइव ते तमोय उ विद्यायाꣳरताः" इत्यादिश्रुतिभिः । 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च । मोघाशा मोघकर्माणः । क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यादिस्मृतिभिश्च जन्यत्वदृश्यत्वादियुक्तिभिश्चापि पण्डितस्य मोक्षैककामिनः स्वेन यष्टव्यदेवानां तदुद्देशेन क्रियमाणकर्मणां तत्फलानां च विचारः सम्यक्कर्तव्य इति सूचयितुमर्जुनस्य परमार्थिनः कर्तव्यं योद्धव्यं योद्धॄणां युद्धक्रियायास्तत्फलस्य च विचारं तदुदितवैराग्यं च प्रतिपादयितुमिदं प्रकरणमारभ्यते–**अथेति** । अथोभयसेनयोः युद्धसन्नाहसमनन्तरं पाण्डोरपत्यं पाण्डवः कपिध्वजोऽर्जुनः व्यवस्थितान् युद्धाय समुपस्थितान् धार्तराष्ट्रान् दृष्ट्वा स्वयमपि धनुरुद्यम्य शस्त्राणां सम्पाते प्रयोगकाले प्राप्ते ॥ २० ॥

**श्री० टी०**–तस्मिन् समये श्रीकृष्णमर्जुनो विज्ञापयामासेत्याह–**अथेति** चतुर्भिः । व्यवस्थितान् युद्धोद्योगेन स्थितान् । कपिध्वजः अर्जुनः ॥ २० ॥

**स० टी०**–इत्येवं धार्तराष्ट्राणां भयप्राप्तिं प्रदर्श्य सः ॥ सञ्जयः पाण्डवानां तु महत्त्वं दर्शयत्यथ॥१॥ धार्तराष्ट्रान् रणोद्योगे दृष्ट्वैवावस्थितान् रिपून् ॥ प्रवर्तमाने सत्येष शस्त्रसम्पात उद्यतः ॥ २ ॥ ध्वजरूपतयात्यन्तवीरेणास्ति हनूमता ॥ अर्जुनोऽनुगृहीतश्च गाण्डीवं धनुरुत्तमम् ॥ ३ ॥ उद्यम्याह हृषीकेशं सर्वधीवृत्तिसाक्षिणम् ॥ २० ॥

**भा० टी०**–अथ तुमुलशब्देन व्यथाप्राप्त्यनन्तरमपि व्यवस्थितान्न तु पलायितान् धृतराष्ट्रसंबन्धिनो दृष्ट्वा प्रत्यक्षेणोपलभ्य प्रवृत्ते शस्त्रसम्पाते शस्त्राणां सम्पातः समुदायः तस्मिन्प्रवृत्ते प्रयोगाभिमुखे सति पाण्डवः धनुरुद्यम्य गाण्डीवं धनुरुद्यतं कृत्वा हृषीकेशमुवाचेत्यन्वयः । पाण्डोरतिवीरस्य महीपतेः पुत्रत्वात् स्वयमतिशूरः । कपिर्वानरो हनूमान् सीतात्मिकां लक्ष्मीं भगवते रामचन्द्राय प्रापयिता । शत्रुपराजयं सम्पाद्य पाण्डवेभ्यो राज्यलक्ष्मीप्रदानाय यस्य ध्वजे स्थित इति भावः ॥ ४ ॥ २० ॥

**प० टी०**–ततः किं वृत्तमित्याह–**अथेति** । कपिध्वजोऽर्जुनश्चतुर्भिः श्लोकैः कृष्णं विज्ञापयति ॥२०॥

**रा० टी०**–तत्त्वोपदेशप्रसंजकमर्जुनविषादं वक्तुमेतावानुपोद्घातः प्रवृत्तः । एवं दुर्योधनव्यापारं दलद्वयगतव्यापारं चोक्त्वाऽधुनार्जुनव्यापारमाह–**अथेत्यादिचतुर्भिः** श्लोकैः । अथानन्तरं कपिध्वजोऽर्जुनः व्यवस्थितान् युद्धे कृतनिश्चयान् दृष्ट्वा शस्त्रसंपाते शस्त्रप्रहरणे प्रवृत्ते । वर्तमानसामीप्ये वर्तमानवद्वा । प्रवर्तितुमुद्युक्ते सति तदा शस्त्रसंपातप्राक्काले इदं वक्ष्यमाणं वाक्यमाहेत्यन्वयः ॥ २० ॥

**हृषीकेशं तदा वाक्यमिदमाह महीपते ॥**
**सेनयोरुभयोर्मध्ये रथं स्थापय मेऽच्युत ॥ २१ ॥**

**त० टी०**—तदा हृषीकेशं सर्वेन्द्रियनियन्तारं स्वसारथीभूतं भगवन्तमिदं वक्ष्यमाणं वाक्यमाह—महीपते इति सम्बोधनेन एवम्भूतेऽर्जुने युद्धायोपस्थिते नीत्यभावान्नश्यमानं तव महीपतित्वमित्युपहासो ध्वनितः। अर्जुनवाक्यमनुवदति—हे अच्युत ! यथा तव कुतोऽपि च्युतिर्नास्ति तथा मे रथमुभयोः सेनयोर्मध्ये स्थापय ॥ २१ ॥

**म० टी०**—सर्वथा भयशून्यत्वेन युद्धाय गाण्डीवं धनुरुद्यम्य हृषीकेशमिन्द्रियप्रवर्तकत्वेन सर्वान्तःकरणवृत्तिज्ञं श्रीकृष्णमिदं वक्ष्यमाणं वाक्यमाहोक्तवान् नत्वविमृश्यकारितया स्वयमेव यत्किंचित्कृतवानिति। परेषां विमृश्यकारित्वेन नीतिधर्मयोः कौशलं वदन्नविमृश्यकारितया परेषां राज्यं गृहीतवानसीति नीतिधर्मयोरभावात्तव जयो नास्तीति महीपते इति सम्बोधनेन सूचयति। तदेवार्जुनवाक्यमवतारयति सेनयोरुभयोः स्वपक्षप्रतिपक्षभूतयोः सन्निहितयोर्मध्ये मम रथं स्थापय स्थिरीकुर्विति सर्वेश्वरो नियुज्यतेऽर्जुनेन। किं हि भक्तानामशक्यं यद्भगवानपि तन्नियोगमनुतिष्ठतीति ध्रुवो जयः पाण्डवानामिति। नन्वेवं रथं स्थापयन्तं मामेते शत्रवो रथात् च्यावयिष्यन्तीति भगवदाशङ्कामाशङ्क्याह—अच्युतेति। देशकालवस्तुष्वच्युतं त्वां को वा च्यावयितुमर्हतीति भावः। एतेन सर्वदा निर्विकारत्वेन नियोगनिमित्तकोपोऽपि परिहृतः ॥ २१ ॥

**शं० टी०**—**हृषीकेशमिति**। तदा हृषीकेशमिदं वक्ष्यमाणं वाक्यमाह—**सेनयोरिति**। योद्धुकामान् युयुत्सून् अतएवावस्थितान्सेनां सन्नह्य युद्धायोद्युक्तानेतान् योधान् सर्वान् यावत् यावति देशे स्थित्वाऽहं निरीक्षे सम्यक्पश्यामि हे अच्युत ! तावन्तं देशं मे रथं नीत्वा सेनयोरुभयोर्मध्ये स्थापय। किमिह सेनां द्रष्टुमागतोसि वा त्वमित्यतआह—**कैरिति**। अस्मिन् रणसमुद्यमे युद्धव्यापारे कैः सह मया योद्धव्यं युद्धं कर्तव्यं भवतीति द्वयोरर्थः ॥ २१ ॥ २२ ॥

**श्री० टी०**—**हृषीकेशमिति**। तदेव वाक्यमाह—**सेनयोरिति** ॥ २१ ॥

**स० टी०**—वक्ष्यमाणमिदं वाक्यं नीतियुक्तं महीपते ॥ स्वपक्षप्रतिपक्षात्मसेनयोरुभयो रथम् ॥ १ ॥ मध्ये संस्थापयेत्येवं सर्वेशोऽपि नियुज्यते ॥ किमशक्यं हि भक्तानां कृष्णपादानुरागिणाम् ॥ २ ॥ यदीश्वरोऽपि भक्तानां नियोगमनुतिष्ठति ॥ पाण्डवानां जयोऽवश्यमित्येवं तेन सूच्यते ॥ ३ ॥ मां रथं स्थापयन्तं ते च्यावयिष्यन्ति शत्रवः ॥ रथादित्येवमाशङ्क्य सम्बोध्याहाच्युतेति च ॥ ४ ॥ देशकालाद्यनुस्यूतं कश्च्यावयितुमर्हति ॥ सर्वथा निर्विकारत्वान्न नियोगेऽपि कोपवान् ॥ ५ ॥ २१ ॥

**भा० टी०**-वाचः प्रवर्तकेन तेनैव प्रेरित आहेति हृषीकेशपदेन सूचितं हृषीकेशं इन्द्रियप्रवर्तकत्वेन सर्वान्तःकरणवृत्तिज्ञमिति केचित् तथा च निर्बलैर्बुद्धिहीनैर्भवद्भिः कपटेन गृहीतं महीपतित्वं पाण्डवानामतिशूराणां भगवता हनूमता चानुगृहीतानां बुद्धिमतामेव भविष्यतीति भवता तत्प्राप्तिदुराशा त्याज्येति ध्वनयन् सम्बोधयति महीपतइति। वाक्यमेवोदाहरति **सेनयोरिति**। उभयोः सेनयोर्मध्ये मे मम रथं स्थापय। ननु मत्स्थापितं रथं ते चालयिष्यन्तीत्यतआह अच्युतेति। रथमप्यचलं कर्तुं समर्थोसीत्यभिप्रायः। तथा च परमेश्वरोपि यस्य सारथ्ये स्थितः प्राकृतसारथिवन्नियुज्यते तस्य विजये को विस्मय इति भावः। युक्तं च भगवतो भक्तपारवश्यं कोपश्च न युक्तः यतः भगवतः स्वरूपं न कदाचिदपि प्रच्युतिं प्राप्नोतीत्यच्युतेति सम्बोधनाशय इत्येके। नन्वेवं रथं स्थापयन्तमामेते शत्रवो रथाच्च्यावयिष्यन्तीति भगवदाशङ्कामाशङ्क्याह—**अच्युतेति**। देशकालवस्तुष्वच्युतं त्वां को वा च्यावयितुमर्हतीति भाव इति केचित् ॥ २१ ॥

**रा० टी०**— सार्धश्लोकद्वयेन तद्वाक्यमाह—**सेनयोरिति**। अस्मिन्रणोद्योगे कैः सह मया यौद्धव्यं। दुर्बुद्धेर्धार्तराष्ट्रस्य प्रियं कर्तुमिच्छन्तो येऽत्र समागतास्तान्योद्धुकामानवस्थितान्योत्स्यमानान्यावद्द्रक्ष्यामि तावदुभयोः सेनयोर्मध्ये रथं स्थापयेत्याहेत्यर्थः ॥ २१–२३ ॥

**यावदेतान्निरीक्षेऽहं योद्धुकामानवस्थितान् ॥**
**कैर्मया सह योद्धव्यमस्मिन्रणसमुद्यमे ॥ २२ ॥**

**त० टी०–न ह्येकत्रैव स्थिरीभूय योद्धुं नियमोऽस्ति, किमर्थमुभयोः सेनयोर्मध्ये रथः स्थापनीय इत्यपेक्षायामाह–यावदिति । योद्धुकामानवस्थितानेतान्यावदहं निरीक्ष्ये तावत्कालं स्थापय, न तु सर्वदेत्यर्थः । ननु त्वं प्रेक्षको भूत्वा द्रष्टुमागतोऽसि योद्धुं वेत्यत आह–कैरिति । अस्मिन् रणसमुद्यमे प्रायो बन्धवएव समागता अतः कैर्मया सह योद्धव्यं केषां मया सह । मम वा कैः सह योद्धुं योग्यमित्यर्थः ॥ २२ ॥**

**म० टी०**–मध्ये रथस्थापनप्रयोजनमाह–योद्धुकामान् नत्वस्माभिः सह सन्धिकामानवस्थितान् नतु भयात्प्रचलितानेतान्भीष्मद्रोणादीन् यावद्गत्वाहं निरीक्षितुं क्षमः स्यां तावत्प्रदेशे रथं स्थापयेत्यर्थः । यावदिति कालपरं वा । ननु त्वं योद्धा नतु युद्धप्रेक्षकः अतस्तव किमेषां दर्शनेनेत्यत्राह–कैरिति । अस्मिन् रणसमुद्यमे बन्धूनामेव परस्परं युद्धोद्योगे मया कैःसह योद्धव्यं मत्कर्तृकयुद्धप्रतियोगिनः के । कैर्मयासह योद्धव्यं किंकर्तृकयुद्धप्रतियोग्यहमिति च महदिदं कौतुकमेतज्ज्ञानमेव मध्ये रथस्थापनप्रयोजनमित्यर्थः ॥ २२ ॥

**श्री० टी०**–यावदेतानिति । ननु त्वं योद्धा न तु युद्धप्रेक्षकस्तत्राह । कैः सह मया योद्धव्यम् ॥ २२ ॥

**स० टी०**–मध्ये किं स्थापनस्यास्ति फलमत्राह पाण्डवः ॥ योद्धुकामान्न चास्माभिः सन्धिकामानवस्थितान् ॥ १ ॥ भीष्मद्रोणादिकानेतान् यावद्गत्वा निरीक्षितुम् ॥ क्षमोऽहं स्यां रथं तावत्प्रदेशे स्थापयाच्युत ॥ २ ॥ योद्धा त्वमसि नो युद्धप्रेक्षकः किं दिदृक्षया ॥ तवैषामिति शङ्कायामर्जुनः प्राह सद्वचः ॥३॥ अन्योन्यमेव बन्धूनां युद्धोद्योगे मया सह ॥ कैर्योद्धव्यं मयाप्यत्र योद्धव्यं कैः सहेति वा ॥ ४ ॥ २२ ॥

**भा० टी०**–सेनयौरुभयोर्मध्येपि क स्थापनीय इत्यपेक्षायामाह–यावदिति । एतान् योद्धुकामानवस्थिताम् यावद्यस्मिन्स्थाने स्थित्वाऽहं निरीक्षे द्रष्टुं समर्थः स्यां तस्मिन्स्थाने रथं स्थापयेत्यर्थः । यावदिति कालपरं वा निरीक्षणप्रयोजनमाह–कैरिति । अस्मिन् रणसमुद्यमे युद्धोद्योगे बहूनां शूराणां मध्ये कैः सह मया योद्धव्यं मया सह च कैर्योद्धव्यमित्यालोचनार्थमित्यर्थः ॥ २२ ॥

**योत्स्यमानानवेक्षेऽहं य एतेऽत्र समागताः ॥**
**धार्तराष्ट्रस्य दुर्बुद्धेर्युद्धे प्रियचिकीर्षवः ॥ २३ ॥**

**त० टी०–ननु बन्धवः सर्वे त्वया दृष्टपूर्वा एव योग्यतामयोग्यतां च जानास्येव किं पुनरत्र तन्निरीक्षणेनेति चेत्तत्राह–योत्स्यमानानिति । य एतेऽत्र समागतास्तान्योत्स्यमानानहमवेक्ष्ये द्रक्ष्यामि । ननु भीष्मादयः कुलवृद्धत्वात्समा द्रोणादयस्त्वाचार्यत्वात्सुहृद एवोभयोः समार्थमागताश्चेद्येऽत्र समागतास्तान्योत्स्यमानानिति कथमुक्तमिति चेत्तत्राह। दुर्बुद्धेर्धार्तराष्ट्रस्य युद्धे प्रियचिकीर्षवः अतस्तदवेक्षणमुचितमेवेति भावः ॥ २३ ॥**

**म० टी०**–ननु बन्धवएव एते परस्परं सन्धिं कारयिष्यन्तीति कुतो युद्धमित्याशङ्क्याह । यएते भीष्मद्रोणादयः धार्तराष्ट्रस्य दुर्बुद्धेः दुर्योधनस्य स्वरक्षणोपायमजानतः प्रियचिकीर्षवो युद्धे नतु दुर्बुद्ध्यपनयनादेतान् योत्स्यमानानहमवेक्षे उपलभे नतु सन्धिकामान् अतो युद्धाय तत्प्रतियोग्यवलोकनमुचितमेवेति भावः॥२३॥

**शं० टी०**–**योत्स्यमानानिति** । दुर्बुद्धेरधर्मनिष्ठस्य धार्तराष्ट्रस्य धृतराष्ट्रापत्यस्य दुर्योधनस्य युद्धे प्रिय-

१ निरीक्ष्ये इतिपाठः । २ अवेक्ष्ये इतिपाठः ।

चिकीर्षवः युद्धेनेष्टमर्थं संपादयितुकामाः सन्तोऽत्र कुरुक्षेत्रे ये वा एते समागतास्तान् योत्स्यमानान्सर्वानह-मवेक्षे नाम रूपं कुलं च संबन्धं यथा ज्ञास्ये तथा रथं स्थापयेत्यर्थः ॥ २३ ॥

श्री० टी०-योत्स्यमानानिति। धार्तराष्ट्रस्य दुर्योधनस्य प्रियं कर्तुमिच्छन्तो य इह समागताः तान् यावद्द्रक्ष्यामि तावदुभयोः सेनयोर्मध्ये मे रथं स्थापयेत्यन्वयः ॥ २३ ॥

स० टी०-सन्धिं ते कारयिष्यन्ति बन्धवोऽन्योन्यमेव चेत् ॥ कुतो युद्धं भवेदेवमाशङ्क्याहार्जुनो वचः ॥ १ ॥ य एते द्रोणभीष्माद्या धार्तराष्ट्रस्य दुर्मतेः ॥ प्रियं चिकीर्षवो युद्धे न तु दुर्मतिनाशने ॥ २ ॥ योत्स्य-मानानहं तानुपलभे न तु सन्धिकान् ॥ अतः कौतुकसिद्ध्यर्थं प्रतियोग्यवलोकनम् ॥ ३ ॥ युक्तमित्याशयो भाति पार्थस्यात्र विपश्चितः ॥ ४ ॥ २३ ॥

भा० टी०-योद्धुकामानवस्थितानित्युक्तं विवृणोति-योत्स्यमानानिति । योत्स्यमानानहमवेक्षे उपलभे न तु सान्धिकामान् नापि धार्तराष्ट्रस्य दुर्बुद्धेर्बुद्धिनिवृत्त्यर्थमवस्थितान् प्रत्युत तस्य प्रियचिकीर्षूनित्याह। य एते योधा अत्र समरभूमौ समागताः दुर्योधनस्य दुष्टबुद्धेः प्रियं कर्तुमिच्छवो न तु समर्था इत्यर्थः । धार्तराष्ट्रस्येत्यनेन धृतराष्ट्रस्यापि दुर्बुद्धित्वं सूचयति ॥ २३ ॥

प० टी०-धार्तराष्ट्रस्य दुर्बुद्धेः कूटकारिणो युद्धे प्रियं कर्तुमिच्छन्तो य एतेत्र समागताः सन्ति तान्या-वन्निरीक्षे तावदुभयोः सेनयोर्मध्ये रथं स्थापयेति ॥ २३ ॥

**सञ्जय उवाच-एवमुक्तो हृषीकेशो गुडाकेशेन भारत ॥**
**सेनयोरुभयोर्मध्ये स्थापयित्वा रथोत्तमम् ॥ २४ ॥**
**भीष्मद्रोणप्रमुखतः सर्वेषां च महीक्षिताम् ॥**
**उवाच पार्थ पश्यैतान्समवेतान्कुरूनिति ॥ २५ ॥**

**त० टी०-ततः किं वृत्तमित्यपेक्षायां सञ्जयो धृतराष्ट्रं प्रत्युक्तवानित्याह वैशम्पायनः-सञ्जय उवाचेति । सञ्जयवचनमवतारयति-एवमिति द्वाभ्याम् । हे भारत ! अतिधार्मिकस्य भरतस्या-न्वये जातस्य तवापि ज्ञातिद्रोहचिन्तनमनुचितमिति भावः । गुडाका निद्रा तस्या ईशेनार्जुनेन एवं पूर्वोक्तप्रकारेणोक्तो हृषीकेश उभयोः सेनयोर्मध्ये भीष्मद्रोणयोः प्रमुखतः प्रमुखे, सर्वेषां च महीक्षितां मह्यां क्षीयन्ते महीक्षितो राजानस्तेषां च प्रमुखे, रथोत्तमं स्थापयित्वा हे पार्थ ! समवेतान्युद्धाय मिलि-तानेतान् कुरून् पश्येत्युवाच ॥ २४ ॥ २५ ॥**

म० टी०-एवमर्जुनेन प्रेरितो भगवानहिंसारूपं धर्ममाश्रित्य प्रायशो युद्धात्तं व्यावर्तयिष्यतीति धृतराष्ट्रा-भिप्रायमाशङ्क्य तन्निराचिकीर्षुः सञ्जयो धृतराष्ट्रं प्रत्युक्तवानित्याह वैशम्पायनः-एवमिति। हे भारत धृतराष्ट्र! भ-रतवंशमर्यादामनुसन्धायापि द्रोहं परित्यज ज्ञातीनामिति सम्बोधनाभिप्रायः । गुडाकाया निद्राया ईशेन जित-निद्रतया सर्वत्र सावधानेन अर्जुनेनैवमुक्तो भगवानयं मद्भृत्योऽपि सारथ्ये मां नियोजयतीति दोषमासज्य नाकुप्यन्न वा तं युद्धान्न्यवर्तयत्। किन्तु सेनयोरुभयोर्मध्ये भीष्मद्रोणप्रमुखतः प्रमुखे सम्मुखे सर्वेषां महीक्षितां च सम्मुखे। आद्यादित्वात्सार्वविभक्तिकस्तसिः। चकारेण समासनिविष्टोपि प्रमुखतः शब्द आकृष्यते। भीष्म-द्रोणयोः पृथक्कीर्तनमतिप्राधान्यसूचनाय । रथोत्तममग्निना दत्तं दिव्यं रथं भगवता स्वयमेव सारथ्येनाधिष्ठित-तया च सर्वोत्तमं स्थापयित्वा हृषीकेशः सर्वेषां निगूढाभिप्रायज्ञो भगवानर्जुनस्य शोकमोहावुपस्थिताविति विज्ञाय सोपहासमर्जुनमुवाच हे पार्थ ! पृथाया स्त्रीस्वभावेन शोकमोहग्रस्ततया तत्सम्बन्धिनस्तवापि तद्वत्ता

समुपस्थितेति सूचयन् हृषीकेशत्वमात्मनो दर्शयति । पृथा मम पितुः स्वसा तस्याः पुत्रोऽसीति सम्बन्धोल्लेखेन चाश्वासयति मम सारथ्ये निश्चितो भूत्वा सर्वानपि समवेतान्कुरून्युयुत्सून्पश्य निःशङ्कतयेति दर्शनविध्य-भिप्रायः । अहं सारथ्येऽतिसावधानः त्वं तु साम्प्रतमेव रथित्वं त्यक्ष्यसीति किं तव परसेनादर्शने-नेत्यर्जुनस्य धैर्यमापादयितुं पश्येत्येतावत्पर्यन्तं भगवतो वाक्यं । अन्यथा रथं सेनयोर्मध्ये स्थापयामासेत्ये-तावन्मात्रं ब्रूयात् ॥ २४ ॥ २५ ॥

**शं० टी०—एवमिति** । गुडाकेशः 'अङ्गुष्ठतर्जनीयोगो गुडानाम्नी तु मुद्रिका' इतिवचनादङ्गुष्ठतर्जनीयोगो गु-डेत्युच्यते । तत्परिमाणा अग्रकेशा यस्य स गुडाकेशः । यद्वा । 'गुडो गोलेक्षुपाकयोः' इत्यभिधानाद्गुडो गोलः ब्रह्माण्डगोलस्तं तत्प्रायःपिण्डमग्निरिवान्तर्बहिश्चाकति व्याप्नोतीति गुडाकः शिवः "विश्वस्यैकं परिवेष्टितारं ज्ञात्वा शिवम्" इतिश्रुतेः । यद्वा गुडवन्मधुरः सन् भक्तानकति प्राप्नोतीति गुडाकः शिवः । "स्वादुष्किलायं मधुमा-नुतायम्" इतिश्रुतेः । स शिव ईशो यस्य स गुडाकेशोऽर्जुनस्तेन हृषीकेशः हृषीकाणामिन्द्रियाणामीशो हृषी-केशः श्रीकृष्ण एवमुक्तः सन् रथोत्तमं रथिकसारथिभ्यामश्वविशेषैर्ध्वजप्रभावेन चोत्कृष्टत्वेन तद्रथस्योत्तमत्वं । तं रथोत्तमं सेनयोरुभयोर्मध्ये स्थापयित्वा ॥ २४ ॥ **भीष्मेति** । भीष्मद्रोणप्रमुखतः षष्ठीबहुवचनान्तस्तसिः । भीष्मद्रोणौ प्रमुखमादिर्येषां ते भीष्मद्रोणप्रमुखाः महीक्षितः छत्रिन्यायेनात्र भीष्मस्यैव महीक्षित्त्वं तेषां भीष्मद्रोणप्रमुखानां महीक्षितां भूभुजां सर्वेषां शृण्वतामिति शेषः । हे पार्थ ! समवेतान्समवायं प्राप्ताने-तान्कुरून्पश्येत्युवाच ॥ २५ ॥

**श्री० टी०**—ततः किं प्रवृत्तमित्यपेक्षायां सञ्जय उवाच—**एवमिति** । गुडाका निद्रा तस्या ईशेन जित-निद्रेणार्जुनेनैवमुक्तः सन् हे भारत धृतराष्ट्र ! सेनयोर्मध्ये रथानामुत्तमं रथं हृषीकेशः स्थापितवान् ॥ २४ ॥ **भीष्मद्रोणइति** । महीक्षितां पितामहद्रोणराज्ञां च प्रमुखतः सम्मुखे रथं स्थापयित्वा हे पार्थ ! एतान्कुरून्पश्येत्युवाच ॥ २५ ॥

**स० टी०**—भगवान्प्रेरितो ह्येनं युद्धाद्व्यावर्तयिष्यति ॥ अहिंसाधर्ममाश्रित्येत्येवमाशङ्क्य सञ्जयः ॥ १ ॥ प्राह हे भारतेत्येवं स्ववंशोचितमाचर ॥ सर्वत्र सावधानेन जितनिद्रेण केशवः ॥ २ ॥ एवमुक्तोऽप्ययं भृत्यो मां नियोजयतीति च ॥ दोषमासज्य नाकुप्यन्न तं युद्धान्न्यवर्तयत् ॥ ३ ॥ यथोक्तं सेनयोर्मध्ये भीष्मद्रोणादिसंमुखे ॥ अग्निदत्तं रथं दिव्यं स्वयं भगवताश्रितम् ॥ ४ ॥ स्थापयित्वा समस्तानां गूढभावज्ञ ईश्वरः ॥ अर्जुनस्यापि विज्ञाय शोकमोहावुपस्थितौ ॥ ५ ॥ सोपहासमुवाचेदं स्वभक्तं प्रियमर्जुनम् ॥ पृथायाः स्त्रीस्वभावेन शोकमोहनिमग्नता ॥ ६ ॥ तवापि तत्सुतत्वेन तद्वत्तास्तीति सूचयन् ॥ युयुत्सूंस्त्वं कुरून्पश्य निःशङ्कत्वेन तानिति ॥ ७ ॥ २४ ॥ २५ ॥

**भा० टी०**—ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच—**एवमित्यादि** । यत्तु एवमर्जुनेन प्रेरितो भगवान् अहिंसारूपं धर्ममाश्रित्य प्रायशस्तं युद्धात् व्यावर्तयिष्यतीति धृतराष्ट्राभिप्रायमालक्ष्य सञ्जय उवाचेति तदुपे-क्ष्यं । युद्धमेव जातमिति श्रुतवत एवमभिप्रायवर्णनस्यानुचितत्वात् । एवं पूर्वोक्तेन प्रकारेण गुडाकेशेनार्जुनेनोक्तो हृषीकेशो भगवान् वासुदेवः सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः सर्वोत्तमयोः सर्वेषां च महीक्षितां महीपतीनां प्रमुखतः संमुखे रथोत्तमं दिव्यं रथं स्थापयित्वोवाचोक्तवान् । हे पार्थ! एतान्कुरून् भीष्मादीन्समवेतान् युद्धार्थं मिलितान्पश्येति द्वयोरर्थः । तथा च यस्याज्ञामीश्वरोऽप्यङ्गीकरोति तस्यार्जुनस्य माहात्म्यं किं वक्तव्यमिति भावः । हे भारत! भरतवंशोद्भवत्वात् शोकं मा कुर्वित्याशयः । भरतवंशमर्यादामनुसन्धायापि द्रोहं परित्यज ज्ञातीना-मिति सम्बोधनाशय इति केचित् । गुडाकेशेन जिताज्ञाननिद्रेणैवमुक्तो हृषीकेशः सर्वेन्द्रियनियन्ता लोकोद्धा-राय स्वस्वरूपभूतस्यार्जुनस्यान्तःकरणे शोकमोहयोराविर्भावयिता सेनयोरुभयोर्मध्ये भीष्मद्रोणयोः सर्वेषां

च राज्ञां प्रमुखतः रथोत्तमं स्थापयित्वोवाच–हे पार्थ ! लोकोद्धाराय स्त्रीस्वभावौ शोकमोहावङ्गीकुरु कथमित्यपेक्षायामाह–एतान्मिलितान्कुरून्सर्वान् स्वबान्धवान् पश्य दृष्ट्वा चैते मदीया एतानहं न हन्मीति निर्विण्णो भवेति हृषीकेशादिपदैस्तात्पर्यार्थः सूचितः। हृषीकेशः सर्वेषां निगूढाभिप्रायज्ञो भगवान् अर्जुनस्य शोकमोहावुपस्थिताविति विज्ञाय सोपहासमर्जुनमुवाच–हे पार्थ ! पृथायाः स्त्रीस्वभावत्वेन शोकमोहग्रस्ततया तत्सम्बन्धिनस्तवापि तद्वत्तोपस्थितेति सूचयन् हृषीकेशत्वमात्मनो दर्शयति। पृथा मम पितुः स्वसा तस्याः पुत्रोऽसीति तत्सम्बन्धोल्लेखेन वाऽऽश्वासयति मम सारथ्ये निश्चितो भूत्वा सर्वानपि समवेतान्कुरून् युयुत्सून् पश्य निःशङ्कतयेति दर्शनविध्यभिप्रायः। अहं सारथ्येऽतिसावधानस्त्वं तु सांप्रतमेव रथित्वं त्यक्ष्यसीति किं तव परसेनादर्शनेनेत्यर्जुनस्य धैर्यमापादयितुं पश्येत्येतावत्पर्यन्तं भगवतो वाक्यं। अन्यथा रथं सेनयोर्मध्ये स्थापयामासेत्येतावदेव ब्रूयादिति केचित् ॥ २४ ॥ २५ ॥

प० टी०। अथ श्रीकृष्णोपि सेनयोर्मध्ये भीष्मद्रोणप्रमुखानां सर्वेषां महीक्षितां राज्ञां च संमुखं रथं नीत्वा उवाच। किमुवाचेत्याह–एवमिति। भो पार्थ ! एतान् समवेतान् कुरून् पश्येति ॥ २४ ॥ २५ ॥

श० टी०–एवं गुडाकेशेन गुडाकाया निद्रायाः ईशेन जितनिद्रेणार्जुनेनोक्तो हृषीकेशः सर्वेन्द्रियप्रेरकः श्रीकृष्णः बलद्वयमध्ये भीष्मद्रोणप्रमुखतः तदाभिमुख्येन तथा सर्वेषां च महीक्षितां राज्ञां प्रमुखत इति बुद्ध्या विविक्तेनान्वयः। रथं स्थापयित्वा हे पार्थ ! समवेतान्युद्धार्थं मिलितानेतान्कुरून्पश्येत्युवाचेति ॥ २४॥२५ ॥

तत्राऽपश्यत् स्थितान्पार्थः पितॄनथ पितामहान् ॥
आचार्यान्मातुलान्भ्रातॄन्पुत्रान्पौत्रान्सखींस्तथा ॥ २६ ॥
श्वशुरान् सुहृदश्चैव सेनयोरुभयोरपि ॥
तान्समीक्ष्य स कौन्तेयः सर्वान्बन्धूनवस्थितान् ॥ २७ ॥
कृपया परयाऽऽविष्टो विषीदन्निदमब्रवीत् ॥
अर्जुन उवाच–दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम् ॥ २८ ॥
सीदन्ति मम गात्राणि मुखं च परिशुष्यति ॥
वेपथुश्च शरीरे मे रोमहर्षश्च जायते ॥ २९ ॥
गाण्डीवं स्रंसेत हस्तात्त्वक्चैव परिदह्यते ॥
न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः ॥ ३० ॥

त० टी०–ततः किं वृत्तमित्यत आह–तत्रेति सार्धेन। समवेतान् कुरून् पश्येत्येवं भगवतोक्ते सति पार्थ उभयोः सेनयोरपि स्थितान् पितॄन् भूरिश्रवादीन्, तदनन्तरं पितामहान्भीष्मादीन्, आचार्यान् द्रोणकृपादीन्, मातुलान् शल्यशकुन्यादीन्, भ्रातॄन्भीमदुर्योधनादीन्, पुत्रानभिमन्युलक्ष्मणादीन्, पौत्रान् लक्ष्मणादिपुत्रान्, सखीन्वयस्यानश्वत्थामादीन्, श्वशुरान् भार्याणां पितॄन्, सुहृदः कृतोपकारा ये तान्सर्वानपश्यत् ॥ ततः किं कृतवानिति पुत्रराज्यहानिशङ्काव्याकुलचित्तं धृतराष्ट्रमाश्वासयन्निवाह–तानिति। पितृहीनानां वने क्लिष्टानां राज्यभागो देय इति तव कृपा नोत्पन्ना। तथाऽर्जुनस्तु महादेवादिन्द्रादेश्च लब्धदिव्यायुधोऽपि अग्निदत्तगाण्डीवधनुषा वासुदेवेन सारथिना च सर्वक्षत्रियजयनसमर्थोऽपि तान् सर्वान् बन्धूनवस्थितान्समीक्ष्य परया स्वाभाविक्या कृपयाऽऽविष्टो व्याप्तोऽभूत्।

तत्कुतः। यतः कौन्तेयः महापराधिन्यपि कंसे क्षमाशीलस्य ज्ञानिनो भक्तस्य वसुदेवस्य तत्समशीलाया भगिन्याः कुन्त्याः सुतस्तत एवं विषीदन् विषादं कुर्वन्निदं वक्ष्यमाणं वचनग्राममब्रवीत् ॥ तदेवाह—अर्जुन उवाचेति। तच्च दृष्ट्वेत्यारभ्य धार्त्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेदित्यन्तम्। हे कृष्ण ! सच्चिदानन्दस्वरूप ! इमं स्वजनं स्वकीयं भ्रातृपुत्रादिबन्धुवर्गं युयुत्सुं योद्धुमिच्छुं समुपस्थितं सम्यक् शस्त्रकवचादि सन्नह्य समीपे स्थितं दृष्ट्वा मम गात्राण्यङ्गानि सीदन्ति व्यथन्ते। मुखं च परिशुष्यति सर्वतः शुष्यति ॥ किञ्च मे शरीरे वेपथुः कम्पः रोमहर्षश्च जायते। गाण्डीवस्रंसनं त्वग्दाहश्चेत्यनिष्टसूचकं लक्षणं प्रतीयते ॥ किञ्च अवस्थातुं च न शक्नोमि च पुनर्मे मनो भ्रमतीव भ्रमसदृशं विकारं मनसि भावयामि ॥ २६-३० ॥

म० टी०—तत्र समरसमारम्भार्थं सैन्यदर्शने भगवताभ्यनुज्ञाते सति सेनयोरुभयोरपि स्थितान्पार्थोऽपश्यदित्यन्वयः। अथशब्दस्तथाशब्दपर्यायः परसेनायां पितॄन्पितृव्यान्भूरिश्रवःप्रभृतीन्पितामहान्भीष्मसोमदत्तप्रभृतीनाचार्यान्द्रोणकृपप्रभृतीन्मातुलान् शल्यशकुनिप्रभृतीन्भ्रातॄन्दुर्योधनप्रभृतीन्पुत्राँल्लँक्ष्मणप्रभृतीन्पौत्राँल्लँक्ष्मणादिपुत्रान्सखीनश्वत्थामजयद्रथप्रभृतीन् सुहृदो मित्राणि कृतवर्मभगदत्तप्रभृतीन्। सुहृदइत्यनेन यावन्तः कृतोपकारा मातामहादयश्च ते द्रष्टव्याः। एवं स्वसेनायामप्युपलक्षणीयम्। एवं स्थिते महानधर्मो हिंसेति विपरीतबुद्ध्या मोहाख्यया शास्त्रविहितत्वेन धर्मत्वमिति ज्ञानप्रतिबन्धकेन च ममकारनिबन्धनेन चित्तवैक्लव्येन शोकमोहाख्येनाभिभूतविवेकस्यार्जुनस्य पूर्वमारब्धाद्युद्धाख्यात्स्वधर्मादुपरिरंसा महानर्थपर्यवसायिनी प्रवृत्तेति दर्शयति—कौन्तेयइति। स्त्रीप्रभवत्वकीर्तनं पार्थवत्तात्विकमूढतामपेक्ष्य कृपया कर्त्र्या स्वव्यापारेणैवाविष्टो व्याप्तः नतु कृपां केनचिद्व्यापारेणाविष्टइति स्वतः सिद्धैवास्य कृपेति सूच्यते। एतत्प्रकटीकरणाय परयेति विशेषणम्। अपरयेति वा छेदः। स्वसैन्ये पुरापि कृपाभूदेव। तस्मिन् सैन्येतु कौरवसैन्येप्यपरा कृपाभूदित्यर्थः। विषीदन् विषादमुपतापं प्राप्नुवन्नब्रवीदित्युक्तिविषादयोः समकालतां वदन् सगद्गदकण्ठताश्रुपातादि विषादकार्यमुक्तिकाले द्योतयति तदेव भगवन्तं प्रत्यर्जुनवाक्यमवतारयति संजयः—अर्जुनउवाचेत्यादिना। एवमुक्त्वाऽर्जुनः सङ्ख्यइत्यतः प्राक्तनेन ग्रन्थेन तत्र स्वधर्मप्रवृत्तिकारणीभूततत्त्वज्ञानप्रतिबन्धकः स्वपरदेहे आत्मात्मीयाभिमानवतोऽनात्मविदोर्जुनस्य युद्धेन स्वपरदेहविनाशप्रसङ्गदर्शिनः शोको महानासीदिति तल्लिङ्गकथनेन दर्शयति त्रिभिः श्लोकैः। इमं स्वजनमात्मीयं बन्धुवर्गं युद्धेच्छुं युद्धभूमौ चोपस्थितं दृष्ट्वा स्थितस्य मम पश्यतो ममेत्यर्थः। अङ्गानि व्यथन्ते मुखं च परिशुष्यतीति श्रमादिनिमित्तशोषापेक्षयाऽतिशयकथनाय सर्वतोऽभाववाचिपरिशब्दप्रयोगः। वेपथुः कम्पः रोमहर्षः पुलकितत्वं गाण्डीवभ्रंशेनाधैर्यलक्षणं दौर्बल्यं त्वक्परिदाहेन चान्तःसन्तापो दर्शितः। अवस्थातुं शरीरं धारयितुं च न शक्नोमीत्यनेन मूर्च्छा सूच्यते। तत्र हेतुः मम मनो भ्रमतीवेति भ्रमणकर्तृ सादृश्यं नाम मनसः कश्चिद्विकारविशेषो मूर्छायाः पूर्वावस्था। च हेतौ। यतएव मनो नावस्थातुं शक्नोमीत्यर्थः ॥ २६-३० ॥

शं० टी०—मुमुक्षोर्विदुषो यष्टव्यदेवतापरिशीलनमेव कर्तव्यमिति सूचयितुमर्जुनस्य सैनिकपरिशीलनप्रकारमाह द्वाभ्याम्—तत्रेति। अथ भगवदुक्तेरनन्तरं पार्थः पृथा कुन्ती तदपत्यं पार्थोऽर्जुनो यत्र रथः स्थापितस्तत्र स्थित्वा सेनयोरुभयोरपि स्थितान्पितॄन्पितृव्यान्सखीन्सवयस्काः सखायस्तान् श्वशुरान् सुहृदो मित्राणि चैवं सर्वानपि स्वीयानेवापश्यत्। नतु तदतिरिक्तानित्यर्थः। एवं तान्दृष्टवतोर्जुनस्य तद्दर्शनकार्यमाह—तानिति। स दर्शनकर्मणि प्रवृत्तः कौन्तेयः कुन्त्या अपत्यं कौन्तेयोऽर्जुनः बन्धून्बन्धुत्वधर्मविशिष्टानेव तानवस्थितान्युद्धसन्नद्धान्सर्वान्समीक्ष्य ग्रीवामुन्नम्य सम्यग्दृष्ट्वेति द्वयोरर्थः ॥ २६ ॥ २७ ॥ कृपयेति। तेषु परया कृपयाविष्टो भूत्वा विषीदन्निदं वक्ष्यमाणलक्षणं वचनमब्रवीत् "तस्माच्च देवा बहुधा संप्रसूताइति, मुखादिन्द्रश्चाग्निश्च"

इत्यादिश्रुतिभ्यो देवतानां जनिश्रवणाज्जनिमतां तेषामनित्यत्वमागन्तुकैश्वर्यत्वं संसारित्वं फलदानेन बन्धकत्वं च विज्ञाय मुमुक्षुणा नित्यसुखार्थिना तद्यजने किमनेन दुःखान्तेन कर्मणेतिपरितापः कर्तव्यइति सूचयितुमर्जुनस्य स्वकर्तृकबन्धुजनवधनिमित्तकपरितापप्रकारमाहाध्यायसमाप्तेः । **दृष्ट्वेति** । युयुत्सुं सेनां सन्नह्य युयुत्सया समुपस्थितमिमं पुरःस्थं स्वजनं पितृपुत्रादिकं दृष्ट्वा मदीया इति ज्ञात्वा ॥ २८ ॥ **सीदन्तीति** । हन्तुं मम गात्राणि करचरणादयः सीदन्ति शिथिलायन्ते मुखं च परिशुष्यति शुष्कीभवति शरीरे वेपथुः कम्पो रोमहर्षो भयसन्तापाभ्यां रोमोद्गमश्च जायते ॥ २९ ॥ **गाण्डीवमिति** । हस्ताद्गाण्डीवं धनुः स्रंसते गलति त्वक्चर्म च परितापेन दह्यते मे मनोपि च भ्रमति परवशं गच्छति । अतएव रथे स्थातु च न शक्नोमि ॥ ३० ॥

**श्री० टी०**—ततः किं प्रवृत्तमित्यतआह—**तत्रेति** । पितॄन्पितृव्यादीनित्यर्थः । पुत्रान्पौत्रानिति दुर्योधनादीनां ये पुत्राः पौत्राश्च तानित्यर्थः । सखीन्मित्राणि सुहृदः कृतोपकारांश्चापश्यत् ॥ ततः किं कृतवानित्यत आह—**तानिति** । आविष्टो व्याप्तः युक्तः । विषीदन्विशेषेण सीदन् अवसादं ग्लानिं लभमानः ॥ किमब्रवीदित्यपेक्षायामाह—**दृष्ट्वेममित्यादि** यावदध्यायसमाप्ति । हे कृष्ण ! योद्धुमिच्छन्तं पुरतः सम्यगवस्थितं इमं बन्धुजनं दृष्ट्वा मदीयानि गात्राणि करचरणादीनि सीदन्ति विशीर्यन्ते । किञ्च मुखं परि समन्तात् शुष्यति निर्द्रवीभवति ॥ किञ्च **वेपथुश्चेति** । वेपथुः कंपः । रोमहर्षः रोमाञ्चः । स्रंसते निपतति । परिदह्यते सर्वतः सन्तप्यते ॥ २६-३० ॥

**श्र० टी०**—एवं भगवता प्रोक्ते सेनयोरुभयोपि ॥ पार्थोऽपश्यत्स्थितान्भूरिश्रवआदीन्पितृंस्तथा ॥ १ ॥ पितामहान्भीष्ममुख्यान्कृपद्रोणमुखान् गुरून् ॥ शल्यादीन्मातुलान्भ्रातॄन्दुर्योधनमुखान्बहून् ॥ २ ॥ लक्ष्मणप्रभृतीन्पुत्रानश्वत्थाममुखान्सखीन् ॥ पौत्राँल्लक्ष्मणपुत्रादीन् श्वशुरान्बहुधा स्थितान् ॥ ३ ॥ सुहृदः कृतवर्मादीनेवमेव स्वसैन्यके ॥ एवं स्थितेऽन्यथाबुद्ध्या स्वधर्मे धर्मरूपया ॥ ४ ॥ ममत्वाविष्टयाऽत्यन्तमोहग्राहगृहीतया ॥ अभिभूतविवेकस्य स्वधर्मादर्जुनस्य च ॥ ५ ॥ धर्म्याद्युद्धात्पुरारब्धान्महानर्थावसानिका ॥ सञ्जातोपरिरंसेति दर्शयत्यधुना स्फुटम् ॥ ६ ॥ कृपया कर्तृरूपिण्या कर्मभूतोऽर्जुनोऽवशः ॥ व्याप्तोऽनादिमहामोहजन्ययाऽध्यासरूपया ॥ ७ ॥ स्वकीयानुपलभ्यैते ममेत्याक्रान्तमानसः ॥ सन्तापं प्राप्नुवन्नाह वक्ष्यमाणमिदं वचः ॥ ८ ॥ स्वधर्मकरणे हेतुभूतज्ञानानिरोधकृत् ॥ महाशोकोऽर्जुनस्यासीन्ममाहमिति चेतसा ॥ ९ ॥ इति तल्लिङ्गतो वक्ति पार्थोक्तिं सञ्जयस्त्रिभिः ॥ बन्धुवर्गमिमं स्वीयं युद्धेप्सुं युद्धभूगतम् ॥ १० ॥ पश्यतो मे श्लथन्तेऽङ्गान्याननं परिशुष्यति ॥ कम्पः पुलकितत्वं च गाण्डीवभ्रंशनं तथा ॥ ११ ॥ त्वग्दाहो धैर्यदौर्बल्यमन्तःसन्तापहेतुकाः । स्वशरीरं न शक्नोमि मनो धारयितुं तथा ॥ १२ ॥ २६-३० ॥

**भा० टी०**—एवं स्वसारथ्ये दृढतया स्थितेन स्वोक्तकारिणा भगवतोक्तोऽर्जुनस्तथैव कृतवानित्याह—**तत्रेति** । तत्र समवेतान्कुरून्पश्येति भगवदभ्यनुज्ञाने संवृत्ते सति तत्र सेनयोरुभयोरपिऽस्थितान्पार्थोऽपश्यदिति वा तत्रपदान्वयः । एतान्समवेतान्कुरून्दृष्ट्वा स्त्रीस्वभावौ शोकमोहावङ्गीकुर्विति भगवदभिप्रायमर्जुनो ज्ञात्वा तानपश्यदिति सूचयितुं पार्थ इत्युक्तं । पितॄन् पितृव्यान् भूरिश्रवआदीन् । अथशब्दस्तथाशब्दार्थे तथा पितामहान् भीष्मप्रमुखान् आचार्यान् द्रोणादीन् मातुलान् शल्यप्रभृतीन् भ्रातॄन् भीष्मदुर्योधनाद्यान् पुत्रानभिमन्युलक्ष्मणप्रभृतीन् पौत्रान् लक्ष्मणादिपुत्रान् सखीनश्वत्थामादिकान् ॥ २६ ॥ श्वशुरान् द्रुपदादीन् सात्यकिकृतवर्मप्रभृतीन् । ततः किं कृतवानित्यपेक्षायामाह—**तानिति** । तान् पितृपितामहादीन्बन्धून्सेनयोरुभयोर्मध्ये युयुत्सूनवस्थितान् समीक्ष्य सम्यग्दृष्ट्वेदमब्रवीदित्यन्वयः । भगवदाज्ञया बन्धून्दृष्ट्वा शोकमोहावर्जुनेन गृहीताविति कौन्तेयपदेन सूचितम् ॥ २७ ॥ परया कृपया स्नेहजन्यकरुणयाऽऽविष्टो व्याप्तः सन्नहो एते पित्रादयो

बन्धवो मरिष्यतीति विषादमुपतापं कुर्वन्निदं वक्ष्यमाणमब्रवीदुक्तवानित्यर्थः। तदेवेदंशब्दवाच्यं वचनमुदाहरति—दृष्ट्वेति। इमं प्रत्यक्षेणोपलभ्यमानं स्वजनं स्वसम्बन्धिवर्गं युयुत्सुं युद्धेच्छुं समुपस्थितं सम्यग्युद्धभूमावुपस्थितं न तु साधारणयुयुत्सया साधारणमागतं दृष्ट्वोपलभ्य सीदन्तीति परेणान्वयः। हे कृष्णेति सम्बोधयन् यल्लोकोपकाराय मदीयज्ञानापकर्षणं त्वया कृतं तन्मया बुद्धमिति गूढाभिसन्धिं सूचयति ॥२८॥ आत्मतत्त्वापरिज्ञानकृताहङ्कारममकारोत्थयोः शोकमोहयोर्लिङ्गानि स्वस्मिन्दर्शयति—सीदन्तीत्यादिना। मम युयुत्सुं स्वजनं दृष्ट्वा एते मरिष्यन्तीति शोकेनाविष्टस्य व्याकुलचित्तस्य गात्राण्यङ्गानि सीदन्ति शिथिलानि भवन्ति वेपथुः कम्पः रोमहर्षो रोमाञ्चः ॥ २९ ॥ हस्ताद्गाण्डीवं स्रंसते पतति। त्वक् चैव परि समन्ताद्दह्यते। धैर्याभावादवस्थातुं च न शक्नोमि। मे मनो भ्रमतीव च मम मनो मोहं प्राप्नोतीवेत्यर्थः ॥ ३० ॥

प० टी०—ततः किं वृत्तमित्याह—तत्रापश्यदिति। पितॄन्पितृव्यान् पितामहान् वृद्धानाचार्यांस्तथा मातृवत्पूज्यान्मातुलानिति पूज्यत्वकोटिः। अथ प्रेमास्पदमाह—भ्रातॄनिति। भ्रातॄन् दुर्योधनादीन् एकोत्तरशतमितान्। अथ कृपापात्राण्याह—पुत्रान् पौत्रानिति। दुर्योधनादीनां पुत्रान् पौत्रांश्चेत्यर्थः। अथापयशोहेतूनाह—सखीनित्यादि ॥ २६ ॥ २७ ॥ अथार्जुनः स्वनिर्वेदं कथयति—दृष्ट्वेममित्यादि। गात्राण्यङ्गानि करचरणादीनि सीदन्ति शिथिलानि भवन्ति। मुखं च शुष्यति शुष्कं भवति ॥ २८ ॥ अथ करुणारसाविर्भावे सात्विकानाह। सर्वशरीरे वेपथुः कम्पो भवति रोमहर्षो रोमाञ्चः। अथाङ्गवैकल्यं दर्शयति। गाण्डीवं धनुः हस्तात्स्रंसते निपतति। त्वक्परिदह्यते संतप्यते ॥ २९ ॥ इतः परं कथं योद्धव्यमित्याह—नचेति। न केवलमवस्थातुं न शक्नोमि किं पुनर्योद्धुम्। मनसि धैर्यमवलम्ब्य योद्धव्यमिति चेत्तदपि नेत्याह—भ्रमतीति। मनः कान्दिशीकतया प्रकृतिस्थं न भवति ॥ ३० ॥

रा० टी०—तत्रेत्यस्य विवरणं सेनयोरुभयोरपीति। तथेति समुच्चये ॥ २६ ॥ तानवस्थितान्सर्वान्बन्धून्समीक्ष्यैवेत्येवकारेणान्वयः। विषीदन्विषादं कुर्वन्। विषादो नाम मोहनिमित्तकाच्छोकाद्यन्मनोदौर्बल्यं। यस्मिन्सति सर्वव्यापारोपरमो भवति स इति ज्ञेयम् ॥ २७ ॥ इदमब्रवीदित्युक्तमर्जुनवाक्यमाह—दृष्ट्वेत्यादिना यावदध्यायसमाप्ति। हे कृष्ण सकललोककर्षक! तदुक्तं गीताभाष्ये पञ्चमेऽध्याये। नियमनादिना सकललोककर्षणात्कृष्णः। तच्चोक्तं। 'यतः कर्षसि देवेश नियम्य सकलं जगत्। अतो वदन्ति मुनयः कृष्णं त्वां ब्रह्मवादिनः' इति महाकौर्मोक्तेः। युयुत्सुं योद्धुमिच्छन्तं सम्यगवस्थितमिमं बन्धुजनं दृष्ट्वा मम गात्राणि हस्ताद्यवयवाः सीदन्ति विशीर्यन्ते। षद्लृ विशरणगत्यवसादनेष्विति धातोः। मुखे म्लानता च जायते ॥ २८ ॥ शरीरे कम्पो रोमाञ्चश्च जायते। धनुर्हस्तात्पतति। त्वक्च परितस्तप्यतएव ॥ २९ ॥ अवस्थातुं च न शक्नोमि। मनश्च मे भ्रमतीव च ॥ ३० ॥

**निमित्तानि च पश्यामि विपरीतानि केशव ॥**
**न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे ॥ ३१ ॥**

त०टी०—हे केशव! विपरीतानि निमित्तानि वामाङ्गस्फुरणादीनि पश्यामि। अत एवाऽऽहवे युद्धे स्वजनं हत्वा श्रेय ऐहलौकिकं पारलौकिकं वा नाऽनुपश्यामि मनसि विचारणादनु पश्चान्न पश्यामि। यद्यपि 'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः' इति श्रेयोऽभिधानमस्ति तथापि हतस्यैव तदभिधानान्न हन्तुः किञ्चित्पुण्यमुक्तम् ॥ ३१ ॥

म० टी०—पुनरप्यवस्थानासामर्थ्ये कारणमाह—निमित्तानीति। निमित्तानि सूचकतयाऽऽसन्नदुःखस्य विपरीतानि वामनेत्रस्फुरणादीनि पश्यामि अनुभवामि अतोपि नावस्थातुं शक्नोमीत्यर्थः। अहमनात्मवित्त्वेन

दुःखित्वाच्छोकनिबन्धनंक्लेशमनुभवामि । त्वं तु सदानन्दरूपत्वाच्छोकासंसर्गीति कृष्णपदेन सूचितं । अतः स्वजनदर्शने तुल्येपि शोकासंसर्गित्वलक्षणाद्विशेषात्त्वं मामशोकं कुर्विति भावः । केशवपदेन च तत्करणसामर्थ्यं। को ब्रह्मा सृष्टिकर्ता ईशो रुद्रः संहर्ता तौ वात्यनुकम्प्यतयागच्छतीति तद्व्युत्पत्तेः । भक्तदुःखकर्षित्वं वा कृष्णपदेनोक्तं । केशवपदेन च केश्यादिदुष्टदैत्यनिबर्हणेन सर्वदा भक्तान्पालयसीत्यतो मामपि शोकनिवारणेन पालयिष्यसीति सूचितम् । एवं लिङ्गद्वारेण समीचीनप्रवृत्तिहेतुभूततत्त्वज्ञानप्रतिबन्धकीभूतं शोकमुक्त्वा सम्प्रति तत्कारितां विपरीतप्रवृत्तिहेतुभूतां विपरीतबुद्धिं दर्शयति—श्रेयः पुरषार्थं दृष्टमदृष्टं वा बहुविचारणादनु पश्चादपि न पश्यामि अस्वजनमपि युद्धे हत्वा श्रेयो न पश्यामि । ' द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ । परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ' इत्यादिना हतस्यैव श्रेयोविशेषाभिधानाद्धन्तुस्तु न किंचित्सुकृतं । एवमस्वजनवधेऽपि श्रेयसोऽभावे स्वजनवधे सुतरां तदभावइति ज्ञापयितुं स्वजनमित्युक्तम् ॥ ३१ ॥

**शं० टी०—निमित्तानीति ।** युद्धप्रवृत्तेरनर्थत्वसूचकानि विपरीतान्येव निमित्तानि च पश्यामि न त्वनुकूलानि । हे केशव! इदानीमेवमस्तु तथापि पश्चात्तु श्रेयो भविष्यतीत्यतआह—**नचेति ।** इमं पितृपितामहादिकं स्वजनमाहवे युद्धे हत्वा अनु पश्चाद्युद्धानन्तरभावि न किमपि श्रेयश्च पश्यामि । एतेषां वधेन न कमपि पुरुषार्थमेष्यन्तं विजानइत्यर्थः ॥ ३१ ॥

**श्री० टी०—निमित्तानीति ।** विपरीतानि निमित्तानि अनिष्टसूचकानि शकुनानि पश्यामि । किञ्च **नचेति ।** स्वजनं आहवे युद्धे हत्वा श्रेयः फलं न पश्यामि ॥ ३१ ॥

**स० टी०—**वामाक्षिस्फुरणादीनि निमित्तान्यन्यथान्यथा ॥ विपरीततया दुःखदायीन्यनुभवाम्यहम् ॥ १ ॥ अहं चानात्मवित्त्वेन दुःखित्वाच्छोकहेतुकम् ॥ क्लेशं ह्यनुभवामीति सदानन्दतया भवान् ॥ २ ॥ शोकक्लेशाद्यसंसर्गीत्येवं कृष्णेति सूचितम् ॥ मामशोकमतः कृष्ण कुरु त्वमिति चाशयः ॥ ३ ॥ को ब्रह्मा सृष्टिकर्ता स्यादीशः संहारको हरः ॥ अनुकम्प्यतया तौ द्वौ वाति याति स केशवः ॥ ४ ॥ एवं लिङ्गमुखेनैव शोकं ज्ञाननिरोधकम् ॥ प्रोक्त्वेदानीं स्वधर्मेऽपि युद्धेऽधर्ममतिं गतः ॥ ५ ॥ प्राह पार्थो महामोहजन्याध्यासावृतो वचः ॥ विचारेणाप्यदृष्टं वा दृष्टं श्रेयः कथंचन ॥ ६ ॥ पश्चादपि न पश्यामि हत्वा स्वजनमाहवे ॥ द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ॥ ७ ॥ परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ इत्यत्रोक्तं हतस्यैव श्रेयो हन्तुर्न किंचन ॥ ८ ॥ ३१ ॥

**भा० टी०—**विपरीतनिमित्तप्रवृत्तेरपि मोहो भवतीत्याह—**निमित्तानीति ।** निमित्तानि च विपरीतानि वामनेत्रस्फुरणादीनि पश्यामि तथा चास्मन्निमित्तः स्वजननाशो भविष्यति न तु केश्यादिमारणेन भवता यथा स्वजनः पालितः तथा स्वजनरक्षणमिति सूचयन्सम्बोधयति हे केशवेति । अहमनात्मवित्त्वेन दुःखित्वाच्छोकनिबन्धनं क्लेशमनुभवामि त्वं तु सदानन्दरूपत्वात् शोकासंसर्गीति कृष्णपदेन सूचितं । अतः स्वजनदर्शने तुल्येऽपि शोकासंसर्गित्वलक्षणाद्विशेषात्त्वं मामशोकं कुर्विति भावः । केशवपदेन च तत्करणसामर्थ्यं । केशौ ब्रह्मरुद्रौ वाति अनुकम्प्यतया गच्छतीति तद्व्युत्पत्तेः भक्तदुःखकर्षित्वं वा कृष्णपदेनोक्तं । केशवपदेन च केश्यादिदुष्टनिबर्हणेन सर्वदा भक्तान्पालयसीत्यतो मामपि शोकनिवारणेन पालयिष्यसीति सूचितमिति केचित् । इदानीं शोकमोहाविष्टचित्तः स्वधर्मेऽधर्मतां निष्प्रयोजनतां चारोपयन्नाह—**न चेति ।** आहवे युद्धभूमौ स्वजनं स्वबन्धुवर्गं हत्वाऽनु पश्चाच्छ्रेयो न पश्याम्यतो निष्फलाया बन्धुहिंसाया अधर्मनिमित्ताया निवृत्तिरेव युक्तेति भावः ॥ ३१ ॥

**प० टी०—**किंच भो केशव ! मानसानि निमित्तानि भाव्यर्थसूचकानीहलोकसाधनानि विपरीतान्यनिष्टहेतून् पश्यामि । किंच श्रेयः परलोकसाधनं न पश्यामि ॥ ३१ ॥

रा० टी०—विपरीतानि निमित्तानि दुर्निमित्तानि च पश्यामि । केशव ब्रह्मरुद्रप्रवर्तक ! कश्च ईशश्च केशौ तौ सृष्ट्यादिना वर्तयतीति व्युत्पत्तेः । केशपदोपपदाद्वृतु वर्तनइत्यतोन्तर्णीतण्यर्थाड्डप्रत्यये रूपसिद्धेः । उक्तं हि स्थितप्रज्ञस्य का भाषेत्येतद्भाष्ये । 'हिरण्यगर्भःकः प्रोक्तईशः शङ्कर एव च । सृष्ट्यादिना वर्तयति तौ यतः केशवो भवान्' इति युद्धे न श्रेयो लभ्यतइत्यतआह—नचेति । श्रेयश्च न पश्यामि । आहवे युद्धे विजयादिकं फलं नेच्छामि ॥ ३१ ॥

**न काङ्क्षे विजयं कृष्ण न च राज्यं सुखानि च ॥**
**किं नो राज्येन गोविन्द किं भोगैर्जीवितेन वा ॥ ३२ ॥**
**येषामर्थे काङ्क्षितं नो राज्यं भोगाः सुखानि च ॥**
**त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च ॥ ३३ ॥**
**आचार्याः पितरः पुत्रास्तथैव च पितामहाः ॥**
**मातुलाः श्वशुराः पौत्राः स्यालाः सम्बन्धिनस्तथा ॥ ३४ ॥**

त० टी०—ननु मास्त्वामुष्मिकं श्रेय ऐहिकं राज्यभोगसुखादिकं तु स्यादेवेत्यत आह—न काङ्क्ष इति । हे कृष्णेति सम्बोधनेन सच्चिदानन्दस्वरूपस्त्वं मामपि स्वरूपानन्दतुष्टं कुर्विति सूचितम् । राज्यसाधनभूतविजयमहं न काङ्क्षे नेच्छामि । विजयसाध्यं राज्यं न च काङ्क्षे । राज्याधीनानि सुखानि च न काङ्क्षे नेच्छामि । ननु लोके शत्रुविजयराज्यसुखार्थमेव सर्वजनप्रवृत्तिस्तव कुतस्तदनाकाङ्क्षोत्पन्नेत्यत आह—किन्न इति । गावः समनस्कानीन्द्रियाणि स्वनियम्यतया विन्दते यः स ममेन्द्रियमनःप्रवृत्तिं सदा त्वं जानासीति भावेन सम्बोधयति—गोविन्देति । बहुहिंसावद्युद्धसाध्यराज्येन नोऽस्माकं किं प्रयोजनं, राज्यसाध्यविशिष्टभोगैः किं, जीवितेन भोगकरणकजीवितेनोपक्रोशमलीमसेन प्राणधारणपोषणेन वा किं प्रयोजनं, न किमपीत्यर्थः ॥ ३२ ॥ ननु पाण्डुपृथापुत्रस्य तव राज्यसुखादिनैराकाङ्क्ष्यं भवतु । तथाऽपि स्वजनवर्गार्थं तदाकाङ्क्षोचितैवेति चेत्तत्राह—येषामिति । येषां स्वजनबन्धूनामर्थे नो राज्याद्यपेक्षितं, त इमे प्राणान्प्राणसाधनानि धनाशां च त्यक्त्वा युद्धेऽवस्थितास्तस्मान्न योद्धुमिच्छामि ॥ ३३ ॥ ननु युद्धे वो हन्तुं शत्रव एव स्थिता न बन्धव इति चेत्तत्राह—आचार्या इति । स्पष्टार्थः । न ह्येतेभ्योऽन्ये स्वजनबन्धवो भवन्तीति भावः ॥ ३४ ॥

म० टी०—ननु माभूददृष्टं प्रयोजनं दृष्टप्रयोजनानि तु विजयो राज्यं सुखानि च निर्विवादानीत्यतआह—नेति । पूर्वत्र सुखं परतः फलाकाङ्क्षा ह्युपायप्रवृत्तौ कारणं अतस्तदाकाङ्क्षाया अभावात्तदुपाये युद्धे भोजनेच्छाविरहिणइव पाकादौ मम प्रवृत्तिरनुपपन्नेत्यर्थः । कुतः पुनरितरपुरुषैरिष्यमाणेषु तवानिच्छेत्यत आह—किन्नइति । भोगैः सुखैर्जीवितेन जीवितसाधनेन विजयेनेत्यर्थः । विना राज्यं भोगान् कौरवविजयं च वने निवसतामस्माकं तेनैव जगति श्लाघनीयजीवितानां किमेभिराकाङ्क्षितैरितिभावः । गोशब्दवाच्यानीन्द्रियाण्यधिष्ठानतया नित्यं प्राप्तस्त्वमेव ममैहिकफलविरागं जानासीति सूचयन्सम्बोधयति—गोविन्देति ॥ ३२ ॥ राज्यादीनामाक्षेपे हेतुमाह—येषामिति । एतेन स्वस्य वैराग्येपि स्वीयानामर्थे यतनीयमित्यपास्तं । एकाकिनोहि राज्याद्यनपेक्षितमेव । येषां तु बन्धूनामर्थे तदपेक्षितं तएते प्राणान्प्राणाशां धनानि धनाशां च त्यक्त्वा युद्धेऽवस्थिताइति न स्वार्थः स्वीयार्थो वायं प्रयत्नइति भावः । भोगशब्दः पूर्वत्र सुखपरतया निर्दिष्टोप्यत्र पृथक्सुखग्रहणात्सुखसाधनविषयपरः । प्राणधनशब्दौ तु तदाशालक्षकौ । स्वप्राणत्यागेपि स्वबन्धूनामुपभोगाय धनाशा सम्भवेदिति तद्वारणाय पृथग्धनग्रहणम् ॥३३॥ येषामर्थे राज्याद्यपेक्षितं तेत्र नागताइत्याशङ्क्य तान्विशिनष्टि स्पष्टम् ॥३४॥

**शं० टी०**–अस्त्येवैतेषां वधेन जयादिलक्षणं श्रेयइत्यतआह–**नकाङ्क्षइति**। स्वजनहिंसया प्राप्तो यो जयस्तमहं न काङ्क्षे तेन प्राप्तं राज्यं च तन्मूलकानि विषयसुखान्यपि नाहं काङ्क्षइत्यर्थः । एतेनाधर्मप्राप्तमैहिकसुखमस्माकं मास्त्वित्युक्तं भवति। एतैर्यथा राज्याद्यपेक्षया युध्यते तथा भवद्भिरपि युध्यतामित्यतआह–**किमिति**। धर्माधर्मविवेकवतां नोऽस्माकं स्वजनहिंसया प्राप्तेन राज्येन किं फलं तन्मूलकैर्भोगैर्वा किं तदर्थकेन जीवितेन वा किं। अधर्ममूलकं दोषावहमेतत्सर्वं सतां नाशास्यमित्यर्थः ॥ ३२ ॥ 'अप्यकार्यशतं कृत्वा भर्तव्या मनुरब्रवीत्' इतिवचनात्पित्रादिभरणार्थं कृतोऽप्यधर्मो न दोषायेत्यतआह–**येषामिति**। अकार्यशतेनापि पोषणीयानां येषां पितृपुत्रादीनामर्थे निमित्ते राज्यं भोगाः सुखानि च काङ्क्षितं नोऽस्माभिः काङ्क्षितानि भवन्ति। नइति तृतीयार्थे षष्ठी। तएव पित्रादय इमे प्राणान्धनानि च त्यक्त्वा युद्धे युद्धनिमित्तमवस्थिताः जीविताशां त्यक्त्वा युद्धे मर्तुमागत्य तिष्ठन्तीत्यर्थः ॥३३॥ के ते इत्याकाङ्क्षायामाह–**आचार्याइति**। अत्रास्माकं केचिदाचार्याः केचित्पितरः केचित्पुत्रास्तथैव केचित्पितामहाश्चकारात्केचिन्मातामहाः केचिन्मातुलाः केचिच्छ्वशुरः केचित्पौत्राः केचित्स्यालाः केचित्संबन्धिन एवं सर्वे स्वजना एव नान्य इत्यर्थः ॥ ३४ ॥

**श्री० टी०**–विजयादिकं फलं किं न पश्यसीति चेत्तत्राह–**न काङ्क्ष इति**। एतदेव प्रपञ्चयति–**किं न इति** सार्धाभ्याम्। यदर्थमस्माकं राज्यादिकमपेक्षितं त एते प्राणधनानि त्यक्त्वा त्यागमङ्गीकृत्य युद्धार्थमवस्थिताः। अतः किमस्माकं राज्यादिभिः कृत्यमित्यर्थः ॥ ३२–३४ ॥

**स० टी०**–मास्त्वदृष्टफलं किंचिद्दृष्टं त्वस्ति जयादिकम् ॥ इत्यत्राह न मे वाञ्छा जयादौ क्षुद्रगोचरे ॥ १ ॥ राज्यादिभिर्न चास्माकमीषदस्ति प्रयोजनम् ॥ त्वमिन्द्रियाण्यधिष्ठानतया प्राप्नोषि सर्वदा ॥ २ ॥ फले रागं विरागं च जानासीत्येव सूचयन् ॥ गोविन्देत्याह राज्यादेराक्षेपे हेतुमाह च ॥ ३ ॥ एकाकिनो न राज्याद्यपेक्षितं तदपेक्षितम् ॥ येषामर्थे तएतेऽद्य प्राणाशां च धनैषणाम् ॥ ४ ॥ त्यक्त्वाचार्यादयो युद्धे मृत्युवक्त्रे स्वयं स्थिताः ॥ ते सर्वे सङ्गरे यर्हि हता आचार्यकादयः ॥ ५ ॥ किं न स्यात्तर्हि राज्यादिभोगैः पापकरैर्वृथा ॥ ६ ॥ ३२–३४ ॥

**भा० टी०**–ननु युद्धेन शत्रून् जित्वा विजयराज्यादिश्रेयसो लाभस्यावश्यम्भावात्किमिति न च श्रेयोऽनुपश्यामीत्युच्यते त्वयेति तत्राह–**न काङ्क्ष इति**। हे कृष्णेति सम्बोधयन्। 'वासुदेवे मनो यस्य जपहोमार्चनादिषु । तस्यान्तरायो मैत्रेय देवेन्द्रत्वादिकं फलम्' इति वचनात् स्वभक्त्यन्तरायात्मकस्य विजयराज्यादेः कर्षित्वमेव। भक्तस्योपरि तवानुग्रहः 'यस्यानुग्रहमिच्छामि तस्य वित्तं हराम्यहम्' इति भगवद्वचनात्। तस्माद्विजयादेर्भवद्भक्त्यन्तरायत्वमालोच्यापि तन्न काङ्क्षइति ध्वनयति। ननु भवतां भागवतानां स्वार्थे विषये विरक्तानां मास्तु स्वार्थे विजयाद्याकाङ्क्षा। स्वसम्बन्धिनामर्थे तु तदाकाङ्क्षा युक्तेत्याशङ्क्य येषामर्थे विजयादिकमपेक्षितं ते त्वत्र मरिष्यन्तीति किमस्माकं पाण्डवानां तेनेत्याह–**किमित्यादिसार्धद्वयेन**। नोऽस्माकं राज्येन किं तज्जन्यभोगैर्जीवितेन वा किं न किमपीत्यर्थः। राज्याद्यपेक्षया वने निवसतामस्माकं कन्दमूलादिना जीवनं स्वजनरक्षकं वरं । यतः सर्वप्रकारेण स्वबन्धुरक्षणं कर्तव्यमिति स्वजनरक्षणेन लब्धगोविन्दनामा जगद्गुरुस्त्वमेव गोविन्दनाम्ना शंससीति ध्वनयन्सम्बोधयति हे गोविन्देति। गोशब्दवाच्यानीन्द्रियाण्यधिष्ठानतया नित्यं प्राप्तस्त्वमेव ममैहिकफलविरागं जानासीति सम्बोधनाशय इति केचित् ॥ ३२ ॥ येषां स्वीयानामर्थे नो राज्यं भोगसाधनमाकाङ्क्षितमभिलषितं भोगाः सुखसाधनानि सुखानि च येषामर्थे आकाङ्क्षितानि तइमे प्रत्यक्षेणोपलभ्यमानाः प्राणान्धनानि च त्यक्त्वा युद्धेऽवस्थिताः। त्यक्तुमिति वक्तव्ये त्यक्त्वेति क्त्वाप्रत्ययेन प्राणादित्यागसाधने समरे प्रवृत्ते तत्त्यक्तुमवस्थिता अपि तत्प्रेमातिशयात्पलाय्य गमिष्यन्तीति शङ्का न कर्तव्येति सूचयति ॥ ३३ ॥ तान्विशिनष्टि–**आचार्या इति**। मातुला जननीभ्रातरः। भार्याभ्रातरः स्यालाः। स्पष्टमन्यत् ॥ ३४ ॥

प० टी०—किंच यदर्थमेतावान् युद्धप्रसंगस्तदपि न रोचत इत्याह—किंन इति । सुगमम् ॥ ३२ ॥ अत्र युक्तिमाह—येषामिति । येषामर्थे यन्निमित्तं यत्पोषणाय राज्यं काङ्क्षितमभीप्सितं, च परं भोगाः सुखानि काङ्क्षितानि त इमेऽत्र युद्धे धनानि विषयभोगोपकरणानि स्त्रीपुत्रादीनि प्राणांश्च त्यक्त्वाऽवस्थिताः सन्ति । तेषु हतेषु राज्यं केन भोक्तव्यं केवलं स्वपिण्डपोषणैकफलमित्यर्थः ॥ ३३ ॥ ३४ ॥

रा० टी०—येषामर्थे प्रयोजननिमित्तं राज्याद्यपेक्षितं नः अस्माकं तइमे बान्धवाः प्राणान् धनानि च त्यक्त्वा युद्धे व्यवस्थिताः । ते कइत्यतआह—आचार्याइति ॥ ३२-३४ ॥

**एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन ॥**
**अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ॥ ३५ ॥**

त० टी०—ननु यद्येतान्स्वकीयबन्धुबुद्ध्या त्वं न हनिष्यसि तर्हि त्वामेवैते राज्यलोभेन हनिष्यन्ति । तस्मात्त्वमेवैतान्हत्वा सकलपृथ्वीराज्यं कुर्विति चेत्तत्राह—एतानिति । अस्मान् घ्नतोऽप्येतान् त्रैलोक्यराज्यस्यापि हेतोरहं हन्तुं नेच्छामि, महीकृते महीमात्रराज्यप्राप्त्यर्थं न हन्यामिति किमुत वक्तव्यमित्यर्थः । मधुसूदनेति सम्बोधनेन त्वमपि दैत्यमेव हतवान्न स्वबन्धूनिति सूचितम् ॥ ३९ ॥

म० टी०—ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान्हत्वा राज्यं भुङ्क्ष्वेत्यतआह—त्रैलोक्यराज्यस्यापि हेतोः तत्प्राप्त्यर्थमपि अस्मान् घ्नतोप्येतान्न हन्तुमिच्छामि इच्छामपि न कुर्यामहं किं पुनर्हन्यां । महीमात्रप्राप्तये तु न हन्यामिति किमुवक्तव्यमित्यर्थः । मधुसूदनेति सम्बोधयन् वैदिकमार्गप्रवर्तकत्वं भगवतः सूचयति ॥ ३९ ॥

शं० टी०—स्वजना एव सर्वे ते भवन्तु त्वमिदानीं किं कर्तुमिच्छसीत्यत आह—एतानिति । खड्गैर्मां घ्नतोऽपि हिंसतोऽप्येतानाचार्यादीन्हन्तुं नेच्छामि त्रैलोक्यराज्यस्य हेतोरपि निमित्ताय वा । एतेषां हननेनेन्द्रत्वं वाप्यागच्छतु तथाप्येतान्हन्तुं नेच्छामि किं नु महीकृते किं वक्तव्यं राज्यार्थमेतान्हन्तुं नेच्छामीति । अनेन स्वर्गसुखमपि मास्त्वित्युक्तं भवति ॥ ३९ ॥

श्री० टी०—ननु यदि कृपया त्वमेतान्न हंसि तर्हि त्वामेते राज्यलोभेन हनिष्यन्त्येव अतस्त्वमेवैतान्हत्वा राज्यं भुङ्क्ष्व तत्राह—एतानिति सार्धेन । घ्नतोऽप्यस्मान्घातयतोऽपि एतान्त्रैलोक्यराज्यस्यापि हेतोस्तत्प्राप्त्यर्थमप्यहं हन्तुं नेच्छामि किं पुनर्महीमात्रप्राप्त्यर्थमित्यर्थः ॥ ३९ ॥

स० टी०—ननु त्वं कृपयाविष्टो यदि तान्न हनिष्यसि ॥ राज्यलोभाद्धनिष्यन्ति त्वामेतइति चेच्छृणु ॥ १ ॥ त्रैलोक्यराज्यसंसिद्ध्यै नैतान् हन्तुं घ्नतोऽप्यहम् ॥ कुर्यामिच्छामपि स्वीयान्किं नु हन्यां महीकृते ॥ २ ॥ मधुसूदन वेदाध्वसम्प्रदायप्रवर्तक ॥ मामपि प्रेरय श्रौतमार्गे मोक्षप्रदे शुभे ॥ ३ ॥ विनिवर्त्याशुभान्मार्गादिति भावोऽर्जुनस्य च ॥ ४ ॥ ३९ ॥

भा० टी०—ननु स्वराज्यपरिपन्थिनामाततायिनां हननमेव युक्तं 'जिघांसन्तं जिघांसीयात्'इति न्यायेनैतेषां हनने दोषाभावादित्याशङ्क्याह—एतानिति । अपि त्रैलोक्यराज्यस्य हेतोर्घ्नतोप्येतानित्यन्वयः । पृथिवीप्राप्त्यर्थं हि हननमेतेषामिष्यते न च तत्प्राप्तिः समीहितेति कैमुत्यन्यायेन दर्शयति—अपीति । नहि महदपि त्रैलोक्यराज्यं लब्धुं स्वजनाहिंसायै मनो मदीयं स्पृहयति पृथिवीप्राप्त्यर्थं पुनर्बन्धुवधं न श्रद्दध्यामिति किं वक्तव्यमित्यर्थ इति प्राञ्चः । मधोः सूदनेन त्वयापि स्वपुत्ररक्षणं कृतमिति कथमस्माभिः सम्बन्धिनाशः कर्तव्य इति ध्वनयन्सम्बोधयति मधुसूदनेति । यद्वा मधुरित्युपलक्षणं कैटभस्यापि । मधुकैटभयोरजस्तमसोः सूदनस्त्वं स्वभक्तं मां

तदुभयात्मकेऽस्मिन्घोरे कर्मणि नियोजयितुं नार्हसीति सूचयन्नाह–मधुसूदनेति । मधुसूदनेति सम्बोधयन्वैदिकमार्गप्रवर्तकत्वं भगवतः सूचयतीति केचित् ॥ ३९ ॥

**प० टी०**–ननु गोत्रवात्सल्येन यद्यपि युद्धादुपरतस्तथापि तेऽस्मान् हनिष्यन्त्येवेत्याशङ्क्याह--**एतानिति** । **अपीति** । त्रैलोक्यराज्यस्यापि हेतोरेतान् हन्तुं नेच्छामि किं पुनर्महीकृते । किंभूतानेतान् घ्नतोपि मारयतोऽपि । स्वात्मानं हन्तुं प्रवृत्ता अपि ते न हन्तव्या इत्यर्थः । यथा दैववशात्प्राणघातायोपस्थितस्य तिर्यग्भावं प्राप्तस्य गर्भकस्य हनने माता न यतते तद्वदस्मद्दैवेन नोदितास्ते यत्किंचित्कुर्वन्तु, तथापि वयं तान् हन्तुं नार्हाः । तदुक्तम्–'उत्क्षेपणं गर्भगतस्य पादयोः किं कल्पते मातुरधोक्षजागसे' इति ॥ ३९ ॥

**रा० टी०**–नैवेच्छामीत्येवकारान्वयः । यदि मां युद्धान्निवृत्तं एते हन्युस्तर्हि घ्नतोपि नैव हन्तुमिच्छामीत्यर्थः । हे मधुनामकदैत्यमर्दन ! कैमुत्यन्यायेनाप्याह–**अपीति** । त्रैलोक्यराज्यस्यापि हेतोरेतान्हन्तुं नेच्छामि । किमुत महीमात्रनिमित्तमिति ॥ ३९ ॥

**निहत्य धार्तराष्ट्रान्नः का प्रीतिः स्याज्जनार्दन ॥**
**पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः ॥ ३६ ॥**

**त० टी०**–भवतु तथाऽप्यन्यान्विहाय युष्मद्वधे सदा कृतप्रयत्नानातिनिर्घृणान्धृतराष्ट्रपुत्रांस्त्वं जहि । तद्धनने युष्माकं महती प्रीतिर्भविष्यतीत्यत आह–निहत्येति । धार्तराष्ट्रान्निहत्य नोऽस्माकं का प्रीतिः स्यान्न काऽपीत्यर्थः । ननु गराग्निदानादिभिर्नैते आततायिनः । आततायिवधस्तद्वधे दोषाभावश्च शास्त्रविहितः । तथा हि–' अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥ आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ ' इति स्मृतेः । तस्माच्छास्त्रानुवर्तिना त्वया आततायिलक्षणसम्पन्ना दुर्योधनादयो हन्तव्या इति चेत् " यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः, मृत्युर्यस्योपसेचनं " ' ब्रह्माणमिन्द्रं रुद्रं च यमं वरुणमेव च । प्रसह्य हरते यस्मात्तस्माद्धरिरितीर्यते ॥ ' " अत्ता चराचरग्रहणात्, न कर्मणा लिप्यते पापकेन " इत्यादिशास्त्राच्चराचरसंहारकोऽपि निर्दोषस्त्वमित्यभिप्रायेण सम्बोधयति–जनार्दन इति । वयं तु न तथेत्याह–एतानाततायिनो हत्वाऽस्मान् पापमेवाश्रयेत् बन्धुत्वात् । मातृपितृबन्धुवधस्य शास्त्रे महापातकत्वेनोक्तत्वात् ॥ ३६ ॥

**म० टी०**–नन्वन्यान्विहाय धार्तराष्ट्रा एव हन्तव्यास्तेषामत्यन्तक्रूरतरतत्तद्दुःखदातॄणां वधे प्रीतिसम्भवादित्यतआह–**धार्तराष्ट्रान्दुर्योधनादीन्** भ्रातॄन्निहत्य स्थितानामस्माकं का प्रीतिः स्यात् न कापीत्यर्थः । नहि मूढजनोचितक्षणमात्रवर्तिसुखाभासलोभेन चिरतरनरकयातनाहेतुर्बन्धुवधोऽस्माकं युक्तइति भावः । जनार्दनेतिसम्बोधनेन यदि वध्या एते तर्हि त्वमेवैतान् जहि । प्रलये सर्वजनहिंसकत्वेपि सर्वपापाऽसंसर्गित्वादिति सूचयति।ननु 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः' इतिस्मृतेरेतेषां च सर्वप्रकारैराततायित्वात् ।' आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ' इति वचनेन दोषाभावप्रतीतेर्हन्तव्याएव दुर्योधनादय आततायिन इत्याशङ्क्याह–**पापमेवेति** । एतानाततायिनोपि हत्वा स्थितानस्मान् पापमाश्रयेदेवेति सम्बन्धः । अथवा पापमेवाश्रयेत् । न किंचिदन्यत् दृष्टमदृष्टं वा प्रयोजनमित्यर्थः । न हिंस्यादिति धर्मशास्त्रादाततायिनं हन्यादित्यर्थशास्त्रस्य दुर्बलत्वात् । तदुक्तं याज्ञवल्क्येन 'स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः' । अपरा व्याख्या । ननु धार्तराष्ट्रान् घ्नतां भवतां प्रीत्यभावेपि युष्मान् घ्नतां धार्तराष्ट्राणां प्रीतिरस्त्येवातस्ते युष्मान्हन्युरित्यतआह–**पापमेवेति** अस्मान्हत्वा स्थितानेतानाततायिनो धार्तराष्ट्रान् पूर्वमपि पापिनः साम्प्रतमपि पापमे-

वाश्रयेत् नान्यत् किंचित्सुखमित्यर्थः । तथा चायुध्यतोस्मान्हत्वैतएव पापिनो भविष्यन्ति नास्माकं कापि क्षतिः । पापासम्बन्धादित्यभिप्रायः ॥ ३६ ॥

**शं० टी०**—एतैर्युष्माकं लाक्षागृहदाहादिभिर्बह्वपकृतमपकारिणां हननं सन्तोषाय धर्माय च भवतीत्यतआह—**निहत्येति** । धार्तराष्ट्रान् दुर्योधनादीनस्मद्भ्रातॄन् सबान्धवान् हत्वा तद्धननेनास्माकं का प्रीतिः स्यात् । अपराधिनः पुत्रस्य शिशोर्हननेन पितुः प्रीतिश्चेदस्माकमेतेषां वधेन प्रीतिः संभवेत् । यथा पुत्रहननेन पितुः शिशुहत्या तथास्माकमपि भ्रातृहत्या स्यात् । ननु 'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः ॥ आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन' इतिवचनादुक्तसर्वदोषविशिष्टानामेतेषां वधे न कश्चिद्दोषइत्यत आह—**पापमेवेति** । आततायी उक्ताः षड्विधा दोषा एषां सन्ति ते आततायिनस्तानुक्तदोषवतोप्येतान् हत्वा। तद्धननेन कर्मणाऽस्मान् पापमेवाश्रयेत् । अन्याभावव्यवच्छेद एवकारार्थः । यद्यप्यस्याततायिवधो न दोषाय तथापि ' स एव पापिष्ठतमो यः कुर्यात्कुलनाशनम्' इति 'अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ' इतिन्यायेन अर्थशास्त्राद्बलवत्त्वाद्धर्मशास्त्रस्य । अतआततायित्वदोषादपि कुलनाशकत्वदोषोऽनर्हः । सोयमस्माकं स्यादितिभावः ॥ ३६ ॥

**श्री० टी०**—ननु च ' अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहर्ता च षडेते ह्याततायिनः' इति स्मरणात् अग्निद इत्यादिभिः षड्भिरपि हेतुभिरेते तावदाततायिनः । आततायिनां च वधो युक्त एव ' आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ' इति वचनात्तत्राह सार्धेन—**पापमिति** । आततायिनमायान्तमित्यादिकमर्थशास्त्रं धर्मशास्त्राद्दुर्बलम् । यथोक्तं याज्ञवल्क्येन 'स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः । अर्थशास्त्राच्च बलवद्धर्मशास्त्रमिति स्थितिः ' तस्मादाततायिनामप्येतेषामार्यादीनां वधेऽस्माकं पापमेव भवेत् । अन्याय्यत्वादधर्मत्वाच्चैतद्वधस्य ॥ ३६ ॥

**स० टी०**—नन्वन्यान्संपरित्यज्य दुर्योधनमुखाः खलाः ॥ हन्तव्याः क्रूरनाशे स्यात्प्रीतिरित्यतआह सः ॥ १ ॥ दुर्योधनमुखान् भ्रातॄन्निहत्यास्माकमीदृशान् ॥ न कापि प्रीतिराभाति हिंसा कुत्रापि नो वरा ॥ २ ॥ क्षणिकानन्दलोभेन नैतेषामुचितो वधः ॥ यदि वध्यास्त्वया तर्हि हन्तव्याः खलनाशिना ॥ ३ ॥ प्रलये सर्वसंहारकर्तृत्वेनाप्यसङ्गिना ॥ जनार्दनपदेनेति सूचितं सूक्ष्मबुद्धिना ॥ ४ ॥ नन्वाततायिनां हिंसा न च पापकरी स्मृता ॥ अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥ ५ ॥ क्षेत्रदारापहारी च षडेते ह्याततायिनः ॥ आततायिनमायान्तं हन्यादेवाविचारयन ॥ ६ ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ इति शास्त्रेण हन्तव्याः शत्रवश्चेति चेच्छृणु ॥ ७ ॥ पापमेवाश्रयेदस्मान्न श्रेयोऽपि कथञ्चन ॥ पापिनां न सुखं किंचिद्दृष्टं नादृष्टमण्वपि ॥ ८ ॥ न हिंस्यात्सर्वभूतानीत्येवं धर्मानुशासनात् ॥ अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्मृतिः ॥९॥ अस्मानयुद्ध्यतो हत्वैतानत्यन्ताततायिनः ॥ पापमेवाश्रयेन्नान्यच्छ्रेय इत्यर्थ एव वा ॥ १० ॥ ३६ ॥

**भा० टी०**—ननु बह्वपकर्तुर्धृतराष्ट्रस्य पुत्रान्दुःखदातॄन्निहत्य स्थितानां युष्माकं प्रीतिर्भविष्यतीति चेत्तत्राह—**निहत्येति** । धार्तराष्ट्रान्निहत्य नोस्माकं का प्रीतिः स्यान्न कापीत्यर्थः । अपकर्तर्यपि वृद्धेऽपकारो न कार्य इति धृतराष्ट्रसम्बन्धप्रदर्शनाशयः । तव तु दुष्टजनघातेन स्वसम्बन्धिप्रसन्नता सम्पद्यते । अस्माकं तु सापि नास्ति । अस्मत्सम्बन्धिनामवश्यम्भाविनाशदर्शनादिति सूचयन्नाह—जनार्दनेति । जनार्दनेति सम्बोधनेन यद्येते वध्यास्तर्हि त्वमेवैतान् जहि । प्रलये सर्वजनहिंसकत्वेऽपि सर्वपापासंसर्गित्वादिति सूचयतीति केचित् । ननु " अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते ह्याततायिनः " इति वचनादाततायिन एतान् हत्वा ' नाततायिवधे दोषः ' इति वचनाद्युष्मान्पापं नाश्रयिष्यति अपित्वाततायिन एतानेवेत्यत आह—**पापमिति** । एतानाततायिनो हत्वाऽस्मानेव पापमाश्रयेत् ' द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ ।

परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः' इत्यादिना हतस्य पापापगमात् श्रेयो विशेषाभिधानात् हननकर्तृभूतानस्मानेव हिंसानिबन्धनं पापमाश्रयेदिति । 'आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन ' इति वचनं त्वर्थशास्त्रत्वेन दुर्बलत्वात् । 'न हिंस्यात्सर्वभूतानि ' इति प्रबलेन धर्मशास्त्रेण बाध्यते । तदुक्तं याज्ञवल्क्येन 'स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ' इत्यभिप्रायः । 'युद्धायानुद्यतानस्मान्हत्वैतानाततायिनः। पापमेवाश्रयेत्' इति वा एतान्हत्वाऽऽततायिनोऽस्मानेवेति वेति पक्षत्रयेऽपि एतदादेर्हननक्रियां प्रति कर्तृत्वे क्त्वाप्रत्ययः स्थित्यादिक्रियामध्याहृत्योपपद्यते ॥ ३६ ॥

प० टी०—अस्मासु तत्कृपया त्यक्तयुद्धेषु सत्सु ते कथं हनिष्यन्तीत्याह—आततायिन इति । अपराधराहित्येऽपि परहन्तॄन्। अत्र स्मृतिः—'अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ॥ क्षेत्रदारहरश्चैव षडेते ह्याततायिनः' इति । अथ 'आततायिनमायान्तं हन्यादेवाविचारयन्' इत्याद्यपि स्मृत्युक्तमस्ति, इति चेन्न । इदं चोरादिषु दण्ड्येषु राजनीतौ प्रोक्तं न पुत्रपौत्रादिषु ॥ ३६ ॥

रा० टी०—किंच धार्तराष्ट्रान्निहत्य नोऽस्माकं का प्रीतिः किमैहिकसुखं । न किमपि । नापि पारत्रिकं। प्रत्युत पारत्रिकदुःखहेतु पापमेवास्मानाश्रयेत् । न जायतइति जनः अर्दयति संसारमिति अर्दनः जनश्चासावर्दनश्चेति जनार्दनः तस्य संबुद्धिः । उक्तं ह्येवं गीताभाष्ये दशमे । आततायिनः ' अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारापहारी च षडेते ह्याततायिनः ' इत्युक्तलक्षणात् ॥ ३६ ॥

**तस्मान्नार्हा वयं हन्तुं धार्तराष्ट्रान्स्वबान्धवान् ॥**
**स्वजनं हि कथं हत्वा सुखिनः स्याम माधव ॥ ३७ ॥**

त० टी०—यस्माद्बन्धुवधे ऐहिकं पारलौकिकं च न किमपि फलं, प्रत्युत बन्धुवधजन्यपापफलं नरकपातः स्यात्तस्मात्स्वबान्धवान्धार्त्तराष्ट्रान्वयं हन्तुं नार्हाः । यद्यपि विषाग्निदानादुष्कर्माण एते इति सत्यं, तथाऽपि स्वजनं हत्वा वयं कथं सुखिनः स्याम । हीति निश्चये । नैव स्यामेत्यर्थः । माधवेति त्वमपि वंशवर्द्धको नतु वंशनाशक इति भावः ॥ ३७ ॥

म० टी०—फलाभावादनर्थसम्भवाच्च परहिंसा न कर्तव्येति 'नच श्रेयोनुपश्यामि'इत्यारभ्योक्तं तदुपसंहरति अदृष्टफलाभावोऽनर्थसम्भवश्च तच्छब्देन परामृश्यते दृष्टसुखाभावमाह—**स्वजनंहीति** । माधवेति लक्ष्मीपतित्वान्नालक्ष्मीके कर्मणि प्रवर्तयितुमर्हसीति भावः ॥ ३७ ॥

शं० टी०—तर्हि त्वया किं निश्चितमित्यत आह—**तस्मादिति** । यस्माद्धार्तराष्ट्राणां वधेन कुलनाशनदोषएव प्रसज्यते तस्मात्स्वबान्धवान्धार्तराष्ट्रान् हन्तुं वयं नार्हा न योग्या नेच्छामइत्यर्थः । स्वसुखार्थमेतेषां वधः कर्तव्यएवेत्यतआह—**स्वजनमिति** । स्वजनसुखार्थं खलु पुंसः प्रवृत्तिः।वयं तु स्वजनं हत्वा कथं नु सुखिनः स्याम॥ ३७॥

श्री० टी०—न चेह सुखं स्यादित्याह—**स्वजनंहीति** ॥ ३७ ॥

स० टी०—परहिंसा न कर्तव्या सर्वश्रेयोऽभिघातिनी ॥ ततो नैतान्वयं हन्तुं योग्याः स्वीयानघानपि ॥ १ ॥ नैव तेषां वधे दृष्टं सुखं नो भाति माधव ॥ नास्मिन्कर्मण्यलक्ष्मीके प्रवर्तयितुमर्हसि ॥२॥३७॥

भा० टी०—एवं युद्धस्य निष्फलतामनर्थहेतुतां चोपपाद्योपसंहरति—**तस्मादिति** । ब्रह्मविद्यापतित्वात्तत्साधने प्रवर्तयितुमर्हसि नत्वस्मिन्क्लेशदे कर्मणि इति सूचयन्नाह—माधवेति । स्वजनसुखेन सुखार्थस्य राज्यलक्ष्मीपतित्वस्य स्वजननाशेन सुखाजनकत्वात् स्वजनं हत्वा कथं सुखिनः स्याम । यतस्तवापि लक्ष्मीपतित्वं स्वज-

नार्थमेवेति वा माधवेति सम्बोधनेन सूचयति । लक्ष्मीपतित्वान्नालक्ष्मीके कर्मणि प्रवर्तयितुमर्हसीति भाव इति केचित् ॥ ३७ ॥

**रा० टी०**–तस्मात् 'सीदन्ति मम गात्राणि' इत्यादिनोक्तोपपत्तिबलात्सबान्धवान्धार्तराष्ट्रान्हन्तुं वयं नार्हाः । 'आततायिनमायान्तं हन्यादेवाविचारयन् । नाततायिवधे दोषो हन्तुर्भवति कश्चन' इत्युक्तेस्तेषामाततायित्वेन हन्तव्यतया प्राप्तत्वेपि तद्धननप्रसक्त्या बन्धूनामपि हननप्राप्तेर्न हन्तुं वयं योग्या इति भावः । बन्धुत्वेप्याततायिसंबन्धित्वात्तेपि बन्धुजना हन्तव्या एवेत्यत आह–**स्वजनं हीति** । स्याम भवेम । तद्दर्शनस्पर्शनसंभाषणादेरभावप्राप्तेरिति भावः ॥ ३७ ॥

**यद्यप्येते न पश्यन्ति लोभोपहतचेतसः ॥**
**कुलक्षयकृतं दोषं मित्रद्रोहे च पातकम् ॥ ३८ ॥**

**त० टी०–ननु यूयमपि तेषां स्वजना एव ते कथं युष्मद्वधे प्रवृत्ता इति चेत्तत्राह–यद्यपीति । यद्यप्येते दुर्योधनादयो लोभोपहतचेतसः लोभेनोपहतं नष्टं धर्मविषयं चेतो येषां ते । तथा नष्टधर्मज्ञानत्वात्कुलघ्नतादिदोषं पश्यन्तोऽपि न पश्यन्तीत्यतोऽस्मद्वधे प्रवृत्ता इत्यर्थः ॥ ३८ ॥**

**म० टी०**–कथं तर्हि परेषां कुलक्षये स्वजनहिंसायां च प्रवृत्तिस्तत्राह लोभोपहतबुद्धित्वात्तेषां कुलक्षयादिनिमित्तदोषप्रतिसन्धानाभावात्प्रवृत्तिः सम्भवतीत्यर्थः । अतएव भीष्मादीनां शिष्टानां बन्धुवधे प्रवृत्तत्वाच्छिष्टाचारत्वेन वेदमूलत्वादितरेषामपि तत्प्रवृत्तिरुचितेत्यपास्तं । हेतुदर्शनाच्चेतिन्यायात् । तत्र हि लोभादिहेतुदर्शने वेदमूलत्वं न कल्प्यत इति स्थापितम् । यद्यप्येते न पश्यन्ति तथापि कथमस्माभिर्न ज्ञेयमित्युत्तरश्लोकेन सम्बन्धः ॥ ३८ ॥

**शं० टी०**–उभयसाधारणः खल्वयं विचारः कथं त्वयैव क्रियत इत्यत आह–**यद्यपीति** । एते दुर्योधनादयो लोभोपहतचेतसः स्थितद्रव्यत्यागासहिष्णुत्वं लोभस्तेन हतं ग्रस्तं चेतो येषां ते लोभोपहतचेतसः सन्तः कुलक्षयकरणेन प्राप्तं कुलक्षयकृतं दोषं मित्रद्रोहे विश्वासघातं तज्जन्यं पातकं च यद्यपि न पश्यन्ति न विचारयन्ति ॥ ३८ ॥

**श्री० टी०**–ननु तवैतेषामपि बन्धुवधदोषे समाने सति यथैवैते बन्धुवधदोषमङ्गीकृत्य युद्धे प्रवर्तन्ते तथैव भवानपि प्रवर्ततां किमनेन विषादेनेत्यत आह–**यद्यपीतिद्वाभ्याम्** । राज्यलोभेनोपहतं भ्रष्टविवेकं चेतो येषां ते एते दुर्योधनादयो यद्यपि दोषं न पश्यन्ति ॥ ३८ ॥

**स० टी०**–कथं तर्हि परेषां हि धर्मशास्त्रविदामपि ॥ कुलक्षये प्रवृत्तिश्चेत्यतआहार्जुनो वचः ॥ १ ॥ लोभाच्छादितबुद्धित्वाद्दोषेऽपि बलवत्तरे ॥ भवत्वेषां प्रवृत्तिश्च नास्माकं सोचिता भवेत् ॥ २ ॥ न देवमूलिका सास्ति प्रवृत्तिर्लोभमूलिका ॥ शिष्टानामपि न ग्राह्या भीष्मादीनां विवेकिभिः ॥ ३ ॥ ३८ ॥

**भा० टी०**–ननु स्वजनहिंसाकृतस्य दोषस्योभयेषां समानत्वात् यथा ते पापं न पश्यन्ति तथा भवद्भिरपि न ज्ञेयमिति चेत्तत्राह–**यद्यपीति** । लोभेनोपहतं चेतो येषां ते लोभोपहतचेतसस्त्वादेते कुलक्षयकृतं दोषं मित्राणां द्रोहे च पातकं यद्यपि न पश्यन्ति तथाप्यस्माभिः कथं न ज्ञेयमिति परेणान्वयः ॥ ३८ ॥

**प० टी०**–अथ तेऽपि कथं पुत्रपौत्रोचितं व्यवहारं न रक्षन्तीत्याह–**लोभोपहतचेतस इति** । राज्यभोगेच्छयोपहतं त्यक्तस्मृति चेतो येषां ते । तथा 'पुत्रादपि धनभाजां भीतिः' इत्युक्तत्वात् ॥ ३८ ॥

**रा० टी०**–कुत एवं बुद्ध्या तेन निवृत्ता इत्यतआह–**यद्यपीति** । एते दुर्योधनादयः राज्यलोभेनोपहतचेतसः नष्टधर्मज्ञानाः दोषं पातकं न च पश्यन्ति । यद्यपि तथापि ॥ ३८ ॥

**कथं न ज्ञेयमस्माभिः पापादस्मान्निवर्त्तितुम् ॥**
**कुलक्षयकृतं दोषं प्रपश्यद्भिर्जनार्दन ॥ ३९ ॥**

**त० टी०**—वयं तु न तथेत्याह—कथमिति। कुलक्षयकृतं दोषं प्रकर्षेण पश्यद्भिरस्माभिरस्मात्पापान्निवर्त्तितुं कथं न ज्ञेयं। धर्मप्रवर्त्तकभवदाश्रयाणामस्माकं नाधर्मे प्रवृत्तिः स्यादित्यस्माभिर्भवानर्थ्यते याच्यते इति जनार्दनेति सम्बोधनाभिप्रायः। "कृत्यल्युटोबहुलम्" इति कर्मणि ल्युट् ॥ ३९ ॥

**म० टी०**—ननु यद्यप्येते लोभात्प्रवृत्तास्तथापि 'आहूतो न निवर्तेत द्यूतादपि रणादपि' इति 'विजितं क्षत्रियस्य' इत्यादिभिः क्षत्रियस्य युद्धं धर्मो युद्धार्जितं च धर्म्यं धनमिति शास्त्रे निश्चयाद्भवतां च तैराहूतत्वाद्युद्धे प्रवृत्तिरुचितैवेत्याशङ्क्याह—अस्मात्पापाद्बन्धुवधफलकयुद्धरूपात्। अयमर्थः। श्रेयःसाधनताज्ञानं हि प्रवर्तकम्। श्रेयश्च तद्यदश्रेयोननुबन्धि। अन्यथा श्येनादीनामपि धर्मत्वापत्तेः। तथा चोक्तम् 'फलतोपि च यत्कर्म नानर्थेनानुबध्यते। केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते' इति। ततश्चाश्रेयोनुबन्धितया शास्त्रप्रतिपादितेऽपि श्येनादाविवास्मिन्युद्धेऽपि नास्माकं प्रवृत्तिरुचितेति ॥ ३९ ॥

**शं० टी०**—कथमिति। तथापि धर्मस्वरूपज्ञैः कुलक्षयकृतं दोषं प्रपश्यद्भिर्विजानद्भिः पण्डितैरस्माभिरस्मात्कुलक्षयकृतात्पापान्निवर्तितुं कथं न ज्ञेयमिति काकुः। कथं न विचारितव्यं विचारितव्यमेव 'किमकार्यं दुरात्मनाम्' इति न्यायेनैते राज्यलोभेन कुलक्षयं मित्रद्रोहं च कुर्वन्ति यथा तथा वयं कर्तुं न शक्नुम इत्यर्थः॥३९॥

**श्री० टी०**—तथाप्यस्माभिर्दोषं प्रपश्यद्भिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम्। निवृत्तावेव बुद्धिः कर्तव्येत्यर्थः ॥ ३९ ॥

**स० टी०**—यद्यप्येते प्रवृत्ताः स्युर्लोभात्तदपि शास्त्रतः ॥ तव प्रवृत्तिरुचिता युद्धे चाह्वानतः परैः ॥१॥ आहूतो न निवर्तेत द्यूतादपि रणादपि ॥ क्षत्रियस्यास्ति धर्मोऽयमित्यत्राहार्जुनो वचः ॥ २ ॥ श्रेयःसाधनताज्ञानं पुरुषस्य प्रवर्तकम्॥ अश्रेयोऽननुबन्धि स्याच्छ्रेयो नो दृष्टमात्रकम् ॥ ३ ॥ अन्यथा धर्मतापत्तिः श्येनादीनामपीष्यताम् ॥ फलतोऽपि च यत्कर्म नानर्थेनानुबद्ध्यते ॥ ४ ॥ केवलं प्रीतिहेतुत्वात्तद्धर्मत्वेन कीर्त्यते ॥ यदि येनेष्टसिद्धिः स्यादनिष्टाननुबन्धिना ॥ ५ ॥ तस्य धर्मत्वमिष्येत ततः श्येनादिवर्जनम् ॥ यदा तु चोदनागम्यः कार्याकार्यानपेक्षया ॥ ६ ॥ धर्मः प्रीतिनिमित्तं स्यात्तदा श्येनेऽपि धर्मता ॥ अतोऽश्रेयोनुबन्धित्वाच्छास्त्रतोऽपि रणेन नः ॥ ७ ॥ प्रवृत्तिरुचिता बन्धुवधरूपे कुलक्षये ॥ ८ ॥ ३९ ॥

**भा० टी०**—अस्मात्पापान्निवर्तितुं निवृत्त्यर्थं कुलक्षयकृतं दोषं प्रकर्षेण पश्यद्भिरस्माभिस्तद्दोषशब्दितं पापं कथं न ज्ञातव्यं तस्मात्पापपरिज्ञानं विना तत्र प्रवृत्तिपरिहारासंभवात्तज्ज्ञानमेवोचितं पापान्निवर्तितुं न तु पापसाधके युद्धे प्रवर्तितुं तदज्ञानमिति भावः। सदैव निर्लिप्तस्य तवैव परमेश्वरस्य प्रलयादौ जनानामर्दनेन पापासंश्लेषो न त्वन्यस्येति सूचयन् सम्बोधयति हे जनार्दनेति ॥ ३९ ॥

**प० टी०**—अस्माभिः स्मरणवद्भिरस्मात्पापान्निवर्तितुं कथं न ज्ञेयम्। किं तत्पापमित्याह—कुलेति। किंभूतैरस्माभिः कुलक्षयकृतं दोषं प्रपश्यद्भिः। भो जनार्दन संजिहीर्षो वदेति शेषः ॥ ३९ ॥

**रा० टी०**—हे जनार्दन जननरहित संसारार्दन! कुलक्षयकृतं दोषं प्रपश्यद्भिरस्माभिः अस्माद्दोषान्निवर्तितुं कथं न ज्ञेयम् ॥ ३९ ॥

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः ॥**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत ॥ ४० ॥**

त० टी०–कुलक्षयकृतं दोषं प्रपश्यद्भिरित्युक्तमिदानीं तमेव दोषं प्रपञ्चयति–कुलक्षय इति। सनातनाः परम्परागताः कुलोचिता धर्माः कुलक्षये धर्मानुष्ठातृपुरुषवर्गे नष्टे सति प्रणश्यन्ति। नैतावानेव दोषः किन्तु उत अन्योऽपीत्यर्थः। अनुष्ठात्रभावाद्धर्मे धर्ममात्रे नष्टे सति कृत्स्नं कुलं यत्किञ्चिदवशिष्टं स्त्रीबालादिरूपम् अधर्मोऽभिभवति व्याप्नोति ॥ ४० ॥

म० टी०–एवंच विजयादीनामश्रेयस्त्वेनानाकाङ्क्षितत्वान्न तदर्थं प्रवर्तितव्यमिति द्रढयितुमनर्थानुबन्धित्वेनाश्रेयस्त्वमेव प्रपञ्चयन्नाह। सनातनाः परम्पराप्राप्ताः कुलधर्माः कुलोचिताः धर्माः कुलक्षये प्रणश्यन्ति कर्तुरभावात्। उत अपि अग्निहोत्राद्यनुष्ठातृरूपनाशेन धर्मे नष्टे। जात्यभिप्रायमेकवचनम्। अवशिष्टं बालादिरूपं कृत्स्नमपि कुलमधर्मोऽभिभवति स्वाधीनतया व्याप्नोति। उतशब्दः कृत्स्नपदेन सम्बध्यते ॥ ४० ॥

शं० टी०–कुलक्षये कृते को वाऽनर्थ इत्युक्ते नैक एवानर्थः किंतु कुलतद्धर्मक्षयाद्यनर्थपरम्परैवापतति तदागमप्रकारमेवाह–कुलक्षय इत्यादिपञ्चभिः। अत्र कुलपदेन कुलसम्बन्धिनः पुरुषा लक्ष्यन्ते कुलक्षये कुलधर्मप्रवर्तकपुरुषक्षये सति सनातना वंशपारम्पर्येणागताः कुलधर्माः कुलानुरूपेण जात्यनुरूपेण च कर्तव्या आचारविशेषाः प्रणश्यन्ति प्रवर्तकाभावात्प्रकर्षेण नश्यन्ति। धर्मे कुलाचारे जात्याचारे च नष्टे स्वरूपेणादर्शनं गते सति कृत्स्नं कुलमधर्मस्त्वनाचारोऽप्यभिभवति।शिक्षकाभावादभितः कुले त्वनाचार एवाभिवर्धते४०

श्री० टी०–तमेव दोषं दर्शयति–कुलक्षयइति। सनातनाः परम्पराप्राप्ताः उत अपि। अवशिष्टं कुलमधर्मोऽभिभवति व्याप्नोति ॥ ४० ॥

स० टी०–महापापादिहेतुत्वाद्गुरुपित्रादिहिंसनात्॥ सिद्धयै ह्युपरिरंसायाः प्राह वाक्यानि शास्त्रवित् ॥ १ ॥ धर्माः परम्पराप्राप्ताः प्रणश्यन्ति कुलोचिताः ॥ कुलक्षये यतः कर्तुरभावो दृश्यते क्षितौ ॥ २ ॥ धर्मक्षये कुलं सर्वमाबालमपि सर्वथा ॥ अधर्मः स्ववशे कृत्वा व्याप्नोति भ्रंशयत्यतः ॥ ३ ॥ ४० ॥

भा० टी०–कोऽसौ कुलक्षयकृतो दोष इत्यपेक्षायामाह–कुलक्षय इति। कुलस्य हि क्षये कुलकर्तृकाः कुलोचिताः धर्माः सनातनाः चिरन्तनास्तत्कर्तॄणामभावात् प्रकर्षेण नश्यन्ति धर्मे नष्टे च यत्स्यात्तदाह–धर्म इति। धर्मे नष्टे तत्कर्तृकुलनाशाद्धर्मे नष्टे सति कुलक्षयकर्तुरवशिष्टं कृत्स्नं सर्वमपि कुलमधर्मोऽभिभवति अधर्मभूयिष्ठं तस्य कुलं भवतीत्यर्थः ॥ ४० ॥

प० टी०–अथ कुलक्षये प्रणश्यन्तीत्यादिवाक्यैर्यावदध्यायान्तं पापपर्यवसितमर्थमुक्तवान्। सनातनाः परम्पराप्राप्ताः ॥ ४० ॥

रा० टी०–कः कुलक्षयकृतो दोष इत्यतआह–कुलक्षयइति। सनातनाः परम्पराप्राप्ताः कुलधर्माः क्षत्रियादिकुलधर्माः उतशब्दोऽप्यर्थे। अवशिष्टं कृत्स्नमपि कुलमधर्मोऽभिभवति अधर्माक्रान्तं भवति ॥ ४० ॥

**अधर्माभिभवात्कृष्ण प्रदुष्यन्ति कुलस्त्रियः ॥**
**स्त्रीषु दुष्टासु वार्ष्णेय जायते वर्णसंकरः ॥ ४१ ॥**

त० टी०–ततश्च महान्दोषो भवतीत्याह–अधर्मेति। अधर्मव्यापनात्कुलस्त्रियः प्रदुष्यन्ति यथेष्टाचारेण वर्त्तन्ते। भक्तानां पापकर्षकस्त्वं नतु पापे नियोजक इत्यभिप्रायेण कृष्णेति सम्बोधनं। वार्ष्णेयेति हे धर्मज्ञ! कुलप्रसूतस्त्रीषु दुष्टासु सतीषु वर्णसंकरो जायते ॥ ४१ ॥

म० टी०–अस्मदीयैः पतिभिर्धर्ममतिक्रम्य कुलक्षयः कृतश्चेदस्माभिरपि व्यभिचारे कृते को दोषः स्यादित्येवं कुतर्कहताः कुलस्त्रियः प्रदुष्येयुरित्यर्थः। अथवा कुलक्षयकारिपतितपतिसम्बन्धादेव स्त्रीणां दुष्टत्वम्। 'आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः' इत्यादिस्मृतेः ॥ ४१ ॥

शं० टी०—अधर्माभिभवादिति । अधर्माभिभवादनाचारवृद्धेः कुलस्त्रियः प्रकर्षेण दुष्यन्ति कुवृत्त्या दूषिता भवन्ति । स्त्रीषु सतीषु दुष्टासु वर्णसङ्करः आनुलोम्येन प्रातिलोम्येन च ब्राह्मणादिवर्णानां सङ्कीर्णता जायते । व्यवस्थां त्यक्त्वा वर्णाः सङ्कीर्णा भवन्तीत्यर्थः ॥ ४१ ॥

श्री० टी०—ततश्च—अधर्माभिभवादिति ॥ ४१ ॥

स० टी०—अस्मदीयैश्च पतिभिरतिक्रम्य स्वधर्मतः ॥ कुलक्षयः कृतो यर्हि तर्ह्यस्माभिरिहाधुना ॥ १ ॥ व्यभिचारे कृते कः स्याद्दोष इत्थं कुतर्कतः ॥ कुलस्त्रियः प्रदुष्येयुरधर्माधिक्यहेतुना ॥ २ ॥ तासु दुष्टासु नीचाभिगमनात्सङ्करो भवेत् ॥ वृष्णिवंशेऽवतीर्णत्वाद्रक्षास्मान् घोरदोषतः ॥ ३ ॥ ४१ ॥

भा० टी०—ततश्च किं स्यादत आह—अधर्मेति। अधर्मेणाभिभवादधर्मबाहुल्यात् कुलस्त्रियः प्रकर्षेण दुष्यन्ति दुष्टाः व्यभिचारिण्यो भवन्ति । कुलक्षयकारिपतितपतिसंबन्धादेव स्त्रीणां दुष्टत्वं । 'आशुद्धेः सम्प्रतीक्ष्यो हि महापातकदूषितः' इत्यादिस्मृतेरित्यपि केचित् । तासु च दुष्टासु यत्स्यात्तदाह—स्त्रीष्विति । स्त्रीषु दुष्टासु वर्णसङ्करो जायते सर्वानर्थमूलभूताधर्मसाधनाद्युद्धादस्मदपकर्षणमेव कर्तुमर्हसि न तु तत्र प्रवर्तनमिति सूचयन्नाह—कृष्णेति । वृष्णिकुलोद्भवकुलमर्यादाभिज्ञस्त्वमेतत्कथं जानासि ज्ञात्वा च किमर्थमुपेक्षसइति ध्वनयन्सम्बोधयति—वार्ष्णेयेति ॥ ४१ ॥

प० टी०—वर्णसङ्करः सर्ववर्णानामेकीभावः ॥ ४१ ॥

रा० टी०—वार्ष्णेय वृष्णिकुलोद्भव ॥ ४१ ॥

**संकरो नरकायैव कुलघ्नानां कुलस्य च ॥**
**पतन्ति पितरो ह्येषां लुप्तपिण्डोदकक्रियाः ॥ ४२ ॥**

त० टी०—संकरोत्पत्तिफलमाह—संकर इति। जात्यन्तरपुरुषादन्यस्त्रियां जातः संकरः । स कुलघ्नानां कुलस्य च नरकायैव भवति । न केवलं कुलघ्नानामेव नरकपातः किन्तु तत्पितॄणामपीत्याह—पतन्तीति । हि यतः सन्तत्यभावाल्लुप्ताः पिण्डोदकक्रिया येषां ते। एषां कुलघ्नानां पितरः पतन्ति । नरके इति शेषः ॥ ४२ ॥

म० टी०—कुलस्य सङ्करश्च कुलघ्नानां नरकायैव भवतीत्यन्वयः । न केवलं कुलघ्नानामेव नरकपातः किन्तु तत्पितॄणामपीत्याह—पतन्तीति । हिशब्दोऽप्यर्थे हेतौ वा । पुत्रादीनां कर्तॄणामभावाल्लुप्ता पिण्डस्योदकस्य च क्रिया येषां ते । तथा कुलघ्नानां पितरः पतन्ति । नरकायैवेत्यनुषङ्गः ॥ ४२ ॥

शं० टी०—नैतावानेवानर्थः किन्तु विशेषोऽस्तीत्याह—सङ्करइति। कुलधर्मव्यवस्थापकपुरुषनाशकाः कुलघ्नास्तेषां च कुलस्य च सङ्करो नरकायैव भवति। कुलहन्तारः साङ्कर्यसम्पादकाः सङ्कीर्णाः साङ्कर्यसमुत्पन्नाश्च सर्वे नरके पतन्तीत्यर्थः। आस्तामेषोऽनर्थ इतोप्याधिकतरोऽस्तीत्याह—पतन्तीति। हिश्चार्थे प्रसिद्ध्यर्थे वा। एषां कुलघ्नानां कुलस्य च सङ्कीर्णकानां च ये पितरः स्वर्गस्थास्तेऽपि लुप्तपिण्डोदकक्रियाः सन्तस्तेषामेव दोषेण स्वयं च नरके पतन्ति सङ्कीर्णकानां पितरश्च्यवन्ते । नात्र संशय इति प्रसिद्धेः ॥ ४२ ॥

श्री० टी०—एवं सति—सङ्कर इति। एषां कुलघ्नानां पितरः पतन्ति। हि यस्मात् लुप्ताः पिण्डोदकक्रियाः येषां ते ॥ ४२ ॥

स० टी०—कुलस्य सङ्करो यस्मात्कुलघ्नानामवीचिदः ॥ न केवलं कुलघ्नानां पितॄणामपि नस्तथा ॥१॥ पुत्रादीनां हि कर्तॄणामभावादेव सर्वथा ॥ लुप्ता येषां क्रियाः सर्वाः पिण्डस्याप्युदकस्य च ॥ २ ॥ कुलघ्नानां पतन्त्येव पितरो नरके चिरम् ॥ ३ ॥ ४२ ॥

**भा० टी०**—वर्णसङ्करस्य दोषपर्यवसायितां दर्शयति—**सङ्कर इति।** वर्णसङ्करः कुलघ्नानां कुलहननकर्तॄणां कुलस्य चाधर्माभिभूतस्य नरकायैव नरकप्रदानायैव जायत इत्यनुषङ्गः। कुलस्य सङ्करश्च कुलघ्नानां नरकायैव भवतीत्यन्वयः इति केचित्। न केवलं तेषामेव नरकाय अ पितु तत्पितॄणामपीत्याह—**पतन्तीति।** एषां कुलघ्नानां कुलस्य च पितरः पतन्ति निरयगामिनो भवन्ति। हि यस्मात् लुप्ता पिण्डोदकयोः क्रिया येषां ते। तत्कर्तॄणां पुत्रपौत्रादीनामभावात्। ततश्च प्रेतत्वादिनिवृत्तिकारणाभावात्। तेषां निरयपतनमेवावश्यमायातमित्यर्थः॥ ४२॥

**प० टी०**—लुप्ताः लोपं प्राप्ताः पिण्डक्रियाः श्राद्धाद्या उदकक्रियास्तर्पणाद्याः॥ ४२॥

**रा० टी०**—कुलस्य चेति पुत्रपौत्रादिसन्तानस्य चेत्यर्थः। एषां कुलघ्नानां पितरः लुप्तपिण्डाः लुप्तोदकक्रियाश्च सन्तः नरके पतन्ति॥ ४२॥

**दोषैरेतैः कुलघ्नानां वर्णसंकरकारकैः॥**
**उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः॥ ४३॥**

**त० टी०—संकरस्य कुलतत्पितॄणामनर्थकारित्वमुक्तमिदानीं तद्धेतुभूतपुरुषाणामजस्रदुःखानुभूतिरूपं फलमाह—दोषैरिति द्वाभ्याम्। जातिधर्माः ब्राह्मणत्वक्षत्रियत्वादिजात्यसाधारणा वेदविहिताः कुलधर्माश्च शाश्वताः परमश्रेयःसाधनभूताः सदाचार्योपदिष्टा वेदवेदान्तनिर्णीता भगवदुपासनादिप्रधानाः कुलघ्नानां वर्णसंकरकारकैरेतैर्दोषैरुत्साद्यन्ते विनाश्यन्ते॥ ४३॥**

**म० टी०**—जातिधर्माः क्षत्रियत्वादिनिबन्धनाः कुलधर्माः असाधारणाश्च एतैर्दोषैरुत्साद्यन्ते उत्सन्नाः क्रियन्ते। विनाश्यन्त इत्यर्थः॥ ४३॥

**शं० टी०**—इतोपि कुलघ्नानामेवानर्थं प्रतिपादयति—**दोषैरिति।** कृत्याकृत्यविचारमुत्सृज्य कामक्रोधलोभादिभिः कुलधर्मप्रवर्तकान् ये तु घ्नन्ति ते कुलघ्नास्तेषामेव वर्णसङ्करकारकैरेतैरुक्तैरेव दोषैः शाश्वताः श्रुतिमूलकाः स्वर्गापवर्गप्रदाः कुलधर्मा जातिधर्माः। चकारादाश्रमधर्माश्च उत्साद्यन्ते उत्सारिता भवन्ति॥ ४३॥

**श्री० टी०**—उक्तं दोषमुपसंहरति—**दोषैरिति** द्वाभ्याम्। उत्साद्यन्ते लुप्यन्ते जातिधर्माः वर्णधर्माः कुलधर्माश्च। चकारादाश्रमधर्मादयोऽपि गृह्यन्ते॥ ४३॥

**स० टी०**—ये त्वसाधारणा धर्माः स्वकुलस्य चिरन्तनाः॥ उत्साद्यन्ते जातिधर्माः क्षत्रियत्वादिहेतुकाः १—४३

**भा० टी०**—कुलघ्नानामेतैरुक्तैर्दोषैर्वर्णसङ्करस्य कारकैर्हेतुभिः जातिप्रयुक्ता धर्माः कुलप्रयुक्ताश्च धर्माः सर्वे शाश्वताश्चिरन्तनाः समुत्साद्यन्ते उत्सन्ना विनष्टाः क्रियन्ते॥ ४३॥

**प० टी०**—उत्साद्यन्ते लुप्यन्ते॥ ४३॥

**रा० टी०**—उक्तदोषमुपसंहरति—**दोषैरिति**द्वाभ्याम्। जातिधर्माः क्षत्रियत्वादिजातिप्रयुक्ता धर्माः कुलधर्माश्च शाश्वताः परम्पराप्राप्ताः॥ ४३॥

**उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन॥**
**नरके नियतं वासो भवतीत्यनुशुश्रुम॥ ४४॥**

**त० टी०—धर्मोच्छेदात्तेषां नरके नियतं निवृत्तिवर्जितमजस्रमित्यर्थः। यथा स्यात्तथा वासो भवतीत्यतो महानर्थकारणं बन्धुवधकरं युद्धम्॥ ४४॥**

**म० टी०**—ततश्च प्रेतत्वपरावृत्तिकारणाभावान्नरकएव केवलं नितरां वासो भवति ध्रुवमित्यनुशुश्रुमेत्याचार्याणां मुखाद्वयं श्रुतवन्तो न स्वाभ्यूहेन कल्पयामइति पूर्वोक्तस्यैव दृढीकरणम्॥ ४४॥

**शं० टी०**—यतः—**उत्सन्नेति**। तत उत्सन्ना विध्वंसिताः कुलजात्यादिधर्मा यैस्ते उत्सन्नकुलधर्मास्तेषामुत्सन्नकुलधर्माणां मनुष्याणां नरके रौरवादावनियतं युगमन्वन्तराद्यवधिराहित्यं यथा तथा वासः स्थितिर्भवतीत्यनुशुश्रुम। महर्षीणां वचनेभ्यः श्रुतवन्तो वयमित्यर्थः ॥ ४४ ॥

**श्री० टी०**—**उत्सन्नेति**। उत्सन्नाः कुलधर्मा येषामिति। उत्सन्नजातिधर्मादीनामप्युपलक्षणम्। अनुशुश्रुम श्रुतवन्तो वयम्। 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्निरयान् यान्ति दारुणान्' इत्यादिवचनेभ्यः ॥ ४४ ॥

**स० टी०**—ततः प्रेतत्वमुक्त्यर्थं कारणाभावतश्चिरम् ॥ नरके चैव वासः स्याद्ध्रुवं नातः सुनिष्कृतिः ॥ १ ॥ आचार्याणां मुखादित्थं श्रुतवन्तो वयं पुरा ॥ जनानां देवशत्रूणां प्राणादीनां वियोगतः ॥ २ ॥ यातनागमयितृत्वाद्यतस्त्वं श्रीजनार्दनः ॥ अतो मां प्रेरयस्येवं किं त्वां शरणमागतम् ॥ ३ ॥ ४४ ॥

**भा० टी०**—ततो यद्भवति तदाह—**उत्सन्नेति**। उत्सन्ना विनष्टाः कुलधर्मा जातिधर्माश्च येषां तेषां मनुष्याणां नरके नियतं नियमेन वासो भवतीत्यनुशुश्रुम शास्त्रादाचार्याच्च श्रुतवन्तः। कुलक्षयहेतुभूतयुद्धकर्तॄणामस्माकं नरकपतनध्रौव्यात्तस्मान्निवृत्तिरेव श्रेयसीति नरकात्त्राणार्थिभिर्जनैः प्रार्थ्यमानं त्वामहमपि तत्त्राणाय प्रार्थयामीति ध्वनयन्नाह—हे जनार्दनेति ॥ ४४ ॥

**प० टी०**—अनुशुश्रुम श्रुतवन्तः ॥ ४४ ॥

**रा० टी०**—उत्सन्नकुलधर्माणां उत्सन्नजातिधर्माणां चेत्यपि ज्ञेयम्। अनुशुश्रुम 'प्रायश्चित्तमकुर्वाणाः पापेषु निरता नराः। अपश्चात्तापिनः कष्टान्निरयान्यान्ति दारुणान्' इत्यादि वदद्भिर्वृद्धैः श्रुतवन्तः स्मः ॥ ४४ ॥

**अहो बत महत्पापं कर्तुं व्यवसिता वयम् ॥**
**यद्राज्यसुखलोभेन हन्तुं स्वजनमुद्यताः ॥ ४५ ॥**

**त० टी०**—यस्मादेवं तस्मादनर्थेऽर्थबुद्ध्या तदध्यवसायिनो वयं महामूढा इति पश्चात्तापं कुर्वन्नाह—अहो बत इति। बत इति खेदे। वयं महत्पापं कर्तुं व्यवसिताः निश्चयं कुर्वन्तः। यद्यस्माद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यता इति ॥ ४५ ॥

**म० टी०**—बन्धुवधपर्यवसायी युद्धाध्यवसायोऽपि सर्वथा पापिष्ठतरः किं पुनर्युद्धमिति वक्तुं तदध्यवसायेनात्मानं शोचन्नाह—**अहो इति**। यदीदृशी ते बुद्धिः कुतस्तर्हि युद्धाभिनिवेशेनागतोऽसीति। न वक्तव्यं अविमृश्यकारितया मयैतद्व्यवसितस्य कृतत्वादिति भावः ॥ ४५ ॥

**शं० टी०**—"पश्यति पुत्रं पश्यति पौत्रम्। अपाम सोमममृता अभूम। अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति। दक्षिणावन्तो अमृतं भजन्ते" इत्यादिप्ररोचनश्रुतिभिर्विषयसुखाशावशो भूत्वा श्रौतादिकर्मणि प्रवृत्तो यस्तस्य जननमरणप्रवाहसम्पातएव निरन्तरो भवतीति मुमुक्षुणा सन्त्यक्तव्यमिति सूचयितुमर्जुनस्य कुलक्षयकृतदोषप्राप्तोऽनर्थ एवंलक्षणः कुलघ्नानां महत्तर इति निश्चित्य तज्जन्यसन्तापेनोच्यमानमार्तवचनप्रकारमाह—**अहो बतेति द्वाभ्याम्**। अहो इत्याश्चर्ये बतेति खेदे। महत् महत्तरं वाचा वक्तुमशक्यं पापं कर्तुं विवेकिनोऽपि वयं व्यवसिताः प्रयतामहे। अहो महदाश्चर्यं। बत हन्त। किं तन्महत्पापमित्यत आह—**यदिति**। राज्यसुखलोभेन राज्यलब्ध्या प्राप्तं यत्सुखं राजार्हं तत्र यो लोभो लाम्पट्यं तेन दोषेण स्वजनं पितृभ्रातृपुत्रादिकं शस्त्रैर्हन्तुमुद्यता उद्युक्ता वयमिति यदेतदेव महत्पापमित्यर्थः ॥ ४५ ॥

**श्री० टी०**—बन्धुवधाध्यवसायेन सन्तप्यमान आह—**अहो इति**। स्वजनं हन्तुमुद्यता इति। यत एतन्महत् पातकं कर्तुमध्यवसायं कृतवन्तो वयम्। अहो बत कष्टमित्यर्थः ॥ ४५ ॥

**स० टी०**—स्वकुलक्षयकारित्वात्पापिष्ठो युद्धनिश्चयः ॥ किं युद्धस्य पुनर्वाच्यं दुष्टत्वमितिभावनात् ॥ १ ॥ शोकमोहैकपाथोधौ निमग्नः प्राह दुःखितः ॥ अहो बतेति धर्मेऽपि पापबुद्धिमतो वचः ॥२॥ ४५ ॥

**भा० टी०**—राज्यप्राप्तिसुखोपभोगलोभेन युद्धार्थमत्रागमनमपि शोचनीयमित्याह—**अहो इति**। अहो बतेत्यत्यन्तखेदे। वयं महत्पापं कर्तुं व्यवसिता निश्चिताः यद्राज्यसुखलोभेन स्वजनं हन्तुमुद्यताः युद्धोद्योगेनात्रागताः ४५

**प० टी०**—**अहो बतेति**। बन्धुवधसंतापकथनम् ॥ ४५ ॥

**रा० टी०**—एवं बन्धुवधस्य दोषहेतुत्वाध्यवसायेन संतप्यमानोऽर्जुनआह—**अहो बतेति**। राज्यसुखलोभेन स्वजनं हन्तुं वयमुद्यता इति यत्तदेतन्महत्पापं कर्तुं व्यवसिता निश्चयवन्तो वयं । अहो बत महाकष्टमिति ॥ ४५ ॥

**यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः ॥**
**धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत् ॥ ४६ ॥**

**त० टी०—नतु बन्धुकृपामोहेन त्वयि निर्विण्णेऽपि परेषां भीमादीनां च निर्वेदाभावाद्राज्यहेतोस्ते परस्परं योत्स्यन्त एव। ततो युद्धाऽऽवेशेन धार्तराष्ट्रास्त्वामपि हनिष्यन्ति चेत्तदा त्वया किं कर्त्तव्यमिति चेत्तत्राह—यदीति। अप्रतीकारं प्राणत्राणाय प्रतीकारमकुर्वन्तमत एवाशस्त्रं मां यदि शस्त्रपाणयः धार्तराष्ट्राः लोभाऽऽविष्टचेतस्त्वेन नष्टज्ञाना रणे हन्युश्चेत्तर्हि अजस्रनरकफलाद्बन्धुवधात्तन्मरणं मे क्षेमतरं भवेदत्यर्थं हितं भवेत्। एतच्छरीरनाशेऽपि "किमहं पापमकरवं। किमहं साधु नाकरवम्" इत्येवं पश्चात्तापाभावादिति भावः ॥ ४६ ॥**

**म० टी०**—ननु तव वैराग्येपि भीमसेनादीनां युद्धोत्सुकत्वाद्बन्धुवधो भविष्यत्येव त्वया पुनः किं विधेयमित्यतआह—**यदीति**। प्राणादपि प्रकृष्टो धर्मः प्राणभृतामहिंसा पापानिष्पत्तेः तस्माज्जीवनापेक्षया मरणमेव मम क्षेमतरं अत्यन्तं हितं भवेत्। प्रियतरमिति पाठेऽपि स एवार्थः। अप्रतीकारं स्वप्राणत्राणाय व्यापारमकुर्वाणं बन्धुवधाध्यवसायमात्रेणापि प्रायश्चितान्तररहितं वा। तथाच प्राणान्तप्रायश्चित्तेनैव शुद्धिर्भविष्यतीत्यर्थः ॥ ४६ ॥

**शं० टी०**—पापभीत्या युद्धादुपरतं त्वां तएव बलाद्धनिष्यन्तीत्यतआह—**यदि मामिति**। अप्रतीकारं कृतस्य प्रतिक्रिया प्रतीकारस्ताडयन्तं प्रतिताडनं पापभीत्या दययाचानुरक्त्या च तमकुर्वन्तमतएवाशस्त्रं परित्यक्तायुधं मां धार्तराष्ट्राः स्वयं शस्त्रपाणयः सन्तो रणे यदि हन्युर्निर्दाक्षिण्येन धर्मं त्यक्त्वा मां हिंस्युश्चेत्तद्धननं मम स्वधर्मनिष्ठस्य क्षेमतरमेव भवेत् क्षेमायैव भवति। अप्राप्तप्रापणं योगः। क्षेमस्तु स्थितरक्षणमितिन्यायेन स्थितस्य परिपालनं क्षेमस्तस्मादधिकः क्षेमतरः। कुलनाशनदोषतद्धेतुकनरकपातदुष्कीर्त्याद्यनर्थराहित्येन प्राक्तनपुण्यपुञ्जस्य क्षत्यभावएव क्षेमतरशब्दार्थस्तस्मादेव भवतीत्यर्थः ॥ ४६ ॥

**श्री० टी०**—एवं ततः सन्मृत्युमेवाशासान आह—**यदीति**। अकृतप्रतीकारं तूष्णीमुपविष्टं मां यदि हनिष्यन्ति तर्हि तद्धननं मम क्षेमतरमत्यन्तं हितं भवेत्। पापानिष्पत्तेः ॥ ४६ ॥

**स० टी०**—यदीदृशी मतिस्तेऽभूत्कुतस्तर्हि रणक्षितौ ॥ त्वं युद्धाभिनिवेशेनेहागतोऽसीति चेच्छृणु ॥ १॥ अविचार्य मयौद्धत्यं कृतं मौढ्यं ममेत्यहो ॥ नन्वेवं तव वैराग्ये भीमादीनां रणोत्सुका ॥ २ ॥ अस्ति तैरेव बन्धूनां वधः स्याद्यदि पापदः ॥ किं विधेयं त्वया तर्हीत्याशङ्क्याह यदीति च ॥३॥ अहिंसा प्राणिनां धर्मः प्रकृष्टः प्राणरक्षणात्। जीवनापेक्षयात्यन्तं हितं मे मरणं मतम् ॥ ४ ॥ स्वप्राणरक्षणे हेतुं व्यापारं मां मनागपि ॥ अकुर्वाणं रणे हन्युस्तदाऽहं स्यामकल्मषः ॥ ५ ॥ ४६ ॥

**भा० टी०**—ननु स्वरक्षणाय व्यापारमकुर्वाणं शस्त्रपरिग्रहरहितं त्वां धार्तराष्ट्रा रणे हन्युरिति चेत्तत्राह—**यदीति**। यत्तु 'ननु तव वैराग्येपि भीमसेनादीनां युद्धोत्सुकत्वात् तत्कृतो बन्धुवधो भविष्यत्येव त्वया पुनः किं कार्यमित्यत आह—यदीति' मधुसूदनसरस्वतिभिरुक्तं तदुपेक्ष्यं। मूले शङ्कानुगुणस्योत्तरस्याभावात्। क्षेमतरं हिततरं पापानिष्पत्तेः॥ ४६॥

**प० टी०**—अथ रणोद्यमं त्यक्त्वा तूष्णीं स्थितं मां ते शस्त्रपाणयो हन्युस्तन्मे क्षेमतरं भवेत्। पापजनकं न भवतीत्यर्थः॥ ४६॥

**रा० टी०**—एवं सन्तप्तः सन्मृतिमेवार्थयमानआह—**यदीति**। अकृतप्रतीकारमशस्त्रं तूष्णीमासीनं मां यदि शस्त्रपाणयो धार्तराष्ट्रा रणे हन्युस्तर्हि तद्धननं मे क्षेमतरम् अत्यन्तहितमेव भवेत्। बन्धुवधदोषाभावाद्रणे हननेन गतिसंभवाच्चेति भावः॥ ४६॥

## सञ्जय उवाच—एवमुक्त्वाऽर्जुनः सङ्ख्ये रथोपस्थ उपाविशत्॥
## विसृज्य सशरं चापं शोकसंविग्नमानसः॥ ४७॥

### इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादेऽर्जुनविषादयोगो नाम प्रथमोऽध्यायः॥ १॥

**त० टी०**—ततः किं वृत्तमिति धृतराष्ट्रापेक्षायां सञ्जय उवाच—**एवमिति**। शोकेन संविग्नं व्यथितं मानसं यस्य सोऽर्जुनः सङ्ख्ये संग्रामे एवं पूर्वोक्तप्रकारेणोक्त्वा सशरं चापं विसृज्य रथोपस्थे रथोपर्युपवेशनस्थाने उपाविशत्॥ ४७॥

इति श्रीमद्भगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायामर्जुनशोकवर्णनउपोद्घाताख्यः प्रथमोऽध्यायः॥ १॥

**म० टी०**—ततः किं वृत्तमित्यपेक्षायां सञ्जय आह—**एवमिति**। सङ्ख्ये संग्रामे रथोपस्थे रथस्योपर्युपविवेश। पूर्वं युद्धार्थमवलोकनार्थं चोत्थितः सन् शोकेन संविग्नं पीडितं मानसं यस्य सः॥ ४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यविश्वेश्वरसरस्वतीयपादशिष्यसूनुमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां प्रथमोऽध्यायः॥ १॥

**शं० टी०**—"परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन। तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्"इत्यादिश्रुत्युक्तरीत्या मुमुक्षुर्ब्राह्मणो विद्वान् कर्मणां कर्मफलानां तद्दातॄणां च क्लेशकरत्वानित्यत्वसंसारित्वादिदोषवत्त्वं कर्मकर्तॄणां च जननमरणप्रवाहपातानपायित्वं निरन्तरसंसारदुःखभाक्त्वाद्यनर्थपरम्परां च श्रुतिस्मृतियुक्तिभिर्निश्चित्य मोक्षैककामनया स्वयमसतो विरज्य सहसाधनं कर्म संन्यस्य मुक्त्यै सद्गुरुमुपसीदेदितीममर्थं सूचयितुमर्जुनस्य सदसद्विचारमसत्प्रवृत्तौ परितापमधर्मप्राप्ते राज्ये तत्सुखादौ दोषदर्शनं वैराग्यं च प्रतिपाद्येदानीं हिंसासाधनभूतशस्त्रसंन्यासं युद्धक्रियानिवृत्तिं च प्रतिपादयन्नध्यायमुपसंहरति—**एवमिति**। अर्जुनः सङ्ख्ये सत्येवं 'धार्तराष्ट्रा रणे हन्युस्तन्मे क्षेमतरं भवेत्' इत्येवंप्रकारकं वचनमुक्त्वा शोकसंविग्नमानसः स्वजनविनाशं निमित्तीकृत्य समुत्पन्नेन शोकेन संविग्नं मानसं यस्य स तथोक्तः सन्सशरं चापं विसृज्य नाहं योद्धुं शक्ष्यामीति रथोपस्थे रथस्योपर्युपाविशदुपविष्टवानित्यर्थः। एतेन सदसद्विवेकवतः परमार्थापेक्षिणो मुमुक्षोरनित्यात्स्वर्गादिसुखादसतः सकाशाद्विरज्य तत्साधनं

सर्वं संन्यस्तव्यमिति सूचितं भवति। तथाच श्रुतिः " परीक्ष्य लोकान्कर्मचितान्ब्राह्मणो निर्वेदमायात् " इति " यदहरेव विरजेत्तदहरेव प्रव्रजेत् " इति ॥ ४७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशङ्करानन्द-
सरस्वतीकृतौ गीतातात्पर्यबोधिन्यां प्रथमोऽध्यायः ॥ १ ॥

**श्री० टी०**—ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच—**एवमिति**। सङ्ख्ये सङ्ग्रामे रथोपस्थे रथस्योपरि उपाविशत् उपविवेश। शोकेन संविग्नं प्रकम्पितं मानसं चित्तं यस्य सः ॥ ४७ ॥

इति श्रीमद्भगवद्गीताटीकायां सुबोधिन्यां श्रीधरस्वामिविरचितायां प्रथमोऽध्यायः ॥ १ ॥

**स० टी०**—ततः किं वृत्तमित्यत्राकाङ्क्षायामाह सञ्जयः ॥ सङ्ग्रामे पूर्वमेवासौ युद्धार्थं दर्शनाय च ॥१॥ भीष्मादीनां रथस्योर्ध्वभागे पार्थः समुत्थितः ॥ शोकेनाविष्टभावत्वात्पीडितं यस्य मानसम् ॥ २ ॥ सबाणं धनुरुत्सृज्य रथोपस्थ उपाविशत् ॥ ३ ॥ ४७ ॥ श्लोकानामादितः समष्ट्यङ्काः ॥ २७२ ॥
मेघश्यामोऽवदातः स्मितमधुरमुखस्तोत्रवेत्रैकपाणिर्बीभत्सोः सम्मुखेऽजः श्रुतिसुरभिपयोदोहनार्थं प्रवृत्तः। लोकानुद्धर्तुकामः श्रुतिविशदयशा भक्तिवश्योऽमलात्मा स्वामी सर्वस्य कृष्णो वसतु मम मतौ ब्रह्मविद्याश्रितोऽसौ ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ शास्त्रोपोद्घातनामाऽयं प्रथमः पूर्णतां गतः ॥ १ ॥

**भा० टी०**—एतद्वृत्तान्तं सञ्जयो धृतराष्ट्रं प्रत्यावेदितवानित्याह—**एवमिति**। एवमुक्त्वा उक्तेन प्रकारेण श्रीकृष्णं प्रति विज्ञापनं कृत्वा पूर्वं शूराणामवलोकनायोत्थितोऽर्जुनः परया कृपयाऽऽविष्टः। शोकग्रहणं मोहस्याप्युपलक्षणार्थम्। शोकमोहाभ्यां सम्यगुद्विग्नं मनो यस्य स एतादृशः सन् संख्ये संग्रामभूमिमध्ये शरेण सहितं चापं कार्मुकं विसृज्य त्यक्त्वा रथोपस्थे रथस्योपरि उपाविशत् उपविष्टवानित्यर्थः ॥ ४७ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपति-
विदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां प्रथमोऽध्यायः ॥ १ ॥

**प० टी०**—ततः किं वृत्तमित्याह सञ्जयः—**एवमुक्त्वेति**। सङ्ख्ये रथोपस्थे रथोपरि उपाविशत् उपविवेश। शोकेन संविग्नं कम्पितं मानसं यस्य सः ॥ ४७ ॥

अथाध्यायतात्पर्यम्।

सद्योमोक्षाधिकारी स भवति खलु यः पापभीरुर्वितृष्णस्तादृक्पार्थोऽस्ति तस्मान्निजकुलदमनाद्राज्यभोगान्निवृत्तः। मत्वैवं यादवेशोऽप्यनुपदमकरोद् ब्रह्मविद्योपदेशं भूभृद्धर्मानुरूपं तदिदमभिहितं त्वादिमाध्यायकृत्यम् ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितवर्यसूर्यविरचितायां श्रीमद्भगवद्गीताटीकायां परमार्थ-
प्रपायामर्जुनविषादो नाम प्रथमोऽध्यायः ॥ १ ॥

**रा० टी०**—ततः किं जातमिति धृतराष्ट्रहार्दं परिहरति सञ्जयः—**एवमिति**। सङ्ख्ये रणे रथोपस्थे रथमध्ये उपाविशत्। कथं शोकेन कम्पितचित्तः सन् सशरं चापं विसृज्येति ॥ ४७ ॥

इति श्रीमद्गीतार्थसंग्रहे श्रीराघवेन्द्रयतिकृते प्रथमोध्यायः ॥ १ ॥



## अथ द्वितीयोऽध्यायः ॥ २ ॥

**सञ्जय उवाच—तं तथा कृपयाऽऽविष्टमश्रुपूर्णाकुलेक्षणम् ॥**
**विषीदन्तमिदं वाक्यमुवाच मधुसूदनः ॥ १ ॥**

**त० टी०**—एवं बन्धुवधपापभयेन युद्धादुपरतमर्जुनं श्रुत्वा निवृत्तपुत्रराज्यापायभयं तदुत्तरवृत्तान्तं जिज्ञासुं धृतराष्ट्रं प्रति सत्यवादी सञ्जय उक्तवानित्याह वैशम्पायनः—सञ्जय उवाचेति। उक्तप्रकारेण यथा मयोक्तं तथा स्वाभाविक्या कृपयाऽऽविष्टमतएव विषीदन्तं विषादं कुर्वन्तमतएवाश्रुपूर्णाकुलेक्षणम् अश्रुभिः पूर्णेऽतएवाकुले ईक्षणे यस्य तमर्जुनं मधुसूदन इदं वक्ष्यमाणं वाक्यमुवाच। दैत्यराजस्य मधोरपि सूदनो निहन्ता वासुदेवो क्षत्रियरूपेणावतीर्णो दुष्टदैत्यान् पृथ्वीभारभूतान् सर्वान्हनिष्यतीति मधुसूदनशब्दाभिप्रायः ॥ १ ॥

**म० टी०**—अहिंसा परमो धर्मो भिक्षाशनं चेत्येवंलक्षणया बुद्धया युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यमप्रचलितमवधार्य स्वस्थहृदयस्य धृतराष्ट्रस्य हर्षनिमित्तां ततः किंवृत्तमित्याकाङ्क्षामपनिनीषुः सञ्जयः तं प्रत्युक्तवानित्याह वैशम्पायनः—**तमिति**। कृपा ममेत इति व्यामोहनिमित्तः स्नेहविशेषः तया आविष्टं स्वभावसिद्धया व्याप्तं। अर्जुनस्य कर्मत्वं कृपायाश्च कर्तृत्वं वदता तस्याः आगन्तुकत्वं व्युदस्तं। अतएव विषीदन्तं स्नेहविषयीभूतस्वजनविच्छेदाशङ्कानिमित्तः शोकापरपर्यायश्चित्तव्याकुलीभावो विषादस्तं प्राप्तुवन्तं। अत्र विषादस्य कर्मत्वेनार्जुनस्य कर्तृत्वेन तस्यागन्तुकत्वं सूचितं। अतएव कृपाविषादवशादश्रुभिः पूर्णे आकुले दर्शनाक्षमे चेक्षणे यस्य तं। एवमश्रुपातव्याकुलीभावाख्यकार्यद्वयजनकतया परिपोषं गताभ्यां कृपाविषादाभ्यामुद्विग्नं तमर्जुनमिदं सोपपत्तिकं वक्ष्यमाणं वाक्यमुवाच मधुसूदनः नतूपेक्षितवान्। मधुसूदनइति स्वयं दुष्टनिग्रहकर्तार्जुनं प्रत्यपि तथैव वक्ष्यतीति भावः ॥ १ ॥

**शं० टी०**—सदसद्विवेकेन तज्जनिततीव्रवैराग्येण मुमुक्षया च संन्यस्तसर्वकर्मणो मोक्षैककामस्य ब्राह्मणस्य सदसद्विवेकवैराग्यादिसाधनसंपत्तिसिद्धेर्ब्राह्मणत्वसिद्धेश्च साफल्याय "अथातो ब्रह्मजिज्ञासा" इति "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इति "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्" इत्यादिश्रुत्युक्तप्रकारेण सद्गुरुं श्रोत्रियं ब्रह्मनिष्ठमुपसद्य ब्रह्मविचारः कर्तव्यइतीममर्थं सूचयितुं सदसद्विवेकिनोऽर्जुनस्य परमार्थापेक्षिणः 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' इतीश्वरप्रतिपत्तिं तस्मै ईश्वरेण कृतमात्मानात्मज्ञानोपदेशप्रकारं च प्रतिपादयितुं द्वितीयोऽध्याय आरभ्यते। तत्रादौ "सोहं भगवः शोचामि तं मा भगवाञ्शोकस्य पारं तारयतु" इतिश्रवणात्संसारदुःखेन शोचन्तं स्वशरणं गतं मुमुक्षुमभयवचनपूर्वकमभिमुखीकृत्य गुरुस्तत्त्वं बोधयेदिति सूचयितुं तथा शोचन्तमर्जुनं विवेकवचनैर्भगवान् बोधयामासेति वक्तुं धृतराष्ट्रं प्रति सञ्जयउवाच—**तमिति**। तथोक्तरीत्या मदीया एते भ्रातृपुत्रादयो युधि म्रियन्तइति मरिष्यमाणस्वजनेषु कृपयाविष्टमतएव विषीदन्तमतएवाश्रुपूर्णाकुलेक्षणं तमर्जुनं दृष्ट्वा मधुसूदनः मध्वाख्यमसुरं सूदयतीति मधुसूदनः। यद्वा सर्वेषां देहे मधुवदिष्टत्वान्मधुरहङ्कारस्तमात्मप्रकाशनेन सूदयतीति मधुसूदनः। यद्वा "इयं पृथिवी सर्वेषां भूतानां मधु" इति श्रवणान्मधुः स्वरूपानन्दस्तं स्वापरोक्षवतां सूदयति स्फोरयतीति मधुसूदनः श्रीकृष्ण इदं वक्ष्यमाणलक्षणं वाक्यमुवाच। अत्र कृपयाविष्टमित्युक्तिर्मुमुक्षोः कृपादिभिरष्टभिरात्मगुणैर्भावितव्यमिति सूचनार्थं कृपापदं क्षान्त्यादीनामुपलक्षणार्थं। 'दया सर्वभूतेषु क्षान्तिरनसूया शुचिरनायासो माङ्गल्यमकार्पण्यमस्पृहा चेत्यष्टावात्मगुणाः' इति गौतमोक्तैरष्टभिरात्मगुणैर्विशिष्टस्यैव सम्यक् ज्ञानं जायते "सोहं भगवः शोचामि" इति

श्रवणात्कथं संसारसागरं तरिष्यामीति शोचतः परितपतएव गुरुरीश्वरश्च प्रसीदतीति सूचयितुं विषीदन्तमश्रुपूर्णाकुलेक्षणमित्युक्तं मुमुक्षोर्गुरुमुपसिषीदिषोरेतैरुक्तगुणैर्भवितव्यमित्यनेन ज्ञापितं भवति ॥ १ ॥

**श्री० टी०**–ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच–**तं तथेति** । अश्रुभिः पूर्णे आकुले ईक्षणे यस्य तम् । तथोक्तप्रकारेण विषीदन्तमर्जुनं प्रति मधुसूदन इदं वाक्यमुवाच ॥ १ ॥

**स० टी०**–पीतं वासो दधानं विजयरथगतं ब्रह्मरुद्रादिवन्द्यं भूमेर्भारं जिहीर्षुं नवजलदरुचं शङ्खचक्राब्जहस्तम् ॥ पार्थव्याजेन लोकं निगममतसृतौ योजयन्तं महेशं ध्यायेन्नित्यं सुसेव्यं सुजनमतिगृहं कृष्णमानन्दकन्दम् ॥ १ ॥ लक्ष्मीपतिः कृष्णसखो नियन्ता ब्रह्मादिलोकस्य च नन्दसूनुः ॥ गोपीप्रियो गोपवयस्य आत्माऽखिलस्य कृष्णो मतिदो ममास्तु ॥ २ ॥ अहिंसा परमो धर्मो महान्दोषः कुलक्षये ॥ आकाङ्क्षा मे न राज्यादावर्जुनस्येति यन्मतम् ॥ ३ ॥ धृतराष्ट्रस्तदाकर्ण्य ममत्वाभिनिवेशतः ॥ राज्यदार्ढ्यं स्वपुत्राणामवधार्यातिहर्षतः ॥ ४ ॥ अभूत्स्वस्थमना इत्थमवलोक्याह सञ्जयः ॥ शृणु राजन्यथावृत्तं समाधानेन चेतसा ॥ ५ ॥ व्यामोहो यो ममैतेऽहमेतेषामिति दुःखदः ॥ स्नेहभेदः कृपा सोक्ता तयाऽध्यासस्वरूपया ॥ ६ ॥ स्वभावसिद्धया व्याप्तं शोचन्तं तं तथाविधम् ॥ तद्वशादश्रुभिः पूर्ण आकुले दर्शनाक्षमे ॥ ७ ॥ ईक्षणे यस्य तं मोहादुद्विग्नं चार्जुनं प्रति ॥ इदं सयुक्तिकं वाक्यं वक्ष्यमाणमुवाच ह ॥ ८ ॥ नतूपेक्षितवानीशो यतोऽसौ मधुसूदनः ॥ स्वयं दुष्टनिहन्ताऽजस्तथा वक्ष्यति तं प्रति ॥ ९ ॥ १ ॥

**भा० टी०**–एवं रथोपस्थ उपविष्टमर्जुनं भगवान्किमुक्तवानित्याकाङ्क्षायां सञ्जय उवाच–**तमिति** । यत्तु 'अहिंसा परमो धर्मो भिक्षाशनं चेत्येवं लक्षणया बुद्ध्या युद्धवैमुख्यमर्जुनस्य श्रुत्वा स्वपुत्राणां राज्यमप्रचलितमित्यवधार्य स्वस्थहृदयस्य धृतराष्ट्रस्य हर्षनिमित्तां ततः किं वृत्तमित्याकाङ्क्षामपनिनीषुः सञ्जय उवाचेति' तत्तु पूर्वग्रन्थविरोधादुपेक्ष्यं । तमर्जुनं तथा पूर्वोक्तेन प्रकारेण कृपया स्नेहजन्यया ऽऽविष्टं व्याप्तं अश्रुभिः पूर्णे आकुले दर्शनाक्षमे ईक्षणे नेत्रे यस्य तं । विषादं बन्धुवियोगाशङ्कानिमित्तं शोकं प्राप्नुवन्तमिदं वक्ष्यमाणं वाक्यं वक्तुं योग्यं वचनमुवाच नतूपेक्षितवानित्यर्थः । मध्वादिदुष्टसूदनो भीमादिद्वारा दुर्योधनादिदुष्टसूदनायोवाचेति सूचयन्नाह–मधुसूदन इति ॥ १ ॥

**प० टी०**–ततः किं वृत्तमित्यपेक्षायां सञ्जय उवाच–**तं तथेति** । कृपयाविष्टं स्वजनकृपया व्याप्तं विषीदन्तं विषादं प्राप्तमतएवाश्रुपूर्णे अक्षिणी यस्य तं प्रति मधुसूदनः स्वयं दैत्यहन्ता कृष्ण उवाच ॥ १ ॥

**रा० टी०**–ततः किं जातमिति धृतराष्ट्रस्यापेक्षायां सञ्जय उवाच–**तं तथेति** ॥ १ ॥

**श्रीभगवानुवाच–कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम् ॥**
**अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ॥ २ ॥**

**त० टी०**–भगवद्वाक्यमवतारयति–श्रीभगवानुवाचेति । स्वाभाविकैश्वर्यादिषड्गुणानां नित्याश्रयभूतो भगवच्छब्दवाच्यो वासुदेवः स्वभक्तहितं चिकीर्षुः–कुतस्त्वामिति द्वाभ्यामुक्तवानित्यर्थः । हे अर्जुन ! बन्धुकृपाव्यामोहकृताश्रुपातपुरःसरं स्वधर्मवैमुख्यकरं युद्धात्पराङ्मुखत्वमिदं कश्मलं मानसं कथमनार्यैरधर्मवद्भिर्जुष्टं सेवितमतएवास्वर्ग्यं स्वर्गविरोधि अकीर्तिकरं च विषमे शोकानर्हस्थाने सङ्ग्रामे त्वा त्वां सर्वक्षत्रियप्रवरस्य पाण्डोः पुत्रं कुतो हेतोरुपस्थितं प्राप्तम् ॥ २ ॥

**म० टी०**–तदेव भगवतो वाक्यमवतारयति–श्रीभगवानुवाचेति । 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्याथ मोक्षस्य षण्णां भगइतीङ्गना ' समग्रस्येति प्रत्येकं संबन्धः । मोक्षस्येति तत्साधनस्य ज्ञानस्य इङ्गना संज्ञा । एतादृशं समग्रमैश्वर्यादिकं नित्यमप्रतिबन्धेन यत्र वर्तते स भगवान् । नित्ययोगे मतुप् ।

तथा ' उत्पत्तिं च विनाशं च भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति । ' तत्र भूतानामिति प्रत्येकं संबध्यते । उत्पत्तिविनाशशब्दौ तत्कारणस्याप्युपलक्षकौ । आगतिगती आगामिन्यौ सम्पदापदौ । एतादृशो भगवच्छब्दार्थः श्रीवासुदेवएव पर्यवसितइति । तथोच्यते । इदं स्वधर्मात्पराङ्मुखत्वं कृपाव्यामोहाश्रुपातादिपुरःसरं कश्मलं शिष्टगर्हितत्वेन मलिनं विषमे सभये स्थाने त्वा त्वां सर्वक्षत्रियप्रवरं कुतो हेतोः समुपस्थितं प्राप्तं । किं मोक्षेच्छातः किंवा स्वर्गेच्छातः अथवा कीर्तीच्छातः इति किंशब्देनाक्षिप्यते । हेतुत्रयमपि निषेधति त्रिभिर्विशेषणैरुत्तरार्धेन । आर्यैर्मुमुक्षुभिर्न जुष्टमसेवितं । स्वधर्मैराशयशुद्धिद्वारा मोक्षमिच्छद्भिरपक्वकषायैर्मुमुक्षुभिः कथं स्वधर्मस्त्याज्यइत्यर्थः । संन्यासाधिकारी तु पक्वकषायोग्रे वक्ष्यते । अस्वर्ग्यं स्वर्गहेतुधर्मविरोधित्वात् न स्वर्गेच्छया सेव्यं । अकीर्तिकरं कीर्त्यभावकरमपकीर्तिकरं वा । न कीर्तीच्छया सेव्यं । तथाच मोक्षकामैः स्वर्गकामैः कीर्तिकामैश्च वर्जनीयं । तत्कामएव त्वं सेवसइत्यहोऽनुचितचेष्टितं तवेति भावः ॥ २ ॥

**शं० टी०**–श्रीभगवानुवाच–**कुतइति** द्वाभ्याम् । हे अर्जुन शुद्धस्वभाव ! विषमे सङ्कटे शत्रुभिः शस्त्रैर्हन्तुं प्रवृत्तसमये इदं कश्मलं 'एतान्न हन्तुमिच्छामि । यदि मामप्रतीकारम्' इत्याद्युक्तलक्षणश्चित्तव्यामोहः कुतः कस्माद्धेतोस्त्वा त्वां समुपस्थितं प्राप्तं । कालदोषात्कर्मदोषाद्वा कस्मादयं भ्रमः शुद्धस्वभावस्य विवेकिनस्तव प्राप्तइत्यर्थः । हे पार्थ ! अनार्यजुष्टमनार्यैरार्यशिक्षावर्जितैः पामरैर्जुष्टं सेवितमस्वर्ग्यं स्वर्गाप्रापकं दुर्गतिकारणमिह लोकेप्यकीर्तिकरम् ॥ २ ॥

**श्री० टी०**–तदेव वाक्यमाह–**श्रीभगवानुवाच–कुतइति** । कुतो हेतोः त्वा इति त्वाम् विषमे सङ्कटे इदं कश्मलं समुपस्थितं अयं मोहः प्राप्तः । यत आर्यैरसेवितमस्वर्ग्यमधर्म्यमयशस्करं च ॥ २ ॥

**स० टी०**–तदेव सञ्जयो वाक्यमवतारयति स्फुटम् ॥ समग्रैश्वर्यसम्पन्न उवाच भगवानिति ॥ १ ॥ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ॥ ज्ञानवैराग्ययोश्चैव षण्णां भग इतीङ्गना ॥ २ ॥ नित्यमप्रतिबन्धेन वर्तते यत्र षड्विधम् ॥ समग्रैश्वर्यमुख्यं तद्भगाख्यं भगवानिति ॥ ३ ॥ शुद्धे महाविभूत्याख्ये परे ब्रह्मणि वर्तते ॥ श्रीकृष्णे भगवच्छब्दः सर्वकारणकारणे ॥ ४ ॥ अन्यत्र भगवच्छब्द उपचारेण वर्तते ॥ उत्पत्तिं प्रलयं चैव भूतानामागतिं गतिम् ॥ ५ ॥ वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति ॥ ज्ञानशक्तिबलैश्वर्यवीर्यतेजांस्यशेषतः ॥ ६ ॥ भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ॥ इदं स्वधर्माद्वैमुख्यं व्यामोहैकनिबन्धनम् ॥ ७ ॥ शिष्टैर्विगर्हितत्वाच्च मलिनं कुत आगतम् ॥ सङ्ग्रामे क्षत्रियश्रेष्ठं त्वा विमृश्यैव कारणम् ॥ ८ ॥ मोक्षेच्छातोऽथवा स्वर्गकामतो वा किमागतम् ॥ किं कीर्तिकामतो वा त्वां किंशब्देनेति सूचितम् ॥ ९ ॥ त्रिभिर्विशेषणैर्हेतूंस्त्रीनेवेशो निरस्यति । आर्यैर्मुमुक्षुभिर्नैतत्सेवितं शुद्धिमिच्छुभिः ॥ १० ॥ यतः स्वधर्मत्यागेन चित्तशुद्धिर्न जायते ॥ न वा स्वर्गेच्छया सेव्यं स्वर्गहेतुविरोधतः ॥ ११ ॥ स्वधर्मत्यागिनां स्वर्गः स्वप्नेऽप्यत्यन्तदुर्लभः ॥ न वा कीर्त्याच्छया सेव्यं कीर्तिनाशकरं यतः ॥ १२ ॥ तस्मात्स्वधर्मवैमुख्यं वर्जनीयं शुभेप्सुभिः ॥ मोक्षकीर्तिफलेप्सुस्त्वं किमहो सेवसे मलम् ॥ १३ ॥ २ ॥

**भा० टी०**–किं तद्वाक्यमित्यत आह श्रीभगवान्–**कुतइति** । कुतो हेतोः त्वा त्वां शूरशिरोमणिमिदं स्वधर्मभूताद्युद्धात्पराङ्मुखत्वं कश्मलं मलिनं विषमेऽसमये समुपस्थितं संप्राप्तं यतोऽनार्यैर्दुष्टैर्जुष्टं सेवितम् । अतएव दृष्टादृष्टफलरहितमित्याह–अस्वर्ग्यमकीर्तिकरमिति विशेषणद्वयेन स्वर्गानर्हं प्रत्यवायजनकत्वात् । अकीर्तिकरमयशस्यं किं मोक्षेच्छातः किंवा स्वर्गेच्छातः अथवा कीर्त्तिच्छातः इति किंशब्देनाक्षिप्यते । हेतुत्रयमपि निषेधयति त्रिभिर्विशेषणैरुत्तरार्धेन । आर्यैर्मुमुक्षुभिर्न जुष्टमसेवितमिति केचित् । न आर्यैर्जुष्टं यत्त्वार्यैरजुष्टमिति विग्रहो दर्शितस्तत्त्वर्थैक्येपि पदव्युत्क्रमदोषादुपेक्ष्यमित्यन्ये । स्वधर्मयुद्धं कुर्वन्नमलात्मकं पापं न प्राप्स्यसीति द्योतय-

न्नाह-अर्जुनेति । अर्जुननाम्ना प्रख्यातस्य तव नैतद्युक्तमित्येके । हे अर्जुन स्वच्छस्वभाव ! तव नैतद्युक्तमिति भाव इत्यन्ये ॥ २ ॥

पु० टी०-कुत इति । विषमे संग्रामसङ्कटे त्वा त्वामिदं कश्मलमज्ञानं कुतो हेतोः समुपस्थितं प्राप्तम् । अथ तत्स्वरूपमाह-अनार्यजुष्टमिति । अनार्यजुष्टं न आर्या अनार्यास्तैर्जुष्टं सेवितं आर्यैरसेवितम् । एतद्विषयमज्ञानं कश्मलमिति ज्ञात्वा शिष्टैस्त्यक्तमित्यर्थः । यत इहामुत्र च गर्हितम् । तत्कथमित्याह-अकीर्तिकरमस्वर्ग्यं चेति ॥ २ ॥

रा० टी०-उक्तदिशा कृपयाविष्टमेवं विषण्णमर्जुनं भगवानुवाच-कुत इत्यादिद्वाभ्यां श्लोकाभ्यां । हे अर्जुन ! कुतो हेतोस्त्वा त्वां बिषमे सङ्कटे इदं कश्मलं उपस्थितम् अयं मोहः प्राप्तः । यतः आर्यैरसेवितं । अस्वर्ग्यं स्वर्गबिरोधि अयशस्करं च ॥ २ ॥

**क्लैब्यं मा स्म गमः पार्थ नैतत्त्वय्युपपद्यते ॥**
**क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ॥ ३ ॥**

त० टी०-हे पार्थ ! पृथया आराधितदेवराजप्रसादाल्लब्धस्तद्वीर्यातिशयसम्पन्नः पुत्रस्त्वं क्लैब्यं क्लीबभावं तेजोवीर्यादिनाशकं मा गमः । एतत्कश्मलं क्लैब्यं च त्वयि साक्षान्महादेवतोषकार्यद्भुतयुद्धकारिणि नोपपद्यते । यच्च त्वयोक्तं 'नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः' इति तत् क्षुद्रमतितुच्छं । यतो हृदयदौर्बल्यं हृदयस्य दौर्बल्यं कृपामोहजन्यं कातर्यं त्यक्त्वा कुलोचितधैर्यावलम्बनेनापनीयोत्तिष्ठ । तत्र हेतुगर्भितसम्बोधनमाह-हे परन्तप ! परान् शत्रूंस्तापयतीति तथा । सर्वान् शत्रून् जेष्यतीति जन्मसमये देववाण्याऽप्युक्तत्वादिति भावः ॥ ३ ॥

म० टी०-ननु बन्धुसेनावेक्षणजातेनाधैर्येण धनुरपि धारयितुमशक्नुवता मया किं कर्तुं शक्यमतआह-क्लैब्यमिति । क्लैब्यं क्लीबभावमधैर्यमोजस्तेजादिभङ्गरूपं मास्मगमः मागाः । हे पार्थ पृथातनय ! पृथया देवप्रसादलब्धे तत्तनयमात्रे वीर्यातिशयस्य प्रसिद्धत्वात् । पृथातनयत्वेन क्लैब्यायोग्यइत्यर्थः । अर्जुनत्वेनापि तदयोग्यत्वमाह-नैतदिति । त्वयि अर्जुने साक्षान्महेश्वरेणापि सह कृताहवे प्रख्यातमहाप्रभावे नोपपद्यते न युज्यते । एतत् क्लैब्यमित्यसाधारण्येन तदयोग्यत्वानिर्देशः । ननु 'न च शक्नोम्यवस्थातुं भ्रमतीव च मे मनः' इति पूर्वमेव मयोक्तमित्याशङ्क्याह-क्षुद्रमिति । हृदयदौर्बल्यं मनसो भ्रमणादिरूपमधैर्यं क्षुद्रत्वकारणत्वात् क्षुद्रं सुनिरसनं वा त्यक्त्वा विवेकेनापनीय उत्तिष्ठ युद्धाय सज्जो भव । हे परंतप ! परं शत्रुं तापयतीति तथा संबोध्यते । हेतुगर्भम् ॥ ३ ॥

शं० टी०- क्लैब्यं क्लीबभावं कातर्यं शूराणामनर्हं त्वं मास्मगमः मा भजस्व । राजधर्मज्ञे रणपण्डिते त्वयि नैतदुपपद्यते । वीरतमस्तुत्यस्य तव नैतद्युक्तमित्यर्थः । हे परन्तप शत्रुकर्शन ! क्षुद्रं क्षुद्रत्वकारणं निकृष्टत्वापादकं हृदयदौर्बल्यमधैर्यं मनःकालुष्यमेतत्त्यक्त्वोत्तिष्ठ । युद्धाय सन्नद्धो भवेत्यर्थः ॥ ३ ॥

श्री० टी०-तस्मात्-क्लैब्यमिति । हे पार्थ ! क्लैब्यं कातर्यं मास्मगमः न प्राप्नुहि । यतस्त्वय्येतन्नोपपद्यते योग्यं न भवति क्षुद्रं तुच्छं हृदयदौर्बल्यं कातर्यं त्यक्त्वा युद्धायोत्तिष्ठ । हे परन्तप शत्रुतापन ॥ ३ ॥

स० टी०-नन्वहं त्यक्तधैर्योऽस्मि न धनुर्धारणे क्षमः ॥ स्वजनावेक्षणेनैव क युद्धं चातिदुःसहम् ॥ १ ॥ इत्याशङ्क्याह मागच्छाऽधैर्यं तेजःसुखापहम् ॥ देवप्रसादात्पृथया लब्धस्त्वं वीर्यवत्तरः ॥ २ ॥ साक्षान्महेश्वरेणापि कृतयुद्धेऽर्जुने त्वयि ॥ महाप्रभावे कातर्यं न चैतद्युज्यते मलम् ॥ ३ ॥ क्षुद्रताहेतुकं बुद्धेरधैर्यं स्वविवेकतः ॥ त्यक्त्वा युद्धाय शीघ्रं त्वं सज्जीभव रणक्षितौ ॥ ४ ॥ यतस्त्वं शत्रुसन्तापकारी शूरतमो मतः ॥ ५ ॥ ३ ॥

भा० टी०—एवं श्रुत्वाऽपि क्लैव्यमत्यजन्तमर्जुनं पुनराह—क्लैब्यमिति । क्लैव्यं 'दृष्ट्वेमं स्वजनं कृष्ण' इत्यादिना प्रदर्शितमधैर्यं मास्म गमः मागाः । नैवाङ्गीकुर्वित्यर्थः । यत एतत् क्लैव्यं त्वयि प्रथितप्रभावेऽर्जुने नोपपद्यते उपपन्नं न भवति तस्मात्क्षुद्रं क्षुद्रतायाः लघुतायाः सम्पादकं हृदयस्य दौर्बल्यं दुर्बलभावं निर्वीर्यत्वं त्यक्त्वोत्तिष्ठ युद्धायोद्युक्तो भव । मत्पितृष्वसृपृथातनये त्वयि मत्स्वभाव उचित इति ध्वनयन्नाह—हे पार्थेति ! पृथया देवप्रसादालब्धे तत्तनयमात्रे त्वयि वीर्यातिशयस्य प्रसिद्धत्त्वात् । पृथातनयत्वेन त्वं क्लैव्यायोग्य इति केचित् । शत्रूंस्तापय न स्वजनान् स्वहितकर्तॄनिति कथयितुं परन्तपेति ॥ ३ ॥

प० टी०—तस्मात्किं कर्तव्यमिति भगवानाह—क्लैब्यमिति । भो पार्थ ! त्वं क्लैव्यं पुमर्थविधुरत्वम् 'यदि मामप्रतीकारमशस्त्रं शस्त्रपाणयः' इत्यादिवाक्यप्रकाशितं मा स्म गमः न प्राप्नुहि । यत एतत्त्वयि गाण्डीवधन्वनि न युज्यते । तर्हि किं कर्तव्यमिति चेत्तत्राह—क्षुद्रमिति । भो परन्तप शत्रुतापन ! क्षुद्रमल्पविचाररूपं हृदयदौर्बल्यं कल्पितममतोत्पन्नशोकरूपं त्यक्त्वा युद्धायोत्तिष्ठ ॥ ३ ॥

रा० टी०—तस्मात्क्लैव्यं कातर्यं मास्म गमः नैव प्राप्नुहि । हे पार्थ ! एतत्क्लैव्यं त्वयि नोपपद्यते योग्यं न भवति । क्षुद्रं लाघवकरं हृदयदौर्बल्यं कातर्यं त्यक्त्वोत्तिष्ठ उत्थाय सन्नद्धो भव । हे परन्तप परं शत्रुं तापयतीति शत्रुतापन ! "द्विषत्परयोस्तापेः" इति खचि "खित्यनव्ययस्य" इति मुमागमः ॥ ३ ॥

## अर्जुन उवाच—कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन ॥
## इषुभिः प्रतियोत्स्यामि पूजार्हावरिसूदन ॥ ४ ॥

त० टी०—ननु भगवदुक्तं सर्वं सत्यं तथापि सत्कुलीनेन परम्पराप्राप्तस्वधर्माविरोध्येव युद्धं कर्तव्यं, नतु धर्मनाशकमित्यभिप्रायवानर्जुनः श्रीकृष्णं प्रत्युक्तवानित्याह सञ्जयः—अर्जुन उवाचेति । तदेव वाक्यमाह—कथमिति । भीष्मं पितामहं द्रोणं चाचार्यं सङ्ख्ये सङ्ग्रामेऽहं कथं प्रतियोत्स्यामि । न कथमपीत्यर्थः । तत्रापीषुभिः । याभ्यां सह वाचापि युद्धमनुचितं किं पुनः प्राणहारिभिः शरैरित्यर्थः । कुतो यतस्तौ पूजार्हौ दुर्योधनादिभिरस्मद्धर्मनाशाय पुरस्कृतौ 'गुरुं हुंकृत्य त्वंकृत्य विप्रं निर्जित्य वादतः ॥ अरण्ये निर्जले स्थाने स भवेद्ब्रह्मराक्षसः' इत्यादिशास्त्रोक्तं गुरोर्वचनावज्ञाचरणमपि महादोषं जानद्भिरस्माभिः कथं तन्निधननिमित्ते युद्धे वर्त्तितव्यमिति भावः ॥ ४ ॥

म० टी०—ननु नायं स्वधर्मस्य त्यागः शोकमोहादिवशात् किन्तु धर्मत्वाभावादधर्मत्वाचास्य युद्धस्य त्यागो मया क्रियतइति भगवदभिप्रायमप्रतिपद्यमानस्यार्जुनस्याभिप्रायमवतारयति—कथमिति । भीष्मं पितामहं द्रोणं चाचार्यं सङ्ख्ये रणे इषुभिः सायकैः प्रतियोत्स्यामि प्रहरिष्यामि कथं । न कथंचिदपीत्यर्थः । यतस्तौ पूजार्हौ कुसुमादिभिरर्चनयोग्यौ । पूजार्हाभ्यां सह क्रीडास्थानेऽपि वाचापि हर्षफलकमपि लीलायुद्धमनुचितं किं पुनर्युद्धभूमौ शरैः प्राणत्यागफलकं प्रहरणमित्यर्थः । मधुसूदनारिसूदनेति संबोधनद्वयं शोकव्याकुलत्वेन पूर्वापरपरामर्शवैकल्यात् । अतो न मधुसूदनारिसूदनेत्यस्यार्थस्य पुनरुक्तत्वदोषः । युद्धमात्रमपि यत्र नोचितं दूरे तत्र वधइति प्रतियोत्स्यामीत्यनेन सूचितं । अथवा पूजार्हौ कथं प्रतियोत्स्यामि । पूजार्हयोरेव विवरणं भीष्मं द्रोणं चेति । द्वौ ब्राह्मणौ भोजय देवदत्तं यज्ञदत्तं चेतिवत्संबन्धः । अयं भावः दुर्योधनादयो नापुरस्कृत्य भीष्मद्रोणौ युद्धाय सज्जीभवन्ति । तत्र ताभ्यां सह युद्धं न तावद्धर्मः पूजादिवदविहितत्वात् । नचायमनिषीद्धत्वादधर्मोपि न भवतीति वाच्यं 'गुरुं हुंकृत्य त्वंकृत्य' इत्यादिना शब्दमात्रेणापि गुरुद्रोहो यदानिष्टफलप्रदर्शनेन निषिद्धः तदा किं वाच्यं ताभ्यां सह संग्रामस्याधर्मत्वे निषिद्धत्वे चेति । ननु भीष्मद्रोणयोः पूजार्हत्वं गुरुत्वेनैव । एवमन्येषामपि कृपादीनां । नच तेषां गुरुत्वेन स्वीकारः साम्प्रतमुचितः 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते ' इति स्मृतेः ॥ ४ ॥

**शं० टी०**–भगवद्वचनमेतच्छ्रुत्वापि गुर्वादिस्वजनहिंसादोषदुःखमसहमानः सन् उक्तमेवार्थं विशेषयितुमर्जुनउवाच–**कथमिति**। कुलवृद्धं गुणवृद्धं च भीष्मं विद्यागुरुं द्रोणं च सङ्ख्ये युद्धे इषुभिः कथं प्रतियोत्स्यामि प्रतिपक्षीभूय युद्धं करिष्यामि। किं तौ शौर्याधिकाविति भीत्या ताभ्यां योद्धुं न शक्नोषीत्यतआह–**पूजेति**। अरीन्कामादीन् भक्तानां सूदयतीत्यरिसूदनः हे अरिसूदन! भीष्मद्रोणौ गृहे पितृवत्पुष्पादिभिः पूजार्हौ न तु वाचापि युद्धार्हौ किमुत बाणैर्मर्मघातिभिर्न युद्धार्हाविति। शरैस्तयोर्मर्मच्छेदं कथं करिष्यामीत्यर्थः ॥ ४ ॥

**श्री० टी०**–नाहं कातर्येण युद्धादुपरतोऽस्मि किंतु युद्धस्यान्याय्यत्वादित्यर्जुन उवाच–**कथमिति**। भीष्मद्रोणौ पूजायामर्हौ योग्यौ तौ प्रति कथमहं योत्स्यामि। तत्रापि इषुभिः। यत्र वाचापि योत्स्यामीति वक्तुमनुचितं तत्र बाणैः कथं योत्स्यामीत्यर्थः। हे अरिसूदन शत्रुसूदन! ॥ ४ ॥

**स० टी०**–ननु स्वधर्मसन्त्यागो नायं शोकवशात्कृतः ॥ किन्तु युद्धस्य धर्मत्वाभावाच्चाधर्मरूपिणः ॥ १ ॥ मयाऽस्य क्रियते त्याग इत्याहार्जुन आन्तरम् ॥ भीष्मं पितामहं द्रोणमाचार्यं सायकै रणे ॥ २ ॥ न जातु प्रहरिष्यामि पूजार्हौ कुसुमादिभिः ॥ पूजार्हाभ्यां सह क्रीडास्थाने वाचापि लीलया ॥ ३ ॥ हर्षार्थमपि सङ्ग्रामो नोचितः किं शरै रणे ॥ प्राणत्यागकरो युद्धभूमौ वाच्यमिति स्फुटम् ॥ ४ ॥ सम्बोधनद्वयं मोहादेकार्थकमुदाहृतम् ॥ ५ ॥ ४ ॥

**भा० टी०**–ननु शत्रवस्तापनीया नतु गुरव इत्याशयेनाह–**कथमिति**। भीष्मं पितामहं द्रोणं च धनुर्विद्याचार्यं गुरुं सङ्ख्ये संग्रामभूमौ इषुभिः सह कथं प्रतियोत्स्यामि प्रतीपो भूत्वा युद्धं कथं करिष्यामि। यतः पूजार्हौ पूजायोग्यौ भीष्मद्रोणौ। पुष्पादिभिः पूजार्हयोस्तयोरिषुभिर्हननं मया कथं कर्तव्यमित्यर्थः। मधुसूदनारिसूदनेति संबोधयन्त्वमपि दुष्टानेव तापयसीत्यतो गुरू अदुष्टौ च भीष्मद्रोणौ जहीति प्रेरयितुं नार्हसीति सूचयति। मधुसूदनारिसूदनेति संबोधनद्वयं शोकव्याकुलत्वेन पूर्वापरपरामर्शवैकल्यात्। अतो न मधुसूदनेत्यस्यार्थस्य पुनरुक्तत्वदोष इति केचित् ॥ ४ ॥

**प० टी०**–अथास्तां भ्रातृपुत्रादिवधशङ्कावकाशः श्रुतिगर्हितस्य ब्रह्मवधस्य का गतिरित्याशयेनार्जुनः प्राह–**कथमिति**। भो मधुसूदन केवलदैत्यनिबर्हण! अहं सङ्ख्ये संग्रामे भीष्मं द्रोणं चेषुभिर्बाणैः कथं प्रतियोत्स्यामि प्रतिपक्षत्वेन कथं युद्धं करिष्यामि। यतस्तौ पूजार्हावाचार्यत्वेन पूज्यौ न तु ब्राह्मणमात्रत्वेनावस्थितौ। अत्रार्थे शातपथी श्रुतिरपि "तस्मात् यद्यपि राजा परमतां गच्छति। ब्रह्मैवान्तत उपनिश्रयति। स्वां योनिं य उ एनं हिनस्ति। स्वाᳬ स योनिमृच्छति। स पापीयान् भवति। यथा श्रेयाᳬसᳬहिंसित्वा" इति। भाष्यम् "तस्मादिति पूर्वश्रुतौ "क्षत्र एव तद्यशो दधाति" इत्यादिना। राजा क्षत्रियः यद्यपि परमतां गच्छति राजसूयादिनोत्कृष्टो भवति। तथा स्वधर्माचरणेनान्ततोऽवसाने ब्रह्मैव ब्राह्मणत्वमेव उपनिश्रयति आश्रयते प्राप्नोति। एवं सति उ इति विचार्य यः क्षत्रियः स्वां योनिं प्राप्तव्यस्थानमेनं ब्राह्मणं हिनस्ति घातयति स स्वां योनिं पितरमृच्छति हिनस्ति। अत एव स पापीयान् भवति। किंवत्। यथा श्रेयांसं महानुभावं हिंसित्वा।" अथ तैत्तिरीयकेऽपि–"यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति। तस्माद् ब्राह्मणेभ्यो वेदविद्भ्यो दिवे दिवे नमस्कुर्यान्नाश्लीलं कीर्तयेत्" इति। भाष्यम् "दिवे दिवे प्रतिदिवसं नमस्कुर्यात् परन्तु कदापि नाश्लीलं विरुद्धं कीर्तयेत् उन्मर्यादं न वदेत्" शेषं स्पष्टम्। एवं सति भीष्मद्रोणादीनां वधः कथं कर्तुं शक्यत इति भावः ॥ ४ ॥

**रा० टी०**–पुनः स्नेहकारुण्यतया व्याकुलो भगवदुक्तं हितमजानन्नर्जुन उवाच–**कथमित्यादिपञ्चभिः श्लोकैः**। हे मधुदैत्यघातक शत्रुनिबर्हण! संख्ये युद्धे भीष्मं द्रोणं कथमहमिषुभिर्बाणैः प्रतियोत्स्यामि। कुतः यतस्तौ पूजार्हौ पूजनीयौ तत इति ॥ ४ ॥

गुरूनहत्वा हि महानुभावान् श्रेयो भोक्तुं भैक्ष्यमपीह लोके ॥
हत्वाऽर्थकामांस्तु गुरूनिहैव भुञ्जीय भोगान् रुधिरप्रदिग्धान् ॥ ५ ॥

त० टी०—ननु पूजार्हाविति सत्यमुक्तं तथापि भीष्मद्रोणकृपाणां पौत्रत्वेन शिष्यत्वेन च धार्तराष्ट्रा यूयं च समा एव योगक्षेमेण रक्षणीयाः । कथं ते धार्तराष्ट्रानुवर्तिनो भूत्वाऽनपकारिणां शिष्याणां शत्रव इव राज्यप्राप्तिविरोधिनो युद्धाय प्रवृत्ताः अतः कार्याकार्यविवेकरहिता उत्पथगामिनस्त्वत्तो वधार्हाः। उक्तं च भीष्मेणैव 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते' इति चेत्तत्राह—गुरूनिति । महाननुभावः सर्वसामर्थ्यरूपः प्रभावो येषां तान् गुरून् हत्वा इहास्मिँल्लोके भैक्ष्यं भिक्षितान्नाद्यपि भोक्तुं श्रेयः । परलोकश्रेयोविरोधिपापस्पर्शाभावादित्यर्थः । महानुभावत्वादेव तेषां नावलिप्तत्वादिदोषयोगः तत्त्यागवचनमपि कालकामादिजयनशीलानां तेषामेवोपपद्यते, नेतरेषाम्। 'नैतत्समाचरेज्जातु मनसाऽपि ह्यनीश्वरः । विनश्यत्याचरन्मौढ्याद्यथारुद्रोऽब्धिजं विषम्' इति वचनात् । ननु ' अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः' इति तद्वाक्येनैव तेषामर्थकामपरत्वान्न तद्धननं दोषावहमित्याशङ्क्याह—हत्वेति । अर्थकामान्गुरून् हत्वा इहैव भोगान्भुञ्जीय अश्नीयां । गुरुवधजनितमहापातकेन तन्नाशादित्यर्थः। इहापि न शुद्धान् किन्तु रुधिरप्रदिग्धान् रुधिरेण प्रकर्षेणोपचितान् ॥ ५ ॥

म० टी०—तस्मादेषां युद्धगर्वेणावलिप्तानामन्यायराज्यग्रहणेन शिष्यद्रोहेण च कार्याकार्यविवेकशून्यानामुत्पथनिष्ठानां वध एव श्रेयानित्याशङ्क्याह—गुरूनिति। गुरूनहत्वा परलोकस्तावदस्त्येव। अस्मिंस्तु लोके तैर्हतराज्यानां नो नृपादीनां निषिद्धं भैक्ष्यमपि भोक्तुं श्रेयः प्रशस्यतरमुचितं। ननु तद्वधेन राज्यमपि श्रेयइति । धर्म्येपि युद्धे वृत्तिमात्रफलत्वं गृहीत्वा पापमारोप्य ब्रूते। नत्ववलिप्तत्वादिना तेषां गुरुत्वाभावउक्तइत्याशङ्क्याह—महानुभावानिति । महाननुभावः श्रुताध्ययनतपआचारादिनिबन्धनः प्रभावो येषां तान् । तथा च कालकामादयोपि यैर्वशीकृतास्तेषां पुण्यातिशयशालिनां नावलिप्तत्वादिक्षुद्रपाप्मसंश्लेषइत्यर्थः । हिमहानुभावानित्येकं वा पदं। हिमं जाड्यमपहन्तीति हिमहः आदित्योऽग्निर्वा तस्येवानुभावः सामर्थ्यं येषां तान्। तथा चातितेजस्वित्वात्तेषामवलिप्तत्वादिदोषो नास्त्येव। ' धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् । तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा' इत्युक्तेः । ननु यदार्थलुब्धाः सन्तो युद्धे प्रवृत्तास्तदैषां विक्रीतात्मनां कुतस्त्यं पूर्वोक्तं माहात्म्यं। तथा चोक्तं भीष्मेण युधिष्ठिरं प्रति ' अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ।इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः' इत्याशङ्क्याह—हत्वेति। अर्थलुब्धा अपि ते मदपेक्षया गुरवो भवन्त्येवेति पुनर्गुरुग्रहणेनोक्तं। तुशब्दोप्यर्थे । ईदृशानपि गुरून् हत्वा भोगानेव भुञ्जीय नतु मोक्षं लभेय।भुज्यन्तइति भोगा विषयाः। कर्मणि घञ्। ते च भोगा इहैव न परलोके । इहापि च रुधिरप्रदिग्धा इव । अयशोव्याप्तत्वेनात्यन्तजुगुप्सिता इत्यर्थः। यदेहाप्येवं तदा परलोकदुःखं कियद्वर्णनीयमितिभावः । अथवा गुरून् हत्वार्थकामात्मकान् भोगानेव भुञ्जीय नतु धर्ममोक्षावितिअर्थकामपदस्य भोगविशेषणतया व्याख्यानान्तरं द्रष्टव्यम् ॥ ५ ॥

शं० टी०—क्षत्रियाणां युद्धं श्रेयस्करं कथं त्यक्तुं शक्यत इत्यतआह—गुरूनिति । महाननर्गलोऽनुभावो धर्मब्रह्मविषयको बोधो येषां तान् महानुभावान् गुरून् भीष्मद्रोणकृपादीनहत्वा इह लोके भैक्ष्यं भिक्षान्नं नः श्रेयः युद्धवच्छ्रेयस्करं भवति तदेव भोक्तुं युक्तं।गुर्वादिस्वजनहिंसारहितं भिक्षाशनमस्माकं श्रेयस्करमित्यर्थः। ' अकृत्वा परसंतापमगत्वा खलमदिरम् । अक्लेशयित्वा चात्मानं यदल्पमपि तद्बहु' इत्यादिशास्त्रप्रसिद्धिद्योतनार्थो हिशब्दः । किमनाथवद्भिक्षाशनं शूराणां । शत्रून् जित्वा राज्यभोगः कर्तव्यइत्यतआह—हत्वेति । कामि-

ज्ञानार्थः । अर्थान्धर्मादिपुरुषार्थान् शिष्येभ्यः कामयन्ति बोधयन्तीत्यर्थकामास्तान्धर्मोपदेष्टॄन् गुरून् हत्वाऽहमिहैव लोके रुधिरप्रदिग्धान् रक्तधाराप्रसिक्तान् रुधिरमयान् भोगान् भुज्यन्तइति भोगाः विषयास्तान्नारकीयान् भुञ्जीयाऽनुभवेयं नतु नारकीया एव । किंतु गुर्वादिवधेन जुगुप्स्यो नरकभोगोऽत्रैव भविष्यत्यतोगुर्वादिहिंसाशून्यं भिक्षाशनं श्रेयस्करं मन्यइत्यर्थः ॥ ५ ॥

**श्री० टी०**–तर्हि तव देहयात्रापि न स्यादितिचेत्तत्राह–**गुरूनिति**। गुरून्द्रोणादीनहत्वा परलोकविरुद्धो गुरुवधस्तमकृत्वा इह लोके भिक्षान्नमपि भोक्तुं श्रेयः उचितम्। विपक्षे तु न केवलं परत्र दुःखम्। इहैव तु नरकदुःखमनुभवेयमित्याह–**हत्वेति** । गुरून्हत्वा तु रुधिरेण प्रदिग्धान्प्रकर्षेण लिप्तान् अर्थकामात्मकान्भोगानहं भुञ्जीय अश्नीयाम्। यद्वा अर्थकामानिति गुरूणां विशेषणम्। अर्थतृष्णाकुलत्वादेते तावद्युद्धान्न निवर्तेरन्। तस्मादेतद्वधः प्रसज्येतैवेत्यर्थः । तथाच युधिष्ठिरंप्रति भीष्मेणोक्तम् 'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् । इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः' इति ॥ ५ ॥

**स० टी०**–नन्वेषां भीष्ममुख्यानां पूज्यत्वं सांप्रतं कथम्॥ युद्धगर्वेण दृप्तानां कार्याकार्यमजानताम् ॥१॥ गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः ॥ उत्पथप्रतिपन्नस्य परित्यागो विधीयते ॥ २ ॥ इति स्मृतेर्वधः श्रेयाञ्छिष्यद्रोहवतामिति ॥ एवमाशङ्क्य सद्युक्त्या वाक्यमाह गुरूनिति ॥ ३ ॥ अहत्वा तावदस्त्येव परलोकसुखं हि नः ॥ अस्मिँल्लोके नृपादीनां निषिद्धं भैक्ष्यमप्युत ॥ ४ ॥ उचितं भोक्तुमस्माकं न गुरूणां वधो वरः ॥ उत्कृष्टोऽध्ययनाचारतपआदिनिबन्धनः ॥ ५ ॥ येषां प्रभावस्तेषां तु महापुण्यवतां सताम् ॥ न क्षुद्रैरवलिप्तत्वादिभिर्दोषैः क्षतिर्मनाक् ॥ ६ ॥ अपहन्ति हिमं योऽग्निरादित्यो वास्ति तत्समम् ॥ येषां सामर्थ्यमेतेषां क्षुद्रैर्दोषैर्न वा क्षतिः ॥ ७ ॥ धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम् ॥ तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा ॥ ८ ॥ नन्वर्थलोभिनः सन्तः प्रवृत्ता ये रणेऽधुना ॥ तेषां विक्रीतदेहानां कुतोऽयं महिमाद्भुतः ॥ ९ ॥ तथैवोक्तं रणोद्योगे भीष्मेणापि युधिष्ठिरम् ॥ अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित् ॥ १० ॥ इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः ॥ इत्याशङ्क्याह सद्वाक्यं गुरुभक्तिसमन्वितः ॥ ११ ॥ अर्थलुब्धानपि गुरून्हत्वा भुञ्जीय केवलम् ॥ विषयानेव नो मोक्षं तेऽपीह न परत्र च ॥ १२ ॥ इहाप्यपयशोव्याप्ता निन्द्या रक्तयुता इव ॥ १३ ॥ ५ ॥

**भा० टी०**–एवं तर्हि राज्यालाभेन भोगाभावे भिक्षाटनं कर्तव्यं भविष्यतीत्याशङ्कामिष्टापत्त्या परिहरति–**गुरूनिति** । गुरून् भीष्मद्रोणादीन् महानुभावानहत्वाऽहिंसित्वा इहास्मिँल्लोके भैक्षमपि भिक्षया लब्धमन्नं क्षत्रियस्य निषिद्धमपि भोक्तुमशितुं श्रेयः प्रशस्यं। गुरुहिंसावर्जनार्थस्य भिक्षाशनस्य प्रत्यवायाजनकत्वात्। गुर्वहननेन नरकाभावं, महानतिप्रसिद्धोऽनुभावः प्रभावो येषामिति विशेषणेनापकीर्त्यभावं च गुणमुक्त्वा हनने दोषमाह–**हत्वेति** । महानुभावानित्यस्यात्रापि संबन्धः । गुरून् महानुभावान् हत्वा भोगानर्थकामानिहैव भुञ्जीय नतु परलोके। इहापि रुधिरप्रदिग्धानपकीर्तिव्याप्तत्वेनात्यन्तजुगुप्सितानित्यर्थः । अर्थकामानिति गुरुविशेषणं तथा चार्थतृष्णाकुलत्वेनैते तावद्युद्धान्न निवर्तेरन् । तस्मादेतद्वधः प्रसज्येतैव इत्यर्थः । तथाचोक्तं भीष्मेण–'अर्थस्य पुरुषो दासो दासस्त्वर्थो न कस्यचित्। इति सत्यं महाराज बद्धोऽस्म्यर्थेन कौरवैः' इति। अपरे केचित्तु ननु 'गुरोरप्यवलिप्तस्य कार्याकार्यमजानतः । उत्पथप्रतिपन्नस्य परित्यागो विधीयते' इति स्मृतेः । तेषां युद्धगर्वेणावलिप्तानामन्यायराज्यग्रहणेन शिष्यद्रोहेण च कार्याकार्यविवेकशून्यानामुत्पथनिष्ठानां च वध एव श्रेयानित्याशङ्क्याह–**गुरूनिति** । महान् श्रुत्यध्ययनादिनिबन्धनः प्रभावो येषां तान् । तथाच कालकामादयोपि यैर्वशीकृताः तेषां पुण्यातिशायिनां नावलिप्तत्वादिक्षुद्रपाप्मसंश्लेष इत्यर्थः । हिमहानुभावानित्येकं वा पदम् । हिमं जाड्यं अपहन्तीति हिमहा आदित्योऽग्निर्वा तस्यैवानुभावः सामर्थ्यं येषां तान् ।

तथाचातितेजस्वित्वात् तेषामवलिप्तत्वादिदोषो नास्त्येव 'धर्मव्यतिक्रमो दृष्ट ईश्वराणां च साहसम्। तेजीयसां न दोषाय वह्नेः सर्वभुजो यथा'इत्युक्तेरिति वर्णयन्ति। तत्रैतदीयेतथापनोक्तस्मृतौ अवलिप्तत्वादिदोषप्रयुक्तत्यागविधानेन वधानुक्त्या तच्छ्रेयस्त्वस्य दूरापास्तत्वमस्ति न वेति विद्वद्भिर्विचार्यं। किञ्च यत्तु 'ननु यदार्थलुब्धाः सन्तो युद्धे प्रवृत्तास्तदैषां विक्रीतात्मनां कुतस्त्यं पूर्वोक्तं माहात्म्यम्। तथाचोक्तं भीष्मेण युधिष्ठिरंप्रति ' अर्थस्य पुरुषो दासः ' इत्यादीत्याशङ्क्याह–हत्वेति' इत्युत्तरार्धं तैरवतारितं तत्राप्येतन्मूलकावलिप्तत्वादिदोषाणां तैरेव तदीयातिप्रसिद्धमहानुभावत्वातितेजस्वित्ववर्णनेन समाहितत्वात्। पुनरीदृक्शङ्काया उत्थानमस्ति न वेति विचारणीयम् ॥ ५ ॥

प० टी०–अथोक्तमेव विविच्याह–गुरूनिति। महानुभावान् गुरून् द्रोणादीनहत्वा लोकशास्त्रविरुद्धं गुरुवधमकृत्वेह लोके भैक्ष्यं भिक्षया प्राप्तमन्नं भोक्तुं श्रेय उचितम्। परन्तु गुरून् हत्वा रुधिरप्रदिग्धान् तद्रुधिराक्तान् अर्थकामांस्तदात्मकान् भोगान् इहैव लोके कथं भुञ्जीय गुरुवधशङ्काकलङ्कितः कथमश्नीयाम्। परलोककथा तु दूरतोऽपास्तेत्यर्थः। श्रुतिरप्यापस्तम्बसंहितासु। " तस्माद्ब्राह्मणाय नापगुरेत न निहन्यान्न लोहितं कुर्यादेतावता ह्येनसा भवति " इति। भाष्यम्। " तस्मात् " योनिहनत् " इति पूर्वश्रुतौ निषिद्धमस्ति तस्माद्। ब्राह्मणायेति चतुर्थ्या द्वितीयार्थोऽवगम्यते। ब्राह्मणं नापगुरेत सक्रोधाविर्भावेन नोद्गिरेत्। तथा न निहन्याद्धस्तपादाद्यभिघातं न कुर्यात् तथा न लोहितं शस्त्रादिना रुधिराक्तं न कुर्यात्। हि यतः कारणादेतावता दुष्कर्मणा एनसा भवति पातकेन सम्पद्यते " ॥ ५ ॥

श० टी०–ननु चैतदहनने राज्याप्राप्तेः देहनिर्वाहो न स्यादित्यत आह–गुरूनिति। इह महानुभावान्भगवद्भक्त्यादिगुणसम्पन्नान्द्रोणादिगुरूनहत्वा इह लोके भैक्षं भिक्षयोपलब्धमन्नं भोक्तुं श्रेयः वरम्। पारत्रिकदुःखाभादिति भावः। हि यतोऽतो न योत्स्यामीत्यन्वयः। न केवलं तेषां हनने पारत्रिकदुःखं इहाप्यतिदुःखमित्याह–हत्वेति। अर्थं कामयन्त इत्यर्थकामास्तान् गुरून्हत्वा तैर्भुज्यमानांस्तानेव भोगांस्तद्रुधिरेण प्रदिग्धान्प्रकर्षेण लिप्तांस्तदीयासनेष्वेवोपविश्य इह भुञ्जीय अनुभवेयम्। तदेतत्परलोकदुःखादतिशयितं दुःखमिति भावः ५

**न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ॥**
**यानेव हत्वा न जिजीविषामस्तेऽवस्थिताः प्रमुखे धार्तराष्ट्राः ॥ ६ ॥**

**त० टी०–ननु शास्त्रविहितं क्षत्रियस्य श्रेयो युद्धरूपं स्वधर्मं विहाय परधर्मं भैक्ष्यं कथं श्रेयो मन्यसे इत्यत आह–न चैतदिति। भैक्ष्यं वा युद्धं वा नोऽस्माकं कतरत् गरीयः श्रेष्ठमेतद्द्वयं न विद्मः। यद्वा युद्धाङ्गीकारेऽपि वयं तान् जयेम यदि वा नोऽस्मान् ते जयेयुरेतच्च न विद्मः। किञ्च जयोऽप्यस्माकं पराजय इत्याह–यानेवेति। यान्बन्धूनेव हत्वा वयं न जिजीविषामो जीवितुं नेच्छामस्ते धार्तराष्ट्राः प्रमुखेऽवस्थिताः ॥ ६ ॥**

म० टी०–ननु भिक्षाशनस्य क्षत्रियंप्रति निषिद्धत्वाद्युद्धस्य च विहितत्वात् स्वधर्मत्वेन युद्धमेव तव श्रेयस्करमित्याशङ्क्याह–नचैतदिति। एतदपि न जानीमो भैक्ष्ययुद्धयोर्मध्ये कतरत् नोस्माकं गरियः श्रेष्ठं किं भैक्ष्यं हिंसाशून्यत्वादुत युद्धं स्वधर्मत्वादिति इदं च न विद्मः। यद्वा आरब्धेपि युद्धे वयं जयेमातिशयीमहि यदि वा नोस्मान् जयेयुर्धार्तराष्ट्राः। उभयोः साम्यपक्षोप्यर्थाद्बोद्धव्यः। किंच जातोपि जयो नः फलतः पराय एव। यतो यान् बन्धून् हत्वा जीवितुमपि वयं नेच्छामः किं पुनर्विषयानुपभोक्तुं। तएवावास्थिताः संमुखे धार्तराष्ट्राः धृतराष्ट्रसम्बन्धिनो भीष्मद्रोणादयः सर्वेपि तस्माद्भैक्ष्याद्युद्धस्य श्रेष्ठत्वमसिद्धमित्यर्थः। तदेवं प्राक्तनेन ग्रन्थेन संसारदोषनिरूपणादधिकारिविशेषणान्युक्तानि। तत्र ' नच श्रेयोनुपश्यामि हत्वा स्वजनमाहवे '

इत्यत्र रणे हतस्य परिव्राट्समानयोगक्षेमत्वोक्तेः "अन्यत् श्रेयोन्यदुतैव प्रेयः" इत्यादिश्रुतिसिद्धं श्रेयोमोक्षाख्यमुपन्यस्तं। अर्थाच्च तदितरदश्रेयइति नित्यानित्यवस्तुविवेको दर्शितः। 'न काङ्क्षे विजयं कृष्ण' इत्यत्रैहिकफलविरागः। 'अपि त्रैलोक्यराज्यस्य हेतोः' इत्यत्र पारलौकिकफलविरागः। 'नरके नियतं वासः' इत्यत्र स्थूलदेहातिरिक्त आत्मा। 'किन्नो राज्येन' इति व्याख्यातवर्त्मना शमः। 'किं भोगैः' इति दमः। 'यद्यप्येते न पश्यन्ति' इत्यत्र निर्लोभता। 'तन्मे क्षेमतरं भवेत्' इत्यत्र तितिक्षा। इति प्रथमाध्यायस्यार्थः। ससंन्याससाधनसूचनं अस्मिंस्त्वध्याये 'श्रेयो भोक्तुं भैक्ष्यमपि' इत्यत्र भिक्षाचर्योपलक्षितः संन्यासः प्रतिपादितः॥ ६॥

**शं० टी०**—"ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः" इति श्रवणात् क्षत्रियाणां युद्धमेव श्रेयस्करं न तु भिक्षाशनमित्यत आह—**नचैतदिति**। भिक्षाशनयुद्धयोर्मध्ये नोऽस्माकं धर्मपराणां गरीयः श्रेष्ठं कतरत् किन्नु वा। गुरुहिंसादुष्कीर्त्यादिदोषशून्यत्वात् किं भैक्ष्याशनमेव श्रेष्ठं उत स्वधर्मत्वाद्युद्धमेव श्रेष्ठमाहोस्विदुभयमपि समं वा। चस्त्वर्थः। तदेतद्वयं तु न विद्मो न विजानीमः। जये राज्यसुखहेतुत्वादपजये स्वर्गप्रापकत्वात्स्वधर्मत्वाच्चेति तत्र संशयो न कर्तव्य इति चेत्तथापि सम्प्राप्तो विजयोऽस्माकं दुःखायैव भवति न तु किञ्चिदपि भवति सुखायेत्याह—**यानेवेति**। प्राणेभ्योपि प्रेयसो यानेव भ्रातृपुत्रादीन् युधि हत्वा न जिजीविषामो जीवितुं न शक्नुमस्त एव धार्तराष्ट्राः प्रमुखे रणमुखे अवस्थिता म्रियामह इति तिष्ठान्ति। अतोऽनर्थहेतोर्युद्धाद्भैक्ष्याशनमेव नः श्रेयस्करमित्यर्थः॥ ६॥

**श्री० टी०**—किंच यद्यपि अधर्ममङ्गीकरिष्यामस्तथापि किमस्माकं जयः पराजयो वा भवेदिति न ज्ञायत इत्याह—**नचेति**। एतद्वयोर्मध्ये नोऽस्माकं कतरत् किंनाम गरीयोऽधिकतरं भविष्यतीति न विद्मः। तदेव द्वयं दर्शयति। यद्वा एतान् वयं जयेम जेष्यामः यदि वा नोऽस्मानेते जयेयुः जेष्यन्तीति। किंचास्माकं वा जयोऽपि फलतः पराजय एवेत्याह—**यानिति**। यानेव हत्वा जीवितुं नेच्छामस्तएवैते संमुखे अवस्थिताः॥६॥

**स० टी०**—ननु भिक्षाशनं निन्द्यं क्षत्रियंप्रति शास्त्रतः॥ धर्म्यं युद्धं च विहितं श्रेयो नेत्याह नेति च॥ १॥ एतन्नापि वयं विद्मो मध्ये सङ्ग्रामभैक्ष्ययोः॥ कतरच्छ्रेष्ठमस्माकं भैक्ष्यं सङ्ग्राम एव वा॥२॥ इदं चापि न जानीमः प्रारब्धेऽस्मिन्रणे वयम्॥ जयेम यदि वाऽस्मांस्ते जयेयुः शत्रवो रणे॥ ३॥ सिद्धोऽपि चेज्जयोऽस्माकं फलतः स्यात्पराजयः॥ स्वजनान्यान्वयं हत्वा नेच्छामश्चापि जीवितुम्॥ ४॥ किं पुनर्विषयान्भोक्तुं त एतेऽवस्थिता रणे॥ भीष्मद्रोणादयः सर्वे तथा दुर्योधनादयः॥ ५॥ धृतराष्ट्रनृपस्यैते सम्बन्धिन इहापरे॥ तस्माद्भैक्ष्याद्रणस्यापि श्रेष्ठत्वं नैव सिद्ध्यति॥ ६॥ ६॥

**भा० टी०**—नन्वहननस्य श्रेयस्त्वे निश्चिते किमर्थं शोचसीति चेत्तत्राह—**नेति**। नोऽस्माकं किं भैक्षं गरीयः श्रेष्ठं हिंसाशून्यत्वात्। उत युद्धं स्वधर्मत्वादित्येतन्न विद्मः इदमेव श्रेय इति न जानीमः। ननु पक्षयोर्द्वयोरपि समबलत्वे युद्धमेव कुतो नाङ्गीकरोषीत्याशङ्क्य स्वबुद्ध्या तु तत्र दोषं पश्यामीत्याह—**यद्वेति**। यद्वा वयं जयेम यदि वा नोस्मांस्ते जयेयुः। इति न विद्मः। जये सत्यपि दोष इत्याह—**यानिति**। यानेव हत्वा हिंसित्वा न जिजीविषामः जीवितुं नेच्छामः ते धार्तराष्ट्राः धृतराष्ट्रसंबन्धिनः प्रमुखे संमुखे अवस्थिताः॥ ६॥

**प० टी०**—अथ तेभ्योऽस्माकं जये पराजये वा मरणमेवावशिष्यत इत्याह—**नचैतदिति**। जयपराजयव्यवस्था तु दैवाधीना। तथापि यद्वा वयं जयेम यदि वा तेऽस्मान् जयेयुः। अनयोः पक्षयोर्मध्ये कतरद्गरीयः किं श्रेष्ठं तन्न विद्मो न जानीमः। यतोऽस्माकं पराजये मरणमेवावशिष्टं न पलायनमित्यसन्दिग्धं। तथाऽस्माकं जयपक्षे सर्वेषामाचार्याणां गोत्रिणां च वधो भविता। अनन्तरमस्माभिः किं जीवितव्यं। परिशेषाल्लोकशास्त्रगर्हाभयान्मर्तव्यमेवेत्याह—**यानेवेति**। यान् हत्वा वयं न जिजीविषामः न जीवितुमिच्छामस्ते धार्तराष्ट्राः प्रमुखे रणमुखेऽवस्थिताः सन्ति॥ ६॥

शा० टी०—पापमङ्गीकृत्य युद्धकरणेपि जयः संदिग्ध एवेत्याह—**नचैतदिति** । द्वयोर्मध्ये नोऽस्माकं कतरत्किंनाम गरीयः अधिकतरं भविष्यतीति न विद्मः । तदेव द्वयमाह—**यद्वेति** । एतान्वयं जयेम जेष्यामः । यदि वा नोऽस्मानेते जयेयुः जेष्यन्तीति । किंचास्माकं जयोपि पराजय एव बुध्यत इत्याह—**यानेवेति** । यानेव हत्वा जीवितुं नेच्छामः तएव धार्तराष्ट्राः संमुखेऽवस्थिताः तस्मात्कार्पण्यदोषेणैतान्हत्वा कथं जीविष्याम इति॥६॥

**कार्पण्यदोषोपहतस्वभावः पृच्छामि त्वां धर्मसम्मूढचेताः ॥**
**यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम् ॥ ७॥**

त०टी०—एवं चेत्किं त्वया स्वश्रेयो निश्चितमित्यपेक्षायां "यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये । यो ब्रह्माणं विदधाति पूर्वं यो विद्यां च तस्मै गोपायति स्म कृष्णः । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणं व्रजेत्" 'ये तु कृष्णं प्रपद्यन्ते न ते मुह्यन्ति मानवाः । भये महति मग्नानां त्राता नित्यं जनार्दनः' इत्यादिश्रुतिस्मृतिप्रतिपादितां भगवदुपसत्तिमेव सर्वसाधनेषु गरीयसीं मनसि निधाय स्वहिताहितज्ञानकौशलं विहाय ब्रह्मरुद्रादिभिरनवगतमहिमानमचिन्त्यगुणशक्तिकं कारुण्यवात्सल्यादिगुणार्णवं स्वभक्तहिताय वसुदेवगृहेऽवतीर्णं साक्षात्परमात्मभूतं भगवन्तं त्वामेव शरणं व्रजामीत्याह—**कार्पण्येति** । "यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः । पूर्वप्रतिपादिताक्षरशब्दवाच्यसूर्यचन्द्रवायुवह्नीन्द्रादिसर्वजगन्नियन्तृपरमात्मस्वरूपगुणादिज्ञानहीनः कृपण इत्युच्यते शास्त्रे । लोके तु स्वल्पमपि द्रव्यव्ययं कर्तुमक्षमः कृपणस्तस्य भावः कार्पण्यं तन्निमित्ते एतत्स्वजनवधेऽस्मज्जीवनं निरर्थकमिति मोहरूपो दोषस्तेनोपहतो विवेकात्मकः स्वभावो यस्य । अत एव धर्मे सम्मूढं चेतो यस्य सोऽहं त्वां स्वभावतोऽपास्तसमस्तदोषं सर्वज्ञं पृच्छामि । किं यत् निश्चितमसन्दिग्धं श्रेयः परमपुरुषार्थभूतं हितं स्यात्तन्मे मह्यं ब्रूहि । हितोपदेशस्यात्मनो योग्यतामाह—**शिष्यस्तेऽहमिति** । तव शासनयोग्योऽहमतः सखित्वान्मम तुल्योऽयं नोपदेशार्ह इति न शङ्कनीयं त्वया। तस्मात्त्वां प्रपन्नं शरणागतं मां त्वं शाधि। स्वकरुणावशेन शिक्षयेत्यर्थः॥७॥

म० टी०—गुरूपसदनमिदानीं प्रतिपाद्यते समधिगतसंसारदोषस्यातितरां निर्विण्णस्य विधिवद्गुरुमुपसन्नस्यैव विद्याग्रहणेधिकारात् तदेवं भीष्मादिसङ्कटवशात् "व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति श्रुतिसिद्धभिक्षाचर्येऽर्जुनस्याभिलाषं प्रदर्श्य विधिवदुपसत्तिमपि तत्सङ्कटव्याजेनैव दर्शयति—**कार्पण्येति** । यः स्वल्पामपि वित्तक्षतिं न क्षमते स कृपण इति लोके प्रसिद्धस्तद्विधत्वादखिलोऽनात्मविदप्राप्तपुरुषार्थतया कृपणो भवति "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः । तस्य भावः कार्पण्यमनात्माध्यासवत्त्वं तन्निमित्तोऽस्मिन् जन्मन्येत एव मदीयास्तेषु हतेषु किं जीवितेनेत्यभिनिवेशरूपो ममतालक्षणो दोषस्तेनोपहतस्तिरस्कृतः स्वभावः क्षात्रो युद्धोद्योगलक्षणो यस्य सः । तथा धर्मविषये निर्णायकप्रमाणादर्शनात्सम्मूढं किमेतेषां वधो धर्मः, किमेतत्परिपालनं धर्मः, तथा किं पृथ्वीपरिपालनं धर्मः, किंवा यथावस्थितोऽरण्यनिवास एव धर्म इत्यादिसंशयैर्व्याप्तं चेतो यस्य स तथा 'न चैतद्विद्मः कतरन्नोगरीयः' इत्यत्र व्याख्यातमेतत् । एवंविधः सन्नहं त्वा त्वामिदानीं पृच्छामि । श्रेय इत्यनुषङ्गः । अतो यन्निश्चितमैकान्तिकमात्यन्तिकं च श्रेयः परमपुमर्थभूतं फलं स्यात्तन्मे मह्यं ब्रूहि । साधनान्तरमवश्यम्भावित्वमैकान्तिकत्वम् । जातस्याविनाश आत्यन्तिकत्वम् । यथा ह्यौषधे कृते कदाचिद्रोगनिवृत्तिर्न भवेदपि । जातापि च रोगनिवृत्तिः पुनरपि रोगोत्पत्त्या विनाश्यते । एवं कृतेपि यागे प्रतिबन्धवशात्स्वर्गो न भवेदपि । जातोपि स्वर्गो दुःखाक्रान्तो नश्यति चेति नैकान्तिकत्वमात्यन्तिकत्वं वा तयोः । तदुक्तम्—'दुःखत्रयाभिघाताज्जिज्ञासा तदपघातके हेतौ । दृष्टे सापार्था चेन्नैकान्तात्यन्ततोभावात्' इति । 'दृष्टवदा-

नुश्रविकः सद्यविशुद्धिक्षयातिशययुक्तः । तद्विपरीतः श्रेयान् व्यक्ताव्यक्तत्वविज्ञानात्' इति च । ननु त्वं मम सखा न तु शिष्योऽत आह—शिष्यस्तेहमिति । त्वदनुशासनयोग्यत्वादहं तव शिष्य एव भवामि न सखा न्यूनज्ञानत्वात् । अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय करुणया नत्वशिष्यत्वशङ्कयोपेक्षणीयोहमित्यर्थः । एतेन "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ॥ भृगुर्वै वारुणिः । वरुणं पितरमुपससार । अधीहि भगवो ब्रह्मेति " इत्यादिगुरूपसत्तिप्रतिपादकः श्रुत्यर्थो दर्शितः ॥ ७ ॥

**शं० टी०**—कथं भवान् पण्डितः सन्नधर्मं धर्ममिवाधर्ममिव धर्मं च मन्यते मूढवदित्याकाङ्क्षायामहमेतद्द्वयं सूक्ष्मार्थं निर्णेतुं न शक्नोमि यत्कर्तव्यं तत्त्वमेवोपदिशेत्याह—**कार्पण्येति** । अविद्याकृतदेहेन्द्रियाद्यनात्मनः स्वरूपमिदमेवाहमिति व्यवहरतीति कृपणस्त्वतत्त्वज्ञः " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति 'कृपणो योऽजितेन्द्रियः' इति श्रुतिस्मृतिप्रसिद्धेः । तस्य भावः कार्पण्यमज्ञत्वमज्ञानं तमःप्रधानत्वाद्वस्तुस्वरूपं दूषयतीति तदेव दोषस्तेनोपहतस्तिरोहितः स्वस्याविक्रियस्य प्रत्यगात्मनो भावः सत्ता यस्य स कार्पण्यदोषोपहतस्वभावोऽविद्यातिरस्कृतात्मस्वरूपो यस्माद्धर्मसम्मूढचेताः अविद्यया संसारे पात्यमानः पुमान् धार्यतेऽनेनेति धर्मस्तस्मिन् स्वरूपप्रकाशके ज्ञानात्मके धर्मे सम्मूढमप्रविष्टं चेतो यस्य तथोक्तः । एवंलक्षणसंपन्नोहं त्वां परमेश्वरं पृच्छामि । श्रुतिस्मृतिभिर्महर्षिभिश्च यन्निश्चितं निर्णीतं नियतफलं श्रेयःसाधनं शोकविध्वंसकं तन्मे ब्रूहि । ननु "नापुत्रायाशिष्याय वै पुनः" इति श्रवणात्पुत्रशिष्यव्यतिरिक्तायाऽतिरहस्यं न वक्तव्यमित्यत आह—शिष्यइति । धर्मज्ञानार्थितयाऽहं ते शिष्यः शिष्यभावं गतोस्मि । त्वां जगद्गुरुं परमेश्वरं प्रपन्नं शरणं गतं मुमुक्षुं मां शाध्यनुगृहाण । शोकस्य निःशेषनिवृत्तिर्यथा भवेत्तथा मां बोधयेत्यर्थः ॥ ७ ॥

**श्री० टी०**—**कार्पण्येति** । तस्मात्कार्पण्यदोषोपहतस्वभाव एतान् हत्वा कथं जीविष्याम इति कार्पण्यं दोषश्च स्वकुलक्षयकृतः ताभ्यामुपहतोऽभिभूतः स्वभावः शौर्यादिलक्षणो यस्य सोऽहं त्वां पृच्छामि । तथा धर्मे संमूढं चेतो यस्य सः । युद्धं त्यक्त्वा भिक्षाटनमपि क्षत्रियस्य धर्मो वाऽधर्मोवेति संदिग्धचित्तः सन्नित्यर्थः । अतो मे यन्निश्चितं श्रेयो युक्तं स्यात्तद्ब्रूहि । किञ्च तेऽहं शिष्यः शासनार्हः अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय ॥ ७ ॥

**स० टी०**—तदेवं पूर्वसन्दर्भे संसारो दोषवारिधिः ॥ उक्तस्तेन विवेकादिसाधनान्यधिकारिणः ॥ १ ॥ प्रोक्तानि मोक्षशास्त्रस्योपोद्धातत्वेन कृत्स्नशः ॥ नच श्रेयोऽनुपश्यामीत्यत्र श्रेयोपवर्गकम् ॥ २ ॥ उपन्यस्तं ततोऽन्यत्र श्रेय इत्यर्थतः स्फुटम् ॥ नित्यानित्यविवेकोऽसौ दर्शितः शुद्धिहेतुकः ॥ ३ ॥ न काङ्क्षे विजयं कृष्णेत्यत्रैहिकफले रतिः ॥ अपि त्रैलोक्यराज्यस्येत्यत्रामुत्र फले रतिः ॥ ४ ॥ किं नो राज्येन चेत्यत्र शमः प्रोक्तस्तथा दमः ॥ यद्यप्येते न पश्यन्तीत्यत्र निर्लोभतात्मनः ॥ ५ ॥ तन्मे क्षेमतरं त्वत्र तितिक्षासाधनान्तरम् ॥ भोक्तुं भैक्ष्यमपीत्यत्र भिक्षाचर्योपलक्षितः ॥ ६ ॥ सन्न्यासो दर्शितोऽत्राथ गुरूपसदनं स्फुटम् ॥ ज्ञातसंसारदोषस्य निर्विण्णस्याधुनोच्यते ॥ ७ ॥ तदेवं द्रोणभीष्मादिवधसङ्कटहेतुकाम् ॥ भिक्षाचर्येऽर्जुनस्येच्छां प्रदर्श्याथ यथाविधि ॥ ८ ॥ तत्सङ्कटच्छलेनैवमुपसत्तिः प्रदर्श्यते ॥ कृपणोऽनात्मवित्तस्य भावः कार्पण्यमुच्यते ॥ ९ ॥ तन्निमित्तो ममैतेऽहमेतेषामिति निश्चयः ॥ दोषस्तेनावृतः क्षात्रः स्वभावो यस्य शूरता ॥ १० ॥ निर्णायकप्रमाणस्यादर्शनाद्धर्मगोचरे ॥ किमेतेषां वधो धर्मः किमेतत्परिपालनम् ॥ ११ ॥ इत्यादिसंशयग्रस्तं चेतो यस्याहमीदृशः ॥ त्वां पृच्छाम्यधुना श्रेय आत्यन्तिकमसंशयम् ॥ १२ ॥ यन्निश्चितं स्यात्तन्मह्यं ब्रूहि श्रेयोऽर्थिने परम् ॥ ननु त्वं मे सखा चासि न शिष्योऽसीति चेच्छृणु ॥ १३ ॥ तवानुशासनार्हत्वाच्छिष्य एव भवाम्यहम् ॥ न सखा न्यूनबोधत्वादतस्त्वां शरणं गतम् ॥ १४ ॥ कृपया शिक्षय त्वं मां नोपेक्ष्योऽशिष्यशङ्कया ॥ १५ ॥ ७ ॥

भा० टी०–संसारासारतां ज्ञातवत इहामुत्रार्थे भोगेऽत्यन्तविरक्तस्य मुमुक्षोर्गुरूपसत्तिं सूचयन्नाह–कार्पण्येति । अनात्मवित्त्वात्संबन्धिनां वियोगासहनं कार्पण्यम् " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः । तेन कार्पण्येन दैन्यरूपेण दोषेणोपहतो दूषितः स्वभावोऽन्तःकरणं यस्य सः। कार्पण्यदोषेणोपहतोऽभिभूतः स्वभावः शौर्यादिलक्षणो यस्य स इत्यपरे। स्वभावः क्षात्रो युद्धोद्योगलक्षण इति केचित्। यतो धर्मसंमूढचेताः धारयतीति धर्मः सर्वाधिष्ठानं परमात्मा तस्मिन्सम्यक् मूढमविवेकितां प्राप्तं चेतो यस्य सोऽहं त्वा त्वां पृच्छामि। किमित्यत आह–यदिति। यच्छ्रेयः स्यान्निश्चितं श्रुतिस्मृतीतिहासपुराणैर्यत् श्रेयस्त्वेन नित्यनिरतिशयानन्दत्वेन निश्चितं स्यात्तन्मे ब्रूहि निश्चितमैकान्तिकमनपेक्षिकं श्रेयः स्यात् न रोगनिवृत्तिवदनैकान्तिकमनात्यन्तिकं स्वर्गवदापेक्षिकं चेत्येके । मे मह्यं ब्रूहि कथय । ननु नापुत्रायाशिष्यायेति निषेधान्न वक्तव्यमिति चेन्नाहमशिष्यः किंतु शिष्यस्तेहमतो मां शिष्यं शासनार्हं त्वां प्रपन्नं शरणागतं च शाधि शिक्षय । स्वबुद्ध्या भिक्षाशनं प्रशस्यं मन्यमानोऽपि कार्पण्यदोषोपहतस्वभावः भिक्षाशनं धर्म उत युद्धमिति संशयापगमाभावाद्धर्मसंमूढचेता अहं त्वां पृच्छामि । यद्भैक्ष्यं युद्धं वा निश्चितमव्यभिचारि श्रेयःसाधनं तन्मे ब्रूहीति धर्मतत्त्वविषयकोऽपि प्रश्नो बोध्यः । यत्तु केचित् धर्मविषये संमूढं किमेतेषां वधो धर्मः किमेतत्परिपालनं धर्मः तथा किं पृथ्वीपरिपालनं धर्मः किंवा यथाऽवस्थितोऽरण्यनिवास एव धर्म इत्यादिसंशयैर्व्याप्तं चेतो यस्य स एवंविधोऽहं त्वामिदानीं पृच्छामि । श्रेय इत्यनुषङ्गः । अतो यन्निश्चितमैकान्तिकमात्यन्तिकं च श्रेयः परमपुरुषार्थभूतं फलं स्यात्तन्मे ब्रूहि । साधनानन्तरमवश्यंभावित्वमैकान्तिकत्वं जातस्याविनाशित्वमात्यन्तिकत्वमिति वर्णयन्ति । तत्र धर्मविषयकसंदेहवान् परमपुमर्थभूतं फलं पृच्छाम्यतः तन्मे ब्रूहीत्यस्यान्यद्भुक्तमन्यद्वान्तमिति न्यायतुल्यस्य सामञ्जस्यमस्ति नवेति विद्वद्भिराकलनीयम् ॥ ७ ॥

प० टी०–अथ व्याकुलचित्तः सन् श्रीकृष्णमेव पृच्छति–कार्पण्येति । स्नेहानुबन्धिनां गोत्रिणां जीवरक्षणमेव कार्पण्यं तथा तद्वधे दोषस्ताभ्यामुपहतः स्वभावश्चित्तं यस्य स तथा । कार्पण्ये क्षात्रधर्मपरित्यागो हिंसायां च श्रौतधर्मपरित्यागः। एवमुभयथा धर्मसंमूढचेताः धर्मविषये विमूढं चेतो यस्येत्यर्थः । इतः परमुभयधर्मसंरक्षणेन यच्छ्रेय उचितं स्यात्तन्मे निश्चितमसंदिग्धं यथा स्यात्तथा ब्रूहि । यतोऽहं ते शिष्यः अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय " आचार्यवान् पुरुषो वेद " इति श्रुतेः ॥ ७ ॥

रा० टी०–कृपणतादोषेणाभिभूतशौर्यलक्षणस्वभावः धर्मसंमूढचेताः धर्मे संमूढं संदिग्धं चेतो यस्य स तथोक्तस्तादृशोऽहं त्वां पृच्छामि । यच्छ्रेयः स्याद्भिक्षाटनयुद्धयोर्मध्ये यच्छ्रेयः स्यान्निश्चितं तन्मे ब्रूहि । किंचाहं ते शिष्यः शासनार्हः अतस्त्वां प्रपन्नं शरणागतं मां शाधि शिक्षय ॥ ७ ॥

**न हि प्रपश्यामि ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणाम् ॥**
**अवाप्य भूमावसपत्नमृद्धं राज्यं सुराणामपि चाधिपत्यम् ॥ ८ ॥**

त० टी०–ननु लोके देवताऽऽराधनजन्यसम्पत्पुत्रराज्यादीनि यथाकामं श्रेयांसि बहूनि सन्ति । क्षत्रियाणां तु प्रायो निष्कण्टकराज्यमेव श्रेय इति त्वमेव स्वबुद्ध्या निश्चित्य तदुपाये प्रयतस्वेति चेत्तत्र " सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु श्रुतं ह्येव भगवद्दृशेभ्यस्तरति शोकमात्मवित्" इति श्रुत्यर्थं हृदि निधाय नैतानि शोकतरणोपायानीत्याह–न हीति। यच्छब्दः श्रेयःपरामर्शपरः। यच्छ्रेयः इन्द्रियाणां शोषणं मम शोकमपनुद्यान्नाशयेत्तद्भूमौ असपत्नं निष्कण्टकं राज्यमवाप्य सुराणां च आधिपत्यं देवेन्द्रतां च प्राप्यापि न पश्यामि । हीत्यवधारणे। प्रकर्षेण नैव पश्यामीत्यर्थः। अतस्त्वमेव तद्वक्तुमर्हसीति भावः ॥ ८ ॥

**म० टी०**—ननु स्वयमेव त्वं श्रेयो विचारय श्रुतसंपन्नोऽसि किं परशिष्यत्वेनेत्यत आह—**नहीति** । यच्छ्रेयः प्राप्तं सत् कर्तृ । मम शोकमपनुद्यादपनुदेन्निवारयेत्तन्न पश्यामि हि यस्मात्तस्मान्मां शाधीति "सोऽहं भगवः शोचामि तं मा भगवान् शोकस्य पारं तारयतु" इति श्रुत्यर्थो दर्शितः । शोकानपनोदे को दोष इत्याशङ्क्य तद्विशेषणमाह—इन्द्रियाणामुच्छोषणमिति । सर्वदा संतापकरमित्यर्थः । ननु युद्धे प्रयतमानस्य तव शोकनिवृत्तिर्भविष्यति जेष्यति चेत्तदा राज्यप्राप्त्या इतरथा च स्वर्गप्राप्त्या । 'द्वावेतौ पुरुषो लोके' इत्यादिधर्मशास्त्रादित्याशङ्क्याह—**अवाप्येत्यादिना** । शत्रुवर्जितं सस्यादिसम्पन्नं च राज्यं तथा सुराणामाधिपत्यं हिरण्यगर्भपर्यन्तमैश्वर्यमवाप्य स्थितस्यापि मम यच्छोकमपनुद्यात्तन्न पश्यामीत्यन्वयः । "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इतिश्रुतेः । यत्कृतकं तदनित्यमित्यनुमानात् प्रत्यक्षेणाप्यैहिकानां विनाशदर्शनाच्च । नैहिक आमुत्रिको वा भोगः शोकनिवर्तकः किन्तु स्वसत्ताकालेपि भोगपारतन्त्र्यादिना विनाशकालेपि विच्छेदाच्छोकजनक एवेति न युद्धं शोकनिवृत्तयेऽनुष्ठेयमित्यर्थः । एतेनेहामुत्रभोगविरागोऽधिकारिविशेषणत्वेन दर्शितः ॥ ८ ॥

**शं० टी०**—मया ते किं वक्तव्यं भवान् पण्डितः खलु सूक्ष्मबुद्ध्या युक्त्या च यच्छ्रेयःसाधनं तत्त्वयैव ज्ञातव्यमित्यत आह—**नहीति** । इन्द्रियाणां देहेन्द्रियमनोबुद्धीनामुच्छोषणमत्यन्तसन्तापकं मम शोकं यदपनुद्याद्द्रव्यगुणकर्मणां मध्ये विशिष्टं यत्प्रातं सन्मामकं दुःखं निवर्तयेत्तदहं न प्रपश्यामि तादृशं न किंचिज्जानामि ज्ञातं चेत्कुतोयं शोक इति । हिस्तदज्ञानप्रसिद्धिद्योतनार्थः । शत्रून् जित्वा राज्यं प्राप्य शोकस्त्यक्तुं शक्यते विशिष्टपदार्थभोगेनेत्यतआह—**अवाप्येति** । भूमावसपत्नं निःशात्रवं समृद्धं समग्रं राज्यं सार्वभौमत्वमवाप्य प्राप्य वा सुराणामाधिपत्यमिन्द्रत्व ब्रह्मत्वं वाथ प्राप्याहं शोकं त्यक्तुं न शक्नुयाम् । सार्वभौमत्वेन्द्रत्वब्रह्मत्वादीनां जन्यत्वेन ध्वंसप्रतियोगित्वात्तद्वतः शोकनिवृत्तिर्न संभवति । प्रकृतेपि स्वजनध्वंसहेतुकत्वाच्छोकस्याऽतो विवेकवतो विषयप्राप्तिस्तद्भोगश्च न शोकनिवर्तको भवति । यतः शोकं निःशेषं त्यक्ष्यामि तं धर्मं ममोपदिशेति सर्वभोगविरक्तया तीव्रमुमुक्षया च भगवन्तं प्रार्थितवानर्जुनः शाधि मामिति । एतेनात्यन्तिकसंसारदुःखनिवृत्तिकारणं न भवति ब्रह्मविष्ण्वादिपदलाभः । किंतु दुःखायैव विनैव ब्रह्मज्ञानम् । तच्च गुरूपदेशं विना न सिध्यति "आचार्यवान् पुरुषो वेद" इति श्रवणादतस्तदर्थिना गुरूपसत्तिः कर्तव्येति सूचितम् 'शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्' इति । एवमर्जुनस्य वृत्तं धृतराष्ट्रं प्रति ॥ ८ ॥

**श्री० टी०**—त्वमेव विचार्य यद्युक्तं तत्कुर्विति चेत्तत्राह—**नहीति** । इन्द्रियाणामुच्छोषणमतिशोषणकरं मदीयं शोकं यत्कर्मापनुद्यादपनयेत्तदहं न प्रपश्यामि । यद्यपि भूमौ निष्कण्टकं समृद्धं राज्यं प्राप्स्यामि तथा सुरेन्द्रत्वमपि यदि प्राप्स्यामि । एवमभीष्टं तत्सर्वमवाप्यापि शोकापनोदनोपायं न पश्यामीत्यन्वयः ॥ ८ ॥

**स० टी०**—ननु त्वं श्रुतिसंपन्नः स्वयं श्रेयो विचारय । परशिष्यतया किं ते इत्याशङ्क्याह सद्वचः ॥ १ ॥ यच्छ्रेयः कर्तृप्राप्तं सन्मम शोकं निवारयेत् ॥ तन्न पश्याम्यहं यस्मात्तस्मान्मां शाधि शोकिनम् ॥ ॥ २ ॥ शोकं संतापकं नित्यमिन्द्रियाणामपाकुरु ॥ नन्वाजौ यतमानस्य शोकस्ते लयमेष्यति ॥ ३ ॥ जेष्यसि त्वं तदा राज्यप्राप्त्या वा स्वर्गतोऽन्यथा ॥ इत्यत्राहारिभिर्हीनं राज्यं सस्यादिसंयुतम् ॥ ४ ॥ हिरण्यगर्भपर्यन्तमैश्वर्यं प्राप्य सर्वतः ॥ यत्स्थितस्यापि मे शोकमपनुद्यान्न तल्लभे ॥ ५ ॥ तद्यथेहेति वेदेन कृतकेनास्ति नित्यता ॥ कृतकं यन्न तन्नित्यं युक्त्यापीति विनिश्चितम् ॥ ६ ॥ नैहिकामुष्मिकौ भोगौ मम शोकनिवर्तकौ ॥ इहामुत्रफले तेन विरागो दर्शितः पुनः ॥ ७ ॥ ८ ॥

**भा० टी०**—ननु विजयिनो लब्धभूमिराज्यस्य हतस्य स्वधर्मबलादिन्द्रपुत्रत्वाद्वा प्राप्तदेवाधिपत्यस्य वा

तवाज्ञानानिबन्धनशोकापनोदकोपि यः कश्चित्सुलभो भविष्यतीति चेत्तत्राह—**नहीति**। यदित्यव्ययम्। भूमौ राज्यमसपत्नं न विद्यते सपत्नः शत्रुर्यस्य तन्निष्कण्टकमित्यर्थः। ऋद्धं सस्यादिसंपन्नं सुराणामाधिपत्यं वा प्राप्यापि तन्नहि प्रपश्यामि यः शोकमिन्द्रियाणामुच्छोषणमत्यन्तशोषकरं ममापनुद्यादपनयेदित्यन्वयः। अतस्त्वमेवेदानीमेव शोकमपाकुर्वित्यभिप्रायः। कुतो निःश्रेयसमेवेच्छसीति तत्राह—**नहीति**। यस्मान्ममापनुद्याद्यच्छोकमुच्छोषणमिन्द्रियाणां तन्न पश्यामि। ननु शत्रून्निहत्य राज्ये प्राप्ते शोकनिवृत्तिस्ते भविष्यति नेत्याह—**अवाप्येति**। अविद्यमानः सपत्नः शत्रुर्यस्य तदृद्धं राज्यं राज्ञः कर्म प्रजारक्षणशासनादि तदिदमस्यां भूमाववाप्यापि शोकापनयनकारणं न पश्यामीत्यर्थः। तर्हि देवेन्द्रत्वादिप्राप्त्या शोकापनयस्ते भविष्यति नेत्याह—सुराणामपीति। तेषामाधिपत्यमधिपतित्वं स्वाम्यमिन्द्रत्वं ब्रह्मत्वं वा तदवाप्यापि मम शोको नापगच्छतीत्यर्थ इत्येके ॥ ८॥

**प० टी०**—इदानीं त्वमेव विचार्य यद्युक्तं तत्कुरुष्वेति चेत्तत्रोर्वरिते प्रमेये पुनर्वदति—**नहीति**। अस्मिन् संग्रामे कार्यद्वयं दृश्यते। तात्किम् अस्माकं जये भूलोकराज्यं तथाऽस्माकं मरणे स्वर्लोकराज्यम्। अनयोरुभयोर्मध्ये एकमपि तथा न दृश्यते यदस्माकं शोकमपनुद्यान्नाशयेत्। किंभूतं शोकम्। इन्द्रियाणामुच्छोषणं सकलेन्द्रियघातकम्। अथ भूलोकराज्यं वर्णयति। असपत्नं निष्कण्टकमृद्धं समृद्धं स्वर्लोकराज्यं च सुराणां त्रयस्त्रिंशत्कोटिप्रमितानां देवानामाधिपत्यम्। तत्र भूलोकराज्ये ये भोगास्ते रुधिराक्ताः। स्वर्लोकभोगा अपि पुनश्च्यवनात् क्षणभङ्गुरा अतः शोकप्रदाः। न तु शोकशामका इत्यर्थः ॥ ८ ॥

**रा० टी०**—त्वमेव विचार्य यद्युक्तं तत्कुर्वित्याहार्जुनः—**नहीति**। इन्द्रियाणामुच्छोषणमतिशोषकरं मदीयं शोकं यत्कर्मापनुद्यादपनयेत्तदहं न पश्यामि। राज्यलाभहेतुयुद्धकर्मैव तादृशमित्यत आह—**अवाप्येति**। यद्यपि भूमौ निष्कण्टकं राज्यं प्राप्स्यामि तथा सुराणां देवानामाधिपत्यं च प्राप्स्यामि। एवमभीष्टं सर्वमवाप्यापि शोकापनोदनोपायं न प्रपश्यामीत्यर्थः। हत्वार्थकामानिति उक्तदिशा सर्वस्यापि दुःखहेतुत्वादिति भावः॥ ८॥

**सञ्जय उवाच—एवमुक्त्वा हृषीकेशं गुडाकेशः परन्तप ॥**
**न योत्स्य इति गोविन्दमुक्त्वा तूष्णीं बभूव ह ॥ ९ ॥**

**त० टी०—ततः किं वृत्तमिति धृतराष्ट्राकाङ्क्षायां सञ्जय उवाच-एवमिति। गुडाकाया निद्राया ईशः जितनिद्रोऽर्जुनः हृषीकेशमिन्द्रियनियन्तारमेवमुक्तप्रकारेणोक्त्वा गोविन्दं गां वेदलक्षणां वाणीं वेदयते इति गोविन्दः। यथोक्तमुद्योगपर्वणि 'गोविन्दो वेदनाद्गवाम्' इति। हरिवंशेऽपि 'गौरेषा तु यतो वाणी तां च वेदयते भवान्। गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान्' इति तं सर्ववेदोपदेष्टारं सर्वज्ञं भगवन्तं न योत्स्य इत्युक्त्वा तूष्णीं बभूव। हेति स्फुटम् ॥ ९ ॥**

**म० टी०**—तदनन्तरमर्जुनः किं कृतवानिति धृतराष्ट्राकाङ्क्षायां गुडाकेशो जितालस्यः परन्तपः शत्रुतापनोऽर्जुनः हृषीकेशं सर्वेन्द्रियप्रवर्तकत्वेनान्तर्यामिणं गोविन्दं गां वेदलक्षणां वाणीं विन्दतीति व्युत्पत्त्या सर्ववेदोपादानत्वेन सर्वज्ञमादौ एवं 'कथं भीष्ममहं सङ्ख्ये' इत्यादिना युद्धस्वरूपाऽयोग्यतामुक्त्वा तदनन्तरं न योत्स्य इति युद्धफलाभावं चोक्त्वा तूष्णीं बभूव बाह्येन्द्रियव्यापारस्य युद्धार्थं पूर्वं कृतस्य निवृत्त्या निर्व्यापारो जात इत्यर्थः। स्वभावतो जितालस्ये सर्वशत्रुतापने च तस्मिन्नागन्तुकमालस्यमतापकत्वं च नास्पदमादधातीति द्योतयितुं हशब्दः। गोविन्दहृषीकेशपदाभ्यां सर्वज्ञत्वसर्वशक्तित्वसूचकाभ्यां भगवतस्तन्मोहापनोदनमनायाससाध्यमिति सूचितम् ॥ ९ ॥

**शं० टी०**—सञ्जय उवाच—**एवमिति**। परन्तपः शत्रुतापनोपि गुडाकेशः नामैकदेशे नामग्रहणम्। गुडो लगुडो दण्डस्तद्वद्दीर्घा आसमन्तात्समाश्च केशाः शिरोजा यस्य स गुडाकेशोऽर्जुनः। गोविन्दं गोभिर्वेदान्तवाक्यैरेव

विद्यते लभ्यतइति गोविन्दस्तं हृषीकेशं स्वजनहिंसाया अत्यन्तशोकहेतुत्वान्नाहं योत्स्ये इत्येवमुक्त्वा तूष्णीं बभूव ह । पुनर्न किंचिद्बभाष इत्यर्थः ॥ ९ ॥

**श्री० टी०**—एवमुक्त्वाऽर्जुनः किं कृतवानित्यपेक्षायां सञ्जय उवाच—**एवमिति** । स्पष्टार्थः ॥ ९ ॥

**स० टी०**—ततः किं कृतवान्पार्थ इत्यत्रोवाच सञ्जयः ॥ जितालस्योऽर्जुनः शत्रुतापनश्चेन्द्रियेश्वरम् ॥ १ ॥ सर्वज्ञं भगवन्तं तमेवमुक्त्वा वचोव्रजम् ॥ कथं भीष्ममहं चेति स्वरूपायोग्यतां रणे ॥ २ ॥ न योत्स्यइति युद्धस्य फलाभावं ततःपरम् ॥ उक्त्वा तूष्णीं बभूवेत्थं निर्व्यापारतया स्थितः ॥ ३ ॥ स्वभावतो जितालस्ये सर्वशत्रुप्रतापने ॥ अतापकत्वमालस्यं तदा धास्यति नास्पदम् ॥ ४ ॥ इति द्योतयितुं हेति तथानायासतो हरेः । बोधाच्छोकापनेतृत्वं गोविन्देति पदध्वनिः ॥ ५ ॥ ९ ॥

**भा० टी०**—जिताज्ञाननिद्रोऽपि शत्रुतापनोऽपि हृषीकेशनियमितसर्वेन्द्रियोऽज्ञानं युद्धोपरतिं चाङ्गीकृत्य लोकोद्धारार्थं वेदार्थप्रकाशनाय वेदज्ञं परमात्मानं गोविन्दमेवमुक्त्वा तूष्णीं बभूवेति सूचयन्नाह—**एवमिति** । एवं पूर्वोक्तप्रकारेण हृषीकेशं सर्वेन्द्रियनियन्तारमुक्त्वा गुडाकेशः अर्जुनः परन्तपः शत्रुतापनः न योत्स्ये युद्धं न करिष्यामीति गोविन्दमुक्त्वा तूष्णीं वाग्व्यापारविनिर्मुक्तो बभूवेत्यर्थः । हेति वाक्यालङ्कारे । स्वभावतो जितालस्ये सर्वशत्रुतापने च तस्मिन्नागन्तुकमालस्यमतापकत्वं च नास्पदमध्यास्यतीति द्योतयितुं हशब्दः । गोविन्दहृषीकेशपदाभ्यां सर्वज्ञत्वसर्वशक्तित्वसूचकाभ्यां भगवतस्तन्मोहापनोदनमनायाससाध्यमिति सूचितमिति केचित् ॥ ९ ॥

**प० टी०**—अथाग्रे किं वृत्तमिति सञ्जय आह—**एवमुक्त्वेति** । स्पष्टम् ॥ ९ ॥

**रा० टी०**—ततः किमकरोदर्जुन इति धृतराष्ट्राकाङ्क्षां निरासयन्नाह सञ्जयः—**एवमुक्त्वेति** । हृषीकेशं सर्वेन्द्रियप्रेरकं गुडाकेशो जितनिद्रः परन्तपः शत्रुतापनः गोविन्दं गाः वेदवाचः प्रतिपादकत्वेन विन्दते लभत इति गोविन्दः तम् । हेत्याश्चर्ये । महाधैर्यादिगुणवतोऽप्येवं बुद्धिर्जातेति ॥ ९ ॥

## तमुवाच हृषीकेशः प्रहसन्निव भारत ॥
## सेनयोरुभयोर्मध्ये विषीदन्तमिदं वचः ॥ १० ॥

**त० टी०**—एवं युद्धत्यागाय कृतव्यवसायेऽर्जुने मम पुत्राणां सुखं जीवनं सिद्धमिति चेतनाचेतननियन्तरि दुर्जनविनाशायावतीर्णे भगवत्यधिष्ठातरि सति नाशासनीयमिति धृतराष्ट्राय सूचयितुं सञ्जय आह-**तमिति** । हे भारत ! महावीरस्य भरतस्य वंशे जातस्य तव युद्धोपरतौ पुत्रस्नेहेन हर्षो नोचित इति भावः । हृषीकेशः सर्वेन्द्रियनियन्ता तमुभयोः सेनयोर्मध्ये युद्धार्थं विषीदन्तं विषादं कुर्वन्तमर्जुनं प्रहसन्निव इदं वक्ष्यमाणं वच उवाचेत्यन्वयः । पाण्डुपुत्रस्य क्षत्रियसम्मतस्य नैतद्युक्तमिति लज्जानिमित्तं कोपमुत्पादयितुं प्रहसन्निवेत्युक्तम् । अर्जुनं निमित्तीकृत्य सर्वसेनासंहारार्थं प्रवृत्तस्य गुरुत्वेनाङ्गीकृतस्य हितोपदेष्टुर्भगवतः स्वधर्मे प्रवर्त्तयितुमुद्यतस्य प्रहासो नोचितः, किन्तु ( तद्विया- ) तद्विधाबुद्धिकौशल्यगर्वापनयनेन तत्त्वज्ञानाधिकारितासम्पादनाय तथा वचनमितीवशब्दाभिप्रायः ॥ १० ॥

**म० टी०**—एवं युद्धमुपेक्षितवत्यप्यर्जुने भगवान्नोपेक्षितवानिति धृतराष्ट्रदुराशानिरासायाह—**तमिति** । सेनयोरुभयोर्मध्ये युद्धोद्यमेनागत्य तद्विरोधिनं विषादं मोहं प्राप्नुवन्तं तमर्जुनं प्रहसन्निव अनुचिताचरणप्रकाशनेन लज्जाम्बुधौ मज्जयन्निव हृषीकेशः सर्वान्तर्यामी भगवानिदं वक्ष्यमाणमशोच्यानित्यादि वचः परमगम्भीरार्थमनुचिताचरणप्रकाशकमुक्तवान् । नतूपेक्षितवानित्यर्थः । अनुचिताचरणप्रकाशनेन लज्जोत्पादनं प्रहासः । लज्जा च दुःखात्मिकेति द्वेषविषय एव मुख्यः । अर्जुनस्य तु भगवत्कृपाविषयत्वादनुचिताचरणप्रकाशनस्य च विवेकोत्पत्तिहे-

तुत्वादेकदलाभावेन गौण एवायं प्रहास इति कथयितुमिवशब्दः। लज्जामुत्पादयितुमिव विवेकमुत्पादयितु मर्जुनस्यानुचिताचरणं भगवता प्रकाश्यते। लज्जोत्पत्तिस्तु नान्तरीयकतयास्तु मास्तु वेति न विवक्षितेति भावः ॥ १० ॥

**शं० टी०**–यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्म इति पृष्टः श्रीभगवान् शोचन्तं तं दृष्ट्वा किमुक्तवानित्याकाङ्क्षायामाह–**तमिति**। हे भारत! सेनयोरुभयोर्मध्ये विषीदन्तं मदीया एते म्रियन्त इति शोचन्तमेतान् हत्वा तद्दोषेणाहं निरयं यास्यामीत्यात्मनि निष्क्रिये निर्विकारे कर्तृत्वादिधर्मशून्य एवानाद्यविद्ययाऽनात्मतद्धर्मानध्यस्याहं कर्ता भोक्तेति विपरीतभावेन मुह्यन्तं तमर्जुनं दृष्ट्वा परमकृपालुः श्रीभगवान् "तत्र को मोहः कः शोक एकत्वमनुपश्यतः"इत्यादिश्रुतिप्रसिद्धब्रह्मात्मैकत्वज्ञानेन विना नायं द्वैतभ्रमप्रवर्तकेन भेदशास्त्रेण बोध्यमानः शोकसागरं भ्रममूलकं तर्तुं शक्नोतीति मत्वा पदार्थद्वयशोधनपूर्वकं तज्ज्ञानमुपदिदिक्षुः सन्नादौ त्वंपदार्थशोधनमवतारयितुं तदीयवृत्तं भवान् पण्डितइति मम बुद्धिरेवं वा तव पाण्डित्यमिति प्रहसन्निव वचनमिदमुवाच १०

**श्री० टी०**–ततः किं वृत्तमित्यपेक्षायामाह–**तमुवाचेति**। प्रहसन्निव प्रसन्नमुखः सन्नित्यर्थः ॥ १० ॥

**स० टी०**–एवमप्यर्जुने युद्धमुपेक्षितवतीश्वरः। नैवोपेक्षितवानित्थमन्वं प्रत्याह सञ्जयः ॥ १ ॥ आगत्य सेनयोर्मध्ये युद्धोद्योगेन चार्जुनम् ॥ प्राप्नुवन्तं विषादं च संमोहं युद्धरोधकम् ॥ २ ॥ तच्चेष्टाया ह्यनौचित्यं हसनेन प्रकाशयन् ॥ अन्तर्यामी तमाहेशो लज्जाब्धौ मज्जयन्निव ॥ ३ ॥ वक्ष्यमाणमिदं चातिगम्भीरं सारवद्वचः ॥ ४ ॥ १० ॥

**भा० टी०**–एतदनन्तरं भगवान् किं कृतवानित्यत आह–**तमिति**। तं सेनयोरुभयोर्मध्ये विषीदन्तं शोकमोहावङ्गीकुर्वन्तमर्जुनं हृषीकेशो भगवान् वासुदेवः प्रहसन्निव मदाज्ञावशवर्तिनि त्वय्यहं प्रसन्नोस्मीति प्रकटयन्निवेदं वक्ष्यमाणं वचो वचनमुवाच। अनुचिताचरणप्रकाशनेन लज्जाम्बुधौ मज्जयन्निवेति केचित्। मूढोप्ययममूढवद्वदतीति प्रहसन्निवेत्यन्ये। त्वमपि भरतवंशोद्भवत्वाद्भगवद्वाक्यं सावधानतया श्रोतुमर्हसीति द्योतयन् सञ्जयः प्रज्ञाचक्षुषं धृतराष्ट्रं संबोधयति–भारतेति। तदाश्वासार्थं भारतान्वयेत्येवं संबोध्य भगवांस्तमुवाचेत्येके ॥ १० ॥

**प० टी०**–अथार्जुनं विषादेन न योत्स्य इति निश्चित्य तूष्णींभूतं प्रति भगवानाह–**तमुवाचेति**। हृषीकेश आशयज्ञः कृष्णस्तमर्जुनं प्रति प्रहसन्निव प्रहासगर्भमिव वचनमुवाच। ननु विषादावसरे हासानुपक्रमेऽपि कथमुक्तं प्रहसन्निवेति, तत्रोच्यते। विषादोत्पत्तेरकारणत्वाद् यतो दीनानाथवधे एव विषादोत्पत्तेर्दर्शनात्। प्रकृते तु भीष्मद्रोणकर्णदुर्योधनाद्याः शौर्येण शक्रमप्यगणयन्तः क्षात्रधर्ममनुस्मृत्य प्रवृत्ता न तु मूर्खत्वेन तेषु कथं कृपापात्रत्वम्। तथा ते मद्वध्या एवेति कुतो ज्ञातं स्वभुजप्रतापविश्वासादुत सहायीभूतास्मत्प्रभावात्। नाद्यः। अस्मान् प्रति स्वभुजप्रतापाख्यापनस्यानौचित्यात्। किंच अस्मत्सहायानुपयोगात्। कौतुकदर्शनार्थं चेत्तर्हीतरलोकवदकिंचित्करत्वेनागमनस्य वैयर्थ्यात्। न द्वितीयः। वधस्यास्मन्निमित्तकत्वेन विषादानुत्पत्तेः। अतो यद्विषादकारणमुक्तं तत्प्रतारणमात्रं कर्म नैष्कर्म्यमार्गबहिर्भूतमित्याशयेन ईषद्धास्यमुखो भूत्वा प्रोवाचेत्यर्थः ॥ १० ॥

**रा० टी०**–ततः किं जातमित्यत आह–**तमुवाचेति**। हे भारतेति धृतराष्ट्रसंबोधनम्। प्रहसन्निवेति परिहासकरवाक्योक्तिद्योतकहासस्य सूचनायेवशब्दः ॥ १० ॥

**श्रीभगवानुवाच–अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे ॥**
**गतासूनगतासूंश्च नानुशोचन्ति पण्डिताः ॥ ११ ॥**

त० टी०—तत्र " तस्मै स विद्वानुपसन्नाय सम्यक् प्रशान्तचित्ताय समन्विताय येनाक्षरं पुरुषं वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् " इति श्रुतेरुक्तलक्षणाधिकारिणे गुरुणा ब्रह्मविद्योपदेष्टव्या अतस्तथाभूतार्जुनाय " एतस्याक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। भीषास्माद्वातः पवते। भीषोदेति सूर्यः। भीषास्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः। यच्च किञ्चिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा। अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः। नारायणः परं ब्रह्म तत्त्वं नारायणः परः। नारायणः परो ध्याता ध्यानं नारायणः परः। सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत " 'ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्। जगद्वशे वर्त्ततेऽदः कृष्णस्य सचराचरम्॥ यदाह वसुधा सर्वं सत्यमेतद्दिवौकसः। अहं भवो भवन्तश्च सर्वे नारायणात्मकाः॥ किमनेन जगन्नाथ सर्वं त्वद्वशगं जगत्' " एकः समस्तं यदिहास्ति किञ्चित् तदच्युतो नास्ति परं ततोऽन्यत्। सकलमिदमहं च वासुदेवः परमः पुमान्परमेश्वरः स एकः को मोहः कः शोक एकत्वमनुपश्यतः " इत्यादिश्रुतिस्मृतिनिर्णीता सूर्यचन्द्रवाय्वग्नीन्द्रमृत्युद्यावादिसर्वचेतनाचेतननियन्तृजगज्जन्मस्थितिलयाभिन्ननिमित्तोपादानकारणसर्वव्यापकसर्वात्मभूतसर्वभिन्नाभिन्नस्वरूपाक्षरनारायणहरिवासुदेवादिशब्दाभिधेयपरब्रह्मस्वरूपगुणादिविषयिणी विद्या निःशेषशोकमोहविनाशिनी तामेवोपदेष्टुं तावन्नियम्यभूतचिदचिद्वर्गयाथात्म्यज्ञानाभावेन शोचते देहात्मविवेकमुत्पादयितुं तस्य पाण्डित्याभिमानं निरासयन् श्रीभगवानुवाच—अशोच्यानिति। अशोच्यान् शोचितुमयोग्यान् पुण्यलोकजयोद्यतान्भीष्मद्रोणादीन् त्वमन्वशोचः शोकमकार्षीः ' नच श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे। किन्नो राज्येन गोविन्द किम्भोगैर्जीवितेन वा ' इत्यादिना एतैर्विना राज्यादिना जीवितेन वाऽस्माकं किं प्रयोजनमित्येवं शोकं कृतवानसीति ते मूर्खत्वम्। किञ्च प्रज्ञावादांश्च भाषसे प्रज्ञावतां वादाः प्रज्ञावादाः स्वपाण्डित्यद्योतकास्तान् 'पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः। उत्सन्नकुलधर्माणां मनुष्याणां जनार्दन। नरके नियतं वासो भवति। गुरूनहत्वा हि महानुभावाञ्छ्रेयो भोक्तुं भैक्ष्यमपीह लोके ' इत्यादिना भाषसे कथयसि। एवं मूर्खत्वं पाण्डित्यं चैकस्मिन्विरुद्धमतो मुधा ते पाण्डित्यमित्यर्थः। यतो गतासून् गतप्राणान् मृतान् अगतासून्प्राणवतो जीवितान् पण्डिता नानुशोचन्ति। तत्त्वविवेचिनी बुद्धिः पण्डा सा जाता येषां ते पण्डितास्ते देहेन्द्रियादिविच्छेदे सत्त्वे वा तद्व्यतिरिक्तात्मनां शोकं न कुर्वन्तीत्यर्थः॥ ११॥

म० टी०—यदि युद्धारम्भात्प्रागेव गृहे स्थितो युद्धमुपेक्षेत तदा नानुचितं कुर्यात्। महता संरम्भेण तु युद्धभूमावागत्य तदुपेक्षणमतीवानुचितमिति कथयितुं सेनयोरित्यादिविशेषणम्। एतच्चाशोच्यानित्यादौ स्पष्टं भविष्यति। तत्रार्जुनस्य युद्धाख्ये स्वधर्मे स्वतो जातापि प्रवृत्तिर्द्विविधेन मोहेन तन्निमित्तेन च शोकेन प्रतिबद्धेति द्विविधो मोहस्तस्य निराकरणीयः। तत्रात्मनि स्वप्रकाशपरमानन्दरूपे सर्वसंसारधर्माऽसंसर्गिणि स्थूलसूक्ष्मशरीरद्वयतत्कारणाविद्याख्योपाधित्रयाविवेकेन मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूप एकः सर्वप्राणिसाधारणः। अपरस्तु युद्धाख्ये स्वधर्मे हिंसादिबाहुल्येनाधर्मत्वप्रतिभासरूपोऽर्जुनस्यैव करुणादिदोषनिबन्धनोऽसाधारणः। एवमुपाधित्रयविवेकेन शुद्धात्मस्वरूपबोधः प्रथमस्य निवर्तकः। द्वितीयस्य तु हिंसादिमत्त्वेपि युद्धस्य स्वधर्मत्वेनाभावबोधोसाधारणः। शोकस्य तु कारणनिवृत्त्यैव निवृत्तेर्न पृथक् साधनान्तरापेक्षेत्यभिप्रेत्य क्रमेण भ्रमद्वयमनुवदन् श्रीभगवानुवाच—अशोच्यानिति। अशोच्यान् शोचितुमयोग्यानेव भीष्मद्रोणादीनात्मसहितान् त्वं पण्डितोपि सन् अन्वशोचः अनुशोचितवानासि ते म्रियन्ते मन्निमित्तमहं तैर्विनाभूतः किं करिष्यामि राज्यसुखादिनेत्येवमर्थकेन ' दृष्ट्वेमं स्वजनम् ' इत्यादिना। तथा चाशोच्ये शोच्यभ्रमः पश्वादिसाधारणस्त्वत्वात्यन्तपण्डितस्यानुचित इत्यर्थः। तथा 'कुतस्त्वाकश्मलम्' इत्यादिना

मद्वचनेनानुचितमिदमाचरितं मयेति विमर्शे प्राप्तेऽपि त्वं स्वयं प्रज्ञोपि सन् प्रज्ञानां अवादान् प्रज्ञैर्वक्तुमनुचितान् शब्दांश्च कथं भीष्ममहं सङ्ख्यइत्यादीन् भाषसे वदसि नतु लज्जया तूष्णीं भवसि। अत:परं किमनुचितमस्तीति सूचयितुं चकार:। तथाचाधर्मे धर्मत्वभ्रान्तिर्धर्मे चाधर्मत्वभ्रान्तिरसाधारणी तवातिपण्डितस्य नोचितेति भाव:। प्रज्ञावतां पण्डितानां वादान् भाषसे परं न तु बुध्यसइति वा। भाषणापेक्षयानुशोचनस्य प्राक्कालत्वादतीतत्वनिर्देश:। भाषणस्य तु तदुत्तरकालत्वे नाव्यवहितत्वाद्वर्तमानत्वनिर्देश:। छान्दसेन तिङ्व्यत्यये नानुशोचसीति वर्तमानत्वं व्याख्येयम्। ननु बन्धुविच्छेदे शोको नानुचित: वसिष्ठादिभिर्महाभागैरपि कृतत्वादित्याशङ्क्याह–**गतासूनिति**। ये पण्डिता: विचारजन्यात्मतत्वज्ञानवन्त: ते गतप्राणानगतप्राणांश्च बन्धुत्वेन कल्पितान्देहान्नानुशोचन्ति एते मृता: सर्वोपकरणपरित्यागेन गता: किं कुर्वन्ति क तिष्ठन्ति एते च जीवन्तो बन्धुविच्छेदेन कथं जीविष्यन्तीति न व्यामुह्यन्ति। समाधिसमये तत्प्रतिभासाभावात्। व्युत्थानसमये तत्प्रतिभासेपि मृषात्वेन निश्चयात्। न हि रज्जुतत्वसाक्षात्कारेण सर्पभ्रमेऽपनीते तन्निमित्तभयकम्पादि संभवति न वा पित्तोपहतेन्द्रियस्य कदाचिद् गुडे तिक्तताप्रतिभासेपि तिक्तार्थितया तत्र प्रवृत्ति: संभवति मधुरत्वनिश्चयस्य बलवत्त्वात्। एवमात्मस्वरूपाज्ञाननिबन्धनत्वाच्छोच्यभ्रमस्य तत्स्वरूपज्ञानेन तदज्ञानेपनीते तत्कार्यभूत: शोच्यभ्रम: कथमवतिष्ठेतेति भाव:। वसिष्ठादीनां प्रारब्धकर्मप्राबल्यात्तथा तथानुकरणं न शिष्टाचारतयाऽन्येषामनुष्ठेयतामापादयति। शिष्टैर्धर्मबुद्ध्यानुष्ठीयमानस्यालौकिकव्यवहारस्यैव तदाचारत्वात्। अन्यथा निष्ठीवनादेरप्यनुष्ठानप्रसङ्गादिति द्रष्टव्यम्। यस्मादेवं तस्मात्त्वमपि पण्डितो भूत्वा शोकं माकार्षीरित्यभिप्राय: ११

**शं० टी०–अशोच्यानिति**। न शोच्या अशोच्या: शोचितुमनर्हा भीष्मद्रोणादयस्तानेतानशोच्यानेव त्वमन्वशोच एतानुद्दिश्य शोकं कृतवानसि। ननु स्वजनमरणे सर्वेषां शोको जायत एव कथमुच्यत एतानन्वशोचस्त्वमिति कुतो वा म्रियमाणानामेतेषामशोच्यत्वमिति चेत्त्वमत्र प्रष्टव्य:। किं भीष्मद्रोणादिशब्दवाच्यार्थमुद्दिश्य शोच्यते उत लक्ष्यार्थमिति। आद्ये भीष्मादिशब्दवाच्यार्थस्यासद्वृत्तत्वमवेक्ष्य शोच्यते किंवा तन्नाशमुद्दिश्य शोच्यतेइति। नाद्य: महानुभावा इति त्वयैव तन्महत्त्वप्रतिपादनात्। न द्वितीय: तदसंभवात्। "मघवन् मर्त्यं वा इदं शरीरमात्तं मृत्युना" इति शरीरस्य मृत्युग्रस्तत्वश्रवणात्। 'दुर्लभो मानुषो देहो देहिनां क्षणभङ्गुर:' इति देहस्य नश्वरत्वश्रवणात् सर्वदाम्रियमाणप्राणिसंदर्शनाच्च। प्रत्यक्षादिप्रमाणैरेव ध्रुवमृत्युकस्य देहादे: शोच्यत्वं न संभवति। न प्रथमे द्वितीय:। आत्माऽजत्वान्न जायते जननाभावान्न म्रियते मरणाभावान्नित्य: अजो नित्य: शाश्वत इति, नित्यो नित्यानामिति, लक्ष्यार्थस्यात्मनो नित्यत्वश्रवणान्नित्यस्य सदाप्तस्यात्मन: शोच्यत्वानुपपत्ते:। नहि बुद्धिमतां नित्य: पदार्थ: शोच्यो भवति नाप्यनित्यश्च। यतएवं वाच्यार्थस्य लक्ष्यार्थस्य चोभयोरशोच्यत्वे सिद्धे त्वमशोच्यानेव शोच्यत्वबुद्ध्या मूढवदनुशोचसि नैतावन्मात्रमेव करोषि अपि तु प्रज्ञावादांश्च भाषसे सदसत्पदार्थस्वरूपं विविच्य ये प्रकर्षेण जानन्ति ते प्रज्ञा: पण्डितास्तेषां शास्त्रमभिव्याप्ता: वादा आवादास्तान् प्रज्ञावादान्। 'कुलक्षये प्रणश्यन्ति कुलधर्मा:' इति 'उत्सन्नकुलधर्माणाम्' इति 'कथं भीष्ममहं संख्ये' इत्यादीनि प्रौढवचनान्यपि भाषसे। यदशोच्यशोचनं यच्च शास्त्रार्थप्रकटनपाण्डित्यं तदेतद्द्वयं तेजस्तिमिरवत्परस्परविरुद्धं नैकत्र स्थातुमर्हत्यतो भवान् मूढ एव भवति न तु पण्डित:। तर्ह्येवं समये पण्डिता: कथं वर्तन्त इत्याह–**गतासूनिति**। केवलं मूढा ममैते पुत्रादयो मृता इति गतासूनेवानुशोचन्ति न त्वगतासून्। शास्त्रज्ञास्तु ममैते पुत्रादयो मूढा दुर्भगा दुर्वृत्ता जाता इत्यगतासूनेवानुशोचन्ति न तु गतासून्। पण्डितास्तु गतासूनगतासूंश्च पुत्रादीन्नानुशोचन्ति। गतासूनामगतासूनामप्युभयेषामविद्याकार्यत्वेन स्वप्नार्थवदसत्वादुभयत्र ब्रह्मैव पश्यन्ति तएव हि पण्डिता:। ये त्वसत्त्यक्त्वा सदेव गृह्णन्ति सदा सर्वत्र ब्रह्मदर्शनं हि पाण्डित्यं "ब्राह्मण: पाण्डित्यं निर्विद्य" इति श्रुते:। अत उक्तलक्षणाभावात्त्वं मूढ एव न तु पण्डित इत्यर्थ:॥ ११॥

श्री० टी०—देहात्मनोरविवेकादस्यैवं शोको भवतीति तद्विवेकप्रदर्शनार्थं श्रीभगवानुवाच—अशोच्यानिति। शोकस्य विषयभूतानेव बन्धूंस्त्वमन्वशोचः अनुशोचितवानसि 'दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्'इत्यादिना। तत्र 'कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्'इत्यादिना मया बोधितोऽपि पुनश्च प्रज्ञावतां पण्डितानां वादान् शब्दान् ' कथं भीष्ममहं संख्ये ' इत्यादीन्केवलं भाषसे नतु पण्डितोऽसि । यतः गतासून्गतप्राणान्बन्धूनगतासूंश्च जीवतोऽपि बन्धुहीना एते कथं जीविष्यन्तीति नानुशोचन्ति ॥ ११ ॥

स० टी०—तत्रार्जुनस्य संग्रामे प्रवृत्तिरभवत्स्वतः । मोहेन द्विविधेनैषा प्रतिबद्धा स च द्विधा ॥ १ ॥ मोह आदौ निराकार्यस्तत्स्वरूपं प्रदर्श्यते । स्वप्रकाशे परानन्दे शुद्धेऽसंसारिणि स्वतः ॥ २ ॥ शरीरत्रितयाध्यासात्संसारे सत्यता मतिः । अनात्मनि शरीरादावात्मताधीर्भ्रमात्मिका ॥ ३ ॥ सर्वसाधारणो मोह एकोऽसाधारणोऽपरः । स्वधर्मेऽधर्मताबुद्धिर्युद्धे पार्थस्य याऽभवत् ॥ ४ ॥ मोहोऽयमपरोऽप्यत्रासाधारणपदाभिधः । देहत्रयाद्विविच्यात्मतत्त्वं प्रत्यञ्चमागमैः ॥ ५ ॥ यो बोधः स्यात्स आद्यस्य मोहस्य विनिवर्तकः । स्वधर्मत्वेन युद्धस्य हिंसादीनां न दोषता ॥ ६ ॥ एवं बोधो द्वितीयस्य संमोहस्य निवर्तकः । हेतुनाशे न शोकस्य विनिवृत्तिः स्वतो भवेत् ॥ ७ ॥ इत्यभिप्रेत्य भगवांस्तद्द्वयं क्रमशो वदन् । उवाच सर्वशोकाद्यध्यासमूलं निवर्तयन् ॥ ८ ॥ भीष्मादीनात्मसहितानयोग्यानेव शोचितुम् । पण्डितः सन्नहो तांस्त्वमनुशोचितवानसि ॥९॥ म्रियन्ते मन्निमित्तं ते किं करिष्यामि तैर्विना । किं नो राज्यादिनेत्यादिवचोभिर्बहुधा भ्रमात् ॥ १० ॥ शोच्यभ्रमस्तवाशोच्ये स मान्यस्तिर्यगादिभिः । अत्यन्तपण्डितस्यायं नोचितः सर्वथा भवेत् ॥ ११ ॥ प्राज्ञैर्वक्तुमयोग्यांश्च शब्दान्वदसि नैकधा । कथं भीष्ममहं संख्ये इत्यादींस्त्वं न लज्जया ॥ १२ ॥ तूष्णीं भवसि किं ते स्यादनौचित्यमतःपरम् । यद्वा प्रज्ञावतांवादान्भाषसे न तु बुद्ध्यसे ॥ १३ ॥ मौढ्यं पाण्डित्यमेकत्र त्वयि दृष्टं तदद्भुतम् । ननु बन्धुवियोगेन शोकः स्याद्धीमतामपि ॥ १४ ॥ मैवं धीमत्त्वमेतद्धि प्रहासायैव कल्पते । ये पण्डिता गुरोः श्रुत्वा वेदान्तविषयं पदम् ॥ १५ ॥ ब्रह्मैक्यं युक्तिभिर्मत्वा निदिध्यास्य निरन्तरम् । साक्षात्कृतात्मतत्त्वास्ते नष्टाविद्यामलाबुधाः ॥ १६ ॥ मृतान्वा जीवतो बन्धून्नानुशोचन्ति कल्पितान् । एते सर्वे परित्यज्य गतास्तिष्ठन्ति कुत्र ते ॥ १७ ॥ जीविष्यन्ति कथं चैते जीवन्तो बन्धवो मम। बन्धुविच्छेदतश्चैवं न व्यामुह्यन्ति पण्डिताः ॥ १८ ॥ यथा स्वप्ने मृतो बन्धुर्जीवन्वा शोच्यतां गतः । न तन्निमित्तको मोहो जागरेऽप्यनुवर्तते ॥१९॥ एवमज्ञानजभ्रान्त्या कल्पिता बन्धवो मृताः । जीवन्तो वा न ते बोधे शोकमोहप्रदाः सताम् ॥ २० ॥ देहादेर्नश्वरात्मत्वान्नित्यत्वात्प्रत्यगात्मनः । न शोच्याः प्राणिनः सर्वे स्वात्मतत्त्वविदां सताम् ॥ २१ ॥ एवं त्वं पण्डितो भूत्वा माकार्षीः शोकमान्ध्यजम् । स्वात्मतत्त्वे सदा स्थैर्यं प्राप्नुहीत्याशयो हरेः ॥ २२ ॥ ११ ॥

भा० टी०—तदेवमर्जुनः 'कथं भीष्ममहम्' इत्यादिना प्रदर्शिताभ्यां गुर्वादिष्वहमेतेषां ममैतइति भ्रान्तिप्रत्ययनिमित्तस्नेहविच्छेदादिनिमित्ताभ्यां शोकमोहाभ्यां स्वतएव क्षत्रधर्मे युद्धे प्रवृत्तोऽप्यभिभूतविवेकविज्ञानस्तस्माद्युद्धादुपरराम परधर्मं च भिक्षाशनादिकं कर्तुं प्रववृते । तथा च सर्वप्राणिनां शोकमोहाविष्टचेतसां स्वभावत एव स्वधर्मपरित्यागः प्रतिषिद्धाश्रयणं च स्यात् स्वधर्मे प्रवृत्तानामपि तेषां कायिकादित्रिविधं कर्म फलाभिसंधिपूर्वकमेव साहंकारं भवति तत्रैवं सति धर्माधर्मोपचयादिष्टानिष्टजन्ममरणादि संप्राप्तलक्षणः संसारो नोपशाम्यत्यतो धर्मसंमूढचेतसं महति शोकसागरे निमग्नं लोकमुद्दिधीर्षुः संसारबीजभूतयोस्तयोश्चित्तशुद्धिजनकनिष्कामकर्मणः लब्धात्तत्त्वज्ञानात्केवलादन्यतो निवृत्तिमपश्यन् उपायोपेयभूतं निष्ठाद्वयमुपादिदिक्षुरर्जुनं निमित्तीकृत्य भगवान् वासुदेव आह—अशोच्यानित्यादिना। एतेन तत्रार्जुनस्य द्विविधो मोहो निराकरणीयः तत्रात्मन्युपाधित्रयाधिविवेकेन मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूपः सर्व-

प्राणिसाधारण एकः । अपरस्तु स्वधर्मेऽधर्मत्वप्रतिभासरूपोऽर्जुनस्यैवासाधारण इति प्रत्युक्तं सर्वप्राणिसाधारणयोर्मोहयोर्लोक उपलभ्यमानत्वात् । तथा च सर्वप्राणिनामिति भाष्यकारैस्तथैवोक्तत्वात् । अर्जुनं निमित्तीकृत्य लोकार्थमेव भगवतोपदेशः कृत इति भाष्यकृद्भिः स्वेन च स्थापितत्वात्।अशुद्धान्तःकरणानां तु योगनिष्ठोक्तान्तःकरणशुद्धिद्वारा ज्ञानभूमिकारोहणार्थं 'धर्म्याद्धि युद्धाच्छ्रेयोन्यत्क्षत्रियस्य न विद्यते' इत्यादिनेति । लोकेऽस्मिन्निति श्लोकस्थस्वग्रन्थविरोधाच्चेति दिक् । अशोच्यान् शोकानर्हान् सद्वृत्तत्वात्परमार्थरूपेण नित्यत्वाच्च शोचितवानसि।प्रज्ञावतां बुद्धिमतां वादान् 'किं नो राज्येन। कथं भीष्ममहम्' इत्यादीनि वचनानि च भाषसे। तदेतदुभयमुन्मत्तचेष्टितमित्याभिप्रायः।यतः पण्डिताः आत्मज्ञाः गतासून्मृतानगतासूनमृतांश्च नानुशोचन्ति । अहो कष्टमेते मृता एते मरिष्यन्तीति चिन्तां न कुर्वन्तीत्यर्थः । यत्तु प्रज्ञानां पण्डितानामवादान् वक्तुमयोग्यान् भाषस इति तदुपेक्ष्यम् । अर्हार्थे घञो दुर्लभत्वात् विशेष्याध्याहारसापेक्षत्वाच्चेति ॥ ११ ॥

प० टी०—अथार्जुनस्य ज्ञानकर्मोपदेशात् विषादं परिहरन् त्रिचत्वारिंशच्छ्लोकैर्भगवानाह—**अशोच्यानिति।** अशोच्यान् शोकानर्हानेव बन्धून् अनु अनुलक्षीकृत्य अशोचः शोचितवानसि 'दृष्ट्वेमं स्वजनं कृष्ण' इत्यादिना । अनन्तरं 'कुतस्त्वा कश्मलमिदम्' इत्यादिनास्माभिर्बोधितोऽपि प्रज्ञावादान् प्रज्ञया वचनचातुर्यमात्रेण शब्दान् भाषसे अज्ञानप्रलपितवद्वदसि । नह्येतादृशं भाषणं त्वयि युक्तमित्यर्थः । यतः पण्डिता ज्ञातारो गतासून् गतप्राणान् तथागतासून् जीवतो बन्धवादीन् कथं जीविष्यन्तीति अनु न शोचन्ति ॥ ११ ॥

रा० टी०—भगवन्माहात्म्यज्ञानतद्भक्तिपूर्वकभगवदाराधनरूपतया स्वविहितवृत्तित्वेन वाऽनुष्ठीयमानो नारायणद्विट्तदनुबन्धिनिग्रहः क्षत्रियाणां परमो धर्मः । तं धर्मं बन्धुस्नेहादधर्मत्वेनोक्तदिशा शङ्कमानमर्जुनं प्रत्युक्तरूपो निग्रह एव परमधर्मः तद्विरुद्धः सर्वोपि अधर्म इति कृत्स्नगीताशास्त्रेण बोधयिष्यन्नादौ तावदविवेकेन तव शोक इत्याह—**अशोच्यानिति।** अशोच्यान् शोकानर्हान् हे पार्थ! त्वं अन्वशाचेः।यांस्त्वं शोचितवानभूस्ते न शोकार्हा इति यावत् । प्रज्ञावादांश्च भाषसे । प्रज्ञयोत्था वादाः प्रज्ञावादाः स्वबुद्धिमात्रपरिकल्पिता वादाः तान्भाषसे यान्प्रभाषसे ते स्वबुद्धिमात्रपरिकल्पिता वादाः न वृद्धसंमता इति यावत् । यद्वा प्रकर्षेण जानन्तीति प्रज्ञाः । "इगुपधज्ञाप्रीकिरः कः" तेषामवादाः प्रज्ञावादाः प्राज्ञविरुद्धवादास्तान्प्रभाषस इत्यर्थः । नहि दृष्ट्वेमं स्वजनं कृष्णेत्याद्यर्जुनवाक्येषु कश्चित्प्राज्ञसंमतवादोस्ति । नहि प्राज्ञा नारायणद्विट्तदनुबन्धिनिग्रहमधर्मं वदन्तीतिभावः । ननु आसन्नविनाशास्ते कथमशोच्या इत्यतआह—**गतासूनिति** । पण्डिताः ज्ञानिनः गतासूनासन्नविनाशान् अगतासूनिवेत्युपमार्थश्चकारः । जीवतइव तान्नानुशोचन्ति यतोऽतो न शोच्यास्त इति तानन्वशोचस्त्वमित्यर्थः ॥ ११ ॥

**न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ॥**
**न चैव न भविष्यामः सर्वे वयमतः परम् ॥ १२ ॥**

त० टी०—ननु कुतस्तेऽशोच्याः यतस्तान् पण्डिता न शोचन्तीत्यपेक्षायां देहातिरिक्तात्मनां नित्यत्वादित्याह—न त्विति । तत्रात्मत्वेन स्वस्य जीवात्मसाम्यापत्तिं तुशब्देन निराकरोति । सर्वात्मनां मध्ये यथा अहं सर्वेश्वर इतः पूर्वस्मिन्काले जातु कदाचिन्नासं नाभवमिति न अपि त्वासमेव । तथा त्वं नासीरिति न किन्त्वासीरेव । तथेमे जनाधिपा नाऽऽसन्निति न किन्त्वासन्नेव । एतेनात्मनां भूतकाले सत्त्वादुत्पत्तिर्निराकृता—नचेति । पुनः सर्वे वयं पूर्वोक्ता अतः वर्त्तमानकालात् परमन्ते ( परमग्रिमे ) काले न भविष्याम इति न अपि तु भविष्याम एव । एतेन नाशाभावो निरूपितः उत्पत्तिनाशाभावादेव मध्येऽपि तेषां सत्त्वं सिद्ध्यति । एवं कालत्रयेऽपि सत्त्वप्रतिपादनात्सर्व एवात्मानो नित्या अतोऽशोच्या इति भावः ॥ १२ ॥

म० टी०—नत्वेवेत्याद्येकविंशतिश्लोकैरशोच्यानन्वशोचस्त्वमित्यस्य विवरणं क्रियते। 'स्वधर्ममपि चावेक्ष्य' इत्याद्यष्टभिः श्लोकैः 'प्रज्ञावादांश्च भाषसे' इत्यस्य मोहद्वयस्य पृथक्प्रयत्ननिराकर्तव्यत्वात्। तत्र स्थूलशरीरादात्मानं विवेक्तुं नित्यत्वं साधयति। तुशब्दो देहादिभ्यो व्यतिरेकं सूचयति। यथा अहमितः पूर्वं जातु कदाचिदपि नासमिति नैव अपितु आसमेव। तथा त्वमप्यासीः इमे जनाधिपाश्चासन्नेव। एतेन प्रागभावाप्रतियोगित्वं दर्शितम्। तथा सर्वे वयमहं त्वमिमे जनाधिपाश्च अतःपरं न भविष्याम इति न अपि तु भविष्याम एवेति ध्वंसाप्रतियोगित्वमुक्तम्। अतः कालत्रयेपि सत्तायोगित्वादात्मनो नित्यत्वेनानित्याद्देहाद्वैलक्षण्यं सिद्धमित्यर्थः॥ १२॥

शं० टी०—अशोच्यानन्वशोचस्त्वमिति भीष्मादीनामशोच्यत्वे प्रतिपादिते भीष्मादिपदलक्ष्यार्थस्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं च सूचितं भवति। तमिममर्थमजानन्तमर्जुनमालक्ष्य श्रीभगवान् लक्ष्यार्थस्यात्मनो नित्यत्वे त्वजत्वं हेतुरित्यजत्वहेतुना शशविषाणस्यापि नित्यत्वे प्राप्ते भावत्वे सत्यजत्वं नित्यत्वप्रयोजकम्। यस्य कालत्रये सत्ता न व्यभिचरति स भावो नित्यश्च। यस्य व्यभिचरति नासौ भावोऽनित्यश्चेत्यात्मनः कालत्रयेपि सत्ताप्रतिपादनद्वारा देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं च सूचयितुं पुनस्तत्त्वंपदार्थयोः शोधनं शोधितयोरेकत्वं च प्रतिपादयति। त्वंपदार्थस्य निःशेषसंसारदुःखनिवृत्त्या नित्यनिरतिशयाखण्डानन्दावाप्तये तत्पदार्थस्यापि परोक्षत्वपरिच्छिन्नत्वानर्थनिवृत्त्याऽद्वितीयत्वाखण्डैकरसत्वसिद्धये च—नत्वेवाहमिति। अहं तत्पदार्थः परमात्मा सर्वज्ञः सर्वशक्तिः सर्वतन्त्रः स्वतन्त्रः परमेश्वरः जातु कदाचिन्नासमिति न किंतु सर्वदा आसमेव। मदसम्भवे जगत्सृष्ट्याद्यसंभवात्। तथाहि "जन्माद्यस्य यतः" "यतो वा इमानि भूतानि जायन्ते। यतो जातानि भुवनानि विश्वा। स ईक्षत लोकान्नु सृजा इति। सइमाँल्लोकानसृजत" इत्यादिश्रुतिभिर्मत्त एव जगदुत्पत्तिः श्राव्यते। मत्त एव जगतः स्थितिश्च "येन जातानि जीवन्ति। व्यक्ताव्यक्तं भरते विश्वमीशः। स दाधार पृथिवीं द्यामुतेमाम्। भीषास्माद्वातः पवते। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ। तस्मिँल्लोकाः श्रिताः सर्वे" इत्यादिश्रुतिभिः प्रतिपाद्यते। "यत्प्रयन्त्यभिसंविशन्ति। तथाऽक्षराद्विविधाः सोम्य भावाः प्रजायन्ते तत्र चैवापि यन्ति। यस्मिन् क्षेत्रे संहरत्येष देवः" इत्यादिश्रुतिभिर्मत्त एव जगल्लयोपि श्राव्यते। यतो मदेककर्तृकत्वं जगत्सृष्ट्यादिक्रियायास्ततो जगदुत्पत्तिस्थितिलयादिष्वागच्छत्सु सत्सु तदधिष्ठातृतया सदाहमासमेवेति निरुक्तश्रुतिबलात्रिष्वपि कालेषु मत्सद्भावो निश्चेतव्य इत्यर्थः। एतेन मेघतदागमस्थित्यादीनामाधारतया स्थितस्याऽऽकाशस्येव प्रपञ्चतदुत्पत्त्यादीनामधिष्ठानतया स्थितस्य तत्पदार्थस्य स्वस्वरूपतो निष्फलत्वेन निष्क्रियत्वेन च प्रपञ्चतद्धर्मतत्कर्मलेशसंबन्धरहितत्वं तद्भिन्नत्वं नित्यत्वं च सूचितं भवति। ननु परमेश्वरस्य स्वतन्त्रस्य कालत्रयेपि तव सद्भावोस्तु मम कथं मर्त्यस्य नित्यत्वं सिध्यतीत्यत आह—नत्वमिति। त्वं त्वंपदलक्ष्यार्थश्च जातु कदाचिन्नासीरिति न किंत्वासीरेव अतीतानागतदेहोत्पत्त्यादिषु जाग्रदादिष्विव त्वमस्येव। यथा जाग्रति तिष्ठत एव तव स्वप्नसंबन्धः स्वप्ने तिष्ठत एव सुषुप्तिसंबन्धः सुषुप्तौ तिष्ठत एव जाग्रत्संबन्धस्तथागतदेहे तिष्ठत एवैतद्देहसंबन्ध एतद्देहे तिष्ठत एव भाविदेहसंबन्धोङ्गीकर्तव्यस्त्वन्यथा सुखदुःखादिवैचित्र्यासंभवात्कर्मवैचित्र्यादेव तव सुखादिवैचित्र्यम्। ततस्तादृग्विधकर्मकर्तुस्तवास्त्येव देहान्तरेषु सद्भावस्त्वन्यथाकृतहानाऽकृताभ्यागमप्रसङ्गात् "यत्कर्म कुरुते तदभिसंपद्यते" इति 'जन्मान्तरकृतं कर्म भुञ्जते जन्तवोऽधुना' इत्यादिश्रुतिस्मृतिविरोधप्रसंगाच्च। पूर्वकृतस्याधुना अधुना कृतस्य कर्मणः फलं भाविजन्मन्यनुभुज्यते। तथैव श्रूयते "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इति यतस्ततो जाग्रदाद्यवस्थास्विव गतदेहेषु भाविदेहेष्वपि इदानीमिव तव त्रिष्वपि कालेषु सद्भावोस्त्येवेत्यर्थः। एतेन त्वंपदार्थस्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं नित्यत्वं च सूचितं भवति। इमे जनाधिपाश्च नासन्निति न किंतु त्वंपदार्थत्वाऽविशेषा-

त्रिषु कालेष्वासन्नेव । यथाहं तथैवैतेपि नित्यसिद्धसत्स्वभावा इत्यर्थः । जनाधिपा इत्यविद्यावृत्तिभेदेन बहुवचनं न त्वात्मभेदेन । तद्भेदे प्रमाणाभावात् । नन्वात्मभेदे प्रमाणाभाव इति यदुक्तं तदतिसाहसम् । आत्मतत्त्वे विचार्यमाणे त्वात्मैकत्वं न घटते प्रत्यक्षादिप्रमाणविरोधात् । तथाहि यत्रयत्र अहंप्रत्ययभेदस्तत्रतत्रात्मभेद इति प्रतिदेहमहंप्रत्ययभेदस्य प्रत्यक्षेणोपलभ्यमानत्वात् । एकत्वे तु त्वमहमयमित्यादिव्यवहारलोपप्रसंगात्तत आत्मभेदे प्रत्यक्षं प्रमाणम् । आत्मभेदाभावे व्यवहारो न सिध्यतीति व्यवहारसिद्धेरन्यथानुपपत्त्याऽर्थापत्तिश्च प्रमाणम् । आत्मा प्रतिव्यक्तिभिन्नो भवति व्यक्तीनां भिन्नत्वाद्द्रवादिवदात्मा भिन्न एव भवति प्रतिव्यक्त्यहंप्रत्ययभेदात् व्यक्तिप्रत्ययभेदात् घटादिवदित्याद्यनुमानं च प्रमाणम् । "अदितिर्देवा गन्धर्वा मनुष्याः पितरोऽसुराः" इति देवादिभेदप्रतिपादकश्रुतिश्च प्रमाणम् । 'देवदानवगन्धर्वायक्षराक्षसकिन्नराः' इत्यादिपुराणवचनं च प्रमाणम् । यद्यात्मैकत्वमेवाभ्युपगम्यते तर्हि तव सुखदुःखादिव्यवस्था च न सिद्ध्येत् । एकस्मिन् दुःखिनि सुखिनि च सर्वेऽपि दुःखिनः सुखिनश्च स्युः । देवादिसर्वदेहेष्वात्मैकत्वे सर्वे सर्वज्ञाश्च भवेयुः । तेन विधिनिषेधशास्त्राणामानर्थक्यं च स्यात् । एकस्मिन् बद्धे बन्धो मुक्ते मोक्षश्च सर्वेषां प्रसज्येत । तस्मात् प्रमाणसिद्धमात्मनोऽनेकत्वं त्वयाप्यङ्गीकर्तव्यमिति चेन्न व्याप्तिव्यभिचारात् प्रत्यक्षासिद्धेः । यत्रयत्राहंप्रत्ययभेदस्तत्रतत्रात्मभेद इति व्याप्तिर्व्यभिचरति । शिशुः कुमारो युवा वृद्धोऽहमिति शैशवादिदशाभेदेनाहंप्रत्ययो भिद्यते तत्तदवस्थानां भेदात् । नहि कौमारे शिशुरहमिति प्रत्ययोऽस्ति तदुत्पादकशैशवाभावात् । एवं युवत्वे वृद्धत्वे च अहंप्रत्ययो भिद्यते तथापि शैशवाद्यवस्थावतोहंप्रत्ययार्थस्यात्मनो भेदादर्शनान्न प्रत्यक्षं प्रमाणम् । ननु विशेषणभेदाद्विशिष्टस्यापि भेद इति न्यायेनावस्थाभेदादवस्थावतोऽपि भेदः स्यादिति चेत्तस्य शिशुत्वाद्यभिमानिन्यहङ्कार एव चरितार्थत्वान्नित्यात्मविषयत्वानुपपत्तेः । अन्यथा बाल्यमारभ्य देहेन्द्रियकृतकार्यस्मरणासंभवात् । स्मर्यते च मया बाल्ये कृतं कन्दुकखेलनमिति । न ह्यात्मानेकत्वे एतत्स्मरणं घटते । अन्यकृते कर्मण्यन्यस्य स्मृत्यदर्शनाद्यतो बाल्यमारभ्य वृद्धत्वावसानकं कृतं कार्यं स्मर्यते । ततः प्रत्ययभेदेन प्रत्ययार्थस्य भेद इति प्रत्यक्षमसिद्धम् । व्यक्तिभेदादात्मनोऽपि भेद इत्यनुमानं च न सिध्यति । स्थूलसूक्ष्मकारणदेहानां जाग्रत्स्वप्नदेहयोश्च भेदे सत्यपि अहंप्रत्ययार्थस्यात्मनो भेदाभावान्नानुमानसिद्धिः । श्रुतिस्तु—"अदितिर्देवा गन्धर्वाः" इत्यात्मोपाधिभेदान्वदति नत्वात्मभेदं सर्वत्र चैतन्यस्यैकरूपत्वान्नात्मभेदोपपत्तिस्ततो देवगन्धर्वमनुष्यादिदेहाः सर्वे जाग्रत्स्वप्नादिदेहवदात्मनो भोगायतनान्येव नत्वात्मभेदद्योतकाः । यथा स्थूलादिदेहैरेकस्यैवात्मनो भोगो भिद्यते तथैव देवादिदेहैरप्यतो देवादिदेहा भोगायतनान्येव भवन्ति । यतस्तेषु रूपतेजःस्वभावादीनामेव भेदो दृश्यते नतु चेतनस्य । तत एवात्मविषयकोऽहमस्मीत्यहंप्रत्ययः सदैकरूपो भवति । तेन व्यक्तिभेदप्रतिपादनपरैव श्रुतिर्नत्वात्मभेदप्रतिपादनपरेति सिद्धम् । तथैव पुराणवचनं च यथैकस्मिन्नेव देहेऽवयवभेदमुपाश्रित्य शिरः करः पाद इत्यादिव्यवहारस्तथाऽऽत्मैकत्वेऽपि व्यक्तिभेदमुपाश्रित्य त्वमहमयमित्यादिव्यवहारः सिध्यति नात्मभेदस्त्वपेक्ष्यते । एवं व्यवहारसिद्धावन्यथानुपपत्त्यसंभवान्नार्थापत्तिश्च प्रमाणम् । यत्त्वसत्यात्मभेदे सुखदुःखादिव्यवस्था न सिध्यतीति तन्न । तस्याः कर्मैकनिबन्धनत्वादेकस्मिन्नेव देहे कर्मभेदेन सुखदुःखादिवैचित्र्यदर्शनात्सुखदुःखयोः पुण्यपापकार्यत्वेन तद्भेदाद्भोक्तृभेदाच्च सुखदुःखादिव्यवस्थोपपत्तेः "यत्कर्म कुरुते तदभिसंपद्यते" इति यथाकारी यथाचारी तथा भवतीति श्रवणात्ततो नात्मैकत्वे सुखादिसाङ्कर्यसिद्धिः । "नान्योऽतोस्ति विज्ञाता" इति श्रवणात्फलभोक्तृणामनेकत्वाच्च सत्यप्यात्मैकत्वे तदाभासानामनेकत्वोपपत्तेः । यद्यप्यात्मैव सदा सर्वत्र जानाति तथापि तत्तद्देहे तत्तद्बुद्धिमुपादाय स्वयं जानाति । देहभेदाद्बुद्धिभेदस्य नियतत्वात्प्रतिदेहं ज्ञानं तु भिद्यते । ज्ञायते वस्त्वनेनेति ज्ञानम् । ज्ञानं नाम बुद्धिवृत्तिः । सा च परिच्छिन्ना चक्षुरिव स्वसंपृक्तवस्तुमात्रप्रकाशिनी । वृत्तेः परिच्छिन्नत्वात्पदार्थैः सर्वैः संबन्धो न घटते । यदि सर्वपदार्थैः संबन्धः स्यात्तदा सर्वे सर्वज्ञा भवेयुस्तदभावान्न सर्वेषां सार्वज्ञं सिध्यति ।

यथा विभोरपि महाकाशस्य शब्दसंभूतिहेतोः सर्वत्र भेरीपणवादिभिः संयोगे सत्यपि यत्र भेर्यादिस्ताड्यते तत्रैव शब्दोत्पत्तिर्न तु सर्वत्र। तथैवैकस्यात्मनः परिपूर्णस्यापि यत्र बुद्धिवृत्तेरर्थसंबन्धस्तत्रैव ज्ञानोदयो नान्यत्र। ततो बुद्धिवृत्तीनामनेकत्वादव्यापकत्वाच्च सर्वेषां सार्वज्ञं नोपपद्यत इति सिद्धम्। ततः किंचिज्ज्ञान्प्रति प्रवृत्तिनिवृत्तिहेतुत्वाद्विधिनिषेधशास्त्राणां सार्थक्यमेवोपपन्नं भवति। प्राणिनां सर्वज्ञत्वाभावस्य प्रतिपादितत्वाद्वेदान्तश्रवणजन्यज्ञानेन प्रत्यगभिन्नं परब्रह्म स्वात्मना यो विजानाति तस्यैव मुक्तिर्नेतरस्य। तथा च श्रुतिः "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इति तत आत्मैकत्वेऽपि मुक्तिरात्मज्ञानादेव सिध्यति। ज्ञानादेव तु कैवल्यमिति नियमश्रवणात्तत आत्मैकत्वेनैवोक्तदोषाणामवकाशः। आत्मनामनेकत्वं पूर्णत्वं चाभ्युपगतवतस्तव पक्ष एवामी दोषाः संप्रसज्यन्ते। तदुच्यते आत्मनामनेकत्वे विभुत्वे चाभ्युपगते सत्यन्योन्येषामन्योन्यमनोबुद्ध्यादिभिः संयोगः संभवति तेनोक्तरीत्या सुखदुःखबन्धमोक्षादीनां साङ्कर्यं च प्रसज्यते। नैक एष एवाऽनर्थः अपितु विभुत्वाद्यसिद्धिश्च। तथाहि यद्यद्वस्तुस्वेतरभेदवत्तत्तत्परिच्छिन्नमित्यात्मनामनेकत्वे सत्यन्योन्यसत्ताभिरन्योन्यभेदवत्त्वेन परिच्छिन्नत्वात्पूर्णत्वं न सिध्यति पूर्णत्वेऽङ्गीक्रियमाणे त्वनेकत्वं च न सिध्यति पूर्णत्वानेकत्वयोः परस्परविरोधादात्मनां पूर्णत्वमनेकत्वं च ब्रह्मणापि निर्वोढुं न शक्यते ततो भवताप्यात्मैकत्वमेवाभ्युपगन्तव्यम्। किंच परिच्छिन्नाश्चिद्रूपाश्चानेके चाऽऽत्मानइति यः पक्षः सोऽपि न सिध्यति बहुश्रुतिस्मृतियुक्तिविरोधात्। "आकाशवत्सर्वगतश्च नित्यः। एकस्तथा सर्वभूतान्तरात्मा। एको देवः सर्वभूतेषु गूढः। एकः सन् बहुधा विचचार। एक एव हि भूतात्मा। निरपेक्ष एक एव। साक्षी एकस्तेनेदं पूर्णं पुरुषेण सर्वम्। अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्। महान्तं विभुमात्मानम्" इत्यादिश्रुतिभिः। 'नित्यः सर्वगतः स्थाणुः। नित्यः सर्वगतोप्यात्मा कूटस्थो दोषवर्जितः। एकः सन् भिद्यते भ्रान्त्या मायया न स्वरूपतः' इत्यादिस्मृतिभिः। आत्मा सर्वशरीरेष्वेकएव भवितुमर्हति पूर्णत्वाद्घटादिष्वाकाशवदात्मा एक एव भवति। निष्कलत्वात्सर्वप्रकाशकत्वात्सर्वसाक्षित्वात्सर्वत्राहंप्रत्ययार्थत्वाच्चेत्येवमादियुक्तिभिश्चात्मनः पूर्णतैवावध्रियते। निरुक्तश्रुतिस्मृतियुक्तिप्रामाण्यादेक एवात्मेति सिद्धान्तः। यतोऽहं त्वं चेमे जनाधिपाश्च पूर्वोक्तरीत्या भूतभविष्यद्वर्तमानकालेषु कचिदपि न भाविष्याम इति न किंतु भविष्याम एव। त्रिष्वपि कालेषु सत्तावन्त एव स्मस्ततोऽहं त्वं चेमे च सर्वे वयं परं ब्रह्मैव प्रपञ्चतदभिमान्यादिसर्वदृश्यकल्पनाधिष्ठानभूतं निष्कलं निष्क्रियं शान्तमनन्तं नित्यशुद्धबुद्धमुक्तसत्यज्ञानानन्दाद्वयं ब्रह्मैव स्मः "भोक्ता भोज्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्। ब्रह्मैवेदं सर्वम्" इति च श्रवणात्त्वां च मां चैतांश्च सर्वान् परं ब्रह्मैवेति जानीहीत्यर्थः॥ १२॥

**श्री० टी०—अशोच्यत्वेहेतुमाह—नत्वेवेति।** यथाऽहं परमेश्वरो जातु कदाचित् लीलाविग्रहस्याविर्भावे तिरोभावेऽपि नासमिति नैव अपि तु आसमेव। अनादित्वात्। नच त्वं नासीः नाभूः अपि त्वासीरेव। इमे च जनाधिपाः नृपाः नासन्निति न अपितु आसन्नेव। मदंशत्वात्। तथाऽतःपरमित उपर्यपि न भविष्यामो न स्थास्याम इति च नैव अपितु स्थास्याम एव। जन्ममरणशून्यत्वादशोच्या इत्यर्थः॥ १२॥

**स० टी०—**अशोच्यानन्वशोचस्त्वं प्रज्ञावादांश्च भाषसे॥ इति पादद्वयस्यैव विवृतिः क्रियतेऽधुना॥१॥ नेत्याद्येकोनविंशत्या पादस्याद्यस्य विस्तरः॥ स्वधर्ममित्याद्यष्टाभिर्द्वितीयस्योच्यते तथा॥ २॥ मोहद्वयं निराकार्यं पृथग्यत्नेन दुःखदम्॥ स्थूलदेहात्पृथक्कर्तुमात्मानं साक्षिणं परम्॥ ३॥ वक्त्यादौ तस्य नित्यत्वं त्वमः शुद्धयर्थमीश्वरः॥ देहादिभ्यस्तु शब्देन व्यतिरेकोऽस्य सूच्यते॥ ४॥ नैवाहं जातितः पूर्वं नासं किं त्वासमेव हि॥ तथैव त्वं पुराप्यासीरासन्नेते जनाधिपाः॥ ५॥ एतेन प्रागभावस्याप्रतियोगित्वमीरितम्॥ तथाहं त्वमिमे भूपा न भविष्याम एव किम्॥ ६॥ अत ऊर्ध्वं तनोः पातादवश्यंभाविनो न च॥ किंतु सर्वे भविष्यामो वयं नित्यतयात्मनः॥ ७॥ एतेनैवात्मनः प्रोक्ता ध्वंसस्याप्रतियोगिता॥ अतः कालत्रये सत्ता-

योगित्वात्प्रत्यगात्मनः ॥ ८ ॥ नित्यत्वेनाऽस्य संसिद्धं वैलक्षण्यं शरीरतः ॥ देहाद्युपाधिभेदेन भेदोऽहं त्वमिमे त्विति ॥९॥ नात्र स्वाभाविको भेदोऽप्यात्मनो हरिणेरितः॥ त्वंपदार्थविशुद्ध्यर्थं भेदमुद्दिश्य लौकिकम् ॥१०॥ आत्मनो नित्यताद्वारा वैलक्षण्यं शरीरतः ॥ शास्त्रस्योपक्रमे यस्मात्सिसाधयिषितं हरेः ॥ ११ ॥ यत्त्वत्रा-भिमतो विष्णोर्भेदः स्वाभाविकः किल ॥ अन्यथेहोपदेशस्यावसरे कथमीरयेत् ॥ १२ ॥ अहं त्वं वयमित्या-दिभेदमित्याहुरित्यसत् ॥ उपदेश्योपदेशादिव्यवहारेऽस्ति कल्पितः ॥ १३ ॥ भेदस्तेनैव तत्सिद्धिर्नवास्तव इहेष्यते ॥ न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः ॥१४॥ न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥ इत्यादिश्रुतिनिर्णीता द्वैततत्त्वाविमर्शनात् ॥१५॥ भेदवादोऽसतामिष्टो न स तत्र विमर्शिनाम् ॥ १६॥१२॥

**भा० टी०**—तेषां नित्यत्वाच्छोकानर्हतामाह—**नेति** । जातु कदाचिदहं नासमिति न किंत्वासमेव । तथा त्वं नासीरिति नापित्वासीरेव । तथेमे जनाधिपाः नासन्निति न किंत्वासन्नेव । तथा नच भविष्याम इति न किंतु भविष्याम एव । अतोऽस्माद्देहविनाशादुत्तरकालेऽपि त्रिष्वपि कालेषु नित्याः आत्मस्वरूपे-णेत्यर्थः । स्वस्य मध्ये गणनमात्मैक्याभिप्रायम् । बहुवचनं तु जीवभेदाभिप्रायेण देहभेदानुवृत्त्या तत्तद्देहाभि-मानिनां जीवानामपि भेदात् । नतु परमार्थत आत्मभेदाभिप्रायेणेति । तथा च शारीरकभाष्यम् "भेदस्तूपा-धिनिमित्तकः मिथ्याज्ञानकल्पितो न पारमार्थिकः" इति बोध्यम् ॥ १२ ॥

**प० टी०**—ननु शोकः किं जीवनिमित्तको देहनिमित्तको वा । नाद्यः तेषां नित्यत्वात् । नापरस्तेषां पुरो निद्रितवद्वर्तमानत्वादित्याशङ्क्याशोच्यत्वे हेतुमाह—**नत्वेवाहमिति** । यथाहमीश्वरो जातु कदाचित्स्वेच्छाधृत-विग्रहोऽस्याविर्भावे तिरोभावे वा पूर्वं नासमिति न किंत्वासमेवानादित्वात् । नच त्वं नासीः किंत्वासीरेव । इमे जनाधिपा राजानो नासन्निति न किंत्वासन्नेव मदंशत्वात् । तथेतः परमग्रे वयं सर्वे प्राङ्निरूपिता नैव भविष्याम इति न किंतु भविष्याम एव । ननु जीवनिरूपणेऽहमितिपदेन गमनागमनरहितस्येश्वरस्य कथं प्रसङ्ग इति चेन्न । परमार्थतो विचारे जीवोऽपि मदंशत्वान्नित्योऽनादिश्चेति ज्ञात्वा पण्डिता नानुशो-चन्तीत्यर्थः ॥ १२ ॥

**रा० टी०**—ननु कुतो न शोचन्ति कुतश्च मदीया वादाः प्राज्ञमतविरुद्धा इति । दृष्ट्वेमं स्वजनं कृष्णेत्या-दिनोपपत्तेरुक्तत्वादिति चेत् । तत्किं तेषां जीवनाशात्तव शोक उत देहनाशात् । अथ देहान्यात्मनोऽभावा-त्तद्देहनाश एव तन्नाश इति । नाद्यः । जीवानामनादिनित्यत्वादित्याह—**नत्वेवेति** । जातु कदापि अहं ना-समिति न किं त्वासमेव । त्वं नासीरिति न । विपरिणामेन क्रियान्वयः । अपित्वासीरेव । इमे जनाधिपाश्च नासन्निति न अपि तु आसन्नेव । अहं यूयं च वयं सर्वे एव अतःपरमनन्तरकाले न भविष्याम इति न किन्तु भविष्याम एव । अत्र पूर्वोत्तरार्धाभ्यां कालद्वयसंबन्धोक्त्याऽनादित्वं नित्यत्वं चोक्तम् । वर्तमानकाल-सम्बन्धस्तु स्फुटत्वान्नोक्तः । द्वौ नञौ प्रकृतमर्थं सातिशयं गमयत इति न्यायेन नञ्द्वयप्रयोगादेवावधारणसिद्धौ पुनस्तदुक्तिः " नित्योनित्यानाम्" । 'स्वदेहयोगविगमौ नाम जन्ममृती पुरा । इष्येते ह्येव जीवस्य मुक्तेर्नतु हरेः क्वचित् ' इतिश्रुतिस्मृतिप्रसिद्धिद्योतनार्था । चशब्दोऽनादित्वेन सह नित्यत्वस्य समुच्चयार्थः । तुशब्दस्तु स्मृत्युक्तदिशा ईश्वरस्येतरेषामिव देहतोप्युत्पत्तिनाशौ नेति विशेषार्थः । तदाह । "असंभवस्तु सतोऽनुपपत्तेः । नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः " इतिसूत्राभ्याम् । तत्राणुभाष्यमपि । सोऽनुत्पत्तिलय इति । ये तु कृष्णस्ये-श्वरत्वमनादित्वं च न जानन्ति तान्प्रति यथाश्रुतैवोक्तयोजना । ये तु तज्ज्ञात्वा जीवानादिनित्यतामेव न जानन्ति तान्प्रति तु यथैवंपदयोरध्याहारेण दृष्टान्तदार्ष्टान्तिकभावेन यथाहं न नासमनादितो वर्ते । एवं त्वमेते च सर्वे यूयं न नासुः । अनादितो वर्तध्वमिति योजना । अत्रैतौ प्रयोगावभिमतौ कृष्णत्वदादिचेतना न नाशवन्तः भावत्वे सत्यनादित्वात् । नासत इति श्लोके वक्ष्यमाणप्रकृत्यादिवदिति । द्वितीययोजनायां तु

त्वदादयो जनाधिपा न नाशवन्तः चेतनत्वे सत्यनादित्वात् कृष्णवदिति स्वरूपासिद्धिस्तु देहिन इत्यत्र निरसिष्यते । नच साधनवैकल्यम् । " नित्योनित्यानाम् " इतिश्रुतेः । तत्रानादित्वस्याप्युपलक्षणात् । एवं चैवमनादिनित्या जीवाः कथं नाम शोच्याः अनादिनित्यजीवानां नाशभीत्या न योत्स्य इत्यादि त्वदीया वादाः कथं नाम प्राज्ञविरुद्धा न भवेयुरिति भावः ॥ १२ ॥

देहिनोऽस्मिन्यथा देहे कौमारं यौवनं जरा ॥
तथा देहान्तरप्राप्तिर्धीरस्तत्र न मुह्यति ॥ १३ ॥

त० टी०—ननु देवदत्तस्य पुत्रो जातः यज्ञदत्तो मृत इति परम्परागतप्रतीतेर्जन्ममरणयोर्दशाहानि ब्राह्मणस्याशौचप्रतिपादकधर्मशास्त्रस्य च प्रामाण्यात्कथमात्मनां जन्मनाशाभावः कथं वाऽशोच्यत्वमन्यथा प्रमाणबाधः स्यादित्याशङ्क्याह—देहिन इति । देहः कर्मफलभोगायतनभूतो विद्यते यस्य स देही तस्यैकस्मिन्नेव देहे यथा कौमारं यौवनं जरा परस्परविरुद्धावस्थाः कालभेदेन प्राप्नोति न त्ववस्थाभेदेनात्मभेदः ' योऽहं पित्राद्यङ्केऽक्रीडं स एवाहं यौवने विषयमनुभूयेदानीं वार्द्धके पुत्रपौत्रादीननुभवामि ' इत्यबाधितप्रत्यभिज्ञानात् अनुभवस्मृत्योरेकाधिकरण्यनियमाच्च । तथा पूर्वदेहादन्यो देहो देहान्तरं तस्य प्राप्तिस्तस्यैवात्मनः, नतु देहभेदेनात्मभेदः । तत्र देहान्तरप्राप्तौ धीरो धारणावतीबुद्धिमान्न मुह्यति । पितृपुत्रादौ मृते नष्टोऽयमिति मोहं न प्राप्नोतीत्यर्थः । 'देहिन' इत्यारभ्य 'देही नित्यमवध्योऽयम् ' इत्यन्तेषु श्लोकेष्वेकवचनं जात्यभिप्रायकमेव । ननु जीवात्मस्वरूपैकत्वविषयम् । 'आचार्यप्रोक्ता या जातिः सा नित्या साऽजराऽमरा ' इति सनत्सुजातवचनात् 'न त्वं नेमे जनाधिपाः ' इति निरन्तरश्लोके बहुत्वनित्यत्वप्रतिपादनाच्च । नैतावदेव प्रमाणमपि तु 'कामात्मानः स्वर्गपराः । ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः । बहवो ज्ञानतपसा पूता मद्भावमागताः । ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् । सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः । कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये । तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः । योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । न मां दुष्कृतिनोऽमूढाः प्रपद्यन्ते नराधमाः । चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः । येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् । ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः । यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते । मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । सर्वे नमस्यन्ति च सिद्धसङ्घाः । मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते । तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात् । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः । सर्वेऽपि नोपजायन्ते प्रलये न व्यथन्ति च । निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः । द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत्' इत्यादि सर्वेष्वध्यायेषु प्रत्यगात्मबहुत्वप्रतिपादकानि वाक्यानि विद्यन्ते, एकात्मत्वाङ्गीकारे तानि बाध्येरन् । न चोपाधिकृतभेदप्रतिपादनेन न तद्बाध इति वाच्यम् । तेषामुपाधिपरत्वकल्पने मानाभावात् । प्रत्युत 'लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः । छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः । कामक्रोधवियुक्तानां यतीनां यतचेतसाम् । अभितो ब्रह्मनिर्वाणं वर्त्तते विदितात्मनाम् ' इति निवृत्ताशेषाऽविद्यानामपि बहुत्वप्रतिपादनात् । अन्यथा सर्वदेहेषु चेतनैकत्वाङ्गीकारे एकस्मिन्सुप्ते मूर्छिते मृते वा सर्वेषां तत्साम्यापत्तिः स्यात्, सर्वान्तर्वर्त्तिसुखदुःखादिज्ञानं सर्वेषां समानं स्यात् । किञ्च अहं त्वमयमिति प्रत्ययानां निगमनाविरहेण विभागाभावः

**स्यात्सर्वत्राहमेव प्रतीतिः स्यात् । नतु तथाऽस्ति । किं तर्हि भगवदुक्तात्मभेदः स्वरूपनिरूपित इति श्रुतिरपि निश्चाययति "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्" इति । तस्मादात्मैकत्ववादिनो भ्रान्ता इति निश्चीयते । अतः स्वधर्मे युद्धे मरणेऽपि विवेकिनो न शोकमोहौ स्यातामिति भावः ॥ १३ ॥**

**म० टी०**—ननु देहमात्रं चैतन्यविशिष्टमात्मेति लोकायतिकाः । तथा च स्थूलोहं गौरोहं गच्छामि चेत्यादिप्रत्यक्षप्रतीतानां प्रामाण्यमनपोहितं भविष्यति । अतः कथं देहादात्मनो व्यतिरेकः । व्यतिरेकेपि कथं वा जन्मविनाशशून्यत्वम् । जातो देवदत्तो मृतो देवदत्त इति प्रतीतेर्देहजन्मनाशाभ्यां सहात्मनोपि जन्मविनाशोपपत्तेरित्याशङ्क्याह—**देहिन इति ।** देहाः सर्वे भूतभविष्यवर्तमाना जगन्मण्डलवर्तिनोऽस्य सन्तीति देही एकस्यैव विभुत्वेन सर्वदेहयोगित्वात्सर्वत्र चेष्टोपपत्तेर्न प्रतिदेहमात्मभेदे प्रमाणमस्तीति सूचयितुमेकवचनम् । सर्वे वयमिति बहुवचनं तु पूर्वदेहभेदानुवृत्त्या नत्वात्मभेदाभिप्रायेणेति न दोषः । तस्य देहिन एकस्यैव सतोस्मिन् वर्तमाने देहे यथा कौमारं यौवनं जरेत्यवस्थात्रयं परस्परविरुद्धं भवति नतु तद्भेदेनात्मभेदः । य एवाहं बाल्ये पितरावन्वभूवं सएवाहं वार्द्धके प्रणप्तॄननुभवामीति दृढतरप्रत्यभिज्ञानात् । अन्यनिष्ठसंस्कारस्य चान्यत्रानुसन्धानाजनकत्वात् । तथा तेनैव प्रकारेणाविकृतस्यैव सत आत्मनो देहान्तरप्राप्तिः एतस्माद्देहादत्यन्तविलक्षणदेहप्राप्तिः । स्वप्ने योगैश्वर्ये च तद्देहभेदानुसन्धानेपि स एवाहमिति प्रत्यभिज्ञानात् । तथा च यदि देह एवात्मा भवेत्तदा कौमारादिभेदेन देहे भिद्यमाने प्रतिसन्धानं न स्यात् । अथ तु कौमाराद्यवस्थानामत्यन्तवैलक्षण्येप्यवस्थावतो देहस्य यावत्प्रत्यभिज्ञं वस्तुस्थितिरिति न्यायेनैक्यं ब्रूयात्तदापि स्वप्नयोगैश्वर्ययोर्देहधर्मभेदे प्रतिसन्धानं न स्यादित्युभयोदाहरणम् । अतो मरुमरीचिकादावुदकादिबुद्धेरिव स्थूलोहमित्यादिबुद्धेरपि भ्रमत्वमवश्यमभ्युपेयं बाधस्योभयत्रापि तुल्यत्वात् । एतच्च न जायत इत्यादौ प्रपञ्चयिष्यते । एतेन देहाद्व्यतिरिक्तो देहेन सहोत्पद्यते विनश्यति चेति पक्षोपि प्रत्युक्तः । तत्रावस्थाभेदे प्रत्यभिज्ञोपपत्तावपि धर्मिणो देहस्य भेदे प्रत्यभिज्ञानुपपत्तेः । अथवा यथा कौमाराद्यवस्थाप्राप्तिरविकृतस्यात्मन एकस्यैव तथा देहान्तरप्राप्तिरेतस्माद्देहादुत्क्रान्तौ तव स एवाहमिति प्रत्यभिज्ञानाभावेपि जातमात्रस्य हर्षशोकभयादिसंप्रतिपत्तेः पूर्वसंस्कारजन्याया दर्शनात् । अन्यथा स्तनपानादौ प्रवृत्तिर्न स्यात् । तस्या इष्टसाधनतादिज्ञानजन्यत्वस्यादृष्टमात्रजन्यत्वस्य चाभ्युपगमात् । तथा च, पूर्वापरदेहयोरात्मैक्यासिद्धिः । अन्यथा कृतनाशाकृताभ्यागमप्रसङ्गादित्यन्यत्र विस्तरः । कृतयोः पुण्यपापयोर्भोगमन्तरेण नाशः कृतनाशः । अकृतयोः पुण्यपापयोरकस्मात्फलदातृत्वमकृताभ्यागमः । अथवा देहिन एकस्यैव तव यथाक्रमेण देहावस्थोत्पत्तिविनाशयोर्न भेदः । नित्यत्वात् । तथा युगपत्सर्वदेहान्तरप्राप्तिरपि तवैकस्यैव विभुत्वात् । मध्यमपरिमाणत्वे सावयवत्वेन नित्यत्वायोगात् । अणुत्वे सकलदेहव्यापिसुखाद्यनुलब्धिप्रसङ्गात् । विभुत्वे निश्चिते सर्वत्र दृष्टकार्यत्वात्सर्वशरीरेष्वेकएवात्मा त्वमिति निश्चितोऽर्थः । तत्रैवंसति वध्यघातकभेदकल्पनया त्वमधीरत्वान्मुह्यसि । धीरस्तु विद्वान्न मुह्यति । अहमेषां हन्ता एते मम वध्या इति भेददर्शनाभावात् । तथा च विवादगोचरापन्नाः सर्वे देहाः एकभोक्तृकाः देहत्वात्त्वद्देहवत् इति । श्रुतिरपि "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा" इत्यादि । एतेन यदाहुर्देहमात्रमात्मेति चार्वाकाः । इन्द्रियाणि मनः प्राणश्चेति तदेकदेशिनः । क्षणिकं विज्ञानमिति सौगताः । देहातिरिक्तः स्थिरो देहपरिमाण इति दिगम्बराः । मध्यमपरिमाणस्य नित्यत्वानुपपत्तेः । नित्योणुरित्येकदेशिनः । तत्सर्वमपाकृतं भवति नित्यत्वविभुत्वस्थापनात् ॥ १३ ॥

**शं० टी०**—एवं तत्त्वंपदार्थयोः श्रुतियुक्तिभिः शोधितयोर्द्वयोरेकत्वे प्रतिपादिते सत्यपि त्वंपदार्थस्यात्मनोऽविद्यातत्कार्यकोटिभिस्तिरोहितत्वादतिसूक्ष्मत्वाद्दुर्विज्ञेयत्वाच्च श्रोतुर्मुमुक्षोर्मन्दप्रज्ञस्य यावदप्रतिबद्धाऽपरोक्षं

तावत् "वृत्तिरसकृदुपदेशात्" इति न्यायेन पुनःपुनस्त्वंपदार्थशोधनमेव सम्यक्कर्तव्यमिति सूचयितुमुत्तरग्रन्थमारभते । तत्र पूर्वं त्वंपदार्थस्यात्मनः कालत्रयेपि सद्भावे प्रतिपादिते सत्यप्येतद्देहनाशानन्तरं सत्ता न दृश्यते कथं तत्र सद्भाव इति शङ्कावन्तमर्जुनमालक्ष्यात्मनो देहान्तरेऽपि सत्तां सदृष्टान्तं प्रत्यक्षानुमानाभ्यामवगमयितुमाह—देहिन इति । अस्मिन् देहे त्वविक्रियात्मनैवैकरूपेणाहमहामिति सर्वदा तिष्ठत एव देहिनः देह एवात्मोपलम्भादात्मा देहीत्युच्यते । तस्य देहिनो देहोपाधिमत आत्मनः कौमारं कुमारस्येदं कौमारं वपुरिति शेषः । यून इदं यौवनं वपुः जरा जरोपलक्षितं जीर्णवपुश्च यथा येन प्रकारेणायाति । कौमारं जहतः सत एव यौवनं यौवनं जहतः सत एव जरठं वपुरन्वागच्छति तथैव एतत्स्थूलं जहतः सतएव देहान्तरमन्यो देहश्चायात्यविनश्यत एवात्मनः । "जीवापेतं वाव किलेदं म्रियते न जीवो म्रियते" इति श्रवणात् । किंच जाग्रत्स्वप्नदेहयोः सुषुप्तौ नाशे सत्यात्मसद्भावो न ज्ञायते तथापि सुषुप्तोत्थितः स्वयं यः स्वप्नमद्राक्षं यः सुखमस्वाप्सं सोऽहमिदानीं जागर्मीति स्वप्रत्यभिज्ञाबलेन जाग्रत्स्वप्नसुषुप्तिष्वात्मनः सत्त्वं नित्यत्वं च यथा जानाति तथा एतद्देहनाशानन्तरमप्यात्मनः सत्त्वं नित्यत्वं च विज्ञाय धीरो विद्वान् आत्मतत्त्वज्ञः अतस्तत्रात्मनो नित्यत्वविषये न मुह्यति गतजन्मन्यन्नाद्याहारवान् भवितुमर्हति । इदानीं स्वयमुपदेशमन्तरेणैव स्तन्याहारप्रवृत्तत्वात् । यन्नैवं तन्नैवं यथा प्रतिमादिः । आत्मा देहान्तरेष्वागच्छत्सु सत्सु तिष्ठति नित्यत्वात् । यथात्र कौमारादिदेहेषु प्राप्तेषु सत्सु तिष्ठति तथेत्युक्तप्रत्यक्षश्रुत्यनुमानैरात्मनो जन्मान्तरेषु सद्भावं विज्ञाय तेन नित्यत्वमेव निश्चित्यात्मास्ति वा न वेति पण्डितो न भ्रमतीत्यर्थः ॥ १३ ॥

**श्री० टी०**—नन्वीश्वरस्य तव जन्मादिशून्यत्वं सत्यमेव । जीवानां तु जन्ममरणे प्रसिद्धे तत्राह—देहिन इति । देहिनो देहाभिमानिनो जीवस्य यथाऽस्मिन्स्थूलदेहे कौमाराद्यवस्थादेहनिबन्धना एव नतु स्वतः पूर्वावस्थानाशेऽवस्थान्तरोत्पत्तावपि स एवाहमिति प्रत्यभिज्ञानात्तथैवैतद्देहनाशे देहान्तरप्राप्तिरपि लिङ्गदेहनिबन्धना । नतु तावतात्मनो नाशः जातमात्रस्य पूर्वसंस्कारिणः स्तन्यपानादौ प्रवृत्तिदर्शनात् । अतो धीरः धीमांस्तत्र तयोर्देहनाशोत्पत्त्योर्न मुह्यति आत्मैव मृतो जातश्चेति न मन्यते ॥ १३ ॥

**स० टी०**—ननु स्थूलोऽहमित्यादिप्रत्यक्षं मार्जितं भवेत् ॥ आत्मनो देहभिन्नत्वे स्वीकृते तच्च नोचितम् ॥ १ ॥ विष्णुशर्मा मृतो जात इति प्रत्यक्षमानतः ॥ शरीरजन्मनाशाभ्यां सहैवास्यात्मनोऽपि तौ ॥ २ ॥ जन्मनाशौ प्रसिद्धौ स्त इत्याशङ्क्याह माधवः ॥ देहाः सर्वे त्रिकालस्था जगन्मण्डलवर्तिनः ॥ ३ ॥ अस्य सन्तीति देही स्यात्तस्यैकस्यात्मनो विभोः ॥ ब्रह्मादिस्थावरान्तेषु शरीरेष्वखिलेष्वपि ॥ ४ ॥ व्यापिनो नास्ति भेदस्य गन्ध इत्यपि दर्शितम् ॥ हरिणैकत्वनिर्देशाद्देहिनोऽस्मिन्निति स्फुटम् ॥ ५ ॥ देहभेदानुवृत्त्योक्तं वयं सर्वे पुरात्विति ॥ तस्यैकस्यात्मनो देहे वर्तमाने सतो यथा ॥ ६ ॥ कौमारं यौवनं जीर्णा चेत्यवस्थात्रयं यतः ॥ परस्परविरुद्धं तत्तद्भेदान्नात्मनो भिदा ॥ ७ ॥ बाल्ये य एव पितरावन्वभूवं स एव हि ॥ वार्धकेऽहं प्रणप्त्रादीनेतानुनुभवाम्यसौ ॥ ८ ॥ प्रत्यभिज्ञा भवत्येषा प्रत्यगात्मैक्यगोचरा ॥ येषु व्यावर्त्यमानेषु नैव व्यावर्तते तु यः ॥ ९ ॥ स तेभ्यो भिद्यते सूत्रं कुसुमेभ्य इव स्वतः ॥ निर्विकारस्य बाल्याद्या यथा सन्त्यत्र देहिनः ॥ १० ॥ तद्वद्देहान्तरप्राप्तिर्निर्विकारस्य वस्तुतः ॥ एतस्माद्देहतोऽत्यन्तभिन्नदेहाप्तिरात्मनः ॥ ११ ॥ योगैश्वर्ये तथा स्वप्ने नास्ति तेन भिदात्मनः ॥ सोऽहमित्येव विज्ञानं प्रत्यभिज्ञात्मकं यतः ॥ १२ ॥ प्रत्यगात्मनि तेनायं देहादतिविलक्षणः ॥ आत्मैकः केवलः शुद्धो देहाध्यासादयं भ्रमः ॥ १३ ॥ स्थूलोऽहममुको जातो मृत इत्यादिको नृणाम् ॥ बाल्याद्या जाग्रदाद्याश्च व्यावृत्तास्ताः परस्परम् ॥ १४ ॥ अवस्थाः कल्पिता भ्रान्त्या प्रत्यगात्मनि केवले ॥ जातमात्रस्य हर्षादिः पूर्वसंस्कारजो भवेत् ॥ १५ ॥ अन्यथा स्तन्यपानादौ प्रवृत्तिः स्यान्न देहिनाम् ॥ अदृष्टाद्वा प्रवृत्तिः स्यादिष्टसाधनताधिया ॥ १६ ॥ तथा चात्मैक्यसंसिद्धिः

पूर्वापरशरीरयोः ॥ अन्यथा कृतनाशादिदोषोऽपि स्याद्दुरुद्धरः ॥ १७ ॥ एवं देहाद्विभिन्नात्मज्ञानाद्धीमान्न मुह्यति ॥ शोकमोहाद्यसंस्पृष्टो धीरधीस्त्वमतो भव ॥ १८ ॥ १३ ॥

**भा० टी०**—तत्र दृष्टान्तमाह—**देहिन इति** । देहोऽस्यास्तीति देही आत्मा तस्य यथास्मिन्देहेऽवस्थात्रयमेकस्यैव तथा देहान्तरप्राप्तिः । तत्रैवं सति धीमानात्मनित्यत्वज्ञानवान्न मुह्यति न मोहं प्राप्नोति । नन्वेतेषां श्लोकानां वादिमतान्याशङ्क्यानवतारणं भाष्यकाराणां न्यूनतेति चेन्न । 'नानुशोचन्ति पण्डिताः । धीरस्तत्र न मुह्यति । तांस्तितिक्षस्व भारत । यं हि न व्यथयन्त्येते ' इति वाक्यशेषाणां सत्वात् । शोकनिवारणायात्मनित्यत्वव्याख्यानस्य शब्दार्थत्वादात्मानित्यत्ववादी मूर्ख इत्येवमादीनां तेषामश्रवणात् । आत्मनो नित्यत्वादिवर्णनेन वादिमतनिराकरणस्यार्थसिद्धत्वात् । शारीरकभाष्ये कुमतानां स्वेनैव खण्डितत्वाच्च । तथाऽनवतारणे न्यूनताया अभावात् ॥ १३ ॥

**प० टी०**—एवं शोकस्य जीवनिमित्तकत्वं निवार्य देहनिमित्तकत्वं निवारयति—**देहिन इति** । देहिनो देहाभिमानिनो जीवस्य कौमारयौवनजरारूपावस्थात्रयस्यानुभवो दृष्टः । यथाहं कौमारदशायां नग्नो बालिशेषु क्रीडितवान् स एवाहं यौवने सभ्यत्वमुपागतोऽस्मि । पुनः स एवाहं सम्प्रति दन्ताद्युपप्लवेन स्थविरत्वं प्राप्तोऽस्मीति प्रत्ययोस्ति । तदुक्तम्—' कस्तवायं जडो मूको देहो भवति राघव ' इति । तथाच पुत्रस्य पूर्वावस्थातिक्रमे उत्तरावस्थाप्राप्तौ किं पित्रादीनां शोको भवति । तथैव देहान्तरप्राप्तावशिक्षितोऽपि बालः पूर्वसंस्कारवशात् स्तनग्रहणरोदनादिषु प्रवर्तते । एवमनुभूय धीरस्तत्र विषये न मुह्यतीत्यर्थः ॥ १३ ॥

**रा० टी०**—देहनाशभयादिति द्वितीयपक्षं निरासयन्नाह—**देहिन इति** । देहिनो देहवतो जीवस्यास्मिन्निदानीं वर्तमाने स्थूलदेहे कौमारं यौवनं जरा च यथा प्राप्नोति तथा देहान्तरप्राप्तिः । अयं भावः । कौमारावस्थाविशिष्टदेहहाने यौवनावस्थाविशिष्टदेहहाने च शोकस्तावन्नास्तीति प्रासिद्धम् । तत्कुत इति न वाच्यम् । जरादिविशिष्टदेहान्तरलाभात् । समानलाभेन हानिर्हि समाधीयत इति चेन्मृतावपि शोको न कार्यः । देहान्तरलाभादेव । यदा तु जीर्णदेहलाभेन समीचीनयौवनदेहहानेः प्रतिनिधिस्तदा सुतरां समीचीनदेहान्तरलाभेन जीर्णदेहहानेरिति । अतो धीरो बुद्धिमांस्तत्र देहनाशविषये न मुह्यति न मोहं प्राप्नोति । एतेषां देहाः नश्यन्तीति शोकं न प्राप्नोतीत्यर्थः । तत्रावस्थामात्रहानिः । अत्रावस्थावतोऽपीति वैषम्यमनुपयुक्तम् । निष्कदानेन पटग्रहणदृष्टेरिति । अत्र देहिन इत्युक्त्या देहवतो जीवस्यैव । नतु देहदेहिभेदहीनस्य हरेर्जराद्यवस्था देहान्तरावाप्तिर्वेति सूचितम् । देहान्यजीव एव नास्ति । एवं च त्वदादयो जनाधिपा नित्या अनादिनित्यत्वादिति प्रागुक्तप्रयोगे देहपक्षीकारे असिद्धिबाधौ जीवपक्षीकारे चाश्रयासिद्धिरिति तृतीयपक्षमाशङ्क्य परिहरति—**देहिन इति** । अत्र कौमारादिविषयेण तदनुभवो विषयी लक्ष्यते । देहिन इत्यस्य देहादन्यस्येत्यर्थः । दहोऽस्यास्तीत्यर्थे मतुबर्थेनिप्रत्ययविधानात् । एकवचनादेकस्येत्यपि लभ्यते । देहान्तरशब्दोऽत्रानेकदेहपरः । तथाचायमर्थः । अस्मिन्देहे कौमारं कौमारानुसन्धानं यौवनं यौवनानुसंधानं जरा जरानुसंधानम् । योहं कौमारशरीरवानभूवं स इदानीं युवशरीरवान्वर्ते । योऽहं युवशरीरवानभूवं स इदानीं जीर्णशरीरवान्वर्ते इत्येवंरूपेण तावदस्ति । तच्च देहिनो देहवतो देहान्यस्येतियावत् । देहशब्दोऽत्र देहेद्रियान्तःकरणसङ्घातपरः । देहेन्द्रियान्तःकरणेभ्योऽन्यस्य चेतनस्य भवति देहादेर्जडत्वेनानुसंधानकर्तृत्वायोगात् । एवं च देहेन्द्रियादितोतिरिक्तजीवसिद्धिः । तथाचैकवचनबलादेकस्यैव देहादन्यस्य कौमाराद्यनेकदेहानुसन्धानं यथा तथा देहान्तरप्राप्तिरनेकदेहप्राप्तिर्देहिनो देहादन्यस्यैकस्यैव भवतीति पूर्वार्धेन देहादन्यसिद्धिः । त्रिपाद्या चोक्तविधयाऽनेकदेहप्राप्तिमान्सिद्ध इति । देहादन्यजीवपक्षीकारे नाश्रयासिद्धिः । प्रत्यग्रजातस्य शिशोराहाराद्यभिलाषेण पूर्वपूर्वतरदेहानुसन्धानेन सिद्धानेकदेहानुगत्याऽनादित्वसिद्धेर्न हेतोः स्वरूपासिद्धिरिति भावः । ननु देहादन्यत-

मस्यैवास्त्वनुसंधानम् । चार्वाकाद्युक्ततर्कबलादित्यत आह–धीर इति । बुद्धिमांस्तत्र देहादन्यात्मविषये न मुह्यति । देहादीनां जडत्वकरणत्वादिना कर्तृत्वायोग इत्यादिरूपेण ते तर्का निरस्या इति भावः ॥ १३ ॥

**मात्रास्पर्शास्तु कौन्तेय शीतोष्णसुखदुःखदाः ॥**
**आगमापायिनोऽनित्यास्तांस्तितिक्षस्व भारत ॥ १४ ॥**

**त०टी०**–ननु भवत्वात्मनां स्वरूपेण नित्यत्वे बहुत्वे च तन्नाशनिमित्तं मोहानौचित्यमिति । तथाऽपि युद्धे शस्त्रपातादिना आचार्यपितृबन्धूनां प्रियदेहवियोगे सुखहानिर्दुःखावाप्तिश्च भवेदेव, तन्निमित्तो मोहः सम्भवतीत्याशङ्क्याह–मात्रास्पर्शा इति । मात्राः शब्दादितन्मात्राणि तत्कार्यत्वाच्छब्दस्पर्शादयो विषया मात्राशब्दवाच्यास्तेषां श्रोत्रादीन्द्रियैः स्पर्शाः शीतोष्णसुखदुःखदा भवन्ति, मृदुमधुराः सुखदाः कटुपरुषा दुःखदाः । तथाऽपि नात्मवन्नित्याः किन्त्वागमापायिनः आगमापायशीलाः अतएवानित्यास्ततस्तान्विवेकधैर्यसम्पत्त्या तितिक्षस्व सहस्व । कालान्तरे स्वयमेव नंक्ष्यन्ति । तन्निमित्तो मोहस्तव नोचित इति । कौन्तेय भारतेति सम्बोधनाभ्यां सूचितम् ॥ १४ ॥

**म० टी०**–नन्वात्मनो नित्यत्वे विभुत्वे च न विवदामः । प्रतिदेहसमत्वं तु न सहामहे । तथाहि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यनवविशेषणगुणवन्तः प्रतिदेहं भिन्नाः । एवं नित्या विभवश्चात्मान इति वैशेषिका मन्यन्ते । इममेव च पक्षं तार्किकमीमांसकादयोपि प्रतिपन्नाः । साङ्ख्यास्तु विप्रतिपद्यमाना अप्यात्मनो गुणवत्त्वे प्रतिदेहं भेदेन विप्रतिपद्यन्ते अन्यथा सुखदुःखादिसङ्करप्रसङ्गात् । तथा च भीष्मादिभिन्नस्य मम नित्यत्वे विभुत्वेपि सुखदुःखादियोगित्वात् भीष्मादिबन्धुदेहविच्छेदे सुखवियोगो दुःखसंयोगश्च स्यादिति कथं शोकमोहौ नानुचिताविति अर्जुनाभिप्रायमाशङ्क्य लिङ्गशरीरविवेकायाह–मात्रास्पर्शास्त्विति । मीयन्ते आभिर्विषया इति मात्रा इन्द्रियाणि तासां स्पर्शा विषयैः संबन्धास्तत्तद्विषयाकारान्तःकरणपरिणामा वा । ते आगमापायिन उत्पत्तिविनाशवतोऽन्तःकरणस्यैव शीतोष्णादिद्वारा सुखदुःखदाः नतु नित्यस्य विभोरात्मनः । तस्य निर्गुणत्वान्निर्विकारत्वाच्च । न हि नित्यस्यानित्यधर्माश्रयत्वं संभवति । धर्मधर्मिणोरभेदात्संबन्धान्तरानुपपत्तेः । साक्ष्यस्य साक्षिधर्मत्वानुपपत्तेश्च । तदुक्तं 'नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः' इति । तथा च सुखदुःखाद्याश्रयीभूतान्तःकरणभेदादेव सर्वव्यवस्थोपपत्तेर्न निर्विकारस्य सर्वभासकस्यात्मनो भेदे मानमस्ति सद्रूपेण स्फुरणरूपेण च सर्वत्रानुगमात् । अन्तःकरणस्य तावत्सुखदुःखादौ जनकत्वमुभयवादिसिद्धम् । तत्र समवायिकारणत्वस्यैवाभ्यर्हितत्वात्तदेव कल्पयितुमुचितम् । न तु समवायिकारणान्तरानुपस्थितौ निमित्तमात्रम् । तथा च "कामः संकल्पः" इत्यादिश्रुतिरेतत्सर्वं मन एवेति कामादिसर्वविकारोपादानत्वमभेदनिर्देशान्मनस आह । आत्मनश्च स्वप्रकाशज्ञानानन्दरूपत्वस्य श्रुतिभिर्बोधनान्न कामाद्याश्रयत्वम् । अतो वैशेषिकादयो भ्रान्त्यैवात्मनो विकारित्वं भेदं चाङ्गीकृतवन्त इत्यर्थः । अन्तःकरणस्यागमापायित्वात् दृश्यत्वाच्च । नित्यदृग्रूपात्त्वत्तो भिन्नस्य सुखादिजनका ये मात्रास्पर्शास्तेप्यनित्याः अनियतरूपाः एकदा सुखजनकस्यैव शीतोष्णादेरन्यदा दुःखजनकत्वदर्शनात् । एवं कदाचिद्दुःखजनकस्याप्यन्यदा सुखजनकत्वदर्शनात् । शीतोष्णग्रहणमाध्यात्मिकाधिभौतिकाधिदैविकसुखदुःखोपलक्षणार्थं शीतमुष्णं च कदाचित्सुखं कदाचित् दुःखम् । सुखदुःखे तु न कदापि विपर्ययेते इति पृथङ्निर्देशः । तथा चात्यन्तस्थिरात् त्वद्भिन्नस्य विकारिणः सुखदुःखादिप्रदान्भीष्मादिसंयोगवियोगरूपान्मात्रास्पर्शान् त्वं तितिक्षस्व । नैते मम किंचित्करा इति विवेकेनोपेक्षस्व । दुःखितादात्म्याध्यासेनात्मानं दुखिनं माज्ञासीरित्यर्थः । कौन्तेय भारतेति सम्बोधनद्वयेनोभयकुलविशुद्धस्य तवाज्ञानमनुचितमिति सूचयति ॥ १४ ॥

**शं० टी०**—यद्यपि प्रत्यक्षानुमानश्रुतिस्मृतिभिस्त्वंपदलक्ष्यार्थ आत्मा नित्य एवेति विजानामि तथापि भीष्मादिशब्दवाच्यार्थानां म्रियमाणानां वियोगजं दुःखं सोढुं न शक्यत इत्याशयवन्तमर्जुनमालक्ष्य ब्रह्मविद्भिरनात्मविषयकसुखदुःखानुसंधानं न कर्तव्यं किंतु शरीरान्तरानुसत्तया प्रारब्धवशात्प्राप्तमप्याध्यात्मिकादित्रिविधदुःखं यत्तत्सोढ्वा तीव्रमुमुक्षया सदा ब्रह्मानुसन्धानमेव कर्तव्यमिति सूचयितुमाह—**मात्रास्पर्शा इति** । चक्षुरादिज्ञानेन्द्रियैः सामान्येन मीयन्त इति मात्राः । वागाद्युभयेन्द्रियैः स्पृश्यन्ते गृह्यन्ते इति स्पर्शाः शब्दादयो भोग्यपदार्थाः । स्वयं शीतोष्णसुखदुःखदाः शीतोष्णवत्सुखदुःखदाः शीतोष्णावनुकूलौ प्रतिकूलौ च सन्तौ यथा सुखं दुःखं च ददाते तथैव शब्दादयोऽप्यनुकूलाः प्रतिकूलाश्च सन्तः सुखं दुःखं च ददत इत्यर्थः । यद्वा शब्दादयः प्रतिकूलमनुकूलं वा शीतमुष्णं वाप्यध्यात्ममुत्पाद्य तद्वारा साक्षाद्वा सुखं दुःखं च ददतीति शीतोष्णसुखदुःखदाः । ननु विषयेन्द्रियसंयोगस्य नित्यत्वात्तन्निमित्तकसुखदुःखयोरपि नित्यत्वे सत्यात्मविदस्तदनुसन्धानं विना ब्रह्मानुसन्धिः कथं सिध्यतीत्यत आह—**आगमेति** । आगम उत्पत्तिरपायो विनाशस्तद्वन्तो विषयास्तज्जन्यसुखदुःखादयश्च तडिद्वदनित्यास्तान् क्षणकालावस्थायिनो विषयान् तत्संयोगांश्च तितिक्षस्व । भारत भा ब्रह्मविद्या तस्यामेव रमत इति भारत हे कौंतेय ! मुमुक्षोर्नित्यसुखार्थिनः प्रारब्धादागतानां सुखदुःखादीनां सहनमवश्यं कर्तव्यम् । तत्सहनं कुर्वत एव श्रवणादि तज्जन्यं ज्ञानं तत्फलं चापि सिध्यत्यतस्त्वमेतेषां समागमसुखवद्वियोगदुःखं च सहस्व । प्रतिक्रियाचिन्ताविषादराहित्येन प्राप्तदुःखसहनं मुमुक्षोरुत्तमो धर्मः । तथा च श्रुतिः "वृक्ष इव तिष्ठासे च्छिद्यमानो न कुप्येत कम्प्येत । उपल इव तिष्ठासे च्छिद्यमानो न कुप्येत न कम्प्येत" इति । देहेन्द्रियादयः शब्दादयश्चानित्याः आगमापायित्वाद्यन्नैवं तन्नैवं यथात्मेति । आत्मा नित्यः तदागमापायसाक्षित्वात् । यन्नैवं तन्नैवं यथा देह इत्याद्यनुमानेन देहेन्द्रियादीनामनित्यत्वं तत्साक्षिण आत्मनो नित्यत्वं चात्रापि सूचितं भवति ॥ १४ ॥

**श्री० टी०**—ननु गतानागतानहं न शोचामि किन्तु तद्वियोगादिदुःखभाजमात्मानमेवेति चेत्तत्राह—**मात्रास्पर्शा इति** । मीयन्ते ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयस्तासां स्पर्शाः विषयैः सम्बन्धाः ते शीतोष्णादिप्रदा भवन्ति । ते त्वागमापायित्वादनित्या अस्थिराः । अतस्तांस्तितिक्षस्व सहस्व । यथा जलातपादिसम्पर्कास्तत्तत्कालकृताः स्वभावतः शीतोष्णादि प्रयच्छन्ति एवमिष्टसंयोगवियोगा अपि सुखदुःखादि प्रयच्छन्ति । तेषां चास्थिरत्वात्सहनं तव धीरस्योचितम् । नतु तन्निमित्तहर्षविषादपारवश्यमित्यर्थः ॥ १४ ॥

**स० टी०**—नन्वात्मनो न नित्यत्वे विभुत्वे वा विकल्पना ॥ एकत्वं तु कथं सिद्ध्येज्जीवत्सु द्वैतवादिषु ॥ १ ॥ वैशेषिकादयः सर्वे तार्किकाः कापिलास्तथा ॥ देहभेदेन भिन्नत्वमात्मनस्ते प्रपेदिरे ॥ २ ॥ अन्यथा सुखदुःखादिसङ्करः सर्वदेहिनाम् ॥ एवं भीष्मादिभिन्नस्य नित्यत्वे मम सत्यपि ॥ ३ ॥ सुखदुःखादियोगित्वात्तत्संयोगवियोगजौ ॥ शोकंमोहौ कथं न स्तामित्याशङ्क्याह मापतिः ॥ ४ ॥ मीयन्ते विषया आभिर्मात्राः स्युरिन्द्रियाणि ताः ॥ तासां स्पर्शास्तु विषयैः सम्बन्धाः क्षणभङ्गुराः ॥ ५ ॥ परिणामा धियः सर्वे तत्तदाकारवृत्तयः ॥ बुद्धेराद्यन्तवन्तस्ते सुखदुःखप्रदाः शठाः ॥ ६ ॥ शीतोष्णादिमुखेनैते नतु नित्यस्य देहिनः ॥ कौटस्थ्यान्निर्गुणत्वाच्च साक्षिणः स्युः कथं त्विमे ॥ ७ ॥ नित्यस्यानित्यधर्माणामाश्रयत्वं न संभवेत् ॥ साक्ष्यस्य साक्षिधर्मत्वानुपपत्तेश्च सर्वथा ॥ ८ ॥ नर्ते स्याद्विक्रियां दुःखी साक्षिता क विकारिणः ॥ धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ॥ ९ ॥ इत्युक्तं वार्तिके तस्मात्साक्षिणो नैव विक्रियाः ॥ अन्तःकरणधर्मास्ते सुखदुःखादयोऽखिलाः ॥ १० ॥ नात्मनो निर्विकारस्य तेन भेदविकल्पना ॥ एकस्मिन्नद्वितीयेऽस्मिन्भेदो नास्ति मनागपि ॥ ११ ॥ वैशेषिकादयो भ्रान्त्या मन्यन्ते विक्रियां भिदाम् ॥ आद्यन्तवत्त्वादृश्यत्वात्सुखाद्याः क्षणभङ्गुराः ॥ १२ ॥ परिणामा धियः सर्वे भिन्नायाः साक्षिणो दृशः ॥ वैलक्षण्यमतः सिद्धमात्मनो लिङ्गदेहतः ॥ १३ ॥ सर्वं सुखादिवैचित्र्यं लिङ्गधर्मो न चात्मनः ॥ प्रतिदेहमसौ बुद्धिर्भिन्ना

दुःखादिधर्मिणी ॥ १४ ॥ तत्र कूटस्थ आत्मैको भानुवत्प्रतिबिम्बितः ॥ प्रमातृत्वं गतो नानारूपेण प्रतिभासितः ॥ १५ ॥ पात्रस्थसलिलेष्वर्को यथैव प्रतिबिम्बितः ॥ स्वच्छेषु स्वच्छवद्भाति मलिनेषु तथाऽऽविलः ॥ १६ ॥ चलेषु चलवद्भाति स्थिरेषु स्थिरवत्तथा ॥ चञ्चलत्वादयो धर्माः सूर्ये सन्ति न तावता ॥ १७ ॥ तथा सुखादयो बुद्धेर्नानात्वात्स्युरनेकधा ॥ आत्मनो नैव ते सन्ति सूर्यस्येवाविकारिणः ॥ १८ ॥ एतेन स्वर्गनरकौ बन्धमोक्षौ भवाभवौ ॥ व्याख्यातौ मातृनिष्ठत्वान्मातॄणां बुद्धिभेदतः ॥ १९ ॥ भिन्नत्वान्नैव तैरात्मा लिप्यते व्योमसूर्यवत् ॥ एकस्मिन्नपि देहेऽस्मिन्मातुर्दुःखसुखे यथा ॥ २० ॥ पादाद्यङ्गेषु भिन्नेषु भिन्ने तद्वज्जगत्सु च ॥ पादे मे सुखमस्त्यद्य वेदना शिरसीति च ॥ २१ ॥ अनुभूतिस्तया नासौ भिद्यते जीव एकलः ॥ तथात्माऽस्त्येक एवासौ सर्वदेहेषु भासकः ॥ २२ ॥ उपाधेरेव भिन्नत्वान्न भेदः प्रत्यगात्मनि ॥ श्रुतिसिद्धात्मनो भेदे मानमन्यन्न दृश्यते ॥ २३ ॥ येन भेदप्रसिद्धिः स्यात्तस्माद्भेदो न वास्तवः ॥ अध्यक्षादेः प्रमाणस्य विषयत्वं न चात्मनः ॥ २४ ॥ तद्भेदस्य कथं युक्त्या तस्य गोचरता भवेत् ॥ प्रतियोग्यात्मविज्ञानाधीनज्ञानभिदा यतः ॥ २५ ॥ अत आत्मैक एवास्ति सिद्धमित्युपपत्तिभिः ॥ शीतं जातु सुखे हेतुः कदाचिद्दुःखकारणम् ॥ २६ ॥ एवमुष्णमतो भिन्नतया स्वीकार एतयोः ॥ अतोऽत्यन्तास्थिरांस्त्वत्तो भिन्नस्यैव विकारिणः ॥ २७ ॥ धर्माश्चित्तस्य दुःखादिदायिनः क्षणभङ्गुरान् ॥ मात्रास्पर्शांस्तितिक्षस्व नैते किंचित्करा मम ॥ २८ ॥ एवं तांस्त्वमुपेक्षस्व विवेकेन चिदात्मनः ॥ देहाद्यध्यासतो मा त्वं जानीहि स्वं च दुःखिनम् ॥ २९ ॥ कुलद्वयविशुद्धस्य तवाज्ञानं न चोचितम् ॥ कौन्तेय भारतेत्येवं संबोधनयुगध्वनिः ॥ ३० ॥ १४ ॥

**भा० टी०**—नन्वात्मनो नित्यत्त्वात्तन्नाशनिमित्तशोकमोहाभावेऽपि सुखवियोगदुःखसंयोगशीतादिप्राप्तिनिमित्तौ तौ दुर्वाराविति चेत्तत्राह—**मात्रास्पर्शा इति** । मीयन्ते आभिर्विषया इति मात्राः इन्द्रियाणि । तेषां विषयैः स्पर्शाः संयोगाः । यद्वा स्पृश्यन्त इति स्पर्शाः विषया मात्राश्च स्पर्शाश्च ते । शीतोष्णसुखदुःखदाः त्वगिन्द्रियतद्विषयसम्बन्धस्य तयोर्वाऽनियतसुखदुःखशीतोष्णदातृत्वमप्यस्तीत्यभिप्रेत्य नियतरूपाभ्यां सुखदुःखाभ्यामनियतसुखदुःखप्रदयोः शीतोष्णयोः पृथग्ग्रहणम् । यत उत्पत्तिविनाशशीला अत एवानित्याः । अत एव तान् सहस्व । तेषु हर्षं विषादं च मा कार्षीरित्यर्थः । स्त्रीस्वभाववतः सुखादिदानेतान् भरतादिपुरुषधौरेयस्वभावमाश्रित्य सोढुं योग्योऽसीति सम्बोधनाशयः । अत्र संबोधनद्वयेनोभयकुलशुद्धस्यैव विद्याधिकारित्वं सूचयतीत्येके । उत्तमवंश्यत्वेन धीरत्वमस्येत्यन्ये । उभयकुलविशुद्धस्य तवात्माज्ञानमनुचितमिति केचित् । अयं पक्षउभयकुलशुद्धिमात्रादेवात्मज्ञानं यदि स्यात्तर्हि सम्यक् । अथवा प्रथमपक्षानुरोधेन व्याख्येयः । भाष्यकृद्भिस्तु सुगमत्वात्संबोधनाभिप्रायवर्णनं न सर्वत्र क्रियत इति बोध्यम् ॥ १४ ॥

**प० टी०**—ननु न तानहं शोचामि किंतु तद्वियोगदुःखभाग्भवामीति चेत्तत्राह—**मात्रास्पर्शा इति** । मीयन्ते ज्ञायन्ते विषया आभिरिति मात्रा इन्द्रियवृत्तयस्तासां स्पर्शा विषयैः सह संबन्धास्ते शीतोष्णादिसुखदुःखदा भवन्ति । ते चागमापायित्वादनित्या अतस्तांस्तितिक्षस्व सहस्व । यतस्त्वं भारतो भरतवंशोत्पन्नोऽसि वीरोऽसि । अत्रैतदुक्तं भवति । पुत्रपौत्रादिविषया देहार्थं मृग्यन्तेऽतः सर्वोत्कृष्टो विषयो देहः । एवंविधमपि देहं रणे वीरास्तृणीकुर्वन्ति पुनः किं सुहृद्वियोगं क्षणभङ्गुरं शीतोष्णादितुल्यमित्यर्थः ॥ १४ ॥

**रा० टी०**—सत्यमेव तत्सर्वं भवदुक्तम् । उक्तविधया देहहानेरभावात् । देहहानावपि समीचीनदेहान्तररूपप्रतिनिधिलाभात् । बान्धवानां हानिर्भविष्यतीति धिया शोको न युक्त इति । तथापि तन्मृतौ ममैव सुखहानिर्दुःखप्राप्तिश्च स्यात् । तद्देहदर्शनस्पर्शनसम्भाषणादेः सुखहेतोरभावात् । छेदभेदादिना विकृततद्देहदर्शनस्य दुःखहेतोर्भावादित्यत आह—**मात्रेति** । मीयन्त इति मात्राः । माङ्माने इत्यतः कर्मणि त्रप्रत्ययः । स्त्रीत्वं शब्दस्वाभाव्यात् । ज्ञानविषयाः गन्धरसरूपस्पर्शशब्दाः तेषां स्पर्शाः सम्बन्धाः । शीतोष्णशब्दौ शीतस्पर्शो-

ष्णस्पर्शवाचकौ । लक्षणया गन्धरसरूपस्पर्शशब्दाख्यसर्वविषयपरौ भूत्वा तदनुभवलक्षकौ । लाक्षणिकोक्तिकृत्यमग्रे व्यक्तम् । गन्धरसरूपस्पर्शशब्दाख्यविषयाणां घ्राणरसनचक्षुस्त्वक्श्रोत्ररूपेन्द्रियैर्यथाक्रमं ये सन्निकर्षास्ते मात्रास्पर्शाः । शीतोष्णसुखदुःखदाः सुगन्धसुरससुरूपसुस्पर्शसुशब्दविषयकसाक्षात्काररूपानुभवजननद्वाराऽऽत्मनः सुखप्रदाः । अनिष्टगन्धरसादिविषयकसाक्षात्कारजननद्वारा दुःखप्रदाः । तेषां मृतौ च तन्निमित्तसुखदुःखहानिप्राप्ती भवत इति किल कौन्तेय तवाशय इति पार्थहार्दमनूद्य भगवान्कृष्णः काकुस्वरशिरस्कं तुशब्देनावधारणार्थकेन निराचष्टे । हे कौन्तेय मात्रास्पर्शा एव । गन्धादिविषयेन्द्रियसन्निकर्षा एव इष्टानिष्टस्वविषयसाक्षात्कारद्वारा सुखदुःखदाः । किमिति काकुस्वरेणाक्षेपः । केवलं तन्मात्रा एव न भवन्ति । किंतु विषयेषु शोभनाध्यासनिमित्तस्नेहरूपेण वा अरित्वादिभ्रमहेतुकद्वेषरूपेण वा देहेन्द्रियान्तःकरणेषु ममतातिशयहेतुकाविवेकरूपेण वाऽभिमानसहिता एव तथेत्यर्थः । कुत एवं तन्मात्रा एव स्वस्वविषयानुभवद्वारा सुखदुःखहेतवो भवन्त्वित्यत आह—आगमेति । यत इति शेषो वा हेतुगर्भविशेषणं वा । एतच्चागमापायित्वं शीतोष्णसुखदुःखदाः मात्रास्पर्शाः । आगमापायिन इत्येवं स्वस्वविषयकधीद्वारा सुखदुःखदत्वविशिष्टमात्रास्पर्शानां विशेषणम् । सविशेषणे हि विधिनिषेधौ विशेष्ये बाधाद्विशेषणमुपसङ्क्रामतइति न्यायात् । मात्रास्पर्शानां स्वस्वविषयकधीद्वारा यत्सुखदुःखदत्वं तस्यागमापायित्वादिति सुखादिदत्वरूपविशेषणमुपसंक्रामति । सुप्त्यादौ श्रीचन्दनाग्निकणादिशीतोष्णस्पर्शसम्बन्धे अविनाभूतमनस्सम्बन्धात्मसन्निकृष्टत्वगिन्द्रियस्य सत्त्वेपि स्वविषयानुभवद्वारा सुखदुःखादिदत्वस्यादर्शनात् । जाग्रद्दशायामभिमानसत्वे एव तद्दर्शनात् । अन्वयव्यतिरेकाभ्यामभिमानसहिता एव मात्रास्पर्शाः स्वस्वविषयधीद्वारा सुखदुःखादिदाः । न तु केवला इति भावः । सुप्तावन्येन्द्रियाणामुपरमेऽपि त्वगिन्द्रियस्य नोपरमः । तस्य तदापि विषयसन्निकर्षोऽस्तीति ज्ञापनायैवेतरविषयलाक्षणिकशीतोष्णपदप्रयोगः । आगमापायित्वं चात्र गङ्गोदकस्येव प्रवाहतो नित्यत्वे व्यक्तिरूपेणानित्यत्वं न विवक्षितम् । मात्रास्पर्शानां सुखादिदत्वेन तदयोगात् । तथात्वे सुप्त्यादौ सत्त्वेनाभिमानस्य प्रकृतान्वयव्यतिरेकोक्त्ययोगात् । अर्जुनस्याभिमाननिवर्तनबोधानुपयोगाच्च । किन्तु किंशुककुसुमानामिव प्रवाहतोऽपि विच्छिद्यमानत्वम् । सुप्तिमूर्छासम्प्रज्ञातसमाधिषु च्छेदेन प्रवाहविच्छेदसम्भवात् । तस्य प्रकृतोपयोगाच्चेति भावेन आगमापायित्वं व्यनक्ति—अनित्या इति । शीतोष्णसुखदुःखदाः मात्रास्पर्शा अनित्याः प्रवाहतोऽप्यनित्याः तेषां सुखादिदत्वं प्रवाहतोऽप्यनित्यं यतोऽतोन्वयव्यतिरेकाभ्यामभिमानयुता एव सुखादिदा इत्यर्थः । अत इति शेषः । अभिमानहीनमात्रास्पर्शानां सुखादिदत्वाभावात् । अभिमानत्यागेन तन्मात्रास्पर्शांस्तितिक्षस्व विफलीकुरु । सुखदुःखादिदा यथा न भवन्ति तथा कुरु । नह्यभिमानं विना कृतो मात्रास्पर्शरूपः सामग्र्येकदेशः सुखादिदाने शक्तो भवतीति भावः ॥ १४ ॥

**यं हि न व्यथयन्त्येते पुरुषं पुरुषर्षभ ॥**
**समदुःखसुखं धीरं सोऽमृतत्वाय कल्पते ॥ १५ ॥**

**त० टी०**—मात्रास्पर्शतितिक्षायां किं फलं स्यादित्यपेक्षायामाह—यं हीति । हे पुरुषर्षभ ! यं पुरुषं स्वधर्मानुवर्त्तिनं शास्त्रविहितं फलसङ्कल्पशून्यं युद्धादिकं स्वधर्मं कुर्वाणं समदुःखसुखं समे दुःखसुखे यस्य स तमत एव धीरं धैर्यवन्तमेते शस्त्रपातादिजन्यमृदुपरुषाः स्पर्शा न व्यथयन्ति स्वधर्मान्न चालयन्ति । सोऽमृतत्वाय परमपुरुषार्थभूतजरामरणादिधर्मवर्जितस्वरूपप्राप्तये कल्पते योग्यो भवति॥१५॥

**म० टी०**—नन्वन्तःकरणस्य सुखदुःखाद्याश्रयत्वे तस्यैव कर्तृत्वेन भोक्तृत्वेन च चेतनत्वमभ्युपेयम् । तथा च तद्व्यतिरिक्ते तद्भासके भोक्तरि मानाभावान्नाममात्रे विवादः स्यात् । तदभ्युपगमे च बन्धमोक्षयोर्वैयधि-

करण्यापत्तिः। अन्तःकरणस्य सुखदुःखाश्रयत्वेन बद्धत्वात्। आत्मनश्च तद्व्यतिरिक्तस्य मुक्तत्वादित्याशङ्कामर्जुनस्यापनेतुमाह भगवान्—यमिति। यं स्वप्रकाशत्वेन स्वत एव प्रसिद्धम् "अत्रायं पुरुषः स्वयंज्योतिर्भवति" इति श्रुतेः। पुरुषं पूर्णत्वेन पुरि शयानम्। "स वा अयं पुरुषः सर्वासु पूर्षु पुरिशयो नैतेन किंचनानावृतं नैतेन किंचनासंवृतम्" इति श्रुतेः। समदुःखसुखं समे दुःखसुखे अनात्मधर्मतया भास्यतया च यस्य निर्विकारस्य स्वयंज्योतिषस्तम्। सुखदुःखग्रहणमशेषान्तःकरणपरिणामोपलक्षणार्थम्"एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्" इति श्रुत्या वृद्धिकनीयस्तारूपयोः सुखदुःखयोः प्रतिषेधात्। धीरं धियमीरयतीति व्युत्पत्त्या चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरकम्। धीसाक्षिणमित्यर्थः। "स धीरः स्वप्नो भूत्वेमं लोकमतिक्रामति" इति श्रुतेः। एतेन बन्धप्रसक्तिर्दर्शिता। तदुक्तम् 'यतो मानानि सिध्यन्ति जाग्रदादित्रयं तथा। भावाभावविभागश्च स ब्रह्मास्मीति बोध्यते' इति। एते सुखदुःखदा मात्रास्पर्शाः हि यस्मात् न व्यथयन्ति परमार्थतो न विकुर्वन्ति। सर्वविकारभासकत्वेन विकारायोग्यत्वात्। "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतेः। अतः स पुरुषः स्वस्वरूपभूतब्रह्मात्मैक्यज्ञानेन सर्वदुःखोपादानतदज्ञाननिवृत्त्युपलक्षिताय निखिलद्वैतानुपरक्तस्वप्रकाशपरमानन्दरूपाय अमृतत्वाय मोक्षाय कल्पते।योग्यो भवतीत्यर्थः। यदि ह्यात्मा स्वाभाविकबन्धाश्रयः स्यात्तदा स्वाभाविकधर्माणां धर्मनिवृत्तिमन्तरेणानिवृत्तेर्न कदापि मुच्यते। तथा चोक्तम् 'आत्मा कर्त्रादिरूपश्चेन्माकाङ्क्षीस्तर्हि मुक्तताम्। न हि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः' इति प्रागभावासहवृत्तेर्युपगतसर्वविशेषगुणनिवृत्तेर्द्धर्मिनिवृत्तिर्नान्तरीयकत्वदर्शनात्। अथात्मनि बन्धो न स्वाभाविकः। किन्तु बुद्ध्याद्युपाधिकृतः "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इति श्रुतेः। तथा च धर्मिसद्भावेऽपि तन्निवृत्त्या मुक्त्युपपत्तिरिति चेत् हन्त तर्हि यः स्वधर्ममन्यनिष्ठतया भासयति स उपाधिरित्यभ्युपगमाद्बुद्ध्यादिरुपाधिः स्वधर्ममात्मनिष्ठतया भासयतीत्यायातम्। तथा चायातं मार्गे बन्धस्यासत्यत्वाभ्युपगमात्। न हि स्फटिकमणौ जपाकुसुमोपधाननिमित्तो लोहितिमा सत्यः। अतः सर्वसंसारधर्मासंसर्गिणोऽप्यात्मन उपाधिवशात्तत्संसर्गित्वप्रतिभासो बन्धः। स्वस्वरूपज्ञानेन तु स्वरूपाज्ञानतत्कार्यबुद्ध्याद्युपाधिनिवृत्त्या तन्निमित्तनिखिलभ्रमनिवृत्तौ निर्मृष्टनिखिलभास्योपरागतया शुद्धस्य स्वप्रकाशपरमानन्दतया पूर्णस्यात्मनः स्वत एव कैवल्यं मोक्ष इति न बन्धमोक्षयोर्वैयधिकरण्यापत्तिः। अत एव नाममात्रे विवाद इत्यपास्तम्। भास्यभासकयोरेकत्वानुपपत्तेः। दुःखी स्वव्यतिरिक्तभास्यः भास्यत्वात् घटवदित्यनुमानात् भास्यस्य भासकत्वादर्शनात्। एकस्यैव भास्यत्वे भासकत्वे च कर्तृकर्मविरोधात्। आत्मनः कथमिति चेन्न। तस्य भासकत्वमात्राभ्युपगमात्। अहं दुःखीत्यादिवृत्तिसहिताहङ्कारभासकत्वेन तस्य कदापि भास्यकोटावप्रवेशात्। अत एव दुःखी न स्वातिरिक्तभासकापेक्षः भासकत्वात् दीपवदित्यनुमानमपि न भास्यत्वेन स्वातिरिक्तभासकसाधकेन प्रतिरोधात्। भासकत्वं च भानकरणत्वं स्वप्रकाशनरूपत्वं वा। आद्ये दीपस्येव करणान्तरानपेक्षत्वेऽपि स्वातिरिक्तभानसापेक्षत्वं दुःखिनो न व्याहन्यते। अन्यथा दृष्टान्तस्य साध्यवैकल्यापत्तेः। द्वितीये त्वसिद्धो हेतुरित्यधिकबलतया भास्यत्वहेतुरेव विजयते। बुद्धिवृत्त्यतिरिक्तभानानभ्युपगमाद्बुद्धिरेव भानरूपेति चेन्न। भानस्य सर्वदेशकालानुस्यूततया भेदकधर्मशून्यतया च विभोर्नित्यस्यैकस्यानित्यपरिच्छिन्नानेकरूपबुद्धिपरिणामात्मकत्वानुपपत्तेः। उत्पत्तिविनाशादिप्रतीतेश्चावश्यकल्प्यविषयसम्बन्धविषयतयाऽप्युपपत्तेः। अन्यथा तत्तज्ज्ञानोत्पत्तिविनाशभेदादिकल्पनायामतिगौरवापत्तेरित्याद्यन्यत्र विस्तरः। तथा च श्रुतिः "न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात्। आकाशवत्सर्वगतश्च नित्यः। महद्भूतमनन्तमपारं विज्ञानघन एव। तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूतिः" इत्याद्या विभुनित्यस्वप्रकाशज्ञानरूपतामात्मनो दर्शयन्ति। एतेनाविद्यालक्षणादप्युपाधेर्व्यतिरेकः सिद्धः। अतोऽसत्योपाधि-

निबन्धनबन्धभ्रमस्य सत्यात्मज्ञानान्निवृत्तौ मुक्तिरिति सर्वमवदातम् । पुरुषर्षभेति सम्बोधयन् स्वप्रकाशचैतन्यरूपत्वेन पुरुषत्वे परमानन्दरूपत्वेन चात्मन ऋषभत्वं सर्वद्वैतापेक्षया श्रेष्ठत्वमजानन्नेव शोचसि अतः स्वरूपज्ञानादेव तव शोकनिवृत्तिः सुकरा । "तरति शोकमात्मवित्" इति श्रुतेरिति सूचयति । अत्र पुरुषमित्येकवचनेन साङ्ख्यपक्षो निराकृतस्तैः पुरुषबहुत्वाभ्युपगमात् ॥ १९ ॥

शं० टी०—तितिक्षुत्वमेव विवेकवैराग्यशमदमसंन्याससहितं श्रवणादिसाधनं सत्तज्जन्यज्ञानद्वारा मोक्षफलदं भवतीत्याह—**यं हीति** । सर्वदुःखसहनपूर्वकं निरन्तरब्रह्मनिष्ठो यः कैवल्यं संपादयति स एव पुरुषोत्तम इति सूचयितुमिदं संबोधनं हे पुरुषर्षभार्जुन ! धीरं विषयग्रहणेभ्यो धियं राति निगृह्णातीति धीरः सदात्मनिष्ठस्तमत एव समदुःखसुखं समे दुःखसुखे यस्य तं सुखदुःखयोः प्राप्तयोरविकारात्मना तिष्ठन्तम् । यद्वा समे समभावं ब्रह्मभावं गमिते दुःखसुखे यस्य तम् । यं पुरुषं ब्रह्मविदमेते शीतोष्णादयो न व्यथयन्ति न बाधन्ते निष्ठातो न चालयन्ति स एवामृतत्वाय यदज्ञानान्मृतं मरणं जन्म च पुंसस्तदमृतं ब्रह्म एतदमृतमभयमेतद्ब्रह्मेति श्रवणात्तद्भावायामृतत्वाय कल्पते मुक्तो भवतीत्यर्थः । "शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति अभयं वै ब्रह्म अभयं हि वै ब्रह्म भवति" इत्येतत् श्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः ॥ १९ ॥

श्री० टी०—तत्प्रतीकारप्रयत्नादपि तत्सहनमेवोचितं महाफलत्वादित्याह—**यमिति** । एते मात्रास्पर्शाः यं पुरुषं न व्यथयन्ति नाभिभवन्ति । समे सुखदुःखे यस्य तम् । स तैरविक्षिप्यमाणो धर्मज्ञानद्वारा अमृतत्वाय मोक्षाय कल्पते योग्यो भवति ॥ १९ ॥

स० टी०—नन्वन्तःकरणस्यैव भोक्तृत्वे सुखदुःखयोः ॥ तस्यैव चेतनत्वात्स्यादात्मत्वं न ततः परे ॥१॥ भोक्तुरन्यस्य चात्मत्वे मानं नैवेह दृश्यते ॥ स्याद्वैयधिकरण्यं च ह्यन्यथा बन्धमोक्षयोः ॥ २ ॥ बद्धं मनो विमुक्तोऽन्य आत्मेत्यत्राह माधवः ॥ यं स्वतः स्वप्रकाशत्वात्प्रसिद्धं पूर्णमद्वयम् ॥ ३ ॥ मात्रास्पर्शा न कुर्वन्ति विक्रियां वस्तुतोऽण्वपि ॥ दृश्यधर्मतया यस्य सुखदुःखे समे दृशः ॥ ४ ॥ धीरं धीप्रेरकं स्वात्मतादात्म्याध्यासतो विभुम् ॥ चिच्छायाद्वारतो बुद्धिसाक्षिणं वस्तुतः परम् ॥ ५ ॥ अध्यस्तबन्धाधिष्ठानतदुक्तं साम्प्रदायिकैः ॥ यतो मानानि सिद्ध्यन्ति जाग्रदादित्रयं तथा ॥ ६ ॥ भावाभावविभागश्च सब्रह्मास्मीति बोध्यते ॥ अतः स पुरुषः साक्षी ब्रह्मात्मैक्यधियाखिलम् ॥ ७ ॥ सविलासमहामोहं ध्वस्त्वा मोक्षाय कल्पते ॥ अनात्मन्यात्मताध्यासाद्बन्धस्तत्रैव कल्पितः ॥ ८ ॥ तन्निवृत्त्यैक्यविज्ञानान्मुक्त इत्युपचर्यते ॥ वस्तुतो बन्धमोक्षादि नास्त्येवाद्वैतवस्तुनि ॥९॥ स्वाभाविकत्वे बन्धस्य मुक्तिर्न स्यात्ततो विभोः ॥ न स्वभावविपर्यासः प्रमाणानां शतैरपि ॥ १० ॥ तस्माद्बन्धस्य मिथ्यात्वं तदुक्तं वार्तिके स्फुटम् ॥ आत्मा कर्त्रादिरूपश्चेन्मा काङ्क्षीस्तर्हि मुक्तताम् ॥ ११ ॥ नहि स्वभावो भावानां व्यावर्तेतौष्ण्यवद्रवेः ॥ मिथ्याज्ञानप्रयुक्तोऽयं बन्धोऽध्यस्तश्चिदात्मनि ॥ १२ ॥ सम्यगद्वैतबोधेन तन्निवृत्त्यास्य मुक्तता ॥ स्वप्रकाशपरानन्दरूपत्वेनैव पूरुषः॥१३॥ ऋषभः सर्वतः श्रेष्ठो द्वैतास्पष्टश्चिदद्वयः ॥ इत्याह्वानेन हरिणा बोधितः पुरुषर्षभः ॥ १४ ॥ अज्ञात्वैतादृशं वस्तु रूपं तं पुरुषर्षभम् ॥ शोचसीत्येव तात्पर्यं गम्यते श्रीहरेर्विभोः ॥ १५ ॥ १९ ॥

भा० टी०—तितिक्षायाः फलमाह—**यमिति** । समे सुखदुःखे यस्य तं धीरं धीमन्तं नित्यात्मज्ञानवन्तं नित्यात्मज्ञानादेते शीतोष्णादयः न चालयन्ति । यद्यपि एते मात्रास्पर्शा इति वक्तुमुचितं तथापि शीतादिकमदत्त्वा न व्यथयन्ति इत्यतो भाष्यकृद्भिरेतच्छब्देन शीतादीनामेव परामर्शः कृतः । स साधनचतुष्टयसंपन्नो नित्यात्मदर्शननिष्ठोऽमृतत्वाय मोक्षाय समर्थो भवति । पुरुषं न व्यथयन्ति त्वं तु पुरुषर्षभइति सूचयन्नाह—पुरुषर्षभेति । अत्र केचिद्वर्णयन्ति । नन्वात्मनो नित्यत्वे विभुत्वे च न विवदामः । प्रतिदेहमेकत्वं तु न

सहामहे । तथाहि बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यनवविशेषगुणवन्तः प्रतिदेहं भिन्ना एव । नित्या विभवश्चात्मान इति वैशेषिका मन्यन्ते । इममेव पक्षं तार्किकमीमांसकादयोऽपि प्रतिपन्नाः । साङ्ख्यास्तु विप्रतिपद्यमाना अपि आत्मनो गुणवत्त्वे प्रतिदेहं भेदेन विप्रतिपद्यन्ते अन्यथा सुखदुःखादिसङ्करप्रसङ्गात् । तथा च भीष्मादिभिन्नस्य मम नित्यत्वे विभुत्वे च सुखदुःखादियोगित्वात् । भीष्मादिबन्धुदेहविच्छेदे सुखवियोगो दुःखसंयोगश्च स्यादिति शोकमोहौ नानुचिताविति अर्जुनाभिप्रायमाशङ्क्य लिङ्गशरीरविवेकमाह—मात्रेति । मात्रास्पर्शा उत्पत्तिविनाशवतोऽन्तःकरणस्यैव शीतादिद्वारा सुखदुःखदा न तु नित्यस्य विभोरात्मनः । तथाचान्तःकरणभेदान्न साङ्ख्योक्तः सङ्करप्रसङ्गः । वैशेषिकादयश्च भ्रान्त्यैवात्मनो विकारित्वं भेदं चाङ्गीकृतवन्त इत्यर्थः । अन्तःकरणस्यानित्यत्वाद्दृश्यत्वाच्च नित्यदृग्रूपत्वात्त्वत्तो भिन्नश्च सुखादिजनका ये मात्रास्पर्शास्तेऽप्यनित्यास्तांस्तितिक्षस्व नैते मम किंचित्करा इति विवेकेनोपेक्षस्व । दुःखितादात्म्येनात्मानं दुःखिनं मा ज्ञासीरित्यर्थः । नन्वन्तःकरणस्य सुखाद्याश्रयत्वे तस्यैव कर्तृत्वादिना चेतनत्वमभ्युपेयम् । तथाच तद्व्यतिरिक्ते तद्भासके भोक्तरि मानाभावान्नाममात्रे विवादः स्यात्तदभ्युपगमे च बन्धमोक्षयोर्वैयधिकरण्यापत्तिः अन्तःकरणस्य सुखाद्याश्रयत्वेन बद्धत्वात् । आत्मनश्च तद्व्यतिरिक्तस्य मुक्तत्वादित्याशङ्कामर्जुनस्यापनेतुमाह—यमिति । यं स्वप्रकाशत्वेन स्वत एव प्रसिद्धं पुरुषं पूर्णत्वेन पुरि शयानं समे सुखदुःखे अनात्मधर्मतया भास्यतया च यस्य तं धीरं धियं प्रेरयतीति व्युत्पत्त्या चिदाभासद्वारा धीतादात्म्याध्यासेन धीप्रेरकं धीसाक्षिणमित्यर्थः । एतेन बन्धप्रसक्तिर्दर्शिता । एते सुखदुःखदा मात्रास्पर्शा यस्मान्न व्यथयन्ति परमार्थतो न विकुर्वन्ति स पुरुषः अमृतत्वाय मोक्षाय योग्यो भवतीत्यर्थः । अतः सर्वधर्मासंसर्गिणोऽप्यात्मन उपाधिवशात्तत्संसर्गित्वप्रतिभासो बन्धः स्वरूपज्ञानेन स्वरूपाज्ञानतत्कार्यबुद्ध्याद्युपाधिनिवृत्त्या तन्निमित्तनिखिलभ्रमनिवृत्तौ निर्मृष्टनिखिलभास्योपरागतया शुद्धस्य स्वप्रकाशपरमानन्दतया पूर्णस्यात्मनः स्वत एव कैवल्यं मोक्ष इति न बन्धमोक्षयोर्वैयधिकरण्यापत्तिः । अत एव नाममात्रे विवाद इत्यपास्तम् । भास्यभासकयोरेकत्वानुपपत्तेः । पुरुषर्षभेति संबोधयन् स्वप्रकाशचैतन्यरूपत्वेन पुरुषत्वं परमानन्दरूपत्वेनात्मन ऋषभत्वं सर्वद्वैतापेक्षया श्रेष्ठत्वमजानन्नेव शोचसि । अतः स्वस्वरूपज्ञानादेव तव शोकनिवृत्तिः सुकरा । "तरति शोकमात्मवित्" इति श्रुतेरिति सूचयतीति । अत्रेदमवधेयं शीतोष्णद्वारा सुखदुःखदा इत्यसङ्गतम् । सर्वेषां मात्रास्पर्शानां सुखादिदातृत्वे शीतोष्णयोर्द्वारत्वाभावात् । शीतोष्णग्रहणं त्रिविधसुखदुःखोपलक्षणार्थम् । शीतमुष्णं च कदाचित्सुखं कदाचिद्दुःखम् । सुखदुःखे तु न कदाचिद्विपरीते इति तयोः पृथङ्निर्देश इति स्ववरग्रन्थविरोधाच्च । शीतोष्णद्वारा सुखदुःखदा इत्यस्य शीतोष्णद्वारा साक्षाच्च सुखदुःखदा इत्यर्थ इति यदि कश्चित् ब्रूयात्तर्हि भाष्ये एवास्यार्थस्यान्तर्भावः । तस्मात् शीतं चोष्णं च सुखं च दुःखं च प्रयच्छन्तीति भाष्यकृद्व्याख्यानमेवर्जु । एतेनागमापायिनोन्तःकरणस्येत्यपास्तम् । वाक्यार्थस्य सत्यपि सम्यक्सम्भवे विशेषाध्याहारानौचित्यात् । तितिक्षस्वेति वाक्यशेषस्य मुख्यार्थत्यागापत्तेश्च । एतेनोत्तरश्लोकव्याख्यानमप्यपास्तं यं पुरुषमित्येतावतैव निर्वाहे समेत्यादिविशेषणद्वयस्यानर्थक्यापत्तेश्च । बन्धप्रसक्तिरपि पुरिषु तादात्म्याध्यासं कृत्वा शेते इत्यर्थकेन पुरुषशब्देनैव लभ्यते । एतेन सुखादेः क्षेत्रधर्मत्वस्य वक्ष्यमाणत्वाच्चास्य व्याख्यानस्याकरणे भाष्यकृतां न्यूनता न शङ्कनीया । एवमन्येषामपि मूलतद्भाष्यबहिर्भूताः कल्पनाः सम्यग्विचार्य निराकर्तव्याः ।अस्माभिस्तु विस्तरभयान्नोद्घाट्य निराक्रियन्ते १५

प० टी०—अथ दुःखसहने तावदुपायद्वयमस्ति धैर्यं विवेकश्च तत्र प्रथममाह—यं हीति । एते मात्रास्पर्शा यं पुरुषं पुरुषार्थाधिष्ठानभूतं न व्यथयन्ति नाभिभवन्ति । भो पुरुषर्षभ पुरुषश्रेष्ठ ! तं धीरमविक्रियं सहनशीलं समदुःखसुखं सुखेऽस्पृहं दुःखे निर्विषादमिति पुरुषविशेषणानि । स पुरुषोऽमृतत्वाय जीवन्मुक्तत्वाय कल्पते ॥ १५ ॥

रा० टी०—ननु दुःखाभावस्य युद्धाकरणे सम्भवात्किं तत्कृत्वा दुःखाभावायाभिमानत्यागेनेत्याशङ्क्य देहाद्यभिमानत्यागेन भवन् दुःखाभावः स्वयं फलरूपोऽपि परमपुमर्थहेतुश्च भवतीत्याह—यं हीति । हे पुरुषर्षभ पुरुषश्रेष्ठ पार्थ ! एते मात्रास्पर्शाः विषयेन्द्रियसन्निकर्षाः पुरुषं पुरं देहं सरति गच्छति। सृ गतौ प्रत्यक्षतो जानाति । उपपदान्तस्योकारः सरतेर्डप्रत्ययः । षत्वम् । शरीरदर्शनवन्तम् । यद्वा पुरु पूर्णं ब्रह्म । तत्सरत्यवगच्छतीति ब्रह्मज्ञानी तम् । धीरं सुखे दुःखे च प्राप्ते सति तत्कार्ययोरुत्सेकविषादयोः स्तम्भकप्रयत्नवन्तम् अतएव समदुःखसुखम् । अनुपादेयत्वेन धर्मेण दुःखेन समं सुखं यस्य स तथा तम् । दुःखं यथाऽपुमर्थत्वहेतुनाऽनुपादेयं तथा वैषयिकं सुखमपि अमृतत्वविरोधित्वादनुपादेयं यस्य स समदुःखसुखः दुःखसमसुखमिति यावत् । अत एव यमभिमानहीनं जीवं स्त्रीजनं पुंजनं वा न व्यथयन्ति न चालयन्ति सुखदुःखकृतोच्चत्वनीचत्वलक्षणाविकारं न प्रापयन्ति । सोऽधिकारी अमृतत्वाय मुक्तये कल्पते समर्थो भवति । अत्र धीरमिति समदुःखसुखत्वे हेतुः । तच्चाभिमानत्यागे हेतुः समदुःखसुखो जीवः कथं सुखहेतुषु शोभनाध्यासलक्षणाभिमानवांस्तद्विरोधिषु द्वेषरूपाभिमानवांश्च कथं भवेदिति सुप्त्यादौ पामराणामपि अभिमानाभावेन व्यथाभावादमृतत्वप्रसक्तिरिति शङ्काव्यावृत्तये पुरुषं शरीरदर्शनवन्तमित्युक्तम् । तथा व्यथाभावमात्रेण कथममृतत्वम् "तमेवं विद्वान्" इत्यादिश्रुतिविरोधादित्यपि शङ्कापनुत्तये पुरुषं ब्रह्मज्ञानिनमित्युक्तम् । 'पुरु ब्रह्मगुणाधिक्यात्तज्ज्ञानात्पुरुषः स्मृतः' इत्युक्तेः । अत्र नरहरितीर्थीये 'ब्रह्मानिरभिमानित्वात्' इति स्मृतिमुदाहृत्य चतुर्मुखादन्येषामतिव्यथाराहित्यमेव लिङ्गभङ्गात्प्रागदेहाद्यभिमानाभावादित्युक्तम् ॥ १९ ॥

**नासतो विद्यते भावो नाभावो विद्यते सतः ॥**
**उभयोरपि दृष्टोऽन्तस्त्वनयोस्तत्त्वदर्शिभिः ॥ १६ ॥**

**नन्वतिप्रभूतशीतोष्णादिप्राप्तावात्माऽप्यतिदुःख्यनुभूयते, अमुकोऽतिदुःखेन मृत इत्यात्मनोऽप्यभावप्रतीतेः कथं शीतोष्णादेरेवागमापायित्वं कथं वाऽऽत्मनोऽमृतत्वकल्पनमित्याशङ्कां निरासयति—नेति । असतोऽनात्मधर्मस्य विकारस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते, सतोऽविकार्यस्यात्मनोऽभावो विनाशो न विद्यते । अनयोर्भावाभावौ नाज्ञप्रतीत्यवसेयावित्याह—उभयोरिति । उभयोरप्यनयोः सदसतोर्विचारे जाते अन्तः सिद्धान्तपक्षः निर्णय इत्यर्थः तत्त्वदर्शिभिर्दृष्टः । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । ऐतदात्म्यमिदं सर्वम् । तत्सत्यं स आत्मा । तत्त्वमसि श्वेतकेतो" इत्यादिश्रुतिप्रतिपादितं तत्त्वं जीवात्मपरमात्मनोः स्वरूपम् । तद्दर्शनशीलैर्दृष्टो ज्ञात इत्यर्थः ॥ १६ ॥**

म० टी०—ननु भवतु पुरुषैकत्वं तथापि तस्य सत्यस्य जडद्रष्टृत्वरूपः सत्य एव संसारः । तथाच शीतोष्णादिसुखदुःखकारणे सति तद्भोगस्यावश्यकत्वात्सत्यस्य च ज्ञानाद्विनाशानुपपत्तेः कथं तितिक्षा कथं वा सोमृतत्वाय कल्पत इतिचेत् न ' कृत्स्नस्यापि द्वैतप्रपञ्चस्यात्मनि कल्पितत्वेन तज्ज्ञानाद्विनाशोपपत्तेः । शुक्तौ कल्पितस्य रजतस्य शुक्तिज्ञानेन विनाशवत् । कथं पुनरात्मानात्मनोः प्रतीत्यविशेषे आत्मवदनात्मापि सत्यो न भवेत् अनात्मवदात्मापि मिथ्या न भवेत् उभयोस्तुल्ययोगक्षेमत्वादित्याशङ्क्य विशेषमाह भगवान्—**नासतइति** । यत्कालतो देशतो वस्तुतो वा परिच्छिन्नं तदसत् यथा घटादि जन्मविनाशशीलं प्राक्कालेन च परकालेन परिच्छिद्यते ध्वंसप्रागभावप्रतियोगित्वात् । कदाचित्कालपरिच्छिन्नमित्युच्यते। एवं देशपरिच्छिन्नमपि तदेव मूर्तत्वेन सर्वदेशावृत्तित्वात् । कालपरिच्छिन्नस्य देशपरिच्छेदनियमेऽपि देशपरिच्छिन्नत्वेनाभ्युपगमस्य परमाण्वादेस्तार्किकैः कालपरिच्छेदानभ्युपगमाद्देशपरिच्छेदोऽपि पृथगुक्तः । स च किञ्चिद्देशवृत्तिरत्यन्ताभावः । एवं सजातीयभेदो विजातीयभेदः स्वगतभेदश्चेति त्रिविधो भेदो वस्तुपरिच्छेदः । यथा वृक्षस्य

वृक्षान्तरात् शिलादेः पत्रपुष्पादेश्च भेदः । अथवा जीवेश्वरभेदो जीवजगद्भेदो जीवपरस्परभेद ईश्वरजगद्भेदो जगत्परभेद इति पञ्चविधो वस्तुपरिच्छेदः । कालदेशापरिच्छिन्नस्याप्याकाशादेस्तार्किकैर्वस्तुपरिच्छेदाभ्युपगमात्पृथङ्निर्देशः । एवं साङ्ख्यमतेपि योजनीयम् । एतादृशस्य असतः शीतोष्णादेः कृत्स्नस्यापि प्रपञ्चस्य भावः सत्ता पारमार्थिकत्वं स्वान्यूनसत्ताकं तादृशपरिच्छेदशून्यत्वं न विद्यते न सम्भवति घटत्वाघटत्वयोरिव परिच्छिन्नत्वापरिच्छिन्नत्वयोरेकत्र विरोधात् । नहि दृश्यं किञ्चित्क्वचित्काले देशे वस्तुनि वा निषिध्यते अननुगमात् । नवा सद्वस्तु क्वचिद्देशे काले वस्तुनि वा निषिध्यते सर्वत्रानुगमात् । तथाच सर्वत्रानुगते सद्वस्तुनि अननुगतं व्यभिचारि वस्तु कल्पितं रज्जुखण्ड इवानुगते व्यभिचारि सर्पधारादिकमिति भावः । ननु व्यभिचारिणः कल्पितत्वं सद्वस्त्वपि कल्पितं स्यात्तस्यापि तुच्छव्यावृत्तत्वेन व्यभिचारित्वादित्यत आह— नाभावोविद्यते सत इति । सदधिकरणकभेदप्रतियोगित्वं हि वस्तुपरिच्छिन्नत्वम् । तच्च न तुच्छव्यावृत्तत्वेन तुच्छे शशविषाणादौ सत्वायोगात् सञ्चामभावो निरूप्यत इति न्यायात् । एकस्यैव स्वप्रकाशस्य नित्यस्य विभोः सतः सर्वानुस्यूतत्वेन सद्व्यक्तिभेदानभ्युपगमात् । घटः सन्नित्यादिप्रतीतेः सर्वलौकिकत्वेन सतोघटादधिकरणकभेदप्रतियोगित्वायोगात् । अभावः परिच्छिन्नत्वं देशतः कालतो वस्तुतो वा सतः सर्वानुस्यूतसन्मात्रस्य न विद्यते न संभवति पूर्ववद्विरोधादित्यर्थः । ननु सन्नाम किमपि वस्तु नास्त्येव यस्य देशकालवस्तुपरिच्छेदः प्रतिषिध्यते । किन्तर्हि सत्त्वं नाम परं सामान्यं तदाश्रयत्वेन द्रव्यगुणकर्मसु सद्व्यवहारः तदेकाश्रयसम्बन्धेन सामान्यविशेषसमवायेषु तथाचासतः प्रागभावप्रतियोगिनो घटादेः सत्त्वं कारणव्यापारात् सतोऽपि तस्याभावः । कारणनाशाद्ध्वंसेनेति कथमुक्तम् 'नासतो विद्यते भावो नाभावो विद्यते सतः' इति । एवं प्राप्ते परिहरति—**उभयोरपीत्यर्धेन** । उभयोरपि सदसतोः सतश्चासतश्चान्तो मर्यादा नियतरूपत्वं यत्सत्तत्सदेव यदसत्तदसदेवेति दृष्टो निश्चितः श्रुतिस्मृतियुक्तिभिर्विचारपूर्वकं कैःतत्त्वदर्शिभिः वस्तुयाथात्म्यदर्शनशीलैर्ब्रह्मविद्भिः नतु कुतार्किकैः । अतः कुतार्किकाणां न विपर्ययानुपपत्तिः । तुशब्दोऽवधारणे । एकान्तरूपो नियम एव दृष्टो नत्वनेकान्तरूपोन्यथाभाव इति तत्त्वदर्शिभिरेव दृष्टो नातत्त्वदर्शिभिरिति वा। तथाच श्रुतिः"सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्"इत्युपक्रम्य"ऐतदात्म्यमिदं सर्वं तत्सत्यम्। स आत्मा। तत्त्वमसि श्वेतकेतो" इत्युपसंहरन्ती सदेकं सजातीयविजातीयस्वगतभेदशून्यं सत्यं दर्शयति । "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुतिस्तु विकारमात्रस्य व्यभिचारिणो वाचारम्भणत्वेनानृतत्वं दर्शयति । "अन्नेन सोम्य शुङ्गेनापोमूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इतिश्रुतिः सर्वेषामपि विकाराणां सति कल्पितत्वं दर्शयति । सत्त्वं च न सामान्यं तत्र मानाभावात् पदार्थमात्रसाधारण्यात् सत्सदिति प्रतीत्या द्रव्यगुणकर्ममात्रवृत्तिसत्त्वस्य स्वानुपपादकस्याकल्पनात्। वैपरीत्यस्यापि सुवचत्वात्। एकरूपप्रतीतेरेकरूपनिर्वाह्यत्वेन सम्बन्धभेदस्य स्वरूपस्य च कल्पयितुमनुचितत्वात्। विषयस्याननुगमेऽपि प्रतीत्यनुगमे जातिमात्रोच्छेदप्रसङ्गात्। तस्मादेकमेव सद्वस्तु स्वतः स्फुरणरूपं ज्ञाताज्ञातावस्थाभासकं स्वतादात्म्याध्यासेन सर्वत्र सद्व्यवहारोपपादकं सन्घट इति प्रतीत्या तावत्सद्व्यक्तिमात्राभिन्नत्वं घटे विषयीकृतम्। ननु सत्तासमवायित्वमभेदप्रतीतेर्भेदघटितसम्बन्धानिर्वाह्यत्वात् । एवं द्रव्यं सद्गुणः सन्नित्यादिप्रतीत्या सर्वाभिन्नत्वं सतः सिद्धं द्रव्यगुणभेदासिद्ध्या च न तेषु धर्मिषु सत्त्वं नाम धर्मः कल्प्यते किन्तु सति धर्मिणि द्रव्याद्यभिन्नत्वं लाघवात्। तच्च वास्तवं न सम्भवतीत्याध्यासिकमित्यन्यत् । तदुक्तं वार्तिककारैः 'सत्तातोऽपि न भेदः स्याद्द्रव्यत्वादेः कुतोऽन्यतः । एकाकारा हि संवित्तिः सद्द्रव्यं सद्गुणस्तथा' इत्यादि सत्तापि नासतो भेदिका तस्याप्रसिद्धेः । द्रव्यत्वादिकं तु सद्धर्मत्वान्न सतो भेदकमित्यर्थः । अत एव घटाद्भिन्नः पट इत्यादिप्र-

तीतिरपि न भेदसाधिका घटपटतद्भेदानां सदभेदेनैक्यात् । एवं यत्रैव न भेदग्रहस्तत्रैव लब्धपदा सती सदभेदप्रतीतिर्विजयते । तार्किकैः कालपदार्थस्य सर्वात्मकस्याभ्युपगमात्तेनैव सर्वव्यवहारोपपत्तौ तदतिरिक्तपदार्थकल्पने मानाभावात्तस्यैव सर्वानुस्यूतस्य सद्रूपेण स्फुरणरूपेण च सर्वतादात्म्येन प्रतीत्युपपत्तेः । स्फुरणस्यापि सर्वानुस्यूतत्वेनैकत्वान्नित्यत्वं विस्तरेणाग्रिमश्लोके वक्ष्यते । तथाच यथा कस्मिंश्चिद्देशे काले वा घटस्य पटादेर्न देशान्तरे कालान्तरे वा घटत्वम् । एवं कस्मिंश्चिद्देशे काले वा घटस्यान्यत्राघटत्वं शक्रेणापि न शक्यते सम्पादयितुं पदार्थस्वभावभङ्गायोगात् । एवं कस्मिंश्चिद्देशे काले वा सतो देशान्तरे कालान्तरे वा सत्त्वं कस्मिंश्चिद्देशे काले वा सतोऽन्यत्रासत्त्वं न शक्यते सम्पादयितुं युक्तिसामान्यात् । अत उभयोर्नियतरूपत्वमेव द्रष्टव्यमित्यद्वैतसिद्धौ विस्तरः । अतः सदेव वस्तु मायाकल्पिताऽसन्निवृत्त्याऽमृतत्त्वाय कल्पते सन्मात्रदृष्ट्या च तितिक्षाप्युपपद्यत इति भावः ॥ १६ ॥

**शं० टी०**—ननु सर्वत्र विद्यमानानां शब्दादीनामनुसन्धिं सुतरां त्यक्त्वा सदा ब्रह्मैवानुसन्धातुं न शक्यत इत्याकाङ्क्षायां ब्रह्मातिरिक्तस्य वस्तुनोऽभावाद्ब्रह्मण एव पूर्णत्वान्नित्यत्वान्निरन्तरत्वाच्च मुमुक्षोः सदा तदेवानुसन्धातव्यमिति सूचयितुं ब्रह्मण एव सत्तां तदन्यस्य त्वसत्तां च प्रतिपादयति—**नासत इति** । सदित्यस्तितामात्रं वस्तु सर्वगतं सूक्ष्ममेकमेकरसं नित्यं निरवयवं निरञ्जनं विज्ञानं यदवगम्यते सर्ववेदान्तेभ्यः एतद्विलक्षणमसच्छब्दादिलक्षणं जगत्तस्यैतस्य भावः सत्ता न विद्यते नास्ति सति स्वरूपेण वस्तुनि सत्ता सम्पद्येत तदभावात्सत्ताभावः । असदात्मनो जगतः सत्त्वे प्रमाणाभावात् । नन्वस्त्येव प्रत्यक्षादिप्रमाणमिति चेत्त्वमत्र प्रष्टव्यः । तत्सत्त्वे प्रमाणं किं प्रत्यक्षमनुमानं वा किमुपमानं वा उतशब्दो वा । नाद्यः इदं रजतम् प्रादेशमात्रश्चन्द्र इत्यादौ व्यभिचारदर्शनात् । तत्र प्रमाणप्रमेययोः सम्यक् संसर्गाभावाद्व्यभिचारस्तदन्यत्र प्रमाणमेवेति चेन्न दारुणि गज इति मृदि घट इति विपरीतग्रहदर्शनाद्व्यभिचारानुच्छित्तेः । न द्वितीयः त्वत्पक्षे प्रपञ्चस्य प्रत्यक्षत्वात्तत्रानुमानानुपयुक्तेः । नापि तृतीयः गोसदृशो गवय इतिवत्तत्सदृशं जगदिति सादृश्यासम्भवादस्त्येव सादृश्यं स्वप्न इति चेत्तथात्वे मिथ्यात्वेऽपि तत्सादृश्यापत्तेः । नैव चतुर्थः विकल्पो नहि वस्तु नह्यस्ति द्वैतसिद्धिः । असत्त्वादन्यस्येति जगतोऽसत्त्वश्रुतिं विना श्रुतिभ्यस्तत्सद्भावाश्रवणात् । ननु "आत्मन आकाशः सम्भूतः" इति "यतो वा इमानि भूतानि जायन्ते" इति ब्रह्मणः सकाशाज्जगदुत्पत्तिः श्रूयते ब्रह्मकार्यत्वेन जगतोऽस्तित्वे श्रुतिरस्त्येव प्रमाणमिति चेत्त्वमत्र प्रष्टव्यः । ब्रह्मकार्यं यज्जगदस्ति तद्ब्रह्मणो भिन्नं किमभिन्नं वा उत भिन्नाभिन्नं वा । भिन्नत्वपक्षे कार्यं सद्वा किमसद्वा उत सदसद्वा । आद्ये कार्यस्य कारणसत्ता वा किमु कार्यसत्ता वा । नाद्यः कार्यकारणयोः सत्तैकत्वे स्वतः सत्ताभावात्कार्यस्यासत्त्वापत्तेः । द्वितीये कार्यसत्ता सद्रूपा वा किमसद्रूपेति । आद्ये सद्रूपकार्यसत्ता कारणसत्तायाः भिन्ना वा किमभिन्ना वा । नाद्यः ब्रह्मणः पूर्णत्वेन निरन्तरत्वात्कार्यस्य तत्सत्ताव्यतिरिक्तसत्तासम्भवादसत्त्वमेव स्यात् । न द्वितीयः सत्तयोरुभयोः सद्रूपेणैकत्वावगमात्कार्यस्य कारणभिन्नत्वाऽसम्भवादसत्त्वाऽव्याहतेः । असद्रूपेण भिन्नायाः कार्यसत्तायाः स्वतः स्वरूपाभावात्कार्यस्य शून्यत्वापत्तेः । कार्यस्यासत्त्वपक्षे जगतः शशविषाणवत्स्वरूपशून्यत्वाद्ब्रह्मकार्यत्वानुपपत्तेः । नन्वसतोऽपि जगतः प्रध्वंसाभाववत्कार्यत्वमुपपद्यत एवेति चेन्न । प्रध्वंसाभावस्यापि कारणसम्बन्धासम्भवात्कार्यत्वानुपपत्तेः । कर्तृकरणादिकारकसम्बन्धे सति खलु जनिक्रियायां घटादेः कार्यत्वं दृष्टं तथैव कारकसम्बन्धवत्त्वे प्रध्वंसस्य भावत्वापत्तावभाव इति निर्देशायोगात्कारकसम्बन्धः सत एव सावयवस्य घटते नेतरस्य । नहि घटनाशनसामग्रीसम्बन्धः प्रध्वंसस्यात्यन्ताऽसत उपयुज्यते । तदभावादेव प्रध्वंसाभावस्य न कार्यत्वं तथैव जगतोऽप्यसतो न कार्यत्वं सिध्यति सदसत्त्वपक्षेपि सत्त्वासत्त्वयोर्भावाभावधर्मत्वेनान्योन्यविरुद्धत्वादेकाधिकरणत्वासम्भवात्तादृग्धर्मवैशिष्ट्यानुपपत्तौ सुतरां जगतो ब्रह्मकार्यत्वानुपपत्तेः । तर्हि कार्यं

कारणाभिन्नमेवेति चेन्न बह्वनर्थागमप्रसङ्गात्कार्यस्य जगतो जडात्मनो ब्रह्माभिन्नत्वे ब्रह्मणोपि दृश्यत्वानित्यत्वाप्रकाशत्वदुःखरूपत्वसावयवत्वादिदोषपरम्पराप्रसङ्गात्तादिष्टापत्तिरेवेति चेत्तव जगदान्ध्यप्रसक्त्याऽहंममेदमित्यादिव्यवहाराऽसिद्धेः भवतोपि जडत्वेन ज्ञानानुत्पत्तौ मोक्षाभावप्रसङ्गात्। "तरति शोकमात्मवित्" इत्यादिश्रुतिवैयर्थ्यापत्तेः । ब्रह्मानन्दप्राप्तिकामानां सतां मुक्तौ प्रवृत्तिविच्छेदप्रसङ्गात्। "यत्तदद्रेश्यमग्राह्यम्" ।"अजोनित्यः शाश्वतः" इत्यादिश्रुतिविरोधप्रसङ्गाच्च । तर्हि तृतीय एव पक्षोस्त्विति चेन्न । भिन्नाभिन्नत्वयोरन्योन्यविरुद्धत्वेनैकाश्रयत्वासम्भवात् । एवं जगतो ब्रह्मकार्यत्वानुपपत्तौ श्रुतिप्रमाणकत्वं च न सिध्यति । नन्वेवं सति "यतो वा" इत्यादिश्रुतेर्मृषावादित्वेनाप्रामाण्यापात इति चेन्न। तस्याब्रह्मणोऽद्वितीयत्वप्रतिपादनपरतया प्रामाण्याभ्युपगमात्केचिज्जगत्कारणं परमाणव इति वदन्ति । प्रकृतिरित्यपरे । तदुररीकृत्य कार्यकारणाभ्यां सर्वश्रुतिप्रसिद्धमद्वितीयत्वं ब्रह्मणो व्येति तदऽसहमानयाऽनया श्रुत्या जगदुपादानत्वं ब्रह्मणः प्रतिपाद्यते । ननूक्तरीत्या जगद्ब्रह्मणोः कार्यकारणभावानुपपत्तौ कथमुपादानं ब्रह्मेति चेद्विवर्तोपादानं ब्रह्मेति ब्रूमः । विवर्तत्वं नामाधिष्ठानस्यान्यथाभानमात्रं तच्च ग्रहीतुर्ग्रहणदोषकृतं शुक्तेर्यथा रजताकारेण प्रतीतिः शुक्तियाथात्म्यसन्दर्शनेन रजताभासस्य शुक्तिमात्रत्ववदधिष्ठानब्रह्मस्वरूपसाक्षात्कारेण जगतोपि प्रतीतिमात्रस्य "तदनन्यत्वमारम्भणशब्दादिभ्य इति । वाचारम्भणं विकारो नामधेयम्" इत्यादिश्रुतिप्रामाण्याद्ब्रह्ममात्रत्वसिद्धौ ब्रह्मणोऽद्वितीयत्वेऽव्याहते सत्यत्रैवं पूर्वोक्तदोषानवकाशः।कार्यस्य नाममात्रत्वावशेषाद्यत एवं ततोऽर्थतः शब्दादिप्रपञ्चसद्भावेन श्रुतिः प्रमाणं नापि प्रत्यक्षमनुमानं च तस्मादप्रामाणिकत्वाज्जगतः स्वतःसत्ता नास्तीति सिद्धम् । एवमसतः शब्दादेः सत्ताभावं प्रतिपाद्य इदानीं ब्रह्मणः स्वस्वरूपस्य सद्भावं प्रतिपादयति—नाभावो विद्यते सत इति। सामान्यविशेषभावशून्यमखण्डचिदेकरसं सर्वविक्रियारहितं सदेवेत्यादिश्रुतिप्रसिद्धमपूर्वमनपरमनन्तरमबाह्यं यत्सत्तस्य सतस्स्वभावो नास्तिता कचित्कदाचिन्न विद्यते जाग्रत्स्वप्नसुषुप्त्यादिषु सद्भावदर्शनादात्मनः सदासत्त्वे प्रत्यक्षं प्रमाणम् । आत्मा नित्यसत्ताको भवति अवस्थात्रयसाक्षित्वात् यन्नैवं तन्नैवं यथा देहादिरित्याद्यनुमानं च। अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्ध इति अजो नित्यः शाश्वत इति । "तथाऽरसं नित्यमगन्धवच्च" इत्यादिश्रुतिश्च प्रमाणम् । एवं सर्वप्रमाणैर्निर्धारितनित्यसत्ताकस्य सतः प्रत्यगभिन्नस्य ब्रह्मणस्स्वभावः कदाचिन्नास्तीति तत्त्वदर्शिभिस्तत्त्वं सर्वाधिष्ठानभूतस्य ब्रह्मणो याथात्म्यमबाधितस्वरूपं सत्यज्ञानानन्दात्मकं यत्तदेव सदा सर्वत्र द्रष्टुं शीलं येषां ते तत्त्वदर्शिनस्तैर्ब्रह्मविद्भिरेवमुभयोः सदसतोरन्तो निश्चयः सदा सर्वत्र ब्रह्मैकमेवास्ति न ततोन्यादिति निष्कर्षो दृष्टः कृत इत्यर्थः। एतेन त्वमप्यात्मनस्त्वनित्यत्वभ्रममुत्सृज्य निःशोको भूत्वा "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्यर्थमवष्टभ्य सर्वत्र ब्रह्मदर्शनपरो भवेति सूचितं भवति ॥ १६ ॥

**श्री० टी०**—ननु तथाऽपि शीतोष्णादिकमतिदुःसहं कथं सोढव्यम्।अत्यन्तं तत्सहने च कदाचिद्देहनाशस्यापि सम्भवादित्याशङ्क्य तत्त्वविचारतः सर्वं सोढुं शक्यमित्याशयेनाह—नेति । असतः अनात्मधर्मत्वादविद्यमानस्य शीतोष्णादेरात्मनि भावः सत्ता न विद्यते तथा सतः सत्स्वभावस्यात्मनो भावो विनाशो न विद्यते एवमुभयोः सदसतोरन्तो निर्णयो दृष्टः । कैस्तत्त्वदर्शिभिर्वस्तुयाथात्म्यविद्भिः । एवम्भूतविवेकेन सहस्वेत्यर्थः ॥ १६ ॥

**स० टी०**—नन्वस्तु पुरुषैकत्वं तथाप्यस्य न मुक्तता ॥ शीतोष्णादेश्च बन्धस्य सहेतोर्वस्तुतावशात् ॥ १ ॥ एवं कथं तितिक्षा स्यात्कथं वा बन्धनाशनम् ॥ सत्यामपि तितिक्षायां जातु स्यादात्मनः क्षयः ॥ २ ॥ इत्याशङ्क्याह भगवान् मङ्गलायतनो हरिः ॥ समस्तस्य प्रपञ्चस्य सहेतोर्बन्धरूपिणः ॥ ३ ॥ स्वाज्ञानात्कल्पितत्वेन स्वात्मबोधोदयात्क्षयः ॥ कल्पितस्य भुजङ्गस्य रज्जौ तज्ज्ञानतः क्षयः ॥ ४ ॥

दृष्टो यथा तथैतस्य शीतोष्णादेः क्षयो धिया ॥ अन्योन्याध्यासतो यस्मात्सदात्मानात्मनोर्द्वयोः ॥ ५ ॥ शीतोष्णादि जगत्सर्वं भाति तस्मान्मृषा जगत् ॥ अन्योन्याध्यासतुल्यत्वे कथमेकस्य सत्यता ॥ ६ ॥ इतरस्यैव मिथ्यात्वमिति चेच्छृणु युक्तितः ॥ परिच्छिन्नं हि यद्वस्तु देशतः कालतोऽर्थतः ॥ ७ ॥ तज्जन्मनाशशीलत्वादसद्रज्जुभुजङ्गवत् ॥ यथा स्वाप्नं मृषा सर्वं मृत्कुम्भादिकमीक्ष्यते ॥ ८ ॥ तथेदं बन्धशब्देन प्रोक्तं विश्वं मृषाऽखिलम् ॥ नाध्यस्तं सत्कदाचित्स्यात्स्वाप्नं कुम्भादिकं यथा ॥ ९ ॥ असतो विद्यमानस्य शीतोष्णादेर्न चास्तिता ॥ सहेतोर्निष्प्रमाणत्वाद्विकारत्वाच्चलत्वतः ॥ १० ॥ घटाङ्कुरादि यत्कार्यं दृष्टं सत्कारणं हि तत् ॥ आकाशादि च नः कार्यं तदप्येवं प्रतीयताम् ॥ ११ ॥ असतश्चेदिदं कार्यं सर्वं स्यादसदन्वितम् ॥ असतः कारणत्वं च निरात्मत्वान्न सिद्ध्यति ॥ १२ ॥ ध्रुवः सत्कुरुते कार्यमयस्कान्तो मणिर्यथा ॥ कारणत्वं भवेदेवं कुर्वतोऽतिशयः कुतः ॥ १३ ॥ इत्येवंवार्तिकेऽध्यस्तकार्यस्य गतिरीरिता ॥ अधिष्ठानस्य सत्यत्वसिद्ध्यै न त्वन्यसिद्धये ॥ १४ ॥ यथा घटादिसंस्थानं मृदो भिन्नं न चक्षुषा ॥ गृह्यते सकलं तद्वत्सतो भिन्नं जगन्नहि ॥ १५ ॥ शीतोष्णादेः प्रपञ्चस्य सहेतोर्नास्ति सत्यता ॥ अन्योन्यव्यभिचारित्वात्कल्पितत्वाच्चिदद्वये ॥ १६ ॥ अज्ञातज्ञापकत्वं हि प्रामाण्यं शास्त्रविन्मतम् ॥ नाज्ञातत्वं प्रपञ्चस्याज्ञानकार्यस्य जाड्यतः ॥ १७ ॥ सर्वत्रानुगते सत्ये कल्पितं व्यभिचारि यत् ॥ विश्वं रज्जौ यथा सर्पदण्डादि सन्न तत्तथा ॥ १८ ॥ सन्घटः सन्पटो हीत्थमनुस्यूते सदद्वये ॥ न घटः पट इत्येवं व्यभिचारि प्रकल्पितम् ॥ १९ ॥ सामानाधिकरण्यं तु मिथ्यासद्वस्तुनोरपि ॥ दृष्टं नीलं नभो वारि मरीच्यादाविदं यथा ॥ २० ॥ तस्माद्बन्धस्य देहादेः सहेतोर्नास्ति सत्यता ॥ तथासतश्चिदानन्दापरिच्छिन्नस्य वस्तुनः ॥ २१ ॥ अभावोऽसत्यता नास्ति परिच्छिन्नत्वलक्षणः ॥ सर्वत्राव्यभिचारित्वादनुस्यूतस्य चित्सतः ॥ २२ ॥ एवं सदसतोरात्मानात्मनोरनयोर्द्वयोः ॥ निर्णयः सत्सदेवासदसदेवेति नान्यथा ॥ २३ ॥ दृष्टस्तद्ब्रह्मतद्भावो याथात्म्यं ब्रह्मणः सतः ॥ तत्त्वं द्रष्टुं सदा शीलं येषां तैस्तत्त्वदर्शिभिः ॥ २४ ॥ त्वमप्येवं समाश्रित्य दृष्टिं तां तत्त्वदर्शिनाम् ॥ शोकमोहौ परित्यज्य तितिक्षस्व गतागतम् ॥ २५ ॥ दृश्यं स्वरूपतोऽध्यस्तं चिद्घनेऽतोऽनृतात्मकम् ॥ संसर्गमात्रमध्यस्तमात्मनोऽस्मिन्ननात्मनि ॥ २६ ॥ प्रातीतिकशरीरत्वाद्दृश्यं मिथ्या जडं क्षरम् ॥ अबाध्यत्वाच्चिदात्मत्वादात्मा सत्यः स्वयम्प्रभः ॥ २७ ॥ १६ ॥

**भा० टी०**—शीतोष्णादेः प्रतीयमानत्वेऽपि बाध्यत्वेन मिथ्यात्वात् । तद्विपर्ययेणात्मनः सत्यत्वाच्च शोकमोहावकृत्वा शीतोष्णादिसहनं युक्तमित्याह—**नेति** । असतो विचारेण बाध्यत्वात्पूर्वमप्यविद्यमानस्य शीतादेः सकारणस्य प्रत्यक्षादिप्रमाणैर्निरूप्यमाणस्यापि भावः परमार्थसत्ता न विद्यते । एतेनासतः शून्यस्य नरविषाणतुल्यस्यास्तित्वप्रसङ्गाभावादप्रसक्तप्रतिषेध इति प्रत्युक्तम् । विमतं शीतादि अतात्विकमप्रामाणिकत्वात् शुक्तिरूप्यवत् । धर्मिग्राहकस्य प्रत्यक्षादेस्तात्त्विकप्रामाण्याबोधकत्वदर्शनात् । तद्विषयस्य शीतादेरनिर्वाच्यस्यासतो भ्रान्तैर्लौकैः प्रत्यक्षादिभिरुपलभ्यमानत्वात् । सत्त्वेन गृहीतस्य भावस्तात्त्विकत्वं नास्तीत्यर्थः । ननु क्वचित्प्रत्यक्षादेस्तात्त्विकप्रामाण्यावेदकत्वदर्शनात्तद्विषयस्य शीतादिद्वैतस्य दुर्निरूपत्वेनानिर्वचनीयत्वं न शक्यते वक्तुम् । वेदैकदेशस्य क्रियार्थत्वे ब्रह्मबोधकवेदस्यापि क्रियार्थत्वम् । यथा—'यथा वा श्रोत्रादीन्द्रियैरूपानुपलब्ध्या चक्षुषापि तन्नोपलभ्यते ' इतिचेन्न । शीतादिद्वैतस्य विकारस्यागमापायित्वेनासत्वनिर्धारणात् । तथाचायं प्रयोगः 'विमतमसत् आगमापायित्वाद्रज्जूरगवत् ' इति । तथा च "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्यादिश्रुत्यापि विकारस्य मिथ्यात्वं बोधितम् । किञ्च कार्यं कारणान्न भिद्यते कुण्डलादिसंस्थानस्य चक्षुरादिनिरूप्यमाणस्य कनकादिव्यतिरेकेणानुपलब्धेः । ततश्चायं प्रयोगः 'विमतं न कारणाद्वस्तुतो भिन्नं का-

र्यत्वात् कुण्डलादिवत्' इति । 'आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा' इतिन्यायात् । कार्यस्य जन्मप्रध्वंसाभ्यां प्रागूर्ध्वं चानुपलब्धेः । कारणाद्व्यतिरेकाच्च सर्वः शीतादिविकारोऽसत् कारणव्यतिरेकेणानुपलब्धेः कुण्डलादिवादिति । सर्वस्यापि कारणस्य स्वस्वकारणाद्व्यतिरेकेणानुपलभमानस्य कार्यकारणपरम्पराभ्रमाधिष्ठाने कल्पितत्वं सिध्यति । ननु कार्यकारणविभागविहीनस्य वस्तुनोऽभावात् कार्यकारणपरम्पराया असत्वे सर्वाभावप्रसङ्ग इति चेन्न । सर्वत्रानुवृत्तव्यावृत्तसदसद्बुद्धिद्वयोपलब्ध्याऽनुवृत्ते च व्यावृत्तानाकल्पितत्वात् । अकल्पितस्य सर्वभेदविकल्पाधिष्ठानस्याकार्यकारणस्य वस्तुनः सिद्धेः । तथा च यद्व्यावृत्तेष्वनुवृत्तं तत्तत्परमार्थं सत् यथा रजतादिधारास्वनुगतः शुक्त्यादेरिदमंशः विमतं सत् अव्यभिचारित्वादिदमंशवत् । यद्व्यावृत्तं तन्मिथ्या यथा रजतादिधाराविमतं मिथ्या व्यभिचारित्वात् रजतादिधारावदित्यनुमानद्वयेन सतोऽकल्पितत्वमसतः कल्पितत्वं च सिद्धम् । ननु नेदमनुमानद्वयमुपपद्यते । सर्वमिथ्यात्ववादिनो विभागाभावात् । अनुमानादिव्यवहारानुपपत्तेरिति चेन्न । सदसद्विभागस्य बुद्ध्यायत्तत्वात् । बुद्धिद्वयाधीने विभागे स्थिते सत्यनुमानादिव्यवहारोपपत्तेः । ननु अद्वैतवादिनस्तव बुद्धिद्वयाभावात् । तदधीनः सदसद्विभागः कथं सेत्स्यतीति चेत् सर्वत्र व्यवहारदशायां कल्पितस्य सदसद्विभागस्य हेतुभूतबुद्धिद्वयस्य सर्वैरुपलभ्यमानत्वात्। नन्वेवमपि सतः सामान्यरूपतया विशेषाकाङ्क्षायां सामान्यविशेषरूपे द्वे वस्तुनी स्यातामिति चेन्न । सोयमित्यादिसामानाधिकरण्यवत् । घटः सन्नित्यादिसामानाधिकरण्यस्यैकवस्तुनिष्ठत्वात् । वस्तुभेदे घटपटयोरिव तदयोगात् । ननूक्तसामानाधिकरण्यस्यैकवस्तुनिष्ठत्वं न वाच्यं नीलमुत्पलमितिवद्धर्मधर्मिविषयतया तस्य सुवचत्वात् । इति चेन्न । नीलोत्पलमिति सामानाधिकरण्यस्य धर्मधर्मिविषयस्य गौणत्वात् । तदपेक्षयानुवृत्ते व्यावृत्तं कल्पितमिति ऐक्यनिष्ठस्यैवंमुख्यस्यौचित्यात् । तथा च सन्घटः सन्पटः सन्हस्ती सन्नश्वः सन्गौरित्येवं बुद्धिद्वयमुपलभ्यते । तयोश्च बुद्ध्योर्घटादिबुद्धिर्व्यभिचरति घटादेर्विकारस्य व्यभिचारित्वं पूर्वं दर्शितम् । न तु सद्बुद्धिर्व्यभिचरति घटे नष्टेऽपि पटादौ तद्दर्शनात् । एतेन घटे नष्टे घटबुद्धौ व्यभिचरन्त्यां सद्बुद्धिरपि व्यभिचरतीति प्रत्युक्तम् । तस्मात् घटादिबुद्धिविषयोऽसद्व्यभिचारात् । रज्जूरगवत् । सद्बुद्धिविषयस्तु नासत् अव्यभिचारादिदमंशवत् । ननु यथा घटे विनष्टे सद्बुद्धिः पटादौ दृश्यते तथा घटबुद्धिरपि घटान्तर इति चेन्न । घटबुद्धेः पटादावदर्शनात् । ननु नष्टे घटे सद्बुद्धिरपि तत्र न दृश्यते इतिचेन्न । यतो घटादिनाशे व्यक्तिनाशे जातेरिव विशेष्यस्य विशेषणीभूतसत्ताभिव्यञ्जकस्याभावात् सद्बुद्धेरप्यदर्शनं नतु तस्याविषयस्य सत्ताया अभावाददर्शनम् । ननु द्वयोः सतोरेव नीलोत्पलयोः विशेषणविशेष्यत्वदर्शनात् । सद्घटयोरपि विशेषणविशेष्यत्वाभ्युपगमे द्वयोः सत्वावश्यंभावाद्घटादिकल्पितत्वानुमानं सामानाधिकरण्यबुद्धिबाधितं घटादेः कल्पितत्वाभ्युपगमे तस्याभावेन समानाधिकरणत्वस्यायुक्तत्वादितिचेन्न । यतः सामानाधिकरण्यबुद्धिः पदार्थद्वयभानमपेक्षते न द्वयोः सत्वम् । मरीच्यादावन्यतरस्याभावेऽपि सदिदमुदकमिति सामानाधिकरण्यदर्शनात् । तस्माद्देहादेः शीतोष्णादेर्द्वन्द्वस्य च सकारणस्य सत्वेन कल्पितस्य वस्तुतोऽसतोभावः । परमार्थसत्ता न विद्यते जन्मध्वंसाभ्यां प्रागूर्ध्वं च वस्त्वन्तरे देशान्तरे चानुपलब्धेः । तथा परमार्थसतः अविनाशिनोऽबाध्यस्यात्मनोऽतत्त्वविद्भिरज्ञातत्वादविद्यमानकल्पस्याभावोऽविद्यमानत्वं परमार्थतो सत्ता न सम्भवति सर्वत्राव्यभिचारात् । त्रिविधपरिच्छेदशून्यत्वात् । इत्थं भाष्यकृद्भिः सदसतोः साध्यत्वं परिच्छिन्नापरिच्छिन्नत्वयोर्हेतुत्वं च बोधितम् । कैश्चित्तु ' परिच्छिन्नस्यासतः शीतोष्णादेः कृत्स्नस्यापि प्रपञ्चस्य भावः सत्ता पारमार्थिकत्वं स्वान्यूनसत्ताकतादृशपरिच्छेदशून्यत्वं न विद्यते सतः सर्वत्रानुस्यूतसन्मात्रस्याभावः परिच्छिन्नत्वं न विद्यते ' इति व्याख्यातम् । परिच्छिन्नत्वं च त्रिविधम् । तत्रात्यन्ताभावप्रतियोगित्वलक्षणं देशतः परिच्छिन्नत्वम् । ध्वंसप्रतियोगित्वलक्षणं कालतः परिच्छिन्नत्वम् ।

अन्योन्याभावप्रतियोगित्वलक्षणं वस्तुतः परिच्छिन्नत्वम् । नन्वात्मनोऽप्याकाशवत् क्वाप्यसमवेतत्वात् । समवायसंबन्धेनात्यन्ताभावप्रतियोगित्वं तस्मिन्नतिव्याप्तम् आकाशादेश्च यावन्मूर्तसंयोगित्वनियमात् । संयोगसम्बन्धेन तस्मिन्नव्याप्तं च अमूर्तनिष्ठेपि विशेषणदाने त्वात्मन्यतिव्याप्तिस्तदवस्था सर्वसम्बन्धित्वाभावविवक्षायां सर्वसम्बन्धशून्ये परमात्मन्यतिव्याप्तिः । सर्वसम्बन्धिन्यज्ञानेऽव्याप्तिश्च ध्वंसप्रतियोगित्वमप्याकाशादावव्याप्तं तेषां परैर्नित्यत्वाभ्युपगमात् । अन्योन्याभावप्रतियोगित्वं चात्मनि व्यभिचारितस्य जडनिष्ठान्योन्याभावप्रतियोगित्वादन्यथाऽस्य जडत्वापत्तेरिति चेन्न । अत्यन्ताभावेऽन्योन्याभावे च प्रतियोगिसमसत्ताकत्वविशेषणेनात्मन्यतिव्याप्तिवारणात् । अज्ञानाकाशादौ स्वस्वसमानसत्ताकान्योन्याभावात्यन्ताभावप्रतियोगित्वसत्वेनाव्याप्त्यभावात् । अविद्याकाशादेर्व्यावहारिकस्य पारमार्थिकाभावपक्षे स्वान्यूनसत्ताकेति विशेषणं देयमत एव प्रातिभासिकरजतादेर्व्यावहारिकाभावप्रतियोगित्वेऽपि न साधनवैकल्यं ध्वंसप्रतियोगित्वं च नाकाशादावव्याप्तम् । "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इतिश्रुतिसिद्धत्वेन तस्यानुमतत्वात् । "आकाशवत्सर्वगतश्च नित्यः" इत्यत्रात्मनि दर्शनत्वं तु स्वसमानकालीनसर्वगतत्वेनाभूतसम्प्लवस्थायित्वेन चेति द्रष्टव्यमिति तत्रोदाहृतव्याख्या । "सत्यं ज्ञानमनन्तं ब्रह्म" इतिश्रुतौ ब्रह्मणोऽपरिच्छिन्नत्वबोधकस्यानन्तपदस्य पृथङ्निर्देशात् ब्रह्म सत्यमपरिच्छिन्नत्वात् । जगदसत्यं परिच्छिन्नत्वादित्यनुमानद्वये हेतुत्वेनोभयोर्निर्देशादप्रसिद्धार्थकल्पनात्मकेन हेतुसाध्ययोरैक्यापत्तिरूपेण च दोषेण ग्रस्ता यदि भाष्यानुरोधेन योजयितुं शक्या तर्हि निर्दुष्टेति दिक् । ननु सर्वेषामेव कुतो न निर्णय इत्याशङ्क्य सर्वेषां तत्त्वदर्शित्वाभावात् । तत्त्वदर्शिनां त्वस्त्येव निर्णय इत्याह—**उभयोरिति**। उभयोरात्मानात्मनोः सदसतोरपि दृष्टोन्तः सत्सदेवासदसदेवेति निर्णयः तत्त्वदर्शिभिर्ब्रह्मविद्भिः । तस्मात्त्वमपि तेषां दृष्टिमवलम्ब्य शोकमोहौ हित्वा शीतादींस्तिक्षस्वेत्याशयः ॥ १६ ॥

**प० टी०**—अथ द्वितीयोपायमाह—**नासत इति** । असतः शुक्तिकारजतवदसद्रूपस्य दृश्यमात्रस्य भावो वर्तमानत्वं वक्तुं न शक्यते । तथा सतः सच्छब्दव्यपदेश्यस्यात्मनोऽभावोऽवर्तमानत्वं च वक्तुं न शक्यते । एवमसत्सतोरन्तो निर्णयस्तत्त्वदर्शिभिः स्वस्वरूपाभिज्ञैर्दृष्टः । अत्रैतदुक्तं भवति यत्रोत्तरक्षणे बाधो दृश्यते तदसच्छब्दव्यपदेश्यम् । तथा यत्सर्वदाप्यबाधितं तत् सच्छब्दव्यपदेश्यम् "अतोन्यदार्तम्" इतिश्रुतेः । तदुक्तमध्यात्मसारे 'यद्वत्क्षणार्धमवभाति मरीचिकाम्भश्चासन्निधानमपि रज्जुभुजङ्गमुख्यम् । स्वप्नः क्षणावधि सुषुप्त्यवधीह तद्वद्विश्वं विभाति तदपि प्रवदन्ति सत्यम् ॥ सर्वप्रपञ्चविलयावसरे सुषुप्तौ यत्प्राणवाय्वनुचरं चिदिहास्ति नूनम् । अर्थप्रतीतिवशतोऽपि च जागरादौ तस्मात्सदित्यभिहितं खलु चित्स्वरूपम्' इति । एवमवस्थात्रयेऽप्यबाधिते सत्ये ब्रह्मणि निविष्टचित्तानां तत्त्वदर्शिनामसद्रूपशीतोष्णादिद्वन्द्वदुःखसहने कियानायासः । यथा स्वप्ने सर्पव्याघ्रदष्टस्य जागरे तत्प्रतिकारासम्भवादित्यर्थः ॥ १६ ॥

**रा० टी०**—ननु 'पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः' इत्यादिना बन्धुहननादिरूपयुद्धात्परलोकदुःखहेतुतयोक्तम् । अतः शोक इत्यत आह—**नासत इति** । अत्र सदसच्छब्दौ साध्वसाधुकर्मपरौ । भावाभावशब्दौ सुखदुःखवाचकौ 'सद्भावे साधुभावे च सदित्येतत्प्रयुज्यते । प्रशस्ते कर्मणि तथा' इत्यादेः । 'सद्भाववाचिनः शब्दाः सर्वे ते सुखवाचिनः' इत्यादेः । असतो दुष्कर्मणः सकाशात् भावः सुखं नास्ति । यथेति दृष्टान्ततयाऽस्योपयोगः । सतः साधुकर्मणः सकाशादभावो दुःखं नास्ति । एतच्च युद्धं नारायणद्विट्तदनुबन्धिनिग्रहरूपत्वेन सत्कर्मत्वान्न परलोकदुःखहेतुः । प्रत्युत सुखहेतुरेवेति भावः । किमत्र प्रमाणमित्यत आह—**उभयोरपीति** । अन्तो निर्णयः पूर्वार्धोक्तार्थस्यावधारणम् । अन्यदर्शनस्यान्यान्प्रत्यप्रत्यायकत्वाद्दर्शनमूलः सम्प्रदायोत्र लक्ष्यते । उभयोरप्यनयोः सदसत्कर्मणोः दुःखसुखे यथाक्रमं न विद्येते इत्यर्थयोरपि तत्त्वदर्शिभिरन्तस्तु

सम्प्रदायस्तु प्रमाणतया दृष्ट इति वा । दृष्टस्तु दृष्ट एवेति वा तुशब्दान्वयः । सत्कर्मणो दुःखं नास्ति असत्कर्मणः सुखं वा नास्तीत्यनयोरर्थयोर्निर्णायकोपदेशपरम्परारूपसम्प्रदायो महात्मभिर्दृष्ट एवेत्यर्थः । नन्वनादित्वहेतुनाहमपि पक्षे निक्षिप्य नित्यत्वेनानुमातव्य इति यदुक्तं त्वया स त्वयुक्तः पक्षः । दृष्टान्ताभावेन व्याप्तिग्रहासम्भवात् । अन्यस्यानादिनित्यस्य मानाभावेनाभावादित्यतोऽन्यदप्यनादिनित्यमित्येतदप्यनेनोच्यते—नासत इति। असतः करणस्य प्रकृतेरभावः प्रागभावः प्रध्वंसश्च न विद्यते नास्ति । तथा सतो ब्रह्मणश्चाभावो द्विरूपो भावः न विद्यते। अत्रासतः सतश्चाभावो न विद्यत इत्येकवाक्ये सम्भवति वाक्यद्वयग्रहणं प्रागुक्तानादित्वानुमाने व्याप्तिसद्भावे आदरसूचनार्थम्। अत एवाग्रेऽविनाशि त्वित्यादिना व्याप्तिग्रहणस्थलमनेकं दर्शयति । अत्र व्याप्तिस्थलप्रदर्शनार्थं नासतो विद्यते भाव इत्येतावदेव वाच्यम् । तथापि प्रागुक्तद्वितीयप्रयोगे कृष्णो दृष्टान्तितः । तत्र साध्यसाधनानुगतिसूचनाय 'नाभावो विद्यते सतः' इत्यप्युक्तिः । तथा च द्वितीयप्रयोगेऽपि व्याप्तिः सुदृढा । नन्वन्यस्यानादिनित्यत्वे माना (भावात्) भाव इत्युक्तमित्यत आह—उभयोरपीति । सदसतोरनादिनित्ययोरन्तस्तु निर्णयभूतपरम्परोपदेशलक्षणसम्प्रदायस्त्वित्यर्थः। तत्त्वदर्शिभिर्दृष्ट इत्यर्थः। नरहरितीर्थास्तु तत्त्वदर्शिभिरपीत्यपिपदं भिन्नक्रममुपेत्य "प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम" इत्यागमोऽत्रार्थे मानत्वेन समुच्चीयत इत्याहुः ॥ १६ ॥

**अविनाशि तु तद्विद्धि येन सर्वमिदं ततम् ॥**
**विनाशमव्ययस्यास्य न कश्चित्कर्तुमर्हति ॥ १७ ॥**

त० टी०—निर्णीतार्थमाह—अविनाशि त्विति । तत्त्वं त्वविनाशि विनाशाभावशीलं विद्धि । किं तत् । येनात्मवर्गेण सर्वमिदमचेतनं ततं व्याप्तं, व्यापकं सूक्ष्मं व्याप्यं स्थूलं, व्यापकत्वेन सूक्ष्मत्वादव्ययस्यात्मतत्त्वस्य विनाशं कश्चिदनात्मपदार्थः कर्तुं नार्हति न योग्यो भवति ॥ १७ ॥

म० टी०—नन्वेतादृशस्य सतोऽज्ञानाद्भेदे परिच्छिन्नत्वापत्तेर्ज्ञानात्मकत्वमभ्युपेयं तच्चानाध्यासिकम्।अन्यथा जडत्वापत्तेः। तथा चानाध्यासिकज्ञानरूपत्वस्य सतो धात्वर्थत्वादुत्पत्तिविनाशवत्त्वं घटज्ञानमुत्पन्नं घटज्ञानं नष्टमिति प्रतीतेश्च। एवं चाहं घटं जानामीति प्रतीतेस्तस्य साश्रयत्वं सविषयत्वं चेति देशकालवस्तुपरिच्छिन्नत्वात्स्फुरणस्य कथं तद्रूपस्य सतो देशकालवस्तुपरिच्छेदशून्यत्वमित्याशङ्क्याह—अविनाशीति । विनाशो देशतः कालतो वस्तुतो वा परिच्छेदः सोऽस्यास्तीति विनाशि परिच्छिन्नं तद्विलक्षणमविनाशि सर्वप्रकारपरिच्छेदशून्यं तु एव तत् सद्रूपं स्फुरणं त्वं विद्धि जानीहि। किं तत् येन सद्रूपेण स्फुरणेनैकेन नित्येन विभुना सर्वमिदं दृश्यजातं स्वतः सत्तास्फूर्तिशून्यं ततं व्याप्तं स्वसत्तास्फूर्त्यध्यासेन रज्जुशकलेनेव सर्पधारादि स्वस्मिन्समावेशितं तदविनाश्येव विद्धीत्यर्थः। कस्मात् यस्मात् विनाशं परिच्छेदमव्ययस्यापरिच्छिन्नस्य अस्य अपरोक्षस्य सर्वानुस्यूतस्य स्फुरणरूपस्य सतः कश्चित् कोऽपि आश्रयो वा विषयो वा इन्द्रियसन्निकर्षादिरूपो हेतुर्वा न कर्तुमर्हति समर्थो न भवति कल्पितस्याकल्पितपरिच्छेदकतायोगात् । आरोपमात्रे चेष्टापत्तेः। अहं घटं जानामीत्यत्र हि अहङ्कार आश्रयतया भासते घटस्तु विषयतया उत्पत्तिविनाशवती काचिदहङ्कारवृत्तिस्तु सर्वतो विप्रसृतस्य सतः स्फुरणस्य व्यञ्जकतया आत्ममनोयोगस्य परैरपि ज्ञानहेतुत्वाभ्युपगमात् तदुत्पत्तिविनाशैनैव च तदुपहिते स्फुरणरूपे सत्युत्पत्तिविनाशप्रतीत्युपपत्तेर्नैकस्य स्फुरणस्य स्वत उत्पत्तिविनाशकल्पनाप्रसङ्गः ध्वन्यवच्छेदेन शब्दवद्घटाद्यवच्छेदेनाकाशवच्च । अहङ्कारस्तु तस्मिन्नध्यस्तोऽपि तदाश्रयतया भासते तद्वृत्तितादात्म्याध्यासात् । सुषुप्तौ अहङ्काराभावेऽपि तद्वासनावासिताज्ञानभासकस्य चैतन्यस्य स्वतः स्फुरणात् । अन्यथैतावन्तं कालमहं किमपि नाज्ञासिषमिति सुषुप्तोत्थितस्य स्मरणं न स्यात्। न चोत्थितस्य ज्ञानाभावानुमितिरियमिति वाच्यम् । सुषुप्तिकालरूपपक्षाज्ञाना-

लिङ्गासम्भवाच्च अस्मरणादेर्व्यभिचारित्वात् स्मरणाजनकनिर्विकल्पकाद्यभावासाधकत्त्वाच्च ज्ञानसामग्र्यभावस्य चान्योन्याश्रयग्रस्तत्वात् । तथा च श्रुतिः "यद्वैतन्न पश्यति पश्यन्वैतद्द्रष्टव्यं न पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यते विनाशित्वात्" इत्यादिः । सुषुप्तौ स्वप्रकाशस्फुरणसद्भावं तन्नित्यतया दर्शयति । एवं घटादिर्विषयोऽपि तदज्ञानावस्थाभासके स्फुरणे कल्पितः य एव प्रागज्ञातः स एवेदानीं मया ज्ञात इति प्रत्यभिज्ञानात् । अज्ञातज्ञापकत्वं हि प्रामाण्यं सर्वतन्त्रसिद्धान्तः । यथार्थानुभवः प्रमेति वदद्भिस्तार्किकैरपि ज्ञातज्ञापिकायाः स्मृतेर्व्यावर्तकमनुभवपदं प्रयुञ्जानैरेतदभ्युपगमात् । अज्ञातत्वं च घटादेर्न चक्षुरादिना परिच्छिद्यते तत्रासामर्थ्यात् । तज्ज्ञानोत्तरकालमज्ञानस्यानुवृत्तिप्रसङ्गाच्च नाप्यनुमानेन लिङ्गाभावात् । नहीदानीं ज्ञातत्वेन प्रागज्ञातत्वमनुमातुं शक्यं धारावाहिकानेकज्ञानविषये व्यभिचारात् । इदानीमेव ज्ञातत्वं तु प्रागज्ञातत्वे सतीदानीं ज्ञातत्वरूपं साध्याविशिष्टत्वादसिद्धम् । नचाज्ञातावस्थाज्ञानमन्तरेण ज्ञानं प्रति घटादेर्हेतुता ग्रहीतुं शक्यते पूर्ववर्तित्वाग्रहात् । घटं न जानामीति सार्वलौकिकानुभवविरोधश्च तस्मादज्ञातं स्फुरणं भासमानं स्वाध्यस्तं घटादिकं भासयति घटादीनामज्ञाने कल्पितत्वसिद्धिः । अन्यथा घटादेर्जडत्वेनाज्ञातत्वतद्भानयोरनुपपत्तेः । स्फुरणं चाज्ञातं स्वाध्यस्तेनैवाज्ञानेनेति स्वयमेव भगवान् वक्ष्यति ' अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ' इत्यत्र । एतेन विभुत्वं सिद्धम् । तथाच श्रुतिः "महद्भूतमनन्तमपारं विज्ञानघन एव" इति । "सत्यं ज्ञानमनन्तम्" इति च ज्ञानस्य महत्त्वमनन्तत्वं च दर्शयति।महत्त्वं स्वाध्यस्तसर्वसम्बन्धित्वम् अनन्तत्वं त्रिविधपरिच्छेदशून्यत्वमिति विवेकः । एतेन शून्यवादोऽपि प्रत्युक्तः । निरधिष्ठानभ्रमायोगान्निरवधिबाधायोगाच्च । तथाच श्रुतिः "पुरुषान्न परं किञ्चित्सा काष्ठा सा परा गतिः" इति सर्वबाधावधिं पुरुषं परिशिनष्टि । उक्तंच भाष्यकारैः "सर्वं विनश्यद्वस्तुजातं पुरुषान्तं विनश्यति । पुरुषो विनाशहेत्वभावान्न विनश्यति"इति । एतेन क्षणिकवादोऽपि परास्तः । अबाधितप्रत्यभिज्ञानादन्यदृष्टान्तस्मरणाद्यनुपपत्तेश्च । तस्मादेकस्य सर्वानुस्यूतस्य स्वप्रकाशस्फुरणरूपस्य सतः सर्वप्रकारपरिच्छेदशून्यत्वादुपपन्नं—नाभावो विद्यते सत इति॥ १७॥

**शं० टी०**—ननु सदिति सामान्यं वा उत स्वरूपं वा । सामान्यत्वे तस्य विशेषापेक्षत्वेन प्रलयदशायामशेषविशेषविनाशे विनाशः स्याद्विशेषाणामपि कार्यत्वेन तत्र विनाशः स्यात् सामान्यस्यापि तद्धर्मत्वेन विनाशोपपत्तेः । स्वरूपत्वे तस्य व्यावृत्तत्वे कल्पितत्वाद्विनाशित्वमुपात्तमनुवृत्तत्वे तस्यैव सामान्यत्वेनोक्तदोषप्रसक्तिरित्याशङ्कायां न तस्य सामान्यविशेषभावशून्यत्वात्सतो न कथञ्चिदपि विनाश उपपद्यत इत्याह—**अविनाशि त्विति** । इदं परिदृश्यमानमविद्याकार्यमसज्जगत्सर्वं येनातिसूक्ष्मेण विभुना सदात्मकेन मरीच्या जलप्रवाहवत्ततमन्तर्बहिश्च व्याप्तं भवति तत्सच्छब्दितं वस्तु अविनाशि यथा असत्तथा विनष्टुं विनाशनविक्रियाया विषयतां प्राप्तुमनर्हं शीलं स्वभावः सत्ता यस्य तदविनाशि अतिसूक्ष्मत्वादतिमहत्त्वाच्च स्वयं विनाशनक्रियातिगं सन्नित्यमेव भवतीत्यर्थः । आत्मा नित्यः परिपूर्णत्वाद्गगनवदिति नित्यत्वे अनुमानं प्रमाणं नष्टेप्येकस्मिन् देहे पदार्थाः सर्वत्र सर्वेषामुपलभ्यन्ते सत्येवात्मनि रविवत्सर्वप्रकाशके पदार्थोपलब्धिरन्यथानुपपत्तिरिति तत्प्रसूतार्थापत्तिश्च प्रमाणम् । अत्रात्मनो नाशं वदन् वादी प्रष्टव्यः किमात्मनो नाशः स्वतो वा किं परतो वा किमाश्रयनाशाद्वा किं सम्बन्धिनाशाद्वा उत कारणनाशाद्वा अथ कार्यनाशाद्वेति। नाद्यः निरवयवत्वाद्यथा सावयवस्य स्वावयवापचयान्नाशस्तथा निरवयवस्यात्मनः स्वतो नाशानुपपत्तेः । न द्वितीयः तस्याप्यात्मत्वेन स्वंप्रति स्वस्य कर्तृकर्मत्वायोगात्ततोऽपि नाशासम्भवात् । न तृतीयः "कस्मिन् भगवः प्रतिष्ठित इति स्वे महिम्नि"इत्यात्मनः स्वातिरिक्ताश्रयाभावश्रवणादाश्रयनाशनिमित्तकनाशानुपपत्तेः । नापि चतुर्थः आत्मनो निरवयवत्वेन द्रव्यगुणक्रियादिभिः संयोगादिसम्बधस्य निरूपयितुमशक्यत्वात्तद्विश्लेषप्रयुक्तनाशासम्भूतेः । नापि च पञ्चमः नचास्य कश्चिज्जनितेति ब्रह्मणः कारणाभावश्रवणात्तन्निमित्तकनाशायोगात् । नैव च षष्ठः "न तस्य कार्यं करणं च विद्य-

ते'' इति कार्याभावश्रवणात्कार्यनाशनिमित्तकनाशासम्भवान्न केनापि प्रकारेणेदं सद्ब्रह्म व्येतीत्यव्ययं तस्यैतस्याव्ययस्य नित्यसिद्धसत्ताकस्य ब्रह्मणो विनाशमभावं कर्तुं वक्तुं च कोपि वादिविशेषो नार्हति । तथात्वे स्वस्यैव नाहमस्मीत्यभावप्रसङ्गः बहुश्रुतिविरोधः प्रत्यक्षादिविरोधश्च प्रसज्यत इति भावः ॥ १७ ॥

**श्री० टी०**—तत्र सत्स्वभावमविनाशि वस्तु सामान्येनोक्तं विशेषतो दर्शयति—**अविनाशीति** । येन सर्वमिदमागमापायधर्मकं देहादिकं ततं तत्साक्षित्वेन व्याप्तं तत्तु आत्मस्वरूपमविनाशि विनाशशून्यं विद्धि जानीहि । तत्र हेतुमाह—**विनाशमिति** ॥ १७ ॥

**स० टी०**—ननु ज्ञानात्मकं सत्स्याज्ज्ञानमाद्यन्तवत्किल ॥ घटज्ञानं समुत्पन्नं नष्टं चेति प्रतीतितः ॥ १ ॥ घटं वेद्मीत्यतो भानात्साश्रयं च सकर्मकम् ॥ दिक्कालवस्तुविच्छिन्नं ज्ञानं स्याद्व्यापकं कथम् ॥ २ ॥ इत्यत्राहाविनाशीत्यपरिच्छिन्नं चिदद्वयम् ॥ जानीहि स्फुरणं सत्तयैनैकेन चिदात्मना ॥ ३ ॥ नित्येन विभुना सर्वमिदं व्याप्तं जडानृतम् ॥ स्वसत्तास्फूर्तिदानेन सर्वं स्वस्मिन्निवेशितम् ॥ ४ ॥ परिच्छेदं न कोऽप्यस्यापरोक्षस्याव्ययस्य च ॥ सर्वानुस्यूतरूपस्य सतः कर्तुमिहार्हति ॥ ५ ॥ नाश्रयो विषयो नो न सन्निकर्षादिकारणम् ॥ परिच्छेत्तुं समर्थोऽस्त्यपरिच्छिन्नस्य कर्हिचित् ॥ ६ ॥ तुनाऽसतो विभिन्नत्वं सूच्यते सच्चिदात्मनः ॥ सत्यं ज्ञानमनन्तं चापरिच्छिन्नमबाधितम् ॥ ७ ॥ श्रुत्या ज्ञानं विनिर्णीतं संविद्रूपं सदद्वयम् ॥ या त्वाद्यन्तवती काचिद्बुद्धिवृत्तिर्मता हि सा ॥ ८ ॥ स्फुरणस्यास्य नित्यस्याभिव्यञ्जकतयाखिले ॥ घटादौ जन्मनाशादिप्रतीतिविषयेरिता ॥ ९ ॥ तदुत्पत्तिविनाशाभ्यामनाशिस्फुरणे परे ॥ जन्मनाशप्रतीतेश्चोपपत्तेर्न स्वतः सतः ॥ १० ॥ साश्रयादिपरिच्छेदवतो भवतु तेन हि ॥ न क्षतिः स्फुरणस्यास्यापरिच्छिन्नस्य वस्तुनः ॥ ११ ॥ यथा घटाद्यविच्छेदादाकाशे भेदकल्पना ॥ तथाधीवृत्त्यविच्छेदात्स्फुरणे भेदकल्पना ॥ १२ ॥ सुप्तौ धीवृत्त्यभावेऽपि सतः स्फूर्तिः स्वतो यतः ॥ अत औपाधिकस्तस्य परिच्छेदो न वास्तवः ॥ १३ ॥ तदुक्तं वार्तिके सम्यक् सत्यादिपदनिर्णये ॥ ननु सत्यमनन्तं च कथं सम्यक् प्रतीयते ॥ १४ ॥ देशकालादिहेतुत्वात्तदिदानीं विभाव्यते ॥ वस्तुतो देशतश्चैव कालतश्च त्रिधोच्यते ॥ १५ ॥ आनन्त्यं ब्रह्मणश्चातः सत्याद्यपि च सिद्ध्यति ॥ नानन्तं देशतो व्योम देशवत्प्रकृतित्वतः॥ १६॥ कारणैकदेशं हि कार्यं नान्यत्र वर्तते ॥ कार्यत्वात्कालतो नास्य वस्तुतश्च विहायसः ॥ १७ ॥ वस्त्वन्तरस्य सद्भावादानन्त्यं वस्तुतोऽपि न ॥ कालाकाशादियोनित्वात्सर्वात्मत्वात्तथात्मनः ॥ १८ ॥ वस्त्वन्तरस्य चासत्वान्मुख्यानन्त्यं परात्मनः ॥ कल्पितेन परिच्छेदो न ह्यकल्पितवस्तुनः ॥ १९ ॥ कल्पितश्चेह कालादि वाचारम्भणशास्त्रतः ॥ कल्पितानामधिष्ठानतया सत्यमबाधितम् ॥ २० ॥ देहादिसर्वविश्वस्यासत्यत्वं सिद्धमित्यलम् ॥ २१ ॥ १७ ॥

**भा० टी०**—किं तत्सदित्याकाङ्क्षायामाह—**अविनाशि त्विति** । न विनष्टुं शीलमस्येति तत् जानीहि । तुशब्दोऽसतो व्यावृत्त्यर्थः । किं येनेदं सर्वं व्याप्तं निरवयवत्वात् स्वरूपेण देहादिवत् आत्मीयाभावात् धनादिहान्या देवदत्तवच्च न व्येतीत्यव्ययम् तस्यास्याव्ययस्य ब्रह्मणः स्वस्वरूपस्य विनाशमभावं बाधं न कश्चित् ईश्वरोऽपि कर्तुमर्हति शक्नोति स्वात्मनि क्रियाविरोधात् । नन्वेतादृशस्य सतोज्ञानाद्भेदे परिच्छिन्नत्वापत्तेर्ज्ञानात्मकत्वमभ्युपेयम् । तच्चानाध्यासिकम् अन्यथा जडत्वापत्तेः । तथाचानाध्यासिकज्ञानरूपस्य सतो धात्वर्थत्वात् उत्पत्तिविनाशवत्त्वं घटज्ञानमुत्पन्नं घटज्ञानं नष्टमिति प्रतीतेश्च । एवं चाहं घटं जानामि इति प्रतीतेस्तस्य साश्रयत्वं सविषयत्वं चेति देशकालतस्तु परिच्छिन्नत्वात् । स्फुरणस्य कथं तद्रूपस्य सतो देशकालवस्तुपरिच्छिन्नशून्यत्वमित्याशङ्क्याह—अविनाशि त्रिविधपरिच्छेदशून्यं तु एव तत्सद्रूपं स्फुरणं विद्धि किं तत् येनेदं सर्वं ततं रज्जुशकलेनेव सर्पधारादि स्वस्मिन् समावेशितं यस्माद्विनाशं परिच्छेदमव्ययस्याप

रिच्छिन्नस्यास्य कोऽप्याश्रयो वा विषयो वा इन्द्रियसन्निकर्षादिरूपो हेतुर्वा न कर्तुमर्हतीति भाष्यकृद्भिः कुतो न व्याख्यातमिति चेन्मूलाक्षरैरुक्तशङ्कोत्तरस्य घटादिज्ञानस्य वृत्त्यात्मकस्यात्मन्यध्यस्तत्वेऽपि तस्य स्वप्रकाशत्वान्न जडत्वं वृत्त्यादेरुत्पत्त्यादिमत्त्वेऽपि तस्य न तत्त्वमित्येवमादिरूपस्याप्रतीतेः । उत्तरत्रान्तवन्त इमे देहा इत्यस्य स्थानेन्तवत्य इमा वृत्तय इति वक्तव्यत्वापत्तेः । एतेषां नाशो भविष्यतीत्यर्जुनस्य भ्रमनिराकरणायात्मसंसृष्टदेहाद्यसत्यत्वप्रतिपादनस्यावश्यकत्वेनाश्रयत्वेत्यादेरार्थिंत्वाच्चेति गृहाण । किञ्च शुक्त्यध्यस्तरजतज्ञानस्य कल्पितत्ववत्सदध्यस्तघटादिज्ञानस्याप्यध्यस्तत्वेन कल्पितत्वस्यसद्बुद्धिरसद्बुद्धिरित्यादिभाष्येण प्रदर्शितत्वादुक्तशङ्कानुत्थानमित्यभिप्रेत्याचार्यैरेवं न व्याख्यातमिति दिक् ॥ १७ ॥

प० टी०—अथोक्तयुक्तिपरिनिष्ठितमर्थमाह—**अविनाशीति** । तद्वस्तु सत्यमविनाशीति विद्धि न विद्यते विनाशो यस्य तदविनाशीति जानीहि । तत्किम् । येनाध्यासाश्रयीभूतेनाधिकरणरूपेण सर्वमिदं दृश्यजातं ततं विस्तारं प्राप्तम् । न हि सत्याश्रयव्यतिरेकेणासत्यं भासते । शुक्तिकाया असत्त्वे रजतमिवेत्यर्थः । अतोऽव्ययस्यास्य विनाशं कः कर्तुमर्हति न कोऽपीत्यर्थः ॥ १७ ॥

श० टी०—ननु 'प्रकृतिः पुरुषः कालः' इत्यादिवाक्यानामुपासनार्थत्वात्सम्प्रदायस्य च मूलानिश्चयात्प्रकृतिपुरुषयोः स्वरूपस्यैवासिद्धेः पुनरनुमानस्य व्याप्त्यसिद्धिरित्याशङ्क्य भगवान् किमिदानीं प्रकृत्यादिस्वरूपसाधनेन किञ्चेदं नित्यम् इदम् ( अ ) नित्यमिति प्रत्यैकमुक्तेन च । यद्देशतो अनन्तं सत्सर्वं नित्यमेवेत्येवं सङ्ग्राहकसङ्गृहीतं वर्णादिजीवादन्यदप्यस्ति तद्व्याप्तिग्रहणस्थलं भविष्यतीत्याह—**अविनाशि त्विति** । येनेदं सर्वं ततं व्याप्तं तदकारादिवर्णजातम् अव्याकृताकाशश्चेत्येवमादि सर्वमविनाशि तु नित्यमेवेति तुरेवेत्यर्थः । अनादिचेत्यपि ग्राह्यम् । ननु " सुप्यजातौ णिनिस्ताच्छील्ये " इति सूत्रेण सोपसर्गस्यापि च्छान्दसत्वाच्छीलिकणिनिप्रत्ययान्ताविनाशिशब्देन स्वाभाविकविनाशाभावोक्तावपि शापेन वा बलवत्प्रयत्नादिना वा विनाशः किं न स्यादित्यत आह—**विनाशमिति** । अस्य व्याप्तस्य वस्तुनो विनाशं ध्वंसं कश्चिदपि कर्तुं नार्हति । कुत इत्यत उक्तम्—**अव्ययस्येति** ह्रासहीनस्येत्यर्थः । ह्रास एव नास्ति तादृशस्य नाशं न कोपि कर्तुमीष्ट इति किमु वाच्यमित्यर्थः ॥ १७ ॥

**अन्तवन्त इमे देहा नित्यस्योक्ताः शरीरिणः ॥**
**अनाशिनोऽप्रमेयस्य तस्माद्युद्ध्यस्व भारत ॥ १८ ॥**

त० टी०—नन्वात्मनां विनाशानर्हत्वेन नित्यत्वमुक्तं तर्हि सर्वेषां मातृपित्रादयो नष्टा इत्यबाधितप्रतीतेः के विषया इत्याशङ्क्याह—**अन्तवन्त इति** । नित्यस्य शरीरिण इमे कर्मफलभोगायतनभूताः पञ्चमहाभूतावयवोपचिता देहा अन्तवन्तो विनाशिन उक्ता व्यासादिभिः । तथाहि—'मातापितृसहस्राणि पुत्रदारशतानि च । संसारेष्वनुभूतानि याता यास्यन्ति यान्ति च ॥ हर्षस्थानसहस्राणि शोकस्थानशतानि च । दिवसे दिवसे मूढमाविशन्ति न पण्डितम् ॥ धर्मो नित्यः सुखदुःखे त्वनित्ये जीवो नित्यो हेतुरस्याप्यनित्यः' इति । हेतुः स्थूलसूक्ष्मशरीरम् । शरीरिणो नित्यत्वे हेतुगर्भितविशेषणमाह—**अनाशिन इति** । नाशाभाववतः अत एव नित्यस्य अनाशी परमार्थश्च प्राज्ञैरभ्युपगम्यते । 'तत्तु नाशि न सन्देहो नाशिद्रव्योपपादितम्'इति वैष्णवे जडभरतवाक्यात् । ननु नित्योऽविनाशी चेदात्मा तर्हि देहे नष्टेऽपि तदुपलब्धिः किन्न स्यादित्याशङ्कानिरासाय हेतुगर्भितविशेषणमाह—**अप्रमेयस्येति** । भगवत्कृपां शास्त्रमन्तरेण प्रत्यक्षादिप्रमाणैरिदमित्थमिति प्रमातुमशक्यत्वात् । 'एनं विदुर्वै भगवत्प्रसादात्' इत्याद्याचार्यपादोक्तेश्च । यद्देहादि इदमित्थमित्युपलभ्यते तन्नाशित्वेनाप्युपलभ्यते, आत्मा न तथा । किन्त्वहं जानाम्य-

**तुभवामीति प्रतीत्या प्रमातृतयैवोपलभ्यते, यस्मादनाशित्वादात्मानो न शोच्याः, नाशित्वादन्तवन्तो देहा अपि न शोच्याः । तस्मान्मोहं विहाय हे भारत ! त्वं युद्धयस्व ॥ १८ ॥**

**म० टी०**—ननु स्फुरणरूपस्य सतः कथमविनाशित्वं तस्य देहधर्मत्वात् देहस्य चानुक्षणविनाशादिति भूतचैतन्यवादिनस्तान्निराकुर्वन् 'नासतो विद्यते भावः' इत्येतद्विवृणोति । अन्तवन्तो विनाशिनः इमे परोक्षाः देहाः उपचितापचितरूपत्वाच्छरीराणि बहुवचनात् स्थूलसूक्ष्मकारणरूपाः विराट्सूत्राव्याकृताख्याः समष्टिव्यष्ट्यात्मानः सर्वे नित्यस्य अविनाशिन एव शरीरिणः आध्यासिकसम्बन्धेन शरीरवत एकस्य आत्मनः स्वप्रकाशस्फुरणरूपस्य सम्बन्धिनः दृश्यत्वेन भोग्यत्वेन चोक्ताः श्रुतिभिर्ब्रह्मवादिभिश्च। तथाच तैत्तिरीयके अन्नमयाद्यानन्दमयान्तान्पञ्च कोशान् कल्पयित्वा तदधिष्ठानमकल्पितं "ब्रह्मपुच्छं प्रतिष्ठा" इति दर्शितम् तत्र पञ्चीकृतपञ्चमहाभूततत्कार्यात्मको विराट् मूर्तराशिरन्नमयकोशः स्थूलसमष्टिः तत्कारणीभूतोऽपञ्चीकृतपञ्चमहाभूततत्कार्यात्मको हिरण्यगर्भः सूत्रममूर्तराशिः सूक्ष्मसमष्टिः । "त्रयं वा इदं नाम रूपं कर्म" इति बृहदारण्यकोक्तत्रयन्नात्मकः सकर्मात्मकत्वेन क्रियाशक्तिमात्रमादाय प्राणमयकोश उक्तः । नामात्मकत्वेन ज्ञानशक्तिमात्रमादाय मनोमयकोश उक्तः । रूपात्मकत्वेन तदुभयाश्रयतया कर्तृत्वमादाय विज्ञानमयकोशउक्तः । ततः प्राणमयमनोमयविज्ञानमयात्मैक एव हिरण्यगर्भाख्यो लिङ्गशरीरकोशः । तत्कारणीभूतस्तु मायोपहितचैतन्यात्मा सर्वसंस्कारशेषोऽव्याकृताख्य आनन्दमयकोशः । ते च सर्वे एकस्यैवात्मनः शरीराणीत्युक्तम् । "तस्यैष एव शारीर आत्मा यः पूर्वस्य" इति तस्य प्राणमयस्यैष एव शरीरे भवः शारीर आत्मा यः सत्यज्ञानादिलक्षणो गुहानिहितत्वेनोक्तः पूर्वस्यान्नमयस्य । एवं प्राणमयमनोमयविज्ञानमयानन्दमयेषु योज्यम् ।अथवा इमे सर्वे देहास्त्रैलोक्यवर्तिसर्वप्राणिसम्बन्धिन एकस्यैवात्मन उक्ता इति योजना । तथा च श्रुतिः "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति सर्वशरीरसम्बन्धिनमेकमात्मानं नित्यं विभुं दर्शयति । ननु नित्यत्वं यावत्कालस्थायित्वं तथाचाविद्यादिवत्कालेन सह नाशेऽपि तदुपपन्नमित्यत आह—**अनाशिन इति** । देशतः कालतो वस्तुतश्च परिच्छिन्नस्याविद्यादेः कल्पितत्वेनानित्यत्वेऽपि यावत्कालस्थायित्वरूपमौपचारिकं नित्यत्वं व्यवह्रियते । "यावद्विकारं तु विभागो लोकवत्" इतिन्यायात् । आत्मनस्तु परिच्छेदत्रयशून्यस्याकल्पितस्य विनाशहेत्वभावान्मुख्यमेव कूटस्थनित्यत्वं नतु परिणामि नित्यत्वं यावत्कालस्थायित्वं चेत्यभिप्रायः । नन्वेतादृशे देहिनि किञ्चित्प्रमाणमवश्यं वाच्यम् ।अन्यथा निष्प्रमाणस्य तस्यालीकत्वापत्तेः शास्त्रारम्भवैयर्थ्यापत्तेश्च । तथाच वस्तुपरिच्छेदो दुष्परिहरः "शास्त्रयोनित्वात्" इति न्यायाच्च । अत आह—**अप्रमेयस्येति** । 'एकधैवानुद्रष्टव्यमेतदप्रमयं ध्रुवम्' अप्रमयमप्रमेयम् "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोयमग्निः । तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति च श्रुतेः । स्वप्रकाशचैतन्यरूप एवात्मा अतस्तस्य सर्वभासकस्य स्वभानार्थं न स्वभास्यापेक्षा । किन्तु कल्पिताज्ञानतत्कार्यनिवृत्त्यर्थं कल्पितवृत्तिविशेषापेक्षा । कल्पितस्यैव कल्पितविरोधित्वात् 'यक्षानुरूपोबलिः' इति न्यायात् । तथाच । सर्वकल्पितनिवर्तकवृत्तिविशेषोत्पत्त्यर्थं शास्त्रारम्भः । तस्य तत्त्वमस्यादिवाक्यमात्राधीनत्वात् । स्वतः सर्वदा भासमानत्वात्सर्वकल्पनाधिष्ठानत्वाद्दृश्यमात्रभासकत्वाच्च । न तस्य तुच्छत्वापत्तिः । तथा च "एकमेवाद्वितीयं सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादिशास्त्रमेव स्वप्रमेयानुरोधेन स्वस्यापि कल्पितत्वमापादयति । अन्यथा स्वप्रामाण्यानुपपत्तेः । कल्पितस्य चाकल्पितपरिच्छेदकत्वं नास्तीति प्राक् प्रतिपादितम् । आत्मनः स्वप्रकाशत्वं च युक्तितोपि भगवत्पूज्यपादैरुपपादितम् । तथाहि यत्र जिज्ञासोः संशयविपर्ययव्यतिरेकप्रमाणानामन्यतममपि नास्ति तत्र तद्विरोधि ज्ञानमिति सर्वत्र दृष्टम् । अन्यथा वितयान्यतरापत्तेः । आत्मनि चाहं नाहं वेति न कस्यचित् संशयः नापि नाहमिति विपर्ययः व्यतिरेकः प्रमा वेति तत्स्वरूपप्रमा सर्वदास्तीति वाच्यम् । तस्य सर्वसंशयविपर्ययध-

र्मित्वात् । 'धर्म्यंशे सर्वमभ्रान्तं प्रकारे तु विपर्ययः' इति न्यायात् । अत एवोक्तम् ' प्रमाणमप्रमाणं च प्रमाभासस्तथैव च । कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः ' इति प्रमाभासः संशयः स्वप्रकाशे सद्रूपे धर्मिणि प्रमाणाप्रमाणयोर्विशेषो नास्तीत्यर्थः । आत्मनो भासमानत्वे च घटज्ञानं मयि जातं नवेत्यादिसंशयः स्यात् । नचान्तरपदार्थे विषयस्यैव संशयादिप्रतिबन्धकत्वस्वभावः कल्प्यः । बाह्यपदार्थे क्लृप्तेन विरोधिज्ञानेनैव संशयादिप्रतिबन्धसम्भवे आन्तरपदार्थे स्वभावभेदकल्पनाया अनौचित्यात् । अन्यथा सर्वविप्लवोपपत्तेः । आत्ममनोयोगमात्रं चात्मसाक्षात्कारे हेतुः । तस्य च ज्ञानमात्रे हेतुत्वाद्घटादिभानेप्यात्मभानं समूहालम्बनन्यायेन तार्किकाणां प्रवरेणापि दुर्निवारम् । न च चाक्षुषत्वमानसत्वादिसङ्करः लौकिकत्वालौकिकत्ववदंशभेदेनोपपत्तेः । सङ्करस्यादोषत्वाच्चाक्षुषत्वादेर्जातित्वानभ्युपगमाद्वा । व्यवसायमात्र एवात्मभानसामग्र्याविद्यमानत्वादनुव्यवसायोप्यपास्तः । न च व्यवसायभानार्थं सः तस्य दीपवत्स्वव्यवहारे सजातीयानपेक्षत्वात् । न हि घटतज्ज्ञानयोरिव व्यवसायानुव्यवसाययोरपि विषयत्वविषयित्वव्यवस्थापकं वैजात्यमस्ति व्यक्तिभेदातिरिक्तवैधर्म्यानभ्युपगमात् । विषयत्वावच्छेदकरूपेणैव विषयित्वाभ्युपगमे घटयोरपि तद्भावापत्तिरविशेषात् । ननु यथा घटव्यवहारार्थं घटज्ञानमभ्युपेयते तथा घटज्ञानव्यवहारार्थं घटज्ञानविषयं ज्ञानमभ्युपेयं व्यवहारस्य व्यवहर्तव्यज्ञानसाध्यत्वादिति चेत् कानुपपत्तिरुद्भाविता देवानां प्रियेण स्वप्रकाशवादिनः । न हि व्यवहर्तव्यभिन्नत्वमपि ज्ञानविशेषणं व्यवहारहेतुतावच्छेदकं गौरवात् । तथाचेश्वरज्ञानवत् योगिज्ञानवत्प्रमेयमिति ज्ञानवच्च स्वेनैव व्यवहारोपपत्तौ न ज्ञानान्तरकल्पनावकाशः । अनुव्यवसायस्यापि घटज्ञानव्यवहारहेतुत्वं किं घटज्ञानत्वेन किंवा घटज्ञानत्वेनैवेति विवेचनीयम् । उभयस्यापि तत्र सत्त्वात् । तत्र घटव्यवहारे घटज्ञानत्वेनैव हेतुतायाः क्लृप्तत्वात्तेनैव रूपेण घटज्ञानव्यवहारेपि हेतुतोपपत्तौ न घटज्ञानज्ञानत्वं हेतुतावच्छेदकं गौरवान्मानाभावाच्च । तथा च नानुव्यवसायसिद्धिः । एकस्यैव व्यवसायस्य व्यवसेये व्यवसाये च व्यवहारजनकत्वोपपत्तेरिति त्रिपुटीप्रत्यक्षवादिनः प्राभाकराः । औपनिषदास्तु मन्यन्ते स्वप्रकाशज्ञानरूप एवात्मा न स्वप्रकाशज्ञानाश्रयः । कर्तृकर्मविरोधेन तद्भानानुपपत्तेः । ज्ञानभिन्नत्वे घटादिवज्जडत्वेन कल्पितत्वापत्तेश्च । स्वप्रकाशज्ञानमात्रस्वरूपोप्यात्मा विद्योपहितः सन् साक्षीत्युच्यते । वृत्तिमदन्तःकरणोपहितः प्रमातेत्युच्यते । तस्य चक्षुरादीनि करणानि । स चक्षुरादिद्वारान्तःकरणपरिणामेन घटादीन्व्याप्य तदाकारो भवति एकस्मिंश्चान्तःकरणपरिणामे घटावच्छिन्नचैतन्यमन्तःकरणावच्छिन्नचैतन्यं चैकलोलीभावापन्नं भवति ततोघटावच्छिन्नचैतन्यं प्रमात्रभेदात्स्वाज्ञानं नाशयदपरोक्षं भवति । घटं च स्वावच्छेदकं स्वतादात्म्याध्यासाद्भासयाति अन्तःकरणपरिणामश्च वृत्त्याख्योतिस्वच्छः स्वावच्छिन्नेनैव चैतन्येन भास्यत इति अन्तःकरणतद्वृत्तिघटानामपरोक्षता तदेतदाकारत्रयमहं जानामि घटमिति भासकचैतन्यस्यैकरूपत्वेपि घटं प्रति वृत्त्यपेक्षत्वात्प्रमातृता अन्तःकरणतद्वृत्तीः प्रति तु वृत्त्यनपेक्षत्वात्साक्षितेति विवेकः । अद्वैतसिद्धौ सिद्धान्तबिन्दौ च विस्तरः । यस्मादेवं प्रागुक्तन्यायेन नित्यो विभुरसंसारी सर्वदैकरूपश्चात्मा तस्मात्तन्नाशशङ्कया स्वधर्मे युद्धे प्राक्प्रवृत्तस्य तव तस्मादुपरतिर्न युक्तेति युद्धाभ्यनुज्ञया भगवानाह—तस्माद्युध्यस्व भारतेति । अर्जुनस्य स्वधर्मे युद्धे प्रवृत्तस्य तत उपरतिकारणं शोकमोहौ तौ च विचारजनितेन विज्ञानेन बाधितावित्यपवादापवादे उत्सर्गस्य स्थितिरिति न्यायेन युध्यस्वेत्यनुवादो न विधिः । यथा " कर्तृकर्मणोः कृति " इत्युत्सर्गः । " उभयप्राप्तौ कर्मणि " इत्यपवादः । ' अकाकारयोः स्त्रीप्रत्यययोः प्रयोगेनेति वक्तव्यम् ' इति तदपवादः । तथाच मुमुक्षोर्ब्रह्मणो जिज्ञासेत्यत्र अपवादापवादे पुनरुत्सर्गस्थितेः " कर्तृकर्मणोः कृति " इत्यनेनैव षष्ठी । तथा च "कर्मणि च" इति निषेधाप्रसराद्ब्रह्मजिज्ञासेति कर्मषष्ठीसमासः सिद्धो भवति । कश्चित्त्वेतस्मादेव विधेर्मोक्षे ज्ञानकर्मणोः समुच्चय इति प्रलपति तन्न । युध्यस्वेत्यतो मोक्षस्य ज्ञानकर्मसमुच्चयसाध्यत्वाप्रतीतेः । विस्तरेण चैतदग्रे भगवद्गीतावचनविरोधेनैव निराकरिष्यामः ॥ १८ ॥

शं० टी०–'अशोच्यानन्वशोचस्त्वम्' इत्यत्र त्वम्पदवाच्यार्थो देहादिर्जन्मादिमत्त्वेनानित्यत्वादशोच्य एव त्वम्पदलक्ष्यार्थोऽप्यात्मा स्वयमजत्वेन जन्मादिशून्यतया नित्यत्वादशोच्य एवेत्युभयोरप्यशोच्यत्वे यत्कारणत्वेन सूचितं तयोरनित्यत्वनित्यत्वाज्ञानं तदिदानीं मुखतो विस्पष्टयन् तेन निवृत्तशोकमर्जुनमालक्ष्य स यस्मिन्नर्थे स्वयमेव पूर्वं प्रवृत्तस्तत्रैव तं प्रोत्साहयति श्रीभगवान्–**अन्तवन्त इति।** अप्रमेयस्य प्रत्यक्षादिप्रमाणैः प्रमापयितुमशक्यस्य नह्यस्तिप्रत्यक्षादेर्विषयतात्मनः प्रमापयितुम्। तथाहि नात्मा प्रत्यक्षविषयः शब्दादिरहितत्वात्। "अशब्दमस्पर्शम्" इति श्रुतेः। नानुमानविषयः लिङ्गाभावात् "नैव च तस्य लिङ्गम्" इति श्रुतेः। नाप्युपमानविषयः सादृश्याभावात्। "हेतुदृष्टान्तवर्जितम्" इति श्रुतेः। न शब्दस्यापि विषयः नामरूपजात्याद्यभावात् "यत्तदद्रेश्यमग्राह्यमगोत्रम्" इति श्रुतेः। ननु "तं त्वौपनिषदम्" इति श्रूयते। कथं शब्दागम्यत्वमिति चेत्सत्यम्। यद्यपि श्रूयते तथापि शब्दप्रवृत्तिनिमित्ताभावान्न तत्र शब्दः प्रवर्तते। "यतो वाचो निवर्तन्ते" इति श्रुतेः। तर्हि श्रुतेरप्रामाण्यमिति चेन्न। निर्विशेषाधिगमकत्वात्प्रामाण्योपपत्तेः। श्रुतिरात्मन्यध्यस्ताशेषविशेषं निरस्याऽधिष्ठानभूतं सन्मात्रं निर्विशेषमात्मानमधिगमयति तेन प्रामाण्यमुपपद्यते। आत्मनः सविशेषत्वेन ज्ञातत्वेपि निर्विशेषत्वस्याऽज्ञातत्वादज्ञातज्ञापकत्वेन श्रुतेः प्रमाणलक्षणसम्भवात्। तथापीदन्तया साक्षान्निर्देष्टुमशक्यत्वादात्मा श्रुतेरविषय एव। किञ्च आत्मनि विषये त्वन्यथानुपपत्तेरभावान्नाप्यर्थापत्तेर्विषयः। भावत्वादनुपलब्धेरप्यविषयः वागविषयत्वादैतिह्यस्याप्यविषयः इत्यात्मनस्त्वप्रमेयत्वं सिद्धम्। सर्वेषां प्रमाणानां प्रमेयानां च यतः प्रामाण्यसिद्धिस्तं किं प्रमापयेत्। "विज्ञातारमरे केन विजानीयात्" इति श्रुतेः। स्वस्मिन्नध्यस्तसर्वप्रमाणप्रमेयसद्भावासद्भावप्रकाशकत्वात्स्वप्रकाशत्वाच्च आत्मनः स्वत एव प्रामाण्यं नतु कचिच्च परतस्तत एवाप्रमेयस्तस्याविनाशिनो विनाशः सत्ताऽदर्शनं परिच्छित्तिस्तदभावोऽस्यास्तीत्यविनाशी अनन्तः। "सत्यं ज्ञानमनन्तम्" इति श्रुतेस्तस्याविनाशिनोऽपरिच्छिन्नस्य परिपूर्णस्याऽत एव नित्यस्य। ननु परिच्छिन्नस्यापि परमाणोरस्ति नित्यत्वमिति चेन्न तन्नित्यत्वे प्रमाणाभावात् "सर्वगतश्च नित्यः" इति "यो वै भूमा तदमृतम्" इति श्रवणादपरिच्छिन्नस्यैव भूम्नो नित्यत्वं न तु परिच्छिन्नस्य। "यदल्पं तन्मर्त्यम्" इति श्रुतेः। शरीरिणः ब्रह्मादिस्तम्बान्तानि शरीराण्युपलब्धिस्थानत्वेनास्य सन्तीति शरीरी सर्वप्राणिशरीरोपाधिकस्तस्य आत्मा त्वेक एवेत्यात्मैकत्वे इदं भगवद्वचनं प्रमाणं यतः शरीरिण इत्यात्मैकत्वमिमे देहा इतीदमा निर्दिश्यमानानां देहानामनेकत्वं च वक्ति शरीरिणः सर्वशरीरेष्वहमित्युपलभ्यमानस्य नित्यस्यात्मनः। इमे उभयत्र सेनयोर्दृश्यमाना भीष्मादिशब्दवाच्या उक्ताः 'आचार्याः पितरः पुत्राः' इत्यादिना त्वयोक्ता देहाः सर्वे अन्तवन्तः अन्तोऽवसानमदर्शनं तद्वन्तः जन्मादिमत्त्वेन प्रतीतिमात्रत्वेन चानियतसत्ताका इति यावत्। नहि शुक्तिरजतवदधिष्ठानभ्रमकल्पितानां देहादीनां सत्ता सम्भवति प्रमाणतो गृह्यमाणे यतोऽसतः सत्ताभावः प्रदर्शितः। 'नासतो विद्यते भावः' इति ततस्त्वमेवं देहादीनामन्तवत्त्वं देहिनस्त्वात्मनो नित्यत्वं च सम्यक् अविज्ञाय पूर्वं मदीया एते म्रियन्त इति शोचितवानसि। इदानीं श्रुतियुक्त्यनुभवैर्विचार्यमाणे आत्मनो देहानां चाऽशोच्यत्वं सिद्धमनुभूतं च त्वया यस्मात् तस्मात् हे भारत विवेकविज्ञानसम्पन्न! युध्यस्व युद्धाय यतस्वेति पूर्वमेव युद्धाय प्रवृत्तमर्जुनं भ्रान्त्या शोचन्तं तच्छोकमूलमपनीय स्वकार्यं कुर्वित्यनुजानीते भगवान् बुभुक्षुं शङ्कितं शङ्कामपास्य भुङ्क्ष्वेतिवत् ननु युद्धं कुर्विति नियुक्ते ज्ञानकाण्डे कर्मविधेरनुपयुक्तत्वान्नहि कर्मणि कर्मारम्भ इति कर्मणि कर्मान्तरस्यैवानुपयुक्तत्वे किं वक्तव्यं स्वप्रतिपक्षे ज्ञानप्रकरणे कर्मविधेरनुपयुक्तत्वं प्रयास्यन्तं प्रयाहीतिवत् योत्स्यन्तं युध्यस्वेत्यनुमतिमात्रं भगवतो वचनस्य तात्पर्यम्। यद्वा "एतं वैतमात्मानं विदित्वा ब्राह्मणा व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति ब्रह्मविदां ब्राह्मणानां सर्वेषणाभ्यो व्युत्थितवतां शरीरयात्रार्थं भिक्षाविधिः श्रूयते। ज्ञानिनामप्यवश्यं शरीर-

यात्रायां वर्तितव्यमिति तद्वदत्रापि ब्रह्मविदां प्राणत्राणमवश्यं कर्तव्यमिति सूचयितुं ज्ञानप्रकरणे आत्मज्ञानिनोऽर्जुनस्य क्षत्रियत्वेन युवत्वेन च संन्यासवनस्थत्वयोरनुपपत्तौ राज्ञोऽस्य राज्येनैव शरीरयात्रा भवितव्या राज्यस्य पराक्रान्तत्वेन तज्जयाय यतस्वेति शरीरयात्रात्र भगवता विधीयते 'शरीरयात्राऽपि च ते न प्रसिद्ध्येदकर्मणः' इत्यग्रे उच्यते च यतस्ततो न कश्चिदत्र कर्मविधिरिति मन्तव्यम् ॥ १८ ॥

श्री० टी०—आगमापायधर्मकं सन्दर्शयति—अन्तवन्त इति। अन्तो विनाशो विद्यते येषां ते अन्तवन्तः। नित्यस्य सर्वदैकरूपस्य शरीरिणः शरीरवतः। अत एव अनाशिनः विनाशरहितस्याप्रमेयस्यापरिच्छिन्नस्यात्मन इमे सुखदुःखादिधर्मका देहा उक्तास्तत्त्वदर्शिभिः। यस्मादेवमात्मनो न विनाशो नच सुखदुःखादिसम्बन्धस्तस्मान्मोहजं शोकं त्यक्त्वा युद्ध्यस्व। स्वधर्मं मात्याक्षीरित्यर्थः॥ १८ ॥

म० टी०—नासतो विद्यते भाव इत्येतद्विवृणोत्यजः॥ स्वप्नमायाशरीरादिवदेते कल्पिता जडाः॥ १ ॥ देहा विनाशिनः सर्वे देवतिर्यङ्नरादयः॥ नित्यस्यानाशिनोऽध्यस्तदेहयुक्तस्य चात्मनः॥ २ ॥ दृश्यत्वेन दृशः प्रोक्ताः श्रुतिभिर्ब्रह्मवादिभिः॥ नित्यत्वस्य च नाशस्य द्विविधत्वात्तयोर्यथा ॥ ३ ॥ भस्मीभूतो मृतो देहो नष्टश्चादर्शनं गतः॥ तद्व्यावृत्त्यर्थमत्रोक्तं नित्यस्येति शरीरिणः॥ ४ ॥ यथाव्याध्यादिभिर्युक्तो देहो नष्ट इतीर्यते॥ तन्निवृत्त्यर्थमत्रोक्तमनाशिन इति स्फुटम्॥ ५ ॥ अन्यथा परिणाम्येव नित्यः क्षित्यादिवद्भवेत्॥ नित्यः कूटस्थ आत्मेति सिद्धमित्याशयो हरेः॥ ६ ॥ नन्वेतादृशचिद्रूपे मानमस्ति न वास्ति चेत्॥ भास्यत्वेन जडत्वं स्यात्तद्वस्यापि घटादिवत्॥ ७ ॥ नास्ति चेत्तर्ह्यलीकत्वं खपुष्पादेरिवास्य च॥ इत्यत्राहाप्रमेयस्यापरिच्छेद्यस्य वस्तुनः॥ ८ ॥ स्वप्रकाशस्य चिद्धातोर्मानापेक्षा स्वभासने॥ नास्ति सर्वावभासस्य मानं तेनावभास्यते॥ ९ ॥ स्वभानार्थं स्वभास्यस्यापेक्षा नैवोपपद्यते॥ स्वप्रकाशस्वभावस्य मानाभावेऽपि न क्षतिः॥ १० ॥ मानाभावे ह्यलीकत्वनियमोऽस्ति जडे क्षरे॥ अन्यथा स्यादलीकत्वं मानस्याप्यवभासिनः॥ ११ ॥ मातृमानप्रमेयाणां यौगपद्येन भासकः॥ साक्षी तत्र प्रमाणस्याकाङ्क्षा स्यादित्यहो भ्रमः॥ १२ ॥ प्रमाणमप्रमाणं वा प्रमाभासस्तथैव च॥ कुर्वन्त्येव प्रमां यत्र तदसम्भावना कुतः॥ १३ ॥ इत्युक्तं सम्प्रदायज्ञैर्वार्तिके श्रीसुरेश्वरैः॥ ननु व्यर्थस्तदा शास्त्रारम्भो मानानपेक्षणे॥ १४ ॥ शास्त्रयोनित्वसूत्रस्य वैयर्थ्यं चेति चेन्नहि॥ कल्पिताज्ञानतत्कार्यनिवृत्त्यर्थमपेक्ष्यते॥ १५ ॥ कल्पितं मानमेतेन स्वप्रकाशस्य का क्षतिः॥ कल्पितस्यैव साजात्या कल्पितस्य विरोधिता॥ १६ ॥ विरुद्धयोरधिष्ठानभूतस्य न विरोधिता॥ तथा च कल्पितस्यैवाज्ञानादेर्विनिवर्तकः॥ १७ ॥ वृत्तिभेदस्तदुत्पत्त्यै शास्त्रारम्भोऽपि सार्थकः॥ तस्य तत्त्वमसीत्यादिवाक्याधीनतयैव च॥ १८ ॥ शास्त्रयोनित्वसार्थक्यं तस्मात्सच्चित्सुखात्मनः॥ सर्वदा भासमानत्वात्स्वतः सिद्धस्य भास्वतः॥ १९ ॥ सर्वाधिष्ठानभावेन तुच्छत्वं च निराकृतम्॥ यस्मात्पूर्वोक्तरीत्यास्ति चिदात्मा व्यापकोऽच्युतः॥ २० ॥ सर्वदैकरसो नित्यस्ततस्तन्नाशशङ्कया॥ स्वधर्मे प्राक्प्रवृत्तस्य युद्धे तस्मात्त्वयाधुना॥ २१ ॥ न युक्तोपरतिस्त्वेवमाह युद्धाभ्यनुज्ञया॥ युद्ध्यस्वेति विधिर्नायं पूर्वप्राप्तानुवादतः॥ २२ ॥ १८ ॥

भा० टी०—किं पुनस्तदसदित्याकाङ्क्षायामाह—अन्तवन्त इति। ननु स्फुरणरूपस्य सतः कथमविनाशित्वं तस्य देहधर्मत्वाद्देहस्य चानुक्षणविनाशित्वादिति भूतचैतन्यवादिनः। तान्निराकुर्वन्नासतो विद्यते भावइत्येतद्विवृणोति इति तु नत्वेत्यादिना देहात्मविवेकस्योक्तत्वमभिप्रेत्याचार्यैर्नावतारितम्। अन्तस्तत्त्वज्ञानेन बाधो येषां विद्यते ते अन्तवन्तः यथाशुक्त्यादिज्ञानेन शुक्तिरूप्यादयो बाध्याः। तथा इमे भ्रान्त्या प्रतीयमाना देहाः स्थूलादयो नित्यस्याबाध्यस्याध्यासिकसम्बन्धेन कारणादिशरीरवतः। देहा इति सकारणस्य शी-

तादेरप्युपलक्षणम्। देहानेकत्वाद्बहुवचनम्। पृथिव्यादिवत् व्यावहारिकनित्यत्वमाशङ्क्याह—अनाशिन इति। परमार्थनित्यस्य विद्वद्भिरुक्तः अप्रमेयस्य रूपादिरहितत्वात् व्याप्तिग्रहाभावात्। सदृशस्यान्यस्यानिरूपणात् प्रवृत्तिनिमित्ताभावात्। तेन विनानुपपद्यमानस्याभावात् अभावत्वाभावात् प्रत्यक्षादिभिरपरिच्छेद्यस्य। अथवाऽज्ञाते हि वस्तुनि प्रमाणान्वेषणा भवति ज्ञातश्चात्मा देहाद्भिन्नः सर्वैः प्राणिभिः योऽहं बाल्ये पितरावन्वभूवं स एव नप्तॄननुभवामीत्यनुसन्धानदर्शनात्। स्वप्ने देवादिशरीरमास्थाय तदुचितान् भोगान् भुक्त्वा प्रबुद्धो मनुष्यदेहं प्राप्य मनुष्य एवाहं न तु देव इति देवशरीरे बाध्यमानेऽपि अहमास्पदस्यात्मनोऽबाध्यमानत्वाच्च योगमाहात्म्येन सिंहादिशरीरभेदेऽप्यात्मनो भेदेन ज्ञातत्वाच्च तथा इन्द्रियेभ्योपि भिन्न आत्मा सर्वैर्ज्ञायते। योहमद्राक्षं स एवेदानीं शृणोमीत्यहमालम्बनस्य प्रत्यभिज्ञानात्। बुद्धिमनोभ्यामपि भिन्नः तयोः करणत्वेन कर्तृत्वाश्रयत्वायोगात्। अहं कृश इत्यादिप्रत्ययस्तु प्रेमास्पदे पुत्रादौ विकलेऽहमेव विकल इत्यादिप्रत्ययवदुपपद्यते। तस्मादात्मनो ज्ञातत्वान्न प्रमाणपरिच्छेद्यता। ननु कथं शास्त्रस्य प्रत्यगात्मनि प्रामाण्यम् तस्य स्वतः सिद्धस्य ज्ञातत्वेनाविषयत्वादिति चेत् सत्यम्। तथापि शास्त्रस्यात्माध्यस्तसमूलकर्तृत्वाद्यनात्मधर्मनिरासकत्वेन प्रामाण्यमुपपद्यते। तथा च भाष्यम्—"नहि पूर्वमित्थमहमित्यात्मानं प्रमाय पश्चात्प्रमेयपरिच्छेदाय प्रवर्तते। नह्यात्मा नाम कस्यचिदप्रसिद्धो भवति। शास्त्रं त्वन्त्यं प्रमाणम्। अतद्धर्माध्यारोपणमात्रनिवर्तकत्वेन प्रामाण्यमात्मनः प्रतिपद्यते न त्वज्ञातार्थज्ञापकत्वेन" तथा च श्रुतिः "यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा" इति यस्मादात्मा नित्यः केनापि क्वचिदपि कदापि न नश्यति देहाश्चानित्यत्वान्नश्यन्त्येव तस्माद्धे भारत भरतवंशोद्भव! त्वं युध्यस्व स्वधर्मं युद्धं मा त्याक्षीरित्यर्थः ॥ १८ ॥

प० टी०—अथ यदर्थमिहोपक्रमस्तदाह—अन्तवन्त इति। नित्यस्य सर्वदैकस्वभावस्यात एवानाशिनोऽप्रमेयस्यापरिच्छिन्नस्य शरीरिणः शरीरावच्छिन्नस्य परमात्मनः सुखदुःखयोनयो देहास्तत्त्वदर्शिभिरन्तवन्तः क्षणभङ्गुरा उक्ता घटान्तर्गताकाशस्य घटा इव। एकस्यैव बहुभिः स्वरूपैर्नटतो नटस्येवेत्यर्थः। यस्मादेवं तस्माद्भीष्मद्रोणादिवधविषये विगतज्वरो भूत्वा युद्ध्यस्व युद्धं कुरुष्व। यद्वा इमे स्वप्नावस्थायामनुभूयमाना उच्चावचदेहा अन्तवन्तो जागृदवस्थायां नश्वरा उक्ता वेदेन प्रतिपादिताः सन्ति। कस्याशरीरिणस्तत्तच्छरीरावस्थेन तत्तद्भोगान् भुञ्जानस्यात्मनो नित्यस्यावस्थात्रयेऽप्यनुस्यूतस्य। शेषं पूर्ववत्। तदुक्तम्—'सुखं तल्पगतो येन स्वप्नदेहेन दिक्तटान् ॥ परिभ्रमसि हे राम स देहस्ते क्व सम्प्रति ॥' श्रुतिरपि शातपथी—"अथैतत्स्वप्नया चरति ते हास्य लोकास्तदुतेव महाराजा भवत्युतेव महाब्राह्मण उतेवोच्चावचं निगच्छति" इति। भाष्यम्—"स्वप्नया स्वप्नावस्थया चरति व्यवहरति तस्यात्मनो लोका भोगस्थानानि।" शेषं स्पष्टम्। तदुक्तम्—'स्वप्ने यथा पश्यति देहमीदृशम्' इत्यादि ॥ १८ ॥

रा० टी०—ननु "रूपंरूपं प्रतिरूपो बभूव" इति श्रुतेः जीवः प्रतिबिम्बः। प्रतिबिम्बश्चोपाधिकृतः प्रतिमुखमिव दर्पणोपाधिकृतम्। देह एवात्र जीवोपाधिर्नान्योस्ति। तथाच जीवचेतना न नित्याः। नाशवद्देहोपाधिकत्वात्। दर्पणोपाधिकप्रतिमुखवत्। नश्वरबिम्बोपाधिसन्निधिकत्वात्। नश्वरमुखदर्पणसन्निधिकप्रतिमुखवदिति प्रतिपक्षग्रस्तमनादिनित्यत्वानुमानमित्यत आह—अन्तवन्त इति। एकवचनं बहुवचनार्थे। शरीरिणां नित्यानामिमे परिदृश्यमानाः भौतिकाः देहाः अन्तवन्तः विनाशिन इति योजना। इम इति विशेषणादन्येन्तहीना अपि देहाः सन्तीति सूच्यते। तत एवोपाधयो जीवानां नान्तवद्भौतिकदेहा इत्याद्यप्रतिपक्षे हेतुरसिद्धः। अत एव नित्यस्येति साध्योक्तिः। जीवाः नित्याः नित्योपाधिकत्वात्। व्यतिरेकेण प्रतिमुखवदित्युक्तं भवति। नित्यस्येत्येवोक्तावीश्वरस्यापि देहोन्तवानिति प्राप्नोतीत्यतः शरीरिण इति विशेषणम्। द्वितीयहेतुरप्यसिद्ध इत्याह—अनाशिन इति। बिम्बोपाधिसन्निधिनाशकृतनाशहीनस्य शरीरिण इत्यन्वयः। जीवाः नित्याः

नित्यबिम्बोपाधिसन्निधिकत्वात् । व्यतिरेकेण प्रतिमुखवदित्युक्तं भवति । ननूपाधेर्नित्यत्वेपि परिच्छिन्नपरिमाणस्यैव वस्तुनो बिम्बत्वयोग्यत्वात्परिच्छिन्नयोश्च बिम्बोपाध्योः सन्निधेः दर्पणमुखसन्निधेरिव कादाचित्कत्वनियमात्कथं तस्य नित्यतेत्यत आह—**अप्रमेयस्येति** । प्रमा परिमितिः अपरिच्छिन्नस्येत्यर्थः । सर्वगतस्येति यावत् । जीवे सर्वगतत्वस्याभावादतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति सिंहश्चैत्र इत्यादौ प्रसिद्धेः सर्वगतेश्वरसरूपस्येत्यर्थः । तत्प्रतिबिम्बस्येतियावत् । सर्वगतेश्वरप्रतिबिम्बस्य कथं बिम्बसन्निधिनाशेन नाशः स्यादिति भावः । नच सर्वगतस्य प्रतिबिम्बत्वायोगः । तत्सारूप्यस्यैव प्रतिबिम्बताशब्दार्थत्वात् । तदाह सूत्रकारः । "यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात्"इति ।उपसंहरति—तस्मादिति । बिम्बोपाधितत्सान्निधीनां नाशाभावेन तन्नाशप्रत्युक्तनाशस्य जीवचेतने अनाशङ्क्यत्वेन प्रतिपक्षानुत्थानात् । नत्वेवाहमित्यत्रोक्तानादिनित्यत्वानुमानेन जीवस्य नित्यत्वात् । जीर्णदेहहानेपि समीचीनदेहान्तरलाभरूपप्रतिनिधिना समाधानसम्भवात् । बन्धुदेहस्पर्शनदर्शनाद्यभावनिमित्तशोकस्य च परमपुमर्थहेत्वभिमानत्यागेन निवर्तितुं शक्यत्वात् । भगवत्पूजार्थं हे भारत ! युध्यस्वेति । नन्वेतदयुक्तम् । जीवेश्वरयोर्नित्यत्वाविशेषात् कुत ईश्वरस्य पूज्यतेत्यतो वा जीवाद्धरेर्विशेषं वक्तुं अविनाशि त्वित्यादि श्लोकद्वयं प्रवृत्तम् । तथाहि । येन भगवता इदं जगत् कालः गुणजातं ततं व्याप्तम् । कालतो गुणतो देशतश्च यद्विष्णवाख्यं ब्रह्म ततिमत्तद्विष्णवाख्यं ब्रह्माविनाशि । तुर्विशेषे । 'अनित्यत्वं देहहानिर्दुःखप्राप्तिरपूर्णता । नाशश्चतुर्विधः प्रोक्तस्तदभावो हरेः सदा' इत्युक्तादिशा चतुर्विधनाशहीनमिति विद्धि जानीहीत्यर्थः । विनाशमित्यादिप्राग्वद्व्याख्येयम् । वर्णावकाशादेर्देशकालाभ्यां व्याप्तत्वेपि न गुणतः सास्ति । जीवस्य कालतस्ततत्वेपि न देशगुणाभ्यां ततिरस्तीति हरेस्ततत्वे विशेषः । अस्त्वेवं हरेः सर्वप्रकारेण विनाशाभावः । तावता जीवाद्विनाशविषये को हरेर्विशेष इत्यत आह—**अन्तवन्त इति** । शरीरिणां शीर्यमाणदेहवतां संसारिणामिति यावत् । स्वरूपतो नित्यानां जीवानामिमे देहाः अन्तवन्तो विनाशवन्तो जनिमन्तश्चेत्यपि ग्राह्यम् । संसारिदेहाः आद्यन्तवन्त इत्युक्त्या मुक्तदेहो नैवमिति लाभान्मुक्तेश्वरस्य हरेः कैमुत्यासिद्धो नित्यदेहः । एवं चोत्पत्तिविनाशवद्देहवतां च दुःखप्राप्तिः अवर्जनीयैव । गुणतोऽपूर्णता व्यक्तैवेति । स्वरूपतो नित्यत्वेपि त्रिविधनाशवत्त्वाज्जीवस्य ततो हरेश्चतुर्विधनाशहीनस्यास्ति महान्विशेष इति तत्पूजा कार्येत्युपसंहरति—**अनाशिन इति** । तस्माज्जीवेभ्योतिशयवत्त्वात् । अनाशिनश्चतुर्विधनाशहीनस्याप्रमेयस्य देशकालगुणापरिच्छिन्नस्य हरेः पूजार्थं युध्यस्वेति । किञ्च न केवलं सर्वप्रकारेणाविनाशित्वात्तत्पूजा कार्येति किंतु सर्वथैवाविनाशित्वात्स एव स्वतन्त्रः । ततश्च तदधीनत्वान्मुक्तेः युद्धादिस्वकर्मणाराधितश्च मोक्षं ददातीत्यतस्तत्पूजा कार्येति भावेन चोक्तमनाशिनोऽप्रमेयस्येति ॥ १८ ॥

**य एनं वेत्ति हन्तारं यश्चैनं मन्यते हतम् ॥**
**उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ १९ ॥**

**त०टी०—एवमात्मनोऽविनाशित्वे सिद्धे गुरून् हत्वेत्यादिना आत्मनो गुर्वादिहन्तृत्वकल्पनं तेऽज्ञानमेवेत्याह—यइति । यः पुरुष एनमुक्तविधं शरीरिणं हन्तारं हननक्रियायाः कर्त्तारमयं मम हन्तेति वेत्ति जानाति यश्चान्य एनं हतं हननक्रियायाः कर्मभूतं हतोऽयं मयेति मन्यते तावुभौ न विजानीतः आत्मस्वरूपानभिज्ञावित्यर्थः । यतो नायं हन्ति न हन्यते हननक्रियायाः कर्ता कर्म वा न भवतीत्यर्थः ॥ १९ ॥**

**म० टी०**—नन्वेवमशोच्यानन्वशोचस्त्वमित्यादिना भीष्मादिबन्धुविच्छेदनिबन्धने शोकेऽपनीतेपि तद्वधकर्तृत्वनिबन्धनस्य पापस्य नास्ति प्रतीकारः । नहि यत्र शोको नास्ति तत्र पापं नास्तीति नियमः । द्वे-

ब्यब्राह्मणवधे शोकाविषये पापाभावप्रसङ्गात् । अतोहं कर्ता त्वं प्रेरक इति द्वयोरपि हिंसानिमित्तपातकापत्तेरयुक्तमिदं वचनं तस्माद्युध्यस्व भारतेत्याशङ्क्य काठकपठितया ऋचा परिहरति भगवान्—य एनमिति । एनं प्रकृतं देहिनमदृश्यत्वादिगुणकं यो हन्तारं हननक्रियायाः कर्तारं वेत्ति अहमस्य हन्तेति विजानाति यश्चान्य एनं मन्यते हतं हननक्रियायाः कर्मभूतं देहहननेन हतोहमिति विजानाति तावुभौ देहाभिमानित्वादेनमविकारिणमकारकस्वभावमात्मानं न विजानीतो न विवेकेन जानीतः शास्त्रात् कस्मात् यस्मात् 'नायं हन्ति न हन्यते' कर्ता कर्म च न भवतीत्यर्थः । अत्र य एनं वेत्ति हन्तारं हतं चेत्येतावति वक्तव्ये पदानामावृत्तिर्वाक्यालङ्कारार्था । अथवा य एनं वेत्ति हन्तारं तार्किकादिरात्मनः कर्तृत्वाभ्युपगमात् तथा 'यश्चैनं मन्यते हतम्' चार्वाकादिरात्मनो विनाशित्वाभ्युपगमात् तावुभौ न विजानीत इति योज्यम् । वादिभेदख्यापनाय पृथगुपन्यासः । अतिशूरातिकातरविषयतया वा पृथगुपदेशः । " हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ' इति पूर्वार्धे श्रौतः पाठः ॥ १९ ॥

**शं० टी०**—यत्तु 'पापमेवाश्रयेदस्मान्' इति 'सङ्करो नरकायैव कुलघ्नानाम्' इति 'कथं भीष्ममहं संख्ये' इत्यात्मनः पापक्रियाविषयत्वं तत्फलभोक्तृत्वं तत्क्रियाकर्तृत्वं च मन्यसे तदात्मस्वरूपाज्ञानकृतमेव भवति सत्यात्मतत्त्वे परिज्ञातेन कस्यापि विकल्पस्यावकाशोस्तीत्यात्मयाथात्म्यमवगमयितुं तत्प्रकाशनपरौ मन्त्रावर्थतः पठति । तत्राद्येनात्मनः क्रियाश्रयत्वं तद्विषयत्वं च यो मन्यते स श्रुतवेदान्तोपि मूढ एवेत्याह—य एनमिति । यस्त्वहमिमं हन्मीत्यहंप्रत्ययार्थमेनं प्रकृतमात्मानं हन्तारं हननक्रियायाः कर्तारं मन्यते योऽहमनेन हतोस्मीत्येनमात्मानं परेण हतं तद्धननक्रियाया विषयभूतं च मन्यते एवमात्मानं हननक्रियाया आश्रयं विषयं च मन्यमानौ तौ उभौ पुरुषावात्मानं न विजानीतः यथाभूतमात्मतत्त्वं साक्षान्न विदितवन्तौ यतोऽयमात्मा न स्वयं यं च कंचन हन्ति येन केनापि न हन्यते देहेन्द्रियादिषु व्यापृतेषु सत्स्वयमात्मा चलितेपि च वृक्षे तदन्तस्थ आकाश इव कूटस्थासङ्गचिद्रूपेण सर्वत्रोदासीनतया तूष्णीमास्त इत्यर्थः । " न तदश्नाति किंचन न तदश्नाति कश्चन" इति श्रुतेः। आत्मा निष्क्रिय एव भवति निरवयवत्वादाकाशवदित्यादियुक्तिभिः "निष्कलं निष्क्रियं शान्तम्" इति " साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिभिश्चात्मा निष्क्रिय एवेति श्रुत्वा मत्वा च स्वं कर्तारं भोक्तारं सुखिनं च दुःखिनं च यो मनुते नासावात्मतत्त्वं विजानाति अपि तु तस्य श्रवणादिक्रिया मृतप्रस्वाः प्रसवक्रियावच्छ्रमैकफलैवेति सूचितं भवति ॥ १९ ॥

**श्री० टी०**—तदेवं भीष्मादिमृत्युनिमित्तः शोको निवारितः । यच्चात्मनो हन्तृत्वनिमित्तं दुःखमुक्तम् एतान्न हन्तुमिच्छामीत्यादिना तदपि तद्वदेव निर्निमित्तमित्याह—य एनमिति । एनमात्मानम् । आत्मनो हननक्रियायां कर्मत्वं कर्तृत्वमपि नास्तीत्यर्थः । तत्र हेतुः—नायमिति ॥ १९ ॥

**स० टी०**—ननु त्वदुक्तरीत्येत्थं मास्तु शोकस्तथापि मे ॥ भीष्मादिवधकर्तृत्वनिमित्तैनो दुरुद्धरम् ॥ १ ॥ कर्ताहं प्रेरकस्त्वं च हिंसायां पातकं द्वयोः ॥ युद्ध्यस्वेति वचस्तस्मादयुक्तमिति चेच्छृणु ॥ २ ॥ य एनं देहिनं शुद्धमक्रियं निष्कलं परम् ॥ हननाख्यक्रियायाश्च कर्तारं वेत्ति मूढधीः ॥ ३ ॥ अस्य हन्ताहमित्येवं यश्चैनं मन्यते हतम् ॥ हतोऽहं तत्क्रियायाश्च कर्मेत्येवं हि तावुभौ ॥ ४ ॥ देहाभिमानिनावेनं न जानीतो विवेकतः ॥ यतोऽयं तत्क्रियाया नो कर्ता नैवास्ति कर्म वा ॥ ५ ॥ कर्मैनं वेत्ति चार्वाको देहमात्रात्मविज्जडः ॥ बुद्ध्यादिगुणमात्मानं कर्तारं वेत्ति तार्किकः ॥ ६ ॥ इत्थं वादिभिदा सम्यक्ख्यापनाय पृथक्पुनः ॥ उपन्यासः पदानां वा शूरादिख्यापनाय वा ॥ ७ ॥ अतश्चार्वाककाणादपक्षं त्यक्त्वातिदूरतः ॥ वेदान्तमतमाश्रित्य युद्ध्यस्वेत्याशयो हरेः ॥ ८ ॥ १९ ॥

भा० टी०—अहमेतेषां हन्ता मयैते हन्यन्तइत्यर्जुनबुद्धेर्मृषात्वबोधनाय ऋचावुदाहरति—य इति । यत्तु 'नन्वेवमशोच्यानित्यादिना बन्धुविच्छेदनिबन्धने शोकेऽपनीतेऽपि तद्वधकर्तृत्वनिबन्धनपापस्य नास्ति प्रतीकारः शोकाविषयेऽपि द्वेष्यब्राह्मणवधे पापस्य सत्वात् । अतः कर्तुर्मम प्रेरकस्य तव च हिंसानिमित्तपापापत्तेरयुक्तमिदं वचनं तस्मादित्यादीत्याशङ्कां काठकपठितया ऋचा परिहरति—यइति' तद्विचार्यम् । ऋचि हन्त्रादेः पापं न जायते इति परिहारस्यानुक्तेः । वधनिबन्धनबन्धुविच्छेदस्यात्मनित्यत्वप्रतिपादकपूर्वग्रन्थेन नाशाभावोक्त्या प्रतिषिद्धत्वेन तन्निबन्धनपापस्यापि निवारितत्वात् शङ्काया अनुत्थानात् । यस्मादेवं प्रागुक्तन्यायेन नित्यो विभुरसंसारी सर्वदैकरूपश्चात्मा तस्मात्तन्नाशशङ्कया स्वधर्मे युद्धे प्राक्प्रवृत्तस्य तव तस्मादुपरतिर्न युक्तेति स्वपूर्वोक्तिविरोधात् । द्वेष्यब्राह्मणवधे शोकाभावे द्वेष्यत्वस्य हेतोः पापासाधकत्वेन दृष्टान्तस्य वैषम्यात् । सङ्घातवधनिबन्धनपापाभावस्याग्रिमग्रन्थेन क्षत्रधर्मबोधकेन वक्ष्यमाणत्वाच्च । नत्वेवाद्येकोनविंशतिश्लोकैरशोच्यानन्वशोचस्त्वमित्येतस्य विवरणं क्रियते स्वधर्ममपि चावेक्ष्येत्यष्टभिः श्लोकैः । प्रज्ञावादांश्च भाषस इत्यस्य मोहद्वयस्य पृथक्प्रयत्ननिराकर्तव्यत्वादिति स्वपूर्वग्रन्थविरोधाच्चेत्यास्तां तावत् । य एनमात्मानं हननक्रियायाः कर्तारं यश्च तस्याः कर्म जानाति तौ द्वौ देहात्मबुद्धिमत्त्वेन भ्रान्तौ न विजानीतः । यतोऽयमात्मा देहभिन्नोऽविक्रियत्वात् । हननक्रियायाः कर्ता तत एव कर्म च न भवतीत्यर्थः ॥ १९ ॥

प० टी०—अथ एतान्न हन्तुमिच्छामीत्यादिना यच्चात्मनो हन्तृत्वनिमित्तं दुःखमुक्तं तदपि निर्निमित्तमित्याह—य एनमिति । एवमात्मनो हननक्रियायां कर्मत्वं कर्तृत्वमपि नास्ति । यद्वद्घटेनैव घटस्फोटने तदन्तर्गताकाशस्य कर्मकर्तृभावो नास्ति । तत्र हेतुमाह—नायमिति ॥ १९ ॥

रा० टी०—ननु यदुक्तं जीवचैतन्यस्य नित्यत्वं यच्चोक्तं सर्वथैकप्रकारेणाविनाशित्वादीश्वरः स्वतन्त्रः अनिच्छया देहनाशात्तन्निमित्तदुःखवत्त्वाच्च जीवः परतन्त्र इति । तज्जीवनित्यत्वपारतन्त्र्ये न युक्ते । हन्तायमस्य हतश्चायामिति हननादिक्रियायाः जीवे तत्र स्वातन्त्र्यस्य च प्रतीतोरित्यत आह—य इति । यः पुमानेनं जीवं हन्तारं जीवान्तरस्य स्वातन्त्र्येण घातकं वेत्ति यश्चैनं केनचित्स्वातन्त्र्येण हतं मन्यते तावुभौ जीवस्याऽनित्यत्वज्ञानी हननादिक्रियायां जीवस्वातन्त्र्यज्ञानी चेत्युभौ न विजानीतः । जीवनित्यत्वभगवत्स्वातन्त्र्याज्ञानिनौ भ्रान्ताविति यावत् । कुतो बाधकाद्भ्रान्तित्वकल्पनेत्यत आह—नायमिति । बिम्बनित्यत्वोपाधिनित्यत्वबिम्बसन्निधिनित्यत्वानादित्वरूपोक्तहेतुभ्यो नायं हन्ति जीवम् । न हन्यते च जीवः । प्रतिबिम्बत्वादेव हेतोर्न स्वतन्त्रः कश्चन हन्तीत्यर्थः । अतो बाधकाद्भ्रान्तित्वमिति भावः । अत्र हननक्रिया जीवक्रियान्तरोपलक्षणम् । सर्वत्र तस्यास्वातन्त्र्यादिति । एनमीश्वरं जीवचेतनस्य हन्तारं यो मन्यते सोपि भ्रान्त एव । चेतनहननस्येश्वरेणाकरणादित्यपि योजना तात्पर्योक्ता ॥ १९ ॥

**न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः ॥**
**अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ २० ॥**

त० टी०—हननक्रियायाः कर्ता कर्म वाऽयं कुतो न भवतीत्यपेक्षायां जन्मादिषड्विक्रियारहितत्वादित्याह—नेति । अयं पुरुषो न जायते नोत्पद्यते । वाशब्दश्चार्थे । न चायं कदाचिन्म्रियते । तत्कुतो यस्मान्नायं भूत्वा भविता वा न भूयः । अयमात्मा पूर्वं भूत्वा पश्चान्न भवितेति । न यो हि अभूत्वा भविता स उत्पद्यते यश्च प्राग्भूत्वा भूयो न भविता स म्रियते इत्युच्यते अयं तु प्रागपि सत्त्वान्नोत्पद्यते उत्तरकालेऽपि सत्त्वान्न म्रियते । यतो न जायतेऽतोऽजो, न म्रियतेऽतो नित्यः, इति द्वाभ्यां पदाभ्यां जन्ममरणलक्षणे विक्रिये निरस्ते । अस्तित्वलक्षणविकारवारणायाह । शाश्वत इति । सनातनः प्राकृतवत्सदसत्परि-

णामशून्य इत्यर्थः। वृद्धिलक्षणविक्रियावारणाय पुराण इति। पुरापि नव एव। यो हि सावयवः सोऽवयवोपचयाद्वर्द्धते अयं तु निरवयवो ज्ञानैकस्वरूपत्वान्न वर्द्धते इत्यर्थः। परिशिष्टौ परिणामापक्षयौ जन्ममरणास्तित्ववृद्ध्यभावादेव निरस्तौ। एवं षड्विकारशून्य आत्मा शरीरे हन्यमाने सति न हन्यते। शरीरमेव हननक्रियायाः कर्मभूतमित्यर्थः॥ २०॥

**म० टी०**—कस्मादयमात्मा हननक्रियायाः कर्ता कर्म च न भवति अविक्रियत्वादित्याह द्वितीयेन मन्त्रेण—**न जायत इति।** "जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीति षट् भावविकारा इति वार्ष्यायणिः" इति नैरुक्ताः। तत्राद्यन्तयोर्निषेधः क्रियते न जायते म्रियते वेति। वाशब्दः समुच्चयार्थः। न जायते न म्रियते चेत्यर्थः। कस्मादयमात्मा नोत्पद्यते यस्मादयमात्मा कदाचित् कस्मिन्नपि काले न भूत्वा अभूत्वा प्राक् भूयः पुनरपि भविता न योह्यभूत्वा भवति स उत्पत्तिलक्षणां विक्रियामनुभवति। अयं तु प्रागपि सत्त्वाद्यतो नोत्पद्यतेऽतोऽजः तथायमात्मा भूत्वा प्राक् कदाचित् भूयः पुनः न भविता न वा शब्दाद्वाक्यविपरिवृत्तिः। यो हि प्राग्भूत्वा उत्तरकाले न भवति स मृतिलक्षणां विक्रियामनुभवति अयं तु उत्तरकालेपि सत्त्वाद्यतो न म्रियतेऽतो नित्यः विनाशायोग्य इत्यर्थः। अत्र न भूत्वेत्यत्र समासाभावेऽपि नानुपपत्तिः नानुयाजेष्वितिवत्। भगवता पाणिनिना महाविभाषाधिकारे नञ्समासपाठात्। यत्तु कात्यायनेनोक्तं समासनित्यताभिप्रायेण 'वावचनानर्थक्यं तु स्वभावसिद्धत्वात्' इति तद्भगवत्पाणिनिवचनविरोधादनादेयम्। तदुक्तमाचार्यशबरस्वामिना 'असद्वादी हि कात्यायनः' इति। अत्र न जायते म्रियते वेति प्रतिज्ञा कदाचिन्नायं भूत्वा भविता वा न भूय इति तदुपपादनम्—**अजो नित्यइति।** तदुपसंहार इति विभागः। आद्यन्तयोर्विकारयोर्निषेधेन मध्यवर्तिविकाराणां तद्व्याप्यानां निषेधे जातेपि गमनादिविकाराणामनुक्तानामप्युपलक्षणायापक्षयश्च वृद्धिश्च स्वशब्देनैव निराक्रियते। तत्र कूटस्थनित्यत्वादात्मनो निर्गुणत्वाच्च न स्वरूपतो गुणतो वाऽपक्षयः सम्भवतीत्युक्तम्—शाश्वत इति। शश्वत्सर्वदा भवति नापक्षीयते नापचीयत इत्यर्थः। यदि नापक्षीयते तर्हि वर्धतामिति नेत्याह—पुराण इति। पुरापि न (भ) व एकरूपो नत्वधुना नूतनां काञ्चिदवस्थामनुभवति। यो हि नतनां काञ्चिदुपचयावस्थामनुभवति स वर्धत इत्युच्यते लोके। अयं तु सर्वदैकरूपत्वान्नापचीयते एवेत्यर्थः। अस्तित्वविपरिणामौ तु जन्मविनाशान्तर्भूतत्वात्पृथङ्न निषिद्धौ। यस्मादेवं सर्वविकारशून्य आत्मा तस्माच्छरीरे हन्यमाने तत्सम्बन्धोऽपि केनाप्युपायेन न हन्यते न हन्तुं शक्यत इत्युपसंहारः२०

**शं० टी०**—तर्ह्यात्मतत्त्वं कथम्भूतमित्याकाङ्क्षायां यास्कपठितजन्मादिषड्भावविकाररहिततया कूटस्थासङ्गचिद्रूपत्वमेवात्मनः स्वाभाविकं तत्त्वमित्यात्मतत्त्वनिर्धारणाय द्वितीयं मन्त्रं पठति—**न जायत इति।** अत्र कदाचिच्छब्दः कदाचिन्न जायते कदाचिन्न म्रियत इति सर्वत्र सम्बध्यते। वाशब्दौ चार्थौ भवतः। अत्राज इत्यजत्वेनैव सर्वविकारासम्भवे प्राप्तेपि स्वयं श्रुतिः कण्ठरवेण प्रत्येकं तान्निषेधति आत्मनो निर्विकारत्वज्ञानस्य निर्विचिकित्सत्वाय अजः यत्साक्षात्काराद्विद्वान् पुनर्न जायते सोजः स्वयं जननरहितो वाऽजोऽयमात्मा कदाचिन्न जायते निरवयवत्वान्नोत्पद्यते "निष्कलं निष्क्रियम्" इति "न चास्य कश्चिज्जनिता न चाधिपः" इति निरवयवत्वनिष्कारणत्वश्रवणादात्मनो जनिक्रिया नोपपद्यत इति भावविकारः प्रथमो निरस्तः। न म्रियते च तेनैव हेतुनाऽयमात्मा नाशक्रियां न प्राप्नोतीति षष्ठो विकारो निरस्तः। अयमात्मा भूत्वा जनिक्रियां प्राप्य भूयः पुनर्भविता चास्तित्वमात्र भवति घटवज्जन्मानन्तरभाव्यस्तित्वं न प्राप्नोति किंतु मृदिव जन्यनपेक्षितप्राक्तनसत्तावानेव भवतीति द्वितीयो विकारो निरस्तः। निरवयवत्वादात्मा नित्य एकरूप इति विपरिणामलक्षणश्चतुर्थो विकारो निरस्तः। एकरूपयैव सत्तया शश्वद्भवतीति शाश्वत इत्यपक्षयलक्षणः पञ्चमो विकारो निरस्तः। निरवयवत्वेनायं पुराप्यधुना च सर्वदा नवत्वात् पुराण इति वृद्धिलक्षणस्तृतीयो विकारो निरस्तः।

एवं षड्भिर्भावविकारैर्वर्जितत्वे प्रतिपादिते सत्यात्मनो नित्यकूटस्थासङ्गचिद्रूपत्वमाद्यन्तशून्यत्वमद्वितीयत्वं च सूचितं भवति। तथाप्यस्य श्रोतुर्देहनाशादात्मनाशभ्रमो न नष्ट इति मत्वा यत्र भ्रमस्तत्रैव पुमान् सम्यग्बोधनीय इति तस्य भ्रमं छेत्तुमाह–न हन्यत इति। अस्मिन् शरीरे खड्गादिना हन्यमाने छिद्यमाने सत्यप्यात्मा निर्विकारत्वात् स्वयं घटे भिद्यमाने घटाकाशवन्न हन्यते हननक्रियाया विषयो न भवति घटे नष्टे घटाकाशवद्देहे नष्टे सत्यात्मा स्वयं स्वरूपेणैव तिष्ठति। तथा च श्रुतिः "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इति ॥ २० ॥

श्री० टी०–न हन्यत इत्येतदेव षड्भावविकारशून्यत्वेन द्रढयति–नेति। न जायत इति जन्मप्रतिषेधः। न म्रियते चेति विनाशप्रतिषेधः। वाशब्दौ चार्थे। नचायं भूत्वा उत्पद्य भविता भवति अस्तित्वं भजते। किंतु प्रागेव स्वतः सद्रूप इति जन्मानन्तरास्तित्वलक्षणद्वितीयविकारप्रतिषेधः। तत्र हेतुः यस्मादजः यो हि जायते स जन्मान्तरमस्तित्वं भजते नतु यः स्वयमेवास्ति स भूयोऽप्यन्यदस्तित्वं भजत इत्यर्थः। नित्यः सर्वदैकरूप इति वृद्धिप्रतिषेधः। शाश्वतः शश्वद्भव इत्यपक्षयप्रतिषेधः। पुराण इति विपरिणामप्रतिषेधः। पुराऽपि नव एव नतु परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः। यद्वा न भवितेत्यस्यानुषङ्गं कृत्वा भूयोऽधिकं यथा भवति तथा न भवतीति वृद्धिप्रतिषेधः। अजो नित्य इति चोभयवृद्ध्यभावे हेतुरित्यपौनरुक्त्यम्। तदेव जायते अस्ति वर्धते विपरिणमते अपक्षीयते नश्यतीत्येवं यास्कादिभिर्वेदवादिभिरुक्ताः षड्भावविकारा निरस्ताः। यदर्थमेते विकारा निरस्तास्तं प्रस्तुतं विनाशाभावमुपसंहरति–न हन्यते हन्यमाने शरीर इति ॥ २० ॥

स० टी०–हननाख्यक्रियाया नो कर्तात्मा नैव कर्म वा॥ कुत एव मुपेक्षायामाविकारितयोच्यते॥ १॥ न जायते यतो नायमभूत्वा भविता पुनः॥ यो ह्यभूत्वा भवत्येनामुत्पत्तिं भजते स च ॥ २ ॥ यतोऽयं सत्य एवास्ति ततो नोत्पद्यते ह्यजः॥ कालत्रयेऽपि सत्यत्वाज्जनिर्नैवास्य युज्यते ॥ ३ ॥ तथात्माप्येष भूत्वा प्राक्पुनर्न भावितेति न ॥ यो हि भूत्वा पुरा पश्चान्न भवत्येष मृत्युभाक् ॥ ४ ॥ अयं तूत्तरकालेऽपि सत्वान्न म्रियते यतः ॥ अतो नित्यो न नाशार्हः कदाचिदपि चिद्घनः॥ ५ ॥ न जायते म्रियते वा प्रतिज्ञावाक्यमिष्यते॥ कदाचिदिति तस्यैवोपपादनमिहोच्यते ॥ ६ ॥ अजो नित्य इतीहोपसंहार इति भागशः ॥ आद्यन्तयोर्निषेधेन निषेधो मध्यवर्तिनाम्॥ ७ ॥ विकाराणां स्वतः सिद्धस्तथापि वृद्ध्यपक्षयौ ॥ स्वशब्देन निषिद्धचेते शाश्वतश्चेत्यपक्षयः ॥ ८ ॥ पुरापि नव एवासौ ततो नायं विवर्धते ॥ अवस्थां नूतनां यस्तु याति वर्धत एव सः ॥ ९ ॥ अयं सदैकरूपत्वान्नोपचीयत आन्तरः॥ अस्तित्वविपरीणामौ जन्यतान्तर्गतौ यतः॥ १० ॥ निषिद्धौ न पृथक् तस्मात्षड्विकारविवर्जितः ॥ आत्मा न शक्यते हन्तुं हन्यमाने शरीरके॥ ११ ॥ २० ॥

भा० टी०–"जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते नश्यति"इतियास्कोक्तान् षड्भावविकारान् आत्मनि निराकुर्वंस्तस्याविक्रियत्वं साधयति–नेति। कदाचित्पदं सर्वविक्रियाप्रतिषेधैः पदैः सम्बन्धनीयं न कदाचिज्जायते। यतोऽयमात्मा न भूत्वा भूयः पुनर्भविता न यस्माच्च भूत्वा भवनक्रियामनुभूय भूयोऽभविताऽभावं गन्ता वा न तस्मान्न कदाचिन्म्रियते च। वाशब्दश्चार्थे। यद्वा अयं ना पुरुषो भूत्वा पुनर्भविता न। अस्तिविक्रियायोग्यो न च भवतीत्यर्थः। अस्मिन्पक्षे द्वितीयोपि वाशब्दश्चार्थे। उक्तरीत्या ना अयमिति च्छेदे पूर्वनकारस्य म्रियतइत्यनेन सम्बन्धः। न अयमिति च्छेदे त्वस्येति बोध्यम्। भाष्यकृद्भिस्तु सुगमत्वादयमर्थस्त्यक्तः। यतो न जायतेऽतोऽजः यतो न म्रियतेऽतो नित्यः। येत्वन्ये अस्तु तर्हि क्षणिकविज्ञानधारारूपः। तस्य विज्ञानवादिभिरजत्वनित्यत्वाभ्युपगमात् इत्याशङ्क्याह–भूत्वा भविता वा न भूय इति। अयमित्यनुवर्तते। अयं भूत्वा भूयो भविता न भूयो सकृद्भूत्वा भावितेति भवनक्रियाद्वयस्य क्त्वाप्रत्ययोक्तसमानक-

र्तृत्वधारैव साभिप्रायेण भूत्वैव भविता न तु भूत्वा स्थित्वा विनश्यति तार्किकाणां हि विज्ञानम् । उत्पत्तिस्थितिनाशलक्षणव्यापित्वात् । त्रिक्षणावस्थायिविज्ञानवादिनां तु पूर्वस्य नाशक्षण एवोत्तरस्योत्पत्तिक्षणः । स एव तस्य स्थितिक्षणश्चेति क्षणिकत्वाद्विज्ञानानां भवनक्रियाद्वयस्याव्यवधानाद्भूत्वा भवितेत्युक्तम् । तादृशोऽप्ययं नेत्यादि वर्णयन्ति । तैर्विकारनिषेधोपक्रमादिविरोधस्य परिहारः प्रदर्शनीयः । एतेनाजत्वान्न जायते नित्यत्वान्न म्रियत इत्यपि प्रत्युक्तम् । नायं भूत्वेत्यादेर्हेतुत्वस्य भाष्यकारैः प्रदर्शितत्वेन न जायत इत्यादेरेव हेतुत्वौचित्यात् । एवं जन्मनाशास्तित्वरूपविकारत्रयं निराकृत्यावशिष्टान् विकारान् निराकरोति–शाश्वत इत्यादिना । शश्वद्भवः शाश्वत इत्यनेनापक्षयस्य निरवयवत्वान्निर्गुणत्वात् । पुराप्यभिनवः पुराण इत्यनेन वृद्धिरूपस्य हन्यमाने विपरिणम्यमाने शरीरे न हन्यते न विपरिणम्यत इत्यनेन विपरिणामस्य विकारस्य प्रतिषेधः । तथाच भाष्यम् " हन्तिरत्र विपरिणामार्थो द्रष्टव्योऽपुनरुक्ततायै " अस्मिन् श्लोके षड्भावविकारा लौकिकवस्तुविक्रिया आत्मनि प्रतिषिध्यन्ते सर्वप्रकारविक्रियारहित आत्मेति वाक्यार्थः । यस्मादेवं तस्मादुभौ तौ न विजानीत इति पूर्वेण मन्त्रेणास्य सम्बन्धः इति । एतेनास्तित्वपरिणामौ जन्मविनाशान्तर्भूतत्वात् पृथङ् न निषिद्धौ यस्मादेतत्सर्वविकारशून्य आत्मा तस्माच्छरीरे हन्यमानेतत्सम्बद्धोपि केनाप्युपायेन न हन्यते न हन्तुं शक्यते इत्युपसंहार इति प्रत्युक्तम् । आद्यन्तविकारयोर्निषेधे मध्यतनानां निषेधे सिद्धेऽपि तेषामुपादानमवस्थान्तरक्रियान्तरोपलक्षणार्थम् ॥ २० ॥

प० टी०–अथ न हन्यत इत्यनेनात्मनः षड्भावविकारशून्यत्वं यदुक्तं तदेव प्रकटयन्नाह–**न जायत इति**। तत्र षड्विकारास्तु । जायते, अस्ति, वर्धते, विपरिणमते, अपक्षीयते, नश्यतीति एतान् क्रमेण निषेधयति–**न जायत इति** । न जायते इति जन्मनिषेधः । वाशब्दश्चार्थे । न चायं भूत्वोत्पद्य भविता भवति अस्तित्वं भजते । किन्तु प्रागेव स्वतः सद्रूप इति जन्मान्तरास्तित्वलक्षणद्वितीयविकारनिषेधः । अत्र हेतुः यस्मादजः यो हि जायते स एव जन्मानन्तरमस्तित्वं भजते । नित्यः सर्वदैकरूप इति वृद्धिप्रतिषेधः । शाश्वत इति अपक्षयनिषेधः । निरवयवत्वान्निर्गुणत्वाच्च पुराण इति विपरिणामप्रतिषेधः । पुरापि नव एव न तु परिणामतो रूपान्तरं प्राप्य नवो भवतीत्यर्थः । यद्वा न भवितेत्यस्यानुषङ्गं कृत्वा भूयोऽधिकं यथा भवति तथा न भवितेति वृद्धिप्रतिषेधः । अजो नित्य इति चोभयं वृद्ध्याद्यभावहेतुरिति न पौनरुक्त्यम् । एवं यदर्थे वेंदवादिभिरुक्ताः षड्विकारा निरस्तास्तं प्रस्तुतं विनाशाद्यभावमुपसंहरति–न हन्यते हन्यमाने शरीर इति । अत्रार्थे कठशाखीया श्रुतिश्च " न जायते म्रियते वा विपश्चिन्नायं कुतश्चिन्न बभूव कश्चित् ॥ अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे ॥ हन्ता चेन्मन्यते हन्तुं हतश्चेन्मन्यते हतम् ॥ उभौ तौ न विजानीतो नायं हन्ति न हन्यते ॥ अशरीरं शरीरेषु अनवस्थेष्ववस्थितम् ॥ महान्तं विभुमात्मानं मत्वा धीरो न शोचति " इति गतार्थेयम् ॥ २० ॥

रा० टी०–यदुक्तं जीवेश्वरयोरुत्पत्तिविनाशराहित्यम् । ईश्वरस्य देहतोप्युत्पत्त्यभावेन स्वातन्त्र्यम् । जीवस्य स्वरूपतो जन्मादिशून्यस्यापि देहोत्पत्त्यादिनाऽस्वातन्त्र्यं तेष्वर्थेषु प्रमाणत्वेन मन्त्रवर्णमुदाहरति–**न जायत इति** । तथाहि जीवविषये तावदियं योजना । अयं जीवः स्वरूपेण न जायते न म्रियते न नश्यति च । वाशब्दश्चशब्दार्थः । अग्रेतननञोऽनुकर्षः । जीवो न जायते चेत्तर्हि यथेश्वरज्ञानं वृद्धिह्रासविवर्जितं भूत्वैव कदाचिदचिन्त्यशक्त्या भूतमिव व्यवहारावलम्बनं भवति । " तदैक्षत " इत्यादिश्रुतेः । तथा जीवेऽपि किं जननव्यवहारस्तन्निमित्त इत्यतो नेत्युच्यते । अयं जीवः स्वरूपेण भूत्वा कयाचिद्विवक्षया ईश्वरज्ञानवद्भविता न भवति । कुतो न जायते न म्रियते वेति स्वरूपोत्पत्तिविनाशाभावो जीवस्येत्यत उक्तम्–**अजो नित्यः शाश्वत इति** । स्वरूपोत्पत्तिविनाशशून्यसदैकरूपभगवत्स्वरूपत्वादित्यर्थः । अतद्भावे सामाना-

धिकरण्यस्य सारूप्यगमकत्वात् । अजनित्यपदाभ्यां बिम्बोत्पत्तिविनाशाभावः । शाश्वतपदेन बिम्बोपाधिसन्निधिजन्मनाशाभावश्च हेतुरुक्तो भवति । ईश्वरज्ञानवद्भूत्वा भवितापि चेन्न जीवस्तर्हि किन्निमित्तो जननव्यवहारो जीव इत्यत उक्तम्—पुराण इति । पुराणि देहानणति अणपण गतौ गच्छति देहाद्देहान्तरं प्राप्नोतीति देहयोगनिमित्त इत्यर्थः । एवं तर्ह्युपाधिभूतदेहनाशः स्यादित्यत आह—न हन्यत इति । अन्तवन्त इमे देहा इत्यत्रोक्तदिशा नित्योपाधेरन्यस्य भावात् एतच्छरीरनाशेपि न जीवनाश इति भावः । ईश्वरविषये तु पूर्वोत्तरार्धे ईश्वरजीवरूपविषयभेदेन योज्ये । तथाहि वाशब्दादेव पूर्वनञो म्रियते वेत्यत्रानुकर्षस्य सिद्धेः नञन्तरवैयर्थ्यात् । नायं भूत्वेत्यत्र श्रुतो नाशब्दो न नञ् किन्तु नृशब्दः । तथा चायं ना परमपुरुषः न जायते न म्रियते देहयोगवियोगवान्न भवति नित्यदेह एवेत्यर्थः। अत एव स्वरूपानाशः कैमुत्यसिद्धः । देहोत्पत्तिविनाशयोरप्यभावेन स्वातन्त्र्यमपि सिद्धमेवेति भावः । एवं चेत्कथं तर्हि रामकृष्णादिरूपेण जननव्यवहार इत्यतो भूत्वा रामकृष्णादिरूपेण सर्वदा भूत्वैव कदाचिज्जनदृग्विषयत्वादिरूपेण भूयः पुनर्भविता नतु देहयोगेनापि भविता । 'किन्तु निर्दोषचैतन्यसुखां नित्यां स्वकां तनुम् । प्रदर्शयति लोकस्य जनिरित्युच्यते हरेः' इति तत्त्वनिर्णयोक्तेः अयं जीवोप्यजो नित्यश्च । ईश्वरस्येव जीवस्याप्यनादिनित्यत्वे स्वातन्त्र्यस्यापि प्राप्तेः ईश्वरादविशेषः स्यादित्यत उक्तम्—शाश्वत इति । सदैकरूपः अनाद्यनन्तकालमत्यक्तपारतन्त्र्यादिस्वभाव इत्यर्थः । कुत एतदित्यत उक्तम्—पुराण इति । अनिच्छयापि देहाद्देहान्तरप्राप्तिमत्त्वादिति हेतुगर्भविशेषणमिदम् । नहि तादृशस्य स्वातन्त्र्यसम्भावनापीति भावः । एतावान्गुण इत्याह—न हन्यते हन्यमाने शरीर इति ॥ २० ॥

**वेदाविनाशिनं नित्यं य एनमजमव्ययम् ॥**
**कथं स पुरुषः पार्थ कं घातयति हन्ति कम् ॥ २१ ॥**

**त० टी०—कथं तर्हि "ब्राह्मणो न हन्तव्यः" इत्यादि निषेधशास्त्रस्य गोघ्नब्रह्मघ्नादेर्नरकादिप्राप्तिविधायकशास्त्रस्य च सार्थक्यमित्याशङ्कापरिहारार्थमाह—वेदेति । अविनाशिनं विनाशाभाववन्तमत एव नित्यं यतोऽजमव्ययं जन्मपरिणामादिरहितमेनं प्रतिशरीरभिन्नमात्मानं यः पुरुषो वेद जानाति हे पार्थ! स कथं हन्ति कं घातयति । बहुष्वेव किंशब्दप्रयोगो लोके शास्त्रे च दृष्टः । तथा च ब्राह्मणादिश्वपचपशुकृम्यन्तशरीरेषु विनाशानर्हस्वभावतया वर्तमानेष्वात्मसु कं कतमं हन्ति हननक्रियायाः कर्ता भवति कं वा घातयति तां क्रियां प्रति प्रयोजको भवति न कञ्चिदपीत्यर्थः । एतेन त्वं प्रयोजको भूत्वा घातयसि अहं त्वन्नियुक्तो हन्मीत्यत उभयोः पापं स्यादिति न शङ्कितव्यमिति ध्वनितम् । एवञ्च ब्राह्मणादिहनननिषेधशास्त्रस्य हननजन्यपापफलाभिधायकस्य च उक्तात्मस्वरूपस्वभावयाथात्म्यज्ञानाभाववद्विषयकत्वेन सार्थक्यम् ॥ २१ ॥**

म० टी०—नायं हन्ति न हन्यत इति प्रतिज्ञाय न हन्यत इत्युपपादितम् । इदानीं न हन्तीत्युपपादयन्नुपसंहरति—वेदाविनाशिनमिति । न विनष्टुं शीलं यस्य तमविनाशिनमन्त्यविकाररहितं तत्र हेतुः अव्ययं न विद्यते व्ययोऽवयवापचयो गुणापचयो वा यस्य तमव्ययमवयवापचयेन गुणापचयेन वा विनाशदर्शनात्तदुभयरहितस्य न विनाशः सम्भवतीत्यर्थः । ननु जन्यत्वेन विनाशित्वमनुमास्यामहे नेत्याह—अजमिति । न जायत इत्यजमाद्यविकाररहितं तत्र हेतुः नित्यं सर्वदा विद्यमानं प्रागविद्यमानस्य हि जन्म दृष्टं नतु सर्वदा सत इत्यभिप्रायः । अथवा अविनाशिनमबाध्यं सत्यमितियावत् । नित्यं सर्वव्यापकं तत्र हेतुः अजमव्ययं जन्मविनाशशून्यं जायमानस्य विनश्यतश्च सर्वव्यापकत्वसत्यत्वयोरयोगात् । एवं सर्वविक्रियाशून्यं प्रकृतमेनं

देहिनं स्वमात्मानं यो वेद विजानाति शास्त्राचार्योपदेशाभ्यां साक्षात्करोति अहं सर्वविक्रियाशून्यः सर्वभासकः सर्वद्वैतरहितः परमानन्दबोधरूप इति स एवं विद्वान्पुरुषः पूर्णरूपः कं हन्ति कथं हन्ति । किंशब्द आक्षेपे न कमपि हन्ति न कथमपि हन्तीत्यर्थः । तथा कं घातयति कमपि न घातयतीत्यर्थः । न हि सर्वविकारशून्यस्याकर्तुर्हननक्रियायां कर्तृत्वं सम्भवति । तथा च श्रुतिः " आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसञ्ज्वरेत् " इति शुद्धमात्मानं विदुषस्तदज्ञाननिबन्धनाध्यासनिवृत्तौ तन्मूलरागद्वेषाद्यभावात्कर्तृत्वभोक्तृत्वाद्यभावं दर्शयति अयमभिप्रायो भगवतः वस्तुगत्या कोपि न करोति न कारयति च किञ्चित् सर्वविक्रियाशून्यस्वभावत्वात्परन्तु स्वप्न इवाविद्यया कर्तृत्वादिकर्मात्मन्यभिमन्यते । तदुक्तमुभौ तौ न विजानीत इति । श्रुतिश्च "ध्यायतीव लेलायतीव" इत्यादि अत एव सर्वाणि शास्त्राण्यविद्वदधिकारिकाणि । विद्वांस्तु समूलाध्यासबाधान्नात्मनि कर्तृत्वादिकमभिमन्यते । स्थाणुस्वरूपे विद्वानिव चोरत्वम् । अतो विक्रियारहितत्वादद्वितीयत्वाच्च विद्वान्न करोति कारयति चेत्युच्यते । तथा च श्रुतिः " विद्वान्न बिभेति कुतश्चनेति" अर्जुनो हि स्वस्मिन्कर्तृत्वं भगवति च कारयितृत्वमध्यस्य हिंसानिमित्तं दोषमुभयत्राप्याशशङ्के । भगवानपि विदिताभिप्रायो हन्ति घातयतीति तदुभयमाचिक्षेप आत्मनि कर्तृत्वम् । मयि च कारयितृत्वमारोप्य प्रत्यवायशङ्कां मा कार्षीरित्यभिप्रायः । अविक्रियत्वप्रदर्शनेनात्मनः कर्तृत्वप्रतिषेधात्सर्वकर्माक्षेपे भगवदभिप्रेते हन्तिरुपलक्षणार्थः । पुरः स्फूर्तिकत्वात् प्रतिषेधहेतोस्तुल्यत्वात्कर्मान्तराभ्यनुज्ञानुपपत्तेः । तथा च वक्ष्यति ' तस्य कार्यं न विद्यते ' इति । अतोत्र हननमात्राक्षेपेण कर्मान्तरं भगवताभ्यनुज्ञायत इति मूढजनजल्पितमपास्तम् । तस्माद्युध्यस्वेत्यत्र हननस्य भगवताभ्यनुज्ञानात् वास्तवकर्तृत्वाद्यभावस्य कर्ममात्रे समत्वादिति दिक् ॥ २१ ॥

शं० टी०—एवमात्मनोऽहमर्थस्य निर्विकारत्वं नित्यकूटस्थासङ्गचिद्रूपता तदेतत्पारमार्थिकं तत्त्वमिति प्रतिपाद्य ईदृशमात्मतत्त्वं विदितवतो विदुषः सर्वकर्मसंन्यास एवाधिकारो नान्यत्रेति सूचयितुमाह—वेदेति । ब्रह्मचर्याहिंसादिविवेकवैराग्यशमदमादिश्रुत्याचार्येश्वरप्रसादादिलक्षणया नियतया श्रुत्यादिसाधनसम्पत्त्या युक्तो मोक्षैकप्रयोजनोक्तमुमुक्षुरधिकारी ब्रह्मविद्गुरुसन्निधौ श्रद्धाभक्तिभ्यामजस्रं कृतश्रवणादिजन्यज्ञानेनानुभूयमानमेनं प्रत्यग्रूपमात्मानमहमर्थमजं जन्मादिसर्वविकारशून्यमत एवाव्ययं येन केनापि प्रकारेण न व्येतीत्यव्ययम् अविनाशिनं विनाशः प्रमाणेन रज्जुसर्पादेरिव सत्ताबाधः द्रव्यगुणादिभिः परिच्छेदः तदभावोस्यास्तीत्यविनाशी परिपूर्णस्तमत एव नित्यमेकरसमद्वितीयमात्मतत्त्वमिदमेवाहमस्मीति साक्षाद्यो वेद स पुरुषः सर्वात्मभावं गतो विद्वान् कथं केन प्रकारेण कं हन्ति कं विषयीकृत्य हननक्रियां करोति कं घातयति कं हननक्रियायां प्रवर्तयति सर्वत्र किंशब्द आक्षेपार्थक एव भवति न तु प्रश्नार्थकः प्रत्युत्तरादर्शनात् । कथमिति साधनमाक्षिप्य कमिति विषयाक्षेपः कं घातयतीति प्रयोज्याक्षेपः । एवं क्रियातत्साधनाद्यसम्भवे निर्विकारब्रह्मात्मदर्शिनः सर्वकर्मसंन्यास एवाधिकार इति सिद्धम् । ननु निर्विकारब्रह्मदर्शिनः कथं हन्ति कं हन्ति कं घातयतीति साधनाद्याक्षेपेण हननक्रियाया एव निवृत्तिरत्र सूच्यते न तु सर्वेषां कर्मणामिति चेन्न क्रियामात्रहेतोस्तुल्यत्वाद्यत्रयत्र त्वविक्रियात्मज्ञानं तत्रतत्र न प्रवृत्तिरिति । निर्विकारात्मज्ञानस्य प्रवृत्तिमात्रं प्रति निवृत्तिहेतुत्वान्न हननक्रियामात्रं प्रति हेतुत्वं नियन्तुं शक्यमतो निर्विकाराद्वितीयब्रह्मात्मज्ञानिनो न कर्तव्यं न कारयितव्यं च किञ्चिदस्तीति सिद्धम् । ननु न जायते म्रियते इति जन्मादिसर्वविक्रियाशून्यत्वं ब्रह्मण उक्तमतो निर्विकारं ज्ञेयं ब्रह्म ज्ञाता तु विद्वान् विकारीत्युभयोर्निर्विकारत्वसविकारत्वधर्माभ्यां परस्परभिन्नत्वाद्विकारिणो विदुषस्त्वविक्रियत्वज्ञानाऽसम्भवात्संन्यासो नोपपद्यते अविक्रियं ब्रह्मेति ज्ञानमस्त्येव संन्यासकारणमिति चेन्न ' तस्य ज्ञेयविषयत्वेनासाधनत्वात् । नह्यचलः पर्वत इति ज्ञानं क्रियानिवृत्तिकारणं

भवति तद्वत्स्वस्य विकारित्वेन विदुषस्त्वक्रियोहामित्यविक्रियात्मतत्त्वज्ञानासम्भवात्कर्मसंन्यासोऽनुपपन्न एवेति चेद्भवानत्र प्रष्टव्यः । इदमहं जानामीतीदमर्थस्य ज्ञाताहं प्रत्ययार्थौ देहो वा प्राणो वा इन्द्रियाणि वा मनो वाऽहङ्कारो वा विश्वो वा तैजसो वा प्राज्ञो वा उत आत्मा वेति । आद्ये स्वप्नदेहो वा जाग्रद्देहो वा उतोभयं वा । नाद्यः जागरे अहम्प्रत्ययानुदयः स्यात्स्वप्नदेहनाशाज्ज्ञातुरहमर्थस्यापि नाशप्रसङ्गात्तदिष्टापत्तिरेवेति चेन्न जाग्रति नाहमस्मीति तवाभावप्रसङ्गात्प्रत्यक्षविरोधाच्च । न द्वितीयः न यस्य कस्यापि स्वप्ने अहमस्मीत्यहम्प्रत्ययोदयः स्यात् अहं व्रजामीत्युक्त्वा देह एव व्रजत्यतो देह एवाहंशब्दार्थ इति चेन्न देवानिष्ट्वाहं स्वर्गं व्रजामीत्यादौ व्यभिचारान्मृते देहे विद्यमानेप्यहम्प्रत्ययादर्शनाच्च । न तृतीयः द्वयोः सामानाधिकरण्यासम्भवान्नादिमो द्वितीयः पक्षः । स्वभावजडत्वान्नहि जाग्रति स्वप्ने वा स्वं वान्यं वा प्राणो जानाति तदभावान्नाहमर्थत्वसिद्धिः । तृतीये एकस्य वा इन्द्रियस्य सर्वेषां वाहमर्थत्वं नाद्यः शब्दादिष्वेकस्यैवार्थस्योपलब्धिप्रसङ्गाच्छब्दादेः सर्वस्य सर्वत्रोपलब्धिप्रदर्शनात्प्रत्यक्षविरोधश्च स्यात् । न द्वितीयः अहं ब्राह्मण इत्यत्र श्रोत्रादीनां प्रत्येकं ब्राह्मणशब्दार्थत्वे ब्राह्मणानेकत्वसिद्धावयमेको ब्राह्मण इति प्रत्यक्षसिद्धब्राह्मणैकत्वव्यवहारविरोधप्रसङ्गात् । योऽहं चक्षुषा घटमद्राक्षं सोऽहं पाणिना स्पृशामीति दृगादिभ्यो भिन्नस्याहमर्थत्वसिद्धाविन्द्रियाणां तदनुपपत्तेः । नापि चतुर्थः चक्षुरादिवत्करणत्वाऽविशेषात् "मनसा ह्येव पश्यति" इतिश्रुतेः । नापि च पञ्चमः विकारित्वाज्ज्ञातृत्वानुपपत्तावहमर्थत्वानुपपत्तेः । नन्वहं जानामीत्यहङ्कारस्यापि ज्ञातृत्वं प्रतीयत इति चेन्न स्वतो जडत्वाज्ज्ञातृत्वानुपपत्तेः यथाऽहं मनुष्य इत्यन्यधर्माध्यासस्तथा ज्ञाताहमित्यन्यधर्माध्यास एव स्वतो जडत्वेन ज्ञातृत्वमस्य न सम्भवति ज्ञातृत्वस्य चेतनधर्मत्वाद्वृद्धेर्दग्धृत्ववच्चैशवे मया द्राक्षा भुक्तेति तेन तेन सहैव विकारेण विनश्यतोऽहङ्कारस्य विकारिणः शैशवभुक्तद्राक्षानुभूतिश्चिरकालिका वृद्धत्वे नोपपद्यते । तदनुपपत्तावहमर्थत्वं न सम्भवति ममायमहङ्कारो दुष्ट इति स्वातिरिक्तस्य ज्ञेयत्वेन ज्ञातृत्वानुपपत्तावहमर्थत्वासिद्धेः । नापि षष्ठो नापि च सप्तमो नाप्यष्टमश्च विश्वादीनां ज्ञातृव्यतिरिक्तत्वेनाऽहमर्थत्वाऽयोगात्तेषामेकैकावस्थाभिमानित्वेन व्यवस्था तद्धर्मविज्ञानाऽसम्भवात् यः स्वप्नमद्राक्षं यः सुखमस्वाप्सं सोऽहं जागर्मीत्यवस्थात्रितयज्ञातुर्विश्वादिभ्यो भिन्नत्वमेवावगम्यते । नित्यत्वमविकारित्वं चातः पारिशेष्यादात्मैव ज्ञाता "नान्योऽतोस्ति विज्ञाता" इतिश्रुतेः । ननु निरवयवस्यात्मनो बुद्धितद्वृत्तीन्द्रियैरिन्द्रियार्थैः सम्बन्धासम्भवात्कथं ज्ञातृत्वमिति चेद्बुद्ध्यादिभिराध्यासिकसम्बन्धस्य सम्भवादविक्रियस्याप्यात्मनो ज्ञातृत्वं सिध्यति यत एवं ततो विज्ञातुरात्मन एवाहमर्थत्वम् "अहं विजानामि विविक्तरूपः" इतिश्रुतेः । तत आत्मैव विद्वान् निरुक्तविज्ञानस्य विदुषः सम्भवादेवं विद्वदात्मनोरभिन्नत्वे "अयमात्मा ब्रह्म" इत्यात्मनो ब्रह्माभिन्नत्वश्रवणादविक्रियोऽहमिति विदुषः स्वस्याविक्रियत्वाद्द्वितीयत्वज्ञानसिद्धेर्निरङ्कुशत्वादविक्रियब्रह्मात्मत्वज्ञानबलेन सर्वकर्मसंन्यास उपपद्यत एवेति सिद्धम् ॥ २१ ॥

**श्री० टी०**–अत एव हन्तृत्वाभावोऽपि पूर्वोक्तः प्रसिद्ध इत्याह–वेदेति । नित्यं वृद्धिशून्यमव्ययमपक्षयशून्यमजमविनाशिनं च यो वेद स पुरुषः कं हन्ति कथं वा हन्ति एवंभूतस्य वधे साधनाभावात् । तथा स्वयं प्रयोजको भूत्वान्येन कं घातयति न कञ्चिदपि कथञ्चिदपीत्यर्थः । अनेन मय्यपि प्रयोजकत्वाद्दोषदृष्टिं मा कार्षीः इत्युक्तं भवति ॥ २१ ॥

**स० टी०**–इत्थं निषिद्धं कर्मत्वमात्मनोऽत्राविकारिणः ॥ इदानीं तु क्रियामात्रे कर्तृत्वं प्रतिषिद्ध्यते ॥१॥ न विनष्टस्वभावोऽस्य न व्ययोपचयात्मकः ॥ गुणाद्यपचयादेव विनाशो दृश्यते यतः ॥ २ ॥ यथा कस्तूरिकादीनां गुणनाशे व्ययो भवेत् ॥ नाशोऽवयवतो यद्वत्तन्तुनाशे पटव्ययः ॥ ३ ॥ नाशः स्याद्धर्मतो यद्वत्कटकादिविनाशतः ॥ हेमनाशो भवेत्तद्वन्निर्धर्मक इहात्मनि ॥ ४ ॥ निर्गुणे निष्कले नाशस्तदभावान्न

युज्यते ॥ न जायते यतो नित्यो विद्यमानतया सदा ॥ ५ ॥ तं सर्वविक्रियाशून्यं स्वात्मानं यस्तु साक्षिणम् ॥ शास्त्राचार्योपदेशाभ्यामहमस्मीति चाक्रियम् ॥ ६ ॥ साक्षात्करोति स ज्ञानी पूर्णोऽसौ हन्ति कं कथम् ॥ आक्षेपेऽस्त्यत्र किंशब्दो न कथं न किमप्यसौ ॥ ७ ॥ हन्ति वा न कथं कञ्चिन्नैव घातयतीह सः ॥ शुद्धमक्रियमात्मानं विदुषोऽध्यासहानतः ॥ ८ ॥ कर्तृत्वप्रेरकत्वादेरभावं दर्शयत्यजः ॥ अयमत्राशयो विष्णोर्वासुदेवस्य मापतेः ॥ ९ ॥ निर्विकारतयात्यन्तशुद्धत्वाच्चिद्घनोऽव्ययः ॥ न कर्ता प्रेरको नायं कुत्रापि परमार्थतः ॥ १० ॥ देहाद्यध्यासतः पुंसो भ्रान्त्याकर्तृत्वभोक्तृते ॥ अतः सर्वाणि शास्त्राणि ह्यविद्वद्विषयाणि च ॥ ११ ॥ समूलाध्यासबाधान्न विद्वानात्मनि विक्रियाम् ॥ कर्तृत्वाद्यात्मिकां काञ्चिदभिमन्यत उत्तमः ॥ १२ ॥ अर्जुनः कर्तृतां स्वस्मिन्विष्णौ प्रेरकतां तथा ॥ आरोप्य चोभयत्रापि दोषं हिंसानिमित्तकम् ॥ १३ ॥ आशशङ्केऽथ भगवाञ्ज्ञाताभिप्राय ईश्वरः ॥ हन्ति घातयतीत्येवमाचिक्षेप द्वयं हि तत् ॥ १४ ॥ आत्मन्यारोप्य कर्तृत्वं प्रेरकत्वं मयीश्वरे ॥ मा कार्षीर्दोषशङ्कां त्वमित्यभिप्राय ईशितुः ॥ १५ ॥ २१ ॥

**भा० टी०**—नायं हन्ति न हन्यत इति मन्त्रकृतां प्रतिज्ञां न जायत इति मन्त्रेणात्मनोऽविक्रियत्वकथनपरेणोपपाद्य स्वयमुपसंहरति—वेदेति। एतेन न हन्ति न हन्यत इति प्रतिज्ञाय न हन्यत इत्युपपादितम् इदानीं न हन्तीत्युपपादयतीति परास्तम्। कस्मादयमात्मा हननक्रियायाः कर्ता कर्म च न भवति अविक्रियत्वादित्याह—द्वितीयेन मन्त्रेणेति। स्वपूर्वग्रन्थविरोधादन्यथा मन्त्रे न्यूनतापत्तेश्च। एतेन नायं हन्ति न हन्यत इत्युक्तम्। तत्र न हन्यत इत्येतदुपपादयति—न जायत इति। न हन्तीत्येतदुपपादयति वेदेतीत्यपि परास्तम्। एनं पूर्वमन्त्रेोक्तस्वरूपमविनाशिनमन्त्यविकाररहितं नित्यमविपरिणामिनमव्ययमपक्षयरहितं तत्र हेतुरजं जन्मरहितत्वात्सर्वविकारशून्यं यो वेद जानाति सोऽविक्रियः स्वात्मदर्शी विद्वान् कं कथं घातयति हन्तारं प्रयोजयति तथा कं हन्ति न कथञ्चित्कञ्चिदपीत्यर्थः। तथा त्वमपि विद्वान् भूत्वा स्वयं हननकर्ता शिखण्ड्यादिप्रयोजकश्चेति कर्तृत्वकारयितृत्वे स्वस्मिन्माऽध्यारोपयेत्याशयः। ननु न विनष्टुं शीलमस्य तमविनाशिनमन्त्यविकाररहितम्। तत्र हेतुरव्ययम्। न विद्यते व्ययोऽवयवापचयो गुणापचयो वा यस्य तमव्ययम्। अवयवापचयेन गुणापचयेन वा विनाशदर्शनात्। तदुभयरहितस्य न विनाशः सम्भवतीत्यर्थः। ननु जन्यत्वे विनाशित्वमनुमास्यामहे नेत्याह—अजमिति। न जायत इत्यजमाद्यविकाररहितम्। तत्र हेतुर्नित्यं सर्वदाविद्यमानम्। प्रागविद्यमानस्य हि जन्म दृष्टं नतु सर्वदा सत इत्यभिप्रायः। अथवाऽविनाशिनमबाध्यं सत्यमिति यावत्। नित्यं सर्वव्यापकम्। तत्र हेतुरजमव्ययं जन्मविनाशशून्यं जायमानस्य विनश्यतश्च सर्वव्यापकत्वसत्यत्वयोरयोगात्। यद्वा विनष्टुमदर्शनं गन्तुं शीलमस्येति विनाशी रज्जूरगतुल्यमुपाधित्रयं स्थूलसूक्ष्मकारणशरीराख्यं ततोन्यमविनाशिनमत एव नित्यं नाशहीनम्। तत्र हेतुरजं जन्मवान्हि अनित्यः। अयं त्वजत्वान्नित्यश्चेत्यर्थः। ननु विनाशिनः स्वकार्यपेक्षयान्यत्वमजत्वं नित्यत्वं च साङ्ख्याभिमते प्रधाने तार्किकाभिमते नभसि चास्त्यत उक्तमव्ययमिति न व्येति पूर्वावस्थां न त्यजतीत्यव्ययम्। परिणामिप्रधानं तु चलं गुणवृत्तमितिन्यायेन गुणसाम्यावस्थायामपि परिणममानमेव सर्वदास्तीति तेषामभ्युपगमात्। आकाशस्यापि "तस्माद्वा एतस्मादात्मन आकाशः सम्भूतः" इत्युत्पत्तिश्रवणादन्तवत्त्वभावादेव नाव्ययत्वमित्येवमाचार्यैः कुतो न व्याख्यातमिति चेत् सर्वविक्रियाशून्यमेनं यो वेदेति प्रकृतानुसारिवाक्यार्थस्य ऋजुमार्गेण सम्यक्सम्भवे क्लिष्टकल्पनाया अन्याय्यत्वमभिप्रेत्येति गृहाण। तथाच एनं नित्यमविनाशिनं सदैव नाशरहितं न त्वाकाशादिवत् व्यवहारदशायां नाशरहितम्। अत एवाजं जन्मरहितं नित्यमविनाशिनो जन्यत्वायोगात्। अत एवाव्ययं सदैकरसं यो वेदेत्यर्थः। यद्वा एनं नित्यं तत्र हेतुरविनाशिनम्। अविनाशित्वे हेतुरजमव्ययमपक्षयरहितम्। यद्वा एनमविनाशिनमजमव्ययं यो नित्यं सदैव वेदेत्यर्थः। अथवा वेद अविनाशिनमिति छेदः। अज्ञाने-

नावृतत्वादासमन्ताददर्शनं गतमेनं यो नित्यं सच्चिदानन्दात्मना सदैव सन्तमज्ञानावृतत्वाद्रज्जुशकलवत्तस्यासत्त्वाभावात् । तथाऽज्ञानेन जातः क्षीण इति प्रतीयमानमप्यजमव्ययं यो वेदेत्यादि यत्किञ्चित्कल्पनस्य बालैरप्यस्मदादिभिः सुकरत्वेन मार्गप्रदर्शकानां सर्वज्ञानां भाष्यकृतामुक्तकल्पनाकरणप्रयुक्ता न्यूनता न प्रदर्शनीयेति ध्येयम् । यत्तु 'अर्जुनो हि स्वस्मिन्कर्तृत्वं भगवति च कारयितृत्वमध्यस्य हिंसानिमित्तं दोषमुभयत्राप्याशङ्के भगवानपि विदिताभिप्रायो हन्ति घातयतीति तदुभयमाचिक्षेप। आत्मनि कर्तृत्वं मयि च कारयितृत्वमारोप्य प्रत्यवायशङ्कां मा कार्षीरित्यभिप्राय इति कैश्चिदुक्तम्' तन्न आत्मज्ञानरहितस्य हिंसानिबन्धनपापभयात् । स्वधर्माद्युद्धान्निवृत्तस्यार्जुनस्याऽऽत्मस्वरूपतदुपायभूतधर्मबोधनपरेण गीताशास्त्रेण सर्वेणापि बोधनं भगवता क्रियते इति स्पष्टप्रतिपत्त्या आ शशङ्के शङ्कां मा कार्षीरित्यस्य निरर्थकत्वात् । य इतिमन्त्रोत्थापकाया अस्याः शङ्कायाः असम्भवस्य तत्रैवोक्तत्वाच्च हननक्रियानिषेधः क्रियामात्रनिषेधस्योपलक्षणार्थः । असंहतस्यात्मस्वरूपस्य विदुषः कर्मासम्भवात् प्रबलप्रारब्धवशात् बाधितानुवृत्त्या कर्मसम्भवेऽपि तस्य कर्तृत्वाभिमानाभावेन कर्मणां फलाजनकत्वात् । वस्तुगत्या तेषामसम्भवस्य सुवचत्वात् । तस्मात्फलाभिसन्धिकर्तृत्वाभिमानपूर्वकोऽज्ञस्य कर्माणि मुख्योऽधिकारः । ननु विद्यायामप्यविदुष एवाधिकारः । तथा च भाष्यम् "तमेतमविद्याख्यमात्मानात्मनोरितरेतराध्यासं पुरस्कृत्य सर्वे प्रमाणप्रमेयव्यवहारा लौकिका वैदिकाश्च प्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिषेधमोक्षपराणि कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनि प्रमाणानि शास्त्राणि चेति । उच्यते देहेन्द्रियादिष्वहंममाभिमानहीनस्य प्रमातृत्वानुपपत्तौ प्रमाणप्रवृत्त्यनुपपत्तेः" इत्यादि । अयमर्थः प्रमातृत्वं हि प्रमां प्रति कर्तृत्वं तच्च स्वातन्त्र्यमस्वातन्त्र्यं च इतरकारकाप्रयोज्यस्य प्रमातुः समस्तकारकप्रयोक्तृत्वम् । तदनेन प्रमाणं प्रयोजनीयम् । नच स्वव्यापारमन्तरेण करणं प्रयोक्तुं शक्यते इति । नहि कूटस्थनित्यश्चिदात्माऽपरिणामी स्वतोऽव्यापारवान् भवितुमर्हति । तस्मात् व्यापारवद्बुध्यादितादात्म्याध्यासाद्व्यापारवत्तया प्रमाणमधिष्ठातुमर्हतीति । भवत्यविद्यावत्पुरुषविषयत्वमविद्यावत्पुरुषाश्रयत्वं प्रमाणानामिति चेत्सत्यम् । तथापि कर्मनियोगार्थबोधानन्तरमहं कर्ता ममेदं कर्तव्यमित्येवंप्रकारज्ञानवतोऽनेकसाधनोपसंहारपूर्वकं यथा कर्मानुष्ठेयं न तथा न जायत इत्यादावात्मस्वरूपविध्यर्थज्ञानानन्तरं किञ्चिदनुष्ठेयं भवति । किन्तु नाहं कर्ता न भोक्तेत्यादिज्ञानद्वयात्मैकत्वात्कर्तृत्वाभोक्तृत्वज्ञानादन्यत्किञ्चिदनुष्ठेयं भवतीत्येष विशेष इति स्पष्टं चेदं भाष्ये ॥ २१ ॥

प० टी०—अत एव हन्तृत्वमपि न युज्यत इत्याह—वेदाविनाशिनमिति । नित्यं वृद्धिशून्यम् अव्ययमपक्षयशून्यम् । अजं जन्मशून्यमेभिस्त्रिभिर्विकारैरेनमात्मानमविनाशिनं यो वेद ज्ञातवान् स कं पुरुषं घातयति च स्वयं हननक्रियाऽयोग्यत्वात् किञ्च प्रयोजकेऽपि तथैव । अनेन मय्यपि प्रयोजकत्वदृष्टिमाप्नुहीत्युक्तम् । तदुक्तम्—' शुद्धो निरञ्जनोऽनन्तो बोधोऽहं प्रकृतेः परः ॥ चेष्टमानमिदं देहं पश्याम्यन्यशरीरवत्' इति ॥ २१ ॥

रा० टी०—य एनमिति । श्लोके जीवचैतन्यस्य हननं वा हननक्रियास्वातन्त्र्यं वा मन्यमानो न जानातीत्यत्र जीवचितोबिम्बोपाधिसान्निध्यनाशहेतुनित्यत्वप्रतिबिम्बत्वहेतुकास्वातन्त्र्यरूपहेतू उक्तौ । यस्तु जीवचितो नित्यत्वं हरेः स्वातन्त्र्यं च जानाति स ज्ञानी । स्वातन्त्र्याभिमानाभावात् । हन्ताहमिति वा । अस्यायं हन्तेति वा न जानातीत्यज्ञानेऽभिमानाभावोऽपरो हेतुरुच्यते—वेदेति । अविनाशिनं बिम्बनाशादिनिमित्तकनाशहीनम् । मात्रास्पर्शा इत्यत्रोक्तदिशाभिमानकृता एव रागद्वेषसुखादिदोषाः नतु स्वत इति स्वतो दोषहीनमिति वा । दुष्टेषु नष्टशब्दप्रयोगान्नाशोऽत्र दोषो ध्येयः । नित्यं स्वाभाविकनाशहीनम् अजमुत्पत्तिहीनम् अव्ययं स्वरूपविकारशून्यमेनं जीवम् । यद्वा अविनाशिनं नित्यं स्वरूपतो नाशहीनम् । अजं जन्महीनम् अव्ययं निर्विकारम् । अत एव सर्वस्वतन्त्रमेनमीश्वरं यो वेद जानाति स पुरुषो ज्ञानी कथं केन प्रकारेण कं घातयति कं वा हन्ति । घातयाम्येनमिति वा हन्म्येनमिति वा भावं न करोतीत्यर्थः ॥ २१ ॥

**वासांसि जीर्णानि यथा विहाय नवानि गृह्णाति नरोऽपराणि ॥**
**तथा शरीराणि विहाय जीर्णान्यन्यानि संयाति नवानि देही ॥ २२ ॥**

**त० टी०**—नन्वात्मनामविनाशित्वेन शोकानर्हत्वेऽपि देहानां विनाशित्वात्तद्विनाशनिमित्ते युद्धे प्रियभोगसाधनभूतेषु भीष्मादिप्रियदेहेषु नश्यत्सु तद्वियोगनिमित्तः शोकः स्यादेवेत्याशङ्कायामाह—**वासांसीति**। यथा नरो जीर्णानि वासांसि विहायाऽपराणि नवानि गृह्णाति न तत्त्यागे शोको भवति प्रत्युत हर्ष एव जायते। तथा देही जीर्णानि शरीराणि विहायाऽन्यानि नवानि शरीराणि संयाति प्राप्नोति। न तस्य पूर्वदेहत्यागे शोको भवति प्रत्युत हर्ष एवोपजायते। तस्मात्स्वधर्मे युद्धे पूर्वशरीरं त्यक्त्वाऽन्यत्कल्याणतरं शरीरं गृह्णतां भीष्मादीनां हर्षविशेष एवोत्पत्स्यते । अतस्त्वया तदुपकार एव कृतः स्यान्न द्रोहसम्भावना कर्तव्येति भावः ॥ २२ ॥

**म० टी०**—नन्वेवमात्मनो विनाशित्वाभावेपि देहानां विनाशित्वाद्युद्धस्य च तन्नाशकत्वात्कथं भीष्मादिदेहानामनेकसुकृतसाधनानां मया युद्धेन विनाशः कार्य इत्याशङ्काया उत्तरम्—**वासांसीति**। जीर्णानि विहाय वस्त्राणि नवानि गृह्णाति विक्रियाशून्य एव नरो यथेत्येतावतैव निर्वाहे अपराणीति विशेषणमुत्कर्षातिशयख्यापनार्थं तेन यथा निकृष्टानि वस्त्राणि विहायोत्कृष्टानि जनो गृह्णातीत्यौचित्यायातम्। तथा जीर्णानि वयसा तपसा च कृशानि भीष्मादिशरीराणि विहाय अन्यानि देवादिशरीराणि सर्वोत्कृष्टानि चिरोपार्जितधर्मफलभोगाय संयाति सम्यक् गर्भवासादिक्लेशव्यतिरेकेण प्राप्नोति देही प्रकृष्टधर्मानुष्ठातृदेहवान् भीष्मादिरित्यर्थः। "अन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं दैवं वा प्राजापत्यं वा ब्राह्मं वा" इत्यादिश्रुतेः। एतदुक्तं भवति भीष्मादयो हि यावज्जीवं हि धर्मानुष्ठानक्लेशेनैव जर्जरशरीरा वर्तमानशरीरपातमन्तरेण तत्फलभोगायासमर्था यदि धर्मयुद्धेन स्वर्गप्रतिबन्धकानि जर्जरशरीराणि पातयित्वा दिव्यदेहसम्पादनेन स्वर्गभोगयोग्याः क्रियन्ते त्वया तदात्यन्तमुपकृता एव ते। दुर्योधनादीनामपि स्वर्गभोग्यदेहसंपादनान्महानुपकार एव। तथा चात्यन्तमुपकारके युद्धेऽपकारकत्वभ्रमं मा कार्षीरिति अपराणि अन्यानि संयातीति पदत्रयवशाद्भगवदभिप्राय एवमभ्यूहितः। अनेन दृष्टान्तेनाविकृतत्वप्रतिपादनमात्मनः क्रियत इति तु प्राचां व्याख्यानमतिस्पष्टम् ॥ २२ ॥

**शं० टी०**—नन्वात्मनः स्वतो विक्रियावत्त्वाभावेपि पूर्वापरदेहपरिग्रहपरित्यागयोर्विक्रियावत्त्वमौपाधिकं सम्भवति पूर्वापरगिरियोगाद्भानोरिव तेनाविक्रियत्वमसिद्धमित्याशङ्क्य वासांसि गृह्णतो जहतश्च पुरुषस्य यथाऽविक्रियत्वं तथैवात्मनोऽपि देहोपादानविसर्गयोरित्यात्मनस्त्वविक्रियत्वं देहादिभिन्नत्वं तद्धर्मतत्कर्मतदवस्थाराहित्यं च सूचयितुमाह—**वासांसीति**। नरः पुरुषो जीर्णानि वासांसि विहायापराणि नामरूपलक्षणैः पूर्वविपरीतानि नवानि वासांसि स्वयमविक्रियः सन्नेव यथा गृह्णाति तथा देही देहेहमित्युपलभ्यमान आत्मा स्वयमविकारात्मना स्थितः सन्नेव जीर्णानि कालकर्मवशात्त्याज्यतां प्राप्तानि शरीराणि विहाय अन्यानि नामरूपजातिगुणविशेषैः पूर्वविलक्षणानि संयाति प्राप्नोति न तु स्वयं विक्रियते यथा वस्त्राणामेवागमनिर्गमो नामरूपवैचित्र्यं शैथिल्यं च न तु पुरुषस्य तथा शरीराणामेवागमापायाववान्तरविकारश्च न त्वात्मनो निरवयवस्येति देहेन्द्रियादिभ्यो भिन्नत्वमविक्रियत्वं नित्यत्वं चात्मनः सूचितं भवति ॥ २२ ॥

**श्री० टी०**—नन्वात्मनोऽविनाशित्वेऽपि तदीयशरीरनाशं पर्यालोच्य शोचामीति चेत्तत्राह—**वासांसीति**। कर्मनिबन्धनभूतानां देहानामवश्यम्भावित्वान्न जीर्णदेहनाशे शोकावकाश इत्यर्थः ॥ २२ ॥

**स० टी०**—ननु मास्त्वात्मनो नाशस्तथाप्येषां महात्मनाम्॥ कथं भीष्मादिदेहानां नाशः कार्यो

मयेति चेत् ॥ १ ॥ त्यक्त्वा जीर्णानि वस्त्राणि यथा गृह्णात्यविक्रियः ॥ जनो नवानि श्रेष्ठानि जीर्णानि वयसा तथा ॥ २ ॥ भीष्मादिकशरीराणि त्यक्त्वा भीष्मादिदेहिकः ॥ सर्वोत्कृष्टानि देवादिशरीराणि प्रयात्यसौ ॥ ३ ॥ यावज्जीवं हि भीष्माद्या धर्मानुष्ठानखेदतः ॥ जर्जरीभूतदेहास्ते सर्वे स्वर्गाभिलाषिणः ॥ ४ ॥ जर्जराणि शरीराणि पातयित्वा रणे भवान् ॥ दिव्यदेहप्रदानेन तेषामुपकृतिं पराम् ॥ ५ ॥ करोत्वेवं हि युद्धेऽस्मिन्धर्म्ये सर्वोपकारिणि ॥ मा कार्षीर्दोषबुद्धिं त्वमित्यभिप्राय ईशितुः ॥ ६ ॥ २२ ॥

भा० टी०—नन्वात्मनः पुरातनदेहत्यागे नवीनदेहोपादाने च सति विक्रियावत्त्वध्रौव्यादविक्रियत्वमसिद्धमित्याशङ्कां दृष्टान्तेन परिहरति—**वासांसीति** । यथा लोके जीर्णानि दुर्बलतां गतानि वस्त्राणि नरः पुरुषः परित्यज्यापराण्यन्यानि नवान्युपादत्ते तद्वदेव देह्यात्मा जीर्णानि शरीराणि विहायान्यानि नवानि सङ्गच्छति। जीर्णानीत्यादिविशेषणत्रयेण वस्त्राणां शरीराणां च जीर्णत्वादिमत्त्वेपि तदुपादानत्यागकर्त्रोः पुरुषदेहिनोस्तत्त्वाभावबोधकेन तयोरविक्रियत्वं कथितम् । तथाच पुरुषवदविक्रिय एवात्मेत्यर्थः । यत्तु केचित् ' नन्वेवमात्मनोऽविनाशित्वेपि देहानां विनाशित्वात् युद्धस्य तन्नाशकत्वात् कथं भीष्मादिदेहानामनेकसुकृतसाधनानां मया युद्धेन विनाशः कार्य इत्याशङ्कायामुत्तरं वासांसीति । यथा निकृष्टानि वस्त्राणि विहाय नवान्युत्कृष्टानि जनो गृह्णाति तथा वयसा तपसा च कृशानि भीष्मादिशरीराणि विहायान्यानि देवादिशरीराणि सर्वोत्कृष्टानि संयाति देही प्रकृष्टधर्मानुष्ठाता देहवान् भीष्मादिरित्यर्थः। तथाच 'अत्यन्तमुपकारके युद्धेऽपकारकत्वभ्रमं मा कार्षीः ' इति तच्चिन्त्यम् । प्रकरणविरोधस्य विशेष्याध्याहारदोषस्य च स्पष्टत्वात् । जीर्णानीतिविशेषणात् नवीनादिसाधारणशरीरनाशनिमित्तस्य युद्धस्यात्यन्तोपकारकताया मूलादसिद्धेश्च उक्तरीत्यापराणीति पदस्य सार्थकत्वेन जीर्णानि विहाय नवानि गृह्णाति विक्रियाशून्य एव नरो यथेत्येतावतैव निर्वाहे अपराणीति विशेषणमुत्कर्षातिशयख्यापनार्थमिति वर्णनं त्वयुक्तमिति दिक् । अत एवानेन दृष्टान्तेनाविकृतत्वप्रतिपादनमात्मनः क्रियत इति प्राचां व्याख्यानमतिस्पष्टमिति कटाक्षोपि परास्तः । आत्माविक्रियत्वप्रतिपादकपूर्वोत्तरप्रकरणानुसारिमूलादतिस्पष्टतया प्रतीयमानस्य भाष्योक्तव्याख्यानस्यैव सम्यक्त्वात् ॥ २२ ॥

प० टी०—नन्वात्मनोऽविनाशित्वं निरूढमेव परं तु तदधिष्ठितदेहवधभयेन शोक इति चेत्तत्राह—**वासांसीति** । उत्पत्स्यमाननूतनदेहानां कर्मनिबन्धत्वेनावश्यम्भावात्तथैव जीर्णदेहनाशेऽपीति न दोषावकाशः॥२२॥

रा० टी०—पूर्वत्र पुराणपदेन जीवस्य देहाद्देहान्तरप्राप्तिरुक्ता । सा तु देहान्यनित्यजीवसत्व एव युक्ता । 'कौमारं यौवनं जरा' इत्यत्र देहात्मविवेकोक्तावपि कौमारादिदेहानामतिभिन्नत्वाभावान्न तेन देहात्मनोर्विनाशित्वाविनाशित्वलक्षणो विवेकः स्फुटमनुभवारूढो भवतीत्यतो दृष्टान्तान्तरेण तमुपपादयति—**वासांसीति** । यद्वा ईश्वरस्य देहतः स्वरूपतश्च नित्यत्वेन तद्विषये शोकाभावेपि जीवविषये तु स भविष्यति । जीवो नित्यस्तद्देहयोगवियोगौ कौमारादिदेहवदेवेत्युक्तावपि सर्वलोकप्रसिद्धजनिमृतिसत्वात् । युद्धे च तत्प्राप्तेस्तन्निमित्तः शोक इत्यत आह—**वासांसीति** । शरीरयोगवियोगयोः कौमारादिवच्छोककारणत्वाभावोऽङ्गीकृतश्चेत्तर्हि जनिमृती अपि न शोककारणम् । देहयोगवियोगयोरेव जनिमृतिशब्दार्थत्वादिति भावः । यद्वा वाससो जरावत्स्वशरीरे जरादावस्वातन्त्र्यदर्शनात्सर्वत्रास्वातन्त्र्यं जीवस्य ज्ञेयमित्यनेनोच्यते । श्लोकार्थस्तु व्यक्तः॥२२॥

## नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः ॥
## न चैनं क्लेदयन्त्यापो न शोषयति मारुतः ॥ २३ ॥

त० टी०—ननु गृहदाहे तदन्तर्वर्तिपुरुषदाहवद्देहस्य छेददाहादौ सत्यात्मनोऽपि छेददाहादिः किन्न स्यात्तथात्वेऽविनाशित्वहानिरित्यत आह—**नैनमिति** । सर्वदेहेषु समानरूपमेनमात्मानं शस्त्राग्न्यब्वायवः

छेदनदहनक्लेदनशोषणात्मकक्रियाफलाश्रयं न कुर्वन्ति छेदनदहनक्लेदनादिना विनाशयितुं न शक्नुवन्तीत्यर्थः। एकेनापि प्रसज्यात्मकनञोक्तार्थसिद्धौ तस्य चतुःकृत्व उपादानमुक्तार्थदार्ढ्यायार्जुनस्य हृदि मन्दीभूयापि शङ्का न तिष्ठेदित्येतदर्थम् ॥ २३ ॥

**म० टी०**—नतु देहनाशे तदभ्यन्तरवर्तिन आत्मनः कुतो न विनाशो गृहदाहे तदन्तर्वर्तिपुरुषवदित्यत आह—**नैनमिति**। शस्त्राण्यस्यादीनि अतितीक्ष्णान्यपि एनं प्रकृतमात्मानं न छिन्दन्ति अवयवविभागेन द्विधा कर्तुं न शक्नुवन्ति तथा पावकोऽग्निरतिप्रज्वलितोऽपि नैनं भस्मीकर्तुं शक्नोति। न चैनमापोऽत्यन्तं वेगवत्योऽपि आर्द्रीकरणेन विश्लिष्टावयवं कर्तुं शक्नुवन्ति मारुतो वायुरतिप्रबलोऽपि नैनं नीरसं कर्तुं शक्नोति सर्वनाशकाक्षेपे प्रकृते युद्धसमये शस्त्रादीनां प्रकृतत्वादवयुत्यानुवादेनोपन्यासः। पृथिव्यप्तेजोवायूनामेव नाशकत्वप्रसिद्धेस्तेषामेवोपन्यासो नाकाशस्य ॥ २३ ॥

**शं० टी०**—ननु घटजलनाशात्तत्रस्थप्रतिबिम्बस्येव शस्त्रादिना देहविनाशे सत्यात्मनोपि तत्रोपलभ्यमानस्य चरमविकारः स्यादेवातोऽविक्रियत्वमसिद्धमित्यतआह—**नैनमिति**। शस्यन्ते पदार्था एभिरिति शस्त्राण्यसिगदादयः पृथिवीविकारा देहवदेनं प्रकृतमात्मानं न छिन्दन्त्यवयवविश्लेषं न कुर्वन्ति निरवयवत्वादाकाशवत्तेषां शसनक्रियाविषयो न भवत्यात्मेत्यर्थः। आपोऽपि नैनमात्मानं देहवत् क्लेदयन्ति आर्द्रतामापाद्य सावयवस्येव निरवयवस्यात्मनः शैथिल्यं सम्पादयितुं न शक्नुवन्ति। पावकोऽग्निरपि देहवन्नैनं दहति दहनक्रियाया अविषयत्वात् भस्मीकर्तुं न शक्नोति। स्नेहशोषणेन देहं यथा शोषयति तथा मारुतोप्येनं न शोषयति शोषणक्रियाया अगोचरत्वादेनं शुष्कीकर्तुं न शक्नोति। यथा घटं जलं क्लेदयति शस्त्राणि ताडनीयानि ताडयन्ति वायुः शोषयति वह्निर्दहति तथा तत्रस्थमाकाशं निरवयवं न क्लेदयति न ताडयन्ति न शोषयति न दहति तद्वदात्मानं देहस्थमिति भावस्ततोऽविक्रियत्वमात्मनः सिद्धम्। एतेन जरारोगादयो भौतिका दैविकाश्चोपद्रवाः सर्वे शरीरस्यैव नात्मनोऽहमर्थस्येति देहादिभिन्नत्वेनात्मनो देहं विषयीकृत्य प्राप्तानर्थागोचरत्वमुक्तं ततस्तेषु प्राप्तेष्वपि स्थिरप्रज्ञतया ब्रह्मविद्भिः स्थातव्यमिति सूचितं भवति ॥ २३ ॥

**श्री० टी०**—कथं हन्तीत्यनेनोक्तं वधसाधनाभावं दर्शयन्नविनाशित्वमात्मनः स्फुटीकरोति—**नैनमिति**। आपो नैनं क्लेदयन्ति मृदुकरणेन शिथिलं न कुर्वन्ति ॥ २३ ॥

**स० टी०**—ननु देहविनाशेन कुतो नाशो न चात्मनः ॥ गृहदाहे यथा दाहस्तदभ्यन्तरवर्तिनः ॥ १ ॥ तथेत्याशङ्क्य भगवानाह सर्वज्ञ ईश्वरः ॥ शस्त्राण्यङ्गविभागेन द्विधा कर्तुं चिदात्मकम् ॥ २ ॥ न शक्नुवन्ति वह्निर्नो भस्मीकर्तुं क्षमो विभुम् ॥ न चार्द्रीकरणेऽप्यापः शक्नुवन्त्येनमान्तरम् ॥ ३ ॥ विश्लिष्टाङ्गकमात्मानं कर्तुं तद्वन्न मारुतः ॥ आत्मानं नीरसं कर्तुं शक्नोति बलवत्तरः ॥ ४ ॥ प्रसिद्धा नाशका एते प्रभवन्ति न चात्मनि ॥ पृथिव्यब्वह्निवायूनां नाशकत्वप्रसिद्धितः ॥ ५ ॥ तेषामप्यान्तरो ह्यात्मा तं विना ते मृषात्मकाः ॥ ६ ॥ २३ ॥

**भा० टी०**—तस्याविक्रियत्वं प्रकारान्तरेण पुनराह—**नैनमित्यादिना**। न च क्लेदयन्ति विश्लिष्टावयवं न कुर्वन्ति निरवयवत्वं हेतुः ॥ २३ ॥

**प० टी०**—**नैनमिति**। क्लेदनं नाम मृदुत्वहेतोः शिथिलीकरणं तथाविधो न भवति ॥ २३ ॥

**रा० टी०**—ननु जीवचितः कालकृतस्य बिम्बनाशादिनिमित्तकृतस्य च नाशस्याभावेपि दक्षशिरश्छेद इव शस्त्रादिप्रबलहेतुना नाशोस्ति किमित्यत आह—**नैनमिति**। एनं देहीति प्रकृतं जीवं न क्लेदयति। मृदुकरणेन शिथिलं न कुर्वन्तीत्यर्थः ॥ २३ ॥

**अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च ॥**
**नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ २४ ॥**

त० टी०—शस्त्रादिजन्यतन्नाशानर्हत्वे हेतूनाह—अच्छेद्य इति । यतोऽच्छेद्योऽयं तस्मादेनं शस्त्राणि न छिन्दन्ति । एवमेवाशोष्यान्तानि विशेषणानि हेतुरूपविशेषणानि योज्यानि । अच्छेद्यत्वादिष्वपि हेतुमाह—नित्य इति । अनित्यश्छेद्यदाह्यादिरूपो भवति, नो नित्यः । नित्यत्वेऽपि हेतुः—सर्वगत इति । सर्वगतत्वव्यापनस्वभावोऽतिसूक्ष्म इत्यर्थः । नहि व्यापनशीलमतिसूक्ष्मं वस्तु शस्त्राग्न्यादिभिश्छेद्यदाह्यादि कर्तुं शक्यते । यतोऽच्छेद्योऽदाह्यश्च तत एव स्थाणुः स्थिरस्वभावः स्वरूपान्यथाभावरहितः । स्थाणुत्वादक्लेद्यः अद्भिरार्द्रीकृत्य स्वरूपाच्च्यावयितुमशक्यः । स्थाणुत्वादेवाचलः अप्रकम्प्यः । अचलत्वादशोष्यो वायुना शोषयितुमशक्यः । तस्मादुक्तेभ्यो हेतुभ्यः सनातनः नित्यस्वरूप इत्यर्थः ॥ २४ ॥

म० टी०—शस्त्रादीनां तन्नाशकत्वासामर्थ्ये तस्य तज्जनितनाशानर्हत्वे हेतुमाह—अच्छेद्य इति । यतोऽच्छेद्योयं अतो नैनं छिन्दन्ति शस्त्राणि । अदाह्योऽयं यतोऽतो नैनं दहति पावकः । यतोऽक्लेद्योऽयं अतो नैनं क्लेदयन्त्यापः । यतोऽशोष्योऽयं अतो नैनं शोषयति मारुत इति क्रमेण योजनीयम् । एवकारः प्रत्येकं सम्बध्यमानोऽच्छेद्यत्वाद्यवधारणार्थः । चः समुच्चये हेतौ वा । छेदाद्यनर्हत्वे हेतुमाह उत्तरार्धेन—नित्यमिति । नित्योऽयं पूर्वापरकोटिरहितोऽतोऽनुत्पाद्यः असर्वगतत्वे ह्यनित्यत्वं स्यात् "यावद्विकारं तु विभागः" इति न्यायात् पराभ्युपगतपरमाण्वादीनामनभ्युपगमात् । अयं तु सर्वगतो विभुरतो नित्य एव । एतेन प्राप्यत्वं पराकृतं यदि चायं विकारी स्यात्तदा सर्वगतो न स्यात् । अयं तु स्थाणुरविकारी अतः सर्वगत एव । एतेन विकार्यत्वमपाकृतं यदि वायं चलः क्रियावान् स्यात् तदा विकारी स्यात् घटादिवत् । अयं त्वचलोऽतो न विकारी एतेन संस्कार्यत्वं निराकृतं पूर्वावस्थापरित्यागेनावस्थान्तरापत्तिर्विक्रिया अवस्थैक्येपि चलनमात्रं क्रियेति विशेषः । यस्मादेवं तस्मात् सनातनोऽयं सर्वदैकरूपः न कस्या अपि क्रियायाः कर्मेत्यर्थः । उत्पत्त्याप्तिविकृतिसंस्कृत्यन्यतमक्रियाफलयोगे हि कर्मत्वं स्यात् । अयं तु नित्यत्वान्नोत्पाद्यः अनित्यस्यैव घटादेरुत्पाद्यत्वात् । सर्वगतत्वान्न प्राप्यः परिच्छिन्नस्यैव घटादेः प्राप्यत्वात् । स्थाणुत्वादविकार्यः विक्रियावतो घृतादेरेव विकार्यत्वात् । अचलत्वादसंस्कार्यः । सक्रियस्यैव दर्पणादेः संस्कार्यत्वात् । तथा च श्रुतयः "आकाशवत्सर्वगतश्च नित्यः । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । निष्कलं निष्क्रियं शान्तम्" इत्यादयः "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो योऽप्सु तिष्ठन्नद्भ्योन्तरो यस्तेजसि तिष्ठंस्तेजसोऽन्तरो यो वायौ तिष्ठन्वायोरन्तरः" इत्याद्या च श्रुतिः सर्वगतस्य सर्वान्तर्यामितया तदविषयत्वं दर्शयति—यो हि शस्त्रादौ न तिष्ठति तं शस्त्रादयश्छिन्दन्ति । अयं तु शस्त्रादीनां सत्तास्फूर्तिप्रदत्वेन तत्प्रेरकस्तदन्तर्यामी । अतः कथमेनं शस्त्रादीनि स्वव्यापारविषयीकुर्युरित्यभिप्रायः । अत्र "येन सूर्यस्तपति तेजसेद्धः" इत्यादिश्रुतयोऽनुसन्धेयाः सप्तमाध्याये च प्रकटीकरिष्यति श्रीभगवानिति दिक् ॥ २४ ॥

शं० टी०—वासांसि जीर्णानीति यतो देहव्यतिरिक्तत्वमात्मनः प्रतिपादितं ततो देहस्यैव छेदादयो दृश्यविषयकाः न त्वात्मनो निरवयवस्येति छेदक्लेददहनशोषणानि भूतचतुष्टयकार्याणि न प्रसरन्त्यात्मनीति स्फुटमाह—अच्छेद्य इति । सनातनोऽनादिः "न तस्य कश्चिज्जनिता न चाधिपः" इति श्रवणादात्मायं निरवयवत्वेन कुतश्चित्कारणादुत्पन्नो न भवतीति सनातनः । जन्मादिविकाररहितस्तत एव नित्यः नित्यत्वादेव सर्वगतः परिपूर्णः नित्यत्वे सर्वगतत्वेप्यात्मनः क्रियाशक्त्याश्रयत्वमस्त्विति न शङ्कनीयम् ।

नित्यत्वादिधर्मवत्याकाशे तद्दर्शनादत एव स्थाणुः स्थिरस्वभावः स्थिरत्वादेवाचलः अयमयमित्यपरोक्षेण निर्देश आत्मनो विद्वत्प्रत्यक्षाविषयत्वज्ञापनार्थम् । सनातनत्वान्नित्यत्वात् स्थिरत्वादचलत्वाच्चायमात्मा स्वयमच्छेद्यः छेत्तुमशक्यः अदाह्यो दग्धुमशक्यः । अक्लेद्यः क्लेदयितुमशक्यः । अशोष्यश्च शोषयितुमशक्य एव भवति शस्त्रादीनामित्यर्थः । सनातनत्वविशेषणेन निर्विकारत्वं नित्यत्वविशेषणेन प्रमाणान्तराबाध्यत्वं स्थिरत्वाचलत्वविशेषणाभ्यां क्रियाया अनाश्रयत्वमविषयत्वं पूर्णत्वविशेषणेनाऽद्वितीयत्वं नित्यशुद्धत्वमानन्दैकरसत्वं चात्मनः सूचितं भवति ॥ २४ ॥

**श्री० टी०**–तत्र हेतूनाह–अच्छेद्य इति सार्धेन । निरवयवत्वादच्छेद्योऽयमक्लेद्यश्च अमूर्तत्वाददाह्यो द्रवत्वाभावादशोष्य इति भावः । इतश्च छेदादियोग्यो न भवति यतो नित्यः । अविनाशी सर्वत्र गतः । स्थाणुः स्थिरस्वभावः रूपान्तरापत्तिशून्यः । अचलः पूर्वरूपापरित्यागी सनातनः अनादिः ॥ २४ ॥

**स० टी०**–शस्त्रादेरात्मनो नाशासामर्थ्ये हेतवो ह्यमी ॥ अच्छेद्यत्वादयस्तेन नित्य आत्माक्षरोऽव्ययः ॥ १ ॥ अन्योन्यनाशहेतूनि भूतान्यात्मानमान्तरम् ॥ नोत्सहन्ते यतो हन्तुं नाशशङ्कामतस्त्यज ॥ २ ॥ नित्यत्वात्सर्वगो व्यापी व्यापित्वात्स्थाणुवत्स्थिरः ॥ स्थिरत्वाच्च क्रियाशून्यस्तस्मादात्मा चिरन्तनः ॥ ३ ॥ नित्यत्वान्नायमुत्पाद्यो न प्राप्यः सर्वगो यतः ॥ स्थाणुत्वादविकार्योऽयमसंस्कार्योऽचलत्वतः ॥ ४ ॥ संस्कारस्तु गुणाधानं दोषापनयनं च वा ॥ निर्गुणेन गुणाधानं स्वतः शुद्धेन चापरः ॥ ५ ॥ सत्तास्फूर्तिप्रदातास्ति शस्त्रादीनामयं यतः ॥ प्रेरकोऽन्तर्यामितया कथमेनमिमान्यपि ॥ ६ ॥ शस्त्रादीनि प्रकुर्युस्तं स्वव्यापारैकगोचरम् ॥ ७ ॥ २४ ॥

**भा० टी०**–फलितमाह–अच्छेद्य इति । एवकारस्य सर्वत्र संबन्धः । यस्मादन्योन्यनाशहेतूनि भूतानि आत्मानं नाशयितुं नोत्सहन्ते तस्मान्नित्यः परमाणुनित्यत्वे प्रमाणाभावात् । न तत्रातिप्रसङ्गः । अत एव सर्वगतः तत एव सर्वगताकाशवत्स्थाणुरिव स्थिर इत्यर्थः । तत एवाचलः अत एवायमात्मा सनातनश्चिरन्तनः न कुतश्चित्कारणान्निष्पन्न इतीदं भाष्यमुपलक्षणं यथेष्टहेतुहेतुमद्भावस्यापि तथा चोत्पाद्याप्यविकार्यसंस्कार्यरूपाणां क्रियाफलानां क्रमेण नित्य इत्यादिविशेषणचतुष्टयेन निराकरणं हेतुहेतुमद्भावविपर्ययश्च । न कुतश्चित्कारणान्निष्पन्न इति भाष्यात् । तस्योपलक्षणार्थत्वाच्च सिध्यत इति न कोपि विरोधः । यत्तु तथा च श्रुतयः "आकाशवत्सर्वगतश्च नित्यः । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकः । निष्कलं निष्क्रियं शान्तम्" इत्याद्याः । "यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो योप्सु तिष्ठन्नद्भ्योन्तरो यस्तेजसि तिष्ठंस्तेजसोन्तरो यो वायौ तिष्ठन्वायोरन्तरः" इत्याद्याश्च श्रुतयः सर्वगतस्य सर्वान्तर्यामितया तदविषयत्वं दर्शयन्ति । यो हि शस्त्रादौ न तिष्ठति तं शस्त्रादयच्छिन्दन्ति । अयं तु शस्त्रादीनां सत्तास्फूर्तिप्रदत्वेन तत्प्रेरकस्तदन्तर्यामी अतः कथमेनं शस्त्रादीनि स्वव्यापारविषयीकुर्युरित्यभिप्राय इति केचिद्वर्णयन्ति । तत्रेदं वक्तव्यम् । त्वंपदशोधनप्रकरणे तत्पदवाच्यान्तर्यामिप्रतिपादकश्रुत्युदाहरणमयुक्तं गतासूनगतासूनित्युपक्रमः । देहिनोऽस्मिन्नन्तवन्त इमे देहा वासांसि जीर्णानीत्यादिर्मध्यनिर्देशः । देही नित्यमित्युपसंहारः । इत्येवंरूपतात्पर्यलिङ्गैस्त्वंपदनिरूपणप्रतीतेः स्पष्टत्वात् । आद्यषट्कं त्वंपदशोधनपरमिति सर्वैः स्वेन च तथैव स्थापितत्वाच्च । अभेदस्तु नियम्यनियामकोपाधिविनिर्मुक्तयोः शुद्धचैतन्ययोर्वास्तवः । औपाधिकस्तु भेद एव । तथा च भाष्यम् "अविद्याप्रत्युपस्थापितकार्यकरणोपाधिनिमित्तोऽयं शारीरान्तर्यामिणोर्भेदव्यपदेशो न पारमार्थिकः" इति । एवं च येन शुद्धेन शुद्धस्यास्याभेदः । तस्य नियामकत्वाभावात् । नान्तर्यामिश्रुत्युदाहरणं प्रकृत उपयुक्तम् । तथाचौपाधिकभेदप्रतिपादकानि भगवतो बादरायणस्य सूत्राणि अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् । नच स्मार्तमतद्धर्माभिलापात् । शारीरश्चोभयेपि हि भेदेनैनमधीयत इति । "य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यम-

यति " इत्युपक्रम्य श्रूयते । "यः पृथिव्यां तिष्ठन्पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' इत्यादि । "अत्राधिदैवतमधिलोकमधिवेदमधियज्ञमधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामी" इति श्रूयते । सः अधिदैवाद्यभिमानी कश्चिद्देवतात्मा स्यात् । प्राप्ताणिमाद्यैश्वर्यः कश्चिद्योगी वा स्यात् अर्थान्तरं किंचिद्वा स्यात् । इति प्राप्ते राद्धान्तः योन्तर्याम्यधिदैवादिषु श्रूयते स परमात्मैव स्यान्नान्यः । कुतः तद्धर्मव्यपदेशात् । तस्य परमात्मनो धर्माणामस्यां श्रुतौ व्यपदेशात् । नच स्मार्तं प्रधानमन्तर्यामिशब्दप्रतिपाद्यं भवितुमर्हति कस्मादतद्धर्माभिलापात् । द्रष्टृत्वादीनामप्रधानधर्माणां कथनात् । ननु शारीरोस्त्वित्यत आह—शारीर इति । पूर्वसूत्रान्नेत्यनुवर्तते शारीरश्च नान्तर्यामी स्यात् । हि यस्मादुभयेऽपि काण्वा माध्यंदिनाश्चान्तर्यामिणो भेदेनैनं शारीरं पृथिव्यादिवदधिष्ठानत्वेन नियम्यत्वेन चाधीयते । यो विज्ञाने तिष्ठन्निति काण्वाः । आत्मनि तिष्ठन्निति माध्यन्दिनाः । तस्माच्छारीरादन्य आत्मान्तर्यामीति सिद्धम् । यत्तु-'यो हि शस्त्रादौ न तिष्ठति तं शस्त्रादयश्छिन्दन्ति' इति । तदपि न शस्त्रादौ स्थितस्यापि लोहादेस्तैश्छेदस्योपलब्धेः । तस्मात्सर्वज्ञैर्भाष्यकारैरुक्तो निरवयवत्वहेतुरेव समीचीन इति दिक् । न जायत इति श्लोकेनोक्तस्याप्यात्मज्ञानस्य दृष्टफलस्य व्रीह्यवहननस्यावृत्तिवत् । दृष्टफलत्वाद्दुर्बोधत्वाच्च । पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूप्यते भगवता करुणानिधिना श्रीकृष्णेन कथञ्चिदपि संसारनिमग्नानां मुमुक्षूणां बुद्धिगोचरतामापन्नं स्पष्टतत्त्वं सत् संसारनिवृत्तये स्यादित्यभिप्रायवता इति न पौनरुक्त्यम् । तथा च भगवतो व्यासस्य सूत्रम् । "आवृत्तिरसकृदुपदेशात्" इति । अस्यार्थः । " आत्मा वा अरे द्रष्टव्यो श्रोतव्यो मन्तव्यो निदिध्यासितव्यः । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः सोन्वेष्टव्यः स विजिज्ञासितव्यः " इत्यादि श्रूयते । तत्र संशयः किं सकृत्प्रत्ययः कर्तव्य आहोस्विदावृत्त्येति । किं तावत्प्राप्तं सकृत्प्रत्ययः स्यात् । प्रयाजादिवत् । तावता शास्त्रस्य कृतार्थत्वात् । अश्रूयमाणायामप्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत् । नन्वसकृदुपदेशा उदाहृताः श्रोतव्य इत्यादयः । एवमपि यावच्छब्दमावर्तयेत् । सकृच्छ्रवणमित्यादिनातिरिक्तमित्येवं प्राप्ते ब्रूमः । प्रत्ययावृत्तिः कर्तव्या । कुतः असकृदुपदेशात् । श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति । ननूक्तं यावच्छब्दमेवावर्तयेन्नाधिकमिति न दर्शनपर्यवसानत्वादेतेषां दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति यथाऽवघातादीनि तन्दुलनिष्पत्तिपर्यवसानानि तद्वदिति ॥ २४ ॥

**प० टी०—अच्छेद्य इति** । निरवयवत्वादमूर्तित्वादद्रवत्वात्तथाविधो न भवति । छेद्यत्वादिदेहगतमात्मन्यारोप्यते । तदुक्तम्—'अयःपिण्डगते वह्नौ लोहकारस्य ताडनम् ॥ आरोप्यते तथा लोहे दाहकत्वादि-वह्निजम् ' इति । अग्रेऽपि तथैवास्तीत्याह—**नित्य इत्यादि** । नित्योऽविनाशी सर्वगतोऽपरिच्छिन्नः स्थाणुः स्थिरस्वभावो रूपान्तरशून्यः । अचलः पूर्वरूपापरित्यागी । सनातनोऽनादिः । एवंभूतश्चेत्कथं नानुभूयत इत्याह—**अव्यक्त इति** । चक्षुराद्यविषयो मनसा ज्ञातव्य इति चेदचिन्त्योऽत एव देहादिभिरविकार्यो विकारं न प्राप्यते ॥ २४ ॥

**रा० टी०**—ननु न छिन्दन्तीत्यादिलट्प्रयोगेन वर्तमानस्यैव छेदादेर्निषेधादिदानीं दृश्यमानत्वेनात्मनः प्राग्विनाशाभावेप्युत्तरत्र शस्त्रादिना विनाशः स्यादित्यतः छेदादियोग्यतैवात्मनो नास्तीत्याह—**अच्छेद्योयमिति** । अयं जीवः । " कृत्याः प्राङ्ण्वुलः " इतिसूत्रेणोक्तकृत्यसंज्ञकस्य ण्यत्प्रत्ययस्य " अर्हे कृत्यतृचश्च " इत्यर्हार्थे छिदिदहेत्यादेर्धातोर्विधानाच्छेदनाद्यर्हो न भवतीत्यर्थः । अयमयमिति पृथग्वचनं योयो जीवः स सर्वोप्येवंरूप इति प्रदर्शनाय । कुतो नार्हतेत्यत उक्तम् । नित्य इत्यादि । सर्वगतः स्थाणुरिति पदविभागः । नित्य इति सर्वगत इत्यस्य विशेषणम् । सर्वगतपदेन सर्वगतत्वविशिष्ट उच्यते । नित्यः सर्वगतत्वविशि-

ष्ट इत्युक्ते सविशेषणे हीतिन्यायेन नित्यत्वं सर्वगतत्वरूपविशेषणमुपसङ्क्रामति । नित्यं यत्सर्वगतत्वमिति तद्वान्सर्वगत इत्यर्थः । स्थाणुरिति यत्किञ्चिन्निमित्तकृतविकारहीनः । अजो नित्यः शाश्वत इत्यत्र शाश्वतपदेन सामान्यतो विकाराभावोक्तावपीह नैमित्तिकनिषेधप्रकरणान्नैमित्तिकविकाराभावोक्त्यर्थं स्थाणुरित्युक्तम् । अतो न पुनरुक्तता । अचलः प्राकृतचलनहीनः । सनातनः वक्ष्यमाणदिशा सशब्द इत्यर्थः । त्वयीश्वरे ब्रह्मणि नो विरुध्यते । विज्ञानशक्तिरहमासमनन्तशक्तेः । "परास्य शक्तिर्विविधैव श्रूयते" इत्यादिश्रुतिस्मृतिरूपशब्दसहितः तत्प्रतिपाद्य इति यावत् । तथा च स्थाणुत्वेऽपि हरेस्तदैक्षतेत्याद्युक्तकर्तृत्वमचिन्त्यशक्त्यैव युक्तम् । ननु पररीत्या मायावशादित्युक्तं भवति । ननु नित्य इत्यादिविशेषणविशिष्टस्येश्वरत्वादयं जीवो नित्यः सर्वगः स्थाणुरिति भगवदभेदोक्तिरयुक्तेति चेत् । सत्यम् । उक्तानुपपत्तेरेव भेदोक्तिपरत्वादतद्भावे सामानाधिकरण्यं सारूप्यं गमयतीति न्यायाद्गौणी नेया । नित्यसर्वगतत्वादियुक्तभगवत्सरूपोयं जीव इति । उक्तगुणकेश्वरप्रतिबिम्बो जीव इति यावत् । तावता कथं छेदनाद्यनर्हो जीव इति शङ्कानिरास इति चेत् । यो यत्प्रतिबिम्बः सोऽसति विरोधे तत्समानधर्मक इति व्याप्तिबलेन जीवस्य स्थाणुत्वादीश्वरधर्मसमानधर्मप्राप्तेरिति तात्पर्यात् । अनाशिनोऽप्रमेयस्येत्यत्राजो नित्यः शाश्वत इत्यत्र नित्य इति प्रकृतार्थे च जीवस्येश्वरप्रतिबिम्बत्वोक्तावपि न पुनरुक्तता शङ्क्या । तत्तच्छङ्कानिवर्तकभिन्नगुणविशिष्टेश्वरप्रतिबिम्बत्वस्य तत्र तत्र कथनादिति ज्ञेयम् । ननु सयुक्तिकमच्छेद्यत्वाद्युक्त्यैव नैमित्तिकनाशशङ्कानिरासात् नैनमिति व्यर्थमिति चेत् । प्रवृत्ते शस्त्रसंपात इत्युक्तेः प्रसक्तौ सत्यामपि वर्तमानस्य छेदादेरदृष्टेरात्मनः छेदाद्ययोग्यत्वं युक्तमिति प्रदर्शनार्थत्वात् । यद्वा नैनमित्यादिश्लोक ईश्वरविषयः । तथाहि । वेदाविनाशिनमित्यत्रेश्वरस्य स्वतो नाशाभावोक्त्या तन्निमित्तशोकाभावेपि युद्धगतशस्त्रादिकरणविशेषेण च्छेदादिप्रसक्तेस्तन्निमित्तशोको ममेत्यत आह—**नैनमिति** । य एनं वेत्तीति श्लोके प्रकृतमीश्वरम् । शिष्टं व्यक्तम् । एतेनेश्वरस्य देहतोपि च्छेदाद्यभावात् स्वातन्त्र्यमित्युक्तं भवति । एनमेनमिति पृथक्पृथग्वचनं सर्वरूपाणामेवंभावप्रदर्शनाय । एवमव्यक्तोयमित्यत्रापि । ननु जीवस्य स्वतो नाशाभावेपि युद्धगतशस्त्रादिकरणविशेषेण छेदादिः स्यादित्यत आह—**अच्छेद्योऽयमिति** । अयं जीवः । ननु जीवस्यापीश्वरवदच्छेद्यत्वादिसत्वे सर्वसाम्यं स्यात् । तथा च किं तत्पूजयेत्यतो जीवस्य नित्यमीशाधीनतामाह—**नित्य इति** । सर्वगतस्थाणुरित्येकं पदम् । नित्य इति योग्यतया स्थितिरूपक्रियाविशेषणम् । क्रियाव्ययविशेषणानां च नपुंसकत्वमेकवचनान्तत्वं च वाच्यमित्येतन्नाश्रितम् । अयं जीवः नित्यं सर्वगते हरौ तिष्ठतीति नित्यः सर्वगतस्थः । तदधीनतया सदा स्थित इति यावत् । स चासावणुश्च सर्वगतस्थाणुरित्यर्थः । ईशजीवयोः सर्वगतत्वाणुत्वरूपवैषम्यान्न सर्वसाम्यमितिभावेन सर्वगतेति अणुरिति चोक्तम् । ननु जीवस्येशाधीनत्वं यदा न स्यात्तदा स्यात्सर्वसाम्यम् । तथा च न तत्पूजा कार्येत्यत आह—**अचल इति** । सर्वगतस्थपदं बुद्धिविविक्तमाकृष्यते भावप्रधानम् । सर्वगतस्थत्वान्न कदाचिच्चलतीत्यचलः । नित्यं सर्वगतस्थ इत्युक्त्यैवास्यार्थस्य लाभेऽपि केनचिद्द्वरादिनिमित्तेनापि तदधीनत्वस्य ( नाश इति ) नैमित्तिकनाशाभावोक्त्यर्थमचल इत्युक्तिः । कुतः सदा हर्यधीनत्वं जीवस्येत्यत उक्तम्—**सनातन इति** । नादेन विधिनिषेधरूपशब्देन सह वर्तत इति सनादः । सनाद एव सनातनः । दशब्दस्य च्छांदसस्तनादेशः । विधिनिषेधबद्धत्वात्सदा तदधीन इति भावः । तदुक्तं विष्णुपुराणे । 'नित्यं सर्वगते विष्णावणुर्जीवो व्यवस्थितः' इत्यादि ॥ २४ ॥

**अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ॥**
**तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ॥ २५ ॥**

त० टी०—किञ्चान्योऽप्यशोच्यत्वे हेतुरित्याह—**अव्यक्त इति** । छेद्यादिद्रव्याणि यथा यैः प्रमाणैर्व्यज्यन्ते तथा तैः प्रमाणैरयमात्मा न व्यज्यतेऽतोऽव्यक्तः । तथा स्वेतरसमस्तवस्तुस्वरूपस्वभावौ-

पश्येन चिन्तयितुमनर्हस्ततोऽचिन्त्यः, अत एवाविकार्यः । दध्यादिवद्विकारशून्य उच्यते । तस्मादेवमुक्तस्वरूपस्वभावमेनमात्मानं विदित्वा त्वं शोचितुं नार्हसि ॥ २५ ॥

**म० टी०**—छेद्यत्वादिग्राहकप्रमाणाभावादपि तदभाव इत्याह—**अव्यक्तोयमित्याद्यर्धेन** । योहीन्द्रियगोचरो भवति स प्रत्यक्षत्वाद्व्यक्त इत्युच्यते। अयं तु रूपादिहीनत्वान्न तथा अतो न प्रत्यक्षं तत्र छेद्यत्वादिग्राहकमित्यर्थः । प्रत्यक्षाभावेऽप्यनुमानं स्यादित्यत आह—अचिन्त्योऽयं चिन्त्योऽनुमेयस्तद्विलक्षणोऽयं क्वचित्प्रत्यक्षो हि वह्न्यादिर्गृहीतव्याप्तिकस्य धूमादेर्दर्शनात् क्वचिदनुमेयो भवति। अप्रत्यक्षे तु व्याप्तिग्रहणासंभवान्नानुमेयत्वमिति भावः । अप्रत्यक्षस्यापीन्द्रियादेः सामान्यतो दृष्टानुमानविषयत्वं दृष्टमत आह—अविकार्योऽयं यद्विक्रियावच्चक्षुरादिकं तत्स्वकार्यान्यथानुपपत्त्या कल्प्यमानमर्थापत्तेः सामान्यतो दृष्टानुमानस्य च विषयो भवति । अयं तु न विकार्यो न विक्रियावानतो नार्थापत्तेः सामान्यतो दृष्टस्य वा विषय इत्यर्थः । लौकिकशब्दस्यापि प्रत्यक्षादिपूर्वकत्वात्तन्निषेधेनैव निषेधः । ननु वेदेनैव तत्र छेद्यत्वादि ग्रहीष्यत इत्यत आह—उच्यते वेदेन सोपकरणेन अच्छेद्याव्यक्तादिरूप एवायमुच्यते तात्पर्येण प्रतिपाद्यते अतो न वेदस्य तत्प्रतिपादकस्यापि छेद्यत्वादिप्रतिपादकत्वमित्यर्थः । अत्र नैनं छिन्दन्ति इत्यत्र शस्त्रादीनां तन्नाशकसामर्थ्याभाव उक्तः । अच्छेद्योऽयमित्यादौ तस्य च्छेदादिकर्मत्वायोग्यत्वमुक्तम् । अव्यक्तोऽयमित्यत्र तच्छेदादिग्राहकमानाभाव उक्त इत्यपौनरुक्त्यं द्रष्टव्यम् । वेदाविनाशिनमित्यादीनां तु श्लोकानामर्थतः शब्दतश्च पौनरुक्त्यं भाष्यकृद्भिः परिहृतं दुर्बोधत्वादात्मवस्तुनः पुनः पुनः प्रसङ्गमापाद्य शब्दान्तरेण तदेव वस्तु निरूपयति भगवान्वासुदेवः । कथं नु नाम संसारिणां बुद्धिगोचरमापन्नं तत्त्वं संसारनिवृत्तये स्यादिति वदद्भिः । एवं पूर्वोक्तयुक्तिभिरात्मनो नित्यत्वे निर्विकारत्वे च सिद्धे तव शोको नोपपन्न इत्युपसंहरति—**तस्मादित्यर्धेन** । एतादृशात्मस्वरूपवेदनस्य शोककारणनिवर्तकत्वात्तस्मिन्सति शोको नोचितः कारणाभावे कार्याभावस्यावश्यकत्वात् तेनात्मानमविदित्वा यदन्वशोचस्तद्युक्तमेव आत्मानं विदित्वा तु नानुशोचितुमर्हसीत्यभिप्रायः ॥ २५ ॥

**शं० टी०**—"तरति शोकमात्मवित्" इति श्रवणादात्मनि विज्ञाते शोकनिवृत्तिरात्मविज्ञानं त्वात्मानात्मशोधनं विना न सिध्यतीति तच्छोधनमुपक्रम्य वासांसीति स्थूलशरीरभिन्नत्वमात्मनः प्रतिपाद्य नैनं छिन्दन्ति शस्त्राणीति छेदादेरविषयत्वे प्रतिपादिते सूक्ष्मकारणयोः शस्त्रादेरविषयत्वसंभवात्तत्रात्मत्वबुद्धिः स्यात्सा मा भूदिति । अव्यक्ताचिन्त्यपदाभ्यां तद्भिन्नत्वं प्रतिपादयन्नविकार्यत्वं च वदन्नेतल्लक्षणमात्मानं विदितवतस्तव न पुनः शोको युक्त इत्युपक्रान्तमुपसंहरति—**अव्यक्त इति** । अहङ्कारममकारादिभिर्व्यज्यत इति व्यक्तं लिङ्गशरीरं तद्धर्मतदवस्थासाक्षित्वेन ततो भिन्नत्वादात्मायमव्यक्तो व्यक्ताद्भिन्नः ममेदं दुःखं प्राप्तमिति दुःखानुभवितृ येन ज्ञायते स तस्माद्भिन्न एव नात्र संशयः । तथैवाचिन्त्यश्च अदृष्टादिवत्कार्येण शोकमोहादिना चिन्त्यतेऽनुमीयत इति चिन्त्यमव्याकृतमज्ञानं कारणशरीरं येन यत् ज्ञायते स ततो भिन्नो दृष्टः । मामहं न जानामीति अहमज्ञ इत्यज्ञत्वमज्ञानं यतोऽनुभूयते ततः स्वविषयकाज्ञानसाक्षित्वादात्मायमज्ञानाच्चिन्त्याद्भिन्नत्वेनाचिन्त्यश्चिन्त्याद्भिन्न एव भवतीत्यविकार्यश्च निरवयवत्वादात्माऽयं विकृतेरविषयत्वेनाऽविकार्यः अविकार्य इत्यनुत्पाद्यत्वादीनामात्मधर्माणामुपलक्षणं पुरस्तात्सिद्धं हि ब्रह्मेति श्रवणादनादिसिद्धत्वादात्मायमनुत्पाद्यः "नान्योऽतोस्ति विज्ञाता" इति श्रवणाज्ज्ञातुःस्वरूपत्वादनाप्यः शुद्धोऽबाध्यस्वरूपो बुद्धः सुखस्वरूप इति श्रवणान्नित्यशुद्धत्वादात्माऽयं न संस्कार्यः अद्वय एवायमात्मा " सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरसः प्रमाणैरेतैरवगतः" इति श्रुत्या यस्मादुच्यते तस्मात्त्वमेवं यथोक्तलक्षणमेतमात्मानमस्थूलमव्यक्तमचिन्त्यं निष्कलं निष्क्रियं कूटस्थसङ्गचिद्रूपमहमेवंलक्षण इति स्वं विज्ञाय नानुशोचितुमर्हसि । अहमेतेषां हन्ता मयैते हन्यन्त इति पूर्ववच्छोकं कर्तुं भवान्नार्हतीत्यर्थः । एतेन ब्रह्मविदामद्वैतदर्शिनां न किञ्चिच्छोच्यमस्तीति सूचितं भवति ॥ २५ ॥

**श्री० टी०**–किंच अव्यक्तश्चक्षुराद्यविषयः । अचिन्त्यो मनसोऽप्यविषयः । अविकार्यः कर्मेन्द्रियाणामप्यगोचर इत्यर्थः । उच्यत इति नित्यत्वादावभियुक्तोक्तिं प्रमाणयति उपसंहरति–**तस्मादिति** ॥ २९ ॥

**स० टी०**–मानातीतं यतो ब्रह्मवस्तु दुर्बोधमद्वयम् ॥ तस्मात्प्रसङ्गमापाद्य तदेवाह पुनः पुनः ॥ १ ॥ कथं नु नाम जीवानां मग्नानां शोकसागरे ॥ बुद्धिगोचरमापन्नं तत्त्वं बन्धाद्विमुक्तये ॥ २ ॥ स्यादेवं भगवान् स्वीयं कृपालुत्वं व्यनक्त्यजः ॥ पौनरुक्त्यमतो नैषां श्लोकानां शब्दतोऽर्थतः ॥ ३ ॥ इन्द्रियैर्व्यज्यते स्थूलदेहादिर्व्यक्तमुच्यते ॥ आत्मा रूपादिहीनत्वान्नायं प्रत्यक्षगोचरः ॥ ४ ॥ प्रत्यक्षेण गृहीतोऽर्थोऽनुमेयः स्यात्स वै कचित् ॥ नाप्रत्यक्षेऽनुमेयत्वमचिन्त्येऽतीन्द्रिये भवेत् ॥ ५ ॥ रूपादिभानकार्येण चिन्तार्हो लिङ्गदेहकः ॥ चक्षुरादिसमूहात्मा तद्भिन्नोऽयमिहाथवा ॥ ६ ॥ न वा सामान्यतो दृष्टानुमानविषयोऽप्ययम् ॥ निर्धर्मकतया वाचामगोचरतया तथा ॥ ७ ॥ यद्विक्रियावदक्ष्यादि तदर्थापत्तिगोचरम् ॥ अयं तु विक्रियाशून्यो नार्थापत्त्यादिगोचरः ॥ ८ ॥ वेदेनापि स आत्मायमव्यक्तादिस्वरूपतः ॥ प्रतिपाद्यत आबोधं तात्पर्येण न शक्तितः ॥ ९ ॥ विकारं स्थूलसूक्ष्माख्यं कार्यभावादवस्थितिम् ॥ अर्हतीति विकार्यं वाऽस्त्वज्ञानं त्रिगुणात्मकम् ॥ १० ॥ कारणाख्यं शरीरं यत्सुप्तौ साक्ष्येकगोचरम् ॥ तदन्यः प्रत्यगात्मायमविकार्य उदाहृतः ॥ ११ ॥ एवं देहत्रयादन्यमात्मानं सर्वसाक्षिणम् ॥ ज्ञात्वा नैवं मृषा शोकं कर्तुमर्हसि बोधवान् ॥ १२ ॥ २९ ॥

**भा० टी०**–किंच सर्वकरणागोचरत्वान्न व्यज्यत इत्यव्यक्तः । अयं प्रत्यक्षातीतः प्रत्यक्षागोचरत्वात् । अचिन्त्योनुमानागम्यः कार्यलिङ्गकानुमानगम्योऽपि न भवतीत्याह अविकार्यः विकारं न प्राप्नोतीत्यर्थः । एतेन देहत्रयातिरिक्तोऽप्यर्थाद्बोधित इति ज्ञेयम् । यत्तु 'अविकार्यः कर्मेन्द्रियाणामप्यगोचरः' इति तच्चिन्त्यमव्यक्त इत्यनेनैव तस्य सङ्ग्रहात् । अन्यथा सामान्यतो दृष्टानुमानागोचरत्वालाभापत्तेश्च । उच्यते "नावेदविन्मनुते तं बृहन्तम्" "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतिभिः । तस्मादेवं यथोक्तप्रकारेण एनमात्मानं ज्ञात्वाऽहं हन्ता मयैवैते हन्यन्त इति शोचितुं नार्हसि ॥ २९ ॥

**प० टी०**–अथोपसंहरति–**तस्मादिति** । तस्मात्कारणादेवममुना प्रकारेण निरूपितमेनमात्मानं विदित्वाऽनुशोचितुं नार्हसि ॥ २९ ॥

**रा० टी०**–नन्वणोर्जीवस्याधारः परमात्मा सर्वगतश्चेत्कुतस्तथा न दृश्यते इत्यत आह–**अव्यक्तोयमिति** । अयं सर्वगतपदेन प्रकृतो हरिः । ननु नैनमितिश्लोके देहतोऽपि छेदाद्यभावात्स्वतन्त्रो हरिरित्युक्तम् । देहवान्सर्वगतश्चेत्कथमव्यक्त इत्यतोऽचिन्त्योयमिति । अचिन्त्यशक्तिक इत्यर्थः । एतेन हरेरव्यक्तत्वे तद्दर्शनश्रुत्यप्रामाण्यमिति निरस्तम् । तदाह सूत्रे "ॐ अतोनन्तेन तथाहि लिङ्गम्" इति अचिन्त्यशक्तेः प्रतिबन्धे नाशे वा तस्य प्रतीतिप्रसङ्ग इत्यत उक्तम्–अविकार्योयमिति । सा शक्तिर्न कदाप्यन्यथा भवतीत्यर्थः । कुत एतदच्छेद्यदेह ( व ) त्त्वादीत्यत उक्तम्–उच्यत इति । सदेहः सुखगन्धश्चेत्यादितात्पर्योदाहृतश्रुतिष्वेतत्सर्वं हरेरुच्यत इत्यर्थः । अयमयमिति पृथग्वचनं सर्वरूपाणामेवंभावप्रदर्शनार्थम् । तेनायमयमव्यक्तोयमयमचिन्त्योयमयमविकार्यः इतीदंशब्दो वीप्सारूपेणानेकरूपपरामर्शीति सूचितम् । नैनमित्यत्रापि पूर्वश्लोके एनमेनमिति बहुशब्दयोगेन बहुरूपपरामर्श इत्युक्तं भवति । अन्यथा नञः एनमित्यस्य च पुनः पुनरुक्तिरयुक्ता स्यादिति भावः । एवं सर्वशङ्कोद्धारेणात्मनित्यत्वं प्रतिपाद्योपसंहरति–**तस्मादिति** । बिम्बोपाधितत्सान्निध्यविनाशनिमित्तस्य शापादिनिमित्तस्य शस्त्रास्त्रादिनिमित्तकस्य च नाशस्याभावेनात्मनो नित्यत्वादेनं जीवमेवं नित्यत्वादिना विदित्वा शोचितुं नार्हसीति । अथवा अस्त्वेवं भगवानेव नित्यः सर्वगतस्थाणुरित्यादावुक्तदिशा स्वतन्त्रः ततश्च किमित्यत आह–**तस्मादिति** । हरेरेव सर्वस्वतन्त्रत्वेनाखिल-

दुःखनिवृत्तिविशिष्टपुमर्थप्रदत्वात् एवं युद्धादिस्वकर्मणाऽव्यक्तत्वादिरूपेणैनं भगवन्तं ज्ञात्वा शोचितुं संसार-दुःखमनुभवितुं नार्हसि मुक्तो भविष्यसीत्यर्थः । अत उक्तरूपेण तं ज्ञात्वा युद्धादिस्वकर्मणा तमाराध्या-शेषदुःखं परिहरेति भावः ॥ २५ ॥

## अथ चैनं नित्यजातं नित्यं वा मन्यसे मृतम् ॥
## तथाऽपि त्वं महाबाहो नैनं शोचितुमर्हसि ॥ २६ ॥

**त० टी०**—एवं वैदिकमतानुकूल्येन भगवता प्रत्यगात्मनोऽशोच्यत्वमुपपाद्येदानीं देहातिरिक्तो देहतुल्य-परिमाणक आत्मा देहेन सह जायते म्रियते चेति दिगम्बरमताङ्गीकारेऽपि तस्याशोच्यतोच्यते—अथ चेति । अथेति पक्षान्तरे । मदुक्तमतेतरमताभ्युपगमपक्षेऽपि नित्यजातं नित्यं वा मृतमेनमात्मानं त्वं मन्यसे तथाऽपि हे महाबाहो ! नैवं शोचितुमर्हसि ॥ २६ ॥

**म० टी०**—एवमात्मनो निर्विकारत्वेनाशोच्यत्वमुक्तम् इदानीं विकारवत्त्वमभ्युपेत्यापि श्लोकद्वयेनाशोच्य-त्वं प्रतिपादयति भगवान् । तत्रात्मा ज्ञानस्वरूपः प्रतिक्षणविनाशीति सौगताः । देह एवात्मा स च स्थिरोप्यनुक्ष-णपरिणामी जायते नश्यति चेति प्रत्यक्षसिद्धमेवैतदिति लोकायतिकाः । देहातिरिक्तोऽपि देहेन सहैव जायते नश्यति चेत्यन्ये । सर्गाद्यकाल एवाकाशवज्जायते देहभेदेप्यनुवर्तमान एवाकल्पस्थायी नश्यति प्रलय इत्यपरे । नित्य एवात्मा जायते म्रियते चेति तार्किकाः । तथाहि प्रेत्यभावो जन्म स चापूर्वदेहेन्द्रियादिसंबन्धः । एवं म-रणमपि पूर्वदेहेन्द्रियादिविच्छेदः । इदं चोभयं धर्माधर्मनिमित्तत्वात्तदाधारस्य नित्यस्यैव मुख्यम् । अनित्यस्य तु कृतहान्यकृताभ्यागमप्रसङ्गेन धर्माधर्माधारत्वानुपपत्तेर्न जन्ममरणे इति वदन्ति । नित्यस्याप्यात्मनः कर्णशष्कु-लीजन्मनाप्याकाशस्येव देहजन्मना जन्म तन्नाशाच्च मरणं तदुभयमौपाधिकममुख्यमेवेत्यन्ये । तत्रानित्यत्वप-क्षेऽपि शोच्यत्वमात्मनो निषेधति—अथेति । अथेति पक्षान्तरे । चोप्यर्थे । यदि दुर्बोधत्वादात्मवस्तुनोऽसकृच्छ्र-वणेऽप्यवधारणासामर्थ्यान्मदुक्तपक्षानङ्गीकारेण पक्षान्तरमभ्युपैषि तत्राप्यनित्यत्वपक्षमेवाश्रित्य यद्येनमात्मानं नित्यजातं नित्यमृतं वा मन्यसे । वा शब्दश्चार्थे । क्षणिकत्वपक्षे नित्यं प्रतिक्षणं पक्षान्तरे आवश्यकत्वान्नित्यं नियतं जातोऽयं मृतोऽयमिति लौकिकप्रत्ययवशेन यदि कल्पयसि तथापि हे महाबाहो पुरुषधौरेयेति सो-पहासं कुमताभ्युपगमात् । त्वय्येतादृशी कुदृष्टिर्न संभवतीति सानुकम्पं वा । एवं 'अहो बत महत्पापं कर्तुं व्यवसिता वयम्' इत्यादि यथा शोचसि एवंप्रकारं अनुशोकं कर्तुं स्वयमपि त्वं तादृश एव सन् नार्हसि योग्यो न भवसि । क्षणिकत्वपक्षे देहात्मवादपक्षे देहेन सह जन्म विनाशपक्षे च जन्मान्तराभावेन पापभ-यासंभवात् पापभयेनैव खलु त्वमनुशोचसि तच्चैतादृशे दर्शने न संभवतीत्यर्थः । क्षणिकत्वपक्षे च दृष्टमपि दुःखं संभवति बन्धुविनाशदर्शित्वाभावादित्यधिकम् । पक्षान्तरे दृष्टदुःखनिमित्तं शोकमभ्यनुज्ञातुमेवंकारः दृष्टदुःखनि-मित्तशोकसंभवेप्यदृष्टदुःखनिमित्तः शोकः सर्वथा नोचित इत्यर्थः प्रथमश्लोकस्य ॥ २६ ॥

**शं० टी०**—एवं संसारभ्रमविध्वंसकमात्मयाथात्म्यविज्ञानमुपदिश्य श्रीभगवानेतादृशविज्ञानस्यात्मप्रसा-देन विना लब्धुमशक्यत्वादर्जुने तदनुदयमालक्ष्य प्रकारान्तरेण तच्छोकमपाकर्तुमिदमाह—अथ चेति । महा-बाहो इति साभिप्रायं संबोधनम् । चशब्दो यद्यर्थः । अथवा एनमुक्तमात्मानं नित्यजातं यदा यदा देहोत्प-त्तिस्तदा तदा देहेन सह जातमुत्पन्नं देहे मृते देहेन सहैनं नित्यं मृतं च मूढलोकवत्त्वं यदि मन्यसे तथापि तस्मिन् पक्षेऽप्येवम् 'नार्हा वयं हन्तुं धार्तराष्ट्रान् स्वबान्धवान्' इत्युक्तरीत्या शोचितुं नार्हसि ॥ २६ ॥

**श्री० टी०**—तदेवमात्मनो जन्मविनाशाभावान्न शोकः कार्य इत्युक्तम् । इदानीं देहेन सहात्मनो जन्म तद्विनाशेन च विनाशमङ्गीकृत्यापि शोको न कार्य इत्याह—अथ चेति । अथ च यद्यप्येनमात्मानं नित्यं

सर्वदा तत्तद्देहे जाते जातं मन्यसे तथा तद्देहे मृते मृतं मन्यसे पुण्यपापयोस्तत्फलभूतयोर्जन्ममरणयोरात्मगामित्वात् । तथापि त्वं शोचितुं नार्हसि ॥ २६ ॥

**स० टी०**–इत्यात्मनो विकारित्वादशोच्यत्वमुदाहृतम् ॥ स्वीकृत्यापि विकारित्वमुच्यतेऽशोच्यताधुना॥ १॥ यदि दुर्बोधमात्मानं श्रुत्वा त्वं मन्मुखादपि ॥ नावबोद्धुं समर्थोऽसि स्वीकरोषि मतान्तरम् ॥ २ ॥ जातं प्रतिक्षणं नष्टं मन्यसे सौगतानुगः ॥ जातोऽयं वा विनष्टोऽयं मन्यसे लौकिकानुगः ॥ ३ ॥ तथापि नोचितः शोकः किं पुनर्वैदिके मते ॥ त्वयीदृशी कुदृष्टिर्न संभवेत्पुरुषर्षभे ॥ ४ ॥ सौगते वाथ चार्वाके मते जन्मान्तरं नहि ॥ कुतस्ते पापभीतिः स्याद्दृष्टदुःखं न सौगते ॥ ५ ॥ यदीदृशे मते दुष्टे नैव शोकस्तवोचितः ॥ किं पुनः श्रौतसिद्धान्तविदस्ते शोकिता न हि ॥ ६ ॥ २६ ॥

**भा० टी०**–प्रौढ्या आत्मनो नित्यत्वं वेदबाह्यवादिसिद्धान्तमभ्युपेत्यापि शोकमपाकरोति–**अथेति** । पक्षान्तराभ्युपगमार्थः । एनं लोकदृष्ट्या प्रत्यनेकशरीरोत्पत्तिं जातो जात इति मन्यसे । तथा तद्विनाशं नित्यं वा मन्यसे उपलक्षणमेतद्भाष्यं नास्तिकोक्तपक्षान्तराणामपि । यद्वा इतरेषां मतानामत्रोपपादनमविवक्षितम् । प्रयोजनाभावात् । अतिस्थूलमताभ्युपगमेऽपि शोको न कार्यः । किमुत वैदिकमताङ्गीकार इति फलितार्थस्य विवक्षितत्वात् । महाबाहो इति संबोधयन् शोकमकृत्वा बाह्वोमर्हत्वं सार्थकं कुर्विति सूचयति ॥ २६ ॥

**प० टी०**–अथ देहात्मनोः साहचर्यदर्शनाद्देहेन सह जन्ममरणमङ्गीकृत्यापि शोको न कार्य इत्याह–**अथ चैनमिति** । अथ यद्यपि नित्यं सर्वदैनमात्मानं तत्तद्देहेन सह जातं मृतं वा मन्यसे यतः पुण्यपापयोस्तत्फलभूतयोर्जन्ममरणयोरात्मगामित्वात्तथापि न त्वं शोचितुमर्हसि ॥ २६ ॥

**रा० टी०**–अस्त्वेवमात्मनो नित्यत्वं अथापि देहयोगवियोगरूपजनिमृती स्त एव । युद्धे च मृतिर्नियता । अतस्तन्निमित्तं च दुःखं मदीयानां भविष्यतीति मे शोक इत्यत आह–**अथ चेति** । नित्यशब्दोऽत्रावधारणे । एनं जीवं नित्यजातं देहयोगरूपजनिमन्तमेव नित्यं मृतं देहवियोगरूपमृतिमन्तमेव त्वं मन्यसे चेत्तथापि हे महाबाहो एनं जीवं शोचितुं नार्हसीत्यर्थः ॥ २६ ॥

**जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च ॥**
**तस्मादपरिहार्येऽर्थे न त्वं शोचितुमर्हसि ॥ २७ ॥**

**त० टी–०कुतस्तत्राह–जातस्येति । उत्पन्नस्य विनाशोऽवश्यंभावी तच्छरीरारम्भकर्मणां नियतकालस्थायित्वनियमात् । मृतस्य च पूर्वदेहकृतस्योत्तरदेहसम्बन्धहेतुकर्मणो विद्यमानत्वाज्जन्माप्यवर्जनीयं, हेतुसत्त्वे कार्योत्पत्तेः सम्भवात्। यस्मादेवं तस्मादपरिहार्येऽर्थे तत्तत्कर्माधीनावर्जनीयजन्ममरणपदार्थे त्वं शोचितुं नार्हसि ॥ २७ ॥**

**म० टी०**–नन्वात्मन आभूतसंप्लवस्थायित्वपक्षे नित्यत्वपक्षे दृष्टादृष्टदुःखसंभवात्तद्वयेन शोचामीत्यत आह–**जातस्य हीति** द्वितीयश्लोकेन । हि यस्मात् जातस्य स्वकृतधर्माधर्मादिवशाल्लब्धशरीरेन्द्रियसंबन्धस्य स्थिरस्यात्मनो ध्रुव आवश्यको मृत्युस्तच्छरीरादिविच्छेदः तदारम्भककर्मक्षयनिमित्तः संयोगस्य वियोगावसानत्वात् । तथा ध्रुवं जन्म मृतस्य च प्राग्देहकृतकर्मफलोपभोगार्थं सानुशयस्यैव प्रस्तुतत्वान्न जीवन्मुक्तेर्व्यभिचारः तस्मादेवमपरिहार्ये परिहर्तुमशक्येऽस्मिन् जन्ममरणलक्षणेऽर्थे विषये त्वमेवं विद्वान्न शोचितुमर्हसि । तथा च वक्ष्यति 'ऋतेपि त्वां न भविष्यन्ति सर्वे' इति यदि हि त्वया युद्धेऽनाहन्यमाना एते जीवेयुरेव तदा युद्धाय शोकस्तवोचितः स्यात् । एते तु कर्मक्षयात्स्वयमेव म्रियन्त इति तत्परिहा-

रासमर्थस्य तव दृष्टदुःखनिमित्तः शोको नोचित इति भावः । एवमदृष्टदुःखनिमित्तेऽपि शोके तस्मादपरिहार्येऽर्थे इत्येवोत्तरम् । युद्धाख्यं हि कर्म क्षत्रियस्य नियतमग्निहोत्रादिवत् । यच्च युधूसंप्रहारे इत्यस्माद्धातोर्निष्पन्नं शत्रुप्राणवियोगानुकूलशस्त्रप्रहाररूपं विहितत्वादग्नीषोमीयादिहिंसावन्न प्रत्यवायजनकम् । तथा च गौतमः स्मरति 'न दोषो हिंसायामाहवेऽन्यत्र व्यश्वासारथ्यनायुधकृताञ्जलिप्रकीर्णकेशपराङ्मुखोपविष्टस्थलवृक्षारूढदूतगोब्राह्मणवादिभ्यः' इति । ब्राह्मणग्रहणं चात्रायोद्धृब्राह्मणविषयं गवादिप्रायपाठादिति स्थितम् । एतच्च सर्वं स्वधर्ममपि चावेक्ष्येत्यत्र स्पष्टीकरिष्यते । तथा च युद्धलक्षणेऽर्थेऽग्निहोत्रादिवद्विहितत्वादपरिहार्ये परिहर्तुमशक्ये तदकरणे प्रत्यवायप्रसङ्गात् त्वमदृष्टदुःखभयेन शोचितुं नार्हसीति पूर्ववत् । यदि तु युद्धाख्यं कर्म काम्यमेव 'य आहवेषु युध्यन्ते भूम्यर्थमपराङ्मुखाः । अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा' इति याज्ञवल्क्यवचनात् 'हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति भगवद्वचनाच्च । तदापि प्रारब्धस्य काम्यस्यापि अवश्यपरिसमापनीयत्वेन नित्यतुल्यत्वात् । त्वया च युद्धस्य प्रारब्धत्वादपरिहार्यत्वं तुल्यमेव । अथवा आत्मनित्यत्वपक्षे एव श्लोकद्वयम् । अर्जुनस्य परमास्तिकस्य वेदबाह्यमताभ्युगमासंभवात् । अक्षरयोजना तु नित्यश्चासौ देहेन्द्रियादिसंबन्धवशाज्जातश्चेति नित्यजातस्तमेनमात्मानं नित्यमपि सन्तं जातं चेन्मन्यसे तथा नित्यमपि सन्तं मृतं चेन्मन्यसे तथापि त्वं नानुशोचितुमर्हसीति प्रतिज्ञाय हेतुमाह—**जातस्य हीत्यादिना** । नित्यस्य जातत्वं मृतत्वं च प्राग्व्याख्यातम् । स्पष्टमन्यत् । भाष्यमप्यस्मिन् पक्षे योजनीयम् ॥ २७ ॥

**शं० टी०**—अस्मिन् पक्षेऽपि शोकस्याकर्तव्यत्वे हेतुमाह—**जातस्येति** । हि यस्मात्कारणाज्जातस्य जन्मवतो मृत्युर्मरणं ध्रुवोऽनपायी । तथा मृतस्य च जन्म पुनर्जननं ध्रुवं नियतमेवं जन्ममरणयोर्मरणजन्मनोश्चाहोरात्रयोरिवाव्यभिचार्ययं नियमोऽपरिहार्यस्तस्मादपरिहार्ये ब्रह्मणापि परिहर्तुमशक्येऽर्थे अयं देवदत्तो मदीयो म्रियत इति त्वं शोचितुं नार्हसीत्यर्थः ॥ २७ ॥

**श्री० टी०**—कुत इत्यत आह—**जातस्येति** । हि यस्मात् जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितः । मृतस्य तत्तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव । तत्तस्मादेवमपरिहार्येऽर्थेऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे त्वं विद्वान् शोचितुं नार्हसि । योग्यो न भवसीत्यर्थः ॥ २७ ॥

**स० टी०**—ननु नित्यत्वपक्षेऽहं शोचामीहात्मनो यतः ॥ दृष्टादृष्टमहादुःखसंभवोऽस्तीति भीतितः ॥ १ ॥ मैवं यतोऽस्य जातस्य स्वकृतैः सुकृतादिभिः ॥ लब्धदेहादियोगस्य स्थिरस्याप्यात्मनो ध्रुवः ॥ २ ॥ तच्छरीरादिविच्छेदस्तद्धेतोः कर्मणः क्षये ॥ तथा मृतस्य प्राग्देहकृतकर्मफलस्य च ॥ ३ ॥ भोगार्थं स्याद्ध्रुवं जन्म देहिनोऽज्ञस्य संसृतौ ॥ परिहर्तुमशक्येऽस्मिन्मृत्युजन्मादिगोचरे ॥ ४ ॥ तस्मादेवं विजानंस्त्वं कथं शोचितुमर्हसि ॥ जीवेयुश्चेत्तदैवैतेऽहन्यमानास्त्वया रणे ॥ ५ ॥ तदा युद्धाय शोकस्ते योग्यः स्यात्तन्निवृत्तये ॥ एते स्वयं मरिष्यन्ति यदा कर्मक्षये तदा ॥ ६ ॥ अवश्यंभाविनि ह्यर्थे नैव शोकस्तवोचितः ॥ ७ ॥ २७ ॥

**भा० टी०**—अस्मिन्पक्षे शोकाभावं स्फुटयति—**जातस्येति** । नन्वात्मन आभूतसंप्लवस्थायित्वपक्षेऽनित्यत्वपक्षे च दृष्टादृष्टदुःखसंभवात् तद्भयेन शोचामीत्यत आहेति तु यथाश्रुतमूलाननुगुणत्वादाचार्यैर्नावतारितम् । तस्मादपरिहार्येऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे । यत्तु 'एवमदृष्टनिमित्तेऽपि शोके तस्मादपरिहार्येऽर्थे इत्येवोत्तरं युद्धाख्यं हि कर्म क्षत्रियस्यापरिहार्यमित्यादि' तदुपेक्ष्यं प्रकरणविरोधात् । जन्ममरणलक्षणस्यार्थस्य ध्रुवताया एव पूर्वार्धे प्रस्तुतत्वात् । यत्तु अथवा आत्मनित्यत्वपक्ष एव श्लोकद्वयमर्जुनस्य परमास्तिकस्य वेदबाह्यमताभ्युपगमासंभवात् । अक्षरयोजना तु नित्यश्चासौ देहेन्द्रियसंबन्धवशाज्जातश्चेति नित्यजातस्तमेनमात्मानं नित्यमपि सन्तं जातं चेन्मन्यसे तथा नित्यमपि सन्तं मृतं चेन्मन्यसे तथापि त्वं नानु-

शोचितुमर्हसि इति प्रतिज्ञाय हेतुमाह—जातस्य हीत्यादिना। मृत्युः शरीरादिविच्छेदस्तत्संयोगो जन्म। भाष्यमप्यस्मिन्पक्षे योजनीयमिति तद्विचार्यम्। समासैकदेशस्य क्रियायामन्वयायोगात्। प्रयोजनशून्याक्लिष्टकल्पनाया अन्याय्यत्वाच्च। ननूक्तमेवार्जुनस्य परमास्तिकस्य वेदबाह्यमताभ्युपगमासंभवरूपं प्रयोजनमिति चेन्न। भगवतैवाभ्युपगम्य कैमुत्यन्यायः प्रदर्शित इत्युक्तत्वात्। तथा च परमास्तिकं श्रीरामचन्द्रं प्रति भगवतो वसिष्ठस्य वचनम् 'त्वं चेद्बभूविथ पुरा तथेदानीं भविष्यसि। अद्य चेह स्थितोऽसीति ज्ञातवानसि निश्चयम्॥ तदानन्तरगानन्यान्प्राणादीन्निकटस्थितान्। बन्धूनतीतान्सुबहून्कस्मात्त्वं नानुशोचसि॥ पूर्वमन्यस्तथेदानीं बभूविथ भविष्यसि। यदि राम तथापि त्वं सद्रूपः किं विमुह्यसि॥ पुरा भूत्वाथ भूत्वा च भूयश्चेन्न भविष्यसि। तथापि क्षीणसंसारः किमर्थमनुशोचसि॥ तस्मान्न दुःखिता युक्ता प्राकृते जागते भ्रमे। तथैव मुदिता युक्ता युक्तं कार्यानुवर्तनम्॥' इति। विवृतं चेदं टीकाकारैः। एवमात्मनोऽसङ्गत्वाद्वितीयत्वदर्शने शोकासंभव उक्तः। इदानीमस्त्वासङ्गी तथापि स किं नित्य उत क्षणिक उत प्रागभाववद्घटादिवद्वा कालान्तरेण नश्वरः। सर्वेष्वपि पक्षेषु बन्धुशोको न युक्त इति प्रौढ्या समाधित्सुराद्ये कल्पे तावदाह—त्वं चेदिति। इति यदि निश्चयं ज्ञानवानसि बन्धून्प्राणादीनिवेत्यध्याहारः। विनिगमनाविरहात् सर्वशोकाशक्तेः क्वापि शोको न युक्त इति भावः॥ तृतीयेप्याह—पूर्वमिति। इदानीमन्यः अग्रेप्यन्यः क्षणिकमात्मानं यदि जानासि तथापि किं सद्रूपमालम्ब्य विमुह्यसि द्वितीयक्षणे शोच्यस्य शोचितुश्चासत्वेन शोकावसराभावादित्यर्थः॥ चतुर्थेप्याह—पुरेति। तथाप्यात्मनाशादेव क्षीणसंसारः यदात्मनो जन्मादिसङ्गित्वेन शोको न युक्तः तदा किं वाच्यमसङ्गोदासीनकूटस्थस्वप्रकाशपूर्णानन्दैकरसत्वे स न युक्त इत्याशयेनोपसंहरति—तस्मादिति। मुदिता सहजसंतोषवृत्तिः॥ इति। यत्तुभाष्यमपीत्यादि तदपि न 'आत्मनोऽनित्यत्वमभ्युपगम्येदमुच्यते' इति भाष्यस्यास्मिन्पक्षे योजनाया अशक्यत्वात्। नित्यत्वच्छेदेऽभ्युपगम्येति न सङ्गच्छते। नित्यत्वस्य स्वसिद्धान्तत्वात्। देहादिसंबन्धेनानित्यत्वमिति शेषपूर्णे तु जातत्वादिकमभ्युपगम्येति वक्तव्यं स्यात्। अथ चेत्यभ्युपगमार्थः। एनं प्रकृतमात्मानं नित्यजातं लोकप्रसिद्ध्या प्रत्यनेकशरीरोत्पत्तिं जातोऽजात इति वा मन्यसे तथा प्रति तद्विनाशं नित्यं वा मन्यसे मृतोऽमृत इति भाष्यस्य जातादौ नित्यशब्दान्वयप्रतिपादनपरस्योक्तपक्षे योजयितुमशक्यत्वाच्चेति दिक्॥ २७॥

प० टी०—कुत इत्याह—जातस्येति। हि यस्माज्जातस्य स्वारम्भककर्मक्षये मृत्युर्ध्रुवो निश्चितो मृतस्य च तद्देहकृतेन कर्मणा जन्मापि ध्रुवमेव, तस्मादेवमपरिहार्येऽर्थेऽवश्यंभाविनि जन्ममरणलक्षणेऽर्थे त्वं शोचितुं नार्हसि॥ २७॥

रा० टी०—पूर्वार्धेनार्जुनशङ्कामनूद्योत्तरार्धेन तथापि त्वं न शोचितुमर्हसीत्येवोक्तं नतु तत्र हेतुरुक्तः। अतः शोकाभावे हेत्वाकाङ्क्षायां जन्ममरणयोर्यावन्मोक्षं नियतत्वादिति हेतूक्तिपूर्वं साध्यमाह—जातस्येति। ध्रुवो नियत इत्यर्थः। मृत्युर्मृतिः। तस्माज्जन्ममृत्योर्नियतत्वादित्यर्थः॥ २७॥

## अव्यक्तादीनि भूतानि व्यक्तमध्यानि भारत॥
## अव्यक्तनिधनान्येव तत्र का परिदेवना॥ २८॥

त० टी०-देहवियोगयोगयोरवर्जनीयत्वेऽपि अस्मदनुभूतभीष्मादिदेहेषु नश्यत्सु एतान्कथं पुनर्द्रक्ष्यामः क्व गमिष्यन्तीति शोककारणमस्तीत्यत आह—अव्यक्तादीनीति। अव्यक्तं त्रिगुणात्मकं प्रधानं मायादिरुत्पत्तेः पूर्वं स्वरूपं येषां तान्यव्यक्तादीनि भूतानि चेतनाधेयभूतशरीराणि सद्रूपकारणद्रव्यात्मना स्थितान्यपि अतिसूक्ष्मत्वादुपलब्धुमयोग्यानि, नतु तार्किकाभिमतप्रागभावरूपाणि ततो व्यक्तम-

भिव्यक्तमवस्थान्तरापत्तिलक्षणं जन्मैव मध्ये येषां तथा तानि । सदेव कारणद्रव्यमवस्थान्तरापत्त्या कार्यव्यक्त्यादिशब्दाभिधेयं प्रत्यक्षशास्त्राभ्यां गृह्यते, अतो मध्येऽवस्थान्तरापन्नान्यपि कारणाभिन्नान्येव । "सदेव सोम्येदमग्र आसीत्" इति श्रुतेः "तदनन्यत्वमारम्भणशब्दादिभ्यः, भावे चोपलब्धेः, सत्त्वाच्चावरस्य" इत्यादिसूत्रेभ्यश्च । ननु "असदेवेदमग्र आसीत्ततः सदजायत" इति श्रुतेः कार्यस्योत्पत्तेरसत्पूर्वकत्वोक्तेस्तदनन्यत्वे चासदेवेदं जगदिति चेन्न, एतच्छ्रुतिस्थासच्छब्दार्थस्य सूत्रकारेणैव निर्णीतत्वात् "असद्व्यपदेशादिति चेन्न, धर्मान्तरेण वाक्यशेषात्, पटवच्च" इति सूत्राभ्याम् । अन्यथा तत्रैव वाक्यशेषे "कथमसतः सज्जायेत" इति श्रुतिविरोधात्, असत उत्पत्त्यङ्गीकारे तिलेभ्य इव सिकताभ्योऽपि तैलोत्पत्तिः स्यान्न च सा दृष्टा श्रुता वा । तस्मात्सत एव सूक्ष्मद्रव्यस्य स्थूलावस्थापत्तिः कार्यत्वेनाभिधीयते इति दिक् । यदुपादानकं वस्तु तस्य तत्रैव लयो नान्यत्रेत्याह—अव्यक्तनिधनान्येवेति । अव्यक्ते प्रधाने एव निधनं प्राणवियोगानन्तरावस्थानं येषां तानि घटकुण्डलादेर्मृत्सुवर्णादिस्वरूपापत्तिवत् । तत्रैवम्भूतेषु देहेषु नश्यत्सु का परिदेवना कः शोकनिमित्तो विलापः । बुद्धिमतो न युज्यत इत्यर्थः ॥ २८ ॥

म० टी०—तदेवं सर्वप्रकारेणात्मनोऽशोच्यत्वमुपपादितम् । अथेदानीमात्मनोऽशोच्यत्वेपि भूतसङ्घातात्मकानि शरीराण्युद्दिश्य शोचामीत्यर्जुनाशङ्कामपनुदति भगवान् अव्यक्तादीनीति । आदौ जन्मनः प्राक् अव्यक्तानि अनुपलब्धानि पृथिव्यादिभूतमयानि शरीराणि मध्ये जन्मानन्तरं मरणात्प्राक् व्यक्तानि उपलब्धानि सन्ति निधने पुनरव्यक्तान्येव भवन्ति । यथा स्वप्नेन्द्रजालादौ प्रतिभासमात्रजीवनानि शुक्तिरूप्यादिवन्न तु ज्ञानात् प्रागूर्ध्वं वा स्थितानि दृष्टिसृष्ट्याभ्युपगमात् । तथा च 'आदावन्ते च यन्नास्ति वर्तमानेपि तत्तथा' इति न्यायेन मध्येपि न सन्त्येवैतानि, नासतो विद्यते भाव इति प्रागुक्तेश्च । एवंसति तत्र तेषु मिथ्याभूतेष्वत्यन्ततुच्छेषु भूतेषु का परिदेवना को वा दुःखप्रलापः न कोप्युचित इत्यर्थः । न हि स्वप्ने विविधान्बन्धूनुपलभ्य प्रतिबुद्धस्तद्विच्छेदेन शोचति पृथग्जनोऽपि । एतदेवोक्तं पुराणे 'अदर्शनादापतितः पुनश्चादर्शनं गतः' भूतसङ्घ इति शेषः । तथाच शरीराण्युद्दिश्य शोको नोचित इति भावः । आकाशादिमहाभूताभिप्रायेण वा श्लोको योज्यः । अव्यक्तमव्याकृतमविद्योपहितचैतन्यमादिः प्रागवस्था येषां तानि तथा व्यक्तं नामरूपाभ्यामेवाविद्याकार्याभ्यां प्रकटीभूतं नतु स्वेन परमार्थसदात्मना मध्यस्थित्यवस्था येषां तादृशानि भूतानि आकाशादीनि अव्यक्तनिधनान्येव अव्यक्ते स्वकारणे मृदीव घटादीनां निधनं प्रलयो येषां तेषु का परिदेवनेति पूर्ववत् । तथा च श्रुतिः "तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत' इत्यादिरव्यक्तोपादानतां सर्वस्य प्रपञ्चस्य दर्शयति । लयस्थानं तु तस्यार्थसिद्धं कारण एव कार्यलयस्य दर्शनात् । ग्रन्थान्तरे तु विस्तरः । तथाचाज्ञानकल्पितत्वेन तुच्छान्याकाशादिभूतान्यप्युद्दिश्य शोको नोचितश्चेत्तत्कार्याण्युद्दिश्य नोचित इति किमु वक्तव्यमिति भावः । अथवा सर्वदा तेषामव्यक्तरूपेण विद्यमानत्वाद्विच्छेदाभावेन तन्निमित्तः प्रलापो नोचित इत्यर्थः । भारतेत्यनेन संबोधयन् शुद्धवंशोद्भवत्वेन शास्त्रीयमर्थं प्रतिपत्तुमर्हसि किमिति न प्रतिपद्यस इति सूचयति ॥ २८ ॥

शं० टी०—इमे भीष्मादिशब्दवाच्याः सर्वे देहा मायाकार्यत्वेनाऽसत्त्वादेते मदीया इति न कदापि शोचनीयमिति सूचयति—अव्यक्तादीनीति । नामरूपगुणादिभिर्न व्यज्यत इत्यव्यक्तं माया तस्याः सकाशादादिर्जन्म येषां तान्यव्यक्तादीनि भूतानि भवन्तीति भूतानि शरीराणि । भावे क्तः । व्यक्तं व्यक्तता मध्ये येषां तानि व्यक्तमध्यानि देवस्तिर्यङ्मनुष्यो ब्राह्मण इत्याभासतो मध्ये लब्धस्वरूपाणि पुनरव्यक्तनिधनानि अव्यक्ते मायायामेव निधनं लयो येषां तान्यव्यक्तनिधनानि । ऐन्द्रजालिकवद्दृष्टनष्टस्वरूपाण्यत एव शरीराणि

मायाकार्याणि 'यथा स्वप्नप्रपञ्चोयं मयि मायाविजृम्भितः । तथा जाग्रत्प्रपञ्चोयं मयि मायाविजृम्भितः' इति वचनादिदं सर्वं स्वप्नार्थवन्मायिकमेवेति सर्वस्य मायाकार्यत्वमेव विदितवतः पुरुषस्य तत्र मायाकार्यैं ममार्यं हन्यते म्रियते नश्यतीति का परिदेवना मिथ्याभूतार्थे कः परिताप इति विदां परितापमाक्षिपति श्रीभगवान् । यद्वा प्रमाणैः सर्वैर्न व्यज्यते व्यक्तीकर्तुं न शक्यत इत्यव्यक्तं परं ब्रह्म तदग्रहणादादिर्जन्म येषां तान्यव्यक्तादीनि भूतानि शुक्त्यग्रहणाद्रजतवदात्माऽग्रहणाल्लब्धजन्मानि । तथा व्यक्तमध्यानि सर्वं व्यञ्जयतीति व्यक्तमन्तःकरणं मध्ये स्थितिकाले येषां तानि व्यक्तमध्यानि देवतिर्यङ्मनुष्यादिभेदं स्त्रीपुंसादिभेदं पितृपुत्रादिभेदमहं ममायमित्यादिसंबन्धं च कल्पयित्वान्तःकरणमेव प्रपञ्चनिर्वाहं करोति तेन व्यक्तमध्यानि यावदधिष्ठानादर्शनं तावत्तेषां सत्तास्फूर्त्यादीनि सवासनान्तःकरणबलादेव तस्माद्व्यक्तमध्यानीत्युच्यन्ते भूतानि "मनोवृत्तिमयं द्वैतमद्वैतं परमार्थतः" इति वचनात्सत्यधिष्ठाने दृष्टे तदा पुनरव्यक्तनिधनानि अव्यक्ते स्वाधिष्ठाने ब्रह्मणि निधनमेषां तथोक्तानि अधिष्ठानाग्रहणादुत्पन्नानि यावदधिष्ठानं न ज्ञायते तावत्स्वतः स्वरूपवन्तीव भूतानि मरीचिजलवद्भान्ति । अधिष्ठाने दृष्टे सत्यधिष्ठानमात्राण्येव भवन्ति न ततो व्यतिरिच्यन्ते तत्र मरीचिजलवत्प्रतिभासमात्रे अधिष्ठानाज्ञानविजृम्भिते देहादिप्रपञ्चे अधिष्ठानसन्दर्शनेन सर्वं ब्रह्मैवेति पश्यतो विदुषः का परिदेवना परिदेवनाया अवकाशः कुत इत्यर्थः ॥ २८ ॥

**श्री० टी०**–किंच देहादीनां च स्वभावं पर्यालोच्य तदुपाधिके आत्मनो जन्ममरणे च शोको न कार्य इत्याह–**अव्यक्तादीनीति** । अव्यक्तं प्रधानं तदेव आदिः पूर्वरूपं येषां तान्यव्यक्तादीनि भूतानि शरीराणि कारणात्मनापि स्थितानामेवोत्पत्तेः । तथा व्यक्तम् अभिव्यक्तं मध्यं जन्ममरणान्तरालस्थितिलक्षणं येषाम् । अव्यक्ते निधनं लयो येषां तानीमान्येवम्भूतान्येत्र तत्र तेषु का परिदेवना कः शोकनिमित्तो विलापः । प्रतिबुद्धस्य स्वप्नदृष्टवस्तुष्विव शोको न युज्यत इत्यर्थः ॥ २८ ॥

**स० टी०**–तदेवमात्मनो युक्त्याऽशोच्यत्वं प्रतिपादितम् ॥ अथेदानीमशोच्यत्वेऽप्यात्मनो भौतिकानिमान् ॥ १ ॥ देहानुद्दिश्य शोचामीत्याशङ्क्याहाच्युतोऽर्जुनम् ॥ जन्मनः प्राक् शरीराणि भूतकार्याणि सर्वथा ॥ २ ॥ अदृष्टानि तथा मध्ये जनेरूर्ध्वं मृतेः पुरा ॥ उपलब्धानि सन्त्यन्तेऽप्यदृष्टानि भवन्ति च ॥ ३ ॥ यथा स्वप्नेन्द्रजालादौ प्रतिभाससमानि वै ॥ भूतानीह तथा ज्ञानात्प्रागूर्ध्वं न स्थितानि च ॥ ४ ॥ आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ इति न्यायेन मध्येऽपि न सन्त्येतानि सर्वशः ॥ ५ ॥ तथाचात्यन्ततुच्छेषु तेषु तत्त्वविदस्तव ॥ को वा दुःखप्रलापोऽयं न कोऽपीहोचितस्तव ॥ ६ ॥ नहि स्वप्ने स्वपुत्रादीनुपलभ्य पृथग्जनः ॥ प्रबुद्धस्तद्वियोगेन शोचति त्वं किमप्यहो ॥ ७ ॥ अदर्शनादापतितः पुनश्चादर्शनं गतः ॥ नासौ तव न तस्य त्वं वृथा का परिदेवना ॥ ८ ॥ शुद्धवंशोद्भवत्वेन शास्त्रीयं ज्ञानमर्हसि ॥ प्राप्तुं त्वमत्र भगवानाह भारतशब्दतः ॥ ९ ॥ २८ ॥

**भा० टी०**–नन्वात्मनो नित्यत्वेपि कार्यकरणसङ्घातात्मकानि भूतानि शोचामीति चेत्तत्राह–**अव्यक्तादीनीति** । प्रागुत्पत्तेरव्यक्तमदर्शनमादिर्येषां पुत्रमित्रादिकार्यकरणसङ्घातानां भूतानां तानि अव्यक्तं निधनं मरणं येषां तानि तत्र का परिदेवना कः शोकः नहि शुक्तिरूप्यमुद्दिश्य कश्चिच्छोचतीति भावः । तथा चोक्तम् 'अदर्शनादापतितः पुनश्चादर्शनं गतः । नासौ तव न तस्य त्वं वृथा का परिदेवना' इति । ननु अव्यक्तमव्याकृतं भूतान्याकाशादीनि नामरूपाभ्यां व्यज्यत इति व्यक्तमित्याकाशादिमहाभूताभिप्रायेणायं श्लोक आचार्यैः कुतो न व्याख्यात इति चेत् 'तत्र का परिदेवना' इति वाक्यशेषविरोधात् । अदर्शनादापतित इत्यादिवचनेन । तस्मात्सर्वाणि भूतानीत्युपसंहारस्थेन कार्यकरणसङ्घातबोधकभूतशब्देन चैका-

र्थत्वानापत्तेश्चेति गृहाण । यथा भरतादयः अव्यक्ताद्भूत्वाऽव्यक्त एव लयं गतास्तथेति सूचयन्नाह–भारतेति ॥ २८ ॥

प० टी०–अथ देहस्य गतिरज्ञानमूलिकेति पर्यालोच्य तदुपाधिकः शोकोऽप्यज्ञानकृत इत्याह–**अव्यक्तादीनीति** । अव्यक्तं प्रधानं तदेवादिरुत्पत्तेः पूर्वरूपं येषां तान्यव्यक्तादीनि भूतानि शरीराणि कारणरूपस्थितानामेवोत्पत्तेः । तथा व्यक्तमभिव्यक्तं मध्यं जन्ममरणान्तरालस्थितिरूपं येषाम् । अव्यक्ते निधनं लयो येषामेवंविधानामज्ञानरूपादिमध्यावसानानां नाशे का परिदेवना किं दुःखम् । स्वप्ने विनष्टभ्रातृवदित्यर्थः । एवं स्वाप्नशोकापगमे जाग्रत्येव प्रतीकारः । तद्वत्स्वाज्ञानोत्पन्ने शोके तावदात्मज्ञानमेव प्रतीकारः ॥ २८ ॥

रा० टी०–एतदेव जन्ममृतिस्वरूपोक्त्या स्पष्टयति–**अव्यक्तेति** । अव्यक्तं प्रधानमादिरुत्पत्तिकारणं येषां तानि भूतानि जीवशरीराणि व्यक्तमध्यानि । व्यक्तं कार्यतापत्त्यावस्थानं मध्यं जन्म निधनान्तरालमेषां तानि व्यक्तमध्यानि । अव्यक्ते प्रधाने निधनं लयो येषां तानि अव्यक्तनिधनान्येव । तत्र तेष्वेवंरूपेषु भूतेषु का परिदेवना कः शोक इति । यद्वा कृष्णेनैवं स्वयं युक्तीरुक्त्वा शोको न कार्य इत्युक्तम् । तत्र देहनाशस्यावश्यंभावित्वं यदुक्तं तन्नास्माभिः साध्यं भवतोपि सिद्धं तेनैव शोको न कार्य इत्याह–**अथ चेति** । अत्र नित्यशब्दो नियतवाची । 'नित्यं नियतमेव च' इति वचनात् । अथेत्यस्य तिष्ठतु तावदयं प्राचीनो विस्तर इत्यर्थः । एनं जीवं नित्यजातं नियतजनिमन्तं मृतं वा नियतमृतिमन्तं त्वं मन्यसे चेत् । यदि यावन्मोक्षं जीवस्य जन्ममरणे नियते इति स्वयमेव मन्यसे । तथापि तावन्मात्रज्ञानेनापि एनं जीवं शोचितुं नार्हसि । जन्ममरणयोरवर्जनीयतया नियमेन प्राप्नुवतोस्त्वयैव ज्ञातत्वात् । अवर्जनीये कथं शोक इति भावः । एवं चास्मिन्नेव श्लोके शोकाभावे जनिमृतिनियमरूपो हेतुः स्पष्टमेवावगम्यत इति पुनस्तत्र हेत्वाकाङ्क्षाभावादेतद्विवरणपरे जातस्येत्यादिश्लोकद्वये जीवस्य जनिमृतिनैयत्यानुवादः । प्रागभिप्रेतजीवास्वातन्त्र्ये च हेतुत्वेनेति का तत्र परिदेवनेत्यनन्तरं तस्माज्जीवस्य जनिमृतिनियमवत्त्वाज्जीवे शोको यथा न कार्यः तथा स्वातन्त्र्यबुद्धिश्च न कार्येति श्लोकद्वयतात्पर्यार्थो ज्ञेयः ॥ २८ ॥

**आश्चर्यवत्पश्यति कश्चिदेनमाश्चर्यवद्वदति तथैव चान्यः ॥**
**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाऽप्येनं वेद न चैव कश्चित् ॥ २९ ॥**

त० टी०–स्यादेतद्देहानामचित्प्रधानपरिणामत्वादन्ते तत्रैव लयसम्भवान्न पुनस्तद्दर्शनादीति, आत्मा त्वपरिणामिस्वभावतया नित्यो ध्रुवश्चोक्तस्ततो देहवैलक्षण्येन दर्शनादियोग्यो भवेदित्याकाङ्क्षायां दुर्बोध आत्मेत्याह–**आश्चर्यवदिति** । सहस्रेषु मध्ये कश्चिद्भगवदाराधनलब्धतत्प्रसादनिवृत्तदेहाद्यभिनिवेश एनं देहिनं पश्यति शास्त्रसंस्कृतबुद्धावनुभवति । कथमाश्चर्यवत् पूर्वानुभूतसर्ववस्तुविजातीयत्वादद्भुतमिव, नतु लौकिकवस्तुसाधारणतया न केवलमनुभवितुस्तदाश्चर्यवत्त्वमपि तु तद्वक्तुरपीत्याह–**आश्चर्यवदिति** । तथैव कश्चिदेवान्यस्तदुपदेष्टा गुरुरपि शिष्यायाश्चर्यवद्वदति, नतु केनाचिद्दृष्टवस्तुनोपमातुं शक्नोति । तथैवान्य आश्चर्यवदेनं शृणोति । कश्चिदेनं श्रुत्वाऽपि न च नैव वेद । तस्माद्द्रष्टा श्रोता वक्ता चास्य दुर्लभ इति भावः ॥ २९ ॥

म० टी०–ननु विद्वांसोपि बहवः शोचन्ति तत् किं मामेव पुनः पुनरेवमुपालभसे । अन्यच्च 'वक्तुरेव हि तज्जाड्यं श्रोता यत्र न बुध्यते' इति न्यायात्त्वद्वचनार्थाप्रतिपत्तिरपि मम न दोषः । तत्रान्येषामपि तवेवात्मापरिज्ञानादेव शोकः आत्मप्रतिपादकशास्त्रार्थापत्तिश्च । तवाप्यन्येषामिव स्वाशयदोषादिति नोक्तदोषद्वयमित्यभिप्रेत्यात्मनो दुर्विज्ञेयतामाह–**आश्चर्यवदिति** । एनं प्रकृतं देहिनं आश्चर्येणाद्भुतेन

तुल्यतया वर्तमानं आविद्यकनानाविधविरुद्धधर्मवत्तया सन्तमप्यसन्तमिव स्वप्रकाशचैतन्यरूपमपि जडमिवानन्दघनमपि दुःखितमिव निर्विकारमपि सविकारमिव नित्यमप्यनित्यमिव प्रकाशमानमप्यप्रकाशमानमिव ब्रह्माभिन्नमपि तद्भिन्नमिव मुक्तमपि बद्धमिवाद्वितीयमपि सद्वितीयमिव संभावितविचित्रानेकाकारप्रतीतिविषयं पश्यति। शास्त्राचार्योपदेशाभ्यां आविद्यकसर्वद्वैतनिषेधेन परमात्मस्वरूपमात्राकारायां वेदान्तमहावाक्यजन्यायां सर्वसुकृतफलभूतायामन्तःकरणवृत्तौ प्रतिफलितं समाधिपरिपाकेन साक्षात्करोति कश्चित् शमदमादिसाधनसम्पन्नचरमशरीरः। कश्चिदेव नतु सर्वः। तथा कश्चिदेनं यत्पश्यति तदाश्चर्यवदिति क्रियाविशेषणम्। आत्मदर्शनमप्याश्चर्यवदेव यत्स्वरूपतो मिथ्याभूतमपि सत्यस्य व्यञ्जकम् आविद्यकमप्यविद्याया विघातकम् अविद्यामुपघ्नन् तत्कार्यतया स्वात्मानमप्युपहन्तीति। तथा यः कश्चिदेनं पश्यति स आश्चर्यवदिति कर्तृविशेषणम्। यतोसौ निवृत्ताविद्यातत्कार्योपि प्रारब्धकर्मप्राबल्यात्तद्वानिव व्यवहरति। सर्वदा समाधिनिष्ठोऽपि व्युत्तिष्ठति व्युत्थितोऽपि पुनः समाधिमनुभवतीति। प्रारब्धकर्मवैचित्र्याद्विचित्रचरित्रः प्राप्तदुष्प्रापज्ञानत्वात्सकललोकस्पृहणीयोऽत आश्चर्यवदेव भवति। तदेतत्त्रयमाश्चर्यमात्मा तज्ज्ञानं तज्ज्ञाता चेति परमदुर्विज्ञेयमात्मानं त्वं कथमनायासेन जानीया इत्यभिप्रायः। एवमुपदेष्टुरभावादप्यात्मा दुर्विज्ञेयः। यो ह्यात्मानं जानाति स एव तमन्यस्मै ध्रुवं ब्रूयात्। अज्ञस्योपदेष्टृत्वासंभवात्। जानंस्तु समाहितचित्तः प्रायेण कथं ब्रवीतु। व्युत्थितचित्तोऽपि परेण ज्ञातुमशक्यः। यथा कथञ्चिज्ज्ञातोपि लाभपूजाख्यात्यादिप्रयोजनानपेक्षत्वान्न ब्रवीत्येव। कथञ्चित्कारुण्यमात्रेण ब्रुवंस्तु परमेश्वरवदत्यन्तदुर्लभ एवेत्याह—आश्चर्यवद्वदति तथैव चान्य इति। यथा जानाति तथैव वदति एनमित्यनुकर्षणार्थश्चकारः। स चान्यः सर्वज्ञजनविलक्षणः नतु यः पश्यति ततोन्य इति व्याघातात्। तत्रापि कर्मणि क्रियायां कर्तरि चाश्चर्यवदिति योज्यम्। तत्र कर्मणः कर्तुश्च प्रागाश्चर्यत्वं व्याख्यातम्। क्रियायास्तु व्याख्यायते सर्वशब्दावाच्यस्य शुद्धस्यात्मनो यद्वचनं तदाश्चर्यवत्। तथा च श्रुतिः "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति केनापि शब्देनावाच्यस्य शुद्धस्यात्मनो विशिष्टशक्तेन पदेन जहदजहत्स्वार्थलक्षणया कल्पितसंबन्धेन लक्ष्यतावच्छेदकमन्तरेणैव प्रतिपादनम्। तदपि निर्विकल्पकसाक्षात्काररूपमत्याश्चर्यमित्यर्थः। अथवा विना शक्तिं विना लक्षणां विना संबन्धान्तरं सुषुप्तोत्थापकवाक्यवत्तत्त्वमस्यादिवाक्येन यदात्मतत्त्वप्रतिपादनं तदाश्चर्यवत्। शब्दशक्तेरचिन्त्यत्वात्। न च विना संबन्धं बोधनेऽतिप्रसङ्गः। लक्षणापक्षेपि तुल्यत्वात्। शक्यसंबन्धरूपानेकसाधारणत्वात्। तात्पर्यविशेषान्नियम इति चेत् तस्यापि सर्वान्प्रत्यविशेषात्। कश्चिदेव तात्पर्यविशेषमवधारयति न सर्व इति चेत्। हन्त तर्हि पुरुषग एव कश्चिद्विशेषो निर्दोषत्वरूपो नियामकः। स चास्मिन्पक्षेपि न दण्डवारितः। तथा च यादृशस्य शुद्धान्तःकरणस्य तात्पर्यानुसन्धानपुरःसरं लक्षणया वाक्यार्थबोधो भवद्भिरङ्गीक्रियते तादृशस्यैव केवलः शब्दविशेषोऽखण्डसाक्षात्कारं विनापि संबन्धेन जनयतीति किमनुपपन्नम्। एतस्मिन्पक्षे शब्दवृत्त्यविषयत्वात् "यतो वाचो निवर्तन्ते" इति सुतरामुपपन्नम्। अयं च भगवदभिप्रायो वार्तिककारैः प्रपञ्चितः 'दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः। शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः॥ अगृहीत्वैव संबन्धमभिधानाभिधेययोः। हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः॥ जाग्रद्वन्न यतः शब्दं सुषुप्तौ वेत्ति कश्चन। ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम्॥ अविद्याघातिनः शब्दाद्याहं ब्रह्मेति धीर्भवेत्। नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम्॥' इत्यादिना ग्रन्थेन। तदेवं वचनविषयस्य वक्तुर्वचनक्रियायाश्चात्याश्चर्यरूपत्वादात्मनो दुर्विज्ञानत्वमुक्त्वा श्रोतुर्दुर्लभत्वादपि तदाह—**आश्चर्यवच्चैनमन्यः शृणोति श्रुत्वाप्येनं वेदेति।** अन्यो द्रष्टुर्वक्तुश्च मुक्ताद्विलक्षणो मुमुक्षुर्वक्तारं ब्रह्मविदं विधिवदुपसृत्य एनं शृणोति श्रवणाख्यविचारं विषयीकरोति वेदान्तवाक्यतात्पर्यनिश्चयेनावधारयतीति यावत्। श्रुत्वा चैनं मनननिदिध्यासनपरि-

पाकाद्वेदापि साक्षात्करोत्यपि आश्चर्यवत्। तथा चाश्चर्यवत्पश्यति कश्चिदेनमिति व्याख्यातम्। अत्रापि कर्तुराश्चर्यरूपत्वम्। अनेकजन्मानुष्ठितसुकृतक्षालितमनोमलतयातिदुर्लभत्वात्। तथा च वक्ष्यति 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इति "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यन्न विद्युः। आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः" इति श्रुतेश्च। एवं श्रवणश्रोतव्ययोराश्चर्यत्वं प्राग्वद्व्याख्येयम्। ननु यः श्रवणमननादिकं करोति सः आत्मानं वेदेति किमाश्चर्यमत आह—नचैव कश्चिदिति। चकारः क्रियाकर्मपदयोरनुषङ्गार्थः। कश्चिदेनं नैव वेद श्रवणादिकं कुर्वन्नपि। तदकुर्वंस्तु न वेदेति किमु वक्तव्यम्। ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनादिति न्यायात्। उक्तं च वार्तिककारैः 'कुतस्तज्ज्ञानमिति चेत्ताद्धि बन्धपरिक्षयात्। असावपि च भूतो वा भावी वा वर्तते यथा' इति श्रवणादिकुर्वतामपि प्रतिबन्धपरिक्षयादेव ज्ञानं जायते। अन्यथा तु न। स च प्रतिबन्धपरिक्षयः कस्याचिद्भूत एव यथा हिरण्यगर्भस्य। कस्यचिद्भावी यथा वामदेवस्य। कस्यचिद्वर्तते यथा श्वेतकेतोः। तथा च प्रतिबन्धक्षयस्यातिदुर्लभत्वात् 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति स्मृतेश्च दुर्विज्ञेयोऽयमात्मेति निर्गलितोऽर्थः। यदि तु 'श्रुत्वाप्येनं वेद न चैव कश्चित्' इत्येव व्याख्यायेत तदा "आश्चर्यो ज्ञाता कुशलानुशिष्टः" इति श्रुत्यैकवाक्यता न स्यात्। 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इति भगवद्वचनाविरोधश्चेति विद्वद्भिरविनयः क्षन्तव्यः। अथवा न चैव कश्चिदित्यस्य सर्वत्र संबन्धः। कश्चिदेनं न पश्यति न वदति न शृणोति श्रुत्वापि न वेदेति पञ्च प्रकारा उक्ताः। कश्चित्पश्यत्येव न वदति कश्चित्पश्यति च वदति च कश्चित्तद्वचनं शृणोति च तदर्थं जानाति च कश्चिच्छ्रुत्वापि न जानाति च कश्चित्तु सर्वबहिर्भूत इति। अविद्वत्पक्षे तु असंभावनाविपरीतभावनाभिभूतत्वात् 'आश्चर्यतुल्यत्वं दर्शनवदनश्रवणेषु' इति निगदव्याख्यातः श्लोकः। चतुर्थपादे तु दृष्ट्वोक्त्वा श्रुत्वापीति योजना ॥२९॥

शं० टी०—ननु बहुभिः पण्डितैरात्मतत्त्वं श्राव्यते श्रूयते मन्यते च तथाप्येतादृशं ज्ञानं न कुत्रचिदृश्यत इत्याशङ्कायां ममेश्वरस्य श्रुत्याचार्यात्मनां च प्रसादेन विना लब्धुमशक्यमिति सूचयितुं जिज्ञासुश्रोतृवक्तृणां चातिदुर्लभत्वं वदन्नात्मनो दुर्बोधत्वं प्रतिपादयति—आश्चर्यवदिति। मनुष्येषु शतकोटिसङ्ख्याकेषु यः कश्चिन्मत्प्रसादपात्रीभूत एनं कूटस्थासङ्गचिद्रूपमात्मानमद्वयमखण्डानन्दैकरसं पश्यति साक्षात्कर्तुमिच्छति स आश्चर्यवदेव भवति लोकैः कर्तुमशक्यस्य कर्मणः करणमाश्चर्यं तत्करणार्ह एव भवति यथा हनुमतः समुद्रलङ्घनं तद्वदत्र सर्वविषयाशापाशं निर्दह्य मोक्षेच्छाकरणमाश्चर्यं मोक्षेच्छाया अतिदुर्लभत्वाद्बहुजन्मलभ्यत्वाद्बहुपुण्यपरिपाकसाध्यत्वाच्चित्तप्रसादैकमूलत्वाच्च। सन्तीर्णाशेषविषयाशासिन्धुः शुद्धात्मा मोक्षैककामो मुमुक्षुरतिदुर्लभ इत्यर्थः। किंच एनमुक्तलक्षणमात्मानमन्यः पूर्वोक्ताद्दिदृक्षोर्भिन्नः य कश्चिच्छृणोति सोप्याश्चर्यवदेव भवति। आकाशगामी पुरुषो यथा। तद्वत्प्राणात्ययेपि दुस्त्यजेषु भोग्येषु वैराग्यमतिदुर्लभं सत्येतस्मिन् ससाधनस्य कर्मणः संन्यासो दुष्करः। कृतेपि च तस्मिन्नमानित्वाद्यक्रोधत्वादिब्रह्मचर्यादिदैवीसाधनसम्पद्दुर्लभा। तस्यामपि लब्धायां अनन्यप्रोक्ते गतिरत्र नास्ति। "आचार्यवान् पुरुषो वेद" इति श्रवणाद्ब्रह्मविदाचार्यो दुर्लभः सिद्धेप्युक्तसाधने गुरौ च मत्प्रसादैकलभ्या श्रवणादिनिष्ठा त्वतिदुर्लभा मदनुग्रहवत्कर्तृकश्रवणादेरेव सम्यग्ज्ञानजनकत्वेन मोक्षफलकत्वान्निरुक्तसाधनसंपन्न आत्मनि विषये श्रोता दुर्लभ इत्यर्थः। तथैव निरुक्तसर्वसाधनसंपन्नश्चाद्वेष्टृत्वादिस्वधर्मयुक्तो मत्प्रसादपात्रीभूतो यः काश्चिदुक्तादन्यः श्रवणादिनिष्ठया विज्ञातात्मतत्त्वो ब्रह्मनिष्ठ एव एनमुक्तलक्षणमात्मानं वदति। उपसन्नाय सच्छिष्यायात्मतत्त्वमुपदिशति सोप्याश्चर्यवदेव भवति "ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद्बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इति श्रुत्युक्तब्राह्मणत्वसिद्धिहेतोरतिदुःसाध्यत्वादुक्त-

लक्षणो ब्रह्मवित्तत्त्वोपदेष्टातिदुर्लभ इत्यर्थः । एवं परमार्थेच्छोः श्रोतुस्तत्त्वोपदेष्टुश्चातिदुर्लभत्वं प्रतिपाद्य इदानीमुक्तसाधनसंपाद्विधुरस्य मद्विमुखस्यात्मा बोद्धुं न शक्य इत्याह-श्रुत्वाप्येनमिति । श्रुत्याचार्यमत्प्रसादरहितोऽमानित्वादिदैवसंपद्विधुरो यः कश्चिदात्मतत्त्वावगत्यै श्रवणादि करोति स उक्तसाधनवैधुर्याच्छतधा सहस्रधा वा श्रुत्वा श्रवणं कृत्वा अपिशब्दान्मननं च कृत्वाप्येनं प्रकृतमात्मानं नैव जानाति ज्ञातुं ज्ञानफलं च प्राप्तुं न शक्नोतीत्यर्थः । एतेन सर्वमिदमहं च ब्रह्मैवेति सर्वस्य ब्रह्ममात्रत्वविज्ञानं दुर्लभतरमिति सूचितं भवति ॥ २९ ॥

**श्री० टी०**—कुतस्तर्हि विद्वांसोऽपि लोके शोचन्ति आत्माज्ञानादेवेत्याशयेनात्मनो दुर्विज्ञेयतामाह—**आश्चर्यवदिति** । कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन् आश्चर्यवत्पश्यति । सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवदघटमानं पश्यन्निव विस्मयेन पश्यति असंभावनाभिभूतत्वात् । तथा आश्चर्यवदन्यो वदति च शृणोति चान्यः कश्चित्पुनः विपरीतभावनाभिभूतः श्रुत्वापि नैव वेद । चशब्दादुक्त्वापि न सम्यग्वेदेति द्रष्टव्यम् ॥ २९ ॥

**स० टी०**—दुर्विज्ञेयोऽयमात्मा किं त्वामेवैकमुपालभे ॥ साधारणे हि विभ्रान्तिनिमित्ते सति दुःखदे ॥ १ ॥ शृणु त्वमात्मतत्त्वस्य दुर्ज्ञेयत्वमिहोच्यते ॥ एनं प्रकृतमात्मानमाश्चर्येणाद्भुतेन हि ॥ २ ॥ तुल्यं मायाविपर्यासकल्पनाधारमक्षतम् ॥ शास्त्राचार्योपदेशाभ्यां सर्वद्वैतनिषेधतः ॥ ३ ॥ वेदान्तवाक्यजन्यायां धीवृत्तौ प्रतिबिम्बितम् ॥ समाधिपरिपाकेन कश्चिच्छान्त्यादिसंयुतः ॥ ४ ॥ पश्यत्येनं न सर्वोऽपि दौर्लभ्यं तत्त्वदर्शिनः ॥ यत्पश्यति तदाश्चर्यवदित्येवं क्रियान्वयि ॥ ५ ॥ तथात्मदर्शनं यच्च तदप्याश्चर्यवद्यतः ॥ यत्स्वरूपान्मृषाभूतं सत्यस्य व्यञ्जकं विभोः ॥ ६ ॥ यः पश्यति स आश्चर्यवन्निरीक्ष्यो मुमुक्षुभिः ॥ यतोऽसौ तत्त्वविद्ब्रह्मीभूतोऽप्यज्ञवदेव च ॥ ७ ॥ सदाचारे प्रवृत्तः सन्देहवानिव लक्ष्यते ॥ आत्मा तद्विच्च तज्ज्ञानमेतदाश्चर्यवत्त्रयम् ॥ ८ ॥ दुर्विज्ञेयमतो ह्येनं जानीयाः कथमञ्जसा ॥ तथोपदेष्टुर्दौर्लभ्याद्दुर्विज्ञेय इतोऽप्यसौ ॥ ९ ॥ य आत्मानं विजानाति स ब्रूयान्नेतरो जनः ॥ यतोऽज्ञस्योपदेष्टृत्वासंभवो भ्रान्तिशालिनः ॥ १० ॥ ज्ञानी यस्तु समाधिस्थः स कथं प्रायशो वदेत् ॥ व्युत्थितोऽपि परेणासौ ज्ञातुं शक्यः कथं सुधीः ॥ ११ ॥ यथाकथञ्चिज्ज्ञातोऽपि पूजाख्यात्यादिके फले ॥ निःस्पृहत्वाच्च न ब्रूयात्कथञ्चित्करुणावशात् ॥ १२ ॥ ब्रुवन्नीशवदेवासौ दैशिकोऽत्यन्तदुर्लभः ॥ यथा वेत्ति तथा वक्ति य एनं साक्षिणं परम् ॥ १३ ॥ सर्वाज्ञजनभिन्नोऽसौ स आश्चर्यवदेव हि ॥ अनिर्देश्यस्य शुद्धस्य निर्विकल्पस्य साक्षिणः ॥ १४ ॥ आत्मनो वचनं यत्स्यात्तदाश्चर्यवदेव च ॥ विना शक्त्यादिना तत्त्वमादिवाक्यैः प्रबोधनम् ॥ १५ ॥ यदद्वैतात्मतत्त्वस्य तदाश्चर्यवदित्यहो ॥ शब्दशक्तेरचिन्त्यत्वात्तदुक्तं ब्रह्मविद्वरैः ॥ १६ ॥ दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः ॥ शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥१७॥ अगृहीत्वैव संबन्धमभिधानाभिधेययोः ॥ हित्वा निद्रां प्रबुद्ध्यन्ते सुषुप्तेर्बोधिताः परैः ॥१८॥ जाग्रद्वन्न यतः शब्दं सुषुप्ते वृत्ति कश्चन ॥ ध्वस्तेऽतो वचसा ज्ञाने ब्रह्मास्मीति भवेत्फलम् ॥१९॥ अविद्याघातिनः शब्दाद्याहंब्रह्मेतिधीर्भवेत् ॥ नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम् ॥२०॥ एवं वक्तव्य आत्मायं वक्ता च वचनक्रिया ॥ त्रयमाश्चर्यवद्यस्माद्दुर्विज्ञेय इतोऽपि सः ॥२१॥ अन्यो मुमुक्षुर्वक्तारं यथाशास्त्रमुपेत्य यः ॥ वेदान्तवाक्यतात्पर्यं निश्चिनोति विचारतः ॥२२॥ श्रुत्वा चैनं तथा मत्वा निदिध्यास्य निरन्तरम् ॥ साक्षात्करोति तुर्यं स्वं तदाश्चर्यवदित्यपि ॥ २३ ॥ श्रोतव्यं श्रवणं श्रोता चैतदाश्चर्यवत्त्रयम् ॥ ननु शृणोति यश्चैनं मनुते ध्यायतीह यः ॥ २४ ॥ स वेदात्मानमित्यत्र किमाश्चर्यमिवेति चेत् ॥ कश्चिदेनं मुमुक्षुर्हि श्रवणादिपरोऽपि सन् ॥ २५ ॥ प्रतिबंधवशान्नैनं वेद स्वात्मानमद्भुतम् ॥ ननु तर्हि न कोऽप्येनं जानीयादिति

चेन्नहि ॥ २६ ॥ जायते तत्त्वविज्ञानं श्रवणादि प्रकुर्वताम् ॥ प्रतिबन्धक्षयादेव तदुक्तं वार्तिके स्फुटम् ॥ २७ ॥ कुतस्तद्ध्यानमिति चेत्तद्धि बन्धपरिक्षयात् ॥ असावपि च भूतो वा भावी वा वर्ततेऽथवा ॥ २८ ॥ भूतो हिरण्यगर्भस्य वामदेवस्य भाव्ययम् ॥ वर्तते श्वेतकेतोश्च तत्क्षयोऽप्यतिदुर्लभः ॥ २९ ॥ नचैव कश्चिदित्यस्य सर्वत्रैवान्वयोऽस्तु वा ॥ कश्चित्पश्यति नो वक्ति कश्चित्पश्यति वक्ति च ॥ ३० ॥ कश्चिच्छृणोति तद्वाक्यं तदर्थं वेत्ति तत्त्वतः ॥ कश्चिच्छ्रुत्वापि नो वेत्ति कश्चित्सर्वबहिष्कृतः ॥ ३१ ॥ एवं पञ्चप्रकाराश्च प्रोक्ता भगवता स्फुटम् ॥ ३२ ॥ २९ ॥

भा० टी०–शुद्धात्मनो दुर्विज्ञेयत्वात् भ्रान्तेश्च सर्वसाधारणत्वात् न त्वां प्रत्येवोपालम्भो युक्त इत्याह–आश्चर्यवदिति । आश्चर्यमद्भुतमदृष्टपूर्वमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवत् । कश्चिदेनमात्मानमाश्चर्यवत्पश्यति तथैव चान्य एनमाश्चर्यवद्वदति अन्यश्चैनमाश्चर्यवच्छृणोति श्रुत्वोक्त्वा दृष्ट्वाऽप्येनं कश्चित्प्रतिबन्धवशान्न वेद साक्षान्न जानाति "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" इति व्याससूत्रात् फलोन्मुखं विद्याविरुद्धफलकं कर्म प्रस्तुतं तेन प्रतिबन्धः प्रस्तुतप्रतिबन्धः तदभावे ऐहिकमस्मिन्नेव जन्मनि विद्या जायते। सति तु तस्मिन् जन्मान्तरेऽपि सा जायते कुतः तद्दर्शनात् । प्रतिबन्धतदभावाभ्यामुभयविधविद्याजन्मनः श्रुतौ दर्शनात्। "गर्भस्थ एव वामदेवः प्रतिपेदे ब्रह्मभावम्" इति वदन्ती श्रुतिः। सति प्रतिबन्धे जन्मान्तरसञ्चितसाधनाज्जन्मान्तरे विद्योत्पत्तिं दर्शयतीति तदर्थः। यद्वा योयमात्मानं पश्यति स आश्चर्यतुल्यः। एवमग्रेऽपि यो वदति यश्च शृणोति सोऽनेकशतसहस्रेषु कश्चिदेव यश्चोक्त्वा श्रुत्वा पश्यति परोक्षज्ञानवान् भवति स ततोऽपि दुर्लभः । यस्तु साक्षात्करोति स तु ततोपि दुर्लभ इत्याह–श्रुत्वापीति । अतो दुर्बोध आत्मेत्यभिप्रायः । तथाच प्रथमपक्षे प्रथमपादेनात्मविषयकपरोक्षदर्शनस्य तथैव द्वितीयेन वदनस्य तृतीयेन श्रवणस्य च दुर्लभत्वं चतुर्थेन साक्षात्कारस्य चात्यन्तदौर्लभ्यं च दर्शयता द्रष्टुर्वक्तुः श्रोतुः साक्षात्कर्तुर्विरलतोच्यते। तद्द्वारा चात्मनो दुर्विज्ञेयत्वं कथ्यते । द्वितीयपक्षे त्वात्मनि चतुर्णां दुर्लभत्वकथनेन तदीयं दुर्बोधत्वमुच्यत इति विवेकः। इत्थं च श्रुत्यैकार्थत्वमस्याः स्मृतेः सम्यगुपपद्यते । तथाच श्रुतिः "श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोपि बहवो यं न विद्युः । आश्चर्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः" इति । विवृता चेयं भगवत्पादैः। "प्रायेण ह्येवंविध एव लोकः यस्तु श्रेयोर्थी सः अनेकशतसहस्रेषु कश्चिदेवात्मविद्भवति त्वद्विधः । यस्मादित्याह–श्रवणायापि श्रवणार्थं श्रोतुमपि यो न लभ्यः आत्मा बहुभिरनेकैः शृण्वन्तो बहवोऽनेकेऽन्ये यमात्मानं न विद्युर्न विन्दन्ति अभागिनोऽसंस्कृतात्मानो न विजानीयुः किंचास्य वक्ताऽप्याश्चर्योऽद्भुतवदेव अनेकेषु कश्चिदेव भवति तथा श्रुत्वाऽप्यस्यात्मनः कुशलो निपुण एवानेकेषु लब्धा कश्चिदेव भवति तस्मादाश्चर्यो ज्ञाता कश्चिदेव कुशलानुशिष्टः कुशलेन निपुणेनाचार्येणानुशिष्टः सन् इत्यर्थः' इति । तथाच श्रवणायापीत्यादेरर्थः । आश्चर्यवत्कश्चिदेनं शृणोतीति शृण्वन्तोपीत्यादेः श्रुत्वाप्येनं वेद नचैव कश्चिदिति । आश्चर्यो वक्तेत्यस्य आश्चर्यवद्वदति तथैव चान्य इति कुशलोस्येत्यादेराश्चर्यवत्पश्यति कश्चिदेनमिति । आश्चर्यो ज्ञाता कुशलानुशिष्ट इत्येतत्तु कुशल इत्यादेर्व्याख्यानं तस्मादित्यादिभाष्यात् । यद्वा लब्धापरोक्षज्ञानवान् ज्ञाता साक्षात्कर्ता आश्चर्यवत्पश्यतीत्यत्रापि द्विविधं दर्शनं वक्ष्यते । श्रुत्यैकवाक्यतार्थमस्मिन्पक्षे परोक्षेणापरोक्षेण वाऽस्य दर्शनं द्रष्टा वात्यन्तदुर्लभः । परोक्षेणास्य दर्शनं द्रष्टा वा कुतो दुर्लभ इत्यत आह–आश्चर्यवद्वदतीत्यादि । यतोऽस्य कथनं वक्ता वा श्रवणं श्रोता वा दुर्लभोऽत इत्यर्थः । अपरोक्षेणास्य दर्शनस्य द्रष्टुर्वात्यन्तदौर्लभ्ये हेतुमाह–श्रुत्वापीति । 'श्रुत्वा उक्त्वा परोक्षेण दृष्ट्वाप्येनं कश्चिदभागी असंस्कृतात्मा लोको न चैव जानाति' इति । अतः साक्षादस्य दर्शनं द्रष्टा वात्यन्तदुर्लभ इत्यर्थः । एतेन यदि श्रुत्वाप्येनं वेद न चैव कश्चिदित्येवं व्याख्यायेत तदा आश्चर्यो ज्ञाता कुशलानुशिष्ट इति श्रुत्यैकवाक्यता

न स्यात् । 'यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः' इति भगवद्वचनविरोधश्चेति प्रत्युक्तम् । य आत्मानं पश्यति स आश्चर्यतुल्यो यो वदति यश्च शृणोति सोऽनेकसहस्रेषु कश्चिदेवेति भाष्यात्स्मृतिविरोधानवकाशाच्च। अत्र केचिद्वर्णयन्ति । एनं प्रकृतं देहिनमाश्चर्येणाद्भुतेन तुल्यतया वर्तमानमाविद्यकनानाविरुद्धधर्मवत्तया सन्तमप्यसन्तमिव स्वप्रकाशचैतन्यरूपमपि जडमिवानन्दरूपमपि दुःखितमिवेत्याद्यसंभावितविचित्रानेकाकारप्रतीतिविषयं पश्यति। शास्त्राचार्योपदेशाभ्यामाविद्यकसर्वद्वैतनिषेधेन परमात्मस्वरूपाकारायां वेदान्तमहावाक्यजन्यायां सर्वसुकृतफलभूतायामन्तःकरणवृत्तौ प्रतिफलितं समाधिपरिपाकेन साक्षात्करोति कश्चिच्छमदमादिसाधनसंपन्नचरमशरीरः कश्चिदेव मर्त्यः नतु सर्वः। तथा कश्चिदेनं यत्पश्यति तदाश्चर्यवदिति क्रियाविशेषणम् । आविद्यकमपि दर्शनमविद्यां स्वात्मानं च निवर्तयतीति । तथा यः कश्चिदेनं पश्यति स आश्चर्यवदिति कर्तृविशेषणम्। यत एक एव विद्वान् समाधिव्युत्थानयोः परस्परविरुद्धमात्मनो ब्रह्मभावं जीवभावं च यावत्प्रारब्धकर्मक्षयमनुभवतीति तदेतत्त्रयमप्याश्चर्यमात्मा तज्ज्ञानं ज्ञाता चेति । एवमग्रेपि कर्मणि क्रियायां कर्तरि चाश्चर्यवदिति योज्यम्। सर्वशब्दावाच्यस्य शुद्धस्यात्मनो यद्वदनं तदाश्चर्यवत् । श्रुत्वाप्येनं वेद श्रुत्वा चैनं मननिदिध्यासनपरिपाकाद्वेदापि साक्षात्करोत्यपि आश्चर्यवत्।तथाचाश्चर्यवत्पश्यति कश्चिदेनमित्यत्र व्याख्यातम्। ननु यः श्रवणादिकं करोति स आत्मानं वेदेति किमाश्चर्यमत आह—नचैव कश्चिदिति। चकारः क्रियाकर्मपदयोरनुषङ्गार्थः।कश्चिदेनं नैव वेद श्रवणादिकं कुर्वन्नपि तदकुर्वन्न वेदेति किमु वक्तव्यम्। अथवा नचैव कश्चिदित्यस्य सर्वत्र संबन्धः। कश्चिदेनं न पश्यति न वदति न शृणोति श्रुत्वाऽपि न वेदेति पञ्च प्रकारा उक्ताः। कश्चित्पश्यत्येव न वदति कश्चित्पश्यति वदति च कश्चित्तद्वचनं शृणोति तदर्थं जानाति च कश्चित् श्रुत्वाऽपि न जानाति कश्चित्तु सर्वबहिर्भूत इति । तत्रेदमवधेयम् । आश्चर्यमद्भुतमदृष्टमकस्माद्दृश्यमानं तेन तुल्यमाश्चर्यवत् यो वदति यश्च शृणोति स सहस्रेषु कश्चिदेवेत्यादिवदद्भिराचार्यैः कर्तृक्रिययोराश्चर्यवत्त्वं दुर्लभत्वं प्रदर्शितम् । "श्रवणायापि बहुभिर्यो न लभ्यः" इतिश्रुत्यनुरोधात् । आत्मनस्तु कर्तृक्रियाविरलत्वद्वारैव दुर्ज्ञेयत्त्वं न तु साक्षात् । आश्चर्यवत्पदविशेष्यत्वेन श्रुतौ तथात्वासंभवात् । तदैकवाक्यतानापत्तेः । तस्मादाश्चर्यवत्पदस्य विरुद्धधर्माश्चर्यपरत्वं कर्मविशेषणत्वं चावदतामाचार्याणां न्यूनता न शङ्कनीया । यदपि वेदेत्यस्य पृथक्करणादि तदपि क्लेशमात्रं तद्विनापि श्रुत्येकवाक्यताया निरूपितत्वात् । यदपि नचैव कश्चिदित्यस्य सर्वत्र संबन्ध इत्यादि । तदपि न आश्चर्यवदित्याद्युक्त्या बहव एनं न पश्यन्ति इत्यादेरर्थस्य स्पष्टप्रतीतेः । क्लिष्टकल्पनया पक्षान्तरप्रदर्शनस्य वैयर्थ्यात् । कश्चिदेनं पश्यतीत्यादिनोपपादिते सर्वबहिर्भूते श्रुत्वापि न वेदेत्यस्योक्तत्वेन चतुर्थप्रकारानर्थक्याच्चेति दिक् । एतेन कश्चिदेनमात्मानं शास्त्राचार्योपदेशाभ्यां पश्यन्नाश्चर्यवत्पश्यति। सर्वगतस्य नित्यज्ञानानन्दस्वभावस्यात्मनोऽलौकिकत्वादैन्द्रजालिकवदघटमानं पश्यन्निव विस्मयेन पश्यति। असंभावनाऽभिभूतत्वादित्यादिभाष्यकृद्भिः कुतो न व्याख्यातमिति प्रत्युक्तम् । अत्रापि मूलश्रुत्येकवाक्यत्वाभावापत्तेस्तुल्यत्वात् । अन्ये तु वज्रपञ्जरतुल्यस्य सर्वप्रमाणसिद्धस्य वियदादिप्रपञ्चस्य कथं रज्जूरगादिवदज्ञानप्रभवत्वेनात्यन्ततुच्छत्वमुच्यते । कथं वा कर्मज्ञानकाण्डापेक्षितमात्मनो यज्ञादिकर्तृत्वं चापह्नूयत इत्याशङ्क्याह—आश्चर्यवदिति। कश्चिज्ज्ञातात्मतत्त्व एनमतीतानन्तरश्लोकोक्तं भूतग्राममाश्चर्यमद्भुतं स्वप्नमायेन्द्रजालादिकं तेन तुल्यमाश्चर्यवत्तथाभूतं पश्यति। तथा कश्चिदेनमाश्चर्यवद्वदाति सत्त्वेनासत्त्वेन वा निर्वक्तुमशक्यमपि अनिर्वचनीयत्वेनैव लोकाप्रसिद्धेन रूपेणोपपादयति। तथा एनं प्रपञ्चमन्य आश्चर्यवच्छृणोति। "इमे लोका इमे देवा इमे वेदा इदं सर्वं यदयमात्मा" इति प्रत्यक्षेणानात्मतयोपलभ्यमानस्यापि प्रपञ्चस्य यत्प्रत्यगभिन्नत्वेन श्रवणं तदत्यन्तमाश्चर्यम्। तथा कश्चिदेनं प्रपञ्चं प्रत्यगनन्यत्वेन श्रुत्वापि शब्दादुक्त्वा दृष्ट्वापि तत्त्वतो न वेदेति वर्णयन्ति तदपि सर्वमुपेक्ष्यम्। देही नित्यमिति श्लोकस्थभूतानीत्यनुरोधे-

नातीतानन्तरश्लोकस्थभूतानीत्यस्य कार्यकारणसङ्घातपरत्वेन व्याख्या तत्वात् । प्रपञ्चस्यानुक्तेरेनदादेशानुपपत्तेः । एनमित्यनेन बहुभ्यस्तस्यात्मनस्त्यागेन प्रकरणविरोधात् । बह्वध्याहारग्रस्तत्वादुपलभ्यमानमूलभूतश्रुतिविरोधात् । एतद्व्याख्यातृभिरप्यरुच्या यद्वेत्यादिपक्षान्तरस्वीकाराच्च । पक्षान्तरं च केषाञ्चिद्व्याख्यानमनूदितमिति निर्मत्सरैर्विद्वद्भिराकलनीयम् ॥ २९ ॥

प० टी०—तच्चातिदुर्गममित्याह—आश्चर्यवदिति । अनादिजन्मकोटिषु दृश्यजातदर्शनसंनिविष्टदृष्टिः पुमान् कश्चिच्छास्त्राचार्योपदेशान्निराकाराद्वैतचिदेकरसमात्मानमाश्चर्यवत्पश्यति । यतः प्रागननुभूतवस्तुदर्शनं श्रवणं वाश्चर्यजनकं भवति । दृष्टान्ताभावान्मुह्यमान इत्यर्थः । तथान्यो यः कश्चिदनभिज्ञातात्मतत्त्वः शास्त्रश्रुतेन शब्दमात्रेण वदति सोऽप्याश्चर्यवन्मत्वा दृश्यद्रष्टृभिनिवेशेन यत्किंचिद्वदसि तस्मादस्मिन्निरूपणे सावधानतया भवितव्यमित्यर्थः । अथैतदर्थेऽथर्वशाखीया श्रुतिरपि “ श्रवणायापि बहुभिर्यो न लभ्यः शृण्वन्तोऽपि बहवो यं न विद्युः । आश्चार्यो वक्ता कुशलोऽस्य लब्धा आश्चर्यो ज्ञाता कुशलानुशिष्टः ” इति । भाष्यम्—“यः परमात्मा सदाचार्यादपि श्रवणाय श्रवणार्थं बहुभिर्न लभ्यः बहूनां सुलभो न भवति किंतु दैववशात् कस्यापीत्यर्थः । तथा यं परमात्मानं शृण्वन्तोऽपि बहवो न विद्युर्नाविन्दन् किंतु कश्चिदेव । तथास्यात्मनो लब्धा कुशलानुशिष्टः आश्चार्यो भवति मुह्यति । तथाकुशलानुशिष्ट उपदिष्टो ज्ञाता शिष्योऽप्याश्चर्यो भवति ” ॥ २९ ॥

रा० टी०—तर्हि कुत्र सा कार्या नैनमित्यादौ सा बुद्धिर्भगवति कार्येत्युक्तावपि सा किं भगवत्येव कार्या । अथ ततोन्यत्रापि कचिदित्याशङ्कां वतिप्रत्ययप्रयोगबलेन परिहरन् भगवत्स्वातन्त्र्यं प्रागुक्तमुपसंहरति—आश्चर्यवदिति । कश्चित्सात्त्विकप्रकृतिः एनमव्यक्तइत्यत्र प्रकृतमेनमीश्वरमाश्चर्यवत्पश्यति । आश्चर्यत्वेन सर्वस्वतन्त्रत्वेन सन्तमेव तमाश्चर्यवत्स्वतन्त्रवद्यथा भवति तथा पश्यतीति क्रियाविशेषणम् । ‘ गगनं गगनाकारम्’ इत्यादिवत् । आश्चर्यभूतस्य हरेरेवाश्चर्यवदिति स्वोपमामुखेन हरेरितरस्य स्वातन्त्र्याभावज्ञापनायाश्चर्यवदिति वत्यन्तोक्तिः।अन्यश्च तथैव द्रष्टृवदेव आश्चर्यत्वेन सन्तमेनमाश्चर्यवद्यथा भवति तथा वदति । ‘सागरःसागरोपमः’ इतिवदन्यदाश्चर्यवस्तुनेतिज्ञापनाय स्वोपमत्वेन वक्तीत्यर्थः। अन्यश्च सात्विकः आश्चर्यत्वेन सन्तमेनं हरिं आश्चर्यवद्यथा भवति तथा । ‘ रामरावणयोर्युद्धं रामरावणयोरिव’ इतिवत् । अन्यदाश्चर्यतया श्रोतव्यं वस्तुनेति ज्ञापनाय स्वोपमत्वेन शृणोति । कश्चिच्च सात्त्विक एनमाश्चर्यतया सन्तं हरिं श्रुत्वापि नैव वेद । अत्यद्भुतवस्तुत्वादिति भावः । ईश्वरस्य सर्वान्प्रत्याश्चर्यत्वेपि विपरीतदर्शिनामसुरादीनां बहूनां भावात् । यथावदर्शी यथावद्वादी च कश्चित्कश्चिदेवेति ज्ञापनाय कश्चिदित्याद्युक्तिः ॥ २९ ॥

**देही नित्यमवध्योऽयं देहे सर्वस्य भारत ॥**
**तस्मात्सर्वाणि भूतानि न त्वं शोचितुमर्हसि ॥ ३० ॥**

त० टी०—एनमित्येकवचनेनात्मैक्यभ्रमं मा कार्षीरिति वदन्नात्मोपदेशमुपसंहरति—देहीति । हे भारत ! सर्वस्य देवतिर्यक्कीटादिप्राणिमात्रस्य देहे वध्यमानेऽप्ययमुक्तविधो देही कर्मफलभोगायतनभूतं देहं प्रति भिन्नस्वरूपेणाश्रयीभूतोऽवध्यः हन्तुमशक्यः । यस्मादेवं तस्मात्सर्वाणि भूतानि आत्माश्रितशरीराणि त्वं शोचितुं नार्हसि ॥ ३० ॥

म० टी०—इदानीं सर्वप्राणिसाधारणभ्रमनिवृत्तिसाधनमुक्तमुपसंहरति—देहीति । सर्वस्य प्राणिजातस्य देहे वध्यमानेप्ययं देही लिङ्गदेहोपाधिरात्मा वध्यो न भवतीति नित्यं नियतं यस्मात् तस्मात्सर्वाणि भूतानि

स्थूलानि सूक्ष्माणि च भीष्मादिभावापन्नान्युद्दिश्य त्वं न शोचितुमर्हसि। स्थूलदेहस्याशोच्यत्वमपरिहार्यत्वात्। लिङ्गदेहस्याशोच्यत्वमात्मवदेवावध्यत्वादिति न स्थूलदेहस्य लिङ्गदेहस्यात्मनो वा शोच्यत्वं युक्तमिति भावः ३०

**शं० टी०**—पूर्वमव्यक्तादीनि भूतानीति भीष्मादिशब्दवाच्यार्थस्याशोच्यत्वमुपसंहृत्य इदानीमात्मनो लक्ष्यार्थस्याशोच्यत्वमुपसंहरति—देहीति। हे भारतात्मज्ञानसंपन्न! सर्वे देहा उपलब्धिस्थानत्वेनास्य सन्तीति देही सर्वदेहोपाधिमानयमात्मा सर्वस्य ब्रह्मादिस्तम्बान्तस्य प्राणिजातस्य देहे वध्यमानेपि नित्यं स्वयमवध्य एव भवति अविक्रियत्वादात्मा घटेषु नष्टेषु तत्स्थाकाशवत्स्वयं तु न नश्यति यस्मात्तस्मादात्मनोऽनश्वरत्वविज्ञानात् 'त इमेऽवस्थिता युद्धे प्राणांस्त्यक्त्वा धनानि च' इत्युक्तरीत्या भीष्मादिसर्वभूतानि शरीराण्येते म्रियन्ते मदीया इति न त्वं शोचितुमर्हसि। एतेषु हन्यमानेष्वात्मा न नश्यतीत्यात्मनो नित्यत्वविज्ञातात्त्वमात्मानमुद्दिश्य शोकं मोहं च कर्तुं नार्हसीत्यर्थः। अत्र देहो नश्यतीति ममायमिति च यस्य देहविषयौ शोकमोहौ न स्तस्तस्याऽप्रतिबद्धाऽपरोक्षविज्ञानवतो विदुषः 'दैवाधीने शरीरेऽस्मिन् गुणभाव्येन कर्मणा' इति न्यायेन शरीरस्य प्रारब्धाधीनत्वाच्छरीरयात्रार्थमपि न किंचित्कर्म कर्तव्यं किमुतापरमिति सिद्धस्य ब्रह्मविदः सर्वकर्मसंन्यास एवाधिकार इति भूतानि न त्वं शोचितुमर्हसीतिपदेन सूचितं भवति ॥ ३० ॥

**श्री० टी०**—तदेवं दुर्बोधमात्मतत्त्वं सङ्क्षेपेणोपदिशन् अशोच्यत्वमुपसंहरति—देहीति ॥ ३० ॥

**स० टी०**—इदानीं सकलप्राणिसमानस्य भ्रमस्य च ॥ निवृत्तिसाधनं प्रोक्तमुपसंहरतीश्वरः ॥ १ ॥ सर्वस्य प्राणिजातस्य वद्ध्यमानेऽपि देहके ॥ देही न वद्ध्यते यस्मान्नियतं शुद्धवंशज ॥ २ ॥ तस्मात्सर्वाणि भूतानि भीष्मादीनि ममत्वतः ॥ उद्दिश्य त्वं न योग्योऽसि शोचितुं मूढबुद्धिवत् ॥ ३ ॥ नाशस्यापरिहार्यत्वात्स्थूलस्याशोच्यतेरिता ॥ लिङ्गस्याशोचिता चात्मवदवद्ध्यत्वहेतुना ॥ ४ ॥ आमोक्षं न विनाशोऽस्य लिङ्गदेहस्य सम्भवेत् ॥ सुषुप्तौ प्रलये चास्य सूक्ष्मरूपेण संस्थितिः ॥ ५ ॥ न स्थूलस्य न सूक्ष्मस्य नात्मनो वास्ति शोच्यता ॥ अतो निरास्पदः शोको न कार्यः सुविवेकिभिः ॥ ६ ॥ तदेवं स्थूलसूक्ष्माभ्यां तादात्म्याध्यासतो नृणाम् ॥ मिथ्याभूतोऽपि संसारः सत्यवद्भासते भ्रमात् ॥ ७ ॥ अविद्याकारणं तत्र सर्वानर्थैकबीजभूः ॥ सर्वसाधारणा भ्रान्तिरर्जुनस्यापि बोधतः ॥ ८ ॥ निराकार्या ततो ह्येवं देहत्रयविवेकतः ॥ आत्मस्वरूपं भगवानुक्तवान्स्वकृपावशात् ॥ ९ ॥ ३० ॥

**भा० टी०**—उपसंहरति—देहीति। देही आत्मा देहे वध्यमानेऽपि सर्वाणि भूतानि भीष्मादीनि देहाश्च भरतादिदेहवदनित्या एवेति तानुद्दिश्यापि शोचितुं नार्हसीति भारतेति संबोधनेन ध्वनितम् ॥ ३० ॥

**प० टी०**—अथ प्रकृतमनुसरति—देही नित्यमिति। देही शरीरचालक आत्मा नित्यं निरन्तरमवध्यो वधार्हो न भवतीति नित्यत्वं प्रोक्तम्। एक एव सर्वस्य भूतजातस्य देहे वर्तत इति व्यापकत्वं प्रोक्तम्। तस्मात्कारणात्सर्वाणि भूतानि भ्रातृसुहृदादीनि शोचितुं नार्हसि। तन्निमित्तशोको व्यर्थः। अथ देहानिमित्तं चेत्तर्हि तस्मादधिकरणीभूतात्सत्यादात्मनः सकाशात्सर्वाणि भूतान्याविर्भवन्तीति देहानामध्यासरूपत्वं निरूपितम्। एतदेव बृहदारण्यकेऽप्याम्नातम्—" स यथोर्णनाभिस्तन्तुनोच्चरेद्यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि सर्व एतदात्मनो व्युच्चरन्ति। तस्योपनिषत्सत्यस्य सत्यमिति। प्राणा वै सत्यं तेषामेष सत्यम् " इति। भाष्यम्—पूर्वम् " अथ यदा सुषुप्तौ भवति न कस्य च न वेद " इत्यादि श्रुत्या सुषुप्तौ मनसि परमात्मनि लीने सति तत्कल्पितः स्थूलसूक्ष्मः प्रपञ्चोऽपि लीनो भवेदिति प्रतिपादितम्। अथ पुनर्जागरावस्थायां मनसि बहिर्मुखे जाते सति प्राक्संस्कारैर्यथापूर्वं मनःप्रपञ्च आविर्भवति " धाता यथापूर्वमकल्पयत् " इति श्रुतेः। एवं सुषुप्तौ प्रपञ्चनये

जागरे पुनराविर्भवे च दृष्टान्तमाह–स यथेति । ऊर्णा सूत्रविशेषो नाभौ यस्य स ऊर्णनाभिः कीटविशेषः स यथा पूर्वं स्वोत्पादितेन पुनर्ग्रस्यमानेन तन्तुना उच्चरेदूर्ध्वं चरेत् । यावत्सर्वतन्तुग्रासो भवति तद्वन्मनः सर्वसंस्काररूपं तन्तुं ग्रसित्वा स्वयमपि लीनं भवति । अथ पुनः प्रपञ्चोदये दृष्टान्तमाह–यथेति । यथा हन्यमानादुल्मुकाग्नेः सकाशाद्युगपदेव क्षुद्रा लघीयांसः सहस्रशो विस्फुलिङ्गा अग्निकणा व्युच्चरन्त्युद्गच्छन्त्येवमेवास्मात्प्रशुद्धादात्मनो मनसः सकाशात्सर्वे सूक्ष्मप्रपञ्चरूपाः प्राणास्तथा स्थूलप्रपञ्चरूपाः सर्वे भूर्भुवःस्वराद्या लोकाः सर्वे देवा इन्द्रादयः सर्वाणि भूतानि स्थावरजङ्गमात्मकानि सर्व एत आत्मानो देहा व्युच्चरन्ति निर्गच्छन्ति । तस्य परमात्मन उपनिषद्रानसत्यस्य सत्यमिति वदन्ति । एतदेव प्रकटीकरोति–वै इति । ज्ञानव्यवहारे प्राणमुख्यप्राणादयो हिरण्यगर्भाद्याः सत्यं तेषामप्येष आत्मा सत्यं सैव सत्यत्वमर्यादेत्यर्थः । एवमुभयथापि शोकानुदय इत्यर्थः । तदुक्तमध्यात्ममीमांसायाम्–"इन्द्रेन्द्राणीरतान्ते प्रविशति मनसा रेतसा साकमेतद्बुद्ध्यन्तर्विश्वजातं स सकलकरणं तेन गर्भं दधाना ॥ साऽव्यक्ते लीयमाना पुनरुदयमिता जागरादौ प्रसूते कीटे चोर्णामिवासावुत हुतवहतो निस्सरन्ति स्फुलिङ्गाः" इति॥३०॥

रा० टी०–यदेतज्जीवस्य न त्वं नेम इत्यादिना नित्यत्वमुक्तम् तत्स्वाभाविकत्वान्नेशाधीनम् । तथा च सर्वं परमेश्वराधीनं स एव सर्वस्वतन्त्र इत्युक्तमतस्तद्विरोध इत्यतस्तदपि द्रव्यं कर्म चेत्यादेरीश्वरायत्तमित्याह–देहीति । सर्वस्य देहिनो देहे स्थूलदेहे सूक्ष्मलिङ्गदेहे चिद्रूपस्वरूपदेहे च अयं पूर्वप्रकृतो हरिः रक्षकत्वेन तिष्ठति । अतो देही जीवो नित्यमवध्यः । हे भारत ! तस्माद्रक्षकतया स्थितत्वेन नित्यमवध्यत्वात्सर्वाणि भूतानि त्वं शोचितुं नार्हसीति । यद्वोपसंहारपरोत्तरश्लोकोपयुक्तत्वेनाप्रमेयस्येत्यादिना प्राङ्महिमोक्तावपि पुनर्महिमान्तरमाह–आश्चर्यवदिति । वातिरत्र एवकारार्थः । एनं पूर्वत्र प्रकृतं जीवं यः कश्चिदजादिलक्षणेश्वरसरूपत्वतदधीनत्वादिना पश्यति स पुमानाश्चर्यवत् । आश्चर्य एव । उक्तरूपेणैनं जीवं वदन् शृण्वंश्चाश्चर्य एव दुर्लभ एवेत्यर्थः । सर्वेषामप्यहमित्यात्मदर्शनादिभावात् । दर्शनादिमान्कथं दुर्लभ इत्यत उक्तमुपपादयति–श्रुत्वेति । दृष्ट्वा उक्त्वेत्यपि ग्राह्यं सामान्यतो दर्शनादौ सत्यप्युक्तरूपेण सम्यक् न वेदेति सम्यग्ज्ञानी दुर्लभ इत्यर्थः । प्रतिबिम्बभूतजीवस्यापि सम्यग्ज्ञानी दुर्लभः । किमीश्वरसामर्थ्यं वर्णनीयमितीश्वरसामर्थ्योक्तिर्ध्येया । देहयोगवियोगयोर्नियतत्वात्मनश्चेश्वरसरूपत्वाद्बिम्बनाशादिनिमित्तनाशाभावान्न शोकः कार्य इत्युपसंहरति–देहीति । प्राग्वदेव पूर्वार्धस्यार्थः । तस्मादित्यस्य तु देहयोगवियोगयोरवर्जनीयत्वादात्मनश्चेश्वरसरूपत्वेन सर्वथैवानाशादित्यर्थः । भगवत्सरूपत्वेप्यनाशः कुत इत्यतोऽतिसमर्थो भगवानिति तत्सामर्थ्यं प्रागुक्तमिति तस्य तदुपसंहारोपयुक्तता ध्येयेति ॥ ३० ॥

**स्वधर्ममपि चावेक्ष्य न विकम्पितुमर्हसि ॥**
**धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते ॥ ३१ ॥**

**त० टी०–एतावताऽऽत्मनोऽशोच्यत्वमुपपाद्य 'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे' इति यदर्जुनेनोक्तं तस्योत्तरमाह–स्वधर्ममिति । न केवलमात्मतत्त्वमेवावेक्ष्य किन्तु स्वधर्मं क्षत्रियधर्ममपि चावेक्ष्य शास्त्रेण निश्चित्य त्वं विकम्पितुं विचलितुं धर्मादधर्मभ्रान्त्या निवर्तितुं नार्हसि । कोऽसौ धर्म इत्यपेक्षायामाह–धर्म्यादिति । धर्मादनपेतं धर्म्यं तस्मात् युद्धादन्यत् क्षत्रियस्य श्रेयो न विद्यते । शास्त्रे इति शेषः । तथोक्तं याज्ञवल्क्येन 'पदानि क्रतुतुल्यानि भग्नेष्वप्यनिवर्तिनाम्' इति एतेन 'दृष्ट्वेमं स्वजनं कृष्ण युयुत्सुं समुपस्थितम्' इत्यारभ्य 'वेपथुश्च शरीरे मे रोमहर्षश्च जायते' इति मध्ये 'नच शक्नोम्यवस्थातुं भ्रमतीव च मे मनः' इत्यन्तं स्वधर्मप्रतिकूलं ते वचनमनुचितमिति भावः ॥ ३१ ॥**

म० टी०–तदेवं स्थूलसूक्ष्मशरीरद्वयतत्कारणाविद्याख्योपाधित्रयाविवेकेन मिथ्याभूतस्यापि संसारस्य सत्यत्वात्मधर्मत्वादिप्रतिभासरूपं सर्वप्राणिसाधारणमर्जुनस्य भ्रमं निराकर्तुमुपाधित्रयविवेकेनात्मस्वरूपमभिहितवान् । संप्रति युद्धाख्ये स्वधर्मे हिंसादिबाहुल्ये नाधर्मत्वप्रतिभासरूपमर्जुनस्यैव करुणादिदोषनिबन्धनमसाधारणं भ्रमं निराकर्तुं हिंसादिमत्त्वेपि युद्धस्य स्वधर्मत्वेनाधर्मत्वाभावं बोधयति भगवान्–**स्वधर्ममपीति** । न केवलं परमार्थतत्त्वमेवावेक्ष्य किन्तु स्वधर्ममपि क्षत्रियधर्ममपि युद्धापराङ्मुखत्वरूपमवेक्ष्य शास्त्रतः पर्यालोच्य विकम्पितुं विचलितुं धर्मादावधर्मत्वभ्रान्त्या निवर्तितुं नार्हसि । तत्रैवं सति 'यद्यप्येते न पश्यन्ति ' इत्यादिना ' नरके नियतं वासो भवति' इत्यन्तेन युद्धस्य पापहेतुत्वं त्वया यदुक्तम् ' कथं भीष्ममहं सङ्ख्ये' इत्यादिना च गुरुवधब्रह्मवधाद्यकरणं यदभिसंहितं तत्सर्वं धर्मशास्त्रापर्यालोचनादेवोक्तम् । कस्मात् हि यस्मात् धर्म्यात् अपराङ्मुखत्वधर्मादनपेतात् युद्धादन्यत् क्षत्रियस्य श्रेयःसाधनं न विद्यते । युद्धमेव हि पृथिवीजयद्वारेण प्रजारक्षणब्राह्मणशुश्रूषादिक्षात्रधर्मनिर्वाहकमिति तदेव क्षत्रियस्य प्रशस्ततरमित्यभिप्रायः । तथा चोक्तं पराशरेण ' क्षत्रियो हि प्रजा रक्षन् शस्त्रपाणिः प्रदण्डवान् । निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्' मनुनापि 'समोत्तमाधमै राजा चाहूतः पालयन् प्रजाः । न निवर्तेत संग्रामात् क्षात्रं धर्ममनुस्मरन् ॥ सङ्ग्रामेष्वनिवर्तित्वं प्रजानां चैव पालनम् । शुश्रूषा ब्राह्मणानां च राज्ञः श्रेयस्करं परम्' इत्यादिना राजशब्दश्च क्षत्रियजातिमात्रवाचीति स्थितमेवेष्ट्यधिकरणे तेन भूमिपालस्यैवायं धर्म इति न भ्रमितव्यम् । उदाहृतवचनेपि क्षत्रियोहीति क्षात्रं धर्ममिति च स्पष्टं लिङ्गम् । तस्मात्क्षत्रियस्य युद्धं प्रशस्तो धर्म इति साधु भगवताभिहितम् । अपशवोऽन्ये गोअश्वेभ्यः ' इतिवत्प्रशंसालक्षणया युद्धादन्यच्छ्रेयः साधनं न विद्यते इत्युक्तमिति न दोषः । एतेन युद्धात्प्रशस्ततरं किंचिदनुष्ठातुं ततो निवृत्तिरुचितेति निरस्तम् । ' न च श्रेयोनुपश्यामि हत्वा स्वजनमाहवे ' इत्येतदपि ॥ ३१ ॥

शं० टी०–वेदाविनाशिनामित्यत्रायमर्थः स्फुटं निरूपितः सर्वमिदमहं च ब्रह्मैवेति सर्वस्य ब्रह्ममात्रत्वविज्ञानमात्मप्रसादजं यस्य तस्य न किंचित्कर्तव्यमस्ति । तदन्यस्याहंममेत्याद्यभिमानवतो मुमुक्षोः " ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इत्यादिश्रुतिबलाच्चित्तशुद्ध्यर्थं विधिदृष्टः स्वधर्मः पूर्वोक्तज्ञानसिद्ध्यर्थं कर्तव्य एवेति बोधयितुमिदं प्रकरणमारभ्यते । तत्रादावर्जुनस्यात्मज्ञानाभावमालक्ष्य तं स्वभक्तं मुमुक्षुं कर्तव्ये स्वधर्मे प्रवर्तयितुमिदमाह श्रीभगवान्–**स्वधर्ममिति** । यदा कर्ता करणं कार्यं च सर्वं ब्रह्मैवेति विज्ञातं तदा न किंचित्कर्तव्यमेवोपपद्यते यद्येते मदीया मया हन्यन्त इति भेदज्ञानं तदापि चस्त्वर्थः। 'युद्धं स्वधर्मो नृपतेः प्रजानां परिपालनम्' इत्यादिशास्त्रोक्तं स्वधर्मं क्षत्रियस्य कर्तव्येन विहितमवेक्ष्य स्वबुद्ध्या विचार्य त्वं विकम्पितुं स्वधर्माच्चलितुं नार्हसि स्वधर्मं त्यक्तुं नार्हसीत्यनेन स्वधर्मतया कर्तव्यत्वेन प्राप्ते युद्धे याग इव शोकमोहौ हिंसादिदोषविचारश्च न कर्तव्यो विदुषेति सूचितम् । धर्मशास्त्रादागतं धर्म्यं कर्तव्यत्वेन विहितं तस्माद्युद्धादन्यदपरं श्रेयः श्रेयःसाधनं क्षत्रियस्य न विद्यते नास्ति । जयलब्धधनैकसाध्यैर्यागैर्दानैर्व्रतादिभिश्चित्तशुद्धिस्तया ज्ञानं तेन मोक्ष इति युद्धस्य श्रेयःसाधनता युक्ता ततो युद्धं कर्तव्यमेवेति सिद्धम् । "ये युध्यन्ते प्रधनेषु शूरासः" इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः ॥ ३१ ॥

श्री० टी०–यच्चोक्तमर्जुनेन ' वेपथुश्च शरीरे मे रोमहर्षश्च जायते ' इति तदप्ययुक्तमित्याह–**स्वधर्ममिति** । आत्मनो नाशाभावादेवैतेषां हननेऽपि विकम्पितुं नार्हसि । किंच स्वधर्ममपि अवेक्ष्य विकम्पितुं नार्हसीति संबन्धः । यच्चोक्तम् ' न च श्रेयोऽनुपश्यामि हत्वा स्वजनमाहवे' इत्यादि तत्राह–**धर्म्यादिति** । धर्मादनपेतान्न्याय्याद्युद्धादन्यत् ॥ ३१ ॥

स० टी०–देहत्रयविवेकेन सर्वसाधारणो भ्रमः ॥ निराकृतोऽथ युद्धाख्ये स्वधर्मेऽधर्मताभ्रमम् ॥ १ ॥ अर्जु-

नस्य निराकर्तुमसाधारणमीश्वरः ॥ स्वधर्मत्वेन युद्धस्याधर्मत्वाभावमाह वै ॥ २ ॥ वस्तुतत्त्वमवेक्ष्यैव कार्यं युद्धं न केवलम् ॥ किंतु युद्धादवैमुख्यं क्षात्रं धर्मं हि शाश्वतः ॥ ३ ॥ पर्यालोच्य स्वधर्मात्त्वं न निवर्तितुमर्हसि ॥ यस्माद्रणादवैमुख्यधर्मयुक्तान्नृपस्य च ॥ ४ ॥ न श्रेयःसाधनं सम्यग्विद्यतेऽन्यद्धि शाश्वतः ॥ जयद्वारेण सङ्ग्रामः प्रजारक्षणतस्तथा ॥ ५ ॥ विप्रभक्तया यतः क्षात्रधर्मनिर्वाहको भवेत् ॥ तथोक्तो मनुना धर्मो राज्ञो युद्धादिलक्षणः ॥ ६ ॥समोत्तमाधमै राजा चाहूतः पालयन्प्रजाः ॥ न निवर्तेत सङ्ग्रामात्क्षात्रं धर्ममनुस्मरन् ॥ ७ ॥ न च श्रेयोऽनुपश्यामित्येतेनैव निराकृतम् ॥ ८ ॥ ३१ ॥

**भा० टी०**—इत्थमात्मतत्त्वापेक्षायां शोकमोहौ न संभवत इत्युक्तम् । न केवलमात्मतत्त्वापेक्षायामेव किंतु स्वधर्ममपि चावेक्ष्येत्याह—**स्वधर्ममपीति** । यत्तु कैश्चित् ' सर्वप्राणिसाधारणं भ्रमं निराकृत्यार्जुनस्यैवासाधारणं भ्रमं निराकरोति' इत्युक्तं तत्पूर्वोक्तयुक्त्या निरसनीयम् । स्वधर्मं क्षत्रियस्य धर्मयुद्धं धर्मशास्त्रादवेक्ष्य विचार्य शोकमोहाभिभूतः स्वधर्माच्चालितुं नार्हसि । यस्मात्पृथिवीजयद्वारा युद्धस्य यज्ञादिधर्मार्थत्वेन ब्राह्मणादिप्रजारक्षणार्थत्वेन च धर्मादनपेताद्युद्धादन्यच्छ्रेयःसाधनं युद्धसदृशं क्षत्रियस्य न भवतीत्यर्थः । अतो मोक्षरूपश्रेयोर्थिनोऽपि ते युद्धेन स्वधर्मेण जयं लब्ध्वा यज्ञाद्यनुष्ठानप्रजापालनादिभ्योऽन्यत्तत्साधनं न भवतीत्याशयः ॥ ३१ ॥

**प० टी०**—अथास्तां तव सत्यत्वाभिमता दृश्यदृष्टिस्तथापि शोको न युज्यत इत्याह—**स्वधर्ममपीति** । स्वधर्मं श्रुतिस्मृतिसिद्धं क्षत्रधर्ममवेक्ष्य सम्यग्विचार्य विकम्पितुं नार्हसि । अथ त्वमेव धर्मं कथयेत्याह—**धर्म्यादिति** । क्षत्रियस्य श्रीः धर्म्यान्न्यायागताद्युद्धादन्यदहिंसाद्यनुष्ठानं श्रेयः श्रेयोजनकं न विद्यते । अथ प्रागर्जुनोपक्रान्तश्रुतेस्तात्पर्यप्रतिपादिका श्रुतिः—" तच्छ्रेयोरूपमत्यसृजत धर्मं तदेतत्क्षत्रस्य क्षत्रं यद्धर्मस्तस्माद्धर्मात्परं नास्त्यथो अबलीयान् बलीयाꣳसꣳसमाशंसते धर्मेण यथा राज्ञैवं यो वै स्वधर्मः सत्यं वै तत्तस्मात्सत्यं वदन्तमाहुर्धर्मं वदतीति धर्मं वो वदन्तꣳसत्यं वदतीतीत्येतद्ध्येवैतदुभयं भवति " इति । भाष्यम्—"तत्तस्मादनन्तरं श्रेयोरूपं धर्ममत्यसृजतातिसृष्टिस्थानीयमसृजत् । तदेतद्वक्ष्यमाणम् । तत्किम्, क्षत्रस्य क्षत्रियजातेः क्षत्रं क्षात्रलक्षणो धर्मस्तस्माद्धर्मात्परमुत्कृष्टं नास्ति यतो धर्मेण कृत्वाबलीयान् दुर्बलोपि बलीयांसं समर्थमपि समाशंसते सम्यक्प्रकारेणाक्षिपति । यथा राज्ञा स्ववशेन कृत्वा दुर्बलोपि समर्थमाक्षिपति तथेत्यर्थः । एवं वै इति निश्चयेन पूर्वोक्तो यो धर्मः स सत्यं सत्यस्य प्रापकस्तत्तस्मात्कारणात्सत्यं वदन्तं पुरुषं धर्मं वक्तीत्याहुः । वा इत्यथवा धर्मं वदन्तं पुरुषं सत्यं वदतीत्याहुरेवं सत्यधर्मयोरेकार्थवाचकत्वमस्तीत्युक्तं हीति निश्चयेन । एतद्धर्मसत्याभिधानमुभयं तद्भवति ब्रह्मरूपं भवति तत्त्वमसि तत्सद् ब्रह्मेति श्रुतेः " ॥ ३१ ॥

**रा० टी०**—यदुक्तं प्राक् ' वेपथुश्च शरीरे मे रोमहर्षश्च जायते ' इति तत्राह—**स्वधर्ममिति** । यद्वा न केवलमात्मनित्यत्वादशोकः किं तर्हीत्यत आह—**स्वधर्ममिति** । न केवलमात्मनोऽविनाशादेवाविकम्पः । स्वधर्ममप्यवेक्ष्य विकम्पितुं शरीरे कम्पं सर्वावयवचेष्टां कर्तुं नार्हसीत्यर्थः । यच्चोक्तम् ' न च श्रेयोनुपश्यामि हत्वा स्वजनमाहवे ' इति तत्राह—**धर्म्यादिति** । परलोकसुखहेतुर्धर्मः । तत्संबन्धितज्जनकमिति यावत् । यद्वा धारकत्वाद्धर्मो हरिः तत्पूजारूपं यत्तद्धर्म्यं तस्माद्युद्धादन्यच्छ्रेयः क्षत्रियस्य न विद्यते हि प्रसिद्धमेतत् ॥ ३१ ॥

**यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ॥**
**सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ ३२ ॥**

**त० टी०**–स्वश्रेयो महता यत्नेन प्राप्यते इदं तु तवायत्नतः प्राप्तमित्याह–**यदृच्छयेति** । यदृच्छया स्वप्रयत्नं विनैवोपपन्नमुपस्थितमीदृशं पौरुषविशेषविशिष्टवीरपुरुषप्रतियोद्धृनिष्ठमैहिकामुष्मिकेष्टकीर्तिलाभकरं युद्धं सुखिनः सुखार्हाः क्षत्रियाः लभन्ते । ननु युद्धे मृतश्चेत्तस्य किं सुखं स्यादित्यत्राह–स्वर्गद्वारमिति । अप्रतिरुद्धं स्वर्गस्य द्वारभूतं तत्–' य आहवेषु युद्धयन्ते भूम्यर्थमपराङ्मुखाः । अकूटैरायुधैर्यान्ति ते स्वर्गं योगिनो यथा ' इति वचनात् ॥ ३२ ॥

**म० टी०**–ननु युद्धस्य कर्तव्यत्वेऽपि न भीष्मद्रोणादिभिर्गुरुभिः सह तत्कर्तुमुचितमतिगर्हितत्वादित्याशङ्क्याह–**यदृच्छयेति** । यदृच्छया स्वप्रयत्नव्यतिरेकेण । चोऽवधारणे । अप्रार्थनयैवोपस्थितमीदृशं भीष्मद्रोणादिवीरपुरुषप्रतियोगिकं कीर्तिराज्यलाभदृष्टफलसाधनं युद्धं ये क्षत्रियाः प्रतियोगित्वेन लभन्ते ते सुखिनः सुखभाज एव जये सत्यनायासेनैव यशसो राज्यस्य च लाभात् पराजये वातिशीघ्रमेव स्वर्गस्य लाभादित्याह–स्वर्गद्वारमपावृतमिति । अप्रतिबद्धं स्वर्गसाधनं युद्धमव्यवधानेनैव स्वर्गजनकम् । ज्योतिष्टोमादिकं तु चिरतरेण देहपातस्य प्रतिबन्धाभावस्य चापेक्षणादित्यर्थः। स्वर्गद्वारमित्यनेन श्येनादिवत्प्रत्यवायशङ्का परिहृता। श्येनादयो हि विहिता अपि फलदोषेण दुष्टाः । तत्फलस्य शत्रुवधस्य ' न हिंस्यात्सर्वा भूतानि । ब्राह्मणं न हन्यात्' इत्यादिशास्त्रनिषिद्धस्य प्रत्यवायजनकत्वात् फले विध्यभावाच्च । न विधिस्पृष्टे निषेधानवकाश इति न्यायावतारः। युद्धस्य हि फलं स्वर्गः स च न निषिद्धः। तथा च मनुः 'आहवेषु मिथोन्योन्यं जिघांसन्तो महीक्षितः । युद्धयमानाः परं शक्त्या स्वर्गं यान्त्यपराङ्मुखाः' इति। युद्धं तु अग्नीषोमीयाद्यालम्भवद्विहितत्वान्न निषेधेन स्प्रष्टुं शक्यते षोडशिग्रहणादिवत् ग्रहणाग्रहणयोस्तुल्यबलतया विकल्पवत्सामान्यशास्त्रस्य विशेषशास्त्रेण सङ्कोचसंभवात्। तथा च विधिस्पृष्टे निषेधानवकाश इति न्यायाद्युद्धं न प्रत्यवायजनकं नापि भीष्मद्रोणादिगुरुब्राह्मणादिवधनिमित्तो दोषः तेषामाततायित्वात् । तदुक्तं मनुना 'गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम् ।आततायिनमायान्तं हन्यादेवाविचारयन् ।।आततायिनमायान्तमपि वेदाङ्गपारगम्। जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत्।। नाततायिवधे दोषो हन्तुर्भवति कश्चन ' इत्यादि । ननु ' स्मृत्योर्विरोधे न्यायस्तु बलवान्व्यवहारतः । अर्थशास्त्रात्तु बलवद्धर्मशास्त्रमिति स्थितिः ' इति याज्ञवल्क्यवचनात् आततायिब्राह्मणवधेऽपि प्रत्यवायोस्त्येव । 'ब्राह्मणं न हन्यात् ' इति हि दृष्टप्रयोजनानपेक्षत्वाद्धर्मशास्त्रम् 'जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ' इति च स्वजीवनार्थत्वादर्थशास्त्रम्। अत्रोच्यते "ब्रह्मणे ब्राह्मणमालभेत ' इतिवद्युद्धविधायकमपि धर्मशास्त्रमेव ' सुखदुःखे समे कृत्वा ' इत्यत्र दृष्टप्रयोजनानपेक्षत्वस्य वक्ष्यमाणत्वात् । याज्ञवल्क्यवचनं तु दृष्टप्रयोजनोद्देश्यककूटयुद्धादिकृतवधविषयमित्यदोषः । मिताक्षराकारस्तु धर्मार्थसन्निपातेर्थग्राहिण एतदेवेति द्वादशवार्षिकप्रायश्चित्तस्यैतच्छब्दपरामृष्टस्यापस्तम्बेन विधानान्मित्रलाभाद्यर्थशास्त्रानुसारेण चतुष्पाद्व्यवहारे शत्रोरपि जये धर्मशास्त्रातिक्रमो न कर्तव्य इत्येतत्परं वचनमेतदित्याह।भवत्वेवं न नो हानिः । तदेवं युद्धकरणे सुखोक्तेः ' स्वजनं हि कथं हत्वा सुखिनः स्याम माधव' इत्यर्जुनोक्तमपाकृतम् ॥ ३२ ॥

**शं० टी०**–ननु जयश्चेद्युद्धस्य श्रेयःसाधनता स्यान्मृतिश्चेन्न किमप्यस्तीत्यतआह–**यदृच्छयेति** । हे पार्थ पृथापुत्र ! यदृच्छयैवोपपन्नमयत्नप्राप्तमपावृतं चोद्घाटितकपाटं स्वर्गद्वारं स्वर्गप्राप्तिद्वारभूतं युद्धमीदृशं सुखिनः स्वर्गसुखार्थिनः धन्याः क्षत्रियाः पुण्येन लभन्ते भाग्यवतामेवेदृशं युद्धमभ्यागच्छतीत्यर्थः । युद्धे मृतस्याप्यस्ति स्वर्गसुखमित्यत उभयथापि फलहेतुत्वादवश्यं युद्धं कर्तव्यमित्यर्थः ॥ ३२ ॥

**श्री० टी०**–किंच महति श्रेयसि स्वयमेवोपगते सति कुतो विकम्पसइत्याह–**यदृच्छयेति** । यदृच्छयाऽप्रार्थितमेवोपपन्नं प्राप्तमीदृशं युद्धं सुखिनः सभाग्या एव लभन्ते । यतो निरावरणं स्वर्गद्वारमेवैतत् । यद्वा य

एवंविधं युद्धं लभन्ते त एव सुखिन इत्यर्थः । एतेन 'स्वजनं हि कथं हत्वा सुखिनः स्याम' इति यदुक्तं तन्निरस्तं भवति ॥ ३२ ॥

स० टी०–ननु भीष्मादिभिः सार्धं गुरुभिर्नोचितो रणः ॥ स्वधर्मोऽप्यतिनिन्द्यत्वादित्याशङ्क्याह केशवः ॥ १ ॥ स्वप्रयत्नं विनैवेत्थं भीष्मादिप्रतियोगिकम् ॥ कीर्त्यादिसाधनं युद्धं प्रतियोगितया च ये ॥ २ ॥ लभन्ते क्षत्रियास्ते वै भवन्ति सुखभागिनः ॥ प्रतिबन्धं विना स्वर्गहेतुर्युद्धमिदं यतः ॥ ३ ॥ आततायितया तेषां भीष्मादीनां वधे तव ॥ न दोषोऽस्ति तदेवोक्तं मनुना धर्मभास्वता ॥ ४ ॥ गुरुं वा बालवृद्धं वा ब्राह्मणं वा बहुश्रुतम् ॥ आततायिनमायान्तं हन्यादेवाविचारयन् ॥ ५ ॥ आततायिनमायान्तमपि वेदान्तपारगम् ॥ जिघांसन्तं जिघांसीयान्न तेन ब्रह्महा भवेत् ॥ ६ ॥ नाततायिवधे दोषो हन्तुर्भवति कश्चन ॥ गुरुणा ब्राह्मणेनापि बहुज्ञेन महर्षिणा ॥ ७ ॥ भीष्मस्याप्यभवद्युद्धं जामदग्न्येन ते गुरोः ॥ अतस्तवापि शास्त्रेण युद्धं कार्यतयेष्यते ॥ ८ ॥ ३२ ॥

भा० टी०–स्वधर्मत्वाद्युद्धं प्रयत्नेनापि क्षत्रियैः संपाद्यते तव तु भाग्यवशाद्भवत्प्रयत्नं विनैवोपपन्न मतः कर्तव्यमेवेत्याह–यदृच्छयेति । अप्रार्थिततयाऽऽगतं सद्यः स्वर्गप्रदं यतः उद्घाटितं स्वर्गद्वारं ये ईदृशं युद्धं क्षत्रिया लभन्ते त एव सुखिनः राज्यस्वर्गादिसुखभाजः पार्थेति संबोधयन् स्वोत्साहसदृशे उत्साहे प्रेरयति ॥ ३२ ॥

प० टी०–अथ श्रुत्यर्थमेव दृढीकुर्वन्नाह–यदृच्छयेति । भो पार्थ ! ईदृशं जयाजयाद्यभिनिवेशरहितं युद्धं सुखिनः सुकृतिनः क्षत्रिया लभन्ते । अथास्य दुर्लभत्वमाह–स्वर्गेति । पुनः कीदृशं स्वर्गद्वारमपावृतं निरावरणं यदृच्छयाऽप्रार्थनयोपपन्नं सिद्धं भवति ॥ ३२ ॥

रा० टी०–किंच स्वयमेव महति श्रेयसि प्राप्ते विकम्पोनुचित इत्याह–यदृच्छयेति । यदृच्छयाऽप्रयत्नेनोपपन्नं प्राप्तं यदृच्छा हि तदिच्छा स्यादित्युक्तेरीश्वरेच्छाप्राप्तमिति वा । अपावृतमपगतावरणं स्वर्गद्वारं च पारत्रिकसुखसाधनमिति यावत् । ईदृशं भगवत्पूजात्वेन स्वधर्मत्वेन स्थितं युद्धं सुखिनः सुखहेतुपुण्यवन्तः क्षत्रियाः हे पार्थ ! लभन्ते प्राप्नुवन्ति । यद्वा ईदृशं युद्धं ये क्षत्रियाः लभन्ते ते सुखिन इत्यर्थः । तेन स्वजनं हि कथं हत्वा सुखिनः स्यामेति निरस्तम् ॥ ३२ ॥

## अथ चेत्त्वमिमं धर्म्यं संग्रामं न करिष्यसि ॥
## ततः स्वधर्मं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥

**त० टी०–यदुक्तम् 'एतान्न हन्तुमिच्छामि घ्नतोऽपि मधुसूदन । अपि त्रैलोक्यराज्यस्य हेतोः किन्नु महीकृते ॥ कथं भीष्ममहं संख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि' इति तस्योत्तरमाह–अथ चेदिति । अथ पक्षान्तरे । ऐहिकामुष्मिकसुखलाभानपेक्षया चेद्यदि धर्म्यं धर्मादनपेतम् 'निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत्' इति शास्त्रविहितमिमं संग्रामं त्वं न करिष्यसि ततः संग्रामाकरणात्स्वधर्मं स्वधर्मजन्यं निरतिशयसुखं देवसममहावीरपुरुषविजयागामिनीं कीर्तिं च हित्वा पापमवाप्स्यसि ॥ ३३ ॥**

म० टी०–ननु नाहं युद्धफलकामः 'न काङ्क्षे विजयं कृष्ण । अपि त्रैलोक्यराज्यस्य' इत्युक्त्वा तत्कथं मया कर्तव्यमित्याशङ्क्याकरणे दोषमाह–अथेति । अथेति पक्षान्तरे । इमं भीष्मद्रोणादिवीरपुरुषप्रतियोगिकं धर्म्यं हिंसादिदोषेणादुष्टं सतां धर्मादनपेतमिति वा । स च मनुना दर्शितः 'न कूटैरायुधैर्हन्याद्युध्यमानो

रणे रिपून् । न कर्णिभिर्नापि दिग्धैर्नाग्निज्वलिततेजनैः ।। न च हन्यात्स्थलारूढं न क्लीबं न कृताञ्जलिम् । न मुक्तकेशं नासीनं न तवास्मीति वादिनम् ।। न सुप्तं न विसन्नाहं न नग्नं न निरायुधम् । नायुध्यमानं पश्यन्तं न परेण समागतम् ।। नायुधव्यसनप्राप्तं नार्तं नातिपरिक्षतम् । न भीतं न परावृत्तं सतां धर्ममनुस्मरन् ' इति सतां धर्ममुलङ्घ्य युध्यमानो हि पापीयान्स्यात् । त्वं तु परैराहूतोऽपि सद्धर्मोपेतमपि सङ्ग्रामं युद्धं न करिष्यसि धर्मतो लोकतो वा भीतः परावृत्तो भविष्यसि चेत् ततः ' निर्जित्य परसैन्यानि क्षितिं धर्मेण पालयेत् ' इत्यादिशास्त्रविहितस्य युद्धस्याकरणात्स्वधर्मं हित्वाऽननुष्ठाय कीर्तिं च महादेवादिसमागमनिमित्तां हित्वा ' न निवर्तेत सङ्ग्रामात् ' इत्यादिशास्त्रनिषिद्धसङ्ग्रामनिवृत्त्या च रणजन्यं पापमेव केवलमवाप्स्यसि न तु धर्मं कीर्तिं चेत्यभिप्रायः । अथवा अनेकजन्मार्जितं धर्मं त्यक्त्वा राजकृतं पापमेवाप्स्यसीत्यर्थः । यस्मात्त्वां परावृत्तमेते दुष्टा अवश्यं हनिष्यन्ति । अतः परावृत्तहतः सन् चिरोपार्जितनिजसुकृतपरित्यागेन परोपार्जितदुष्कृतमात्रभाङ्माभूरित्यभिप्रायः । तथा च मनुः ' यस्तु भीतः परावृत्तः सङ्ग्रामे हन्यते परैः । भर्तुर्यद्दुष्कृतं किंचित्तत्सर्वं प्रतिपद्यते ।। यच्चास्य सुकृतं किंचिदमुत्रार्थमुपार्जितम् । भर्ता तत्सर्वमादत्ते परावृत्तहतस्य तु ' इति । याज्ञवल्क्योपि 'राजा सुकृतमादत्ते हतानां विपलायिनाम् ' इति तेन यदुक्तम् ' पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः। एतान्न हन्तुमिच्छामि घ्नतोपि मधुसूदन ' इति तन्निराकृतं भवति ।। ३३ ।।

**शं० टी०**–मुमुक्षोर्मोक्षसाधने विध्युक्ते स्वधर्मे प्रमादो मास्त्विति ज्ञापयितुं स्वधर्मतया कर्तव्यत्वेन प्राप्तस्य युद्धस्याकरणे प्रत्यवायाऽकीर्त्याद्यनर्थपरम्पराऽऽयास्यतीति नयभयाभ्यामर्जुनं स्वधर्मे प्रवर्तयति पञ्चभिः। तत्राद्येन हिंसारूपत्वाद्दोषाय भवतीति वा तेषु स्वीयत्वभ्रमेण वा स्वधर्मं युद्धं त्यक्ष्यसि चेत्प्रत्यवायः कीर्तिनाशश्चोभाभ्यामिह परलोकभ्रंशः स्यादित्याह–**अथ चेदिति** । अथ युद्धसन्नाहसमनन्तरं त्वमिमं धर्म्यं धर्मत्वेन दृष्टं विध्युक्तं संग्रामं न करिष्यसि चेत्ततस्तदकरणेन कीर्तिमीश्वरादिभिः सह युद्धं कृतवानिति अर्जुनः स्वधर्मनिष्ठ इति वा कीर्तिं लोकप्रसिद्धां स्वधर्मं स्वस्य धर्मं च धर्मावबोधकं शास्त्रं वेदादिलक्षणं वा स्वधर्मं त्यक्तवानसि वेदोक्तकर्मत्यागेन वेदोपि त्यक्त एव भवति एवं स्वधर्मं कीर्तिं च हित्वा वेदवेदोक्तकर्मत्यागलक्षणं पापमवाप्स्यसि न तु संन्यासफलमित्यर्थः ।। ३३ ।।

**श्री० टी०**–विपक्षे दोषमाह–**अथ चेत्त्वमिति** ।। ३३ ।।

**स० टी०**–ननु युद्धफलं नाहमाकाङ्क्षे तन्मया कथम् ।। युद्धं कार्यं वृथेत्येवमाशङ्क्याहात्र दूषणम् ।।१।। यदि धर्म्यमिमं भीष्मद्रोणादिप्रतियोगिकम् ।। आहूतोऽपि परैरेवं संग्रामं न करिष्यसि ।। २ ।। भविष्यसि परावृत्तो भीतो धर्मात्स्वयं तदा ।। बहुजन्मार्जितं धर्मं त्यक्त्वा कीर्तिं च शाश्वतीम् ।। ३ ।। न निवर्तेत संग्रामादिति शास्त्रनिषेधतः ।। विहिताचरणत्यागात्त्वं हि पापमवाप्स्यसि ।। ४ ।। यस्मात्ते त्वां परावृत्तं हनिष्यन्त्येव शत्रवः ।। स्वधर्मत्यागतस्तस्मान्मा त्वं दुष्कृतभाग्भव ।। ५ ।। ३३ ।।

**भा० टी०**–विपक्षे दोषमाह–**अथेति** ।। ३३ ।।

**प० टी०**–अथ विपक्षे दोषमाह–**अथ चेदित्यादितः** श्लोकचतुष्टयेन । अथेत्यनन्तरं मदुक्तमनाकर्ण्य धर्म्यं धर्मसाधकं संग्रामं चेन्न करिष्यसि तर्हि स्वधर्मं हित्वा स्वधर्मबहिर्मुखो भूत्वा तथेह लोके श्लाघनीयां कीर्तिं च हित्वा पापं परलोकप्रतिबन्धकमवाप्स्यसि । अनेन पापमेवाश्रयेदस्मानित्युक्तस्य परिहारः सूचितः ।। ३३ ।।

**रा० टी०**–युद्धाकरणेऽनर्थप्राप्त्युक्त्या च तत्कर्तव्यतामाह–**अथ चेदित्यादिचतुर्भिः** । अथ चेत् यद-

च्छया पारत्रिकसुखहेतुत्वेन च प्राप्तमपि धर्म्यं प्रागवत् । इमं संग्रामं युद्धं न करिष्यसि न कुर्याः तर्हि ततः स्वधर्मभूतयुद्धाकरणान्न केवलं धर्मकीर्त्योर्हानिः । स्वविहितधर्मत्यागात्पापं चावाप्स्यसि ॥ ३३ ॥

**अकीर्तिं चापि भूतानि कथयिष्यन्ति तेऽव्ययाम् ॥**
**सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते ॥ ३४ ॥**

**त० टी०**–संग्रामत्यागे न केवलं भाविस्वधर्मकीर्तिहानिमात्रमपि तु महान्दोषः स्यादित्याह–अकीर्तिमिति । क्षत्रियहर्षकरे संग्रामे प्राप्ते पाण्डुपुत्रो गाण्डीवधन्वाऽर्जुनः कातरो भूत्वापलायित इत्यव्ययां बहुजनदृष्टश्रुतपरम्परया सर्वदेशव्यापिनीं पुनरविनाशिनीं तेऽकीर्तिं न केवलं क्षत्रियाः कथयिष्यन्ति किन्तु देवर्षिक्षत्रियवणिक्शूद्रान्तानि सर्वाणि भूतानि कथयिष्यन्ति । ननु युद्धे मरणसन्देहान्मरणादकीर्तिर्नाधिकेत्यतः सा सोढव्या न तु मरणोपायं कुर्यात् । तथोक्तं शान्तिपर्वणि–'साम्ना दानेन भेदेन समस्तैरुत चापृथक । विजेतुं प्रयतेतारीन्न तु युद्धयेत्कदाचन ॥ अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः । पराजयश्च संग्रामे तस्माद्युद्धं विवर्जयेत्' इति तस्मान्मरणादकीर्त्तिः किमधिकं दुःखमित्यत आह–सम्भावितस्येति । खाण्डवे इन्द्रेणाऽप्यनिवार्यो वासुदेवसखाऽग्नितर्पणाद्यतुल्यपराक्रमैरन्यदुर्लभैर्गुणैर्बहुमतस्याकीर्तिर्मरणादतिरिच्यते अधिका भवति ॥ ३४ ॥

**म० टी०**–एवं कीर्तिधर्मयोरिष्टयोरप्राप्तिरनिष्टस्य च पापस्य प्राप्तिर्युद्धपरित्यागे दर्शिता । तत्र पापाख्यमनिष्टं व्यवधानेन दुःखफलदमामुत्रिकत्वाच्छिष्टगर्हालक्षणं त्वनिष्टमासन्नफलदमत्यसह्यमित्याह–अकीर्तिमिति । भूतानि देवर्षिमनुष्यादीनि ते तव अव्ययां दीर्घकालामकीर्तिं न धर्मात्मायं न शूरोयमित्येवंरूपां कथयिष्यन्त्यन्योन्यं कथाप्रसङ्गे । कीर्तिधर्मनाशसमुच्चयार्थौ निपातौ । न केवलं कीर्तिधर्मौ हित्वा पापं प्राप्स्यसि अपि तु अकीर्तिं च प्राप्स्यसि । न केवलं त्वमेव तां प्राप्स्यसि अपि तु भूतान्यपि कथयिष्यन्तीति वा निपातयोरर्थः । ननु युद्धे स्वमरणसन्देहात्तत्परिहारार्थमकीर्तिरपि सोढव्या । आत्मरक्षणस्यात्यन्तापेक्षितत्वात् । तथा चोक्तं शान्तिपर्वणि 'साम्ना दानेन भेदेन समस्तैरुत वा पृथक् । विजेतुं प्रयतेतारीन्न युध्येत कदाचन ॥ अनित्यो विजयो यस्मात् दृश्यते युध्यमानयोः । पराजयश्च सङ्ग्रामे तस्माद्युद्धं विवर्जयेत् ॥ त्रयाणामप्युपायानां पूर्वोक्तानामसंभवे । तथा युध्येत संपत्तौ विजयेत रिपून्यथा' इति । एवमेव मनुनाप्युक्तम् । तथा च मरणभीतस्य किमकीर्तिर्दुःखमिति शङ्कामपनुदति संभावितस्य धर्मात्मा शूर इत्येवमादिभिरनन्यलभ्यैर्गुणैर्बहुमतस्य जनस्याकीर्तिर्मरणादप्यतिरिच्यते अधिका भवति । चो हेतौ । एवं यस्मात् अतोऽकीर्तेर्मरणमेव वरं न्यूनत्वात् त्वमप्यतिसंभावितोसि महादेवादिसमागमेन अतो नाकीर्तिदुःखं सोढुं शक्ष्यसीत्यभिप्रायः । उदाहृतवचनं त्वर्थशास्त्रत्वान्न निवर्तेत । सङ्ग्रामादित्यादिधर्मशास्त्राद्दुर्बलमितिभावः ॥ ३४ ॥

**शं० टी०**–एतावन्मात्रमेव न भवति किंतु–अकीर्तिमिति । भूतानि अत्र चान्यत्र च विद्यमाना जनाः सर्वे स्वधर्मत्यागजनितामव्ययां चिरकालस्थायिनीमकीर्तिं च ते तव कथयिष्यन्ति सभासु पापिष्ठः स्वधर्मं त्यक्तवानिति । ननु स्वजनवधादागतनिन्दापेक्षया युद्धोपरतिकृतनिन्दा सोढुं शक्यत इति चेदुच्यते "ब्रह्मणे ब्राह्मणमालभेत" इति ब्राह्मणालम्भो विहितत्वाद्दोषाय न भवति यथा तथा युद्धस्य शास्त्रीयत्वाद्युद्धे स्वजनवधो दोषाय न भवति युद्धादुपरतेस्त्वशास्त्रीयत्वात्तदुपरत्याऽऽगतेयमकीर्तिर्दुष्कीर्तिः संभावितस्य । तु चस्त्वर्थः । धर्मात्मा सत्यसन्धः शूरतमोर्जुन इति सर्वत्र सर्वैरीडितस्य सत्कीर्तेस्तव पुण्यपुरुषस्य मरणादतिरिच्यते अधिका भवति लोके मरणदुःखं क्षणकालिकं दुष्कीर्तिदुःखं तु सतामापातभावित्वान्मरणदुःखान्महत्तरमतो दुष्कीर्तेर्वरं मरणमित्यर्थः ॥ ३४ ॥

**श्री० टी०**–किंच–**अकीर्तिमिति** । अव्ययां शाश्वतीं संभावितस्य बहुमानितस्याकीर्तिर्मरणादतिरिच्यते अधिकतरा भवति ॥ ३४ ॥

**स० टी०**–एवं युद्धपरित्यागाद्धर्मत्यागक्षतिं पराम् ॥ उक्त्वेदानीं सतां निन्दाफलं दुःसहमुच्यते ॥१॥ देवर्ष्यादीनि भूतानि दीर्घकालामनर्थदाम् ॥ न धर्मात्मा न शूरोऽयमित्येवं हि परस्परम् ॥ २ ॥ अकीर्तिं कथयिष्यन्ति गुणैः संभावितस्य ते ॥ ननु स्वमृत्युसंदेहाद्रणे तद्वर्जनाय च ॥ ३ ॥ अकीर्तिरपि सोढव्या प्रियाः प्राणा हि देहिनाम् ॥ तथा च मृत्युभीतस्य किमकीर्त्येति चेच्छृणु ॥ ४ ॥ धर्मात्मा शूर इत्येवमादिभिः प्रवरैर्गुणैः ॥ लोके बहुमतस्यास्याधिका कीर्तिर्मृतेरपि ॥ ५ ॥ महादेवादिसंग्रामे त्वं च संभावितो यतः ॥ अतोऽप्यकीर्तिजं दुःखं जातु सोढुं न शक्ष्यसि ॥ ६ ॥ ३४ ॥

**भा० टी०**–किंच अकीर्तिमव्ययां दीर्घकालां धर्मात्मा शूर इत्येवमादिभिर्गुणैः संभावितस्य चाकीर्तिर्मरणादतिरिच्यते । तस्याकीर्तेर्मरणं वरमित्यर्थः ॥ ३४ ॥

**प० टी०**–किंच–**अकीर्तिमिति** । भूतानि लोकास्तेऽव्ययामाकल्पस्थायिनीमकीर्तिमपयशः कथयिष्यन्ति । यतो यादृशतादृशस्याकीर्तेर्भयं नास्ति । संभावितस्य पुरुषस्याकीर्तिर्मरणादप्यतिरिच्यतेऽतिशयं प्राप्नोति । जीवतो मरणसमय एव दुःखं भवत्यकीर्तिस्तु मरणानन्तरमपि भवतीत्यर्थः ॥ ३४ ॥

**रा० टी०**–अपकीर्तिं चावाप्स्यसीत्याह–**अकीर्तिं चेति** । अपि चाकीर्तिमपकीर्तिम् । अव्ययां शाश्वतीम् । अस्तु को दोष इत्यत आह–**संभावितस्येति** । लोके बहुमतस्यातिरिच्यते अधिका भवति ॥ ३४ ॥

**भयाद्रणादुपरतं मंस्यन्ते त्वां महारथाः ॥**
**येषां च त्वं बहुमतो भूत्वा यास्यसि लाघवम् ॥ ३५ ॥**

**त० टी०**–ननु नाहं युद्धात्कातरतया भीतो निवर्त्ते । किन्तु बन्धुस्नेहकारुण्यादतोऽकीर्तिनिमित्ताभावात्कथं मेऽकीर्तिं कथयिष्यन्तीति चेत्तत्राह–**भयादिति** । युद्धोद्योगात्पूर्वमेव नाहं युद्धं करिष्यामीति व्यवसायेनानुद्युक्तश्चेत्तर्ह्येवं सर्वे मन्येरन्, पूर्वं तु गराग्निदानकपटद्यूतसर्वस्वाहरणवननिर्यापणादिबहुपकारिधार्तराष्ट्रवधेच्छुः परशुरामाद्यजेयभीष्मादिभयात्तदधिकविद्यालाभाय तपःकरणगिरीशतोषणस्वर्गप्रयाणाद्यद्भुतकर्म कृत्वा सर्वान्वधिष्यामीति प्रतिज्ञापूर्वकं युद्धार्थमागत्य बहुशस्त्रास्त्रशौर्यतेजःपराक्रमैर्येषां त्वं बहुमतोऽर्जुनेन युद्धं भविष्यतीति हर्षेणागतास्ते महारथाः इदानीमुभयोः सेनयोर्मध्ये रथं मे स्थापयेति मां प्रेर्य रथे स्थित्वा सम्प्रति न्यस्तशस्त्रमश्रुव्याप्ताक्षं त्वां दृष्ट्वा भयाद्रणादुपरतं मंस्यन्ते । नहि भयं विना क्षत्रियाणां युद्धादुपरमः सम्भवतीति भावः । तस्माद्युद्धादुपरतो भीष्मद्रोणकर्णादिभ्यो लाघवं यास्यसि ॥ ३५ ॥

**म० टी०**–ननूदासीना मां निन्दन्तु नाम भीष्मद्रोणादयस्तु महारथाः कारुणिकत्वेन स्तोष्यन्ति मामित्यत आह–**भयादिति** । कर्णादिभ्यो भयाद्युद्धान्निवृत्तं न कृपयेति त्वां मंस्यन्ते भीष्मद्रोणदुर्योधनादयो महारथाः । ननु ते मां बहु मन्यमानाः कथं भीतं मंस्यन्त इत्यत आह–**येषामिति** । येषामेव भीष्मादीनां त्वं बहुमतो बहुभिर्गुणैर्युक्तोयमर्जुन इत्येवं मतः त एव महारथाः त्वां भयादुपरतं मंस्यन्त इत्यन्वयः । अतो भूत्वा युद्धादुपरत इति शेषः । लाघवम् अनादरविषयत्वं यास्यसि प्राप्स्यसि सर्वेषामिति शेषः । येषामेव त्वं प्राग्बहुमतोऽभूस्तेषामेव तादृशो भूत्वा लाघवं यास्यसीति वा ॥ ३५ ॥

**शं० टी०**–अकीर्तिमात्रमेव न भवति शूरास्त्वां लघूकरिष्यन्तीत्याह–**भयादिति** । महारथाः बाह्लीक-

भगदत्तसौमदत्तिद्रुपदादयः शूराः एवं दययोपरतं त्वां भीष्मेण द्रोणेन कर्णेन चान्यैर्वीरैर्योद्धुमशक्ततया तद्भयेन रणादुपरतोऽर्जुनो न तु दययेति मंस्यन्ते निश्चेष्यन्ति पूर्वं येषां त्वं बहुमतः शौर्यधैर्ययुद्धचातुर्यादिगुणैरुत्कृष्ट इति बहुमानं गमितः स त्वमिदानीं तेभ्य एव लाघवं रणभयात्पलायत इति लघुत्वमवमतिं यास्यसि। अकीर्तिः पारोक्षिकी तिरस्कृतिरवमतिर्लघुकृतिः अपारोक्षिकीति तयोर्भेदः ॥ ३५ ॥

श्री० टी०—किंच—भयादिति। येषां बहुगुणत्वेन त्वं पूर्वं संमतोऽभूस्त एव भयेन संग्रामात्त्वां निवृत्तं मन्येरन् ततश्च पूर्वं बहुमतो भूत्वा लाघवं यास्यसि ॥ ३५ ॥

स० टी०—ननु निन्दन्तु मां लोका उदासीनाः पृथग्जनाः॥ भीष्मद्रोणादयः शूरास्तोष्यन्त्येवेति चेच्छृणु ॥ १ ॥ शल्यकर्णादिशूरेभ्यो भयाद्युद्धात्पराङ्मुखम्॥ मंस्यन्ते त्वां न कृपया भीष्मद्रोणादयोऽपि ते ॥ २ ॥ बहु मन्यन्त एते मां जिष्णुं भीष्मादयो रणे ॥ कथं भीतं हि मंस्यन्त इत्याशङ्क्याह केशवः ॥ ३ ॥ येषां त्वं भीष्ममुख्यानां गुणैराढ्यतरो मतः॥ अभूस्तेषां परावृत्तो लघुतामेव यास्यसि ॥ ४ ॥ ३५ ॥

भा० टी०—न केवलमितरभूतान्येवाऽकीर्तिं कथयिष्यन्ति किंतु महारथा अपीत्याह—भयादिति। कर्णादिभयाद्युद्धान्निवृत्तं न कृपयेति चिन्तयिष्यन्ति बहुमतो बहुभिर्गुणैर्मतो भूत्वा लघुतां यास्यसि ॥ ३५ ॥

प० टी०—अथ संभावितत्वमेवाह—भयादिति। ते महारथास्त्वां भयान्निमित्तभूताद्रणात्संग्रामादुपरतं परावृत्तं मंस्यन्ते मन्येरन् न त्वस्मत्कृपयेति। ते के येषां वीराणां त्वं बहु यथा भवति तथा मतः संमतो भूत्वा लाघवं लघुत्वं यास्यसि प्राप्स्यसि ॥ ३५ ॥

रा० टी०—दयालुत्वान्निवृत्तोयमिति कीर्तिमेव कथयिष्यन्तीत्यत आह—भयादिति। मंस्यन्ते ज्ञास्यन्ते। महारथस्वरूपमुक्तं पूर्वाध्याये। मन्यन्तां ते ततः का हानिरित्यतआह—येषामिति। येषां महारथानां त्वं बहुमतो भूत्वासीः तेषां पुरत एव लाघवं यास्यसीत्यर्थः ॥ ३५ ॥

**अवाच्यवादांश्च बहून्वदिष्यन्ति तवाहिताः ॥**
**निन्दन्तस्तव सामर्थ्यं ततो दुःखतरं नु किम् ॥ ३६ ॥**

**त० टी०—न केवलं लाघवमात्रमपि त्वन्यदपि दुःखमित्याह—अवाच्येति। दुर्बलहृदयः पार्थोऽस्मच्छरैः कथमयं योद्धुं शक्नुयात् भीष्मादिभ्योऽन्यत्रैव यस्य सामर्थ्यमतोऽस्मत्सन्निधौ स्थातुमपि न समर्थ इति तव सामर्थ्यं निन्दन्तस्तवाहिताः कर्णदुर्योधनादयो राज्ञामग्रे बहूनवाच्यवादान्वदिष्यन्ति ॥ ३६ ॥**

म० टी०—ननु भीष्मादयो महारथा न बहु मन्यन्तां दुर्योधनादयस्तु शत्रवो बहु मंस्यन्ते मां युद्धानिवृत्त्या तदुपकारित्वादित्यत आह—अवाच्यवादानिति। तवासाधारणं यत्सामर्थ्यं लोकप्रसिद्धं तन्निन्दन्तस्तव शत्रवो दुर्योधनादयः अवाच्यान् वादान् वचनानर्हान् षण्ढतिलादिरूपानेव शब्दान्बहूननेकप्रकारान् वदिष्यन्ति न तु बहु मंस्यन्त इत्यभिप्रायः। ननु भीष्मद्रोणादिवधप्रयुक्तं कष्टतरं दुःखमसहमानो युद्धान्निवृत्तः शत्रुकृतसामर्थ्यनिन्दनादिदुःखं सोढुं शक्ष्यामीत्यत आह—ततस्तस्मान्निन्दाप्राप्तिदुःखात् किन्नु दुःखतरं ततोधिकं किमपि दुःखं नास्तीत्यर्थः ॥ ३६ ॥

शं० टी०—विद्याकुलशीलधर्मकर्मभिः प्रतिष्ठां गतस्याकीर्तिर्दुःखं ततोप्यधिकं दुःखमवमतिस्ततोप्यधिकतरं दुःखं प्रत्यक्षदूषणमिदमित्याह—अवाच्यवादानिति। अहिताः शत्रवो दुर्योधनकर्णविकर्णादयस्तव सामर्थ्यमत्रादृश्यमानं पौरुषं पराक्रमं च निन्दन्तः रणात्पलायितवतस्तव शौर्यं किमिति कुत्सयन्तः सन्त-

श्चावाच्यवादान् वक्तुमनर्हानवाच्यान् वादान् धिक्शब्दपूर्वकान् दूषणशब्दाननेकधा इतो वदिष्यन्ति ततः कर्णकठोरेभ्यो मर्मघातिभ्यो दूषणवचनेभ्यो दुःखतरं क्षत्रियस्याभिमानिनः शूरस्य किं नु किमस्ति न ततोन्यद्दुःखतरमस्तीत्यर्थः ॥ ३६ ॥

**श्री० टी०**–किंच–अवाच्येति । अवाच्यान्वादान्वचनानर्हान् शब्दांस्तवाहितास्त्वच्छत्रवो वदिष्यन्ति ॥

**स० टी०**–ननु भीष्मादयः शूरा मा मन्यन्तां गुणैर्युतम् ॥ शत्रवो बहु मंस्यन्ते मां तु दुर्योधनादयः ॥ १ ॥ यतो युद्धनिवृत्त्यैषा प्राणरक्षेति चेच्छृणु ॥ तव लोकप्रसिद्धं यत्सामर्थ्यं शत्रवस्तव ॥ २ ॥ निन्दन्तस्ते वदिष्यन्ति बहुशब्दांश्च निन्दितान् ॥ एते षण्ढतिला एवमादीन्वक्तुमयोग्यकान् ॥ ३ ॥ किं ते ततोऽधिकं दुःखमिह लोके परत्र वा ॥ ४ ॥ ३६ ॥

**भा० टी०**–न केवलमेतावदेव मंस्यन्ते अपि तु षण्ढतिल इत्यादिरूपानवाच्यवादानपि वदिष्यन्ति यतोऽहिता इत्याह–अवाच्येति । वक्तुमयोग्यान् वादान् वचनानि अहिताः शत्रवः । ततो निन्दाप्राप्तेर्दुःखात्कष्टतरं दुःखं नास्तीत्यर्थः ॥ ३६ ॥

**प० टी०**–अवाच्यवादानिति । तवाहिताः सिद्धवैरिणो दायादा अवाच्यान् वचनानर्हानपवादान् वदिष्यन्ति । किं भूतास्तव सामर्थ्यं निन्दन्तस्ततोऽपि दुःखतरं किं नु ॥ ३६ ॥

**रा० टी०**–न केवलं लाघवप्राप्तिस्तवाहिताः शत्रवः अवाच्यवादान्वचनानर्हशब्दान्बहून्वदिष्यन्ति । ततः शत्रुकृतनिन्दादिश्रवणात् दुःखतरं अतिशयितदुःखं किं नु । न किमपीत्यर्थः ॥ ३६ ॥

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम् ॥**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः ॥ ३७ ॥**

**त० टी०**–अतः सामर्थ्यवतो वीरस्योभयलोकरक्षणाय परैर्युद्धकरणमेव श्रेय इत्याह–हत इति । धर्मयुद्धे शत्रुभिर्हतश्चेत्स्वर्गं प्राप्स्यसि तान् जित्वा वा महीं भोक्ष्यसे, एतेन ' न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ' इति संशयो निरस्तः । यत उभयथाऽपि लाभ एव । तस्माद्युद्धाय युद्धं कर्तुं कृतनिश्चयः सन्नुत्तिष्ठ ॥ ३७ ॥

**म० टी०**–ननु तर्हि युद्धे गुर्वादिवधवशान्मध्यस्थकृता निन्दा ततो निवृत्तौ तु शत्रुकृता निन्देत्युभयतः पाशारज्जुरित्याशङ्क्य जये पराजये च लाभध्रौव्याद्युद्धार्थमेवोत्थानमावश्यकमित्याह–हतो वेति । स्पष्टं पूर्वार्धम् । यस्मादुभयथापि ते लाभस्तस्मात् जेष्यामि शत्रून् मरिष्यामि वेति कृतनिश्चयः सन् युद्धायोत्तिष्ठ अन्यतरफलसन्देहेपि युद्धकर्तव्यताया निश्चितत्वात् । एतेन ' न चैतद्विद्मः कतरन्नो गरीयः ' इत्यादि परिहृतम् ॥ ३७ ॥

**शं० टी०**–ननु युद्धे कृते गुर्वादिवधवशाच्छिष्टनिन्दा स्यादकृते शत्रुनिन्दा स्यादुभयथापि निन्दादुःखमेव फलाय भवति न ततोन्यदस्तीत्याशङ्कायां न कृते युद्धे यागवद्युद्धस्य स्वधर्मत्वाद्गुर्वादिहिंसायाः पशुहिंसावत्तदन्तःपातित्वान्न शिष्टनिन्दा नापि च शत्रुनिन्दास्ति जयेप्यजये च युद्धेन इष्टफलमस्तीत्याह–हतो वेति । युद्धे कर्णादिभिर्हतो वा निहतश्च त्वं स्वर्गं प्राप्स्यसि रिपून् जित्वा वा जितवांश्चेन्निष्कण्टकां महीं भोक्ष्यसे यस्माद्युद्धमुभयथा फलायैव भवति न तु विफलाय तस्माद्युद्धायैव कृतनिश्चयः सन् हे कौन्तेय ! उत्तिष्ठ सन्नद्धो भवेत्यर्थः ॥ ३७ ॥

**श्री० टी०**–यच्चोक्तम् ' न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः ' इति तत्राह–हतो वेति । पक्षद्वयेऽपि तव लाभ एवेत्यर्थः ॥ ३७ ॥

स० टी०—ननु तद्यकृते युद्धे निन्दा शत्रुकृता भवेत् ॥ कृते मध्यस्थनिन्दा स्याद्भीष्मादीनां वधादपि ॥ १ ॥ इत्येवं स्यादुभयतः पाशारज्जुर्ममेति चेत् ॥ स्वधर्मकरणान्निन्दा न मध्यस्थकृता भवेत् ॥ २ ॥ नहि स्वधर्मनिष्ठानां निन्दा कुत्रापि काचन ॥ जये पराजये वा ते लाभध्रौव्याद्रणाय भोः ॥ ३ ॥ उत्थातुमुचितं तस्मादुत्तिष्ठ न च ते क्षतिः ॥ जेष्यामि वा मरिष्यामीत्येवं कृत्वा विनिश्चयम् ॥४॥३७॥

भा० टी०—विपक्षे दोषमुक्त्वा युद्धप्रवृत्तौ सर्वथा लाभ एवेत्याशयेनाह—हत इति । हतः कर्णादिभिः जित्वा कर्णादीन् यत एवं तस्मात् शत्रून् जेष्यामि मरिष्यामीति निश्चयं कृत्वोत्तिष्ठ कौन्तेयेति संबोधयन् शत्रून् जित्वा राज्यलाभेनावश्यं त्वया कुन्त्यै सुखं प्रदेयमिति द्योतयति ॥ ३७ ॥

प० टी०—ननु मरणवत एव स्वर्गप्राप्तिश्रवणान्न तु जयवतो जीवत इत्याह—हत इति । रणे मृतस्य स्वाराज्यं जीवतः साम्राज्यमित्यर्थः ॥ ३७ ॥

रा० टी०—यच्चोक्तम् 'न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः' इति । जयः संदिग्ध इति पक्षद्वयेऽप्यहानिरित्याह—हतो वेति । 'जित्वा वा भोक्ष्यसे महीम्' इत्यत्र स्वर्गं च पश्चात्प्राप्स्यसीत्यपि ध्येयम् "ये युध्यन्ते प्रधनेषु शूरासो ये तनुत्यजः । ये वा सहस्रदक्षिणास्तांश्चिदेवापि गच्छतात्" इति श्रुतौ ये शूराः प्रधनेषु युद्धेषु युध्यन्ति ये च तत्र म्रियन्ते ये च सहस्रसंख्याकदक्षिणादातारः तानेवायं प्रेतोऽपि गच्छतादिति यमं प्रति प्रेतस्य स्वर्गप्रार्थनात् । तत्र च ये युध्यन्ते तान्प्रेतो गच्छतादिति युद्धशूराणां जयेऽपि स्वर्गप्राप्तेरत्र श्रुताववगमात् । तस्मात्पक्षद्वयेऽपि फलभावाद्युद्धाय कृतनिश्चयः सन्नुत्तिष्ठ सन्नद्धो भवेत्यर्थः ॥ ३७ ॥

## सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ॥
## ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ ३८ ॥

**त० टी०—यदुक्तं 'पापमेवाश्रयेदस्मान्हत्वैतानाततायिनः' इति तस्योत्तरमाह—सुखदुःखे इति । यद्यपि स्वधर्मभूतयुद्धे शस्त्रपातादिनिमित्ते सुखदुःखे अवर्जनीये तथापि देहस्यैव ते नोक्तस्वभावस्य देहविलक्षणस्यात्मन इति मत्वा ते समे कृत्वा तद्धेतुभूतौ लाभालाभौ जयाजयौ च समौ कृत्वा स्वर्गादिफलेऽभिसन्धिरहितः सन् युद्धाय युज्यस्व । केवलं स्वधर्मानुष्ठानबुद्ध्या युद्धमारभस्व । एवं विवेकबुद्ध्या एतान्सर्वान्हत्वा पापं नावाप्स्यसि, प्रत्युत स्वधर्माकरणजन्यपापात्प्रमोक्ष्यसे ॥ ३८ ॥**

म० टी०—नन्वेवं स्वर्गमुद्दिश्य युद्धकरणे तस्य नित्यत्वव्याघातः राज्यमुद्दिश्य युद्धकरणे त्वर्थशास्त्रत्वाद्धर्मशास्त्रापेक्षया दौर्बल्यं स्यात् ततश्च काम्यस्याकरणे कुतः पापं दृष्टार्थस्य गुरुब्राह्मणादिवधस्य कुतो धर्मत्वं तथा चाथ चेदिति श्लोकार्थो व्याहत इति चेत् तत्राह—सुखदुःखे इति । समताकरणं रागद्वेषराहित्यं सुखे तत्कारणे लाभे तत्कारणे जये च रागमकृत्वा । एवं दुःखे तद्धेतावलाभे तद्धेतावपजये च द्वेषमकृत्वा ततो युद्धाय युज्यस्व संनद्धो भव । एवं सुखकामनां दुःखनिवृत्तिकामनां वा विहाय स्वधर्मबुद्ध्या युध्यमानो गुरुब्राह्मणादिवधनिमित्तं नित्यकर्माकरणनिमित्तं च पापं न प्राप्स्यसि । यस्तु फलकामनया करोति स गुरुब्राह्मणादिवधनिमित्तं पापं प्राप्नोति यो वा न करोति स नित्यकर्माकरणनिमित्तम् । अतः फलकामनामन्तरेण कुर्वन्नुभयविधमपि पापं न प्राप्नोतीति प्रागेव व्याख्यातोऽभिप्रायः । 'हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्' इति त्वानुषङ्गिकफलकथनमिति न दोषः । तथा चापस्तम्बः स्मरति

'तद्यथाम्रे फलार्थे निमित्ते ( निर्मिते ) छायागन्ध इत्यनूत्पद्यते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नोचेदनूत्पद्यन्ते न धर्महानिर्भवति ' इति । अतो युद्धशास्त्रस्यार्थशास्त्रत्वाभावात्पापमेवाश्रयेदस्मानित्यादि निराकृतं भवति ॥ ३८ ॥

**शं० टी०**–ननु 'हतो वा प्राप्स्यसि स्वर्गम्' इति वाक्येन युद्धस्य ऐहिकामुष्मिकसुखसाधनत्वमेव प्रतीयते न तु ' धर्म्याद्धि युद्धाच्छ्रेयोन्यत् ' इत्युक्तन्यायेन श्रेयःसाधनता विद्यते तत इन्द्रियारामाणामेव कर्तव्यं युद्धं यतः स्वर्गादिसुखहेतुत्वं युद्धस्य दृश्यते ततो बन्धकत्वान्न परमार्थापेक्षावतामित्याशङ्कायां न । भावनाभेदादत्र तत्फलभेदोप्यस्ति यथा ज्योतिष्टोमः स्वर्गकामनया कृतः स्वर्गहेतुरकामनया चित्तशुद्धिहेतुः तद्वद्युद्धं प्रजापरिपालनं दानं च कामाऽकामाभ्यां स्वर्गादिफलाय चित्तशुद्धये च भवति श्रेयस्कामश्चेत्त्वं युद्धकामनयैव कुर्वित्याह–**सुखदुःखे इति** । लाभालाभौ जयाजयौ च तत्फलभूते सुखदुःखे च समे कृत्वा समबुद्धिर्भूत्वा लाभादीनां सिद्ध्यसिद्ध्योर्हर्षविषादावकृत्वेत्यर्थः । मद्भक्त्या विधिविधेयो भूत्वा ततो विध्युक्ताय युद्धाय स्वधर्मानुष्ठानाय युज्यस्व यतस्व एवं विध्युक्तं यत्तदीश्वरार्पणबुद्ध्या करिष्यामीत्येवं निश्चयेन युद्धं कुर्वन् पापं नावाप्स्यसि " ब्रह्मणे ब्राह्मणमालभेत " इति श्रुत्युक्ते नरमेधे ब्राह्मणमालभ्य कर्ता यथा पापं नाप्नोति तथा " ये युध्यन्ते प्रधनेषु" इति श्रुत्युक्ते स्वधर्मे युद्धे गुर्वादीन् हत्वा गुर्वादिवधजं पापं नरमेधिवन्नावाप्स्यसीत्यर्थः ॥ ३८ ॥

**श्री० टी०**–यदप्युक्तं पापमेवाश्रयेदस्मानिति तत्राह–**सुखदुःख इति** । सुखदुःखे समे कृत्वा तथा तयोः कारणभूतौ यौ लाभालाभावपि तयोरपि कारणभूतौ जयाजयावपि समौ कृत्वा एतेषां समत्वे कारणं हर्षविषादराहित्यम् । युज्यस्व सन्नद्धो भव । सुखाद्यभिलाषं हित्वा स्वधर्मबुद्ध्या युद्ध्यमानः पापं न प्राप्स्यसीत्यर्थः ॥ ३८ ॥

**स० टी०**–तत्र स्वधर्म इत्येवं युद्ध्यमानस्य ते परम् ॥ उपदेशं शृणु त्वं मे सुखदुःखे समे इति ॥१॥ सुखे तत्कारणे लाभे तन्निमित्ते जयेऽपि च ॥ अकृत्वा रागमेवं च दुःखे तत्कारणे क्षतौ ॥ २ ॥ तन्निमित्तेऽजये चाप्यकृत्वा द्वेषं ततः परम् ॥ युद्धाय भव सन्नद्धो नैवं पापमवाप्स्यसि ॥ ३ ॥ फलाभिलाषया कुर्वन्गुरुविप्रवधादिकम् ॥ प्राप्नोति किल्बिषं घोरं तन्निमित्तमयं पुमान् ॥ ४ ॥ विना फलाभिलाषं तु धर्म इत्येवमाचरन् ॥ नैवं पापमवाप्नोति महेशाज्ञानुपालनात् ॥ ५ ॥ हतो वेत्यादिना प्रोक्तं फलं तत्त्वानुषङ्गिकम् ॥ न काम्यं कर्म संग्रामः किं तु नित्यं स्वधर्मतः ॥ ६ ॥ ३८ ॥

**भा० टी०**–ननु गुर्वादिवधार्थे प्रवृत्तस्य पापावाप्त्या कुतः स्वर्गप्राप्तिः । जित्वा वा कुतो भोगसुखम् । निन्दया व्याप्तत्वात्तेषामित्याङ्क्य निष्कामस्य समदृष्टेः स्वधर्मबुद्ध्या प्रवृत्तस्य ते पापादिप्राप्तिर्नास्तीत्याशयेनाह–**सुखेति** । सुखदुःखे समे कृत्वा सुखे रागं दुःखे द्वेषं चाकृत्वा तथा तत्साधनीभूतौ लाभालाभौ तत्साधनीभूतौ जयाजयौ च समौ कृत्वा ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि । तथा चाग्नीषोमीयहिंसाविधायकवचनवत् युद्धहिंसाविधायकमपि धर्मशास्त्रविशेषवचनम् ' न हिंस्यात्सर्वाभूतानि ' इत्यस्य सामान्यशास्त्रस्य बाधकम् । अतः पापावाप्तेरभावात् । युद्धप्रवृत्तौ सर्वथाऽपि लाभ एवेति ॥ ३८ ॥

**प० टी०**–अथ धर्म्ययुद्धस्वरूपमाह–**सुखदुःखे इति** । सुखदुःखे समे कृत्वा तथा तयोः कारणीभूतौ लाभालाभौ जयाजयौ समौ कृत्वा हर्षविषादरहितो भूत्वा युध्यस्वेत्यर्थः । एवममुना प्रकारेण युद्धं कृत्वा पापं न प्राप्स्यसि ॥ ३८ ॥

**रा० टी०**–यच्चोक्तं पापमेवाश्रयेदस्मानिति तत्राह–**सुखेति** । यथा दुःखमनुपादेयं तथा वैषयिकसुख-

मप्यनुपादेयमित्यनुपादेयत्वेन दुःखसमं सुखं कृत्वेत्यर्थः । लाभालाभावित्यादावपि समावित्यनुषङ्गः । अनुपादेयत्वेनालाभसमं लाभं कृत्वेत्यर्थः । जयाजयावित्यत्राप्येवमर्थो ध्येयः । सुखाद्यभिलाषं हित्वा भगवत्पूजारूपोऽयं स्वधर्म इति बुद्ध्वेति यावत् । युद्धाय युज्यस्व युङ्क्ष्व । ततो भगवद्भक्तिपूर्वकं स्वधर्मतयानुष्ठानात्पापं नैवाप्स्यसि । प्रत्युत पुण्यमेवाप्स्यसीत्यर्थः ॥ ३८ ॥

**एषा तेऽभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ॥**
**बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि ॥ ३९ ॥**

**त० टी०**–एवं देहाद्विविक्तात्मतत्त्वयाथात्म्यज्ञानमुपदिश्य तदर्जुनस्य हृद्यदृढभूतं ज्ञात्वा नहि साधनमृते तत्त्वज्ञानं स्थिरीभवतीति दर्शयन्साधनानुष्ठानदार्ढ्यायोक्तमनुवदन् तत्साधनभूतं कर्मयोगं वक्तुं प्रस्तौति–एषेति । एषा 'अशोच्यानन्वशोचस्त्वम्' इत्यारभ्य 'तस्मात्सर्वाणि भूतानि' इत्यन्तैः श्लोकैः सांख्ये सम्यक् ख्यायते प्रकथ्यते तत्त्वमनयेति संख्याऽध्यात्मशास्त्रजा बुद्धिस्तयाऽवधारणीयं तत्त्वं साङ्ख्यं तस्मिन्विषये बुद्धिरभिहिता निरूपिता । तथापि ( तव ) तत्साधनानुष्ठानाभावात्त्वय्यस्थिरेव लक्ष्यतेऽतो योगे निःसङ्गतया भगवदाराधनात्मके कर्मयोगे तु तद्भिन्नां तत्साधनभूतामिमां सुखदुःखे समे कृत्वेत्यनन्तरमेव सङ्क्षेपेणोक्तामग्रे विस्तरेण वक्ष्यमाणां शृणु । हे पार्थ शुद्धान्तःकरणायाः पृथायाः पुत्र । यया बुद्ध्या युक्तस्त्वं कर्मबन्धं कर्मणा बन्धभूतं संसारं प्रहास्यसि प्रकर्षेण त्यक्ष्यासि ॥ ३९ ॥

**म० टी०**–ननु भवतु स्वधर्मबुद्ध्या युध्यमानस्य पापाभावस्तथापि न मां प्रति युद्धकर्तव्यतोपदेशस्तवोचितः 'य एनं वेत्ति हन्तारम्' इत्यादिना 'कथं स पुरुषः पार्थ कं घातयति हन्ति कम्' इत्यनेन विदुषः सर्वकर्मप्रतिक्षयात् नह्यकर्त्रभोक्तृशुद्धस्वरूपोहमस्मि युद्धं कृत्वा तत्फलं भोक्ष्य इति च ज्ञानं संभवति विरोधात् ज्ञानकर्मणोः समुच्चयासंभवात्प्रकाशतमसोरिव अयं चार्जुनाभिप्रायो'ज्यायसी चेत्' इत्यत्र व्यक्तो भविष्यति । तस्मादेकमेव मां प्रति ज्ञानस्य कर्मणश्चोपदेशो नोपपद्यते इति चेत् न' विद्वदविद्वदवस्थाभेदेन ज्ञानकर्मोपदेशोपपत्तेरित्याह भगवान्–एषेति । एषा नत्वेवाहमित्याद्येकविंशतिश्लोकैस्ते तुभ्यमभिहिता साङ्ख्ये सम्यक् ख्यायते सर्वोपाधिशून्यतया प्रतिपाद्यते परमात्मतत्त्वमनयेति सङ्ख्योपनिषत् तयैव तात्पर्यपरिसमाप्त्या प्रतिपाद्यते यः स साङ्ख्यः औपनिषदः पुरुष इत्यर्थः । तस्मिन् बुद्धिस्तन्मात्रविषयं ज्ञानं सर्वानर्थनिवृत्तिकारणं त्वां प्रति मयोक्तं नैतादृशज्ञानवतः क्वचिदपि कर्मोच्यते तस्य कार्यं न विद्यत इति वक्ष्यमाणत्वात् । यदि पुनरेवं मयोक्तेपि तवैषा बुद्धिर्नोदेति चेच्चित्तदोषात्तदा तदपनयेनात्मतत्त्वसाक्षात्काराय कर्मयोग एव त्वयानुष्ठेयः । तस्मिन्योगे कर्मयोगे तु करणीयामिमाम् 'सुखदुःखे समे कृत्वा' इत्यत्रोक्तां फलाभिसन्धित्यागलक्षणां बुद्धिं विस्तरेण मया वक्ष्यमाणां शृणु । तुशब्दः पूर्वबुद्धेर्योगविषयत्वव्यतिरेकसूचनार्थः । तथा च शुद्धान्तःकरणं प्रति ज्ञानोपदेशोऽशुद्धान्तःकरणं प्रति कर्मोपदेश इति कुतः समुच्चयशङ्कया विरोधावकाश इत्यभिप्रायः । योगविषयां बुद्धिं फलकथनेन स्तौति–यया व्यवसायात्मिकया बुद्ध्या कर्मसु युक्तस्त्वं कर्मनिमित्तं बन्धं आशयाऽशुद्धिलक्षणं ज्ञानप्रतिबन्धं प्रकर्षेण पुनः प्रतिबन्धानुत्पत्तिरूपेण हास्यसि त्यक्ष्यासि । अयं भावः कर्मनिमित्तो ज्ञानप्रतिबन्धः कर्मणैव धर्माख्येनापनेतुं शक्यते । "धर्मेण पापमपनुदति" इति श्रुतेः श्रवणादिलक्षणो विचारस्तु कर्मात्मकप्रतिबन्धरहितस्यासंभावनादिप्रतिबन्धं दृष्टद्वारेणापनयतीति न कर्मबन्धनिराकरणायोपदेष्टुं शक्यते । अतोत्यन्तमलिनान्तःकरणत्वाद्बहिरङ्गसाधनं कर्मैव त्वयानुष्ठेयं नाधुना श्रवणादियोग्यतापि तव जाता दूरे तु ज्ञानयोग्यतेति । तथा च वक्ष्यति 'कर्मण्येवाधिकारः' इति ।

एतेन साङ्ख्यबुद्धेरन्तरङ्गसाधनं श्रवणादि विहाय बहिरङ्गसाधनं कर्मैव भगवता किमित्यर्जुनायोपदिश्यत इति निरस्तम् । कर्मबन्धं संसारमीश्वरप्रसादनिमित्तज्ञानप्राप्त्या प्रहास्यसीति प्राचां व्याख्याने त्वध्याहारदोषः कर्मपदवैयर्थ्यं च परिहर्तव्यम् ॥ ३९ ॥

शं० टी०—ननु 'वेदाविनाशिनं नित्यम्' इत्यादिना ब्रह्मविदो न किंचित्कर्तव्यमस्तीत्युपपाद्येदानीं स्वधर्ममपि चेत्यादिना कर्म कर्तव्यमिति त्वया पुनः कर्म विधीयते दुःखभूयिष्ठस्य कर्मणः करणापेक्षया कर्ता करणं कार्यं च सर्वं मिथ्यैवेति कर्म सर्वं संन्यस्य तूष्णीमवस्थानमेव सुखमिति चेत्सत्यमेवंविधज्ञानमेवाहंममेत्यादि संसारभ्रमविध्वंसकं भवति तथापि तदारूढविषयं न त्वारुरुक्षुविषयमिति मुमुक्षूणां कर्मतत्संन्यासमार्गपरिज्ञानाय कर्मसंन्यासकर्मयोगयोर्विषयविभागं सूचयितुं कर्मानुष्ठानप्रकारं च बोधयितुमिदमाह—एषेति । साङ्ख्ये यया तदक्षरमधिगम्यत इति ब्रह्मविद्भिः ऋषिभिः सम्यक् ख्यायते पठ्यत इति सङ्ख्या परविद्या तया संख्यया "यत्तदद्रेश्यमग्राह्यम्" इत्यादिना प्रतिपाद्यत इति साङ्ख्यं निर्विशेषं परं ब्रह्म तस्मिन् साङ्ख्ये ब्रह्मणि विषये या बुद्धिरभिहिता 'न जायते म्रियते' इत्यादिना परं ब्रह्म विषयीकृत्य पूर्वं यज्ज्ञानं ते तुभ्यमुपदिष्टं सैषा बुद्धिः तज्ज्ञानमारूढस्यैवाश्रयणीयं नत्वारुरुक्षोः आरुरुक्षोस्तव चित्तशुद्ध्यै श्रद्धयेश्वरार्पणबुद्ध्या निरभिमानेनाकामनया च सुखदुःखादिषु समबुद्ध्या च कर्मयोग एव कर्तव्यः न तु ज्ञानयोगस्तत्रैवं कर्तव्ये योगे कर्मयोगे त्विमां वक्ष्यमाणलक्षणां बुद्धिं ज्ञानं शृणु हे पार्थ! यया बुद्ध्या युक्तः समन्वितो वक्ष्यमाणोपदेशप्रकारेण कर्मयोगे वर्तमानः सन् त्वं कर्मबन्धं जन्ममृत्युजरादिभिः पुनःपुनः पुरुषं बध्नाति योजयतीति बन्धः कर्मैव बन्धः कर्मबन्धस्तं प्रहास्यसि बन्धकेभ्यः सर्वेभ्य कर्मभ्यो वैदिककर्मानुष्ठानसंभावितचित्तशुद्ध्युत्पन्नाऽकर्त्राऽऽत्मविज्ञानबलेन निष्क्रान्तो भविष्यसीत्यर्थः । नन्वीश्वर एव कर्ता कारयिता कर्मणां फलभोक्ता चेत्यध्यवसायात्मिकयैव बुद्ध्या कर्मबन्धप्रहाणे सति किमकर्त्रात्मज्ञानेन कर्मबन्धान्मुक्तो भविष्यसीति मध्ये कर्मबन्धस्यात्मज्ञाननिवर्त्यत्वकल्पनयेति चेद्भवानत्र प्रष्टव्यः । किं कर्मणामीश्वरार्पणमात्रेण कर्मबन्धनिवृत्तिरुच्यते उतेश्वर एव कर्ता कारयितेत्युक्तिमात्रेण वा कर्मबन्धनिवृत्तिरिति । नाद्यः तावन्मात्रेण नैष्कर्म्यासंभवात् । 'नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः' इति परमेश्वरस्य भक्तैर्दत्तसुकृतदुष्कृतादेरनादानस्मरणादङ्गीकृतेप्यस्मिन् पक्षे शतकोटिब्रह्मकल्पेषु कृतानामनर्पितानां सुकृतादिकर्मणां निवृत्त्यसंभवाच्च । भक्तेरिदानींतनत्वात्तेषां तत्समर्पणायोगाद्यदा जन्मारब्धं तदारभ्यास्त्येव भक्तिरिति चेन्न तथात्वे जन्मान्तर एव तव मुक्तिप्रसङ्गात् 'लोकत्रयाधिपतिमप्रतिमप्रभावमीषत्प्रणम्य शिरसा प्रभविष्णुमीशम् । जन्मान्तरप्रलयकल्पसहस्रजातमाशु प्रणाशमुपयाति नरस्य पापम्' इति सकृत्प्रणतेः संसारमहासागरतारकमित्यादिभक्तवाक्यानामप्रामाण्यप्रसंगाच्च तत्रापि च पापस्यैव नाशो न तु पुण्यस्य । न द्वितीयः 'अयुद्धेन हतो बाली तस्येदं कर्मणः फलम्' इति स्वकृतकर्मण एवापरिहार्यत्वे ईश्वरस्य परकृतकर्मपरिहारायोगात्ततोऽविक्रियात्मविज्ञानादेव पुरुषस्य सर्वकर्मनिवृत्तिर्वक्तव्या । तथा च श्रुतिः "सर्वं पाप्मानं तरति क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे" इत्यादि । तर्हि 'बुद्ध्या युक्तो यया पार्थ!' इति बचनस्य का गतिरिति चेत्तस्य फलाभिसन्धिराहित्येन कृतं कर्म बन्धाय न भवतीति कर्मस्तुत्या मुमुक्षुभिर्निष्कामत्वेन चित्तशुद्ध्यै कर्म कर्तव्यमिति कर्मविधिपरत्वमेव गतिरिति ब्रूमस्ततोऽविक्रियात्मविज्ञानादेव कर्मबन्धनिवृत्तिरिति सिद्धम् ॥ ३९ ॥

श्री० टी०—उपदिष्टं ज्ञानयोगमुपसंहरंस्तत्साधनं कर्मयोगं प्रस्तौति—एषा त इति । सम्यक् ख्यायते प्रकाश्यते वस्तुतत्त्वमनयेति संख्या सम्यक् ज्ञानं तस्मिन् प्रकाशमानमात्मतत्त्वं सौख्यं तस्मिन्करणीया बुद्धिरेषा तवाभिहिता । एवमभिहितायामपि साङ्ख्यबुद्धौ तव चेदात्मतत्त्वमपरोक्षं न संभवति तर्ह्यन्तःकरणशु-

द्विद्वाराऽऽत्मतत्त्वापरोक्षार्थं कर्मयोगे त्विमां बुद्धिं शृणु यया बुद्धया युक्तः परमेश्वरार्पितकर्मयोगेन शुद्धान्तःकरणः सन् तत्प्रसादप्राप्तापरोक्षज्ञानेन कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ॥ ३९ ॥

**स० टी०**—ननु धर्मधिया मास्तु युद्धयमानस्य मे शुभम् ॥ तथापि युद्धकार्यत्वोपदेशस्तेन मां प्रति ॥१॥ योग्यो यस्मात्पुरा ज्ञस्य कर्माक्षेपस्त्वयोदितः ॥ नह्यकर्तृस्वरूपोऽहमिति ज्ञाने पुनर्भवेत् ॥ २ ॥ युद्धं कृत्वा फलं मोक्ष्य इति ज्ञानं विरोधतः ॥ तस्मात्ते यौगपद्येन मां प्रति ज्ञानकर्मणोः ॥ ३ ॥ उपदेशः कथं योग्यः स्यादित्यत्राह माधवः ॥ ज्ञानकर्मोपदेशः स्यादवस्थाभेदतो यतः ॥ ४ ॥ एकं प्रत्यपि शास्त्रीयां व्यवस्थां शृण्वतोऽर्जुन ॥ न त्वेवेत्यत आरभ्य तुभ्यमेषा पुरोदिता ॥ ५ ॥ तत्त्वं संख्यायते सर्वोपाधिशून्यतयानया॥ संख्योपनिषदे तस्यां प्रतिपाद्यः परः पुमान् ॥ ६ ॥ सांख्यस्तन्मात्रविषयं ज्ञानमज्ञाननाशकम् ॥ मयोक्तं त्वां प्रतीत्येवं ज्ञानिनः कर्म नोच्यते ॥ ७ ॥ यद्येवं ते मदुक्तेऽर्थे चित्तदोषान्न धीर्भवेत् ॥ तदा तद्दोषनाशार्थं तत्त्वज्ञानोदयाय च ॥ ८ ॥ कर्मयोगो ह्यनुष्ठेयस्त्वया धीशुद्धिकारकः ॥ तस्मिन्योगे तु कर्तव्यामिमां निष्कामशालिनीम् ॥ ९ ॥ सर्वत्र समतारूपां बुद्धिं त्वं विस्तराच्छृणु ॥ तुना बुद्धेः पुरोक्ताया भेदोऽस्याः सूच्यते धियः ॥ १० ॥ तेन शुद्धधियो ज्ञानं कर्माशुद्धधियः स्मृतम् ॥ यया निश्चयरूपिण्या बुद्धया युक्तः स्वकर्मसु ॥ ११ ॥ बन्धं कर्मनिमित्तं त्वमाशया शुद्धिलक्षणम् ॥ प्रतिबन्धं निजज्ञाने प्रकर्षेणैव हास्यसि ॥ १२ ॥ धर्माधर्माख्यकर्मैव बन्धं तं त्वं प्रहास्यसि ॥ ईशप्रसादतस्तत्त्वज्ञानलाभसुखेन वा ॥ १३॥३९॥

**भा० टी०**—एष उपदेशः शोकमोहापनयसाधनस्य आत्मतत्त्वज्ञानस्य प्रसङ्गे आगतः । लौकिको न्यायः स्वधर्मविद्भिः कैश्चिल्लोकैर्यथा स्वधर्मप्रतिबन्धकौ शोकमोहौ अकृत्वा स्वधर्मोऽनुष्ठीयते । तद्वत्त्वं स्वधर्ममपि चावेक्ष्य शोकमोहाभिभूतो विकम्पितुं नार्हसीति । अथ चैनमित्यादिवत् प्रासङ्गिकः स्वधर्ममपीत्याद्यष्टभिः श्लोकैरुक्तः । ननु समुच्चयतात्पर्येण परमार्थदर्शनस्येह प्रकृतत्वात् । तच्चोक्तं परमार्थदर्शनमुपसंहरन् तदुपायभूतां योगनिष्ठां चित्तशुद्धये वक्तुं प्रतिजानीते—एषेति । एषा ते तुभ्यमभिहिता कथिता साङ्ख्ये परमार्थवस्तुविवेकविषये बुद्धिर्ज्ञानं साक्षाच्छोकमोहादिसहेतुदोषनिवृत्तिकारणम् । योगे तु निःसङ्गतया द्वन्द्वप्रहाणपूर्वकमीश्वराराधनार्थे कर्मयोगे कर्मानुष्ठाने समाधियोगे च तत्प्राप्त्युपाये इमामनन्तरोच्यमानां बुद्धिं शृणु तां स्तौति—ययेति । यया बुद्ध्या योगविषयया युक्तः कर्मबन्धं कर्मैव धर्माधर्माख्यं बन्धस्तं प्रहास्यसि प्रकर्षेण त्यजसि । ननु योगविषयया बुद्ध्या कर्मबन्धस्य कुतो निवृत्तिर्नहि तत्त्वज्ञानमन्तरेण समूलं कर्म हातुं शक्यमिति चेत्सत्यम् । तथापीश्वरप्रसादनिमित्तज्ञानप्राप्तिद्वारेत्यभिप्रायः । द्वाराकथनं तु तत्साधनस्तुत्यर्थम् । पार्थेति संबोधयन् एतद्बुद्धियुक्तस्य मातृगर्भाप्राप्तिं सूचयति । यत्तु कर्मनिमित्तं बन्धमाशयाशुद्धिलक्षणं ज्ञानप्रतिबन्धं प्रहास्यसि । अयं भावः । कर्मनिमित्तो ज्ञानप्रतिबन्धः कर्मणैव धर्माख्येनापनेतुं शक्यते । श्रवणादिलक्षणविचारस्तु कर्मात्मकप्रतिबन्धरहितस्यासंभावनादिप्रतिबन्धं दृष्टद्वारेणापनयतीति न कर्मबन्धनिराकरणायोपदेष्टुं शक्यते इति । तन्न । स्वर्गनरकादिसाधनपुण्यपापप्रतिपादककर्मपदसंकोचे बन्धशब्दस्य प्रतिबन्धपरत्वे च कारणाभावात् । ननु एतद्बुद्ध्या धर्माधर्माख्यबन्धप्रहाणस्यासंभव एव कारणमिति चेन्न, ज्ञानप्राप्तिद्वारा तत्संभवस्योक्तत्वात् । असम्भावनादेरपि पापनिमित्तचित्ताशुद्धिमूलकत्वादत एव शुद्धचित्तस्य विद्याधरस्यासंभावनाद्यनुत्पत्तिर्वासिष्ठे उपाख्यायते । असम्भावनादिनिमित्तदुरितनिवृत्त्यर्थमेवादृष्टोत्पादको विवरणाचार्यैः श्रवणे विधिरङ्गीकृतः । अन्यथा प्राकृतप्रबन्धाद्यर्थेन दृष्टेनासंभावनादिनिरासः स्यात् तथा च वेदान्तश्रवणजेन पुण्येन पापनिवृत्त्या आत्मतत्त्वं सम्यगवगम्यते इति सर्वसंमतमनर्थकं भवेत् । एतेन कर्मबन्धं संसारमीश्वरप्रसादनिमित्तज्ञानप्राप्त्या प्रहास्यसि इति प्राचां व्याख्याने

त्वध्याहारदोषः कर्मपदवैयर्थ्यं च परिहर्तव्यमिति प्रत्युक्तम्। जन्मबन्धविनिर्मुक्ता इत्यत्र जन्मपदवत्कर्मपदस्यापि बन्धस्वरूपबोधनपरत्वेन सार्थक्यात्। भाष्ये अभिप्राय इत्युक्त्या तस्याभिप्रायकथनपरत्वेनाध्याहारदोषाभावात्। स्वेनापि 'बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते' इत्यत्र द्वारस्योक्तत्वाच्चेति दिक् ॥३९॥

प० टी०—अथोपदिष्टं ज्ञानयोगमुपसंहरन् स्वधर्ममपीत्युक्तत्वात्कर्मयोगं प्रशंसन्नाह—एषेति । सम्यक् ख्यायते प्रकाश्यत आत्मतत्त्वमनयेति संख्या सम्यग्ज्ञानं तस्मिन् प्रकाश्यमानमात्मतत्त्वं साङ्ख्यं तत्र साधनीभूता या बुद्धिरेषा त इति तुभ्यमभिहिता कथिता। एवं कथितायामपि साङ्ख्यबुद्धौ तव चेदात्मतत्त्वमपरोक्षं न भवति तर्ह्यन्तःकरणशुद्धिद्वारात्मतत्त्वमपरोक्षं कर्तुं कर्मयोगे त्विमां वक्ष्यमाणां बुद्धिं शृणु । यया बुद्ध्या कर्मात्मकं बन्धं प्रकर्षेण हास्यसि त्यक्ष्यसि ॥ ३९ ॥

रा० टी०—न त्वेवेत्यादिग्रन्थोक्तार्थोपसंहारपूर्वकं तत्सङ्गतत्वेनोत्तरप्रकरणारम्भं प्रतिजानीते—एषेति। अत्र साङ्ख्यशब्दो जीवेश्वरज्ञानपरः। 'न त्वं नेमे' इत्यादिना जीवस्य प्राधान्येन। तादर्थ्येन 'न त्वेवाहम्' इत्यादिनेश्वरस्येति द्वयोरपि प्रकृतत्वात्। बुद्धिशब्दश्च बुध्यतेऽनयेति करणव्युत्पत्त्या बोधजनकवाक्यपरः (क्पर:)। योगशब्दश्च युज्यते प्राप्यते फलमनेनेति करणव्युत्पत्त्योपायपरः। अयमर्थः। हे पार्थ! साङ्ख्ये जीवेश्वरस्वरूपज्ञानविषये तज्जननार्थमिति यावत्। एषा 'न त्वेवाहम्' इत्यारभ्य 'देही नित्यमवध्यः' इत्यन्ता बुद्धिः तदुभयस्वरूपबोधजनिका वाक् वाक्यानीति यावत् । ते तुभ्यमभिहिता उक्ता। योगे तज्ज्ञानहेतूपायविषये तूपायज्ञानार्थमिति यावत्। इमाम् 'त्रैगुण्यविषया' इत्यादिनाऽऽषष्ठसमाप्तिवक्ष्यमाणां बुद्धिं उपायबोधजनिकां वाचं वाक्यानीति यावत्। शृणु। श्रवणमात्रस्य विधिना विनापि संभवाच्छ्रुत्वा तत्र निष्ठां कुर्वित्यर्थः । अत्र वागभिहितेति यौगिकबुद्धिपदेन तदुक्तिर्नाविशदं वाङ्मात्रमुक्तं किंतु तदवबोधो यथोत्पद्येत तथोक्तमिति ज्ञापनायेति ध्येयम्। आदरजननाय योगं प्रशंसति—बुद्ध्येत्यादिसार्धश्लोकेन । यया मद्वाग्जन्यया बुद्ध्या ज्ञानोपायबुद्ध्या युक्तः सन् तदनुष्ठानद्वारा ब्रह्मसाक्षात्कारातिशयं प्राप्य कर्मबन्धं संसारं निःशेषतः प्रहास्यसि मुक्तो भविष्यसि ॥ ३९ ॥

**नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते ॥**
**स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ॥ ४० ॥**

**त० टी०—ननु "यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्या कर्मणां कृषिवत् क्षयिष्णुत्वाभिधानात्किञ्चिदङ्गवैगुण्ये प्रत्यवायसम्भवाच्च कुतः कर्मयोगस्य कर्मबन्धप्रहणनशक्तिरिति चेत्तत्राह—नेहेति। इह भगवदाराधनात्मके निष्कामकर्मणि अभिक्रमः प्रारम्भस्तस्य नाशो नास्ति, कृष्यादेरिव विघ्नबाहुल्येन नैष्फल्यं नास्तीत्यर्थः। आरब्धस्य च विच्छेदेऽपि प्रत्यवायो न विद्यते, भगवदाज्ञापालनबुद्ध्याऽनुष्ठिते प्रत्यवायासम्भवात्। अतोऽस्य निष्कामकर्मयोगस्य धर्मस्य स्वल्पमप्यनुष्ठानं महतो भयात्संसारात्त्रायते रक्षति ॥ ४० ॥**

म० टी०—ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्या विविदिषां ज्ञानं चोद्दिश्य संयोगपृथक्त्वन्यायेन सर्वकर्मणां विनियोगात्तत्र चान्तःकरणशुद्धेर्द्वारत्वादन्यान्प्रति कर्मानुष्ठानं विधीयते तत्र "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुतिबोधितस्य फलनाशस्य संभवात् ज्ञानं विविदिषां चोद्दिश्य क्रियमाणस्य यज्ञादेः काम्यत्वात्सर्वाङ्गोपसंहारेणानुष्ठेयस्य यत्किंचिदङ्गासंपत्तावपि वैगुण्योपपत्तेः। यज्ञेनेत्यादिवाक्यविहितानां च सर्वेषां कर्मणामेकेन पुरुषायुषपर्यवसानेऽपि कर्तुमशक्यत्वात् कुतः कर्मबन्धं प्रहास्यसीति फलप्रत्याशेत्यत आह भगवान्—नेहा-

**भिक्रमनाशोऽस्तीति ।** अभिक्रम्यते कर्मणा प्रारभ्यते यत्फलं सोभिक्रमस्तस्य नाशस्तद्यथेहेत्यादिना प्रतिपादितः इह निष्कामकर्मयोगे नास्ति ' एतत्फलस्य शुद्धेः पापक्षयरूपत्वेन लोकशब्दवाच्यभोग्यत्वाभावेन च क्षयासंभवात् वेदनपर्यन्ताया एव विविदिषायाः कर्मफलत्वाद्वेदनस्य चाव्यवधानेनाज्ञाननिवृत्तिफलजनकस्य फलमजनयित्वा नाशासंभवादिह फलनाशो नास्तीति साधूक्तम् । तदुक्तम् ' तद्यथेहेति या निन्दा सा फले न तु कर्मणि । फलेच्छां तु परित्यज्य कृतं कर्म विशुद्धिकृत् ' इति । तथा प्रत्यवायः अङ्गवैगुण्यनिबन्धन वैगुण्यमिह न विद्यते । तमितिवाक्येन नित्यानामेवोपात्तदुरितक्षयद्वारेण विविदिषायां विनियोगात् । तत्र च सर्वाङ्गोपसंहारनियमाभावात् । काम्यानामपि संयोगपृथक्त्वन्यायेन विनियोग इति पक्षेपि फलाभिसन्धिराहितत्वेन तेषां नित्यतुल्यत्वात् । न हि काम्यनित्याग्निहोत्रयोः स्वतः कश्चिद्विशेषोस्ति । फलाभिसन्धितदभावाभ्यामेव तु काम्यत्वनित्यत्वव्यपदेशः । इदं च पक्षद्वयमुक्तं वार्तिके ' वेदानुवचनादीनामैकात्म्यज्ञानजन्मने । तमेतमितिवाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् । तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः ' इति । तथा च फलाभिसन्धिना क्रियमाण एव कर्मणि सर्वाङ्गोपसंहारनियमात् । तद्विलक्षणे शुद्ध्यर्थे कर्मणि प्रतिनिध्यादिना समाप्तिसंभवान्नागमवैगुण्यनिमित्तः प्रत्यवायोऽस्तीत्यर्थः । तथा अस्य शुद्ध्यर्थस्य धर्मस्य तमेतमित्यादिवाक्यविहितस्य मध्ये स्वल्पमपि सङ्कल्पेतिकर्तव्यतया वा यथाशक्ति भगवदाराधनार्थं किञ्चिदप्यनुष्ठितं सत् महतः संसारभयात्त्रायते भगवत्प्रसादसम्पादनेनानुष्ठातारं रक्षति ' सर्वपापप्रसक्तोपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ' इत्यादिस्मृतेः । तमेतमिति वाक्ये समुच्चयविधायकाभावाच्च अशुद्धितारतम्यादेवानुष्ठानतारतम्योपपत्तेर्युक्तमुक्तं कर्मबन्धं प्रहास्यसीति ॥ ४० ॥

**शं० टी०**–उक्तमेव कर्मयोगं मुमुक्षुप्रवृत्त्यै स्तौति–**नेहेति** । इह मोक्षैकप्रयोजने उक्तकर्मयोगे नाभिक्रमनाशोस्ति अभिक्रम उपक्रमः कर्मण आरम्भस्तस्य नाशो नास्ति कृषिवाणिज्यादावारब्धे सति क्वचित्फलति क्वचिन्न फलति न तथेदं किं तु नियतफलवदेव भवति भुक्तिवत् । अत्र प्रत्यवायो न विद्यते ज्ञानाज्ञानकृतकर्मनियमादिलोपकृतो दोषः राजाज्ञावन्नानर्थाय कल्पते । अस्य भक्त्या क्रियमाणस्येश्वराराधनात्मकस्य वेदोक्तस्य धर्मस्य संबन्धि स्वल्पमपि केवलाग्निहोत्रं वा श्रौतमौपासनं वा स्मार्तं श्रद्धया कृतं कर्म चित्तशुद्धिजननद्वारा ज्ञानहेतुत्वात् कर्तारं महतो भयाज्जननमरणदुःखात्त्रायते रक्षत्यतो मुमुक्षोः श्रौतं स्मार्तं चोभयं वा श्रद्धाभक्तिभ्यामकामनयेश्वरप्रीत्यै यथाशक्त्यवश्यं कर्तव्यमीश्वरप्रीत्यर्थमेव कृतेन कर्मणा पुमान् तरति नान्यथेति सूचितं भवति ॥ ४० ॥

**श्री० टी०**–ननु कृष्यादिवत्कर्मणां कदाचिद्विघ्नबाहुल्येन फले व्यभिचारान्मन्त्राद्यङ्गवैगुण्येन च प्रत्यवायसंभवात्कुतः कर्मयोगेन कर्मबन्धप्रहरणं तत्राह–**नेहेति** । इह निष्कामकर्मयोगे अभिक्रमस्य प्रारम्भस्य नाशो निष्फलत्वं नास्ति प्रत्यवायश्च न विद्यते ईश्वरोद्देशेनैव विघ्नवैगुण्याद्यसंभवात् । किंच अस्य धर्मस्य स्वल्पमपि उपक्रममात्रमपि कृतं महतो भयात्संसारात् त्रायते रक्षति । ननु काम्यकर्मवत् किंचिदङ्गवैगुण्यादिना नैष्फल्यमस्येत्यर्थः ॥ ४० ॥

**स० टी०**–ननु तमेतमित्यादिश्रुत्या विविदिषा धियौ ॥ उभे उद्दिश्य संयोगपृथक्त्वात्सर्वकर्मणाम् ॥ १ ॥ विनियोगः कृतस्तत्र धीशुद्धेर्द्वारभावतः ॥ त्वया मां प्रत्यनुष्ठानं कर्मणां च विधीयते ॥ २ ॥ तद्यथेहेतिवाक्येन फलनाशस्य संभवात् ॥ बुभुत्सादिफलं कर्म काम्यं सर्वाङ्गसंयुतम् ॥ ३ ॥ अनुष्ठेयं च यत्किञ्चिदङ्गासंपत्तिहेतुकम् ॥ स्यात्तस्तत्र वैगुण्यं किंचैकेन नरेण च ॥ ४ ॥ यज्ञेनेत्यादिवाक्येन विहितानां हि कर्म-

णाम् ॥ सर्वेषामायुषोऽन्तेप्यशक्यत्वात्कर्तुमेव च ॥ ५ ॥ बन्धं प्रहास्यसीत्येवं फलस्याशा कुतो मम ॥ इत्याशङ्क्याह भगवान्नारायण उदारगीः ॥६॥ इह निष्कामकर्माख्ये श्रेयोमार्गे सुनिश्चिते ॥ अभिक्रमः कर्मफलं कर्मणारभ्यते यतः ॥ ७ ॥ तद्यथेहेतिवाक्येन तस्य नाशो नहीरितः ॥ एतत्फलस्य धीशुद्धेर्भोग्यत्वाभावतोऽपि च ॥ ८॥ तद्यथेहेति या निन्दा सा फले न तु कर्मणि ॥ फलेच्छां तु परित्यज्य कृतं कर्म विशुद्धिकृत् ॥ ९ ॥ प्रत्यवायोऽङ्गवैगुण्यं हेतुर्वैगुण्यमत्र न ॥ तमेतमितिवाक्येन नित्यानां विनियोगतः ॥१०॥ बुभुत्सां प्रति हेतुत्वं काम्यानामपि कर्मणाम् ॥ संयोगस्य पृथक्त्वाच्च फलसङ्गविवर्जनात् ॥ ११ ॥ एकस्य तूभयार्थत्वे स्यात्संयोगपृथक्त्वतः ॥ क्रत्वर्थस्य च यूपस्य पुमर्थत्वं यथेष्यते ॥ १२ ॥ नहि कश्चिद्विशेषोऽस्ति काम्यनित्याग्निहोत्रयोः ॥ स्वतः किंतु फलेच्छाया भावाभावकृता भिदा ॥ १३ ॥ इदं पक्षद्वयं न्यस्तं वार्तिके श्रीसुरेश्वरैः ॥ वेदानुवचनादीनामैकात्म्यज्ञानजन्मने ॥ १४ ॥ तमेतमितिवाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं काम्यानामपि कर्मणाम् ॥ १५ ॥ तमेतमितिवाक्येन संयोगस्य पृथक्त्वतः ॥ तथा च काम्यकर्मापि सर्वाङ्गैः संयुतं यतः ॥ १६ ॥ फलाभिसन्धिना कार्यं न तु निष्कामबुद्धिना ॥ एवं सत्यङ्गवैगुण्यहेतुकः प्रत्यवायकः ॥ १७ ॥ नास्त्येवास्येश्वरार्थस्य कर्मणः शुद्धिकारिणः ॥ शुद्ध्यर्थस्यास्य धर्मस्य स्वल्पमप्येषु कर्मसु ॥ १८ ॥ तमेतमितिवाक्येन विहितेष्वप्यनुष्ठितम् ॥ यथाशक्तीश्वरार्थं सत्रायते संसृतेर्भयात् ॥ १९ ॥ हरिप्रसादसंसिद्ध्या कर्तारं परिरक्षति ॥ सर्वपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् ॥ २० ॥ भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥ इत्युक्त्वादतो हेतोः कर्मबन्धं प्रहास्यसि ॥ २१ ॥ ४० ॥

**भा० टी०**–काम्यादस्य महद्वैलक्षण्यमित्याशयेनाह–**नेहेति**। इह निष्कामकर्मणि समाधियोगे च मोक्षमार्गे अभिक्रमस्य प्रारम्भस्य नाशो नास्ति कृष्यादेरिव प्रत्यवायः पापोत्पत्तिरपि चिकित्सावन्न विद्यते अस्य धर्मस्य स्वल्पमपि अनुष्ठितं महतो भयाज्जन्ममरणादिलक्षणसंसारभयाद्रक्षति ॥ ४० ॥

**प० टी०**–अथ परमेश्वरार्पणतया कर्माणि क्रियमाण इन्द्रादिभ्यो विघ्नं नास्तीत्याह–**नेहाभिक्रमेति**। इह निष्कामकर्मण्यभिक्रमस्य कर्मारम्भस्य विघ्नादिभिर्नाशो नास्ति। यतस्तत्रेश्वर एव विघ्नहर्ता । तदुक्तं भागवते–' त्वां सेवतां सुरकृता बहवोऽन्तरायाः स्वौको विलङ्घ्य व्रजतां परमं पदं ते ॥ नान्यस्य बर्हिषि बलिं ददतः स्वधर्मं धत्ते पदं त्वमविता यदि विघ्नमूर्ध्नि ' इति । अथ हिंसाप्रधाने कर्मणि कथमीश्वरादर इत्याह–प्रत्यवाय इति। प्रत्यवायः पापं नास्ति "अग्नीषोमीयं पशुमालभेत" इत्यादि वाक्यैर्वेदबोधितत्वात्। किंचास्य परमेश्वरार्पणतया कृतस्य धर्मस्य स्वल्पमप्युपक्रममात्रमपि कृतं महतो भयात्संसारात्त्रायते रक्षति न तु काम्यकर्मादि यतः पुण्यक्षये पुनः संसारश्रवणात् ॥ ४० ॥

**रा० टी०**–किंच इह वक्ष्यमाणे योगशब्दितज्ञानोपायभूतनिष्कामविष्णवाराधनरूपकर्मविषये अभिक्रमस्योपक्रमस्य नाशो नास्ति । उपक्रममात्रस्यापि निष्फलता नास्तीत्यर्थः । प्रारम्भमात्रमिच्छा वेत्यादेः । उपक्रान्तविष्णुधर्मविच्छेदे वा विष्णुधर्मवतोन्यधर्माकरणे वा प्रत्यवायो न विद्यते । अस्य धर्मस्य विष्णुपूजात्मकनिष्कामकर्मणः स्वल्पमपि एकांशोपि महतो भयात्संसारभयात्त्रायते रक्षति । तस्मात्तत्र निष्ठा कुर्विति भावः । ननु ज्ञानं हि जैवमुक्तमिति भाष्योक्तेः । जीवतत्वं प्रागुक्तम् । ब्रह्मज्ञानोपायश्च वक्ष्यते । नहि निवृत्तकर्मानुष्ठानादिरूपो योगो जीवज्ञानहेतुः । अतः कथं पूर्वोत्तरप्रकरणयोः साध्यसाधनविषयतया सङ्गतत्वम् । मैवम् । श्रुत्वाप्येनमित्यत्र भगवत्प्रतिबिम्बत्वादिना जीवचैतन्यवेदी दुर्लभ इत्युक्त्या तादृशत्वेन तज्ज्ञानोपायस्याप्याकाङ्क्षितत्वेन वक्ष्यमाणनिवृत्तकर्मानुष्ठानाराधितभगवत्प्रीतेरेवेश्वरतत्त्वज्ञानस्योपाय-

त्वात् । तादर्थ्येन प्रकृतस्यापीश्वरस्य 'तस्मादेवं विदित्वैनम्' इत्यत्र स्वातन्त्र्यादिना ज्ञानस्य मोक्षादिसर्वपुमर्थहेतुत्वोक्त्या तज्ज्ञानोपायस्याप्याकाङ्क्षितत्वात् । वक्ष्यमाणसाधनस्य यथावत्तया परापरतत्त्वज्ञानोपायत्वान्न पूर्वोत्तरप्रकरणयोरसङ्गतिः । अत्र योगस्यानेकाध्यायप्रतिपाद्यत्वाच्छ्रोतृमनःसमाधानाय पूर्वसङ्गतत्वेन प्रतिज्ञाकरणसार्थक्यं ज्ञेयम् ॥ ४० ॥

**व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन ॥**
**बहुशाखा ह्यनन्ताश्च बुद्धयोऽव्यवसायिनाम् ॥ ४१ ॥**

**त० टी०**—सकामकर्मविषयाया बुद्धेर्निष्कामभगवदाराधनात्मककर्मयोगविषयबुद्धेः सुखहेतुत्वेन महान्विशेष इत्याह—व्यवसायेति । इह कर्मानुष्ठातरि जीवलोके व्यवसायात्मिका बुद्धिरेका भगवत्तोषणात्मकमेव कर्म कर्तव्यं नान्यत् । तत्प्रसादेन सुखेनैव तरिष्यामो नान्याराधनेनेति निश्चयो व्यवसायस्तदात्मिका बुद्धिः सर्वनियन्तृसर्वकर्मफलप्रदातृसर्वमुमुक्षुध्येयसर्वेश्वराराधनैकविषयत्वादेकफलकत्वाच्चैका, अतः सुखदा, सा च परमनिःश्रेयस्कामानां मुमुक्षूणामेवेति निश्चीयते । अव्यवसायिनामनिश्चिततत्त्वानां स्वर्गधनस्त्रीपुत्रपश्वादिबहुकामानां तत्तत्कर्मफलसाधनकर्मनिष्ठानां बुद्धयः कर्मकाण्डे कामानां बहुभेदेन बहुशाखाः, तत्राप्यवान्तरानन्तप्रकारभेदादनन्ताश्च दुःखदाश्चेत्यनुभवगम्यम् ॥ ४१ ॥

**म० टी०**—एतदुपपादनाय तमेतमितिवाक्यविहितानामेकार्थत्वमाह—व्यवसायात्मिकेति । हे कुरुनन्दन ! इह श्रेयोमार्गे तमेतमितिवाक्ये वा व्यवसायात्मिका आत्मतत्त्वनिश्चयात्मिका बुद्धिरेकैव चतुर्णामाश्रमाणां साध्या विवक्षिता 'वेदानुवचनेन' इत्यादौ तृतीयाविभक्त्या प्रत्येकं निरपेक्षसाधनत्वबोधनात् । भिन्नार्थत्वे हि समुच्चयः स्यात् । एकार्थत्वेपि दर्शपूर्णमासाभ्यामितिवत् द्वन्द्वसमासेन । यदग्नये च प्रजापतये चेतिवच्चशब्देन । न तथात्र किञ्चित्प्रमाणमस्तीत्यर्थः । साङ्ख्यविषया योगविषया च बुद्धिरेकफलत्वादेका व्यवसायात्मिका सर्वविपरीतबुद्धीनां बाधिका निर्दोषवेदवाक्यसमुत्थत्वादितरास्त्वव्यवसायिनां बुद्धयो बाध्या इत्यर्थ इति भाष्यकृतः । अन्ये तु परमेश्वराराधनेनैव संसारं तरिष्यामीति निश्चयात्मिका एकनिष्ठैव बुद्धिरिह कर्मयोगे भवतीत्यर्थमाहुः । सर्वथापि तु ज्ञानकाण्डानुसारेण ' स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयात् ' इत्युपपन्नं कर्मकाण्डे पुनः बहुशाखाः अनेकभेदाः कामानामनेकभेदत्वात् अनन्ताश्च कर्मफलगुणफलादिप्रकारोपशाखाभेदात् बुद्धयो भवन्त्यव्यवसायिनां तत्फलकामानां बुद्धीनामानन्त्यप्रसिद्धिद्योतनार्थो हिशब्दः । अतः काम्यकर्मापेक्षया महद्वैलक्षण्यं शुद्ध्यर्थकर्मणामित्यभिप्रायः ॥ ४१ ॥

**शं० टी०**—योगविषयिण्या बुद्ध्या विशिष्टः पुमान् तरतीत्युक्तं योगविषयिणी बुद्धिः केत्याकाङ्क्षायां तस्याः स्वरूपं वदन् तदितरबुद्धिविशिष्टानां न कदाचित्तरणमस्तीति सूचयति—व्यवसायात्मिकेति । 'मनो हि द्विविधं प्रोक्तं शुद्धं चाशुद्धमेव च । अशुद्धं कामसङ्कल्पं शुद्धं कामविवर्जितम् ' इतिश्रवणात्कामसङ्कल्पादिकषायरहिततया शुद्धत्वेनेश्वर एवास्माकं परा गतिरिति व्यवस्थितो व्यवसायो निश्चयो यस्यां सा व्यवसायात्मिका वस्तुतत्त्वनिश्चयवतीश्वराश्रया बुद्धिरिह मोक्षैकप्रयोजने कर्मयोगे प्रवृत्तस्य व्यवसायिनो मुमुक्षोरेकैव बहिरन्तः सदैकरूपैव भवति " यो वा एतदक्षरं गार्ग्यविदित्वास्मिन् लोके जुहोति यजते तपस्तप्यते अन्तवदेवास्य तद्भवति " इति व्यतिरेकमुखेन विदित्वा जुह्वतो यजतस्तप्यतश्च सर्वं कर्म वैदिकमनन्तवदेव भवतीति वदच्छ्रुतिप्रमाणजनितत्वादेकरूपेणैव तिष्ठति न कदाचिद्भिद्यते अव्यवसायिनां विवेकबुद्धिरहितानां व्यवस्थाशून्यानामेव कामिनां बुद्धयो बहुशाखा बहुप्रकाराः आशास्ते यं यजमानोऽसा-

वित्युक्तप्रकारेण बह्वर्थविषयत्वाद्बहुधा भिद्यन्ते अत एवानन्ताः काम्यानामनन्तत्वात् । एवं बुद्धीनामनन्तत्वे तद्वतां संसारोप्यनन्त एव भवति न कदाप्युपशाम्यतीत्यर्थः ॥ ४१ ॥

**श्री० टी०**—कुत इत्यपेक्षायामुभयोर्वैषम्यमाह—**व्यवसायेति** । इह ईश्वराराधनलक्षणे कर्मयोगे व्यवसायात्मिका परमेश्वरभक्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका एकैवैकनिष्ठैव बुद्धिर्भवति । अव्यवसायिनां तु बहिर्मुखानां कामिनां कामानामानन्त्यादनन्ताः । तत्रापि कर्मगुणफलादिभेदात् बहुशाखाश्च बुद्धयो भवन्ति। ईश्वराराधनार्थं हि नित्यनैमित्तिकं कर्म किञ्चिदङ्गवैगुण्येनापि न नश्यति । यथा शक्नुयात्तथा कुर्यादिति हि तद्विधीयते नच वैगुण्यम् । ईश्वरोद्देशेनैव वैगुण्योपरमात् । नतु तथा काम्यं कर्म "अग्निहोत्रं जुहुयात् स्वर्गकामः । दध्नेन्द्रियकामो जुहुयात्" अतो महद्वैषम्यमिति भावः ॥ ४१ ॥

**स० टी०**—एतत्सिद्ध्यर्थमाहेशस्तमेतमिति वाक्यतः॥ विहितानां फलैकत्वं कर्मणां शुद्धिकारिणाम् ॥ १॥ श्रेयोमार्गेऽथवा वाक्ये तमेतमिति वैदिके ॥ बुद्धिरेकैव साध्यास्ति तत्त्वनिश्चयरूपिणी ॥ २ ॥ चतुर्णामाश्रमाणां च सैव साध्या विवक्षिता ॥ एकैव साङ्ख्ये योगे च फलैक्यान्निश्चयात्मिका ॥ ३ ॥ विपरीतमतीनां सा बाधिका वेदवाक्यजा ॥ ईश्वराराधनेनैव तरिष्यामीह संसृतिम् ॥ ४ ॥ इत्येकैवास्ति वा बुद्धिर्भक्तानां निश्चयात्मिका ॥ इतरास्तु धियो बाध्या मिथ्याज्ञानवतां नृणाम् ॥ ५ ॥ कामभेदात्तथा शाखाभेदान्नानाभिदायुताः ॥ संसारानन्त्यहेतुत्वादनन्ता मूढचेतसाम् ॥ ६ ॥ ४१ ॥

**भा० टी०**—इह मोक्षमार्गे व्यवसायात्मिका निश्चयात्मिकोपायोपेयबुद्धिरेका सम्यक् प्रमाणजनितत्वात् । इतरविपरीतबुद्धिशाखाभेदस्य बाधिका । येतु व्यवसायात्मिका परमेश्वरभक्त्यैव तरिष्यामीति निश्चयात्मिकेति वर्णयन्ति तद्बुद्धेः स्वरूपं निरूपितं प्रमाणजनितत्वादिति वदद्भिर्भाष्यकृद्भिः सा दृढेत्युक्तमिति न विरोधः । अव्यवसायिनां प्रमाणजनितविवेकबुद्धिरहितानां कामिनां बुद्धयो बहुशाखाः बह्वयः अनुपरतसंसारप्रदाः शाखा यासां ताः प्रतिशाखाभेदेन ह्यनन्ताश्च कामनानामानन्त्यात् । यत्तु 'नन्वेवं साङ्ख्ययोगयोर्महाभयात्राणहेतुत्वं तुल्यं चेत्कोऽनयोर्विशेष इत्याशङ्क्य साङ्ख्यानां पातशङ्का नास्ति योगिनां तु यावद्विदेहकैवल्यं पातशङ्कास्तीत्याह—व्यवसायात्मिकेति' तच्चिन्त्यम् योगस्तवनपरस्य ग्रन्थस्य तन्निन्दापरत्वेनोत्थापनस्यानुचितत्वात् । कामात्मान इत्यादिना सकामस्य निन्दाप्रतीतेः स्पष्टत्वाच्च । तव तूत्तमवंशोद्भवस्य व्यवसायात्मिकैव बुद्धिर्युक्तेति सूचयन्नाह—कुरुनन्दनेति ॥ ४१ ॥

**प० टी०**—अथ तदेव प्रकटयति—**व्यवसायेति** । इह परमेश्वराराधनरूपे कर्मयोगे व्यवसायात्मिका परमेश्वरभजनानुवृत्त्यैव ध्रुवं तरिष्यामीति निश्चयात्मिका बुद्धिः सा तावदेकैव एकनिष्ठैव भवति । अथाव्यवसायिनां कामात्मनां या बुद्धयस्ता बहुशाखाः कामात्कामान्तरजनिका भवन्ति कामानामनन्तत्वात् "जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यात्" इति श्रुतेश्च ॥ ४१ ॥

**रा० टी०**—ननु ज्ञानोपायविषया वाचोऽन्योन्यविरुद्धा बह्वयो मतभेदेन सन्ति । अतः कथमेकत्र त्वदीयायामेवोपायविषयवाचि निष्ठाशब्दितं विश्वासं करोमीत्यत आह—**व्यवसायेति** । व्यवसायात्मिका प्रमाणनिर्णीतार्थनिश्चयात्मिका निश्चयजनिका बुद्धिः करणव्युत्पत्त्या वाक् । एकैव एकोपायविषयैव इह लोके वेदे च । न तत्र विप्रतिपत्तिरस्ति । स एव वैष्णवधर्मानुष्ठानहेतुः । अव्यवसायिनां प्रमाणनिर्णीतार्थनिश्चयहीनानां बुद्धयः उपायविषयाः वाचः बहुशाखाः बहुमुखाः विरुद्धनानार्थविषयाः अनन्ताश्च । तथा च कथमप्रामाणिकमतविवादेन प्रामाणिकेर्थे अविश्वासः । मया वक्ष्यमाणोपायस्तु प्रामाणिक इति तत्र तत्र व्यक्तीभविष्यतीति भावः ॥ ४१ ॥

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः ॥
वेदवादरताः पार्थ नान्यदस्तीति वादिनः ॥ ४२ ॥
कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ॥
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥ ४३ ॥
भोगैश्वर्यप्रसक्तानां तयाऽपहृतचेतसाम् ॥
व्यवसायात्मिका बुद्धिः समाधौ न विधीयते ॥ ४४ ॥

त० टी०—ननु विधिवदधीतवेदानां तदर्थपरिशीलिनां पण्डितानामपि व्यवसायात्मिका बुद्धिः कुतो न भवतीत्यपेक्षायां वेदशिरोभागमविदित्वा वेदतात्पर्याज्ञानादित्याह—यामिति त्रिभिः। यामिमां वक्ष्यमाणां पुष्पितां विषलतावदापातरमणीयां प्रकर्षेण वदन्ति तेऽविपश्चितो ज्ञानहीनाः नतु पण्डिताः। कुतो यतो वेदवादरताः वेदेषु ये फलार्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति, अपाम सोममममृता अभूम, यत्र नोष्णं नच शीतं स्यान्न ग्लानिर्नाप्यरातयः" इत्यादयस्तेषु रताः सक्ताः। सक्तत्वलक्षणं नान्यदस्तीति वादिन इति। स्वर्गादिभोगादधिकं किञ्चित्फलं मोक्षसुखं नास्तीति वदनशीलाः ॥ ४२ ॥ एतत्कुतो यतः कामात्मानः कामा विषयेन्द्रियजन्यसुखानि तेष्वेवात्मा मनो येषां ते तथा। अत एव स्वर्गपराः एतद्देहत्यागानन्तरं दिव्यविमानारोहणाप्सरोभोगाम्लानपारिजातपुष्पमालाविधारणदिव्यचन्दनालेपामृतपानादिस्वर्गफलमेव परमपुरुषार्थं मन्यमानाः स्वर्गफलभोगावसाने इह लोके विद्याधनाढ्यकुले जन्म तदनुगुणश्रेष्ठवर्णाश्रमनिबन्धनानि कर्माणि च पुनस्तज्जन्यं पूर्वोक्तं फलं तानि प्रकर्षेण घटीयन्त्रवदविच्छेदेन ददातीति तथा तां, पुनर्भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुलां पूर्वोक्तो भोग ऐश्वर्यं च क्वचिदिन्द्रेण देवाधिकारे गन्धर्वाप्सरोदेवविशेषं प्रत्याज्ञापनं तयोर्गतिं प्राप्तिं प्रति साधनभूतायाः क्रियाया विशेषा बहुद्रव्याऽऽयाससाध्यचातुर्मास्यज्योतिष्टोमदर्शपूर्णमासादयस्तैर्बहुलां विस्तृतां भोगैश्वर्यप्राप्तिफलकातिविस्तृतक्रियाप्रतिपादिकामिति यावत् एतादृशीं वाचं प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥ तेषां भोगैश्वर्ययोः प्रसक्तानां तया पुष्पितया वाचाऽपहृतं चेतो येषां परमार्थतत्त्वविचारानर्हचेतसामिति यावत् अत उक्तप्रकारा व्यवसायात्मिका बुद्धिः समाधौ न विधीयते समाधीयते आत्मतत्त्वमस्मिन्निति समाधिश्चित्तैकाग्र्यं तस्मिन्मोक्षसाधनभूतभगवदाराधनात्मककर्मनिश्चयरूपा बुद्धिर्न विधीयते नोत्पद्यते इत्यर्थः ॥ ४४ ॥

म० टी०—अव्यवसायिनामपि व्यवसायात्मिका बुद्धिः कुतो न भवति प्रमाणस्य तुल्यत्वादित्याशङ्क्य प्रतिबन्धकसद्भावान्न भवतीत्याह—यामिमामिति त्रिभिः। यामिमां वाचं प्रवदन्ति तया वाचापहृतचेतसामविपश्चितां व्यवसायात्मिका बुद्धिर्न भवतीत्यन्वयः। इमामध्ययनविध्युपात्तत्वेन प्रसिद्धां पुष्पितां पुष्पितपलाशवदापातरमणीयां साध्यसाधनसंबन्धप्रतिभानान्निरतिशयफलाभावाच्च कुतो निरतिशयफलस्वाभावस्तदाह—जन्मकर्मफलप्रदां जन्म चापूर्वशरीरेन्द्रियादिसंबन्धलक्षणं तदधीनं च कर्म तत्तद्वर्णाश्रमाभिमाननिमित्तं तदधीनं च फलं पुत्रपशुस्वर्गादिलक्षणं विनश्वरं तानि प्रकर्षेण घटीयन्त्रवदविच्छेदेन ददातीति तथा ताम्। कुत एवमत आह—भोगैश्वर्यगतिं प्रति क्रियाविशेषबहुलाममृतपानोर्वशीविहारपारिजातपरिमलादिनिबन्धनो यो भोगस्तत्कारणं च यदैश्वर्यं देवादिस्वामित्वं तयोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषा अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादयस्तैर्बहुलां विस्तृतामतिबाहुल्येन भोगैश्वर्यसाधनक्रियाकलापप्रतिपादि-

कामिति यावत् । कर्मकाण्डस्य हि ज्ञानकाण्डापेक्षया सर्वत्रातिविस्तृतत्वं प्रसिद्धम् । एतादृशीं कर्मकाण्डलक्षणां वाचं प्रवदन्ति प्रकृष्टां परमार्थस्वर्गादिफलामभ्युपगच्छन्ति के ये अविपश्चितः विचारजन्यतात्पर्यपरिज्ञानशून्याः अत एव वेदवादरताः वेदे ये सन्ति वादा अर्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्येवमादयस्तेष्वेव रता वेदार्थे सत्यत्वेन एवमेवैतदिति मिथ्याविश्वासेनसन्तुष्टाः । हे पार्थ ! अत एव नान्यदस्तीति वादिनः कर्मकाण्डापेक्षया नास्त्यन्यत् ज्ञानकाण्डं सर्वस्यापि वेदस्य कार्यपरत्वात्, कर्मफलपेक्षया च नास्त्यन्यन्निरतिशयं ज्ञानफलमिति वदनशीलाः महता प्रबन्धेन ज्ञानकाण्डविरुद्धार्थभाषिण इत्यर्थः । कुतो मोक्षद्वेषिणस्ते यतः कामात्मानः काम्यमानविषयशताकुलचित्तत्वेन काममयाः। एवंसति मोक्षमपि कुतो न कामयन्ते यतः स्वर्गपराः स्वर्ग एवोर्वश्याद्युपेतत्वेन पर उत्कृष्टो येषां ते तथा स्वर्गातिरिक्तपुरुषार्थो नास्तीति भ्राम्यन्तो विवेकवैराग्याभावान्मोक्षकथामपि सोढुमक्षमा इति यावत् । तेषां च पूर्वोक्तभोगैश्वर्ययोः प्रसक्तानां क्षयित्वादिदोषादर्शनेन निविष्टान्तःकरणाना तया क्रियाविशेषबहुलया वाचापहृतमाच्छादितं चेतो विवेकज्ञानं येषां तथाभूतानामर्थवादाः स्तुत्यर्थाः तात्पर्यविषये प्रमाणान्तराबाधिते वेदस्य प्रामाण्यमिति सुप्रसिद्धमपि ज्ञातुमसक्तानां समाधावन्तःकरणे व्यवसायात्मिका बुद्धिर्न विधीयते न भवतीत्यर्थः । समाधिविषया व्यवसायात्मिका बुद्धिस्तेषां न भवतीति वा । अधिकरणे विषये वा सप्तम्यास्तुल्यत्वात् । विधीयते इति कर्मकर्तरि लकारः । समाधीयतेऽस्मिन् सर्वमिति व्युत्पत्त्या समाधिरन्तःकरणं वा परमात्मा वेति नाप्रसिद्धार्थकल्पनम् । अहं ब्रह्मेत्यवस्थानं समाधिस्तन्निमित्तं व्यवसायात्मिका बुद्धिर्नोत्पद्यत इति व्याख्याने तु रूढिरेवादृता । अयं भावः । यद्यपि काम्यान्यग्निहोत्रादीनि शुद्ध्यर्थेभ्यो न विशिष्यन्ते तथापि फलाभिसन्धिदोषान्नाऽऽशयशुद्धिं संपादयन्ति । भोगानुगुणातुशुद्धिर्न ज्ञानोपयोगिनी । एतदेव दर्शयितुं भोगैश्वर्यप्रसक्तानामिति पुनरुपात्तं फलाभिसन्धिमन्तरेण तु कृतानि ज्ञानोपयोगिनीं शुद्धिमादधतीति सिद्धं विपश्चिदविपश्चितोः फलवैलक्षण्यम् । विस्तरेण चैतदग्रे प्रतिपादयिष्यते ॥ ४२–४४ ॥

शं० टी०–नन्वव्यवसायिनामपि योगबुद्धिरस्त्वित्याकाङ्क्षायां कामपराणां तेषामेषा नान्तःकरणमारोहतीति बोधयितुं तेषां स्वभावं वर्णयति त्रिभिः–**यामिमामिति** । वेदवादरता उच्यन्त इति वादा वाक्यानि वेदस्य वादाः वेदवादास्तेषु "वायव्यं श्वेतमालभेत भूतिकामः" इत्यादिषु कर्मतत्फलतत्साधनप्रकाशकेष्वर्थवादादिवेदवाक्येषु रताः निरतास्तत्रैव तात्पर्यवन्तोऽतएव नान्यदस्तीति वादिनः कर्मतत्फलेभ्यः साधनसाध्येभ्योऽन्यदपीश्वरो वा मोक्षो वा किंचिन्नास्तीति प्रष्टृभ्यो वक्तारो वदनशीलाः यतोऽविपश्चितः वेदानामुपक्रमोपसंहारादिषु तात्पर्यानभिज्ञा बहिर्मुखा मीमांसकाः पुष्पितां पुष्पैर्मल्लिकालतावत् "अपाम सोमम् । दक्षिणावन्तो अमृतं भजन्तः । पश्यति पुत्रं पश्यति पौत्रम् । अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्याद्यर्थवादलक्षणैः फलशून्यैः पुष्पै रञ्जयन्तीमिमां जन्मकर्मफलप्रदामित्यादिना वक्ष्यमाणलक्षणां यां वाचम् "अग्निमीळे पुरोहितम् । इषे त्वोर्जे त्वा । ब्रह्म संधत्तं तन्मे जिन्वतम्" इत्यादिवाक्यरूपां प्रवदन्ति कर्मकाण्डमेव प्राशस्त्येन वदन्ति नतूपासनाकाण्डं नापि ब्रह्मकाण्डमित्यर्थः ॥ ४२ ॥ योगबुद्ध्यनर्हत्वे तेषां स्वभावो दुष्ट इति सूचयितुं तद्गुणानेव वर्णयति कृष्णः–**कामात्मान इति** । स्वर्गपराः स्वर्ग एव परो निरतिशयः पुरुषार्थ इति निश्चयो येषां ते स्वर्गपरास्तत एव भोगैश्वर्यगतिं प्रति भुज्यन्त इति भोगाः दिव्याः स्रक्चन्दनवनितादयस्तेषां समग्रभोगायैश्वर्यमीश्वरत्वं स्वामित्वं तस्य गतिः प्राप्तिस्तां प्रत्येव काम इच्छावेग आत्मनि बुद्धौ येषां ते कामात्मानः विषयभोगलम्पटा मीमांसकाः कामिनः क्रियाविशेषबहुलां क्रियाविशेषा अग्निष्टोमातिरात्रादयः फलविशेषहेतवो बहुला बहवो यया प्रतिपाद्यन्ते सा क्रियाविशेषबहुला तां तत एव जन्मकर्मफलप्रदां जन्मपदेन मृत्युजरारोगास्तद्दुःखानि च लक्ष्यन्ते जन्मादय एव स्वप्रतिपादितकर्मणां

फलानि जन्मकर्मफलान्यनुष्ठातृभ्यः प्रददातीति जन्मकर्मफलप्रदा नानायोनिषु जन्मानि कर्मफलानि सुखादीनि च स्वप्रकाशितकर्मकर्तृभ्यो यच्छतीति वा तां जन्मकर्मफलप्रदां वाचं प्रवदन्तीति पूर्वेणान्वयः ॥ ४३ ॥ यत एवं लक्षणास्ततस्तेषां योगबुद्धिस्तत्फलं च न सिध्यतीत्याह—**भोगेति** । अर्थवादबहुलया तया कर्मकाण्डलक्षणया वाचाऽपहृतचेतसामपहृतं तिरोभावितं चेतः कार्याकार्यविवेकविज्ञानं येषां ते अपहृतचेतसः विषयाशाभ्रामितबुद्धयस्तेषामत एव भोगैश्वर्यप्रसक्तानां भुज्यन्त इति भोगा भोग्यपदार्था ऐश्वर्यं तेषामीश्वरत्वं तयोरेव प्रसक्तानां तेषां समाधौ समाधीयते पुरुषो विषयेष्वनेनेति समाधिः वासनात्मना जगत्सर्वं समाधीयते पुरुषेणास्मिन्निति वा समाधिरन्तःकरणं तस्मिन्व्यवसायात्मिका बुद्धिर्योगबुद्धिर्न विधीयते न प्रवेश्यते कामैरन्तरालाभावान्न प्रविशति यतस्ततः कारणाभावे कार्याभाव इति न्यायेन योगबुद्धयभावे तत्कार्यभूतो मोक्ष एतेषां कदापि न संभवतीत्यर्थः ॥ ४४ ॥

**श्री० टी०**—ननु कामिनोऽपि कष्टान्कामान्विहाय व्यवसायात्मिकामेव बुद्धिं किं न कुर्वन्ति तत्राह—**यामिति** । पुष्पितां विषलतावदापातरमणीयां प्रकृष्टां परमार्थफलपरामेव वदन्ति वाचं स्वर्गादिफलश्रुतिं ये तेषां तया वाचाऽपहृतचेतसां व्यवसायात्मिका बुद्धिर्न विधीयत इति तृतीयेनान्वयः । किमिति तथा वदन्ति यतोऽविपश्चितो मूढाः । तत्र हेतुः वेदे ये वादाः अर्थवादाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति । अपाम सोमममृता अभूम" इत्याद्याः तेष्वेव रताः प्रीताः अत एव अतः परमन्यदीश्वरतत्त्वं प्राप्यं नास्तीति वचनशीलाः ॥ ४२ ॥ अत एव—**कामात्मान इति** । कामात्मानः कामाकुलचित्ताः । अतः स्वर्ग एव परः पुरुषार्थो येषां ते । जन्म च तत्र कर्माणि च तत्फलानि च प्रददातीति तथा ताम् । भोगैश्वर्ययोर्गतिं प्राप्तिं प्रति साधनभूता ये क्रियाविशेषाः ते बहुला यस्यां तां प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥ ततश्च—**भोगैश्वर्यप्रसक्तानामिति** । भोगैश्वर्ययोः प्रसक्तानामभिनिविष्टानां तया पुष्पितया वाचाऽपहृतमाकृष्टं चेतो येषां तेषां समाधिः चित्तैकाग्र्यं परमेश्वरैकाग्र्याभिमुखत्वं तस्मिन्निश्चयात्मिका बुद्धिर्न विधीयते । कर्मकर्तरिप्रयोगो नोत्पद्यत इत्यर्थः ॥ ४४ ॥

**स० टी०**—अनिश्चयवतां नानाप्रतिबन्धवशान्न सा॥व्यवसायात्मिका बुद्धिर्भवतीत्याह मापतिः॥ १॥यामिमां वक्ष्यमाणां हि वाचं श्रवणशोभनाम् ॥ आपातरमणीयां च प्रपुष्पितपलाशवत् ॥ २ ॥ देहेन्द्रियादिसम्बन्धरूपं जन्म ददाति या ॥ तदधीनं च यत्कर्म तदधीनं फलं तथा ॥ ३ ॥ ददातीति घटीयन्त्रवदविच्छेदतश्च ताम् ॥ सुधापानोर्वशीक्रीडासुगन्धादिनिबन्धनः ॥ ४ ॥ भोगस्तद्धेतुरैश्वर्यं देवादिस्वामिता तयोः ॥ प्राप्तिं प्रतिक्रियाभेदाः साधनत्वेन ये मताः ॥ ५ ॥ तैर्विस्तृतां कर्ममयीं प्रवदन्त्यविपश्चितः ॥ विचारजन्यतात्पर्यज्ञानशून्याः सुरागिणः ॥ ६ ॥ येऽर्थवादाः श्रुतौ सन्ति रोचनार्था हि कर्मणाम् ॥ अस्त्यक्षय्यं ह वै चातुर्मास्ययाजिन इत्यपि ॥ ७ ॥ तेष्वेव वेदतात्पर्यमिति विश्वासतत्पराः ॥ पशुपुत्रादिहेतुभ्यः कर्मभ्यो नान्यदस्ति तत् ॥ ८ ॥ ज्ञानं वा तत्फलं वा न श्रुतेः कर्मपरत्वतः ॥ प्रतिबन्धात्त इत्येवं विरुद्धार्थैकभाषिणः ॥ ९ ॥ विषयाकुलचित्तत्वात्सदा काममयाः शठाः ॥ स्वर्ग एव परो येषां पुरुषार्थतया मतः ॥ १० ॥ वैराग्यादिबहिर्भूता मूढा मोक्षकथामपि ॥ न क्षमन्ते ततस्तेषां भोगादौ लग्नचेतसाम्॥ ११॥ तया पूर्वोक्तया वाचा येषामाच्छादितं मनः ॥ समाधिविषयाबुद्धिर्नास्त्येषां निश्चयात्मिका ॥ १२ ॥ अहं ब्रह्मेत्यवस्थानं समाधिस्तन्निबन्धना ॥ व्यवसायात्मिका बुद्धिस्तेषां नोत्पद्यतेऽथवा ॥१३॥४२॥–॥४४॥

**भा० टी०**—अव्यवसायिनां तु व्यवसायात्मिका बुद्धिर्न भवति प्रतिबन्धबाहुल्यादित्याशयेनाह—**यामिति**त्रिभिः । यामिमां वक्ष्यमाणां पुष्पितां फलाप्रदपुष्पितवृक्षवच्छोभमानां श्रवणमात्ररमणीयाम् "अपाम सो-

ममामृता अभूम" इत्यादिरूपां प्रवदन्ति। अविपश्चितो बुद्धिरहिता वेदस्य वादेऽर्थवादे "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इत्येवंरूपे रताः प्रीतिमन्तोऽत एव नान्यन्मोक्षादिकं स्वर्गादन्यदस्तीति वादिनः। त्वया तु मम मतमेवाभ्युपेयमिति सूचयन्नाह—हे पार्थेति ॥ ४२ ॥ यतः कामे आत्मान्तःकरणं येषामत एव स्वर्ग एव परः पुरुषार्थो येषां ते कर्मणः फलं जन्मैव कर्मफलं प्रददातीति तथा तां वेदवाचा कर्माणि प्रवृत्तिः कर्मणा जन्मलाभः ननु वेदवाचः स्वतन्त्रं जन्मादिप्रदातृत्वमस्तीति अभिप्रेत्याचार्यैर्जन्म च तत्र कर्म च तत्फलं च प्रददातीति न व्याख्यातं यतो भोगैश्वर्यं च तयोर्गतिं प्राप्तिं प्रति क्रियाणां विशेषा बहुला यस्यां तां वाचं प्रवदन्तीत्यनुषङ्गः ॥ ४३ ॥ तेषां भोगैश्वर्ययोः प्रसक्तानामतिरक्तचित्तानां यतस्तया वाचाऽपहृतमाच्छादितं चेतो येषां तेषां व्यवसायात्मिका सांख्ये योगे वा या बुद्धिः सा समाधौ समाधीयते पुरुषोपभोगाय सर्वमस्मिन्नन्तःकरणं तस्मिन्न विधीयते न स्थिरीभवतीत्यर्थः। ननु 'अहंब्रह्मास्मीत्यवस्थानं समाधिस्तन्निमित्तम्' इति 'चित्तैकाग्र्यं परमेश्वरैकाग्र्याभिमुखत्वं तस्मिन् वा' इति 'व्याख्यानद्वयमाचार्यैः कुतो न प्रदर्शितमिति चेत्, अहं ब्रह्मास्मीत्यवस्थानस्य परमेश्वरैकाग्र्याभिमुखत्वस्य च व्यवसायात्मिकसाङ्ख्ययोगबुद्धावन्तर्भावमभिप्रेत्येति गृहाण ॥ ४४ ॥

**प० टी०**—अथ कामिनोऽप्येतां व्यवसायबुद्धिं कथं नानुतिष्ठन्त्यत आह—**यामिति**। यथा लोके पुष्पं हि फलोद्गमं सूचयत्येवं पुष्पितां फलाभिसन्धिं सूचयन्त्यविपश्चितस्तात्पर्यमजानन्तो वदन्ति समर्थयन्ति। कथम्, नान्यदस्तीतिवादिनः एतद्व्यतिरेकेणान्यच्छ्रुतितात्पर्यं नास्तीत्याभिनिवेशवन्तोऽत एते वादेऽर्थवादे रतास्तत्रैव तात्पर्यमवधारयन्तः। यद्वा "अधेन्वाचरति माययैष वाचं सुश्रुवामफलामपुष्पाम्" इति श्रुतौ पुष्पफले हि देवताध्यात्मे इति निरुक्तेः पुष्पस्थानीयदेवतोपासनाविषयां वाचं वेदवाणीं प्रवदन्तीति ॥ ४२ ॥ अथ तदेव प्रकटयन्नाह—**कामात्मान इति**। कामात्मानोऽभिलाषाकुलचित्ता अत एव स्वर्गपराः स्वर्ग एव परमुत्कृष्टं येषां ते ते जन्मकर्मफलप्रदां जन्म च तत्र कर्म च फलं च प्रददाति तां भोगैश्वर्यगतिं प्रवदन्ति, भोगो रम्भादिः ऐश्वर्यं देवाधिपत्यं तयोर्गतिः प्राप्तिस्ताम्। किंभूतां क्रियाविशेषबहुलां भोगैश्वर्यप्राप्तिं प्रति साधनभूता ये क्रियाविशेषास्तैर्बहुलां गुर्वीमतिप्रयाससाध्याम् ॥ ४३ ॥ **भोगैश्वर्यप्रसक्तानामिति** भोगैश्वर्ययोः प्रसक्तानां तया पुष्पितवेदवाण्यापहृतं चेतो येषां तेषां पुरुषाणां तथैव वाण्या समाधौ परमेश्वराराधनैकाग्र्ये व्यवसायात्मिका बुद्धिर्न विधीयते नोत्पद्यते। तदुक्तम्—'सोऽहं चिन्मात्रमेवेति चिन्तनं ध्यानमुच्यते। ध्यानस्याविस्मृतिः सम्यक्समाधिरभिधीयते' ॥ ४४ ॥

**रा० टी०**—नन्ववैदिकमतानामप्रामाणिकत्वेन तत्राविश्वासेपि वैदिकेष्वपि केचित्कर्माणि स्वर्गफलान्येवाहुः। त्वया तु काम्यार्थान्येव स्वर्गादिफलानि। निष्कामानीश्वरार्पणबुद्ध्यानुष्ठितानि तु ज्ञानार्थानीत्यभिप्रेयते। तथा च कथं त्वद्वचने निष्ठा स्यादित्यतस्तेषां वैदिकाभासताप्रदर्शनाय निन्दामाह—**यामि**-त्यादित्रयेण। वेदवादरताः वेदैर्यदापातत उच्यते कर्मादि तत्रैव रताः। वेदोक्तविष्णुमहिमविवादपूर्वकं वेदपाठका वा निरर्थकवेदपाठका वा। अत एवाविपश्चितः। वेदतात्पर्यार्थापरिज्ञानिनः अन्यन्मोक्षाख्यफलं वा ब्रह्मस्वरूपं वा नास्तीति वादिनः कामात्मानः काम्यफलमनस्काः भोगचित्ता इति वा। स्वर्गपराः स्वर्गतात्पर्यकाः स्वर्गमेव परमपुमर्थं मन्यमाना इति यावत्। जन्मकर्म च तत्फलं च प्रददातीति तथाविधां क्रियाविशेषबहुलां बहुकर्मविशेषप्रतिपादिकां यामिमां वाचं पुष्पितां संजातपुष्पां मोक्षफलमपेक्ष्य पुष्पस्थानीयस्वर्गादिफलकां भोगैश्वर्यप्राप्तिं प्रति प्रवदन्ति। तया वाचापहृतचेतसां भोगैश्वर्ययोरासक्तचित्तानां व्यवसायात्मिका सम्यक्प्रमाणनिर्णीतार्थनिश्चयरूपा बुद्धिः समाधौ भगवति मनःसमाधानार्थं न विधीयते। तस्यैव परमपुमर्थहेतुत्वादिति भावः। यद्वा अव्यवसायबुद्धिः केन कारणेन भवति। यत्परित्यागात्सा बुद्धिर्न भवति इत्यतो

व्यवसायबुद्धेः कारणमाह—यामिति । योजना तु पूर्ववदेव । वेदतात्पर्यविषयीभूतभगवत्स्वरूपमोक्षस्वरूपयोरज्ञानिनामापातप्रतीतार्थमादाय स्वर्गादिफलका वेदा इति वादिनां भोगैश्वर्यप्रसक्तानामसद्वादिनां वाक्यान्यव्यवसायबुद्धिकारणम् । तत्त्यागे च सा बुद्धिर्न भवतीति भावः । अत्र पक्षे समाधावित्यस्य तत्त्वविषयतया दार्ढ्यार्थमित्यर्थः । तस्यैव विष्णुधर्मानुष्ठानहेतुत्वादिति ॥ ४२–४४ ॥

**त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥**
**निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ ४५ ॥**

**त० टी०—ननु यदि स्वर्गादिकं फलं परमार्थरूपं न भवति चेत्तर्हि अपौरुषेयतया निर्दोषा वेदाः सर्वजनस्य हितार्थावबोधने प्रवृत्ताः किमिति स्वर्गाद्युद्देशेन कर्माणि विदधतीति चेत्तत्राह—त्रैगुण्यविषया इति । त्रयो गुणाः सत्त्वरजस्तमांसि तत्र भवास्तद्वृत्तिस्थाः पुरुषास्त्रैगुण्यशब्दवाच्याः । तत्र केचित् सत्त्वाऽधिकाः केचिद्रजोऽधिकाः केचित्तमोऽधिका इति त्रिविधा जना भवन्ति तद्विषया वेदा उपनिषद्व्यतिरिक्ताः काम्यफलाद्यभिधायकाः यो यत्कामस्तस्य तदेव विहितं तदनुसारेण तत्तत्फलस्तुतितत्प्रकारांस्तत्साधनानि कर्माणि बोधयन्ति । यदि तेषां तत्तद्गुणानुसारेण तत्तद्धितसाधनं वेदा न बोधयेयुस्तर्हि तत्त्वज्ञाननिष्ठाभावात् त्रिगुणविलक्षणमोक्षफलमजानन्तः स्वाभिमतस्वर्गादिफलहितप्राप्तिसाधनानि कर्माण्यप्यविज्ञायोभयथा नष्टा भवेयुरिति तद्धितकर्मबोधनात्त्रैगुण्यविषया इति युक्तमुक्तम् । हे अर्जुन ! त्वं तु निस्त्रैगुण्यो भवेति त्रिगुणमयस्वर्गादिफलतत्साधनतत्प्रतिपादकवेदानिष्ठो भव । वेदविहितेऽपि त्रिगुणात्मकफलसाधनादौ निःस्पृहो भवेति भावः । ननु स्वर्गादौ निःस्पृहत्वेऽपि सर्वस्यान्नवस्त्रादेस्त्रिगुणमयत्वमेव तस्य च देहनिर्वाहार्थमवश्यापेक्षितत्वात् कथं निस्त्रैगुण्यसम्भव इत्यत आह—निर्द्वन्द्व इति । द्वन्द्वानि शीतोष्णक्षुधापिपासासुखदुःखानि तद्रहितो भव तानि सहस्वेत्यर्थः । कथमिति चेत्तत्राह—नित्यसत्त्वस्थ इति । नित्यसत्त्वं रजस्तमोभ्यामनभिभूतं सत्त्वं तल्लक्षणं धैर्यं तत्रस्थः सन् रजस्तमोऽभिभूतसत्त्वः पुरुषः शीतोष्णादिप्राप्तौ मरणभयेन धैर्यात्प्रचलति त्वं तु रजस्तमसी अभिभूय शुद्धसत्त्वनिष्ठो भवेति भावः । ननु परिग्रहगतस्तद्योगक्षेमार्थिनः कुतो नित्यसत्त्वस्थत्वमिति चेत्तत्राह—निर्योगक्षेम इति । अपेक्षितस्य लाभो योगः लब्धस्य रक्षणं क्षेमस्तान्निरपेक्षो भव । एवं चेत्कथं मे निर्वाहो भविष्यतीति सन्देहो न कर्तव्य इत्याह—आत्मवानिति । आत्मा परमात्मा सर्वाभीष्टप्रदो ध्येयतया विद्यते यस्य स तथा तदाश्रितो भूत्वा चिन्तां विहाय किञ्चियोगक्षेमाय नान्यं कञ्चन समाश्रयेति भावः ॥ ४५ ॥**

म० टी०—ननु सकामानां माभूदाशयदोषाद्व्यवसायात्मिका बुद्धिः निष्कामानां तु व्यवसायात्मकबुद्ध्या कर्म कुर्वतां कर्मस्वाभाव्यात्स्वर्गादिफलप्राप्तौ ज्ञानप्रतिबन्धः समान इत्याशङ्क्याह—त्रैगुण्यविषया इति । त्रयाणां गुणानां कर्म त्रैगुण्यं काममूलः संसारः स एव प्रकाश्यत्वेन विषयो येषां तादृशा वेदाः कर्मकाण्डात्मकाः । यो यत्फलकामस्तस्यैव तत्फलं बोधयतीत्यर्थः । न हि सर्वेभ्यः कामेभ्यो दर्शपूर्णमासाविति विनियोगेपि सकृदनुष्ठानात्सर्वफलप्राप्तिर्भवति तत्तत्कामनाविरहात् । यत्फलकामनयानुतिष्ठति तदेव फलं तस्मिन्प्रयोग इति स्थितम् । योगसिद्ध्यधिकरणे यस्मादेवं कामनाविरहे फलविरहः तस्मात्त्वं निस्त्रैगुण्यो निष्कामो भव हे अर्जुन ! एतेन कर्मस्वाभाव्यात्संसारो निरस्तः । ननु शीतोष्णादिद्वन्द्वप्रतीकाराय वस्त्राद्यपेक्षणात्कुतो निष्कामत्वमतआह—**निर्द्वन्द्व इति** । निर्द्वन्द्वः सर्वत्र भवेति संबध्यते । मात्रास्पर्शास्त्वित्युक्तन्यायेन शीतोष्णादिद्वन्द्वसहिष्णुर्भव । असह्यं दुःखं कथं वा सोढव्यमित्यपेक्षायामाह—**नित्यसत्त्वस्थ इति** । नित्यसत्त्वस्थः

नित्यमचञ्चलं यत्सत्त्वं धैर्यापरपर्यायं तस्मिंस्तिष्ठतीति तथा। रजस्तमोभ्यामभिभूतसत्त्वो हि शीतोष्णादिपीडया मरिष्यामीति मन्वानो धर्माद्विमुखो भवति। त्वं तु रजस्तमसी अभिभूय सत्त्वमात्रालम्बनो भव। ननु शीतोष्णादिसहनेऽपि क्षुत्पिपासादिप्रतीकारार्थं किंचिदनुपात्तमुपादेयमुपात्तं च रक्षणीयमिति तदर्थं यत्ने क्रियमाणे कुतः सत्त्वमित्यत आह–निर्योगक्षेम इति। निर्योगक्षेमः अलब्धलाभो योगः लब्धपरिरक्षणं क्षेमस्तद्रहितो भव। चित्तविक्षेपकारिपरिग्रहरहितो भवेत्यर्थः। न चैवं चिन्ता कर्तव्या कथमेवं सति जीविष्यामीति। यतः सर्वान्तर्यामी परमेश्वर एव तव योगक्षेमादि निर्वाहयिष्यतीत्याह–आत्मवानिति। आत्मवान् आत्मा परमात्मा ध्येयत्वेन योगक्षेमादिनिर्वाहकत्वेन च वर्तते यस्य स आत्मवान् सर्वकामनापरित्यागेन परमेश्वरमाराधयतो मम स एव देहयात्रामात्रमपेक्षितं सम्पादयिष्यतीति निश्चित्य निश्चिन्तो भवेत्यर्थः। आत्मवानप्रमत्तो भवेति वा ॥ ४५ ॥

**शं० टी०**–एवं श्रुतिवाक्यानामुपक्रमोपसंहारादिष्वेवावान्तरतात्पर्यं महत्तात्पर्यं चाविजानतामर्थवादैर्मोहितानां कामिनां योगबुद्ध्यभावादीश्वरप्रसादाभावस्तेनैव संसारोपरमाभाव इति प्रतिपाद्य इदानीं केवलमुमुक्षूणां योगबुद्धिमतामीश्वरप्रीत्यै कर्म कुर्वतां प्ररोचनवाक्यैर्न मोहितव्यमिष्टानिष्टप्राप्तौ समबुद्ध्या श्रद्धाभक्तिभ्यामीश्वराराधनात्मकं कर्म वैदिकं कर्तव्यमिति सूचयितुमाह–**त्रैगुण्येति**। राजसास्तामसाः सात्त्विकाश्चेति त्रिविधा गुणास्त्रिगुणा रागद्वेषलोभमोहादयस्तेषां तत्कार्याणां तत्फलानां च समाहारस्त्रैगुण्यं संसारः स एव विषयः कर्मतत्साधनादिप्रकाशनद्वारा वर्धनीयत्वेन गोचरो येषां ते त्रैगुण्यविषयाः वेदाः संसारवृद्धेर्वेदोक्तकर्माधीनत्वेन वेदास्त्रैगुण्यविषया इत्युच्यन्ते। त्रैगुण्यस्य वेदविषयत्वेन सर्वेषामुपादेयत्वे सत्यपि न तन्मुमुक्षुभिरादर्तव्यमित्याह–निस्त्रैगुण्य इति। यतस्त्वं मोक्षेच्छया योगबुद्धियुक्तः स्वधर्मे प्रवृत्तस्ततो निस्त्रैगुण्यो भव प्ररोचनश्रुतिभ्यो रागद्वेषादिभ्यस्तत्प्रधानकर्मभ्यस्तत्फलेभ्यश्च निष्क्रान्तो भव निर्द्वन्द्वश्च इष्टानिष्टपदार्थौ द्वौ द्वन्द्वशब्दवाच्यौ रागद्वेषादिदोषजनकौ तत्र समबुद्ध्या ताभ्यां निष्क्रान्तो भव मोक्षस्य तत्साधनस्य च शमदमक्षान्त्यादेः सत्त्वगुणैकलभ्यत्वान्निस्त्रैगुण्यत्वेऽपि मुमुक्षोः सत्त्वेन भवितव्यमित्याशयेनाह–नित्यसत्त्वस्थ इति। नित्यं सत्त्वगुण एव तिष्ठतीति नित्यसत्त्वस्थो भव। विवेकवैराग्यशमदमादिष्वेव तिष्ठेत्यर्थः। योगक्षेमपरस्य रागद्वेषादिः प्रसज्यते तेन शमादयः पलायन्ते ततः साधनविच्छित्तिस्तया मोक्षासिद्धिस्ततो मुमुक्षोस्ताभ्यां निर्गमः कर्तव्य इत्याशयेनाह–निर्योगक्षेमो भवेति। अविद्यमानस्य संपादनं योगः विद्यमानस्य पालनं क्षेमः प्रारब्धाधीनो भूत्वा त्वं ताभ्यां निष्क्रान्तो भव। मनसो विषयान्तरपारवश्ये स्वधर्मो न सिध्यत्यतस्तदभावेन भवितव्यमित्याह–आत्मवानिति। विहिते कर्मणि श्रवणध्यानकीर्तनादिष्वेव स्थित आत्मा मनोऽस्यास्तीत्यात्मवान् निश्चलचित्तो भवेत्यर्थः। यद्वा 'न जायते म्रियते वा कदाचित्' इति 'वेदाविनाशिनम्' इत्यादिवाक्यैः प्रतिपादिता सांख्यविषया बुद्धिर्यदि तवास्ति दृढा तदा त्वयैवं स्थातव्यमिति ज्ञानिनः कर्तव्यं सूच्यते। त्रयो गुणाः सत्त्वादयो यस्य सन्ति तत्त्रिगुणं जगद्बीजमव्याकृतं तस्मादुत्पन्नं जगत्त्रैगुण्यं तदेव प्रतिपाद्यत्वेन विषयो येषां ते त्रैगुण्यविषयाः साध्यसाधनसाधकफलदेवतात्मकजगत्प्रकाशनपराः सर्वे वेदा इत्यर्थः। वेदतदुक्तकर्मतत्फलेषु प्रवृत्तस्य द्वैतज्ञानबाधं विना नाद्वैतज्ञानं तन्निष्ठा तत्फलमपि न सिद्ध्यति अतस्तन्निष्क्रमो विदुषा कर्तव्य इत्याह–निस्त्रैगुण्यो भवेति। 'वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' इति स्मरणाद्वेदेभ्यस्तदुक्तकर्मभ्यस्त्रैगुण्याज्जगतश्च सर्वस्मान्निष्क्रान्तो भव सर्वसंन्यासं कुर्वित्यर्थः। कृतेऽपि सर्वसंन्यासे बहिर्मुखस्य द्वैतावलम्बिनो ब्रह्मनिष्ठायोगात्तदयोगे ज्ञानभ्रंशस्तेन मोक्षो न सिद्ध्यत्यतो ज्ञानिना द्वैतालम्बनं त्यक्तव्यमित्याह–निर्द्वन्द्व इति। द्वन्द्वे नामरूपे सर्वत्र तयोर्ग्रहणान्निर्गतो भव नामरूपयोर्ग्रहणं मा कुर्वित्यर्थः। निद्रां कुर्वतो नामरूपग्रहणं न संभवत्यतः प्राप्तां तां विदुषो निषेद्धुमाह–नित्यस-

त्त्वस्थ इति। सतो भावः सत्त्वं ब्रह्मस्वरूपं नित्यं तस्मिन्नेव तिष्ठतीति नित्यसत्त्वस्थो भव। सर्वदा ब्रह्मैवानुसन्धेहीत्यर्थः। ब्रह्मविदः शरीरयात्रापि ब्रह्मदृष्ट्यैव कर्तव्या न तु बाह्यदृष्ट्येति सूचयितुमाह—निर्योगक्षेम इति। स्थितस्यैव देहस्याहिकण्टकादिभ्यस्तात्पर्येण पालनं क्षेमः तस्यानुकूलद्रव्यसंपादनं योगस्तदुभयस्यापि प्रारब्धाधीनत्वात्स्वदृष्ट्या देहाभावाच्च अधिष्ठानज्ञानबलेन तयोर्निर्गमं कृत्वा निर्योगक्षेमो भव ब्रह्मनिष्ठायां प्रमादः कचिदपि मा भूदित्याह—आत्मवान् आत्मा ब्रह्माकारबुद्धिः सदा सैवास्यास्तीत्यात्मवान्। यद्वाऽहंबुद्धेर्विषय आत्मैव सदास्तु न कचित्प्रमादेनाप्यनात्मेति मत्वाह—आत्मवान् भवेति। अनात्मानमहंबुद्धेः कचित्कदाचिदपि विषयं मा कुर्वित्यर्थः॥ ४५॥

**श्री० टी०**—ननु च यदि स्वर्गादिकं परमं फलं न भवति तर्हि किमिति वेदैस्तत्साधनतया कर्माणि विधीयन्ते तत्राह—त्रैगुण्यविषया इति। त्रिगुणात्मकाः सकामा येऽधिकारिणस्तद्विषयास्तेषां कर्मफलसम्बन्धप्रतिपादका वेदाः। त्वं तु निस्त्रैगुण्यो निष्कामो भव। तत्रोपायमाह निर्द्वन्द्वः सुखदुःखशीतोष्णादियुगुलानि द्वन्द्वानि तद्रहितो भव। तानि सहस्वेत्यर्थः। कथमित्यत्राह नित्यसत्वस्थः सन् धैर्यमवलम्ब्येत्यर्थः। तथा निर्योगक्षेमः अप्राप्तस्वीकारो योगः प्राप्तपरिपालनं क्षेमं तद्रहितः आत्मवान् अप्रमत्तः। नहि द्वन्द्वाकुलस्य योगक्षेमव्यापृतस्य च प्रमादिनः त्रैगुण्यातिक्रमः संभवतीति॥ ४५॥

**स०टी०**—ननु मा भूत्सकामानां व्यवसायात्मिका मतिः॥निष्कामानां तया बुद्ध्या नित्यकर्मादि कुर्वताम्॥१॥ स्वर्गाप्तौ कर्मसामर्थ्यात्प्रतिबन्धः समो भवेत्॥ तेषामप्यात्मविज्ञाने इत्याशङ्क्याह सर्वभूः॥ २॥ गुणानां कर्मसंसारस्त्रयाणां काममूलकः॥ सप्रकारयतया येषां विषयस्तादृशास्त्रयः॥ ३॥ कर्मकाण्डात्मका वेदास्तत्तत्कामानुसारतः॥ बोधयन्ति फलं कामाभावे निष्कामतापराः॥ ४॥ अवदाततया त्वं तु निष्कामो भव सर्वदा॥ एतेन कर्मसामर्थ्यात्संसारोऽस्तीत्यपाकृतम्॥ ५॥ ननु द्वन्द्वप्रतीकारसिद्धयेऽपेक्ष्यतेऽखिलम्॥ वस्त्राशनादि चेत्तर्हि कथं निष्कामतेति चेत्॥ ६॥ मात्रास्पर्शास्त्विहेत्युक्तन्यायेनैव विवेकतः॥ भव द्वन्द्वसहिष्णुस्त्वमालम्ब्यासङ्गसाक्षिणम्॥ ७॥ सोढव्यं वा कथं दुःखमसह्यमिति चेच्छृणु॥ यत्सत्त्वमचलं धैर्यं तदालम्बी सदा भव॥ ८॥ अलब्धलाभो योगः स्यात्क्षेमो लब्धस्य रक्षणम्॥ तच्छून्यो भव धीवृत्तिविक्षेपकमलं त्यज॥ ९॥ जीविष्यामि कथं नैवं चिन्ता कार्या यतो हरिः॥ सर्वान्तर्यामिरूपेण योगक्षेमकरस्तव॥ १०॥ आत्मा ध्येयतया यस्य परमेश्वरसंज्ञकः॥ वर्तते पालकत्वेन सदा स त्वं भवात्मवान्॥ ११॥ सदा कृष्णपदालम्बि यस्य चेतः समाहितम्॥ स निर्द्वन्द्वः स सत्त्वस्थो निःसंकल्पः सदा सुखी॥ १२॥ ४५॥

**भा० टी०**—वेदवादरतानां वेदोक्तत्रिगुणात्मकसंसार एव फलमित्याशयेनाह—त्रैगुण्येति। त्रैगुण्यं संसारः विषयः प्रतिपाद्यो येषां कर्मकाण्डपराणां वेदानां ते। तर्हि मया कथं भाव्यमित्याकाङ्क्षायामाह—निस्त्रैगुण्य इति। निस्त्रैगुण्यो निष्कामो भव। हे अर्जुनेति संबोधयन् स्वनामसार्थकं कर्तुमर्हसीति ध्वनयति। निस्त्रैगुण्यभवने उपायमाह—निर्द्वन्द्व इति। सुखदुःखहेतू प्रतिपक्षपदार्थौ द्वन्द्वशब्दवाच्यौ तस्माद्रहितो भव। तत्रोपायमाह—नित्येति। नित्यं सत्वे स्थितः भव। तत्राप्युपायमाह—निर्योगेति। अनुपात्तस्योपादानं योगः उपात्तस्य रक्षणं क्षेमः ताभ्यां निर्गतः रजोगुणरहितो भव। आत्मवानप्रमत्तः। तमोगुणाद्विनिर्गतो भवेत्यर्थः॥ ४५॥

**प० टी०**—ननु स्वर्गादिकं फलं न स्यात्तर्हि वेदैस्तत्साधनभूतानि कर्माणि कथं विधीयन्त इत्याशङ्क्य तद्विधायकश्रुतिवाक्यानामन्या दृक्तात्पर्यमस्तीत्याह—त्रैगुण्येति। अत्र केवलं वेदानां त्रैगुण्यविषयत्वे सिद्धे

प्रस्तुतं भगवदुपदिश्यमानस्य निस्त्रैगुण्यस्य वेदामूलकत्वेनोपदेशानर्हत्वात् 'तस्माच्छास्त्रं प्रमाणं ते' तथा 'वेदैश्च सर्वैरहमेव वेद्यः' इत्यग्रतो भगवतैव प्रतिपादनादतोऽन्यथा व्याख्यायते। यथाधिकारं सत्त्वादित्रिगुणसंबन्धि यत्फलं तत्त्रैगुण्यं तदेव विषयो निरूपणीयत्वेन प्राप्तं येषु तथाविधा वेदाः सन्ति त्वं तु सात्त्विकफले नित्यसत्त्वस्थः सन् निस्त्रैगुण्यो भव नित्यं शुद्धं च तत्सत्त्वं च तत्रस्थस्तन्निष्ठः सन् तेन तत्त्वज्ञानोत्पत्तौ गुणत्रयातीतो भव। अत्र सामान्यतः सत्त्वस्वरूपं तु–'उपासनायां यदवञ्चकत्वं वाक्कायचित्तेषु तदेव सत्त्वम्' इत्युक्तत्वाद्वेदेनोपासनायां शबलशुद्धत्वभेदेन द्विधा सत्त्वं निरुक्तमस्ति तत्रैकं स्वर्गसुखप्रापकमन्यत्तत्त्वज्ञानोत्पादकम्। एतदेव भगवताप्यग्रे निरूपयिष्यते। 'तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनायम्। सुखसंगेन बध्नाति ज्ञानसंगेन चानघ' इति। श्रुतिरप्याश्वलोपनिषत्सु–"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति। ब्रह्मैव लोको ब्रह्मलोकः। शेषं स्पष्टम्। तथा च शुद्धसत्त्वेन रजस्तमसी अभिभूय तथा तत्त्वज्ञानोत्पत्तौ पुष्पफलन्यायेन सत्त्वोपरमोपि। ततो निस्त्रैगुण्यत्वमेव पर्यवसन्नमित्यर्थः। यद्वा त्रैगुण्यमेव विषं त्रैगुण्यविषं तद्यापयन्ति तिरस्कुर्वन्ति ते त्रैगुण्यविषया एवंविधा वेदाः प्रथमं निरूपितमपि त्रिगुणसंबन्धि स्वर्गादिफलं त्रैगुण्यं तद्विषं घातकं जन्ममरणपर्यवसायित्वेन बन्धहेतुत्वात् पुनरुपनिषद्विभागैस्तद्यापयन्ति दूषयन्ति ते तथा। श्रुतिरपि शातपथी–"पुत्रैषणायाश्च वित्तैषणायाश्च वाञ्छायार्थं भिक्षाचर्यं चरन्ति" इति। नन्वेवं ज्ञात्वापि कथं तेषां विधानमिति चेन्न गुडजिह्विकान्यायेन कर्मप्रवृत्तौ प्रलोभनमात्रत्वात्। अयमर्थः। शरीरायासद्रव्यव्ययैरतिक्लेशसाधनेषु कर्मसु सहसा प्रवृत्तिर्न भवत्यतो रोचनार्थं फलश्रुतिरुक्ता। यथा रोगार्तः शिशुर्मुखे कटु भेषजं न गृह्णाति, तत्र शर्करा निक्षिप्तास्तीति माता प्रलोभयति, सतु शर्करामाधुर्येच्छया गृह्णाति, मातुस्तात्पर्यमारोग्ये तद्वत्। अतस्त्वं निस्त्रैगुण्यो भव त्रैगुण्यतिरस्कारकवेदार्थं भज। अथ व्यतिरेकमुखेन त्रैगुण्यस्य विषयरूपत्वमाह–**निर्द्वन्द्व इत्यादि**। द्वन्द्वानि शीतोष्णादीनि तदसहिष्णुत्वम्। तथाप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य संरक्षणं क्षेमं तथा सावधानत्वमेतानि दुःखहेतवो त्रैगुण्यविषये संभवन्तीति विषरूपत्वं निस्त्रैगुण्ये तु तदभाव इति नित्यसत्त्वस्थो धैर्यवानात्मवान् सावधानः॥ ४५॥

रा० टी०–एवं योगे त्विमां शृण्विति योगोक्तिं प्रतिज्ञाय तत्रादरजननाय सार्धश्लोकेन तं प्रशस्य स्वोक्तौ निष्ठाभावे कारणीभूतमतान्तरविधानं च श्लोकत्रयेण तन्निन्दोक्त्या निरस्येदानीं प्रतिज्ञातं योगं प्राधान्येनाह–**त्रैगुण्येत्यादिना**। आषष्ठाध्यायसमाप्ति। बहूनि मे व्यतीतानीत्यादेः प्रासंगिकत्वेनाप्रधानत्वात्। त्रयाणां सत्वरजस्तमसामिदं त्रैगुण्यम्। त्रिगुणसंबन्धा ( ष्यञ् ) र्थे विचित्रा हि तद्धितगतिरिति ष्यञ्प्रत्ययः। त्रिगुणजन्यं यत्स्वर्गादि तद्विषयाः आपाततः स्वर्गादिफलककर्मादिप्रतिपादकाः प्रतीयन्ते वेदाः वादो विषयकत्वं च मुखतो वचनं तथेत्येके। हे अर्जुन! त्वं तु निस्त्रैगुण्यः निष्क्रान्तस्त्रैगुण्यात् त्रिगुणसंबन्धिस्वर्गादितो निस्त्रैगुण्यः त्रैगुण्यबुद्धितो निर्गतो भव। आपाततः प्रतीतार्थे भ्रान्तिं मा कार्षीरित्यर्थः। यद्वा त्रैगुण्यं त्रिगुणसंबन्धि स्वर्गाद्यस्थिरफलं संसारबन्धनं वा तदेव विषं त्रैगुण्यविषं यापयन्ति अपगमयन्तीति त्रैगुण्यविषयाः। यातेरन्तर्णीतण्यर्थात् "आतोऽनुपसर्गे कः" इति कः। नित्यपुमर्थहेतुभगवत्स्वरूपविषया इति यावत्। तानाश्रित्येति शेषः। निस्त्रैगुण्यो भव प्राग्वदेवार्थः। वेदतात्पर्यविषयीभूतार्थं बुद्धा क्षुद्रफलककर्मादिरूपापातप्रतीतार्थे भ्रान्तिं मा कार्षीरिति भावः। किंच निर्द्वन्द्वः सुखदुःखे समे कृत्वेत्यत्रोक्तदिशा समदुःखसुखादिरिति वा सुखदुःखादिप्राप्तावुत्सेकानुत्सेकहीन इति वार्थः। नित्यं सत्वे साधुगुणोपेते हरौ तिष्ठतीति नित्यसत्वस्थः। नित्यं हरिस्मृतिमान्भवेति सर्वत्रान्वेति। कथं नित्यं हरिस्मृतिरित्यत आत्मवान् परमात्मवान् तथा स्मृतिमानिति। आत्मेति तूपगच्छन्ति ग्राहयन्ति चेति सूत्रोक्तदिशा मम स्वामी हरिरिति स्मृति-

मानिति यावत् । अप्राप्तप्राप्तिर्योगः प्राप्तपरिरक्षणं क्षेमः शास्त्रविरुद्धविषये योगक्षेमाभ्यां निष्क्रान्तो नि-र्योगक्षेमः । शास्त्रविरुद्धविषये योगक्षेमहीनो भवेत्यर्थः । उपलक्षणमेतत् । तादृशयोगक्षेमेच्छाहीनोपि भवे-त्यर्थः । निर्द्वन्द्वत्वादिविशेषणयुक्तः सन् नित्यपुमर्थहेतुर्भगवानेव वेदतात्पर्यविषयो न काम्यकर्मेति ज्ञात्वा का-म्यकर्मत्यागेन सर्वत्र सन्ततः साधुगुणो हरिः मम स्वामीति नित्यस्मरणमेव ज्ञानोपायो न त्वैक्यस्मृति-रित्युक्तं भवति ॥ ४५ ॥

**यावानर्थ उदपाने सर्वतः संप्लुतोदके ॥**
**तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ ४६ ॥**

**त० टी०—नतु वेदविषयपरित्यागे तदर्थातिरिक्तपदार्थाभावान्मुमुक्षोरपि साधनानुष्ठानाद्यपेक्षितं सर्वं हेयं स्यात्तथात्वे तस्य स्वार्थभ्रंश एव स्यादिति चेत्तत्राह—यावानिति । यथा स्नानपानाद्यर्थिनः पुरुषस्य उदपाने वापीकूपतडागादिषु यावान्यावत्परिमाणः स्नानपानाद्यर्थः सर्वतः संप्लुतोदके बहुदेशप्रसृतजलसमूहे महानद्यादिषु तावानेवार्थः । एवं वेदार्थं विजानतः ब्राह्मणस्य ब्रह्मज्ञस्य मुमुक्षो-रिति यावत् । वेदैकदेशे यावानर्थः स्वश्रेयःसाधनभूतसर्वदेवेशभगवत्तोषकरं कर्माचरणं प्रयोजनं तावा-नेव सर्ववेदेष्वर्थः प्रयोजनं, नतु वेदोक्तं सर्वं सर्वैरुपादेयं किन्तु यथाधिकारमेव । यथा वेदोदितमेवाग्निहो-त्रश्राद्धपितृतर्पणादिकं कर्म न संन्यासिनाऽनुष्ठेयमनधिकारात् । किन्तु प्रवृत्तिनिष्ठगृहस्थस्यैव तत्राधि-कारः । संन्यासिनां तु स्नानप्रणवजपतत्त्वानुसन्धानयावद्देहयात्रामात्रभिक्षावसनोपादानमेव वेदोदित-मनुष्ठेयं तद्वदिति विवेकः ॥ ४६ ॥**

म० टी०—न चैवं शङ्कनीयं सर्वकामनापरित्यागेन कर्म कुर्वन्नहं तैस्तैः कर्मजनितैरानन्दैर्वञ्चितः स्या-मिति—**यावानिति** । यस्माद् उदपाने क्षुद्रजलाशये । जातावेकवचनम् । यावानर्थः यावत्स्नानपानादिप्रयोजनं भवति सर्वतः संप्लुतोदके महति जलाशये तावानर्थो भवत्येव । यथा हि पर्वतनिर्झराः सर्वतः स्रवन्तः क्वचिदुपत्यकायामेकत्र मिलन्ति तत्र प्रत्येकं जायमानमुदकप्रयोजनं समुदिते सुतरां भवति । सर्वेषां निर्झ-राणामेकत्रैव कासारेन्तर्भावात् । एवं सर्वेषु वेदेषु वेदोक्तेषु काम्यकर्मसु यावानर्थो हैरण्यगर्भानन्दपर्यन्तः तावान्विजानतो ब्रह्मतत्त्वं साक्षात्कृतवतो ब्राह्मणस्य ब्रह्मबुभूषोर्भवत्येव।क्षुद्रानन्दानां ब्रह्मानन्दांशत्वात्तत्र क्षुद्रा-नन्दानामन्तर्भावात् । "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । एकस्याप्यानन्दस्या-विद्याकल्पिततत्तदुपाधिपरिच्छेदमादायांशांशिवद्व्यपदेश आकाशस्येव घटाद्यवच्छेदकल्पनया । तथा च निष्कामकर्मभिः शुद्धान्तःकरणस्य तत्त्वज्ञानोदये परब्रह्मानन्दप्राप्तिः स्यात्तयैव च सर्वानन्दप्राप्तौ न क्षुद्रानन्दाप्राप्तिनिबन्धनवैयग्र्यावकाशः । अतः परमानन्दप्रापकाय तत्त्वज्ञानाय निष्कामकर्माणि कुर्वित्यभिप्रायः । अत्र यथा तथा भवतीति पदत्रयाध्याहारः । यावान् तावानिति पदद्वयानुषङ्गश्च दार्ष्टा-न्तिके द्रष्टव्यः ॥ ४६ ॥

शं० टी०—ननु ब्रह्मविदः श्रुत्युक्तसर्वकर्मसंन्यासे साधनाभावे साध्याभाव इति न्यायेन तत्तत्कर्म-विशेषलभ्याः सुखविशेषा न संभवन्ति तर्ह्युन्मत्तस्येव निष्फलैवास्य प्रवृत्तिरित्याशङ्कायां न 'सर्वे पदं हस्तिपदे निमग्नम्' इति न्यायेन सत्क्रियालभ्याः सार्वभौमादिब्रह्मान्ता आनन्दाः सर्वे ब्रह्मानुभूतौ तिष्ठ-तोस्यारूढस्य संभवन्तीति सदृष्टान्तमुपपादयति—**यावानिति** । उदमुदकं पिबन्त्यस्मिन्नित्युदपानं जलाशयः । जातावेकवचनम् । तस्मिन्नुदपाने भूमौ सर्वत्र विद्यमानवापीकूपतटाकपुष्करिणीनदनद्यादौ पुण्यतीर्थे स्नानदा-

नार्चनादिक्रियया साध्यमानोऽर्थः पुण्यलक्षणो यावान् यावत्परिमाणकः सिध्यति सर्वतः संप्लुतोदके सर्वत्र संप्लुतं परिपूर्णमुदकं यस्य स सर्वतः संप्लुतोदकः समुद्रस्तस्मिन्नेव स्नानदानार्चनादिक्रियया लभ्यमानः पुण्यरूपोऽर्थस्तावानेव गङ्गादिपुण्यतीर्थेषु तत्रतत्र पृथक्पृथक् क्रियमाणस्नानदानादिक्रियालभ्यमानपुण्यविशेषैः समानपरिमाण एव सिध्यति न ततो न्यूनायते शते पञ्चाशन्न्यायेन परिच्छिन्नजलानां गङ्गादीनां समुद्रेऽन्तर्भावात् । एवमेव सर्वेषु वेदेषु ऋगादिषु प्रसिद्धैः कर्मभिर्यागयज्ञदानाध्ययनव्रततपोयोगादिभिरन्यैश्च पुण्यविशेषैः संपाद्यमानः श्रुत्युक्त आनन्दः सार्वभौमादिब्रह्मान्तः पुनःपुनः शतगुणितो यावान् भवति तावानानन्दो विजानतः सर्वमिदमहं च ब्रह्मैवेति जगत्सर्वं स्वं च सच्चिदानन्दं ब्रह्मैव पश्यतो ब्राह्मणस्य ब्रह्म विद्यतेर्ब्रह्मानुभूत्या सिध्यति ततो ब्रह्मविन्नित्यानन्द एव भवति । "स मोदते मोदनीयं हि लब्ध्वा" इति श्रुतेः । यद्वा उदपाने भूमौ सर्वत्र विद्यमानवापीकूपतटाकनदनद्यादौ जलप्रदेशे विद्यमानो जलरूपोऽर्थो यावान् तिष्ठति तावान् स जलरूपोऽर्थः सर्वतः संप्लुतोदके समुद्रे एककोणस्थितजलस्यांशांशो भवति यथा तथा वेदेषु शब्दादिविषयजातं विदन्ति जानन्तीति वेदाः । विदधातोः कर्तर्यच् । ब्रह्मादिपिपीलिकान्ताः सर्वे प्राणिनस्तेषु वेदेषु सर्वेषु प्राणिषु पुण्यकर्मपरिपाकवशादिष्टार्थसान्निध्ये प्रतीयमान आनन्दरूपोऽर्थः यावान् तावान् आनन्दरूपोऽर्थः सर्वतः संप्लुतोदकस्थानीये ब्रह्मणि स्थितानन्दस्य लेशांशो भवति। "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । एवं स्वप्रतिबिम्बलेशांशमात्रेण ब्रह्मादिपिपीलिकान्तप्राणिजातस्य तत्तत्पुण्यविशेषतारतम्येन सुखतारतम्यप्रदं सर्वतः संप्लुतोदकस्थानीयमद्वितीयं सत्यज्ञानानन्दघनं परं ब्रह्म विजानतः एतदेवाहमिति स्वस्वरूपत्वेन साक्षात्कृतवतो ब्राह्मणस्य ब्रह्मविदोऽखण्डाकारवृत्त्या सर्वदाऽनुभूयमानोऽनन्तो बिम्बानन्द एवंलक्षण एतावानिति वक्तुं न केनापि शक्यत इत्यर्थः ।। ४६ ।।

**श्री० टी०**—ननु वेदोक्तनानाफलपरित्यागेन निष्कामतया ईश्वराराधनविषया व्यवसायात्मिका बुद्धिरेवेत्याशङ्क्याह—**यावानिति** । उदकं पीयतेऽस्मिन्नित्युदपानं वापीकूपतडागादि तस्मिन्स्वल्पोदके एकत्र कृत्स्नस्याभावात् तत्रतत्र परिभ्रमणेन विभागशो यावान् स्नानपानादिरर्थः प्रयोजनं भवति तावान्सर्वोऽप्यर्थः सर्वतः संप्लुतोदके महाह्रदे एकत्रैव यथा भवति एवं यावान् सर्वेषु वेदेषु तत्तत्कर्मफलरूपोऽर्थः तावान् सर्वोऽपि विजानतो व्यवसायात्मकबुद्धियुक्तस्य ब्राह्मणस्य ब्रह्मनिष्ठस्य भवत्येव ब्रह्मानन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । तस्मादियमेव बुद्धिः सुबुद्धिरित्यर्थः ।। ४६ ।।

**स० टी०**—सर्वकामपरित्यागाद्वञ्चितोऽहं सुखांशतः ।। कर्मजात्कर्म कुर्वंश्चेत्येवं मा मानसं कुरु ।। १ ।। यावत्स्यात्स्नानपानादिफलं क्षुद्रजलाशये ।। तावत्फलं भवत्येव महत्यपि जलाशये ।। २ ।। यथाद्रिनिर्झराः सर्वे स्रवन्तस्ते क्वचिद्भुवि ।। मिलन्त्येकत्र तत्रापि प्रत्येकं यत्प्रयोजनम् ।। ३ ।। तत्सर्वं तत्र सुतरामेकत्रातिजलाशये ।। एवमेवागमोक्तेषु सर्वेषु काम्यकर्मसु ।। ४ ।। यावानर्थोऽस्ति हैरण्यगर्भानन्दावसानकः ।। तावान्ब्रह्माद्वयानन्दं साक्षात्कृतवतो विदः ।। ५ ।। ब्राह्मणस्य भवत्येव ब्रह्मीभूतस्य सर्वथा ।। ६ ।। यथाकृतायो विजितोऽस्ति येनाधरेऽपि संयान्ति तमेव चायाः ।। तथात्मविज्ञं सुकृतैकराशिं संयान्ति सर्वाणि सुखानि पुंसाम् ।। ७ ।। क्षुद्रानन्दाः समस्तास्ते ब्रह्मानन्दलवा यतः ।। अविद्याकल्पितोपाधितारतम्यादनेकधा ।। ८ ।। ब्रह्मानन्दस्तु सर्वत्र व्यापकः सत्य आन्तरः ।। जडदुःखानृताकारे प्रपञ्चे कुत्र वा सुखम् ।। ९ ।। सच्चिदानन्दमद्वैतसुखं ब्रह्मैव सर्वगम् ।। तथा च शुद्धचित्तस्य तव निष्कामकर्मभिः ।। १० ।। आत्मज्ञानोदये ब्रह्मानन्दप्राप्तिः स्वतो भवेत् ।। सर्वानन्दपरिप्राप्त्या क्षुद्रानन्दल-

वेषु ते ॥ ११ ॥ मास्तु कामो ह्यतस्तत्त्वज्ञानलाभाय सर्वथा ॥ ईश्वरार्पणया बुद्धया कुरु कर्मानहंकृतिः ॥ १२ ॥ ४६ ॥

**भा० टी०**—ननु वेदोक्तकर्मफलाकाङ्क्षा नापेक्षिता चेदीश्वरार्थमपि कर्म किमर्थमनुष्ठेयमित्याशङ्क्य फलाकाङ्क्षया कर्मानुष्ठातुरनेकानर्थसंभावना फलाभिसन्धिरहितस्य तस्य तु ज्ञानप्राप्त्या सर्वकर्मफलानां यस्मिन्ब्रह्मसुखेन्तर्भावः तत्प्राप्तिः समस्तानर्थनिवृत्तिश्च भवतीत्याशयेनाह—**यावानिति** । यथा लोके उदपाने कूपाद्यनेकस्मिन् स्वल्पे कचिद्धस्तादिप्रक्षालनं क्वचित्स्नानं कचित्पानमित्यादिर्यावानर्थः यावत्परिमाणं प्रयोजनं स सर्वार्थः तावत्परिमाण एव सर्वतः संप्लुतोदके परिपूर्णोदके भवति । तत्रान्तर्भवतीत्यर्थः । तथा यावानर्थः फलं वेदेषु वेदबोधितेषु कर्मसु तावानर्थो ब्राह्मणस्य परमार्थतत्त्वं विजानतः संभवति सर्वतः संप्लुतोदकस्थानीये ज्ञानफले ब्रह्मणि सर्वेषां फलानामन्तर्भावात् । " एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति " इति श्रुतेः । ब्राह्मणग्रहणं ब्रह्मविद्यायां ब्राह्मणस्य मुख्याधिकारसूचनार्थम् ॥ ४६ ॥

**प० टी०**—अत एव ज्ञातवेदतात्पर्यं पुरुषं स्तौति—**यावानिति** । उदमुदकं पीयते यस्मिन्नित्युदपानं तस्मिन् पानपर्याप्तोदके निर्झरपल्वलादौ भ्रमणं कृतवतः पुरुषस्य यावानर्थः सिद्ध्यति तावान् सर्वतः सर्वोऽप्यर्थ एकत्र संप्लुतोदके महाह्रदे सिद्ध्यति । एवं यावान् सर्वेषु पूर्वोत्तरमीमांसादिदर्शनेषु कर्मनैष्कर्म्याद्यर्थो निरूपितोस्ति तावान् विजानतो विशेषेण वेदतात्पर्यं जानतो ब्राह्मणस्य ब्रह्मज्ञस्य पुरुषस्य संप्लुतोदकस्थानीयेषु वेदेषु सिद्ध्यति ॥ ४६ ॥

**रा० टी०**—ननु यामिमामिति त्रयेण काम्यकर्मिणां समाध्यभावेन ज्ञानाभावान्न मोक्ष इति निन्दां कृत्वा निस्त्रैगुण्यो भवेति काम्यकर्मत्यागेन योगानुष्ठाननियम उक्तः । सत्वयुक्तः । ज्ञानफलं कर्मिणामिव कर्मिफलं स्वर्गादिकं ज्ञानिनां नास्तीति ज्ञानकर्ममार्गयोः साम्यादित्यत आह—**यावानिति** । सामर्थ्याद्यथैवं पदयोरध्याहारः । यावान्तावानित्यनयोरावृत्तिः । अयमर्थः । यथा यावानर्थः प्रयोजनमुदपाने उदकं पीयतेऽस्मिन्निति व्युत्पत्त्या कूपे भवति तावान्स्नानपानादिरूपोर्थः सर्वतः संप्लुतोदके महासमुद्रेन्तर्भवति । एवं सर्वेषु वेदेषु सर्ववेदोक्तकाम्यकर्मिणां यावानर्थः स्वर्गादिरूपं फलं तावानर्थः तावत्फलं विजानतो परोक्षतो भगवन्तं जानतो ब्राह्मणस्य ब्रह्मापरोक्षज्ञानिनः भवत्येवेत्यर्थः । ज्ञानिकर्मिणोरन्योन्यफलाभावेपि ज्ञानिफलं महासमुद्रोदकमिव महत् कर्मिफलं तु कूपोदकमिवात्यल्पमतः कुतस्तयोः साम्यम् । तथाचाल्पास्थिरफलककर्मनिन्दया महानन्तफलज्ञानसाधने योगे प्रेरणं पूर्वश्लोकोक्तं युक्तमिति भावः । अत्र विजानत इति परोक्षज्ञानस्य ब्राह्मणपदोक्तापरोक्षज्ञानस्य च हेतुहेतुमद्भावेन द्वयोरुक्तिः । पूर्वत्र स्वामित्वेन हरिस्मरणस्य योगशब्दितज्ञानोपायत्वप्रकटनाय स्वरूपकथनमिति टीकोक्तिस्त्वभ्युपगमवादेनेति ज्ञेयम् । यद्वा पूर्वत्र निस्त्रैगुण्यो भवेति स्वर्गादिशयिष्णुफलककाम्यकर्मरूपे आपाततः प्रतीते वेदार्थे भ्रान्तिं मा कार्षीरित्युक्तकाम्यकर्मनिवृत्तौ त्रैगुण्यविषहारिवेदाश्रयणं कार्यमित्युक्तेर्थे वेदतात्पर्यार्थे निवृत्तकर्माराध्यं विष्णुं सम्यग्जानतोऽतिशयितफलावाप्तिरूपयुक्तिमाह—**यावानिति** । सर्वतः संप्लुतोदके प्रकृत्यात्मके महाप्रलयोदके । अधिकरणसप्तमी । तत्र स्थित इत्यर्थः । उदपाने परमात्मनि । उत् उद्रेकात् अपः पालकराहित्याद् अनः चेष्टकत्वाद्धेतोः उच्चासावपश्च अनश्चेत्युदपानस्तस्मिन्प्रलये अत्युद्रिक्तगुणतया पालकवर्जितः सन्कालादिचेष्टकतया स्थिते हरौ प्रसन्ने सति यावानर्थः धर्ममोक्षादिर्भवति तावान्सर्वेषु वेदेषु विजानतो विशेषज्ञस्य कर्माणि भगवज्ज्ञानार्थानि । भगवानेव वेदमुख्यार्थः । स्वर्गादिफलश्रवणं रुच्यर्थमित्यादि जानतो ब्राह्मणस्य तावानर्थो भवति । अतः प्रतीतार्थे त्रैगुण्ये भ्रान्तिं मा कार्षीरिति ॥ ४६ ॥

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ॥**
**मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि ॥ ४७ ॥**

त० टी०—ननु यद्येवं तर्हि मुमुक्षुणा ज्ञाननिष्ठैव सम्पादनीया, किं कर्मणेति चेत्तत्राह—कर्मण्येवेति । ते तव मुमुक्षोः तत्त्वनिष्ठापादनाय तावदन्तःकरणशुद्ध्यर्थं कर्मण्येवाधिकारोऽस्ति । न च कर्मण्यधिकृतस्य मे तत्राऽऽसक्त्याऽव्यवसायात्मिका बुद्धिः स्यादिति वाच्यमित्याह—मा फलेषु कदाचनेति । कर्मफलेषु तेऽधिकारो मा भूत् । नहि फलेच्छां त्यक्त्वा कर्म कुर्वतोऽव्यवसायात्मिका बुद्धिर्भवति अपि तु फलासक्तस्यैव । ननु फलेच्छाभावेऽपि कर्म कुर्वतः फलावाप्तिः स्यादेवेति चेत्तत्राह—मा कर्मफलहेतुर्भूरिति । मत्कृतस्य कर्मण इदं फलमित्यामानं फलं प्रति हेतुं मा भावयेथाः । फलोद्देशं विनैव कर्म कुर्वित्यर्थः । ननु निष्फलकर्मकरणादकरणमेव ज्यायो 'न कुर्यान्निष्फलं कर्म' इति निषिद्धत्वादिति चेत्तत्राह—मा ते संगोऽस्त्वकर्मणीति । अकर्मणि कर्माकरणे तव मुमुक्षोः संगो न, योत्स्यामीत्यहंकारो माऽस्तु नित्यनैमित्तिकाकरणे प्रत्यवायापत्तेः 'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया' इति मनुस्मरणात् ॥ ४७ ॥

म० टी०—ननु निष्कामकर्मभिरात्मज्ञानं सम्पाद्य परमानन्दप्राप्तिः क्रियते चेत्तदात्मज्ञानमेव तर्हि सम्पाद्यं किं बह्वायासैः कर्मभिर्बहिरङ्गसाधनभूतैरित्याशङ्क्याह—कर्मणीति । ते तवाशुद्धान्तःकरणस्य तात्त्विकज्ञानोत्पत्त्ययोग्यस्य कर्मण्येवान्तःकरणशोधकेऽधिकारो मयेदं कर्तव्यमिति बोधोस्तु न ज्ञाननिष्ठारूपे वेदान्तवाक्यविचारादौ । कर्म च कुर्वतस्तव तत्फलेषु स्वर्गादिषु कदाचन कस्यांचिदप्यवस्थायां कर्मानुष्ठानात्प्रागूर्ध्वं तत्काले वा अधिकारो मयेदं भोक्तव्यमिति बोधो मास्तु । ननु मयेदं भोक्तव्यमिति बुद्ध्यभावेपि कर्म स्वसामर्थ्यादेव फलं जनयिष्यतीति चेन्नेत्याह—मेति । मा कर्मफलहेतुर्भूः फलकामनया हि कर्म कुर्वन्फलस्य हेतुरुत्पादको भवति त्वं तु निष्कामः सन् कर्मफलहेतुर्माभूः । न हि निष्कामेन भगवदर्पणबुद्ध्या कृतं कर्म फलाय कल्पत इत्युक्तम् । फलाभावे किं कर्मणेत्यत आह मा ते सङ्गोस्त्वकर्माणि । यदि फलं नेष्यते किं कर्मणा दुःखरूपेणेति अकरणे तव प्रीतिर्मा भूत् ॥ ४७ ॥

शं० टी०—यद्यप्येवंलक्षणसंपन्नस्यैव ब्रह्मवित्तमस्य सर्वकर्मसंन्यासेऽधिकारस्तथापि शोकमोहाविष्टत्वादिधर्मैर्विचार्यमाणे नैतल्लक्षणं त्वयि दृश्यते ततस्तव कर्मण्येवाधिकारो न तु ज्ञाने नापि च संन्यासे इति वदन् शतधा कुतः श्रवणानामप्यनुदितात्मज्ञानानां मुमुक्षूणां स्वधर्मानुष्ठानमवश्यं कर्तव्यं न क्वचिदपि त्यक्तव्यमिति निष्कर्षमाह—कर्मणीति । मुमुक्षोस्तव श्रुतिस्मृतिभ्यां विहिते काम्यवर्जिते नित्ये नैमित्तिके च कर्मण्येवाधिकारो योग्यता नान्यत्र ज्ञाननिष्ठायां संन्यासे वेत्यन्ययोगव्यवच्छेदार्थ एवकारः । तत्रापि कर्मफलेषु 'यज्ञो दानं तपश्चैव पावनानि' इति 'धर्मेण पापमपनुदति' इति नित्यानामपि फलश्रवणात्तत्फलेषु मा ते अधिकारः नास्ति योग्यता कदाचिदपि कर्मफलेष्वपेक्षा न कर्तव्येत्यर्थः । कर्मफलेष्वपेक्षितेषु सत्सु बीजे सत्यङ्कुरवत्पुनर्जन्मादयो दुःखभूमयः स्वयमेव स्युस्तस्मान्मा कर्मफलहेतुर्भूः यथा स्वर्गकामी स्वर्गफलहेतुस्तथा त्वमेतत्कर्मफलहेतुर्माभूः । कर्मफलेष्वपेक्षावान् मा भवेत्यर्थः । ननु फलशून्यं तत्रापि क्लेशप्रधानं कर्म कर्तुं न शक्यते तदपेक्षया तत्त्यागः सुखावह इत्याकाङ्क्षायामारुरुक्षोः कर्मत्यागो न युक्त इत्याशयेनाह—मा त इति । अकर्म कर्मव्यतिरेकः क्रियात्याग इति यावत्तस्मिन्नकर्मणि ते सङ्गो मनःसक्तिर्मास्तु । अकरणे प्रत्यवायस्तेन नरको दुर्योनिश्च स्यादतो मुमुक्षोः कर्मसंन्यासो न युक्त इत्यर्थः । एतेन कर्मफलानपेक्षया श्रद्धया चेश्वरप्रीत्यर्थं भक्त्या कर्म कुर्वत एव मोक्षो नान्यथेति सूचितं भवति ॥ ४७ ॥

**श्री० टी०**—तर्हि सर्वकर्मफलानि परमेश्वराराधनादेव भविष्यन्तीत्यभिसंधाय प्रवर्तेत किं कर्मणेत्याशङ्क्य तद्वारयन्नाह—**कर्मण्येवेति** । ते तव तत्त्वज्ञानार्थिनः कर्मण्येवाधिकारः तत्फलेषु बन्धहेतुष्वधिकारः कामो मास्तु । ननु कर्मणि कृते तत्फलं स्यादेव भोजने कृते तृप्तिवदित्याशङ्क्याह—**मा कर्मेति** । मा कर्मफलहेतुर्भूः कर्मफलं प्रवृत्तिहेतुर्यस्य तथाभूतो मा भूः । कामितस्यैव स्वर्गादेर्नियोज्यविशेषणत्वेन फलत्वादकामितं फलं न स्यादिति भावः । अत एव फलं बन्धकं भविष्यतीति भयादकर्मणि कर्माऽकरणेऽपि तव संगो निष्ठा मास्तु ॥ ४७ ॥

**स० टी०**—नन्वात्मबोधः संपाद्यो यदि निष्कामकर्मभिः ॥ आनन्दाय तदा तत्र यतितव्यं मुमुक्षुभिः ॥ १ ॥ आत्मबोधे किमायासशतैः कर्मभिरेव चेत् ॥ मैवं ह्यशुद्धबुद्धेस्ते बुद्धिशोधककर्माणि ॥ २ ॥ मयेदं कार्यमित्येवास्तु बोधः कर्म कुर्वतः ॥ न च वेदान्तवाक्यानां विचारे तेऽधिकारिता ॥ ३ ॥ कर्मापि कुर्वतः सम्यक्तत्फलेषु स्वरादिषु ॥ कर्मानुष्ठानकाले वा प्रागूर्ध्वं वा कदाचन ॥ ४ ॥ मयेदमिह भोक्तव्यमिति बोधोऽपि मास्तु ते ॥ ननु मयेदं भोक्तव्यमिति बुद्धिं विनापि तत् ॥ ५ ॥ स्वसामर्थ्यात्फलं कर्म जनयिष्यति चेच्छृणु ॥ फलकामनया कर्म कुर्वन्नुत्पादको भवेत् ॥ ६ ॥ मा कर्मफलहेतुर्भूस्त्वं तु निष्काम एव सन् ॥ निष्कामेन कृतं कर्म कृष्णार्पणधिया स्वयम् ॥ ७ ॥ फलाय कल्पते नैव तथैव त्वं सदा कुरु ॥ फलं चेन्नेष्यते तर्हि किं स्याद्दुःखात्मकर्मणा ॥ ८ ॥ इति बुद्ध्या तव प्रीतिर्मा भूदकरणे कदा ॥ ९ ॥ ४७ ॥

**भा० टी०**—मम तर्हि काधिकार इत्याकाङ्क्षायामाह—**कर्मणीति** । कर्मण्येव न तु ज्ञाननिष्ठायाम् अन्तःकरणशुद्ध्यभावात् तत्रापि चित्तशुद्धिहेतौ फलाभिसंधिरहिते कर्मणि न तु बन्धनिमित्ते काम्ये इत्याह—**मेति** । कदाचन कस्यांचिदवस्थायामपि कर्मफलतृष्णा ते मास्तु फलतृष्णया काम्ये तेऽधिकारो मास्त्विति यावत् । ननु तृष्णाभावेऽपि भोजनात्तृप्तिरिव कर्मणः फलं स्यादेवेति तत्राह—**मा कर्मेति** । मा कर्मफलेहेतुर्भूः फलतृष्णया तदुत्पादको मा भूः कामनया कृतस्य कर्मणः पश्वादिफलदातृत्वनियमात् । "चित्रया यजेत पशुकामः" इति श्रुतेः । यत्तु 'कर्मफलं प्रवृत्तिहेतुर्यस्य' इति तन्न बहुव्रीह्यपेक्षया तत्पुरुषस्य लघुत्वात् । दुःखरूपेण निष्फलेन कर्मणा किमिति ते कर्माकरणे संग आसक्तिर्मा भूत् ॥ ४७ ॥

**प० टी०**—अथोक्तप्रमेयपर्यवसितमर्थमाह—**कर्मण्येवेति** । तत्त्वज्ञानार्थिनस्ते तवेश्वरकृपया कर्मण्येवाधिकारोऽस्तु परं फलेष्वधिकारो मास्तु । स्वर्गादिफलभोगाधिकारो मास्त्वित्याशीः । तथा त्वमपि कर्मफले हेतुर्मा भूः कर्मफलभोगे हेतुर्निमित्तं मा भव । तव चित्तं कर्मफलसंकल्पोऽपि न स्पृशतु । अथ साक्षात्कर्मणः फलावश्यंभावनियम इति प्रसिद्धे फलं भविष्यत्येव तस्मात्कर्मैव कार्यमित्याशङ्क्याह—**मेति** । तेऽकर्मणि कर्माकरणे संगो निष्ठा मास्तु । स्वतृप्तिमनुद्दिश्येश्वरार्पणत्वेन भोजनसामग्रीसंपादनवत्कर्म कार्यमित्यर्थः ॥ ४७ ॥

**रा० टी०**—ननु सकामतया कर्म कुर्वतां यामिमामित्यादिनोक्ता निन्दा न युक्ता । "स्वर्गकामो यजेत" इत्यादौ कामनाया अपि विधानात् । नहि विहितकृतां निन्दा युक्ता । न च यागकामनयोर्द्वयोरपि विधौ वाक्यभेदः स्वर्गकामनाविशिष्टयागविध्यभ्युपगमादित्यत आह—**कर्मण्येवेति** । अत्र त इति ज्ञानिभूतसर्ववर्णाश्रमोपलक्षणम् । फलेष्विति पदं फलकामोपलक्षणम् । अयमर्थः । हे पार्थ ते तव त्वादृशस्यान्यस्य ज्ञानिनोपि कर्मण्येवाधिकारो योग्यता । फलेषु स्वर्गादिफलकामनासु मा नाधिकारः । अतः कर्मैव कार्यं विधिविषय इति यावत् । न तु कामना कार्या । कुतः कुर्वन्नेवेति श्रुतौ एवं त्वयीत्युत्तरार्धे कर्माकरणे प्रत्यवाय इव कामनाया अकरणे प्रत्यवायाश्रवणात् । तथा च कामनानुवादेन यागविधिरेवायम् नतु विशिष्टविधि-

रिति भावः । अतः कामनायाः विध्यविषयत्वात् कर्मकृतौ फलं हेतुर्यस्य स कर्मफलहेतुः मा भूरित्यर्थः । शाकपार्थिवादिवत् कृतिपदलोपोत्र ध्येयः । तर्हि स्वयं क्लेशरूपत्वात् कर्म न कार्यमित्यत आह—मा त इति । ते तव त्वादृशस्य सर्वस्यापि ज्ञानिनो कर्मणि कर्माकरणे संगः स्नेहो मा भूत् । स्वर्गादिरूपाल्पास्थिरफलाभावेपि अनल्पस्थिरमोक्षरूपमहापुमर्थहेतुभगवज्ज्ञानभक्तिप्रसादानां भावात्तत्कामनया कर्मकरणोपपत्तेर्ज्ञानभक्त्यादिकामनायाश्च निन्दाभावात् । प्रत्युत 'वृणीमहे ते परितोषणाय' इत्यादिना चतुर्थस्कन्धे प्रचेतसां महतामाचाराच्च । तथाच सूत्रम् "बहिस्तूभयथापि स्मृतेराचाराच्च" इति । न च ज्ञानिनोऽनियमः सर्वेषामित्युक्तदिशा मोक्षस्य सिद्धतया किं कर्मकरणेन साध्यमिति चेन्न । ज्ञाने मोक्षे चातिशयार्थत्वात् । यथोक्तं भावं तु बादरायणोस्ति हीति । यद्वा पूर्वमात्मवानित्यनेनैक्यभावनं न कार्यमित्युक्तम् । तत्कुत इत्यतो जीवब्रह्मैक्यस्यैवाभावादित्यैक्याभावरूपं हेतुमाह—कर्मण्येवेति । त इत्युपलक्षणम् । त्वदादिसर्वजीवानां कर्मण्येवाधिकारः । कर्मसंपादन एव सामर्थ्यमित्यर्थः । एवकारव्यवच्छेद्यमाह—मा फलेष्विति । फलेषु कदाचनाधिकारो नास्ति । फलसंपादने सामर्थ्यं नास्ति किंत्वीश्वर एव फलदाने समर्थ इति भावः । तदाह सूत्रे "फलमत उपपत्तेः" इति । एवं च फलसंपादने शक्तत्वाशक्तत्वाभ्यां सर्वजीवानां ईश्वरेणैक्याभावादिति युक्तिरुक्ता भवति । तस्याः प्रतिज्ञामाह—मा कर्मफलहेतुर्भूरिति । उक्तदिशा कर्मफलहेतुरीश्वरः मनसा स मा भूः । तदैक्यभावना न कार्येति यावत् । मिथ्योपासनायाः "न प्रतीकेन हि सः" इति व्याससूत्रे "अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्" इति साङ्कर्षणसूत्रे च निषेधात् । तर्हि सत्त्वस्थ इत्युक्तदिशा नित्यं स्वामित्वेन हरिस्मृत्यैवालं किं कर्मकरणेनेत्यत आह—मा त इति । त्वदादेः सर्वस्य अकर्मणि कर्माकरणे संगः स्नेहो मा भूत् । तदकरणे प्रत्यवायश्रवणादिति भावः ॥ ४७ ॥

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ॥ ४८ ॥**

**त० टी०—तर्हि किं कुर्यामित्यत आह—योगस्थ इति । योगस्थः सन् सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा सिद्ध्यसिद्ध्योः समो भूत्वा कर्माणि कुरु । कर्माणीति बहुवचनं नित्यनैमित्तिकयोरेव बहुप्रकाराभिप्रायेण । न च काम्यस्यापि ग्रहणमिति वाच्यं, पूर्वापरविरोधात् । योगशब्दार्थं स्वयमेवाह—समत्वं योग उच्यते इति । सिद्ध्यसिद्ध्योर्यत्समचित्तत्वं स एव योग उच्यते विवेकिभिः ॥ ४८ ॥**

म० टी०—पूर्वोक्तमेव विवृणोति—योगस्थ इति । हे धनञ्जय ! त्वं योगस्थः सन् सङ्गं फलाभिलाषं कर्तृत्वाभिनिवेशं च त्यक्त्वा कर्माणि कुरु । अत्र बहुवचनात्कर्मण्येवाधिकारस्त इत्यत्र जातावेकवचनम् । सङ्गत्यागोपायमाह—सिद्ध्यसिद्ध्योरिति । सिद्ध्यसिद्ध्योः समो भूत्वा फलसिद्धौ हर्षं फलासिद्धौ च विषादं त्यक्त्वा केवलमीश्वराराधनबुद्ध्या कर्माणि कुर्वित्यर्थः । ननु योगशब्देन प्राक्कर्मोक्तमत्र तु योगस्थः कर्माणि कुर्वित्युच्यते अतः कथमेतद्बोद्धुं शक्यमित्यत आह—समत्वमिति । समत्वं योग उच्यते यदेतत् सिद्ध्यसिद्ध्योः समत्वमिदमेव योगस्थ इत्यत्र योगशब्देनोच्यते न तु कर्मेति न कोपि विरोध इत्यर्थः । अत्र पूर्वार्धस्योत्तरार्धेन व्याख्यानं क्रियत इत्यपौनरुक्त्यमिति भाष्यकारीयः पन्थाः । सुखदुःखे समे कृत्वेत्यत्र जयाजयसाम्येन युद्धमात्रकर्तव्यता प्रकृतत्वादुक्ता इह तु दृष्टादृष्टसर्वफलपरित्यागेन सर्वकर्मकर्तव्यतेति विशेषः ॥ ४८ ॥

शं० टी०—जन्मादिदुःखनिःशेषनिवृत्त्यपेक्षैव तवास्ति चेत्तर्हि त्वं कर्मैव कुर्वित्युपदिशति—योगस्थ इति ।

निर्दोषं हि समं ब्रह्मेति वक्ष्यमाणं ब्रह्मात्र समशब्देनोच्यते समस्य भावः समत्वं तदेव ज्ञानेन युज्यते प्राप्यत इति योग इत्युच्यते तस्मिन् योगे ब्रह्मणि स्वस्य तद्भावापत्त्यैतदेकापेक्षया तिष्ठतीति योगस्थो मोक्षैककामः सन् त्वं सङ्गमेतैर्मम दुरितक्षयोऽस्त्विति प्रतिबन्धनिवृत्तिरस्त्विति वा प्रसीदत्वीश्वरो मह्यमिति वा कर्मजन्यं फलं मे भूयादिति वा संगः कामस्तं कर्मसु त्यक्त्वा प्रारब्धस्य कर्मणः साङ्गतासिद्धिस्तदभावोऽसिद्धिः ईश्वरप्रसादप्राप्तिः सिद्धिस्तदप्राप्तिरसिद्धिः चित्तप्रसक्तिः सिद्धिस्तदभावोऽसिद्धिरित्यादिसिद्ध्यसिद्ध्योः समो हर्षविषादशून्यो भूत्वा कर्माणि क्लेशात्मकान्यपि विहितानीति बुद्ध्या कुर्वित्यर्थः ॥ ४८ ॥

**श्री० टी०**—किं तर्हि—**योगस्थ इति**। योगः परमेश्वरैकपरता तत्र स्थितः कर्माणि कुरु तथा संगं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराश्रयेणैव कुरु तत्फलस्य ज्ञानस्यापि सिद्ध्यसिद्ध्योः समो भूत्वा केवलमीश्वरार्पणेनैव कुरु। यत एवंभूतं समत्वमेव योग उच्यते सद्भिः। चित्तसमाधानरूपत्वात् ॥ ४८ ॥

**स० टी०**—कथं कर्तव्यमिति चेच्छृणु भूत्वा समाहितः ॥ योगस्थः सन्फले कामं कर्तृत्वाभिमतिं तथा ॥ १ ॥ त्यक्त्वा त्वं कुरु कर्माणि कृष्णार्पणधिया सदा ॥ त्यक्त्वा हर्षं फलप्राप्तौ फलासिद्धौ विषादताम् ॥ २ ॥ कोऽसौ योगः स यत्रस्थः कर्म कुर्वन्न दुष्यति ॥ सिद्ध्यसिद्ध्योः समत्वं यत्स योग इह कथ्यते ॥ ३ ॥ ४८ ॥

**भा० टी०**—एतदेव विवृणोति—**योगस्थ इति**। योगस्थः कर्माणि कुरु केवलमीश्वरार्थम्। ननु 'योगः परमेश्वरैकपरता' इति योगशब्दार्थ आचार्यैः कुतो न प्रदर्शित इति चेत् समत्वं योग उच्यत इति अनेन तदर्थस्य मूल एवोक्तत्वात्। तत्रापीश्वरो मे तुष्यात्विति संगं त्यक्त्वा एतद्भाष्यमुपलक्षणं कर्तृत्वाद्यभिनिवेशस्यापि चित्तशुद्धिद्वारा ज्ञानप्राप्तिरूपायां सिद्धौ तद्विपर्ययरूपायामसिद्धौ च समो हर्षविषादशून्यो भूत्वा अयमेव योग इत्याह—समत्वमिति। दिग्विजये महीपाञ्जित्वा धनमाहृत्य राजसूययज्ञे त्वया नियोजितं तथाधुनाप्येतान् सर्वान् जित्वा यज्ञादीन् संपादयितुमर्हसीति द्योतयन्नाह—हे धनञ्जयेति ॥ ४८ ॥

**प० टी०**—तर्हि कथमित्याह-**योगस्थ इति**। योगः परमेश्वरसांनिध्यं तत्र कृतनिश्चयो योगस्थ एवंविधो भूत्वा कर्माणि कुरु, अत एव धनञ्जय धनं स्वर्गादिसुखं जयति तुच्छत्वेन त्यजति तथाविधस्त्वमसीत्यर्थः। किं कृत्वा संगं त्यक्त्वा कर्तृत्वाभिनिवेशं परित्यज्य। पुनः किं कृत्वा सिद्ध्यसिद्ध्योः समो भूत्वा सिद्धावसिद्धौ वा हर्षविषादरहितो भूत्वा। यतः समत्वं निर्विकारत्वमेव योग इत्युच्यते ॥ ४८ ॥

**रा० टी०**—मा ते संगोऽस्त्वकर्मणीत्युक्तं तर्हि किं कार्यमित्यत आह—**योगस्थ इति**। योगो ज्ञानोपायः तत्र तिष्ठतीति योगस्थः। ज्ञानोपायमनुतिष्ठन्संगं फलस्नेहं त्यक्त्वा तत एव फलरागत्यागादेव सिद्ध्यसिद्ध्योः समो भूत्वा कर्माणि कुरु ईश्वरप्रसत्तौ कर्माणि कुर्वित्यर्थः। योगस्थ इत्युक्तयोगः क इत्यतः संगं त्यक्त्वेत्यादिना योगशब्दार्थो व्याख्यातः। तत्र त्यागसमत्वयोः प्रत्येकं योगत्वभ्रान्तिनिरासायाह—**समत्वमिति**। संगत्यागस्याप्युपलक्षणम्। त्यागोपेतं समत्वं योग इत्यर्थः ॥ ४८ ॥

**दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय ॥**
**बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः ॥ ४९ ॥**

**त० टी०**—ननु फलार्थमपि कर्म कर्तुरभीष्टदानेन श्रेष्ठं प्रतीयते किमर्थमसकृत्तन्निषिध्यत इत्यत आह—**दूरेणेति**। हे धनञ्जय! पूर्वमेव धनं जितवानसि नहि ते धनादिफलाकाङ्क्षया स्वधर्मे प्रवृत्तिरिति भावः। व्यवसायात्मिकबुद्ध्याऽनुष्ठितः कर्मयोगो बुद्धियोगस्तस्मात् काम्यं कर्म दूरेणावरम्

**अतिनिकृष्टमित्यर्थः। हि यस्मादेवं तस्माद् बुद्धौ शरणं निवासस्थानमाश्रयमिति यावत्। अन्विच्छ तदाश्रितो भवेत्यर्थः। फलहेतवः फलोद्देशेन कर्म कुर्वाणाः कृपणा अतिदीनाः त्वं तु कृपणो मा भवेति भावः॥४९॥**

**म० टी०**—ननु किं कर्मानुष्ठानमेव पुरुषार्थो येन निष्फलमेव सदा कर्तव्यमित्युच्यते। 'प्रयोजनमनुदिश्य न मन्दोऽपि प्रवर्तते' इति न्यायात् तद्वरं फलकामनयैव कर्मानुष्ठानमिति चेन्नेत्याह—**दूरेणेति**। बुद्धियोगात् आत्मबुद्धिसाधनभूतान्निष्कामकर्मयोगात् दूरेणातिविप्रकर्षेणावरमधमं कर्म फलाभिसन्धिना क्रियमाणं जन्ममरणहेतुभूतम्। अथवा परमात्मबुद्धियोगाद्दूरेणावरं सर्वमपि कर्म हि यस्मात् हे धनंजय! तस्मात् बुद्धौ परमात्मबुद्धौ सर्वानर्थनिवर्तकायां शरणं प्रतिबन्धकपापक्षयेण रक्षकं निष्कामकर्मयोगमन्विच्छ कर्तुमिच्छ। ये तु फलहेतवः फलकामाः अवरं कर्म कुर्वन्ति ते कृपणाः सर्वदा जन्ममरणादिघटीयन्त्रभ्रमणेन परवशाः अत्यन्तदीना इत्यर्थः। "यो वा एतदक्षरं गार्ग्यविदित्वा अस्माल्लोकात्प्रैति स कृपणः" इति श्रुतेः। तथा च त्वमपि कृपणो मा भूः किन्तु सर्वानर्थनिवर्तकात्मज्ञानोत्पादकं निष्कामकर्मयोगमेवानुतिष्ठेत्यभिप्रायः। यथाहि कृपणा जनाः अतिदुःखेन धनमर्जयन्तो यत्किंचिद्दृष्टसुखमात्रलोभेन दानादिजनितं महत्सुखमनुभवितुं न शक्नुवन्तीत्यात्मानमेव वञ्चयन्ति। तथा महता दुःखेन कर्माणि कुर्वाणाः क्षुद्रफलमात्रलोभेन परमानन्दानुभवेन वञ्चिता इत्यहो दौर्भाग्यं मौढ्यं च तेषामिति कृपणपदेन ध्वनितम्॥ ४९॥

**शं० टी०**—मोक्षेच्छयैव फलानपेक्षया समबुद्ध्या च कर्माणि नित्यानि नैमित्तिकानि च कुर्वतश्चित्तशुद्धिर्यदा जायते कर्मभिस्तत्फलैश्च भोग्यैर्न किमप्यस्ति तुच्छैरित्यलंबुद्धिलक्षणा तदा निकृष्टफलदे कर्मण्यनास्थया ज्ञानयोग एवादर्तव्य इति बोधयति—**दूरेणेति**। बहुसाधनसाध्यत्वात्क्लेशभूयिष्ठत्वादसाङ्गत्वे फलवैगुण्यात्साङ्गत्वे च जन्मादिदुःखबीजत्वादकरणे प्रत्यवायजनकतया निरयहेतुत्वाच्च अवरं निकृष्टं कर्म नित्यनिरतिशयमोक्षसुखहेतोर्बुद्धियोगाज्ज्ञानयोगाद्दूरेण वर्तते "दूरमेते विपरीते विषूची अविद्या या च विद्या" इति श्रवणाद्विपरीतभावहेतुतया मोक्षहेतोर्ज्ञानयोगस्य दूरमेव भवति "अष्टादशोक्तमवरं येषु कर्म" इतिश्रुत्योक्तमवरत्वं कर्मणो हिशब्दोद्योतयत्यतः कर्म नास्थेयमिति भावः। ननु बहवः कर्मयोगमेवानुतिष्ठन्ति कथं कर्मावरमित्यत आह—कृपणा इति। कर्मजन्यफलस्य स्वर्गस्य सुखस्य वाप्यैहिकस्य हेतवः कर्मफलहेतवः कर्मफलप्रार्थिनः कामिनो ये त एव कृपणा अधमा नीचाः "यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः" इति श्रुतिर्विशिष्टजन्मकर्मशीलगुणवतोऽप्यजानत एव ब्रह्मतत्त्वं कर्मिणोऽधमत्वं ब्रवीति "एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरा मृत्युं ते पुनरेवापि यन्ति। यत्कर्मिणो न प्रवेदयन्ति रागात्तेनातुराः क्षीणलोकाश्च्यवन्ते" इति कर्मिणां कर्मफलमोहितानां ब्रवीति श्रुतिरनर्थमेव। "अतो धीरा अमृतत्त्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते। एतद्यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य। ज्ञानादेव तु कैवल्यम्। ययाचिरात्सर्वपापं व्यपोह्य परात्परं पुरुषमुपैति विद्वान्" इत्यादिश्रुतिभिर्विवेकवतां भोग्येष्वप्रार्थ्यत्वं मोक्षस्यैव प्रार्थ्यत्वं विवेकगम्यत्वं च प्रतिपाद्यते यस्मात्तस्माद्धनञ्जय बुद्धौ सांख्यबुद्धौ चित्तप्रसादासादितज्ञानयोग एव शरणं वासं मनसोऽन्विच्छ तत्रैव मनः स्थापय तव चित्तं यदा प्रसीदति तदारभ्य ज्ञानयोग एव तिष्ठ। अवरत्वादसाधनत्वादनात्मन्यात्मताधीहेतुत्वाच्च न क्वचित्कर्मणि तिष्ठेत्यर्थः। एतेन यावच्चित्तप्रसादस्तावदेव कर्मसाधनं मुमुक्षोरतः परं ज्ञानयोग एवेति सूचितम्। तेन यावज्जीवमग्निहोत्रमपक्वबुद्धेरेवेति सिद्धम्॥ ४९॥

**श्री० टी०**—काम्यं तु कर्मातिनिकृष्टमित्याह—**दूरेणेति**। बुद्ध्या व्यवसायात्मिकया कृतः कर्मयोगो बुद्धियोगः बुद्धिसाधनभूतो वा तस्मात्सकाशात् अन्यत् काम्यं कर्म दूरेणावरमत्यन्तमपकृष्टम्। हि

यस्मादेवं तस्माद् बुद्धौ ज्ञाने शरणमाश्रयं कर्मयोगमन्विच्छ अनुतिष्ठ । यद्वा बुद्धौ शरणं त्रातारमीश्वरमाश्रयेत्यर्थः । फलहेतवस्तु सकामा नराः कृपणाः दीनाः " यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः " इति श्रुतेः ॥ ४९ ॥

**स० टी०**–ननु निष्कामकर्माणि कर्तव्यानि कुतो मम ॥ प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तते ॥ १ ॥ इतिन्यायाद्दूरं कर्मानुष्ठानं फलवाञ्छया ॥ किमर्थं निष्फलं कर्म कर्तव्यमिति चेच्छृणु ॥ २ ॥ फलकामनया कर्म कृतं जन्मादिहेतुकम् ॥ निकृष्टं तत्त्वविज्ञानहेतोर्निष्कामकर्मणः ॥ ३ ॥ यद्वात्मबुद्धियोगात्तत्कर्म दूरं यतोऽखिलम् ॥ निकृष्टं किं पुनर्वाच्यं नैकृष्ट्यं काम्यकर्मणः ॥ ४ ॥ सर्वानर्थनिवर्तिन्यां बुद्धौ तस्माद्धनञ्जय ॥ प्रतिबन्धकपापस्य क्षयेण परिरक्षकम् ॥ ५ ॥ निष्कामकर्मयोगं त्वं कर्तुमिच्छ स्थिरो भव ॥ फलकामनया कर्म ये कुर्वन्त्यविचक्षणाः ॥ ६ ॥ कृपणास्ते सदा जन्ममृत्युग्रस्ता भवन्ति ते ॥ यथातिकृपणा लोके दुःखेनाप्यर्जितं धनम् ॥ ७ ॥ दानादिजनितं भोगं कर्तुं शक्ता भवन्ति न ॥ तथात्यन्तप्रयत्नेन कुर्वाणाः कर्म वैदिकम् ॥ ८ ॥ क्षुद्रानन्दाभिलाषेण वञ्चिताः कृपणाः सुखात् ॥ अहो दौर्भाग्यमेतेषां मौढ्यं चेत्याशयो हरेः ॥ ९ ॥ ४९ ॥

**भा० टी०**–काम्यं त्वतिनिकृष्टमित्याह–**दूरेणेति** । दूरेण विप्रकर्षेणावरमधमफलाभिसन्धिनानुष्ठीयमानं कर्म बुद्धियोगात्समत्वबुद्धियुक्तादीश्वराराधनार्थात्कर्मणः जन्मादिहेतुत्वाद्बुद्धियोगात् आत्मबुद्धिसाधनभूतात् समत्वलक्षणाद्योगादिति वाऽर्थः । यत एवमतो बुद्धौ समत्वबुद्धिं साङ्ख्यबुद्धिं वा शरणमाश्रयमभयप्राप्तेः परम्परया साक्षाद्वा कारणमन्विच्छ प्रार्थयस्व शरणो भवेत्यर्थः । बुद्धौ शरणं त्रातारमीश्वरमित्यर्थस्त्वप्रक्रान्तार्थकल्पनाया विशेष्याध्याहारेण च ग्रस्तोऽत आचार्यैर्न प्रदर्शितः यतः कारणादवरं कर्म कुर्वाणाः दीना यतः फलहेतवः फलतृष्णायुक्ताः " यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः " इति श्रुतेः । धनं त्वया हृतं तेन युधिष्ठिरेण स्वाराज्यकामनया राजसूयकर्मानुष्ठितं तस्य फलं भवद्भिः पूर्वमनुभूतमधुना चोपस्थितमतः काम्यं कर्मात्यधममिति सूचयन्संबोधयति–धनञ्जयेति ॥ ४९ ॥

**प० टी०**–अत एव ज्ञानयोगं प्रशंसन्नाह–**दूरेणेति** । भो धनञ्जय बुद्धियोगात्सकाशात्फलोद्देशेन कृतं कर्म दूरेणात्यन्तमवरमपकृष्टं तथा च चित्तशुद्धिद्वारा ज्ञानयोगमुद्दिश्यैव कर्म कर्तव्यम् । तस्मात्त्वं बुद्धौ ज्ञाने शरणं कर्मयोगमन्विच्छाश्रयेत्यर्थः । हि यस्मात्कारणात्फलहेतवः कर्मकरणे फलमेव हेतुः कारणमिति मन्वानाः पुरुषाः कृपणा विषयसुखलम्पटाः । यद्वा फलव्यतिरेकेण निरर्थकं कर्मार्थं धनव्ययः कथं कर्तव्य इति तेषां कार्पण्यम् । श्रुतिरपि–" यो वा एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणोऽथ य एतदक्षरं गार्गि विदित्वा प्रैति स ब्राह्मणः " इति । भाष्यम्–"भो गार्गि वाचक्नवि यः पुरुष एतदक्षरं परं ब्रह्माविदित्वाज्ञात्वा फलोद्देशेन कर्म कृत्वास्मान्मनुष्यलोकाल्लोकान्तरं प्रैति मृत्वा गच्छति स कृपणः स्वर्विषयभोगेच्छुः । तथैतदक्षरं विदित्वा प्रैति स ब्राह्मणो ब्रह्मरूपो भवति " ॥ ४९ ॥

**रा० टी०**–किंच कर्मफलस्य ज्ञानफलादल्पत्वाज्ज्ञानोपायानुष्ठानाय प्रयतस्वेति यावानर्थ इत्यत्रोक्तेर्थे कर्मरूपस्य पुमर्थोपायस्य ज्ञानरूपोपायादधमत्वरूपं हेत्वन्तरमुच्यते–**दूरेणेति** । बुद्धियोगाज्ज्ञानलक्षणपुमर्थसाधनात्कर्म दूरेणातीवावरमधममतो बुद्धौ ज्ञाने शरणमन्विच्छ ज्ञानस्योपायभूतयोगानुष्ठानलक्षणां ज्ञाने स्थितिम् अन्विच्छेत्यर्थः । कथं कर्म ज्ञानादवरमित्यत आह–**कृपणा इति** । फले कर्मकृतौ हेतुर्येषां ते फलहेतवः । ते कृपणाः दीनाः इमं लोकं हीनतरं लोकं वा विशन्तीत्यर्थः । यद्वोत्तरार्धस्यैवमर्थः । ज्ञानस्य कर्मत उत्तमत्वे सति उत्तमायां ज्ञानावस्थायामीश्वरैक्यभावनं युक्तमित्यत आह–**बुद्धाविति** । बुद्धौ ज्ञाने जातेपि

२३

विष्णुमेव शरणमन्विच्छ । कुतः फलहेतवः फलहेतुरीश्वरः फलहेतवः ईश्वरैक्यभाविनो ये ते कृपणाः कृपाविषयाः । तमःप्राप्तिमन्त इत्यर्थः ॥ ४९ ॥

**बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते ॥**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम् ॥ ५० ॥**

**त० टी०**—काम्यकर्मणि दोषं प्रदर्श्य बुद्धियोगे गुणं दर्शयति—बुद्धीति । बुद्धियुक्तः पुरुष इह कर्मभूमौ उभे सुकृतदुष्कृते पुण्यपापे जहाति । तस्माद्योगायोक्तबुद्धियोगाय युज्यस्व प्रवृत्तो भव । कर्मसु वर्तमानस्य पुरुषस्य योगः समत्वं कौशलं यद्बन्धनहेतूनां कर्मणां मोक्षहेतुत्वापादनमिति महत्कुशलत्वमित्यर्थः ॥ ५० ॥

**म० टी०**—एवं बुद्धियोगाभावे दोषमुक्त्वा तद्भावे गुणमाह—बुद्धियुक्त इति । इह कर्मसु बुद्धियुक्तः समत्वबुद्ध्या युक्तो जहाति परित्यजति उभे सुकृतदुष्कृते पुण्यपापे सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यस्मादेवं तस्मात्समत्वबुद्धियोगाय त्वं युज्यस्व घटस्व उद्युक्तो भव यस्मादीदृशः समत्वबुद्धियोग ईश्वरार्पितचेतसः कर्मसु प्रवर्तमानस्य कौशलं कुशलभावः यद्बन्धहेतूनामपि कर्मणां तदभावो मोक्षपर्यवसायित्वं च तन्महत्कौशलं समत्वबुद्धियुक्तः कर्मयोगः कर्मात्मापि सन् दुष्कर्मक्षयं करोतीति महाकुशलस्त्वं तु न कुशलो यतश्चेतनोपि सजातीयतदुष्टक्षयं न करोषीति व्यतिरेकोऽत्र ध्वनितः । अथवा इह समत्वबुद्धियुक्ते कर्मणि कृते सति सत्त्वशुद्धिद्वारेण बुद्धियुक्तः परमात्मसाक्षात्कारवान्सन् जहात्युभे सुकृतदुष्कृते तस्मात्समत्वबुद्धियुक्ताय कर्मयोगाय युज्यस्व । यस्मात् कर्मसु मध्ये समत्वबुद्धियुक्तः कर्मयोगः कौशलं कुशलः दुष्टकर्मनिवारणचतुर इत्यर्थः ॥ ५० ॥

**शं० टी०**—मुमुक्षोर्जन्मादिहेतूनां सर्वेषामपि कर्मणां निःशेषनिवृत्तिर्ज्ञानयोगबलेनैव सिध्यति नान्येनातस्त्वं तत्रैव निष्ठां कुर्वीति बोधयति—बुद्धियुक्त इति । बुद्धिः साङ्ख्यविषया निरुक्ता तया युक्तः ज्ञानयोगेन युक्तो ब्रह्मविदारूढः स्वस्य कूटस्थासङ्गचिदात्मत्वविज्ञानबलेनैव इह लोके जन्मान्तरशतसहस्रेष्वधुना ज्ञानोत्पत्तेः प्रागूर्ध्वं च कृते नानायोनिसहस्रप्रापके उभे सुकृतदुष्कृते जहाति ज्ञानाग्निना निर्मूल्यात्र जीवन्नेव मुक्तो भवति यस्मात्तस्मात्त्वं योगाय ज्ञानयोगाय युज्यस्व यतस्व । ननु कृच्छ्रचान्द्रायणादिप्रायश्चित्तैस्त्रिसुपर्णादिजपैरश्वमेधादियागैर्गङ्गादिमहानदीस्नानदानैश्च सर्वपापक्षये सति किमर्थं ज्ञानयोगाभ्यासक्लेश इति चेत् न तैर्निःशेषनिवृत्त्यसंभवादुक्ताः प्रायश्चित्तादयो यदुद्देशेन क्रियन्ते तैस्तदेव निवर्त्यते नेतरदन्यथा प्रायश्चित्तभेदविध्यानर्थक्यप्रसङ्गात् " तरति ब्रह्महत्यां योऽश्वमेधेन यजते " इति ब्रह्महत्याव्यतिरिक्तपापतरणाश्रवणात्कृतेऽपि प्रायश्चित्तादौ पापस्यैव निवृत्तिर्न तु पुण्यस्य शतकोटिजन्महेतोः नहि पुण्यस्य निवर्तकमस्ति महत्साधनं विनात्मज्ञानं तदा विद्वान् पुण्यपापे विधूयेति " स य एवं विद्वानेते आत्मान ँ स्पृणुते" इति श्रुतावत्रैवास्ति उभे सुकृतदुष्कृते इत्यतः पापपुण्योभयात्मकेषु कर्मसु निवर्तितव्येषु सत्सु योगो ज्ञानयोग एव कौशलं कुशलमेव कौशलं निपुणं ज्ञानकुशलैर्दृष्टं परमं साधनं तस्माद्योगाय युज्यस्वेति पूर्वेणान्वयः । जहातीहेत्यत्रासन्धिरार्षः ॥ ५० ॥

**श्री० टी०**—बुद्धियोगयुक्तस्तु श्रेष्ठ इत्याह—बुद्धीति । सुकृतं स्वर्गादिप्रापकं दुष्कृतं निरयादिप्रापकं ते उभे इहैव जन्मनि परमेश्वरप्रसादेन जहाति त्यजति तस्माद्योगाय तदर्थाय कर्मयोगाय युज्यस्व घटस्व यतः कर्मसु यत्कौशलं बन्धकानामपि तेषामीश्वराराधनेन मोक्षपरत्वसंपादनचातुर्यं स एव योगः ॥ ५० ॥

स० टी०—समत्वबुद्धियुक्तः सन्स्वधर्ममनुतिष्ठति ॥ पुमांस्तस्य फलं यत्स्यात्तदत्र हरिणोच्यते ॥ १ ॥ समत्वप्रज्ञया युक्तः सत्वशुद्ध्यात्मबोधतः ॥ जहाति पुण्यपापे द्वे समूले सफले कृते ॥ २ ॥ जीवन्नेव पुमान्ब्रह्मीभूतो भवति बोधवान् ॥ यस्मादेवं ततः सम्यग्बुद्धियोगाय सर्वथा ॥ ३ ॥ उद्युक्तो भव योगोऽसौ वर्तमानस्य कर्मसु ॥ मोक्षपर्यवसायित्वादतिदक्षो यतो मतः ॥ ४ ॥ ५० ॥

भा० टी०—काम्यकर्मणोऽवरत्वमुक्त्वा निष्कामकर्मणः श्रैष्ठ्यमाह—बुद्धियुक्त इति । समत्वबुद्धियुक्तः सत्वशुद्धिज्ञानप्राप्तिद्वारेणोभे पुण्यपापे त्यजति सांख्यबुद्धियुक्त इति वा तस्माद्योगाय समत्वलक्षणकर्मयोगानुष्ठानार्थं घटस्व ज्ञानयोगप्राप्त्यर्थमिति वा यस्माद्योगः समत्वलक्षणः कर्मसु सर्वेषु कौशलं बन्धकानामपि तेषामीश्वरार्पितचेतस्तया मोक्षपरत्वसंपादनचातुर्यं ज्ञानयोग इति वा अस्मिन्पक्षे कर्मसु ज्ञानप्रतिबन्धकेषु फलाभिसन्धि विहाय ज्ञानलाभचातुर्यमिति व्याख्येयं तस्मात्समत्वयुक्तो भवेत्यर्थः ॥ ५० ॥

प० टी०—अथ ज्ञानं प्रशंसन्नाह—बुद्धियुक्त इति । बुद्धिर्विज्ञानं तद्युक्तो ज्ञानी पुरुषः स्वर्गप्रापकं तथा दुष्कृतमधमयोनिप्रापकं ते उभे जहाति त्यजति । श्रुतिरपि—"पापमकरवमित्यतः कल्याणमकरवमित्युभे उभे एष एते तरत्यमृतः साध्वसाधुनी नैनं कृताकृते तपतः" इति । भाष्यम्—"अतो ज्ञानोत्पत्त्यनन्तरमहं पापमकरवमकार्षमिति तथा कल्याणं सुकृतमकरवमित्येते उभे साध्वसाधुनी सुकृतदुष्कृते अमृतो मुक्तः संस्तरति उल्लङ्घयति तथैवं तत्त्वज्ञानिनं पुरुषं कृताकृते कृते वा साध्वसाधुनी न तपतः नाक्रामतः न स्वाधीनं कुरुतोऽनुष्ठितेऽननुष्ठिते फलदानाय समर्थे न भवत इत्यर्थः । " तस्मात्त्वं योगाय परमेश्वरप्राप्तये युज्यस्व घटस्व । अथ योगस्य स्वरूपमाह—योगेति। योगः कर्मसु कौशलं बन्धजनकेषु कर्मस्वबन्धजनकत्वसंपादकत्वं कौशलम् ॥ ५० ॥

श० टी०—ज्ञानात्कर्मावरमित्येतत्काम्यकर्मिणां कृपणत्वोक्त्योपपाद्येदानीं कर्मफलाज्ज्ञानफलस्य विलक्षणत्वोक्त्याप्युपपादयति—बुद्धियुक्त इति । बुद्धियुक्तो भगवज्ज्ञानयुक्तः उभे सुकृतदुष्कृते पुण्यपापे जहाति त्यजति । पुण्यमध्ये यदनिष्टं मानुष्यादिफ ( लकं ) लं तज्जहाति । यत्तूपासनादिजन्यं ज्ञानवृद्धिकरं मुक्तावानन्दकरं च तत्पुण्यं नैव जहाति। दुष्कृतं तु सर्वात्मना जहाति । तस्माज्ज्ञानस्य सर्वानिष्टनिवृत्तिविशिष्टोभयवृद्धिरूपमहाफलत्वात् । योगाय ज्ञानोपायाय युज्यस्व सन्नद्धो भव प्रयतस्वेति वा । योगं स्तौति—योग इति । योगो ज्ञानोपायः कर्मसु कौशलं श्रेष्ठमित्यर्थः । यद्वा अस्तु ज्ञानोपायाय प्रयत्नः । किंफलस्नेहरहितकर्मणेत्यत आह—योग इति । कर्मसु मध्ये भगवज्ज्ञानपूर्वं फलस्नेहरहितं भगवदर्थत्वेन क्रियमाणं कर्मकौशलमुच्यते । स एव च योगो नाम । अतः फलस्नेहहीनं कर्मैव ज्ञानोपाय इत्यर्थः ॥ ५० ॥

**कर्मजं बुद्धियुक्ता हि फलं त्यक्त्वा मनीषिणः ॥**
**जन्मबन्धविनिर्मुक्ताः पदं गच्छन्त्यनामयम् ॥ ५१ ॥**

त० टी०—ननु दुष्कृतत्यागे भवति कौशलं सुकृतं तु किमर्थं त्याज्यमित्यत आह—कर्मजमिति। उक्तबुद्ध्या युक्ता मनीषिणः बन्धमोक्षहेतुमननशीलाः हि यतः कर्मजं फलं सुखदुःखात्मकमुभयविधमपि बन्धनरूपं मत्वा न केवलं दुष्कृतफलमपि तु जन्मापादकं सुकृतफलमपि त्यक्त्वा जन्मबन्धविनिर्मुक्ताः जन्मैव बन्धस्तस्माद्विनिर्मुक्ताः सन्तः अनामयमामयो मायाकार्यस्वभावः परिणामापक्षयादिरूपो रोगस्तद्रहितं पदमुपनिषत्प्रतिपाद्यं परवैकुण्ठाख्यं स्थानं गच्छन्ति । तस्मात्तुच्छफलं सुकृतमप्यनन्तफलाय त्याज्यमिति भावः ॥ ५१ ॥

म० टी०—ननु दुष्कृतहानमपेक्षितं न तु सुकृतहानं पुरुषार्थभ्रंशापत्तेरित्याशङ्क्य तुच्छफलत्यागेन पर-

मपुरुषार्थप्राप्तिं फलमाह—**कर्मजमिति** । समत्वबुद्धियुक्ता हि यस्मात्कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थं कर्माणि कुर्वाणाः सत्वशुद्धिद्वारेण मनीषिणस्तत्त्वमस्यादिवाक्यजन्यात्ममनीषावन्तो भवन्ति तादृशाश्च सन्तो जन्मात्मकेन बन्धेन विनिर्मुक्ता विशेषेणात्यन्तिकत्वलक्षणेन निरवशेषं मुक्ताः पदं पदनीयमात्मतत्त्वमानन्दरूपं ब्रह्म अनामयं अविद्यातत्कार्यात्मकरोगरहितमभयं मोक्षाख्यं पुरुषार्थं गच्छन्त्यभेदेन प्राप्नुवन्तीत्यर्थः । यस्मादेवं फलकामनां त्यक्त्वा समत्वबुद्धया कर्माण्यनुतिष्ठन्तस्तैः कृतान्तःकरणशुद्धयस्तत्त्वमस्यादिप्रमाणोत्पन्नात्मतत्त्वज्ञानाविनष्टाज्ञानतत्कार्याः सन्तः सकलानर्थनिवृत्तिपरमानन्दप्राप्तिरूपं मोक्षाख्यं विष्णोः परमं पदं गच्छन्ति । तस्मात्त्वमपि 'यच्छ्रेयः स्यान्निश्चितं ब्रूहि तन्मे' इत्युक्तेः श्रेयोजिज्ञासुरेवंविधं कर्मयोगमनुतिष्ठेति भगवतोऽभिप्रायः ॥ ५१ ॥

**शं० टी०**—फलानपेक्षया समबुद्धया च सम्यगनुष्ठितनित्यनैमित्तिककर्मपरिपाकसंजातचित्तशुद्धेः फलभूतायाः श्रवणादिजनिताऽविक्रियाऽत्मतत्त्वविज्ञानसिद्धेः फलमाह—**कर्मजमिति** । बुद्धियुक्ताः बुद्धिः सांख्यबुद्धिर्ब्रह्मात्मैकत्वविज्ञानं तया युक्तास्तन्निष्ठासंपन्ना हि ज्ञानयोगनिष्ठाः खलु मनीषिणो विद्वांसः कर्मजं कर्मभ्यः संचितादिभ्यो जातं नानायोनिसहस्रप्रापकं फलं जन्मादिलक्षणं त्यक्त्वा 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति न्यायेन ज्ञानाग्निना सर्वेषामपि कर्मणां दाहे सति तत्फलानां च जन्मादीनां दाहसंभवात्तेन त्यक्तकर्मफला भवन्ति । आत्मनः कूटस्थत्वासङ्गत्वविज्ञानशक्तिबलेन विद्वांसः स्वयं कर्मफलाऽविषयाभूत्वेत्यर्थः । जन्मबन्धविनिर्मुक्ताः जन्मना बन्धः संबन्धो यस्य स जन्मबन्धो देह उत्तरकालभावी वर्तमानश्च तेन विनिर्मुक्ताः । कारणाभावाद्भाविदेहसंबन्धरहितास्तादात्म्याभावाद्वर्तमानदेहसंबन्धरहिताश्च सन्तः स्वयमिह जीवन्त एवाऽनामयमाध्यात्मिकादिसर्वोपद्रवरहितं नित्यशुद्धबुद्धमुक्तस्वभावमखण्डानन्दैकरसं पदं पद्यते ज्ञानेन प्राप्यत इति पदं परं ब्रह्म गच्छन्ति । अविद्याकृतं वासनाकृतमप्यन्यभावं परित्यज्य तद्भावमेव प्राप्नुवन्तीत्यर्थः । हिर्विद्वदनुभवद्योतनार्थः ॥ ५१ ॥

**श्री० टी०**—कर्मणां मोक्षसाधनत्वप्रकारमाह—**कर्मेति** । कर्मजं फलं त्यक्त्वा केवलमीश्वराराधनार्थमेव कर्म कुर्वाणा मनीषिणो ज्ञानिनो भूत्वा जन्मरूपेण बन्धेन विनिर्मुक्ताः सन्तोऽनामयं सर्वोपद्रवरहितं विष्णोः पदं मोक्षाख्यं गच्छन्ति ॥ ५१ ॥

**स० टी०**—ननु सर्वस्य मम च पापहानमपेक्षितम् ॥ पुण्यहानं न कस्यापि पुरुषार्थक्षयोऽन्यथा ॥ १ ॥ मैवं जन्मप्रदं पुण्यं हेयत्वेन विवक्षितम् ॥ ननु धीशोधकं पुण्यं मुमुक्षोरीश्वरार्पितम् ॥ २ ॥ तत्फलज्ञानसंसिद्धौ कर्ममात्रं विनश्यति ॥ अतः समत्वधीयुक्ताः संत्यक्त्वा कर्मजं फलम् ॥ ३ ॥ ईश्वराराधनार्थं च कुर्वाणाः कर्म केवलम् ॥ धीशुद्धिद्वारतो वेदवाक्यजन्यात्मधीयुताः ॥ ४ ॥ सन्तो जन्माख्यबन्धेन विनिर्मुक्ता अशेषतः ॥ आत्मतत्त्वं पदं ब्रह्मानन्दं मायादिवर्जितम् ॥ ५ ॥ पुरुषार्थं विमोक्षाख्यं प्राप्नुवन्तीह तादृशाः ॥ त्वमप्येतादृशो भूत्वा गच्छ विष्णोः परं पदम् ॥ ६ ॥ ५१ ॥

**भा० टी०**—पुण्यपापत्यागमात्रस्य फलत्वाभावमाशङ्क्याह—**कर्मजमिति** । कर्मजं फलमिष्टानिष्टदेहप्राप्तिलक्षणं त्यक्त्वा हि यस्मात् समत्वबुद्धियुक्ता मनीषिणो ज्ञानिनो भूत्वा जन्मैव बन्धस्तेन विनिर्मुक्ताः सर्वोपद्रवरहितं विष्णोः परमं मोक्षाख्यं पदं गच्छन्ति जीवन्त एव स्वस्वरूपेण जानन्तीत्यर्थः । कर्मजं फलं त्यक्त्वा साङ्ख्यबुद्धियुक्ताः शुद्धैकाग्रमनस इति वा ॥ ५१ ॥

**प० टी०**—अथ कौशलेन कृतानां कर्मणां मोक्षसाधनत्वमाह—**कर्मजमिति** । व्यवसायात्मकबुद्धियुक्ता मनीषिणो ज्ञानिनः कर्मजं फलं त्यक्त्वा तृणवदगणय्यानामयं सर्वोपद्रवरहितं पदं गच्छन्ति । किंभूताः जन्मबन्धविनिर्मुक्ताः कर्मजफले हि पुनर्जन्मबन्धो दृश्यते तस्माद्विशेषेण निर्मुक्ताः ॥ ५१ ॥

रा० टी०—पूर्वोक्तं ज्ञानसाधनं ज्ञानफलं च विवृणोति—कर्मजमिति । कर्मजं फलं त्यक्त्वेत्युपलक्षणम् । कर्मजफलसंकल्पत्यागादिपूर्वकं भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपं योगमास्थाय बुद्धियुक्ताः सम्यक्शास्त्रजनितभगवज्ज्ञानिन इत्यनेन ज्ञानसाधनं योगो विवृतः । ततश्च मनीषिणः प्रशंसायां मतुबर्थेनिप्रत्ययः । अपरोक्षज्ञानिनो भूत्वा जन्मबन्धविनिर्मुक्ताः सन्तोऽनामयं निर्दुःखं पदं मोक्षं गच्छन्तीत्युक्त्या ज्ञानफलं विवृतं ज्ञेयम् ॥ ५१ ॥

**यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति ॥**
**तदा गन्ताऽसि निर्वेदं श्रोतव्यस्य श्रुतस्य च ॥ ५२ ॥**

**त० टी०—कर्माणि कुर्वतो ममाप्येवम्भूतो निर्वेदः कदा भविष्यतीत्यपेक्षायामाह—यदेति । नास्ति कालनियमः किन्तु यदा यस्मिन्काले ते बुद्धिर्मोहकलिलं मोहो मन्निमित्तमेते मरिष्यन्ति अहं पापभागी स्यामित्याद्यन्तःकरणविभ्रम एव कलिलं गहनकर्दमं व्यतितरिष्यति विशेषेणोल्लङ्घ्य गमिष्यति तदा श्रोतव्यस्य श्रोतुं योग्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं वैराग्यं गन्तासि गमिष्यसि प्राप्स्यसि । पुनस्तज्जिज्ञासां न करिष्यसीति भावः ॥ ५२ ॥**

म० टी०—एवं कर्माण्यनुतिष्ठतः कदा मे सत्त्वशुद्धिः स्यादित्यत आह—यदेति । न ह्येतावता कालेन सत्त्वशुद्धिर्भवतीति कालनियमोऽस्ति किंतु यस्मिन् काले ते तव बुद्धिरन्तःकरणं मोहकलिलं व्यतितरिष्यति अविवेकात्मकं कालुष्यं अहमिदं ममेदमित्याद्यज्ञानविलसितमतिगहनं व्यतिक्रमिष्यति रजस्तमोमलमपहाय शुद्धभावमापत्स्यत इति यावत् । तदा तस्मिन् काले श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं वैतृष्ण्यं गन्तासि प्राप्तासि ( प्राप्नोषि ) " परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायात् " इति श्रुतेः निर्वेदेन फलेनान्तःकरणशुद्धिं ज्ञास्यसीत्यभिप्रायः ॥ ५२ ॥

शं० टी०—चित्तशुद्धिजन्यं सर्वत्रालंबुद्धिलक्षणं वैराग्यं प्रज्ञास्थैर्यलक्षणं योगं च कदा केन वा प्राप्स्यामीत्यभिप्रायमर्जुनस्यालक्ष्य यदा तव बुद्धिकालुष्यनिवृत्तिर्यदा वा प्रज्ञा निर्विकल्पा भविष्यति तदा वैराग्यं योगं च प्राप्स्यसीत्येतद्द्वयं श्लोकद्वयेन क्रमेण प्रतिपादयति—यदेति । सदसद्विवेकशून्यतयान्तःकरणमसत्स्वेव विषयेषु रम्यमरम्यमिष्टमनिष्टं ग्राह्यमग्राह्यमिति येन रागद्वेषग्रस्तं सत्सर्वदा प्रवर्तते तदेव मोहकलिलं मोहो विचित्तताविषयजातमेतत्सर्वमसन्मायिकं तुच्छमिति विवेकाभावः पदार्थाऽपरिज्ञानं तदेव कलिलं कालुष्यं दर्पणस्य धूलिपटलवद्विवेकबुद्धेरावरणमेवंलक्षणं मोहकलिलं ते बुद्धिर्यदा व्यतितरिष्यति । ' यदिदं मनसा वाचा चक्षुर्भ्यां श्रवणादिभिः । नश्वरं गृह्यमाणं च विद्धि मायामनोमयम् ' इत्यादिवचनार्थस्य सम्यग्ग्रहणजन्येन शिवप्रसादमूलकेन दृश्यमानं सर्वं मिथ्यैवेति निश्चयेन यदा त्यक्ष्यति तदा श्रोतव्यस्य श्रुतस्य च द्रष्टव्यस्य दृष्टस्य च ज्ञातव्यस्य ज्ञातस्य च गृहीतस्य ग्राह्यस्य च वस्तुनो मिथ्यात्वमेव विज्ञाय निर्वेदं वैराग्यं सर्वत्रालंबुद्धिलक्षणं गन्तासि प्राप्स्यसि। व्यवहार्यस्य मिथ्यात्वाद्व्यवहारस्य मिथ्यार्थगोचरत्वान्निष्फलेनानेन मम किमिति सर्वस्माद्व्यवहार्याद्व्यवहाराच्चोपरतो भविष्यसीत्यर्थः ॥ ५२ ॥

श्री० टी०—कदा तत्पदमहं प्राप्स्यामीत्यपेक्षायामाह—यदेति द्वाभ्याम् । मोहो देहादिष्वात्मबुद्धिः तदेव कलिलम् । 'कलिलं गहनं विदुः' इत्यभिधानकोशस्मृतेः। ततश्चायमर्थः एवं परमेश्वराराधने क्रियमाणे यदा तत्प्रसादेन तव बुद्धिः देहाभिमानलक्षणं मोहमयं गहनं दुर्गं विशेषेणातितरिष्यति तदा श्रोतव्यस्य श्रुतस्यार्थस्य च निर्वेदं वैराग्यं गन्तासि प्राप्स्यसि तयोरनुपादेयत्वेन जिज्ञासां न करिष्यसीत्यर्थः॥५२॥

स० टी०—एवं मे कुर्वतः कर्म चित्तशुद्धिः कदेति चेत्॥ न कालनियमस्तत्र शृणु त्वं भोः समाहितः॥१॥

यस्मिन्कालेऽतिकालुष्यमविवेकात्मकं मलम् ॥ अहं ममेदमित्येवमाद्यविद्याविजृम्भणम् ॥ २ ॥ अत्यन्तगहनं तीर्त्वा तवान्तःकरणं पराम् ॥ शुद्धिमापत्स्यते त्यक्त्वा राजसं तामसं मलम् ॥ ३ ॥ तस्मिन्काले समस्तस्य श्रोतव्यस्य श्रुतस्य च ॥ फलस्य कर्मणां सम्यग्वैतृष्ण्यं यास्यसि स्वयम् ॥ ४ ॥ त्वं निर्वेदफलेनैव धीशुद्धिं ज्ञास्यसीति च ॥ ५ ॥ ५२ ॥

**भा० टी०**–सांख्यं बुद्धिं कदा प्राप्स्यामि यदर्थं कर्मानुष्ठानं भवतोपदिश्यत इत्यत आह–**यदेति** । यदा यस्यामवस्थायां तव बुद्धिर्मोहात्मकमविवेकरूपं कालुष्यं व्यतिक्रमिष्यति तदा तस्यामवस्थायां श्रोतव्यस्य श्रुतस्य च वैराग्यं प्राप्तासि पूर्वं श्रुतिभिरनेकसाध्यसाधनश्रवणैर्विप्रतिपन्ना विक्षिप्ता श्रुतश्रोतव्ययोर्निर्वेदं लब्ध्वा यदा समाधीयते चित्तमस्मिन्निति समाधिरात्मा तस्मिन्निश्चला विक्षेपरहिता स्थास्यति स्थिरीभूता भविष्यति तदा योगं सांख्ययोगमवाप्स्यसीति द्वयोरर्थः । यद्वा योगानुष्ठानजनितसत्त्वशुद्धिजा वैराग्यादीतरसाधनसहिता नित्यानित्यवस्तुविवेकरूपा ज्ञानाधिकारसंपादिका बुद्धिः कदा प्राप्यत इत्यत आह–**यदेति** । यदा तव बुद्धिर्मोहात्मकमविवेकरूपं कालुष्यं चित्ताशुद्धिजं व्यतितरिष्यति तदा श्रोतव्यस्य श्रुतस्य च कर्मफलस्य निर्वेदं गन्तासि ॥ ५२ ॥

**प० टी०**–अथ कदा पदप्राप्तिरित्याह–**यदेति** । ते बुद्धिर्यदा मोहकलिलं व्यतितरिष्यति मोहो देहात्मबुद्धिस्तदेव कलिलं गहनं दुरतिक्रमत्वात् ते बुद्धिस्तद्विशेषात्तरिष्यत्युल्लङ्घयिष्यति, तदा श्रोतव्यस्य श्रुतस्य च फलोपधानस्य निर्वेदं वैराग्यं गन्तासि प्राप्स्यासि । तदुक्तं पातञ्जले–'भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्तमानौ कथं पुरुषे व्यपदिश्येते स हिं तत्फलभोक्तेति । यथा विजयः पराजयो बा योधेषु वर्तमानः स्वामिन्यपदिश्यते स हि तत्फलभोक्तेति । बुद्धिरेव पुरुषार्थापरिसमाप्तिर्बन्धस्तदर्थव्यवसायो मोक्षः ' इति ॥ ५२ ॥

**रा० टी०**–फलकामनादिवर्जितानीश्वराराधनरूपाणि कर्माणि मोक्षसाधनज्ञानार्थिना कियत्पर्यन्तं कर्तव्यानीत्यत आह–**यदा त इति** । यदा ते तव बुद्धिरन्तःकरणं मोहकलिलमन्यथाज्ञानलक्षणं दोषं व्यतितरिष्यति परित्यक्ष्यति तदा महद्भ्यः श्रुतस्य श्रोतव्यस्य च। सर्वकर्मोपलक्षणमेतत् । तस्य सर्वस्य निर्वेदं नितरां लाभं गन्तासि प्राप्स्यासि । मुक्तिहेतुज्ञानसाधनभूतो निवृत्तकर्मानुष्ठानरूपो योगः साक्षाज्ज्ञानहेतुः श्रवणादिरूपप्रमाणस्यादृष्टद्वारा सत्त्वशुद्ध्युत्पादनेनोपकारकः सन्मिथ्याज्ञानदोषनिवृत्तिपर्यन्तं तत्त्वज्ञानोदयपर्यन्तं कर्तव्य इति भावः ॥ ५२ ॥

## श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला ।
## समाधावचला बुद्धिस्तदा योगमवाप्स्यसि ॥ ५३ ॥

**त० टी०**–निष्कामकर्मानुष्ठानेन कदा योगं प्राप्स्यामीत्यपेक्षायामाह–**श्रुतीति** । इतः पूर्वमतत्त्वविद्भ्यः श्रुतिभिर्नानाविधसाधनफलश्रवणैस्ते बुद्धिर्विप्रतिपन्ना इदं श्रेय इदं वेत्यादिसंशयग्रस्ततयाऽतत्त्वनिष्ठा सती विक्षिप्ताऽऽसीत् । यदा यस्मिन्काले समाधिर्मनस आत्मप्रावण्यं तस्मिन्नचला विषयान्तराग्रहणेन तदेकनिश्चया सती स्थास्यति तदा योगं योगफलमात्मयाथात्म्यानुभवमवाप्स्यसि ॥ ५३ ॥

**म० टी०**–अन्तःकरणशुद्ध्यैवं जातनिर्वेदस्य कदा ज्ञानप्राप्तिरित्यपेक्षायामाह–**श्रुतिविप्रतिपन्नेति** । ते तव बुद्धिः श्रुतिभिर्नानाविधफलश्रवणैरविचारिततात्पर्यैर्विप्रतिपन्ना अनेकविधसंशयविपर्यासवत्त्वेन विक्षिप्ता प्राक् । यदा यस्मिन् काले शुद्धिजविवेकजनितेन दोषदर्शनेन तं विक्षेपं परित्यज्य समाधौ परमात्मनि निश्चला जाग्रत्स्वप्नदर्शनलक्षणविक्षेपरहिता अचला सुषुप्तिमूर्च्छास्तब्धीभावादिरूपलयलक्षणचलनरहिता

सती स्थास्यति लयविक्षेपलक्षणौ दोषौ परित्यज्य समाहिता भविष्यतीति यावत् । अथवा निश्चला संभावनाविपरीतभावनारहिता अचला दीर्घकालादरनैरन्तर्यसत्कारसेवनैर्विजातीयप्रत्ययादूषिता सती निर्वातप्रदीपवदात्मनि स्थास्यतीति योजना । तदा तस्मिन्काले योगं जीवपरमात्मैक्यलक्षणं तत्त्वमस्यादिवाक्यजन्यमखण्डसाक्षात्कारं सर्वयोगफलमवाप्स्यसि । तदा पुनः साध्यान्तराभावात् कृतकृत्यः स्थितप्रज्ञो भविष्यसीत्यभिप्रायः ॥ ५३ ॥

शं० टी०—एवं मुमुक्षोर्ज्ञानयोगसिद्धेरसाधारणकारणं बाह्योपरमणं निरूप्याथ ज्ञानयोगसिद्धिप्रकारमाह—श्रुतीति । ऋगादिभिः श्रुतिभिः कुत्रचित्कर्मविशेषास्तत्फलविशेषास्तन्महत्त्वविशेषाः प्रतिपाद्यन्ते । कुत्रचिदुपास्तिविशेषास्तत्फलविशेषास्तन्महत्त्वविशेषाः प्रतिपाद्यन्ते । कुत्रचिद्ब्रह्म सगुणं तन्माहात्म्यं तत्फलस्य औत्कृष्ट्यं च प्रतिपाद्यते । कुत्रचिन्निर्गुणं ब्रह्म तज्ज्ञानं तन्माहात्म्यं तत्फलप्राशस्त्यं च प्रतिपाद्यते । एतत्सर्वं श्रुतवतो विप्रतिपत्तिः । किं सर्वेषां प्राधान्यं वा उत सगुणस्य वा उत निर्गुणस्य वा उतोभयेषां वेत्येवं श्रुतिवाक्यैर्विप्रतिपन्ना संशयाविष्टा बहुविक्षेपवती ते बुद्धिः प्रज्ञया शास्त्रं सर्वमवलोड्य श्रुतिस्मृतियुक्तिबलेन गुरूपदेशेन च 'सर्वे वेदा यत्पदमामनन्ति' इति न्यायेन सर्वस्यापि शास्त्रस्य महत्तात्पर्यं निर्विशेषे एव ब्रह्मणि पर्यवसितमिति परिज्ञाय विप्रतिपत्तीः सर्वाः परित्यज्य निश्चला निर्विशेषा भूत्वा समाधौ समाधीयते चित्तमस्मिन्निति समाधिः परं ब्रह्म तस्मिन् तदाकारेणैवाचलाचलनहेतूनां बाह्यवासनानां नाशादविक्रिया निश्चला सती यदा स्थास्यति तदा योगं प्रज्ञास्थैर्यलक्षणमवाप्स्यसि । यद्वा "सत्यं ज्ञानमनन्तं ब्रह्म सर्वं ब्रह्मैतदात्म्यमिदं सर्वं सद्धीदं सर्वं चिद्धीदं सर्वं तत्त्वमसि अयमात्मा ब्रह्म तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यं ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतिभिः सर्वस्य ब्रह्ममात्रत्वप्रतिपत्तिजनकाभिर्विशेषप्रतिपत्तिमती या सा श्रुतिविप्रतिपन्ना "सर्वं ब्रह्मैव" इति श्रुतिभिः संभावितविशिष्टज्ञानवतीत्यर्थः । तत एव निश्चला विक्षेपनिर्मुक्ता न हि परमाप्तवाक्यश्रवणेन वाप्यधिष्ठानसंदर्शनेन वा सद्बुद्धेर्विप्रतिपत्तिर्विक्षेपो वा संभवत्यत एवं सम्यक् श्रवणेन मननेन च संपन्ना ते बुद्धिः समाधावसंप्रज्ञाताख्ये अचला निर्वातस्थदीपवन्निश्चला निष्कम्पा भूत्वा यदा यस्मिन्काले चित्तपरिपाकावस्थायां स्थास्यति स्थिता भविष्यति तदा त्वं योगं ज्ञानयोगमप्रतिबद्धं प्राप्स्यसि योगारूढो भविष्यसीत्यर्थः ॥ ५३ ॥

श्री० टी०—ततश्च—श्रुतीति । श्रुतिभिः नानालौकिकवैदिकार्थश्रवणैः विप्रतिपन्ना इतः पूर्वं विक्षिप्ता सती तव बुद्धिर्यदा समाधौ स्थास्यतीति । समाधीयते चित्तमस्मिन्निति समाधिः परमेश्वरस्तस्मिन्निश्चला विक्षेपव्याप्तिविषयान्तरैनाकृष्टाऽत एवाचला अभ्यासपटुत्वेन तत्रैव च स्थिरा च सती तदा योगं योगफलं तत्त्वज्ञानमवाप्स्यसि ॥ ५३ ॥

स० टी०—धीशुद्ध्यैवं परिप्राप्तवैराग्यस्य कदा मम ॥ आत्मज्ञानोदयश्चैवमपेक्षायां वचः शृणु ॥ १ ॥ अविचारिततात्पर्यैरनेकश्रवणैस्तव ॥ धीः संशयविपर्यासैर्विक्षिप्ता प्रागनेकधा ॥ २ ॥ यस्मिन्काले विशुद्ध्युत्थविवेकजनितेन च ॥ इहामुत्रफले दोषदर्शनेन समन्विता ॥ ३ ॥ त्यक्त्वा विक्षेपमद्वैततत्त्वेऽत्यन्तविनिश्चला ॥ जाग्रत्स्वप्नमनोराज्यवर्जिता ब्रह्मणि स्थिता ॥ ४ ॥ अचला सुप्तिमूर्छादिलयशून्या सती स्वयम् ॥ यद्वाऽसंभावनां त्यक्त्वा विपरीतमतिं तथा ॥ ५ ॥ निदिध्यासनसंपन्ना तत्त्वे स्थास्यति निश्चला ॥ तस्मिन्काले परात्मैक्ययोगं वेदान्तवाक्यजम् ॥ ६ ॥ अखण्डसाक्षात्काराख्यं सर्वयोगफलं परम् ॥ अवाप्स्यसि स्थितप्रज्ञः कृतकृत्यो भविष्यसि ॥ ७ ॥ ५३ ॥

भा० टी०—चित्तशुद्धिद्वारा लब्धात्मविवेकबुद्धिः कर्मयोगजं फलं परमात्मयोगं कदाऽऽप्स्यसीति तच्छृणु—श्रुतीति । प्राग्वद्व्याख्यानद्वयमपि भाष्याल्लभ्यत इति बोध्यम् ॥ ५३ ॥

प० टी०–अथैतदेव परमेश्वरप्राप्तिनिमित्तमित्याह–श्रुतीति। श्रुती रोचनार्था फलश्रुतिस्तत्र विप्रतिपन्ना त्यक्तादरा एवंविधा ते बुद्धिः समाधौ सम्यगाधीयते चित्तं यस्मिन्निति समाधिः परमेश्वररूपं तस्मिन् निश्चला कृतनिश्चयात एवाचलाऽविक्षेपा सती यदा स्थास्यति स्थिता भविष्यति तदा योगं तत्सान्निध्यमवाप्स्यसि ॥ ५३ ॥

रा० टी०–किं तन्मोहकलिलं कीदृशं च तदतितरणमित्याकाङ्क्षायां पुंसामधममध्यमोत्तमावस्थादिप्रदर्शनेन पूर्वश्लोकोक्तमेव योगानुष्ठानविधिं स्पष्टयति–श्रुतीति। परोक्षनिश्चयात्पूर्वावस्थायां श्रुतिभिर्वैदैर्विप्रतिपन्ना विरुद्धा सती बुद्धिर्यदा वेदार्थानुकूलेन तत्त्वनिश्चयेनासच्छास्त्रै (श्चालन) र्हीना इदमदो वेति संशयानास्कन्दिता सती स्थास्यति। ततश्च समाधिर्भवति। जाते च समाधौ असंप्रज्ञातध्याने अपरोक्षज्ञानं भवति। तेन च ब्रह्मदर्शनेन परमानन्दमग्नतया भेरीताडनादिनापि चलनहीना बुद्धिर्मनो यदा स्थास्यति तदा योगं योगफलं ज्ञानोपायानुष्ठानस्य फलमवाप्स्यसीत्यर्थः। पूर्वावस्थायामनुष्ठितयोगस्य परोक्षभगवन्निश्चयावधित्वमुक्तम्। परोक्षनिश्चयस्य काष्ठा त्वसच्छास्त्रैरनेकधा परिलोड्यमानत्वेप्यप्रामाण्यशङ्काकलङ्कितत्वशून्यत्वम्। तद्दशायामनुष्ठितनिवृत्तकर्मरूपयोगस्य तु समाधौ भगवदपरोक्षज्ञानावधित्वम्। तस्य तु काष्ठा भेरीताडनादिनाप्यप्रतिबोधसमाधिस्थत्वम्। एतेन बुद्धेर्मनसः मोहकलिलं श्रुतिविरुद्धत्वरूपो दोषः। तत्तरणं नाम वेदार्थानुकूलेन निश्चयेन दृढतयावस्थानम्। तदा निर्वेदं गन्तासीत्यस्य विवरणं समाधावचला बुद्धिरित्युक्तं भवति। श्लोकद्वयस्याप्यचञ्चलसमाध्यवस्थाप्राप्तिर्योगानुष्ठानावधिरिति तात्पर्यं ध्येयम्। यद्वा बुद्धिर्मनः श्रुतिविप्रतिपन्ना श्रुतिविशेषेण प्रपन्ना श्रुत्यर्थनिर्णयं प्राप्ता सती इदमदो वेति चञ्चलत्वहीना यदा स्थास्यति तदा समाधौ समाधिः समाधानम्। सतिसप्तमी। श्रुत्यर्थनिश्चयेन निश्चलत्वे सति अपरोक्षज्ञानं भवतीति योज्यम्। तेन च विष्णावचला भवति बुद्धिः। ततश्च योगं भगवद्योगं मुक्तिमवाप्स्यसीति ॥५३॥

**अर्जुन उवाच–स्थितप्रज्ञस्य का भाषा समाधिस्थस्य केशव ॥**
**स्थितधीः किं प्रभाषेत किमासीत व्रजेत किम् ॥ ५४ ॥**

त० टी०–यदा समाधावचला बुद्धिस्तदा योगमवाप्स्यसीत्युक्तं तेन समाधिस्थः स्थितप्रज्ञस्तत्त्वज्ञो भवतीति विज्ञाय तस्य लक्षणभाषणासनव्रजनानि जिज्ञासुरर्जुनः पृच्छति–स्थितप्रज्ञस्येति। हे केशव स्थिता प्रज्ञा बुद्धिर्यस्य तत्कुतो यतः समाधिस्थस्तस्य का भाषा भाष्यते प्रकर्षेण कथ्यतेऽनयेति भाषालक्षणमित्यर्थः। तथा स्थितधीः पुरुषः समाधेरुत्थाय किं प्रभाषेत किं भाषणं कथं वा भाषणं कुर्वीत। तथा किमासीत कथमासीत उपविशेत। तथा किं कथं वा व्रजेत गमनं कुर्यात्। स्थितप्रज्ञस्य मूढजनाद्विलक्षणानि भाषणादीन्यतः पृच्छामि। एतद्ब्रूहीति शेषः। ननु समाधिस्थस्य लक्षणभाषणादिकं समाधिमच्छ्रेष्ठो ब्रह्मशिवादिः कश्चिज्जानीयात्तत एव जिज्ञासितव्यमित्याशङ्कानिरासकं सम्बोधनमुक्तं केशवेति। कश्च ईशश्च केशौ वापयति उत्पादयति नियमयति ताभ्यां ज्ञानं प्रापयति वा तथा स त्वमेव ब्रह्मशिवादिजनकत्वान्नियन्तृत्वाद्गुरुत्वाद्वा सर्वेश्वरः सर्वज्ञश्च समाश्रयणीय इत्यर्थः। "यो ब्रह्माणं विदधाति पूर्वं योवै वेदांश्च प्रहिणोति तस्मै तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषोऽजायत" 'क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गसम्भूतौ तस्मात्केशवनामवान्' इत्यादि श्रुतिस्मृतिभ्यः ॥ ५४ ॥

म० टी०–एवं लब्धावसरः स्थितप्रज्ञलक्षणं ज्ञातुमर्जुन उवाच यान्येव हि जीवन्मुक्तानां लक्षणानि तान्येव मुमुक्षूणां मोक्षोपायभूतानीति मन्वानः–स्थितप्रज्ञस्येति। स्थिता निश्चलाहं ब्रह्मास्मीति प्रज्ञा यस्य

स स्थितप्रज्ञो ऽवस्थाद्वयवान् समाधिस्थो व्युत्थितचित्तश्चेति । अतो विशिनष्टि समाधिस्थस्य स्थितप्रज्ञस्य का भाषा लक्षणं समाधिस्थः स्थितप्रज्ञः केन लक्षणेनान्यैर्व्यवह्रियत इत्यर्थः । स च व्युत्थितचित्तः स्थितधीः स्थितप्रज्ञः स्वयं किं प्रभाषेत स्तुतिनिन्दादावभिनन्दनद्वेषादिलक्षणं किं कथं प्रभाषते । सर्वत्र संभावनायां लिङ् । तथा किमासीतेति व्युत्थितचित्तनिग्रहाय कथं बहिरिन्द्रियाणां निग्रहं करोति तन्निग्रहाभावकाले च किं व्रजेत कथं विषयान्प्राप्नोति । तत्कर्तृकभाषणासनव्रजनानि मूढजनविलक्षणानि कीदृशानीत्यर्थः । तदेवं चत्वारः प्रश्नाः समाधिस्थे स्थितप्रज्ञे एकः व्युत्थिते स्थितप्रज्ञे त्रय इति । केशवेति संबोधयन् सर्वान्तर्यामितया त्वमेवेतादृशं रहस्यं वक्तुं समर्थोऽसीति सूचयति ॥ ५४ ॥

**शं० टी०**–श्रवणमननाभ्यां विज्ञातात्मतत्त्वस्य विदुषः समाधिना प्रज्ञास्थैर्यसिद्धिं श्रुत्वा स्थितप्रज्ञस्य लक्षणं विज्ञातुकामोऽर्जुनः पृच्छति–**स्थितप्रज्ञस्येति**। स्थितप्रज्ञस्य स्थिता ब्रह्माकारेण निश्चला बाह्याऽनवगाहिनी प्रज्ञा बुद्धिर्यस्य स स्थितप्रज्ञ आरूढस्तस्य भाषा भाषणं का कदा सिद्ध्यति । समाधिस्थस्य नित्यं निरन्तरं नियमेन समाधिं कुर्वाणस्य समाधिनिष्ठा निरतो विद्वान् पण्डितैरयं स्थितप्रज्ञ इति कदा भाष्यत इत्यर्थः । स्थितधीः स्थितप्रज्ञः स्वयं किं प्रभाषेत किमासीत किं व्रजेत कथं तिष्ठति कथं चरति किं वदतीत्यर्थः ॥ ५४ ॥

**श्री० टी०**–पूर्वश्लोकोक्तस्यात्मतत्त्वज्ञस्य लक्षणं जिज्ञासुरर्जुन उवाच–**स्थितप्रज्ञस्येति** । स्वाभाविके समाधौ स्थितस्यात एव स्थिता निश्चला प्रज्ञा बद्धिर्यस्य तस्य का भाषा भाष्यतेऽनयेति भाषा लक्षणमिति यावत् केन लक्षणेन स्थितप्रज्ञ उच्यत इत्यर्थः । तथा स्थितधीः किं कथं भाषणमासनं व्रजनं च कुर्यादित्यर्थः ॥ ५४ ॥

**स० टी०**–उपलभ्यार्जुनः प्रश्नबीजं सर्वहिताय च ॥ तत्त्वज्ञलक्षणं ज्ञातुं प्रोवाच श्रीहरिं प्रति ॥ १ ॥ यान्येव जीवन्मुक्तानां लक्षणानि भवन्ति हि ॥ तान्येवात्र मुमुक्षूणां मोक्षोपायात्मकान्यपि ॥ २ ॥ ब्रह्मैवास्मीति धीर्यस्य निश्चला स्थितधीर्हि सः ॥ समाधिस्थस्य षष्ठीयं कर्मण्येव न कर्तरि ॥ ३ ॥ समाधिस्थो व्युत्थितश्च स्थितप्रज्ञो द्विधोच्यते ॥ तत्राद्यः केन चिह्नेन ज्ञायतेऽन्यैर्जनैरपि ॥ ४ ॥ समाधिस्थस्य का भाषा लक्षणं भाष्यतेऽनया ॥ व्युत्थितोऽसौ स्थितप्रज्ञः किं प्रभाषेत वा स्वयम् ॥ ५ ॥ स्तुतिनिन्दादिविषयाञ्छब्दानज्ञविलक्षणान् ॥ किमासीत कथं चित्तनिरोधार्थं विनिग्रहम् ॥ ६ ॥ इन्द्रियाणां करोत्येष व्यवहारे कथं व्रजेत् ॥ विषयान्कथमाप्नोति स्वारब्धादागतान्सुधीः ॥ ७ ॥ लक्षणं भाषणं स्थानं व्रजनं च चतुर्थकम् ॥ चत्वारि कीदृशान्यस्य भिन्नान्यज्ञेभ्य इत्यलम् ॥ ८ ॥ एवं प्रश्ना हि चत्वारः समाधिस्थस्य चाग्रिमः ॥ व्युत्थितस्य त्रयः प्रोक्ताः स्थितप्रज्ञस्य भागशः ॥ ९ ॥ त्वमेवैतादृशं गुह्यं रहस्यं वक्तुमर्हसि ॥ सर्वान्तर्यामिभावेन सर्वसामर्थ्यवान् हरिः ॥ १० ॥ आह्वयन्केशवेत्येवं सूचयत्यर्जुनः सुधीः ॥ ११ ॥ ५४ ॥

**भा० टी०**–तत्त्वविल्लक्षणानि जिज्ञासुरर्जुन उवाच–**स्थितेति** । स्थिता प्रास्थिता प्रतिष्ठिताऽहं ब्रह्मास्मीति प्रज्ञा यस्य स एव समाधिस्थः न त्वात्मज्ञानशून्यस्य मुख्यसमाधिरस्तीति भावः । तस्य का भाषा कमथसौ लोकैर्भाष्यते कैर्लक्षणैर्लक्षितः सन् लोकैः स्थितप्रज्ञ इत्युच्यते इत्यर्थः । यथा भवानपि केशिहननादिकर्मणा केशव इत्युच्यते तथेति सूचयन्नाह–हे केशवेति । एतेनावस्थाद्वयवान्समाधिस्थो व्युत्थितचेताश्चेति अतो विशिनष्टि समाधिस्थस्य स्थितप्रज्ञस्येत्यादि प्रत्युक्तम् । योगिनोऽप्रक्रान्तत्वेन तस्य लक्षणप्रश्नानौचित्यात् । तत्त्वज्ञानरूपसमाधिस्थस्यैव प्रक्रान्तत्वात् । उत्तरे प्राणनिरोधं यदा करोति तदा समाधिस्थ इत्यनुक्तत्वाच्च ज्ञानिनः प्राणायामानपेक्षसमाधेर्वासिष्ठे स्पष्टमुक्तत्वाच्च । तथाहि परिघ उवाच 'यद्यत्संसारजालेऽस्मिन् क्रियते

कर्म भूमिप । तत्समाहितचित्तस्य सुखायान्यस्य नानघ ॥ क्वचित्संकल्परहितं परं विश्रमणास्पदम् । परमोपशमं श्रेयः समाधिमनुतिष्ठसि ॥ रघुरुवाच । एतन्मे ब्रूहि भगवन्सर्वसंकल्पवर्जितम् । परमोपशमं श्रेयः समाधिर्हि किमुच्यते ॥ योऽज्ञो महात्मन्सततं तिष्ठन्व्यवहरंश्च वा । असमाहितचित्तोऽसौ कदा भवति कः किल ॥ नित्यप्रबुद्धचित्तास्तु कुर्वन्तोऽभिजगत्क्रियाः । आत्मैकतत्त्वसन्निष्ठाः सदैव सुसमाधयः ॥ बद्धपद्मासनस्यापि कृतब्रह्माञ्जलेरपि । अविश्रान्तः स्वभावस्य कः समाधिः कथं च वा ॥ तत्त्वावबोधो भगवन्सर्वाशातृणपावकः । प्रोक्तः समाधिशब्देन नतु तूष्णीमवस्थितिः ॥ समाहिता नित्यतृप्ता यथा भूतार्थदर्शिनी । साधो समाधिशब्देन परा प्रज्ञोच्यते बुधैः ॥ अक्षुब्धा निरहंकारा द्वन्द्वेष्वननुपातिनी । प्रोक्ता समाधिशब्देन मेरोः स्थिरतराकृतिः ॥ निश्चिताभिगताभीष्टा हेयोपादेयवर्जिता । प्रोक्ता समाधिशब्देन परिपूर्णा मनोगतिः ॥ यतः प्रभृति बोधेन युक्तमात्यन्तिकं मनः । तदारभ्य समाधानमव्युच्छिन्नं महात्मनः' इत्यादि । स्थितधीः स्वयं वा किं प्रभाषेत किं प्रभाषणमासनं व्रजनं वा तस्य कथमित्यर्थः । आत्मनि स्थितस्य स्थितप्रज्ञस्य लक्षणं ब्रूहीति प्रश्नार्थः । तथाच भाष्यम् "स्थितप्रज्ञस्य लक्षणमनेन श्लोकेन पृच्छति यो ह्यादित एव सन्यस्य कर्माणि ज्ञानयोगनिष्ठायां प्रवृत्तः यश्च कर्मयोगेन तयोः स्थितप्रज्ञस्य प्रजहातीत्यारभ्याध्यायपरिसमाप्तिपर्यन्तं स्थितप्रज्ञलक्षणं साधनं चोपदिश्यते । सर्वत्रैव ह्यध्यात्मशास्त्रे कृतार्थलक्षणानि यानि तान्येव साधनान्युपदिश्यन्ते यत्नसाध्यत्वात्" इति ॥ ५४ ॥

प० टी०—अथ समाधौ स्थिरबुद्धेः स्वरूपमर्जुनः पृच्छति—**स्थितप्रज्ञस्येति** । भाष्यते प्रोच्यतेऽनेनेति भाषा स्थितप्रज्ञः पुमान् कैर्लक्षणैरुच्यत इत्यर्थः । तथा समाधिस्थस्य च किं लक्षणं स्थितप्रज्ञः समाधिस्थो वा कैर्लक्षणैर्बोद्धव्यः । ननु परबुद्धेरप्रत्यक्षत्वात्कथं दर्शनमात्रेण स्वरूपं ज्ञायते इति चेत्तर्हीतिबुद्धिमताकारेणैव मनोगतं ज्ञायते यतः—' उदीरितोऽर्थः पशुनापि गृह्यते हयाश्च नागाश्च वहन्ति नोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ' इत्युक्तत्वात् । अथ व्यवहारेण वा तल्लक्षणं पृच्छति—**स्थितधीरिति** । स्थितधीः किं प्रभाषेत कथं वदति, किमासीत कथमासीनो भवति, कथं वा व्रजेत गच्छतीति प्रश्नार्थः । प्रश्नाक्षराणि व्याख्याय वाक्यार्थमाह—**स्थितप्रज्ञस्येति** ॥ ५४ ॥

रा० टी०—ज्ञानिनि प्रकृते(सति)लब्धावसरोऽर्जुनः प्रागुक्तलक्षणानुवादपूर्वकं लक्षणान्तरादिकं पृच्छति—**स्थितेति** । स्थिता प्रतिष्ठां प्राप्ता प्रज्ञाऽपरोक्षदर्शिर्यस्य स तथा तस्य समाधिस्थस्य समाध्यवस्थां गतस्य प्राक्त्वदुक्तदिशाऽसंप्रज्ञातध्यानस्थत्वलक्षणं गतस्य का भाषा भाष्यतेऽनयेति भाषाशब्दो लक्षणवचनः किं लक्षणमित्यर्थः । येन लक्षणेनायं ज्ञानीति व्यवह्रियते तत्किमित्यर्थः । केशव ! ब्रह्मरुद्रप्रवर्तक ! "केशाद्वोऽन्यतरस्याम्" इति मत्वर्थे वप्रयोक्तेः । प्रशस्तकेशवानिति वा । स्थितधीरपरोक्षज्ञानी किं प्रभाषेत किं प्रत्यासति किमुद्दिश्य व्रजेत प्रवृत्तिं कुर्यादित्यर्थः । अत्र किंलक्षणमिति वक्तव्ये यौगिकभाषाशब्देन तदुक्तिः । प्रागुक्तं समाधिस्थत्वलक्षणं यावद्द्रव्यभावित्वान्न सम्यग्व्यवहारोपयोगि । यावल्लक्ष्यभावितुः सम्यक्सार्वत्रिकव्यवहारोपयोगि अतोऽसार्वत्रिकव्यवहारहेतुभूतं यावल्लक्ष्यभाविलक्षणं किमिति प्रष्टुमिति ज्ञेयम् । स्थितप्रज्ञस्य का भाषेत्येव पूर्तौ समाधिस्थस्येति प्राचीनलक्षणानुवादस्तु त्वदुक्तं लक्षणं ज्ञातं तन्न पृच्छ्यते येन सिद्धार्थता प्रश्नस्य स्यात् किंत्वन्यदेव पृच्छ्यत इति ज्ञापयितुम् ।यद्वा समाधिस्थस्य विषमबुद्धिवर्जितस्येत्यर्थः । उत्तरार्धे किंशब्दः आक्षेपार्थः ।भेरीताडनादिनापि अप्रतिबद्धो ब्रह्मदर्शनेन परमानन्दमग्नत्वात् । स्थितधीरपरोक्षज्ञानी भाषणोपवेशनगमनादिरूपप्रवृत्तिं किमर्थं कुर्यात् । करोति च शुकादिः । अतः ' समाधावचला बुद्धिस्तदा योगमवाप्स्यसि' इति उक्तमसदिति ॥ ५४ ॥

**श्रीभगवानुवाच–प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् ॥
आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते ॥ ५५ ॥**

**त० टी०**–एवमर्जुनस्य चतुरः प्रश्नान् क्रमेण यावदध्यायान्तं वक्तुं तावत्प्रथमप्रश्नस्योत्तरं श्रीभगवानुवाच–प्रजहातीति द्वाभ्याम् । मनोगतान्सर्वान्कामान्यदा प्रजहाति प्रकर्षेण त्यजति तदा स्थितप्रज्ञ उच्यते । मनोगतकामपरित्यागे किं गमकमित्यत आह–आत्मन्येवात्मना तुष्ट इति । आत्मनि स्वस्वरूपे प्रजापतिविद्योक्तापहतपाप्मत्वादिविशिष्टे ज्ञानानन्दस्वरूपे आत्मना काममलपरित्यागान्निर्मलीभूतेन मनसा तुष्टः प्रसन्नो यदा भवति तदा तस्य स्थितप्रज्ञता ज्ञेयेत्यर्थः ॥ ५५ ॥

**म० टी०**–एतेषां चतुर्णां प्रश्नानां क्रमेणोत्तरं भगवानुवाच–प्रजहातीति यावदध्यायसमाप्ति । कामान् कामसङ्कल्पादीन्मनोवृत्तिविशेषान् प्रमाणविपर्ययविकल्पनिद्रास्मृतिभेदेन तन्त्रान्तरे पञ्चधा प्रपञ्चितान् सर्वान्निरवशेषान्प्रकर्षेण कारणबाधेन यदा जहाति परित्यजति सर्ववृत्तिशून्य एव यदा भवति स्थितप्रज्ञस्तदोच्यते । समाधिस्थ इति शेषः । कामानामनात्मधर्मत्वेन परित्यागयोग्यतामाह–मनोगतानिति । यदि ह्यात्मधर्माः स्युस्तदा न त्यक्तुं शक्येरन् वह्न्यौष्ण्यवत् स्वाभाविकत्वात् मनसस्तु धर्मा एते अतस्तत्परित्यागेन परित्यक्तुं शक्या एवेत्यर्थः । ननु स्थितप्रज्ञस्य मुखप्रसादलिङ्गस्य सन्तोषविशेषः प्रतीयते स कथं सर्वकामपरित्यागे स्यादित्यत आह–आत्मनीति । आत्मन्येव परमानन्दरूपे न त्वनात्मनि तुच्छे आत्मना स्वप्रकाशचिद्रूपेण भासमाने नतु वृत्त्या तुष्टः परितृप्तः परमपुरुषार्थलाभात् । तथा च श्रुतिः "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति । तथा च समाधिस्थः स्थितप्रज्ञ एवंविधैर्लक्षणवाचिभिः शब्दैर्भाष्यत इति प्रथमप्रश्नस्योत्तरम् ॥ ५५ ॥

**शं० टी०**–सिद्धस्य लक्षणानि यानि तान्येव साधकस्य साधनानि प्रयत्नेन संपाद्यानि येषु सिद्धेषु सत्स्वेव विदुषः प्रज्ञास्थैर्यं विदेहकैवल्यं च सिध्यत्यतस्तानि मुमुक्षोर्यत्नेन साधनीयानीति सूचयितुमध्यायपरिसमाप्तेस्तान्येव प्रतिपाद्यन्ते । तत्रादौ प्रथमप्रश्नस्योत्तरमाह श्रीभगवान्–प्रजहातीति । श्रवणादिना सम्यग्विज्ञातात्मतत्त्वो मुमुक्षुः समाधौ वर्तमानो मनोगतान् "मनसैवानुद्रष्टव्यम्" इति श्रवणादात्मस्वरूपप्रकाशनैककारणे मनस्येव स्थितान् विषयान् कामयन्तीति कामाः विषयभोगेच्छास्तान् सर्वान्यदा यस्मिन्काले समाधिसिद्धिदशायां प्रजहाति निःशेषं परित्यजति । विषयाशानां निःशेषपरित्यागे हेतुमाह–आत्मनीति । स्वतः सिद्धे नित्यकूटस्थासङ्गचिद्रूपे चक्षुषो रूपवत्सर्वत्रोपलभ्यमान आनन्दैकरस आत्मनि स्वस्वरूपे क्रीडन् रममाणो ब्रह्मविदात्मना स्वस्वरूपेणैवोक्तलक्षणेन तुष्टः स्वात्मानन्दरसानुभूत्यैव संतोषं तृप्तिं च प्राप्यामृतरसपायी लवणाम्बुवत्तुच्छं विषयसुखं नापेक्षते तत एव तद्विषयान् कामान् सर्वान् प्रजहाति यदैवंलक्षणो भवति तदा स्थितप्रज्ञोऽयमिति पण्डितैरुच्यत इत्यर्थः । "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य" इति श्रुतेरर्थोऽनेन प्रतिपादितो भवति । ननु विषयेषु कामोदयकारणेषु सत्सु दृष्टेषु च विदुषोऽपि तदनुभूतौ कामो जायत एव न निःशेषेण कामपरित्यागः संभवतीति चेद्भवानत्र प्रष्टव्यः विषयेषु कामोदयो विषयस्वभावो वा किं पुरुषस्वभावो वा 'नाद्यः दृष्टे तृणपर्णादौ भोक्तुं पुंसः कामानुदयात्' न द्वितीयः कान्तासन्निधौ बालस्य कामादर्शनात् तर्हि कथं कामोदय इति चेदुच्यते ' काम ! जानामि ते मूलं संकल्पात्किल जायसे ' इति स्मरणात्कामः संकल्पमूलकः संकल्पो वासनामूलकः नहि वासनया विना वस्तुनि समीचीनत्वबुद्धिरुदेति समीचीनत्वबुद्धिं विना कामोऽपि न घटते ततः कामोत्पत्तेः कारणं विषयेषु भोग्यत्ववासनैव वासना नाम भोगजन्यसंस्कारः भोग्यत्ववासनाबलादेव विषयेषु कामः प्रवृत्तिश्च जन्तूनां तदिदं

लोकशास्त्रप्रसिद्धं विदुषस्तु नित्यं निरन्तरं समाधिनिष्ठायामेव तिष्ठतः सदा सर्वत्र ब्रह्मैव पश्यतो विषयग्रहणं न संभवति मृदात्मना पश्यतो घटाग्रहणं यथा तथा सर्वं ब्रह्मात्मना पश्यतस्तदभावे विषयवासनाः स्वयमेव क्षीयन्ते तासां क्षये कामाः स्वयमेव विनश्यन्ति स्वयमेव विनश्यतां कामानां नाशो विदुषि ह्युपचर्यते प्रजहाति यदेति प्रभया नश्यतस्तमसो नाशनं सूर्यः करोतीतिवद्यत एवं ततस्तत्सिद्धं निर्वासनत्वं विदुषो लक्षणमिति । तदिदं निर्वासनत्वं समाधिना साधकस्य संपादनीयमित्यवसितं च ॥ ५५ ॥

**श्री० टी०**—अत्र च यानि साधकस्य ज्ञानसाधनानि तान्येव स्वाभाविकानि सिद्धस्य लक्षणानि अतः सिद्धस्य लक्षणानि कथयन्नेवान्तरङ्गाणि ज्ञानसाधनान्याह—यावदध्यायसमाप्ति । तत्र प्रथमप्रश्नोत्तरमाह—**प्रजाहातीति** द्वाभ्याम् । श्रीभगवानुवाच मनसि स्थितान्कामान्यदा प्रकर्षेण जहाति त्यागे हेतुः आत्मन्येव स्वस्मिन्नेव परमानन्दरूपे आत्मना स्वयमेव तुष्ट इति आत्मारामः सन्यदा क्षुद्रविषयाभिलाषांस्त्यजति तदा तेन लक्षणेन मुनिः स्थितप्रज्ञ उच्यत इत्यर्थः ॥ ५५ ॥

**स० टी०**—एषां चतुर्णां प्रश्नानां क्रमेणाहोत्तरं हरिः ॥ कामान्संकल्पमुख्यान्वै मनोवृत्त्यात्मकान्यदा ॥ १ ॥ सर्वान्कारणबाधेन जहात्येतानशेषतः ॥ सर्वकामविनिर्मुक्तो यदा भवति निश्चलः ॥ २ ॥ स्थितप्रज्ञः समाधिस्थस्तदायं प्रोच्यते मुनिः ॥ कामा अनात्मधर्मत्वात्त्यक्तुं योग्या अशेषतः ॥ ३ ॥ यद्येते ह्यात्मधर्माः स्युस्त्यक्तुं शक्याः कथं तदा ॥ वह्न्यौष्ण्यवत्स्वभावत्वात्स्वभावो दुरतिक्रमः ॥ ४ ॥ मनोधर्मा यतस्त्वेते त्यक्तुं शक्याः सुखेन वै ॥ तन्निरोधेन ते सर्वे निरुद्धाः सन्ति वै यथा ॥ ५ ॥ तत्त्यागेन तथा त्यक्तास्तद्धर्माः स्युर्मृषात्मकाः ॥ ननु स्थितधियस्तर्हि सन्तोषः किंनिबन्धनः ॥ ६ ॥ कामत्यागे भवेदित्याकाङ्क्षायामाह केशवः ॥ आत्मन्येव परानन्दे न त्वनात्मनि तुच्छके ॥ ७ ॥ आत्मना स्वप्रकाशत्वाद्भासमानेन चित्त्वतः ॥ परितृप्तः सदानन्दपुरुषार्थैकलाभतः ॥ ८ ॥ स्थितप्रज्ञः समाधिस्थ एवं लक्षणवाचिभिः ॥ शब्दैर्भाष्यत इत्याद्यप्रश्नोत्तरमुदाहृतम् ॥ ९ ॥ ५५ ॥

**भा० टी०**—एवं पृष्टः श्रीभगवान् वासुदेवो मुमुक्षोर्यत्नसाध्यानि जीवन्मुक्तस्वभावभूतानि लक्षणानि वदन्प्रथमप्रश्नस्योत्तरमाह—**प्रजहातीति** द्वाभ्याम । यदा कामानिच्छाभेदान्मनोगतान् मनसि प्रतिष्ठितान् सर्वानशेषान्प्रजहाति, प्रकर्षेण त्यजति । ननु सर्वान्कामान् परित्यज्यापि प्रारब्धकर्मवशाज्जीवतस्तस्य उन्मत्तवत्प्रवृत्तिः प्राप्तेत्यत आह—**आत्मन्येवेति** । आत्मन्येव प्रत्यगात्मस्वरूप एवात्मना स्वेनैव बाह्यविषयलाभनिरपेक्षः परमार्थदर्शनामृतरसलाभेनान्यस्मात् प्राप्तालंप्रत्ययस्तुष्टस्तदा स्थितप्रज्ञः स्थिता प्रतिष्ठिता आत्मानात्मविवेकजा प्रज्ञा यस्य स विद्वान् तदोच्यते आत्मानं जिज्ञासमानो वैराग्यद्वारा पुत्रवित्तलोकैषणात्यागात्मकं सन्यासमासाद्य श्रवणाद्यावृत्त्या तज्ज्ञानं प्राप्य तस्मिन्नेव आसक्त्या विषयवैमुख्येन तत्फलभूतां तुष्टिं तत्रैव प्रतिलभमानः स्थितप्रज्ञव्यपदेशभागित्यर्थः । एतेनसमाधिस्थ इति शेष इति प्रत्युक्तं शेषस्योक्तयुक्त्या निरर्थकत्वात् । एतादृशलक्षणसंबन्धेन स्थितप्रज्ञ उच्यते यथा पृथासंबन्धेन त्वं पार्थ इति सूचयन्नाह—पार्थेति ॥ ५५ ॥

**प० टी०**—तत्र भगवान् क्रमेणोत्तरयति—**प्रजहातीति** यावदध्यायसमाप्ति । भो पार्थ मनोगतान् सर्वान् कामान् प्रजहात्यात्यन्तिकत्वेन वा तान् त्यजति तर्हि । न हि निरालम्बं मनः स्थातुं शक्नोतीत्याह—**आत्मनीति** । आत्मन्यानन्दघने आत्मना स्वयं तुष्टात्मसुखानुभवेन संतुष्टोऽत एव क्षुद्रानन्देभ्यो निवृत्त एतादृशी दशा यदा तदा स्थितप्रज्ञ इत्युच्यते । अत्र प्रज्ञानशब्देन विज्ञानमेव, स्थिरीभूतविज्ञानो जीवन्मुक्त इत्यर्थः । श्रुतिरपि—"यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति । अत्रैव देहे ब्रह्मानन्दमनुभवति। शेषं स्पष्टार्थम् ॥ ५५ ॥

**रा० टी०**—का भाषेति कृतलक्षणप्रश्नस्योत्तरमाह—प्रजहातीति । उत्तरार्धे कृताक्षेपस्य तु समाधिं 'या निशा' इत्यग्रे वक्ष्यति । यदा मनोगतान्सर्वान्कामान्प्रजहाति परित्यजति । कामानित्युपलक्षणं कामक्रोधादीनित्यर्थः । यदा चात्मन्येव परमात्मन्येव व्यवस्थितः सन् तदेकचित्तः सन्निति यावत् । आत्मना परमात्मना तत्प्रसादेनेत्यर्थः । तुष्टः संतोषयुक्तः तदा स्थितप्रज्ञोऽपरोक्षज्ञानी उच्यत इत्यर्थः । अत्र सर्वान्कामानित्यस्य विरुद्धकामानित्यर्थः । कामादेर्मनोगतत्वाव्यभिचारेपि मनोगतानित्युक्तिर्विरुद्धसर्वकामप्रहाणघटनाय ज्ञानस्य कामादेश्च मानसैकनिष्ठत्वात् ' रसोप्यस्य परं दृष्ट्वा निवर्तते ' इति वक्ष्यमाणदिशान्योन्यं विरुद्धत्वान्मनसि भगवज्ज्ञाने जाते तद्विरुद्धाः कामादयो न स्थातुमर्हन्तीति युक्तिसूचनेन तद्घटनात् प्रायः सर्वविरुद्धकामादित्यागवत्त्वे सति भगवदेकचित्ततया संतुष्टत्वं ज्ञानिलक्षणमित्युक्तं भवति । न च ' योगे त्विमां शृणु' इति ज्ञानोपायं प्रतिज्ञाय ज्ञानिलक्षणोक्तिरसङ्गतेति शङ्क्यम् । प्रायो विरुद्धकामत्यागभगवदेकचित्ततत्प्रसादायत्तसंतोषवत्त्वादीनां ज्ञानिलक्षणतयोक्तवक्ष्यमाणानामेव ज्ञानोपायशब्दितयोगरूपत्वात् । परन्तु ज्ञानार्थिनैतानि यत्नसाध्यानि ज्ञानिनि तु स्वभावसिद्धानीति विशेषः ॥ ५५ ॥

**दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृहः ॥**
**वीतरागभयक्रोधः स्थितधीर्मुनिरुच्यते ॥ ५६ ॥**

**त० टी०**—नन्विदं लक्षणं स्वसंवेद्यं तस्यात्मसंतुष्टत्वमन्यैः कथं ज्ञेयमित्यपेक्षायामाह—दुःखेष्विति । दुःखानि तावदध्यात्माधिदैवाधिभौतिकभेदात्त्रिविधानि । तत्राध्यात्मं शारीरकमानसभेदाद्विविधम् । तत्राक्षिशिरोरोगातिसारज्वरादिकं शारीरम् । निन्दाऽसूयाऽवमानेर्ष्यादिजन्यं मानसम् । शीतोष्णवातवर्षाविद्युदादिसमुद्भवमाधिदैविकम् । मनुष्यराक्षसपशुपक्ष्यादिजन्यमाधिभौतिकमिति विवेकः । तेषु प्रारब्धवशात्प्राप्तेषु एतान्यागमापायित्वात्स्वयमेव भोगेन वा नङ्क्ष्यन्तीति विचारेण नोद्विग्नं मनो यस्य सोऽनुद्विग्नमनाः तथा प्रारब्धवशात्सुखान्यपि प्राप्नुवन्ति तेष्वनागतेषु विगतस्पृहः वाञ्छारहितः । तत्र हेतुः—**वीतरागभयक्रोध** इति । मनस आसक्तिर्विषयेष्वभीष्टपदार्थेषु ममैते मा छिद्येरन्निति प्रीत्यतिशयो रागः प्रियवियोगजन्यागामिदुःखनिमित्तजन्यं दुःखं भयं प्रियवस्तुनाशहेतावुपस्थिते तद्वियोगकर्तृविषयोऽन्तःकरणविकारविशेषः क्रोधः एते रागादयो नित्यसुखस्वरूपे आत्मन्यविवेकेन जायन्ते तद्विवेकेन वीता गता यस्मात्स मुनिर्मननशीलः स्थितप्रज्ञ उच्यते विवेकिभिरिति शेषः॥५६॥

**म० टी०**—इदानीं व्युत्थितस्य स्थितप्रज्ञस्य भाषणोपवेशनगमनानि मूढजनविलक्षणानि व्याख्येयानि । तत्र किं प्रभाषेतेत्यस्योत्तरमाह—दुःखेष्विति द्वाभ्याम् । दुःखानि त्रिविधानि शोकमोहज्वरशिरोरोगादिनिमित्तान्याध्यात्मिकानि व्याघ्रसर्पादियुक्तान्याधिभौतिकानि अतिवातातिवृष्ट्यादिहेतुकान्याधिदैविकानि तेषु दुःखेषु रजःपरिणामसन्तापात्मकचित्तवृत्तिविशेषेषु प्रारब्धपापकर्मप्रापितेषु नोद्विग्नं दुःखपरिहाराक्षमतया व्याकुलं न भवति मनो यस्य सोऽनुद्विग्नमनाः अविवेकिनो हि दुःखप्राप्तौ सत्यामहो पापोऽहं धिङ्मां दुरात्मानमेतादृशदुःखभागिनं को मे दुःखमीदृशं निराकुर्यादित्यनुतापात्मको भ्रान्तिरूपस्तामसचित्तवृत्तिविशेष उद्वेगाख्यो जायते । यद्ययं पापानुष्ठानसमये स्यात्तदा तत्प्रवृत्तिप्रतिबन्धकत्वेन सफलः स्यात् भोगकाले तु भवेत्कारणे सति कार्यस्योच्छेत्तुमशक्यत्वान्निष्प्रयोजने दुःखकारणे सत्यपि किमिति मम दुःखं जायत इति अविवेकभ्रमरूपत्वात् न विवेकिनः स्थितप्रज्ञस्य संभवति दुःखमात्रं हि प्रारब्धकर्मणा प्राप्यते नतु तदुत्तरकालीनो भ्रमोपि । ननु दुःखान्तरकारणत्वात्सोपि प्रारब्धकर्मान्तरेण प्राप्यतामिति चेत् न स्थितप्रज्ञस्य भ्रमोपादानाज्ञाननाशेन भ्रमासंभवात्तज्जन्यदुःखप्रापकप्रारब्धाभावात् । यथा कथंचिद्देहयात्रामात्रनिर्वाहकप्रार-

ब्धकर्मफलस्य भ्रमाभावेऽपि बाधितानुवृत्त्योपपत्तेरिति विस्तरेणाग्रे वक्ष्यते। तथा सुखेषु सत्त्वपरिणामरूपप्रीत्यात्मकचित्तवृत्तिविशेषेषु त्रिविधेषु प्रारब्धपुण्यकर्मप्रापितेषु विगतस्पृहः आगामितज्जातीयसुखस्पृहारहितः। स्पृहा हि नाम सुखानुभवकाले तज्जातीयसुखस्य कारणं धर्ममननुष्ठाय वृथैव तदाकाङ्क्षारूपा तामसी चित्तवृत्तिर्भ्रान्तिरेव सा चाविवेकिन एव जायते न हि कारणाभावे कार्यं भवितुमर्हति अतो यथा सति कारणे कार्यं मा भूदिति वृथाकाङ्क्षारूप उद्वेगो विवेकिनो न संभवति तथैवासति कारणे कार्यं भूयादिति वृथाकाङ्क्षारूपा तृष्णात्मिका स्पृहापि नोपपद्यते प्रारब्धकर्मणः सुखमात्रप्रापकत्वात्। हर्षात्मिका वा चित्तवृत्तिः स्पृहाशब्देनोक्ता सापि भ्रान्तिरेव अहो धन्योहं यस्य ममेदृशं सुखमुपस्थितं को वा मया तुल्यस्त्रिभुवने केन वोपायेन ममेदृशं सुखं न विच्छिद्येतेत्येवमात्मिकोत्फुल्लतारूपा तामसी चित्तवृत्तिः। अत एवोक्तं भाष्ये 'नाग्निरिवेन्धनाद्याधाने यः सुखान्यनुविवर्धते स विगतस्पृहः' इति। वक्ष्यति च 'न प्रहृष्येत् प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्' इति। सापि न विवेकिनः संभवति भ्रान्तित्वात्। तथा वीतरागभयक्रोधः रागः शोभनाध्यासनिबन्धनो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषोत्पन्नाभिनिवेशरूपः। रागविषयस्य नाशके समुपस्थिते तन्निवारणासामर्थ्यमात्मनो मन्यमानस्य दैन्यात्मकश्चित्तवृत्तिविशेषो भयम्। एवं रागविषयविनाशके समुपस्थिते तन्निवारणसामर्थ्यमात्मनो मन्यमानस्याभिज्वलनात्मकश्चित्तवृत्तिविशेषः क्रोधस्ते सर्वे विपर्ययरूपत्वाद्विगता यस्मात् स तथा एतादृशो मुनिर्मननशीलः संन्यासी स्थितप्रज्ञ उच्यते। एवं लक्षणः स्थितधीः स्वानुभवप्रकटनेन शिष्यशिक्षार्थमनुद्वेगनिस्पृहत्वादिवाचः प्रभाषत इत्यन्वय उक्तः। एवं चान्योपि मुमुक्षुर्दुःखे नोद्विजेत् न प्रहृष्येत् रागभयक्रोधरहितश्च भवेदित्यभिप्रायः॥ ५६॥

शं० टी०—इदं मुमुक्षोरवश्यं साधनीयं साधनमिति सूचयितुं सिद्धस्य लक्षणान्तरमाह—दुःखेष्विति। दुःखेषु दुःखप्रापकेषु ज्वरशूलशिरोवेदनादिष्वाध्यात्मिकेषु चौराऽहिव्याघ्रादिष्वाधिभौतिकेषु वर्षवातातपादिष्वाधिदैविकेषूपद्रवेषु प्राप्तेषु सत्सु स्वयमनुद्विग्नमनाः अनुद्विग्नं किं करोमि क्व गच्छामीति विक्षेपव्यथाविधुरं मनो यस्य सोऽनुद्विग्नमनाः समाधिनिष्ठया तैरक्षोभितचित्त इत्यर्थः। तथा सुखेषु सुखप्रापकेषु मिष्टान्नरसादिषु स्वयं प्राप्तेषु विगतस्पृहः विगता विशिष्य निर्गता स्पृहा रसनादीन्द्रियलौल्यं यस्य स विगतस्पृहः स्वानन्दरसास्वादासक्तया तेष्वादररहित इत्यर्थः। वीतरागभयक्रोधः उपकारिणि रागः प्रीतिरत्यन्ताऽपकारिणि क्रोधोऽप्रीतिरासन्ने मरणहेतौ भयं चैतत्त्रितयं स्वात्मनिष्ठया वीतं न प्राप्तं येन स वीतरागभयक्रोधः प्रीत्यप्रीतिभयहेतूनां प्रीत्यादीनां तत्कार्याणां चाविषयीभूत इत्यर्थः। दुःखादिषु विषादाद्यनुदये हेतुमाह—मुनिरिति। श्रुतं दृष्टं स्पृष्टं च सर्वं प्रत्यक्दृष्ट्या ब्रह्मैव मनुते पश्यति जानाति नतु तत्तदाकारेणेति मुनिर्ब्रह्मनिष्ठः। एवंलक्षणो यः स स्थितधीः स्थितप्रज्ञः सिद्ध इत्युच्यत इत्यर्थः। एतेन दुःखादिबाह्याऽनालम्बिन एव सद्ब्रह्मनिष्ठावत एव सम्यग्ज्ञानं सम्यक्ज्ञानिन एव विदेहमुक्तिरिति सूचितं भवति। संसिद्धो ब्रह्मविद्यतिरापत्सु संपत्सु न किंचिद्वदति किंतु तूष्णीमेव स्वात्मना तिष्ठतीति किं प्रभाषेतेत्यस्य प्रश्नस्योत्तरं दत्तम्॥ ५६॥

श्री० टी०—किंच—दुःखेष्विति। दुःखेषु प्राप्तेष्वपि अनुद्विग्नमक्षुभितं मनो यस्य सः। सुखेषु विगता स्पृहा यस्य सः। तत्र हेतुः वीता अपगता रागभयक्रोधा यस्मात्। तत्र रागः प्रीतिः। स मुनिः स्थितधीः स्थितप्रज्ञ इत्युच्यते॥ ५६॥

स० टी०—अथ व्युत्थितचित्तस्य स्थितप्रज्ञस्य भाषणम्॥ आसनं गमनं चैतत्त्रयं मूढविलक्षणम्॥ १॥ व्याख्येयं तत्र चाद्यस्य व्याख्यानं सम्यगुच्यते॥ शोकमोहज्वरादीनि दुःखान्याध्यात्मिकानि वै॥ २॥

आधिभौतिकदुःखानि व्याघ्रसर्पादिजानि च ॥ अतिवातातिवृष्ट्यादि दुःखं स्याच्चाधिदैविकम् ॥ ३ ॥ तेषु दुःखेषु रजसः परिणामात्मकेषु च ॥ प्रारब्धकर्मणाप्तेषु व्याकुलं यस्य नो मनः ॥ ४ ॥ भ्रान्तिकार्यतया तेषु नोद्वेगं भजते बुधः ॥ देहाभिमानिनो दुःखप्राप्तौ सत्यामहो बत ॥ ५ ॥ पापिष्ठोऽहं च धिङ्मां स्यादीदृशं दुःखभागिनम् ॥ को मे दुःखं निराकुर्यादित्युद्वेगोऽभिजायते ॥ ६ ॥ पापानुष्ठानसमये यद्येवं स्यात्तदा ततः ॥ प्रतिबन्धेन पापस्य सफलः स्याज्जडात्मनः ॥ ७ ॥ भोगकाले वृथोद्वेगो मूढस्यैव न तद्विदः ॥ तथा सुखेषु सत्त्वस्य परिणामात्मकेषु च ॥ ८ ॥ प्रारब्धकर्मणाप्तेषु त्रिविधेषु गतस्पृहः ॥ सुखानुभवकाले हि मूढानामविवेकिनाम् ॥ ९ ॥ वृथाकाङ्क्षा विना धर्मं तज्जातीयसुखस्य च ॥ स्थितप्रज्ञस्य च भ्रान्तेरभावात्तामसो भ्रमः ॥ १० ॥ नैवास्त्यतः स्पृहाशून्यः स्वात्मतत्त्वे स्थितः सुधीः ॥ अनात्मन्यात्मधीरेव कारणं सकलभ्रमे ॥ ११ ॥ शोभनाध्यासजो रागो विषये रञ्जनात्मकः ॥ अत्यन्ताभिनिवेशात्मा चित्तवृत्तिविशेषकः ॥ १२ ॥ तद्गोचरस्य दुर्दैवान्नाशके प्रत्युपस्थिते ॥ तन्निराकरणाशक्तेर्यद्दैन्यं तद्भयं स्मृतम् ॥ १३ ॥ तन्निवारणसामर्थ्यं मन्यमानस्य चात्मनः ॥ चित्तवृत्तिविशेषः स्यात्क्रोधोऽभिज्वलनात्मकः ॥ १४ ॥ ते विपर्ययरूपत्वाद्रागाद्या विगता यतः ॥ एतादृशो मुनिर्धीरः स्थितप्रज्ञ उदाहृतः ॥ १५ ॥ एवं स शिष्यशिक्षार्थमनुद्वेगादिका गिरः ॥ स्वानुभूतिप्रकाशेन निर्मलास्ताः प्रभाषते ॥ १६ ॥ एवं मुमुक्षुर्नो हृष्येत्सुखे दुःखे च नोद्विजेत् । रागक्रोधादिशून्यः स्यादित्येवात्राशयो हरेः ॥ १७ ॥ ५६ ॥

भा० टी०—किंच—दुःखेष्विति । यत्तु 'पूर्वश्लोकेन प्रथमप्रश्नस्योत्तरमुक्तम् इदानीं व्युत्थितचित्तस्य स्थितप्रज्ञस्य भाषणोपवेशनगमनानि मूढजनविलक्षणानि व्याख्येयानि तत्र किं प्रभाषेतेत्यस्योत्तरमाह' इति तच्चिन्त्यम् । स्थितधीर्मुनिरुच्यते इति वाक्यशेषेण प्रथमप्रश्नोत्तरप्रतीतेः स्पष्टत्वात् । दुःखेष्वाध्यात्मिकाधिदैविकाऽधिभौतिकेष्वनुद्विग्नमक्षुभितं मनो यस्य स तथा त्रिविधसुखेषु विगता स्पृहाभिलाषो यस्य सः । अत एव वीता रागभयक्रोधा यस्मात्स स्थितधीः स्थितप्रज्ञस्तदोच्यते ॥ ५६ ॥

प० टी०—अथान्यदाह—दुःखेष्विति । दैवात्प्राप्तेषु दुःखेष्वनुद्विग्नमना नोद्विग्नमुद्वेगं प्राप्तं मनो यस्य स तथा । तथा च प्राप्तेषु सुखेषु विगतस्पृहोऽनादरः । अत्र यथासंभवं हेतुमाह—वीतराग इति । स्पष्टम् ॥ ५६ ॥

रा० टी०—एतदेव कामशब्दोपलक्षितदोषान्तरत्यागकथनादिना त्रिभिः स्पष्टयति—दुःखेष्वित्यादिभिः । दुःखेषु प्राप्तेषु अनुद्विग्नं क्षान्तं मनो यस्य स तथा सुखेषु विषये विगतेच्छः । अशोभने शोभनाध्यासो रागः । रागभयक्रोधाः वीता अपगता यस्मात्स तथा तादृशो मुनिः स्थितधीरुच्यते ॥ ५६ ॥

**यः सर्वत्रानभिस्नेहस्तत्तत्प्राप्य शुभाशुभम् ॥**
**नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥**

त० टी०—इदानीं स्थितधीः किं प्रभाषेतेत्यस्योत्तरमाह—यः सर्वत्रेति । यो मुनिः सर्वविषयेष्वनभिस्नेहश्चित्तासक्तिरहितस्तत एव तत्तत् शुभाशुभं मूढजनाभिमतं शुभं सुखहेतुं सुमिष्टस्निग्धपायसमोदकादिभोजनमिष्टरसादिपानं कोमलं सुरूपं वस्त्रं गृहपानादिकं वा प्राप्य नाभिनन्दति त्वया ममातिप्रियं कृतं त्वत्समो नास्ति कश्चिदित्यभिनन्दनं न करोति । अशुभं दुःखहेतुतया मतमुक्ताद्विपरीतभोजनपानादिमृषासमाधिर्दाम्भिक इत्यादि वाक्यं वा प्राप्य कश्चित्प्रति न द्वेष्टि । अतो रागद्वेषाभावात्स्तुतिनिन्दारहितं सर्वहितमल्पभाषणं करोतीति भावः । तस्य प्रज्ञा प्रतिष्ठिता, स स्थितप्रज्ञ इत्यर्थः ॥ ५७ ॥

**म० टी०**—किंच सर्वदेहेषु जीवनादिष्वपि यो मुनिरनभिस्नेहः यस्मिन्सत्यन्यदीये हानिवृद्धी स्वस्मिन्नारोप्येते स तादृशोन्यविषयः प्रेमापरपर्यायस्तामसो वृत्तिविशेषः स्नेहः सर्वप्रकारेण तद्रहिताऽनभिस्नेहः । भगवति परमात्मनि तु सर्वथाभिस्नेहवान्भवेदेव अनात्मस्नेहाभावस्य तदर्थत्वादिति द्रष्टव्यम् । तत्तत्प्रारब्धकर्मपरिप्रापितं शुभं सुखहेतुं विषयं प्राप्य नाभिनन्दति हर्षाविशेषपुरस्सरं न प्रशंसति । अशुभं दुःखहेतुं विषयं प्राप्य न द्वेष्टि अन्तरसूयापूर्वकं न निन्दति । अज्ञस्य हि सुखहेतुर्यः स्वकलत्रादिः स शुभो विषयस्तद्गुणकथनादिप्रवर्तिका धीवृत्तिर्भ्रान्तिरूपाभिनन्दः स च तामसः तद्गुणकथनादेः परप्रोचनार्थत्वाभावेन व्यर्थत्वात् । एवमसूयोत्पादनेन दुःखहेतुः परकीयविद्याप्रकर्षादिरेनं प्रत्यशुभो विषयस्तं निन्दादिप्रवर्तिका भ्रान्तिरूपा धीवृत्तिर्द्वेषः सोऽपि तामसः तं निन्दाया निवारणार्थत्वाभावेन व्यर्थत्वात् । तावभिनन्दद्वेषौ भ्रान्तिरूपौ तामसौ कथमभ्रान्ते शुद्धसत्त्वे स्थितप्रज्ञे संभवेतां तस्माद्विचालकाभावात् । तस्यानभिस्नेहस्य हर्षविषादरहितस्य मुनेः प्रज्ञा परमात्मतत्त्वविषया प्रतिष्ठिता फलपर्यवसायिनी स स्थितप्रज्ञ इत्यर्थः । एवमन्योपि मुमुक्षुः सर्वत्रानभिस्नेहो भवेत् शुभं प्राप्य न प्रशंसेत् अशुभं प्राप्य न निन्देदित्यभिप्रायः । अत्र च निन्दाप्रशंसादिरूपा वाचो न प्रभाषेत इति व्यतिरेक उक्तः ॥ ५७ ॥

**शं० टी०**—श्रवणादिना विज्ञातात्मतत्त्वो विदेहकैवल्यार्थी सन् ज्ञानपरिपाकाय समाधौ प्रवृत्तः साधको य एवं वर्तते तस्यैव ज्ञाननिष्ठा सिध्यतीत्याह—**य इति** । यः समाधौ प्रवृत्तो यतिः सर्वत्र कन्थाकौपीनादिपरिग्रहे देहजीवनेप्यनभिस्नेहः अत्यन्तासक्तिरहितो भवति प्रारब्धवशादागतं यच्छुभमनुकूलं तन्नाभिनन्दति यदशुभं प्रतिकूलं तत् न द्वेष्टि हर्षविषादरहितो भूत्वा सर्वत्र समबुद्धिः सन् समाधावेव तिष्ठति तस्यैव प्रज्ञा प्रतिष्ठिता स्याज्ज्ञाननिष्ठा सिध्यति नेतरस्येत्यर्थः ॥ ५७ ॥

**श्री० टी०**—कथं भाषेतेत्यस्योत्तरमाह—**य इति** । यः सर्वत्र पुत्रादिष्वपि अनभिस्नेहशून्यः अत एव बाधितानुवृत्त्या तत्तच्छुभमनुकूलं प्राप्य नाभिनन्दति न प्रशंसति अशुभं प्रतिकूलं प्राप्य न द्वेष्टि न निन्दति किंतु केवलमुदासीन एव भाषते तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः ॥ ५७ ॥

**स० टी०**—यस्मिन्सत्यन्यदीये हि हानिवृद्धी वृथात्मनि ॥ आरोप्येते तमोवृत्त्या स्नेहः प्रेमापराभिधः ॥ ॥ १ ॥ देहे वित्ते कलत्रादौ स्नेहशून्यः स तादृशः ॥ सुखहेतुं शुभं तत्तद्विषयं प्राप्य कर्मणा ॥ २ ॥ न प्रशंसति हर्षेण दुःखहेतुं तथा शुभम् ॥ विषयं प्राप्य नासूयापूर्वकं तं च निन्दति ॥ ३ ॥ अज्ञस्य सुखहेतुर्यः स्वकलत्रादिकः शुभः ॥ तद्गुणख्यापनोद्युक्ता धीवृत्तिरभिनन्दकः ॥ ४ ॥ तथान्यदीयाविद्यादिप्रकर्षोऽज्ञजनं प्रति ॥ अशुभो विषयस्तस्य तन्निन्दादिप्रवर्तिका ॥ ५ ॥ धीवृत्तिर्भ्रान्तिरूपा स्याद्द्वेषः सोऽत्यन्ततामसः ॥ तावुभौ शुद्धसत्वेऽस्मिन्संभवेतां कथं मुनौ ॥ ६ ॥ तस्माद्विचालकाभावात्प्रज्ञा तस्यात्मगोचरा ॥ प्रतिष्ठां निश्चलां प्राप्ता फलपर्यवसायिनी ॥ ७ ॥ स्थितप्रज्ञः स्तुतिं निन्दां कस्याप्येवं न भाषते ॥ एवं मुमुक्षुरन्योऽपि निःस्नेहः सकले भवेत् ॥ ८ ॥ न प्रशंसेच्छुभं प्राप्य न निन्देदशुभं गतः ॥ ९ ॥ ५७ ॥

**भा० टी०**—द्वितीयप्रश्नस्योत्तरमाह—**य इति** । यो मुनिः सर्वत्र देहजीवनादिष्वपि स्नेहवर्जितः तत्तत्प्राप्य शुभाशुभं शुभं लब्ध्वा नाभिनन्दति हर्षगर्भितं स्तुतिवचनं नाभिभाषते तथाऽशुभं लब्ध्वा न द्वेष्टि द्वेषगर्भितं निन्दावाक्यं न वक्तीत्यर्थः । तस्य प्रज्ञा प्रतिष्ठिता ॥ ५७ ॥

**प० टी०**—अथान्यदप्याह—**यः सर्वत्रेति** । यः सर्वत्र देहादिविषयेष्वथवा सर्वावस्थास्वप्यनभिस्नेहः स्नेहशून्यः । अथ तदेवाह—**नाभिनन्दतीति** । तच्छुभाशुभं प्राप्य क्रमेण नाभिनन्दति शुभं प्राप्य न प्रशंसत्यशुभं प्राप्य न निन्दति केवलमुदासीनत्वेन तिष्ठति तस्य प्रज्ञा प्रतिष्ठितेति विद्धि ॥ ५७ ॥

रा० टी०–वीतरागभयक्रोधत्वं केन हेतुना भवतीत्यत आह–य इति । अनभिस्नेह इति हेतुगर्भम् । यः सर्वत्राऽनभिस्नेहत्वात्तत्तच्छुभाशुभं प्राप्यापि नाभिनन्दति न द्वेष्टि तस्य प्रज्ञा अपरोक्षधीः प्रतिष्ठिता ॥५७॥

**यदा संहरते चायं कूर्मोऽङ्गानीव सर्वशः ॥**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥**

**त० टी०–किमसीतेत्यस्योत्तरमाह–यदेति । यदा समाधेर्व्युत्थानसमये अयं योगी इन्द्रियार्थेभ्यः शब्दादिविषयेभ्यः सर्वेभ्यः सर्वश इन्द्रियाणि श्रोत्रादिज्ञानेन्द्रियाणि संहरते बहिर्न प्रवर्तयति कर्मेन्द्रियाणि त्वावश्यके कर्मणि संकोचेन प्रवर्तयति च । तत्र दृष्टान्तः कर्मोऽङ्गानीवेति । यथा कूर्मोऽन्यभयात्करचरणाद्यङ्गानि शरीरान्तरुपसंहरति आहारार्थं शनैर्निःसार्य प्रवर्तते च तद्वत् । तस्य प्रज्ञा प्रतिष्ठिता स्थितप्रज्ञ एवमासीतेत्यर्थः ॥ ५८ ॥**

म० टी०–इदानीं किमासीतेति प्रश्नस्योत्तरं वक्तुमारभते भगवान्–यदेति षड्भिः श्लोकैः । तत्र प्रारब्धकर्मवशाद्व्युत्थानेन विक्षिप्तानीन्द्रियाणि पुनरुपसंहृत्य समाध्यर्थमेव स्थितप्रज्ञस्योपवेशनमिति दर्शयितुमाह–अयमिति । अयं व्युत्थितः सर्वशः सर्वाणीन्द्रियाणि इन्द्रियार्थेभ्यः शब्दादिभ्यः सर्वेभ्यः । चः पुनरर्थे । यदा संहरते पुनरुपसंहरति सङ्कोचयति । तत्र दृष्टान्तः कर्मोऽङ्गानीव । तदा तस्य प्रज्ञा प्रतिष्ठितेति स्पष्टम् । पूर्वश्लोकाभ्यां व्युत्थानदशायामपि सकलतामसवृत्त्यभाव उक्तः । अधुना तु पुनः समाध्यवस्थायां सकलवृत्त्यभाव इति विशेषः ॥ ५८ ॥

शं० टी०–यद्यपि ज्ञाननिष्ठासिद्धेर्महद्वैराग्यं तीव्रमोक्षेच्छा तत्परत्वं चैतत्त्रितयमेव कारणं तथापीन्द्रियनिग्रहाभावे वैराग्यादिज्ञाननिष्ठा च न सिध्यतीत्यतः साधकस्य यतेर्यत्नत इन्द्रियजयः संपाद्यः प्रज्ञासिद्धया इत्याह–यदेति । योयं ज्ञाननिष्ठायां प्रवृत्तो यतिर्यथा कूर्मः स्वाङ्गानि परेभ्यो भयात् सर्वशः सर्वाणि तत्तत्काले स्वस्मिन्नेवोपसंहरते तद्वदिन्द्रियार्थेभ्यस्तत्तद्विषयेभ्यो भयाद्रागादिदोषाप्रसक्तिभयात्समाधिविघ्नभयाच्च वागादीनि चक्षुरादीनि च सर्वशः सर्वाणि यदा स्वयं स्वस्मिन्नुपसंहरते समाधिस्थैर्याय तत्तत्प्रवृत्तिं वारयति तदा तस्य प्रज्ञा प्रतिष्ठिता भवतीत्यर्थः ॥ ५८ ॥

श्री० टी०–किंच–यदेति । यदा चायं योगी इन्द्रियार्थेभ्यः शब्दादिभ्यः सकाशात् इन्द्रियाणि संहरते प्रत्याहरति । अनायासेन संहारे दृष्टान्तः अङ्गानि करचरणादीनि कूर्मो यथा स्वभावेनैव आकर्षति तद्वत् ५८॥

स० टी०–किमासीतेतिप्रश्नस्य वक्तुमुत्तरमीश्वरः ॥ षड्भिरारभते श्लोकैः सर्वमङ्गलहेतवे ॥ १ ॥ विक्षिप्तानीन्द्रियाण्येष व्युत्थाने सति कर्मणा ॥ समस्तानीन्द्रियार्थेभ्यः शब्दादिभ्यो यदा स्वयम् ॥ २ ॥ संकोचयति धैर्येण कूर्मोऽङ्गानीव सर्वशः ॥ समाधिकाले तस्यास्ति प्रज्ञा सम्यक् प्रतिष्ठिता ॥ ३ ॥ पूर्वश्लोकद्वये प्रोक्तो व्युत्थानसमये मुनेः ॥ सर्वतामसवृत्तीनामभावस्तत्त्वदर्शनात् ॥ ४ ॥ पुनः समाध्यवस्थायामधुनोक्तो महात्मनः ॥ समस्तवृत्त्यभावोऽत्र विशेषोऽयं विचार्यताम् ॥ ५ ॥ ५८ ॥

भा० टी०–त्रिचारादिनेन्द्रियनिग्रहार्थं स्थितप्रज्ञस्योपवेशनमिति तृतीयप्रश्नस्योत्तरं वक्तुं जितेन्द्रियत्वं तस्य लक्षणमाह–यदेति । यथा कूर्मः कमठो भयादङ्गान्युपसंहरति तथा यदा ज्ञाननिष्ठः यतिः शब्दादिविषयेभ्य इन्द्रियाण्युपसंहरति तदा तस्य प्रज्ञा प्रतिष्ठिता ॥ ५८ ॥

प० टी०–किंच–यदेति । योगीन्द्रियार्थेभ्यः शब्दादिभ्यः सकाशाद्यदेन्द्रियाणि संहरते प्रत्याहरति तदा तस्य प्रज्ञा प्रतिष्ठितेति विद्धि । अथापरिपक्वमनस इन्द्रियाकर्षणे भूयान् प्रयासो भवति तथा तस्य न

वेति सुखोपायेनेन्द्रियाकर्षणे दृष्टान्तमाह–यथेति । यथा कूर्मः कच्छपोऽङ्गानि करचरणादीनि स्वभावेनै-वाकर्षति तद्वदलौकिकात्मसुखानुभवे सुषुप्त्यारम्भ इव स्वत एवेन्द्रियवृत्तिः ॥ ५८ ॥

रा० टी०–किंचायं ज्ञानी यदा इन्द्रियार्थेभ्यः शब्दस्पर्शरूपरसगन्धेभ्यः सर्वशः सर्वाणि इन्द्रियाणि श्रोत्रादीनि कूर्मः करचरणाद्यङ्गानि स्वभावेनोपसंहरति तद्वदनायासेनोपसंहरते तस्य प्रज्ञा प्रतिष्ठिता। ज्ञानिनो जिज्ञासोरिवेन्द्रियप्रत्याहरणं न यत्नसाध्यं किंत्वनायासेनैवेति ज्ञापनाय कर्मोङ्गानीवेति दृष्टान्तः ॥ ५८ ॥

**विषया विनिवर्तन्ते निराहारस्य देहिनः ॥**
**रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ॥ ५९ ॥**

त० टी०–नन्वयोगिनां मूढानामपि रोगादिवशादिन्द्रियाणि विषयेभ्यः स्वयमुपसंह्रियन्ते कथमि-न्द्रियाणां विषयेष्वप्रवर्तनं स्थितप्रज्ञस्य लक्षणमिति चेत्तत्राह–विषया इति । निराहारस्य रोगेण भोजनरहितस्य देहिन इन्द्रियशैथिल्याद्विषयाः शब्दस्पर्शादिभोगास्तद्ग्रहणाशक्यत्वाद्विशेषेण निवर्तन्ते इति सत्यं, तथाऽपि रसवर्जं रसो विषयेष्वत्यन्तरागः स्नेहस्तं विना रागेण पुरुषस्य विषयभोगो निवर्तते,परन्तु दुःखनिवृत्तेरनन्तरं मधुराम्लभक्षणपानस्त्रीभोगादि सर्वं सुखं भोक्ष्यामीति मनसि वासना न निवर्तते इत्यर्थः । स रसोऽपि अस्य विदुषः परं परमानन्दं दृष्ट्वा निवर्तते । नहि नित्यानन्तानन्द-ज्ञस्य विनाशिनि तुच्छानन्दे रागो भवति । परशब्दार्थस्तु सर्वानन्दकारणस्य निखिलहेयगन्धव-र्जितस्य ( ध्येयस्य ) भगवतश्चिद्घनं वपुरेव " एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुप-जीवन्ति । यदात्मको भगवांस्तदात्मिका व्यक्तिः किमात्मको भगवान् ज्ञानात्मक ऐश्वर्यात्म-कश्च " इति श्रुतेः॥ ५९ ॥

म० टी०–ननु मूढस्यापि रोगादिवशाद्विषयेभ्य इन्द्रियाणामुपसंहरणं भवति तत्कथं तस्य प्रज्ञा प्रति-ष्ठितेत्युक्तमत आह–विषया इति । निराहारस्य इन्द्रियैर्विषयाननाहरतो देहिनो देहाभिमानवतो मूढस्यापि रोगिणः काष्ठतपस्विनो वा विषयाः शब्दादयो विनिवर्तन्ते किन्तु रसवर्जं रसस्तृष्णा तं वर्जयित्वा अज्ञस्य विषया निवर्तन्ते तद्विषयो रागस्तु न निवर्तत इत्यर्थः । अस्य तु स्थितप्रज्ञस्य परं पुरुषार्थं दृष्ट्वा तदेवाहमस्मीति साक्षात्कृत्य स्थितस्य रसोपि क्षुद्रसुखरागोपि निवर्तते अपिशब्दाद्विषयाश्च । तथाच यावानर्थ इत्यादौ व्याख्यातम् । एवं च सरागविषयनिवृत्तिः स्थितप्रज्ञलक्षणमिति न मूढे व्यभिचार इत्यर्थः । यस्मान्नासति परमात्मसम्यग्दर्शने सरागविषयोच्छेदः तस्मात्सरागविषयोच्छेदिकायाः सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं महता यत्नेन संपादयेदित्यभिप्रायः ॥ ५९ ॥

शं० टी०–नन्विन्द्रियाणां विषयेभ्यो वैमुख्यकरणं प्रज्ञास्थैर्यकारणमित्येतदयुक्तं यत्किंचित्कार्यमुद्दिश्य सर्वेन्द्रियनिग्रहं कृत्वा तिष्ठति पुरुषे इन्द्रियनिग्रहो दृश्यते नतु प्रज्ञास्थैर्यमिति चेन्न तस्य रागवत्त्वेन ब्रह्मज्ञानं तन्निष्ठा च न संभवतीति सूचयितुमाह–विषया इति । आह्रियन्ते विषया यैस्ते आहारा इन्द्रियाणि नियमार्थं तेभ्यो निर्गतो यः स निराहार इन्द्रियनिग्रहवान् तापसस्तस्य देहिनः देह एवाहमित्यहंबुद्धेरालम्बनत्वेनास्या-स्तीति देही देहाद्यभिमानी तस्य इन्द्रियाणां निगृहीतत्वाद्विषयाः शब्दादयः सर्वे विनिवर्तन्ते विशिष्य निवृत्ता भवन्ति रसवर्जं रागं विना ' रसो रागे गुणे द्रव्ये ' इत्यभिधानाद्रसो रागो न गच्छति ' रागो लिङ्गमबोधस्य ' इति नियमात्सर्वमिदमहं च ब्रह्मैवेति सर्वस्य स्वस्य च ब्रह्ममात्रत्वज्ञानं रागश्च नैतद्द्वयमेकत्र स्थातुं शक्नोत्यतो रागवत्त्वादेवास्य बोधाभावस्तत एव रुद्धेन्द्रियत्वेपि न प्रज्ञास्थैर्यप्रसक्तिरित्यर्थः । तर्हि कथं तस्य रागनिवृत्तिः प्रज्ञा च सिध्यतीत्याकाङ्क्षायामाह–रसोपीति । अस्य मौनेनेन्द्रियनिग्रहेण व्रतादिना

चित्तशुद्धौ सत्यां श्रवणादिजन्यज्ञानेन परं ब्रह्माद्वितीयं दृष्ट्वा इदमेवाहमस्मीति स्वात्मना साक्षात्कृतवतो रसो निर्वतते निर्गच्छति । विषयेषु भोग्यत्वभावनानिवृत्त्या रागनिवृत्तिः । भोग्यत्वभावना तु ब्रह्मदृष्ट्या निवर्तते । सर्वस्य स्वस्य च ब्रह्ममात्रत्वावगमाग्निना भोक्तृभोग्यत्वादिभेदवने निर्दग्धे सति तदाश्रितत्वात्तेन सहैव स्वयं च दग्धो भवतीत्यर्थः । अपिशब्दात्प्रज्ञास्थैर्यं च सिध्यतीति सूचितं भवति ॥ ५९ ॥

श्री० टी०—ननु नेन्द्रियाणां विषयेष्वप्रवृत्तिः स्थितप्रज्ञस्य लक्षणं भवितुमर्हति जडानामातुराणामुपवासपराणां च विषयेष्वप्रवृत्तेरविशेषात्तत्राह—विषया इति । इन्द्रियैर्विषयाणामाहरणं ग्रहणमाहारः । निराहारस्येन्द्रियैर्विषयग्रहणमकुर्वतो देहिनो देहाभिमानिनोऽज्ञस्य विषया विनिवर्तन्ते तदनुभवो निर्वर्तत इत्यर्थः । किंतु रसो रागोऽभिलाषस्तद्वर्जम् । अभिलाषस्तु न निवर्तते इत्यर्थः । रसोऽपि रागोऽपि परं परमात्मानं दृष्ट्वाऽस्य स्थितप्रज्ञस्य स्वतो निवर्तते नश्यतीत्यर्थः । यद्वा निराहारस्योपवासपरस्य विषयाः प्रायशो विनिवर्तन्ते क्षुधासंतप्तस्य शब्दस्पर्शाद्यपेक्षाभावात् । परन्तु रसवर्जं रसापेक्षा तु न निवर्तत इत्यर्थः । शेषं समानम् ॥ ५९ ॥

स० टी०—ननु मूढजनस्यापि रोगादिवशतः स्वयम् ॥ विषयेभ्यो ह्युपरतिरिन्द्रियाणां भवत्यतः ॥ १ ॥ प्रज्ञा प्रतिष्ठिता तस्य कथमुक्तमिहेति चेत् ॥ आतुरस्येन्द्रियैर्भोगाननाहरत आग्रहात् ॥ २ ॥ शब्दादयो निवर्तन्ते यद्वा काष्ठतपस्विनः ॥ विषयेषु निवृत्तेषु तत्तृष्णा न निवर्तते ॥ ३ ॥ स्थितप्रज्ञस्य धीरस्य साक्षात्कृत्य परं पदम् ॥ तदेवाहमिति स्वात्मपदे नित्यं स्थितस्य च ॥ ४ ॥ क्षुद्रानन्दे सरागोऽपि विषयैः सह नश्यति ॥ एवं रागनिवृत्तिस्तु नास्त्यनात्मविदो यतः ॥ ५ ॥ समूलरागाद्युच्छेदस्तत्त्वसाक्षात्कृतेर्मुनेः ॥ तस्मात्त्वमपि तत्त्वैक्यसाक्षात्कारे यतस्व भोः ॥ ६ ॥ ५९ ॥

भा० टी०—ननु निराहारस्य रोगिणो व्रतिनो वापि विषयेभ्य इन्द्रियाणि विनिवर्तन्तेऽत इदं लक्षणं मूढेष्वप्यागतमित्याशङ्क्य परिहरति—विषया इति । विषया लक्षणयेन्द्रियाणि शब्दादयो वा रसवर्जं रसो रागस्तं वर्जयित्वा निराहारस्याहारविनिर्मुक्तस्यानाह्रियमाणविषयस्य कष्टेन तपसि स्थितस्य मूर्खस्यापि देहिनो देहवतः विनिवर्तन्ते परं परमात्मानं दृष्ट्वाऽहंब्रह्मास्मीति साक्षादुपलभ्य रसोपि रञ्जनात्मकः सूक्ष्मोप्यस्य यतेर्निवर्तते निर्बीजं विषयज्ञानं संपद्यत इत्यर्थः । तस्माद्रसस्योच्छेदाय सम्यग्दर्शनात्मिकायाः प्रज्ञायाः स्थैर्यं कर्तव्यमित्यभिप्रायः ॥ ५९ ॥

प० टी०—ननु प्राप्तोपवासस्य जडस्य रोगाभिभूतस्य यस्य कस्यापि शब्दस्पर्शादयो विषया विनिवर्तन्त एव एवं तस्य तथा निवृत्तविषयस्य स्थितप्रज्ञस्य च को विशेष इत्याह—विषया इति । निराहारस्य प्राप्तोपवासस्य यस्य कस्यापि देहाभिमानवतो जीवस्य विषया अप्राप्याः स्वत एव निवर्तन्ते परं तु रसवर्जं रसो रागोऽभिलाषस्तत्तद्विषयापेक्षा तद्वर्जं यद्यपि दुःसाध्यत्वेन विषयेभ्यो निवृत्तिरस्ति तथापि विषयैर्भवितव्यमिति संकल्पोऽस्त्यस्य, स्थितप्रज्ञस्य तु परं परमात्मानं दृष्ट्वा विषयाभिलाषो निवर्तत इति महान्विशेष इत्यर्थः ॥ ५९ ॥

रा० टी०—नन्वेवं कामप्रहाणादिलक्षणसाधनं चेज्ज्ञानं तर्हि सर्वोपि जनः कस्मान्न तत्साधयति कामाद्युपद्रवपरिहारार्थं किं दन्दह्यमानाशिराः बम्भ्रमीति इत्यतो निराहारत्वेनेन्द्रियजयः तेनैव च ज्ञानमित्यादि दुःसंपादत्वं ज्ञानस्य—विषया इत्यादिभिस्त्रिभिः । तत्राद्येनेन्द्रियजय उच्यते । देहिनो निराहारस्य हेतुगर्भमिदम् । निराहारत्वेन हेतुना विषयाः रूपादयः इन्द्रियाणां तद्भोगशक्तय उपलक्ष्यन्ते ताः निवर्तन्ते । रसवर्जं रसो रागः मानसिकविषयाभिलाषवर्जं निराहारत्वेन विषयाभिलाषो न निवर्तते । रसोप्यस्य देहिनः परं दृष्ट्वा निवर्तते परमात्मदर्शनेनैव विषयाभिलाषोऽपयातीत्यर्थः । यद्वा रसेतरे रूपगन्धस्पर्शशब्दाः नि-

वर्तन्ते । अत्रापि विषयपदेनेन्द्रियाणां तद्भोगशक्त्यादयो लक्ष्यन्ते । चक्षुरादीन्द्रियाणां रूपादिविषयभोगशक्तयो मनसस्तदाकाङ्क्षाश्च निवर्तन्ते इत्यर्थः । रसवर्जं रसशब्दः प्राग्वल्लाक्षणिकः रसनेन्द्रियस्य रसभोगशक्तिवर्जं मानसिकरसाकाङ्क्षावर्जमिति रसविषयकमनोगताकाङ्क्षा रसनेन्द्रियगतरसभोगशक्तिश्च निराहारत्वेन हेतुना न निवर्तत इत्यर्थः । तद्द्वयं कदा निवर्तत इत्यत उक्तम्–रसोपीति । अस्य देहिनः रसः मानसिको रसविषयको रागः रसनेन्द्रियस्य तद्भोगशक्तिश्च परं दृष्ट्वा निवर्तते । अचेतने चेतनवदुपचाराद्रसः परं दृष्ट्वा निवर्तत इत्युक्तमिति ज्ञेयम् । अयमर्थः । बाह्येन्द्रियाणि विषयसन्निधानेपि न तैः सन्निकृष्यन्ते । सन्निकृष्टान्यपि मनस्तदाभिमुख्येन हरन्ति । अपहृतेपि मनसि न विषयरागो जायते । तदा नात्मनः क्षोभो भवति इत्येष इन्द्रियजयः । सोयं संग्रहेण द्वेधा भवति बाह्येन्द्रियाणां शक्तिजयान्मनसो रागक्षयाच्च । एतद्द्वयं च जिज्ञासोर्निराहारत्वेन ज्ञानिनो ब्रह्मदर्शनेन भवतीत्येवमिन्द्रियजयस्य महाप्रयत्नसाध्यत्वमिति ॥ ५९ ॥

**यततो ह्यपि कौन्तेय पुरुषस्य विपश्चितः ॥**
**इन्द्रियाणि प्रमाथीनि हरन्ति प्रसभं मनः ॥ ६० ॥**

**त० टी०**–स्थितप्रज्ञतायामिन्द्रियसंयमस्य कारणत्वमुक्तं तदभावे दोषमाह–यतत इति । हे कौन्तेय ! विपश्चितः विविधं गुणदोषं पश्यतो विवेकिनः पुरुषस्य यततोऽपि मनो ध्येयरूपे प्रवणीकरणार्थं भूयो भूयो विषयेभ्यो निवर्तने प्रयतमानस्यापि मनः सर्वेन्द्रियाणि प्रसभं बलात्कारेण हरन्ति विषयेषु रागवत्कुर्वन्ति । यततोऽपि विपश्चितश्च कथं हरन्ति तत्राह–प्रमाथीनीति । प्रमथनशीलानि अतस्तद्विवेकं यत्नं चाकिञ्चित्कृत्वा विषयानुध्याने प्रवर्तयन्तीत्यर्थः ॥ ६० ॥

**म० टी०**–तत्र प्रज्ञास्थैर्ये बाह्येन्द्रियनिग्रहो मनोनिग्रहश्चासाधारणं कारणं तदुभयाभावे प्रज्ञानाशदर्शनादिति वक्तुं बाह्येन्द्रियनिग्रहाभावे प्रथमं दोषमाह–**यतत इति** । हे कौन्तेय ! यततः भूयोभूयो विषयदोषदर्शनात्मकं यत्नं कुर्वतोऽपि । चक्षिङो ङित्त्वकरणादनुदात्तेतोऽनावश्यकमात्मनेपदमिति ज्ञापनात्परस्मैपदमविरुद्धम् । विपश्चितः अत्यन्तविवेकिनोपि पुरुषस्य मनः क्षणमात्रनिर्विकारं कृतमपि इन्द्रियाणि हरन्ति विकारं प्रापयन्ति । ननु विरोधिनि विवेके सति कुतो विकारप्राप्तिस्तत्राह–**प्रमाथीनीति** । प्रमाथीनि प्रमथनशीलानि अतिबलीयस्त्वाद्विवेकोपमर्दनक्षमाणि अतः प्रसह्य बलात्कारेण पश्यत्येव विपश्चिति स्वामिनि विवेके च रक्षके सति सर्वप्रमाथित्वादेवेन्द्रियाणि विवेकजप्रज्ञायां प्रविष्टं मनस्ततः प्रच्याव्य स्वविषयाविष्टत्वेन हरन्तीत्यर्थः । हिशब्दः प्रसिद्धिं द्योतयति प्रसिद्धो ह्ययमर्थो लोके यथा प्रमाथिनो दस्यवः प्रसभमेव धनिनं धनरक्षकं चाभिभूय तयोः पश्यतोरेव धनं हरन्ति तथेन्द्रियाण्यपि विषयसंनिधाने मनो हरन्तीति ॥ ६० ॥

**शं० टी०**–यत एवमतः सिद्धं मुमुक्षोर्यतेः सर्वस्य ब्रह्ममात्रत्वज्ञानं संपादनीयं रागद्वेषादिनिःशेषनिवृत्तये निष्प्रवृत्तये विदेहमुक्तये चेति विदेहकैवल्यसिद्धेः कारणभूतब्रह्मज्ञानस्य सम्यक्त्वसिद्धये समाधौ प्रवृत्तस्य यतेरिन्द्रियनिग्रह एव आदाववश्यं कर्तव्यस्तदभावे महाननर्थ इति सूचयितुमाह–**यतत इति** । हि यस्मात्कारणाद्यततः समाधिना ज्ञानस्याऽप्रतिबन्धत्वसिद्धये प्रयत्नं कुर्वतः समाधौ तिष्ठतोपीत्यर्थः । विपश्चितः विषयजातं मायिकमसत्तुच्छमिति विषयप्रवृत्तिर्बन्धाय भवतीति च विजानतोपि पुरुषस्य मुमुक्षोर्मनः मनुते ब्रह्मानेनेति मनः सर्वत्र सदवलोकनकारणं इन्द्रियाणि प्रमाथीनि प्रमथितुं विषयदर्शनमात्रेण व्याकुलीकर्तुं शीलं येषां तानि प्रमाथीनीन्द्रियाणि रागादिदोषग्रस्तानि प्रसभं बलात्कारेणास्य पश्यतः

सतो विवेकयुक्तमपि मनः हरन्ति गृहीत्वा विषयेषु पातयन्ति स्वरूपाच्च्यावयन्तीत्येतदिन्द्रियनिग्रहमकुर्वतः स्वरूपभ्रंश एव विदुषो महाननर्थः ॥ ६० ॥

**श्री० टी०**—इन्द्रियसंयमं विना तु स्थितप्रज्ञता न संभवति अतः साधकावस्थायां तत्र महान्प्रयत्नः कर्तव्य इत्याह—**यततो ह्यपीति** द्वाभ्याम्। यततः मोक्षे प्रयतमानस्यापि विपश्चितो विवेकिनोऽपि मनः इन्द्रियाणि प्रसभं बलाद्धरन्ति यतः प्रमाथीनि प्रमथनशीलानि प्रक्षोभकाणि ॥ ६० ॥

**स० टी०**—प्रज्ञास्थैर्ये परो हेतुः सेन्द्रियस्वान्तनिग्रहः ॥ तदभावे परा हानिः प्रज्ञाया इति कथ्यते ॥ १ ॥ भूयोभूयोऽपि भोगेषु दोषदृष्टिं प्रकुर्वतः ॥ सम्यग्विवेकिनोऽप्येतन्मनः स्थितमपि क्षणम् ॥ २ ॥ विकारं प्रापयन्त्येतानीन्द्रियाणि प्रसह्य तत् ॥ पश्यत्येव बलात्कारात्स्वामिन्यपि विपश्चिति ॥ ३ ॥ क्षोभकाणि बलीयस्त्वाद्विवेके सति रक्षके ॥ प्रविष्टं तानि प्रच्याव्य विवेकजमतौ मनः ॥ ४ ॥ विषयावेशसामर्थ्याद्धरन्त्येवेन्द्रियाण्यदः ॥ यथा प्रमाथिनश्चौराः प्रसह्य धनिनो धनम् ॥ ५ ॥ हरन्त्येवं मनः स्वेस्वे विषयेऽपीन्द्रियाणि वै ॥ ६ ॥ ६० ॥

**भा० टी०**—सम्यग्दर्शनं विना रसस्योच्छेदो नास्तीत्युक्तम्। तच्चाजितेन्द्रियस्य दुर्लभमिन्द्रियनिग्रहश्चातियत्नसाध्यः। तस्मात्सम्यग्दर्शनलक्षणं प्रज्ञास्थैर्यं चिकीर्षता आदाविन्द्रियजयः कार्य इत्याशयेन तदकरणे दोषमाह—**यतत इति**। हि यस्माद्विपश्चितो बुद्धिमतः प्रज्ञास्थैर्यार्थं यततो यतमानस्यापीन्द्रियाणि प्रमथनशीलानि पुरुषं विषयाभिमुखं कर्तुं समर्थानि तं व्याकुलीकृत्य प्रसभं बलात्कारेण विवेकयुक्तमपि मनो हरन्ति। कौन्तेयेति संबोधयन् इन्द्रियापेक्षया पुरुषस्य दौर्बल्यं सूचयति ॥ ६० ॥

**प० टी०**—एवं विस्मृतव्यवहारस्य स्थितप्रज्ञस्य दशामुक्त्वेदानीमभ्यासादिपूर्वरूपवतो दशामाह द्वितयेन—**यतत इत्यादि**। यतत आत्मप्राप्त्यर्थं प्रयत्नं कुर्वतोऽपि विपश्चित आत्मानात्मविवेकवतः पुरुषस्येन्द्रियाणि चक्षुरादीन्यनादिविषयविक्षिप्ततया प्रमाथीनि क्षोभकाण्यात्माभिमुखमपि मनः प्रसभमकस्माद्धरन्ति विषयविक्षिप्तं कुर्वन्ति ॥ ६० ॥

**रा० टी०**—नन्विन्द्रियजयार्थं किं निराहारत्वरूपमहाप्रयत्नेन प्रत्याहारादिसाधारणयत्नेनापि तत्संभवात्। तथा किं ब्रह्मापरोक्षज्ञानेन नित्यानित्यविवेकज्ञानेनापि रागनिवृत्त्युपपत्तेरित्यत आह—**यततो ह्यपीति**। विपश्चितः परोक्षज्ञानिनः यततोपि साधारणप्रयत्नवतोऽपि पुरुषस्य देहाभिमानिनः इन्द्रियाणि मनः प्रसभं बलात् हरन्ति स्वयं विषयसन्निकृष्टानि सन्ति तदभिमुखं कृत्वा तद्रागीकुर्वन्तीत्यर्थः। तावता आत्मनः कथमिन्द्रियाविजय इत्यत आह—प्रमाथीनीति। प्रमथनशीलानि पुरुषस्य क्षोभणशीलानि न तेन तानि जितानि यो हि यं व्याकुलं करोति स तेन विजित इत्युच्यते। अतो महाप्रयत्नः प्रागुक्तदिशा कार्य इति। यदि साधारणयत्नविवेकज्ञानाभ्यामिन्द्रियाणि न जीयन्ते तर्ह्यशक्यान्येव तानि जेतुं निराहारत्वे देहावस्थित्यसंभवात् ॥ ६० ॥

**तानि सर्वाणि संयम्य युक्त आसीत मत्परः ॥**
**वशे हि यस्येन्द्रियाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ ६१ ॥**

**त० टी०**—यस्मादवशीकृतेन्द्रियाण्यनर्थकारणानि तस्मान्मुमुक्षुणा प्रथमं तज्जयः कर्तव्य इत्याह—**तानीति**। तानि दुष्टानि सर्वाणीन्द्रियाणि संयम्य सम्यङ्नियम्य वशीकृत्य युक्तः ध्येये नियुक्तमना आसीत समादध्यादित्यर्थः। ननु यदि तानि प्रमाथीनि तर्हि कथं तेषां संयमः स्यादित्यत आह—मत्पर इति। अहं हृषीकेशः पर उत्कृष्ट उपायो यस्य स तथा मदाश्रयो भूत्वा अनायासेन जयेदित्यर्थः।

**मदाश्रयणं विनेन्द्रियाणि वशीकर्तुमशक्यानीति भावः । इन्द्रियवशीकरणमेव पुरुषार्थकारणमित्याह-वशे हीति । हीत्यवधारणे । यस्य साधकस्येन्द्रियाणि वशे भवन्ति तस्यैव प्रज्ञा प्रतिष्ठिता भवति नान्यस्येत्यर्थः । एतावता किमासीतेत्यस्योत्तरमुक्तम् ॥ ६१ ॥**

**म० टी०**—एवं तर्हि तत्र कः प्रतीकार इत्यत आह—**तानीति** । तानि इन्द्रियाणि सर्वाणि ज्ञानकर्मसाधनभूतानि संयम्य वशीकृत्य युक्तः समाहितः निगृहीतमनाः सन्नासीत निर्व्यापारस्तिष्ठेत् । प्रमाथिनां कथं स्ववशीकरणमिति चेत्तत्राह—मत्पर इति । अहं सर्वात्मा वासुदेव एव पर उत्कृष्ट उपादेयो यस्य स मत्परः एकान्तमद्भक्त इत्यर्थः । तथा चोक्तम् ' न वासुदेवभक्तानामशुभं विद्यते क्वचित् ' इति । यथा हि लोके बलवन्तं राजानमाश्रित्य दस्यवो निगृह्यन्ते राजाश्रितोयमिति ज्ञात्वा च स्वयमेव तद्वश्या भवन्ति तथैव भगवन्तं सर्वान्तर्यामिणमाश्रित्य तत्प्रभावेणैव दुष्टानीन्द्रियाणि निग्राह्याणि । पुनश्च भगवदाश्रितोयमिति मत्वा तानि तद्वश्यान्येव भवन्तीति भावः । यथा च भगवद्भक्तेर्महाप्रभावत्वं तथा विस्तरेणाग्रे व्याख्यास्यामः । इन्द्रियवशीकारे फलमाह—**वशे हीति** । स्पष्टम् । तदेतद्वशीकृतेन्द्रियः सन्नासीतेति प्रश्नस्योत्तरमुक्तं भवति ॥६१॥

**शं० टी०**—यस्मादेवं तस्मादिन्द्रियसंयमवत एव स्थितप्रज्ञत्वमाह—**तानीति** । विषयेषु पुनःपुनर्दोषदर्शनेन बन्धकत्वभयेन च रागद्वेषाभ्यां वियोजितानि तानीन्द्रियाणि सर्वाणि संयम्य तेषु प्रवृत्तिं निरुध्य तत्तद्गोलकेषु स्थापयित्वा ब्रह्मविद्यतिर्युक्तो योगेन युक्तः समाहितचित्तः वृत्तेर्ब्रह्माकारतामापाद्येत्यर्थः । मत्परः अहमेव परः परमात्मेति परस्मिन्नेव ब्रह्मण्यहंधीर्यस्य स मत्परः "सर्वमिदमहं च ब्रह्मैव" इति सर्वं स्वं च ब्रह्मैव पश्यन्नासीत प्रत्यग्दृष्ट्या सर्वदा तिष्ठेदित्यर्थः । एवं नित्यं निरन्तरं पश्यतो यस्य यतेरिन्द्रियाणि विषयग्रहानवकाशतया नीरागाणि भूत्वा वशे वश्यानि भवन्ति तस्य हि खलु प्रज्ञा प्रतिष्ठिता निश्चला भवति मोक्षश्च सिध्यति नैवेतरस्येत्यर्थः ॥ ६१ ॥

**श्री० टी०**—यस्मादेवं तस्मात्—**तानीति** । युक्तो योगी तानीन्द्रियाणि संयम्य मत्परः सन् आसीत । यस्य वशे वशवर्तीनि । एतेन कथमासीतेति प्रश्नस्य वशीकृतेन्द्रियः सन् आसीतेत्युत्तरमुक्तं भवति ॥६१ ॥

**स० टी०**—एवं तर्हि प्रतीकारः कस्तत्रेत्यत आह तम् ॥ तानीन्द्रियाणि धीकर्मसाधकान्यखिलान्यपि ॥ १ ॥ समाहितो वशीकृत्य निगृहीतमनाश्च सन् ॥ निर्व्यापारतया तिष्ठेन्मां समाश्रित्य मत्परः ॥ २ ॥ वासुदेवोऽहमेवेशो यस्योपादेय आन्तरः ॥ स चास्त्येकान्तमद्भक्तो वशीकर्तुं क्षमोऽखिलम् ॥३॥ यथा राजानमाश्रित्य निगृह्यन्ते हि दस्यवः ॥ राजाश्रितोऽयमित्येवं ज्ञात्वा वश्या भवन्ति ते ॥ ४ ॥ भगवन्तं तथाश्रित्य तत्प्रभावेन सर्वशः ॥ निगृह्याणीन्द्रियाण्येव क्षोभकाण्यपि योगिनः ॥ ५ ॥ कृष्णाश्रितोऽयं मत्वेत्थं स्वयं वश्यानि सन्ति वै ॥ माहात्म्यं भगवद्भक्तेः स्फुटं चाग्रे भविष्यति ॥ ६ ॥ इन्द्रियाणां वशीकारे फलमाह रमापतिः ॥ वशे हीति स्पष्टमिदं किमासीतेति पृच्छतः ॥ ७ ॥ उत्तरं प्रोक्तमित्येतदतः कृत्यं यतेः शृणु ॥ ८ ॥ ६१ ॥

**भा० टी०**—तस्मात्तानि सर्वाणि वशीकृत्य युक्तः समाहितः सन् मत्परोहं वासुदेवः सर्वप्रत्यगात्मा परो यस्य स मत्परो नान्यस्तस्मादहमित्यासीतेत्यर्थः । स्पष्टमन्यत् ॥ ६१ ॥

**प० टी०**—तथा मनोनिग्रहव्यतिरेकेण बाह्येन्द्रियनिग्रहो मृषैव भवत्येवं तानि सर्वाणि संयम्यान्तरिन्द्रियनिग्रहेण स्वाधीनानि कृत्वा मत्परः सन् मदाश्रयवर्तित्वेन मुक्तः सन्नासीत । एवमनेनापि प्रकारेणेन्द्रियाणि यस्य वशे भवन्ति तस्य प्रज्ञा प्रतिष्ठितेत्यर्थः । अनेन किमासीतेत्युत्तरमुक्तं भवति । तदुक्तमर्थोपनिषत्सु " यस्तु विज्ञानवान् भवत्ययुक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि दुष्टाश्वा इव सारथेः ।! यस्तु विज्ञानवान् भवति युक्तेन मनसा सह । तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः " इति । स्पष्टार्थेयं श्रुतिः ॥ ६१ ॥

रा० टी०—इन्द्रियजयस्य ब्रह्मदृष्टिसाध्यतयाभिमतत्वेन तस्य तद्धेतुत्वे विवक्षिते सत्वन्योन्याश्रयप्रसङ्गादित्यत आह—तानीति। तानीन्द्रियाणि सर्वाणि संयम्य विषयेभ्य उपसंहृत्य मत्परः अहमेव भगवान्कृष्ण एव परः सर्वोत्कृष्टो यस्य स मत्परः भगवानेव सर्वोत्तम इति ज्ञात्वा युक्तः। समाध्यर्थस्य युजे रूपम्। भगवति मनो युञ्जान इत्यर्थः। आसीत तिष्ठेत्। अयं भावः। यद्यपीन्द्रियजये परोक्तः प्रत्याहारादिः साधारणप्रयत्नो न साधनं नापि निराहारत्वादिकं प्रागुक्तमशक्यं तथापि तत्प्रतिनिधिना महाप्रयत्नेन जेयानि। तत्र भगवतः सर्वोत्तमत्वज्ञानपूर्वं तस्मिन्नेव निरन्तरं मनोयोजनमिन्द्रियजये मुख्यं साधनं निराहारत्वादिकं तु वस्तुगतिप्रदर्शनार्थमेवोक्तमिति। यदर्थं सार्धश्लोकद्वयेनेन्द्रियजयरूपोपोद्घात उक्तः। अथेदानीं महाप्रयत्नेन साधितेन्द्रियजयस्य ज्ञानसिद्धिः फलमित्याह—वशे हीति। यस्य वशे इन्द्रियाणि वर्तन्ते तस्य प्रज्ञा प्रतिष्ठितेति। यत एवं महायाससाध्येन्द्रियजयफलं ज्ञानमत एवायासभीरुर्जनो न तत्साधयतीति। ननु ज्ञानस्योक्तलक्षणाभावादिति श्लोकत्रयतात्पर्यार्थः। अत्रोक्तमिन्द्रियजयस्य ज्ञानरूपं फलं न साक्षादिति रागद्वेषवियुक्तैरित्यादौ व्यक्तीभविष्यतीति ज्ञेयम्॥ ६१॥

ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते॥
सङ्गात्सञ्जायते कामः कामात् क्रोधोऽभिजायते॥ ६२॥
क्रोधाद्भवति संमोहः संमोहात्स्मृतिविभ्रमः॥
स्मृतिभ्रंशाद्बुद्धिनाशो बुद्धिनाशात्प्रणश्यति॥ ६३॥

त० टी०—एवं वशीकृतेन्द्रियत्वं स्थितप्रज्ञतालक्षणमुक्तमिदानीं बाह्येन्द्रियसंयमे सत्यपि मनःसंयमाभावेऽनर्थप्राप्तिः स्यादित्याह—ध्यायत इति द्वाभ्याम्। विषयान् रूपरसादीन्ध्यायतो मनसा पुनः पुनश्चिन्तयतः पुंसस्तेषु सङ्ग आसक्तिः सुखहेतुबुद्ध्या प्रीत्यतिशय उपजायते। सङ्गात्कामः सङ्गस्य परिणामोऽवस्थाविशेषः, यस्मिन् जाते पुरुषो विषयाननुभूय बधिरोऽन्ध उन्मत्त इव जायते स कामः सम्यग्जायते। कामात् क्रोधोऽभिजायते कामे जाते विषयप्राप्तिप्रतिबन्धे सति तत्प्रतिबन्धकेषु जनेषु अभिज्वलनात्मकोऽन्तःकरणपरिणामः क्रोधः साक्षाज्जायते। क्रोधात्संमोहः कार्याकार्याविवेको भवति। संमोहात् स्मृतिविभ्रमः स्मृतेराचार्योपदिष्टशास्त्रार्थविचारस्य विभ्रमो भ्रंशो भवति। स्मृतिभ्रंशात्सुखरूपात्मव्यवसायात्मिकाया बुद्धेर्नाशः। बुद्धिनाशात्प्रणश्यति सर्वपुरुषार्थहीनो मृततुल्यो भवतीत्यर्थः। तस्मान्मनोनिग्रहोऽवश्यं कर्तव्य इति भावः॥ ६२॥ ६३॥

म० टी०—ननु मनसो बाह्येन्द्रियप्रवृत्तिद्वाराऽनर्थहेतुत्वं निगृहीतबाह्येन्द्रियस्य तूत्खातदंष्ट्रोरगवन्मनस्यनिगृहीतेऽपि न कापि क्षतिः बाह्योद्योगाभावेनैव कृतकृत्यत्वादतो युक्त आसीतेति व्यर्थमुक्तमित्याशङ्क्य निगृहीतबाह्येन्द्रियस्यापि युक्तत्वाभावे सर्वानर्थप्राप्तिमाह—ध्यायत इति द्वाभ्याम्। निगृहीतबाह्येन्द्रियस्यापि शब्दादीन् विषयान् ध्यायतो मनसा पुनः पुनश्चिन्तयतः पुंसस्तेषु विषयेषु सङ्गः आसङ्गः ममात्यन्तं सुखहेतव एत इत्येवं शोभनाध्यासलक्षणप्रीतिविशेषः उपजायते। सङ्गात् सुखहेतुत्वज्ञानलक्षणात् संजायते कामः ममैते भवन्त्विति तृष्णाविशेषः। तस्मात् कामात् कुतश्चित्प्रतिहन्यमानात् प्रतिघातकविषयः क्रोधोऽभिज्वलनात्माभिजायते। क्रोधाद्भवति संमोहः कार्याकार्यविवेकाभावरूपः। संमोहात्स्मृतिविभ्रमः स्मृतेः शास्त्राचार्योपदिष्टार्थानुसन्धानस्य विभ्रमो विचलनं विभ्रंशः तस्माच्च स्मृतिभ्रंशात् बुद्धेरैकात्म्याकारमनोवृत्तेर्नाशः विपरीतभावनोपचयदोषेण प्रतिबन्धाद् अनुत्पत्तिरनुत्पन्नायाश्च फलायोग्यत्वेन विलयः। बुद्धिनाशात् प्रणश्यति तस्याश्च फलभूताया बुद्धेर्विलोपात्प्रणश्यति सर्वपुरुषार्थायोग्यो भवति। यो हि पुरुषार्थायोग्यो जातः स मृत एवेति

लोके व्यवह्रियते अतः प्रणश्यतीत्युक्तम् । यस्मादेवं मनसो निग्रहाभावे निगृहीतबाह्येन्द्रियस्यापि परमानर्थप्राप्तिस्तस्मान्महता प्रयत्नेन मनो निगृह्णीयादित्यभिप्रायः । अतो युक्तमुक्तं तानि सर्वाणि संयम्य युक्त आसीतेति ॥ ६२ ॥ ६३ ॥

**शं० टी०**—नन्विन्द्रियैरन्तःकरणं विषयेषु पातितं चेदनेनास्य विदुषः कोवाऽनर्थ इति चेद्विषयाभिध्यानमेव सर्वानर्थबीजं तेनानर्थहेतुपरम्पराऽऽपतति तयापरावरैकत्वविज्ञानं विनश्यति तन्नाशाज्जननमरणतरङ्गमालिनि संसाराब्धौ पतित्वा स्वयं च विद्वान् विनश्यतीति विदुषोपि बहिर्मुखत्वस्य जन्मादिदुःखप्रवाहपातानपायित्वमेव फलं नतु मुक्तिः कारणाभावात् रागद्वेषाभ्यां विषयेषु प्रविष्टस्य विदुषोपि विषयाभिध्यानमेव प्रसज्यते नतु ब्रह्मध्यानमिति सर्वानर्थमूलं विषयाभिध्यानं तत्कार्यं च प्रतिपादयति—**ध्यायत इति द्वाभ्याम्** । विषयान् शब्दादीन् ध्यायतस्तेषु रम्यत्वमरम्यत्वं च इदं भोग्यमिति वा चिन्तयतः पुंसः सङ्गस्तेषु रम्यत्वाकारेण वा भोग्यत्वाकारेण वा भावितेषु भोगेषु प्रीतिः प्राक्तनसंस्कारादासक्तिरुपजायते सद्य उत्पद्यते सङ्गात्प्रीत्या तत्र ममामुना भवितव्यमिति कामो भोगेच्छावेगः सम्यक् जायते ग्रस्तो येनाऽभोग्यमपि कलत्रादि स्त्रैणो भगिन्यादि वा भोग्यत्वबुद्ध्या भोक्तुं त्वरयते पुरुषः । कामाद्येनकेनापि प्रतिबन्धेन हतात् क्रोधोऽभिजायते परवशीकृतात्मनः परापकारकरणहेतुबुद्धिविशेषः क्रोधः ॥ ६२ ॥ **क्रोधादिति** । क्रोधात्संमोहो वैचित्यं कार्याकार्यविवेकशून्यता जायते । क्रोधाविष्टः खलु संमोहेन महतामप्यपचरति गुरुमपि धिक्करोति । संमोहादुक्तलक्षणात्स्मृतिविभ्रमो जायते । वेदान्तश्रवणजन्यज्ञानेन ब्रह्मैवाहमिति पुनः पुनः कृतस्वानुभवसंस्कारजस्तदाकारपरिणामिबुद्धिवृत्तिविशेषः स्मृतिरित्युच्यते । तस्या विभ्रमो भ्रंशः स्मृतिहेतुषु सत्स्वपि स्मृतेरनुदयः । तस्मात् स्मृतिभ्रंशाद्बुद्धिनाशः । बुद्धिर्ब्रह्ममयी वृत्तिस्तस्याः स्वविषयकस्मृतिविनाशान्नाशो भवति । यथा पुरोवर्तिन्येव पुरुषे पुत्र इति स्मृतिरस्ति चेन्ममाऽयं पुत्र इति पुत्राकारेण बुद्धिर्जायते । भ्रान्तस्य तु स्मृत्यसंभवात्पुत्राकारा बुद्धिर्न जायते । तथा ब्रह्मण्यपरोक्षेपि विषयव्यामोहाक्रान्तचित्तस्य विदुषः स्वविषयकस्मृत्यभावादिदमहं च ब्रह्मैवेति दृश्याकारतामुत्सृज्य जगतः स्वस्य च ब्रह्माकारत्वावगाहिन्यखण्डात्मिका चिन्मयी वृत्तिर्न जायते किंतु भोक्तृभोग्याकारवृत्तिभिः स्वयं तिरोहिता भूत्वा नष्टा भवति । एवं स्वविज्ञानविनाशाद्विद्वान् स्वयमपि प्रणश्यति प्रकर्षेण नश्यति प्रणश्यति । संसारकारागारे पतितत्वात्कदाचिदपि मुक्तिं न प्राप्नोति विषं पिबतोऽमरत्वमिव असन्मार्गे प्रविष्टस्य सद्गतिर्न संभवत्यतो विषयाणामवकाशमदत्वा सर्वेन्द्रियनिग्रहपूर्वकं समाधिं कुर्वत एव सम्यग्ज्ञानं तत्फलं च सिध्यतीति सिद्धम् ॥ ६३ ॥

**श्री० टी०**—बाह्येन्द्रियसंयमाभावे दोषमुक्त्वा मनःसंयमाभावे दोषमाह—**ध्यायत इति द्वाभ्याम्** । गुणबुध्या विषयान्ध्यायतः पुरुषस्य तेषु सङ्ग आसक्तिर्भवति आसक्त्या च तेष्वधिकः कामो भवति कामाच्च केनचित्प्रतिहतात्क्रोधो भवति । किंच—**क्रोधादिति** । क्रोधात्संमोहः कार्याकार्यविवेकाभावः । ततः शास्त्राचार्योपदिष्टार्थस्मृतेर्विभ्रमो विचलनं विभ्रंशः । ततो बुद्धेश्चेतनायासाविनाशः वृक्षादिष्विवाभिभवः । ततः प्रणश्यति मृततुल्यो भवति ॥ ६२ ॥ ६३ ॥

**स० टी०**—नन्विन्द्रियवशीकारे जाते स्वान्तविनिग्रहः ॥ स्वतः सिद्धः किमर्थं तदासीतेति पृथक् श्रमः ॥ १ ॥ इन्द्रियद्वारतोऽनर्थकरं नैव स्वतो मनः ॥ उत्खातदंष्ट्रोरगवदनिरोधेऽस्य का क्षतिः ॥ २ ॥ मैवं मनो निरोद्धव्यं सर्वानर्थकरं यतः ॥ निगृहीतेन्द्रियस्यापि मनसा विषयान्प्रियान् ॥ ३ ॥ पुंसश्चिन्तयतस्तेषु शोभनाध्यासहेतुकः ॥ प्रीतिभेदो य आसङ्गो ममैते सुखहेतवः ॥ ४ ॥ इत्येवं जायते तस्मात्सङ्गात्कामः प्रजायते ॥ भवन्त्वेते ममेत्येवं तृष्णाभेदस्ततोऽपि च ॥ ५ ॥ कुतश्चिद्धन्यमानात्तत्प्रतिघातकगो-

चरः ॥ क्रोधोऽभिज्वलनात्मास्य जायते क्रोधतस्ततः ॥ ६ ॥ कार्याकार्यविवेकस्याभावः संमोह उद्भवेत् ॥ येनाप्तगुरुमित्रादीन्यथाक्रुश्यति मूढधीः ॥ ७ ॥ संमोहाज्जायते तस्मात्स्मृतेर्भ्रंशो ह्यनर्थदः ॥ शास्त्राचार्योपदिष्टार्थानुसंधानस्य विभ्रमः ॥ ८ ॥ ततो ब्रह्मैक्यधीवृत्तेः प्रतिबन्धो विपर्ययात् ॥ बुद्धेर्नाशस्ततस्तस्या विलोपादेव पूरुषः ॥ ९ ॥ पुमर्थायोग्यतापन्नो मृत एवेति कथ्यते ॥ यस्मादेवं हि मनसो निग्रहाभावतः पुमान् ॥ १० ॥ मृततुल्यो भवेत्तस्माद्यतस्वास्य विनिग्रहे ॥ अतो युक्तं मयोक्तं तदासीतेति पुरा तव ॥ ११ ॥ श्रीमत्कृष्णपदारविन्दसुरभौ वृत्तिं वहद्भ्रामरीं श्रद्धाभक्तियुतं मनोऽनवरतं यावत्प्रविष्टं नहि ॥ तावत्क्षोभकशीलतां प्रतिपदं नाद्धा जहाति स्विकां चाञ्चल्यं प्रजहाति तत्र निरतं चेतः स्वयं त्वाधिदम् ॥ १२ ॥ ६२ ॥ ६३ ॥

**भा० टी०**–इन्द्रियस्य जयः प्रयत्नेन संपाद्य इत्युक्तं तत्र मनसा विषयाचिन्तनाभ्यास एवोपाय इत्याशयेन व्यतिरेके दोषमाह–ध्यायत इति । विषयांश्चिन्तयतः पुरुषस्य तेषु प्रीतिरुपजायते सङ्गादभिलाषः संजायते कामात्कुतश्चित्प्रतिहतात् क्रोधोऽभिजायते क्रोधात्कर्तव्याकर्तव्यविषये विभ्रमो भवति क्रुद्धो हि संमूढो गुरूनप्याक्रोशति तस्मात् स्मृतेः शास्त्राचार्योपदेशाहितसंस्कारजनितायाः विभ्रंशः स्यात्, स्मृत्युत्पत्तिनिमित्तप्राप्तावनुत्पत्तिः, ततः कार्याकार्यविवेकायोग्यता बुद्धेर्नाशः, तस्मात्प्रणश्यति जीवन्नेव मृतः पुरुषार्थायोग्यो भवतीति द्वयोरर्थः । विषयध्यानमेव सर्वानर्थबीजमित्यभिप्रायः ॥ ६२ ॥ ६३ ॥

**प० टी०**–एवं बाह्येन्द्रियसंयमाभावे दोषमुक्त्वाऽधुना मनःसंयमाभावे दोषमाह–ध्यायत इति द्वाभ्याम् । विषयान् ध्यायतः पुंसः पुरुषस्य तेषु सङ्ग आसक्तिर्भवति ततः सङ्गात्कामस्तैर्विषयैरवश्यं भवितव्यमिति तदर्जन आदरो भवति तत्र केनचिदन्तराये कृते क्रोधो भवति क्रोधात्संमोहः कार्याकार्यविचाराभावस्तस्मात्स्मृतिविभ्रमः शास्त्राचार्योपदिष्टः कीदृशोऽहं किं करोमीति न स्मरति तस्माद्बुद्धिनाशस्तस्मात्प्रणश्यति लोकनिन्दास्पदत्वेन जीवन्मृततुल्यो भवति । एवमनेन प्रथमतो विषयानुस्मृतिः परिहार्येत्युक्तम् । उक्तं च 'लोक एष विषयानुरञ्जनं दुःखगर्भमपि मन्यते सुखम् । आमिषं बडिशगर्भमप्यहो मोहतो ग्रसति यद्वदण्डजः' इति ॥ ६२ ॥ ६३ ॥

**रा० टी०**–मत्परो युक्त आसीतेति हरिसर्वोत्तमत्वज्ञानपूर्वं तस्मिन्नेव मनोयोजनमिन्द्रियजयस्य मुख्यं साधनं रागद्वेषवियुक्तैरिति वक्ष्यमाणदिशा रागादिपरिहारोप्यपरं साधनम् । तत्र रागादेर्यत्कारणं यच्च फलं तदुभयज्ञाने सति तत्परित्यागो भवत्यतः तदुपोद्घातत्वेन तदुभयमाह–ध्यायत इति श्लोकद्वयेन । यद्यपि वीतरागभयक्रोध इति रागादिराहित्यं ज्ञानिलक्षणत्वेनोक्तं तथापि तस्य तत्सिद्धं जिज्ञासुना च साध्यमतस्तत्परिहाराय तत्कारणफलयोरुक्तिर्नायुक्तेति ज्ञेयम् । विषयान्नुपादीन् हितबुद्ध्या ध्यायतः पुंसस्तेषु विषयेषु सङ्ग आसक्तिर्भवति । आसक्त्या च तेषु कामः संजायते अधिको भवति । कामाच्च केनचित्प्रतिहतात्क्रोधो भवति । किंच क्रोधाद्भवति संमोहः अकार्येच्छा परवित्तापहरणाद्यधर्मे धर्मबुद्धिरित्यादिमिथ्याज्ञानं वा । संमोहादुक्तद्विरूपात्स्मृतिविभ्रमः । क्रमात्प्रतिषेधादिस्मृतिनाशः । परवित्ताहरणादेरधर्मत्वाद्यभिधायकश्रुत्याद्यर्थस्य पूर्वं स्वयं ज्ञातस्याप्यन्यथास्मरणं वा स्मृतिभ्रंशाद्बुद्धिनाशः येन पूर्वं निर्णीतदोषबुद्धेः सर्वात्मना नाशो भवति तन्नाशात् तेन चाधर्मकरणाच्च प्रणश्यति नरकाद्यनर्थं प्राप्नोति । एतदुक्तं भवति । रागद्वेषयोः परंपरया नरकाद्यनर्थप्राप्तिः फलमिति ज्ञानेन तत्परिजिहीर्षायां विषयध्यानं परंपरया तत्कारणमिति ज्ञानेन तदकरणाद्रागद्वेषयोरनुत्पाद इति ॥ ६२ ॥ ६३ ॥

**रागद्वेषवियुक्तैस्तु विषयानिन्द्रियैश्चरन् ॥**
**आत्मवश्यैर्विधेयात्मा प्रसादमधिगच्छति ॥ ६४ ॥**

२६

**त० टी०**—मनसो निग्रहे बाह्येन्द्रियनिग्रहाभावेऽपि न दोषयोग इति वदन् व्रजेत किमित्यवशिष्टस्य प्रश्नस्योत्तरमाह–**रागेति** द्वाभ्याम् । तुशब्दः पूर्वस्माद्वैलक्षण्यद्योतनार्थः । विधेयः वशीभूत आत्मा मनो यस्य स रागद्वेषवियुक्तैरिन्द्रियैर्विषयान् चरन् भुञ्जानः प्रसादं चित्तस्य प्रसन्नतामिधिगच्छति निर्मलान्तःकरणो भवतीत्यर्थः ॥ ६४ ॥

**म० टी०**—मनसि निगृहीते तु बाह्येन्द्रियनिग्रहाभावेऽपि न दोष इति वदन् किं व्रजेतेत्यस्योत्तरमाह–रागद्वेषवियुक्तैरित्यष्टभिः । योऽसमाहितचेताः स बाह्येन्द्रियाणि निगृह्यापि रागद्वेषदुष्टेन मनसा विषयांश्चिन्तयन्पुरुषार्थाद्भ्रष्टो भवति । विधेयात्मा तु तुशब्दः पूर्वस्माद्व्यतिरेकार्थः । वशीकृतान्तःकरणस्तु आत्मवश्यैर्मनोधीनैः स्वाधीनैरिति वा रागद्वेषाभ्यां वियुक्तैर्विरहितैरिन्द्रियैः श्रोत्रादिभिर्विषयान् शब्दादीननिषिद्धान् चरन्नुपलभमानः प्रसादं प्रसन्नतां चित्तस्य स्वच्छतां परमात्मसाक्षात्कारयोग्यतामधिगच्छति रागद्वेषप्रयुक्तानि इन्द्रियाणि दोषहेतुतां प्रतिपद्यन्ते । मनसि स्ववशे तु न रागद्वेषौ । तयोरभावे च न तदधीनेन्द्रियप्रवृत्तिः । अवर्जनीयतया तु विषयोपलम्भो न दोषमावहतीति न शुद्धिव्याघात इति भावः । एतेन विषयाणां स्मरणमपि चेदनर्थकारणं सुतरा तर्हि भोगः । तेन जीवनार्थं विषयान् भुञ्जानः कथमनर्थं न प्रतिपद्येतेति शङ्का निरस्ता । स्वाधीनैरिन्द्रियैर्विषयान्प्राप्नोतीति च किं व्रजेतेति प्रश्नस्योत्तरमुक्तं भवति ॥ ६४ ॥

**शं० टी०**—नन्विन्द्रियैर्विषयग्रहणाभावे विदुषः कथं शरीरयात्रा सेत्स्यतीत्याशङ्कायां तत्प्रकारं नित्यं समाधिमनुतिष्ठतश्चित्तप्रसादं च प्रतिपादयति–**रागेति** । रागद्वेषयोर्बीजं विषयेष्विष्टत्वानिष्टत्वबुद्धिरेव दोषदर्शनेन तस्यां परित्यक्तायामिन्द्रियाणि रागद्वेषवियुक्तानि भवन्ति तैः रागद्वेषवियुक्तैर्विषयेष्वसत्त्वतुच्छत्वबन्धकत्वबुद्ध्या रागद्वेषाभ्यां वियोजितैरित्यर्थः । तत एवात्मवश्यैरात्मनः स्वस्य वश्यैः संकोचव्याकोचयोर्वशवर्तिभिः प्रसन्नैरिन्द्रियैस्तु विषयानन्नरसादीननिषिद्धान् तत्रापि प्राणत्राणमात्रपर्याप्तान् चरन् भुञ्जानो ब्रह्मविद्यतिर्विधेयात्मा विधेयः इन्द्रियशुद्ध्या समाधिना च निर्मुक्तरागादिदोषतया शुद्धत्वेन स्वाधीन आत्मा मनो यस्य स विधेयात्मा सन् प्रसादं चित्तस्य स्वाध्यमत्यन्तनिर्मलतां गच्छति । "आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति श्रवणादिन्द्रियशुद्ध्या चित्तशुद्धिः सिध्यतीत्यर्थः ॥ ६४ ॥

**श्री० टी०**—नन्विन्द्रियाणां विषयप्रवणस्वभावानां निरोद्धुमशक्यत्वादयं दोषो दुष्परिहर इति स्थितप्रज्ञत्वं कथं स्यादित्याशङ्क्याह–**रागेति** द्वाभ्याम् । रागद्वेषरहितैर्विगतदर्पैरिन्द्रियैर्विषयांश्चरन् भुञ्जानोऽपि प्रसादं शान्तिं प्राप्नोति । रागद्वेषराहित्यमेवाह–आत्मनो मनसो वश्यैर्विधेयो वशवर्ती आत्मा मनो यस्येति । अनेनैव कथं व्रजेत भुञ्जीतेत्यस्य चतुर्थप्रश्नस्य स्वाधीनैरिन्द्रियैर्विषयानधिगच्छति इत्युत्तरमुक्तं भवति ॥ ६४ ॥

**स० टी०**—निगृहीते तु मनसि विनेन्द्रियविनिग्रहम् ॥ दोषो नेति वदन्नाह व्रजेतेत्यस्य चोत्तरम् ॥ १ ॥ वशीकृतमना यस्तु स्वाधीनैरिन्द्रियैश्चरन् ॥ वियुक्तैरागद्वेषाभ्यां शब्दादिविषयांस्तथा ॥ २ ॥ चित्तस्य स्वच्छतां ब्रह्मसाक्षात्कारैकयोग्यताम् ॥ स प्राप्नोति ततश्चित्तं निरोद्धव्यं प्रयत्नतः ॥ ३ ॥ ६४ ॥

**भा० टी०**—एवं विषयचिन्तनस्यानर्थोपायत्वमुक्त्वा अथेदानीं विषयध्यानरहितस्य स्वाधीनस्य चेतसः परमपुरुषार्थोपायत्वं वदन् किं व्रजेतेत्यस्योत्तरमाह–**रागेति**। विधेयात्मा स्वाधीनचित्तोऽत एवात्मवश्यैः स्वाधीनैरत एव रागद्वेषाभ्यां स्वाभाविकेन्द्रियप्रवृत्तिहेतुरूपाभ्यां वियुक्तैरिन्द्रियैः विषयाञ्जीवनहेतून् भोजनाच्छादनादींश्चरन्नुपलभमानः प्रसन्नतां स्वास्थ्यं प्राप्नोति ॥ ६४ ॥

प० टी०–अथैतत्कर्तुमसमर्थोऽपि तरतीति व्रजेत किमस्योत्तरमाह–रागद्वेषेति । रागद्वेषवियुक्तैरिन्द्रियैर्विषयांश्चरन् प्रसादमधिगच्छति । रागः प्रीतिरासक्तिर्द्वेषश्च ताभ्यां वियुक्तैरुदासीनैरिन्द्रियैर्विषयान् भुञ्जानः । अथ रागद्वेषवियुक्तत्वे हेतुमाह–आत्मवश्यैरिति । आत्मा वश्यो येषां तानि सर्वत्रात्मभावनायुक्तानि तैर्विधेयः परिनिष्ठित आत्मा मनो यस्य स तथाभूतः प्रसादं शान्तिमधिगच्छतीत्यर्थः । तदुक्तम्–'अग्निसङ्गाद्यथा लोहमग्नित्वमुपगच्छति । आत्मसङ्गात्तथा गच्छत्यात्मतामिन्द्रियादिकम्' इति ॥ ६४ ॥

रा० टी०–अस्त्वेवमुक्तदिशा रागद्वेषपरिहारः । ततः किमित्यतस्तस्येन्द्रियजयाख्यं फलमिन्द्रियजयाज्जायमानं फलं चाह–रागद्वेषेति । यद्यपीन्द्रियजयस्य वशे हीत्यर्धे ज्ञानं फलमित्युक्तं तथापि तन्न साक्षात् किंतु मनःप्रसादद्वारेति अत्र श्लोकद्वयेनोच्यत इत्यदोषः । अयमर्थः । य उक्तविधया त्यक्तरागद्वेषः स पुमान् रागद्वेषवियुक्तैस्ताभ्यामप्रयुक्तैरिन्द्रियैश्चक्षुरादिबाह्येन्द्रियैः अत एवात्मवश्यैः स्वाधीनैः रूपरसादीन्विषयान्केवलदेहधारणमात्रार्थं चरन्ननुभवति । विधेयात्मा विधेयः स्वाधीनः आत्मा मनो यस्य स तथा तादृशो भूत्वा प्रसादं मनसः स्वतोपि प्रायो विषयागतिलक्षणं प्रसादमधिगच्छति प्राप्नोति । अत्र पादत्रयेण रागद्वेषपरिहाराख्येन्द्रियजयाख्यं फलमुक्तम् । रागद्वेषाप्रयुक्तत्वादेवेन्द्रियाणां विधेयात्मत्वहेतुनात्मवश्यत्वस्येन्द्रियाणामुक्त्या तज्जयस्य प्रतीतेरात्मवश्यत्वस्य स्वात्मनः क्षोभानापादकत्वरूपत्वात् । विषयांश्चरन्नित्युक्तिस्त्विन्द्रियजयकारणत्वं निराहारत्वस्य प्रागुक्तमयुक्तमशक्यत्वादित्याशङ्क्य देहधारणमात्रोपयुक्तविषयानुभवो न दोषायेति वक्तुमिन्द्रियजयस्याव्यवहितफलोक्तिर्विधेयात्मा प्रसादमधिगच्छतीति ॥ ६४ ॥

**प्रसादे सर्वदुःखानां हानिरस्योपजायते ॥**
**प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते ॥ ६५ ॥**

त० टी०–चित्तप्रसादे सति अस्य मुमुक्षोः सर्वदुःखानामाध्यात्मिकादीनां हानिरुपजायते । विषयासक्तचेतसां विपाकदशायां यान्यवर्जनीयानि दुःखानि, निर्मलमनसस्तेषां हानिर्नियतभोगनिवृत्तिरनायासेन भवतीत्यर्थः । न केवलं तस्य दुःखहानिमात्रमपि तु महत्फलं प्राप्नोतीत्याह–प्रसन्नचेतस इति । हीत्यवधारणे । प्रसन्नचेतस आशु शीघ्रमेव बुद्धिः पर्यवतिष्ठते परितः सर्ववृत्तीः समाकृष्य निश्चला भवतीत्यर्थः ॥ ६५ ॥

म० टी०–प्रसादमधिगच्छतीत्युक्तं तत्र प्रसादे सति किं स्यादित्युच्यते । चित्तस्य प्रसादे स्वच्छत्वरूपे सति सर्वदुःखानामाध्यात्मिकादीनामज्ञानविलसितानां हानिर्विनाशोऽस्य यतेरुपजायते । हि यस्मात् प्रसन्नचेतसो यतेराशु शीघ्रमेव बुद्धिर्ब्रह्मात्मैक्याकारा पर्यवतिष्ठते परि समन्तादवतिष्ठते स्थिरा भवति । विपरीतभावनादिप्रतिबन्धाभावात् । ततश्च प्रसादे सति बुद्धिपर्यवस्थानं ततस्तद्विरोध्यज्ञाननिवृत्तिः ततस्तत्कार्यसकलदुःखहानिरिति क्रमेपि प्रसादे यत्नाधिक्याय सर्वदुःखहानिकरत्वकथनमिति न विरोधः ॥ ६५ ॥

शं० टी०–नित्यं समाधिनिष्ठया चेन्द्रियाणां मनसश्च शुद्धिलक्षणं प्रसादं संपादितवतो विदुषस्तत्सिद्धेः फलमाह–प्रसाद इति । इन्द्रियशुद्धिसिद्धेः प्रसादे प्राप्ते सत्यस्य विदुषः सर्वदुःखानाम् । अत्र दुःखशब्देन तद्धेतवो विक्षेपा लक्ष्यन्ते तेषां सर्वेषां विक्षेपाणां हानिर्निःशेषनिवृत्तिरुपजायते । तत एव आशु शीघ्रमेव प्रसन्नचेतसो निर्मलात्मनस्तस्य बुद्धिः सर्वत्र ब्रह्मदर्शिनी प्रज्ञा पर्यवतिष्ठते प्रतिष्ठिता भवतीत्यर्थः ॥ ६५ ॥

**श्री० टी०**–प्रसादे सति किं स्यादित्यत्राह–**प्रसाद इति**। प्रसादे सति सर्वदुःखनाशस्ततश्च प्रसन्नचेतसो बुद्धिः प्रतिष्ठिता भवतीत्यर्थः ॥ ६५ ॥

**स० टी०**–चित्तस्य स्वच्छतायां तु भ्रान्तिज्ञानैकजन्मनाम् ॥ आध्यात्मिकादिदुःखानां सर्वेषां जायते क्षयः ॥ १ ॥ यस्माच्छीघ्रं यतेरस्य प्रसन्नमनसो मतिः ॥ ब्रह्मात्मैक्यसुखाकारा समन्तादवतिष्ठते ॥ २ ॥ अतः सर्वप्रयत्नेन मुमुक्षुर्मत्परायणः ॥ वशीकृत्य मनः स्वीयं तिष्ठेद्ब्रह्माद्वये मयि ॥ ३ ॥ ६५ ॥

**भा० टी०**–**प्रसाद इति**। प्रसादे सति अस्य विवेकिनः सर्वदुःखानां त्रिविधतापानां हानिरुपजायते। कुत इत्यत आह–**प्रसन्नेति**। हि यस्मात् प्रसन्नचेतस आशु शीघ्रं बुद्धिः आत्मस्वरूपेणैव निश्चलीभवतीत्यर्थः। एवं प्रसन्नचेतसः स्थिरबुद्धेः कृतकृत्यता यतः तस्माद्रागद्वेषवियुक्तैरिन्द्रियैः शास्त्राविरुद्धेष्वावश्यकेषु जीवनहेतुभूतेषु युक्तः समाचरेदिति वाक्यार्थः ॥ ६५ ॥

**प० टी०**–अथ तेन किं स्यादित्याह–**प्रसाद इति**। अस्य पुरुषस्य प्रसादे जाते सति सर्वदुःखाना हानिर्जायते। एवं सर्वदुःखातिगत्वेन प्रसन्नमनस आशु शीघ्रं बुद्धिः पर्यवतिष्ठते निश्चला भवति। तदुक्तम् 'विज्ञानामृतनिर्झरावनिरिव स्वानन्दपूर्णोदधेरूर्मिः शाश्वतसुप्रसादसदनं भूतानुकम्पाप्रसूः। निर्वातस्थितसुप्रदीपकलिका वैराग्यभाग्यास्पदं दृश्यातीतपदावलम्बरसिका स्वान्तस्थितिस्तद्विदाम्' ॥ ६५ ॥

**रा० टी०**–प्रसादे सति किं स्यादित्यत उक्तम्–**प्रसाद इति**। प्रागुक्तरूपमनःप्रसादे सति अस्य प्रसन्नचेतसः पुंसः आशु शीघ्रं बुद्धिर्ब्रह्मापरोक्षज्ञानं पर्यवतिष्ठति सम्यग्भवति। ततश्चास्यापरोक्षज्ञानिनः सर्वदुःखानां हानिरुपजायते। हि प्रसिद्धमेतत् तरति शोकमात्मविदित्यादौ इति। अत्र प्रसादे सति बुद्धिः पर्यवतिष्ठतीत्येतावत्येव वक्तव्ये सर्वदुःखानां हानिरिति ज्ञानफलस्याप्युक्तिः। बुद्धियुक्तो जहातीहेत्यत्र सुकृतदुष्कृतहानस्य ज्ञानफलत्वोक्तिरयुक्ता। सुखदुःखप्राप्तिपरिहारयोरन्यतरत्वाभावेनापुमर्थत्वादित्याशङ्कानिरासाय प्रसङ्गात्प्राप्तेति ज्ञेयम् ॥ ६५ ॥

## नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना ॥
## न चाभावयतः शान्तिरशान्तस्य कुतः सुखम् ॥ ६६ ॥

**त० टी०**–उक्तार्थदृढीकरणायासंयतमनसः सर्वं विपरीतफलं दर्शयति–**नास्तीति**। अयुक्तस्यावशीकृतचित्तस्य बुद्धिः सर्ववेदवेदान्तनिर्णीततत्त्वविषयिणी व्यवसायात्मिका न भवति। किञ्च अयुक्तस्य भावना तत्त्वपरिशीलनात्मिका मनोवृत्तिर्नास्ति। अभावयतः भावनाशून्यस्य शान्तिर्विषयेभ्य उपरतिर्न भवति। अशान्तस्य सुखं दुःखलेशासंभिन्नं नित्यानपायिसुखं कुतः स्यात्। प्राकृतविषयजन्यं राजसं सुखं तु तस्यापि भवति विषयेन्द्रियसंयोगादित्यादिना वक्ष्यमाणत्वात् ॥ ६६ ॥

**म० टी०**–इममेवार्थं व्यतिरेकमुखेन द्रढयति–**नास्तीति**। अयुक्तस्याजितचित्तस्य बुद्धिरात्मविषया श्रवणमननाख्यवेदान्तविचारजन्या नास्ति नोत्पद्यते। तद्बुद्ध्यभावे न चायुक्तस्य भावना निदिध्यासनात्मिका विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहरूपा। सर्वत्र नञोऽस्तीत्यनेनान्वयः। नचाभावयत आत्मानं शान्तिः सकार्याविद्यानिवृत्तिरूपा वेदान्तवाक्यजन्या ब्रह्मात्मैक्यसाक्षात्कृतिः। अशान्तस्यात्मसाक्षात्कारशून्यस्य कुतः सुखं मोक्षानन्द इत्यर्थः ॥ ६६ ॥

**शं० टी०**–नित्यानित्यविवेकवैराग्याभ्यां तीव्रमुमुक्षुतया च सर्वं संन्यस्य मुमुक्षवो ये यतयः श्रवणं कुर्वन्ति तेषां मुक्तिः सम्यग्ज्ञानेन विना न सिध्यति सम्यक्ज्ञानं च समाधिं विना समाधिश्चेन्द्रिय-

निग्रहं विना चेन्द्रियनिग्रहोऽपि निःशेषरागादित्यागं विना न सिध्यतीति । यततो ह्यपि कौन्तेय इत्यादिना रागद्वेषपरित्यागमिन्द्रियनिग्रहं समाध्यनुष्ठानं च प्रतिपाद्य ध्यायतो विषयान्पुंस इति ज्ञानिनोऽपि बहिर्मुखस्य ज्ञाननाशाद्यनर्थनिपातं प्रतिपाद्येदानीं बहुधा श्रुतश्रावितवेदान्तस्य पठनपाठनमात्रेण आत्मानं कृतार्थं मन्यमानस्य मुमुक्षोरालस्येन दुर्मेधया च ध्यानादावप्रवृत्तस्य समाधिरवश्यं कर्तव्य इति सूचयितुं तदकर्तुरनर्थमाह—**नास्तीति** । शतधा श्रुतवेदान्तोऽपि यस्तीव्रमुमुक्षया शान्तो दान्त उपरतस्तितिक्षुर्भूत्वाऽप्रतिबद्धज्ञानसिद्धये समाधिं न करोति तस्याऽयुक्तस्याऽसमाहितचेतसः पुरुषस्य बुद्धिः सर्वत्र ब्रह्मदर्शनलक्षणा चित्तप्रसादैकलभ्या प्रत्यग्दृष्टिर्नास्ति । बहुधा कृतेऽपि श्रवणे तदुत्पन्नं ज्ञानं पदवाक्यार्थगोचरमेव भवति नतु वस्तुगोचरं सूक्ष्मबुद्ध्या कचिज्जातमपि न तिष्ठति स्थिरमित्यर्थः । अयुक्तस्येति पुनरुक्तिः समाधेरवश्यकर्तव्यत्वद्योतनार्था । ' कारणाभावे कार्याभावः ' इति न्यायेन अयुक्तस्य समाधिसमुत्पन्नब्रह्मापरोक्षज्ञानशून्यस्य भावना न च नास्ति देह इव इदमेवाहमस्मीति स्वात्मना साक्षात्कृते ब्रह्मण्येवात्मत्वाभिनिवेशो भावना तत्तादात्म्यापत्त्या स्वस्य ब्रह्मण्येव व्यवस्थि-ऽहंबुद्धिलक्षणा या सा चायुक्तस्य न संभवतीत्यर्थः। तदसंभवे तत्कार्यं च न संभवतीत्याह—**न चाभावयत इति** । प्रबुद्धो यथा देहं तथा ब्रह्मैवाऽहं नेतरदित्यात्मानं ब्रह्मैवाऽभावयतोऽमन्यमानस्य ब्रह्मात्मना स्वयमतिष्ठतो यतेः शान्तिरनात्मतादात्म्यतत्कार्यसंबन्धाऽदर्शनलक्षणा चोपशान्तिर्न सिध्यति । किंचाऽशान्तस्याऽनात्मानमेवात्मानं द्वैतं च पश्यतः सुखं नित्यं निरन्तरं ब्राह्मं कुतः सर्वमिदमहं च ब्रह्मैवेति सर्वं स्वं च ब्रह्मैव पश्यत एव यतेर्ब्रह्मानन्दरसानुभवः स्यात्तद्विपरीतदर्शिनः कुतः सिध्यतीत्यर्थः । यद्वा न चाभावयतः शान्तिः श्रुतं दृष्टं स्पृष्टं मतं विज्ञातं स्वयं च सर्वं चिद्रूपं ब्रह्मैवेति सर्वस्य चिन्मात्रत्वमखण्डया चिदात्मिकया वृत्त्या नित्यं निरन्तरमभावयतोऽपश्यतोऽविदुषः शान्तिर्विदेहमुक्तिश्चिदानन्दैकरसब्रह्मरूपेणावस्थानलक्षणा नास्ति। एवमशान्तस्य विदेहमुक्तिमप्राप्तस्य सुखं विदेहकैवल्यसुखं कुतः ब्रह्मभावमप्राप्तस्य ब्रह्मसुखं न सिध्यतीत्यर्थः ॥ ६६ ॥

**श्री० टी०**—इन्द्रियानिग्रहस्य स्थितप्रज्ञतासाधनत्वं व्यतिरेकमुखेनोपपादयति—**नास्तीति** । अयुक्तस्यावशीकृतेन्द्रियस्य नास्ति बुद्धिः शास्त्राचार्योपदेशाभ्यामात्मविषया बुद्धिः प्रज्ञैव नोत्पद्यते । कुतस्तस्य प्रतिष्ठा वार्ता वा कुत इत्यत आह—नचायुक्तस्य भावना ध्यानम् । भावनया हि बुद्धेरात्मनि प्रतिष्ठा भवति सा चायुक्तस्य यतो नास्ति न चाभावयत आत्मध्यानमकुर्वतः शान्तिः आत्मनि चित्तोपरतिः अशान्तस्य कुतः सुखं मोक्षानन्द इत्यर्थः ॥ ६६ ॥

**स० टी०**—व्यतिरेकमुखेनेमं दृढयत्यर्थमीश्वरः ॥ पुंसो ह्यजितचित्तस्य बुद्धिर्वेदान्तवाक्यजा ॥ १ ॥ नोत्पद्यतेऽस्य तद्बुद्ध्यभावे नास्त्येव भावना ॥ निदिध्यासनरूपा या शान्तिहेतुः स्थिरात्मिका ॥ २ ॥ निदिध्यासनशून्यस्य नास्त्यविद्यापरिक्षयः ॥ साक्षात्कारः परात्मैक्यतत्त्वस्यानन्दकारणम् ॥ ३ ॥ तत्साक्षात्कारशून्यस्य मोक्षानन्दः कुतो भवेत् ॥ अतश्चित्तं नियम्याशु यतस्वानन्दसिद्धये ॥ ४ ॥ ६६ ॥

**भा० टी०**—ननु किं चित्तप्रसादस्यैव साक्षाद्बुद्धिप्रतिष्ठासाधनत्वमुत परंपरयेत्याकाङ्क्षायां निदिध्यासनद्वारेणेति वक्तुं चित्तप्रसादं विना तन्न जायत इति पूर्वोक्तेस्तात्पर्यं प्रसन्नतास्तुत्या स्फुटयति—**नास्तीति** । यत्तु समनस्कानामिन्द्रियाणामनिग्रहे दोष उक्तः बुद्धेरपर्यवस्थाने को दोष इत्यत आहेति तच्चिन्त्यम् । अयुक्तस्य बुद्धिर्नास्तीत्युक्त्या चित्तप्रसादस्तुतेः स्पष्टप्रतीतेः तथोत्थापनानौचित्यात् । अयुक्तस्यासमाहितचेतसः अप्रसन्नचित्तस्येति यावद् बुद्धिरात्मस्वरूपज्ञानविषया ब्रह्मात्मैक्याकारा कुत इत्यत आह—**नचेति** । नचायुक्तस्य भावना पूजा प्रतिष्ठाद्यर्थं श्रवणमननयोः सत्त्वेऽपि भावनाऽभिनिवेशो निदिध्यासनं बुद्धिसाधनं नास्ति न

चाभावयतः विजातीयप्रत्ययस्य विषयानुसन्धानस्य तिरस्कारमकुर्वतः शान्तिरुपशमः तृष्णाया इच्छापरपर्यायायाः अभावो नास्ति अशान्तस्य कुतः सुखम् । अविद्यानिवृत्त्या आविद्यकतृष्णाद्यभावकर्तुस्तत्त्वसाक्षात्कारस्याभावात् ब्रह्मानन्दसुखं तु तस्य नास्त्येव । विषयसुखमपि तस्य नास्तीति द्योतयितुं कुतःशब्दः । ननु विषयार्जनतद्भिन्ना शयोः दुःखसाधनत्वेपि विषयोपभोगस्य सुखहेतुत्वं भविष्यतीति चेन्न । तस्मिन्कालेऽपि सर्वदुःखमूलभूतायस्तृष्णायाः सत्त्वेन सुखगन्धस्याप्यनुपपत्तेः । तृष्णायाः दुःखहेतुत्वमुक्तं वासिष्ठे 'यान्येतानि दुरन्तानि दुर्जराण्युन्नतानि च । तृष्णावल्ल्याः फलानीह तानि दुःखानि राघव ॥ इच्छोदयो यथा दुःखमिच्छाशान्तिर्यथा सुखम् । तथा न नरकेनापि ब्रह्मलोकेऽनुभूयते ॥ यावती यावती जन्तोरिच्छोदेति यथा यथा । तावती तावती दुःखबीजमुष्टिः प्ररोहति' इत्यादि ॥ ६६ ॥

प० टी०—इन्द्रियनिग्रहस्य स्थितप्रज्ञतासाधनत्वं व्यतिरेकमुखेनोपपादयति—नास्ति बुद्धिरिति । अयुक्तस्यावशीकृतेन्द्रियस्य बुद्धिर्नोत्पद्यते च परं तया बुद्ध्याऽयुक्तस्य भावनात्मभावना नास्ति । तथाभावयतो ब्रह्मभावनावार्जितस्य सुखमात्मसुखं कुतो नास्तीत्यर्थः ॥ ६६ ॥

रा० टी०—श्रवणमननाभ्यासुपकृतेन ध्यानेनैव ब्रह्मापरोक्षज्ञानासिद्धेः किमनेन प्रसादेनेत्यतः प्रसादाभावे दोषमाह—नास्तीत्यादिश्लोकद्वयेन । विपक्षे दोषोक्तिपरत्वान्मनःप्रसादाभावे युक्तिशब्दितचित्तनिरोधो न भवतीत्येतत्प्रकरणप्राप्तमादौ योज्यम् । नास्ति बुद्धिरित्येतदग्रे योज्यम् । अयुक्तस्य चित्तनिरोधहीनस्य भावना ध्यानं न भवति । अभावयतश्चाध्यायिनश्च बुद्धिरपरोक्षज्ञानं न भवति । न चाबुद्धेरिति शेषः । अपरोक्षहीनस्य च शान्तिर्मुक्तिर्नास्ति । अशान्तस्यामुक्तस्य च सुखं कुतः न कुतोपीत्यर्थः । अबुद्धेः शान्तिर्नेत्येतावत्येव वाच्येऽशान्तस्य कुतः सुखमित्युक्तिर्न केवलमपरोक्षिणो मुक्तौ सर्वदुःखप्रहाणमात्रं किंतु संसारिभिरलभ्यं परमं सुखं चेति ज्ञापयितुं प्रसङ्गात्प्राप्तेति ज्ञेयम् । यद्वा शान्तिर्भगवदेकनिष्ठबुद्धिता । सुखं मोक्षः ॥ ६६ ॥

**इन्द्रियाणां हि चरतां यन्मनोऽनुविधीयते ॥**
**तदस्य हरति प्रज्ञां वायुर्नावमिवाम्भसि ॥ ६७ ॥**

**त० टी०—अयुक्तस्य बुद्धिः कुतो नास्तीत्यत आह—इन्द्रियाणामिति । हि यस्मात् इन्द्रियाणा चरतां विषयेषु प्रवर्तमानानां मध्ये यत्किमपीन्द्रियं मनोऽनुविधीयते, कर्मभूतं मनः पुरुषेणानुवर्त्यते तदिन्द्रियं मनो वा अस्य पुरुषस्य प्रज्ञां आत्मतत्त्वविषयिणीं बुद्धिं हरति, तत्त्वतः प्रच्याव्य स्वानुवर्तिनीं विषयाभिमुखीं करोति । तत्र दृष्टान्तः—वायुर्नावमिवेति । यथा अम्भसि नीयमानां नावं प्रतिकूलो वायुर्हरति गन्तव्यमार्गात्प्रच्याव्य विकटे प्रक्षिप्य नाशयति तद्वदित्यर्थः ॥ ६७ ॥**

म० टी०—अयुक्तस्य कुतो नास्ति बुद्धिरित्यत आह—इन्द्रियाणामिति । चरतां स्वविषयेषु प्रवर्तमानानामवशीकृतानामिन्द्रियाणां मध्ये यदेकमपीन्द्रियमनुलक्षीकृत्य मनोऽनुविधीयते प्रेर्यते प्रवर्तत इति यावत् । कर्मकर्तरि लकारः । तदिन्द्रियमेकमपि मनसाऽनुसृतं अस्य साधकस्य मनसो वा प्रज्ञामात्मविषयां शास्त्रीयां हरति अपनयति मनसस्तद्विषयाविष्टत्वात् । यदैकमपीन्द्रियं प्रज्ञां हरति तदा सर्वाणि हरन्तीति किमु वक्तव्यमित्यर्थः । दृष्टान्तस्तु स्पष्टः । अम्भस्येव वायोर्नौकाहरणसामर्थ्यं न भुवीति सूचयितुमम्भसीत्युक्तम् । एवं दार्ष्टान्तिकेप्यम्भःस्थानीये मनश्चाञ्चल्ये सत्येव प्रज्ञाहरणसामर्थ्यमिन्द्रियस्य नतु भूस्थानीये मनःस्थैर्ये इति सूचितम् ॥ ६७ ॥

शं०टी०—ननु सूक्ष्मबुद्धेः श्रवणादिजन्यज्ञानं समाध्यभावेऽपि न नश्यति यथा मेधाविनाऽधीतमीमांसादिशास्त्रजन्यज्ञानं मेधया प्रतिष्ठितमेव भवति तथैवेति चेन्न। इष्टकाचयनादिज्ञानमतिस्थूलमपि मुहुर्मुहुरवलोडनं चरणं प्रचारणं वा विना न स्फुटं प्रतिभाति किमु वक्तव्यमतिसूक्ष्ममतीन्द्रियमविषयमप्रचुरमसंस्कृतमनारूढमविनष्टप्रतिपक्षमात्मज्ञानं समाध्यभावे न प्रतिभातीति। ततस्तत्सिद्ध्यै मुमुक्षोः समाधिः कर्तव्य इति सूचयितुं बहिःप्रवृत्तस्य ज्ञाननाशनप्रकारं सदृष्टान्तमाह—**इन्द्रियाणामिति**। हि यस्मात्कारणादिन्द्रियाणां श्रोत्रादीनां वागादीनां च स्वस्वविषयेषु चरतां सतां लोकशास्त्रविषयकर्मवासनाभिराविष्टं यन्मनोऽनुविधीयते विदुषा तत्तदिच्छावता स्वेच्छानुरूपं प्रवर्त्यते तदेव मनः अम्भसि नदीजले वायुर्नावमिवास्य स्ववासनानुरूपं प्रवर्तमानस्यास्य विदुषः प्रज्ञामात्मानात्मविवेकबुद्धिं हरति संहरति। अत्रायमभिप्रायः। नद्याः परपारं गच्छन्तीं नौकां प्रतिकूलो वायुर्गृहीत्वा महाऽऽवर्ते तां पातयति जलेनापूर्य वा मज्जयति महापाषाणेनाभिहत्य भञ्जयति पुनरपारं वा विषमस्थानं वा गमयति सर्वथाऽनर्थवर्तीमेव करोति तथा तथा विदुषोपि प्रज्ञां विवेकबुद्धिमनाद्यविद्यावासनाभिरुच्चावचाभिराकृष्टं मनो विषये वा कर्मणि वा योगे वाप्युपास्तौ वा व्यवहारे वान्यत्र वा पातयित्वा वायुर्नावमिव विध्वंसयतीत्यर्थः॥ ६७॥

श्री० टी०—नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह—**इन्द्रियाणामिति**। इन्द्रियाणामवशीकृतानां स्वैरं विषयेषु चरतां मध्ये यदेवैकमिन्द्रियं मनोऽनुविधीयते अवशीकृतं सदिन्द्रियेण सह गच्छति तदेवैकमिन्द्रियमस्य मनसः पुरुषस्य वा प्रज्ञां हरति विषयविक्षिप्तां करोति किमुत वक्तव्यं बहूनि प्रज्ञां हरन्तीति यथा प्रमत्तस्य कर्णधारस्य नावं वायुः समुद्रे सर्वतः परिभ्रामयति तद्वत्॥ ६७॥

स० टी०—अयुक्तस्य कुतो नास्ति बुद्धिरित्यत उच्यते॥ स्वैरं प्रवर्तमानानामिन्द्रियाणां प्रमाथिनाम्॥१॥ विषयेषु च तन्मध्ये यद्येकमपि हीन्द्रियम्॥ मनोऽनुलक्ष्मीकृत्यैव साधकस्य प्रवर्तते॥ २॥ मनसानुसृतं तच्च प्रज्ञामात्मैकगोचराम्॥ साधकस्यापनयति शास्त्रीयां विषयावृतम्॥ ३॥ यद्येकमपि तां प्रज्ञां विदुषो हरतीन्द्रियम्॥ किमुवाच्यं तदा सर्वाणीन्द्रियाणि हरन्ति ताम्॥ ४॥ नौकाहरणसामर्थ्यमम्भस्येव नतु क्षितौ॥ वायोस्तथेन्द्रियस्यापि चाञ्चल्ये मनसः सति॥५॥ प्रज्ञाहरणसामर्थ्यं मनःस्थैर्ये तु नास्य तत्॥ इति सूचयितुं प्रोक्तमम्भसीति पदं त्विह॥ ६॥ ६७॥

भा० टी०—अयुक्तस्य बुद्धिर्नास्तीत्युक्तं तत्र हेतुमाह—**इन्द्रियाणामिति**। यत्तु तदभावे दोषमाह इति तदयुक्तं पूर्वश्लोकेऽपि दोषस्यैवोक्तत्वात्। इन्द्रियाणां स्वविषये प्रवर्तमानानां यन्मनोऽनुवर्तते तदिन्द्रियविषयविकल्पे प्रवृत्तमस्य पुरुषस्य विवेकिनः प्रज्ञामात्मानात्मविवेकजां हरति अम्भसि नावं वायुरिव जले जिगमिषतां मार्गादुद्धृत्योन्मार्गे यथा वायुः प्रवर्तयति तद्वत्। यत्तु इन्द्रियाणां मध्ये यदेकमपीन्द्रियमनुलक्ष्मीकृत्य विधीयते प्रेर्यते प्रवर्तत इति यावत् तदिन्द्रियमेकमपि मनसानुसृतं अस्य साधकस्य मनसो वा प्रज्ञां हरति इत्यादि तदयुक्तम् 'नास्ति बुद्धिरयुक्तस्य' इत्यनुरोधेन इन्द्रियानुगतमनस एव बुद्धिहरणकर्तृत्वस्य विवक्षितत्वात्। श्रुतं मनःपदं त्यक्त्वाऽश्रुतस्यैकेन्द्रियस्य यत्तत्पदेनोपादानानौचित्यात् मनस इत्यपि न साधकस्यैव प्रकृतत्वात्॥ ६७॥

प० टी०—अथ नास्ति बुद्धिरयुक्तस्येत्यत्र हेतुमाह—**इन्द्रियाणामिति**। विषयेषु स्वैरं चरतामिन्द्रियाणां मध्य एकमिन्द्रियं यन्मनोऽनु तदनुगतमेव विधीयते प्रेर्यते तदस्य पुरुषस्य प्रज्ञां हरति तथा चैकस्य मनसः संयमे कृते सर्वेषां संयमः कृत एव स्यादित्यर्थः। अथ प्रज्ञाहरणे दृष्टान्तमाह—**वायुरिति**। असावधानकर्णधाराधिष्ठितां नावं वायुर्यथेतस्ततो भ्रामयति तद्वत्॥ ६७॥

**रा० टी०**—अयुक्तस्य भावना नेत्ययुक्तं कृतश्रवणमननस्य पुंसो ध्यानोपपत्तेरित्यत आह—**इन्द्रियाणामिति**। चक्षुरादीन्द्रियाणां स्वैरं विषयेषु चरतां गच्छतामनु पृष्ठभावितया मनो विषयान्प्रति विधीयते ईश्वरेण क्रियते यत्तन्मनस इन्द्रियाणां पृष्ठभावितया ईश्वरेण मनसः करणं अस्य पुंसः प्रज्ञां परोक्षनिश्चयं हरति।उत्पत्स्यत्परोक्षज्ञानं निवारयति । उत्पन्नमपि ज्ञानं चित्तनिरोधहीनस्य न ध्यानोपयोगि सदपरोक्षज्ञानाय प्रभवतीत्यर्थः। कथमम्भसि वायुर्नावमिव प्लवमिवेति ॥ ६७ ॥

**तस्माद्यस्य महाबाहो निगृहीतानि सर्वशः ॥**
**इन्द्रियाणीन्द्रियार्थेभ्यस्तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥**

**त० टी०**—एवमिन्द्रियाणि प्रमाथीनीत्यादिनेन्द्रियाणां मनोबुद्धिभ्रंशकत्वं तन्नियमनस्य च स्थितप्रज्ञताहेतुत्वं चानेकधोपपाद्येदानीं तमर्थमनूद्योपसंहरति—**तस्मादिति** । यस्मादिन्द्रियाण्येव विषयप्रवृत्तिहेतुत्वेनानर्थकराणि तस्मात् हे महाबाहो ! यस्य पुरुषस्य सर्वशः सर्वप्रकारेण इन्द्रियाणि इन्द्रियार्थेभ्यो निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता भवति ॥ ६८ ॥

**म० टी०**—हि यस्मादेवं सर्वशः सर्वाणि समनस्कानि हे महाबाहो इति संबोधयन् सर्वशत्रुनिवारणक्षमत्वादिन्द्रियशत्रुनिवारणेऽपि त्वं क्षमोसीति सूचयति । स्पष्टमन्यत् । तस्येति सिद्धस्य साधकस्य च परामर्शः । इन्द्रियसंयमस्य स्थितप्रज्ञं प्रति लक्षणत्वस्य मुमुक्षुं प्रति प्रज्ञासाधनत्वस्य चोपसंहरणीयत्वात् ॥ ६८ ॥

**शं० टी०**—यस्माद्रागद्वेषलोभमोहादिदोषैरेवेन्द्रियप्रवृत्तिस्तया समाध्यभावस्तेन ज्ञानाभावस्तेनैव ब्रह्मणि स्वात्मन्यहंभावाभावस्तस्मान्मुक्त्यभावस्ततः सुखाभावश्चैवमनर्थव्रातापातो रागद्वेषादिभिरिन्द्रियनिग्रहमकृत्वा बहिःप्रवृत्तस्य ज्ञानिनोऽपि तस्मादिन्द्रियग्रामं रागादिभिर्वियोज्य सम्यङ्निगृह्य च मुमुक्षोर्यतेर्विदेहमुक्त्यै समाधिरवश्यं कर्तव्य इति सूचयितुमाह—**तस्मादिति** । रागादिशत्रुसंहारसमर्थस्यैवात्राधिकारो नान्यस्येति सूचनार्थं महाबाहो इति संबोधनम् । यस्य मोक्षैकार्थिनो यतेरिन्द्रियार्थेभ्यः सर्वाणीन्द्रियाणि निगृहीतानि भवन्ति तीव्रवैराग्येण तस्यैव धन्यस्य समाधिः सिध्यति प्रज्ञा प्रतिष्ठिता भवति विदेहबुद्धिरग्रे तिष्ठति तत्सुखं चेत्यर्थः ॥ ६८ ॥

**श्री० टी०**—इन्द्रियसंयमस्य स्थितप्रज्ञत्वसाधनत्वलक्षणत्वं प्रोक्तमुपसंहरति—**तस्मादिति** । प्रतिष्ठिता भवतीत्यर्थः । लक्षणत्वोपसंहारे तस्य प्रज्ञा प्रतिष्ठिता ज्ञातव्येत्यर्थः । महाबाहो इति संबोधनं वैरिनिग्रहसमर्थस्य तवात्रापि सामर्थ्यं भवेदिति सूचयति ॥ ६८ ॥

**स० टी०**—यस्मादेवं ततो यस्य सचित्तानीन्द्रियाणि च ॥ निगृहीतानि सर्वाणि तस्य प्रज्ञा प्रतिष्ठिता ॥ १ ॥ निवातकवचादीन्योऽसुरांश्च जितवानसि ॥ महाबाहो समर्थस्त्वमिन्द्रियारिनिवारणे ॥ २ ॥ ६८ ॥

**भा० टी०**—उपसंहरति—**तस्मादिति** । महाबाहुभ्यां शत्रून्विजित्य यथा राज्यस्य प्रतिष्ठितत्वं शूरैः संपाद्यते एवं विवेकिभिः इन्द्रियशत्रूञ्जित्वा प्रज्ञाप्रतिष्ठितत्वमिति सूचयन् संबोधयति--हे माहाबाहो इति ॥ ६८ ॥

**प० टी०**—अथोपसंहरन्नाह—**तस्मादिति** । भो महाबाहो ! यस्मादेवं तस्मात्कारणाद्यस्य पुरुषस्य सर्वशः सर्वाणीन्द्रियाणीन्द्रियार्थेभ्यो निगृहीतान्याकर्षितानि भवन्ति तस्य प्रज्ञा प्रतिष्ठिता ॥ ६८ ॥

**रा० टी०**—प्रजहातीत्यादिनोक्तज्ञानिलक्षणस्यासंभवनिरासाय ज्ञानस्य महाप्रयत्नसाध्येन्द्रियनिग्रहसाध्यत्वं विषया विनिवर्तन्त इत्यादिना यदुक्तं तदुपसंहरति—**तस्मादिति** । यस्मादेवं निगृहीतेन्द्रियस्यैवोक्तरूपः

प्रसादः प्रसादवत एव चित्तनिरोधरूपा युक्तिः युक्तिमत एव श्रवणमनने ताभ्यां तत्त्वनिश्चयः तत्त्वनिश्चयवत एवापरोक्षसाधनं ध्यानं तस्मात् हे महाबाहो सर्वश इन्द्रियाणि सर्वाण्यपीन्द्रियाणि इन्द्रियार्थेभ्यः रूपादिसर्वेन्द्रियविषयेभ्यो यस्य निगृहीतानि तस्य प्रज्ञा प्रतिष्ठिता । प्रसादयुक्तिश्रवणमननतत्त्वनिश्चयध्यानप्रणाड्या अपरोक्षधीः प्रतिष्ठिता प्रकर्षेण जायत इति ॥ ६८ ॥

**या निशा सर्वभूतानां तस्यां जागर्ति संयमी ॥**
**यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः ॥ ६९ ॥**

**त० टी०**—ननु सर्वेन्द्रियव्यापारशून्यः स्थितप्रज्ञ उक्तस्तथाभूतो न कोऽपि दृश्यते, किं त्वन्यजनवद्दर्शनश्रवणादिव्यापारः स्थितप्रज्ञस्याप्यवर्जनीयः कथमुक्तार्थः संभाव्येतेत्याशङ्क्य स्थितप्रज्ञस्य दर्शनादि सर्वलोकविलक्षणमित्याह—या निशेति । सर्वभूतानां प्राणिनां या निशेव निशा आत्मस्वरूपादिदर्शनयोग्या बुद्धिवृत्तिः, विषयासक्तचेतसां दर्शनाद्ययोग्यतया गाढान्धतमस्वती कुहूशर्वरीव तस्यामात्मस्वरूपादिदर्शनार्हबुद्धिवृत्तौ प्राणिमात्रनिशायां संयमी सम्यङ्नियमितबाह्यान्तःकरणो मुनिर्जागर्ति, प्रबुद्धः सन् याथात्म्येन शास्त्रतत्त्वं बुद्धावनुभवति । यस्यां तु विषयानुभवयोग्यायामनात्मनिष्ठायां बुद्धिवृत्तौ भूतानि अवशीकृतबाह्यान्तःकरणा प्राणिनः जाग्रति सावधानतया वर्तन्ते सा विषयानुभवयोग्या बुद्धिवृत्तिः आत्मतत्त्वं याथात्म्येन पश्यतो मुनेर्निशा निशेव निशा विषयदर्शनानर्हा बुद्धिवृत्तिरित्यर्थः । अतः संभावितमेवेदं स्थितप्रज्ञस्य लक्षणमिति सिद्धम् ॥ ६९ ॥

**म० टी०**—तदेवं मुमुक्षुणा प्रज्ञास्थैर्याय प्रयत्नपूर्वकमिन्द्रियसंयमः कर्तव्य इत्युक्तं स्थितप्रज्ञस्य तु स्वतः सिद्ध एव सर्वेन्द्रियसंयम इत्याह—**या निशेति ।** या वेदान्तवाक्यजनितसाक्षात्काररूपाऽहंब्रह्मास्मीति प्रज्ञा सर्वभूतानामज्ञानां निशेव निशा तान् प्रत्यप्रकाशरूपत्वात् । तस्यां ब्रह्मविद्यालक्षणायां सर्वभूतनिशायां जागर्ति अज्ञाननिद्रायाः प्रबुद्धः सन् सावधानो वर्तते संयमी इन्द्रियसंयमवान् स्थितप्रज्ञ इत्यर्थः । यस्यां तु द्वैतदर्शनलक्षणायामविद्यानिद्रायां प्रसुप्तान्येव भूतानि जाग्रति स्वप्नवद्व्यवहरन्ति सा निशा न प्रकाशते आत्मतत्त्वं पश्यतोऽपरोक्षतया मुनेः स्थितप्रज्ञस्य यावद्धि न प्रबुध्यते तावदेव स्वप्नदर्शनं बाधपर्यन्तत्वाद् भ्रमस्य । तत्त्वज्ञानकाले तु न भ्रमनिमित्तः कश्चिद्व्यवहारः । तदुक्तं वार्तिककारैः 'कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते । शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा ॥ काकोलूकनिशेवायं संसारो ज्ञात्मवेदिनोः । या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः' इति । तथा च यस्य विपरीतदर्शनं तस्य न वस्तुदर्शनं विपरीतदर्शनस्य वस्त्वदर्शनजन्यत्वात् । यस्य च वस्तुदर्शनं तस्य न विपरीतदर्शनं विपरीतदर्शनकारणस्य वस्त्वदर्शनस्य वस्तुदर्शनेन बाधितत्वात् । तथा च श्रुतिः "यत्र वा अन्यदिव स्यात्तत्रान्योन्यत्पश्येत् । यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्" इति । विद्याविद्ययोर्व्यवस्थामाह—यथा काकस्य रात्र्यन्धस्य दिनमुलूकस्य दिवान्धस्य निशा रात्रौ पश्यतश्चोलूकस्य यद्दिनं रात्रिरेव सा काकस्येति महदाश्चर्यमेतत् । अतस्तत्त्वदर्शिनः कथमाविधिकक्रियाकारकादिव्यवहारः स्यादिति स्वतःसिद्ध एव तस्येन्द्रियसंयम इत्यर्थः ॥ ६९ ॥

**शं० टी०**—जन्मानेकशतसहस्रकृतसुकृतपरिपाकेन श्रुत्याचार्येश्वरप्रसादपौष्कल्यं प्राप्तवतो यस्य समाधिना सर्वमिदमहं च ब्रह्मैवेति ब्रह्माऽपरोक्षविज्ञानमप्रतिबद्धं भवति तस्य महात्मनः स्थितप्रज्ञस्य प्रबुद्धस्य स्वप्नव्यवहारवदहं ममेदमित्यादिव्यवहारो लौकिको वैदिकश्च निःशेषो विनिवर्तते । निद्रावदविद्याया निःशेषविनष्टत्वात्तत्कार्यस्यापि निःशेषनिवृत्तिरतः प्रबुद्धो जागर इव जीवन्मुक्तो ब्रह्मविद्ब्रह्मण्येवारमति नान्यत्रेति प्रतिपादयति—**या निशेति ।** प्राचीनकर्मफलानुभूत्यै पुनः पुनर्भवन्ति जायन्त इति भूतानि प्राणिनस्तेषां

सर्वेषां भूतानां स्थितप्रज्ञव्यतिरिक्तानां सर्वभूतानां या निशा भवति "तेजः परस्यां देवतायाम्" इत्यादिश्रुत्युक्ता या परदेवता सर्वप्रमाणाऽगोचरा निर्विशेषा सत्तामात्रा स्वयं निशेव भवति यथा निशा नितरां शेरते प्राणिनो यत्र सा निशा तमिस्रा रात्रिः सर्वव्यापकत्वेन दृष्टेः प्रवेष्टुमशक्यत्वेन सर्वपदार्थानां स्वमात्रत्वापादनेन च भूतानां मनुष्यादीनां व्यवहर्तुमशक्या भवति तथा सेयं परदेवतापि सर्वव्यापकत्वादिधर्मैः सर्वभूतानां व्यवहर्तुमशक्यत्वान्निशेत्युच्यते। शं सुखं नितरां सुखरूपत्वान्निशा तस्यां निशायामत्यन्तसुखरूपायां परस्यां देवतायां परे ब्रह्मण्यानन्दघने स्वयमविद्यानिद्राप्रबुद्धः संयमी बहिःप्रवृत्तिनिवृत्तसर्वेन्द्रियो ब्रह्मविदेक एव जागर्ति तत्रैवारमति क्रीडत्यानन्दति तदन्ये तु शेरते श्रुतवेदान्ता अपि निद्रिता इव तत्स्वरूपं किमपि न जानन्तीत्यर्थः। यस्यामविद्याया द्रष्टृदर्शनदृश्यादिभेदवत्यां भूतानि जाग्रति अहं ममेदमिष्टमानिष्टमिदं कार्यमिदमकार्यमिति व्यवहरन्ति सा त्वविद्या द्वैतभूमिः पश्यतः द्रष्टारं दर्शनं दृश्यं च सर्वं प्रत्यग्दृष्ट्या ब्रह्मैव पश्यतो मुनेर्ब्रह्मनिष्ठस्य निशा भवति। यथा निशायां प्राणिनो न व्यवहरन्ति तथायमविद्यानिशायामहं ममेति न व्यवहराति। अहं ममेत्यादिप्रत्ययहेतूनामनाद्यविद्यावासनानां निःशेषविनष्टत्वेन तद्बुद्धेर्ब्रह्ममय्याः प्रवेष्टुमशक्यत्वादत्राहं ममेदमिति प्राकृतमेव व्यवहारं न करोति। कुत एवंलक्षणस्यास्य विदुषो वैदिकव्यवहारः सिध्यतीत्यर्थः। यद्वा "अधीहि भगवो ब्रह्मविद्यां वरिष्ठाम्" इत्यादिश्रुतिप्रसिद्धा या ब्रह्मविद्या सर्वभूतानां सर्वेषां प्राणिनां निशा भवति स्वयं चिदाकृत्या सूर्यप्रभावत्प्रकाशरूपापि सुदृष्टिशून्यानां निशेव भवतीति निशेत्युच्यते। यथा प्रसिद्धनिशा स्वकीयतमःशक्त्या नामरूपभेदमपास्य सर्वं वस्तुजातं तमोमात्रं कृत्वा स्वयमेव सर्वत्र विजृम्भते तथैवैषा ब्रह्मविद्या स्वकीयाचिच्छक्त्या नामरूपभेदमपोह्य सर्वं दृश्यजातं चिन्मात्रं कृत्वा स्वयमेकैव सर्वत्र विजृम्भते। यत्र निशायामिव अज्ञास्तज्ज्ञाश्च सर्वे व्यवस्थानरूपान् स्वप्नान् पश्यन्तः शेरते तस्यां ब्रह्मविद्यायां संयमी बहिःप्रवृत्तिशून्यः स्थितप्रज्ञो ब्रह्मविदेक एव जागर्ति आत्मरतिरात्मक्रीड आत्ममिथुन आत्मज्योतिरात्मानन्दो भूत्वा सर्वदाऽऽस्ते। यस्यामविद्यायां सर्वाणि भूतानि जाग्रति त्वमहमिदमद इति व्यवहरन्ति सा त्वविद्या द्वैतावस्था पश्यतो द्रष्टारं दर्शनं दृश्यं च सर्वं मिथ्यैवेति पश्यतो ब्रह्मविदो निशा भवति यथा प्राणिनां ब्रह्मविद्या निशा तथा ब्रह्मविदोप्यविद्या निशा ब्रह्मविद्यया ब्रह्मैवाहमिति स्वमानन्दैकरसं परिपूर्णं विषयीकर्तुं यथैवाऽज्ञा न शक्नुवन्ति तथैवायं ब्रह्मविदविद्ययाहं ममेदमिति देहेन्द्रियादिकं विषयीकर्तुं न शक्नोतीत्यर्थः। तत एवास्य लौकिके वैदिके च कर्मण्यनधिकारः योग्यत्वाभावात्। यस्य देहतदाश्रितवर्णजात्यादावभिमानः फलार्थित्वं ममेदं कर्तव्यमिदं न कर्तव्यमिति क्रियासु गुणदोषदर्शनं च विद्यते तस्यैव कर्मणि योग्यता दृश्यते न तूक्तलक्षणशून्यस्य। नहि नित्यनिरन्तर समाधिनिष्ठया निरूढविज्ञानबलेनाऽविद्यां तत्कार्यं चाऽध्यासादिकं निर्मूल्य ब्रह्मतादात्म्यमापाद्य ब्रह्मैवाहमिति सर्वदा ब्रह्मण्येव तदात्मना तिष्ठतो विदुषः पुनः शरीरतादात्म्यापत्तिस्तत्राहं ममेत्याभिमानश्च संभवति। तदसंभवे तत्रारोपितवर्णजात्याद्यभिमानोऽपि न सिध्यति। तदसिद्धौ सर्वमिथ्यात्वदर्शिनः फलाभिसंध्यसिद्धेः क्रियासु गुणदोषदर्शनाऽसिद्धेश्च सत्येवं न विदुषः कर्मण्यधिकार उपयुज्यते सर्वमिथ्यात्वदर्शनस्य प्रवृत्तेश्च परस्परविरुद्धत्वादेकाधिकरणत्वानुपपत्तेः। वस्तुनः सत्यत्वनिश्चयधीपूर्विकाप्रवृत्तिर्भ्रमकल्पितत्वनिश्चयधीमूलकं मिथ्यात्वज्ञानं ततस्तयोः परस्परविरुद्धत्वमेकाधिकरणत्वानुपपत्तिश्च। ननु कर्ता करणं कार्यं च सर्वं मिथ्यैवेति विदुषा कर्म क्रियतां मिथ्यात्वेन कृतं कर्म बन्धाय न भवतीति चेन्न। मिथ्यात्वज्ञानस्य प्रवृत्तिविरोधान्नेदं जलं किंतु मरुरेवेति जलमिथ्यात्ववेदिनस्तृषितस्यापि प्रवृत्त्यदर्शनात्किमुतारोपितं दृश्यं सर्वं मिथ्यैवेति तदधिष्ठानं ब्रह्मैव सर्वत्र पश्यतः प्रवृत्तिरनुपपन्नेत्यतो ह्यविद्यावत एव कर्मण्यधिकारो नतु विद्या-

वतो विद्याया अविद्यातत्कार्यविरोधित्वाद्विद्यावति ब्रह्मविद्यविद्या तत्कार्यं च तेजसीव तमः सकार्यं स्थातुं न शक्नोति । यत एवं ततो विधिर्विधानं विधेयं विधाता च सर्वमाविद्यकं मिथ्यैवेति विजानतो ब्रह्मविदः सदात्मना तूष्णीमवस्थितिं विना न किंचित्कर्तव्यमस्तीति सिद्धम् ॥ ६९ ॥

**श्री० टी०**–ननु च कश्चिदपि प्रसुप्त इव दर्शनादिव्यापारशून्यः सर्वात्मना निगृहीतेन्द्रियो लोके न दृश्यतेऽतोऽसंभावितमिदं लक्षणमित्याशङ्क्याह–**या निशेति**। सर्वेषां भूतानां या निशा निशेव निशा आत्मनिष्ठा आत्माज्ञानध्वान्तावृतमतीनां तस्यां दर्शनादिव्यवहाराभावात् तस्यामात्मनिष्ठायां संयमी निगृहीतेन्द्रियो जागर्ति प्रबुद्ध्यते यस्यां तु विषयबुद्ध्या भूतानि जाग्रति प्रबुद्ध्यन्ते सा आत्मतत्त्वं पश्यतो मुनेर्निशा तस्यां दर्शनादिव्यापारस्तस्य नास्तीत्यर्थः । एतदुक्तं भवति । यथा दिवान्धानामुलूकादीनां रात्रावेव दर्शनं नतु दिवसे एवं ब्रह्मज्ञस्योन्मीलिताक्षस्यापि ब्रह्मण्येव दृष्टिर्नतु विषयेषु। अतो नासंभावितमिदं लक्षणमिति ॥ ६९ ॥

**स० टी०**–एवं मुमुक्षुणा प्रज्ञास्थैर्यायेन्द्रियसंयमः॥ कार्यः प्रयत्नतः शास्त्राचार्याभ्यामुपदेशतः ॥ १ ॥ उत्पन्ने तत्त्वविज्ञाने क्षीणेऽज्ञाने सकार्यके ॥ इन्द्रियाणां सचित्तानां स्वतः सिद्धोऽस्ति संयमः ॥ २ ॥ इत्याह भगवान्विष्णुर्ब्रह्मनिष्ठाप्रदर्शनात् ॥ वेदान्तवाक्यजा प्रज्ञाहंब्रह्मास्मीति या दृढा ॥ ३ ॥ अज्ञानप्रत्यक्प्रकाशत्वादज्ञानां रजनीव या ॥ ब्रह्मविद्यास्वरूपिण्यां तस्यां जागर्ति संयमी ॥ ४ ॥ जितेन्द्रियो जितमनाः स्थितप्रज्ञ उदारधीः ॥ प्रबुद्धोऽज्ञाननिद्रातः सावधानः स वर्तते ॥ ५ ॥ ग्राह्यग्राहकरूपा या निशाऽविद्या तमोमयी ॥ प्रसुप्तान्येव भूतानि यस्यां व्यवरन्ति वै ॥ ६ ॥ स्वप्नवत्सा निशा तस्य ब्रह्मतत्त्वं प्रपश्यतः ॥ स्थितप्रज्ञस्य विदुषो भेददृङ् नावभासते ॥ ७ ॥ प्रबुद्ध्यते न यावद्धि तावत्स्वप्नस्य दर्शनम् ॥ प्रबुद्धस्य पुनः स्वप्नो बाधितो भ्रमकालिकः ॥ ८ ॥ बाधपर्यन्तता दृष्टा सकार्यस्य भ्रमस्य च ॥ साक्षात्कृते परे तत्त्वे न भ्रमो न च तत्कृतिः ॥९॥ समूलभ्रान्तिबाधाच्च तदुक्तं वार्तिके स्फुटम् ॥ कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते ॥ १० ॥ शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिस्तथा ॥ काकोलूकनिशेवायं संसारो ऽज्ञात्मवेदिनोः ॥ ११ ॥ या निशा सर्वभूतानामित्यवोचत्स्वयं हरिः ॥ विपरीतदृशो नास्ति सम्यग्वस्तुनिरीक्षणम् ॥ १२ ॥ वस्त्वदर्शनजा यस्माद्विपरीता दृगेव सा ॥ सम्यग्वस्तुदृशो नास्ति विपर्ययनिरीक्षणम् ॥ १३ ॥ सम्यग्दृशा बाधितत्वात्समूलस्य भ्रमस्य हि ॥ उलूकस्य दिवान्धस्य यथा काकदिनं निशा ॥ १४ ॥ रात्र्यन्धस्य च काकस्य यथोलूकदिनं निशा ॥ तथाऽज्ञस्य निशेवास्ति निष्ठा ब्रह्मविदो मुनेः ॥१५॥ तथा ब्रह्मविदो मूढनिष्ठा रात्रिरिवोदिता॥ अतस्तत्त्वदृशो नास्ति क्रियाकारकलक्षणः ॥१६॥ व्यवहारोऽस्य सिद्धोऽतः सचित्तेन्द्रियसंयमः ॥ वितृष्णस्यात्मनिष्ठत्वादेषणात्रयमुज्झतः ॥१७॥ ज्ञस्याप्यनिच्छतो ध्यानमर्थायातं प्रवर्तते ॥ इत्युक्तं श्रीवसिष्ठेन रघुनाथं प्रति स्फुटम् ॥ १८ ॥ ६९ ॥

**भा० टी०**–एवं स्थितप्रज्ञलक्षणवर्णनेन मुमुक्षुभिरतियत्नेन स्थितप्रज्ञत्वाय समनस्केन्द्रियनिग्रहः कर्तव्य इत्युक्तम् । उत्पन्नविवेकविज्ञानस्य स्थितप्रज्ञस्य तु स्वतः सिद्ध एव समनस्केन्द्रियसंयमः । अविद्याविरोधिन्या विद्यया समूलस्य सर्वव्यवहारस्य निवृत्तेरित्येतद्वक्तुकामोऽविद्यावस्थायामेव कर्माणि विधीयन्ते न विद्यावस्थायामिति द्योतयन्नाह–**येति** । सर्वभूतानामुलूकस्थानीयानां या निशेव निशा रात्रिः परमार्थतत्त्वलक्षणा तस्यामज्ञाननिद्रातः प्रबुद्धः संयमी स्थितप्रज्ञो ज्ञानयोगी जागर्ति यस्यां ग्राह्यग्राहकलक्षणायामविद्यायां भूतानि जाग्रति सा पश्यतो मुनेर्निशेव निशेत्यर्थः ॥ ६९ ॥

**प० टी०**–अथ विषयपरावृत्तेन्द्रियस्य स्थितिमाह–**या निशेति** । सर्वाणि भूतान्यात्मानं न जान-

न्त्यत आत्मविषयकाज्ञानरूपा तेषां भूतानां रात्रिर्यथोलूकानां दिनमेव रात्रिरेवं तस्यां रात्रौ संयमी परावृत्तेन्द्रियो योगी जागर्त्युद्बुद्धो भवति। तथा यस्यां जाग्रद्दशायां भूतानि जाग्रति स्वव्यवहारं कुर्वन्ति सा पश्यत आत्मदृष्टेर्मुनेर्मननशीलस्य निशा भवति तत्र व्यवहाराभावात्। तदुक्तम्—'आत्मा न हि स्फुरति सर्वशरीरभाजां तेषां निशा भवति सा खलु तत्र योगी। जागर्ति जाग्रति च ते व्यवहारजाते तन्न स्फुरत्युरुधियः क्षणदास्य सा ते' इति। एवं सकलेन्द्रियपरावृत्तित्वमेव स्थितप्रज्ञत्वमित्यर्थः। यद्वा सर्वभूतानां सर्वदेहिनां या सकलेन्द्रियोपरमरूपा निशा सुषुप्तिस्तत्रात्माकारान्तःकरणवृत्तौ सत्यामप्यात्मानं न विन्दत्यथ तस्यां तुर्यावस्थापरिणतायां संयम्यात्मनिष्ठः पुमान् जागर्त्यात्मसुखानुभववान् भवति। "दैवं ह्येतन्मिथुनं परमो ह्येष आनन्दस्तस्मादेवंवित्स्वाप्याञ्लोक्यं हैत एवं तदेव ते मिथुनेन प्रियेण धाम्ना समर्धयति" इतिश्रुतेः। वाशिष्ठेपि—'निद्रादौ जागरस्यान्ते यो भाव उपपद्यते। तं भावं भावयन् साक्षादद्वयानन्दमश्नुते' इति। अथ यस्यां जाग्रदवस्थायां भूतानि जाग्रति स्वव्यापारं कुर्वन्ति सा व्यवहारमपश्यत आत्मदृष्टेः पुरुषस्य निशा दृश्यप्रपञ्चास्फुरणात्॥ ६९॥

रा० टी०—स्थितप्रज्ञस्य का भाषेति पृष्टस्य ज्ञानिलक्षणस्य प्रजहातीत्यादिश्लोकचतुष्टयेनोक्त्वा तस्यासंभवं च विषया इत्यादिश्लोकनवकेनोक्त्वा तस्मादित्यनेन तदुपसंहृत्येदानीं स्थितधीः किं प्रभाषेतेत्युत्तरार्धे भाषणादिप्रवृत्तिं परमानन्दतृप्तः किमर्थं करोतीति कृतज्ञानिप्रवृत्त्याद्याक्षेपस्योत्तरमाह—या निशेति। यद्वा प्रजहातीत्यादिश्लोकचतुष्टये विक्षिप्योक्तं ज्ञानिलक्षणं पिण्डीकृत्याह—या निशेति। या भूतानां प्राणिनां निशेव निशा परमेश्वरस्वरूपलक्षणा यत्परमेश्वरस्वरूपं प्राणिनां निशास्थानीयमिति यावत्। निशायां सुप्तानीव न किंचिद्भगवत्स्वरूपं जानन्तीति भावः। तस्यां भगवत्स्वरूपलक्षणायां प्राणिनिशायां संयमीन्द्रियसंयमयुक्तो ज्ञानी जागर्ति भगवत्स्वरूपं सम्यगपरोक्ष्येण पश्यति। यस्यां विषयलक्षणायां भूतानि जाग्रति रूपादिविषयेष्वासक्त्यानुभववन्तो वर्तन्ते प्राणिनः सा निशा मुनेर्मननवतः अत एव पश्यतोऽपरोक्षिणः सा निशेव निशा न किंचिज्जानातीत्यर्थः। तथात्वे भाषणभिक्षाटनादिप्रवृत्त्यनुपपत्तिरिति चेत्, प्रारब्धकर्मणेषत्तिरोहितब्रह्मस्वरूपस्य वासनया प्रायोल्पाभिसंधिपूर्वकं प्रवृत्तीनां मत्तस्येवोपपत्तेरिति भावः। एतेन नित्यं भगवदेकचित्ततया तदितरत्राभिसंधिहीनत्वं ज्ञानिलक्षणमित्युक्तं भवति। एतच्च देवेतरज्ञानिलक्षणं बोध्यम्। अन्यथा सर्वप्रेरकाणां देवानामपि ज्ञानित्वात्तेषां भगवदितरत्राभिसंध्यभावे लोकयात्रोच्छेदापत्तेः। शब्दक्रमादर्थक्रमस्य बलवत्त्वान्मुनेः पश्यत इति व्यत्यासेन मुनेर्मननवतः पश्यत इति पौर्वापर्येण योजना। ततश्च तयोर्हेतुहेतुमद्भावलाभः। स च मननादेः प्रागदर्शनसाधनत्वस्य स्पष्टमनुक्तेः इह प्रसङ्गादुक्त इति॥ ६९॥

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमापः प्रविशन्ति यद्वत्॥**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी॥ ७०॥**

त० टी०—नन्वेवं निगृहीतसर्वेन्द्रियस्य सर्वविषयेभ्यो निवृत्तबुद्धेर्योगिनो योगप्रभावाद्यदि सर्वकामसिद्धयः स्वयं प्राप्नुयुः स तान् कामान् गृह्णीयाच्चेत्तर्हि तस्य तत्रासक्त्या तत्त्वतश्च्युतिः स्यादित्याशङ्कावारणायाह—आपूर्यमाणमिति। सर्वाभिर्नदीभिः सदा आपूर्यमाणं तथाऽप्यनुल्लङ्घितमर्यादं समुद्रं पुनरपि वृष्टिजाः सर्वा आपः प्रविशन्ति स यद्वन्न कञ्चन विशेषमापद्यते, तद्वत्। विषयात्मभिः काम्यन्त इति कामाः सर्वे रूपरसादयो विषयाः प्रारब्धकर्मवशाद्योगविघ्नार्थं देवैः प्रेषिता वा यं स्थितप्रज्ञं मुनिं प्रविशन्ति तदिन्द्रियग्राह्यतां स्वयमेव प्राप्नुवन्त्यपि किञ्चिद्विकारं कर्तुं न प्रभवन्ति स शान्तिं सर्वविक्षेपहेतुकर्मध्वंसेन निरतिशयानन्दरूपां मुक्तिमाप्नोति। न तस्य तत्त्वनिष्ठाया

भ्रंशशङ्काऽपीत्यर्थः । विषयिणस्तदभावमाह—न कामकामीति । कामान्विषयान्कामयितुं शीलं यस्य स तथा शान्तिं न प्राप्नोति किन्तु विषयानुभवार्हे संसार एव वर्तते ॥ ७० ॥

म० टी०—एतादृशस्य स्थितप्रज्ञस्य सर्वविक्षेपशान्तिरप्यर्थसिद्धेति सदृष्टान्तमाह—आपूर्यमाणमिति । सर्वाभिर्नदीभिरापूर्यमाणं सन्तं वृष्ट्यादिप्रभवा अपि सर्वा आपः समुद्रं प्रविशन्ति । कीदृशमचलप्रतिष्ठमनतिक्रान्तमर्यादम् । अचलानां मैनाकादीनां प्रतिष्ठा यस्मिन्निति वा गाम्भीर्यातिशय उक्तः । यद्वत् येन प्रकारेण निर्विकारत्वेन तद्वत् तेनैव निर्विकारप्रकारेण यं स्थितप्रज्ञं निर्विकारमेव सन्तं कामाः अज्ञैर्लोकैः काम्यमानाः शब्दाद्याः सर्वे विषयाः अवर्जनीयतया प्रारब्धकर्मवशात्प्रविशन्ति न तु विकर्तुं शक्नुवन्ति । स महासमुद्रस्थानीयः स्थितप्रज्ञः शान्तिं सर्वलौकिकालौकिककर्मविक्षेपनिवृत्तिं बाधितानुवृत्ताविद्याकार्यनिवृत्तिं चाप्नोति ज्ञानबलेन न कामकामी काम्यान् विषयान् कामयितुं शीलं यस्य स कामकाम्यज्ञः शान्तिं व्याख्यातां नाप्नोति अपि तु सर्वदा लौकिकालौकिककर्मविक्षेपेण महति क्लेशार्णवे मग्नो भवतीति वाक्यार्थः । एतेन ज्ञानिन एव फलभूतो विद्वत्संन्यासस्तस्यैव च सर्वविक्षेपनिवृत्तिरूपा जीवन्मुक्तिर्दैवाधीनविषयभोगेपि निर्विकारतेत्यादिकमुक्तं वेदितव्यम् ॥ ७० ॥

शं० टी०—यथा कन्यका स्वयमृतुमती भूत्वा जननीं जनकं भ्रातरं च सर्वं स्वजनं त्यक्त्वा भर्तारमेवैकमाश्रित्य तदेकालम्बना भूत्वा तत्रैव रमते तेनैव तुष्यति हृष्यत्यानन्दति नान्यं शृणोति पश्यति स्मरति स्पृशति स्वयं पतिव्रता भूत्वा तत्रैव तिष्ठति तथैव यस्य ब्रह्मविदो यतेः प्रज्ञा समाधिना प्रौढीभूय देहं प्राणमिन्द्रियजातं च सर्वं दूरतः परित्यज्य सच्चिदानन्दैकरसं परं ब्रह्मैकमेवाश्रित्य तदेकालम्बना भूत्वा तत्रैव रमन्ती क्रीडन्ती नन्दन्ती तुष्यन्ती हृष्यन्ती सती पतिव्रतावन्नान्यच्छृणोति पश्यति मनुते विजानाति स्वयं सदा तदात्मना तिष्ठति स एव जीवन्मुक्तिसुखं विदेहकैवल्यसुखं च विन्दत इति सूचयितुं स्थितप्रज्ञस्य यतेर्भिक्षादावपि वृत्तेर्बाह्यानालम्बनत्वमेव प्रतिपादयति श्रीभगवान् एवंलक्षण एव यतिर्विदेहमुक्तिं प्राप्नोति नान्यविध इति निर्धारयन्—आपूर्यमाणमिति । गङ्गानर्मदागोदावरीकृष्णाकावेरीसिन्ध्वादीनां महानदनदीनां दशशतसहस्रसंख्याकेभ्यो मुखेभ्योऽतिपरिणामवद्भ्यः समागतैरभ्रंकषैर्महाप्रवाहैरपरिमितैः समन्तादापूर्यमाणमपि स्वयमचलप्रतिष्ठमचला चलनवर्जिता प्राक्तनस्वीयलक्षणमनतिक्रान्ता वृद्धिक्षयशून्या प्रतिष्ठा जलस्थितिमर्यादा यस्य सोऽचलप्रतिष्ठस्तं प्रवाहाऽप्रवेशकाल इव प्रवेशकालेप्येकरूपेण सत्ताविशेषशून्यतया वर्तमानमित्यर्थः । सदैकरूपेणैव तिष्ठन्तं समुद्रमापः गङ्गासिन्ध्वादिमहानदीनां नानामुखेभ्यः समागतानि जलानि नानाविधवर्णरसगन्धगुणफलवत्य आपो यद्वत्प्रविशन्ति स्वकीयशुक्लनीलारुणपीतादिरूपविशेषं मधुराम्लतिक्तकषायादिरसविशेषं परिमलपूत्यादिगन्धविशेषं लघुत्वगुरुत्वादिगुणविशेषमेकद्वित्रिचतुःपञ्चषट्सप्ताष्टनवदशशतकृच्छ्रसमानपुण्यविशेषं तत्तन्नामविशेषं च परित्यज्य समुद्रभावमेव यथा गच्छन्ति समुद्रं प्राप्य तत्संबन्धमहिम्ना नामरूपगुणविशेषैर्यथा समुद्रान्न भिद्यन्त इत्यर्थः । तद्वत्कामा यं प्रविशन्ते काम्यन्ते नामभेदेन रूपभेदेन रसभेदेन गन्धभेदेन पाकभेदेन च विविच्य गृह्यन्त इति कामा भोग्यपदार्थाः सूपाऽपूपरसान्नादयस्तदन्ये च भोग्यविशेषा नानाविधैर्नामरूपरसगन्धपाकसंस्कारादिविशेषविचित्रैरनेकैर्भोग्यविशेषैः सर्वतोऽनिच्छाप्रारब्धादेव संप्राप्तैरापूर्यमाणं मां गृहाण मां गृहाणेति दातृजनद्वारा समन्तात्पतद्भिर्व्याकुलीक्रियमाणमप्यचलप्रतिष्ठमचला निर्विकल्पा विपरीतभावशून्या व्युत्थानदशायामप्याहारादौ सदाकारतामापाद्य सदात्मनैव निश्चलीभूय स्थिताऽखण्डाकारवृत्तेः प्रतिष्ठा स्थितिर्यस्य सोऽचलप्रतिष्ठः तदानीमपि बाह्यानविकल्प्य समाधिनिष्ठया विपरिणामरहितान्तःकरण इत्यर्थः । तमचलप्रतिष्ठमेव यं ब्रह्मविदं यतिं सर्वे कामाः प्रविशन्ति यं

ब्रह्मनिष्ठं प्राप्य सर्वे विषयाश्छिद्रावापन्ना अध्यात्मदृष्ट्या प्रविलापिताः सन्तः स्वकीयं नामविशेषं रूपविशेषं गन्धविशेषं पाकविशेषं संस्कारविशेषं रुचिविशेषं च परित्यज्य समुद्रप्रविष्टमहानदीजलानि समुद्रभावमिव स्वयं ब्रह्मभावं गच्छन्तीत्यर्थः। य एवंलक्षणो ब्रह्मविद्यतिः स एव शान्तिमविद्याप्रपञ्चोपशमलक्षणां विदेहमुक्तिमाप्नोति नतु कामकामी कामान् विषयान् यः कामयते स कामकामी स्वयं कैवल्यकारणभूतां ब्रह्मनिष्ठां स्वधर्मं परित्यज्यानात्मन्येवात्मभावमापद्य भोक्ता सन् शुक्तौ रजतमिव मरौ जलमिव ब्रह्मण्यद्वितीये ह्यविद्यमानमेव द्वैतं कल्पयित्वा अहं भोक्तेदं भोग्यमित्यनृताभिसंधितया बाह्यवासनाभिरसत्यहन्ताममताभिनिवेशेन बद्धः सन् इदं रम्यमिदमिष्टमित्यादिभेदबुद्ध्या नामरूपादिविशेषविभागेन पदार्थान् गृह्णाति यतस्ततः कामकामी भेददर्शी शान्तिं न प्राप्नोति देहादितादात्म्यापत्त्या योऽसदभिनिवेशेन ब्रह्मण्याद्वितीये भेदं पश्यति स एव कामकामी द्वैतदर्शी मुक्तिं न प्राप्नोतीत्यर्थः। तथाच श्रुतिः "यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य" इति। नहि देहतादात्म्यं विना भेददर्शनं कामना च सिध्यति नापि देहतादात्म्यं चाविद्यां विना संभवत्यविद्यावतो मुक्त्यभावो युक्त एव यतस्ततः क्वचित्कदाचिदपि देहतादात्म्यापत्त्या भेददृष्टिर्न कर्तव्या विदेहकैवल्यार्थिना यतिनेति सिद्धम्। पूर्वश्लोकेनानेन च द्वाभ्यामाहारादावपि स्थितप्रज्ञो ब्रह्मविद्यतिर्ब्रह्मात्मना ब्रह्मण्येव तिष्ठति न क्वचिदप्यनात्मनीति किमासीतेति प्रश्नस्योत्तरं दत्तम्॥ ७०॥

**श्री० टी०**–ननु विषयेषु दृष्टयभावे कथमसौ तान् भुङ्क्ते इत्यपेक्षायामाह–**आपूर्यमाणमिति**। नाना नदीभिरापूर्यमाणमपि अचलप्रतिष्ठमनतिक्रान्तमर्यादमेव समुद्रं पुनरप्यन्या आपो यथा प्रविशन्ति तथा कामा विषया यं मुनिमन्तर्दृष्टिं भोगैरविक्रियमाणमेव प्रारब्धकर्मभिराक्षिप्ताः सन्तः प्रविशन्ति स शान्तिं कैवल्यं प्राप्नोति नतु कामकामी भोगकामनाशीलः॥ ७०॥

**स० टी०**–तदेवं सर्वविक्षेपनिवृत्तिस्तस्य धीमतः॥ उक्ताधुना कामशान्तिः सदृष्टान्ता निदर्श्यते॥१॥ आपूर्यमाणं सर्वाभिर्नदीभिरपि सागरम्॥ वृष्ट्यादिप्रभवा आपः प्रविशन्ति यथाखिलाः॥ २॥ अनतिक्रान्तमर्यादं तिष्ठन्तं निर्विकारतः॥ धीरं तेन प्रकारेण स्थितप्रज्ञमवस्थितम्॥ ३॥ निर्विकारतया सन्तं काम्यमाना अपीतरैः॥ शब्दाद्या विषयाः सर्वे यदि प्रारब्धकर्मणा॥ ४॥ प्रविशन्ति न तच्चित्तं विकर्तुं शक्नुवन्ति ते॥ स महार्णवतुल्यो यः स्थितप्रज्ञो विचक्षणः॥ ५॥ सर्वलौकिकविक्षेपनिवृत्तेर्ज्ञानतेजसा अविद्याकार्यमाभासमपि त्यक्त्वा च नैष्ठिकीम्॥ ६॥ शान्तिमाप्नोति मूढस्तु कामकामी न शान्तिभाक्॥ काम्यान्कामयितुं शीलं यस्य संसारिणः स च॥७॥ सदा क्लेशार्णवे मग्नो भवतीत्याशयो हरेः॥८॥७०॥

**भा० टी०**–एतादृशस्यैव मोक्षप्राप्तिः न कामिन इति सदृष्टान्तमाह–**आपूर्यमाणमिति**। अद्भिरापूर्यमाणमचलप्रतिष्ठमनतिक्रान्तमर्यादम्। अचलानां मैनाकादीनां प्रतिष्ठा यस्मिन् तमेतेन गाम्भीर्यातिशय उक्त इत्यर्थस्तु भाष्यकृद्भिर्न कृतः अनतिक्रान्तमर्यादत्वस्यैवात्र विवक्षितत्वात् मैनाकादेरिन्द्रवज्रभयात्समुद्रे तिरोभूय स्थितस्य सपक्षत्वेन तस्मिन्नचलशब्दप्रवृत्तौ कारणाभावाच्च। समुद्रमापः काश्चित्सकण्टकाः काश्चित्सपुष्पाः सर्वतो गताः प्रविशन्ति स्वात्मस्थमविक्रियमेव सन्तं यद्वत्तद्वत्सर्वे कामाः लोकैः काम्यमाना विषयाः यं स्थितप्रज्ञमचलाऽप्रकम्प्या प्रतिष्ठा यस्य अचले ब्रह्मणि प्रतिष्ठा यस्येति वा। प्रविशन्ति सर्वे आत्मन्येव लीयन्ते न ह्यात्मवशं कुर्वन्ति सः शान्तिं मोक्षाभिधां प्राप्नोति कामान् विषयान् कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः। यत्वन्ये प्रजहातीत्यादिग्रन्थेन कामादित्यागेन्द्रियनिग्रहकथनपरेण कामादीनां पृथक्त्वमेवमुक्तमतो नाद्वैतसिद्धिरित्याशङ्क्य सदृष्टान्तं परिहरति–प्रविशन्तीभिरद्भिरापूर्यमाणमचलप्रतिष्ठं समुद्रं

यद्वदापः प्रविशन्ति तद्वद्यं पुरुषं कामैरापूर्यमाणं हीयमानं वाचलप्रतिष्ठं निर्विकारं वृद्धिह्रासहीनत्वाद्-आत्मप्रभवाः सर्वे कामाः प्रविशन्ति स शान्तिमाप्नोति नतु कामकामी काम्यन्त इति कामा विषयाः तान्कामयितुं शीलं यस्य स कामकामी नैव प्राप्नोतीत्यर्थः। अयं भावः। पूर्वग्रन्थेन कामादीनां पृथक्सत्त्वं न प्रतिपाद्यते किंतु पामरसिद्धं पृथक्सत्वमभिप्रेत्य प्रहाणादिकमुच्यते इत्यादि वर्णयन्ति तदुपेक्ष्यं प्रकरण-विरोधाद् यत्पदेन पूर्वोत्तरं बह्वभ्यस्तस्यात्रापि यमिति श्रूयमाणस्य मोक्षाधिकारिणस्त्यागायोगात् स शान्तिमाप्नोति न कामकामीति वाक्यशेषविरोधाच्चेति दिक् ॥ ७० ॥

प० टी०—अथेन्द्रियपरावृत्तिं दृष्टान्तेनाह—आपूर्यमाणमिति। स पुरुषः शान्तिं शमसुखमाप्नोति। स कः सर्वे कामाः सर्वे विषयास्तावद्यं प्रविशन्ति तद्वत् परावृत्ता भवन्ति। किंवत्, यद्वदापो नानानदीप्रवाहाः समुद्रं प्रविशन्ति। किंभूतम् आपूर्यमाणं मेघैर्बहिर्निःसार्यमाणेऽप्युदकेऽनुपक्षीणं तथा पुनर्वर्षमाणोत्पन्नप्रवाहैर्युक्तेप्यचलप्रतिष्ठमनुल्लङ्घितमर्यादम्। एवं प्रकृतेऽपि विषयवृत्तिषु बहिर्निःसृतास्वपि स्थितप्रज्ञत्वादनुपक्षीणं पुनः प्रतिष्ठास्वप्यहं निवृत्तेन्द्रिय इत्यभिमानशून्यमित्यर्थः। एवंविध एवात्मसुखभाक् परंतु न कामकामी भोगकामनाशीलः ॥ ७० ॥

रा० टी०—ननु ज्ञानिनो बाह्यानुसंधानहीनस्य मत्तस्येव युज्येतापि कथंचिद्गमनादिकम्। विषयानुभवस्तु दृश्यमानः कथं स्यात्। तस्य नियतसाधनसाध्यस्यानुसंधानेन विनानुदयात्। इत्यतो ज्ञानिना क्रियमाणविषयानुभवप्रकारमाह—आपूर्यमाणमिति। नानानदीजलैरापूर्यमाणमपि अचलप्रतिष्ठं सरित्प्रवेशाद्वृद्धिविशेषहीनतया स्वभावत एव स्थितम्। सरितामप्रवेशनिमित्तशोषहीनं च सरित्प्रवेशार्थं यत्नहीनं चेत्यपि ध्येयम्। समुद्रमापो यद्वद्यथा प्रविशन्ति तद्वत् तथायं ज्ञानिनं विषयैरापूर्यमाणत्वे वा उत्सेकानुत्सेकहीनं कामा विषयाः प्रविशन्ति स ज्ञानी शान्तिं मोक्षमाप्नोति नतु कामकामी कुत्सितविषयेच्छावान् शान्तिमाप्नोतीत्यर्थः। यद्वा विषयभोक्ता कामी कथमुच्यत इत्यत उक्तम्—नत्विति। एवं विषयाननुभवन्स ज्ञानी न कामकामी ॥ ७० ॥

**विहाय कामान्यः सर्वान्पुमांश्चरति निस्पृहः ॥**
**निर्ममो निरहङ्कारः स शान्तिमधिगच्छति ॥ ७१ ॥**

त० टी०—एवंभूतमहाफलस्य योगस्य कोऽधिकारीत्यपेक्षायामाह—विहायेति। सामान्ययच्छब्दप्रयोगात्सर्वविषयत्यागपूर्वकात्मनिष्ठायां वर्णाश्रमविशेषनियमो नास्ति, किन्तु यः कश्चिदपि पुमान्सर्वान्कामानप्राप्तान्प्राप्तान्वा विहाय विशेषेण त्यक्त्वा देहयात्रामात्रेऽपि निस्पृहः अत एव निर्ममः यदृच्छाप्राप्ते भोजनाच्छादनादौ ममेदमित्यभिमानशून्यः पुनश्च निरहङ्कारः देहेन्द्रियादावहङ्काररहितः आत्मनस्तद्वैलक्षण्यज्ञानपूर्वकदेहादिसम्बन्धस्यानित्यत्वज्ञानात् चरति यदृच्छाप्राप्तभोगान् भुङ्क्ते यत्र क्व वा गच्छति स शान्तिमुक्तलक्षणामधिगच्छति निर्बन्धतया प्राप्नोति ॥ ७१ ॥

म० टी०—यस्मादेवं तस्मात्प्राप्तानपि सर्वान् बाह्यान् गृहक्षेत्रादीन् आन्तरान्मनोराज्यरूपान् वासनामात्ररूपांश्च पथि गच्छतस्तृणस्पर्शरूपान् कामांस्त्रिविधान् विहायोपेक्ष्य शरीरजीवनमात्रेपि निस्पृहः सन् यतो निरहङ्कारः शरीरेन्द्रियादावयमहमित्यभिमानशून्यः विद्यावत्त्वादिनिमित्तात्मसंभावनारहित इति वा। अतो निर्ममः शरीरयात्रामात्रार्थेऽपि प्रारब्धकर्माक्षिप्ते कौपीनाच्छादनादौ ममेदमित्यभिमानवर्जितः सन् यः पुमान् चरति प्रारब्धकर्मवशेन भोगान् भुङ्क्ते यादृच्छिकतया यत्र क्वापि गच्छतीति वा स एवंभूतः स्थितप्रज्ञः शान्ति

सर्वसंसारदुःखोपरमलक्षणामविद्यातत्कार्यनिवृत्तिमधिगच्छति ज्ञानबलेन प्राप्नोति । तदेतदीदृशं व्रजनं स्थितप्रज्ञस्येति चतुर्थप्रश्नस्योत्तरं परिसमाप्तम् ॥ ७१ ॥

**शं० टी०**–यस्मात् ध्यायतो विषयानित्यत्र विषयाणां श्रवणेन दर्शनेन च विनैव केवलध्यानमात्रेण कामाद्यनर्थाविर्भूत्या विदुषोपि प्रणाशः प्रतिपादितः किमुत ब्रह्मनिष्ठामुत्सृज्य बाह्यवृत्त्या विषयानिन्द्रियैर्गृह्णतो भुञ्जतो यथेच्छं विहरतो वा कामकामिनः प्रणाश इति तस्माद्विदेहकैवल्यार्थिना यतिना ब्रह्मविदा सर्वथाविषयग्राहमुत्सृज्य सर्वेन्द्रियनिग्रहपूर्वकं सदात्मनिष्ठया स्थातव्यमेवं यस्तिष्ठति स एव विदेहमुक्तिं विन्दतीति प्रतिपादयति–**विहायेति** । पुमर्थमतिदुर्लभं मोक्षं महता प्रयत्नेन संपादयति ब्रह्मवित् खलु पुमान् पुरुषशब्दवाच्यो यो ब्रह्मविद्यतिः स्वयं निरहंकारः ब्रह्मैवाहमिति ब्रह्मण्येव निरूढात्मत्वाभिनिवेशेन देहान्निर्गतोऽहंकारोहमात्मिका बुद्धिर्यस्य स निरहंकारः नित्यनिरन्तरब्रह्मनिष्ठया निर्मूलितानात्मतादात्म्यग्रन्थिरित्यर्थः । तत एव निर्ममः देहतद्धर्मतत्कर्मतदवस्थादिभ्यो निर्गतो ममताबन्धो यस्य स निर्ममः ब्रह्मतादात्म्यापत्त्या वपुष्यहंभावाभावे तद्धर्मादौ ममताभावो विदुषो युक्त एवेत्यर्थः । तत एव निःस्पृहः विषयेभ्यो निर्गता स्पृहा सुखाशालक्षणा यस्य स निःस्पृहः ब्रह्मण्येवात्मतापत्त्या देहादेरनात्मत्वेन निरस्तत्वात्तमुद्दिश्य सुखाशाऽसंभवात्स्वस्य निरन्तरब्रह्मानन्दामृतरसेनैव तृप्तत्वाच्च विदुषो विषयसुखापेक्षाऽभावो युक्तः । तत एव सर्वान् कामान् बाह्यशब्दवाच्यान् विषयान् विहाय शुक्तिरजततुल्यैस्तैः प्रयोजनाभावादिन्द्रियैस्तद्ग्रहणमकृत्वा सर्वमिदमहं च ब्रह्मैवेति स्वं सर्वं च ब्रह्मैव पश्यन् चरति । "कामान्नीकामरूप्यनुसंचरन्" इत्यादिश्रुत्युक्तप्रकारेण भूमौ सर्वत्राऽसङ्गोदासीनो भूत्वा यः पर्यटति परमहंसः स एव शान्तिमात्यन्तिकसंसारोपरमलक्षणां विदेहमुक्तिमधिगच्छति नैतद्विपरीतलक्षण इत्यर्थः । ब्रह्मात्मना सर्वं वीक्षमाणो ब्रह्मानन्दमनुभुञ्जानो ब्रह्मवित्सर्वत्र चरति नैकत्र तिष्ठतीति व्रजेत किमितिप्रश्नस्योत्तरं दत्तम् ॥ ७१ ॥

**श्री० टी०**–यस्मादेवं तस्मात्–**विहायेति** । प्राप्तान्कामान्विहाय त्यक्त्वा उपेक्ष्य अप्राप्तेषु च निःस्पृहः यतो निरहङ्कारः अतएव तद्भोगसाधनेषु निर्ममः सन्नन्तर्दृष्टिर्भूत्वा यश्चरति प्रारब्धवशेन भोगान्भुङ्क्ते यत्र क्वापि गच्छति वा स शान्तिमाप्नोति ॥ ७१ ॥

**स० टी०**–यस्मादेवमतः प्राप्तानपि बाह्यान्गृहादिकान् ॥ वासनामात्ररूपांश्च मनोराज्यात्मकानपि ॥१॥ पथि प्राप्तांस्तृणस्पर्शतुल्यांस्तांस्त्रिविधानपि ॥ उपेक्ष्य देहयात्रायामपि यो निःस्पृहो मुनिः ॥ २ ॥ देहाद्यहंकृतेः शून्यः स्वश्लाघादिविवर्जितः ॥ तादात्म्याध्यासशून्यत्वात्संसर्गाध्यासवर्जितः ॥ ३ ॥ शरीरयात्रामात्रार्थे प्राप्ते प्रारब्धकर्मणा ॥ ममेदमिति तत्रापि स्वत्वभ्रान्तिविवर्जितः ॥ ४ ॥ भोगानारब्धवशतो भुङ्क्ते भोक्तृत्वमन्तरा ॥ यादृच्छिकतया यत्र क्वापि याति स वा पुमान् ॥ ५ ॥ य एवंभूत एषोऽत्र स्थितप्रज्ञ उदारधीः ॥ शान्तिं समस्तसंसारदुःखाभावोपलक्षिताम् ॥ ६ ॥ निर्वाणाख्यामवाप्नोति तत्त्वबोधबलेन वै ॥ ईदृशं व्रजनं तस्य स्थितप्रज्ञस्य कीर्तितम् ॥ ७ ॥ ७१ ॥

**भा० टी०**–चतुर्थप्रश्नस्योत्तरमुपसंहरति–**विहायेति** । यस्मादेवं तस्माद्विहाय कामान्सर्वान्यः स्थितप्रज्ञः शरीरजीवनमात्रेपि निःस्पृहः । अत एव शरीरजीवनमात्राक्षिप्तपरिग्रहेऽपि ममेदमित्यभिनिवेशरहितः निरहंकारः विद्यावत्त्वादिनिमित्तात्मसंभावनावर्जितः । ननु देहाभिमानरहित इत्याचार्यैः कुतो न व्याख्यातमिति चेदुक्ताहंभावेऽस्यान्तर्भावविवक्षयेत्यदोषः । चरति पर्यटति स शान्तिमविद्यातत्कार्योपरमरूपां निर्वाणाभिधामधिगच्छति प्राप्नोति ॥ ७१ ॥

**प० टी०**–अथ तदेव प्रकटयति–**विहायेति** । यः पुमान् साधितपुरुषार्थः सर्वान् कामान् विहाय तृणोपमान् कृत्वा निस्पृहश्चरति । अथ निस्पृहत्वमेवाह–**निर्मम इति** । विषयेषु सत्स्वपि ममताभिमा-

नशून्यः परावृत्तेषु निरहंकारोऽहं कृतकृत्य इति श्लाघाशून्य एवंविधो यो निस्पृहः स एव शान्तिमधिगच्छति नान्यः ॥ ७१ ॥

रा० टी०–एतच्छ्लोकोक्तं प्रपञ्चयति–विहायेति । यो निस्पृहो निषिद्धस्पृहाहीनः निर्ममः स्वामित्वाभिमानहीनः निरहंकारः भक्षयामीति कर्तृत्वाभिमानहीनः सन्सर्वान्कामान्विषयान्विहाय चरति भक्षयति भक्षयामीति कर्तृत्वाद्यभिमानत्यागेन विषयाननुभवतीत्यर्थः । स एव पुमाननन्यः पशुरिति वा स पुमान् शान्तिमधिगच्छतीति वा ज्ञानिन इयं स्तुतिः ॥ ७१ ॥

एषा ब्राह्मी स्थितिः पार्थ नैनां प्राप्य विमुह्यति ॥
स्थित्वाऽस्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति ॥ ७२ ॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

त० टी०–उक्तात्मनिष्ठां स्तुवन्नुपसंहरति–एषेति । एषाऽसङ्गकर्मपूर्विका ब्राह्मी ब्रह्मसंबन्धिनी ब्रह्मप्रापिकेति यावत् । स्थितिः स्थितप्रज्ञालक्षणा निष्ठोक्तेति शेषः । एनां स्थितिं प्राप्य कर्मयोगी न विमुह्यति देहात्मबुद्धिं न प्राप्नोति । अस्यां स्थित्यामन्तकाले मरणासन्नकालेऽपि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वाणं सर्वकर्मध्वंसपूर्वकं दुःखात्यन्ताभावं निरतिशयसुखं मोक्षमृच्छति प्राप्नोति । प्राकृतोभयशरीरत्यागपूर्वकमप्राकृतदेहवान् भूत्वा निरन्तरभगवद्भजनानन्दसुखानुभवयोग्यो भवतीति भावः । किं पुनर्वक्तव्यं यदि पूर्वे समर्थे वयस्यस्यां स्थित्वा ब्रह्मनिर्वाणमृच्छतीति ॥ ७२ ॥

भगवत्प्राप्तिहेतुस्तत्पराभक्तिर्हि वक्ष्यते । तदङ्गमात्मविज्ञानं साधनं तस्य कर्म च ॥ १ ॥
असङ्गं तेन शुद्धात्मा स्थितप्रज्ञो भवेत्ततः । सर्वदुःखविनिर्मुक्तः परां शान्तिं निगच्छति ॥ २ ॥
इति गीतार्थसंक्षेपः श्रीकृष्णेन कृपावशात् । अध्यायेऽस्मिन् समादिष्टो भक्तानां हितसिद्धये ॥ ३ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां गीतासंग्रहार्थप्रकाशो नाम द्वितीयोऽध्यायः ॥ २ ॥

म० टी०–तदेवं चतुर्णां प्रश्नानामुत्तरव्याजेन सर्वाणि स्थितप्रज्ञलक्षणानि मुमुक्षुकर्तव्यतया कथितानि संप्रति कर्मयोगफलभूतां सांख्यनिष्ठां फलेन स्तुवन्नुपसंहरति–एषेति । एषा स्थितप्रज्ञलक्षणव्याजेन कथिता एषा तेऽभिहिता सांख्ये बुद्धिः इति च प्रागुक्ता स्थितिर्निष्ठा सर्वकर्मसंन्यासपूर्वकपरमात्मज्ञानलक्षणा ब्राह्मी ब्रह्मविषया । हे पार्थ ! एनां स्थितिं प्राप्य यः कश्चिदपि पुनर्न विमुह्यति नहि ज्ञानबाधितस्याज्ञानस्य पुनः संभवोऽस्ति अनादित्वेनोत्पत्त्यसंभवात् । अस्यां स्थितौ अन्तकालेपि अन्त्येऽपि वयसि स्थित्वा ब्रह्मनिर्वाणं ब्रह्मणि निर्वाणं निर्वृतिं ब्रह्मरूपं निर्वाणमिति वा ऋच्छति गच्छत्यभेदेन किमु वक्तव्यं यो ब्रह्मचर्यादेव संन्यस्य यावज्जीवमस्यां ब्राह्म्यां स्थिताववतिष्ठते स ब्रह्मनिर्वाणमृच्छतीत्यपिशब्दार्थः ॥ ७२ ॥

ज्ञानं तत्साधनं कर्म सत्त्वशुद्धिश्च तत्फलम् ॥ तत्फलं ज्ञाननिष्ठैवेत्यध्यायेऽस्मिन्प्रकीर्तितम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीयपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां सर्वगीतार्थसूत्रणं नाम द्वितीयोऽध्यायः ॥ २ ॥

शं० टी०–मुमुक्षोर्यतेः श्रवणजन्यं ज्ञानं प्रपञ्चवासनाभिः कामक्रोधादिभिरहंममाद्यभिमानविशेषैश्च सप्रतिबन्धकं विदेहमुक्त्यै नालमिति निश्चित्य परमकृपालुः श्रीभगवान् समाधावचला बुद्धिः इति ब्रह्म-

निष्ठां प्रस्तुत्य निरन्तरं ब्रह्मनिष्ठया सर्वकामप्रहाणं कृतवतः शरीरयात्रादावपि ब्रह्मात्मना ब्रह्मणि तिष्ठतोऽहंममादिबन्धान्मुक्तवत एव विदुषो विदेहमुक्तिं प्रतिपाद्येदानीं मुमुक्षोरेषैव संपादनीया ह्यनयैव विदेहमुक्तिर्नान्यथेति सूचयन्नुपक्रान्तां ब्रह्मनिष्ठामुपसंहरति–एषेति । स्वस्वरूपं प्रकाश्य मुमुक्षुं संसारमृत्योः पातीति पः परमात्मा तमेवार्थयते वाञ्छतीति पार्थस्तस्य संबुद्धिः हे पार्थ मुमुक्षो ! त्वमिदं मयोच्यमानं शृणु श्रुत्वा कुरु । ब्राह्मी ब्रह्मप्राप्तेर्नियतकारणत्वाद्ब्राह्मी ब्रह्मप्रापिका स्थितिर्निष्ठा एषा मया प्रतिपादिता । मुमुक्षूणां विदेहकैवल्यार्थी ब्रह्मविन्मुमुक्षुरेनां प्रस्तुतां ब्रह्मनिष्ठां प्राप्यानुष्ठाय न मुह्यति विमोहाय न कल्पते । सर्वेषां प्राणिनामहमिति विशिष्टो मोहो यत्र स विमोहो देहस्तं न प्राप्नोति एतस्यां निष्ठायां स्थित्वा ब्रह्मवित्पुनर्देही न भवतीत्यर्थः । किंच पूर्वस्मिन्नेव वयसि प्रसिद्धसाधनो जन्मान्तरीयसंन्यासश्रवणादिपुण्यकर्मपरिपाकवशाद्विद्वानिह प्रारब्धविशेषबलेन किंचित्कालं संसृत्यान्तकाले चरमावस्थायामप्यस्यां निष्ठायां स्थित्वा निर्वाणं निष्क्रियं नित्यानन्दैकरसं ब्रह्म ऋच्छति मुक्तिं गच्छतीत्यर्थः । ' विज्ञाय चरमावस्थां देवताभ्यो नृपोत्तमः । खट्वाङ्गो नाम राजर्षिर्मुहूर्ते मुक्तिमेयिवान् ' इति प्रसिद्धेः । यत एवं ततो विदेहकैवल्यार्थिभिर्यतिभिर्बाह्ये प्रवृत्तिं परित्यज्यास्यामेव निष्ठायां सर्वदा स्थातव्यमिति सिद्धम् ।। ७२ ।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशङ्करानन्दसरस्वतीकृतौ गीतावाक्यतात्पर्यबोधिन्यां द्वितीयोऽध्यायः ।। २ ।।

**श्री० टी०**–उक्तां ज्ञाननिष्ठां स्तुवन्नुपसंहरति–**एषेति** । ब्राह्मी स्थितिः ब्रह्मज्ञाननिष्ठा एषा एवंविधा एनां परमेश्वराराधनेन विशुद्धान्तःकरणः पुमान् प्राप्य न विमुह्यति पुनः संसारमोहं न प्राप्नोति । यतः अन्तकाले मृत्युसमयेऽपि अस्यां क्षणमात्रमपि स्थित्वा ब्रह्मणि निर्वाणं लयमृच्छति प्राप्नोति किं पुनर्वक्तव्यं बाल्यमारभ्य स्थित्वा प्राप्नोतीति ।। ७२ ।।

शोकपङ्कनिमग्नं यः सांख्ययोगोपदेशतः ।। उज्जहारार्जुनं भक्तं स कृष्णः शरणं मम ।। १ ।।

इति श्रीमद्भगवद्गीताटीकायां सुबोधिन्यां द्वितीयोऽध्यायः ।। २ ।।

**स० टी०**–एवं चतुर्णां प्रश्नानामुत्तरव्याजतोऽत्र च ।। तत्त्वविल्लक्षणान्येतान्यखिलानि मुमुक्षुणा ।।१।। प्रकर्तव्यतयोक्तानि जीवन्मुक्त्यैकसिद्धये ।। स्तूयते ज्ञाननिष्ठेयमधुनात्रोपसंहृतौ ।। २ ।। एषा यथोक्ता ब्राह्मी या ब्रह्माद्वैतैकगोचरा ।। निष्ठा च कर्मसंन्यासपूर्विका ज्ञानलक्षणा ।। ३ ।। एतां ब्राह्मीं स्थितिं प्राप्य यः कोऽपि न विमुह्यति ।। मोहहेतोरविद्याया बाधितत्वान्न संभवः ।।४।। अस्यामन्त्येऽपि वयसि स्थितौ स्थित्वातिनिश्चलाम् ।। ब्रह्मात्मनिर्वृतिं नित्यां मोक्षाख्यामाधिगच्छति ।। ५ ।। किमुवाच ब्रह्मचर्यादेव सन्यस्य यः पुमान् ।। यावज्जीवं स्थितावस्यां ब्राह्म्यामेवावतिष्ठते ।। ६ ।। स याति ब्रह्मनिर्वाणमित्यपेराशयो हरेः ७।७२

आदित आरभ्य टीकाश्लोकसंख्या ।। ९४७ ।।

बन्धोच्छेद्यात्मबोधं तदनु मति मलोच्छेदनार्थं स्वधर्मं तज्जां शुद्धिं ततोऽद्धाऽखिलकरणफलं ज्ञाननिष्ठां परेष्टाम् ।। यो भक्ताय प्रियायावददमलयशाः श्रीपतिर्धर्मगोप्ता स श्रीकृष्णोऽखिलस्य भ्रमतिमिरहरो भातु भास्वान्ममान्तः ।। १ ।। १७२ ।।

इति भावप्रकाशे श्रीसदानन्दविदाकृते ।। गीतार्थसूत्रणं नाम द्वितीयः पूर्णतां गतः ।। १७३ ।।

**भा० टी०**–ज्ञाननिष्ठां स्तुवन्नुपसंहरति–**एषेति** । एषा यथोक्ता ब्रह्मणि भवा स्थितिः सर्वं परित्यज्य ब्रह्मरूपेणैवावस्थानमिति यावत् "ब्रह्मविद्ब्रह्मैव भवति" इतिश्रुत्या ब्रह्मशब्देनात्र ब्रह्मविद्गृह्यत इति व्याख्या-

नं त्वाचार्यैर्न कृतं मुख्यार्थेन वाक्यार्थनिर्वाहेऽमुख्यार्थस्यानौचित्यात् । एनां स्थितिं लब्ध्वा न विमुह्यति मोहं न प्राप्नोति । अस्यां ब्राह्म्यां स्थितावन्तकाले वृद्धावस्थायामपि स्थित्वा ब्रह्मणि निर्वृतिं मोक्षमृच्छति गच्छति किं वक्तव्यं प्रथमावस्थात आरभ्य ब्रह्मण्येव योऽवतिष्ठते स ब्रह्मनिर्वाणमृच्छतीति । अन्तकाले मृत्युसमये इत्यर्थस्तु न तस्मिन्काले एतादृशस्थित्यसंभवात् नतु तदा विवशस्य स्मरणोद्यमः संभवतीति यंयं वापीति श्लोकस्थस्वोक्तिविरोधाच्च । ब्रह्मणि निर्वाणमिति भाष्यस्योपलक्षणत्वेन ब्रह्मरूपं निर्वाणमित्यर्थोऽप्यविरुद्धः निर्गतं यानं गमनं यस्मिन्नित्यर्थोऽपि तवाप्ययं शोकमोहाभिभूतत्वरूपः स्वभावो नोचितः किंतु जीवन्मुक्तस्वभाव एवेति सूचयन्नाह—पार्थेति । यद्वा मत्संबन्धिनस्तव मयि ब्रह्मण्येवावस्थानं युक्तमिति सूचयन्नाह—पार्थेति । तदनेन द्वितीयाध्यायेन तत्पदलक्ष्यं परमात्मानमेव त्वंपदलक्ष्यत्वेन प्रतिपादयता साक्षाच्छोकमोहनिवृत्तिहेतुभूतां ज्ञाननिष्ठां लक्षणसहितां प्राधान्येन तदुपायभतां योगनिष्ठां च गुणभावेन प्रदर्शयता उपायोपेयभूतं निष्ठाद्वयं प्रकाशितम् ॥ ७२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां द्वितीयोऽध्यायः ॥ २ ॥

**प० टी०**—अथोपसंहरन्नाह—**एषेति** । एषोक्तलक्षणा ब्राह्मी स्थितिर्ब्रह्माकारेणावस्थितिरुपन्यस्ता । एनां प्राप्य न मुह्यति पुनर्मोहं न प्राप्नोति । अस्यामन्तकाले देहावसाने क्षणं स्थित्वापि ब्रह्मनिर्वाणमृच्छति प्राप्नोति किं पुनर्यावज्जीवमित्यर्थः ॥ ७२ ॥

अथाध्यायतात्पर्यम् ।

शोको देहात्मबुद्ध्या ननु भवति मृषा येन देहातिरिक्तो देहद्रष्टैक आत्मा विभुरनुपहतो हन्तृहन्यत्वशून्यः ॥ तस्य ज्ञानान्न शोकस्तदिह निजमनःशुद्धितः सा स्वधर्माद्विदोक्तः स द्वितीये भृशमिममवदत्सांख्ययोगाधिकारम् ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां श्रीमद्भगवद्गीताटीकायां परमार्थप्रपायां सांख्ययोगो नाम द्वितीयोऽध्यायः ॥ २ ॥

**रा टी०**—प्रजहातीत्यादिनोक्तं ज्ञानिलक्षणप्रकरणं समापयति—**एषेति** । एषा प्रजहातीत्यादिनोपक्रान्ता या निशेत्यत्र निष्कृष्योक्ता ब्राह्मी ब्रह्मविषया स्थितिः सर्वकामप्रहाणनित्यभगवदनुस्मृत्यादिरूपब्रह्मज्ञानिलक्षणरूपा स्थितिरिति यावत् । एनामुक्तरूपां स्थितिं प्राप्य न मुह्यति भववेदनानुभववान्न भवति । अन्तकालेपि देहत्यागकालेपि अस्यां भगवदनुस्मृत्यादिरूपस्थित्यां स्थित्वा निर्वाणं प्राकृतशरीरहीनं ब्रह्म ऋच्छति प्राप्नोति । प्रारब्धकर्माभावे यद्देहे ज्ञानोदयस्तद्देहत्यागकाले भगवदनुस्मृत्या तद्देहपातानन्तरमेव मुक्तिः प्रारब्धसत्वे तु देहान्तरं प्राप्येति भावः । तथाच सूत्रम् "भोगेन त्वितरे क्षपयित्वाथ संपत्स्यते" इति । ब्रह्मपदेन विरिञ्चोपादानव्यावृत्त्यर्थं निर्वाणमिति विशेषणं परब्रह्मप्राप्तेरेव मोक्षत्वादिति भावः ॥ ७२ ॥

इति श्रीमद्राघवेन्द्रयतिकृते श्रीमद्भगवद्गीतार्थसंग्रहे द्वितीयोऽध्यायः ॥ २ ॥



## तृतीयोऽध्यायः ॥ ३ ॥

**अर्जुन उवाच—ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन ॥**
**तत्किं कर्मणि घोरे मां नियोजयसि केशव ॥ १ ॥**

**त० टी०**—एवं तावदर्जुनस्यात्मतत्त्वोपदेशनिमित्तशोकमोहप्रदर्शनायोपोद्घाततत्वेन प्रथमाध्यायो निरूपितस्ततः शोकमोहनिवृत्तये देहात्मविवेकस्तत्साधनभूतासङ्गकर्मयोगसत्त्वशुद्धिपूर्वकभगवदाश्रयणसाध्यसर्वेन्द्रियसंयमस्ततः स्थितप्रज्ञता तत्फलं सर्वदुःखनिवृत्तिपूर्वकपरमा शान्तिरिति सर्वगीताशास्त्रार्थः संक्षेपेण द्वितीयाध्याये निरूपितः। तत उक्तार्थस्यैव षोडशाध्यायैर्विस्तरः कृतो बोध्यः। तत्र तावत्पूर्वाध्याये अशोच्यानन्वशोचस्त्वमिति श्लोकेनात्मज्ञानहीनं मां कुत्सयित्वा न त्वेवाहमित्यारभ्य एषा तेऽभिहिता सांख्ये बुद्धिरित्यन्तेन शोकविनाशोपायं ज्ञानयोगं मह्यमुपदिश्य पुनः योगे त्विमां शृणु इत्युक्त्वा कर्मण्येवाधिकारस्ते, मा ते सङ्गोऽस्त्वकर्मणि, योगस्थः कुरु कर्माणि इत्यादिना कर्मनिष्ठामुपादेयतयाऽभिधाय, श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला इत्यादिना समाधिनिष्ठामुपदिश्य, स्थितप्रज्ञलक्षणे सर्वकामत्यागपूर्वकसर्वेन्द्रियसंयममात्मनैव सन्तुष्टत्वं चोक्त्वा या निशेत्यादिना एषा ब्राह्मी स्थितिः पार्थ, स्थित्वास्यामन्तकालेऽपि ब्रह्मनिर्वाणमृच्छति इति ज्ञानफलेनोपसंहारात्। मध्येऽभिहितायाः कर्मबुद्धेः सकाशात् ज्ञाननिष्ठाया ज्यायस्त्वं भगवतोऽभिप्रेतमिति प्रतीयते। एवं सति सर्वज्ञो हितोपदेष्टा गुरुर्भगवान्निकृष्टे कर्माधिकारे मां कथं नियोजयतीति संदिह्य, पृच्छति। अर्जुन उवाच—ज्यायसी चेदिति। हे जनार्दन श्रेयोर्थिभिः सर्वैर्भक्तैः स्वस्याभीष्टमर्द्यते याच्यते तथाभूतस्त्वं मयाऽपि स्वश्रेयःसाधननिश्चयार्थं याच्यते इत्यर्थः। कर्मणः सकाशात् बुद्धिर्ज्ञानयोगाख्या मोक्षहेतुत्वेन ज्यायसी श्रेष्ठतरा चेद्यदि ते तव मता तत्तर्हि किं किमर्थं घोरे हिंसाबहुले युद्धाख्ये कर्मणि मां त्वदेकशरणं नियोजयसि कर्मण्येवाधिकारस्ते इत्यादिना प्रेरयसि। हे केशव! ब्रह्मशिवादीनामीश्वर! त्वया भक्तस्य मम बुद्धिव्यामोहो न कर्तव्य इत्यभिप्रायः॥ १॥

**म० टी०**—एवं तावत्प्रथमेनाध्यायेनोपोद्घातितो द्वितीयेनाध्यायेन कृत्स्नः शास्त्रार्थः सूत्रितः। तथाहि आदौ निष्कामकर्मनिष्ठा ततोऽन्तःकरणशुद्धिस्ततः शमदमादिसाधनपुरस्सरः सर्वकर्मसंन्यासस्ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा ततस्तत्त्वज्ञाननिष्ठा तस्याः फलं च त्रिगुणात्मकाविद्यानिवृत्त्या जीवन्मुक्तिः प्रारब्धकर्मफलभोगपर्यन्तं तदन्ते च विदेहमुक्तिः जीवन्मुक्तिदशायां च परमपुरुषार्थालम्बनेन परवैराग्यप्राप्तिः दैवसंपदाख्या च शुभवासना तदुपकारिण्यादेया आसुरसंपदाख्या त्वशुभवासना तद्विरोधिनी हेया दैवसंपदोऽसाधारणं कारणं सात्त्विकी श्रद्धा आसुरसंपदस्तु राजसी तामसी चेति हेयोपादेयविभागेन कृत्स्नशास्त्रार्थपरिसमाप्तिः। तत्र योगस्थः कुरु कर्माणीत्यादिना सूत्रिता सत्त्वशुद्धिसाधनभूता निष्कामकर्मनिष्ठा सामान्यविशेषरूपेण तृतीयचतुर्थाभ्यां प्रपञ्च्यते। ततः शुद्धान्तःकरणस्य शमदमादिसाधनसंपत्तिपुरस्सरा विहाय कामान्यः सर्वानित्यादिना सूत्रिता सर्वकर्मसंन्यासनिष्ठा संक्षेपविस्तररूपेण पञ्चमषष्ठाभ्याम्। एतावता च त्वम्पदार्थोऽपि निरूपितः। ततो वेदान्तवाक्यविचारसहिता युक्त आसीत मत्पर इत्यादिना सूत्रितानेकप्रकारा भगवद्भक्तिनिष्ठाध्यायषट्केन प्रतिपाद्यते। तावता च तत्पदार्थोऽपि निरूपितः। प्रत्यध्यायं चावान्तरसङ्गतिमवान्तर-

प्रयोजनभेदं च तत्र तत्र प्रदर्शयिष्यामः । ततस्त्त्वंपदार्थैक्यज्ञानरूपा वेदाविनाशिनं नित्यमित्यादिना सूत्रिता तत्त्वज्ञाननिष्ठा त्रयोदशे प्रकृतिपुरुषविवेकद्वारा प्रपञ्चितज्ञाननिष्ठायाश्च फलं त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुनेत्यादिना सूत्रिता त्रैगुण्यनिवृत्तिश्चतुर्दशे सैव जीवन्मुक्तिरिति गुणातीतलक्षणकथनेन प्रपञ्चिता तदा गन्तासि निर्वेदमित्यादिना सूत्रिता परमवैराग्यनिष्ठा संसारवृक्षच्छेदद्वारेण पञ्चदशे दुःखे ष्वनुद्विग्नमना इत्यादिना स्थितप्रज्ञलक्षणेन सूत्रिता परवैराग्योपकारिणी दैवी संपदादेया यामिमां पुष्पितां वाचमित्यादिना सूत्रिता तद्विरोधिन्यासुरी सम्पच्च हेया षोडशे दैवसंपदोऽसाधारणं कारणं च सात्त्विकी श्रद्धा निर्द्वन्द्वो नित्यसत्त्वस्थ इत्यादिना सूत्रिता तद्विरोधपरिहारेण सप्तदशे एवं सफला ज्ञाननिष्ठा अध्यायपञ्चकेन प्रतिपादिता अष्टादशेन च पूर्वोक्तसर्वोपसंहार इति कृत्स्नगीतार्थसङ्गतिः । तत्र पूर्वाध्याये साङ्ख्यबुद्धिमाश्रित्य ज्ञाननिष्ठा भगवतोक्ता एषा तेभिहिता सांख्ये बुद्धिरिति तथा योगबुद्धिमाश्रित्य कर्मनिष्ठोक्ता योगे त्विमां शृण्वित्यारभ्य कर्मण्येवाधिकारस्ते मा ते सङ्गोऽस्त्वकर्मणीत्यन्तेन न चानयोर्निष्ठयोरधिकारिभेदः स्पष्टमुपदिष्टो भगवता । न चैकाधिकारिकत्वमेवोभयोः समुच्चयस्य विवक्षितत्वादिति वाच्यं दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जयेति कर्मनिष्ठायाः बुद्धिनिष्ठापेक्षया निकृष्टत्वाभिधानात् यावानर्थ-उदपाने इत्यत्र च ज्ञानफले सर्वकर्मफलान्तर्भावस्य दर्शितत्वात् स्थितप्रज्ञलक्षणमुक्त्वा च एषा ब्राह्मी स्थितिः पार्थेति सप्रशंसं ज्ञानफलोपसंहारात् । या निशा सर्वभूतानामित्यादौ ज्ञानिनो द्वैतदर्शनाभावेन कर्मानुष्ठानासंभवस्य चोक्तत्वाद् । अविद्यानिवृत्तिलक्षणे मोक्षफले ज्ञानमात्रस्यैव लोकानुसारेण साधनत्वकल्पनात् "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेश्च । ननु तर्हि तेजस्तिमिरयोरिव विरोधिनोर्ज्ञानकर्मणोः समुच्चयासंभवाद्भिन्नाधिकारिकत्वमेवास्तु सत्यमेवं संभवति एकमर्जुनं प्रति तूभयोपदेशो न युक्तः नहि कर्माधिकारिणं प्रति ज्ञाननिष्ठोपदेष्टुमुचिता न वा ज्ञानाधिकारिणं प्रति कर्मनिष्ठा । एकमेव प्रति विकल्पेनोभयोपदेश इति चेन्न, उत्कृष्टनिकृष्टयोर्विकल्पानुपपत्तेः । अविद्यानिवृत्त्युपलक्षितात्मस्वरूपे मोक्षे तारतम्यासंभवाच्च । तस्माज्ज्ञानकर्मनिष्ठयोर्भिन्नाधिकारिकत्वे एकं प्रत्युपदेशायोगादेकाधिकारिकत्वे च विरुद्धयोः समुच्चयासंभवात्कर्मापेक्षया ज्ञानप्राशस्त्यानुपपत्तेश्च विकल्पाभ्युपगमे चोत्कृष्टमनायाससाध्यं ज्ञानं विहाय निकृष्टमनेकायासबहुलं कर्मानुष्ठातुमयोग्यमिति मत्वा पर्याकुलीभूतबुद्धिः हे जनार्दन! सर्वैर्जनैरर्द्यते याच्यते स्वाभिलषितासिद्ध्य इति त्वं तथाभूतो मयापि श्रेयोनिश्चयार्थं याच्यस इति नैवानुचितमिति संबोधनाभिप्रायः । कर्मणो निष्कामादपि बुद्धिरात्मतत्त्वविषया ज्यायसी प्रशस्ततरा चेद्यदि ते तव मता तत्तदा किं कर्मणि घोरे हिंसाद्यनेकायासबहुले मामतिभक्तं नियोजयसि कर्मण्येवाधिकारस्त इत्यादिना विशेषेण प्रेरयसि हे केशव सर्वेश्वर! सर्वेश्वरस्य सर्वेष्टदायिनस्तव मां भक्तं शिष्यस्तेहं शाधि मामित्यादिना त्वदेकशरणतयोपसन्नं प्रति प्रतारणा नोचितेत्यभिप्रायः ॥ १ ॥

**शं० टी०—** न त्वेवाहं जातु नासमित्यात्मानात्मविवेचनमुपक्रम्य न जायते म्रियते वा इत्यादिना सम्यगात्मतत्त्वं निर्धार्य वेदाविनाशिनमित्यादिना ब्रह्मविदः सर्वकर्मसंन्यासमुक्त्वा तस्यैव प्रजहातीत्यारभ्य स शान्तिमाप्नोतीत्यन्तेन ग्रन्थेन ब्रह्मनिष्ठां तत्फलं च मोक्षं प्रतिपाद्य न कामकामीति कामकामिनो मोक्षाभावः प्रतिपादितस्तेन सर्वकर्मसंन्यासपूर्वकं ब्रह्मनिष्ठया मोक्षः संपादनीय इति सर्वेषां प्रवृत्तौ संप्रसक्तायाम् 'विरक्तः प्रव्रजेद्धीमान् सरक्तस्तु गृहे वसेत् । सरागो नरकं याति प्रव्रजन् हि द्विजाधमः ॥ यदा मनसि संजातं वैतृष्ण्यं सर्ववस्तुषु । तदा संन्यासमिच्छन्ति पतितः स्याद्विपर्यये ॥ प्रवृत्तिलक्षणं कर्म ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ॥ यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् । तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत् ॥ अहमेव परं ब्रह्म

वासुदेवाख्यमव्ययम् । इति बोधो दृढो यस्य तदा भवति भैक्ष्यभुक् ॥ प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोपि स कैवल्याश्रमे वसेत् ॥ अनधीत्याखिलान्वेदानानिष्ट्वैवाखिलान् सुरान् । अनुत्पाद्य सुतान् विप्रो न संन्यसितुमर्हति ॥ अकुर्वन् विहितं कर्म निन्दितं च समाचरन् । प्रचरन्निन्द्रियार्थेषु नरः पतनमृच्छति ॥ ज्ञात्वा नैष्कर्म्यमाचरेत् सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः' " ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति 'परं ब्रह्म परिज्ञाय प्रव्रजेद्ब्राह्मणोत्तमः । अन्यथा कर्म कुर्वीत न प्रमाद्येत कर्हिचित् ॥ स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपरीतस्तु दोषः स्यादुभयोरेष निश्चयः' इत्यादिश्रुतिस्मृतिवचनेभ्यो ह्यधिकारिणामेव संन्यासो नानधिकारिणाम् 'अन्यथा कृत्वा पतिष्यन्ति' इति ज्ञानकर्मयोगयोरधिकार्यादिभेदेन भेद एवेति तयोर्विभागं दर्शयितुं चानधिकारिणां कर्मैव चित्तशुद्धिद्वारा मोक्षसाधनं तदेवावश्यं कर्तव्यमिति बोधयितुं च तृतीयाध्याय आरभ्यते । तत्रादौ कर्मण्येवाधिकारस्ते मा फलेषु कदा च नेति तव कर्मण्येवाधिकारो नान्यत्रेत्यवधारणपूर्वकं कर्म विधाय 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनञ्जय । बुद्धौ शरणमन्विच्छ' इति ज्ञानयोगात्कर्मयोगो निकृष्टस्ततो ज्ञानयोगमेवाश्रयेति ज्ञानयोगविधानाच्च तेन व्याकुलीभूतान्तरात्मा भूत्वार्जुनः स्वयम् दूरेण ह्यवरं कर्मेतिवचनार्थमेव मनसि निधाय कर्मयोगाज्ज्ञानयोगस्य साक्षान्मोक्षसाधनत्वेन विशिष्टतरत्वं मन्यमान इदमुवाच—**ज्यायसीति** । जनं जननं तत्कारणमज्ञानं च स्वसाक्षात्कारेणार्दयति हिनस्तीति जनार्दनस्तस्य संबुद्धिर्हे ! जनार्दन कर्मणः कर्मयोगाद्बुद्धिर्ज्ञानयोग एव ज्यायसी श्रेष्ठेति ते मताभिमता चेत्किं किमर्थम् कर्मण्येवाधिकारस्ते इति मां कर्मणि ज्ञानान्निकृष्टे नियोजयसि तत्रापि घोरे हिंसात्मके तस्माद्युध्यस्व भारतेति चोदयसि भवानीश्वरस्तव वचनमलङ्घ्यं मां भक्तमनुरक्तं च योग्यमर्थं त्याजयित्वाऽयोग्यार्थे प्रेषयसीत्यर्थः ॥ १ ॥

**श्री० टी०**—एवं तावदशोच्यानन्वशोचस्त्वमित्यादिना प्रथमं मोक्षसाधनत्वेन देहात्मविवेकबुद्धिरुक्ता । तदनन्तरम् एषा तेऽभिहिता सांख्ये बुद्धिर्योगेत्विमां शृणु इत्यादिना कर्म चोक्तं न च तयोर्गुणप्रधानभावः स्पष्टं दर्शितः । तत्र बुद्धियुक्तस्य स्थितप्रज्ञस्य निष्कामत्वनियतेन्द्रियत्वनिरहंकारत्वाद्यभिधानात् एषा ब्राह्मी स्थितिः पार्थ इति सप्रशंसमुपसंहाराच्च बुद्धिकर्मणोर्मध्ये बुद्धेः श्रैष्ठ्यं भगवतोऽभिमतं मन्वानोऽर्जुन उवाच—**ज्यायसी चेदिति** । कर्मणः सकाशान्मोक्षान्तरङ्गत्वेन बुद्धिर्ज्यायसी अधिकतरा श्रेष्ठा चेत्तव संमता तर्हि किमर्थं तद्युद्धचस्वेति तस्मादुत्तिष्ठेति च वारंवारं वदन् घोरे हिंसात्मके कर्मणि मां नियोजयसि प्रवर्तयसि ॥ १ ॥

**स० टी०**—महीभारोद्धारं सुजनपरिवारं सुरगुरुं गुणाधारं सारं निरवधिविहारं रसरसम् ॥ परप्रेमागारव्रजभुवि सुचारं कलपदं हरिं वारंवारं हृदि गतमुदारं सुकलये ॥ १ ॥ पूर्वाध्याये समाश्रित्य सांख्यबुद्धिं विपश्चिताम् ॥ ज्ञाननिष्ठा विभज्योक्ता हरिणा विजयं प्रति ॥ २ ॥ एषा तेऽभिहिता सांख्ये बुद्धिरित्यादिना स्फुटम् ॥ योगबुद्धिं समाश्रित्य कर्मनिष्ठाप्युदाहृता ॥ ३ ॥ योगे त्विमां शृण्वित्यादौ कर्मण्येवेति चान्ततः ॥ नानयोर्निष्ठयोः स्पष्टमधिकारभिदोदिता ॥ ४ ॥ नैकाधिकारिकत्वं वोभयोः प्रोक्तं यतोऽनयोः ॥ परस्परविरुद्धत्वं तेजस्तिमिरयोरिव ॥ ५ ॥ दूरेण ह्यवरं कर्म बुद्धियोगादिति स्फुटम् ॥ कर्मणां बुद्धिनिष्ठायाः सकाशान्न्यूनतोदिता ॥ ६ ॥ यावानर्थ उदपान इति ज्ञानफले परे ॥ सर्वकर्मफलानां चाप्यन्तर्भावः प्रदर्शितः ॥ ७ ॥ स्थितधीलक्षणं प्रोच्याध्यायान्ते धीप्रशंसया ॥ एषा ब्राह्मीति विज्ञानफलेनैवोपसंहृतिः ॥ ८ ॥ या निशा सर्वभूतानामित्यादौ तत्त्ववेदिनः ॥ द्वैतदृष्टेरभावाच्चानुष्ठाना-

संभवः क्षितौ ॥ ९ ॥ भिन्नाधिकारिकत्वे चाप्यनयोर्ज्ञानकर्मणोः ॥ एककर्तृकनिर्देशः स्यादयोग्यस्तदा किल ॥ १० ॥ एकाधिकारिकत्वे तु विरोधान्न समुच्चयः ॥ संभवेद्युगपत्तत्र तथा सत्यपि च द्वयोः ॥ ११ ॥ नैव स्याज्ज्ञानप्राशस्त्यवचनं तदपेक्षया ॥ विकल्पस्वीकृतौ श्रेष्ठं ज्ञानं सुकरमासुखम् ॥ १२ ॥ त्यक्त्वा निकृष्टमायासबहुलं कर्म नश्वरम् ॥ अयोग्यं स्यादनुष्ठातुमिति मत्वाऽऽकुलेऽर्जुनः ॥ १३ ॥ हे जनार्दन नाम्नैव त्वं प्रार्थ्योऽसीत्युवाच ह ॥ यतस्त्वं याच्यसे सर्वैः स्वाभिवाञ्छितसिद्धये ॥ १४ ॥ तथाभूतो मयापि त्वं स्वश्रेयोनिश्चयेऽर्थ्यसे ॥ आत्मतत्त्वैकविषयान्निष्कामादपि कर्मणः ॥ १५ ॥ सुप्रशस्ततरा बुद्धिर्यदि तेऽभिमता तदा ॥ हिंसाद्यायासबहुले भक्तं मां क्रूरकर्मणि ॥ १६ ॥ कर्मण्येवाधिकारस्त इत्यारभ्य विशेषतः ॥ किमर्थं प्रेरयस्येवं हे सर्वेश्वर केशव ॥ १७ ॥ शिष्यत्वेन प्रपन्नं मामनन्यशरणं प्रति ॥ सर्वेश्वरस्य कृष्णस्य नोचिता ते प्रतारणा ॥ १८ ॥ १ ॥

भा० टी०–पूर्वाध्याये उपायोपेयभूते कर्मनिष्ठा ज्ञाननिष्ठा चेति द्वे निष्ठे प्रोक्ते तत्र प्रजहातीत्यादिना एषा ब्राह्मीत्यन्तेन ज्ञाननिष्ठाऽत्युत्तमेत्यभिहितं तदेव श्रुत्वाऽर्जुनः फलभूतायां ज्ञाननिष्ठायामत्युत्कण्ठितः स्वस्यापि चित्तशुद्धिपुरःसरं ज्ञानाधिकारं मन्यमान उवाच–**ज्यायसीति**। जनान्देवविपक्षभूतानर्दयति पीडयतीति जनार्दनः तं संबोधयन् ममासुरत्वाभावाद् घोरे कर्मणि प्रेरणेन पीडादातृत्वं तवानुचितमिति सूचयति। यदि निष्कामकर्मणः सकाशादपि बुद्धिर्ज्ञानं श्रेष्ठं तवाभिमतं तर्हि कस्माद् घोरे हिंसाप्रधाने क्रूरे कर्मणि मां स्वभक्तम् तस्माद्युध्यस्व इत्यादिना नियोजयसि प्रेरयसि। हे केशव ब्रह्मादिमनुकम्पार्थं गच्छतीति तथा संबोधयन् मामपि स्वभक्तं प्रति केशवो भव नतु जनार्दन इति द्योतयति ॥ १ ॥

प० टी०–पूर्वं कर्मण्येवाधिकारस्त इत्यादिवाक्यैः कर्मप्रशंसा कृतानन्तरं स्थितप्रज्ञस्येत्यादिवाक्यैर्यावदध्यायसमाप्तिस्तावद्बुद्धियोगप्रशंसा कृता। एवमुभयोः प्रशंसने संदिहानोऽर्जुनः पृच्छति–**ज्यायसी चेदिति** द्वाभ्याम्। भो जनार्दन ते तव कर्मणः कर्मयोगात्सकाशान्मतिर्बुद्धिर्ज्यायसी श्रेष्ठा मता ज्ञानयोगः श्रेष्ठ इत्यभिमतं चेत्तर्हि मां घोरेऽतिप्रयासे कर्माणि कथं नियोजयस्याज्ञापयासि ॥ १ ॥

रा० टी०–एषा तेऽभिहिता सांख्ये इत्यन्तेन नत्वेवाहमित्यादिना ग्रन्थेन जीवेश्वरस्वरूपमुक्त्वा तज्ज्ञानोपायं च योगे त्विमां शृणिवति प्रतिज्ञापूर्वं त्रैगुण्यविषया वेदा इत्यादिनोक्त्वा कर्मजं बुद्धियुक्ता हीत्यादिना किंचित्प्रपञ्चनं तस्य कृतं पूर्वाध्याये। अत्र तु पूर्वोक्तस्यैव निवृत्तकर्मरूपज्ञानोपायशब्दितं योगस्यावश्यकार्यताज्ञापनरूपं प्रपञ्चनं प्राचुर्येण क्रियत इति पूर्वोत्तराध्याययोः पौर्वापर्यं ध्येयम्। दूरेण ह्यवरं कर्मेत्युक्ते लब्धावसरः पृच्छति दुरेण ह्यवरं कर्म बुद्धियोगात्, कृपणाः फलहेतव इत्यादिनोक्तदिशा बुद्धिः कर्मणः सकाशात् ज्यायसी चेत् श्रेष्ठा यदि हे जनार्दन ते तव मता तत् तर्हि कर्मणि किं किमर्थं मां नियोजयसीत्येकः प्रश्नः। तत्रापि घोरे रागद्वेषाद्युपेते युद्धाख्ये कर्मणि किमर्थं नियोजयसीत्यन्यः। अत्र केशवशब्दार्थ उक्तः प्रथमाध्याये। न जायते अर्दयति च संसारमिति दशमभाष्ये नञः परनिपातः अत एव नलोपाभावः। उत्तरपदे परतः तस्य स्मरणात् इति तट्टीकोक्तदिशा च जनार्दनशब्दार्थो ध्येयः। अयं भावः। "सर्व एते पुण्यलोका भवन्ति" इत्यादि फलश्रवणेन सर्वकर्मणां हतो वा प्राप्स्यसे स्वर्गमित्यादियुद्धस्यापि काम्यत्वात्तेषां च बुद्धियोगादवरत्वात्। यत्याश्रमविहितानां शमादीनां फलाश्रवणेनाकाम्यत्वात् शान्तो दान्त इत्युपक्रम्यात्मानं पश्येदिति ज्ञानार्थत्वश्रवणाच्च यत्याश्रमं स्वीकृत्य तद्धर्मनिष्ठो भवेत्येव नियोक्तव्यं नतु काम्यकर्मणि युद्धे युद्ध्यस्व भारतेति नियोजनं युक्तमिति ॥ १ ॥

**व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे ॥**
**तदेकं वद निश्चित्य येन श्रेयोऽहमाप्नुयाम् ॥ २ ॥**

**त० टी०**—ननु नाहं त्वद्बुद्धिं मोहयामि त्वं मे किं व्यामोहकत्वं पश्यसि तद्वदेति चेत्तत्राह—**व्यामिश्रेणैवेति** । न त्वेवाहमित्यादिना ज्ञाननिष्ठामुपदिश्य योगस्थः कुरु कर्माणीति कर्मनिष्ठां चोपदिश्य पुनरन्ते ज्ञाननिष्ठामेव सप्रशंसं यदुपदिष्टवान् भवांस्तत्ते वाक्यमधिकारिभेदाप्रतिपादनेन मदेकविषयत्वाद्व्यामिश्रमेव संकीर्णार्थं सन्देहोत्पादकमिति यावत्, तेन व्यामिश्रेणैव वाक्येन मम बुद्धिं मोहयसीव । यद्यपि महाकारुणिकस्य सर्वसुहृदो गुरोस्तव मोहकत्वं नास्त्येव, तथाऽपि तव वाक्यार्थानिश्चयान्ममैव तथा भातीतीवशब्दाभिप्रायः । यस्मादेवं तस्मादेकं ज्ञानं कर्म वा निश्चित्य वद येनानुष्ठितेनाहं श्रेयोऽर्थी श्रेय आप्नुयां प्राप्नुयाम् ॥ २ ॥

**म० टी०**—ननु नाहं कंचिदपि प्रतारयामि किं पुनस्त्वामतिप्रियं त्वं तु किं मे प्रतारणाचिह्नं पश्यसीति चेत् तत्राह—**व्यामिश्रेणेति** । तव वचनं व्यामिश्रं न भवत्येव मम त्वेकाधिकारिकत्वभिन्नाधिकारिकत्वसन्देहाद्व्यामिश्रं सङ्कीर्णार्थमिव ते यद्वाक्यं मां प्रति ज्ञानकर्मनिष्ठाद्वयप्रतिपादकं तेन वाक्येन त्वं मे मम मन्दबुद्धेर्वाक्यतात्पर्यापरिज्ञानाद् बुद्धिमन्तःकरणं मोहयसीव भ्रान्त्या योजयसीव परमकारुणिकत्वात्त्वं न मोहयस्येव मम तु स्वाशयदोषान्मोहो भवतीतीवशब्दार्थः । एकाधिकारित्वे विरुद्धयोः समुच्चयानुपपत्तेरेकार्थत्वाभावेन च विकल्पानुपपत्तेः प्रागुक्तेर्यद्यधिकारिभेदं मन्यसे तदैकं मां प्रति विरुद्धयोर्निष्ठयोरुपदेशायोगात् तत् ज्ञानं वा कर्म वा एकमेवाधिकारं मे निश्चित्य वद येनाधिकारनिश्चयपुरःसरमुक्तेन त्वया मया चानुष्ठितेन ज्ञानेन कर्मणा चैकेन श्रेयो मोक्षमहमाप्नुयां प्राप्तुं योग्यः स्याम् । एवं ज्ञानकर्मनिष्ठयोरेकाधिकारित्वे विकल्पसमुच्चययोरसंभवादधिकारिभेदज्ञानायार्जुनस्य प्रश्न इति स्थितम् ॥ इहेतरेषां कुमतं समस्तं श्रुतिस्मृतिन्यायबलान्निरस्तं पुनः पुनर्भाष्यकृतातियत्नादतो न तत्कर्तुमहं प्रवृत्तः ॥ भाष्यकारमतसारदर्शिना ग्रन्थमात्रमिह योज्यते मया । आशयो भगवतः प्रकाश्यते केवलं स्ववचसो विशुद्धये ॥ २ ॥

**शं० टी०**—किंच—**व्यामिश्रेणेति** । कर्मण्येवाधिकारस्ते इति 'बुद्धौ शरणमन्विच्छ' इति चैवंलक्षणेन व्यामिश्रेणेव क्षीरनीरयोरिव द्वयोर्मेलनं व्यामिश्रं तेनेव ज्ञानकर्मणोः समुच्चयवतैव वाक्येन मम बुद्धिं मोहयसीव मां कर्मणि नियोजयसि । यद्यपि युद्धं कर्तव्यं वा त्यक्तव्यं वेति संशयालोस्त्वां शरणं गतस्य मम भ्रमापनयनाय भवान् दयया प्रवृत्तो नतु मोहनाय तथापि विवेकविकलस्य जडात्मनो मम भवद्वचनं व्यामिश्रमिव भाति तेन व्यामिश्रवाक्येन मम बुद्धिं मोहयसीव प्रतीयते तदपि मम बुद्धिदोष एवेति भावः । तर्हीदानीं किं कर्तव्यमित्यत आह—**तदेकमिति** । ज्ञानकर्मणोः क्रियाकारकफलभेदेन विपरीतयोरेककर्तृत्वासंभवात्तयोरेकं ज्ञानं वा कर्म वा मदधिकारानुरूपं तत्र मम योग्यत्वमयोग्यत्वं च विचार्य इदमेवास्याहमिति निश्चित्य वद येन ज्ञानेन वा कर्मणा तयोरेकतरेण वाहं साक्षात्परंपरया वा श्रेयः परमपुरुषार्थं प्राप्नुयाम् ॥ २ ॥

**श्री० टी०**—ननु धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते इत्यादिना कर्मणोऽपि श्रेष्ठत्वमुक्तमेवेत्याशङ्क्याह—**व्यामिश्रेणेति** । कचित्कर्मप्रशंसा कचिज्ज्ञानप्रशंसेत्येवं व्यामिश्रं संदेहोत्पादकमिव यद्वाक्यं तेन मे बुद्धिं मतिमुभयत्र दोलायितां कुर्वन्मोहयसीव । परमकारुणिकस्य तव मोहकत्वं नास्त्येव तथापि भ्रान्त्या ममैवं भाति इतीवशब्देनोक्तम् । अत उभयोर्मध्ये यद्भद्रं तदेकं निश्चित्य वदेति । यद्वा इदमेव श्रेयःसाधनमिति निश्चित्य येनानुष्ठितेन श्रेयो मोक्षमहमाप्नुयां प्राप्स्यामि तदेवैकं निश्चित्य वदेत्यर्थः ॥ २ ॥

स० टी०—नाहं प्रतारयाम्यन्यं किं पुनस्त्वामतिप्रियम् ॥ किंवा प्रतारणाचिह्नं पश्यसि त्वं मयीति चेत् ॥ १ ॥ नह्येवं किंतु मे भ्रान्तिवशाद्भाति प्रतारणा ॥ व्यामिश्रं नैव ते वाक्यं सुविविक्ताभिधायिनः ॥२॥ भिन्नाधिकारिकं वा स्यात्किं स्यादेकाधिकारिकम् ॥ कर्मज्ञानं ममेत्येव संदेहात्ते वचस्त्विदम् ॥ ३ ॥ संकीर्णार्थमिवाभाति तात्पर्यानवधारणात् ॥ मम मन्दमतेस्तेन वाक्येनैवान्तरिन्द्रियम् ॥ ४ ॥ भ्रान्त्या योजयसीवेति कल्पयामि न वस्तुतः ॥ त्वं मोहयसि मे किंतु मोहः स्वाशयदोषतः ॥ ५ ॥ तस्माद्विरुद्धयोरेकं मां प्रति ज्ञानकर्मणोः ॥ निर्देशासंभवादेकं ज्ञानं वा कर्म वा मम ॥ ६ ॥ अधिकारानुसारेण विनिश्चित्य वद स्फुटम् ॥ येनाधिकारमाश्रित्यानुष्ठितेन यथाविधि ॥ ७ ॥ ज्ञानेन कर्मणा वाहं सम्यङ्मोक्षमवाप्नुयाम् ॥ ८ ॥ २ ॥

भा० टी०—ननु त्वया सैव ज्यायसी ममेति मद्वाक्यान्निश्चिता चेत् किमर्थमधुना पृच्छसीत्याशङ्क्याह-व्यामिश्रेणेवेति । 'बुद्ध्यायुक्तो यया' इत्यादिना कर्मप्रशंसा 'या निशा सर्वभूतानाम्' इत्यादिना ज्ञानप्रशंसा 'कर्मण्येवाधिकारस्ते' इत्यादिना मम कर्मण्येवाधिकारबोधनं 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति ज्ञाननिष्ठाधिकारबोधनमित्येवं व्यामिश्रेण किं श्रेष्ठं किमश्रेष्ठं क ममाधिकारः क नेति संदेहोत्पादकेन वाक्येन । यद्यपि विविक्ताभिधायी भगवांस्तथापि मम मन्दबुद्धेर्व्यामिश्रमिव भगवद्वाक्यं प्रतिभातीतीवशब्दार्थः । मम बुद्धेर्मोहापनयार्थं हि प्रवृत्तस्त्वं कथं मोहयस्यतो ब्रवीमि—बुद्धिं मोहयसीव म इति । भिन्नकर्तृकयोर्ज्ञानकर्मणोरेकपुरुषानुष्ठानासंभवं यदि त्वं मन्यसे तर्हि तयोर्मध्ये एकं ज्ञानं वा कर्म वा इदमेव तव योग्यमिति निश्चित्य वद येन ज्ञानकर्मान्यतरेण श्रेयो मोक्षमहं प्राप्नुयामित्यर्थः ॥ २ ॥

प० टी०—शेषं स्पष्टम् ॥ २ ॥

रा० टी०—ननु 'बुद्ध्या युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' इति बुद्धिपदोक्तयुद्धाख्यकर्मणोपि ज्ञानार्थत्वमुक्तमिति चेत् तर्हि व्यामिश्रेण कचित्कर्मप्रशंसा कचिज्ज्ञानप्रशंसेत्येवम् । यद्वा युद्धस्य कचित्स्वर्गार्थत्वं कचिज्ज्ञानार्थत्वमित्येवं व्यामिश्रेण संदेहोत्पादकेन बुद्धिं मोहयसीव दोलायमानां करोषीव । यदि कामिनो युद्धं स्वर्गार्थमकामिनो ज्ञानार्थमिति चेत्तथापि यतिधर्म एव नियोगो युक्तो न तु वैकल्पिके युद्धे अतो येनाहं श्रेय आप्नुयां तदेकं निश्चित्य वदेति ॥ २ ॥

**श्रीभगवानुवाच—लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयाऽनघ ॥**
**ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम् ॥ ३ ॥**

त० टी०—तत्रोत्तरं श्रीभगवानुवाच लोकेऽस्मिन्निति । हे अनघार्जुन! त्वं तूपदेशयोग्यः, यथा तव संदेहो जातस्तथा न मया मोक्षसाधनत्वेन परस्परनिरपेक्षत्वेन ज्ञानकर्मात्मिके द्वे निष्ठे एकाधिकार्युद्देशेनाभिहिते किंतु एकस्याप्यधिकारभेदेनाङ्गाङ्गिभावेन निष्ठाद्वयमुक्तमिति विविच्य दर्शयति—लोक इति । नानाविधेऽप्यस्मिन् लोके जने मुमुक्षुजनोद्देशेन द्विविधा द्विप्रकारा ज्ञानकर्मात्मिका निष्ठा मत्प्राप्तिसाधनलक्षणा स्थितिर्यथाधिकारमसंकीर्णा पुरा पूर्वाध्याये मयोक्ता 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इत्यादिना । अधिकारभेदमेव दर्शयति—ज्ञानेति । सम्यक् ख्यायते आत्मतत्त्वमनयेति संख्या बुद्धिस्तन्निष्ठाः सांख्यास्तेषां यथाऽधिकारमनभिहितफलैरीश्वराराधनभूतैः कर्मभिः शुद्धान्तःकरणानां ज्ञानयोगेन स्थितप्रज्ञतालक्षणा निष्ठोक्ता 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः' इत्यादिना योगिनां पूर्वमननुष्ठितानभिसंहितफलकर्मणामशुद्धान्तःकरणानां मुमुक्षूणामुक्तसांख्यनिष्ठामारुरुक्षूणामन्तःकरणशुद्धिद्वारा स्थितप्रज्ञतालक्षणज्ञानारूढताप्राप्त्यर्थं योगो निष्का-

मकर्मानुष्ठानं तद्वतां योगिनां कर्मयोगेन ' कर्मण्येवाधिकारस्ते ' इत्यादिना निष्ठा स्थितिरुक्ता। " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इतिश्रुतेः कर्मणा विविदिषायां विनियोगात्। न चैषोऽधिकारभेदोऽनुष्ठातृपुरुषभेद एव नियत इति शङ्कनीयम्, एकस्यापि पुरुषस्यावस्थाभेदेनाधिकारभेदस्य संभवात्। तथाहि " अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते। अविद्या कर्मसंज्ञाऽन्या तृतीया शक्तिरिष्यते " इति श्रुतिस्मृत्यभिहिताविद्याशब्दवाच्येन कर्मणा पुरुषो मृत्युं प्रमादं तीर्त्वा तत्कारणमन्तःकरणमलं विधूय विद्ययाऽमृतं मोक्षमश्नुते प्राप्नोति' इति श्रुत्यर्थानुसारेण मुमुक्षायां जातायां पुरुषो न सहसा ज्ञानेऽधिकरोति अपि तु निष्कामकर्मानुष्ठानेनान्तःकरणबुद्धिद्वारेणैवेति भगवता निष्ठाद्वयमुपदिष्टम्। यस्य तु कर्मानुष्ठानं विनैवेह जन्मन्युक्तलक्षणं ज्ञानं जायेत तस्य जन्मान्तरानुष्ठितनिष्कामकर्मभिरन्तःकरणशुद्धिरनुमेयेति नोक्तव्यवस्थायां कश्चिद्विरोधः ॥ ३ ॥

म० टी०—एवमाधिकारिभेदेऽर्जुनेन पृष्टे तदनुरूपं प्रतिवचनमस्मिन्नधिकारित्वाभिमते लोके शुद्धाशुद्धान्तःकरणभेदेन द्विविधे जने द्विविधा द्विप्रकारा निष्ठा स्थितिः ज्ञानपरता कर्मपरता च पुरा पूर्वाध्याये मया तवात्यन्तहितकारिणा प्रोक्ता प्रकर्षेण स्पष्टत्वलक्षणेनोक्ता। तथा चाधिकार्यैक्यशङ्कया मा ग्लासीरिति भावः। हे अनघ अपापेति सम्बोधयन्नुपदेशयोग्यतामर्जुनस्य सूचयति। एकैव निष्ठा साध्यसाधनावस्थाभेदेन द्विप्रकारा न तु द्वे एव स्वतन्त्रे निष्ठे इति कथयितुं निष्ठेत्येकवचनम्। तथाच वक्ष्यति ' एकं सांख्यं च योगं च यः पश्यति स पश्यति ' इति। तामेव निष्ठां द्वैविध्येन दर्शयति संख्या सम्यगात्मबुद्धिस्तां प्राप्तवतां ब्रह्मचर्यादेव कृतसंन्यासानां वेदान्तविज्ञानसुनिश्चितार्थानां ज्ञानभूमिमारूढानां शुद्धान्तःकरणानां सांख्यानां ज्ञानयोगेन ज्ञानमेव युज्यते ब्रह्मणानेनेति व्युत्पत्त्या योगस्तेन निष्ठोक्ता 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः ' इत्यादिना। अशुद्धान्तःकरणानां तु ज्ञानभूमिमनारूढानां योगिनां कर्माधिकारयोगिनां कर्मयोगेन कर्मैव युज्यतेऽन्तःकरणशुद्ध्यानेनेति व्युत्पत्त्या योगस्तेन निष्ठोक्तान्तःकरणशुद्धिद्वारा ज्ञानभूमिकारोहणार्थम् ' धर्म्याद्धि युद्धाच्छ्रेयोन्यत् क्षत्रियस्य न विद्यते ' इत्यादिना। अत एव न ज्ञानकर्मणोः समुच्चयो विकल्पो वा किंतु निष्कामकर्मणा शुद्धान्तःकरणानां सर्वकर्मसंन्यासेनैव ज्ञानमिति चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैकमेव त्वां प्रति द्विविधा निष्ठोक्ता ' एषा तेभिहिता साङ्ख्ये बुद्धिर्योगे त्विमां शृणु ' इति। अतो भूमिकाभेदेनैकमेव प्रत्युभयोपयोगान्नाधिकारभेदेप्युपदेशवैयर्थ्यमित्यभिप्रायः। एतदेव दर्शयितुमशुद्धचित्तस्य चित्तशुद्धिपर्यन्तं कर्मानुष्ठानम् न कर्मणामनारम्भात् इत्यादिभिः मोघं पार्थ स जीवति इत्यन्तैस्त्रयोदशभिर्दर्शयति। शुद्धचित्तस्य तु ज्ञानिनो न किंचिदपि कर्मापेक्षितमिति दर्शयति--यस्त्वात्मरतिरिति द्वाभ्याम्। तस्मादसक्तः इत्यारभ्य तु बन्धहेतोरपि कर्मणो मोक्षहेतुत्वं सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण संभवति फलाभिसन्धिराहित्यरूपकौशलेनेति दर्शयिष्यति। ततः परं त्वथ केनेति प्रश्नमुत्थाप्य कामदोषेणैव काम्यकर्मणः शुद्धिहेतुत्वं नास्ति अतः कामराहित्येनैव कर्माणि कुर्वन्नन्तःकरणशुद्ध्या ज्ञानाधिकारी भविष्यसीति यावदध्यायसमाप्ति वदिष्यति भगवान् ॥ ३ ॥

शं० टी०—त्वया यदुक्तं तत्सत्यं तवैवायं बुद्धिदोषस्तदा यदुक्तं तत्त्वया न ज्ञातं विद्याबुद्धिशक्त्यवस्थादौ विचार्यमाणे तव कर्मण्येवाधिकारो नतु संन्यासे तत एवोक्तं मया—कर्मण्येवाधिकारस्ते इति। तथापि चित्तशुद्धिद्वारा ज्ञानसिद्ध्यै कर्म कुरु नतु फलायेति सूचयितुं--बुद्धौ शरणमन्विच्छ कृपणाः फलहेतवः, इत्युक्तं नतु कर्म त्यक्त्वा बुद्धिमाश्रयेत्युक्तं नाप्युभयं च कुर्विति ज्ञानकर्मणो राजसूयबृहस्पतिसवादिवद्भिन्नकर्तृकत्वेनैकपुरुषानुष्ठेयत्वायोगादिदं पूर्वमेव सूचितम्। एषा तेऽभिहिता सांख्ये बुद्धि-

योगे त्विमां शृणु ' इति तदेव पुनरुच्यते श्रूयतामित्याशयेन श्रीभगवानुवाच–**लोक इति** । अस्मिन् लोके ब्राह्मणादीनां स्वधर्मपराणां मुमुक्षूणां पुरा पूर्वकाले मया वेदरूपिणा सर्वज्ञेन सर्वधर्मोपदेष्ट्रा द्विविधा द्विप्रकारा निष्ठा शास्त्रीयस्यानुष्ठेयस्य धर्मस्यासांकर्यं यथा तथा नियमेन स्थितिर्व्यवस्था प्रोक्ता कृतेत्यर्थः । तत्कथमिति चेदुच्यते–**ज्ञानयोगेनेति** । वेदान्तैः सर्वैः सम्यक् ख्यायते तात्पर्येण प्रतिपाद्यत इति सांख्यं निर्विशेषं परं ब्रह्म तदेव स्वात्मत्वेन ये विदुस्ते सांख्याः ब्रह्मविदस्तेषां सांख्यानां यतीनां ब्रह्मज्ञानां ज्ञानयोगेन ब्रह्मविद्ब्रह्मणा युज्यत एकीक्रियतेऽनेनेति योगः ज्ञानमेव योगो ज्ञानयोगस्तेन " सर्वमिदमहं च ब्रह्मैवेति ब्रह्माकारवृत्त्या निष्ठा नैश्चल्येन स्थितिः प्रोक्ता सदैकरीत्या कर्तव्यत्वेन विहिता तमेवैकं विजानथ आत्मानमन्या वाचो विमुञ्चथ । ओमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय । तमसःपरस्तात् । वेदान्तविज्ञानसुनिश्चितार्थाः । सर्वं खल्विदं ब्रह्म । तज्जलानिति शान्त उपासीत । तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद्बहूञ्छब्दान्वाचो विग्लापनं हि तत् " इत्यादिवाक्यैरतत्प्रवृत्तिं निषिध्य तेषां ब्रह्मनिष्ठैव कर्तव्यत्वेन प्रोक्तेत्यर्थः । योगिनां कर्मयोगिनां गृहिणां कर्मयोगेन युज्यते अभ्युदयोऽनेनेति योगः कर्मैव योगः कर्मयोगस्तेन निष्ठा नियमस्थितिः प्रोक्ता । " अहरहः सन्ध्यामुपासीत । उदिते सूर्ये प्रातर्जुहोति । वसन्ते ब्राह्मणोग्नीनादधीत । कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । तस्मात्स्वाध्यायोऽध्येतव्यः । ऋतं च स्वाध्यायप्रवचने च । सत्यं च स्वाध्यायप्रवचने च । अग्नयश्च स्वाध्यायप्रवचने च । अग्निहोत्रं च स्वाध्यायप्रवचने च । सत्यं वद धर्मं चर । तानि त्वयोपास्यानि " इति श्रौतस्मार्तकर्मनिष्ठैव कर्मिणां कर्तव्यत्वेन प्रोक्ता विहिता । एवं निष्ठाद्वयं कर्मिणां गृहस्थानामकर्मिणां संन्यासिनां चाऽसंकीर्णं विभज्य प्रदर्शितमित्यर्थः ॥ ३ ॥

**श्री० टी०**–अत्रोत्तरं श्रीभगवानुवाच–**लोकेस्मिन्निति** । अयमर्थः यदि मया परस्परनिरपेक्षं मोक्षसाधनत्वेन कर्मज्ञानयोगरूपं निष्ठाद्वयमुक्तं स्यात्तर्हि द्वयोर्मध्ये यद्भद्रं तदेकं वदेति त्वदीयः प्रश्नः संगच्छेत नतु मया तथोक्तं किंतु द्वाभ्यामेकैव ब्रह्मनिष्ठोक्ता गुणप्रधानभूतयोस्तयोः स्वातन्त्र्यानुपपत्तेः। एकस्या एव तु प्रकारभेदमात्रमधिकारभेदेनोक्तमिति । अस्मिन् शुद्धाशुद्धान्तःकरणतया द्विविधे लोके अधिकारिजने द्वे विधे प्रकारौ यस्याः सा द्विविधा निष्ठा मोक्षपरता पुरा पूर्वाध्याये मया सर्वज्ञेन प्रोक्ता स्पष्टमेवोक्ता । प्रकारद्वयमेव निर्दिशति सांख्यानां शुद्धान्तःकरणानां ज्ञानभूमिकामारूढानां ज्ञानपरिपाकार्थं ज्ञानयोगेन ध्यानादिना निष्ठा ब्रह्मपरतोक्ता 'तानि सर्वाणि संयम्य युक्त आसीत मत्परः' इत्यादिना । सांख्यभूमिकामारुरुक्षूणां तु अन्तःकरणशुद्धिद्वारा तदारोहार्थं तदुपायभूतकर्मयोगाधिकारिणां योगिनां कर्मयोगेन निष्ठोक्ता ' धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत् क्षत्रियस्य न विद्यते' इत्यादिना । अत एव चित्तशुद्ध्यशुद्धिरूपावस्थाभेदेनैव द्विविधापि निष्ठोक्ता 'एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु' इति ॥ ३ ॥

**स० टी०**–एवमेकाधिकारित्वे न विकल्पसमुच्चयौ ॥ अधिकारभिदा ज्ञानसिद्ध्यै प्रश्नोऽर्जुनस्य च ॥१॥ पृष्टेऽधिकारभेदे श्रीभगवानाह सूत्तरम् ॥ चित्तशुद्ध्यविशुद्धिभ्यां जनेऽस्मिन्नधिकारिणि ॥ २ ॥ द्विविधे द्विप्रकारैव पूर्वाध्याये स्फुटं मया ॥ ज्ञानकर्मपरत्वाख्या निष्ठोक्ता ते हितैषिणा ॥ ३ ॥ यद्वा पुरेति सर्गादौ प्रजाः सृष्ट्वा चतुर्विधाः ॥ तासां स्वर्गापवर्गाप्तिसाधनं वेदपद्धतिः ॥ ४ ॥ मयाविष्कुर्वता प्रोक्ता सर्वज्ञेनेश्वरेण च ॥ तथाच त्वं भो मा ग्लासीरधिकार्यैक्यशङ्कया ॥ ५ ॥ अनघेतिपदेनैषा सूच्यते योग्यताऽर्जुने ॥ साध्यसाधनभेदेन निष्ठैकैवास्ति सा द्विधा ॥ ६ ॥ न तु निष्ठे स्वतन्त्रे द्वे निष्ठेत्यत्रैकताध्वनिः ॥ द्वैविध्येन च तामेव निष्ठां संदर्शयत्यजः ॥ ७ ॥ सम्यक्तत्त्वमतिः संख्या तां संप्राप्तवतां सताम् ॥ ब्रह्मचर्याश्रमादेव वेदान्तश्रवणादिभिः ॥ ८ ॥ ज्ञानभूमौ प्रविष्टानां सांख्यानां शुद्धचेतसाम् ॥ युज्यते ब्रह्मणा-

नेन ज्ञानं तद्योग इत्यतः ॥ ९ ॥ ज्ञानयोगेन तेनैव निष्ठा तेषामुदाहृता ॥ कर्माधिकारिणां पुंसामशुद्धमनसां तथा ॥ १० ॥ कर्मैव युज्यते चित्तशुद्ध्यानेनेति योगकः ॥ तेनैव कर्मयोगेन निष्ठा तेषामुदाहृता ॥ ११ ॥ धीशुद्धिद्वारतो ज्ञानभूमौ सम्यक्प्रवेशनम् ॥ नान्यथेत्याशयो विष्णोः श्रीकृष्णस्य कृपानिधेः ॥ १२ ॥ अतो भिन्नाधिकारित्वात्साध्यसाधनरूपयोः ॥ न विकल्पस्तयोर्ज्ञानकर्मणोर्वा समुच्चयः ॥ १३ ॥ तस्मादवस्थाभेदेन चैकमेव प्रतिद्वयोः ॥ उपयोगान्न वैयर्थ्यमुपदेशस्य चेति दिक् ॥ १४ ॥ ३ ॥

भा० टी०–अर्जुनप्रश्नानुरूपमुत्तरं श्रीभगवानुवाच–**लोक इति** । लोकेऽस्मिन् शास्त्रोक्तानुष्ठानाधिकृते त्रैवर्णिके जने शुद्धाशुद्धान्तःकरणतया द्विविधे द्विविधा उपायोपेयभेदेन द्विप्रकारा निष्ठाऽनुष्ठेयतात्पर्यं पुरा सर्गादौ मया सर्वज्ञेनेश्वरेण प्रजाः सृष्ट्वा तासामभ्युदयनिःश्रेयससाधनवेदार्थसंप्रदायमाविष्कुर्वता प्रोक्ता । यत्तु पुरा पूर्वाध्याय इति भाष्यविरुद्धं वर्णयन्ति तन्न प्रोक्तेत्येतावतैव निर्वाहे लोकेऽस्मिन्नित्यस्य पुरेत्यस्य च वैयर्थ्यप्रसङ्गात् 'इमं विवस्वते योगं प्रोक्तवानहमव्ययम्' इति वक्ष्यमाणेन भाष्योक्तार्थस्य स्पष्टप्रतिपादकेन मूलेन विरोधाच्च । हे अनघेति संबोधयन् भवच्चित्तशुद्ध्यर्थमेव त्वां स्वधर्मे नियोजयामि न स्वार्थमिति ध्वनयति । निष्ठायाः प्रकारविभागमाह–**ज्ञानेति** । युज्यते ब्रह्मणानेनेति योगः ज्ञानमेव योगः ज्ञानयोगः तेन सांख्यानां चित्तशुद्ध्यात्मानात्मविषयविवेकज्ञानवतां निष्ठा स्थितिः प्रोक्ता । चित्तशुद्धिद्वारा युज्यतेऽनेन ज्ञानेनेति योगः कर्मैव योगः कर्मयोगः तेन योगिनामशुद्धान्तःकरणानां कर्मिणां मया निष्ठा प्रोक्तेत्यर्थः ॥ ३ ॥

प० टी०–ततो भगवानाह–**लोकेऽस्मिन्निति** । लोक्यते ज्ञायतेऽनेनेति लोको मुमुक्षुजनस्तस्मिन् द्विविधा द्विप्रकारा निष्ठा मर्यादा पुरा द्वितीयाध्याये प्रोक्ता । तत्र सांख्यानां शुद्धान्तःकरणानां ज्ञानयोगेन ' तथाशुद्धान्तःकरणानां योगिनां कर्मकुशलानां कर्मयोगेन, न ह्येकं प्रत्युपायद्वयकथनं किंत्वधिकारभेदादतो व्यामिश्रेणेव वाक्येनेति वक्तुं नार्हसीत्यर्थः ॥ ३ ॥

रा० टी०–यद्यपि सर्वकर्माण्याश्रमत्रयविहितानि काम्यकामिभेदेन काम्यान्यकाम्यानि चेति वैकल्पिकानि यतिधर्मास्तु शमादयः केवलमकाम्याः युद्धकर्मैव नरकाद्यनर्थहेतुरागद्वेषाद्युपेताश्च न भवन्ति तथापि तेषामनधिकारिकविषयत्वात् तव च जनकप्रियव्रतादेरिव आधिकारिकत्वात् सुखदुःखे समे कृत्वेत्यत्रोक्तदिशा भगवद्भक्त्या स्वधर्मत्वेनानुष्ठाने पापानवाप्तेर्वैकल्पिकेपि युद्धकर्मण्येव नियोज्य इति भावेनाद्यप्रश्नस्योत्तरमाह–**लोक** इत्यादिना । द्वितीयस्य तु श्रेयानित्यादिनाग्रे ध्येयम् । अस्मिन्लोके साधकवर्गे निष्ठा स्वरूपेण स्थितिः मुक्तिरिति यावत् । यद्वा निष्ठा नितरां संसारगतिनिवृत्तिर्द्विविधा द्विप्रकारा द्विविधसाधनसाध्येत्यर्थः । पुरा मया प्रोक्ता हे अनघेति संबुद्धिः । कथमित्यत आह–सांख्यानां ज्ञानप्रधानानां देवानां सनकादियतीनां च ज्ञानयोगेन प्राचुर्याज्ज्ञानस्योक्तिः । अप्रचुरकर्मोपेतप्रचुरज्ञानोपायेन जपध्यानादिना निष्ठा मुक्तिः योगिनां कर्मरूपोपायवतां कर्मयोगेनाप्रचुरज्ञानोपेतेन प्रचुरकर्मोपायेन निष्ठा मुक्तिः । योगिनामित्यनन्तरमितिशब्दोध्याहार्यः । अत्र भगवज्ज्ञानिनामप्युभयेषां न ज्ञानमात्रेण स्वयोग्ययावदानन्दानुभवरूपसंपूर्णमुक्तिः अपितु कर्मसमुच्चितेनैव । तत्र केचन सनकादयो यतयः स्वगतज्ञानकर्मणोर्मध्ये ज्ञानप्रचुराः सन्तो मुक्तिभाजः केचित्तु जनकप्रियव्रतादयो गृहस्थाः स्वगतज्ञानकर्मणोर्मध्ये प्रचुरकर्माणः सन्त एव मुक्तिभाजो भवन्ति आधिकारिकतया तथैव भगवता क्लृप्तत्वात् । तथाच त्वमप्याधिकारिक इति कर्मणि विनियोज्य एवेति भावः । अत्र नीरमिश्रक्षीरे क्षीरशब्दप्रयोगवत्प्राचुर्याभिप्रायेण ज्ञानयोगेन कर्मयोगेनेत्येकैकोक्तिरिति ज्ञेयम् ॥ ३ ॥

**न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ॥**
**न च संन्यसनादेव सिद्धिं समधिगच्छति ॥ ४ ॥**

**त० टी०**—कर्मणां ज्ञानार्थं विनियोग इत्युक्तं तदभावे न ज्ञानप्राप्तिरित्याह—**न कर्मणामिति**। स्वस्ववर्णाश्रमोचितभगवदाज्ञापालनात्मककर्मणामनारम्भादकरणान्नैष्कर्म्यं कर्मराहित्यं ज्ञानं पुरुषो नाश्नुते न प्राप्नोति। ननु "एतमेव लोकमिच्छन्तः प्रव्रजन्ति" इति श्रुतेः सर्वकर्मसंन्यासादेव मोक्षाभिधानात्किं कर्मभिरित्यत आह—**न चेति**। चित्तशुद्ध्यभावेन ज्ञानं विना कृतात्केवलात्संन्यासात्सिद्धिं मोक्षं न च समधिगच्छति प्राप्नोति। लोके संन्यासीति प्रथामात्रप्राप्तावपि न संन्यासफलभाग्भवतीत्यर्थः ॥ ४ ॥

**म० टी०**—तत्र कारणाभावे कार्यानुपपत्तेः कर्मणाम् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति श्रुत्याऽऽत्मज्ञाने विनियुक्तानामनारम्भादननुष्ठानाच्चित्तशुद्ध्यभावेन ज्ञानायोग्यो बहिर्मुखः पुरुषो नैष्कर्म्यं सर्वकर्मशून्यत्वं ज्ञानयोगेन निष्ठामिति यावत् नाश्नुते न प्राप्नोति। ननु "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" इति श्रुतेः सर्वकर्मसंन्यासादेव ज्ञाननिष्ठोपपत्तेः कृतं कर्मभिरित्यत आह—**न चेति**। न च संन्यसनादेव चित्तशुद्धिं विना कृतात् सिद्धिं ज्ञाननिष्ठालक्षणां सम्यक् फलपर्यवसायित्वेन नाधिगच्छति नैव प्राप्नोतीत्यर्थः। कर्मजन्यां चित्तशुद्धिमन्तरेण संन्यास एव न संभवति यथाकथंचिदौत्सुक्यमात्रेण कृतोपि न फलपर्यवसायीति भावः ॥ ४ ॥

**शं० टी०**—नन्वेवं सति ज्ञानकर्मणोरुभयोरपीतरेतरानपेक्षयैव साक्षान्मोक्षहेतुत्वं प्राप्तमिति चेन्न "न कर्मणा न प्रजया" इत्यादिश्रुतिभिः कर्मणो मोक्षसाधनत्वनिषेधात् 'ज्ञानादेव तु कैवल्यम्' इतीतरव्यावृत्तिपूर्वकं ज्ञानस्यैव साक्षान्मोक्षसाधनत्वावधारणाच्च न कर्मणो मोक्षसाधनता संभवति। यद्यपि ज्ञानमेव समुत्पन्नं स्वयमन्यानपेक्षया पुरुषस्य सद्यो मुक्तिसुखं प्रयच्छति तथापि "सत्त्वशुद्धौ ध्रुवा स्मृतिः" इति श्रवणात्सत्त्वशुद्धिं विना ज्ञानं नोदेति। सत्त्वशुद्धिश्च "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इतिश्रवणाद्यज्ञदानादिसत्कर्मानुष्ठितिं विना न सिध्यत्यतो मुमुक्षोरनुत्पन्नात्मज्ञानस्यावश्यं चित्तशुध्यर्थं कर्म कर्तव्यमन्यथा मोक्षो न सिध्यतीत्याह—**न कर्मणामिति**। नित्यानां कर्मणां श्रौतादीनामनारम्भादनाचरणान्नैष्कर्म्यं न यत्र कर्म तन्निष्कर्म ब्रह्म "निष्कलं निष्क्रियम्" इतिश्रुतेः तस्य भावो नैष्कर्म्यं निष्क्रियब्रह्मात्मनावस्थानलक्षणां मुक्तिं पुरुषो नाश्नुते उपायाभावात्सत्येवोपाये उपेयं सिध्यति यत उपायभूतानां कर्मणामननुष्ठानादुपेयभूतं ज्ञानं तत्फलं च नैष्कर्म्यं पुरुषस्य न सिध्यत्यतो मुमुक्षोरीश्वरार्पणबुद्ध्या नित्यं नैमित्तिकं च कर्मावश्यमनुष्ठातव्यं तेन ज्ञानं मोक्षश्च सिध्यतीत्यर्थः। ननु "न कर्मणा न प्रजया" इतिश्रुत्यैव कर्मणो मोक्षसाधनत्वनिषेधात् "संन्यासयोगात्" इति संन्यासस्यैव यतीनां मुक्तिहेतुत्वश्रवणाच्च सर्वकर्मणां संन्यासमेव कृत्वाऽहं तूष्णीं सुखमासे न कदापि च कुर्वे क्लेशभूयिष्ठं कर्म तत्रापि च हिंसाप्रधानमित्याशङ्कायामाह—**न चेति**। कर्मणि क्लेशभूयिष्ठत्वबुद्ध्याप्यलसत्वेन वाप्यापातवैराग्याच्छिखायज्ञोपवीतत्यागमात्रादेव सिद्धिं नैष्कर्म्यसिद्धिं विदेहमुक्तिं ब्राह्मणो मुमुक्षुर्न समधिगच्छति विनैव वेदान्तश्रवणजन्यज्ञानेन "ज्ञानादेव तु कैवल्यम्" इति श्रुतिप्रसिद्धेः। ननु संन्यस्य मुक्त्यर्थं दहरोपास्तिं वा वैश्वानरीं वोपास्तिं शिवस्य पूजां तन्नामकीर्त्तनं वा कुर्यामिति चेन्नाद्यः "सत्यकामः सत्यसंकल्पः" इति दहरोपासनस्य सत्यकामत्वादिगुणवत्त्वश्रवणाद्गुणवदुपास्त्या तद्भावापत्तिप्रसङ्गात्। न द्वितीयः "स सर्वेषु भूतेष्वन्नमत्ति" इतिश्रवणाद्वैश्वानरोपास्त्या सर्वभूतात्मनान्नादनमात्रफलप्रसङ्गात्। न तृतीयः "देवो भूत्वा

देवानप्येति " इतिश्रवणात्तल्लोकप्राप्तिप्रसङ्गात् । नापि चतुर्थः ' नास्ति पातकमहो कलिकाले नामकीर्तन-परेषु नरेषु ' ' पुण्यश्रवणकीर्तनम् ' इत्यादिवचनात्पापक्षयमात्रप्रयोजनसिद्धेः । " यद्दृश्यं तदसत् " इत्य-व्याकृतादेः स्थूलान्तरस्य सगुणस्य सर्वस्य दृश्यत्वेनासत्त्वावगमादुपास्यस्य सर्वस्यापि सगुणत्वेनाऽसत्त्वा-द्व्यभिचारादसदुपास्त्या त्वसद्भाव एव फलं सिध्यति न क्वचिदपि सद्भाव उपासनानुरूपत्वात्फलसिद्धेः "तं यथायथोपासते तथैव भवति । असन्नेव स भवति असद्ब्रह्मेति इति चेदवेत् " इत्यादिश्रुतेः ' ये यथा माम् ' इतिस्मृतेश्च । किंच "असूर्या नाम ते लोकाः" इति "न चेदिहावेदीन्महती विनष्टिः" इत्यात्मतत्त्वा-ज्ञानिनोऽसुरलोकप्राप्तिरूपमहानर्थश्रवणात् "अरुन्मुखान यतीन् सालावृकेभ्यः प्रायच्छम् " इति वेदान्त-विमुखानां यतीनामिन्द्रभयश्रवणाच्च ' प्रत्यक्तत्त्वविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्या विधीयते तस्मा-त्तत्त्यागी पतितो भवेत् ' इति यतेः स्वरूपविवेकाभावे पतितत्वस्मरणात्संन्यासस्यापि कर्मत्वाविशेषात्ताव-न्मात्रेण मोक्षासंभवाच्च तस्माद्यतेर्मुमुक्षोः सर्वथा वेदान्तश्रवणेन ज्ञानं प्रयत्नेन संपादनीयमिति सूचितं भग-वता—नच संन्यसनादेव सिद्धिंसमधिगच्छतीति । चकारस्त्वर्थः । संन्यासयोगादित्यत्र ब्रह्मविदां यतीनां ब्रह्मण्यारोपितनामरूपग्रहणत्यागः संन्यासशब्देनोच्यते नतु कर्मसंन्यासः यतय इतिपदेनैव संन्यासस्य सिद्धत्वादन्यथा पुनरुक्तिप्रसङ्गस्तस्माद्यतेः संन्यासस्य फलं वेदान्तश्रवणजन्यज्ञानमेवेति सिद्धम् ॥ ४ ॥

**श्री० टी०**—अतः सम्यक्चित्तशुद्ध्यर्थं ज्ञानोत्पत्तिपर्यन्तं वर्णाश्रमोचितानि कर्माणि कर्तव्यानि अन्यथा चित्तशुद्ध्यभावेन ज्ञानानुत्पत्तेरित्याह—**न कर्मणामिति** । कर्मणामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञानं नाश्नुते नाप्नोति । ननु च " एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति " इति संन्यासस्य मोक्षाङ्गत्वश्रुतेः संन्यासादेव मोक्षो भविष्यतीति किं कर्मभिरित्याशङ्कयोक्तम्—**न चेति** । न च चित्तशुद्धिं विना कृतात्सं-न्यसनादेव ज्ञानशून्यात्सिद्धिं मोक्षं समधिगच्छति प्राप्नोति ॥ ४ ॥

**स० टी०**—शुद्ध्यन्तं कर्म कर्तव्यमस्त्यशुद्धधियस्त्विति ॥ न कर्मणामनारम्भादित्यारभ्य प्रवक्ष्यते ॥१॥ मोघं स जीवतीत्यन्तैस्त्रयोदशभिरेव च ॥ विदुषः शुद्धबुद्धेस्तु कर्तव्यं नास्ति किंचन ॥ २ ॥ यस्त्वात्मर-तिरित्यादिद्वाभ्यामित्थं प्रवक्ष्यते ॥ तस्मादसक्त इत्यादौ बन्धहेतोश्च कर्मणः ॥ ३ ॥ धीशुद्ध्या मोक्षहेतुत्वं ज्ञानोत्पत्तिमुखेन च ॥ अथ केनेति चोत्थाप्य प्रश्नं कामस्य शत्रुता ॥ ४ ॥ वक्ष्यते मोक्षमार्गेऽस्मिंस्त-त्त्यागाज्ज्ञानयोगतः ॥ मोक्षोऽस्तीत्येव भगवानध्यायान्ते च वक्ष्यति ॥ ५ ॥ तत्रादौ कारणाभावे कार्याभावः प्रदर्श्यते ॥ तमेतमितिवाक्येन विहितानां हि कर्मणाम् ॥ ६ ॥ चित्तशुद्ध्यात्मबोधार्थमननुष्ठा-नतः पुमान् ॥ सत्त्वशुद्धेरभावात्स्याज्ज्ञानायोग्यो बहिर्मुखः ॥ ७ ॥ ज्ञानयोगेन निष्ठां नावाप्नोत्यात्मन्यव-स्थितिम् ॥ नन्वेतमेव प्रव्राजिनो लोकमिति वेदतः ॥ ८ ॥ समस्तकर्मसंन्यासाज्ज्ञाननिष्ठोपपत्तितः ॥ कृतं कर्मभिरित्यत्र प्राह नारायणो हरिः ॥ ९ ॥ यतः सन्यसनादेव चित्तशुद्धिं विना कृतात् ॥ ज्ञान-निष्ठात्मिकां सिद्धिं नैवाप्नोति फलावधिम् ॥ १० ॥ न धीशुद्धिमृते न्यासः संभवेदथ चेत्कृतः ॥ फले पर्य-वसायी नो भवेदित्याशयो हरेः ॥ ११ ॥ ४ ॥

**भा० टी०**—तत्किं कर्मणि घोरे मां नियोजयसि केशवेत्युक्तवन्तं खिन्नचित्तमर्जुनं कर्म न कर्तव्यमित्येवं मन्वानमालक्ष्याह—**नेति** । यद्वा निष्ठेत्येकवचनेन सूचितं कर्मनिष्ठायाः ज्ञाननिष्ठाप्राप्तिहेतु-त्वेन पुरुषार्थसाधनत्वं ज्ञाननिष्ठायाः कर्मनिष्ठोपायलब्धस्वरूपायास्तु स्वातन्त्र्येणैव पुरुषार्थहेतुत्वं च स्फुटं वक्तुमारभते—**नेत्यादिना** । कर्मणाम् " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इति श्रुत्या ' ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः । यथाऽऽदर्शतलप्रख्ये पश्य-त्यात्मानमात्मनि ' इति स्मृत्या ' सर्वापेक्षा च यज्ञादिश्रुतेः ' इतिन्यायेन च चित्तशुद्धिद्वारा ज्ञानोपाय-

त्वेन विहितानामकरणान्नैष्कर्म्यं कर्मशून्यत्वं ज्ञानयोगेन निष्ठां पुरुषो नाश्नुते न प्राप्नोति किंतु तेषामारम्भात् प्राप्नोतीत्यर्थः । ननु 'ह्यभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इत्यादौ कर्तव्यकर्मसंन्यासादपि नैष्कर्म्यप्राप्तिः श्रूयतेऽतस्तदर्थिनः किं कर्मारम्भेणेति चेत्तत्राह—नेति । न च संन्यसनात् कर्मत्यागमात्रात् ज्ञानशून्यात्सिद्धिं नैष्कर्म्यलक्षणां प्राप्नोतीत्यर्थः ॥ ४ ॥

प० टी०—सम्यक्चित्तशुद्ध्या ज्ञानोत्पत्तिपर्यन्तं वर्णाश्रमोचितानि कर्माणि कर्तव्यानि अन्यथा चित्तशुद्ध्यभावे ज्ञानानुत्पत्तिरित्यभिप्रायं प्रकटन्नाह—**न कर्मणामिति** । कर्मणामनारम्भादननुष्ठानान्नैष्कर्म्यं ज्ञानं नाश्नुते न प्राप्नोति । ननु च "एतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति" इत्यादि श्रुतेः संन्यासस्यापि मोक्षसाधनत्वात्तेनैवार्थसिद्धेः किं कर्मणेत्याशङ्क्याह—**न चेति** । श्रुतिरपि यजुःसंहितायाम् "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे" भाष्यम्—इह मोक्षमार्गे कर्माणि कुर्वन्नेव शतं समाः । शतवर्षाणि जिजीविषेज्जीवितुमिच्छेत् । कर्माकरणे तु मृत्युरेव श्रेयानित्यर्थः । एवकारोऽन्ययोगव्यवच्छेदार्थः । तेन कर्म कर्तव्यमेवेत्युक्तम् । एवममुना प्रकारेण नरे मनुष्ये देहाभिमानिनि कर्म कृतवति सति तन्मोक्षप्रापकं कर्म त्वयि न लिप्यते फलभोगाय न भवति इतः परमन्यथा मोक्षमार्गो नास्ति ॥ ४ ॥

रा० टी०—यतिधर्माः शमादय एवानुष्ठेया न तु गृहिधर्माः । तत्रापि न घोरं युद्धकर्मेति वादिनं पार्थं प्रति तव जनकादेरिवाधिकारिकत्वात् वर्णाश्रमोचिता धर्मास्त्वयानुष्ठेया एवेति उक्तम् । इदानीं कर्म न कार्यमिति वदतः किं कर्माकरणप्राप्यत्वहेतुना मुक्तेर्नैष्कर्म्यशब्दवाच्यत्वात्तदन्यथानुपपत्त्या कर्म न कार्यमित्यभिप्रायः उत कर्मणः संसारबीजत्वात्तदकरणं मुक्तिहेतुरिति 'कर्मणा बध्यते जन्तुः' इति स्मृतेः कर्मणो मुक्तिप्रतिबन्धकत्वाद्वा । आद्यं निराह—**नेति** । कर्मणामनारम्भादकरणान्नैष्कर्म्यं कर्माकरणप्राप्यत्वहेतुना नैष्कर्म्यशब्दवाच्यं मोक्षमश्नुते इति यत्त्वयोक्तं तन्न भवति । कुत इत्यत उक्तम्—पुरुष इति । पुराणि शरीराणि सरति प्राप्नोतीति पुरुसः पुरुस एव पुरुषः । हेतुगर्भमिदम् । सदा सूक्ष्मेण स्थूलेन च देहेन युक्तत्वादिति । कर्माकरणमात्रेण मोक्ष इति पक्षे कदाचित्कर्मानधिकारशरीरस्यापि संभवेन तद्देहे कर्माकरणनिमित्तमोक्षप्राप्त्याधुना दृश्यमानं पुरुषत्वं न स्यादिति भावः । नैष्कर्म्यशब्दवाच्यत्वं तु काम्यकर्माप्राप्यत्वनिमित्तेनोपपन्नं मया तु निवृत्तकर्मण्येव नियोगः क्रियत इति भावः । द्वितीयमपि निराह—**नेति** । कर्मणामनारम्भादकरणान्नैष्कर्म्यं काम्यकर्माप्राप्यं मोक्षमश्नुते । संसारबीजभूतकर्माभावादिति त्वयोक्तं यत्तन्न कुतः—पुरुष इति । प्राग्वदेवार्थः । अनादौ संसारे कर्माधिकृतानन्तजन्मसंभवेन सदा पुरुषशब्दितदेहयुतत्वात्तत्र कृतानन्तकर्मणां भावेनाद्यतनदेहावच्छेदेन कर्माकरणमात्रेण संसारबीजाभावकृतमोक्षाशा कुतः स्यादिति भावः । तृतीयपक्षनिरासस्तु यज्ञार्थात्कर्मणोन्यत्रेत्यादौ वक्ष्यते । ननु 'निष्कामं ज्ञानपूर्वं तु' इतिस्मृतौ निवृत्तकर्मणा मोक्ष उच्यते । तस्य मोक्षहेतुत्वे फलान्तराभाव एव युक्तिर्न त्वन्या । तथाच कर्माकरणस्यापि फलान्तराभावरूपयुक्तिसाम्याद् आयासाभावरूपगुणवत्त्वाच्च कर्माकरणादपि मोक्षः स्यात् । "एवं त्वयि नान्यथेतोस्ति" इत्यादौ श्रुतः कर्माकरणे प्रत्यवायस्तु अमुमुक्षुविषयतयोपपन्न इत्यत आह—**न चेति** । संन्यसनात् काम्यकर्माकरणादेव तन्मात्रादितियावत् । अनेन निवृत्तकर्मकरणमुपलक्ष्यते । निवृत्तकर्मकरणमात्रात्सिद्धिं मोक्षं पुरुषो न समधिगच्छति प्राप्नोति किंतु तेनान्तःकरणशुद्धिविषयवैराग्यश्रवणमननध्यानज्ञानद्वारैव । "निवृत्तं सेवमानस्तु ब्रह्माभ्येति" इतिश्रुतेरप्ययमेवाभिप्रायः । तथाच न तत्प्रतिबन्ध्याकर्माकरणस्य मोक्षहेतुत्वं शङ्क्यमिति भावः । ननु यत्याश्रमधर्माणां श्रुत्यादिसिद्धे मुक्तिहेतुत्वे फलान्तराभाव एव मुक्तिरिति तत्प्रतिबन्ध्यास्तु कर्माकरणस्य युक्तिहेतुत्वमित्यतो

प्युक्तम्-न चेति। संन्यसनाद्यत्याश्रमादेवेत्यर्थः। स तु भगवति मनःसमाधानद्वारा तत्प्रीतिविशेषद्वारा वा मुक्तिहेतुर्न फलान्तराभाववत्त्वहेतुना येन तत्प्रतिबन्धापि फलान्तराभावयुक्तया कर्माकरणस्य मुक्तिहेतुत्वं शङ्क्येतेति। एतेन लोक इतिपूर्वश्लोकोक्तदिशा न केवलमाधिकारिकत्वात्तव कर्मणि नियोगः अपि तु कर्माकरणस्य त्वदुक्तरीत्या मुक्तिहेतुत्वभावादपीति हेत्वन्तरमुक्तं भवति ॥ ४ ॥

**न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ॥**
**कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥ ५ ॥**

**त० टी०**—तस्य फलपर्यवसायित्वं दूरे तिष्ठतु तावत्सर्वकर्मसंन्यास एवाशक्य इत्याह—**न हीति**। जातु कदाचित्कश्चिदपि मूर्खो ज्ञानी वा क्षणमपि अकर्मकृत्कर्माकुर्वाणो न हि तिष्ठति। हीत्यवधारणे। नैव तिष्ठति अपि तु वैदिकं लौकिकं वा कर्म कुर्वन्नेव तिष्ठतीत्यर्थः। हि यतोऽवशः यावत्स्थूलसूक्ष्मदेहहेतुभूतकर्मास्ति तावत्प्रकृतिवशगस्तस्मात्प्रकृतिजैः सर्वजगद्धेतुप्रकृतिसमुद्भवैः सत्त्वादिभिर्गुणैः सर्वोऽपि जनः कर्म कार्यते बलात्कर्मणि नियुज्यते। तस्मान्मुमुक्षुणा ज्ञानप्रतिबन्धकपापक्षयार्थं स्वोचितः कर्मयोग एवानुष्ठेयः ॥ ५ ॥

**म० टी०**—तत्र कर्मजन्यशुद्ध्यभावे बहिर्मुखः हि यस्मात्क्षणमपि कालं जातु कदाचित् कश्चिदप्यजितेन्द्रियः अकर्मकृत्सन्न तिष्ठति अपि तु लौकिकवैदिककर्मानुष्ठानव्यग्र एव तिष्ठति तस्मादशुद्धचित्तस्य संन्यासो न संभवतीत्यर्थः। कस्मात्पुनरविद्वान्कर्माण्यकुर्वाणो न तिष्ठति हि यस्मात् सर्वः प्राणी चित्तशुद्धिरहितः अवशः अस्वतन्त्र एव सन् प्रकृतिजैः प्रकृतितो जातैरभिव्यक्तैः कार्याकारेण सत्त्वरजस्तमोभिः स्वभावप्रभवैर्वा रागद्वेषादिभिर्गुणैः कर्म लौकिकं वैदिकं वा कार्यते अतः कर्माण्यकुर्वाणो न कश्चिदपि तिष्ठतीत्यर्थः। स्वाभाविका गुणाश्चालकाः अतः परवशतया सर्वदा कर्माणि कुर्वतोऽशुद्धबुद्धेः सर्वकर्मन्यासो न संभवतीति न संन्यासनिबन्धना ज्ञाननिष्ठा संभवतीत्यर्थः ॥ ५ ॥

**शं० टी०**—यदुक्तं सर्वकर्मसंन्यासं कृत्वाहं तूष्णीं सुखमास इति तन्न संस्कारजप्रवृत्तेः क्रियाया निःशेषत्यागायोगाद्वृत्तेरालम्बनाभावाच्च तूष्णीमासनं ब्रह्मनिष्ठं विना न कस्यापि घटत इत्याशयेनाह—**न हीति**। अत्र लोके जातु कदाचिदपि कश्चिद्यो वा को वापि प्राणी क्षणं क्षणार्धमप्यकर्मकृत्किमपि कर्माकुर्वन्न तिष्ठति किंतु सुषुप्तिं विना जाग्रत्स्वप्नयोः सर्वदा कायेन वा मनसा वा वाचा वा चक्षुरादिभिर्वा यत्किंचित्कर्म कुर्वन्नेव तिष्ठति न क्वचिदपि तूष्णीमित्यर्थः। इदं सर्वं प्रत्यक्षमिति हिः प्रसिद्धिद्योतनार्थः। कस्मात्तूष्णीं स्थातुं न शक्नोतीत्याकाङ्क्षायामाह—**कार्यत इति**। हि यस्मात्कारणात्सर्वोऽपि प्राणिवर्गः प्रकृतिजैः सत्त्वरजस्तमोगुणात्मिका मूलप्रकृतिस्तस्याः सकाशाज्जाताः प्रकृतिजास्तैर्गुणैर्गुणाः द्रव्यवासना गुणवासना: कर्मवासना जातिवासना रागद्वेषादयश्च तैः प्रकृतिजैर्गुणैरन्तःप्रेर्यमाणोऽवशोऽस्वतन्त्रः सन्नेव बहिरन्तः कर्म नानाव्यापाररूपं कार्यते वासनात्मिकायाः प्रवृत्तेर्वशो भूत्वा न कोपि तूष्णीं स्थातुं शक्नोति विना ब्रह्मविद्वर्यं ब्रह्मविद्वर्यस्तु निर्विकल्पसमाध्यग्निना निर्मूलितप्रकृतिगुणतत्कार्यतूलपटलत्वाद्वायुना मेरुरिव स्वयं गुणैर्न चाल्यते किंतु निष्क्रियब्रह्मात्मना तूष्णीमेव तिष्ठति 'उदासीनवदासीनो गुणैर्यो न विचाल्यते' इति स्मरणात्ततो ब्रह्मविद्वर्य एक एव तूष्णीं स्थातुं शक्नोति न ततोऽन्य इत्यर्थः ॥ ५ ॥

**श्री० टी०**—कर्मणां च संन्यासस्तेष्वनासक्तिमात्रं न तु स्वरूपेणाशक्यत्वादित्याह—**न हीति**। जातु कस्यांचिदवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञानी वाऽज्ञो वा कर्मकृत्कर्माण्यकुर्वाणो न तिष्ठति। तत्र हेतुः प्रकृतिजैः स्वभावप्रभवैः रागद्वेषादिगुणैः सर्वोऽपि जनः कर्म कार्यते कर्मणि प्रवर्तते अवशः अस्वतन्त्रः सन् ॥ ५ ॥

**स० टी०**—यतः कश्चिदपि प्राणी क्षणं नापि कदाचन ॥ तिष्ठतीह विना कर्म नातः शुद्धिमृतेऽक्रियः ॥ १ ॥ यतोऽशुद्धमनाः सर्वो रजःसत्त्वतमोगुणैः ॥ स्वभावप्रभवैर्वापि रागद्वेषादिभिर्गुणैः ॥ २ ॥ अस्वतन्त्रोऽखिलं कर्म वैदिकं लौकिकं बलात् ॥ कार्यतेऽतो विना शुद्धिं न संन्यासोऽपि संभवेत् ॥ ३ ॥५॥

**भा० टी०**—तत्र हेत्वाकाङ्क्षायामाह—**न हीति** । हि यस्मात्कश्चिदज्ञोऽशुद्धचित्तः क्षणमपि कालं जातु कदाचिदपि कस्यां चिदप्यवस्थायामकर्मकृत्सन्न तिष्ठति हि यस्मादस्वतन्त्र एव सर्वोऽज्ञलोकः प्रकृतितो जातैः सत्त्वरजस्तमोभिः गुणैः कर्म कार्यते एतेन कर्मणां च संन्यासस्तेष्वनासक्तिमात्रं नतु स्वरूपेणाशक्यत्वादित्याह—**न हीति** । कश्चिदपि ज्ञानी वाऽज्ञो वेति परास्तम् । अस्य पक्षस्य युक्तिशतेन भगवत्पादैर्निराकृतत्वात् ‘ गुणैर्यो न विचाल्यते ’ इति वक्ष्यमाणविरोधस्यात्रैवाचार्यैरुक्तत्वाच्च । अतोऽज्ञं कर्मत्यागिनं निन्दति कर्मेन्द्रियाणीति स्वपरग्रन्थविरोधाच्च ॥ ५ ॥

**प० टी०**—अथ सत्कर्मण्युद्विग्नचित्तं जनमुपपत्त्या बोधयति—**न हीति** । कश्चिदपि जातु कदाचिदप्यकर्मकृन्न हि तिष्ठति किं तु सर्वोपि जनोऽवशोऽस्वतन्त्रः सन् प्रकृतिजैः स्वभावजैर्गुणैः करचरणचेष्टारूपं कर्म कार्यते कर्मणि प्रयोज्यते । तत्रोद्विग्नः सन् करोत्येव परं तु सत्कर्मणि न प्रवर्तते इत्याश्चर्यम् ॥ ५ ॥

**रा० टी०**—किंच कर्मणेत्यादिस्मृतिबलात्कर्मणो मुक्तिप्रतिबन्धकत्वमिति तृतीयपक्षे स्मृतौ कर्मशब्दः संकुचितवृत्तिरिति वक्ष्यमाणोपोद्घाततया कर्माणि सर्वात्मना त्यक्तुं न शक्यानीत्याह—**न हीति** । जातु कस्यांचिदवस्थायां क्षणमात्रमपि कश्चिदपि ज्ञोऽज्ञो वा अकर्मकृत्कर्माण्यकुर्वन्न तिष्ठति । कुत इत्यत उक्तम्—**कार्यत इति** । सर्वः सर्वेण जनेन व्यत्ययात् । अवशः अवशेन “अ:इति ब्रह्म” इतिश्रुतेः । विष्णुवशेनैव सता स्वतन्त्रकर्तृविष्णवधीनकर्तृताकेनैव कर्त्रा प्रकृतिजैर्गुणैः सत्त्वादिभिर्विकारकर्तृभूतैः कर्म कार्यते । स्वतन्त्रकर्त्रा भगवता विकारकर्तृसत्त्वादिभिश्च प्रेरितो जनः सदा किंचित्कर्म करोतीति हेतोरकर्मकृत्कोऽपि नेत्यर्थः ॥ ५ ॥

## कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ॥
## इन्द्रियार्थान्विमूढात्मा मिथ्याचारः स उच्यते ॥ ६ ॥

**त० टी०**—ननु कर्मणः कर्मेन्द्रियाधीनत्वात् तन्नियमने कर्म कथं स्यादिति चेत्तत्राह—**कर्मेन्द्रियाणीति** । यो विमूढात्मा अनादिविषयवासनया मलीमसत्वेनाऽऽत्मतत्त्वस्मरणानर्हतया विषयासक्तमनाः कर्मेन्द्रियाणि संयम्य मनसा इन्द्रियार्थान्विषयान् स्मरन्नास्ते स मिथ्याचार उच्यते । निष्कामकर्मानुष्ठानं विनाऽनादिपापानिवृत्त्या मनसो विषयासङ्गोऽवर्जनीय इति भावः । तस्मात्परमार्थोपयोगित्वाभावात्सर्वकर्मसंन्यास्यहमिति लोके दर्शयितुं मिथ्या वृथैव कर्मेन्द्रियसंयमरूप आचारो यस्य स तथा उच्यते । शास्त्रविद्भिरिति शेषः ॥ ६ ॥

**म० टी०**—यथा कथंचिदौत्सुक्यमात्रेण कृतसंन्यासस्त्वशुद्धचित्तस्तत्फलभाङ्न भवति यतः यो विमूढात्मा रागद्वेषादिदूषितान्तःकरण औत्सुक्यमात्रेण कर्मेन्द्रियाणि वाक्पाण्यादीनि संयम्य निगृह्य बहिरिन्द्रियैः कर्माण्यकुर्वन्निति यावत् मनसा रागादिप्रेरितेन इन्द्रियार्थान् शब्दादीन् नत्वात्मतत्त्वं स्मरन्नास्ते कृतसंन्यासोऽहमित्यभिमानेन कर्मशून्यस्तिष्ठति स मिथ्याचारः सत्त्वशुद्ध्यभावेन फलायोग्यत्वात्पापाचार उच्यते ‘ त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् । श्रुत्येह विहितो यस्मात्तत्त्यागी पतितो भवेत् ’ इत्यादिधर्मशास्त्रेण । अत उपपन्नं न च संन्यसनादेवाशुद्धान्तःकरणः सिद्धिं समधिगच्छतीति ॥ ६ ॥

शं० टी०–ननु सर्वं कर्म संन्यस्य करपादादीन्द्रियग्रामं रुद्ध्वा बहिस्तूर्ष्णीं स्थाणुवन्नैश्चल्येन स्थातुं शक्यत एवेत्याशङ्कायां न बन्धमोक्षयोर्गतिं स्वाधिकारं चाविज्ञाय किं कर्मणा निष्फलेन क्लेशभूयिष्ठेनेति दुरहंकारेण मुक्तिसाधनं वैदिकं कर्म सर्वं संन्यस्य यस्तूष्णीं तिष्ठति स दम्भाचार इत्याह–**कर्मेन्द्रियाणीति**। विमूढात्मा विमूढः कार्याकार्यविवेकरहित आत्मा मनो यस्य स विमूढात्मा सन् स्वस्य कर्तव्यं वैदिकं कर्म मुक्तिसाधनं परित्यज्य बहिः कर्मेन्द्रियाणि संयम्य निरुध्य चक्षुषी निमील्यान्तरिन्द्रियार्थान् शब्दादीन् स्मरन् चिन्तयन् य आस्ते ब्रह्मविदहमेव कर्मसंन्यासेन कृतार्थोऽस्मीति स मिथ्याचारोऽसदाचारः कपटचारित्र आत्मवञ्चक इति सद्भिरुच्यत इत्यर्थः। एतेन श्रवणार्थं वान्यथा वा संन्यस्य श्रवणादिकमकृत्वा वेषेण जीवनं कुर्वन् संन्यासेनैव कृतार्थोऽहमिति यो यतिर्मन्यते सोऽपि मिथ्याचार एवेति सूचितं भवति ॥ ६ ॥

श्री० टी०–अतोऽज्ञं कर्मत्यागिनं निन्दति–**कर्मेन्द्रियाणीति**। वाक्पाण्यादीनि कर्मेन्द्रियाण्यपि संयम्य निगृह्य यो मनसा भगवद्ध्यानच्छलेनेन्द्रियार्थान् विषयान् स्मरन्नास्ते अविशुद्धतया मनस आत्मनि स्थैर्याभावात् स मिथ्याचारः कपटाचारो दाम्भिक उच्यत इत्यर्थः ॥ ६ ॥

स० टी०–रागाद्याक्रान्तचित्तस्तु योऽकुर्वन्बहिरिन्द्रियैः॥ कर्माणि मनसा रागद्वेषादिप्रेरितेन च ॥ १ ॥ शब्दादीन्संस्मरन्नित्यं कर्म त्यक्त्वैव तिष्ठति ॥ स सत्त्वशुद्ध्यभावेन पापाचारः प्रकथ्यते ॥ २ ॥ त्वंपदार्थविवेकाय संन्यासः सर्वकर्मणाम् ॥ श्रुत्या विधीयते यस्मादन्यथा पतितो भवेत् ॥ ३ ॥ ६ ॥

भा० टी०–ननु हठात्कर्मेन्द्रियाणि संयम्याकर्मकृद्भविष्यतीत्याशङ्क्य यस्त्वनात्मज्ञोऽशुद्धान्तःकरणो हठात्कर्मेन्द्रियाणि संयम्य विहितं कर्म न करोति औत्सुक्यात्संन्यस्यति स तूभयतो भ्रष्ट इत्याह–**कर्मेति**। कर्मेन्द्रियाणि यो विमूढात्मा रागद्वेषादिभिर्मलिनचित्तः हस्तादीनि संहृत्य इन्द्रियार्थान् शब्दादीन् मनसा स्मरन्नास्ते स मिथ्याचारोऽसदाचारः पापाचार उच्यते ॥ ६ ॥

प० टी०–अथ कोऽपि पुमानहं प्राप्तनैष्कर्म्यसिद्धिरिति ध्यानच्छलेन नेत्रे निमील्य तिष्ठति सोऽपि निन्द्यते–**कर्मेन्द्रियाणीति**। कर्मेन्द्रियाणि वाक्पाणिपादादीनि संयम्य नियम्य तूर्ष्णीं तिष्ठति मनसा त्विन्द्रियार्थान् रूपरसादीन् विषयान् स्मरति मिथ्याचारो दाम्भिकः सन्नास्ते स विमूढात्मेत्युच्यते। स्वहितमजानन् व्यर्थमायुः परिकलयतीत्यर्थः ॥ ६ ॥

रा० टी०–ननु शरीरयात्राद्यर्थकर्मणां त्यक्तुमशक्यत्वेऽपि यज्ञादिकर्मणां त्यक्तुं शक्यत्वात्तेषामस्तु त्यागः। न ह्यशक्यविषये शास्त्रप्रवृत्तिरस्ति। अतः कर्मणा बध्यत इति कर्मत्यागपरे शास्त्रे कर्मशब्दो यज्ञादिकर्मपरो भविष्यतीत्यतो मन एव बन्धमोक्षयोः प्रयोजकं न कर्मकरणाकरणे इतिभावेन मनस एव प्राधान्यमाह–**कर्मेत्यादिश्लोकाभ्याम्**। कर्मेन्द्रियाणि वाक्पाणिपादपायूपस्थानि चक्षुरादीन्युपलक्ष्यन्ते। संयम्य निगृह्य यो मनसा इन्द्रियार्थान् रूपादीन्मनसा स्मरन्नास्ते वर्तते स विमूढात्मा भ्रान्तः मिथ्याचारः कपटाचारः दाम्भिक उच्यत इत्यर्थः ॥ ६ ॥

**यस्त्विन्द्रियाणि मनसा नियम्यारभतेऽर्जुन ॥**
**कर्मेन्द्रियैः कर्मयोगमसक्तः स विशिष्यते ॥ ७ ॥**

त० टी०–तस्माद्विषयासक्तिशून्यः कर्मकर्ताऽपि ततः श्रेष्ठ इत्याह–**यस्त्विति**। तुशब्दः पूर्वोक्तसंन्यासिनो वैलक्षण्यद्योतनार्थः। इन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि आत्मस्मरणयोग्येन विषय-

विमुक्तेन मनसा नियम्य वशीकृत्य कर्मेन्द्रियैः वाक्पाणिपादादिभिः कर्मयोगमसक्तः फलाभिसन्धिरहितः सन् य आरभते स क्रमेण महच्छ्रेयोयोग्यत्वाद्विशिष्यते श्रेष्ठो भवति ॥ ७ ॥

म० टी०—औत्सुक्यमात्रेण सर्वकर्माण्यसंन्यस्य चित्तशुद्धये निष्कामकर्माण्येव यथाशास्त्रं कुर्यात् यस्मात् तुशब्दोऽशुद्धान्तःकरणसंन्यासिव्यतिरेकार्थः। इन्द्रियाणि ज्ञानेन्द्रियाणि श्रोत्रादीनि मनसा सह नियम्य पापहेतुशब्दादिविषयासक्तेर्निवर्त्य मनसा विवेकयुक्तेन नियम्येति वा कर्मेन्द्रियैर्वाक्पाण्यादिभिःकर्मयोगं शुद्धिहेतुतया विहितं कर्मारभते करोत्यसक्तः फलाभिलाषशून्यः सन् यो विवेकी स इतरस्मान्मिथ्याचाराद्विशिष्यते परिश्रमसाम्येऽपि फलातिशयभाक्त्वेन श्रेष्ठो भवति। हे अर्जुन आश्चर्यमिदं पश्य यदेकः कर्मेन्द्रियाणि निगृह्णन् ज्ञानेन्द्रियाणि व्यापारयन् पुरुषार्थशून्योऽपरस्तु ज्ञानेन्द्रियाणि निगृह्य कर्मेन्द्रियाणि व्यापारयन् परमपुरुषार्थभाग्भवतीति वा ॥ ७ ॥

शं० टी०—अनात्मज्ञस्य मुमुक्षोः कर्मसंन्यासापेक्षया कर्मयोग एव श्रेष्ठ इत्याह—**यस्त्विति**। तुशब्दः पूर्वस्मादस्य श्रेष्ठत्वद्योतनार्थः। यस्त्वनात्मज्ञो मुमुक्षुर्विचक्षणः कर्मसंन्यासमकृत्वैव चक्षुरादीनीन्द्रियाणि रागद्वेषादिदोषाणां गोचराणि भवेयुर्यथा तथान्तर्नियम्य स्वयमसक्तः फलाभिसन्धिरहितो भूत्वेश्वरार्पणबुद्ध्या कर्मेन्द्रियैर्वागादिभिः कर्मयोगं श्रौतं स्मार्तं वारभते श्रद्धया चित्तशुद्ध्यै करोति स विशिष्यते मोक्षसाधनीभूतकर्मयोगनिष्ठत्वात्कर्मयोगी पूर्वोक्तदाम्भिककर्मसंन्यासापेक्षया श्रेष्ठ इत्यर्थः ॥ ७ ॥

श्री० टी०—एतद्विपरीतः कर्मकर्ता श्रेष्ठ इत्याह—**यस्त्विति**। यस्तु ज्ञानेन्द्रियाणि मनसा नियम्य ईश्वरप्रवणानि कृत्वा कर्मेन्द्रियैः कर्मरूपं योगं उपायमारभते अनुतिष्ठति असक्तः फलाभिलाषरहितः सन् स विशिष्यते विशिष्टो भवति चित्तशुद्ध्या ज्ञानवान् भवतीत्यर्थः ॥ ७ ॥

स० टी०—कर्मण्यधिकृतो यस्तु सचित्तानीन्द्रियाणि च ॥ भोगासक्तेर्निवर्त्याशु वाक्पाण्यादिभिरिन्द्रियैः ॥ १ ॥ शुद्धिहेतुतया प्रोक्तं कर्मयोगविवेकवान् ॥ फलाभिलाषशून्यः सन्करोति स विशिष्यते ॥ २ ॥ श्रमे साम्येऽपि पूर्वोक्तान्मिथ्यासंन्यासिनो नरान् ॥ चित्तशुद्ध्यै क्रियाः कुर्वन् श्रेष्ठः स्यात्फलभाग्यतः ॥ ३ ॥ ७ ॥

भा० टी०—य इति। यस्त्वज्ञः कर्मण्यधिकृतः ज्ञानेन्द्रियाणि विवेकवैराग्ययुक्तेन मनसा नियम्य मनसा सहेत्यर्थस्त्वरुचिग्रस्तः अरुचिबीजं तु पूर्वश्लोकोक्तस्य करणत्वस्य त्यागः सहशब्दाध्याहारश्च फलाभिसन्धिरहितः कर्मेन्द्रियैः कर्मयोगमारभते स पूर्वस्माच्छ्रेष्ठो भवति ज्ञाननिष्ठोपाये स्थितो यतः अर्जुनेति संबोधयन् एवमेव त्वमपि कुर्वन् अन्वर्थसंज्ञो भविष्यसीति ध्वनयति ॥ ७ ॥

प० टी०—अथाविमूढात्मानं वर्णयति—**यस्त्विति**। यस्तु ज्ञानेन्द्रियाणि आत्मप्रवणेन मनसा नियम्यासक्तः फलानपेक्षः सन् कर्मेन्द्रियैः कृत्वा कर्मयोगमारभते स एव विशिष्यते विशिष्टो भवति चित्तशुद्ध्या ज्ञानवान् भवति यस्मादेवं तस्मात्तथा भवेति तात्पर्यम् ॥ ७ ॥

रा० टी०—यस्त्विन्द्रियाणि चक्षुरादिज्ञानेन्द्रियाणि मनसा नियम्य असक्तः फलेच्छाहीनः सन् कर्मेन्द्रियैः कर्मयोगं स्ववर्णाश्रमोचितकर्मरूपज्ञानोपायमारभते करोति स विशिष्यते पूर्वतनादधिको भवति। एतेन पूर्वश्लोके मनसो निग्रहाभावे बन्ध इत्यन्वयः। द्वितीये तु मनसो निग्रहे बन्धाभाव इति व्यतिरेक उक्तः। तथा पूर्वत्र मनसोऽनिग्रहे मोक्षाभाव इति व्यतिरेकः। द्वितीये तु श्लोके मनसोऽनिग्रहे मोक्ष इत्यन्वय इति बन्धापेक्षया मनसोऽनिग्रहनिग्रहयोरन्वयव्यतिरेकौ मोक्षापेक्षया च व्यतिरेकान्वयावित्युक्तदिशाभिप्रेततया बन्धमोक्षयोर्मनोऽनिग्रहनिग्रहावेव प्रयोजकावित्युक्तं भवति।

मनस एव प्रयोजकत्वज्ञापनाय मनसा स्मरन्नित्युक्तिः । अन्यथा स्मरणस्य मानसत्वाव्यभिचारान्मनसेति व्यर्थं स्यादिति ज्ञेयम् ॥ ७ ॥

**नियतं कुरु कर्म त्वं कर्म ज्यायो ह्यकर्मणः ॥**
**शरीरयात्राऽपि च ते न प्रसिध्येदकर्मणः ॥ ८ ॥**

**त० टी०**—पूर्वोक्तयत्तच्छब्दाभ्यामन्यपर एवायमुपदेश इति न मन्तव्यमित्याह—**नियतमिति** । मोहलिङ्गेन पूर्वमकृतनिष्कामकर्मा त्वं नियतं नित्यकर्तव्यतया विहितं स्नानसन्ध्योपासनतर्पणादिकं कर्म कुरु । हि यस्मादकर्मणः कर्माकरणात्कर्म ज्यायः प्रशस्यं पापक्षयहेतुत्वात् । न केवलं प्रशस्यतया कर्तव्यमपि तु अकर्मणः सर्वकर्मरहितस्य तव शरीरयात्रा देहनिर्वाहोऽपि न प्रकर्षेण सिद्ध्येत्कुतोऽन्यदिति अपिशब्दार्थः ॥ ८ ॥

**म० टी०**—यस्मादेवं तस्मात् मनसा ज्ञानेन्द्रियाणि निगृह्य कर्मेन्द्रियैः त्वं प्रागननुष्ठितशुद्धिहेतुकर्मा नियतं विध्युद्देशे फलसंबन्धशून्यतया नियतनिमित्तेन विहितं कर्म श्रौतं स्मार्तं च नित्यमिति प्रसिद्धं कुरु कुर्विति मध्यमपुरुषप्रयोगेणैव त्वमिति लब्धे त्वमिति पदमर्थान्तरे संक्रमितं कस्मादशुद्धान्तःकरणेन कर्मैव कर्तव्यं हि यस्मात् अकर्मणोऽकरणात् कर्मैव ज्यायः प्रशस्यतरं न केवलं कर्माभावे तवान्तःकरणशुद्धिरेव न सिध्येत् किंतु अकर्मणो युद्धादिकर्मरहितस्य ते तव शरीरयात्रा शरीरस्थितिरपि न प्रकर्षेण क्षात्रवृत्तिकृतत्वलक्षणेन सिध्येत् । तथा च प्रागुक्तम् । अपि चेत्यन्तःकरणशुद्धिसमुच्चयार्थः ॥ ८ ॥

**शं० टी०**—मुमुक्षोर्नैष्कर्म्यसिद्धये मिथ्याचारत्वादौ निवृत्तये चावश्यं कर्म कर्तव्यमिति सूचयितुमाह—**नियतमिति** । हि यस्मात्कारणादकर्मणः येन न संभाव्यते कर्मबन्धः पुरुषस्य स कर्मसंन्यासस्तस्मादकर्मणो मूढकर्तृकाद्विवेकवता मोक्षसाधनत्वेन क्रियमाणं कर्म ज्यायः श्रेष्ठम् । यद्यपि "संन्यास एवात्यरेचयत्" इति संन्यासस्यैव सर्वोत्कृष्टतमत्वं श्रूयते तथापि 'योग्यप्रयुक्तं साधनं कार्यसाधकम्' इतिन्यायेन नाहं कर्म करोमीत्यभिमानवन्मूढतमकृतत्वात्संन्यासस्य तदपेक्षया परमेश्वरमाराध्याहं तरिष्यामीतीश्वरार्पणबुद्ध्या निरभिमानिना मुमुक्षुणा क्रियमाणत्वात्कर्म ज्याय इत्युपचर्यते नतु संन्यासो दूष्यते किंतु विद्वत्संन्यासाद्विविदिषासंन्यासाद्विलक्षणः संन्यासः स्वस्थेन न कर्तव्य इत्युच्यते तत्र विध्यभावाद्यत आत्मतत्त्वमज्ञात्वैव केवलमूढेनाविविदिषुणा कर्मसंन्यासः कृतश्चेत्तेन प्रत्यवाय एकोऽनर्थः नरकपातो द्वितीयः दुर्योनिस्तृतीयः मोक्षाभावश्चतुर्थः कृते तु कर्मणि प्रत्यवायाभावः ईश्वरप्रसादश्चित्तशुद्धिर्ज्ञानं मोक्षश्च सिध्यत्यतः फलभूयस्त्वात्कर्मणस्त्वं नियतं विध्युक्तं कर्म नित्यं वा नैमित्तिकं वेश्वरप्रीत्यर्थं चित्तशुद्ध्यर्थं च कुर्वित्यर्थः । न केवलमामुष्मिकार्थमेव कर्म कर्तव्यं भवति किंत्वैहिकार्थमपि कर्तव्यमित्याह—**शरीरेति** । निश्चलात्मना स्थाणुवत्तूष्णीमवस्थानं खल्वकर्म कर्मसंन्यासस्तस्मादकर्मणो निःशेषकर्मपरित्यागात्ते शरीरयात्रापि न प्रसिध्येत् सुखेन न सिध्यतीत्यर्थः । नहि बृहच्छिलावद्गुहायां कन्दरे वा तूर्ष्णीं तिष्ठतः शरीरयात्रा सिध्यति यत्किंचित्तदनुकूलव्यापारं विना ततस्तदर्थमपि कर्म कर्तव्यमेव । ननु यावता कर्मणा शरीरपरित्राणं सिध्येत्तावत्कर्म कुर्यां न ततोऽतिरिक्तमिति चेत्तत एव भवानतिमूढः संन्यासानर्हश्च भवति यतः स्वेतरस्यैवाऽनात्मनो देहस्य रक्षणं कर्तुमिच्छति नत्वात्मनः तवायमात्मा जननमरणप्रवाहे पतित्वा मुहुर्मुहुर्निमज्जन्नुन्मज्जन्निरन्तरदुःखेन क्लिश्नाति त्वमात्मनस्त्राणमकृत्वा अनात्मनः शत्रोरेव त्राणाय यतस इतोऽपि वा दुरभिमानं त्यक्त्वा कर्मणा शरीरत्राणमत्यन्तास्थया यथा करोषि तथा विहितानि कर्माण्यनुष्ठाय तेन प्राप्तचित्तशुद्ध्याऽऽत्मज्ञानमपरोक्षलक्षणं संपाद्यात्मानं दुःखसागरादुद्धर 'उद्धरेदात्मनात्मानम्' इतिवचनादात्मनो मोक्षार्थमेव कर्म कुरु न कचिदप्यन्यार्थमित्यर्थः ॥ ८ ॥

श्री० टी०—यस्मादेवं तस्मात्—**नियतमिति** । नियतं नित्यं सन्ध्योपासनादि कर्म कुरु हि यस्मादकर्मणः कर्माकरणात्सकाशात्कर्म ज्यायः अधिकतरम् । अन्यथाऽकर्मणः सर्वकर्मशून्यस्य तव शरीरनिर्वाहोऽपि न भवेत् ॥ ८ ॥

स० टी०—यस्मादेवं ततो बुद्ध्या धीन्द्रियाणि निगृह्य वै ॥ फलसंबन्धशून्यं यद्विहितं विधिनैव तत् ॥ १ ॥ नियतं कर्म नित्यं त्वं श्रौतं स्मार्तं समाचर ॥ अशुद्धबुद्धेः कर्मैवाकरणादधिकं यतः ॥ २ ॥ न सिद्ध्येन्मनसः शुद्धिः कर्माभावेन केवलम् ॥ किंतु स्वधर्मशून्यस्य देहस्थितिरपीहते ॥ ३ ॥ नैव सिद्ध्येत्प्रकर्षेण ततः कर्म समाचर ॥ ४ ॥ ८ ॥

भा० टी—यत एवमतो नियतं स्ववर्णाश्रमोचितं नित्यं कर्म त्वं फलाभिसन्धिरहितः कुरु हि यस्मादकरणात् चित्तशोधकं कर्म श्रेष्ठं न केवलमकरणाच्चित्तशुद्ध्यभाव एव किंतु शरीरयात्रापि शरीरस्थितिरपि च ते प्रकर्षेण स्वधर्मवृत्त्या न सिद्ध्येदकर्मणः ॥ ८ ॥

प० टी०—एवं वेदविहितं कर्म द्विविधमुपन्यस्तमेकमिहामुत्रफलभोगजनकमपरं नैष्कर्म्यजनकं तयोरुभयोर्यद्रोचते तत्कार्यं परं तूभयशून्यत्वं मा भजेत्याह—**नियतमिति** । नियतमकरणे प्रत्यवायजनकं संध्योपासनादि कुरु । हि यस्मात् कारणादकर्मणः कर्माकरणात्सकाशात्कर्म ज्यायः श्रेष्ठम् । कुत इत्याह—**अकर्मण इति** । कर्मशून्यत्वात्ते शरीरयात्रापि न प्रसिध्येत् पुनरेतादृशशरीरप्राप्तिर्न भवेदधमयोनिप्राप्तौ सर्वमपि नश्यतीत्यर्थः ॥ ८ ॥

रा० टी०—ततः किमित्यत आह—**नियतमिति** । हि यस्मादकर्मणः कर्माकरणात्कर्मानुष्ठानं ज्यायः प्रशस्ततममतो नियतं वर्णाश्रमोचितं कर्म कुरु । किंचाकर्मणः कर्माकुर्वतस्ते तव शरीरयात्रापि देहनिर्वाहोऽपि न प्रसिद्ध्येदित्यर्थः ॥ ८ ॥

**यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ॥**
**तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ॥ ९ ॥**

**त० टी०—ननु " ज्ञात्वा देवं मुच्यते सर्वपाशैः " इति श्रुतेः, 'कर्मणा बध्यते जन्तुः' इति स्मृतेश्च सर्वकर्मणो बन्धकत्वाभिधानात्कथं मां तत्रैव प्रवर्तयसीति विवक्षुं मत्वाऽऽह—यज्ञार्थादिति । यज्ञो विष्णुः " यज्ञो वै विष्णुः " इति श्रुतेः तदर्थं तदाराधनं तदाज्ञापालनात्मकं यत्कर्म ततोऽन्यत्र कर्मणि प्रवृत्तोऽयं लोकः कर्माधिकारी जनः कर्मबन्धनः कर्मैव बन्धनं यस्य स तथा कर्मणा बध्यते इत्यर्थः । अतस्तदर्थं विष्णुप्रीत्यर्थं कर्म हे कौन्तेय मुक्तसङ्गः फलसंकल्परहितः सन् सम्यग्विधिश्रद्धापूर्वकमाचर ॥ ९ ॥**

म० टी०—'कर्मणा बध्यते जन्तुः' इति स्मृतेः सर्वं कर्म बन्धात्मकत्वान्मुमुक्षुणा न कर्तव्यमिति मत्वा तस्योत्तरमाह—**यज्ञार्थादिति** । यज्ञः परमेश्वरः " यज्ञो वै विष्णुः " इति श्रुतेः । तदाराधनार्थं यत्क्रियते कर्म तद्यज्ञार्थं तस्मात्कर्मणोन्यत्र कर्माणि प्रवृत्तोऽयं लोकः कर्माधिकारी कर्मबन्धनः कर्मणा बध्यते नत्वीश्वराराधनार्थेन अतस्तदर्थं कर्म हे कौन्तेय त्वं कर्मण्याधिकृतो मुक्तसङ्गः सन् समाचार सम्यक् श्रद्धादिपुरस्सरमाचर ॥ ९ ॥

शं० टी०—ननु 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते' इति कर्मणां बन्धहेतुत्वस्मरणात्कथं बन्धकं कर्म कर्तुं शक्यते इत्याशङ्कायां न, काम्यस्यैव कर्मणो बन्धकत्वं नत्वीश्वरार्पणबुद्ध्या क्रियमाणस्येत्याह—**यज्ञार्थादिति** । " यज्ञो वै विष्णुः " इतिश्रवणाद्यज्ञस्य श्रीविष्णोः परमेश्वरस्यार्थं संतुष्टिनिमित्तं यत्कर्म क्रियते

वैदिकं तद्यज्ञार्थमित्युच्यते तस्माद्यज्ञार्थात्कर्मणो नित्यादीश्वरप्रीतिहेतोरन्यत्र काम्यादौ कर्मण्ययं लोकोऽधिकारी ब्राह्मणादिः कर्मबन्धनः कर्मैवबन्धनं जन्मादेर्निबन्धनं हेतुर्यस्य स कर्मबन्धनो भवति विहिताकरणेन वा काम्येन निषिद्धेन वा कृतेन कर्मणा नरो बन्धवान् भवति नत्वीश्वरप्रीत्यै क्रियमाणेन कर्मणा 'तत्कर्म यन्न बन्धाय' इति स्मरणादीश्वराराधनात्मकमेव कर्माऽबन्धकं तदन्यत्तु बन्धकमित्यर्थः । ततस्तदर्थमीश्वरप्रीत्यर्थं चाऽवश्यं त्वं मुक्तसङ्गः फलाभिसन्धिरहितो भूत्वा विहितं कर्म समाचर सम्यगनुतिष्ठ तेन तुष्टेश्वरप्रसादात् शुद्धात्मा सन् ज्ञानं प्राप्य मुक्तो भविष्यसीत्यर्थः ॥ ९ ॥

**श्री० टी०**–सांख्यास्तु सर्वमपि कर्म बन्धकत्वान्न कार्यमित्याहुस्तन्निराकुर्वन्नाह–**यज्ञार्थादिति** । यज्ञोऽत्र विष्णुः "यज्ञो वै विष्णुः" इति श्रुतेस्तदाराधनार्थात्कर्मणोऽन्यत्र तदेकं विनाऽयं लोकः कर्मबन्धनः कर्मभिर्बध्यते नत्वीश्वराराधनार्थेन कर्मणा अतस्तदर्थं विष्णुप्रीत्यर्थं मुक्तसङ्गो निष्कामः सन्कर्म सम्यगाचर ॥ ९ ॥

**स० टी०**–कर्मणा बध्यते जन्तुरिति स्मृत्या मुमुक्षुणा ॥ बन्धकत्वात्कथं कर्म कर्तव्यमिति चेच्छृणु ॥ १ ॥ यज्ञो वै विष्णुरित्युक्तस्तदाराधनहेतुकम् ॥ यत्कर्म क्रियते तस्मात्प्रवृत्तोऽन्यत्र कर्मणि ॥२॥ कर्माधिकार्ययं लोकः कर्मणा बध्यते तदा ॥ नेश्वराराधनार्थेन बध्यतेऽतस्तदर्थकम् ॥ ३ ॥ कर्मण्यधिकृतः संस्त्वं फलसङ्गविवर्जितः ॥ सम्यक् श्रद्धादिना कर्म कौन्तेय कुरु शास्त्रतः ॥ ४ ॥ ९ ॥

**भा० टी०**–ननु 'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते' इतिस्मृत्या यच्च मन्यसे बन्धार्थत्वात्कर्म न कर्तव्यमिति तदप्यसदित्याह–यज्ञेति यज्ञार्थात् ईश्वरार्थात् "यज्ञो वै विष्णुः" इतिश्रुतेः कर्मणोऽन्यत्रान्येन कर्मणाऽयं लोकः कर्म बन्धनं यस्य सः ये त्वन्यत्र कर्मणि प्रवृत्तोऽयं लोकः कर्मणा बध्यत इति भाष्यविरुद्धं वर्णयन्ति तैः प्रवृत्तपदाध्याहारदोषः कर्मण्यनुशासनाभावाद्बहुलग्रहणस्यागतिकगतित्वात् ल्युडनुपपत्तिदोषो बहुव्रीह्यभावेन पुलिङ्गानुपपत्तिदोषश्च परिहरणीयः । तस्मात्कर्मफलासङ्गवर्जितः सन् यज्ञार्थं कर्म समाचर कौन्तेयेति संबोधयन् स्वपक्षग्रहण उत्साहयति ॥ ९ ॥

**प० टी०**–अथ सांख्याः सर्वमपि कर्म बन्धकत्वान्न कार्यमित्याहुस्तन्निषेधयति–**यज्ञार्थादिति** । "यज्ञो वै विष्णुः" इत्यादि श्रुतेः यज्ञो विष्णुः स एवार्थः प्रयोजनं यस्य तद्यज्ञार्थात्परमेश्वरार्पणत्वेन कृतात्कर्मणः सकाशादन्यत्र बन्धके कर्मणि कर्मैव बन्धनं यस्य स कर्मबन्धनो लोको जनः सज्जतेऽत एव मुक्तसङ्गस्त्यक्तफलाभिसंधिः सन् ॥ ९ ॥

**रा० टी०**–'कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः' इतिस्मृतेर्मुक्तिप्रतिबन्धकत्वात्कर्म न कार्यमिति प्राग्विकल्पितं तृतीयं पक्षं निराह–**यज्ञार्थादिति** । यज्ञो विष्णुः "यज्ञो वै विष्णुः" इति श्रुतेः । तदर्थात् । यद्वा जानातीति ज्ञः । इगुपधज्ञाप्रीकिरः कः । स्वपरगताशेषविशेषज्ञत्वात् । ज्ञो विष्णुः येनोद्देशेन यातो विषयीकृतः स उद्देशो यज्ञः विष्णुविषयोद्देशार्थात्कर्मणोऽन्यत्र विष्णवन्यविषये विष्णूद्देशादन्योद्देशविषये वा । अयं लोको जनः कर्मबन्धनः । "कृत्यल्युटो बहुलम्" इति कर्तरि ल्युट् । कर्म बन्धनं बन्धकं यस्य स कर्मबन्धनः । अवैष्णवकर्मैव प्रतिबन्धकं न वैष्णवं कर्म । कर्मणेतिस्मृतौ कर्मपदमवैष्णवकर्मपरं नतु कर्ममात्रपरम् । अत एव प्राक् 'न हि कश्चित्' इति श्लोके कर्मणेति स्मृतिबलात्कर्ममात्रं न करोमीति त्वया वक्तुमशक्यम् । स्मृतौ कर्मपदस्य संकोचस्त्वयाप्यभ्युपेय इति भावे नाकर्मकृत्कोऽपि नास्ति । सदा भगवदादिप्रेरितः किंचित्कर्म कुर्वन्नेव सर्वोप्यास्ते इत्यसंकुचितवृत्तित्वे बाधकमुक्तम् । तथा शरीरयात्रापीत्यत्रापि देहनिर्वाहाभावो बाधक उक्तः । अतस्तदर्थं भगवत्पूजार्थं मुक्तसङ्गः फलकामनाहीनः सन्कर्म समाचर कुर्विति ॥ ९ ॥

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ॥
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ १० ॥

त० टी०—एवं मुमुक्षुणा ज्ञानलाभाय विष्णुप्रीत्यर्थं तदाराधनात्मकं निष्कामकर्म कर्तव्यमित्युक्तमिदानीं विष्णवाराधनरूपं कर्म स्वभक्तायैवोपदिशामि, नतु सर्वजनेभ्यः। यतोमद्भक्तेतरे सर्वे जनाः सृष्टिवृद्धये प्रजापतिना विष्णवितरदेवताऽऽराधने काम्ये कर्मणि नियुक्ता इति ज्ञापनाय प्रजाः प्रति तन्नियोगमाह—सहयज्ञा इति चतुर्भिः। सहयज्ञा यज्ञसाधनद्रव्यक्रियाकलापसहिताः प्रजाः ब्राह्मणादित्रिवर्णान् पुरा सर्गकाले कल्पादौ सृष्ट्वा प्रजापतिर्ब्रह्मोवाच। किं? तदाह—अनेन यज्ञेन यथावर्णाश्रमोचितविधिश्रद्धायुक्तेन प्रसविष्यध्वं प्रसवो वृद्धिः उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः। अनेन कथं वृद्धिः स्यादत आह—एष यज्ञो वो युष्माकमिष्टकामधुगस्तु। इष्टानभीष्टान्कामान्दोग्धीति तथा ऐहिकामुष्मिकाभीष्टभोगप्रदोऽस्त्वित्यर्थः। इहेत्थं काम्यकर्मणि नियोगः प्रलोभनं चोक्तसङ्गत्यैव संगच्छते। अन्यथा 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते, असक्तः स विशिष्यते, मुक्तसङ्गः समाचर' इति प्रकृतनिष्कामकर्मोपदेशविरोधात्। 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ असक्तो ह्याचरन्कर्म परमाप्नोति पूरुषः' इत्यादिवक्ष्यमाणात्मरतस्य कर्मनिरपेक्षत्वोक्तेरनासक्त्या चरतो मोक्षफलोक्तेर्जनकादिनिदर्शनाच्चासङ्गतं स्यादित्यलं विस्तरेण ॥१०॥

म० टी०--प्रजापतिवचनादप्यधिकृतेन कर्म कर्तव्यमित्याह–सहयज्ञा इत्यादिचतुर्भिः। सह यज्ञेन विहितकर्मकलापेन वर्तन्त इति सहयज्ञाः कर्माधिकृता इति यावत् "वोपसर्जनस्य" इति पक्षे सादेशाभावः। प्रजाः त्रीन् वर्णान् पुरा कल्पादौ सृष्ट्वोवाच प्रजानां पतिः स्रष्टा। किमुवाचेत्याह--अनेनेति। अनेन यज्ञेन स्वाश्रमोचितधर्मेण प्रसविष्यध्वं प्रसूयध्वं प्रसवो वृद्धिः उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः। कथमनेन वृद्धिः स्यादत आह--एष यज्ञाख्यो धर्मः वो युष्माकम् इष्टकामधुक् इष्टानभिमतान् कामान् काम्यानि फलानि दोग्धि प्रापयतीति तथा अभीष्टभोगप्रदोऽस्त्वित्यर्थः। अत्र यद्यपि यज्ञग्रहणमावश्यककर्मोपलक्षणार्थम् अकरणे प्रत्यवायस्याग्रे कथनात् काम्यकर्मणां च प्रकृते प्रस्तावो नास्त्येव 'मा कर्मफलहेतुर्भूः' इत्यनेन निराकृतत्वात् तथापि नित्यकर्मणामप्यानुषङ्गिकफलसद्भावात् 'एष वोऽस्त्विष्टकामधुक्' इत्युपपद्यते। तथाचापस्तम्बः स्मरति तद्यथा 'आम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्ते नो चेदनूत्पद्यन्ते न धर्महानिर्भवति' इति फलसद्भावेऽपि तदभिसन्ध्यनभिसन्धिभ्यां काम्यनित्ययोर्विशेषः। अनभिसंहितस्यापि वस्तुस्वभावादुत्पत्तौ न विशेषः। विस्तरेण चाग्रे प्रतिपादयिष्यते ॥ १० ॥

शं० टी०—पूर्वं नैष्कर्म्यसिद्धये मिथ्याचारत्वनिवृत्तये शरीरयात्रासिद्धये चावश्यं कर्म कर्तव्यमित्युक्त्वा इदानीं धर्मज्ञसमयः प्रमाणमिति सूत्रोक्तरीत्या धर्मज्ञतमेन ब्रह्मणा प्रोक्तः प्रामाणिकोऽयं परमो धर्मो मुमुक्षूणामवश्यं कर्तव्य इन्द्रादिदेवताप्रसादसिद्धय इत्याह–सहयज्ञा इति द्वाभ्याम्। पुरा सृष्ट्यादौ प्रजापतिर्ब्रह्मा श्रुत्युक्तैर्यज्ञैः सह प्रजा ब्राह्मणादिवर्णान् सृष्ट्वा ताः प्रजा उवाच यूयमनेन यज्ञेन श्रौतेन स्मार्तेन च प्रसविष्यध्वं चरुपुरोडाशादिद्रव्यैर्देवानां प्रीतिमुत्पादयध्वम्। एष देवानुद्दिश्य श्रद्धया कृतो यज्ञोऽपि व इष्टानिच्छाया विषयभूतान् काम्यन्त इति कामाः फलविशेषास्तान् दोग्धीतीष्टकामधुक् भवतु। निष्कामानां ज्ञानप्रतिबन्धकदुरितक्षयाय सकामानां स्वर्गसुखाय भवेदित्यभिप्रायः ॥ १० ॥

श्री० टी०—प्रजापतिवचनादपि कर्मकर्तैव श्रेष्ठ इत्याह–सहयज्ञा इति चतुर्भिः। यज्ञेन सह वर्तन्त

इति सहयज्ञाः यज्ञाधिकृता ब्राह्मणाद्याः प्रजाः पुरा सर्गादौ सृष्ट्वा ब्रह्मा इदमुवाच-अनेन यज्ञेन प्रसविष्यध्वं प्रसूयध्वम् प्रसवो वृद्धिः उत्तरोत्तरामभिवृद्धिं लभध्वमित्यर्थः । तत्र हेतुः एष यज्ञः वो युष्माकम् इष्टकामधुक् इष्टान् कामान्दोग्धीति तथा अभीष्टभोगप्रदोऽस्त्वित्यर्थः । अत्र च यज्ञग्रहणमावश्यककर्मोपलक्षणार्थम् काम्यकर्मप्रशंसा तु प्रकरणेऽसङ्गतापि सामान्यतोऽकर्मणः कर्म श्रेष्ठमित्येतदर्थेत्यदोषः ॥ १० ॥

**स० टी०**—प्रजापतिगिराप्येवं कर्म कर्तव्यमादरात् ॥ सृष्ट्वा कर्मकलापेन सह वर्णत्रयात्मिकाः ॥ १ ॥ प्रजाः स्रष्टा स कल्पादावुवाचाधिकृतान् जनान् ॥ स्वाश्रमोचितधर्मेणाभिवृद्धिं ह्युत्तरोत्तरम् ॥ २ ॥ लभध्वं यूयमेतस्मात्कुरुध्वं यज्ञमादरात् ॥ युष्माकमेष यज्ञोऽस्तु सर्वाभीष्टफलप्रदः ॥ ३ ॥ यद्यप्यावश्यकं कर्म यज्ञशब्देन लक्ष्यते ॥ निन्दितत्वान्न चात्रास्ति प्रस्तावः काम्यकर्मणाम् ॥ ४ ॥ तथापि फलसद्भावो नित्यानामपि कर्मणाम् ॥ आनुषङ्गिक एवोक्त एष वोऽस्त्विष्टकामधुक् ॥ ५ ॥ १० ॥

**भा० टी०**—इतश्च हेतोरधिकृतेन कर्म कर्तव्यं प्रजापतिर्ब्रह्मा सर्गादौ यज्ञसहिताः त्रैवर्णिकाः प्रजाः सृष्ट्वोवाचानेन यज्ञेन कर्मणा प्रसविष्यध्वं वृद्धिं लभध्वमुत्पत्तिं कुरुध्वम् वृद्ध्यादिहेतुत्वमस्यास्तीत्याह—एष यज्ञो वो युष्माकमभिप्रेतभोगप्रदो भवतु ॥ १० ॥

**प० टी०**—एवमनुष्ठेयरहस्यमुक्त्वाधुना कर्मनिबन्धनानां लोकानां ब्रह्मवाक्योक्तां गतिं दर्शयति—**सहयज्ञा इति** । पुरा सृष्ट्यादौ प्रजापतिर्ब्रह्मा यज्ञेन सह वर्तन्ते ताः सहयज्ञास्तदधिकारिण्यः प्रजा ब्राह्मणादयः सृष्ट्वा निर्मायेत्युवाच तत्किं भो प्रजा अनेन यज्ञेन कृत्वा यूयं प्रसविष्यध्वं पुत्रपौत्राद्युत्तरोत्तराभिवृद्धिं भजध्वम् । तत्र हेतुः—एष यज्ञो वो युष्माकमिष्टकामधुगभीष्टभोगप्रदोऽस्तु ॥ १० ॥

**रा० टी०**—वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे स्तुतिनिन्दापरकृतिपुराकल्परूपार्थवादं चाह—**सहेत्यादिचतुर्भिः** श्लोकैः । यज्ञैः सह वर्तन्त इति सहयज्ञाः ब्राह्मणादिप्रजाः पुरा सर्गादौ सृष्ट्वा प्रजापतिरुवाच । किमुवाचेत्यत आह—**अनेनेत्यादिना** कारणादित्यन्तेन । हे प्रजाः अनेन यज्ञेन यूयं प्रसविष्यध्वम् । इष्टकामानिति शेषः । स्वस्वाभिमतपुमर्थान्संपादयत । एष यज्ञः वो युष्माकमिष्टकामधुक् कामा भोगास्तान्दोग्धीति कामधुक् इच्छाविषयभोगप्रदोऽस्तु ॥ १० ॥

## देवान्भावयताऽनेन ते देवा भावयन्तु वः ॥
## परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥ ११ ॥

**त० टी०**—कथमयमिष्टकामधुक् स्यादित्यपेक्षायामाह—**देवानिति** । अनेन यज्ञेन यूयं देवानिन्द्रादीन्भावयत हविर्भागैर्वर्द्धयत । ते देवा वर्धिताः सन्तो वो युष्मान्भावयन्तु वृष्ट्याऽन्नोत्पत्तिद्वारेण धनसन्ततिदानेन वर्द्धयन्तु । एवं परस्परमन्योन्यं भावयन्तो यूयं देवाश्च परं श्रेयोऽभिमतार्थं प्राप्स्यथ॥ ११॥

**म० टी०**—कथमिष्टकामदोग्धृत्वं यज्ञस्येति तदाह-अनेन यज्ञेन यूयं यजमाना देवानिन्द्रादीन् भावयत हविर्भागैः संवर्धयत तर्पयतेत्यर्थः । ते देवा युष्माभिर्भाविताः सन्तो वो युष्मान् भावयन्तु वृष्ट्यादिना अन्नोत्पत्तिद्वारेण संवर्धयन्तु । एवमन्योन्यं संवर्धयन्तो देवाश्च यूयं च परं श्रेयोऽभिमतमर्थं प्राप्स्यथ देवास्तृप्तिं प्राप्स्यन्ति यूयं च स्वर्गाख्यं परं श्रेयः प्राप्स्यथेत्यर्थः ॥ ११ ॥

**शं० टी०**—कथमयं यज्ञोऽस्माकमिष्टार्थाय भवतीत्यत आह—**देवानिति** । अनेन यज्ञेन श्रौतेन स्मार्तेन च यूयं देवानिन्द्रादीन भावयत संभावयत चरुपुरोडाशादिभिः संतुष्टान् कुरुतेत्यर्थः । अनेन संभाविताः स्तुष्टाः सन्तस्ते देवा इन्द्रादयो वः युष्मान् भावयन्तु इष्टार्थप्रदानेन संभावयन्तु । एवं परस्परं भावयन्तः

सन्तो यूयं देवानां प्रसादेन निःशेषविनष्टप्रतिबन्धा भूत्वा सत्त्वशुद्ध्या सम्यग्ज्ञानं प्राप्य परं निरतिशयानन्दलक्षणं श्रेयो विदेहकैवल्यमवाप्स्यथ । यद्यप्यत्र परस्परं भावयन्तः श्रेयः परमवाप्स्यथेत्युभयेषां परश्रेयःप्राप्तिविधिः प्रतीयते तथापि विचार्यमाणे प्रजानामेव धर्मोपदेशविषयत्वेनोक्तधर्मानुष्ठानलभ्यपरमश्रेयःप्राप्तिविधिर्न तु तदनुग्राहकाणां देवानां तेषामुपदेशाविषयत्वात्स्वयंप्रभातविज्ञानत्वाज्जीवन्मुक्तत्वाच्च न श्रेयोविधिरुपयुज्यते, ततः संभावनायामेव परस्परपदस्य संबन्धो न तु परमश्रेयःप्राप्तिविधाविति ज्ञेयम् ॥ ११ ॥

श्री० टी०—कथमिष्टकामदोग्धा यज्ञो भवेदित्यत्राह—देवानिति । अनेन यज्ञेन यूयं देवान् भावयत हविर्भागैः संवर्धयत ते च देवा वो युष्मान्संवर्धयन्तु वृष्ट्यादिनाऽन्नोत्पत्तिद्वारेण । एवमन्योन्यं संवर्धयन्तो देवाश्च यूयं परस्परं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥

स० टी०—कामदोग्धृत्वमप्याह यज्ञस्य भगवानिति ॥ यजमानतया यूयं देवानिन्द्रमुखान्सदा ॥ १ ॥ तर्पयध्वं हविर्भागैर्यज्ञेनानेन शाश्वतः ॥ युष्माभिस्तर्पिता देवा युष्मान्वृष्ट्यादिभिर्हितैः ॥ २ ॥ संवर्धयन्तु यूयं ते देवाश्चैवं परस्परम् ॥ संवर्धयन्तः सततं प्राप्स्यथाभिमतं फलम् ॥ ३ ॥ प्राप्स्यन्ति देवतास्तृप्तिं यूयं स्वर्गफलं तथा ॥ ४ ॥ ११ ॥

भा० टी०—कथमित्याकाङ्क्षायामाह—देवानिति । अनेन यज्ञेन देवानिन्द्रादीन् वर्धयत । ते वृष्ट्यादिद्वाराऽन्नदानेन युष्मान् वर्धयन्तु । एवं परस्परं वर्धयन्तोऽभीष्टं परं परलोके स्वर्गादिकमवाप्स्यथ ॥ ११ ॥

प० टी०—अथ भोगप्रदत्वे हेतुमाह—देवानिति । भो प्रजा अनेन यज्ञेन देवान् भावयत संवर्धयत । अथ संतुष्टास्ते देवा वो युष्मान् भावयन्तु फलदानैः कृत्वा संवर्धयन्तु । एवं परस्परभावनेन परमुत्कृष्टं श्रेयोऽभीष्टमर्थं प्राप्स्यथ ॥ ११ ॥

रा० टी०—कथमिष्टकामदोग्धृत्वं यज्ञस्येत्यत आह—देवानिति । हे प्रजा अनेन यज्ञेन यूयं देवान् भावयत संभावयत हविर्भिस्तर्पयत । ते हविरादिभिस्तृप्ता देवा वो युष्मान् भावयन्तु इष्टकामदानेन तर्पयन्तु । एवमन्योन्यं भावयन्तो देवाश्च यूयं च परं श्रेयो मोक्षाख्यमवाप्स्यथ ॥ ११ ॥

## इष्टान्भोगान्हि वो देवा दास्यन्ते यज्ञभाविताः ॥
## तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ १२ ॥

**त० टी०—उक्तार्थं दृढीकुर्वंस्तस्याकर्तुर्दोषमाह—इष्टानिति । यज्ञैर्भाविता देवा युष्मभ्यमिष्टान्भोगान्हि निश्चितं दास्यन्ते । यस्तैर्देवैर्दत्तान्भोगानेभ्यो देवेभ्योऽप्रदाय बलिवैश्वदेवाग्निहोत्राद्यकरणेनादत्त्वा यो भुंक्ते स स्तेन एव, स चौरवद्दण्ड्य इति भावः ॥ १२ ॥**

म० टी०—न केवलं पारत्रिकमेव फलं यज्ञात् किन्त्वैहिकमपीत्याह—इष्टानिति । अभिलषितान् भोगान् पश्वन्नहिरण्यादीन् वो युष्मभ्यं देवा दास्यन्ते वितरिष्यन्ति हि यस्मात् यज्ञैर्भावितास्तोषितास्ते यस्मात्तैर्ऋणवद्भवद्भ्यो दत्ता भोगास्तस्मात्तैर्देवैर्दत्तान्भोगानेभ्यो देवेभ्योऽप्रदाय यज्ञेषु देवोद्देशेनाहुतीरसंपाद्य यो भुङ्क्ते देहेन्द्रियाण्येव तर्पयति स्तेन एव तस्कर एव सः देवस्वापहारी, देवर्णानपाकरणात् ॥ १२ ॥

शं० टी०—यज्ञैः संभाविता देवा मुमुक्षूणां न केवलमामुष्मिकमेव सुखं प्रयच्छन्ति किंतु ऐहिकसंपत्सुखमप्यऽतस्तेषां प्रीत्यै यज्ञाद्यवश्यं कर्तव्यमन्यथा प्रत्यवायी भवतीति सूचयितुमाह—इष्टानिति । यज्ञैः श्रौतैः स्मार्तैश्च भाविताः संभाविता देवा वो युष्मभ्यमिष्टानिच्छाविषयभूतान् भोगान् पशुपुत्रकलत्रधनधान्यादीन् दास्यन्ते वितरिष्यन्ति एवं तैर्देवैर्दत्तान् पदार्थान् पुनश्चरुपुरोडाशादिरूपेणैभ्यो देवेभ्योऽप्रदायाऽदत्त्वा

देवानामृषीणां पितृणां च यज्ञेन ब्रह्मचर्येण प्रजया चाऽनृण्यमकृत्वा यः स्वशरीरमेव पोष्टुं भुङ्क्ते स स्तेनो देवादीनां चोर एव भवति शिष्टानां निन्द्यश्च देवब्रह्मस्वहारिणस्तस्करस्य या गतिस्तां च गच्छतीत्यर्थः ॥१२॥

श्री० टी०–एतदेव स्पष्टीकुर्वन्कर्माकरणे दोषमाह–इष्टानिति । यज्ञैर्भाविताः सन्तो देवा वृष्ट्यादिद्वारेण वः युष्मभ्यं भोगान् दास्यन्ति हि अतो देवैर्दत्तानन्नादीनेभ्यो देवेभ्यः पञ्चयज्ञादिभिरदत्त्वा यो भुङ्क्ते स तु स्तेनश्चोर एव ज्ञेयः ॥ १२ ॥

स० टी०–न केवलं परत्रैव फलं किंत्वैहिकानपि॥ हिरण्यपशुधान्यादीन्देवा भोगांश्च वाञ्छितान् ॥१॥ वितरिष्यन्ति युष्मभ्यं यज्ञैस्ते तोषिता यतः ॥ भोगास्तैर्ऋणवद्दत्ता भवद्भ्यश्च यतोऽमरैः ॥ २ ॥ तस्माद्देवैः प्रदत्तांस्तान्भोगानेभ्योऽध्वरेषु च ॥ असंपाद्याहुतीर्देवोद्देशेनात्मम्भरिस्तु यः ॥ ३ ॥ देहप्राणेन्द्रियाण्येव तर्पयत्येष तस्करः ॥ देवर्णमनपाकृत्य देवस्वापहरोऽधमः ॥ ४ ॥ १२ ॥

भा० टी०–किंच ते देवा यज्ञैर्वर्धिता वो युष्मभ्यमिष्टान् भोगान् स्त्रीपुत्रपशुस्वर्णादीन् दास्यन्ते वितरिष्यन्ति यस्तु तैर्देवैर्दत्तान् भोगानेभ्योदेवेभ्योऽदत्त्वाऽऽनृण्यमकृत्वा स्वदेहादीन्येव तर्पयति स तस्कर एव देवादिस्वापहारी ॥ १२ ॥

प० टी०–एवं फलनिश्चयं निरूपयन्नकरणे दोषमाह–इष्टानिति । यज्ञभाविता देवा वो युष्माकमिष्टान् भोगान् दास्यन्ति । अथ देवदत्तैर्भोगैः प्रमत्तत्वेन कर्मत्यागपरान्निन्दति–तैरिति । तैर्देवैर्दत्तानन्नादिभोगानेभ्यो देवेभ्योऽप्रदायादत्वा यो भुङ्क्ते स स्तेनश्चोर एव ज्ञेयः ॥ १२ ॥

रा० टी०–एतदेव स्पष्टयितुं कर्माकरणे दोषमाह–इष्टानिति । यज्ञैर्भाविता देवा वो युष्मभ्यम् इष्टान् भोगान्दास्यन्ति । तैर्देवैर्दत्तानन्नादीन्तेभ्यो यज्ञादिभिरप्रदाय यो भुङ्क्ते सः स्तेन एव चोर एव ॥ १२ ॥

**यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥**
**भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ॥ १३ ॥**

त० टी०–तस्माद्देवार्चानुभोजिनो निर्दोषा इत्याह–यज्ञशिष्टाशिन इति । यज्ञशिष्टं देवर्षिभूताद्यर्चनाख्यपञ्चमहायज्ञावशिष्टमन्नं येऽश्नन्ति, ते सन्तः सदाचाराः सर्वकिल्बिषैर्विहिताकरणाविहितकरणजैः स्वर्गप्रतिबन्धकैः पञ्चसूनोद्भवैर्मुच्यन्ते । पञ्च यज्ञास्तु 'पाठोहोमश्चातिथीनां सपर्या तर्पणं बलिः । अमी पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः' इत्युक्ताः । पञ्च सूनाश्च 'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दन्ति ॥ पञ्चसूनाकृतं पापं पञ्चयज्ञैर्व्यपोहति' इति स्मृत्युक्ताः । ये त्वात्मकारणाद् आत्मनः स्वस्य भोजनार्थं पचन्ति, नतु देवाद्यर्थं, ते पापाः पापाचारा अघं पञ्चसूनानिमित्तं विध्युपेक्षादिनिमित्तं च पापं भुञ्जते प्राप्नुवन्ति ॥

म० टी०–यज्ञशिष्टाशिन इति । ये तु वैश्वदेवादियज्ञावशिष्टममृतमश्नन्ति ते सन्तः शिष्टा वेदोक्तकारित्वेन देवाद्यृणापाकरणात् । अतस्ते मुच्यन्ते सर्वैर्विहिताकरणनिमित्तैः पूर्वकृतैश्च पञ्चसूनानिमित्तैः किल्बिषैः । भूतभाविपातकाऽसंसर्गिणस्ते भवन्तीत्यर्थः । एवमन्वये भूतभाविपापाभावमुक्त्वा व्यतिरेके दोषमाह--भुञ्जत इति । भुञ्जते ते वैश्वदेवाद्यकारिणोऽघं पापमेव । तुशब्दोवधारणे । ये पापाः पञ्चसूनानिमित्तं प्रमादकृतहिंसानिमित्तं च कृतपापाः सन्त आत्मकारणादेव पचन्ति नतु वैश्वदेवाद्यर्थम् । तथा च पञ्चसूनादिकृतपापे विद्यमान एव वैश्वदेवादिनित्यकर्माकरणनिमित्तमपरं पापमाप्नुवन्तीति भुञ्जते त्वघं पापा इत्युक्तम् । तथा च स्मृतिः 'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी ॥ पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति' 'पञ्चसूनाकृतं पापं पञ्च यज्ञैर्व्यपोहति' इति च । श्रुतिश्च "इदमेवास्य तत्साधारणमन्नं यदिदमद्यते स य एतदुपास्ते न स पाप्मनो व्याव-

र्तते मिश्रं ह्येतत्" इति । मन्त्रवर्णोपि "मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायम् । केवलाघो भवति केवलादी " इति इदं चोपलक्षणं पञ्चमहायज्ञानां स्मार्तानांश्रौतानां च नित्यकर्मणाम् अधिकृतेन नित्यानि कर्माण्यवश्यमनुष्ठेयानीति च प्रजापतिवचनार्थः ॥ १३ ॥

**शं० टी०**–ये तु पञ्चमहायज्ञान् कृत्वाऽवशिष्टान्नाऽशिनो भवन्ति ते सर्वपापैर्मुक्ता भवन्ति ये तु देवतातिथ्यादीननुद्दिश्य स्वार्थमेव पचन्ति ते पापाशिन एवेति पञ्चमहायज्ञानुष्ठानाननुष्ठानयोः फलं प्रतिपादयति । पञ्चमहायज्ञानां दैनंदिनत्वेनावश्यकर्तव्यत्वदाढर्याय–**यज्ञशिष्टाशिन इति** । ब्राह्मणा यज्ञशिष्टाशिनः सन्तो देवयज्ञः पितृयज्ञ इतिश्रुत्युक्तपञ्चमहायज्ञाननुष्ठाय तच्छेषान्नभोजिनो भूत्वा सर्वकिल्बिषैः 'कण्डनी पेषणी चुल्ली चोदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य बध्यते यास्तु वाहयन्' इति स्मृत्युक्तानि यानि बुद्धिपूर्वकं पाणिपादपातोत्पन्नानि यान्यवशेन प्राप्तानि तैरेतैः सर्वैः किल्बिषैर्मुच्यन्ते तेषां मोकाचित्तशुद्धिस्तया ज्ञानं मुक्तिं च विन्दन्तीत्यर्थः । पञ्चमहायज्ञानकुर्वाणाः पापा ये ब्राह्मणा आत्मकारणात्स्वोदरपूर्तिहेतोरेव पचन्ति शूद्रवन्न देवार्थं वैश्वदेवार्थं पचन्ति देवेभ्यः ब्राह्मणेभ्यश्चाऽदत्वा स्वयमेव भुञ्जते च ते तु पापमेवान्नरूपेण स्थितं भुञ्जते न त्वन्नं स्वदृष्ट्या तदन्नमिव भाति शास्त्रदृष्ट्या देवतादृष्ट्या च पापमेव भवति त एव पापिष्ठतमा इत्यर्थः । तथाच श्रुतिः " मोघमन्नं विन्दते अप्रचेताः । केवलाघो भवति केवलादी " इति 'एकाक्रिया द्व्यर्थकरी बभूव' इतिन्यायेन मुमुक्षुणा श्रोत्रियेण क्रियमाणं कर्म सत्त्वशुद्धिद्वारा स्वस्य मोक्षहेतुर्भवति वृष्ट्यादिद्वारा जगत्स्थितिहेतुश्च भवत्यत उभयथापि कर्म कर्तव्यमेव ॥ १३ ॥

**श्री० टी०**–अतश्च यजन्त एव श्रेष्ठा नेतर इत्याह–**यज्ञशिष्टाशिन इति** । वैश्वदेवादियज्ञावशिष्टं येऽश्नन्ति ते पञ्चसूनाकृतैः सर्वैः किल्बिषैर्मुच्यन्ते । पञ्च सूनाश्च स्मृतावुक्ताः 'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी ॥ पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति' इति । ये त्वात्मनो भोजनार्थमेवान्नं पचन्ति नतु वैश्वदेवाद्यर्थं ते पापाः दुराचाराः अघमेव भुञ्जते ॥ १३ ॥

**म० टी०**–वैश्वदेवादियज्ञानामवशिष्टं सदामृतम् ॥ येऽश्नन्ति शिष्टा वेदोक्तकारित्वेनैव तेऽनृणाः ॥१॥ पञ्चसूनानिमित्तैश्च प्राकृतैः किल्बिषैरपि ॥ नित्याकरणजैस्तैस्तेऽतो मुच्यन्ते सर्वकिल्बिषैः ॥ २ ॥ सन्त्यसंसर्गिणस्तैस्तैर्भूतैरागामिभिर्मलैः ॥ ये तु नैवं प्रकुर्वन्ति तान्प्रत्याहातिदूषणम् ॥ ३ ॥ भुञ्जते पापमेवाघा वैश्वदेवाद्यकारिणः ॥ पञ्चसूनानिमित्तं च प्रमादादिनिबन्धनम् ॥ ४ ॥ पापं कृत्वा पचन्त्यात्मकारणादेव येऽधमाः ॥ प्राचीने सत्यघे चान्यं प्रयान्त्यकरणात्कृतोः ॥ ५ ॥ अतोऽघं भुञ्जते पापास्तथोक्तं स्मृतिकर्तृभिः ॥ कण्डनी पेषणी चुल्ली उदकुम्भी प्रमार्जनी ॥ ६ ॥ पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ॥ पञ्चसूनाकृतं पापं पञ्चयज्ञैर्व्यपोहति ॥ ७ ॥ ब्रह्मदेवमनुष्याणां पितॄणां भूतसंज्ञिनाम् ॥ यज्ञाः सन्ति जपो होमो दानं च तर्पणं बलिः ॥ ८ ॥ अनुष्ठेयानि कर्माणि कर्मण्याधिकृतैर्जनैः ॥ प्रजापतिगिरामर्थः समाप्तोऽयं यथातथम् ॥ ९ ॥ १३ ॥

**भा० टी०**–ये पुनर्यज्ञान् 'ब्रह्मयज्ञो देवयज्ञः पितृयज्ञस्तथैव च । भूतयज्ञो नृयज्ञश्च पञ्चयज्ञाः प्रकीर्तिताः ॥ अध्यापनमध्ययनं चाद्यः, होमो द्वितीयः, तर्पणं श्राद्धं च तृतीयः, भूतेभ्यो बलिप्रदानं चतुर्थः, अतिथिपूजनं पञ्चमः, इत्युक्तान्कृत्वा तच्छिष्टममृतमशितुं शीलं येषां ते सन्तः सर्वपापैः 'कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य वर्तन्तेऽहरहः सदा' इति स्मृत्युक्तेः पञ्चसूनाकृतैरन्यैश्च मुच्यन्ते । ये त्वन्ये आत्मकारणात्स्वोदरपूरणार्थं न तु वैश्वदेवाद्यर्थं पाकं कुर्वन्ति ते तु पापं भुञ्जते । तुशब्दः पूर्वेभ्यो वैलक्षण्यार्थः । अवधारणं तु 'सर्वं वाक्यं सावधारणम्' इति न्यायलब्धम् । एतेन तुशब्दोऽवधारण इत्याचार्यविरुद्धोक्तिः प्रत्युक्ता ॥ १३ ॥

**प० टी०**—अथ साधून् स्तौति—**यज्ञशिष्टाशिन इति ।** वैश्वदेवादियज्ञावशिष्टं येऽश्नन्त्यत एव साधवस्तेपि दैनंदिनैः पञ्चसूनादिसर्वकिल्बिषैर्मुच्यन्ते । अथ ये पापाः पातकिनः पुरुषा आत्मकारणात् केवलं पिण्डपोषणार्थं पचन्ति पाकं कुर्वन्ति तेऽघमेव भुञ्जते । ऋक्शाखीया श्रुतिरपि—"मोघमन्नं विन्दते अप्रचेताः । सत्यं ब्रवीमि वध इत्स तस्य । नार्यमणं पुष्यति नो सखायं । केवलाघो भवति केवलादी " इति । भाष्यम्—न प्रकृष्टं चेतो यस्यासावप्रचेताः मूर्खो मोघं निष्फलमन्नं विन्दते संपादयति । स तस्य वधइद्वध एवात्मघातक एवेत्यर्थः । स कः यो वैश्वदेवेनार्यमणं सूर्यं न पुष्यति न संतर्पयति । रात्रौ च सखायमुपकारकमग्निं न संतर्पयति । एवं यः केवलमत्तीति केवलादी पिण्डपोषणार्थमेव भक्षयति स केवलाघो भवति पापमेव भक्षयतीति सत्यं ब्रवीमि न वैश्वदेवार्थवादमित्यर्थः । शतपथेऽपि—" न स पाप्मनो व्यावर्तते " इति ॥ १३ ॥

**रा० टी०**—एवमयजतो विनिन्द्य यजतः स्तौति—**यज्ञेति ।** विष्णुतदितरदेवाराधनावशिष्टभोजिनः सन्तः सर्वकिल्बिषैः पापैर्मुच्यन्ते । यद्वा वैश्वदेवादियज्ञावशिष्टभोजिनः सन्तः सर्वकिल्बिषैः ' कण्डनी पेषणी चुल्ली उदकुम्भी च मार्जनी । पञ्च सूना गृहस्थस्य ताभिः स्वर्गं न विन्दति ' इत्युक्तपञ्चसूनाकृतदोषैर्मुच्यन्त इत्यर्थः । पुनरयजतो निन्दति—**भुञ्जत इति ।** आत्मकारणात्स्वार्थमेव ये पचन्ति ते पापाः अघमेव भुञ्जते अघनिमित्तमेव भुञ्जते तद्भोजनं पापहेतुरेवेत्यर्थः । इति प्रजापतिरुवाचेति इतिशब्दो योज्यः ॥ १३ ॥

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसंभवः ॥**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः ॥ १४ ॥**

**त० टी०—एवं जगत्प्रवृत्त्यधिकारिणः कर्मकरणाकरणयोर्हेतुना गुणदोषौ दर्शयित्वा पुनस्तस्यैव कर्माकरणे हेत्वन्तरेण दोषमाह—अन्नादिति त्रिभिः । भुक्तादन्नाद्रजोरेतोरूपेण परिणतानि सजीवानि शरीराणि भवन्ति उत्पद्यन्ते । पर्जन्याद् वृष्टेरन्नस्य संभवः प्रसिद्धः । पर्जन्यो यज्ञाद्भवतीति शास्त्रेण ज्ञायते । यज्ञश्च समिदाज्यादिद्रव्यस्य मन्त्रपुरःसरमग्नौ प्रक्षेपणादिरूपकर्तृव्यापाररूपात्कर्मणः समुद्भवति। इति सर्वं विलोमेनाह मनुः ' अग्नौ प्रास्ताऽऽहुतिः सम्यगादित्यमुपतिष्ठति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' इति ॥ १४ ॥**

**म० टी०**—न केवलं प्रजापतिवचनादेव कर्म कर्तव्यमपि तु जगच्चक्रप्रवृत्तिहेतुत्वादपीत्याह—**अन्नादिति** त्रिभिः । अन्नाद्भुक्ताद्रेतोलोहितरूपेण परिणताद्भूतानि प्राणिशरीराणि भवन्ति जायन्ते । अन्नस्य संभवो जन्म अन्नसंभवः पर्जन्याद् वृष्टेः प्रत्यक्षसिद्धमेवैतत् । अत्र कर्मोपयोगमाह—**यज्ञादिति** । यज्ञात्कारीर्यादेरग्निहोत्रादेश्चापूर्वाख्याद्धर्माद्भवति पर्जन्यः । यथा चाग्निहोत्राहुतेर्वृष्टिजनकत्वं तथा व्याख्यातमष्टाध्यायीकाण्डे जनकयाज्ञवल्क्यसंवादरूपायां षट्प्रश्न्याम् । मनुना चोक्तम् ' अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' इति । स च यज्ञो धर्माख्यः सूक्ष्मः कर्मसमुद्भवः ऋत्विग्यजमानव्यापारसाध्यः । यज्ञस्य हि अपूर्वस्य विहितं कर्म कारणम् ॥ १४ ॥

**शं० टी०**—' मुच्यन्ते सर्वकिल्बिषैः ' इति ' नैष्कर्म्यं पुरुषोऽश्नुते ' इति कर्मणो मोक्षहेतुत्वं प्रतिपादितं जगत्स्थितिहेतुत्वमिदानीं निरूप्यते—**अन्नादिति** त्रयेण । ' अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ' इति स्मृत्युक्तप्रक्रियया यज्ञाच्छ्रोत्रियेण यथाशास्त्रं निर्वर्तितात्पर्जन्यो वृष्टिर्भवति, पर्जन्याद्व्रीहियवादिरूपस्य अन्नस्य संभव उत्पत्तिर्भवति, अन्नात्स्त्रीपुंसाभ्यां भुक्ताच्छुक्रशोणितरूपेण परिणताद्भूतानि प्राणिनो भवन्ति जायन्ते, जातान्यन्नेनैव जीवन्ति च । एवं वृष्ट्यन्नद्वारा जगज्जीवनहेतुर्यो यज्ञः स तु कर्मसमुद्भवः ऋत्विग्यजमानादिभिः क्रियमाणहोममन्त्रतन्त्रादिक्रिया वैदिकी कर्मेत्युच्यते तस्मात्सम्यगुद्भवोऽस्य स कर्मसमुद्भवोऽपूर्वलक्षणो यज्ञः ॥ १४ ॥

**श्री० टी०**—जगच्चक्रप्रवृत्तिहेतुत्वादपि कर्म कर्तव्यमित्याह—**अन्नादिति** त्रिभिः । अन्नाच्छुक्रशोणितरूपेण परिणताद्भूतान्युत्पद्यन्ते । अन्नस्य च संभवः पर्जन्याद्वृष्टेः । स च पर्जन्यो यज्ञाद्भवति । स च यज्ञः कर्मसमुद्भवः कर्मणा यजमानादिव्यापारेण सम्यङ्निष्पद्यत इत्यर्थः । ‘ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठति । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः’ इति स्मृतेः ॥ १४ ॥

**स० टी०**—न केवलं विधेर्वाक्यादेव कर्तव्यमस्ति तत् ॥ कर्म किंतु जगच्चक्रप्रवृत्तेः कारणादपि ॥१॥ शुक्रशोणितरूपेण ह्यन्नात्परिणतात्किल ॥ शरीराणि प्रजायन्ते वृष्टेरन्नस्य जन्म च ॥ २ ॥ यज्ञाद्धर्मादपूर्वाख्याज्जायते वृष्टिरर्कतः ॥ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते ॥ ३ ॥ आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ॥ सूक्ष्मो यज्ञः स धर्माख्य ऋत्विगादेश्च कर्मणः ॥ ४ ॥ अपूर्वाख्यस्य यज्ञस्य विहितं कर्म कारणम् ॥ ५ ॥ १४ ॥

**भा० टी०**—जगच्चक्रप्रवृत्तिहेतुत्वादप्यधिकृतेन कर्म कर्तव्यमित्याह—**अन्नादिति** । अन्नाद्भुक्ताद्रेतआदिरूपेण परिणताद्भूतानि प्राणिशरीराणि भवन्ति । पर्जन्याद्वृष्टेरन्नस्य संभव उत्पत्तिर्यज्ञादपूर्वात्पर्जन्यो भवति। तदुक्तम् “ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः ” इति । यज्ञः कर्मणः ऋत्विग्यजमानव्यापारात्समुद्भवो यस्य सः ॥ १४ ॥

**प० टी०**—अथ विश्वोपकारार्थमपि कर्म कर्तव्यमित्याह—**अन्नादिति** । अन्नाद्रेतोरूपेण परिणताद्भूतानि भवन्ति । अत्र भवन्तीत्यनेन अन्नादेव जीवन्ति वर्धन्त इत्यपि ज्ञेयम् । श्रुतिरपि ब्रह्मवल्ल्याम्—“अन्नाद्ध्येव खल्विमानि भूतानि जायन्ते जातान्यन्नेन वर्धन्ते ” इत्यादिः । अथान्नं कस्मात् पर्जन्यात्, स च यज्ञात् पर्जन्येष्टितः, यज्ञश्च कस्मात्स च कर्मसमुद्भवः । कर्म यजमानस्य सदर्थव्यापारः ॥ १४ ॥

**रा० टी०**—वर्णाश्रमोचितकर्मणः सर्वथा कर्तव्यत्वे स्तुत्याद्यात्मकार्थवादं चतुर्भिरुक्त्वा अधुना जगच्चक्रप्रवर्तकत्वरूपं हेत्वन्तरं विपक्षेऽनर्थोक्त्याह—**अन्नादित्यादित्रिभिः** श्लोकैः । अन्नाद्भूतानि भवन्ति रेतोद्वारा प्राणिन उत्पद्यन्ते । पर्जन्यादादित्यादन्नसंभवः वृष्टिद्वारा अन्नस्योत्पत्तिः । पर्जन्यो मेघचक्राभिमानी आदित्यः यज्ञाद्भवति । यज्ञशब्दोऽत्राज्यादिहविःपरः । यजमानदत्तेनाज्यादिहविषामुपभोजनेनादित्यस्य बलाद्युपचयान्निमित्तादुपचारेण ‘ यज्ञाद्भवति पर्जन्यः ’ इत्युच्यते । यद्वा पर्जन्यशब्देनादित्याभिमन्यमानं मेघचक्रमेव लक्षणया वा ‘जननात्परसस्यादेः पर्जन्यो मेघसन्ततिः ’ इतिस्मृत्युक्तयोगवृत्त्या वा ग्राह्यम् । तच्च यज्ञाद्भवति हविर्भागेन परितुष्टादादित्यादुत्पद्यते ‘ अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिः’ इत्यादेः वृष्टिर्वार्षिकमेघचक्रं जायत इत्यर्थः । यज्ञो देवतोद्देशेन द्रव्यत्यागरूपो ज्योतिष्टोमादिः कर्मसमुद्भवस्तदङ्गक्रिययोत्पद्यते ॥ १४ ॥

**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ॥**
**तस्मात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥ १५ ॥**

**त० टी०**—यज्ञहेतुभूतं कर्म ब्रह्मोद्भवं विद्धि । अत्र ब्रह्मशब्देन प्रकृतिपरिणामरूपं शरीरं विवक्षितम् “ तदेतद् ब्रह्म नाम रूपमन्नं च जायते ” इति श्रुतौ ब्रह्मशब्देन प्रकृतिर्निर्दिष्टा । इहापि चतुर्दशाध्याये वक्ष्यते ‘मम योनिर्महद्ब्रह्म ’ इति अतो ब्रह्मशब्दनिर्दिष्टप्रकृतिपरिणामरूपशरीरोद्भवं कर्मेति युक्तम् ‘ कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ’ इति प्रकृतेः कर्महेतुत्वेन वक्ष्यमाणत्वात् । तच्च शरीररूपेणैव संभवति । ब्रह्म उक्तस्वरूपमक्षरसमुद्भवम् । अत्राक्षरशब्देन पुरुषक्षेत्रज्ञादिशब्दवाच्यो

जीवात्मोच्यते ' कूटस्थोऽक्षर उच्यते ' इति वक्ष्यमाणत्वात् । तेनाधिष्ठितं शरीररूपं प्रकृत्याख्यं ब्रह्म भुक्तान्नपानादिना पुष्ट्या लब्धसामर्थ्यं सत्कर्मोत्पादने योग्यं भवति । कार्योत्पादनयोग्यतैव समुद्भवशब्देनाभिहिता, अतो ब्रह्माक्षरसमुद्भवमित्युक्तं, प्रकृतिरपि क्षेत्रज्ञाधिष्ठितैव कार्योत्पादने समर्था, न केवला । तथा चोक्तं विष्णुपुराणे ' गुणसाम्यात्ततस्तस्मात्क्षेत्रज्ञाधिष्ठितान्मुने । गुणव्यञ्जनसंभूतः सर्गकाले द्विजोत्तम ' इति यस्मादक्षरशब्दवाच्यं जीवाधिष्ठितं शरीरात्मना परिणतं प्रकृत्याख्यं ब्रह्म यज्ञहेतुभूतकर्मोत्पादकं तस्मात्सर्वगतं यज्ञादिकर्मसु सर्वाधिकारे गतं प्राप्तम्, न तेन विना यज्ञप्रवृत्तिर्भवेदिति भावः । अत एव नित्यं यज्ञे प्रतिष्ठितं यजमानहोत्रादिशरीरं नित्यं यज्ञे प्रतिष्ठितं, प्रकर्षेण स्थितं पूजितं वेत्यर्थः ॥ १५ ॥

**म० टी०—कर्मेति** । तच्चापूर्वोत्पादकं ब्रह्मोद्भवं ब्रह्म वेदः स एवोद्भवः प्रमाणं यस्य तत्तथा । वेदविहितमेव कर्माऽपूर्वसाधनं जानीहि, न त्वन्यत्पाषण्डप्रतिपादितमित्यर्थः । ननु पाषण्डशास्त्रापेक्षया वेदस्य किं वैलक्षण्यं यतो वेदप्रतिपादित एव धर्मो नान्य इत्यत आह--ब्रह्म वेदाख्यमक्षरसमुद्भवमक्षरात्परमात्मनो निर्दोषात्पुरुषनिश्वासन्यायेनाबुद्धिपूर्वं समुद्भव आविर्भावो यस्य तदक्षरसमुद्भवं तथा चापौरुषेयत्वेन निरस्तसमस्तदोषासङ्कवेदवाक्यं प्रमितिजनकतया प्रमाणमतीन्द्रियेऽर्थे न तु भ्रमप्रमादकरणापाटवविप्रलिप्सादिदोषवत्प्रणीतं पाषण्डवाक्यं प्रमितिजनकमिति भावः । तथाच श्रुतिः "अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवदोथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि निश्वसितानि " इति । तस्मात्साक्षात्परमात्मसमुद्भवतया सर्वगतं सर्वप्रकाशकं नित्यमविनाशि च ब्रह्म वेदाख्यं यज्ञे धर्माख्येऽतीन्द्रिये प्रतिष्ठितं तात्पर्येण । अतः पाषण्डप्रतिपादितोपधर्मपरित्यागेन वेदबोधित एव धर्मोऽनुष्ठेय इत्यर्थः ॥ १५ ॥

**शं० टी०—कर्मेति** । यज्ञकारणभूतं यत्कर्म तत्तु ब्रह्मोद्भवं ब्रह्म वेद ऋगादिस्तस्मादुत्पन्नं विद्धि । तच्च ब्रह्माक्षरसमुद्भवं विद्धि " अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः " इति श्रवणात्सर्वजगत्कारणभूतादक्षरात्परमात्मनः सकाशान्निःश्वासरूपेण स्वयमेवाविर्भूतमत एव नित्यमपौरुषेयं ब्रह्म वेदं विजानीहीत्यर्थः । यस्माद्यज्ञैकमूलाज्जगदुत्पत्तिः स्थितिश्च तस्मात्स्वयं सर्वगतं सर्वार्थप्रकाशकत्वेन सर्वलोकस्थानां तत्तद्धर्मनियतिस्थापकत्वेन च सर्वत्र स्थितमपि ब्रह्म वेदो यज्ञे ब्राह्मणादिभिरनुष्ठेये औपासनाद्यश्वमेधान्ते कर्मण्येव तद्विधानैकप्रयोजनत्वात्प्रतिष्ठितं नित्यं नियमेन स्थितं भवति, वर्णाश्रमिणां कर्तव्यत्वेन कर्माणि वेद एव विदधातीत्यर्थः ॥ १५ ॥

**श्री० टी०—तथा—कर्म ब्रह्मोद्भवमिति** । तच्च यजमानादिव्यापाररूपं कर्म ब्रह्मोद्भवं विद्धि ब्रह्म वेदस्तस्मात्प्रवृत्तं जानीहि । तच्च ब्रह्म वेदाख्यमक्षरात्परब्रह्मणः समुद्भूतं विद्धि "अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदः" इति श्रुतेः । यत एवमक्षरादेव यज्ञप्रवृत्तेरत्यन्तं तस्याभिप्रेतो यज्ञस्तस्मात्सर्वगतमप्यक्षरं ब्रह्म नित्यं सर्वदा यज्ञे प्रतिष्ठितं यज्ञेनोपायभूतेन प्राप्यत इति यज्ञे प्रतिष्ठितमुच्यते ' उद्यमस्था सदा लक्ष्मीः ' इतिवत् । यद्वा यस्माज्जगच्चक्रमूलं कर्म तस्मात्सर्वगतं मन्त्रार्थवादैः सर्वेषु सिद्धार्थप्रतिपादकेषु भूतार्थाख्यानादिषु गतं स्थितमपि वेदाख्यं ब्रह्म सर्वदा यज्ञे च तात्पर्यरूपेण प्रतिष्ठितम्, अतो यज्ञादि कर्म कर्तव्यमित्यर्थः ॥ १५ ॥

**स० टी०—**वेदप्रमाणकं कर्मापूर्वस्योत्पादकं भवेत् ॥ ननु पाषण्डसंसिद्धं धर्मस्योत्पादकं भवेत् ॥ १ ॥ ननु पाषण्डशास्त्रात्किं वैलक्षण्यं श्रुतेर्यतः ॥ श्रुतिप्रमाणको धर्मो नान्योऽस्तीति शृणूत्तरम् ॥ २ ॥ आविर्भावोऽपि वेदस्य ह्यक्षरात्परमात्मनः ॥ तथा चापौरुषेयत्वान्निरस्ताखिलसंशयः ॥ ३ ॥ अर्थे ह्यतीन्द्रिये

वेदः प्रमाणं स्वत एव सः ॥ ननु प्रमादमायादिदोषवद्रचितं हि तत् ॥ ४ ॥ पाषण्डवाक्यं प्रामाण्यजनकं स्यादतीन्द्रिये ॥ तस्मात्साक्षात्परब्रह्महेतुत्वात्सर्वभासकम् ॥ ५ ॥ अविनाशि च वेदाख्यं ब्रह्म यज्ञे प्रतिष्ठितम् ॥ अतोऽप्यतीन्द्रियो धर्मोऽनुष्ठेयो वेदबोधितः ॥ ६ ॥ त्यक्त्वोपधर्मं पाषण्डबोधितं सर्वथा जनैः ॥ ७ ॥ १५ ॥

भा० टी०–कर्म ब्रह्म वेद उद्भवः कारणं यस्य तज्जानीहि । ब्रह्म वेदाख्यमक्षरः परमात्मा समुद्भवः कारणं यस्य तत् " अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः " इत्यादिश्रुतेः । यस्मादेवं तस्मात्सर्वार्थप्रकाशकत्वात् सर्वगतमपि सद्वेदाख्यं ब्रह्म नित्यं सदा यज्ञविधिप्रधानत्वात् यज्ञे प्रतिष्ठितम् यत्त्वक्षरं ब्रह्म सर्वदा यज्ञे प्रतिष्ठितं यज्ञेनोपायभूतेन प्राप्यत इत्यपरेषां व्याख्यानं तदरुचिग्रस्तम्, अरुचिबीजं तु पूर्वार्धस्थब्रह्मपदद्वयस्य वेदपरत्वेनात्रान्यपरत्वे 'वेदो वा प्रायदर्शनात्' इतिन्यायविरोधादि ॥ १५ ॥

प० टी०–कर्म च ब्रह्मोद्भवं ब्रह्म मन्त्रात्मकं वाग् ब्रह्म वेदस्तस्मात् । अथ वेदोऽपि कस्मादित्याह--अक्षरेति । न क्षरतीत्यक्षरं वैराजं ब्रह्म तस्मादुद्भूतः । श्रुतिरपि शातपथी--"यथाग्नेरभ्याहतस्य पृथग्धूमा विनिश्चरन्त्यरेऽस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वः " इत्यादिः । भाष्यम्--यथावदभित आहतस्य नान्तःप्रविष्टस्यार्द्रैधोऽग्नेरार्द्रं यदेधः काष्ठं तत्रत्याग्नेः पृथग्भूता नानाकारा धूमा विनिश्चरन्ति, अरे मैत्रेयि तद्वदस्य महतो भूतस्य महाभूतारब्धस्य वैराजब्रह्मणो निःश्वसितं निःश्वासरूपमेतद्यदृग्वेद इत्यादि । ननु सर्वज्ञोऽपि ब्रह्मा मुख्यां कर्मणो गतिमपहाय गौणीं किमुपदिष्टवानित्याशङ्क्योपसंहारे परमप्रयोजनमपि दर्शयन्नाह–तस्मादिति । तस्मात् कारणात् सर्वगतमिन्द्रसूर्यादिसर्वदेवेष्वन्तर्यामित्वेन स्थितं ब्रह्म नित्यमनश्वरफलरूपं यज्ञे प्रतिष्ठितं प्रतिष्ठां प्राप्तं यज्ञोपायेनैव लभ्यम् " यज्ञेन यज्ञमयजन्त देवाः " इति श्रुतेः । अथानश्वरफलदत्वे श्रुतिरप्यग्निरहस्ये–" स य आत्मानमेव लोकमुपास्ते नहास्य कर्म क्षीयते " इत्यादिः ॥ १५ ॥

रा० टी०–कर्म ब्रह्मोद्भवं परब्रह्मजन्यं विद्धि जानीहि । ब्रह्म परब्रह्म चाक्षरसमुद्भवं अक्षरशब्दितवेदाभिव्यङ्ग्यम् । वेदेन यथावदवगतमेव ब्रह्म सत्कर्म कारयतीति भावः । तानि चाक्षराणि भूतव्यङ्ग्यानीति शेषोक्त्या चक्रं ध्येयम् । तस्मादुक्तपरम्परया यज्ञाभिव्यङ्ग्यत्वात्सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितमित्युच्यते । एवं च भगवतो यज्ञे प्रतिष्ठितत्वात् यज्ञानुष्ठानेन चक्रप्रवृत्तौ भूतस्थितिहेतुत्वनिमित्तसुकृतमिव भगवदभिव्यक्तिनिमित्तं च सुकृतं भवतीति भावः ॥ १५ ॥

## एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः ॥
## अघायुरिन्द्रियारामो मोघं पार्थ स जीवति ॥ १६ ॥

त० टी०–एतेन किं निर्दिष्टमित्यत आह–एवमिति । अयं भावः परमेश्वरेणादौ सृष्टिकाले स्वस्मिन् लीनानां जीवानां तत्तत्कर्मफलभोगसिद्धये स्वांशभूतजीवानुप्रवेशेन प्रकृतिपरिणामद्वारा नामरूपविभागं कृत्वा, चतुर्मुखद्वारेण ब्राह्मणादीनुत्पाद्य सृष्टिवृद्ध्यर्थं तेभ्योऽन्नादिभोगं प्रदर्श्य, ततो ब्राह्मणादीनां यज्ञादिकर्मोत्पादनसामर्थ्यं, ततः कर्मोत्पत्तिस्ततो यज्ञसंभवस्ततो वृष्टिस्ततः पुनरन्नोत्पत्तिस्ततः सजीवानि शरीराणीत्येवं प्रकारेणेश्वरेण प्रवर्तितं जगच्चक्रमिह जगति कर्माधिकारे वर्तमानो यः स्वाधिकारानुसारं नानुवर्तयति, यज्ञादिकर्मणा सृष्टिं न वर्धयति सोऽघायुरघार्थमेवायुर्यस्य स तथाभूतो भवति । यतः इन्द्रियारामः इन्द्रियप्रीतयेऽयज्ञशिष्टान्नवर्धितदेहत्वेन देवपित्रतिथिवञ्चकः पापवर्धक एवेत्यर्थः । हे पार्थ स पुरुषो मोघं वृथैव जीवति तज्जीवनान्मरणं श्रेय इति भावः ॥

**म० टी०**–भवत्वेवं ततः किं फलितमित्याह–**एवमिति** । आदौ परमेश्वरात्सर्वावभासकान्नित्यनिर्दोषवेदाविर्भावस्ततः कर्मपरिज्ञानं ततोनुष्ठानाद्धर्मोत्पादस्ततःपर्जन्यस्ततोऽन्नं ततो भूतानि पुनस्तथैव भूतानां कर्मप्रवृत्तिरित्येवं परमेश्वरेणैव प्रवर्तितं चक्रं सर्वजगन्निर्वाहकं यो नानुवर्तयति नानुतिष्ठति सोऽघायुः पापजीवनो मोघं व्यर्थमेव जीवति,हे पार्थ!तस्य जीवनान्मरणमेव वरं जन्मान्तरे धर्मानुष्ठानसंभवादित्यर्थः । तथाच श्रुतिः"अथो अयं वा आत्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्पितृभ्यो निपृणाति यत्प्रजामिच्छते तेन पितॄणामथ यन्मनुष्यान्वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत् पशुभ्यस्तृणोदकं विन्दति तेन पशूनां यदस्य गृहेषु श्वापदा वयांस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोकः" इति । ब्रह्मविदं व्यावर्तयति—इन्द्रियाराम इति । यत इन्द्रियैर्विषयेष्वारमति अतः कर्माधिकारी संस्तदकरणात्पापमेवाचिन्वन् व्यर्थमेव जीवतीत्यभिप्रायः ॥ १६ ॥

**शं० टी०**–**एवमिति** । ईश्वरः श्रुतिमुखेन यज्ञसन्ततिं विधाय यज्ञद्वारा वृष्टिं चान्नं च संभाव्य भूतसृष्टिं तत्स्थितिं च निर्वोढुमिच्छया स्वयमेवं चक्रं प्रवर्तितवान् । तदिदमीश्वरप्रवर्तितं चक्रं नियतमिह लोके यः कर्माधिकारी ब्राह्मणादिर्नानुवर्तयति परमेश्वरेण श्रुत्या विधायितं कर्मयोगं नानुतिष्ठति एतदीश्वरशासनमकृत्वा स्वयमिन्द्रियाराम इन्द्रियार्थेष्वेव अजस्रमारमतीतीन्द्रियारामो विषयभोगलम्पटः सन्नत एवाघायुरायुषः फलमघमेव यस्य सोऽघायुर्भूत्वा काकवच्छाल्मलिवन्मोघं व्यर्थं निष्फलमेव जीवति नैतावन्मात्रमेव भवति किंत्वीश्वराज्ञोल्लङ्घनदोषेण विहिताकरणप्रत्यवायेन नित्यकृतपापसंघातेन चानेककल्पं नरकं चाधिगच्छतीत्यर्थः । ततो विवेकिनो ब्राह्मणस्य मुमुक्षोरनात्मज्ञस्य तरणार्थं लोकहितार्थं चावश्यं वदोक्तं कर्म कर्तव्यमेवेति सिद्धम् ॥ १६ ॥

**श्री० टी०**–यस्मादेवं परमेश्वरेणैव भूतानां पुरुषार्थसिद्धये कर्मादिचक्रं प्रवर्तितं तस्मात्तदकुर्वतो वृथैव जीवितमित्याह–**एवमिति** । परमेश्वरवाक्यभूताद्वेदाख्याद्ब्रह्मणः पुरुषाणां कर्मणि वृत्तिस्ततः कर्मनिष्पत्तिस्ततः पर्जन्यस्ततोऽन्नं ततो भूतानि भूतानां च पुनस्तथैव कर्मणि प्रवृत्तिः इत्येवं प्रवर्तितं चक्रं यो नानुवर्तयति नानुष्ठिति स अघायुः अघं पापरूपमायुर्यस्य सः यत इन्द्रियैर्विषयेष्वेव रमति नतु ईश्वराराधनार्थं कर्मणि अतो मोघं व्यर्थं स जीवति ॥ १६ ॥

**स० टी०**–आदौ सर्वेश्वराद्वेदः कर्मज्ञानं ततो भवेत् ॥ ततोऽधर्मस्ततोनुष्ठानतो वृष्टिस्ततः परम् ॥१॥ अन्नमन्नाच्छरीराणि पुनस्तेषां तथैव च ॥ कर्मप्रवृत्तिरित्येवमीश्वरेण प्रवर्तितम् ॥२॥ जगन्निर्वाहकं चक्रं यो मूढो नानुतिष्ठति ॥ स पापजीवितो व्यर्थमेव जीवति केवलम् ॥ ३ ॥ यतोऽसाविन्द्रियैर्भोगे रमते हि स्वभावतः ॥ स कर्माधिकृतो भूत्वाऽकुर्वन्कर्म प्रयात्यघम् ॥ ४ ॥ १६ ॥

**भा० टी०**–फलितमाह–एवमीश्वरेण वेदयज्ञपूर्वकं जगच्चक्रं प्रवर्तितं य इह लोके कर्माधिकृतो नानुवर्तयति नानुतिष्ठति स अघायुरघं पापमायुर्जीवनं यस्य स इन्द्रियैरारमणं विषयसेवनं यस्य सः व्यर्थं जीवति । त्वया तु जगच्चक्रप्रवर्तकस्य ममानुसरणमवश्यं कर्तव्यमिति द्योतयन्नाह–पार्थेति । तस्मादज्ञेनाधिकृतेन कर्म कर्तव्यमेवेति प्रकरणार्थः ॥ १६ ॥

**प० टी०**–अथ पर्यवसितमर्थमाह–**एवमिति** । एवमुक्तप्रकारेण प्रवर्तितं प्रवृत्तिरूपेणोपपादितमिहामुष्मिकफलभोगरूपम् । तथा चक्रं चक्रतिर्गतिकर्मा परमगतिरूपमन्नादिकार्यजातस्यात्यन्तिककारणमक्षरं यो नानुवर्तयति तारतम्यभावेन पुनः पुनर्न परिशीलयति ज्ञात्वापि पुनरिन्द्रियसंतर्पणनिमित्तं फलभोगमपेक्षते सोऽघायुरित्यादिवाक्यैर्निन्द्यते । अघायुः पापेच्छावानिन्द्रियारामो विषयसुखलम्पटः ॥ १६ ॥

रा० टी०—एवं पुरातनैः प्रवर्तितं भगवतैव वा प्राणिनामिष्टासिद्धये प्रवर्तितं जगच्चक्रमिहलोके यो नानुवर्तयति कर्म न करोतीति यावत्। विश्वस्य चक्रेऽन्तर्भावात् कर्माकरणेन चक्राप्रवृत्तौ चक्रविनाशकत्वेन विश्वहन्तृत्वात् स अघायुः। तादर्थ्यात्ताच्छब्द्यम्। अघनिमित्तमायुर्यस्य स तथा। इन्द्रियाराम इन्द्रियैर्विषयेषु रतिमान्। हे पार्थ व्यर्थमेव जीवति नरके मज्जतीत्यर्थः। यज्ञदानतपोरूपत्रिविधकर्मणां गृहस्थानामिव ब्रह्मचर्याद्याश्रमत्रयस्यापि विद्यादानाभयदानस्वभोक्तव्यान्नदानस्य च तथाध्ययनप्रवचनध्यानादिरूपवाचिकमानसिकयज्ञस्य तथा कृच्छ्रचान्द्रायणादितपसः सत्त्वेन तेषामपि चक्रप्रवर्तनसंभवो ज्ञेयः। उक्तं हि 'वाचिको मानसो यज्ञो न्यासिनां तु विशेषतः' इत्यादि ॥ १६ ॥

**यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः ॥**
**आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ १७ ॥**

त० टी०—एवमनादिविषयवासनावतां प्रवृत्त्यधिकारिणां जगच्चक्रप्रवृत्तिहेतुभूते काम्ये कर्मण्यधिकार इति निर्णीतमिदानीं विषयवासनाशून्यस्यात्मनिष्ठस्य तूक्तयज्ञादिकर्माकरणे न कश्चिद्दोषयोग इत्याह—यस्त्विति द्वाभ्याम्। तुशब्दः पूर्वोक्तात्सकामान्निष्कामस्य विदुषो महद्वैलक्षण्यं द्योतयति। यो मानवः आत्मरतिः आत्मनि स्वात्मभूते भगवति रतिः प्रीतिर्यस्य, नतु शब्दादिपञ्चेन्द्रियविषयेषु स्त्रीषु वा तथाऽऽत्मना तेनैव तृप्तः पूर्णः, नतु नानाविधभोजनादिना। तथाऽऽत्मन्येव संतुष्ट आत्मस्वरूपगुणाद्यनुभव एव संतुष्टः स्यात्, नतु धनपुत्रपशुक्षेत्रादिलाभे। तस्य तथाभूतस्य कार्यं कर्तव्यं कर्म न विद्यते, न स कर्मनियोगार्ह इत्यर्थः ॥ १७ ॥

म० टी०—यस्त्विन्द्रियारामो न भवति परमार्थदर्शी स एवं जगच्चक्रप्रवृत्तिहेतुभूतं कर्माननुतिष्ठन्नपि न प्रत्यवैति कृतकृत्यत्वादित्याह द्वाभ्याम्—यस्त्विति। इन्द्रियारामो हि स्रक्चन्दनवनितादिषु रतिमनुभवति मनोज्ञान्नपानादिषु तृप्तिं पशुपुत्रहिरण्यादिलाभेन रोगाद्यभावेन च तुष्टिम्। उक्तविषयाभावे रागिणामरत्यतृप्त्यतुष्टिदर्शनाद्रतितृप्तितुष्टयो मनोवृत्तिविशेषाः साक्षिसिद्धाः। लब्धपरमात्मानन्दस्तु द्वैतदर्शनाभावादतिफल्गुत्वाच्च विषयसुखं न कामयत इत्युक्तम् 'यावानर्थ उदपाने' इत्यत्र। अतोऽनात्मविषयकरतितृप्तितुष्ट्यभावादात्मानं परमानन्दमद्वयं साक्षात्कुर्वन्नुपचारादेवमुच्यते आत्मरतिरात्मतृप्त आत्मसंतुष्ट इति। तथा च श्रुतिः "आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः" इति। आत्मतृप्तश्चेति चकार एवकारानुकर्षणार्थः। मानव इति यः कश्चिदपि मनुष्य एवंभूतः स एव कृतकृत्यो नतु ब्राह्मणत्वादिप्रकर्षेणेति कथयितुम्। आत्मन्येव च संतुष्ट इत्यत्र चकारः समुच्चयार्थः। य एवंभूतस्तस्याधिकारहेत्वभावात्किमपि कार्यं वैदिकं लौकिकं वा न विद्यते ॥ १७ ॥

शं० टी०—तत्र श्रीभगवान् 'ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति सांख्यानां संन्यासिनामसांख्यानां योगिनां गृहिणां चोत्तरदक्षिणायनवदसंकीर्णं निष्ठाद्वयं विभज्य दर्शयित्वा 'तदेकं वद निश्चित्य' इति स्वस्य कर्तव्यं पृष्टवतोऽर्जुनस्य कर्माधिकारिणः सन्निहितत्वात्तद्धितमुपदेष्टुं 'न कर्मणामनारम्भात्' इति कर्मयोगमुपक्रम्य 'नियतं कुरु कर्म त्वम्' इत्यस्मै कर्मयोगमेवोपदिश्य 'यज्ञार्थात्' इत्यारभ्य 'मोघं पार्थ स जीवति' इत्यन्तेन ग्रन्थेनानात्मज्ञस्य मुमुक्षोरवश्यं सत्त्वशुद्ध्यर्थं कर्म कर्तव्यमेवं कृते कर्मणि देवताप्रसाद ईश्वरप्रसादश्च सिध्यतीति सूचयितुं कर्मणः कर्तव्यत्वमेव बहुप्रक्रियया निश्चित्य इदानीं सांख्यस्य यतेर्ज्ञानयोगनिष्ठां विना नान्यत्कथंचिदपीषत्कर्तव्यमस्तीति सूचयितुमाह—य इति। तुशब्दोऽनात्मरतिव्यावृत्त्यर्थः। यस्तु मानवः बहिरन्तश्च सर्वत्र ब्रह्मैव मापयति ग्राहयतीति मानं प्रत्यग्दर्शनं तदेव सर्वदा वाति भजतीति मानवो ब्रह्मविद्यतिरात्मरतिः "अहं ब्रह्मास्मि" इति श्रुत्युक्तरीत्या स्वात्मना साक्षा-

त्कृते नित्यानन्दैकरसेऽद्वितीये परे ब्रह्मण्येव रतिरन्तःकरणस्य रमणं क्रीडा सर्वदा विहारो यस्य स आत्मरतिरेव भवेत् "आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः" इति श्रवणाद्यो ब्रह्मवित्सर्वदात्मन्येव विहरति न क्वचिदप्यनात्मनीत्यर्थः । किंचात्मतृप्तश्च आत्मनैवानन्दैकरसेन पूर्णेन स्वीकृत्याधिगतेन तृप्तः 'आत्मलाभान्न परं विद्यते' इति स्मरणादतः प्राप्तव्यान्तराभावादात्मप्राप्त्यैव सर्वत्र प्राप्तालंबुद्धिर्यस्य स आत्मतृप्तश्च भवेत् । आत्मन्येव चक्षुषो रूपवद्बहिरन्तः सर्वत्र वृत्तेर्विषयभूते चिदानन्दैकरसे ब्रह्मण्येव संतुष्टः यथा कामी इष्टार्थे संतुष्टो भवति तथा य आत्मन्येव संतुष्टश्च स्यात् तस्य महात्मन आत्मारामस्य कृतकृत्यस्य यतेः कार्यं कर्तव्यं कर्म न विद्यते नास्ति पर्याप्तकामत्वेन प्राप्तव्याभावात् । नन्वधिकृतत्वाविशेषाद्विदुषोऽपि कर्तव्यमेव वैदिकं कर्म कर्मविधेः सर्वसामान्यात्कर्मशास्त्रतदर्थतन्नियमपरिज्ञातृत्वाद्विदुषः "विद्वान् यजते" इति विशेषविधानाच्च विधिबलाद्विदुषाप्यवश्यं कर्म कर्तव्यमेवेति चेद्भवानत्र प्रष्टव्यः परावरैकत्वविज्ञानवह्निनिर्मूलितद्वैतभ्रमस्य सर्वं ब्रह्मैव पश्यतो जीवन्मुक्तस्य ब्रह्मविदः कर्मकरणं स्वार्थं वा किं परार्थं वा आद्ये कर्मैहिकार्थं वा किमामुष्मिकार्थं वा आद्ये शरीररक्षार्थं वा किं परिग्रहरक्षार्थं वाप्युत विलासार्थम् । नाद्यः 'सिद्धेऽन्यथार्थे न यतेत तत्र परिश्रमं तत्र समीक्षमाणः' इतिवचनाच्छरीरस्थितेः प्रारब्धाधीनत्वात्तदुद्दिश्य विदुषः कर्माऽनुपपत्तेः । न द्वितीयः "एवं वैतमात्मानं विदित्वा" इतिश्रुतेः निःशेषनिवृत्तमिथ्याज्ञानानां ब्रह्मविदां पुत्राद्येषणाभ्यो व्युत्थानश्रवणात्ताभ्य उत्थितवतो विदुषः परिग्रहाभावात्तद्रक्षानिमित्तककर्मानुपपत्तेः । न तृतीयः सर्वमात्मानमेव पश्यत आत्मरतेर्विदुषोऽन्यत्र रत्यप्रसक्तौ विलासासंभवात् । तर्ह्यामुष्मिकार्थमस्त्विति चेत्तत्रापि किं स्वर्गार्थं वा किमपवर्गार्थं किमात्मशुद्ध्यर्थं वा । नाद्यः पर्याप्तकामस्य कृतात्मनस्तु "इहैव सर्वे प्रविलीयन्ति कामाः" इतिसर्वकामप्रविलयश्रवणाद्विदुषः स्वर्गकामासंभवात्तदर्थककर्मानुष्ठानानुपपत्तेः । न द्वितीयः "न कर्मणा न प्रजया" इतिश्रुत्या कर्मणा मोक्षसाधनत्वनिषेधाज्जीवन्मुक्तत्वाच्च विदुषस्तदर्थककर्मासिद्धेः । तृतीये किं शरीरशुद्ध्यर्थं वा किं चित्तशुद्ध्यर्थं वा किमात्मशुद्ध्यर्थं वा कर्म कर्तव्यम् । नाद्यः 'कलेवरं मूत्रपुरीषभाजनम्' इति स्मरणात्प्रत्यक्षत्वाच्च मलमांसास्थिमतो वपुषः कर्मणा शुद्ध्यसंभवात् । न द्वितीयः "यतयः शुद्धसत्त्वाः" इति श्रवणात् शुद्धचित्तत्वादेव सम्यगुत्पन्नात्मज्ञानत्वाद्विदुषस्तच्छुद्ध्यपेक्षाऽसिद्धेः । न तृतीयः "अस्नाविरꣳ शुद्धमपापविद्धम्" इति श्रवणान्निरवयवत्वेनाऽविषयत्वाच्च कर्मणात्मनः शुद्धिकल्पनाऽयोगात् यज्ज्ञानबलेन विष्णुरुद्रादयोऽकार्यशतकोटिमपि कृत्वा स्वयं शुद्ध्यन्त्यन्यानपि च शोधयन्ति तमात्मानं कः केन शोधयेत् स्वत एव सतः शुद्धिर्नासता येन केनचिदित्यात्मनः स्वत एव शुद्धत्वात् । तर्हि विदुषः कर्माचरणं परार्थमेवास्त्विति चेत्त्वमत्र प्रष्टव्यः लोकार्थं यः कर्म करोति स किमपरोक्षज्ञानी उत परोक्षज्ञानी वेति । आद्ये स यतिर्वा गृहस्थो वा । नाद्यः तस्य निरभिमानत्वात्संन्यस्तसर्वकर्मतत्साधनत्वाच्च कर्मशब्दाऽप्रसक्तेः देहवर्णाश्रमादिष्वहं ममेत्यभिमानः प्रपञ्चसत्यत्वबुद्धिरर्थित्वं कर्तव्यताबुद्धिरकरणे प्रत्यवायभयं शास्त्रभयं च खलु प्रवृत्तेर्बीजं तदेतत्सर्वमपि समूलं परावरैकत्वविज्ञानमहाग्निना निर्दह्य स्वयं निष्क्रियब्रह्मात्मना तिष्ठतो निर्दग्धानात्मतादात्म्यग्रन्थेः सर्वात्मभावापन्नस्य स्वात्मारामस्य यतेरतिवदनमेव न संभवति किमुत कर्मणि प्रवृत्तिरिति । तथाच श्रुतिः "प्राणो ह्येष सर्वभूतैर्विभाति । विजानन्विद्वान् भवते नातिवादी" इति । ततो ब्रह्मनिष्ठस्यात्मरतेः स्वार्थं वा परार्थं वा कर्मणि प्रवृत्तिर्न संभवति । नापि द्वितीयः जन्मानेकसहस्रकृतपुण्यकर्मपुञ्जपरिपाकेनेश्वरप्रसादेन च सर्वदृश्यमिथ्यात्वनिश्चयपूर्वकं ब्रह्मैवाहमिति ब्रह्मात्मैकत्वविज्ञानमप्रतिबद्धं यदा समुत्पन्नं स्यात्तदैव गृहस्थोपि याज्ञवल्क्यादिवदेषणाभ्यो व्युत्थास्यति नत्वहं ममेति संसर्तुमर्हति तत्कारणासंभवात् । संसारकारणं खल्वनात्मनि देहादावहंभावस्तदन्यत्र ममभावश्च तदेतद्द्वयं यस्य ब्रह्मात्मैकत्वविज्ञानेन विध्वस्तं

न स पुनः संसाराय कल्पते नहि ब्रह्मैवाहमिति विज्ञानं ब्राह्मणोऽहं ममेदमितिबुद्धिश्च तेजस्तिमिरवत्परस्परविरुद्धमेकत्र वस्तुं शक्नोति ततो ब्रह्मतत्त्वविज्ञानखड्गनिर्भिन्नहृदयग्रन्थेर्विदुषः पुनः संसरणं न संभवत्यतः संसाराद्व्युत्तिष्ठत्येव गृह्यपि विद्वान् यदि न व्युत्तिष्ठेत्तदव्युत्थानमेव ज्ञापयत्यज्ञानतत्कार्यनिगृहीतत्वं विदुषः । ननु तद्धेतुकप्रारब्धाभावाद्गृही ब्रह्मभावापन्नोऽपि नोत्तिष्ठतीति चेज्जडभरतवद्वसेत् न त्वहं ममेदमिति संसरति मिथ्यात्वज्ञानस्य संसारस्य च मिथो विरोधात् नहि मरुं निर्जलं दृष्ट्वा पुनर्दूरात्प्रतीयमानं जलमादातुं पातुं वा विवेकी गच्छति स्वयं बलवता प्रेष्यमाणोऽपि वेगेन हर्षेण च न गच्छति किंतु हा कष्टमिति रुदन् मन्दंमन्दं गच्छति नाप्यन्यं चोदयति तद्वत्प्रतिकूलप्रारब्धवानपि विद्वान् तत्सर्वमिथ्यात्वदर्शी संसर्तुं न हृष्यति नान्यं प्रेषयति च किंतु भग्नकटिसर्पवन्मन्दगतिर्भविष्यति प्रवृत्तिहेतोरनात्मन्यहंभावस्याभावात् ब्रह्मैवाहमिति ब्रह्मात्मना ब्रह्मण्येव तिष्ठतो ब्रह्मविदो ब्राह्मणस्य चाण्डालमिव तनु स्प्रष्टुं न रोचते देहादितादात्म्यं विनाऽहं ममेति व्यवहर्तुं च न शक्यते ब्रह्मविदां देहादितादात्म्यमतीव दुःखं तत्तादात्म्येनाहं ममेति प्रवृत्तिस्ततोऽतिदुःखं तत्रापि कर्मकरणमत्यन्तदुःखमेवेति विज्ञाय गृहस्थोऽपि विद्वान् सर्वं संन्यस्यत्येव न स्वार्थं न परार्थं वा कर्म कर्तुं शक्नोति अतः परोक्षज्ञान्येव चतुर्थाध्याये चात्र च वक्ष्यमाणरीत्या लोकसंग्रहं करिष्यतीति न क्वचिदप्यपरोक्षज्ञानी निःशेषविनष्टानात्माऽहंभावः । ननु "योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः। सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते॥ नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्" इत्यादिवाक्यार्थपर्यालोचनया त्वपरोक्षज्ञानिनोपि लोकसंग्रहार्थं कर्म कर्तव्यमेवेति प्रतीयते कथं परोक्षज्ञान्येव लोकसंग्रहं करिष्यतीति नियमः क्रियते विशुद्धात्मत्वादिविशेषणजातं कथं परोक्षज्ञानिनः सिध्येद्विना ब्रह्मविदं ब्रह्मनिष्ठं मुनिरिति तत्त्वविदिति ब्रह्मविल्लिङ्गदर्शनात्ततोऽपरोक्षज्ञानिनोऽपि लोकसंग्रहार्थं कर्म कर्तव्यमेवेति चेत्सत्यं विशुद्धात्मादिविशेषणजातमितरस्माद्ब्रह्मविदं व्यावर्तयति तदिदं मुक्तिकृतलक्षणं जन्मशतकोट्याप्यन्येषामलभ्यं तथाप्यत्र त्वं प्रष्टव्यः अपरोक्षज्ञानी द्विविधः सिद्धः साधकश्चेति तयोः किं सिद्धस्योच्यते उत साधकस्य वा लोकसंग्रह इति। नाद्यः मुक्तत्वात्तस्य लोकसंग्रहानुपपत्तेः "सर्वमिदमहं च ब्रह्मैव" इति नित्यनिरन्तरब्रह्मनिष्ठया निशितीकृतपरावरैकत्वविज्ञानखड्गेन द्वैतभ्रमबन्धं विच्छिद्य ब्रह्मादिस्तम्बपर्यन्तैः सह सर्वप्राणिभिः स्वं मुक्तं पश्यतो ब्रह्म विद्यतेस्तद्दृष्ट्या बद्धलोकाभावात्तत्संग्रहाऽसंभवात् यथा देवदत्तः सर्वेभ्यः पूर्वं स्वयं भुक्त्वा स्वमेव भुक्तवन्तं पश्यति नान्यं यथा वा यज्ञदत्तः स्वयं पूर्वं प्रतिबुध्य स्वमेव प्रतिबुद्धं पश्यति न तथा विद्वानात्मानमेव मुक्तं पश्यति किंतु स्वविज्ञानेन स्वं च सर्वं च प्राणिजातं मुक्तमेव पश्यति यथा बुद्धिमान् स्वस्य चेतनत्वधर्मवैशिष्ट्यविज्ञानेन ब्रह्माण्डस्थं प्राणिजातं सर्वं चेतनत्वधर्मविशिष्टमेव विजानाति यथा वा पाचकः स्थालीपुलाकस्यैकस्य पक्वताज्ञानेन सर्वस्याप्यन्यस्य पक्वतां विजानाति तथा ब्रह्मविद्यतिः स्वमुक्त्या सर्वान्मुक्तानेव विजानाति नतु स्वमात्रं यस्तु स्वमात्रमेव मुक्तं पश्यति नत्वन्यं न स ब्रह्मविदेव भवति नापि च मुक्तः किंतु स वाचा मुक्तः नत्वविद्याबन्धात् यथा विवेकी सूक्ष्मबुद्ध्या तरङ्गफेनबुद्बुदाद्यम्मयं सर्वं जलमात्रं पश्यति यथा कटकमुकुटादि हैमं सर्वं हेममात्रं पश्यति यथा वा रज्जुसर्पं रज्जुमात्रं पश्यति तथा यस्तु प्रत्यक्दृष्ट्या स्वं च जगत्सर्वं च ब्रह्ममात्रं पश्यति स एव ब्रह्मविदद्वैतदर्श्यविद्याबन्धविमुक्तश्च तस्यैतस्याद्वैतदर्शिनो महात्मनः सिद्धस्य सुप्तोत्थितवत्स्वातिरिक्तमपश्यतः पूर्णवृत्तेर्ब्रह्मविद्वरिष्ठस्य लोकविधिविधानविधेयादेरभावात्तदुद्देशेन कर्मणि प्रवृत्तिर्न संभवति 'कुर्वन्नपि न लिप्यते' इतिप्रवृत्तिद्योतकं वाक्यं विद्यते तत्कथमितिचेत्तदर्थं श्लोकव्याख्यानावसरे वक्ष्यामः "विद्वान्यजते" इत्यत्र विदितवेदार्थो ब्राह्मणो विद्वच्छब्दार्थो नतु ब्रह्मविद्यतिस्तस्य सर्वकर्मसंन्यासित्वाद्विधेरपि लोकवन्मिथ्यात्वकोट्यन्तःपातित्वाच्च

कर्म विध्यनुपपत्तेः । न द्वितियः साधकस्य मुमुक्षोर्यतेः कर्मविध्यदर्शनात् नहि मुमुक्षोर्यतेर्निदिध्यासो लोकसंग्रहार्थं कर्म कर्तव्यमिति विधिरस्ति विना समाधिम् " तमेव धीरो विज्ञाय प्रज्ञाम्' इति " परं ब्रह्मानुसंदध्यात् " " यच्छेद्वाङ्मनसी प्राज्ञः " इति " ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् " इति ज्ञाननिष्ठैव कर्तव्यत्वेन श्रूयते स्मर्यते च 'मनः संयम्य मच्चित्तः' इति 'ध्यानयोगपरो नित्यम्' इति 'वाचं यच्छ मनो यच्छ' इति चातःसाधकस्यात्मवेदिनो यतेः कर्तव्यः समाधिरेव न श्रौतं न स्मार्तं च स्वार्थं वा परार्थं वा शौचमाचमनं स्नानं नतु चोदनया चरेदिति ज्ञाननिष्ठस्य विध्यभावस्मरणात् " एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति " इति श्रुत्या जिज्ञासया संन्यस्तसर्वकर्मणो यतेर्विविदिषोरेव जिज्ञासायां संप्रवृत्तो " नाद्रियेत्कर्मचोदनाम् " इति श्रवणादिज्ञानसाधनं विना नान्यत्कर्तव्यमिति कर्मविधेरुपेक्ष्यत्वस्मरणात्किमुत सिद्धस्य विज्ञातात्मतत्त्वस्य साधकस्य कर्मतन्त्रानवकाश इति अतः परोक्षज्ञान्येव बहुधा कृतश्रवण आभासात्मज्ञान्यहं ममादिबाह्यवासनाबद्धो लोकसंग्रहवचनस्य विषयः अथवा लोकानुग्रहार्थं ब्रह्मणा सृष्टा महान्तो व्यासागस्त्यपराशरवसिष्ठादयस्तत्सदृशा वा अन्ये आधिकारिका निग्रहानुग्रहक्षमास्ते वा भवेयुर्लोकसंग्रहवचनस्य विषयाः नतु सिद्धो नापि च साधको मुमुक्षुर्यतिस्तत एवोच्यते भगवता सर्वज्ञेन–तस्य कार्यं न विद्यते इति ॥ १७ ॥

**श्री० टी०**–तदेवं न कर्मणामनारम्भान्नैष्कर्म्यमित्यादिनाज्ञस्यान्तःकरणशुद्ध्यर्थं कर्मयोगमुक्त्वा ज्ञानिनः कर्मानुपयोगमाह–**यस्त्विति** द्वाभ्याम् । आत्मन्येव रतिः प्रीतिर्यस्य ततश्चात्मन्येव तृप्तः स्वानन्दानुभवेन निर्वृतः अत एवात्मन्येव संतुष्टो भोगापेक्षारहितो यस्तस्य कर्तव्यं नास्ति ॥ १७ ॥

**स० टी०**–यस्तु नास्तीन्द्रियारामस्तत्त्वदर्शी स कर्म तत् ॥ अकुर्वन्नपि नैवासौ प्रत्यवैति कथंचन ॥१॥ रतिं यातीन्द्रियारामः स्रग्गन्धवनितादिषु ॥ तृप्तिं यात्यन्नपानादौ तुष्टिं पुत्रादिलाभतः ॥ २ ॥ विषयाणां यथोक्तानामभावे दुःखमेति च ॥ साक्षात्कृतनिजानन्दो द्वैतदृष्टेरभावतः ॥ ३ ॥ अतितुच्छतया भोग्यसुखं नेच्छति तत्त्वदृक् ॥ तथोक्तं श्रीवसिष्ठेन निर्वाणस्योत्तरे दले ॥ ४ ॥ स्वभावो दृश्यवैरस्यमेव तत्त्वविदो निजः ॥ दृश्यस्पन्दनमेवाहुरतत्त्वज्ञत्वमुत्तमाः ॥ ५ ॥ अतज्ज्ञायैव विषयाः स्वदन्ते न तु तद्विदः ॥ नहि पीतामृतायान्तःस्वदते कटु काञ्जिकम् ॥ ६ ॥ मनोवृत्तिविशेषा हि स्यू रतितृप्तितुष्टयः ॥ साक्षिसिद्धा अतोऽनात्मधर्मास्तेषु कथं बुधः ॥ ७ ॥ सज्जेतात्मसुखे मग्नो गलितानात्मधीः स्वतः ॥ आत्मन्येव सुखाम्भोधौ स्वभावादेव तत्त्ववित् ॥ ८ ॥ रतिं तृप्तिं च तुष्टिं च यात्यसौ सुखसागरः ॥ अतोऽनात्मनि रत्यादेरभावादात्मतत्त्ववित् ॥ ९ ॥ साक्षात्कुर्वन्परानन्दमुपचारतयोच्यते ॥ आत्मरतिरात्मतृप्त आत्मसंतुष्ट इत्यपि ॥ १० ॥ एवंभूतो मनुष्यो यः कृतकृत्यः स एव हि ॥ वर्णाश्रमानियम्यो न मानवश्चेतिशब्दतः ॥११॥ एवंभूतस्य कर्तव्यं वैदिकं लौकिकं मनाक् ॥ न विद्यते भ्रान्तिनाशात्स्थितस्याद्वयवस्तुनि ॥१२॥१७॥

**भा० टी०**–' न कर्मणाम् ' इत्यारभ्य 'शरीरयात्रापि' इत्यन्तेन ग्रन्थेनात्मज्ञाननिष्ठायोग्यताप्राप्त्यर्थं फलाभिसंधिरहितं कर्मानुष्ठेयमिति प्रतिपाद्य ' यज्ञार्थात् ' इत्यादिना मोघमित्यन्तेन प्रासङ्गिकमनात्मविदोऽधिकृतस्य कर्मानुष्ठाने बहुकारणमुक्तं तदकरणे च दोषसंकीर्तनं कृतमेवंस्थिते किमेवं प्रवर्तितं चक्रं सर्वेणानुवर्तनीयमुतानात्मज्ञेनाशुद्धान्तःकरणेन ज्ञानप्राप्त्यर्थमित्यर्जुनसंशयमालक्ष्य स्वयमेव वा शास्त्रस्य विवेकप्रतिपत्त्यर्थं तत्त्वविदस्तन्निषेधति–**यस्त्विति** । यस्तु मानव आत्मज्ञाननिष्ठ आत्मन्येव रतिर्न विषयेषु यस्य स आत्मनैव नान्नरसादिना तृप्तश्च भवेद् आत्मन्येव तुष्टो न बाह्येष्वर्थेषु सर्वतो विगततृष्ण इत्यर्थः तस्य कर्तव्यं नास्ति ॥ १७ ॥

**प० टी०**–एवं ब्रह्ममतं निरूप्येदानीमनुत्पन्नज्ञानं भवन्तं प्रत्येवायं कर्मोपदेशो नोत्पन्नज्ञानं प्रतीत्याह–

**यस्त्विति** । यस्त्वात्मरतिरात्मन्येव रतिः प्रीतिर्यस्य तथात्मन्येव तृप्तोऽवाप्तसकलकामत्वादत एवात्मन्येव संतुष्टो भोगापेक्षारहितस्तस्य कार्यं कर्तव्यं न विद्यते ॥ १७ ॥

**रा० टी०**—एवं न कर्मणामनारम्भादित्यादिना सहयज्ञा इत्यादिना चोक्तदिशा कर्माकरणतत्करणयोर्हानिलाभौ चेत्तर्हि परमेश्वरे असंप्रज्ञातसमाधिरूपं मनःसमाधानमपि न कार्यं प्रसज्येत तत्र कर्मलोपस्यावश्यकत्वादित्यत आह—**यस्त्विति** । तुशब्दः समाधिस्थत्वविशेषसूचकः । यस्त्वसंप्रज्ञातसमाधिस्थः मानवोऽपरोक्षज्ञानी । मनुतेरवण् । आत्मरतिरेव । अत्रात्मशब्दः सर्वोऽपि परमात्मपरः । आत्मनि आत्मनो वा रतिमान्दर्शनजन्यसुखवान् परमात्मविषयकदर्शनजन्यसुखवानेव नत्वन्यत्र रतिमानित्येवकारार्थः । भगवतोऽन्यत्र रतिराहित्यं न प्रायेणेति मन्तव्यं किंतु सर्वात्मनेत्याह—आत्मतृप्त इति । आत्मना तृप्तः परमात्मप्रसादेनैव तदन्यत्र सर्वात्मनालंबुद्धिमानित्यर्थः । अन्यत्रालंबुद्धिरपि भगवत्प्रसादायत्तेति भावः । किंचातिशयितं सुखं दत्त्वा भगवानन्यत्र सर्वात्मनालंबुद्धिमुत्पादयतीत्यतोऽन्यत्रालंबुद्धौ हेतुतया प्रागुक्तरत्याख्यमेव सुखमाह—**आत्मन्येव च संतुष्ट इति** । सम्यक् तुष्टिमान्संतुष्टः महासुखवानित्यर्थः । हेतुगर्भमिदम् । भगवद्दर्शननिमित्तकमहासुखवत्त्वादन्यत्रालंबुद्धिमानिति । भगवद्दर्शनानिमित्तकं महासुखं केन हेतुना स्यादित्यतः संतुष्टत्वे हेतुः—आत्मन्येवेति । अधिकरणसप्तमी । आत्मनि स्थित एव सन्संतुष्ट इति । असंप्रज्ञातसमाधिरूपयात्मानि स्थित्यैव संतुष्टो नत्वन्येन केनापीत्येवकारार्थः । अत्र मानव इति उक्तिः अपरोक्षिण एवासंप्रज्ञातसमाधिरिति द्योतयितुम् । यस्त्वेवंरूपस्तस्य कार्यं कर्तव्यं संध्यावन्दनादिकं किमपि कर्म न विद्यते ॥ १७ ॥

**नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन ॥**
**न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ १८ ॥**

**त० टी०—तत्र हेतुमाह—नैवेति । लोके कर्मणां कर्तुरुत्कर्षो भवति तदकरणेऽपकर्षो जायते । तस्यात्मरतस्य विदुषः कृतेन कर्मणा कश्चनोत्कर्षाद्यर्थो नास्ति न चाप्यकृतेनेह कश्चनापकर्षो दोषो वा भवति । आत्मव्यतिरिक्तस्य सर्वस्योपेक्षितत्वाद् अत एव चास्यात्मविदः सर्वभूतेषु देवमनुष्यादिषु कश्चिदर्थव्यपाश्रयः कोऽप्यर्थाय प्रयोजनाय सेवनीयो न भवतीत्यर्थः ॥ १८ ॥**

**म० टी०**—नन्वात्मविदोऽपि अभ्युदयार्थं निःश्रेयसार्थं प्रत्यवायपरिहारार्थं वा कर्म स्यादित्यत आह—**नैवेति** । तस्यात्मरतेः कृतेन कर्मणाभ्युदयलक्षणो निःश्रेयसलक्षणो वाऽर्थः प्रयोजनं नैवास्ति तस्य स्वर्गाद्यभ्युदयाऽनर्थित्वात् निःश्रेयसस्य च कर्मासाध्यत्वात् । तथा च श्रुतिः "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृतः कृतेन" इति । अकृतो नित्यो मोक्षः कृतेन कर्मणा नास्तीत्यर्थः । ज्ञानसाध्यस्यापि व्यावृत्तिरेवकारेण सूचिता । आत्मरूपस्य हि निःश्रेयसस्य नित्यप्राप्तस्याज्ञानमात्रमप्राप्तिः तच्च तत्त्वज्ञानमात्रापनोद्यं तस्मिंस्तत्त्वज्ञानेनापनुन्ने तस्यात्मविदो न किंचित् कर्मसाध्यं ज्ञानसाध्यं वा प्रयोजनमस्तीत्यर्थः । एवंभूतेनापि प्रत्यवायपरिहारार्थं कर्माण्यनुष्ठेयान्येवेत्यत आह—नाकृतेनेति । भावे निष्ठा नित्यकर्माकरणेन इह लोके गर्हितत्वरूपः प्रत्यवायप्राप्तिरूपो वा कश्चनार्थो नास्ति । सर्वत्रोपपत्तिमाह—उत्तरार्धेन । चो हेतौ । यस्मादस्यात्मविदः सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कोपि अर्थव्यपाश्रयः प्रयोजनसंबन्धो नास्ति । कंचिद्भूतविशेषमाश्रित्य कोपि क्रियासाध्योऽर्थो नास्तीति वाक्यार्थः । अतोऽस्य कृताकृते निष्प्रयोजने "नैनं कृताकृते तपतः" इति श्रुतेः । "तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवति" इति श्रुतेर्देवा अपि तस्य मोक्षाभवनाय न समर्था इत्युक्तेर्न विघ्नाभावार्थमपि देवाराधनरूपकर्मानुष्ठानमित्यभिप्रायः । एतादृशो ब्रह्मविद्भूमिकासप्तकभेदेन निरूपितो वसिष्ठेन 'ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता ।

विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततोऽसंसक्तिनामिका । पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ' इति । तत्र नित्यानित्यवस्तुविवेकादिपुरःसरा फलपर्यवसायिनी मोक्षेच्छा प्रथमा । ततो गुरुमुपसृत्य वेदान्तवाक्यविचारः श्रवणमननात्मको द्वितीया । ततो निदिध्यासनाभ्यासेन मनस एकाग्रतया सूक्ष्मवस्तुग्रहणयोग्यत्वं तृतीया । एतद्भूमिकात्रयं साधनरूपं जाग्रदवस्थोच्यते योगिभिर्भेदेन जगतो भानात् । तदुक्तम् ' भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् । यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ' इति । ततो वेदान्तवाक्यान्निर्विकल्पको ब्रह्मात्मैक्यसाक्षात्कारश्चतुर्थी भूमिका फलरूपा सत्त्वापत्तिः स्वप्नावस्थोच्यते सर्वस्यापि जगतो मिथ्यात्वेन स्फुरणात् । तदुक्तम् ' अद्वैते स्थैर्यमायाते द्वैते प्रशममागते । पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ' इति । सोऽयं चतुर्थभूमिं प्राप्तो योगी ब्रह्मविदित्युच्यते । पञ्चमीषष्ठीसप्तम्यस्तु भूमिका जीवन्मुक्तेरवान्तरभेदाः । तत्र सविकल्पकसमाध्यभ्यासेन निरुद्धे मनसि या निर्विकल्पकसमाध्यवस्था साऽसंसक्तिरिति सुषुप्तिरिति चोच्यते ततः स्वयमेव व्युत्थानात् । सोऽयं योगी ब्रह्मविद्वरः । ततस्तदभ्यासपरिपाकेण चिरकालावस्थायिनी सा पदार्थाभावनीति गाढसुषुप्तिरिति चोच्यते । ततः स्वयमनुत्थितस्य योगिनः परप्रयत्नेनैव व्युत्थानात् सोयं ब्रह्मविद्वरीयान् । उक्तं हि ' पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् । षष्ठीं गाढसुषुप्त्याख्यां क्रमात्पतति भूमिकाम् ' इति । यस्यास्तु समाध्यवस्थायाः न स्वतो वा परतो व्युत्थितो भवति सर्वथा भेददर्शनाभावात् किंतु सर्वदा तन्मय एव स्वप्रयत्नमन्तरेणैव परमेश्वरप्रेरितप्राणवायुवशादन्यैर्निर्वाह्यमानदैहिकव्यवहारः परिपूर्णपरमानन्दघन एव सर्वतास्तिष्ठति सा सप्तमी तुरीयावस्था तां प्राप्तो ब्रह्मविद्वरिष्ठ इत्युच्यते । उक्तं हि ' षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् । किंचिदेवैष संपन्नस्त्वथ वैष न किंचन ॥ विदेहमुक्तता तूक्ता सप्तमी योगभूमिका । अगम्या वचसां शान्ता सा सीमा योगभूमिषु ' इति यामधिकृत्य श्रीमद्भागवते स्मर्यते ' देहं च नश्वरमवस्थितमुत्थितं वा सिद्धो न पश्यति यतोध्यगमत्स्वरूपम् । दैवादुपेतमथ दैववशादपेतं वासो यथा परिकृतं मदिरामदान्धः ॥ देहोऽपि दैववशगः खलु कर्म यावत्स्वारम्भकं प्रतिसमीक्षत एव सासुः । तं सप्रपञ्चमधिरूढसमाधियोगः स्वाप्नं पुनर्न भजते प्रतिबुद्धवस्तुः ' इति । श्रुतिश्च " तद्यथा हिनिर्ल्वयनी वल्मीके मृता प्रत्यस्ता शयीतैवमेवेदं शरीरं शेतेऽथायमशरीरोऽमृतः प्राणो ब्रह्मैव तेज एव " इति । तत्रायं संग्रहः ' चतुर्थी भूमिका ज्ञानं तिस्रः स्युः साधनं पुरा । जीवन्मुक्तेरवस्थास्तु परास्तिस्रः प्रकीर्तिताः ' अत्र प्रथमभूमित्रयमारूढोऽज्ञोपि न कर्माधिकारी किं पुनस्तत्त्वज्ञानी तद्विशिष्टो जीवन्मुक्तो वेत्यभिप्रायः ॥ १८ ॥

**शं० टी०**—ननु ब्रह्मेन्द्रादिभिस्तत्तत्पदं लब्ध्वा प्राप्तं यत्सुखं तत्कर्मजन्यमेव ततः सर्वत्र सुखस्य कर्मसंपाद्यत्वाद्ब्रह्मविदोऽपि सुखार्थित्वाच्च तस्य निरन्तरसुखसिद्ध्यै कर्म यत्किंचित्कर्तव्यमेवेत्याशङ्कायां न "आनन्दो ब्रह्मेति" "विज्ञानमानन्दं ब्रह्म" इति ब्रह्मण आनन्दैकरूपत्वश्रवणान्निरन्तरब्रह्मनिष्ठया तद्भावापन्नस्याखण्डानन्दस्वरूपेणैव तिष्ठतोऽस्य निरन्तरब्रह्मानन्दरसानुभूतेरनवच्छिन्नत्वात्क्रियाजन्यसुखस्यानित्यत्वात्तदनपेक्षिणो ब्रह्मविदः कर्मसाध्योऽर्थस्तदभावे पुमर्थो वा न कश्चिदस्तीत्याह—नैवेति । तस्याहमेवेदं सर्वमिति सर्वमात्मानमेवाद्वितीयं पश्यत आत्मारामस्यात्मानन्दस्य यतेः सिद्धस्य कृतेनानुष्ठितेन कर्मणा प्राप्तव्योऽर्थः कश्चिदपि नैवास्ति आत्मतृप्तत्वात्सर्वमिथ्यात्वदर्शित्वाच्च । योगक्रियया प्राप्तव्याकाशगमनाणिमादिसिद्धिर्नापेक्ष्यते सर्वात्मभावापन्नत्वात्तपःक्रियया प्राप्तव्यब्रह्मेन्द्रादिपदापेक्षा च न संभवति जीवन्मुक्तत्वाद्वैदिकक्रियया प्राप्तव्यचित्तशुद्धिद्वारकमोक्षापेक्षापि नास्त्यतो ब्रह्मवित्तमस्य कर्मणा साधनीयोऽर्थः कश्चिदपि नास्त्येवेत्यर्थः । नन्वेतस्य कर्मणा प्राप्तव्येष्टार्थाभावेऽपि विध्युल्लङ्घनदोषो वाप्यकरणे प्रत्यवायदोषो वा स्यात्तेन ज्ञानद्वा-

निर्वा स्वरूपहानिर्वा प्रसज्येतेत्याशङ्कायामाह—नाकृतेनेति । उक्तलक्षणस्य ब्रह्मविदस्त्वकृतेन विहितानाचरणेनानर्थ उक्तः कश्चनेह लोके न संभवति 'मायामात्रमिदं द्वैतम्' इतिन्यायेन विधेरप्याविद्यकत्वेन मिथ्यात्वाद्विदुषस्तदुल्लङ्घने दोषाभावः "उभे ह्येवैष एते आत्मानं स्पृणुते" इति श्रवणादकर्मणोऽपि ब्रह्ममात्रत्वदर्शनेन स्वतः सत्ताभावादकर्माऽपि दोषाय न कल्पते निरन्तरब्रह्मनिष्ठयैव तिष्ठतो विदुषस्तेन ज्ञानहानिर्न संभवति "एष नित्यो महिमा ब्राह्मणस्य" इतिब्रह्मवित्स्वरूपस्य कर्माकर्मभ्यां वृद्धिक्षयाभावश्रवणाद्ब्रह्मविदोऽकर्मणा स्वरूपहानिश्च न भवति तस्मादकृतेनास्य न कश्चिदप्यनर्थ इत्यर्थः । नन्वस्य मुक्तिप्रतिबन्धकनिवृत्त्यर्थं वाप्याध्यात्मिकाद्युपद्रवनिवृत्त्यर्थं वाप्युपास्तिक्रियया शिवो वा विष्णुर्वाऽन्यो वा व्यपाश्रयणीयो भवति अथवा शरीरयात्रार्थं ब्राह्मणो वा क्षत्रियो वाप्यनुसृत्याश्रयणीयो भवत्यतो विदुषः सर्वदा कर्मत्यागो न युज्यत एवेत्याशङ्कायामाह—न चेति । अस्योक्तलक्षणस्य ब्रह्मवित्तमस्य देवेषु शिवो वा विष्णुर्वा सर्वभूतेषु ब्राह्मणो वान्यो वा कश्चिदपि यत्किंचित्कार्यमुक्तलक्षणमुद्दिश्य क्रियया व्यपाश्रय आश्रयणीयः कश्चिदपि नास्ति 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः' इति वचनादिहैवास्मिन् शरीरे नित्यनिरन्तरब्रह्मनिष्ठया भाविशरीरप्रापकमज्ञानं तत्कार्यं संचितादिसर्वकर्मजातं च विनिर्मूल्य स्वयं शरीरसंबन्धरहितत्वेनैव सदा स्थितत्वाद्ब्रह्मविदोऽत्रैव मुक्तस्य इतो मुक्तिप्रतिबन्धकासंभवान्मिथ्याकोट्यन्तःपातित्वाच्च शिवविष्ण्वादिराराध्यो न भवति आध्यात्मिकाद्युपद्रवस्य शरीरत्राणस्य च प्रारब्धाधीनत्वात्पुंप्रयत्नस्य वैयर्थ्यदर्शनाच्च न कोऽपि ब्राह्मणादिराश्रयणीय एवातो ब्रह्मविद्वर्यस्य मुक्तस्य क्वचिदपि यत्किंचिदपि कर्म न कर्तव्यमेव कृतं चेत्स ब्रह्मविदेव न भवति । तथाच स्मृतिः 'ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्' इति ॥ १८ ॥

**श्री० टी०**—तत्र हेतुमाह—**नैव तस्येति** । कृतेन कर्मणा तस्यार्थः पुण्यं नैवास्ति न चाकृतेन कश्चन कोऽपि प्रत्यवायोऽस्ति निरहंकारत्वेन विधिनिषेधातीतत्वात् तथापि "तस्मात्तदेषां देवानां न प्रियं यदेतन्मनुष्या विद्युः" इति श्रुतेः मोक्षे देवकृतविघ्नसंभवात् तत्परिहारार्थं कर्मभिर्देवाः सेव्या इत्याशङ्क्योक्तं सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदपि अर्थव्यपाश्रयः आश्रय एव व्यपाश्रयः अर्थे मोक्ष आश्रयणीयोऽस्य नास्तीत्यर्थः । विघ्नाभावस्य श्रुत्यैवोक्तत्वात् । तथाच श्रुतिः—"तस्य ह न देवाश्च नाभूत्या ईशते आत्मा ह्येषां स भवति" इति । हनेत्यव्ययमप्यर्थे । देवा अपि तस्यात्मतत्त्वज्ञस्य अभूत्यै ब्रह्मताप्रतिबन्धनाय नेशते न शक्नुवन्तीति श्रुतेरर्थः । देवकृतास्तु विघ्नाः सम्यग्ज्ञानोत्पत्तेः प्रागेव "यदेतद्ब्रह्म मनुष्या विद्युस्तद्देवानां न प्रियम्" इति श्रुत्यां ब्रह्मज्ञानस्यैवाप्रियत्वोक्त्या तत्रैव विघ्नकर्तृत्वस्य सूचितत्वात् ॥ १८ ॥

**स० टी०**—नन्वस्त्वात्मविदः कर्माभ्युदयादिनिबन्धनम् ॥ प्रत्यवायक्षयार्थं वा को दोष इति चेच्छृणु॥ १॥ कृतेन कर्मणा तस्य न स्वर्गादिप्रयोजनम् ॥ प्राप्यं तस्य तु सर्वत्र स्वर्गादौ तुच्छतामतिः ॥ २ ॥ कर्मासाध्यतया मुक्तेः स्वात्मत्वाच्चात्मवेदिनः ॥ तदर्थमपि नो कार्यं नित्यप्राप्ततया मुनेः॥ ३॥ स्वात्मावस्था न मोक्षस्य नित्यप्राप्तस्य केवलम् ॥ अज्ञानमात्रमप्राप्तिस्तद्बाध्यं स्वात्मबोधतः ॥ ४ ॥ अज्ञाने ज्ञानतो नष्टे सकार्ये तत्त्ववेदिन॥ न किंचित्कर्मणा साध्यं ज्ञानसाध्यं न किंचन ॥५॥ न कर्माकरणेनास्य प्रत्यवायोऽपि कश्चन ॥ यस्मादात्मविदः सर्वभूतेषु द्रुहिणादिषु ॥ ६ ॥ न प्रयोजनसंबन्धः कोऽप्यस्त्यात्मरतेर्मुनेः ॥ अतः कृताकृते तस्य निष्फले इति निर्णयः ॥ ७ ॥ मुमुक्षोरपि नैवास्ति कर्म कर्तव्यमाग्रहात् ॥ भूमिकात्रयसंस्थस्य किं पुनर्ज्ञानिनो मुनेः ॥ ८ ॥ भूमिसप्तकभेदेन ब्रह्मवित्संनिरूपितः ॥ वसिष्ठे जानकीनाथं संमुखीकृत्य तद्विदा ॥ ९ ॥ ज्ञानभूमिः शुभेच्छाख्या प्रथमा परिकीर्तिता ॥ विचारणा द्वितीया स्यात्तृतीया तनुमानसा ॥ १० ॥ भूमिकात्रितयं त्वेतद्राम जाग्रदिति स्थितम् ॥ यथावद्भेदबुद्ध्येदं जगज्जाग्रति दृश्यते ॥ ११ ॥

अद्वैते स्थैर्यमायाते द्वैते च प्रशमं गते ॥ पश्यन्ति स्वप्नवल्लोकं चतुर्थीं भूमिकामिताः ॥ १२ ॥ पञ्चमीं भूमिकामेत्य सुषुप्तिपदनामिकाम् ॥ षष्ठीं गाढसुषुप्ताख्यां क्रमात्पतति भूमिकाम् ॥ १३ ॥ षष्ठ्यां भूम्यामसौ स्थित्वा सप्तमीं भूमिमाप्नुयात् ॥ किंचिदेवैष संपन्नस्त्वथ वैष न किंचन ॥ १४ ॥ अगम्या वचसां शान्ता सा सीमा योगभूमिषु ॥ एवं वसिष्ठमुनिना शरदेन्दुः प्रबोधितः ॥ १५ ॥ चतुर्थीं भूमिमारभ्य ब्रह्मविज्ञानकर्मणोः ॥ न साध्यमीक्षते किंचित्कृतकृत्यतयात्मनः ॥ १६ ॥ साध्याभावादतो ब्रह्मविदः कार्यं न विद्यते ॥ १७ ॥ १८ ॥

**भा० टी०**–चतुर्थपादं विवृणोति–**नैवेति** । तस्यात्मरतेः कृतेन कर्मणाऽभ्युदयार्थेन ज्ञानार्थेन मोक्षार्थेन वा प्रयोजनं नैवास्ति स्वर्गस्य तुच्छरूपेण ज्ञातत्वात् ज्ञानस्य जातत्वात् "नास्त्यकृतः कृतेन" इतिश्रुत्या मोक्षस्य कर्माकार्यत्वप्रतिपादनात् । अस्तु तर्ह्यकृतेन प्रत्यवायाख्योऽर्थ इत्यत आह–**नेति** । इह लोके कश्चिदपि प्रत्यवायप्राप्तिरूपः स्वहानिलक्षणोऽर्थो नास्ति आत्मरतेः नित्यकरणेऽधिकृतत्वाभावात् तस्मिन्काले प्रत्यवायजनकभावरूपविहितान्यकर्मणि तस्य व्यापृतत्वाभावाच्च । यतो यत्किंचिदपि कस्मादपि तस्य साध्यं नास्तीत्याह–**न चेति** । अस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदर्थोऽर्थार्थमाश्रयणीयः सेवनीयो नास्ति येन तदर्था क्रियानुष्ठेया स्यात् । अस्मिन्श्लोके भूमिकारूढस्येत्यादिशब्दस्याभावेनाप्रासङ्गिकं वसिष्ठोक्तभूमिकाप्रदर्शनं कैश्चित्कृतमिति बोध्यम् ॥ १८ ॥

**प० टी०**–तत्र हेतुमाह–**नैवेति** । तस्यात्मनिष्ठस्य कृतेन कर्मणार्थः सुकृतातिशयो नैव तथाकृतेन च प्रत्यवायोऽपि नैव निरहंकारत्वेन विधिनिषेधातीतत्वात् । अत्र श्रुतिरपि " तदेतदृचाभ्युक्तमेष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न कर्मणा लिप्यते पापकेन " इति । भाष्यम्—तत्तद्बृहदारण्यकं निरूपणीयार्थऋक्शाखीयां श्रुतिं संमतित्वेन दर्शयति–**तदेतदिति** । तदेतत्प्रमेयमृचा ऋग्वेदेनाभ्युक्तमप्यभितो निरूपितमस्ति । तत्किम्, ब्राह्मणस्य ब्रह्मज्ञस्य पुरुषस्य एष नित्यो महिमा शाश्वतं सामर्थ्यम् । तत्किम्, कृतेन कर्मणा न वर्धते उत्कृष्टत्वं न प्राप्नोति नाप्यकृतेन कनीयान् कनिष्ठो भवत्येवंविधो यस्तस्यैव पदवित् पदमात्मरूपं तस्य विद् ध्यानं भवत्येवं तं परमात्मानं विदित्वा सत्कर्मणा पापकेन वा न लिप्यते । अथोपक्रान्तऋक्शाखायामपि—" हृदा तष्टेषु मनसो जवेषु यद् ब्राह्मणाः संयजन्ते सखायः । अत्राह त्वं विजहुर्वेद्याभिरोहब्राह्मणा विचरन्त्युत्वे । इमे ये नार्वाङ् न परश्चरन्ति न ब्राह्मणासो न सुतेकरासः । त एते वाचमभिपद्य पापया सिरीस्तन्त्रं तन्वते अप्रजज्ञयः " इति ऋग्द्वयम् । रावणभाष्यम्–हृदा बुद्धिरूपेण मनसा तष्टेषु निराकृतेषु मनसो जवेषु वृत्तिरूपेषु मनोजवेषु वेगेषु सत्सु यद्यस्मात्कारणाद् ब्रह्मज्ञाः ब्राह्मणाः सखायः सर्वभूतसुहृत्तमाः सन्तः सम्यक् प्रकारेण यजन्तेऽन्तर्यागं कुर्वते । तत्रान्तर्यागे क्रियमाणे किं भवतीत्याह–अत्रेति । अत्राहं त्वमिति पदविभागे अहेत्यत्रानुस्वारलोपश्छान्दसः । अहं त्वं विजहुरन्तर्यागेन भेदभावनां त्यक्तवन्तः । किंभूता वेद्याभिर्विद्याभिज्ञानवृत्तिभिरभित ऊह्यं ब्रह्म यैस्ते पदार्थप्रतीतिरूपेण ज्ञातब्रह्माणः सन्तः उ इति निर्धारणे विचरन्ति अखण्डैकरसत्वेन व्यवहरन्ति । तदुक्तमागमेऽपि–'स्वाधिष्ठानगते कुण्डे चिद्रूपं वह्निमुज्ज्वलेत् । जुहुयात्प्रणवेनात्र त्वमहंतां निवेदयेत् ॥ आत्मनात्मानमद्वैते भूत्वा सच्चित्सुखात्मकः । स्थीयते यत्कियत्कालं सोन्तर्यागः स्मृतो बुधैः ' इति । इमे ये इति । इमे ये उक्तलक्षणाः पुरुषास्ते अर्वाङ् मनुष्यलोके न चरन्ति न संभवन्ति । नपरः पर इति सकारान्तमव्ययम् । परस्मिन् देवलोकेऽपि नोत्पद्यन्ते कृताकृतैः कर्मभिरुत्तमाधमलोकं न गच्छन्ति । किं त्वत्रैव ब्रह्मीभूतास्तिष्ठन्तीत्यर्थः । " न तस्य प्राणा उत्क्रामन्त्यत्रैव समलीयन्ते " इति श्रुतेः । परं तु ब्राह्मणा जातिमात्रविप्रास्तथा सुतं सोममभिसृतं कुर्वन्तीति सुतेकरास्त

एव सुतेकरासो याज्ञिकास्तथा भवन्ति किंतु ते उत्तममध्यमाधमगतिं प्राप्नुवन्त्येवेत्यर्थः । अत्र हेतुमाह-त एत इति । त एते निरूपितप्रकारा ब्राह्मणाः सुतेकराश्च वाचं फलप्रतिपादकां वेदवाणीमभिपद्य ज्ञात्वा सिरीः सीरिणः कृषिकर्तार इव भूत्वा पापया फलाशया तन्त्रं यज्ञादिकं तन्वते विस्तारयन्ति, अत एव अ-प्रजज्ञयो न प्रकृष्टा जज्ञिर्जन्म येषां तेऽप्रकृष्टजन्मान इत्यर्थः । अथ प्रकृतमनुसरामः । तथास्य पुरुषस्य सर्वभूतेषु ब्रह्मादिस्थावरान्तेषु कश्चिदर्थव्यपाश्रयोऽर्थः प्रयोजनं तस्य व्यपाश्रय आश्रयः कश्चिदपि न मृग्यते परमार्थसाधने भगवत्कृपापात्रस्य तस्य विघ्नोपशान्त्यर्थं कोऽप्याश्रयणीयो नास्तीत्यर्थः । श्रुतिरपि-"तस्य हन देवा नाभूत्या ईशते आत्मा ह्येषां स भवति" इति । तस्य पुरुषस्याभूत्या अनैश्वर्यायापकर्षणाय देवा इन्द्राद्या नेशते समर्था न भवन्ति हि यस्मात्कारणात्स पुरुष एषां देवानामात्मान्तर्यामी प्रयोजको भवति न हि प्रयोजकमन्तरा विघ्नकरणार्थं प्रवृत्तिरित्यर्थः ॥ १८ ॥

रा० टी०—ननु कर्मकरणाकरणयोर्लाभहानी चेत्तर्हि समाधिर्न कार्यः प्रसज्येतेति चोदिते समाधिस्थस्य कार्यं न विद्यते इत्युत्तरं कस्मादुक्तं कर्मकृतिकाले त्वयाहमुद्बोधनीय इति कंचित्प्रत्युक्त्वा समाधौ स्थितः सन् तेन योगशास्त्रोक्तैरुपायैरुद्बोधितः कर्म करोतीत्येवोत्तरं कुतो नोक्तमित्यत आह—नैवेति । तस्यासंप्रज्ञातसमाधिस्थस्य समाधिं विनेह कृतेन यज्ञादिकर्मणात्मरत्यधिकस्तत्समो वार्थः पुमर्थो नास्ति । ननु यज्ञादिकरणार्थमुत्थाना-भावेऽपि नित्यनैमित्तिककर्माकरणे प्रत्यवायात् तत्करणार्थं समाधित उद्बोधनमावश्यकमित्यत आह—नाकृतेनेति । तस्य समाधिस्थस्याकृतेन कर्मणा संध्यावन्दनादितत्तत्कालानुष्ठेयकर्माभावेन कश्चन नास्ति दोष इति शेषः । ननु समाधिस्थस्यालपस्य यज्ञादेरनुष्ठाने फलाभावेपि संध्याद्यकृतौ प्रत्यवायाभावेपि गुरुदेवतादिषु पूजाकर-णाकरणयोरर्थप्रत्यवायौ स्यातामेवातस्तत्सन्निधानप्राप्तौ उद्बोधनमावश्यकमित्यत आह—न चेति । अस्यासंप्र-ज्ञातसमाधिस्थस्य सर्वभूतेषु । विषयसप्तमीयम् । अर्थव्यपाश्रयः अर्थस्य व्यपाश्रयः प्राप्तिः येन दर्शनसंभा-षणपूजनादिव्यापारेण भवति सोर्थव्यपाश्रय इति व्यधिकरणबहुव्रीहिः । गुर्वादिविषयकदर्शनभाषणवन्दना-दिव्यापारः पुमर्थप्राप्तिहेतुभूतः समाधिस्थस्य नास्तीत्यर्थः । चशब्दः पूर्वार्धोक्तसमुच्चये । गुर्वादिविषयव्यापा-रेणाप्यात्मरतितुल्यं सुखं न लभ्यत इत्यभिप्रायः । एवं तत्पूजाद्यकरणमपि समाधिस्थस्य नानर्थप्राप्तिहेतु-रित्युपलक्ष्यते । यद्वा न केवलं चक्रप्रवर्तकत्वेन भूतस्थितिहेतुत्वात्कर्म कर्तव्यं किंतु मुक्तस्यैवाकर्मत्वादमुक्ते-नावश्यं कर्म कार्यमिति तस्मादित्यनेन वक्तुमकर्मकत्वं मुक्तस्यैवेत्याह—यस्त्विति । यस्तु मानवः प्राप्त-ज्ञानफलो मुक्तः आत्मरतिः आत्मना परमात्मना रतिः अभिव्यक्तस्वरूपानन्दो यस्य स तथा । आत्मना परमात्मना तृप्तः कृतकृत्यः आत्मतृप्तः आत्मन्येव च संतुष्टः प्रीतिमान् । यद्वा तृप्तिसंतोषशब्दयोः प्रीतिरूपैकार्थत्वेऽप्यात्मना तृप्तः प्रीतिमान् आत्मन्येव च संतुष्ट इत्येतावतार्थभेदो ध्येयः । तस्य तु तस्यैवेति तुशब्दोऽत्र योज्यः । मुक्तस्यैव कार्यं न विद्यते । ननु 'कृष्णो मुक्तैरिज्यते वीतमोहैः' इत्यु-क्तेर्मुक्तस्यापि कर्म कर्तव्यमित्यत आह—नैवेति । प्राग्वदेवार्थः । स्वेच्छयैव करणं न विधिबद्धत्वेन न वा फलापेक्षया तस्यैव फलरूपत्वेन फलान्तराभावादिति भावः ॥ १८ ॥

**तस्मादसक्तः सततं कार्यं कर्म समाचर ॥**
**असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ॥ १९ ॥**

त० टी०—एवंभूतात्मज्ञान्यवस्थेप्सुना फलाभिसंधिशून्यं कर्म कर्तव्यमित्याह-तस्मादिति । यस्मात्परमेश्वराराधनात्मकं कर्म एवंभूतज्ञानफलकं तस्मादसक्तः फलसंकल्पवर्जितः सन् कार्यं नियतं कर्तव्यं कर्म सततं नित्यं यावज्जीवं समाचर, हि यतः असक्तः सन्कर्माचरन् पूरुषः कोऽपीश्वराराधकः सत्त्वशुद्धिज्ञानद्वारा परं सर्वोत्तमं परमेश्वरं मोक्षाख्यं फलं वा आप्नोति ॥ १९ ॥

म० टी०—यस्मान्न त्वमेवंभूतो ज्ञानी किंतु धर्माधिकृत एव मुमुक्षुः असक्तः फलकामनारहितः सततं सर्वदा न तु कदाचित् कार्यं अवश्यकर्तव्यं यावज्जीवादिश्रुतिचोदितम् “ तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ” इति श्रुत्या ज्ञाने विनियुक्तं कर्म नित्यनैमित्तिकलक्षणं सम्यगाचर यथाशास्त्रं निर्वर्तय। असक्तो हि यस्मादाचरन्नीश्वरार्थं कर्म कुर्वन्सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण परं मोक्षमाप्नोति पूरुषः, पुरुषः स एव सत्पुरुषो नान्य इत्यभिप्रायः ॥ १९ ॥

शं० टी०—योगारूढो यस्तस्यैव मुक्तस्य यतेरात्मारामस्य कर्म न कर्तव्यं किंत्वारुरुक्षोर्मोक्षार्थिनस्तव कर्म कर्तव्यमेवेति बोधयितुमाह—तस्मादिति। हि यस्मात्कारणान्मुमुक्षुः पुरुषः स्वयमसक्तः फलाभिसंधिरहितो भूत्वा वैदिकं कर्माचरन् सम्यगनुतिष्ठन्नेव परं परमपुरुषार्थं मोक्षमाप्नोति यथाऽयमात्मरतिरस्मिन् जन्मनि जन्मान्तरेषु च वैदिकं कर्म कृत्वैव चित्तशुद्धिं प्राप्यात्मज्ञानेन मुक्तिं प्राप्तवान् तथान्योऽपि कर्मभूमिस्थः कर्म कृत्वैव ज्ञानं प्राप्य मुक्तो भवति नैवान्यथा तस्मात्त्वमपि मुमुक्षुरसक्तो निष्कामः सन् सततं कार्यं कर्तव्यं वैधं नित्यं नैमित्तिकं च कर्म समाचर श्रद्धाभक्तिभ्यामीश्वरार्पणबुद्ध्या सम्यक्कुरु। कर्मणैव चित्तशुद्धिं प्राप्य ज्ञानं च मोक्षं च प्राप्स्यसीत्यर्थः “धर्मेण पापमपनुदति” इति ‘ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः’ इति ‘ज्ञानादेव तु कैवल्यम्’ इत्यादिश्रुतिस्मृतिभिर्धर्मानुष्ठानादेव पापक्षयः पापक्षयादेव ज्ञानं ज्ञानादेव मोक्ष इति प्रतिपाद्यते ॥ १९ ॥

श्री० टी०—यस्मादेवंभूतस्य ज्ञानिन एव कर्मानुपयोगो नान्यस्य तस्मात्त्वं कर्म कुर्वित्याह—तस्मादिति। असक्तः फलसङ्गरहितः सन्कार्यमवश्यकर्तव्यतया विहितं नित्यनैमित्तिकं कर्म सम्यगाचर हि यस्मात् असक्तः कर्माचरन्पुरुषः परं मोक्षं चित्तशुद्धिज्ञानद्वारा प्राप्नोति ॥ १९ ॥

स० टी०—यस्मान्नैवं त्वमात्मज्ञः किंतु कर्माधिकारवान् ॥ तस्मान्नित्यं फलासङ्गशून्यः कर्म यथाविधि ॥ १ ॥ तमेतमितिवाक्येन विहितं सम्यगाचर ॥ यस्मात्समाचरन्नीशाराधनं सङ्गवर्जितः ॥ २ ॥ धीशुद्ध्या ज्ञानसंप्राप्तिद्वारेण परमं पदम् ॥ पुरुषो मोक्षमाप्नोति स एव पुरुषो मतः ॥ ३ ॥ १९ ॥

भा० टी०—तव तु चित्तशुद्धिद्वारा ज्ञानार्थं कर्मण्यधिकारः तस्मादसक्तः फलासक्तिवर्जितः कार्यमवश्यं कर्तव्यं नित्यं नैमित्तिकं च कर्म सर्वदा समाचर हि यस्मात्पुरुषोऽसक्तः कर्म समाचरन् ईश्वरार्थं कर्म कुर्वन् तत्त्वशुद्धिद्वारा ज्ञानप्राप्त्या परं मोक्षं प्राप्नोति ॥ १९ ॥

प० टी०—यस्मादेवंभूतस्योत्पन्नज्ञानस्य कर्मोपरमो नान्यस्य तस्मात्त्वं कर्म कुर्वित्याह—तस्मादिति। असक्तः फलसङ्गरहितः सन् कार्यं कर्म नित्यं नैमित्तिकं सततं निरन्तरं समाचर हि यस्मादसक्तः सन् पुरुषः परं ब्रह्माप्नोति ॥ १९ ॥

रा० टी०—तस्मादसंप्रज्ञातसमाधिस्थस्य वा मुक्तस्यैव वाऽकर्मत्वेन त्वादृशेनावश्यं कर्मणः कर्तव्यत्वादसक्तः फलस्नेहरहितः सन् कार्यमवश्यकर्तव्यं कर्म सततं समाचर भगवत्पूजात्वेनानुतिष्ठ। ननु मुक्तस्य कर्मणा प्रयोजनाभावात्कार्याभावः, एवं मुमुक्षोरपि कर्मणा फलाभावात्कार्याभावः किं न स्यादित्यत आह—असक्त इति। पुरुषः असक्तः कर्माचरन्नेव ज्ञानद्वारा परमाप्नोति हि यस्मात्तस्मान्मुक्तसमाधिस्थाभ्यामन्यस्य कर्मणा फलसत्त्वादस्त्येव कार्यमिति भावः ॥ १९ ॥

**कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥**
**लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि ॥ २० ॥**

त० टी०—नन्वन्तःकरणशुद्ध्यर्थमेव कर्म कर्तव्यं तच्छुद्ध्या ज्ञाने जाते कर्म त्याज्यमन्यथा सदा

कर्मणि क्रियमाणे मोक्षो न स्यात्तेन बन्धः स्यात् "नास्त्यकृतः कृतेन" इति श्रुतेः 'कर्मणा बध्यते जन्तुः' इति शास्त्रादित्याशङ्कानिरासार्थं कर्म कुर्वतो ज्ञानिनः प्रमाणयति—कर्मणैवेति। कर्मणेति सहार्थे तृतीया वृद्धो यूनेति निर्देशात्। तथा च कर्मणा सहैव नतु कर्मत्यागेन ज्ञानित्वेन विख्याता जनकादयः जनकाश्वपतिप्रभृतयः ज्ञानस्य संसिद्धिं मोक्षाख्यामास्थिताः प्राप्ताः, नतु कर्मानुष्ठानेन बन्धं प्राप्ता ज्ञानप्रभावादिति भावः। हि यत एवं तस्मात्त्वमपि ज्ञानी चेत्कर्म कर्तुमर्हसि। ननु ज्ञाननिष्ठः पुरुषः कर्मणि क्रियमाणेऽपि ज्ञानफलसिद्धिमेव प्राप्नोति, नतु कर्मणा बध्यते। एवंप्रभावा ज्ञाननिष्ठा चेत्किमर्थं ज्ञानिनोऽपि कर्मकरणावश्यकत्वमिति चेदत आह—लोकसंग्रहमिति। यद्यपि ज्ञाननिष्ठार्हस्त्वं तथाऽपि लोकसंग्रहमेव पश्यन् लोकानां स्वधर्मे प्रवर्तनमधर्मान्निवर्तनं लोकसंग्रहस्तं संपश्यन्कर्तुमर्हसि योग्यो भवसि॥ २०॥

म० टी०—ननु विविदिषोरपि ज्ञाननिष्ठाप्राप्त्यर्थं श्रवणमनननिदिध्यासनानुष्ठानाय सर्वकर्मत्यागलक्षणः संन्यासो विहितः। तथा च न केवलं ज्ञानिन एव कर्मानधिकारः किंतु ज्ञानार्थिनोपि विरक्तस्य। तथा च मयापि विरक्तेन ज्ञानार्थिना कर्माणि हेयान्येवेत्यर्जुनाशङ्कां क्षत्रियस्य संन्यासानधिकारप्रतिपादनेनापनुदति भगवान्—कर्मणेति। जनकादयो जनकाजातशत्रुप्रभृतयः श्रुतिस्मृतिपुराणप्रसिद्धाः क्षत्रिया विद्वांसोपि कर्मणैव सह नतु कर्मत्यागेन सह संसिद्धिं श्रवणादिसाध्यां ज्ञाननिष्ठामास्थिताः प्राप्ताः। हि यस्मादेवं तस्मात्त्वमपि क्षत्रियो विविदिषुर्विद्वान्वा कर्म कर्तुमर्हसीत्यनुषङ्गः " ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति " इति संन्यासविधायके वाक्ये ब्राह्मणत्वस्य विवक्षितत्वात् " स्वाराज्यकामो राजा राजसूयेन यजेत" इत्यत्र क्षत्रियत्ववत्। ' चत्वार आश्रमा ब्राह्मणस्य त्रयो राजन्यस्य द्वौ वैश्यस्य ' इति च स्मृतेः। पुराणेपि ' मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम्। बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ' इति क्षत्रियवैश्ययोः संन्यासाभाव उक्तः। तस्माद्युक्तमेवोक्तं भगवता कर्मणैव हि संसिद्धिमास्थिता जनकादयः इति" ' सर्वे राजाश्रिता धर्मा राजा धर्मस्य धारकः' इत्यादिस्मृतेर्वर्णाश्रमधर्मप्रवर्तकत्वेनापि क्षत्रियोऽवश्यं कर्म कुर्यादित्याह—लोकेति। लोकानां स्वे स्वे धर्मे प्रवर्तनमुन्मार्गान्निवर्तनं च लोकसंग्रहस्तं पश्यन्नपिशब्दाज्जनकादिशिष्टाचारमपि पश्यन्कर्म कर्तुमर्हस्येवेत्यन्वयः। क्षत्रियजन्मप्रापकेण कर्मणाऽऽरब्धशरीरस्त्वं विद्वानपि जनकादिवत्प्रारब्धकर्मबलेन लोकसंग्रहार्थं कर्म कर्तुं योग्यो भवसि न तु त्यक्तुं ब्राह्मणजन्मालाभादित्यभिप्रायः। एतादृशभगवदभिप्रायविदा भगवता भाष्यकृता ब्राह्मणस्यैव संन्यासो नान्यस्येति निर्णीतं, वार्तिककृता तु प्रौढिवादमात्रेण क्षत्रियवैश्ययोरपि संन्यासोऽस्तीत्युक्तमिति द्रष्टव्यम्॥ २०॥

शं० टी०—ततो मुमुक्षोरज्ञातात्मतत्त्वस्यावश्यं कर्मैव कर्तव्यमित्युपदिश्यास्मिन्नर्थे वृद्धाचारं प्रमाणयति श्रीभगवान्—कर्मणैवेति। जनकादयः जनको वैदेह आदिर्येषां ते जनकादयः अश्वपतिभगीरथादयः क्षत्रियाः कर्मणैव श्रौतस्मार्तकर्मानुष्ठानेनैव चित्तशुद्धिं प्राप्य ज्ञानेन संसिद्धिमास्थिता मुक्तिं प्राप्य कृतार्था जाता इत्यतस्त्वमपि कर्मैव कृत्वा तदुत्पन्नचित्तशुद्ध्या ज्ञानं प्राप्य मुक्तो भूत्वा सुखेन तिष्ठेत्यर्थः। यद्वा जनकादयो ज्ञानयोगनिष्ठानिरूढतया संसिद्धिं मुक्तिं प्राप्यापि लोकहितार्थं कर्मणैव सह स्थिताः स्वयं कृतार्था अपि मूढतारणार्थं कर्म कुर्वन्त एव स्थिता इत्यर्थः। आरूढानामेवैवं सति किमुतानात्मज्ञेनारुरुक्षुणा त्वया मोक्षार्थं कर्म कर्तव्यमिति। एवं मुमुक्षोरनात्मज्ञस्यारुरुक्षोर्मोक्षार्थमवश्यं कर्म कर्तव्यमेवेति निर्धार्य इदानीं मुक्तेनाप्याधिकारिकेण लोकहितार्थं कर्म कर्तव्यमेवेति बोधयितुं तत्र दृष्टान्तत्वेन जनकादीनां ज्ञानवृद्धानां प्रवृत्तिमुदाहृत्य तवाप्येतादृशोऽधिकारो यद्यस्ति तिष्ठतु तथापि जनका-

दिवत्त्वया लोकहितार्थमपि कर्मावश्यं कर्तव्यमेव महापुरुषप्रवृत्त्या खलु शास्त्रस्य प्रामाण्यं कर्मणः प्राशस्त्यमज्ञतरणं च पारम्पर्येणाचारप्रचयोऽपि च सिध्यत्यतो मुक्तेनाप्यवश्यं महता कर्म कर्तव्यमित्याशयेनाह–**लोकसंग्रहमिति**। लोकः पामरजनस्तस्य संग्रहः सत्कर्ममार्गप्रदर्शनेन तारणमुन्मार्गान्निवारणं वा तमिमं लोकसंग्रहमेवार्थं संपश्यन् मया क्रियमाणं कर्म लोकोपकाराय भवतीति पश्यन्नपि कर्म कर्तुं त्वमर्हसीत्यर्थः ॥ २० ॥

**श्री० टी०**–अत्र सदाचारं प्रमाणयति–**कर्मणैवेति**। कर्मणैव शुद्धसत्त्वाः सन्तः संसिद्धिं सम्यग्ज्ञानं प्राप्ता इत्यर्थः। यद्यपि त्वं सम्यग्ज्ञानिनमेवात्मानं मन्यसे तथापि कर्माचरणं भद्रमेवेत्याह–**लोकसंग्रहमिति**। लोकस्य संग्रहः स्वधर्मे प्रवर्तनं मया कर्मणि कृते जनः सर्वोपि करिष्यति अन्यथा ज्ञानिदृष्टान्तेन अज्ञः कर्म त्यजेदित्येवं लोकरक्षणमपि तावत्प्रयोजनं पश्यन्कर्म कर्तुमेवार्हसि नतु त्यक्तुमित्यर्थः ॥ २० ॥

**स० टी०**–ननु मे ब्रह्मजिज्ञासोर्ज्ञाननिष्ठाप्तये सदा ॥ श्रवणाद्येव कर्तव्यं कर्मत्यागपुरःसरम् ॥ १ ॥ यथा तत्त्वविदः कर्मसंन्यासोऽस्ति तथा मम ॥ बुभुत्सोरपि संन्यासः किं न स्यादिति चेच्छृणु ॥ २ ॥ श्रुतिस्मृतिप्रसिद्धा ये क्षत्रिया जनकादयः ॥ मुमुक्षवो वा विद्वांसः स्वधर्मेण सहैव ते ॥ ३ ॥ धीशुद्धिं ज्ञाननिष्ठां वा प्राप्ता न त्यागतो यतः ॥ ततोऽपि त्वं बुभुत्सुर्वा विद्वान्वा क्षत्रियत्वतः ॥ ४ ॥ स्वधर्माचरणं सम्यक्कर्तुमेव सदार्हसि ॥ संन्यासविधिवाक्ये हि ब्राह्मणत्वं विवक्षितम् ॥ ५ ॥ संन्यासाभाव एवास्ति यतः क्षत्रियवैश्ययोः ॥ चत्वार आश्रमा विप्रे राजन्यस्य त्रयः स्मृताः ॥६ ॥ द्वौ वैश्यस्य स्मृतौ सिद्धौ पुराणे भारते तथा ॥ मुखजानामयं धर्मो यद्विष्णोर्लिङ्गधारणम् ॥ ७ ॥ बाहुजातोरुजातानां नायं धर्मः प्रशस्यते ॥ जनकादिसमाचारं पश्यंस्त्वं कर्म साधय ॥ ८ ॥ स्वे स्वे धर्मे च लोकानामुन्मार्गाद्विनिवर्त्य यत् ॥ स्थापनं प्रोच्यते लोकसंग्रहस्तं त्वमाश्रय ॥ ९ ॥ सर्वे राजाश्रिता धर्मा राजा धर्मस्य धारकः ॥ १० ॥ २० ॥

**भा० टी०**–हि यस्माच्च जनकादयो जनकाश्वपतिप्रभृतयः पूर्वे क्षत्रियाः कर्मणैव संसिद्धिं मोक्षं गन्तुमास्थिताः प्रवृत्ताः श्रवणादिसाध्यां ज्ञाननिष्ठां प्राप्ता इति वा। इदं व्याख्यानं परमाप्नोति पूरुष इति पूर्वोक्तानुगुणमत आचार्यैः परित्यक्तम्। यदि प्राप्तसम्यग्दर्शनास्तर्हि लोकसंग्रहार्थं प्रारब्धकर्मत्वात्कर्मणा सहैवासंन्यस्यैवाथाप्राप्तसम्यग्दर्शनास्तदा कर्मणा चित्तशुद्धिसाधनभूतेन कर्मणेत्यर्थः। पूर्वैरप्यज्ञानवद्भिरेव कर्तव्यं कर्म कृतमतो नावश्यमन्येन तत्त्वज्ञेन कृतार्थेन कर्तव्यमिति चेत्तथापि प्रारब्धकर्माधीनस्त्वं लोकस्योन्मार्गप्रवृत्तिनिवारणं लोकसंग्रहस्तमेवापि प्रयोजनं संपश्यन्कर्तुमर्हसीत्यर्थः ॥ २० ॥

**प० टी०**–अत्रार्थे सदाचारं प्रमाणयति–**कर्मणैवेति**। जनकादयो राजानोऽपि वर्णाश्रमोचितेन कर्मणैव कृत्वा सिद्धिं तत्त्वज्ञानरूपिणीं प्राप्ताः। अथ तत्त्वज्ञानोत्पत्तावपि कर्म न त्याज्यमित्याह–**लोकसंग्रहमिति**। लोकसंग्रहमपि पश्यन् कर्तुमर्हसि केऽप्यल्पप्रज्ञा वयमपि तत्त्वज्ञानिन इति मत्वा कर्म त्यक्ष्यन्ति तदर्थमपि कर्माचर। तदुक्तम्–'सर्पिरस्ति पयसीक्षुगो रसस्तैलमस्ति तिलमध्य एव तत्। लभ्यते मथनयन्त्रकर्मणा कर्मणा हृदि गता तथैव चित्' इति ॥ २० ॥

**रा० टी०**–ननु ज्ञानादेव मोक्षसिद्धेः कथमसक्तो ह्याचरन्नेवेत्युच्यत इत्यतो मुक्तावानन्दातिशयार्थं विहितकर्मणोऽवश्यकर्तव्यतायां ज्ञानिनामाचारमपि प्रमाणयति–**कर्मणैवेति**। सहयोगे तृतीया। जनकादयो जनकप्रियव्रतादयो ज्ञानिनः कर्मणैव कर्मसहिता एव कर्म कुर्वन्त एव संसिद्धिं संपूर्णमोक्षमास्थिताः प्राप्ताः।

ज्ञानमात्रान्मुक्तिसिद्धावपि तत्रानन्दातिशयार्थं कर्म कुर्वन्तीत्यर्थः । तृतीयायाः करणार्थत्वेपि कर्मणा करणेन संसिद्धिं मोक्षमाप्ता इत्यर्थः । लाङ्गलेन जीवाम इतिवत् ज्ञानद्वारकत्वाभिप्रायं करणत्वमिति । यद्वा संसिद्धिं ज्ञानं कर्मणा प्राप्ता इत्यर्थः । न केवलं ज्ञानिनामाचारात्कर्म कर्तव्यं किंत्वीश्वरप्रीतिद्वारा मुक्तिहेतुलोकसंग्रहार्थत्वाच्च कर्म कार्यमित्याह—लोकेति । लोकानामज्ञजनानां कर्माणि प्रवृत्तिरूपं संग्रहमेवापि न केवलं ज्ञान्याचारमित्यपेरर्थः । एवकारस्तु तिष्ठतु तावत्कर्मकरणेऽन्यो हेतुरित्यर्थसूचकः । संपश्यन्कर्म कर्तुमर्हसि । जनानां कर्माणि प्रवर्तनेन भगवत्प्रीतिस्तथा च मोक्षे सुखातिशय इति ज्ञेयम् । तदुक्तम् 'अज्ञानां ज्ञानदं कर्म ज्ञानिनां लोकसंग्रहात् । अद्धैव तुष्टिदं मह्यं सा मुक्तानन्दपूर्तिदा ' इति ॥ २० ॥

**यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः ॥**
**स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ २१ ॥**

**त० टी०**—ननु मया कर्मकरणे लोकसंग्रहः कथं स्यादित्यत आह—**यद्यदिति** । श्रेष्ठः जातिकुलगुणादिना लोकेऽतिशयप्रशस्यतया संमतः पुरुषो यद्यत्कर्माऽऽचरति, इतरस्ततो निकृष्टो जनस्तत्तदेवाचरति । ननु शुभाशुभाचारयोः शास्त्रमेव सर्वेषां प्रमाणं तदेव दृष्ट्वाऽन्येऽपि किं न कुर्वन्तीत्यत आह—**स इति** । स श्रेष्ठः पुरुषो यच्छास्त्रमन्यद्वा प्रमाणं कुरुते मन्यते लोकोऽज्ञजनस्तदेवानुवर्तते तदुक्तवचनं विश्वस्तः कुरुते । यथा शास्त्रगर्हितमपि मत्स्यभोजनं पूर्वं केनचिच्छ्रेष्ठेन कृतं कान्यकुब्जादयस्तदनुवर्तिनो वहवो भुञ्जते तद्वत् ॥ २१ ॥

**म० टी०**—ननु मया कर्माणि क्रियमाणेऽपि लोकः किमिति तत्संगृह्णीयादित्याशङ्क्य श्रेष्ठाचारानुविधायित्वादित्याह—**यद्यदिति** । श्रेष्ठः प्रधानभूतो राजादिर्यद्यत्कर्माचरति शुभमशुभं वा तत्तदेवाचरतीतरः प्राकृतस्तदनुगतो जनो न त्वन्यत्स्वातन्त्र्येणेत्यर्थः । ननु शास्त्रमवलोक्याशास्त्रीयं श्रेष्ठाचारं परित्यज्य शास्त्रीयमेव कुतो नाचरति लोक इत्याशङ्क्याचारवत्प्रतिपत्तावपि श्रेष्ठानुसारितामितरस्य दर्शयति—**स यदिति** । स श्रेष्ठो यल्लौकिकं वैदिकं वा प्रमाणं कुरुते प्रमाणत्वेन मन्यते तदेव लोकोप्यनुवर्तते प्रमाणं कुरुते न तु स्वातन्त्र्येण किंचिदित्यर्थः । तथाच प्रधानभूतेन त्वया राज्ञा लोकसंरक्षणार्थं कर्म कर्तव्यमेव 'प्रधानानुयायिनो जनव्यवहारा भवन्ति' इति न्यायादित्यभिप्रायः ॥ २१ ॥

**शं० टी०**—मत्कर्तृकं कर्म कथं लोकस्योपकाराय भवतीति चेदुच्यते—**यद्यदाचरतीति** । वेदशास्त्राध्ययनाध्यापनयोस्तदर्थज्ञानज्ञापनयोस्तदुक्तकर्मानुष्ठानानुष्ठापनयोश्च दक्षिणः कुलशीलादिमहत्त्वसंपन्नश्च यो द्विजश्रेष्ठः यद्यच्छ्रौतं स्मार्तं वा अन्यद्वाचरति नियमेनानुतिष्ठति मुमुक्षुः इतरः पामरोपि तत्तदेव कर्माचरति न तु स्वयमप्यन्यत्करोति शास्त्रतज्ज्ञानतदुक्तकर्मपरिज्ञानाभावात् । किंच उक्तलक्षणः श्रेष्ठः यद्यच्छास्त्रं स्वयं प्रमाणं कुरुते इदमेव प्रमाणमिति व्यवहरति लोको मूढजनस्तदेव तेन प्रमाणीकृतमेव शास्त्रमनुवर्तते तदेव शास्त्रं स्वयं प्रमाणं करोति, श्रेष्ठानुसारी भवति पामर इत्यर्थः । एतेन श्रेष्ठस्य कृतार्थस्यापि लोकहितार्थं कर्म कर्तव्यमेवेति सिद्धम् ॥ २१ ॥

**श्री० टी०**—कर्मकरणे लोकसंग्रहो यथा स्यात्तथाह—**यदिति** । इतरः प्राकृतो जनस्तत्तदेवाचरति स श्रेष्ठो जनः कर्मशास्त्रं निवृत्तिशास्त्रं वा यत्प्रमाणं मन्यते तदेव लोकोऽप्यनुवर्ततेऽनुसरति ॥ २१ ॥

**स० टी०**—कर्माणि क्रियमाणेऽपि मया कथमयं जनः ॥ संगृह्णीयादिति भ्रान्तिवारणायाह माधवः ॥ १ ॥ प्रधानभूतो राजादिर्यद्यदेव शुभाशुभम् ॥ कर्माचरति सामान्यस्तत्तदाचरतीतरः ॥ २ ॥ ननु शास्त्रं समालोच्य श्रेष्ठं शास्त्रीयमादरात् ॥ आचारं स्वयमेवान्यः कुतो नाचरतीति चेत् ॥ ३ ॥ मैवं श्रेष्ठो जनो

यद्यद्वैदिकं लौकिकं च वा ॥ प्रमाणत्वेन लोकेऽस्मिन्मन्यतेऽन्यो जनोऽपि च ॥ ४ ॥ तदेव कुरुते मानं न स्वातन्त्र्येण किंचन ॥ त्वया प्रधानभूतेन लोकसंरक्षणाय च ॥ ५ ॥ शास्त्रीयं कर्म कर्तव्यं तस्मादित्याशयो हरेः ॥ ६ ॥ २१ ॥

**भा० टी०**–मयि कर्माणि प्रवृत्ते कथं लोकसंग्रहो भविष्यतीत्यत आह–**यदिति** । यद्यत्कर्म श्रेष्ठः प्रधान आचरति तत्तदेव कर्मेतरोऽन्यो जनस्तदनुगत आचरति । किंच स प्रधानः यल्लौकिकं वैदिकं वा प्रमाणं कुरुते लोकस्तदनुवर्तते तदेव प्रमाणीकुरुते इत्यर्थः । यत्कर्मशास्त्रं वा निवृत्तिशास्त्रं वेत्याचार्यैः संकोचे मानाभावमभिप्रेत्य न व्याख्यातम् ॥ २१ ॥

**प० टी०**–अथ तदेव प्रकटयन्नाह–**यद्यदिति** । श्रेष्ठः संभावितो जनो यद्यदाचरतीतरः प्राकृतोऽपि जनस्तदेवाचरति तथा स श्रेष्ठो जनो यद्वेदशास्त्रादिकं प्रमाणत्वेन मनुते लोकोऽपि तदनुलक्षीकृत्य वर्तते ॥ २१ ॥

**रा० टी०**–कथं कर्मकरणेन लोकसंग्रह इत्यत आह–**यद्यदिति** । श्रेष्ठो महात्मा यत्प्रमाणं कुरुते यद्वाक्यादिकं प्रमाणं सदपि लोके प्रमाणत्वेनानवगतं प्रमाणतया ज्ञपयतीत्यर्थः । यद्वा यत्प्रमाणमित्येकं पदं बहुव्रीहिः । यत्प्रमाणं लौकिकं वैदिकं वा कर्म कुरुते तदेव लोकोऽनुवर्तते अनुसरति ॥ २१ ॥

**न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किंचन ॥**
**नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥ २२ ॥**

**त० टी०**–न केवलं त्वामेवेदमाज्ञापयामि किंत्वहमपि लोकसंग्रहार्थमेव कर्म करोमीत्याह–**न मे इति** । हे पार्थ मे मम त्रिषु लोकेषु अनवाप्तमप्राप्तम् अवाप्तव्यं प्राप्तुं योग्यमपेक्षितं किंचन नास्ति, अतः कर्तव्यं नास्ति तथापि कर्मणि वर्त एव, कर्म करोम्येवेत्यर्थः ॥ २२ ॥

**म० टी०**–अत्र चाहमेव दृष्टान्त इत्याह त्रिभिः–**न मे इति** । हे पार्थ मे मम त्रिष्वपि लोकेषु किमपि कर्तव्यं नास्ति यतोऽनवाप्तं फलं किंचिन्ममावाप्तव्यं नास्ति तथापि वर्त एव कर्मण्यहं,कर्म करोम्येवेत्यर्थः।पार्थेति संबोधयन् विशुद्धक्षत्रियवंशोद्भवस्त्वं शूरापत्यापत्यत्वेन चात्यन्तं मत्समोऽहमिव वर्तितुमर्हसीति दर्शयति ॥२२॥

**शं० टी०**–ननु महात्मनः कृतार्थस्य कर्मणा साध्यमपश्यतः कर्मकरणं कुत्रापि न दृष्टमित्याशङ्कायामस्मिन्नर्थे त्वहमेव प्रमाणमित्याह श्रीभगवान्–**न मे इति** । हे पार्थ षड्गुणैश्वर्यसंपन्नस्यावाप्तसर्वकामस्य सर्वेश्वरस्य मे यत्किंचित्कार्यमाप्तव्यमर्थमुद्दिश्य कर्तव्यं कर्म नास्ति तत्कुतः अनवाप्तमप्राप्तं सत् मम क्रिययाऽवाप्तव्यं प्राप्तव्यं वस्तु किंचिदपि त्रिषु लोकेषु न विद्यते । गृहस्वामिनो गृहस्थद्रव्यवद्ब्रह्माण्डस्थं सर्वं वस्तु ब्रह्माण्डस्वामिनो मे प्राप्तमेव भवति न तु प्राप्तव्यं किंचिदस्ति । एवं महाभाग्यवैराग्यज्ञानसमृद्धोऽप्यहं लोकसंग्रहात्मके कर्मणि वर्ते एव हि । चकारो ह्यर्थः । मम वैदिके लौकिके च कर्मणि प्रवर्तनं भवतां प्रत्यक्षसिद्धमिति हिः प्रसिद्धिबोधनार्थः ॥ २२ ॥

**श्री० टी०**–अत्र चाहमेव दृष्टान्त इत्याह त्रिभिः–**न मे पार्थेति** । हे पार्थ मे कर्तव्यं नास्ति । यतस्त्रिष्वपि लोकेष्वनवाप्तमप्राप्तं सदवाप्तव्यं प्राप्यं नास्ति । तथापि कर्मण्यहं वर्ते कर्म करोम्येवेत्यर्थः ॥ २२ ॥

**स० टी०**–अत्राहमेव दृष्टान्त इत्याह त्रिभिरीश्वरः ॥ ममेश्वरस्य हे पार्थ कर्तव्यं नास्ति किंचन ॥१॥ लोकत्रयेऽपि यस्मान्मेऽनवाप्तं नास्ति किंचन ॥ प्राप्तव्यं तदपीशोऽहं करोम्येव जगद्धितम् ॥ २ ॥ २२ ॥

**भा० टी०**–अहमिव त्वमपि लोकसंग्रहं कुर्वित्याशयेनाह–**नेति** । त्रिषु लोकेषु मम कर्तव्यं किंचि-

दपि न विद्यते यस्मादनवाप्तमप्राप्तमवाप्तव्यं प्रापणीयं त्रिषु लोकेषु किंचिदपि मे नास्ति । यद्यप्येवं तथापि कर्मणि वर्त एव कर्म करोम्येवेत्यर्थः । त्वयापि मत्संबन्धित्वान्मत्पक्षपात एव कर्तव्य इति सूचयन्नाह—पार्थेति ॥ २२ ॥

प० टी०—एतन्न केवलं तुभ्यमुपदिशाम्यहमपि तथैवाचरामीत्याह—**न मे इति** । भो पार्थ त्रिष्वपि लोकेषु भूर्भुवःप्रमुखेषु, अथवा देवपितृमनुष्यलोकेषु मम कर्तव्यं किमपि नास्ति । किमुद्दिश्य कर्तव्यमित्याह—**नानवाप्तमिति** । अप्राप्तस्य प्राप्त्यर्थं प्रयत्नः कर्तव्यश्चेत्तर्हि ममानवाप्तं किमपि नास्त्यवाप्तसकलकामत्वात् । अथ कामनातीतं परं ब्रह्म प्राप्तव्यमिति मनोरथस्तर्हि किमवाप्तव्यं तत्स्वरूपेणाहमेवास्मि । एवंविधोऽप्यहं कर्मणि वर्त एवातः परिशेषाल्लोकसंग्रहार्थमेवेत्यर्थः ॥ २२ ॥

रा० टी०—किंच प्रयोजनमात्रहीनेनापि मया केवलानुग्रहेण लोकसंग्रहार्थं कर्म क्रियते मुक्तावानन्दवृद्धिप्रयोजनवता ज्ञानिना तत्कर्तव्यमिति किं वाच्यमितिभावेनाह—**न मे इत्यादित्रिभिः** । हे पार्थ मे किंचन कर्तव्यं नास्ति यतस्त्रिषु लोकेषु प्रागप्राप्तं पश्चात्प्राप्तव्यं नास्ति तथापि कर्मणि वर्त एव कर्म करोम्येव ॥ २२ ॥

**यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ॥**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ २३ ॥**

त० टी०—तदकरणे मम दोषः स्यादित्याह—**यदीति** । जातु कदाचिदतन्द्रितोऽनलसः सन्यदि कर्मण्यहं न वर्तेयं कर्म नाचरेयं, तर्हि हे पार्थ जगद्धिताय धर्मज्ञशिष्टजनाग्रवर्तिवसुदेवगृहेऽवतीर्णस्य सर्वेश्वरस्य वर्त्म कर्मानुष्ठानमार्गं मनुष्याः कर्माधिकारिणः सर्वशः सर्वप्रकारेणानुवर्तन्ते अयमेव धर्म इति स्वहिताय स्वीकुर्वन्ति ममाचारप्रमाणका भवन्तीत्यर्थः ॥ २३ ॥

म० टी०—लोकसंग्रहोऽपि न ते कर्तव्यो विफलत्वादित्याशङ्क्याह—**यदीति** । यदि पुनरहमतन्द्रितोऽनलसः सन् कर्माणि जातु कदाचिन्न वर्तेयं नानुतिष्ठेयं कर्माणि तदा मम श्रेष्ठस्य सतो वर्त्म मार्गं हे पार्थ मनुष्याः कर्माधिकारिणः सन्तः अनुवर्तन्ते अनुवर्तेरन् सर्वशः सर्वप्रकारैः ॥ २३ ॥

शं० टी०—ननु सर्वेश्वरस्य तव लोकसंग्रहोपि न कर्तव्यः अनर्थाभावादित्याशङ्क्य ' न अश्रेष्ठः श्रेष्ठानुसारी ' इतिन्यायेन सर्वज्ञोऽयं कृष्ण इति सर्वे मदनुसारिणो भवन्ति मय्यकर्मणि सति सर्वेऽप्यकर्माणो भवेयुस्तेन लोकक्षतिरुपपद्यते अतः कर्म मम कर्तव्यमेवेत्याशयेनाह—**यदीति** द्वाभ्याम् । अहं कृतार्थोस्मीति वा, न कर्मणा मम साध्यमस्तीति वाऽप्यहमतन्द्रितः मन्त्रतन्त्रप्रयोगादावप्रमत्तो भूत्वा जातु कचित्कदाचिदपि कर्माणि विहिते न वर्तेयं यदि विहितकर्मकर्ता न स्यां चेन्मामकर्माणं दृष्ट्वा सर्वे मनुष्या अप्यकर्माणो भवेयुः । हि यस्मात्कारणान्मनुष्याः सर्वे भगवानयं सर्वज्ञ इति मयि सर्वज्ञत्वबुद्ध्या मम वर्त्म मदीयमेव मार्गमनुवर्तन्ते अश्रेष्ठस्य श्रेष्ठानुसारित्वनियमान्मया कर्मणि त्यक्ते स्वयमपि कर्म त्यजेयुरित्यर्थः ॥ २३ ॥

श्री० टी०—अकरणे लोकस्य नाशं दर्शयति—**यदीति** । जातुकदाचिद्अतन्द्रितोऽनलसः सन्यदि कर्मणि न वर्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं मनुष्या अनुवर्तन्ते अनुवर्तेरन्नित्यर्थः ॥ २३ ॥

स० टी०—यद्यहं जगतामीशः कर्माण्यनलसोऽपि सन् ॥ कदाचिन्नानुतिष्ठेयं तदा सर्वेशितुर्मम ॥ १ ॥
मार्गं सर्वप्रकारैस्ते नराः कर्माधिकारिणः ॥ सर्वदैवानुवर्तेरंस्तत्र दोषं शृणुष्व भोः ॥ २ ॥ २३ ॥

भा० टी०—यद्यहमतन्द्रितोऽनलसः सन् कर्माणि कदाचिन्न वर्तेयं मम श्रेष्ठस्य वर्त्म मार्गमनुवर्तन्ते

सर्वे मनुष्याः अनुवर्तेरन्। इतरे जना अपि मम मार्गमनुवर्तन्ते त्वं संबन्धी नानुवर्तस इत्यत्याश्चर्यमिति द्योतयन् संबोधयति—पार्थेति ॥ २३ ॥

**प० टी०**—अथ व्यतिरेकेऽनिष्टमाह—यदीति। यद्यहं जातु कदाचिदप्यतन्द्रितोऽनलसः सन् कर्मणि न वर्तेयं कर्म नानुतिष्ठेयं तर्हि ममैव वर्त्म मार्गं सर्वशः सर्वे मनुष्या अनुवर्तन्तेऽनुवर्तेरन् ॥ २३ ॥

**रा० टी०**—यदि ह्यहं जातु कदाचिदतन्द्रितोऽनलसः कर्मणि न वर्तेयं न कर्म कुर्यां तर्हि मम वर्त्म मार्गं कर्माकरणरूपं मनुष्याः सर्वशः सर्वेऽपि अनुवर्तन्ते अनुसरेयुः। मद्दृष्टान्तेन कर्म न कुर्युरित्यर्थः ॥२३॥

**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ॥**
**संकरस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ॥ २४ ॥**

**त० टी०**—ननु लोकानां सर्वज्ञस्य सर्वश्रेष्ठस्य तवानुवर्तनमुचितमेव, तव कर्माकरणे को दोष इत्यत आह—उत्सीदेयुरिति। चेद्यद्यहं कर्म न कुर्यां तर्हीमे ममाचारानुवर्तिनो लोका जना उत्सीदेयुः कर्मविदामग्रणीर्वासुदेवो यदि कर्म न करोति तर्ह्यस्माभिरपि न कर्तव्यमिति मत्वा धर्माद्भ्रष्टा भवेयुरित्यर्थः। स्वधर्मनियमत्यागात्संकरः वर्णानां सांकर्यं स्यात्तस्य कर्ताऽहमेव स्यां ततश्चेमाः प्रजा उपहन्यां नरकपातार्हताहेतुना विनाशकर्ता स्यामित्यर्थः। एवं सर्वलोकसंरक्षणार्थमवतीर्णस्य मम महान्दोष एव स्यादिति भावः ॥ २४ ॥

**म० टी०**—श्रेष्ठस्य तव मार्गानुवर्तित्वं मनुष्याणामुचितमेव, अनुवर्तित्वे को दोष इत्यत आह—उत्सीदेयुरिति। अहमीश्वरश्चेद्यदि कर्म न कुर्यां तदा मदनुवर्तिनां मन्वादीनामपि कर्मानुपपत्तेः लोकस्थितिहेतोः कर्मणो लोपेनेमे सर्वे लोका उत्सीदेयुर्विनश्येयुस्ततश्च वर्णसंकरस्य च कर्ताहमेव स्यां तेन चेमाः सर्वाः प्रजा अहमेवोपहन्यां धर्मलोपेन विनाशयेयं, कथं च प्रजानामनुग्रहार्थं प्रवृत्त ईश्वरोहं ताः सर्वा विनाशयेयमित्यभिप्रायः। यद्यदाचरतीत्यादेरपरा योजना। न केवलं लोकसंग्रहं पश्यन्कर्तुमर्हसि अपि तु श्रेष्ठाचारत्वादपीत्याह—यद्यदिति। तथा च मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्तिना त्वयानुष्ठेयो न स्वातन्त्र्येणान्य इत्यर्थः। कीदृशस्तवाचारो यो मयानुवर्तनीय इत्याकाङ्क्षायां न मे पार्थेत्यादिभिस्त्रिभिः श्लोकैस्तत्प्रदर्शनमिति।२४।

**शं० टी०**—ननु तैरपि कर्म त्यज्यतां ततः कोऽनर्थ इत्यत आह—उत्सीदेयुरिति। सर्वैः कर्मणि परित्यक्ते अन्नाद्भवन्ति भूतानि इत्युक्तरीत्या हविर्भागाभावाद्देवाः प्रक्षीणा भवेयुर्वृष्ट्याद्यभावान्मनुष्यादीनामनुत्पत्तिरुत्पन्नानां च विनाशः स्यात्। एतावानेवानर्थो न भवतिकिंतु वर्णसांकर्यमपिचस्यादित्याह—संकरस्येति। कृतकृत्यत्वाभिमानेनाऽहं लोकस्थितिकारणं वैदिकं कर्मत्याजयित्वासंकरस्यचकर्ता स्याम्। तत्तद्वर्णजातिभेदव्यवस्थापककर्माभावे सर्वेषामैकरूप्यापत्तौ वर्णाः संकीर्यन्तेसोऽपिवर्णसंकरो मत्कर्तृक एव स्यात्। एवं सांकर्यसंपादनेनाहं सर्वाः प्रजा उपहन्यां सर्वासां प्रजानामुपहतिकर्ता च स्याम्। उपहतिर्दुर्गतिप्राप्तिः सद्गतिहेतोः सत्कर्मानुष्ठानस्याभावात्सर्वे नरकभाजो भवेयुरित्यर्थः। यत एषानर्थपरंपरापत्तिस्ततः कृतकृत्यस्यापि मम तव चाप्यात्मविदोऽन्यस्य च लोकहितार्थं कर्म कर्तव्यमेवेति सिद्धम् ॥ २४ ॥

**श्री० टी०**—ततः किमत आह—उत्सीदेयुरिति। उत्सीदेयुः कर्मलोपेन नश्येयुः ततश्च यो वर्णसंकरो भवेत्तस्याप्यहमेव कर्ता स्यां भवेयम्। एवमहमेव प्रजा उपहन्यां मलिनीकुर्याम् ॥ २४ ॥

**स० टी०**—यद्यहं कर्म नो कुर्यां तदा मदनुवर्तिनाम् ॥ कर्माकरणतो लोकस्थितिहेतोश्च कर्मणः ॥ १ ॥ लोपेनैते विनश्येयुः सर्वे कर्माधिकारिणः ॥ तदा कर्ताहमेव स्यां वर्णानां संकरस्य च ॥ २ ॥ इमाः सर्वाः प्रजास्तेन धर्मलोपेन संकरात् ॥ अहमेवोपहन्यां यः प्रवृत्तोऽनुग्रहाय सः ॥ ३ ॥ २४ ॥

भा० टी०–तथाच को दोष इत्यत आह–उत्सीदेयुरिति । अहं चेत्कर्म न कुर्यां तर्हि इमे लोका उत्सीदेयुर्नश्येयुः लोकानुच्छित्तिनिमित्तकर्मणोऽभावात् संकरस्य च कर्ता स्यां तेनेमाः प्रजाः उपहन्यामतः प्रजानामनुग्रहाय प्रवृत्तस्य ममेदं नानुरूपमित्यर्थः । यत्तु यद्यचारतीत्यादेरपरा योजना, न केवलं लोकसंग्रहं पश्यन्कर्तुमर्हस्यपि तु श्रेष्ठाचारत्वादपीत्याह–यद्यदिति । तथाच मम श्रेष्ठस्य यादृश आचारस्तादृश एव मदनुवर्तिना त्वयानुष्ठेयो न स्वातन्त्र्येणान्य इत्यर्थः । कीदृशस्तवाचारो मयानुवर्तनीय इत्याकाङ्क्षायां न मे पार्थेत्यादिभिस्त्रिभिस्तत्प्रदर्शनमिति केषांचिद्व्याख्यानं तद्भाष्यानुगुण्येन योजनीयम् । यद्वा लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसीति पूर्वोक्तानुरोधेन लोकसंग्रहं कः कर्तुमिच्छति कथं चेत्युच्यते, यद्यदित्यस्य भाष्योक्तोत्थापनविरुद्धं न केवलमित्याद्युपेक्ष्यं कर्मणैवेत्यादिना शिष्टाचारस्योक्तत्वात् सक्ता इत्यादिना विदुषो लोकसंग्रहाय कर्मणि प्रवृत्तिं दर्शयता यदि त्वमात्मानं विद्वांसं मन्यसे तर्हि लोकसंग्रहं संप्रति पश्यन्कर्म कर्तुमर्हसीत्येवं दृढीकृतं तस्मान्मध्येऽपि स्वस्य श्रेष्ठस्य कर्मणि प्रवृत्तिं प्रत्यक्षासिद्धां दर्शयंस्तदेव द्रढयति । योजनान्तरानीतार्थस्त्वर्थात्संबोधनाद्वापि सिध्यतीति न तदर्था भाष्यविरुद्धा क्लिष्टयोजना प्रदर्शनीयेति दिक् ॥ २४ ॥

प० टी०–नन्वसङ्गोदासीनस्य तव लोके किं प्रयोजनमित्याशङ्क्य वर्णाश्रमधर्मप्रवर्तकः सन् परमकारुणिकोऽस्मीत्याह–उत्सीदेयुरिति । अहं चेत्कर्म न कुर्यां तर्हीमे लोका उत्सीदेयुः स्वकर्मलोपेन भ्रंशेयुः । ततश्च यो वर्णसंकरो भविष्यति तस्य कर्ताहमेव स्यां तेन मत्कृपापात्रत्वेन स्थिताः प्रजा उपहन्यां मालिन्योपहताः कुर्याम् । यथा मार्गभ्रष्टानां रङ्कानां व्याघ्रचोरादिभीतिर्मा भूदिति कृपया कोऽपि मार्गद्रष्टा भवति प्रकृतेऽपि तथैव ॥ २४ ॥

रा० टी०–ततः को दोष इत्यत उच्यते–उत्सीदेयुरिति । अहं चेत्कर्म न कुर्यां तदा इमे लोकाः उत्सीदेयुः कर्मलोपेन नरकं प्राप्नुयुः । किंच कर्मलोपे सति ब्रह्मक्षत्रादिवर्णविवेको न स्यात् । अतो वर्णसंकरस्य च कर्ता स्यां भवेयम् । एवमहमेव प्रजा उपहन्यां हतवान् भवेयम् ॥ २४ ॥

**सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत ॥**
**कुर्याद्विद्वांस्तथाऽसक्तश्चिकीर्षुर्लोकसंग्रहम् ॥ २५ ॥**

**त० टी०–तस्माद्विदुषाऽपि लोकोपकारार्थं कर्म कर्तव्यमित्याह–सक्ता इति त्रिभिः । अविद्वांसो वेदान्ततत्त्वज्ञानहीनाः कर्मणि सक्ता अभिनिविष्टाः सन्तो यथा कर्म कुर्वन्ति, विद्वानात्मानात्मविवेकज्ञोऽसक्तः कर्मणि तत्फलेऽभिनिवेशवर्जितः सन् लोकसंग्रहं चिकीर्षुः स्वाचारेण लोकानां स्वधर्मे निश्चयं कर्तुमिच्छुस्तथाऽविद्वद्वत्कुर्यात् ॥ २५ ॥**

म० टी०–ननु तवेश्वरस्य लोकसंग्रहार्थं कर्माणि कुर्वाणस्यापि कर्तृत्वाभिमानाभावान्न कापि क्षतिः मम तु जीवस्य लोकसंग्रहार्थं कर्माणि कुर्वाणस्य कर्तृत्वाभिमानेन ज्ञानाभिभवः स्यादित्यत आह–सक्ता इति । सक्ताः कर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मण्यभिनिविष्टा अविद्वांसोऽज्ञा यथा कुर्वन्ति कर्म लोकसंग्रहं कर्तुमिच्छुर्विद्वानात्मविदपि तथैव कुर्यात् किंतु असक्तः सन् कर्तृत्वाभिमानं फलाभिसन्धिं चाकुर्वन्नित्यर्थः । भारतेति भरतवंशोद्भवत्वेन भा ज्ञानं तस्यां रतत्वेन वा त्वं यथोक्तशास्त्रार्थबोधयोग्योऽसीति दर्शयति ॥ २५ ॥

शं० टी०–तर्हि लोकहितार्थं कर्मणि प्रवृत्तेन विदुषा कथं कर्म कर्तव्यमित्याकाङ्क्षायामाह–सक्ता इति । अविद्वांसोऽनात्मज्ञाः कर्मणि कर्मजन्यफले स्वर्गपुत्रधनादौ सक्ता आसक्तिमन्तो भूत्वा नियमेन श्रद्धाभक्तिभ्यां यथा विहितं कर्म कुर्वन्ति तथैव वर्तमानः सन् लोकसंग्रहं चिकीर्षुर्विद्वान् ब्रह्मविदाधिकारिकः

स्वयमसक्तः कर्तृत्वाभिनिवेशरहितः फलापेक्षारहितोऽपि भूत्वा कर्म कुर्यादेवं कुर्वन्स्वयं तीर्णः परानपि तारयतीति भावः । कर्तृत्वाभिनिवेशराहितत्वं फलानपेक्षित्वं साकल्यवैकल्ययोर्हर्षविषादशून्यत्वं च तज्ज्ञाज्ञयोर्वैलक्षण्यं नियमेन कर्मकरणं तूभयत्र सममेव ॥ २९ ॥

**श्री० टी०**–तस्मादात्मविदापि लोकसंग्रहार्थं तत्कृपया कर्म कार्यमेवेत्युपसंहरति–**सक्ता इति** । कर्माणि सक्ता अभिनिविष्टाः सन्तोऽज्ञा यथा कर्म कुर्वन्ति, असक्तः सन् विद्वानपि तथैव कुर्यात् लोकसंग्रहं कर्तुमिच्छुः ॥ २९ ॥

**स० टी०**–नन्वीश्वरस्य तव तु कर्तृत्वादेरभावतः ॥ न क्षतिर्मे त्वनीशस्य क्षतिर्ज्ञानाभिभूतितः ॥१॥ कर्मणि क्रियमाणे स्यादित्याशङ्क्याह माधवः ॥ यथा फलानुरागेण कर्तृत्वाभिनिवेशतः ॥ २ ॥ कर्मण्यभिनिविष्टाश्च कुर्वन्त्यज्ञाः स्वकर्म तत् ॥ तथैव कर्तुमिच्छुः सन्नात्मविल्लोकसंग्रहम् ॥ ३ ॥ कुर्यात्त्यक्त्वा फले रागं कर्तृत्वाभिमतिं तथा ॥ तथाच क्रियमाणेऽपि कर्मण्यात्मविदो नहि ॥ ४ ॥ क्षतिर्नापि मुमुक्षोर्वा धीशुद्ध्यर्थं प्रकुर्वतः ॥ किंतु कर्तृत्वधीः कर्मफले रागश्च बन्धने ॥ ५ ॥ हेतुस्तस्माद्द्वयं त्यक्त्वा कुर्वन्नाप्नोति बन्धनम् ॥ भो ज्ञानं तद्रतत्वेन यथोक्तं बोद्धुमर्हसि ॥ ६ ॥ यद्वोत्कृष्टकुलोत्पन्नतया भारतशब्दतः ॥७॥२९॥

**भा० टी०**–यथाहं कृतार्थो लोकसंग्रहार्थं कर्म करोमि तथा त्वमन्यो वा विद्वांस्तदर्थं कर्म कुर्यादित्याह–**सक्ता इति** । यथाऽविद्वांसः कर्मणि सक्ताः कर्तृत्वाभिमानफलाभिसंधिभ्यामासक्ताः कर्म कुर्वन्ति तथाऽसक्तः सन् विद्वानात्मविल्लोकसंग्रहं कर्तुमिच्छुः कर्म कुर्यात् । तव तु भरतवंशोद्भवत्वादपि लोकसंग्रहोऽवश्यं संपाद्य इति सूचयन्नाह–भारतेति ॥ २९ ॥

**प० टी०**–एवमस्मद्दृष्टान्तेन सद्भिरपि कथं न वर्तितव्यमित्याह–**सक्ता इति** । अविद्वांसः परमार्थानभिज्ञाः कर्मजडाः कर्मणि सक्ताः साक्षात्कर्मणः फलावश्यंभावनियम इति निश्चित्य फलाशया प्रवृत्ताः सन्तो यथा कुर्वन्त्येवमसक्तोऽपि विद्वांस्तथाविधमार्गमनुलङ्घ्य कुर्यात् । किंभूतो लोकसंग्रहं चिकीर्षुरिति पूर्ववत् ॥ २९ ॥

**रा० टी०**–ननु अज्ञवदाग्रहेण ज्ञानिनापि कर्म कार्यं चेद्विद्वदविद्वत्कर्मणोरविशेषप्रसङ्ग इत्यत आह–**सक्ता इति** । हे भारत अविद्वांसोऽज्ञाः कर्मणि सक्ता अभिनिविष्टाः फलेच्छावन्तः सन्तो यथा कर्म कुर्वन्ति तथा विद्वान् ज्ञान्यपि असक्तः फलेच्छाहीनः सन् लोकसंग्रहं चिकीर्षुः कर्म कुर्यादित्यर्थः । सक्त्यसक्तिपूर्वकत्वेन कर्मानुष्ठानं तयोर्विशेष इति भावः ॥ २९ ॥

**न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ॥**
**जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ २६ ॥**

**त० टी०**–ननु पङ्कलिप्तानां पङ्क ( नि ) पातनवत्कर्मासक्तानामज्ञानां कर्मण्येव प्रवर्तनमहितमेव कृतं स्यादतस्तद्धितेप्सुना विदुषा ज्ञानमेवोपदेष्टव्यमिति चेत्तत्राह–**न बुद्धिभेदमिति** । अज्ञानामन्तःकरणशुद्ध्यभावात्तत्त्वोपदेशानर्हाणामत एव कर्मसङ्गिनामनादिकर्मवासनयाऽशुद्धमनस्त्वेन कर्मण्येवारूढमतीनामात्मज्ञानं विना कर्मभिर्मोक्षो नास्तीति बुद्धिभेदं न जनयेन्नोत्पादयेत् । किं तर्हि एते ज्ञानेऽनधिकृताः कर्मच्युता भ्रष्टा भवेयुरिति विद्वान् तेषां हितबुद्ध्या युक्तः सन्सर्वकर्माणि नित्यनैमित्तिकानि समाचरन् अज्ञान्कर्मसु जोषयेत्[१] प्रीतिं जनयेत् ॥ २६ ॥

**म० टी०**–ननु कर्मानुष्ठानेनैव लोकसंग्रहः कर्तव्यो न तु तत्त्वज्ञानोपदेशेनेति को हेतुरत आह–**नेति** । अज्ञानामविवेकिनां कर्तृत्वाभिमानेन फलाभिसन्धिना च कर्मसङ्गिनां कर्मण्यभिनिविष्टानां या बुद्धिरहमेत-

१ योजयेत् इति प. प्र. धृतः पाठः।

त्कर्म करिष्ये एतत्फलं च भोक्ष्य इति तस्या भेदं विचालनमकर्त्रात्मोपदेशेन न कुर्यात् किंतु युक्तोऽवहितः सन् विद्वान् लोकसंग्रहं चिकीर्षुः अविद्वदधिकारिकाणि सर्वकर्माणि समाचरन् तेषां श्रद्धामुत्पाद्य जोषयेत् प्रीत्या सेवयेत्, अनधिकारिणामुपदेशेन बुद्धिविचालने कृते कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेरुभयभ्रष्टत्वं स्यात् । तथा चोक्तम् 'अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् । महानिरयजालेषु स तेन विनियोजितः' इति ॥ २६ ॥

**शं० टी०**—किंच—**न बुद्धिभेदमिति** । विद्वान् ब्रह्मवित्स्वयं युक्त आत्मनो देहादितादात्म्याभावदर्शनयोगनिष्ठो भूत्वा समाचरन् कालोचितं कर्म कुर्वन् कर्मसङ्गिनां कर्मासक्तानां फलापेक्षया नियमेन कर्म कुर्वतामित्यर्थः । यद्वा देहेन्द्रियादिभिरेव क्रियमाणेषु कर्मस्वहं कर्ता भोक्तेत्यभिमानः सङ्गः स येषां तेषां कर्मसङ्गिनामतत्त्वविदां मूढानां स्वयं पण्डितत्वाभिमानेन बुद्धिभेदम् "ज्योतिष्टोमेन स्वर्गकामः" इति वचनात् ज्योतिष्टोमं कृत्वा स्वर्गफलं भोक्ष्य इत्यादिफलविषया या कामना बुद्धिस्तस्या भेदं चालनं न जनयेत् न कर्माणि कामनया कर्तव्यानीति वा स्वर्गादिफलमसदिति वा कर्त्रादि सर्वं मिथ्येति वा तेषां बुद्धेर्वैकल्यं न संपादयेत् किंतु "अक्षय्यं ह वै चातुर्मास्ययाजिनः" इति "पश्यति पुत्रं पश्यति पौत्रम्" इति 'तस्माद्धर्मं परमं वदन्ति' इत्यादिना च सर्वाणि कर्माणि वैदिकानि जोषयेत् प्रीणयेत् कर्मफलस्तुत्या कर्माणि कर्तुमिच्छामेव संपादयेदित्यर्थः ॥ २६ ॥

**श्री० टी०**—ननु कृपया तत्त्वज्ञानमेवोपदेष्टुं युक्तं, नेत्याह—**नेति** । अज्ञानामत एव कर्मसङ्गिनां कर्मासक्तानामकर्तात्मोपदेशेन बुद्धेर्भेदमन्यथात्वं न जनयेत् कर्मणः सकाशाद्बुद्धिचालनं न कुर्यात् अपितु जोषयेत् सेवयेत् । जुषी प्रीतिसेवनयोः । अज्ञान् कर्माणि कारयेत् । कथं युक्तः अवहितो भूत्वा स्वयं च समाचरन् । बुद्धिचालने कृते सति कर्मसु श्रद्धानिवृत्तेर्ज्ञानस्य चानुत्पत्तेस्तेषामुभयभ्रंशः स्यादिति भावः ॥२६॥

**म० टी०**—अनुष्ठानेन धर्मस्य कर्तव्यो लोकसंग्रहः ॥ तत्त्वज्ञानोपदेशेन कर्मणोऽज्ञान्न चालयेत् ॥ १ ॥ अविवेकवतां यास्ति कर्तृत्वाभिनिवेशिनाम् ॥ फलाभिसन्धिनां बुद्धिरिदं कर्म करोम्यहम् ॥ २ ॥ भोक्ष्येऽहं तत्फलं चेति तस्याः कुर्यान्न चालनम् ॥ अकर्त्रात्मोपदेशेन किंतु भूत्वा समाहितः ॥ ३ ॥ आत्मवित्सर्वकर्माणि चिकीर्षुर्लोकसंग्रहम् ॥ कुर्वंस्तेषां समुत्पाद्य श्रद्धां प्रीत्या हि सेवयेत् ॥ ४ ॥ अकर्त्रात्मोपदेशेन कृते बुद्धेर्विचालने ॥ कर्मश्रद्धानिवृत्त्या स्याद्धर्मभ्रष्टो जनस्ततः ॥ ५ ॥ चित्तशुद्धेरभावात्स्याज्ज्ञानानुत्पत्तिदूषणम् ॥ उभयभ्रष्टता पुंसां स्यात्तथोक्तं महर्षिणा ॥ ६ ॥ अज्ञस्यार्धप्रबुद्धस्य सर्वं ब्रह्मेति यो वदेत् ॥ महानिरयजालेषु स तेन विनियोजितः ॥ ७ ॥ २६ ॥

**भा० टी०**—लोकसंग्रहं चिकीर्षोस्तत्त्वविद इदमुपदिश्यते—**नेति** । अज्ञानामत एव कर्मसङ्गिनां फलार्थे कर्मण्यासक्तानामिदं कर्म मयावश्यं कर्तव्यं तत्फलं च भोक्तव्यमिति निश्चितरूपाया बुद्धेर्भेदनं चालनं न कर्मणेत्याद्युपदेशेन नोत्पादयेत् किंतु विद्वान्युक्तः समाहितः सन्नविदुषां कर्म स्वयं समाचरन् सर्वकर्माणि जोषयेत् कारयेदन्यथा कर्मसु तेषां श्रद्धापगमे चित्तशुद्ध्यभावाज्ज्ञानाप्राप्त्योभयभ्रष्टत्वं स्यादिति भावः ॥ २६ ॥

**प० टी०**—अथ कृपालुना लोकानां तत्त्वज्ञानमेव कथं नोपदिश्यत इत्याशङ्क्य नह्यज्ञानां तत्त्वोपदेशाधिकार इत्याह—**न बुद्धिभेदमिति** । कर्मसङ्गिनां कर्ममार्गप्रवृत्तानामात्मोपदेशेन बुद्धिभेदं न जनयेद्यतस्तथा कृते सत्युभयभ्रष्टता स्यात् । तर्हि किं कुर्यादित्याह—**योजयेदिति** । युक्तः कर्मकौशलवान् विद्वानपि समाचरन् सम्यगाचरन् सन् सर्वकर्माणि योजयेत्कारयेज्जोषयेत्सेवेत वा ॥ २६ ॥

**रा० टी०**—अज्ञानां कर्माणि सक्तिं जनयितुमपि ज्ञानिना कर्म कार्यमित्याह—**न बुद्धीति** । अज्ञानां भगवत्स्वरूपमजानतां कर्मसङ्गिनां कर्माभिनिवेशिनां बुद्धेर्भेदं विपर्यासं न जनयेत् कर्मानुष्ठानाद्बुद्धेश्चालनं

न कुर्यात् । विद्वान्युक्तो भगवति मनोयोगवान् तत्पूजात्वेनेतियावत्, कर्म समाचरन् सर्वकर्माणि जोषयेत् सेवयेत् । अज्ञानिति शेषः ॥ २६ ॥

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ॥**
**अहंकारविमूढात्मा कर्ताऽहमिति मन्यते ॥ २७ ॥**

**त० टी०**–ननु विदुषोऽप्यविद्वद्वत्कर्मानुष्ठानं चेत्तर्ह्यविदुषो विदुषः को विशेष इत्याकाङ्क्षोपशमार्थं तद्विशेषं दर्शयति—प्रकृतेरिति द्वाभ्याम् । प्रकृतिरीश्वरस्याचिच्छक्तिर्माया तस्या गुणैः सत्त्वादिभिर्देहेन्द्रियरूपेण परिणतैः सर्वशः सर्वप्रकारेण क्रियमाणानि कर्माणि अहंकारविमूढात्मा अनात्मनि देहादावात्मबुद्धिरहंकारस्तेन विमूढ आत्मा मनो यस्य सोऽहं कर्ता इति मन्यते, नतु गुणांस्तत्कार्यभूतान्देहेन्द्रियादीन्वा । यद्यपि "कर्ता शास्त्रार्थवत्त्वात्" इत्यादिशास्त्रादात्मनः कर्तृत्वमस्ति, तथापि बद्धावस्थायां संकुचितज्ञानत्वाद्देहेन्द्रियाद्यधीनं कर्तृत्वं न केवलस्यात्मनः 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक् चेष्टा दैवं चैवात्र पञ्चमम् ॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ तत्रैवं सति कर्तारमात्मानं केवलं तु यः । पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः' इति वक्ष्यमाणत्वात् । अत एव अहंकारविमूढात्मा कर्ताऽहमिति मन्यते इत्युक्तम्, अन्यथा "यक्ष्यन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चिता" इति मोक्षदशायामप्यात्मनः कर्तृत्वप्रतिपादकश्रुतिबाधः स्यादित्यलं विस्तरेण ॥ २७ ॥

**म० टी०**–विद्वदविदुषोः कर्मानुष्ठानसाम्येपि कर्तृत्वाभिमानतदभावाभ्यां विशेषं दर्शयन्सक्ताः कर्मणीति श्लोकार्थं विवृणोति द्वाभ्याम्—प्रकृतेरिति । प्रकृतिर्माया सत्त्वरजस्तमोगुणमयी मिथ्याज्ञानात्मिका पारमेश्वरी शक्तिः "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुतेस्तस्याः प्रकृतेर्गुणैर्विकारैः कार्यकारणरूपैः क्रियमाणानि लौकिकानि वैदिकानि च कर्माणि सर्वशः सर्वप्रकारैः अहंकारेण कार्यकारणसङ्घातात्मप्रत्ययेन विमूढः स्वरूपविवेकासमर्थ आत्मान्तःकरणं यस्य सोहंकारविमूढात्मा अनात्मन्यात्माभिमानी तानि कर्माणि कर्ताहमिति करोम्यहमिति मन्यते । कर्त्रध्यासेन कर्ताहमिति तृन्प्रत्ययः तेन "न लोकाव्ययनिष्ठाखलर्थतृनाम्" इति षष्ठीप्रतिषेधः ॥ २७ ॥

**शं० टी०**–मूढानामेव कर्म न तु पण्डितानामिति सूचयितुमज्ञानां कर्मसङ्गिनामित्युक्तम् । कर्मसङ्गिनामिति यदुक्तं तदेव विस्पष्टयति—प्रकृतेरिति । प्रकृतिर्माया सत्त्वादिगुणद्वारा आकाशादिमहाभूतरूपेण परिणता तस्याः प्रकृतेर्गुणाः कार्यभूताः देहेन्द्रियादयस्तैरेव न क्वचिदप्यात्मना क्रियमाणानि सर्वाणि कर्माणि प्रति अविद्वानहंकाराविमूढात्मा स्वाविद्यया देहेन्द्रियादावनात्मन्यहमितिबुद्धिरहंकारस्तेन विमूढो विपरीतग्रहणतत्पर आत्मा मनो यस्य सोहंकारविमूढात्मा । यद्वा विमूढ इत्यत्रान्तर्गर्भितो णिच् देहेन्द्रियादिष्वहंकरणेन विमोहितो द्रष्टाहं स्प्रष्टाहं श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता भोक्तेति तत्तदुपाधिसंबन्धसंभावितविपरीतवृत्तीनां विषयतां गमित आत्मा प्रत्यग्लक्षणो येन सोहंकारविमूढात्मा । यद्वा देहेन्द्रियादिष्वहंकरणेन विमोहितोऽहंप्रत्ययार्थत्वेनाऽविदित आत्मा येन सोऽहंकारविमूढात्मा कर्ताहमिति मन्यते दुष्टादुष्टप्रारब्धवशाद्देहेन्द्रियैः कृतेषु दुष्टेष्वदुष्टेष्वपि कर्मस्वकर्तारमेवात्मानं मया पापं कृतं पुण्यं कृतमिति तत्तत्क्रियायाः कर्तारमेव पश्यतीत्यर्थः ॥ २७ ॥

**श्री० टी०**–ननु विदुषापि चेत्कर्म कर्तव्यं तर्हि विद्वदविदुषोः को विशेष इति चेत्तं दर्शयति—प्रकृतेरिति द्वाभ्याम् । प्रकृतेर्गुणैः प्रकृतिकार्यैरिन्द्रियैः सर्वप्रकारेण क्रियमाणानि यानि कर्माणि तान्यहमेव कर्ता करोमीति मन्यते । तत्र हेतुः अहंकारेण इन्द्रियादिष्वात्माध्यासेन विमूढ आत्मा बुद्धिर्यस्य सः ॥ २७ ॥

स० टी०–कर्मानुष्ठानसाम्येऽपि विशेषश्चाज्ञतज्ज्ञयोः ॥ अध्यासतदभावाभ्यां कर्तृत्वादेः प्रदर्श्यते ॥१॥ मिथ्याज्ञानात्मिका माया प्रकृतिः पारमेश्वरी ॥ कार्यकारणरूपेण तस्याः परिणतैर्गुणैः ॥ २ ॥ क्रियमाणानि कर्माणि श्रौतानि लौकिकानि च ॥ सर्वप्रकारैस्तत्रायं कार्यकारणसंहतौ ॥ ३ ॥ आत्मत्वाध्यासतः स्वात्मविवेकाक्षममानसः ॥ तानि कर्माणि कर्ताहं करोमीत्यभिमन्यते ॥ ४ ॥ अक्रिये कर्तृताध्यासादात्माज्ञानावृतो जनः ॥ जन्ममृत्युमयीं घोरां संसृतिं याति दुःसहाम् ॥ ५ ॥ २७ ॥

भा० टी०–सक्ताः कर्मणीत्येतं श्लोकं व्याचष्टे–प्रकृतेरिति द्वाभ्याम् । प्रकृतेः प्रधानस्य मायाशक्तेर्गुणैर्विकारैः कार्यकारणरूपैः क्रियमाणानि कर्माणि सर्वाणि सर्वप्रकारैः कार्यकरणसंघातेऽहंप्रत्ययोऽहंकारस्तेन विमूढः स्वात्मस्वरूपविवेकासमर्थः आत्मान्तःकरणं यस्य सोऽविद्यया कर्मणामहं कर्तेति मन्यते ॥ २७॥

पु० टी०–अथ कर्मकरणे सर्वेषां विधिस्तुल्य एव, तथाच विद्वदविदुषां को भेद इत्याह–प्रकृतेरिति द्वाभ्याम् । प्रकृतेर्गुणैः प्रकृतिकार्यैरिन्द्रियैः क्रियमाणानि सर्वाणि तान्यहमेव करोमीत्यहंकारेणेन्द्रियादिष्वात्माध्यासेन विमूढ आत्मा बुद्धिर्यस्य सोऽहं कर्तेति मन्यते कर्तृत्वाभिनिविष्टो भवति तेन बध्यते ॥ २७ ॥

रा० टी०–ज्ञान्यज्ञानिनोः सक्ताः इत्यादि श्लोकद्वयोक्तं कर्मानुष्ठानवैलक्षण्यं प्रपञ्चयति–प्रकृतेरित्यादिश्लोकत्रयेण । अत्र प्रकृतिशब्देन जीवस्वभावेश्वरजडप्रकृतयो ग्राह्याः । प्रकृतेः प्रकृष्टकृतिमत्त्वहेतुना प्रकृतिपदवाच्यस्य हरेर्गुणैरिच्छाज्ञानप्रयत्नादिरूपगुणैर्धर्मैः स्वतन्त्रैः, तथा प्रकृतेः उत्तममध्यमाधमरूपजीवराशिस्वभावस्य गुणैरनुगुणैस्तत्त्वज्ञानमिश्रज्ञानमिथ्याज्ञानादिरूपधर्मैरीशाधीनैः, तथा प्रकृतेर्जडप्रकृतेः संबन्धिभिर्गुणैस्तत्कार्यभूतैः सत्त्वरजस्तमोगुणैः प्रकृतेर्विकारभूतैर्देहेन्द्रियान्तःकरणरूपगुणैः क्रियमाणानि कर्माणि साधुकर्ममिश्रकर्मासाधुकर्माणि प्रति अहंकारविमूढात्मा सन् कर्ताहं स्वतन्त्रकर्ताहमिति मन्यते । ईश्वरः स्वतन्त्रकर्ता सन् स्वज्ञानेच्छादिना स्वाधीनकर्त्रा त्रिविधजीवस्वभावमनुसृत्य प्रकृतिविकारजीवकरणैः प्रकृतिकार्यसत्त्वादिगुणरूपोपादानकारणेन क्रियमाणकर्मणामहमेव स्वतन्त्रकर्तेत्यात्मानमज्ञो जनो मन्यत इत्यर्थः २७

## तत्त्ववित्तु महाबाहो गुणकर्मविभागयोः ॥
## गुणा गुणेषु वर्तन्त इति मत्वा न सज्जते ॥ २८ ॥

**त० टी०–गुणानां सकार्याणां सत्त्वादीनां विभागः, कर्माणि सत्त्वाद्यनुगुणानि तेषां च विभागः दैहिकमानसादिरूपः, तयोर्विभागयोस्तत्त्वं याथात्म्यं वेत्तीति गुणकर्मविभागवित् स तु गुणाः सत्त्वादिकार्यभूता मनोवाक्शरीररूपाः गुणेषु स्वस्वकर्मभूतविषयेषु वर्तन्त इति मत्वा न सज्जते अहमेव करोमीति न मन्यते ॥ २८ ॥**

म० टी०–विद्वांस्तु तथा न मन्यत इत्याह–तत्त्वविदिति। तत्त्वं याथात्म्यं वेत्तीति तत्त्ववित् । तुशब्देन तस्याज्ञाद्वैशिष्ट्यमाह । कस्य तत्त्वमित्यत आह–गुणकर्मविभागयोः गुणा देहेन्द्रियान्तःकरणान्यहंकारास्पदानि कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानीति । गुणकर्मेति द्वन्द्वैकवद्भावः । विभज्यते सर्वेषां जडानां विकारिणां भासकत्वेन पृथग्भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा । गुणकर्म च विभागश्चेति द्वन्द्वः तयोर्गुणकर्मविभागयोर्भास्यभासकयोर्जडचैतन्ययोर्विकारिनिर्विकारयोस्तत्त्वं याथात्म्यं यो वेत्ति स गुणाः करणात्मका गुणेषु विषयेषु प्रवर्तन्ते विकारित्वात् न तु निर्विकार आत्मेति मत्वा न सज्जते सक्तिं कर्तृत्वाभिनिवेशमतत्त्वविदिव न करोति । हे महाबाहो इति संबोधयन्सामुद्रिकोक्तसत्पुरुषलक्षणयोगित्वान्न पृथग्जनसाधारण्येन त्वमविवेकी भवितुमर्हसीति सूचयति । गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति वा अस्मिन्पक्षे गुणकर्मणोरित्येतावतैव निर्वाहे विभागपदस्य प्रयोजनं चिन्त्यम् ॥ २८ ॥

शं० टी०—विद्वान् युक्त इति यदुक्तमात्मनो देहेन्द्रियतत्कर्मसंबन्धाभावदर्शनं विदुषस्तदनेन प्रतिपाद्यते—तत्त्वविदिति। गुणकर्मविभागयोः गुणाश्चक्षुरादयो वागादयो बुद्धिर्मनश्च। तत्र चक्षुःश्रोत्रादीनामेव दर्शनश्रवणादिक्रिया वाक्पाण्यादीनामेव वचनादानादिक्रिया बुद्धेरेवाहंकरणक्रिया मनस एव संकल्पनक्रिया आत्मनस्तु कूटस्थासङ्गचिद्रूपेणावस्थानमात्रम् एवं गुणविभागः कर्मविभागश्च तयोर्गुणकर्मविभागयोरात्मनश्च तत्त्वं याथात्म्यं सम्यग्वेत्तीति तत्त्वविद्विद्वान्। तुशब्दोऽविद्वद्व्यावृत्त्यर्थः। सर्वकर्मसु गुणाश्चक्षुरादय एव गुणेषु रूपादिषु वर्तन्ते वागादय एव वचनादिषु वर्तन्ते बुद्धिरेव तेषां कर्मस्वहं कर्तेत्यहंकरोति अहं तु न शृणोमि न पश्यामि न वदामि न करोमि न गच्छामि किंतु कूटस्थासङ्गचिदात्मना सर्वदा तूष्णीमेवासमिति मत्वा निश्चित्य तेषां कर्मसु न सज्जते तत्राहं ममेति प्रत्ययं न करोतीत्यर्थः॥ २८॥

श्री० टी०—विद्वांस्तु तथा न मन्यत इत्याह—तत्त्वविदिति। नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागः न मे कर्माणीति कर्मभ्योऽप्यात्मनो विभागस्तयोर्गुणकर्मविभागयोर्यस्तत्त्वं वेत्ति स तु न सज्जते कर्तृत्वाभिनिवेशं न करोति। तत्र हेतुः गुणा इन्द्रियाणि गुणेषु विषयेषु वर्तन्ते नाहमिति मत्वा॥ २८॥

स० टी०—विद्वांस्तु मन्यते नैवं तत्त्वं वेत्ति यतः परम्॥ कस्य तत्त्वं तदित्याह गुणकर्मविभागयोः॥ १॥ अहंकारास्पदा एव गुणा देहेन्द्रियादयः॥ तेषां व्यापारभूतानि कर्माणि विविधानि च॥ २॥ ममकारास्पदान्येव बाह्यान्याभ्यन्तराणि च॥ अत्र द्वन्द्वैकवद्भावे गुणकर्मेति बोध्यताम्॥ ३॥ भासकत्वेन सर्वेषां जडानां हि विकारिणाम्॥ विभज्यते विभागोऽयं पृथग्भवति चिद्घनः॥ ४॥ स्वप्रकाशतयासङ्ग आत्मा जडविलक्षणः॥ भास्यभासकयोरेवं जडचैतन्ययोर्द्वयोः॥ ५॥ याथात्म्यं वेत्ति यो विद्वाञ्छास्त्रानुभवयुक्तिभिः॥ विकारित्वेन वर्तन्ते गुणा हि करणात्मकाः॥ ६॥ गुणेषु विषयेष्वेवं न त्वात्माविक्रियत्वतः॥ आत्मनो निर्विकारत्वं गुणानां च विकारिताम्॥ ७॥ ज्ञात्वा कर्तृत्वबुद्धिं न करोत्येष विमूढवत्॥ सामुद्रिकोक्तसच्चिह्नयुक्तत्वात्त्वं विमूढवत्॥ ८॥ कर्तृत्वाभिनिवेशं मा कार्षीरिति महाभुज॥ ९॥ २८॥

भा० टी०—तत्त्ववित्तु तुशब्दोऽज्ञाद्वैलक्षण्यद्योतनार्थः। कस्य तत्त्वविदित्यत आह—गुणकर्मविभागयोः गुणविभागस्य कर्मविभागस्य च तत्त्वविदित्यर्थ इति भाष्यम्। अस्यायमर्थः। नाहं कार्यकरणसंघातात्मेति गुणेभ्य आत्मनो विभागः न मे कर्माणीत्यात्मनस्तेभ्यो विभागः गुणकर्मभ्यां विभक्तात्मसाक्षात्कारवान् तथाच नायमहंकारविमूढात्मा नापि कर्मण्यासक्तो येनाहं कर्तेति मन्येत विभागपदाभावे त्वयमर्थो न लभ्यते विग्रहस्तु विभागश्च विभागश्च विभागौ गुणकर्मभ्यो विभागौ गुणकर्मविभागौ तयोर्गुणकर्मविभागयोरिति बोध्यः। एतेन गुणविभागस्य कर्मविभागस्य च तत्त्वविदिति वा अस्मिन्पक्षे गुणकर्मणोरित्येतावतैव निर्वाहे विभागपदस्य प्रयोजनं चिन्त्यमित्याक्षेपः प्रत्युक्तः। यत्त्वाक्षेप्त्रा स्वव्याख्यानं प्रदर्शितं गुणानि देहेन्द्रियान्तःकरणान्यहंकारास्पदानि कर्माणि च तेषां व्यापारभूतानि ममकारास्पदानीति गुणकर्मेति द्वन्द्वैकवद्भावः विभज्यते सर्वेषां जडानां विकारिणां भासकत्वेन यथा भवतीति विभागः स्वप्रकाशज्ञानरूपोऽसङ्ग आत्मा गुणकर्म च विभागश्चेति द्वन्द्वः तयोर्गुणकर्मविभागयोर्भास्यभासकयोर्जडचैतन्ययोर्विकारिनिर्विकारयोस्तत्त्वं याथात्म्यं यो वेत्तीति तच्चिन्त्यं, गुणकर्मेत्यस्यैकपदत्वेऽल्पाच्त्वादभ्यर्हितत्वाच्च विभागपदस्य पूर्वनिपातापत्तेश्छान्दसत्वनिपातप्रकरणानित्यत्वयोराश्रयणस्य भाष्योक्तरीत्या सत्यां गतौ अनुचितत्वात् विभागपदस्य प्रसिद्धमर्थं परित्यज्याप्रसिद्धार्थकल्पनायाः क्लिष्टकल्पनायाश्चान्याय्यत्वादिति दिक्। यदप्यन्ये यस्तत्त्ववित्स गुणाः गुणेषु वर्तन्त इति मत्वा गुणविभागे कर्मविभागे च न सज्जत इति योजना। गुणानां सत्त्वरजस्तमसां विभागः बुद्ध्यहंकारज्ञानेन्द्रियविषयरूपेण विभज्यावस्थानं तस्मिन्न सज्जते इदमहमिति न मन्यते, एतेन

कर्मविभागोऽप्यावश्यकत्वेन व्याख्यातः अन्यथा चिदात्मन्येवादानादिकर्तृत्वं दुःखादिमत्वं चापतति। तथा-चात्मानात्मनोर्याथात्म्यज्ञः व्यापृतेष्वहंकारादिषु तत्कर्मसु चाभिमानादिषु कुसुमेषु सूत्रमिवानुवर्तमानमात्मानं तेभ्यः पृथग्भूतं जानन्गुणा धीचक्षुरादयः गुणेषु दुःखरूपादिषु वर्तन्ते न त्वात्मेति मत्वा न सज्जतेऽहमेव हस्तादिसंघातरूपो ममैवेदमादानादिकं कर्मेति न सक्तो भवतीत्यर्थ इति तदपि विचार्यं, गुणकर्मणोर्न सज्जत इत्येतावतैव निर्वाहे विभागपदवैयर्थ्यापत्तेः, तथाचेत्यादिग्रन्थस्य स्वव्याख्यानाननुरूपत्वाच्चेति दिक् । गुणाः करणात्मकाः गुणेषु विषयेषु प्रवर्तन्ते नात्मेति मत्वा न सज्जते सक्तिं कर्तृत्वाभिनिवेशं न करोति । महान्तौ बाहू शत्रुहनने प्रवर्तेते नाहमिति मत्वा त्वमपि कर्तृत्वाभिनिवेशं कर्तुं नार्हसीति ध्वनयन्नाह–हे महाबाहो इति ॥ २८ ॥

प० टी०–अथ ज्ञानिनो विशेषं दर्शयति–**तत्त्वविदिति** । गुणकर्मविभागयोस्तत्त्वविन्नाहं गुणात्मक इति गुणेभ्य आत्मनो विभागो विभक्तत्वम्, न मे कर्माणीति कर्मभ्योऽप्यात्मनो विभागस्तयोस्तत्त्वं वेत्तीति तत्त्ववित् गुणा इन्द्रियाणि गुणेषु विषयेषु वर्तन्ते स्वभावतः प्रवृत्तानीति मत्वा न सज्जते कर्तृत्वाभिनिवेशं न करोति । तदुक्तम्–'धूलिधूमाम्बुदैर्यद्वन्मलिनं क्रियते नभः । परामृष्टस्तथैवात्मा विशुद्धः प्राकृतैर्गुणैः' इति ॥ २८ ॥

रा० टी०–एवमविद्वान्करोति चेत् विद्वान् कथमित्यत आह–**तत्त्वविदिति** । गुणकर्मविभागयोः गुणानामिच्छादिभगवद्गुणानां सत्त्वादिप्रकृतिगुणानां प्रकृतिविकारतया प्रकृत्युपसर्जनभूतचक्षुरादीन्द्रिशरीरमनसां चान्योन्यमुक्तविधया विभागस्य तथा कर्म च स्वतन्त्रभगवत्कर्तृकं तदायत्तजीवकर्तृकं विकाररूपप्रकृतिकर्तृकं चेति कर्मविभागस्य तत्त्ववित्तु तत्त्वज्ञानी तु गुणा भगवदिच्छादयः गुणेषु जीवस्वभावकर्मादिषु प्रेरकत्वेन वर्तन्ते भगवदिच्छाद्यनुसारेण च गुणा इन्द्रियाणि गुणेषु शब्दादिविषयेषु वर्तन्ते अतो जीवस्य न क्वापि स्वातन्त्र्यमिति मत्वा न सज्जते स्वात्मनः कर्तृत्वाभिमानेन संसारमग्नो न भवतीत्यर्थः ॥ २८ ॥

**प्रकृतेर्गुणसंमूढाः सज्जन्ते गुणकर्मसु ॥**
**तानकृत्स्नविदो मन्दान् कृत्स्नविन्न विचालयेत ॥ २९ ॥**

**त० टी०–एवं विद्वदविदुषोर्भेदं प्रदर्श्य पुनः न बुद्धिभेदं जनयेत् इत्युक्तमेव दृढयति–प्रकृतेरिति । प्रकृतेर्गुणैः संमूढाः सन्तः पूर्वोक्तगुणकर्मसु सज्जन्ते वयमेवैतत्कर्म कृत्वैतत्फलं भोक्ष्याम इत्थमासक्ता भवन्ति तानकृत्स्नविद आत्मज्ञानहीनानत एव मन्दान्मन्दबुद्धीन् कृत्स्नवित् गुणकर्मविभागात्मवित् न विचालयेत् कर्मनिष्ठातो न च्यावयेत् ॥ २९ ॥**

म० टी०–तदेवं विद्वदविदुषोः कर्मानुष्ठानसाम्येन विद्वानविदुषो बुद्धिभेदं न कुर्यादित्युक्तमुपसंहरति–**प्रकृतेरिति** । प्रकृतेः पूर्वोक्ताया मायाया गुणैः कार्यतया धर्मैर्देहादिभिर्विकारैः सम्यङ्मूढाः स्वरूपास्फुरणेन तानेवात्मत्वेन मन्यमानास्तेषामेव गुणानां देहेन्द्रियान्तःकरणानां कर्मसु व्यापारेषु सज्जन्ते सक्तिं वयं कर्म कुर्मस्तत्फलायेति दृढतरामात्मीयबुद्धिं कुर्वन्ति ये तान् कर्मसङ्गिनोऽकृत्स्नविदोऽनात्माभिमानिनो मन्दानशुद्धचित्तत्वेन ज्ञानाधिकारमप्राप्तान् कृत्स्नवित्परिपूर्णात्मवित् स्वयं न विचालयेत्कर्मश्रद्धातो न प्रच्यावयेदित्यर्थः । ये त्वमन्दाः शुद्धान्तःकरणास्ते स्वयमेव विवेकोदये न विचलन्ति ज्ञानाधिकारं प्राप्ता इत्यभिप्रायः । कृत्स्नाकृत्स्नशब्दौ आत्मानात्मपरतया श्रुत्यर्थानुसारेण वार्तिककृद्भिर्व्याख्यातौ ' सदेवेत्यादिवाक्येभ्यः कृत्स्नं वस्तु यतोऽद्वयम् । संभवस्तद्विरुद्धस्य कुतोऽकृत्स्नस्य वस्तुनः ॥ यस्मिन्दृष्टेऽप्यदृष्टोर्थः स तदन्यश्च शिष्यते । तथादृष्टेऽपि दृष्टः स्यादकृत्स्नस्तादृगुच्यते ' इति । अनात्मनः सावयवत्वादनेकधर्म-

त्त्वाच्च केनचिद्धर्मेण केनचिदवयवेन वा विशिष्टे तस्मिन्नेकस्मिन् घटादौ ज्ञातेऽपि धर्मान्तरेणावयवान्तरेण वा विशिष्टः स एवाज्ञातोऽवशिष्यते तदन्यश्च पटादिरज्ञातोऽवशिष्यत एव तथा तस्मिन् घटादावज्ञातेऽपि पटादिर्ज्ञातः स्यादिति तज्ज्ञानेऽपि तस्यान्यस्य चाज्ञानात्तदज्ञानेऽप्यन्यज्ञानाच्च सोऽकृत्स्न उच्यते कृत्स्नस्त्वद्वय आत्मैव तज्ज्ञाने कस्यचिदवशेषस्याभावादिति श्लोकद्वयार्थः ॥ २९ ॥

**शं० टी०**–एवं देहेन्द्रियादिभिः क्रियमाणेषु कर्मसु स्वस्याकर्तृत्वदृष्ट्या विद्वान् स्वविलक्षणानज्ञान् कर्मिणः प्रमादेनापि न विचालयेदिति पुनरुक्तमेवार्थं द्रढयति–**प्रकृतेरिति**। कर्मिणां विद्वद्वैलक्षण्यं दर्शयति–**प्रकृतेर्गुणसंमूढा** इति। प्रकृतेरुक्तलक्षणाया गुणेषु कार्येषु देहेन्द्रियादिष्वहंबुद्ध्या संमूढास्तदात्मतामापन्नाः पामराः स्वयं गुणकर्मसु गुणैः श्रवणादिभिर्वागादिभिः क्रियमाणेषु कर्मसु श्रवणदर्शनवचनादानभोजनादिष्वहमेव श्रोता द्रष्टा वक्ता दाता कर्ता भोक्तेति सज्जन्तेऽभिनिवेशं कुर्वन्ति एतान् कर्मिणोऽकृत्स्नविदोऽब्रह्मविदोऽज्ञान् कृत्स्नवित्पूर्वोक्तलक्षणो ब्रह्मविन्न विचालयेत् कामनया कर्म न कर्तव्यमिति वा कर्मफलमसदिति वा कर्त्रादि मिथ्येति वा त्वं ब्रह्मैव तव न किंचित्कर्तव्यमस्तीति वा न विक्षेपयेत् किंतु कर्मस्तुतया कर्मस्वेव प्रवर्तयेदित्यर्थः ॥ २९ ॥

**श्री० टी०**–न बुद्धिभेदं जनयेदित्युक्तमुपसंहरति–**प्रकृतेरिति**। यैः प्रकृतेर्गुणैः सत्त्वादिभिः संमूढाः सन्तो गुणेष्विन्द्रियेषु तत्कर्मसु च सज्जन्ते वयं कुर्म इति तानकृत्स्नविदो मन्दमतीन्कृत्स्नवित्सर्वज्ञो न विचालयेत् ॥ २९ ॥

**स० टी०**–मायायाः कार्यरूपेण गुणैः परिणतैर्जनाः ॥ देहेन्द्रियादिभिः सम्यङ्मूढास्तत्राभिमानिनः ॥ १ ॥ तेषां देहेन्द्रियादीनां व्यापारेषु भ्रमावृताः ॥ स्वीयां बुद्धिं प्रकुर्वन्ति तान्मूढान्कर्मसंगिनः ॥ २ ॥ मन्दानशुद्धचित्तत्वाद्देहाद्यात्माभिमानिनः ॥ ज्ञानाधिकारमप्राप्तान्परिपूर्णात्मवित्स्वयम् ॥ ३ ॥ नैव प्रच्यावयेत्कर्मश्रद्धातोऽल्पविदो जनान् ॥ ४ ॥ २९ ॥

**भा० टी०**–विद्वत्स्वरूपमविद्वत्स्वरूपं च प्रकृतमुपपाद्य विद्वानविदुषो बुद्धिभेदनं न कुर्यादित्युपसंहरति–**प्रकृतेरिति**। प्रकृतेः प्रधानस्य मायाशक्तेर्गुणैः विकारैः कार्यकरणरूपैः सम्यङ्मूढाः स्वस्वरूपास्फुरणेन तानेवात्मतया मन्यमानास्तेषामेव गुणानां कर्मसु व्यापारेषु सज्जन्ते वयं कुर्मः फलायेति दृढतरस्वकीयबुद्धिं कुर्वन्ति ये तान्कर्मसङ्गिनोऽत एवाकृत्स्नविद आत्मज्ञानशून्यान् यतो मन्दप्रज्ञान् कृत्स्नविदात्मवित् "आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्" इतिश्रुत्याऽऽत्मविदः कृत्स्नवित्त्वप्रतिपादनात् स्वयं न विचालयेत् बुद्धिभेदं न कुर्यादित्यर्थः। प्रकृतेर्गुणैः सत्त्वादिभिरिति व्याख्यानं तु भाष्यविरुद्धं प्रकृतेः क्रिमाणानि गुणैरित्यत्रेन्द्रियैरिति स्वोक्त्यननुरूपं च। एतेन गुणेष्विन्द्रियेषु तत्कर्मसु च प्रकृतेः संबन्धिषु गुणेषु देहादिषु कर्मसु गमनादिषु चेति व्याख्यानद्वयमपि प्रत्युक्तं, देहेन्द्रियाद्यासक्तेर्गुणसंमूढा इत्यनेनैवोक्तत्वात् प्रकृतेरित्यस्य गुणकर्मस्वित्यनेन संबन्धस्य प्रयोजनशून्यत्वाच्च ॥ २९ ॥

**प० टी०**– अथ न बुद्धिभेदं जनयेदित्युपसंहरति–**प्रकृतेरिति** । प्रकृतेर्गुणैः सत्त्वादिभिः संमूढा मोहं प्राप्ताः सन्तो गुणकर्मसु गुणेष्विन्द्रियेषु तत्कर्मसु द्रष्टव्यश्रोतव्यादिषु च ये सज्जन्ते तानकृत्स्नविद एकैकेन्द्रियोपासकान् कृत्स्नं वेत्तीति कृत्स्नवित्कृत्स्नं सर्वेन्द्रियचालकमात्मानं वेत्ति न स विचालयेत् कर्माणि करचरणव्यापारं कुर्वतः पुरुषानपि भ्रंशं न प्रापयेत्। श्रुतिरपि शातपथी–"स योत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येषोत एकैकेन भवत्यात्मेत्येवोपासीतात्र ह्येते सर्व एक भवति तदेतत्पदनीयमस्य सर्वस्य यदयमात्मानेन ह्येतत्सर्वं वेद यथा ह वै पदेनानुविन्देदेवं कीर्तिं श्लोकं विन्दते य एवं वेद" इति। भाष्यम्—पूर्वश्रुतौ प्राणन्नेव प्राणो नाम भवतीत्यादिना सर्वेन्द्रियाण्यात्मन एव कर्मनामानि भवन्तीत्युक्तं

तत्र यं एकैकमुपास्ते आत्मानभिज्ञः सन् एकैकेन्द्रियोपासनां करोति न स वेद न जानाति । एष एकैकेन्द्रियेणाकृत्स्नो भवति । अथ कृत्स्नः केन प्रकारेण भवतीत्याह—आत्मेति । सर्वेन्द्रियेषु स्वस्वविषयं गृह्णत्सु सत्सु पदार्थभासकोऽयमेवेत्येवोपासीत । यतोऽत्रात्मनि सर्वे विषयाः प्रतीतिरूपेणैकीभवन्ति । तदेतस्यात्मनः पदनीयं ज्ञातव्यं स्थानं यद्यस्मात् कारणादस्य सर्वस्य जगतोऽयमात्मा अनेनात्मना सर्वं वेद जानाति । अतो रूपरसादिसर्वपदार्थग्रहणे प्रतीतिरूपेणात्मैव ज्ञातो भवति । तत्र दृष्टान्तमाह—यथेति । यथा पदेन गोपदानुसारं गच्छतो गोज्ञानमेवं यो वेद स कीर्तिं श्लोकं यशश्च विन्दते प्राप्नोति । तदुक्तं तैत्तिरीयकेऽपि " अन्तः प्रविष्टः शास्ता जनानामेकः सन् बहुधा विचारः । शतं शुक्राणि यत्रैकं भवन्ति । सर्वे वेदा यत्रैकं भवन्ति । अतो बहुप्रकारमिन्द्रियमार्गैर्विचरन्ति " इति । शुक्राणि इन्द्रियवृत्तयः । शेषं स्पष्टम् ॥ २९ ॥

रा० टी०—स्वात्मनः स्वतन्त्रकर्तृतां मन्यमाना अविद्वांसो ज्ञानिना बोधनीया इत्यत आह—प्रकृतेरिति । प्रकृतेरीश्वरस्येच्छादिगुणैः कर्तृभूतैः प्रकृतेर्जडस्य कार्यभूतसत्त्वादिगुणैर्निमित्तैः प्रकृतेः प्रकृतेर्जडस्य विकारभूतगुणेष्विन्द्रियेषु संमूढा ममेवैतानि करणानि, इति तेषु स्वातन्त्र्याभिमानिनः अत एव गुणकर्मसु गुणेषु शब्दादिविषयेषु सज्जन्ते स्नेहातिशयवन्तो भवन्ति । स्वकर्मसु च सज्जन्ते स्वातन्त्र्यभ्रमवन्तो ये तानकृत्स्नविदः गुणकर्मविभागाज्ञान्मन्दानयोग्यजनान् स्वयं कृत्स्नविज्ज्ञानी न विचालयेत् । गुणकर्मसु सङ्गं त्याजयित्वा सन्मार्गे न प्रवर्तयेदित्यर्थः । शब्दाद्या इन्द्रियाद्याश्च सत्त्वाद्याश्च शुभानि चेत्यादेः गुणशब्दोऽनेकार्थो ध्येयः ॥ २९ ॥

**मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ॥**
**निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ३० ॥**

**त० टी०—एवं न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते इत्यारभ्य कर्मकरणावश्यकत्वं तस्य फलाभिसंधिरहितत्वेनाबन्धकत्वं लोकसंग्रहार्थमनासक्त्या कर्तव्यत्वमभिहितमेतत्सर्वं कथं स्यादिति चिन्तयतेऽर्जुनाय कृपया भगवान्स्वयमेव तत्प्रकारमुपदिशति—मयीति । मयि भगवति सर्वज्ञे सर्वशक्तौ सर्वान्तर्यामिणि वासुदेवे सर्वाणि कर्माणि दैहिकमानसादीनि सर्वप्रकाराणि अध्यात्मचेतसा अध्यात्मन्यन्तर्यामिणि यच्चेतस्तदध्यात्मचेतस्तेन संन्यस्य ममान्तर्यामीश्वर एव सर्वकर्माणि कारयति नाहं स्वतन्त्रः कर्तेति मत्वा तत्प्रीत्यर्थमेव भवेयुरिति बुद्ध्याऽर्पयित्वा निराशीः कर्मसु फलकामनावर्जितः, अत एव निर्ममस्तत्र ममताशून्यो भूत्वा विगतज्वरः शोकमोहरहितः सन् युद्ध्यस्व । एवं कृतेऽसङ्गत्वमन्तःशुद्धिर्लोकसंग्रहश्च भवेदिति भावः ॥ ३० ॥**

म० टी०—एवं कर्मानुष्ठानसाम्येऽप्यज्ञविज्ञयोः कर्तृत्वाभिनिवेशतदभावाभ्यां विशेष उक्तः । इदानीमज्ञस्यापि मुमुक्षोरमुमुक्ष्वपेक्षया भगवदर्पणं फलाभिसन्ध्यभावं च विशेषं वदन्नज्ञतयाऽर्जुनस्य कर्माधिकारं द्रढयति—मयीति । मयि भगवति वासुदेवे परमेश्वरे सर्वज्ञे सर्वनियन्तरि सर्वात्मनि सर्वाणि कर्माणि लौकिकानि वैदिकानि च सर्वप्रकाराणि अध्यात्मचेतसा अहं कर्तान्तर्याम्यधीनस्तस्मा एवेश्वराय राज्ञ इव भृत्यः कर्माणि करोमीत्यनया बुद्ध्या संन्यस्य समर्प्य निराशीर्निष्कामः निर्ममो देहपुत्रभ्रात्रादिषु स्वीयेषु ममताशून्यः विगतज्वरः संतापहेतुत्वाच्छोक एव ज्वरशब्देनोक्तः, ऐहिकपारत्रिकदुर्यशोनरकपातादिनिमित्तशोकरहितश्च भूत्वा त्वं मुमुक्षुर्युध्यस्व विहितानि कर्माणि कुर्वित्यभिप्रायः । अत्र भगवदर्पणं निष्कामत्वं च सर्वकर्मसाधारणं मुमुक्षोः निर्ममत्वं त्यक्तशोकत्वं च युद्धमात्रे प्रकृत इति द्रष्टव्यम् । अन्यत्र ममताशोकयोरप्रसक्तत्वात् ॥ ३० ॥

शं० टी०–एवं ज्ञानिनामप्याधिकारिकाणां लोकसंग्रहार्थमवश्यं कर्म कर्तव्यमिति लोकसंग्रहकारिणेत्येवं वर्तितव्यमिति चोपदिश्याधुना लोकसंग्रहदृष्ट्यापि स्वधर्मं कुर्वित्याह–मयीति। लोकसंग्रहकर्तात्मतत्त्वज्ञस्त्वमध्यात्मचेतसा "सर्वं यदयमात्मा" इति श्रुत्युक्तरीत्यात्मानमधिकृत्य प्रवृत्तमध्यात्मं चेतो ज्ञानमध्यात्मं च तच्चेतश्च तेनाध्यात्मचेतसा ब्रह्मार्पणं ब्रह्म हविः इति वक्ष्यमाणलक्षणया प्रत्यग्दृष्ट्या सर्वं ब्रह्मैवेतिदर्शनेन कर्माणि नित्यनैमित्तिकादीनि सर्वाणि मयि सर्वात्मनि ब्रह्मणि संन्यस्य सर्वं ब्रह्मैवेति प्रविलाप्य जयेन प्राप्ते राज्ये युद्धक्रियाफले निराशीर्निरपेक्षः सन् वध्यमानेषु भ्रात्रादिषु निर्ममो ममतारहितो भूत्वा एते मदीया मया हन्यन्त इति यो ज्वरः संतापः स विगतो यस्य स विगतज्वरो निःशोको भूत्वा युध्यस्व लोकसंग्रहार्थं कर्म कुर्वित्यर्थः। अत्रायमभिप्रायः "सर्वमिदमहं च ब्रह्मैव" इतिपरावरैकत्वविषयकाऽप्रतिबद्धाऽपरोक्षज्ञानवानाधिकारिको ब्रह्मविदत्रोक्तरीत्या लोकहितार्थं कर्म कुर्याज्जीवत एव मुक्तत्वादस्य परतारणमेव प्रयोजनम्। परोक्षज्ञानी चेदात्मा देहादिभिन्नस्तद्द्रष्टृत्वाद्घटद्रष्टृवदिति स्वस्य देहादिभिन्नत्वज्ञानेन यौक्तिकेन, नाऽहं कर्ता कारयितेत्यकर्तृत्वबुद्ध्या "मायामात्रमिदं द्वैतम्" इत्यादिश्रुतिबलेन, इदं सर्वं मिथ्या मायाकार्यत्वादैन्द्रजालिकवदित्यादियुक्तिबलेन च कर्ता कार्यं करणं च सर्वं मिथ्यैवेति कर्त्रादेः सर्वस्य मिथ्यात्वमेव पश्यन् सर्वत्र निराशीर्निर्ममो भूत्वा लोकहितार्थं कर्म कुर्यात्तेन चित्तपरिपाको ज्ञानं मोक्षश्च सिध्यति लोकोपकारश्चास्य तरणं तारणं चोभयमप्युपपद्यते। अनात्मज्ञश्चेत्परिग्रहे ममतारहितः कर्मफलानपेक्षश्च भूत्वा श्रौतानि स्मार्तानि च सर्वाणि कर्माणीश्वरार्पणबुद्ध्या स्वार्थमेव कुर्यात्तेन चित्तशुद्धिस्तया ज्ञानं मोक्षश्चास्य सिध्यतीति ॥ ३० ॥

श्री० टी०–तदेवं तत्त्वविदापि कर्म कर्तव्यं त्वं तु नाद्यापि तत्त्ववित् अतः कर्मैव कुर्वित्याह–मयीति। सर्वाणि कर्माणि मयि संन्यस्य समर्प्याध्यात्मचेतसान्तर्याम्यधीनोऽहं करोमीति दृष्ट्या निराशीर्निष्कामोऽत एव मत्फलसाधनं मदर्थमिदं कर्मेत्येवं ममताशून्यश्च भूत्वा विगतज्वरस्त्यक्तशोकश्च भूत्वा युध्यस्व ॥३०॥

स० टी०–कथं मुमुक्षुणाज्ञेन कर्मण्यधिकृतेन च ॥ कर्तव्यं कर्म शास्त्रीयमित्यत्राह रमापतिः ॥ १ ॥ मयि सर्वात्मनीशाह्वे सर्वज्ञे परमेश्वरे ॥ श्रौतानि सर्वकर्माणि लौकिकानि समर्प्य च ॥ २ ॥ अहं कर्तेश्वराधीनस्तदर्थं भृत्यवत्सदा ॥ करोमीत्यनया बुद्ध्या निष्कामो ममतोज्झितः ॥ ३ ॥ दुर्यशो नरकप्राप्तिहेतुशोकाविवर्जितः। युद्धयस्वेति विहितानि कुरु कर्माणि शास्त्रतः ॥ ४ ॥ ३० ॥

भा० टी०–ननु नाहं तत्त्ववित् किंत्वज्ञो मुमुक्षुर्मया कथं कर्म कर्तव्यमिति चेत्तत्राह–मयीति। मयि परमेश्वरे सर्वाणि वैदिकानि लौकिकानि च कर्माणि अध्यात्मचेतसा विवेकबुद्ध्याऽहं कर्तेश्वराय भृत्यवत्करोमीत्यनया बुद्ध्या संन्यस्य समर्प्य निराशीः फलाभिसंधिरहितः ममत्वशून्यस्त्वं भूत्वा विगतज्वरो विगतशोकः सन् युध्यस्व। यत्त्वत्र भगवदर्पणं निष्कामत्वं च सर्वकर्मसाधारणं मुमुक्षोः निर्ममत्वं त्यक्तशोकत्वं च युद्धमात्रे प्रकृत इति द्रष्टव्यमन्यत्र ममताशोकयोरप्रसक्तत्वादिति, तच्चिन्त्यं सर्वस्मिन्कर्मणि ममेदमिति ममत्वस्य निष्फले कष्टसाध्ये वा कर्मणि ज्वरस्य च प्रसक्तत्वात्। शोकादेर्निवृत्त्यर्थमेव सिद्ध्यसिद्ध्योः समो भूत्वेति भगवतोक्तत्वाच्चेति दिक् ॥ ३० ॥

प० टी०–अथ प्रकृतमनुसरति–मयीति। सर्वाणि कर्माणि मयि संन्यस्य समर्प्याध्यात्मचेतसान्तर्याम्यधीनोऽहं करोमीति दृष्ट्या निराशीरमुकं मे भूयादिति कामरहितस्तथा यन्निमित्तं तव ज्वरः समुदितोऽभूत्तद्विषये निर्ममो ममताशून्यो भूत्वा ततो विगतज्वरः सन् युध्यस्व ॥ ३० ॥

रा० टी०–एवमविद्वत्कर्मतो विद्वत्कर्मणोऽनभिमानेनानुष्ठानरूपवैलक्षण्यमुक्त्वेदानीं तवापि ज्ञानित्वात्तथैवानुष्ठेयं कर्मेत्याह–मयीति। अध्यात्मचेतसा आत्मानं परमात्मानं मामधिकृत्य स्थितमध्यात्मम्, अध्यात्मं च

तत् चेतश्च तदध्यात्मचेतः तेनेति वा, अधि अधिकं सचासावात्मा चाध्यात्मा अध्यात्मनि चेतोऽध्यात्मचेतस्तेनेति वा सर्वाधिकपरमात्मभूतमन्निष्ठमनसा निराशीः विष्णुभक्तिज्ञानाद्यन्यकामरहितः निर्ममः कर्मण्यहमेव स्वातन्त्र्येण करोमीति स्वतन्त्रकर्तृताभिमानहीनो भूत्वा सर्वाणि कर्माणि मयि संन्यस्य भगवान् कृष्ण एव मयि स्थित्वा सर्वकर्माणि करोतीति ज्ञात्वा तानि च श्रीकृष्णपूजारूपाणीति मयि समर्प्य विगतज्वरस्त्यक्तशोकः सन् युध्यस्वेति । तदुक्तम् ' नाहं कर्ता हरिः कर्ता तत्पूजा कर्म चाखिलम् ' इत्यादि ॥ ३० ॥

**ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः ॥**
**श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ३१ ॥**

**त० टी०**–एतेन " अन्तः प्रविष्टः शास्ता जनानाम् । सर्वात्मा । एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते । स कारयेत् पुण्यमथापि पापं न तावता दोषवानीषिताऽपि " इत्यादिश्रुतिशतसिद्धं परमेश्वराधीनं सर्वात्मकर्तृत्वं, तदर्पणबुद्ध्या च कृतं कर्म दोषस्पर्शाय न भवतीति भगवता स्वमतमुक्तमिदानीं श्रद्धयेदमनुतिष्ठतां गुणमननुतिष्ठतां च दोषमाह–ये मे मतमिति द्वाभ्याम् । इदं पूर्वश्लोके कर्मविषयं मम मतं नित्यं श्रुतिस्मृतिभिर्निर्णीतं सनातनं तुभ्यमुपदिष्टं ये केऽपि मानवाः कर्ममात्राधिकारिणः श्रद्धावन्तो भगवतोक्तं शास्त्रनिर्णीतमेवैतदिति विश्वासवन्तः अनसूयन्तः असूया दोषारोपो गुणेष्वपि सा चेह निराशीर्निर्ममो भूत्वा युद्धयस्व इति काममताहीनं विधाय तस्य प्रयोजनशून्ये युद्धे प्रवर्तनान्न समीचीनमिदं मतमित्येवंरूपा तामकुर्वन्तोऽनुतिष्ठन्ति तेऽपि कर्मभिः शुभाशुभैर्मुच्यन्ते ॥ ३१ ॥

**म० टी०**–फलाभिसन्धिराहित्येन भगवदर्पणबुद्ध्या विहितकर्मानुष्ठानं सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण मुक्तिफलमित्याह–ये मे इति । इदं फलाभिसन्धिराहित्येन विहितकर्माचरणरूपं मम मतं नित्यं नित्यवेदबोधितत्वेनानादिपरंपरागतमावश्यकमिति वा सर्वदेति वा । मानवाः मनुष्या ये केचित् मनुष्याधिकारित्वात्कर्मणां श्रद्धावन्तः शास्त्राचार्योपादिष्टेर्थेऽननुभूतेप्येवमेवैतदिति विश्वासः श्रद्धा तद्वन्तः । अनसूयन्तः गुणेषु दोषाविष्करणमसूया सा च दुःखात्मके कर्मणि मां प्रवर्तयन्न कारुणिकोऽयमित्येवंरूपा प्रकृते प्रसक्तां तामसूयामपि गुरौ वासुदेवे सर्वसुहृद्यकुर्वन्तो येऽनुतिष्ठन्ति तेऽपि सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण सम्यक् ज्ञानिवन्मुच्यन्ते कर्मभिर्धर्माधर्माख्यैः ॥ ३१ ॥

**शं० टी०**–'न कर्मणामनारम्भात्' इत्यारभ्य 'मयि सर्वाणि कर्माणि' इत्यन्तेन ग्रन्थेन मुमुक्षोरवश्यं मोक्षार्थमीश्वरार्पणबुद्ध्या कर्म कर्तव्यमिदं मम मतमिति निश्चित्य श्रीभगवान् स्वमतानुसारिणो ये ते मुक्ता भविष्यन्ति ये तु विपरीतकारिणस्ते विनङ्क्ष्यन्तीति नियमयति–ये मे मतमिति । ये विवेकिनो मानवा ब्राह्मणादयो मुमुक्षव इदमुक्तलक्षणं मे ममेश्वरस्य मतं शासनमनसूयन्तः असूया नाम गुणदूषणा जगद्गुरौ मयि तामकुर्वन्तः किंतु श्रद्धावन्तस्तत्र श्रद्धां भक्तिं च कुर्वन्तः सन्तोऽनुतिष्ठन्ति समनुवर्तन्ते मच्छासनमनुल्लङ्घ्य ये नित्यं कर्म कुर्वन्तीत्यर्थः । ते सत्त्वशुद्ध्या निर्विकारात्मविज्ञानं प्राप्य कर्मभिः पुण्यापुण्यलक्षणैर्नानादुःखहेतुभिः संचितादिभिर्मुच्यन्ते । अपिशब्दाज्जन्मादिभिश्च मुक्ता भवन्तीत्यर्थः ॥ ३१ ॥

**श्री० टी०**–एवं कर्मानुष्ठाने गुणमाह–ये मे मतमिति । मद्वाक्ये श्रद्धावन्त अनसूयन्तः दुःखात्मके कर्मणि प्रवर्तयतीति दोषदृष्टिमकुर्वन्तश्च ये मे मदीयमिदं मतमनुतिष्ठन्ति तेऽपि शनैः कर्मकुर्वाणाः सम्यग्ज्ञानिवत्कर्मभिर्मुच्यन्ते ॥ ३१ ॥

**स० टी०**–ये मदीयं यथोक्तं च मतमावश्यकं सदा ॥ श्रद्धावन्तोऽनुवर्तन्ते नराः कर्माधिकारिणः ॥ १ ॥ मयीश्वरे गुरौ विष्णौ सर्वभूतानुकम्पिनि ॥ अहो दुःखात्मके क्रूरे कर्मणीशः प्रवर्तयन् ॥ २ ॥ मामकारु-

णिकोऽयं स्यादित्युदारगुणेष्वपि ॥ असूयां दोषबुद्धिं चाकुर्वन्तो धर्मतत्पराः ॥ ३ ॥ तेऽपि धीशुद्धितस्तत्त्वज्ञानप्राप्तिमुखेन च ॥ सम्यग्ज्ञानिवदेवाशु धर्माधर्माख्यकर्मभिः ॥ ४ ॥ बन्धनापरपर्यायैर्मुच्यन्ते मत्प्रसादतः ॥ ५ ॥ ३१ ॥

**भा० टी०**—येऽन्येऽपि मानवाः मम परमेश्वरस्य मतं फलाभिसंधिराहित्येन चित्तशोधकं कर्मानुष्ठेयमित्येवंरूपं सप्रमाणमुक्तमीश्वरेण सर्वज्ञेनाप्ततमेनोक्तं यत्तत्तथ्यमेवेति निश्चयः श्रद्धा तद्युक्ता अत एवानसूयन्तो मयि परमगुरौ वासुदेवेऽसूया दुःखात्मके कर्मण्यस्मान्प्रेरयतीति सुखसाधने तस्मिन्दोषारोपणमकुर्वन्तोऽनुतिष्ठन्ति अनुवर्तन्ते तेऽप्येवंभूताः सत्त्वशुद्धिद्वारा ज्ञानप्राप्त्या धर्माधर्माख्यैः कर्मभिर्मुच्यन्ते ॥ ३१ ॥

**प० टी०**—एवमनुष्ठाने गुणमाह—ये मे इति । इदं मे मतं ये मद्वाक्यं श्रद्धावन्तोऽनसूयन्तो दुःखास्पदे कर्मणि प्रवर्तयतीति दोषदृष्टिरहिताः सन्तोऽनुतिष्ठन्ति तेऽपि शनैर्ज्ञानिवत्कर्मभिर्मुच्यन्ते ॥ ३१ ॥

**रा० टी०**—विद्वांस एवं कर्म कुर्वन्तीत्येतावता मयाप्युक्तविधया कर्म कार्यमिति कुत इत्यतः स्वोक्तस्य करणे अकरणे च फलमाह—ये मे इत्यादिश्लोकद्वयेन । ये मानवाः श्रद्धावन्तः मद्वाक्येष्वास्तिक्यबुद्धिमन्तः अनसूयन्तः कष्टे कर्मणि प्रवर्तयतीति मयि दोषदृष्टिमकुर्वन्तः सन्तः इदं पूर्वोक्तश्लोकोक्तरीत्या कर्मानुष्ठानरूपं मे मतं नित्यमनुतिष्ठन्ति तेऽपि कर्मभिर्निर्वृत्तकर्मभिर्मुच्यन्ते । ज्ञानद्वारेतियोज्यम् । किमुतापरोक्षज्ञानिनो मुच्यन्तं इति कैमुत्यसूचनार्थोऽपिशब्दः । एतत्सूचनं च प्रासङ्गिकं ध्येयम् ॥ ३१ ॥

**ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् ॥**
**सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ३२ ॥**

**त० टी०**—ये तु एतन्मम मतं अभ्यसूयन्तो दोषारोपं कुर्वन्तो नानुतिष्ठन्ति नानुवर्तन्ते तान्सर्वज्ञानविमूढान् सर्वकर्मज्ञाने विशेषतो मूढान् यतोऽचेतसोऽशुद्धचित्तान्नष्टान् सदा संसारिणो विद्धि जानीहि ॥ ३२ ॥

**म० टी०**—एवमन्वये गुणमुक्त्वा व्यतिरेके दोषमाह—येत्विति । तुशब्दः श्रद्धावद्वैधर्म्यमश्रद्धां सूचयति तेन ये नास्तिक्यादश्रद्दधाना अभ्यसूयन्तो दोषमुद्भावयन्त एतन्मम मतं नानुवर्तन्ते तानचेतसो दुष्टचित्तान् अत एव सर्वज्ञानविमूढान् सर्वत्र कर्मणि ब्रह्मणि सगुणे निर्गुणे च यज्ज्ञानं तत्र विविधं प्रमाणतः प्रमेयतः प्रयोजनतश्च मूढान् सर्वप्रकारेणायोग्यान्नष्टान् सर्वपुरुषार्थभ्रष्टान्विद्धि जानीहि ॥ ३२ ॥

**शं० टी०**—विपर्यये दण्डमाह—ये त्विति । ये त्वविवेकिनो ब्राह्मणादयो दुरहंकारा एतदुक्तं ममेश्वरस्य मतं शासनमभ्यसूयन्तोऽत्यन्तं दूषयन्तः सन्तो नानुतिष्ठन्ति दुराग्रहेण मदाज्ञां न कुर्वते सर्वज्ञानविमूढान् सर्वात्मकत्वाद्ब्रह्म सर्वमित्युच्यते तद्विषयकं ज्ञानं सर्वज्ञानं तस्मिन् विषये विशिष्य मूढास्तान् सर्वज्ञानविमूढान् अचेतसो विचेतसोऽविवेकिनः कर्म बहुसाधनसाध्यं क्लेशभूयिष्ठमदृष्टफलं चातस्तत्संन्यास एव परमसुखमित्येवं विपरीतबुद्धयस्तान् संन्यासानर्हानकर्मनिष्ठान् जनान्नष्टान् विनष्टपुण्यलोकान् विद्धि स्वधर्मं परित्यज्य परधर्मे वर्तमानाः स्वयमेव विपरीतबुद्ध्या विनश्येयुरित्यर्थः ॥ ३२ ॥

**श्री० टी०**—विपक्षे दोषमाह—ये त्विति । ये तु मे मतमीश्वरार्थं कर्म कर्तव्यमित्यनुशासनमभ्यसूयन्तः द्विषन्तः नानुतिष्ठन्ति तान् अचेतसः विवेकशून्यानत एव सर्वस्मिन्कर्मणि ब्रह्मविषये च यज्ज्ञानं तत्र विमूढान्नष्टान्विद्धि ॥ ३२ ॥

**स० टी०**—एवमुक्त्वान्वये मोक्षं दोषमाह विपर्यये ॥ ये तु नास्तिक्यतः श्रद्धाहीना एतन्मतं मम ॥ १ ॥ दोषमुद्भावयन्तो नानुवर्तन्तेऽतिदुर्धियः ॥ तानतो दुष्टचित्तांश्च मन्दभाग्यान्सुधिक्कृतान् ॥ २ ॥ सर्वत्र

कर्मणीशे वा सगुणे निर्गुणे च यत् ॥ ज्ञानं तत्रात्ययोग्यांश्च मानतो मेयतः फलात् ॥ ३ ॥ पुरुषार्थपरिभ्रष्टाञ्जानीहि हृतकर्मणः ॥ ४ ॥ ३२ ॥

**भा० टी०**—ये तु तद्विपरीताः श्रद्धाहीना एतन्मम मतमभ्यसूयन्तः गुणेऽपि दोषमारोप्य निन्दन्तः नानुतिष्ठन्ति तान् कर्मज्ञाने सगुणज्ञाने निर्गुणज्ञाने चेति सर्वेषु ज्ञानेषु विविधप्रमाणप्रमेयप्रयोजनविभागे मूढान् सर्वप्रकारेणायोग्यान् अचेतसोऽविवेकिनो दुष्टचेतसो नष्टान् सर्वपुरुषार्थेभ्यो भ्रष्टान् विद्धि । सर्वशब्द ईश्वरवाची 'सर्वं समाप्नोषि ततोऽसि सर्वः' इतिनिर्वचनात् । तस्य ज्ञाने इति व्याख्यानं तूक्तव्याख्याने ईश्वरज्ञानस्यान्तर्भावात् व्यर्थमेव लोकप्रसिद्धित्याग इत्यत उपेक्ष्यम् ॥ ३२ ॥

**प० टी०**—विपक्षे दोषमाह—ये त्वेतदिति । ये तु प्राङ्निरूपितप्रकाररहिताः सन्तो मे मतं नानुतिष्ठन्ति तानचेतसो भ्रान्तांस्तथा सर्वज्ञानरहितान्नष्टान् विद्धि ॥ ३२ ॥

**रा० टी०**—ये तु एतन्मे मतमभ्यसूयन्तः कष्टं कर्मेति दोषदृष्टिमन्तः सन्तो नानुतिष्ठन्ति तानचेतसः विवेकशून्यान् अत एव ज्ञातव्यसर्वज्ञानविषये विमूढान् विशेषेण मिथ्याज्ञानिनः अत एव नष्टान् नरकाद्यनर्थभाजो विद्धि जानीहि ॥ ३२ ॥

**सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानपि ॥**
**प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ॥ ३३ ॥**

**त० टी०**—नन्वेवं शास्त्रप्रतिपादितं तव मतं सर्वे कुतो नानुतिष्ठन्ति शास्त्ररूपाज्ञाप्रतिकूलाः कथं भवन्तीत्यपेक्षायामाह—**सदृशमिति** । प्रकृतिर्हि पूर्वजन्मकृतगुणानुकूलं शुभाशुभकर्मसंस्कारेणेह जन्मन्यभिव्यक्तः स्वभावविशेषस्तस्याः स्वस्याः प्रकृतेः स्वभावस्य सदृशं स्वभावानुकूलमिति यावत् ज्ञानवानपि वेदस्मृतिपुराणशब्दार्थज्ञानवानपि चेष्टते, किं पुनर्वक्तव्यं मूर्खः प्रकृतेः सदृशं चेष्टत इति । तस्मात् भूतानि सर्वे प्राणिनः प्रकृतिमुक्तरूपां यान्ति प्राप्नुवन्ति स्वभावस्य वशे भवन्तीत्यर्थः । निग्रहः शास्त्रीयाज्ञा किं करिष्यति अनादिविषयवासनादूषितचेतसां सर्वकामत्यागपूर्वकमय्यर्पणबुद्धिर्न जायते इत्यर्थः ॥ ३३ ॥

**म० टी०**—ननु राज्ञ इव तव शासनातिक्रमे भयं पश्यन्तः कथमसूयन्तस्तव मतं नानुवर्तन्ते कथं वा सर्वपुरुषार्थसाधने प्रतिकूला भवन्तीत्यत आह—**सदृशमिति**। प्रकृतिर्नाम प्राग्जन्मकृतधर्माधर्मज्ञानेच्छादिसंस्कारो वर्तमानजन्मन्यभिव्यक्तः सर्वतो बलवान् "तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च" इति श्रुतिप्रमाणकः । तस्याः स्वकीयायाः प्रकृतेः सदृशमनुरूपमेव सर्वो जन्तुर्ज्ञानवान् ब्रह्मविदपि 'पश्वादिभिश्चाविशेषात्' इतिन्यायात् गुणदोषज्ञानवान्वा चेष्टते किं पुनर्मूर्खस्तस्मात् भूतानि सर्वे प्राणिनः प्रकृतिं यान्त्यनुवर्तन्ते पुरुषार्थभ्रंशहेतुभूतामपि तत्र मम वा राज्ञो वा निग्रहः किं करिष्यति रागौत्कट्येन दुरितान्निवर्तयितुं न शक्नोतीत्यर्थः । महानरकसाधनत्वं ज्ञात्वापि दुर्वासनाप्राबल्यात्पापेषु प्रवर्तमाना न मच्छासनातिक्रमदोषाद्बिभ्यतीति भावः ॥ ३३ ॥

**शं० टी०**—मम मतमनादृत्य कर्तव्यं कर्म संन्यस्य स्थाणुवत्तूष्णीमास्मह इति ये तु मन्यन्ते तेषां प्रकृत्यधीनानामचलित्वा तूष्णीमासनं न घटते ज्ञानिनामप्यजयायाः प्रकृतेर्मम मायाया निग्रहस्यातिदुष्करत्वादिति कार्यते ह्यवशः कर्म इतिवचनार्थमेव पुनर्द्रढयति मूढानां कर्मणि नियमनार्थम्—**सदृशमिति** । नित्यनिरन्तरब्रह्मनिष्ठानिर्मूलितसर्ववासनाग्रन्थिरपि ब्रह्मवित्प्राणत्राणहेतुतयाऽविशिष्टायाः स्वस्याः प्रकृतेर्वासनायाः सदृशमनुरूपमेवाहारादौ चेष्टते तां निग्रहीतुं न शक्नोति शरीरस्थितिहेतोः प्रकृतेर्दुर्निवारत्वात् ।

एवं ब्रह्मनिष्ठया प्रकृतिमतीत्य तिष्ठतो जितेन्द्रियस्य ब्रह्मविदोऽपि प्रकृत्यनुवर्तित्वे सत्यवशिष्टानां मूढानां किमु वक्तव्यमित्याशयेनाह—**प्रकृतिमिति**। सुखदुःखयोरनुभूत्यै स्वस्वकर्मणा भवन्तीति भूतानि सर्वे प्राणिनः स्वस्वजात्यनुरूपेण नानाक्रियानिर्वृत्तिहेतुभूतां प्रकृतिं रागद्वेषादिगुणवतीं वासनात्मिकां यान्ति स्वस्वप्रकृत्यनुरूपेण रागद्वेषाभ्यां नानारूपं चेष्टन्त एव न प्रकृत्यधीनास्तूष्णीं स्थातुं क्षणमपि शक्नुवन्त्यतो वयं न किंचित्कुर्म इति निग्रहस्तात्कालिकेन्द्रियनिरोधः किं करिष्यति। रागादिदोषवत्स्वकीयप्रकृतिवेगेन सर्वस्यापि चेष्टितव्ये सति नाहं किंचित्करोमीति नियमो व्यर्थ इत्यर्थः॥ ३३॥

**श्री० टी०**—ननु तर्हि महाफलत्वादिन्द्रियाणि निगृह्य निष्कामाः सन्तः सर्वेऽपि स्वधर्ममेव किं नानुतिष्ठन्ति तत्राह—**सदृशमिति**। प्रकृतिः प्राचीनकर्मसंस्काराधीनस्वभावः स्वस्याः स्वकीयायाः प्रकृतेः स्वभावस्य सदृशमनुरूपमेव गुणदोषज्ञानवानपि चेष्टते किं पुनर्वक्तव्यमज्ञश्चेष्टत इति। तस्माद्भूतानि सर्वेऽपि प्राणिनः प्रकृतिं यान्ति अनुवर्तन्ते। एवं सति इन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलिष्ठत्वादित्यर्थः॥३३॥

**स० टी०**—ननु राज्ञ इवेशस्य तवाज्ञातिक्रमे भयम्॥ पश्यन्तस्ते मतं नानुतिष्ठन्तीति कथं तव॥१॥प्रतिकूलाः कथं वाते पुरुषार्थैकसाधने॥ शृणु प्राग्जन्मसंस्कारो धर्माधर्मादिगोचरः॥२॥वर्तमानभवे व्यक्तः सर्वतो बलवांश्च यः॥ प्रकृतिः सा स्वकीयायास्तस्याः सदृशमेव हि॥ ३ ॥ सर्वोऽपि गुणदोषज्ञश्चेष्टते किमु मूढधीः॥ तस्मात्सर्वेऽनुवर्तन्ते प्राणिनः प्रकृतिं स्विकाम्॥४॥ पुरुषार्थक्षये हेतुभूतामपि दुरत्ययाम्॥ राज्ञो वा मम वा तत्र निग्रहः किं करिष्यति॥ ५॥ रागौत्कट्येन दुरितान्न निवर्तयितुं क्षमाः॥ महानरकहेतुत्वं ज्ञात्वापि वासनाबलात्॥६॥ प्रवर्तमानाः पापेषु मदाज्ञातिक्रमादपि॥ न बिभ्यतीति तात्पर्यं हरेर्नारायणस्य च॥ ७॥ ३३॥

**भा० टी०**—ननु कस्मात्त्वत्प्रतिकूलास्त्वच्छासनातिक्रमान्न बिभ्यति त्वदीयं मतं स्वधर्मं नानुतिष्ठन्ति परधर्मं चानुतिष्ठन्तीति चेत्तत्राह—**सदृशमिति**। ज्ञानवानपि 'पश्वादिभिश्चाविशेषात्' इतिन्यायाद्गुणदोषज्ञानवानपीति वा। स्वस्याः प्रकृतेः सा च पूर्वकृतधर्माधर्मादिसंस्कारो वर्तमानजन्मादावभिव्यक्तस्तस्याः सदृशमनुरूपं चेष्टां करोति किं पुनर्मूर्खस्तस्माद्भूतानि प्राणिनः प्रकृतिं यान्त्यनुगच्छन्ति निग्रहो निषेधरूपः मम परमेश्वरस्यान्यस्य राज्ञो वा किं करिष्यति प्रकृतेः प्राबल्यान्नास्मदादिशासनाद्बिभ्यतीति भावः॥ ३३॥

**प० टी०**—ननु सर्वे ज्ञातारोऽपि भगवद्वाक्यविश्वासादिन्द्रियाणि निगृह्य कथं स्वधर्माचरणं न कुर्वन्तीत्याह—**सदृशमिति**। ज्ञानवानपि प्रकृतेः सदृशं चेष्टते प्राचीनकर्मसंस्काराधीनः स्वभावः प्रकृतिस्तत्सदृशं तदनुरूपं यथा भवति तथा गुणदोषज्ञानवानपि चेष्टते किं पुनरज्ञश्चेष्टते इति। यतः सर्वाणि भूतानि प्रकृतिं यान्त्यनुवर्तन्ते। एवं सतीन्द्रियनिग्रहः किं करिष्यति प्रकृतेर्बलिष्ठत्वात्॥ ३३॥

**रा० टी०**—यदि त्वन्मतानुष्ठाने मोक्षः अन्यथा तु नाशस्तर्हि ते मतं किमिति लोको नानुतिष्ठतीत्यत आह—**सदृशमिति**। प्रकृतिशब्दोऽत्र पूर्वसंस्कारार्थः सन् तत्कार्यरागद्वेषोपलक्षकः। ज्ञानवानपि त्वन्मतकरणाकरणयोरिष्टानिष्टज्ञानवानपि स्वस्याः प्रकृतेः स्वकीयपूर्वसंस्कारकार्यरागद्वेषयोः सदृशमनुगुणमेव चेष्टते कर्म करोति। किमुताज्ञ इत्यपेरर्थः। ननु मनोनिग्रहे स्वभावानुगतचेष्टोपरतिः स्यादित्यत आह—**प्रकृतिमिति**। प्रकृतिं स्वभावं यान्ति प्राणिनस्तत्र मनोनिग्रहः किं करिष्यति न किमपीत्यर्थः। तदुक्तम् 'बुद्ध्वाप्यसौ यतो नित्यस्वभावानुगचेष्टितः। स्वभावं यान्ति भूतानि निग्रहः किं करिष्यति' इति। यद्वा मन्दान्न विचालयेत् इत्ययोग्येषु तत्त्वबोधो न कार्य इत्युक्तम्। तत्कुत इत्यत आह—**सदृशमिति**। प्रागिवार्थः। तत्त्वोपदेशेनोत्पन्नज्ञानवानपि स्वभावानुगुणचेष्टावानेव भवति न तूपदेशजन्यज्ञानानुरूपचेष्टावानपि भवति। अतस्तत्र तत्त्वोपदेशो व्यर्थ इति भावः॥ ३३॥

इन्द्रियस्येन्द्रियस्यार्थे रागद्वेषौ व्यवस्थितौ ॥
तयोर्न वशमागच्छेत्तौ ह्यस्य परिपन्थिनौ ॥ ३४ ॥

त० टी०—यद्येवं सर्वे प्रकृतिं यान्ति तर्हि प्रकृतिशून्यो न कोऽप्यस्ति। तथात्वे गुरुशास्त्रोपदेशस्य वैयर्थ्यं प्रसज्येतेत्यत आह—इन्द्रियस्येति । इन्द्रियस्येन्द्रियस्येति वीप्सया श्रोत्रादिज्ञानेन्द्रियस्य वागादिकर्मेन्द्रियस्य च अर्थे शब्दादिविषये वचनादौ कर्मणि च रागद्वेषौ व्यवस्थितौ स्वानुकूले मधुरादौ रागः कामः, प्रतिकूले परुषादौ द्वेषः क्रोधः इति प्राचीनवासनानुसारेण सर्वेषां व्यवस्थितौ स्वभावसिद्धौ । गुरुशास्त्रोपदेशस्तु तयो रागद्वेषयोर्वशं न गच्छेदित्येवंरूपः ततो निवर्तयति। किमर्थं हि यस्मात्तौ रागद्वेषौ अस्य मुमुक्षोः परिपन्थिनौ पथिकस्योत्पथनयनेन सर्वस्वहारिचौरवत् ज्ञानभक्तिरूपमोक्षमार्गात्प्रच्याव्यापथे विषयप्राप्तिसाधने नीत्वा तत्रासक्तं कृत्वा मोक्षसाधनसर्वस्वहारिणौ । तत्र यथा राजभटः पथिकं चौरवशं प्राप्नुवन्तं दृष्ट्वा ततो प्रतिवार्य सुमार्गे प्रवर्तयति तथा शास्त्राचार्योपदेशो विषये रागद्वेषवशं गच्छन्तं मुमुक्षुं ततो वारयित्वा मोक्षप्राप्तिहेतुभूते परमेश्वराराधने सुमार्गे प्रवर्तयति। अतो न गुरुशास्त्रोपदेशस्य वैयर्थ्यम् ॥ ३४ ॥

म० टी०—ननु सर्वस्य प्राणिवर्गस्य प्रकृतिवशवर्तित्वे लौकिकवैदिकपुरुषकारविषयाभावाद्विधिनिषेधानर्थक्यं प्राप्तं न च प्रकृतिशून्यः कश्चिदस्ति यं प्रति तदर्थवत्त्वं स्यादित्यत आह—इन्द्रियस्येन्द्रियस्येति। वीप्सया सर्वेषामिन्द्रियाणामर्थे विषये शब्दे स्पर्शे रूपे रसे गन्धे च । एवं कर्मेन्द्रियविषयेपि वचनादौ अनुकूले शास्त्रनिषिद्धेपि रागः प्रतिकूले शास्त्रविहितेपि द्वेष इत्येवं प्रतीन्द्रियार्थं रागद्वेषौ व्यवस्थितावानुकूल्यप्रातिकूल्यव्यवस्थया स्थितौ नत्वनियमेन सर्वत्र तौ भवतस्तत्र पुरुषकारस्य शास्त्रस्य चायं विषयो यत्तयोर्वशं नागच्छेदिति । कथं या हि पुरुषस्य प्रकृतिः सा बलवदनिष्टानुबन्धित्वज्ञानाभावसहकृतेष्टसाधनत्वज्ञान निबन्धनं रागं पुरस्कृत्यैव शास्त्रनिषिद्धे कलञ्जभक्षणादौ प्रवर्तयति । तथा बलवदिष्टसाधनत्वज्ञानाभावसहकृतानिष्टसाधनत्वज्ञाननिबन्धनं द्वेषं पुरस्कृत्यैव शास्त्रविहितादपि सन्ध्यावन्दनादेर्निवर्तयति। तत्र शास्त्रेण प्रतिषिद्धस्य बलवदनिष्टानुबन्धित्वे ज्ञापिते सहकार्यभावात्केवलं दृष्टेष्टसाधनताज्ञानं मधुविषसंपृक्तान्नभोजन इव तत्र न रागं जनयितुं शक्नोति। एवं विहितस्य शास्त्रेण बलवदिष्टानुबन्धित्वे बोधिते सहकार्यभावात्केवलमनिष्टसाधनत्वज्ञानं भोजनादाविव तत्र न द्वेषं जनयितुं शक्नोति । ततश्चाप्रतिबद्धं शास्त्रं विहिते पुरुषं प्रवर्तयति निषिद्धाच्च निवर्तयतीति शास्त्रीयविवेकविज्ञानप्राबल्येन स्वाभाविकरागद्वेषयोः कारणोपमर्देनोपमर्दात्र प्रकृतिर्विपरीतमार्गे पुरुषं शास्त्रदृष्टिं प्रवर्तयितुं शक्नोतीति न शास्त्रस्य पुरुषकारस्य च वैयर्थ्यप्रसङ्गः। तयोरागद्वेषयोर्वशं नागच्छेत्तदधीनो न प्रवर्तेत निवर्तेत वा किंतु शास्त्रीयतद्विपक्षज्ञानेन तत्कारणविघटनद्वारा तौ नाशयेत् । हि यस्मात् तौ रागद्वेषौ स्वाभाविकदोषप्रयुक्तौ अस्य पुरुषस्य श्रेयोर्थिनः परिपन्थिनौ शत्रू श्रेयोमार्गस्य विघ्नकर्तारौ दस्यू इव पथिकस्य । इदं च "द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरास्त एषु लोकेष्वस्पर्धन्त" इत्यादिश्रुतौ स्वाभाविकरागद्वेषनिमित्तशास्त्रविपरीतप्रवृत्तिमसुरत्वेन शास्त्रीयप्रवृत्तिं च देवत्वेन निरूप्य व्याख्यातमतिविस्तरेणेत्युपरम्यते ॥ ३४ ॥

शं० टी०—ननु सर्वस्यापि प्राणिजातस्य रागद्वेषात्मिकया प्रकृत्या ग्रस्तत्वे त्वन्मतानुसारिणामप्युक्तलक्षणप्रकृतिग्रस्तत्वात्त्वदुक्ते कर्मयोगे कथं तेषां प्रवृत्तिर्घटेतेत्याकाङ्क्षायां रागद्वेषयोः समीचीनत्वाऽसमीचीनत्वबुद्धिमूलकत्वात् 'न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते' इतिन्यायेन ईश्वराराधनात्मके कर्तव्ये विध्युक्ते कर्मणि कुशलत्वाऽकुशलत्वबुद्धिपरित्यागे रागद्वेषयोरनवकाश इति सूचयितुं रागद्वेषयोः स्थितिं

तन्निवृत्तिप्रकारं तयोर्बन्धकत्वं चाह—**इन्द्रियस्येति** । इन्द्रियस्येन्द्रियस्य सर्वेषामिन्द्रियाणां श्रोत्रादीनामर्थे शब्दादौ रागद्वेषौ व्यवस्थितौ इष्टे रागोऽनिष्टे द्वेष इत्येवं प्रतिविषयं नियमेन स्थितौ भवतः । इन्द्रियाणां विषयेषु रागो वा द्वेषो वास्तु मुमुक्षोस्तेन तु का हानिरित्यत आह–तौ हीति । हि यस्मात्कारणात्तौ रागद्वेषावस्य धर्मं चिकीर्षोर्मोक्षमार्गस्य परिपन्थिनौ पथि चोराविव प्रतिबन्धकौ मुमुक्षुं मोक्षसाधनमाश्रयन्तं स्वाश्रयबलेन विषयारण्ये पातयित्वा तदन्तरेव भ्रामयतः । ततो मुमुक्षुः पुरुषः सदसद्विवेकी विषये समीचीनत्वादिबुद्ध्या तयो रागद्वेषयोः वशमधीनतां न गच्छेत् द्रव्ये गुणे कर्मणि वा समीचीनत्वादिबुद्धिं न कुर्याद्विषयेषु समीचीनत्वाऽसमीचीनत्वबुद्धिकरणमेव तयोर्वशवर्तित्वहेतुस्तां मुमुक्षुरकुर्वन् रागद्वेषयोरविषयो भूत्वा स्वधर्मे कुशले वाकुशले वाऽ पीश्वरप्रीत्यै प्रवर्तेत। एवं प्रवृत्तो निष्प्रत्यूहं मोक्षं प्राप्नोतीत्यर्थः ॥ ३४ ॥

**श्री० टी०**–नन्वेवं प्रकृत्यधीनैव चेत्पुरुषस्य प्रवृत्तिस्तर्हि विधिनिषेधवैयर्थ्यं प्राप्तमित्याशङ्क्याह–**इन्द्रियस्येन्द्रियस्येति** । वीप्सया प्रत्येकं सर्वेषामिन्द्रियाणामित्युक्तम् । अर्थे स्वस्वविषयेऽनुकूले रागः प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ व्यवस्थितौ अवश्यंभाविनौ ततश्च तदनुरूपा प्रवृत्तिरिति भूतानां प्रकृतिः तथापि तयोर्वशवर्ती न भवेदिति शास्त्रेण नियम्यते । हि यस्मात् अस्य मुमुक्षोस्तौ परिपन्थिनौ प्रतिपक्षौ । अयं भावः विषयस्मरणादिना रागद्वेषावुत्पाद्यानवहितं पुरुषमनर्थेऽपि गम्भीरे स्रोतसीव प्रकृतिर्बलात्प्रवर्तयति शास्त्रं तु ततः प्रागेव विषयेषु रागद्वेषप्रतिबन्धके परमेश्वरभजनादौ प्रवर्तयति । गम्भीरस्रोतःपातात्पूर्वमेव नावमाश्रित इव नानर्थं प्राप्नोतीति ॥ ३४ ॥

**स० टी०**–नन्वेवं प्राणिनः सर्वे प्रकृतेर्वशवर्तिनः ॥ विध्यादिशास्त्रानर्थक्यं प्राप्तं तर्हि यतो जनः॥१॥ न कश्चित्प्रकृतेर्हीनो यं प्रति स्यात्तदर्थवत् ॥ पौरुषस्यापि वैयर्थ्यं प्राप्तमित्यत्र चोच्यते ॥ २ ॥ इन्द्रियाणां समस्तानां शब्दादिविषयेऽखिले ॥ रागः शास्त्रनिषिद्धेऽपि द्वेषस्तद्विहितेऽपि च ॥३॥ प्रतीन्द्रियार्थमित्येवं रागद्वेषौ व्यवस्थितौ ॥ प्रातिकूल्यानुकूल्याख्या व्यवस्था तत्र कारणम् ॥४॥ तत्र पूरुषकारस्य शास्त्रस्य विषयस्त्वयम् ॥ न तयोर्वशमागच्छेच्छास्त्रीयात्सद्विवेकतः ॥५॥ अत्यनिष्टानुबन्धित्वज्ञानाभावपुरःसरम् ॥ इष्टसाधनताज्ञानं हेतू रागोद्भवे नृणाम् ॥ ६ ॥ पुरस्कृत्यैव तं रागं निषिद्धे प्रकृतिर्हि सा ॥ कलञ्जभक्षणादौ च प्रवर्तयति पूरुषम् ॥ ७ ॥ अभीष्टहेतुताज्ञानाभावेनैवोपबृंहितम् ॥ अनिष्टहेतुताज्ञानं हेतुर्द्वेषोद्भवे नृणाम् ॥८॥ पुरस्कृत्यैव सा द्वेषं शास्त्रीयादपि पूरुषम् ॥ निवर्तयति नित्यादेः प्रकृतिः कर्मणो वशम् ॥९॥ शास्त्रेण ज्ञापिता तत्र निषिद्धेऽनर्थहेतुता ॥ विहितेऽभीष्टहेतुत्वं ज्ञापितं तद्द्वयं बुधः ॥ १० ॥ विनिश्चित्यास्तिकस्तत्र यथाशास्त्रं प्रवर्तते ॥ तदा सा प्रकृतिर्ह्येनं ज्ञानवन्तं नरं बलात् ॥ ११ ॥ न शक्नोति तमानेतुं रागद्वेषवशे कदा ॥ विषसंपृक्तमिष्टान्नभोजनादौ यथा नृणाम् ॥ १२ ॥ निवृत्तिर्दृश्यतेऽभीष्टहेतुताज्ञानबाधनात् ॥ तपोवित्तव्ययादौ चाभीष्टसाधनताधिया ॥१३ ॥ प्रवृत्तिर्दृश्यतेऽनिष्टहेतुताज्ञानबाधनात् ॥ शास्त्रीयं ज्ञानमाश्रित्य रागद्वेषौ विनाशयेत् ॥ १४ ॥ रागद्वेषौ यतः शत्रू मोक्षमार्गवियोजकौ ॥ आध्यासिकौ विघ्नकरौ श्रेयोमार्गेऽतिदुःसहौ ॥ १५ ॥ शास्त्रीयज्ञानप्राबल्यात्पौरुषेण पुमानयम् ॥ समूलौ तौ समुच्छेत्तुं शक्नोत्यात्मावबोधतः ॥ १६ ॥ ३४ ॥

**भा० टी०**–ननु सर्वस्यापि प्राणिजातस्य प्रकृत्यायत्तत्वात्पुरुषकारस्य विषयालाभाद्विधिनिषेधशास्त्रानर्थक्यं प्राप्तमित्याशङ्क्याह–**इन्द्रियस्येति** । सर्वेन्द्रियाणामर्थे शब्दादिविषये इष्टे रागोऽनिष्टे द्वेष इति प्रतिविषयं रागद्वेषाववश्यंभाविनौ तस्मात्तयोर्वशं नागच्छेत्तदधीनो न प्रवर्तेत। तत्रायमेव पुरुषप्रयत्नस्य शास्त्रस्य च विषय उच्यते । तथाहि इन्द्रियार्थसंनिकर्षे पदार्थज्ञानं ततो मिथ्याज्ञानवशात्तत्र रागादिः प्रकृतिश्च रागादिपुरःसरैव पुरुषं स्वकार्ये प्रवर्तयति तदा निषिद्धाचरणं विहितत्यागश्च संपद्यते । यदा पुनः शास्त्रदृष्ट्या

पूर्वमेव यथावद्वस्तु प्रतिभाति तदा मिथ्याज्ञाननिवृत्त्या रागादिर्निवर्तते सहकारिनिवृत्त्या च प्रकृतिः प्रवर्तयितुं न शक्नोति तस्मात्प्रथममेव पुरुषकारेण रागद्वेषयोर्वशं नागच्छेत् । नच पुरुषकारे शास्त्रे च प्रवृत्तिरेव न सिध्यति प्रकृतेः प्रतिबन्धिकायाः सत्त्वादिति वाच्यम्, अदृष्टस्य दृष्टसामग्रीं विना प्रतिबन्धकत्वाभावात् । ननु तुल्यन्यायेन दृष्टस्यापि शास्त्रादौ प्रवृत्तिरूपस्यादृष्टापेक्षतया प्रकृत्यधीनत्वमेव पुनरागतमिति चेत्तर्हि तदनुकूलसंस्कारोऽपि ब्राह्मणाद्यधिकारिजनेऽस्त्येवेति न काचिदनुपपत्तिः। नच तत एव सर्वं भविष्यति किं विधिनिषेधमोक्षपरैः शास्त्रैरिति वाच्यम्, अदृष्टस्य दृष्टसामग्र्यपेक्षाया आवश्यकत्वस्योक्तत्वात् । तथाच यथा लोके संस्काररूपेण स्थितस्य कामस्य कामिनीदर्शनमुद्बोधकं तथा शास्त्रमपि । ननु शास्त्रश्रवणे प्रवृत्तिजनकस्य तस्य किमुद्दीपकमिति चेत् यथा जनकस्य क्रीडार्थमुद्यानं गतस्याकस्मिकं सिद्धवाक्यश्रवणं यथा वा कार्यान्तरवशाच्छ्रवणशालायामागतस्य तत्रत्यशब्दश्रवणं यथा वा केनचिल्लौकिकेन निमित्तेन मित्रतां प्राप्तस्य कस्यचिच्छिष्टस्य वचनमिति गृहाणेत्यलं विस्तरेण । हि यस्मात्तौ रागद्वेषौ अस्य पुरुषस्य परिपन्थिनौ श्रेयोमार्गस्य विघ्नकरौ तस्कराविव पथि ॥ ३४ ॥

प० टी०—नन्वेवं प्राचीनस्वभावाधीना चेत्पुरुषस्य प्रवृत्तिस्तर्हि विधिनिषेधवैयर्थ्यं स्यादित्याह—इन्द्रियस्येति । मुख्येन्द्रियस्य मनस इन्द्रियस्यार्थरूपरसादिविषये रागद्वेषौ व्यवस्थिताववश्यंभाविनौ स्याताम् । स्वानुकूलेऽर्थे विषये रागः प्रीतिः प्रतिकूले च द्वेषस्तथापि तयोर्वशं नागच्छेत् तद्वशवर्ती न भवेत् हि यस्मात् कारणात् तौ रागद्वेषावस्य मुमुक्षोर्मनसः परिपन्थिनौ क्षोभकत्वेन शत्रुवदुपस्थितौ । नहि कश्चिल्लोकेऽपि वैरिवशवर्ती भवति दुःखहेतौ प्रवृत्त्यभावाद् । अथ तौ प्रकृतिबलेन वशं नयतस्तथापि मदाश्रयबलेन शास्त्राचार्यबलेन च वशं न गच्छेदित्यर्थः । ननु तत्रापि प्राक्संस्कार एव शरणमिति चेन्न "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः" इत्यादिवाक्यैरुपायस्य श्रुतिबोधितत्वात् ॥ ३४ ॥

रा० टी०—यदि सर्वाणि भूतानि स्वभावानुगुणमेव चेष्टन्ते निग्रहोऽकिंचित्करस्तर्हि 'मयि सर्वाणि' इत्यत्रेतिकर्तव्यतापूर्वं कर्मविधानं ये मे मतमित्यादिना तस्य फलोक्तिश्च व्यर्थेत्यत आह--इन्द्रियस्येति । जात्येकवचनम् । इन्द्रियाणां चक्षुरादीनामर्थेषु रूपादिषु इन्द्रियाणां रागद्वेषौ अनुकूले रागः प्रतिकूले द्वेषश्चेत्येवं रागद्वेषौ व्यवस्थितौ अवश्यंभाविनौ । लोभमोहमदमत्सराणामुपलक्षणम् । प्राधान्याद्द्वयोरेवोक्तिः । तदनुरूपा च प्राणिनां चेष्टेति निग्रहोऽकिंचित्करो यद्यपि तथापि तयो रागद्वेषयो रागादिषड्वर्गस्य वशं न गच्छेत् न प्राप्नुयात् । कुतः हि यस्मादस्य श्रेयोर्थिनस्तौ परिपन्थिनौ श्रेयोविघातकौ पापहेतू चात इत्यर्थः । निग्रहात्सद्यः फलाभावेप्यतिप्रयत्नवतो भवत्येव फलमिति भावः । उक्त हि 'संस्कारो बलवानेव' इत्यादि । एतच्च योग्यजनविषयं ध्येयम् ॥ ३४ ॥

**श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥**
**स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ३५ ॥**

त० टी०—ननु शास्त्राचार्योपदेशेनासन्मार्गान्निवृत्तस्येश्वराराधनाय निर्हिंसकसात्त्विकयदृच्छालाभसंतोषवन्यान्नादिजीवनरूपो मुनिधर्म एव श्रेयान्भाति, किं निरनुक्रोशेन राजसतामसरूपेण क्षत्रियधर्मेण युद्धेनेत्याशङ्क्याह—श्रेयानिति । स्वधर्मः स्ववर्णाश्रमनिबन्धनः शास्त्रविहितो यो धर्मः स विगुणोऽपि कियद्गुणहीनोऽपि सुष्ठु सर्वाङ्गतयाऽनुष्ठितात्परधर्मादन्यवर्णाश्रमोद्देशेन विहिताद्धर्मात् श्रेयान् प्रशस्यतरः, अतः स्वधर्मे स्थितस्य निधनं मरणमपि श्रेयः अतिशयेन प्रशस्यम् । कस्मात् परधर्मे जीवनादपि । यतः परधर्मो भयावहः परस्यान्यस्यान्येनानुष्ठितः शास्त्रीयोऽपि धर्मः तद्बुद्धिरपि पापवत् भयावहः नर-

कादिभयं तत्फलमावहति प्रापयतीति तथा 'पर्युदस्तो हि यो यस्माच्छास्त्रीयादपि कर्मणः। न स तत्राधिकारी स्याद्दानादौ दीक्षितो यथा' इति शास्त्रनियमात् ॥ ३५ ॥

म० टी०—ननु स्वाभाविकरागद्वेषप्रयुक्तपश्वादिसाधारणप्रवृत्तिप्रहाणेन शास्त्रीयमेव कर्म कर्तव्यं चेत्तर्हि यत्सुकरं भिक्षाशनादि तदेव क्रियतां किमतिदुःखावहेन युद्धेनेत्यत आह—श्रेयानिति। श्रेयान् प्रशस्यतरः स्वधर्मः यं वर्णमाश्रमं प्रति यो विहितः स तस्य स्वधर्मः विगुणोपि सर्वाङ्गोपसंहारमन्तरेण कृतोऽपि परधर्मात् स्वं प्रत्यविहितात् स्वनुष्ठितात् सर्वाङ्गोपसंहारेण संपादितादपि नहि वेदातिरिक्तमानगम्यो धर्मः येन परधर्मोऽप्यनुष्ठेयः धर्मत्वात् स्वधर्मवदित्यनुमानं तत्र मानं स्यात् 'चोदनालक्षणोऽर्थो धर्मः' इति न्यायात्। अतः स्वधर्मे किंचिदङ्गहीनेपि स्थितस्य निधनं मरणमपि श्रेयः प्रशस्यतरं परधर्मस्थस्य जीवितादपि स्वधर्मस्थस्य निधनं हि इह लोके कीर्त्यावहं परलोके च स्वर्गादिप्रापकम्। परधर्मस्तु इहाकीर्तिकरत्वेन परत्र नरकप्रदत्वेन च भयावहो यतः अतो रागद्वेषादिप्रयुक्तस्वाभाविकप्रवृत्तिवत्परधर्मोऽपि हेय एवेत्यर्थः। एवं तावद्भगवन्मताङ्गीकारिणां श्रेयःप्राप्तिस्तदनङ्गीकारिणां च श्रेयोमार्गभ्रष्टत्वमुक्तं श्रेयोमार्गभ्रंशेन फलाभिसन्धिपूर्वककाम्यकर्माचरणे च केवलपापमात्राचरणे च बहूनि कारणानि कथितानि ये त्वेतदभ्यसूयन्तः इत्यादिना। तत्रायं संग्रहश्लोकः 'श्रद्धाहानिस्तथाऽसूया दुष्टचित्तत्वमूढते। प्रकृतेर्वशवर्तित्वं रागद्वेषौ च पुष्कलौ॥ परधर्मरुचित्वं चेत्युक्ता दुर्मार्गवाहकाः' ॥ ३५ ॥

शं० टी०—ननु 'अभयं सर्वभूतेभ्यो दत्त्वा नैष्कर्म्यमाचरेत्' इतिस्मरणात्कर्मसंन्यासोऽपि धर्मः कर्तव्य एवेति चेत्सत्यं संन्यासोऽपि शास्त्रीय एव धर्मः कर्तव्यश्च मुमुक्षोस्तथापि 'स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः' इतिवचनादपक्वान्तःकरणस्य स धर्मो न भवति किंतु बहुजन्मानुष्ठितपुण्यपुञ्जैः परिपक्वान्तःकरणस्य सर्वतो विरक्तस्य कर्मणां मोक्षसाधनत्वमपश्यत एव मुमुक्षोर्विविदिषया कर्तव्यो धर्मः संन्यासः कृतार्थस्य वा विदुषः नतु मूढस्य कर्मस्वलसस्य दुःखबुद्ध्या ततोऽस्य संन्यासः परधर्म एव नतु स्वधर्मः, नापि च श्रेयोहेतुः किंतु कर्मैव स्वधर्मः श्रेयोहेतुश्चानुष्ठेय इत्याह—श्रेयानिति। वर्णाश्रमिणामयं परमोपदेशः क्रियते भगवता शृण्वन्तु मुमुक्षवः। स्वनुष्ठितात् यथाशास्त्रं सुसम्यङ्नियमेनानुष्ठितादाचरितात्परधर्माद्विगुणोऽपि व्यङ्गोऽप्यसम्यगनुष्ठितोऽपि स्वधर्मः कर्तव्यत्वेन स्वस्य यः शास्त्रेण विहितः स एव स्वधर्मः पुरुषस्य श्रेयान् श्रेष्ठतरः विध्युक्तत्वात्। यथा कर्मणः परधर्मत्वाद्यतेः स्नानजपस्तोत्रादिकर्मापेक्षया ज्ञानसाधनश्रवणाद्येकप्रयोजनः सर्वकर्मसंन्यास एव श्रेष्ठो धर्मस्तथा कर्मसंन्यासस्य परधर्मत्वाद्गृहिणोऽपि सर्वकर्मसंन्यासापेक्षया ज्ञानसाधनसत्त्वशुद्ध्येकप्रयोजनः कर्मयोग एव श्रेष्ठो धर्मः। एवमेवेतरेषां वर्णाश्रमिणां च परधर्मापेक्षया स्वधर्म एव श्रेयस्कर इत्यर्थः। किंच सुतरां परधर्मं परित्यज्य स्वल्पे व्यङ्गेपि वा स्वधर्मे नियमेन वर्तमानस्य निधनं मरणं श्रेयः श्रेयसे स्वर्गायाऽपवर्गाय वा भवति न क्वचिदप्यश्रेयसे नरकाय, स्वधर्मं संपरित्यज्य वागगोचरेऽपि परधर्मे वर्तमानस्य निधनं कचिच्छ्रेयसे न भवति किंतु परधर्मो भयावहः इति नियमेन सम्यगनुष्ठितोऽपि परधर्मो भयं यमदूतेभ्यो नरकं चावहति संपादयतीति भयावहः नरकगर्भवासादिदुःखप्रवाहहेतुरेव भवतीत्यर्थः ॥ ३५ ॥

श्री० टी०—तदेवं स्वाभाविकीं पश्वादिसदृशीं प्रकृतिं त्यक्त्वा स्वधर्मे प्रवर्तितव्यमित्युक्तम्। तर्हि स्वधर्मस्य युद्धादेर्दुःखरूपस्य यथावत्कर्तुमशक्यत्वात्परधर्मस्य च अहिंसादेः सुकरत्वाद्धर्मत्वाविशेषाच तत्र प्रवर्तितुमिच्छन्तं प्रत्याह—श्रेयानिति। किंचिदङ्गहीनोपि स्वधर्मः श्रेयान् प्रशस्यतरः स्वनुष्ठितात्सर्वाङ्गपूर्त्या कृतादपि परधर्मात्सकाशात्। तत्र हेतुः स्वधर्मे युद्धादौ प्रवर्तमानस्य निधनं मरणमपि श्रेष्ठं स्वर्गादिप्रापकत्वात्। परधर्मस्तु स्वस्य भयावहः निषिद्धत्वेन नरकप्रापकत्वात् ॥ ३५ ॥

स० टी०—ननु स्वाभाविकीं रागद्वेषहेतुप्रवृत्तिकीम् ।। त्यक्त्वा शास्त्रीयमेवेह कर्म कर्तव्यमस्ति चेत् ।। १ ।। तदा यदञ्जसा कर्तुं शक्यं भिक्षाशनादिकम् ।। तदेव क्रियतां किं मे युद्धेन श्रमदायिना ।। २ ।। मैवं स्वधर्मोऽयं वर्णमाश्रमं प्रति चोदितः ।। श्रुत्या स एव तस्यास्ति प्रशस्यतर आमृतेः ।। ३ ।। स सर्वाङ्गोपसंहारमन्तरेण कृतोऽपि च ।। स्वं प्रत्यविहिताद्धर्मात्सर्वाङ्गैः साधितादपि ।। ४ ।। अतः स्थितस्य स्वे धर्मे किंचिदङ्गानतुष्ठिते ।। अपि स्यान्मरणं श्रेयः परधर्मस्थजीवितात् ।। ५ ।। इह कीर्त्यावहो यस्मात्परलोके सुखावहः ।। स्वधर्मस्तत्र धीमद्भिः स्थेयं शास्त्रार्थवेदिभिः ।। ६ ।। परधर्मस्तु लोकानामिहाकीर्तिकरो यतः ।। परत्रानर्थदो घोरनरकादिप्रदानतः ।। ७ ।। तस्माद्रागादिवद्धयन्यधर्मो हेयो मुमुक्षुभिः ।।८।।३५।।

भा० टी०—ननु शास्त्रीयमेव कर्म कर्तव्यं चेत्तर्हि परधर्मोऽपि सुकरो धर्मत्वात् कुतो नानुष्ठेय इति चेत्तत्राह—श्रेयानिति । परधर्मात्साद्गुण्येन संपादितादपि स्वकीयो धर्मो विगतगुणोऽपि अनुष्ठीयमानः प्रशस्यतरः । स्वधर्मे स्थितस्य मरणमपि श्रेयः इहलोके कीर्त्यावहममुत्र स्वर्गप्रापकम् । परधर्मस्तु तद्विपर्ययेण भयप्रदः । यद्वा तत्तादिन्द्रियविषये स्थितयोः रागद्वेषयोरात्मप्रापक आत्मधर्मे विघ्नकर्तृत्वेऽपीन्द्रियधर्मे प्रावृत्तिके विषयसुखजनके तयोस्तत्त्वाभावात् इन्द्रियधर्म एवानुष्ठेयः किमात्मधर्मानुष्ठानेन विघ्नकर्तृयुक्तेनेति चेत्तत्राह—श्रेयानिति । परेषामिन्द्रियाणां धर्मात्प्रावृत्तिकात्स्वनुष्ठितात् सुगमत्वेनानुष्ठातुं शक्यादपि स्वधर्म आत्मधर्म अध्यात्मावगतिरूपः विगुणः प्राकृतगुणवियुक्तः मुक्तिहेतुत्वात्प्रशस्यतरः तत्र निधनं श्रेयः अपुनर्भवत्वात् । परधर्मो भयावहः अविद्यारूपतया संसारपातहेतुत्वात् ।। ३५ ।।

प० टी०—ननु धर्माविशेषाच्छमदमादिसंपदुपेतं ब्रह्मकर्मैवानुष्ठेयम्, स्वपरहिंसाप्रधानत्वेन दुःखनिदाने क्षत्रधर्मे कथं प्रवर्तितव्यमित्याशङ्क्याह—श्रेयानिति । सुष्ठु यथा भवति तथानुष्ठितात्परधर्माच्छमदमादिसंपदुपेताद्ब्राह्मणधर्मात्सकाशादुक्तप्रकारेण विगुणोऽपि स्वधर्मः श्रेयान् प्रशस्यतरः प्रोक्तः । यथा सौभाग्यादिगुणोपेतायाः परमातुः सकाशात्कुरूपापि स्वमाता हितावहा भवति । अतः स्वधर्मे मरणं श्रेयः श्रुतिबोधितस्वमार्गादिसाधनत्वात् । परधर्मस्तु भयावहः निषिद्धत्वेन निरयप्रापकत्वात् । अन्यथा वेदेन चातुर्वर्ण्यं कथं कल्प्येत ।। ३५ ।।

रा० टी०—ज्यायसी चेदित्यत्रार्जुनेन कर्मैव न कार्यं तत्रापि नरकाद्यनर्थहेतुरागद्वेषोपेततया घोरं युद्धाख्यं कर्म तु नैव कार्यमिति कृताक्षेपद्वयमध्ये प्राथमिको लोकेऽस्मिन्नित्यादिनोत्तारितः । द्वितीयस्त्वधुना युध्यस्व विगतज्वरः तयोर्न वशमागच्छेदित्याद्युक्त्या स्मारितः सन्परिह्रियते—श्रेयानिति । स्वधर्मः स्ववर्णाश्रमोचितो धर्मः विगुणः अङ्गहीनोपि स्वनुष्ठितात्सर्वाङ्गसाकल्येन कृतात्परधर्मादन्यवर्णाश्रमोचितधर्मादपि श्रेयानधिकतरः । कुतः स्वधर्मे युद्धादौ निधनमपि श्रेयः श्रेष्ठतरं परधर्मः वर्णाश्रमान्तरधर्मस्तु भयावहः निषिद्धत्वादनर्थप्रापको यतोऽत इत्यर्थः ।। ३५ ।।

## अर्जुन उवाच—अथ केन प्रयुक्तोऽयं पापं चरति पूरुषः ।।
## अनिच्छन्नपि वार्ष्णेय बलादिव नियोजितः ।। ३६ ।।

त० टी०—परधर्मो भयावहः इत्युक्तं तेन नरकादिभयहेतुः पापं सूचितम् । इदानीं पापाचारस्य हेतुं जिज्ञासुरर्जुन उवाच—अथेति । अथशब्दः प्रश्नान्तरे । परधर्मरुचिर्भयावहेति त्वदुक्तं मयाऽवधारितं किंचिदन्यत्पृच्छामीत्यर्थः । हे वार्ष्णेय परधर्मरुच्युपलक्षितं नरकादिफलकं पापं कर्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पूरुषः पापं चरति आचरति । तत्रापि बलादिव नियोजितः, इति मे ब्रूहीति शेषः ।। ३६ ।।

**म० टी०**–तत्र काम्यप्रतिषिद्धकर्मप्रवृत्तिकारणमपनुद्य भगवन्मतमनुवर्तितुं तत्कारणावधारणाय 'ध्यायतो विषयान्पुंसः' इत्यादिना पूर्वमनर्थमूलमुक्तम् । साम्प्रतं च प्रकृतेर्गुणसंमूढाः, इत्यादिना बहुविस्तरं कथितम् तत्र किं सर्वाण्यपि समप्राधान्येन कारणानि । अथवैकमेव मुख्यं कारणमितराणि तु तत्सहकारीणि केवलम् । तत्राद्ये सर्वेषां पृथक्पृथङ्निवारणे महान्प्रयासः स्यात्, अन्त्ये त्वेकस्मिन्नेव निराकृते कृतकृत्यता स्यादित्यतो ब्रूहि मे केन हेतुना प्रयुक्तः प्रेरितोयं त्वन्मताननुवर्ती सर्वज्ञानविमूढः पुरुषः पापमनर्थानुबन्धि सर्वं फलाभिसन्धिपुरःसरं काम्यं चित्रादि शत्रुवधसाधनं च श्येनादि प्रतिषिद्धं च कलञ्जभक्षणादि बहुविधं कर्माचरति स्वयं कर्तुमनिच्छन्नपि न तु निवृत्तिलक्षणं परमपुरुषार्थानुबन्धि त्वदुपदिष्टं कर्मेच्छन्नपि करोति । न च पारतन्त्र्यं विनेत्थं संभवति । अतो येन बलादिव नियोजितो राज्ञेव भृत्यस्त्वन्मतविरुद्धं सर्वानर्थानुबन्धित्वं जानन्नपि तादृशं कर्माचरति तमनर्थमार्गप्रवर्तकं मां प्रति ब्रूहि ज्ञात्वा समुच्छेदायेत्यर्थः । हे वार्ष्णेय वृष्णिवंशे मन्मातामहकुले कृपयावतीर्णेति संबोधनेन वार्ष्णेयीसुतोहं त्वया नोपेक्षणीय इति सूचयति ॥ ३६ ॥

**शं० टी०**–यद्यपि ध्यायतो विषयानिति इन्द्रियस्येन्द्रियस्य इति च पुरुषस्य जननमरणाद्यनर्थपरंपरागमनकारणं निरूपितं तथापि विशेषतस्तत्स्वरूपं तदधिष्ठानं तज्जयोपायं च बिज्ञातुकामोऽर्जुनः स्वयं विस्मृतवत्तदेव पृच्छति । संसारकारणे विज्ञाते पाण्डितैस्तदुपायेन परिहर्तुं शक्यत इत्यर्जुन उवाच–अथेति । अथशब्दः पृथक्प्रश्नारम्भार्थः। ब्रह्मविदां ब्रह्मानन्दामृतं वर्षतीति वृष्णिः सम्यग्बोधस्तेनावगम्यते इति वार्ष्णेयः परमात्मा श्रीभगवान् तस्य संबुद्धिर्हे वार्ष्णेय बलवता राज्ञा चान्येन वा बलात्कारेण नियोजितः प्रेष्य इव कार्याकार्यज्ञोऽप्ययं पुरुषः स्वयं फलं पापसाध्यमनिच्छन्नपि पापमाचरति केन प्रयुक्तोऽस्मिन् कार्यकारणसंघाते बलवता केन प्रेरितो भूत्वाऽयुक्तमपि करोति तं ब्रूहीत्यर्थः ॥ ३६ ॥

**श्री० टी०**–तयोर्न वशमागच्छेदित्युक्तम्, तदेतदशक्यं मन्वानोऽर्जुन उवाच–अथ केनेति । वृष्णेर्वंशेऽवतीर्णो वार्ष्णेयः हे वार्ष्णेय अनर्थरूपं पापं कर्तुमनिच्छन्नपि केन प्रयुक्तः प्रेरितोऽयं पुरुषः पापं चरति । कामक्रोधौ विवेकबलेन निरुन्धतोऽपि पुरुषस्य पुनः पापे प्रवृत्तिदर्शनादन्योऽपि तयोर्मूलभूतः कश्चित्प्रवर्तको भवेदिति संभावनायां प्रश्नः ॥ ३६ ॥

**स० टी०**–यद्यप्यनर्थमूलं प्राग्ध्यायतो विषयानिति ॥ प्रोक्तं तथाधुना रागद्वेषौ शत्रू प्रकीर्तितौ ॥ १ ॥ प्रकृतेर्गुणसंमूढा इत्यादौ बहुविस्तरात् ॥ पुंसः पृथक्पृथक् तत्र सर्वेषां विनिवारणे ॥ २ ॥ महाप्रयास एव स्यादतः सर्वस्य कारणम् ॥ किमेकं यन्निवृत्त्या स्यात्कृतकृत्यत्वमञ्जसा ॥ ३ ॥ ममेत्याशयवानाह हरिं प्रत्यर्जुनो वचः ॥ केनायं हेतुभूतेन प्रेरितः पुरुषोऽवशः ॥ ४ ॥ अनिष्टहेतुकं कर्म निषिद्धं चरति स्फुटम् ॥ अनिच्छन्नप्ययं कर्तुं भृत्यो राज्ञेव येन सः ॥ ५ ॥ बलान्नियोजितो जानन्नप्यनिष्टानुबन्धि तत् ॥ कर्मानुचरतीत्येनं प्रेरकं ब्रूहि मां प्रति ॥६॥ वृष्णिवंशेऽवतीर्णत्वान्नोपेक्ष्योऽहं हरे त्वया ॥७॥३६॥

**भा० टी०**–ध्यायतो विषयान् रागद्वेषौ ह्यस्य परिपन्थिनाविति पूर्वग्रन्थेन संसारपातहेतुभूतानि विस्तरेण भगवतोक्तानि । तत्र संक्षिप्तं निश्चितमिदमेवेति ज्ञातुमिच्छन्नर्जुन उवाच ज्ञाते हि तस्मिंस्तदुच्छेदाय प्रयत्नं कुर्यामित्यभिप्रायेण–अथेति । केन हेतुभूतेन प्रयुक्तः प्रेरितः सन्ननिच्छन्नपि बलादिव नियोजितो राज्ञेव भृत्योऽयं पुरुषः पापमाचरति यथा त्वमजोऽपि केनचिदतिभक्तेन प्रार्थितः वृष्णिकुले जन्मलब्धवानसि तथेति सूचयन्नाह–वार्ष्णेयेति । तं वैरिणं ब्रूहि इत्यर्थः ॥ ३६ ॥

**प० टी०**–अथ तयोर्न वशमागच्छेदिति यदुक्तं तदशक्यं मन्यमानोऽर्जुनः पृच्छति–अथेति । भो वा-

ष्र्णेय वृष्णिकुलोद्भव कृष्ण पापं कर्तुमिच्छन्निव पुरुषः केन प्रयुक्तः सन् पापं चरति । किंवत् बलादिव बलात्कारेण नियोजित इवाज्ञस्त इव यथा त्वयाहमिति सूचयन् वार्ष्णेयेति संबुद्धिः ॥ ३६ ॥

रा० टी०–तयोर्न वशमागच्छेदित्यत्रातिप्रयत्नवतः पापहेत्वरिषड्वर्गजयः शक्य इत्युक्तम् । तेषु को बलवान् तं महाप्रयत्नेन जेष्यामीतिभावेन पृच्छति—अथेति । मयि संन्यस्य कर्माणीत्यादावुक्तसेति-कर्तव्यताककर्मकर्तव्यतारूपप्रकृतप्रमेये पापहेतुप्रश्नोऽनुपयुक्तः । तथापि तयोर्न वशमित्यर्धे कामाद्यरिषड्वर्गस्य पापहेतुत्वोक्त्या स्मारितम् । तेषु प्रबलपापहेतुप्रश्नोयं प्रासङ्गिक इतिभावेन गीताकृता प्रकृतादर्थादर्थान्तर-द्योतकोऽथशब्दः प्रयुक्तः । यद्वा प्रकृतेः क्रियमाणानीत्यत्रेश्वरस्य सर्वप्रेरकत्वोक्त्या तत्प्रेरकत्वस्य पार्थस्य देवत्वेन देवानां प्रेरकत्वस्य च ज्ञाततया तत्र प्रश्नायोगात् । इन्द्रियस्येत्यत्र रागशब्दितकामाद्यरि-षड्वर्गस्य प्रवर्तकत्वोक्त्या परमेश्वरादेवजाताचाथानन्तरं कामादिषट्सु बलवत्प्रश्नोयमिति द्योतनादानन्तर्य-वाच्येवायमथशब्दः । तथाचायमर्थः । अथ परमेश्वराद्देवेभ्यश्चानन्तरमयं पुरुषः पापाचारमनिच्छन्नपि बला-न्नियोजित इव पापं चरति स कामादिषु केन बलवता प्रयुक्तः प्रेरितश्चरति । हे वार्ष्णेय वृष्णिकुलोद्भवेति ॥३६॥

**श्रीभगवानुवाच–काम एष क्रोध एष रजोगुणसमुद्भवः ॥**
**महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥ ३७ ॥**

त० टी०–एवं पृष्टे ध्यायतो विषयानित्यादिना सङ्गात्सञ्जायते कामः इत्युक्त इन्द्रियस्येन्द्रियस्यार्थे इत्यत्र च रागशब्देनाभिहितः काम एव पापाचारहेतुर्महाञ्छत्रुरित्युत्तरं श्रीभगवानुवाच–काम इति । यस्त्वया पापाचरणे प्रयोजकः पृष्टः स एष इन्द्रियार्थे रागपर्यायः काम एव । ननु क्रोधोऽपि हिंसाद्यनर्थहेतुरुक्त इति चेत्सत्यं सोऽपि न ततो भिन्नः, किन्तु क्रोध एष इति काम एव केनचित्प्रतिहतः क्रोधरूपेण परिणमते । अतः क्रोधोऽपि काम एव । कामजय एव क्रोधजयः न तज्जये पृथग्यत्नः कर्तव्य इति भावः । तज्जयोपायदर्शनाय तत्कारणमाह–रजोगुणसमुद्भव इति । रजोगुणात्सम्यगुद्भवति उत्पद्यते इति रजोगुणसमुद्भवः । एतेन सत्त्ववृद्ध्या रजोऽभिभवद्वारेण कामजयो भवेदिति सूचितम्। तस्य दुर्जेयतामाह—महाशन इति । महदशनं यस्य बहुधनधान्यस्त्रीराज्यलाभेऽपि हविषाग्निरिव वर्धते नतु शाम्यति । अत एव महापाप्मा केनाचिन्निवारितः क्रोधात्मना परिणमय्य पितृभ्रातृगुर्वादि-हिंसनमपि दोषमगणय्य कारयति । अत एनमिह श्रेयोमार्गे वैरिणं विद्धि ॥ ३७ ॥

म० टी०–एवमर्जुनेन पृष्टे "अथो खल्वाहुः काममय एवायं पुरुषः" इति "आत्मैवेदमग्र आसी-देक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीय" इत्यादिश्रुतिसिद्धमु-त्तरं श्रीभगवानुवाच–काम इति । यस्त्वया पृष्टो हेतुर्बलादनर्थमार्गे प्रवर्तकः स एष काम एव महान् शत्रुः यन्निमित्ता सर्वानर्थप्राप्तिः प्राणिनाम् । ननु क्रोधोऽप्यभिचारादौ प्रवर्तको दृष्ट इत्यत आह–क्रोध एषः काम एव केनाचिद्धेतुना प्रतिहतः क्रोधत्वेन परिणमतेऽतः क्रोधोप्येष काम एव। एतस्मिन्नेव महावैरिणि निवारिते सर्वपुरुषार्थप्राप्तिरित्यर्थः । तन्निवारणोपायज्ञानाय तत्कारणमाह–रजोगुणसमुद्भवः । दुःखप्रवृत्तिबलात्मको रजोगुण एव समुद्भवः कारणं यस्य, अतः कारणानुविधायित्वात् कार्यस्य सोपि तथा । यद्यपि तमोगुणोपि तस्य कारणं तथापि दुःखे प्रवृत्तौ च रजस एव प्राधान्यात्तस्यैव निर्देशः । एतेन सात्त्विक्या वृत्त्या रजसि क्षीणे सोऽपि क्षीयत इत्युक्तम् । अथवा तस्य कथमनर्थमार्गे प्रवर्तकत्वमित्यत आह–रजोगुणस्य प्रवृत्त्यादिलक्षणस्य समुद्भवो यस्मात्, कामो हि विषयाभिलाषात्मकः स्वयमुद्भूतो रजः प्रवर्तयन्पुरुषं दुःखा-त्मके कर्मणि प्रवर्तयति । तेनायमवश्यं हन्तव्य इत्यभिप्रायः । ननु सामदानभेददण्डाश्चत्वार उपायास्तत्र

प्रथमत्रिकस्यासंभवे चतुर्थो दण्डः प्रयोक्तव्यो न तु हठादेवेत्याशङ्क्य त्रयाणामसंभवं वक्तुं विशिनष्टि-**महाशनो महापाप्मेति** । महदशनमस्येति महाशनः ' यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ' इति स्मृतेः । अतो न दानेन सन्धातुं शक्यो नापि सामभेदाभ्यां यतो महापाप्माऽत्युग्रस्तेन हि बलात्प्रेरितोऽनिष्टफलमपि जानन्पापं करोति । अतो विद्धि जानीहि एनं काममिह संसारे वैरिणम् । तदेतत्सर्वं विवृतं वार्तिककारैः " आत्मैवेदमग्र आसीत् " इति श्रुतिव्याख्याने-' प्रवृत्तौ च निवृत्तौ च यथोक्तस्याधिकारिणः । स्वातन्त्र्ये सति संसारसृतौ कस्मात्प्रवर्तते ॥ ननु निःशेषविध्वस्तसंसारानर्थवर्त्मनि । निवृत्तिलक्षणे वाच्यं केनायं प्रेर्यतेऽवशः ॥ अनर्थपरिपाकत्वमपि जानन्प्रवर्तते । पारतन्त्र्यमृते दृष्टा प्रवृत्तिर्नेदृशी क्वचित् ॥ तस्माच्छ्रेयोर्थिनः पुंसः प्रेरकोऽनिष्टकर्मणि । वक्तव्यस्तन्निरासार्थमित्यर्था स्यात्परा श्रुतिः ॥ अनाप्तपुरुषार्थोऽयं निःशेषानर्थसंकुलः । इत्यकामयतानाप्तान्पुमर्थान्साधनैर्जडः ॥ जिहासति तथानर्थानविद्वानात्मनि श्रितान् । अविद्योद्भूतकामः सन्नथो खल्विति च श्रुतिः ॥ अकामतः क्रियाः काश्चिद्दृश्यन्ते नेह कस्यचित् । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ काम एष क्रोध एष इत्यादिवचनं स्मृतेः । प्रवर्तको नापरोऽतः कामादन्यः प्रतीयते ' इति । अकामतः इति मनुवचनम् । अन्यत्स्पष्टम् ॥ ३७ ॥

**शं० टी०**—'अकामस्य क्रिया काचिद्दृश्यते नेह कर्हिचित् । यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्' इति न्यायेन पुंसः सकलकर्माचरणकारणं सर्वानर्थबीजं काम एवेति बोधयितुं श्रीभगवानुवाच—**काम एष इति** । सर्वेषां प्रवृत्तेः काममूलत्वात्कामः सर्वप्रत्यक्ष इत्यभिप्रायेण एष इति पुरोनिर्देशः । योग्यत्वायोग्यत्वविचारमन्तरेण वस्तु दृष्टं श्रुतं च कामयति पुमांसमिति कामः वैषयिकी प्रबलेच्छाऽत्र कामशब्देनोच्यते । एष कामः यः पुंसः संसारकारणं स एष काम एव । केनाचित्स्वविषये प्रतिबद्धे क्रोधात्मना परिणमते ततः क्रोधोऽप्येष काम एव । स्वयं रजोगुणसमुद्भवः रजसः गुणो रागो रञ्जनात्मिका वैषयिकी सामान्येच्छा स एव । विषयसन्निधाने काममुद्भावयतीति कामो रजोगुणसमुद्भवः । यद्वा ' प्रज्ञां तु सात्त्विकीं प्राहुस्तामसीं तु विचित्तताम् । क्रियां तु राजसीं प्राहुर्गुणतत्त्वविदो बुधाः ' इतिवचनात्क्रिया रजोगुणस्तस्य समुद्भवो यस्मात्स रजोगुणसमुद्भवः काम एव प्रवृत्तिहेतुरित्यर्थः । ' न जातु कामः कामानामुपभोगेन शाम्यति' इतिवचनान्महदियत्ताशून्यमशनमुपभोगलक्षणं यस्य स महाशनः कदाचित्तृप्तिरहित इत्यर्थः । तत एव महापाप्मा महान् पाप्मा दोषो यस्मात्पुरुषस्यायाति स महापाप्मा । यतः कामाविष्टः स्वसारमप्यारोढुमिच्छति चण्डालादप्यर्थं गृह्णाति क्रुद्धो गुरुमप्याक्रोशति गामपि च हन्त्यतः कामस्य युक्तं महापाप्मत्वमित्यर्थः । तस्मात्त्वमिह संसारे मुमुक्षोरेनं काममेव वैरिणं विद्धि मुक्तिप्रतिबन्धकमेतमेव विजानीहीत्यर्थः ॥ ३७ ॥

**श्री० टी०**—अत्रोत्तरं श्रीभगवानुवाच—**काम एष इति** । यस्त्वया पृष्टो हेतुरेष काम एव । ननु क्रोधोपि पूर्वं त्वयोक्तः इन्द्रियस्येन्द्रियस्येत्यत्र, सत्यं नासौ ततः पृथक् किंतु क्रोधोऽप्येष एव काम एव । केनचित् प्रतिहतः क्रोधात्मना परिणमते अतः पूर्वं पृथक्त्वेनोक्तोऽपि क्रोधः कामज एवेत्यभिप्रायेण कामैनैकीकृत्योच्यते रजोगुणात्समुद्भवतीति तथा । अनेन सत्त्ववृद्ध्या रजसि क्षयं नीते सति कामोऽपि क्षीयत इति सूचितम् । एनं काममिह मोक्षमार्गे वैरिणं विद्धि । अयं च वक्ष्यमाणक्रमेण हन्तव्य एव यतो नासौ दानेन सन्धातुं शक्य इत्याह—**महाशनः** । महदशनं यस्य दुष्पूर इत्यर्थः । नच साम्ना संधातुं शक्यः यतो महापाप्मा अत्युग्रः ॥ ३७ ॥

**स० टी०**—एवं पृष्टेऽर्जुनेनाह भगवानुत्तरं वचः ॥ अथो खल्वाहुरित्यादिश्रुतिसिद्धमसंशयम् ॥ १ ॥ शृणु तं वैरिणं यं त्वं पृच्छस्यत्यन्तदुःसहम् ॥ बलादनर्थमार्गेऽस्मिन्काम एष प्रवर्तकः ॥ २ ॥ सर्वानर्थप-

रिप्राप्तिनिमित्तं शत्रुरात्मनः ॥ केनचिद्धेतुना कामः प्रतिबद्धः स एव हि ॥ ३ ॥ क्रोधः परिणतो भाति तस्मिन्कामे निवारिते ॥ सर्वश्रेयःपरिप्राप्तिस्ततोऽस्य शृणु कारणम् ॥ ४ ॥ चलप्रवृत्तिदुःखात्मा यस्य हेतू रजोगुणः ॥ यद्वा रजोगुणस्यायं कारणं लोभरूपधृक् ॥ ५ ॥ नायं सामादिभिः साध्यो हन्तव्यो दण्डतो रिपुः ॥ महाशनत्वाद्दानेन संधातुं नैष शक्यते ॥ ६ ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ॥ नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत् ॥ ७ ॥ संधातुं सामभेदाभ्यामत्युग्रत्वान्न शक्यते ॥ तेनायं प्रेरितो जन्तुर्महापापे प्रवर्तते ॥ ८ ॥ अतो जानीहि संसारे काममेनं हि वैरिणम् ॥ तदेतद्विवृतं सर्वं वार्तिके श्रीसुरेश्वरैः ॥ ९ ॥ आत्मैवेदमिति श्रुत्या व्याख्याने निर्मलैः पदैः ॥ प्रवृत्तौ च निवृत्तौ च यथोक्तस्याधिकारिणः ॥ १० ॥ स्वातन्त्र्ये सति संसारसृतौ कस्मात्प्रवर्तते ॥ ननु निःशेषविध्वस्तसंसारानर्थवर्त्मनि ॥ ११ ॥ निवृत्तिलक्षणे वाच्यं केनायं प्रेर्यतेऽवशः ॥ अनर्थपरिपाकत्वमपि जानन्प्रवर्तते ॥ १२ ॥ पारतन्त्र्यमृते दृष्टा प्रवृत्तिर्नेदृशी क्वचित् ॥ तस्माच्छ्रेयोऽर्थिनः पुंसः प्रेरकोऽनिष्टकर्मणि ॥ १३ ॥ वक्तव्यस्तन्निरासार्थमित्यर्था स्यात्परा श्रुतिः ॥ अनाप्तपुरुषार्थोऽयं निःशेषानर्थसंकुलः ॥ १४ ॥ इत्यकामयताना प्तान्पुमर्थान्साधनैर्जडः ॥ जिहासति तथानर्थानविद्वानात्मनि श्रितान् ॥ १५ ॥ अविद्योद्भूतिकामः सन्नथो खल्विति च श्रुतिः ॥ अकामतः क्रियाः काश्चिद्दृश्यन्ते नेह कस्यचित् ॥ १६ ॥ यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥ काम एष क्रोध एष इत्यादिवचनं स्मृतेः ॥ १७ ॥ प्रवर्तको नापरोऽतः कामादन्यः प्रतीयते ॥ १८ ॥ ॥ ३७ ॥

भा० टी०—एवं पृष्टः श्रीभगवान् 'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा' इत्युक्तं समग्रमैश्वर्यादिषट्कं नित्यमप्रतिबन्धेन यस्मिन्वासुदेवे वर्तते 'उत्पत्तिं निधनं चैव भूतानामागतिं गतिम् । वेत्ति विद्यामविद्यां च स वाच्यो भगवानिति' इत्युत्पत्त्यादिविषयं च विज्ञानं यस्य स वासुदेवो भगवानितिशब्दवाच्य उवाचोत्तरमुक्तवान्—काम इति । यस्त्वया वैरी पृष्टः एष कामः शत्रुर्यन्निमित्ता सर्वानर्थप्राप्तिर्लोकस्य । ननु क्रोधोऽप्यनर्थहेतुर्लोके दृश्यते इत्यत आह—स एव कामः कुतश्चिन्निमित्तात्प्रतिहतः क्रोधत्वेन परिणमतेऽतः क्रोधोऽप्येष एव शत्रोः पुत्रत्वादप्ययं शत्रुरित्याह । रजोगुणः समुद्भवो यस्य सः । यद्वा कथं शत्रुतां करोतीत्यत आह--रजोगुणस्य समुद्भवः कारणं कामो रजः प्रवर्तयन्पुरुषं प्रवर्तयति । ननु विषयभोगेन तृप्तिं नीतः शत्रुत्वं जिहास्यतीति चेत्तत्राह--महदशनमस्य सः । तदुक्तम् 'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः । नालमेकस्य तत्सर्वमिति मत्वा शमं व्रजेत्' इति । ननु लोके यथा स्वेनापराधितः कश्चिच्छत्रुत्वं भजति तथायमप्यतोऽपराधं तस्य न करिष्यामीति चेत्तत्राह — महाशनत्वान्महापाप्माऽत्युग्रो विनैवापराधं स्वेनोपकृतश्च नाशयतीत्यर्थः । अतः काममेव परमं वैरिणं विद्धि ज्ञात्वा च तत्परिहाराय यतस्वेति भावः ॥ ३७ ॥

प० टी०—अत्रोत्तरं भगवानाह—काम एष इति । यदा विवेकिनोऽपि पुरुषस्य सत्त्वगुणः प्रच्छन्नो भवति तदा रजोगुणः प्रादुर्भवति तस्मात्कामक्रोधावुत्पद्येते । तयोः क्रमेण स्वरूपमाह—महाशन इति । तत्र कामो महाशनो दुष्पूरत्वात् क्रोधस्तु महापाप्मातिक्रूरत्वादनयोरुभयोर्दुर्जेयत्वं व्यञ्जितम् । एवमेनं कामं क्रोधं वा वैरिणं विद्धि । तथाच शत्रुरेव पापे प्रवर्तयति न तु मित्रम् । तथा त्वं बन्धुसुहृद्विषयकामेन स्वधर्मत्यागरूपेण पातके प्रवर्तस इत्यर्थः ॥ ३७ ॥

रा० टी०—काममूलत्वात्सर्वेषां स एव बलवानित्याह—काम एष इति । एष त्वया पृष्टः पुरुषस्य पापेषु बलवान्प्रवर्तक इत्यनूद्य काम इति विधीयते । एष कामः एष क्रोधः कामात्क्रोधोऽभिजायत इत्युक्तेः,

कामजत्वात्क्रोधस्य कार्यकारणयोः " गोभिः श्रीणीत मत्सरम् " इत्यादाविवाभेदोपचारेणेयमुक्तिः । स च क्रोधो रजोगुणात्समुद्भवतीति स तथा कामनिमित्तको रजोगुणपरिणाम इत्यर्थः । क्रोध इत्युपलक्षणम्। तथाच कामनिवृत्तौ तन्मूलाः क्रोधादयः पापहेतवो निवर्तितुं शक्यन्त इति कामनिवृत्तावेवातिप्रयत्नः कार्य इति भावः । कामस्य यावदपेक्षितं दत्त्वा जेतव्यः स इत्यतः कामं विशिनष्टि--**महाशन इति** । महाशनः महदशनं भोग्यं विषयो यस्य स तथा महत्पाप्म पापं ब्रह्महत्यादिरूपं यस्मात्स तथा । इह ऐहिकामुष्मिक-पुरुषार्थविषये एनं कामं वैरिणं नित्यमशुभेष्वेव प्रवर्तकतया मोक्षविरोधित्वात् शत्रुभूतं विद्धि जानीहि । कामाभिमानी कालनेमिर्ज्ञेयः ॥ ३७ ॥

## धूमेनाव्रियते वह्निर्यथाऽऽदर्शो मलेन च ॥
## यथोल्बेनावृतो गर्भस्तथा तेनेदमावृतम् ॥ ३८ ॥

**त० टी०**—तस्य वैरित्वं दृष्टन्तैरुपपादयति—**धूमेनेति** । यथा धूमेन वह्निराव्रियते आच्छाद्यते यथा वाऽऽदर्शो मलेन, यथा च उल्बेन गर्भवेष्टनेन चर्मणा जरायुणा गर्भ आवृतः तथा तेनेद-मावृतम् ॥ ३८ ॥

**म० टी०**—तस्य महापाप्मत्वेन वैरित्वमेव । वैरित्वमेव दृष्टान्तैः स्पष्टयति—**धूमेति** । तत्र शरीरारम्भा-त्प्रागन्तःकरणस्यालब्धवृत्तिकत्वात्सूक्ष्मः कामः शरीरारम्भकेण कर्मणा स्थूलशरीरावच्छिन्ने लब्धवृत्तिकेन्तः-करणे कृताभिव्यक्तिः सन् स्थूलो भवति स एव विषयस्य चिन्त्यमानावस्थायां पुनः पुनरुद्रिच्यमानः स्थूलतरो भवति । स एव पुनर्विषयस्य भुज्यमानतावस्थायामत्यन्तोद्रेकं प्राप्तः स्थूलतमो भवति। तत्र प्रथमाव-स्थायां दृष्टान्तः, यथा धूमेन सहजेनाप्रकाशात्मकेन प्रकाशात्मको वह्निराव्रियते, द्वितीयावस्थायां दृष्टान्तः यथादर्शो मलेनासहजेनादर्शोत्पत्त्यनन्तरमुद्रिक्तेन । चकारोऽवान्तरवैधर्म्यसूचनार्थः आव्रियत इति क्रियानुकर्षणार्थश्च । तृतीयावस्थायां दृष्टान्तः, यथोल्बेन जरायुणा गर्भवेष्टनचर्मणातिस्थूलेन सर्वतो निरुध्यावृतस्तथा प्रकारत्रयेणापि तेन कामेनेदमावृम् । अत्र धूमेनावृतोपि वह्निर्दाहादिलक्षणं स्वकार्यं करोति । मलेनावृतस्त्वादर्शः प्रतिबिम्बग्रहणलक्षणं स्वकार्यं न करोति । स्वच्छताधर्ममात्रतिरोधानात् स्वरूपतस्तूपलभ्यत एव । उल्बेनावृतस्तु गर्भो न हस्तपादादिप्रसारणरूपं स्वकार्यं करोति न वा स्वरूपत उपलभ्यत इति विशेषः ॥ ३८ ॥

**शं० टी०**—यदुक्तं मुमुक्षोर्मुक्तिप्रतिबन्धकत्वेन वैरित्वं कामस्य तदेव विस्पष्टयति--**धूमेनेति** द्वाभ्याम् । धूमेनाऽप्रकाशस्वरूपेण स्वयंप्रकाशस्वरूपोऽपि वह्निर्यथाऽऽव्रियते आवृतो भवति । मलेन लेपनस्वभावेन रजसा स्वयं बिम्बप्रकाशनेनाह्लादकर आदर्शश्च यथाऽऽव्रियते । अचेतनेनोल्बेन चेतनो गर्भः शिशुर्यथा ऽऽवृतो भवति । तथाऽप्रकाशरूपेण लेपकेन अचेतनेन च तेन पूर्वोक्तेन कामेन प्रकाशस्वरूपमात्मप्रकाशने-नानन्दकरमाभासव्याप्त्या चेतनतुल्यमिदं पुरुषस्य ज्ञानमावृतं तिरोहितमित्यर्थः ॥ ३८ ॥

**श्री० टी०**--कामस्य वैरित्वं दर्शयति--**धूमेनेति** । यथा धूमेन सहजेन वह्निराव्रियते आच्छाद्यते । यथा वा आदर्शो मलेनागन्तुकेन । यथा च उल्बेन गर्भवेष्टन चर्मणा गर्भः सर्वतो निरुद्ध्यावृतस्तथा प्रकारत्रयेणापि तेन कामेनावृतमिदम् ॥ ३८ ॥

**स० टी०**--महापाप्मतया तस्य स्पष्टयत्यतिवैरिताम्॥ दृष्टान्तैस्तत्र कामोऽयं चतुर्धा प्रोच्यते क्रमात् ॥ १॥ मनसोलब्धवृत्तित्वाच्छरीरारम्भतः पुरा ॥ सूक्ष्मः कामः शरीरे चारब्धे स्थूलः सवृत्तिके ॥ २ ॥ विषये चिन्त्यमाने स्यात्कामः स्थूलतरस्ततः ॥ भोगस्यावसरेऽत्यन्तोद्रिक्तस्थूलतमस्ततः ॥ ३ ॥ अप्रकाशेन धूमेन सहजेनानलो यथा ॥ प्रकाशात्मा वृतो दाहमुखं कार्यं करोति च ॥४॥ मलेनागन्तुकेनासावादर्शस्त्वावृतः

स्वकम् ॥ प्रतिच्छायाग्रहं कार्यं न करोति यथा स्फुटम् ॥ ५ ॥ स्वच्छताधर्ममात्रस्य तिरोधानवशात्स च ॥ उपलभ्यत एवासौ स्वरूपेण च दर्पणः ॥ ६ ॥ जरायुणा वृतो गर्भः स्वरूपेण न लभ्यते ॥ हस्तपादादिचेष्टां च न करोति यथेष्टतः ॥ ७ ॥ तत्प्रकारत्रयेणेदं कामेनाच्छाद्यते तथा ॥ ८ ॥ ३८ ॥

भा० टी०—तस्य शत्रुत्वं स्पष्टयति—धूमेनेति । यथा धूमेन सहजेनाप्रकाशात्मकेनाग्निः प्रकाशात्मको यथा वाऽऽदर्शो मलेनाव्रियते यथोल्बेन गर्भवेष्टनेन जरायुणा गर्भ आच्छादितस्तथा तेन कामेनेदं ज्ञानमावृतम् । प्रथमदृष्टान्तेनात्मस्वरूपप्रकाशात्मकत्वं द्वितीयेन यथावद्विषयस्वरूपप्रतिभानात्मकत्वं तृतीयेनोहापोहात्मकत्वं ज्ञानस्यावृतमिति बोध्यम् ॥ ३८ ॥

प० टी०—अथ सत्त्वप्रच्छादने दृष्टान्तत्रयमाह—धूमेनेति । यथार्द्रेन्धनोपाधिप्रसूतेन धूमेनाग्निराव्रियते यथा वा प्रतिबिम्बदर्शक आदर्शो मलेनाच्छिद्यते यथोल्बेन गर्भावरणीभूतेन चर्मणा गर्भ आव्रियते, तथा तेन कामेन क्रोधेन चेदं सत्त्वोत्पन्नं ज्ञानमाव्रियते ॥ ३८ ॥

रा० टी०—अशुभप्रेरकेषु क्रोधाद्यभिमान्यसुरेषु कामः कथं बलवानित्यत आह—धूमेनेत्यादिश्लोकद्वयेन । वह्निर्यथा धूमेनाव्रियते तथा तेन कामेनेदमुत्तमजीवजातं किंचिदावृतम् । यथा चादर्शो दर्पणो मलेनावृतस्तथेदं मध्यमजीवजातं तेन कामेनाधिकमावृतम् । यथा च गर्भ उल्बेन गर्भवेष्टनचर्मणाव्रियते आच्छाद्यते तथेदमधमजीवजातं तेन कामेनात्यन्तमावृतम् । त्रिविधस्यापि जीवजातस्य यथायोग्यं यथावत्तया परावरतत्त्वज्ञानप्रतिबन्धकः काम इत्यर्थः । यद्वा इदमित्यनेनेश्वरान्तःकरणजीवाख्यं वस्तुत्रयं ग्राह्यम् । वह्निर्यथा धूमेनाव्रियते तथेश्वरो जीवगतकामेनावृतः । प्रकाशरूपोप्यग्निर्धूमेनावृतोऽन्यैर्यथा न दृश्यते तथेश्वरः स्वयं सर्वं जानन्नपि नान्यैर्ज्ञायत इत्यर्थः । आदर्शो मलेनेवान्तःकरणं कामेनावृतं, यथाऽदर्शो मलेनावृतो मुखाद्यभिव्यक्तिहेतुर्न भवति तथा जीवान्तःकरणं कामावृतं सदीश्वरं जीवं वा न प्रकाशयतीत्यर्थः । यथोल्बेनावृतो गर्भस्तथा कामेनावृतो जीव उल्बेन वेष्टितो गर्भो यथा व्यापाराक्षमस्तथा जीवोऽपि कामेनावृतो नेश्वरादिज्ञाने क्षम इत्यर्थः ॥ ३८ ॥

**आवृतं ज्ञानमेतेन ज्ञानिनो नित्यवैरिणा ॥**
**कामरूपेण कौन्तेय दुष्पूरेणानलेन च ॥ ३९ ॥**

**त० टी०—तदिदंशब्दार्थं स्वयमेव वदन् दार्ष्टान्तं स्पष्टयति—आवृतमिति । एतेन कामरूपेण ज्ञानिनो नित्यवैरिणा धर्मभूतं ज्ञानमावृतम् । कामरूपेण किंरूपेण हे कौन्तेय दुष्पूरेण दुःखेन पूर्यते इति दुष्पूरस्तेन अनलेन चेति । च इवार्थे । अनलेन वह्निनेवेत्यर्थः । यथाऽनलो हविषा न पूर्यते, तथायं विषयभोगेन न पूर्यते इत्यर्थः । अज्ञस्य तु विषयभोगकाले कामः सुखहेतुत्वेन प्रिय एव प्रतीयते, परिणामे दुःखानुभवकाले वैर्यनुभूयते । ज्ञानी तु भोगसमयेऽप्येनं दुःखमेव जानाति, किं पुनः परिणामेऽतो ज्ञानिनो नित्यवैरिणेत्युक्तम् ॥ ३९ ॥**

म० टी०—तथा तेनेदमावृतमिति संग्रहवाक्यं विवृणोति—आवृतमिति । ज्ञायतेऽनेनेति ज्ञानमन्तःकरणं विवेकविज्ञानं वा इदंशब्दनिर्दिष्टमेतेन कामेनावृतम् । तथाप्यापाततः सुखहेतुत्वादुपादेयः स्यादित्यत आह—ज्ञानिनो नित्यवैरिणा । अज्ञो हि विषयभोगकाले कामं मित्रमिव पश्यंस्तत्कार्ये दुःखे प्राप्ते वैरित्वं जानाति कामेनाहं दुःखित्वमापादित इति, ज्ञानी तु भोगकालेऽपि जानात्यनेनाहमनर्थे प्रवेशित इति।अतो विवेकी दुःखी भवति भोगकाले च तत्परिणामे चानेनेति ज्ञानिनोऽसौ नित्यवैरीति सर्वथा तेन हन्तव्य एवेत्यर्थः । तर्हि किंस्वरूपोऽसावित्यत आह—कामरूपेण काम इच्छा तृष्णा सैव रूपं यस्य तेन । हे कौन्तेयेति संबन्धाविष्कारेण प्रेमाणं सूचयति ।

ननु विवेकिना ज्ञातव्योऽप्यविवेकिनोपादेयः स्यादित्यत आह–दुष्पूरेणानलेन च। चकार उपमार्थः। न विद्यतेऽलं पर्याप्तिर्यस्येत्यनलो वह्निः, स यथा हविषा पूरयितुमशक्यस्तथायमपि भोगेनेत्यर्थः। अतो निरन्तरं सन्तापहेतुत्वाद्विवेकिन इवाविवेकिनोऽपि हेय एवासौ। तथा च स्मृतिः 'न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति। अथवा इच्छाया विषयसिद्धिनिवर्त्यत्वादिच्छारूपः कामो विषयभोगेन स्वयमेव निवर्तिष्यते किं तत्रातिनिर्बन्धेनेत्यत उक्तं दुष्पूरेणानलेनचेति। विषयसिद्ध्या तत्कालमिच्छा तिरोधानेऽपि पुनः प्रादुर्भावान्न विषयसिद्धिरिच्छानिवर्तिका किंतु विषयदोषदृष्टिरेव तथेति भावः ॥ ३९ ॥

**शं० टी०**–ज्ञानावरणमेव विशदयति–**आवृतमिति**। यस्मादनलेन निरन्तरविषयसेवयाप्यलंभावो यस्य नास्ति सोऽनलः हृद्यन्तरनलवदाचरतीति वाऽनलस्तेन दुष्पूरेण दुःखेन पूरणमिष्टप्रापणं यस्य स दुष्पूरः कामिताऽप्राप्तौ पुरुषं दुःखेन पूरयतीति वा दुष्पूरस्तेन, कामरूपेण काम्यत इति कामो विषयस्तमेव सर्वत्र रूपयति गोचरयति न कचिद्ब्रह्मेति कामरूपस्तेन, तस्मादेव ज्ञानिनो नित्यवैरिणा नित्यं बाह्यालम्बनहेतुत्वेन प्रतिकूलत्वान्नित्यवैरी। नित्यग्रहणहेतोर्ज्ञानस्याऽऽवरकत्वाद्वा नित्यवैरिणा, एतेन कामेन ज्ञानं सर्वत्र ब्रह्मग्राहिका बुद्धिवृत्तिरावृतं पङ्केन जलमिव राहुणा चन्द्रबिम्बमिव पिहितमित्यर्थः ॥ ३९ ॥

**श्री० टी०**–इदंशब्दनिर्दिष्टं दर्शयन्वैरित्वं स्फुटयति–**आवृतमिति**। इदं तु विवेकज्ञानमेतेनावृतम्। अज्ञस्य खलु भोगसमये कामः सुखहेतुरेव परिणामे तु वैरितां प्रपद्यते। ज्ञानिनः पुनस्तत्कालमप्यनर्थानुसन्धानाद्दुःखहेतुरेवेति नित्यवैरिणेत्युक्तम्। किंच विषयैः पूर्यमाणोऽपि दुष्पूरः। अपूर्यमाणः शोकसन्तापहेतुत्वादनलतुल्यः। अनेन सर्वान्प्रति नित्यवैरित्वमुक्तम् ॥ ३९ ॥

**स० टी०**–तथा तेनेति वाक्यं च विवृणोति हरिः स्वयम् ॥ इदंशब्दोदितं ज्ञानमन्तःकरणमेव वा ॥ १ ॥ कामेनाच्छादितं तत्त्वज्ञानिनो नित्यवैरिणा ॥ अज्ञो हि भोगकाले तं पश्यन्मित्रमिवाधमम् ॥ २ ॥ प्राप्ते दुःखे च तत्कार्ये वैरितां वेत्ति दुःखितः ॥ ज्ञानी तु भोगकालेऽपि वेत्त्यनेनाहमाग्रहात् ॥ ३ ॥ अनर्थेऽस्मिन्प्रयुक्तोऽस्मीत्यतो ज्ञस्य सदा रिपुः ॥ इच्छातृष्णादिरूपोऽसौ हन्तव्यः सर्वथा ततः ॥ ४ ॥ न विद्यतेऽलंपर्याप्तिर्यस्य सोऽत्यन्तदुर्भरः ॥ यथा पूरयितुं नैव हविषा शक्यतेऽनलः ॥ ५ ॥ तथायमपि भोगेन हेयस्तस्माद्विवेकिना ॥ ६ ॥ न जातु कामः कामानामुपभोगेन शाम्यति ॥ हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ ७ ॥ इतिस्मृत्यापि कामस्य त्याग एव विशिष्यते ॥ दोषदृष्ट्या हि भोगेषु न भोगासक्तिरासुरी ॥ ८ ॥ ३९ ॥

**भा० टी०**–इदंशब्दवाच्यं दर्शयति–**आवृतमिति**। एतेन कामेन ज्ञानं विवेकरूपमावृतं ज्ञानिनो नित्यवैरिणा। ज्ञानी हि तदुत्पत्तिकालेऽपि जानात्यनेनाहमनर्थे नियोजित इति तत आरभ्यैव दुःखी भवति तेनासौ ज्ञानिनो नित्यवैरी नतु मूर्खस्य। स हि कामं तदुत्पत्तिकाले मित्रमिव पश्यन् तदानीमहमनेन दुःखे नियोजित इति न जानाति किंतु तत्कार्ये दुःखे प्राप्तेऽतस्तस्य नायं नित्यवैरी। केन रूपेण वैरीत्यत आह–कामः कामनेच्छैव रूपं यस्य तेन। दुःखेन पूरणमस्य तेन। कुत इत्यत आह–नालं पर्याप्तिरस्य विद्यत इत्यनलः तेन। यो हि कदाचित्तृप्तिं गच्छति स पूरयितुं शक्यः, अयं तु न तथेत्यर्थः। चकार उपमार्थः। अनलेन वह्निनेवेति व्याख्यानं तु सुगमत्वादाचार्यैरुपेक्षितम्। यत्तु ज्ञायतेऽनेनेति ज्ञानमन्तःकरणमिति तदुपेक्ष्यं ज्ञानविज्ञाननाशनमित्यनुरोधेनात्राऽपि विवेकज्ञानग्रहणस्यौचित्यात्। कौन्तेय इति संबोधयन् संबन्धिवियोगो मा भवत्वित्येवंरूपेण कामेनैवावृतज्ञानस्त्वमपि स्त्रीस्वभावे शोकमोहरूपे नियोजितोऽसीति ध्वनयति ॥ ३९ ॥

**प० टी०**–अथ तदेव विविच्याह–**आवृतमिति**। पूर्वं कामक्रोधौ पृथङ्निरूपितावथैकत्वेनाह। यतः काम एव केनाप्याक्षिप्तः सन् क्रोधत्वेन परिणमति। एवमेकेन कामरूपेण ज्ञानमावृतम्। किंभूतेन ज्ञानिनः

पुरुषस्य नित्यवैरिणा । अज्ञस्य भोगावसरे कामः सुखहेतुर्भवति परिणामे दुःखरूपः । ज्ञानिनस्त्वनर्थानुसन्धानेन नित्यं दुःखहेतुत्वान्नित्यवैरिणेत्युक्तम् । किंभूतेन दुष्पूरेणानलेन च दुष्पूरेण दुर्भरेण विषयप्राप्तावनलेनाग्निरूपेण । अथ कामस्य स्वरूपं दुष्पूरत्वं च निरूपयितुं शातपथी श्रुतिरपि—"एतावान्वै कामो नेत्संश्च नातो भूयो विन्देत्तस्मादप्येतर्ह्येकाकी कामयते जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेति स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्याकृत्स्नतः" इति । भाष्यम्-पूर्वश्रुत्या निरूपितः काम एतावानेतादृशः । अत्र नेदिति निपातो निषेधार्थे । स कामः सन्न भवति तथाप्यतः कामात्सकाशाद्भूयो महत्तरं न विन्देत् न जानाति यत एवं तस्मात्कामात्प्रथममेकाकी मातृगर्भादिक एवोत्पन्नोऽनन्तरं जाया मे स्यादिति कामयते अथानन्तरं प्रजायेय प्रजात्वेन भूयासम् "आत्मा वै पुत्रनामासि" इति श्रुतेः । तत्पोषणार्थं वित्तं मे स्यात्तदर्थं सेवा कृष्यादिकर्म कर्तव्यमित्येतावान् काम इति पूर्वेणान्वयः । अथ कामस्य दुष्पूरत्वमाह—स यावदिति । स कामयानः पुरुष एतेषां पूर्वोक्तानां कामानां मध्ये यावदेकैकं कामं न प्राप्नोति तावदहमकृत्स्न एव अकृतार्थ इति मन्यते इयमेव तस्याकृत्स्नता ॥ ३९ ॥

रा० टी०—एवं ज्ञेयस्येश्वरादेः ज्ञानकारणस्य मनसः ज्ञातुर्जीवस्य प्रतिबन्धकः काम इत्युक्त्या ज्ञानोऽत्पत्तिप्रतिबन्धकत्वमुक्तम् । इदानीं शास्त्रतो जातमपि ज्ञानं स्वकार्यापरोक्षज्ञानाय न प्रभवतीत्याह—आवृतमिति । ज्ञानिनः शास्त्रजनितज्ञानिनोपि ज्ञानं कामावृतं भगवदपरोक्षज्ञानाय न प्रभवति । किमु गुरूपदेशमात्रजज्ञानवत इति सूचनाय ज्ञानिन इत्युक्तम् । अन्यथा ज्ञानस्य ज्ञानिसंबन्धव्यभिचाराज्ज्ञानिन इत्युक्तिर्व्यर्था स्यात् । केनावृतं ज्ञानमित्यत उक्तम्—कामरूपेणेति । रूप्यते निरूप्यतेऽनयेति रूपमाख्या कामेति रूपमाख्या यस्य तेन कामरूपेण कामाख्येन नित्यवैरिणा सदापकारिणा दुष्पूरेण दुःखेन पूरयितव्येन । न केवलं दुष्पूरः किंत्वनलेन न विद्यतेऽलं तृप्तिर्यस्य सोऽनलः, तेन महतो भोग्यस्य विषयस्य प्राप्तावपि अधिकेच्छयालंबुद्धिहीनेनेत्यर्थः ॥ ३९ ॥

**इन्द्रियाणि मनो बुद्धिरस्याधिष्ठानमुच्यते ॥**
**एतैर्विमोहयत्येष ज्ञानमावृत्य देहिनम् ॥ ४० ॥**

**त० टी०—एवंभूतस्य वैरिणः कामस्य हननायाधिष्ठानमाह—इन्द्रियाणीति । एतैरिन्द्रियमनोबुद्धिभिरेष कामः ज्ञानं यथार्थानुभवमावृत्य देहिनं विमोहयति विवेकं नाशयित्वा सुखदुःखाभिनिवेशे योजयति । वस्तुस्वरूपान्यथाज्ञानं मोहः, तथाच कामविमोहितः पुरुषः दुःखहेतुमपि विषयं सुखमेव मत्वा तत्प्राप्तावेव सर्वथा यतते ॥ ४० ॥**

म० टी०—ज्ञाते हि शत्रोरधिष्ठाने सुखेन स जेतुं शक्यत इति तदधिष्ठानमाह—इन्द्रियाणीति। इन्द्रियाणि शब्दस्पर्शरूपरसगन्धग्राहकाणि श्रोत्रादीनि वचनादानगमनविसर्गानन्दजनकानि वागादीनि च । मनः सङ्कल्पात्मकं बुद्धिरध्यवसायात्मिका च।अस्य कामस्याधिष्ठानमाश्रय उच्यते।यतः एतैरिन्द्रियादिभिःस्वस्वव्यापारवद्भिराश्रयैर्विमोहयति विविधं मोहयति एष कामो ज्ञानं विवेकज्ञानमावृत्याच्छाद्य देहिनं देहाभिमानिनम्॥ ४०॥

शं० टी०—ननु संसारकारणं कामस्तत्कार्यं ज्ञानतिरोधानं विषयसन्निधापनं तापनं दुःखप्रापणं च निरूपितम् । तथापि मुमुक्षोस्तज्जयो दुर्घटस्तदधिष्ठानाऽज्ञानात् । ज्ञाते हि शत्रोः स्थाने तज्जित्यै यत्नः कर्तुं शक्यत इत्याकाङ्क्षायामाह—इन्द्रियाणीति । "यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गतिम्" इत्येतच्छ्रुतितात्पर्यज्ञैरिन्द्रियादीनां कामाश्रयत्वमुच्यते कामस्यैव तच्चे-

ष्टाहेतुत्वात् । तत इन्द्रियाणि चक्षुरादीनि मनोबुद्धिश्चास्य कामस्याधिष्ठानमाश्रय इति बोद्धव्यम् । स्वप्रवृत्तेर्द्वारभूतैर्यैरिन्द्रियव्यापारैरेष कामः ज्ञानं प्रत्यग्दृष्टिमावृत्य वृत्तेर्बहिःप्रवणतां कृत्वा देहिनं देहात्मबुद्धिं पुरुषं ज्ञानिनमज्ञानिनं च विमोहयति, अहं भोक्ता इदं भोग्यं रम्यमरम्यमिदं सुखमिदं दुःखमित्यादिना विविधं भावयति । कामदोषेणैव बुद्धेश्चलनं देहेन्द्रियादितादात्म्यापत्तिरहंममेतिसंसारः पुंस इत्यर्थः ॥ ४० ॥

श्री० टी०–इदानीं तस्याधिष्ठानं कथयन् जयोपायमाह–इन्द्रियाणीति द्वाभ्याम् । विषयदर्शनश्रवणादिभिः संकल्पेनाध्यवसायेन च कामस्याविर्भावादिन्द्रियाणि च मनश्च बुद्धिश्चास्याधिष्ठानमुच्यते एतैरिन्द्रियादिभिर्दर्शनादिव्यापारवद्भिराश्रयभूतैर्विवेकज्ञानमावृत्य देहिनं विमोहयति ॥ ४० ॥

स० टी०–ज्ञाते शत्रोरधिष्ठाने स जेतुं शक्यतेऽञ्जसा ॥ तदधिष्ठानमेवाह समस्तानीन्द्रियाणि च ॥ १ ॥ शब्दादिग्राहकाण्यस्य वचनादिकराणि च ॥ संकल्पात्मा मनो ज्ञेयं बुद्धिर्निश्चयरूपिणी ॥ २ ॥ कामस्य ह्याश्रयो यस्मादेतैः सोऽपीन्द्रियादिभिः ॥ स्वस्वव्यापारवद्भिस्तैराश्रयैर्मोहयत्यसौ ॥ ३ ॥ विवेकज्ञानमाच्छाद्य मूढं देहाभिमानिनम् ॥ ४ ॥ ४० ॥

भा० टी०–सुखेन शत्रुं नाशयितुं तदधिष्ठानं किमित्यर्जुनाकाङ्क्षायामाह–इन्द्रियाणीति । इन्द्रियादीन्यस्य कामस्याधिष्ठानमाश्रय उच्यते। एतैराश्रयैर्विवेकज्ञानमावृत्य जीवं विविधं मोहयति। यत्तु ज्ञानं चिदात्मकमिति तन्न उक्तयुक्तेः ॥ ४० ॥

प० टी०–अथ कामोन्मूलनप्रकारं निरूपयिषुस्तदधिष्ठानमाह–इन्द्रियाणीति । अस्य कामस्याधिष्ठानमाश्रयीभूतास्त्रयो भवन्ति । दर्शनादाविन्द्रियाणि, संकल्पे मनः, प्रादुर्भावे बुद्धिः, एतैस्त्रिभिरधिष्ठानभूतैः कृत्वा ज्ञानमावृत्य देहिनं जीवं विमोहयति ॥ ४० ॥

रा० टी०–यदर्थमर्जुनेन पापप्रवर्तकेषु बलवान्पृष्ट उत्तरितश्च तस्य बलवतः कामस्य शत्रोर्वधार्थमधिष्ठानमाह–इन्द्रियाणीति । अस्य कामाख्यशत्रोरिन्द्रियाणि चक्षुरादीनि मनोबुद्धिश्चाधिष्ठानम् । प्राधान्यज्ञापनाय मनोबुद्ध्योः पृथगुक्तिः । अधिष्ठानतां व्यनक्ति–एतैरिति । एतैर्मनोबुद्धीन्द्रियैर्विषयसंसृष्टैरेष कामाख्यशत्रुर्ज्ञानमावृत्य ज्ञानजन्म प्रतिबध्येति वा जातमपि ज्ञानं कार्याक्षमं कृत्वेति वार्थः । देहिनं जीवं विमोहयति ॥ ४० ॥

## तस्मात्त्वमिन्द्रिण्यादौ नियम्य भरतर्षभ ॥
## पाप्मानं प्रजहि ह्येनं ज्ञानविज्ञाननाशनम् ॥ ४१ ॥

त० टी०–अधिष्ठाननिरूपणं तन्निग्रहपूर्वकं कामजयार्थमेव तदेवाह–तस्मादिति । यस्मादिन्द्रियाधिष्ठित एव कामो विमोहकस्तस्माद्धे भरतर्षभ त्वमादाविन्द्रियाणि नियम्य विषयेभ्यो निवर्त्य ततो ज्ञानविज्ञाननाशनं ज्ञानं गुरुशास्त्रोपदेशजं विज्ञानं मननानन्तरनिदिध्यासनजं तयोर्नाशनमत एव पाप्मानं सर्वपापहेतुत्वात्पापरूपमेनं कामं प्रजहि प्रकर्षेण नाशय । यथा पुनर्नोद्भवेदित्यर्थः ॥ ४१ ॥

म० टी०–तस्मादिति। यस्मादेवं तस्मादिन्द्रियाधिष्ठानः कामो देहिनं मोहयति तस्मात्त्वमादौ मोहनात्पूर्वं कामनिरोधात्पूर्वमिति वा, इन्द्रियाणि श्रोत्रादीनि नियम्य वशीकृत्य तेषु हि वशीकृतेषु मनोबुद्ध्योरपि वशीकरणं सिध्यति सङ्कल्पाध्यवसाययोर्बाह्येन्द्रियप्रवृत्तिद्वारैवानर्थहेतुत्वात् । अत इन्द्रियाणि मनो बुद्धिरिति पूर्वं पृथङ्निर्दिश्यापीहेन्द्रियाणीत्येतावदुक्तम्। इन्द्रियत्वेन तयोरपि संग्रहो वा। हे भरतर्षभ महावंशप्रसूतत्वेन समर्थोसि । पाप्मानं सर्वपापमूलभूतमेनं कामं वैरिणं प्रजहि हि परित्यज। हि स्फुटं प्रजहि प्रकर्षेण मारयेति वा । जहि शत्रुमित्युपसंहाराच्च । ज्ञानं शास्त्राचार्योपदेशजं परोक्षं विज्ञानमपरोक्षं तत्फलं तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनम् ॥ ४१ ॥

शं० टी०—निःशेषकामनिबर्हणाभावे बुद्धेर्नैश्चल्यं न संभवति तदसंभवे ज्ञानं विशुद्धं न भवति तदभावे मोक्षाभावस्ततो मुमुक्षुणा तज्जयोऽवश्यं कर्तव्य इति सूचयितुमाह—**तस्मादिति** । हि यस्मान्मनोबुद्धीन्द्रियव्यापारैकबलः कामो मुमुक्षोस्तव नित्यशत्रुस्तस्मात्त्वमादाविन्द्रियाण्यनन्तरं मनो बुद्धिं च नियम्य विषयग्रहविमुखानि कृत्वा इन्द्रियाण्यादावित्युक्तिर्मनोबुद्ध्योर्नियमनं सूचयति । नियमविधावादिपदस्यानन्तरकृत्यद्योतकत्वात् सत्यामन्तर्विषयचिन्तायामिन्द्रियनिग्रहस्य विफलत्वात् 'मनस्तु पूर्वमादद्यात्कुमीनमिव मत्स्यहा' इतिवचनाद्वस्तुदर्शने मनस एव करणत्वाच्चात इन्द्रियनियमनानन्तरमेव मनोबुद्ध्योरपि निग्रहः कर्तव्य एव । एवं कामाधिष्ठाननिरोधं कृत्वा ज्ञानविज्ञाननाशनं ज्ञानं श्रुतियुक्तिभिः पर्वते वह्निरस्तीतिवत्परोक्षको वस्तुनिश्चयः सर्वं ब्रह्मैवेति, विज्ञानं तु विषयव्याप्तवृत्तिजन्यं महानसाग्निज्ञानवदिदमेवाहमिति, एवंरूपयोर्मोक्षैकप्रयोजनयोश्चन्द्रसूर्ययोरिवाऽविशेषविशेषस्फुरणयोर्ज्ञानविज्ञानयोर्नाशनं विध्वंसकमत एव स्ववैरिणं पाप्मानं पापिष्ठमेनं कामं प्रजहि निःशेषं विध्वंसयेत्यर्थः ॥ ४१ ॥

श्री० टी०—यस्मादेवम्—**तस्मात्त्वमिति** । आदौ विमोहात्पूर्वमेव इन्द्रियाणि मनो बुद्धिं च नियम्य पापरूपमेनं कामं हि स्फुटं प्रजहि घातय । यद्वा प्रजहि परित्यज ज्ञानमात्मविषयं विज्ञानं शास्त्रीयं तयोर्नाशिकम् । यद्वा ज्ञानं शास्त्राचार्योपदेशजं विज्ञानं निदिध्यासनजम् "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत" इति श्रुतेः ॥ ४१ ॥

स० टी०—यतोऽसाविन्द्रियाधारः कामो मोहाय देहिनः ॥ तस्मात्त्वं मोहनात्पूर्वं प्राग्वा कामनिरोधतः ॥ १ ॥ श्रोत्रादीनीन्द्रियाण्येव वशीकृत्य सुवंशज ॥ पापमूलं रिपुं कामं मारयैनमशेषतः ॥ २ ॥ ज्ञानं परोक्षमित्युक्तं शास्त्राचार्योपदेशजम् ॥ अपरोक्षं हि विज्ञानं श्रेयःसाधनयोस्तयोः ॥ ३ ॥ नाशनं दुष्टमत्यन्तं तत्त्वज्ञानी रिपुं शठम् ॥ ननु ज्ञानं समुत्पन्नं सविज्ञानं यदा तदा ॥ ४ ॥ बाधित्वाऽज्ञानतत्कार्ये तिष्ठत्यात्मनि निश्चलम् ॥ कामस्योत्पत्तिमात्रेण तस्य नाशः कथं भवेत् ॥ ५ ॥ वेदान्तमानसं सिद्धं ज्ञानं विज्ञानसंयुतम् ॥ कामादिमात्रनाश्यं चेद्वृथा तत्र परिश्रमः ॥ ६ ॥ ज्ञानं वस्तुप्रमायत्तं साधितं ब्रह्मविद्वरैः ॥ तत्कथं नश्यति क्षिप्रं सति माने च वस्तुनि ॥ ७ ॥ किंच ज्ञानस्य नाशेन प्रतिद्वन्द्विसमुद्भवः ॥ यथा दीपप्रभानाशे तिमिरस्य समुद्भवः ॥ ८ ॥ तद्विरुद्धमनिर्वाच्यानाद्येकाज्ञानवादिनाम् ॥ अनादिभावरूपस्याज्ञानस्यास्य जनिः कथम् ॥ ९ ॥ अन्यथा भवतामेव स्वसिद्धान्तक्षतिर्भवेत् ॥ बाढं ज्ञानं सविज्ञानं जातं जातु न नश्यति ॥ १० ॥ तदुक्तेः का गतिस्तर्हि शृणु त्वं युक्तितः स्फुटम् ॥ ज्ञानविज्ञानघातित्वं कामस्येत्यत्र नो हरेः ॥ ११ ॥ तात्पर्यं किंतु कामस्य दुष्टस्यात्यन्तनिन्दया ॥ हेयत्वेऽस्त्यन्यथा वाक्यभेदः स्यात्तत एव च ॥ १२ ॥ तत्त्वज्ञाने समुत्पन्ने जीवन्मुक्तमुनेरयम् ॥ कामाभासः समुत्पन्नो यदि प्रारब्धकर्मणा ॥ १३ ॥ प्रत्युत ज्ञाननाश्योऽसावक्षमो ज्ञाननाशने ॥ तथाप्ययं न विश्वास्यः काम इत्येव कथ्यते ॥ १४ ॥ मुमुक्षोरुपदेशार्थं हरिणा भ्रान्तिहारिणा ॥ अयमत्रास्ति निष्कर्षो भगवद्वचसो मतः ॥ १५ ॥ बाध्योऽप्यज्ञानबाधाच्छ्रुतिशिखरवचोजन्यबोधेन कामो वामोऽयं मोक्षमार्गे प्रबलतररिपुर्नैव विश्वासयोग्यः ॥ तत्त्यागे सन्मुमुक्षोरनुदिनमधिकं यत्नमास्थाय बोधः साध्यो विज्ञानयुक्तो हरिरिति वदति ब्रह्मविद्याप्रदाता ॥ १६ ॥ यद्वा कामस्य यद्दौष्ट्यं तत्सर्वमिह वर्ण्यते ॥ तत्त्यागाय तथा प्राह ज्ञानविज्ञाननाशनम् ॥ १७ ॥ ज्ञानविज्ञानशब्दाभ्यां तत्फलं मुक्तिरुच्यते ॥ सा द्विधास्ति सदेहैका विदेहान्येति तत्र च ॥ १८ ॥ उत्पन्ने तत्त्वविज्ञाने साक्षात्कारापराभिधे ॥ अवश्यं स भवेन्मुक्तो देहपातादनन्तरम् ॥ १९ ॥ जीवन्मुक्तिफलं कामक्रोधादिभिरिहारिभिः ॥ प्रतिबद्ध्यत एवेति दर्शनार्थमिहोच्यते ॥ २० ॥ अहो कामस्य दुष्टत्वं किमु वाच्यमतः परम् ॥ यदयं ज्ञानविज्ञानफले सत्यपि तत्क्षणे ॥ २१ ॥ उद्भूतः प्रतिबध्नाति

जीवन्मुक्तिसुखं मुनेः ।। यस्यां वृत्तौ स आह्लादो जीवन्मुक्तिसुखाभिधः ।। २२ ।। आरूढः सुखयत्येनं नष्टाविद्यं विचक्षणम् ।। यदि तत्रागतः कामो दृष्टप्रारब्धकर्मणा ।।२३।। तत्क्षणे तत्सुखं चासौ प्रतिबध्नाति वेदिनः ।। ननु ज्ञाने स्थिते तत्र सविज्ञाने ज्ञचेतासि ।। २४ ।। कथं कामोद्भवस्तत्र संभवेदिति चेच्छृणु ।। प्रारब्धकर्मप्राबल्यात्कामोत्पत्तिर्ज्ञचेतसि ।। २५ ।। सति मिथ्यात्वबोधेऽपि विषयेषु च संभवेत् ।। ननु तत्त्वविदां चित्ते कामः प्रारब्धकर्मणा ।।२६।। जायतेऽत्र प्रमाणं किमिति चेच्छ्रीहरेर्वचः ।। सदृशं चेष्टते स्वस्याः प्रकृतेर्ज्ञानवानापि ।। २७ ।। प्रकृतिं यान्ति भूतानि निग्रहः किं करिष्यति ।। तथैवोक्तं च वासिष्ठे निर्वाणे कुम्भवाक्यतः ।। २८ ।। ज्ञस्याज्ञस्य च देहस्य यावद्देहमयं क्रमः ।। लोकवद्व्यवहारोऽयं शक्त्याशक्त्याथ वा सदा ।। २९ ।। ये परिज्ञातगतयो ये चाज्ञाः पशुधर्मिणः ।। लोकस्य व्यवहारेषु ते स्थिता लोकजालवत् ।। ३० ।। व्यवहारे यथैवाज्ञस्तथैवाखिलपण्डितः ।। वासनामात्रभेदोऽत्र कारणं बन्धमोक्षयोः ।। ३१ ।। यावच्छरीरं तावद्धि दुःखे दुःखं सुखे सुखम् ।। असंसक्तधियो धीरा दर्शयन्त्यप्रबुद्धवत् ।। ३२ ।। तथैव भाष्ये भामत्यां चायमर्थो निदर्शितः ।। पश्वादिभिश्चाविशेषादित्यत्रातिस्फुटं तथा ।। ३३ ।। विदन्तु श्रुतियुक्तिभ्यां देहादिभ्यो विलक्षणम् ।। विशुद्धं प्रत्यगात्मानं ब्रह्मैक्यं चिद्घनं सुखम् ।। ३४ ।। प्राणभृन्मात्रधर्मे तु व्यवहारे विदां वराः ।। नातिवर्तन्त इत्यादौ भामत्यां निर्णयः कृतः ।। ३५ ।। प्रारब्धकर्मनानात्वाद्बुधानामन्यथान्यथा ।। वर्तनं तेन शास्त्रार्थे भ्रमितव्यं न पण्डितैः ।। ३६ ।। स्वस्वकर्मानुसारेण वर्तन्तां ते तथातथा ।। अविशिष्टः सर्वबोधः समा मुक्तिरिति स्थितिः ।। ३७ ।। इत्यादिसंप्रदायज्ञैरयमर्थ उदीरितः ।। जातेऽपि तत्त्वविज्ञाने प्रारब्धाख्येन कर्मणा ।। ३८ ।। जीवतः पुरुषस्यास्ति चित्तधर्मो ह्यनेकधा ।। रागद्वेषादिकक्लेशहेतुत्वादेष तद्विदः ।। ३९ ।। स बाधितानुवृत्त्यापि बन्धो भवति तत्क्षणे ।। चित्तवृत्तिनिरोधेन तस्य योगेन वारणम् ।। ४० ।। प्रोक्तं बहुविधं शास्त्रे जीवन्मुक्तिसुखाप्तये ।। अतः कामोद्भवाज्जीवन्मुक्तेः स्यात्प्रतिबन्धनम् ।। ४१ ।। तदर्थं हरिणा प्रोक्तं ज्ञानविज्ञाननाशनम् ।। चित्तस्य सर्वदोषाणां राजा काम उदीरितः ।। ४२ ।। तन्निराकरणेनैव सर्वदोषनिराकृतिः ।। जीवन्मुक्तिसुखं तज्ज्ञचेतस्याविर्भवत्यपि ।। ४३ ।। यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ।। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ।। ४४ ।। कामोद्भवो मुमुक्षोर्हि तत्त्वधीप्रतिबन्धकः ।। तज्ज्ञस्यात्मसुखास्वादप्रतिबन्धक ईर्यते ।। ४५ ।। तदर्थं तस्य नाशाय यत्न आस्थेय आदरात् ।। मुमुक्षुणात्मबोधाय तज्ज्ञेनात्मसुखाय च ।। ४६ ।। इति श्रीकरुणासिन्धोर्हरेरद्भुतकर्मणः ।। तात्पर्यं गम्यते विष्णोः शास्त्रयोनरमापतेः ।। ४७ ।। तत्त्वज्ञानेऽपि जाते भ्रमतिमिरहरे शान्तिदे सज्जनानां जीवन्मुक्त्यापि भाव्यं परमसुखदयासर्वविक्षेपनाशात् ।। तत्र प्रारब्धदोषाद्यदि भवति मतौ कामशत्रोः प्रचारो मोक्षो भाव्यन्तकाले त्वपि सपदि परं दृष्टदुःखं न नश्येत् ।। ४८ ।। अथवा तत्त्वजिज्ञासोरुपदेशार्थमेव हि ।। कामनिन्दाद्युपक्रान्ता तथाहि श्रीहरेर्मतम् ।। ४९ ।। कामस्तृष्णादिपर्यायो दुःपूरो यत्र तिष्ठति ।। ज्ञानविज्ञानयोस्तत्र गन्धोऽप्यत्यन्तदुर्लभः ।। ५० ।। वक्ष्यत्येव हरिः साक्षात्षोडशे कामदुष्टताम् ।। त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।। ५१ ।। कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ।। एतैर्विमुक्तः कौन्तेय तमोद्वारैस्त्रिभिर्नरः ।। ५२ ।। आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ।। कामलोभावुभावत्र कामशब्देन कीर्तितौ ।।५३।। क्रोधस्तस्यानुजोऽप्यत्र काममूल उदीरितः ।। काम एष क्रोध एष इत्यत्र हरिणा स्वयम् ।। ५४ ।। तस्मात्कामरिपावन्तर्भूतत्वेनैव तौ मतौ ।। तस्मिन्सति न गन्धोऽपि श्रेयसः साधनस्य वा ।। ५५ ।। अत एनं रिपुं कामं विनियम्येन्द्रियाणि च ।। नाशय त्वं सुखावाप्त्यै पौरुषेण बलीसाय ।। ५६ ।। नन्विन्द्रियनिरोधेन कथं कामस्य नाशनम् ।। सति कामे निरोधोऽपि तेषां भातीह दुर्घटः ।।५७।। काममूल-

मिदं यस्माच्चाञ्चल्यं हीन्द्रियाश्रयम् ॥ केनोपायेन तीव्रेण क्षमः स्यां कामनाशने ॥ ५८ ॥ इत्यत्राह हरिः साक्षाज्ज्ञानविज्ञानसाधनम् ॥ नाशने बाधने ज्ञानविज्ञाने अस्य वै यतः ॥ ५९॥ ज्ञानविज्ञानरूपाभ्यां साधनाभ्यां समूलतः॥ नाशनं यस्य कामस्य तत्र त्वं यत्नवान्भव॥ ६० ॥ देहेन्द्रियादिसंघाते यावदस्यात्मधीर्दृढा ॥ कामोऽपि तावदेवास्ति बलवानतिदुःखदः ॥ ६१ ॥ अविद्याहेतवः कामाः काममूलाः प्रवृत्तयः ॥ धर्माधर्मौ च तन्मूलौ देहोऽनर्थाश्रयस्ततः ॥ ६२ ॥ अतोऽविद्यानिरोधे स्यान्निरोधो विदुषः सदा ॥ निःशेषकर्महेतूनां विकाराणां तदैव तु ॥ ६३ ॥ इत्युक्तं वार्तिके स्पष्टं तैत्तिरीयकभाष्यके ॥ अहंकारचिदात्मानावेकीकृत्याविवेकतः ॥ ६४ ॥ इदं मे स्यादिदं मे स्यादितीच्छाकामशब्दिता ॥ देहादिभ्यो विविच्यातो ज्ञाते ब्रह्मात्मवस्तुनि ॥ ६५ ॥ समूलस्यैव कामस्य नाशनं भवति स्वयम् ॥ अतो मुख्य उपायोऽयं तुभ्यं समुपदिश्यते ॥ ६६ ॥ ज्ञानं शास्त्रीयमाश्रित्य तत्त्वमस्यादिवाक्यजम् ॥ देशिकोक्तनयैर्युक्तं विज्ञानं स्वानुभूतिजम् ॥ ६७ ॥ नाशय त्वमिमं शत्रुं कामं पौरुषमास्थितः ॥ इत्येवं वा कृपासिन्धोस्तात्पर्यं श्रीहरेर्विभोः ॥ ६८ ॥ संदर्भस्योत्तरस्यापि यतोऽस्मिन्पक्ष एव हि ॥ स्वारस्यं तत्र चिद्धातोर्जडवर्गाद्विवेचनम् ॥ ६९ ॥ स्वाज्ञानाध्यस्तदेहद्वयमहमिति संश्रित्य यस्यास्ति यावत्कामक्रोधादिदोषः प्रभवति भयदस्तस्य तावन्मुमुक्षोः ॥ देहादिभ्यो विविच्याभयपदममलं तत्त्वमाज्ञाय सम्यग्ध्वस्तेऽज्ञाने सकार्ये ह्यपनयति सुधीः कामशत्रुं सुखेन ॥ ७० ॥ क्व शास्त्रं गीताख्यं हरिमुखसरोजाद्विगलितं क्व चास्माकं बुद्धिर्विषयविषपङ्के निपतिता ॥ तथापि श्रीकान्तप्रचुरगुणलक्ष्मीविरचितं कटाक्षं स्वच्छाच्छं ह्यनुसृतवतां किं न सुलभम् ॥ ७१ ॥ ४१ ॥

भा० टी०—तस्मादिति। तस्मादिन्द्रियादीनामाश्रयत्वात्त्वमिन्द्रियाणि पूर्वं कामनिरोधात्प्रागवस्थायां मोहनात्पूर्वमिति वा नियम्य वशीकृत्य पाप्मानं पापाचारं कामं प्रजहि,आत्मनः सकाशात्परित्यज। कामस्य परित्याग एव मारणं नतु शस्त्रेण शिरश्छेदनम्। एवं जहिशत्रुमित्युपसंहारेऽपि परित्यजेत्येवार्थः। एतेन प्रजहि प्रकर्षेण जहि मारयेति भाष्यानुक्तं कैश्चिदुक्तं प्रत्युक्तम्। हि यस्माज्ज्ञानविज्ञाननाशनमस्य विशेषणस्य हेतुगर्भत्वं सूचयति हिशब्दः। तथाच यस्मादित्यस्याध्याहारोऽपि नापेक्षितः। एतेन हि प्रस्फुटमिति प्रत्युक्तम्। ज्ञानं शास्त्रत आचार्यतश्चात्मादीनामवबोधः, विज्ञानं विशेषतस्तदनुभवः, तयोर्ज्ञानविज्ञानयोः श्रेयःप्राप्तिहेत्वोर्नाशनम्। ये तु ज्ञानमात्मविषयं विज्ञानं शास्त्रीयं, यद्वा ज्ञानं शास्त्राचार्योपदेशजं विज्ञानं निदिध्यासनम् "विज्ञाय प्रज्ञां कुर्वीत" इतिश्रुतेरिति वर्णयन्ति तेषां व्याख्याने प्रथमपक्षोऽरुचिग्रस्तः। अरुचिबीजं ज्ञानं विवेकज्ञानमिति पूर्वं स्वेन व्याख्यातं तच्चात्मविषयं शास्त्रीयमेवेति विज्ञानपदेन पौनरुक्त्यम्। द्वितीयस्तु विज्ञानं विशेषतस्तदनुभव इति भाष्यस्य निदिध्यासनपरत्वं व्याख्याय तदविरुद्धो बोध्यः। तेनेदमावृतम्, आवृतं ज्ञानमेतेन, ज्ञानमावृत्येत्यनुरोधेन नाशनमित्यस्यादर्शनसंपादकमित्यर्थः। णश् अदर्शन इति स्मरणात्। ज्ञानविज्ञानयोरुत्पन्नयोरावरणात्मकाज्ञानबाधकत्वप्रसिद्ध्या विक्षेपात्मकाज्ञानेन कदाचित्प्रारब्धप्राबल्यादाभासरूपेणोत्पन्नस्य कामस्य तावत्कालज्ञानविज्ञाननाशनत्वमुपपद्यते। यद्वा मुमुक्षुणा मोक्षसाधनज्ञानविज्ञानप्राप्तये यतमानेनेन्द्रियाणि नियम्य ज्ञानविज्ञानावरकः कामो हातव्य इति। तथाच नाशनमावरकमिति व्याख्यानेऽस्य सम्यक्त्वेन घातकमित्यर्थभ्रान्त्या ज्ञानविज्ञाननाशासंभवशङ्कायास्तदुत्तरस्य चानवकाशः। भरतैरप्ययं शत्रुः परित्यक्तः त्वं तु भरतर्षभ इति सूचयन्नाह—भरतर्षभेति ॥ ४१ ॥

प० टी०—अथ क्रमेणास्योपरमप्रकारमाह—तस्मादिति। यस्मादयं बुद्धिपर्यन्तगतिस्तस्मात्कारणादादौ प्रथमत इन्द्रियाणि चक्षुरादीनि नियम्य विषयपराङ्मुखानि कृत्वैनं पाप्मानमत्युग्रं कामं प्रजहि घातय। किंभूतं ज्ञानविज्ञाननाशनम्। ज्ञानं शास्त्रोत्थं विज्ञानमनुभवस्तयोः प्रतिबन्धकीभूतम् ॥ ४१ ॥

रा० टी०–तस्मादिति। हि यस्मात् हे भरतर्षभ त्वमिन्द्रियाण्यादौ नियम्य विषयसङ्गतान्यकृत्वा सङ्गतत्वे वा मनोबुद्ध्योर्विषयस्पर्शमकृत्वा तयोर्विषयसंस्पर्शेऽपि क्षोभमप्राप्येति वार्थः। ज्ञानविज्ञानयोर्नाशनं यस्मात्तं पाप्मानं पापहेतुमेनं कामं प्रजहि हतं कुरु। हताधिष्ठानो हि शत्रुर्नाशयितुं शक्य इति प्रसिद्धिद्योतको हिशब्दः। इन्द्रियजयः कामहननोपाय इति भावः॥ ४१॥

**इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः॥**
**मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः॥ ४२॥**

त० टी०–एवं ज्ञानविज्ञानविरोधिकामनाशने द्वारभूतेन्द्रियनियमनमुक्तमिदानीं ज्ञानविरोधेऽधिष्ठानभूतानीन्द्रियाणि क्रमतः प्रधानानि प्रदर्श्य सर्वप्रधानभूतं कामं हन्यादित्युपदिशन्नुपसंहरति–इन्द्रियाणीति द्वाभ्याम्। ज्ञानावरणे इन्द्रियाणि पराणि प्रधानकारणान्याहुः। यत इन्द्रियेषु विषयप्रवणेषु आत्मनि ज्ञानं न जायते। इन्द्रियेभ्यः परं मनः, इन्द्रियेषूपरतेष्वपि मनसि विषयप्रवणे नात्मनि ज्ञानं प्रकाशते। मनसस्तु परा बुद्धिः, मनसि विषयविमुखे सत्यपि विपरीताध्यवसायवत्यां बुद्धौ सत्यां नात्मज्ञानं प्रकाशते। यो बुद्धेः परतस्तु सः, स पूर्वोक्तः कामः यत इन्द्रियादिषु बुद्धिपर्यन्तेषु ज्ञानविरोधिषूत्तरोत्तरप्रधानभूतेषु कथञ्चिद्विषयेभ्य उपरतेष्वपि रजोगुणसमुद्भवोऽनादिसूक्ष्माभिलाषरूपः कामः मनोबुद्धी विषयसंकल्पाध्यवसायिन्यौ विधायात्मज्ञानमाच्छादयति। अतो बुद्धेः परः सर्वज्ञानविरोधिप्रधानभूतो वैरी स काम एवेत्यर्थः। केचित्, यस्तु बुद्धेः परस्तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा विमोहयति देहिनमिति देहिशब्दोक्त आत्मा स इति परामृश्यते इत्येवं व्याख्यायन्ते, तदसङ्गतं व्यवहितस्य देहिनः परामर्शासंभवात् 'पाप्मानं प्रजहि ह्येनम्' 'जहि शत्रुं महाबाहो कामरूपम्' इति पूर्वोत्तरश्लोकयोः कामस्यैव प्रकृतत्वात्। न ह्यनन्तरोक्तं विहाय व्यवहितस्य परामर्शं पण्डिताः कुर्वन्तीत्यलं विस्तरेण॥ ४२॥

म० टी०–ननु यथाकथंचिद्बाह्येन्द्रियनियमसंभवेऽप्यान्तरतृष्णात्यागोऽतिदुष्कर इति चेत् न, रसोऽप्यस्य परं दृष्ट्वा निवर्तत इत्यत्र परदर्शनस्य रसाभिधानीयकतृष्णात्यागसाधनस्य प्रागुक्तेः। तर्हि कोऽसौ परो यद्दर्शनात्तृष्णानिवृत्तिरित्याशङ्क्य शुद्धमात्मानं परशब्दवाच्यं देहादिभ्यो विविच्य दर्शयति–इन्द्रियेति। श्रोत्रादीनि ज्ञानेन्द्रियाणि पञ्च स्थूलं जडं परिच्छिन्नं बाह्यं च देहमपेक्ष्य पराणि सूक्ष्मत्वात्प्रकाशकत्वाद्व्यापकत्वादन्तःस्थत्वाच्च प्रकृष्टान्याहुः पण्डिताः श्रुतयो वा। तथेन्द्रियेभ्यः परं मनः सङ्कल्पविकल्पात्मकं तत्प्रवर्तकत्वात्। तथा मनसस्तु परा बुद्धिरध्यवसायात्मिका। अध्यवसायो हि निश्चयस्तत्पूर्वक एव सङ्कल्पादिर्मनोधर्मः। यस्तु बुद्धेः परतस्तद्भासकत्वेनावस्थितो यं देहिनमिन्द्रियादिभिराश्रयैर्युक्तः कामोऽज्ञानावरणद्वारेण मोहयतीत्युक्तं स बुद्धेर्द्रष्टा पर आत्मा। स एष इह प्रविष्ट इतिवद्व्यवहितस्यापि देहिनस्तदा परामर्शः। अत्रार्थे श्रुतिः 'इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः। मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इति। अत्रात्मनः परत्वस्यैव वाक्यतात्पर्यविषयत्वादिन्द्रियादिपरत्वस्याविवक्षितत्वादिन्द्रियेभ्यः परा अर्था इति स्थानेर्थेभ्यः पराणीन्द्रियाणीति विवक्षाभेदेन भगवदुक्तं न विरुध्यते। बुद्धेरस्मदादिव्यष्टिबुद्धेः सकाशान्महानात्मा समष्टिबुद्धिरूपः परः 'मनो महान्मतिर्ब्रह्मा पूर्बुद्धिः ख्यातिरीश्वरः' इति वायुपुराणवचनात्। महतो हैरण्यगर्भबुद्धेः परमव्यक्तमव्याकृतं सर्वजगद्बीजं मायाख्यं "मायां तु प्रकृतिं विद्यात्" इति श्रुतेः "तद्धेदं तर्ह्यव्याकृतमासीत्" इति च। अव्यक्तात्सकाशात्सकलजडवर्गप्रकाशकः पुरुषः पूर्ण आत्मा परस्तस्मादपि कश्चिदन्यः परः स्यादित्यत आह–पुरुषान्न परं किंचिदिति। कुत एवं

यस्मात् सा काष्ठा समाप्तिः सर्वाधिष्ठानत्वात्सा परा गतिः " सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् " इत्यादिश्रुतिप्रसिद्धा परा गतिरपि सैवेत्यर्थः । तदेतत्सर्वं यो बुद्धेः परतस्तु स इत्यनेनोक्तम् ॥ ४२ ॥

**शं० टी०**—ननु कामो दुर्जयो दुर्जयस्य जये बलवदाश्रयोऽपेक्ष्यते मुमुक्षुः कमाश्रित्य कस्य महिम्ना कामं जयेदित्याकाङ्क्षायाम् 'रसवर्जं रसोऽप्यस्य परं दृष्ट्वा निवर्तते ' इतिन्यायेन परमात्मानं सर्वान्तरं सर्वगमवगम्य तदाश्रयणेन त्वं कामं जहीति बोधयितुमात्माधिगमप्रकारमाह—**इन्द्रियाणीति** । " इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः" इत्याद्याः श्रुतय इन्द्रियाणि पराण्याहुः इन्द्रियाणि श्रोत्रादीनि पञ्च पञ्च कर्मेन्द्रियाणि च स्वापेक्षया जडं बाह्यं स्थूलं प्रवर्त्यं व्याप्यं कार्यं च यच्छरीरं तस्मात्प्रकाशकत्वान्तरत्वसूक्ष्मत्वप्रवर्तकत्वव्यापकत्वकारणत्वादिधर्मैः पराण्युत्कृष्टतराण्याहुर्वदन्ति । येन यत्प्रकाश्यते प्रवर्त्यते च तत्तदपेक्ष्य व्यापकं सूक्ष्मं परं भिन्नं च भवति यथाऽयसोऽयस्थो वह्निस्तथा देहमपेक्ष्येन्द्रियाणि देहतद्धर्मप्रकाशकत्वात्प्रवर्तकत्वाच्च पराणि भिन्नानि च भवन्तीत्यर्थः । तथेन्द्रियेभ्यो मनः प्रकाशकत्वादिधर्मेण परमुत्कृष्टं भिन्नं च भवति, इन्द्रियतद्धर्माणां प्रकाशकत्वान्मनः खल्वन्तस्थं सदिन्द्रियाणि तद्धर्मांश्च प्रकाशयति । ततो मनसस्तत्परत्वं भिन्नत्वं च युक्तमित्यर्थः । एवं मनसोऽपि प्रकाशकत्वादिधर्मैर्बुद्धिः परा भवति । बुद्ध्या खलु मनस्तद्धर्मांश्च प्रकाश्यन्ते प्रवर्त्यन्ते च ततस्तत्परत्वं भिन्नत्वं च बुद्धेः सिद्धमेव । सूक्ष्मत्वान्तरत्वव्यापकत्वकारणत्वप्रवर्तकत्वप्रकाशकत्वादिधर्मैर्यस्त्वयं सर्वतो व्याप्य बुद्ध्यादिस्थूलपर्यन्तं कार्यकरणसंघातं स्वसन्निधिमात्रेण प्रवर्तयन् तद्धर्मतत्कर्मतद्गुणतद्विकारांश्च सर्वानविकारात्मना साक्षाज्जानाति प्रकाशयति स एव आत्मा बुद्धेः परतः परः सर्वस्मादुत्कृष्टतमो भिन्नश्च नित्यत्वात्सर्वज्ञत्वात्सर्वप्रकाशकत्वात्सर्वसाक्षित्वाच्च "पुरुषान्न परं किंचित् " इति श्रवणात् । यत एवं ततः सर्वस्मात्परं सर्वद्रष्टारमत एव देहेन्द्रियादिभ्यो भिन्नं सर्वप्रकाशकं चिदानन्दैकरसं सन्मात्रं परिपूर्णमेतमेव स्वात्मानं विजानीहीत्यर्थः ॥ ४२ ॥

**श्री० टी०**—अथ यत्र प्रसन्नतया चित्तप्रणिधानेन इन्द्रियाणि नियन्तुं शक्यन्ते तदात्मस्वरूपं देहादिभ्यो विविच्य दर्शयति—**इन्द्रियाणीति** । इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराणि श्रेष्ठान्याहुः सूक्ष्मत्वात्प्रकाशकत्वाच्च, अत एव तद्व्यतिरिक्तत्वमप्यर्थादुक्तं भवति । इन्द्रियेभ्यश्च संकल्पात्मकं मनः परं तत्प्रवर्तकत्वात् । मनसस्तु बुद्धिर्निश्चयात्मिका परा निश्चयपूर्वकत्वात्संकल्पस्य । यस्तु बुद्धेः परस्तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा 'विमोहयति देहिनम् ' इति देहिशब्दोक्त आत्मा स इति परामृश्यते ॥ ४२ ॥

**स० टी०**—स्वस्मिन्भोक्तृत्वविज्ञानात्स्वात्मानन्दाविवेकतः ॥ भोग्यसौन्दर्यसंभ्रान्त्या कामोऽयं जायते नृणाम् ॥ १ ॥ प्रत्यगात्मा विविच्यातो द्रष्टव्योऽन्तर्धिया नरैः ॥ कामशत्रुविनाशाय निजानन्दाप्तये तथा ॥ २ ॥ देहेन्द्रियमनोधीभ्यः पृथक्कृत्य विवेकतः ॥ सर्वसाक्षी परो दृश्याद्‌दृष्टा द्रष्टव्य आदरात् ॥३॥ असङ्गात्मानमाश्रित्य भोग्यमिथ्यात्वबोधतः ॥ हेयः कामः परः शत्रुरित्याह भगवान्हरिः ॥ ४ ॥ स्थूलं जडं परिच्छिन्नं बाह्यं देहमपेक्ष्य हि ॥ प्रकाशकत्वात्सूक्ष्मत्वाद्व्यापकत्वात्पराणि च ॥ ५ ॥ इन्द्रियाणीन्द्रियेभ्यस्तु प्रेरकत्वान्मनः परम् ॥ मनसस्तु परा बुद्धिर्निश्चयैकस्वरूपिणी ॥ ६ ॥ यस्तु बुद्धेः परस्तस्याभासकत्वेन चिद्वपुः ॥ यमविद्यावृतं कामः स्वाश्रयैर्मोहयत्यसौ ॥ ७ ॥ बुद्धेर्द्रष्टा परः सोऽयमात्मा साक्षी विविच्यताम् ॥ अत्रायमस्ति निष्कर्षः साक्षितत्त्वविवेचने ॥ ८ ॥ देहः स्थूलो जडोऽयं जनिमरणयुतो नायमात्मा कदाचित्सूक्ष्मो लिङ्गापराख्यो भ्रमशतवलितो वैकृतो नायमात्मा ॥ सुप्त्यादौ भावहीनस्ताडिदिव गलितोऽज्ञानमात्रैकहेतुः साक्षी तस्याप्यभावं सुखघनवपुषा वेत्ति तद्भिन्नबोधः ॥ ९ ॥ विश्वो वैश्वानरोऽयं व्यभिचरति यतो जागरे विप्रणष्टे सूत्रात्मा तैजसोऽपि स्वयमिह गलति प्रत्यहं संप्रसादे ॥ प्राज्ञेशौ संप्रबोधे सुखघनविषये संलयं प्राप्नुतश्च प्रत्यग्ब्रह्माद्वयात्मा स्वयमिह निगमाच्छिष्यते भ्रान्तिशून्यः ॥ १० ॥ ४२ ॥

भा० टी०–इन्द्रियाण्यादौ नियम्य कामं वैरिणं जहीत्युक्तं तत्र किमाश्रयः कामं जह्यादित्यपेक्षायां रसोऽप्यस्य परं दृष्ट्वा निवर्तत इत्युक्तं स्मारयन्परं ज्ञापयति–इन्द्रियाणीति । इन्द्रियाणि श्रोत्रादीनि देहं स्थूलं बाह्यं परिच्छिन्नं चापेक्ष्य सौक्ष्म्यान्तरस्थितत्वव्यापित्वाद्यपेक्षया पराणि प्रकृष्टान्याहुः पण्डिता उक्तविवक्षया न तु श्रुतयः साक्षादाहुः 'इन्द्रियेभ्यः परा ह्यर्थाः' इति श्रुतावुक्तत्वात् । तथेन्द्रियेभ्यः परं मनः संकल्पविकल्पात्मकम् । मनसस्तु बुद्धिर्निश्चयात्मिका परा । बुद्धेः परतस्तु सः बुद्धेर्द्रष्टा परमात्मा यः सर्वदृश्येभ्यो बुद्ध्यन्तेभ्यः आभ्यन्तरः । यमिन्द्रियादिभिराश्रयैर्युक्तः कामो ज्ञानावरणद्वारा मोहयति । परतस्तु इत्युक्तिस्तु " बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः " इतिश्रुत्यर्थसंग्रहार्था । श्रुत्यनुसारेणेन्द्रियेभ्यः परा ह्यर्था इति वक्तव्येपि एवं भगवत उक्तिः सफला पूर्वपुरुषपरत्वप्रतिपादनायाः श्रुतेरफलार्थादिपरत्वाभिधाने तात्पर्याभावज्ञापनार्थेति मन्तव्यम् । तदुक्तम्–आध्यानाय प्रयोजनाभावात् आत्मशब्दाचेति ॥ ४२ ॥

प० टी०–अथेन्द्रियाद्यधिष्ठानत्रयगतः कामो जेतुं न शक्यतेऽतस्तेभ्योऽपि विविक्तमात्मानं दर्शयति–इन्द्रियाणीति । इन्द्रियाणि देहादिभ्यो ग्राह्येभ्यः पराण्युत्कृष्टान्याहुः सूक्ष्मत्वादर्थप्रकाशकत्वाच्च । तत एवार्थादतिरिक्तत्वमुक्तं भवति । इन्द्रियेभ्यश्च संकल्पात्मकं मनः परमुत्कृष्टं तत्प्रवर्तकत्वात् । मनसस्तु बुद्धिर्निश्चयात्मिका परा निश्चयपूर्वकत्वात् संकल्पस्य । यस्तु बुद्धेः परतस्तत्साक्षित्वेनावस्थितः सर्वान्तरः स आत्मा । अत्रार्थे कठशाखीया श्रुतिः–"इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥ महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ॥ एवं सर्वेषु भूतेषु गूढोत्मा न प्रकाशते । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति ॥ ४२ ॥

रा० टी०–शत्रुहनने आयुधरूपं ज्ञानम्, एवं बुद्धेरित्युत्तरश्लोके वक्तुं ज्ञानविषयमाह–इन्द्रियाणीति । शरीरादिन्द्रियाणि पराणि उत्कृष्टानीत्यर्थः । इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मन इत्यध्याहारेण योजना ध्येया । तथा यो बुद्धेः परतस्तु सः, इत्यत्र 'बुद्धेरात्मा महान्परः । महतः परमव्यक्तं यो व्यक्तात्परतस्तु सः' इत्यपि ध्येयम् । स परमात्मेत्यर्थः । " इन्द्रियेभ्यः परा ह्यर्था" इत्यादि काठकश्रुतेः । अस्यार्थस्तु 'देवेभ्य इन्द्रियात्मभ्यो ज्यायांसोऽर्थाभिमानिनः । सोमवित्तपसूर्याप्या अश्व्यग्नीन्द्रेन्द्रसूनवः ॥ यमो दक्षश्चेन्द्रियेशाः सौपर्णी वारुणी तथा । उमेति चार्थमानिन्यस्तिस्रो द्विघ्येकदेवताः ॥ मनोभिमानिनो रुद्रवीन्द्रशेषास्त्रयोऽपि तु । श्रेष्ठा अर्थाभिमानिभ्यस्तेभ्यो बुद्धिः सरस्वती ॥ तस्या ब्रह्मा महानात्मा ततो व्यक्ताभिधा रमा । तस्यास्तु पुरुषो विष्णुः पूर्णत्वान्नैव तत्समः' इत्यादिकाठकभाष्यात् । तथा 'सर्वेभ्यः प्रवरा देवाः' इत्यादितात्पर्यवाक्याच्चावसेयः ॥ ४२ ॥

**एवं बुद्धेः परं बुद्ध्वा संस्तभ्यात्मानमात्मना ॥**
**जहि शत्रुं महाबाहो कामरूपं दुरासदम् ॥ ४३ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादे तृतीयोऽध्यायः ॥ ३ ॥

त० टी०–एवं ज्ञातस्वरूपाधिष्ठानबलस्य शत्रोर्हनने प्रयतितव्यमिति द्रढयति–एवमिति । एव-मुक्तप्रकारेण बुद्धेः परं सूक्ष्मं वासनारूपं प्रधानं वैरिणं बुद्ध्वा, आत्मानं मन आत्मना सात्त्विक्या

बुद्ध्या संस्तभ्य कामावशगं कृत्वा मनोबुद्धिभ्यां वियुक्तं निर्बलं सन्तं कामरूपं शत्रुं जहि । हे महाबाहो महान्तौ बाहू यस्य स त्वं शत्रुनिग्रहणे समर्थः । यद्यपि दुरासदं दुःखेनासादनीयं दुर्निग्राह्यमिति यावत्, तथापि मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा, इत्युक्तं सज्ज्ञानं मदुपासनं तदेव महाबाहुद्वयं तेन बलान्निगृह्य जहि नाशयेत्यर्थः । इन्द्रियाद्यधिष्ठानं त्याजयेति वा ॥ ४३ ॥

ज्ञानसाधनभूतोऽपि कर्मयोगोऽधिकारतः ॥ स्वप्रसादाय निष्कामः प्राधान्येनेह कीर्तितः ॥ १ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां कर्मयोगो नाम तृतीयोऽध्यायः ॥ ३ ॥

म० टी०—फलितमाह—एवमिति । 'रसोऽप्यस्य परं दृष्ट्वा निवर्तते' इत्यत्र यः परशब्देनोक्तस्तमेवंभूतं पूर्णमात्मानं बुद्धेः परं बुद्ध्वा साक्षात्कृत्य संस्तभ्य स्थिरीकृत्यात्मानं मन आत्मना एतादृशनिश्चयात्मिकया बुद्ध्या जहि मारय शत्रुं सर्वपुरुषार्थशातनम् । हे महाबाहो महाबाहोर्हि शत्रुमारणं सुकरमिति योग्यं संबोधनम् । कामरूपं तृष्णारूपम् । दुरासदं दुःखेनासादनीयं दुर्विज्ञेयानेकविशेषमिति यत्नाधिक्याय विशेषणम् ॥ ४३ ॥

उपायः कर्मनिष्ठात्र प्राधान्येनोपसंहृता । उपेया ज्ञाननिष्ठा तु तद्गुणत्वेन कीर्तिता ॥ १ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीयपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां ज्ञाननिष्ठावर्णनं नाम तृतीयोऽध्यायः ॥ ३ ॥

शं० टी०एवं बुद्ध्यादेर्दृश्यजातस्य द्रष्टारमात्मानं सन्मात्रमात्मत्वेनाधिगम्य तन्निष्ठया स्वशत्रोः कामस्य संसारहेतोर्निःशेषनिर्मूलनं कुर्विति कर्मयोगस्य मोक्षोपायभूतस्योपेयभूतया ज्ञाननिष्ठया संभाव्यमानः सर्वकामनिर्मोक एव मुक्तिरिति सूचयन् कर्मयोगमुपसंहरति—एवमिति । महाबाहो इति विशेषणं मुमुक्षोः कामरूपशत्रुसंहारणपटीयस्त्वद्योतनार्थम् । बुद्धेर्बुद्ध्यादेः सर्वदृश्यस्य परं विलक्षणं द्रष्टारमखण्डानन्दैकरसमात्मानमयमेवाहमस्मीत्यवं स्वात्मना सम्यग्बुद्ध्वाऽऽत्मन्येवात्मत्वबुद्धिं दृढां कृत्वा त्वमात्मानं कामस्याश्रयभूतं कारणभूतं चान्तःकरणमात्मना स्वस्वरूपेणान्तर्बहिःपूर्णेनाखण्डैकरसेन संस्तभ्य संयोज्यारोपितं नामरूपग्रहणमकृत्वा तदधिष्ठानभूतब्रह्मदर्शन एव नियोज्य सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मदर्शनादन्यत्र दुरासदं दुर्जयं जेतुमशक्यस्वभावं कामरूपं शत्रुं जहि विध्वंसय । विशिष्यविषयग्रहणमेव कामाविर्भूतिकारणं सर्वत्र ब्रह्मदृष्ट्या तदग्रहणमेव कामविनाशनहेतुरतः सर्वं ब्रह्मैव पश्यन् कामं निर्मूलयेत्यर्थः । अत्र न कर्मणामनारम्भात्, इति कर्मयोगमुपक्रम्य मुमुक्षोस्तत्त्यागनिन्दनपूर्वकं बहुवचनैः कर्मण एव कर्तव्यत्वं प्रतिपाद्य, अहं ममेति संसारस्य प्रवृत्तिलक्षणस्य कारणं काम एवेति काममाहात्म्यं वर्णयित्वा कर्मणा प्राप्तचित्तशुद्धेः पुरुषस्य ज्ञानयोगनिष्ठया तज्जयः कर्तव्य इति वदता भगवता "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः" इत्यादिश्रुतिप्रमाणककामनिर्मोक एव मोक्ष इति सूचितं भवति । तेन मोक्षहेतोर्ज्ञानयोगस्यैव प्राधान्यं कर्मयोगस्योपसर्जनतैवेत्यस्याध्यायस्य ज्ञानयोगपर्यवसायित्वात्तत्परत्वमेवेति सिद्धम् ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां तृतीयोऽध्यायः ॥ ३ ॥

श्री०— टी०—उपसंहरति—एवमिति । बुद्धेरेव विषयेन्द्रियादिजन्याः कामादिविक्रियाः आत्मा तु निर्विकारस्तत्साक्षीत्येवं बुद्धेः परमात्मानं बुद्ध्वा आत्मना एवंभूतनिश्चयात्मिकया बुद्ध्यात्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपं शत्रुं जहि मारय । दुरासदं दुःखेनासादनीयं दुर्विज्ञेयगतिमित्यर्थः ॥ ४३ ॥

स्वधर्मेण यमाराध्य भक्त्या मुक्तिमिता नराः । तं कृष्णं परमात्मानं तोषयेत्सर्वकर्मभिः ॥ १ ॥

इति श्रीमद्भगवद्गीताटीकायां सुबोधिन्यां तृतीयोऽध्यायः ॥ ३ ॥

**स० टी०**—एवं बुद्धेः परं पूर्णं साक्षात्कृत्य स्वया धिया ॥ स्थिरीकृत्य मनः कामं शत्रुं मारय सर्वथा ॥ १ ॥ समूलोच्छेदनं तस्य मारणं तत्त्वबोधतः ॥ तृष्णारूपं च दुर्ज्ञेयानेकभेदं भ्रमप्रदम् ॥ २ ॥ प्रयत्नाधिक्यमाश्रित्य नाश्योऽयं सर्वथा रिपुः ॥ ३ ॥ ४३ ॥ एतदध्यायश्लोकसंख्या ॥ ३९९ ॥

यं योगी श्रद्धधानः क्रतुभिरपि यजंश्चित्तशुद्ध्यैति मोक्षं सांख्यो यन्निष्ठयाप्तापरमितपदधीर्मज्जति स्वे सुखाब्धौ ॥ यत्स्मृत्या कामशत्रुं ह्यपनयति सुधीः साक्षिणं संविविच्य स्वान्ते तं दीनबन्धुं गुरुमतिसुहृदं संस्थितं कृष्णमीडे ॥ १ ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ ज्ञाननिष्ठाप्रधानोऽयं तृतीयः पूर्णतां गतः ॥ ३ ॥

आदित आरभ्य टीकाश्लोकसंख्या ॥ १३०६ ॥

**भा० टी०**—ततः किमित्याशङ्क्येन्द्रियादिसमाधानपूर्वकादात्मज्ञानात्कामजयो भवतीत्युपसंहरति—**एवमिति** । आत्मना संस्कृतमनसा बुद्ध्या वाऽऽत्मानं मनः सम्यक्स्तंभनं कृत्वा समाधाय बुद्धेः परं साक्षिभूतं ज्ञात्वा साक्षात्कृत्वा मूलोच्छेदेन कामरूपं दुरासदं दुर्विज्ञेयानेकविशेषं शत्रुं जहि परित्यज । महाबाहो इति संबोधयन्मदुक्तमुपायं विना महद्भिर्बाहुभिः बाह्यशत्रुवदयमजेय इति सूचयति । तदनेन तृतीयाध्यायेन साधनभूता कर्मनिष्ठा प्राधान्येनोक्ता साध्या तु ज्ञाननिष्ठा गुणत्वेनेति विवेक्तव्यम् ॥ ४३ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां तृतीयोऽध्यायः ॥ ३ ॥

**प० टी०**—अथोक्तार्थमुपसंहरति—**एवमिति** । भो महाबाहो पुरुषार्थिन् एवममुना प्रकारेण बुद्धेः परं बुद्ध्यातिरिक्तं तत्साक्षिणं परमात्मानं बुद्ध्वात्मनैवंभूतनिश्चयात्मिकया बुद्ध्यात्मानं मनः संस्तभ्य निश्चलं कृत्वा कामरूपं दुरासदं दुर्जयं शत्रुं जहि मारय । अथ तदेव बृहदारण्यके प्रथमतो दैवासुरसंग्रामव्याजेन द्व्याहप्राजापत्यादिदशभिः कण्डिकाभिः प्रतिपादितम् । तत्रोपसंहारश्रुतिस्तु " अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाऽविध्यन्स यथाश्मानमृत्वा लोष्टो विध्वंसेतैवं हैव विध्वंसमाना विष्वञ्चो विनेशुस्ततो देवा अभवन् परासुरा भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद " इत्यादिः । भाष्यम्—अथानन्तरं हशब्दो वृत्तान्तद्योतनार्थः । मोघप्रयत्नास्ते देवा इममासन्यं समीपे च वर्तमानं सर्वेन्द्रियचालकं मुख्यप्राणं वक्ष्यमाणेन्द्रशब्दव्यपदेश्यं प्रत्यूचुस्त्वं न उद्गायेति । त्वं नोऽस्मदर्थमुद्गानं कुरु । तस्योद्गानमवाग्जप्रणवरूपं तेन सोऽपि पूर्ववदुदगायत् । तदुक्तं छान्दोग्ये " अथाध्यात्मम् । एवं मुख्यप्राणस्तमुद्गीथमुपासीतोमिति " इति । अथ तं प्राणमुद्गातारं ज्ञात्वा कामक्रोधाद्यसुरास्तमभिहत्याविध्यन् वेधितवन्तो विध्वंसमाना विशीर्णमानाश्च विष्वञ्चोपि विश्वस्मिन्नञ्चन्ति ते विष्वञ्चो नानागतयो विनेशुर्विनाशं प्राप्ताः । अत्र दृष्टान्तमाह—यथाश्मानं पाषाणमृत्वा प्राप्य लोष्टः पांसुपिण्डो विध्वंसते तथैव मुख्यप्राणाभिहतास्ते दैत्या नाशं प्राप्ता इत्यर्थः । अत्रैतदुक्तं भवति । प्राणनं जीवनं करोतीति प्राणो वागाद्यधिदैवतानां शक्त्युत्पादको हिरण्यगर्भः । तथा कामादीनां प्रसरस्तु बुद्धिपर्यन्तमेव । तदग्रे कामादीनामभाव एव संभवतीत्यर्थः । ततो दैत्यनाशानन्तरं देवाः परासुरा अभवन् । अत्र मध्यमपदलोपी समासः । पराभूता असुरा यैस्ते परासुरा विजयवन्त इत्यर्थः । एवमुक्तप्रकारं दैवासुरसंग्रामं वेद स आत्मना भवति कामादीन् परास्य पराभूय स्वेनात्मना कृत्वा संपद्यते न कामाद्यैः । एवमात्मज्ञानसंपत्तौ जातायां तस्य द्विषन् द्वेष्टापि भ्रातृव्यो भवतीति । अयमेवार्थः सामवेदे कल्माषसाम्नोपपादितः—"हाउ ३ सेतूँस्तर ३ दुस्तरान् ३ दानेनादानं ३ हाउ ३ अह-

मस्मि प्रथमाजा ऋतस्या हाउ ३ सेतूँस्तर ३ दुस्तरान् ३ अक्रोधेन क्रोधम् " इत्यादिः । भाष्यम्—यथा जलप्रवाहप्रतिबन्धकाः सेतवो भवन्ति तद्वदखण्डैकरसानुभवे चत्वारः सेतवः सन्ति । ते तु अदानक्रोधाश्रद्धानृतानि । तांश्चतुरः सेतूँस्तर उल्लङ्घय । तत्र प्रथमसेतोरुल्लङ्घने उपायमाह—दानेनेति । यद्ब्रह्मार्पणत्वेन दीयते तद्दानशब्दव्यपदेश्यम्, ततोऽन्यज्जायापुत्रार्थं यद्व्ययीक्रियते तददानमेवं दानेन कृत्वा अदानं तर । अदानमपि ब्रह्मार्पणत्वेन गणयेदित्यर्थः । यतोऽहमृतस्य सत्यस्य ब्रह्मणः प्रथमजा प्रथमं शबलत्वेनोपस्थितो हिरण्यगर्भोऽस्मि । यत्किंचिद्दीयते तत्सर्वं मदर्पणमेव भवतीत्यर्थः । तथैव क्रोधलक्षणं द्वितीयसेतुमक्रोधेन क्षमया कृत्वा तरेति । अत्र पूर्वदेवेभ्योऽमृतस्य नाभा इत्यादिश्रुतयोऽस्माभिः शतश्लोकभाष्ये सम्यग्व्याख्याताः सन्ति । तदुक्तम्—"क्षमो न वाचां शिरसो न शूलं न चित्ततापो न तनोर्विमर्दः । न चापि हिंसादिरनर्थयोगः श्लाघ्या परं क्रोधजयेऽहमेका " ॥ ४३ ॥

अथाध्यायतात्पर्यम् ।

यज्ञाद्यं वर्णधर्मोचितमपि नियतं कर्म शर्मप्रदं स्यान्न त्याज्यं कार्यमेतद्विगुणमपि यतोऽकर्मणः कर्म शस्तम् । जीवन्मर्त्यः कदाचित्करचरणयुतो नैव तिष्ठत्यकर्मा तस्माच्छ्रेयान् स्वधर्मो यदुपतिगदितश्चित्तशुद्ध्यै तृतीये ॥ ३ ॥

इति दैवज्ञपण्डितसूर्यविरचितायां श्रीमद्भगवद्गीताटीकायां परमार्थप्रपायां तृतीयोऽध्यायः ॥ ३ ॥

रा० टी०—एवं तारतम्यान्तगतत्वेन ज्ञेयमुक्त्वा तज्ज्ञानमाह—एवमिति । एवमुक्तदिशा बुद्धेर्महतोऽव्यक्ताच्च परं बुद्ध्वा आत्मानं मन आत्मना बुद्ध्या संस्तभ्य निश्चलं कृत्वा दुरासदं दुःखेनासादनीयं निवर्तनीयमिति यावत् । कामरूपं शत्रुं जहि हतं कुरु हे महाबाहो इति ॥ ४३ ॥

इति श्रीगीतार्थसंग्रहे राघवेन्द्रयतिकृते तृतीयोऽध्यायः ॥ ३ ॥

## अथ चतुर्थोऽध्यायः ॥ ४ ॥

**श्रीभगवानुवाच—इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ॥**
**विवस्वान्मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥**

त० टी०—तृतीयाध्यायेऽमृदितकषायस्य मुमुक्षोः सहसा ज्ञानयोगेऽनधिकारात् ज्ञानवद्भ्रंशशङ्कावर्जितः कर्मयोग एव श्रेयोऽर्थः कार्यः । ज्ञानयोगाधिकारिणोऽपि फलकर्तृत्वत्यागपूर्वकं लोकसंग्रहाय कर्मैव कर्तव्यमिति निर्णीतम् । इदानीं चतुर्थेऽध्याये कर्मयोगस्यैव ज्ञानानुसंधानप्रकारं ज्ञानफलकत्वं कर्मस्वरूपं तद्भेदांश्च वक्तुं श्रेष्ठजनाधिकारिकत्वेन परंपराप्राप्तमित्युक्तकर्मयोगं प्रशंसन् श्रीभगवानुवाच—इममित्यादित्रिभिः । योऽयं कर्मयोगस्तुभ्यं मयोदितः स त्वां युद्धे प्रोत्साहनायैवाधुनिकः प्रोक्त इति न मन्तव्यं, किंतु जगद्रक्षणाय मन्वन्तरादौ जगद्यात्रानिर्वाहकाय विवस्वते सूर्याय परमश्रेयःसाधनतयेममेवाव्ययं योगमहं प्रोक्तवान् । विवस्वान्सूर्यो मनवे स्वपुत्राय सत्यव्रताय प्राह । मनुर्वैवस्वत इक्ष्वाकवे ज्येष्ठाय स्वपुत्रायाब्रवीत् ॥ १ ॥

म० टी०—यद्यपि पूर्वमुपेयत्वेन ज्ञानयोगस्तदुपायत्वेन च कर्मयोग इति द्वौ योगौ कथितौ तथाप्येकं सांख्यं च योगं च यः पश्यति स पश्यतीत्यनया दिशा साध्यसाधनयोः फलैक्यादैक्यमुपचर्य साधनभूतं कर्मयोगं साध्यभूतं च ज्ञानयोगमनेकविधगुणविधानाय स्तौति वंशकथनेन भगवान्—इममिति । इममध्या-

यद्वयेनोक्तं योगं ज्ञाननिष्ठालक्षणं कर्मनिष्ठोपायलभ्यं विवस्वते सर्वक्षत्रियवंशबीजभूतायादित्याय प्रोक्तवान् प्रकर्षेण सर्वसंदेहोच्छेदादिरूपेणोक्तवानहं भगवान् वासुदेवः सर्वजगत्परिपालकः सर्गादिकाले राज्ञां बलाधानेन तदधीनं सर्वजगत्पालयितुम् । कथमनेन बलाधानमिति विशेषणेन दर्शयति—अव्ययं अव्ययवेदमूलत्वादव्ययमोक्षफलत्वाच्च न व्येति स्वफलादित्यव्ययमव्यभिचारिफलं तथाचैतादृशेन बलाधानं शक्यमिति भावः । स च मम शिष्यो विवस्वान् मनवे वैवस्वताय स्वपुत्राय प्राह । स च मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् । यद्यपि प्रतिमन्वन्तरं स्वायंभुवमन्वादिसाधारणोयं भगवदुपदेशस्तथापि सांप्रतिकवैवस्वतमन्वन्तराभिप्रायेणादित्यमारभ्य संप्रदायो गणितः ॥ १ ॥

**शं० टी०**—द्वितीयाध्याये तदनन्तराध्याये च कर्मयोगैकोपायस्य ज्ञानयोगस्यैव एषा ब्राह्मी स्थितिः, इति संस्तभ्यात्मानमात्मना, इत्यादिवचनैर्मोक्षैकसाधनत्वं प्रतिपाद्याधुना तस्यैव योगस्य "एष पन्था एतत्कर्म । एतद्ब्रह्म" इत्यादिश्रुतिप्रमाणकत्वे सिद्धेऽपि सिद्धपरंपराभ्युपगतत्वेनापि प्रामाण्यं सूचयितुमिदमाह श्रीभगवान्—**इममिति** । अहं परमात्मा सृष्ट्यादौ अव्ययः अव्ययवैदिकप्रमाणत्वादव्ययः "न स पुनरावर्तते । न स पुनरावर्तते" इति श्रवणादव्ययफलहेतुत्वाद्वाऽव्ययः । सर्वत्र ब्रह्मदर्शनलक्षणयोगसाध्यस्य मोक्षस्य व्ययाऽभावाज्ज्ञानस्याव्ययफलहेतुत्वं यत्साध्यं तदनित्यमिति मोक्षस्य ज्ञानसाध्यत्वान्न नित्यत्वमिति नानुमानस्यावकाशस्तस्योक्तश्रुतिपराहतत्वात्तमव्ययं नित्यफलमित्यर्थः । इममध्यायद्वयेन प्रतिपादितं मोक्षैकप्रयोजनं योगं ज्ञानयोगं विवस्वते सूर्याय प्रोक्तवानस्मि । 'स्वयं तीर्णः परान् तारयति' इतिन्यायेन सोऽपि विवस्वान्मनवे प्राह स्वपुत्रायोक्तवान् । मनुरपि स्वपुत्रायेक्ष्वाकवेऽब्रवीदुपदिष्टवानित्यर्थः॥ १॥

**श्री० टी०**—आविर्भावतिरोभावावाविष्कर्तुं स्वयं हरिः ॥ तत्त्वंपदविवेकार्थं कर्मयोगं प्रशंसति ॥ एवं तावदध्यायद्वयेन कर्मयोगोपायो ज्ञानयोगोपायश्च मोक्षसाधनत्वेन उक्तः । तमेव ब्रह्मार्पणादिगुणविधानेन त्वंपदार्थविवेकादिना च प्रपञ्चयिष्यन्प्रथमं तावत्परंपराप्राप्तत्वेन स्तुवन् श्रीभगवानुवाच—**इममिति त्रिभिः** । अव्ययफलत्वादव्ययमिमं योगं पुराहं विवस्वते आदित्याय कथितवान् । स च स्वपुत्राय मनवे श्राद्धदेवाय प्राह । स च मनुः स्वपुत्रायेक्ष्वाकवेऽब्रवीत् ॥ १ ॥

**स० टी०**—यमाराध्यानन्तं रविमनुमुखा ब्रह्मपदवीं विदित्वा त्रैलोक्ये सुजनमणितामापुरमिताम् ॥ श्रुतीनां सिद्धान्तं प्रथितमहिमा देशिकवपुः स्वभक्तायादेशस्तमहममलं नौमि शतशः ॥१॥ साध्यसाधनरूपौ द्वौ योगौ पूर्वमुदाहृतौ ॥ साध्यसाधनयोरैक्यं फलैक्यादौपचारिकम् ॥ २ ॥ साधनं कर्मयोगाख्यं साध्यं ज्ञानमनेकधा ॥ गुणैः स्तौति हरिर्वंशकीर्तनेनाधुना स्फुटम् ॥ ३ ॥ एतावान्सर्ववेदार्थो गीतार्थश्च विवक्षितः ॥ श्रीहरेरित्यतश्चोर्ध्वं वेदार्थं सकलं हरिः ॥ ४ ॥ समाप्तं किलमन्वानः स्तौति वेत्यवतारिका ॥ इममध्याययुग्मेन प्रोक्तं योगं विवस्वते ॥५॥ सर्वक्षितीशसद्वंशबीजभूताय भास्वते ॥ सर्गादौ प्रोक्तवान्सर्वजगतां पालको ह्यहम् ॥ ६ ॥ जगत्पालयितुं राज्ञां बलाधानाय तेन ते ॥ युक्ता योगबलेन स्युः समर्था विश्वपालने ॥ ७ ॥ अक्षयश्रुतिमूलत्वादविनाशिफलत्वतः ॥ अव्ययं स्वफलान्नैव व्येति राज्ञां बलं ह्यतः ॥ ॥ ८ ॥ आधातुं राजयोगोऽयं क्षमते विश्वपालने ॥ मम शिष्यः स वै सूर्यः श्राद्धदेवाय सूनवे ॥ ९ ॥ मनवे प्राह तं योगं ब्रह्माप्तौ कारणं परम् ॥ मनुर्वैवस्वतः प्राह स्वपुत्रायादिभूभुजे ॥ १० ॥ इक्ष्वाकवे स इत्थं हि योगः संस्तूयतेऽधुना ॥ प्रतिमन्वन्तरं योगोपदेशो यद्यपीशितुः ॥ ११ ॥ साधारणस्तथाप्यर्कमारभ्य हरिणाधुना ॥ वैवस्वतमनौ वर्तमाने वंशपरंपरा ॥ १२ ॥ संप्रदायविशुद्ध्यर्थं प्रोक्ता लोकहिताय च ॥ एतादृशाय शिष्याय पुत्रायानुगताय च ॥ १३ ॥ देयोऽयं राजयोगश्चेत्याशयः श्रीरमापतेः॥ १४॥ १॥

**भा० टी०**—एवमध्यायद्वयेनोक्तस्य निष्ठाद्वयात्मकस्य वेदार्थस्य समाप्तिं मन्यमानः संप्रदायप्रदर्शनेन

तं स्तुवन् श्रीभगवानुवाच—इममिति । इममध्यायद्वयेनोक्तं योगं सांख्ययोगं कर्मयोगरूपोपायसहितं ससंन्यासमिमं संध्योपासनादिनिर्विकल्पकसमाध्यनुष्ठानान्तं कर्मयोगं ज्ञाननिष्ठोपसर्जनं पारिव्राज्यानधिकारिणां राज्ञामेव योग्यमित्यन्येषां व्याख्याने तु द्वितीयाध्यायार्थस्येदंशब्देनाग्रहणप्रसङ्गः । न चेष्टापत्तिः । अध्यायद्वयोक्तेऽर्थेऽप्रामाण्यशङ्का मा भूदिति विद्यावंशसंप्रदायं दर्शयति इममित्यादिनेति स्वोक्तिविरोधात् । एतेन राज्ञामेव योग्यमित्यपि प्रत्युक्तम् । अध्यायद्वयेन प्रतिपादितेऽवेदार्थेऽग्रे विस्तरेण वक्ष्यमाणे ब्राह्मणादियोग्यताभावप्रसङ्गात् । सर्गादौ विवस्वते सूर्यायाहं श्रीकृष्णः प्रोक्तवान् ब्रह्मपरिपालनसमर्थबलाधानाय ब्रह्मक्षत्रे परिपालिते सर्वं जगद्रक्षितं भवति । अव्ययमव्ययफलत्वादिदं भाष्यमुपलक्षणम्, अव्ययवेदमूलत्वात् न व्येति स्वफलादित्यव्ययमव्यभिचारि फलमित्यस्यापि यत्त्वव्ययमविच्छिन्नसंप्रदायमिति तत्तु स कालेनेह महता योगो नष्टः परंतप इतिवाक्यशेषविरोधादुपेक्ष्यम् । स च विवस्वान्मनवे श्राद्धदेवाय प्राह । स च मनुरिक्ष्वाकवे स्वपुत्रायादिराजायाब्रवीत् ॥ १ ॥

प० टी०—द्वितीयतृतीयाध्यायाभ्यां ज्ञानकर्मयोगौ निरूप्येदानीं ब्रह्मार्पणत्वेनैव कर्म मोक्षप्रापकं भवतीति निरूपणार्थं चतुर्थाध्यायस्य प्रवृत्तिस्तत्र वक्ष्यमाणमप्रमेयं यदुपदेशात्परंपरया बहुभिरनुष्ठितमित्याह—इममिति त्रिभिः । इमं वक्ष्यमाणं योगमव्ययमनुपक्षीणं पूर्वं विवस्वते प्रोक्तवान् । ततस्तमेव योगं विवस्वान् सूर्यो मनवे प्राह । मनुरिक्ष्वाकवेऽब्रवीत् ॥ १ ॥

रा० टी०—पूर्वाध्याये नियतं कुरु कर्म त्वमित्यादिना किंचिद्विवृतस्य निवृत्तकर्मणस्तथा यो बुद्धेः परतस्तु सः, इत्यादिना तारतम्यान्तगत्वेनोक्तविष्णोस्तज्ज्ञानस्य च विस्तरेण निरूपणमत्राध्याये क्रियते । एवं ज्ञात्वा कृतं कर्मेत्यतः प्राक्तनग्रन्थेन बुद्धेः परस्य विष्णोर्माहात्म्यमुच्यते । श्रेयान्द्रव्यमयाद्यज्ञादित्यतः पूर्वेण निवृत्तस्य कर्मणोऽन्यस्माद्भेदः । निवृत्तकर्मण्येवोपासनायज्ञादिरूपेण भेद इत्येवं कर्मविस्तारोक्तिः शेषेण ज्ञानमाहात्म्योक्तिरिति विवेकः । मयि सर्वाणीत्युक्तनिवृत्तकर्मलक्षणज्ञानोपायानुष्ठानानुष्ठानाभ्यां ये मे मतमित्यादिनार्थानर्थयोरुक्त्या अवश्यमनुष्ठेयमित्युक्तम् । पुनस्तदनुष्ठाने रुच्युत्पादनाय पूर्वानुष्ठितश्चायं धर्म इत्याह—इममित्यादित्रयेण । अव्ययफलत्वादव्ययम् । इमं योगं मयि सर्वाणीत्यनेनोक्तं निवृत्तकर्मलक्षणं ज्ञानोपायं विवस्वते आदित्याय स च स्वपुत्राय मनवे श्राद्धदेवाय स च मनुः स्वपुत्रायेक्ष्वाकवे ॥१॥

**एवं परंपराप्राप्तमिमं राजर्षयो विदुः ॥**
**स कालेनेह महता योगो नष्टः परंतप ॥ २ ॥**

त० टी०—एवमुक्तप्रकारेण शिष्टपरंपराप्राप्तमिमं योगं राजर्षयो राजानश्च ते ऋषयश्च निमिसगरादिप्रभृतयो विधिना पित्रादिप्रोक्तं विदुः । अतोऽनादिवेदमूलत्वेनानादिरयमित्यभिप्रायः । स एव महाप्रभावोऽयं योगः महता कालेनाधिकारिबुद्धिमान्द्याद्विच्छिन्नसंप्रदायतयेह लोके नष्टोऽदर्शनं यातः ॥ २ ॥

म० टी०—एवमादित्यमारभ्य गुरुशिष्यपरंपरया प्राप्तमिमं योगं राजानश्च ते ऋषयश्चेति राजर्षयः प्रभुत्वे सति सूक्ष्मार्थनिरीक्षणक्षमा निमिप्रमुखाः स्वपित्रादिप्रोक्तं विदुस्तस्मादनादिवेदमूलत्वेनानन्तफलत्वेनानादिगुरुशिष्यपरम्पराप्राप्तत्वेन च कृत्रिमत्वशङ्कानास्पदत्वान्महाप्रभावोऽयं योग इति श्रद्धातिशयाय स्तूयते। स एवं महाप्रयोजनोऽपि योगः कालेन महता दीर्घेण धर्मह्रासकरेण इह इदानीमावयोर्व्यवहारकाले द्वापरान्ते दुर्बलानजितेन्द्रियाननधिकारिणः प्राप्य कामक्रोधादिभिरभिभूयमानो नष्टो विच्छिन्नसंप्रदायो जातः, तं विना पुरुषार्थाप्राप्तेः अहो दौर्भाग्यं लोकस्येति शोचति भगवान् । हे परन्तप परं कामक्रोधा-

दिरूपं शत्रुगणं शौर्येण बलवता विवेकेन तपसा च भानुरिव तापयतीति परन्तपः शत्रुतापनो जितेन्द्रिय इत्यर्थः । उर्वश्युपेक्षणाद्यद्भुतकर्मदर्शनात् । तस्मात् त्वं जितेन्द्रियत्वादत्राधिकारीति सूचयति ॥ २ ॥

**शं० टी०**–स्वप्रोक्तज्ञानयोगस्य विशिष्टजनपरिगृहीतत्वमेव विस्पष्टयति–**एवमिति** । ब्रह्मनिष्ठया परं शत्रुं कामक्रोधादिलक्षणं तापयति विनाशयतीति परन्तपेति संबुद्धिः । एवमुक्तरीत्या विवस्वदादिविशिष्टजनपरम्पराप्राप्तं ज्ञानयोगमिममर्वाचीना राजर्षयो जनकादयो विदुरेवमेव विदुरिति वा राजानश्चते ऋषयश्च राजर्षय इदं ब्राह्मणादीनामुपलक्षणं राजानश्च ऋषयश्च विदुरिति वा । ननु राजभिर्ऋषिभिर्महापुरुषैः परिगृहीतत्वे सर्वत्र प्रसिद्धत्वात्किं त्वयोपदिश्यत इत्यत आह–**स इति** । पूर्वं विवस्वदादिषु मया प्रवर्तितो यो योगः स इदानीं महता कालेन कालदेशविपर्यासेन प्रवर्त्यप्रवर्तकजनाभावादिहास्मिँल्लोके नष्टः संप्रदायविच्छित्तिं प्राप्त इत्यर्थः ॥ २ ॥

**श्री० टी०**–**एवमिति** । राजानश्च ते ऋषयश्चान्येऽपि राजर्षयो निमिप्रमुखाः स्वपुत्रादिभिरिक्ष्वाकुप्रमुखैः प्रोक्तमिमं योगं विदुर्जानन्ति स्म । अद्यतनानामज्ञाने कारणमाह–हे परंतप शत्रुतापन स योगः कालवशादिह लोके नष्टो विच्छिन्नः ॥ २ ॥

**स० टी०**–एवमादित्यमारभ्य गुरुशिष्यपरंपरा ॥ तया प्राप्तमिमं योगं राजान ऋषयश्च ते ॥ १ ॥ प्रभुत्वे सति सूक्ष्मार्थनिरीक्षणक्षमा नृपाः ॥ विदुर्निम्यादयः पूर्वे स्वपित्राद्युक्तमादरात् ॥ २ ॥ अनादिवेदमूलत्वादनन्तफलभावतः ॥ अनादिसंप्रदायत्वाद्योगोऽयं स्तूयते महान् ॥ ३ ॥ एवं महाफलो योगो धर्महासकरेण सः ॥ नष्टो दीर्घेण कालेन द्वापरान्तेऽधुना क्षितौ ॥ ४ ॥ दुर्बलान्प्राप्य भोगादौ तत्परानजितेन्द्रियान् ॥ कामाद्यैरभिभूतः सन् विच्छिन्नः संप्रदायतः ॥ ५ ॥ क्रोधादिशत्रुसंघं यः शौर्येण स्वविवेकतः ॥ तापयत्यर्कवत्सत्वमधिकारी जितेन्द्रियः ॥ ६ ॥ स्वर्लोकेऽप्युर्वशीत्यागितया सम्यक्परीक्षितः ॥ परे विपक्षभूतास्तान् शौर्यतेजोगभस्तिभिः ॥ ७ ॥ तापयत्यर्कवद्वायं प्रोक्तस्त्वं हि परंतपः ॥ ८ ॥ २ ॥

**भा० टी०**–एवं क्षत्रियपरंपरया प्राप्तमागतमिमं योगं राजानश्च ते ऋषयश्च प्रभुत्वे सति सूक्ष्मार्थदर्शनसमर्थाः निमिप्रभृतयो विदुः । यत्तु जनकाजातशत्रुकैकयप्रभृतयो राजानः ऋषयश्च सनकवसिष्ठाद्याः सूक्ष्मार्थदर्शिन इति पक्षान्तरप्रदर्शनं तदरुचिग्रस्तं तद्बीजं तु अभ्यर्हितस्य पूर्वनिपातादि । स योगो महता कालेनेहलोके नष्टः संप्रदायविच्छेदेनादर्शनं गतः । परान् शत्रून्कामादीन् तापयतीति परंतपः, दुर्बलानजितेन्द्रियान् प्राप्य नष्टं योगं मत्त उपलभ्य जितेन्द्रियस्त्वं पुनर्लोके स्थापयेति सूचयन् संबोधयति–परंतपेति॥२॥

**प० टी०**–**एवमिति** । एवमिक्ष्वाकोः सूर्यवंशप्रधानीभूताद्राज्ञः सकाशात्परंपरया प्राप्तं राजर्षयो राजान ऋषयश्च विदुर्ज्ञातवन्तः । श्रुतिरपि–"तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवꣳ सूर्यश्च" इति ॥ २ ॥

**रा० टी०**–राजानश्च ऋषयश्चेति वा राजर्षयो राजश्रेष्ठाः निमिप्रभृतयः स्वपित्रिक्ष्वाकुप्रभृतिभिर्विदुरिति वा । अत्र प्रवचनवेदनशब्दैः विवस्वदादीनामनुष्ठानमप्युपलक्ष्यम् । अद्यतनानामज्ञाने कारणमाह–**स इति** । हे परन्तप शत्रुतापन स च योगः महता कालेन इह लोके नष्ट अदर्शनं गतः ॥ २ ॥

## स एवायं मया तेऽद्य योगः प्रोक्तः पुरातनः ॥
## भक्तोऽसि मे सखा चेति रहस्यं ह्येतदुत्तमम् ॥ ३ ॥

**त० टी०**–यः पुरा विवस्वते प्रोक्तः स एवायं पुरातनो योगो मयाऽद्य ते तुभ्यं प्रोक्तः । यतस्त्वं मे भक्तः सखा चासि अत एवोक्तः, नान्यस्मै प्रोक्त इत्यर्थः । अन्यस्मै कुतो नोक्तोऽत आह–हि यतः एतज्ज्ञानमुत्तमं रहस्यम्, अनधिकारिणो गोपनीयमित्यर्थः ॥ ३ ॥

**म० टी०–स एवेति।** य एवं पूर्वमुपदिष्टोऽप्यधिकार्यभावाद्विच्छिन्नसंप्रदायोऽभूद् यं विना च पुरुषार्थो न लभ्यते स एवायं पुरातनोऽनादिगुरुपरंपरागतो योगोऽद्य संप्रदायविच्छेदकाले मयाऽतिस्निग्धेन ते तुभ्यं प्रकर्षेणोक्तः। न त्वन्यस्मै कस्मैचित्। कस्मात् भक्तोऽसि मे सखा चेति। इतिशब्दो हेतौ। यस्मात्त्वं मम भक्तः शरणागतत्वे सत्यत्यन्तप्रीतिमान् सखा च समानवयाः स्निग्धसहायोऽसि सर्वदा भवसि अतस्तुभ्यमुक्त इत्यर्थः। अन्यस्मै कुतो नोच्यते तत्राह–हि यस्मादेतज्ज्ञानमुत्तमं रहस्यमतिगोप्यम् ॥ ३ ॥

**शं० टी०**–विनष्टसंप्रदायः स योगः किमर्थं पुनरिदानीं त्वया प्रवर्तित इत्याकाङ्क्षायां कूटस्थासङ्गचिद्रूप एवात्मन्यविक्रियेऽविषयेऽनात्मतद्धर्मकर्माण्यध्यस्य कर्ताहं भोक्ताहं सुखी दुःखीति मोमुह्यमानं दोधूयमानं लोकमिममालोक्य कृपया तं संसारसागरादुद्दिधीर्षया मया त्वां निमित्तीकृत्य प्रवर्तित इत्याशयेनाह–**स एवायमिति।** पूर्वं विवस्वते संप्रदायप्रवृत्तये पुरातनः अनादिश्रुतिमूलकत्वात्सनातनो यो योगः प्रोक्तः संसारध्वान्तविध्वंसकः स एवायं योगो मयाऽद्य कर्तृत्वभोक्तृत्वभ्रमेण मुह्यमानाय ते तुभ्यं प्रोक्तो बुद्धिमोहविच्छित्तये उपदिष्ट इत्यर्थः। अर्जुनस्य ज्ञानोपदेशयोग्यतां दर्शयति–**भक्त इत्यादिना।** 'यथा शिवमयो विष्णुरेवं विष्णुमयः शिवः' इति शिवकेशवयोरभेदश्रवणाच्छिवरूपं मामेव बहिरन्तरमायया श्रद्धया भजस्यतो मे भक्तोसि सदा मद्भजनशीलोऽसि सखा चासि सखा स्निग्धः सख्युः स्मरणश्रवणादिभिर्द्रवीभूयमानचित्तः स्निग्धश्चासि। ममायं भक्तः स्निग्धश्चेतिहेतोरेव स योगस्त उपदिष्ट इत्यर्थः। किमेवं पात्रपरिशीलनं योगोपदेशायेत्यत आह–रहस्यमिति। हि यस्मादेतज्ज्ञानशास्त्रं रहस्यं गोप्यं यस्मै कस्मैचित्पृष्टवते वक्तुमयोग्यम्। तत्कुत इत्यत आह–उत्तममिति। उत्तमं सर्वोत्तमं परं ब्रह्म तत्प्राप्तिहेतुत्वादुत्तमसाधनं मुक्तेरत एव रहस्यमत एव न कस्मैचिद्वक्तव्यमित्यर्थः ॥ ३ ॥

**श्री० टी०–स एवायमिति।** स एवायं योगोऽद्य विच्छिन्ने संप्रदाये सति पुनश्च मया ते तुभ्यमुक्तः यतस्त्वं मम भक्तोऽसि सखा चेति। अन्यस्मै मया नोच्यते हि यस्मादिदमुत्तमं रहस्यम् ॥ ३ ॥

**स० टी०**–स एवायं पराचीनस्तुभ्यं स्नेहवशान्मया ॥ प्रोक्तो यतस्त्वं मद्भक्तो मामेव शरणं गतः ॥ १ ॥ सखा स्निग्धः सहायोऽसि ततस्तुभ्यमनुत्तमम् ॥ गोपनीयमिदं ज्ञानं प्रोक्तमत्यद्भुतोपमम् ॥ २ ॥ मायातीतोऽप्यसङ्गो विमलमतिमतां भावगम्योऽप्यगम्यो यः संकल्पेन लोकान् विरचयति विभुर्ब्रह्मरुद्रादिनेतॄन् ॥ यस्तिष्ठन्स्वे महिम्नि स्वपदरतधियां भक्तिविद्यादिसिद्ध्यै स्वात्मानं नित्यशुद्धं वपुरिव सृजति श्रीपतिं तं श्रयेऽहम् ॥ ३ ॥ ॥ ३ ॥

**भा० टी०–स एवेति।** स आदित्यं प्रत्युक्त एव पुरातनोऽयमध्यायद्वयनिरूपितस्ते तुभ्यं मया प्रोक्तो भक्तोऽसि मे सखा चासीतिहेतोः।नन्वन्यस्मै कुतो नोच्यत इत्यत आह–रहस्यं गुह्यं हि यस्मादेतज्ज्ञानमुत्तमम्॥३॥

**प० टी०–स एवेति।** स एवायं पुरातनयोगो महता कालेन नष्ट उज्झितोऽभूत्सोऽयं योग इति कारणान्मया तेऽद्य प्रोक्तो वक्तुमुपक्रान्तः। इतीति किं यतस्त्वं मद्भक्तः सन् सखा भवसि सखित्वलक्षणा भक्तिस्त्वयि वर्तत इत्यर्थः। अथान्यत्रास्यानिर्वाच्यत्वमाह–किंभूतो योगः, उत्तमं रहस्यमेकान्तवेद्यमित्यर्थः ॥ ३ ॥

**रा० टी०**–कुतः प्रोक्त इत्यत उक्तम्–**भक्तोसीत्यादि।** हिशब्दो हेतौ। भक्तत्वादिहेतुना हि यतस्ते प्रोक्तोऽत एतद्रहस्यम् उत्तमं चेति। हि यतो रहस्यम् उत्तमं चातो भक्तत्वात्ते प्रोक्त अवश्यानुष्ठानायेति वा। कर्मणैव हि संसिद्धिमित्यत्र गृहस्थधर्मस्त्वया न त्याज्य इत्यत्र जनकादिज्ञान्याचार उक्तः, अत्र तु निवृत्तकर्मानुष्ठाने महदाचारः प्रमाणत्वेनोच्यत इति न तेन गतार्थत्वं शङ्क्यम् ॥ ३ ॥

**अर्जुन उवाच–अपरं भवतो जन्म परं जन्म विवस्वतः ॥**
**कथमेतद्विजानीयां त्वमादौ प्रोक्तवानिति ॥ ४ ॥**

त० टी०—इमं विवस्वते योगं प्रोक्तवानहमिति भगवतो वचः सर्वेश्वरत्वेन ( सर्वकारणत्वेन ) प्रकृतिकालकर्मादिनियन्तृत्वेनावस्थितस्य परस्य ब्रह्मणः स्वेच्छया वसुदेवगृहेऽवतीर्णस्य जीवेष्वसंभाविताश्चर्यरूपानेकचरितैर्ज्ञातानुभावोऽर्जुनः संभावितं जानन्नपि अनादिपापवासनादूषितमतीनां भगवति वासुदेवे विपरीतभावनावतां तत्रेतरसजातीयजन्मकर्मबुद्धिमपाकरणाय भगवज्जन्मकर्मयाथात्म्यं भगवन्मुखेनैव निर्णाययितुमुक्तमसंभावितमिव मन्वानोऽर्जुन उवाच—अपरमिति । अपरमर्वाचीनमस्मज्जन्मसमकालं वसुदेवगृहे भवतो जन्म प्रसिद्धं, परं प्राक्कालिकं मन्वादौ विवस्वतो जन्म, तस्मात्तवार्वाचीनत्वान्मनुष्यत्वाच्च प्राचीनाय देवाय विवस्वते त्वमादौ प्रोक्तवानेतत्कथमहं विजानीयां कथं संभावयेयमित्यर्थः ॥ ४ ॥

म० टी०—या भगवति वासुदेवे मनुष्यत्वेनासर्वज्ञत्वानित्यत्वाशङ्का मूर्खाणां तामपनेतुमनुवदन्नर्जुन आशङ्कते-अपरमिति। अपरमल्पकालीनमिदानींतनं वसुदेवगृहे भवतो जन्म शरीरग्रहणं विहीनं च मनुष्यत्वात् । परं बहुकालीनं सर्गादिभवमुत्कृष्टं च देवत्वाद् विवस्वतो जन्म। अत्रात्मनो जन्माभावस्य प्राग्व्युत्पादितत्वाद्देहाभिप्रायेणैवार्जुनस्य प्रश्नः । अतः कथमेतद्विजानीयामतिविरुद्धार्थतया । एतच्छब्दार्थमेव विवृणोति—त्वमादौ प्रोक्तवानिति । त्वमिदानीन्तनो मनुष्योऽसर्वज्ञः सर्गादौ पूर्वतनाय सर्वज्ञायादित्याय प्रोक्तवानिति विरुद्धार्थमेतदिति भावः । अत्रायं निर्गलितोर्थः। एतद्देहावच्छिन्नस्य तव देहान्तरावच्छेदेन वा आदित्यं प्रत्युपदेष्टृत्वं एतद्देहेन वा । नाद्यः जन्मान्तरानुभूतस्यासर्वज्ञेन स्मर्तुमशक्यत्वात्। अन्यथा ममापि जन्मान्तरानुभूतस्मरणप्रसङ्गः, तव मम च मनुष्यत्वेनासर्वज्ञत्वाविशेषात् । तदुक्तमभियुक्तैः 'जन्मान्तरानुभूतं च न स्मर्यते' इति । नापि द्वितीयः सर्गादाविदानीन्तनस्य देहस्यासद्भावात् । तदेवं देहान्तरेण सर्गादौ सद्भावसंभवेपीदानीन्तनस्मरणानुपपत्तिः । अनेन देहेन स्मरणोपपत्तावपि सर्गादौ सद्भावानुपपत्तिरित्यसर्वज्ञत्वानित्यत्वाभ्यां द्वावर्जुनस्य पूर्वपक्षौ ॥ ४ ॥

शं० टी०—राजसाधारणोऽयं कृष्णः, वसुदेवपुत्रत्वादनेनोक्तमिदं शास्त्रमप्रमाणमित्यत्र गीतायां सर्वेषामविश्वासः स्यात्तद्व्युत्कुर्भगवत ईश्वरत्वे विज्ञाते श्रद्धाभक्तिभ्यां प्रवृत्तिः संपद्येत तया सर्वे कृतार्थाः स्युरिति श्रीकृष्णस्य परमेश्वरत्वं तन्मुखेनैव प्रथयितव्यमित्याशयेनार्जुन उवाच—अपरमिति । श्रीकृष्णाभिधानस्य भवतो जन्मापरमर्वाचीनं वसुदेवगृहे त्वदुत्पत्तेर्दृष्टत्वात् ।विवस्वतः सर्वजगत्प्रकाशकं तेजोऽस्यास्तीति विवस्वान् सूर्यस्तस्य तु जन्म परं प्राचीनं सृष्ट्यादौ "चक्षोः सूर्यो अजायत"इति श्रवणात्। एवमुभयोर्जन्मव्यत्यासे सति त्वमादौ विवस्वत इमं योगं प्रोक्तवानित्येतद्वचनं सत्यमित्यहं कथं विजानीयामन्यो वा विजानीयात् 'एष वन्ध्यासुतो याति' इतिवाक्य इवास्मिन् वाक्ये त्वदुक्तशास्त्रे च सर्वेषामविश्वास एवोदेतीत्यर्थः ॥४॥

श्री० टी०—भगवतो विवस्वन्तं प्रति योगोपदेशासंभवं पश्यन्नर्जुन उवाच—अपरमिति । अपरमर्वाचीनं तव जन्म, परं प्राक्कालीनं विवस्वतो जन्म तस्मात्तवाधुनिकत्वाच्चिरन्तनाय विवस्वते त्वमादौ योगं प्रोक्तवानित्येतत्कथमहं विजानीयां ज्ञातुं शक्नुयाम् ॥ ४ ॥

स० टी०—वासुदेवे भगवति मूढानामविचारिणाम् ॥ मनुष्यत्वेन जन्मादिशङ्का या तां स चार्जुनः ॥ १ ॥ अपनेतुमनूद्यैवमुवाच श्रीपतिं प्रति ॥ वसुदेवगृहे जन्म भवतश्चाधुनातनम् ॥ २ ॥ सर्गादौ बहुकालीनं जन्मादित्यस्य च श्रुतम् ॥ कथमेतद्विजानीयामविरुद्धार्थभावतः ॥ ३ ॥ त्वमिदानींतनस्तस्मै सर्गादौ प्रोक्तवानिति ॥ ४ ॥ ४ ॥

भा० टी०—भगवति वासुदेवे मनुष्यवत् स्थिते याऽनीश्वरत्वासर्वज्ञत्वशङ्का मूर्खाणां तत्परिहाराय चोद्यमिव कुर्वन्नर्जुन उवाच—अपरमिति। भवतो जन्मापरमर्वाचीनं वसुदेवगृहे, विवस्वतो जन्म परं पूर्वं सर्गादौ

तत्तस्मादेतज्ज्ञानं त्वमेवादौ प्रोक्तवानिति कथं विजानीयाम्। यत्तु अपरमतिहीनं च मनुष्यत्वात् परमुत्कृष्टं च देवत्वात्, इति तत्तु त्वमादौ प्रोक्तवानिति वाक्यशेषविरोधादुपेक्ष्यं भाष्यस्योपलक्षणपरत्वेन तदविरोधेन वा ग्राह्यम्। आदित्यं प्रत्युपदेष्टा सर्वज्ञ ईश्वरस्त्वं तु तदन्यत्वादनीश्वरः, तत एवासर्वज्ञश्चेत्येवं तस्माद्विरुद्धमिदमहमादौ प्रोक्तवानिति ॥ ४ ॥

प० टी०–अथ संदिहानोऽर्जुनः पृच्छति–अपरमिति। भवतस्तव जन्मापरमाधुनिकं तथा विवस्वतः सूर्यस्य जन्म परं प्राचीनम्, एवं सत्यादौ त्वं प्रोक्तवानिति कथं विजानीयाम् ॥ ४ ॥

रा० टी०–मयि सर्वाणीत्यत्र हरेः पूज्यत्वमर्जुनस्य पूजकत्वमित्युक्तम्। तथा तस्यैव स्वतन्त्रकर्तृत्वमन्यस्य तदधीनकर्तृत्वमुक्तम्। एवं च पूज्यपूजकत्वादिना तत्राभिप्रेतं जीवेश्वरभेदं प्रमाणेन ज्ञातुं पृच्छति–अपरमित्यादिना। एवं च न त्वेवाहमित्यादिना सर्वप्रकारेणोत्पत्तिनाशराहित्यं भगवतः श्रुतवान्कथमेवमपरं पश्चात्तनं भवतो जन्मेति पृच्छतीति चोद्यानवकाशः ॥ ४ ॥

**श्रीभगवानुवाच–बहूनि मे व्यतीतानि जन्मानि तव चार्जुन ॥**
**तान्यहं वेद सर्वाणि न त्वं वेत्थ परंतप ॥ ५ ॥**

त० टी०–अर्जुनाभिप्रायज्ञ उक्तसंदेहनिरासाय श्रीभगवानुवाच–बहूनीति। मे मम जन्मानि देहेनाविर्भावरूपाणि बहूनि व्यतीतानि अभूवन्। तव च चकारादन्येषामपि जीवानाम्, हे अर्जुन! तानि आत्मनोऽन्येषां च सर्वाणि जन्मानि अहं सर्वज्ञो वेद जानामि, अनावृतज्ञानत्वात्। न त्वं वेत्थ आत्मनोऽपि, कुतोऽन्येषामावृतज्ञानत्वात् ॥ ५ ॥

म० टी०–बहूनीति। तत्र सर्वज्ञत्वेन प्रथमस्य परिहारं जन्मानि लीलादेहग्रहणानि लोकदृष्ट्यभिप्रायेणादित्यस्योदयवन्मे मम बहूनि व्यतीतानि तव चाज्ञानिनः कर्मार्जितानि देहग्रहणानि।तव चेत्युपलक्षणमितरेषामपि जीवानां जीवैक्याभिप्रायेण वा। हे अर्जुन! श्लेषेण अर्जुनवृक्षनाम्ना संबोधयन्नावृतज्ञानत्वं सूचयति। तानि जन्मान्यहं सर्वज्ञः सर्वशक्तिरीश्वरो वेद जानामि सर्वाणि मदीयानि त्वदीयान्यन्यदीयानि च न त्वमज्ञो जीवस्तिरोभूतज्ञानशक्तिर्वेत्थ न जानासि स्वीयान्यपि किं पुनः परकीयाणि, हे परन्तप परं शत्रुं भेददृष्ट्या परिकल्प्य हन्तुं प्रवृत्तोऽसीति विपरीतदर्शित्वाद्भ्रान्तोऽसीति सूचयति। तदनेन संबोधनद्वयेनावरणविक्षेपौ द्वावप्यज्ञानधर्मौ दर्शितौ ॥ ५ ॥

शं० टी०–इदं मम मायाविलासवैभवमेव सत्यमिति जानतां केवलमूढानामेवं प्रत्ययो न तु मत्तत्त्वं विदितवतां पण्डितानां तेषामस्त्येव मयीश्वरत्वभावना श्रद्धा भक्तिश्च मदुक्तौ च प्रमाणताबुद्धिः। अहं तु स्वयमजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावस्तथापि तस्यैतस्य स्वमहिम्ना सिद्धनित्यज्ञानैश्वर्यशक्तिबलवीर्यतेजःसंपन्नस्य लोकनिग्रहानुग्रहचिकीर्षोर्ममैवमेव बहूनि जन्मानि सन्तीत्याह–बहूनीति। मे ममाप्रमेयस्वभावस्यानन्तशक्तेः परमेश्वरस्य देवतिर्यङ्मनुष्येषु जन्मानि व्यतीतान्यतिक्रान्तानि बहून्यसंख्यानि सन्ति तव चान्येषां च भूतानां तानि गतानि जन्मानि सर्वाण्यहं वेद वेद्मि "नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते" इति श्रवणादप्रतिहतविज्ञानशक्तित्वादतीतानागतवर्तमानार्थं सर्वं विजानामीत्यर्थः। त्वं तु तानि जन्मानि न वेत्थ पापपुण्यरागद्वेषादिदोषैस्तिरोभूतज्ञानशक्तित्वादतीतानागतवर्तमानं न किंचिज्जानासीत्यर्थः ॥ ५ ॥

श्री० टी०–इति पृष्टवन्तमर्जुनं रूपान्तरेणोपदिष्टवानित्यभिप्रायेणोत्तरं श्रीभगवानुवाच–बहूनीति। मम बहूनि जन्मानि तव च व्यतीतानि तानि सर्वाण्यहं वेद जानामि अलुप्तविद्याशक्तित्वात्। त्वं तु न वेत्थ न जानासि अविद्यावृतत्वात् ॥ ५ ॥

स० टी०–शङ्कां परिहरन्नाह सर्वज्ञः सर्वशक्तिमान् ॥ अतिक्रान्तानि जन्मानि स्वेच्छोपात्तवपूंषि मे॥ १॥ बहूनि परमेशस्य वासुदेवस्य सद्विभोः ॥ तव चाज्ञानिनः कर्मनिर्मितानि तथार्जुन ॥ २ ॥ अर्जुनेतितरोनाम्ना सूचयत्यावृतां मतिम् ॥ तानि जन्मानि सर्वाणि सर्वज्ञोऽहं महेश्वरः ॥ ३ ॥ विजानामि त्वदीयानि मदीयानीत्यलुप्तदृक् ॥ न त्वं वेत्थ तिरोभूतज्ञानशक्तितयाज्ञकः ॥ ४ ॥ भेददृष्टया परं शत्रुं परिकल्प्य त्वमुद्यतः ॥ हन्तुं विपर्ययज्ञानवत्त्वादित्याशयो हरेः ॥ ५ ॥ ५ ॥

भा० टी०–मूर्खाणां शङ्का परिहरन् श्रीभगवानुवाच–बहूनीति । बहूनि मे तवान्यस्य च जन्मानि व्यतीतानि तानि सर्वाण्यहं शुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तिर्वेद जानामि त्वं तु न वेत्थ धर्माधर्मादिप्रतिबद्धज्ञानशक्तित्वान्न जानासि, इत्येतत्सूचनार्थमेव संबोधनद्वयम्, हे अर्जुन शुद्धधर्मवत्त्वाच्छुद्ध हे परंतप परमात्मानमन्यान्वा अधर्मेण तापयतीति तथेतिविवक्षणात् ॥ ५ ॥

प० टी०–तत्र भगवानाह–बहूनीति । मम तव जन्मानि च बहूनि व्यतीतानि व्यतिक्रान्तानि । तर्हि को विशेष इत्याह–तानीति । तानि सर्वाणि जन्मान्यहं वेद त्वं च न वेत्थ न ज्ञातवान् । अयमर्थः । ममेश्वरस्य जन्म स्वेच्छाविर्भावमात्रम्, अत एवालुप्तज्ञानशक्तित्वात्सर्वाणि वेद्मि, तव जीवस्य तु कर्मवशाद्देहधारिणो लुप्तज्ञानशक्तित्वान्न प्राक्तनजन्मज्ञानम् ॥ ५ ॥

रा० टी०–अत एव विदितप्रश्नाभिप्रायो भगवान् तव चेति न त्वं वेत्थेति पराक्त्वाज्ञत्वयोरुक्तिं कृतवान् । अन्यथा बहूनि मे व्यतीतानि जन्मानीत्येतावता प्रश्नपरिहारात्तव चेत्याद्युक्तिर्व्यर्था स्यादिति ज्ञेयम् ॥ ५ ॥

**अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ॥**
**प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया ॥ ६ ॥**

त० टी०–तव जन्मन्यपि ज्ञानावरणं नास्ति चेत्तर्हि कथं जन्मेत्यपेक्षायामाह–अज इति । अजोऽपि सन् जीववत्कर्मनिमित्तजन्माऽपूर्वदेहग्रहणं तद्रहितोऽपि सन्, अव्ययात्मा पूर्वदेहवियोगरहितोऽपि सन्, भूतानां सर्वेषां प्राणिनामीश्वरो नियन्ताऽपि सन्, स्वां प्रकृतिं स्वभावमसङ्गत्वाजेयत्वानतिक्रमणीयत्वावार्यत्वादि स्वं स्वभावमधिष्ठाय आत्ममायया मीयते कार्यमनयेति माया ज्ञानं संकल्पो वा "माया वयुनं ज्ञानम्" इति निघण्टुकोशात् । तथाच प्रकृतिं स्वामधिष्ठाय स्वस्वभावमपरित्यज्यात्मसंकल्पेन संभवामि सम्यक् लोकहितं कुर्वन्नाविर्भवामि । "अजायमानो बहुधा व्यजायत" इति श्रुतिरप्याह । तथा भगवद्विग्रहप्रकारोऽपि श्रुतिनिर्णीत एव । "आनन्दरूपममृतं यद्विभाति, आदित्यवर्णं तमसः परस्तात्, हिरण्यकेशः हिरण्यश्मश्रुः आप्रणखात्सुवर्णः यदात्मको भगवांस्तदात्मिका व्यक्तिः । किमात्मको भगवान् ? ज्ञानात्मक ऐश्वर्यात्मकः तमेकं गोविन्दं सच्चिदानन्दविग्रहम्" इत्यादिश्रुतिभ्यो ज्ञेयः । एवं च सर्वज्ञः सर्वशक्तिः सर्वेश्वरोऽजहत्स्वरूपगुणशक्तिरेव सच्चित्प्रकाशानन्दविग्रहेण स्वसंकल्पेनैवाविर्भवामीति न मेऽसंभावितोक्तिरिति भावः । केचित्तु प्रकृतिं स्वामधिष्ठाय मम वैष्णवीं त्रिगुणात्मिकां यस्या वशे सर्वं जगद्वर्तते तया मोहितः सन्स्वमात्मानं वासुदेवं न जानाति । तां प्रकृतिं स्वात्ममायामधिष्ठाय वशीकृत्य संभवामि देहवानिव जात इव आत्मनो मायया न परमार्थतः, लोकवदिति व्याख्यायन्ते तदुक्तश्रुतिविरुद्धत्वात् 'जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः' इति भक्ष्यमाणभगवद्वाक्यविरोधाच्चोपेक्षणीयं, त्रिगुणात्मिकमायाकृतजन्मकर्मणोर्दिव्यत्वासंभवात् । किंच वगवद्विग्रहस्य त्रिगुणमायिकत्वाङ्गीकारे भौतिकत्वं मिथ्यात्वं चाप्यङ्गीकृतं स्यात् । तथात्वे दोष उक्तो

बृहद्वैष्णवे " यो वेत्ति भौतिकं देहं कृष्णस्य परमात्मनः । स सर्वस्माद्बहिष्कार्यः श्रौतस्मार्तविधानतः ॥ मुखं तस्यावलोक्यापि सचैलं स्नानमाचरेत् " । महाभारतेऽपि " न भूतसंघसंस्थानो देहोऽस्य परमात्मनः " इति । श्रीभागवतेऽपि " अस्यापि देववपुषो मदनुग्रहस्य स्वेच्छामयस्य न तु भूतमयस्य कोऽपि " इति । तस्माच्छ्रुतिस्मृतीतिहासपुराणाविरोधायास्मदुक्तार्थ एवास्तिकैरङ्गीकार्य इत्यलं विस्तरेण ॥ ६ ॥

म० टी०—नन्वतीतानेकजन्मवत्त्वमात्मनः स्मरसि चेतर्हि जातिस्मरो जीवस्त्वं, परजन्मज्ञानमपि योगिनः सार्वात्म्याभिमानेन ' शास्त्रदृष्ट्या तूपदेशो वामदेववत् ' इति न्यायेन संभवति । तथाचाह वामदेवो जीवोपि " अहं मनुरभवं सूर्यश्चाहं कक्षीवानृषिरस्मि विप्रः" इत्यादिदाशतय्याम् । अत एव न मुख्यः सर्वज्ञस्त्वं तथाच कथमादित्यं सर्वज्ञमुपदिष्टवानस्यनीश्वरः सन् । न हि जीवस्य मुख्यं सार्वज्ञ्यं संभवति व्यष्ट्युपाधेः परिच्छिन्नत्वेन सर्वसंबन्धित्वाभावात् । समष्ट्युपाधेरपि विराजः स्थूलभूतोपाधित्वेन सूक्ष्मभूतपरिणामविषयं मायापरिणामविषयं च ज्ञानं न संभवति । एवं सूक्ष्मभूतोपाधेरपि हिरण्यगर्भस्य तत्कारणमायापरिणामाकाशादिसर्गक्रमादिविषयज्ञानाभावः सिद्ध एव । तस्मादीश्वर एव कारणोपाधित्वादतीतानागतवर्तमानसर्वार्थविषयज्ञानवान्मुख्यः सर्वज्ञः । अतीतानागतवर्तमानविषयं मायावृत्तित्रयमेकैव वा सर्वविषया मायावृत्तिरित्यन्यत् । तस्य च नित्येश्वरस्य सर्वज्ञस्य धर्माधर्माद्यभावेन जन्मैवानुपपन्नमतीतानेकजन्मवत्त्वं तु दूरोत्सारितमेव । तथा च जीवत्वे सार्वज्ञ्यानुपपत्तिरीश्वरत्वे च देहग्रहणानुपपत्तिरिति शङ्काद्वयं परिहरन्नित्यत्वपक्षस्यापि परिहारमाह—अपूर्वदेहेन्द्रियादिग्रहणं जन्म । पूर्वगृहीतदेहेन्द्रियादिवियोगो व्ययः । यदुभयं तार्किकैः प्रेत्यभाव इत्युच्यते । तदुक्तम् 'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च' इति तदुभयं च धर्माधर्मवशाद्भवति । धर्माधर्मवशत्वं चाज्ञस्य जीवस्य देहाभिमानिनः कर्माधिकारित्वाद्भवति तत्र यदुच्यते सर्वज्ञस्येश्वरस्य सर्वकारणस्येदृग्देहग्रहणं नोपपद्यत इति तत्तथैव । कथं यदि तस्य शरीरं स्थूलभूतकार्यं स्यात्तदा व्यष्टिरूपत्वे जाग्रदवस्थाऽस्मदादितुल्यत्वं समष्टिरूपत्वे च विराट्जीवत्वं तस्य तदुपाधित्वात् । अथ सूक्ष्मभूतकार्यं तदा व्यष्टिरूपत्वे स्वप्नावस्थाऽस्मदादितुल्यत्वं समष्टिरूपत्वे च हिरण्यगर्भजीवत्वं तस्य तदुपाधित्वात् । तथाच भौतिकं शरीरं जीवानाविष्टं परमेश्वरस्य न संभवत्येवेति सिद्धम् । नच जीवाविष्ट एतादृशे शरीरे तस्य भूतावेशवत्प्रवेश इति वाच्यम्, तच्छरीरावच्छेदेन तज्जीवस्य भोगाभ्युपगमेऽन्तर्यामिरूपेण सर्वशरीरप्रवेशस्य विद्यमानत्वेन शरीरविशेषाभ्युपगमवैयर्थ्यात् । भोगाभावे च जीवशरीरत्वानुपपत्तेः । अतो न भौतिकं शरीरमीश्वरस्येति पूर्वार्धेनाङ्गीकरोति—**अजोपि सन्निति** । अजोपि सन्नित्यपूर्वदेहग्रहणम् । अव्ययात्मापि सन्निति पूर्वदेहविच्छेदं भूतानां भवनधर्माणां सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानामीश्वरोपि सन्निति धर्माधर्मवशत्वं निवारयति । कथं तर्हि देहग्रहणमित्युत्तरार्द्धेनाह—**प्रकृतिमिति** । प्रकृतिं मायाख्यां विचित्रानेकशक्तिमघटमानघटनापटीयसीं स्वां स्वोपाधिभूतामधिष्ठाय चिदाभासेन वशीकृत्य संभवामि तत्परिणामविशेषैरेव देहवानिव जात इव च भवामि । अनादिमायैव मदुपाधिभूता यावत्कालस्थायित्वेन च नित्या जगत्कारणत्वसंपादिका मदिच्छयैव प्रवर्तमाना विशुद्धसत्त्वमयत्वेन मम मूर्तिस्तद्विशिष्टस्य चाजत्वमव्ययत्वमीश्वरत्वं चोपपन्नमतोऽनेन नित्येनैव देहेन विवस्वन्तं च त्वां च प्रति इमं योगमुपदिष्टवानहमित्युपपन्नम् । तथाच श्रुतिः " आकाशशरीरं ब्रह्म " इति । आकाशोऽत्राव्याकृतम् । "आकाश एव तदोतं च प्रोतं च" इत्यादौ तथा दर्शनात् 'आकाशस्तल्लिङ्गात् ' इति न्यायाच्च । तर्हि भौतिकविग्रहाभावात्तद्धर्ममनुष्यत्वादिप्रतीतिः कथमिति चेत् तत्राह—आत्ममाययेति । मन्माययैव मयि मनुष्यत्वादिप्रतीतिर्लोकानुग्रहाय न वस्तुवृत्त्येति भावः । तथा चोक्तं मोक्षधर्मे ' माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि ' इति सर्वभूतगुणै-

युक्तं कारणोपाधिं मां चर्मचक्षुषा द्रष्टुं नार्हसीत्यर्थः । उक्तं च भगवता भाष्यकारेण स च भगवान् ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः सदा संपन्नस्त्रिगुणात्मिकां वैष्णवीं स्वां मायां प्रकृतिं वशीकृत्याजोऽव्ययो भूतानामीश्वरो नित्यशुद्धबुद्धमुक्तस्वभावोऽपि सन् स्वमायया देहवानिव जात इव च लोकानुग्रहं कुर्वन्लक्ष्यते स्वप्रयोजनाभावेपि भूतानुजिघृक्षयेति । व्याख्यातृभिश्चोक्तं स्वेच्छाविनिर्मितेन मायामयेन दिव्येन रूपेण संबभूवेति " नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्तिमान् । स एव भगवद्देह इति भाष्यकृतां मतम् " । अन्ये तु परमेश्वरे देहदेहिभावं न मन्यन्ते । किंतु यश्च नित्यो विभुः सच्चिदानन्दघनो भगवान्वासुदेवः परिपूर्णो निर्गुणः परमात्मा स एव तद्विग्रहो नान्यः कश्चिद्भौतिको मायिको वेति । अस्मिन्पक्षे योजना " आकाशवत्सर्वगतश्च नित्यः । अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा " इत्यादिश्रुतेः । " असंभवस्तु सतोनुपपत्तेः" "नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः" इत्यादिन्यायाच्च । वस्तुगत्या जन्मविनाशरहितः सर्वभासकः सर्वकारणमायाधिष्ठानत्वेन सर्वभूतेश्वरोपि सन्नहं प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसम् । मायां व्यावर्तयति–स्वामिति निजस्वरूपमित्यर्थः । " स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि " इतिश्रुतेः । स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सन् संभवामि देहदेहिभावमन्तरेणैव देहिवद्व्यवहारामि । कथं तर्हि देहे सच्चिदानन्दघने देहत्वप्रतीतिरत आह--आत्ममाययेति । निर्गुणे शुद्धे सच्चिदानन्दरसघने मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिर्मायामात्रमित्यर्थः । तदुक्तम् 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम् । जगद्धिताय सोप्यत्र देहीवाभाति मायया' इति 'अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम् । यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम् ' इति च । केचित्तु नित्यस्य निरवयवस्य निर्विकारस्यापि परमानन्दस्यावयवावयविभावं वास्तवमेवेच्छन्ति ते 'निर्युक्तिकं ब्रुवाणस्तु नास्माभिर्विनिवार्यत' इति न्यायेन नापवाद्याः । यदि संभवेत्तथैवास्तु किमतिपल्लवितेनेत्युपरम्यते ॥ ६ ॥

शं० टी०–ननु 'कर्मणा जायते जन्तुः कर्मणैव प्रलीयते' इति स्मरणाज्जन्मादिहेतोः पुण्यपापादेरभावात्तवेश्वरस्य स्वतन्त्रस्य कथं जन्मादिरित्याकाङ्क्षायां माययैव मम जन्मादयो न तु लोकवत्कर्मणेति बोधयितुमाह–अजोऽपीति । कदाचित्कथंचित्कुतश्चिन्न जायत इत्यजः " न तस्य कश्चिज्जनिता न चाधिपः "इतिश्रवणाज्जन्महेतोरुपादानादेरभावादजो जन्मरहित एवास्मि । एवमजः सन्नपि तथाऽव्ययात्मा निरवयवत्वेन विनाशकारणसामग्रीसंबन्धायोगादव्ययः नाशनक्रियाया अविषयः आत्मा स्वभावो यस्य सोऽव्ययात्मा नित्यः " अजो नित्यः" इति श्रवणादव्ययात्मा नित्य एवास्मि न क्वचिदपि षष्ठविकारवान् । अजोऽव्ययात्मेति विशेषणद्वयं तदन्तरालविकारासंभवद्योतनार्थम् । आद्यन्तयोरभावे तदन्तरवस्थाकल्पनाऽयोगात् । ननु तव कर्मनिमित्तकजन्माभावेपीश्वरो नियन्ता स्यादेवेत्यत आह–भूतेति । ब्रह्मादीनामन्येषां च भूतानामहमेवेश्वरो नियन्ता स्वसन्निधिमात्रेण " एष सर्वेश्वरः" इति श्रुतेः । न तु ममान्योऽस्ति नियन्ता "न चाधिपः" इतिश्रवणादतोऽहं न कस्यापि च नियोगविषयः । एवमजोऽप्यव्ययात्मापीश्वरोपि च सन्नहं निर्विकार एव परमात्मा प्रकृतिं प्रकर्षेण कृतिः सृष्ट्यादिक्रिया यस्याः सकाशान्मम सा प्रकृतिस्त्रिगुणात्मिका दैवी माया " मायां तु प्रकृतिं विद्यात् " इति श्रुतेः । तां प्रकृतिं स्वां स्वकीयाम् " कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः " इति श्रवणात् स्वस्योपाधिभूतामव्यक्तसंज्ञिकां मूलप्रकृतिमधिष्ठाय तस्यां तत्कार्ये चाहंममेति भावनां कृत्वा योऽजत्वादिलक्षणः सोऽहं संभवाम्यात्ममायया आत्माधीना माया आत्ममाया तया संभवामि । यद्वा भानोः प्रभावद्वह्नेर्दग्धृत्वशक्तिवदात्मनो ममाऽभिन्ना माया आत्ममाया नतु मद्व्यतिरिक्ता " देवात्मशक्तिं स्वगुणैर्निगूढाम् " इति श्रवणादन्यथा त्वद्वैतहानिः श्रुतिविरोधश्च स्यादतो वह्नेर्दहनशक्तिवदभिन्नैव सा प्रकृतिशब्दिता माया तयैवाहं जन्मवान्न तु वस्तुतस्तथात्वे " निष्कलं निष्क्रियम " इति " न जायते

म्रियते वा विपश्चित्" इति श्रुतेर्विरोधापत्तेस्ततो मायथैवाहं देवादिषु संभवामीत्यर्थः। एवं तत्पदार्थस्येश्वरस्य जन्मादेर्मायिकत्वे बोधिते त्वंपदार्थस्यापि तदभिन्नत्वाज्जन्मकर्माद्याविद्यकमेवेति सूचितं भवति ॥ ६ ॥

**श्री० टी०**—नन्वनादेस्तव कुतो जन्म अविनाशिनश्च कथं पुनर्जन्म येन बहूनि मे व्यतीतानीत्युच्यते, ईश्वरस्य तव पुण्यपापविहीनस्य कथं जीववज्जन्मेत्यत आह—**अजोऽपीति** । सत्यमेवं तथापि अजोऽपि सन्नहं तथाव्ययात्मापि अनश्वरस्वभावोऽपि सन् तथा ईश्वरोऽपि कर्मपारतन्त्र्यरहितोऽपि सन्स्वमायया संभवामि सम्यगप्रच्युतज्ञानबलवीर्यादिशक्त्यैव भवामि । ननु तथापि षोडशकलात्मकलिङ्गदेहशून्यस्य तव कुतो जन्मेत्यत उक्तम्—स्वां शुद्धसत्त्वात्मिकां प्रकृतिमधिष्ठाय स्वीकृत्य विशुद्धोर्जितसत्त्वमूर्त्या स्वेच्छया अवतरामीत्यर्थः ॥ ६ ॥

**स० टी०**—सर्वज्ञस्य तवेशस्य धर्माधर्माद्यभावतः ॥ जन्मैवासंभवि स्वामिन्कुतस्ते बहुधा जनिः ॥ १ ॥ इत्यत्राह चिदानन्दकन्दलः श्रीरमापतिः ॥ अपूर्वदेहसंबन्धो जन्म तद्वर्जितोऽप्यहम् ॥ २ ॥ पूर्वदेहस्य विच्छेदो व्ययस्तद्रहितोऽपि सन् ॥ ब्रह्मादीनां च भूतानां सर्वेषामीश्वरोऽपि सन् ॥ ३ ॥ विचित्रानेकाशक्त्याढ्यां मायाख्यां प्रकृतिं स्विकाम् ॥ स्वोपाधिभूतामत्यन्तासंभावितप्रदर्शिनीम् ॥ ४ ॥ चिच्छायया-वशीकृत्य स्यामहं देहवानिव ॥ अजातो जात इव च स्वेच्छया स्वात्ममायया ॥ ५ ॥ वैष्णवी मम मायेयं मनुष्यत्वादिनाटनम् ॥ लोकस्यानुग्रहायैव वस्तुवृत्त्या न तन्मयि ॥ ६ ॥ माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद ॥ सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि ॥ ७ ॥ मोक्षधर्मोक्तरीत्यापि वस्तुतोऽहं निराकृतिः ॥ यस्याविद्यादिसंबन्धो जन्म तस्यैव युज्यते ॥ ८ ॥ निरविद्यस्य शुद्धस्य कथं भूतमयं वपुः ॥ तथैवोक्तं पुराणेऽपि ब्रह्माण्डाख्ये महर्षिणा ॥ ९ ॥ स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते ॥ किंतु निर्दोषचैतन्यं सुखनित्यां स्विकां तनुम् ॥ १० ॥ प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा ॥ नित्यो यः कारणोपाधिर्मायाख्यो नैकशक्तिमान् ॥ ११ ॥ स एव भगवद्देह इति भाष्यकृतां मतम् ॥ अन्ये त्वाहुर्न चैवास्ति देहदेहिभिदा हरौ ॥ १२ ॥ किंत्वखण्डचिदानन्दघनो यो विभुरद्वयः ॥ निर्गुणो नित्यपूर्णात्मा विग्रहोऽस्य स एव हि ॥ १३ ॥ भौतिको मायिको वान्यो नास्ति देहो हरेर्विभोः ॥ अत आह स्वयं विष्णुरज इत्यादिका गिरः ॥ १४ ॥ आकाशवत्सर्वगतो नित्य इत्यादिवेदतः ॥ प्रकृतिं स्वां चिदानन्दस्वभावं प्रकृतेः परम् ॥१५॥ सर्वदैकरसं नित्यं स्वे महिम्नि प्रतिष्ठितम् ॥ स्वस्वरूपमधिष्ठाय स्वस्वरूपे-ह्यवस्थितः ॥ १६ ॥ देहिवद्विहरामीशो देहदेहिभिदोज्झितः ॥ १७ ॥ स्वतः स्वच्छे बोधे विगलितमहामोहतिमिरे मयीशे जन्मादेर्न भवति कदा कापि कलना ॥ स्वभक्तोद्धारार्थं स्वयमहमजोऽप्यात्मकलया चिदानन्दाकारं पुनरिव सृजामीड्यममलम् ॥ १८ ॥ ६ ॥

**भा० टी०**—ईश्वरस्य तव धर्माधर्माद्यभावाज्जन्मैवायुक्तं व्यतीतानेकजन्मवत्त्वं तु दूरं निरस्तमित्याशङ्क्य वस्तुतो जन्माभावेऽपि स्वमायया जन्म संभवतीत्याह—**अजोऽपीति** । अजो जन्मरहितोऽपि सन्नव्ययात्माऽक्षीणज्ञानशक्तिस्वभावोऽपि सन् कदापि मम विच्छेदाभावात् । तथा भूतानां ब्रह्मादिस्तम्बपर्यन्तानामीश्वर ईशनशीलोऽपि सन् प्रकृतिं मम वैष्णवीं त्रिगुणात्मिकां मायां यस्या वशे सर्वं जगद्वर्तते यया मोहितः सन् स्वमात्मानं वासुदेवं न जानाति तामधिष्ठाय वशीकृत्य संभवामि देहवानिव जात इव, आत्मनः स्वस्य मायया मन्मायथैव मयि विग्रहवत्त्वादिप्रतीतिः साधकानुग्रहार्थं न परमार्थत इति भावः । तदुक्तं मोक्षधर्मे 'एतत्त्वया न विज्ञेयं रूपवानिति दृश्यते। इच्छन्मुहूर्तान्नश्येयमीशोऽहं जगतो गुरुः" नश्येयमदृश्यो भवेयमित्यर्थः । 'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं न तु मां द्रष्टुमर्हसि' इति सर्वभूतगुणैर्युक्तं कारणोपाधिकमित्यर्थः । अत्र केचित् 'नित्यो यः कारणोपाधिर्मायाख्योऽनेकशक्ति-

मान्। स एव भगवद्देह इति भाष्यकृतां मतम्' इत्याचार्यानुसारिव्याख्यानानन्तरं तन्मतं संग्रहेणोक्त्वा मतान्तरं प्रदर्शयन्ति। अन्ये तु परमेश्वरे देहदेहिभावं न मन्यन्ते किंतु यश्च नित्यो विभुः सच्चिदानन्दघनो भगवान्वासुदेवः परिपूर्णो निर्गुणः परमात्मा जन्मविनाशरहितः सर्वभासकः सर्वकारणत्वेन सर्वभूतेश्वरोऽपि सन् अहं प्रकृतिं स्वभावं सच्चिदानन्दघनैकरसम्। मायां व्यावर्तयति—स्वामिति। निजरूपमित्यर्थः। "स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि" इतिश्रुतेः स्वस्वरूपमधिष्ठाय स्वरूपावस्थित एव सन् संभवामि देहदेहिभावमन्तरेणैव देहिवद्व्यवहरामि। कथं तर्हि देहे सच्चिदानन्दघने देहित्वप्रतीतिरत आह—आत्ममाययेति। निर्गुणे शुद्धे सच्चिदानन्दरसघने मयि भगवति वासुदेवे देहदेहिभावशून्ये तद्रूपेण प्रतीतिर्मायामात्रमित्यर्थः। तदुक्तम् 'कृष्णमेनमवेहि त्वमात्मानमखिलात्मनाम्। जगद्धिताय सोऽप्यत्र देहीवाभाति मायया' इति 'अहो भाग्यमहो भाग्यं नन्दगोपव्रजौकसाम्। यन्मित्रं परमानन्दं पूर्णं ब्रह्म सनातनम्' इति चेति। तत्रेदमवधेयं, परमेश्वरे देहदेहिभावो नास्तीत्युक्तिर्मायया देहदेहिभावो न वस्तुत इत्यङ्गीकुर्वतां भाष्यकृतां मतेन प्रतिकूला यत्तु नित्य इत्यादि तत्र यो निर्गुणः "अथात आदेशो नेति नेति। नेदं यदिदमुपासते। एकमेवाद्वितीयम्। सत्यं ज्ञानमनन्तं ब्रह्म। विज्ञानमानन्दं ब्रह्म। अस्थूलमनणुमह्रस्वमदीर्घम्। यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। यो वै भूमा तत्सुखम्। यतो वाचो निवर्तन्ते अप्राप्य मनसा सह। तदेतदपूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः। निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्। अपाणिपादम्' इत्यादिश्रुतितात्पर्यसिद्धः परमात्मा स एव तद्विग्रहः। स च विग्रहः किं साकार उत निराकारः, आद्ये निर्गुणस्य परिणाम उत विवर्तः। नाद्यः निर्विकारस्य विकाररूपपरिणामायोगात्। अन्यथा तस्यानित्यत्वं स्यात्। द्वितीये मायाया विवर्तसाधिकाया आवश्यकत्वेन न मायिक इत्युक्तिरनुपपन्ना। न द्वितीयः सर्वाकारशून्यः पुनश्च विशेषाकारेण गृह्यत इति विग्रह इति वदतो व्याघातात्। किंच सविग्रहः किं हस्तपादादिमान् उत तद्रहितः। आद्ये हस्तादयोऽपि किं दृश्या उतादृश्याः। आद्ये विग्रहस्य भूतकार्यत्वाभावान्मायिकत्वमवश्यमभ्युपेयम्। न द्वितीयः भक्तानां तद्दर्शनाद्यनापत्तेः। नन्वदृश्या अपि मायया दृश्या इति चेत्तर्हि किं परमाण्वादिवददृश्या उत ब्रह्मरूपेण। आद्ये योगिनामक्षिगोचराः स्युः, द्वितीये हस्तादयोऽवयवास्तद्वान्विग्रह इति कृतमुक्तिमात्रेण स्वशिष्यधन्धनेन। न द्वितीयः तद्रहितो विग्रहश्चेति व्याघातात्। एतेन एतत्पक्षानुसारेण क्लिष्टकल्पनया श्लोकयोजनापि प्रत्युक्ता। उदाहृतवचनद्वयमपि भाष्यकृतां मत एव सम्यगुपपद्यते तस्मात्सच्चिदानन्दस्वरूपः मायावच्छिन्नः "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति" 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे। यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये' 'जन्माद्यस्य यतः' इत्यादिश्रुतिस्मृतिन्यायैर्जगत्कारणत्वेन प्रतिपादितः शुद्धबुद्धमुक्तस्वभावः अशरीरी परमात्मा सर्वेश्वरो मायानियन्ता साधकानुग्रहार्थं स्वमायया लीलाविग्रहं गृहीत्वा जात इव विग्रहवानिव भातीति श्रुतिस्मृतीतिहासपुराणाद्यनुगृहीतं सर्वज्ञानां भाष्यकृतां मतं शरणीकरणीयमिति दिक्। अन्ये तु न कर्मफलं भगवतः शरीरमत एव न भौतिकं तस्माद्युक्तमजोऽपि सन्निति। ननु तर्हि भगवच्छरीरस्य किमुपादानम्, अविद्येति चेन्न परमेश्वरे तदभावात्। जीवाविद्येति चेन्न, शुक्तिरजतादिवत्तुच्छत्वापत्तेः। चिन्मात्रं चेन्न, चितः साकारत्वायोगात्, तथात्वे वा तस्यातीन्द्रियत्वापत्तिः। तस्मात्किमालम्बनोऽयं भगवद्देहो देवकीगर्भप्रवेशजननबाल्यकौमारपौगण्डयौवनादिप्रतीतिविषय इति चेत् शृणु—प्रकृतिं स्वामिति। अयमर्थः। जीवात्मानो हि अनात्मभूतां प्रकृतिं तेजोबन्नात्मिकां पञ्चभूतात्मिकां वाऽधिष्ठाय संभवन्ति जन्मादींल्लभन्ते, अहं तु स्वां प्रत्यगनन्यां प्रकृतिं प्रत्यक्चैतन्यमित्यर्थः। तदेवाधिष्ठाय नत्रूपादानान्तरम्। आत्ममायया स्वीयमायया संभवामि। यथा कश्चिन्मायावी स्वयं स्वस्थानादप्रच्युतस्वभावो-

ऽप्यदृश्यो भूत्वा स्थूलसूक्ष्मभूतान्यनुपादायैव केवलया मायया द्वितीयं मायाविनं स्वसदृशमेव सूत्रमार्गेण गगनमारोहन्तं सृजति,एवमहं कूटस्थचिन्मात्रोऽग्राह्यः स्वमायया चिन्मयमात्मनः शरीरं सृजामि। तस्य बालाद्यवस्थाश्च सूत्रारोहणवद्दर्शयामीति। एतावांस्तु विशेषः, लौकिकमायावी मायामुपसंहरन् द्वितीयं मायाविनमप्युपसंहरति, अहं तु तामनुपसंहरन्स्वविग्रहमपि नोपसंहरामीति । एवं हि सति हिरण्यश्मश्रुत्वादिलक्षणविग्रहयोगिनश्चेतनस्य 'अन्तस्तद्धर्मोपदेशात्' इत्यादिन्यायसिद्धं वियदाद्युपादानलक्षणं सर्वेश्वरत्वं युज्यते नान्यथेति । तस्मात्सिद्धं परमेश्वरस्य मायामयं शरीरं नित्यमिति । एकेनैव हिरण्यश्मश्रुत्वादिलक्षणेन देहेन विवस्वन्तमुपदिश्य त्वामप्युपदिशामीत्यादि वर्णयन्ति । अत्रेदं वक्तव्यं नियम्यदेहातिरिक्तनियामकदेहाभावादेकेनैवेत्यादि नोपपद्यते।किंच हिरण्यश्मश्रुत्वादिविशिष्ट आदित्यान्तर्यामिदेह एव यदि कृष्णादिदेहः स्यात्तर्हि तथैव प्रतीयेत नतु मेघश्यामत्वादिलक्षणः। ननु मायया तथेति चेद्वरं परमेश्वरस्याशरीरस्यैव साधकानुग्रहायादित्यान्तर्यामिरूपेण कृष्णादिदेहात्मना च माययाऽवस्थानवर्णनं कृष्णादिविग्रहाणां परंपरया मायिकत्वकल्पनाया भाष्यविरुद्धाया हिरण्यश्मश्रुत्वादिविशिष्टस्यापि सविशेषत्वेन मायिकत्वात् । यदपि यथा कश्चिदित्यादि तदपि न भगवता वासुदेवेनैवादौ चतुर्भुजं विग्रहं प्रदर्श्य पुनर्द्विभुजं रूपं प्रदर्शितं तदपि तिरोधाय पुनस्तदपि प्रकटितमिति प्रसिद्धेरन्यथा परमेश्वरदेहानां मोहिन्यादिरूपाणामनन्तानां युगपत्प्रतीत्यापत्तेः । तस्मादीश्वरो भक्तार्थं तत्तद्विग्रहमाविर्भावयति तिरोभावयति चेत्यवश्यमभ्युपेयम् । एतेनाहमित्याद्यपि प्रत्युक्तम् । अजोपीत्यादिविशेषणैर्भाष्योक्तव्याख्यानेन च जीवाद्वैलक्षण्यस्य सम्यक्प्रतीतेः क्लिष्टाप्रसिद्धकल्पनाया भाष्यविरुद्धाया अनौचित्यात् । अत एवेश्वरदेहाभिप्रायेणैवायमर्जुनस्य प्रश्न इति पूर्वोक्तं प्रत्युक्तं परमात्मनो वास्तवदेहस्याभावात् तस्मात्त्वमपि कश्चिदसर्वज्ञोऽनीश्वरो जीव एव तस्य तवादित्यं प्रत्युपदेष्टृत्वं विरुद्धमिति मूर्खाणामभिप्रायेणार्जुनस्य शङ्काऽहं जीववत् धर्माधर्मादिपारतन्त्र्याभावादजोऽव्ययात्मा भूतानामीश्वर एतादृशोऽपि सन् प्रकृतिं स्वामधिष्ठाय स्वमायया संभवामीत्यनेन योऽहमीश्वरः सर्वज्ञः सर्गादावुपदेशाय योग्यं विग्रहमुपादाय सूर्यं प्रति योगमुक्तवान् स एवाहमिदानीमुक्तवानित्युत्तरमित्यलं विस्तरेण ॥ ६ ॥

**प० टी०**–अथ स्वस्येश्वरत्वं प्रकटयन्नाह–**अजोऽपीति** । अजोऽनुत्पत्तिधर्माव्ययोऽविनाशधर्मा भूतानामीश्वरः कर्मपारतन्त्र्यरहितः सन् संभवामि सम्यक्प्रकारेणालुप्तसर्वज्ञत्वादिगुणः सन् भवामि । नन्वीश्वरत्वे लिङ्गदेहादिशून्यस्य कथं जन्मेत्याह–**प्रकृतिमिति**। स्वां स्वस्मिन्नध्यस्तां शुद्धसत्त्वात्मिकां प्रकृतिमवष्टभ्याधिष्ठाय स्वेच्छाविर्भूतशुद्धसत्त्वात्मकमूर्त्यावतरामि। तदुक्तम् 'सतो हि मायया जन्म जायते न तु तत्त्वतः। असतो मायया जन्म तत्त्वतो नहि युज्यते । वन्ध्यापुत्रो न तत्त्वेन मायया वापि जायते' इति ॥ ६ ॥

**रा० टी०**–जन्मान्यतीतानि चेत्तर्हि न जननमरणराहित्यमीश्वरत्वं वा तव स्यात् । तथा चाविनाशित्वियुक्तविरोध इत्यत आह–**अजोपीति** । देहतोऽप्युत्पत्तिहीनोपि अव्ययोऽविनाशी आत्मा स्वरूपं देहश्च यस्य सोऽव्ययात्मा सन्नपि भूतानामीश्वरः सन्नपि संभवामीत्वन्वयः । स्वरूपतो देहतश्च अनादिनित्यस्य कथं जनिरित्यत उक्तम्–प्रकृतिमधिष्ठायेति। प्रकृतिशब्द प्राकृतपरः। प्राकृतान्प्रकृतिजान्वसुदेवादीनधिष्ठायानुप्रविश्यात्ममायया स्वज्ञानेन वा संभवामि प्रादुर्भवाभि । अतो जात इति लोकस्य भ्रान्तो व्यवहार इति भावः । यद्वा स्वां स्वकीयां मदधीनां प्रकृतिं तमोरूपामधिष्ठाय आश्रित्य संभवामि संभूतो जात इति भ्रमविषयो भवामि लोकस्येत्यर्थः । स्वाधीनप्रकृत्या वसुदेवादिदेहान्निर्माय तेष्वनुप्रविश्य प्रादुर्भवकरणे किं प्रयोजनमित्यतोऽप्युक्तम्–स्वां प्रकृतिमधिष्ठायेति । स्वस्वभावमनुसृत्य संभवामीति देवस्यैष स्वभाव एव न प्रयोजनपेक्षेति भावः । एतेन जीवजन्मविलक्षणजन्मवत्त्वाद्धरेः पूज्यत्वादिना जीवभेद उपपादित इति ज्ञेयम् ॥ ६ ॥

**यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ॥**
**अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥ ७ ॥**

**त० टी०**—भवतु तवानादित्वाद्विवस्वदाद्युपदेष्टृत्वं स्वेच्छया निर्विकारत्वेनैव जन्म चेति । तथाऽपि बहूनीत्युक्तत्वात् कदा कदा जन्मेत्यपेक्षायामाह—यदा यदेति । न मे जन्मकालनियमोऽस्ति । यदा यदा हि यस्मिन्यस्मिन्नेव युगे धर्मस्य परमश्रेयःप्राप्तिहेतुभूतस्य मद्भक्तिलक्षणस्य ग्लानिर्हानिर्भवति । तत्प्रतिपक्षस्य चाधर्मस्य अभ्युत्थानमभिवृद्धिर्भवति । तदा तदाऽहमुक्तप्रकारेणात्मानं सृजामि आविर्भवामीत्यर्थः । न चात्र धर्मशब्देन वेदोदितवर्णाश्रमनिबन्धनः सामान्यधर्मो विवक्षितः, कथमन्यथा व्याख्यायते इति वाच्यं, तदानीं सामान्यवर्णाश्रमधर्मस्य हान्यभावात् । किंतु भगवद्भक्तिविरोध्यसुरराजन्यबाहुल्येन भागवतधर्मस्योच्छिन्नप्रायत्व एवावतारः । एवमेव धरण्याह ब्रह्मवैवर्ते 'कृष्णभक्तिविहीना ये ये च तद्भक्तनिन्दकाः । तेषां महापातकिनामशक्ता भारवाहने" इति । अत एव 'परित्राणाय साधूनां विनाशाय च दुष्कृताम्' इति । "अनन्येनैव योगेन मां ध्यायन्त उपासते । तेषामहं समुद्धर्त्ता मृत्युसंसारसागरात्" इत्यादिना बहुशो वक्ष्यमाणत्वात् । धर्मस्वरूपं स्वयमेवोक्तं श्रीभागवते 'सत्त्वाद्वृद्धाद्भवेद्धर्मः पुंसो मद्भक्तिलक्षणः । धर्मो मद्भक्तिकृत्प्रोक्तः' इत्यादिना । 'धर्मः स्वनुष्ठितः पुंसो विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्' इत्यनेन भक्तिहीनस्य केवलधर्मस्याकिंचित्करत्वाभिधानात् ॥ ७ ॥

**म० टी०**—एवं सच्चिदानन्दघनस्य तव कदा किमर्थं वा देहिवद्व्यवहार इति तत्रोच्यते धर्मस्य वेदविहितस्य प्राणिनामभ्युदयनिःश्रेयससाधनस्य प्रवृत्तिनिवृत्तिलक्षणस्य वर्णाश्रमतदाचारव्यङ्ग्यस्य यदा यदा ग्लानिर्हानिर्भवति हे भारत ! भरतवंशोद्भवत्वेन भा ज्ञानं तत्र रतत्वेन वा त्वं न धर्महानिं सोढुं शक्नोषीति संबोधनार्थः । एवं यदा यदाऽभ्युत्थानमुद्भवोऽधर्मस्य वेदनिषिद्धस्य नानाविधदुःखसाधनस्य धर्मविरोधिनस्तदा तदाऽऽत्मानं देहं सृजामि नित्यसिद्धमेवं सृष्टमिव दर्शयामि मायया ॥ ७ ॥

**शं० टी०**—देवादिषु मायया तव संभवः कदेत्याकाङ्क्षायामाह—यदेति । वर्णाश्रमिणामभ्युदयनिःश्रेयससिद्धेः सम्यगनुष्ठेयस्य धर्मस्य वैदिकस्य ग्लानिर्विघ्नकारिभिर्निर्विशेषविच्छित्तिर्यदा यदा भवति । हिः पुराणप्रसिद्धिद्योतनार्थः । तथैवाधर्मस्य सर्वानर्थहेतोरभ्युत्थानम् अभितः सर्वत्राश्रमेषु वर्णेषु चोत्थानं धूमकेतोरिवोत्पत्तिर्भवति तदा तदात्मानं स्वस्य धर्माधर्मयोस्तद्वतां चानुग्रहनिग्रहयोग्यं देहमात्ममायया सर्वनियन्ताहमीश्वरः सृजामीत्यर्थः ॥ ७ ॥

**श्री० टी०**—कदा संभवसीत्यपेक्षायामाह—यदा यदेति । धर्मस्य ग्लानिर्हानिः । अधर्मस्य अभ्युत्थानमाधिक्यम् ॥ ७ ॥

**स० टी०**—चिदानन्दघनस्यैवं किमर्थं तव वा कदा ॥ देहिवद्व्यवहारोऽस्तीत्यत आह जगद्गुरुः ॥ १ ॥ द्विविधस्यास्य धर्मस्य वेदप्रामाणिकस्य च ॥ स्वर्गमोक्षनिमित्तस्य प्राणिनां हि यदा यदा ॥ २ ॥ क्षतिर्भवत्यधर्मांशैः स्वर्गमोक्षविरोधिभिः ॥ श्रुतिस्मृतिनिषिद्धस्याधर्मस्यानर्थकारिणः ॥ ३ ॥ उद्भवो धर्मशत्रोश्च भवतीह यदा यदा ॥ तदा तदाहमात्मानं नित्यसिद्धं स्वमायया ॥ ४ ॥ दर्शयामि सृष्टमिव चिद्घनं परमार्थतः ॥ ५ ॥ ७ ॥

**भा० टी०**—एवं सर्वज्ञः सर्वेश्वरो शरीरी त्वं कदा किमर्थं देहवानिव जात इव प्रतीयस इत्यत आह—यदेति । ग्लानिर्हानिः, अभ्युत्थानं वृद्धिः, भरतवंशोद्भवत्वेन धर्महानिं कर्तुमयोग्योऽसीति सूचयन्नाह-भारतेति । त्वमपि धर्मसंस्थापनाय भरतवंशेऽवतीर्णोसीति गूढाभिप्रायेण वा संबोधयति—भारतेति । माय-

या आत्मानं स्वं सृजामि जन्मवन्तमिव प्रदर्शयामि। आत्मानं देहं सृजामि नित्यसिद्धमेव सृष्टमिव प्रदर्शयामीति केचित्। तन्न, परमेश्वरस्य देहः किं तस्मादन्य उतानन्यः। नाद्यः, तस्यासत्त्वाद्यापत्त्या सच्चिदादिरूपत्वस्वीकारविरोधात्। द्वितीयेऽपि स देहः किं परिच्छिन्न उतापरिच्छिन्नः, आद्ये ईश्वरस्य नित्यमेव परिच्छिन्नत्वं स्यात् तथाच देहस्य नित्यसिद्धत्वं वदद्भिः परमेश्वरस्यासत्त्वसंपादनेन मूलोच्छेद एव संपादितः। न द्वितीयः अपरिच्छिन्नः पुनरवयवसमूहः परिमिताकारो देह इति वदतो व्याघातात्॥ ७॥

प० टी०—अथावतरणावसरमाह—यदेति। यदा धर्मस्य ग्लानिरुच्छित्तिस्तथाऽधर्मस्याभ्युत्थानमभ्युदयस्तदात्मानं सृजामि स्वयं स्वेच्छयाविर्भवामि॥ ७॥

रा० टी०—किंच स्वप्रयोजनाभावेपि लोकापेक्षितधर्माधर्मस्थापनोत्सादनाद्यर्थमवतार इति संभवकालोक्तिपूर्वकमाह—यदेत्यादिश्लोकद्वयेन॥ ७॥

**परित्राणाय साधूनां विनाशाय च दुष्कृताम्॥**
**धर्मसंस्थापनार्थाय संभवामि युगे युगे॥ ८॥**

त० टी०—जन्मप्रयोजनमाह—परित्राणायेति। साधवः समदर्शिनो भगवद्भक्ताः। तथोक्तं भागवते यमेनान्वयव्यतिरेकाभ्याम् 'ये साधवः समदृशो भगवत्प्रपन्नास्तान्नोपसीदत हरेर्गदयाऽभिगुप्तान्। नैषां वयं नच वयः प्रभवाम दण्डे तानानयध्वमसतोऽकृतविष्णुकृत्यान्' इत्यादिना। तेषां साधूनां प्रह्लादादीनां परित्राणाय सर्वतो रक्षणाय दुष्कृतां भक्तिविरोधिनां हिरण्यकशिपुकंसमगधपौण्ड्रकचैद्यशाल्वादीनां विनाशाय च धर्मस्य भागवतस्य सम्यक् स्थापनाय युगे युगे संभवामि॥ ८॥

म० टी०—तत्किं धर्मस्य हानिरधर्मस्य च वृद्धिस्तव परितोषकारणं येन तस्मिन्नेव काल आविर्भवसीति तथा चानर्थावह एव तवावतारः स्यादिति नेत्याह धर्महान्या हीयमानानां साधूनां पुण्यकारिणां वेदमार्गस्थानां परित्राणाय परितः सर्वतो रक्षणाय। तथाऽधर्मवृद्ध्या वर्धमानानां दुष्कृतां पापकारिणां वेदमार्गविरोधिनां विनाशाय च। तदुभयं कथं स्यादिति तदाह—धर्मसंस्थापनार्थाय। धर्मस्य सम्यगधर्मनिवारणेन स्थापनं वेदमार्गपरिरक्षणं धर्मसंस्थापनं तदर्थं संभवामि पूर्ववत्, युगे युगे प्रतियुगम्॥ ८॥

शं० टी०—उक्तमर्थं स्पष्टयति—परित्राणायेति। प्राणात्ययेपि ये स्वधर्मं न त्यजन्ति त एव साधवस्तेषां स्वधर्मैकशरणानां परित्राणाय तेषां विनैव प्रार्थनामिहपरलोकयोर्विच्छित्तिर्यथा न स्यात्तथा रक्षणं परित्राणं तस्मै। एतेन साधुभिरीश्वर एवास्माकं त्रातेति धैर्येण स्वधर्मे स्थातव्यमिति सूचितं भवति। किंच दुष्कृतां ये तु त्रिभिरपि करणैः शास्त्रनिषिद्धमेव कुर्वन्ति नान्यत्ते दुष्कृतो जगद्दूषणास्तेषां समूलविनाशाय च धर्मसंस्थापनार्थाय च धर्मस्य सतामभ्युदयनिःश्रेयसहेतोरधर्मस्य न्यक्कारपूर्वकं संस्थापनार्थाय धर्मस्याधिकारिभिः सर्वैर्नियमेन यथाशास्त्रमनुष्ठापनमेव संस्थापनं तदेवार्थः प्रयोजनं तस्मै। युगे युगे कृतादौ भूयो भूयः स्वमायया स्वयमेव संभवाम्यवतरामीत्यर्थः। एतेन साधुपरिपालनमसाधुविनाशनं धर्मसंस्थापनं चैतत्त्रितयमेव भगवदवतारस्य प्रयोजनमिति सूचितं भवति। यज्ञादिधर्मेण संरक्षितेन देवा वर्धन्ते वृष्टयश्च ताभिरन्नमन्नेन प्राणिनः सर्वे जीवन्त्यतो धर्मसंरक्षणमात्रेण विश्वं सर्वं रक्षितमेव भवतीति भावः॥ ८॥

श्री० टी०—किमर्थमित्यपेक्षायामाह—परित्राणायेति। साधूनां स्वधर्मवर्तिनां रक्षणाय दुष्टं कर्म कुर्वन्तीति दुष्कृतस्तेषां वधाय च। एवं धर्मस्य संस्थापनार्थाय साधुरक्षणेन दुष्टवधेन च धर्मं स्थिरीकर्तुं युगे युगे तत्तदवसरे संभवामीत्यर्थः। नचैवं दुष्टनिग्रहं कुर्वतोऽपि नैर्घृण्यं शङ्कनीयं यथा चाहुः—'लालने ताडने मातुर्नाकारुण्यं यथाऽर्भके॥ तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः' इति॥ ८॥

**स० टी०**–धर्माधर्मविपर्यासः किं तवाभिमतो यतः ॥ तदैवाविर्भवस्येवमपेक्षायामितीर्यते ॥ १ ॥ साधूनां हीयमानानां धर्महान्या महात्मनाम् ॥ वेदमार्गे स्थितानां च रक्षणाय समन्ततः ॥ २ ॥ पापिनां वर्धमानानामधर्मस्योद्भवेन च ॥ विध्वंसनाय दुष्टानां वेदमार्गविरोधिनाम् ॥ ३ ॥ वेदमार्गपरित्राणधर्मसंस्थापनाय च ॥ नित्यसिद्धः प्रतियुगं स्वयं प्रादुर्भवाम्यहम् ॥ ४ ॥ ८ ॥

**भा० टी०**–अवतरणप्रयोजनमाह–परित्राणाय रक्षणाय साधूनां सन्मार्गस्थानां भक्तानां विनाशाय च पापिष्ठानां किंच धर्मसंस्थापनार्थाय तथाचावतरणप्रयोजनत्रयमुक्तम् । यत्तु तदुभयं कथं स्यादित्यत आह–**धर्मसंस्थापनार्थायेति** । तच्चिन्त्यं धर्मसंस्थापनेन साधूनां रक्षणस्य पापिनां नाशस्य चासिद्धेः । यथा वसुदेवगृहेऽवतीर्णेन श्रीकृष्णेन गीताद्युपदेशेन धर्मस्थापनं युधिष्ठिरादिपरिपालनेन साधुपरित्राणं कंसादिमारणेन दुष्कृतां विनाश इति प्रयोजनत्रयमेव संपादितं नहि गीतोपदेशमात्रेण तत्र तत्र कृतमर्जुनसंरक्षणं तत्तदुपायैः कर्णनाशश्च सिध्यति इति दिक् । एतेन साधुरक्षणेन दुष्टवधेन च धर्मं स्थिरीकर्तुमिति प्रत्युक्तम् । नहि वसुदेवादिरक्षणेन कंसादिवधेन च कस्यचिद्धर्मस्य स्थापनं भवति धर्मस्थापनहेतुभूतैतत्कर्मद्वयाकर्तुर्व्यासावतारस्य धर्मसंस्थापनार्थस्य वैयर्थ्यापत्तेश्च । तथाच कदाचिदेकस्मै कदाचिद्वाभ्यां कदाचित्सर्वस्मै प्रयोजनाय भगवदवतरणमिति ध्येयम् ॥ ८ ॥

**प० टी०**–किमर्थमित्याह–**परित्राणायेति** । साधूनां स्वमार्गवर्तिनां परित्राणाय विघ्नेभ्यो रक्षणाय तथा दुष्टं कर्म कुर्वन्ति ते दुष्कृतस्तेषां विनाशाय । एतदपि किमर्थं धर्मसंस्थापनार्थाय, धर्मसंस्थापनमेवार्थः प्रयोजनं तस्मै, युगे युगे तत्तदवसरेऽन्यथा जातिसंकरः स्यात् । श्रुतिरपि " स सेतुर्विधरणमेषां लोकानामसंभेदाय " इति । अत्र तुल्यदृष्टेः परमेश्वरस्य साधुसंरक्षणं खलनिबर्हणमयुक्तमिति नाशङ्कनीयम् । यथाहुः– ' लालने ताडने मातुर्न वैषम्यं यथार्भके । तद्वदेव महेशस्य नियन्तुर्गुणदोषयोः ' इति ॥ ८ ॥

**रा० टी०**–युगे युग इति धर्महान्यधर्मवृद्धिकाल इत्यर्थः । अवतारं विना साधुपरित्राणादिसंभवेऽपि लीलयैवावतारद्वारा परित्राणादिकं स्वभावादेव तस्येति ज्ञेयम् ॥ ८ ॥

## जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः ॥
## त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ ९ ॥

**त० टी०–एवंभूतस्वजन्मकर्मज्ञातुः फलमाह–जन्म कर्म चेति । सर्वज्ञस्य सर्वशक्तेः सर्वेश्वरस्य सर्वकारणस्य मे मम जन्म त्रिगुणमायाऽस्पृष्टनित्यसिद्धं सच्चिदानन्दविग्रहेण स्वेच्छयाऽऽविर्भावरूपं, कर्म च भक्तपरित्राणमभक्तविनाशनं च दिव्यमप्राकृतं तत्त्वतः परमार्थबुद्धया यो वेत्ति हे अर्जुन ! स पुरुषः देहं स्थूलं तद्धेतुभूतं सूक्ष्मं च त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति। किंतु मां मुक्तप्राप्यं सत्यज्ञानानन्दस्वरूपं परब्रह्म भगवन्तं वासुदेवमेवैति प्राप्नोति । मद्भावं प्राप्नोतीत्यर्थः ॥ ९ ॥**

**म० टी०**–जन्म नित्यसिद्धस्यैव मम सच्चिदानन्दघनस्य लीलया तथानुकरणं कर्म च धर्मसंस्थापनेन जगत्परिपालनं मे मम नित्यसिद्धेश्वरस्य दिव्यमप्राकृतमन्यैः कर्तुमशक्यमीश्वरस्यैवासाधारणम् । एवमजोऽपि सन्नित्यादिना प्रतिपादितं यो वेत्ति तत्वतो भ्रमनिवर्तनेन। मूढैर्हि मनुष्यत्वभ्रान्त्या भवतोऽपि गर्भवासादिरूपमेव जन्म स्वभोगार्थमेव कर्मेत्यारोपितं परमार्थतः शुद्धसच्चिदानन्दघनरूपत्वाज्ञानेन तदपनुद्य अजस्यापि मायया जन्मानुकरणमकर्तुरपि परानुग्रहाय कर्मानुकरणमित्येवं यो वेत्ति स आत्मनोपि तत्त्वस्फुरणात् त्यक्त्वा देहमिमं पुनर्जन्म नैति किंतु मां भगवन्तं वासुदेवमेव सच्चिदानन्दघनमेति संसारात् मुच्यत इत्यर्थः । हे अर्जुन ॥ ९ ॥

शं० टी०—दुष्टानां शिष्टानां च निग्रहानुग्रहार्थं धर्मसंस्थापनार्थं च विवस्वदादिभ्यो योगोपदेशाय च मायया संभावितानि यानि शरीराणि यानि तैः कृतानि कर्माणि तान्येतानि च सर्वाणि वस्तुतो ब्रह्ममात्रमेवेति यो जानाति स मुक्तिं गच्छतीत्याह—**जन्म कर्मेति** । इतरानपेक्षया स्वात्मनि स्वयमेव स्वप्रकाशेन दीप्यते प्रकाशत इति दिव्यं निर्विशेषचिदेकरसं परं ब्रह्म दिविति दिवुधातोः क्विबन्तं रूपं तस्मिन् दिवि परे ब्रह्मणि पूर्णानन्दैकघनेऽद्वितीये सर्वाधिष्ठाने प्रतीता या प्रकृतिर्यच्च प्राकृतं मे जन्म शरीरं यच्च तत्कृतं कर्म तदेतत्सर्वं तत्त्वतोऽध्यात्मदृष्ट्या परिशील्य दिव्यं दिवो ब्रह्मणः स्वरूपं दिव्यं चैतन्यं तन्मात्रमेवेत्येवं यो वेत्ति साक्षाद्विजानाति स सर्वस्य ब्रह्ममात्रत्वदर्शी विद्वानिमं विद्वद्देहं त्यक्त्वा पुनर्जन्म नैति नतु पुनर्जायते किंतु मामेति सच्चिदानन्दैकरसं मां ब्रह्मैव प्राप्नोति विदेहमुक्तिं गच्छतीत्यर्थः ॥ ९ ॥

श्री० टी०—एवंविधानामीश्वरजन्मकर्मणां ज्ञाने फलमाह—**जन्म कर्मेति** । मे जन्म स्वेच्छाकृतं कर्म च धर्मपालनरूपं दिव्यमलौकिकं तत्त्वतः परानुग्रहार्थमेवेति यो वेत्ति स देहाभिमानं त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति किंतु मामेव प्राप्नोति ॥ ९ ॥

स० टी०—जन्मैवं नित्यसिद्धस्य चिदानन्दघनस्य मे ॥ लीलयाऽमोघया शक्त्या तथानुकरणं क्षितौ ॥ १ ॥ धर्मसंस्थापनेनैव जगतः परिपालनम् ॥ कर्म मे वासुदेवस्य नित्यसिद्धेश्वरस्य च ॥ २ ॥ अक्रियस्यातिशुद्धस्य दिव्यमप्राकृतं परम् ॥ अन्यैः कर्तुमशक्यं यदसाधारणमैश्वरम् ॥ ३ ॥ यो वेत्ति तत्त्वतो भ्रान्तिं त्यक्त्वैवं मूढधीगताम् ॥ सच्चिदानन्दरूपस्याजस्यापि स्वात्ममायया ॥ ४ ॥ जन्मानुकरणं चैवमकर्तुरपि सर्वथा ॥ कर्मानुकरणं लोकानुग्रहायेति वेत्ति यः ॥ ५ ॥ स आत्मतत्त्वविज्ञानात्त्यक्त्वा देहमिमं बुधः ॥ प्राप्नोति न पुनर्जन्म मामेवैति चिदद्वयम् ॥ ६ ॥ जीवन्मुक्तो मुनिर्भूत्वा संसारान्मुच्यतेऽर्जुन ॥७॥ ९ ॥

भा० टी०—जन्म मायिकं कर्म साधुपरित्राणादि मम परमेश्वरस्यैश्वरमप्राकृतं यस्तत्त्वतो वेत्ति स देहं त्यक्त्वा पुनरुत्पत्तिं न प्राप्नोति किंतु मां परमात्मानमेति मुच्यत इत्यर्थः । अर्जुनेति संबोधयन् मज्जन्मकर्मतत्त्वज्ञानशोधितत्वंपदस्तत्पदाभेदं लब्ध्वा मुच्यत इति सूचयति ॥ ९ ॥

प० टी०—एवंविधानामीश्वरजन्मकर्मणां ज्ञाने फलमाह—**जन्मेति** । जन्म स्वेच्छाकृतं कर्म पालनरूपं तत्त्वतोऽनुग्रहार्थमेवेति यथावत्परमेश्वरस्वरूपं वेत्ति स वर्तमानं देहं त्यक्त्वा पुनर्जन्म नैति किंतु मामेति मामेव प्राप्नोति ॥ ९ ॥

रा० टी०—एवं स्वभावादेवावतारादिस्वव्यापारमुक्त्वा तज्ज्ञानफलमाह—**जन्मेति** । एवमुक्तप्रकारेण दिव्यमलौकिकं मे जन्म कर्म च तत्त्वतो यथावत्तया यो वेत्ति स ज्ञानी देहं त्यक्त्वा पुनर्जन्म नैति न प्राप्नोति किंतु मामेति । अत्र जन्मकर्मरूपैकदेशज्ञानेन मुक्त्युक्तिर्योग्यगुणज्ञानोपलक्षणार्था ज्ञेया ॥ ९ ॥

**वीतरागभयक्रोधा मन्मया मामुपाश्रिताः ॥**
**बहवो ज्ञानतपसा पूता मद्भावमागताः ॥ १० ॥**

त० टी०—मामेतीत्युक्तं तत्र त्वत्प्राप्तौ त्वज्ज्ञाने च साधनान्तरमपेक्षितं न वा प्राप्तिः स्वरूपैक्येन भेदेन वा तादात्म्येन वेत्यपेक्षायामाह—**वीतरागेति** । रागः स्त्रीपुत्रादिषु स्नेहः, भयं भयानुबन्धि कर्म, क्रोधः किंचिद्वस्त्विच्छाविघातके चित्तविकारः । वीता विशेषतो गता रागभयक्रोधा येभ्यस्ते शुद्धदेहेन्द्रियमनस्का इत्यर्थः । एतेन ज्ञानसाधनमुक्तम् । अतो मन्मया मदात्मका वासुदेवात्मका वयमिति जातनिश्चयाः “ ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो ” ‘ इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः । वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च ’ इत्यादिश्रुतिस्मृतिभ्यः ।

एवंभूता मामुपाश्रिताः उक्तस्वरूपं मामेवार्चनवन्दनध्यानैः सेवितवन्तः, नतु देवान्तरभक्ताः। एतेन स्वप्राप्तिसाधनं सूचितम्। एवंभूता बहवो भक्ता ज्ञानतपसा मज्जन्मकर्मविषयकज्ञानमेव तपः सर्वकर्मभर्जकम् 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते' इति वक्ष्यमाणत्वात्। तेन पूता निरस्ताऽज्ञानतत्कार्यशुभाशुभवासनाः सन्तो मद्भावमागताः, मम यो भावः अपरिच्छिन्नज्ञानानन्दवत्त्वे सत्यप्राकृतप्रकाशानन्दविग्रहवत्त्वं तमागताः प्राप्ताः। स्वरूपभेदे सति "सर्वं ह पश्यः पश्यति" इति मुक्तौ सार्वज्ञ्ययोगोक्तेः सार्वज्ञ्यादिधर्माविर्भावेन विग्रहसाम्येन चाभेदं तादात्म्यलक्षणं भेदाभेदं प्राप्ता इत्यर्थः। भेदसहिष्णुरभेदस्तादात्म्यमिति भगवत्पतञ्जल्युक्ततादात्म्यलक्षणसमन्वयात्। एवं साधर्म्यवचनेन मुक्तौ स्वरूपैक्यवादः केवलभेदवादश्च बहुवचनेनात्मैक्यवादश्च स्पष्टं निरस्तः॥ १०॥

म० टी०—मामेति सोऽर्जुनेत्युक्तं तत्र स्वस्य सर्वमुक्तप्राप्यतया पुरुषार्थत्वमस्य मोक्षमार्गस्यानादिपरंपरागतत्वं च दर्शयति—वीतरागेति। रागस्तत्फलं तृष्णा, सर्वान्विषयान्परित्यज्य ज्ञानमार्गे कथं जीवितव्यमिति त्रासो भयं, सर्वविषयोच्छेदकोऽयं ज्ञानमार्गः कथं हितः स्यादिति द्वेषः क्रोधः, त एते रागभयक्रोधा वीता विवेकेन विगता येभ्यस्ते वीतरागभयक्रोधाः शुद्धसत्त्वाः। मन्मयाः मां परमात्मानं तत्पदार्थं त्वंपदार्थाभेदेन साक्षात्कृतवन्तः मदेकचित्ता वा। मामुपाश्रिता एकान्तप्रेमभक्त्या मामीश्वरं शरणं गताः। बहवोऽनेके ज्ञानतपसा ज्ञानमेव तपः सर्वकर्मक्षयहेतुत्वात् 'नहि ज्ञानेन सदृशं पवित्रमिह विद्यते' इति हि वक्ष्यति तेन पूताः क्षीणसर्वपापाः सन्तो निरस्ताज्ञानतत्कार्यमलाः मद्भावं मद्रूपत्वं विशुद्धसच्चिदानन्दघनं मोक्षमागताः अज्ञानमात्रापनयेन मोक्षं प्राप्ताः। ज्ञानतपसा पूता जीवन्मुक्ताः सन्तो मद्भावं मद्विषयं भावं रत्याख्यं प्रेमाणमागता इति वा 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इति हि वक्ष्यति॥ १०॥

शं० टी०—सर्वं ब्रह्मैवेति सर्वस्य ब्रह्ममात्रत्वदर्शनयोगेन प्राञ्चो बहवो मुक्ता इति 'योगः प्रोक्तः पुरातनः' इति यदुक्तं योगस्य प्राक्तनत्वं तत्प्रतिपादयति—वीतरागेति। भोगेषूपकारिषुच राग आध्यात्मिकाद्युपद्रवेभ्यो भयं स्वस्यापकारिषु क्रोधः क्रोध इत्यापस्तम्बेनोक्तानां भूतदाहीयानां दुर्गुणानामुपलक्षणम्। तीव्रमुमुक्षया सदसद्विवेकवैराग्याभ्यां वीता विशिष्य निर्गता रागभयक्रोधा येषां ते वीतरागभयक्रोधाः। ज्ञानतपसा ज्ञानं ब्रह्मैवाहमिति साक्षाद्ब्रह्मण्येवात्मत्ववेदनमप्रतिबद्धं यत्तज्ज्ञानं तदेव तपः मुमुक्षोर्यतेः कर्तव्यम् 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इतिस्मरणात्तेन ज्ञानतपसा पूताः सम्यग्विनष्टानात्मस्वभावत्वेन शुद्ध आत्मा मनो येषां ते शुद्धात्मानो बहवो वामदेवादयो मुमुक्षवः स्वयं सर्वदा मामुपाश्रिताः मामपूर्वमनपरमनन्तरमबाह्यमद्वितीयं परं ब्रह्मैवोपाश्रिता उपश्रयणं नाम सर्वं ब्रह्मैवेति बहिरन्तः सर्वत्र प्रत्यग्दृष्ट्या सदेकत्वदर्शनं तदेव कुर्वन्तः सन्तो मन्मया मदात्मना पूर्णा भूत्वा देहपातानन्तरं मद्भावं ब्रह्मात्मनावस्थानलक्षणमागता विदेहमुक्तिं प्राप्ता इत्यर्थः॥ १०॥

श्री० टी०—कथं जन्मकर्मज्ञानेन त्वत्प्राप्तिः स्यादित्यत्राह—वीतरागेति। अहं शुद्धसत्त्वावतारैर्धर्मपरिपालनं करोमीति मदीयं परमकारुणिकत्वं ज्ञात्वा वीता विगता रागभयक्रोधा येभ्यस्ते विक्षेपाभावात्। मन्मया मदेकचित्ता भूत्वा मामेवोपाश्रिताः सन्तो मत्प्रसादलभ्यं यदात्मज्ञानं च तपश्च तत्परिपाकहेतुः स्वधर्मः तयोर्द्वन्द्वैकवद्भावः तेन ज्ञानतपसा पूताः शुद्धा निरस्ताज्ञानतत्कार्यमलाः सन्तो मद्भावं मत्सायुज्यं प्राप्ता बहवः। न त्वधुनैवप्रवृत्तोऽयं मद्भक्तिमार्ग इत्यर्थः। तदेवं तान्यहं वेद सर्वाणीत्यादिना विद्याविद्योपाधिभ्यां तत्त्वंपदार्थावीश्वरजीवौ प्रदर्श्येश्वरस्य चाविद्याभावेन नित्यशुद्धत्वाज्जीवस्य चेश्वरप्रसादलब्धज्ञानेनाज्ञाननिवृत्तेः शुद्धस्य सतश्चिदंशेन तदैक्यमुक्तमिति द्रष्टव्यम्॥ १०॥

स० टी०—सर्वमुक्तजनैः प्राप्यं स्वात्मानं संप्रदर्श्य च॥ मोक्षाध्वनोऽप्यनादित्वं दर्शयत्यधुना हरिः

॥ १ ॥ तत्तत्फलैषणा रागो भयं भोगेषु दीनता ॥ विषयोच्छेदकत्वेन ज्ञानमार्गः कथं हितः ॥ २ ॥ इति द्वेषोऽत्र क्रोधोऽस्ति ते त्रयोऽत्यन्तदुःसहाः ॥ विवेकाद्विगता येभ्यः शुद्धसत्त्वा विरागिणः ॥ ३ ॥ तत्त्वंपदार्थाभेदेन मामेवाद्वयमान्तरम् ॥ साक्षात्कृत्यैव मद्रूपा मामेव शरणं गताः ॥ ४ ॥ ज्ञानमेव तपः सर्वकर्मविध्वंसकारणम् ॥ तेन पूताः परिक्षीणाज्ञानतत्कार्यकल्मषाः ॥ ५ ॥ बहवः सच्चिदानन्दघनं मद्भावमागताः ॥ ६ ॥ १० ॥

भा० टी०-अस्य मोक्षमार्गस्याधुनिकत्वं वारयति-**वीतेति** । रागो विषयेषु रञ्जनात्मकश्चित्तवृत्तिविशेषः।विषयत्यागान्नाशाच्च भयं, विषयप्राप्तौ विघ्नकर्तृषु ताडनाक्रोशनादिकर्तृषु च क्रोधः, वीता विगता रागादयो येभ्यस्ते। अत एव मन्मया ईश्वराभेददर्शिनः कर्मानुष्ठानसहभावं वारयति मामेव परमेश्वरमुपाश्रिताः केवलज्ञाननिष्ठा इत्यर्थः । 'तन्निष्ठस्य मोक्षोपदेशात्' इति न्यायात्। इतरकर्मानपेक्षाः केवलज्ञाननिष्ठा मुच्यन्त इति ज्ञापयन् विशिनष्टि बहवोऽनेके ज्ञानमेव तपस्तेन पूताः परां शुद्धिं गताः पूर्वेषामघानां नाशादुत्तरेषामसंबन्धाच्च 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात्, मद्भावं ब्रह्मभावं मोक्षं प्राप्ताः। यत्तु मन्मयाः मदेकचित्ताः मामुपाश्रिता एकान्तभक्त्या मामीश्वरं शरणं गताः सन्तो मत्प्रसादलभ्यं यदात्मज्ञानं च तपश्च तत्परिपाकहेतुः स्वधर्मस्तयोः द्वन्द्वैकवद्भावः तेन पूताः शुद्धाः निरस्ता ज्ञानतत्कार्यमलाः मद्भावं सायुज्यं प्राप्ता इति तत्रेदं बोध्यं मन्मयशब्दार्थत्यागे कारणाभावात्, तच्छब्दार्थानुरोधेन मामुपाश्रिता इत्यस्यापि भाष्योक्तव्याख्यानमेव सम्यक् इति । यदपि यदात्मज्ञानं चेत्यादि तदपि न, समुच्चयप्रसङ्गात् । यत्तु मद्भावं मद्विषयं भावं रत्याख्यं प्रेमाणमागता इति वेति तच्चिन्त्यं, त्यक्त्वा देहमित्यादिपूर्वग्रन्थानुगुण्याभावप्रसङ्गात् ॥ १० ॥

प० टी०-अथ कथमेतावतैव त्वत्प्राप्तिः स्यादत आह-**वीतरागेति** । वीता अतिक्रान्ता रागभयक्रोधा येभ्यस्तेऽत एव मन्मया मदेकचित्ता भूत्वा मामेवोपाश्रिताः सन्तो मत्प्रसादाल्लब्धेन ज्ञानतपसा ज्ञानमात्मानात्मविवेकरूपं तपश्च तन्निमित्तरूपं कर्म तेन बहवो योगिनः पूताः शुद्धाः सन्तो मद्भावं मत्सायुज्यमागताः ॥ १० ॥

रा० टी०-एवं ज्ञात्वा मुक्ताः सन्ति किमित्यतः सन्तीत्याह-**वीतरागेति** । तज्ज्ञानस्य मुक्तिहेतुत्वं कुत इत्यतो वाह-**वीतेति** । अपगतरागभयक्रोधाः मन्मयाः मत्प्रधाना अहमेव प्रधान इति जानन्त इतियावत् । यद्वा मन्मया मत्प्रचुरा मामेव सर्वभूतेषु सत्ताप्रतीत्यादिप्रदं जानन्त इति यावत् । मामुपाश्रिताः मदेकशरणा बहवो ज्ञानाख्यतपसा ज्ञानेन तपसा चेति वा पूताः दग्धकर्माणः मद्भावं मयि सायुज्यलक्षणं भावं स्थितिमागताः प्राप्ताः ॥ १० ॥

**ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम् ॥**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ॥ ११ ॥**

त० टी०-ननु यदि ज्ञानतपसा पूतानां निष्कामभक्तानामेवात्मभावं ददासि नान्येषां सकामभक्तानां तर्हि त्वय्यपि वैषम्यं स्यादित्याशंक्याह—**ये यथेति** । ये भक्ता यथा येन प्रकारेण सकामतया निष्कामतया च मां प्रपद्यन्ते उपासते तांस्तथैव तदीप्सितफलदानप्रकारेण भजामि अनुगृह्णामि। तत्रापि न केवलमात्मभक्तानेवापि तु अन्यदेवभक्तानप्यनुगृह्णामि । यतः सर्वशः सर्वप्रकारेण इन्द्रादिदेवानपि भजन्तो मनुष्या मम सर्वात्मभूतस्य वासुदेवस्य वर्त्म भजनमार्गमनुवर्तन्ते 'यमिन्द्रमाहुर्वरुणं यमाहुः स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट्" इत्यादिश्रुतेः । "यदाह वसुधा सर्वं

सत्यमेतद्दिवौकसः । अहं भवो भवन्तश्च सर्वे नारायणात्मकाः" इति वैष्णवे । तस्मायं कांचिदपि भजतां कर्मफलदाता सर्वात्मा भगवान्वासुदेव एवेति फलितम् "फलमत उपपत्तेः" इति न्यायात् ॥ ११ ॥

**म० टी०**—ननु ये ज्ञानतपसा पूता निष्कामास्ते त्वद्भावं गच्छन्ति ये त्वपूताः सकामास्ते न गच्छन्तीति फलदातुस्तव वैषम्यनैर्घृण्ये स्यातामिति नेत्याह—**ये यथेति** । ये आर्ताः अर्थार्थिनो जिज्ञासवो ज्ञानिनश्च यथा येन प्रकारेण सकामतया निष्कामतया च मामीश्वरं सर्वफलदातारं प्रपद्यन्ते भजन्ति तांस्तथैव तदपेक्षितफलदानेनैव भजाम्यनुगृह्णाम्यहं न विपर्ययेण । तत्रामुमुक्षूनार्तानर्थार्थिनश्चार्तिहरणेनार्थदानेन चानुगृह्णामि " जिज्ञासून् विविदिषन्ति यज्ञेन " इत्यादिश्रुतिविहितनिष्कामकर्मानुष्ठातॄन् ज्ञानदानेन ज्ञानिनश्च मुमुक्षून् मोक्षदानेन न त्वन्यकामायान्यद्ददामीत्यर्थः । ननु तथापि स्वभक्तानामेव फलं ददासि नत्वन्यदेवभक्तानामिति वैषम्यं स्थितमेवेति नेत्याह—मम सर्वात्मनो वासुदेवस्य वर्त्म भजनमार्गं कर्मज्ञानलक्षणमनुवर्तन्ते हे पार्थ सर्वशः सर्वप्रकारैरिन्द्रादीनप्यनुवर्तमाना मनुष्या इति कर्माधिकारेण 'इन्द्रं मित्रं वरुणमग्निमाहुः" इत्यादिमन्त्रवर्णात् 'फलमत उपपत्तेः' इति न्यायाच्च सर्वरूपेणापि फलदाता भगवानेक एवेत्यर्थः । तथा च वक्ष्यति येऽप्यन्यदेवताभक्ता इत्यादि ॥ ११ ॥

**शं० टी०**—ननु सर्वे प्राणिनः सुधाब्धाविव त्वय्येवाद्वितीये परे ब्रह्मणि तिष्ठन्ति त्वदावासस्य सर्वसमत्वे केभ्यश्चिदेव तत्र मुक्तिं प्रयच्छसि नतु सर्वेभ्यः कस्तवायं पक्षपात इत्याशङ्कायां न, सुधाब्धिवासस्य सर्वसमत्वेऽपि निपीतसुधानामेवारमत्वं न त्वितरेषां यथा तथैव मय्यवस्थानस्य सर्वसमत्वेऽपि मामेकं परं भावं ये भजन्ति तेषामेव विमुक्तिर्न त्वपरं भावं भजतां कामिनामिति " तं यथा यथोपासते तथैव भवति " इत्येतच्छ्रुत्यर्थमनुसृत्याह—**ये यथेति** । 'द्वे रूपे वासुदेवस्य व्यक्तं चाव्यक्तमेव च । अव्यक्तं ब्रह्मणो रूपं व्यक्तमेतच्चराचरम्' इति स्मरणादव्यक्तं निर्विशेषं परं ब्रह्म व्यक्तं तु मायोपाधिकमपरं ब्रह्म सकार्यमेवं व्यवस्थितं मत्तत्त्वं शास्त्राचार्योपदेशसंस्कृतस्वस्वप्रज्ञानुरूपेण तत्तद्विज्ञाय परंब्रह्मविदो वाप्यपरंब्रह्मविदोऽपि वा तत्तत्फलार्थिनो ये जना मामेवं द्वेधावस्थितं परमात्मानं यथा प्रपद्यन्ते ज्ञानयोगेन वाप्यन्यथा वा येन प्रकारेणोपासते तत्तत्साधननिष्ठान् तानुपासकान् तथैव यस्मिन् यस्मिन् तत्त्वे परिनिष्ठिता भवन्ति तत्तद्रूपेणैव प्रत्यक्षीभूय भजाम्यनुगृण्हामि तत्तद्वस्तूपासनानुरूपफलेन योजयामीत्यर्थः । ' यादृशी भावना यत्र सिद्धिर्भवति तादृशी ' इति नियमात्स्वस्वप्रज्ञाबलेन परिगृहीतवस्तूपासनानुरूपेणैव तेषां तेषां फलं सिध्यति नान्यथाऽतो मम न कश्चित्पक्षपात इति भावः । एवं ज्ञानकर्मयोगफलप्रदाने समभावेन मयि स्थिते सत्यपि शास्त्रार्थज्ञास्तदनुसारिणो ये मनुष्या ब्राह्मणादयो मुमुक्षवस्ते सर्वे ममेश्वरस्याभिमतं श्रुतिस्मृतिविहितं वर्त्म कर्ममार्गमेव अनुवर्न्तते । यद्वा ममेश्वरस्य कृतेर्विषयभूतं कर्ममार्गमनुवर्तन्ते विशिष्य कर्मैव कुर्वन्तीत्यर्थः ॥ ११ ॥

**श्री० टी०**—ननु तर्हि किं त्वय्यपि वैषम्यमस्ति यस्मादेवं त्वदेकशरणानामेवात्मभावं ददासि नान्येषां सकामानामित्यत आह—**ये यथेति** । यथा येन प्रकारेण सकामतया निष्कामतया वा ये मां भजन्ति तानहं तथैव तदपेक्षितफलदानेन भजामि अनुगृह्णामि नतु ये सकामा मां विहायेन्द्रादीनेव भजन्ते तानहमुपेक्ष इति मन्तव्यम् । यतः सर्वशः सर्वप्रकारैः इन्द्रादिसेवका अपि ममैव वर्त्म भजनमार्गमनुवर्तन्ते इन्द्रादिरूपेणापि ममैव सेव्यत्वात् ॥ ११ ॥

**स० टी०**—ये ज्ञानतपसा पूतास्त्वद्भावं यान्ति ते जनाः ॥ नेतरे चेति वैषम्यं फलदातुस्तवेति चेत् ॥ १ ॥ शृण्वार्ता वित्तकामाश्च ज्ञानिनश्च मुमुक्षवः ॥ सकामत्वेन निष्कामतया ये मां यथेश्वरम् ॥ २ ॥ समस्तफलदातारं भजन्ते तांस्तथैव च । तदभीष्टप्रदानेन त्वनुगृह्णाम्यहं हरिः ॥ ३ ॥ आर्तानार्तिविनाशेन

वित्तदानेन चार्थिनः ॥ जिज्ञासून् ज्ञानदानेन ज्ञानिनो मोक्षदानतः ॥ ४ ॥ अनुगृह्णाम्यहं स्वामी नान्यकामाय चान्यथा ॥ फलार्थित्वे मुमुक्षुत्वे हरिरेव नृणां गतिः ॥ ५ ॥ इत्याहाखिलभूतानामात्मा स्वामी गुरुः सखा ॥ सर्वात्मनः परेशस्य मम मार्गं द्विधेरितम् ॥ ६ ॥ ज्ञानकर्मात्मकं सर्वे जीवाः कर्माधिकारिणः ॥ अनुवर्तन्त एवास्मिन्पार्थ सर्वप्रकारतः ॥ ७ ॥ अन्यदेवान्भजन्तोऽपि भजन्ते माखिलात्मकम् ॥८॥११॥

भा० टी०—एवं स्वस्मिन्प्रसक्तौ रागद्वेषौ वारयति—य इति । ये यथा येन प्रकारेण यदर्थं मोक्षार्थमर्थार्थमार्तिनिवृत्त्यर्थं ज्ञानार्थं च मां प्रपद्यन्ते भजन्ति तांस्तथैव तत्तत्फलप्रदानेनाहं समस्तफलप्रदाता परमेश्वरो भजामि अनुगृह्णामि । ये मनुष्याः यत्फलार्थितया यस्मिन्कर्मण्यधिकृता इन्द्रादिदेवतान्तरं यजन्ते सर्वशः सर्वप्रकारेण प्रवृत्तास्ते ममैव सर्वात्मनस्तत्कर्मात्मकं वर्त्म मार्गमनुवर्तन्ते । ये तु ये मनुष्याः मां सर्वशरीरस्थं यथा येन प्रकारेण शत्रुत्वेन मित्रत्वेन वा प्रपद्यन्ते प्राप्नुवन्ति तांस्तेनैव प्रकारेणाहमपि भजाम्यनुसरामि । ये तु मम वर्त्म भक्तिध्यानप्रणिधानात्मकमनुवर्तन्ते तान् ममात्मभूतान् तथैव सर्वशः सर्वप्रकारैरनुवर्तेऽहमिति. वर्णयन्ति तैस्त्वर्थान्तरं वर्णनीयमिति व्यग्रचित्तैः मामुपाश्रिताः यजन्त इति पूर्वोत्तरग्रन्थानुसारी प्रपद्यन्ते भजामीत्यनयोर्यथाश्रुतार्थः परित्यक्तः एतेन ममेत्यादिक्लिष्टकल्पनापि प्रत्युक्ता । इतरमनुष्या अपि मम वर्त्मानुवर्तन्ते त्वया तु मत्संबन्धिनापि मदनुवर्तनं न क्रियत इत्यत्याश्चर्यमिति द्योतयन्नाह पार्थेति ॥ ११ ॥

प० टी०—ननु तर्हि त्वय्यपि वैषम्यमस्ति यतस्त्वदेकशरणानामेवात्मभावं ददासि न कामात्मनामित्यत आह—ये यथेति । ये उपासकाः पुरुषा यथा यदुद्दिश्य मां प्रपद्यन्ते शरणं व्रजन्ति, अहमपि तांस्तथैव भजामि तं तमुद्देशं पूर्णीकरोमि । तदुक्तम् ‘ सुरद्रुमो यद्वदुपाश्रितार्थदः ’ इति । अथ तत्तदुद्देशप्रवर्तकोऽप्यहमेवेत्याह—ममेति । सर्वशः सर्वे मनुष्या मम वर्त्म मार्गमनुलक्षीकृत्य वर्तन्ते सर्वान्तर्यामित्वेन तत्तद्गुणविशिष्टबुद्धीनां प्रेरकोऽप्यहमेवास्मि ॥ ११ ॥

रा० टी०—ननु सामान्यतो विष्णुं सर्वोत्तमं ज्ञात्वा अन्यदेवताः पितॄंश्चेष्ट्वान्ते तत्कर्म विष्णौ समर्पयन्ति ये त्रैविद्यास्तेषामपि मोक्षश्चेत्को विशेषस्त्वामुपाश्रितानामित्यतो न ज्ञानिनां त्रैविद्यानां च फलसाम्यं तत्तत्सेवानुसारेणैव मोक्षस्वर्गरूपभिन्नफलदानात्सेवायाश्च वैषम्यादितो न वैषम्यादिदोष इति भावेनाह— ये यथेति । ये ज्ञानिनस्त्रैविद्या वा यथा येन प्रकारेण मोक्षेच्छया मद्यजनप्रकारेण स्वर्गादिच्छया अन्यदेवतायजनप्रकारेण मां प्रपद्यन्ते तांस्तथैव तत्तद्भजनानुसारेणाहं भजामि मोक्षस्वर्गफलदानेन सेवेत गुणभावेनेत्यर्थः । फलतारतम्यहेतुरयं ज्ञानिभ्यस्त्रैविद्यानां सेवायां विशेषः किंप्रकार इत्यत आह—ममेति । हे पार्थ सर्वशः सर्वे ज्ञानिनः त्रैविद्याश्च मनुष्याः ममवर्त्मानुवर्तन्ते मत्कर्मकर्तृत्वात्तद्यागीयहविरादिभोक्तृत्वान्मम वर्त्मानुवर्तिन एव सर्व इत्यर्थः ॥ ११ ॥

**काङ्क्षन्तः कर्मणां सिद्धिं यजन्त इह देवताः ॥**
**क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा ॥ १२ ॥**

त० टी०—एवं चेत्तर्हि सर्वे जना निष्कामा भूत्वा मोक्षार्थं साक्षात्त्वामेव कुतो नाश्रयन्ते इत्यत आह—कांक्षन्त इति । कर्मणां सिद्धिं धनस्त्रीपुत्रपश्वादिप्राप्तिरूपां सिद्धिं कांक्षन्तो वाञ्छन्तः प्राय इह कर्माधिकारिणि मनुष्यलोके देवता इन्द्रादीनेव यजन्ते, नतु साक्षान्मां भजन्ते । कुतः हि यस्मात्कर्मजा सिद्धिः देवताराधनजं कर्म क्षुद्रफलं क्षिप्रं शीघ्रं भवति, ज्ञानफलो मोक्षस्तु न शीघ्रं भवति तस्यानेकजन्मसाधनसिद्धिलभ्यत्वात् ‘ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ’ इति

**वक्ष्यति। अतस्तेषां मुमुक्षाभावात् क्षुद्रफलसिद्ध्यर्थं क्षुद्रफलदा देवता एव यजन्ते, न साक्षान्मामाश्रयन्ते इति भावः ॥ १२ ॥**

**म० टी०**—ननु त्वामेव भगवन्तं वासुदेवं किमिति सर्वे न प्रपद्यन्त इति तत्राह—**काङ्क्षन्त इति** । कर्मणां सिद्धिं फलनिष्पत्तिं काङ्क्षन्त इह लोके देवताः देवान् इन्द्राग्न्याद्यान् यजन्ते पूजयन्ति अज्ञानप्रतिहतत्वान्न तु निष्कामाः सन्तो मां भगवन्तम् । वासुदेवमिति शेषः । कस्मात् हि यस्मात् इन्द्रादिदेवतायाजिनां तत्फलकाङ्क्षिणां कर्मजा सिद्धिः कर्मजन्यं फलं क्षिप्रं शीघ्रमेव भवति मानुषे लोके, ज्ञानफलं त्वन्तःकरणशुद्धिसापेक्षत्वान्न क्षिप्रं प्रभवति। मानुषे लोके कर्मफलं शीघ्रं भवतीति विशेषणादन्यलोकेऽपि वर्णाश्रमधर्मव्यतिरिक्तकर्मफलसिद्धिर्भगवता सूचिता । यतस्तत्तत्क्षुद्रफलसिद्ध्यर्थं सकामा मोक्षविमुखाः अन्या देवता यजन्तेऽतो न मुमुक्षव इव मां वासुदेवं साक्षात्ते प्रपद्यन्त इत्यर्थः ॥ १२ ॥

**शं० टी०**—ननु मोक्षस्य सन्निकृष्टकारणं प्रकृष्टं सर्वश्रुतिप्रसिद्धं ज्ञानयोगमुत्सृज्य पण्डिता अपि किं कर्ममार्गमनुतिष्ठन्तीत्याशङ्कायां न ज्ञानयोगस्य चित्तशुद्ध्येकलभ्यत्वात्तदसिद्धौ सर्वकर्म संन्यस्य ज्ञानयोगे प्रवृत्तस्य ज्ञाननिष्ठाऽसंभवात्तदसिद्धौ मोक्षासिद्धेस्तेन ज्ञानकर्मफलयोरुभयोरपि भ्रंशः स्यात्ततो मोक्षस्यादिमं परं कारणं चित्तशुद्धिरेव कर्मभिः संपादनीयेति विचक्षणाः कर्मैव कुर्वन्तीत्याशयेनाह—**कांक्षन्त इति** । इहास्मिन् लोके देवता इन्द्राग्न्यादिदेवान् तत्प्रसादसिद्धये यजन्त आज्यादिहविषाऽऽराधयन्तः पण्डिताः कर्मणां श्रद्धाभक्तिभ्यां नियमेनानुष्ठितानां श्रौतादीनामनुष्ठानेन लब्धां सिद्धिं सत्त्वशुद्धिलक्षणां काङ्क्षन्तो मम वर्त्मानुवर्तन्त इति पूर्वेणान्वयः । ननु हठादियोगैरपि धीशुद्धिः संपादयितुं शक्यते किं कर्मणेत्याशङ्कायां न तेषामवैदिकत्वाद्ब्राह्मणस्याऽविहितत्वाच्च कर्तुमयोग्यत्वात्कृतैरपि तैश्चित्तशुद्धेर्बहुकालभाव्यत्वाच्चावश्यं ब्राह्मणस्य मुमुक्षोः कर्मणैव भवितव्यमित्याशयेनाह—**क्षिप्रमिति** । हि यस्मात्कारणान्मानुषे लोके कर्मभूमौ कर्मजा वैदिककर्मानुष्ठानसंपन्ना सिद्धिश्चित्तशुद्धिलक्षणा क्षिप्रं शीघ्रमेव भवति यज्ञैराराधितानां देवानां प्रसादाच्छीघ्रमेव मनः प्रसीदतीत्यर्थः । मानुषे लोके सिद्धिरित्युक्तिर्मनुष्यलोक एव चातुर्वर्ण्यं चातुराश्रम्यं कर्मविधिश्च नास्त्यन्यत्र लोक इति सूचितं भवति ॥ १२ ॥

**श्री० टी०**—तर्हि मोक्षार्थमेव किमिति सर्वे त्वां न भजन्तीत्यत आह—**काङ्क्षन्त इति** । कर्मणां सिद्धिं फलं काङ्क्षन्तः प्रायशः इह मनुष्यलोके इन्द्रादिदेवता एव यजन्ते नतु साक्षान्मामेव हि यस्मात्कर्मजा सिद्धिः कर्मजं फलं शीघ्रं भवति नतु ज्ञानफलं कैवल्यं दुष्प्राप्यत्वाज्ज्ञानस्य ॥ १२ ॥

**स० टी०**—ननु त्वामेव सर्वेशं न भजन्ते कुतोऽखिलाः ॥ सर्वाभीष्टप्रदातारमित्यत्राह रमापतिः ॥ १ ॥ कर्मणां फलनिष्पत्तिं प्रार्थयन्तो जना इह ॥ पूजयन्तीन्द्रवह्न्यादीनज्ञानहतबुद्धयः ॥ २ ॥ कर्मजन्यं फलं यस्मादिन्द्रवह्न्यादियाजिनाम् ॥ तत्फलं कांक्षिणां पुंसां शीघ्रं भवति भारत ॥ ३ ॥ तत्त्वज्ञानफलं बुद्धिशुद्धिसाक्षेपभावतः ॥ न शीघ्रं भवतीत्यस्मादन्यान्देवान्भजन्ति ते ॥ ४ ॥ क्षिप्रं हि मानुषे लोके इत्यस्मात्तु विशेषणात् ॥ अन्यलोकेऽप्युपासादिकर्मजा सिद्धिरूहिता ॥ ५ ॥ सकामा मोक्षविमुखास्तत्तत्क्षुद्रफलाप्तये ॥ अन्यदेवान्यजन्तेऽतो मां भजन्ति मुमुक्षवः ॥ ६ ॥ १२ ॥

**भा० टी०**—ननु वासुदेवः सर्वमितिज्ञानार्थं सर्वे त्वामेव कुतो नानुवर्तन्त इत्याशङ्क्य मम वर्त्मेत्यादि विवृण्वन् तत्र कारणमाह—**काङ्क्षन्त इति** । काङ्क्षन्तः प्रार्थयन्त इहास्मिंल्लोके इन्द्राग्न्यादयः देवता यजन्ते हि यस्मान्मानुषे लोके काम्यकर्मजा सिद्धिः फलं क्षिप्रं शीघ्रं भवति। क्षिप्रं मानुषे लोके इति विशेषणादन्येष्वपि कर्मफलसिद्धिं दर्शयति भगवान्।मानुषे लोके वर्णाश्रमादिकर्माणीति विशेषः ॥ १२ ॥

**प० टी०**—अथ तदेव प्रकटयन्नाह द्वाभ्याम्—**काङ्क्षन्त इति** । केऽपि कर्मणां सिद्धिं काङ्क्षन्तः सन्तो

देवता इन्द्रादीन्यजन्ते, तेषां हीति निश्चयेन कर्मजा सिद्धिरिहैव मनुष्यलोके क्षिप्रं शीघ्रं भवति न तु जन्मान्तरविलम्बेन, यतो यद्देवतार्पणं कुर्वन्ति तेन तद्देवतां तर्पयाम्यहमेव संतर्पितो भूत्वा तत्तद्देवतारूपेण कामान् पूरयामीत्यर्थः ॥ १२ ॥

रा० टी०—एतावान्विशेषः—काङ्क्षन्त इति । अहमेव सर्वयज्ञानां भोक्ता प्रेरकश्च । तदेतज्ज्ञात्वा भागवताः निष्कामाः मामेव यजन्ते त्रैविद्यास्ते तत्तत्त्वमजानानाः कर्मणां सिद्धिं काङ्क्षन्तः अन्यदेवता इह यजन्त इति । ननु मम वर्त्मानुवर्तन्त इति यत्सर्वकर्मकर्तृत्वं सर्वकर्मभोक्तृत्वं चोक्तं तत्र सर्वकर्मकर्तृत्वं जीवानामस्वातन्त्र्यदर्शनात्सिद्धं, यज्ञादिभोक्तृत्वं कुतो मानाज्ज्ञेयमित्यत आह—क्षिप्रं हीति । यस्मान्मानुषे लोके कर्मजा सिद्धिः कर्मजं फलं क्षिप्रं शीघ्रं भवति तस्मान्मम वर्त्मानुवर्तन्ते सर्वयज्ञभोक्तेतियावत्।भगवतः सर्वयज्ञभोक्तृत्वादेव तत्फलमिह यजमानस्य क्षिप्रमुपलभ्यते नान्यथा । "तस्मात्ते धनसनयः" "फलमत उपपत्तेः" इति श्रुतिसूत्रादिना हरेरेव फलदातृत्वादिति भावः । यद्वा त्रैविद्यानामन्यदेवतायाजित्वात्कथमुच्यते मां प्रपद्यन्त इत्यत इह लोके अन्यदेवता यजन्तः यजिकर्मणां सिद्धिं काङ्क्षन्तः सर्वशो मनुष्यास्त्रैविद्या अन्ते मयि तत्कर्मसमर्पणेन मम वर्त्मानुवर्तन्ते वैष्णवमार्गमेव अनुसृता भवन्ति।कुत एतत्, हि यस्मात्कर्मजा सिद्धिरिह लोके क्षिप्रं भवति अत इति । अन्यथा तन्न स्यादिति भावः ॥ १२ ॥

**चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ॥**
**तस्य कर्तारमपि मां विद्ध्यकर्तारमव्ययम् ॥ १३ ॥**

त० टी०—ननु केचिदेव साक्षात्त्वां भजन्ते नतु सर्वे, तर्हि तेऽन्यदेवताभक्ता विषमस्वभावाः केन सृष्टाः, कस्येदं वैषम्यमिति चेत्तत्राह—चातुर्वर्ण्यमिति । चत्वारो वर्णा एव चातुर्वर्ण्यं स्वार्थे ष्यञ् । मयेश्वरेण सृष्टमुत्पादितं, कथं गुणकर्मविभागशः, गुणविभागेन कर्मविभागेन चेत्यर्थः । तत्र सत्त्वप्रधाना ब्राह्मणास्तेषां सात्त्विकानि शमदमादीनि कर्माणि । सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियास्तेषां च तादृशानि शौर्यतेजोयुद्धादीनि कर्माणि । तमउपसर्जनरजःप्रधाना वैश्यास्तेषां च तादृशानि कृष्यादीनि कर्माणि । रजउपसर्जनतमःप्रधानाः शूद्रास्तेषां च तादृशानि त्रैवर्णिकशुश्रूषादीनि कर्माणि । तस्य विषमस्वभावस्य चातुर्वर्ण्यस्य कर्तारमपि मामकर्तारं वैषम्यकर्तृत्वशून्यं विद्धि । कुतः, यतोऽव्ययं स्वरूपगुणशक्तिविग्रहान्यथाभावरहितं निर्विकारमित्यर्थः ॥ १३ ॥

म० टी०—शरीरारम्भकगुणवैषम्यादपि न सर्वे समानस्वभावा इत्याह—चातुर्वर्ण्यमिति । चत्वारो वर्णा एव चातुर्वर्ण्यं स्वार्थे ष्यञ् । मयेश्वरेण सृष्टमुत्पादितं गुणकर्मविभागशः गुणविभागशः कर्मविभागशश्च । तथाहि सत्त्वप्रधाना ब्राह्मणास्तेषां च सात्त्विकानि शमदमादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियास्तेषां च तादृशानि शौर्यतेजःप्रभृतीनि कर्माणि तमोपसर्जनरजःप्रधाना वैश्यास्तेषां च कृष्यादीनि तादृशानि कर्माणि, तमःप्रधानाः शूद्रास्तेषां च तामसानि त्रैवर्णिकशुश्रूषादीनि कर्माणीति मानुषे लोके व्यवस्थितानि । एवं तर्हि विषमस्वभावचातुर्वर्ण्यस्रष्टृत्वेन तव वैषम्यं दुर्वारमित्याशङ्क्य नेत्याह—तस्येति । तस्य विषमस्वभावस्य चातुर्वर्ण्यस्य व्यवहारदृष्ट्या कर्तारमपि मां परमार्थदृष्ट्या विद्ध्यकर्तारमव्ययं निरहंकारत्वेनाक्षीणमहिमानम् ॥ १३ ॥

शं० टी०—मम वर्त्मानुवर्तन्त इत्यत्र मत्कृतेर्विषयभूतं कर्ममार्गमनुवर्तन्त इति यदुक्तं तद्विस्पष्टयति—चातुर्वर्ण्यमिति । गुणकर्मविभागशः, गुणानां सत्त्वादीनां कर्मणां शमादीनां च विभागेन रजउपसर्जनसत्त्वप्रधानस्य ब्राह्मणस्य शमदमादयः कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य क्षत्रियस्य शौर्यतेजोधृत्यादयः

कर्माणि, तमउपसर्जनरजःप्रधानस्य वैश्यस्य कृष्यादीनि कर्माणि, रजउपसर्जनतमःप्रधानस्य शूद्रस्य परिचर्यात्मकं कर्म, एवं गुणकर्मविभागशश्चातुर्वर्ण्यं चत्वारो वर्णा एव चातुर्वर्ण्यं चातुराश्रम्यं च सर्गादौ मया सृष्टमत एव मम वर्त्मानुवर्तन्ते मनुष्याः इति यदुक्तं तत्सिद्धम् "यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इति श्रवणात्तथापि तर्हि चातुर्वर्ण्यसृष्टिकर्मकर्तृत्वात्तत्फलेन जन्मादिना संबन्धसंभवान्न नित्यत्वेश्वरत्वादिः सिध्यतीत्याशङ्कायां न विकल्पो नहि वस्तु "मायामात्रमिदं द्वैतम्" इतिश्रवणात् स्रष्टृस्रष्टव्यादेर्मायिकत्वेन मिथ्यात्वान्निष्कलस्य निष्क्रियस्याविक्रियस्य मम सर्जनादिक्रियाऽयोगाद्वस्तुतो मामकर्तारमेव विजानीहीत्याह—**तस्येति** । तस्य चातुर्वर्ण्यस्य प्रपञ्चस्य च मायया कर्तारमपि मायामोहितचित्तानां कर्तृत्वेन प्रतीयमानं मां परमात्मानमकर्तारं निर्गुणत्वाद्वस्तुतः कर्तृत्वादिधर्मशून्यमेव विद्धि । तदभावे कर्माऽसंभूतौ तत्फलजन्माद्यसंभवादव्ययं नाशरहितं नित्यशुद्धबुद्धमुक्तस्वभावमेव विजानीहीत्यर्थः ॥ १३ ॥

**श्री० टी०**—ननु केचित्सकामतया प्रवर्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यं तत्कर्तॄणां च ब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यं कुर्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याह—**चातुर्वर्ण्यमिति** । चत्वारो वर्णा एव चातुर्वर्ण्यं स्वार्थे ष्यञ्प्रत्ययः । अयमर्थः । सत्त्वप्रधाना ब्राह्मणास्तेषां शमदमादीनि कर्माणि, सत्त्वरजःप्रधानाः क्षत्रियास्तेषां च शौर्ययुद्धादीनि कर्माणि, रजस्तमःप्रधाना वैश्यास्तेषां कृषिवाणिज्यादीनि कर्माणि, तमःप्रधानाः शूद्रास्तेषां च त्रैवर्णिकशुश्रूषादिकर्माणीत्येवंगुणानां कर्मणां च विभागैश्चातुर्वर्ण्यं मयैव सृष्टमिति सत्यं तथाप्येवं तस्य कर्तारमपि फलतोऽकर्तारमेव मां विद्धि । तत्र हेतुः अव्ययम्, आसक्तिराहित्येन श्रमरहितं नाशादिरहितम् ॥ १३ ॥

**स० टी०**—गुणानामपि वैषम्याच्छरीरारम्भकारिणाम् ॥ न सर्वे तुल्यशीलाः स्युरित्याह प्रकृतेः पतिः ॥ १ ॥ चत्वार एव वर्णास्ते ष्यञः स्वार्थे विधानतः ॥ गुणकर्मविभागेन वर्णास्ते ब्राह्मणादयः ॥ २ ॥ चत्वारो निर्मिताः सर्गे मया भगवता यतः ॥ सत्त्वप्रधाना ये विप्रास्तेषां कर्म शमादिकम् ॥ ३ ॥ सत्त्वगौणरजोमुख्या नृपाः शौर्यादिकर्मिणः ॥ तमोगौणरजोमुख्या वैश्याः कृष्यादिकर्मिणः ॥ ४ ॥ तमःप्रधानाः शूद्रास्तत्कर्म शुश्रूषणादिकम् ॥ तदिदं मानुषे लोके चातुर्वर्ण्यं व्यवस्थितम् ॥ ५ ॥ एवं वैषम्यसृष्टेस्ते कर्तृत्वात्तत्फलेन च ॥ संबन्धो दुर्निवारः स्यादित्यतः प्राह माधवः ॥ ६ ॥ व्यवहारदृशा तस्य चातुर्वर्ण्यस्य सर्वशः ॥ कर्तारं सन्तमपि मां परमार्थदृशाऽव्ययम् ॥७॥ विद्ध्यकर्तारमक्षीणस्वभावमनहंकृतिम् ॥ निर्विकारतया सन्तं मां ज्ञात्वा मुच्यते भयात् ॥ ८ ॥ १३ ॥

**भा० टी०**—कस्मात्पुनः कारणात्तवैव वर्त्मानुवर्तन्ते नान्यस्येत्यत आह, यद्वा मानुष एव लोके वर्णाश्रमकर्माधिकारो नान्येष्विति नियमः किंनिमित्त इति तत्राह—**चातुर्वर्ण्यमिति** । यत्तु ननु च केचित्सकामतया वर्तन्ते केचिन्निष्कामतयेति कर्मवैचित्र्यं तत्कर्तॄणां ब्राह्मणादीनामुत्तममध्यमादिवैचित्र्यं च कुर्वतस्तव कथं वैषम्यं नास्तीत्याशङ्क्याहेति तदुपेक्ष्यं भाष्योक्तरीत्याऽव्यवहितेन संबन्धे संभवति व्यवहितसंबन्धेनोत्थानानौचित्यात् । शरीरारम्भकगुणवैषम्यादपि न सर्वे समानस्वभावा इत्याहेति वा । अस्मिन्पक्षे गुणकर्मविभागशश्चातुर्वर्ण्यमुत्पन्नमित्येतावतैव निर्वाहे मया सृष्टमित्यस्य प्रयोजनं चिन्त्यम् । चत्वार एव वर्णाश्चातुर्वर्ण्यं गुणविभागशः कर्मविभागशश्च सत्त्वप्रधानस्य ब्राह्मणस्य शमदमादीनि कर्माणि, सत्त्वोपसर्जनरजःप्रधानस्य राजन्यस्य शौर्यादीनि, तमउपसर्जनस्य रजःप्रधानस्य वैश्यस्य कृष्यादीनि, रजउपसर्जनस्य तमःप्रधानस्य शूद्रस्य त्रैवर्णिकशुश्रूषैवेत्येवं गुणकर्मविभागशः चातुर्वर्ण्यं मयेश्वरेण सृष्टम् । चतुर्णां वर्णानां हितं चातुर्वर्ण्यं गुणाश्च कर्माणि चेति गुणकर्म द्वन्द्वैकवद्भावः कर्माण्यग्निहोत्रादीनि गुणाश्च द्रव्यदेवतारूपाः, विभागशः साधारणासाधारणविभागेन । तथाहि । दानजपादिकं सर्वसाधारणम्, अग्निहोत्रादिकं

त्रैवर्णिकस्यैव न शूद्रस्य राजसूयादिकं राज्ञ एव नेतरेषामिति विभागो दृश्यते। यतश्चातुर्वर्ण्यं गुणकर्म च मया सृष्टं ततोऽन्यदेवतानामपि मदुत्थत्वात् पुत्रप्रीत्या पितुरिव तत्प्रीत्या ममैव तृप्तिरस्तीत्यर्थस्तु विभागपदेन साकाङ्क्षेण गुणकर्मणोः समासस्यौचित्यमभिप्रेत्याचार्यैर्न प्रदर्शित इति बोध्यम् । एवं तर्हि चातुर्वर्ण्यस्य विषमस्वभावस्य सृष्ट्यादेस्तन्निष्ठव्यापारस्य च निर्वर्तकत्वात्, वैषम्यस्य कर्मफलस्य कर्तृगामित्वात् कर्तृत्वभोक्तृत्वयोश्च त्वयि प्रसङ्गात् संसारित्वादिकं ते स्यादित्याशङ्क्य मायया कर्तृत्वं न वस्तुत इत्यतो नित्यमुक्तस्य मम संसारित्वस्याभाव इत्याशयेनाह—तस्येति। तस्य चातुर्वर्ण्यस्य मायिकेन व्यवहारेण कर्तारमपि मां परमार्थतोऽकर्तारं विद्धि, अत एव कर्तृत्वाभावादभोक्तृत्वादिसिद्ध्याऽव्ययमविकारिणमक्षीणमहिमानम्, असंसारिणामिति यावत् । आसक्तिराहित्येन श्रमरहितमित्यर्थस्त्वयुक्तः, फलासक्तिरहितानां जीवानां श्रमस्योपलब्धेः ॥ १३ ॥

प० टी०—अथ वैषम्यपरिहारार्थमाह—चातुर्वर्ण्यमिति । चतुर्णां वर्णानां भावश्चातुर्वर्ण्यं ब्रह्मक्षत्रविट्शूद्ररूपं गुणकर्मविभागशो मयैव सृष्टम् । गुणाः सत्त्वादयः, कर्म वर्णाश्रमोचितं, तद्विभागेन तत्तद्वर्णोचितेन निर्मितं विराड्रूपेण । तस्य चातुर्वर्ण्यस्य विराड्रूपेणैव कर्तारं मां विद्धि जानीहि । तथाव्ययमक्षरं शुद्धस्वरूपमसङ्गमकर्तारं विद्धि । अत्र शातपथी श्रुतिः "तदेतद्ब्रह्मक्षत्रविट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवद्ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः" इति। भाष्यम्, ब्रह्मक्षत्रविट्शूद्र इति यच्चातुर्वर्ण्यं तदेतत् । तत्किं तत्तेष्वग्निना वैश्वानरापरपर्यायेण विराड्रूपेण समष्टिना देवेषु ब्रह्माभवत्, स एव मनुष्येषु क्षत्रियोऽभवत्, तथा देवेषु षड्विधेन वसुरुद्रादित्यादिना वैश्येन मनुष्येषु वैश्योऽभवत्, तथा देवेष्वेकविधेन पूषसंज्ञकेन शूद्रेण मनुष्येषु शूद्रोऽभवत् । तथा "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः" इत्यपि ॥ १३ ॥

रा० टी०—भगवद्भजनं विना कुतो न फलमित्यतो वा ज्ञानिनामिव त्रैविद्यानामपि कुतो न महाफलमित्यतो वा तस्य पितृत्वात्पितरं परित्यज्यान्यदेवतायाजिनां फलप्राप्तिरेव नास्ति कुतो महाफलप्राप्तिरितिभावेनाह—चातुर्वर्ण्यमिति । चत्वारो वर्णाश्चातुर्वर्ण्यम् । "चतुर्वर्णादिभ्यः स्वार्थ उपसंख्यानम्" इत्युक्तेः स्वार्थे ष्यञ् । यद्वा चतुर्णां वर्णानां समूहश्चातुर्वर्ण्यम् 'विचित्रा हि तद्धितगतिः' इति समूहार्थे ष्यञ् । गुणकर्मविभागशः, सत्त्वादिगुणविभागेन कर्मविभागेन च चातुर्वर्ण्यं चतुर्वर्णसंघो मया सृष्टः। जनाः सात्त्विकसात्त्विकाः राजससात्त्विकास्तामससात्त्विकाश्चेति त्रिविधाः । तत्र राजससात्त्विकानामत्र ग्रहणम् 'राजसास्तु नरा विप्राः' इत्यष्टादशतात्पर्योक्तेः "सात्त्विको ब्राह्मणः" इत्याद्येतद्भाष्योक्तेश्च । तथाच अतिसत्त्वाधिकरजोगुणयुक्ताः ब्राह्मणाः, किंचित्सत्त्वाधिकरजोगुणयुक्ताः क्षत्रियाः, तमोपेक्षयाधिकं समसत्त्वं यद्रजस्तद्युक्ता वैश्याः, रजोपेक्षयाधिकतमउपेतः तमोपेक्षयाधिकसत्त्वोपेतश्च शूद्र इति गुणविभागकृतो ब्राह्मणादिवर्णः । ब्राह्मणादियोग्यकर्मविभागस्तु, अष्टादशाध्याये शमो दम इत्यादिश्लोकत्रयेण वक्ष्यते । ननु यथा भवान्सर्वस्य कर्ता तथा तवाप्यन्यः कर्तास्ति किमित्यत आह—तस्येति । तस्य चातुर्वर्ण्यस्याव्ययं कर्तारं मां विद्धि। तथाऽकर्तारत्रपि कर्त्रन्तरहीनमपि विद्धि। मेऽन्यः कर्ता नास्तीत्यपि विद्धीत्यर्थः । यद्वा यदि त्वया चत्वारो वर्णाः सृष्टास्तर्हि कर्तृत्वाज्जीववत्तवापि कर्मलेपः स्यादित्यतः कर्मलेपाभावं न मामित्यादिना वक्तुं लेपाभावे हेतुं तावदाह—तस्येति। तस्य कर्तारमपि मां जीवविलक्षणकर्तृत्वादकर्तारं कर्तृत्वहीनं विद्धीति ॥ १३॥

**न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा ॥**
**इति मां योऽभिजानाति कर्मभिर्न स बध्यते॥ १४ ॥**

**त० टी०**—एतत्कुतस्तत्राह—**न मामिति** । कर्माणि विविधजगत्सृष्ट्यादीनि तन्निमित्तानुगुणकर्तारं सर्वज्ञं मां न लिम्पन्ति, तद्वैषम्यजन्यपुण्यपापानि न स्पृशन्तीत्यर्थः । अयं भावः । यथा व्रीह्याम्रकण्टक्यादीनां विषमाणामुत्पत्तौ पर्जन्यस्यासाधारणकारणत्वेऽपि वैषम्यस्य तत्तद्बीजशक्तित्वेन न पर्जन्ये तत्प्रसक्तिः, तथैवोत्तमाधमगुणकर्मविशिष्टसौम्यक्रूरस्वभावसुखिदुःखिविविधजीवसृष्टौ तत्फलदाने च वासुदेवस्य भगवतोऽसाधारणकारणत्वेऽपि वैषम्यस्य तत्तद्बीजात्मकानादिकर्मनिष्ठत्वेन परमेश्वरे भगवति न वैषम्यनैर्घृण्यप्रसक्तिरिति । तथा चाह भगवान्सूत्रकारः—"वैषम्यनैर्घृण्ये न सापेक्षत्वात्" इति । तत्र हेतुमाह—**न मे कर्मफले स्पृहेति** । यथा आत्मबन्धुमित्राणां सुखस्पृहया सुखहेतुकं कर्म कुर्वन्ति, स्ववैरिदुःखस्पृहया तथाभूतं कर्म कुर्वन्ति । न यथोत्तमाधमसुखदुःखविशिष्टप्राणिसर्जनात्मककर्मणां मे फले स्पृहाऽस्ति, आप्तकामत्वात् । न किंचित्फलोद्देशेन करोमीत्यर्थः । इति उक्तप्रकारेण जगत्सृष्ट्यादेः कर्तारमकर्तारं तत्कर्मसङ्गरहितं च यो मां साक्षाज्जानाति स कर्मभिः क्रियमाणैर्न बद्ध्यते ॥ १४ ॥

**म० टी०**—**न मामिति** । कर्माणि विश्वसर्गादीनि मां निरहंकारत्वेन कर्तृत्वाभिमानहीनं भगवन्तं न लिम्पन्ति देहारम्भकत्वेन न बध्नन्ति । एवं कर्तृत्वं निराकृत्य भोक्तृत्वं निराकरोति न मे ममाप्तकामस्य कर्मफले स्पृहा तृष्णा 'आप्तकामस्य का स्पृहा" इति श्रुतेः कर्तृत्वाभिमानफलस्पृहाभ्यां हि कर्माणि लिम्पन्ति तदभावान्न मां कर्माणि लिम्पन्तीति एवं योऽन्योपि मामकर्तारमभोक्तारं चात्मत्वेनाभिजानाति कर्मभिर्न स बध्यते अकर्त्रात्मज्ञानेन मुच्यत इत्यर्थः ॥ १४ ॥

**शं० टी०**—परस्य ब्रह्मणो ममोपाधिद्वयं मायातत्कार्यं न स्वस्य कूटस्थासङ्गचिद्रूपत्वेन मायातत्कार्यसंबन्धासंभवान्मायाकर्तृकैर्जगत्सृष्ट्यादिकर्मभिःश्लेषो यथा नास्ति तथा प्रत्यग्रूपस्य ममासङ्गत्वेन देहेन्द्रियादिकृतकर्मभिरपि श्लेषो नास्त्येवं कर्तृत्वभोक्तृत्वादिधर्मशून्यं मां परमात्मानं श्रवणमननादिसंजातविज्ञानबलेन यः स्वात्मत्वेन विज्ञाय कर्मणि प्रवर्तते स कर्मभिर्न बध्यत इत्याह—**न मामिति** । कूटस्थासङ्गचिद्रूपत्वेन बुद्ध्यादिसबन्धशून्यस्य मे प्रत्यगात्मनः कर्मफले कर्मसु तज्जन्यफलेषु च न स्पृहास्ति।स्पृहाया बुद्धिधर्मत्वाद्बुद्ध्यादिसाक्षिणोऽविकारिणो मम तद्धर्मायोगान्न कर्मफलेच्छा संभवत्यत एव न मां कर्माणि लिम्पन्ति "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुत इति" कामिन एव कर्मसंकल्पतदारम्भश्रवणात्कर्मफलेच्छुनैव विज्ञात्मना कर्माणि क्रियन्ते नत्वकामिना अक्रियेण मया अतो न बुद्ध्यादिभिः कृतानि कर्माणि मामकर्तारं कर्मतत्कर्तृसाक्षिणं लिम्पन्ति स्पृशन्ति । येन यत्कर्म क्रियते फलेच्छुना स तेन कर्मणा लिप्यते तैलवन्नान्यस्ततो बुद्ध्यादेः कर्मकर्तुरन्यस्य बुद्ध्यादिकृतकर्माणि लेपाय न भवन्ति, इत्येवं कर्मफलेच्छारहितं कर्मणामकर्तारमभोक्तारं चाकाशवत्सर्वगतमसङ्गमविक्रियं बुद्धितद्धर्मतत्कर्मतदवस्थासाक्षिणं मां परमात्मानं स्वतत्त्वं योऽभिजानाति सम्यगाभिमुख्येन अयमेवाहमस्मीति साक्षात्स्वात्मना यो वेत्ति स विद्वानाधिकारिको लोकसंग्रहार्थं कृतैः कर्मभिर्न बध्यते कृतानि कर्माण्यमुष्य देहारम्भकाणिं न भवन्तीत्यर्थः ॥ १४ ॥

**श्री० टी०**—तदेव दर्शयन्नाह—**न मामिति** । कर्माणि विश्वसृष्ट्यादीन्यपि मां न लिम्पन्ति आसक्तं न कुर्वन्ति निरहंकारत्वात् आप्तकामत्वेन मम कर्मफले स्पृहाभावाच्च । मां न लिम्पन्तीति किं वक्तव्यं यतः कर्मफले स्पृहाराहित्येन मां योऽभिजानाति सोऽपि कर्मभिर्न बद्ध्यते । मम निर्लेपत्वे कारणं निरहंकारत्वनिःस्पृहत्वादिकं जानतस्तस्याप्यहंकारादिशैथिल्यात् ॥ १४ ॥

**स० टी०**—कर्तृत्वं च निराकृत्य निराचष्टेऽथ भोक्तृताम् ॥ कर्माणि विश्वसृष्ट्यादीन्यनहंकारमीश्वरम् ॥ १ ॥ देहाद्यारम्भकत्वेन न मां बध्नन्ति चिद्घनम् ॥ न वा ममाप्तकामस्य तृष्णा कर्मफले यतः ॥ २ ॥

कर्तृत्वाभिनिवेशेन तथैव फलतृष्णया ॥ लिम्पन्त्यज्ञांस्तु कर्माणि तदभावान्न मां हरिम् ॥ ३ ॥ एवं योऽन्योऽपि मामीशमात्मत्वेन श्रुतेर्नयात् ॥ अकर्तारमभोक्तारं वेत्ति स्वानुभवेन च ॥ ४ ॥ धर्माधर्मादिरूपाणि कर्माणि बन्धकान्यपि ॥ तस्यापि नैव देहाद्यारम्भकाणि भवन्ति वै ॥ ५ ॥ स चाकर्त्रात्मबोधेन मुच्यते कर्मबन्धनैः ॥ ६ ॥ १४ ॥

भा० टी०–अत एवाहंकाराभावात् तानि कर्माणि मां न लिम्पन्ति देहाद्यारम्भकत्वेन न निबध्नन्ति। आसक्तं न कुर्वन्तीत्यर्थस्तु न मे कर्मफले स्पृहेत्यनेन पौनरुक्त्यमभिप्रेत्याचार्यैर्न दर्शितः, मे मम कर्मफले स्पृहा तृष्णा आसक्तिर्नास्ति, अतोऽपि मां कर्माणि न लिम्पन्तीत्येतत् । यत्तु ननु कर्तुरपि कथमकर्तृत्वमत आह–न मामिति । कर्मलेपेपिऽकुतो नास्तीत्यत आह–न मे इति । यः कर्तृत्वाभिमानी स लिप्यते यस्तु फलेच्छुः स एवात्मनः कर्तृत्वं मन्यत इति फलेच्छाभावादकर्ताऽकर्तृत्वाच्च न लिप्यत इति तच्चिन्त्यं, कर्तृत्वाभिनिवेशस्य फलासक्तेश्च बन्धकतयोक्तत्वेनात्रान्यथा वर्णनस्यानौचित्यात् । फलेच्छारहितस्य मुमुक्षोस्तावतैवाकर्तृत्वापत्त्या निर्लेपत्वेन जन्माभावप्रसङ्गाच्च । मां कर्माणि न लिम्पन्तीति किं वक्तव्यम्, इति मां य आत्मत्वेनाभिजानाति परात्माभिन्नस्य मे कर्तृत्वं कर्मफले स्पृहा च नास्तीति स कर्मभिर्न निबध्यते देहादिसंबन्धं प्राप्य न संसरतीत्यर्थः । यत्तु मम निर्लेपत्वे कारणं निरहंकारत्वनिस्पृहत्वादिकं जानतस्तस्याप्यहंकारशैथिल्यादिति तच्चिन्त्यम्, ईश्वराभेदसाक्षात्कारं विना कर्तृत्वादेर्मूलोच्छेदाभावेनोक्तज्ञानवतो मोक्षासंभवात् । अन्यथा मूर्खाणामप्येतावज्ज्ञानवतां कर्मप्रयुक्तबन्धनाभावप्रसङ्गात् ॥ १४ ॥

प० टी०–अथ विद्धयकर्तारमव्ययमित्येव विविच्याह–न मामिति । मां कर्माणि सृष्ट्यादिकर्तृत्वरूपाणि न लिम्पन्त्यसङ्गत्वात् । अत एव न मे कर्मफले स्पृहा वाञ्छापि। अवाप्तसकलकामेन मया किमुद्दिश्यैतत्कर्म कर्तव्यमित्यर्थः । यथा सूर्यो जगद्व्यापारहेतुत्वेऽपि तत्कर्मणा न लिप्यते एवमित्युक्तप्रकारेण यो मामभिजानाति सोऽपि कर्मभिर्न बध्यते किं पुनरहमित्यर्थः ॥ १४ ॥

रा० टी०–ततः किमित्यत आह–न मामिति । जीवविलक्षणक्रियावत्त्वेनाकर्तृत्वान्मां कर्माणि न लिम्पन्ति । किंच जीवानां कर्मलेपे अभिनिवेशो हेतुः नच मेऽसावस्तीत्याह–न मे कर्मफले स्पृहेति । फलप्राप्तिपर्यन्तं मनोविक्षेपशब्दितोऽभिनिवेशः कर्मफले मे नास्ति अतोऽपि न लिम्पन्ति कर्माणीत्यर्थः । कैमुत्येनापि स्वस्य कर्मालेपमाह–इतीति । कर्मलेपो मे नास्ति तत्फले स्पृहापि नेत्येवं मां योऽभिजानाति सोऽपि कर्मभिर्न बध्यते किम्वहमिति इति योऽभिजानातीति वाच्ये मामिति पुनर्वचनं स्वस्य ईश्वराभेदाभिप्रायेण। स्वात्मानमुद्दिश्य न मां कर्माणि लिम्पन्तीत्यादि यो जानातीति जीवाभेदप्रतीतिनिरासाय मां योऽभिजानाति न स्वात्मानमिति ॥ १४ ॥

**एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः ।**
**कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम् ॥ १५ ॥**

**त० टी०–तस्मात्फलितमाह–एवमिति । यथा फलस्पृहाराहित्येन परमेश्वरो जगत्सृष्ट्यादीनि महान्त्यपि कर्माणि कुर्वन्न बध्यते, तथा कर्तृत्वाभिमानतत्फलेच्छाराहित्येन यथाधिकारं विधिना कृतं कर्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्वैरपि मुमुक्षुभिर्मनुजनकादिभिः कर्म कृतम् । यस्मादेवं तस्मात्त्वमपि मुमुक्षुः पूर्वैः कृतं पूर्वतरं शिष्टपरंपरागतं कर्मैव कुरु ॥ १५ ॥**

म० टी०–यतो नाहं कर्ता न मे कर्मफले स्पृहेति ज्ञानात्कर्मभिर्न बध्यते अतः–**एवमिति** । एवमात्मनोऽकर्तुः कर्मालेपं ज्ञात्वा कृतं कर्म पूर्वैरतिक्रान्तैरपि अस्मिन् युगे ययातियदुप्रभृतिभिर्मुमुक्षुभिः, तस्मात्त्वमपि कर्मैव

कुरु न तूष्णीमासनं नापि संन्यासं यद्यतत्त्ववित्तदात्मशुद्ध्यर्थम् तत्त्वविच्चेल्लोकसंग्रहार्थम् । पूर्वैः जनकादिभिः पूर्वतरमतिपूर्वं युगान्तरेपि कृतम् । एतेनास्मिन्युगेऽन्ययुगे च पूर्वपूर्वतरैः कृतत्वादवश्यं त्वया कर्तव्यं कर्मेति दर्शयति ॥ १५ ॥

**शं० टी०**—विदुष उपाधिकृतानां कर्मणामबन्धकत्वज्ञानमेव परार्थप्रवृत्तौ बलवत्साधनमिति सूचयित्वा प्राञ्चोऽप्यबन्धकत्वज्ञाने नैव परार्थे प्रवृत्ता इति शिष्टाचारं प्रमाणय्य त्वयाप्येवमेव प्रवर्तितव्यमित्याह—**एवमिति** । एवं ज्ञात्वा अहंबुद्ध्यादिसाक्षी प्रत्यगेवास्मि देहेन्द्रियादिभ्यो भिन्नः सन् देहेन्द्रियकृतैः कर्मभिर्न बद्ध इत्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वं देहादिकृतकर्मणामबन्धकत्वं चैवमुक्तरीत्या विज्ञाय मुमुक्षुभिर्मुक्तैर्मुमोचयिषुभिरितीदं गर्भितणिजन्तरूपम् । अविद्याबन्धेभ्यो मोचयितुमिच्छद्भिर्मुमुक्षुभिः पूर्वैरपि जनकादिभिर्लोकहितार्थं कर्म कृतं भवति यस्मात्तस्मात्त्वं पूर्वैः कृतं ज्ञानवृद्धैः सद्भिरनुष्ठितं पूर्वतरमनादिकालप्रवृत्तं कर्मैव लोकहितार्थं कुरु नतु संन्यासमित्यर्थः ॥ १५ ॥

**श्री० टी०**—ये यथा मां प्रपद्यन्त इत्यादिचतुर्भिः श्लोकैः प्रासङ्गिकमीश्वरस्य वैषम्यं परिहृत्य पूर्वोक्तमेव कर्मयोगं प्रपञ्चयितुमनुस्मारयति—**एवमिति** । अहंकारादिराहित्येन कृतं कर्म बन्धकं न भवतीत्येवं ज्ञात्वा पूर्वैर्जनकादिभिरपि मुमुक्षुभिः सत्त्वशुद्ध्यर्थं पूर्वतरं युगान्तरेष्वपि कृतं तस्मात्त्वमपि प्रथमं कर्मैव कुरु ॥ १५ ॥

**स० टी०**—एवमेवात्मनोऽकर्तुः कर्मालेपं विचार्य वै ॥ कृतं कर्म युगेऽप्यस्मिन्नतिक्रान्तैर्मुमुक्षुभिः ॥१॥ तस्मात्त्वमपि कर्मैव कुरु त्यागस्तु नोचितः ॥ धीशुद्ध्यर्थं मुमुक्षुश्चेत्तज्ज्ञश्चेत्संग्रहाय च ॥२॥ युगान्तरे कृतं पूर्वैः कृतं तज्जनकादिभिः ॥ अवश्यं कर्म कर्तव्यं कृतत्वात्सार्वकालिकैः ॥ ३ ॥ १५ ॥

**भा० टी०**—**एवमिति** । नाहं कर्ता न मे कर्मफले स्पृहेत्येवं ज्ञात्वा पूर्वैरपि मुमुक्षुभिश्चित्तशुद्धिद्वारा ज्ञानार्थं कर्म कृतं तस्मात्त्वमपि कर्मैव कुरु, नापि तूष्णीमासनं नापि संन्यासं यस्मात्त्वत्तोऽपि पूर्वैर्जनकादिभिः ज्ञानिभिर्लोकसंग्रहार्थम्, अनादिसिद्धत्वात्पूर्वतरं कृतं यद्यज्ञो मुमुक्षुस्त्वं तर्हि सत्त्वशुद्ध्यर्थं तत्त्वविच्चेत्तर्हि लोकसंग्रहार्थं कर्म कुर्वित्यभिप्रायः ॥ १५ ॥

**प० टी०**—अथ प्रकृतमनुसरति—**एवमिति** । एवममुना प्रकारेण मदीयं कर्तृत्वाद्यभिमानशून्यत्वं ज्ञात्वा मुमुक्षुभिर्मोक्षमिच्छद्भिः पूर्वैः पुरातनैरपि कर्म कृतम् । तस्मात्त्वमपि प्रस्तुतं कर्मैव कुरु । यतः पूर्वैः पूर्वतरमनादिसिद्धं कृतम् । अनेन शिष्टाचारोऽपि प्रमाणमिति सूचितम् ॥ १५ ॥

**रा० टी०**—यदि ज्ञानी कर्मभिर्न बध्यते तर्हि ममापि ज्ञानित्वात्कर्मबन्धाभावरूपमुक्तिसत्त्वात्कथं कर्मविधानमित्यतो ज्ञानिनामप्यधिकमोक्षाकाङ्क्षया कर्मकरणे आचारोऽप्यस्तीत्याह—**एवमिति** । प्राक् जनकादीनां विवस्वदादीनां च विद्यमानमपि ज्ञानित्वं भगवतो न विवक्षितम् ’ अत्र तु विवक्षितमिति न तेन पौनरुक्त्यं शङ्क्यम् । पूर्वैर्मुमुक्षुभिः “ आक्वेस्तच्छीलतद्धर्मतत्साधुकारिषु” इति तत्साधुकारिण्युप्रत्ययः । अधिकमोक्षेच्छावद्भिरेवमुक्तप्रकारेण हार्दं ज्ञात्वापि कर्म कृतं तस्मात्त्वमपि पूर्वैः कृतं पूर्वतरं ततोऽपि पूर्वभावि कर्म कुर्विति ॥ १५ ॥

**किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः ।**
**तत्ते कर्म प्रवक्ष्यामि यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १६ ॥**

**त० टी०**—ननु कर्मैव कर्तव्यं चेत्त्वद्वचनादेव करिष्यामि, परंतु कर्मणि कश्चित्संदेहोऽस्ति किं यतः पूर्वैः पूर्वतरं कृतमित्युदाहरसीत्यत आह—**किं कर्मेति** । मुमुक्षुणाऽनुष्ठेयं कर्म किंस्वरूपम्, अकर्म च

किमत्र कर्माकर्मज्ञानविषये कवयो विद्वांसोऽपि मोहितास्तन्निर्णयं कर्तुमशक्ताः यथावन्न जानन्ति। यस्मात्कर्मादिज्ञानं दुर्घटं, तत्तस्मात्ते तुभ्यं कर्म अकर्म च प्रवक्ष्यामि, यत्कर्माकर्मस्वरूपं ज्ञात्वा अशुभात्संसारान्मोक्ष्यसे ॥ १६ ॥

म० टी०—ननु कर्मविषये किं कश्चित्संशयोप्यस्ति येन पूर्वैः पूर्वतरं कृतमित्यतिनिर्बन्धासि अस्त्येवेत्याह—किमिति। नौस्थस्य निष्क्रियेष्वपि तटस्थवृक्षेषु गमनभ्रमदर्शनात् तथातिदूराच्चक्षुःसन्निकृष्टेषु गच्छत्स्वपि पुरुषेष्वगमनभ्रमदर्शनात् परमार्थतः किं कर्म किं वा परमार्थतोऽकर्मेति कवयो मेधाविनोप्यत्रास्मिन्विषये मोहिताः मोहं निर्णयासामर्थ्यं प्राप्ताः अत्यन्तदुर्निरूपत्वादित्यर्थः। तत्तस्मात्ते तुभ्यमहं कर्म, अकारप्रश्लेषेण छेदादकर्म च प्रवक्ष्यामि। प्रकर्षेण सन्देहोच्छेदेन वक्ष्यामि। यत्कर्माकर्मस्वरूपं ज्ञात्वा मोक्ष्यसे मुक्तो भविष्यस्यशुभात्संसारात् ॥ १६ ॥

शं० टी०—ननु कर्मणां बन्धकत्वमेव सिद्ध्यति 'कर्मणा बध्यते जन्तुः' इति कर्मणां बन्धकत्वस्मरणादिति चेन्न, तत्स्मृतेरविद्वत्कर्तृककर्मविषयत्वात् "तं विदित्वा न लिप्यते कर्मणा पापकेन" इति विदुषः कर्मालेपश्रवणात्कर्माकर्मणोस्तत्त्वं सम्यक् ज्ञात्वा विदुषा क्रियमाणं कर्माऽकर्मैव तन्न बन्धाय भवति। अविदुषा कृतमकर्मैव कर्म तदेव बन्धाय भवति, तर्हि कर्माकर्मणोर्लक्षणं किमित्याकाङ्क्षायामाह—किं कर्मेति। श्रुतिस्मृतिभ्यां यद्विहितं तत्कर्म यदविहितं तदकर्मेति केचित्पण्डिता जगुः। वैदिकं श्रौतं स्मार्तं च यत्तत्सर्वं कर्म तत्संन्यासोऽकर्मेत्यपरे। चलनात्मकं कर्म त्वचलनं तूष्णीमासनमकर्मेत्यन्ये। केचित्तु किं कर्म किमकर्मेति किं वा कर्मशब्दवाच्यमकर्मशब्दवाच्यं वा किमिति कवयः सर्वशास्त्रज्ञा अप्यत्र कर्माकर्मतत्त्वनिर्णये मोहिता मूढभावं गतास्तत्तत्त्वं निर्णेतुमसमर्था जाता इत्यर्थः। यत एवं ततः कर्माकर्मस्वरूपमजानते ते तुभ्यं कर्म चाकर्म च प्रवक्ष्यामि तयोर्लक्षणमुपदेक्ष्यामि यज्ज्ञात्वा ययोस्तत्त्वं विज्ञायाऽशुभात्संसारान्मोक्ष्यसे कर्माकर्मणोस्तत्त्वं सम्यक् ज्ञात्वा मुक्तो भविष्यसीत्यर्थः ॥ १६ ॥

श्री० टी०— तच्च तत्त्वविद्भिः सह विचार्य कर्तव्यं न लोकपरम्परामात्रेणेत्याह—किं कर्मेति। किं कर्म कीदृशं कर्मकरणं किमकर्म कीदृशं कर्माकरणमित्येतस्मिन्नर्थे विवेकिनोऽपि मोहिताः। अतो यज्ज्ञात्वानुष्ठाय अशुभात्संसारान्मोक्ष्यसे मुक्तो भविष्यसि तत्कर्माकर्म च तुभ्यमहं प्रवक्ष्यामि शृणु ॥ १६ ॥

स० टी०— नन्वत्र कर्मविषये किं कश्चित्संशयोऽस्ति वा ॥ पूर्वैः पूर्वतरं चेति येनोक्तमिति चेच्छृणु ॥ १ ॥ निष्क्रियेष्वपि तीरस्थवृक्षेषु गमनभ्रमः ॥ नौस्थस्य दृश्यते पुंसस्तस्मात्किं कर्म वस्तुतः ॥ २ ॥ चक्षुषा संनिकृष्टेषु गच्छत्स्वप्यतिदूरतः ॥ नरेष्वगमनभ्रान्तिदर्शनात्किमकर्म तत् ॥ ३ ॥ अतः किं वस्तुतः कर्म किमकर्मेति वार्थतः ॥ मेधाविनोऽपि कर्मादिविषये निर्णयेऽर्थतः ॥ ४ ॥ असामर्थ्यं गताश्चातिदुर्निरूपतयाखिलाः ॥ तस्मात्तुभ्यमहं कर्म वक्ष्यामि तदकर्म च ॥ ५ ॥ कर्माकर्मस्वरूपं यज्ज्ञात्वा मुक्तो भविष्यसि ॥ अशुभागारसंसाराज्जन्ममृत्युप्रवाहतः ॥ ६ ॥ १६ ॥

भा० टी०—ननु कर्म कर्तव्यं चेत्त्वदुक्त्यैवाहमिदं कर्मेति स्वबुद्ध्या विचार्य करोमि किं पूर्वैः पूर्वतरं कृतमिति विशेषितेनेत्याशङ्क्य कर्मणि महावैषम्यस्य सत्त्वात् तस्य पूर्वैरित्यादिविशेषितत्वेन तव प्रवृत्तिस्तस्मिन्सुकरेत्याशयेन कर्मणो दुर्विज्ञेयत्वमाह—किमिति। यत्तु तच्च तत्त्वविद्भिः सह विचार्य कर्तव्यं न लोकपरम्परामात्रेणेत्याहेति तच्चिन्त्यम् 'कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतम्' इति स्वयमतिनिर्बन्धेनोक्त्वा पुनस्तत्रैवानिर्बन्धं वदतः परमेश्वरस्य पूर्वापरविरोधापत्तेः। अत्रास्मिन्कर्मादिविषये कवयो मेधाविनोऽपि मोहं किं कर्म किमकर्मेति संशयं गताः प्राप्ताः, अतस्ते तुभ्यमहं कर्म, अप्रश्लेषेणाकर्म च प्रवक्ष्यामि यत्कर्मादि ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसे ॥ १६ ॥

प० टी०– अथ कर्मणो दुर्ज्ञेयत्वमाह–किं कर्मेति त्रिभिः । कर्म वेदबोधितं कीदृशं, तथा तत्समाप्तिरूपमकर्म नैष्कर्म्यं कीदृशमित्यत्र कवयः पण्डिता अपि मोहिताः किं पुनर्भवादृशा इत्यर्थः । यस्मादेवं तस्मात्ते मुमुक्षवेऽनुष्ठेयं कर्म प्रवक्ष्यामि । तत्किं, यज्ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसे ॥ १६ ॥

रा० टी०–कुर्विति कर्तव्यतयोक्तकर्मस्वरूपं वक्तुं तत्र जिज्ञासाजननाय कर्मणो दुर्ज्ञेयत्वमाह–किमिति । अकर्मपदेन कर्माभावो विरुद्धकर्म च ग्राह्यम् । अत्र कर्मविषये कवयोपि मोहिताः विभ्रमवन्तस्तर्हि किं तत्स्वरूपं ब्रूहीत्यत आह–तदिति । तस्मात्कवीनामपि मोहविषयत्वादिति वा यत्कर्तव्यत्वादिनोक्तं तत्कर्मेति वा ते जिज्ञासवे प्रवक्ष्यामि । यज्ज्ञात्वाऽशुभात्कर्मबन्धान्मोक्ष्यसे तत्कर्मेति वा कर्म प्रवक्ष्यामीत्यकर्मविकर्मणोरप्युपलक्षणम् । अनुष्ठेयतया प्राधान्यात्कर्मेत्येवोक्तम् । यद्वा ते कर्मेत्यत्राकारप्रश्लेषेणाकर्मेत्यपि पदच्छेदो ज्ञेयः ॥ १६ ॥

**कर्मणो ह्यपि बोद्धव्यं बोद्धव्यं च विकर्मणः ।**
**अकर्मणश्च बोद्धव्यं गहना कर्मणो गतिः ॥ १७ ॥**

त० टी०–ननु शरीरेन्द्रियव्यापारः कर्म तदभावः क्रियाशून्यत्वमकर्मेति सर्वजनप्रसिद्धं, कथमत्र कवयोऽपि मोहिता इत्युक्तमिति चेत्तत्राह–कर्मण इति । हि निश्चयेन कर्मणः शास्त्रविहितस्य शरीरेन्द्रियव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति । विकर्मणः प्रतिषिद्धस्यापि तत्त्वं बोद्धव्यमस्ति । अकर्मणः क्रियाऽभावस्य तूष्णीमासनस्यापि तत्त्वं बोद्धव्यमस्ति । यतो गहना कर्मणो गतिः । कर्मण इत्युपलक्षणं कर्माकर्मविकर्मणां तत्त्वं दुर्विज्ञेयमित्यर्थः ॥ १७ ॥

म० टी०–ननु सर्वलोकप्रसिद्धत्वादहमेवैतज्जानामि देहेन्द्रियादिव्यापारः कर्म तूष्णीमासनमकर्मेति तत्र किं त्वया वक्तव्यमिति तत्राह–कर्मण इति । हि यस्मात् कर्मणः शास्त्रविहितस्यापि तत्त्वं बोद्धव्यमस्ति, विकर्मणश्च प्रतिषिद्धस्य, अकर्मणश्च तूष्णींभावस्य । अत्र वाक्यत्रयेऽपि तत्त्वमस्तीत्यध्याहारः । यस्मात् गहना दुर्ज्ञाना कर्मण इत्युपलक्षणं कर्माकर्मविकर्मणां गतिस्तत्त्वमित्यर्थः ॥ १७ ॥

शं० टी०–ननु कर्माकर्मणोरुभयोस्तत्त्वमारुरुक्षोर्ज्ञातव्यं वा किमारूढस्यैवेत्याकाङ्क्षायामारुरुक्षोः कर्माकर्मविकर्मणामेव तत्त्वं सम्यक् ज्ञातव्यं तद्बोधस्यैव तस्य दुरवगाहत्वात्तान्येव बोद्धव्यानि प्रयत्नेनास्यात्रैवाधिकारो नान्यत्रेत्याशयेनाह–कर्मण इति । मुमुक्षोरारोढुमिच्छतः कर्मणो वर्णाश्रमादेरनुष्ठेयस्य बोद्धव्यमस्ति ज्ञाते सति हि कर्मस्वरूपे यथाशास्त्रं कर्म कर्तुं शक्यते नाज्ञाते । शास्त्राणामनेकत्वाच्छास्त्रप्रवर्तकानां बहुविधत्वाच्च देशकालयुगाधिकारिवर्णाश्रमवयोवस्थादिभेदेन संकोचव्याकोचाभ्यां कर्मविधेरनेकरूपत्वाच्च कर्तव्यस्य कर्मणस्तत्त्वं सम्यग्बोद्धव्यमित्यर्थः । विकर्मणोऽनन्तसंबन्धवता विधिना विहितविपरीततया विधीयमानत्वाद्विकर्म प्रतिषिद्धं निन्दितं कर्म तस्य विकर्मणोऽपि बोद्धव्यमस्ति, ज्ञाते हि निषिद्धांशे यन्निषिद्धं तत्परिहर्तुं शक्यते ततो निरुक्तदेशकालादिभेदेन निषिद्धस्यापि बहुविधत्वाद्बोद्धव्यमस्तीत्यर्थः । तथैवाकर्मणोऽपि न कर्माकर्मकर्माभावः यस्मात्कर्म न संभवति तदकर्मेति वा कर्मसंन्यासस्तस्याऽपि बोद्धव्यमस्ति काम्यकर्मत्यागो निषिद्धत्यागः कर्मफलत्यागः सर्वकर्मपरित्यागः कर्ममात्रपरित्याग इत्यादिभेदेन संन्यासोऽपि बहुधा भिद्यते ततस्तस्यापि बोद्धव्यमस्तीत्यर्थः । हि यस्मात्कारणात्कर्मणः, कर्मण इति विकर्माकर्मणोरप्युपलक्षणं कर्माकर्मविकर्मणां त्रयाणामपि गतिरेवं कर्तव्यमिति कर्तव्यता निश्चितिर्गहना विदुषामपि दुर्ज्ञेया भवत्यत आरुरुक्षोः कर्माकर्मविकर्मणां स्वरूपं शास्त्रत आचार्यतश्च सलक्षणं सरहस्यं च सम्यग्ज्ञातव्यमित्यर्थः ॥ १७ ॥

**श्री० टी०**–ननु लोकप्रसिद्धमेव कर्म देहादिव्यापारात्मकमकर्म च तदव्यापारात्मकमतः कथमुच्यते कवयोऽप्यत्र मोहं प्राप्ता इति तत्राह–**कर्मण इति** । कर्मणो विहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति ननु लोकसिद्धमात्रमेव । अकर्मणोऽविहितव्यापारस्यापि तत्त्वं बोद्धव्यमस्ति विकर्मणोऽपि निषिद्धस्यापि तत्त्वं बोद्धव्यमस्ति यतः कर्मणो गतिर्गहना । कर्मण इत्युपलक्षणार्थम्, कर्माकर्मविकर्मणां तत्त्वं बोद्धव्यमस्ति यतः दुर्विज्ञेयमित्यर्थः ॥ १७ ॥

**स० टी०**–सर्वलोकप्रसिद्धत्वाज्ज्ञानाम्यप्यहमेव तत ॥ देहेन्द्रियादिव्यापारः कर्माकर्मविपर्ययः ॥ १ ॥ किं त्वया तत्र वक्तव्यमिति चेच्छृणु तत्त्वतः ॥ यस्माच्छास्त्रविधानस्य बोद्धव्यं तत्त्वमस्ति ते ॥ २ ॥ निषिद्धस्यापि बोद्धव्यं तत्त्वमस्ति विकर्मणः ॥ तूर्ष्णींभावस्य बोद्धव्यमस्ति तत्त्वमकर्मणः ॥ ३ ॥ यतस्तत्त्वं च दुर्ज्ञेयं कर्माकर्मविकर्मणाम् ॥ ४ ॥ १७ ॥

**भा० टी०**–ननु देहादिव्यापारः कर्माकरणं तूष्णींमासनमिति लोकप्रसिद्ध्यैव ज्ञातुं शक्यमिति तत्राह–**कर्मण इति** । हि यस्मात्कर्मणः शास्त्रविहितस्यापि तत्त्वं बोद्धव्यं ज्ञातव्यमस्ति, विकर्मणश्च प्रतिषिद्धस्य तत्त्वं बोद्धव्यमस्ति, अकर्मणश्च तूर्ष्णींभावस्य तत्त्वं बोद्धव्यमस्ति । सर्वत्र तत्त्वमस्तीतिपदाध्याहारः । भाष्येत्वस्तीत्यस्याध्याहारकथनमुपलक्षणमित्यविरोधः । यस्माद्गहना कर्मण इत्युपलक्षणार्थं कर्माकर्मविकर्मणां गतिस्तत्त्वं याथात्म्यमित्यर्थः ॥ १७ ॥

**प० टी०**–अथ गहनत्वमेवाह–**कर्मण इति** । मोक्षनिरूपणे तावत्कर्माकरणे विकर्मणोऽनुपक्रान्तत्वात्कर्मणो वेदविहितात्किं भवतीति बोद्धव्यं तत्त्वतो ज्ञातव्यम् । तस्मिन् वक्ष्यमाणप्रकारेण द्विधा ज्ञाते सति विनश्वरफलं कर्म विकर्म स्वर्गप्रापकं तस्मात्किं भविष्यतीति बोद्धव्यं तथाकर्मणस्ततसमाप्तिरूपान्नैष्कर्म्यात्किं भवतीति बोद्धव्यम् । यतः कर्मणो गतिर्गहना । तदुक्तं टिप्पणिकासु 'कर्माकर्मविकर्ममर्म सुधिया बोद्धव्यमेवादितः कर्म स्याद्विधिपूर्वकं तु मनसा सर्वेन्द्रियव्यापृतिः । तद्द्वेधा सफलं फलेन रहितं त्वाद्यं विकर्म स्मृतं बन्धादन्यदकर्म शुद्धिकरणान्नैष्कर्म्यतामागतम्' इति । अस्यार्थः–सुधिया पुरुषेणादितः प्रथमतः कर्माकर्मविकर्मणां मर्म रहस्यं बोद्धव्यं ज्ञातव्यम् । तत्र कर्म किं नामेत्याह–विधिपूर्वकं यथा भवति तथा मनसा सह सर्वेन्द्रियव्यापृतिः सत्त्वसंपन्नेन मनसा साकं सर्वेन्द्रियाणां ज्ञानकर्मेन्द्रियाणां या व्यापृतिर्व्यापारस्तत्कर्मेत्युक्तम् । यज्ञोपकरणं दर्शनं तत्प्रतिपादकं वेदश्रवणं होमधूमाघ्राणं यज्ञपात्रस्य दर्शनं पुरोडाशास्वादनं यज्ञसामग्रीसंपादनार्थं हस्तपादक्रिया ऋतौ भार्याभिगमनं दक्षिणस्यां दिशि मलोत्सर्ग इत्यादिविध्युक्त इन्द्रियव्यापारः कर्मशब्देनोच्यते । अथ तत्कर्म द्विधा सफलं स्वर्गप्रापकं फलेन रहितं मोक्षप्रापकं च । उभयत्र विधिस्तुल्य एव परंतु संकल्पकृतो भेदस्तत्राद्यं स्वर्गप्रापकं विकर्म विनश्वरफलं कुतो बन्धहेतुत्वात् । तथान्यन्मोक्षप्रापकं कर्माकर्म । यतश्चित्तशुद्धिकरणानन्तरं स्वयमुपरमं प्राप्तं सन्नैष्कर्म्यतामागतं, ज्ञानपदत्वं प्राप्तमित्यर्थः ॥ १७ ॥

**रा० टी०**–कर्मादिस्वरूपज्ञानमावश्यकमितिभावेनाह–**कर्मणो हीति** । पूर्वस्मात्कर्माकर्मपदयोरनुवृत्तिः । कर्मणः सकाशादकर्म कर्माकरणं विरुद्धकर्म च विविच्य बोद्धव्यम् । विकर्मणो निषिद्धकर्मणश्च कर्माकर्म च विविच्य बोद्धव्यम् । अकर्मणश्च कर्म विकर्म च विविच्य बोद्धव्यम् । कुत इत्यत आह–गहनेति । पूर्वत्र दुर्ज्ञेयत्वोक्तावपि तच्छापादिप्रबलानिमित्तं न भवति किंतु स्वभावत एवेति वक्तुं गहना कर्मणो गतिरिति पुनर्वचनम् । यद्वा कर्म प्रवक्ष्यामीति प्रतिज्ञातं कर्मादिस्वरूपमाह–**कर्मणो हीति** । अत्र कर्म न इति विकर्म न इति अकर्म न इति पदविभागः । ब्रह्माण इन्द्रोपयाहि विद्वानित्यत्र ब्रह्माण इत्यस्येव भिन्नपदस्यापि न इत्यस्य रेफोत्तरस्य णत्वं ध्येयम् । तेन "रषाभ्यां नो णः समानपदे" इत्युक्तावपि छान्दसं णत्वमत्र ध्येयम् । कर्म नो मत्तो भवतीति विकर्म अकर्म च नो मत्तो भवतीत्येवं योजना । कर्मादिस्वरूपं न स्वतन्त्रं किंतु भगवदधीनं बोद्धव्यमित्यर्थः । न

इति बहुवचनं बहुरूपत्वात् । एवंरूपेण कर्मस्वरूपज्ञानं दुःशकमित्याह—गहनेति । एतच्च श्रोतुरधिकादरजननायोक्तम् ॥ १७ ॥

**कर्मण्यकर्म यः पश्येदकर्मणि च कर्म यः ।**
**स बुद्धिमान्मनुष्येषु स युक्तः कृत्स्नकर्मकृत् ॥ १८ ॥**

**त० टी०—तदेव कर्मादीनां तत्त्वं कृपयाऽऽह—कर्मणीति । कर्मणि भगवदाराधनलक्षणे किंचिदङ्गवैगुण्येऽपि अकर्म प्रत्यवायापादकं कर्मेदं न भवतीति यः पश्येत्, तथाभूतस्य कर्मणः सत्त्वशुद्धिपूर्वकज्ञानद्वारेण मोक्षहेतुत्वाद्बन्धकत्वाभावादकर्मैव जानीयादित्यर्थः । 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते, इत्युक्तत्वादकर्मणि योग्यतायां सत्यां विहिताकरणे तूर्णींभावे कर्म यः पश्येत्, प्रत्यवायापादकत्वेन बन्धकं यः पश्येदित्यर्थः । कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् इत्यादिना मिथ्याचारः स उच्यते, इत्युक्तत्वात् । चकारेण केवलकर्मनिष्ठस्य यथा वृन्ताकमसूरादिभक्षणनिषिद्धाचरणे दोष एव । भगवदाराधकस्य कथंचित्केनचिद्दत्तभगवत्प्रसादमिश्रिततद्भक्षणं चेन्न दोष इति विकर्मणोऽपि तत्त्वं सूचितम् । तथा चोक्तं श्रीभागवते 'स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य हरिः परेशः । विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः' इति । एवं कर्माकर्मादितत्त्वज्ञं स्तौति—स इति । यः कर्मादिस्वरूपतत्त्वज्ञः स पुरुषः मनुष्येषु सर्वेषु बुद्धिमान् सम्यग्ज्ञानवान्छ्रेष्ठ इत्यर्थः । किंच स युक्तः योगयुक्तः, स एव कृत्स्नकर्मकृत्, कृत्स्नफलहेतुकर्मकर्ता सर्वकर्मफलानां तत्रैवान्तर्भावादित्यर्थः ॥ १८ ॥**

म० टी०—कीदृशं तर्हि कर्मादीनां तत्त्वमिति तदाह—कर्मणीति । कर्मणि देहेन्द्रियादिव्यापारे विहिते प्रतिषिद्धे च अहं करोमीति धर्मा ( र्म्य ) ध्यासेनात्मन्यारोपिते नौस्थेनाचलत्सु तटस्थवृक्षादिषु समारोपिते चलन इव अकर्त्रात्मस्वरूपालोचनेन वस्तुतः कर्माभावं तटस्थवृक्षादिष्विव यः पश्येत पश्यति । तथा देहेन्द्रियादिषु त्रिगुणमायापरिणामत्वेन सर्वदा सव्यापारेषु निर्व्यापारस्तूर्णीं सुखमास इत्यभिमानेन समारोपितेऽकर्मणि व्यापारोपरमे दूरस्थचक्षुःसंनिकृष्टपुरुषेषु गच्छत्स्वप्यगमन इव सर्वदा सव्यापारदेहेन्द्रियादिस्वरूपपर्यालोचनेन च वस्तुगत्या कर्म निवृत्त्याख्यप्रयत्नरूपं व्यापारं यः पश्येदुदाहृतपुरुषेषु गमनमिव । औदासीन्यावस्थायामप्युदासीनोऽहमास इत्यभिमान एव कर्म । एतादृशः परमार्थदर्शी स बुद्धिमानित्यादिना बुद्धिमत्त्वयोगयुक्तत्वसर्वधर्मकृत्त्वैस्त्रिभिर्धर्मैः स्तूयते । अत्र प्रथमपादेन कर्मविकर्मणोस्तत्त्वं कर्मशब्दस्य विहितप्रतिषिद्धपरत्वात्, द्वितीयपादेन चाकर्मणस्तत्त्वं दर्शितमिति द्रष्टव्यम् । तत्र यत्त्वं मन्यसे कर्मणो बन्धहेतुत्त्वात्तूष्णीमेव मया सुखेन स्थातव्यमिति तन्मृषा । असति कर्तृत्वाभिमाने विहितस्य प्रतिषिद्धस्य वा कर्मणो बन्धहेतुत्वाभावात् । तथाच व्याख्यातं न मां कर्माणि लिम्पन्तीत्यादिना । सति च कर्तृत्वाभिमाने तूष्णीमहमास इत्यौदासीन्याभिमानात्मकं यत्कर्म तदपि बन्धहेतुरेव वस्तुतत्त्वापरिज्ञानात् । तस्मात् कर्मविकर्माकर्मणां तत्त्वमीदृशं ज्ञात्वा विकर्माकर्मणी परित्यज्य कर्तृत्वाभिमानफलाभिसन्धिहानेन विहितं कर्मैव कुर्वित्यभिप्रायः । अपरा व्याख्या कर्मणि ज्ञानकर्मणि दृश्ये जडे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वभ्रमाधिष्ठानमकर्म अवेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत् । तथा अकर्मणि च स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं न परमार्थसत्, दृग्दृश्ययोः संबन्धानुपपत्तेः "यस्तु सर्वाणि भूतान्यात्मन्येवानुपश्यति सर्वभूतेषु चात्मानं ततो न विजुगुप्सते" इति श्रुतेः । एवं परस्पराध्यासेपि शुद्धं वस्तु यः पश्यति मनुष्येषु मध्ये स एव बुद्धिमान्नान्यः, अस्य परमार्थदर्शित्वादन्यस्य चापरमार्थदर्शित्वात् । स च

बुद्धिसाधनयोगयुक्तः अन्तःकरणशुद्ध्या एकाग्रचित्तः । अतः स एवान्तःकरणशुद्धिसाधनकृत्स्नकर्मकृदिति वास्तवधर्मैरेव स्तूयते । यस्मादेवं तस्मात् त्वमपि परमार्थदर्शी भव तावतैव कृत्स्नकर्मकारित्वोपपत्तेरित्यभिप्रायः । अतो यदुक्तं यज्ज्ञात्वा मोक्ष्यसेऽशुभादिति यच्चोक्तं कर्मादीनां तत्त्वं बोद्धव्यमस्तीति स बुद्धिमानित्यादिस्तुतिश्च तत्सर्वं परमार्थदर्शने सङ्गच्छते। अन्यज्ज्ञानादशुभात्संसारान्मोक्षानुपपत्तेः । अतस्त्वयान्यत् न बोद्धव्यं न वा तज्ज्ञाने बुद्धिमत्त्वमिति युक्तैव परमार्थदर्शिनां व्याख्या । यत्तु व्याख्यानं कर्मणि नित्ये परमेश्वरार्थेऽनुष्ठीयमाने बन्धहेतुत्वाभावादकर्मेदमिति यः पश्येत् । तथा अकर्मणि च नित्यकर्माकरणे प्रत्यवायहेतुत्वेन कर्मेदमिति यः पश्येत् स बुद्धिमानित्यादि तदसङ्गतमेव नित्यकर्मण्यकर्मेदमिति ज्ञानस्याशुभमोक्षहेतुत्वाभावात्, मिथ्याज्ञानत्वेन तस्यैवाशुभत्वाच्च । नचैतादृशं मिथ्याज्ञानं बोद्धव्यं तत्त्वं नाप्येतादृशज्ञाने बुद्धिमत्त्वादिस्तुत्युपपत्तिर्भ्रान्तत्वात् । नित्यकर्मानुष्ठानं हि स्वरूपतोऽन्तःकरणशुद्धिद्वारोपयुज्यते न तत्राकर्मबुद्धिः कुत्राप्युपयुज्यते शास्त्रेण नामादिषु ब्रह्मदृष्टिवदविहितत्वात् । नापीदमेव वाक्यं तद्विधायकमुपक्रमादिविरोधस्योक्तेः । एवं नित्यकर्माकरणमपि स्वरूपतो नित्यकर्मविरुद्धकर्मलक्षकतयोपयुज्यते नतु तत्र कर्मदृष्टिः काप्युपयुज्यते । नापि नित्यकर्माकरणात्प्रत्यवायः, अभावाद्भावोत्पत्त्ययोगात् । अन्यथा तदविशेषेण सर्वदा कार्योत्पत्तिप्रसङ्गात् । भावार्थाः कर्मशब्दास्तेभ्यः क्रियाप्रतीयेतैष ह्यर्थो विधीयत इति न्यायेन भावार्थस्यैवापूर्वजनकत्वात् 'अतिरात्रे षोडशिनं न गृह्णाति' इत्यादावपि संकल्पविशेषस्यैवापूर्वजनकत्वाभ्युपगमात् 'नेक्षेतोद्यन्तमादित्यम्' इत्यादि प्रजापतिव्रतवत् । अतो नित्यकर्मानुष्ठानार्हे काले तद्विरुद्धतया यदुपवेशनादि कर्म तदेव नित्यकर्माकरणोपलक्षितं प्रत्यवायहेतुरिति वैदिकानां सिद्धान्तः । अत एवाकुर्वन्विहितं कर्मेत्यत्र लक्षणार्थे शता व्याख्यातः "लक्षणहेत्वोः क्रियायाः" इत्यविशेषस्मरणेप्यत्र हेतुत्वानुपपत्तेः । तस्मान्मिथ्यादर्शनापनोदे प्रस्तुते मिथ्यादर्शनव्याख्यानं न शोभततराम्, नापि नित्यानुष्ठानपरमेवैतद्वाक्यं नित्यानि कुर्यादित्यर्थे कर्मण्यकर्म यः पश्येदित्यादि तदबोधकं वाक्यं प्रयुञ्जानस्य भगवतः प्रतारकत्वापत्तेरित्यादि भाष्य एव विस्तरेण व्याख्यातमित्युपरम्यते ॥ १८ ॥

**शं० टी०**—नैवैतान्यारूढस्य तु बोद्धव्यानि किंतु आरुरुक्षोः कर्माकर्मणोरेव तत्त्वं बोद्धव्यमशुभमोक्षायेति पूर्वं वक्ष्यामीति यत्प्रतिज्ञातं तदिदानीमुपदिशति—**कर्मणीति** । क्रियते देहेन्द्रियैरेव निर्वर्त्यत इति कर्म लौकिको वैदिकश्च सर्वोऽपि व्यापारस्तस्मिन् कर्मणि चेष्टामात्रे औपाधिके आत्मयाथात्म्यज्ञो विद्वान् अकर्म कर्माभावं यः पश्येत् । तथैवाकर्मणि देहेन्द्रियव्यापारोपरमलक्षणे तूष्णीमवस्थायां कर्म क्रियामेव यः पश्येत् । ननु कर्मण्यकर्मदर्शनं चाकर्मणि कर्मदर्शनं चोभयमपि न संभवति प्रत्यक्षविरोधान्नहि कर्माकर्म भवितुमर्हति व्यापारस्य दृश्यमानत्वान्नाप्यकर्म च कर्म भवति स्थाणुवत्तूष्णींभावस्योपलभ्यमानत्वाद्भावे चाऽभावदर्शनमभावे च भावदर्शनमतिविरुद्धमप्रामाणिकं च भावाभावयोरभावत्वभावत्वाऽसंभवादिति चेन्न, सद्बुद्ध्या विचार्यमाणे दर्शनद्वयोपपत्तेस्तत्कथमिति चेदुच्यते स्वयमकर्मासन्नेव पुमानन्यकर्मणा कर्मी भवति, यथा मेघक्रियया चन्द्रः क्रियावान्, यथा चालनक्रिययाऽऽतपः क्रियावान्, तथा देहादितादात्म्येन देहादिक्रियया स्वयमक्रियोऽपि क्रियावान् भवत्यखिलो जन्तुस्तथापि ब्रह्मवेत्ता ब्रह्मैवाहमिति ब्रह्मण्येवात्मत्वविज्ञानेन स्वस्य देहादिसंबन्धाभावात्तत्कर्तृकं कर्माकर्मैव पश्यति । तत्राहं ममेति स्वत्वाभावात् । नह्यन्यकर्तृके कर्मण्यन्यस्य स्वत्वमुपपद्यते तदभावाद्देहादिकर्तृकं कर्मास्याकर्मैव भवत्यबन्धकत्वेनाकर्मतुल्यत्वात्तस्मात्तदकर्मैव पश्यतीत्यर्थः । न तु स्वगतं कर्माऽकर्म पश्यति, स्वस्य निरवयवत्वेन क्रियासमवायानुपपत्तेः। यथा वृक्षे चलति सति तत्स्थमाकाशं निष्क्रियं पश्यति, यथा मेघेषु धावत्सु सत्सु चन्द्रं निष्क्रियं पश्यति, तथा देहेन्द्रियादिषु स्वच्छन्दं विषयेषु प्रवृत्तेषु सत्सु स्वं निष्क्रियमेव पश्यति विद्वान् ततः " निष्कलं

निष्क्रियम् " इत्यादिश्रुतिप्रामाण्यात्कूटस्थासङ्गचिद्रूपमात्मानमेवात्मत्वेन विजानतो विदुषो देहादिकर्तृके कर्मण्यकर्मदर्शनमुपपद्यत एव, तस्यैतस्य दर्शनस्य विद्वत्प्रत्यक्षत्वात् 'कर्तारं स पश्यति' इत्यादिस्मृतिसिद्धत्वाच्च प्रामाण्योपपत्तेः। किंच मूढः स्वस्मिन् देहाद्यध्यस्य तद्व्यापारोपरमे चाहमासे तूष्णीं सुखं न किंचित्करोमि दुःखकरं कर्मेत्यसुखे देहेन्द्रियनिरोधे सुखबुद्ध्या तदक्रियया स्वमक्रियमेव पश्यति, यथाऽश्वारूढोऽश्वस्थित्या स्वं स्थितं पश्यति, यथा गच्छन्तमेव सूर्यमगच्छन्तं पश्यति, न तथा विद्वान् किंतु तस्मिन् देहादिव्यापारोपरमेऽप्यकर्मणि कर्मैव पश्यति। यथा निगूढाङ्गुलिमुष्टौ बहिःक्रियाभावेऽप्यन्तरङ्गुलीनां मुकुलीभावसिद्धेः कारणभूताङ्गुलिनिरोधनक्रिया विद्यते। यथा निमीलिते चक्षुषि बहिर्दर्शनक्रियाऽभावेऽपि पक्ष्मनिरोधनक्रिया विद्यते। तथा नाहं किंचित्करोमीति तूष्णीमवस्थायामपि बहिर्देहेन्द्रियादिचलनक्रियाऽभावेऽप्यन्तर्नाहं किंचित्करोमीति कर्तुराग्रहरूपा मानसी क्रिया विद्यत एव। अन्तराग्रहक्रियाभावे बहिः पाण्यादिनिरोधायोगान्मनोव्यापारैकमूलत्वात्सर्वार्थसिद्धयें इन्द्रियक्रियासंभवाच्च। ऐन्द्रियनिग्रहक्रिययैव देहो निश्चलस्तिष्ठति तदभावे देहचलनं वेन्द्रियचलनं वा स्यात्ततो मूढदृष्ट्या त्वकर्मणि तूष्णीमवस्थानेऽपि कर्मदर्शनस्य न्यायदृष्टान्तानुभवसिद्धत्वादकर्मणि कर्मदर्शनमविरुद्धं प्रामाणिकं च। भावे चाभावदर्शनमभावे च भावदर्शनमयुक्तमिति यत्तन्न, देहचेष्टाया भावत्वेऽप्यबन्धकत्वेनाभावतुल्यत्वात्तत्र कर्माभावदर्शनस्योपयुक्तत्वाद्भावे चाभावदर्शनमुपपद्यते। तूष्णीमवस्थायामकर्मण्यप्युक्तरीत्या कर्मदर्शनादकर्मणि कर्मदर्शनं चोपपन्नतरमेवातो न कोऽपि विरोधः। ननु विदुषः कर्मण्यकर्मदर्शनमतीतानागतवर्तमानसर्वकर्मनिर्मोकहेतुत्वेन जन्मादिबन्धनिवर्तकत्वात्कर्तव्यमेव भवति, अकर्मणि कर्मदर्शनस्य तु प्रयोजनाभावादकर्मणि च कर्म यः पश्येदिति विधिर्निरर्थक एवेति चेन्न, तस्याप्यकर्मास्पष्टात्मदर्शनसाधनत्वेन सफलत्वोपपत्तेः। "निष्क्रियं शान्तम्" इति निष्क्रियत्वशान्तत्वयोर्ब्रह्मलक्षणत्वश्रवणादत्रापि निष्क्रियत्वशान्तत्वधर्मवति देहेन्द्रियव्यापारोपरमे तूष्णीमवस्थाने स्वरूपभ्रमः स्यात्तन्माभूदित्युपदिशति "अकर्मणिचकर्म यः" इति। कर्मवदकर्मणोऽप्यौपाधिकत्वात् पुरुषतन्त्रत्वात् दृश्यत्वाद्विचार्यमाणे सक्रियत्वाच्च स्वयमनात्मैव भवति तद्द्रष्टा यः स एवात्मेति बोद्धव्यमिति सूचयितुमुपदिश्यते—अकर्मणि च कर्म य इति। किंचाकर्मणोऽपि कर्मवत्कर्मत्वज्ञानेन कर्माकर्मणोरुभयोरप्यनात्मत्वे सिद्धे विदुषस्तूष्णीमवस्थायामकर्मणो निष्फलत्वात्तदपेक्षया लोकोपकारकत्वात्कर्मणि प्रवृत्तिः सफलेत्यपि सूचयति—अकर्मणि च कर्म य इति। अतो विधेः सर्वथा साफल्यमस्ति। ननु कर्मण्यकर्मदर्शनमकर्मणि कर्मदर्शनं चैककर्तृकं न संभवति परस्परविरुद्धत्वेन तयोरेकाश्रयत्वायोगात् विकल्पो नहि वस्त्विति द्वैतं सर्वं मिथ्यैव पश्यतो विदुषो देहेन्द्रियादेर्मिथ्यात्वात्तदाश्रितकर्मणोऽपि मिथ्यात्वदर्शनं युक्तं न त्वकर्मणि कर्मदर्शनं युक्तं तस्य देहादिसत्यत्वज्ञानैकसाध्यत्वाद्देहादेः सत्यत्वे खलु तदाश्रितस्याऽकर्मणः सत्यत्वं कर्मत्वं च सिध्यति तत्सिद्धौ तु कर्मण्यकर्मदर्शनं न सिध्यति तस्य मिथ्यात्वज्ञाननिबन्धनत्वादेवं परस्परविरुद्धयोस्तयोरेकपुरुषाधिकरणत्वं न संभवति कर्मण्यकर्म यः पश्येदकर्मणि च कर्म य इति यच्छब्दद्वयश्रवणाच्च ततस्तयोर्भिन्नपुरुषाश्रयत्वमेवेति चेन्न, विदुष उभयत्र मिथ्यात्वदर्शनस्यैव विवक्षितत्वाद्यथा देहेन्द्रियादेस्तत्कर्मणोऽपि च मिथ्यात्वं द्रष्टव्यं तथा तद्व्यापारोपरमस्यापि मिथ्यात्वमेव द्रष्टव्यम्। उभयोरप्यविद्याकार्यभूतदेहाश्रयत्वेनाऽवस्तुत्वाऽविशेषादन्यथा भेददृष्टेरशुभमोक्षासंभवात्। यः कर्माकर्मणोरुभयोस्तदाश्रयस्यापि मिथ्यात्वमेव विनिश्चित्य तदधिष्ठानं परं ब्रह्म निष्कलं निष्क्रियं शान्तमनन्तमखण्डानन्दैकरसमिदमेवाहमिति स्वात्मना विज्ञाय तदात्मना तिष्ठति स एवाऽशुभान्मुक्तो भवत्यतोऽन्यथात्मानं पश्यतो न मुक्तिरस्ति, तस्मात्तयोरेकपुरुषाश्रयत्वमेव नत्वनेकपुरुषाश्रयत्वं, यच्छब्दद्वयं तु "यतो वा इमानि भूतानि जायन्ते" इत्यत्र यथा, तथा बोधसौकर्यार्थमेव नतु ग्रहीतृभेदासिद्ध्यर्थम्। 'स बुद्धि-

मानित्येकेनैव तच्छब्देनोपसंहारात् । एवं कर्मण्यकर्मदर्शनमकर्मणि कर्मदर्शनं च यः करोति शास्त्रत आचार्यतो युक्तितश्चानुभूतितश्च स एव मनुष्येष्वधिकृतः सर्वशास्त्रेषु बुद्धिमानात्मतत्त्वज्ञः स एव युक्तो योगी च स एव कृत्स्नकर्मकृत्सर्वेषां श्रौतानां स्मार्तानामितरेषां च पुण्यकर्मणां कर्ता च भवति "यथा कृताय विजितायाधरेयाः संयन्त्येवमेनꣳसर्वं तदभिसमेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेदयत्स वेद" इति श्रवणात्सर्वाणि सर्वलोकैः कृतानि पुण्यकर्माण्यनेन कृतानि भवन्तीत्यर्थः ॥ १८ ॥

यद्वा किं कर्म किमकर्म इति श्लोकव्याख्यानपुच्छमत्र लिख्यते—अशुभात्संसारान्मोक्ष्यसे कर्माकर्मणो स्तत्त्वं सम्यक् ज्ञात्वा मुक्तो भविष्यसीत्यर्थः (॥ १६ ॥) ननु "तमेव विदित्वातिमृत्युमेति" इत्यात्मतत्त्वज्ञानादेव मुक्तिः श्रूयते नतु कर्माकर्मणोस्तत्त्वज्ञानादिति चेत्सत्यम्, आत्मज्ञानादेव मुक्तिस्तथापि "तदा विद्वान् पुण्यपापे विधूय" इति पुण्यपापविध्वंसनं कृतवत एव विदुषो मुक्तिः श्रूयते ततो मुमुक्षोः कर्मादितत्त्वज्ञानेन जन्मादिहेतुभ्यः कर्मादिभ्यो मोक्तव्यं तदर्थं कर्मादीनां तत्त्वं ज्ञातव्यमित्याह—**कर्मणो ह्यपीति** । कर्मणोऽपि कर्तव्यत्वेन शास्त्रेणोक्तस्य स्वर्गादिहेतोस्तत्त्वं मुमुक्षोर्बोद्धव्यं तद्विपरीतस्य दुर्गतिहेतोर्विकर्मणो निषिद्धस्यापि तत्त्वं बोद्धव्यं तथैवानर्थहेतोरकर्मणोऽप्यश्रद्धया विहिताकरणलक्षणस्य तत्त्वं बोद्धव्यं सद्गुरोः। ननु 'चलनात्मकं कर्म' इति चलनमेव कर्मणः स्वरूपं किं तस्य बोद्धव्यमस्तीत्याशङ्कायां न, कर्माकर्मविकर्मणां तत्त्वं मूढैर्ज्ञातुं न शक्यमित्याह—**गहनेति** । हि यस्मात्कारणात्कर्मणः कर्मण इतीतरयोरप्युपलक्षणं कर्मणो विकर्मणोऽप्य-कर्मणश्च गतिस्तत्त्वावगतिर्याथात्म्यवेदनं सद्गुरूपदेशेन विना ज्ञातुं गहना दुर्घटा दुर्लभेत्यर्थः (॥ १७ ॥) तर्हि तेषां तत्त्वं त्वयैवोपदेष्टव्यं जगद्गुरुणेत्याकाङ्क्षायां कर्माकर्मविकर्मणां चाकाशादिप्रपञ्चस्य सर्वस्यापि तत्त्वं ब्रह्मैव तस्मिन्विदिते सर्वस्यापि तत्त्वं विदितं भवतीति 'सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि । संपश्यन् ब्रह्म परमम्' इत्येतच्छ्रुतिप्रमाणकं परावरैकत्वदर्शनं निःशेषसंसारभ्रमविध्वंसकमुपादिशति—**कर्मण्यकर्म य इति** । क्रियते सृज्यत इति कर्म ब्रह्मकार्यं महदादिस्थूलान्तं जगत्तस्मिन् कर्मणि सर्वत्र जगत्यकर्म न विद्यते यत्र कर्म तदकर्म "निष्कलं निष्क्रियम्" इति श्रवणान्निष्क्रियं परं ब्रह्म यः पश्येत्, प्रतीतं प्रपञ्चं सर्वं ब्रह्मैव यः पश्यतीत्यर्थः । ननु सविशेषं जगन्निर्विशेषं परं ब्रह्म गवाश्ववदेतद्द्वयं परस्परं विलक्षणं भवति गामश्वमिव ब्रह्मविलक्षणं विश्वं कथं ब्रह्म पश्यति विद्वानिति चेन्न, तयोः कार्यकारणभावापन्नत्वाद्वैलक्षण्यानुपपत्तेः। गवाश्वयोस्तु कार्यकारणभावाभावाज्जातिभेदाच्च वैलक्षण्यं संभवति न तथा जगद्ब्रह्मणोः । ननु नामतो रूपतो गुणतो जातितश्च जगद्भिद्यते निरुक्तभेदस्य प्रत्यक्षत्वादेवं भेदभिन्नं जगत्कथं ब्रह्म पश्यतीति चेन्न, नामरूपादेरधिष्ठानाज्ञानकल्पितत्वाद्यथैकस्मिन् तोये तरङ्गफेनबुद्बुदादिभेदकल्पना, यथैकस्यामेव भूम्यां गृहक्षेत्रादिभेदकल्पना, तथैवैकस्मिन् ब्रह्मणि नामरूपादिभेदकल्पना भ्रममूला नतु वास्तवी । यथा द्रवत्वशीतत्वशुक्लत्वमधुरत्वादीनां तोयधर्माणां तरङ्गादिषु बहिरन्तरनुस्यूतत्वाज्जलसत्ताव्यतिरेकेण पृथक्सत्ताभावाच्च तरङ्गादि सर्वं जलमात्रमेव भवति,तथा जगत्यपि बहिरन्तः सर्वत्राविच्छेदेन सत्त्वचित्त्वादीनां ब्रह्मधर्माणामनुगमदर्शनाद्ब्रह्मसत्ताव्यतिरेकेण पृथक्सत्ताऽभावाच्च "चिद्धीदं सर्वम्। सद्धीदं सर्वम्। सर्वं खल्विदं ब्रह्म। ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतिभिरिदं सर्वं ब्रह्मैव ब्रह्मकार्यत्वान्मृत्कार्यभूतो घटो मृद्यथा इदं सर्वं ब्रह्मैव ब्रह्मण्यारोपितत्वाच्छुक्तिरजतवदित्यादियुक्तिभिर्मृदादिदृष्टान्तैश्च सम्यग्विचार्यमाणे जगत्सर्वं ब्रह्मैव भवत्यत एव शुद्धात्मा ब्रह्मवित्सर्वं जगद्ब्रह्मैव पश्यतीत्यर्थः । यद्यपि श्रुतियुक्तिदृष्टान्तानुभवैर्जगतो ब्रह्ममात्रत्वे सिद्धे जगतः कार्यत्वं निवृत्तं तन्निवृत्त्या ब्रह्मणोऽपि 'निमित्तापाये नैमित्तिकस्याप्यपायः' इतिन्यायेन कारणत्वं निवृत्तमेव भवति, कार्यत्वसापेक्षत्वात्कारणत्वस्य तन्निवृत्त्या तन्निवृत्तिरेवमुभयनिवृत्त्या तु कार्यकारणभावविकलमेवाद्वितीयं ब्रह्मेति ब्रह्मणोऽद्वितीयत्वं सिद्धं तथाप्यधुना विचारादद्वितीयत्वं ब्रह्मणः सिद्धं पूर्वं तु जग-

दिति ब्रह्मेति द्वैतमस्त्येवेत्याशङ्कायां न, पूर्वमपि यथा रज्जुरेव सर्पतच्छिरःपुच्छादिरूपेणाभात्, यथा-मरुरेव जलतत्तरङ्गफेनादिरूपेणाभात्तथा ब्रह्मैव भ्रान्त्या द्रव्यगुणकर्मादिभेदभिन्नजगदात्मना भातं नतु वस्तुतो जगदस्तीति मुमुक्षुणा ब्रह्मणः कालत्रयेऽप्यद्वितीयत्वसिद्धये ब्रह्मणि तद्विवर्तत्वेन जगत्स्थितमिति द्रष्टव्यमिति व्यतिहारमुखेनोक्तमेव दर्शनं पुनर्द्रढयति जगतो ब्रह्ममात्रत्वे निर्विचिकित्सत्वाय—अकर्मणि च कर्म य इति। अकर्मण्युक्तलक्षणे ब्रह्मणि कर्म चोक्तलक्षणं जगद्यः पश्येद्ब्रह्मविवर्तत्वेन स्वतःसत्ताभावाद्रजतं शुक्तिमिव सलिलं मरुमिव जगत्सर्वं ब्रह्मैव यः पश्यतीत्यर्थः। "सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेद" इति श्रुतिर्ब्रह्मणः पृथक्सत्तावत्त्वेन नामरूपादिभेदभिन्नं जगत् पश्यतो विदुषोऽनर्थं ब्रवीति यतस्ततो नामरूपादिद्वैतदर्शनं भ्रमकल्पितमुत्सृज्य निःश्रेयसार्थिना निःशेषविनष्टविपर्ययं यथातथा नाम रूपं गुणं कर्म च सर्वं ब्रह्मैवेति द्रष्टव्यमिति सिद्धम्। एवमसन्दिग्धमविपर्यस्तं सर्वं प्रत्यग्दृष्ट्या ब्रह्मैव यः पश्यति स एव बुद्धिमान् ब्रह्मवेत्ता स एव युक्तो ब्रह्मनिष्ठः स एव कृत्स्नकर्मकृत् कृत्स्नानि सर्वाण्यनेककल्पार्जितानि संचितान्याधुनिकजन्मकृतान्यप्रवृत्तफलानि कर्माणि नानायोनिप्रापकाणि स्वयाथात्म्यविज्ञानखड्गेन कृन्तति छिनत्तीति कृत्स्नकर्मकृत् "सर्वं पाप्मानं तरति" इतिश्रवणादेवं द्रष्टा यः सोऽशुभान्मुक्तो भवतीत्यर्थः ॥ १८ ॥

**श्री० टी०**—तदेवं कर्मादीनां दुर्विज्ञेयत्वं दर्शयन्नाह—**कर्मण्यकर्मेति**। परमेश्वराराधनलक्षणे कर्मणि विषये अकर्म कर्मेदं न भवतीति यः पश्येत्तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात्, अकर्मणि च विहिताकरणे कर्म यः पश्येत्तस्य प्रत्यवायोत्पादकत्वेन बन्धहेतुत्वात्, मनुष्येषु कर्म कुर्वाणेषु स बुद्धिमान्व्यवसायात्मकबुद्धिमत्त्वाच्छ्रेष्ठः। तं स्तौति स युक्तः योगी तेन कर्मणा ज्ञानयोगावाप्तेः। स एव कृत्स्नकर्मकर्ता च सर्वतः संप्लुतोदकस्थानीये तस्मिन्कर्मणि सर्वकर्मफलानामन्तर्भूतत्वात्। तदेवमारुरुक्षोः कर्मयोगाधिकारावस्थायां न कर्मणामनारम्भादित्यादिनोक्त एव कर्मयोगः स्फुटीकृतः। तत्प्रपञ्चरूपत्वाच्चास्य प्रकरणस्य न पौनरुक्त्यदोषः। अनेनैव योगारूढावस्थायां यस्त्वात्मरतिरेव स्यादित्यादिना यः कर्मानुपयोग उक्तस्तस्याप्यर्थात्प्रपञ्चः कृतो वेदितव्यः। यदा आरुरुक्षोरपि कर्म बन्धकं न भवति तदारूढस्य कुतो बन्धकं स्यादित्यत्रापि श्लोको योज्यते। यद्वा कर्मणि देहेन्द्रियादिव्यापारे वर्तमानेऽप्यात्मनो देहादिव्यतिरेकानुभवेनाकर्म स्वाभाविकं नैष्कर्म्यमेव यः पश्येत्, तथाकर्मणि च ज्ञानरहिते दुःखबुद्ध्या कर्मणां त्यागे कर्म यः पश्येत् तस्य प्रतिबन्धकत्वेन मिथ्याचारत्वात्। तदुक्तम्—कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन्निति। य एवंभूतः स तु सर्वेषु मनुष्येषु बुद्धिमान्पण्डितः। तत्र हेतुः यतः कृत्स्नानि सर्वाणि यदृच्छया प्राप्तान्याहारादीनि कर्माणि कुर्वन्नपि स युक्त एवाकर्त्रात्मज्ञानेन समाधिस्थ एवेत्यर्थः। अनेनैव ज्ञानिनः स्वभावादापन्नं कलञ्जभक्षणादिकं न दोषाय, अज्ञस्य तु रागतः कृतं दोषायेति विकर्मणोऽपि तत्त्वं निरूपितं द्रष्टव्यम् ॥ १८ ॥

**स० टी०**—कीदृशं तर्हि कर्मादेस्तत्त्वमित्यत्र कथ्यते॥ देहेन्द्रियादिव्यापारे निषिद्धे विहिते तथा ॥ १ ॥ कर्मण्यहं करोमीति धर्माध्यासे प्रकल्पिते ॥ स्वात्मन्यसङ्गचिद्रूपे निरीहे निष्क्रियेऽमले ॥ २ ॥ पश्यत्यकर्म यो वस्तुदृष्ट्या सम्यग्विवेकतः ॥ यथा नौस्थेन तीरस्थवृक्षेष्वविचलेष्वपि ॥ ३ ॥ कल्पितं चलनं तद्वदक्रिये कर्म कल्पितम् ॥ अकर्त्रात्मविचारेण कर्माभावं च वस्तुतः ॥ ४ ॥ तीरस्थवृक्षेष्विव यः पश्यत्यात्मस्वरूपवित् ॥ तथा मायाविकारेषु सदा देहेन्द्रियादिषु ॥ ५ ॥ सव्यापारेषु तच्छून्यस्तूष्णीमासे सुखं त्विति ॥ आरोपिताभिमानेन व्यापारोपरमाभिधे ॥ ६ ॥ गच्छत्स्वगमनं यद्वत्कल्पितं नृषु दूरगैः ॥ सदा देहेन्द्रियादीनां स व्यापारविचारणात् ॥ ७ ॥ यश्च कर्म निवृत्त्याख्यं व्यापारं परिपश्यति ॥ उदासीनदशायामप्यहमासे स तादृशः ॥ ८ ॥ एवंरूपोऽभिमानोऽस्ति कर्म यश्चेति पश्यति ॥ एवंभूतः स आत्मज्ञो बुद्धि-

मत्त्वादिभिर्गुणैः ॥ ९ ॥ स्तूयते वासुदेवेन सम्यग्दर्शितया मुनिः ॥ अत्राद्यपादे संप्रोक्तं तत्त्वं कर्मविकर्मणोः ॥ १० ॥ विहिते प्रतिषिद्धे च कर्मशब्दप्रयोगतः ॥ अकर्मणो द्वितीयेन तत्त्वमत्र प्रदर्शितम् ॥ ११ ॥ सत्यां कर्तृत्वबुद्धौ हि तूष्णीमासेऽहमित्यपि ॥ बन्धहेतुरविद्येयं वस्तुतत्त्वाविचारणात् ॥ १२ ॥ तस्मात्त्वमीदृशं तत्त्वं कर्माकर्मविकर्मणाम् ॥ ज्ञात्वा कर्मैव विहितं कुरु त्यक्त्वोभयं त्रिषु ॥ १३ ॥ यद्वा कर्मणि दृश्येऽस्मिन् जडे हि ज्ञानकर्मणि ॥ सत्तास्फूर्त्यात्मना तत्त्वमनुस्यूतं सदद्वयम् ॥ १४ ॥ भ्रमाधिष्ठानचैतन्यमकर्मावेद्यमान्तरम् ॥ परमार्थदृशैवं यः पश्यत्यद्धा विविक्तदृक् ॥ १५ ॥ तथाकर्मणि दृग्वस्तु स्वप्रकाशे प्रकल्पितम् ॥ कर्म दृश्यं मृषारूपं मायाकार्यं क्षरं जडम् ॥ १६ ॥ दृग्दृश्ययोर्न संबन्धो विनाध्यासं भ्रमात्मकम् ॥ अन्योन्याध्यासमाबाध्य यः शुद्धं वस्तु पश्यति ॥ १७ ॥ स बुद्धिमान्मनुष्येषु तत्त्वदर्शितयोत्तमः ॥ स युक्तो योगफलभाग्धीशुद्ध्या सर्वकर्मकृत् ॥ १८ ॥ तस्मात्त्वमपि याथात्म्यं ज्ञात्वा स्तुत्यो भवात्मनः ॥ इदमेव हि बोद्धव्यं तत्त्वं कर्मादिगोचरम् ॥ १९ ॥ एवं ज्ञानाद्विमुक्तः स्यात्संसारान्नान्यबोधतः ॥ अत्र पद्ये कुधीभिर्यत्कल्पितं स्वकपोलतः ॥ २० ॥ खण्डितं भाष्यकारैस्तद्व्याख्यानं चात्यसङ्गतम् ॥ २१ ॥ १८ ॥

भा० टी०—किं पुनः कर्मादेस्तत्त्वं बोद्धव्यमस्तीत्यपेक्षायामाह—**कर्मणीति** । नौस्थस्य तटस्थतरुपर्वतादिषु समारोपितचाञ्चल्यप्रतीतिरिव लोकस्य देहाद्याश्रयं कर्मात्मन्यारोप्याहं कर्ता ममैतत्कर्मास्य फलं मया भोक्तव्यमिति भ्रान्त्या प्रतीतिस्तन्निवृत्त्यर्थं भगवानाह—कर्मणि क्रियत इति कर्म व्यापारमात्रमात्मन्यारोपितं तस्मिन्नकर्म पूर्वैर्जनकादिभिर्मुक्तैर्मुमुक्षुभिश्च नाहं कर्ता न ममैतत्कर्मास्य फलं मम नापेक्षितमिति कर्माभावः यथा दृष्टस्तथाधुनातनोऽपि यः कश्चित्पश्यति सूर्यादिषु गच्छत्स्वप्यगमनप्रतीतिरिव देहेन्द्रियादिषु मायिकेषु नित्यं प्रवृत्तिनिवृत्तिरूपक्रियायुक्तेषु निर्व्यापारस्तूष्णीं सुखमास इति भ्रान्त्या प्रतीतिस्तन्निराकरणायाह—अकर्मणि कर्म यः पश्यति निवृत्तेरपि क्रियात्वात् स मनुष्येषु बुद्धिमान् स युक्तः योगी कृत्स्नकर्मकृत् समस्तकर्मकृच्च स इति कर्माकर्मणोस्तत्त्वदर्शी स्तूयते । यत्तु परमेश्वराराधनलक्षणे कर्मणि विषयेऽकर्म कर्मेदं न भवति इति यः पश्येत्तस्य ज्ञानहेतुत्वेन बन्धकत्वाभावात् अकर्मणि च विहिताकरणे कर्म यः पश्येत्प्रत्यवायोत्पादकत्वेन बन्धहेतुत्वात् स बुद्धिमानित्यादि तदसङ्गतम् । एवं ज्ञानादशुभान्मोक्षस्यानुपपत्त्या यज्ज्ञात्वेत्यादि भगवदुक्तिबाधप्रसङ्गात् नहि नित्यानामनुष्ठानसापेक्षाणां कर्मणां फलाभावज्ञानान्मोक्षणं भवति नापि कर्माकर्माकर्म कर्मेति मिथ्याज्ञानादशुभस्वरूपादन्यतोऽशुभान्मोक्ष उपपद्यते अकर्मणश्चाभावरूपतया भावरूपस्य प्रत्यवायस्योत्पत्तेर्वर्णनम् "कथमसतः सज्जायेत" इति श्रुतिविरुद्धमिति संक्षेपः । विस्तरस्तु भाष्ये द्रष्टव्यः । यदपि कर्मणि ज्ञानकर्मणि दृश्ये जडे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वभ्रमाधिष्ठानमकर्मावेद्यं स्वप्रकाशचैतन्यं परमार्थदृष्ट्या यः पश्येत्तथाऽकर्मणि च स्वप्रकाशे दृग्वस्तुनि कल्पितं कर्म दृश्यं मायामयं न परमार्थसत् दृग्दृश्ययोः संबन्धानुपपत्तेः । एवं परस्पराध्यासेऽपि शुद्धं वस्तु यः पश्यति स परमार्थदर्शित्वाद्बुद्धिमानित्यादिवास्तवैरेव गुणैः स्तूयत इति कैश्चित् व्याख्यातं तदप्युपेक्ष्यं, ज्ञानकर्मणः घटादिरूपस्याप्रस्तुतत्वात् । एवं ज्ञात्वेत्यादिनोपक्रम्य किं कर्मेत्यनेन तत्र वैषम्यं प्रदर्श्य तस्य कर्मणो बोद्धव्यं तत्त्वमस्तीति निरूप्यानेन श्लोकेन तत्त्वकथनस्योचितत्वेन ज्ञानकर्मणोऽकर्तव्यस्य वर्णनमसङ्गतमिति दिक् । यदपि कर्माकर्मणी वक्तव्यत्वेन बोद्धव्यत्वेन चोपक्षिप्यात्र तयोर्लक्षणदर्शनमुचितम् अतो यदकर्मणा विशेषितं तदेव कर्म नान्यदिति कर्मलक्षणं यच्च कर्मणा विशेषितं तदेवाकर्म इत्यकर्मलक्षणमिति व्याख्येयम् । अक्षरार्थस्तु कर्म यज्ञादिकं ससाधनं तदकर्म स्पन्दशून्यं कूटस्थं ब्रह्म यः पश्येत्कर्म तदङ्गेषु ब्रह्मदृष्टिमध्यसेत् 'अहं क्रतुरहं यज्ञः स्वधाहमहमौषधम् । मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम्' इत्युक्तेः । अन्यथा यत्कृतं

तद्व्यथाचेष्टारूपमेवातो गहना कर्मणो गतिः। किं तदकर्म यत्कर्मण्यध्यस्यते इत्याकाङ्क्षायां यत्रैतत् कर्म पुण्यपापात्मकं दृश्यते पुण्यः पुण्येन कर्मणा भवति पापः पापेनेति तत्फलं च सुखदुःखादिकमहं सुख्यहं दुःखीति स प्रत्यक्चेतनोऽकर्म तत्रैवेदं कर्म अस्पन्दे स्पन्दात्मकं सर्पः असर्प इव अध्यस्तमिति यः पश्येदिति तदप्यसङ्गतमेव प्रकरणाविरोधस्यात्रापि तुल्यत्वात्। प्रस्तुतस्य तूष्णीं भावात्मकस्याकर्मणः प्रत्यक्चैतन्यपरत्ववर्णने प्रस्तुतविरोधः स्फुटः तथा कर्मण्यकर्मेत्यत्रापि कर्मप्रतियोगिकमेवाकर्मापेक्षितं नापि यज्ञरूपे कर्माणि ब्रह्मदृष्ट्यध्यासात्फलाभिसन्धिकर्तृत्वाभिनिवेशत्यागं विनाऽशुभान्मोक्षणं संभवति। तस्मात्सर्वज्ञैर्भाष्यकृद्भिरुक्तं व्याख्यानमेव समीचीनमिति दिक् ॥ १८ ॥

प० टी०—अथैतदेव विविच्याह—**कर्मणीति**। वेदविहिते कर्माणि योऽकर्म नैष्कर्म्यं पश्येत्, तथाकर्मणि नैष्कर्म्ये निमित्तभूतं कर्मैव पश्येत्, एवं मिथः कार्यकारणरूपत्वं पश्येत् स एव व्यवसायात्मकबुद्धिमान् स एव कृत्स्नकर्मकृत्, मुक्तौ सर्वकर्मफलानामन्तर्भूतत्वात् ॥ १८ ॥

रा टी०—कर्मादिस्वरूपं प्रपञ्चयँस्तद्बोधं स्तौति—**कर्मणीति**। वर्णाश्रमोचितकर्मणि क्रियमाणे सति अकर्म कर्माभावं स्वस्य यः पश्येत् भगवानेव कर्ता नाहं स्वतन्त्रः किंतु तदधीनकर्तृशक्तिकः सन्करोमीति यः पश्येदित्यर्थः। अकर्मणि जीवकर्तृककर्मकरणहीने सुप्त्यादौ जीवस्य कर्माकरणावस्थायामिति यावत् कर्म यः पश्येत् जीवव्यापारस्य भावे अभावे च सदा भगवानेव महदादिस्वप्नादौ गजादि करोतीति पश्येदित्यर्थः। अनेन हरेः परानपेक्षया कर्तृत्वं स्वस्य तदधीनकर्तृत्वं ज्ञात्वा वर्णाश्रमविहितानुष्ठानं कर्मेत्युक्तं भवति। एतेन कर्माकरणमकर्म निषिद्धं कर्म विकर्मेत्युक्तप्रायम्। कर्मादिबोधं स्तौति—**स इति**। य एवं पश्येत्स बुद्धिमान् ज्ञानी। प्रशंसायां मतुप्। स एव युक्तः ज्ञानोपायवान्, स एव कृत्स्नकर्मकृत् स्वयोग्यकृत्स्नकर्मफलस्य ज्ञानस्य मोक्षस्य प्राप्तप्रायत्वादिति भावः। यद्वा करशब्दः सकारान्तः कर्मविधिवाची तेन मीयते विषयीक्रियते इति कर्म। उपपदस्य टिलोपो मातेः कनिन्प्रत्ययः। 'करोऽस्मिन्मीयत इति कर्म जीव उदाहृतः' इति निर्वचनात् विधिबद्धत्वात्कर्मशब्दार्थो जीवः। कर्मविधेस्तत्फलस्य चाभावादकर्मपदेनेश्वरो ग्राह्यः। तथाच कर्मणि विधिबद्धे जीवे अस्वातन्त्र्याद्धेतोरकर्म कर्माभावं यः पश्येत् तथाऽकर्मणि विष्णौ कर्म यः पश्येत् सर्वकर्मकर्तृत्वात्तदीयमेव सर्वकर्मेति पश्येत् स बुद्धिमान् ज्ञानीत्येवं प्राग्वदेव स्तुतिपरतार्थस्य ध्येया ॥ १८ ॥

**यस्य सर्वे समारम्भाः कामसंकल्पवर्जिताः।**
**ज्ञानाग्निदग्धकर्माणं तमाहुः पण्डितं बुधाः ॥ १९ ॥**

त० टी०—उक्तप्रकारेण कर्माकर्मादिज्ञातुर्बुद्धिमत्त्वं यदुक्तं तदेवोपपादयति—**यस्येति**। यस्य मुमुक्षोः सर्वे समारम्भा नित्यनैमित्तिकभगवज्जन्मकर्मोत्सवादिसंबन्धिनः सम्यगारम्भाः कामसंकल्पवर्जिताः, काम्यन्त इति कामाः फलानि तत्संकल्पवर्जिता भवन्ति, तं बुधाः पण्डितं ज्ञानिनमाहुः। यतो ज्ञानाग्निदग्धकर्माणम्, उक्तप्रकारैः कर्मभिर्निर्मलीभूतेऽन्तःकरणे जातो यो ज्ञानरूपोऽग्निस्तेन दग्धानि फलदान्यपि भर्जितान्नवत्फलोत्पादनानर्हीभूतानि कर्माणि यस्य तमित्यर्थः ॥ १९ ॥

म० टी०—तदेतत्परमार्थदर्शिनः कर्तृत्वाभिमानाभावेन कर्मालिप्तत्वं प्रपञ्च्यते—यस्येत्यादिना ब्रह्मकर्मसमाधिनेत्यन्तेन। यस्य पूर्वोक्तपरमार्थदर्शिनः सर्वे यावन्तो वैदिका लौकिका वा समारम्भाः समारभ्यन्त इति व्युत्पत्त्या कर्माणि, कामसंकल्पवर्जिता कामः फलतृष्णा संकल्पोऽहं करोमीति कर्तृत्वाभिमानस्ताभ्यां वर्जिताः लोकसंग्रहार्थं वा जीवनमात्रार्थं वा प्रारब्धकर्मवेगाद्वृथाचेष्टारूपा भवन्ति तथा कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्"

इति न्यायात् ज्ञानाग्निदग्धकर्माणं तं बुधाः ब्रह्मविदः परमार्थतः पण्डितं आहुः सम्यग्दर्शी हि पण्डित उच्यते नतु भ्रान्त इत्यर्थः ॥ १९ ॥

शं० टी०—"यथा पुष्करपलाश आपो न श्लिष्यन्ते" इत्येतच्छ्रुत्युक्तरीत्या कर्मण्यकर्मत्वदर्शनेन शरीरयात्रोपयुक्तानि ज्ञानसमकालानि सर्वाणि कर्माणि यो विश्लेषयति स एव पण्डित इत्याह—यस्येति । समारम्भाः सम्यग्देहेन्द्रियादिभिरेवारभ्यन्ते क्रियन्त इति समारम्भाः प्राणत्राणोपयोगिनो देहेन्द्रियव्यापाराः सर्वे यस्य ब्रह्मविदः कामसंकल्पवर्जिताः कामोऽनेन भवितव्यमितीच्छावेगः संकल्पस्तद्धेतुः सम्यक्त्वबुद्धिस्ताभ्यां वर्जिताः क्षुदादिवत्तात्कालिका भवन्ति तं ज्ञानाग्निदग्धकर्माणं कूटस्थासङ्गचिद्रूप एवाहं नतु कर्ता भोक्ता श्रोता द्रष्टा वक्तेत्यात्मन्येवात्मभावापत्त्या देहतद्धर्मतत्कर्मसुखस्यासङ्गत्वदर्शनं तदेवाग्निस्तेन दग्धानि निर्मूलितानि सर्वाणि विहिताविहितादिरूपाणि कर्माण्यौपाधिकानि यस्य तमेव जीवन्मुक्तं महापुरुषं बुधाः शास्त्रज्ञाः पण्डितं प्राहुः । पण्डा कल्याणी सर्वत्र ब्रह्ममात्रावगाहिन्यखण्डात्मिका वृत्तिरस्य संजातेति पण्डितस्तमेव पण्डितं वदन्ति नान्यमित्यर्थः । अत्र कामवर्जिता इत्यनेन 'यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम्' इति न्यायात्कर्मसु प्रवृत्तेः कारणं कामस्तत्कारणं संकल्प एवारम्भाणां तद्विवर्जितत्वे स्वार्थे परार्थे वा विदुषः प्रवृत्तिरनुपपन्ना सती शरीरयात्रामात्रावशिष्टा सापि तात्कालिकी तत्रापि कामाद्यभावाद्वेगवर्जिता ज्ञानाग्निनिर्दग्धा च भवतीति सूचितं भवति ॥ १९ ॥

श्री० टी०—कर्मण्यकर्म यः पश्येदितिश्रुत्यर्थार्थापत्तिभ्यां यदुक्तमर्थद्वयं तदेव स्पष्टयति—यस्येत्यादिपञ्चभिः । सम्यगारभ्यन्त इति समारम्भाः कर्माणि काम्यत इति कामः बलं तत्संकल्पेन वर्जिता यस्य भवन्ति तं पण्डितमाहुः । तत्र हेतुः यतस्तैः समारम्भैः शुद्धचित्ते सति जातेन ज्ञानाग्निना दग्धानि अकर्मतां नीतानि कर्माणि यस्य तम् । आरूढावस्थायां तु कामः फलविषयस्तदर्थमिदं कर्म कर्तव्यमिति कर्मविषयः संकल्पश्च ताभ्यां वर्जितः । शेषं स्पष्टम् ॥ १९ ॥

म० टी०—यथार्थदर्शिनोऽध्यासाभावात्कर्माद्यसङ्गता ॥ प्रपञ्च्यतेऽत्र हरिणा श्लोकैः षड्भिरतिस्फुटम् ॥ १ ॥ यथोक्तदर्शिनो यस्य सर्वे श्रौताश्च लौकिकाः ॥ कर्माभिधाः समारम्भाः फलाहंकारवर्जिताः ॥ २ ॥ शरीरयात्रामात्रार्थं संग्रहायाथ वा मुधा ॥ चेष्टामात्रा भवन्त्याप्तकामस्याद्वैतदर्शिनः ॥ ३ ॥ यत्कर्मादावकर्मादिदर्शनं ज्ञानमेव तत् ॥ अग्निस्तेन प्रदग्धानि यस्य कर्माणि सर्वशः ॥४॥ परमार्थेन तं प्राहुः पण्डितं ब्रह्मविद्बुधाः ॥ पण्डितस्तत्त्वदर्शी स्यान्न तु भ्रान्तो जडात्मदृक् ॥ ५ ॥ १९ ॥

भा० टी०—तदेतत्स्तौति—यस्येति । यथोक्तदर्शिनः सर्वे समारभ्यन्त इति समारम्भाः कर्माणि कामैः फलतृष्णाभिः संकल्पैस्तत्र तत्र कर्तृत्वाभिनिवेशैस्तत्कारणीभूतैः यद्वा काम्यन्त इति कामाः । फलानि तैः तत्कारणीभूतैस्तत्संकल्पैश्च वर्जिताः मुधैव चेष्टामात्रा अनुष्ठीयन्ते । कर्मादावकर्मादिदर्शनं ज्ञानं तदेवाग्निस्तेन दग्धानि शुभाशुभलक्षणानि कर्माणि यस्य तं परमार्थतः पण्डितं बुधाः तत्त्वदर्शिन आहुः ॥ १९ ॥

प० टी०—अथैवं पश्यतः पुरुषस्य स्वरूपमाह—यस्येति पञ्चभिः । यस्य पुरुषस्य सम्यगारभ्यन्त इति समारम्भाः कर्माणि काम्यत इति कामः फलं तत्संकल्पेन वर्जिता भवन्ति तं पण्डितमाहुः किं भूतम्, ज्ञानाग्निदग्धकर्माणम्, ज्ञानाग्निना निर्दग्धानि भर्जितबीजानि कर्माणि यस्य ॥ १९ ॥

रा० टी०—न केवलं कर्तृत्वाभिमानत्यागेन वर्णाश्रमोचितकृत्स्नकर्मकृत्त्वं किंतु कामादिपरित्यागेनापि भाव्यमितिभावेन कर्मस्वरूपमेव प्रपञ्चयति—यस्येत्यादिश्लोकपञ्चकेन । यस्य पुंसः सर्वे समारम्भाः सर्वकर्मोपक्रमाः कामसंकल्पवर्जिताः कामः फलेच्छा अनेनेदं स्वर्गादिसाधयिष्यामीति संकल्पः, ताभ्यां हीनाः तं ज्ञानाग्निदग्धकर्माणं हरेरेव स्वतन्त्रकर्तृत्वं ज्ञात्वा पश्चात्स्वस्य स्वातन्त्र्येण कर्माभावज्ञानित्वं ज्ञानाग्निदग्धकर्मत्वं तादृशं बुधाः ज्ञानिनः पण्डितं तत्त्वज्ञानिनमाहुः ॥ १९ ॥

**त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः ।**
**कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोति सः ॥ २० ॥**

**त० टी०**—एतेन निष्कामस्य ज्ञानिनः पूर्वकर्मविनाश उक्तः । इदानीं क्रियमाणकर्मणामश्लेषमाह—त्यक्त्वेति । कर्मणि तत्फले च आसङ्गं फलकर्तृत्वाभिमानं त्यक्त्वा नित्येन स्वरूपानन्देन तृप्तः, निराश्रयः देहाद्यर्थमाश्रयणीयरहितो यः स शास्त्रीये लौकिके वा कर्मणि आभिमुख्येन प्रवृत्तोऽपि किंचित्कर्म न करोति न तेन श्लिष्यते इत्यर्थः ॥ २० ॥

**म० टी०**—भवतु ज्ञानाग्निना प्राक्तनानामप्रारब्धकर्मणां दाहः आगामिनां चानुत्पत्तिः, ज्ञानोत्पत्तिकाले क्रियमाणं तु पूर्वोत्तरयोरनन्तर्भावात् फलाय भवेदिति भवेत्कस्यचिदाशङ्का तामपनुदति—त्यक्त्वेति । कर्मणि फले चासङ्गं कर्तृत्वाभिमानं भोगाभिलाषं च त्यक्त्वा अकर्त्रभोक्त्रात्मसम्यग्दर्शनेन बाधितत्वान्नित्यतृप्तः परमानन्दस्वरूपलाभेन सर्वत्र निराकाङ्क्षः निराश्रयः आश्रयो देहेन्द्रियादिरद्वैतदर्शनेन निर्गतो यस्मात् स निराश्रयो देहेन्द्रियाद्यभिमानशून्यः फलकामनायाः कर्तृत्वाभिमानस्य च निवृत्तौ हेतुगर्भं क्रमेण विशेषणद्वयम् । एवंभूतो जीवन्मुक्तो व्युत्थानदशायां कर्मणि वैदिके लौकिके वा अभिप्रवृत्तोऽपि प्रारब्धकर्मवशाल्लोकदृष्ट्याऽभितः साङ्गोपाङ्गानुष्ठानाय प्रवृत्तोपि स्वदृष्ट्या नैव किंचित् करोति सः निष्क्रियात्मदर्शनेन बाधितत्वादित्यर्थः ॥ २० ॥

**शं० टी०**—सर्वं ब्रह्मैव पश्यतो विदुषः स्वार्था परार्था वा प्रवृत्तिर्न संभवति क्वचिद्वासनया आहारादौ कर्मणि प्रवृत्तोपि स्वयमकर्मैव भवतीत्याह—त्यक्त्वेति । ब्रह्मवित्स्वयं नित्यतृप्तः नित्येनानन्दैकरसेन स्वात्मना साक्षात्कृतेन ब्रह्मणैव तृप्तस्तृप्तिं गतः स्वरूपसुखसंपन्नस्तत एव निराश्रयः येन ससाधनं कर्म पुमानाश्रयति स आश्रयः कामस्तस्मान्निर्गतो यः स निराश्रयो निष्कामस्तत एव कर्मसु न प्रवर्तते काममूलत्वात्प्रवृत्तेस्तदभावात्तदभावो युक्तः । यदि वासनया भिक्षाटनादौ क्वचित्प्रवर्तते तदा कर्मफलासङ्गं कर्माणि फलन्ति यत्रेति वा कर्माणि फलतीति वा स्वयं कर्मणा फलत्वाद्वा कर्मफलो देहस्तत्रासङ्गं कर्ता भोक्ता वक्ता श्रोता द्रष्टाहमिति तत्तादात्म्यं त्यक्त्वा कर्मणि स्वोचितेऽभिप्रवृत्तोऽपि स विद्वान् परदृष्ट्या कुर्वन्नपि स्वदृष्ट्या तु किंचिन्न करोत्येव, कर्मण्यकर्मत्वदर्शनेन कर्मभिरुपाधिकृतैर्न लिप्यत इत्यर्थः ॥ २० ॥

**श्री० टी०**—किंच—त्यक्त्वेति । कर्मणि तत्फले चासक्तिं त्यक्त्वा नित्येन निजानन्देन तृप्तः अत एव योगक्षेमार्थमाश्रयणीयरहितः एवंभूतो यः स्वाभाविके विहिते च कर्मणि अभितः प्रवृत्तोऽपि किंचिदपि नैव करोति तस्य कर्माकर्मतामापद्यत इत्यर्थः ॥ २० ॥

**स० टी०**—सम्यग्ज्ञाने समुत्पन्ने कार्यं ज्ञस्य न किंचन ॥ कृतैः कर्मभिरस्पृष्टभावत्वादेवमुच्यते ॥ १ ॥ कर्तृत्वाहंकृतिं त्यक्त्वा फले तृष्णां च कर्मणि ॥ परानन्दात्मलाभेन निराकाङ्क्षोऽखिले फले ॥ २ ॥ देहाद्यहंकृतेः शून्यो दृष्टादृष्टाश्रयातिगः ॥ एवंभूतः प्रवृत्तोऽपि लोकदृष्ट्या यथाविधि ॥ ३ ॥ लौकिके वैदिके वासौ कर्मण्यारब्धयोजितः ॥ स्वदृष्ट्या निष्क्रियः स्वात्मदर्शनध्वस्तविक्रियः ॥ ४ ॥ स्वे महिम्नि स्थितो धीरो नैव किंचित्करोत्यसौ ॥ ५ ॥ २० ॥

**भा० टी०**—ज्ञानाग्निदग्धकर्मत्वात्तदीयं ज्ञानोत्तरं क्रियमाणमपि कर्माकर्मैव संपद्यत इत्येतमर्थं दर्शयन्नाह—त्यक्त्वेत्यादिना । यत्तु भवतु ज्ञानाग्निना प्राक्तनानामप्रारब्धकर्मणां दाहः आगामिनां चानुत्पत्तिः ज्ञानोत्पत्तिकाले क्रियमाणं तु पूर्वोत्तरयोरनन्तर्भावात् फलाय भवेदिति भवेत्कस्यचिदाशङ्का तामपनुदतीति, तच्चिन्त्यं मूलात्तद्भाष्यादेवंभूतो जीवन्मुक्तो व्युत्थानदशायां कर्मणि वैदिके लौकिके प्रवृत्तोऽपीत्यादिस्वग्रन्थाच्च ज्ञानो-

त्तरक्रियमाणकर्माश्लेषस्य प्रतीतेः स्फुटत्वेनैवमुत्थानानौचित्यात् । ज्ञानोत्पत्तिकाल इत्यस्य किं ज्ञानोत्पत्तिक्षण इत्यर्थः, उत ज्ञानसाधनानामनुष्ठानकाल इति । आद्ये पापादेरसंभवः, द्वितीये तत्कर्मणः पूर्वकर्मण्यन्तर्भाव इति शङ्काया अप्यनुत्थानाच्च अत एव तस्य नाशो वा विश्लेषो वा व्यासेन पृथक् न सूत्रितः कर्मस्वभिमानं फलासक्तिं च त्यक्त्वा यथोक्तेन ज्ञानेन नित्यतृप्तः विषयेषु निराकाङ्क्षः अत एव दृष्टादृष्टेष्टफलसाधनाश्रयरहितः योगक्षेमार्थाश्रयणीयरहित इति व्याख्या तु भाष्यान्तर्भूता यत्त्वाश्रयो देहेन्द्रियादिरद्वैतदर्शनेन निर्गतो यस्मात्स निराश्रयः देहेन्द्रियाद्यभिमानशून्यः । फलकामनायाः कर्तृत्वाभिनिवेशस्य च निवृत्तौ क्रमेण विशेषणद्वयमिति व्याख्यानं तदपि दृष्टादृष्टेष्टफलसाधनानि देहेन्द्रियादीनि तदेवाश्रयस्तद्रहितः देहाद्यभिमानशून्य इति भाष्यं व्याख्याय तदविरोधेनादेयम् । तेनैवंभूतेन प्रयोजनाभावात्समग्रं कर्म यद्यपि त्याज्यं तथापि प्रारब्धप्राबल्याल्लोकसंग्रहार्थं लोकदृष्ट्या पूर्ववत्कर्मण्यभितः साङ्गोपाङ्गानुष्ठानाय प्रवृत्तोऽपि निष्क्रियात्मदर्शनसंपन्नत्वात्स्वदृष्ट्या नैव किंचित्करोति सः तत्त्वविदः क्रियमाणकर्मसंबन्धो न भवतीत्यर्थः २०॥

प० टी०—किंच—त्यक्त्वेति । कर्मफलानामासमन्तात्सङ्गं त्यक्त्वा निजानन्देन नित्यतृप्तोऽत एव निराश्रय आश्रयणीयरहित एवंविधो योऽभितः सर्वकर्मप्रवृत्तोऽपि नैव किंचित्करोति कर्तृत्वाभिमानशून्यो भवति तस्य कर्माकर्मतामेति ॥ २० ॥

रा० टी०—कामसंकल्पवर्जितत्वमात्रेण न कर्मस्वरूपं पूर्णं किंतु कर्मफलस्नेहत्यागेनापि भाव्यमित्याह—त्यक्त्वेति । कर्मणि फले चासङ्गं स्नेहं च त्यक्त्वा नित्यतृप्तो निराश्रयः नित्यतृप्तनिराश्रयभगवत्सरूपोऽस्मीति ज्ञानवान् कर्मण्यभिप्रवृत्तोऽपि स नैव किंचित्करोति स्वातन्त्र्याभावात् । अनिराश्रय इति वा पदविभागः । भगवदाश्रयत्वादनिराश्रय इत्यर्थः ॥ २० ॥

**निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥**
**शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ २१ ॥**

त० टी०—यद्येवं तर्हि—निराशीरिति । निर्गता आशिषः कामना यस्मात्स तथा यतं वशीकृतं चित्तमात्मा सेन्द्रियो देहश्च येन सः, त्यक्तः सर्वपरिग्रहः संग्रहो येन स केवलं शारीरं शरीरसम्बधिमात्रं नित्यावर्जनीयं कर्म कुर्वन् किल्बिषं पापं नाप्नोतीति किमु वक्तव्यमित्यर्थः ॥ २१ ॥

म० टी०—यदात्यन्तविक्षेपहेतोरपि ज्योतिष्टोमादेः सम्यग्ज्ञानवशात् न तत्फलजनकत्वं तदा शरीरस्थितिमात्रहेतोरविक्षेपकस्य भिक्षाटनादेर्नास्त्येव बन्धहेतुत्वमिति कैमुत्यन्यायेनाह—निराशीरिति । निराशीर्गततृष्णः यताचित्तात्मा चित्तमन्तःकरणमात्मा बाह्येन्द्रियसहितो देहस्तौ संयतौ प्रत्याहारेण निगृहीतौ येन सः यतो जितेन्द्रियोऽतो विगततृष्णत्वात् त्यक्तसर्वपरिग्रहः त्यक्ताः सर्वे परिग्रहा भोगोपकरणानि येन सः एतादृशोऽपि प्रारब्धकर्मवशात् शारीरं शरीरस्थितिमात्रप्रयोजनं कौपीनाच्छादनादिग्रहणभिक्षाटनादिरूपं यतिं प्रति शास्त्राभ्यनुज्ञातं कर्म कायिकं वाचिकं मानसं च तदपि केवलं कर्तृत्वाभिमानशून्यं पराध्यारोपितकर्तृत्वेन कुर्वन्परमार्थतोऽकर्त्रात्मदर्शनान्नाप्नोति न प्राप्नोति किल्बिषं धर्माधर्मफलभूतमनिष्टं संसारं पापवत्पुण्यस्याप्यनिष्टफलत्वेन किल्बिषत्वात् । ये तु शरीरनिर्वर्त्यं शारीरमिति व्याचक्षते तन्मते केवलं कर्म कुर्वन्नित्यतोऽधिकार्थालाभादव्यावर्तकत्वेन शारीरपदस्य वैयर्थ्यम् । अथ वाचिकमानसिकव्यावर्तनार्थमिति ब्रूयात् तदा कर्मपदस्य विहितमात्रपरत्वे शारीरं विहितं कर्म कुर्वन्नाप्नोति किल्बिषमित्यप्रसक्तप्रतिषेधोऽनर्थकः वाचिकं मानसं च विहितं कर्म कुर्वन्नाप्नोति किल्बिषमिति च शास्त्रविरुद्धमुक्तं स्यात् विहितप्रतिषिद्धसाधारणपरत्वेऽप्येवमेव व्याघात इति भाष्य एव विस्तरः ॥ २१ ॥

शं० टी०–यस्तु विवेकवैराग्यशमदमादिसाधनसंपत्त्या सर्वाणि कर्माणि संन्यस्य श्रवणमननाभ्यां विज्ञातात्मतत्त्वो यतिर्निदिध्यासनपरो भवति स तु शरीरयात्रामात्रात्मकं कर्म कृत्वा ब्रह्मनिष्ठया निर्मूलितबन्धः सन्मुक्तो भवतीत्याह–**निराशीरिति** । निःशेषं निर्गता आशिषो वैषयिक्यः कामना यस्मात्स निराशीर्विनष्टसर्वकाम इत्यर्थः । तत एव त्यक्तसर्वपरिग्रहः त्यक्ताः कौपीनकन्थातिरिक्ताः सर्वे परिग्रहा येन स त्यक्तसर्वपरिग्रहो योगनिष्ठापरो यतिः स्वयं यतचित्तात्मा आत्मा देहः यतौ निरुद्धौ चित्तात्मानौ येन स यतचित्तात्मा। यद्वा यतं संस्थापितं चित्तमात्मन्येव न क्वचिदनात्मनि येन स यतचित्तात्मा सन् शारीरं शरीरस्थितिकारणं शारीरं प्राणत्राणैकप्रयोजनं तत्रापि केवलं यतित्वज्ञानित्वकर्तृत्वाभिमाननिर्मुक्तं शारीरं कर्म कुर्वन् किल्बिषं नाप्नोति । ननु "व्युत्थायाथ भिक्षाचर्यं चरन्ति" इति प्राणत्राणहेतोर्भिक्षाया यतेर्विहितत्वाद्विहितानुष्ठित्या किल्बिषासंभवादप्राप्तकिल्बिषप्राप्त्यभावप्रतिपादनमयुक्तमिति चेन्न, क्वचित्किल्बिषप्राप्तिप्रसङ्गाद्यतचित्तात्मेत्युक्त्या वाचोऽपि निरुद्धत्वान्मौनिनो यतेः क्वचिदभिशस्तादिभ्योऽपि भिक्षाग्रहप्रसङ्गात् "अभिशस्तपतितवर्जम्" इत्यादिश्रुतिप्रतिषिद्धानुष्ठित्या स्यादेव किल्बिषं सम्यग्ज्ञानप्रतिबन्धकं यत्तदेव कर्मण्यकर्मत्वदर्शनाग्निना निर्दह्य मुक्तिं प्राप्नोतीत्याशयेनोच्यते–कुर्वन्नाप्नोतिकिल्बिषमिति। यद्वा "मधु मांसं च मद्यं च ताम्बूलं तैलमौषधम् । त्याज्यान्यष्टौ यतेर्दूरात्तथा कान्ता च काञ्चनम्" इत्यतिनिषिद्धमपि शारीरं शरीरस्थितिकारणं यदभावे शरीरं निर्गच्छति श्रवणादि न सिद्ध्यति तच्छारीरं सर्पदंशननेत्ररोगोदरशूलादिमहोपद्रवे औषधसेवालक्षणम् "औषधवदशनमाचरेत्" इतिश्रवणाच्छारीरं कर्म केवलमयत्नसिद्धं कुर्वन् यतिः श्रवणादिशीलः किल्बिषं न प्राप्नोति। यद्वा निराशीर्नित्यानित्यविवेकवैराग्यतीव्रमोक्षेच्छाभिराशीर्भ्य ऐहिकामुष्मिकसुखाशाभ्यस्तुच्छविषयाभ्यो निर्गतो यः स निराशीस्तत एव त्यक्तसर्वपरिग्रहः धर्मप्रजासंपत्त्यर्थं परिगृह्यत इति परिग्रहो दारादिः सर्वोऽपि मोक्षेच्छया परित्यक्तो येन स त्यक्तसर्वपरिग्रहः संन्यस्तसर्वकर्मतत्साधनो यतिः स्वयं यतचित्तात्मा यतौ बाह्यप्रवृत्तेर्निवर्तितौ चित्तमात्मा कार्यकारणसंघातश्च द्वौ येन स यतचित्तात्मा सन् शारीरं शरीरोपाधिकत्वादात्मा शारीरस्तत्प्रापकं कर्मापि श्रवणादिकं शारीरमेव भवति बाह्यं जपादिकर्म सर्वं परित्यज्यानन्तरं केवलं शारीरमेव श्रवणादिलक्षणं कर्म कुर्वन् किल्बिषं दुःखप्रदं संसारबन्धनं न प्राप्नोति । कुर्वन्नाप्नोति किल्बिषमिति वदता भगवता जपादिकर्मणा सह श्रवणादि कुर्वन्वा श्रवणादि त्यक्त्वा यतिस्तद्व्यतिरिक्तं कर्मैव कुर्वन् किल्बिषमेव प्राप्नोतीति सूचितं भवति । तेन यतेः श्रवणाद्येव सर्वदा कर्तव्यं नान्यत्स्तोत्रमन्त्रजपादिकमिति सिद्धं भवति । तथा च स्मृतिः 'यमानभीक्ष्णं सेवेत नियमान्मत्परस्त्यजेत् । जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम्' इति 'संन्यस्य श्रवणं कुर्यान्नान्यत्कुर्याद्यतिः क्वचित्' इति च ॥ २१ ॥

श्री० टी०–किंच–**निराशीरिति** । निर्गता आशिषः कामना यस्माद् यतं नियतं चित्तमात्मा च शरीरं यस्य त्यक्ताः सर्वे परिग्रहा येन सः शारीरं शरीरमात्रनिर्वर्त्यं कर्तृत्वाभिनिवेशरहितं कर्म कुर्वन्नपि किल्बिषं बन्धनं न प्राप्नोति योगारूढपक्षे शरीरनिर्वाहमात्रोपयोगि स्वाभाविकं भिक्षाटनादि कर्म कुर्वन्नपि किल्बिषं विहिताकरणनिमित्तं दोषं न प्राप्नोतीति ॥ २१ ॥

स० टी०–यदा चात्यन्तविक्षेपकारणैरपि कर्मभिः ॥ सम्यग्ज्ञानान्न लेपोऽस्ति तदा भिक्षाटनादिभिः ॥ १ ॥ नास्ति बन्धो ब्रह्मविदः किमु वाच्यमितीर्यते ॥ वीततृष्णो वशे नीतं चित्तं देहेन्द्रियैः सह ॥ २ ॥ येन सोऽत्यन्तवैराग्यात्त्यक्तभोगोपकारकः ॥ एतादृशोऽपि प्रारब्धवशाद्भिक्षाटनादिकम् ॥ ३ ॥ शरीरस्थितिमात्रार्थं कायिकं वाचिकं तथा ॥ मानसं कर्म कर्तृत्वाध्यासशून्यः समाचरन् ॥ ४ ॥ अकर्त्रात्मदृशा नासौ धर्माधर्मफलं यतिः ॥ संसारं किंचनाप्नोति बाधितत्वाच्छुभाशुभम् ॥ ५ ॥ यतेरनिष्टहेतुत्वात्पुण्यमप्यस्य किल्बिषम् ॥ ६ ॥ २१ ॥

भा० टी०—सत्यपि विक्षेपके दर्शपूर्णमासादिकर्मणि निष्क्रियात्मवित् निर्लेप एव भवति किं पुनर्वक्तव्यं यो विक्षेपरहितः शरीरमात्रचेष्टो यतिर्ज्ञाननिष्ठो नाप्नोति किल्बिषमितीत्याशयेनाह—निराशीरिति। निर्गता आशिषस्तृष्णा यस्मात्सः, यतौ निगृहीतौ चित्तात्मानावन्तःकरणबाह्यकार्यकरणसंघातौ येन सः, त्यक्तः सर्वः परिग्रहो येन सः, केवलं शारीरं शरीरस्थितिमात्रप्रयोजनं भिक्षाशनादिकं कर्म तत्रापि अभिमानवर्जितं लोकदृष्ट्या कुर्वन्किल्बिषं धर्माधर्माख्यं संसारं नाप्नोति, मुमुक्षु प्रतिबन्धोदर्कत्वेन धर्मस्यापि किल्बिषरूपत्वात्। यत्तु नन्वेतस्माद्गौणात्करणादकरणं मुख्यमेव तद्वरमित्याशङ्क्य गृहस्थस्य तत्प्रत्यवायावहमिति व्यतिरेकमुखेनाह—यस्तु त्यक्तसर्वपरिग्रहः स निराशीरपि यतचित्तात्मापि केवलमपि शारीरं कर्म कुर्वन् विहिताकरणात् किल्बिषं प्राप्नोत्येवेत्यर्थ इति, तदुपेक्ष्यं निराशीरित्यादिविशेषणाननुरूपया कुकल्पनया व्यतिरेकमुखेन 'नैव किंचित्करोति सः। कृत्वापि न निबध्यते। हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यते' इत्यादिविरुद्धार्थप्रदर्शनानौचित्यात् "कथमसतः सज्जायेत" इति श्रुत्याऽकरणादभावरूपात् किल्बिषस्य भावस्य उत्पत्तिर्न जायतेऽपि तु प्रतिषिद्धाचरणादित्यसकृद्भाष्यकारैरुक्तत्वेन च शारीरं केवलमिति विशेषणात् किल्बिषस्याप्राप्तेः प्राप्नोत्येवेत्यस्यासङ्गतत्वात् प्रत्यवायेन निबध्यत इति स्वपरग्रन्थविरोधाच्चेति दिक् ॥२१॥

प० टी०—किंच—निराशीरिति। निराशीरमुकं मे भूयादित्याशीर्विरहितः यतं नियत चित्तमात्मा शरीरं च यस्य सः, तथा त्यक्ताः सर्वे परिग्रहा बन्धहेतवो येन स केवल शारीरं कर्म शरीरनिर्वाहमात्ररूपं कर्म कुर्वन् किल्बिषं परिग्रहादिदोषं न प्राप्नोति ॥ २१ ॥

रा० टी०—कामसंकल्पादित्यागोपायमाह—निराशीरिति। आत्मा मनः यतौ नियतौ चित्तात्मानौ यस्य स यतचित्तात्मा भूत्वा निराशीः निष्कामः त्यक्तसर्वपरिग्रहश्च भवतीत्यर्थः। मनोनिग्रहेणैव कामादित्याग इति भावः। परिग्रहत्यागो नाम देहेन्द्रियादिपरिग्रहे अभिमानत्यागो ज्ञेयः। केवलं शारीरं शरीरयात्रार्थम्। यद्वा केवलं कामादिरहितं शारीरं शरीरेन्द्रियादिकरणकं कर्म कुर्वन् किल्बिषं कर्मबन्धं नाप्नोति। नैव किंचित्करोतीति प्रागुक्तस्य कर्मणां मिथ्यात्वादाति विपरीतभ्रमनिरासाय नाप्नोतिकिल्बिषमिति तदभिप्रायोऽत्र गौण्या वृत्त्या वर्णितः ॥ २१ ॥

## यदृच्छालाभसंतुष्टो द्वन्द्वातीतो विमत्सरः ॥
## समः सिद्धावसिद्धौ च कृत्वाऽपि न निबध्यते ॥ २२ ॥

त० टी०—ननु स्यादेव केवलशारीरकर्मस्पर्शाभाव इति यदि पुनः पूर्वाभ्यासेन कर्मविशेषं कुर्याच्चेत्तर्हि तेन बध्येतेति चेत्तत्राह—यदृच्छेति। इच्छां प्रयत्नं विनैव येन केनचिदप्रेरिता या चित्तेन भोगप्राप्तिर्यदृच्छा तयैव यो लाभः स यदृच्छालाभः वस्त्रान्नादिस्तेन संतुष्टः, यदि न प्राप्नुयात्तदा द्वन्द्वातीतः, द्वन्द्वानि क्षुत्पिपासाशीतोष्णवातवर्षादीनि अतीतस्तत्प्राप्तावकातरः। किंच विमत्सरः, परस्य भोजनादिप्राप्तौ स्वस्याप्राप्तौ चासहनताशून्यः। अत एव सिद्धावसिद्धौ च लाभालाभे च हर्षविषादरहितः। एवंवृत्तिर्ज्ञानावस्थितो विद्वान् स्वार्थं किंचित्कर्म न करोति, किंतु केनचित्स्वहिताय याचितश्चेत्सर्वज्ञत्वात्परार्थं भगवत्संबन्धि यज्ञादिकं विशेषकर्म कृत्वाऽपि न निबध्यते बन्धनं न प्राप्नोति। केचित्तु इमं श्लोकं त्यक्तसर्वपरिग्रहस्य यतेः शरीरस्थित्यर्थं याचनादिप्राप्तौ सत्यामयाचितादिना शरीरस्थितिं कुर्यादिति नियमपरतया व्याख्याय यतेरकर्तृत्वसाधनायान्ते नैव किंचिद्भिक्षाटनादिकं कर्म करोति लोकव्यवहारसामान्यदर्शनेन तु लौकिकैरारोपितकर्तृत्वे भिक्षाटनादौ कर्मणि कर्ता भवति। स्वानुभवे तु शास्त्रप्रमाणजनितेनाकर्तैव सः। एवं पराध्यारोपितकर्तृत्वं शरीरस्थितिमात्रप्रयोजनं भिक्षाट-

नादिकं कर्म कृत्वाऽपि न निबध्यते बन्धहेतोः कर्मणः सहेतुकस्य ज्ञानाग्निदग्धत्वादिति वदन्ति, तत्पौनरुक्तिदोषादसङ्गतम्, तस्य पूर्वश्लोकेनैव सिद्धत्वाद्यतः शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिकं कर्मेति पूर्वोक्तशारीरान्न किंचिद्विशिष्यते। अस्य वैयर्थ्यं प्रसज्येत । किंच यतिपरत्वे उत्तरश्लोकद्वयसङ्गतिविरुध्येत। तत्र यज्ञायाचरतः कर्मेत्युक्तत्वात्, यतेर्यज्ञादिकर्मानधिकारात् । तस्मान्न संन्यासिपरमिदं प्रकरणं वक्तुं शक्यमनुपपन्नत्वात् किंतु निष्कामज्ञानिभक्तपरमेवोपपद्यते, इत्यलं प्रासङ्गिकेन ॥ २२ ॥

म० टी०—त्यक्तसर्वपरिग्रहस्य यतेः शरीरस्थितिमात्रप्रयोजनं कर्माभ्यनुज्ञातम् । तत्रान्नाच्छादनादिव्यतिरेकेण शरीरस्थितेरसंभवाद्याच्ञादिनापि स्वप्रयत्नेनान्नादिकं संपाद्यमिति प्राप्ते नियमानाह—यदृच्छेति। शास्त्रानुमतप्रयत्नव्यतिरेको यदृच्छा तयैव यो लाभोऽन्नाच्छादनादेः शास्त्रानुमतस्य स यदृच्छालाभस्तेन संतुष्टस्तदधिकतृष्णारहितः । तथाच शास्त्रम् 'भैक्षं चरेत्' इति प्रकृत्य 'अयाचितमसंक्लृप्तमुपपन्नं यदृच्छया' इति याच्ञासंकल्पादिप्रयत्नं वारयति। मनुरपि 'न चोत्पातनिमित्ताभ्यां न नक्षत्राङ्गविद्यया । नानुशासनवादाभ्यां भिक्षां लिप्सेत कर्हिचित्' इति 'यतयो भिक्षार्थं ग्रामं विशन्ति' इत्यादिशास्त्रानुमतस्तु प्रयत्नः कर्तव्य एव एवं लब्धव्यमपि शास्त्रनियतमेव 'कौपीनयुगलं वासः कन्थां शीतनिवारिणीम्। पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्' इत्यादि। एवमन्यदपि विधिनिषेधरूपं शास्त्रमूह्यम्। ननु स्वप्रयत्नमन्तरेणालाभे शीतोष्णादिपीडितः कथं जीवेदत आह—द्वन्द्वातीतः द्वन्द्वानि क्षुत्पिपासाशीतोष्णवर्षादीनि अतीतोऽतिक्रान्तः समाधिदशायां तेषामस्फुरणात् व्युत्थानदशायां स्फुरणेपि परमानन्दाद्वितीयाकर्त्रभोक्त्रात्मप्रत्ययेन बाधात् तैर्द्वन्द्वैरुपहन्यमानोऽप्यक्षुभितचित्तः अत एव परस्य लाभे स्वस्यालाभे च विमत्सरः परोत्कर्षासहनपूर्विका स्वोत्कर्षवाञ्छा मत्सरस्तद्रहितः अद्वितीयात्मदर्शनेन निर्वैरबुद्धिः अत एव समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च सिद्धौ न हृष्टः नाप्यसिद्धौ विषण्णः स स्वानुभवेनाकर्तैव परैरारोपितकर्तृत्वः शरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिरूपं कर्म कृत्वापि न निबध्यते बन्धहेतोः सहेतुकस्य कर्मणो ज्ञानाग्निना दग्धत्वादिति पूर्वोक्तानुवादः ॥ २२ ॥

श्री० टी०—परावरैकत्वविज्ञानाग्निनिर्दग्धाविद्यातत्कार्यग्रन्थेर्जीवन्मुक्तस्य विदुषः शरीरयात्रातिरिक्तं कर्तव्यं कर्म नास्तीति प्रतिपाद्य निदिध्यासोर्यतेर्मौनिनस्त्वन्नतद्दातृविचारमन्तरेण शरीरयात्रां कुर्वतोऽपि विमुक्तिर्न प्रतिबध्यत इत्युक्त्वा जीवन्मुक्तस्याऽजगरवृत्तेर्यदृच्छाप्राप्तेन जीवनं कुर्वतोऽपि यतेर्या वृत्तिः सा मुक्तिप्रतिबन्धकी न भवतीतीदानीं प्रतिपादयति श्रीभगवान्—यदृच्छेति । द्वन्द्वातीतः द्वन्द्वानि त्वमहमिति इदमद इति इष्टमनिष्टमिति शुद्धमशुद्धमिति द्वैतमद्वैतमित्यादीनि विपरीतज्ञानान्यतीतः सर्वत्र ब्रह्मदृष्ट्या विनष्टविपरीतदर्शनस्तत एव विमत्सरः अहमेवेदं सर्वमिति सर्वस्य स्वात्मत्वेनाधिगतत्वादुत्कृष्टत्वाऽपकृष्टत्वभावनानुपपत्तौ सर्वत्रात्मबुद्धिरत एव यदृच्छालाभसंतुष्टः अयत्नप्राप्तो लाभो यदृच्छालाभः प्रारब्धवशात्स्वत एव प्राप्तः साधुना वाऽसाधुना वा दत्तः शुद्धोऽशुद्धो वाल्पोऽनल्पो वान्नादिस्तेनैव संतुष्टः परितृप्तिं प्राप्तः सन्नाहारस्य सिद्धावसिद्धौ च समो ब्रह्मानन्दानुभूत्या स्वयं हर्षविषादवैवर्ण्यादिरहितो भूत्वैवं शरीरयात्रां कृत्वाप्याजगरो ब्रह्मवित्तिर्न निबध्यते मुक्तेः प्रतिबन्धनं न प्राप्नोति लोकदृष्ट्या त्वाहारादिवैषम्येण प्रतिबन्धकवद्दोषेण प्रतीयमानोऽपि विद्वान् "सर्वमिदमहं च ब्रह्मैव" इतिभोक्तृभोग्यदातृदेयादेः सर्वदृश्यस्य ब्रह्ममात्रत्वेन प्रविलापितत्वात्परे ब्रह्मण्यद्वितीये प्रतिबन्धहेतोरन्यस्यासंभवात्पतितेऽस्मिन् विद्वद्देहे विदेहमुक्तिं प्राप्नोतीत्यर्थः ॥ २२ ॥

श्री० टी०—किंच—यदृच्छेति । अप्रार्थितोपस्थितो लाभो यदृच्छालाभः तेन संतुष्टः द्वन्द्वानि शीतोष्णादीन्यतीतः अतिक्रान्तः तत्सहनशील इत्यर्थः । विमत्सरो निर्वैरः यदृच्छालाभस्यापि सिद्धावसिद्धौ च

समः हर्षविषादरहितः य एवंभूतः स पूर्वोत्तरभूमिकयोर्यथायथं विहितं स्वाभाविकं वा कर्म कृत्वाऽपि न बन्धं प्राप्नोति ॥ २२ ॥

स० टी०—यतेरकिंचनस्यापि शरीरस्थितिकारणम् ॥ याच्ञादिना न संपाद्यमन्नादीत्याह विश्वपाः ॥ १ ॥ लाभो ह्यप्रार्थितोऽयत्नात्तेनालंप्रत्ययं गतः ॥ शास्त्रानुमतभिक्षादिलाभात्संतुष्ट एव वा ॥ २ ॥ स्वप्रयत्नं विनाऽलाभे शीतोष्णादिभिरर्दितः ॥ द्वन्द्वैरक्षुब्धचित्तो यो निर्वैरः सर्वजन्तुषु ॥ ३ ॥ शरीरस्थितिहेतोश्च लाभेऽलाभेऽविकारधीः ॥ स्वानुभूत्या स चाकर्तैवान्यैरारोपितक्रियः ॥ ४ ॥ भिक्षाटनादिकं कृत्वा बन्धं नाप्नोति किंचन ॥ ५ ॥ २२ ॥

भा० टी०—ननु त्यक्तसर्वपरिग्रहस्य यतेः अन्नादेः शरीरस्थितिहेतोः परिग्रहाभावाद् याचनादिना शरीरस्थितिः कर्तव्येत्याशङ्क्य अयाचितमसंक्लृप्तमुपपन्नं यदृच्छयेति वचनानुरोधेनोत्तरमाह—यदृच्छेति । अप्रार्थितोऽप्रयत्नो लाभो यदृच्छालाभः तेन संतुष्टः संजातालंप्रत्ययः, द्वन्द्वैः शीतोष्णादिभिः स्वप्रयत्नमन्तरेण वस्त्राद्यलाभे पीड्यमानोऽप्यखिन्नचित्तः द्वन्द्वातीतः, अत एव परस्य कौपीनाच्छादनलाभेन परोत्कर्षासहनरूपमत्सरशून्यः निर्वैर इत्यर्थः । समस्तुल्यो यदृच्छालाभस्य सिद्धावसिद्धौ च हर्षविषादरहित इत्यर्थः । यतयो भिक्षार्थं ग्रामं प्रविशन्ति 'विधूमे सन्नमुसले व्यङ्गारे भुक्तवज्जने । अतीतपात्रसंचारे भिक्षां लिप्सेत वै मुनिः ॥ कौपीनयुगुलं वासः कन्थां शीतनिवारिणीम् । पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहम्' इत्यादिशास्त्राल्लोकदृष्ट्या भिक्षाटनादिकं शरीरस्थितिमात्रप्रयोजनं कर्म कृत्वापि कर्मादावकर्मादिदर्शी यथाभूतात्मज्ञाननिष्ठः कृत्वाऽपि न निबध्यते बन्धहेतोः सहेतुकस्य कर्मणः ज्ञानाग्निना दग्धत्वादित्युक्तानुवादः । यत्त्वन्ये ननु सपरिग्रहः कुटुम्बभरणव्यग्रचित्ततया कथं व्ययायाससाध्याग्निहोत्रादीन्यनुतिष्ठेदित्याशङ्क्याह—यदृच्छालाभसंतुष्टः, द्वन्द्वातीतो बहुलाभेऽलाभे वा सुखदुःखाद्यतीतः परस्य लाभं दृष्ट्वा संतापहीनः समः यदृच्छालाभेनैव इष्टिपशुचातुर्मास्यादेर्नित्यात्कर्मणः सिद्धावसिद्धौ च समः निर्विकारः एवंभूत इष्ट्यादीनि कृत्वाऽपि तन्मूलेन स्वर्गादिना न निबध्यते अपिशब्दात्तज्जेन प्रत्यवायेन न निबध्यते बन्धहेतोः कर्मणस्तत्त्वज्ञानेनैव दाहात् । तथाच स्मृतिः 'न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत्सत्यवादी च गृहस्थोऽपि विमुच्यते' इति व्याचख्युः, तदसङ्गतम् । उक्तरीत्या त्यक्तसर्वपरिग्रहस्य यतेः पूर्वश्लोकेन वर्णनौचित्येनैवमुत्थापनस्यानौचित्यात् । शङ्कानुरूपस्य श्लोकाक्षरैरुत्तरस्याप्रतीतेश्च तस्मादनेन श्लोकेन परिग्रहरहितस्यैव वर्णनं न्याय्यमिति दिक् ॥ २२ ॥

प० टी०—किंच—यदृच्छेति । अप्रार्थितोपस्थितो लाभो यदृच्छालाभस्तेन संतुष्टः सोऽपि निर्वाहमात्रपर्याप्तः "मा गृधः कस्यचिद्धनम्" इति श्रुतेः । द्वन्द्वानि शीतोष्णादीन्यतीतो विमत्सरोऽन्यशुभद्वेषरहितः सिद्धावसिद्धौ समो हर्षविषादरहितः स एव पूर्वोत्तरदशयोर्यथायथं कर्म कुर्वन् बन्धं न प्राप्नोति ॥२२॥

रा० टी०—यतचित्तात्मा कीदृश इत्यपरस्तस्य लक्षणमाह—यदृच्छेति । अप्रयत्नलब्धेन तृप्तिमान् सुखदुःखलाभालाभादिद्वन्द्वान्यतीतो द्वन्द्वातीतः । विमत्सरः, स्वानधीनत्वनिमित्तमनःखेदहीनः । द्वन्द्वातीतत्वं किंप्रकारमिति जिज्ञासायां तद्विवृणोति—सम इत्यादिना । सिद्ध्यसिद्ध्योरुत्सेकानुत्सेकहीनत्वरूपसमत्वमेव द्वन्द्वातीतत्वमित्यर्थः । एवंविधः कर्म कृत्वापि तेन न निबध्यत इति । यदृच्छालाभसंतुष्टत्वादिकं यतचित्तात्मनो लक्षणमित्युक्तं भवति ॥ २२ ॥

**गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः ॥**
**यज्ञायाचरतः कर्म समग्रं प्रविलीयते ॥ २३ ॥**

त० टी०–कृत्वाऽपि न निबध्यत इत्युक्तं तत्र हेतुमाह–**गतसङ्गस्येति** । कर्मणि स्वफलोद्देशरहितस्य अत एव मुक्तस्य अन्यैः रागद्वेषविवर्जितस्य यतो ज्ञानेऽवस्थितं निश्चलं चेतो यस्य तस्य यज्ञाय विष्णुप्रीत्यर्थमाचरतः साङ्गोपाङ्गं विधिपूर्वकं कर्मानुष्ठानं कुर्वतः समग्रं निःशेषं प्रविलीयते तस्मै पुण्यदानायापि योग्यो न भवति । कुतस्तद्वैगुण्यजन्यप्रत्यवायाय भवेदित्यर्थः । यद्यपि 'कर्ता कारयिता चैव प्रेरकश्चानुमोदकः । सुकृते दुष्कृते चैव चत्वारः समभागिनः' इति कर्तुरपि समफलत्वमुक्तं तथापि फलोद्देशेनैव कुर्वतस्तत्संबन्धो नैवंविधस्येति भावः ॥ २३ ॥

म० टी०–त्यक्तसर्वपरिग्रहस्य यदृच्छालाभसंतुष्टस्य यतेर्यच्छरीरस्थितिमात्रप्रयोजनं भिक्षाटनादिरूपं कर्म तत्कृत्वा न निबध्यत इत्युक्तेर्गृहस्थस्य ब्रह्मविदो जनकादेर्यज्ञादिरूपं यत्कर्म तद्बन्धहेतुः स्यादिति भवेत्कस्यचिदाशङ्का तामपनेतुं त्यक्त्वा कर्मफलासङ्गमित्यादिनोक्तं विवृणोति–**गतसङ्गस्येति** । गतसङ्गस्य फलासङ्गशून्यस्य मुक्तस्य कर्तृत्वभोक्तृत्वाद्यध्यासशून्यस्य, ज्ञानावस्थितचेतसः निर्विकल्पब्रह्मात्मैक्यबोध एव स्थितं चित्तं यस्य तस्य स्थितप्रज्ञस्येत्यर्थः । उत्तरोत्तरविशेषणस्य पूर्वपूर्वहेतुत्वेनान्वयो द्रष्टव्यः । गतसङ्गत्वं कुतः यतोऽध्यासहीनत्वं तत् कुतो यतः स्थितप्रज्ञत्वमिति । ईदृशस्यापि प्रारब्धकर्मवशाद् यज्ञाय यज्ञसंरक्षणार्थं ज्योतिष्टोमादियज्ञे श्रेष्ठाचारत्वेन लोकप्रवृत्त्यर्थं यज्ञाय विष्णवे तत्प्रीत्यर्थमिति वा आचरतः कर्म यज्ञदानादिकं समग्रं सहाग्रेण फलेन विद्यत इति समग्रं प्रविलीयते प्रकर्षेण कारणोच्छेदेन तत्त्वदर्शनाद्विलीयते विनश्यतीत्यर्थः ॥ २३ ॥

शं० टी०–ननु सर्वमिदमहं च ब्रह्मैवेति सर्वस्यापि स्वस्य च ब्रह्मत्वमेव प्रत्यग्दृष्ट्या सर्वदा पश्यतां ब्रह्मविदां जीवन्मुक्तानां शरीरयात्रात्मकं कर्म ब्रह्मदृष्ट्या प्रविलापितत्वेन निःसत्ताकतया तेषां मुक्तिप्रतिबन्धकं मास्तु लोकानुग्रहकाम्यया कर्माणि प्रवृत्तस्याधिकारिकस्यान्यस्य वाऽविदुषोऽहं कर्तानेनेदं कर्तव्यमिति क्रियाकारकभेददृष्टिमवष्टभ्य क्रियमाणेन कर्मणा मुक्तिः प्रतिबध्यत एव 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिस्मृतिनियमादित्याशङ्कायां न ब्रह्मविद्भिर्महापुरुषैः क्रियमाणं क्रियाकारकादिभेदभिन्नमपि कर्म लौकिकं वैदिकं च सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मबुद्ध्यैव क्रियते नतु मयेदं क्रियत इति भेददृष्ट्या, ततस्तैः क्रियमाणं कर्माकर्मैव सत्स्वयं मुक्तिं तेषां प्रतिबद्धुं न शक्नोतीत्याशयेनाह–**गतसङ्गस्येति** । मुक्तस्य ब्रह्मण्येवात्मभावापत्त्याऽहंममाभिनिवेशेन विमुक्तस्य निरहंकृतेरत एव गतसङ्गस्य सज्यते पुमाननेन कर्मस्विति सङ्गः कामः स गतो यस्य तस्य गतसङ्गस्य निष्कामस्यात एव ज्ञानावस्थितचेतसः ज्ञानं सर्वत्र ब्रह्मदर्शनलक्षणं तत्रैवावस्थितं चेतो यस्य तस्य ज्ञानावस्थितचेतसः दृश्यावगाहिन्या वृत्तेः सदा ब्रह्माकारतामेवापादयतो यज्ञाय विष्णवे । यद्वा श्रौतैः स्मार्तैश्च कर्मभिर्देवान् यजन्तीति यज्ञाः ब्राह्मणादयस्तेभ्यः । जातावेकवचनम् । यज्ञाय लोकहितायैवाचरतः कर्माणि कुर्वतः आधिकारिकस्य नित्यमनुष्ठीयमानं कर्म समग्रं करणत्रयनिर्वर्तितं सर्वं कर्माकर्मादिलक्षणं वा सर्वं प्रविलीयते ब्रह्मबुद्ध्या प्रविलापितं सत्समूलं विनश्यति न जन्मादिफलाय कल्पत इत्यर्थः ॥ २३ ॥

श्री० टी०–किंच–**गतसङ्गस्येति** । गतसङ्गस्य निष्कामस्य रागादिभिर्मुक्तस्य ज्ञानेऽवस्थितं चेतो यस्य यज्ञाय परमेश्वरार्थं कर्माचरतः सतः समग्रं सवासनं कर्म प्रविलीयते अकर्मभावमापद्यते । आरूढयोगपक्षे यज्ञायेति यज्ञसंरक्षणार्थं लोकसंग्रहार्थमेव कर्म कुर्वत इत्यर्थः ॥ २३ ॥

स० टी०–तत्त्वज्ञस्य गृहस्थस्य कर्म यागादिकं कृतम् ॥ नैव बन्धकमित्याह पूर्वोक्तमपि केशवः ॥ १ ॥ फलासङ्गविहीनस्य निर्गताध्यासकस्य च ॥ निर्विकल्पात्मतत्त्वैक्यबोधे यस्य स्थितं मनः ॥ २ ॥ ईद-

शस्यापि प्रारब्धवशाल्लोकप्रवृत्तये ॥ कुर्वतः कर्म यज्ञादि विष्णुप्रीत्यर्थमेव वा ॥ ३ ॥ सहाग्रेण फलेनैतत्कर्म ज्ञस्य विनश्यति ॥ फलं चाजनयित्वैव मूलोच्छेदादृशोक्तया ॥ ४ ॥ २३ ॥

भा० टी०—यस्तु प्रारब्धवशात्पूर्वं कर्मण्यभिप्रवृत्तोऽपि नैव किंचित्करोतीत्युक्तं तदेव विवृण्वन्नाह—गतसङ्गस्येति । गतः सर्वतो निवृत्तः सङ्ग आसक्तिर्यस्य तस्य मुक्तस्य निवृत्तधर्माधर्मादिबन्धनस्येति भाष्यं तत्रादिशब्देन कर्तृत्वभोक्तृत्वाद्यध्यासो रागादिश्च गृह्यत इत्यविरोधः । ज्ञान एवावस्थितं चेतो यस्य तस्य यज्ञायाग्निष्टोमादियंज्ञनिर्वृत्त्यर्थं विष्णुप्रीतिनिर्वृत्त्यर्थमिति वाऽऽचरतः कुर्वतः सहाग्रेण फलेन वर्तत इति समग्रं प्रकर्षेण कारणोच्छेदेन तत्त्वसाक्षात्काराद्विलीयते नश्यतीत्यर्थः ॥ २३ ॥

प० टी०—किंच गतसङ्गस्येति । गतसङ्गस्य रागादिभिर्विमुक्तस्य ज्ञानावस्थितमात्मज्ञानैकतत्परं चेतो यस्यैवंभूतस्य यज्ञाय परमेश्वरार्थं यागार्थं वा कर्माचरतः समग्रं सवासनं प्रविलीयतेऽकर्मतामापद्यते ॥ २३ ॥

रा० टी०—विक्षिप्य प्रागुक्तं पिण्डीकृत्य दर्शयति—गतसङ्गस्येति । गतसङ्गस्य फलस्नेहरहितस्य मुक्तस्य देहाद्यभिमानहीनस्य स्वातन्त्र्याभिमानहीनस्येति वा ज्ञानावस्थितचेतसः विष्णुज्ञानेऽभिनिविष्टचित्तस्य यज्ञाय विष्णवे तत्प्रीत्यर्थं कर्माचरतः कुर्वतः कर्म प्रविलीयते बन्धकं न भवतीत्यर्थः । यस्येत्यादिना यत्कामादिविवर्जनमुक्तं तद्गतसङ्गस्येत्यनेन त्यक्तसर्वपरिग्रह इत्येतन्मुक्तस्येत्यनेन कर्मण्यकर्मेति नित्यतृप्त इति च ज्ञानावस्थितचेतस इत्यनेन पिण्डीकृत्य प्रदर्शितं ध्येयम् ॥ २३ ॥

**ब्रह्मार्पणं ब्रह्म हविर्ब्रह्माग्नौ ब्रह्मणा हुतम् ॥**
**ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना ॥ २४ ॥**

**त० टी०—एवमुक्तविधस्य योगिनः समग्रकर्मप्रविलय उक्तस्तत्र कथमाकाङ्क्षायां ज्ञानावस्थितचेतस इतिपदस्य व्याख्यारूपं साङ्गस्य यज्ञस्य ब्रह्मात्मकतानुसंधानप्रकारमाह—ब्रह्मार्पणमिति । अर्प्यतेऽनेनेति अर्पणं स्रुगादि मन्त्रादि च ब्रह्मात्मकत्वाद्ब्रह्मैव, हविरग्नौ प्रक्षेपणीयं द्रव्यं ब्रह्मैव, ब्रह्माग्नौ ब्रह्मभूतेऽग्नौ ब्रह्मणा कर्त्रा यजमानेन हुतं प्रक्षेपणक्रियापि ब्रह्मैव, तथाऽर्पणसंप्रदानभूतदेवताऽप्यनुसन्धेया । तथाच कर्ता कर्म करणमधिकरणं संप्रदानं क्रिया च सर्वं ब्रह्मैवेत्यर्थः । एवं ब्रह्मात्मकं कर्मणि समाधिस्तत्त्वानुसंधानं यस्य स ब्रह्मकर्मसमाधिस्तेन ब्रह्मैव गन्तव्यं प्राप्यं फलं नतु स्वर्गादिनश्वरफलमित्यर्थः ॥ २४ ॥**

म० टी०—ननु क्रियमाणं कर्म फलमजनयित्वैव कुतो नश्यति ब्रह्मबोधे तत्कारणोच्छेदादित्याह—ब्रह्मर्पणमिति । अनेककारकसाध्या हि यज्ञादिक्रिया भवति। देवतोद्देशेन हि द्रव्यत्यागो यागः। स एव त्यज्यमानद्रव्यस्याग्नौ प्रक्षेपाद्धोम इत्युच्यते। तत्रोद्देश्या देवता संप्रदानं, त्यज्यमानं द्रव्यं हविःशब्दवाच्यं साक्षाद्धात्वर्थकर्म, तत्फलं तु स्वर्गादि व्यवहितं भावनाकर्म । एवं धारकत्वेन हविषोऽग्नौ प्रक्षेपे साधकतमतया जुह्वादि करणं प्रकाशकतया मन्त्रादि करणमपि कारकज्ञापकभेदेन द्विविधम् । एवं त्यागोऽग्नौ प्रक्षेपश्च द्वे क्रिये। तत्राद्यायां यजमानः कर्ता। प्रक्षेपे तु यजमानपरिक्रीतोऽध्वर्युः। प्रक्षेपाधिकरणं चाग्निः। एवं देशकालादिकमप्यधिकरणं सर्व क्रियासाधारणं द्रष्टव्यम्। तदेवं सर्वेषां क्रियाकारकादिव्यवहाराणां ब्रह्माज्ञानकल्पितानां रज्ज्वज्ञानकल्पितानां सर्पधारादण्डादीनां रज्जुतत्त्वज्ञानेनेव ब्रह्मतत्त्वज्ञानेन बाधे बाधितानुवृत्त्या क्रियाकारकादिव्यवहाराभासो दृश्यमानोऽपि दग्धपटन्यायेन न फलाय कल्पत इत्यनेन श्लोकेन प्रतिपाद्यते। ब्रह्मदृष्टिरेव च सर्वयज्ञात्मिकेति स्तूयते । तथाहि अर्प्यते अनेनेति करणव्युत्पत्त्या अर्पणं जुह्वादि मन्त्रादि च । एवमर्प्यतेऽस्मा इति व्युत्पत्त्या अर्पणं देवता-

रूपं संप्रदानम् । एवमर्प्यते अस्मिन्निति व्युत्पत्त्याऽर्पणमधिकरणं देशकालादि । तत्सर्वं ब्रह्मणि कल्पितत्वाद्ब्रह्मैव रज्जुकल्पितभुजङ्गवदधिष्ठानव्यतिरेकेणासदित्यर्थः । एवं हविस्त्यागप्रक्षेपक्रिययोः साक्षात्कर्म कारकं तदपि ब्रह्मैव । एवं यत्र प्रक्षिप्यतेऽग्नौ सोऽपि ब्रह्मैव । ब्रह्माग्नाविति समस्तं पदम् । तथा येन कर्त्रा यजमानेनाध्वर्युणा च त्यज्यते प्रक्षिप्यते च तदुभयमपि कर्तृकारकं कर्तरि विहितया तृतीययानूद्य ब्रह्मेति विधीयते ब्रह्मणेति, एवं हुतमिति हवनं त्यागक्रिया प्रक्षेपक्रिया च तदपि ब्रह्मैव । तथा तेन हवनेन यद्गन्तव्यं स्वर्गादि व्यवहितं कर्म तदपि ब्रह्मैव । अत्रत्य एवकारः सर्वत्र संबध्यते । हुतमित्यत्रापि इत एव ब्रह्मेत्यनुषज्यते व्यवधानाभावात् साकाङ्क्षत्वाच "चित्पतिस्त्वापुनातु" इत्यादावच्छिद्रेणेत्यादिपरवाक्यशेषवत् । अनेन रूपेण कर्मणि समाधिः ब्रह्मज्ञानं यस्य स कर्मसमाधिस्तेन ब्रह्मविदा कर्मानुष्ठात्रापि ब्रह्म परमानन्दाद्वयं गन्तव्यमित्यनुषज्यते।साकाङ्क्षत्वादव्यवधानाच्च या ते अग्ने रजाशयेत्यादौ तनूर्वर्षिष्ठेत्यादिपूर्ववाक्यशेषवत् । अथवा अर्प्यतेऽस्मै फलायेति व्युत्पत्त्याऽर्पणपदेनैव स्वर्गादिफलमपि ग्राह्यम् । तथाच ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिनेत्युत्तरार्द्धं ज्ञानफलकथनार्थैवेति समञ्जसम् । अस्मिन्पक्षे ब्रह्मकर्मसमाधिनेत्येकं वा पदम् । पूर्वं ब्रह्मपदं हुतमित्यनेन संबध्यते चरमं गन्तव्यपदेनेति भिन्नं वा पदम् । एवं च नानुषङ्गद्वयक्लेश इति द्रष्टव्यम् । ब्रह्म गन्तव्यमित्यभेदेनैव तत्प्राप्तिरुपचारात् । अत एव न स्वर्गादि तुच्छफलं तेन गन्तव्यं विद्यया आविद्यककारकव्यवहारोच्छेदात् । तदुक्तं वार्तिककृद्भिः ' कारकव्यवहारे हि शुद्धं वस्तु न वीक्ष्यते । शुद्धे वस्तुनि सिद्धे च कारकव्यापृतिः कुतः' इति । अर्पणादिकारकस्वरूपानुपमर्देनैव तत्र नामादाविव ब्रह्मदृष्टिः क्षिप्यते सम्पन्मात्रेण फलविशेषायेति केषांचिद्व्याख्यानं भाष्यकृद्भिरेव निराकृतमुपक्रमादिविरोधाद्ब्रह्मविद्याप्रकरणे सम्पन्मात्रस्याप्रसक्तत्वादित्यादियुक्तिभिः ॥ २४ ॥

शं० टी०—प्रविलापनप्रकारमेवाह—**ब्रह्मार्पणमिति** । ब्रह्मार्पणं हविरर्प्यतेऽनेनेत्यर्पणं चमसस्रुक्स्रुवादिकं सर्वं ब्रह्मैवेति प्रत्यग्दृष्ट्या ब्रह्मवित्पश्यति । मूढदृष्ट्या यद्रजतं तदेव विवेकिदृष्ट्या शुक्तिर्यथा तथाऽज्ञदृष्ट्या यच्चमसादि यज्ञसाधनं तदेव ब्रह्मविद्दृष्ट्या ब्रह्मैव भवतीत्यर्थः । ब्रह्म हविर्यज्ञियं यद्धविश्चरुपुरोडाशादिकं होम्यद्रव्यं तत्सर्वं ब्रह्मैव पश्यति । ब्रह्मणा होमकर्त्रा कर्तापि ब्रह्मैवेति यजमानं स्वं ब्रह्मविद्ब्रह्मैव पश्यति । ब्रह्माग्नौ ब्रह्मैवाग्निस्तं होमाधिकरणं ब्रह्मैवेति पश्यति । तस्मिन् ब्रह्माग्नौ यद्धुतं हवनक्रिया तदपि ब्रह्मैव पश्यति । ब्रह्मकर्मसमाधिना सर्वस्य ब्रह्ममात्रत्वदर्शनं यत्तद्ब्रह्मकर्म तस्मिन् ब्रह्मकर्मणि समाधिश्चित्तस्य स्थापनं यस्य तेन ब्रह्मकर्मसमाधिना सर्वं ब्रह्मैव पश्यता ब्रह्मविदा यद्गन्तव्यमेवं दर्शनस्य फलत्वेन प्राप्तव्यमिदमेवाहमस्मीति तद्ब्रह्मैव भवति । इत्थं लोकहितार्थं प्रवृत्तस्याधिकारिकस्य ब्रह्मविदोऽपि ससाधनं सर्वं कर्म ब्रह्मवृत्त्या ब्रह्ममात्रत्वेन प्रविलापितत्वात्स्वयं निःसत्त्वेनाकर्मैव सद्बन्धाय न भवतीति सिद्धम् । एतेन चलनात्मिकायाः प्रवृत्तेर्निरोधस्य दुष्करत्वात्सर्वदा विदुषोऽपि प्रवर्तितव्यत्वे प्राप्ते विवेकिनो व्यर्थव्यावृत्त्यपेक्षया वैदिकी प्रवृत्तिर्भूषणाय मनोहर्षाय लोकहिताय चान्ततोऽप्यबन्धाय च भवत्यतस्तयैव दृष्ट्या सद्भिर्ब्रह्मविद्भिः प्रवर्तितव्यमिति सूचितं भवति ॥ २४ ॥

श्री० टी०—तदेवं परमेश्वराराधनलक्षणं कर्म ज्ञानहेतुत्वेन बन्धकत्वाभावादकर्मैव, आरूढावस्थायां त्वकर्त्रात्मज्ञानेन बाधितत्वात्स्वाभाविकमपि कर्माकर्मैवेति कर्मण्यकर्म यः पश्येदित्यनेनोक्तः कर्मप्रविलयः प्रपञ्चितः, इदानीं कर्मणि तदङ्गेषु च ब्रह्मैवानुस्यूतं पश्यतः कर्मप्रविलयमाह—**ब्रह्मार्पणमिति** । अर्प्यतेऽनेनेत्यर्पणं स्रुवादि तदपि ब्रह्मैव, अर्प्यमाणं हविरपि घृतादिकं ब्रह्मैवाग्निस्तास्मिन्ब्रह्मणा कर्त्रा च हुतं ब्रह्मैव होमः, अग्निश्च कर्ता च क्रिया च ब्रह्मैवेत्यर्थः । एवं ब्रह्मण्येव कर्मात्मके समाधिश्चित्तैकाग्र्यं यस्य तेन ब्रह्मैव गन्तव्यं प्राप्यं नतु फलान्तरमित्यर्थः ॥ २४ ॥

स० टी०–नतु ज्ञाने समुत्पन्ने पूर्वं कर्म विनश्यतु ॥ क्रियमाणं कथं कर्माऽजनयित्वा फलं विदः ॥१॥ नश्यतीत्यत्र ब्रह्मैक्यबोधेनेत्याह माधवः ॥ बहुकारकसाध्यास्ति क्रिया यागादिकाऽखिला ॥ २ ॥ देवतोद्देशतो द्रव्यत्यागो याग उदाहृतः ॥ स एव त्यज्यमानस्य द्रव्यस्याग्नौ यथाविधि ॥ ३ ॥ प्रक्षेपाद्धोम इत्युक्तस्तत्रोद्देश्यास्ति देवता ॥ संप्रदानं हविःशब्दवाच्यं द्रव्यं यदस्ति तत् ॥ ४ ॥ साक्षाद्धात्वर्थकर्मास्ति तत्फलं तु स्वरादिकम् ॥ भावना कर्म यस्मात्तत्द्रव्यं विहितं भवेत् ॥ ५ ॥ एवं जुह्वादिकरणं प्रक्षेपेऽत्यन्तसाधकम् ॥ भासकत्वेन मन्त्रादिकरणं द्विविधं तथा ॥ ६ ॥ त्यागप्रक्षेपभेदेन क्रियापि द्विविधेरिता ॥ त्यागे यजमानः कर्ता प्रक्षेपोऽध्वर्युकर्तृकः ॥ ७ ॥ प्रक्षेपाधिकरणं स्यादग्निः स्वर्गादिकं फलम् ॥ तदेवमखिलं यज्ञक्रियाकारकवस्तु यत् ॥ ८ ॥ ब्रह्माज्ञानेन तत्रैवाध्यस्तं रज्जौ स्रगादिवत् ॥ ब्रह्मज्ञानेन बाधे तु भासमानमपि स्फुटम् ॥ ९ ॥ कल्पते नैव बन्धाय यथा स्वाप्नं प्रजागरे ॥ ब्रह्मदृष्टिरियं सर्वयज्ञरूपतयाधुना ॥ १० ॥ स्तूयते हरिणा सम्यग्दृष्टिदार्ढ्याय तद्विदाम् ॥ अर्पणं चार्प्यतेऽनेन जुह्वादि करणं हि यत् ॥ ११ ॥ अर्प्यतेऽस्मा इति प्रोक्तं संप्रदानं च देवता ॥ अर्प्यतेऽस्मिंस्तु देशाद्याधारोऽधिकरणं तथा ॥ १२ ॥ ब्रह्मण्यारोपितत्वात्तत्सर्वं ब्रह्मैव नेतरत् ॥ कल्पितस्य पृथक्सत्ताधिष्ठानान्नास्ति सर्वथा ॥ १३ ॥ त्यागादिकक्रिया कर्म हविर्ब्रह्मैव वस्तु सत् ॥ यत्र प्रक्षिप्यतेऽग्नौ तत्सोऽपि ब्रह्मैव केवलम् ॥ १४ ॥ त्यज्यते क्षिप्यते येन स कर्ता ब्रह्म चिन्मयम् ॥ त्यागप्रक्षेपरूपा या क्रिया ब्रह्मैव तद्धुतम् ॥ १५ ॥ हुतेन तेन गन्तव्यं फलं ब्रह्म स्वरादि तत् ॥ कर्मण्यनेन रूपेण समाधिर्यस्य धीमतः ॥ १६ ॥ तेन ब्रह्मविदा ब्रह्म गन्तव्यं चित्सुखाद्वयम् ॥ १७ ॥ २४ ॥

भा० टी०–ननु 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इत्यादिवचनेभ्यः कर्मफलस्यावश्यंभावित्वकथनात्, कस्मात्पुनः कारणात्क्रियमाणं कर्म स्वकार्यारम्भं बन्धनमकुर्वत्समग्रं प्रविलीयत इत्याशङ्क्य सर्वक्रियाकारकफलजातं द्वैतं ब्रह्मैव ब्रह्मविद इति हेतोस्तस्य समग्रं कर्म विनश्यतीत्याह–**ब्रह्मार्पणमिति**। असमस्ते पदे । अर्प्यतेऽनेन हस्तादिना करणेनेत्यर्पणं करणं कारकं, अर्प्यतेऽस्मिन्नित्यर्पणमधिकरणं देशकालादि, अर्प्यतेऽस्मै इति संप्रदानं देवतारूपं, भाष्यस्योपलक्षणार्थतयाऽविरोधः, तद्ब्रह्मैवेति बाधायां सामानाधिकरण्यं, यश्चौरः स स्थाणुरितिवदेवमग्रेपि यद्धविर्बुद्ध्या गृह्यमाणं घृतादिकं प्रत्यागप्रक्षेपक्रिययोः साक्षात्कर्म कारकं तदपि ब्रह्मैव तत्त्वविदः, तथा । ब्रह्माग्नाविति समस्तं पदम् । एतेन ब्रह्मणीतिपदमध्याहर्तव्यमित्यपास्तम् । यस्मिन्हूयते सोऽग्निरधिकरणकारकमपि ब्रह्मैव, तथा येन यजमानेनाध्वर्युणा च त्यज्यते क्षिप्यते च तदुभयमपि कर्तृकारकं ब्रह्मैवेत्यर्थः । यत्तेन हुतं हवनक्रियाऽपि ब्रह्मैव । अत्रत्य एवकारः सर्वत्र संबध्यते । ब्रह्मपदं च काकाक्षिगोलकन्यायेनोभयत्र । ब्रह्मैव कर्म तत्र समाधिर्यस्य सः तेन गन्तव्यं फलमपि ब्रह्मैव । एवं लोकसंग्रहचिकीर्षुणाऽपि क्रियमाणं कर्म परमार्थतोऽकर्म, ब्रह्मबुद्ध्युपमर्दितत्वात् निवृत्तकर्मणोऽपि यतेः सम्यग्दर्शिनः सम्यग्दर्शनस्तुत्यर्थं ज्ञानस्य यज्ञत्वसंपादनं सुतरामुपपद्यते । यदर्पणादि यज्ञे प्रसिद्धं तदस्याध्यात्मं ब्रह्मैवाऽन्यथा सर्वस्य ब्रह्मत्वेऽर्पणादीनामेव विशेषतो ब्रह्मत्वाभिधानमनर्थकं स्यात्, यत्तु यद्ब्रह्म तदर्पणादीति ब्रह्मैव खल्वर्पणादिना पञ्चविधेन कारकात्मनाऽवस्थितं सत् तदेव कर्म करोति नात्रार्पणादिबुद्धिर्निवर्त्यते किंत्वर्पणादिषु प्रतिमादौ विष्णुबुद्धिरिव ब्रह्मबुद्धिराधीयत इति, तदसत् ज्ञानयज्ञस्तुत्यर्थत्वादस्य प्रकरणस्य, अत्र सम्यग्दर्शनं ज्ञानयज्ञशब्दप्रतिपादितम् । अनेकान् क्रियाविशेषान् यज्ञशब्दितानुपन्यस्य श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः इति ज्ञानं स्तौतीति भाष्ये विस्तरः । एतेन कर्मण्यकर्म यः पश्येदित्यारभ्यारुरुक्षुपरत्वेन दृश्यमानमपरेषां व्याख्यानमसङ्गतमिति ध्येयम्, यत्तु अथवाऽर्प्यतेऽस्मै फलायेति व्युत्पत्त्याऽर्पणपदेन स्वर्गादिफलमपि ग्राह्यम् । तथाच ब्रह्मैवेत्याद्युत्तरार्धं ज्ञानफलकथनायैवेति समञ्जसम् ।

अस्मिन्पक्षे ब्रह्मकर्मसमाधिनेत्येकं वा पदं पूर्वं ब्रह्मपदं हुतमित्यनेन संबध्यते चरमं गन्तव्यमित्यनेनेति भिन्नं वा पदम्, एवंच नानुषङ्गद्वयक्लेश इति तच्चिन्त्यं, श्रुतं गन्तव्यपदं विहाय क्लिष्टव्युत्पत्त्या तदानयनस्यान्याय्यत्वात्। ज्ञानप्रभावमुक्त्वा ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छतीति ज्ञानयज्ञफलस्य वक्ष्यमाणत्वात्। भाष्ये तु ब्रह्मकर्मसमाधिना ब्रह्मैव गन्तव्यमिति तेन गन्तव्यं फलमपि ब्रह्मैवेत्यस्यानुवादो ब्रह्मेत्यादिपदस्यान्वयप्रदर्शनार्थः, न तु ब्रह्मैव गन्तव्यमितिपदद्वयानुषङ्गेण ज्ञानफलप्रदर्शनम्। एतेन पूर्वमित्यादिप्रास्तं काकाक्षिगोलकन्यायस्य प्रदर्शितत्वादिति दिक् ॥ २४ ॥

प० टी०–अथोपक्रान्तप्रमेयमुपसंहरन्नाह–ब्रह्मार्पणमिति । अर्पणं चित्तस्य दानसंकल्पो यस्तद्ब्रह्मरूपत्वाद् ब्रह्मैव । तथा हविः समित्तिलाज्यादि वैराजब्रह्मणो व्यष्टिरूपत्वाद् ब्रह्मैव । अग्निरपि वैश्वानरापरपर्यायं ब्रह्मैव । तस्मिन् येन पुरुषेण हुतं सोऽपि ब्रह्मैव । इति ज्ञात्वा येन क्रियते तेन ब्रह्मैव गन्तव्यं प्राप्तव्यम् । किंभूतेन ब्रह्मकर्मसमाधिना । ब्रह्मार्पणं कर्म ब्रह्मकर्म तस्मिन् समाधिश्चित्तैकाग्र्यं यस्य तेन ॥ २४ ॥

रा० टी०–एवं तत्ते कर्म प्रवक्ष्यामीति प्रतिज्ञातं कर्मस्वरूपं संक्षेपविस्तराभ्यां प्रतिपाद्य गतसङ्गस्येत्यनेनोपसंहृत्याधुना ज्ञानावस्थितचेतस्त्वं स्पष्टयति–ब्रह्मेति । अर्प्यते समर्प्यतेऽनेनेत्यर्पणं दुर्वीपिठरादि । अर्पणहविरग्नीनां ब्रह्माभेद उच्यते, ब्रह्म च तदर्पणं चेत्यादिव्युत्पत्तेः । तथा समाधिना सह सहितं कर्म चाग्निहोत्रादि ब्रह्मेति कर्मसमाध्योरपि । तथा ब्रह्मणा हुतमित्यत्रापि प्रायपाठाद्ब्रह्मैव हुतमिति होमस्यापि ब्रह्माभेदः स तु अर्पणादिसत्ताप्रतीत्यादेर्ब्रह्माधीनत्वाभिप्रायेण । त्वदधीनं यतः सर्वमतः सर्वो मतो भवानित्यादेः । इति मां योऽभिजानातीति श्लोकान्ते शेषः । तेनैव ब्रह्म गन्तव्यमित्यन्वयः । एतेन ज्ञानावस्थितचेतःपदोक्तं परमेश्वरज्ञानमेवंरूपमिति स्पष्टीकृतं भवति । यद्वा ब्रह्मणा हुतमिति असामानाधिकरण्यनिर्देशप्रायपाठात् । ब्रह्मण्यर्पणं ब्रह्मणो हविः ब्रह्मणोऽग्नौ ब्रह्मणः कर्म ब्रह्मकर्म न केवलं कर्ममात्रं ब्रह्मणः किंतु समाधिना सहितं कर्म ब्रह्मण इत्यर्थः । अर्पणादिकं सर्वं तत्स्वामिकमिति यो जानाति तेन ब्रह्म गन्तव्यमिति योजना । एतेन प्राङ्मुक्तपदेनोक्तस्वातन्त्र्याभिमानत्यागः कर्माङ्गमुक्तः स कुत्र कार्यः–त्यक्तस्वातन्त्र्याभिमानं च वस्तु किमधीनं ज्ञेयं यज्ञायेत्युक्तयज्ञार्थत्वं च किमिति शङ्कात्रयं निरस्तम् । हविरादौ स्वातन्त्र्याभिमानत्यागब्रह्माधीनत्वयोः विष्णवर्पणमेव यज्ञार्थत्वमित्यस्य चात्र प्रतीतेरिति ॥ २४ ॥

**दैवमेवापरे यज्ञं योगिनः पर्युपासते ॥**
**ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति ॥ २५ ॥**

त० टी०–एवं साङ्गस्य यज्ञरूपकर्मणो ब्रह्मात्मकतानुसंधानेनानुष्ठातुर्ब्रह्मप्राप्तिरूपफलमुक्तमिदानीं तस्यैव श्रैष्ठ्यप्रदर्शनाय अधिकारिभेदेनापरान्बहुविधान्यज्ञानाह–दैवमित्याद्यष्टभिः । केवला इन्द्रादयो देवा इज्यन्ते पूज्यन्ते यस्मिन्स दैवस्तं यज्ञमपरे योगिनो ज्ञानहीनाः केवलकर्मनिष्ठाः पर्युपासते सम्यगनुतिष्ठन्ति । अपरे योगिनः किंचिज्ज्ञानविशिष्टकर्मनिष्ठा ब्रह्माग्नौ ब्रह्मरूपत्वेनाभिमतेऽग्नौ यज्ञं यज्ञद्रव्यं हविर्यज्ञेन यज्ञसाधनेन स्रुगादिना जुह्वति प्रक्षिपन्ति । अग्निमात्रे ब्रह्मबुद्धयस्ते, ननु कर्तृकर्मादिकारककलापेऽतस्तेषां पूर्वोक्ताद्ब्रह्मार्पणादिबुद्धिमतोऽवरत्वमिति भावः ॥ २५ ॥

म० टी०–अधुना सम्यग्दर्शनस्य यज्ञरूपत्वेन स्तावकतया ब्रह्मार्पणमन्त्रे स्थिते पुनरपि तस्य स्तुत्यर्थमितरान्यज्ञानुपन्यस्यति–दैवमेवेति । देवा इन्द्राग्न्यादय इज्यन्ते येन स दैवस्तमेव यज्ञं दर्शपूर्णमासज्योतिष्टोमादिरूपमपरे योगिनः कर्मिणः पर्युपासते सर्वदा कुर्वन्ति न ज्ञानयज्ञम् । एवं कर्मयज्ञमुक्त्वाऽन्तः–

करणशुद्धिद्वारेण तत्फलभूतं ज्ञानयज्ञमाह—**ब्रह्माग्नाविति**। ब्रह्माग्नौ सत्यज्ञानानन्तानन्दरूपं निरस्तसमस्तविशेषं ब्रह्म तत्पदार्थस्तस्मिन्नग्नौ यज्ञं प्रत्यगात्मानं त्वंपदार्थं यज्ञेनैव, यज्ञशब्द आत्मनामसु यास्केन पठितः। इत्थंभूतलक्षणे तृतीया। एवकारो भेदाभेदव्यावृत्त्यर्थः। त्वंपदार्थाभेदेनैव उपजुह्वति तत्स्वरूपतया पश्यन्तीत्यर्थः। अपरे पूर्वविलक्षणास्तत्त्वदर्शननिष्ठाः संन्यासिन इत्यर्थः। जीवब्रह्माभेददर्शनं यज्ञत्वेन संपाद्य तत्साधनयज्ञमध्ये पठ्यते श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञ इत्यादिना स्तोतुम्॥ २९॥

**शं० टी०**—पूर्वं ब्रह्मार्पणं ब्रह्महविरितिमन्त्रेण चमसादीनां ब्रह्ममात्रत्वदर्शनलक्षणं ज्ञानं यज्ञरूपत्वेन वर्णयित्वा तस्यैव ज्ञानयज्ञस्य साक्षान्मोक्षैकसाधनत्वेन दैवादियज्ञापेक्षया सर्वोत्तमत्वं प्रतिपादयितुं मोक्षस्य व्यवहितसाधनानां दैवादियज्ञानां मुमुक्षुभिः स्वाधिकारानुरूपेण चित्तशुद्ध्यर्थमनुष्ठेयत्वं सूचयितुं च दैवादियज्ञान्निरूपयति—**दैवमिति**। देवानिन्द्रादीनुद्दिश्य प्रवृत्तो यज्ञो दैवस्तं दैवमेव यज्ञं श्रौतं स्मार्तं चापरे मोक्षकामा योगिनः कर्मयोगिनो गृहिणश्चित्तशुद्ध्यर्थं पर्युपासतेऽनुतिष्ठन्तीति, दैव एव वैदिको यज्ञो गृहिणां कर्तव्य इति सूचयित्वा ब्रह्मविदां यतीनां स्वयमेव यज्ञः कर्तव्यो मुक्त्यर्थमित्युक्तमेव ज्ञानयज्ञं प्रकारान्तरेण वर्णयति—**ब्रह्माग्नाविति**। अपरे गृहिभ्यो भिन्ना यतयः श्रवणादिभिर्विज्ञातात्मतत्त्वाः स्वयं ब्रह्माग्नौ "सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दो ब्रह्म। तदेतद्ब्रह्मापूर्वमनपरम्" इत्यादिश्रुतिप्रसिद्धं निरस्ताशेषविशेषं सच्चिदानन्दघनं यत्परं ब्रह्म तदेवाग्निरविद्यातत्कार्यदावदाहकत्वात्सोपाधिकात्माहुतिप्रक्षेपस्याधिकरणत्वाच्च परं ब्रह्माग्निरित्युच्यते तस्मिन् ब्रह्माग्नौ यज्ञं पामरैरहं भोक्तेति विषयोपभोगैरिज्यत इति यज्ञ आत्मा सोपाधिकस्तं यज्ञं वस्तुतो निर्विशेषमप्यध्यासतो बुद्ध्याद्युपाधियुक्तमात्मानमाहुतिनिक्षेपणकाले यज्ञेनात्मना निर्विशेषस्वरूपेणैव ब्रह्मणि जुह्वति, अहं ब्रह्मास्मीत्यहमित्यहंपदार्थं सोपाधिकवत्प्रतीयमानं विवेकवृत्त्या निर्विशेषं भावयित्वा ब्रह्माभिन्नमनुभवन्तीत्यर्थः। यद्वा यज्ञमात्मानं सोपाधिकं यज्ञेन "यज्ञो वै विष्णुः" इतिश्रवणात्सोपाधिकेनेश्वरेण सहैव जुह्वति। सोपाधिकमीश्वरं सोपाधिकमात्मानं चोभौ तत्तदुपाधिमपोह्य चोभयोराधिष्ठानभूतेन तुरीयेण निर्विशेषेण ब्रह्मणाऽभिन्नौ पश्यन्ति, यथा तरङ्गबुद्बुदौ तन्नामरूपापोहेन तदाधारभूतसमुद्रेणाऽभिन्नौ पश्यन्ति तद्वदित्यर्थः॥ २९॥

**श्री० टी०**—एतदेव यज्ञत्वेन संपादितं सर्वत्र ब्रह्मदर्शनलक्षणं ज्ञानं सर्वयज्ञोपायप्राप्यत्वात्सर्वयज्ञेभ्यः श्रेष्ठमित्येवं स्तोतुमधिकारिभेदेन ज्ञानोपायभूतान्बहून्यज्ञानाह—**दैवमित्यष्टभिः**। देवा इन्द्रवरुणादय इज्यन्ते यस्मिन्, एवकारेणेन्द्रादिषु ब्रह्मबुद्धिराहित्यं दर्शितम्। तं दैवं यज्ञमपरे कर्मयोगिनः पर्युपासते श्रद्धयाऽनुतिष्ठन्ति। अपरे तु ज्ञानयोगिनः ब्रह्मरूपेऽग्नौ यज्ञेनैवोपायभूतेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञमुपजुह्वति यज्ञादिसर्वकर्माणि प्रविलापयन्तीत्यर्थः। सोऽयं ज्ञानयज्ञः॥ २५॥

**स० टी०**—एवं संपाद्य यज्ञत्वं सम्यग्दृष्टेरथाधुना॥ तत्स्तुत्यर्थं मखानन्यानुपन्यस्यति केशवः॥ १॥ देवा इन्द्रमुखा येनेज्यन्ते यज्ञः स दैवकः॥ तं कुर्वन्ति सदा यज्ञं योगिनः कर्मिणोऽपरे॥ २॥ सत्यं ज्ञानमनन्तं यन्निर्विशेषं निरञ्जनम्॥ तत्पदार्थः परं ब्रह्म तदेवाग्निर्हुताश्रयः॥ ३॥ तस्मिन्नग्नौ चिदात्मानं त्वंपदार्थं मुमुक्षवः॥ वस्तुतो ब्रह्मसन्तं तं यज्ञं बुद्ध्यादिसंयुतम्॥ ४॥ आहुतीरूपमध्यस्तं ब्रह्मत्वेनैव जुह्वति॥ सर्वोपाधिपरित्यागाद्ब्रह्मात्मैक्यमखण्डितम्॥ ५॥ पश्यन्ति ब्रह्मनिष्ठास्ते भेदं सम्यङ्निरस्य च॥ यज्ञत्वेनैव संपाद्य ब्रह्मात्माभेददर्शनम्॥ ६॥ तत्स्तोतुं पठ्यते मध्ये तत्साधनमखेषु वै॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञ इतीह सा॥ ७॥ संस्तुतिर्ज्ञानयज्ञस्य सम्यग्भगवतोच्यते॥ ८॥ २९॥

**भा० टी०**—सम्यग्दर्शनस्य यज्ञत्वं संपाद्य तत्स्तुत्यर्थमन्येऽपि यज्ञा उपक्षिप्यन्ते—**दैवमेवेत्यादिना**। देवा एवेज्यन्तेऽनेनाग्निष्टोमादिनाऽसौ दैवः यज्ञस्तमपरे कर्मयोगिनः पर्युपासते कुर्वन्ति। ब्रह्माग्नौ "सत्यं-

ज्ञानमनन्तं ब्रह्म " इत्यादिश्रुत्युक्तमसंसारिस्वरूपं ब्रह्म तदेव होमाधिकरणविवक्षयाऽग्निः तस्मिन्नपरे ब्रह्मविदः आत्मनामसु यज्ञशब्दस्य पाठात् यज्ञमात्मानं जीवमाहुतिरूपं यज्ञेन सत्यादिलक्षणेनोपजुह्वति, सोपाधिकस्यात्मनो निरुपाधिकेन परब्रह्मरूपेणैव यदवलोकनं स तस्मिन्होमस्तं कुर्वन्तीत्यर्थः । ब्रह्मरूपेऽग्नौ यज्ञेनैवोपायेन ब्रह्मार्पणमित्युक्तप्रकारेण यज्ञमुपजुह्वति यज्ञादिसर्वकर्म प्रविलापयतीत्यर्थ इति वा । अस्मिन्पक्षे यज्ञं यज्ञेनेत्यनयोः स्वारस्यं श्रोत्रादीनीत्यादिनोक्तयज्ञानुगुण्यं च चिन्त्यम् ॥ २९ ॥

प० टी०–अथ इज्यते यस्मिन्निति यज्ञ इति व्युत्पत्त्या यज्ञत्वेनोपपादितं ब्रह्मानुभवलक्षणं ज्ञानं तत्सर्वयज्ञेभ्यः श्रेष्ठमिति दर्शयितुं तथा तदधिकारिभेदाद्बहुधेति वक्तुं द्वादशयज्ञानाह दैवमित्यादितोऽष्टभिः— दैवमिति । अपरे योगिनः कर्मकुशला दैवं यज्ञं पर्युपासते देवसंबन्धी दैवो देवा इन्द्रसूर्यवरुणादय इज्यन्ते यस्मिन्निति दैवस्तं यज्ञं परितः सर्वत्र देवेषु ब्रह्मबुद्धिराहित्येनोपासत इत्यर्थः । अपरे ज्ञानयोगिनस्तु यज्ञेन ज्ञानयज्ञेन कृत्वा यज्ञं कर्मरूपं ब्रह्मरूपेऽग्नौजुह्वति प्रविलापयन्तीत्यर्थः ॥ २९ ॥

रा० टी०–पूर्वं भगवदधीनकर्तृत्वानुसंधानपूर्वं तत्प्रीत्युद्देशेन वर्णाश्रमविहितानुष्ठानं कर्मेति सामान्यतः कर्मस्वरूपमुक्तं तद्यज्ञादिभेदभिन्नमित्याह–दैवमिति । दैवं विष्णुं यज्ञं यथा भवति तथा परे केचन योगिनो यतयः पर्युपासते । यज्ञपदमत्रोपासनरूपक्रियाविशेषणम् । दैवमेवेत्येवकारोऽपि क्रिययैवान्वेति । भगवदुपासनमेव यज्ञतयानुतिष्ठन्ति केचिद्यतय इत्यर्थः । एतेनायज्ञस्येत्यादिना यज्ञादिहीनस्य नायं लोकोस्तीति वक्ष्यमाणतया यत्याश्रमविलोपप्रसङ्ग इति शङ्का निरस्ता । तेषामपि भगवदुपासनारूपयज्ञसत्त्वादिति । यद्वा दैवं यज्ञमिति सामानाधिकरण्यम् । यज्ञरूपं भगवन्तं योगिनः पर्युपासते यज्ञत्वेनोपासते । तेषां तथोपासनमेव यज्ञ इति भावः । भगवतः स्वानन्दरूपहविर्भोक्तृत्वात्स्वस्यैवाग्निरूपत्वाच्चेति ज्ञेयम् । ब्रह्माग्नौ ब्रह्माख्याग्नौ यज्ञेनाग्निहोत्रादियज्ञेन यज्ञं भगवन्तं प्रति जुह्वति । यद्वा ब्रह्माग्नौ यज्ञमग्निहोत्रादिकं यज्ञेनैव यज्ञनामकेन भगवता निमित्तेन जुह्वति समर्पयन्ति । सर्वं यज्ञनामकविष्ण्वधीनं ज्ञात्वा स्वस्य स्वातन्त्र्याभिमानत्यागेन कृतं कर्म विष्णौ समर्पयन्तीति यावत् । यज्ञेनैवेत्यग्रे सर्वत्रान्वेति ॥ २९ ॥

**श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति ॥**
**शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति ॥ २६ ॥**

त० टी०-तेभ्यः श्रेष्ठानाह–श्रोत्रादीनीति । अन्ये निवृत्तिधर्मनिष्ठा ब्रह्मज्ञानाग्निकामा ज्ञानपरिपन्थिभूतानि श्रोत्रादीनीन्द्रियाणि तत्तत्संयमरूपेष्वग्निषु जुह्वति, इन्द्रियाणां विषयेभ्यो नियमनपरास्तिष्ठन्तीत्यर्थः । अन्ये प्रवृत्तिधर्मनिष्ठाः संततिवृद्धिकामा विषयभोगसमये हविष्ट्वेन भावितान् शब्दादीन्विषयानग्नित्वेन भावितेषु इन्द्रियेषु जुह्वति, यज्ञरूपकेण विषयानुभवे वर्तन्त इत्यर्थः ॥ २६ ॥

म० टी०–तदनेन मुख्यगौणौ द्वौ यज्ञभेदौ दर्शितौ । यावद्धि किंचिद्वैदिकं श्रेयःसाधनं तत्सर्वं यज्ञत्वेन संपाद्यते । तत्र श्रोत्रादीनि ज्ञानेन्द्रियाणि तानि शब्दादिविषयेभ्यः प्रत्याहृत्य अन्ये प्रत्याहारपराः संयमाग्निषु धारणा ध्यानं समाधिरिति त्रयमेकविषयं संयमशब्देनोच्यते । तथा चाह भगवान् पतञ्जलिः 'त्रयमेकत्र संयमः' इति तत्र हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनं धारणा । एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोऽन्तरान्याकारप्रत्ययव्यवहितो ध्यानं सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः। स तु चित्तभूमिभेदेन द्विविधः संप्रज्ञातोऽसंप्रज्ञातश्च । चित्तस्य हि पञ्च भूमयो भवन्ति क्षिप्तं मूढं विक्षिप्तमेकाग्रं निरुद्धमिति । तत्र रागद्वेषादि शाद्विषयेष्वभिनिविष्टं क्षिप्तं तन्द्रादिग्रस्तं मूढं सर्वदा

विषयासक्तमपि कदाचिद्ध्याननिष्ठं क्षिप्ताद्विशिष्टतया विक्षिप्तम्। तत्र क्षिप्तमूढयोः समाधिशङ्कैव नास्ति। विक्षिप्ते तु चेतसि कादाचित्कः समाधिर्विक्षेपप्राधान्याद्योगपक्षे न वर्तते किंतु तीव्रपवनविक्षिप्तप्रदीपवत्स्वयमेव नश्यति। एकाग्रं तु एकविषयकधारावाहिकवृत्तिसमर्थं सत्त्वोद्रेकेण तमोगुणकृततन्द्रादिरूपलयाभावादात्माकारवृत्तिः। सा च रजोगुणकृतचाञ्चल्यरूपविक्षेपाभावादेकविषयैवेति शुद्धे सत्त्वे भवति चित्तमेकाग्रम्। अस्यां भूमौ संप्रज्ञातः समाधिः। तत्र ध्येयाकारा वृत्तिरपि भासते तस्या अपि निरोधे निरुद्धं चित्तमसंप्रज्ञातसमाधिभूमिः। तदुक्तम् 'तस्या अपि निरोधे सर्ववृत्तिनिरोधान्निर्बीजः समाधिः' इति अयमेव सर्वतो विरक्तस्य समाधिफलमपि सुखमनपेक्षमाणस्य योगिनो दृढभूमिः सन् धर्ममेघ इत्युच्यते। तदुक्तम् 'प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' 'ततः क्लेशकर्मनिवृत्तिः' इति। अनेन रूपेण संयमानां भेदादग्निष्विति बहुवचनम्। तेषु इन्द्रियाणि जुह्वति धारणाध्यानसमाधिसिद्ध्यर्थं सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहरन्तीत्यर्थः। तदुक्तम् 'स्वस्वविषयासंप्रयोगे चित्तस्वरूपानुकार इवेन्द्रियाणां प्रत्याहारः' इति विषयेभ्यो निगृहीतानीन्द्रियाणि चित्तरूपाण्येव भवन्ति। ततश्च विक्षेपाभावाच्चित्तं धारणादिकं निर्वहतीत्यर्थः। तदनेन प्रत्याहारधारणाध्यानसमाधिरूपं योगाङ्गचतुष्टयमुक्तम्। तदेवं समाध्यवस्थायां सर्वेन्द्रियवृत्तिनिरोधो यज्ञत्वेनोक्तः। इदानीं व्युत्थानावस्थायां रागद्वेषराहित्येन विषयभोगो यः सोऽप्यपरो यज्ञ इत्याह—शब्दादीन्विषयानन्य इन्द्रियाग्निषु जुह्वति अन्ये व्युत्थितावस्थाः श्रोत्रादिभिरविरुद्धविषयग्रहणं स्पृहाशून्यत्वेनान्यसाधारणं कुर्वन्ति स एव तेषां होमः॥ २६॥

**शं० टी०**—एवं ब्रह्मविदां कर्तव्यं ज्ञानयज्ञं विधायाथाऽब्रह्मविदां कर्तव्यानि यज्ञान्तराण्याह—**श्रोत्रादीनीति**। उक्तेभ्योऽन्ये त्वब्रह्मविदो मुमुक्षवो नैष्ठिकब्रह्मचार्यादय इन्द्रियाणि श्रोत्रादीनि वागादीनि च संयमाग्निषु संयमो नाम तत्तदिन्द्रियस्य तत्तद्विषयाद्विनिवर्त्य तत्तत्स्थाने निग्रहः। इन्द्रियाणां बहुत्वात्संयमा बहवस्त एवाग्नयस्तेषु संयमाग्निषु चक्षुरादीन्द्रियाहुतीर्जुह्वति इन्द्रियनिग्रहरूपं यज्ञं कुर्वन्तीत्यर्थः। एतदन्ये गृहिणो मुमुक्षवः स्वधर्मनिष्ठाः शब्दादिविषयानानिषिद्धान् योग्यकाल एवेन्द्रियाग्निषु तन्निक्षेपणाधिकरणत्वादिन्द्रियाण्येवाग्नयस्तेषु जुह्वति विषयानुभवनियम एव तेषां यज्ञ इत्यर्थः॥ २६॥

**श्री० टी०**—**श्रोत्रादीनीति**। अन्ये नैष्ठिकब्रह्मचारिणस्तत्तदिन्द्रियसंयमरूपेष्वग्निषु श्रोत्रादीनि जुह्वति प्रविलापयन्ति, इन्द्रियाणि निरुद्ध्य संयमप्रधानास्तिष्ठन्तीत्यर्थः। इन्द्रियाण्येवाग्नयस्तेषु शब्दादीनन्ये गृहस्था जुह्वति विषयान् भोगसमयेप्यनासक्ताः सन्तोऽग्नित्वेन भावितेष्विन्द्रियेषु हविष्ट्वेन भावितान् शब्दादीन्प्रक्षिपन्तीत्यर्थः॥ २६॥

**स० टी०**—श्रेयसः साधनं यावत्किंचिदस्तीह वैदिकम्॥ यज्ञत्वेनैव तत्सर्वमत्र संपाद्यतेऽधुना॥ १॥ प्रत्याहारपराः केचिच्छ्रोत्रादीनीन्द्रियाणि ते॥ विषयेभ्यः समाकृष्य संयमाग्निषु जुह्वति॥ २॥ धारणाध्यानसिद्ध्यर्थं समस्तानीन्द्रियाण्यपि॥ धीराः समस्तभोगेभ्यः प्रत्याहृत्यात्मनि स्थिताः॥ ३॥ अपरे व्युत्थितावस्थाः श्रोत्रादिभिरपीन्द्रियैः॥ अविरुद्धार्थस्वीकारं होमं मन्यन्त एव तम्॥ ४॥ २६॥

**भा० टी०**—**श्रोत्रेति**। श्रोत्रादीनि ज्ञानेन्द्रियाण्यन्ये योगिनः प्रत्याहारपराः प्रतीन्द्रियं संयम्य प्रत्याहारस्य सत्त्वात् बहुवचनम्, संयमा एवाग्नयस्तेषु जुह्वतीन्द्रियसंयमनमेव कुर्वन्तीत्यर्थः। यत्तु धारणाध्यानसमाधित्रितयमेकविषयं संयमशब्देनोच्यते तत्र हृत्पुण्डरीकादौ मनसश्चिरकालस्थापनं धारणा, एवमेकत्र धृतस्य चित्तस्य भगवदाकारवृत्तिप्रवाहोऽन्तरान्तराऽन्याकारप्रत्ययव्यवहितो ध्यानं, सर्वथा विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययप्रवाहः समाधिः। अनेन रूपेण संयमानां भेदाद् अग्निष्विति बहुवचनम्। तेष्विन्द्रियाणि जुह्वति धारणाध्यानसमाधिसिद्ध्यर्थं सर्वाणीन्द्रियाणि स्वस्वविषयेभ्यः प्रत्याहरन्तीत्यर्थ इत्यादि तच्चिन्त्यं, प्रत्याहार-

रूपेष्वग्निषु श्रोत्रादीन्द्रियाणा होमस्यात्र विवक्षितत्वादन्यथा होमाधिकरणस्यालाभात् । ध्यानादीनां तु मनोहोमाधिकरणत्वादिति दिक् । एतेन तदनेन प्रत्याहारध्यानधारणासमाधिरूपं योगाङ्गचतुष्टयमुक्तमिति प्रत्युक्तं प्रत्याहारस्यैवात्राक्षरस्वारस्यात्प्रतीतेः, अत एव तत्र कंचिद्बाह्यमाभ्यन्तरं वा विशेषमुपादाय तत्र चेतसो नियमनं क्रियते ते च संयमा अनेकविषयत्वादनेके पृथक्फलाश्च । तथाच योगसूत्रकृता प्रोक्तम् "भुवनज्ञानं सूर्ये संयमात् चन्द्रे ताराव्यूहज्ञानं कण्ठकूपे क्षुत्पिपासानिवृत्तिः" इत्यादीति परास्तम् । अन्ये तत्त्वविदः प्रारब्धवशादुपलब्धान् शब्दादीन् शास्त्राविरुद्धान् विषयान् इन्द्रियाग्निषु जुह्वति, श्रोत्रादिभिरविरुद्धविषयग्रहणं होमं मन्यन्त इत्यर्थः । यत्तु तथान्ये विषयेभ्यः प्रत्याहृतकरणाः धारणाध्यानसमाध्यात्मकं मनसः संयममेकत्र मूलाधाराद्यन्यतमचक्रे कर्तुमशक्ताः समनस्केन्द्रियेषु विषयवियोगाद्दग्धेन्धनानलवत्स्वयं विलीनेषु येषां समाधिबुद्धिस्तैः समनस्केन्द्रियेषु विषया एवोपसंहृताः, इत्याद्यन्ये वर्णयन्ति तदसत् । इन्द्रियप्रत्याहाररूपस्य यज्ञस्य श्रोत्रादीनीत्यादिनोक्तत्वेन यज्ञान्तरत्वाभावप्रसङ्गात् । उक्तरीत्या विषयासन्निकर्षाग्नौ इन्द्रियाणि जुह्वतीति वक्तव्यत्वापत्तेश्चेति दिक् ॥ २६ ॥

प० टी०—स्पष्टार्थम् ॥ २६ ॥

रा० टी०—श्रोत्रेति । अन्ये योगिनः श्रोत्रादीनि ज्ञानेन्द्रियाणि संयमाग्निषु जुह्वति भगवत्पूजात्वेनेन्द्रियनियमनं कुर्वन्ति । प्रत्याहारादिना सर्वं यज्ञाख्यहर्यधीनं न कचिदपि स्वातन्त्र्यमिति ज्ञात्वेत्यर्थः । एतदपि ब्रह्मार्पणरूपमेव विवक्षितम् । एवमग्रेपि । अत एव वक्ष्यति एवं बहुविधा यज्ञा इति ज्ञेयम् । अन्ये योगिनः शब्दादीन् शब्दस्पर्शरूपरसगन्धान्विषयान् श्रोत्रादीन्द्रियाख्याग्निषु जुह्वति, यज्ञेनैव यज्ञाधीनं ज्ञात्वा स्वस्वातन्त्र्याभिमानत्यागेन भगवत्पूजात्वेन विषयान्भुञ्जत इत्यर्थः ॥ २६ ॥

## सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे ॥
## आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते ॥ २७ ॥

त० टी०—तेभ्योऽपि श्रेष्ठाधिकारिण आह—**सर्वाणीति** । अपरे पूर्वमेव नियमितज्ञानेन्द्रियत्वाद्बाह्यविषयासक्तिशून्या योगिनः सर्वाणीन्द्रियकर्माणि वाक्पाणिपादपायूपस्थानां कर्मेन्द्रियाणां वचनादानगमनोत्सर्गानन्दाख्यानि कर्माणि प्राणकर्माणि च पञ्चप्राणानां कर्माणि तत्र प्राणस्योर्ध्वगमनम्, अपानस्याधोगमनं, व्यानस्य विष्वक्शरीरे गमनाकुञ्चनप्रसारणानि, उदानस्य पीताशितान्नाद्युद्गारकरणं, समानस्याशितपीतान्नादेः सर्वत्र शरीरे समीकरणम् । एतानि आत्मसंयमयोगाग्नौ आत्मनो मनसः संयमो वृत्त्यन्तरवैमुख्यपूर्वकमात्मप्रवणीकरणं ध्यानयोग्यतासंपादनं स योग एव सर्वाशुभदाहकत्वादग्निस्तस्मिन् ज्ञानदीपिते ज्ञानेन प्रज्वलिते जुह्वति, ध्येयं सम्यङ् निश्चित्य तस्मिन्मनो निश्चलीकर्तुमिन्द्रियप्राणकर्माणि त्याजयन्तीत्यर्थः ॥ २७ ॥

म० टी०—तदेवं पातञ्जलमतानुसारेण लयपूर्वकसमाधिं ततो व्युत्थानं च यज्ञद्वयमुक्त्वा ब्रह्मवादिमतानुसारेण बाधपूर्वकं समाधिं कारणोच्छेदेन व्युत्थानशून्यं सर्वफलभूतं यज्ञान्तरमाह—**सर्वाणीति** । द्विविधो हि समाधिर्भवति लयपूर्वको बाधपूर्वकश्च । तत्र 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति न्यायेन कारणव्यतिरेकेण कार्यस्यासत्त्वात् । पञ्चीकृतपञ्चभूतकार्यं व्यष्टिरूपं समष्टिरूपविराट्कार्यत्वात्तद्व्यतिरेकेण नास्ति । तथा समष्टिरूपमपि पञ्चीकृतपञ्चभूतात्मकं कार्यमपञ्चीकृतपञ्चमहाभूतकार्यत्वात्तद्व्यतिरेकेण नास्ति । तत्रापि पृथिवी शब्दस्पर्शरूपरसगन्धाख्यपञ्चगुणा गन्धेतरचतुर्गुणापकार्यत्वात्तद्व्यतिरेकेण नास्ति । ताश्चतुर्गुणाः आपो गन्धरसेतरत्रिगुणात्मकतेजःकार्यत्वात्तद्व्यतिरेकेण न सन्ति । तदपि त्रिगुणात्मकं तेजो गन्धरस-

रूपेतरद्विगुणवायुकार्यत्वात्तद्व्यतिरेकेण नास्ति । सोऽपि द्विगुणात्मको वायुः शब्दमात्रगुणाकाशकार्यत्वात्तद्व्यतिरेकेण नास्ति । स च शब्दगुण आकाशो बहु स्यामिति परमेश्वरसंकल्पात्मकाहंकारकार्यत्वात्तद्व्यतिरेकेण नास्ति । सोपि संकल्पात्मकोऽहंकारो मायेक्षणरूपमहत्तत्त्वकार्यत्वात्तद्व्यतिरेकेण नास्ति । तदपि ईक्षणरूपं महत्तत्त्वं मायापरिणामत्वात्तद्व्यतिरेकेण नास्ति । तदपि मायाख्यं कारणं जडत्वेन चैतन्येऽध्यस्तत्वात्तद्व्यतिरेकेण नास्तीत्यनुसंधानेन विद्यमानेपि कार्यकारणात्मके प्रपञ्चे चैतन्यमात्रगोचरो यः समाधिः स लयपूर्वक उच्यते । तत्र तत्त्वमस्यादिवेदान्तमहावाक्यार्थज्ञानाभावेनाविद्यातत्कार्यस्याक्षीणत्वात् । एवं चिन्तनेऽपि कारणसत्त्वेन पुनः कृत्स्नप्रपञ्चोत्थानादयं सुषुप्तिवत्सबीजः समाधिर्न मुख्यः । मुख्यस्तु तत्त्वमस्यादिमहावाक्यार्थसाक्षात्कारेण विद्याया निवृत्तौ सर्गक्रमेण तत्कार्यनिवृत्तेरनाद्यविद्यायाश्च पुनरुत्थानाभावेन तत्कार्यस्यापि पुनरुत्थानाभावान्निर्बीजो बाधपूर्वकः समाधिः । स एवानेन श्लोकेन प्रदर्श्यते । तथाहि सर्वाणि निखिलानि स्थूलरूपाणि संस्काररूपाणि च इन्द्रियकर्माणि इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां पञ्चानां वाक्पाणिपादपायूपस्थाख्यानां च पञ्चानां बाह्यानामिन्द्रियाणामान्तरयोश्च मनोबुद्ध्योः कर्माणि शब्दश्रवणस्पर्शग्रहणरूपदर्शनरसग्रहणगन्धग्रहणानि वचनादानविहरणोत्सर्गानन्दाख्यानि च संकल्पाध्यवसायौ च । एवं प्राणकर्माणि च प्राणानां प्राणापानव्यानोदानसमानाख्यानां पञ्चानां कर्माणि बहिर्नयनमधोनयनमाकुञ्चनप्रसारणादि अशितपीतसमनयनमूर्ध्वनयनमित्यादीनि । अनेन पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, पञ्च प्राणा, मनो, बुद्धिश्चेति सप्तदशात्मकं लिङ्गमुक्तम् । तच्च सूक्ष्मभूतसमष्टिरूपं हिरण्यगर्भाख्यमिह विवक्षितमिति वदितुं सर्वाणीति विशेषणम् । आत्मसंयमयोगाग्नौ आत्मविषयकः संयमो धारणाध्यानसंप्रज्ञातसमाधिरूपस्तत्परिपाके सति योगो निरोधसमाधिः । यं पतञ्जलिः सूत्रयामास 'व्युत्थाननिरोधसंस्कारयोरभिभवप्रादुर्भावौ निरोधक्षणचित्तान्वयो निरोधपरिणामः ' इति । व्युत्थानं क्षिप्तमूढविक्षिप्ताख्यं भूमित्रयं तत्संस्काराः समाधिविरोधिनस्ते योगिना प्रयत्नेन प्रतिदिनं प्रतिक्षणं चाभिभूयन्ते । तद्विरोधिनश्च निरोधसंस्काराः प्रादुर्भवन्ति । ततश्च निरोधमात्रक्षणेन चित्तान्वयो निरोधपरिणाम इति । तस्य फलमाह ' ततः प्रशान्तवाहिता संस्कारात् ' इति तमोरजसोः क्षयाल्लयविक्षेपशून्यत्वेन शुद्धसत्त्वस्वरूपं चित्तं प्रशान्तमित्युच्यते । पूर्वपूर्वप्रशमसंस्कारपाटवेन तदाधिक्यं प्रशान्तवाहितेति । तत्कारणं च सूत्रयामास ' विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः ' इति । विरामो वृत्त्युपरमस्तस्य प्रत्ययः कारणं वृत्त्युपरमार्थः पुरुषप्रयत्नस्तस्याभ्यासः पौनःपुन्येन संपादनं तत्पूर्वकस्तज्जन्योऽन्यः संप्रज्ञाताद्विलक्षणोऽसंप्रज्ञात इत्यर्थः । एतादृशो य आत्मसंयमयोगः स एवाग्निस्तस्मिन् ज्ञानदीपिते ज्ञानं वेदान्तवाक्यजन्यो ब्रह्मात्मैक्यसाक्षात्कारस्तेनाविद्यातत्कार्यनाशद्वारा दीपिते अत्यन्तोज्ज्वलिते बाधपूर्वके समाधौ समष्टिलिङ्गशरीरसपरे जुह्वति प्रविलापयन्तीत्यर्थः । अत्र च सर्वाणीति आत्मेति ज्ञानदीपित इति विशेषणैरग्नावित्येकवचनेन च पूर्ववैलक्षण्यं सूचितमिति न पौनरुक्त्यम् ॥ २७ ॥

शं० टी०—किंच—सर्वाणीति । उक्तेभ्योऽपरे केचन यतयो ध्याननिष्ठा इन्द्रियकर्माणि ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च कर्माणि श्रवणदर्शनादीनि वचनादानादीनि च सर्वाणि प्राणकर्माणि च प्राणस्यापानव्यानादिभेदभिन्नस्य कर्माण्युच्छ्वासनिश्वासनिमेषोन्मेषजृम्भणोद्गारादीनि कर्माणि सर्वाण्यपि ज्ञानदीपिते ज्ञानेनात्मविषयकेण दीपिते सम्यगवगमिते आत्मसंयमयोगाग्नौ स्वस्वरूपे आत्मनि संयमयोगो मनोनिरोधः समाधिः स एवाग्निस्तस्मिन् प्राणकर्माणीन्द्रियकर्माणि च जुह्वति प्राणेन्द्रियव्यापारं निरुद्ध्य सदात्मानमेवानुभवन्तीत्यर्थः ॥ २७ ॥

श्री० टी०—सर्वाणीति । अपरे ध्याननिष्ठाः बुद्धीन्द्रियाणां श्रोत्रादीनां कर्माणि श्रवणदर्शनादीनि कर्मे-

न्द्रियाणां वाक्पाण्यादीनां कर्माणि वचनोपादानादीनि च । प्राणानां दशानां कर्माणि प्राणस्य बहिर्गमनम्, अपानस्याधो नयनम्,व्यानस्य व्यानयनाकुञ्चनप्रसारणादि,समानस्याशितपीतादीनां सम्यगुन्नयनम्, उदानस्योर्ध्वनयनम् । 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुतकृज्ज्ञेयो देवदत्तो विजृम्भणे ॥ न जहाति मृतं चापि सर्वव्यापी धनञ्जयः' इत्येवंरूपाणि जुह्वति क आत्मनि संयमो ध्यानैकाग्र्यं स एव योगः स एवाग्निस्तस्मिन् ज्ञानेन ध्येयविषयेण दीपिते प्रज्वलिते ध्येयं सम्यग् ज्ञात्वा तस्मिन्मनः संयम्य तानि सर्वाणि कर्माण्युपरमयतीत्यर्थः ॥ २७ ॥

**स० टी०**–पातञ्जलमतेनैवमुक्त्वा यज्ञद्वयं हरिः ॥ ब्रह्मवादिमतेनाह यज्ञान्तरमकामिनाम् ॥ १ ॥ सर्वाणि स्थूलरूपाणि सूक्ष्मरूपाणि सर्वशः ॥ शब्दाद्यादानरूपाणीन्द्रियकर्माणि योगिनः ॥ २ ॥ तथैव प्राणकर्माण्याकुञ्चनप्रभृतीनि च ॥ अर्थाद्व्यष्टिसमष्ट्यात्मलिङ्गं सप्तदशाङ्गकम् ॥ ३ ॥ आत्मसंयमयोगाग्नौ समाधौ निर्विकल्पके ॥ प्रक्षिपन्त्यात्मविज्ञानदीपितेऽत्यन्ततेजसि ॥ ४ ॥ बाधित्वा ज्ञानमखिलं सम्यग्ज्ञानेन योगिनः ॥ विलापयन्ति ते लिङ्गं समाधौ सर्वतो ध्रुवम् ॥ ५ ॥ २७ ॥

**भा० टी०**–किंच–सर्वाणीति । सर्वाणीन्द्रियकर्माणि इन्द्रियाणां श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानां ज्ञानेन्द्रियाणां वाक्पाणिपादपायूपस्थाभिधानां कर्मेन्द्रियाणां कर्माणि शब्दस्पर्शरूपरसगन्धग्रहणात्मकानि वचनादानविहरणोत्सर्गानन्दाख्यानि च तथा प्राणानां प्राणापानव्यानोदानसमानाभिधानां कर्माणि बहिर्नयनमधोनयनमाकुञ्चनप्रसारणादि अशितपीतसमनयनमूर्ध्वनयनमित्यादीनि 'उद्गारे नाग आख्यातः कूर्म उन्मीलने स्मृतः । कृकरः क्षुत्करो ज्ञेयो देवदत्तो विजृम्भणे । न जहाति मृतं चापि सर्वव्यापी धनञ्जयः' इति उक्तानि नागादिपञ्चप्राणकर्माणि चापरे आत्मनि संयमः प्रविलापनं स एव योगाग्निस्तस्मिन् तैलेन दीप इव ज्ञानेन विवेकेन सर्वोपाधिनिरासेनोज्ज्वलतामापादिते जुह्वति प्रविलापयन्तीत्यर्थः । अत्र भाष्यस्य समानरूपतया न तेन व्याख्यान्तराणां विरोध इति ध्येयम् ॥ २७ ॥

**प० टी०**–सर्वाणीति । अपरे ध्याननिष्ठाः श्रोत्रादिज्ञानेन्द्रियाणां वागादीनां कर्माणि वचनादीनि तथा मुख्यप्राणानां पञ्चानां कर्माणि बहिर्निर्गमनादीनि तथोपप्राणानां नागादीनां पञ्चानामुद्गारादीनीत्येवंरूपाणि कर्माण्यात्मनो मनसः संयमरूपो योगो ध्यानैकाग्र्यं स एवाग्निस्तस्मिन् ज्ञानेन स्वानुभवरूपेण दीपिते प्रज्वलिते ध्येयं सम्यग् ज्ञात्वा, तत्र सर्वाणि कर्माण्युपरमन्तीत्यर्थः ॥ २७ ॥

**रा० टी०**–सर्वाणीति । अपरे योगिनः सर्वाणीन्द्रियकर्माणि वाक्पाणिपादपायूपस्थरूपकर्मेन्द्रियव्यापारान्, तथा प्राणकर्माणि प्राणापानादिव्यापारांश्च आत्मसंयमयोगाग्नौ जुह्वति, आत्मनो मनसो यः संयमः स एव योग उपायः स एवाग्निः ज्ञानदीपिते तत्र जुह्वति, यज्ञेनैव भगवदधीनताज्ञानपूर्वं स्वातन्त्र्याभिमानत्यागेन मनो निगृह्य कर्मेन्द्रियादिव्यापारान् भगवत्पूजात्वेन नियच्छन्तीत्यर्थः ॥ २७ ॥

## द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथाऽपरे ॥
## स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः ॥ २८ ॥

**त० टी०**–किंच–द्रव्ययज्ञा इति । केचिद्द्रव्ययज्ञाः स्वधर्मतो द्रव्यार्जनं कृत्वा पात्रे प्रतिपादनदेवार्चनहोमवापीकूपतडागादिषु प्रयुञ्जन्ति ते द्रव्ययज्ञाः, केचित्तपोयज्ञाः कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषां ते तपस्विनः । तथाऽपरे योगयज्ञाः यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधय इत्यष्टाङ्गो योग एव यज्ञस्तन्निष्ठाः । स्वाध्यायो वेदाध्ययनमेव यज्ञो येषां ते स्वाध्याययज्ञाः, वेदवेदान्तार्थाभ्यासनिष्ठा ज्ञानयज्ञाः । यतयः यत्नशीलाः, संशितव्रताः सम्यक् शितानि तीक्ष्णीकृतानि दृढानि व्रतानि येषां ते व्रतयज्ञाः ॥ २८ ॥

**म० टी०**–एवं त्रिभिः श्लोकैः पञ्चयज्ञानुक्त्वाऽधुनैकेन श्लोकेन षडयज्ञानाह–द्रव्ययज्ञा इति। द्रव्यत्याग एव यथाशास्त्रं यज्ञो येषां ते द्रव्ययज्ञाः पूर्तदत्ताख्यस्मार्तकर्मपराः। तथाच स्मृतिः 'वापीकूपतडागादि देवतायतनानि च। अन्नप्रदानमारामः पूर्तमित्यभिधीयते॥ शरणागतसंत्राणं भूतानां चाप्यहिंसनम्। बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते' इति। इष्टाख्यं श्रौतं कर्म तु दैवमेवापरे यज्ञमित्यत्रोक्तम्। अन्तर्वेदिदानमपि तत्रैवान्तर्भूतम्। तथा कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषां ते तपोयज्ञास्तपस्विनः। तथा योगश्चित्तवृत्तिनिरोधोऽष्टाङ्गो यज्ञो येषां ते योगयज्ञाः यमनियमासनादियोगाङ्गानुष्ठानपराः। यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधयो हि योगस्याष्टावङ्गानि। तत्र प्रत्याहारः श्रोत्रादीनीन्द्रियाण्यन्य इत्यत्रोक्तः। धारणाध्यानसमाधय आत्मसंयमयोगाग्नावित्यत्रोक्ताः। प्राणायामोऽपाने जुह्वति प्राणमित्यनन्तरश्लोके वक्ष्यते। यमनियमासनान्यत्रोच्यन्ते। अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः पञ्च। शौचसन्तोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः पञ्च। स्थिरसुखमासनं पद्मकस्वस्तिकाद्यनेकविधम्। अशास्त्रीयः प्राणिवधो हिंसा। सा च कृतकारितानुमोदितभेदेन त्रिविधा। एवमयथार्थभाषणमवध्यहिंसानुबन्धि यथार्थभाषणं चानृतम्। स्तेयमशास्त्रीयमार्गेण परद्रव्यस्वीकरणम्, अशास्त्रीयः स्त्रीपुंसव्यतिकरो मैथुनम्, शास्त्रनिषिद्धमार्गेण देहयात्रानिर्वाहकाधिकभोगसाधनस्वीकारः परिग्रहः, एतन्निवृत्तिलक्षणा उपरमा यमाः 'यम उपरमे' इति स्मरणात्। तथा शौचं द्विविधं बाह्यमाभ्यन्तरं च। मृज्जलादिभिः कायादिक्षालनं हितमितमेध्याशनादि च बाह्यम्। मैत्रीमुदितादिभिर्मदमानादिचित्तमलक्षालनमान्तरम्। सन्तोषो विद्यमानभोगोपकरणादधिकस्यानुपादित्सारूपा चित्तवृत्तिः। तपः क्षुत्पिपासाशीतोष्णादिद्वन्द्वसहनं काष्ठमौनाकारमौनादिव्रतानि च। इङ्गितेनापि स्वाभिप्रायाप्रकाशनं काष्ठमौनम्, अवचनमात्रमाकारमौनमिति भेदः। स्वाध्यायो मोक्षशास्त्राणामध्ययनं प्रणवजपो वा। ईश्वरप्रणिधानं सर्वकर्मणां तस्मिन्परमगुरौ फलनिरपेक्षतयाऽर्पणम्। एते विधिरूपा नियमाः पुराणेषु येऽधिका उक्तास्त एष्वेव यमनियमेष्वन्तर्भाव्याः। एतादृशयमनियमाद्यभ्यासपरा योगयज्ञाः स्वाध्यायज्ञानयज्ञाश्च। यथाविधि वेदाभ्यासपराः स्वाध्याययज्ञाः, न्यायेन वेदार्थनिश्चयपरा ज्ञानयज्ञाः। यज्ञान्तरमाह–यतयो यत्नशीलाः। संशितव्रताः सम्यक् शितानि तीक्ष्णीकृतान्यतिदृढानि व्रतानि येषां ते, संशितव्रतयज्ञा इत्यर्थः। तथाच भगवान्पतञ्जलिः 'ते जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' इति। ये पूर्वमहिंसाद्याः पञ्च यमा उक्तास्त एव जात्याद्यनवच्छेदेन दृढभूमयो महाव्रतशब्दवाच्याः। तत्राहिंसा जात्यवच्छिन्ना यथा मृगयोर्मृगातिरिक्तान्न हनिष्यामीति, देशावच्छिन्ना न तीर्थे हनिष्यामीति, सैव कालावच्छिन्ना यथा न चतुर्दश्यां न पुण्येऽहनीति, सैव प्रयोजनविशेषरूपसमयावच्छिन्ना यथा क्षत्रियस्य देवब्राह्मणप्रयोजनव्यतिरेकेण न हनिष्यामीति युद्धं विना न हनिष्यामीति च, एवं विवाहादिप्रयोजनव्यतिरेकेणानृतं न वदिष्यामीति, एवमापत्कालव्यतिरेकेण क्षुद्भयाद्यतिरिक्तः स्तेयं न करिष्यामीति च, एवमृतुव्यतिरिक्तकाले पत्नीं न गमिष्यामीति, एवं गुर्वादिप्रयोजनमन्तरेण न परिग्रहीष्यामीति यथायोग्यमवच्छेदो द्रष्टव्यः। एतादृगवच्छेदपरिहारेण यदा सर्वजातिसर्वदेशसर्वकालसर्वप्रयोजनेषु भवाः सार्वभौमाः अहिंसादयो भवन्ति महता प्रयत्नेन परिपाल्यमानत्वात्। तदा ते महाव्रतशब्देनोच्यन्ते। एवं काष्ठमौनादिव्रतमपि द्रष्टव्यम्। एतादृशव्रतदार्ढ्ये च कामक्रोधलोभमोहानां चतुर्णामपि नरकद्वारभूतानां निवृत्तिः। तत्राहिंसया क्षमया क्रोधस्य, ब्रह्मचर्येण वस्तुविचारेण कामस्य, अस्तेयापरिग्रहरूपेण सन्तोषेण लोभस्य, सत्येन यथार्थज्ञानरूपेण विवेकेन मोहस्य, तन्मूलानां च सर्वेषां निवृत्तिरिति द्रष्टव्यम्। इतराणि च फलानि सकामानां योगशास्त्रे कथितानि॥ २८॥

**शं० टी०**–एतान्यपि मुमुक्षुभिः कर्तव्यानीति सूचयितुं पुनरपि यज्ञान्तराण्याह–द्रव्येति। उक्तेभ्यो-

ऽपरे केचन मुमुक्षवो द्रव्ययज्ञाः सत्पात्रेषु नियमेन श्रद्धया द्रव्यनिक्षेपणमयमेवास्माकं यज्ञ इति ये कुर्वन्ति ते द्रव्ययज्ञाः । केचन तपोयज्ञाः तपश्चान्द्रायणप्राजापत्याद्युपवासादिरूपं वा इदमेवास्माकं यज्ञ इति ये कुर्वन्ति ते तपोयज्ञाः । केचन योगयज्ञाः योग आसनप्राणायामादिभिः स्वाङ्गैर्युक्तो लक्ष्ये चित्तस्थैर्यलक्षण एव यज्ञो येषां ते योगयज्ञाः । तथा केचन स्वाध्यायज्ञानयज्ञाः । अन्तेश्रूयमाणो यज्ञशब्दः प्रत्येकं संबध्यते तेनस्वाध्याययज्ञाः ज्ञानयज्ञा इति रूपद्वयम् " तस्य वा एतस्य यज्ञस्य द्वावनध्यायौ यदात्माऽशुचिर्यद्देशः " इति श्रुत्युक्तानध्यायद्वयं त्यक्त्वा सर्वदा वेदपारायणमेवास्माकं यज्ञ इत्यध्ययनविधिं नियमेन ये कुर्वन्ति ते स्वाध्याययज्ञास्तथा केचन ज्ञानयज्ञाः ज्ञानं ज्ञानशास्त्रपरिशीलनमिदं नो यज्ञ इति सदा ये कुर्वन्ति ते ज्ञानयज्ञाः । एवं मोक्षार्थं यतयो यत्नशीलाः संशितव्रतास्तत्र तत्र स्वस्वनिष्ठायां संशितमतितीक्ष्णं व्रतं नियमो येषां ते संशितव्रताः बहवः सन्तीति द्रव्यत्यागस्य तपसो योगस्य स्वाध्यायावृत्तेः शास्त्रपरिशीलनस्य च यज्ञत्वं सूचितं भवति ।। २८ ।।

श्री० टी०–किंच–द्रव्येति । द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः। कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषां ते तपोयज्ञाः। योगश्चित्तवृत्तिनिरोधलक्षणः समाधिः, स एव यज्ञो येषां ते योगयज्ञाः । स्वाध्यायेन वेदेन श्रवणमननादिना यत्तदर्थज्ञानं तदेव यज्ञो येषां ते, अथवा वेदपाठयज्ञास्तदर्थज्ञानयज्ञाश्चेति द्विविधा यतयः प्रयत्नशीलाः सम्यक् शितं निशितं तीक्ष्णीकृतं व्रतं येषां ते ।। २८ ।।

स० टी०–पञ्चयज्ञांस्त्रिभिः श्लोकैरुक्त्वैकेन षडाह च।। द्रव्यत्यागो यथाशास्त्रं यज्ञो येषां त एव ते ।। १ ।। तप एवातिकृच्छ्रादियज्ञो येषां तपस्विनाम् ।। चित्तवृत्तिनिरोधाख्यो यज्ञो येषां सुयोगिनाम् ।।२।। वेदाभ्यासो यथाशास्त्रं येषां स्वाध्यायिनां मखः ।। शास्त्रार्थनिश्चयो येषां न्यायेन ज्ञानयाजिनाम् ।।३।। व्रतान्यतिदृढान्येव येषां ते व्रतिनां वराः ।। ४ ।। २८ ।।

भा० टी०–एवं त्रिभिः श्लोकैर्यज्ञपञ्चकमुक्त्वाथैकेन पञ्चयज्ञानाह–द्रव्ययज्ञा इति । तीर्थेषु द्रव्यविनियोगं यज्ञबुद्ध्या ये कुर्वन्ति ते द्रव्ययज्ञा इति भाष्यं तस्यैव विवरणं द्रव्ययज्ञाः पूर्तदत्ताख्यस्मार्तयज्ञपराः । तथाच स्मृतिः ' वापीकूपतडागादि देवतायतनानि च । अन्नप्रदानमारामः पूर्तमित्यभिधीयते ।। शरणागतसंत्राणं भूतानां चाप्यहिंसनम्। बहिर्वेदि च यद्दानं दत्तमित्यभिधीयते ' इत्यादीति बोध्यम् । तथा पञ्चाग्निसेवनादि तप एव यज्ञो येषां ते तपोयज्ञाः, तथा यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिलक्षणो योग एव यज्ञो येषां ते योगयज्ञाः, तथा परे स्वाध्यायो विधिवद्वेदाभ्यासो यज्ञो येषां ते स्वाध्याययज्ञाः। ज्ञानं पूर्वोत्तरमीमांसाविचारेण शास्त्रार्थपरिज्ञानं यज्ञो येषां ते ज्ञानयज्ञाश्च । यतयो यत्नशीलाः सम्यक् शितानि सूक्ष्माणि तीक्ष्णीकृतानि च व्रतानि येषां ते इति सर्वेषां विशेषणमन्त्यानां वा केचित्त्वनेन विशेषणेन यज्ञान्तरं वर्णयन्ति व्रतयज्ञा इत्यर्थ इति तेषां कृच्छ्रचान्द्रायणादि तप एव यज्ञो येषामिति तपोयज्ञा इत्यस्य व्याख्यानकर्तॄणां मते पौनरुक्त्यं यज्ञानां त्रयोदशत्वं चापततति। अपान इत्यादिसार्धश्लोकेनैकयज्ञवर्णनं तु प्रामादिकम्। अपर इत्यस्य वारद्वयमुपलब्धेरिति ज्ञेयम् ।। २८ ।।

प० टी०–अथान्यान् पञ्चयज्ञानाह–द्रव्ययज्ञा इति । द्रव्यदानमेव यज्ञो येषां ते द्रव्ययज्ञाः अपरे तपांसि कृच्छ्रचान्द्रायणादीनि यज्ञो येषां ते, योगयज्ञास्तथापरे स्वाध्यायो वेदपाठलक्षणो यज्ञो येषां ते तथा ज्ञानं शास्त्रोत्थं शास्त्रश्रवणं स एव यज्ञो येषां ते एवं पञ्चयाज्ञिकाः । किंभूता यतयः, यतन्ते ते यतयः प्रयत्नशीलास्तथा सम्यक् प्रकारेण शितानि तीक्ष्णीकृतानि व्रतानि पूर्वोक्तानि यैस्ते संशितव्रता एवं नवयज्ञाः ।। २८ ।।

रा० टी०–द्रव्येति । अपरे द्रव्ययज्ञाः द्रव्यस्य याजकाः । कर्त्रर्थोऽयं यज्ञशब्दः । तपोयज्ञाः कृच्छ्रचान्द्रा-

यणादि तपो हर्यर्पणबुद्ध्या हरौ जुह्वतीति तपोयज्ञाः । भगवत्पूजात्वेन ध्यानं कुर्वन्तीति योगयज्ञाः । विष्णुपूजात्वेन स्वाध्यायमधीयत इति स्वाध्याययज्ञाः । यज्ञेनैवेति सर्वत्रान्वेतीत्युक्तं तदर्थः प्राग्वत् । ज्ञानयज्ञाः भगवत्पूजात्वेन श्रवणादि कुर्वन्तीति । संशितव्रताः तीक्ष्णव्रताः यतयो यत्नशीलाः ॥ २८ ॥

अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे ॥
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः ॥ २९ ॥
अपरे नियताहाराः प्राणान्प्राणेषु जुह्वति ॥
सर्वेऽप्येते यज्ञविदो यज्ञक्षपितकल्मषाः ॥ ३० ॥
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम् ॥
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम ॥ ३१ ॥

त० टी०-प्राणायामयज्ञमाह-अपान-इति सार्धेन । अपानेऽधोवृत्तौ प्राणमूर्ध्ववृत्तिं जुह्वति पूरकं कुर्वन्ति । प्राणेऽपानमिति रेचकं कुर्वन्ति । किं कृत्वा प्राणापानयो रुद्ध्वा कुम्भकं कृत्वेत्यर्थः । ननु पूरकानन्तरं रेचकमिति भावः । एवं च पूरककुम्भकरेचकैः प्राणायामपरायणा अपरे योगिनः प्राणायामयज्ञं कुर्वन्तीत्यर्थः । अपरे योगिनो नियताहारा आहारनियमाभ्यासनिष्ठाः सन्तो योगाभ्यासेऽन्तरायकरान्प्राणान् ज्ञानकर्मात्मकानि द्विविधानीन्द्रियाणि प्राणेषु ऊर्ध्वाधोगतिनियमनेन मध्ये स्थिरीकृतेषु जुह्वति, कुम्भक एव तद्वृत्तीर्विलाययन्तीत्यर्थः । अयमपि प्राणायामयज्ञ एव, न पृथक् ॥ २९ ॥ एवमेते द्वादशयज्ञा दर्शिताः । इदानीमेषां यज्ञविदां फलमाह-सर्वेऽपीति । एते पूर्वोक्ताः सर्वेऽपि यज्ञान् विदन्ति विजानन्ति, विन्दन्ति लभन्त इति वा यज्ञविदो यज्ञज्ञातारः कर्तारो वा यज्ञैः पूर्वोक्तैः क्षपितं नाशितं कल्मषं यैस्ते यज्ञक्षपितकल्मषाः । यज्ञानुष्ठानानन्तरः कालो यज्ञशिष्टशब्दवाच्यस्तस्मिन्काले भोज्यं यदन्नादि तदमृतं भुञ्जते इति यज्ञशिष्टामृतभुजः, ते सर्वेऽपि सत्त्वशुद्धिपूर्वकज्ञानप्राप्तिद्वारेण सनातनं ब्रह्म यान्तीत्यवैष्णवपक्षे व्याख्यानम् । वैष्णवपक्षे तु पूर्वोक्तयज्ञैर्निष्कामतयाऽनुष्ठितैः क्षपितपूर्वकल्मषा यज्ञो विष्णुस्तच्छिष्टं तद्भुक्तावशिष्टं विष्णुनिवेदितान्नमित्यर्थः । तदेवामृतं भुञ्जत इति यज्ञशिष्टामृतभुजस्ते सनातनं ब्रह्म यान्ति । तथोक्तं स्कान्दे नारायणेन ब्रह्माणं प्रति 'भोक्तव्यं मम चोच्छिष्टं मम भक्तिपरायणैः । पवित्रकरणं पुत्र पापिनामपि मुक्तिदम् ॥ ममाशनस्य शेषं च यो भुनक्ति दिने दिने । सिक्थे सिक्थे भवेत्पुण्यं चान्द्रायणशतं सुत' इति । अन्यथा दोषमाह तत्रैव 'अवशिष्टं यथोच्छिष्टं भक्तानां भोजनद्वयम् । नान्यद्वै भोजनं तेषां भुक्त्वा चान्द्रायणं चरेत् ॥ अनर्पयित्वा यो भुङ्क्ते अन्नपानादिकं च यत् । शुनो विष्ठासमं चान्नं पानं च मदिरासमम्' इति । वक्ष्यति च भगवान्स्वयमपि 'यत्करोषि यदश्नासि' इत्यादिना । तत्फलं च 'शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः' इति । तस्माद्विष्णवनर्पितस्य भोज्यस्य कुतोऽमृतत्वं कुतो वा तद्भुञ्जतां ब्रह्मप्राप्तिरिति संक्षेपः ॥ ३० ॥ एवं यज्ञानुष्ठाने गुणमुक्त्वा तदभावे दोषमाहार्धेन—नायमिति । पूर्वोक्तानां यज्ञानां मध्ये यस्य कोऽपि यज्ञो नास्ति, सोऽयज्ञस्तस्यायमल्पसुखो मनुष्यलोकोऽपि नास्ति । कुतोऽन्यो विशिष्टसुखः परलोको हे कुरुसत्तमेति ॥ ३१ ॥

म० टी०-प्राणायामयज्ञमाह-अपान इति सार्धेन । अपाने अपानवृत्तौ जुह्वति प्रक्षिपन्ति प्राणवृत्तिं बाह्यवायोः शरीराभ्यन्तरप्रवेशेन पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । प्राणेऽपानं तथाऽपरे जुह्वति शारी-

रवायोर्बहिर्निर्गमनेन रेचकाख्यं प्राणायामं कुर्वन्तीत्यर्थः । पूरकरेचककथनेन च तदविनाभूतो द्विविधः कुम्भकोऽपि कथित एव । यथाशक्ति वायुमापूर्यानन्तरं श्वासप्रश्वासनिरोधः क्रियमाणोऽन्तःकुम्भकः, यथाशक्ति सर्वं वायुं विरेच्यानन्तरं क्रियमाणो बहिः कुम्भकः, एतत्प्राणायामत्रयानुवादपूर्वकं चतुर्थं कुम्भकमाह— **प्राणापानगती** । प्राणापानगती मुखनासिकाभ्यामान्तरस्य वायोर्बहिर्निर्गमः श्वासः प्राणस्य गतिः, बहिर्निर्गतस्यान्तःप्रवेशः प्रश्वासोऽपानस्य गतिः । तत्र पूरके प्राणगतिनिरोधः रेचकेऽपानगतिनिरोधः कुम्भके तूभयगतिनिरोध इति क्रमेण युगपच्च श्वासप्रश्वासाख्ये प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तोऽपरे पूर्वविलक्षणाः नियताहाराः आहारनियमादियोगसाधनविशिष्टाः प्राणेषु बाह्याभ्यन्तरकुम्भकाभ्यासनिगृहीतेषु प्राणान् ज्ञानेन्द्रियकर्मेन्द्रियरूपान् जुह्वति चतुर्थकुम्भकाभ्यासेन विलापयन्तीत्यर्थः । तदेतत्सर्वं भगवता पतञ्जलिना सङ्क्षेपविस्ताराभ्यां सूत्रितम् । तत्र संक्षेपसूत्रम् 'तस्मिन्सति श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः प्राणायामः' इति । तस्मिन्नासने स्थिरे सति प्राणायामोनुष्ठेयः । कीदृशः, श्वासप्रश्वासयोर्गतिविच्छेदलक्षणः श्वासप्रश्वासयोः प्राणापानधर्मयोर्या गतिः पुरुषप्रयत्नमन्तरेण स्वाभाविकप्रवहणं क्रमेण युगपच्च पुरुषप्रयत्नविशेषेण तस्या विच्छेदो निरोध एव लक्षणं स्वरूपं यस्य स तथेति । एतदेव विवृणोति "बाह्याभ्यन्तरस्तम्भवृत्तिर्देशकालसङ्ख्याभिः परिदृष्टो दीर्घसूक्ष्मः" इति । बाह्यगतिनिरोधरूपत्वाद्बाह्यवृत्तिः पूरकः । आन्तरगतिनिरोधरूपत्वादान्तरवृत्ती रेचकः । कैश्चित्तु बाह्यशब्देन रेचकः आन्तरशब्देन च पूरको व्याख्यातः । युगपदुभयगतिनिरोधस्तम्भस्तद्वृत्तिः कुम्भकः । तदुक्तं यत्रोभयोः श्वासप्रश्वसायोः सकृदेव विधारकात्प्रयत्नादभावो भवति न पुनः पूर्ववदापूरणप्रयत्नौघविधारणं नापि रेचनप्रयत्नौघविधारणं किंतु यथा तप्त उपले निहितं जलं परिशुष्यत्सर्वतः संकोचमापद्यते एवमयमपि मारुतो वहनशीलो बलवद्विधारकप्रयत्नावरुद्धक्रियः शरीर एव सूक्ष्मभूतोऽवतिष्ठते नतु पूरयति येन पूरकः नतु रेचयति येन रेचक इति त्रिविधोऽयं प्राणायामो देशेन कालेन संख्यया च परीक्षितो दीर्घसूक्ष्मसंज्ञो भवति, यथा घनीभूतस्तूलपिण्डः प्रसार्यमाणो विरलतया दीर्घः सूक्ष्मश्च भवति तथा प्राणोपि देशकालसंख्याधिक्येनाभ्यस्यमानो दीर्घो दुर्लक्ष्यतया सूक्ष्मोऽपि संपद्यते । तथाहि हृदयान्निर्गत्य नासाग्रसंमुखे द्वादशाङ्गुलपर्यन्ते देशे श्वासः समाप्यते । तत एव च परावृत्त्य हृदयपर्यन्तं प्रविशतीति स्वाभाविकी प्राणापानयोर्गतिः । अभ्यासेन तु क्रमेण नाभेराधारद्वारा निर्गच्छति । नासान्तश्चतुर्विंशत्यङ्गुलपर्यन्ते षड्त्रिंशदङ्गुलपर्यन्ते वा देशे समाप्यते । एवं प्रवेशोपि तावानवगन्तव्यः । तत्र बाह्यदेशव्याप्तिर्निवाते देशे इषीकादिसूक्ष्मतूलक्रिययाऽनुमातव्या । अन्तरपि पिपीलिकास्पर्शसदृशेन स्पर्शेनानुमातव्या । सेयं देशपरीक्षा । तथा निमेषक्रियावच्छिन्नस्य कालस्य चतुर्थो भागः क्षणस्तेषामियत्ताऽवधारणीया । स्वजानुमण्डलं पाणिना त्रिःपरामृश्य छोटिकावच्छिन्नः कालो मात्रा । ताभिः षड्त्रिंशन्मात्राभिः प्रथम उद्घातो मन्दः । स एव द्विगुणीकृतो द्वितीयो मध्यः । स एव त्रिगुणीकृतस्तृतीयस्तीव्र इति । नाभिमूलात्प्रेरितस्य वायोर्विरिच्यमानस्य शिरस्यभिहननमुद्घात इत्युच्यते । सेयं कालपरीक्षा । संख्यापरीक्षा च प्रणवजपावृत्तिभेदेन वा संख्यापरीक्षा श्वासप्रवेशगणनया वा । कालसंख्ययोः कथंचिद्भेदविवक्षया पृथगुपन्यासः । यद्यपि कुम्भके देशव्याप्तिर्नावगम्यते तथापि कालसंख्याव्याप्तिरवगम्यत एव । स खल्वयं प्रत्यहमभ्यस्तो दिवसपक्षमासादिक्रमेण देशकालप्रचयव्यापितया दीर्घः परमनैपुण्यसमधिगमनीयतया च सूक्ष्म इति निरूपितस्त्रिविधः प्राणायामः । चतुर्थं फलभूतं सूत्रयति स्म "बाह्याभ्यन्तरविषयाक्षेपी चतुर्थः" इति । बाह्यविषयः श्वासो रेचकः । आभ्यन्तरविषयः प्रश्वासः पूरकः । वैपरीत्यं वा । तावुभावपेक्ष्य सकृद्बलवद्विधारकप्रयत्नवशाद्भवति बाह्याभ्यन्तरभेदेन द्विविधस्तृतीयः कुम्भकः । तावुभावनपेक्ष्यैव केवलकुम्भकाभ्यासपाटवेनासकृत्तत्तत्प्रयत्नवशाद्भवति चतुर्थः कुम्भकः ।

तथाच बाह्याभ्यन्तरविषयाक्षेपीति तदनपेक्ष इत्यर्थः। अन्या व्याख्या, बाह्यो विषयो द्वादशान्तादिराभ्यन्तरो विषयो हृदयनाभिचक्रादिः, तौ द्वौ विषयावाक्षिप्य पर्यालोच्य यः स्तम्भरूपो गतिविच्छेदः स चतुर्थः प्राणायाम इति। तृतीयस्तु बाह्याभ्यन्तरौ विषयावपर्यालोच्यैव सहसा भवतीति विशेषः। एतादृशश्चतुर्विधः प्राणायामः, अपाने जुह्वति प्राणमित्यादिना सार्धेन श्लोकेन दर्शितः॥ तदेवमुक्तानां द्वादशधा यज्ञविदां फलमाह—सर्वे इति। यज्ञान्विदन्ति जानन्ति विन्दन्ति लभन्ते वेति यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्च। यज्ञैः पूर्वोक्तैः क्षपितं नाशितं कल्मषं पापं येषां ते यज्ञक्षपितकल्मषाः। यज्ञान् कृत्वाऽवशिष्टे कालेऽन्नममृतशब्दवाच्यं भुञ्जत इति यज्ञशिष्टामृतभुजः, ते सर्वेऽपि सत्त्वशुद्धिज्ञानप्राप्तिद्वारेण यान्ति ब्रह्म सनातनं नित्यं संसारान्मुच्यन्त इत्यर्थः। एवमन्वये गुणमुक्त्वा व्यतिरेके दोषमाह—नायमित्यर्धेन। उक्तानां यज्ञानां मध्येऽन्यतमोऽपि यज्ञोऽस्य नास्ति सोऽयज्ञस्तस्यायमल्पसुखोऽपि मनुष्यलोको नास्ति सर्वनिन्द्यत्वात्। कुतोऽन्यो विशिष्टसाधनसाध्यः परलोकः हे कुरुसत्तम॥ २९॥ ३०॥ ३१॥

शं० टी०—प्राणायामोऽपि मुमुक्षोः पापक्षयार्थिनो यज्ञ एव स कर्तव्य इति सूचयितुमाह—अपान इति। केचन मुमुक्षवः अपाने अपानवृत्तौ वायुप्रवेशनाड्यां प्राणं प्राणवृत्तिं जुह्वति नासिकाद्वये तत्तत्कालं ज्ञात्वा पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। तथा केचन प्राणे प्राणवृत्तौ वायुनिर्गमनाड्यामपानमपानवृत्तिं जुह्वति रेचकमेव प्राणायामं कुर्वन्तीत्यर्थः। केचन प्राणापानगती रुद्ध्वा मुखनासिकाभ्यां बहिर्वायोर्गमनं प्राणस्य गतिस्ताभ्यां वायोरन्तःप्रवेशोऽपानगतिरेते प्राणापानगती रुद्ध्वा प्राणायामनिरताः केवलं कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। यद्वा अपरे केचन प्राणायामपरायणाः मुमुक्षवः प्राणापानयोर्गती मुखनासिकाभ्यां वायोर्निर्गमप्रवेशौ त्रिकूटे निरुध्य ततो हृदये प्राणेऽपानं तथाऽपाने प्राणं च जुह्वति प्राणेनापानमपानेन प्राणं च योजयन्त्येकीकुर्वन्ति तेन सर्वनाडीषु स्थितं पापं सर्वं भस्मीभवतीत्यर्थः। प्राणेऽपानं जुह्वति पूरकं कुर्वन्ति ततः प्राणापानगती रुद्ध्वा कुम्भकं कृत्वा तथाऽपाने प्राणं जुह्वति रेचकं कुर्वन्तीति वा योजना॥ २९॥ किंच—अपर इति। अपरे केचन मुमुक्षवः नियताहाराः स्वल्पाहाराः क्षीराद्यल्पाहारेणान्तर्वायूनां वश्यत्वसंपादनाय प्राणानन्तर्वायून् प्राणेषु तेषु वायुभेदेषु जुह्वति बस्तिधौत्यादिक्रियाऽन्तःशोधनं कुर्वन्तीत्यर्थः। एवं दैवादियज्ञान्नियमेन कुर्वतां तत्तद्यज्ञानुष्ठानस्य फलमाह—सर्वेऽपीति। यज्ञविदः यज्ञान् विदन्त्यनुतिष्ठन्तीति यज्ञविदो दैवादियज्ञानुष्ठायिन एते निरुक्ताः सर्वेऽपि यज्ञशिष्टामृतभुजः यज्ञानुष्ठानानन्तरभावित्वादेतेषामन्नं यज्ञशिष्टं यज्ञशिष्टत्वादेवामृतं तद्भुञ्जत इति यज्ञशिष्टामृतभुजः॥ ३०॥ यद्वा यज्ञानुष्ठानेन शिष्टो यज्ञशिष्टः नित्यत्वादमृतः कालः भोजनसंबद्धत्वादमृतशब्देन काल उच्यते। यज्ञशिष्टो योऽमृतः कालस्तस्मिन् भुञ्जत इति यज्ञशिष्टामृतभुजः सन्तो यज्ञक्षपितकल्मषाः यज्ञैर्नियमेनानुष्ठितैः क्षपितो नाशितः कल्मषो येषां ते यज्ञक्षपितकल्मषाः यज्ञानुष्ठानानिःशेषविनष्टज्ञानप्रतिबन्धका भूत्वा सकृदुपदेशेनैव सद्गुरोरात्मज्ञानं प्राप्य सनातनं नित्यं ब्रह्म सच्चिदानन्दैकरसं यान्ति ज्ञानानुत्पत्तौ क्रमान्मुक्ता भवन्तीत्यभिप्रायः। उक्तेषु यज्ञेष्वन्यतरं यज्ञमकुर्वतो दुःशीलस्य दुर्भगस्यानुष्ठानफलमाह—नायमिति। अयज्ञस्य यस्य न विद्यते यज्ञेषूक्तेष्वेकोऽपि यज्ञो मोक्षसाधनः सोऽयमयज्ञस्तस्य मोक्षधर्मशून्यस्य दुर्बुद्धेरयं लोकः लोक्यत इति लोको देहो मुक्तिसंपादनयोग्यो मानव एव नास्ति इतोऽन्यो दैवो वा ब्राह्मो वा शैवो वा कुतः कस्माद्धेतोरधर्मनिष्ठस्यासाधारणकारणसाध्यः सिध्यतीति द्वयोरर्थः॥ ३१॥

श्री० टी०—किंच—अपान इति। अपाने अधोवृत्तौ प्राणमूर्ध्ववृत्तिं पूरकेण जुह्वति पूरककाले प्राणमपानेनैकीकुर्वन्ति तथा कुम्भकेन प्राणापानयोरूर्ध्वाधोगती रुद्ध्वा रेचककाले अपानं प्राणे जुह्वति एवं पूरककुम्भकरेचकैः प्राणायामपरायणा अपरे इत्यर्थः॥ २९॥ किंच—अपर इति। अपरे त्वाहारसंकोचमभ्यस्य-

न्तः स्वयमेव जीर्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः। यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे, इत्यनेन पूरकरेचकयोरावर्त्यमानयोर्हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानेनाजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतिहारेण भावयन्तीत्यर्थः। तदुक्तं योगशास्त्रे 'सकारेण बहिर्याति हकारेण विशेत्पुनः। प्राणस्तत्र स एवाहं हंस इत्यनुचिन्तयेत्' इति। प्राणापानगती रुद्ध्वेत्यनेन तु श्लोकेन प्राणायामयज्ञाः अपरैः कथ्यन्ते तत्रायमर्थः—'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' इत्येवमादिवचनोक्तो नियत आहारो येषां ते कुम्भकेन प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति कुम्भके हि सर्वे प्राणा एकीभवन्तीति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीत्यर्थः। तदुक्तं योगशास्त्रे 'यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत्। वायुवाक्कायदृष्टीनां स्थिरता च तथा तथा' इति। तदेवमुक्तानां द्वादशानां यज्ञविदां फलमाह—सर्व इति। यज्ञान्विदन्ति लभन्त इति यज्ञविदः यज्ञज्ञा इति वा। यज्ञैः क्षपितं नाशितं कल्मषं यैस्ते ॥ ३० ॥ यज्ञशिष्टेति। यज्ञान्कृत्वाऽवशिष्टे कालेऽनिषिद्धमन्नममृतरूपं भुञ्जत इति तथा ते सनातनं नित्यं ब्रह्म ज्ञानद्वारेण प्राप्नुवन्ति। तदकरणे दोषमाह—नायं लोक इति। अयमल्पसुखोऽपि मनुष्यलोकः अयज्ञस्य यज्ञानुष्ठानशून्यस्य नास्ति कुतोऽन्यः परलोकः अतो यज्ञाः सर्वथा कर्तव्या इत्यर्थः ॥ ३१ ॥

**स० टी०**—इदानीमाह सार्धेन प्राणायामं चतुर्विधम् ॥ जुह्वत्यपानवृत्तौ च प्राणवृत्तिं तथा परे ॥ १ ॥ पूरकाख्यं प्रकुर्वन्ति प्राणायामं सदैव ते ॥ रेचकाख्यं प्रकुर्वन्ति प्राणेऽपानमितीतरे ॥ २ ॥ मुखनासिकाभ्यां वायोर्निर्गमः प्राणिकी गतिः ॥ विपरीतमतोऽपानगमनं ते गती उभे ॥ ३ ॥ निरुध्य कुम्भकं प्राणायामं कुर्वन्ति योगिनः ॥ ४ ॥ २९ ॥ अन्ये परिमिताहारा निगृहीतेषु वायुषु ॥ विलापयन्ति ते प्राणान् ज्ञानकर्मेन्द्रियाणि च ॥ १ ॥ तदेवं सम्यगुक्तानां फलमाहाध्वराध्वनाम् ॥ सर्वेऽप्येते हि यज्ञानां ज्ञातारः साधकास्तथा ॥ २ ॥ नाशितं कल्मषं येषां यज्ञैः पूर्वोदितैः कृतैः ॥ ३ ॥ ३० ॥ यज्ञान्कृत्वावशिष्टं ये कालेऽन्नं भुञ्जतेऽमृतम् ॥ चित्तशुद्ध्यात्मसद्बोधप्राप्तिद्वारेण तेऽखिलाः ॥ १ ॥ ब्रह्मीभूता विमुच्यन्ते संसाराद्दुःखसागरात् ॥ यस्य नैकोऽपि यज्ञानामुक्तानां मध्य ऐश्वरः ॥ २ ॥ नायमल्पसुखस्तस्य नृलोकोऽप्यधमस्य तु ॥ सर्वनिन्द्यतया दुःखभागिनोऽतिदरिद्रिणः ॥ ३ ॥ कुतोऽन्यः स्वर्गमोक्षादिः साध्यो यः साधनैर्वरैः ॥ ४ ॥ ३१ ॥

**भा० टी०**—एकादशयज्ञमाह—**अपान इति**। अपानेऽपानप्रवृत्तौ प्राणवृत्तिमपरे जुह्वति पूरकाख्यं प्राणायामं कुर्वन्तीत्यर्थः। तथा प्राणेऽपानं जुह्वति रेचकाख्यं प्राणायामं कुर्वन्ति। प्राणापानयोर्मुखनासिकाभ्यां वायोर्निर्गमनाधोगमनरूपे गती रुद्ध्वा निरुध्य प्राणायामपरायणाः प्राणायामतत्पराः कुम्भकाख्यं प्राणायामं कुर्वन्तीत्यर्थः ॥ २९ ॥ द्वादशयज्ञमाह—**अपर इति**। नियतः परिमित आहारो येषां ते नियताहाराः सन्तः प्राणान् जिता वायुभेदान्प्राणेषु जितेषु वायुभेदेषु जुह्वति तेऽजितान् अपि तत्र प्रविष्टा जिता इव भवन्तीत्यर्थः। यत्तु अपरे त्वाहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्यमाणेष्विन्द्रियेषु तत्तदिन्द्रियवृत्तिलयं होमं भावयन्तीत्यर्थः। यद्वा अपाने जुह्वति प्राणं प्राणेऽपानं तथाऽपरे इत्यनेन पूरकरेचकयोरावर्तमानयोर्हंसः सोहमित्यनुलोमतः प्रतिलोमतश्चाभिव्यज्यमानाऽजपामन्त्रेण तत्त्वंपदार्थैक्यं व्यतिहारेण भावयन्तीत्यर्थः। प्राणापानगती इत्यनेन तु श्लोकेन प्राणायामयज्ञा अपरे कल्प्यन्ते, तत्रायमर्थः 'द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत्। मारुतस्य प्रचारार्थं चतुर्थमवशेषयेत्' इत्येवमुक्तो नियत आहारो येषां ते कुम्भकेन, प्राणापानगती रुद्ध्वा प्राणायामपरायणाः सन्तः प्राणानिन्द्रियाणि प्राणेषु जुह्वति कुम्भके सर्वे प्राणा एकीभवन्ति तत्रैव लीयमानेष्विन्द्रियेषु होमं भावयन्तीति भाष्यविरुद्धं व्याचख्युस्तदुपेक्ष्यं, प्रसिद्धार्थपरित्यागबीजभूतानुपपत्त्याद्यनुप-

लब्ध्या श्रोत्रादीन्द्रियहोमस्य प्रत्याहाररूपेष्वग्निपूक्तत्वेन च पक्षान्तरे श्लोकोत्तरार्द्धस्य सत्यपि संभवे स्वपूर्वार्धेनान्वयं विहायापरपूर्वार्धेनान्वयस्यान्याय्यत्वेन पूरकरेचकयोरित्यादिग्रन्थस्याक्षरार्थत्वाभावेन च पूरकरेचककुम्भकरूपं प्राणायामं कुर्वन्तीति भाष्योक्तस्यैव सम्यक्त्वात् । एतेन प्राणानिन्द्रियाणीत्याद्यपि प्रत्युक्तं लोकाप्रसिद्धार्थकल्पनापत्तेः। अत एव प्राणेषु बाह्याभ्यन्तरकुम्भकाभ्यासनिगृहीतेषु प्राणान् ज्ञानेन्द्रियकर्मेन्द्रियरूपान् जुह्वति चतुष्कुम्भकाभ्यासेन विलापयन्तीत्यर्थः इत्यपास्तम् । इन्द्रियाणि जुह्वतीत्युक्त्या इन्द्रियानिरोधयज्ञस्याप्युपलब्ध्या प्राणायामयज्ञमाह सार्धेनेति स्वोक्तिविरोधाच्च । यदपि नियताहारा वैराग्यादिमन्तः प्राणानत्र समनस्कानीन्द्रियाणि प्राणशब्देन गृह्यन्ते द्वितीयान्तप्राणशब्देन श्रोत्रादीनि वागादीनि च गृह्यन्ते तान्प्राणान्प्राणेषु समनश्चित्ताहंकारेष्वन्तःकरणवृत्तिभेदेषु जुह्वति प्रविलापयन्ति, इन्द्रियाणि संकल्पात्मके मनसि संहृत्य मनोऽपि स्मरणात्मके चित्ते संहृत्य तदप्यहंकारे संहरन्ति स चाभिमानरूपोऽहंकारोऽभिमन्तव्याभावात् स्वयमेव दग्धेन्धनानलवत् विलीयते इत्यन्ये, तदप्यसमञ्जसं लोकाप्रसिद्धार्थकल्पनादिदोषस्यात्रापि तुल्यत्वादिति दिक् । एते सर्वेऽपि यज्ञविदो यज्ञानां ज्ञातारः कर्तारश्च यज्ञैर्यथोक्तैः क्षपिता नाशिताः कल्मषाः पापानि येषां ते ॥ ३० ॥ एवं यथोक्तान्यज्ञान्निर्वर्त्य तच्छिष्टेन कालेन यथाविधिचोदितमन्नममृताख्यं भुञ्जत इति यज्ञशिष्टामृतभुजः। यत्त्वन्ये सर्वेषामप्येतेषां मध्येऽन्यतममप्यनुष्ठातुमशक्तं प्रति प्राह–यज्ञेति । यज्ञाः पञ्चमहायज्ञाः तेभ्यः शिष्टमवशिष्टमन्नममृताख्यं ये भुञ्जत इत्यादि तच्चिन्त्यं, श्रुतहानेरश्रुतकल्पनायाश्चान्याय्यत्वात् । पञ्चयज्ञानामपि दैवादिश्रौतस्मार्तयज्ञेष्वन्तर्भावाच्च । ब्रह्म सनातनं मोक्षाख्यं यान्ति यथोक्तानां यज्ञानामेकोऽपि यज्ञो यस्य नास्ति सोऽयज्ञः तस्यायं लोकः सर्वप्राणिसाधारणोऽपि नास्ति शुद्धचित्तेन श्रवणादिविशिष्टसाधनलभ्योऽन्यः सर्वलोकातीत आत्मस्वरूपस्तस्य कुतः कुरुसत्तमेति संबोधयन् कुरवोऽपि यज्ञविद आसन् त्वं तु तेषु सत्तमः श्रेष्ठोऽतस्त्वया यज्ञवित्त्वमवश्यं संपादनीयमिति सूचयति ॥ ३१ ॥

प० टी०–अथान्यद्यज्ञत्रितयमाह–**अपान इति** । अपानेऽधोवृत्तौ प्राणमूर्ध्ववृत्तिं पूरकेण जुह्वति । पूरककाले प्राणमपानेनैकीकुर्वन्ति । तथा कुम्भकेन प्राणापानयोरूर्ध्वाधोगती रुद्ध्वा रेचककालेऽपाने प्राणाञ् जुह्वति । एवं रेचकपूरककुम्भकैः प्राणवायुं वशीकुर्वन्तः प्राणायामपरायणाः प्राणायाम एव परमयनं गतिर्येषां ते । तदुक्तम्–'यथा यथा सदाभ्यासान्मनसः स्थिरता भवेत् । वायुवाक्कायदृष्टीनां स्थिरता च तथा तथा ' इति । श्रुतिरप्यथर्ववल्ल्याम् " आत्मा देवानां भुवनस्य गर्भो यथा वशं चरति एष देवः । घोषा इदं यस्य शृण्वीत रूपं तस्मै वाताय हविषा विधेम " इति । भाष्यम्–तस्मै वाताय प्राणमुख्याय " वायुर्वै गौतम सूत्रं तथा वायुर्वै क्षेपिष्ठा देवता तथा वायो त्वमेव प्रत्यक्षं ब्रह्मासि " इत्यादिश्रुतेर्वाताय हिरण्यगर्भाय हविषा हविर्द्रव्येण यथोचिताहाररूपेण कृत्वा विधेम परिचरेम । विदधतिः परिचरणकर्मा । तस्मै कस्मै, यस्य इदमनुभूयमानं रूपं घोषा अनाहतध्वनयस्तथा शृण्वीत श्रवणविषयीकुर्वीत यथैष प्राणलक्षणो देवो वशं चरति वशवर्ती भवति । किंभूतो देवः देवानामात्मान्तर्यामी न केवलं देवानां भुवनस्य गर्भो बीजरूपः ॥ २९ ॥ **अपर इति** । अपरे आहारसंकोचमभ्यस्यन्तः स्वयमेव जीर्यमाणेषु प्राणेष्विन्द्रियेषु प्राणांस्तत्तदिन्द्रियरूपान् जुह्वति । अथोपसंहरति–**सर्वे इति** । सर्वेऽप्येते निरूपितप्रकारा यज्ञविदो याज्ञिका एव भवन्ति । किंभूता यज्ञक्षपितकल्मषा यज्ञैः क्षपितं कल्मषं मनोवेगलक्षणं पापं यैस्ते ॥ ३० ॥ अथ द्वादशानां यज्ञानां फलमाह–**यज्ञेति** । यज्ञानन्तरं शिष्टं विशिष्टं सर्वफलापेक्षयोत्तमं यदमृतं सोमचक्राद्गलितमात्मसुखं वा तद्भुञ्जते ते तथाविधाः सन्तः सनातनं नित्यं ब्रह्म यान्ति तदतिरिक्तं सर्वं फलं नश्वरमित्यर्थः । अथोक्तयज्ञाकरणे दोषमाह–**नायमिति** । अयज्ञस्योक्तयज्ञेष्वेकमप्यकुर्वाणस्यायं मनुष्यलोकोऽपि नास्ति कुतोऽन्यः किं पुनरुत्तमलोकः, अधमयोनिषु पततीत्यर्थः ॥ ३१ ॥

रा० टी०–अपर इति । अपरे प्राणायामपरायणाः प्राणापानगती रुद्ध्वा निरुध्य अपाने प्राणं जुह्वति तत्र प्रवेशयन्ति । प्राणे चापानं जुह्वति कुम्भकस्था एवेत्यर्थः ॥ २९ ॥ अपरे नियताहाराः सन्तः प्राणानिन्द्रियाणि श्रोत्रादीन्द्रियवृत्तीः प्राणेष्विन्द्रियेषु जुह्वति संकुचितवृत्तीन्प्राणान्कुर्वन्ति । नियताहारत्वेनेन्द्रियाणां शक्तिह्रासादिति भावः । यद्वा प्राणान्वागादीन्द्रियदेवान् मनःप्रभृत्युत्तमदेवाधीनान्ध्यायन्तीत्यर्थः । अस्मिन्पक्षे भगवत्पूजात्वेन नियताहारः पृथग्यज्ञो ज्ञातव्यः । तान्स्तौति–सर्वेऽप्येत इति । यज्ञविदो यज्ञज्ञाः यज्ञक्षपितकल्मषाः यज्ञानुष्ठाननाशितपापाः ॥ ३० ॥ एवं यज्ञभेदान् ज्ञात्वाताननुतिष्ठतामननुतिष्ठतां च फलभेदमाह–यज्ञेति । यज्ञे देवतायै दत्तहविःशेषोऽमृतमुच्यते तद्भुजः यज्ञानुष्ठातार इति यावत् । सनातनमनादिनित्यं ब्रह्म यान्ति प्राप्नुवन्ति अयज्ञस्य तु अयं लोकः अल्पसुखोऽपि मानुषो लोको नास्ति कुतोऽन्यः स्वर्गादिः । अतो यज्ञाः सर्वथा कार्या इति भावः ॥ ३१ ॥

**एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे ॥**
**कर्मजान्विद्धि तान्सर्वानेवं ज्ञात्वा विमोक्ष्यसे ॥ ३२ ॥**

**त० टी०–उक्तयज्ञानां प्रमाणापेक्षायां वैदिकत्वमाह–एवमिति । एवमुक्तप्रकारेण बहुप्रकारा यज्ञा ब्रह्मणो वेदस्य मुखे पूर्वकाण्डे वितता विस्तृताः । वेदद्वारेणैव ते ज्ञेयाः, वेदादेव वैदिकैः परम्परयावगन्तव्या इत्यर्थः । तान्सर्वान् कर्मजान् कायिकवाचिकमानसकर्मसमुद्भवान् विद्धि जानीहि । कर्मणामनित्यत्वेनात्मस्वरूपस्य च नित्यत्वान्न नित्यसंबन्धः, इत्येवं ज्ञात्वा विमोक्ष्यसे कर्ममयसंसारादित्यर्थः ॥ ३२ ॥**

म० टी०–किं त्वया स्वोत्प्रेक्षामात्रेणैवमुच्यते नहि वेद एवात्र प्रमाणमित्याह–एवमिति । एवं यथोक्ताः बहुविधाः बहुप्रकारा यज्ञाः सर्ववैदिकश्रेयःसाधनरूपाः विततः विस्तृताः ब्रह्मणो वेदस्य मुखे द्वारे वेदद्वारेणैव तेऽवगता इत्यर्थः । वेदवाक्यानि तु प्रत्येकं विस्तरभयान्नोदाह्रियन्ते । कर्मजान् कायिकवाचिकमानसिकर्मोद्भवान्विद्धि जानीहि । तान्सर्वान्यज्ञानात्मजान् निर्व्यापारो ह्यात्मा न तद्व्यापारा एते किंतु निर्व्यापारोऽहमुदासीन इत्येवं ज्ञात्वा विमोक्ष्यसेऽस्मात्संसारबन्धनादिति शेषः ॥ ३२ ॥

शं० टी०–त्वत्कल्पिता एवैते यज्ञा ननु शास्त्रीया इत्याशङ्कायां न, ते वेदैकमूला इत्याह–एवमिति । दैवमेवापरे यज्ञमित्येवमाद्या बहुविधा बहुप्रकारा निरुक्ता यज्ञाः सर्वे ब्रह्मणो वेदस्य मुखे मुखेनैव वितताः विस्तृताः प्रतिपादिता इत्यर्थः । ननु ' यज्ञविदो यान्ति ब्रह्म सनातनम् ' इति यज्ञानामपि साक्षान्मोक्षसाधनत्वं प्रतीयते किं ज्ञानप्रयासेनेत्याशङ्कायां न, तेषामपि कर्मत्वेन "न कर्मणा न प्रजया" इत्यादिबहुश्रुतिविरोधान्न नित्यफलदातृत्वं किंत्वनित्यफलदत्त्वमिति सूचयितुमाह–कर्मजानिति । 'क्रिया कुर्वद्धि कारकम् ' इति स्मरणात्कर्मभ्यः कर्मकारकेभ्यो जाताः कर्मजा वागादीन्द्रियसंभवास्तान् कर्मजान् कर्माण्येव तान् सर्वान् यज्ञान् विद्धि । नन्वपूर्वाः खलु यज्ञा वागादीन्द्रियव्यापारजा एवेति चेदपूर्वत्वे पूर्वत्वे वा तेषां कर्मत्वं न व्यभिचरत्यत एवानित्यफलदत्त्वमेवं ज्ञात्वा नित्यफलदं ज्ञानं प्राप्य संसारान्मोक्ष्यसे नत्वनित्यफलदान् यज्ञानित्यर्थः ॥ ३२ ॥

श्री० टी०–ज्ञानयज्ञं स्तोतुमुक्तान्यज्ञानुपसंहरति–एवमिति । ब्रह्मणो वेदस्य मुखे वितताः वेदेन साक्षाद्विहिता इत्यर्थः । तथापि तान्सर्वान्वाङ्मनःकायकर्मजनितानात्मस्वरूपसंस्पर्शरहितान्विद्धि जानीहि । आत्मनः कर्मागोचरत्वादेवं ज्ञात्वा ज्ञाननिष्ठः सन्संसाराद्विमुक्तो भविष्यसि ॥ ३२ ॥

स० टी०–एवं बहुप्रकारास्ते वेदद्वारेण विस्तृताः ॥ यज्ञा अवगतास्तांस्त्वं यज्ञाञ्जानीहि सर्वकान्

॥ १ ॥ कायवाङ्मनसामेव कर्मभ्यो हि समुद्भवान् ॥ नत्वास्मजान्यतश्चात्मा निर्व्यापारश्चिदद्वयः ॥ २ ॥ मद्व्यापारा न चैवैते निर्व्यापारोऽहमक्षरः ॥ देहेन्द्रियादयः सर्वे क्रियाधारा जडाश्चलाः ॥ ३ ॥ मय्यक्रिये चिदानन्दे कल्पिताः खे यथा मलाः ॥ नह्यध्यस्तस्य दोषेण गुणेनास्ति मनागपि ॥ ४ ॥ लेपोऽधिष्ठानचिद्धातोर्ममाद्वैतस्य सर्वथा ॥ एवं ज्ञात्वैव संसारबन्धनात्त्वं विमोक्ष्यसे ॥ ५ ॥ ३२ ॥

**भा० टी०**—उक्तानां यज्ञानां वेदमूलत्वेनाप्रामाण्यशङ्कां वारयति—**एवमिति** । बहुविधा बहुप्रकारा यज्ञाः ब्रह्मणो वेदस्य मुखे द्वारे वितता विस्तीर्णाः वेदद्वारेणावगम्यमानाः तान्सर्वान्कायिकवाचिकमानसकर्मोद्भवान्न विद्धि । निर्व्यापारो ह्यात्मा न ममात्मस्वरूपस्योदासीनस्य व्यापारा एते इत्येवं ज्ञात्वाऽस्मात्संसारबन्धनान्मोक्ष्यसे ॥ ३२ ॥

**प० टी०**—अथ ज्ञानयोगं स्तोतुमन्यान्यज्ञानुपसंहरति—**एवमिति** । एवममुना प्रकारेण ब्रह्मणो मुखे ब्रह्ममुखान्निःसृते वेदे बहुविधा वितता विस्तृता विस्तारेण कथिताः सन्ति, तान् सर्वान् कर्मजान् विद्धि कर्मणा कृत्वा निष्पन्नान् जानीहि । तस्मात् कर्म कर्तव्यमेव । एवं कर्मणि कृते सति चित्तशुद्धिद्वारा ज्ञात्वा ज्ञानमुत्पाद्य विमोक्ष्यसे मोक्षं प्राप्नोषि ॥ ३२ ॥

**रा० टी०**—उक्तान्कर्मभेदानुपसंहरति—**एवमिति** । एवं दैवमेवेत्यादिना श्लोकषट्केनोक्तदिशा मानसिकवाचिकभेदेन बहुप्रकाराः यज्ञाः ब्रह्मणो हरेर्मुखे वितता विस्तृताः तस्य सर्वयज्ञभोक्तृत्वात् । अहं हि सर्वयज्ञानां भोक्तेत्यादेः श्रोत्रादीत्यादिनोक्तेन्द्रियनियमनादिरूपयज्ञेषु तदाराध्यस्यानुक्तेर्ब्रह्मणोऽन्यस्तदाराध्य इति शङ्कानिरासाय ब्रह्मणो मुखे वितता इत्युक्तम् । ननु यज्ञानां बहुविधत्वे ज्ञानयज्ञादिनैवालं किं कर्मात्मकेन युद्धेनेत्यत आह—**कर्मजानिति** । तान्प्रागुक्तान्सर्वान्यज्ञान्कर्मजान्कर्मरूपान्विद्धि जानीहि मानसवाचिककायिककर्मजान्विद्धीति वार्थः । ततः किमित्यत आह—एवमिति । मानसिकवाचिकादिसर्वयज्ञाः कर्मात्मका इति जानासि चेत् तर्हि युद्धादिस्वविहितकर्माणि कृत्वैव विमोक्ष्यसे संसारादात्मानं मोक्तु ( मोचयितु ) मिच्छसि । सर्वेषां कर्मजत्वज्ञाने सति मोक्षार्थं युद्धादिकं कर्तव्यमिति तवैवेच्छा भविष्यतीत्यर्थः । सर्वेषां यज्ञत्वे ज्ञानोपासनस्वाध्यायाद्यकर्मरूपयज्ञेनैव भगवत्प्रीतिसिद्धेः किं कर्मात्मकयुद्धेनेति पार्थाभिप्रायस्येदमुत्तरं ज्ञात्वेति । तस्यायं भावः, युद्धं हित्वा मोक्षार्थं यदुपासनादिकं करिष्यसि तदपि कर्मात्मकमेव । तथाच युद्धत्यागे विहितधर्मत्याग एव कृतः स्यात् नतु कर्मत्यागः । अत एवं जानतः तव विहितं युद्धादिकं न त्याज्यमिति । एवमभिप्रायाभावे कर्मजानित्यर्थस्य प्रकृतानुपयोगः स्यात् । ननु सत्यमेवमथाप्ययमर्थो लुडन्तशब्देन कथं लभ्यते इति चेत्, नायं लुडन्तः किंतु मुच्लृ मोक्षण इत्यतः सन्नन्तात्कर्मकर्तरि लट्प्रत्यये सति विमोक्ष्यस इति रूपम् । यद्यपि धातोः कर्मण इति सन्प्रत्यये सन्यङोरिति द्विर्वचने हलन्ताच्चेति सनः कित्वेन गुणाभावे च मुमुक्ष्येति भाव्यं तथापि गुणाभ्यासलोपौ छान्दसावित्युपेत्य सन्नन्तान्मोक्षशब्दाद्वर्तमाने लडिति लट्प्रत्यये तस्य सिबादेशे कर्मवत्कर्मणा तुल्यक्रिय इतिसूत्रेण कर्तुः कर्मवद्भावे कर्मकारकनिमित्तयगात्मनेपदचिण्वद्भावादिकार्याणि लभत इत्युक्तेर्यकि सत्यतो लोपे मोक्ष्यस इति रूपसिद्धिर्ज्ञेया । लुडन्तत्वपक्षे त्वयमर्थः सर्वेषां कर्मजत्वं ज्ञात्वा तान्यनुष्ठाय मुक्तो भविष्यसीति ॥ ३२ ॥

**श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ।**
**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ॥ ३३ ॥**

**त० टी०**—सर्वेषां तुल्यवन्निर्देशाज्ज्ञानयज्ञस्यापि तदन्तर्गणनात्तत्साम्यापत्तिं वारयन्नाह—**श्रेयानिति** । हे परन्तप द्रव्यमयाद्दैवादिरूपात्तदुपलक्षिताज्ज्ञानहीनादल्पफलकात्सर्वस्माद्यज्ञाज्ज्ञानयज्ञः

श्रेयान् प्रशस्यतरः। तत्र हेतुः सर्वं कर्म साङ्गोपाङ्गमखिलं हेतुफलसहितं ज्ञाने तत्त्वंपदार्थस्वरूप-गुणसंबन्धविषयकानुभवे परिसमाप्यते अन्तर्भवतीति "सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वशः" इति श्रुतेः। श्रीभागवतेऽपि 'तपस्तीर्थं जपो दानं पवित्राणीतराणि च। नालंकुर्वन्ति तां सिद्धिं या ज्ञानकलया कृता' इति ॥ ३३ ॥

म० टी०—सर्वेषां तु तुल्यवन्निर्देशात्कर्मज्ञानयोः साम्यप्राप्तावाह—**श्रेयानिति**। श्रेयान्प्रशस्यतरः साक्षान्मोक्षफलत्वात् द्रव्यमयात्तदुपलक्षितात् ज्ञानशून्यात्सर्वस्मादपि यज्ञात्संसारफलात् ज्ञानयज्ञ एक एव हे परन्तप कस्मादेवं यस्मात् सर्वं कर्म इष्टिपशुसोमचयनरूपं श्रौतम् अखिलं निरवशेषं स्मार्तमुपासनादिरूपं च यत्कर्म तत् ज्ञाने ब्रह्मात्मैक्यसाक्षात्कारे समाप्यते प्रतिबन्धक्षयद्वारेण पर्यवस्यति "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति "धर्मेण पापमपनुदति" इति च श्रुतेः। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदिति न्यायाच्चेत्यर्थः ॥ ३३ ॥

शं० टी०—तत एव ज्ञानयज्ञं ब्रह्मार्पणम् इत्यनेन मन्त्रेण वर्णितं दैवादिभ्यो यज्ञेभ्यो व्यवहितसाधनेभ्यः साक्षान्मोक्षैकसाधनत्वादुत्कर्षयति—**श्रेयानिति**। द्रव्यमयात् द्रव्यमन्त्रतन्त्रक्रियाश्रमसाध्याद-नित्याल्पस्वर्गादिफलहेतोर्यज्ञादुक्तात्सर्वयज्ञजातान्नित्यनिरन्तरानन्दरूपमोक्षैकफलदो ज्ञानयज्ञः श्रेयान् श्रेष्ठतरसंप्राप्तिः। यत्र ज्ञाने पुंसः कर्तव्यं श्रौतं स्मार्तं लौकिकं यच्च यावच्च तत्सर्वं कर्माखिलं खिलः शेषः स न विद्यते यत्र तदखिलं निःशेषं परिसमाप्यते समापितं भवति। वेलां प्राप्तस्य यथा गन्तव्यं नास्ति तथा ज्ञानं प्राप्तवतः कर्तव्यं किंचिन्नास्तीत्यर्थः। यद्वा यत्र ज्ञाने संप्राप्ते कर्म ब्रह्मकल्पशतार्जितं संचितमागामि च प्रवृत्तमप्रवृत्तं च सर्वमखिलं निरवशेषं परिसमाप्यते ज्ञानशक्त्या सूर्यप्रभया तम इव कर्म सर्वं निर्मूल्यत इत्यर्थः। यद्वा "यथा कृतायविजितायाधरेयाः संयन्ति" इत्येतच्छ्रुत्युक्तरीत्या लोके सर्वत्र पुण्यशरीरिभिर्यज्ञदानतपोव्रतादिरूपं यद्यत्पुण्यं क्रियते तत्सर्वं यस्मिन् ज्ञाने संप्राप्ते विदुषा परिसमाप्यते संप्राप्तं भवति यत्प्राप्त्या सर्वकर्मणामनुष्ठाता विद्वान् भवतीत्यर्थः ॥ ३३ ॥

श्री० टी०—कर्मयज्ञाज्ज्ञानयज्ञस्तु श्रेष्ठ इत्याह—**श्रेयानिति**। द्रव्यमयादनात्मव्यापारजन्याद्दैवादियज्ञाज्ज्ञानयज्ञः श्रेयान्श्रेष्ठः। यद्यपि ज्ञानयज्ञस्यापि मनोव्यापाराधीनत्वमस्त्येव तथाप्यात्मरूपस्य ज्ञानस्य मनःपरिणामेऽभिव्यक्तिमात्रं नतु तज्जन्यत्वमिति द्रव्यमयाद्विशेषः श्रेष्ठत्वे हेतुः। सर्वं कर्माखिलं फलसहितं ज्ञाने परिसमाप्यते अन्तर्भवतीत्यर्थः। "सर्वं तदभिसमेति यत्किंचित्प्रजाः साधु कुर्वन्ति" इति श्रुतिः ॥ ३३ ॥

स० टी०—उक्तैर्बहुविधैर्यज्ञैर्ज्ञानाख्यः स्तूयतेऽध्वरः ॥ द्रव्यसाधनसाध्याच्च सर्वस्माज्ज्ञानवर्जितात् ॥ १ ॥ संसारफलकाद्यज्ञाज्ज्ञानयज्ञोऽधिकोत्तमः ॥ समस्तं वैदिकं कर्माखिलं स्मार्तमुपासनम् ॥ २ ॥ ब्रह्मात्मैक्यावबोधे तत्पर्यवस्यति सर्वथा ॥ प्रतिबन्धक्षयद्वारा ज्ञानयज्ञस्ततो वरः ॥ ३ ॥ ३३ ॥

भा० टी०—कर्मजान्विद्धि तान्सर्वानित्युक्त्या सर्वेषु ज्ञानयज्ञस्याप्युक्तत्वात् इतरसाम्यमाशङ्क्याह—**श्रेयानिति**। देहेन्द्रियादिद्रव्यसाध्यात्संसारफलात् द्रव्ययज्ञात् ज्ञानयज्ञो मोक्षफलकोऽतिशयेन श्रेष्ठः। परन्तपेति संबोधयन् चित्तशुद्ध्या ज्ञानं लब्ध्वाऽज्ञानात्मकं शत्रुं तापयितुं मारयितुं समर्थो भविष्यसि न कर्ममात्रेणेति सूचयति। तत्र हेतुमाह—सर्वमग्निहोत्रादिकं कर्मोक्तद्वादशयज्ञात्मकम्। सर्वमिति प्रकरणात्संकोचमाशङ्क्याह—अखिलमुक्तानुक्तं श्रौतस्मार्तमुपासनादिरूपं ज्ञाने तत्त्वसाक्षात्कारे मोक्षसाक्षात्कारे मोक्षसाधने परिसमाप्यतेऽन्तर्भवति 'यावानर्थ उदपाने सर्वतः संप्लुतोदके। तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः' इत्युक्तत्वात्। यद्वा प्रतिबन्धक्षयद्वारेण पर्यवस्यति "तमेतं वेदानुवचनेन विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः। सर्वापेक्षा च यज्ञादिश्रुतेरश्ववदितिन्यायाच्चेत्यर्थः। अस्मिन्पक्षे निष्कामकर्मणामेव तत्र विनियोगात्सर्वं क-

र्माखिलमिति संकोचनिवारकयोः सर्वाखिलपदयोरन्यतरस्य प्रयोजनं चिन्त्यं, यथा युधिष्ठिरभीमसेनयोरपि पार्थेत्यस्मिन्नन्तर्भावस्तथा " एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति " इतिश्रुत्या ज्ञानकण्डाफले तत्त्वसाक्षात्कारे इतरकाण्डफलस्यान्तर्भाव इति ध्वनयन्नाह—पार्थेति ॥ ३३ ॥

प० टी०—ज्ञानयोगं स्तौति—श्रेयानिति । द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः श्रेयान् द्रव्यं स्वर्गादिविषयभोगलक्षणं तन्मयस्तत्प्रसादको यो यज्ञस्तस्माज् ज्ञानयज्ञः श्रेयानतिशयेन श्रेयःसाधकः परमसुखप्रापकः । अथैतदेव विविच्य कथयति—सर्वमिति । कर्म द्वेधा खिलमखिलं चेति । तत्र खिलं दुष्टफलजनकमखिलं ज्ञानजनकमेवं सर्वमखिलं कर्म ज्ञाने परिसमाप्यते ज्ञाने पर्यवसितं भवति । खिलं तु तद्विपरीतमज्ञानपर्यवसायीत्यर्थः ॥ ३३ ॥

रा० टी०—उक्तयज्ञेषु को यज्ञः श्रेष्ठ इति जिज्ञासायामाह—श्रेयानिति । द्रव्यमयादिति प्रागुक्तयज्ञान्तराणामुपलक्षणम् । देवतोद्देशेन द्रव्यत्यागादिरूपाद्यज्ञाद्भगवज्ज्ञानसंपादनरूपो यज्ञः श्रेयान् श्रेष्ठः । कुत इत्यत उक्तम्—सर्वमिति । अखिलं खिलं सशेषं न भवतीत्यखिलं 'समुद्रं मनसा ध्यायीत' इत्यादिकर्मसमृद्धयर्थोपासनाद्यङ्गसंहितं सर्वं कर्म ज्ञाने परिसमाप्यते पूर्यते । ज्ञाने जाते ज्ञानलक्षणफलेन सफलं भवतीत्यर्थः। यद्वा आखिलमिति विभागः आसमन्तात् खिलमल्पमत्यल्पमपि सर्वं कर्म ज्ञाने जाते परिसमाप्यते फलवद्भवतीत्यर्थः ॥ ३३ ॥

## तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
## उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ ३४ ॥

**त० टी०—एवंभूतज्ञानप्राप्तिः केनोपायेन स्यादित्यपेक्षायामाह—तद्विद्धीति। तत्सर्वकर्मविलक्षणं सर्वफलदं ज्ञानं विद्धि लभस्व, उक्तज्ञानवतां प्रणिपातेन श्रद्धाभक्तिपूर्वकदण्डवत्प्रणामेन। ततश्च कोऽहं किंस्वरूपः कथं बद्धोऽस्मि कथं वा मुच्येयं को वा मे नियन्तेत्यादिपरिप्रश्नेन बहुविधसंदेहविषयेण प्रश्नेन सेवया शुद्धभावेन शुश्रूषया च प्रसादाभिमुखा ज्ञानिनः शास्त्रजन्यपरोक्षानुभववन्तः, तत्त्वदर्शिनः शास्त्रार्थभूततत्त्वसाक्षात्काराश्रयास्ते तुभ्यं ज्ञानं जीवेश्वरस्वरूपयाथात्म्यमुपदेक्ष्यन्ति, समीचीनयुक्तिप्रमाणैः संदेहनिनिवर्तनेन संपादयिष्यन्ति । तत्त्वदर्शिभिरेवोपदिष्टे ज्ञाने सर्वं कर्मान्तर्भवति, नत्वन्योपदिष्टे इत्यर्थः। एतेन " तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " इति श्रुत्यर्थो दर्शितः। बहुवचनं चात्र यद्येकस्माद्गुरोः सम्यग्ज्ञानालाभश्चेत्तर्ह्यन्यस्मात्तत्त्वदर्शिन उक्तरीत्यैवोपादेयम् । तत्रापि संदेहावशेषेऽन्यस्माद्ग्राह्यमित्येतदर्थम् । एकस्मादेव कृतार्थतायां नेतरापेक्षेति विवेकः ॥ ३४ ॥**

म० टी०—एतादृशज्ञानप्राप्तौ कोऽतिप्रत्यासन्न उपाय इति उच्यते—तद्विद्धीति । तत्सर्वकर्मफलभूतं ज्ञानं विद्धि लभस्व आचार्यानभिगम्य तेषां प्रणिपातेन प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारस्तेन कोऽहं कथं बद्धोऽस्मि केनोपायेन मुच्येयमित्यादिपरिप्रश्नेन बहुविषयेण प्रश्नेन सेवया सर्वभावेन तदनुकूलकारितया एवं भक्तिश्रद्धातिशयपूर्वकेणावनतिविशेषेणाभिमुखाः सन्त उपदेक्ष्यन्ति उपदेशेन संपादयिष्यन्ति ते तुभ्यं ज्ञानं परमात्मविषयं साक्षान्मोक्षफलज्ञानिनः पदवाक्यन्यायादिमाननिपुणाः तत्त्वदर्शिनः कृतसाक्षात्काराः साक्षात्कारवद्भिरुपदिष्टमेव ज्ञानं फलपर्यवसायि नतु तद्रहितैः पदवाक्यमाननिपुणैरपीति भगवतो मतं, " तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् " इति श्रुतिसंवादि । तत्रापि श्रोत्रियमधीतवेदं ब्रह्मनिष्ठं कृतब्रह्मसाक्षात्कारमिति व्याख्यानात् । बहुवचनं चेदमाचार्यविषयमेकस्मिन्नपि गौरवातिशयार्थं नतु बहुत्वविवक्षया एकस्मादेव तत्त्वसाक्षात्कारवत आचार्यात्तत्त्वज्ञानोदये सत्याचार्यान्तरगमनस्य तदर्थमयोगादिति द्रष्टव्यम् ॥ ३४ ॥

**शं० टी०**—एवंविशेषणविशिष्टं ज्ञानं कथं मे सिध्येदित्याकाङ्क्षायामाह—**तद्विद्धीति**। यत्तु द्रव्ययज्ञादिभ्यो विशिष्टतरं साक्षान्मोक्षैकफलप्रदं तज्ज्ञानं गुरुभ्यो विद्धि। गुरून् प्रसाद्य तेभ्यो विजानीहीत्यर्थः। केन प्रसन्ना भूत्वा गुरवोऽत्यन्तरहस्यमिदं ज्ञानं मह्यमुपदेक्ष्यन्तीत्याकाङ्क्षायामाह—**प्रणिपातेनेति**। प्रणिपातेन प्रणिपातः साष्टाङ्गनमस्कारस्तेन सेवया काले काले श्रद्धाभक्तिभ्यां क्रियमाणशुश्रूषया च समये विनयेनोपसङ्गम्य क्रियमाणपरिप्रश्नेन 'कथं बन्धः कथं मोक्षो विद्याविद्ये उभे च के। क आत्मा कः परात्मा च तयोरैक्यं कथं वद' इत्यादिविवेकप्रश्नेन चैवं प्रणिपातशुश्रूषाविवेकप्रश्नैस्त्वयि श्रद्धां भक्तिं पाण्डित्यमुपदेशयोग्यतां च दृष्ट्वा प्रसन्ना भूत्वा ज्ञानिनः शास्त्रजन्यज्ञानसंपत्तिमन्तस्तत्त्वदर्शिनः साक्षात्कारजन्यवस्तुयाथात्म्यवेदनवन्तश्चोक्तविशेषणद्वयविशिष्टैरुपदिष्टं ज्ञानं संसारनिवर्तकं भवत्यतो विशेषणद्वयेन भवितव्यं गुरोरेवं लक्षणसंपन्ना गुरवस्ते तुभ्यं शमदमादिसाधनवते ज्ञानं ब्रह्मात्मैकत्वावगमकं निःशेषसंसारभ्रमापनोदकमुपदेक्ष्यन्ति दययाऽनुग्रहीष्यन्तीत्यर्थः। "श्रोत्रियं ब्रह्मनिष्ठम्" इतिश्रवणाज्ज्ञानिन इति तत्त्वबोधने गुरूणां सर्वशास्त्रार्थपरिज्ञानसंपत्तिं तत्त्वदर्शिन इति वस्तुविषयकाऽप्रतिबद्धानुभवसंपत्तिमपेक्ष्य विशेषणद्वयोपन्यासः। बहुवचनं तु 'बहुभ्यः श्रोतव्यं बहुधा' इतिन्यायमनुसृत्य च सत्सु बहुषु गुरुष्वत्र कश्चिदेको ब्रह्मवित्तमो लभ्यते ततः संसारभ्रमापनोदकं सम्यग्ज्ञानं सलक्षणं सेत्स्यतीत्यभिप्रायेण चोक्तं नतु बहुभ्यो ज्ञानं संपादनीयमिति "श्रोत्रियं ब्रह्मनिष्ठम्" इत्येकवचनश्रवणात् 'उपसीदेदेकमेव सद्गुरुं ब्रह्मवित्तमम्' इतिवचनाच्च। तस्माच्छास्त्रज्ञं तत्त्वज्ञं च गुरुमाश्रयेदिति सिद्धम्॥ ३४॥

**श्री० टी०**—एवंभूतात्मज्ञाने साधनमाह—**तद्विद्धीति**। तज्ज्ञानं विद्धि प्राप्नुहि ज्ञानिनां प्रणिपातेन दण्डवन्नमस्कारेण ततः परिप्रश्नेन कुतोऽयं मम संसारः कथं वा निवर्तेत इतिप्रश्नेन सेवया शुश्रूषया च ज्ञानिनः शास्त्रज्ञास्तत्त्वदर्शिनः अपरोक्षानुभवसंपन्नाश्च ते तुभ्यं ज्ञानमुपदेशेन संपादयिष्यन्ति॥ ३४॥

**स० टी०**—तादृशज्ञानसंप्राप्तावुपायः प्रोच्यतेऽधुना॥ अभिगम्य त्वमाचार्यांस्तज्ज्ञानं मोक्षसाधनम्॥१॥ लभस्व येन विधिना प्राप्यते तं त्वमाश्रय॥ नमस्कारेण दीर्घेण दैशिकानां महात्मनाम्॥ २॥ कोऽहं कथमहं बद्धो मुच्येयं कथमञ्जसा॥ का विद्या कास्त्यविद्या वेत्यादिप्रश्नैरनेकधा॥ ३॥ सेवया सर्वभावेन गुरूणां हितरूपया॥ एवं तेऽभिमुखाः सन्तो भक्तिश्रद्धादिभिर्गुणैः॥ ४॥ तुभ्यं संपादयिष्यन्ति ज्ञानं ब्रह्मैक्यगोचरम्॥ उपदेशेन साक्षाद्यन्मोक्षसाधनमुत्तमम्॥ ५॥ पदवाक्यप्रमाणज्ञा ब्रह्मयाथात्म्यदर्शिनः॥ सम्यग्दर्शिभिरेवेदमुपदिष्टं यथाविधि॥ ६॥ फलपर्यवसायि स्याज्ज्ञानं नत्वज्ञपण्डितैः॥ एकस्मिन्नपि चाचार्ये गौरवातिशयाय तत्॥ ७॥ बहुत्वं ज्ञानिनश्चेति न बहुत्वविवक्षया॥ ८॥३४॥

**भा० टी०**-तदेतत्सर्वोत्तमं ज्ञानं तर्हि केन साधनेन लभ्यत इत्याह—**तदिति**। यत्र सर्वकर्मफलमन्तर्भवति तज्ज्ञानं विद्धि जानीहि। येन विधिना प्राप्यत इति विद्धि लभस्वेत्यर्थस्तु अदादेर्ज्ञानार्थत्वात् मुख्ये संभवति अमुख्यस्यान्याय्यत्वादाचार्यैर्न प्रदर्शितः। आचार्यानभिगम्य प्रकर्षेण नीचैः पतनं प्रणिपातो दीर्घनमस्कारः तेन कथं बन्धः कथं मोक्षः कस्य केन विमुच्यते विद्याविद्ये कथंभूते कोऽहं दृश्यमिदं च किंमिति परिप्रश्नेन सेवया गुरुशुश्रूषया गुर्वभिमुख्यसंपादिकया मायाविनिर्मुक्तया इत्येवमादिना प्रश्रयेण प्रसादिता गुरवो ज्ञानिनः न्यायविचारपूर्वकवेदार्थज्ञाः तत्त्वदर्शिनः तत्त्वसाक्षात्कारवन्तः ते ज्ञानमुपदेक्ष्यन्ति 'पदवाक्यप्रमाणज्ञैः सम्यक्तत्त्वविलोकिभिः। उक्ताज्ज्ञानाद्भवेत्कार्यं नान्यैरिति हरेर्मतम्' तथाच श्रुतिः "तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम्" इति। बहुवचनं त्वादरार्थमिति बोध्यम्॥ ३४॥

प० टी०—एवंभूतात्मज्ञाने साधनमाह—तद्विद्धीति । द्वाभ्याम् । तत्त्वदर्शिनो ज्ञानिनोऽपरोक्षसाक्षात्कारवन्तस्ते तुभ्यं ज्ञानमुपदेक्ष्यन्ति तद्विद्धि तादृशं जानीहि ॥ ३४ ॥

रा० टी०—कर्मणो ज्ञानमधिकमित्युक्त्वा तत्संपादयेत्याह—तदिति । तस्माज्ज्ञानस्याधिकत्वात्कर्मणां ज्ञानेनैव फलवत्त्वादिति वा तत्त्वदर्शिनो ज्ञानिनः प्रणिपातेन त्वत्कृतवन्दनेन त्वत्सेवया त्वत्कृतपरिप्रश्नेन च ते तुभ्यं ज्ञानं ज्ञानजनकं शास्त्रमुपदेक्ष्यन्ति तेभ्यस्तज्ज्ञातव्यमर्थं विद्धि जानीहि । तदित्यस्यावृत्तिः । अर्जुनस्य ज्ञानित्वेऽपि ज्ञानतिरोभावनिवृत्त्यर्थं विद्धीत्युक्तिः पार्थं प्रति ज्ञानोपदेशार्थमेव कृष्णस्य प्रवृत्तत्वात् । नत्वेवाहमित्यादिना संक्षेपेणोपादिष्टत्वात्, ज्ञानं तेऽहं सविज्ञानमित्यादिना विस्तरेणोपदेक्ष्यमाणत्वात्, तदविरोधायोपदेक्ष्यन्तीत्यस्योपदेक्ष्याम इत्यर्थो ज्ञेयः ॥ ३४ ॥

**यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डव ।**
**येन भूतान्यशेषेण द्रक्ष्यस्यात्मन्यथो मयि ॥ ३५ ॥**

त० टी०—एवंभूतमाहात्म्यस्य ज्ञानस्येहापि यत्फलं तद्दर्शयति—यदिति । यत्तत्त्वदर्शिभिरुपदिष्टं ज्ञानं ज्ञात्वा सम्यगवधार्य पुनर्मोहमन्तःकरणविभ्रमम्, एवं यथा यानेव हत्वा न जिजीविषामः, इत्याद्युक्तप्रकारेण न यास्यसि प्राप्स्यसि । कुतस्तत्राह—येन ज्ञानेन भूतानि बन्धुसुहृदादीनि, अशेषेण देवमनुष्यतिर्यगन्तानि सर्वाणि आत्मनि त्वंपदार्थे द्रक्ष्यसि आत्मतुल्यतया ज्ञास्यसि । वैषम्यं तु प्रकृतिकार्यशरीरनिष्ठम्, आत्मा तु ज्ञानस्वरूपत्वेन सर्वत्र देहेषु सम एवातो न मत्तः कश्चिद्विलक्षणोऽस्तीति निश्चेष्यसीत्यर्थः। अथोऽनन्तरं मयि सर्वात्मनि तत्पदार्थे वासुदेवे भगवति सर्वाणि भूतान्यशेषेण द्रक्ष्यसि, आत्मनां सर्वेषां मदात्मकत्वमदधीनत्वमद्व्याप्यत्वमदाधेयत्वादिना बन्धे मोक्षे च मत्तोऽन्यत्रावस्थित्यभावादित्यर्थः ॥ ३५ ॥

म० टी०—एवमतिनिर्बन्धेन ज्ञानोत्पादने किं स्यादत आह—यदिति । यत्पूर्वोक्तं ज्ञानमाचार्यैरुपदिष्टं ज्ञात्वा प्राप्य ओदनपाकं पचतीतिवत्तस्यैव धातोः सामान्यविवक्षया प्रयोगः । न पुनर्मोहमेवं बन्धुवधादिनिमित्तं भ्रमं यास्यसि हे पाण्डव । कस्मादेवं यस्मात् येन ज्ञानेन भूतानि पितृपुत्रादीनि अशेषेण ब्रह्मादिस्तम्बपर्यन्तानि स्वाविद्याविजृम्भितानि आत्मनि त्वयि त्वंपदार्थे अथो अपि मयि भगवति वासुदेवे तत्पदार्थे परमार्थतो भेदरहिते अधिष्ठानभूते द्रक्ष्यस्यभेदेनैव अधिष्ठानातिरेकेण कल्पितस्याभावात् । मां भगवन्तं वासुदेवमात्मत्वेन साक्षात्कृत्य सर्वाज्ञाननाशेन तत्कार्याणि भूतानि न स्थास्यन्तीति भावः ॥ ३५ ॥

शं० टी०—सद्गुरूपदेशेन लब्धज्ञानस्य फलमाह—यज्ज्ञात्वेति । प्रसन्नैर्ब्रह्मविद्भिरुपदिष्टं यज्ज्ञानं ज्ञात्वा तदेकनिष्ठया प्राप्य त्वमेवमिदानीं यथा तथा पुनर्मोहमहमेते मदीया इत्यात्मन्यद्वितीये त्वनेकत्वभ्रमं न यास्यसि त्वमहमिदमद इत्यादिमिथ्याज्ञानं त्यक्ष्यसीत्यर्थः । ननु सति द्वैतज्ञानहेतौ भूतजाते कथमात्मनोऽद्वितीयत्वमित्यत आह—येनेति । आत्मैवेदं सर्वमिति सर्वस्य भूतजातस्यात्ममात्रत्वग्राहकेण येन सूक्ष्मबुद्ध्या समधिगतेन ज्ञानेन भूतानि ब्रह्मादिस्तम्बपर्यन्तान्यशेषेणाशेषाणि साक्षादहमेवेदं सर्वमिति स्वाभिन्नानि द्रक्ष्यसि घटकलशशरावादि सर्वं बुद्धिसौक्ष्म्येण मृण्मात्रं चित्रं भित्तिमात्रं तरङ्गफेनबुद्बुदादि जलमात्रं यथा तथा भूतजातं सर्वं स्वमात्रमेव द्रष्टासीत्यर्थः । ननु तथापि ब्रह्मात्मा चेति भेदोऽस्त्येव कथमद्वैतसिद्धिरित्यत आह—अथो मयीति । तानि भूतानि मयि निर्विशेषे परे ब्रह्मण्यप्यथो समनन्तरमेव द्रक्ष्यसि चैवं तव च मम च सर्वात्मकत्वं दृष्ट्वा द्वयोरप्येकत्वं द्रक्ष्यसीत्यर्थः । "तत्त्वमसि" इतिश्रुतेः । यद्वा सर्वभूतात्मकमात्मानं दृष्ट्वा तमात्मानं निर्विशेषं मयि सर्वाधिष्ठाने परे ब्रह्मणि द्रक्ष्यसि ब्रह्माभिन्नमात्मानं द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

श्री० टी०–ज्ञानफलमाह–यज्ज्ञात्वेति सार्धैस्त्रिभिः । यज्ज्ञानं ज्ञात्वा प्राप्य पुनर्बन्धुवधादिनिमित्तं मोहं न प्राप्स्यसि । तत्र हेतुः येन ज्ञानेन भूतानि पितृपुत्रादीनि स्वाविद्यारचितानि स्वात्मन्येवाभेदेन द्रक्ष्यसि अथो अनन्तरमात्मानं मयि परमात्मन्येवाभेदेन द्रक्ष्यसीत्यर्थः ॥ ३५ ॥

स० टी०–एवमत्याग्रहेणात्मज्ञानस्योत्पादने सति ॥ फलमाह कृपासिंधुर्वासुदेवो जगद्गुरुः ॥ १ ॥ उपदिष्टं परात्मैक्यज्ञानं ब्रह्मात्मदर्शिभिः ॥ प्राप्य त्वं बन्धुविच्छेदनिमित्तं मोहमाविदम् ॥ २ ॥ पाण्डुपुत्र कदाचिन्न भूयो यास्यसि पूर्ववत् ॥ येन ज्ञानेन भूतानि ब्रह्मादीन्यप्यशेषतः ॥ ३ ॥ स्वाविद्याकार्यभूतानि त्वंपदार्थे त्वमात्मानि ॥ मयीशे तत्पदार्थेऽपि वस्तुतो भेदवर्जिते ॥ ४ ॥ अधिष्ठाने ह्यभेदेन द्रक्ष्यस्यात्मसमयानि च ॥ अधिष्ठानातिरेकेण कल्पितस्याप्यभावतः ॥ ५ ॥ साक्षात्कृत्यात्मरूपेण वासुदेवं हि मां हरिम् ॥ ध्वस्तेऽज्ञाने च तत्कार्ये न स्थास्यति जगद्भ्रमः ॥ ६ ॥ ३५ ॥

भा० टी०–ज्ञानफलमाह–यदिति यत्तैरुपदिष्टं ज्ञानं ज्ञात्वा लब्ध्वा। यत्तु यच्चिन्मात्रस्वरूपं ब्रह्म ज्ञात्वेति तन्न पूर्वप्रस्तुतज्ञानपरामर्शेनार्थसंभवे यच्छब्देनाप्रस्तुतपरामर्शस्यान्याय्यत्वात् । एवमिदानीमिव पुनर्मोहं न यास्यसि न प्राप्स्यसि । किंच न केवलं स्वसंबन्धिनिबन्धनमेव मोहं यास्यस्यपि तु सर्वभूतनिबन्धनमित्याह–येन ज्ञानेनाशेषेण सर्वाणि भूतानि ब्रह्मादिस्तम्बपर्यन्तानि मयि प्रत्यगात्मनि कल्पितानीति स्वस्मिन्साक्षाद्द्रक्ष्यसि । अथो मयि वासुदेवे परमेश्वरे चेमानीति प्रत्यगात्मैकत्वं सर्ववेदान्तेषु प्रसिद्धं द्रक्ष्यसीत्यर्थः । अथो अनन्तरमात्मानं मयि परमात्मन्यभेदेनेति वा अस्मिन्पक्षेऽध्याहारदोषः परिहर्तव्यः । यद्वाऽथो अपि च येन ज्ञानेन भूतान्यात्मनि मयि त्वंपदलक्ष्यार्थादनन्यभूते इति अस्मिन्पक्षे सति संभवेऽथोशब्दस्य दूरान्वयोऽयुक्त इति ध्येयम् । पाण्डवेति संबोधयन् यथाधुनाऽहं पाण्डुपुत्र एते मदीया इत्यहंकारममकाराभ्यां मोहं गतोऽसि तथा ज्ञानं तन्मूलोच्छेदकं लब्ध्वा न यास्यसीति द्योतयति ॥ ३५ ॥

प० टी०–कीदृशमित्याह–यदिति । एवमुक्तप्रकारेण यज्ज्ञात्वा न पुनर्बन्धादिविषादरूपं मोहं यास्यसीति । अथ तस्य ज्ञानस्य मोहनिवर्तकत्वमाह–येनेति । येनाशेषेण सर्वात्मकत्वरूपेण ज्ञानेन कृत्वा भूतानि पितृपुत्रसुहृद्बन्ध्वादीनि मय्यात्मनि व्यापके समष्टिरूपेण पश्यसि ॥ ३५ ॥

रा० टी०–स्वेनोपदेक्ष्यमाणं ज्ञानं स्तौति भगवान्—यज्ज्ञात्वेति । यत् मया वक्ष्यमाणं ज्ञात्वा पुनः एवमाद्याध्यायोक्तदिशा बन्धुविषयमोहं न यास्यसि । हे पाण्डव येन ज्ञानेन अथो मोहनाशाद्धेतोरात्मनि सर्वान्तर्यामिणि मणिभूतान्यशेषेण द्रक्ष्यसि मदाधारत्वेन सर्वभूतानि तिष्ठन्तीति द्रक्ष्यसीत्यर्थः । यद्वा आत्मनि सर्वत्र व्याप्ते मयि अथो व्याप्तत्वादेव सर्वभूतान्यशेषेण द्रक्ष्यसि येन ज्ञानेन तद्विद्धि तज्ज्ञानविषयं जानीहीति विद्धि प्राप्नुहीति वान्वयः ॥ ३५ ॥

## अपि चेदसि पापेभ्यः सर्वेभ्यः पापकृत्तमः ॥
## सर्वं ज्ञानप्लवेनैव वृजिनं संतरिष्यसि ॥ ३६ ॥

त० टी०–अन्यदपि ज्ञानमाहात्म्यं शृण्वित्याह–अपि चेदिति । अपिचेच्छब्दौ कदाचित्संभावनापरौ । ज्ञानमाहात्म्यद्योतनायासंभावितमप्यर्थमङ्गीकृत्योच्यते । यद्यपि सर्वपापेभ्यः पापकारिभ्यः पापकृत्तमस्त्वमसि, तथाऽपि सर्वं वृजिनं पापं ज्ञानप्लवेनैव ज्ञानरूपपोतेनैव सम्यक् तरिष्यसि अतिक्रमिष्यसि ॥ ३६ ॥

म० टी०–किंच–अपि चेदिति । शृणु ज्ञानस्य माहात्म्यम् । अपिचेदित्यसंभाविताभ्युपगमप्रदर्शनार्थौ निपातौ । यद्यप्ययमर्थो न संभवत्येव तथापि ज्ञानफलकथनायाभ्युपेत्योच्यते । यद्यपि त्वं पापकारिभ्यः

सर्वेभ्योऽप्यतिशयेन पापकारी पापकृत्तमः स्यास्तथापि सर्वं वृजिनं पापमतिदुस्तरत्वेनार्णवसदृशं ज्ञानप्लवेनैव नान्येन ज्ञानमेव प्लवं पोतं कृत्वा संतरिष्यसि सम्यगनायासेन पुनरावृत्तिवर्जितत्वेन च तरिष्यसि अतिक्रमिष्यसि। वृजिनशब्देनात्र धर्माधर्मरूपं कर्म संसारफलमभिप्रेतं मुमुक्षोः पापवत्पुण्यस्याप्यनिष्टत्वात् ॥ ३६ ॥

**शं० टी०**–एवंविधं ज्ञानं प्राप्यापि भीष्मद्रोणादिगुरुस्वजनवधजनितात्पापान्मुक्तो न स्यामेवेत्याशङ्कावन्तमर्जुनमालक्ष्याह–**अपि चेदिति**। महापातकोपपातकतत्समपापसंकरीकरणमलिनीकरणादीनि पापान्युक्तान्यनुक्तानि च सर्वाणि समस्तानि व्यस्तानि च ये कुर्वन्ति ते पापाः पापकारिणस्त्रिलोकस्था भूतभविष्यद्वर्तमानकालीना एतेभ्यः सर्वेभ्यः पापेभ्यः पापकारिभ्योऽपि यदि त्वं पापकृत्तमस्तैः सर्वैः कृतं पापं त्वयैकेनैव यदा कृतं भवति तदा त्वं पापकृत्तमो भवितासि एवं पापकृत्तमोऽप्यसि चेत्तत्सर्वं वृजिनार्णवं ज्ञानप्लवेन स्वस्य कूटस्थासङ्गचिद्रूपत्वेन विक्रियासंभवान्नाहं कर्मणां कर्ता सदा निष्क्रिय एवास्मीति यदविक्रियत्वज्ञानं तदेव प्लवस्तरणिस्तेनैव संतरिष्यसि किमु वक्तव्यं भीष्मादिवधजं पापं तरिष्यसीति ॥३६॥

**श्री० टी०**–किंच–**अपि चेदिति**। सर्वेभ्यः पापकारिभ्यो यद्यपि अतिशयेन पापकारी त्वमसि तथापि सर्वं पापसमुद्रं ज्ञानपोतेनैव सम्यगनायासेन तरिष्यसि ॥ ३६ ॥

**स० टी०**–शृणु ज्ञानस्य माहात्म्यं पावनानां सुपावनम् ॥ सर्वेभ्यः पापकारिभ्यस्त्वमाधिक्येन यद्यपि ॥ १ ॥ पापकारी तथाप्येवं दुस्तरत्वेन संकटम् ॥ पापार्णवमिदं सर्वं ज्ञानं पोतं विधाय च ॥२॥ पुनरावृत्तिशून्यत्वात्सुखेनातिक्रमिष्यसि ॥ धर्माधर्मात्मकं कर्म सर्वं वृजिनशब्दतः ॥ ३ ॥ अभिप्रेतं मुमुक्षोर्हि बन्धहेतुतया यतः ॥ हेयं पुण्यमतीत्येवं भगवन्मतमुत्तमम् ॥ ४ ॥ ३६ ॥

**भा० टी०**–किंच न केवलमेतावदेव किंत्वन्यत् ज्ञानमाहात्म्यमपि शृण्वित्याह–**अपि चेदिति**। असंभाविताभ्युपगमार्थं निपातद्वयम्। यदि चेत्त्वं सर्वेभ्यः पापकृद्भ्योऽतिशयेन पापकृदसि तथापि ज्ञानमेवप्लवं पोतं तरणसाधनं कृत्वा वृजिनार्णवं धर्माधर्मरूपदुःखसमुद्रं तरिष्यसि मुमुक्षुं प्रति पुण्यस्याऽपि वृजिनरूपत्वात्। तथाच श्रुतिः "तथा स यो ह मां वेद न ह वै तस्य केनचन कर्मणा लोको मीयते न स्तेयेन न भ्रूणहत्यया न साधुना कर्मणा भूयान् भवति नो एवाऽसाधुना कनीयान्। त्रिशीर्षाणं त्वाष्ट्रमहनमरुन्मुखान्यतीन् सालावृकेभ्यः प्रायच्छम्" इत्याद्याः ॥ ३६ ॥

**प० टी०**–ननूपदेशाज्ज्ञानप्राप्तौ सत्यां मोहनिवृत्तिर्भवति तत्पूर्वं मोह एवास्तीत्याशङ्क्याह–**अपीति**। त्वं चेत्पापेभ्यो हिंस्रेभ्यः पापकृत्तमोऽस्यतिशयेन पापकर्तासि तथापि सर्वं वृजिनं पापसमुद्रं ज्ञानप्लवेन ज्ञाननौकया सम्यक्प्रकारेण तरिष्यसि। अयमर्थः—"सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रुतेर्ज्ञानं हि परमात्मस्वरूपं तत्सत्यं तदतिरिक्तं सर्वमसत्यम्। एवं पितृपुत्रसुहृद्बन्ध्वादिसकलप्रपञ्चस्य मिथ्यात्वाज्ज्ञानैकनाश्यत्वम्। यथा स्वाप्नब्रह्महत्यायां जागरे प्रायश्चित्तादर्शनात् ॥ ३६ ॥

**रा० टी०**–येनेति करणतया निर्दिष्टं ज्ञानमेव स्तौति पुनः–**अपि चेदसीत्यादित्रयेण**। सर्वेभ्यः पापेभ्यः पापकृद्भ्योऽपि पापकृत्तमश्चेदसि अतिशयेन पापकारी चेदसीतियावत् तथापि सर्वं वृजिनं ज्ञानप्लवेनैव ज्ञानाख्यनावा संतरिष्यसि पापादतिक्रान्तो भविष्यसीत्यर्थः ॥ ३६ ॥

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन ॥**
**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ ३७ ॥**

**त० टी०**–ननु यथा प्लवेन तरणे समुद्रनाशो न भवति, तथा ज्ञानप्लवेन कर्मणामपि नाशो न

स्यादित्याशङ्क्याऽऽह—यथेति । यथा समिद्धः प्रज्वलितोऽग्निः एधांसि काष्ठानि भस्मसात्कुरुते हे अर्जुन, तथा ज्ञानाग्निः सर्वकर्माणि प्रारब्धभिन्नानि पापपुण्यरूपाणि भस्मसात्कुरुते ॥ ३७ ॥

म० टी०—ननु समुद्रवत्तरणे कर्मणां नाशो न स्यादित्याशङ्क्य दृष्टान्तान्तरमाह—यथेति । यथा एधांसि काष्ठानि समिद्धः प्रज्वलितोऽग्निर्भस्मसात्कुरुते भस्मभावं नयति हे अर्जुन ! ज्ञानाग्निः सर्वकर्माणि पापानि पुण्यानि चाविशेषेण प्रारब्धफलभिन्नानि भस्मसात्कुरुते तथा तत्कारणाज्ञानविनाशेन विनाशयतीत्यर्थः । तथाच श्रुतिः "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" इति । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्, इतरस्याप्येवमसंश्लेषः पाते तु" इति च सूत्रे । अनारब्धे पुण्यपापे नश्यत एवेत्यत्र सूत्रम् "अनारब्धकार्ये एव तु पूर्वे तदवधेः" इति ज्ञानोत्पादकदेहारम्भकाणां तु तद्देहान्त एव विनाशः "तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इतिश्रुतेः "भोगेन त्वितरे क्षपयित्वा संपद्यते" इति सूत्राच्च । आधिकारिकाणां तु यान्येव ज्ञानोत्पादकदेहारम्भकाणि तान्येव देहान्तरारम्भकाण्यपि यथा वसिष्ठापान्तरतमःप्रभृतीनाम् । तथाच सूत्रम् "यावदधिकारमवस्थितिराधिकारिकाणाम्" इति अधिकारोऽनेकदेहारम्भकं बलवत्प्रारब्धफलं कर्म तच्चोपासकानामेव नान्येषामनारब्धफलानि नश्यन्ति आरब्धफलानि तु यावद्भोगसमाप्ति तिष्ठन्ति । भोगश्चैकेन देहेनानेकेन वेति न विशेषः । विस्तरस्त्वाकरे द्रष्टव्यः ॥ ३७ ॥

शं० टी०—महामेरुं लङ्घयतो वालुकाकणलङ्घनवदपारपापार्णवं तरतस्तव भीष्मादिवधजपापपल्वलतरणमविचार्यमेवातो धर्माधर्मतत्कार्यमहार्णवं तर्तुमिच्छतो ज्ञानमेव संपादनीयं तेनैव विद्वाञ्छतकोटिकल्पार्जितं सर्वं पापं तरति । तथाच श्रुतिः "नैनं पाप्मा तरति सर्वं पाप्मानं तरति" इति। समुद्रतरणे नौकावज्ज्ञानं पापनिबर्हणे बहुकालं नापेक्षते किंतु क्षणेनैव सर्वं पापं विध्वसयतीति सदृष्टान्तमुपपादयति—यथेति । समिद्धःक्षुद्रकाष्ठैः प्रज्वलनेन प्रवृद्धोऽग्निरेधांसि काष्ठानि क्षणेन भस्मसात्कुरुते यथा, तथा समिद्धो निरन्तरध्यानसमाधिभिः प्रवर्तितो ज्ञानाग्निर्ज्ञानमुक्तलक्षणं तदेवाग्निर्ज्ञानाग्निः सर्वकर्माणि सर्वाणि पुण्यपापमिश्ररूपाणि कर्माणि । यद्वा प्रारब्धकर्मणो भोगैकनाश्यत्वात्तद्भिन्ना ज्ञानोत्पत्तेः पूर्वभावीनि पश्चाद्भावीनि च बहुजन्मसंचितानि चेत्येवंरूपाणि सर्वाणि कर्माणि भस्मसात्करोति क्षणाद्भस्मीकरोति यथा स्थाणुज्ञानं तत्स्वरूपावरकाज्ञाननिवर्तनेन सह चौरभूतादिभ्रमं विध्वस्य भ्रमकार्यं च विध्वंसयति तथा निष्क्रियब्रह्मात्मत्वज्ञानमपि तदावरकाज्ञाननिवर्तनेन सहैव विदुषस्तदुद्भावितकर्तृत्वभ्रमं विध्वंस्य तत्संभावितानि सर्वाणि कर्माणि च सद्यो निर्मूलयति सर्वदा निष्क्रिय एवास्मीत्येवं विज्ञानवन्तं विद्वांसं करोति । निष्क्रियब्रह्मात्मत्वविज्ञानमित्यर्थः । ननु ज्ञानस्याज्ञाननिवृत्तिरेव कार्यमिति चेन्न, भ्रमादिनिवृत्तेरपि तत्कार्यत्वपर्यवसानादेकस्याः क्रियाया अनेककार्यकारित्वदर्शनात् यथा ब्रह्मास्त्रपातस्य रावणवक्षश्छेदः प्राणनिर्गमो देहपातश्च कार्यं भवति तद्वत् । ननु कर्ममात्रस्याप्यज्ञानकार्यत्वे सिद्धे कारणनाशात्प्रारब्धस्यापि संचितादिवन्निवृत्तिः स्यादेवेति चेन्न, प्रवृत्तफलत्वात्तस्य निवृत्त्यनुपपत्तेः । यथा भुक्तेः पूर्वभाविनः पश्चाद्भाविनोऽप्यन्नस्य त्याग उपपद्यते न तथा भुक्तान्नस्य प्रवृत्तफलत्वात्तथैवारब्धकर्मणोऽपि । ननु कार्यस्य सद्भावे कारणस्यापि सद्भावोऽङ्गीकर्तव्य इति चेन्न, कारणाभावेऽपि कार्याभासदर्शनात्तन्नियमाऽव्यवस्थितेः । जलबुद्धौ नष्टायामपि मरौ पुनर्जलाभासप्रतीतेः सत्यत्वबुद्ध्यभावेऽपि प्रतिच्छायादौ व्यवहारदर्शनात्तथा देहाद्यात्मत्वसत्यत्वममत्वबुद्ध्यभावेऽपि विदुषः कर्मतत्फलाभासोपपत्तेरतो युक्तं निष्क्रियब्रह्मात्मविज्ञानस्य समाधिनाऽप्रतिबद्धतां प्रापितस्याविद्यानिःशेषनिर्मूलकत्वम्, अन्यथा त्वयं घट इत्युक्तिमात्रे ब्रह्मावरकाज्ञानसद्भावप्रसङ्गस्तस्मात्सर्वमिदमहं च ब्रह्मैवेति विज्ञानमज्ञानं सर्वं निर्मूलयत्येव सकार्यमिति सिद्धम् ॥ ३७ ॥

**श्री० टी०**—समुद्रवत्स्थितस्यैव पापस्यातिलङ्घनमात्रं ननु पापस्य नाश इति भ्रान्तिं दृष्टान्तेन वारयन्नाह—**यथेति**। एधांसि काष्ठानि प्रदीप्तोऽग्निर्यथा भस्मीभावं नयति तथा आत्मज्ञानरूपोऽग्निः प्रारब्धकर्मव्यतिरिक्तानि सर्वाणि कर्माणि भस्मीकरोतीत्यर्थः ॥ ३७ ॥

**स० टी०**—निःशेषत्वेन सर्वेषां कर्मणां ज्ञानवह्निना ॥ दाहः प्रदर्श्यते तेषां मूलोच्छेदेन संप्रति ॥ १ ॥ यथा प्रज्वलितो वह्निः काष्ठं नयति भस्मताम् ॥ ज्ञानाग्निः सर्वकर्माणि पुण्यपापात्मकानि च ॥ २ ॥ प्रारब्धफलभिन्नानि संचितादीन्यशेषतः ॥ तद्धेत्वज्ञाननाशेन नाशयत्येवमेव हि ॥ ३ ॥ ३७ ॥

**भा० टी०**—ननु ज्ञानप्लवेन तरिष्यसीत्युक्तया ज्ञानस्य पापनाशकत्वं नागतमित्याशङ्क्य पापं नाशयति ज्ञानं नावशेषयति तन्नाश एव तत्तरणमित्यभिप्रेत्य सदृष्टान्तमाह—**यथैधांसीति**। काष्ठानि सम्यग्दीप्तोऽग्निर्भस्मसाद्भस्मीभावं कुरुते तथा ज्ञानमेवाग्निर्ज्ञानाग्निः सर्वकर्माणि भस्मीभावं कुरुते निर्बीजं करोतीत्यर्थः। अर्जुनेति संबोधयन् शुद्धचित्तेनैवेदृशं ज्ञानं लभ्यते नान्येनेति द्योतयति। यद्वा तच्च ज्ञानं सर्वकर्माणि दग्ध्वा शुद्धं ब्रह्म संपद्यत इति सूचयति। यद्वैवंभूतेन ज्ञानेन सर्वाणि कर्माणि भस्मसात्कृत्वाऽन्वर्थसंज्ञो भवेति सूचयन्नाह—अर्जुनेति। सम्यग्दर्शनं प्रारब्धकर्मव्यतिरिक्तानां सर्वकर्मणां निर्बीजत्वकारणमित्यभिप्रायः। प्रारब्धकर्मणां प्रवृत्तफलानां भोगेनैव क्षयात् तस्माद्यान्यप्रवृत्तफलान्यतीतानेकजन्मार्जितानि ज्ञानोत्पत्तेः पूर्वमस्मिञ्जन्मनि कृतानि ज्ञानाग्निसाधनानुष्ठानकालिकानि च सर्वाणि च भस्मसात्कुरुते ज्ञानोत्तरभाविनामसंबन्धोऽपि बोध्यः। तथाच भगवतो बादरायणस्य सूत्राणि "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्, इतरस्याप्येवमसंश्लेषः पाते तु, अनारब्धकार्ये एव तु पूर्वे तदवधेः, भोगेन त्वितरे क्षपयित्वा संपद्यते" इति। फलार्थत्वात्कर्मणः फलमदत्त्वा क्षयासंभवात्। ब्रह्माधिगमे सति तद्विपरीतफलं दुरितं न क्षीयत इति प्राप्ते राद्धान्तः तदधिगमे ब्रह्मसाक्षात्कारे सति उत्तरस्याघस्य दुरितस्याश्लेषः असंबन्धः पूर्वस्य विनाशः कस्मात्तद्व्यपदेशात् तयोरश्लेषविनाशयोः श्रुतिभिर्व्यपदेशात्। तथाच श्रुतयः "तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते तद्यथैषीकातूलमग्नौ प्रोतं प्रदूयत एवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते" 'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति। धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्याह—इतरस्यापि पुण्यस्य कर्मणः एवमघवदसंश्लेषाविनाशौ भवतः, कुतस्तस्यापि स्वफलहेतुत्वेन ज्ञानप्रतिबन्धित्वप्रसङ्गात् "उभे इहैवैष एते तरति" इत्यादि श्रुतिषु च दुष्कृतवत्सुकृतस्यापि विनाशव्यपदेशात्। अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात् क्षीयन्ते चास्य कर्माणीति चाविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दः पठ्यते तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यं ज्ञानापेक्षया निकृष्टफलत्वात्। तुशब्द एवकारार्थः। एवं पुण्यपापयोर्बन्धहेत्वोर्विद्यासामर्थ्यादश्लेषविनाशसिद्धया विदुषो देहपाते मुक्तिरवश्यमेव भवतीत्यर्थः। तत्र "उभे इहैव एष एते तरति" इत्यादि श्रुतिविशेषश्रवणात्। अविशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च क्षय इति प्राप्ते प्रत्याह—अनारब्धकार्ये अप्रवृत्तफले एव तु पूर्वे जन्मान्तरसंचिते अस्मिन्नपि च जन्मनि प्राक्ज्ञानोत्पत्तेः संचिते पुण्यपापे तदधिगमात् क्षीयेते न त्वारब्धकार्ये याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितं कुतस्तस्य तावदेव चिरं "यावन्न विमोक्ष्येऽथ संपत्स्ये इति शरीरपातावधिकरणात्क्षेमप्राप्तेः। ननु वस्तुबलेनाकर्त्रात्मावगत्या प्रारब्धकर्माण्यपि कुतो न क्षीयन्ते अग्निसंबन्धे बीजशक्तिरिवेति चेदुच्यते न तावदनाश्रित्यारब्धकार्यं कर्माशयं तत्त्वावगत्युत्पत्तिरुपपद्यते। आश्रिते च तस्मिन्कुलालचक्रवत्प्रवृत्तवेगस्यान्तराले प्रतिबन्धासंभवाद्भवति वेगक्षयपरिपालनम्। अकर्त्रात्मावगत्या बाधितमपि मिथ्याऽज्ञानं कर्माधिष्ठानं जले वृक्षज्ञानवत् संस्कारवशात्कंचित्कालमनुवर्तत एव। अनारब्धकार्ययोः पुण्यपापयोः विद्यासामर्थ्यात् क्षय उक्तः

इतरे त्वारब्धकार्ये ते उपभोगेन क्षपयित्वा ब्रह्म संपद्यते तस्य तावदेवेत्यादि । "ब्रह्मैव सन्ब्रह्माप्येति" इति चैवमादिश्रुतिभ्य इति ॥ ३७ ॥

प० टी०–अथोक्तप्रमेयं लौकिकदृष्टान्तेन द्रढयति–**यथेति**। यथा समिद्धः प्रदीप्तोऽग्निरेधांसि काष्ठानि भस्मसात् कुरुते तथा ज्ञानाग्निः प्रारब्धव्यतिरिक्तानि सर्वकर्माणि भस्मसात्कुरुते । समिद्ध इति पदेन ज्ञानाग्निः प्रतिपदं वृद्धिं प्रापितः सन् भस्मसात्कुरुते ॥ ३७ ॥

रा० टी०–यथा एधांसि दारूणि समिद्धः प्रदीप्तः अग्निः भस्मसात्कुरुते तथा ज्ञानाख्योऽग्निः सर्वकर्माण्यप्रारब्धानि भस्मसात्कुरुते । अतः प्रशस्तं ज्ञानमिति ॥ ३७ ॥

**नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ॥**
**तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ ३८ ॥**

त० टी०–अत एव–**नहीति**। ज्ञानेन सदृशं पवित्रं पावनमिह जगति नहि विद्यते । एवंभूतज्ञानमाशु किं नोपजायते इत्यत आह–**तत्स्वयमिति**। तज्ज्ञानं महता कालेन योगसंसिद्धः योगेन पूर्वोक्तकर्मयोगेन यथाविध्यनुष्ठितेन संसिद्धः योग्यतामापन्नः पुरुषः स्वयमेवात्मनि स्वान्तर्विन्दति लभते ॥ ३८ ॥

म० टी०–यस्मादेवं तस्मात्–**नहीति**। न हि ज्ञानेन सदृशं पवित्रं पावनं शुद्धिकरमन्यदिह वेदे लोकव्यवहारे वा विद्यते ज्ञानभिन्नस्याज्ञानान्निवर्तकत्वेन समूलपापनिवर्तकत्वाभावात्, कारणसद्भावेन पुनः पापोदयाच्च ज्ञानेन त्वज्ञाननिवृत्त्या समूलपापनिवृत्तिरिति तत्सममन्यन्न विद्यते । तदात्मविषयं ज्ञानं सर्वेषां किमिति झटिति नोत्पद्यते तत्राह–**तदिति**। तत्तु ज्ञानं कालेन महता योगसंसिद्धः योगेन पूर्वोक्तकर्मयोगेन संसिद्धः संस्कृतो योग्यतामापन्नः स्वयमात्मन्यन्तःकरणे विन्दति लभते न तु योग्यतामापन्नोऽन्यदत्तं स्वनिष्ठतया न वा परनिष्ठं स्वीयतया विन्दतीत्यर्थः ॥ ३८ ॥

शं० टी०–ननु राजसूयाश्वमेधादिक्रतुभिर्दानैः कन्यादिभिः कृच्छ्रचान्द्रायणादितपोभिश्च सर्वपापनिवृत्तिसंभवात्किं सर्वपरिग्रहत्यागमूलकशमदमादिसाधनपूर्वकसंन्यासाश्रमं संपाद्यात्मज्ञानेनेत्याशङ्कायां न, औषधवद्यदुद्देशेन क्रियन्ते उक्ता राजसूयादयस्तस्यैवोद्दिष्टस्य पापस्य निवर्तका भवन्ति नतु सर्वेषां पापाना संचितागामिवर्तमानानामनेकेषामनेकरूपाणाम् । तत्रापि पापस्यैव निवर्तका नतु बहुजन्मसंपादकपुण्यकर्मणा। मिदं तु पापानां पुण्यानां मिश्राणां च कर्मणां संचितादीनां च सर्वेषां विध्वंयंसने परमकारणं पवित्रतमं ज्ञानमेव नैवैतादृशमन्यदस्ति मुमुक्षोः प्रयत्नेन संपादनीयमिति सूचयितुमाह–**नहीति**। हि यस्मात्कारणान्नानायोनिषु नानाविधजन्ममरणादिमहादुःखपरंपराप्रापकानि पुण्यपापमिश्रात्मकान्यनेककल्पशतसमार्जितान्यशेषाणि कर्माणि समूलमुन्मूलयत्यविक्रियात्मज्ञानं तस्माज्ज्ञानेन सदृशमुक्तधर्मैस्तुल्यमत्यन्तशुद्धिकरं परमपुरुषार्थसाधनतमामिह लोके शास्त्रे च न विद्यते नास्ति, एतादृशं शुद्धिकारणं मुक्तिकारणमस्मिन् लोके लोकान्तरे च न संभवतीत्यर्थः। एतादृशं ज्ञानमनाद्यविद्यातत्कार्यविध्वंसकमधिकारी कृतश्रवणादिर्यतिः कालेन महता दीर्घेण योगसंसिद्धः योगेन ज्ञानयोगेन नित्यनिरन्तरसमाधिनिष्ठया तात्पर्येण कृतया संसिद्धः निःशेषविनष्टसर्वबाह्यवासनता संसिद्धिस्तां प्राप्तः संसिद्धः सम्यङ्निर्मूलितसर्वप्रतिबन्धः सन्स्वयमात्मनि स्वान्तःकरण एव विन्दति सर्वमिदमहं च ब्रह्मैवेत्यप्रतिबद्धा ब्रह्ममयी वृत्तिर्बुद्धावेवोदेतीत्यर्थः ॥ ३८ ॥

श्री० टी०–तत्र हेतुमाह–**नहीति**। पवित्रं शुद्धिकरमिह तपोयोगादिषु मध्ये ज्ञानतुल्यं नास्त्येव । तर्हि सर्वेऽप्यात्मज्ञानमेव किं नाभ्यस्यन्तीत्यत आह–**तत्स्वयमिति** सार्धेन । तदात्मविषयं ज्ञानं कालेन महता कर्मयोगेन संसिद्धो योग्यताप्राप्तः सन्स्वयमेवानायासेन लभते नतु कर्मयोगं विनेत्यर्थः ॥ ३८ ॥

स० टी०—ज्ञानेन तुल्यं लोकेऽस्मिन्वेदे वान्यन्न पावनम् ॥ विद्यते शुद्धिजनकमज्ञानमलनाशकम् ॥ १ ॥ ज्ञानाद्भिन्नस्य सामर्थ्यं नास्त्यज्ञानमलक्षये ॥ तदात्मज्ञानं सर्वेषां कुतो नोत्पद्यतेऽचिरात् ॥ २ ॥ इत्याशङ्क्याह कालेन महता नतु तत्क्षणे ॥ पूर्वोक्तकर्मयोगेन संस्कृतो योग्यतां गतः ॥ ३ ॥ मुमुक्षुर्लभते बुद्धौ स्वयं तज्ज्ञानमुत्तमम् ॥ न योग्यतामनापन्नो ज्ञानमात्मैक्यगोचरम् ॥ ४ ॥ लभते योग्यतासिद्ध्यै यत्नं कुर्यादतः पुमान् ॥ ५ ॥ ३८ ॥

भा० टी०—यत एवमतो—नहीति। नहि ज्ञानेन तुल्यं पवित्रं पापनाशनं शुद्धिकरमिह दैवादियज्ञादौ विद्यते तस्य ज्ञानभिन्नस्याज्ञानानिवर्तकत्वेनात्यन्तशुद्धिकरत्वाभावात् । तर्हि किमन्यैर्यज्ञादिभिः मयाऽन्यैश्च ज्ञानमेव कुतो न संपाद्यमित्याशङ्क्याह—तदिति । तज्ज्ञानं स्वयमेव योगेन निष्कामकर्मयोगेन समाधियोगेन च संसिद्धः संस्कृतः योग्यतां प्राप्तः सन् मुमुक्षुर्महता कालेनात्मनि अखण्डात्मविषयं ज्ञानं विन्दति लभते स्वयमेव स्वप्रयत्नेनैव योगसिद्धः स्वयमेव विन्दतीति वा आत्मविषयसाक्षात्कारस्य स्वेनैव लभ्यत्वात् गुर्वादेः परोक्षज्ञान एवोपयोगात् । यस्माद्योगसंसिद्धैरेवान्यैर्ज्ञानं लभ्यते तस्मात्त्वमपि तथाभूतः सन् तल्लभस्वेत्याशयः ॥ ३८ ॥

प० टी०—अत एव ज्ञानेन दुःसाध्यं किमपि नास्तीत्याह— नहीति । इह तपोयोगादिषु मध्ये ज्ञानतुल्यं पवित्रं शोधकमन्यन्न विद्यते । तदाह—तत्स्वयमिति सार्धेन । तज्ज्ञानं योगसंसिद्धो योगेन कर्मयोगेन योग्यतां प्राप्तः कालेन परिपक्वावस्थायां स्वयमेवानायासेनात्मन्येव शुद्धे मनस्येव विन्दति प्राप्नोति, परं तु नान्यतः कुतश्चिदानीयते । श्रुतिरपि—“ मनसैवानुद्रष्टव्यमेतदप्रमेयं ध्रुवम् ” इति । तथा “ मनसैवाप्तव्यम् । नेह नानास्ति किंचन ” इति । भाष्यम्—एतदात्माख्यं वस्त्वप्रमेयमतर्क्यमपि मनसैव ध्रुवं स्थिरं यथा भवति तथानुवेलं द्रष्टव्यं नान्येन । तदुक्तं पञ्चाशीतौ–‘ राहुरदृश्योऽपि सदा शशिबिम्बस्थः प्रकाशते जगति । तद्वद्विशुद्धात्मा चित्ते प्रकाशमेति स्वयं ह्यात्मा ’ इति ॥ ३८ ॥

रा० टी०—नहीति। इह लोके ज्ञानेन सदृशं पवित्रं नहि विद्यते। तज्ज्ञानं स्वयं योगसंसिद्धः योगविषये सम्यक्सिद्धिमान्संसिद्धिज्ञानोपायः सन् कालेन बहुना आत्मनि विन्दति प्राप्नोति ॥ ३८ ॥

**श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ॥**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ३९ ॥**

त० टी०—ननु कालेन योगसंसिद्धः स्वयमेव ज्ञानं लभते चेत्तर्हि पूर्वोक्तगुर्वभिगमनप्रणिपातादेरप्रयोजकत्वं स्यादित्याशङ्कानिरासार्थं ज्ञानाधिकारिणं विशिनष्टि—श्रद्धावानिति । योगसंसिद्धः स्वयं ज्ञानं लभते इति सत्यं, तथापि स किंगुणविशिष्टोऽभिप्रेतस्तं शृणु, श्रद्धावानिति । गुरुशास्त्रोक्तवाक्यार्थे एवमेवायमित्यास्तिक्यबुद्धिः श्रद्धा, तद्वान्। न चैतावत्त्वमेवापि तु तत्परः गुरूपासनशास्त्राभ्यासयोः सदोद्युक्तः। तद्विरोधिनिरासार्थमाह—संयतेन्द्रिय इति । श्रद्धावत्त्वेऽपि इन्द्रियचाञ्चल्यं चेद्गुरुशास्त्रसेवादिपरता न स्यादतः सम्यग्यतानि वशीकृतानीन्द्रियाणि येन स एव ज्ञानं लभते, नान्यः । तस्मात्पूर्वं निष्कामकर्मयोगानुष्ठानेनान्तःकरणशुद्ध्या श्रद्धादिसंपत्त्या ज्ञानलाभः स्यादिति सर्वं निरवद्यम् । एवं साधनपरंपरया ज्ञानं लब्ध्वा प्राप्य विक्षेपहेतुकर्मात्मिकाविद्यानाशेन परां शान्तिं मुक्तिलक्षणामचिरेणैवाधिगच्छति प्राप्नोति ॥ ३९ ॥

म० टी०—येनैकान्तेन ज्ञानप्राप्तिर्भवति स उपायः पूर्वोक्तप्रणिपाताद्यपेक्षयाप्यासन्नतर उच्यते गुरुवे-

१ मत्पर इति रा. पाठः।

दान्तवाक्येष्विदमित्थमेवेति प्रमारूपास्तिक्यबुद्धिः श्रद्धा तद्वान् पुरुषो लभते ज्ञानम् । एतादृशोऽपि कश्चिद्-लसः स्यात्तत्राह—तत्परः गुरूपासनादौ ज्ञानोपायेऽत्यन्ताभियुक्तः । श्रद्धावांस्तत्परोपि कश्चिदजितेन्द्रियः स्यादतः आह—संयतानि विषयेभ्यो निवर्तितानीन्द्रियाणि येन स संयतेन्द्रियः य एवं विशेषणत्रययुक्तः सोऽवश्यं ज्ञानं लभते । प्रणिपातादिस्तु बाह्यो मायावित्त्वादिसंभवादनैकान्तिकोऽपि श्रद्धावत्त्वादिस्त्वैकान्तिक उपाय इत्यर्थः। ईदृशेनोपायेन ज्ञानं लब्ध्वा परां चरमां शान्तिमविद्यातत्कार्यनिवृत्तिरूपां मुक्तिमचिरेण तद्-व्यवधानेनैवाधिगच्छति लभते यथा हि दीपः स्वोत्पत्तिमात्रेणैवान्धकारनिवृत्तिं करोति नतु कंचित्सहकारिणमपेक्षते तथा ज्ञानमपि स्वोत्पत्तिमात्रेणैवाज्ञाननिवृत्तिं करोति नतु किंचित्प्रसंख्यानादिकमपेक्षत इति भावः ॥३९॥

**शं० टी०**—एवं ज्ञानमाहात्म्यं तत्सिद्धिप्रकारं च प्रतिपाद्य ज्ञानयोगसिद्धेरन्तरङ्गसाधनान्याह—**श्रद्धावानिति**। श्रद्धावान् "तत्त्वमसि" इति श्रुत्या ब्रह्मात्मैकत्वमुच्यते तदेव गुरुणोपदिश्यते तत्र श्रुतिवाक्ये गुरूक्तौ च सत्यत्वबुद्धिः श्रद्धा "अस्तीत्येवोपलब्धव्यः" इति श्रवणात्तादृश्यव्यभिचारिणी श्रद्धा यस्यास्ति स श्रद्धावान् मुमुक्षोरवश्यं श्रद्धावत्त्वेन भवितव्यं तदभावे न किंचिदस्त्यतः श्रद्धा प्रयत्नेन संपादनीयेत्यर्थः। श्रद्धावत्त्वेपि बहिर्मुखस्य ज्ञानं न सिद्ध्यत्यतस्तद्राहित्येन भवितव्यमित्याह—**संयतेन्द्रिय इति**। संयतानि तत्तद्विषयेष्वप्रवर्तितान्युभयेन्द्रियाणि येन सः संयतेन्द्रियत्वं यतेर्धर्मत्वेन सदा भवितव्यं बहिःप्रवृत्तिशून्यस्यैव ज्ञानं सिद्ध्यति सिद्धं च तेनैव रक्षितव्यं भवति नान्यथा तिष्ठतीत्यर्थः। एवं श्रद्धावत्त्वसंयतेन्द्रियत्वयोः सिद्धयोः सतोरप्यन्तर्विषयान् ध्यायतो यतेर्ज्ञानं न सिद्ध्यत्यतस्तद्राहित्येन भवितव्यमित्याह—**तत्पर इति**। सर्वदा तस्मिन्नेव वृत्तेरन्तर्बहिर्ब्रह्माकारत्वापादन एव पर आसक्तचित्तस्तत्परः ब्रह्माकारवृत्तिपरत्वमेवाऽसाधारणकारणं तेनैव विपरीतप्रत्ययाः सर्वे नश्यन्त्यनात्मवासनाश्च सर्वाः ज्ञानस्याप्रतिबद्धता च सिद्ध्यत्यतस्तदेव संपादनीयं मोक्षैकार्थिन इत्येवं नियतविशेषणत्रयसंपन्नो यो यतिः स एव ब्रह्मैवाहमस्मीत्यप्रतिबद्धं ज्ञानं लभते नान्यः शतधा श्रुतश्रावितवेदान्तोऽपि विद्वानित्यर्थः। एवं श्रद्धावत्त्वसंयतेन्द्रियत्वतत्परत्वादिसाधनसंपत्त्या दैर्घकालिक्या नित्यनिरन्तरं ब्रह्मनिष्ठया निष्पन्नं जगतश्च स्वस्य च ब्रह्मात्मनैवोपलभ्यमानत्वापादकं ज्ञानं लब्ध्वा ब्रह्मवियातिरचिरेणैवोत्तरक्षण एव परां संशयविपरीतभावनादिनिर्मुक्तज्ञानावभासितत्वाद्वस्तुस्वाभाव्याच्चाविद्यातत्कार्याभासशून्यां निरतिशयसुखात्मिकां ब्रह्मात्मनावस्थानलक्षणां शान्तिं मुक्तिं विदेहात्मिकां गच्छति प्राप्नोतीत्यर्थः ॥ ३९ ॥

**श्री० टी०**—किंच—**श्रद्धावानिति**। श्रद्धावान् गुरूपदिष्टेऽर्थे आस्तिक्यबुद्धिमान् तत्परस्तदेकनिष्ठः संयतेन्द्रियश्च तज्ज्ञानं लभते नान्यः, अतः श्रद्धादिसंपत्त्या ज्ञानलाभात्प्राक्कर्मयोग एव शुद्ध्यर्थमनुष्ठेयः। ज्ञानलाभानन्तरं तु न तस्य किंचित्कृत्यमस्तीत्याह—ज्ञानं लब्ध्वा त्वचिरेण परां शान्तिं मोक्षं प्राप्नोति ३९॥

**स० टी०**—ज्ञानप्राप्तिः सतां येनोपायेनैकान्तभाविनी ॥ स आसन्नतरः साक्षादुपाय उपदिश्यते ॥१॥ गुरुवेदान्तवाक्येषु श्रद्धास्तिक्यमतिः स्मृता॥ तद्युतो लभते ज्ञानं यदि तत्रैव तत्परः ॥ २ ॥ गुरुसेवामुखे ज्ञानोपायेऽत्यन्ताभियुक्तिमान् ॥ श्रद्धावांस्तत्परो यस्तु न स्यात्सम्यग्जितेन्द्रियः ॥ ३ ॥ तस्यापि दुर्लभं ज्ञानमतः स्यात्संयतेन्द्रियः ॥ निवर्तितानीन्द्रियाणि विषयेभ्यश्च येन सः ॥ ४ ॥ अवश्यं लभते ज्ञानं विशेषणत्रयान्वितः ॥ प्रणिपाताद्युपायो हि दम्भिनामपि दृश्यते ॥ ५ ॥ श्रद्धावत्त्वाद्युपायस्तु सतामैकान्तिको वरः ॥ उपायेनेदृशेनैव ज्ञानं प्राप्य सपद्यसौ ॥ ६ ॥ अविद्यादिनिवृत्त्याख्यां शान्तिं मुक्तिमुपैति सः ॥ व्यवधानं विनैवाद्धा ब्रह्मीभूतो भवेन्नरः ॥ ७ ॥ यथा स्वोत्पत्तिमात्रेण दीपो हन्ति तमोऽखिलम् ॥ स नैवापेक्षते तत्र कंचित्तु सहकारिणम् ॥ ८ ॥ तथा स्वोत्पत्तिमात्रेण ज्ञानं ब्रह्मैक्यगोचरम् ॥ निहन्त्यविद्यां तत्कार्यं न सहायमपेक्षते ॥ ९ ॥ ३९ ॥

भा० टी०—योगेन योग्यतामापन्नस्य येनैकान्तेन तत्त्वज्ञानं भवति तमुपायमाह—श्रद्धावानिति । गुरुवेदान्तवाक्येष्विदमित्थमित्यास्तिक्यं श्रद्धा तद्वान् तत्रापि तत्परः गुरूपासनादावभियुक्तः तत्रापि संयतानि विषयेभ्यो निवर्तितानि इन्द्रियाणि येन सः, एवं विशेषणत्रयविशिष्टश्चेदवश्यं ज्ञानं लभते । प्रणिपातादेर्मायया‍ऽपि संभवेन नैकान्तिकत्वमेतेषां न तथात्वमत एकान्तिकत्वम् । ज्ञानं लब्ध्वा किं स्यादत आह—ज्ञानं लब्ध्वा परां शान्तिं मोक्षाभिधामचिरेण जन्मान्तरं लोकान्तरगमनं च विना एवाधिगच्छति प्राप्नोति ॥ ३९ ॥

प० टी०—किंच—श्रद्धावानिति । गुरूपदिष्टेऽर्थे आस्तिक्यं श्रद्धा तद्वान् तत्परस्तदेकनिष्ठोऽत एव संयतेन्द्रियश्च ज्ञानं लभते नान्यः । एवं ज्ञानं लब्ध्वाचिरेण परां शान्तिं मोक्षमधिगच्छति प्राप्नोति ॥३९॥

रा० टी०—एवं ज्ञानं प्रशस्य तस्यान्तरङ्गसाधनं फलं चाह—श्रद्धावानिति । आस्तिक्यबुद्धिमान्मत्परो मदेकनिष्ठः संयतेन्द्रियो जितेन्द्रियश्च ज्ञानं लभते । ज्ञानं लब्ध्वा परां शान्तिं मोक्षमचिरेणाविलम्बेनाधिगच्छति प्राप्नोति असति प्रारब्धे । सति तु तस्मिन् तद्भोगानन्तरमिति ॥ ३९ ॥

**अज्ञश्चाश्रद्दधानश्च संशयात्मा विनश्यति ॥**
**नायं लोकोऽस्ति न परो न सुखं संशयात्मनः ॥ ४० ॥**

त० टी०—एवं श्रद्धाभक्तिमतः सद्गुरूपदेशाल्लब्धज्ञानस्य मोक्षफलमुक्त्वा तदभाववतोऽज्ञस्य विनाशमाह—अज्ञश्चेति । अज्ञो गुरूपदिष्टतत्त्वज्ञानशून्यः । तत्र हेतुः अश्रद्दधानः पूर्वोक्तलक्षणश्रद्धाशून्यः । तत्रापि हेतुः संशयात्मेति । द्वौ चशब्दौ पुनरर्थकौ । तथाहि अज्ञोऽपि सद्गुरूपदिष्टेन केनचित्सुगमोपायेन मुच्येत । पुनरश्रद्दधानः श्रद्धाहीनत्वादुपायं नानुतिष्ठति, तदनुष्ठानाभावेऽपि दृढसत्सङ्गेन कथंचिच्छ्रद्दधीत । पुनः संशयात्मा संशयाः फलसाधनोपास्यधर्मगुरुशास्त्रादिविषयभेदेनानेकधा, तत्र परं श्रेयः मोक्षः स्वर्गादि वा, श्रेयः साधनं ज्ञानं कर्म वा, तत्प्राप्त्यर्थं विष्णुराराध्यः रुद्रेन्द्रविनायकशक्त्यादिर्वा, धर्मो वैष्णवः श्रेष्ठ इतरो वा, गुरुर्निष्किंचनो धनाढ्यो वा, गुरुवचनं सत्यमसत्यं वा, शास्त्रं वेदान्तमन्यद्वेत्यादिसंशयेष्वात्मा मनो यस्य न त्वेकस्मिन्निश्चये, अतो न सत्सङ्गनिष्ठो भवति, किंत्वितस्ततो धावति तस्मादेव विनश्यति, श्रेयोमार्गाद्भ्रश्यति । यतः संशयात्मनः पुरुषस्यायं मनुष्यलोको नास्ति धर्मार्जनविवाहादौ सम्यक्प्रवृत्त्यभावात् परलोकोऽपि नास्ति, तत्साधनधर्माननुष्ठानात् । नच सुखं कस्मिंश्चिदपि निश्चयाभावात् । कुतो मोक्ष इति भावः । एवं चाज्ञस्येत्यादिविशेषणत्रयमेकस्यैव बोध्यमन्यथा "भिद्यते हृदयग्रन्थिः" इत्यादिश्रुतेः 'अज्ञसर्वज्ञभक्तानां गतिर्गम्यो भवान्' इति स्मृतेश्च विरोधः स्यात् ॥ ४० ॥

म० टी०—अत्र च संशयो न कर्तव्यः कस्मात् अज्ञेति । अज्ञोऽनधीतशास्त्रत्वेनात्मज्ञानशून्यः गुरुवेदान्तवाक्यार्थे इदमेवं न भवत्येवेति विपर्ययरूपा नास्तिक्यबुद्धिरश्रद्धा तद्वानश्रद्दधानः इदमेवं भवति न वेति सर्वत्र संशयाक्रान्तचित्तः संशयात्मा विनश्यति स्वार्थाद्भ्रष्टो भवति । अज्ञश्चाश्रद्दधानश्च विनश्यतीति संशयात्मापेक्षया न्यूनत्वकथनार्थं चकाराभ्यां तयोः प्रयोग उक्तः । कुतः संशयात्मा हि सर्वतः पापीयान् यतो नायं मनुष्यलोकोऽस्ति वित्तार्जनाद्यभावात् न परलोकः स्वर्गमोक्षादिः धर्मज्ञानाद्यभावात् न सुखं भोजनादिकृतं संशयात्मनः सर्वत्र संदेहाक्रान्तचित्तस्य । अज्ञस्याश्रद्दधानस्य च परो लोको नास्ति मनुष्यलोके भोजनादिसुखं च वर्तते । संशयात्मा तु त्रितयहीनत्वेन सर्वतः पापीयानित्यर्थः ॥ ४० ॥

शं० टी०—"ब्रह्मविदाप्नोति परम्, ज्ञात्वा देवं मुच्यते सर्वपाशैः, ज्ञात्वा शिवं शान्तिमत्यन्तमेति,

तमेव विदित्वातिमृत्युमेति, य एतद्विदुरमृतास्ते भवन्ति" । 'ये विदुर्यान्ति ते परम्, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इति 'ब्रह्मविन्मुक्तो भवति ज्ञानवत्त्वाद्वामदेवादिवत्' इत्यादिश्रुतिस्मृतियुक्तिशतप्रसिद्धेः सम्यग्ज्ञानान्मोक्ष इत्येतस्मिन्नर्थे ब्राह्मणेन मोक्षैककामेन अश्रद्धा वा संशयो वाप्यात्मज्ञानसंपादने प्रयत्नाभावो वा न कर्तव्यः कृतश्चेन्मोक्षो न लभ्यत इत्याह—अज्ञश्चेति । यस्तु सर्वाणि कर्माणि मोक्षार्थं संन्यस्य मोक्षकारणे श्रवणादौ तत्कारणे गुरुशुश्रूषाशमदमतितिक्षातत्परत्वादौ च प्रयत्नमकृत्वात्मज्ञानं न संपादयति स एवात्र मोक्षशास्त्रे अज्ञ इत्युच्यते स च यस्य तु संन्यासे वेदान्तश्रवणादौ गुरौ च मोक्षे च ज्ञानान्मोक्ष इत्यस्मिन्नर्थे चाविश्वासो भवति सोऽश्रद्दधानः श्रद्धाशून्यश्च संशयात्मा च " अपाम सोममभृता अभूम, दक्षिणावन्तो अमृतं भजन्ते " इत्यादिवाक्यैः कर्मणो मुक्तिहेतुत्वं प्रतिपाद्यते "तरति शोकमात्मवित्, ज्ञानादेव तु कैवल्यम्" 'कर्मणा बध्यते जन्तुर्विद्यया तु विमुच्यते' इत्यादिश्रुतिस्मृतिवाक्यैर्ज्ञानेन मुक्तिरिति प्रतिपाद्यते ततः कर्मणा वा ज्ञानेन वा मुक्तिरिति संशय आत्मनि चित्ते यस्य स संशयात्मा सम्यगधीतशास्त्रोऽपि यः संशयग्रहग्रस्तः स चापि विनश्यति ज्ञानफलाद्भ्रश्यति न कदापि मुक्तिं प्राप्नोतीत्यर्थः । एवं त्रयाणामपि ज्ञानशून्यानां मुक्त्यभावं प्रतिपाद्य तत्र दोषाधिक्यात्संशयालुं विशेषयति—नायमिति । संशयात्मनः पापिष्ठस्य मुक्तिरेव नास्तीति न किंतु भाविजन्मन्ययं लोको मानुषोऽपि नास्ति, न परः स्वर्गोऽपि च नास्ति पुंसः संशय एव महापापसमुद्भवः सर्वानर्थस्य च बीजं तत इदमवश्यं कर्तव्यमनेन तरिष्यामीति कर्मणि वैदिके सर्वत्र च श्रद्धाऽसंभवात् श्रद्धावैधुर्येण कृतानां कर्मणां स्वफलदानसामर्थ्यासंभवात्तत्तल्लोकप्राप्त्यभावोपपत्तेः । नच विषयसुखमप्यस्ति तादृशस्य त्वाहारादावपि संशयसंभवात्ततः संशयात्मा नरलोकपरलोकयोस्तत्सुखस्य च दूरीभवतीत्यर्थः । एतेन मुमुक्षोर्यतेः प्रयत्नेनात्मज्ञत्वं संन्यासगुरुवेदान्तश्रवणादिषु श्रद्धात्वं सर्वत्र निःसंशयत्वं च संपादनीयमिति सूचितं भवति ॥ ४० ॥

**श्री० टी०**—ज्ञानाधिकारिणमुक्त्वा तद्विपरीतमनधिकारिणमाह—अज्ञश्चेति । अज्ञो गुरूपदिष्टार्थानभिज्ञः कथंचिज्ज्ञाने जातेऽप्यश्रद्दधानश्च जातायामपि श्रद्धायां ममेदं सिध्येद्वा नवेति संशयाक्रान्तचित्तश्च नश्यति स्वार्थाद्भ्रश्यति । एतेषु त्रिष्वपि संशयात्मा सर्वथा नश्यति यतस्तस्यायं लोको नास्ति धनार्जनविवाहाद्यसिद्धेः, नच परलोकः धर्मस्यानिष्पत्तेः, । नच सुखं संशयेनैव भोगस्याप्यसंभवात् ॥ ४० ॥

**स० टी०**—संशयो नात्र कर्तव्यः किमर्थमिति चेच्छृणु ॥ अज्ञोऽनधीतशास्त्रत्वादात्मज्ञानविवर्जितः ॥ १ ॥ गुरुवेदान्तवाक्यार्थे विश्वासाभावरूपिणी ॥ नास्तिक्यबुद्धिरश्रद्धा तद्वानश्रद्दधानकः ॥ २ ॥ इदमेवं न वेत्येवं संशयाक्रान्तधीः पुमान् ॥ भवति स्वार्थतो भ्रष्टस्त्रिष्वेष्वन्यतमोऽपि यः ॥ ३ ॥ अज्ञश्चाश्रद्दधानश्च विनश्यति तथापि यः ॥ संशयात्मातिपापीयान् सर्वथा स विनश्यति ॥ ४ ॥ वित्तार्जनाद्यभावान्न लोकः साधारणोऽप्ययम् ॥ धर्मज्ञानाद्यभावान्न स्वर्गमोक्षादिकः परः ॥ ५ ॥ संशयाक्रान्तचित्तस्य नाशनादिकृतं सुखम् ॥ अज्ञस्याश्रद्दधानस्य परलोको न यद्यपि ॥ ६ ॥ वर्तते तु नृलोकोऽयं भोजनादिसुखं तथा ॥ संशयात्मा त्रिभिर्हीनः पापीयान्सर्वतोऽधमः ॥ ७ ॥ ४० ॥

**भा० टी०**—अस्मिन्सर्वशास्त्रन्यायसिद्धे सुनिश्चितेऽर्थे संशयो न कर्तव्यस्तस्य पापिष्ठत्वादित्याशयेनाह—अज्ञ इति । अज्ञो गुरुमुखादनधीतशास्त्रत्वेनात्मज्ञानशून्यश्च पूर्वोक्तश्रद्धारहितश्च इदमेवं भवति नवेति सर्वत्र संशयाक्रान्तचेता विनश्यति स्वार्थलाभाद्भ्रश्यति । अज्ञाश्रद्दधानसंशयात्मापेक्षया चकारद्वयसूचितममुख्यत्वं स्फुटयति संशयात्मा तु सर्वतः पापिष्ठः यतस्तस्यायं मनुष्यलोको वित्तार्जनविवाहादिसाध्यो न नच पर उपासनादिसाध्यो देवलोकः, नच तत्त्वज्ञानसाध्यजीवन्मुक्तिसुखं सर्वत्रापि संशयस्य सत्त्वात् । अज्ञाश्रद्दधानयोः परलोकस्य जीवन्मुक्तिसुखस्य चाभावेऽपि मनुष्यलोकोऽस्त्येव । यद्वाऽज्ञः कदाचिदभ्यासवशात्परलोका-

दिसाधनं देहात्मविवेकादिज्ञानं लभते अश्रद्दधानोऽपि युक्तियुक्तं श्रुत्वा श्रद्धां लभते ततश्च परलोकादिभाजौ भवतः। सदा सर्वत्र संशयग्रस्तस्तु न तथा किंत्वतिपापिष्ठ इत्यर्थः। तस्मात्संशयो न कर्तव्य इत्याशयः॥४०॥

प० टी०—अथ ज्ञानरहितं निन्दति—अज्ञ इति। अज्ञो गुरूपदिष्टार्थानभिज्ञः कथं चिज्ज्ञाने जातेऽप्यश्रद्दधानो नास्तिक्यवान् कथं चिज्जातायामपि श्रद्धायां ममेदं सिध्येन्न वेति संशयात्मैवंविधः पुरुषो नश्यति। अथ नाशस्वरूपमाह—नायमिति। संशयात्मनः संशयरूप आत्मा मनो यस्य तथाभूतस्यायं लोको नास्त्यज्ञत्वात्, न परोऽश्रद्दधानत्वात्, न सुखं न विश्रान्तिः संशयात्मत्वात्॥ ४०॥

रा० टी०—ज्ञानतत्साधनयोरभावे तद्विरोधिविपरीतज्ञानादौ चानिष्टमाह—अज्ञश्चेति। नञोऽभावविरोधरूपार्थद्वयं ध्येयम्। तत्त्वविषयसंशयात्मा च विनश्यति नरकं प्रतिपद्यते। किंच संशयात्मनोऽयं मानुषो लोकः परः स्वर्गादिर्वा नास्ति किं बहुना सुखं नास्तीत्यर्थः॥ ४०॥

**योगसंन्यस्तकर्माणं ज्ञानसंछिन्नसंशयम्॥**
**आत्मवन्तं न कर्माणि निबध्नन्ति धनंजय॥ ४१॥**

त० टी०—एवं संशयात्मनोऽज्ञस्य सर्वार्थभ्रंशमुक्त्वा सदाचारानुवर्तिनो मुमुक्षोर्निःश्रेयसाय संशयवारणार्थं पूर्वोक्तक्रमेण कर्मयोगज्ञानयोगावेवोपदिशन्नुपसंहरति—योगेति द्वाभ्याम्। योगेन भगवदाराधनलक्षणेन संन्यस्तानि भगवत्यर्पितानि कर्माणि येन तं, तत एव ज्ञानसंछिन्नसंशयं, भगवति कर्मार्पणादेव जातं यदात्मनो भगवदधीनत्वज्ञानं तेन छिन्नाः पूर्वोक्ताः संशया यस्य अत एवात्मवन्तं, तत्त्वविषयतयाऽवस्थितमनसं कर्माणि विधिप्राप्तानि स्वाभाविकानि वा न निबध्नन्ति, हे धनंजय॥४१॥

म० टी०—एतादृशस्य सर्वानर्थमूलस्य संशयस्य निराकरणायात्मनिश्चयमुपायं वदन्नध्यायद्वयोक्तां पूर्वापरभूमिकाभेदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति—योगेति। योगेन भगवदाराधनलक्षणसमत्वबुद्धिरूपेण संन्यस्तानि भगवति समर्पितानि कर्माणि येन। यद्वा परमार्थदर्शनलक्षणेन योगेन संन्यस्तानि त्यक्तानि कर्माणि येन तं योगसंन्यस्तकर्माणम्। संशये सति कथं योगसंन्यस्तकर्मत्वमत आह—ज्ञानसंच्छिन्नसंशयं ज्ञानेनात्मनिश्चयलक्षणेन छिन्नः संशयो येन तम्। विषयपरवशत्वरूपप्रमादे सति कुतो ज्ञानोत्पत्तिरित्यत आह—आत्मवन्तमिति। आत्मवन्तमप्रमादिनं सर्वदा सावधानं एतादृशमप्रमादित्वेन ज्ञानवन्तं ज्ञानसंछिन्नसंशयत्वेन योगसंन्यस्तकर्माणं कर्माणि लोकसंग्रहार्थानि वृथाचेष्टारूपाणि वा न निबन्धन्ति अनिष्टमिष्टं मिश्रं वा शरीरं नारभन्ते हे धनंजय॥ ४१॥

शं० टी०—तर्ह्येवमनर्थहेतोः संशयस्य निःशेषनिवृत्तिः कथं सिध्यतीत्याकाङ्क्षायां श्रुतियुक्तिसमुत्पन्नब्रह्मात्मैकत्वविज्ञानेनैव तस्य विच्छित्तिर्नान्यथेति सूचयितुं परावरैकत्वविज्ञानविच्छिन्नसर्वसंशयत्वादेव ब्रह्मवित्कर्मभिर्न निबध्यत इति प्रतिपादयति—योगेति। ज्ञानसंछिन्नसंशयं ज्ञानं परावरयोरखण्डैकरसत्वसंदर्शनलक्षणं तेन ज्ञानेन निरन्तरसमाधिनिष्पन्नाऽप्रतिबद्धभावेन संछिन्ना निःशेषं निर्मूलिताः संशयाः मोक्षः कर्मणा वा ज्ञानेन वा ज्ञानं च परोक्षं वाऽपरोक्षं वा मोक्षो ज्ञानेन सिध्यति वा न वेत्येवमादयः सर्वे यस्य तं ज्ञानसंछिन्नसंशयमत एव योगसंन्यस्तकर्माणम् सर्वमिदमहं च ब्रह्मैवेति सर्वस्य जगतः स्वस्य च ब्रह्ममात्रत्वदर्शनं योगस्तेन संन्यस्तानि विश्लेषितानि सम्यङ् नितरामस्तानि ब्रह्मणि ब्रह्मात्मना लयं गतानीति वा कर्माणि संचितान्यागामीनि च सर्वाणि यस्य तं योगसंन्यस्तकर्माणमात्मवन्तमप्रमत्तम्। यद्वात्मैव बहिरन्तः सर्वत्र वृत्तेर्विषयत्वेनास्यास्ति नान्यदित्यात्मवान् तमात्मवन्तं ब्रह्मविदं कर्माणि स्वप्नवदा-

भासरूपाणि शरीरयात्रामात्रैकप्रयोजनानि देहचेष्टारूपाणि योगाग्निनिर्दग्धत्वान्निर्वीर्याणि न निबध्नन्ति बन्धाय न कल्पन्ते शुक्तिदृष्ट्यारजतप्रत्ययवद्ब्रह्मदृष्ट्या विनश्यन्तीत्यर्थः । एतेन ब्रह्मविदां यतीनां योगेनैव सर्वकर्मसंन्यासः कर्तव्यः कर्मणामबन्धकत्वायेति सूचितं भवति ॥ ४१ ॥

**श्री० टी०**–अध्यायद्वयोक्तां पूर्वापरभूमिकाभेदेन कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरति–**योगेति** द्वाभ्याम् । योगेन परमेश्वराराधनरूपेण तस्मिन्संन्यस्तानि समर्पितानि कर्माणि येन तं पुरुषं कर्माणि स्वफलैर्निबन्धन्ति अतश्च ज्ञानेनाकर्त्रात्मबोधेन संछिन्नः संशयो देहाद्यभिमानलक्षणो यस्य तं चात्मवन्तमप्रमादिनं कर्माणि लोकसंग्रहार्थानि स्वाभाविकानि वा न निबन्धन्ति ॥ ४१ ॥

**स० टी०**–संशयस्याखिलानर्थमूलस्यास्यापनुत्तये ॥ आत्मज्ञानमुपायं च वदन्नारायणो हरिः ॥ १ ॥ पुराध्यायद्वयेनोक्तां कर्मज्ञानमयीं द्विधाम् ॥ उपसंहरतीदानीं ब्रह्मनिष्ठां विमोक्षदाम् ॥ २ ॥ समत्वबुद्धिरूपेण योगेन परमेश्वरे ॥ समर्पितानि कर्माणि येन तं शुद्धमानसम् ॥३॥ यद्वा त्यक्तानि कर्माणि येन ब्रह्मैक्यदर्शिना ॥ योगसंन्यस्तकर्मत्वं कथं स्यात्संशये सति ॥४॥ शृणु त्वमात्मबोधेन येनच्छिन्नोऽस्ति संशयः॥ सर्वदा सावधानं तं क्रियमाणान्यनेकधा ॥ ५ ॥ कर्माणि न निबन्धन्त्यनिष्टेष्टादिकलेवरैः ॥ ६ ॥ ४१ ॥

**भा० टी०**–ननु संशयनिवर्तकाभावे तदकरणमस्वाधीनमित्याशङ्क्य तन्निवृत्त्युपायमात्मज्ञाननिश्चयं ज्ञापयन् तत्त्वसाक्षात्कारसंछिन्नसंशयं कर्माणि न निबध्नन्तीत्याह—**योगेति** । योगेन परमार्थदर्शनलक्षणेन सम्यङ्न्यस्तानि त्यक्तानि शक्तिप्रतिबन्धेन धर्माधर्माख्यानि कर्माणि संचितादीनि येन तं "क्षीयन्ते चास्य कर्माणि" इतिश्रुतेः योगेन भगवदाराधनलक्षणसमत्वबुद्धिरूपेण संन्यस्तानि भगवति समर्पितानि कर्माणि येनेति वा अस्मिन्पक्षे कर्मपदसंकोचाद्यापत्तिरूपाऽरुचिर्बोध्या । यद्वा भाष्यस्योपलक्षणार्थतया तत्रेणायमपि पक्षोस्तु यस्मात्कर्मयोगानुष्ठानादशुद्धिक्षयहेतुकज्ञानसंछिन्नसंशयो न निबध्यते कर्मभिरित्यग्रिमभाष्यात् । तत्र हेतुमाह—ज्ञानेनात्मेश्वरैकत्वदर्शनलक्षणेन छिन्नः संशयः आत्मा देहाद्यभिन्नो भिन्नो वा भिन्नोप्यविभुर्विभुर्वा सोऽपि कर्ताकर्ता वा कर्तापि भोक्ताभोक्ता वाऽभोक्ताप्यनेक एको वा सोऽपि सविशेषो निर्विशेषो वा निर्विशेषज्ञानात्केनचित्समुच्चितान्मोक्षः केवलाद्वा केवलज्ञाननिवर्त्यः प्रपञ्चः सत्यः मिथ्याभूतो वेत्येवमादिरूपो यस्य तम् । अत्र हेतुमाह–आत्मवन्तमप्रमत्तं शमदमादिपरं कर्माणि 'गुणा गुणेषु वर्तन्ते' इतिबुद्ध्या क्रियमाणानि न निबध्नन्ति अनिष्टादिरूपं फलं नारभन्ते राज्ञामतिप्रबलत्वात्तान्विजित्य धनमाहर्तुं मम सामर्थ्यमस्ति न वेति संशयमतिप्रबलात्मस्वरूपनिश्चयेन मुक्त्वा धनं जितवाँस्त्वमेवात्र दृष्टान्त इति ध्वनयन्नाह–धनञ्जयेति ॥ ४१ ॥

**प० टी०**–अथ प्रागुक्तां कर्मज्ञानमयीं द्विविधां ब्रह्मनिष्ठामुपसंहरन्नाह–**योगसंन्यस्तकर्माणमिति** द्वाभ्याम् । योगेन परमेश्वराराधनरूपेण तस्मिन् संन्यस्तानि कर्माणि येन तं तथा ज्ञानेनाकर्त्रात्मबोधेन संछिन्नः संशयो देहाभिमानलक्षणो यस्य तमात्मवन्तं प्रमादशून्यं सावधानं कर्माणि लोकसंग्रहार्थं कृतानि न निबध्नन्ति । तदुक्तम्–'यथा पर्वतमादीप्तं न श्रयन्ति मृगद्विजाः । तद्वद् ब्रह्मविदो दोषा नाश्रयन्ति कदाचन ' इति ॥ ४१ ॥

**रा० टी०**–ज्ञानसाधनमनुवदन्ज्ञानफलं प्रपञ्चयति–**योगेति** । भगवति मनोयोगेन तस्मिन्संन्यस्तं समर्पितं कर्म येन तं योगसंन्यस्तकर्माणं ज्ञानेन छिन्नसंशयमात्मवन्तं परमात्मभक्तं हे धनञ्जय कर्माणि न निबध्नन्ति मुक्तो भवतीत्यर्थः ॥ ४१ ॥

**तस्मादज्ञानसंभूतं हृत्स्थं ज्ञानासिनात्मनः ॥**
**छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत ॥ ४२ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे यज्ञविभागयोगो[1] नाम चतुर्थोऽध्यायः ॥ ४ ॥

त० टी०—यस्मादेवं तस्मादज्ञानात्संभूतं समुत्पन्नं हृत्स्थम् ' स्वान्तं हृन्मानसं मनः' इति कोशात् हृदि मनसि स्थितं सर्वार्थभ्रंशहेतुमेनं संशयम् आत्मनो ज्ञानासिना मयोपदिष्टेनात्मविषयकज्ञानरूपखड्गेन छित्त्वा योगं मयोपदिष्टं निष्कामकर्म आतिष्ठ, यथाधिकारमाचर । भारतेति संबोधनेन भरतवंशोद्भवस्य क्षत्रियश्रेष्ठस्य तव युद्धमेव प्रधानं कर्मेति सूचितम् । तस्मादुत्तिष्ठ तदेव कुर्वित्यर्थः ॥ ४२ ॥

ज्ञानोपायतयाऽसङ्गकर्मनिष्ठा यथार्हतः । हरिणा भक्तसंसारच्छेदायेहोपशिक्षिता ॥ १ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां ज्ञानयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

म० टी०—यस्मादेवमज्ञानादविवेकात्संभूतमुत्पन्नं हृत्स्थं हृदि बुद्धौ स्थितं कारणस्याश्रयस्य च ज्ञाने शत्रुः सुखेन हन्तुं शक्यत इत्युभयोपन्यासः । एनं सर्वानर्थमूलभूतं संशयं आत्मनो ज्ञानासिना आत्मविषयकनिश्चयखड्गेन छित्त्वा योगं सम्यग्दर्शनोपायं निष्कामकर्म आतिष्ठ कुरु । अत इदानीमुत्तिष्ठ युद्धाय हे भारत ! भरतवंशे जातस्य युद्धोद्यमो न निष्फल इति भावः ॥ ४२ ॥

स्वस्मिन्नीशत्वबोधेन भक्तिश्रद्धे दृढीकृते ॥ धीहेतुः कर्मनिष्ठा च हरिणेहोपसंहृता ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायां ब्रह्मार्पणयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

शं० टी०—यथा ब्रह्मवित्तमो ज्ञानसंछिन्नसंशयत्वाद्योगसंन्यस्तसर्वकर्मा सन् कर्मबन्धनिर्मुक्तस्तथा त्वमपि ज्ञानसंछिन्नसंशयो भूत्वा योगसंन्यस्तकर्मा सन् कर्मनिष्ठो भवेत्याह—तस्मादिति । यस्मात्संशयवान् तद्दोषेणैव कर्मज्ञानयोगयोरन्यतरप्रवृत्त्यनुपपत्त्या स्वयमुभयभ्रष्टो भवति तस्मात् हे भारत त्वमज्ञानसंभूतं स्वस्याविक्रियब्रह्मात्मत्वाऽदर्शनलक्षणं यदज्ञानं तस्मादेव संभूतमात्मनः स्वस्य हृत्स्थं चित्तगतं संशयं मोक्षसाधनं ज्ञानं वाऽन्यद्वा ज्ञानं च परोक्षं वापरोक्षं वा ज्ञानेनाविद्यातत्कार्याणां निःशेषनिवृत्तिरस्ति वा न वेत्यादिलक्षणं सन्देहं ज्ञानासिना ज्ञानं ब्रह्मैवाहमिति स्वस्य निर्विकारेऽद्वितीये परे ब्रह्मण्येवात्मप्रत्ययोऽप्रतिबद्धस्तदेवासिस्तेनैनं निरुक्तलक्षणं संशयमात्मनाशकं छित्त्वोत्तिष्ठ व्युत्थाय योगं कर्मयोगमातिष्ठ समाचर युध्यस्वेत्यर्थः ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां चतुर्थोऽध्यायः ॥ ४ ॥

श्री० टी०—तस्मादिति । यस्मादेवं तस्मादात्मनोऽज्ञानेन संभूतं हृदि स्थितमेनं संशयं शोकादिनिमित्तं देहात्मविवेकज्ञानखड्गेन छित्त्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठाश्रय तत्र च प्रथमं प्रस्तुताय युद्धायोत्तिष्ठ हे भारत । क्षत्रियत्वेन युद्धस्य स्वधर्मत्वं दर्शितम् ॥ ४२ ॥

पुमवस्थादिभेदेन कर्मज्ञानमयी द्विधा । निष्ठोक्ता येन तं वन्दे शौरिं संशयसंछिदम् ॥ १ ॥

इति सुबोधिन्यां टीकायां चतुर्थोऽध्यायः ॥ ४ ॥

---

१ ज्ञानयोगोनाम । ज्ञान कर्मसंन्यासयोगो नाम । ब्रह्मार्पणयोगो नाम । इति पाठः ।

**स० टी०**–यस्मादेवं ततोऽज्ञानादुत्पन्नं च स्थितं मतौ । कारणस्याश्रयस्यापि ज्ञाने सति सुखेन वै ॥१॥ निहन्तुं शक्यते शत्रुरुपन्यासो द्वयोरिति ॥ ब्रह्मैक्यबोधखड्गेन छित्त्वा भरतवंशज ॥ २ ॥ निष्कामकर्मयोगं त्वमाश्रय ज्ञानसाधनम् ॥ अत उत्तिष्ठ युद्धाय सन्नद्धो भव धीरधीः ॥ ३ ॥ ४२ ॥

स्वस्मिन्नीशत्वबोधाद्भगवति सुतनौ भक्तिरापादिताद्धा धीहेतुः कर्मनिष्ठा क्रतुभिरपि तथा ज्ञाननिष्ठोत्तमोक्ता ॥ सत्यं ब्रह्मैक्यतत्त्वं प्रतिपदमुदितं दृश्यमिथ्यात्वमेवं येन श्रीशान्तिधाम्ना तमिह मुररिपुं कृष्णमेवावलम्बे ॥ १ ॥ इति भावप्रकाशे श्रीसदानन्दविदाकृते ॥ ब्रह्मनिष्ठाप्रधानोऽयं चतुर्थः पूर्णतां गतः ॥ २६४ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ १९७० ॥

**भा० टी०**–यस्माच्चित्तशुद्धिलभ्यं ज्ञानमेवंभूतं यस्माच्च संशयात्मा विनश्यति यस्माच्च ज्ञानसंछिन्नसंशयः कर्मभिर्न निबध्यते तस्मात्पापिष्ठमात्मनः संशयमज्ञानादविवेकाज्जातं बुद्धौ स्थितं शोकमोहादिदोषहरं सम्यग्दर्शनं ज्ञानं तदेवासिः खड्गः तेनात्मनो ज्ञानासिना छित्त्वा योगमात्मज्ञानोपायं कर्मानुष्ठानमातिष्ठ कुर्वित्यर्थः । इदानीं तु स्वधर्मभूताय युद्धायोत्तिष्ठ भारतेति तत्र योग्यतासूचकं संबोधनम् । तदनेन चतुर्थाध्यायेन योगस्य संप्रदायसिद्धत्वं भगवतो वासुदेवस्य सर्वज्ञत्वमीश्वरत्वं च प्रतिपाद्य योग्यतासंपत्तये कर्मनिष्ठां तत्साध्यां ज्ञाननिष्ठामत्युत्तमां तत्र प्रणिपातादीनि बहिरङ्गसाधनानि श्रद्धादीन्यन्तरङ्गाणि तस्याः फलं सर्वानर्थनिवृत्त्या ब्रह्मभावमतिपापिष्ठं संशयं चाभिदधताऽशेषदोषवन्तं संशयं विहायोत्तमाधिकारिणो ज्ञाननिष्ठाऽपरस्य कर्मनिष्ठेति स्थापितम् ॥ ४२ ॥

इति श्रीपरमहंसपरिव्राजकाचार्य श्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां चतुर्थोऽध्यायः ॥ ४ ॥

**प० टी०**–तस्मादज्ञानेति । यस्मादेवं तस्मादात्मनोऽज्ञानसंभूतं हृत्स्थं हृदिस्थं संशयं ज्ञानासिनात्मज्ञानखड्गेन छित्त्वा योगं कर्मयोगं क्षात्रधर्मोचितमातिष्ठाश्रय तदर्थमुत्तिष्ठ भारतेति संबुद्धिरुत्तेजनार्था ॥ ४२ ॥

अथाध्यायतात्पर्यम् ।

बाह्यं कर्मागमोक्तं द्विविधमपि विनश्यत्फलं तद्विकर्म स्यात्तच्चाकर्म यत्स्यादमृतफलमतः कर्मनैष्कर्म्ययोस्तु । अन्योऽन्यं साहचर्यं भवति तदखिलं मामिहोद्दिश्य कार्यं तद्वै ब्रह्मार्पणं स्याद्द्विविधयजनतः प्राह पार्थ चतुर्थे ॥१॥

इति श्रीमद्दैवज्ञपण्डितसूर्यवि० भ० टी० परमार्थप्रपायां ब्रह्मार्पणयोगो नाम चतुर्थोऽध्यायः ॥ ४ ॥

**रा० टी०**–उपपादितं कर्मणः कर्तव्यत्वमुपसंहरति–तस्मादिति । ज्ञानोपायानुष्ठानाननुष्ठानयोरर्थानर्थवत्त्वादज्ञानसंभूतं हृद्गतमात्मनः संशयं ज्ञानासिना ज्ञानाख्यखड्गेन छित्त्वा योगं ज्ञानोपायं कर्मानुतिष्ठ कुरु, हे भारत उत्तिष्ठ उद्युक्तो भवेति ॥ ४२ ॥

इति गीतार्थसंग्रहे राघवेन्द्रयतिकृते चतुर्थोऽध्यायः ॥ ४ ॥

---

## अथ पञ्चमोऽध्यायः ॥ ५ ॥

**अर्जुन उवाच–संन्यासं कर्मणां कृष्ण पुनर्योगं च शंससि ।**
**यच्छ्रेय एतयोरेकं तन्मे ब्रूहि सुनिश्चितम् ॥ १ ॥**

**त० टी०**–पूर्वाध्याये कर्मयोगमवश्यकर्तव्यतयोक्त्वा ज्ञाननिष्ठस्य कर्मनिरपेक्षत्वमभिधायान्ते पुनः कर्मयोगमेव भगवानुपदिष्टवान् । तत्र मुमुक्षूणां कर्मज्ञानयोर्युगपदेकेनानुष्ठानासंभवात् द्वयोर्मध्ये किं

**श्रेयोऽनुष्ठानमिति संदिहानोऽर्जुन उवाच–संन्यासमिति । हे कृष्ण स्वभक्तपापकर्षक ' निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ' इत्यादिना ' श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप। सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते ' इत्यादिना च कर्मणां संन्यासं सम्यङ् न्यस्यन्ते समाप्यन्ते कर्माणि यत्रेति संन्यासः ज्ञानयोगस्तं शंससि, ' ज्ञानासिना संशयं छित्त्वा योगमातिष्ठ ' इति च पुनर्योगं कर्मानुष्ठानं शंससि । तथा चैकेन मुमुक्षुणा द्वयोरेकदाऽनुष्ठानं न संभवति विरुद्धत्वात् । अतस्तयोः कर्मज्ञानयोर्मध्ये यदेकं श्रेयः श्रेष्ठं सुनिश्चितं स्यात्तन्मे मह्यं ब्रूहि ॥ १ ॥**

म० टी०–अध्यायाभ्यां कृतो द्वाभ्यां निर्णयः कर्मबोधयोः । कर्मतत्त्यागयोर्द्वाभ्यां निर्णयः क्रियतेऽधुना ॥ तृतीयेऽध्याये ज्यायसी चेत्कर्मणस्त इत्यादिनाऽर्जुनेन पृष्टो भगवान्ज्ञानकर्मणोर्विकल्पसमुच्चयासंभवेनाधिकारिभेदव्यवस्थया लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयेत्यादिना निर्णयं कृतवान् । तथा चाज्ञाधिकारिकं कर्म न ज्ञानेन सह समुच्चीयते तेजस्तिमिरयोरिव युगपदसंभवात् कर्माधिकारहेतुभेदबुद्ध्यपनोदकत्वेन ज्ञानस्य तद्विरोधित्वात् । नापि विकल्प्यते एकार्थत्वाभावात् ज्ञानकार्यस्याज्ञाननाशस्य कर्मणा कर्तुमशक्यत्वात् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय " इति श्रुतेः। ज्ञाने जाते तु कर्म कार्यं नापेक्ष्यत एवेत्युक्तं यावानर्थ उदपान इत्यत्र । तथाच ज्ञानिनः कर्मानधिकारे निश्चिते प्रारब्धकर्मवशाद्वृथाचेष्टारूपेण तदनुष्ठानं वा सर्वकर्मसंन्यासो वेति निर्विवादं चतुर्थे निर्णीतम् । अज्ञेन त्वन्तःकरणशुद्धिद्वारा ज्ञानोत्पत्तये कर्माण्यनुष्ठेयानि " तमेत वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन " इति श्रुतेः सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इति भगवद्वचनाच्च । एवं सर्वकर्माणि ज्ञानार्थानि तथा सर्वकर्मसंन्यासोऽपि ज्ञानार्थः श्रूयते " एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" "शान्तो दान्त उपरतास्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्", "त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक् परं पदम् ", "सत्यानृते सुखदुःखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्" इत्यादौ तत्र कर्मतत्त्यागयोरारादुपकारकसन्निपत्योपकारकयोः प्रयाजावघातयोरिव न समुच्चयः संभवति विरुद्धत्वेन यौगपद्याभावात् । नापि कर्मतत्त्यागयोरात्मज्ञानमात्रफलत्वेनैकार्थत्वादतिरात्रयोः षोडशिग्रहणाग्रहणयोरिव विकल्पः स्यात् द्वारभेदेनैकार्थत्वाभावात् । कर्मणो हि पापक्षयरूपमदृष्टमेव द्वारं संन्यासस्य तु सर्वविक्षेपाभावेन विचारावसरदानरूपदृष्टमेव द्वारं नियमापूर्वं तु दृष्टसमवायित्वादवघातादाविव न प्रयोजकं तथा चादृष्टार्थदृष्टार्थयोरारादुपकारकसन्निपत्योपकारकयोरेकप्रधानार्थत्वेऽपि विकल्पो नास्त्येव प्रयाजावघातादीनामपि तत्प्रसङ्गात् । तस्मात् क्रमेणोभयमप्यनुष्ठेयम् । तत्रापि संन्यासानन्तरं कर्मानुष्ठानं चेत्तदा परित्यक्तपूर्वाश्रमस्वीकारेणारूढपतितत्वात् कर्मानधिकारित्वं प्राक्तनसंन्यासवैयर्थ्यं च तस्मादृष्टार्थत्वाभावात् प्रथमकृतसंन्यासेनैव ज्ञानाधिकारलाभे तदुत्तरकाले कर्मानुष्ठानवैयर्थ्यं च तस्मादादौ भगवदर्पणबुद्ध्या निष्कामकर्मानुष्ठानादन्तःकरणशुद्धौ तीव्रेण वैराग्येण विविदिषायां दृढायां सर्वकर्मसंन्यासः श्रवणमननादिरूपवेदान्तवाक्यविचाराय कर्तव्य इति भगवतो मतम् । तथा चोक्तं 'न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते' इति, वक्ष्यते च 'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते' इति । योगोऽत्र तीव्रवैराग्यपूर्विका विविदिषा । तदुक्तं वार्तिककारैः 'प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः । ब्रह्मावाप्त्यै तु तत्त्यागमीप्सन्तीति श्रुतेर्बलात् ' इति । स्मृतिश्च ' कषायपक्तिः कर्मभ्यः ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ' इति । मोक्षधर्मे च ' कषायं पाचयित्वा च श्रेणीस्थानेषु च त्रिषु । प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् । भावितैः करणैश्चायं बहुसंसारयोनिषु । आसादयति शुद्धात्मा मोक्षं वै प्रथमाश्रमे । तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः । त्रिष्वाश्रमेषु को-

न्वर्थो भवेत्परमभीप्सितः' इति । मोक्षं वैराग्यम् । एतेन क्रमाक्रमसंन्यासौ द्वावपि दर्शितौ । तथा च श्रुतिः "ब्रह्मचर्यं समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेद्यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा वनाद्वा यद-हरेव विरजेत्तदहरेव प्रव्रजेत्" इति तस्मादज्ञस्याविरक्ततादशायां कर्मानुष्ठानमेव तस्यैव विरक्ततादशायां संन्यासः श्रवणाद्यवसरदानेन ज्ञानार्थ इति दशाभेदेनाज्ञमधिकृत्यैव कर्मतत्यागौ व्याख्यातुं पञ्चमषष्ठा-वध्यायावारभ्येते । विद्वत्संन्यासस्तु ज्ञानबलादर्थसिद्ध एवेति संदेहाभावान्नात्र विचार्यते । तत्रैकमेव जिज्ञासुमज्ञं प्रति ज्ञानार्थत्वेन कर्मतत्त्यागयोर्विधानात्तयोश्च विरुद्धयोर्युगपदनुष्ठानासंभवान्मया जिज्ञा-सुना किमिदानीमनुष्ठेयमिति संदिहानोऽर्जुनः पृच्छति—**संन्यासमिति** । हे कृष्ण सदानन्दरूप भक्तदुः-खकर्षणेति वा कर्मणां यावज्जीवादिश्रुतिविहितानां नित्यानां नैमित्तिकानां च संन्यासं त्यागं जिज्ञासुमज्ञं प्रति कथयसि वेदमुखेन पुनस्तद्विरुद्धं योगं च कर्मानुष्ठानरूपं शंससि "एतमेव प्रव्रजिनो लोकमिच्छन्तः प्रव्रजन्ति", "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन" इत्यादिवाक्यद्वयेन । निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् । छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारत । इति गीतावाक्यद्वयेन वा तत्रैकमज्ञं प्रति कर्मतत्त्यागयोर्विधानाद्युगपदुभयानुष्ठानासंभवात्, एतयोः कर्मतत्त्या-गयोर्मध्ये यदेकं श्रेयः प्रशस्यतरं मन्यसे कर्म वा तत्त्यागं वा तन्मे ब्रूहि सुनिश्चितं तव मतमनुष्ठानाय॥ १॥

**शं० टी०**—कर्मण्यकर्म यः पश्येदित्यारभ्य कर्मसंन्यासमुपक्रम्य 'ज्ञानाग्निदग्धकर्माणं', 'शारीरं केवलं कर्म' 'यदृच्छालाभसंतुष्टः', 'सर्वं कर्माखिलं पार्थ', 'ज्ञानाग्निः सर्वकर्माणि', 'योगसंन्यस्तकर्माणम्' इत्येतैर्वाक्यैर्ब्रह्मविदो ब्रह्मनिष्ठस्य कर्तव्यः कर्मसंन्यास एवेति प्रतिपाद्येदानीं कर्मसंन्यासकर्मयोगयोरेकदैकपुरुषाऽननुष्ठेयत्वम् उभयो-रव्यवहितव्यवहितसाधनभावेनैकार्थोपयोगित्वं, फलैकत्वेऽपि तयोः साध्यसाधनभावेन पूर्वापरभावित्वं, कर्मसाधनसाध्ये ज्ञाने संप्राप्ते ब्रह्मविदः कर्तव्यः सर्वकर्मसंन्यास एवेत्याद्यर्थनिरूपणाय पञ्चमाध्याय आर-भ्यते । तत्रादौ लोकसंग्रहमेवापीति विदुषो लोकहितार्थं कर्म कर्तव्यमिति कर्मयोगमुपक्रम्योपक्रान्ते वर्त एव च कर्मणीति तत्र स्वदृष्टान्तं विधाय गुणा गुणेषु वर्तन्त इतिन्यायेनानुष्ठातव्यमित्यनुष्ठानप्रक्रियां सूच-यित्वा एवं पूर्वैः पूर्वतरं कृतमिति तस्य शिष्टाभ्युपगतत्वं दर्शयित्वा तस्मिन्नेव कर्मयोगे कुरु कर्मैव तस्मात्त्व-मिति योगमातिष्ठोत्तिष्ठेति संन्यासेन सहोपदिष्टे सति कर्मसंन्यासकर्मानुष्ठानयोरुभयोर्युगपत्कर्तव्यत्वेन प्राप्तयोश्चक्षुरुन्मीलननिमीलनवदन्योन्यविरोधादेकेनैकदा कर्तुमशक्यत्वात्, द्वयोरन्यतरस्य कर्तव्यत्वे प्राप्ते तयोर्यच्छ्रेष्ठतरं पुमर्थसाधकं तज्ज्ञात्वैकं कर्तुं शक्यत इति तदन्यतरश्रेष्ठत्वजिज्ञासयार्जुन उवाच—**संन्यास-मिति** । नन्वत्र एतयोः कर्मसंन्यासकर्मयोगयोर्यच्छ्रेष्ठतरं तन्मे ब्रूहीत्यर्जुनस्य प्रश्नः किं विद्वत्कर्तृककर्म-संन्यासकर्मयोगयोर्वा किमविद्वत्कर्तृककर्मसंन्यासकर्मयोगयोर्वा उत विद्वदविद्वत्कर्तृकसंन्यासकर्मयोगयोर्वेति चेदुच्यते । नाद्यः निरन्तरसमाधिसमुत्पन्नसम्यग्ज्ञानेन ब्रह्मैवाहमिति निष्क्रिये परे ब्रह्मण्येवात्मभावमुपेत्य सदा तदात्मनैव तिष्ठतो ब्रह्मविदस्तद्विपरीतात्माज्ञानमूलकानात्मतादात्म्यासंभवादहंकारैककारणकः कर्मयोगो न कथंचन सिध्यति स्वविरोधिनि सम्यग्ज्ञाने विजृम्भमाणे सत्यर्के तमस इवाज्ञानस्य स्थित्यनुपपत्तौ विदुषोऽनात्मतादात्म्यं न संभवत्येव तदसंभवे तत्कारणकाहंकारासंभवात्तदेकनिबन्धनः कर्मयोगः स्वप्नेऽपि संभावयितुं न शक्यते । नहि जाग्रतः स्वप्नार्थसंबन्धवद्ब्रह्मविद्यायामेव जाग्रतो ब्रह्मविदोऽनात्मतादात्म्य-तत्कार्यसंबन्धः संभवति तत्सत्त्वेकृतकृत्यताऽभावप्रसङ्गात् "तद्ब्रह्माहमस्मीति कृतकृत्यो भवति", "नैवास्ति किंचित्कर्तव्यम्" इत्यादिश्रुतिस्मृत्यप्रमाण्यप्रसङ्गात्प्रत्यक्षविरोधाच्च वक्रकोटरत्वादिधर्मसंदर्शिनः स्थाणौ पुनश्चोरत्वबुद्धिः पलायनं च न संभवति यथा तथा ब्रह्मैवात्मानं विजानतस्तदानन्दमनुभवतः सर्वं ब्रह्मैव पश्यतो ब्रह्मविदोऽनात्मतादात्म्यापत्तिः कर्तृत्वबुद्धिः कामना च कर्मणि प्रवृत्तिश्च न संभवत्येवाऽतो

विद्वत्कर्तृककर्मसंन्यासकर्मयोगविषयो न भवति । नापि तृतीयः विद्वत्ताविद्वत्तयोः परस्परविरोधिन्योरेकाधिकरणत्वानुपपत्तौ प्रश्नासंभवात् परिशेषादविद्वत्कर्तृकयोरेव कर्मसंन्यासकर्मयोगयोर्द्वयोरेकदैव कर्तव्यत्वप्रसक्तावप्युभयोः परस्परविरुद्धत्वेन सहप्रयोगायोगात्तयोरन्यतरस्य प्रशस्यतरत्वे सिद्धे तत्रैको मुमुक्षुणा कर्तुं शक्यत इति तयोरेकस्य श्रेष्ठत्वजिज्ञासुरर्जुनः पृच्छति–संन्यासमिति । सदानन्दरूपत्वात्परमात्मा कृष्ण इत्युच्यते तस्य संबुद्धिर्हे कृष्ण पूर्वोक्तैर्वचनैः संन्यासं विध्युक्तानामवश्यमनुष्ठेयानां कर्मणां त्यागं शंससि कथयसि पुनर्भूयोऽपि कुरु कर्मैव तस्मात्त्वमिति योगमातिष्ठेति च कर्मयोगमपि शंससि क्रिययाप्यधिकारितः साधनसंपत्त्या चाश्रमेण च परस्परविरुद्धौ संन्यासकर्मयोगावेकेनैकदा कर्तुमशक्यौ मह्यं तत्कर्तव्यत्वेन विधत्से । ममात्र संशयः–कर्तव्यः कर्मयोगो वा संन्यासो वेति । द्वयोरप्याश्रमादिभेदेन विरुद्धत्वादेकेनैकदा कर्तुमशक्यत्वात्तयोर्यच्छ्रेयःसाधनं भवति तदेव कर्तव्यं न तु द्वयमिति भात्यत एतयोर्यदेकं प्रशस्यतरं मोक्षसाधनत्वेन भवता सुनिश्चितं तदेव मे ब्रूहीत्यर्थः ॥ १ ॥

श्री० टी०–निवार्य संशयं जिष्णोः कर्मसंन्यासयोगयोः । जितेन्द्रियस्य च यतेः पञ्चमे मुक्तिमब्रवीत् ॥ अज्ञानसंभूतं संशयं ज्ञानासिना छित्त्वा कर्मयोगमातिष्ठेत्युक्तं तत्र पूर्वापरविरोधं मन्वानोऽर्जुन उवाच–संन्यासमिति । यस्त्वात्मरतिरेव स्यादित्यादिना सर्वं कर्माखिलं पार्थेत्यादिना च ज्ञानिनः कर्मसंन्यासं कथयसि ज्ञानासिना संशयं छित्त्वा योगमातिष्ठेति पुनर्योगं च कथयसि। नच कर्मसंन्यासः कर्मयोगश्चैकस्यैकदैव संभवतः विरुद्धस्वरूपत्वात् तस्मादेतयोर्मध्ये एकस्मिन्ननुष्ठातव्ये सति मम यच्छ्रेयः श्रेष्ठं सुनिश्चितं तदेकं ब्रूहि ॥ १ ॥

स० टी०–श्रियो वासं वृन्दावनकृतनिवासं श्रुतिपदं कलावासावासं सुरनरसुखावासजलधिम् ॥ महोल्लासोल्लासं सुजनहृदिवासं गुणनिधिं प्रतिश्वासं वन्दे निरवधिविलासं मधुरिपुम् ॥ १ ॥ अध्यायाभ्यां कृतो द्वाभ्यां निर्णयः कर्मबोधयोः ॥ कर्मतत्त्यागयोर्द्वाभ्यां निर्णयः क्रियतेऽधुना ॥ २ ॥ तृतीय ईरितोऽध्याये विभागः कर्मबोधयोः ॥ अज्ञाधिकारिकं कर्म न समुच्चीयते धिया ॥ ३ ॥ परस्परविरुद्धत्वात्तेजस्तिमिरयोरिव ॥ ऐकार्थ्याभावतो नापि कर्मयोगो विकल्प्यते ॥ ४ ॥ धीकार्याज्ञानबाधो हि कर्तुं शक्यो न कर्मणा ॥ नापेक्षते समुत्पन्नं ज्ञानं कर्मफलं मनाक् ॥ ५ ॥ तथाच ज्ञानिनः कर्मानधिकारे विनिश्चिते ॥ प्रारब्धवशतस्तस्य कर्मानुष्ठानमस्तु वा ॥ ६ ॥ कर्मत्यागोऽस्तु वेत्येवं चतुर्थे निर्णयः कृतः ॥ चित्तशुद्ध्यात्मविज्ञानप्राप्तये ज्ञानिनः सदा ॥ ७ ॥ अनुष्ठेयानि कर्माणि न तत्त्यागः प्रशस्यते ॥ सर्वकर्मपरित्यागो ज्ञानार्थः श्रूयते तथा ॥ ८ ॥ एतमेवेतिवाक्यादौ संन्यासोऽपि प्रशस्यते ॥ त्यजतैव हि तज्ज्ञेयं त्यक्तुः प्रत्यक्परं पदम् ॥ ९ ॥ प्रयाजादिवदेवेदं कर्मारादुपकारकम् ॥ अवघातवत्तत्त्यागः सन्निपत्योपकारकः ॥ १० ॥ तयोः समुच्चयो नास्ति विरुद्धत्वेन सर्वथा ॥ न वा तयोर्विकल्पोऽस्ति ज्ञानमात्रफलत्वतः ॥ ११ ॥ द्वारभेदेन चैकार्थ्याभावात्स च निदर्श्यते ॥ कर्मणोऽघक्षयाददृष्टमेव द्वारं विनिश्चितम् ॥ १२ ॥ संन्यासस्य तु विक्षेपाभावहेतुतया मतौ ॥ दृष्टद्वारत्वमेवास्ति विकल्पो नास्त्यतस्तयोः ॥ १३ ॥ तस्माद्द्वयं क्रमेणैतत्पुंसानुष्ठेयमादरात् ॥ संन्यासानन्तरं कर्मानुष्ठानं नैव संभवि ॥ १४ ॥ त्यक्तस्य पुनरादाने आरूढपतितो भवेत् ॥ आरूढो नैष्ठिकं धर्मं यस्तु प्रच्यवते पुनः ॥ १५ ॥ प्रायश्चित्तं न पश्यामो येन शुद्ध्येत्स आत्महा ॥ तस्मादादावनुष्ठानात्कर्मणामीश्वरार्पणात् ॥ १६ ॥ चित्तशुद्ध्याप्तसत्तीव्रवैराग्येण विवेकिनः ॥ जिज्ञासायां दृढायां तु संन्यासः सर्वकर्मणाम् ॥ १७ ॥ श्रवणायात्मवेदान्तविचाराय विधीयते ॥ इत्येवं निश्चितं भाति श्रीमद्भगवतो मतम् ॥ १८ ॥ कुतो विनिश्चितं ह्येवं शृणु वेदविदां गिरः ॥ प्रत्यग्विविदिषासिद्ध्यै वेदानुवचनादयः ॥ १९ ॥ ब्रह्मावाप्त्यै तु तत्त्याग ईप्सन्तीति श्रुतेर्बलात् ॥ इत्युक्तं संप्रदायज्ञैर्वार्तिके

श्रीसुरेश्वरैः ॥ २० ॥ कषायान्याचयित्वा च श्रेणीस्थानेषु च त्रिषु ॥ प्रव्रजेच्च परं स्थानं परिव्राज्यमनुत्तमम् ॥ २१ ॥ भावितैः करणैश्चायं बहुसंसारयोनिषु ॥ आसादयति शुद्धात्मा मोक्षं वा प्रथमाश्रमे ॥ २२ ॥ तमासाद्य तु मुक्तस्य दृष्टार्थस्य विपश्चितः ॥ त्रिष्वाश्रमेषु कोऽन्वर्थो भवेत्परमभीप्सितम् ॥ २३ ॥ इत्येवं मोक्षधर्मे श्रीव्यासेनोक्तं महर्षिणा ॥ तस्माद्वैराग्यपर्यन्तं कर्मानुष्ठानमुच्यते ॥ २४ ॥ विरक्ततादशाया तु संन्यासो ज्ञानसाधनम् ॥ ततोऽज्ञमधिकृत्यैव कर्मतत्त्यागयोर्विधिः ॥ २५ ॥ सम्यक्तत्त्वविदो नास्ति चोदना कापि वैदिकी ॥ लौकिकी वा यतस्तस्य कृतकृत्यतया हरिः ॥ २६ ॥ कृत्याभावं स्वयं पूर्वमवदन्निगमावधिः ॥ विद्वत्संन्यास आत्मज्ञे सिद्ध एवार्थतो यतः ॥ २७ ॥ संदेहाभावतस्तस्मात्स च नात्र विचार्यते ॥ तत्रैकमेव जिज्ञासुमज्ञं प्रत्यात्मलब्धये ॥ २८ ॥ कर्मतत्त्यागयोः शास्त्रे विधानात्तत्र चार्जुनः ॥ विरुद्धयोरनुष्ठानं युगपन्नैव संभवेत् ॥ २९ ॥ मया जिज्ञासुनेदानीं किमनुष्ठेयमादरात् ॥ इति संशयवानेवमुवाच श्रीहरिं प्रति ॥ ३० ॥ यावज्जीवादिवेदोक्तकर्मणां त्यागमित्यपि ॥ जिज्ञासुं कथयस्यज्ञं प्रति वेदगिरा स्वयम् ॥ ३१ ॥ तद्विरुद्धं पुनः कर्मानुष्ठानं च प्रशंससि ॥ एतमेवेति वेदेन निराशीरिति च स्वयम् ॥ ३२ ॥ तमेतमिति वेदेन कुरु कर्मेति च स्वयम् ॥ तयोरेकेन युगपत्करणं दुर्घटं द्वयोः ॥ ३३ ॥ कर्मतत्त्यागयोर्मध्ये यदेकं मन्यसे वरम् ॥ तन्मह्यं निश्चितं ब्रूहि स्वनुष्ठानाय ते मतम् ॥ ३४ ॥ सदानन्दस्वरूपोऽसि कृष्ण भक्तार्तिकर्षण ॥ संहृत्य संशयार्तिं मे निजानन्दे नयस्व माम् ॥ ३५ ॥ १ ॥

भा० टी०—निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् । यदृच्छालाभसंतुष्ट इत्यादिना सर्वकर्मसंन्यासं, छित्त्वैनं संशयं योगमातिष्ठोत्तिष्ठ भारतेति कर्मयोगं च श्रुत्वोभयोश्च स्थितिगतिवत्परस्परविरोधादेकेन सह कर्तुमशक्यत्वात् कालभेदेन विधानाभावादर्थात्तयोरन्यतरस्य कर्तव्यताप्राप्तौ सत्यामज्ञस्याशुद्धचेतस एतयोः संन्यासकर्मयोगयोः किं श्रेयस्करमिति बुभुत्सयाऽर्जुन उवाच—**संन्यासमिति** । संन्यासं परित्यागं कर्मणां शास्त्रीयाणामनुष्ठानविशेषाणां पुनस्तेषामनुष्ठानं च " एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन " इत्यादिवेदमूलकैः पूर्वोक्तैर्वचनैः शंससि कथयसि । कृष्णेति संबोधयन् मया त्यागः कर्तव्य उत कर्मानुष्ठानमिति तत्र तत्र मच्चित्ताकर्षणं करोषीति सूचयति अतो मे कतरच्छ्रेय इति संशयो भवति तस्माद्यदेतयोरेकं प्रशस्यतरं सुनिश्चितं तन्मे ब्रूहि निःसंशयाय ॥ १ ॥

प० टी०—अथ परस्पराविरुद्धयोः कर्मसंन्यासकर्मयोगयोः सकृदुपदेशात्संदिहानोऽर्जुनः पृच्छति—**संन्यासमिति** । भो कृष्ण प्रथमं कर्मणां संन्यासं शंससि पुनरनन्तरमेव योगं शंससि उपदिशसि तर्ह्येतयोर्मध्ये यच्छ्रेयः श्रेष्ठं तदेकं सुनिश्चितं यथा भवति तथा ब्रूहि ॥ १ ॥

रा० टी०—योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वेत्यादिना द्वितीये संक्षेपेणोक्तस्य तृतीयादौ विशेषतः स्पष्टीकृतस्य फलकामनादित्यागेनेश्वरार्पणबुद्ध्या वर्णाश्रमविहितकर्मानुष्ठानरूपस्य कर्मयोगस्य यदंशद्वयं कामादिवर्जनरूपमुक्तरूपकर्मानुष्ठानाख्यं चेति, तदंशद्वयरूपं तृतीयोक्तमत्राध्याये प्रपञ्च्यते—**संन्यासमिति** । पूर्वाध्याये यदृच्छालाभसंतुष्ट इत्यादिना कामादिवर्जनरूपं संन्यासं, कुरु कर्मैव तस्मात्त्वं पूर्वैः पूर्वतरं कृतमित्यादिना वर्णाश्रमविहितकर्मणां योगमीश्वरार्पणबुद्ध्यानुष्ठानरूपं कर्मयोगं च हे कृष्ण शंससि कथयसि एतयोरुक्तलक्षणयोः संन्यासकर्मयोगयोः यच्छ्रेयः अधिकं भवति तदेकं मे मम सुनिश्चितं ब्रूहि । संन्यासस्याधिकत्वे तमेव ग्रहीष्यामि किं तद्विरोधिना कामद्वेषादियुतेन युद्धाख्यकर्मयोगेनेति भावः । यद्वा

पूर्वत्र योगसंन्यस्तकर्माणमित्यादौ पठितः संन्यासशब्दो यत्याश्रमविषयः योगमातिष्ठेत्यादौ श्रुतो योगशब्दो गृहिविषय इति प्रकल्प्य यतीनां सर्वकर्मत्यागेन ज्ञानमात्राधिकारित्वात् गृहिणां च ज्ञानत्यागेन कर्ममात्राधिकारित्वात् तयोरेकपुंनिष्ठत्वं न युक्तमितिभावेन योगसंन्यासयोर्मध्ये यच्छ्रेयस्तदेकं ग्रहीष्यामीति भावेन तयोर्मध्ये श्रेयः पृच्छति-संन्यासमिति । कर्मणां संन्यासं यत्याश्रमं संन्यस्तकर्माणमित्यनेन शंससि । पुनःकर्मणां योगमनुष्ठानलक्षणं गृहस्थाश्रमं च योगमातिष्ठोत्तिष्ठेत्यनेन शंससि । एतयोर्यत्याश्रमगृहस्थाश्रमयोः । शिष्टं प्राग्वत् । एतेनास्याध्यायस्य तृतीयोक्तकर्मयोगप्रपञ्चनपरत्वे तदानन्तर्यं स्यादिति निरस्तम् । योजनाद्वयेऽपि पूर्वाध्यायोक्तोपजीवनेनैव प्रश्नस्योत्थानेन चतुर्थानन्तर्यस्योचितत्वादिति ॥ १ ॥

**श्रीभगवानुवाच-संन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ ।**
**तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते ॥ २ ॥**

त० टी०-इत्येवं प्रश्नस्योत्तरं श्रीभगवानुवाच—संन्यास इति । संन्यासः ज्ञानयोगः कर्मयोगश्चेत्युभौ निःश्रेयसकरौ । तयोस्तु कर्मसंन्यासाज्ज्ञानयोगात्कर्मयोगो विशिष्यते श्रेष्ठो भवति॥२॥

म० टी०-एवमर्जुनस्य प्रश्ने तदुत्तरं स श्रीभगवानुवाच-संन्यास इति । निःश्रेयसकरौ ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनौ तयोस्तु कर्मसंन्यासादनधिकारिकृतात्कर्मयोगो विशिष्यते श्रेयानधिकारसंपादकत्वेन ॥ २ ॥

शं० टी०-एवं कर्मसंन्यासकर्मयोगयोरेकैकैनैकदाऽननुष्ठेयत्वे सिद्धे तयोरन्यतरस्य ज्यायस्त्वनिर्णयाय 'देशकालवयोऽवस्थाबुद्धिशक्त्यनुरूपतः। धर्मोपदेशो भैषज्यं वक्तव्यं धर्मपारगैः ' इतिन्यायेनाधिकार्यनुरूपमुत्तरं श्रीभगवानुवाच-संन्यास इति । ब्रह्मणि नितरामासः संन्यासः बाह्यप्रवणताराहित्येन चित्तस्य ब्रह्मणि ब्रह्मात्मनावस्थानलक्षणो निर्विकल्पकसमाधिः प्रत्यग्दृश्याऽनात्मप्रत्ययनिरासः संन्यासः सविकल्पकसमाधिः द्वावप्येतौ संन्यासौ प्रधानौ एतयोः श्रवणमननयोश्चाङ्गभूतस्तत्प्रतिकूलानां सर्वेषां च कर्मणां परित्यागलक्षणः संन्यास इत्येवं संन्यासशब्दार्थस्त्रेधा भिद्यते । अत्र प्रधानभूतौ संन्यासौ न विवक्षितौ किंत्वङ्गभूत एव सर्वकर्मसंन्यासः श्रवणादिजन्यज्ञानद्वारा मोक्षहेतुर्यस्त्वविद्वत्कर्तृकः स च स्वानुष्ठानप्राप्तचित्तशुद्धिजन्यज्ञानद्वारा मोक्षहेतुः यस्त्वविद्वत्कर्तृकः कर्मयोगः स च तावुभावपि निःश्रेयसकरौ यद्यपि मोक्षस्य साधने एव भवतस्तथाप्यविदुषः समकाले कर्तव्यत्वेन प्राप्तयोस्तयोस्तु गुणदोषविचारे क्रियमाणे सदसद्विवेकजन्यतीव्रवैराग्यतीव्रमोक्षेच्छायमनियमशमदमाद्यन्तरङ्गसाधनपौष्कल्यशून्यात्केवलप्रैषमात्रोच्चारणरूपात्संन्यासात् कर्मयोगः श्रद्धया समनुष्ठीयमानो विशिष्यते स्वानुष्ठानभवैर्गुणैर्विशेषत्वाय कल्पते श्रौतस्मार्तादिलक्षणं कर्मैव परमेश्वरप्रीत्यै श्रद्धया समनुतिष्ठतोऽविदुष ऋणत्रयनिवृत्तिस्तज्जन्य इन्द्रादिदेवताप्रसाद ईश्वरप्रसाद इन्द्रियप्रसादश्चित्तशुद्धिरेवमादिर्ज्ञानसाधनसंपत्तिः सिध्यत्यस्माद्धेतोः कर्मयोग उक्तलक्षणात्संन्यासाद्विशिष्टतरो भवत्यतः साधनशून्येनाऽविदुषा सहसा संन्यासो न कर्तव्यः कर्मैवेश्वरार्पणबुद्ध्या सम्यक्कर्तव्यमिति सिद्धम् । ननु " न्यासमेषां तपसामतिरिक्तमाहुः " इति संन्यासस्यैवोत्कृष्टत्वं श्रूयते ततो भगवतः संन्यासन्यक्कारपूर्वकं कर्मयोगस्योत्कृष्टत्ववर्णनमयुक्तमिति चेन्न सर्वलोकानुग्रहहेतुत्वाद्भगवत्प्रवृत्तेः पूर्वं न जायते म्रियते वेत्यादिवाक्यैरमूढानामात्मतत्त्वं तत्साधनं सर्वकर्मसंन्यासं चोपदिश्य इदानीं स्वीयां विद्यां प्रज्ञां प्रकृतिं च परपारगमनशक्तिं चाऽविज्ञायाऽज्ञानात्कुतश्चिन्निमित्तात्सहसा संन्यस्य मूढाः पतिष्यन्तीति तानुद्धर्तुमत्राऽप्रकृतमपि प्रकृत्य कर्मयोगं तेषां कर्मण्येव प्रवृत्तिसिद्धये कर्मयोगं स्तौति-कर्मयोगो विशिष्यत इति न तु संन्यासं निराकरोति संन्यासस्य स्वरूपत्वात्सर्वोत्तमत्वाच्च " न्यास इति ब्रह्मा

ब्रह्मा हि परः " इति " न्यास एवात्यरेचयत्" इति संन्यासस्यैव ब्रह्मत्वसर्वश्रेष्ठतमत्वश्रवणात्ततः कर्मयोगस्तुतिपरमेवैतद्वचनमिति निश्चेतव्यम् ॥ २ ॥

श्री० टी०–अत्रोत्तरं श्रीभगवानुवाच–संन्यास इति । अयं भावः–नहि वेदान्तवेद्यात्मतत्त्वविदं प्रति कर्मयोगमहं ब्रवीमि यतः पूर्वोक्तेन संन्यासेन विरोधः स्यात्। अपि तु देहात्माभिमानिनं त्वां बन्धुवधादिनिमित्तशोकमोहादिकृतमेनं संशयं देहात्मविवेकज्ञानासिना छित्वा परमात्मज्ञानोपायभूतं कर्मयोगमातिष्ठेति ब्रवीमि कर्मयोगेन शुद्धचित्तस्य चात्मतत्त्वज्ञाने जाते सति तत्परिपाकार्थं ज्ञाननिष्ठाङ्गत्वेन संन्यासः पूर्वमुक्तः, एवं सत्यङ्गप्रधानयोर्विकल्पायोगात्संन्यासः कर्मयोगश्चेत्येतावुभावपि भूमिकाभेदेन समुचितावेव निःश्रेयसं साधयतः तथाऽपि तु तयोर्मध्ये कर्मसंन्यासात्सकाशात्कर्मयोगो विशिष्टो भवति ॥ २ ॥

स० टी०–एवं प्रश्नेऽर्जुनस्याह भगवानुत्तरं वचः ॥ निःश्रेयसकरौ कर्मसंन्यासौ श्रुतिसंमतौ ॥ १ ॥ मोक्षोपयोगिनौ ज्ञानोत्पत्तिहेतुतया ह्युभौ ॥ तयोस्तु कर्मसंन्यासादशुद्धस्वान्तकर्तृकात् ॥२॥ शुद्धिसंपादकत्वेन कर्मयोगो विशिष्यते ॥ ३ ॥ २ ॥

भा० टी०–अर्जुनसंशयनिवर्तकमुत्तरं श्रीभगवानुवाच–संन्यास इति । उभौ यद्यपि निःश्रेयसकरौ ज्ञानोत्पत्तिहेतुत्वेन मोक्षोपयोगिनौ तथापि तयोस्तु कर्मसंन्यासादशुद्धचित्तेनाविरक्तेन कृतात् कर्मयोगश्चित्तशुद्ध्या वैराग्यादिजनको विशिष्यत उत्कृष्टो भवतीति कर्मयोगं स्तौति ॥ २ ॥

प० टी०–अत्रोभयोरपि श्रेष्ठत्वे एकं श्रेयो ब्रूहीति प्रश्नं भगवानाह–संन्यास इति । संन्यासः कर्मयोगश्च तावुभावधिकारिभेदेन निःश्रेयसकरौ भवतः, न ह्येकं प्रत्युभयोपदेशः। अयमर्थः । न ह्यात्मतत्त्वज्ञं प्रति कर्मयोगोपदेशः, किं तु देहात्माभिमानिनं भवादृशं बन्धुवधशोकाकुलं प्रति योगमातिष्ठेति ब्रवीमि कर्मयोगिनः शुद्धचित्तस्यात्मतत्त्वज्ञाने सति कर्मसंन्यासः संभवत्येवमुभावपि भूमिकाभेदेन निःश्रेयससाधने समुचितावेव तथापि तयोर्मध्ये प्रस्तुतः कर्मसंन्यासात्सकाशात्कर्मयोगो विशिष्यते विशिष्टो भवति ॥ २ ॥

रा० टी०–संन्यासयोगशब्दौ न सर्वकर्मत्यागतदनुष्ठानलक्षणयतिगृहिपरौ । तथाच तयोरन्यतरश्रेयःप्रश्नो न युक्तः । किंतु कामादिवर्जनकर्मानुष्ठानार्थकौ । तयोश्चैकपुंयोग्यत्वान्निःश्रेयसकरत्वाच्चानुष्ठेयत्वादन्यतरश्रेष्ठत्वप्रश्नो व्यर्थ एव । अथ स्वरूपज्ञानमात्रार्थं प्रश्नश्चेद्योग एव श्रेष्ठ इति भावेन परिहारमाह–संन्यास इति । संन्यासः कामादिवर्जनरूपः कर्मयोगो भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपश्च उभौ समुचितौ सन्तौ निःश्रेयसकरौ । तयोस्तु मध्ये कर्मसंन्यासात्कर्मणि संन्यासः कर्मसंन्यासः कर्मानुष्ठानविषये यः कामक्रोधद्वेषादिवर्जनरूपसंन्यासस्तस्माद्भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो यः कर्मयोगः स तु विशिष्यते श्रेष्ठो भवति । द्वन्द्वत्यागात्तु संन्यासान्मत्पूजैव गरीयसीत्युक्तेः ॥ २ ॥

**ज्ञेयः स नित्यसंन्यासी यो न द्वेष्टि न काङ्क्षति ।**
**निर्द्वन्द्वो हि महाबाहो सुखं बन्धात्प्रमुच्यते ॥ ३ ॥**

त० टी०–उक्तार्थे हेत्वपेक्षायां कर्मयोगिनः संन्यासित्वं वदन्, तद्धर्मान्निर्दिशति–ज्ञेय इति । य आत्मज्ञानाय कर्माणि कुर्वन् तद्व्यतिरिक्तं किंचिन्न काङ्क्षति । अत एव किमपि न द्वेष्टि, स नित्यसंन्यासी नित्यज्ञाननिष्ठो ज्ञेयः । हि यतो निर्द्वन्द्वः, रागद्वेषादिद्वन्द्वशून्यः । एवंभूतः सुखमनायासेनैव बन्धात्प्रमुच्यते ॥ ३ ॥

म० टी०–तमेव कर्मयोगं स्तौति त्रिभिः–ज्ञेय इति । स कर्माणि प्रवृत्तोऽपि नित्यं संन्यासीति ज्ञेयः ।

कोऽसौ यो न द्वेष्टि भगवदर्पणबुद्ध्या क्रियमाणं कर्म निष्फलत्वशङ्कया, न काङ्क्षति स्वर्गादिकम् । निर्द्वन्द्वो रागद्वेषरहितो हि यस्मात् सुखमनायासेन हे महाबाहो बन्धादन्तःकरणाशुद्धिरूपाज्ज्ञानप्रतिबन्धात्प्रमुच्यते नित्यानित्यवस्तुविवेकादिप्रकर्षेण मुक्तो भवति ॥ ३ ॥

**शं० टी०**—तत एव कर्मयोगिनं स्तौति—ज्ञेय इति । यस्त्वकुशलं कर्म न द्वेष्टि तत्राऽप्रीतिं न करोति किंतु कुशलमकुशलमपि कर्मैवेति बुद्ध्या करोति । यद्वा न द्वेष्टि द्वेषोऽप्रीतिस्तां यस्मै कस्मैचिदपि प्राणिने न करोति न काङ्क्षति यत्किंचिदपि कर्मजं फलं न काङ्क्षति । यद्वा प्राप्तस्यानर्थस्य निवृत्तिमप्राप्तस्यार्थस्य प्राप्तिं न काङ्क्षति निर्द्वन्द्वः द्वन्द्वानि शीतोष्णसुखदुःखलाभालाभादीनि तेभ्यः समबुद्ध्या निर्गतो निर्द्वन्द्वो य एवं लक्षणः स एव नित्यसंन्यासी नित्यं संन्यासोऽस्यैवेति पण्डितैर्ज्ञेयो ज्ञातव्यो हि यस्माद्रागादिदोषरहितः परिपक्वचित्तः समबुद्ध्यादिगुणयुक्तस्तस्मादयं गृही कर्मनिष्ठोऽपि सुखं परिग्रहत्यागशीतवाताद्युपद्रवभिक्षाटनादिदुःखराहित्यं यथा तथाऽनायासेन बन्धात्संसारात्प्रमुच्यते यथोक्तकर्मानुष्ठानेन चित्तशुद्धिं ज्ञानं च प्राप्य कालान्तरे मुक्तो भवति नत्वपक्वचित्तो यतिरपीत्यर्थः । एतेन कर्मोपासनाभ्यां परिपक्वचित्तस्यैव संन्यासाधिकार इति सूचितं भवति ॥ ३ ॥

**श्री० टी०**—कुत इत्यपेक्षायां संन्यासित्वेन कर्मयोगं स्तुवन् तस्य श्रेष्ठत्वं दर्शयति—ज्ञेय इति । रागद्वेषादिराहित्येन परमेश्वरार्थं कर्माणि योऽनुतिष्ठति स नित्यं कर्मानुष्ठानकालेऽपि संन्यासीत्येव ज्ञेयः । तत्र हेतुः—निर्द्वन्द्वो रागद्वेषादिशून्यो हि शुद्धचित्तो ज्ञानद्वारा सुखमनायासेन संसारात्प्रमुच्यते ॥ ३ ॥

**स० टी०**—कर्मयोगं तमेवेशः स्तौति लोकप्रवृत्तये ॥ स्वकर्मणि प्रवृत्तोऽपि कर्मयोग्यनहंकृतिः ॥ १ ॥ ज्ञातव्यो नित्यसंन्यासी यो न द्वेष्टि परिश्रमम् ॥ ईश्वराराधनं कुर्वन्कर्म नैष्फल्यशङ्कया ॥ २ ॥ न स्वर्गादिफलं किंचित्काङ्क्षति द्वन्द्ववर्जितः ॥ यतोऽनायासतश्चित्ताशुद्ध्याख्यप्रतिबन्धतः ॥ ३ ॥ विवेकादिप्रकर्षेण मुक्तो भवति शुद्धधीः ॥ ४ ॥ ३ ॥

**भा० टी०**—तत्र हेतुमाह—ज्ञेय इति । स निष्कामकर्मयोगी नित्यं संन्यासी ज्ञातव्यः । यत्तु यदो योगात्तदोऽध्याहारः सनित्यसंन्यासीत्येकं पदं, नित्यैः कर्मभिः सह वर्तत इति सनित्यः संन्यासी चेति तन्न । स इत्यनेनैव नित्यादिकर्मानुष्ठातुर्लाभेनाध्याहारस्य क्लिष्टकल्पनायाश्च वैयर्थ्यात् नित्यसंन्यासीति विवक्षितार्थालाभाच्च । कोऽसौ यो न द्वेष्टि दुःखं तत्साधनं च सुखं तत्साधनं च नाकाङ्क्षति रागद्वेषराहित्यरूपसंन्यासगुणयोगात् अयमपि संन्यासीति भावः । एतेन द्वेषमूलकानि श्येनादीनि नानुतिष्ठति स्वर्गादिफलाकाङ्क्षाप्रयुक्तानि ज्योतिष्टोमादीन्यपि तस्मात्संन्यासगुणयोगादयमपि संन्यासीति भाव इति प्रत्युक्तं, क्रियायाः कर्ममात्रसाकाङ्क्षत्वेनास्यार्थस्यार्थिकत्वात्, श्येनाद्यननुष्ठानमात्रेण सर्वत्र रागद्वेषानिवृत्त्या संन्यासिगुणयोगासिद्धेः । अत्रादिपदाभ्यामाभिचारिककर्मणामग्निष्टोमादीनां चैव लाभः श्येनादिसमभिव्याहारात् द्वेषेत्यादिना विशेषितत्वाच्च । यद्यादिपदाभ्यां भाष्योक्तमपि लभ्यत इत्याग्रहस्तर्हि तेनैव निर्वाहे कृतमनया कुसृष्ट्या । यत्तु न द्वेष्टि भगवदर्पणबुद्ध्या क्रियमाणं कर्म निष्फलत्वशङ्कयेति तच्चिन्त्यं, संकोचे मानाभावात् संन्यासिगुणयोगालाभाच्च । हि यस्मात्सुखदुःखरागद्वेषशीतोष्णादिद्वन्द्ववर्जितः सुखमनायासेनैव बन्धात्संसारात् ज्ञानप्राप्त्या प्रमुच्यते यथा त्वं महाबाहुत्वादस्माद्युद्धादनायासेनैव मोक्ष्यसे तथेति द्योतयन्नाह—महाबाहो इति । यत्तु यद्यप्येवं तथापि हि प्रसिद्धं निर्द्वन्द्वः द्वन्द्वं सत्यानृतयोरात्मानात्मनोर्मिथुनं परस्पराध्यासः तद्रहितः सांख्यः रागाद्युदयहेतोरज्ञानस्यात्यन्तोच्छेदात् सुखं कर्मकरणाऽऽयासं विनाऽपि बन्धात् केवलेन ज्ञानेनैव मुच्यते न कर्माण्यपेक्षते । यद्वा "द्वन्द्वं वै मिथुनं प्रजायते" इति श्रुतेर्द्वन्द्वं स्त्रीपुंसयोर्मिथुनं तद्रहित

कृयादित्यागी संन्यासी अनायासेन मुच्यते रागादिभयस्योभयत्र तुल्यत्वात् अत्र च कुटुम्बभरणवै- यग्र्याभावात् सुखं मुच्यत इत्यर्थ इति व्याचख्युः तत्प्रकरणविरोधादुपेक्ष्यम् ॥ ३ ॥

प० टी०—अथ कर्मकुशलस्योभयोरप्यनुष्ठानं सहैव भवतीत्याह—ज्ञेय इति । स पुरुषः कर्म कुर्वन्नपि नित्यसंन्यासी ज्ञेयः । स कः, यो न द्वेष्टि न काङ्क्षति रागद्वेषराहित्येन. कृतः कर्मयोगः स एव कर्मसंन्यासो भवितुमर्हति । हि यस्मात्कारणान्निर्द्वन्द्वः निर्गतानि द्वन्द्वानि रागद्वेषसुखदुःखजय- पराजयादीनि यस्मात्तथाविधः सुखं यथा भवति तथा बन्धाद्विमुच्यते । यथा प्रस्तुतं क्षात्रधर्मं शत्रु- द्वेषेण राज्यलोभेन वा प्रवृत्तस्य बन्धो भवति। तद्व्यतिरिक्तस्य बन्धाभावः । तथा च स्वत एव तत्संन्यासः परिणतो भवतीत्यर्थः ॥ ३ ॥

रा० टी०—संन्यासशब्दो न यत्याश्रमपर इति भावेन तदर्थमाह—ज्ञेय इति । यद्यपि यदृच्छालाभेत्या- दिनोक्तं कामादित्यागरूपं संन्यासं, संन्यासं कर्मणामित्यनूद्यार्जुनेन प्रश्नस्य कृतत्वात् अस्त्येव तस्य संन्यास- शब्दार्थज्ञानं अतोऽसौ तं प्रति न वाच्यः । तथापि संन्यासस्योक्तं निःश्रेयसकरत्वमुपपादयितुं ज्ञानमपि तदर्थं स्मारयत्यनेनेत्यदोषः । हे महाबाहो ! यो द्वेषाकाङ्क्षादिहीनः काम्यकर्मत्यागी चेत्युपलक्ष्यते स नित्य- संन्यासी ज्ञेयः स्मर्तव्य इत्यर्थः । स एव सुखं यथा भवति तथा अनायासेन बन्धात्प्रमुच्यते । हि प्रसिद्ध- मिति युद्धकर्म त्वया न त्याज्यमिति ॥ ३ ॥

**सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः ॥**
**एकमप्यास्थितः सम्यगुभयोर्विन्दते फलम् ॥ ४ ॥**

त० टी०—ननु कर्मयोगी कथं संन्यासी स्यात्कर्मज्ञानयोः फलभेदात्स्वरूपभेदाच्च पृथगेव तावित्या- शङ्क्याह—सांख्ययोगाविति । सांख्यं ज्ञानयोगः, योगः कर्मयोग इमौ पृथग्भूतौ भिन्नफलकाविति बाला अविद्वांसः प्रवदन्ति, नतु पण्डिताः । यतः सांख्ययोगयोर्मध्ये एकमपि सम्यगास्थितः उभयोः फलमात्मज्ञानं विन्दते लभते ॥ ४ ॥

म० टी०—ननु यः कर्मणि प्रवृत्तः स कथं संन्यासीति ज्ञातव्यः कर्मतत्त्यागयोः स्वरूपविरोधात् फलै- क्यात्तथेति चेत् न स्वरूपतो विरुद्धयोः फलेऽपि विरोधस्यौचित्यात् तथाच निःश्रेयसकरावुभावित्यनुपपन्न- मित्याशङ्क्याह—सांख्येति । संख्या सम्यगात्मबुद्धिस्तां वहतीति ज्ञानान्तरङ्गसाधनतया सांख्यः संन्यासः योगः पूर्वोक्तः कर्मयोगः तौ पृथग्विरुद्धफलौ बालाः शास्त्रार्थविवेकज्ञानशून्याः प्रवदन्ति न पण्डिताः । किं तर्हि पण्डितानां मतम् ? उच्यते, एकमपि संन्यासकर्मणोर्मध्ये सम्यगास्थितः स्वाधिकारानुरूपेण सम्यक् यथाशास्त्रं कृतवान्सन्नुभयोर्विन्दते फलं ज्ञानोत्पत्तिद्वारेण निःश्रेयसमेकमेव ॥ ४ ॥

शं० टी०—ननु "कर्मणा पितृलोकः" इति कर्मिणां पितृलोकप्राप्तिः श्रूयते। कथं कर्मिणः सुखं बन्धात्प्र- मुच्यत इति कर्मफलं भवबन्धमोक्षणं शास्त्रविरुद्धमुच्यत इत्याशङ्कायां न कामिनामेव कर्मफलं पित्रादि- लोको नतु निष्कामानामिति विरुद्धफलवादिमतन्यक्कारपूर्वकं संन्यासकर्मयोगयोः फलमेकमेवेति निश्चित्य तयोरेकस्याश्रयणेनोभयोर्यत्फलं तदाप्नोतीत्याह—सांख्ययोगाविति । बालाः वेदान्तशास्त्रार्थरहस्याऽवे- दिनः केचिद्विद्वांसः सांख्ययोगौ सांख्यं सर्ववेदान्तैः सम्यक्तत्परत्वेन ख्यायते प्रतिपाद्यत इति सांख्यं, परं ब्रह्म तत्प्राप्तेः परमकारणत्वात्सांख्यं ज्ञाननिष्ठाङ्गभूतः संन्यासः योगः कर्मयोगस्तावुभौ सांख्ययोगौ क्रिययाधिकारित आश्रमेण च पृथग्यथा भिन्नौ तथा फलेनापि भिन्नाविति साधनतः फलतश्च भेदं वदन्ति "कर्मणा पितृलोकः स्वर्गं वा एते लोकं यन्ति" इत्यादिवाक्यैः "संन्यासयोगाद्यतयः शुद्धसत्त्वाः" नैष्कर्म्य-

सिद्धिं परमां संन्यासेनाधिगच्छतीत्यादिवाक्यैश्च संन्यासकर्मयोगयोः साधनभेदं फलभेदं च प्रतिपादयन्तीत्यर्थः। श्रुतिस्मृतिप्रामाण्यात्तयोः फलपार्थक्यं युक्तमेवेत्यत आह—नेति । पण्डिता वेदान्तशास्त्रपारगास्तद्रहस्यवेदिनो ब्रह्मविदस्तु तयोः फलमेकमेव वदन्ति तत्कथमिति चेदुच्यते तत्त्वमस्यादिवाक्यानि पुंसश्चित्तशुद्ध्यभावे ब्रह्मतत्त्वं बोधयितुं न शक्नुवन्ति चित्तशुद्धिश्च कर्मोपासनाभ्यां विना न सिद्ध्यति कर्मोपासनयोः प्रवृत्तिश्च कर्मेश्वरयोर्महत्त्वस्तुतिं विना न सिध्यत्यतः श्रुतैरेवार्थवादवाक्यैः "पश्यति पुत्रम्" इत्यादिभिः "एष सर्वेश्वर एष सर्वज्ञः" इत्यादिवाक्यैश्च कर्मेश्वरयोर्महत्त्वे प्रतिपाद्यमाने फलानुषक्तया कर्मण्युपास्तौ च प्रवृत्तस्य ताभ्यां शुद्धात्मन एवोपदिष्टं तत्त्वज्ञानं फलत्यतो ज्ञानसिद्धेः कारणं चित्तशुद्धिस्तत्कारणं कर्मैवेत्यतः कर्मणो मोक्ष एव फलं ज्ञानसाधनत्वात्संन्यासस्यापि "विद्यां चाविद्यां च यस्तद्वेदोभय॰ सह अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते" इति श्रवणादविद्यया मृत्युं ज्ञानप्रतिबन्धमतीत्य ज्ञानेनामृतं मोक्षमश्नुत इति ज्ञानकर्मयोगयोगयोर्ज्ञानसंन्यासयोश्च साध्यसाधनभावावगमाज्ज्ञानफलं तत्फलमेवेति सांख्ययोगयोरेकमेव फलं मोक्ष इति पण्डिता मन्यन्ते तस्मात्कारकोदेरेवभेदो न तु तयोः फलतो भेद इति सिद्धं, यतस्ततः सांख्ययोगयोरेकमप्यपिशब्दो वार्थः उभयोर्मध्ये सांख्यं वा कर्मयोगं वा सम्यगास्थितः समनुतिष्ठन् मुमुक्षुरुभयोरपि फलं मोक्षाख्यं विन्दते प्राप्नोतीति सांख्यकर्मयोगयोर्मोक्षं प्रत्यन्तरङ्गबहिरङ्गभावेन कालतोऽप्यल्पत्वाऽनल्पत्वाभ्यां च साध्यसाधनभावेनाप्युभयोस्तरतमभावे विद्यमानेऽपि गजाश्वयोरिव तयोः समत्वप्रतिपादनमनधिकारिणः कर्मैव कर्तव्यं न तु संन्यास इति च सूनार्थम् ॥ ४ ॥

**श्री० टी०**—यस्मादेवमङ्गप्रधानत्वेनोभयोरवस्थाभेदेन क्रमसमुच्चयः अतो विकल्पमङ्गीकृत्योभयोः कः श्रेष्ठ इति प्रश्नोऽज्ञानिनामेवोचितो न विवेकिनामित्याह—सांख्ययोगाविति । सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गसंन्यासं लक्षयति संन्यासकर्मयोगावेकफलौ सन्तौ पृथक्स्वतन्त्राविति बालाः अज्ञा एव प्रवदन्ति न तु पण्डिताः। तत्र हेतुः—अनयोरेकमपि सम्यगास्थित आश्रितः सन्नुभयोरपि फलं प्राप्नोति । तथाहि कर्मयोगं सम्यगनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारा यदुभयोः फलं कैवल्यं विन्दति संन्यासं सम्यगास्थितोऽपि पूर्वमनुष्ठितस्य कर्मयोगस्यापि परंपरया ज्ञानद्वारा यदुभयोः फलं कैवल्यं तद्विन्दतीति न पृथक्फलत्वमनयोरित्यर्थः ॥ ४ ॥

**स० टी०**—ननु यः कर्मणां कर्ता स संन्यासी कथं भवेत् ॥ कर्मतत्त्यागयोर्यस्माद्विरोधोऽस्ति स्वरूपतः ॥ १ ॥ फलतोऽपि विरुद्धत्वं स्वरूपेण विरुद्धयोः ॥ निःश्रेयसकरत्वं वानुपपन्नमिवेति चेत् ॥ २ ॥ सम्यगात्ममतिः संख्या तां वहत्यात्मबोधने ॥ ज्ञानान्तरङ्गहेतुत्वात्सांख्यः संन्यास उच्यते ॥ ३ ॥ कर्मयोगश्च पूर्वोक्तश्चित्तशुद्ध्येककारणम् ॥ संन्यासयोगौ शास्त्रार्थविवेकज्ञानवर्जिताः ॥ ४ ॥ तौ विरुद्धफलौ बालाः प्रवदन्ति न पण्डिताः ॥ पण्डितानां मतं तर्हि किं स्यादित्युच्यते शृणु ॥ ५ ॥ संन्यासकर्मणोर्मध्ये स्वाधिकारानुरूपतः ॥ कृतवान्सन्यथाशास्त्रमेकमप्यादरात्सुधीः ॥ ६ ॥ ज्ञानोत्पत्तिमुखेनैवामेकं निःश्रेयसं फलम् ॥ उभयोर्विन्दते तस्मान्न विरोधः फले तयोः ॥ ७ ॥ ४ ॥

**भा० टी०**—ननूभयोर्निःश्रेयसकरत्वमेकफलकत्वं न युक्तं भिन्नपुरुषानुष्ठेययोः स्वरूपतोऽपि विरुद्धयोः फलतोऽपि विरोधस्योचितत्वात्। तस्मात्तयोर्यदेकं निःश्रेयसकरं तन्मे ब्रूहीत्यर्जुनाशङ्कामालक्ष्याह—सांख्येति यत्त्वेकत्र पाताशङ्का एकत्र कर्मश्रमस्तदनयोः पथोः कतरः श्रेयानित्याशङ्क्य द्वयोरपि फलतः साम्यमित्याहेति तच्चिन्त्यम् । उभयोरप्यश्रेष्ठतां मन्यमानस्य कतरः श्रेयानिति प्रश्नस्यानुपपत्तेः। संख्या सम्यगात्मबुद्धिस्तां वहतीति ज्ञानान्तरङ्गसाधनतया सांख्यः संन्यासः। एवं सांख्यशब्दवाच्यः शमदमादिभिर्ज्ञानेन च संयुक्तः संन्यासोऽत्र विवक्षितः प्रस्तुतः तथा प्रस्तुत एव कर्मयोगः ज्ञानोपायसमबुद्धित्वादिसंयुक्तः योगशब्द-

वाच्यः तावेव संन्यासकर्मयोगौ ज्ञानतदुपायसमबुद्धित्वादियुक्तौ सांख्ययोगशब्दवाच्याविति भाष्यात्। एतेन सांख्यशब्देन ज्ञाननिष्ठावाचिना तदङ्गं संन्यासं लक्षयतीति लक्षणा परास्ता। बाला अविवेकिनः तौ पृथक् भिन्नफलौ प्रवदन्ति न तु पण्डिताः शास्त्रज्ञाः विवेकिनः ते तु एकमपि कर्मयोगं संन्यासं वा सम्यक् चित्तशुद्धिसंपादकं शमदमादियुक्तं वाऽऽस्थितोऽनुष्ठितवानुभयोः फलं निःश्रेयसं मोक्षं परंपरया साक्षाद्वा विन्दते लभत इति प्रवदन्तीत्यर्थः। "यत्तु समित्यैकीभावः" इति यास्कः एकीभावेनात्मानन्यत्वेन ख्यायते प्रकाश्यते वस्तुस्वरूपमनयेति संख्या स्थूलसूक्ष्मकारणप्रपञ्चस्य निर्विकल्पे प्रत्यगात्मनि प्रविलापनेनोदिता चेतोवृत्तिः तत्साधनभूतो यः सांख्यः संन्यासः स च दारादिबुद्ध्यन्तानां पदार्थानामात्मन्येकीभावेन न्यसनं त्यागः प्रविलापनम्। तथा योगोऽप्यग्निहोत्रसंध्योपासनादिनिर्विकल्पसमाध्यन्तमनुष्ठानं तत्र मुख्ययोगस्य लक्षणम् "योगश्चित्तवृत्तिनिरोधः" इति। "वृत्तयश्च प्रमाणविपर्ययविकल्पनिद्रास्मृतयः" इति पञ्च। तावेतौ फलभूतौ सांख्ययोगौ उत साधनभूतौ संन्यासकर्मयोगाख्यौ। तत्रान्त्ययोः साम्यं ज्ञेयः स नित्यसंन्यासीत्यनेन सूचितमाद्ययोस्त्वैक्यमत्रोच्यते—आस्थितोऽनुतिष्ठन् फलं निर्विकल्पात्मनाऽवस्थितिरूपमित्यन्ये व्याचख्युः तदर्जुनप्रश्नाननुगुणत्वेनोपेक्ष्यं, संन्यासकर्मयोगयोः किं श्रेयस्करमिति तेन पृष्टत्वात्। अत एव भाष्यकृद्भिस्तत्र तत्र योगशब्दार्थः कर्मयोग इत्येव प्रदर्शितः। एतेन वृत्तेः पञ्चधात्ववर्णनमप्यप्रासङ्गिकत्वादपास्तम् ॥ ४ ॥

प० टी०—अथ पूर्वप्रश्नस्त्वज्ञानत इति दर्शयति—सांख्ययोगाविति। सांख्ययोगौ पृथगिति बाला वदन्ति न पण्डिताः। सांख्यशब्दो ज्ञाननिष्ठार्थवाची। कर्मसंन्यासो योगश्च कर्मयोगस्तौ पृथक् स्वतन्त्रफलाविति बाला अज्ञा एव वदन्ति न तु पण्डिता ज्ञातार इत्यर्थः। तत्र ह्येनयोरेकमपि सम्यगाश्रितवानुभयोः फलं प्राप्नोति। अनासक्त्या कर्मयोगमनुतिष्ठन् शुद्धचित्तः सन् ज्ञानद्वारोभयोः कैवल्यमेव फलं न पृथक्फलत्वमित्यर्थः ॥ ४ ॥

रा० टी०—ननु 'न तस्य तत्वग्रहणाय साक्षात्' इति पञ्चमस्कन्धस्थश्लोके विषयवैराग्याभावे ज्ञानानुत्पत्त्युक्त्या तत एव तदुत्पत्तिरिति लाभेन वैराग्यशब्दितकामादिसर्ववर्जनरूपसंन्यासो ज्ञानोत्पत्तौ आवश्यकत्वेनोक्त इति प्रतीयते। कर्मयोगस्तु ज्ञानविरोधित्वेनोक्तोऽग्निमुग्धो धूमतान्तः स्वलोकं न प्रतिजानातीति अग्न्युपलक्षिते कर्मणि मुग्धः श्रेयस्करमेतदिति भ्रान्तः धूमतान्तो होमधूमेन ग्लानः स्वलोकं स्वीयमाश्रयं परमात्मानं न प्रति जानातीत्येकादशस्कन्धे। तथाच कथं कर्मयोगात्संन्यासो वर इत्युच्यत इत्यतः संन्यास इव कर्मयोगोऽपि ज्ञानोत्पत्तावावश्यक एवेत्याह कृष्णः—सांख्येति। सांख्यं ज्ञानं योगो भगवदर्पणबुद्ध्या कर्मानुष्ठानं तावुभौ बालाः अविवेकिनः पृथक् साध्यसाधनभावहीनौ प्रवदन्ति न पण्डिताः। योगस्य ज्ञानहेतुत्वं कुत इत्यत उच्यते—एकमपीति। एकमपि ज्ञानमार्गं कर्ममार्गं वा एकमपि सम्यगास्थितोऽनुतिष्ठन् उभयोर्ज्ञानकर्मणोरुभयोरपि फलं विन्दत इत्यर्थः ॥ ४ ॥

**यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते ॥**
**एकं सांख्यं च योगं च यः पश्यति स पश्यति ॥ ५ ॥**

त० टी०—उक्तार्थं विवृणोति—यत्सांख्यैरिति। सांख्यैर्ज्ञाननिष्ठैर्यत् स्थानं, स्थीयतेऽस्मिन्निति स्थानमात्मस्वरूपं प्राप्यते, तदेव योगैः कर्मयोगनिष्ठैरपि भगवदर्पणबुद्ध्या कृतैः कर्मभिर्ज्ञानद्वारेण गम्यते। तस्मादेकफलत्वेनैकं सांख्यं योगं च यः पश्यति स पश्यति। स एव पण्डितो न त्वन्य इत्यर्थः ॥ ५ ॥

म० टी०—एकस्यानुष्ठानात्कथमुभयोः फलं विन्दते तत्राह—यदिति। सांख्यैः ज्ञाननिष्ठैः संन्यासिभिरैहिककर्मानुष्ठानशून्यत्वेऽपि प्राग्भवीयकर्मभिरेव संस्कृतान्तःकरणैः श्रवणादिपूर्विकया ज्ञाननिष्ठया यत्प्रसिद्धं स्थानं तिष्ठत्येवास्मिन्न तु कदापि च्यवत इति व्युत्पत्त्या मोक्षाख्यं प्राप्यते आवरणाभावमात्रेण लभ्यत इव नित्यप्राप्तत्वात्। योगैरपि भगवदर्पणबुद्ध्या फलाभिसंधिराहित्येन कृतानि कर्माणि शास्त्रीयाणि योगास्ते येषां सन्ति तेऽपि योगाः अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः तैर्योगिभिरपि सत्त्वशुद्ध्या संन्यासपूर्वकश्रवणादिपुरस्सरया ज्ञाननिष्ठया वर्तमाने भविष्यति वा जन्मनि संपत्स्यमानया तत्स्थानं गम्यते अत एकफलत्वात्, एकं सांख्यं च योगं च यः पश्यति स एव सम्यक् पश्यति नान्यः । अयं भावः येषां संन्यासपूर्विका ज्ञाननिष्ठा दृश्यते तेषां तयैव लिङ्गेन प्राग्जन्मसु भगवदर्पितकर्मनिष्ठाऽनुमीयते कारणमन्तरेण कार्योत्पत्त्ययोगात् । तदुक्तम् 'यान्यतोऽन्यानि जन्मानि तेषु नूनं कृतं भवेत्। सत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः' इति। एवं येषां भगवदर्पितकर्मनिष्ठा दृश्यते तेषां तयैव लिङ्गेन भाविनी संन्यासपूर्वकज्ञाननिष्ठाऽनुमीयते सामग्र्याः कार्याव्यभिचारित्वात् । तस्मादज्ञेन मुमुक्षुणान्तःकरणशुद्ध्यै प्रथमं कर्मयोगोऽनुष्ठेयो न तु संन्यासः स तु वैराग्यतीव्रतायां स्वयमेव भविष्यतीति ॥ ५ ॥

शं० टी०—यदुक्तं सांख्ययोगयोरेकफलत्वं पुनस्तदेव विस्पष्टयंस्तदेकत्वदर्शिनं स्तौति—यदिति। सांख्यं परं ब्रह्म तदात्मत्वेन ये विदुस्ते सांख्यास्तैः सांख्यैर्ब्रह्मनिष्ठैर्यतिभिर्यत्स्थानं सदैकरूपेणैव तिष्ठति न कचित्किंचिदपि विकरोतीति स्थानं स्वरूपं केवलभावात्मकं प्राप्यते स्वात्मनावगम्यते योगैः फलाभिसंधिवर्जितमीश्वरप्रीत्यै क्रियमाणं वैदिकं कर्म मोक्षोपायत्वाद्योग इत्युच्यते, स योगो येषामस्ति ते योगाः मतुबर्थेऽच्प्रत्ययोऽत्र द्रष्टव्यस्तैर्योगैः कर्मनिष्ठैरपि तदेव स्थानं मोक्षाख्यं गम्यते निरन्तरं श्रद्धया समनुष्ठीयमानकर्मसंभावितचित्तशुद्धिजन्यज्ञानतद्योगप्राह्या तैरपि स्वात्मत्वेनावगन्तुं शक्यत इत्यर्थः । "एष पन्था एतत्कर्मैतद्ब्रह्म" इति श्रवणाद्यतः सांख्ययोगयोः फलैकत्वं प्रमाणसिद्धं ततः सांख्यं ज्ञानयोगं योगं कर्मयोगं चैकं यः पश्यति द्वयोरप्येकस्यैव मोक्षस्य फलत्वान्मोक्षसाधनयोस्तयोरप्येकत्वमेकार्थकत्वं यः पश्यति स पश्यति स एव सम्यग्दर्शी न त्वन्य इत्यर्थः ॥ ५ ॥

श्री० टी०—एतदेव स्फुटयति—यत्सांख्यैरिति । सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिर्यत्स्थानं मोक्षाख्यं प्रकर्षेण साक्षादवाप्यते। योगैरित्यत्र अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययो द्रष्टव्यः। तेन कर्मयोगिभिरपि तदेव ज्ञानद्वारेण गम्यते अवाप्यत इत्यर्थः। अतः सांख्यं च योगं चैकफलत्वेनैकं यः पश्यति स एव सम्यक्पश्यति ॥ ५ ॥

स० टी०—कथमेकस्य करणादुभयोर्विन्दते फलम् ॥ शृणु संन्यासिभिः पुण्यैः पूर्वजन्मस्वनुष्ठितैः ॥ १ ॥ शुद्धान्तःकरणैः सम्यग्वेदान्तश्रवणादिभिः ॥ अवाप्तात्मावबोधैर्यन्मोक्षाख्यं प्राप्यते फलम् ॥ २ ॥ ईशार्पणधिया योगाः शास्त्रीयाणि कृतानि च ॥ कर्माणि सन्ति येषां ते योगास्तैरपि योगिभिः ॥ ३ ॥ सत्त्वशुद्ध्या च संन्यासपूर्वया ज्ञाननिष्ठया ॥ तत्स्थानं गम्यते वर्तमाने भाविनि वा भवे ॥ ४ ॥ अत एकफलत्वाद्यः पश्यत्येकं विशुद्धधीः ॥ सांख्यं योगं स एवेह सम्यक्पश्यति नापरः ॥ ५ ॥ दृश्यते ज्ञाननिष्ठेयं येषां संन्यासपूर्विका ॥ तेषां तल्लिङ्गतः पूर्वजन्मस्वीशसमर्पितम् ॥ ६ ॥ कर्मानुष्ठानमप्यस्तीत्येवमत्रानुमीयते ॥ न विना कारणं कार्योत्पत्तिर्दृश्यत एव हि ॥ ७ ॥ यान्यतोऽन्यानि जन्मानि तेषु नूनं कृतं भवेत्॥ यत्कृत्यं पुरुषेणेह नान्यथा ब्रह्मणि स्थितिः॥ ८ ॥ एवमीशार्पितं कर्मानुष्ठानं दृश्यते नृणाम्॥ येषां तेषां ससंन्यासं ज्ञानं भाव्यनुमीयते ॥ ९ ॥ तस्माज्जिज्ञासुनाज्ञेन प्रथमं चित्तशुद्धये ॥ कर्मयोगोऽस्त्यनुष्ठेयो न संन्यासः कथं च न ॥ १० ॥ वैराग्यतीव्रतायां स स्वयमेव भविष्यति ॥ ११ ॥ ५ ॥

**भा० टी०**—एकस्यापि सम्यगनुष्ठानात्कथमुभयोः फलं लभन्त इत्यत आह—**यदिति**। सांख्यैः ज्ञाननिष्ठैः संन्यासिभिः विशुद्धान्तःकरणैर्यन्मोक्षाख्यं स्थानं च्युतिवर्जितं प्राप्यते तत्त्वसाक्षात्कारमात्रेण लभ्यते इति, विस्मृतग्रैवेयकलाभवल्लब्धस्यैव लाभः तद्योगैर्ज्ञानप्राप्त्युपायभूतानि ईश्वराराधनार्थानि फलाभिसंधिरहितानि शास्त्रीयाणि कर्माणि योगशब्दवाच्यानि तद्वद्भिः अर्शआदित्वान्मत्वर्थीयोऽच्प्रत्ययः तदेव स्थानं परमार्थज्ञानं संन्यासप्राप्तिद्वारेण गम्यते प्राप्यत इत्यर्थः। आयुर्घृतमितिवत् साध्यसाधनयोरभेदाभिप्रायेण परमार्थज्ञानस्य मोक्षाभिन्नत्वात् मोक्षस्य तदभिन्नत्वाच्चैवमुक्तमित्यविरोधः।एतेन ननूभयोरेकं मोक्षाख्यं फलमस्तु नाम तत्साधनयोस्तु परस्परसापेक्षत्वं न युक्तं, प्राप्यग्रामस्यैकत्वेऽपि भिन्नत्वं मार्गाणामिवेत्याशङ्क्याह—**यत्सांख्यैरिति**। अत्रेदं विकल्पनीयं किं व्यक्तिभेदमात्रेण संन्यासकर्मयोगयोरन्योन्यनिरपेक्षतां ब्रूषे, किंवा अपेक्षणीयान्तराभावात्। नाद्य इत्याह बहुवचनेन—यत्सांख्यैरिति। संन्यासैस्तत्तत्कर्मत्यागरूपैरपि यथाऽन्योन्यसापेक्षैरेव फलं साध्यते, तथा भिन्नाभ्यामेव संन्यासकर्मयोगाभ्यामन्योन्यसापेक्षाभ्यां भविष्यतीति भावः। नान्त्य इत्याह—यत्स्थानं प्राप्यत इति। स्थानशब्देनात्र मोचकज्ञानमुच्यत इति प्रत्युक्तं, पूर्वश्लोके परस्परसापेक्षत्वाप्रतिपादनात्। कर्मयोगादिसाध्याज्ज्ञानान्निरपेक्षात्केवलान्मोक्ष इतिवच्छमदमादिविशिष्टस्य संन्यासस्य कर्मसाध्यत्वेऽपि तेन ज्ञाने जननीये कर्मापेक्षाया अभावादन्योन्यसापेक्षत्वासिद्धेः। एकमित्यादेः स्थाने सांख्यं योगं च परस्परसापेक्षमिति वक्तव्यत्वापत्तेश्च। अतः साक्षात्परंपरया वा एकफलजनकत्वादेकं सांख्यं च योगं च यः पश्यति स सम्यक् पश्यतीत्यर्थ एव रम्यः॥ ५॥

**प० टी०**—**यत्सांख्यैरिति**। सांख्यैर्ज्ञाननिष्ठैः संन्यासिभिर्यत्स्थानं कैवल्यं प्रकर्षेण साक्षादाप्यते तदेव योगैः कर्मयोगैर्ज्ञानद्वारा प्राप्यतेऽतः सांख्यं योगं चैकमेव फलत्वेन यः पश्यति स एव पश्यति परमार्थद्रष्टा नान्यः॥ ५॥

**रा० टी०**—नन्वेतावता द्वयं किंचित्फलं प्रति स्वतन्त्रसाधनमित्युच्यते। योगस्य ज्ञानहेतुत्वं न प्राप्तमित्यतस्तदभिप्रायं स्वयमेव व्यनक्ति—**यत्सांख्यैरिति**। सांख्यैर्ज्ञानिभिर्यत्स्थान भगवत्स्वरूपलक्षणं तद्योगैः अर्शआद्यच्प्रत्ययान्तावत्र सांख्ययोगशब्दौ कर्मयोगवद्भिरपि ज्ञानद्वारा गम्यत इत्यर्थः। तथाच सांख्यं च योगं च एकं साध्यसाधनभाववत् यः पश्यति स पश्यति स एव ज्ञानीत्यर्थः। संन्यासयोगयोर्द्वयोरपि ज्ञानहेतुत्वान्न कोऽपि विरोधः। अग्निमुग्ध इत्यादि तु काम्यकर्मविषयमिति भावः। यद्वा संन्यासयोगशब्दयोः यतिगृहिपरत्वमुपेत्य तयोरधिकारिभेदादेकत्र संन्यासयोगयोः समावेशायोगश्चोदितोऽसौ संन्यासयोगशब्दयोस्तदर्थत्वानङ्गीकारेण पूर्वश्लोके परिहृतः। अधुना संन्यासयोगयोरधिकारिभेदोऽपि न युज्यत इत्याह—**सांख्येति**। बालाः अविवेकिनः सांख्ययोगौ ज्ञानकर्मयोगौ पृथक् भिन्नाधिकारिकौ नैकत्र समाविष्टौ यत्याश्रमिणां सांख्यपदोक्तज्ञानाधिकार एव न कर्मणि, गृहिणां तु योगपदोक्तकर्माधिकार एव न ज्ञान इति प्रवदन्ति। ज्ञानमार्गं सम्यगास्थित एव ज्ञानफलं प्राप्नोति कर्ममार्गं सम्यगास्थित एव कर्मफलं विन्दते यतः अतो न पण्डिता बाला इव प्रवदन्तीत्यर्थः। अत्र मार्गद्वयस्य सम्यक्त्वविशेषणात्कर्मणो ज्ञानसाहित्यं तेन विना सम्यगनुष्ठानासिद्धेः। कर्मणा विना संपूर्णानन्दहेतुत्वरूपसम्यक्त्वस्य ज्ञानेऽनुपपत्तेः तदर्थं तस्य कर्मसाहित्यमिति सूचितम्। ज्ञानैकगम्ययतिप्राप्यस्थानप्राप्तिसद्भावाच्च गृहिणां ज्ञानाधिकारोऽस्तीति स्पष्टं वदन्नुक्तमुपसंहरति—**यदित्यादिना**। यतः सांख्यैर्ज्ञानिभिर्यतिभिः प्राप्यं स्थानं योगैर्योगवद्भिर्गृहिभिर्गम्यते तस्मात्सांख्यं योगं चैकं एकाधिकरणकं। कर्मिण्यपि गृहिणि ज्ञानं ज्ञानिन्यपि कर्मेत्येवमेकत्र तयोः समावेशं यः पश्यति स पश्यति ज्ञानीत्यर्थः॥ ५॥

**संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः ॥**
**योगयुक्तो मुनिर्ब्रह्म नचिरेणाधिगच्छति ॥ ६ ॥**

**त० टी०**—ननु यदि कर्मयोगस्यापि ज्ञानयोगद्वारेणैवात्मस्वरूपप्राप्तिस्तर्हि प्रथमतो ज्ञानयोग एव कुतो नानुष्ठीयते इति चेत्तत्राह—संन्यासस्त्विति । संन्यासो ज्ञानयोगस्तु अयोगतः कर्मयोगानुष्ठानादृते दुखमाप्तुं प्राप्तुमशक्य इत्यर्थः । चित्तशुद्ध्यभावेन ज्ञाननिष्ठाया अपायसंभवात् । योगयुक्तः निष्कामकर्मयोगयुक्तः शुद्धान्तःकरणत्वान्मुनिर्मननशीलः ब्रह्म नचिरेणाल्पकालेनैवाधिगच्छति प्राप्नोति निर्दोषसमत्वादिना ब्रह्मसमानधर्मो भवतीत्यर्थः ॥ ६ ॥

**म० टी०**—अशुद्धान्तःकरणेनापि संन्यास एव प्रथमं कुतो न क्रियते ज्ञाननिष्ठाहेतुत्वेन तस्यावश्यकत्वादिति चेत्तत्राह—संन्यास इति । अयोगतः योगमन्तःकरणशोधकं शास्त्रीयं कर्मान्तरेण हठादेव यः कृतः संन्यासः स तु दुःखमाप्तुमेव भवति, अशुद्धान्तःकरणत्वेन तत्फलस्य ज्ञाननिष्ठाया असंभवात्, शोधके च कर्मण्यनधिकारात् कर्मब्रह्मोभयभ्रष्टत्वेन परमसङ्कटापत्तेः। कर्मयोगयुक्तस्तु शुद्धान्तःकरणत्वान्मुनिर्मननशीलः संन्यासी भूत्वा ब्रह्म सत्यज्ञानादिलक्षणमात्मानं नचिरेण शीघ्रमेवाधिगच्छति साक्षात्करोति प्रतिबन्धकाभावात् । एतच्चोक्तं प्रागेव ' न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । नच संन्यसनादेव सिद्धिं समधिगच्छति ' इति। अतः एकफलत्वेऽपि कर्मसंन्यासात्कर्मयोगो विशिष्यते इति यत्प्रागुक्तं तदुपपन्नम्॥ ६ ॥

**शं० टी०**—यस्मात् संन्यासकर्मयोगयोर्मोक्षैकफलकत्वं प्रदर्शितन्यायेन सिद्धं तस्मादपक्वान्तःकरणेन मोक्षार्थिना कर्मैव कर्तव्यं न तु संन्यासः अपक्वान्तरात्मनः संन्यासो दुर्घट इत्युपदिशन् कर्मणा मृदितकषायस्य तु कर्तव्यत्वेन संन्यासमुपदिशति—संन्यास इति । अयोगतस्त्वयोगे कर्मयोगानुष्ठानजन्यचित्तशुद्ध्यभावे संन्यासो ज्ञाननिष्ठालक्षण आप्तुमधिगन्तुं दुःखं दुर्घटं चित्तशुद्ध्येकसाध्यत्वाज्ज्ञाननिष्ठालक्षणसंन्यासस्य 'कारणाभावे कार्याभावः' इति न्यायेन कर्मसंभावितचित्तशुद्ध्यभावे संन्यासो न सिध्यतीत्यर्थः। एवं संन्यासस्य कर्मयोगानुष्ठानसंभावितचित्तप्रसादैकलभ्यत्वं निश्चित्य इदानीं कर्मयोगेन सुपक्वान्तःकरणस्य तु मुमुक्षोः संन्यासः कर्तव्य इत्याशयेनाह—योगेति । योगयुक्तः योगेन योगानुष्ठानसंभूतचित्तप्रसादेन युक्तः संयुक्तः स्वयं मुनिर्गृही ब्रह्म ब्रह्मशब्देनात्र संन्यास उच्यते 'न्यास इति ब्रह्मा ब्रह्मा हि परः' इतिश्रवणाद्ब्रह्मस्वरूपेणावस्थानलक्षणं प्रधानसंन्यासं परिपक्वान्तःकरणत्वान्मुमुक्षुरधिकारी नचिरेण शीघ्रमेवाधिगच्छति प्राप्नोतीत्यर्थः । यद्वा योगयुक्तः योगसंभावितचित्तशुद्धियुक्तः स्वयं मुमुक्षुश्चित्तप्रसादमहिम्नैव मुनिः संन्यासी निरुक्तलक्षणसंन्यासवान् भूत्वा तन्निष्ठया नचिरेण क्षिप्रमेव ब्रह्माधिगच्छति ब्रह्मैवाह[illegible]त्यप्रतिबद्धवृत्त्या स्वं ब्रह्मैव विजानातीत्यर्थः । एतेनाऽपक्वान्तःकरणस्य कृतेऽपि कर्मसंन्यासे मुख्यसंन्यासो न सिध्यति परिपक्वान्तःकरणस्य तु बाह्योऽप्यबाह्यश्च संन्यासः सिध्यति तत्फलमपि सिध्यति सर्वात्मतापत्तिरिति सूचित भवति ॥ ६ ॥

**श्री० टी०**—यदि कर्मयोगिनोऽप्यन्ततः संन्यासेनैव ज्ञाननिष्ठा तर्हि आदित एव संन्यासः कर्तुं युक्त इति मन्वानं प्रत्याह—संन्यास इति । अयोगतः कर्मयोगं विना संन्यासः प्राप्तुं दुःखं दुःखहेतुः अशक्य इत्यर्थः । चित्तशुद्ध्यभावेन ज्ञाननिष्ठाया असंभवात्। योगयुक्तस्तु शुद्धचित्ततया मुनिः संन्यासी भूत्वाऽचिरेणैव ब्रह्माधिगच्छति अपरोक्षं जानाति अतश्चित्तशुद्धेः प्राक्कर्मयोग एव संन्यासाद्विशिष्यते इति पूर्वोक्तं सिद्धम् । तदुक्तं वार्तिककृद्भिः—' प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः ' इति ॥ ६ ॥

स० टी०–किमर्थं कर्मसंन्यासो नादौ कार्यः शृणु स्फुटम् ॥ धीशोधकमृते कर्मसंन्यासो यो हठात्कृतः ॥ १ ॥ स दुःखमाप्तुमेवास्ति बुद्धिशुद्धेरभावतः ॥ ज्ञानस्यासंभवात्कर्मत्यागाद्भ्रष्टोऽभितो भवेत् ॥ २ ॥ कर्मानुष्ठानयुक्तस्तु शुद्धबुद्धितया मुनिः ॥ सत्यं ज्ञानमनन्ताख्यमात्मानं ब्रह्म हृद्गतम् ॥ ३ ॥ शीघ्रमप्रतिबन्धेन सम्यक्साक्षात्करोत्यसौ ॥ अत एकफलत्वेऽपि संन्यासाज्ज्ञानवर्जितात् ॥ ४ ॥ श्रेयान्स कर्मयोगोऽस्ति धीशुद्ध्या ज्ञानकारणम् ॥ न कर्मणामनारम्भादित्यत्र हरिणा स्फुटम् ॥ ५ ॥ धीशुद्धिहेतुकं कर्म न त्याज्यमित्युदाहृतम् ॥ चित्तशुद्धिमृते त्यागं यः करोति स्वकर्मणाम् ॥ ६ ॥ स ईशाज्ञापरित्यागी पतत्येव न संशयः ॥ श्रुतिस्मृती ममैवाज्ञे यस्ते उल्लङ्घ्य वर्तते ॥ ७ ॥ आज्ञाभङ्गी मम द्वेषी मद्भक्तोऽपि न वैष्णवः ॥ इति स्मृतौ हरेराज्ञावश्यं कार्यतयेरिता ॥ ८ ॥ ६ ॥

भा० टी०–एवं तर्हि कर्मयोगात्संन्यास एव विशिष्यते कथमुक्तं तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते इत्याशङ्क्य ज्ञाननिष्ठारहिताशुद्धचित्तेन कृतात्केवलात् संन्यासात् कर्मत्यागात् शुद्धिकरस्य संन्यासद्वारा ज्ञानप्राप्त्या मोक्षसंपादकस्य कर्मयोगस्य श्रैष्ठ्यं मया प्रतिपादितं, न तु ज्ञाननिष्ठासहितात् सांख्यशब्दोदितात् विशुद्धान्तःकरणेन कृतात् । तस्मात्तं प्रति साधनत्वात्कर्मयोगस्येत्याशयेनाह–संन्यास इति । संन्यासस्तु ज्ञाननिष्ठासहितस्तु परमार्थसंन्यासः अयोगतः योगेन विनाऽऽप्तुं प्राप्तुं दुःखं दुर्घटमित्यर्थः । योगेन वैदिकेन कर्मयोगेनेश्वरसमर्पितरूपेण निष्कामेन युक्तः मुनिः सगुणेश्वरस्वरूपमननशीलः ब्रह्म परमार्थसंन्यासं परमात्मज्ञाननिष्ठालक्षणं नचिरेण क्षिप्रमेवाधिगच्छति प्राप्नोति परमार्थज्ञानलक्षणत्वात्प्रकृतः संन्यासो ब्रह्मोच्यते "न्यास इति ब्रह्मा ब्रह्मा हि परः" इतिश्रुतेः अशुद्धचित्तेनापि संन्यास एव प्रथमं कुतो न क्रियते ज्ञाननिष्ठाहेतुत्वेन तस्यावश्यकत्वादिति चेत्तत्राह–संन्यासस्त्विति । योगमन्तरेण हठादेव यः कृतः संन्यासः स तु दुःखमाप्तुमेव भवति अशुद्धान्तःकरणत्वेन तत्फलस्य ज्ञाननिष्ठाया असंभवात् शोधके च कर्मण्यनधिकारात्, कर्मब्रह्मोभयभ्रष्टत्वेन परमसंकटापत्तेः । यद्वाऽयोगत इति सप्तम्यर्थे तसिः अयोगे तु संन्यासो दुःखमाप्तुमिति । अयोगे योगाभावे प्रसिद्धसंन्यासाद्विलक्षणः 'प्रमादिनो बहिश्चित्ताः पिशुनाः कलहोत्सुकाः । संन्यासिनोऽपि दृश्यन्ते दैवसंदूषिताशयाः' इतिवार्तिककारोक्तः संन्यासः दुःखं नरकात्मकमाप्तुं भवतीति शेषः । नरकफलको नत्वनर्थनिवृत्त्यविनाभूतनिरतिशयानन्दरूपतापादक इति भावः । ननु तर्ह्यवश्यापेक्षिताद्योगादेवास्तु फलं नेत्याह–योगयुक्तः सत्त्वशुद्ध्या मुनिर्मननशीलः संन्यासी भूत्वा ब्रह्म सत्यज्ञानादिलक्षणं नचिरेण शीघ्रमेवाधिगच्छति प्रतिबन्धकाभावात्साक्षात्करोतीति तु सुगमत्वाद्भाष्यकारैरुपेक्षितम् । महाबाहो इति संबोधयन् महाबाहुसाध्ये युद्धरूपे कर्मण्येव तवाधिकारः न संन्यास इति सूचयति ॥ ६ ॥

प० टी०–यदि कर्मयोगिनोऽप्यन्ततः संन्यासेनैव ज्ञाननिष्ठा तर्ह्यादित एव संन्यासः कर्तुं युक्त इत्याह–संन्यास इति । भो महाबाहो अयोगतः कर्मयोगं विना संन्यासः प्राप्तुं दुःखहेतुरशक्योऽतो योगयुक्तः सन् मुनिर्मननशीलो नचिरेण शीघ्रमेव ब्रह्माधिगच्छत्यपरोक्षं जानाति न तु तद्विधुरः ॥ ६ ॥

रा० टी०–पूर्वं ज्ञेय इत्यत्र स्वाभिमतसंन्यासशब्दार्थं स्मारयित्वा तस्य योगादवरत्वे ज्ञानान्तरङ्गत्वरूपं बाधकं यत्सांख्येतिश्लोकाभ्यां परिहृत्येदानीं तस्य योगादवरत्वे साधकमाह–संन्यासस्त्विति । अयोगतः भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगाभावे कामादिविवर्जनरूपसंन्यासस्तु दुःखमाप्तुमेव परमपुमर्थहेतुत्वात् स्वोचितकर्माननुष्ठानेन नरकप्राप्तेश्चेति भावः । तात्कालिकापमानादिकृतदुःखाभावस्त्वल्पत्वान्न फलमिति भावः । मुनिः संन्यासी 'स हि लोके मुनिर्नाम यः कामक्रोधवर्जितः' इत्युक्तेः योगयुक्तोऽचिरेण शीघ्रं ब्रह्माधिगच्छतीत्यर्थः । एतेन योगाभावे पुमर्थहेतुत्वाभावः सति तु तस्मिंस्तद्धेतुत्वं संन्यासस्येति योगस्य वरत्वे

व्यतिरेकान्वयरूपं साधकमुक्तं भवति। यद्वा योगसंन्यासयोः समुच्चितयोरेव निःश्रेयसकरत्वमुभावित्यनेनोक्तमिदानीमसमुच्चये बाधकमाह–संन्यासस्त्विति। कामादिवर्जनरूपसंन्यासस्तु अयोगतः भावप्रधानं योगरूपत्वाभावे केवलसंन्यासस्तु दुःखमाप्तुमेव विष्णवर्पितत्वादियोगरूपत्वं विना केवलकर्मत्यागो नरकफल एवेति भावः। योगरूपत्वं विना संन्यासस्यानर्थहेतुत्वमुक्त्वा योगरूपसंन्यासस्य मुक्तिहेतुत्वमाह–योगयुक्त इति। मुनिः संन्यासी संन्यासस्य योगावान्तरभेदत्वाद्योगरूपत्वोक्तिः। यं संन्यासमिति प्राहुर्योगं तं विद्धि इति वक्ष्यमाणगीतोक्तिरप्येतदभिप्राया। अतः संन्यासः कर्मयोगश्चेति भेदोक्तिः कुरुपाण्डववन्न विरुद्धेति ज्ञेयम् ॥ ६ ॥

## योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः ॥
## सर्वभूतात्मभूतात्मा कुर्वन्नपि न लिप्यते ॥ ७ ॥

**त० टी०**–ननु ब्रह्मणः सर्वत्र समत्वं जगत्सृष्ट्यादिकर्तृत्वेऽपि निर्लेपत्वं च शास्त्रसिद्धं, कर्मणि वर्तमानस्य जीवस्य कथं तत्समानधर्मत्वमिति चेत्तत्राह–योगयुक्त इति। फलसंकल्पशून्यं भगवदाराधनरूपं शास्त्रीयं कर्म योगशब्देनोच्यते, तेन युक्तः पुरुषो योगयुक्तस्तत एव विशुद्धात्मा रजस्तमोभिभवेन सत्त्ववृद्ध्या विमलीकृत आत्मा मनो येन सः अत एव विजितात्मा विशेषेण जितोऽभिभूत आत्मा अहंकारस्तत्कार्यभूतः क्रोधश्च येन सः तत एव जितेन्द्रियः स्ववशीकृतसर्वबाह्येन्द्रियः। एतेभ्यो हेतुभ्यः सर्वसुहृत्सर्वात्मवल्लभो भवतीत्याह–सर्वभूतात्मभूतात्मेति। सर्वभूतानां देवमनुष्यादीनामात्मभूत आत्मवल्लभ आत्मा स्वरूपं यस्य स तथा, सर्वप्रियाचरण इत्यर्थः। स सर्वकर्माणि कुर्वन्नपि न लिप्यते अतः सर्वभूतसमत्वं निर्लेपत्वं ब्रह्मसमानधर्मत्वं च सिद्धम्। अन्यथा ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति। समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् इति वक्ष्यमाणा ब्रह्मभूतस्य भक्तिलाभोक्तिर्विरुध्येत। तस्मादुक्तार्थ एव साधुरित्यलम् ॥ ७ ॥

**म० टी०**–ननु कर्मणो बन्धहेतुत्वाद्योगयुक्तो मुनिर्ब्रह्माधिगच्छतीत्यनुपपन्नमित्यत आह–योगयुक्त इति। भगवदर्पणफलाभिसन्धिराहित्यादिगुणयुक्तं शास्त्रीयं कर्म योग इत्युच्यते। तेन योगेन युक्तः पुरुषः प्रथमं विशुद्धात्मा विशुद्धो रजस्तमोभ्यामकलुषित आत्मान्तःकरणरूपं सत्त्वं यस्य स तथा निर्मलान्तःकरणः सन् विजितात्मा स्ववशीकृतदेहस्ततो जितेन्द्रियः स्ववशीकृतसर्वबाह्येन्द्रियः एतेन मनूक्तस्त्रिदण्डी कथितः 'वाग्दण्डोऽथ मनोदण्डः कायदण्डस्तथैव च। यस्यैते नियता दण्डाः स त्रिदण्डीति कथ्यते' इति। वागिति बाह्येन्द्रियोपलक्षणं, एतादृशस्य तत्त्वज्ञानमवश्यं भवतीत्याह–सर्वभूतात्मभूतात्मा सर्वभूत आत्मभूतश्चात्मा स्वरूपं यस्य स तथा जडाऽजडात्मकं सर्वमात्ममात्रं पश्यन्नित्यर्थः। सर्वेषां भूतानामात्मभूत आत्मा यस्येति व्याख्याने तु सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूतेत्यधिकं स्यात्। सर्वात्मपदयोर्जडाजडपरत्वे तु समञ्जसं, एतादृशः परमार्थदर्शी कुर्वन्नपि कर्माणि परदृष्ट्या न लिप्यते तैः कर्मभिः स्वदृष्ट्या तदभावादित्यर्थः ॥ ७ ॥

**शं० टी०**–यः कर्मानुष्ठानसंप्राप्तचित्तशुद्धिर्जितेन्द्रियः सर्वात्मभावापन्नो ब्रह्मवित्तमः स शारीरं कर्म यत्किंचित्कुर्वन्नपि न लिप्यते इत्याह–योगयुक्त इति। योगयुक्तः योगेन कर्मयोगेन युक्तश्चिरमनुष्ठितकर्मयोग इत्यर्थः। यद्वा मुनिर्ब्रह्माधिगच्छतीति मुख्यसंन्यासाधिगमस्योक्तत्वाद्योगयुक्तः योगेन संन्यासयोगेन ब्रह्मनिष्ठालक्षणेन युक्तश्चिरमनुष्ठितसमाधियोग इत्यर्थः। तत एव विशुद्धात्मा जितेन्द्रियश्च विशुद्धः रागद्वेषादिदोषैर्निःशेषवियुक्तः आत्मा मनो यस्य स विशुद्धात्मा तत एव जितेन्द्रियः जितानि विषयग्रहणवैमुख्यं

प्रापितान्युभयेन्द्रियाणि येन स जितेन्द्रियः। विशुद्धात्मत्वं जितेन्द्रियत्वं च चिरकालसमनुष्ठितसमाध्येकलभ्य-मत एव विजितात्मा 'आत्मा यत्नधृतिस्वान्तस्वभावपरमात्मसु' इत्यभिधानाद्विजितो निर्जितो निर्यापित आत्मा स्वभावो बाह्यवासनालक्षणो येन स विजितात्मा समाधिनिर्मूलिताऽनात्मवासन इत्यर्थः। तत एव सर्वभूतात्मभूतात्मा सर्वेषां ब्रह्मादिस्तम्बान्तानां भूतानां प्राणिनामात्मभूतः स्वरूपभूत आत्मा प्रत्यग्लक्षणः स्वात्मा यस्य स सर्वभूतात्मभूतात्मा "प्राणो ह्येष सर्वभूतैर्विभाति", "अहमेवेदं सर्वम्" इत्यादिश्रुत्यर्थानु-भूत्या स्वानुभूत्या च सर्वात्मतामापन्नो यो ब्रह्मवित्तमः स शरीरयात्रार्थं यत्किंचिद्वैधमवैधं वा कर्म कुर्वन्न-पि तेन कर्मणा पुण्येनापुण्येन वा न लिप्यते कर्मण्यकर्मत्वदृष्ट्या न श्लिष्यत इत्यर्थः। ननु लोकसंग्रहमि-त्यादिशास्त्रेण कर्तव्यतया प्राप्तानां शास्त्रीयाणामेव कर्मणाममुष्यकर्तव्यत्वे शरीरयात्रार्थं कर्मेति शास्त्रवि-रुद्धमुच्यत इति चेन्न, ब्रह्मविदः कर्मानुपपत्तेः ब्रह्मैवाहमिति स्वस्याविक्रियब्रह्मात्मत्वविज्ञानेन निःशेषविन-ष्टमिथ्याज्ञानत्वात्, तद्विपरीतज्ञानैकनिबन्धनस्य कर्मयोगस्यासंभवात्सम्यग्ज्ञानस्य मिथ्याज्ञानतत्कार्यविरो-धात्। नह्यधिष्ठानज्ञाने सति तद्विपर्ययज्ञानं तत्कार्यं च संभावयितुं शक्यं, स्थाणुज्ञाने चोरज्ञान-तत्कार्यादर्शनात्कूटस्थासङ्गचिद्रूपमेवात्मानमप्रतिहतवृत्त्या पश्यतो विदुषस्त्वनात्मतादात्म्यानुपपत्तौ तदा-त्मत्वाभिनिवेशनिष्पाद्यः कर्मयोगः स्वप्नेऽपि न संभवति। विधिविधानादेः सर्वस्य दृश्यस्य मिथ्यात्वमेव पश्यतो विधेयत्वासंभवाच्च। योगयुक्तो मुनिर्ब्रह्माधिगच्छतीति सर्वकर्मसंन्यासावगमाच्च "पश्यञ्छृण्वन्" इत्यत्र च त्रयोदशधा कर्मक्रिया श्रूयते न वैदिकक्रियायास्त्रयोदशधा करणत्वं संभवति, विदुषस्त्वाहारादौ देहेन्द्रियचेष्टायास्तथाविधत्वसंभवात्सर्वथा ब्रह्मविदो जीवन्मुक्तस्य वैधः कर्मलेशो न संभावयितुं शक्यते तत एवोच्यते तस्य कार्यं न विद्यते इति ततो न कश्चिच्छास्त्रविरोधः॥ ७॥

श्री० टी०—कर्मयोगादिक्रमेण ब्रह्माधिगमे सत्यपि तदुपरितनेन कर्मणा बन्धः स्यादेवेत्याशङ्क्याह—योगयुक्त इति। योगेन युक्तोऽतो विशुद्ध आत्मा चित्तं यस्यात एव विजित आत्मा शरीरं येन अत एव विजितानीन्द्रियाणि येन, ततश्च सर्वेषां भूतानामात्मभूत आत्मा यस्य सः लोकसंग्रहार्थं स्वाभाविकं वा कर्म कुर्वन्नपि न लिप्यते तैर्न बध्यते॥ ७॥

स० टी०—कर्मणो बन्धकत्वात्स्यात्कथं मोक्षैकहेतुता॥ शृणु कृष्णार्पणं कर्म फलासङ्गविवर्जितम्॥१॥ योग इत्युच्यते तेन युक्तः सन्प्रथम ततः॥ रजस्तमोमलास्पृष्टं सत्त्वं यस्य स शुद्धधीः॥ २॥ स्ववशी-कृतदेहः सन् सन्स्वाधीनकृतेन्द्रियः॥ एतेन मनुनोक्तोऽत्र त्रिदण्डी हरिणोदितः॥ ३॥ वाग्दण्डोऽथ मनो-दण्डः कायदण्डस्तथैव च॥ यस्यैते नियता दण्डाः स त्रिदण्डीति कथ्यते॥ ४॥ सर्वेन्द्रियपरस्तत्र वाक्शब्दोऽस्ति मनुस्मृतौ॥ ईदृशस्य भवेदेव तत्त्वज्ञानमितीर्यते॥ ५॥ यस्यात्मा सर्वभूतानामात्मभूतः स ईदृशः॥ अखण्डाद्वैतनिष्ठः सन्त्यक्तभेदमतिः पुमान्॥ ६॥ सर्वभूत आत्मभूतश्चात्मा यस्येति वि-ग्रहे॥ जडाजडात्मकं विश्वं पश्यन्नात्ममयं मुनिः॥ ७॥ उभयत्राप्यखण्डार्थबोधसिद्धिरितीरिता॥ ईदृ-शस्तत्त्ववित्कुर्वन्नपि लोकदृशा क्रियाः॥ ८॥ ताभिर्न लिप्यते यस्मात्स्वदृष्ट्या तदभावतः॥ ९॥ ७॥

भा० टी०—कस्यचिच्चित्तशुद्ध्या श्रवणादिना कृतसाक्षात्कारस्य प्रारब्धवशात्कर्मणि स्थितस्य यथापूर्वमुप-लभ्यमानानि कर्माणि बन्धकानि न भवन्तीत्यत आह—योगयुक्त इति। योगेन पूर्वोक्तेन युक्तः अत एव विशुद्धान्तःकरणः अत एव विजितदेहः अत एव विजितानि वागादीनि इन्द्रियाणि येन सः एवंभूतोऽधिकारी लक्षणसंपन्नः सर्वेषां ब्रह्मादिस्तम्बपर्यन्तानां भूतानामात्मभूत आत्मा प्रत्यक्चेतनो यस्य स अखण्डात्म-साक्षात्कारवानित्यर्थः। यत्तु कैश्चिद्भाष्योक्तं विग्रहं सर्वभूतात्मेत्येतावतैवार्थलाभादात्मभूतेत्यधिकं स्यादि-त्यापत्त्या दूषयित्वा सर्वभूतो जडभूत आत्मभूतोऽजडभूतश्च आत्मा यस्येति च विग्रहः प्रदर्शितस्तत्प्रामा-

दिकं, कृत्स्नवाचिनः सर्वपदादेव जडाजडग्रहे सर्वभूतात्मेत्येतावतैवेष्टलाभे आधिक्यस्य तुल्यत्वात्। सर्वमचेतनमात्मानश्चेतनास्तद्भूत आत्मा यस्येति विगृह्य सर्वात्मभूतात्मेत्येतावतैवेष्टार्थे सिद्धे प्रथमभूतपदवैयर्थ्यप्रसङ्गाच्च। किंच भाष्यमते ब्रह्मादीनां प्रत्यगात्मभूत आत्मा यस्येति श्रुत्यैवात्मपरमात्मनोरैक्यमुच्यते तव मते तु उपादानत्वलिङ्गेन जडसाधारण्येनात्मनः परमात्माऽभेदो गम्यत इत्यत आचार्योक्तमेव रमणीयम्। स लोकसंग्रहार्थं कुर्वन्नपि न लिप्यते योगयुक्तो न कर्मभिर्बध्यत इत्यर्थः। यत्तु ननु योगयुक्तस्य सत्त्वशुद्धौ जातायामपि सर्वकर्मसंन्यासे कृते नित्याकरणजनितप्रत्यवायलक्षणो लेप आपद्येतेत्याशङ्क्याह—योगयुक्त इति। अकुर्वन्नपि न लिप्यते नित्याकरणोत्थेन दोषेण न स्पृश्यत इत्यर्थः। तत्र हेतुमाह—सर्वेषां ब्रह्मादिस्थावरान्तानां भूतानां योऽनुस्यूत आत्माऽसङ्गोदासीनचिद्रूपस्तंभूतः प्राप्तस्तदैक्यज्ञानवानात्मान्तःकरणं यस्येति तदुपेक्ष्यम् "कथमसतः सज्जायेत" इति श्रुतिमनुरुध्याकरणादभावरूपाद्भावरूपस्य प्रत्यवायस्यानुत्पत्तेराचार्यैरसकृदुक्तत्वात्सर्वेत्यादेरार्जवेन भाष्योक्तमार्गेणोक्तार्थलाभे संभवति क्लिष्टकल्पनाया अन्याय्यत्वात्। योगेन निर्विकल्पसमाधिना युक्त इत्याद्युपेक्ष्यं प्रकरणविरोधस्योक्तत्वात् ॥ ७ ॥

प० टी०—अथोक्तप्रमेयं दृढीकुर्वन् कर्मलोपाभावक्रममाह—योगयुक्त इति। योगेन कर्मयोगेन युज्यते निष्पद्यतेऽसौ योगयुक्तोऽत एव विशुद्ध आत्मा चित्तं यस्यात एव तद्वशवर्ती विजित आत्मा देहो येनात एव तत्संसक्तानि जितानीन्द्रियाणि येन स तथाभूतः सर्वभूतानामात्मभूत आत्मा यस्य सर्वभूतेषु समत्वदर्शी तादृशः पुमान् कर्म कुर्वन्नपि न लिप्यते न बध्यते ॥ ७ ॥

श० टी०—योगयुक्तसंन्यासस्य महाफलहेतुत्वं प्रपञ्चयति—योगेति। प्रपञ्चनं च यो न द्वेष्टीत्यत्रोक्तद्वेषादिवर्जनरूपसंन्यासस्य पूर्वार्धे कारणोपन्यासेन, ब्रह्माधिगच्छतीति प्रागुक्तमुक्तिफलं प्रति उत्तरार्धे ब्रह्मज्ञानरूपावान्तरफलोक्त्या चेति ध्येयम्। योगयुक्तः कर्मयोगयुक्तः विशुद्धात्मा विशुद्धस्वभावः अत एव विजितमनस्को जितेन्द्रियः सर्वभूतात्मा सर्वभूतानामादानादिकर्ता स्वामीति यावत्। सर्वभूतात्मभूतः सर्वप्राणिनां स्वामिभूतः स एव स्वस्यात्मा आदानादिकर्ता स्वामी यस्य स सर्वभूतात्मभूतात्मा। ज्ञानोपलक्षणमेतत् सर्वभूतात्मभूतात्मेति ज्ञानीत्यर्थः। कुर्वन्नपि न लिप्यते मुक्तो भवतीत्यर्थः। जितेन्द्रियत्वादिद्वेषादिवर्जनकारणं सर्वस्वामी मम स्वामीति ज्ञानं ब्रह्माधिगतावान्तरफलमित्युक्तं भवति। यद्वा योगयुक्त इत्यत्र भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपो योग उक्तः सर्वेत्यादिना तु सर्वभूतात्मनि हरौ भूतमनाः स्थितमना इत्यर्थः ॥ ७ ॥

**नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित् ॥**
**पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन् गच्छन् स्वपन् श्वसन् ॥८॥**
**प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ॥**
**इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥ ९ ॥**

त० टी०—एवंभूतः परमार्थदर्शी यावज्जीवः कथं वर्तेतेत्यपेक्षायां तद्विवेकबुद्धिं शिक्षयति—नैवेति द्वाभ्याम्। युक्तः समाहितचित्तः तत्त्ववित्परमार्थदर्शी चक्षुरादिज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिभिश्च दर्शनादिवचनादिश्वसनादिषु तत्तत्क्रियासु क्रियमाणासु इन्द्रियाणि बाह्यान्तःकरणान्येव इन्द्रियार्थेषु स्वस्वविषयेषु वर्तन्ते इति धारयन् बुद्ध्या निश्चिन्वन्नहं नैव किंचित्करोमीति मन्येत जानीयात्। तत्र दर्शनश्रवणस्पर्शनघ्राणाशनानि चक्षुःश्रोत्रत्वग्घ्राणरसनानां व्यापाराः। गमनं पादयोः, प्रलापो वाचः, विसर्गः पायोः, [illegible]सुखमुपस्थस्य, ग्रहणं हस्तयोरिति पञ्च कर्मेन्द्रियाणां व्यापाराः।

श्वसन्निति प्राणादिपञ्चकव्यापारस्योपलक्षणम्, उन्मेषणनिमेषणे कूर्माख्यस्य प्राणस्य, स्वापोऽन्तःकरणस्येत्यर्थक्रमेण विवेकः । पाठक्रमादर्थक्रमो बलीयान् । इमे व्यापारा मम स्वरूपनिरूपका न भवन्ति किंतु प्रकृतिकार्यभूतेन्द्रियप्राणादीनामेवेति जानन्निरभिमानतयाऽऽयुःशेषं क्षपयेदिति भावः ॥ ८ ॥ ९ ॥

म० टी०—एवदेव विवृणोति द्वाभ्याम्—नैवेति । चक्षुरादिज्ञानेन्द्रियैर्वागादिकर्मेन्द्रियैः प्राणादिवायुभेदैरन्तःकरणचतुष्टयेन च तत्तच्चेष्टासु क्रियमाणासु इन्द्रियाणि इन्द्रियादीन्येव इन्द्रियार्थेषु स्वस्वविषयेषु वर्तन्ते प्रवर्तन्ते नत्वहमिति धारयन्नवधारयन् नैव किंचित्करोमीति मन्येत मन्यते तत्त्ववित् परमार्थदर्शी युक्तः समाहितचित्तः । अथवा आदौ युक्तः कर्मयोगेन पश्चादन्तःकरणशुद्धिद्वारेण तत्त्वविद्भूत्वा नैव किंचित्करोमीति मन्यत इति संबन्धः ॥ ८ ॥ प्रलपन्निति । तत्र दर्शनश्रवणस्पर्शनघ्राणाशनानि चक्षुःश्रोत्रत्वग्घ्राणरसनानां पञ्चज्ञानेन्द्रियाणां व्यापाराः पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्नित्युक्ताः, गतिः पादयोः, प्रलापो वाचः, विसर्गः पायूपस्थयोर्ग्रहणं हस्तयोरिति पञ्च कर्मेन्द्रियव्यापाराः गच्छन् प्रलपन्विसृजन् गृण्हन्नित्युक्ताः,श्वसन्निति प्राणादिपञ्चकस्यव्यापारोपलक्षणं, उन्मिषन्निमिषन्निति नागकूर्मादिपञ्चकस्य, स्वपन्नित्यन्तःकरणचतुष्टयस्य, अर्थक्रमवशात् पाठक्रमं भङ्क्त्वा व्याख्यातोऽयं श्लोकः । यस्मात्सर्वव्यापारेष्वप्यात्मनोऽकर्तृत्वमेव पश्यति अतः कुर्वन्नपि न लिप्यत इति युक्तमेवोक्तमिति भावः ॥ ९ ॥

शं० टी०—योगयुक्तत्वादिविद्वल्लक्षणपञ्चकविशिष्टस्य ब्रह्मविद आहारादौ प्रवृत्तस्य दर्शनादीन्द्रियव्यापारेषु नाहं कर्तास्मीत्येवंबुद्ध्या स्थातव्यमित्याह—नैवेति द्वाभ्याम् । तत्त्वविदात्मयाथात्म्यज्ञो ब्रह्मवित्यतिर्युक्तः स्वस्य कूटस्थत्वासङ्गत्वान्तर्बहिःपूर्णत्वदर्शनलक्षणया प्रज्ञया युक्तः सन् स्वयं बहिः पश्यन्, अश्नन्, भक्षणं कुर्वन्, स्वप्ननिद्रां कुर्वन्, श्वसन्नुच्छ्वासं निःश्वासं च कुर्वन्नुन्मिषन्निमिषन् निमेषोन्मेषौ च कुर्वन्नपि इन्द्रियार्थेषु शब्दादिविषयेष्विन्द्रियाण्येव वर्तन्ते नाहं द्रष्टा श्रोता स्प्रष्टा घ्राता भोक्ता गन्तेत्येवंलक्षणामेव वृत्तिं सर्वदा धारयन् तानि तानि कर्माणीन्द्रियाण्येव कुर्वन्त्यहं त्वविक्रियत्वान्नैव किंचित्करोमि किंतु तत्तत्क्रियासाक्षित्वेन निष्क्रियात्मना तूष्णीमेवास इत्येवं मन्येत स्वं तत्र तत्र निष्क्रियमेव वीक्षेत । देहेन्द्रियव्यापारेष्वहं ममेतिभावनां त्यक्त्वा विदुषा तूष्णीं स्थातव्यमेवं स्वं ब्रह्मैव पश्यतो ब्रह्मविदो दुष्टादुष्टान्नस्वीकृत्या प्राप्तपापपुण्यलेपो नास्तीति सिद्धमिति द्वयोरर्थः ॥ ८ ॥ ९ ॥

श्री० टी०—कर्म कुर्वन्नपि न लिप्यत इत्येतद्विरुद्धमित्याशङ्क्य कर्तृत्वाभिमानाभावान्न विरुद्धमित्याह—नैवेति द्वाभ्याम् । कर्मयोगेन युक्तः क्रमेण तत्त्वविद्भूत्वा दर्शनश्रवणादीनि कुर्वन्नपि इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन्बुद्ध्या निश्चित्य किंचिदप्यहं न करोमीति मन्येत मन्यते । तत्र दर्शनश्रवणस्पर्शनावघ्राणाशनानि चक्षुरादिज्ञानेन्द्रियव्यापाराः, गतिः पादयोः, स्वापो बुद्धेः, श्वासः प्राणस्य, प्रलपनं वागिन्द्रियस्य, विसर्गः पायूपस्थयोः, ग्रहणं हस्तयोः, उन्मेषणनिषणे कूर्माख्यप्राणस्येति विवेकः । एतानि कर्माणि कुर्वन्नपि अनभिमानात् ब्रह्मविन्न लिप्यते । तथाच पारमर्षं सूत्रम्—"तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्" इति ॥ ८ ॥ ९ ॥

स० टी०—द्वाभ्यां तदेतद्देवेशो विवृणोति स्फुटं हरिः ॥ धीशुद्ध्या युक्त एवादौ भूत्वा तत्त्वविदेव सः ॥ १ ॥ क्रियमाणासु चेष्टासु न करोमीति मन्यते ॥ ज्ञानकर्मेन्द्रियैः कर्म दशभिस्तद्यथायथम् ॥ २ ॥ कुर्वन्नकर्तृताबुद्ध्या पश्यत्यात्मानमक्रियम् ॥ श्वसन्प्राणैः स्वपन्नन्तःकरणेन मुनिस्तथा ॥ ३ ॥ उन्मिषन्निमिषन्नेवं नागकूर्मादिपञ्चकैः ॥ एतानि स्वस्वविषये वर्तन्ते न त्वहं त्विति ॥ ४ ॥ धारयन्सर्वव्यापारेष्वात्मानमक्रियं विदन् ॥ कुर्वन्न लिप्यते चातो युक्तमेवेरितं वचः ॥ ५ ॥ ८ ॥ ९ ॥

भा० टी०—कुर्वन्नपि कुतो न लिप्यत इत्याशङ्क्य यतोऽसौ परमार्थतो न करोतीत्याह द्वाभ्याम्—नैवेति । युक्तः समाहितः सन्नादौ कर्मयोगयुक्त इति वाऽयं पक्षोऽध्याहारसापेक्षत्वादाचार्यैरुपेक्षितः । तत्त्ववित्परमार्थदर्शी नैव किंचित्करोमीति मन्येत मन्यते । कदेत्यपेक्षायामाह—पश्यन्नित्यादि । अपेः सर्वत्र संबन्धः । पश्यन्नित्यादिज्ञानेन्द्रियाणां व्यापारान्, गच्छन्निति पादयोर्व्यापारं, स्वपन्निति बुद्धेः, श्वसन्निति प्राणस्य, प्रलपन्निति वाचः, विसृजन्निति पायूपस्थयोः, गृह्णन्निति हस्तयोः, उन्मिषन्निमिषन्निति कूर्माख्यप्राणस्य, कुर्वन्नपीन्द्रियाणीन्द्रियार्थेषु वर्तन्ते, नाहमसङ्ग आत्मेति धारयन् बुद्ध्या निश्चयं कुर्वन् नैव किंचित्करोमीति तत्त्वविन्मन्यतेऽतो न लिप्यत इत्यर्थः । यद्वा नन्वेवं कर्तृत्वाभिमानशून्य इन्द्रियैः प्रतिषिद्धमपि कुर्यादित्यत आह-इन्द्रियाणीति । इन्द्रियाणीन्द्रियार्थेष्विष्टेषु विषयेषु वर्तन्त इति हेतोरन्याय्यमपि कुर्युः इत्यत इन्द्रियाणि धारयन्स्वायत्तानि यथेष्टसंचारपराङ्मुखानि कुर्वन्निति । अस्मिन्पक्षे प्रकरणविरोधोऽनुषङ्गक्लेशश्च परिहर्तव्यः ॥ ८ ॥ ९ ॥

प० टी०—अथ कुर्वन्नपि न लिप्यत इत्यनेन कर्तृत्वाभिमानशून्यत्वमुक्तमित्याह—नैव किंचिदिति द्वाभ्याम् । कर्मयोगेन युक्तः शुद्धचित्तः क्रमेण तत्त्वविद्भूत्वा ज्ञानकर्मेन्द्रियप्राणव्यापाररूपमहं किंचिन्न करोमीति मन्येत । अथ तदेवाह—पश्यन् शृण्वन् स्पृशन् जिघ्रन्नश्नन्निति ज्ञानेन्द्रियकृत्यम्, तथा गच्छन् प्रलपन् गृह्णन्निति कर्मेन्द्रियकृत्यम्, तथा स्वपन् श्वसन् उन्मिषन्निमिषन्निति प्राणकृत्यम्, एतत्सर्वमप्यहं किमपि न करोमीति मन्येत । ननु क्रियमाणं कार्यमेतदहं करोमीति यः कश्चिज्जानात्येव स कथमेवं मन्येतेत्याशङ्क्याह—इन्द्रियाणीति । इन्दति जानातीतीन्द्रः परमात्मा तत्संबुद्धानीन्द्रियाणि चक्षुरादीनीन्द्रियार्थेषु रूपरसादिषु वर्तन्ते प्रवर्तन्ते, अथवा वृत्तिरूपेण तिष्ठन्तीति धारयन् स्थिरीकुर्वन् ॥ ८ ॥ ९ ॥

रा० टी०—ज्ञेय इत्यादिना विशुद्धात्मेत्यादिना च स्पष्टीकृतमपि संन्यासं संकल्पत्यागोक्त्या पुनः स्पष्टयति—नैवेत्यादिश्लोकद्वयेन । युक्तः कर्मयोगानुष्ठाता तत्त्ववित् तत्त्वज्ञानी दर्शनश्रवणस्पर्शनादिज्ञानेन्द्रियकर्मेन्द्रियव्यापारं कुर्वन्नपि इन्द्रियाणीन्द्रियार्थेषु हरीच्छया वर्तन्त इति धारयन् मनसावमृशन् स्वस्य स्वातन्त्र्याभावात् नैव किंचित्करोमीति मन्येतेत्यर्थः । संकल्पत्यागोऽपि संन्यासशब्दार्थ इति भावः । संन्यासो योगरूपः सन्परमपुमर्थहेतुरित्युक्तं कथं तस्य योगरूपतेत्यतो वाह—नैवेति । सर्वव्यापारं कुर्वन्नपीन्द्रियाणीशप्रेरितानीन्द्रियार्थेषु वर्तन्ते स एव स्वतन्त्रः नैव किंचिदहं करोमीत्यनुसंधानमेव द्वेषादिवर्जनरूपसंन्यासस्य योगरूपत्वं नामेति श्लोकद्वयतात्पर्यार्थः ॥ ८ ॥ ९ ॥

**ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः ॥**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥ १० ॥**

त० टी०—भवत्वेवंभूतस्य विशुद्धात्मनो जितेन्द्रियस्य कर्मनिर्लेपत्वम्, उक्तलक्षणहीनस्यान्यस्य कथं कर्मलेपः स्यादित्यत आह—ब्रह्मणीति । ब्रह्मणि भगवति वासुदेवे आधाय समर्प्य सङ्गं फलाभिलाषं त्यक्त्वा केवलं भगवदाज्ञापालनात्मकभजनबुद्ध्या यः कर्माणि करोति, स देहेन्द्रियवानपि तत्प्रयुक्तकर्तृत्वाभिमानरूपेण बन्धहेतुना पापेन न लिप्यते यथा पद्मपत्रमम्भसि स्थितमपि अम्भसा न लिप्यते, तद्वत् ॥ १० ॥

म० टी०—तर्ह्यविद्वान्कर्तृत्वाभिमानाल्लिप्येतैव । तथाच कथं तस्य संन्यासपूर्विका ज्ञाननिष्ठा स्यादिति तत्राह—ब्रह्मणीति । ब्रह्मणि परमेश्वरे आधाय समर्प्य सङ्गं फलाभिलाषं त्यक्त्वा ईश्वरार्थं भृत्य इव स्वाम्यर्थं स्वफलनिरपेक्षतया करोमीत्यभिप्रायेण कर्माणि लौकिकानि वैदिकानि च करोति यः लिप्यते न स पापेन

पापपुण्यात्मकेन कर्मणेति यावत् यथा पद्मपत्रमुपरि प्रक्षिप्तेनाम्भसा न लिप्यते तद्वत् भगवदर्पणबुद्ध्याऽनुष्ठितं कर्म बुद्धिशुद्धिफलमेव स्यात् ॥ १० ॥

**शं० टी०**—ननु स्वमविक्रियमेव परं ब्रह्म विजानतो ब्रह्मविदो महात्मनः कर्मलेपो मास्तु कर्मसु प्रवृत्तस्य मुमुक्षोरविदुषस्तु स्यादेव कर्मलेपस्तस्य का वा गतिरित्याकाङ्क्षायां तस्यापि च निष्कामस्य मद्भक्तस्य मय्यर्पितसर्वकर्मणः कर्मलेपो नास्तीत्याह—**ब्रह्मणीति** । यस्तु मुमुक्षुरनात्मज्ञः सङ्गं सङ्गः फलकामस्तं त्यक्त्वा कर्मफले यत्र कुत्रापि काममकृत्वा संप्राप्तदुःखस्यापि निवृत्तिमकामयमानः सन् ब्रह्मणि सगुणे मयि परमेश्वरे सर्वाणि कर्माण्याधाय कर्तृत्वं कारयितृत्वं भोक्तृत्वं भोजयितृत्वं च स्थापयित्वा मदर्पणबुद्ध्या श्रद्धया भक्त्या च नित्यं नैमित्तिकं च कर्म करोति सोऽपि मद्भक्तः पापेन बन्धकेन यथा पापं जन्मादिबन्धकारणं तथा पुण्यमपि जन्मादिबन्धकारणमेव भवत्यतो वैदिकं कर्म जन्मादिबन्धहेतुत्वात्पापमित्युच्यते तेन न लिप्यते पद्मपत्रमम्भसा यथा तथा मद्भक्तः कर्मणा न लिप्यते इत्यर्थः ॥ १० ॥

**श्री० टी०**—तर्हि यस्य करोमीत्यभिमानोऽस्ति तस्य कर्मलेपो दुर्वारोऽविशुद्धचित्तत्वात् संन्यासोऽपि नास्तीति महत्संकटमापन्नमित्याशङ्क्याह—**ब्रह्मणीति** । ब्रह्मण्याधाय परमेश्वरे समर्प्य तत्फले च सङ्गं त्यक्त्वा यः कर्माणि करोति असौ पापेन बन्धहेतुतया पापिष्ठेन पुण्यपापात्मकेन कर्मणा न लिप्यते यथा पद्मपत्रमम्भसि स्थितमप्यम्भसा न लिप्यते तद्वत् ॥ १० ॥

**स० टी०**—तर्ह्यज्ञो लिप्यते तत्तत्कर्तृत्वाभिनिवेशतः ॥ ज्ञाननिष्ठा ससंन्यासा कथं तस्येति चेच्छृणु ॥ १ ॥ फलसङ्गं परित्यज्य समर्प्य परमेश्वरे ॥ कर्माणि वैदिकान्यज्ञो लौकिकानि करोति यः ॥ २ ॥ पापपुण्यात्मकेनासौ कर्मणा नैव लिप्यते ॥ यथोपरि प्रक्षिप्तेन पद्मपत्रं न चाम्भसा ॥ ३ ॥ लिप्यते तद्वदीशेऽपि कर्मार्पितमलेपकम् ॥ प्रत्युतेशप्रसादेन धीशुद्धिश्चास्य जायते ॥ ४ ॥ १० ॥

**भा० टी०**—एवं तत्त्वविदो लौकिककर्मणा मुधाचेष्टामात्रेण लेपो नास्तीत्युक्तमिदानीमतत्त्वविदो मुमुक्षोः का गतिरित्यपेक्षायामाह—**ब्रह्मणीति** । ब्रह्मणि परमेश्वरे भृत्य इव स्वामिने तदर्थं करोमीति समर्प्य मोक्षेऽपि फले सङ्गं त्यक्त्वा यः सर्वाणि कर्माणि करोति सोऽम्भसा पद्मपत्रमिव पापेन न संबध्यते मुमुक्षुं प्रति पुण्यस्यापि प्रतिबन्धकत्वात्पापेनेत्युक्तम् । इतरे तु विद्वत्परत्वेनैवं श्लोकं योजन्ति । तथाहि तत्त्वविदो यो लेपः स किं स्वाभाविकेन्द्रियशरीरचेष्टाजन्य उत वैधेन्द्रियादिचेष्टाजन्यः । आद्यं प्रति द्वाभ्यामुक्त्वा द्वितीयं प्रत्याह—**ब्रह्मणीति** । स किं तत्तत्कर्मजन्यसुकृतापूर्वलक्षणः किंवा तत्तत्कर्मोपयोग्यर्थप्रतिग्रहादिजन्यदुरितापूर्वलक्षणः । नाद्य इत्याह—ब्रह्मणीत्यादि ब्रह्मार्पणबुद्ध्या क्रियमाणेषु कर्मसु नापूर्वोत्पत्तिरिति भावः । न द्वितीय इत्याह—सङ्गं त्यक्त्वेति । सङ्गमैहिकधनादिफलासङ्गं ततश्च न दुरितापूर्वोत्पत्तिरिति भावः । तद्विचार्यम् । ब्रह्मार्पणबुद्ध्या कर्मकरणेऽतत्त्वविदो मुमुक्षोरेवाधिकारादन्यथानन्तरश्लोकेनासङ्गत्यापत्तेः । ननु कानि चेदृशानि कर्माणि यानि धनार्जनतया विनाऽनुष्ठातुं शक्यानि सन्ति, सत्त्वविशुद्धये भवन्तीत्याशङ्कां परिहरन् कर्मयोगानुष्ठाने शिष्टाचारं प्रमाणयति—कायेनेतीति स्वपरग्रन्थविरोधाच्च । अवशिष्टं तु भाष्यानुरोधेनोपादेयं मोक्षफले सर्वफलानामन्तर्भावेन तदासक्तिवारणेन भाष्यकारैः सर्वफलासक्तेर्वारितत्वात् ॥ १० ॥

**प० टी०**—**ब्रह्मणीति** । अर्थप्रतीतिरूपे ब्रह्मणि कर्माणि दर्शनश्रवणादीन्याधायारोप्य सङ्गं कर्तृत्वाभिमानं त्यक्त्वा यः करोति स पापेन बन्धहेतुना न लिप्यते । श्रुतिरपि शातपथी—"वदन् वाक् पश्यंश्चक्षुः शृण्वन् श्रोत्रं मन्वानो मनस्तान्यस्यैतानि कर्मनामानि" इति । तथात्मैवास्य कर्मात्मना हि कर्म करोतीति स्पष्टम् । तथा ऋगारण्यकेऽपि—"कोऽयमात्मेति वयमुपास्महे कतरः स आत्मा येन वा पश्यति येन वा शृणोति येन वा गन्धानाजिघ्रति येन वाचं व्याकरोति येन वा स्वादु चास्वादु विजानाति यदेतद्धृदयं

मनश्चैतत्संज्ञानमज्ञानं विज्ञानं प्रज्ञानं मेधा धृतिर्मनीषा ज्योतिः स्मृतिः संकल्पः क्रतुरसुः कामो वश इति सर्वाण्येतानि प्रज्ञानस्य नामधेयानि भवन्ति " इत्यादि। स्पष्टार्थैव श्रुतिः। अत्रैतदुक्तं भवति पश्यन् शृण्वन्नित्यादिषु बुद्धिप्राणकर्माणि कर्तृत्वाभिमानशून्यत्वे दृष्टान्तत्वेन योजितानि। तथाहि स्वपन् स्वापं निद्रां कुर्वन्नित्यत्र निद्रा तु मनसो निरिन्द्रियप्रदेशावस्थानं तदकस्मादसंकल्पितमेव भवति तथैव श्वासोच्छ्वासनिमेषोन्मेषा अपि भवन्ति तद्वद्दर्शनस्पर्शनादिकर्माण्युक्तरीत्यावधारयन् अत एव तत्त्वविदिति विशेषणम्। एवं कर्माणि वर्तमानोऽपि कर्मभिर्न लिप्यते इत्यत्र दृष्टान्तमाह—पद्मपत्रमिवेति। स्पष्टम्। तदुक्तम्—' स्फटिकः प्रतिबिम्बेन यथा नायाति रञ्जनम्। तत्स्थः कर्मफलेनान्तस्तथा नायाति रञ्जनम् '॥ १०॥

श० टी०—योगमपि किंचिद्विवृण्वन् संन्यासयोगाभ्यां युक्त एव कर्मणा न लिप्यत इति साधननियममाह—ब्रह्मणीति। यद्यपि संन्यासस्त्वित्यनेनैव संन्यासयोगौ मिलितावेव फलं साधयत इति नियमो लब्ध एव कुर्वन्नपि न लिप्यत इति फलं चोक्तमेव तथापि संन्यासयोगौ मिलितावेव फलसाधनमिति नियमोक्तेरुपचारत्वनिवृत्त्यर्थं लिप्यते न स पापेनेति पुनः फलोक्त्या नियमस्य फलसाधनतात्रोच्यत इत्यदोषः। सङ्गफलकामनां त्यक्त्वा ब्रह्मण्याधाय मम शुभार्थं स्वपूजात्मकानि मया कारितानीत्यनुसंधाय कर्माणि यः करोति भगवदधीनकर्तृशक्तिकः सन्करोति सोऽम्भसा पद्मपत्रमिव पापेन न लिप्यते ज्ञानद्वारा मुक्तो भवतीत्यर्थः॥ १०॥

**कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि॥**
**योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वाऽऽत्मशुद्धये॥ ११॥**

त० टी०—उक्तार्थमेव शिष्टाचारेण द्रढयति—कायेनेति। कायेन मनसा बुद्ध्या केवलैः स्वाभाविकविषयासक्तिशून्यैरिन्द्रियैरपि फलसङ्गं त्यक्त्वा आत्मशुद्धये चित्तशुद्ध्यर्थं योगिनः कर्म कुर्वन्ति॥ ११॥

म० टी०—तदेव विवृणोति—कायेनेति। कायेन मनसा बुद्ध्येन्द्रियैरपि योगिनः कर्मिणः फलसङ्गं त्यक्त्वा कर्म कुर्वन्ति कायादीनां सर्वेषां विशेषणं केवलैरिति ईश्वरायैव करोमि न मम फलायेति ममताशून्यैरित्यर्थः। आत्मशुद्धये चित्तसत्त्वशुद्ध्यर्थम्॥ ११॥

शं० टी०—नन्वकामनया कर्माणि कुर्वतां किं फलमित्याकाङ्क्षायामात्यन्तिकसंसारदुःखविध्वंसकविज्ञानजनयित्री चित्तशुद्धिरेव फलमिति ज्ञापयितुं मुमुक्षवश्चित्तशुद्ध्यर्थमेव कर्म कुर्वन्तीत्याह—कायेनेति। योगिनः कर्मयोगिनो मुमुक्षवः सङ्गं सज्जते पुमाननेन कर्मफलेष्विति सङ्गः कामः फलविषयकस्तं त्यक्त्वा फलापेक्षां सुतरां परित्यज्य परमेश्वरप्रीतय एव कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि चात्मशुद्धये सत्त्वशोधनायैव कर्म वैदिकं नियमेन कुर्वन्ति। यद्वा यत्किंचित्कर्तव्यं मनसा संकल्प्य तदेव बुद्ध्या निश्चित्य तदेवेन्द्रियैः केवलै रागद्वेषविवर्जितैः कायेनापि कर्म कुर्वन्ति। यद्वा कायेनेन्द्रियैश्च वैदिकं कर्म बुद्ध्या निश्चितस्य विष्णवादेर्मनसा ध्यानं श्रोत्रेण केवलेन कथाश्रवणं केवलेन चक्षुषा महद्दर्शनं वाचा केवलया स्वाध्यायादि पद्भ्यां तीर्थाटनादिकमीश्वरप्रीत्यै कुर्वन्तीत्यर्थः॥ ११॥

श्री० टी०—बन्धकत्वाभावमुक्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति—कायेनेति। कायेन स्नानादि, मनसा ध्यानादि, बुद्ध्या तत्त्वनिश्चयादि, केवलैः कर्माभिनिवेशरहितैरिन्द्रियैश्च श्रवणकीर्तनादिलक्षणं कर्म फलसङ्गं त्यक्त्वा चित्तशुद्धये कर्मयोगिनः कर्म कुर्वन्ति॥ ११॥

स० टी०—त्यक्त्वा फलाभिलाषं तु कर्म कुर्वन्ति कर्मिणः॥ चित्तशुद्ध्यै धिया चैव कायेन मनसे-

न्द्रियैः ॥ १ ॥ केवलैरिति सर्वेषां कायादीनां विशेषणम् ॥ ईश्वरार्थं करोमीदं नैतन्मम फलाय च ॥ २ ॥ स्वाम्यर्थं भृत्य इव च ममतामलवर्जितैः ॥ ३ ॥ ११ ॥

**भा० टी०**—यस्मात्कायेन केवलेनाहंभावममभावविवर्जितेन तथा केवलेन मनसा केवलया बुद्ध्या केवलैरिन्द्रियैरपि कर्मयोगिनः कर्म कुर्वन्ति, केवलैरितिपदं मनसेत्यनेन वचनस्य, कायेन बुद्धयेत्याभ्यां लिङ्गवचनयोर्व्यत्ययेन योजनीयम् । अत्रापरे केवलपदव्यावर्त्यं धनादि वर्णयन्ति । तथाहि केवलत्वाचाऽलब्धधनादिलाभानपेक्षितता, ततश्च केवलेन कायेन स्नानशौचाद्द्विजोच्छिष्टमार्जनादीनि कर्माणि योगिनः कुर्वन्ति न तु तेषामतीतकालता, नापि कदाचिद्धनापेक्षेति भावः । तथा केवलेन मनसा जगदीशध्यानं यथाशक्ति परोपकारसंकल्पादीनि च कर्णाभ्यामुत्तमश्लोकजन्मकर्माकर्णनादीनि रसनया तीर्थनैवेद्यास्वादनादीनि घ्राणेन तदुपभुक्तमाल्यामोदग्रहणादीनि, त्वचा पुण्यतीर्थोदकस्पर्शादीनि, पद्भ्यां तीर्थाटनादीनि, हस्ताभ्यां परेशपूजादीनि, वाचा स्तुत्यादीनि च कुर्वन्ति सङ्गं धनादिफलासङ्गं त्यक्त्वेति तैर्मानसादिकर्माणि धनाद्यपेक्षाऽप्रसक्तेस्तत्रापि स्वेन संबन्धितस्य केवलपदस्य वैयर्थ्यं परिहर्तव्यं तस्मात्सर्वव्यापारेषु ममतावर्जिता योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वा फलविषयमात्मशुद्धये सत्वशुद्धय इत्यर्थ इति भाष्यमेव रमणीयम् ॥ ११ ॥

**प० टी०**—एवं बन्धकत्वाभावमुक्त्वा मोक्षहेतुत्वं सदाचारेण दर्शयति—कायेनेति । कायेन स्नानोपवासादि मनसा ध्यानादि बुद्ध्या तत्त्वनिश्चयादि केवलैः कर्माभिनिवेशरहितैरिन्द्रियैः श्रवणकीर्तनादिलक्षणं कर्म फलसङ्गं त्यक्त्वा चित्तशुद्धये कर्म योगिनः कुर्वन्ति ॥ ११ ॥

**रा० टी०**—संन्यासयोगौ मिलितावेव फलहेतुरित्यत्राचारोऽस्तीत्याह—कायेनेति । देहेन मनसा मनोबुद्धी तु द्वादशे ( इ ) त्युक्तेर्बुद्धिरूपेन्द्रियेण केवलैः कामाहंभावहीनैः स्वातन्त्र्याभिमानरहितैर्वा इन्द्रियैर्योगिनोऽपि सङ्गं त्यक्त्वाऽत्मनो मनसः शुद्धये तत्र ज्ञानोत्पत्त्यर्थं पापालेपायेति वा कर्म कुर्वन्तीत्यर्थः । पूर्वार्धेन संन्यासः उत्तरार्धेन योगः आत्मशुद्धय इति फलोक्तिः ॥ ११ ॥

**युक्तः कर्मफलं त्यक्त्वा शान्तिमाप्नोति नैष्ठिकीम् ॥**
**अयुक्तः कामकारेण फले सक्तो निबध्यते ॥ १२ ॥**

**त० टी०**—फलासक्तिरेव बन्धहेतुरित्यन्वयव्यतिरेकाभ्यामाह—युक्त इति । युक्त ईश्वराज्ञायां निरतः कर्मणां फलं त्यक्त्वा कर्माणि कुर्वन् नैष्ठिकीं शान्तिं मोक्षं प्राप्नोति । अयुक्तः कर्मसु ईश्वरप्रीत्यर्थमेवेति बुद्धिशून्यः कामकारेण कामतः प्रवृत्त्या मम फलसाधकमिदमहं करोमीति फले सक्तो निबध्यते तैरेव कर्मभिः संसारे बन्धं प्राप्नोतीत्यर्थः ॥ १२ ॥

**म० टी०**—कर्तृत्वाभिमानसाम्येपि तेनैव कर्मणा कश्चिन्मुच्यते कश्चित्तु बध्यत इति वैषम्ये को हेतुरिति तत्राह—युक्त इति । युक्तः ईश्वरायैवैतानि कर्माणि न मम फलायेत्येवमभिप्रायवान् कर्मफलं त्यक्त्वा कर्माणि कुर्वन् शान्तिं मोक्षाख्यामाप्नोति नैष्ठिकीं सत्त्वशुद्धिनित्यानित्यवस्तुविवेकसंन्यासज्ञाननिष्ठाक्रमेण जातामिति यावत् । यस्तु पुनरयुक्तः ईश्वरायैवैतानि कर्माणि न मम फलायेत्यभिप्रायशून्यः स कामकारेण कामतः प्रवृत्त्या मम फलायैवेदं कर्म करोमीति फले सक्तो निबध्यते कर्मभिर्नितरां संसारबन्धं प्राप्नोति यस्मादेवं तस्मात्त्वमपि युक्तः सन् कर्माणि कुर्विति वाक्यशेषः ॥ १२ ॥

**शं० टी०**—श्रद्धया भक्त्या चेश्वरप्रीतय एवाऽकामनया कर्म कुर्वतामन्यथा कुर्वतां च फलमाह—युक्त इति । यस्तु सदसद्विवेकी मोक्षेच्छया कर्मफलं त्यक्त्वा स्वेनानुष्ठीयमानानां कर्मणां फलमनपेक्ष्य युक्तो भवति लाभालाभयोः सिद्ध्यसिद्ध्योश्च समो भूत्वा परमेश्वरप्रीतय एव यः कर्म करोति स एव नैष्ठिकीं कर्म-

निष्ठाजन्यां शान्तिं चित्तशुद्धिं प्राप्नोति । यद्वा नैष्ठिकीं कर्मनिष्ठासमुत्पन्नचित्तशुद्धिसंभावितज्ञानप्रकाशितां शान्तिं मुक्तिं प्राप्नोति । यस्त्वविवेकी कामकारेण कामनया फले कर्मफले सक्त आसक्तः सन्नयुक्त उक्तलक्षण-कर्मानुष्ठानपरो न भवति स निबध्यते ज्ञानानुत्पत्त्या जन्मादिबन्धवान् भवति ततस्त्वमुक्तलक्षणयोगयुक्तो भवेत्यर्थः । एतेन निष्कामेन कृतं कर्म मोक्षाय भवति सकामेन कृतं कर्म बन्धाय भवतीति सूचितम् ॥ १२ ॥

श्री० टी०—ननु तेनैव कर्मणा कश्चिन्मुच्यते कश्चिद्बध्यत इति व्यवस्था कथमत आह—युक्त इति । युक्तः परमेश्वरैकनिष्ठः सन्कर्मणां फलं त्यक्त्वा कर्माणि कुर्वन्नात्यन्तिकीं शान्तिं मोक्षं प्राप्नोति, अयुक्तस्तु बहिर्मुखः कामकारेण कामतः प्रवृत्त्या फले आसक्तो नितरां बन्धं प्राप्नोति ॥ १२ ॥

स० टी०—कर्तृत्वाध्याससाम्येऽपि कश्चित्तेनैव कर्मणा ॥ मुच्यते बध्यते कश्चिद्वैषम्ये हेतुरस्ति कः ॥१॥ शृण्वीशायैव कर्माणि नैतानि च फलाय मे ॥ इत्यभिप्रायवान्युक्तस्त्यक्त्वा कर्मफलं सुधीः ॥ २ ॥ कुर्वन्कर्माणि मोक्षाख्यां शान्तिमाप्नोति नैष्ठिकीम् ॥ शुद्धिर्विवेकसंन्यासज्ञाननिष्ठाक्रमेण या ॥ ३ ॥ जाता सा नैष्ठिकी शान्तिर्मोक्षरूपा स तामियात् ॥ यस्त्वयुक्तोऽस्ति पूर्वस्माद्विपरीतः स कामतः ॥ ४ ॥ प्रवृत्त्या मे फलायेदं करोमीति फलेप्सुकः ॥ कर्मभिर्नितरां बन्धं संसाराख्यं प्रयात्यसौ ॥ ५ ॥ देहाभिमानसाम्येऽपि कृतं भगवदर्पणम् ॥ कर्म श्रौतं तथा स्मार्तं लौकिकं च मुमुक्षुभिः ॥ ६ ॥ चित्तशुद्ध्याप्तवैराग्यज्ञानद्वारा विमुक्तिदम् ॥ तदेव कामकारेण कृतं सत्फलकामिभिः ॥ ७ ॥ दृढबन्धाय मूढानां भवतीत्याशयो हरेः ॥ यस्मादेवं ततस्त्वं भो विहायासक्तिमान्ध्यजाम् ॥ ८ ॥ सर्वकर्मफलेष्वीशप्रतोषार्थं कुरु क्रियाम् ॥ वैदिकीं लौकिकीं वापि बन्धान्मुक्तो भविष्यसि ॥ ९ ॥ १२ ॥

भा० टी०—न केवलं सत्त्वशुद्ध्यर्थमेव कर्माण्यनुष्ठेयान्यपि तु परंपरया मोक्षायापीत्याह—युक्त इति । युक्तः परमेश्वराय कर्माणि न मम फलायेत्येवं समाहितः सन् कर्मफलं परित्यज्य शान्तिं मोक्षाख्यां नैष्ठिकीं निष्ठायां भवां सत्वशुद्धिज्ञानप्राप्तिसर्वकर्मसंन्यासज्ञाननिष्ठाः क्रमेण प्राप्नोति । विपक्षे दोषमाह—अयुक्त इति । यस्तु पुनरयुक्तो समाहितः कामकारेण कामप्रेरणया फलार्थमिदं कर्मकरोमीत्येवं फले सक्तः स निबध्यतेऽतस्त्वं युक्तः सन् कर्माणि कुर्वित्यभिप्रायः ॥ १२ ॥

प० टी०—अथ चित्तशुद्धेः फलमाह—युक्त इति । कर्मफलं त्यक्त्वा युक्तः शुद्धचित्तः पुमान्नैष्ठिकीमात्यन्तिकीं शान्तिं मोक्षं प्राप्नोति । अथायुक्तस्य गतिमाह—अयुक्तो बहिर्मुखः कामकारेण कामतः प्रवृत्त्या फले सक्तः सन्निबध्यते ॥ १२ ॥

रा० टी०—प्राक् संन्यासस्त्वित्यादिना संन्यासयोगौ मिलितावेव फलं साधयतः नान्यतरपरित्यागेनान्यतर इति नियमज्ञापनार्थं तयोः फलमुक्तं ब्रह्माधिगच्छति, कुर्वन्न लिप्यत इत्यादिना । इदानीं तु तावेव मोक्षसाधनं न तु तदुभयत्यागेनान्यदिति नियमज्ञापनाय योगसंन्यासवतस्तदुभयाभाववतश्च मुक्तिसंसारविस्तरलक्षणं फलमाह—युक्त इति । कर्मफलं त्यक्त्वेत्यनेन प्रागुक्तकामादिवर्जनरूपसंन्यासी ज्ञेयः । युक्तः भगवदर्पणबुद्ध्या कर्मानुष्ठानरूपयोगयुक्तः नैष्ठिकीं स्वाभाविकीं शान्तिं स्वरूपानन्दाविर्भावलक्षणां मुक्तिमाप्नोति । अयुक्तः योगहीनः कामकारेण फलकामादिना कर्मानुष्ठानेन संन्यासाभावेनेति यावत् । फले क्षुद्रफले सक्तो निबध्यते नितरां संसारमनुभवतीत्यर्थः ॥ १२ ॥

**सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी ॥**
**नवद्वारे पुरे देही[1] नैव कुर्वन्न कारयन् ॥ १३ ॥**

---

१ देहे इति शङ्करानन्दपाठः ।

**त० टी०**—एवमयुक्तः कर्मस्वभिमानादेहेन्द्रियकर्मभिर्बध्यते इत्युक्तं, ज्ञानी तु देहे वर्तमानोऽपि देहेन्द्रियकर्मभ्यो विलक्षण एवेत्याह—**सर्वकर्माणीति**। वशी स्ववशीकृतचित्तेन्द्रियः नित्यनैमित्तिकादीनि सर्वाणि कर्माणि अनादिकर्मात्मिकाविद्याकृतप्रकृतिसम्बन्धस्तज्जन्यदेहेन्द्रियनिमित्तकमिदं कर्तृत्वं, न केवलस्वरूपप्रयुक्तमिति विवेकयुक्तेन मनसा संन्यस्य त्यक्त्वा नवद्वारे नेत्रकर्णनासिकामुखपायूपस्थात्मकनवद्वारवति देहात्मके पुरे पुरवदहंभाववर्जिते देही देहाश्रयभूतोऽहमिति विवेकवान्न तु अज्ञवद्देहाभिन्नः सुखं यथा स्यात्तथाऽऽस्ते। सुखत्वे हेतुः—नैव कुर्वन्न कारयन्निति। इदमहं करोमीत्यहंकाराभावात्स्वयं नैव कुर्वन्, अन्यत्र देहपर्यन्ते ममकाराभावान्नैव कारयन्नास्तेऽतो न बध्यते इति भावः ॥ १३ ॥

**म० टी०**—अशुद्धचित्तस्य केवलात्संन्यासात्कर्मयोगः श्रेयानिति पूर्वोक्तं प्रपञ्च्याधुना शुद्धचित्तस्य सर्वकर्मसंन्यास एव श्रेयानित्याह—**सर्वेति**। नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं चेति सर्वाणि कर्माणि मनसा कर्मण्यकर्म यः पश्येदित्यत्रोक्तेनाकर्त्रात्मस्वरूपसम्यग्दर्शनेन संन्यस्य परित्यज्य प्रारब्धकर्मवशादास्ते तिष्ठत्येव। किं दुःखेन नेत्याह—सुखमनायासेन आयासहेतुकायवाङ्मनोव्यापारशून्यत्वात्। कायवाङ्मनांसि स्वच्छन्दानि कुतो न व्याप्रियन्ते तत्राह—वशी स्ववशीकृतकार्यकरणसंघातः। क्वास्ते नवद्वारे द्वे श्रोत्रे द्वे चक्षुषी नासिके वागेकेति शिरसि सप्त, द्वे पायूपस्थाख्ये अध इति नवद्वारविशिष्टे देहे देही देहभिन्नात्मदर्शी प्रवासीव परगृहे तत्पूजापरिभवादिभिरप्रहृष्यन्नविषीदन्नहंकारममकारशून्यस्तिष्ठति अज्ञो हि देहतादात्म्याभिमानादेह एव नतु देही स च देहाधिकरणमेवात्मनोऽधिकरणं मन्यमानो गृहे भूमावासने वाहमास इत्यभिमन्यते नतु देहेऽहमास इति भेददर्शनाभावात्। संघातव्यतिरिक्तात्मदर्शी तु सर्वकर्मसंन्यासी भेददर्शनादेहेऽहमास इति प्रतिपद्यते अत एव देहादिव्यापाराणामविद्ययात्मन्यक्रिये समारोपितानां विद्यया बाध एव सर्वकर्मसंन्यास इत्युच्यते। एतस्मादेवाज्ञवैलक्षण्याद्युक्तं विशेषणं नवद्वारे पुर आस्त इति। ननु देहादिव्यापाराणामात्मन्यारोपितानां नौव्यापाराणां तीरस्थवृक्ष इव विद्यया बाधेऽपि स्वव्यापारेणात्मनः कर्तृत्वं देहादिव्यापारेषु कारयितृत्वं च स्यादिति नेत्याह—नैव कुर्वन्न कारयन् आस्त इति संबन्धः ॥ १३ ॥

**शं० टी०**—नन्वकामस्य कर्मयोगेनैव मुक्तिश्चेत्तर्हि सर्वैरप्यकामनया कर्मैव कर्तव्यं न तु संन्यास इत्याशङ्कायां 'नित्यनैमित्तिकैरेव' इति न्यायेन अकामनया कृतकर्मणां फलं चित्तशुद्धिस्तस्याः फलं ज्ञानं ज्ञानस्य सर्वकर्मसंन्यासः 'नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम्। ज्ञानं च विमलीकुर्वन्नभ्यासेन च वासयेत्। अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः' इति सदात्मनावस्थानं च फलमतो बहुजन्मकृतसुकृतपरिपाकात्संप्राप्तचित्तशुद्धेस्तस्यैव समुत्पन्नपरावरैकत्वविज्ञानस्य सर्वात्मदर्शिनो ब्रह्मविदः कर्मेषदपि न संभवति कारणाभावात्किंतु ब्रह्मविद्भिर्यः सर्वाणि कर्माणि संन्यस्य स्वयमविक्रियब्रह्मात्मना तूष्णीं तिष्ठतीत्याह—**सर्वेति**। नित्यनिरन्तरसमाधिनिष्ठानिर्मूलितसर्ववासनापटलत्वेन सुप्रसन्नबाह्याभ्यन्तरकरणत्वाद्वशी वशीकृतसर्वेन्द्रियग्रामः शुद्धात्मा ब्रह्मवित् सर्वकर्माणि नित्यनैमित्तिककाम्यप्रतिषिद्धलक्षणानि शास्त्रीयाण्यशास्त्रीयाणि च सर्वाणि कर्माणि मनसाऽधिष्ठानयाथात्म्यसंदर्शनसंजातारोपितसर्वदृश्यवस्तुमिथ्यात्वप्रत्ययवता संन्यस्य कर्म तत्कर्ता तत्साधनं तत्फलं च सर्वमसदेवेति विज्ञानेन संत्यज्येत्यर्थः। ननु मनसेतिवचनात् सर्वेषां कर्मणां मनसैव त्यागो न तु बहिःक्रियया विहितानां त्यागायोगादिति चेन्न विकल्पो नहि वस्तु 'मायामात्रमिदं द्वैतम्' इति सर्वमिथ्यात्वदर्शिनो विदुषो विध्यनुपपत्तेः विधेरपि दृश्यान्तःपातित्वाद्यथा मरुस्वरूपदर्शिनो जलपानविधिवचनं जलवन्मिथ्या भवति तथाऽधिष्ठानब्रह्मसंदर्शिनः कर्मविधिरपि कर्मवत्कारकवन्मिथ्यैव भवति सर्वप्रमाणैः सर्वं मिथ्यैव पश्यतो ब्रह्मविदः कर्मप्रवृत्तिश्च न संभवत्येव। ननु सर्वं मिथ्यैवेति प्रवर्ततामिति चेन्न मिथ्या-

त्वबुद्धेः प्रवृत्तेश्च परस्परविरोधादेकाधिकरणत्वानुपपत्तेः । नन्वन्तर्मिथ्यात्वबुद्ध्या बहिः सत्यत्वबुद्ध्या क्रियतां कर्मेति चेन्न एकस्मिन्वस्तुनि बुद्धिद्वयायोगात् नहि मरुं दृष्टवतो जलमिथ्यात्वबुद्धिस्तत्सत्यत्वबुद्धिश्चोपपन्ना दृष्टा तद्वत्सर्वदृश्यमिथ्यात्वज्ञानं तत्सत्यत्वज्ञानं तत्प्रवृत्तिश्च नैकस्य कदाप्युपपद्यते पदार्थसत्यत्वधीपूर्वकत्वात्प्रवृत्तेर्मनसि सर्वदृश्यमिथ्यात्वदृढप्रत्ययवति विदुषि सति कथं बहिःप्रवृत्तिः संपद्येत यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोतीति वागादिप्रवृत्तेर्मनोव्यापारपूर्वकत्वश्रवणात्ततो बहिःकरणं मनसा संन्यास इति यत्तदपास्तं तस्मात्सर्वदृश्यमिथ्यात्वनिश्चयपूर्वकं सर्वकर्माणि मनसा संन्यस्य ब्रह्मविद्वर्यः स्वयमविक्रियब्रह्मात्मना तूष्णीमास्ते । कुत्रेत्याकाङ्क्षायामाह—नवेति । नवद्वारे चक्षुर्भ्यां श्रोत्राभ्यां नासिकाभ्यां वक्त्रेण च पायूपस्थाभ्यां च नवसंख्याकानि द्वाराणि सूर्याद्यधिदैवतरक्षितानि यस्य तन्नवद्वारं प्रत्यगात्मैकराजकं बुद्धिप्रधानकं मनःप्रभृतिसर्वकरणपरिचारकं प्राणादिदशवायुग्रामपालकं ब्रह्मविष्ण्वादिसर्वदेवतायतनं तस्मिन् नवद्वारे पुरे देहे सुखं स्वसुखाविर्भावं यथा तथास्ते सुखरूपेण तिष्ठतीत्यर्थः । ननु विद्वान् देहे आस्ते इति यत्तदनुपपन्नं विद्वानविद्वान् यतिरयतिश्च सर्वोऽपि देहे एवास्ते अहमिहास इत्यनुभवादिति चेन्न देहात्मबुद्धेर्मूढतमस्य विपरीतप्रत्ययदर्शनात् यस्तु देहमात्रात्मदर्शी मूढतमस्तस्य गेहे देहल्यामास इति प्रत्ययं विना नाहं देह आस इति प्रत्ययः संभवति यथा ब्रह्मविदः तथाच ब्रह्माण्डे चराचरं सर्वं वस्तुजातं स्वतेजसा प्रकाशयन्तं भानुमन्तमिव बुद्ध्यादिसर्वदृश्यजातमनात्मकमात्मभासा भासयन्तं स्वप्रकाशं चिदेकरसं सर्वसाक्षिणमसङ्गोदासीनं नित्यशुद्धबुद्धमुक्तस्वभावमानन्दघनमात्मानं स्वात्मना साक्षादयमेवाहमस्मीति यो विजानाति स एव देहव्यतिरिक्तात्मदर्शी विद्वान् शक्नोति गेहे देवदत्तवद्देहे निष्क्रियब्रह्मात्मना सुखमासितुं नान्यस्तत एवोच्यते भगवता सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी। नवद्वारे पुरे देहे इति । यद्वा वशी नित्यनिरन्तरब्रह्मनिष्ठया वशीकृतान्तर्बहिःकरणो निश्चलात्मा ब्रह्मविद्वर्यः सर्वकर्माणि विहितानि प्रतिषिद्धान्युभयविलक्षणानि च देहचेष्टारूपाणि सर्वाण्यपि च कर्माण्यतीतानेककल्पेष्वधुना च सर्वावस्थासु सर्वदा देहेन्द्रियव्यापारेण परिणतया प्रकृत्यैव कृतानि नतु मया कूटस्थासङ्गचिद्रूपेणेत्येवमात्मानात्मनोः स्वरूपविवेकज्ञानवता मनसा नवद्वारे स्थूलेन पुर्यष्टकेन च नवद्वारवति पुरे पुरसदृशे पूर्णत्वाद्वा पुरं तस्मिन् पुरे देहे कारणे देहशब्दोपलक्षितायां प्रकृतावेव संन्यस्य जननमरणादिविकाराः कर्तृत्वभोक्तृत्वसुखित्वदुःखित्वादिधर्मा जाग्रदाद्यवस्थाविशेषाश्च सर्वे प्रकृतेरेव नतु कूटस्थासङ्गचिद्रूपात्मनो ममेति सम्यगनात्मतादात्म्याध्यासं परित्यज्य स्वयं निष्कलनिष्क्रियनित्यशुद्धबुद्धनिरन्तरानन्दैकरसाद्वितीयब्रह्मात्मना स्वात्मन्येव तूष्णीं सुखमास्ते न किंचिद्विकरोतीत्यर्थः । ननु जपाकुसुमसान्निध्यात्स्फटिके रक्तिमवदनात्मसान्निध्यादात्मनि प्रतीयमानान्यनात्मकर्तृकानि सर्वाणि प्रकृतिरेव करोति नाहं करोमीति विद्यया स्वयं ब्रह्मभावमापद्य विद्वान् तिष्ठतु तथापि निष्क्रियात्मना स्थातुं न शक्नोति तस्य ब्रह्मात्मना तिष्ठतोऽन्यकर्तृकक्रियासंबन्धाऽभावेऽपि स्वाश्रयक्रियावत्त्वसंभवात् यथान्तर्गृहस्थप्रदीपस्य पवनाद्यन्यकर्तृकचलनक्रियाभावेऽपि स्वकर्तृकतैलादानक्रिया विद्यते यथा वा गजमारुह्य गच्छतो राज्ञो गजकर्तृकगमनक्रियाभावेऽपि स्वनिष्ठचलनक्रिया गजप्रेरणादिक्रिया च विद्यते तद्वत् परमात्मनोऽपि कर्तृत्वं कारयितृत्वं विद्यत एवेति चेन्न निरवयवत्वात्परमात्मनः क्रियाश्रयत्वानुपपत्तेः " निष्कलं निष्क्रियम् " इति निरवयवत्वनिष्क्रियत्वश्रवणादात्मनः क्रियावत्त्वे सावयवत्वादनित्यत्वं स्यात्तदनिष्टं सर्ववादिनां श्रुतिविरोधश्च स्यात् । राज्ञोऽवयवित्वात्कर्तृत्वाद्युपपत्तिर्न तथात्मन इति बोधयितुमाह—नैव कुर्वन्न कारयन्निति । निरवयवत्वात्परमात्मा स्वयं नैव किंचित्करोति नाप्यन्यान्कारयति चेत्यर्थः । नहि निरवयवे परिपूर्णे च वस्तुनि चलनक्रिया कल्पयितुं शक्यते प्रमाणविरोधात्, नहि निरवयवे पूर्णे आकाशे चलनं संभवति तद्वदात्मन्यपि नित्यः सर्वगतः

स्थाणुरित्यात्मनः पूर्णत्वनिष्क्रियत्वयोः प्रतिपादितत्वात् । ननु परमात्मनो निरवयवस्य निष्क्रियस्य कर्तृत्वकारयितृत्वयोरसंभवे " सर्वाधिपत्यं कुरुते महात्मा । एष एव साधुकर्म कारयति । एष त आत्मान्तर्याम्यमृतः " इत्यादिश्रुतीनामात्मनः कर्तृत्वकारयितृत्वप्रतिपादिकानामप्रामाण्यं स्यादिति चेन्न सन्निधिमात्रेणात्मनस्तथात्वसंभवाद्यथा सूर्यसान्निध्यात्तमोनिवृत्तौ सत्यां तन्निवृत्तिं सूर्यः करोतीत्युपचर्यते, यथा चुम्बकसान्निध्यादयसि चलति सति तच्चलनं चुम्बकमयश्चालयतीति चुम्बके उपचर्यते तथात्मसान्निध्यात्प्रकृतौ विजृम्भमाणायां तद्विजृम्भणं सर्वाधिपत्यं परमात्मन्युपचर्यतेऽविकारिण्येव तथैवात्मसान्निध्याद्बुद्ध्यादेः प्रवृत्तौ सत्यां बुद्ध्यादीनात्मा प्रवर्तयतीति तत्प्रवृत्तिरात्मन्यविक्रिय एवोपचर्यते परमात्मा करोति कारयतीति " ध्यायतीव लेलायतीव " इतिश्रुतेः । आत्मन एवंविधकर्तृत्वकारयितृत्वयोः संभवात्तमिममर्थमादाय प्राणिनामस्वातन्त्र्यसिद्ध्यै परमात्मनः कर्तृत्वं कारयितृत्वं च श्रुतयो वदन्त्यनयोक्तरीत्या परमात्मनः सृष्ट्यादिक्रियाप्रतिपादिकानामेतासां च श्रुतीनां प्रामाण्यमभ्युपगन्तव्यम् । अन्यथा " निष्कलं निष्क्रियं शान्तम् " इति । न तदश्नाति किंचन नतदश्नाति कश्चन " इत्यादिश्रुतीनामात्मनो निर्विकारत्वप्रतिपादिकानां व्याकोपः स्यात् यत एवं परमात्मनोऽविक्रियत्वं बहुश्रुतिप्रमाणकं तत आत्मा किंचिन्न करोति न कारयतीति सिद्धम् ॥ १३ ॥

श्री० टी०–एवं तावच्चित्तशुद्धिशून्यस्य संन्यासात्कर्मयोगो विशिष्यत इत्येतत्प्रपञ्चितमिदानीं शुद्धचित्तस्य संन्यासः श्रेष्ठ इत्याह–**सर्वकर्माणीति** । वशी यतचित्तः सर्वाणि कर्माणि विक्षेपकाणि मनसा विवेकयुक्तेन संन्यस्य सुखं यथा भवत्येवं ज्ञाननिष्ठः सन्नास्ते । क्वास्त इत्यत आह–**नवद्वारे** इति । नवद्वारे नेत्रे नासिके कर्णौ मुखं चेति सप्त शिरोगतानि, अधोगते द्वे पायूपस्थरूपे इत्येवं नव द्वाराणि यस्मिंस्तस्मिन्पुरे पुरवदहंभावशून्ये देहे देही अवतिष्ठते अहंकाराभावादेव स्वयं तेन देहेन नैव कुर्वन्ममकाराभावाच्च न कारयन्नित्यविशुद्धचित्ताद्व्यावृत्तिरुक्ता । अविशुद्धचित्तो हि संन्यस्य पुनः करोति कारयति च नत्वयं तथा अतः सुखमास्त इत्यर्थः ॥ १३ ॥

स० टी०–संन्यासात्केवलात्कर्मयोगोऽशुद्धधियो वरः ॥ इत्युक्त्वाहाधुना शुद्धबुद्धेः संन्यसनं वरम् ॥ १ ॥ नित्यं नैमित्तिकं काम्यं निषिद्धं चेति सर्वशः ॥ कर्मण्यकर्म यः पश्येदित्यत्रोक्तविवेकतः ॥ २ ॥ अकर्त्रात्मस्वरूपस्य विचारान्वितचेतसा ॥ त्यक्त्वा प्रारब्धवशतोऽनायासेनैव तिष्ठति ॥ ३ ॥ आयासहेतुकायवाङ्मनोव्यापारवर्जितः ॥ कार्यकारणसंघातो येनादौ स्ववशीकृतः ॥ ४ ॥ क्वास्त इत्याह भगवान्देहभिन्नात्मतत्त्वदृक् ॥ नवद्वारविशिष्टेऽस्मिन्देहे तिष्ठत्यसौ पुरे ॥ ५ ॥ परगेहे प्रवासीव निर्ममो निरहंकृतिः ॥ देहमात्रात्मदर्शी तु देहाधिकरणं नरः ॥ ६ ॥ स्वस्याधिकरणं मत्वा गृहे भूमौ तथासने ॥ अहमासेऽभिमानीति नत्वासे देह इत्यपि ॥ ७ ॥ संघातव्यतिरिक्तात्मदर्शिनस्तूपपद्यते ॥ देह आस इति ज्ञानं विद्यया भ्रान्तिबाधनात् ॥ ८ ॥ ननु देहादिव्यापारा आत्मन्यारोपिता भ्रमात् ॥ विद्यया भ्रान्तिबाधे हि तेषां बाधो भवत्विति ॥ ९ ॥ किंत्वात्मनः स्वकीयेन व्यापारेणास्तु कर्तृता ॥ यथा कारयितृत्वं स्याद्देहादिव्यापृताविति ॥ १० ॥ नैवमात्माऽक्रियोह्यास्ते नैव कुर्वन्न कारयन् ॥ यथाकाशस्य नीलिम्ना संबन्धो नास्ति सर्वथा ॥ ११ ॥ तथात्मनो न संबन्धः कर्तृत्वादिभिरण्वपि ॥ अक्रियस्याद्वयस्यास्य कर्तृत्वाद्यैरसङ्गिनः ॥ १२ ॥ कर्तृत्वाद्याः कुतो धर्मा भवन्त्याविद्यका जडाः ॥ आकाशे वर्णवन्नास्ति कर्तृत्वादि स्वतोऽमले ॥ १३ ॥ आविद्यकं तु विध्वस्तं तत्त्वधीजन्ममात्रतः ॥ तस्मात्त्यक्त्वा स कर्मास्ते नैव कुर्वन्न कारयन् ॥ १४ ॥ वसन्देहागारे परमपदनिष्ठो विजयते न कर्ता नो भोक्ता क्वचिदपि कदाचिद्विहरणे ॥ निजानन्दारामो विषयविरतिर्नान्यशरणः परब्रह्माद्वैतेऽपरिमितवपुः सन्विहरति ॥ १५ ॥ १३ ॥

भा० टी०—एवमशुद्धचित्तस्याविदुषः संन्यासात्कर्मयोगो विशिष्यत इत्युपपादितं शुद्धचित्तः परमार्थदर्शी कथमास्त इत्यपेक्षायामाह–सर्वेति। सर्वाणि नित्यं नैमित्तिकं काम्यं प्रतिषिद्धं चेति तानि कर्माणि मनसा विवेकबुद्ध्या कर्मादावकर्मदर्शनेन संत्यज्य सुखमास्ते दुःखहेतुसर्वव्यापारोपरमात् यतः वशी जितेन्द्रियः। क आस्त इत्यत आह–नवेति। नवद्वारे पुरे द्वे श्रोत्रे नेत्रे नासिके मुखं चेति सप्त शिरसि, अवाक् द्वे मूत्रपुरीषविसर्गार्थे, एवं नवद्वारयुक्ते पुरे नगरस्थानीये आत्मैकस्वामिके इन्द्रियाणि परिचारकाः बुद्धिरमात्योऽहंकारो युवराजो मनः शिल्पीत्येवं रूपैरिन्द्रियादिभिः पौरैरधिष्ठिते आस्ते यतो देही देहाद्यतिरिक्तात्मदर्शी यस्त्वज्ञः स तु देहात्मदर्शी गेहादावास्तेऽतो युक्तं विशेषणम्। यद्यप्येवं तथाप्यात्मसमवायित्वेन कर्तृत्वकारयितृत्वे तस्य स्यातामित्यत आह–नैव कुर्वन्स्वयं न च कारयन् कार्यकरणानि क्रियासु प्रवर्तयन्नास्त इति संबन्धः। यत्तु वशी विवेकवैराग्यसंपन्नो नवद्वारे पुरे मानुषे शरीरे सुखमास्त इति संबन्धः। यद्यपि नवद्वारं श्वमार्जारादिशरीरमपि भवति तथापि वशिशब्दसंयोगान्मानुषमिति लभ्यते। सुखमिति क्रियाविशेषणम् अनेनान्तःकरणस्य हर्षशोकादयः परिणामा निराकृताः। वशीत्यत्र वैराग्योक्त्या रागाद्यपरपर्यायकामतदवस्थाविशेषक्रोधरूपावन्तःकरणपरिणामौ वारितौ। विवेकोक्त्या चाहंकारतन्निबन्धनममकाराध्यासौ चिन्तनात्मकचित्तपरिणामं च निराकृत्य विशुद्धचिदाकारतया बुद्धेरवस्थानमुक्तम्। ततश्च विशुद्धचिदाकारबुद्धिपरिणाम एव निष्कृष्टो वशिशब्देनोक्तः। किं कृत्वेत्यत आह–मनसा सह सर्वकर्माणि संन्यस्य त्यागेन ज्ञानमप्युपलक्ष्यते ततश्च संन्यस्यात्मानं ज्ञात्वा सुखमास्त इति ज्ञेयम्। वशिनं विशिनष्टि–अदेहीति। देहो लिङ्गशरीरं तद्रहितः। अयमाशयः षोडशकलात्मा हि पुरुषः तत्र भूतेन्द्रियप्राणाः प्रवर्त्याः प्रवर्तकमन्तःकरणं तच्च बुद्धिसंकल्पकतया सर्वो हि बुद्ध्या निश्चित्य मनसा संकल्प्य प्रवर्तते तत्र मनस्त्यागेन विज्ञानकर्मत्यागः संभवतीति केदानीं लिङ्गदेहो नहि शिरसि छिन्ने कबन्धो देहतां प्रतिपद्यते इति मनसेत्युक्तम्। बुद्धिस्तु सर्वाकारपरित्यागेन चिन्मात्र उपसंक्रान्ताऽहंकारादीनां तु कथापि विवेकेनोन्मूलितेतीतरे व्याचख्युः तत्रेदं वक्तव्यं वशिशब्दयोगं विनापि सर्वकर्माणीत्यादेर्योगात् प्रकरणाच्च मानुषशरीरमेव लभ्यते सर्वकर्माणि संन्यस्येत्यनेन निषिद्धादिमननरूपमानसकर्मत्यागे मनस्त्यागसिद्ध्या त्यागकरणस्यापेक्षितत्वेन च सहशब्दमध्याहृत्य पृथङ्मनस्त्यागवर्णनमसङ्गतम्। किंच विवेकयुक्तत्वमेव मनस्त्यागोऽतो विवेकयुक्तेन मनसा सर्वकर्माणि संन्यस्येत्येव युक्तम् एतेन वशिशब्देन विवेकवैराग्ययुक्तत्ववर्णनं प्रत्युक्तम्। वशिशब्दस्य स्वतन्त्रवाचित्वेन जितेन्द्रियत्वप्रतीत्या इतरोक्तार्थस्यार्थिकार्थत्वात्। यदप्यदेही लिङ्गशरीररहित इति तदपि न भेदबोधकेनिप्रत्ययेन देहादितरात्मदर्शीति वर्णनस्यैव नवद्वारे पुरे आस्ते इत्यस्य योगेन स्वारसिकत्वेन प्रश्लेषेण क्लिष्टकल्पनाया अन्याय्यत्वात्। इमामेवारुचिं मनसि निधाय पक्षान्तरस्यैतद्व्याख्यानकर्तृभिर्दर्शितत्वाच्चेति दिक्। यदप्यन्ये वशी जितचित्तः समाधिस्थो योगी नवद्वारे नवैव पञ्चज्ञानेन्द्रियाणि षष्ठः प्राणस्तेनैव तत्प्रवर्त्यानां कर्मेन्द्रियाणां संग्रहः बुद्ध्यहंकारचित्तानीति नवैतानि द्वाराणीव पुरपतेर्जीवस्य भोगार्थं विषयप्रवेशस्थानानि यस्मिन्नवद्वारे पुरे शरीराख्ये विचित्रवासनाकल्पितानन्तविषयवति अनेकैः कर्मसचिवैः अधिष्ठिते सुखदुःखादिनानापण्यवति मनसा सर्वद्वारोद्घाटनकुञ्चिकया सह सर्वाणि कर्माणि पुरपतिरिव राज्यकार्याणि संन्यस्य सुखं निर्विकल्पसंविन्मात्ररूपेणास्ते इति तदपि असङ्गतमेव चित्तस्य वृत्तिनिरोधरूपजयापेक्षया वस्त्रादित्यागवदितरत्यागाप्रसिद्ध्या मनसा सहेति सहशब्दाध्याहारेण वर्णनस्य पुनरुक्तिग्रस्तत्वात्। मृतशरीरस्य पुरस्य सत्त्वेपि पुरोक्तद्वाराणामभावेन नवद्वाराणि यस्मिन्नित्युक्तेरनुचितत्वात्। निर्विकल्पसमाधिस्थस्य भोगप्राप्तिद्वाराणां लयादहं देहाद्भिन्न इत्येतावन्मात्रभानस्याप्यभावात् नवद्वारे पुरे आस्ते इत्यस्य वैयर्थ्यापत्तेश्चेति दिक्॥ १३॥

प० टी०—एवं तावच्चित्तशुद्धिमुपन्यस्य कर्मसंन्यासापेक्षया कर्मयोगो विशिष्यत इति पूर्वमुक्तमिदानीं शुद्धचित्तस्य संन्यासः श्रेयानित्याह—**सर्वकर्माणीति** । वशी जितचित्तः सर्वकर्माणि विवेकयुक्तेन मनसा संन्यस्य स्वत एवोपरतानि कृत्वा सुखं यथा भवति तथास्ते वर्तते । कुत्रास्त इत्याह—**नवद्वार इति** । नेत्रकर्णनासाद्वन्द्वानि मुखमेकं चेति सप्त पायूपस्थं चेति द्वे एवं नवद्वारे पुरवदहंभावशून्ये देहे देहीव तिष्ठति। यथा कश्चिन्नवद्वारे नगरे तिष्ठन्नपि नागरधर्मान्न स्पृशति तद्वदहंकाराभावाच्छुद्धचितो न कुर्वन्ममकाराभावाच्च न कारयन्, अशुद्धचित्तस्तु करोति कारयति च ॥ १३ ॥

रा० टी०—पूर्वं नैव किंचित्करोमीत्यादिना कर्तृत्वाभिमानत्यागेन संन्यासो विवृतोऽधुना कारयितृत्वाभिमानत्यागेन संन्यासशब्दार्थं स्पष्टयति—**सर्वकर्माणीति** । यद्वा प्राक्कर्माणि ब्रह्मण्याधाय यः करोतीत्यत्र कर्मणां ब्रह्मण्याधानं नाम न कर्मणां स्वरूपेण त्यागोऽपितु सर्वकर्माणि मनसा संन्यस्य भगवानेव स्वपूजात्मकानि मच्छुभार्थं मया कारयति मम कर्तृताशक्तिरपीशाधीनैवेत्यनुसंधायेत्येवंरूपमित्यर्थः । स्वरूपेण कर्माणि परित्यज्येत्यर्थपक्षे मनसेति व्यर्थमिति भावः । वशी जितेन्द्रियः स्वातन्त्र्येण नैव कुर्वन्नकारयंश्च नवद्वारे चक्षुःश्रोत्रघ्राणानां षड् द्वाराणि मुखं पायूपस्थे चेत्येवं नवद्वारवति पुरे देहे सुखं यथा तथा आस्ते कर्मलेपहीनो वर्तत इत्यर्थः ॥ १३ ॥

**न कर्तृत्वं न कर्माणि लोकस्य सृजति प्रभुः ॥**
**न कर्मफलसंयोगं स्वभावस्तु प्रवर्तते ॥ १४ ॥**

त० टी०—ननूक्तलक्षणो विवेकी कर्मभिर्न बध्यते अज्ञस्तु कामकारेण शुभाशुभकर्मभिर्बध्यत इत्युक्तं, तत्र कस्य गुणः कस्य वा दोषः प्रयोजककर्त्रीश्वरायत्तकर्तृत्वात्सर्वस्य लोकस्य । " एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते " इत्यादिश्रुतेः प्रयोजककर्तुरीश्वरस्यैव वैषम्यं, तस्यैव पुण्यपापसंबन्धः स्यादित्याशङ्कावारणायाह—**न कर्तृत्वमिति** द्वाभ्याम् । प्रभुः परमेश्वरः लोकस्य जनस्य ' लोकस्तु भुवने जने ' इति कोशात् । कर्तृत्वं शुभाशुभानि कर्माणि च न सृजति नापि कर्मफलसंयोगं संबन्धं सृजति किंतु लोकस्य स्वभावः अनादिकर्मात्मिकाऽविद्यानिरूपितप्रकृतिः कर्तृत्वादिना प्रवर्तते, तदनुसारेणैवेश्वरः कर्मसु प्रवर्तयति न त्वपूर्वकर्तृत्वादिकमुत्पादयतीत्यर्थः ॥ १४ ॥

म० टी०—देवदत्तस्य स्वगतैव गतिर्यथा स्थितौ सत्यां न भवति एवमात्मनोऽपि कर्तृत्वं कारयितृत्वं च स्वगतमेव सत्संन्यासे सति न भवति अथवा नभसि तलमलिनतादिवद्वस्तुवृत्त्या तत्र नास्त्येवेति संदेहापोहायाह—**नेति** । लोकस्य देहादेः कर्तृत्वं प्रभुरात्मा स्वामी न सृजति त्वं कुर्विति नियोगेन तस्य कारयिता न भवतीत्यर्थः । नापि लोकस्य कर्माणीप्सिततमानि घटादीनि स्वयं सृजति कर्तापि न भवतीत्यर्थः । नापि लोकस्य कर्मकृतवतस्तत्फलसंबन्धं सृजति भोजयितापि भोक्तापि न भवतीत्यर्थः । " समानः सन्नुभौ लोकावनुसंचरति । ध्यायतीव लेलायतीव स हिः" इत्यादिश्रुतेः । अत्रापि शरीरस्थोऽपि कौन्तेय न करोति न लिप्यत इत्युक्तेः यदि किंचिदपि स्वतो न कारयति न करोति चात्मा कस्तर्हि कारयन्कुर्वंश्च प्रवर्तत इति तत्राह—**स्वभावस्तु** अज्ञानात्मिका दैवी माया प्रकृतिः प्रवर्तते ॥ १४ ॥

शं० टी०—नन्वात्मनो निरवयवत्वेन क्रियाश्रयत्वानुपपत्तौ स्वतः कर्तृत्वासंभवेऽपि यथाऽयस्कान्तस्यायश्चालकत्वं तथा कारयितृत्वं स्यादेवेत्याशङ्कायां न, तथात्वे प्राणिनामात्मसांनिध्यस्य नित्यत्वात्सर्वदा सर्वेषां प्रवृत्तिरेव स्यात्तददर्शनादात्मनः कारयितृत्वं न प्रामाणिकमित्याशयेनाह—**न कर्तृत्वमिति** । प्रकर्षेण

स्वयमेव सर्वत्र भाति सर्वं भासयतीति वा, सर्वात्मना स्वयमेव भातीति वा प्रभुरात्मा स्वयं लोकस्य प्राणिनः कर्तृत्वं त्वमिदं कुर्विति कर्माणि प्रवृत्तिं न सृजति यं कंचन जन्तुं न प्रवर्तयतीत्यर्थः । तथा कर्माणि "कर्तुरीप्सिततमं कर्म" इतिस्मरणात् क्रियया प्राप्तुमिष्टतमानि कर्माणीत्युच्यन्ते तानि न सृजति नोत्पादयति इष्टप्रदमनिष्टदं वा क्रियया प्राप्तुं योग्यं वस्तु न संपादयतीत्यर्थः । कर्मफलसंयोगं च न सृजति तं तं प्राणिनं तत्तत्कृतपापपुण्यफलेन न संयोजयति प्राणिनः सुखदुःखानि नानुभावयति चेत्यर्थः । आत्मनः कारयितृत्वप्रापयितृत्वभोजयितृत्वाद्यभावे तर्हि कारयिता प्रापयिता भोजयिता क इत्याकाङ्क्षायामाह-स्वभाव इति । स्वयमेव सर्वं भावयतीति, स्वं भावयतीति वा स्वभावः प्रकृतिर्वासनामयी प्रवर्तयति कर्मरूपिणी प्रकृतिरिष्टानिष्टे संपाद्य सुखदुःखे चानुभावयति प्राणिनः स्वात्मा तु प्राणिप्रकृतितच्चेष्टातत्सुखदुःखानुभूतीनां साक्ष्येव भवत्यविक्रियः सन्नित्यर्थः ॥ १४ ॥

श्री० टी०—ननु "एष एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" इत्यादिश्रुतेः परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्तृत्वेन प्रयुज्यमानोऽस्वतन्त्रः पुरुषः कथं तानि कर्माणि त्यजेदीश्वरेणैव ज्ञानमार्गे प्रयुज्यमानः शुभान्यशुभानि च त्यक्ष्यतीति चेत् एवंसति वैषम्यनैर्घृण्याभ्यां प्रयोजककर्तृत्वादीश्वरस्यापि पुण्यपापसंबन्धः स्यादित्याशङ्क्याह—न कर्तृत्वमिति द्वाभ्याम् । प्रभुः ईश्वरः जीवलोकस्य कर्तृत्वादिकं न सृजति किंतु जीवस्यैव स्वभावोऽविद्यैव कर्तृत्वादिरूपेण प्रवर्तते अनाद्यविद्या कामवशात्प्रवृत्तिस्वभावं जीवलोकमीश्वरः कर्मसु नियुङ्क्ते न तु स्वयमेव कर्तृत्वादिकमुत्पादयतीत्यर्थः ॥ १४ ॥

स० टी०—यथा पुंसः स्वनिष्ठैव गतिः सत्यां स्थितौ न सा ॥ तथात्मनोऽपि कर्तृत्वं संन्यासे सति नास्ति किम् ॥ १ ॥ यद्वा नभसि वर्णादिवन्नास्त्यात्मनि वस्तुतः ॥ इति संदेहविच्छित्त्यै भगवानाह चान्तिमम् ॥ २ ॥ सृजत्यात्मा न कर्तृत्वं देहादेस्त्वं च कुर्विति ॥ नापि लोकस्य कर्माणि प्रासादादीनि यानि च ॥ ३ ॥ अत्यन्तेप्सितरूपाणि स्वयं सृजति कर्हिचित् ॥ न चाकृतवतः कर्म लोकस्य तत्फलेन च ॥ ४ ॥ ससंबन्धं सृजत्यात्मा भोक्ता भोजयिता न सः ॥ यद्यात्मा न स्वतः किंचित्कुरुते कारयत्यजः ॥ ५ ॥ कस्तर्हि कारयन्कुर्वन्प्रवर्तत इहेति चेत् ॥ शृणु स्वभावशब्देन मायाऽविद्यादिशब्दिता ॥ ६ ॥ प्रकृतिर्याऽस्ति सैवेयं व्यवहारे प्रवर्तते ॥ ७ ॥ १४ ॥

भा० टी०—नैव कुर्वन्न कारयन्नित्युक्तं प्रपञ्चयति—नेति । प्रभुरात्मा लोकस्य देहादेः कर्तृत्वं न सृजति न घटप्रासादादीनि कर्माणि नापि घटादिकृतवतस्तत्फलेन संयोगम् अनेन भोजयितृत्वमप्यात्मनो वारितम् उपलक्षणमेतत् भोक्तृत्वनिषेधस्यापि तर्हि कस्य कर्तृत्वादिकमित्यपेक्षायामाह—स्वभावोऽविद्यालक्षणा प्रकृतिर्माया कुर्वन्कारयन्प्रवर्तते । यत्तु स्वस्मिन् भाव आरोपिता सत्ताऽस्येति स्वभावोन्तःकरणं तदेव प्रवर्तते कृत्यै मुक्त्यै वेत्यर्थ इति तन्न, अन्तःकरणस्यापि प्रकृत्यधीनप्रवृत्तिकत्वेन साकाङ्क्षायाः क्लिष्टकल्पनाया अन्याय्यत्वात् । ननु "एष एव साधुकर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष एवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्योऽधो निनीषते" इत्यादिश्रुतेः 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा' इतिस्मृतेश्च परमेश्वरेणैव शुभाशुभफलेषु कर्मसु कर्तृत्वेन प्रयुज्यमानः अस्वतन्त्रः पुरुषः कथं तानि कर्माणि त्यजेत ईश्वरेणैव ज्ञानमार्गे प्रयुज्यमानस्त्यक्ष्यतीति चेत् एवं सति वैषम्यनैर्घृण्याभ्यां प्रयोजककर्तृत्वादीश्वरस्यापि पुण्यपापसंबन्धः स्यादित्याशङ्क्याह—नेति द्वाभ्याम् । इत्येवमुत्थाप्यायमपि श्लोको भाष्यकृद्भिरीश्वरत्वेन कुतो न व्याख्यात इति चेत् अतीतानन्तरश्लोकेन क्लिष्टकल्पनां विनैव सङ्गतिसंभवमभिप्रेत्येति गृहाण ॥ १४ ॥

प० टी०—ननु 'जानामि धर्मं न च मे प्रवृत्तिः" इत्यादिवाक्यैरस्वतन्त्रस्य पुरुषस्य नैव कुर्वन्न कारयन्नित्यादिना स्वतन्त्रत्वं कथमुक्तम्, अथास्तामीश्वरस्यैव प्रयोजकत्वमिति चेत्तर्हि सदसत्कार्यप्रवर्तकत्वेनास्मदादिवत्तस्यापि विषमत्वं स्यादित्याह—न कर्तृत्वमिति द्वाभ्याम् । प्रभुरीश्वरोऽपि लोकस्य जीवलोकस्य कर्तृत्वं कर्माणि कर्मफलसंयोगं वा न सृजति न प्रयोजयति । तर्हि स्वतन्त्रः स्यादित्याह—स्वभाव इति । अनाद्यविद्यागुणोत्पन्नसदसत्संस्कारः स्वभावः स एव लोकेषु प्रवर्तते प्रवृत्तिजनको भवति स एवेश्वरानुग्रहो निग्रहो वेति कल्प्यते ॥ १४ ॥

रा० टी०—ननु दर्शनादिकुर्वन्नैव करोमीति मन्येतेत्युक्तिरयुक्ता तथात्वे मिथ्याज्ञानित्वप्रसङ्गादित्यतः स्वाभिप्रायमाह—नेति । जडमपेक्ष्य प्रभुः समर्थो जीवः लोकस्य कर्तृत्वं लोकेन कर्म न सृजति न कारयति स्वातन्त्र्येणेत्यर्थः । स्वयं च कर्माणि न सृजति न करोति कर्मण्यस्वातन्त्र्ये फले सुतरां तदित्याह—न कर्मेति । सृजतीत्यनुषङ्गः । कर्मफलप्राप्तिं लोकस्य न सृजति लोकस्य फलप्राप्तिसंपादने स्वस्य वा फलसंपादने न स्वतन्त्र इत्यर्थः । स्वातन्त्र्याभावापेक्षया न करोमीति मन्येतेत्युक्तिरिति भावः । यद्वा जीवस्य स्वतन्त्रकर्तृत्वाभावेऽपीश्वरदत्तं क्रियायां क्रियाजन्यादृष्टे कर्मफलप्राप्तौ चास्त्येव स्वातन्त्र्यमतः कथं ब्रह्मण्याधाय कर्माणीति सर्वाणि कर्माणि संन्यस्येति चोक्तिरित्यत आह—नेति । प्रभुरीश्वरः लोकस्य जीवस्य कर्तृत्वमग्निहोत्रादिक्रियायां स्वातन्त्र्यं न सृजति न प्रयच्छति कर्माणि क्रियाजन्यादृष्टानि लोकस्य न सृजति तेषु स्वातन्त्र्यं न प्रयच्छति कर्मफलसंयोगं च लोकस्य न सृजति फलप्राप्तावपि लोकस्य स्वातन्त्र्यं न प्रयच्छतीत्यर्थः । ननु क्रियायामदृष्टेषु फलसंयोगे च जीवस्य स्वातन्त्र्याभावे कथं क्रियादिनिष्पत्तिरित्यत आह—स्वभावस्त्विति । स्वं स्वयमेव भवति परानपेक्षं तिष्ठति तथा स्वयमेव भावयति जगदुत्पादयतीति स्वभावः । स्वेतिपदे उपपदे भवतेर्ण्यन्तात्कप्रत्ययः । स्वस्थितावन्यकरणे च परानपेक्षः स्वतन्त्रो भगवान्स्वभावशब्दार्थः । स एव च प्रवर्तते क्रियाकर्तृत्वे कर्मशब्दितादृष्टेषु फलसंयोगे चेति ध्येयम् । कदापि कुत्रापि नान्यस्य स्वातन्त्र्यं ददाति किंतु सर्वत्र सर्वदा स्वयमेव प्रवर्तत इति भावः ॥ १४ ॥

**नादत्ते कस्यचित्पापं न चैव सुकृतं विभुः ॥**
**अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ १५ ॥**

त० टी०—अत एव—नादत्त इति । विभुः परमेश्वरः कस्यचिज्जीवस्य पापं सुकृतं चैव नादत्ते तयोः स्वभावानुसारेण कारयिताऽपि पापपुण्यभाङ्न भवतीत्यर्थः । ननु जीवानां प्रयोजक ईश्वरो यदि कर्तृत्वकर्माणि न सृजति, पापादि नादत्ते चेत्तर्हि कथं बन्धनहेतुकर्म कुर्वन्तीत्यत आह—अज्ञानेनेति । अनादिकर्मात्मकाज्ञानेन स्वाभाविकं धर्मभूतं ज्ञानमावृतं, तेन हेतुना जन्तवो मुह्यन्ति । अज्ञानेनावृतज्ञानत्वाज्जीवा मोहमन्यथा ज्ञानं प्राप्नुवन्ति अनिष्टे इष्टबुद्ध्या प्रवर्तन्ते भगवति वैषम्यं पुण्यपापं च कल्पयन्तीत्यर्थः ॥ १५ ॥

म० टी०—नन्वीश्वरः कारयिता जीवः कर्ता तथा च श्रुतिः "एष ह्येव साधु कर्म कारयति तं यमुन्निनीषते । एष एवासाधु कर्म कारयति तं यमधो निनीषते" इत्यादिः । स्मृतिश्च 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा" इति । तथाच जीवेश्वरयोः कर्तृत्वकारयितृत्वाभ्यां भोक्तृत्वभोजयितृत्वाभ्यां च पापपुण्यलेपसंभवात्कथमुक्तं स्वभावस्तु प्रवर्तत इति तत्राह—नादत्त इति । परमार्थतः विभुः परमेश्वरः कस्यचिज्जीवस्य पापं सुकृतं च नैवादत्ते परमार्थतो जीवस्य

कर्तृत्वाभावात् परमेश्वरस्य च कारयितृत्वाभावात् । कथं तर्हि श्रुतिः स्मृतिर्लोकव्यवहारश्च तत्राह—अज्ञानेनावरणविक्षेपशक्तिमता मायाख्येनानृतेन तमसावृतमाच्छादितं ज्ञानं जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूतं नित्यं स्वप्रकाशं सच्चिदानन्दरूपमद्वितीयं परमार्थसत्यं तेन स्वरूपावरणेन मुह्यन्ति प्रमातृप्रमेयप्रमाणकर्तृकर्मकरणभोक्तृभोग्यभोगाख्यनवविधसंसाररूपं मोहमतस्मिंस्तदवभासरूपं विक्षेपं गच्छन्ति जन्तवो जननशीलाः संसारिणो वस्तुस्वरूपादर्शिनः अकर्त्रभोक्तृपरमानन्दाद्वितीयात्मस्वरूपादर्शननिबन्धनो जीवेश्वरजगद्भेदभ्रमः प्रतीयमानो वर्तते मूढानां तस्यां चावस्थायां मूढप्रत्ययानुवादिन्यावेते श्रुतिस्मृती वास्तवाद्वैतबोधिवाक्यशेषभूते इति न दोषः ॥ १५ ॥

शं० टी०—ननु "एव एव साधु कर्म कारयति । सत्त्वस्यैष प्रवर्तकः । ईश्वरः सर्वभूतानाम् । सर्वाधिपत्यं कुरुते महात्मा । धर्मावहं पापनुदं भगेशम् । वरदं देवमीड्यम् । प्रभुः प्रीणाति विश्वभुक्" इत्यादिश्रुतिभिः स्मृतिभिश्च परमात्मनः कर्तृत्वं कारयितृत्वं धर्मावहत्वं पापापनोदकत्वं समर्पितपूजादिभिः परितोष्टृत्वादिकं प्रतिपाद्यते, कथं न कर्तृत्वं न कर्माणीत्यात्मनः श्रुतिस्मृत्युक्तधर्मवत्त्वाभावः प्रतिपाद्यत इत्याकाङ्क्षायां न श्रुतिस्मृतिभिः पुराणैरप्यात्मन्युपाधिकृतमारोप्य प्रतिपाद्यते मुमुक्षूणां सत्त्वशुद्ध्यर्थं तदुपास्तौ प्रवृत्तिसिद्धये नतु तात्त्विकं, वस्तुतस्तु कूटस्थासङ्गचिद्रूपत्वादात्मा स्वयं न करोति न कारयति नादत्त इत्याह—नादत्त इति । निरवयवत्वान्निष्क्रियत्वाच्च विभुर्व्यापकः स्वयमात्मा भक्तस्य वाप्यन्यस्य वा यस्य कस्यचित्पापं नादत्ते ब्राह्मणो हिरण्यगर्भमिव न गृह्णाति । ननु 'हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः । अनेकजन्मार्जितपापसंचयं हरत्यशेषं स्मृतमात्र एव' इत्यादिवाक्यैर्भक्तकृतं पापं भगवानादत्त इति प्रतिपाद्यत इति चेत्सत्यं प्रतिपाद्यते तत्प्रतिपादनं नामकीर्तनप्रायश्चित्त्याऽनात्मज्ञं तत्पापान्मोचयितुमेव भवति नतु परमात्मनो विकारित्वं संपाद्य तत्पापादानप्रतिपादनाय एतत् 'तस्मात्संकीर्तनं विष्णोर्जगन्मङ्गलमंहसाम् । महतामपि कौरव्य विद्ध्यैकान्तिकनिष्कृतिम् ॥ एका विनिष्कृतिः शंभोः सकृदेव हि कीर्तनम्' इत्यादिवचनेभ्योऽवगम्यते । अन्यथा निर्विकारत्वप्रतिपादकबहुश्रुतिविरोधप्रसङ्गात् । किंच यस्य कस्यापि भक्तस्य वान्यस्य वा भक्त्या समर्पितं श्रौतस्मार्तकर्मानुष्ठानजन्यं सुकृतं च नैवादत्ते वह्निराहुतिमिव न किंचिद्गृह्णाति । ननु तर्हि "धर्मावहं पापनुदं वरदं देवमीड्यम्" 'प्रभुं प्रीणाति' 'पत्रं पुष्पं फलं तोयम्' इत्यादिश्रुतिस्मृतिवाक्यानामप्रामाण्यापात इति चेन्न, मुमुक्षोः सत्त्वशुद्धिकामस्य परमेश्वरोपास्तौ तन्महत्त्वप्रतिपादनेन रुच्युत्पादनपरत्वात्तेषां वाक्यानां "वायुर्वै क्षेपिष्ठा देवता" इत्यादिवाक्यवत्प्रामाण्योपपत्तेः । ननु पण्डिताश्चाप्यपण्डिताश्च सर्वे स्नानसंध्यानुष्ठानयज्ञदानादिजं फलमीश्वरायैव समर्पयन्ति गृह्णातीश्वर इति तत्कथमित्याकाङ्क्षायां ते वेदान्तविचारजन्यज्ञानाभावादेव तथा कुर्वन्तीत्याशयेनाह—अज्ञानेनेति । आत्मनो देहेन्द्रियादिभ्यो भिन्नत्वाविक्रियत्वचिद्रूपत्वपरिपूर्णत्वाखण्डानन्दैकरसत्ववेदनं ज्ञानं तद्विलक्षणमज्ञानं तेनोक्तलक्षणं ज्ञानमावृतं राहुणा रविबिम्बवत्तिरोहितं तेनैव परमात्मतत्त्वाऽविवेकेन जन्तवः प्राणिनः सर्वेऽप्यहंममेत्यनेन कर्मणेश्वरः प्रीयते मह्यमीप्सितं दास्यति भोक्ष्ये भोजयिष्यामीति मुह्यन्ति परतत्त्वमजानन्तः सन्तः संसरन्तीत्यर्थः ॥ १५ ॥

श्री० टी०—यस्मादेवं तस्मात्—नादत्त इति । प्रयोजकोऽपि सन्प्रभुः कस्यचित्पापं सुकृतं च नैवादत्ते न भजते । तत्र हेतुः—विभुः परिपूर्णः आप्तकाम इत्यर्थः । यदि हि स्वार्थकामनया कारयेत्तर्हि तथा स्यात् न त्वेतदस्ति आप्तकामस्यैवाचिन्त्यनिजमायया तत्तत्पूर्वकर्मानुसारेण प्रवर्तकत्वात् । ननु भक्ताननुगृह्णतोऽभक्तान्निगृह्णतश्च वैषम्योपलम्भात्कथमाप्तकामत्वमित्यत आह—अज्ञानेनेति । निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्ये-

वमज्ञानेन सर्वत्र समः परमेश्वर इत्येवंभूतं ज्ञानमावृतम्, तेन हेतुना जन्तवो जीवा मुह्यन्ति भगवति वैषम्यं मन्यन्त इत्यर्थः ॥ १५ ॥

**स० टी०**—ननु श्रुतौ स्मृतौ कर्ता प्रसिद्धो जीव एव हि ॥ ईशः कारयिता सिद्धस्तद्विरुद्धमिहोच्यते ॥ १ ॥ माया विद्याभिधा शक्तिः स्वभावाख्या प्रवर्तते ॥ यमिच्छति स उन्नेतुं पुण्यं तं कारयत्यजः ॥ २ ॥ यमिच्छति त्वधो नेतुं पापं तं कारयत्यसौ ॥ अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः ॥३॥ ईश्वरप्रेरितो गच्छेत्स्वर्गं वाऽशुभमेव वा ॥ इति श्रुतिस्मृतिभ्यां च निर्णीतेनाध्वना यतः ॥ ४ ॥ कर्तृत्वप्रेरकत्वाभ्यामात्मनोरीशजीवयोः ॥ भोक्तृत्वभोजयितृत्वधर्माभ्यां लेपसंभवात् ॥ ५ ॥ मैवं वस्तुत आत्मायं विभुत्वात्परमेश्वरः ॥ जीवस्य कस्यचित्पापं नादत्ते सुकृतं तथा ॥ ६ ॥ वस्तुतो नास्ति कर्तृत्वं जीवस्यासङ्गिनो विभोः ॥ कारयितृत्वमप्येवं नेश्वरस्यास्ति वस्तुतः ॥ ७ ॥ अज्ञानेनावृतेनैवावृत्तिविक्षेपशालिना ॥ मायाख्येनान्ध्यतमसाच्छादितं चिद्घनात्मकम् ॥ ८ ॥ जीवेश्वरजगद्भेदभ्रमाधिष्ठानमद्वयम् ॥ स्वप्रकाशं परानन्दं ज्ञानं तेनेह जन्तवः ॥ ९ ॥ स्वरूपावरणेनैव विक्षेपं यान्ति सर्वशः ॥ मातृमानप्रमेयादिमोहं दुःखैकसंकटम् ॥ १० ॥ प्राप्नुवन्ति मुधा जीवा भ्रान्तिज्ञानवशीकृताः ॥ अकर्त्रभोक्तृपरमानन्दात्मा वृत्तिहेतुकः ॥ ११ ॥ जीवेश्वरजगद्भेदभ्रमो मूढधियां भवेत् ॥ तस्यां दशायां मूढानामवभासानुवादिनी ॥ १२ ॥ वास्तवाद्वैतबोधाय श्रुतिस्तदनुगा स्मृतिः ॥ अत आविद्यकैर्धर्मैः कर्तृत्वादिभिरीश्वरः ॥ १३ ॥ जीवो वा लिप्यते नैव श्रीहरेरेष आशयः ॥ ईश्वराशयमाश्रित्य ब्रह्मात्मैक्यं विचार्य च ॥ १४ ॥ अकर्त्रात्मस्वरूपं स्वं निश्चिन्वन्ति विवेकिनः ॥ १५ ॥ १५ ॥

**भा० टी०**—ननु यः परमेश्वरैकशरणो ब्रह्मणि संन्यस्तसमस्तकर्मा यानि पुण्यपापानि करोति तानि क गच्छन्ति लिप्यते न स पापेन पद्मपत्रमिवाम्भसेत्यनेन तस्य लेपाभावोक्तेः, तथाच स्वस्य भक्तस्य पुण्यं च पापं च तदनुग्रहार्थं भगवानादत्त इति चेत्तत्राह—नेति । विभुः परमेश्वरः कस्यचित्स्वभक्तस्यापि पापं नादत्ते न गृह्णाति तथा भक्तैः समर्पितं सुकृतं पूर्णकामत्वान्न चैवादत्ते । ननु परमार्थतो जीवस्यापीश्वराव्यतिरेकात्कर्तृत्वाद्यभावः ईश्वरस्य सुतरामतः किमर्थमीश्वरात्स्वस्य भेदं प्रकल्प्य परमेश्वरो भजनीयोऽहं तस्य भक्तस्तदर्थं मया पूजायागदानहोमादिलक्षणं कर्मानुष्ठेयमिति बुद्ध्या परमेश्वरैकशरणैरन्यैश्चाहं कर्म करोमि कारयामि तस्य फलं भोक्ष्ये भोजयामीति बुद्ध्या कर्माण्यनुष्ठीयन्त इति चेत्तत्राह—अज्ञानेनावृतं कर्तृत्वादिविनिर्मुक्तोहमस्मीति विवेकज्ञानम् । वसिष्ठोऽप्याह ‘ विवेकमाच्छादयति जगन्ति जनयत्यलम् ’ इति पूर्वप्रस्तुताऽविद्या तेन जन्तवो मुह्यन्ति मोहं गच्छन्ति यथा शुक्तिज्ञानं शुक्त्यज्ञानेनावृतं तेन रजतमिदमिति पुरुषाणां मोहस्तथाऽहमुपासक ईश्वरार्थं कर्म करोम्यहं कर्ता कारयिता भोक्ता भोजयितेत्येवं मुह्यन्तीत्यर्थः । ज्ञानं जीवेश्वरजगद्भेदभ्रमाधिष्ठानभूतं स्वप्रकाशं सच्चिदानन्दरूपं परमार्थमिति तु लोकप्रसिद्धज्ञानपदार्थत्यागे बीजाभावमभिप्रेत्याचार्यैर्न व्याख्यातमिति बोध्यम् । एतेन ननु भक्ताननुगृह्णतोऽभक्तान् निगृह्णतश्च वैषम्योपलम्भात्कथमाप्तकामत्वमत आह—अज्ञानेनेति । निग्रहोऽपि दण्डरूपोऽनुग्रह एवेत्येवमज्ञानेन सर्वत्र समः परमेश्वर इत्येवंभूतं ज्ञानमावृतं तेन हेतुना जन्तवो जीवा मुह्यन्ति भगवति वैषम्यं मन्यन्त इत्यर्थ इति प्रत्युक्तम् । ज्ञानं प्रकाशयति ज्ञाननिर्धूतकल्मषा इत्यत्राभिमततद्व्यतिरिक्तज्ञानपदार्थकल्पनानुपपत्तेश्च । यत्त्वितरैः स्वभावस्तु प्रवर्तत इत्यत्रान्तःकरणं प्रवर्तत इति व्याख्याय नन्वेवं सति देवदत्तः पापी यज्ञदत्तः सुकृतीत्यादिव्यवहाराणां का गतिरित्यत आह—नादत्ते इति । चिच्चिदात्मा कस्य ज्ञानशक्तिक्रियाशक्त्याधारत्वगुणयोगात्कशब्दस्यान्तःकरणस्य पापं सुकृतं च नादत्ते नात्मसंबन्धि करोति । तत्र हेतुमाह—विभुरिति अपरिणामीत्यर्थः । कथं तर्ह्ययं लोकव्यवहारस्तत्राह—अज्ञानेनेति । अज्ञाना-

ज्ञानपरिणामरूपेणान्तःकरणेन ज्ञानं स्वरूपमावृतम् अन्योन्यतादात्म्याध्यासविषयभावं गमितमित्यर्थः । तेन कारणेन जन्तवोऽज्ञा मनुष्या मुह्यन्ति आत्मगतत्वेन सुकृतदुष्कृतादि व्यवहरन्तीत्यर्थ इति व्याख्यातं तदुपेक्ष्यं, मुख्यवृत्त्या सम्यग्वाक्यार्थसंभवे गौण्यादिवृत्त्याश्रयणस्य क्लिष्टकल्पनायाश्चान्याय्यत्वात् ॥ १५ ॥

प० टी०–अत एवाह–नादत्त इति । विभुर्व्यापको गगनवत्सर्वसमः परमेश्वरः कस्यचित्पापं सुकृतं वा नादत्ते नाददाति परिपूर्णत्वादवाप्तसकलकामत्वात्, किंत्वज्ञानेन ज्ञानमावृत्तं तेन हेतुना जन्तवोऽज्ञा जीवा मुह्यन्ति ततः सदसद्वा कर्म कुर्वन्तीत्यर्थः ॥ १५ ॥

शा० टी०–फलसंयोगे स्वातन्त्र्याभावं जीवस्य व्यनक्ति–नादत्त इति । विभुः जडापेक्षया समर्थो जीवः कस्यचिद्दुराचारस्य सकाशात्तज्जन्यं पापं स्वातन्त्र्येण नादत्ते सुकृतं पुण्यं च स्वातन्त्र्येण नैवादत्ते । एवं क्रियायामदृष्टे च ज्ञेयम् । यद्वा भगवत एव कर्तृत्वे कर्मलेपः स्यादित्यत आह–नादत्त इति । विभुः स्वतन्त्र ईश्वरः विभुत्वादेव कस्यचित्कर्मणः सकाशात्पापं सुकृतं वा नादत्त इत्यर्थः । न पुण्यपापलेपवान्भवतीत्यर्थः । नन्वेवं सर्वत्र स्थित्वा स्वातन्त्र्येण कर्ता ईश्वरोऽस्ति चेत्कथं न दृश्यत इत्यत आह–अज्ञानेनेति । तेनाज्ञानेनावृतबुद्धित्वेन मुह्यन्ति भगवन्तं न जानन्ति ॥ १५ ॥

**ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ॥**
**तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ॥ १६ ॥**

त० टी०–स्यादेतत्तथाऽप्यनाद्यज्ञानावृतज्ञानाः सर्वेऽपि कुतो न मुह्यन्ति यतो मोहहीना अपि केचिद्दृश्यन्त इत्यपेक्षायां सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत इति पूर्वोक्तं ज्ञानं तत्र हेतुरित्याह—ज्ञानेनेति । अज्ञानेनावृतज्ञानेष्वपि सर्वात्मसु येषां भगवत्कृपाकटाक्षविषयभूतानां जीवात्मनां वेदान्ततत्त्वसाक्षात्कारवद्गुरूपसदनपूर्वकतदुपदिष्टशास्त्रार्थमनननिदिध्यासनाभ्यासजनितेन आत्मनो देहेन्द्रियादिविविक्तात्मस्वरूपविषयेण मनोवृत्तिरूपेण ज्ञानेन तज्ज्ञानावरणमनादिकर्मसंचयरूपमज्ञानं नाशितं तेषां तद्धर्मभूतं स्वाभाविकं ज्ञानं कर्तृपरं देहेन्द्रियादिभ्योऽत्यन्तविलक्षणं चैतन्यं त्वंपदार्थस्वरूपं कर्म आदित्यवदुदयमात्रेणैव प्रकाशयति अन्यदपीष्टानिष्टबन्धमोक्षहेतुभूतं सर्वं वस्तु प्रकाशयतीत्यतो न मुह्यन्तीत्यर्थः । अत्र तेषामादित्यवज्ज्ञानं प्रकाशयतीत्यज्ञाननाशानन्तरमप्यात्मनां बहुत्वाभिधानादुपाधिसंबन्धगन्धस्यापि वक्तुमशक्यत्वादेकात्मवादिनः स्पष्टं भगवता निरस्ताः । तेषामादित्यवज्ज्ञानमिति षष्ठ्या ज्ञानस्य स्वरूपाद्भेदनिर्देशात्तत्संबन्धाभिधानाच्च ज्ञातृज्ञानयोः प्रभाप्रभावतोरिव धर्मिधर्मभावसिद्ध्या स्वरूपातिरिक्तज्ञानानङ्गीकारिणो गुणगुणिनोरैक्याङ्गीकारिणश्च निरस्ता ज्ञेयाः । एतेन बद्धावस्थायां संकुचितप्रभस्य घटावृतदीपस्येव कर्मनिर्मितस्थूलसूक्ष्मदेहेन धर्मभूतज्ञानस्यैव संकोचः, न त्वात्मस्वरूपान्यथाभावः मोक्षदशायां घटात्मकावरणध्वंसे दीपप्रभाप्रकाशवत् सकारणलिङ्गशरीरध्वंसे धर्मभूतज्ञानस्यैव विकासो, नतु स्वरूपान्तरापत्तिरित्यपि सूचितम् । "यथोदपानखननात्क्रियते न जलान्तरम् । सदेव नीयते व्यक्तिमसतः संभवः कुतः ॥ यथा न क्रियते ज्योत्स्ना मलप्रक्षालनान्मणेः । तथा हेयगुणध्वंसादवबोधादयो गुणाः । प्रकाश्यन्ते न जन्यन्ते नित्या एवात्मनो हि ते' ॥ १६ ॥

म० टी०–तर्हि सर्वेषामनाद्यज्ञानावृतत्वात्कथं संसारनिवृत्तिः स्यादत आह–ज्ञानेनेति । तदावरणविक्षेपशक्तिमदनाद्यनिर्वाच्यमनृतमनर्थव्रातमूलमज्ञानमात्माश्रयविषयमविद्यामायादिशब्दवाच्यमात्मनो ज्ञानेन गुरूपदिष्टवेदान्तमहावाक्यजन्येन श्रवणमनननिदिध्यासनपरिपाकनिर्मलान्तःकरणवृत्तिरूपेण निर्विकल्पकसाक्षात्कारेण शोधिततत्त्वंपदार्थाभेदरूपशुद्धसच्चिदानन्दाखण्डैकरसवस्तुमात्रविषयेण नाशितं बाधितं काल-

त्रयेऽप्यसदेवासत्तयाऽज्ञानमधिष्ठानचैतन्यमात्रतां प्रापितं शुक्ताविव रजतं शुक्तिज्ञानेन येषां श्रवणमननादिसाधनसंपन्नानां भगवदनुगृहीतानां मुमुक्षूणां तेषां तज्ज्ञानं कर्तृ आदित्यवत् यथादित्यः स्वोदयमात्रेणैव तमो निरवशेषं निवर्तयति नतु कंचित्सहायमपेक्षते तथा ब्रह्मज्ञानमपि शुद्धसत्त्वपरिणामत्वाद्व्यापकप्रकाशरूपं स्वोत्पत्तिमात्रेणैव सहकार्यन्तरनिरपेक्षतया सकार्यमज्ञानं निवर्तयत्परं सत्यज्ञानानन्तानन्दरूपमेकमेवाद्वितीयं परमात्मतत्त्वं प्रकाशयति प्रतिच्छायाग्रहणमात्रेणैव कर्मान्तरेणाभिव्यनक्ति । अत्राज्ञानेनावृतं ज्ञानेन नाशितमित्यज्ञानस्यावरणत्वज्ञाननाश्यत्वाभ्यां ज्ञानाभावरूपत्वं व्यावर्तितं नह्यभावः किंचिदावृणोति न वा ज्ञानाभावो ज्ञानेन नाश्यते स्वभावनाशरूपत्वात्तस्य तस्मादहमज्ञो मामन्यं च न जानामीत्यादिसाक्षिप्रत्यक्षसिद्धं भावरूपमेवाज्ञानमिति भगवतो मतम् । विस्तरस्त्वद्वैतसिद्धौ द्रष्टव्यः। येषामिति बहुवचनेनानियमो दर्शितः । तथाच श्रुतिः "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणां तदिदमप्येतर्हि य एवं वेदाहं ब्रह्मास्मीति स इदं सर्वं भवति" इत्यादिः। यद्विषयं यदाश्रयमज्ञानं तद्विषयतदाश्रयप्रमाणज्ञानात्तन्निवृत्तिरिति न्यायप्राप्तनियमं दर्शयति । तत्राज्ञानगतमावरणं द्विविधं एकं सतोऽप्यसत्त्वापादकं अन्यत्तु भातोऽप्यभानापादकम् । तत्राद्यं परोक्षापरोक्षसाधारणप्रमाणज्ञानमात्रान्निवर्तते अनुमितेऽपि वह्न्यादौ पर्वते वह्निर्नास्तीत्यादिभ्रमादर्शनात् । तथा सत्यं ज्ञानमनन्तं ब्रह्मास्तीति वाक्यात्परोक्षनिश्चयेऽपि ब्रह्म नास्तीति भ्रमो निवर्तत एव । अस्त्येव ब्रह्म किंतु मम न भातीत्येकं भ्रमजनकं द्वितीयमभानावरणं साक्षात्कारादेव निवर्तते । स च साक्षात्कारो वेदान्तवाक्येनैव जन्यते निर्विकल्पक इत्याद्यद्वैतसिद्धावनुसंधेयम् ॥ १६ ॥

शं० टी०—ननु सर्वेषामज्ञानावृतज्ञानत्वे कथं मुमुक्षूणामात्मज्ञानाविर्भावः कथं वा तेषां मुक्तिरित्याकाङ्क्षायामीश्वरप्रीत्यै कृतनित्यनैमित्तिककर्मानुष्ठानेन यदा चित्तपरिपाकस्तदा सम्यग्ज्ञानमुदेत्यज्ञानं नाशयित्वा परं तत्त्वं प्रकाशयति तदा ते मुक्तिं गच्छन्तीत्याशयेनाह—ज्ञानेनेति द्वाभ्याम् । तुशब्दो ज्ञानव्यतिरिक्तस्याज्ञाननाशकत्वासंभवद्योतनार्थः । कर्मोपास्तिभ्यां परिपक्वचित्तानां येषां ज्ञानेन तु श्रवणादिसमुत्पन्नेनात्मविषयकेणात्मनो बुद्धेः संबन्धिबुद्धिनिष्ठमित्येतज्ज्ञाना ज्ञानयोर्बुद्धिधर्मत्वादावृतिरनावृतिश्च पटलेन चक्षुष एव नतु घटस्य तद्वदज्ञानं ज्ञानं च बुद्धेरेव नात्मनस्तु अन्यथाहमिति प्रत्ययानुत्पत्तेस्ततो बुद्धिसंबन्ध्येवाऽज्ञानं येन मोहिताः संसरन्ति प्राणिनो यत्सर्वानर्थबीजं तदज्ञानं नाशितं भवति सूर्योदयेन तिमिरमिव विध्वस्तं भवति तेषां शुद्धात्मनां समुत्पन्नं तज्ज्ञानमादित्यवद्यथोदित आदित्यः पदार्थजातं प्रकाशयति तथा तत्सर्ववेदान्तप्रसिद्धं सत्यज्ञानादिलक्षणं प्रत्यगभिन्नं परं ब्रह्म प्रकाशयति सूर्यप्रकाशेन स्थाणुरेवायमिति यथा तथा ज्ञानप्रकाशेन ब्रह्मैवाहमिति स्वं ब्रह्मैव विजानन्तीत्यर्थः ॥ १६ ॥

श्री० टी०—ज्ञानिनस्तु न मुह्यन्तीत्याह—ज्ञानेनेति । आत्मनो भगवतो ज्ञानेन येषां तद्वैषम्योपलम्भकज्ञानं नाशितं तज्ज्ञानं तेषामज्ञानं नाशयित्वा तत्परं परिपूर्णमीश्वरस्वरूपं प्रकाशयति यथा आदित्यस्तमो निरस्य समस्तं वस्तुजातं प्रकाशयति तद्वत् ॥ १६ ॥

स० टी०—तर्ह्येवं सर्वजीवानामध्यस्तानाद्यविद्यया ॥ आवृतत्वात्कथं बन्धान्मुक्तिः स्यादिति चेच्छृणु ॥ १ ॥ तदावरणविक्षेपशक्तिमद्बन्धकारणम् ॥ अविद्याख्यमनिर्वाच्यं ज्ञानेनाज्ञानमात्मनः ॥ २ ॥ गुरूपदिष्टवेदान्तवाक्यजन्येन भास्वता ॥ अखण्डसच्चिदानन्दवस्त्वैक्यविषयेण च ॥ ३ ॥ बाधितं सदधिष्ठानचिन्मात्रत्वेन बोधितम् ॥ रज्ज्वामहिस्रगादीव रज्जुज्ञानेन बाधितम् ॥ ४ ॥ येषां यथोक्तवेदान्तश्रवणादिमतां सताम् ॥ केशवानुगृहीतानां मुमुक्षूणां विपश्चिताम् ॥ ५ ॥ तज्ज्ञानं सूर्यवत्तेषां परमद्वैतचिद्घनम् ॥ प्रकाशयति चात्मानं प्रतिबिम्बग्रहेण वै ॥ ६ ॥ कर्मतामन्तरेणाभिव्यनक्तीत्याशयो हरेः ॥

ज्ञाननाश्यतयाऽज्ञानं तथैवावरकत्वतः ॥ ७ ॥ भावरूपमनिर्वाच्यमस्तीति भगवन्मतम् ॥ न ह्यभावः कश्चित्किंचिदावृणोतीति संभवेत् ॥ ८ ॥ नित्यमेव निवृत्तत्वाज्ज्ञानेनापि न नाश्यते ॥ ये ज्ञानाभावमज्ञानं तार्किकाः प्राहुराग्रहात् ॥ ९ ॥ भगवन्मतबाह्यत्वादुपेक्ष्यास्ते निराग्रहैः ॥ अतोऽज्ञोऽहं न मामन्यं जानामीति प्रतीतितः ॥ १० ॥ साक्षिप्रत्यक्षसिद्धं तद्भावरूपं हरेर्मतम् ॥ ११ ॥ त्रिगुणमनृतमान्ध्यं कल्पितं चिद्घनेऽच्छे श्रुतिशिखरविचारोद्भूतबोधेन नष्टम् ॥ निरवधिवपुरात्मा स्वात्मभासा चकास्ति भ्रमजलधरनाशे ब्रह्मसूर्योऽद्वितीयः ॥ १२ ॥ १६ ॥

भा० टी०–तर्हि सर्वेषामनादिभावरूपाज्ञानावृतज्ञानत्वाद् व्यामोहस्य निवृत्त्यभावात्संसारानिवृत्तिः कथं स्यादिति तत्राह–ज्ञानेनेति । ज्ञानेन तु गुरूपदिष्टेन शास्त्रीयेण विवेकज्ञानेन स्वपरमार्थस्वरूपविषयेण तदज्ञानं कर्तृत्वादिविनिर्मुक्तं ब्रह्माहमस्मीति परमात्माभेदास्तित्वज्ञानावरकं येषां मुमुक्षूणां नाशितं तेषामादित्यवत् यथादित्योऽस्तित्वेन भान्तमपि घटादिवस्तु तद्गतसमस्तरूपाभानापादकं तमो निवर्त्य प्रकाशयति तथा गुरूपदिष्टं ज्ञानं भावनाप्रकर्षेण भानावरणमज्ञानमपि निवर्त्य तत् श्रुतिस्मृतीतिहासपुराणादौ प्रसिद्धं परं परमार्थतत्त्वं प्रकाशयति सच्चिदानन्दानन्तात्मकं ब्रह्माहमस्मीति साक्षाद् व्यक्तीकरोतीत्यर्थः ॥ १६ ॥

प० टी०–ज्ञानिनस्तु न मुह्यन्तीत्याह–ज्ञानेनेति । तत्पूर्वमुक्तं ज्ञानावरकमज्ञानं येषामात्मन ईश्वरस्य ज्ञानेन नाशितं तेजसा तमोवदभिभूतं तेषां ज्ञानं तत्परमीश्वरं प्रकाशयति किंवदादित्यवद्, यथादित्यतेजः सकलतमस्तिरस्कृत्यादित्यं प्रकाशयति तद्वत् । यद्वात्रादित्यदृष्टान्तेनैतदुक्तं भवति यथा सूर्यकरा एव मेघत्वमवलम्ब्य सूर्यमेव छादयन्ति परंत्वादित्यकृतं दिवसस्य दिनत्वं न लुम्पन्ति । तदुक्तम्–' घनच्छन्नदृष्टिर्घनच्छन्नमर्कं यथा निष्प्रभं मन्यते चातिमूढः ' इति । इदमेवाज्ञानस्यावरणशक्तेरुदाहरणम् । एवमात्मविषयकमज्ञानमात्मानमेवावृणोति परं त्वनुभूयमानं चित्संवित्सुखरूपत्वं नाच्छादयति अयमेव ज्ञानोपाय इत्यर्थः । श्रुतिरपि वाजसनेयसंहितासु–" ईशावास्यमिदं सर्वं यत्किंच जगत्यां जगत् । तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम् " इति । भाष्यम्–जगत्यां पृथिव्यामिदं शुक्तिरजतवत्पुरो दृश्यमानं यत्किंचित्सर्वं नामरूपकर्मात्मकं गच्छतीति जगन्नश्वरमसत्यमीशा सत्यत्वाद्यैश्वर्यवता परमेश्वरेण कृत्वा वास्यं वस आच्छादने आच्छादनीयं तिरस्कार्यम् । अत्र तिरस्करणसामर्थ्यमीशेतिपदेन द्योतितम् । यथा दीपेन तमस्तिरस्क्रियते न तु तमसा दीप इत्यर्थः । ततस्तेन जगदाभासेन त्यक्तेन दूरतोऽपास्तेन कृत्वावशिष्टं कस्य परब्रह्मणः सुखं भुञ्जीथाः स्वित् परं तु विषयसुखं मा गृधः गृधु अभिकाङ्क्षायां माभिकाङ्क्षेत्यर्थः ॥ १६ ॥

रा० टी०–ननु ज्ञानस्याज्ञानावृतत्वे तेनाज्ञाननाशायोगात् विनाशकान्तरस्य चाभावात् ज्ञानार्थयोर्योगसंन्यासयोर्वैयर्थ्यमित्यत आह–ज्ञानेनेति । द्विविधं हि ज्ञानं स्वरूपं वृत्तिरूपं चेति । यद्यपि स्वरूपज्ञानमज्ञानावृतं नाज्ञाननाशकं तथाप्यात्मनो भगवतो ज्ञानेन परोक्षवृत्तिज्ञानेन येषामज्ञानं नाशितं शिथिलं तेषामेव ज्ञानं भगवदपरोक्षज्ञानं तत्परं ब्रह्मादित्यवत्प्रकाशयतीत्यर्थः ॥ १६ ॥

## तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः ॥
## गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ १७ ॥

त० टी०–आत्मस्वरूपप्रकाशे सति–तद्बुद्धय इति । तस्मिन्नात्मस्वरूपे व्यवसायात्मिका बुद्धिर्येषां ते तथा तदात्मानः विषयान्तरनिरासेन तत्प्रवणमनसः तन्निष्ठास्तच्चिन्तनाभ्यासनिरताः तत्परायणास्तत्पदार्थस्वरूपमेव परमयनमाश्रयो येषां ते तेन ज्ञानेन निर्धूतकल्मषा निःशेषेण ध्वस्तानादिपापाः सन्तोऽपुनरावृत्तिं यथा प्रागज्ञानावृतत्वेन संसारे वर्तन्ते न तथा पुनः संसारे वर्तन्ते, अपि तु विषमाकारेऽशेषदोषवत्यपि संसारे परिशुद्धात्मदर्शनेन संसारधर्मास्पृष्टस्वभावा एव भवन्तीत्यर्थः ॥ १७ ॥

**म० टी०-तद्बुद्धय इति।** ज्ञानेन परमात्मतत्त्वप्रकाशे सति तस्मिन् ज्ञानप्रकाशिते परमात्मतत्त्वे सच्चिदानन्दघन एव बाह्यसर्वविषयपरित्यागेन साधनपरिपाकात्पर्यवसिता बुद्धिरन्तःकरणवृत्तिः साक्षात्कारलक्षणा येषां ते तद्बुद्धयः सर्वदा निर्बीजसमाधिभाज इत्यर्थः । तत्किं बोद्धारो जीवा बोद्धव्यं ब्रह्मतत्त्वमिति बोद्धृबोद्धव्यलक्षणभेदोऽस्ति नेत्याह–तदात्मानः तदेव परं ब्रह्मात्मा येषां ते तथा बोद्धृबोद्धव्यभावो हि मायाविजृम्भितो न वास्तवाभेदविरोधीति भावः। ननु तदात्मान इति विशेषणं व्यर्थं अविद्वद्व्यावर्तकं हि विद्वद्विशेषणम् अज्ञा अपि हि वस्तुगत्या तदात्मान इति कथं तद्व्यावृत्तिरिति चेत् न, इतरात्मत्वव्यावृत्तौ तात्पर्यात् । अज्ञा हि अनात्मभूते देहादावात्माभिमानिन इति न तदात्मान इति व्यपदिश्यन्ते विज्ञास्तु निवृत्तदेहाद्यभिमाना इति विरोधिनिवृत्त्या तदात्मान इति व्यपदिश्यन्त इति युक्तं विशेषणम् । ननु कर्मानुष्ठानविक्षेपे सति कथं देहाद्यभिमाननिवृत्तिरिति तत्राह–तन्निष्ठाः तस्मिन्नेव ब्रह्मणि सर्वकर्मानुष्ठानविक्षेपनिवृत्त्या निष्ठा स्थितिर्येषां ते तन्निष्ठाः सर्वकर्मसंन्यासेन तदेकविचारपरा इत्यर्थः । फलरागे सति कथं तत्साधनभूतकर्मत्याग इति तत्राह–तत्परायणाः तदेव परमयनं प्राप्तव्यं येषां ते तत्परायणाः सर्वतो विरक्ता इत्यर्थः ।अत्र तद्बुद्धय इत्यनेन साक्षात्कार उक्तः, तदात्मान इत्यनात्माभिमानरूपविपरीतभावनानिवृत्तिफलको निदिध्यासनपरिपाकः, तन्निष्ठा इत्यनेन सर्वकर्मसंन्यासपूर्वकः प्रमाणप्रमेयगतासंभावनानिवृत्तिफलको वेदान्तविचारः श्रवणमननपरिपाकरूपः, तत्परायणा इत्यनेन वैराग्यप्रकर्ष इत्युत्तरोत्तरस्य पूर्वपूर्वहेतुत्वं द्रष्टव्यम् । उक्तविशेषणा यतयो गच्छन्त्यपुनरावृत्तिं पुनर्देहसंबन्धाभावरूपां मुक्तिं प्राप्नुवन्ति । सकृन्मुक्तानामपि पुनर्देहसंबन्धः कुतो न स्यादिति तत्राह–ज्ञाननिर्धूतकल्मषाः ज्ञानेन निर्धूतं समूलमुन्मूलितं पुनर्देहसंबन्धकारणं कल्मषं पुण्यपापात्मकं कर्म येषां ते तथा ज्ञानेनाऽनाद्यज्ञाननिवृत्त्या तत्कार्यकर्मक्षये तन्मूलकं पुनर्देहग्रहणं कथं भवेदिति भावः ।। १७ ।।

**शं० टी०–**"तेन त्यक्तेन भुञ्जीथा मा गृधः कस्यस्विद्धनम्" इत्यादिश्रुत्युक्तरीत्या विदेहकैवल्यार्थिभिः समुत्पन्नज्ञानस्य संरक्षणं कर्तव्यं सदात्मनिष्ठया स्थित्वा न किंचिद्बाह्यं द्रष्टव्यमिति बोधयितुमाह–तद्बुद्धय इति । तद्बुद्धय आदित्येन रूपमिव श्रवणादिजन्यज्ञानेन प्रकाशितं सर्ववेदान्तप्रसिद्धं सच्चिदानन्दैकरसं सर्वात्मकं यत्परं ब्रह्म तस्मिन्नेव बुद्धिर्येषां ते तद्बुद्धयः सर्वत्र ब्रह्मदर्शिनः मुमुक्षुभिः कल्पितभेदमगृहीत्वा चक्षुषा रूपमिव प्रत्यग्दृष्ट्या सदा सर्वत्र ब्रह्मैव द्रष्टव्यमित्यर्थः । सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मण्येव गृह्यमाणेऽपि ग्रहीता ग्राह्यमिति भेदः स्यात्तदा "एतस्मिन्नु दरमन्तरं कुरुते । अथ तस्य भयं भवति" इतिभेदद्रष्टुर्भयश्रवणादतोऽभेदेन द्रष्टव्यमित्याह–तदात्मान इति । तदेव परं ब्रह्मात्माऽहंप्रत्ययार्थो येषां ते तदात्मानः ब्रह्मैवाहमिति ब्रह्मण्येव स्वात्मना साक्षात्कृते अहंप्रत्ययवन्तो न तु देह इत्यर्थः । समाधिदशायां ब्रह्मण्येवाहंप्रत्यये सत्यपि विदुष आहारादौ देहेऽहंप्रत्ययश्च तेन प्रबलेन चिरकालिकेन स्थूलेन देहात्मप्रत्ययेन ब्रह्मात्मप्रत्ययो बाह्यध्वनिना नादध्वनिवद्विनश्यति ततो बाह्यं कर्म सर्वं सन्यस्याहाराद्यवस्थासु सर्वास्वपि ब्रह्मण्येवात्मत्वबुद्ध्या दृश्याऽनवगाहिन्या स्थातव्यमित्याह–तन्निष्ठा इति । तस्मिन् ब्रह्मण्यात्माकारप्रत्ययकरणमेव निष्ठा अहंबुद्धेर्नैश्चल्यं येषां ते तन्निष्ठाः स्वस्य ब्रह्मात्मनावस्थिततत्वदर्शिन एव स्थिरीभूतवृत्तय इत्यर्थः । ब्रह्मात्मत्वदर्शने स्थिरीभूतचित्तवृत्तीनामपि कचित्प्रयोजनान्तरापेक्षास्ति चेत्तया सा निष्ठा प्रतिबद्ध्यते बाह्यात्मत्वं च स्यात्ततः कार्यान्तरं बाह्यं किंचिदप्यनपेक्ष्य मुमुक्षोः सदा तदेकपरत्वेन भवितव्यमित्याह–तत्परायणा इति । तत्सच्चिदानन्दैकरसमद्वितीयं स्वात्मनाधिगतं परं ब्रह्मैव बहिरन्तः सदा बुद्धिवृत्तेश्चक्षुषो रूपवत्परं नियतमयनं गतिर्येषां ते तत्परायणा आहारविहारादौ सदा सर्वत्र ब्रह्मदर्शनं ब्रह्मण्येवात्मदर्शनं च चिदेकवृत्त्या ये न मुञ्चन्ति ते तत्परायणाः सदात्मारामा इत्यर्थः । एवं

सर्वत्र ब्रह्मदर्शनं ब्रह्मण्यात्मत्वदर्शनं तन्निष्ठत्वं तत्परायणत्वं च विदेहमुक्तेरसाधारणकारणमेतच्चतुष्टयमनुतिष्ठन्ति ये ब्रह्मविदस्त एव ज्ञाननिर्धूतकल्मषाः ज्ञानेनोक्तान्तरङ्गसाधनचतुष्टयाऽनुष्ठित्याऽप्रतिबद्धतां गतेन निर्धूतं निःशेषं प्रक्षालितं कल्मषं बौद्धं जगद्ब्रह्मणोर्ब्रह्मात्मनोश्च भेदग्रहणलक्षणं येषां ते ज्ञाननिर्धूतकल्मषाः सन्तः स्वयमपुनरावृत्तिं भूयो देहसंबन्धित्वापत्तिः पुनरावृत्तिस्तदभावोऽपुनरावृत्तिस्तां देहसंबन्धरहितां मुक्तिं गच्छन्ति ब्रह्मात्मना स्थितिदशायां गलितेऽस्मिन् देहे ब्रह्मणि वृत्तौ लीनायां सत्यां स्वयं ब्रह्माकारेणैव तिष्ठन्तीत्यर्थः ॥ १७ ॥

श्री० टी०–एवंभूतेश्वरोपासनाफलमाह–तद्बुद्धय इति। तस्मिन्नेव बुद्धिर्निश्चयात्मिका येषाम् तस्मिन्नेवात्मा मनो येषाम् तस्मिन्नेव निष्ठा तात्पर्यं येषाम् तदेव परमयनमाश्रयो येषाम् ततश्च तत्प्रसादलब्धेनात्मज्ञानेन निर्धूतं निरस्तं कल्मषं येषां ते अपुनरावृत्तिं मुक्तिं यान्ति ॥ १७ ॥

स० टी०–ज्ञानप्रकाशिते तस्मिँस्तत्त्वे सच्चित्सुखात्मनि ॥ बाह्यवस्तुपरित्यागाद्बुद्धिर्येषां सुनिष्ठिता ॥१॥ तदेवात्मा परं तत्त्वं येषामद्वैतचेतसाम् ॥ तस्मिन्नेव चिदानन्दे स्थितिर्येषां स्थिता सदा ॥ २ ॥ प्राप्तव्यं तत्पदं येषां विरक्तानां परं सुखम् ॥ साक्षात्कारो निजध्यानं श्रवणादि निरन्तरम् ॥ ३ ॥ वैराग्यादिप्रकर्षश्च पूर्वपूर्वस्य कार्यता ॥ उत्तरोत्तरहेतूनां विशेषणचतुष्टये ॥ ४ ॥ एतैर्विशेषणैर्युक्ता मोक्षं गच्छन्त्यनामयम् ॥ ज्ञानेनोन्मूलितं येषां कल्मषं बन्धकारणम् ॥ ५ ॥ स कार्याज्ञानबाधेन ब्रह्मात्मैक्यधियां सताम् ॥ कथं तन्मूलको बन्धो भवेद्देहपरिग्रहः ॥ ६ ॥ १७ ॥

भा० टी०–तद्बुद्धय इति। तत्परमार्थतत्त्वं ज्ञानप्रकाशितं तस्मिन् गता बुद्धिर्येषां ते। ननु ते किं तस्माद्व्यतिरिक्ता नेत्याह–तदेव परं ब्रह्मात्मा स्वरूपं येषां ते। तत्र हेतुमाह–यतस्तस्मिन् ब्रह्मणि निष्ठा निदिध्यासनात्मकोऽभिनिवेशो येषां ते। तत्रापि हेतुमाह–यतस्तदेव परमयनं परा गतिर्येषां ते। तदेव परां गतिं बुद्ध्वा इहामुत्रार्थभोगे विरज्य तच्छ्रवणतन्मननैकपरत्वेन तत्परायणा इत्यर्थः। एवंभूता अपुनरावृत्तिं मोक्षं गच्छन्ति यतो ज्ञानेन ब्रह्मात्मसाक्षात्कारेण नितरां मूलोच्छेदेन धूतो नाशितः कल्मषः पुनरावृत्तिकारणीभूतः पापादिरूपो येषां ते ॥ १७ ॥

प० टी०–अथेश्वरोपासनया मोक्षाधिकारिणां निष्ठामाह–तद्बुद्धय इति। तस्मिन्नीश्वरे निश्चयात्मिका बुद्धिर्येषां ते तथा तद्विषये आत्मा प्रयत्नो येषां ते तथा तस्मिन्नेव निष्ठा पर्यवसानं येषां ते तथा तदेव परायणमाश्रयो येषां ते तथाविधा ज्ञाननिर्धूतकल्मषाः सन्तोऽपुनरावृत्तिं गच्छन्ति ॥ १७ ॥

रा० टी०–अपरोक्षज्ञानाव्यवहितसाधनमाह–तद्बुद्धय इति। न सकृत्परोक्षज्ञानेनालं किंतु आवृत्तिरसकृदुपदेशादित्युक्तदिशा पुनः पुनस्तत्र हरौ बुद्धिर्येषां ते तद्बुद्धयः स एव आत्मा आदानादिकर्ता स्वामी येषां ते तदात्मानः तन्निष्ठास्तस्मिन्नचञ्चलाः स एव परमयनं येषां ते तत्परायणाः तथा ज्ञानिनः सन्तः अत एव च ज्ञाननिर्धूतकल्मषाः भगवदपरोक्षज्ञानेन निर्धूतपाप्मानोऽपुनरावृत्तिं मुक्तिं गच्छन्ति ॥ १७ ॥

**विद्याविनयसंपन्ने ब्राह्मणे गवि हस्तिनि ॥**
**शुनि चैव श्वपाके च पण्डिताः समदर्शिनः ॥ १८ ॥**

त० टी०–एतदेवोपपादयति–विद्येति। विद्या शास्त्रार्थज्ञानं विनयो विनीतत्वं ताभ्यां संपन्ने ब्राह्मणे सात्त्विके सर्वप्राण्युत्तमे गवि पशौ धेन्वां वृषभे वा संस्कारहीने मध्यमे राजसे हस्तिनि तामसे शुनि च श्वपाके चाण्डाले चात्यन्ततामसेऽत्यन्ताधमे चेत्यादिष्वत्यन्तविषमाकारेष्वपि पण्डितास्तत्त्वयाथात्म्यविदः समदर्शिनः सममात्मस्वरूपं पश्यन्त्येवंशीलाः उत्तमाधमादिवैषम्यं प्रकृतिकार्यदे-

हनिष्टं न त्वात्मसु, आत्मनां स्वरूपं तु ज्ञानस्वरूपत्वेन सदा सर्वत्र दोषास्पृष्टतया सममित्येवंदर्शनशीला भवन्तीत्यर्थः ॥ १८ ॥

म० टी०—देहपातादूर्ध्वं विदेहकैवल्यरूपं ज्ञानफलमुक्त्वा प्रारब्धकर्मवशात्सत्यपि देहे जीवन्मुक्तिरूपं तत्फलमाह—विद्येति । विद्या वेदार्थपरिज्ञानं ब्रह्मविद्या वा विनयो निरहंकारत्वमनौद्धत्यमिति यावत् ताभ्यां संपन्ने ब्रह्मविदि विनीते च ब्राह्मणे सात्त्विके सर्वोत्तमे तथा गवि संस्कारहीनायां राजस्यां मध्यमायां तथा हस्तिनि शुनि श्वपाके चात्यन्ततामसे सर्वाधमेऽपि सत्त्वादिगुणैस्तज्जैश्च संस्कारैरस्पृष्टमेव समं ब्रह्म द्रष्टुं शीलं येषां ते समदर्शिनः पण्डिता ज्ञानिनः यथा गङ्गातोये तडागे सुरायां मूत्रे वा प्रतिबिम्बितस्यादित्यस्य न तद्गुणदोषसंबन्धस्तथा ब्रह्मणोऽपि चिदाभासद्वारा प्रतिबिम्बितस्य नोपाधिगतगुणदोषसंबन्ध इति प्रतिसंदधानाः सर्वत्र समदृष्ट्यैव रागद्वेषराहित्येन परमानन्दस्फूर्त्या जीवन्मुक्तिमनुभवन्तीत्यर्थः ॥१८॥

शं० टी०—तदुद्धय इत्यनेन ब्रह्मविद्यतीनां सर्वदा कर्तव्यत्वेन यद्विहितं कल्पितनामरूपाद्यग्रहणेन सर्वत्र ब्रह्मदर्शनं तद्विशदयति—विद्याविनयसंपन्न इति । विद्याविनयसंपन्ने विद्या सर्ववेदशास्त्राधीतिस्तदर्थज्ञानं वा विनयो नम्रता उपशान्तिर्वा ताभ्यामन्यैश्च स्वधर्मपरत्वप्रतिग्रहविमुखत्वसत्यशौचदयादिभिः सुगुणैः संपन्ने जगत्पूज्ये ब्राह्मणे जात्या गुणेन धर्मेण च परमनिकृष्टे स्वप्राणवृत्त्यै श्वानमपि पचतीति वा श्वो भवितव्यमिति पचतीति वा श्वपाकश्चण्डालस्तस्मिन्नपि जात्या संचारेण क्षीरादिना च जगत्पावन्यां गवि धेनौ जात्यादिभिरतिनिकृष्टे तुच्छभुजि शुनि शुनके राजपूज्ये हस्तिनि भद्रगजे चकाराल्लोष्टाश्मकाञ्चनादिषु सर्वत्र तत्तद्द्रव्यतत्तद्गुणतत्तद्धर्मतत्तत्कर्मभिरस्पृश्यमानं सर्वदाकाशवदेकरूपेण समरसतया तिष्ठतीति परं ब्रह्म सममित्युच्यते तदेव सर्वत्र द्रष्टुं शीलं येषां ते समदर्शिनः आरोपितनामरूपाद्यगृहीत्वैव सर्वत्राधिष्ठानभूतब्रह्ममात्रदर्शनपराः पण्डिता इत्यर्थः । परावरैकत्वविज्ञानपौष्कल्यवन्तः पण्डिताः सदा समदर्शिन एव भवन्ति न क्वचिद्विषमदर्शिन इति समदर्शित्वं पण्डितानां धर्म इति सूचितं भवति ॥ १८ ॥

श्री० टी०—कीदृशास्ते ज्ञानिनो येऽपुनरावृत्तिं गच्छन्तीत्यपेक्षायामाह—विद्याविनयसंपन्न इति । विषमेष्वपि समं ब्रह्मैव द्रष्टुं शीलं येषां ते पण्डिता ज्ञानिन इत्यर्थः । तत्र विद्याविनयाभ्यां युक्ते ब्राह्मणे च शुनो यः पचति तस्मिन् श्वपाके चेति कर्मणा वैषम्यं, गवि हस्तिनि शुनि चेति जातितो वैषम्यं दर्शितम् ॥ १८ ॥

स० टी०—उक्त्वा ज्ञानफलं मोक्षं देहपातादनन्तरम् ॥ जीवन्मुक्तिफलं प्राह देहे सत्यपि तद्विदाम् ॥ १ ॥ सात्त्विके ब्राह्मणे श्रेष्ठे विनीते तत्त्वदर्शिनि ॥ गवि संस्कारहीनायां राजस्यां मध्यमाकृतौ ॥२॥ अत्यन्ततामसे सर्वाधमे हस्त्यादिकत्रये ॥ सत्त्वादिकगुणैस्तज्जैः संस्कारैरत्यसङ्गिकम् ॥ ३ ॥ द्रष्टुं शीलं समं ब्रह्म येषां ते ज्ञानिनो बुधाः ॥ सूर्यो गाङ्गे जले कौपे सुरायां प्रतिबिम्बितः ॥ ४ ॥ तद्गुणैर्दोषसंबन्धैरसंस्पृष्टो यथा भवेत् ॥ तथा ब्रह्म चिदाभासद्वारेण प्रतिबिम्बितम् ॥ ५ ॥ नोपाधिगुणदोषाभ्यां संबन्धं याति चिद्घनम् ॥ इत्येवं मन्यमानास्ते सर्वत्र समदर्शिनः ॥ ६ ॥ नीरागाः स्वसुखस्फूर्त्या जीवन्मुक्तिं भजन्ति वै ॥ ७ ॥ १८ ॥

भा० टी०—येषां ज्ञानेन नाशितमात्मनोऽज्ञानं ते पण्डिता मोक्षगामिनः कथमात्मतत्त्वं पश्यन्तीति तत्राह—विद्येति । विद्या आत्मबोधो विनय उपशम औद्धत्याद्यभावः दैन्यवारणाय विद्यापदमौद्धत्यादिवारणाय विनयपदं ताभ्यां संपन्ने युक्ते उत्तमसंस्कारवति सात्त्विके ब्राह्मणे मध्यमायां राजस्यां गवि संस्काररहितायामधमे केवलतामसे हस्तिनि गजे शुनि सारमेये श्वपाके चाण्डाले तामसानां बहूनामुपादानं तु सात्त्विकराजसापेक्षया तेषां बाहुल्यसूचनार्थं समं सत्त्वादिगुणैस्तज्जन्यसंस्कारैश्चास्पृष्टमेकमविक्रियं गङ्गाजले

तडागोदके मूत्रादाववच्छिन्नाकाशमिव ब्रह्म द्रष्टुं शीलं येषां ते पण्डिताः समदर्शिन इत्यर्थः। यत्तु ननु ज्ञानसंन्याससंपन्नानामेव जीवे कोऽयमतिशयो यत्परैक्यं नाम। नहि मनुष्याणां लोके उत्तममध्यमतया व्यवह्रियमाणानां पशूनां वा तादृशानां न जीवोऽस्ति सन्वा न परैक्यं प्रतिपद्यते इत्याशङ्क्याह—विद्येति। अत्र गवि हस्तिनि शुनीति गोत्वादिजात्याधारपिण्डरूपोपाधीनामुत्तममध्यमाधमानामुक्तत्वान्मानुषपिण्डानामप्यात्मोपाधीनामेवं विवेको ज्ञेयः ब्राह्मणस्योत्तमस्य पृथगभिधानात्। विद्यासंपन्नाववशिष्टौ क्षत्रियवैश्यपिण्डौ विनयसंपन्नस्त्रैवर्णिकसेवामात्रधर्मकः शूद्रपिण्डः पिण्डसमुदायाभिप्रायं चैकवचनम्। तथोत्तमो ब्राह्मणः क्षत्रियवैश्यौ मध्यमौ ततः किंचिन्निकृष्टः शूद्रः सर्वथाधमः श्वपाकः एतेषु मानुषपशूत्तममध्यमाधमेषु पिण्डेष्वात्मोपाधिषु सत्स्वप्यनुपहितं सर्वत्राविशेषत्वात् समं ब्रह्मैव तत्र तत्र प्रविष्टं पण्डिताः पश्यन्ति नत्वात्मानमेव ब्रह्मात्मकं पश्यन्तीत्यर्थः इतीतरे व्याचख्युः तन्मन्दं, सर्वभूतात्मभूतब्रह्मदर्शिन इत्येतावतैवोक्तार्थे सिद्धेऽमूलोक्तानामुपाधिभेदानां क्लिष्टकल्पनया प्रदर्शितानां समपदस्य च वैयर्थ्यप्रसङ्गात्॥ १८॥

प० टी०—अथ सदाचारपर्यवसितं समदर्शित्वमाह—विद्येति। पण्डिता ज्ञानिनो ब्राह्मणादिषु समदर्शिनो भवन्ति सर्वत्रात्मदर्शिनो बाह्याकारं न गणयन्तीत्यर्थः॥ १८॥

रा० टी०—परमेश्वररूपाणां सर्वत्र साम्यदर्शनं चापरोक्षज्ञानसाधनमित्याशयवानाह—विद्येति। पण्डिताः परोक्षज्ञानिनः विद्याविनयसंपन्नब्राह्मणादिषु विषमेषु स्थितं हरिं समं गुणेषु दोषाभावे च समं तारतम्याभावं च पश्यन्तीति समदर्शिन इत्यर्थः। अस्य श्लोकस्य भगवद्विषयता निर्दोषं हीत्युत्तरवाक्यगम्या अपरोक्षज्ञानहेतुता च प्रकरणगम्येति ज्ञेयम्॥ १८॥

**इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः॥**
**निर्दोषं हि समं ब्रह्म तस्माद्ब्रह्मणि ते स्थिताः॥ १९॥**

त० टी०—ननु कज्जलागारस्थस्य कज्जलस्पर्शावश्यकत्ववत्संसारे स्थितानां तद्धर्मस्पर्शावश्यम्भावात्कथं विषमाकारसंसारसंबन्धाभाव इति चेत्तत्राह—इहैवेति। तैः पुरुषैरिहैव संसार एव प्रारब्धशेषेण वर्तमानत्वेऽपि सर्गः संसारो जितः तिरस्कृतः स्वात्मसु स्प्रष्टुमनर्हः कृतः इति यावत्। तैः कैः येषामुक्तप्रकारेण सर्वात्मसाम्ये स्थितं मनः। हि यस्मान्निर्दोषं समं ब्रह्म यथा सर्वचेतनाचेतनेषु तदन्तर्यामितया वर्तमानमपि ब्रह्म निर्दोषं तद्धर्मास्पृष्टमेवात एव समं तथोत्तममध्यमाधमदेहेषु वर्तमानमपि देहधर्मास्पृष्टमेवात्मस्वरूपं कूटस्थत्वान्निर्दोषम् "अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा" इत्यादिश्रुतेः कूटस्थोऽक्षर उच्यते इति वक्ष्यमाणवाक्याच्च निर्दोषत्वादेव सर्वत्र समम्। यस्माद्ब्रह्मवदात्मनां स्वरूपं समं तस्मात् साम्ये ये स्थिता ब्रह्मण्येव ते स्थिताः। एतेन विषमाकारदर्शिनामेव संसारधर्मभागित्वं न तु ब्रह्मभूतात्मस्वरूपदर्शिनामिति समाधानमुक्तम् ब्रह्मणि स्थितिर्हि संसारजयः, राजान्तिके स्थितस्य चौरादिजयवदिति भावः॥ १९॥

म० टी०—ननु सात्त्विकराजसतामसेषु स्वभावविषमेषु प्राणिषु समत्वदर्शनं धर्मशास्त्रनिषिद्धं तथाच तस्यान्नमभोज्यमित्युपक्रम्य गौतमः स्मरति 'समासमाभ्यां विषमसमे पूजातः' इति समासमाभ्यामिति चतुर्थीद्विवचनं, विषमसम इति द्वन्द्वैकवद्भावेन सप्तम्येकवचनम्। चतुर्वेदपारगाणामत्यन्तसदाचाराणां यादृशो वस्त्रालङ्कारान्नादिदानपुरस्सरः पूजाविशेषः क्रियते तत्समायैवान्यस्मै चतुर्वेदपारगाय सदाचाराय विषमे तदपेक्षया न्यूने पूजाप्रकारे कृते तथाल्पवेदानां हीनाचाराणां यादृशो हीनसाधनः पूजाप्रकारः क्रियते तादृशायैवासमाय पूर्वोक्तवेदपारगसदाचारब्राह्मणापेक्षया हीनाय तादृशहीनाय तादृशहीनपूजाधिके मुख्य-

पूजासमे पूजाप्रकारे कृते उत्तमस्य हीनतया हीनस्योत्तमतया पूजातो हेतोस्तस्य पूजयितुरन्नमभोज्यं भवतीत्यर्थः। पूजयिता प्रतिपत्तिविशेषमकुर्वन्धनाद्धर्माच्च हीयत इति च दोषान्तरं यद्यपि यतीना निष्परिग्रहाणां पाकाभावाद्धनाभावाच्चाभोज्यान्नत्वं च धनहीनत्वं च स्वत एव विद्यते तथापि धर्महानिर्दोषो भवत्येव। अभोज्यान्नत्वं चाशुचित्वेन पापोत्पत्त्युपलक्षणं तपोधनानां च तप एव धनमिति तद्धानिरपि दूषणं भवत्येवेति कथं समदर्शिनः पण्डिता जीवन्मुक्ता इति प्राप्ते परिहरति—इहैवेति। तैः समदर्शिभिः पण्डितैरिहैव जीवनदशायामेव जितोऽतिक्रान्तः सर्गः सृज्यत इति व्युत्पत्त्या द्वैतप्रपञ्चः देहपातादूर्ध्वमतिक्रमितव्य इति किमु वक्तव्यम्। कैः येषां साम्ये सर्वभूतेषु विषमेष्वपि वर्तमानस्य ब्रह्मणः समभावे स्थितं निश्चलं मनः हि यस्मान्निर्दोषं समं सर्वविकारशून्यं कूटस्थनित्यमेकं च ब्रह्म तस्मात्ते समदर्शिनो ब्रह्मण्येव स्थिताः। अयं भावः—दुष्टत्वं हि द्वेधा भवति। अदुष्टस्यापि दुष्टसंबन्धाद्वा यथा गङ्गोदकस्य मूत्रगर्तपातात्, स्वत एव वा यथा मूत्रादेः। तत्र दोषवत्सु श्वपाकादिषु स्थितं तद्दोषैर्दुष्यति ब्रह्मेति मूढैर्विभाव्यमानमपि सर्वदोषासंसृष्टमेव ब्रह्म व्योमवदसङ्गत्वात् "असङ्गो ह्ययं पुरुषः सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतेः। नापि कामादिधर्मवत्तया स्वत एव कलुषितं कामादेरन्तःकरणधर्मत्वस्य श्रुतिस्मृतिसिद्धत्वात्। तस्मान्निर्दोषब्रह्मरूपा यतयो जीवन्मुक्ता अभोज्यान्नादिदोषदुष्टाश्चेति व्याहतम्। स्मृतिस्त्वविद्वद्गृहस्थविषयैव तस्यान्नमभोज्यमित्युपक्रमात् पूजात इति मध्ये निर्देशात् धनाद्धर्माच्च हीयत इत्युपसंहाराच्चेति द्रष्टव्यम्॥ १९॥

**शं० टी०**—सदा सर्वत्र ब्रह्मैव पश्यन्तः सन्तो ये तु तदात्मना तिष्ठन्ति तेषामेव विदेहमुक्तिर्नेतरेषामिति सूचयितुं ब्रह्मनिष्ठानां यतीनां जीवद्दशायामेव मुक्तिं दर्शयति—इहैवेति। परावरैकत्वविज्ञानवतां तद्बुद्धित्वाद्यन्तरङ्गसाधनवतां सर्वकर्मसंन्यासिनां येषां ब्रह्मविदां मनः सर्वदा साम्ये सममेव साम्यं स्वार्थे ष्यञ्प्रत्ययः। तस्मिन् साम्ये समरसे परे ब्रह्मण्येव स्थितं नैश्चल्येन तिष्ठति ये तु सर्वत्र ब्रह्मैव पश्यन्ति तदात्मतामेवापद्यन्ते तत्रैव निष्ठां कुर्वन्ति तदात्मतापन्नवृत्त्या कालं नयन्ति तैरेवंलक्षणैर्ब्रह्मविद्भिरिहैव जीवद्दशायामेव सर्गो जन्म भविष्यदेहसंबन्धो जितो निर्जितः परिहृत इत्यर्थः। अविद्याकामकर्माणि खलु शरीरारम्भकाणि अद्वितीये ब्रह्मणि जगद्बुद्धिसंपादिका देहादावहंममबुद्धिसंपादिका वासनाऽविद्या तन्मूलकाः कामास्तत्कार्याणि कर्माणि तेषामविद्याकामकर्मणां नित्यनिरन्तरब्रह्मनिष्ठया निःशेषविनाशे सति 'कारणनाशात्कार्यनाशः' इति न्यायेन तत्कार्यभूतभाविदेहसंबन्धनाशोऽपि सिध्यत्यत एवोच्यते—**इहैव तैर्जितः सर्ग इति**। ननु ब्रह्मविदां कचिदपि बह्यालम्बनं विना सर्वदा ब्रह्मण्येव ब्रह्मात्मनावस्थानं कथमुपपद्यत इत्याकाङ्क्षायां न, तेषां मनसोऽतिनिर्मलत्वाद्ब्रह्मसुखानुभूतिरसिकत्वात्तादृग्ब्रह्मनिष्ठासंपादकपुण्यसंपत्तेश्च सदानन्दैकरसे ब्रह्मणि स्थितिः संभवतीति सूचयितुं ब्रह्मण आनन्दरूपत्वं प्रतिपादयति—**निर्दोषं हीति**। हि यस्मात्कारणाद्ब्रह्म निर्दोषं दोषशब्देनात्र तत्कार्यं दुःखं लक्ष्यते निर्दोषं निर्दुःखं दुःखलेशशून्यमानन्दरूपमित्यर्थः। "आनन्दो ब्रह्म। विज्ञानमानन्दं ब्रह्म। स्वप्रकाशमानन्दघनम्" इति श्रुतेः। ननु ब्रह्मणः स्वत आनन्दरूपत्वेऽप्यनृतजडदुःखात्मकप्रपञ्चसंबन्धसंभवात्क्वचिद्दुःखलेशसंबन्धः संभवेदित्याशङ्कायां न "मायामात्रमिदं द्वैतम्। असत्त्वादन्यस्य नह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयः। एकमेवाद्वितियम्। अद्वया ह्ययमात्मैकल एव" इत्यादिश्रुतिभिर्जगतः स्वरूपासत्त्वं ब्रह्मणोऽद्वितीयत्वं च नियमेन प्रतिपाद्यते यतस्ततो मरोर्जलसंबन्धवद्ब्रह्मणो मिथ्याभूतप्रपञ्चसंभवात् सदा सर्वत्रैकरसत्वमेवेति बोधयितुमाह—सममिति। समं सर्वत्र सममेव परं ब्रह्म सच्चिदानन्दमात्रमेकरसम् "सद्घनोऽयं चिद्घन आनन्दघन एकरसः" इत्यादिश्रुतिभिर्ब्रह्म सदैकस्वभावमेव भवति समरसत्वाल्लवणपिण्डवदित्यादियुक्तिभिश्च सजातीयविजातीयादिभेदवैधुर्यमेव प्रतिपाद्यते ततः

सदानन्दैकरसमेव परं ब्रह्म नत्वविद्यातत्कार्यतद्धर्मतत्कर्मलेशसंपृक्तं तस्मादेव ब्रह्मविदां मनो ब्रह्मानन्दामृतरसास्वादासक्त्या ब्रह्मण्येव तिष्ठति सर्वदैवमेव ब्रह्मण्यानन्दघने येषां ब्रह्मविदां यतीनां मनस्तिष्ठति त एव विदेहमुक्तिं गच्छन्तीति सिद्धम् ॥ १९ ॥

श्री० टी०—ननु विषमेषु समदर्शनं निषिद्धं कुर्वन्तोऽपि कथं ते पण्डिताः। यथाह गौतमः—"समासमाभ्यां विषमसमे पूजातः" इति अस्यार्थः—समाय पूजाया विषमे प्रकारे कृते सति विषमाय च समे प्रकारे कृते सति स पूजक इहलोकात्परलोकाच्च हीयत इति, तत्राह—इहैवेति। इहैव जीवद्भिरेव तैः सृज्यत इति सर्गः संसारो जितः निरस्तः। कैः येषा मनः साम्ये समत्वे स्थितम्। तत्र हेतुः—हि यस्मात् ब्रह्म समं निर्दोषं च तस्मात्ते समदर्शिनो ब्रह्मण्येव स्थिताः ब्रह्मभावं प्राप्ता इत्यर्थः। गौतमोक्तस्तु दोषो ब्रह्मभावप्राप्तेः पूर्वमेव पूज्यत इति पूजकावस्थाश्रवणात् ॥ १९ ॥

म० टी०—ननु सात्त्विकमुख्येषु स्वभावविषमेषु च ॥ समत्वदर्शनं शास्त्रे निषिद्धं धर्मतत्परे ॥ १ ॥ स्मरतीत्थमभोज्यान्ना इत्युपक्रम्य गौतमः ॥ समासमाभ्यां विषमसमे पूजात इत्यसौ ॥ २ ॥ उत्कृष्टानां यथा पूजा प्रोक्ता वेदविदां श्रुतौ ॥ तत्समायैव चान्यस्मै न्यूने पूजाविधौ कृते ॥ ३ ॥ हीनाचारवतामल्पविदां पूजा यथोदिता ॥ तत्समानाय चान्यस्मै मुख्ये पूजाविधौ कृते ॥ ४ ॥ हीनत्वेन वरिष्ठस्य हीनस्योत्तमभावतः ॥ पूजातः कारणात्तस्य पूजाकर्तुरतद्विदः ॥ ५ ॥ भवत्यन्नमभोज्यं हि स्मृतेरित्यर्थ ईरितः ॥ एवं दोषे प्रसिद्धे ते कथं स्युः समदर्शिनः ॥ ६ ॥ पण्डिता इति शङ्कायामुत्तरं प्राह केशवः ॥ तैर्जीवद्भिरतिक्रान्तः पण्डितैः समदर्शिभिः ॥ ७ ॥ सर्गो द्वैतप्रपञ्चोऽयं भूतेषु विषमेष्वपि ॥ ब्रह्मणो वर्तमानस्य साम्ये येषां स्थिरं मनः ॥ ८ ॥ यस्मात्तद्ब्रह्म कूटस्थं नित्यमेकरसं समम् ॥ तस्मात्तेऽवस्थिता नित्यं ब्रह्मण्येव विपश्चितः ॥ ९ ॥ पामरैर्दोषवत्स्वेषु श्वपाकादिषु यद्यपि ॥ तद्दोषैर्दोषवन्मूढैः परं ब्रह्म विभाव्यते ॥ १० ॥ तथापि दोषासंस्पृष्टमेव ब्रह्म स्वभावतः ॥ तद्रूपाः पण्डिता जीवन्मुक्ता दोषैर्विवर्जिताः ॥ ११ ॥ स्मृतिस्त्वज्ञगृहस्थस्य दोषमाहान्यथाकृते ॥ न तु ब्रह्मविदो दोषं वक्तुमर्हति कंचन ॥ १२ ॥ १९ ॥

भा० टी०—ननु सात्त्विकादिषु समत्वदर्शनमनुचितं 'समासमाभ्यां विषमसमे पूजातः' इति तस्यान्नमभोज्यमित्युपक्रम्य स्मृत्या समदर्शिनोऽभोज्यान्नत्वप्रतिपादनात् समानामध्ययनादिभिस्तुल्यधर्मवतां वस्त्रालंकाररत्नादिदानपूर्वके विषमे पूजाविशेषे क्रियमाणे सति असमानां च कस्यचित् द्विवेदाध्ययनमपरस्यैकवेदाध्ययनमित्येवमध्ययनादिभिरतुल्यधर्मवतां प्रागुक्ते समे पूजाविशेषे तस्याः पूजातो हेतोः पूजयिता पुरुषविशेषं ज्ञात्वा पूजाविशेषमकुर्वन्नभोज्यान्नो भवति धनाद्धर्माच्च हीयत इति स्मृतेरर्थः। तथाच सर्वसत्त्वेषु समत्वदर्शिनः दोषवत्त्वमित्याशङ्कायाः कार्यकरणसंघातात्मदर्शनाभिमानवत्कर्मठविषया तु गौतमस्मृतिः पूजात इति पूजाविषयत्वेन विशेषणात्। इदं तु यः सर्वकर्मसंन्यासी निष्परिग्रहः पाकानाधिकारी अभोज्यान्नो धनहीनो धर्मादिदत्तजलाञ्जलिः तत्त्ववित् तद्विषयमिति विषयभेदेनाविरोधमभिप्रेत्योत्तरमाह—इहेति। इहैव जीवद्भिरेव तैर्जितो वशीकृतः अतिक्रान्तो जन्मादिलक्षणः संसारः। कैरित्यपेक्षायामाह—येषां सर्वसत्त्वेषु ब्रह्मणः समभावे स्थितं स्थिरीभूतं मनोऽन्तःकरणं हि यस्मान्मनःस्थितिविषयो ब्रह्म निर्दोषं दोषवत्सु चाण्डालादिषु स्थितमप्याकाशवत्तद्दोषैरस्पृष्टमत एव समं सदैव सर्वत्रैकरूपं तस्मादेतादृशे ब्रह्मणि ते पण्डिताः स्थिताः अतो न दोषगन्धमात्रमपि तान्स्पृशतीत्यर्थः ॥ १९ ॥

प० टी०—अथ तेषां फलमाह—इहैवेति। येषां पुरुषाणां साम्ये समत्वे मनः स्थितं स्थिरीभूतं तैः समदर्शिभिरिहैव देहे जीवद्भिः सर्गः संसारो जितः। हि यस्मात्कारणाद्ब्रह्म सममविषमं तथा निर्दोषं वैषम्यदोषसाधनीभूततत्तद्देहाद्युपाधिभिरस्पृष्टं निर्बाधं वा तस्मात्ते ब्रह्मणि स्थिताः "समो मशकेन समो नागेन" इति श्रुतेः ॥ १९ ॥

रा० टी०—समदर्शिनं स्तौति—इहैवेति। येषां साम्ये मनः स्थितं तैरिहैवास्मिन्नेव जन्मनि सर्गो जन्मादिरूपः संसारः जितः। दृश्यत्वेनोक्तं समं वस्तु किं केन साम्यमित्यत आह—निर्दोषमिति। समं वस्तु ब्रह्म निर्दोषत्वेन च साम्यमित्युक्तं भवति। तस्मात्समतया सर्वत्र स्थितस्य ब्रह्मत्वात्ते समदर्शिनो ब्रह्मणि स्थिता एवेत्यर्थः। ब्रह्मज्ञानिन इति यावत्॥ १९॥

**न प्रहृष्येत्प्रियं प्राप्य नोद्विजेत्प्राप्य चाप्रियम्॥**
**स्थिरबुद्धिरसंमूढो ब्रह्मविद्ब्रह्मणि स्थितः॥ २०॥**

त० टी०—एवं समस्वरूपात्मदर्शनरूपा ब्रह्मस्थितिः संसारजये हेतुरिति निर्णीतमिदानीं मुमुक्षुणा तदर्थमेव यतितव्यमित्युपदिशति—न प्रहृष्येदिति। संसारजयमिच्छुर्यः कश्चिन्मुमुक्षुः प्रियं स्वमनोऽनुकूलं भोजनाच्छादननिवासवचनादि प्राप्य न प्रहृष्येत्, अहो भाग्यमिति प्रफुल्लितो न भवेदित्यर्थः। तथाऽप्रियमननुकूलं पूर्वोक्तं प्राप्य नोद्विजेत् विषादं न कुर्यात्। ततश्च स्थिरबुद्धिः शनैः शनैरात्मज्ञानद्वारेण संसारदुःखं तरिष्यामीति दृढव्यवसायः अत एवासंमोहः दुःखपरिणामकेऽनात्मवस्तुनि सुखहेतुरिदमित्यन्तःकरणविभ्रमो मोहस्तद्रहितस्ततस्तत्त्वज्ञोपदेशेन ब्रह्मविद्भूत्वा ब्रह्मणि स्थितः, ब्रह्मवन्निर्दोषसमस्वरूपे आत्मनि निरतो भवेदिति भावः॥ २०॥

म० टी०—नेति। यस्मान्निर्दोषं समं ब्रह्म तस्मात्तद्रूपमात्मानं साक्षात्कुर्वन् दुःखेष्वनुद्विग्नमनाः सुखेषु विगतस्पृह इत्यत्र व्याख्यातं पूर्वार्धम्। जीवन्मुक्तानां स्वाभाविकं चरितमेव मुमुक्षुभिः प्रयत्नपूर्वकमनुष्ठेयमिति वदितुं लिङ्प्रत्ययौ। अद्वितीयात्मदर्शनशीलस्य व्यतिरिक्तप्रियाप्रियप्राप्त्ययोगान्न तन्निमित्तौ हर्षविषादावित्यर्थः। अद्वितीयात्मदर्शनमेव विवृणोति—स्थिरबुद्धिरिति। स्थिरबुद्धिः स्थिरा निश्चला संन्यासपूर्वकवेदान्तवाक्यविचारपरिपाकेण सर्वसंशयशून्यत्वेन निर्विचिकित्सा निश्चिता ब्रह्मणि बुद्धिर्यस्य स तथा लब्धश्रवणमननफल इति यावत्। एतादृशस्य सर्वासंभावनाशून्यत्वेऽपि विपरीतभावनाप्रतिबन्धात्साक्षात्कारो नोदेतीति निदिध्यासनमाह—असंमूढः निदिध्यासनस्य विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहस्य परिपाकेण विपरीतभावनाख्यसंमोहरहितः, ततः सर्वप्रतिबन्धापगमात् ब्रह्मवित् ब्रह्मसाक्षात्कारवान्, ततश्च समाधिपरिपाकेन निर्दोषे समे ब्रह्मण्येव स्थितो जीवन्मुक्तः स्थितप्रज्ञ इत्यर्थः। एतादृशस्य द्वैतदर्शनाभावात्प्रहर्षोद्वेगौ न भवत इत्युचितमेव। साधकेन तु द्वैतदर्शने विद्यमानेऽपि विषयदोषदर्शनादिना प्रहर्षविषादौ त्याज्यावित्यभिप्रायः॥ २०॥

शं० टी०—विदेहमुक्तिकामस्य ब्रह्मविदः सर्वं संन्यस्य सर्वदा ब्रह्मण्येव ब्रह्मात्मना तिष्ठतो यतेः सर्ववासनासंक्षयः सर्वकामप्रमोकः सर्वकर्मप्रविलयश्चैतत्त्रितयस्य भाविजन्महेतोरनिष्टस्य निवृत्तिस्तथा जीवद्दशायां दृष्टदुःखानुपलब्धिः सदानन्दानुभूतिर्विदेहकैवल्यप्राप्तिश्चेत्येतत्त्रितयस्येष्टस्य प्राप्तिरेवं पुरुषार्थः सिध्यति तस्मान्मुमुक्षोः श्रवणादिना सम्यग्विदितात्मतत्त्वस्य यतेर्ब्रह्मनिष्ठाऽवश्यं कर्तव्येति सूचयितुं ब्रह्मयोगं कुर्वतः कर्तव्यमाह—न प्रहृष्येदिति। ब्रह्मणि सर्वत्र ब्रह्ममात्रदर्शने समाधौ स्थितः प्रवृत्तो ब्रह्मविद्यतिः स्वयं भिक्षाटनादौ यदृच्छया प्रारब्धवशात्प्राप्तं प्रियमिष्टं वस्तु वचनं वा कर्म वा पूजादिलक्षणं प्राप्य श्रुत्वा दृष्ट्वा स्पृष्ट्वा वा रम्यबुद्ध्येष्टताबुद्ध्या वा न प्रहृष्येत् प्रहर्षं न कुर्यात् प्रहर्षोऽनात्मधर्मस्तस्मिन् कृते स्वस्यानात्मतादात्म्ये सत्यसदारोपणं स्याद्वस्तुनो नामरूपगुणविशेषविमर्शनं विना समीचीनत्वबुद्धिरिष्टताबुद्धिश्च न जायते समीचीनत्वादिबुद्धिं विना प्रहर्षोऽपि नोत्पद्यते हर्षोत्पत्तिश्च द्रष्टरि भोक्तृत्वात्मत्वाभिनिवेशं विना न संभवत्येवमनर्थहेतुर्भवति पदार्थविमर्शनं, तत्र रम्यताबुद्धिरिष्टताबुद्धिश्च ततः प्रत्यग्दृष्टि

परित्यज्य पदार्थविमर्शनं रम्यताबुद्धिमिष्टत्वादिबुद्धिं च प्रहर्षं च ब्रह्मविन्न कुर्यात्किंतु सर्वत्र प्रत्यग्दृष्ट्यैव तिष्ठेदित्यर्थः। किंचाप्रियमनिष्टमाध्यात्मिकमाधिभौतिकमाधिदैविकं ज्वरादिसर्पचोरादिवर्षवाताद्यनर्थकारणं प्राप्य नोद्विजेत् उद्वेगश्चलनमधैर्यं भयं च तन्नावहेत् हा हतोस्मीत्यौपाधिकमनर्थं स्वं न प्रापयेत् तदनर्थस्य स्वयं विषयो न भवेदिति यावत्, किंतु भवितव्यं भवत्येवेति दृढबुद्ध्योपाधिं प्रारब्धाय समर्प्य स्वयं तदविषयीभूतनिर्विशेषब्रह्माकारेणैव तिष्ठेत्स्वदृष्ट्या स्थितवतो मुक्तिर्न विहन्यते बाह्यदृष्ट्या स्थितस्य तूपाध्यविनाशो मुक्तिविनाशश्च स्यात्ततः प्रत्यग्दृष्टिं परित्यज्य बाह्यग्रहणं तत्रानिष्टताबुद्धिं स्वस्य तदनर्थविषयत्वमुद्वेगं च विद्वान्न कुर्यादित्यर्थः। इष्टानिष्टयोः प्राप्तौ प्रहर्षोद्वेगावकृत्वा कथं स्थातव्यमित्यत आह—असंमूढ इति। संमूढो विपरीतग्राही तद्विलक्षणः मदर्श्येवासंमूढो ब्रह्मण्येवात्मप्रत्ययस्तत्रैव स्थिरबुद्धिः स्थिरा स्वस्य ब्रह्माकारतामत्यजन्ती निश्चला बुद्धिर्यस्य स स्थिरबुद्धिः सन् ब्रह्मण्येव स्थितो भवेत् स्वस्य सर्वस्य ब्रह्ममात्रदर्शन एव तिष्ठेदित्यर्थः॥ २०॥

**श्री० टी०**—ब्रह्मप्राप्तस्य लक्षणमाह—**नेति**। यो ब्रह्मविद्भूत्वा ब्रह्मण्येव स्थितः स प्रियं प्राप्य न प्रहृष्येत् न प्रहृष्टो हर्षवान् स्यात्, अप्रियं च प्राप्य नोद्विजेत् न विषीदतीत्यर्थः। यतः स्थिरबुद्धिः स्थिरा निश्चला बुद्धिर्यस्य। तत्कुतः यतोऽसंमूढः निवृत्तमोहः॥ २०॥

**स० टी०**—स्वाभाविकं हि चरितं जीवन्मुक्तशरीरिणाम्॥ मुमुक्षुभिरनुष्ठेयमिति वक्ति हरिर्लिङा॥ १॥ अद्वैतदर्शिनो भिन्नप्रियादिप्राप्त्ययोगतः॥ नास्य हर्षविषादौ तद्धेतुकौ भवतः क्वचित्॥ २॥ स्थिरा वेदान्तवाक्योत्था बुद्धिर्ब्रह्मणि यस्य सः॥ अन्योन्याध्याससंमोहशून्यो ब्रह्मावबोधवान्॥ ३॥ ब्रह्मण्येव स्थितो नित्यं समाधिपरिपाकतः॥ ४॥ २०॥

**भा० टी०**—समे निर्दोषे ब्रह्मणि स्थितो जीवन्मुक्तिसुखार्थं कीदृशः स्यादित्याकाङ्क्षायामाह—**नेति**। स्थिरा संयशवर्जिता सर्वभूतेष्वेकः समो निर्दोष आत्मेति बुद्धिर्यस्य यतोऽसंमूढः संशयमूलभूतेन संमोहेन रहितः यतस्तत्त्ववित् मोहनिवर्तकतत्त्वसाक्षात्कारवान् तदपि कुतः यतो ब्रह्मणि स्थितः सर्वं विक्षेपकारणं परित्यज्य श्रवणादिना तत्रैव स्थितः तन्निष्ठ इति यावत् एतादृशः प्रियं प्राप्य हर्षं न कुर्यात् अप्रियं प्राप्योद्वेगं न कुर्यात् एतादृशेनापि मनोनाशवासनाक्षयप्रयत्नेन हर्षविषादाभावे यतितव्यं षष्ठ्यादिभूमिकायै इति सूचनार्थमुभयत्र लिङ्प्रयोगः॥ २०॥

**प० टी०**—अथ ब्रह्मणि स्थिरीभूतस्य परीक्षामाह—**न प्रहृष्येदिति**। स एव ब्रह्मवित्सन् ब्रह्मणि स्थितो यः प्रियं प्राप्य न प्रहृष्येत्तथाऽप्रियं प्राप्य नोद्विजेदुद्वेगं न प्राप्नुयादत एव स्थिरबुद्धिरसंमूढः प्रियत्वाप्रियत्वरहितः॥ २०॥

**रा० टी०**—पुनः संन्यासं प्रपञ्चयति—**न प्रहृष्येदिति**। प्रियं सुखसाधनं प्राप्य न प्रहृष्येत् हर्षं न प्राप्नुयात्। अप्रियं च प्राप्य नोद्विजेत् दुःखहेतुप्राप्तावपि उद्वेगरूपमनोऽधैर्यं न प्राप्नुयात्। तत्रोपायमाह—**स्थिरबुद्धिरिति**। बुद्धेः स्थैर्ये हेतुरसंमूढ इति। प्रियाप्रियप्रापणे लौकिको जन एव स्वतन्त्र इति मिथ्याज्ञानहीनः। तत्र हेतुर्ब्रह्मविदिति। ब्रह्मैव स्वतन्त्रमिति विद्वान्नैतावतालं किंतु ब्रह्मणि स्थितः नित्यं ब्रह्मस्मृतिमानित्यर्थः। संन्यासस्त्वित्यादिना संन्यासाद्योगस्याधिक्योक्त्यर्थं योगहीनसंन्यासस्य व्यर्थत्वं यदुक्तं तदयुक्तम्, कामाद्युपद्रवक्षये स्वरूपसुखाविर्भावसत्त्वादित्यतः सत्यं तदेव सुखं भगवद्ध्यानरूपयोगे सत्यक्षयं भवतीति॥ २०॥

**बाह्यस्पर्शेष्वसक्तात्मा विन्दत्यात्मनि यत्सुखम्॥**
**स ब्रह्मयोगयुक्तात्मा सुखमक्षय्यमश्नुते॥ २१॥**

त० टी०—ननु सर्वजनेप्सितशब्दस्पर्शादिविषयसुखासक्तस्य ब्रह्मणि स्थितिर्न संभवति, बाह्यसुखविमुखश्चेद्ब्रह्मणि रतः किं सुखं विन्देतेति चेत्तत्राह—बाह्यस्पर्शेष्विति। श्रोत्रादीन्द्रियैः स्पृश्यन्त इति स्पर्शाः शब्दादिविषयास्ते बाह्येन्द्रियविषयत्वाद्बाह्यास्तेष्वसक्तात्मा अनासक्तचित्तो विगततृष्ण इति यावत्। आत्मनि अन्तःकरणे यदुपशमरूपमनन्तसुखं शास्त्रे उक्तं तद्विन्दति लभते। तदुक्तं मोक्षधर्मे—'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति। ततश्च प्रकृतिवियुक्तपरिशुद्धात्मस्वरूपं ब्रह्म तस्य योगो निरन्तरचिन्तनाभ्यासस्तत्र युक्त आत्मा मनो येन स ब्रह्मयोगयुक्तात्मा। अथवा ब्रह्म परमात्मा तेन योगः प्रत्यगात्मनस्तादात्म्यसंबन्धस्तत्र युक्तस्तदनुसंधानाभ्यासे नियुक्त आत्मा अन्तःकरणं येन स तथा अक्षयसुखमश्नुते प्राप्नोति। "आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन् कस्य कामाय शरीरमनुसंज्वरेत्" इति श्रुतेः॥ २१॥

म० टी०—ननु बाह्यविषयप्रीतेरनेकजन्मानुभूतत्वेनातिप्रबलत्वात्तदासक्तचित्तस्य कथमलौकिके ब्रह्मणि दृष्टसर्वसुखरहिते स्थितिः स्यात् परमानन्दरूपत्वादिति चेत् न तदानन्दस्याननुभूतचरत्वेन चित्तस्थितिहेतुत्वाभावात्। तदुक्तं वार्तिके 'अप्यानन्दः श्रुतः साक्षान्मानेनाविषयीकृतः। दृष्टानन्दाभिलाषः स न मन्दीकर्तुमप्यलम्' इति। तत्राह—बाह्येति। इन्द्रियैः स्पृश्यन्त इति स्पर्शाः शब्दादयः ते च बाह्या अनात्मधर्मत्वात् तेष्वसक्तात्मा अनासक्तचित्तस्तृष्णाशून्यतया विरक्तः सन् आत्मनि अन्तःकरण एव बाह्यविषयनिरपेक्षं यदुपशमात्मकं सुखं तद्विन्दति लभते निर्मलसत्त्ववृत्त्या। तदुक्तं भारते 'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम्। तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति। अथवा प्रत्यगात्मनि त्वंपदार्थे यत्सुखं स्वरूपभूतं सुषुप्तावनुभूयमानं बाह्यविषयासक्तिप्रतिबन्धादलभ्यमानं तदेव तदभावाल्लभते न केवलं त्वंपदार्थसुखमेव लभते किंतु तत्पदार्थैक्यानुभवेन पूर्णसुखमपीत्याह—स इति। स तृष्णाशून्यः ब्रह्मणि परमात्मनि योगः समाधिस्तेन युक्तस्तस्मिन्व्यापृत आत्मान्तःकरणं यस्य स ब्रह्मयोगयुक्तात्मा। अथवा ब्रह्मणि तत्पदार्थे योगेन वाक्यार्थानुभवरूपेण समाधिना युक्त ऐक्यं प्राप्त आत्मा त्वंपदार्थस्वरूपं यस्य स तथा सुखमक्षय्यमनन्तं स्वस्वरूपभूतमश्नुते व्याप्नोति सुखानुभवरूप एव सर्वदा भवतीत्यर्थः। नित्येऽपि वस्तुन्यविद्यानिवृत्त्यभिप्रायेण धात्वर्थयोगः औपचारिकः तस्मादात्मन्यक्षयसुखानुभवार्थी सन्बाह्यविषयप्रीतेः क्षणिकाया महानरकानुबन्धिन्याः सकाशादिन्द्रियाणि निवर्तयेत्तावतैव च ब्रह्मणि स्थितिर्भवतीत्यभिप्रायः॥ २१॥

शं० टी०—न प्रहृष्येत्प्रियं प्राप्येत्युक्त्वा विषयसुखं परित्यक्तव्यमितिसूचितं, विषयसुखे परित्यक्ते ब्रह्मविदः सुखाभावादुन्मत्तस्येवामुष्य स्थितिर्निष्फलैवेत्याशङ्कायां न, "रसं ह्येवायं लब्ध्वानन्दी भवति" इति श्रवणान्नित्यनिरन्तरं निरतिशयं ब्रह्मसुखममुष्य ब्रह्मनिष्ठायां तिष्ठतोऽस्तीत्याह—बाह्यस्पर्शेष्विति। य आत्मतत्त्वज्ञः स्वयं बाह्यस्पर्शेषु मूढैरात्मनो बहिरेव कल्पिता बाह्या इन्द्रियैः स्पृश्यन्ते गृह्यन्त इति स्पर्शाः बाह्याश्च ते स्पर्शाश्च तेषु बाह्यस्पर्शेषु शब्दादिषु तज्जन्यसुखेषु च तुच्छत्वबुद्ध्या बन्धकत्वबुद्ध्या च असक्तोऽप्रवृत्त आत्मा मनो यस्य सोऽसक्तात्मा सन् तीव्रवैराग्येण मनसा विषयग्रहणमकुर्वन् गुहायां वा अन्यत्र रहसि समाहितो भूत्वात्मनि बुद्ध्यादिसाक्षिणि प्रतीचि साक्षात्कृते सति यत्सुखमात्मसाक्षात्कारसंभूतं विन्दत्यनुभवति स एव ब्रह्मविद्ब्रह्मयोगयुक्तात्मा नामरूपग्रहणमकृत्वा चिदाकारवृत्त्या बहिरन्तः सर्वत्र ब्रह्ममात्रदर्शनं ब्रह्मयोगस्तस्मिन् सर्वत्र सदा ब्रह्मदर्शन एव युक्तो नियमित आत्मा मनो यस्य स ब्रह्मयोगयुक्तात्मा सन् व्युत्थानाव्युत्थानयोः सदा सर्वत्र ब्रह्मैवानन्दैकरसं परिपूर्णं पश्यन् ततोऽधिकतरमक्षय्यं सदा सर्वत्रानन्दैकरसस्य ब्रह्मण एव बुद्धिवृत्तेर्विषयत्वाद्विच्छित्तिरहितं सुखं स्वरूपानन्दमश्नुते सर्वत्र

ब्रह्ममात्रदर्शनपरो ब्रह्मविद्यतिः सदानन्दो भवतीत्यर्थः । अत्रायमभिप्रायः–गुहादौ रहसि समाधिं कुर्वन्तः समाधिकाल एवात्मानन्दानुभवः न तु सर्वदा सर्वत्र, ब्रह्मयोगयुक्तात्मनस्तु बहिरन्तः सदा सर्वत्र ब्रह्मानन्दानुभवो निरर्गल इति ॥ २१ ॥

**श्री० टी०**–मोहनिवृत्त्या बुद्धिस्थैर्यहेतुमाह–**बाह्यस्पर्शेष्विति** । इन्द्रियैः स्पृश्यन्त इति स्पर्शा विषयाः बाह्येन्द्रियविषयेषु असक्तात्मा अनासक्तचित्तः आत्मन्यन्तःकरणे यदुपशमात्मकं सात्त्विकं सुखं तद्विन्दति लभते स चोपशमात्मकं सुखं लब्ध्वा ब्रह्मणि योगेन समाधिना युक्तस्तदैक्यं प्राप्त आत्मा यस्य सः अक्षय्यं सुखमश्नुते प्राप्नोति ॥ २१ ॥

**स० टी०**–अनाद्यध्यासजां भोगप्रीतिं बलवतीं कथम् ॥ त्यक्त्वा ब्रह्मण्यवस्थानं संभवेदिति चेच्छृणु ॥ १ ॥ बाह्याः शब्दादयो भोगा जडधर्मा विनश्वराः ॥ तेष्वनासक्तचित्तः सन्विरक्तः शुद्धमानसे ॥ २ ॥ शान्तिरूपं सुखं बाह्यभोगाकाङ्क्षां विहाय यत् ॥ लभते सत्त्ववृत्त्यासौ तदनन्तं महत्सुखम् ॥ ३ ॥ यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् ॥ तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम् ॥ ४ ॥ यद्वा यत्त्वंपदार्थे च सुप्तौ भातमपीहितम् ॥ प्रतिबन्धादलभ्यं तत्तदभावाच्च लभ्यते ॥ ५ ॥ ब्रह्मण्येकाग्रसंपन्नं चित्तं यस्य च तद्गतम् ॥ तत्पदार्थेऽथ वा योगः समाधिस्तेन चैकताम् ॥ ६ ॥ गतस्त्वमोऽपि लक्ष्योऽर्थो यस्य सोऽनन्तमद्वयम् ॥ स्वस्वरूपसुखं सम्यग्व्याप्नोत्यात्मस्वरूपतः ॥ ७ ॥ नित्येऽपि वस्तुनि भ्रान्तिनाशाभिप्रायतस्तथा ॥ औपचारिकधात्वर्थयोगोऽस्तीह न वस्तुतः ॥ ८ ॥ बाह्यभोगरुचिं त्यक्त्वा सर्वानर्थाकरीं बुधैः ॥ नित्यानन्दैकतां प्राप्तुं यत्न आस्थेय आदरात् ॥ ९ ॥ यत्पादपद्ममकरन्दरसानुभूतिप्राप्ताखिलामृतसुखानुभवेन तृप्ताः ॥ पौरन्दरीं श्रियमथोऽवगणय्य धीरास्तिष्ठन्ति यत्र स हरिः शरणं ममास्तु ॥ १० ॥ २१ ॥

**भा० टी०**–किंच–**बाह्येति** । विषयसुखस्य ब्रह्मानन्दापेक्षयाऽतितुच्छत्वाद् ब्रह्मणि स्थितः स्पृश्यन्त इति स्पर्शाः शब्दादयो विषयाः तेष्वसक्तः प्रीतिवर्जितः आत्मान्तःकरणं यस्य स आत्मनि त्वंपदलक्ष्ये यत्सुखं तद्विन्दते लभते स ब्रह्मणि तत्पदलक्ष्ये परमात्मनि योगः समाधिः त्वंपदलक्ष्यस्य तत्पदलक्ष्ये एकत्वापादनं तेन युक्तः आत्मान्तःकरणमखण्डसाक्षात्कारलक्षणान्तःकरणवृत्तिर्यस्य स सुखं ब्रह्मानन्दमक्षयमश्नुते व्याप्नोति तस्मादात्मनि जीवन्नेवाक्षयसुखार्थी क्षणिकाया विषयप्रीतेरिन्द्रियाणि निवर्तयेदित्याशयः । अत्रत्यभाष्यस्य सामान्यरूपतया न व्याख्यानान्तरैर्विरोध इति ध्येयम् ॥ २१ ॥

**प० टी०**–अथ बुद्धिस्थैर्यहेतुमाह–**बाह्येति** । बहिरिन्द्रियैः स्पृशन्ति ते स्पर्शा बाह्येन्द्रियविषयास्तेष्वसक्त आत्मा मनो यस्य स तथाभूत आत्मन्यन्तःकरण उपशमात्मकं यत्सुखं विन्दति प्राप्नोति तेन ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगेन समाधिना युक्तस्तदैक्यं प्राप्त आत्मा यस्य सोऽक्षयं निरतिशयसुखमश्नुते प्राप्नोति ॥ २१ ॥

**रा० टी०**–संन्यासाद्योगस्य पुनराधिक्यमाह–**बाह्येति** । स्पृश्यन्त इति स्पर्शाः शब्दाद्याः तेषां बाह्यत्वं श्रोत्राद्यविषयत्वसंपादनं तथाकृतविषयेषु असक्तमनस्कः संन्यासीति यावत् । आत्मनि स्वरूपे यत्सुखं विन्दत्यनुभवति। आत्मस्वरूपस्यापि न निर्विशेषत्वमिति ज्ञापनाय यत्सुखमित्येव वाच्ये आत्मनीत्यप्युक्तिः । यदित्युक्तेस्तदिति लभ्यते । स संन्यासी ब्रह्मयोगयुक्तात्मा ब्रह्मणि योगो ब्रह्मयोगः ध्यानं तद्युक्तात्मा तत्सुखं कामाद्युपद्रवक्षयरूपसंन्यासादाविर्भूतं सुखमक्षयं पुनस्तिरोभावहीनमश्नुते प्राप्नोतीत्यर्थः । यद्वा योगयुक्तो मुनिर्ब्रह्मेत्यादिना योगरूपसंन्यासस्य यन्निःश्रेयसकरत्वमुक्तं तदुपपादयते–**बाह्येति** । संसारेऽप्यात्मस्मरणरूपाल्पयोगयुक्तः संन्यासी सुखं विन्दति यदा तदा ध्यानादिमहायोगादियुक्तो मोक्षादिनिःश्रेयसं विन्दतीति किमु वाच्यमित्यर्थः ॥ २१ ॥

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते ॥
आद्यन्तवन्तः कौन्तेय न तेषु रमते बुधः ॥ २२ ॥

त० टी०—ननु बाह्यविषयानासक्तिपूर्वकात्मन्यक्षयसुखमश्नुते इति सत्यं, तथापि प्रथमतो बाह्यविषयानासक्तिरेव कथं स्यादित्याशङ्क्य तेषु दोषदर्शनादित्याह—ये हीति । हि यस्मात् ये संस्पर्शजा विषयेन्द्रियसंबन्धजा भोगा ऐहिकामुष्मिकास्ते सर्वेऽपि दुःखयोनयः परिणामे दुःखहेतवो भवन्ति, तथाभूता अपि न स्थिराः, किन्त्वाद्यन्तवन्तस्तस्मात् हे कौन्तेय! तेषु बुधो विवेकी न रमते, तेषु प्रीतिं न कुरुते इत्यर्थः ॥ २२ ॥

म० टी०—ननु बाह्यविषयप्रीतिनिवृत्तावात्मन्यक्षयसुखानुभवस्तस्मिंश्च सति तत्प्रसादादेव बाह्यविषयप्रीतिनिवृत्तिरितीतरेतराश्रयवशान्नैकमपि सिध्येदित्याशङ्क्य विषयदोषदर्शनाभ्यासेनैव तत्प्रीतिनिवृत्तिर्भवतीति परिहारमाह—ये हीति । हि यस्मात् ये संस्पर्शजा विषयेन्द्रियसंबन्धजाः भोगाः क्षुद्रसुखलवानुभवाः इह वा परत्र वा रागद्वेषादिव्याप्तत्वेन दुःखयोनय एव ते ते सर्वेऽपि ब्रह्मलोकपर्यन्तं दुःखहेतव एव । तदुक्तं विष्णुपुराणे ‘ यावन्तः कुरुते जन्तुः संबन्धान्मनसः प्रियान् । तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ’ इति । एतादृशा अपि न स्थिराः किंतु आद्यन्तवन्तः आदिर्विषयेन्द्रियसंयोगोऽन्तश्च तद्वियोग एव तौ विद्येते येषां ते पूर्वापरयोरसत्त्वान्मध्ये स्वप्नवदाविर्भूताः क्षणिका मिथ्याभूताः । तदुक्तं गौडपादाचार्यैः ‘ आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ’ इति । यस्मादेवं तस्मात्तेषु बुधो विवेकी न रमते प्रतिकूलवेदनीयत्वान्न प्रीतिमनुभवति । तदुक्तं भगवता पतञ्जलिना ‘ परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ’ इति । सर्वमपि विषयसुखं दृष्टमानुश्रविकं च दुःखमेव प्रतिकूलवेदनीयत्वाद् विवेकिनः परिज्ञातक्लेशादिस्वरूपस्य न त्वविवेकिनः अक्षिपात्रकल्पो हि विद्वानत्यल्पदुःखलेशेनाप्युद्विजते यथोर्णातन्तुरतिसुकुमारोऽप्यक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नेतरेष्वङ्गेषु तद्वद्विवेकिन एव मधुविषसंपृक्तान्नभोजनवत्सर्वमपि भोगसाधनं कालत्रयेऽपि क्लेशानुविद्धत्वाद्दुःखं न मूढस्य बहुविधदुःखसहिष्णोरित्यर्थः । तत्र परिणामतापसंस्कारदुःखैरिति भूतवर्तमानभविष्यत्कालेऽपि दुःखानुविद्धत्वादौपाधिकदुःखत्वं विषयसुखस्योक्तम् । गुणवृत्तिविरोधाच्चेत्यनेन स्वरूपतोऽपि दुःखत्वं तत्र परिणामश्च तापश्च संस्कारश्च त एव दुःखानि तैरित्यर्थः । इत्थंभूतलक्षणे तृतीया । तथाहि रागानुविद्ध एव सर्वोऽपि सुखानुभवः नहि तत्र न रज्यति तेन सुखी चेति संभवति राग एव च पूर्वमुद्भूतः सन्विषयप्राप्त्या सुखरूपेण परिणमते तस्य च प्रतिक्षणं वर्धमानत्वेन स्वविषयाप्राप्तिनिबन्धनदुःखस्यापरिहार्यत्वाद्दुःखरूपतैव या हि । भोगेष्विन्द्रियाणामुपशान्तिपरितृप्तत्वात् तत्सुखं, या लौल्यादनुपशान्तिस्तद्दुःखं, न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यं यतो भोगाभ्यासमनुविवर्धन्ते रागाः कौशलानि चेन्द्रियाणां स्मृतिश्च ‘न जातु कामः’ इत्यादि तस्माद्दुःखात्मकरागपरिणामत्वाद्विषयसुखमपि दुःखमेव कार्यकारणयोरभेदादिति परिणामदुःखत्वं तथा सुखानुभवकाले तत्प्रतिकूलानि दुःखसाधनानि द्वेष्टि नानुपहत्य भूतान्युपभोगः संभवतीति भूतानि च हिनस्ति । द्वेषश्च सर्वाणि दुःखसाधनानि मे मा भूवन्निति संकल्पविशेषः । न च तानि सर्वाणि कश्चिदपि परिहर्तुं शक्नोति अतः सुखानुभवकालेऽपि तत्परिपन्थिनं प्रति द्वेषस्य सर्वदैवावस्थितत्वात्तापदुःखं दुष्परिहरमेव । तापो हि द्वेषः । एवं च दुःखसाधनानि परिहर्तुमशक्तो मुह्यति चेति मोहदुःखतापि व्याख्येया । तथाचोक्तं योगभाष्यकारैः ‘ सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभवः ’ इति । तत्रास्ति द्वेषजः कर्माशयः सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते ततः परमनुगृह्णात्युपहन्ति चेति परानुग्रहपीडाभ्यां धर्माधर्मावुपचिनोति स कर्माशयो लोभान्मोहाच्च भवतीत्येषा तापदुःखतोच्यते यथा वर्तमानः

सुखानुभवः स्वविनाशकाले संस्कारमाधत्ते स च सुखस्मरणं तच्च रागं स च मनःकायवचनचेष्टां सा च पुण्यापुण्यकर्माशयौ तौ च जन्मादीनि संस्कारदुःखता एवं तापमोहयोरपि संस्कारौ व्याख्येयौ । एवं कालत्रयेऽपि दुःखानुवेधाद्विषयसुखं दुःखमेवेत्युक्त्वा स्वरूपतोऽपि दुःखतामाह–'गुणवृत्तिविरोधाच्च' गुणाः सत्त्वरजस्तमांसि सुखदुःखमोहात्मकाः परस्परविरुद्धस्वभावा अपि तैलवर्त्यग्नय इव दीपं पुरुषभोगप्रयुक्तत्वेन त्र्यात्मकमेकं कार्यमारभन्ते तत्रैकस्य प्राधान्ये द्वयोर्गुणभावात्प्रधानमात्रव्यपदेशेन सात्त्विकं राजसं तामसमिति त्रिगुणमपि कार्यमेकेन गुणेन व्यपदिश्यते तत्र सुखोपभोगरूपोऽपि प्रत्यय उद्भूतसत्त्वकार्यत्वेऽप्यनुद्भूतरजस्तमःकार्यत्वात्त्रिगुणात्मक एव । तथा च सुखात्मकत्ववद्दुःखात्मकत्वं विषादात्मकत्वं च तस्य ध्रुवमिति दुःखमेव सर्वं विवेकिनः न चैतादृशोऽपि प्रत्ययः स्थिरः यस्माच्चलं च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् । नन्वेकः प्रत्ययः कथं परस्परविरुद्धसुखदुःखमोहत्वान्येकदा प्रतिपद्यत इति चेत् न, उद्भूतानुद्भूतयोर्विरोधाभावात् समवृत्तिकानामेव हि गुणानां युगपद्विरोधः न विषमवृत्तिकानां यथा धर्मज्ञानवैराग्यैश्वर्याणि लब्धवृत्तिकानि लब्धवृत्तिकैरेवाधर्मज्ञानावैराग्यानैश्वर्यैः सह विरुध्यन्ते न तु स्वरूपसद्भिः प्रधानस्य प्रधानेन सह विरोधो न तु दुर्बलेनेति हि न्यायः । एवं सत्त्वरजस्तमांस्यपि परस्परं प्राधान्यमात्रं युगपन्न सहन्ते न तु सद्भावमपि । एतेन परिणामतापसंस्कारदुःखेष्वपि रागद्वेषमोहानां युगपत्सद्भावो व्याख्यातः । प्रसुप्ततनुविच्छिन्नोदाररूपेण क्लेशानां चतुरवस्थत्वात् । तथा हि 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः पञ्च क्लेशाः, अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणां, अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या, दृग्दर्शनशक्त्योरेकात्मतैवास्मिता, सुखानुशयी रागः, दुःखानुशयी द्वेषः, स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः, ते प्रतिप्रसवहेयाः सूक्ष्माः, ध्यानहेयास्तद्वृत्तयः, क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः, सति मूले तद्विपाको जात्यायुर्भोगाः' इति पातञ्जलानि सूत्राणि । तत्रातस्मिंस्तद्बुद्धिर्विपर्ययो मिथ्याज्ञानमविद्येति पर्यायाः । तस्याः विशेषः संसारनिदानं तत्रानित्ये नित्यबुद्धिर्यथा ध्रुवा पृथिवी ध्रुवा सचन्द्रतारका द्यौरमृता दिवौकस इति, अशुचौ परमबीभत्से काये शुचिबुद्धिर्यथा नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयतीवेति कस्य केन संबन्धः 'स्थानाद्बीजादुपष्टम्भान्निष्पन्दान्निधनादपि । कायमाधेयशौचत्वात्पण्डिता ह्यशुचिं विदुः' इति च वैयासिकः श्लोकः । एतेनापुण्ये पुण्यप्रत्ययोऽनर्थे चार्थप्रत्ययो व्याख्यातः, दुःखे सुखख्यातिरुदाहृता, परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः, इति । अनात्मन्यात्मख्यातिर्यथा शरीरे मनुष्योऽहमित्यादिः । इयं चाविद्या सर्वक्लेशमूलभूता तम इत्युच्यते । बुद्धिपुरुषयोरभेदाऽभिमानोऽस्मिता । मोहः साधनरहितस्यापि सर्वं सुखजातीयं मे भूयादिति विपर्ययविशेषो रागः स एव महामोहः । दुःखसाधने विद्यमानेऽपि किमपि दुःखं मे मा भूदिति विपर्ययविशेषो द्वेषः, स तामिस्रः । आयुरभावेऽप्येतैः शरीरेन्द्रियादिभिरनित्यैरपि वियोगो मे मा भूदित्याविद्वदङ्गनाबालं स्वाभाविकः सर्वप्राणिसाधारणो मरणत्रासरूपो विपर्ययविशेषोऽभिनिवेशः, सोन्धतामिस्रः । तदुक्तं पुराणे 'तमोमोहो महामोहस्तामिस्रो ह्यन्धसंज्ञितः । अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः' इति । एते च क्लेशाश्चतुरवस्था भवन्ति । तत्रासतोऽनुत्पत्तेरनभिव्यक्तरूपेणावस्थानं सुप्तावस्था १, अभिव्यक्तस्यापि सहकार्यलाभात् कार्याजनकत्वं तन्ववस्था २, अभिव्यक्तस्य जनितकार्यस्यापि केनचिद्बलवताभिभवो विच्छेदावस्था ३, अभिव्यक्तस्य प्राप्तसहकारिसंपत्तेरप्रतिबन्धेन स्वकार्यकरत्वमुदारावस्था ४, एतादृगवस्थाचतुष्टयविशिष्टानामस्मितादीनां चतुर्णां विपर्ययरूपाणां क्लेशानामविद्यैव सामान्यरूपा क्षेत्रं प्रसवभूमिः सर्वेषामपि विपर्ययरूपत्वस्य दर्शितत्वात् । तेनाविद्यानिवृत्त्यैव क्लेशानां निवृत्तिरित्यर्थः । ते च क्लेशाः प्रसुप्ता यथा प्रकृ-

तिलीनानां, तनवः प्रतिपक्षभावनया तनूकृता यथा योगिनां, त उभयेऽपि सूक्ष्माः प्रतिप्रसवेन मनोनिरोधेनैव निर्बीजसमाधिना हेयाः। ये तु सूक्ष्मवृत्तयस्तत्कार्यभूताः स्थूला विच्छिन्ना उदाराश्च विच्छिद्य विच्छिद्य तेन तेनात्मना पुनः पुनः प्रादुर्भवन्तीति विच्छिन्नाः। यथा रागकाले क्रोधो विद्यमानोऽपि न प्रादुर्भूत इति विच्छिन्न उच्यते। एवमेकस्यां स्त्रियां चैत्रो रक्त इति नान्यासु विरक्तः किंत्वेकस्यां रागो लब्धवृत्तिरन्यासु च भविष्यद्वृत्तिरिति स तदा विच्छिन्न उच्यते। ये यदा विषयेषु लब्धवृत्तयस्ते तदा सर्वात्मना प्रादुर्भूता उदारा उच्यन्ते। तत उभयेऽप्यतिस्थूलत्वाच्छुद्धसत्त्वमयेन भगवद्ध्यानेन हेया न मनोनिरोधमपेक्षन्ते। निरोधहेयास्तु सूक्ष्मा एव। तथा च परिणामतापसंस्कारदुःखेषु प्रसुप्ततनुविच्छिन्नरूपेण सर्वे क्लेशाः सर्वदा सन्ति। उदारता तु कदाचित्कस्यचिदिति विशेषः। एते च बाधनालक्षणं दुःखमुपजनयन्तः क्लेशशब्दवाच्या भवन्ति। यतः कर्माशयो धर्माधर्माख्यः क्लेशमूलक एव। सति च मूलभूते क्लेशे तस्य कर्माशयस्य विपाकः फलं जन्मायुर्भोगश्चेति। स च कर्माशय इह परत्र च स्वविपाकारम्भकत्वेन दृष्टादृष्टजन्मवेदनीयः। एवं क्लेशसन्ततिर्घटीयन्त्रवदनिशमावर्तते अतः समीचीनमुक्तं ये हि संस्पर्शजा भोगा दुःखयोनय एव ते। आद्यन्तवन्त इति। दुःखयोनित्वं परिणामादिभिर्गुणवृत्तिविरोधाच्च, आद्यन्तवत्वं गुणवृत्तस्य चलत्वादिति योगमते व्याख्या। औपनिषदानां तु अनादिभावरूपमज्ञानमविद्या, अहंकारधर्माध्यासोऽस्मिता, रागद्वेषाभिनिवेशास्तद्वृत्तिविशेषाः, इत्यविद्यामूलत्वात्सर्वेऽप्यविद्यात्मकत्वेन मिथ्याभूता रज्जुभुजङ्गाध्यासवन्मिथ्याभूतत्वेऽपि दुःखयोनयः स्वप्नादिवद्दृष्टिसृष्टिमात्रत्वेनाद्यन्तवन्तश्चेति बुधोऽधिष्ठानसाक्षात्कारेण निवृत्तभ्रमस्तेषु न रमते मृगतृष्णिकास्वरूपज्ञानवानिव तत्रोदकार्थी न प्रवर्तते। न संसारे सुखस्य गन्धमात्रमप्यस्तीति बुद्ध्वा ततः सर्वाणीन्द्रियाणि निवर्तयेदित्यर्थः ॥ २२ ॥

शं० टी०—ननु बाह्यस्पर्शेष्वसक्तात्मेत्युक्तिरनुपयुक्ता, ब्रह्मविदः काले विषयसुखमप्यस्तु सुखं ब्राह्मं चाप्यस्तीत्याशङ्कायां न, विषयसुखस्याद्यन्तवत्त्वेन दुःखवत्त्वादल्पत्वात्तुच्छत्वान्न तत्रात्मतत्त्वज्ञः प्रवर्तत इत्याह—ये हीति। हि यस्मात्कारणात्संस्पर्शजा इन्द्रियाणां विषयाणां च संस्पर्शः परस्परसंयोगस्तस्मादेव जायन्त इति संस्पर्शजा इन्द्रियार्थसंपर्कसंभाविता ये भोगाः विषयसुखानि ते आद्यन्तवन्त उत्पत्तिविनाशवन्तः अत एवानित्याः क्षणिका इत्यर्थः। संस्पर्शजा इति जन्यत्वहेतुनैवानित्यत्वे सिद्धे पुनराद्यन्तवन्त इति वचनं निरर्थकमिति न मन्तव्यं, तार्किकैः प्रध्वंसाभावस्य जन्यत्वं नित्यत्वं चाङ्गीकृतं मीमांसकैरपि "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतम्" इति तज्जन्यसुखस्याप्यक्षयत्वमुररीकृतं तन्निरासितुमाद्यन्तवन्त इत्युक्तं, तेन विषयसुखस्य क्षणिकत्वमल्पत्वं च प्रत्यक्षादिप्रमाणसिद्धं विषयेन्द्रियसंयोगात्पूर्वं तद्वियोगात्पश्चाच्च सुखादर्शनात् ये आद्यन्तवन्तो भोगास्ते दुःखयोनयो दुःखहेतव एव भवन्ति स्वकारणनाशे स्वनाशे स्वकारणासिद्धौ स्वासिद्धौ च यस्माद्दुःखमेव प्रयच्छन्ति तदिदं सर्वलोकप्रसिद्धं तस्माद्विषयसुखस्य सापेक्षत्वं क्षणिकत्वमल्पत्वं दुःखदत्वं च विज्ञाय बुधो ब्रह्मवित्तेषु विषयसुखेषु न रमते रतिं न करोति भुक्तिदशायामपि स्वयं स्वदृष्ट्या ब्रह्मानन्दामृतरसमेव पिबति न बाह्यमनुसंधत्त इत्यर्थः ॥ २२ ॥

श्री० टी०—ननु प्रियविषयभोगानामपि निवृत्तेः कथं मोक्षः पुरुषार्थः स्यात्तत्राह—ये हीति। संस्पृश्यन्त इति संस्पर्शा विषयाः तेभ्यो जाता ये भोगाः सुखानि ते हि वर्तमानकालेऽपि स्पर्धासूयादिव्याप्तत्वाद्दुःखस्यैव योनयः कारणभूताः तथा आदिमन्तोऽन्तवन्तश्च अतो विवेकी तेषु न रमते ॥ २२ ॥

स० टी०—ननु बाह्यरुचित्यागे स्वसुखानुभवो भवेत् ॥ तस्मिन्सति भवेद्बाह्यरुचित्यागस्ततस्तयोः ॥१॥ अन्योन्याश्रयतादोषान्नैकं सिद्ध्येदपीति चेत् ॥ शृणु बाह्यरुचित्यागे दोषदृष्टिर्हि कारणम् ॥ २ ॥ विषयेन्द्रियसंबन्धजन्या ये क्षुद्ररूपिणः ॥ सुखांशानुभवा भोगा इह लोके परत्र च ॥३॥ रागद्वेषादिविद्धत्वाद्दुः-

खहेतव एव ते ॥ विषयेन्द्रियसंयोग आदिरन्तस्तु तत्क्षयः ॥ ४ ॥ तद्वन्तः स्वप्रवन्मध्ये प्रादुर्भूता मृषात्मकाः ॥ आदावन्ते च यन्नास्ति वर्तमानेऽपि तत्तथा ॥ ५ ॥ इतिन्यायेन ते मिथ्याक्षणिकानन्दकारिणः ॥ यस्मादेवं ततस्तेषु रतिमेति न पण्डितः ॥ ६ ॥ रज्जुसर्पवदध्यस्ता भोगा मिथ्याभ्रमाकराः ॥ स्वप्रवद्दृष्टिसृष्टित्वादविद्यामूलका जडाः ॥ ७ ॥ अधिष्ठानावबोधेन नष्टाविद्याभ्रमो बुधः ॥ न तेषु रमते यद्वत्तज्ज्ञ ऊषरवारिषु ॥ ८ ॥ न संसारे सुखस्यास्ति गन्धोऽप्यद्धा ततः सुधीः ॥ बाह्यभोगरुचिं त्यक्त्वा स्वसुखानुभवो भवेत् ॥ ९ ॥ २२ ॥

भा० टी०—विषयेष्वसक्ततां संपादयेदित्युक्तं, तत् भोगानां दुःखरूपत्वप्रतिपादनेन द्रढयति—ये हीति। ये हि यस्माद्विषयेन्द्रियसंस्पर्शेभ्यो जाता भोगास्ते दुःखानामाध्यात्मिकादीनां योनयः कारणानि अविद्यावृतत्वात्। एवकारात्संसारे सुखस्य गन्धमात्रमपि नास्तीति ज्ञात्वा शुक्तिरजतनिभेभ्यो भोगेभ्य इन्द्रियाणि निवर्तयेत्। न केवलं दुःखयोनय एवापित्वाद्यन्तवन्तश्च आदिर्विषयेन्द्रियसंयोगो भोगानामन्तश्च एतद्वियोग एव तस्माद्बुधो विवेकी दृग्दृश्यतत्त्ववित् तेषु भोगेषु न रमते। तदुक्तं वासिष्ठे—'संपदः प्रमदाश्चैव तरङ्गोत्सङ्गभङ्गुराः। कस्तास्वहिफणाच्छत्रच्छायासु रमते बुधः' इति। कौन्तेयेति संबोधयन् स्त्रीस्वभावोऽदीर्घदर्श्यत्यन्तमूढ एव भोगेषु रमते इति ध्वनयति, यद्वा विषयेषु रतिरहितायाः कुन्त्याः पुत्रस्त्वं तेषु रन्तुमयोग्योऽसीति सूचयति ॥ २२ ॥

प० टी०—अथैतदेव सुखशब्दव्यपदेश्यं नान्यदित्याह—ये हीति। सम्यक् स्पृशन्तीति स्पर्शा विषयास्तेभ्यो जाता ये भोगा विषयसुखभोगास्ते दुःखयोनय एव दुःखकारणीभूताः परिणतिविरसत्वात्। यद्वा दुःखं योनिः कारणं येषां तेऽर्जुनेऽपि दुःखरूपत्वादत एव आद्यन्तवन्त उत्पत्तिनाशधर्मकत्वाद्दुःखरूपा एवातस्तेषु बुधो ज्ञाता न रमते विषसंपृक्तान्नवत्त्यजाति। तदुक्तम्—'लोक एष विषयानुरञ्जनं दुःखगर्भमपि मन्यते सुखम्। आमिषं बडिशगर्भमप्यहो मोहतो ग्रसति यद्वद्दण्डजः' इति ॥ २२ ॥

रा० टी०—कामादिवर्जनरूपसंन्यासार्थं कामभोगं निन्दति—ये हीति। ये हि संस्पर्शजाः विषयसंबन्धसंभूताः भोगाः सुखानुभवाः ते दुःखयोनय एव। कुत इत्यत उक्तम्—आद्यन्तवन्त इति। उत्पत्तिविनाशवत्त्वादित्यर्थः। बुधो ज्ञानी तेषु विषयभोगेषु न रमते सक्तिं न करोतीत्यर्थः ॥ २२ ॥

**शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् ॥**
**कामक्रोधोद्भवं वेगं स युक्तः स सुखी नरः ॥ २३ ॥**

त० टी०—एवमक्षयसुखहेतुशुद्धात्मनिष्ठाया दृढीकरणाय विषयसुखस्य दुःखहेतुत्वमभिधाय मुमुक्ष्वनुग्रहाय पूर्वोक्तमपि श्रेयोमार्गे प्रधानप्रतिपक्षं स्मृत्वा तन्निवारणाय पुनर्निर्दिशति—शक्नोतीति। दर्शनश्रवणादिना गुणबुद्ध्या हृद्यतिसक्तशब्दस्पर्शरूपादिमद्वस्तुविषयकप्रीत्यतिशयात्मकोऽभिलाषः कामः तथा प्रतिकूलदर्शनश्रवणादिना दोषबुद्ध्या हृद्यारूढाप्रियवस्तुविषयकद्वेषविशेषनिमित्तकोऽभिज्वलनात्मकोऽन्तःकरणपरिणामः क्रोधस्ताभ्यामुद्भवो नदीवेगवदनिवार्यो देहेन्द्रियविकारो वेगस्तं शरीरविमोक्षणात्प्राक् यावच्छरीरपातमिहैव साधनावस्थायामेव यः सोढुं निवर्तयितुं शक्नोति समर्थो भवति स युक्तः उक्तात्मज्ञानयुक्तः, स सुखी, स एव नरः, पुरुषार्थार्हः नान्यस्तद्वेगे पतित्वाऽऽत्मानमुद्धर्तुं समर्थ इत्यर्थः ॥ २३ ॥

म० टी०—सर्वानर्थप्राप्तिहेतुर्दुर्निवारोऽयं श्रेयोमार्गप्रतिपक्षः कष्टतमो दोषो महता यत्नेन मुमुक्षुणा निवारणीय इति यत्नाधिक्यविधानाय पुनराह—शक्नोतीति। आत्मनोऽनुकूलेषु सुखहेतुषु दृश्यमानेषु

श्रूयमाणेषु स्मर्यमाणेषु वा तद्गुणानुसन्धानाभ्यासेन यो रत्यात्मको गर्धोऽभिलाषस्तृष्णालोभः स कामः स्त्रीपुंसयोः परस्परव्यतिकराभिलाषे त्वत्यन्तनिरूढः कामशब्दः एतदभिप्रायेण कामः क्रोधस्तथा लोभ इत्यत्र धनतृष्णालोभः स्त्रीपुंसव्यतिकरतृष्णा काम इति कामलोभौ पृथगुक्तौ । इह तु तृष्णासामान्याभिप्रायेण कामशब्दः प्रयुक्त इति लोभः पृथङ्नोक्तः । एवमात्मनः प्रतिकूलेषु दुःखहेतुषु दृश्यमानेषु श्रूयमाणेषु स्मर्यमाणेषु वा तद्दोषानुसंधानाभ्यासेन यः प्रज्वलनात्मको द्वेषो मन्युः स क्रोधः तयोरुत्कटावस्था लोकवेदविरोधप्रतिसंधानप्रतिबन्धकतया लोकवेदविरुद्धप्रवृत्त्युन्मुखत्वरूपा नदीवेगसाम्येन वेग इत्युच्यते यथा हि नद्या वेगो वर्षास्वतिप्रबलतया लोकवेदविरोधप्रतिसंधानेनानिच्छन्तमपि गर्ते पातयित्वा मज्जयति चाधो नयति च तथा कामक्रोधयोरपि वेगो विषयाभिध्यानाभ्यासेन वर्षाकालस्थानीयेनातिप्रबलो लोकवेदविरोधप्रतिसंधानेनानिच्छन्तमपि विषयगर्ते पातयित्वा संसारसमुद्रे मज्जयति चाधो महानरकान्नयति चेति वेगपदप्रयोगेण सूचितम् । एतच्चाथ केन प्रयुक्तोयमित्यत्र विवृतम् । तमेतादृशं कामक्रोधोद्भवं वेगमन्तःकरणप्रक्षोभरूपं स्तम्भस्वेदाद्यनेकबाह्यविकारलिङ्गम् आशरीरविमोक्षणात् शरीरविमोक्षणपर्यन्तमनेकनिमित्तवशात्सर्वदा संभाव्यमानत्वेनाविस्रम्भणीयमन्तरुत्पन्नमात्रमिहैव बहिरिन्द्रियव्यापाररूपाद्गर्तपतनात्प्रागेव यो यतिर्धीरस्तिमिङ्गिल इव नदीवेगं विषयदोषदर्शनाभ्यासजेन वशीकारसंज्ञकवैराग्येण सोढुं तदनुरूपकार्यासंपादनेनानर्थकं कर्तुं शक्नोति समर्थो भवति स एव युक्तो योगी स एव सुखी स एव नरः पुमान् पुरुषार्थसंपादनात् । तदितरस्त्वाहारनिद्राभयमैथुनादिपशुधर्ममात्ररतत्वेन मनुष्याकारः पशुरेवेति भावः । प्राक् शरीरविमोक्षणादित्यत्रान्यद्व्याख्यानं यथा मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि प्राणशून्यत्वात्कामक्रोधवेगं सहते तथा मरणात्प्रागपि जीवन्नेव यः सहते स युक्त इत्यादि । अत्र यदि मरणवज्जीवनेऽपि कामक्रोधानुत्पत्तिमात्रं ब्रूयात्तदैतद्युज्येत । यथोक्तं वसिष्ठेन ‘ प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत् ’ इति । इह तूत्पन्नयोः कामक्रोधयोर्वेगसहने प्रस्तुते तयोरनुत्पत्तिमात्रे न दृष्टान्त इति किमतिनिर्बन्धेन ॥ २३ ॥

शं० टी०–ननु सर्वं ब्रह्मैव पश्यतो ब्रह्मनिष्ठानिर्धूतकषायस्यात्मारामस्य सिद्धस्य सुखेच्छया विषयेषु प्रवृत्तिर्मास्तु अभ्यासिनस्त्विष्टेऽप्यनिष्टेऽपि कामः क्रोधस्ताभ्यां प्रवृत्तिर्निवृत्तिश्च स्यातामेवेत्याशङ्कायां न, तस्यापि मुमुक्षोः प्रयत्नेन तौ परिहर्तव्यावेव । कामक्रोधजयेनैव शमादयः श्रवणं ज्ञानं मोक्षस्तत्सुखं च सिध्यति नान्यथेत्याशयेनाह–शक्नोतीति । स्मृते श्रुते दृष्टे प्राप्ते च भोग्यपदार्थे या भोगेच्छा सत्वरा स कामः, यः शिष्टमपि भ्रष्टयति वृद्धमपि गर्धयत्यनुपतापिनमपि संतापयति अप्रियवस्तुनि स्मृते श्रुते दृष्टे च सति मनःक्षोभको यो द्वेषपरिपाकः स क्रोधः, यः स्वाश्रयं वह्निरिव दहति गुरुमपि हिंसति ताभ्यां कामक्रोधाभ्यां सम्यगुद्भव उत्पत्तिर्यस्य तं कामक्रोधसमुद्भवं वेगं कामक्रोधयोरुद्रेकं शरीरविमोक्षणात्प्रागेव विद्यमानदेहस्य पतनात्पूर्वमेव यौवनकाल एवेति यावत्, यो मुमुक्षुस्तितिक्षया तीव्रमोक्षेच्छासमुत्पन्नया सोढुं शक्नोति कामक्रोधौ निर्जित्य शान्तो दान्तो भवितुमर्हतीत्यर्थः । स नरो मोक्षार्थी श्रवणादिना ज्ञानं संपाद्य युक्तो योगी सुखी च ब्रह्मानन्दी भवितुं शक्नोतीत्यर्थः । अत्रायमभिप्रायः–‘ दुर्लभो मानुषो देहो ब्राह्मो देहः सुदुर्लभः । ब्राह्मं देहं समासाद्य येन मुक्त्यै न यत्यते ॥ सुमेरोरग्रमासाद्य स्वदेहं पातयत्यधः । तमेव पतितं विद्युर्जातिभ्रष्टं महर्षयः ’ इति न्यायेन ब्राह्मं मोक्षसंपादनयोग्यं देहं प्राप्य कामक्रोधपरवशो भूत्वा पतितश्चेत्पुनरुक्तलक्षणो देहो दुष्प्रापस्ततो मुमुक्षोर्विवेकवैराग्याभ्यां यौवने पूर्वे वयसि कामादिशत्रून्विजित्य प्रयत्नेनेदानीमेव मोक्षः संपादनीय इति । यद्वा इहैवास्मिन्नेव जन्मनि मोक्षं प्राप्तुमिच्छया शरीरविमोक्षणात् अत्र शरीरपदेन तदाश्रितगार्हस्थ्यं लक्ष्यते तस्य विमोक्षणात्संन्यासात्प्रागेव यो मुमुक्षु-

नरो विवेकवैराग्याभ्यां कामक्रोधोद्भवं वेगं सोढुं शमयितुं शक्नोति स एव शमदमादिसाधनसंपन्नः सन् श्रुत्या मत्या च ज्ञानं संपाद्य युक्तो ब्रह्मयोगयुक्तो भवितुं सुखी ब्रह्मानन्दी च भवितुमर्हति नतु कामक्रोधजयमकृत्वा संन्यस्य श्रवणादिना ज्ञानं तत्फलं ब्रह्मण्यात्मभावं मोक्षसुखं च प्राप्तुं शक्नोतीत्यर्थः ॥ २३ ॥

श्री० टी०—तस्मान्मोक्ष एव परः पुरुषार्थस्तस्य च कामक्रोधवेगोऽतिप्रतिपक्षोऽतस्तत्सहनसमर्थ एव मोक्षभागित्याह—**शक्नोतीति** । कामात् क्रोधाच्चोद्भवति यो वेगो मनोनेत्रादिक्षोभलक्षणः तमिहैव तदुद्भवसमय एव यो नरः सोढुं प्रतिरोद्धुं शक्नोति तदपि न क्षणमात्रं किंतु शरीरविमोक्षणात्प्राक् यावद्देहपातमित्यर्थः । य एवंभूतः स एव मुक्तः समाहितः सुखी च भवति नान्यः । यद्वा मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात्प्रागपि जीवन्नेव यः सहेत स एव युक्तः सुखी चेत्यर्थः । तदुक्तं वसिष्ठेन—'प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रयो भवेत्' इति ॥ २३ ॥

स० टी०—सर्वानर्थकरः श्रेयोमार्गे शत्रुश्च दोषभूः ॥ मुमुक्षुणातियत्नेन वारणीयोऽयमित्यजः ॥ १ ॥ यत्नाधिक्यविधानाय पुनराह वचोऽमृतम् ॥ स्वानुकूलेषु भोगेषु दृश्यमानेष्वनेकधा ॥ २ ॥ स्मर्यमाणेषु वा श्रूयमाणेष्वामुष्मिकेषु यः ॥ शोभनत्वगुणाध्यासो गर्धो रत्यात्मकः स च ॥ ३ ॥ कामस्तृष्णादिपर्यायः सर्वानर्थाकरो नृणाम् ॥ आत्मनः प्रतिकूलेषु दुःखहेतुषु वस्तुषु ॥ ४ ॥ दृश्यमानेषु वा श्रूयमाणेषु स्वान्तगेषु च ॥ तावद्दोषानुसंधानाभ्यासात्प्रज्वलनात्मकः ॥५॥ द्वेषो मन्युः स च क्रोधस्तज्जो वेगस्तयोर्द्वयोः ॥ या चास्त्यत्युत्कटावस्था लोकवेदविरोधिनि ॥६॥ मार्गे प्रवृत्तिहेतुत्वाद्वेगो नद्या रयो यथा ॥ नद्या वेगोऽपि वर्षासु प्राबल्याल्लोकवेदयोः ॥ ७ ॥ विरोधिन्यप्यनिच्छन्तं कुगर्ते पातयत्यधः ॥ तथा कामादिजो वेगो लोकवेदविरोधिनि ॥ ८ ॥ भोगगर्तेऽप्यनिच्छन्तं निरये पातयत्यधः ॥ चित्तप्रक्षोभरूपं तं स्तम्भस्वेदादिलिङ्गकम् ॥ ९ ॥ आमृत्योर्जातमात्रं यदिहैव पतनात्पुरा ॥ तद्दोषदर्शनाभ्यासजातवैराग्यतेजसा ॥ १० ॥ मोघीकर्तुं समर्थोऽस्ति स योगी स सुखी नरः ॥ पुरुषार्थैकनिष्ठत्वात्स एव पुरुषः सुखी ॥ ११ ॥ अन्यस्त्वाहारनिद्रादिपशुधर्मैकतत्परः ॥ नराकारः पशुर्ज्ञेयः पुरुषार्थपराङ्मुखः ॥ १२ ॥ मन्दस्मितं रुचिरकान्ति विलासशोभि स्वाभाविकामृतरसाकरमप्रमेयम् ॥ ध्याने स्वयं श्रितवतां रमयाश्चितं श्रीकृष्णाननं व्रजति नाशमयं कुदोषः ॥ १३ ॥ २३ ॥

भा० टी०—अयं च श्रेयोमार्गप्रतिपक्षी कष्टतमो दोषः सर्वानर्थप्राप्तिहेतुः दुर्निवार्यश्चेति तत्परिहारे यत्नाधिक्यविधानायाह—**शक्नोतीति** । यः इहैव जीवन्नेव इन्द्रियगोचरे प्राप्ते इष्टे विषये श्रूयमाणे स्मर्यमाणे वा सुखहेतौ या तृष्णा स कामः क्रोधश्चैवंभूतेऽनिष्टे विषये द्वेषः तौ कामक्रोधावुद्भवौ यस्य स रोमाञ्चनहृष्टनेत्रवदनलिङ्गोऽन्तःकरणप्रक्षोभरूपः कामोद्भवो वेगः, गात्रप्रकम्पप्रस्वेदसंदष्टोष्ठपुटरक्तनेत्रवक्त्रतादिलिङ्गः चित्तप्रक्षोभरूपः क्रोधोद्भवो वेगः, तं कामक्रोधोद्भवं वेगं शरीरविमोक्षणात्प्रागामरणात् सोढुं प्रसहितुं शक्नोति मरणसीमाकरणं तु निमित्तानामनन्तत्वात् कामक्रोधोद्भवस्य वेगस्य जीवतोऽवश्यं भावित्वात् यावन्मरणं स न विश्वसनीय इति कथनार्थम् । यः सोढुं शक्नोति स युक्तो योगी सुखी चेह लोके नरः स एव नर इति सूचनार्थं नरपदम् । यत्त्वपरे मरणादूर्ध्वं विलपन्तीभिर्युवतीभिरालिङ्ग्यमानोऽपि पुत्रादिभिर्दह्यमानोऽपि यथा प्राणशून्यः कामक्रोधवेगं सहते तथा मरणात्प्राक् जीवन्नेव यः सहते स एव युक्तः सुखी चेत्यर्थः । तदुक्तं वसिष्ठेन 'प्राणे गते यथा देहः सुखं दुःखं न विन्दति । तथा चेत्प्राणयुक्तोऽपि स कैवल्याश्रमे वसेत्' इति तन्मन्दं, प्राणशून्ये कामक्रोधोद्भववेगस्याभावादत्र तद्दृष्टान्तीकरणस्यानुचितत्वात् ॥ २३ ॥

प० टी०—अथ सुखप्राप्त्यभिव्यञ्जकसामग्रीमाह—शक्नोतीति । यः पुरुषः इहैव वर्तमाने देहे कामक्रोधोद्भवं वेगं सोढुं शक्नोति कामक्रोधाभ्यामुद्भवो यस्यासौ मनोवेगस्तत्सहनशीलः । तदपि नैरन्तर्येणेत्याह—प्रागिति । शरीरविमोक्षणात् प्राग् यावद्देहपातमित्यर्थः । एवंभूत एव युक्तः स एव नरः पुरुषार्थी सुखी च भवति ॥ २३ ॥

रा० टी०—उक्तरूपसंन्यासार्थं कामभोगत्यागं प्रशंसति—शक्नोतीति । यः इहैव मानुषे देहे शरीरविमोक्षणात् प्राक् कामक्रोधोद्भवं वेगं मनसोऽनवस्थानं सोढुं शक्नोति स नरः युक्तः ज्ञानोपायवान् सुखी च भवति । मानुषदेह एव कामादिजवेगः सोढुं सुकरो नान्यदेह इति ज्ञापनाय इहैवेत्युक्तिः । अतोऽत्रैव तत्सहनाय प्रयतितव्यमिति भावः ॥ २३ ॥

**योऽन्तःसुखोऽन्तरारामस्तथान्तर्ज्योतिरेव यः ॥**
**स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ २४ ॥**

त० टी०—अथ कामक्रोधवेगसहनानन्तरमात्मसाक्षात्कारं प्रति यदन्तरङ्गसाधनं तदाह—य इति । योऽन्तःसुखोऽन्तःसुखोऽन्तरात्मानुभव एव सुखं यस्य सोऽन्तःसुखः न तु विषयानुभवे, अन्तरेवारामः क्रीडा यस्य नतु बहिः पुत्रकलत्रादिषु, तथाऽन्तर्ज्योतिर्दृष्टिः प्रकाशो वा यस्य न तु बाह्यविषयेषु इन्द्रियैर्वा स योगी ध्यानयोगसंपन्नः ब्रह्मभूतः मायादोषशून्यः सन् ब्रह्मनिर्वाणं विक्षेपशून्यं परिशुद्धात्मस्वरूपमधिगच्छति प्राप्नोति ॥ २४ ॥

म० टी०—कामक्रोधवेगसहनमात्रेणैव मुच्यत इति न किंतु—योऽन्तरिति । अन्तर्बाह्यविषयनिरपेक्षमेव स्वरूपभूतं सुखं यस्य सोऽन्तःसुखो बाह्यविषयजनितसुखशून्य इत्यर्थः । कुतो बाह्यसुखाभावस्तत्राह—अन्तरिति । अन्तः आत्मन्येव न तु स्त्र्यादिविषये बाह्यसुखसाधने आराम आरमणं क्रीडा यस्य सोऽन्तरारामस्त्यक्तसर्वपरिग्रहत्वेन बाह्यसुखसाधनशून्य इत्यर्थः । ननु त्यक्तसर्वपरिग्रहस्यापि यतेर्यदृच्छोपनतैः कोकिलादिमधुरशब्दश्रवणमन्दपवनस्पर्शनचन्द्रोदयमयूरनृत्यादिदर्शनातिमधुरशीतलगङ्गोदकपानकेतकीकुसुमसौरभाद्यवघ्राणादिभिरग्राम्यैः सुखोत्पत्तिसंभवात्कथं बाह्यसुखतत्साधनशून्यत्वमिति तत्राह—तथान्तर्ज्योतिरेव यः यथान्तरेव सुखं न बाह्यैर्विषयैस्तथान्तरेवात्मनि ज्योतिर्विज्ञानं न बाह्यैरिन्द्रियैर्यस्य सोऽन्तर्ज्योतिः श्रोत्रादिजन्यशब्दादिविषयविज्ञानरहितः । एवकारो विशेषणत्रयेऽपि संबध्यते । समाधिकाले शब्दादिप्रतिभासाभावात् व्युत्थानकाले तत्प्रतिभासेऽपि मिथ्यात्वनिश्चयान्न बाह्यविषयैस्तस्य सुखोत्पत्तिसंभव इत्यर्थः । य एवं यथोक्तविशेषणसंपन्नः स योगी समाहितः ब्रह्मनिर्वाणं ब्रह्म परमानन्दरूपं कल्पितद्वैतोपशमरूपत्वेन निर्वाणं तदेव कल्पिताभावस्याधिष्ठानात्मकत्वादविद्यावरणनिवृत्त्याऽधिगच्छति नित्यप्राप्तमेव प्राप्नोति यतः सर्वदैव ब्रह्मभूतो नान्यः "ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेः । 'अवस्थितेरिति काशकृत्स्नः' इति न्यायाच ॥ २४ ॥

शं० टी०—नित्यानित्यविवेकवैराग्यतीव्रमोक्षेच्छाभिः सर्वं संन्यस्य शमाद्यन्तरङ्गसाधनसंपत्त्या श्रुत्वा मत्वा च ताभ्यां समुत्पन्नात्मविज्ञानो यो यतिः स स्वयं विदेहकैवल्यार्थी सन्नेव ब्रह्मनिष्ठया तिष्ठति चेन्मुक्तिं गच्छति नान्यथेति सूचयितुमाह—योऽन्तरिति । योगी श्रवणमननाभ्यां समुत्पन्नात्मज्ञानपरिपाकाय समाधिनिष्ठायां प्रवृत्तो यो ब्रह्मविद्यतिः स सदान्तर्ज्योतिरेव भवेत्, एवशब्दः सर्वत्र संबध्यते "सर्वस्मादन्तरतरं यदयमात्मा" इतिश्रवणादन्तःशब्देनात्र सर्वान्तरत्वादात्मेत्युच्यते । "मनोज्योतिः" इतिश्रवणाज्ज्योतिःशब्देन मन उच्यते अन्तरात्मन्येव ज्योतिर्मनो यस्य सोऽन्तर्ज्योतिरेव भवेन्न कचिद्बाह्यज्योतिः

सदा सर्वत्रात्मानमेव पश्येन्नतु बाह्यमित्यर्थः । अन्तरारामः अन्तरात्मन्येवारमणमहंबुद्धेः क्रीडनं यस्य सोऽन्तरारामो न कचिदनात्मारामः सदात्मन्येवाहंबुद्धिमान् भवेन्न कचिदप्यनात्मनीत्यर्थः । योऽन्तःसुखः सदात्मन्येव साधनानपेक्षं सुखमात्मीयं यस्य सोऽन्तःसुखः सदात्मनैव संतुष्येदित्यर्थः । स योगी स्वयमेव निरन्तरब्रह्मनिष्ठया ब्रह्मभूतः निःशेषतया देहात्मभावं परित्यज्य ब्रह्मण्येवात्मभावं गतः सन् ब्रह्मनिर्वाणं विदेहकैवल्यसुखं गच्छति, उक्तलक्षणसंपन्न एव विदेहमुक्तिं प्राप्नोतीत्यर्थः ॥ २४ ॥

श्री० टी०—न केवलं कामक्रोधवेगसंहरणमात्रेण मोक्षं प्राप्नोति अपि तु—योऽन्तरिति । अन्तः आत्मन्येव सुखं यस्य न विषयेषु अन्तरेवारामः क्रीडा यस्य न बहिः अन्तरेव ज्योतिर्दृष्टिर्यस्य न गीतनृत्यादिषु स एव ब्रह्मणि भूतः स्थितः सन्ब्रह्मणि निर्वाणं लयमधिगच्छति प्राप्नोति ॥ २४ ॥

स० टी०—एवं सर्वापदां मूलं नाश्यत्वेनाभिधाय च ॥ पुनर्ब्रह्मामृतानन्दप्राप्तिसाधनमुच्यते ॥ १ ॥ आत्मन्यन्तःसुखं यस्य क्रीडा यस्यान्तरात्मनि ॥ यस्यात्मन्येव विज्ञानं न बाह्यैरिन्द्रियैर्जडे ॥ २ ॥ वैषयिकं सुखं तस्य साधनं तन्मतिस्तथा ॥ एतत्रयं परित्यक्तं यस्य स्वाभाविकं मलम् ॥ ३ ॥ भूमिकात्रितयं तेन दर्शितं हरिणा स्फुटम् ॥ पञ्चम्यादितुरीयान्तं वासिष्ठे कृतनिर्णयम् ॥ ४ ॥ स समाहितधीर्ब्रह्म सच्चिदानन्दमद्वयम् ॥ अध्यस्तद्वैतशून्यत्वान्निर्वाणमगतागतम् ॥ ५ ॥ अविद्यावृत्तिबाधेन प्राप्तं प्राप्नोति तद्वपुः ॥ ६ ॥ यज्ज्ञानिनां विषयसारविचारणोत्थवैराग्यदार्ढ्यजसमाधिसुखानुभूतिः ॥ विस्मारयत्यखिलबाह्यसुखांशहेतूंस्तं श्रीमुकुन्दमनिशं हृदि भावयेऽहम् ॥ ७ ॥ २४ ॥

भा० टी०—न केवलं कामक्रोधोद्भववेगसहनमात्रेण जीवन्नेव मोक्षं प्राप्नोति अपि तु योऽन्तरात्मनि सुखं यस्य स तथा अन्तरेवात्मन्यारमणं क्रीडा यस्य सः यस्य च स्त्र्यादौ सुखबुद्धिः स तत्रैवारमते अयं तु यतोऽन्तःसुखोऽतोऽन्तरारामः यतोऽन्तरात्मा एव ज्योतिः प्रकाशो यस्य स आत्मैवैकोऽद्वितीयः सर्वावस्थासु जाग्रदादिषु स्वप्रकाशः सत्योऽन्यत्सर्वमिन्द्रियविषयादिकं तत्र कल्पितमनृतमतः सुखहीनं दुःखरूपं क्रीडानास्पदमिति बोधवान् । यत्त्वन्तरेव ज्योतिर्दृष्टिर्यस्य न गीतनृत्यादिष्विति तन्न, अन्तःसुखोन्तराराम इत्यनयोरन्यतरेणाप्यस्यार्थस्य लाभात् । य एतादृशः स योगी ब्रह्मभूतः सन्नपि ब्रह्मनिर्वाणं ब्रह्मनिर्वृतिं ब्रह्मानन्दमिति यावत् गच्छति प्राप्नोति प्राप्तमेव विस्मृतग्रैवेयकमिव प्राप्नोति "ब्रह्मैव सन्ब्रह्माप्येति" इति श्रुतेः । 'अवस्थितेरिति काशकृत्स्नः' इति न्यायाचास्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते । तथा च ब्राह्मणम् 'अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति । एवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयतीति तदर्थः ॥ २४ ॥

प० टी०—अथ न केवलं कामक्रोधसहनमात्रेण मोक्षोऽपि तु—योऽन्तरिति । यः पुरुषोऽन्तःसुख आत्मसुखवांस्तथान्तरारामः क्रीडा यस्य न बहिः स तथान्तर्ज्योतिर्दृष्टिर्यस्य न बहिर्नृत्यगीतादौ स योगी ब्रह्मभूतः सन् ब्रह्मण्येव निर्वाणं लयं प्राप्नोति " तदेव सन्तस्तदु तद्भवामः " इति श्रुतेः ॥ २४ ॥

रा० टी०—ज्ञानिलक्षणं प्रपञ्चयत्युत्तरैः श्लोकैः—योऽन्तरिति । योऽन्तःसुखः कामाद्युपद्रवक्षयाभिव्यक्तस्वरूपसुखः अन्तरारामः भगवद्दर्शनजन्यसुखवान् । उक्तज्ञानिलक्षणद्वये हेतुमाह—अन्तर्ज्योतिरन्तरभिव्यक्तभगवत्स्वरूपः यत इति । एतेनान्तर्ज्योतिष्ट्वमेव ज्ञानित्वमेतत्कथं ज्ञानिलक्षणमिति निरस्तम् । तत्र हेतुसमर्पकत्वादस्येति । असंप्रज्ञातसमाधिस्थस्य बाह्यादर्शनादेवशब्दः संप्रज्ञातसमाधावन्यदर्शनसत्त्वेऽपि तस्य विक्षेपाहेतुत्वाददर्शनकल्पमेव तदिति भावः । एवं चास्यान्यव्यवच्छेदप्रधानत्वादन्यदर्शनहीनान्तर्ज्योतिष्ट्वमित्येवं लक्षणोक्तिपरत्वेऽपि न दोषः । अन्तःसुखत्वादौ हेतुस्तु स योगी ब्रह्मभूतो ब्रह्मणि स्थितो निर्वाण-

मशरीरं ब्रह्माधिगच्छति यतोऽतोऽन्तःसुखादिरित्येवमुत्तरार्धोक्तो ज्ञेयः । नन्वेवं ब्रह्मभूतो ब्रह्माधिगच्छतीत्युक्त्यार्थाद्ब्रह्मभूतत्वस्य ब्रह्माधिगतिरूपब्रह्मज्ञानहेतुत्वमुक्तं तच्च तद्बुद्धय इत्यादिनोक्तमेव ब्रह्मभूतत्वस्य तद्बुद्धित्वादिरूपत्वात् । सत्यमयमप्यनुवाद एव योऽन्तः सुखी योऽन्तरारामो योऽन्तर्ज्योतिरेव यश्च तद्बुद्धित्वादिरूपब्रह्मभूतः निर्वाणं ब्रह्माधिगच्छति स योगी ज्ञानीत्येवं ब्रह्मभूतपदं प्रागुक्ततद्बुद्धित्वादिरूपज्ञानसाधनानुवादः । यस्य ज्ञानस्य तद्बुद्धित्वादिरूपं ब्रह्मभूतत्वं साधनं तादृशज्ञानवानन्तःसुखत्वादिलक्षणक इति तात्पर्यार्थः । अत्र य इति पुनरुक्तिः सर्वत्रान्वयार्था ॥ २४ ॥

## लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः ॥
## छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताः ॥ २५ ॥

**त० टी०**–उक्तसाधनप्रक्रियया बहवो विवेकिनः स्वरूपं प्राप्नुवन्तीत्याह–लभन्त इति । प्रथमतो निष्कामकर्मानुष्ठानेन क्षीणं कल्मषं येषां ते, छिन्नं द्वैधं संशयो येषां ते यतात्मानः आत्मन्येव नियमितमनसः, ततश्च सर्वभूतानां हिते रताः कृपालवः ऋषयः सूक्ष्मदर्शिनः मन्त्रद्रष्टारो वा यथोक्तं ब्रह्मनिर्वाणं लभन्ते ॥ २५ ॥

**म० टी०**–मुक्तिहेतोर्ज्ञानस्य साधनान्तराणि विवृण्वन्नाह–लभन्त इति । प्रथमं यज्ञादिभिः क्षीणकल्मषाः ततोऽन्तःकरणशुद्ध्या ऋषयः सूक्ष्मवस्तुविवेचनसमर्थाः संन्यासिनः ततः श्रवणादिपरिपाकेन छिन्नद्वैधाः निवृत्तसर्वसंशयाः ततो निदिध्यासनपरिपाकेन संयतात्मानः परमात्मन्येवैकाग्रचित्ताः एतादृशाश्च द्वैतादर्शित्वेन सर्वभूतहिते रताः हिंसाशून्याः ब्रह्मविदो ब्रह्मनिर्वाणं लभन्ते " यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः " इति श्रुतेः । बहुवचनं " तद्यो यो देवानाम् " इत्यादिश्रुत्युक्तनियमप्रदर्शनार्थम् ॥ २५ ॥

**शं० टी०**–प्रक्षीणकल्मषत्वच्छिन्नद्वैधत्वयतात्मत्वादिधर्मविशिष्टा भूत्वा सदात्मन्येव ये रमन्ते त एव विदेहमुक्तिं गच्छन्तीत्याह–लभन्त इति । यतात्मानः यतः संयमितः बाह्यप्रवणतावैमुख्यं गमित आत्मा मनो येषां ते यतात्मानः सर्वथा निरुद्धान्तरङ्गा भूत्वा सर्वभूतहिते " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा " इति श्रवणादानन्दरूपत्वाच्च सर्वेषां ब्रह्मादिस्तम्बान्तानां भूतानामात्मैव प्रियो हितस्तस्मिन् सर्वभूतात्मनि स्वात्मनि ब्रह्मण्येव रता निरता ये ऋषयो यतयो भवन्ति ये सदात्मन्येव रमन्ते ते सदात्मनिष्ठया क्षीणकल्मषाः क्षीणं निःशेषक्षयं गतं कल्मषं मनःकषायरूपं वासनाशब्दितं येषां ते क्षीणकल्मषाः ब्रह्मयोगनिष्ठा निर्धूतान्तःकरणदोषा अत एव समुत्पन्नात्मयाथात्म्यविज्ञानेन छिन्नद्वैधाः अर्थस्य द्वैधात्वमवलम्ब्य जायन्त इति द्वैधाः संशयाः स्थाणुत्वपुरुषत्वबुद्ध्योरेकत्वसमावेशे खलु संशयो जायते स्थाणुर्वा पुरुषो वेत्येवमेवात्राप्यर्थज्ञानद्वैविध्यमवलम्ब्य संशया जायन्ते । तत्कथमितिचेदुच्यते आत्मा चिद्रूपो वा अचिद्रूपो वा, चिद्रूपत्वेऽपि नित्यो वाऽनित्यो वा, नित्यत्वेऽपि देहेन्द्रियादिभ्यो भिन्नो वाऽभिन्नो वा, भिन्नत्वेऽपि देहादिभिः संसृष्टो वा न वा, असंसृष्टत्वेऽपि स्वयंकर्तृत्वादिधर्मविशिष्टो वा न वा, कर्तृत्वादिधर्मवैशिष्ट्याभावेऽपि स्वयमसङ्गो वा न वा, असङ्गत्वेऽपि देहादिकृतकर्मभिर्लिप्यते वा न वा, कर्मलेपाभावेऽपि त्वयं ब्रह्माऽभिन्नो वा न वा, ब्रह्माभिन्नत्वेऽपि ब्रह्मात्मैकत्वविज्ञानं ममोत्पन्नं वा न वा, उत्पन्नत्वेऽपि तज्ज्ञानं यथार्थं वायथार्थं वा, यथार्थत्वेऽपि मुक्तेः साधकं वाऽसाधकं वा, मुक्तिसाधकत्वेऽपि मम जीवन्मुक्तिरस्ति वा न वा, तत्सत्त्वेऽपि विदेहमुक्तिः सिध्यति वा न वेत्येवमादयः संशयाः । पूर्वोक्तज्ञानेन छिन्ना विनष्टा द्वैधा येषां ते छिन्नद्वैधाः सन्तो ब्रह्मनिर्वाणं विदेहकैवल्यं लभन्ते प्राप्नुवन्तीत्यर्थः ॥ २५ ॥

श्री० टी०–किंच–लभन्त इति । ऋषयः सम्यग्दर्शिनः क्षीणं कल्मषं येषां छिन्नं द्वैधं संशयो येषां यतः संयत आत्मा चित्तं येषां सर्वेषां भूतानां हिते रताः कृपालवस्ते ब्रह्मनिर्वाणं मोक्षं लभन्ते ॥ २५ ॥

स० टी०–मुक्तिहेत्वात्मबोधस्य साधनान्तरमुच्यते ॥ आदौ क्षीणमला यज्ञैश्चित्तशुद्ध्यात्मदर्शने ॥ १ ॥ समर्थास्तत आत्मैक्यविचाराच्छिन्नसंशयाः ॥ निदिध्यासनदार्ढ्येन ब्रह्मण्येकाग्रचेतसः ॥ २ ॥ अद्वैतात्मधिया धीराः सर्वभूतहिते रताः ॥ हिंसाशून्या ब्रह्मविदो लभन्ते ब्रह्मनिर्वृतिम् ॥ ३ ॥ २५ ॥

भा० टी०–ब्रह्मनिर्वाणप्राप्तिहेतोर्ज्ञानस्य साधनान्तराण्याह–लभन्त इति । ऋषयः सूक्ष्मतत्त्वदर्शिनः "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुतेः ब्रह्मनिर्वाणं लभन्त इत्यन्वयः । 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति वचनमनुरुध्याह–निष्कामकर्मणा ईश्वराराधनलक्षणेन क्षीणपापाः । "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इत्यात्मदर्शनसाधनं श्रवणादिकं कथयन्तीं श्रुतिमनुरुध्याह–श्रवणेन मननेन च च्छिन्नद्वैधाः च्छिन्नसंशयाः यतात्मानः संयतानि समनस्कानीन्द्रियाणि यैस्ते अनेन विजातीयप्रत्ययतिरस्कारपुरःसरसजातीयप्रत्ययप्रवाहीकरणात्मकं निदिध्यासनमुक्तम् । एतादृशानां लक्षणमाह–सर्वेषां भूतानां हिते अनुकूले रताः अहिंसका इत्यर्थः ॥ २५ ॥

प० टी०–अत्राधिकारिण आह–लभन्त इति । ऋषयः सम्यग्दर्शनाः क्षीणकल्मषाः शुद्धचित्ताश्छिन्नं द्वैधं संशयो येषां ते यतात्मानः संयत आत्मा मनो येषां ते तथा सर्वेषां भूतानामुच्चावचरूपाणां तारतम्यवर्ज्यं हिते रता एवंविधा ब्रह्मनिर्वाणं लभन्ते ॥ २५ ॥

रा० टी०–अन्तःसुखत्वादिलक्षणसंपादको ब्रह्माधिगमो न ब्रह्मभूतत्वमात्राद्भवति किंतु पापक्षयाच्चेत्याह–लभन्त इति । द्वैधशब्दोऽत्र द्वेधाभावो द्वैधमिति विषयापेक्षयान्यप्रकारत्वरूपायथार्थत्वपरः सन्नयाथार्थ्योपेतज्ञानलक्षको भूत्वा संशयाविपर्ययपरः । ऋषयो ज्ञानिनः क्षीणकल्मषाः निवृत्तपाप्मानो भूत्वा छिन्नद्वैधा यतात्मानः सर्वभूतहिते रताश्च भवन्तीति शेषः । छिन्नौ द्वैधौ संशयविपर्ययौ येषां ते छिन्नद्वैधाः ते च ते आयतात्मानश्च दीर्घमनस्काः श्रवणादिना विदितसर्ववेद्या इति यावत् । छिन्नद्वैधा यतात्मानः छिन्नद्वैधत्वे क्षीणकल्मषत्वमिवायतात्मत्वमपि बुद्ध्या विविच्य हेतुत्वेन योज्यम् । यतात्मानो वशीकृतमनस्का इति भिन्नं पदं वा । ततश्च निर्वाणमशरीरं ब्रह्म लभन्ते । उपशब्दोऽत्र योज्यः। उपलभन्ते पश्यन्तीत्यर्थः। अत्र ज्ञानस्य प्रतिबन्धकपापक्षयाख्यकारणोक्तावपि असाधारणं कारणं कार्यरूपस्य लक्षणं भवतीत्यस्य लक्षणप्रपञ्चनपरत्वमविरुद्धं ध्येयम् ॥ २५ ॥

**कामक्रोधवियुक्तानां यतीनां यतचेतसाम् ॥**
**अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम् ॥ २६ ॥**

**त० टी०–तेभ्योऽपि केचिद्विशिष्टाः शीघ्रफलभाज इत्याह–कामक्रोधवियुक्तानामिति । उक्तस्वरूपाभ्यां कामक्रोधाभ्यां वियुक्तानां तत्परित्यागिनामत एव यतीनां यत्नशीलानां संयतचित्तानां विदितात्मनां ज्ञातात्मतत्त्वानामभितः साक्षादिहैव ब्रह्मनिर्वाणं मोक्षो वर्तते ॥ २६ ॥**

म० टी०–पूर्वं कामक्रोधयोरुत्पन्नयोरपि वेगः सोढव्य इत्युक्तमधुना तु तयोरुत्पत्तिप्रतिबन्ध एव कर्तव्य इत्याह–कामेति । कामक्रोधयोर्वियोगस्तदनुत्पत्तिरेव तद्युक्तानां कामक्रोधवियुक्तानामत एव यतचेतसां संयतचित्तानां यतीनां यत्नशीलानां संन्यासिनां विदितात्मनां साक्षात्कृतपरमात्मनामभित उभयतो जीवतां मृतानां च तेषां ब्रह्मनिर्वाणं मोक्षो वर्तते नित्यत्वात् नतु भविष्यति साध्यत्वाभावात् ॥ २६ ॥

**शं० टी०**–कामक्रोधराहित्येन सदात्मनिष्ठया तिष्ठतामेव यतीनां जीवन्मुक्तिसुखं विदेहमुक्तिसुखं च सिध्यति नेतरेषामित्याशयेनाह–**कामक्रोधवियुक्तानामिति**। काम इच्छाविशेषः वस्तुष्विष्टताबुद्ध्या मनसो बहिःप्रवृत्तिहेतुः, कामव्याघाते जायमाने वस्तुन्यनिष्टताबुद्ध्या मनसो बहिःप्रवृत्तेरेव हेतुर्बुद्धिवृत्तिविशेषः क्रोध, एतद्द्वयमेव श्रवणमननसमाधिविच्छित्तेः परमकारणं तद्वतो ज्ञानं न सिध्यति समाधिश्च। ताभ्यां समाधौ विच्छिन्ने सति सम्यग्ज्ञानं शतधा श्रुतवतोऽपि न संभवति तदभावे मोक्षाभावस्ततो मुमुक्षोः समाधित्सोर्यतेः कामक्रोधराहित्येनावश्यं भवितव्यमिति सूचयितुं पुनः पुनरुक्तमपि कामक्रोधपरित्यागं तदविस्मरणाय स्मारयति–**कामक्रोधवियुक्तानामिति**। कामक्रोधाभ्यामुक्तलक्षणाभ्यां वियुक्तानामेव यतीनां शान्तानां यतचेतसां सर्वात्मनि प्रत्यगभिन्ने ब्रह्मण्येव यतं नियमेन स्थापितं चेतो येषां तेषां सर्वदा ब्रह्मण्येव तिष्ठतामत एव विदितात्मनामयमेवाहमिति साक्षात्स्वात्मत्वेन विदितः सर्वात्मक आत्मा निर्विशेषः परमात्मा यैस्तेषां सम्यग्विदितात्मतत्त्वानामेव ब्रह्मविदामभित उभयतो जीवद्दशायां विदेहदशायां च ब्रह्मनिर्वाणं ब्रह्मानन्दानुभूतिर्वर्तते सिध्यतीत्यर्थः। एतेन कामक्रोधादिकं विक्षेपकारणं दूरतस्त्यक्त्वा समाधिनिष्ठायामेव तिष्ठतो यतेः सम्यग्ज्ञानं तत्फलं मोक्षश्च सिध्यतीति सूचितं भवति ॥ २६ ॥

**श्री० टी०**–किंच–**कामक्रोधवियुक्तानामिति**। कामक्रोधाभ्यां वियुक्तानां यतीनां संन्यासिनां संयतचित्तानां ज्ञातात्मतत्त्वानामभित उभयतः मृतानां जीवतां च न देहान्त एव तेषां ब्रह्मणि लयः अपि तु जीवतामपि वर्तत इत्यर्थः ॥ २६ ॥

**स० टी०**–पूर्वमुत्पन्नयोर्वेगः सोढव्यः कामकोपयोः ॥ उक्तोऽधुना तयोर्जन्मप्रतिबन्धार्थमुच्यते ॥ १ ॥ कामक्रोधवियोगस्तदनुत्पत्तिर्विवक्षिता ॥ तद्वतां यत्नशीलानां समाहितधियां सताम् ॥ २ ॥ साक्षात्कृतात्मतत्त्वानां मृतानां जीवतामपि ॥ तेषां हि वर्तते मोक्षो नित्यत्वात्स्वस्वरूपकः ॥ ३ ॥ २६ ॥

**भा० टी०**–पूर्वं कामक्रोधोद्भवो वेगः सोढव्य इत्युक्तमिदानीं तावेव त्याज्यावित्याह–**कामक्रोधेति**। कामक्रोधाभ्यां वियुक्तानां यतीनां संन्यासिनां संयतचित्तात्मनां विदितात्मतत्त्वानां ब्रह्मनिर्वाणमभितः उभयतो जीवतां मृतानां च वर्तते ॥ २६ ॥

**प० टी०**–किंच–**कामेति**। कामक्रोधाभ्यां परमवैरिभ्यां वियुक्तानां यतचेतसां नियमितमनसां यतीनां संन्यासिनां विदितात्मनां ज्ञातात्मतत्त्वानामपि जीवतां मृतानां वा ब्रह्मनिर्वाणं वर्तते ॥ २६ ॥

**रा० टी०**–न केवलमन्तःसुखत्वादिकमेव ज्ञानिलक्षणं किंतु सर्वदेशकालेषु सुखेन ब्रह्मलब्धिमत्त्वमपीत्याह–**कामक्रोधेति**। यतीनां प्रयत्नवतां यतचेतसां वशीकृतमनस्कानामभितः सर्वदेशकालेषु वर्तते रक्षकत्वेन ज्ञानविषयत्वेन वेत्यर्थः। विदितात्मनां ब्रह्मज्ञानिनाम्। शिष्टं व्यक्तम् ॥ २६ ॥

**स्पर्शान् कृत्वा बहिर्बाह्यांश्चक्षुश्चैवान्तरे भ्रुवोः ॥**
**प्राणापानौ समौ कृत्वा नासाभ्यन्तरचारिणौ ॥ २७ ॥**
**यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः ॥**
**विगतेच्छाभयक्रोधो यः सदा मुक्त एव सः ॥ २८ ॥**

**त० टी०**–पूर्वं मोक्षान्तरङ्गोपायतया स योगी ब्रह्मनिर्वाणमित्यनेन सूचितं ध्यानयोगं विस्तरेण निरूपयितुं सफलमिह सूत्रवत्संक्षिप्याऽऽह–**स्पर्शानिति द्वाभ्याम्**। स्पर्शान् स्पर्शोपलक्षितान शब्दस्पर्शरूपरसगन्धान् पञ्च विषयान्बाह्यान्बहिर्भवान् श्रोत्रचक्षुरादिद्वारेणान्तःप्रविष्टान् पुनस्तच्चिन्तनपरित्यागेन बहिरेव कृत्वा चक्षुश्च दृष्टिं भ्रुवोरन्तरे मध्ये कृत्वा अत्यन्तनिमीलने हि निद्रात्मको लयो

भवेत्, प्रसारणे तु बाह्यविषयसंसर्गेण विक्षेपो भवेत्, एतद्दोषद्वयपरिहाराय किंचिन्निमीलनेन दृष्टिं नासाग्रे विन्यस्य उच्छ्वासनिःश्वासगतिभ्यां नासाभ्यन्तरचारिणौ प्राणापानौ उभयगतिनिरोधेन समौ कृत्वा कुम्भकेन वशीकृत्वेत्यर्थः। अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य, मोक्ष एव परमयनं प्राप्यं यस्य, अत एव विगतेच्छाभयक्रोधः, य एवंभूतो मुनिः स सदा फलकाल इव साधनकालेऽपि मुक्त एव, संसारदोषास्पृष्ट एवेत्यर्थः॥ २७॥ २८॥

म० टी०–पूर्वमीश्वरार्पितसर्वभावस्य कर्मयोगेनान्तःकरणशुद्धिस्ततः सर्वकर्मसंन्यासस्ततः श्रवणादिपरस्य तत्त्वज्ञानं मोक्षसाधनमुदेतीत्युक्तम्। अधुना स योगी ब्रह्मनिर्वाणमित्यत्र सूचितं ध्यानयोगं सम्यग्दर्शनस्यान्तरङ्गसाधनं विस्तरेण वक्तुं सूत्रस्थानीयाँस्त्रीन् श्लोकानाह भगवान्। एतेषामेव वृत्तिस्थानीयः कृत्स्नः षष्ठोऽध्यायो भविष्यति। तत्रापि द्वाभ्यां संक्षेपेण योग उच्यते तृतीयेन तु तत्फलं परमात्मज्ञानमिति विवेकः। स्पर्शानिति। स्पर्शान् शब्दादीन् बाह्यान् बहिर्भवानपि श्रोत्रादिद्वारा तत्तदाकारान्तःकरणवृत्तिभिरन्तःप्रविष्टान् पुनर्बहिरेव कृत्वा परवैराग्यवशेन तत्तदाकारां वृत्तिमनुत्पाद्येत्यर्थः। यद्येते आन्तरा भवेयुस्तदोपायसहस्रेणापि बहिर्न स्युः स्वभावभङ्गप्रसङ्गात्। बाह्यानां तु रागवशादन्तःप्रविष्टानां वैराग्येण बहिर्गमनं संभवतीति वदितुं बाह्यानिति विशेषणम्। तदनेन वैराग्यमुक्त्वाऽभ्यासमाह–चक्षुश्चैवान्तरे भ्रुवोः कृत्वेत्यनुषज्यते। अत्यन्तनिमीलने हि निद्राख्या लयात्मिका वृत्तिरेका भवेत् प्रसारणे तु प्रमाणविपर्ययविकल्पस्मृतयश्चतस्रो विक्षेपात्मिका वृत्तयो भवेयुः पञ्चापि तु वृत्तयो निरोद्धव्या इति अर्धनिमीलनेन भ्रूमध्ये चक्षुषो निधानं तथा प्राणापानौ समौ तुल्यावूर्ध्वाधोगतिविच्छेदेन नासाभ्यन्तरचारिणौ कुम्भकेन कृत्वा अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य स तथा मोक्षपरायणः सर्वविषयविरक्तो मुनिर्मननशीलो भवेत्। विगतेच्छाभयक्रोध इति वीतरागभयक्रोध इत्यत्र व्याख्यातम्। एतादृशो यः संन्यासी सदा भवति मुक्त एव सः न तु मोक्षस्तस्य कर्तव्योऽस्ति अथवा य एतादृशः स सदा जीवन्नपि मुक्त एव॥ २७॥ २८॥

शं० टी०–संयतात्मनामिति सम्यग्ज्ञानसिद्धेस्तत्फलसिद्धेश्च समाधिः परमकारणमिति सूचयित्वा तमेव समाधियोगं ससाधनमुपदिदिक्षुस्तस्य सूत्रभूतं श्लोकत्रयमाह। तत्रादौ श्लोकद्वयेन निदिध्यासोरन्तरङ्गसाधनानि षट्कर्तव्यान्युपदिशति–स्पर्शानिति। आत्मनो बहिरेव भ्रान्त्या कल्पिता बाह्यास्तान् बाह्यान् स्पर्शान् शब्दादिविषयान् बहिःकृत्वा बहिर्देशे एव संस्थाप्य मनसा न किंचित्स्मृत्वेत्यर्थः। इतस्ततो दर्शनं यथा न स्यात्तथा भ्रुवोरन्तरे चक्षुर्दृष्टिं कृत्वा तथा नासाभ्यन्तरचारिणौ प्राणापानौ च समौ साम्यावस्थापन्नौ हृदये कृत्वा केवलं कुम्भकं कुर्वन्नित्यर्थः। पापक्षयार्थं मनोनैश्चल्यार्थं केवलकुम्भकं मुमुक्षोः कर्तव्यम्। यतेन्द्रियमनोबुद्धिः इन्द्रियाणि च मनश्च बुद्धिश्चेन्द्रियमनोबुद्धयः यताः संयताः स्वस्वविषयवैमुख्यं गमिता यस्य स यतेन्द्रियमनोबुद्धिः इन्द्रियैर्विषयग्रहणं मनसा विषयचिन्तनं बुद्ध्याऽवेशात्प्राप्तस्याप्यर्थस्य ग्रहणमकुर्वन्नित्यर्थः। विगतेच्छाभयक्रोधः इच्छा च भयं च क्रोधश्च इच्छाभयक्रोधाः विशिष्य बुद्धिं परित्यज्य गता विगता इच्छाभयक्रोधा यस्य स विगतेच्छाभयक्रोधो भूत्वा यस्मिन् कस्मिन् विषये इच्छायां सत्यां समाधिर्न सिध्यति दिवा रात्रावरण्ये गुहादौ प्राणिभ्यो भयमस्ति चेत्समाधिर्न सिध्यति मशकपिपीलिकादिष्वपकारिषु च क्रोधो हृद्यस्ति चेत्समाधिर्न सिध्यत्यत एव तत्त्रितयं निदिध्यासुः परित्यजेदित्यर्थः। किं च मोक्षपरायणः प्रयत्नेन कर्तव्यं कार्यं सर्वं परित्यज्य तीव्रमोक्षेच्छया मोक्षसाधनैकनिष्ठः स मोक्षपरायणः सन् यो मुमुक्षुः सर्वं संन्यस्य सदा मुनिर्भवति मुनिर्मननशीलः मननं वस्तुध्यानं नियमेन तदेव करोतीति मुनिः यः सदा मुनिरेव भवति स एव मुक्तो भवति नान्यः शतधा कृतश्रवणोऽपीति द्वयोरर्थः॥२७॥२८॥

**श्री० टी०**–स योगी ब्रह्मनिर्वाणमित्यादिषु योगी मोक्षमाप्रोतीत्युक्तं तमेव योगं संक्षेपेण दर्शयन्नाह–**स्पर्शानिति द्वाभ्याम्** । बाह्या एव स्पर्शा रूपरसादयो विषयाश्चिन्तिताः सन्तोऽन्तःप्रविशन्ति ताँस्तच्चिन्तात्यागेन बहिरेव कृत्वा चक्षुश्च भ्रुवोरन्तरे भ्रूमध्य एव कृत्वाऽत्यन्तं नेत्रयोर्निमीलने निद्रया मनो लीयते उन्मीलनेन च बहिः प्रसरति तदुभयदोषपरिहारार्थमर्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः। उच्छ्वासनिश्वासरूपेण नासिकयोरभ्यन्तरे च चरन्तौ प्राणापानावूर्ध्वाधोगतिनिरोधेन समौ कृत्वा कुम्भयित्वेत्यर्थः। यद्वा प्राणो यथा बहिर्न निर्याति यथा चापानोऽन्तर्न प्रविशति किंतु नासामध्य एव द्वावपि यथा चरतः तथा मन्दाभ्यामुच्छ्वासनिःश्वासाभ्यां समौ कृत्वेति ॥ २७ ॥ **यत इति** । अनेनोपायेन यताः संयता इन्द्रियमनोबुद्धयो यस्य मोक्ष एव परमयनं प्राप्यं यस्य अत एव विगता इच्छाभयक्रोधा यस्य य एवंभूतो मुनिः स सदा जीवन्नापि मुक्त एवेत्यर्थः ॥ २८ ॥

**स० टी०**–ईश्वरार्पितचित्तस्य धीशुद्धिः कर्मयोगतः ॥ ततः स्यात्कर्मसंन्यासः श्रवणादिपरस्य च ॥१॥ मोक्षहेत्वात्मविज्ञानं भवतीति पुरोदितम् ॥ इदानीं ब्रह्मनिर्वाणं स योगीत्यत्र सूचितम् ॥ २ ॥ विज्ञानसाधनं ध्यानयोगं मुख्यं सुविस्तरात् ॥ वक्तुं त्रीन्सूत्रस्थानीयाञ्छ्लोकानाह जगद्गुरुः ॥ ३ ॥ वृत्तिस्थानीय एतेषां षष्ठाध्यायो भविष्यति ॥ द्वाभ्यां संक्षेपतो योगस्तृतीये तत्फलं स्मृतम् ॥ ४ ॥ बाह्याः शब्दादयो बुद्धाविन्द्रियैः संप्रवेशिताः ॥ वैराग्येणैव तान्बाह्यान्बहिः कृत्वा प्रयत्नतः ॥ ५ ॥ यद्येते आन्तराः स्युर्वै तदोपायसहस्रकैः ॥ बहिर्न स्युः स्वभावस्य भङ्गः कर्तुं न शक्यते ॥ ६ ॥ बाह्याँस्त्वन्तःप्रविष्टाँस्तान्रागावेशाद्बहिस्तदा ॥ कर्तुं शक्यान्विरागेण बाह्यानिति विशेषणात् ॥ ७ ॥ वैराग्यं तदनेनोक्त्वा प्राहाभ्यासमधोक्षजः ॥ अत्यन्तमीलने निद्रा प्रसारे विभ्रमादयः ॥ ८ ॥ अतोऽर्धमीलनेनैव भ्रूमध्ये चक्षुषोः स्थितिः ॥ ऊर्ध्वाधोगतिविच्छेदान्नासाभ्यन्तरचारिणौ ॥९॥ कुम्भकेन समौ कृत्वा प्राणापानौ विचक्षणः॥१०॥२७॥ संयता इत्युपायेन यस्येन्द्रियमनोधियः ॥ विषयान्विषवत्त्यक्त्वा स मुनिर्मोक्षतत्परः ॥ १ ॥ इच्छादिरहितो योगी जीवन्नेव विमुच्यते ॥ २ ॥ २८ ॥

**भा० टी०**–एवं तत्त्वज्ञाननिष्ठानां यतीनां सद्योमुक्तिरुक्ता कर्मयोगिनां च सत्त्वशुद्ध्यादिक्रमेण । अथेदानीं ध्यानयोगस्य सम्यग्दर्शनान्तरङ्गसाधनस्य षष्ठाध्याये विस्तरेण वक्ष्यमाणस्य सूत्रस्थानीयान् त्रीञ्छ्लोकानाह–**स्पर्शानिति** । स्पर्शान् शब्दादीन्बाह्यानेव श्रोत्रादिद्वारेण अन्तर्बुद्धौ प्रविष्टान् विषयान् अचिन्तनेन बहिःकृत्वा चक्षुश्चैव भ्रुवोरन्तरे कृत्वा तथा प्राणापानौ नासाभ्यन्तरचारिणौ समौ कृत्वा ॥ २७ ॥ यतानि संयतानि इन्द्रियादीनि येन स मुनिर्मननशीलः मोक्ष एव परमयनं परा गतिर्यस्य स मोक्षपरायणो मुमुक्षुः विगता इच्छादयो यस्मात्स य एवं वर्तते स मुमुक्षुरेव न तस्य मोक्षादन्यत्कर्तव्यमस्ति । स्पर्शान्कृत्वा बहिर्बाह्यान् मोक्षपरायण इत्यनेन वैराग्यवान्मुमुक्षुरधिकारी कथितः। चक्षुश्चैवान्तरे भ्रुवोरित्यनेनासनजयेन लयविक्षेपराहित्यमुक्तम्। प्राणेत्यादिना प्राणायामो निरूपितः। स्पर्शान्कृत्वा बहिर्बाह्यानित्यनेनैव "अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः" इतिसूत्रोक्ता यमाः "शौचसंतोषतपःस्वाध्यायेश्वरप्रणिधानानि नियमाः" इतिसूत्रोक्ता नियमाश्च प्रदर्शिताः । यतेन्द्रिय इति प्रत्याहारः यतमना इति धारणाध्याने यतबुद्धिरिति समाधिः कथितः । विगतेच्छाभयक्रोध इतिमोक्षपरायणस्य योगिनः स्वरूपनिरूपणमिति विवेकः ॥ २८ ॥

**प० टी०**–अथ तमेव योगं संक्षेपेणाह–**स्पर्शानिति** द्वाभ्याम् । बाह्यान् विषयान् रूपरसादीन् बहिः स्मरणाविषयान् कृत्वा दूरतो विसृज्य तथा भ्रुवोरन्तरे भ्रूमध्ये चक्षुः कृत्वात्यन्तं नेत्रनिमीलनेन निद्रा भवत्युन्मीलनेन च बहिः प्रसरति तदुभयदोषपरिहारार्थमर्धनिमीलनेन भ्रूमध्ये दृष्टिं निधायेत्यर्थः । तदुक्तं योगमार्तण्डे ' भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी । न रोगो मरणं तत्र न निद्राक्षुत्तृडादयः ' इति ।

तथा नासाभ्यन्तरचारिणौ प्राणापानौ समौ कृत्वा कुम्भयित्वेत्यर्थः ॥ २७ ॥ यतेन्द्रिय इति । अनेनोपायेन क्रमेण यतेन्द्रियमनोबुद्धिर्मुनिर्मननशीलो मोक्ष एव परमयनं गतिर्यस्य तथात एव विगतेच्छाभयक्रोधः सन् सदैव मुक्तो जीवन्मृतो वा मुक्तः स्यादित्यर्थः । तदुक्तं टिप्पणिकासु 'परावृत्तं चित्तं यदि भवति बाह्यव्यवहृतेरसत्यायाः सत्यं कलयति तदाभ्यासवशतः। क्षुधार्तः संविष्टः क्षणमनुभवन् स्वाप्रमशनं मृषा मत्वा बोधे पुनरपि च भोक्तुं प्रयतते' । अथ निरूपितार्थविषये सर्वशाखोक्ताः श्रुतयश्च—"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततम् । तद्विप्रासो विपन्यवो जागृवांसः समिन्धते । विष्णोर्यत्परमं पदम्" अत्र रावणभाष्यम् 'विष्णोर्व्यापनशीलस्यापि परमात्मनस्तत्परमं पारमार्थिकं पदमभिव्यक्तिस्थानं दिवि मूर्ध्नि भ्रूमध्ये वर्तते । "त्रिपादस्यामृतं दिवि" इति श्रुतेः सत्यज्ञानानन्दात्मकं विष्णोः पदं तत्किं सूरयो महानुभावाश्चक्षुराततं विस्तृतमिव कृत्वा सदाव्यवधानेन पश्यन्ति निरन्तरं साक्षात्कुर्वन्ति । यद्वा चक्षुरर्थप्रकाशमिव एवकारार्थे आततमपरिच्छिन्नमेव यथा स्यात् तथा पश्यन्ति । तत्तस्माद्विप्रासो विप्राः श्रेष्ठमतयो विपन्यवो मेधाविनो जागरांचक्रुरिति जागृवांसो दृश्यप्रपञ्चाद्दीर्घस्वप्नात् सकाशाज्जागरं प्राप्ता इत्यर्थः । प्रोक्तवदनुभूयमानपदं समिन्धते समृद्धिं नयन्ति सर्वात्मकत्वेन पश्यन्ति । अत्रैतदुक्तं भवति अभ्यासदशायां सुषुम्नाविवरेण भ्रूमध्यप्रापितया दृष्ट्या पश्यन्ति व्यवहारदशायां तु सकलविषयप्रतीतिरूपेण तदेव पश्यन्तीत्यर्थः । अथैतदर्थे सामारण्यके अन्या श्रुतिरपि—"चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः । आप्रा द्यावापृथिवी अन्तरिक्षं सूर्य आत्मा जगतस्तस्थुषश्च" इति । भाष्यम्—'द्योतयन्त्यर्थान् प्रकशयन्ति ते देवाश्चक्षुराद्यास्तेषां मध्ये चित्रं विचित्रं रूपरसगन्धशब्दग्राहकमनीकं तेजःसमूहरूपमुदगादुदयं प्राप्तम् । किंभूतम्, मित्रस्य चक्षुषोऽधिदैवतस्य सूर्यस्य तथा वरुणस्य रसनाधिदैवतस्याग्नेर्वागधिदैवतस्य चक्षुः प्रकाशकम्, तच्छक्तिप्रदमित्यर्थः । अथैवंविधोऽपि न जीवत्वरूपेण परिच्छिन्नः किं तु द्यावापृथिवी द्यावापृथिव्यन्तरिक्षमाकाशं च आप्रा आपूरितवान् व्यापक इत्यर्थः । तथा सूर्यस्तत्प्रकाशश्च ज्ञापकः । यतो जगतो जङ्गमस्य तस्थुषः स्थावरस्य चान्तर्यामी । अथ प्राणापानावित्यत्र शातपथी श्रुतिः—"तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च नेन्मा पाप्मा मृत्युराप्नवदिति यद्यु चरेत्समापयिषेत्तेनो एतस्यै देवतायै सायुज्यꣳ सलोकतां जयति य एवं वेद" । भाष्यम्—अथातो व्रतमीमांसेत्यादिना चक्षुरादिव्रतमात्मज्ञानोपयोगि न भवतीत्युपक्रम्य तस्मादित्युपसंहरति तस्मात्कारणादेकमेव व्रतं चरेत् । तत्किम् प्राण्याच्चैवापान्याच्चेति प्राणाज्जातः प्राण्योऽपानाज्जातोऽपान्यो योऽयमभ्यासस्तस्मात्प्राणायामव्रतं चरेदित्यर्थः । अथ तत्किं कारणमित्याह—नेदिति निपातो निषेधार्थे । पाप्मा घातको मृत्युर्मा मां प्रति नेदाप्नुवत् नागच्छेदिति । अथेति निश्चित्य यद्येतद्व्रतं चरेत्तर्हि समापयिषेत् समाप्तिं नेतुमिच्छेद् यावत्प्राणायामः सिध्येत्तावन्न त्यजेदित्यर्थः । तेन व्रतेन उ इति निर्धारणेन एतस्यै इति चतुर्थ्या पञ्चम्य(षष्ठ्य ?)र्थोऽभिहितः एतस्या मुख्यप्राणदेवतायाः सायुज्यं सलोकतां जयति प्राप्नोति य एवं वेद । तथा "अन्तश्चरति रोचनास्य प्राणादपानति" इत्यादिसामारण्यकमपि दर्शनीयम् ॥ २८ ॥

रा० टी०—स ब्रह्मयोगयुक्तात्मेत्यादौ ब्रह्मयोगादिपदेन प्रकृतध्यानप्रकारमाह—**स्पर्शानित्यादिद्वयेन** । स्पृश्यन्त इति स्पर्शाः शब्दाद्याः श्रोत्रादीन्द्रियविषयास्तेषां बाह्यत्वं दुःखसंपादकत्वं बाह्यान् स्पर्शान् शब्दादीन्बहिः श्रोत्राद्यविषयान् कृत्वा प्रत्याहारेणेन्द्रियाणि नियम्येति यावत् । भ्रुवोरन्तरे मध्ये चक्षुश्च कृत्वा भ्रुवोर्मध्यमवलोकयन्नित्यर्थः । संप्रेक्ष्य नासिकाग्रं स्वमित्यादेर्वक्ष्यमाणस्योपलक्षणं प्राणापानौ समौ समानौ निर्विकारौ नासाभ्यन्तरचारिणौ कृत्वा कुम्भके स्थित्वेति यावत् ॥ २७ ॥ यतेन्द्रियमनोबुद्धिः मुनिः मननशीलः एवंभूतो यः स मुक्त एवेति स्तुतिः । यद्वा अभिमानादिपरित्यागेन मुक्तसादृश्यान्मुक्त एवेति गौणप्रयोगः ॥ २८ ॥

**भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ॥**
**सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥ २९ ॥**

इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादे पञ्चमोऽध्यायः ॥ ५ ॥

**त० टी०**–एवमुक्तानां यज्ञादिकर्मतपोज्ञानयोगानां समरूपात्मदर्शनं संसारधर्मासङ्गत्वं च फल-मुक्तं, तच्च न स्वातन्त्र्येणापि तु सर्वफलदातुरीश्वरेश्वरस्य भगवतस्तथात्वज्ञानद्वारेणेत्याह–**भोक्तार-मिति** । यज्ञानां तपसां च श्रद्धाप्रीतिपूर्वकं समर्पितानां भोक्तारं पालनाभ्यवहारकर्तारं सर्वलोकम-हेश्वरं सर्वेषां लोकानां लोकेश्वराणामपीश्वरं सर्वभूतानां प्राणिनां सुहृदं हितेच्छुं मां ज्ञात्वा शान्तिं संसारबन्धात्मकविक्षेपनिवृत्तिरूपां दशामृच्छति प्राप्नोति । स्वस्वरूपज्ञानप्रकारं तु पञ्चदशेऽध्याये सम्यग्वक्ष्यति ॥ २९ ॥

साधनं कर्म ज्ञानादि कृपया हरिणोदितम् ॥ समदर्शी यतो भूत्वा परज्ञाने ततोऽर्हति ॥
इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवका-
श्मीरिभट्टाचार्यविरचितायां पञ्चमोऽध्यायः ॥ ५ ॥

**म० टी०**–एवं योगयुक्तः किं ज्ञात्वा मुच्यत इति तदाह–**भोक्तारमिति** । सर्वेषां यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च भोक्तारं भोगकर्तारं पालकमिति वा । भुज पालनाभ्यवहारयोरिति धातुः । सर्वेषां लोकानां महान्तमीश्वरं हिरण्यगर्भादीनामपि नियन्तारं सर्वेषां प्राणिनां सुहृदं प्रत्युपकारनि-रपेक्षतयोपकारिणं सर्वान्तर्यामिणं सर्वभासकं परिपूर्णसच्चिदानन्दैकरसं परमार्थसत्यं सर्वात्मानं नारायणं मा ज्ञात्वा आत्मत्वेन साक्षात्कृत्य शान्तिं सर्वसंसारोपरतिं मुक्तिमृच्छति प्राप्नोतीत्यर्थः । त्वां पश्यन्नपि कथं नाहं मुक्त इत्याशङ्कानिराकरणाय विशेषणानि । उक्तरूपेणैव मम ज्ञानं मुक्तिकारणमिति भावः ॥ २९ ॥

अनेकसाधनाभ्यासनिष्पन्नं हरिणेरितम् ॥ स्वस्वरूपपरिज्ञानं सर्वेषां मुक्तिसाधनम् ॥
इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीयपादशिष्यमधुसूदनसरस्वतीविरचितायां
श्रीभगवद्गीतागूढार्थदीपिकायां स्वरूपपरिज्ञानं नाम पञ्चमोऽध्यायः ॥ ५ ॥

**शं० टी०**–श्लोकद्वयेन ध्यातुः साधनं ध्यातारं च निरूप्येदानीं तृतीयेन तस्य ध्येयं वस्तु निरूपयति–**भोक्तारमिति** । उक्तसाधनसंपन्नो निदिध्यासुर्यतिर्यज्ञतपसां यज्ञानां श्रौतानां स्मार्तानां तपसां सत्यश्रुत-शान्त्यादीनामन्येषां च कर्मणां यत्फलं तस्य भोक्तारमात्मानमुपाधितद्धर्मसंबन्धरहितं स्वं सर्वभूतानां ब्रह्मा-दिस्तम्बान्तानामात्मत्वात्सुहृदं प्रेष्ठतमम् । यद्वा सर्वभूतानां सुशोभनं हृत् हृदयमुपलब्धिस्थानत्वेन यस्य तं सुहृदं सर्वभूतानां हृदये आत्मत्वेन वर्तमानं सर्वलोकमहेश्वरं लोक्यन्त इति लोकाः सर्वे च ते लोकाश्च सर्वलोका अव्यक्तादिस्थूलान्तास्तेभ्यो महान्महत्तमः स्वसन्निधिमात्रेण सर्वमीष्टे चेष्टयतीतीश्वरः महांश्चासा-वीश्वरश्च महेश्वरस्तं सर्वलोकमहेश्वरं सर्वात्मकं सच्चिदानन्दैकरसं मां परमात्मानं ज्ञात्वा प्रत्यगात्मानं स्वं मामेव परं ब्रह्म ज्ञात्वा प्रत्यगभिन्नं परं ब्रह्म मां मत्वा ध्यात्वा च शान्तिमृच्छति सर्वसंसारोपशमं परं ब्रह्मभावं प्राप्नोतीत्यर्थः । यद्वा यज्ञतपसां भोक्तारं कार्योपाधिकं त्वंपदार्थमात्मानं सर्वभूतसुहृदं सर्वलोकम-हेश्वरं कारणोपाधिकं तत्पदार्थं च " अथात आदेशो नेति नेति " इत्यादिश्रुत्यवष्टम्भेनोपाधिद्वयं निरस्य केवलचैतन्यमात्रौ तौ तत्त्वंपदार्थौ द्वावपि तयोरधिष्ठानभूतं सत्यं ज्ञानमनन्तं चिदानन्दैकरसं निर्विशेषं मां

परं ब्रह्म ज्ञात्वा एतदेवाहमिति तन्मां परं ब्रह्मैव स्वात्मना सर्वदा मत्वा ध्यात्वा च शान्तिमृच्छति विदेह-मुक्तिं प्राप्नोतीत्यर्थः ॥ २९ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां पञ्चमोऽध्यायः ॥ ५ ॥

**श्री० टी०**—नन्वेवमिन्द्रियादिसंयममात्रेण कथं मुक्तिः स्यान्न तावन्मात्रेण किंतु ज्ञानद्वारेणेत्याह—**भोक्तारमिति** । यज्ञानां तपसां च मद्भक्तैः समर्पितानां यदृच्छया भोक्तारं पालकमिति वा सर्वेषां लोकानां महान्तमीश्वरं सर्वेषां भूतानां सुहृदं निरपेक्षोपकारिणमन्तर्यामिणं मां ज्ञात्वा मत्प्रसादेन शान्तिं मोक्षमृच्छति प्राप्नोति ॥ २९ ॥

विकल्पशङ्कापोहेन येनैवं सांख्ययोगयोः ॥ समुच्चयः क्रमेणोक्तः सर्वज्ञं नौमि तं हरिम् ॥

इति श्रीमद्भगवद्गीताटीकायां सुबोधिन्यां पञ्चमोऽध्यायः ॥ ५ ॥

**स० टी०**—एवं योगान्वितः किंवा ज्ञात्वा मुच्यत आह तत् ॥ कर्तृरूपेण सर्वेषां यज्ञानां तपसां तथा ॥ १ ॥ भोक्तारं देवरूपेण पालकं वा जगत्पतिम् ॥ ब्रह्मादीनां समस्तानां नियन्तारमसङ्गिनम् ॥ २ ॥ अनपेक्ष्योपकर्तारं प्रत्युपकारमीश्वरम् ॥ सर्वेषा प्राणिनां सर्वबुद्धिवृत्त्येकसाक्षिणम् ॥ ३ ॥ सर्वावभासकं पूर्णं सच्चिदानन्दविग्रहम् ॥ नारायणं हि मां सम्यक् साक्षात्कृत्यात्मरूपतः ॥ ४ ॥ संसारोपरतिं शान्तिं मोक्षाख्यां लभतेऽञ्जसा ॥ पश्यन्नहं कथं त्वां नो मुक्त इत्यपनुत्तये ॥ ५ ॥ विशेषणानि तत्रैवं ज्ञानं मे मुक्तिकारणम् ॥ ६ ॥ निरवधिसुखवार्धिं शान्तिकान्ताश्रितं श्रीप्रमुखगुणनिवासं सर्वयज्ञेज्यमूर्तिम् ॥ सकलसुहृदमीशं सर्ववेदान्तभूमिं यदुपतिमभिवन्दे भ्रान्तिविच्छेदहेतुम् ॥ ७ ॥ २९ ॥

निष्कामः कर्मयोगः सपदि रतिकरा येऽस्य पादारविन्दे ज्ञानं वैराग्ययुक्तं भवति च सुलभं यस्य भक्त्या नराणाम् । कामक्रोधौ निरस्य स्थिरमतिरमिते लभ्यते यत्प्रसादात्तं स्वाराज्यैकहेतुं नवजलदरुचं कृष्णमेवानतोऽस्मि ॥

इति भावप्रकाशे श्रीसदानन्दविदाकृते ॥ जीवन्मुक्तिफलाख्यानः पञ्चमः पूर्णतां गतः ॥ २३९ ॥

आदित आरभ्य टीकाश्लोकसंख्या ॥ १८०५ ॥

**भा० टी०**—एवं द्वाभ्यां ध्यानयोगं सूत्रयित्वाऽन्ते मुक्त एव स इत्युक्तम् । तत्किं साक्षाज्ज्ञानं विनैव मोक्षसाधनमुत ज्ञानद्वारेणेति संशयनिवृत्तये "तमेव विदित्वातिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय । ज्ञानादेव तु कैवल्यम् । ऋते ज्ञानान्न मोक्षः" इत्यादिश्रुत्यनुरोधेन द्वितीयपक्षं सिद्धान्तयति तृतीयेन—**भोक्तारमिति** । भोक्तारं यज्ञानां तपसां च कर्तृरूपेण देवतारूपेण च सर्वेषां ब्रह्मादिस्थावरपर्यन्तानां महान्तमीश्वरं सर्वभूतानां सुहृदं सर्वप्राणिनां प्रत्युपकारनिरपेक्षतया उपकारिणं सर्वभूतानां हृदयस्थं मां नारायणमात्मत्वेन ज्ञात्वा शान्तिं सर्वसंसारोपरतिं मोक्षाख्यामृच्छति प्राप्नोति । यत्तु चतुर्विंशतिश्लोकव्याख्यानानन्तरमेवं मुक्त उक्तः मुमुक्षवस्त्रिविधाः श्रवणमनननिदिध्यासनरताः तेषु श्रवणनिरतो द्वितीयश्लोकेनोच्यते लभन्त इति । अथ मनननिरतस्तृतीयश्लोकेनोच्यते कामेति । अवशिष्टश्लोकद्वयेन निदिध्यासननिरत उच्यते—स्पर्शानितीति वर्णयन्ति तच्चिन्त्यं, लभन्ते ब्रह्मनिर्वाणमिति मोक्षलाभस्य श्रवणमात्रेणानुपपत्तेः द्वारकल्पनाया गौणत्वकल्पनस्य च सति संभवेऽन्याय्यत्वात् विदितात्मनामित्यस्य षष्ठाध्यायसूत्रस्थानीयस्य प्राणेत्यादिना स्पष्टतया प्रतीयमानस्य ध्यानयोगस्य च बाधप्रसङ्गादिति दिक् । तदनेन पञ्चमाध्यायेनाशुद्धचित्तेन कृतात् ज्ञाननिष्ठारहितात्संन्यासात्कर्मयोगस्य चित्तशुद्ध्यादिसंपादकस्य श्रैष्ठ्यमुक्त्वा शुद्धचित्तस्य संन्यासिनः शमदमादिसंपन्नस्य कामाद्युद्भवं वेगमिहैव सोढुं शक्तस्य योगाधिकृतस्य त्वंपदार्थाभिन्नस्य परमात्मानं प्रत्यक्त्वेन जानतो मुक्तिरित्युक्तम् ॥ २९ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां पञ्चमोऽध्यायः ॥ ५ ॥

प० टी०—अथ महाकार्ये विघ्नानां बाहुल्यान्मनोबुद्धीन्द्रियनिग्रहोऽप्याश्रयं विना कर्तुमशक्य इत्याह—भोक्तारमिति । सर्वभूतानां सुहृदं परमप्रेमास्पदमन्तर्यामिणं मां ज्ञात्वा शान्तिं मोक्षमृच्छति प्राप्नोति । अथ तदेवाह किंभूतं सर्वयज्ञानां तपसां वा भोक्तारं सर्वदेवान्तर्यामित्वात् सर्वलोकमहेश्वरं सर्वलोकानां भूर्भुवःस्वरादीनां महान्तमीश्वरं निरतिशयैश्वर्यवन्तं मां ज्ञात्वेति ॥ २९ ॥

अथाध्यायतात्पर्यम् ।

ज्ञानं संपाद्य सम्यक् क्रमविरमवतः कर्मणो या समाप्तिः संन्यासः कर्मयोगः स यदमलधियः कर्मकौशल्यमाभ्याम् । ब्रह्मण्याधीयते यत्सुकृतशतजुषः कर्म सर्वेन्द्रियोत्थं प्राणायामेन चित्तं व्रजति परपदं पञ्चमे प्रोक्तमेतत् ॥ ५ ॥

इति दैवज्ञपण्डितसूर्यविरचितायां श्रीमद्भगवद्गीताटीकायां परमार्थप्रपायां पञ्चमोऽध्यायः ॥ ५ ॥

रा० टी०—ध्यानमुक्त्वा ध्येयमाह—भोक्तारमिति । यज्ञो ज्योतिष्टोमादिः, तपः कृच्छ्रचान्द्रायणादि । महांश्चासावीश्वरश्च महेश्वरस्तं सुहृदमुपकारिणं शान्तिं शान्तिसाधनम् । मुक्तिहेतुमिति ईश्वरविशेषणम् । ज्ञात्वा ध्यात्वेत्यर्थः । ऋच्छति साक्षात्करोतीत्यर्थः ॥ २९ ॥

इति श्रीगीतार्थसंग्रहे राघवेन्द्रयतिकृते पञ्चमोऽध्यायः ॥ ५ ॥



## अथ षष्ठोऽध्यायः ।



**श्रीभगवानुवाच—अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ॥**
**स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥ १ ॥**

त० टी०—पञ्चमेऽध्याये कर्मयोगो ज्ञानयोगश्च सप्रशंसं निरूपितः । तदन्तरङ्गो ध्यानयोगस्तदन्ते संक्षेपेण द्वाभ्यां श्लोकाभ्यां निरूपितः । तद्विस्तारार्थं षष्ठाध्यायारम्भः । तत्र तावत् सर्वकर्माणि मनसा संन्यस्यास्ते इत्यादिना सर्वकर्मत्यागेन संन्यासाख्यज्ञानयोगविधानाद्धीनत्वेन कर्मत्याज्यमिति शङ्कनिवारणाय कर्मयोगस्य संन्यासरूपत्वेनोपादेयतामभिधास्यन् श्रीभगवानुवाच—अनाश्रित इति । कर्मणां फलं स्वर्गादिकमनाश्रितोऽनपेक्षमाणः सन् कार्यमवश्यकर्तव्यतया विहितं कर्म नित्यनैमित्तिकरूपं यः करोति स संन्यासी च ज्ञानयोगनिष्ठश्च योगी च कर्मयोगनिष्ठश्च अत एव न निरग्निः अग्निसाध्यकर्मत्यागी न भवति न चाक्रियः अग्निनिरपेक्षक्रियाहीनश्च न भवति, अथवा निरग्निरक्रियश्च संन्यासी योगी च न मन्तव्यः किंतु सर्वकर्मफलत्यागपूर्वककर्मानुष्ठाय्येव संन्यासी योगी च मन्तव्यः तस्योभयनिष्ठासिद्धेरिति भावः ॥ १ ॥

म० टी०—योगसूत्रं त्रिभिः श्लोकैः पञ्चमान्ते यदीरितम् । षष्ठस्त्वारभ्यतेऽध्यायस्तद्व्याख्यानाय विस्तरात् ॥ तत्र सर्वकर्मत्यागेन योगं विधास्यन् त्याज्यत्वेन हीनत्वमाशङ्क्य कर्मयोगं स्तौति द्वाभ्यां श्रीभगवान्—अनाश्रित इति । कर्मणां फलमनाश्रितोऽनपेक्षमाणः फलाभिसंधिरहितः सन् कार्यं कर्तव्यतया शास्त्रेण विहितं नित्यमग्निहोत्रादि कर्म करोति यः स कर्म्यपि सन् संन्यासी योगी चेति स्तूयते । संन्यासो हि त्यागः चित्तगतविक्षेपाभावश्च योगः तौ चास्य विद्येते फलत्यागात् फलतृष्णारूपचित्तविक्षेपाभावाच्च । कर्मफलतृष्णात्याग एवात्र गौण्या वृत्त्या संन्यासयोगशब्दाभ्यामभिधीयेते सकामानपेक्ष्य

प्राशस्त्यकथनाय । अवश्यंभाविनौ हि निष्कामकर्मानुष्ठातुर्मुख्यौ संन्यासयोगौ तस्मादयं यद्यपि न निराग्निः अग्निसाध्यश्रौतकर्मत्यागी न भवति न चाक्रियः अग्निनिरपेक्षस्मार्तक्रियात्यागी च न भवति तथापि संन्यासी योगी चेति मन्तव्यः । अथवा न निरग्निर्न चाक्रियः संन्यासी योगी चेति मन्तव्यः किंतु साग्निः सक्रियश्च निष्कामकर्मानुष्ठायी संन्यासी योगी चेति मन्तव्य इति स्तूयते 'अपशवो अन्ये गोअश्वेभ्यः पशवो गोअश्वा' इत्यत्रेव प्रशंसालक्षणया नञन्वयोपपत्तिः । अत्र चाक्रिय इत्यनेनैव सर्वकर्मसंन्यासीति लब्धे निरग्निरिति व्यर्थं स्यादित्यग्निशब्देन सर्वाणि कर्माण्युपलक्ष्य निरग्निरिति संन्यासी, क्रियाशब्देन चित्तवृत्तीरुपलक्ष्याः, अक्रिय इति निरुद्धचित्तवृत्तिर्योगी च कथ्यते तेन न निरग्निः संन्यासी मन्तव्यो न चाक्रियो योगी मन्तव्य इति यथासंख्यमुभयव्यतिरेको दर्शनीयः । एवं सति नञ्द्वयमप्युपपन्नमिति द्रष्टव्यम् ॥१॥

**शं० टी०**—पूर्वं पञ्चमाध्यायान्ते स्पर्शान्कृत्वा बहिर्बाह्यानित्यादिश्लोकत्रयेण यतेरात्मविदः श्रवणादिजन्यज्ञानस्याप्रतिबद्धत्वसिद्धयेऽवश्यकरणीयं ध्यानयोगं सूचयित्वेदानीं तस्यैव ध्यानयोगस्य बहिरङ्गान्तरङ्गसाधनान्यधिकारिणं तल्लक्षणं तत्फलं च निरूपयितुं षष्ठोऽध्याय आरभ्यते । तत्रादौ श्रवणादिभिः संभाव्यमानज्ञानोत्पत्तेः परमकारणं चित्तशुद्धिस्तस्यां सत्यामेव श्रवणं मननं निदिध्यासनं तज्जन्यज्ञानं च सिध्यति। सत्त्वशुद्धेः कारणं तु कर्मयोग एव श्रवणादेस्तज्जन्यज्ञानस्य च यमादिवद्बहिरङ्गं बलवत्तरं तस्मिन्सत्येव सत्त्वशुद्धिस्तया श्रवणादिकार्यं सिध्यत्यतो मुमुक्षोरवश्यं वैदिकं कर्म नियमेन श्रद्धया चेश्वरभक्त्या च कर्तव्यमिति सूचयितुं कर्मयोगिनं तदीयं कर्मयोगं च स्तोतुं श्रीभगवानुवाच—**अनाश्रित इति** । अधीतवेदवेदाङ्गस्तदर्थज्ञो यो मुमुक्षुर्ब्राह्मणः स्वयं कर्मफलं "स्वर्गकामश्चिन्वीत यः पशुकामः पश्यति पुत्रम्" इत्यादिश्रुतिवाक्यैस्तत्र तत्र प्रतिपाद्यमानं कर्मणां फलं पुत्रपशुस्वर्गप्राप्तिलक्षणमनाश्रितः मोक्षैककामनया यत्किंचिदपि कर्मफलमनपेक्ष्यैव सर्वं कर्मेश्वराय समर्प्य निष्कामः सन् कार्यं नियमेन यत्कर्तव्यं नित्यं नैमित्तिकं च काम्यवर्जितं कर्म अग्निहोत्रादिलक्षणं करोति श्रद्धया भक्त्या च सम्यगनुतिष्ठति स कर्मफलकामनापरित्यागरूपसंन्यासवत्त्वात्संन्यासी च भवति कर्मयोगे चित्तसमाधानवत्त्वाद्योगी च भवति । न निरग्निर्न चाक्रिय इत्यत्रावधारणपदमध्याहर्तव्यं, निरग्निरेव संन्यासीति न अक्रिय एव योगीति च न किंतु फलकामसंकल्पत्यागेन चित्तनैश्चल्येन मदेकभक्त्या च यः कर्म करोति गृहस्थः सोऽपि च संन्यासी योगी च भवतीत्यर्थः । निरग्निरित्यत्राग्निशब्देनाग्निपूर्वकाणि कर्माणि लक्ष्यन्ते चौलोपनयनमारभ्य ब्राह्मणस्य प्राप्तानि स्मार्तानि श्रौतानि च कर्माणि सर्वाण्यग्निपूर्वकाण्येव तान्येतानि ससाधनानि विविदिषया येन संन्यस्तानि भवन्ति स निरग्निः स संन्यासी स एव श्रवणादिना संप्राप्तविज्ञानो भूत्वा ज्ञानयोगे प्रवृत्तः सन् देहेन्द्रियादिचेष्टारूपाः क्रियाः सर्वास्त्यजन्नक्रियो योगी भवति ॥ १ ॥

**श्री० टी०**—चित्ते शुद्धेऽपि न ध्यानं विना संन्यासमात्रतः ॥ मुक्तिः स्यादिति षष्ठेऽस्मिन्ध्यानयोगो वितन्यते ॥ १ ॥ पूर्वाध्यायान्ते संक्षेपेणोक्तं योगं प्रपञ्चयितुं षष्ठाध्यायारम्भः । तत्र तावत्सर्वकर्माणि मनसेत्यारभ्य संन्यासपूर्विकाया ज्ञाननिष्ठायास्तात्पर्येणाभिधानात् दुःखरूपत्वाच्च कर्मणः सहसा संन्यासातिप्रसङ्गं प्राप्तं वारयितुं संन्यासादपि श्रेष्ठत्वेन कर्मयोगं स्तौति श्रीभगवान्—**अनाश्रित इति** द्वाभ्याम् । कर्मफलमनाश्रितोऽनपेक्षमाणः अवश्यं कर्तव्यतया विहितं कर्म यः करोति स एव संन्यासी योगी च न तु निरग्निः अग्निसाध्येष्टाख्यकर्मत्यागी न चाक्रियोऽनग्निसाध्यपूर्ताख्यकर्मत्यागी च ॥ १ ॥

**स० टी०**—पदं ध्यायन्ध्यायन्सुजनमुनिवन्द्यं मधुरिपोर्गुणान्स्मारं स्मारं भवजलधिपारं गमयतः ॥ रसं पायं पायं यदुपतिगिरां वेदशिरसां मतिर्भूयो भूयो मम हरिपदाब्जे प्रविशतु ॥ १ ॥ ज्ञानयोगः पुरा प्रोक्तः ससंन्यासो विमुक्तिदः ॥ कर्मापि चित्तशुद्ध्यर्थं प्रोक्तं कृष्णार्चनं परम् ॥ २ ॥ चित्तशुद्धावपीदानीं

विक्षेपे सति योगिनाम् ॥ निर्वाणशान्तिरूपं यत्सुखं न स्यात्तदञ्जसा ॥ ३ ॥ येनोपायेन तत्सिद्धिः स्यादुपायः स उच्यते ॥ सूत्ररूपतया योगः पञ्चमान्ते य ईरितः ॥४॥ स एव विस्तरेणात्र षष्ठाध्याये प्रपञ्च्यते॥ तत्रादौ कर्मणां चित्तशुद्धिहेतुतया स्तुतिः ॥५॥ क्रियते कामनात्यागाद्योगसंन्याससाम्यतः ॥ फलाभिसंधिशून्यः सन्नित्यं कर्म करोति यः ॥ ६ ॥ श्रौतं स्मार्तं ससंन्यासयोगयोः फलमश्नुते ॥ निरग्निरक्रियो यस्तु संन्यासस्तुर्य आश्रमः ॥ ७ ॥ न तन्निषेधो हरिणा क्रियते कर्मणां स्तुतौ ॥ किंतु कामपरित्यागमात्रेणैवास्य कर्मिणः ॥ ८ ॥ क्रियते स्तुतिरित्येवमाशयो गम्यते हरेः ॥ फलाभिलाषसंत्यागी विष्ण्वाराधनतत्परः ॥ ९ ॥ स संन्यासी फलत्यागाद्योगी चित्तसमाधितः ॥ निरग्निरित्यनेनोक्तः संन्यासी कर्मवर्जितः ॥ १० ॥ अक्रियश्चित्तसंरोधाद्योगीत्यत्र विवेचनम् ॥ यद्यपीदृङ्न कर्म्यस्ति तथापि स्तूयते तथा ॥ ११ ॥ कामनात्यागसाम्येन संन्यासीत्यादिशब्दतः ॥ १२ ॥ १ ॥

**भा० टी०**–पञ्चमाध्यायान्ते सम्यग्दर्शनं प्रत्यन्तरङ्गसाधनस्य ध्यानयोगस्य सूत्रस्थानीयास्त्रयः श्लोका उदाहृतास्तद्वृत्तिस्थानीयोऽयं षष्ठाध्याय आरभ्यते । तत्र तदधिकारसंपत्तये गृहस्थेनाधिकृतेन कर्तव्यमेव कर्मेत्यतस्तत्स्तौति–**अनाश्रित इति** द्वाभ्याम् । कर्मणः फलमनाश्रितः कर्मफलतृष्णारहितः सन् कार्यमवश्यकर्तव्यं काम्यविपरीतं नित्याग्निहोत्रादिकं यः करोति स संन्यासी च योगी चेति कर्मफलतृष्णावद्भ्य इतरकर्मिभ्य उत्कृष्ट इति गौणप्रयोगेण स्तूयते । तथाच संन्यासः परित्यागः सोऽस्यास्तीति सः योगश्चित्तसमाधानं सोऽस्यास्तीति स योगी चेत्येवमुभयगुणसंपन्नोऽयं मन्तव्यः न केवलं निरग्निरक्रिय एव संन्यासी योगी चेति मन्तव्यः निर्गता अग्नयः कर्माङ्गभूता यस्मात्सः अनग्निसाधना अप्यविद्यमानाः क्रियास्तपोदानादिका यस्य स नित्यसमाधिनिष्ठ इत्यर्थः । एतेन कार्यं कर्म यः करोति स एव संन्यासी च योगी च न तु निरग्निः न चाक्रिय इति प्रत्युक्तम् । न केवलं निरग्निरग्नयो गार्हपत्याहवनीयान्वाहार्यपचनप्रभृतयः तानुद्वास्य स्थित एव संन्यासी तथा अन्याश्च तपोदानाद्याः क्रियास्तद्रहितः समाधिनिष्ठ एव योगी चेति न चेति यथासंख्यमुभयव्यतिरेको व्याख्येयः । एतेनाग्निशब्देन सर्वाणि कर्माण्युपलक्ष्य निरग्निरिति संन्यासी क्रियाशब्देन चित्तवृत्तिरुपलक्ष्याक्रिय इति निरुद्धचित्तवृत्तिर्योगीति कथ्यते इति लक्षणया व्याख्याय उभयव्यतिरेकप्रदर्शनं प्रत्युक्तम् । एवं भाष्योक्तेनर्जुमार्गेणाविरोधस्य सम्यगुपपत्त्या पूर्वाध्यायान्ते श्लोकद्वयेन सूत्रितं ज्ञानयोगं प्राधान्येन षष्ठे प्रपञ्चयिष्यन् श्रीभगवानुवाचेत्याद्या मूलतद्भाष्यतद्विरुद्धाः कल्पना उपेक्ष्याः ॥ १ ॥

**प० टी०**–पूर्वाध्याये तयोस्तु कर्मसंन्यासात्कर्मयोगो विशिष्यते इत्यादिना वर्णाश्रमोचितकर्मयोगेन शुद्धान्तःकरणस्य ध्यानयोगसाधनीभूतं वायुधारणारूपं कर्मयोगं निरूपयितुमिच्छन् सिंहावलोकन्यायेन पुनः कर्मसंन्यासकर्मयोगयोः सोपपत्तिकं साहचर्यं दर्शयति–**अनाश्रित इति** द्वाभ्याम् । कर्मफलमनाश्रितोऽनपेक्षमाणः सन्नवश्यं कार्यतया विहितं कर्म यः करोति स एव संन्यासी योगी च । कर्मफलानपेक्षत्वमेव कर्मसंन्यासः, विहिताचरणमेव कर्मयोगः, एतदन्यथात्वं निषेधयति न–निरग्निर्न चाक्रिय इति । अयमर्थः कश्चिदशुद्धान्तःकरणः शाब्दप्रतीतिमात्रेणाहं मुक्त इति मत्वाग्निहोत्रादिकं त्यजति स निरग्निर्निर्गतोऽग्निर्यस्मात्स तथा तद्वदवशीकृतान्तःकरणः करचरणचेष्टारहितः सन् मृषा नेत्रे निमील्य मिथ्याचारस्तिष्ठति सोऽक्रियस्तथाविधः संन्यासी योगी वा न भवतीत्यर्थः ॥ १ ॥

**रा० टी०**–बुद्धिर्योगे त्विमां शृण्विति योगवचनं प्रतिज्ञातं द्वितीये । स च योग उत्तरषट्के वक्ष्यमाणभगवज्ज्ञानं प्रति उपायः । स च द्विविधः कर्मयोगो ध्यानयोगश्चेति । तत्र कर्मयोगो ज्ञानं प्रति बहिरङ्गोपायत्वात् त्रैगुण्यविषया वेदा इत्यादिना द्वितीये संक्षेपेण तृतीयाध्यायादावतीतग्रन्थे विस्तरेण च

पूर्वं निरूपितोऽधुना कर्मयोगसाध्यत्वाद्वक्ष्यमाणज्ञानान्तरङ्गसाधनत्वाच्चावसरप्राप्तं समाधियोगं स्पर्शानित्यादिना पूर्वाध्यायान्ते संक्षेपेण प्रकृतं विस्तरेणास्मिन्नध्याये वक्ति। आसनादीनामङ्गानां वक्ष्यमाणत्वेऽपि तेषां ध्यानार्थत्वेन ध्यानस्यैव प्राधान्यात् उद्धरेदात्मनात्मानमित्यादिना ध्यानयोगं विधातुं तत्र ध्याने संन्यासयोगयुक्त एवाधिकारीति ज्ञापनाय कामादिवर्जनरूपसंन्यासमीश्वराराधनरूपस्वकर्मानुष्ठानलक्षणयोगं चाह—अनाश्रित इति। यः कर्मफलमनाश्रितः कार्यं स्वस्ववर्णाश्रमोचिततया कर्तव्यं कर्म करोति स संन्यासी योगी च स एव च ध्यानाधिकारीति भावः। आहवनीयाद्यग्नित्यागेन अग्निहोत्रादिक्रियात्यागेन च निःसङ्गतया वर्तमान एव ध्यानाधिकारीति सांख्यमतमपाकरोति—नेति। निरग्निरक्रियश्च संन्यासी योगी च नेत्यर्थः। यतेरपि दैवमेवापरे यज्ञमित्यादिनाग्निक्रिययोरुक्तत्वात्संन्यासाश्रमस्वीकारकाले पूर्वाश्रमस्वीकृताग्नेरात्मनि समारोपणाच्च सोऽपि संन्यासी योगी च भवत्येवेति भावः॥ १॥

**यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डव॥**
**नह्यसंन्यस्तसंकल्पो योगी भवति कश्चन॥ २॥**

**त० टी०**—उक्तार्थमेवोपपादयति—यं संन्यासमिति। प्राहुः प्रकर्षेणाहुः "न्यास एवात्यरेचयत्" इत्याद्याः श्रुतयः। तं योगं फलकर्तृत्वाभिमानत्यागपूर्वकविहितकर्मानुष्ठानं विद्धि हे पाण्डव! एवंभूतं कर्मैव संन्यासं जानीहीत्यर्थः। कुत इत्यपेक्षायां हि यस्मात् असंन्यस्तसंकल्पः न संन्यस्तः त्यक्तः संकल्पो येन सः कश्चन कश्चिदपि योगी न भवतीत्यर्थः॥ २॥

**म० टी०**—असंन्यासेऽपि संन्यासपदप्रयोगे निमित्तभूतं गुणयोगं दर्शयितुमाह—यं संन्यासमिति। यं सर्वकर्मतत्फलपरित्यागं संन्यासमिति प्राहुः श्रुतयः "न्यास एवातिरेचयतीति। ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" इत्याद्याः। योगं फलतृष्णाकर्तृत्वाभिमानयोः परित्यागेन विहितकर्मानुष्ठानं तं संन्यासं विद्धि हे पाण्डव! अब्रह्मदत्तं ब्रह्मदत्तमित्याह तं वयं मन्यामहे ब्रह्मदत्तसदृशोऽयमिति न्यायात्परशब्दः परत्र प्रयुज्यमानः सादृश्यं बोधयति गौण्या वृत्त्या तद्भावारोपेण वा। प्रकृते तु किं सादृश्यमिति तदाह नहि यस्मात् असंन्यस्तसंकल्पः अत्यक्तफलसंकल्पः कश्चन कश्चिदपि योगी न भवति अपि तु सर्वो योगी त्यक्तफलसंकल्प एव भवतीति फलत्यागसाम्यात्तृष्णारूपचित्तवृत्तिनिरोधसाम्याच्च गौण्या वृत्त्या कर्म्येव संन्यासी च योगी च भवतीत्यर्थः। तथाहि 'योगश्चित्तवृत्तिनिरोधः' 'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' इति वृत्तयः पञ्चविधाः। तत्र प्रत्यक्षानुमानशास्त्रोपमानार्थापत्त्यभावाख्यानि प्रमाणानि षडिति वैदिकाः। प्रत्यक्षानुमानागमाः प्रमाणानि त्रीणीति योगाः। अन्तर्भावबहिर्भावाभ्यां संकोचविकासौ द्रष्टव्यौ। अत एव तार्किकादीनां मतभेदाः। विपर्ययो मिथ्याज्ञानम्। तस्य पञ्चभेदाः 'अविद्याऽस्मितारागद्वेषाभिनिवेशाः' त एव च क्लेशाः। शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः प्रमाभ्रमविलक्षणोऽसदर्थव्यवहारः शशविषाणमसत्पुरुषस्य चैतन्यमित्यादिः। अभावप्रत्ययालम्बना वृत्तिर्निद्रा। चतसृणां वृत्तीनामभावस्य प्रत्ययः कारणं तमोगुणस्तदालम्बना वृत्तिरेव निद्रा नतु ज्ञानाद्यभावमात्रमित्यर्थः। अनुभूतविषयासंप्रमोषः स्मृतिः, पूर्वानुभवसंस्कारजं ज्ञानमित्यर्थः। सर्ववृत्तिजन्यत्वादन्ते कथनम्। लज्जादिवृत्तीनामपि पञ्चस्वेवान्तर्भावो द्रष्टव्यः। एतादृशां सर्वासां चित्तवृत्तीनां निरोधो योग इति च समाधिरिति च कथ्यते। फलसंकल्पस्तु रागाख्यस्तृतीयो विपर्ययभेदस्तन्निरोधमात्रमपि गौण्या वृत्त्या योग इति संन्यास इति चोच्यत इति न विरोधः॥ २॥

**शं० टी०**—ननु संन्यासित्वं योगित्वं चानात्मज्ञकर्तृकसर्वकर्मव्युत्थानलक्षणो ब्रह्मविद्धर्मः सर्वशास्त्र-

प्रसिद्धः कथं प्रवृत्तिधर्मवतोऽनात्मज्ञस्य गृहिणो दाराग्निहोत्रादिसाधनवत उपपद्यत इत्याशङ्कायां न, उक्तरीत्या धर्माणामपि धर्मिणां परस्परभेदे सत्यपि संन्यासकर्मयोगयोः साध्यैकत्वेन फलतो भेदाभावात्संन्यासिनो यत्फलं तदेव फलं कर्मयोगिनोऽप्यतः फलसाम्यमुपपद्यत इति सूचयितुं संन्यासवत् कर्माऽपि मोक्षस्य परमसाधनं तदवश्यं मुमुक्षोः कर्तव्यमिति कर्म स्तोतुं च संन्यासकर्मयोगयोरभेदमाह—**यमिति**। पण्डिताः यं कर्मित्वादर्शनलक्षणं धर्मं संन्यासमिति प्राहुर्वदन्ति त्वं तमेव संन्यासं योगं कर्मयोगं विद्धि जानीहि। सर्वकर्माणि मनसेतिवचनात्स्वस्य कूटस्थासङ्गचिद्रूपत्वविज्ञानेनात्मकर्तृककर्माभावदर्शनं संन्यासस्तस्य फलं तु मोक्षः कर्मसंभावितचित्तशुद्धिजन्यज्ञानकार्यत्वात्संन्यासस्य कर्माङ्गं भवत्यङ्गाङ्गिनोरुभयोरप्येककार्यान्वयित्वेनैकफलत्वेन चैकत्वमुपपद्यते ततस्तयोरभेदमेव पश्येत्यर्थः। अथवा उभयोरपि परमार्थसिद्धिसाधनत्वाविशेषादेकत्वमेव भवति, यथा श्रवणादिजन्यविज्ञानेन विना कर्मित्वदर्शनाभावेत्वविक्रियात्मस्वरूपेणावस्थानलक्षणो मोक्षो न सिध्यति तथा विहितकर्मानुष्ठानाभावे चित्तशुद्ध्यभावात्तज्ज्ञानानुत्पत्तौ स्वस्वरूपावस्थानलक्षणो मोक्षो न सिध्यत्येव ततो मोक्षं प्रत्युभयोरप्यसाधारणकारणत्वे विशेषभावादुभयोरेकशक्तिकत्वेनैकार्थफलकत्वेन च भेदाभावादेकत्वमुपपद्यते। यद्वा सर्वसंकल्पसंन्यासीतिवचनात्सर्वसंकल्पपरित्यागः संन्यासः सर्वत्र ब्रह्मदृष्ट्या बाह्यपदार्थभावनापरिवर्जनं यतेर्धर्मः। यद्यप्येतल्लक्षणं मुख्यवृत्त्या कर्मयोगस्य न संभवति तथापि कर्मफलसंकल्पसंन्यासलक्षणलक्षितत्वात्फलसंकल्पपरित्यागगुणेन वृत्त्या संन्यासकर्मयोगयोरेकत्वं संभवत्यतः संन्यास एव कर्मयोग इति तयोरभेदमेव विजानीहीत्यर्थः। यं संन्यासमिति प्राहुर्योगं तं विद्धीत्युक्त्या कर्मफलसंकल्पसंन्यासोपलक्षित एव कर्मयोगो मोक्षाय भवतीति सूचितं भवति। यतः कर्मफलसंकल्पसंन्यासैकप्रधानत्वं कर्मयोगस्य ततो मुमुक्षोर्गृहिणस्तद्वत्तयावश्यं भवितव्यमिति बोधयितुमाह—**नहीति**। असंन्यस्तसंकल्पः संन्यस्तः मोक्षैककामनया सम्यक्परित्यक्तः संकल्पः कर्मफलविषयकं मननं येन मुमुक्षुणा स संन्यस्तसंकल्पस्तद्विलक्षणोऽसंन्यस्तसंकल्पः कर्मणः पूर्वं पश्चात्तत्काले च कर्मफलमेव मन्वानः सन् यः कर्म करोति सोऽसंन्यस्तसंकल्पो ब्राह्मणो वान्यो वा कश्चिदपि योगी न भवति, योगो नाम कर्मफलापेक्षाराहित्येन लब्धं चित्तनैश्चल्यं तद्वानेव योगी यः कर्मफलाशासंभावितचित्तविक्षेपवान् स योगी न भवतीत्यर्थः। यद्वा योऽसंन्यस्तसंकल्पः स योगी मोक्षयोगार्हो न भवति किंतु जन्मादिदुःखयोग्येव भवतीत्यर्थः। "कामान्यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र" इति "उपासते पुरुषं ये ह्यकामास्ते शुक्रमेतदतिवर्तन्ति धीराः" इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः ॥ २ ॥

**श्री० टी०**—कुत इत्यपेक्षायां कर्मयोगस्यैव संन्यासत्वं संपादयन्नाह—**यमिति**। यं संन्यासमिति प्राहुः प्रकर्षेण श्रेष्ठत्वेनाहुः "न्यास एवात्यरेचयत्" इत्यादिश्रुतेः केवलात्फलसंन्यसनाद्धेतोः योगमेव तं जानीहि। कुत इत्यपेक्षायामितिशब्दोक्तो हेतुर्योगेऽप्यस्तीत्याह—**नहीति**। न संन्यस्तः फलसंकल्पो येन स कर्मनिष्ठो ज्ञाननिष्ठो वा कश्चिदपि नहि योगी भवति अतः फलसंकल्पत्यागसाम्यात्संन्यासात्संन्यासी च फलसंकल्पत्यागादेव चित्तविक्षेपाभावाद्योगी च भवत्येव स इत्यर्थः ॥ २ ॥

**स० टी०**—असंन्यासेऽपि संन्यासशब्दयोगेऽथ कारणम् ॥ गुणयोगं हरिः प्राह मुमुक्षूणां हिताय च ॥ ॥ १ ॥ यं कर्मतत्फलत्यागं प्राहुः संन्यासमागमाः ॥ फलाभिलाषकर्तृत्वाभिमानत्यागयोगतः ॥ २ ॥ योगं तं विद्धि तत्प्राप्तौ साधनत्वस्य साम्यतः ॥ अकर्णं कर्णमित्याह तन मन्यामहे वयम् ॥ ३ ॥ कर्णतुल्योऽयमित्येवं न्यायाद्द्रौण्या प्रयुज्यते ॥ परशब्दः परत्रैवं सादृश्यं ज्ञायते जनैः ॥ ४ ॥ सादृश्यं प्रकृतेऽप्यस्ति कामत्यागो हि कर्मिणः ॥ नात्यक्तफलसंकल्पो योगी भवति कश्चन ॥ ५ ॥ २ ॥

**भा० टी०**—गौणप्रयोगे निमित्तभूतं गुणयोगमेव दर्शयितुमाह—**यमिति**। यं सर्वकर्मतत्फलत्यागलक्षणं

परमार्थसंन्यासं श्रुतिस्मृतीतिहासपुराणानि प्राहुः योगं फलाभिसंधिरहितकर्मानुष्ठानलक्षणं तं परमार्थसंन्यासं विद्धि फलविषयसंकल्पत्यागरूपगुणयोगाज्जानीहि । यथा भवान् वस्तुत इन्द्रसुतोऽपि पाण्डुक्षेत्रे जातत्वात्पाण्डव इति लोकैरुच्यते तथैति गूढाभिप्रायेण संबोधयति–हे पाण्डवेति । गुणयोगमेवाह–हि यस्मादसंन्यस्तसंकल्पः अत्यक्तफलाभिसंधिः कश्चन कश्चिदपि कर्मयोगी समाधानवान्न भवति संन्यस्तसंकल्प एव योगी भवतीत्यर्थः । चित्तविक्षेपहेतोः फलसंकल्पस्य संन्यस्तत्वादित्यभिप्रायः । योगाङ्गत्वेन कर्मानुष्ठानात् कर्मफलसंकल्पस्य च चित्तविक्षेपहेतोः परित्यागाद्योगित्वं संन्यासित्वं चोच्यते । यत्त्वपरे एवं कर्मयोगसंन्यासयोर्भेदमङ्गीकृत्याविरोधेन स्तुतिरुक्ता इदानीं तयोरैक्येनैव स्तुतिमारभते–यमिति इत्यतस्तं योगं कर्मयोगं विद्धि यं संन्यासं प्रकर्षेणाहुः। प्रकर्षस्तु कर्मस्वरूपत्यागोऽलसस्यापि संभाव्यते कर्मानुतिष्ठतः फलसंकल्पत्यागस्तु दुर्लभतर इत्येवंलक्षणो ज्ञेयः । अतः कुत इत्यत उक्तम्–हि यस्मात्कश्चन योगी कर्मयोगी ज्ञानयोगी वाऽसंन्यस्तसंकल्पो न भवति संन्यस्तसंकल्प एव योगितां प्रतिपद्यत इति भावः । अतस्तयोः स्वीयस्वीयस्वरूपवदन्योन्यव्यभिचाराभावादैक्यान्न विरोध इति भाव इति तन्मन्दं, संन्यासनिष्कामकर्मयोगयोरैक्येनैव स्तुतिमारभत इत्युत्थानिकया तं कर्मयोगं विद्धि यं संन्यासमित्यादिव्याख्यानस्य संन्यासापेक्षया कर्मयोगप्रकर्षबोधकस्य विरोधात् । किंच संन्यासकर्मयोगयोः सिंहमाणवकयोरिवैक्यं न संभवति किंतु माणवके सिंहशब्दप्रयोग इव निष्कामकर्मयोगे संन्यासशब्दप्रयोगो गौण एवेति दिक् ॥ २ ॥

प० टी०–अथ साहचर्यं प्रकटयन्नाह–यमिति। भो पाण्डव ! इत्युक्तप्रकारेण यं संन्यासं प्राहुः प्रकर्षेण श्रेष्ठत्वेनाहुस्तं योगं विद्धि हि यस्मात्कारणादसंन्यस्तसंकल्पो न संन्यस्ताः संकल्पा येन स तथा कर्मनिष्ठो ज्ञाननिष्ठो वा तत्र कर्मनिष्ठस्त्वसंन्यस्तफलसंकल्पो ज्ञाननिष्ठश्चासंन्यस्तचित्तविक्षेपरूपसंकल्प एवंविधः कश्चिद्योगी न भवति । अत्र भगवदभिमतः संन्यासशब्दार्थस्तु सम्यक् प्रकारेण न्यसनं चित्तशुद्धिद्वारा ज्ञानमुत्पाद्य स्वत एव कर्मोपरमः कर्मसंन्यासो न तु कर्मत्यागः । तदुक्तमध्यात्ममीमांसायाम्–'सम्यङ् न्यासः समाप्तिर्विमलतरधियः कर्मणां संविदाप्तौ संन्यासो यद्वदध्वा स्वयमुपरमति ग्रामवर्त्म प्रवेश्य । रम्भा तावद्विवृद्धिं भजति फलभरं यावदुच्चैः प्रसूते ह्रासं पश्चात्तथैवामृतमभिलषतो ज्ञानमुत्पाद्य कर्म' इति । भाष्यम्–सम्यक्प्रकारेण विमलतरधियः शुद्धान्तःकरणस्य पुंसः संविदाप्तौ ज्ञानप्राप्तौ सत्यां कर्मणां या समाप्तिः संपूर्णता सैव संन्यासशब्दवाच्या न तु कर्मत्यागः । अत्र दृष्टान्तमाह–यद्वदिति । यथाध्वा मार्गः पथिकं ग्रामवर्त्म ग्रामद्वारं प्रवेश्य स्वयमुपरमति पथिकेन ग्रामप्राप्तिव्यतिरेकेणान्तरेणैव मार्गो न त्यज्यते किंतु मार्गो ग्रामद्वारं दर्शयित्वा स्वत एवोपरमति । पुनर्दृष्टान्तान्तरमाह–रम्भेति । रम्भा कदली तावदेवोच्चैर्वृद्धिं भजति यावत्फलभरं प्रसूते पश्चात्फलभरप्रसवानन्तरं ह्रासमुपरमं भजति तथैवामृतं मोक्षमभिलषतो मोक्षार्थिनः पुरुषस्य कर्म ज्ञानमुत्पाद्य स्वयमुपरमति ॥ २ ॥

रा० टी०–स संन्यासी च योगी चेत्युक्त्या प्राप्तां तयोरत्यन्तभेदशङ्कां निरसितुममुख्ययोगापेक्षया पृथगुक्तोऽपि संन्यासो मुख्ययोगान्तर्भूत इत्याह–यमिति । ज्ञेयः स नित्यसंन्यासीत्यादिनोक्तप्रकारेण यं कामक्रोधादिवर्जनरूपं संन्यासं प्राहुस्तं संन्यासं योगं मुख्ययोगं ज्ञानोपायभूतकामादिवर्जनविशिष्टनिवृत्तकर्मानुष्ठानरूपयोगान्तर्भूतं विद्धि जानीहि । हे पाण्डव ! कुतः कश्चन कोऽपि असंन्यस्तसंकल्पः अत्यक्तसंकल्पादिः संन्यासहीनकर्मानुष्ठानमात्रवानिति यावत् । योगी ज्ञानोपायवान्न भवति । नहि सामग्र्येकदेशः कार्यजनको भवति । क्वचित्पृथगुक्तिस्तु ज्ञानभक्त्योः पृथगुक्तिरिवैकदेशापेक्षयेति भावः ॥ २ ॥

**आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ॥**
**योगारूढस्य तस्यैव शमः कारणमुच्यते ॥ ३ ॥**

त० टी०—एवं चेत्तर्हि यावज्जीवं कर्मैव कर्तव्यतयाऽभिप्रेतं किमित्यत आह—आरुरुक्षोरिति। योगं ज्ञानयोगमारुरुक्षोः आरोढुं प्राप्तुमिच्छोर्मुनेरुक्तस्वरूपं कर्म तत्प्राप्तौ कारणमुच्यते। ज्ञानयोगारूढस्य तस्यैव शमः कर्मनिवृत्तिर्ध्यानपरिपाके कारणमुच्यते। यावदात्मसाक्षात्कारान्तरङ्गस्य योगस्य प्राप्तिस्तावत्कर्म कार्यमित्यर्थः॥ ३॥

म० टी०—तत् किं प्रशस्तत्वात्कर्मयोग एव यावज्जीवमनुष्ठेय इति नेत्याह—आरुरुक्षोरिति। योगमन्तःकरणशुद्धिरूपं वैराग्यमारुरुक्षोरारोढुमिच्छोर्नत्वारूढस्य मुनेर्भविष्यतः कर्मफलतृष्णात्यागिनः कर्म शास्त्रविहितमग्निहोत्रादि नित्यं भगवदर्पणबुद्ध्या कृतं कारणं योगारोहणे साधनमनुष्ठेयमुच्यते वेदमुखेन मया। योगारूढस्य योगमन्तःकरणशुद्धिरूपं वैराग्यं प्राप्तवतस्तु तस्यैव पूर्वं कर्मिणोऽपि सतः शमः सर्वकर्मसंन्यास एव कारणमनुष्ठेयतया ज्ञानपरिपाकसाधनमुच्यते॥ ३॥

शं० टी०—एवं मुमुक्षूणां कर्मणोऽवश्यकर्तव्यत्वसिद्धये कर्मयोगं कर्मयोगिनं च संन्याससंन्यासिभ्यां समत्वेन स्तुत्वाऽधुना कर्मयोगस्य ज्ञानसाधनत्वं वदन् तत्कर्तव्यताया अवधिं च सूचयन्नारूढस्य विदेहमुक्तेः कारणमाह—आरुरुक्षोरिति। योगं सम्यग्दर्शननिष्ठामारुरुक्षोर्मुक्त्यै ज्ञानयोगं प्राप्तुमिच्छां कुर्वतो मुनेर्भविष्यन्मुनेः 'गृहस्थः स्त्रियमुद्वहेत्' इतिन्यायेनास्य भविष्यत्संन्यासित्वमादाय मुनित्वव्यपदेशः गौणवृत्त्या वा मुनेर्गृहिणो ज्ञानयोगप्राप्तेः कारणं कर्मैव चित्तशुद्धेः कर्मणा विनाऽन्येन संभावयितुमशक्यत्वात्कर्मैव पुरुषं चित्तशुद्धिं संपाद्य ज्ञानयोगमारोहयत्यतः कर्मैव ज्ञानयोगप्राप्तेः कारणमित्युच्यते मन्त्रेषु "कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा संततानि तान्याचरथ नियतं सत्यकामाः" इत्यादिश्रुतिभिः प्रतिपाद्यत इत्यर्थः। यस्य चित्तशुद्ध्यै कर्मयोगो विहितस्तस्यैव नित्यनैमित्तिककर्मानुष्ठानसंभावितचित्तशुद्धौ सत्यामुदितविवेकवैराग्यशमदमादिसाधनसंपत्त्या प्राप्तश्रवणादिजन्यज्ञानेन योगारूढस्य योगं ज्ञानयोगमारूढस्य संप्राप्तवतो यतेर्विदेहकैवल्यार्थिनः शमो बाह्योपरमणमेव विदेहमुक्तेरन्तरङ्गसाधनमित्युच्यते "तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ। ओमित्येवं ध्यायथ आत्मानं तमेव धीरो विज्ञाय। शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वात्मन्येवात्मानं पश्येत्" इति "आत्मरतिरात्मक्रीडः" इत्यादिश्रुतिभिः 'नैतादृशं ब्राह्मणस्यास्ति वित्तं यथैकता समता सत्यता च। शीलं स्थितिर्दण्डनिधानमार्जवं ततस्ततश्चोपरमः क्रियाभ्यः॥ नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी। यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन्' इत्यादिस्मृतिभिश्च विज्ञातात्मतत्त्वस्य यतेः समाधौ प्रवृत्तस्य शम उपशमः सर्वोपरमणं कारणमित्युच्यते, ब्रह्मण्यारोपितनामरूपाद्यग्रहणमेव शमशब्दार्थः, सर्वसंन्यासलक्षणः स एव विदेहमुक्तेः परमकारणमिति श्रुतिस्मृतिभिरुच्यत इत्यर्थः। यस्मादेवं तस्मान्मुमुक्षोरवश्यं चित्तशुद्ध्यै श्रद्धयेश्वरार्पणबुद्ध्या च वैदिकमेव कर्म कर्तव्यं तस्यैव कर्मानुष्ठानसंभावितचित्तशुद्ध्या तदेकपरतया सम्यक्कृतश्रवणादिसंप्राप्तज्ञानस्य समाधिनिष्ठायां तिष्ठतः सर्वकर्मसंन्यास एव कर्तव्य इत्यभिप्रायः। आरुरुक्षोः कर्म कारणं तस्यैव योगारूढस्य शमः कारणमित्युक्त्या गन्तुर्गमनं समुद्रपर्यन्तमेव ततःपरं तु गतेः परिसमाप्तिर्यथा तथा मुमुक्षोर्ज्ञानसिद्धिपर्यन्तमेव कर्म कर्तव्यं ज्ञानसिद्धौ सर्वकर्मसंन्यासः एव कर्तव्य इति सूचितं भवति। तेन "यावज्जीवमग्निहोत्रं जुहोति। कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः" इत्यादिश्रुतिवाक्यानां यावज्जीवमग्निहोत्रादिकर्मणः कर्तव्यत्वप्रतिपादकानामविद्वानेव गतिर्न तु विद्वान् अन्यथा "यदहरेव विरजेत्तदहरेव प्रव्रजेत्। सशिखं वपनं कृत्वा बहिःसूत्रं त्यजेद्बुधः। ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति" 'यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम्। तदैकदण्डं संगृह्य सोपवीतां शिखां त्यजेत्' इत्यादिश्रुतिविरोधप्रसङ्गात्। ननु जडजात्यन्धमूकादीनामेव वैदिककर्मानधिकारिणां

संन्यासो न तु विदुषः "विद्वान्यजते" इति विदुषो यागादिकर्मविधानादिति चेन्न निरुक्तश्रुतिस्मृतिविरोधप्रसङ्गात्। 'बहिःसूत्रं त्यजेद्बुधः' इति "किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः" इति 'यदा तु विदितं तत्त्वम्' इत्यादिश्रुतिस्मृतिवाक्यार्थे सम्यग्विचार्यमाणे संन्यासस्य ब्रह्मविदेव योग्यो विषयो न तु जडादिस्तेषां वेदशास्त्राधीतिशून्यानाम् "परीक्ष्य लोकान् कर्मचितान् ब्राह्मणो निर्वेदमायात्" इत्येतच्छ्रुत्यर्थपदवाक्यप्रमाणबलेन लोकानां कर्मचितत्वानित्यत्वाल्पफलत्वासत्त्वपरीक्षायोग्यताऽसंभवात् वेदाध्ययनतदर्थविचारे तत्त्वनिश्चये कर्मणि लौकिके च सर्वत्र योग्यस्यैवाधिकारदर्शनाद्वेदाध्ययनतदर्थविचारानर्हाणां ब्रह्मतत्त्वावगमनं बुधत्वं च स्वप्नेऽपि न संभावयितुं शक्यते ततो वेदान्तश्रवणादिनाधिगतब्रह्मतत्त्वानामेव बुधत्वं संन्यासश्च निरुक्तश्रुतिस्मृतिभिरवगम्यते तत एव भगवताप्युच्यते आरुरुक्षोर्मुनेर्योगमित्याद्यतः सम्यग्विदितात्मतत्त्वस्यैव संन्यासो न तु जडादेर्नापि परोक्षज्ञानिनः 'महत्पदं ज्ञात्वा वृक्षमूले वसेत्' "ज्ञात्वा नैष्कर्म्यमाचरेत्" 'तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान्। अहमेवाक्षरं ब्रह्म वासुदेवाख्यमव्ययम्॥ इति भावो ध्रुवो यस्य तदा भवति भैक्ष्यभुक्। यदा तु विदितं तत्त्वम्' इत्यादिश्रुतिस्मृतिशतेभ्यो ब्रह्मविद एव संन्यासः कर्तव्य इति सिद्धम्। "विद्वान् यजते" इत्यत्र वेदश्रौतार्थतत्प्रयोगप्रायश्चित्तविद्विद्वच्छब्दार्थस्तस्यैव यजत इति कर्मविधिर्न तु ब्रह्मविदः "तस्य कार्यं न विद्यते" इति ब्रह्मविदः कर्माभावस्मरणात् ततस्त्वविद्वानेव यावज्जीवश्रुतिवाक्यानां गतिरिति स्थितम्॥ ३॥

**श्री० टी०**—तर्हि यावज्जीवं कर्मयोग एव प्राप्त इत्याशङ्क्य तस्यावधिमाह—आरुरुक्षोरिति। ज्ञानयोगमारोढुं प्राप्तुमिच्छोः पुंसस्तदारोहे कारणं कर्मोच्यते चित्तशुद्धिकरत्वात् ज्ञानयोगमारूढस्य तु तस्यैव ज्ञाननिष्ठस्य शमः समाधिश्चित्तविक्षेपकर्मोपरमो ज्ञानपरिपाके कारणमुच्यते॥ ३॥

**स० टी०**—तत्किं कर्म प्रशस्तत्वात्सदानुष्ठेयमा मृतेः॥ मैवं धीशुद्धिवैराग्यमारुरुक्षोर्हि कर्म तत्॥१॥ शुद्धिं प्राप्तस्य तस्यैव तत्त्यागो ज्ञानसाधनम्॥ अधिकारविभागेन कर्मतत्त्यागयोरपि॥ २॥ कार्याकार्यव्यवस्थात्र प्रोक्ता भगवता मया॥ ३॥ ३॥

**भा० टी०**—किं प्रशस्तत्वाद्यावज्जीवं कर्मयोग एवानुष्ठेय इत्याशङ्कायां ध्यानयोगाधिकारसंपत्तिपर्यन्तमवधिमभिप्रेत्य कर्मयोगस्य ध्यानयोगसाधनत्वप्रदर्शनेन उत्तरमाह—आरुरुक्षोरिति। योगं ध्यानयोगमारुरुक्षोरारोढुमिच्छोर्ध्यानयोगेऽवस्थातुमसमर्थस्य। यत्तु योगं ज्ञानयोगमिति तन्न ध्यानयोगस्यैव प्रक्रान्तत्वात्। कस्यारुरुक्षोः मुनेः कर्मफलसंन्यासिन इत्यर्थः। यत्तु मुनेर्निदिध्यासनाख्यज्ञानयोगवतः श्रवणमननक्रमेण योगमारुरुक्षोरिति तन्न, निदिध्यासनवतः पुनः श्रवणमननक्रमस्यानपेक्षणात्। तयोर्निदिध्यासनार्थत्वात् कर्मफलाभिसंधिरहितं कारणं साधनमुच्यते तस्यैव पूर्वं कर्मिणः पश्चाद्योगारूढस्य प्राप्तध्यानयोगस्य शम उपशमः सर्वकर्मभ्यो निवृत्तिः कारणं योगारूढताया आत्मसाक्षात्कारनिर्विकल्पसमाधिपर्यन्तायाः साधनमुच्यते। एतेन योगमन्तःकरणशुद्धिरूपं वैराग्यमारुरुक्षोर्न त्वारूढस्य मुनेर्भविष्यतः कर्मफलतृष्णात्यागिनः कर्म कारणं योगारोहणे साधनमनुष्ठेयमुच्यते योगारूढस्य योगं पूर्वोक्तं प्राप्तवतस्तु तस्यैव शमः सर्वकर्मसंन्यास एव कारणमनुष्ठेयतया ज्ञानपरिपाकसाधनमुच्यत इति प्रत्युक्तं, ध्यानयोगस्यैवास्मिन्नध्याये वर्णनीयत्वेन तत्पक्षे श्लोकस्य सम्यगुपपत्त्या वर्णनीयार्थं श्रौतं विहायाश्रौतार्थवर्णनस्यानुचितत्वात्। योगसूत्रं त्रिभिः श्लोकैः पञ्चमान्तेयदीरितम्। षष्ठ आरभ्यतेऽध्यायस्तद्व्याख्यानाय विस्तरात्॥ तत्र सर्वकर्मत्यागेन योगं विधास्यंस्त्याज्यत्वेन हीनत्वमाशङ्क्य कर्मयोगं द्वाभ्यां स्तुतवानिति स्वपूर्वग्रन्थादप्यस्मिन् तृतीयश्लोके ध्यानयोगविधानवर्णनस्यावश्यकत्वात्। कदा योगारूढो भवतीत्युच्यत इत्युत्तरश्लोकमवतार्य योगं समाधिमारूढो योगारूढ इत्युच्यत इति योगारूढशब्दार्थप्रदर्शनपरस्वग्रन्थतन्मूलविरोधाच्च॥ ३॥

प० टी०—अथ कर्मज्ञानयोरवधिमाह—आरुरुक्षोरिति । यमनियमादिसोपानमार्गेणारोढुमूर्ध्वगतिं प्राप्तुमिच्छोः पुरुषस्य कर्म कारणमुच्यते आरोहणावधि कर्म कर्तव्यं चित्तशोधकत्वात् अशुद्धचित्तस्य च विक्षेपजनकत्वात्। तथा तस्यैवारूढदशां प्राप्तस्य ध्याननिष्ठस्य ज्ञानपरिपाकार्थं शमो विक्षेपोपरमः कारणम् ॥ ३ ॥

श० टी०—ध्यानाधिकारत्वेनोक्तो मुख्यः कर्मयोगः किं सकृदनुष्ठेय उत फलप्राप्तिपर्यन्तमित्यतः फलपर्यन्तमित्याह—आरुरुक्षोरिति । योगं ज्ञानोपायमारुरुक्षोः संपूर्णं कामयमानस्य मुनेः परोक्षज्ञानिनः कर्म कारणमुच्यते । योगारोहरूपसाक्षात्कारस्येति योज्यम् । अपरोक्षरूपफलोदयपर्यन्तं कार्यमिति भावः । तस्यैव मुनेर्योगारूढस्य संपूर्णज्ञानोपायस्यापरोक्षज्ञानिनः शमः उपलक्षणं भगवन्निष्ठबुद्धित्वरूपध्यानव्याख्यानार्चनादिकं कर्म कारणं मुक्तिगतसुखातिशयस्येति योज्यम् । यद्यप्ययं प्रश्नो यदा ते मोहकलिलमित्यनेन द्वितीये परिहृतस्तथापि तत्र परोक्षज्ञानार्थिनोऽत्र तु योगारोहशब्दितसंपूर्णोपायशब्दितापरोक्षार्थिन इति भेद इति भावः । यद्वा योगारूढस्येत्युत्तरार्धे अपरोक्षज्ञानिनो ध्यानादिकं कर्म वक्तुं यदा त इति श्लोकोक्तस्यैव प्रश्नोत्तरस्य पूर्वार्धेनानुवाद इति ज्ञेयम् । यद्वा कर्मयोगमध्ये ज्ञानार्थिना कीदृशो योगोऽवश्यापेक्षित इत्यत आह—आरुरुक्षोरिति । पूर्वार्धेन ज्ञानार्थिनः उत्तमाधममध्यमरूपनानाजनशुश्रूषाख्यमेव कर्मावश्यापेक्षितमित्युच्यते । ज्ञानार्थिनो यथाशक्ति त्रिविधप्राणिनां शुश्रूषयोपकारकृतः हरिस्तुष्टः स्वापरोक्षं ददाति । तेन तदवश्यं कार्यमिति चरमार्धेन तु ज्ञानिनो नानाजनशुश्रूषाख्यकर्मोपशम एव शमपदेनोच्यते न तु ध्यानाद्युपशमः तत्तु कार्यमेवेत्युच्यते शमपदस्योभयार्थत्वात् तस्य स्वोत्तमसेवयैवेष्टसिद्धौ अन्यशुश्रूषया कृत्याभावात् । एवं चात्र श्लोके पूर्वार्धे ज्ञानार्थिनः कर्मापेक्षितमित्युक्तोत्तरार्धे ज्ञानिनः शमपदेन कर्मोपशमोऽपेक्षित इत्युच्यते । तथाच न निरग्निर्न चाक्रियो योगीत्याद्युक्तिविरोध इति प्रत्युक्तं ध्येयं कर्मशमशब्दाभ्यां नानाजनशुश्रूषाख्यकर्मतदुपशमयोरेवात्र विवक्षितत्वादिति ॥ ३ ॥

**यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते ॥**
**सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते ॥ ४ ॥**

त० टी०—कर्माचरन्कदा योगारूढो भवतीति चेच्छृणु—यदा हीति । यदा यस्मिन्काले इन्द्रियार्थेषु शब्दादिविषयेषु तत्साधनभूतेषु कर्मसु च न सज्जते, ममैते भोग्या एतदर्थं मया प्रयतितव्यमित्यभिनिवेशं न करोति हि यस्मात्सर्वसंकल्पसंन्यासी सर्वसंकल्पफलभोगविषयांस्तत्साधनकर्मविषयांश्च संकल्पान् संन्यसितुं त्यक्तुं शीलं यस्य स तदा योगारूढ उच्यते ॥ ४ ॥

म० टी०—कदा योगारूढो भवतीत्युच्यते—यदा हीति । यदा यस्मिन् चित्तसमाधानकाले इन्द्रियार्थेषु शब्दादिषु कर्मसु च नित्यनैमित्तिककाम्यलौकिकप्रतिषिद्धेषु नानुषज्जते तेषां मिथ्यात्वदर्शनेनात्मनोऽकर्त्रभोक्तृपरमानन्दाद्वयस्वरूपदर्शनेन च प्रयोजनाभावबुद्ध्याऽहमेतेषां कर्ता ममैते भोग्या इत्यभिनिवेशरूपमनुषङ्गं न करोति हि यस्मात् तस्मात्सर्वसंकल्पसंन्यासी सर्वेषां संकल्पानामिदं मया कर्तव्यमेतत् फलं भोक्तव्यमित्येवंरूपाणां मनोवृत्तिविशेषाणां तद्विषयाणां च कामानां तत्साधनानां च कर्मणां त्यागशीलः तदा शब्दादिषु कर्मसु चानुषङ्गस्य तद्धेतोश्च संकल्पस्य योगारोहणप्रतिबन्धकस्याभावात् योगं समाधिमारूढो योगारूढ इत्युच्यते ॥ ४ ॥

शं० टी०—ननु बाह्योपरमणमेवैकं शमाभिधानं साधनमवलम्ब्य योगारोहणं कुर्वतो यतेः कदा योगारूढत्वसिद्धिरित्याकाङ्क्षायां यदा सर्वत्र ब्रह्मदृष्ट्या कर्मसु विषयेषु चासद्धियामुष्य प्रवृत्त्यभावस्तदा योगारूढत्वसिद्धिरिति बोधयति—यदा हीति । सर्वसंकल्पसंन्यासी संकल्पाः द्रव्यगुणकर्मादिगोचराः समीचीन-

त्वबुद्धयः सर्वविषयाः संकल्पाः सर्वसंकल्पास्तान्संन्यसितुं शीलमस्यास्तीति सर्वसंकल्पसंन्यासी अधिष्ठानयाथात्म्यसंदर्शनेनारोपितानां द्रव्यादीनां मिथ्यात्वे तेषु शुक्तिरजतवदाभासमात्रेषु तज्ज्ञस्य समीचीनत्वबुद्धयः संकल्पाः न जायन्ते कामाश्च वैषयिकाः कामाः सर्वे यन्मूलाः 'संकल्पमूलाः कामा वैयज्ञाः संकल्पसंभवाः' इति स्मरणात्ततः प्रत्यग्दृष्ट्या सर्वस्य ब्रह्ममात्रत्वेन निराश्रयान्सर्वान्संकल्पान्संन्यस्य सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मदर्शनशीलो ब्रह्मविद्यतिर्यदा यस्मिन्काले इन्द्रियार्थेषु क्वचिद्भिक्षाटनादौ दृष्टेषु शब्दादिषु कर्मसु च क्वचिद्वासनया कर्तव्यत्वेन प्रतीतेषु स्नानशौचादिकर्मस्वपि नानुषज्जते भोक्तृभोजनभोज्येषु कर्तृकारणकार्येषु च मिथ्यात्वबुद्ध्या स्वयमनुषङ्गमासक्तिं न करोति अनुषङ्गो नामाहं भुञ्जेऽहं करोमीति भोक्तृकर्तृतादात्म्यापत्तिस्तां न करोति किंत्वसङ्गोदासीनत्वेन सर्वत्र साक्षिभूतस्तिष्ठतीत्यर्थः । यद्वा प्राक्तनसंस्कारानुरूपा प्रवृत्तिरनुषक्तिस्तां न करोति प्रवृत्तेः काममूलत्वात्कामस्य संकल्पमूलत्वात्संकल्पानां सर्वेषामप्याश्रयमिथ्यात्वविज्ञानेन संन्यस्तत्वाद्विदुषः शब्दादिषु कर्मसु चाप्यनुषङ्गाभावो युक्तः 'कारणाभावे कार्याभावः' इतिन्यायात् । यद्वा विपरीतप्रत्ययनिरसनपूर्वकं सर्वत्र ब्रह्मदर्शननिष्ठायां प्रवृत्तो ब्रह्मविद्यतिः स्वयं सर्वसंकल्पसंन्यासी अधिष्ठानाज्ञानदोषेण शुक्तौ रजतप्रत्ययवन्निर्विशेषे परे ब्रह्मण्यद्वितीये घटः पटः कुड्यमिति भ्रान्त्या सम्यक्कल्प्यन्त इति संकल्पाः विपरीतप्रत्ययास्तान् सर्वान्संकल्पान्संन्यसितुं चिद्वृत्त्या ब्रह्मणि प्रविलापयितुं शीलमस्यास्तीति सर्वसंकल्पसंन्यासी विजातीयप्रत्ययप्रविलापनपरतया सजातीयप्रत्ययावृत्तिं कुर्वन्नित्यर्थः । यदा यस्मिन्काले सर्वत्र ब्रह्ममात्रग्रहणशीलाया बुद्धिवृत्तेः स्थिरीभावदशायामिन्द्रियार्थेषु क्वचिदाभासतः प्रतीयमानेषु विषयेषु कर्मसु च चक्षुरादीन्द्रियैस्तत्तद्विषयग्रहणकर्मस्वपि नानुषज्जते अनुषक्तिं न करोति अनुषक्तिर्नामाकस्माद्दृष्टार्थानुरूपेण पुनर्वृत्तेः परिणतिस्तां चक्षुरादिभिरिन्द्रियैर्ग्रहणक्रियां च न करोति किंतु दृष्टान्विषयान् तद्वृत्तिद्रष्टारं च प्रत्यावृत्त्या ब्रह्मणि प्रविलापयतीत्यर्थः । एवं द्रष्टृदर्शनदृश्यादिभेदभिन्नं विश्वं सर्वं यदा ब्रह्ममात्रं पश्यति तदा योगारूढः सर्वस्य स्वस्य च ब्रह्ममात्राकारप्रत्ययोऽप्रतिबद्धो योगस्तत्रारूढः प्रतितिष्ठत इति कृत्वा योगारूढ इत्युच्यते स्थितप्रज्ञो यं जीवन्मुक्त इति पण्डितैरन्योन्यं प्रति भाष्यत इत्यर्थः । "विजानन्विद्वान् । भवेत नातिवादी आत्मक्रीड आत्मरतिः क्रियावान्" इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः ॥ ४ ॥

**श्री० टी०**—कीदृशोऽसौ योगारूढः यस्य शमः कारणमुच्यत इत्यत्राह—यदा हीति । इन्द्रियार्थेषु इन्द्रियभोग्येषु शब्दादिषु तत्साधनेषु च कर्मसु यदा नानुषज्जते आसक्तिं न करोति । तत्र हेतुः—आसक्तिमूलभूतान्सर्वान्भोगविषयान्कर्मविषयांश्च संकल्पान्संन्यसितुं त्यक्तुं शीलं यस्य सः तदा योगारूढ उच्यते ॥ ४ ॥

**स० टी०**—यस्मिंश्चित्तसमाधानकाले कर्मसु तत्फले ॥ तन्मिथ्यात्वधिया स्वात्माकर्त्रभोक्तृधिया तथा ॥ १ ॥ अहं कर्तास्य भोग्यं तत्फलं मे चेति रञ्जनाम् ॥ न करोति परित्यक्तसर्वकामतया मुनिः ॥ २ ॥ इहामुत्रार्थकामानां हेतूनाध्यासिकान्यतः ॥ संत्यक्तुं शीलमस्यासौ प्राप्तयोगस्तदोच्यते ॥ ३ ॥ ४ ॥

**भा० टी०**—कदा योगारूढो भवतीत्यपेक्षायामाह—यदेति । एतेन कीदृशोऽसौ योगारूढः यस्य शमः कारणमुच्यत इत्यत्राह कः पुनर्योगारूढ इत्यत उच्यत इत्यापातनिकाद्वयमपि प्रत्युक्तं, यदातदापदयोः प्रत्यक्षमुपलब्धेर्भाष्योक्तपातनिकाया एव युक्तत्वात् । यदा यस्मिन्काले समाधीयमानचित्तो योगी इन्द्रियार्थेषु विषयेषु शब्दादिषु कर्मसु च नित्यादिषु प्रयोजनाभावबुद्ध्या नानुषज्जते अनुषङ्गं कर्तृत्वादिबुद्धिं न करोतीत्यर्थः । यतः सर्वान् संकल्पान् विषयविषयकमनोवृत्तिभेदान् कामान् सर्वाणि कर्माणि चेति सर्वसंकल्पान् इहामुत्रार्थकामहेतून् संन्यासितुं शीलमस्येति सर्वसंकल्पसंन्यासी तदा योगारूढः प्राप्तसमाधिरुच्यते ॥ ४ ॥

**प० टी०**–अथ योगारूढस्य स्वरूपमाह–**यदेति** । यदा यस्मिन् काले इन्द्रियार्थेषु रूपरसादिषु तथा तत्कारणीभूतेषु कर्मसु चेष्टासु न सज्जते आसक्तिं न करोति । अथ न केवलं कर्मेन्द्रियनिरोधमात्रमित्याह–**सर्वेति** । सर्वविषयभोगनिमित्तीभूताः संकल्पास्तान् संन्यस्तुं शीलं यस्य स तदा तस्यामवस्थायां योगारूढ इत्युच्यते नान्यः ॥ ४ ॥

**रा० टी०**–योगारूढशब्दितसंपूर्णोपायसिद्धिमतो लक्षणमाह–**यदेति** । यदा हीन्द्रियार्थेषु शब्दादिविषयेषु कर्मसु च प्रयत्नं विनापि नानुषज्जते । ननु कर्माननुषङ्गो नाम कर्मस्वरूपत्याग एव तथाच न चाक्रियो योगीति प्रागुक्तविरोध इत्यतः कर्माननुषङ्गं स्वयमेव व्याख्याति–**सर्वेति** । ज्ञानिनः कर्माननुषङ्गो नाम सर्वकर्मसु संकल्पन्यास एव सर्वेषु कर्मसु संकल्पत्यागी सन् कर्मसु नानुषज्जते यदा तदा योगारूढ उच्यते इति योजना । कर्मसु संकल्पत्यागो नाम ममतात्याग एव संकल्पक्रियादिकं सर्वं भगवदधीनमिति ज्ञानमेव । एवं च संकल्पादेर्भगवदधीनताज्ञानेन हेतुना कर्मस्वनासक्तत्वे सत्यप्रयत्नेन शब्दादिविषयेषु अनासक्तत्वं योगारूढस्य लक्षणमित्युक्तं भवति । अप्रयत्नेनेति विशेषणाद्योगमारुरुक्षौ नातिव्याप्तिः, तस्यानासक्तेः प्रयत्नसाध्यत्वात् ॥ ४ ॥

**उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ॥**
**आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ५ ॥**

**त० टी०**–एतेन विषयासक्तिस्तद्विरक्तिश्च संसारपाततदुद्धरणहेतुभूते इति बुद्ध्वा स्वहितं कुर्यादित्याह–**उद्धरेदिति** । आत्मना विषयाननुसक्तेन मनसा आत्मानं जीवं समुद्धरेत्, विषयासक्त्या संसारे पतन्तं दोषबुद्ध्या तत्परित्यागेनोर्ध्वं नयेदित्यर्थः । नावसादयेत् विषयासक्त्या संसारसमुद्रे न मज्जयेत् हि यस्मादात्मैव मन एवात्मनो बन्धुर्हितकारी संसारादुद्धारकः मान्यो भ्रात्रादिः । आत्मैव मन एवात्मनो रिपुरहितकारी नान्यः ॥ ५ ॥

**म० टी०**–यो यदैवं योगारूढो भवति तदा तेनात्मनैवात्मोद्धृतो भवति संसारानर्थव्रातादतः आत्मना विवेकयुक्तेन मनसा आत्मानं स्वं जीवं संसारसमुद्रे निमग्नं तत उद्धरेत् उत् ऊर्ध्वं हरेत् विषयासङ्गपरित्यागेन योगारूढतामापादयेदित्यर्थः । ननु विषयासङ्गेनात्मानमवसादयेत् संसारसमुद्रे मज्जयेत् हि यस्मादात्मैवात्मनो बन्धुर्हितकारी संसारबन्धनान्मोचनहेतुः नान्यः कश्चिल्लौकिकस्य बन्धोरपि स्नेहानुबन्धेन बन्धहेतुत्वात् । आत्मैव नान्यः कश्चित् रिपुः शत्रुरहितकारी विषयबन्धनागारप्रवेशककोशकार इवात्मनः स्वस्य बाह्यस्यापि रिपोरात्मप्रयुक्तत्वाद्युक्तमवधारणमात्मैव रिपुरात्मन इति ॥ ५ ॥

**शं० टी०**–मुमुक्षुर्दुर्लभं मानुषं तत्रापि ब्राह्मं देहं प्राप्य सदसद्विवेकसंपादनयोग्यं स्वोद्देशेन कृतश्रौतादिसत्कर्मभिर्भक्त्या च प्रसन्नपरमेश्वरप्रसादसंपन्नो भूत्वा शमादिसाधनसंपत्त्या सद्गुरोः सकाशाच्छ्रवणं मननं च कृत्वा ब्रह्मैवाहमिति स्वात्मना ब्रह्म ज्ञात्वा योगारूढः सन् चिदेकरसब्रह्मात्मना यदा तिष्ठति तदा खल्वयं संसारदुःखसागरे मग्नमात्मानं स्वयमेव समुद्धृत्य मोक्षसाम्राज्यसुखे संस्थापितवान् भवति यतस्ततो ब्राह्मणादिभिर्विवेकसंपन्नैर्मनुष्यत्वब्राह्मणत्वविवेकित्वादिसिद्धेः साफल्याय सर्वं संन्यस्य प्रयत्नेन संसाराब्धिनिमग्नस्यात्मनः समुद्धरणमवश्यं कर्तव्यमित्याह–**उद्धरेदिति** । पुत्रमित्रकलत्रादिगोचरमहामोहावर्त शताकुले कामक्रोधलोभाहंकारममकारादिचित्तविकारमहाग्राहसमुज्जृम्भिते नानाविधमहारोगतिमितिमिङ्गिलकोटिविराजिते अशनापिपासादिमहाकल्लोलोद्वेल्लिते तापत्रयनिबिडवडवानलज्वालामालासंवीते स्वेष्टजननष्टिप्रयुक्तप्रलापमहाध्वनिविघूर्णिते नित्यनिरन्तरदुर्वासनाशैवालपटलसंकीर्णे विषयविषपरिपूर्णसंसारार्णवे निमग्नं जन्ममृत्युजरादिदुःखेन हतोऽस्मीत्याक्रोशन्तमात्मानं स्वमात्मना श्रद्धाभक्तिसमाराधितपरमेश्वरप्रसादवता सदसद्वि-

वेकवैराग्यशमदमादिसाधनवता श्रवणादिसमुत्पन्नात्मज्ञानवता स्वेनैवोद्धरेत्स्वोद्धरणे स्वयमेवोक्तलक्षणसंपन्नः साधनमनुत्तमं नान्यत् । सत्येवोक्तलक्षणे साधकतमे कार्यं साधनान्तरं च सिध्यति नान्यथा ततो विचक्षणो मुमुक्षुरुक्तलक्षणवता स्वेनैव स्वोद्धरणं कुर्यात् यथा महाज्वरादिप्रचण्डरोगदुःखनिमग्नमात्मानं स्वं स्वयमेव प्रतिकूलमपथ्याचरणादिकमपास्य दिव्यौषधपथ्यसेवननिरतो भूत्वा प्रयत्नेन रोगादुद्धरति तथा भूतदाहीयानापस्तम्बोक्तान् क्रोधादिदुर्गुणान् तत्कार्याणि चापास्य प्रतिकूलं सर्वं कर्म संन्यस्यामानित्वादीनामात्मगुणानां च सेवया सद्गुरोः सन्निधौ नियमेन कृतश्रणादिनात्मज्ञानं समधिगम्य योगारूढो भूत्वात्मानं स्वं स्वयमेव संसारसागरादुद्धरेदित्यर्थः । आत्मन उद्धरणं नामाविद्यातत्कार्यसंबन्धलेशरहितेन सच्चिदानन्दैकस्वरूपेण स्थापनमेव स्वस्वरूपेणावस्थानं खल्वात्मनो मोक्षस्तमेव निरन्तरब्रह्मयोगनिष्ठया मुमुक्षुः संपादयेत् नत्वनाद्यविद्यावासनावशवर्ती सन् बहिर्मुखो भूत्वात्मानमवसादयेत् यथा रोगी जिह्वादोषवेगवशगो भूत्वा स्वारोग्यप्रतिकूलमपथ्यं भुक्त्वा स्वं स्वयमेव नाशयति तथा मुमुक्षुर्यतिर्बाह्यवासनयात्मतरणप्रतिकूलां बहिःप्रवृत्तिं कृत्वा स्वं स्वयमेव न नाशयेत् किंतु 'वाचं यच्छ मनो यच्छ यच्छ प्राणेन्द्रियाणि च । आत्मानमात्मना यच्छ न भूयः कल्पसेऽध्वनः' इतिन्यायेनान्तःप्रवणो भूत्वा स्वोद्धरणमेव कुर्यादित्यर्थः । ननु पङ्के मग्नं पशुं तदीया इवात्मानं भ्रातृपुत्रादयो बान्धवाः कन्यादानश्राद्धादिभिः समुद्धरिष्यन्ति किं स्वप्रयासेनेत्याशङ्कायामाह—आत्मैवेति । स्वाविद्यया जननमरणादिदुःखप्रवाहे पतित्वाध्यात्मिकादितापत्रयाग्निना संतप्यमानस्यात्मनः स्वस्यात्मा स्वयमेव बन्धुः संसारदुःखान्मोचयित्वा निरतिशयमोक्षसुखेन बध्नातीति बन्धुः संसारदुःखाब्धितारकः स्वस्य स्वयमेव न तु भ्रात्रादिः तत्कर्तृकश्राद्धादिपुण्यकर्मणामविषयत्वेनात्मा न तैस्तार्यते यथा महारोगी परकर्तृकपथ्यौषधसेवया न तार्यते विना स्वकर्तृकया तथैव स्वयमपि स्वकर्तृकश्रवणमनननिदिध्यासनसमाधिनिष्ठया विना पुत्रादिभिर्न तार्यते प्रत्युत स्नेहास्पदत्वेन बन्धहेतुरेव भवति पुत्रादिर्न तु मुक्तये तत एवावधार्यते आत्मैव ह्यात्मनो बन्धुरिति । स्वस्य रोगक्षुदादिदुःखप्राप्तौ तन्निवर्तकत्वं स्वस्यैव दृष्टमिति प्रत्यक्षप्रासिद्धम् । " एतैरुपायैर्यतते यस्तु विद्वान् तस्यैव आत्मा विशते ब्रह्मधाम " इत्यादिश्रुतिप्रसिद्धिं च हिशब्दो द्योतयति । नन्वात्मानं प्रत्यात्मन एव बन्धुत्वे स्वातिरिक्तानामेव सर्वेषां शत्रुत्वं सिद्धं न काप्यात्मन इत्यादिशङ्कायां न, स्वोद्धरणाय यत्नमकुर्वाणो यो बहिर्मुखः स एव स्वस्य स्वयं शत्रुर्भवतीत्याह—आत्मैवेति । आत्मनः स्वस्यात्मैव शत्रुः " शान्तो दान्तः" इत्युक्तसाधनसंपत्त्यात्मोद्धरणाय समाधिमकुर्वाणो यः स एव यतिः स्वस्य स्वयमेव शत्रुर्भवति यथा जिह्वादोषेणापथ्यकारी स्वस्य स्वयमेव शत्रुस्तथा शमादिसाधनसामग्रीमनालम्ब्य स्वोद्धरणसाधनभूतब्रह्मयोगनिष्ठायामतिष्ठन्ननाद्यविद्यावासनावेगाद्विदेहमुक्तिहेतोर्ज्ञानस्य निर्मूलकं बाह्यमेवावलम्बते यतस्तत आत्मन आत्मैव रिपुर्मारकः न तु बहिरपकर्ता तस्य बाह्यकार्यं प्रत्येव रिपुत्वं न तु मुक्तिं प्रत्यत एवावधार्यते आत्मैव रिपुरात्मन इति । मुक्तिहेतोः सार्वात्म्यसिद्धेर्बाह्यालम्बनस्यैव प्रतिपक्षत्वात्तत्कर्तुः स्वस्य युक्तं स्वं प्रति स्वस्यैव रिपुत्वं रोगिण्यपथ्यकारिणि तद्दृष्टमिति हिः प्रसिद्धिं द्योतयति ॥ ५ ॥

**श्री० टी०**—अतो विषयासक्तित्यागे मोक्षं तदासक्तौ च बन्धं पर्यालोच्य रागादिस्वभावं त्यजेदित्याह—उद्धरेदिति । आत्मना विवेकयुक्तेनात्मानं संसारादुद्धरेत् नत्ववसादयेदधो न नयेत् हि यस्मात् आत्मैव मनः सङ्गादुपरत आत्मनः स्वस्य बन्धुरुपकारकः रिपुरकारकश्च ॥ ५ ॥

**स० टी०**—योगारूढो यदा जातस्तदैवात्मात्मनामुना ॥ अनर्थव्रातसंसाराद्बन्धनाख्यात्समुद्धृतः ॥ १ ॥ संसारपङ्कनिर्मग्नमात्मानमतियत्नतः ॥ उद्धरेत्तत ऊर्ध्वं तं वैराग्यादियुतः पुमान् ॥ २ ॥ त्यागेन विष-

यासक्तेः समाध्यारूढता नयेत् ॥ अनाद्यविद्ययाध्यस्तदेहाद्यात्मममतिं त्यजेत् ॥ ३ ॥ ब्रह्मात्मैक्यावबोधेन धीमान् शान्तिं समाश्रयेत् ॥ संसारेऽत्यन्तघोरेऽस्मिन् रागद्वेषादिसंकुले ॥ ४ ॥ स्वात्मानं पातयेन्नैव विषयासक्तचेतसा ॥ बन्धान्मोक्षकरो ह्यात्मा हितकारी स आत्मनः ॥ ५ ॥ नान्यः कश्चिद्भवेद्बन्धुः संसारोद्धारणे क्षमः ॥ प्रत्युत स्नेहपाशेन बन्धुरन्योऽत्यनर्थदः ॥ ६ ॥ आत्मैवाहितकारित्वादात्मनः शत्रुरुच्यते ॥ विषयासक्तिबन्धैश्च कारागारे प्रवेशनात् ॥ ७ ॥ पुनर्जन्म पुनर्मृत्युः पुनर्भोगेषु दीनता ॥ स्वात्माज्ञानाद्यतो नॄणां तत ऊर्ध्वं नयेत्स्वयम् ॥ ८ ॥ आत्मानं तत्त्वबोधेन वैराग्यादियुतेन च ॥९॥५॥

भा० टी०—यदेवं योगारूढस्तदा तेनात्मनाऽऽत्मोद्धृतो भवति संसारानर्थसमूहादतः संसारार्णवे निमग्नमात्मानमात्मनोद्धरेत् तत उर्ध्वं नयेत् योगारूढतामापादयेत् आत्मानं नावसादयेन्नाधो नयेत् हि यस्मादात्मैव बन्धुः संसारान्मोचकः नान्यः कश्चन पुत्रादिः प्रत्युत मोक्षं प्रति प्रतिकूल एव स्नेहादिबन्धनायतनत्वात् 'बन्धवो दृढबन्धनम्' इत्युक्तत्वात्, तथात्मैवात्मनो रिपुः नान्यो बाह्योऽपकारी तस्यात्मप्रयुक्तत्वात् तस्माद्युक्तमेवोभयत्रावधारणम् ॥ ५ ॥

प० टी०—अतो विषयत्यागे मोक्ष आसक्तौ च बन्ध इति पर्यालोच्य रागादिस्वभावं त्यजेदित्याह—उद्धरेदिति । विवेकयुक्तेनात्मना मनसा कृत्वात्मानं जीवदशापन्नं संसारादुद्धरेत् परं तु नावसादयेन्नाधः पातयेत् हि यस्मात्कारणादात्मनो बन्धुरुपकारको रिपुरपकारक आत्मैव स्वयमेव नान्यः मन एव मनुष्याणां कारणं बन्धमोक्षयोः इत्युक्तत्वात् ॥ ५ ॥

रा० टी०—यस्य ध्यानयोगस्य कामादिवर्जनरूपसंन्यासयुक्तस्ववर्णाश्रमोचितकर्मानुष्ठानवानधिकारी उक्तः अपरोक्षाख्यफलपर्यन्तं कर्मानुष्ठानं चोक्तं । स एव ध्यानयोगोऽभियोगेन कार्य इत्याह—उद्धरेदिति । आत्मना मनसा आत्मानं जीवमुद्धरेत् पुमर्थभाजनं कुर्यात् । आत्मानं जीवं नावसादयेत् न क्लेशभाजनं कुर्यात् । कुतः हि यस्माद्धात्मनो जीवस्यात्मैव मन एव बन्धुः रिपुश्च भवत्यत इति ॥ ५ ॥

## बन्धुरात्मात्मनस्तस्य येनात्मैवात्मना जितः ॥
## अनात्मनस्तु शत्रुत्वे वर्तेतात्मैव शत्रुवत् ॥ ६ ॥

त० टी०—कथंभूतस्यात्मन आत्मा बन्धुः कथंभूतस्यात्मन आत्मा रिपुरित्युच्यते—बन्धुरिति । येन पुरुषेणात्मनैव स्वेनैवात्मा स्वमनो विषयेभ्यो जितो निवर्तितः तस्यात्मा मन एव बन्धुर्हितकारी । अनात्मनोऽजितमनसः पुरुषस्यात्मैव विषयासक्तं स्वकीयं मन एव शत्रुवत् स्वस्य शत्रुत्वे संसारबन्धहेतुत्वे वर्तेत । तदुक्तं श्रीपराशरेण—'मन एव मनुष्याणां कारणं बन्धमोक्षयोः । बन्धाय विषयासक्तं मुक्त्यै निर्विषयं स्मृतम्' इति ॥ ६ ॥

म० टी०—इदानीं किंलक्षण आत्मनो बन्धुः किंलक्षणो वात्मनो रिपुरित्युच्यते—बन्धुरिति । आत्मा कार्यकरणसंघातो येन जितः स्ववशीकृतः आत्मनैव विवेकयुक्तेन मनसैव न तु शस्त्रादिना तस्यात्मा स्वरूपमात्मनो बन्धुरुच्छृङ्खलप्रवृत्त्यभावेन स्वहितकरणात् अनात्मनस्तु अजितात्मन इत्येतत् शत्रुत्वे शत्रुभावे वर्तेतात्मैव शत्रुवत् बाह्यशत्रुरिवोच्छृङ्खलप्रवृत्त्या स्वस्य स्वेनानिष्टाचरणात् ॥ ६ ॥

शं० टी०—यदुक्तं स्वंप्रति स्वस्यैव बन्धुत्वं शत्रुत्वं च तदिदानीं विस्पष्टयति—बन्धुरिति । अनाद्यविद्यावासनया रागद्वेषादिभिश्च बन्धकगुणैरिन्द्रियवशो भूत्वा देहेन्द्रियादिप्रवृत्तिमेव स्वाभाविकीं स्वस्येष्टामेव मन्यमानो य आत्मा संसरति तस्यात्मनः सदसद्विवेकवता तीव्रविरक्तिमता मोक्षेच्छयैव कृतश्रवणादिना विज्ञातात्मतत्त्वेनामानित्वादिगुणसंपन्नेन येनात्मना रागद्वेषादिदोषानभिभूयात्मा कार्यकरणसंघात एव

जितो निर्जितो भवति स आत्मा बन्धुर्भवति कार्यकरणसंघातजयस्तु तत्प्रवृत्तिप्रतियोगिगुणावष्टम्भेन कर्तव्यः देहप्रवृत्तिर्देहशिरोग्रीवाणां समत्वधारणेन धैर्येण च प्राणप्रवृत्तिः प्राणायामेन क्षान्त्या च इन्द्रियप्रवृत्तिर्मनःप्रवृत्तिश्च वैराग्येण शान्त्या च बुद्धिप्रवृत्तिः सदसद्विवेकविज्ञानेन तीव्रमोक्षेच्छया च ब्रह्मण्येवात्मभावेनाहंकारप्रवृत्तिर्जेतव्या । एवं कार्यकरणसंघातलक्षण एवात्मा येन वशीकृतो भवति स कार्यकरणसंघातजेतात्मा पूर्वोक्तस्याहंममेतिसंसरिष्णोरात्मनो बन्धुस्तारको भवति स्वतरणकारणभूतज्ञानस्याप्रतिबन्धत्वाय क्रियमाणसमाधिनिष्ठाप्रतिकूलकार्यकरणसंघातप्रवृत्तिं वासनाकृतां निगृह्य यस्मात्समाधावेव प्रवर्तते तस्मादित्यर्थः । एतेन देहेन्द्रियमनोबुद्ध्यादेरनुकूलत्वे समाधिर्ज्ञानं च मोक्षश्च सिध्यति नान्यथा ततः प्रतियोगिगुणावष्टम्भेन देहेन्द्रियादेर्जयोऽवश्यं मुमुक्षोर्यतेः कर्तव्य इति सूचितम् । तत एव देहेन्द्रियादेर्जयमकुर्वाणः स्वस्य स्वयमेव शत्रुर्भवतीत्याह--अनात्मन इति । अनात्मनो देहेन्द्रियादेः स्वस्ववासनानुरूपप्रवृत्त्या शत्रुत्वे समाधिनिष्ठा प्रतिकूलत्वे सति तत्प्रवृत्त्यनुसार्यात्मापि संसारमग्नस्यात्मनः स्वस्य स्वयं शत्रुवदेव भवति स्वोद्धरणक्रियाप्रतिकूलदेहाद्यनुसारित्वाद्यथा रोगी विरोध्यपथ्यानुसारी पुरुषः स्वस्य स्वयं शत्रुर्भवति तथाऽयमात्मापि 'नाविरतोदुश्चरितात् । यच्छेद्वाङ्मनसी प्राज्ञः' इति 'वाचं यच्छ' इत्यादिश्रुतिस्मृत्युक्तमोक्षमार्गमनादृत्य यतो वासनानुरूपेण स्वमुक्तेः प्रतिकूलां बहिःप्रवृत्तिमेव करोति ततो युक्तमात्मनः स्वं प्रति स्वस्य शत्रुत्वम् । यस्मादेवं तस्मान्मुमुक्षोर्यतेः श्रवणादिजन्यज्ञानवतो विदेहकैवल्यसिद्ध्यै कर्तृकरणभोक्तृभोग्यादिसर्वद्वयमिथ्यात्वबुद्ध्या तीव्रवैराग्येण च मिथ्याविषयां बन्धकरीं बाह्यप्रवृत्तिं निगृह्य ब्रह्मयोगनिष्ठामधिष्ठायात्मोद्धरणमवश्यं प्रयत्नेन कर्तव्यमिति सिद्धम् । ननु उद्धरेदात्मनात्मानमित्यात्मनैवात्मन उद्धरणं कर्तव्यमित्युक्ते त्वेकस्यैवात्मनः कर्तृकर्मभावः प्रसज्यते स च लोकशास्त्रविरुद्धः नहि स्वस्कन्धं स्वयमारोढुं शक्नोति तद्वत् स्वं स्वयमुद्धर्तुं च न शक्नोत्येवेति चेत्सत्यं स्वं प्रति स्वस्य कर्तृभावः कर्मभावश्च नोपपद्यते तथापि गुणभेदेन तद्द्वयमात्मन्येकस्मिन्नप्युपपद्यते तदुच्यते । " स्वाज्ञानेन संसारे पतितं स्वं स्वयमेव शमदमसंन्यासादिसाधनसंपत्त्या श्रवणमनननिदिध्यासादिभिः समुत्पन्नकूटस्थासङ्गचिद्रूपत्वविज्ञानेन देहेन्द्रियादिसंबन्धरहितं ज्ञात्वा कर्तृत्वभोक्तृत्वादिबन्धेभ्यो मोचयितुमर्हत्येव यथा अज्ञानेनारण्ये निर्जने ह्रदे वाऽन्यत्र वा पङ्के पतितं स्वं स्वयमेव विवेकी चतुरः पुरुषस्तरुं तरुशाखां वा लतां वान्यद्वावलब्योपायेन पङ्कात्समुद्धरति तद्वदेतन्न्यायाद्भगवद्वचनाच्च न कोऽपि विरोधः ॥ ६ ॥

**श्री० टी०**—कथंभूतस्यात्मैव बन्धुः कथंभूतस्य चात्मैव रिपुरित्यपेक्षायामाह—बन्धुरिति । येनात्मनैव आत्मा कार्यकारणसंघातरूपो जितो वशीकृतः तस्य तथाभूतस्यात्मनः आत्मैव बन्धुः अनात्मनोऽजितात्मनस्तु आत्मैवात्मनः शत्रुत्वे शत्रुवदपकारित्वे वर्तेत ॥ ६ ॥

**स० टी०**—बन्धुरात्मात्मनः कीदृक्कीदृक् शत्रुरितीर्यते ॥ कार्यकारणसंघातो येनादौ स्ववशीकृतः ॥१॥ विवेकबुद्ध्या तस्यात्मा विषयासक्तिवारणात् ॥ बन्धुरस्त्यात्मनः शास्त्रप्रवृत्त्या मोक्षसंमुखः ॥ २ ॥ आत्मैव शत्रुवत्तस्य मूढस्याप्यजितात्मनः ॥ वर्तते शत्रुभावेन विषयासक्तिबन्धनात् ॥ ३ ॥ उच्छृङ्खलप्रवृत्त्या च स्वस्य स्वेनैव बन्धनम् ॥ तन्निवृत्त्यास्य मोक्षोऽपि स्वयं सिद्ध उपस्थितः ॥ ४ ॥ ६ ॥

**भा० टी०**—आत्मैव बन्धुरात्मैव रिपुरात्मन इत्युक्तं तत्र किंलक्षण आत्मात्मनो बन्धुरात्मात्मनो रिपुश्चेति तत्राह—बन्धुरिति । तस्यात्मनः स आत्मा बन्धुः येनात्मना आत्मैव कार्यकरणसंघात एव जितः वशीकृतः श्रेयोभिमुखः जितेन्द्रिय इत्यर्थः । अनात्मनः अजितात्मनस्त्वजितकार्यकरणसंघातस्यात्मैव स्वयमेव शत्रुत्वे शत्रुभावे वर्तेत शत्रुवत् यथात्मेतर आत्मनोऽपकारी तथात्मात्मनोऽपकारे वर्तेतेत्यर्थः । तथा चै-

तदनुरोधात्पुनः पुनरात्मशब्दस्वारस्याच्चोद्धरेदात्मनात्मानमित्यत्रापि स्वं स्वेनैवोद्धरेत् हि यस्मात्स्वयमेव स्वस्य बन्धुः स्वयमेव स्वस्य शत्रुरित्यर्थः। एतेनात्मना विवेकयुक्तेन मनसा आत्मानं स्वं जीवमात्मैव विवेकयुक्तं मन एवात्मनः स्वस्य बन्धुः येनात्मैवात्मना विवेकयुक्तेन मनसा जितः न तु शास्त्रादिनेति प्रत्युक्तम्। यत्तु नन्विन्द्रियार्थेष्वनासक्तौ तस्य सर्वसंकल्पसंन्यासिनः किं प्रयोजनं तत्राह–उद्धरेदिति। अत्रोत्तरार्धस्थमात्मेतिपदं पूर्वार्धेऽनुषञ्जनीयं तथाचायं संबन्धः आत्मा पूर्वपूर्वापरिमितजन्मोपार्जितपुण्यपुञ्जपूर्णमन्तःकरणं कर्तृ आत्मानं प्रत्यक्त्वं कर्म अन्तःकरणापरपर्यायजडाशयनिमग्नतया सकलानर्थभाजनतां गतमात्मना विवेकवैराग्यादिसंपन्नेनोद्धरेदुक्तजडाशयात्पृथक् कुर्यात् न स्वधर्मैः कर्तृत्वादिभिस्तिरस्कुर्यात्। यत आत्मानं स्वस्य स्वधर्माणां च सत्तायाः प्रत्यगधीनत्वात् स्वजीवनभूतं तथाचेदृशमुपकारं कुर्वत उद्धरणं तिरस्काराकरणं चोचितमेव। एवं च यदीन्द्रियार्थेषु सक्तः स्यात्तर्हि हविषा कृष्णवर्त्मेवेत्यादिन्यायेन कामानुपरमात् तत्क्रोधाद्युपस्थितौ न कदाचित्प्रतीचः संसारादुद्धारः स्यादिति युक्त एवेन्द्रियार्थेष्वनासक्त इत्याकूतम्। यद्वा आत्मा प्रत्यगात्मान्तर्यामी आत्मना विवेकादिसंपन्नेनान्तःकरणेन कर्तृत्वाद्यभिमानकलुषमन्तःकरणमुद्धरेत् कण्टकेनेव कण्टकं दूरेणोत्सादयेत्। कुत एवं कर्तव्यमत आह–नात्मानमवसादयेदिति। आत्मानं प्रत्यग्रूपं स्वं नावसादयेत् न विशीर्णं परमात्मनो विभक्तरूपं कुर्यादित्यर्थः। ननु तदेवमेकमन्तःकरणमात्मन उपकारकमपकारकं च कथं भवतीत्याशङ्क्य स्वभावसहकारिवशात् विषस्येव मरणाजीवनहेतुतया भेदं पुनरुक्तात्मपदप्रयोगात्सूचयन्नाह–आत्मैवान्तःकरणमेव विवेकादिसंपन्नमात्मनो जीवस्य बन्धुः बन्धध्वंसहेतुः तथा विवेकाद्यसंपन्नमन्तःकरणमेव आत्मनः स्वभावाज्जीवस्य रिपुः सर्वानर्थात्मकबन्धनहेतुत्वादित्यर्थः। उभयत्रैवकारं प्रयुञ्जानस्यायमाशयः यत्रापि देवदत्तस्य यज्ञदत्तो बन्धुरुच्यते यत्र वा चैत्रस्य मैत्रो वैरीत्युच्यते तत्रापि चैतन्यस्योपधीयमानस्य स्वतोऽपरिणामित्वान्न बन्धुतारिते उपाधेः परमन्तःकरणस्यैव रागाख्ये परिणामे बन्धुताद्वेषाख्ये तस्मिन् अरितेति नान्यत्रैतौ धर्मौ संभवत इति बन्धुत्वं रिपुत्वं चान्तःकरणस्य स्पष्टयति–बन्धुरिति। तस्यात्मनो जीवस्यात्मान्तःकरणं बन्धुर्भवति येन नियन्त्रा जीवेनान्तःकरणेनैव पूर्वोक्तसहायसहकृतेनात्मा शरीराख्यः सेन्द्रियो जितः स्वाधीनः संपादितः तस्यान्तःकरणं बन्धुरित्यर्थः। कदा पुनरन्तःकरणं रिपुस्तत्राह–अनात्मनः पूर्वमात्मशब्देनोक्तस्य देहस्य यदा शत्रुत्वं वशत्वाभावस्तदात्मान्तःकरणमेव शत्रुवद्वर्तत इति ज्ञेयमित्यर्थः। इतीतरकल्पितं तत्पुनः पुनरात्मशब्दप्रयोगस्वारस्यान्निरसनीयम्। अन्यथा आत्मशब्दस्य मुख्यामुख्यवृत्त्या बह्वर्थकत्वादन्यदपि किंचित् कल्पयितुं शक्यम्। तथाहि आत्मनेश्वरेणात्मानं जीवमुद्धरेत् नात्मानमवसादयेत् यत आत्मा ईश्वर एव जीवस्य बन्धुः स एव चैतस्य रिपुरित्यर्थः। ईश्वरस्यैव बन्धुत्वं रिपुत्वं च स्फुटयति–तस्य जीवस्यात्मेश्वरो बन्धुरुद्धारकः येनात्मना भक्तियुक्तेन मनसा आत्मेश्वरो जितः वशीकृतः अनात्मनस्त्ववशीकृतपरमेश्वरस्य त्वीश्वर एव शत्रुवत् शत्रुत्वेन वर्तेत। यद्वा आत्मना पुण्यलब्धेन मनुष्यदेहेनात्मानमुद्धरेत् यतः आत्मैव देह एवात्मनो बन्धुः स एव जीवस्य रिपुः। देहस्य बन्धुत्वं रिपुत्वं च स्फुटयति–तस्यात्मनः आत्मा देहो बन्धुः येनात्मना विवेकयुक्तेन मनसा आत्मा देहो जितः अनात्मनस्तु अजितदेहस्य तु शत्रुवत् शत्रुत्वं देह एव वर्तेत इत्यर्थः। अथवा आत्मना अखण्डाकारबुद्धिरूपेणात्मानमहंकारमुत् ऊर्ध्वं नयेत् देहात् प्रच्याव्य ब्रह्मण्यहं ब्रह्मास्मीति योजयेत् नात्मानमहंकारमवसादयेत् परिच्छिन्ने देहे तदभिमानेन पीडयेत् यत आत्मैवाहंकार एव ब्रह्मणि नियोजितो बन्धुरात्मनो जीवस्य ब्रह्माभेदसंपादनेन बन्धनिवर्तकत्वात् स एव परिच्छिन्ने देहे पीडितः शत्रुर्जन्ममरणाद्यनर्थनिचयसंपादकत्वात्। अहंकारस्यैव बन्धुत्वं रिपुत्वं च विशदयति–तस्यात्मन आत्मा अहंकाररूपो बन्धुर्येनाहंकार एव आत्मनोक्तबुद्धिरूपेण जितः

वशीकृत्य ब्रह्माकारतां नीतः अनात्मनस्त्ववशीकृताहंकारस्य तु शत्रुवच्छत्रुत्वे वर्तत इत्यर्थः। सर्वथाप्यनासक्तेन संसारनिवृत्तिः संपाद्येत्यलं विस्तरेण। तस्मात्प्रकृतानुसारि भाष्योक्तव्याख्यानमेव शरणीकरणीयमिति दिक् ॥ ६ ॥

प० टी०—अथात्मनो बन्धुत्वं रिपुत्वं च प्रकटयन्नाह—बन्धुरिति। तस्य पुरुषस्यात्मा मन आत्मनो जीवस्य बन्धुः सुहृदुक्तः। तस्य कस्य, येन पुरुषेणात्मनैव स्वेनैवात्मा कार्यकरणसंघातरूपो जीवो जितो वशीकृतोऽथानात्मनोऽजितात्मनः पुरुषस्य शत्रुत्व आत्मैव स्वयमेव वर्तते नान्यः ॥ ६ ॥

रा० टी०—कीदृशस्यात्मनः कीदृशं मनो बन्धुः रिपुश्चेत्यत आह—बन्धुरिति। येनात्मना येन जीवेनेति समानाधिकरणं वा, येन जीवेन कर्त्रा आत्मना बुद्ध्या करणेनेति व्यधिकरणं वा, आत्मा मनः जितं वशीकृतं तस्यात्मनो जीवस्यात्मा मनः बन्धुरेवोपकार्येव भगवद्ध्यानोपयोगीति यावत्। अनात्मनस्तु अजितमनस्कस्य तु जीवस्य आत्मैव मन एव शत्रुवत्प्रसिद्धशत्रुरिव शत्रुत्वे अनुपकारित्वे वर्ततेति मनोजयेन ध्यानयोगः कार्य इत्युक्तं भवति ॥ ६ ॥ यद्वा योगारोहशब्दितयोगसंपूर्तेर्भगवत्प्रसादो मुख्यसाधनमित्याह—उद्धरेदिति। आत्मना परमात्मना तत्प्रसादेनेति यावत्। आत्मानं जीवं प्राग्वदेव योजना। आत्मनो जीवस्यात्मैव परमात्मैव बन्धुः रिपुश्च हि यतः ॥ ५ ॥ कीदृशस्य हरिर्बन्धुः रिपुश्चेत्यत आह—बन्धुरिति। पूर्ववदेवार्थो योजना च। परंतु प्रथमान्तात्मशब्दोऽत्र परमात्मपरः। आत्मना बुद्ध्येत्यत्र बुद्ध्युपलक्षितभक्त्येत्यर्थः। अनात्मनस्त्वित्यस्य भक्तिबलेनात्मवशीकृतभगवत्स्वरूपस्य पुंस इत्यर्थः ॥ ६ ॥

**जितात्मनः प्रशान्तस्य परमात्मा समाहितः ॥**
**शीतोष्णसुखदुःखेषु तथा मानापमानयोः ॥ ७ ॥**
**ज्ञानविज्ञानतृप्तात्मा कूटस्थो विजितेन्द्रियः ॥**
**युक्त इत्युच्यते योगी समलोष्टाश्मकाञ्चनः ॥ ८ ॥**

त० टी०—जितमनसः पुरुषस्य स्वबन्धुत्वं प्रतिपाद्य तत एव यैर्धर्मविशेषैर्योगारूढता संपद्यते तद्वैशिष्ट्यं प्रतिपादयन्पूर्वोक्तं योगारूढत्वं स्मारयति—जितात्मन इति द्वाभ्याम्। प्रागुक्तेन्द्रियानासक्तस्य शीतोष्णसुखदुःखेषु मनस उद्वेगहेतुषु सत्स्वपि तथा हर्षक्षोभहेत्वोर्मानापमानयोः सतोरपि जितात्मनः विकारशून्यमनसः अत एव प्रशान्तस्य सुखदुःखादिहेतुषु पुरुषेषु रागद्वेषवर्जितस्य परमात्मा मनोबुद्ध्यादिभ्यः परमः स्वयंप्रकाशस्वरूप आत्मा सम्यगाहितः सुखरूपेणावस्थितो भवति। अथवा उक्तप्रकारेण प्रशान्तस्य परं केवलमात्मा समाहितो भवति नान्यस्य ॥ ७ ॥ ततश्च—ज्ञानेति। ज्ञानं शास्त्रोपदेशजन्यं, विज्ञानमुपदिष्टार्थस्य मनननिदिध्यासनाभ्यासेन भ्रमनिरासपूर्वकयथावस्थितात्मस्वरूपानुभवः, ताभ्यां तृप्तः बाह्यार्थनिराकाङ्क्ष आत्मा चित्तं यस्य सः कूटस्थो यस्यां कस्यामप्यवस्थायां यथाकथंचित् यदृच्छया सङ्गे जातेऽपि निर्विकारः अत एव विजितेन्द्रियः देहधारणहेतुभूतान्नपानाच्छादनादिमिष्टकटुस्निग्धरूक्षमृद्रमृद्वादिषु प्राप्तेषु प्रीतिद्वेषाभावाद्विनिवर्तितानीन्द्रियाणि येन सः, अत एव समलोष्टाश्मकाञ्चनः समानि मृत्पिण्डपाषाणसुवर्णानि यस्य स तथा तेषु हेयोपादेयबुद्ध्यभावात् स योगी युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

म० टी०—जितात्मनः स्वबन्धुत्वं विवृणोति—जितात्मन इति। शीतोष्णसुखदुःखेषु चित्तविक्षेपकरेषु सत्स्वपि तथा मानापमानयोः पूजापरिभवयोश्चित्तविक्षेपहेत्वोः सतोरपि तेषु समत्वेनेति वा जितात्मनः

प्रागुक्तस्य जितेन्द्रियस्य प्रशान्तस्य सर्वत्र समबुद्धया रागद्वेषशून्यस्य परमात्मा स्वप्रकाशज्ञानस्वभावः आत्मा समाहितः समाधिविषयो योगारूढो भवति । परमिति वा छेदः । जितात्मनः प्रशान्तस्यैव परं केवलमात्मा समाहितो भवति नान्यस्य, तस्माज्जितात्मा प्रशान्तश्च भवेदित्यर्थः ॥ ७ ॥ किंच—ज्ञानेति । ज्ञानं शास्त्रोक्तानां पदार्थानामौपदेशिकं ज्ञानं, विज्ञानं तदप्रामाण्यशङ्कानिराकरणफलेन विचारेण तथैव तेषां स्वानुभवेनापरोक्षीकरणं, ताभ्यां तृप्तः संजातालंप्रत्यय आत्मा चित्तं यस्य स तथा कूटस्थो विषयसन्निधावपि विकारशून्यः अत एव विजितानि रागद्वेषपूर्वकाद्विषयग्रहणाद्व्यावर्तितानीन्द्रियाणि येन सः अत एव हेयोपादेयबुद्धिशून्यत्वेन समानि मृत्पिण्डपाषाणकाञ्चनानि यस्य सः योगी परमहंसपरिव्राजकः परवैराग्ययुक्तो योगारूढ इत्युच्यते ॥ ८ ॥

शं० टी०—समाधेः प्रतिकूलां देहेन्द्रियादिप्रवृत्तिं निरुध्य समाधिनिष्ठां कृतवतो यतेः फलमहमेवेदं सर्वमिति सर्वत्राप्रतिबद्धात्मा पारोक्ष्यमेवेति सूचयन् वक्ष्यमाणलक्षणसंपन्नो भूत्वा यः समाधिनिष्ठासंपादितविज्ञानबलेन विपरीतप्रत्ययानामकम्प्यो भवति स योगारूढ इति बोधयति—जितात्मन इति द्वाभ्याम् । विवेकवैराग्याभ्यां तीव्रमोक्षेच्छया चेश्वरप्रसादाद्गुरोः प्रसादाच्च श्रुत्वा मत्वात्मानं सम्यग्विज्ञाय कार्यकारणसंघातं वशीकृत्यात्मोद्धरणाय यः समाधिं करोति तस्य जितात्मनः जितो निर्जितः समाधिना सर्ववासनापटलसंक्षये सति विपरीतग्रहो यथा न स्यात्तथा वशीकृतो विपरीतग्रहवैमुख्यं प्रापित आत्मा मनो यस्य तस्य जितात्मनस्तत एव प्रशान्तस्य निर्विकल्पस्य यतेः परमात्मा निरतिशयानन्दरूपत्वान्निरवधिकमहत्त्वाच्च परमश्चासावात्मा च परमात्मा परं ब्रह्म समाहितः सम्यगाहितः समाहितः विपरीतप्रत्ययनिर्मुक्तो भूत्वा बहिरन्तः सर्वत्र चक्षुषो रूपमिव बुद्धिवृत्तेः स्वयमेव विषयो भवतीत्यर्थः । कर्ताहं भोक्ता सुखी दुःखीत्यादिविपरीतप्रत्ययैः संसारीभूतस्यात्मनः समाधिनिष्ठासंजातविज्ञानबलेन तत्तत्प्रत्ययसंबन्धराहित्यापादनमेवात्मनः समुद्धरणामिति परमात्मा समाहित इतिपदेन सूचितं भवति । यदुक्तमुद्धरेदात्मनात्मानमिति तदुद्धरणप्रकारमेव निरूप्येदानीमेवंलक्षणो योगारूढो जीवन्मुक्त इति योगिनो योगारूढत्वं सूचयितुमाह—शीतेति । तस्य योगनिष्ठासिद्धेरसाधारणकारणमाह—विजितेन्द्रिय इति । सदसद्विवेकजन्यतीव्रमोक्षेच्छाभ्यां विशिष्य जितानि विजितानि विषयग्रहणवैमुख्यं गमितानीन्द्रियाणि बाह्याभ्यन्तरकरणानि येन स विजितेन्द्रियो भूत्वा योगी योगनिष्ठायां प्रवृत्तो ब्रह्मविद्यतिः स्वयं ज्ञानविज्ञानतृप्तात्मा "सर्वं खल्विदं ब्रह्म । तज्जलान्" इति "अयमात्मा ब्रह्म । तत्त्वमसि । ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतयः 'वासुदेवः सर्वम्' इत्यादिस्मृतयश्च सर्वस्य जगतो नामरूपप्रत्ययनिरासपूर्वकं नियमेन ब्रह्ममात्रत्वं प्रतिपादयन्ति । निरुक्तश्रुतिस्मृतिवाक्यबलात्सर्वस्य ब्रह्ममात्रत्वावधारणमप्रतिहतं ज्ञानं शास्त्रेण सूर्यग्रहणनिश्चयवत् विज्ञानं तु श्रुतिस्मृतिभिः सम्यङ्निर्धारितस्य चिदेकबुद्धिवृत्त्या ब्रह्मैवाहमिदं जगच्चेति निर्विशेषात्मना सर्वतः परिपूर्णस्य साक्षादपरोक्षीकरणं चक्षुषा राहुग्रस्तार्कबिम्बदर्शनवदेताभ्यामुक्तलक्षणाभ्यां ज्ञानविज्ञानाभ्यां सर्वस्य ब्रह्ममात्रत्वावगाहकाभ्यामप्रतिबन्धाभ्यां तृप्तः पूर्णः विकल्पान्तरस्यावकाशरहित आत्मा मनो यस्य स ज्ञानविज्ञानतृप्तात्मा तत एव समलोष्टाश्मकाञ्चनः समानि चिदाकारवृत्त्या समत्वेन ब्रह्ममात्रतया दृष्टानि लोष्टाश्मकाञ्चनानि येन स समलोष्टाश्मकाञ्चनः सर्वत्र ब्रह्ममात्रदर्शीत्यर्थः । एतेन बाह्यपदार्थविवेकराहित्यं हेयोपादेयत्वबुद्धिशून्यत्वं च सूचितं भवति । ननु योगारूढस्य ब्रह्मविदः सदा सर्वत्र ब्रह्मदर्शनमनुपपन्नं प्राप्ते सत्याधिभौतिकाद्युपद्रवे तद्दर्शनतदनुसंधानाभ्यां ब्रह्मदर्शनस्य व्याघातः स्यादित्याशङ्कायां न, विजितेन्द्रियत्वान्निःशेषविनष्टबाह्यवासनत्वाच्च तेषु प्राप्तेष्वपि ब्रह्मविद्ब्रह्मदृष्ट्यैव तिष्ठति न ततश्चलतीति बोधयितुमाह—शीतोष्णेति । मानापमानयोर्मानः स्तुतिपूजोपचारादिरवमानस्तु निन्दातिरस्कारादिस्तयोः प्राप्तयोः सतोस्तथा शीतोष्णसुखदुःखेषु

शीतोष्णेत्याधिभौतिकानामाधिदैविकानां चोपलक्षणं सुखदुःखेत्याध्यात्मिकानामुपलक्षणं शीतोष्णव्याघ्रसर्पदावाग्न्यादिषु वृष्ट्यशन्यादिषु च ज्वरादिषु मिष्टान्नादिषु च प्राप्तेषु सत्स्वपि ब्रह्मवित्समदर्शन एव भवति नत्वारोपितनामरूपक्रियातत्फलानुसंधानपरो भवति नामरूपादेर्ब्रह्मणि प्रविलापितत्वेन पुनर्वृत्तिविषयत्वायोगात्ततः स्वयं ब्रह्मदृष्ट्यैव तिष्ठति न ततः किंचिच्चलति । तथाच श्रुतिः " महत्पदं ज्ञात्वा वृक्षमूले वसेत् कुचैलोऽसहाय एकाकी समाधिस्थ आत्मकाम आप्तकामो निष्कामो जीर्णकामो व्याघ्रे हस्तिनि सिंहे दंशे मशके नकुले सर्पे यक्षे राक्षसे गन्धर्वे मृत्यो रूपाणि विदित्वा न बिभेति कुतश्चन" इति "वृक्ष इव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत। उपल इव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत। आकाशमिव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत सत्येन तिष्ठासेत् " इति एवं विपरीतप्रत्ययहेतुषु प्राप्तेष्वपि ब्रह्मवित्कूटस्थो विपरीतप्रत्ययैरकम्प्यो भवति यदा तदा युक्तो योगारूढ इत्युच्यते पण्डितैरिति द्वयोरर्थः ॥ ७ ॥ ८ ॥

**श्री० टी०**–जितात्मनः स्वस्मिन्बन्धुत्वं स्फुटयति–**जितात्मन इति** । जितः आत्मा येन तस्य प्रशान्तस्य रागादिरहितस्यैव परं केवलमात्मा शीतोष्णादिषु सत्स्वपि समाहितः स्वात्मनिष्ठो भवति नान्यस्य । यद्वा तस्य हृदि परमात्मा समाहितः स्थितो भवति ॥ ७ ॥ योगारूढस्य लक्षणं श्रैष्ठ्यं चोक्तमुपपाद्योपसंहरति–**ज्ञानविज्ञानतृप्तात्मेति**। ज्ञानमौपदेशिकं विज्ञानमपरोक्षानुभवस्ताभ्यां तृप्तो निराकाङ्क्ष आत्मा चित्तं यस्य अतः कूटस्थो निर्विकारः अत एव विजितानि इन्द्रियाणि येन अत एव समानि लोष्टादीनि यस्य मृत्खण्डपाषाणसुवर्णेषु हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

**स० टी०**–जितात्मनः स्वबन्धुत्वं विवृणोति रमापतिः ॥ सत्सु विक्षेपकेष्वेषु शीतोष्णादिषु यस्य नुः ॥ १ ॥ न जहाति समत्वं धीरात्मतत्त्वसमीक्षणात् ॥ जितेन्द्रियस्य शान्तस्य रागद्वेषपरिक्षयात् ॥ २ ॥ समाधिविषयस्तस्य स्वप्रकाशो हरिर्भवेत् ॥ नान्यस्यैत्याशयो विष्णोस्तस्माच्छान्तो भवेन्मुनिः ॥ ३ ॥ संसारदुःखदृढकारणमाधिबीजं भ्रान्तेर्गृहं विविधकामभयादिमूलम् ॥ चित्तं नियन्तुमचिरात्प्रभवन्ति धीरा यत्पादपद्मनिरताः स हरिर्ममेष्टः ॥ ४ ॥ ७ ॥ शास्त्रोक्तानां पदार्थानां ज्ञानं स्यादौपदेशिकम् ॥ असंदिग्धाविपर्यासं विज्ञानं स्वानुभूतितः ॥ १ ॥ जातालंप्रत्ययस्ताभ्यामात्मा चित्तं हि यस्य सः ॥ सन्निधानेऽपि भोगानां निर्विकारोऽतिधीरधीः ॥ २ ॥ व्यावर्तितानि भोगेभ्यो येन सर्वेन्द्रियाणि सः ॥ हेयोपादेयधीशून्यतया यस्य समानि च ॥ ३ ॥ मृत्पाषाणसुवर्णानि वीततृष्णो निजात्मवित् ॥ ईदृशो युक्तचित्तत्वाद्योगारूढ इतीर्यते ॥ ४ ॥ ८ ॥

**भा० टी०**–जितात्मनः स्वबन्धुत्वे फलमाह–**जितात्मन** इति । कार्यकारणसंघात आत्मा जितो येन स तस्य प्रशान्तस्य योगेन जितचित्तस्य योगारूढस्येति यावत् परमात्मा शुद्धस्तत्पदार्थः समाहितः साक्षादात्मभावेन वर्तते । स च जीवन्मुक्तो भवतीत्याह–**शीतेत्यादिना** । शीतोष्णसुखदुःखेषु तथा मानापमानयोः पूजापरिभवयोः समः स्यादित्यध्याहारः । सर्वं वाक्यं सावधारणमितिन्यायेन जितात्मनः प्रशान्तस्यैवेत्यर्थः । एतेन प्रशान्तस्यैव परं केवलमिति प्रत्युक्तम् । यत्तु शीतोष्णसुखदुःखेषु चित्तविक्षेपेषु सत्स्वपि तथा मानापमानयोः सतोरपि तेषु समत्वेनेति वा जितात्मन इति केचिद्वर्णयन्ति तत्रेन्द्रियेषु जाग्रत्सु शीतादेरस्तित्वं संभवत्येवेति सत्स्वपीत्याद्युक्तिररुचिग्रस्ता एतेन शीतादिषु प्राप्तेषु जितात्मनो निर्विकारचित्तस्य परमुत्कर्षेणात्मा समाहितः समाधिं प्राप्तो भवत्यतः समाधिसिद्ध्यर्थं मनो जेतव्यं भवतीत्यर्थं इति प्रत्युक्तम् । शीतादिषु अप्राप्तेषु किंचित्समाहितस्य प्राप्तेषूत्कर्षेणेत्यस्य विपर्ययरूपत्वात् जेतव्यस्य मनसः स्थितौ शीतादयोऽपि सन्त्येवेति प्राप्तेष्वित्यस्य व्यर्थत्वाच्च । यदप्येवंविधस्यात्मान्तःकरणं शीतादिषु द्वन्द्व-

शब्दवाच्येषु परमत्यर्थं समाहितः सहिष्णुरविक्रियो भवतीत्यर्थ इति तदपि न, मुख्यार्थे संभवत्यमुख्यार्थस्यान्याय्यत्वात् । यद्वा भाष्यस्योपलक्षणार्थत्वमङ्गीकृत्योदाहृतव्याख्यानान्युपादेयानि ॥ ७ ॥ शीतादिषु समो भवतीत्युक्तं तत्कुत इत्यत आह–**ज्ञानेति** । ज्ञानं शास्त्रोक्तानां धर्मादिरूपाणां पदार्थानां तत्त्वज्ञानं, विज्ञानं शास्त्रतो ज्ञातानां वेदोक्तो यादृशो धर्मादिस्तादृश एव तथा "तत्त्वमसि" इति श्रुत्यर्थानुसारेणाहं ब्रह्मास्मीत्यनुभवस्ताभ्यां तृप्त आत्मान्तःकरणं यस्य सः अतः कूटस्थोऽप्रकम्प्यः केनापि शीतादिना चालयितुमशक्यो भवतीत्यर्थः । नन्वन्तःकरणस्य ज्ञानविज्ञानतृप्तत्वेनाप्रकम्प्योऽपीन्द्रियाणामतृप्तत्वाद्विषयैरिन्द्रियद्वारा प्रकम्प्यो भविष्यतीति तत्राह–**विजितेन्द्रियः** अन्तःकरणस्येन्द्रियस्वामिनो जयादिन्द्रियाणामपि जय इति भावः । अत एव समलोष्टाश्मकाञ्चनः अत्राश्मशब्देन पाषाणसामान्यवाचिना तद्विशेषा वज्रवैदूर्यादयोऽपि गृह्यन्ते । समानि लोष्टादीनि यस्य स य ईदृशो योगी स युक्तः यथार्थयोगयुक्तः योगारूढ इत्युच्यत इत्यर्थः ॥ ८ ॥

**प० टी०**–अथ जितात्मनस्तस्मिन्बन्धुत्वं प्रकटयति–**जितात्मन इति** । जित आत्मा मनो येन तस्य प्रशान्तस्य रागादिरहितस्य परं केवलमात्मा शीतोष्णादिषु सत्स्वपि तथा मानावमानयोरुपस्थितयोः सतोरपि समाहितः स्वात्मनिष्ठो भवति नान्यस्य ॥ ७ ॥ अथ योगारूढमुपपाद्योपसंहरति–**ज्ञानविज्ञानेति** । ज्ञानं शास्त्रगुरूपदिष्टं विज्ञानमनुभवस्ताभ्यां तृप्तो निरपेक्ष आत्मा चित्तं यस्यातः कूटस्थो निर्विकारोऽत एव विजितेन्द्रियोऽत एव समलोष्टाश्मकाञ्चनो मृत्पिण्डपाषाणसुवर्णेषु समः हेयोपादेयबुद्धिशून्यः स युक्तो योगारूढ इत्युच्यते ॥ ८ ॥

**रा० टी०**–ननु मनसो भगवतश्च वशीकरणे तावस्य बन्धू भवत इत्युक्तम् । केनोपकारेण तावस्य बन्धू आत्मना आत्मानमुद्धरेदिति आत्मोद्धारं कुरुत इत्युक्तमिति चेत्स एव क इत्यत आह–**जितेति** । जितात्मनः वशीकृतमनस्कस्य भक्त्या वशीकृतभगवत्स्वरूपस्य च प्रशान्तिर्भवति स्वत एव मनसो विषयेष्वप्रवृत्तिर्भवतीत्यर्थः । प्रशान्तस्य च परमात्मा सम्यगाहितो हृदि सन्निहितो भवति ध्यानविषयो भूत्वाऽपरोक्षविषयो भवतीत्यर्थः । संपूर्णयोगसिद्धिमद्रूपो योगारूढो भवतीति यावत् ॥ ७ ॥ यदा हि नेन्द्रियार्थेष्वित्यत्रापरोक्षिणो लक्षणोक्तावपीह लक्षणं स्पष्टयति–**शीतोष्णेत्यादिसार्धश्लोकद्वयेन** । शीतोष्णादिद्वन्द्वधर्मेषु कूटस्थः कूटमाकाशं तद्वत्तिष्ठतीति कूटस्थः उत्सेकानुत्सेकरूपविकारहीन इत्यर्थः । तत्र हेतुर्ज्ञानेत्यादि वेदादौ सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमित्युच्यते । तदवान्तरमाहात्म्यविशेषज्ञानं विज्ञानमित्युच्यते । यद्वा परोक्षापरोज्ञाने ज्ञानविज्ञानशब्दाभ्यां वाच्ये ताभ्यां तृप्तो विषयेष्वलंबुद्धिमान्विजितेन्द्रियश्च यतोऽतः कूटस्थः समलोष्टाश्मकाञ्चनः योगी योगं कुर्वन् युक्तः योगसंपूर्ण इत्युच्यते ॥ ८ ॥

**सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु ॥**
**साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते ॥ ९ ॥**

**त० टी०**–एतस्मादपि विशिष्टो भवतीत्याह–**सुहृदिति** । सुहृत् स्वसंबन्धोपकाराद्यनपेक्ष्य हिताशंसी, मित्रं स्नेहेन हितोपकारकः, अरिः सनिमित्तं निर्निमित्तं वाऽपकारकर्ता, उदासीनः हिताहितानाकाङ्क्षः मित्रारिभाववर्जितो वा विवदमानयोरुभयोरप्युपेक्षको वा, मध्यस्थो विवदमानयोर्हिताकाङ्क्षी, द्वेष्यः स्वभावतोऽनिष्टेप्सुः, बन्धुः संबन्धापेक्षोपकारकः, साधवः सदाचाराः, पापा दुराचाराः, एतेषु समा रागद्वेषशून्या बुद्धिर्यस्य स विशिष्यते, पूर्वोक्तादपि विशिष्टो भवति ॥ ९ ॥

**म० टी०**—सुहृन्मित्रादिषु समबुद्धिस्तु सर्वयोगिश्रेष्ठ इत्याह—**सुहृन्मित्रेति** । सुहृत्प्रत्युपकारमनपेक्ष्य पूर्वस्नेहं संबन्धं च विनैवोपकर्ता, मित्रं स्नेहेनोपकारकः, अरिः स्वकृतापकारमनपेक्ष्य स्वभावक्रौर्येणापकर्ता, उदासीनो विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थो विवदमानयोरुभयोरपि हितैषी, द्वेष्यः स्वकृतापकारमपेक्ष्यापकर्ता, बन्धुः संबन्धेनोपकर्ता, एतेषु साधुषु शास्त्रविहितकारिषु पापेषु शास्त्रप्रतिषिद्धकारिष्वपि चकारादन्येषु च सर्वेषु समबुद्धिः कः कीदृक्कर्मेत्यव्यापृतबुद्धिः सर्वत्र रागद्वेषशून्यः विशिष्यते सर्वत उत्कृष्टो भवति । विमुच्यत इति वा पाठः ॥ ९ ॥

**शं० टी०**—ज्ञानविज्ञानपूर्णत्वं बाह्यपदार्थविवेकराहितत्वं हेयोपादेयबुद्धिशून्यत्वं विपरीतप्रत्ययैरकम्पितत्वं च योगारूढस्य लक्षणमिति प्रतिपाद्येदानीमपि सर्वत्र समदर्शनमेव ब्रह्मविदो योगारूढस्य जीवन्मुक्तस्य लक्षणमिति तदेव पुनर्द्रढयति—**सुहृदिति** । सुहृन्मित्रार्युदासीनमध्यस्थद्वेष्यबन्धुषु प्रत्युपकारमनपेक्ष्यैवोपकर्ता सुहृत् ' ददाति प्रतिगृह्णाति ' इत्याद्युक्तलक्षणलक्षितं मित्रं, परोक्षापरोक्षयोरपकर्ताऽरिः शत्रुः, अप्रियवादित्वाद्द्वेष्टुं योग्यो द्वेष्यः, वादिप्रतिवादिनोः समो मध्यस्थः, सर्वत्रोपेक्षावानुदासीनः, बन्धवो बान्धवास्तेषु प्राणात्ययेऽपि ये स्वधर्मं न त्यजन्ति शास्त्रानुवर्तिनस्ते साधवस्तेष्वपि निषिद्धकारिणो दुराचाररताः पापास्तेषु च संन्यासात्पूर्वमुक्तगुणविशिष्टेष्वपि सुहृदादिपापिष्ठान्तेषु जनेषु योगारूढस्य ब्रह्मविदो यतेस्तत्तन्नामरूपजातिगुणक्रियाग्रहणेन विनैव समबुद्धिः सर्वत्र ब्रह्मबुद्धिर्विशिष्यते क्वचिदापाततो मृदि घटबुद्धिवत्पदार्थबुद्धौ जातायामप्युत्तरक्षणे तां बाधित्वा घटे मृद्बुद्धिवत्सर्वत्र ब्रह्मबुद्धिरेव विशेषायते ब्रह्मप्रत्यय एवाबाध्यमानः स्थिरीभवतीत्यर्थः । समबुद्धिर्विमुच्यत इति पाठे तु समबुद्धिरिति प्रथमान्तं पदं विशेषणं समा समाकारतामापन्ना सदा सर्वत्र ब्रह्ममात्रग्राहिणी बुद्धिर्यस्य स समबुद्धिर्विमुच्यते सुहृदादिषु सर्वत्र सदा ब्रह्मैव यः पश्यति स मुक्तो भवतीत्यर्थः ॥ ९ ॥

**श्री० टी०**—सुहृन्मित्रादिषु समबुद्धियुक्तस्ततोऽपि श्रेष्ठ इत्याह—**सुहृदिति** । सुहृत्स्वभावेनैव हिताशंसी, मित्रं स्नेहवशेनोपकारकः, अरिर्घातुकः, उदासीनो विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थो विवदमानयोरुभयोरपि हिताशंसी, द्वेष्यः द्वेषविषयः, बन्धुः संबन्धी, साधवः सदाचाराः, पापा दुराचाराः, एतेषु समा रागद्वेषादिशून्या बुद्धिर्यस्य स तु विशिष्टः ॥ ९ ॥

**स० टी०**—विना प्रत्युपकारेप्सामुपकर्ता सुहृत्स्मृतः ॥ स्नेहवान्मित्रमित्युक्तमरिः स्यादपकारकः ॥ १ ॥ उदासीनो द्वयोः पुंसोर्द्वेषाद्विवदमानयोः ॥ पक्षपातविहीनत्वादुभयोरप्युपेक्षकः ॥ २ ॥ मध्यस्थो यो हितान्वेषी द्वयोर्विवदमानयोः ॥ स्वस्याप्रियो भवेद्द्वेष्यः संबन्धी बन्धुरुच्यते ॥ ३ ॥ एतेषु शास्त्रविहितकर्मकारिषु साधुषु ॥ पापेषु शास्त्रमर्यादां समुल्लङ्घ्यप्रवर्तिषु ॥ ४ ॥ चादन्येष्वपि सर्वेषु समबुद्धिर्विमुच्यते ॥ कः किं कर्मेति धीशून्य उत्कृष्टः संमतो मम ॥ ५ ॥ ९ ॥

**भा० टी०**—न केवलं समलोष्टाश्मकाञ्चन इति अपि तु सुहृदादिष्वपि समबुद्धिरित्याह—**सुहृदिति** । सुहृत्प्रत्युपकारमनपेक्ष्योकर्ता, मित्रं स्नेहादिमपेक्ष्य तत्कर्ता, अरिः शत्रुः खड्गहस्तो मारणायोद्यतः, उदासीनः पक्षपातशून्यः, मध्यस्थो विरोधं कुर्वतोर्द्वयोरपि हितैषी, द्वेष्योऽपकर्तृत्वाद्द्वेषविषयः, बन्धुर्भ्रात्रादिः संबन्धीत्येतेषु साधुषु शास्त्रानुवर्तिष्वपि च पापेषु प्रतिषिद्धकारिषु सर्वेष्वेतेषु समबुद्धिः कः सुहृदादिः किमुपकारादिकर्मकर्तेत्यव्यापृतबुद्धिरित्यर्थः । विशिष्यते सर्वतः श्रेष्ठो भवतीत्यर्थः । विमुच्यत इति वा पाठः ॥ ९ ॥

**प० टी०**—अथ समबुद्धित्वमेव विशिनष्टि—**सुहृदिति** । सुहृत्स्वभावेनैव हिताशंसी, मित्रं स्नेहवशेनैवोपकारकः, अरिर्घातकः, उदासीनो विवदमानयोरुभयोरप्युपेक्षकः, मध्यस्थस्तयोरुभयोरपि हिताशंसी, द्वेष्टुं योग्यो द्वेष्यः, बन्धुः संबन्धी, साधवः सदाचाराः, पापा दुराचारा एतेषु समा रागद्वेषरहिता बुद्धिर्यस्य स विशिष्यते विशिष्टो भवति ॥ ९ ॥

रा० टी०–स एव च सुहृदादिषु समा भगवद्विषयिणी बुद्धिर्यस्य स समबुद्धिर्योगारूढः योगिवर्गात्सर्वस्माद्विशिष्यत इति। सुहृदादिषु सर्वत्रस्थितहरिरूपाणां गुणादिषु तारतम्यं नेति बुद्धिर्वा सुहृदि सुहृत्त्वमेव मित्रादिषु मित्रत्वादिकमेव ददाति न तु सुहृदि मित्रत्वं मित्रादौ सुहृत्त्वादिकमिति वैषम्येणातः सुहृदादौ सुहृत्त्वादिकमीशकृतमेव न स्वतन्त्रमिति वा भगवद्विषये समबुद्धिः। यद्वा सुहृदादिजीवविषये समा बुद्धिर्यस्येत्यर्थः। तेषु समबुद्धित्वं नाम यत्सुहृत्त्वमित्रत्वादिकमस्ति तन्न स्वरूपान्तर्गतं किंत्वन्तःकरणोपाधिकमेव देवदानवमानवभेदेन स्वतो विषमाणां चैतन्यस्वभावत्वमेव सममिति बुद्धिमत्त्वमेवेति ज्ञेयम्। अथवा सुहृदादिषु विषये शास्त्रेषु यथा यथा वृत्तिर्विहिता तथा तथा वर्तनं वर्तनज्ञानं वा सुहृदादिजीवेषु समबुद्धिर्ध्येया। प्रत्युपकारनिरपेक्षोपकारकृत् सुहृत्, क्लेशस्थानं विज्ञाप्य ततो रक्षाकृन्मित्रं, वधादिकर्ताऽरिः, कर्तव्ये उपकारे अपकारे च य उदास्ते स उदासीनः, उपकारापकारोभयकृन्मध्यस्थः, अवाञ्छितकृद्द्वेष्यः, बन्धुरुपकर्ता॥ ९॥

**योगी युञ्जीत सततमात्मानं रहसि स्थितः।**
**एकाकी यतचित्तात्मा निराशीरपरिग्रहः॥ १०॥**

**त० टी०–एवं योगारूढस्य लक्षणमुक्तमिदानीं तस्य साङ्गं योगं विधत्ते–योगी युञ्जीतेत्यारभ्य स योगी परमो मत इत्यन्तेन ग्रन्थेन। योगी योगारूढः सततमहरहर्योगसमये आत्मानं मनो युञ्जीत युक्तं कुर्वीत स्वस्वरूपानुभवार्थं समाहितं कुर्यादित्यर्थः। रहसि विक्षेपहेतुजनवर्जिते गिरिगुहादौ देशे स्थितः एकाकी जनान्तरवर्जितः यतचित्तात्मा यतं चित्तमात्मा देहश्च येन निराशीर्वस्त्वन्तरमात्रे निस्पृहः अत एवापरिग्रहः संग्रहशून्यः॥ १०॥**

म० टी०–एवं योगारूढस्य लक्षणं फलं चोक्त्वा तस्य साङ्गं योगं विधत्ते–योगीत्यादिभिः स योगी परमो मत इत्यन्तैस्त्रयोविंशत्या श्लोकैः। तत्र एवमुत्तमफलप्राप्तये योगीति योगी योगारूढः आत्मानं चित्तं सततं निरन्तरं युञ्जीत क्षिप्तमूढविक्षिप्तभूमिपरित्यागेनैकाग्रनिरोधभूमिभ्यां समाहितं कुर्यात् रहसि गिरिगुहादौ योगप्रतिबन्धकदुर्जनादिवर्जितदेशे स्थितः एकाकी त्यक्तसर्वगृहपरिजनः संन्यासी चित्तमन्तःकरणमात्मा देहश्च संयतौ योगप्रतिबन्धकव्यापारशून्यौ यस्य स यतचित्तात्मा यतो निराशीर्वैराग्यदार्ढ्येन विगततृष्णः अत एव चापरिग्रहः शास्त्राभ्यनुज्ञातेनापि योगप्रतिबन्धकेन परिग्रहेण शून्यः॥ १०॥

शं० टी०–यतो योगारूढस्यैवाप्रतिबद्धज्ञानं सर्वत्र ब्रह्मदर्शनं मुक्तिश्च नान्यस्यातो मुमुक्षुणा श्रवणमननाभ्यां विज्ञातात्मतत्त्वेन यतिनैतावन्मात्रेणैव कृतार्थोऽस्मीत्यस्मितां त्यक्त्वा ज्ञानस्याप्रतिबद्धत्वाय समाधिरवश्यं कर्तव्य इति तत्कर्तुः समाध्यङ्गानि सूचयन्समाधिं विदधाति–योगीति। योगी "संन्यासयोगाद्यतयः शुद्धसत्त्वाः" इति श्रवणात्संन्यासी। यद्वा ब्रह्मणि चित्तं योक्तुं स्थापयितुं शीलमस्यास्तीति योगी योगाभ्यासशीलो यतिरेकाकी एकाकीति विशेषणान्निदिध्यासोः 'एकस्तपो द्विरध्यायी' इतिन्यायेन स्वातिरिक्तजनशून्यत्वं विवक्षितं सति जनान्तरे वाग्व्यापारप्रसक्त्या ध्याननिष्ठाभङ्गप्रसङ्गात्तत एकाकित्वेन भवितव्यम्। किंच निराशीः सर्वाभ्य आशीभ्यो विषयभोगाशाभ्यस्तीव्रमोक्षेच्छावैराग्याभ्यां निर्गतो यः स निराशीः 'एकान्तवासो लघुभोजनादि मौनं निराशा करणावरोधः। मुनेरसोः संयमनं षडेते चित्तप्रसादं जनयन्ति शीघ्रम्' इतिन्यायेन निदिध्यासोर्देहजीवनादावप्याशाराहित्येन भवितव्यमिति सूचितम्। किंच अपरिग्रहः कौपीनकन्थातिरिक्तः परिग्रहो यस्य नास्ति सोऽपरिग्रहः सति तदतिरिक्ते परिग्रहे यतेरपि चौरादिभयं तद्रक्षणविक्षेपप्रसक्त्या समाध्यसिद्धेस्ततस्तद्राहित्येन भावितव्यम्। एवं योगस्य बहिरङ्गसिद्धावप्यन्तरङ्गाभावे योगो न सिध्यत्यतस्तेन भवितव्यमित्याशयेनाह–यतचित्तात्मेति। यतो वासनया

प्राप्ततत्तद्व्यापृतेः सकाशान्निगृहीतौ चित्तं चात्मदेहेन्द्रियसंघातश्च तावुभौ येन स यतचित्तात्मा तत्तद्व्यापारान्निरुद्धदेहेन्द्रियमनोबुद्धिचित्त इत्यर्थः। एवमादिध्यानसाधनसंपन्नो मुमुक्षुर्निदिध्यासुः स्वयं रहस्येकान्ते गिरिकुहरगुहादौ स्थितः सततं नित्यनिरन्तरं नियमेनात्मानं मनः प्रत्यगभिन्ने परे ब्रह्मणि सर्वदृश्यनिषेधावधिभूते नाज्ञानतत्कार्ये, किंतु नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वयमित्युक्तलक्षणे स्वात्मनि युञ्जीत संदधीत ब्रह्मैवाहमहमेव ब्रह्मेति स्वात्मना ब्रह्मानुसंदध्यादित्यर्थः ॥ १० ॥

**श्री० टी०**—एवं योगारूढस्य लक्षणमुक्त्वेदानीं तस्य साङ्गयोगं विधत्ते योगीत्यादिना स योगी परमो मत इत्यन्तेन ग्रन्थेन। **योगीति** । योगी योगारूढः आत्मानं मनः युञ्जीत समाहितं कुर्यात् सततं निरन्तरं रहसि एकान्ते स्थितः सन्नेकाकी सङ्गशून्यः यतं संयतं चित्तं आत्मा देहश्च यस्य निराशीः निराकाङ्क्षः निराहारो वा अपरिग्रहः परिग्रहशून्यश्च ॥ १० ॥

**स० टी०**—अत उत्कृष्टतासिद्ध्यै यतितव्यमितीर्यते ॥ श्रुत्वा वेदान्तवाक्येभ्यो मत्वा सदुपपत्तिभिः ॥ १॥ आत्मतत्त्वं ततस्तस्मिन्निदिध्यासनतत्परः ॥ चित्तं समाहितं कुर्यान्नित्यमेकान्तदेशगः ॥ २ ॥ त्यक्त्वा विक्षेपकारित्वात्समस्तं ममतास्पदम् ॥ संयतौ चित्तदेहौ च येन सोऽत्यन्तनिश्चलः ॥ ३ ॥ परवैराग्यदार्ढ्येन निराशीर्वीततृष्णकः ॥ चित्तविक्षेपकृत्यागी योगी त्यक्तपरिग्रहः ॥ ४ ॥ १० ॥

**भा० टी०**—एवं योगारूढस्य लक्षणं फलं च प्रदर्शितम्, अत उत्तमफलप्राप्तये योगारूढतां संपादयेदित्याह—**योगीति** । योगी ध्यानी रहसि एकान्ते गिरिगुहादौ स्थितः सन् एकाकी सहायवर्जितः रहसि स्थित एकाकीतिविशेषणात्संन्यासं कृत्वेत्यर्थः। एकाकीत्यस्य शिष्यादिसहायरहित इत्यपि बोध्यम्। यतौ वशीकृतौ चित्तात्मानौ चित्तदेहौ यस्य स चित्तस्य चिन्तनात्मनोऽन्तःकरणपरिणामस्य यतत्वमनुभूतार्थचिन्ताव्यावृत्तत्वं देहस्य च यतत्वं मक्षिकादंशपिपीलिकादिबाधयाप्यकम्पितत्वे सति चिरकालासनप्रयुक्तदुःखशून्यत्वं, निराशीः फलतृष्णाशून्यः अनेन वैराग्यादिसाधनसंपन्नो मुमुक्षुः कथितः। अपरिग्रहः संन्यासित्वेऽपि चोरभयजनकपुस्तकादिसर्वपरिग्रहशून्यः एतादृशः सन् सततं सर्वदा आत्मानमन्तःकरणं युञ्जीत समादध्यात् वृत्तिनिरोधेन निरुन्ध्यात्। वृत्तयश्च पञ्चविधाः 'प्रमाणविपर्ययविकल्पनिद्रास्मृतय' इति। तत्र प्रत्यक्षानुमानागमाख्यानि त्रीणि प्रमाणानीति सांख्यादयः। उपमानमप्यङ्गीकृत्य चत्वारीति गौतमाः। अर्थापत्तिमनुपलब्धिं चाश्रित्य षडिति वेदान्तिनो याज्ञिकाश्च। संभवमैतिह्यं चाश्रित्याष्टाविति पौराणिकाः। विपर्ययो मिथ्याज्ञानमतस्मिँस्तद्बुद्धिः शुक्तिर्वा रजतं वेत्येवमादिरूपः प्रमाभ्रमविलक्षणो विकल्पः। निद्रास्मृती लोकप्रसिद्धे। अन्यासामपि वृत्तीनामेतास्वन्तर्भावो द्रष्टव्यः। तथाचैतद्वृत्तिनिरोधेनान्तःकरणं चित्तं समादध्यादिति ॥ १० ॥

**प० टी०**—एवं योगारूढत्वदशां निरूप्येदानीं योगी युञ्जीत इत्यादितस्तथा स योगी परमो मत इत्यन्ततश्चतुर्विंशतिभिः श्लोकैः साङ्गमभ्यासयोगं निरूपयति—**योगीति** । योगशास्त्रे तावद्योगत्रयमुपदिष्टम्। तत्र प्राणापानयोगो मनःपवनयोगो जीवब्रह्मणोर्योगश्च एतत्क्रमेण योगत्रयं प्राप्तुमिच्छुरात्मानं मनः सततं युञ्जीत समाहितं कुर्यात्। अथ चित्तक्षोभकाभावसामग्रीमनुवदति—रहस्येकान्ते एकाकी सङ्गशून्यो यतं नियमितमात्मा शरीरं येन निराशीर्निराकाङ्क्षोऽपरिग्रहः परिग्रहशून्यः ॥ १० ॥

**रा० टी०**—उद्धरेदित्यादिना विहितं ध्यानयोगमनूद्य तत्प्रकारमाह—**योगीति** । योगी ज्ञानोपायमनुतिष्ठन्नात्मानं मनः युञ्जीत भगवन्निष्ठं कुर्यात्। समाधियुक्तं कुर्यादिति यत्तत् सततं निरन्तरं रहसि स्थित एकाकी सङ्गशून्यः यतं नियमितं चित्तं मनः आत्मा देहश्च यस्य स यतचित्तात्मा निराशीः कामनाहीनः परिग्रहोज्झश्च भूत्वा कुर्यादिति ॥ १० ॥

**शुचौ देशे प्रतिष्ठाप्य स्थिरमासनमात्मनः ॥**
**नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरम् ॥ ११ ॥**

**त० टी०**–तत्र तावत्तदुपयोग्यासनमाह–**शुचाविति** द्वाभ्याम् । शुचौ अशुचिभिर्म्लेच्छादिभिः संसर्गवर्जिते अशुचिवस्तुभिरस्पृष्टे च स्वभावसंस्कारादिना शुद्धे देश आत्मनः आसनं प्रतिष्ठाप्य प्रकर्षेण स्थापयित्वा, कथंभूतं स्थिरमचलं नात्युच्छ्रितं नात्युच्चं न चातिनीचं, चैलं शुद्धवस्त्रम्, अजिनं मृगादिचर्म, ते कुशेभ्य उत्तरे यस्मिन् तत्, भूमौ कुशमयं तदुपरि मृगचर्म तदुपरि वस्त्रमित्येवंरूपमित्यर्थः ॥ ११ ॥

**म० टी०**–तत्रासननियमं दर्शयन्नाह द्वाभ्याम्–**शुचौ देश इति** । शुचौ स्वभावतः संस्कारतो वा शुद्धे जनसमुदायरहिते निर्भये गङ्गातटगुहादौ देशे समे स्थाने प्रतिष्ठाप्य स्थिरं निश्चलं नात्युच्छ्रितं नात्युच्चं नाप्यतिनीचं चैलाजिनकुशोत्तरं चैलं मृदुवस्त्रं, अजिनं मृदु व्याघ्रादिचर्म, ते कुशेभ्य उत्तरे उपरितने यस्मिँस्तत् आस्यतेऽस्मिन्नित्यासनं कुशमयबृस्युपरि मृदुचर्म तदुपरि मृदुवस्त्ररूपमित्यर्थः । तथाचाह भगवान् पतञ्जलिः ' स्थिरसुखमासनम् ' इति । आत्मन इति परासनव्यावृत्त्यर्थं तस्यापि परेच्छानियमाभावेन योगविक्षेपकरत्वात् ॥ ११ ॥

**शं० टी०**–पूर्वं योगस्य बहिरङ्गमन्तरङ्गं च संक्षेपेणोक्त्वेदानीं देशासनशरीरधारणादीनि बहिरङ्गान्यन्तरङ्गानि च योगस्य विशिष्य बोधयितुमादावासनलक्षणमाह–**शुचाविति** । शुचौ मार्जनप्रोक्षणादिक्रियया स्वभावेन वा शुद्धे विजने देशे प्रदेशे नदीतीरगुहादावात्मनः स्वस्यैव ध्यानयोग्यमासनं नात्युच्छ्रितमत्यन्तौन्नत्यरहितम्, अत्युन्नतत्वे कचित्पारवश्येन चलनपतनादिविघ्नप्रसङ्गात्ततो नातितुङ्गं नातिनीचमनिम्नं च तथात्वे शैत्यौष्ण्यपाषाणादिघर्षेण क्लेशप्रसङ्गात्ततस्तदुभयविलक्षणं तत्रापि चैलाजिनकुशोत्तरं चैलं वस्त्रमजिनं वैयाघ्रं कार्ष्णं वा कुशा दर्भा उत्तरमुपर्युपरि व्युत्क्रमेण यस्य तच्चैलाजिनकुशोत्तरमधः कुशैस्ततोऽजिनेन ततो वस्त्रेणचाछादितमित्यर्थः । वस्त्रं यद्यपि स्मृत्या निषिद्धं ' वस्त्रं दारिद्र्यदुःखाय दारु रोगाय चोपलः ' इति तद्गृहस्थविषयं न यतिविषयमिति द्रष्टव्यम्, ध्याता स्वस्यैवमासनमचलं स्थिरं निश्चलं यथा तथा प्रतिष्ठाप्य कल्पयित्वेत्यर्थः ॥ ११ ॥

**श्री० टी०**–आसननियमं दर्शयन्नाह–**शुचाविति** द्वाभ्याम् । शुद्धे स्थाने आत्मनः स्वस्यासनं स्थापयित्वा कीदृशं स्थिरमचलं नातीवोन्नतं न चातिनीचं चैलं वस्त्रमजिनं व्याघ्रादिचर्म चैलाजिने कुशेभ्य उत्तरे यस्मिन्, कुशानामुपरि चर्म तदुपरि वस्त्रमास्तीर्येत्यर्थः ॥ ११ ॥

**स० टी०**–आसनाहारनियमानाहेदानीं जगद्गुरुः ॥ स्वभावतः संस्काराद्वा शुद्धे देशे स्थिरं बुधः ॥ १ ॥ प्रतिष्ठाप्यासनं स्वस्य नात्युच्चं नातिनीचकम् ॥ कौशीं बृसीं समास्तीर्य मृदु चर्म कुशोपरि ॥ २ ॥ चर्मोपरि मृदु स्वच्छं वस्त्रमास्तीर्य योगिराट् ॥ ३ ॥ ११ ॥

**भा० टी०**– एवं पूर्वोक्तलक्षणसंपन्नस्य योगारूढस्य यत्फलं भवति तत्प्राप्तये योगारूढतां संपादयेदित्युक्तम् । अथेदानीं योगं युञ्जानस्य तदङ्गान्यासनाहारविहारादीनि नियतानि फलं च सर्वतः श्रैष्ठ्यं मुक्तिलक्षणं वक्तुमारभते–**शुचावित्यादिना** । शुचौ शुद्धे स्वभावतः संस्कारवतो वा देशे स्थाने विविक्ते आत्मनः स्वस्यासनं स्थिरमचलं नात्युच्छ्रितं नाप्यतिनीचं तच्च चैलादीन्युत्तरे यस्मिंस्तत् आदौ कुशानां स्थापनं तदुपर्यजिनं मृगचर्म तदुपरि चैलं मृदुवस्त्रमित्येतादृशमासनं प्रतिष्ठाप्य चतुष्कोणादिसंनिवेशविचारेण कृत्वा आत्मन इत्यनेन स्वस्यैवोपशमयोग्यमित्युक्तं तेनान्यस्थितिप्रयुक्तविक्षेपप्रसक्तिर्वारिता ॥ ११ ॥

१ चेलेति रा. पाठः ।

प० टी०—अथासननियमं दर्शयति—शुचौ देश इति द्वाभ्याम् । शुचौ पवित्रे तीर्थादिसंनिहिते देशे शीतलतरुच्छायाम्बुप्रवाहमनोरमे प्रदेश आत्मनः स्वस्य स्थिरमचलं मूषककीटकाद्युपद्रवशून्यं यथा भवति तथासनं प्रतिष्ठाप्य किंभूतं नात्युच्छ्रितं नात्युच्चं कदापि पतनसंभवात् तथा नातिनीचं भूसंघट्टनेन गात्रोपद्रवादतो मध्यस्थमित्यर्थः । अथासनरचनामाह—चैलेति । चैलं वस्त्रम्, अजिनं व्याघ्रादिचर्म, चैलाजिने कुशेभ्य उत्तरे उपरि स्थिते यस्मिन् कुशानामुपरि चर्म तदुपरि वस्त्रमित्यर्थः ॥ ११ ॥

रा० टी०—पुनर्ध्यानप्रकारमेवाह—शुचावित्याद्यनेकश्लोकैः । शुचौ देशे मनःप्रसादहेतुभूतदेशोपलक्षणमेतत् चेलं वस्त्रमजिनं व्याघ्रादिचर्म कुशो दर्भ उत्तरमुपरि यस्य तत्तथा नात्युच्छ्रितं नातिनीचं न समासः । एवंभूतमासनं स्थिरं यथा भवति तथात्मनः प्रतिष्ठाप्य ॥ ११ ॥

**तत्रैकाग्रं मनः कृत्वा यतचित्तेन्द्रियक्रियः ॥**
**उपविश्यासने युञ्ज्याद्योगमात्मविशुद्धये ॥ १२ ॥**

**त० टी०—तत्रेति । तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा यताः संयता उपरताश्चित्तस्येन्द्रियाणां च क्रिया येन सः आत्मविशुद्धये बन्धविमुक्तये योगं युञ्ज्यात् अभ्यसेत् ॥ १२ ॥**

म० टी०—एवमासनं प्रतिष्ठाप्य किं कुर्यादिति तत्राह—तत्रेति । तत्र तस्मिन्नासने उपविश्यैव न तु शयानस्तिष्ठन्वा 'आसीनः संभवात्' इति न्यायात् । यताः संयता उपरताश्चित्तस्येन्द्रियाणां च क्रियावृत्तयो येन स यतचित्तेन्द्रियक्रियः सन् योगं समाधिं युञ्जीताभ्यसेत् । किमर्थं आत्मविशुद्धये आत्मनोऽन्तःकरणस्य सर्वविक्षेपशून्यत्वेनातिसूक्ष्मतया ब्रह्मसाक्षात्कारयोग्यतायै " दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः " इति श्रुतेः । किं कृत्वा योगमभ्यसेदिति तत्राह—एकाग्रं राजसतामसव्युत्थानाख्यप्रागुक्तभूमित्रयपरित्यागेनैकविषयकधारावाहिकानेकवृत्तियुक्तमुद्रिक्तसत्त्वं मनः कृत्वा दृढभूमिकेन प्रयत्नेन संपाद्य एकाग्रताविवृद्ध्यर्थं योगं संप्रज्ञातसमाधिमभ्यसेत् स च ब्रह्माकारमनोवृत्तिप्रवाह एव निदिध्यासनाख्यः । तदुक्तम् ' ब्रह्माकारमनोवृत्तिप्रवाहोऽहंकृतिं विना । संप्रज्ञातसमाधिः स्याद्ध्यानाभ्यासप्रकर्षतः ' इति । एतदेवाभिप्रेत्य ध्यानाभ्यासप्रकर्षं विदधे भगवान् योगी युञ्जीत सततं, युञ्ज्याद्योगमात्मविशुद्धये, युक्त आसीत मत्परः, इत्यादिबहुकृत्वः ॥ १२ ॥

शं० टी०—एवमासनमुक्त्वा तत्र कर्तव्यमाह—तत्रेति । निदिध्यासुस्तत्रोक्तलक्षण आसने उपविश्य स्वयं यतचित्तेन्द्रियक्रियः इदमेव योगिनो योगसिद्धेरुत्तममन्तरङ्गसाधनमित्युक्तमपि पुनरुपदिशति—यतचित्तेन्द्रियक्रिय इति । यता संयता सम्यङ्निरुद्धा चित्तस्योभयेन्द्रियाणां च क्रिया स्वाभाविकी चेष्टा विषयप्रवृत्तिर्येन स यतचित्तेन्द्रियक्रियो भूत्वा मनो मनोवृत्तिस्तामेकाग्रं लक्ष्यस्यैवाभिमुखं कृत्वा सम्यक् प्रत्यक्प्रवणं कृत्वेत्यर्थः । एवंलक्षणसंपन्नो यतिरात्मविशुद्धये आत्मनो विशुद्धिरविद्या तत्कार्यदेहेन्द्रियादावन्यत्राहंममेदमित्याद्यसत्प्रत्ययानां तत्कारणवासनानां च निःशेषनिवृत्तिरेवात्मनोऽन्तःकरणस्य विशुद्धिस्तत्सिद्धये योगं ब्रह्मण्येवात्मभावेन पुरुषं योजयतीति योगः समाधिस्तं युञ्ज्यात् प्रत्यक्प्रत्ययसंतानं कुर्यादित्यर्थः ॥ १२ ॥

श्री० टी०—तत्रेति । तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा योगं युञ्ज्यात् अभ्यसेत् यताः उपरताः चित्तस्येन्द्रियाणां च क्रिया यस्य स आत्मनो मनसो विशुद्धये उपशान्तये ॥ १२ ॥

स० टी०—उपविश्यासने तस्मिन्मनः संयम्य सर्वतः ॥ कृत्वैकाग्रं साचित्तानामिन्द्रियाणां च वृत्तयः ॥ ॥ १ ॥ सम्यगुपरता यस्य स समाधिं समभ्यसेत् ॥ निर्विक्षेपतया ब्रह्मसाक्षात्कारैकसिद्धये ॥ २ ॥ न शयानो न वा तिष्ठन्नुपविश्येतिशब्दतः ॥ ३ ॥ १२ ॥

**भा० टी०**—तत्रासनं प्रतिष्ठाप्य तत्रासन उपविश्यात्मशुद्धयेऽन्तःकरणशुद्धये यत्त्वात्मनः प्रतीचो विशुद्धिः सविलासाविद्यापङ्कसंपर्कहानिस्तस्या इत्यर्थ इति तन्न, अविद्यापङ्कनिवृत्तेर्ज्ञानाधीनत्वात् ज्ञानप्राप्तिद्वारा प्रतीचो विशुद्धय इति द्वारकल्पनापेक्षयान्तःकरणविशुद्ध्यर्थमित्यस्यैव न्याय्यत्वात् । योगं युञ्ज्यात् । कथमित्यत आह—सर्वविषयेभ्य उपसंहृत्य मनः एकमग्रं प्रधानं चिन्तनीयं यस्येति तथा कृत्वा क्षिप्तमूढविक्षिप्तभूमित्यागेन एकाग्रनिरोधभूमिभ्यां समाहितं कृत्वेत्यपि बोध्यम् । पुनश्च यतचित्तेन्द्रियक्रियः सन् चित्तं चेन्द्रियाणि च तेषां क्रियाः संयता यस्य सः ॥ १२ ॥

**प० टी०**—तत्रेति । तत्र तस्मिन्नासने उपविश्य एकाग्रं विक्षेपरहितं मनः कृत्वा योगं युञ्ज्यात् । किंभूतो यताश्चित्तेन्द्रियक्रिया येन स तथात्मनो मनसः शुद्धय उपशान्तये ॥ १२ ॥

**रा० टी०**—तत्रासने उपविश्य । तदाह सूत्रे—'आसीनः संभवात्' इति । यतचित्तेन्द्रियक्रियः सन् एकाग्रं मनः कृत्वा आत्मनो मनसो विशुद्धये सर्वमलदाहाय स्वस्य संसारमलनिवृत्तये वा योगं ध्यानयोगं युञ्ज्यात् कुर्यादिति विध्यनुवादेन प्रकारोक्तिरियम् ॥ १२ ॥

**समं कायशिरोग्रीवं धारयन्नचलं स्थिरः ॥**
**संप्रेक्ष्य नासिकाग्रं स्वं दिशश्चानवलोकयन् ॥ १३ ॥**

**त० टी०**—एवमासनमुक्त्वा ध्यानोपयोगिशरीरधारणप्रकारमाह—**समामिति** । कायोऽत्र देहमध्यभागो विवक्षितः शिरोग्रीवेति पृथग्ग्रहणात् । कायशिरोग्रीवं सममवक्रमचलमकम्पं धारयन् स्थिरः दृढः सन् स्वं स्वकीयं नासाग्रं संप्रेक्ष्य दिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः ॥ १३ ॥

**म० टी०**—तदर्थं बाह्यमासनमुक्त्वाऽधुना तत्र कथं शरीरधारणमित्युच्यते—**समं कायेति** । कायः शरीरमध्यं स च शिरश्च ग्रीवा च कायशिरोग्रीवं मूलाधारादारभ्य मूर्धान्तपर्यन्तं सममवक्रं, अचलमकम्पं धारयन्नेकतत्त्वाभ्यासेन विक्षेपसहभाव्यङ्गमेजयत्वाभावं संपादयन् स्थिरः दृढप्रयत्नो भूत्वा । किंच स्वं स्वीयं नासिकाग्रं संप्रेक्ष्यैव लयविक्षेपराहित्याय विषयप्रवृत्तिरहितोऽर्धनिमीलितनेत्र इत्यर्थः । दिशश्चानवलोकयन् अन्तरान्तरा दिशां चावलोकनमकुर्वन् योगप्रतिबन्धकत्वात्तस्य । एवंभूतः सन्नासीतेत्युत्तरेण संबन्धः ॥ १३ ॥

**शं० टी०**—पुनरपि योगाङ्गान्येव सिद्धेरान्तराण्युपदिशन्नेवंलक्षणः सन्नेव यतिः समाधिं कुर्यादित्याह—**सममिति द्वाभ्याम्** । कायशिरोग्रीवं कायः कटेरूर्ध्वप्रदेशः कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं समम् ऋज्वचलं च यथा स्यात्तथा धारयन् कायशिरोग्रीवे समतया ऋजुत्वेन धार्यमाणे पार्श्वयोः पश्चाच्च द्रष्टुं स्प्रष्टुं च न शक्यते तथापि मशकपिपीलिकाद्युपद्रवे चलनं संभवति तन्निरासार्थमचलमित्युक्तम् । एवं कायशिरोग्रीवमृज्वचलं च धारयन् स्थिरः स्थाणुवन्निश्चलो भूत्वा स्वं स्वकीयं नासिकाग्रमेव चक्षुषा संप्रेक्ष्य चक्षुषा नासिकाग्रं संप्रेक्ष्येत्युक्तिश्चक्षुषा तद्विषयं रूपं न गृह्णीयादिति नियमार्थं न तु नासिकाग्रदर्शनार्थं, यदि नासिकाग्रदर्शनमेव विवक्षितं स्यात्तदा मनस्तदाकारेण तत्रैव स्थितं स्यात्तेन चित्तस्य ब्रह्मण्यवस्थानं न संभवति ब्रह्मणि चित्तस्थापनं खलु समाधिर्यत आत्मसंस्थं मनः कृत्वेत्युच्यते, ततश्चक्षुषा नासिकाग्रदर्शनविधौ रूपाग्रहणसूचनार्थमेव चक्षुषोरचाञ्चल्यार्थं च तेन सिद्धं चक्षुषो यथा रूपाग्रहणं तथा श्रोत्रादीनामपि शब्दाद्यग्रहणमत्र विवक्षितमिति ज्ञातव्यम् । चक्षुषो रूपाग्रहणविधानादेव निदिध्यासुं नियमयति—दिशश्चानवलोकयन्निति । यद्यपि नासिकाग्रदर्शनविधिनैव तदतिरिक्तदर्शनं निषिद्धमेव भवति तथापि कचित्पुरस्तात्पश्चात्पार्श्वयोर्विपरीतशब्दोत्पत्तावपि दिशश्च प्राच्यादीश्चकारादात्मशरीरं चानवलोकयन्नेव युक्त आसीतेत्युत्तरेण संबन्धः ॥ १३ ॥

श्री० टी०-चित्तैकाग्र्योपयोगिनीं देहादिधारणां दर्शयन्नाह-सममिति द्वाभ्याम्। काय इति देहमध्यभागो विवक्षितः कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं मूलाधारादारभ्य मूर्धान्तपर्यन्तं सममवक्रमचलं निश्चलं धारयन् स्थिरः दृढप्रयत्नो भूत्वेत्यर्थः। स्वकीयं नासिकाग्रं संप्रेक्ष्येति च अर्धनिमीलितनेत्र इत्यर्थः। इतस्ततो दिशश्चानवलोकयन्नासीतेत्युत्तरेणान्वयः ॥ १३ ॥

स० टी०-उक्त्वासनं योगसिद्ध्यै देहधारणमुच्यते ॥ समं कृत्वा शिरो ग्रीवां कायमध्यं सुनिश्चलम् ॥ १ ॥ मूलाधारात्समारभ्य मूर्धान्तं धारयन् स्थिरम् ॥ सुदृढप्रयत्नो भूत्वा निष्कम्पो योगतत्परः ॥ २ ॥ लयविक्षेपशान्त्यर्थं नासिकाग्रमवेक्ष्य च ॥ कृत्वेव दर्शनं सम्यगिवशब्दस्य लोपनात् ॥ ३ ॥ नासासंप्रेक्षणं नात्र विवक्षितमितीशितुः ॥ दिग्वीक्षणमकुर्वंश्च योगस्य प्रतिबन्धकम् ॥ ४ ॥ एवंभूतः स आसीतेत्युत्तरेणान्वयो मतः ॥ ५ ॥ १३ ॥

भा० टी०-आसन उपविश्य शरीरं कथं स्थापयेदिति तत्राह-सममिति। कायश्च शिरश्च ग्रीवा च कायशिरोग्रीवं तत्समं धारयन्। कायशब्देन कायस्यैकदेशः कटिप्रदेशादूर्ध्वो ग्रीवावधिरत्र गृह्यते शिरोग्रीवयोः पृथग्ग्रहणात् कट्यधोभागस्योपवेशने समत्वायोगात्। समत्वेऽपीतस्ततश्चलनं संभाव्याह-अचलमिति। उभयत्राप्युपायमाह-स्थिर इति। स्थिरो भूत्वेत्यर्थः। अत्राप्युपायं लयविक्षेपनिवृत्तिद्वारकमाह-स्वं स्वकीयं नासिकाग्रं संप्रेक्ष्यानेन लयनिवृत्तिः। दिशश्चानवलोकयन् अनेन विक्षेपनिवृत्तिः। एवंभूत आसीतेत्युत्तरेणान्वयः ॥ १३ ॥

प० टी०-अथ चित्तैकाग्र्योपयोगिनीं देहधारणामाह—सममिति द्वाभ्याम्। कायं देहमध्यः शिरश्च ग्रीवा चेति समाहारः कायशिरोग्रीवं सममवक्रं यथा भवति तथा धारयन् धारणां कुर्वन् आसीतेत्युत्तरेणान्वयः। अयमर्थः योगशास्त्रप्रकारेणासनोपवेशे गुदलिङ्गान्तरे स्थितादाधारचक्रान्मूलबन्धादिबन्धत्रयसिद्धावाधिव्याधिमनोवेगोपशमे सति कायग्रीवाशिरसां समत्वं स्थाणुवदृजुत्वमचलत्वं च भवति। एवं देहधारणामुक्त्वा दृष्टिधारणामाह-दिश इति। दिशः समन्ततोऽनवलोकयन्नपश्यन्। तर्हि देहदृष्टिरवशिष्टा तामपि निषेधयति-स्वं नासिकाग्रं संप्रेक्ष्य अनेन चित्तैकाग्र्योपलक्षणमुदितम् ॥ १३ ॥

रा० टी०-कायशिरोग्रीवं कायो मध्यदेहः स च शिरश्च ग्रीवा च प्राण्यङ्गत्वाद्द्वन्द्वैकवद्भावः। सममृजुं धारयन् अचलं यथा तथा स्थिरो दृढः स्वं नासिकाग्रं संप्रेक्ष्य दिशश्चानवलोकयन् युञ्ज्यादिति पूर्वेण वा, युक्त आसीतेत्युत्तरेण वान्वयः ॥ १३ ॥

**प्रशान्तात्मा विगतभीर्ब्रह्मचारिव्रते स्थितः ॥**
**मनः संयम्य मच्चित्तो युक्त आसीत मत्परः ॥ १४ ॥**

त० टी०-प्रशान्त आत्मा चित्तं यस्य विगतभीरकुतश्चिद्भयः। ब्रह्मचारिव्रते ब्रह्मचर्ये स्थितः। उपस्थस्य संयमो ब्रह्मचर्यं तच्चाष्टविधमैथुनत्यागादष्टविधम्। तच्चोक्तम् 'स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम्। संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः। विपरीतं ब्रह्मचर्यमेतदेव प्रकीर्तितम्' इति। तस्मिन् स्थितः सन्मनः संयम्य विषयेभ्यस्तद्वृत्तीः प्रत्याहृत्य मय्येव चित्तं यस्य स मच्चित्तस्तथा मत्परः अहमेवानन्दघनः परः पुरुषार्थो यस्य स मदेकविषयचित्तवृत्तिभिर्युक्त आसीतोपविशेत् ॥ १४ ॥

म० टी०-किंच-प्रशान्तात्मेति। निदाननिवृत्तिरूपेण प्रकर्षेण शान्तः रागादिदोषरहित आत्मान्तःकरणं यस्य स प्रशान्तात्मा शास्त्रीयनिश्चयदार्ढ्याद्विगता भीः सर्वकर्मपरित्यागेन युक्तत्वायुक्तत्व-

शङ्का यस्य स विगतभीः ब्रह्मचारिव्रते ब्रह्मचर्यगुरुशुश्रूषाभिक्षाभोजनादौ स्थितः सन् मनः संयम्य विषयाकारवृत्तिशून्यं कृत्वा मयि परमेश्वरे प्रत्यक्चिति सगुणे निर्गुणे वा चित्तं यस्य स मच्चित्तो मद्विषयकधारावाहिकचित्तवृत्तिमान् । पुत्रादौ प्रिये चिन्तनीये सति कथमेवं स्यादत आह—मत्परः अहमेव परमानन्दरूपत्वात्परः पुरुषार्थः प्रियो यस्य स तथा " तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा " इति श्रुतेः । एवं विषयाकारसर्ववृत्तिनिरोधेन भगवदेकाकारचित्तवृत्तियुक्तः संप्रज्ञातसमाधिमानासीतोपविशेद्यथाशक्ति नतु स्वेच्छया व्युत्तिष्ठेदित्यर्थः । भवति कश्चिद्रागी स्त्रीचित्तो न तु स्त्रियमेव परत्वेनाराध्यत्वेन गृह्णाति किं तर्हि राजानं वा देवं वा अयं तु मच्चित्तो मत्परश्च सर्वाराध्यत्वेन मामेव मन्यत इति भाष्यकृतां व्याख्या । व्याख्यातृत्वेऽपि मे नात्र भाष्यकारेण तुल्यता । गुञ्जायाः किं नु हेम्नैकतुलारोहेऽपि तुल्यता ॥ १४ ॥

**शं० टी०**—समकायशिरोग्रीवत्वं स्थिरत्वं नासिकाग्रद्रष्टृत्वं दिगनवलोकनं च योगिनो योगसिद्धेरङ्गानीति सूचयित्वेतोऽप्यन्तरङ्गानि तत्सिद्धेरसाधारणसाधनानि च सूचयन्नुक्तसाधनसंपन्नो यतिः समाधिं कुर्यादित्याह—**प्रशान्तेति** । प्रकर्षेण शान्तः प्रशान्त आत्मा रागद्वेषाद्यनुत्पत्तिरेवात्मनोऽन्तःकरणस्य शान्तिस्तस्याः प्रकर्षस्तु रागद्वेषादिदोषोत्पत्तिहेतूनां विषयेषु समीचीनत्वाऽसमीचीनत्वप्रीत्यप्रीतीष्टसाधनत्वानिष्टसाधनत्वबुद्धीनां निवृत्तिरेव । एवंलक्षणः प्रशान्त आत्मान्तःकरणं यस्य स प्रशान्तात्मा विगतभीः विशिष्य गता विगता निःशेषविनष्टा भीरन्नादानविसर्गातिरिक्तस्य दन्तधावनमुखक्षालनादेः शास्त्रीयस्य सर्वस्य च कर्मणः परित्यागे शिष्टा निन्दिष्यन्तीति या भीतिः सा यस्य न विद्यते स विगतभीः स्वाध्यायं च सर्वकर्माणि संन्यस्येत्यादि " वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् " इति ' त्यज धर्ममधर्मं च । ' नैव धर्मी न चाधर्मी न चैव हि शुभाशुभी ' इत्यादिश्रुतिस्मृतिनिश्चयमवष्टभ्य निर्भीक इत्यर्थः । किंच ब्रह्मचारिव्रते स्थितः अत्र ब्रह्मचारिव्रतपदेन भिक्षामात्रं लक्ष्यते न तु त्रिषवणादिः त्रिषवणाद्यनुष्ठानस्य समाधिसंभावितनिष्क्रियब्रह्माभिन्नत्वज्ञानविध्वंसकत्वाद्योगं युञ्जीत सततमिति नित्यनिरन्तरकर्तव्यतया प्राप्तसमाध्यनुष्ठानप्रतिकूलत्वाच्चाहारमात्रमत्र गृह्यते आहारविषये ब्रह्मचारिणो व्रतं भिक्षाशनमेव तस्मिन् ब्रह्मचारिव्रते केवलं माधुकरभक्षण एव स्थितो भवेन्निदिध्यासुर्यतिर्न तु प्राक्प्रणीतादौ प्राक्प्रणीतायाचिततात्कालिकोपपन्नेष्वाहारस्य परतन्त्रत्वेन द्रव्यगुरुत्वाकालिकत्वन्यूनातिरिक्तत्वप्रतीक्षादिदोषवत्तया समाधिविघ्नकारित्वप्रसङ्गात्तस्मात्स्वाधीने ब्रह्मचारिव्रते भिक्षाशन एव स्थितो भवेदित्यर्थः । मनो वृत्तिरूपं बहिःप्रवणशीलं संयम्य विषयसंबन्धो यथा न स्यात्तथा निगृह्य मच्चित्तः मयि बुद्धितद्वृत्तिसाक्षिणि चिदेकरसे प्रत्यग्रूपे ब्रह्मणि चित्तं यस्य स मच्चित्तः बहिर्गच्छच्चित्तं मयि सम्यक् स्थापयित्वेत्यर्थः । मच्चित्त इत्यत्रास्मच्छब्दार्थस्य चित्तस्थापनाधिकरणस्य ब्रह्मणः स्थापयितुश्च भेदे प्राप्ते " उ दरमन्तरं कुरुते । अथ तस्य भयं भवतीति " इति श्रवणाद्भेददर्शिनो मुक्तिर्न संभवति ततो ध्याता ब्रह्मैवाहमिति स्वं ब्रह्माभिन्नं भावयेदिति बोधयितुमाह—मत्पर इति । अहमेव परः परमात्मेति मत्परः ब्रह्मैवाहमिति स्वस्य ब्रह्मभावग्राहकया वृत्त्या युक्तः सन्नासीत स्वं ब्रह्मैव भावयन्नासने तूष्णीमुपविशेदित्यर्थः ॥ १४ ॥

**श्री० टी०**—प्रशान्तेति । प्रशान्त आत्मा चित्तं यस्य, विगता भीर्भयं यस्य, ब्रह्मचारिव्रते ब्रह्मचर्ये स्थितः सन्मनः संयम्य प्रत्याहृत्य मय्येव चित्तं यस्य अहमेव परः पुरुषार्थो यस्य स मत्परः एवंयुक्तो भूत्वा आसीत तिष्ठेत् ॥ १४ ॥

**स० टी०**—रागादिदोषशून्यत्वाच्छान्तात्माध्यासवर्जितः ॥ युक्तायुक्तत्वसंदेहः कर्मत्यागे भयं स्मृतम् ॥ ॥ १ ॥ तच्छून्यो निर्भयो भूत्वा यद्वा सर्वभयोज्झितः ॥ ब्रह्मचर्यं विना चित्तं दूषितं स्त्रीक्षणादिभिः ॥ २ ॥

निश्चलं न प्रतीचि स्याद्ब्रह्मचर्यमतश्चरेत् ॥ नारायणे परां भक्तिं विना ब्रह्माद्वये मनः ॥ ३ ॥ न क्षमं निश्चलं स्थातुं भक्तिः कार्या ततो हरौ ॥ एतद्धृदि निधायाह ब्रह्मचारीति माधवः ॥ ४ ॥ गुरुशुश्रूषणं भिक्षा ब्रह्मचर्यमथापरम् ॥ यद्यद्व्रतं भवेद्ब्रह्मचारिणस्तत्र च स्थितः ॥ ५ ॥ मनो निर्विषयं कृत्वा वासुदेवे मयीश्वरे ॥ प्रत्यक्चैतन्यसद्रूपे चित्तं यस्य स मन्मनाः ॥ ६ ॥ अहमेव परानन्दरूपत्वेन परः प्रियः ॥ सर्वस्माज्जीवपर्यन्तात्पुरुषार्थः स मत्परः ॥ ७ ॥ एवं चित्तनिरोधेन ब्रह्माकारा कृता यदा ॥ चित्तवृत्तिः स आसीत न व्युत्तिष्ठेत्स्वयं ततः ॥ ८ ॥ १४ ॥

भा० टी०—प्रशान्तात्मा प्रकर्षेण शान्तः आत्मान्तःकरणं यस्य सः अनेन रम्यशब्दश्रवणादिना शान्तचित्तस्य क्षोभाभावाद्दिगवलोकनं वारितम् । व्याघ्रादिभयप्रयुक्तमपि तद्वारयति—विशेषेण गता भीर्भयं यस्मात्सः । व्याघ्रादिप्रयुक्तभयाभावेऽपि क्षुधादिजन्यभयं संभाव्याह—मनः संयम्य स्वादिष्ठान्नादौ प्रवृत्ता मनोवृत्तीरुपसंहृत्येत्यर्थः । एवंभूतः किं कुर्यादिति तत्राह—युक्तः समाहितः सन् मच्चित्तः मत्परश्चासीतेति मयि परमेश्वरे चित्तं यस्य सः कश्चिद्रागी स्त्रीचित्तो नतु स्त्रियमेव परत्वेन गृह्णाति किं तर्हि राजानं वाराध्यत्वेन देवं वाराध्यत्वेन परमपुरुषार्थत्वेन च अयं तु मच्चित्तो मत्परश्च अहमेव पर आराध्यः परमपुरुषार्थश्च यस्य सः । यत्तु तत्किं द्वितीयाद्यवस्थास्य संभवति ओमित्याह—अयुक्त इति । अयुक्तो मत्परः अहं पर अन्तर्यामी प्रेरको यस्येत्येवंरूपः आस्ते तस्यां दशायामैक्यभावनाभावादिति । तथाचायुक्तावस्थायां भिक्षाद्याचरतीति तात्पर्यमिति तन्न, वाक्यभेदप्रसङ्गात् यथाश्रुतार्थसंभवे आसीतेत्यस्यास्त इत्यर्थकरणानुचितत्वाच्च ॥ १४ ॥

प० टी०—अथ मनोधारणामाह—प्रशान्तात्मेति । प्रशान्तो निःसंकल्प आत्मा चित्तं यस्य विगतभीर्निरस्तभयो निर्जने एकाकिना कथं स्थातव्यमिति भयशून्यः । यद्वा विगतभीरित्युपलक्षणम् "ह्रीर्धीरित्येतत्सर्वं मन एव" इति श्रुतेर्मनोधर्मरहितः । अथावसरमाह—ब्रह्मचारिणां यद्व्रतं तत्र स्थितः संन्यासग्रहणात्पूर्वमेवेत्यर्थः । अथैवंविधमहाकार्ये प्रवृत्तस्याश्रयव्यतिरेकेण विघ्नोपशमः कथं स्यादित्याह—मच्चित इति । मयि चित्तं यस्य निरन्तरं मत्स्मरणवान् । नहि तावदेव मत्प्रयोजनमित्याह—मत्पर इति । अहमेव परं प्राप्तव्यं पदं यस्य स तथा । तदुक्तमकुलागमे 'सुखासने समासीनस्तत्त्वाभ्यासं समाचरन् । सदाभ्यासेन तत्कुर्यात्परतत्त्वप्रकाशनम् ॥ १ ॥ आसनं प्राणसंरोधः प्रत्याहारोऽथ धारणा । ध्यानं समाधिरेतानि योगाङ्गानि वरानने ॥२॥ एकान्ते विजने रम्ये गुहायां पुण्यभूमिके । राहिते मशकैर्दंशैर्देवायतनकेऽपि वा ॥ ३ ॥ सिद्धक्षेत्रे महातीर्थे ध्यानसिद्धिः प्रजायते । तत्र सिद्धासनं बद्ध्वा ऋजुकायं तु कारयेत् ॥ ४ ॥ ऊर्ध्वं मेढ्रादधो नाभेः कन्दो ग्रन्थिरिव स्थितः । तत्र नाड्यः समुत्पन्नाः सहस्राणि द्विसप्ततिः ॥ ५ ॥' श्रुतिरपि शातपथी—"हिता नाम नाड्यो द्वासप्ततिः सहस्राणि हृदयात्पुरीततमभिप्रतिष्ठन्ते " इति । अत्र पुरीततमिति हृदयाकाशे नाडीभिर्निर्मितं स्थानम्, । शेषं स्पष्टम् । तथा ' प्रधानाः प्राणवाहिन्यो भूयस्तत्र दश स्मृताः । इडा च पिङ्गला चैव सुषुम्ना च तृतीयका ॥ ६ ॥ सिनीवाली चानुमतिः पूषा चैव यशस्विनी । अलम्बुका कुहूश्चैव शङ्खिनी दशमी तथा ॥ ७ ॥ एतन्नाडीमयं चक्रं तिस्रस्तत्र प्रवाहिकाः । इडा च पिङ्गला चैव सुषुम्ना प्राणवाहिकाः । इडा वामे स्थिता भागे पिङ्गला दक्षिणे स्थिता ॥ ८ ॥ सुषुम्ना मध्यदेशे तु प्राणमार्गास्त्रयो मताः । पूरयेद्वामनाड्या च रेचयेदन्यया ततः ॥ ९ ॥ तथैव पूरयेद्भूयः पूरयेत्कुम्भवत्ततः । एवमभ्यासयोगेन नाडीशुद्धिः प्रजायते ॥ १० ॥ चन्द्राङ्गे प्राणमभ्यस्य सूर्याङ्गेऽपानमभ्यसेत् । शीतांशुसूर्ययोर्मध्ये चिन्तयेत्परमेश्वरम् ॥ ११ ॥ सुषुम्नान्तर्गतं देवं चिद्रूपं भावयेत्सदा । प्रणवं तारकं ब्रह्म नित्यं ध्यायन्ति योगिनः ॥ १२ ॥ तद्ध्याने तत्क्षणात्सिद्धिर्जायते नात्र संशयः । प्रणवाभ्यासतो

योगी मया तुल्यो वरानने ॥ १३ ॥' योगमार्तण्डे—'योनिस्थानकमङ्घ्रिमूलघटितं कृत्वा दृढं विन्यसेन्मेढ्रे पादमथैवमेव नियतं धृत्वा समं विग्रहम् । स्थाणुः संयमितेन्द्रियोऽचलदृशा पश्येद्भ्रुवोरन्तरं चैतन्मोक्षकपाटभेदजनकं सिद्धासनं प्रोच्यते ॥ १ ॥ वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढौ । अङ्गुष्ठौ हृदये निधाय चुबुकं नासाग्रमालोकयेदेतद्व्याधिविकारनाशि यमिनां पद्मासनं प्रोच्यते ॥ २ ॥ आधारं प्रथमं चक्रं स्वाधिष्ठानं द्वितीयकम् । योनिस्थानं द्वयोर्मध्ये कामरूपं निगद्यते ॥ ३ ॥ अपानप्राणयोरैक्यं क्षयो मूत्रपुरीषयोः । युवा भवति वृद्धोऽपि सततं मूलबन्धनात् ॥ ४ ॥ पार्ष्णिभागेन संपीड्य योनिमाकुञ्चयेद्गुदं । अपानमूलमाकृष्य मूलबन्धं निगद्यते ॥ ५ ॥ उदरे पश्चिमे भागे नाभेरूर्ध्वं निगद्यते । उड्डियानो ह्ययं बन्धः कण्ठदुःखौघनाशनः ॥ ६ ॥ बध्नातीह शिरोजालमधो याति नभोजलम् । ततो जालन्धरं बन्धं कण्ठसंकोचलक्षणम् ॥ ७ ॥ जालन्धरकृते बन्धे कण्ठसंकोचलक्षणे । न पीयूषं पतत्यग्नौ न च वायुः प्रकुप्यति ॥ ८ ॥ कपालकुहरे जिह्वा प्रविष्टा विपरीतगा । भ्रुवोरन्तर्गता दृष्टिर्मुद्रा भवति खेचरी ॥ ९ ॥ युक्तासनं समारुह्य समकायशिरोधरः । नासाग्रदृष्टिरेकान्ते जपेदोङ्कारमव्ययम् ॥ १० ॥ भूर्भुवःस्वरिमे लोकाः सोमसूर्याग्निदेवताः । यस्य मात्रासु तिष्ठन्ति तत्परं ज्योतिरोमिति ॥ ११ ॥ आसनेन रुजं हन्ति प्राणायामेन पातकम् । विकारं मानसं योगी प्रत्याहारेण मुञ्चति ॥१२॥ धारणार्थं मनोधैर्यं ध्यानं निश्चलमद्भुतम् । समाधेर्मोक्षमाप्नोति त्यक्त्वा कर्म शुभाशुभम् ॥ १३ ॥ प्राणायामद्विषट्केन प्रत्याहारः प्रकीर्तितः । प्रत्याहारद्विषट्केन धारणा जायते शुभा ॥ १४ ॥ धारणा द्वादश ध्यानं प्रोक्तं ध्यानविशारदैः । ध्यानद्वादशकेनैव समाधिरभिधीयते ॥ १५ ॥ १४ ॥

रा० टी०—प्रशान्तेति । प्रशान्तात्मा स्वतो विषयेषु अप्रवृत्तमनस्कः विगतभीः व्याघ्रचौरादिभयहीनः ब्रह्मचारिव्रते स्थितः मनः सम्यक् प्रत्याहृत्य मच्चित्तो मद्ध्यानवान्मत्परः अहमेव परः सर्वोत्तमः यस्य स मत्परः युक्तः समाधिसंपन्न आसीतेत्यर्थः ॥ १४ ॥

**युञ्जन्नेवं सदाऽऽत्मानं योगी नियतमानसः ॥**
**शान्तिं निर्वाणपरमां मत्संस्थामधिगच्छति ॥ १५ ॥**

**त० टी०—एवं योगमभ्यसतो योगिनः फलमाह—युञ्जन्नेवमिति । एवमुक्तप्रकारेण परमात्मनि भगवति मयि सदाऽऽत्मानं मनो युञ्जन्समाहितं कुर्वन् । नियतं निरुद्धं मानसं वृत्तिनिरोधेन मन एव निरुध्यतेऽतो नियतमानसः सन् शान्तिं संसारोपरतिरूपां निर्वाणपरमां निर्वाणं मोक्षः परमो यस्यां तां मत्संस्थां मन्निष्ठामधिगच्छति प्राप्नोति ॥ १५ ॥**

म० टी०—एवं संप्रज्ञातसमाधिनासीनस्य किं स्यादित्युच्यते—युञ्जन्नेवमिति । एवं रहोवस्थानादिपूर्वोक्तनियमेनात्मानं मनो युञ्जन् अभ्यासवैराग्याभ्यां समाहितं कुर्वन् योगी सदा योगाभ्यासपरोऽभ्यासातिशयेन नियतं निरुद्धं मानसं मनो येन नियता निरुद्धा मानसा मनोवृत्तिरूपा विकारा येनेति वा, नियतमानसः सन् शान्तिं सर्ववृत्त्युपरतिरूपां प्रशान्तवाहितां निर्वाणपरमां तत्त्वसाक्षात्कारोत्पत्तिद्वारेण सकार्याविद्यानिवृत्तिरूपमुक्तिपर्यवसायिनीं मत्संस्थां मत्स्वरूपपरमानन्दरूपां निष्ठामधिगच्छति नतु सांसारिकाण्यैश्वर्याणि अनात्मविषयसमाधिफलान्यधिगच्छति तेषामपवर्गोपयोगिसमाध्युपसर्गत्वात् । तथा च तत्तत्समाधिफलान्युक्त्वाह भगवान् पतञ्जलिः 'ते समाधावुपसर्गा व्युत्थाने सिद्धयः' इति, 'स्थान्युपनिमन्त्रणे सङ्गस्मयाकरणं पुनरनिष्टप्रसङ्गात्' इति च स्थानिनो देवाः तथाचोद्दालको देवैरामन्त्रितोऽपि तत्र सङ्गमादरं

स्मयं गर्वं चाकृत्वा देवानवज्ञाय पुनरनिष्टप्रसङ्गनिवारणाय निर्विकल्पकमेव समाधिमकरोदिति वसिष्ठेनोपाख्यायते। मुमुक्षुभिर्हेयश्च समाधिः सूत्रितः पतञ्जलिना 'वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञातः' सम्यक् संशयविपर्ययानध्यवसायरहितत्वेन प्रज्ञायते प्रकर्षेण विशेषरूपेण ज्ञायते भाव्यस्वरूपं येन स संप्रज्ञातः समाधिर्भावनाविशेषः। भावना हि भाव्यस्य विषयान्तरपरिहारेण चेतसि पुनःपुनर्निवेशनम्। भाव्यं च त्रिविधं ग्राह्यग्रहणग्रहीतृभेदात्। ग्राह्यमपि द्विविधं स्थूलसूक्ष्मभेदात्। तदुक्तं 'क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थतदञ्जनतासमापत्तिः' क्षीणा राजसतामसवृत्तयो यस्य तस्य चित्तस्य ग्रहीतृग्रहणग्राह्येष्वात्मेन्द्रियविषयेषु तत्स्थता तत्रैवैकाग्रता तदञ्जनता तन्मयता न्यग्भूते चित्ते भाव्यमानस्यैवोत्कर्ष इति यावत् तथाविधा समापत्तिस्तद्रूपः परिणामो भवति यथाभिजातस्य निर्मलस्य स्फटिकमणेस्तत्तदुपाश्रयवशात्तत्तद्रूपापत्तिरेवं निर्मलस्य चित्तस्य तत्तद्भावनीयवस्तूपरागात्तद्रूपापत्तिः समापत्तिः समाधिरिति च पर्यायः। यद्यपि ग्रहीतृग्रहणग्राह्येष्वित्युक्तं तथापि भूमिकाक्रमवशाद् ग्राह्यग्रहणग्रहीतृष्विति बोद्धव्यम्। यतः प्रथमं ग्राह्यनिष्ठ एव समाधिर्भवति ततो ग्रहणनिष्ठस्ततो ग्रहीतृनिष्ठ इति ग्रहीत्रादिक्रमोऽप्यग्रे व्याख्यास्यते। तत्र यदा स्थूलं महाभूतेन्द्रियात्मकषोडशविकाररूपं विषयमादाय पूर्वापरानुसन्धानेन शब्दार्थोल्लेखेन च भावना क्रियते तदा सवितर्कः समाधिः। अस्मिन्नेवालम्बने पूर्वापरानुसंधानशब्दार्थोल्लेखशून्यत्वेन यदा भावना प्रवर्तते तदा निर्वितर्कः। एतावुभावप्यत्र वितर्कशब्देनोक्तौ। तन्मात्रान्तःकरणलक्षणं सूक्ष्मं विषयमालम्ब्य तस्य देशकालधर्मावच्छेदेन यदा भावना प्रवर्तते तदा सविचारः। अस्मिन्नेव अवलम्बने देशकालधर्मावच्छेदं विना धर्मिमात्रावभासित्वेन यदा भावना प्रवर्तते तदा निर्विचारः। एतावुभावप्यत्र विचारशब्देनोक्तौ। तथा च भाष्यम् 'वितर्कश्चित्तस्यास्थूल आलम्बने आभोगः सूक्ष्मे विचारः' इति। इयं ग्राह्यसमापत्तिरिति व्यपदिश्यते। यदा रजस्तमोलेशानुविद्धमन्तःकरणसत्त्वं भाव्यते तदा गुणभावाच्चिच्छक्तेः सुखप्रकाशमयस्य सत्त्वस्य भाव्यमानस्योद्रेकात्सानन्दः समाधिर्भवति। अस्मिन्नेव समाधौ ये बद्धधृतयस्तत्त्वान्तरं प्रधानपुरुषरूपं न पश्यन्ति ते विगतदेहाहंकारत्वाद्विदेहशब्देनोच्यन्ते, इयं ग्रहणसमापत्तिः। ततः परं रजस्तमोलेशानभिभूतं शुद्धं सत्त्वमालम्बनीकृत्य या भावना प्रवर्तते तस्यां ग्राह्यस्य सत्त्वस्य न्यग्भावाच्चितिशक्तेरुद्रेकात्सत्तामात्रावशेषत्वेन समाधिः सास्मित इत्युच्यते। न चाहङ्कारास्मितयोरभेदः शङ्कनीयः यतो यत्रान्तःकरणमहमित्युल्लेखेन विषयान् वेदयते सोऽहंकारः, यत्र त्वन्तर्मुखतया प्रतिलोमपरिणामेन प्रकृतिलीने चेतसि सत्तामात्रमवभाति सास्मिता। अस्मिन्नेव समाधौ ये कृतपरितोषास्ते परं पुरुषमपश्यन्तश्चेतसः प्रकृतौ लीनत्वात्प्रकृतिलया इत्युच्यन्ते। सेयं ग्रहीतृसमापत्तिरस्मितामात्ररूपग्रहीतृनिष्ठत्वात्। ये तु परं पुरुषं विविच्य भावनायां प्रवर्तन्ते तेषामपि केवलपुरुषविषया विवेकख्यातिर्ग्रहीतृसमापत्तिरपि न सास्मितः समाधिर्विवेकेनास्मितायास्त्यागात्। तत्र ग्रहीतृभानपूर्वकमेव ग्रहणभानं तत्पूर्वकं च सूक्ष्मग्राह्यभानं तत्पूर्वकं च स्थूलग्राह्यभानमिति स्थूलविषयो द्विविधोऽपि वितर्कश्चतुष्टयानुगतः। द्वितीयो वितर्कविकलस्त्रितयानुगतः। तृतीयो वितर्कविचाराभ्यां विकलो द्वितयानुगतः। चतुर्थो वितर्कविचारानन्दैर्विकलोऽस्मितामात्र इति चतुरवस्थोऽयं संप्रज्ञात इति। एवं सवितर्कः सविचारः सानन्दः सास्मितश्च समाधिरन्तर्धानादिसिद्धिहेतुतया मुक्तिहेतुसमाधिविरोधित्वाद्धेय एव मुमुक्षुभिः। ग्रहीतृग्रहणयोरपि चित्तवृत्तिविषयतादशायां ग्राह्यकोटौ निक्षेपाद्धेयोपादेयविभागकथनाय ग्राह्यसमापत्तिरेव विवृता सूत्रकारेण— चतुर्विधा हि ग्राह्यसमापत्तिः स्थूलग्राह्यगोचरा द्विविधा सवितर्का निर्वितर्का च। सूक्ष्मग्राह्यगोचरापि द्विविधा सविचारा निर्विचारा च। तत्र शब्दार्थज्ञानविकल्पैः संकीर्णा सवितर्का शब्दार्थज्ञानविकल्पसंभिन्ना स्थूलार्थावभासरूपा सवितर्का समापत्तिः स्थूलगोचरा सविकल्पकवृत्तिरित्यर्थः। स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का। तस्मिन्नेव

स्थूल आलम्बने शब्दार्थस्मृतिप्रविलये प्रत्युदितस्पष्टग्राह्याकारप्रतिभासितया न्यग्भूतज्ञानांशत्वेन स्वरूपशून्येव निर्वितर्का समापत्तिः स्थूलगोचरा निर्विकल्पकवृत्तिरित्यर्थः। एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता। सूक्ष्मस्तन्मात्रादिर्विषयो यस्याः सा सूक्ष्मविषया समापत्तिर्द्विविधा सविचारा निर्विचारा च। सविकल्पकानिर्विकल्पकभेदेन एतयैव सवितर्कया निर्वितर्कया च स्थूलविषयया समापत्त्या व्याख्याता। शब्दार्थज्ञानविकल्पसहितत्वेन देशकालधर्माद्यवच्छिन्नः सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा सविचारा। शब्दार्थज्ञानविकल्परहितत्वेन देशकालधर्माद्यनवच्छिन्नत्वेन च धर्मिमात्रतया सूक्ष्मोऽर्थः प्रतिभाति यस्यां सा निर्विचारा। सविचारनिर्विचारयोः सूक्ष्मविषयत्वविशेषणात्सवितर्कनिर्वितर्कयोः स्थूलविषयत्वमर्थाद्व्याख्यातम्। 'सूक्ष्मविषयत्वं चालिङ्गपर्यवसानं' सविचारायां निर्विचारायाश्च समापत्तेर्यत्सूक्ष्मविषयत्वमुक्तं तदलिङ्गपर्यन्तं द्रष्टव्यम्। तेन सानन्दसास्मितयोर्ग्रहीतृग्रहणसमापत्त्योरपि ग्राह्यसमापत्तावेवान्तर्भाव इत्यर्थः। तथाहि पार्थिवस्याणोर्गन्धतन्मात्रं सूक्ष्मो विषयः। आप्यस्यापि रसतन्मात्रं, तैजसस्य रूपतन्मात्रं, वायवीयस्य स्पर्शतन्मात्रं, नभसः शब्दतन्मात्रं, तेषामहङ्कारस्तस्य लिङ्गमात्रं महत्तत्त्वम्, तस्याप्यलिङ्गं प्रधानं सूक्ष्मो विषयः। सप्तानामपि प्रकृतीनां प्रधान एव सूक्ष्मताविश्रान्तेस्तत्पर्यन्तमेव सूक्ष्मविषयत्वमुक्तम्। यद्यपि प्रधानादपि पुरुषः सूक्ष्मोऽस्ति तथाप्यन्वयिकारणत्वाभावात्तस्य सर्वान्वयिकारणे प्रधान एव निरतिशयं सौक्ष्म्यं व्याख्यातम्। पुरुषस्तु निमित्तकारणं सदपि नान्वयिकारणत्वेन सूक्ष्मतामर्हति अन्वयिकारणत्वाविवक्षायां तु पुरुषोऽपि सूक्ष्मो भवत्येवेति द्रष्टव्यम्। ता एव सबीजः समाधिः। ताश्चतस्रः समापत्तयो ग्राह्येण बीजेन सह वर्तन्त इति सबीजः समाधिर्वितर्कविचारानन्दास्मितानुगमात्संप्रज्ञात इति प्रागुक्तः स्थूलेऽर्थे सवितर्को निर्वितर्कः सूक्ष्मेऽर्थे सविचारो निर्विचार इति। तत्रान्तिमस्य फलमुच्यते 'निर्विचारवैशारद्येऽध्यात्मप्रसादः' स्थूलविषयत्वे तुल्येऽपि सवितर्के शब्दार्थज्ञानविकल्पसंकीर्णमपेक्ष्य तद्रहितस्य निर्विकल्पकरूपस्य निर्वितर्कस्य प्राधान्यम्। ततः सूक्ष्मविषयस्य सविकल्पकप्रतिभासरूपस्य सविचारस्य ततोऽपि सूक्ष्मविषयस्य निर्विकल्पकप्रतिभासरूपस्य निर्विचारस्य प्राधान्यम्। तत्र पूर्वेषां त्रयाणां निर्विचारार्थत्वान्निर्विचारफलेनैव फलवत्त्वम्। निर्विचारस्य तु प्रकृष्टाभ्यासबलाद्वैशारद्ये रजस्तमोऽनभिभूतसत्त्वोद्रेके सत्यध्यात्मप्रसादः क्लेशवासनारहितस्य चित्तस्य भूतार्थविषयः क्रमाननुरोधी स्फुटः प्रज्ञालोकः प्रादुर्भवति। तथा च भाष्यम् 'प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्। भूमिष्ठानिव शैलस्थः सर्वान्प्राज्ञोऽनुपश्यति' इति। ऋतंभरा तत्र प्रज्ञा। तत्र तस्मिन् प्रज्ञाप्रसादे सति समाहितचित्तस्य योगिनो या प्रज्ञा जायते सा ऋतंभरा, ऋतं सत्यमेव बिभर्ति न तत्र विपर्यासगन्धोऽप्यस्तीति यौगिक्येवेयं समाख्या। सा चोत्तमो योगः। तथा च भाष्यम्—'आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्' इति सा तु 'श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात्' श्रुतमागमविज्ञानं तत्सामान्यविषयमेव। नहि विशेषेण सह कस्यचिच्छब्दस्य सङ्गतिर्ग्रहीतुं शक्यते तथानुमानं सामान्यविषयमेव। नहि विशेषेण सह कस्यचिद्व्याप्तिर्ग्रहीतुं शक्यते तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्ति न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनो लोकप्रत्यक्षेण ग्रहणमस्ति किंतु समाधिप्रज्ञानिर्ग्राह्य एव सविशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा तस्मान्निर्विचारवैशारद्यसमुद्भवायां श्रुतानुमानविलक्षणायां सूक्ष्मव्यवहितविप्रकृष्टसर्वविशेषविषयायामृतंभरायामेव प्रज्ञायां योगिना महान् प्रयत्न आस्थेय इत्यर्थः। ननु क्षिप्तमूढविक्षिप्ताख्यव्युत्थानसंस्काराणामेकाग्रतायामपि सवितर्कनिर्वितर्कसविचारजानां संस्काराणां सद्भावात्तैश्चाल्यमानस्य चित्तस्य कथं निर्विचारवैशारद्यपूर्वकाध्यात्मप्रसादलभ्या ऋतंभरा प्रज्ञा प्रतिष्ठिता स्यादत आह—तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी तया ऋतंभरया प्रज्ञया जानितो यः संस्कारः स तत्त्वविषयया प्रज्ञया

जनितत्वेन बलवत्त्वादन्यान् व्युत्थानजान् समाधिजांश्च संस्कारानतत्त्वविषयप्रज्ञाजनितत्वेन दुर्बलान् प्रतिबध्नाति स्वकार्याक्षमान् करोति नाशयतीति वा। तेषां संस्काराणामभिभवात्तत्प्रभवाः प्रत्यया न भवन्ति। ततः समाधिरुपतिष्ठते ततः समाधिजा प्रज्ञा ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराशयो वर्धते। ततश्च प्रज्ञा ततश्च संस्कारा इति। ननु भवतु व्युत्थानसंस्काराणामतत्त्वविषयप्रज्ञाजनितानां तत्त्वमात्रविषयसंप्रज्ञातसमाधिप्रज्ञाप्रभवैः संस्कारैः प्रतिबन्धस्तेषां तु संस्काराणां प्रतिबन्धकाभावादेकाग्रभूमावेव सबीजः समाधिः स्यान्न तु निर्बीजो निरोधभूमाविति तत्राह—'तस्यापि निरोधे सर्वनिरोधान्निर्बीजः समाधिः' तस्य संप्रज्ञातस्य समाधेरेकाग्रभूमिजस्य अपिशब्दात् क्षिप्तमूढविक्षिप्तानामपि निरोधे योगिप्रयत्नविशेषेण विलये सति सर्वनिरोधात्समाधेः समाधिजस्य संस्कारस्यापि निरोधान्निर्बीजो निरालम्बनोऽसंप्रज्ञातसमाधिर्भवति। स च सोपायः प्राक् सूत्रितो 'विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः' इति विरम्यतेऽनेनेति विरामो वितर्कविचारानन्दास्मितादिरूपचिन्तात्यागः। तस्य प्रत्ययः कारणं परं वैराग्यमिति यावत्, विरामश्चासौ प्रत्ययश्चित्तवृत्तिविशेष इति वा तस्याभ्यासः पौनःपुन्येन चेतसि निवेशनं तदेव पूर्वं कारणं यस्य स तथा संस्कारमात्रशेषः सर्वथा निर्वृत्तिकोऽन्यः पूर्वोक्तात्सबीजाद्विलक्षणो निर्बीजोऽसंप्रज्ञातसमाधिरित्यर्थः। असंप्रज्ञातस्य हि समाधेर्द्वावुपायावुक्तावभ्यासो वैराग्यं च। तत्र सालम्बनत्वादभ्यासस्य न निरालम्बनसमाधिहेतुत्वं घटत इति निरालम्बनं परं वैराग्यमेव हेतुत्वेनोच्यते। अभ्यासस्तु संप्रज्ञातसमाधिद्वारा प्रणाड्योपयुज्यते। तदुक्तम् 'त्रयमन्तरङ्गं पूर्वेभ्यः' धारणाध्यानसमाधिरूपं साधनत्रयं यमनियमासनप्राणायामप्रत्याहाररूपसाधनपञ्चकापेक्षया सबीजस्य समाधेरन्तरङ्गं साधनम्। साधनकोटौ च समाधिशब्देनाभ्यास एवोच्यते मुख्यस्य समाधेः साध्यत्वात्। 'तदपि बहिरङ्गं निर्बीजस्य' निर्बीजस्य तु समाधेस्तदपि त्रयं बहिरङ्गं परंपरयोपकारि तस्य तु परं वैराग्यमेवान्तरङ्गमित्यर्थः। अयमपि द्विविधो भवप्रत्यय उपायप्रत्ययश्च। 'भवप्रत्ययो विदेहप्रकृतिलयानाम्' विदेहानां सानन्दाना प्रकृतिलयानां च सास्मितानां देवानां प्राग्व्याख्यातानां जन्मविशेषादोषधिविशेषान्मन्त्रविशेषात्तपोविशेषाद्वा यः समाधिः स भवप्रत्ययः भवः संसारः आत्मानात्मविवेकाभावरूपः प्रत्ययः कारणं यस्य स तथा जन्ममात्रहेतुको वा पक्षिणामाकाशगमनवत् पुनःसंसारहेतुत्वान्मुमुक्षुभिर्हेय इत्यर्थः 'श्रद्धावीर्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम्' जन्मौषधिमन्त्रतपःसिद्धव्यतिरिक्तानामात्मानात्मविवेकदर्शिनां तु यः समाधिः स श्रद्धादिपूर्वकः श्रद्धादयः पूर्वं उपाया यस्य स तथा उपायप्रत्यय इत्यर्थः। तेषु श्रद्धा योगविषये चेतसः प्रसादः सा हि जननीव योगिनं पाति। ततः श्रद्दधानस्य विवेकार्थिनो वीर्यमुत्साह उपजायते। समुपजातवीर्यस्य पाश्चात्यासु भूमिषु स्मृतिरुत्पद्यते। तत्स्मरणाच्च चित्तमनाकुलं सत्समाधीयते। समाधिरत्रैकाग्रता। समाहितचित्तस्य प्रज्ञा भाव्यगोचरा विवेकेन जायते। तदभ्यासात्पराच्च वैराग्याद्भवत्यसंप्रज्ञातः समाधिर्मुमुक्षूणामित्यर्थः। 'प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तेः' इति न्यायेन तस्यामपि सर्ववृत्तिनिरोधावस्थायां चित्तपरिणामप्रवाहः तज्जन्यसंकारप्रवाहश्च भवत्येवेत्यभिप्रेत्य संस्कारशेष इत्युक्तम्। तस्य च संस्कारस्य प्रयोजनमुक्तम् 'ततः प्रशान्तवाहिता संस्कारात्' इति। प्रशान्तवाहिता नामावृत्तिकस्य चित्तस्य निरिन्धनाग्निवत्प्रतिलोमपरिणामेनोपशमः। यथा समिदाज्याद्याहुतिप्रक्षेपे वह्निरुत्तरोत्तरवृद्ध्या प्रज्वलति समिदादिक्षये तु प्रथमक्षणे किंचिच्छाम्यति उत्तरोत्तरक्षणेषु त्वधिकमधिकं शाम्यतीति क्रमेण शान्तिर्वर्धते। तथा निरुद्धचित्तस्योत्तरोत्तराधिकः प्रशमः प्रवहति। तत्र पूर्वपूर्वप्रशमजनितः संस्कार एवोत्तरोत्तरप्रशमस्य कारणम्। तदा च निरिन्धनाग्निवच्चित्तं क्रमेणोपशाम्यद्व्युत्थानसमाधिनिरोधसंस्कारैः सह स्वस्यां प्रकृतौ लीयते। तदा च समाधिपरिपाकप्रभवेन वेदान्तवाक्यजेन सम्यग्दर्शनेनाविद्यायां निवृत्तायां तद्धेतुकदृग्दृश्यसंयोगाभावाद्वृत्तौ पञ्चविधायामपि निवृत्तायां स्वरूपप्रतिष्ठः

पुरुषः शुद्धः केवलो मुक्त इत्युच्यते । तदुक्तम् 'तदा द्रष्टुः स्वरूपेऽवस्थानम्' इति । तदा सर्ववृत्तिनिरोधे वृत्तिदशाया तु नित्यापरिणामिचैतन्यरूपत्वेन तस्य सर्वदा शुद्धत्वेऽप्यनादिना दृश्यसंयोगेनाविवेकेनान्तःकरणतादात्म्याध्यासादन्तःकरणवृत्तिसारूप्यं प्राप्नुवन्नभोक्तापि भोक्तेव दुःखानां भवति । तदुक्तम् 'वृत्तिसारूप्यमितरत्र' इतरत्र वृत्तिप्रादुर्भावे । एतदेव विवृतं द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थं चित्तमेव द्रष्टृदृश्योपरक्तं विषयिविषयनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनमपि चेतनमिव स्फटिकमणिकल्पं सर्वार्थमित्युच्यते । तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः । तदसंख्येयवासनाभिश्चित्तमपि परार्थं संहत्यकारित्वात् यस्य भोगापवर्गार्थं तस्य एव परश्चेतनोऽसंहतः पुरुषो न तु घटादिवत् संहत्यकारि चित्तं चेतनमित्यर्थः । एवं च विशेषदर्शिन आत्मभावभावनानिवृत्तिः । एवं योऽन्तःकरणपुरुषयोर्विशेषदर्शी तस्य यान्तःकरणे प्रागविवेकवशादात्मभावभावनासीत्सा निवर्तते भेददर्शने सत्यभेदभ्रमानुपपत्तेः । सत्त्वपुरुषयोर्विशेषदर्शनं च भगवदर्पितनिष्कामकर्मसाध्यं तल्लिङ्गं च योगभाष्ये दर्शितम्—यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते तथा मोक्षमार्गश्रवणेन सिद्धान्तरुचिवशात् यस्य लोमहर्षाश्रुपातौ दृश्येते तत्राप्यस्ति विशेषदर्शनबीजमपवर्गमार्गीयं कर्माभिनिर्वर्तितमित्यनुमीयते । यस्य तु तादृशं कर्मबीजं नास्ति तस्य मोक्षमार्गश्रवणे पूर्वपक्षयुक्तिषु रुचिर्भवत्यरुचिश्च सिद्धान्तयुक्तिषु । तस्य कोऽहमासं कथमहमासमित्यादिरात्मभावभावना स्वाभाविकी प्रवर्तते । सा तु विशेषदर्शिनो निवर्तत इति । एवं सति किं स्यादिति तदाह—'तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्' निम्नं जलप्रवहणयोग्यो नीचदेशः प्राग्भारस्तदयोग्य उच्चप्रदेशः चित्तं च सर्वदा प्रवर्तमानवृत्तिप्रवाहेण प्रवहज्जलतुल्यं तत्प्रागात्मानात्माविवेकरूपविमार्गवाहिविषयभोगपर्यन्तमस्यासीत् अधुना त्वात्मानात्मविवेकमार्गवाहिकैवल्यपर्यन्तं संपद्यत इति, अस्मिंश्च विवेकवाहिनि चित्ते येऽन्तरायास्ते सहेतुका निवर्तनीया इत्याह सूत्राभ्याम् 'तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः', 'हानमेषां क्लेशवदुक्तम्' । तस्मिन्विवेकवाहिनि चित्ते छिद्रेष्वन्तरालेषु प्रत्ययान्तराणि व्युत्थानरूपाण्यहंममेत्येवंरूपाणि व्युत्थानानुभवजेभ्यः संस्कारेभ्यः क्षीयमाणेभ्योऽपि प्रादुर्भवन्ति । एषां च संस्काराणां क्लेशानामिव हानमुक्तम् यथा क्लेशा अविद्यादयो ज्ञानाग्निना दग्धबीजभावा न पुनश्चित्तभूमौ प्ररोहं प्राप्नुवन्ति तथा ज्ञानाग्निना दग्धबीजभावाः संस्काराः प्रत्ययान्तराणि न प्ररोढुमर्हन्ति ज्ञानाग्निसंस्कारास्तु यावच्चित्तमनुशेरत इति । एवं च प्रत्ययान्तरानुदयेन विवेकवाहिनि चित्ते स्थिरीभूते सति 'प्रसंख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः' प्रसंख्यानं सत्त्वपुरुषान्यताख्यातिः शुद्धात्मज्ञानमिति यावत् तत्र बुद्धेः सात्त्विके परिणामे कृतसंयमस्य सर्वेषां गुणपरिणामानां स्वामिवदाक्रमणं सर्वाधिष्ठातृत्वं तेषामेव च शान्तोदिताव्यपदेश्यधर्मित्वेन स्थितानां यथावद्विवेकज्ञानं सर्वज्ञातृत्वं च विशोका नाम सिद्धिः फलं तद्वैराग्याच्च कैवल्यमुक्तम् 'सत्त्वपुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वं च' 'तद्वैराग्यादपि दोषबीजक्षये कैवल्यम्' इति सूत्राभ्यां । तदेतदुच्यते तास्मिन् प्रसंख्याने सत्यप्यकुसीदस्य फलमलिप्सोः प्रत्ययान्तराणामनुदये सर्वप्रकारं विवेकख्यातेः परिपोषाद्धर्ममेघः समाधिर्भवति 'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्' इति स्मृतेर्धर्मं प्रत्यग्ब्रह्मैक्यसाक्षात्कारं मेहति सिञ्चतीति धर्ममेघस्तत्त्वसाक्षात्कारहेतुरित्यर्थः । ततः क्लेशकर्मनिवृत्तिः ततो धर्ममेघात्समाधेर्धर्माद्वा क्लेशानां पञ्चविधानामविद्यास्मितारागद्वेषाभिनिवेशानां कर्मणां च रक्तकृष्णशुक्लभेदेन त्रिविधानामविद्यामूलानामविद्याक्षये बीजक्षयादात्यन्तिकी निवृत्तिः कैवल्यं भवति । कारणनिवृत्त्या कार्यनिवृत्तेरात्यन्तिक्या उचितत्वादित्यर्थः । एवं स्थिते युञ्जन्नेवं सदात्मानमित्यनेन संप्रज्ञातः समाधिरेकाग्रभूमावुक्तः । नियतमानस इत्यनेन तत्फलभूतोऽसंप्रज्ञातसमाधिर्निरोधभूमावुक्तः । शान्तिमिति निरोधसमाधिजसंस्कारफलभूता प्रशान्तवाहिता,

निर्वाणपरमामिति धर्ममेघस्य समाधेस्तत्त्वज्ञानद्वारा कैवल्यहेतुत्वम्, मत्संस्थामित्यनेनौपनिषदाभिमतं कैवल्यं दर्शितम्। यस्मादेवं महाफलो योगस्तस्मात्तं महता प्रयत्नेन संपादयेदित्यभिप्रायः॥ १९ ॥

**शं० टी०**—योगमात्मविशुद्धय इति वचनाद्योगानुष्ठानस्य फलमात्मविशुद्धिरात्मविशुद्धेस्तु फलमप्रतिबद्धज्ञानसिद्धिद्वारा ब्रह्मनिर्वाणमेवेति सूचयितुं योगिनो ब्रह्मविदो जीवत एव मुक्तिफलमाह—**युञ्जन्निति**। योगी योगनिष्ठापरायणो यतिरेवमेकाकित्वनिराशिष्ट्वापरिग्रहत्वसमकायशिरोग्रीवत्वस्थिरत्वनासिकाग्रदृष्टृत्वदिगनवेक्षितृत्ववीतभयत्वब्रह्मचारिव्रतस्थत्वप्रशान्तत्वादिविशेषणविशिष्टो भूत्वा निरुक्तलक्षण आसन उपविश्यात्मानमन्तःकरणं ब्रह्मणि सदा युञ्जन्ननुसंधानं कुर्वन्नियतमानसः श्रद्धया तीव्रमुमुक्षया चिरकालं नित्यनिरन्तरसमनुष्ठितसमाध्यभ्यासबलेन नियतं निश्चलं सर्वबाह्यवासनानिःशेषसंक्षयवशाद्विपरीतप्रत्ययानुत्पत्तौ निर्विकारात्मना स्थितं मानसम् "मनसैवानुद्रष्टव्यम्" इति श्रवणान्मनुत इदमेवाहमस्मीति स्वात्मना ब्रह्म साक्षात्क्रियतेऽनेनेति मनः मन एव मानसं यस्य स नियतमानसोऽप्रतिबद्धात्मविज्ञानो भूत्वा निर्वाणपरमां निर्वाणं शरीरसंबन्धरहितं परमं परमपुरुषार्थलक्षणं कैवल्यं यया सा ताम्। यद्वा निर्वाणं मोक्षरूपं परमं निरतिशयसुखं यस्यां सा तामत एव मत्संस्थां ममैव संस्था स्थितिर्यत्र नान्यस्य बुद्ध्यादेस्ताम्। यद्वा मम रूपेण संस्था यया ताम्। यद्वा मद्भावापत्तिरूपां ब्रह्मात्मना स्थितिलक्षणां शान्तिं सर्वोपरतिमात्यन्तिकसंसारनिवृत्तिरूपामधिगच्छति प्राप्नोतीत्यर्थः। एतेन योगस्य फलं मुक्तेस्तृप्तिवत्स्वप्रत्यक्षं यतस्ततो मुमुक्षोर्यतेः श्रवणमात्रसंभावितमुक्तत्वभ्रममुत्सृज्यावश्यं विदेहमुक्त्यै समाधिः कर्तव्य इति सूचितं भवति ॥ १९ ॥

**श्री० टी०**—योगाभ्यासफलमाह—**युञ्जन्नेवमिति**। एवमुक्तप्रकारेण सदा आत्मानं मनो युञ्जन्समाहितं कुर्वन्नियतं निरुद्धं मानसं चित्तं यस्य सः शान्तिं संसारोपरतिं प्राप्नोति। कथंभूताम् निर्वाणं परमं प्राप्यं यस्यां तां मत्संस्थां मद्रूपेणावस्थितिम्॥ १९ ॥

**स० टी०**—एवं पूर्वोक्तरीत्या हि योगाभ्यासपरो मुनिः॥ वैराग्याभ्यासयोगेन मनः कुर्वन्समाहितम् ॥ १ ॥ अभ्यासातिशयेनैव निरुद्धं येन मानसम्॥ वृत्तिरूपा विकारा वा निरुद्धा येन मानसाः॥ २ ॥ स वृत्त्युपरतिं शान्तिं निर्वाणपरमां तथा॥ तत्त्वबोधसमुत्पत्तिद्वारेणाज्ञानमान्तरम् ॥ ३ ॥ सकार्यमपबाध्याशु मुक्तिपर्यवसायिनीम्॥ मत्स्वरूपपरानन्दरूपा निष्ठां समश्नुते ॥ ४ ॥ १९ ॥

**भा० टी०**—अथेदानीं योगफलमाह—**युञ्जन्निति**। एवं यथोक्तेन विधानेन योगी आत्मानं मनः सदा सर्वदा युञ्जन्समाधानं कुर्वन् नियतं संयतं मानसं मनो यस्य स योगान्नियतमानसो भूत्वा शान्तिमुपरतिमविद्यानिवृत्तिलक्षणां ब्रह्मविद्यां कीदृशीं निर्वाणं मुक्तिः सैव परमा निष्ठा यस्याः मोक्षस्यानन्यसाधनभूताम् "तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति श्रुतेः। तर्हि मच्चित्तो युक्त आसीत मत्पर इति किमर्थमुक्तमित्याशङ्क्याह—मत्संस्थां मदधीनां योगेनाराधितान्मत्तः सा लभ्यत इत्यर्थः। तथाच वक्ष्यति 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येनमामुपयान्ति ते' इति। अधिगच्छति प्राप्नोति॥ १९ ॥

**प० टी०**—अथ योगाभ्यासफलमाह—**युञ्जन्निति**। एवममुना प्रकारेण योग्यभ्यासरत आत्मानं मनः समाहितं कुर्वन्नियतं स्वाधीनं मानसं यस्य तथाविधः सन् शान्तिं संसारोपरममधिगच्छति। किंभूतां, निर्वाणं परमं प्राप्तव्यस्थानं यस्याम्, मयि संस्था स्थितिर्यया सा मदाकारेण संस्थानमित्यर्थः। श्रुतिरपि तैत्तिरीयके—"युञ्जानः प्रथमं मनस्तत्त्वाय सविता धियः" इति। भाष्यम्—प्रथमं प्रारम्भे मनो युञ्जानः स्वाधीनं कुर्वाणोऽनन्तरं तत्त्वायात्मप्राप्तये धियो बुद्धीर्युञ्जानः पुरुषः सविता स्वयमात्मैव भवति॥ १९॥

**रा० टी०**—समाधेः फलमाह—**युञ्जन्निति**। नियतमानसो यतचित्तः योगी योगानुष्ठाता एवमुक्तप्रका-

रेण सदात्मानं युञ्जन् ध्यायन् आत्मानं मनो भगवति युक्तं कुर्वन्निति वा निर्वाणपरमां शरीरत्यागोत्तरकालीनां मत्संस्थां मयि स्थितिरूपां शान्तिमधिगच्छति प्राप्नोति न जीवन्मुक्तिमात्रमाप्नोतीत्यर्थः ॥ १९ ॥

**नात्यश्नतस्तु योगोऽस्ति न चैकान्तमनश्नतः ॥**
**न चातिस्वप्नशीलस्य जाग्रतो नैव चार्जुन ॥ १६ ॥**

**त० टी०**—एवं महाफलं योगमभिधाय तत्साधनावशिष्टमाहारनियममाह—**नात्यश्नत** इति द्वाभ्याम् । अत्यश्नतः अत्यन्तमधिकं भुञ्जानस्य योगो ध्याननिष्ठा न भवति । एकान्तमत्यन्तमनश्नतोऽभुञ्जानस्यापि योगो नास्ति । तथाऽतिनिद्राशीलस्यातिजाग्रतश्च योगो नास्ति ॥ १६ ॥

**म० टी०**—एवं योगाभ्यासनिष्ठस्याहारादिनियममाह द्वाभ्याम्—**नातीति** । यद्धुक्तं सज्जीर्यति शरीरस्य च कार्यक्षमतां संपादयति तदात्मसंमितमन्नं तदतिक्रम्य लोभेनाधिकमश्नतो न योगोऽस्ति अजीर्णदोषेण व्याधिपीडितत्वात् न चैकान्तमनश्नतो योगोऽस्ति अनाहारादत्यल्पाहाराद्वा रसपोषणाभावेन शरीरस्य कार्याक्षमत्वात् "यदुह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" इति शतपथश्रुतेः । तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाऽश्नीयादित्यर्थः । अथवा 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इत्यादि योगशास्त्रोक्तपरिमाणादधिकं न्यूनं वाऽश्नतो योगो न संपद्यत इत्यर्थः । तथाऽतिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति हे अर्जुन सावधानो भवेत्याभिप्रायः । एकश्चकार उक्ताहारातिक्रमसमुच्चयार्थः अपरोऽत्रानुक्तदोषसमुच्चयार्थः । यथा मार्कण्डेयपुराणे—'नाध्मातः क्षुधितः श्रान्तो न च व्याकुलचेतनः । युञ्जीत योगं राजेन्द्र योगी सिद्ध्यर्थमात्मनः ॥ नातिशीते न चैवोष्णे न द्वन्द्वे नानिलान्विते । कालेष्वेतेषु युञ्जीत न योगं ध्यानतत्परः' इत्यादि ॥ १६ ॥

**शं० टी०**—योगी युञ्जीत सततमित्यारभ्यैतच्छ्लोकपर्यन्तं योगं योगाङ्गानि योगासनं योगिनो योगस्य फलं च प्रतिपाद्य पुनरपीदानीं योगाभ्यासिन एवाहारादिबहिरङ्गमन्तरङ्गयोगानन्दं च प्रतिपादयति—**नात्यश्नतस्त्विति** । "यदात्मसंमितमन्नं तदवति न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" इति श्रवणात् श्रुतेरयमर्थः—आत्मसंमितं स्वोदरपरिमाणमनुकूलं च यदन्नं भुज्यते तदन्नं भोक्तारमवति धर्मनिर्वाहाय च भवति न हिनस्ति धातुवैषम्यं संपाद्य पुरुषं न हन्ति न पीडयति च यद्भूयः स्वोदरपरिमाणादतिरिक्तमन्नं भुज्यते तद्धिनस्ति शूलादिकमुत्पाद्य पुरुषं हन्ति धर्मं च नाशयति यत्कनीयः यत्कनीयोऽत्यल्पमन्नं भुज्यते न तत्पुरुषमवति क्षुन्निवृत्त्यै धर्मनिर्वाहाय च क्षमं न भवति, ततः परिमितमेव भोक्तव्यमिति सिद्धम् । इममेवार्थं श्रीभगवानप्याह—अत्यश्नतः स्वोदरपरिमाणमतिक्रम्य जरयितुमशक्यमन्नमश्नतो बह्वाशिनो योगिनो यतेर्न योगोऽस्ति योगनिष्ठा न सिध्यति, शुश्रूषोरपि यतेः श्रवणं मननं ब्रह्मचर्यं च न सिध्यति, एकान्तं नियमेनानश्नतोऽप्यल्पमश्नतश्च यतेर्योगो नास्त्येव श्रवणं मननं चापि न सिध्यति किंतु स्वोदरपरिमितममेदोवृद्धिकरं चान्नमश्नत एव योगः श्रवणं मननं ब्रह्मचर्यं च दिवास्वापादिदोषराहित्यमपि सिध्यतीत्यर्थः । अथवा 'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थाय चतुर्थमवशेषयेत्' इत्यादिशास्त्रपरिमाणमतीत्याश्नतोऽनश्नतश्च योगो न सिध्यति यथा तथातिस्वप्नशीलस्यात्यन्तनिद्रालोरतिजाग्रतश्च योगो न सिध्यतीत्यर्थः ॥ १६ ॥

**श्री० टी०**—योगाभ्यासनिष्ठस्याहारादिनियममाह—**नेति** द्वाभ्याम् । अत्यन्तमधिकं भुञ्जानस्य एकान्तमत्यन्तमभुञ्जानस्यापि योगः समाधिर्न भवति तथाऽतिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्ति ॥ १६ ॥

**स० टी०**—योगाभ्यासैकनिष्ठस्य प्राहाहारादिसंयमम् ॥ भुक्तं सज्जीर्यति स्वस्य यदन्नं देहधारणम् ॥१॥

तदात्मसंमितं ज्ञेयं तदतिक्रम्य लोभतः ॥ अधिकं चाश्नतो नास्ति योगोऽजीर्णादिदोषतः ॥ २ ॥ अत्यल्पाहारतो नास्ति नास्त्यनाहारतः स च ॥ अथवा योगशास्त्रोक्तमाहारं नैव लङ्घयेत् ॥ ३ ॥ पूरयेदशनेनार्धं तृतीयमुदकेन तु ॥ वायोः संचरणार्थं तु चतुर्थमवशेषयेत् ॥ ४ ॥ निद्रयाक्रान्तचित्तस्य योगाभ्यासो न संभवेत् ॥ ततो नास्त्यतिनिद्रालोर्योगो नास्त्यतिजाग्रतः ॥ ५ ॥ १६ ॥

भा० टी०—योगिन आहारादिनियमं वक्तुं प्रथमं व्यतिरेकमाह—**नेति** । अत्यश्नतः आत्मसंमितादन्नादधिकमश्नतः योगो नास्ति न चैकान्तमात्मसंमितमप्यनश्नतो योगोऽस्ति उभयथापि व्याध्यादिना नाशप्रसङ्गात् । तथाच शतपथश्रुतिः "यदुह वा आत्मसंमितमन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत्कनीयो न तदवति" इति तस्माद्योगी नात्मसंमितादन्नादधिकं न्यूनं वाऽश्नीयात् योगशास्त्रे परिपठितादन्नपरिमाणादतिमात्रं न्यूनं वाश्नतो योगिनो योगो नास्तीति वा व्याख्येयम् । तदुक्तम्—'पूरयेदशनेनार्धं तृतीयमुदकेन तु । वायोः संचरणार्थं तु चतुर्थमवशेषयेत्' इति । एतादृशस्य योग एव न सिध्यति तेन दुःखरूपसमूलसंसारपङ्कहान्या शुद्धत्वाविर्भावस्तु दूरं निरस्त इति सूचयन्संबोधयति—हे अर्जुनेति ॥ १६ ॥

प० टी०—अथाभ्यासनिष्ठस्याहारादिनियममाह—**नात्यश्नत** इति द्वाभ्याम् । अति अत्यन्तमश्नाति जेमति तस्य तथैकान्तमत्यन्तमनश्नत उपोषितस्य तथात्यन्तं स्वप्नशीलस्य निद्रासक्तस्याथवात्यन्तं जाग्रतो योगो दुःखहा दुःखोपशमाय न भवति ॥ १६ ॥

रा० टी०—ध्यानयोगनिष्ठस्याहारादिनियममाह—**नात्यश्नत** इत्यादिद्वाभ्याम् । अति अधिकं भुञ्जानस्य एकान्तं सर्वथैवाभुञ्जानस्य चातिनिद्राशीलस्यातिजाग्रतश्च योगो नैवास्तीत्यर्थः । अत्राशनजागरणनिषेधोऽशक्तस्य शक्तस्य त्वनशनादावपि न योगक्षतिरिति ज्ञेयम् ॥ १६ ॥

**युक्ताहारविहारस्य युक्तचेष्टस्य कर्मसु ॥**
**युक्तस्वप्नावबोधस्य योगो भवति दुःखहा ॥ १७ ॥**

त० टी०—तर्हि कीदृशस्य योगो भवतीत्यपेक्षायामाह—**युक्तेति** । आहारो भोजनं, विहारो विक्रमणं, तौ युक्तौ नियतपरिमाणौ यस्य तस्य । तथोक्तं योगशास्त्रे ' द्वौ भागौ पूरयेदन्नैस्तोयेनैकं प्रपूरयेत् । वायोः संचरणार्थाय चतुर्थमवशेषयेत् ' इति । तथा युक्ता नियता कर्मसु चेष्टा यस्य तथा युक्तौ स्वप्नावबोधौ निद्राजागरौ यस्य तस्य दुःखनाशको योगो निष्पन्नो भवति ॥ १७ ॥

म० टी०—एवमाहारादिनियमविरहिणो योगव्यतिरेकमुक्त्वा तन्नियमवतो योगान्वयमाह—**युक्तेति** । आह्रियत इत्याहारोऽन्नं, विहरणं विहारः पादभ्रमः, तौ युक्तौ नियतपरिमाणौ यस्य तथा अन्येष्वपि प्रणवजपोपनिषदावर्तनादिषु कर्मसु युक्ता नियतकाला चेष्टा यस्य तथा स्वप्नो निद्रा अवबोधो जागरणं तौ युक्तौ नियतकालौ यस्य तस्य योगो भवति साधनपाटवात्समाधिः सिध्यति नान्यस्य । एवं प्रयत्नविशेषेण संपादितो योगः किंफल इति तत्राह—दुःखहेति सर्वसंसारदुःखकारणाविद्योन्मूलनहेतुब्रह्मविद्योत्पादकत्वात्समूलसर्वदुःखनिवृत्तिहेतुरित्यर्थः । अत्राहारस्य नियतत्वं अर्धमशनस्य सव्यञ्जनस्य तृतीयमुदकस्य तु वायोः संचारणार्थं तु चतुर्थमवशेषयेदित्यादि प्रागुक्तम् । विहारस्य नियतत्वं'योजनान्न परं गच्छेत्' इत्यादि । कर्मसु चेष्टाया नियतत्वं वागादिचापलपरित्यागः । रात्रेर्विभागत्रयं कृत्वा प्रथमान्त्ययोर्जागरणं मध्ये स्वपनमिति स्वप्नावबोधयोर्नियतकालत्वम् । एवमन्येऽपि योगशास्त्रोक्ता नियमा द्रष्टव्याः ॥ १७ ॥

शं० टी०—तर्हि कीदृशस्य योगः सिध्यतीत्याह—**युक्ताहारेति** । युक्ताहारविहारस्य युक्तः ' पूरयेदशनेनार्धम ' इति ' न गव्यूतेः परं गच्छेन्न ग्रामे नगरे वसेत् ' इत्यादिशास्त्रनियमेन युक्त आहारोऽन्नं विहारो

विश्रान्त्यै संचारो यस्य तस्य परिमिताहारविहारस्य युक्तचेष्टस्य कर्मसु अन्नादानविसर्गादिक्रियासु युक्ता यावता कार्यसिद्धिस्तावत्परिमिता न तु विशृङ्खला चेष्टा देहेन्द्रियव्यापारो यस्य तस्य, युक्तस्वप्नावबोधस्य स्वप्नो निद्रावबोधो जागरस्तावेतौ युक्तौ परिमितौ 'जागृयाद्दशनाड्यस्तु निद्रा तु दशनाडिकाः। पश्चाज्जागरणं तद्वद्दशनाड्यस्तु योगिनः' इत्युक्तलक्षणलक्षितौ स्वप्नावबोधौ यस्य तस्य योगिनो ब्रह्मनिष्ठस्य आहारविहारनिद्रादीनामतिरिक्तत्वे रजस्तमोवृद्धिस्तया समाधेर्ज्ञानस्य च विच्छित्तिस्ततस्तत्परिमित्या भवितव्यम्। एवंलक्षणस्य यतेर्योगः समाधिर्दुःखहा दुःखान्याध्यात्मिकादीनि जन्मादीनि च सर्वाणि स्वानुष्ठानसमुत्पन्नाप्रतिबद्धबोधेन हन्तीति दुःखहा भवति विदेहमुक्तिं संपादयतीत्यर्थः ॥ १७ ॥

**श्री० टी०**—तर्हि कथंभूतस्य योगो भवतीत्यत आह—युक्तेति। युक्तो नियत आहारो विहारश्च गतिर्यस्य, कर्मसु कार्येषु युक्ता नियतैव चेष्टा यस्य, युक्तौ नियतौ स्वप्नावबोधौ निद्राजागरौ यस्य, तस्य दुःखनिवर्तको योगो भवति सिध्यति ॥ १७ ॥

**स० टी०**—अन्नं विहरणं यस्य नियतं परिमाणतः॥ तथा परिमिता चेष्टा निद्रा जागरणे मिते ॥ १ ॥ सर्वदुःखक्षये हेतुस्तस्य योगोऽस्ति सन्मतेः॥ अभियुक्तैस्तथैवोक्तं योगिनां योगसिद्धये ॥ २ ॥ अत्राहारार्थं कर्म कुर्यादनिन्द्यं कुर्यादाहारं प्राणसंधारणार्थम्॥ प्राणाः संधार्यास्तत्त्वजिज्ञासनार्थं तत्त्वं जिज्ञास्यं येन भूयो न दुःखम्॥ ३ ॥ रजन्या मध्यमौ यामौ कुर्यान्निद्रां न चान्यदा॥ विना प्रयोजनं चेष्टां न कुर्याद्धस्तपादयोः॥ ४ ॥ वृथा चेष्टा वृथा कर्म भवेन्मन्दधियां नृणाम्॥ हितं मेध्यं मितं यस्य भोजनं प्राणधारकम्॥ ५ ॥ गुरुसेवा मुखे यस्य कर्मण्येवाङ्घ्रिसंक्रमः॥ मिता निद्रा मिता वाणी यस्य भागवतस्य च ॥ ६ ॥ योगस्तस्य सकार्यस्याज्ञानस्य स्याद्विनाशकृत्॥ ७ ॥ १७ ॥

**भा० टी०**—अन्वयमाह—युक्तेति। आह्रियत इत्याहारः अन्नं, विहरणं विहारः पादक्रमस्तौ युक्तौ नियतपरिमाणौ यस्य। अन्नस्य युक्तत्वमुक्तमेव पादक्रमस्य नियतत्वं तु 'योजनान्न परं गच्छेत्' इत्युक्तरूपम्। तथा कर्मस्वितरव्यापारेषु युक्ता नियता चेष्टा यस्य स तथा। युक्तौ स्वप्नावबोधौ निद्राजागरौ रात्रेराद्यन्तभागयोर्जागरो मध्ये निद्रेत्येवं नियतकालौ यस्य तस्य योगिनो योगो दुःखहा ज्ञानप्राप्त्या सर्वानर्थमूलभूताविद्यानिवृत्त्या सर्वसंसारदुःखक्षयकृद्भवतीत्यर्थः ॥ १७ ॥

**प० टी०**—किंतु—युक्तेति। युक्तो नियमित आहारो भोजनं विहारश्चेष्टा यस्य तथा कर्मसु कार्येषु ॥१७॥

**रा० टी०**—कथंभूतस्य योगो भवतीत्यत आह—युक्तेति। युक्तौ योगोपेतौ आहारविहारौ भोजनसंचारौ यस्य स तथा तस्य यावता श्रमादिर्न भवति तावदाहारव्यापारवत इत्यर्थः। कर्मसु कार्येषु युक्तचेष्टस्य श्रमानापादकचेष्टायुक्तस्य युक्तस्वप्नावबोधस्य यावन्निद्रावबोधौ योगाविघातकौ तावन्निद्रावबोधोपेतस्य योगो ध्यानयोगः समाधिरिति यावत्, दुःखहा भवतीत्यर्थः ॥ १७ ॥

## यदा विनियतं चित्तमात्मन्येवावतिष्ठते ॥
## निस्पृहः सर्वकामेभ्यो युक्त इत्युच्यते तदा ॥ १८ ॥

**त० टी०**—एवं नियमवान्पुरुषः कदा निष्पन्नयोगो भवतीत्यपेक्षायामाह—यदेति। यदा यस्मिन् काले नियतं विषयान्तरवृत्तिशून्यतया विशेषेण संयतं चित्तमात्मन्येवावतिष्ठते निश्चलं भवति तदा सर्वकामेभ्यो निस्पृहः सन्युक्तः निष्पन्नयोग इत्युच्यते योगज्ञैरिति शेषः ॥ १८ ॥

**म० टी०**—एवमेकाग्रभूमौ संप्रज्ञातं समाधिमभिधाय निरोधभूमावसंप्रज्ञातं समाधिं वक्तुमुपक्रमते—यदेति। यदा यस्मिन् काले परवैराग्यवशाद्विनियतं विशेषेण नियतं सर्ववृत्तिशून्यतामापादितं चित्तं विगतरजस्त-

मस्कमन्तःकरणसत्त्वं स्वच्छत्वात्सर्वविषयाकारग्रहणसमर्थमपि सर्वतो निरुद्धवृत्तिकत्वादात्मन्येव प्रत्यक्चिति अनात्मानुपरक्ते वृत्तिराहित्येऽपि स्वतःसिद्धस्यात्माकारस्य वारयितुमशक्यत्वाच्चितेरेव प्राधान्यात् न्यग्भूतं सदवतिष्ठते निश्चलं भवति तदा तस्मिन्सर्ववृत्तिनिरोधकाले युक्तः समाहित इत्युच्यते । कः यः सर्वकामेभ्यो निःस्पृहः निर्गता दोषदर्शनेन सर्वेभ्यो दृष्टादृष्टविषयेभ्यः कामेभ्यः स्पृहा तृष्णा यस्येति परं वैराग्यमसंप्रज्ञातसमाधेरन्तरङ्गं साधनमुक्तम् । तथा च व्याख्यातं प्राक् ॥ १८ ॥

**शं० टी०**—यद्यपि यदा हि नेन्द्रियार्थेष्विति कूटस्थो विजितेन्द्रियः इति च योगिनो योगारूढत्वं सम्यङ्निरूपितं तथापि ब्रह्मविलक्षणे परिज्ञाते मुमुक्षुभिस्तदाराधनं तदाश्रयणं च कृत्वा ज्ञानं मुक्तिश्च प्राप्तुं शक्यत इति तदेव च पुनर्विस्पष्टयति—**यदेति** । निरुक्तबहिरङ्गान्तरङ्गसाधनसंपत्त्या तीव्रमोक्षेच्छावैराग्याभ्यां च नित्यं योगमभ्यस्यतो योगिनो यतेर्यदा यस्मिन्काले विनियतं विषयसंबन्धो यथा न स्यात्तथा निरन्तराभ्यासबलेनैकाग्र्यमधिगमितं चित्तमात्मनि नित्यानन्दैकरसे प्रत्यगभिन्ने ब्रह्मण्येवावतिष्ठते सर्ववासनाक्षत्या सर्वकामविध्वस्त्या च स्वयं सद्वासनावासितं सत्सर्वदा स्वरूप एव तिष्ठति प्रयत्नेनापि न बाह्यमवलम्बत इत्यर्थः । तदेव विस्पष्टयति—**निःस्पृह इति** । काम्यन्त इति कामाः शब्दादयस्तेभ्यो यत्नादयत्नाद्वा क्वचिद्विषयीभूतेभ्यः सर्वेभ्यश्च यदाऽयं निःस्पृह इच्छाशून्यो भवति तेषु मिथ्यात्वबुद्ध्या इन्द्रियाणि मनश्च न प्रवर्तयति तदा युक्तो योगारूढ इत्युच्यते पण्डितैरिति शेषः ॥ १८ ॥

**श्री० टी०**—कदा निष्पन्नयोगः पुरुषो भवतीत्यपेक्षायामाह—**यदेति** । विनियतं विशेषेण निरुद्धं सच्चित्तमात्मन्येव यदा निश्चलं तिष्ठति, किंच सर्वकामेभ्यः ऐहिकामुष्मिकभोगेभ्यो निःस्पृहो विगततृष्णो भवति तदा युक्तः प्राप्तयोग इत्युच्यते ॥ १८ ॥

**स० टी०**—यस्मिन्काले विशेषेण स्वच्छत्वान्निश्चलं मनः ॥ प्रतीच्येव निरुद्धत्वान्नियमेनावतिष्ठते ॥१॥ दृष्टादृष्टास्पदेभ्यश्च कामेभ्यो दोषदर्शनात् ॥ तृष्णा विनिर्गता यस्य परवैराग्ययोगतः ॥ २ ॥ तदा समाहितो योगी सिद्ध इत्युच्यते बुधैः ॥ ३ ॥ १८ ॥

**भा० टी०**—एतादृशयोगयुक्तः कदा भवतीति तत्राह—**यदेति** । यस्मिन्काले विशेषेण नियतं चित्तं संयतमेकाग्रतामापन्नं निरुद्धं चित्तं बाह्यविषयचिन्तां विहायात्मन्येव प्रत्यगभिन्ने केवलेऽवतिष्ठते स्थितिं लभत इत्यर्थः । सर्वकामेभ्यो दृष्टादृष्टविषयेभ्यः निर्गता निवृत्ता स्पृहा तृष्णा यस्य स तदा तस्मिन्काले युक्त इत्युच्यते ॥१८॥

**प० टी०**—तथा युक्तनिद्राप्रबोधस्य पुरुषस्य परीक्षामाह—**यदेति** । विनियतं निरुद्धं चित्तमात्मन्येवावतिष्ठते, यदा च सर्वकामेभ्यो निःस्पृहो भवति तदा युक्तो निष्पन्नयोग इत्युच्यते ॥ १८ ॥

**रा० टी०**—योगसंपूर्तिस्वरूपमाह—**यदेत्याद्यनेकश्लोकैः** । यदा विशेषेण नियतं विषयेभ्यः प्रत्याहृतं चित्तमात्मन्येवावतिष्ठते सर्वकामेभ्यः निस्पृहश्च यदा तदा युक्तो योगसंपूर्तिमानित्युच्यत इत्यर्थः ॥ १८ ॥

**यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृता ॥**
**योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ १९ ॥**

**त० टी०**—एवं सिद्धयोगयुक्तस्य लक्षणमुक्त्वेदानीं समाधिस्थस्य तस्योपमामाह—**यथेति** । निवातस्थो वातरहिते देशे स्थितो दीपो यथा नेङ्गते न चलति सोपमा स्मृता चिन्तिता योगविद्भिः । कस्य यतचित्तस्य योगिनः संयतान्तःकरणस्य योगं युञ्जतोऽनुतिष्ठत आत्मन आत्मस्वरूपस्य निवातस्थनिश्चलसुप्रकाशदीपवन्निवृत्तविक्षेपतया निश्चलसुप्रकाशज्ञानात्मा भासते इत्यर्थः ॥ १९ ॥

**म० टी०**—समाधौ निर्वृत्तिकस्य चित्तस्योपमानमाह—**यथेति** । दीपचलनहेतुना वातेन रहिते देशे स्थितो

दीपो यथा चलनहेत्वभावान्नेङ्गते न चलति सोपमा स्मृता स दृष्टान्तश्चिन्तितो योगज्ञैः । कस्य योगिन एकाग्रभूमौ संप्रज्ञातसमाधिमतोऽभ्यासपाटवात् यतचित्तस्य निरुद्धसर्वचित्तवृत्तेरसंप्रज्ञातसमाधिरूपं योगं निरोधभूमौ युञ्जतोऽनुतिष्ठतो य आत्मान्तःकरणं तस्य निश्चलतया सत्त्वोद्रेकेण प्रकाशकतया च निश्चलो दीपो दृष्टान्त इत्यर्थः । आत्मनो योगं युञ्जत इति व्याख्याने दार्ष्टान्तिकालाभः सर्वावस्थस्यापि चित्तस्य सर्वदात्माकारतयात्मपदवैयर्थ्यं च, नहि योगेनात्माकारता चित्तस्य संपाद्यते किंतु स्वत एवात्माकारस्य सतोऽनात्माकारता निवर्त्यत इति तस्माद्दार्ष्टान्तिकप्रतिपादनार्थमेवात्मपदम् । यतचित्तस्येति भावपरो निर्देशः कर्मधारयो वा यतस्य चित्तस्येत्यर्थः ॥ १९ ॥

**शं० टी०**—योगमारुह्य तिष्ठतो यतेश्चित्तं कथं तिष्ठतीत्याकाङ्क्षायां तच्चित्तस्थितेरुपमानमाह तदनुष्ठितयोगस्यासंप्रज्ञातसमाधित्वं सूचयितुम्—**यथेति** । आत्मन इति कर्मणि षष्ठी आत्मन आत्मानं विषयीकृत्य प्रवर्तितं योगम् । यद्वा आत्मनः सर्वोपलब्धिसिद्धिसाधनं योगं समाधिं युञ्जतः सादरं नित्यनिरन्तरं समनुतिष्ठतो योगिनो यतेः परमहंसस्य यतचित्तस्य यतं ब्रह्मण्येव ब्रह्माकारेण निश्चलतया सदा स्थापितं चित्तं येन तस्य यतचित्तस्य ब्रह्मण्येव स्थिरीभूतमनसः सैवोपमा उपमीयते अनयेत्युपमा स एव दृष्टान्तः निवातस्थोऽन्तर्गृहस्थो दीपो यथा नेङ्गते न चलति तथा ब्रह्मणि स्थापितं ब्रह्मविच्चित्तं न चलति ब्रह्मण्येव ब्रह्मात्मना निश्चलीभूय तिष्ठत्ययमेवासंप्रज्ञातः समाधिः । तदुक्तम् 'मनसो वृत्तिशून्यस्य निर्विकारात्मना स्थितिः । असंप्रज्ञातनामासौ समाधिर्योगिनां प्रियः' इति ॥ १९ ॥

**श्री० टी०**—आत्मैक्याकारतयावस्थितस्य चित्तस्योपमानमाह—**यथेति** । वातशून्ये देशे स्थितो दीपो यथा नेङ्गते न विचलति सा उपमा दृष्टान्तः । कस्य आत्मविषयं योगं युञ्जतोऽभ्यस्यतो योगिनो यतं नियतं चित्तं यस्य तस्य । निष्कम्पतया प्रकाशकतया चाचञ्चलं तच्चित्तं तद्वत्तिष्ठतीत्यर्थः ॥ १९ ॥

**स० टी०**—समाहितधियः प्रत्यगानन्दे निश्चलस्य च ॥ योगिनो भगवानाहोपमानं बोधनाय वै ॥१॥ वातेन रहिते देशे स्थितो दीपो यथाचलः ॥ समाहितधियः सोऽयं दृष्टान्तश्चिन्तितो बुधैः ॥ २ ॥ निरोधभूमौ सततं समाधिमनुतिष्ठतः ॥ सत्त्वोद्रेकेण यच्चित्तं प्रकाशकतयाचलम् ॥ ३ ॥ निश्चलो दीप एतस्य दृष्टान्तो हरिणेरितः ॥ ४ ॥ १९ ॥

**भा० टी०**—योगिनः समाहितचित्तस्योपमानमाह—**यथेति** । यथा प्रदीपो निवाते वायुवर्जिते देशे स्थितो नेङ्गते न चलति उपमीयतेऽनयेत्युपमा सा योगज्ञैः चित्तप्रचारज्ञैः स्मृता चिन्तिता योगिनो यतचित्तस्य संयतान्तःकरणस्यात्मनो योगं समाधिमनुतिष्ठतः । अत्रोत्थानिकायां समाहितं च तच्चित्तमिति कर्मधारयः । योगिनः समाहितचित्तस्येति व्यधिकरणे षष्ठ्यौ । एवं मूले तद्भाष्ये च ज्ञेयम् । एवं योगाभ्यासबलादेकाग्रीभूतं निवातप्रदीपकल्पं सदित्युत्तरश्लोकस्थभाष्यात् योगिनो यथोक्तविशेषणवतश्चित्तस्थैर्यस्येति शेष इति तु भाष्यटीकाकाराः । एतेनात्मनो योगं नियुञ्जत इति व्याख्याने दार्ष्टान्तिकालाभः सर्वावस्थस्यापि चित्तस्य सर्वदात्माकारतयात्मपदवैयर्थ्यं च । नहि योगेनात्माकारता चित्तस्य संपाद्यते, किंतु स्वत एवात्माकारस्य सतोऽनात्माकारता निवर्त्यत इति तस्माद्दार्ष्टान्तिकलाभप्रतिपादनार्थमात्मपदमिति प्रत्युक्तम् । विवेकादियुक्तेन मनसाऽविद्यानिवृत्त्यात्मा स्वयमेव प्रकाशते इत्यर्थे मनसैवानुद्रष्टव्यमितिवत् योगेनानात्माकारतां चित्तस्य निवर्त्य स्वतःसिद्धामात्माकारतां स्फुरणरूपां समाधिमनुतिष्ठत इत्यर्थके आत्मनो योगं युञ्जत इतिवाक्ये आत्मपदस्य सार्थक्यात् । अन्यथा आत्मसंस्थं मनः कृत्वेति वक्ष्यमाणात्मपदवैयर्थ्यप्रसङ्गात् । युञ्जन्नेवं सदात्मानमितिवत् आत्मनोऽन्तःकरणस्य समाधिं निरोधमनुतिष्ठतो संप्रज्ञातसमाध्यभिमुखस्येति भाष्यार्थसंभवेनात्मपदसार्थक्याच्च । अत एव योगिनो यतचित्तस्य निरुद्धसर्ववृत्तेरसंप्रज्ञातसमाधिरूपं योगं

निरोधभूमौ युञ्जतोऽनुतिष्ठतः य आत्मान्तःकरणं तस्य निश्चलतया सत्त्वोद्रेकेण प्रकाशकतया च निश्चलो दीपो दृष्टान्त इत्यप्यपास्तं, निश्चलताप्रतिपादकयतपदसमभिव्याहारात् समीपत्वाच्चान्वययोग्यं चित्तपदं विहायात्मपदस्य दार्ष्टान्तिकपरत्वानौचित्यात् । असंप्रज्ञातसमाधौ चित्तस्य कथमपि पृथगज्ञायमानत्वात् असंप्रज्ञातसमाध्यभिमुखस्य योगिनस्तत्सिद्धिपूर्वकाले यदेकाग्रीभूतं चित्तं तस्यायं दृष्टान्तो नतु निरुद्धसर्ववृत्तेरसंप्रज्ञातसमाधिस्थस्य योगिनोऽन्तःकरणस्येति विद्वद्भिराकलनीयम् ॥ १९ ॥

प० टी०–अथात्माकारतया स्थितस्योपमानमाह–**यथेति** । वातशून्यं स्थानं निवातं तत्र स्थितो दीपो यथा नेङ्गते न चलति तत्रत्यं पदार्थमात्रं स्पष्टतया प्रकाशयति । प्रकृते सोपमा दृष्टान्तः स्मृतः । कस्य, आत्मनो योगं युञ्जतोऽभ्यस्यतो योगिनो विक्षेपशून्यचित्तस्य ॥ १९ ॥

रा० टी०–योगसंपन्नः कथं तिष्ठतीत्यत आह–**यथेति** । वायुशून्यदेशस्थो दीपो यथा नेङ्गते न चलति सा उपमा दृष्टान्तः । कस्येत्यत उक्तम्–**योगिन इति** । आत्मनो योगं भगवद्विषयसमाधिं युञ्जतः कुर्वतः योगिनः यतचित्तस्येति ॥ १९ ॥

**यत्रोपरमते चित्तं निरुद्धं योगसेवया ॥**
**यत्र चैवात्मनात्मानं पश्यन्नात्मनि तुष्यति ॥ २० ॥**

त० टी०–एवमेतावता योगसाधनमासनाहारादियोगयुक्तस्य लक्षणोपमे चाभिधायेदानीं सफलं सिद्धयोगं लक्षयति–**यत्रेत्यादिसार्धैस्त्रिभिः** । यत्र यस्मिन्नवस्थाविशेषे योगसेवया योगाभ्यासेन निरुद्धं चित्तमुपरमते इतरस्मात् । यत्र चावस्थाविशेषे आत्मना शुद्धेन मनसा आत्मानं पश्यन्नन्यनिरपेक्ष आत्मन्येव तुष्यति ॥ २० ॥

म० टी०–एवं सामान्येन समाधिमुक्त्वा निरोधसमाधिं विस्तरेण विवरीतुमारभते–**यत्रोपरमत इति** । यत्र यस्मिन् परिणामविशेषे योगसेवया योगाभ्यासपाटवेन जाते सति चित्तं निरुद्धं एकविषयकवृत्तिप्रवाहरूपामेकाग्रतां त्यक्त्वा निरिन्धनाग्निवदुपशाम्यन्निर्वृत्तिकतया सर्ववृत्तिनिरोधरूपेण परिणतं भवति । यत्र च यस्मिंश्च परिणामे सति आत्मना रजस्तमोऽनभिभूतशुद्धसत्त्वमात्रेणान्तःकरणेनात्मानं प्रत्यक्चैतन्यं परमात्माभिन्नं सच्चिदानन्दघनमनन्तमद्वितीयं पश्यन् वेदान्तप्रमाणजया वृत्त्या साक्षात्कुर्वन्नात्मन्येव परमानन्दघने तुष्यति न देहेन्द्रियसङ्घाते न वा तद्भोग्येऽन्यत्र । परमात्मदर्शने सत्यतुष्टिहेत्वभावात्तुष्यत्येवेति वा । तमन्तःकरणपरिणामं सर्वचित्तवृत्तिनिरोधरूपं योगं विद्यादिति परेणान्वयः । यत्र काले इति तु व्याख्यानमसाधु तच्छब्दानन्वयात् ॥ २० ॥

शं० टी०–एवंलक्षणसंपन्नो यश्चित्तपरीपाकविशेषः स एव योगो ज्ञातव्य इति वक्तुं तल्लक्षणान्याह–**यत्रेतित्रिभि** । बहिरङ्गान्तरङ्गसाधनसिद्धया तीव्रमोक्षेच्छया च विजृम्भितया योगसेवया योगो योगाङ्गसविकल्पसमाधिर्विजातीयप्रत्ययोदयराहित्येन केवलचित्प्रत्ययमात्रोदयलक्षणस्तस्य सेवया निरन्तरावृत्त्या निरुद्धं विपरीतवृत्तिर्यथा न स्यात्तथा चिरकालं ब्रह्मप्रत्ययावृत्तावेव स्थापितं चित्तं स्वयं निःशेषविनष्टसर्वबाह्यवासनापटलं सत् यत्र यस्यां दशायां स्वस्य केवलशुद्धसत्त्वांशमात्रावशेषरूपायां प्राप्तायां सत्यामुपरमते उपशमं गच्छति वृत्त्यन्तरपरिणाममुज्झित्वा ध्येयात्मनैव निवातस्थप्रदीपवन्निष्कम्पं तिष्ठतीत्यर्थः । किंच यत्र यस्यां चित्तपरिपाकविशेषदशायामयं ब्रह्मविदुत्तम आत्मनि निर्मलान्तःकरणे व्योम्नि राकाचन्द्रबिम्बवत्प्रकाशमानं वृत्त्यारूढं चिदानन्दैकरसमात्मानं परं ब्रह्मात्मना स्वात्मना ब्रह्मैवाहमिति स्वस्वरूपत्वेन पश्यन्साक्षादपरोक्षीकुर्वन् तुष्यत्यानन्दति मुक्तः कृतार्थोऽस्मीति मोदते " स मोदते

मोदनीयं हि लब्ध्वा " इतिश्रुतेः आत्मानि तुष्यतीति योगारोहणं कृतवतो महात्मन आत्मसंसारमोक्षणं तत्सुखं च प्रत्यक्षं यतस्ततः श्रवणादिना विज्ञातात्मतत्त्वस्य यतेर्योगारोहणेनैवात्मोद्धरणं सिध्यति तदवश्यं कर्तव्यमित्यनेन सूचितं भवति ॥ २० ॥

**श्री० टी०**—यं संन्यासमिति प्राहुर्योगं तं विद्धि पाण्डवेत्यादौ कर्मैव योगशब्देनोक्तं, नात्यश्नतस्तु योगोऽस्तीत्यादौ तु समाधिर्योगशब्देनोक्तः, तत्र मुख्यो योगः क इत्यपेक्षायां समाधिमेव स्वरूपतः फलतश्च लक्षयन्स एव मुख्यो योग इत्याह—**यत्रेति** सार्धैस्त्रिभिः । यत्र यस्मिन्नवस्थाविशेषे योगाभ्यासेन निरुद्धं चित्तमुपरतं भवतीति योगस्य स्वरूपलक्षणमुक्तम् । तथाच पातञ्जलं सूत्रम् ' योगश्चित्तवृत्तिनिरोधः ' इति । इष्टप्राप्तिलक्षणेन फलेन तमेव लक्षयति यत्र यस्मिन्नवस्थाविशेषे आत्मना शुद्धेन मनसाऽऽत्मानमेव पश्यति न तु देहादि पश्यंश्चात्मन्येव तुष्यति न तु विषयेषु । यत्रेत्यादीनां यच्छब्दानां तं योगसंज्ञितं विद्यादिति चतुर्थेनान्वयः ॥ २० ॥

**स० टी०**—एवं सामान्यतो योगं प्रोच्येदानीं विशेषतः ॥ समाधिं विस्तरेणाह भगवान्योगिनां गतिः ॥ १ ॥ परिणामविशेषे हि यस्मिन्नभ्यासपाटवात् ॥ जाते चित्तं निरुद्धं सच्छान्तं निःस्नेहदीपवत् ॥ २ ॥ यस्मिंश्च परिणामे सत्यात्मानन्दं चिदद्वयम् ॥ वेदान्तमानसं जातवृत्त्या पश्यंश्चिदात्मनि ॥ ३ ॥ तुष्यत्यात्मसुखादन्यत्तोषहेतोरभावतः ॥ आनन्दः पर एवात्मा भेदसंसर्गवर्जितः ॥ ४ ॥ स एव स्वस्वरूपेण व्यज्यते पुण्यकर्मभिः ॥ यावद्यावत्तमोऽपैति बुद्धौ धर्मसमाहितम् ॥ ५ ॥ तावत्तावद्धियः स्वास्थ्यं तावत्तावत्सुखोन्नतिः ॥ ६ ॥ २० ॥

**भा० टी०**—द्विविधः समाधिः संप्रज्ञातोऽसंप्रज्ञातश्चेति । तत्र ध्येयैकाकारसत्त्ववृत्तिर्भेदेन कथंचिज्ज्ञायमाना आद्यः, कथमपि पृथगज्ञायमाना सैव सत्त्ववृत्तिर्द्वितीयः । तत्राद्यं प्रदर्श्य इदानीं द्वितीयस्य लक्षणं विवक्षन्नाह—**यत्रेति** । एवं योगाभ्यासबलात् एकाग्रीभूतं निवातप्रदीपकल्पं सत् यत्र यस्मिन्काले उपरमते चित्तमुपरतिं गच्छतीति योगसेवया योगानुष्ठानेन निरुद्धं सर्वतो निरुद्धं निवारितप्रचारं यत्र चैव यस्मिंश्च काले आत्मना समाधिपरिशुद्धेनान्तःकरणेनात्मानं परं तत्पदार्थं ज्योतिःस्वरूपं पश्यन्नुपलभमानः त्वंपदार्थं आत्मन्येव तुष्यति परमात्मानं प्रत्यक्चैतन्य एव तद्भावेनापरोक्षीकुर्वन् अतुष्टिनिदानाभावात् तुष्टिं लभत एवेत्यर्थः ॥ २० ॥

**प० टी०**—अथ निष्पन्नयोगस्वरूपमाह—**यत्रेत्यादि**चतुर्भिः । यत्र यस्यामवस्थायां योगसेवया निरन्तराभ्यासेन निरुद्धं विक्षेपरहितं सदुपरमते उपरमं विषयेभ्यो व्यावृत्तिं प्राप्नोति । यत्र चात्मनैव शुद्धान्तःकरणेनात्मानं पश्यन् ज्ञानदृष्ट्यानुभवन्नात्मन्येव सुखस्वरूपे तुष्यति सुखरूपतया तिष्ठति तं विद्यादिति चतुर्थेनान्वयः ॥ २० ॥

**रा० टी०**—**यत्रेति** । योगसेवया निरुद्धं चित्तं यत्र समाधावुपरमते बाह्यव्यापारहीनं भवति । यत्र चैव यस्मिन्नेव समाधियोगे आत्मना मनसा आत्मानं भगवन्तं पश्यन्नात्मनि देहे तुष्यति तोषमाप्नोतीत्यर्थः । यच्छब्दयोस्तमित्यग्रेऽन्वयः । एवमुत्तरत्रापि ॥ २० ॥

**सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम् ॥**
**वेत्ति यत्र न चैवायं स्थितश्चलति तत्त्वतः ॥ २१ ॥**

**त० टी०**—आत्मन्येव तोषे हेतुमाह—**सुखमिति** । यत्र यस्मिन्नवस्थाविशेषे यत्तदतीन्द्रियमिन्द्रियनिरपेक्षं बुद्ध्यैकग्राह्यमात्यन्तिकं नित्यं सुखं योगी वेत्ति अनुभवति । यत्र यस्मिन्सुखे च स्थितः तत्त्वत आत्मस्वरूपान्नैव चलति ॥ २१ ॥

**म० टी०**—आत्मन्येव तोषे हेतुमाह—**सुखमिति** । यत्र यस्मिन्नवस्थाविशेषे आत्यन्तिकमनन्तं निरतिशयं ब्रह्मस्वरूपमतीन्द्रियं विषयेन्द्रियसंप्रयोगानभिव्यङ्ग्यं बुद्धिग्राह्यं बुद्ध्यैव रजस्तमोमलरहितया सत्त्वमात्रवाहिन्या ग्राह्यं सुखं योगी वेत्ति अनुभवति यत्र च स्थितोऽयं विद्वांस्तत्त्वत आत्मस्वरूपान्नैव चलति तं योगसंज्ञितं विद्यादिति परेणान्वयः समानः । अत्रात्यन्तिकमिति ब्रह्मसुखस्वरूपकथनम्, अतीन्द्रियमिति विषयसुखव्यावृत्तिः, तस्य विषयेन्द्रियसंयोगसापेक्षत्वात् । बुद्धिग्राह्यमिति सौषुप्तसुखव्यावृत्तिः सुषुप्तौ बुद्धेर्लीनत्वात् समाधौ निर्वृत्तिकायास्तस्याः सत्त्वात् । तदुक्तं गौडपादैः 'लीयते तु सुषुप्तौ तन्निगृहीतं न लीयते' इति । तथा च श्रूयते "समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत् । न शक्यते वर्णयितुं गिरा तदा यदेतदन्तःकरणेन गृह्यते" इति अन्तःकरणेन निरुद्धसर्ववृत्तिकेनेत्यर्थः । वृत्त्या तु सुखास्वादनं गौडाचार्यैस्तत्र प्रतिषिद्धम् 'नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत्' इति । महदिदं समाधौ सुखमनुभवामीति सविकल्पवृत्तिरूपा प्रज्ञा सुखास्वादः तं व्युत्थानरूपत्वेन समाधिविरोधित्वाद्योगी न कुर्यात् अत एवैतादृश्या प्रज्ञया सह सङ्गं परित्यजेत्तां निरुन्ध्यादित्यर्थः । निर्वृत्तिकेन तु चित्तेन स्वरूपसुखानुभवस्तैः प्रतिपादितः 'स्वस्थं शान्तं सनिर्वाणमकथ्यं सुखमुत्तमम्' इति । स्पष्टं चैतदुपरिष्टात्करिष्यते ॥ २१ ॥

**शं० टी०**—किंच—**सुखमिति** । यत्र यस्यां बुद्धेः केवलशुद्धसत्त्वभावापत्तिदशायामयं योगनिष्ठो ब्रह्मविद्यतिः बुद्धिग्राह्यं स्ववृत्त्यैकगम्यमत एवातीन्द्रियमिन्द्रियाविषयमिन्द्रियविषयसंबन्धरहितमजन्यमित्यर्थः । तत एवात्यन्तिकमन्तमतिक्रम्य वर्तमानमात्यन्तिकमाद्यन्तशून्यमत एव "एषोऽस्य परमानन्दः" इत्यादिश्रुतिप्रसिद्धं यत्तत्सुखं वेत्ति सदानन्दोऽहमस्मीत्यात्मानन्दमनुभवतीत्यर्थः । यत्रायं योगी स्वयं चिदेकवृत्त्या स्वस्वरूपे सच्चिदानन्दैकरसे ब्रह्मणि तदात्मना स्थितः सन् तत्त्वतः परमार्थात्स्वरूपान्न चलति शतधा बाह्याभ्यन्तरविक्षेपेषु प्राप्तेष्वपि न किंचिद्विपरीतभावं भजतीत्यर्थः ॥ २१ ॥

**श्री० टी०**—आत्मन्येव तोषे हेतुमाह—**सुखमिति** । यत्र यस्मिन्नवस्थाविशेषे यत्तत्किमपि निरतिशयमात्यन्तिकं नित्यं सुखं वेत्ति । ननु तदा विषयेन्द्रियसंबन्धाभावात्कुतः सुखं स्यात्तत्राह—अतीन्द्रियं विषयेन्द्रियसंबन्धातीतं केवलं बुद्ध्यैवात्माकारतया ग्राह्यम् अत एव च यत्र स्थितः सन् तत्त्वतः आत्मस्वरूपान्नैव चलति ॥ २१ ॥

**स० टी०**—यत्रावस्थाविशेषे चिद्घनानन्ताद्वयं सुखम् ॥ विषयेन्द्रियसंयोगानभिव्यङ्ग्य धियाच्छया ॥ १ ॥ सत्त्वमात्रप्रवाहिन्या ग्राह्यं चानुभवत्ययम् ॥ यत्रायं च स्थितो विद्वानात्मतत्त्वस्वरूपतः ॥ २ ॥ नैव प्रच्यवते तं च विद्यादित्यन्वयोऽमुना ॥ ३ ॥ २१ ॥

**भा० टी०**—किंच—**सुखेति** । सुखमत्यन्तमेव भवतीत्यात्यन्तिकमनन्तमित्यर्थः । यदेतादृशं ब्रह्मानन्दरूपं सुखं तद्बुद्ध्यैव गृह्यत इति बुद्धिग्राह्यम् "दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः" इति श्रुतेः । अतीन्द्रियमिन्द्रियगोचरातीतं विषयाजन्यमित्यर्थः । यत्र यस्मिन्कालेऽयं विद्वान् आत्मस्वरूपेणावस्थितो वेत्ति अनुभवति तत्त्वतस्तत्त्वरूपान्नैव चलति न प्रच्यवत इत्यर्थः ॥ २१ ॥

**प० टी०**—अथात्मसुखस्य विषयसुखातिरिक्तसत्त्वमुत्कृष्टत्वं च दर्शयति—**सुखमिति** । अयं योगी यदात्यन्तिकं सर्वोत्कृष्टं सुखं वेत्त्यनुभवति तद्बुद्धिग्राह्यम् । केवलं बुद्ध्यैवात्माकारया ग्राह्यमनुभवनीयं न तु विषयेन्द्रियजसुखवदित्याह—अतीन्द्रियमिति । विषयेन्द्रियसंबन्धातीतम् । तथा सुषुप्तौ तथा चातीन्द्रियपदेन विषयसुखाद्वैलक्षण्यं दर्शितम् । आत्यन्तिकपदेनोत्कृष्टत्वं दर्शितमित्यर्थः । अथ पुनरुत्कर्षमेव व्यनक्ति—यत्रेति । यत्र यस्मिन् सुखे तत्त्वतो निश्चयेन स्थितः स्थिरीभूतः सन्नैव चलति सुखान्तरं नापेक्षते परमा-

नन्दे क्षुद्रानन्दानामन्तर्भूतत्वात् । तदुक्तमध्यात्ममीमांसाया –'जाग्रत्यामन्तरात्मा विषयसुखकृतेऽनेकयत्नांश्च कुर्वन् श्राम्यत्सर्वेन्द्रियेभ्योऽधिगतमपि सुखं विस्मरन्याति निद्राम् । विश्रामायात्मरूपे त्वतितरसुलभं तेन चातीन्द्रियं हि सौख्यं सर्वोत्तमं स्यात्परिणतिविरसादिन्द्रियोत्थात्सुखाच्च ' इति ॥ २१ ॥

रा० टी०–सुखमिति । यत्र समाधौ स्थितः बुद्धिग्राह्यमनुभवेन वेद्यमतीन्द्रियमिन्द्रियाग्राह्यमात्यन्तिकमतिशयितं सुखं वेत्ति अनुभवति । यत्र योगे स्थितोऽयं तत्त्वतो भगवद्रूपान्न चलति तामित्यन्वयः ॥२१॥

यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।
यस्मिन् स्थितो न दुःखेन गुरुणापि विचाल्यते ॥ २२ ॥

त० टी०–अचलनमेव हेतुनोपपादयति—यमिति । यं स्वरूपानुभवसंबन्धिसुखरूपं लाभं लब्ध्वा ततोऽधिकमपरं लाभं न मन्यते, तस्यैव निरतिशयत्वज्ञानात् । यस्मिंश्च सुखानुभवार्हे आत्मसक्तमनसोऽवस्थाविशेषे स्थितो योगी गुरुणा महतापि शीतोष्णादिदुःखेन न विचाल्यते न च्याव्यते इत्यर्थः ॥ २२ ॥

म० टी०–यत्र न चैवायं स्थितश्चलति तत्त्वत इत्युक्तमुपपादयति-यं लब्ध्वेति । यं च निरतिशयात्मकसुखव्यञ्जकं निर्वृत्तिकचित्तावस्थाविशेषं लब्ध्वा सन्तताभ्यासपरिपाकेन संपाद्यापरं लाभं ततोऽधिकं न मन्यते 'कृतं कृत्यं प्राप्तं प्रापणीयमित्यात्मलाभान्न परं विद्यते' इति स्मृतेः । एवं विषयभोगवासनया समाधेर्विचलनं नास्तीत्युक्त्वा शीतवातमशकाद्युपद्रवनिवारणार्थमपि तन्नास्तीत्याह–यस्मिन्निति । यस्मिन् परमात्मसुखमये निर्वृत्तिकचित्तावस्थाविशेषे स्थितो योगी गुरुणा महता शस्त्रनिपातादिनिमित्तेन महतापि दुःखेन न विचाल्यते किमुत क्षुद्रेणेत्यर्थः ॥ २२ ॥

शं० टी०–किंच–यमिति । आत्मसाक्षात्कार एव परमो लाभस्तल्लब्धेरसाधारणकारणं योगसिद्धिरपि परमलाभ एवेति मत्वा यमिति कार्यकारणयोरभेदेन निर्देशः, सदानन्दैकरसस्यात्मन उपलब्धेः परमकारणं यं निर्विकल्पकसमाधिं तत्कार्यमात्मलाभं च लब्ध्वा योगारूढो यतिः क्वचित्प्राप्तमपरमनात्मविषयकं लाभं ततः सर्वस्य ब्रह्ममात्रत्वोपलम्भकनिर्विकल्पकसमाधेस्तत्फलादात्मलाभादधिकमुत्कृष्टं न मन्यते आत्मव्यतिरिक्तस्य सर्वस्यापि पदार्थस्य मायिकत्वेनासत्त्वात्तुच्छत्वात्सोपद्रवत्वाद्दुःखबीजत्वान्मिथ्यात्वाच्च धर्मादेर्लाभं सन्तो न लाभाय मन्यन्त इत्यर्थः । ननु ब्रह्मविष्ण्वादिलोकप्राप्तिस्तु विदुषो लाभ एवेति चेन्न, सत्यलोकवैकुण्ठादेरपि मायिकत्वेनोक्तदोषवत्तया मिथ्यात्वाविशेषात्तल्लाभस्तत्स्वामित्वलाभोऽप्यलाभ एव भवति ' आत्मलाभान्न परं विद्यते ' इति स्मृत्यैवात्मलाभातिरिक्तलाभस्य लाभत्वनिषेधान्नित्यनिरतिशयानन्दरूपस्यात्मन एव लाभो लाभाय भवति तस्माद्ब्रह्मविदात्मसाक्षात्कारकरणत्वादमुमेव योगं परमं लाभं मन्यते न ततोऽन्यं लाभमित्यर्थः । किंच यस्मिन् यस्यामन्तःकरणपरिपाकविशेषावस्थायां स्थितः बाह्यमाभ्यन्तरं च विस्मृत्य सद्भावापन्नया वृत्त्या पूर्णानन्दैकरसब्रह्मरूपेण संस्थितो ब्रह्मविद्यतिः गुरुणा खड्गपातादिजनितेनान्येन वाध्यात्मिकेन महता दुःखेन न विचाल्यते स्वरूपाच्चालयितुं न शक्यते बाह्याभ्यन्तरविक्षेपशतैर्विपरीतभावं गमयितुं न शक्यत इत्यर्थः ॥ २२ ॥

श्री० टी०–अचलत्वमेवोपपादयति–यमिति । यमात्मसुखरूपं लाभं लब्ध्वा ततोऽधिकमपरं लाभं न मन्यते न चिन्तयति तस्यैव निरतिशयसुखत्वात् यस्मिंश्च स्थितो महतापि शीतोष्णादिदुःखेन न विचाल्यते नाभिभूयते । एतेनानिष्टनिवृत्तिफलेनापि योगलक्षणमुक्तं द्रष्टव्यम् ॥ २२ ॥

स० टी०–यमभ्यासातिवैशद्याल्लब्ध्वा लाभं चिदद्वयम् ॥ ततो नैवापरं लाभमधिकं मन्यते बुधः ॥१॥

कृतकृत्यतया प्राप्तप्रापणीयतया तथा ॥ परमात्मसुखे यस्मिन्स्थितो दुःखेन नो मुनिः ॥ २ ॥ महता शस्त्रपातादिहेतुकेनापि चाल्यते ॥ ३ ॥ २२ ॥

**भा० टी०—किंच—यमिति।** यमात्मलाभं लब्ध्वा च ततोऽधिकमन्यल्लाभान्तरमस्तीति न मन्यते किंच यस्मिन्नात्मतत्त्वे स्थितो गुरुणापि दुःखेन शस्त्रनिपातादिलक्षणेन न विचाल्यते। यत्तु गुरुणा बृहस्पतिनापि दुःखेनातिप्रयासेनापि न विचाल्यते न ततः परिभ्रष्टः क्रियत इति तदुपेक्ष्यं, क्लिष्टकल्पनयाऽप्रसक्तप्रतिषेधस्यानुचितत्वात्॥ २२॥

**प० टी०—अथ तदेव प्रकटयति—यदिति।** यत्सुखं लब्ध्वा ततः सकाशादपरं लाभमधिकं न मन्यते तस्यैव निरतिशयत्वात्। यथा सुषुप्तिसुखं प्राप्तः कश्चिद्भोजनार्थं न प्रबोधनीयः प्रत्यवायश्रवणात्। श्रुतिरपि—"तस्मादायतं न बोधयेद्दुर्भिषज्यं हास्य भवति" इति । भाष्यम्—यस्मात्सुषुप्तौ निरतिशयं सुखं भवति तस्मात्कारणादायतं विस्तृतहस्तपादनिद्रितं पुरुषं न बोधयेज्जागरं न प्रापयेत्, हि यतोऽस्य जागरं प्रापितस्य दुर्भिषज्यमप्रतिकारं दुःखं भवति । किं च यस्मिन् सुखे स्थितः स्थिरीभूतः सन् गुरुणा महतापि रोगशोकादिदुःखेन न विचाल्यते स्वावस्थां न प्राप्यते ॥ २२ ॥

**रा० टी०—यमिति।** यं योगं लब्ध्वा च ततोऽपरं लाभमधिकं न मन्यते यस्मिन् स्थितो गुरुणापि दुःखेन दुःखहेतुना न विचाल्यते ॥ २२ ॥

**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितम् ।**
**स निश्चयेन योक्तव्यो योगोऽनिर्विण्णचेतसा ॥ २३ ॥**

**त० टी०—एवं यच्छब्दाभ्यासेन सामान्येनोक्तो योऽवस्थाविशेषस्तं तच्छब्देन परामृश्य दर्शयति—तं विद्यादिति। दुःखशब्देन दुःखोदर्कं विषयेन्द्रियजन्यं सुखमपि गृह्यते, तथाच दुःखसंयोगेन स्पर्शमात्रेणापि वियोगो यस्मिंस्तमात्मनिर्वृत्तिकं चित्तावस्थाविशेषं योगसंज्ञितं योगशब्दवाच्यं विद्यात् जानीयात्। एवंभूतो योगो मुमुक्षुणा दृढविश्वासेनानुष्ठेय इत्याह—स इति। स योगो निश्चयेन उक्तलक्षणेन विश्वासेन योक्तव्यः अभ्यसनीयः। तत्सिद्धौ विलम्बे सति निर्वेदं न कुर्यादित्याह—अनिर्विण्णचेतसेति। योगाभ्यासे सिद्धिसंदेहात्प्रयत्नशैथिल्यं निर्वेदस्तद्रहितेन चेतसा योक्तव्य इत्यर्थः ॥ २३ ॥**

**म० टी०—तमिति।** यत्रोपरमत इत्यारभ्य बहुभिर्विशेषणैर्यो निर्वृत्तिकः परमानन्दाभिव्यञ्जकश्चित्तावस्थाविशेष उक्तस्तं चित्तवृत्ति निरोधं चित्तवृत्तिमयसर्वदुःखविरोधित्वेन दुःखवियोगमेव सन्तं योगसंज्ञितं वियोगशब्दार्हमपि विरोधिलक्षणया योगशब्दवाच्यं विद्याज्जानीयान्न तु योगशब्दानुरोधात्कंचित्संबन्धं प्रतिपद्येतेत्यर्थः। तथा च भगवान् पतञ्जलिरसूत्रयत् 'योगश्चित्तवृत्तिनिरोधः' इति। योगो भवति दुःखहेति यत्प्रागुक्तं तदेतदुपसंहृतम्। एवंभूते योगे निश्चयानिर्वेदयोः साधनत्वविधानायाह—स इति। स यथोक्तफलो योगो निश्चयेन शास्त्राचार्यवचनतात्पर्यविषयोऽर्थः सत्य एवेत्यध्यवसायेन योक्तव्योऽभ्यसनीयः। अनिर्विण्णचेतसा एतावतापि कालेन योगो न सिद्धः किमतः परं कष्टमित्यनुतापो निर्वेदस्तद्रहितेन चेतसा इह जन्मनि जन्मान्तरे वा सेत्स्यति किं त्वरयेत्येवं धैर्ययुक्तेन मनसेत्यर्थः। तदेतद्गौडपादा उदाजह्रुः 'उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदतः' इति। उत्सेक उत्सेचनं शोषणाध्यवसायेन जलोद्धरणमिति यावत्। अत्र संप्रदायविद आख्यायिकामाचक्षते। कस्यचित् किल पक्षिणोऽण्डानि तीरस्थानि तरङ्गवेगेन समुद्रोऽपजहार। सच समुद्रं शोषयिष्याम्येवेति प्रवृत्तः स्वमुखाग्रेणैकैकं जलबिन्दुमुपरि प्रचिक्षेप। तदा च बहुभिः पक्षिभिर्बन्धुवर्गैर्वार्यमाणोऽपि नैवोपरराम। यदृच्छया च तत्रागतेन नारदेन निवारितोऽप्य-

स्मिन् जन्मनि जन्मान्तरे वा येन केनाप्युपायेन समुद्रं शोषयिष्याम्येवेति प्रतिजज्ञे । ततश्च दैवानुकूल्यात् कृपालुर्नारदो गरुडं तत्साहाय्याय प्रेषयामास समुद्रस्त्वज्ज्ञातिद्रोहेण त्वामवमन्यत इति वचनेन । ततो गरुडपक्षवातेन शुष्यन्समुद्रो भीतस्तान्यण्डानि तस्मै पक्षिणे प्रददाविति । एवमखेदेन मनोनिरोधे परमधर्मे प्रवर्तमानं योगिनमीश्वरोऽनुगृह्णाति ततश्च पक्षिण इव तस्याभिमतं सिध्यतीति भावः ॥ २३ ॥

शं० टी०–योगस्य लक्षणान्युक्त्वाधुनोक्तलक्षणवन्तं योगं विजानीयादित्याह–**तं विद्यादिति** । बाह्योपरतत्वादिचित्तपरिपाकभेदविशिष्टो योऽन्तःकरणावस्थाविशेषस्तमेव योगसंज्ञितं विद्यात् योग इति संज्ञितं संज्ञा यस्य स योगसंज्ञितस्तमुक्तलक्षणमन्तःकरणावस्थाविशेषमेव योगं विजानीयात्पण्डित इत्यर्थः । योगस्योक्तमेव लक्षणं विस्पष्टत्वार्थं पुनरप्याह–दुःखसंयोगवियोगमिति । अत्र दुःखशब्देन तदनुबन्धि वैषयिकं सुखं च गृह्यते दुःखानामाध्यात्मिकादीनां सुखानां च संयोगः संसर्गस्तेन वियोगो यस्य स दुःखसंयोगवियोगः अप्रकाशितबाह्यसुखदुःखप्रत्ययो योऽन्तःकरणस्थितिविशेषस्तं योगं विद्यादित्यर्थः । एवं योगलक्षणं योगं चात्मनि पश्यन् तुष्यतीति योगफलमपि प्रतिपाद्य संसारनिमग्नस्यात्मन उद्धरणं योगेन विना नान्येन सिध्यत्यतो विज्ञातात्मतत्त्वस्य यतेर्विदेहमुक्त्यै समाधिरवश्यं कर्तव्य इति सूचयितुं पुनः समाधेः कर्तव्यतामाह–**स इति** । आत्मसमुद्धरणे परमसाधनमयमुक्तलक्षणो योगोऽनेनैवात्मा समुद्ध्रियते एतच्छास्त्रप्रसिद्धं विद्वत्प्रत्यक्षं चेति निश्चयेन चित्तदार्ढ्येनाप्यनिर्विण्णचेतसा नासाग्रदर्शनमिन्द्रियनिरोधनं साम्येन कायस्थापनं मनोनिग्रहश्च क्लेशाय भवति नाहं कर्तुं शक्नोमीति समाधिकरणे यदलसत्वं तेन दोषेण युक्तं चित्तं निर्विण्णं तीव्रमोक्षेच्छया तद्रहितमनिर्विण्णं तेनानिर्विण्णेन चेतसा मुमुक्षोर्यतेः स उक्तलक्षणो योगः समाधिर्योक्तव्यः प्रयोक्तव्यो विदेहमुक्त्यै सम्यक्कर्तव्य इत्यर्थः ॥ २३ ॥

श्री० टी०–य एवंभूतोऽवस्थाविशेषस्तमाह–**तमित्यर्धेन** । दुःखशब्देन दुःखमिश्रितत्वाद्वैषयिकं सुखमपि गृह्यते दुःखस्य संयोगेन स्पर्शमात्रेणापि वियोगो यस्मिन् तमवस्थाविशेषं योगसंज्ञितं योगशब्दवाच्यं जानीयात् । परमात्मना क्षेत्रज्ञस्य योजनं योगः । यद्वा दुःखसंयोगेन वियोग एव शूरे कातरशब्दवाद्विरुद्धलक्षणया योग उच्यते कर्मणि तु योगशब्दस्तदुपायत्वादौपचारिक एवेति भावः । यस्मादेवं महाफलो योगस्तस्मात्स एव यत्नतोऽभ्यसनीय इत्याह–**स इति** सार्धेन । स योगो निश्चयेन शास्त्राचार्योपदेशजनितेन योक्तव्योऽभ्यसनीयः । यद्यपि शीघ्रं न सिध्यति तथापि अनिर्विण्णेन निर्वेदरहितेन चेतसा योक्तव्यः । दुःखबुद्ध्या प्रयत्नशैथिल्यं निर्वेदः ॥ २३ ॥

स० टी०–यत्रोपरमते चित्तमित्यारभ्य विशेषणैः ॥ चित्तावस्थाविशेषोऽय उक्तस्तं चित्तसंयमम् ॥ १ ॥ सर्वदुःखविरोधित्वाद्दुःखसंयोगघातकम् ॥ जानीयाद्दुःखसंयोगवियोगं सन्तमप्यमुम् ॥ २ ॥ विपरीतनयेनैव योगशब्दाभिधेयकम् ॥ शास्त्राचार्यगिरां भावविषयोऽर्थः स निश्चयात् ॥ ३ ॥ सत्य एवेति योक्तव्यो योगो निर्वेदशून्यया ॥ धियेति पुनराहेशो योगः कार्यतयोदितः ॥ ४ ॥ सेत्स्यत्येवेति निश्चित्य भवेऽस्मिन्वा भवान्तरे ॥ त्यक्त्वा निर्वेदमत्यन्तधैर्ययुक्तेन चेतसा ॥ ५ ॥ योगोऽस्त्यभ्यसनीयोऽयं यथोक्तं सांप्रदायिकैः ॥ उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना ॥ ६ ॥ मनसो निग्रहस्तद्वद्भवेदपरिखेदतः ॥ ७ ॥ २३ ॥

भा० टी०–यत्रोपरमत इत्यारभ्ययावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशिष्टो योग उक्तः तं योगसंज्ञितं विद्याज्जानीयात् इति । यत्र यस्मिन्काले इत्यादि भाष्यं समाध्युपलक्षिते तस्मिन्काले योगसिद्धिर्भवतीति शेषः । यमात्मलाभं तं विद्यादुत्तरत्र संबन्धः यस्मिंस्थितो योगी न विचाल्यते तं योगं विद्यादिति पूर्ववत् । तं विद्यादित्याद्यपेक्षितं पूरयन्नवतारयति–**यत्रेति** । तमित्यात्मावस्थाविशेषं परामृशतीति भाष्यं तट्टी-

काङ्क्षद्भिर्व्याख्यातम् । वस्तुतस्तु यत्रोपरमत इत्यारभ्य यावद्भिर्विशेषणैर्विशिष्ट आत्मावस्थाविशेषो योग उक्तः तमिति भाष्यानुरोधेन काले इत्यस्य चित्तोपरमविशिष्ट आत्मावस्थाविशेष इत्यर्थः । एवमग्रेऽपि । यमात्मलाभमित्यस्य आत्मनो लाभो यस्मिन् यस्मादिति वा । आत्मलाभरूपामिति वा । लब्ध्वेत्यादिविशेषणविशिष्टमात्मावस्थाविशेषमित्यर्थः । यस्मिन्नात्मतत्त्व इत्यस्यात्मतत्त्वमात्रोपलब्ध्या आत्मतत्त्वे स्थित इत्यादिविशेषणविशिष्टे आत्मावस्थाविशेष इत्यर्थः । तथाच सर्वेषां यच्छब्दानां तत्तद्विशेषणविशिष्टावस्थाविशेषप्रतिपादकानां तच्छब्देनान्वय इति एतेन यत्र काल इति व्याख्यानं त्वसाधु तच्छब्दानन्वयादिति प्रत्युक्तम् । यत्त्वसाधुवादिनोक्तं यत्र यस्मिन्परिणामविशेषे योगसेवया योगाभ्यासपाटवेन जाते सति चित्तं निरुद्धमेकविषयकवृत्तिप्रवाहरूपामेकाग्रतां त्यक्त्वा निरिन्धनाग्निवदुपशाम्यन्निर्वृत्तिकतया सर्ववृत्तिनिरोधरूपेण परिणतं भवति यत्र च यस्मिंश्च परिणामे सतीत्यादि । तत्रेदं वक्तव्यं स चित्तपरिणामः कः यस्मिन्सति चित्तं निरोधपरिणामं भजति, निरोधपरिणाम उतैकाग्रतापरिणामः । नाद्यः यस्मिन्सति सर्ववृत्तिनिरोधरूपेण चित्तं परिणतं भवति इति तस्य ततः पृथगुक्तेः । न द्वितीयः तमन्तःकरणपरिणामं सर्वचित्तवृत्तिनिरोधरूपं योगं विद्यादिति परेणान्वयादिति स्वपरग्रन्थविरोधात् । यस्मिंश्च परिणामे सतीति अत्रापि विकल्पनीयम् अयं परिणामः किं पूर्वोक्तादन्य उत स एव । आद्ये प्रथमयत्रपदार्थैकार्थताभावः । न द्वितीयः उक्तदोषात् । एकाग्रतापरिणामे सति निरोधपरिणामस्तस्मिंश्च सति आत्मनात्मानं पश्यन्नात्मनि तुष्यतीति क्रमस्यौचित्याच्चेति दिक् । दुःखैः संयोगो दुःखसंयोगः तेन वियोगो निखिलार्थनिवृत्तिरूपस्तं योगसंज्ञितं योगशब्दितं विपरीतलक्षणेन विद्याज्जानीयादित्यर्थः । योगस्य फलमुपसंहृत्य शतं कृत्वापि पथ्यं वदितव्यमितिन्यायेन निश्चयादेः साधनत्वविधानार्थं योगस्य कर्तव्यतामाह—**स इति** । स यथोक्तफलो योगः निश्चयेनाध्यवसायेनेह जन्मनि जन्मान्तरे वा सेत्स्यत्येवेत्यध्यवसायः शास्त्राचार्योपदेशे यथार्थत्वनिश्चयो वा । अनिर्विण्णचेतसा खेदरहितेन चित्तेन दुःखबुद्ध्या प्रयत्नशैथिल्यकारणं खेदः, एतावतापि कालेन योगो नेति किमतः कष्टमित्येवंरूपः निश्चयेनानिर्विण्णचेतसा योक्तव्यः फलपर्यन्तमभ्यसनीयः । तदुक्त गौडपादाचार्यैः 'उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिन्दुना । मनसो निग्रहस्तद्वद्भवेदपरिखेदतः' इति । उत्सेकः जलोद्धरणम् । एतेन निर्विण्णचेतसेत्येवंपदमुत्तरशेषभूतं द्रष्टव्यम् । तथाह्यापातनिका । नन्वभ्यस्यतां नाम योगस्तत्रापि यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते स सर्वसंकल्पसंन्यासीत्यनेन स्वार्थं संकल्पमूलकामनात्यागे इन्द्रियनिग्रहे प्राप्तेऽपि प्राप्तयोगैश्वर्यो दीनानाथसंदर्शनजनितानुकम्पापरवशस्तेषां हितकामनया संकल्पपूर्वं बाह्यं कर्माचरेदित्याशङ्क्याह—निर्विण्णेति । सर्वान्कामान् स्वीयानिव परसंबन्धिनोऽपि संकल्पप्रभवान् निर्विण्णेन चेतसा अशेषतः सह संकल्पैः त्यक्त्वेति स्वसंसारनिर्वेदवतः परार्थाप्रवृत्तिरत्यन्तासङ्गतेति । तथा समन्ततः सर्वविषयेभ्यो मनसा सहेन्द्रियग्रामं नियम्यैव योगो योक्तव्य इति प्रत्युक्तं, क्त्वाप्रत्ययेन कामत्यागादेः योगाभ्याससाधनत्वस्य स्पष्टप्रतीत्या योगसिद्ध्युत्तरभाव्यैश्वर्यवशादनुकम्पापरवशोऽपि स्वीयानिव परकीयानपि त्यक्त्वेत्यादिवर्णनस्यानौचित्यात् शनैः शनैरित्यादिना मनस उपरमस्य वक्ष्यमाणत्वेनात्र मनसा विवेकादियुक्तेनेति करणपरत्ववर्णनस्यैवौचित्याच्च ॥ २३ ॥

प० टी०—एवंभूतो योऽवस्थाविशेषः स एव योगशब्दव्यपदेश्य इत्याह—**तं विद्यादिति** । तं योगसंज्ञितं विद्यात् । योगोऽत्र परमात्मक्षेत्रज्ञयोर्योजनम् यथा सुषुप्तौ परमात्मा क्षेत्रज्ञेनाश्लिष्यते । श्रुतिरपि—"एवमेवायं शारीर आत्मा प्राज्ञेन आत्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्" इति । भाष्यम्—एवमेव सुषुप्तिवच्छारीरः शरीरावच्छिन्नः परमात्मा क्षेत्रज्ञेन जीवेन परिष्वक्त आलिङ्गितो बाह्यमान्तरं वा किंचिन्न वेद न जानाति । अथ किंभूतं योगं, दुःखसंयोगवियोगं दुःखेन सह संयोगो

यैस्ते दुःखसंयोगा विषयास्तेषां वियोगो यस्मिन्ननेन विषयसुखमपि दुःखपक्षान्तर्भूतमिति सूचितम्। अथ योगनिर्वाहार्थमाह—सेति। एवं स योगो निश्चयेन नियमेन योक्तव्योऽभ्यसनीयः। अथ यद्यप्यभ्यासेन शीघ्रं सिद्धिर्भवति तथापि दुःखं न मन्वीतेत्याह—अनिर्विण्णचेतसेति। न निर्वेदं प्राप्तं चेतो यस्य तेनानुद्विग्नान्तःकरणेनेत्यर्थः॥ २३॥

रा० टी०—तमिति। तं दुःखसंयोगवियोगं दुःखसंयोगेन वियुज्यमानं दुःखसंयोगस्य वियोगो यस्मादिति वा। वियुज्यतेऽनेनेति वियोगः करणे घञ्। दुःखसंयोगस्य वियोग इति वा योगसंज्ञितं विद्यात्। संयोगपदेन न केवलमुत्पन्नदुःखं नाशयति किंतूत्पत्तिमेव निवारयतीति सूचयति। स योगः समाधिः निर्विण्णचेतसा विषयविरक्तमनसा निश्चयेन योक्तव्योऽवश्यं कर्तव्य एव मुमुक्षुणेत्यर्थः। मुमुक्षोर्ध्यानायोगव्यवच्छेदार्थोऽयं निश्चयशब्दः। अयोगव्यवच्छेदविधानार्थमेव उद्धरेदित्यत्र विहितस्यात्र पुनर्विधानम्॥२३॥

**संकल्पप्रभवान् कामाँस्त्यक्त्वा सर्वानशेषतः॥**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः॥ २४॥**
**शनैः शनैरुपरमेद् बुद्ध्या धृतिगृहीतया॥**
**आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत्॥ २५॥**

त० टी०—पूर्वं योगयुक्तलक्षणे निस्पृहः सर्वकामेभ्यः इत्यनेन सर्वकामत्यागपूर्वकध्याननिष्ठा निर्दिष्टा। इदानीं योगविरोधिप्रधानभूतान् कामान् सहसा त्यक्तुमशक्यान् स्मृत्वा पुनस्तत्त्यागप्रयत्नमुपदिशति—संकल्पेति द्वाभ्याम्। रूपादिमद्वस्तुनो दर्शनादिनाऽज्ञानेन सुखहेतुत्वकल्पनं संकल्पः। ततः प्रभवन्ति ते संकल्पप्रभवा ये कामा विषयाभिलाषा इदं मे भूयादिदं मे प्राप्नुयादित्येवमादिरूपास्तान्योगविरोधिनस्तद्याथात्म्यविचारजन्यदुःखहेतुत्वबुद्ध्या सर्वानैहिकामुष्मिकान् सवासनाँस्त्यक्त्वा ततो विषयविमुखीभूतेन मनसैवेन्द्रियग्रामं रूपादिविषयाभिमुख्यस्वभावं चक्षुरादिकरणसमूहं समन्ततः सर्वेभ्यस्तत्तद्विषयेभ्यो विनियम्य प्रत्याहृत्य शनैः शनैरभ्यासक्रमेण नतु सहसा उपरमेत् निवृत्तो भवेत्। उपराममेव दर्शयति—बुद्ध्येति। धृतिर्दुःखे प्राप्तेऽपि स्वनिष्ठायामनिर्वेदेन स्थितिस्तया गृहीता अवश्यकर्तव्यतायां दृढीकृता या बुद्धिः योगः कदाचित्प्राप्स्यत्येवेति व्यवसायरूपा तया आत्मसंस्थमात्मन्येव सम्यक् स्थितं निश्चलं मनः कृत्वा बाह्यं किंचिदपि न चिन्तयेत्॥ २४॥ २५॥

म० टी०—किं च कृत्वा योगोऽभ्यसनीय इत्यत आह—संकल्प इति। संकल्पो दुष्टेष्वपि विषयेष्वशोभनत्वादर्शनेन शोभनाध्यासः। तस्माच्च संकल्पादिदं मे स्यादिदं मे स्यादित्येवंरूपाः कामाः प्रभवन्ति। तान् शोभनाध्यासप्रभवान् विषयाभिलाषान् विचारजन्याशोभनत्वनिश्चयेन शोभनाध्यासबाधाद् दृष्टेषु स्रक्चन्दनवनितादिष्वदृष्टेषु चेन्द्रलोकपारिजाताप्सरःप्रभृतिषु श्ववान्तपायसवत्स्वत एव सर्वान् ब्रह्मलोकपर्यन्तानशेषतः निरवशेषान् सवासनाँस्त्यक्त्वा अत एव कामपूर्वकत्वादिन्द्रियप्रवृत्तेस्तदपाये सति विवेकयुक्तेन मनसैवेन्द्रियग्रामं चक्षुरादिकरणसमूहं विनियम्य समन्ततः सर्वेभ्यो विषयेभ्यः प्रत्याहृत्य शनैः शनैरुपरमेदित्यन्वयः॥ २४॥ भूमिकाजयक्रमेण शनैः शनैरुपरमेत् धृतिर्धैर्यमखिन्नता तया गृहीता या बुद्धिरवश्यकर्तव्यतानिश्चयरूपा तया यदाकदाचिदवश्यं भविष्यत्येव योगः किं त्वरयेत्येवंरूपया शनैः शनैर्गुरूपदिष्टमार्गेण मनो निरुन्ध्यात्। एतेनानिर्वेदनिश्चयौ प्रागुक्तौ दर्शितौ। तथा च श्रुतिः "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत् तद्यच्छेच्छान्त आत्मनि" इति। वागिति वाचं लौकिकीं वैदिकीं च मनसि व्यापारवति नियच्छेत् "नानुध्यायाद्बहूञ्छब्दान् वाचो विग्ला-

पनं हि तत् " इति श्रुतेर्वाग्वृत्तिनिरोधेन मनोवृत्तिमात्रशेषो भवेदित्यर्थः । चक्षुरादिनिरोधोऽप्येतस्यां भूमौ द्रष्टव्यः । मनसीति छान्दसं दैर्घ्यम् । तन्मनः कर्मेन्द्रियज्ञानेन्द्रियसहकारि नानाविधविकल्पसाधनं करणं ज्ञाने जानातीति ज्ञानमिति व्युत्पत्त्या ज्ञातर्यात्मनि ज्ञातृत्वोपाधावहंकारे नियच्छेत् मनोव्यापारान् परित्यज्याहंकारमात्रं परिशेषयेत् । तच्च ज्ञानं ज्ञातृत्वोपाधिमहंकारमात्मनि महति महत्तत्त्वे सर्वव्यापके नियच्छेत् । द्विविधो ह्यहंकारो विशेषरूपः सामान्यरूपश्चेति । अयमहमेतस्य पुत्र इत्येवं व्यक्तमभिमन्यमानो विशेषरूपो व्यष्टयहंकारः । अस्मीत्येतावन्मात्रमभिमन्यमानः सामान्यरूपः समष्टयहंकारः । स च हिरण्यगर्भो महानात्मेति च सर्वानुस्यूतत्वादुच्यते । ताभ्यामहंकाराभ्यां विविक्तो निरुपाधिकः शान्तात्मा सर्वान्तरश्चिदेकरसस्तस्मिन्महान्तमात्मानं समष्टिबुद्धिं नियच्छेदेवं तत्कारणमव्यक्तमपि नियच्छेत्ततो निरुपाधिकस्त्वंपदलक्ष्यः शुद्ध आत्मा साक्षात्कृतो भवति । शुद्धे हि चिदेकरसे प्रत्यगात्मनि जडशक्तिरूपमनिर्वाच्यमव्यक्तं प्रकृतिरुपाधिः । सा च प्रथमं सामान्याहंकाररूपं महत्तत्त्वं नाम धृत्वा व्यक्तीभवति । ततो बहिर्विशेषाहंकाररूपेण । ततो बहिर्मनोरूपेण । ततो बहिर्वागादीन्द्रियरूपेण । तदेतच्छ्रुत्याभिहितम्—" इन्द्रियाणि पराण्याहुरिन्द्रियेभ्यः परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान्परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इति । तत्र गवादिष्विव वाङ्निरोधः प्रथमा भूमिः । बालमुग्धादिष्विव निर्मनस्त्वं द्वितीया । तन्द्रामिवाहंकारराहित्यं तृतीया । सुषुप्ताविव महत्तत्त्वराहित्यं चतुर्थी । तदेतद्भूमिचतुष्टयमपेक्ष्य शनैः शनैरुपरमेदित्युक्तम् । यद्यपि महत्तत्त्वशान्तात्मनोर्मध्ये महत्तत्त्वोपादानमव्याकृताख्यं तत्त्वं श्रुत्योदाहारि तथापि तत्र महत्तत्त्वस्य अव्याकृते नियमनं नाभ्यधायि सुषुप्ताविव स्वरूपलयप्रसङ्गात् तस्य च कर्मक्षये सति पुरुषप्रयत्नमन्तरेण स्वत एव सिद्धत्वात्तत्त्वदर्शनानुपयोगित्वाच्च । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति पूर्वमभिधाय सूक्ष्मत्वसिद्धये निरोधसमाधेरभिधानात् । स च तत्त्वविद्दृक्षोर्दर्शनसाधनत्वेन दृष्टतत्त्वस्य च जीवन्मुक्तिप्रतिबन्धरूपक्लेशक्षयायापेक्षितः । ननु शान्तात्मन्यवरुद्धस्य चित्तस्य वृत्तिरहितत्वेन सुषुप्तिवन्न दर्शनहेतुत्वमिति चेत् न, स्वतःसिद्धस्य दर्शनस्य निवारयितुमशक्यत्वात् । तदुक्तम् ' आत्मानात्माकारं स्वभावतोऽवस्थितं सदा चित्तम् । आत्मैकाकारतया तिरस्कृतानात्मदृष्टि विदधीत ' यथा घट उत्पद्यमानः स्वतो वियत्पूर्ण एवोत्पद्यते । जलतण्डुलादिपूरणं तूत्पन्ने घटे पश्चात्पुरुषप्रयत्नेन भवति । तत्र जलादौ निःसारितेऽपि वियन्निःसारयितुं न शक्यते । मुखपिधानेऽप्यन्तर्वियदवतिष्ठत एव । तथा चित्तमुत्पद्यमानं चैतन्यपूर्णमेवोत्पद्यते । उत्पन्ने तु तस्मिन् मूषानिषिक्तद्रुतताम्रवत्सुखदुःखादिरूपत्वं भोगहेतुधर्माधर्मसहकृतसामग्रीवशाद्भवति । तत्र घटदुःखाद्यनात्माकारे विरामप्रत्ययाभ्यासेन निवारितेऽपि निर्निमित्तश्चिदाकारो वारयितुं न शक्यते । ततो निरोधसमाधिना निर्वृत्तिकेन चित्तेन संस्कारमात्रशेषतयातिसूक्ष्मत्वेन निरुपाधिकचिदात्ममात्राभिमुखत्वाद्वृत्तिं विनैव निर्विघ्नमात्मानुभूयते । तदेतदाह—आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेदिति । आत्मनि निरुपाधिके प्रतीचि संस्था समाप्तिर्यस्य तदात्मसंस्थं सर्वप्रकारवृत्तिशून्यं स्वभावसिद्धात्माकारमात्रविशिष्टं मनः कृत्वा धृतिगृहीतया विवेकबुद्ध्या संपाद्यासंप्रज्ञातसमाधिस्थः सन् किंचिदपि अनात्मानमात्मानं वा न चिन्तयेत् न वृत्त्या विषयीकुर्यात् । अनात्माकारवृत्तौ हि व्युत्थानमेव स्यात् आत्माकारवृत्तौ च संप्रज्ञातः समाधिरित्यसंप्रज्ञातसमाधिस्थैर्याय कामपि चित्तवृत्तिं नोत्पादयेदित्यर्थः ॥ २९ ॥

**शं० टी०—**समाधेः कर्तव्यप्रकारमेवाह—**संकल्पेति** । पदार्थेषु समीचीनत्वकल्पनमेव संकल्पस्तस्मात्प्रभवन्तीति संकल्पप्रभवास्तान् कामान् विषयाभिलाषान् सर्वान् सर्वपदार्थविषयानशेषतस्त्यक्त्वा परित्यक्तेऽपि तैले लेपरूपेण पात्रे शेषस्तिष्ठति यथा तथा कामेषु त्यक्तेष्वपि विषयेषु रञ्जनारूपेण कामशेषो यथा

न स्यात्तथा सर्वत्र कामत्यागः कर्तव्यः। सति कामलेशे तदाकृष्टं मनः समाधौ न तिष्ठत्यतः सर्वत्र देहजीवनादावपि निरपेक्षो भवेद्योगीत्यर्थः। योगसिद्धेरन्तरङ्गं बलवत्साधनमुक्त्वा साधनान्तरमाह—**मनसेति**। समाधौ कृते सम्यग्ज्ञानं तेनैव मोक्षो नान्यथेत्येवं निश्चयवता कामसंकल्पयोर्दूरवर्तिनैव मनसा इन्द्रियग्रामं चक्षुरादीनां वागादीनां च संघातं समन्ततः सर्वतो नियम्य तेषां प्रवृत्तिं निगृह्येत्यर्थः। इन्द्रियैर्मनसा संयोगाकरणमेवेन्द्रियनियमनमिति मनसैवेतिपदेन सूचितम्। तत इन्द्रियाणां मनसश्च संयोगो यथा न स्यात्तथा स्थातव्यमित्यभिप्रायः॥ २४॥ ब्रह्मविदुक्तलक्षण आसने सम्यगासित्वा शरीरं साम्येन स्थापयित्वा दिशोऽपश्यन्नासाग्रे दृष्टिं मुक्त्वा सर्वकामसंकल्पत्यागपूर्वकं सर्वेन्द्रियाणि निगृह्य ततः शनैः शनैरुपरमेदित्याह—**शनैरिति**। शनैः शनैः क्रमेण बाह्यविषयेभ्यस्तत इन्द्रियेभ्यस्ततोऽन्तर्विपरीतप्रत्ययेभ्यश्च मन्दं मन्दमन्तःकरणमुपरमेदुपरतं कुर्यात् मोक्षैककामनया विषयैरिन्द्रियैरसत्प्रत्ययैश्च संबन्धो यथा न स्यात्तथा मनसो बहिःप्रवृत्तिमुपशमयेदित्यर्थः। "यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेज्ज्ञान आत्मनि। ज्ञानमात्मनि महति नियच्छेत्तद्यच्छेच्छान्त आत्मनि" इत्येतच्छ्रुत्युक्तरीत्या वागुपलक्षितानि सर्वाणीन्द्रियाणि तत्तद्विषयैः सह मनसि प्रविलापयेत् प्रपञ्चकारणं तन्मनोऽपि ज्ञान आत्मनि अहमात्मिकायां बुद्धौ तज्ज्ञानमहमात्मिका बुद्धिं महत्यात्मनि महत्तत्वे तन्महत्तत्वमव्याकृते तदव्याकृतं शान्ते सर्वप्रपञ्चोपशमे निर्विशेषे परे ब्रह्मणि प्रविलापयेत्। एवं सर्वं ब्रह्मणि प्रविलाप्य "ब्रह्मैवेदं सर्वम्" इत्यादिश्रुत्यर्थावष्टम्भसमुत्पन्ननिश्चयवती दृढवृत्तिर्धृतिर्धैर्यं तया गृहीतया निगृहीतया बुद्ध्या पूर्वोक्तप्रविलापनेन सर्वत्र ब्रह्ममात्रावशेषत्वसंस्कारबलेन सर्वमात्मैव न ततोऽन्यदस्तीत्येवं प्रत्ययवत्या बुद्ध्या मन आत्मसंस्थं सम्यगात्मन्येव चैतन्यरूपे स्थितं निश्चलं कृत्वा सर्वमात्मानमेव पश्यन्नित्यर्थः। एवमात्मसंस्थं मनः कृत्वा विद्वान् ततः स्वयं किंचिदपि बाह्यमाभ्यन्तरं वा वस्तु न चिन्तयेन्न भावयेत्किंतु सर्वं ब्रह्मैव भावयेदित्यर्थः। एतेन ब्रह्माकारवृत्त्या मनसो योऽन्यभावनाभावः स एष एव योग इति सूचितं भवति॥ २५॥

**श्री० टी०**—किंच—**संकल्पेति**। संकल्पात्प्रभवो येषां तान्योगप्रतिकूलान् सर्वान्कामानशेषतः सवासनांस्त्यक्त्वा मनसैव विषयदोषदर्शिना सर्वतः प्रसरन्तमिन्द्रियसमूहं विशेषेण नियम्य योगो योक्तव्य इति पूर्वेणान्वयः। यदि तु प्राक्तनकर्मसंस्कारेण मनो विचलेत्तर्हि धारणया स्थिरीकुर्यादित्याह—**शनैरिति**। धृतिर्धारणा तया गृहीतया वशीकृतया बुद्ध्यात्मसंस्थमात्मन्येव सम्यक् स्थितं निश्चलं मनः कृत्वोपरमेत्, तच्च शनैः शनैरभ्यासक्रमेण नतु सहसा। उपरमस्वरूपमाह—न किंचिदपि चिन्तयेत् निश्चले मनसि स्वयमेव प्रकाशमानपरमानन्दस्वरूपो भूत्वाऽऽत्मध्यानादपि निवर्तेतेत्यर्थः॥ २४॥ २५॥

**स० टी०**—दृष्ट्वा संसारमागारमापदां भ्रान्तिजन्मनाम्॥ विरज्याल्पसुखेभ्यश्च भोगेभ्यो मतिमान्नरः॥१॥ कृष्णपादरतो भूत्वा सद्गुरुं प्राप्य शान्तिदम्॥ लब्ध्वा ततः परब्रह्मोपदेशं योगमभ्यसेत्॥ २॥ यावद्ब्रह्माद्वयानन्दे प्रतिष्ठां निश्चलां पराम्॥ धियो न विन्दते तावद्योगो योक्तव्य आदरात्॥ ३॥ प्रतिष्ठायां च सिद्धायां कृतकृत्यो भवेन्मुनिः॥ एतद्धृदि निधायाह भगवान्भूतभावनः॥ ४॥ इदं मे स्यादिदं मे स्यादिति संकल्पजानिमान्॥ शोभनाध्यासजान्कामान्दुष्टेषु विषयेष्वपि॥ ५॥ त्यक्त्वा भोगाभिलाषाख्यान्दोषदृष्ट्याप्यशेषतः॥ सर्वान्द्रुहिणलोकान्तान्वासनासहितान्मुनिः॥६॥ प्रत्याहृत्येन्द्रियग्रामं विषयेभ्यः समन्ततः॥ कामापाये विवेकेन युक्ता धीर्या तया तथा॥ ७॥ २४॥ गुरूपदिष्टमार्गेणोपरमेच्च शनैः शनैः॥ अखिन्नतातद्धैर्येण युक्ता या धीस्तया मनः॥ १॥ आत्मन्येव समाप्तिर्हि यस्य तद्ब्रह्म गोचरम्॥ कृत्वा विचिन्तयेन्नान्यद्वृत्तिमन्यां न वा श्रयेत्॥ २॥ आत्मैवास्त्यखिलं नान्यदिति निश्चित्य वा मुनिः॥ नान्यद्विचिन्तयेत्किंचिद्योगस्यायं परोऽवधिः॥ ३॥ २५॥

भा० टी०–साधनान्तराण्यपि विधत्ते–**संकल्पेति** । संकल्पो शोभनोऽपि इहामुत्रार्थभोगेऽविचारजनितः शोभनाध्यासः स प्रभवो येषां कामानां इदं मे स्यादिदं मे स्यादित्येवंरूपाणामिच्छाभेदानां ते तान्सर्वान् ब्रह्मलोकपर्यन्तानशेषतो निर्लेपेन लेपरूपेण शिष्टया वासनया सहितान् विचारेण शोभनाध्यासनिवृत्त्या त्यक्त्वा परित्यज्य । किंच मनसैवेन्द्रियग्रामं चक्षुरादीन्द्रियसमुदायं समन्ततः समन्ताद्विषयसमूहान्नियम्य नियमनं कृत्वा योगो योक्तव्य इति पूर्वेण शनैः शनैरुपरमेदिति परेणान्वयः ॥ २४ ॥ एवं कृत्वा किं कुर्यादित्यत आह–**शनैरिति** । धृतिगृहीतया धैर्ययुक्तया बुद्ध्योपरमेत मनस उपरतिं संपादयेत् शनैः शनैः क्रमेण न तु सहसा । ननूपरतिं प्रापितमपि मनः पुनः पदार्थान्तरचिन्तनेनोपरतिं हास्यतीत्याशङ्क्याह–**आत्मेति** । आत्मसंस्थमात्मैव सर्वं न ततोऽन्यत् किंचिदस्तीति एवमात्मसंस्थं मनः कृत्वा आत्मेतरवस्त्वभावान्न किंचिदपि चिन्तयेन्मनसो नैश्चल्यस्य परमयोगावधित्वात् ॥ २५ ॥

प० टी०–एवमभ्यासयोगमुक्त्वाधुना राजयोगं वक्तुमारभते–**संकल्पेत्यादितः** । संकल्पात् प्रभव उत्पत्तिर्येषां ते तथाभूता ये कामास्तान् सर्वानशेषतस्तन्मूलभूतवासनाभिः सह त्यक्त्वा । तत्रापि कारणमाह–**मनसेति** । समन्ततः प्रसरन्तं ज्ञानकर्मेन्द्रियाणां ग्रामं समूहं मनसैव नियम्य न तु वायुधारणादिप्रयासैः । तदुक्तम्–'न याहि चेतस्त्वमितस्ततोऽपि देहेन्द्रियाद्यैर्न कुरुष्व कर्म । त्वं यत्र कुत्राप्युपविश्य नित्यं विचारयस्व स्वानिदानमन्तः' इति ॥ २४ ॥ अथास्यापि निर्वाहमाह–**शनैः शनैरिति** । धृतिर्धीरता तया गृहीतया नियमितया निश्चयात्मिकया बुद्ध्या कृत्वा संकल्पात्मकं मनो बलादात्मसंस्थं कृत्वात्मातिरिक्तं न किंचिदपि चिन्तयेत् । एवं शनैः शनैरभ्यासक्रमेण न सहसोपरमेद्बाह्यप्रपञ्चादुपरमं प्राप्नुयात् । तदुक्तं योगसारावल्याम्–'असमर्थो यदाभ्यासे राजयोगं तदाचरेत् । येन स्यात्तुरीयावस्था सा पक्वैवोन्मनी भवेत् ॥ प्रसह्य संकल्पपरंपराणां संछेदने संततसावधानः । आलम्बनाशादपचीयमानं शनैः शनैः शान्तिमुपैति चेतः ॥ प्रकाश्यमाने परमात्मभानौ नश्यत्यविद्यातिमिरे समस्ते । अहो बुधा निर्मलदृष्टयोऽपि किंचिन्न पश्यन्ति जगत्स्वरूपम्' ॥ २५ ॥

रा० टी०–किंच–**संकल्पेति** । संकल्पेन एतदर्थमिदं कुर्यामिति संकल्पपूर्वकानुष्ठानेन प्रभवो जन्म येषां तान्कामान्विषयभोगान्सर्वानशेषतो निःशेषतः त्यक्त्वा इन्द्रियग्राममिन्द्रियसमूहं समन्ततः सर्वतः मनसैव विनियम्य इन्द्रियनियमनं न मनसोऽन्येनेतिज्ञापनायैवकारः ॥ २४ ॥ **शनैरिति** । मनसश्च धृतिगृहीतया धैर्योपेतया धारणया गृहीतया वशीकृतयेति वा बुद्ध्या शनैः शनैरुपरमेत् विषयेभ्यो व्यावर्तयेत् भगवति रमेतेति वार्थः । किं चात्मसंस्थं भगवन्निष्ठं मनः कृत्वा बुद्ध्येत्यनुषङ्गः भगवतोऽन्यन्न किंचिदपि चिन्तयेत् ॥ २५ ॥

**यतो यतो निश्चरति मनश्चञ्चलमस्थिरम् ॥**
**ततस्ततो नियम्यैतदात्मन्येव वशं नयेत् ॥ २६ ॥**

त० टी०–नियुज्यमानं मनो यदि चलेत्तर्हि किं कर्तव्यमिति चेत्तत्राह–**यत इति** । यतो यतः शब्दादिविषयाद्धेतोश्चञ्चलस्वभावतयाऽस्थिरं सत् मनो निश्चरति यतो यतो यं यं विषयं प्रति निश्चरति निर्गच्छति ततस्तत एतन्मनो नियम्य आत्मन्येव वशं नयेत् निरुन्ध्यात् ॥ २६ ॥

म० टी०–एवं निरोधसमाधिं कुर्वन् योगी यतो यत इति शब्दादीनां चित्तविक्षेपहेतूनां मध्ये यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्विषयाद्रागद्वेषादेश्च चञ्चलं विक्षेपाभिमुखं सत् मनो निश्चरति विक्षिप्तं सत् विषयाभिमुखीं प्रमाणविपर्ययविकल्पस्मृतीनामन्यतमामपि समाधिविरोधिनीं वृत्तिमुत्पादयति तथा

लयहेतूनां निद्राशेषबह्वशनश्रमादीनां मध्ये यतो यतो निमित्तादस्थिरं लयाभिमुखं सन्मनो निश्चरति लीनं सत्समाधिविरोधिनीं निद्राख्यां वृत्तिमुत्पादयति ततस्ततो विक्षेपनिमित्ताल्लयनिमित्ताच्च नियम्यैतन्मनो निर्वृत्तिकं कृत्वात्मन्येव स्वप्रकाशपरमानन्दघने वशं नयेत् निरुन्ध्यात् यथा न निक्षिप्येत न वा लीयेतेति। एवकारोऽनात्मगोचरत्वं समाधेर्वारयति । एतच्च विवृतं गौडाचार्यपादैः ‘ उपायेन निगृह्णीयाद्विक्षिप्तं कामभोगयोः । सुप्रसन्नं लये चैव यथा कामो लयस्तथा ( १ ) दुःखं सर्वमनुस्मृत्य कामभोगान्निवर्तयेत् । अजं सर्वमनुस्मृत्य जातं नैव तु पश्यति ( २ ) लये संबोधयेच्चित्तं विक्षिप्तं शमयेत्पुनः । सकषायं विजानीयात्समप्राप्तं न चालयेत् ( ३ ) नास्वादयेत्सुखं तत्र निःसङ्गः प्रज्ञया भवेत् । निश्चलं निश्चरच्चित्तमेकीकुर्यात्प्रयत्नतः ( ४ ) यदा न लीयते चित्तं न च विक्षिप्यते पुनः । अनिङ्गनमनाभासं निष्पन्नं ब्रह्म तत्तदा । ( ५ ) इति पञ्चभिः श्लोकैः । उपायेन वक्ष्यमाणेन वैराग्याभ्यासेन कामभोगयोर्विक्षिप्तं प्रमाणविपर्ययविकल्पस्मृतीनामन्यतमयापि वृत्त्या परिणतं मनो निगृह्णीयात् निरुन्ध्यादात्मन्येवेत्यर्थः । कामभोगयोरिति चिन्त्यमानावस्थाभुज्यमानावस्थाभेदेन द्विवचनम् । तथा लीयतेऽस्मिन्निति लयः सुषुप्तं तस्मिन् सुप्रसन्नमायासवर्जितमपि मनो निगृह्णीयादेव । सुप्रसन्नं चेत्कुतो निगृह्यते तत्राह—यथा कामो विषयगोचरप्रमाणादिवृत्त्युत्पादनेन समाधिविरोधी तथा लयोऽपि निद्राख्यवृत्त्युत्पादनेन समाधिविरोधी सर्ववृत्तिनिरोधो हि समाधिः अतः कामादिकृतविक्षेपादिव श्रमादिकृतलयादपि मनो निरोद्धव्यमित्यर्थः ( १ ) उपायेन निगृह्णीयात्केनेत्युच्यते—सर्वं द्वैतमविद्याविजृम्भितमल्पं दुःखमेवेत्यनुसृत्य “ यो वै भूमा तत्सुखं, नाल्पे सुखमस्ति अथ यदल्पं तन्मर्त्यं तत् दुःखम्” इति श्रुत्यर्थं गुरूपदेशादनुपश्चात्पर्यालोच्य कामान् चिन्त्यमानावस्थान् विषयान्भोगान् भुज्यमानावस्थांश्च विषयान्निवर्तयेत् मनसः सकाशादिति शेषः । कामश्च भोगश्च कामभोगं तस्मान्मनो निवर्तयेदिति वा । एवं द्वैतस्मरणकाले वैराग्यभावनोपाय इत्यर्थः । द्वैतविस्मरणं तु परमोपाय इत्याह—अजं ब्रह्म सर्वं न ततोऽतिरिक्तं किंचिदस्तीति शास्त्राचार्योपदेशादनन्तरमनुस्मृत्य तद्विपरीतं द्वैतजातं न पश्यत्येव । अधिष्ठाने ज्ञाते कल्पितस्याभावात् पूर्वोपायापेक्षया वैलक्षण्यसूचनार्थस्तुशब्दः ( २ ) एवं वैराग्यभावनातत्त्वदर्शनाभ्यां विषयेभ्यो निवर्त्यमानं चित्तं यदि दैनंदिनलयाभ्यासवशाल्लयाभिमुखं भवेत् तदा निद्राशेषाजीर्णबह्वशनश्रमाणां लयकारणानां निरोधेन चित्तं सम्यक् प्रबोधयेदुत्थानप्रयत्नेन । यदि पुनरेवं प्रबोध्यमानं दैनंदिनप्रबोधाभ्यासवशात् कामभोगयोर्विक्षिप्तं स्यात् तदा वैराग्यभावनया तत्त्वसाक्षात्कारेण च पुनः शमयेत् । एवं पुनः पुनरभ्यस्यतो लयात्संबोधितं विषयेभ्यश्च व्यावर्तितं नापि समप्राप्तमन्तरालावस्थं चित्तं स्तब्धीभूतं सकषायं रागद्वेषादिप्रबलवासनावशेन स्तब्धीभावाख्येन कषायेण दोषेण युक्तं विजानीयात् समाहिताच्चित्ताद्विवेकेन जानीयात् । ततश्च नेदं समाहितमित्यवगम्य लयविक्षेपाभ्यामिव कषायादपि चित्तं निरुन्ध्यात् । ततश्च लयविक्षेपकषायेषु परिहृतेषु परिशेषाच्चित्तेन समं ब्रह्म प्राप्यते । तच्च समप्राप्तं चित्तं कषायलयभ्रान्त्या न चालयेत् विषयाभिमुखं न कुर्यात् किंतु धृतिगृहीतया बुद्ध्या लयकषायप्राप्तेर्विविच्य तस्यामेव समप्राप्तावतियत्नेन स्थापयेत् ( ३ ) तत्र समाधौ परमसुखव्यञ्जकेऽपि सुखं नास्वादयेत् एतावन्तं कालमहं सुखीति सुखास्वादरूपां वृत्तिं न कुर्यात् समाधिभङ्गप्रसङ्गादिति प्रागेव कृतव्याख्यानम् । प्रज्ञया यदुपलभ्यते सुखं तदप्यविद्यापरिकल्पितं मृषैवेत्येवंभावनया निःसङ्गो निस्पृहः सर्वसुखेषु भवेत् । अथवा प्रज्ञया सविकल्पसुखाकारवृत्तिरूपया सह सङ्गं परित्यजेत् नतु स्वरूपसुखमपि निर्वृत्तिकेन चित्तेन नानुभवेत् स्वभावप्राप्तस्य तस्य वारयितुमशक्यत्वात् । एवं सर्वतो निवर्त्य निश्चलं प्रयत्नवशेन कृतं चित्तं स्वभावचाञ्चल्याद्विषयाभिमुखतया निश्चरद्बहिर्निर्गच्छत् एकीकुर्यात् प्रयत्नतः निरोधप्रयत्नेन समे ब्रह्मण्येकतां नयेत् ( ४ ) समप्राप्तं चित्तं कीदृशमित्युच्यते यदा न लीयते नापि स्तब्धीभवति

तामसत्वसाम्येन लयशब्देनैव स्तब्धीभावस्योपलक्षणात् न च विक्षिप्यते पुनः न शब्दाद्याकारवृत्तिमनुभवति नापि सुखमास्वादयति राजसत्वसाम्येन सुखास्वादस्यापि विक्षेपशब्देनोपलक्षणात् पूर्वं भेदनिर्देशस्तु पृथक्प्रयत्नकरणाय। एवं लयकषायाभ्यां विक्षेपसुखास्वादाभ्यां च रहितं अनिङ्गनमिङ्गनं चलनं सवातप्रदीपवत् लयाभिमुख्यरूपं तद्रहितं निवातप्रदीपकल्पं अनाभासं न केनचिद्विषयाकारेणाभासत इत्येतत् कषायसुखास्वादयोरुभयान्तर्भावः उक्त एव। यदैवं दोषचतुष्टयरहितं चित्तं भवति तदा तच्चित्तं ब्रह्मनिष्पन्नं समं ब्रह्मप्राप्तं भवतीत्यर्थः ( ९ ) एतादृशश्च योगः श्रुत्या प्रतिपादितः 'यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह। बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम्॥ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्। अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ" इति। एतन्मूलकमेव च 'योगश्चित्तवृत्तिनिरोधः' इति सूत्रं तस्माद्युक्तं ततस्ततो नियम्यैतदात्मन्येव वशं नयेदिति॥ २६॥

**शं० टी०**—ननु विषयलम्पटस्य मनस आत्मनि संस्थितिर्न संभवति तद्विषयवासनाभी रागादिभिश्च विषयप्रवृत्त्येकस्वभावत्वान्मनसः स्वभावो दुरतिक्रम इति न्यायेन स्वभावतः प्राप्तप्रवृत्तिनिरोधो न सिध्यति तदसिद्धौ कुत आत्मनि संस्थितिरित्याशङ्कायां न, विषयेषु सत्यत्वसमीचीनत्वेष्टत्वबुद्ध्येकबलान्मनसः प्रवृत्तिस्तद्धेतवो रागादयश्च "विकल्पो नहि वस्तु। मायामात्रमिदं द्वैतम्। त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रम्" इत्यादिश्रुतिभिरिदं सर्वं मिथ्याकल्पितत्वाच्छुक्तिरजतवदित्यादियुक्तिभिश्च विषयाणां मिथ्यात्वे सिद्धे विषये सत्यत्वसमीचीनत्वेष्टत्वबुद्ध्यो नश्यन्ति रागादयश्च तेन मनसश्च प्रवृत्तिर्न संभवति क्वचिद्वासनया यदा मनः प्रवर्तते तदा विषयमिथ्यात्वबुद्ध्या ततो निवर्त्य स्वरूप एव स्थापनीयमित्याह—**यत इति**। वासनावेगाच्चञ्चलं चपलं रागादिदोषग्रस्तत्वादस्थिरमव्यवस्थं मनः स्वविषयमात्मानमनादृत्य वासनया वा रागादिना वा हठाद्वा ज्ञातमज्ञातं च सत् यतो यतो यं यं विषयमुद्दिश्य निश्चरति निर्गच्छति ततस्ततस्तस्मात्तस्माद्विषयान्नियम्य तत्र तत्र विषये मिथ्यात्वं दुःखप्रदत्वं बन्धकत्वमात्मव्यतिरेकेणासत्त्वं चोद्घाट्य वैरस्यमापाद्यैवैतन्मनः पुनराकृष्य चिद्भावं गमयित्वात्मन्येव वशं नयेत् आत्मनि नित्यत्वचिद्रूपत्वाखण्डानन्दैकरसत्वस्वरूपत्वादिगुणप्रकाशनेन रुचिं संपाद्य नियमेनात्मस्थमेव कुर्यादित्यर्थः॥ २६॥

**श्री० टी०**—एवमपि रजोगुणवशाद्यदि मनः प्रचलेत्तर्हि पुनः प्रत्याहारेण वशीकुर्यादित्याह—**यत इति**। स्वभावतश्चञ्चलं धार्यमाणमप्यस्थिरं मनो यं यं विषयं प्रति निर्गच्छति ततस्ततः प्रत्याहृत्यात्मन्येव स्थिरं कुर्यात्॥ २६॥

**स० टी०**—एवं कुर्वन्समाधिं तं योगी चित्तनिरोधनम्॥ चित्तविक्षेपहेतूनां शब्दादीनां च मध्यतः॥ १॥ यस्माद्यस्मान्निमित्तात्तच्छब्दादेश्चञ्चलं मनः॥ अनाद्यविद्ययाध्यासाद्विक्षिप्तं सद्बहिर्व्रजेत्॥ २॥ ततस्ततोऽतिविक्षेपनिमित्तात्तन्मनो मुनिः॥ कृत्वा निर्वृत्तिकं प्रत्यगात्मन्येवाद्वये सुखी॥ ३॥ स्वप्रकाशपरानन्दघने तत्त्वे वशं नयेत्॥ समस्तदुःखसीमेयं यन्मनो दृश्यगोचरम्॥ ४॥ समस्तसुखसीमेयं यन्मनो ब्रह्मगोचरम्॥ विचार्यैवं धिया विद्वान्वेदान्ताचार्यवाक्यतः॥ ५॥ भोगानुत्सृज्य तद्धेतून्कामाँस्त्यक्त्वाश्रयेद्धरिम्॥ यत्र यत्र मनो गच्छेच्छब्दादौ भोगगोचरे॥ ६॥ तं तं विचार्य विषयं स वैराग्याद्विवेकतः॥ आभासीकृत्य दोषाणामाकरत्वादसत्त्वतः॥ ७॥ तत आकृष्य परमानन्दरूपे चिदात्मनि॥ स्थापयेदिति तात्पर्यं श्रीमद्भगवतो हरेः॥ ८॥ २६॥

**भा० टी०**—ननु मनसः शब्दादिनिमित्तानुरोधेन रागद्वेषवशादतिचञ्चलस्यास्थिरस्य स्वभावादेव तत्र तत्र विषये प्रवृत्तस्य नैश्चल्यं नैश्चिन्त्यं वा कुत इत्याशङ्क्याह—**यत इति**। एवमात्मसंस्थं मनः कर्तुं प्रवृत्तो योगी यतो यतो यस्माद्यस्मान्निमित्ताच्छब्दादेर्निःसरति निर्गच्छति स्वभावदोषान्मनश्चञ्चलमत एवास्थिरं

लयाभिमुखं ततस्ततस्तस्मात्तस्माच्छब्दादेर्निमित्तान्नियम्य तत्तच्छब्दादिनिमित्तं क्षयिष्णुत्वदुःखसंमिश्रत्वाद्यालोचनेन तत्र तत्र वैराग्यभावनयाऽभावीकृत्यात्मन्येवैतन्मनो वशं नयेत् आत्मवशतामापादयेत् ॥ २६ ॥

**प० टी०**—अथैतावतापि रजोगुणप्रचुरं मनो यद्यात्मप्रवणं न भवेत्तर्हि प्रत्याहारेण वशं नयेदित्याह—**यतो यत इति**। स्वभावतश्चपलं बलाज्जलक्षिप्ततुम्बिकावद्धार्यमाणमस्थिरं मनो यं यं विषयं प्रति निश्चलति निर्गच्छति ततस्ततो विषयान्नियम्य प्रत्याहृत्यात्मन्येव वशं नयेत्। तदुक्तं वासिष्ठे—'हस्तं हस्तेन संपीड्य दन्तैर्दन्तान्विचूर्ण्य च। अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः॥ चित्तमेकं न शक्नोति जेतुं स्वातन्त्र्यवर्ति यत्। ध्यानवार्तां वदन्मूढः स किं लोके न लज्जते' इति। तथा चोक्तं विष्णुपुराणे 'विषयेभ्यः समाहृत्य विज्ञातात्मा मनो मुनिः। चिन्तयेन्मुक्तये तेन ब्रह्मभूतं परेश्वरम्॥ आत्मभावं नयत्येनं तद्ब्रह्मध्यायनं मुने। विकार्यमात्मनः शक्त्या लोहमाकर्षको यथा॥ २६ ॥

**रा० टी०**—यत इति। ध्यानेन मनोऽनवस्थितं चेत्प्रत्याहारेण वशीकुर्यादित्याह—**यतो यत इति**। आद्यादिभ्य उपसंख्यानमिति सप्तम्यर्थे तसिः। यत्र यत्र विषये स्वतश्चञ्चलं मनोऽस्थिरं सत् निश्चरति प्रवर्तते ततस्तत एतन्मनो नियम्य प्रत्याहृत्य तदात्मन्येव भगवत्येव वशं तन्निष्ठमेव नयेत् कुर्यादित्यर्थः॥ २६ ॥

**प्रशान्तमनसं ह्येनं योगिनं सुखमुत्तमम्॥**
**उपैति शान्तरजसं ब्रह्मभूतमकल्मषम्॥ २७॥**

**त० टी०—एवं विषयेभ्यः प्रत्याहृत्यात्मनि वशीकृतमनसो यत्फलं स्यात्तदाह—प्रशान्तमनसमिति। पुनः पुनर्निरोधेन प्रशान्तमात्मनि निश्चलं मनो यस्य तम्। तत्र हेतुगर्भितविशेषणद्वयम्—शान्तरजसं शान्तं सर्वकामनामूलं रजो यस्य तत एवाकल्मषं निर्गतसमस्तपापमत एव ब्रह्मभूतं निर्दोषसमरूपमेनं योगिनमुत्तमं सुखमुपैति प्राप्नोति॥ २७॥**

**म० टी०**—एवं योगाभ्यासबलादात्मन्येव योगिनः प्रशाम्यति मनः ततश्च प्रशान्तेति प्रकर्षेण शान्तं निर्वृत्तिकतया निरुद्धं संस्कारमात्रशेषं मनो यस्य तं प्रशान्तमनसं वृत्तिशून्यतया निर्मनस्कं निर्मनस्कत्वे हेतुगर्भं विशेषणद्वयं शान्तरजसमकल्मषमिति शान्तं विक्षेपकं रजो यस्य तं विक्षेपशून्यं तथा न विद्यते कल्मषं लयहेतुस्तमो यस्य तमकल्मषं लयशून्यं शान्तरजसमित्यनेनैव तमोगुणोपलक्षणे अकल्मषं संसारहेतुधर्माधर्मादिवर्जितमिति वा ब्रह्मभूतं ब्रह्मैव सर्वमिति निश्चयेन समं ब्रह्मप्राप्तं जीवन्मुक्तमेनं योगिनमेवमुक्तेन प्रकारेणेति श्रीधरः। उत्तमं निरतिशयं सुखमुपैत्युपगच्छति। मनस्तद्वृत्त्योरभावे सुषुप्तौ स्वरूपसुखाविर्भावप्रसिद्धिं द्योतयाति हिशब्दः। तथा च प्राग्व्याख्यातं सुखमात्यन्तिकं यत्तदित्यत्र॥ २७॥

**शं० टी०**—पुनः पुनर्विषयेभ्यस्तत्तद्दोषोद्घाटनपूर्वकमाकृष्य मन आत्मन्येव स्थापयित्वाऽत्यन्तश्रद्धया चिरकालं नित्यनिरन्तरं चित्प्रत्ययावृत्तिमेव कुर्वतो योगिनो यतेर्बाह्यवासनातत्प्रत्ययानां च निःशेषसंक्षये सति यदा ब्रह्मणि मनः प्रशान्तिमेति तदा सुखं ब्राह्ममनुत्तममाविर्भवतीत्याह—**प्रशान्तेति**। शान्तरजसं नित्यनिरन्तरसमाधिनिष्ठया शान्तो विनष्टो रजो रजोगुणः रज इति तमसोऽप्युपलक्षणं तमोगुणश्च स्वकार्यैः कामक्रोधलोभमोहाहंकारममकारादिभिः सह यस्य स शान्तरजास्तं शान्तरजसं केवलं शुद्धसत्त्वस्वभावमत एवाऽकल्मषं अन्तःकरणस्य कल्मषं भेदवासना एव राजस्यस्तामस्यः सत्त्वमिश्रीभूतभौतिकगोचरा यास्ताः सर्वा न विद्यन्ते यस्य चित्ते सोऽकल्मषस्तमत एव प्रशान्तमनसं विक्षेपविपरीतभावहेत्वो रजस्तमोगुणयोः सकार्ययोर्निःशेषविनाशाद्वृत्तिशून्यतया प्रशान्तं प्रकर्षेण शान्तं प्रशान्तं अविषयाकारतामेव समापन्नं मनो यस्य तं प्रशान्त-

मनसमत एव ब्रह्मभूतं ब्रह्मैवाहमित्युपाधिकृतपरिच्छित्तिं परित्यज्य पूर्णात्मनैव स्थितमेनं योगिनं ब्रह्मविदं यतिमनुत्तमं यस्मादुत्तमं नास्ति तदनुत्तममनुपमं नित्यं निरतिशयं साधनानपेक्षमयत्नसिद्धमक्षय्यमात्मभूतमात्मैकवेद्यं ब्राह्मं सुखमुपैति तदा प्राप्नोतीत्यर्थः । साधननिरपेक्षापारसुखाविर्भावः सुषुप्तौ सर्वप्रत्यक्षः "एषोऽस्य परमानन्दः" इत्यादिश्रुतिप्रसिद्धश्चेति प्रसिद्धिद्योतनार्थो हिशब्दः ॥ २७ ॥

श्री० टी०—एवं प्रत्याहारादिभिः पुनः पुनर्मनोवशीकुर्वन्तं रजोगुणक्षये सति योगसुखं प्राप्नोतीत्याह—प्रशान्तमनसमिति । एवमुक्तेन प्रकारेण शान्तं रजो यस्य तम् अत एव प्रशान्तं मनो यस्य तमेनं निष्कल्मषं ब्रह्मत्वं प्राप्तं योगिनमुत्तमं सुखं समाधिसुखं स्वयमेवोपैति प्राप्नोति ॥ २७ ॥

स० टी०—योगाभ्यासबलादेवं योगिनश्चित्तमात्मनि ॥ प्रशाम्यति ततोऽत्यन्तं शान्तं निर्वृत्तिकं स्थिरम् ॥ १ ॥ मनो यस्य तथा शान्तरजोविक्षेपकं मलम् ॥ कल्मषं लयहेतुर्यत्तमो यस्य न विद्यते ॥ २ ॥ धर्माधर्मादिरूपं वा कल्मषं नो भवप्रदम् ॥ यस्य तं ब्रह्मवस्त्वेव सर्वमस्तीति वेदिनम् ॥ ३ ॥ सम्यग्ज्ञाते परे तत्त्वे क्षीणे मोहमये मले ॥ ब्रह्मभूतं मुनिं शान्तमुपैति सुखमुत्तमम् ॥ ४ ॥ दृश्यं नास्ति परं ब्रह्मैवास्ति सर्वं निरन्तरम् ॥ इति निश्चयवन्तं तं सुखं समुपगच्छति ॥ ५ ॥ अभावे चित्ततद्वृत्त्योः सुषुप्तौ चित्सुखं परम ॥ स्वयमाविर्भवत्येवं हिशब्दो द्योतयत्ययम् ॥ ६ ॥ २७ ॥

भा० टी०—वशीकरणेन मनस उपरमे फलमाह—प्रशान्तमनसमिति । एवं योगाभ्यासबलाद्योगिन आत्मन्येव मनः शाम्यति ततश्च प्रकर्षेण शान्तं मनो यस्य तं यतः शान्तरजसं प्रक्षीणमोहादिक्लेशरजसमत एव ब्रह्मभूतं ब्रह्मैव सर्वमित्येवंनिश्चयवन्तं जीवन्मुक्तमत एवाकल्मषं धर्माधर्मादिरूपकल्मषवर्जितं योगिनमुत्तममात्यन्तिकं निरतिशयं सुखमुपैत्युपगच्छति ॥ २७ ॥

प० टी०—एवं रजोगुणक्षये सति स्वत एवात्मसुखप्राप्तिरित्याह—प्रशान्तमिति । एवंविधमेनं योगिनं प्रत्युत्तमं सुखं सर्वोत्कृष्टमात्मसुखं स्वत एवोपैत्यधितिष्ठति । किंभूतं योगिनं प्रशान्तमनसमत एव शान्तरजसमत एव ब्रह्मभूतमकल्मषं निरस्तमोहजालम् ॥ २७ ॥

रा० टी०—एवं साङ्ख्ययोगमभिधाय तदनुष्ठातुः फलं प्रपञ्चयति—प्रशान्तेति । प्रशान्तमनसं स्वतो विषयेष्वप्रवृत्तमनसं शान्तरजसं विगतरजोगुणमत एवाकल्मषं कामक्रोधादिदोषहीनं रजोजन्यत्वात्तेषां ब्रह्मभूतं तद्बुद्धय इत्युक्तदिशा ब्रह्मणि स्थितिमन्तमेनं योगिनं समाधियोगवन्तमुत्तमं सुखं कर्तृ उपैति प्राप्नोति। हि प्रसिद्धं श्रुत्यादावित्यर्थः ॥ २७ ॥

**युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः ॥**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ २८ ॥**

त० टी०—तदभ्यासवतो निरतिशयसुखमाह—युञ्जन्निति । एममुक्तप्रकारेण सदात्मानं युञ्जन्विगतकल्मषः विशेषेण गतं समस्तप्राचीनकल्मषं यस्य स तथा सन् योगी ब्रह्मसंस्पर्शं ब्रह्मानुभवरूपमत्यन्तं सुखं सुखेनानायासेन अश्नुते प्राप्नोति ॥ २८ ॥

म० टी०—उक्तं सुखं योगिनः स्फुटीकरोति—युञ्जन्नेवमिति । एवं मनसैवेन्द्रियग्राममित्याद्युक्तक्रमेणात्मानं मनः सदा युञ्जन्समादधत् योगी योगेन नित्यसंबन्धी विगतकल्मषः विगतमलः संसारहेतुधर्माधर्मरहितः सुखेनानायासेन ईश्वरप्रणिधानात् सर्वान्तरायनिवृत्त्या ब्रह्मसंस्पर्शं सम्यक्त्वेन विषयास्पर्शेन सह ब्रह्मणः स्पर्शस्तादात्म्यं यस्मिन् तद्विषयासंस्पर्शि ब्रह्मस्वरूपमित्येतत् अत्यन्तं सर्वानन्तान्परिच्छेदानतिक्रान्तं निरतिशयं सुखमानन्दमश्नुते व्याप्नोति सर्वतो निर्वृत्तिकेन चित्तेन लयविक्षेपविलक्षणमनुभवति विक्षेपे

वृत्तिसत्त्वात् लये च मनसोऽपि स्वरूपेणासत्त्वात् सर्ववृत्तिशून्येन सूक्ष्मेण मनसा सुखानुभवः समाधावेवेत्यर्थः । अत्र चानायासेनेत्यन्तरायनिवृत्तिरुक्ता । ते चान्तराया दर्शिता योगसूत्रेण 'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः' चित्तं विक्षिपन्ति योगादपनयन्तीति चित्तविक्षेपा योगप्रतिपक्षाः संशयभ्रान्तिदर्शने तावद्वृत्तिरूपतया वृत्तिनिरोधस्य साक्षात्प्रतिपक्षौ । व्याध्यादयस्तु सप्त वृत्तिसहचरिततया तत्प्रतिपक्षा इत्यर्थः । व्याधिर्धातुवैषम्यनिमित्तो विकारो ज्वरादिः, स्त्यानमकर्मण्यता गुरुणा शिक्ष्यमाणस्याप्यासनादिकर्मानर्हतेति यावत्, योगः साधनीयो न वेत्युभयकोटिस्पृग्विज्ञानं संशयः स च अतद्रूपप्रतिष्ठत्वेन विपर्ययान्तर्गतोऽपि सन्नुभयकोटिस्पर्शित्वैककोटिस्पर्शित्वरूपावान्तरविशेषविवक्षयात्र विपर्ययाद्भेदेनोक्तः, प्रमादः समाधिसाधनानामनुष्ठानसामर्थ्येऽप्यननुष्ठानशीलता विषयान्तरव्यापृततया योगसाधनेष्वौदासीन्यमिति यावत्, आलस्यं सत्यामप्यौदासीन्यप्रच्युतौ कफादिना तमसा च कायचित्तयोर्गुरुत्वं तच्च व्याधित्वेनाप्रसिद्धमपि योगविषये प्रवृत्तिविरोधि, अविरतिश्चित्तस्य विषयविशेषे ऐकान्तिकोऽभिलाषः, भ्रान्तिदर्शनं योगासाधनेऽपि तत्साधनत्वबुद्धिस्तथा तत्साधनेऽप्यसाधनत्वबुद्धिः, अलब्धभूमिकत्वं समाधिभूमेरेकाग्रतायाश्च अलाभः क्षिप्तमूढविक्षिप्तरूपत्वमिति यावत्, अनवस्थितत्वं लब्धायामपि समाधिभूमौ प्रयत्नशैथिल्याच्चित्तस्य तत्राप्रतिष्ठितत्वं, त एते चित्तविक्षेपा नव योगमला योगप्रतिपक्षा योगान्तराया इति चाभिधीयन्ते । 'दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः' । दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः । तच्चाध्यात्मिकं शारीरं मानसं च व्याधिवशात्कामादिवशाच्च भवति । आधिभौतिकं व्याघ्रादिजनितं, आधिदैविकं ग्रहपीडादिजनितं द्वेषाख्यविपर्ययहेतुत्वात्समाधिविरोधि । दौर्मनस्यमिच्छाविघातादिबलवद्दुःखानुभवजनितश्चित्तस्य तामसः परिणामविशेषः क्षोभापरपर्यायः स्तब्धीभावः । स तु कषायत्वाल्लयवत्समाधिविरोधी । अङ्गमेजयत्वमङ्गकम्पनमासनस्थैर्यविरोधि । प्राणेन बाह्यस्य वायोरन्तःप्रवेशनं श्वासः समाध्यङ्गरेचकविरोधी । प्राणेन कोष्ठयस्य वायोर्बहिर्निःसरणं प्रश्वासः समाध्यङ्गपूरकविरोधी । समाहितचित्तस्यैते न भवन्ति विक्षिप्तचित्तस्यैव भवन्तीति विक्षेपसहभुवोऽन्तराया एव एतेऽभ्यासवैराग्याभ्यां निरोद्धव्याः ईश्वरप्रणिधानेन वा तीव्रसंवेगानामासन्ने समाधिलाभे प्रस्तुते ईश्वरप्रणिधानाद्वेति पक्षान्तरमुक्त्वा प्रणिधेयमीश्वरं 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः', 'तत्र निरतिशयं सर्वज्ञबीजं', 'स पूर्वेषामपि गुरुः कालेनानवच्छेदात्' इति त्रिभिः सूत्रैः प्रतिपाद्य तत्प्रणिधानं द्वाभ्यामसूत्रयत् 'तस्य वाचकः प्रणवः', 'तज्जपस्तदर्थभावनम्' इति 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' ततः प्रणवजपरूपात्तदर्थध्यानरूपाच्चेश्वरप्रणिधानात् प्रत्यक्चेतनस्य पुरुषस्य प्रकृतिविवेकेनाधिगमः साक्षात्कारो भवति, उक्तानामन्तरायाणामभावोऽपि भवतीत्यर्थः । अभ्यासवैराग्याभ्यामन्तरायनिवृत्तौ कर्तव्यायामभ्यासदार्ढ्यार्थमाह—'तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः' तेषामन्तरायाणां प्रतिषेधार्थमेकस्मिन्कस्मिंश्चिदभिमते तत्त्वेऽभ्यासश्चेतसः पुनः पुनर्निवेशनं कार्यम् । तथा 'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम्' मैत्री सौहार्दं करुणा कृपा मुदिता हर्षः उपेक्षा औदासीन्यं सुखादिशब्दैस्तद्वन्तः प्रतिपाद्यन्ते । सर्वप्राणिषु सुखसंभोगापन्नेषु साध्वेतन्मम मित्राणां सुखित्वमिति मैत्रीं भावयेत् न त्वीर्ष्याम् । दुःखितेषु कथं नु नामैषां दुःखनिवृत्तिः स्यादिति कृपामेव भावयेत् नोपेक्षां न वा हर्षम् । पुण्यवत्सु पुण्यानुमोदनेन हर्षं कुर्यान्न तु विद्वेषं न चोपेक्षाम् । अपुण्यवत्सु चौदासीन्यमेव भावयेन्नानुमोदनं न वा द्वेषम् । एवमस्य भावयतः शुक्लो धर्म उपजायते । ततश्च विगतरागद्वेषादिमलं चित्तं प्रसन्नं सदेकाग्रतायोग्यं भवति । मैत्र्यादिचतुष्टयं चोपलक्षणं, अभयं सत्त्वसंशुद्धिरित्यादीनाममानित्वमदम्भित्वमित्यादीनां च धर्माणां सर्वेषामेतेषां शुभवासनारूप-

त्वेन मलिनवासनानिवर्तकत्वात्। रागद्वेषौ महाशत्रू सर्वपुरुषार्थप्रतिबन्धकौ महता प्रयत्नेन परिहर्तव्या-वित्येतत्सूत्रार्थः। एवमन्येऽपि प्राणायामादय उपायाश्चित्तप्रसादनाय दर्शिताः। तदेतच्चित्तप्रसादनं भगवद-नुग्रहेण यस्य जातं तं प्रत्येवैतद्वचनं सुखेनेति अन्यथा मनःप्रशमानुपपत्तेः ॥ २८ ॥

**शं० टी०**—योगमनुष्ठायैव यतिः कृतार्थो भवति सदा सुखं ब्राह्ममक्षय्यमेव प्राप्नोति न कचिद्दुःखल-वमित्युक्तमेव सुखलाभं योगजं योगिनः प्रशंसति मुमुक्षोरवश्यं योगः करणीयो मुक्तिसुखसिद्धय इति सूच-यितुम्—**युञ्जन्निति**। दृश्यं सर्वं मिथ्यैवेति दृश्यमिथ्यात्वं दृढं निश्चित्य सर्वत्र कामसंकल्पपरित्यागपूर्वकं सर्वेन्द्रियाणि निगृह्य बहिरङ्गान्तरङ्गसाधनसंपन्नो भूत्वा योगी समाधिनिष्ठायां प्रवृत्तो यतिरेवं यथाशास्त्रं यथालक्षणं सदा नित्यमात्मानं चिदानन्दैकरसं परिपूर्णमद्वितीयं परं ब्रह्म युञ्जन्ननुसंदधानः सर्वमिदमहं च ब्रह्मैवेत्यखण्डवृत्त्या सर्वं ब्रह्मैव पश्यन् विगतकल्मषः विशिष्य गतं विगतं निःशेषविनष्टं कल्मषं वासना-कृतभेददर्शनलक्षणं यस्य स विगतकल्मषः सन् सुखेनाप्रयत्नेन सिद्धं साधननिरपेक्षमकृत्रिमं ब्रह्मसंस्पर्शं ब्रह्मणा ब्रह्मात्मना संस्पृश्यते अवगम्यत इति ब्रह्मसंस्पर्शं ब्रह्माभिन्नं चिदेकरसमित्यर्थः। यद्वा सं-स्पृशते गृह्यतेऽनेनेति संस्पर्शः स्वरूपं ब्रह्मैव संस्पर्शो यस्य तद्ब्रह्मसंस्पर्शं ब्रह्मात्मकमत एवात्यन्तमन्तं परिमाणमतीत्य तिष्ठतीतयत्यन्तमपारमक्षयं नित्यं शाश्वतं ब्राह्मं सुखमश्नुते जीवन्नेव मुक्तः सन्मुक्तिसु-खमनुभुङ्क्ते इत्यर्थः ॥ २८ ॥

**श्री० टी०**—ततश्च कृतार्थो भवतीत्याह—**युञ्जन्निति**। एवमनेन प्रकारेण सर्वदात्मानं मनो युञ्जन्वशी-कुर्वन्विशेषेण सर्वात्मना गतं कल्मषं यस्य स योगी सुखेनानायासेन ब्रह्मणः संस्पर्शोऽविद्यानिवर्तकः साक्षा-त्कारस्तदेवात्यन्तं सर्वोत्तमं सुखमश्नुते जीवन्मुक्तो भवतीत्यर्थः ॥ २८ ॥

**स० टी०**—स्फुटीकरोति भगवान्योगिनः सुखमीरितम् ॥ मनसैवेन्द्रियग्राममित्याद्युक्तक्रमेण यः ॥ १ ॥ योगेन नित्यसंबन्धी मनो नित्यं समादधत् ॥ संसारहेतुधर्मादिमलशून्योऽतिनिर्मलः ॥ २ ॥ अनायासेन मद्भक्त्या योगप्रत्यूहवर्जितः ॥ सुखं ब्रह्मस्वरूपं यदपरिच्छिन्नमान्तरम् ॥ ३ ॥ लयविक्षेपशून्यत्वात्तद्व्याप्नोति निरन्तरम् ॥ स्वयं ब्रह्मसुखं योगी भूत्वा तिष्ठति निश्चलः ॥ ४ ॥ २८ ॥

**भा० टी०**—योगिनमुत्तमं सुखमुपैतीत्युक्तं तदेव स्फुटयति—**युञ्जन्निति**। एवं यथोक्तेन क्रमेणात्मान-मन्तःकरणं सदा दीर्घकालमादरनैरन्तर्याभ्यां च युञ्जन् आत्मनि स्थिरं कुर्वन् योगान्तरायवर्जित इति भाष्यम्। योगान्तरायाश्च योगसूत्रप्रदर्शिताः 'व्याधिस्त्यानसंशयप्रमादालस्याविरतिभ्रान्तिदर्शनालब्धभूमिक-त्वानवस्थितत्वानि चित्तविक्षेपास्तेऽन्तरायाः', 'दुःखदौर्मनस्याङ्गमेजयत्वश्वासप्रश्वासा विक्षेपसहभुवः' इति। एते रजस्तमोवशात्प्रवर्तमानाश्चित्तस्य विक्षेपा भवन्ति तैरेकाग्रताविरोधिभिश्चित्तं विक्षिप्यत इत्यर्थः। तत्र व्याधिर्धातुवैषम्यनिमित्तो ज्वरादिः, स्त्यानमकर्मण्यता, संशयश्चित्तस्योभयकोटयालम्बनं विज्ञानं योगः साध्यो न वेति, प्रमादोऽनुत्थानशीलता, समाधिसाधने औदासीन्यमालस्यं, कायचित्तयोर्गुरुत्वं योगविषये प्रीत्य-भावहेतुः, अविरतिश्चित्तस्य विषयसंप्रयोगात्मा गर्धः, भ्रान्तिदर्शनं शुक्तिकायां रजतवद्विपर्ययज्ञानं, अल-ब्धभूमिकत्वं कुतश्चिन्निमित्तात्समाधिभूमेरलाभः, अनवस्थितत्वं लब्धावस्थायामपि समाधिभूमौ चित्तस्य तत्राप्रतिष्ठा, एते समाधेरेकाग्रताया यथायोगं प्रतिपक्षत्वादन्तराया इत्युच्यन्ते। चित्तविक्षेपकारकानन्या-नप्यन्तरायान् प्रतिपादयितुमाह—कुतश्चिन्निमितादुत्पन्नेषु विक्षेपेषु एते दुःखादयः प्रवर्तन्ते। तत्र दुःखं चित्तस्य राजसः परिणामो बाधनालक्षणः यद्वाधात्प्राणिनस्तदपघाताय प्रवर्तन्ते, दौर्मनस्यं बाह्याभ्यन्तरैः करणैर्मनसो दौःस्थ्यं, अङ्गमेजयत्वं सर्वाङ्गीणो वेपथुः आसनस्थैर्यस्य बाधकः, प्राणो यद्बाह्यवायुमाचामति स श्वासः, यत्कौष्ठ्यं वायुं निश्वसिति स प्रश्वास इति योगसूत्रार्थः। विगतकल्मषः पापादिरहितः सुखेनानायासे-

नात्यन्तं निरतिशयं सुखं ब्रह्मसंस्पर्शं ब्रह्मणा परमात्मना सम्यक् स्पर्शो यस्य तत् ब्रह्माभिन्नं सुखमश्नुते व्याप्नोति ॥ २८ ॥

**प० टी०**–ततश्च कृतार्थो भवतीत्याह–**युञ्जन्नेवमिति** । एवममुना प्रकारेणात्मानं मनो युञ्जन् वशीकुर्वन् योगी गतकल्मषोऽज्ञानशून्यो भवति । तथाविधः सन् सुखेन सुखोपायेन ब्रह्मणः संस्पर्शोऽविद्यानिवर्तकोऽपरोक्षसाक्षात्कारस्तदेवात्यन्तमात्यन्तिकं सुखं परमानन्दमश्नुते जीवन्मुक्तो भवतीत्यर्थः ॥ २८ ॥

**रा० टी०**–सुखमुपैतीत्युक्तसुखं किमायासेन प्राप्नोति कीदृशं च तदित्यतो व्यनक्ति–**एवमिति** । विगतकल्मषो विगतरागादिदोषो योगी एवमुक्तदिशात्मानं भगवन्तं युञ्जन् ध्यायन्सुखेनाक्लेशेन ब्रह्मसंस्पर्शं भगवत्संसर्गाभिव्यक्तमत्यन्तमतिशयितं सुखमश्नुते प्राप्नोति ॥ २८ ॥

## सर्वभूतस्थमात्मानं सर्वभूतानि चात्मनि ॥
## ईक्षते योगयुक्तात्मा सर्वत्र समदर्शनः ॥ २९ ॥

**त० टी०**–अथ सिद्धयोगस्य योगिनो योगविपाकदशाभेदेन चतुर्धा दर्शनमाह–**सर्वभूतस्थमि-त्यादिचतुर्भिः श्लोकैः** । योग आत्मयाथात्म्यविचारस्तस्मिन्युक्त आत्मा मनो यस्य सः सर्वभूतस्थं सर्वेषु भूतेषु प्राणिषु स्थितमात्मानं सर्वाणि च भूतानि आत्मनि स्वस्वरूपे ईक्षते पश्यति । भूतेष्वात्मन आत्मनि च भूतानां दर्शनानुपपत्तिशङ्कानिवारणाय हेतुगर्भितविशेषणमाह–सर्वत्र समदर्शन इति । सर्वेषु ब्रह्मादिस्थावरान्तेषु परस्परं विषमेष्वपि भूतेषु वैषम्यकारणीभूतप्रकृतिकार्यदेहादिभ्यो विविक्तं ज्ञानस्वरूपत्वेन ब्रह्मात्मकत्वेन च समं विशेषरहितं यदात्मनां स्वरूपं तद्विषयकं दर्शनं ज्ञानं यस्य सः, तथाच स्वात्मनोऽन्येषां च देहादिविलक्षणशुद्धस्वरूपस्य विशेषाभावादेकस्मिन्नात्मनि ज्ञाते सर्वस्य वस्तुनो ज्ञानं समत्वाद्भवेदेवेत्यर्थः । देहानामपि प्राकृतत्वाविशेषेण समत्वमविरुद्धम् । एवं च सर्वभूतेषु समत्वेन स्थितमात्मानमात्मनि च स्थितानि सर्वाणि भूतानि पश्यतीति सूपपन्नम् ॥ २९ ॥

**म० टी०**–तदेवं निरोधसमाधिना त्वंपदलक्ष्ये तत्पदलक्ष्ये च शुद्धे साक्षात्कृते तदैक्यगोचरा तत्त्वमसीति वेदान्तवाक्यजन्या निर्विकल्पकसाक्षात्काररूपा वृत्तिर्ब्रह्मविद्याभिधाना जायते । ततश्च कृत्स्नाऽविद्या तत्कार्यनिवृत्त्या ब्रह्मसुखमत्यन्तमश्नुत इत्युपपादयति त्रिभिः श्लोकैः । तत्र प्रथमं त्वंपदलक्ष्योपस्थितिमाह–**सर्वभूतस्थमिति** । सर्वेषु भूतेषु स्थावरजङ्गमेषु शरीरेषु भोक्तृतया स्थितमेकमेव नित्यं विभुमात्मानं प्रत्यक्चेतनं साक्षिणं परमार्थसत्यमानन्दघनं साक्ष्येभ्योऽनृतजडपरिच्छिन्नदुःखरूपेभ्यो विवेकेनेक्षते साक्षात्करोति तस्मिंश्चात्मनि साक्षिणि सर्वाणि भूतानि साक्ष्याण्याध्यासिकेन संबन्धेन भोग्यतया कल्पितानि साक्षिसाक्ष्ययोः संबन्धान्तरानुपपत्तेर्मिथ्याभूतानि परिच्छिन्नानि जडानि दुःखात्मकानि साक्षिणोऽविवेकेनेक्षते । कः योगयुक्तात्मा योगेन निर्विचारवैशारद्यरूपेण युक्तः प्रसादं प्राप्त आत्मान्तःकरणं यस्य स तथा । तथाच प्रागेवोक्तम्–'निर्विचारवैशारद्येऽध्यात्मप्रसादः', 'ऋतंभरा तत्र प्रज्ञा', 'श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात्' इति । तथा च शब्दानुमानागोचरयथार्थविशेषवस्तुगोचरयोगजप्रत्यक्षेण ऋतंभरसंज्ञेन युगपत्सूक्ष्मं व्यवहितं विप्रकृष्टं च सर्वं तुल्यमेव पश्यतीति सर्वत्र समं दर्शनं यस्येति सर्वत्र समदर्शनः सन्नात्मानमनात्मानं च योगयुक्तात्मा यथावस्थितमीक्षत इति युक्तम् । अथवा यो योगयुक्तात्मा यो वा सर्वत्र समदर्शनः स आत्मानमीक्षत इति योगिसमदर्शिनावात्मेक्षणाधिकारिणावुक्तौ । यथा हि चित्तवृत्तिनिरोधः साक्षिसाक्षात्कारहेतुः तथा जडविवेकेन सर्वानुस्यूतचैतन्यपृथक्करणमपि नावश्यं योग एवापेक्षितः । अत एवाह वसिष्ठः 'द्वौ क्रमौ चित्तनाशस्य योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं

सम्यगवेक्षणम् ॥ असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः ' इति । चित्तनाशस्य साक्षिणः सकाशात्तदुपाधिभूतचित्तस्य पृथक्करणात्तददर्शनस्य तस्योपायद्वयं एकोऽसंप्रज्ञातसमाधिः संप्रज्ञातसमाधौ हि आत्मैकाकारवृत्तिप्रवाहयुक्तमन्तःकरणसत्त्वं साक्षिणाऽनुभूयते निरुद्धसर्ववृत्तिकं तूपशान्तत्वान्नानुभूयत इति विशेषः । द्वितीयस्तु साक्षिणि कल्पितं साक्ष्यमनृतत्वान्नास्त्येव साक्ष्येव तु परमार्थसत्यः केवलो विद्यत इति विचारः । तत्र प्रथममुपायं प्रपञ्चपरमार्थतावादिनो हैरण्यगर्भादयः प्रपेदिरे । तेषां परमार्थस्य चित्तस्यादर्शनेन साक्षिदर्शने निरोधातिरिक्तोपायासंभवात् श्रीमच्छंकरभगवत्पूज्यपादमतोपजीविनस्त्वौपनिषदाः प्रपञ्चानृतत्ववादिनो द्वितीयमेवोपायमुपेयुः । तेषां ह्यधिष्ठानज्ञानदार्ढ्ये सति तत्र कल्पितस्य बाधितस्य चित्तस्य तद्दृश्यस्य चादर्शनमनायासेनैवोपपद्यते । अत एव भगवत्पूज्यपादाः कुत्रापि ब्रह्मविदां योगापेक्षां न व्युत्पादयांबभूवुरत एव चौपनिषदाः परमहंसाः श्रौते वेदान्तवाक्यविचार एव गुरुमुपसृत्य प्रवर्तन्ते ब्रह्मसाक्षात्काराय न तु योगे विचारेणैव चित्तदोषनिराकरणेन तस्यान्यथासिद्धत्वादिति कृतमधिकेन ॥ २९ ॥

शं० टी०—योगस्य फलमप्रतिबद्धमात्मैकत्वदर्शनमात्मानन्दानुभूतिश्च । तत्र क्रममविवक्षित्वा द्वयोरप्येकैवात्मानन्दानुभूतिर्दर्शिताऽधुना द्वितीयमात्मैकत्वदर्शनं सर्वसंसारदुःखनिर्मूलनकारणं प्रतिपाद्यते—**सर्वभूतस्थमिति** । पुरुषं परमपुरुषार्थेन योजयति संघट्टयतीति योगः बहुजन्मकृतं पुण्यपुञ्जपरिपाकजन्यं प्रत्यग्दर्शनं यस्मिन् सत्येवाप्रतिबन्धेन पुरुषस्य मोक्षस्तेन योगेन सम्यग्दर्शनेनैव युक्तः आत्मा मनो यस्य स योगयुक्तात्मा ब्रह्माकाराकारितान्तःकरणस्तत एव समदर्शनः समं समभावापन्नं विशेषग्रहणनिर्मुक्तं चिरकालयोगाभ्यासवशात्सर्वत्र सन्मात्रग्रहणशीलं दर्शनं यस्य स समदर्शनो ब्रह्मवित्तमः स्वयं सर्वभूतस्थं भवन्तीति भूतानि अधिष्ठानाग्रहणदोषेण ततः पृथक् सत्तावन्तीव प्रतीयमानान्यव्याकृतादीनि ब्रह्मादिस्तम्बान्तानि च यानि तेषु सर्वेषु भूतेषु ब्रह्माण्डे सूर्यवद् गृहेषु प्रदीपवद्घटादिष्वाकाशवदविकारात्मना तिष्ठतीति सर्वभूतस्थमात्मानं यथाऽस्मिन् कार्यकरणसंघाते देहेन्द्रियप्राणमनोबुद्ध्यादीनां तद्धर्मतत्कर्मतदवस्थानां च साक्षित्वेन सर्वप्रकाशकत्वेनाऽहमर्थतया निरभिमानेनाहं तिष्ठामि तथैव सर्वभूतेष्वपि भूततदवस्थातद्धर्मतत्कर्मादीनां साक्षित्वेन प्रकाशकत्वेनाहमर्थत्वेनाविकारात्मनाहमेवैकरूपेण चैतन्यात्मना तिष्ठामीत्येवंभूतानुभूत्या स्वस्यैव सर्वत्र तथा स्थितिमनुभावयित्र्या स्वसद्भावं सर्वतो विनिश्चित्य सर्वभूतेषु प्रत्यग्रूपेण वर्तमानमात्मानं स्वमेकमेव समीक्षते सम्यगनुभवति एवं सर्वभूतेष्वात्मैकत्वं विज्ञाय बाह्यनिर्विकल्पसमाधिनिष्ठानिष्पन्नाधिष्ठानयाथात्म्यविज्ञानबलेनात्मन्येव परिपूर्णे सच्चिदानन्दैकरसे निर्विकल्पे निराकारे निर्विशेषे स्वस्वरूपे सर्वभूतान्यव्याकृतादीनि स्थूलान्तानि सकार्याण्यात्ममात्राण्येव समीक्षते यथाऽधिष्ठानविवेकविज्ञानेन घटशरावादीनि मृण्मात्राणि यथा जलतरङ्गफेनबुद्बुदादीनि मरुमात्राणि यथा सर्पशिरउरःपुच्छादीनि रज्जुमात्राणि समीक्षते विवेकी पुरुषः, तथा ब्रह्मविदपि योगानुष्ठानसमुत्पन्नाप्रतिबद्धाद्वैतात्मविज्ञानबलेन सर्वाण्यपि च भूतान्यधिष्ठानाज्ञानतः प्रतीतान्यात्ममात्राण्येव समीक्षते अहमेवेदं सर्वमिति सर्वमात्मानमेव साक्षादनुभवति न तु स्वस्मात्तेषां पृथक् सत्तां पश्यति एवमाधाराधेयोभयात्मना प्रतीतमात्मानं नित्यशुद्धबुद्धमुक्तस्वभावमेवाद्वितीयं निष्कलं निष्क्रियं शान्तमनन्तमपारसुखं पश्यति सर्वसंसारदुःखनिर्मुक्तमत इदमेव दर्शनं मुक्तेः परमकारणमिति सूचितं भवति न तु योगः सांख्यं कर्म च स्तोत्रमन्त्रजपादिश्च । तथाच श्रुतिः " सर्वभूतेषु चात्मानं सर्वभूतानि चात्मनि । संपश्यन् ब्रह्म परमं याति नान्येन हेतुना " इति । एतेन संसारसागरनिमग्नात्मोद्धरणाय मुमुक्षोर्विदेहकैवल्यार्थिनः समाधिरवश्यं कर्तव्य इति सिद्धम् ॥ २९ ॥

श्री० टी०—ब्रह्मसाक्षात्कारमेव दर्शयति—**सर्वभूतस्थमिति** । योगेनाभ्यस्यमानेन युक्तात्मा समाहित-

चित्तः सर्वत्र समं ब्रह्मैव पश्यतीति समदर्शनः स्वमात्मानमविद्याकृतदेहादिपरिच्छेदशून्यं सर्वभूतेषु ब्रह्मादिस्थावरान्तेष्ववस्थितं पश्यति तानि च आत्मन्यभेदेन पश्यति ॥ २९ ॥

स० टी०—इदानीं योगसंसिद्धं फलं ब्रह्मैक्यदर्शनम् ॥ सर्वसंसारविच्छेदकारणं तत्प्रदर्श्यते ॥ १ ॥ आब्रह्मस्थावरान्तेषु सर्वभूतेषु चिद्घनम् ॥ स्वात्मानमेकमद्वैतमनुस्यूतं प्रपश्यति ॥ २ ॥ तथा सर्वाणि भूतानि ब्रह्मादीन्यात्मवस्तुनि ॥ ऐक्यं गतानि युक्तात्मा पश्यत्यात्मैक्यदृङ्मुनिः ॥ ३ ॥ साक्ष्येभ्योऽनृतदुःखेभ्यो विवेकेन विविच्य यः । साक्षिणं प्रत्यगात्मानमसङ्गं परिपश्यति ॥ ४ ॥ साक्षिण्यखिलभूतानि कल्पितान्यात्ममायया ॥ आध्यासिको हि संबन्धो मायया साक्षिसाक्ष्ययोः ॥ ५ ॥ तन्निरस्य विवेकेन मिथ्याभूतानि पश्यति ॥ योगेनैकाग्र्यरूपेण चित्तं यस्य समाहितम् ॥ ६ ॥ सर्वत्रास्ति समं यस्य दर्शनं ब्रह्मगोचरम् ॥ स योगी ब्रह्मविद्ब्रह्म पश्यत्यन्यन्न पश्यति ॥ ७ ॥ २९ ॥

भा० टी०—इदानीं सर्वसंसारविच्छेदकारणं ब्रह्मात्मैकत्वदर्शनं योगस्य यत्फलं तद्दर्शयति—सर्वेति । सर्वभूतस्थं सर्वेषु ब्रह्मादिस्तम्बपर्यन्तेषु स्वमात्मानं सर्वभूतानि चात्मनि एकतां गतानि योगयुक्तात्मा समाहितान्तःकरण ईक्षते पश्यति सर्वेषु ब्रह्मादिस्थावरान्तेषु गुणरूपसंस्कारवस्तुविक्रियारहितं समं निर्विशेषब्रह्मात्मैक्यविषयं दर्शनं यस्य स सर्वत्र समदर्शनः । एतेनानेन श्लोकेन त्वंपदोपस्थितेर्द्वितीयेन तत्पदोपस्थितेस्तृतीयेनाखण्डार्थोपस्थितेर्वर्णनं प्रत्युक्तं, अखण्डार्थसाक्षात्कारं विना तस्याहं न प्रणश्यामि स च मे न प्रणश्यति इतिफलानुपपत्तेः । यदपि अथ यो योगयुक्तात्मा यो वा सर्वत्र समदर्शनः स आत्मानमीक्षते इति योगिसमदर्शिनावात्मेक्षणाधिकारिणावुक्तौ यथाहि चित्तवृत्तिनिरोधः साक्षिसाक्षात्कारहेतुः तथा जडविवेकेन सर्वानुस्यूतचैतन्यपृथक्करणमपि नावश्यं योग एवापेक्षितः । अत एवाह वसिष्ठः—'द्वौ क्रमौ चित्तनाशाय योगो ज्ञानं च राघव । योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम् ॥ असाध्यः कस्यचिद्योगः कस्यचित्तत्त्वनिश्चयः । प्रकारौ द्वौ ततो देवो जगाद परमः शिवः' इति तत्र प्रथमोपायं प्रपञ्चपरमार्थवादिनो हैरण्यगर्भादयः प्रपेदिरे तेषां परमार्थस्य चित्तस्यादर्शने तिरोधानातिरिक्तोपायासंभवात् । श्रीमच्छंकरभगवत्पूज्यपादमतोपजीविनस्त्वौपनिषदाः प्रपञ्चानृतत्ववादिनः द्वितीयमेवोपायमुपेयुः । तेषां ह्यधिष्ठानज्ञानदार्ढ्ये सति तत्र कल्पितस्य बाधितस्य चित्तस्य तद्दृश्यस्य चादर्शनमनायासेनैवोपपद्यते अत एव भगवत्पूज्यपादाः कुत्रापि ब्रह्मविदां योगापेक्षां न व्युत्पादयांबभूवुः । अत एव चौपनिषदाः परमहंसाः श्रौते वेदान्तवाक्यविचारे एव गुरुमुपसृत्य प्रवर्तन्ते ब्रह्मसाक्षात्काराय न तु योगे । विचारेणैव चित्तदोषनिराकरणेन तस्यान्यथा सिद्धत्वादिति तदप्युपेक्ष्यं, "आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो दिनिध्यासितव्यः" इतिश्रुत्याधिकारिविशेषणीभूतसाधनचतुष्टयान्तर्गतशमाद्युपेतसमाहितत्वोत्तरभाविब्रह्मजिज्ञासायाम् 'अथातो ब्रह्मजिज्ञासा' इतिसूत्रस्थाथशब्देन सूचितत्वाच्च । योगसिद्ध्युत्तरं ब्रह्मदर्शनार्थं श्रवणादेरावश्यकत्वेन तथैव श्रवणादावधिकारसिद्ध्यर्थं चित्तशोधककर्मयोगवत्तन्निरोधकध्यानयोगस्याप्यावश्यकत्वेन च अथेत्यादेरसङ्गतत्वात् । यत्र तु श्रवणादिकं विनैव तत्त्वसाक्षाकारो दृश्यते यत्र चास्मिञ्जन्मनि ध्यानयोगाद्यभ्यासं विनैव श्रवणादिना स दृश्यते तत्र जन्मान्तरीयं श्रवणादिकं योगाद्यभ्यासश्च कल्प्यः । यदपि अत एवाह वसिष्ठ इत्यादि तदपि प्रकृतासङ्गतमेव, साक्षिणि कल्पितं साक्ष्यमनृतत्वान्नास्त्येव साक्ष्येव तु परमार्थसत्यः केवलो विद्यत इति विचारात्मकस्य सम्यगवेक्षणस्य चित्तैकाग्रतां विनाऽनुपपत्तेः साधनचतुष्टयसंपन्नस्यैव ब्रह्मविचारे अधिकार इति जिज्ञासासूत्रे निर्णीतत्वात् । वासिष्ठवचनं तु न साक्षिसाक्षात्कारे हेतुद्वयप्रतिपादनपरं किंतु चित्तनाशे चित्तैकाग्रतोत्तरं क्रमद्वयकथनपरं 'योगो वृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्' इत्यनेन

वृत्तिनिरोधरूपेण समाधिना चित्तं नाशनीयमथवा सम्यग्ज्ञानेनेत्युक्तत्वात् । एतेन " तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय " इतिश्रुतिविरुद्धमिदं वासिष्ठोक्तमिति शङ्काऽपि निरस्ता श्रुत्या मोक्षं प्रति साधनान्तरनिषेधोक्तेः जीवोपाधिभूतं चित्तं चेत्यं च विषयजातमात्मनि कल्पितत्वादनृतमिति विचारात्मकसम्यगवेक्षणेन वृत्तिनिरोधेन वा चित्तनाशे विषयतश्चित्ते निवृत्ते सति परात्माभेदज्ञानस्य मोक्षं प्रत्यनन्यसाधनस्योत्पत्त्या मोक्ष इत्यविरोधात् । यदि तु योगस्य मोक्षसाधनत्वं स्वातन्त्र्येण वसिष्ठाभिप्रेतं स्यात्तर्हि तत्त्वज्ञानहीनसमाधिनिन्दापरं तत्र तत्र वासिष्ठोक्तमनर्थकं स्यात् । यद्वा जीवन्मुक्तिसुखसिद्ध्यर्थं वासनाक्षये मनोनाशे च संपादनीये उपायद्वयकथनपरं वसिष्ठवाक्यं, श्रीराम उवाच ' सम्यग्ज्ञानाविलासेन वासनाविलयोदये । जीवन्मुक्तिपदे ब्रह्मन्नूनं विश्रान्तवानहम् ॥ प्राणस्पन्दनिरोधेन वासनाविलयोदये । जीवन्मुक्तिपदे ब्रह्मन् वद विश्रम्यते कथम् ॥ सुलभत्वाददुःखत्वात्कतरः शोभनोऽनयोः । येनावगतमात्रेण भूयः क्षोभो न बाधते ' इति रामचन्द्रप्रश्नानुसरणस्यावश्यकत्वात् । यदप्यत एव भगवत्पूज्यपादाः इत्यादि तत्रापि किं तत्त्वज्ञानोत्तरं योगापेक्षां न व्युत्पादयांबभुवुः उत ज्ञानसाधनत्वे । नाद्यः तथा जडविवेकेनेत्युपक्रमाननुरोधात्(?)।न द्वितीयः(?)तस्मात्किमपि वक्तव्यं यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति। उच्यते नित्यानित्यवस्तुविवेकः इहामुत्रार्थभोगविरागः शमदमादिसाधनसंपत् मुमुक्षुत्वं चेति । तेषु हि सत्सु प्रागपि धर्मजिज्ञासाया ऊर्ध्वं च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुं च न विपर्यये ' इति । जिज्ञासासूत्रे " शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत् " इति श्रुत्युक्तशमादिपञ्चकस्य " श्रद्धावित्तो भूत्वा " इतिश्रुत्यन्तरोक्तश्रद्धासहितस्य भाष्यकारैरुक्तत्वात् । नहि योगाभ्यासं विना शमादयः सिध्यन्ति । तदुक्तम् ' तत्कारणं सांख्ययोगाभिपन्नं ज्ञात्वा देवं मुच्यते सर्वपाशैः ' इति तेषां प्रकृतानां कामानां कारणं साख्ययोगाभ्यां विवेकध्यानाभ्यामभिपन्नं प्रत्युक्तया प्राप्तं देवं ज्ञात्वा सर्वपाशैरविद्यादिभिर्मुच्यत इत्यर्थः । तथाच श्वेताश्वतरोपनिषदपि ध्यानयोगस्य तत्त्वज्ञानकारणतां प्रतिपादयति " त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा संनिविश्य । ब्रह्मोडुपेन प्रतरेत विद्वान्स्रोतांसि सर्वाणि भयावहानि ॥ प्राणान्प्रपीड्येह सुयुक्तचेष्टः क्षीणे प्राणे नासिकयोच्छ्वसीत । दुष्टाश्वयुक्तमिव वाहमेनं विद्वान्मनो धारयेताप्रमत्तः ॥ समे शुचौ शर्करावह्निवालुकाभिर्विवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुःपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥ नीहारधूमार्कानिलानलानां खद्योतविद्युत्स्फटिकशशिनाम् । एतानि रूपाणि पुरः सराणि ब्रह्मण्यभिव्यक्तिकराणि योगे ॥ पृथ्व्यप्यतेजोनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते । न तस्य रोगो न जरा न मृत्युः प्राप्तस्य पञ्चाग्निमयं शरीरम् ॥ लघुत्वमारोग्यमलोलुपत्वं वर्णप्रसादं स्वरसौष्ठवं च । गन्धः शुभो मूत्रपुरीषमल्पं योगप्रवृत्तिं प्रथमां वदन्ति ॥ यथैव बिम्बं मृदयोपलिप्तं तेजोमयं भ्राजते तत्सुधान्तम् । तदात्मतत्त्वं प्रसमीक्ष्य देही एकः कृतार्थो भवते वीतशोकः ॥ यदात्मतत्त्वेन तु ब्रह्मतत्त्वं दीपोपमेनेह युक्तः प्रपश्येत् । अजं ध्रुवं सर्वतत्त्वैर्विशुद्धं ज्ञात्वा देवं मुच्यते सर्वपाशैः ॥ एषो हि देवः प्रदिशोनु सर्वाः पूर्वो हि जातः स उ गर्भे अन्तः । स एव जातः स जनिष्यमाणः प्रत्यङ् जनास्तिष्ठति सर्वतोमुखः ॥ यो देवाग्नौ योऽप्सु यो विश्वं भुवनमाविवेश । य ओषधीषु यो वनस्पतिषु तस्मै देवाय नमः " इति । त्रिरुन्नतमित्यत्र त्रीणि उरोग्रीवाशिरांसि उन्नतानि यस्मिञ्छरीरे तत्त्र्युन्नतं त्रिरुन्नतमिति तु च्छान्दसम्। ब्रह्मोडुपेन तारप्लवेन स्रोतांसि सुरनरतिर्यक्स्थावरादिभेदभिन्नानि संसारस्रोतांसि अनेनोपायसंसारदुःखमहोदधिं प्रतरेदिति योग्याधिकारिणं श्रुतिरनुशास्ति नीहारादिसदृशान्येतानि योगिनोऽनुभवसिद्धानि एतानि बुद्धेः रूपाणि योगे क्रियमाणे ब्रह्मण्यभिव्यक्तिकराणि ब्रह्माभिव्यक्तिद्योतकानि पुरःसराणि पूर्वरूपाणि लिङ्गानि क्रमेणाविर्भवन्ति । अथवा ब्रह्मणि ब्रह्मविषययोगे चित्तवृत्तिनिरोधलक्षणे अभिव्यक्तिकराणि द्योतका-

नि ब्रह्मविषयचित्तवृत्तिनिरोधलक्षणयोगस्याभिव्यक्तिकराणीति यावत् । भूतजयप्रकारं भूतजयकारणं चाह- पृथिवीं तन्मण्डलं निवृत्त्याख्यं तच्छक्तींश्च साक्षात्कारेणोपास्य तेनोपासनेन तद्वशीकरणे सति अनन्तर- माप्यं तन्मण्डलं प्रतिष्ठाख्यं तच्छक्तिं चाहंत्वेनाप्सु भावयित्वा तेन तद्वशीकरणे सति अनन्तरं तेजोभूतं तन्मण्डलं विद्याख्यं तच्छक्तिं चाहंतया चिन्तयित्वा तेन तद्वशीकरणं कृत्वा एवं पृथिव्यामप्सु तेजसि वा- यौ खे च क्रमेण समुत्थिते ध्यानेन तत्तत्प्रयुक्तकार्ययोग्यतया वशीकृते पञ्चात्मके योगगुणे प्रवृत्ते पृथि- व्यादितन्मण्डलतच्छक्तीनामुत्तरोत्तरत्रयेण पूर्वपूर्वत्रयं वेष्टितं बुद्धौ तत्सर्वं स्वाभेदेन चिन्तयित्वा तेनोपास- नेन पञ्चात्मके योगगुणे प्रवृत्ते भूतपञ्चकस्य यथेष्टविनियोज्यत्वयोग्यतालक्षणे गुणे तस्य योगिनः प्रवृत्ति- निष्पादितस्य योगिनो योगो ध्यानं तदेवाग्निर्योगाग्निस्तेन ध्यानेन वशीकृत्य पञ्चभूतात्मकं शरीरं प्राप्तस्य तदस्मीत्यभिमातुरुक्तफलं सिध्यति । यथैव बिम्बमादर्शादि मृदयोपलिप्तं मृदया मृजया शुद्धिसाधनेन भस्मा- दिनोपलिप्तं जकारस्य दकारः तेजोमयं पूर्वमेव प्रचुरतेजस्कं सुधान्तं भस्माद्युपलेपनेन भस्मादिमलेन ह्युप- लिप्तेन सहापाकृतपूर्वमलं तद्दर्पणादि भ्राजते दीप्यते तद्वत् । स एव प्रत्यङ्जनास्तिष्ठति अनन्तसमष्टिव्य- ष्ट्यात्मककार्यकरणोपाधिषु एषु प्रत्यगन्तरत्वेन जना इति शब्दाभिलाप्यो भूत्वा स एव परमात्मा तिष्ठतीति- कठिनश्रुतीनामर्थः । एतदादिश्रुतीनां योगी युञ्जीत सततमात्मानं रहसि स्थित इत्याद्या गीतास्मृतयः । अत एव तासां स्मृतीनां मूलभूता एतदाद्याः श्रुतय एव यथायोगमुदाहार्याः न योगस्मृतयः गीतास्मृतीनां वेद- मूलकत्वात् । तथाच सांख्यस्मृतीनां योगस्मृतीनां तर्कस्मृतीनां च वेदाविरोधिनीनामेव प्रामाण्यं नेतरासां तथाच प्रमाणलक्षणस्थं पारमर्षं सूत्रम् ‘ विरोधे त्वनपेक्षं स्यादसति ह्यनुमानम् ’ इति “ औदुम्बरीं स्पृष्ट्वो- द्गायेत्”इति प्रत्यक्षश्रुतिविरुद्धा सा सर्वा वेष्टयितव्येति स्मृतिर्मानं न वेति संशये मूलश्रुत्यनुमानान्मानमिति प्राप्ते राद्धान्तः क्लृप्तश्रुतिविरोधे श्रुतिप्रामाण्यमनपेक्षमपेक्षाशून्यं हेयमिति यावत् । हि यतोऽसति विरोधे श्रुत्यनु- मानं भवति अत्र तु विरोधे सति श्रुत्यनुमानायोगान्मूलाभावात्सर्ववेष्टनस्मृतिरप्रमाणमित्यर्थः । एवं च शमा- दिप्रतिपादकश्रुतेः श्वेताश्वतरोपनिषदोऽनुरोधिन्यो योगस्मृतयः प्रमाणं तथा “ आत्मा वा अरे द्रष्टव्यः श्रोत- व्यो मन्तव्यो निदिध्यासितव्यः । ततस्तु पश्यति निष्कलं ध्यायमानः ” इत्यादिश्रुत्युपबृंहणरूपाः ससाध- नसमाधिनिरूपणपराश्च स्मृतयः नास्तिकमतमिवास्तिकमतानां सर्वांशत्यागायोगात् । तथाच एतेन योगः प्रयुक्त इति सूत्रस्थं भाष्यं एतेन सांख्यस्मृतिप्रत्याख्यानेन योगस्य स्मृतिरपि प्रत्याख्याता द्रष्टव्येत्यतिदिशति । तत्रापि स्मृतिविरोधेन प्रधानं स्वतन्त्रमेव कारणं महदादीनि च कार्याण्यलोकवेदप्रसिद्धानि कल्प्यन्ते । नन्वेवं सति समानन्यायत्वात् पूर्वेणैव एतद्गतं किमर्थं पुनरतिदिश्यते अस्ति तत्राभ्यधिका शङ्का सम्यग्दर्शना- भ्युपायो हि वेदे विहितः “ श्रोतव्यो मन्तव्यो निदिध्यासितव्यः” इति ‘ त्रिरुन्नतं स्थाप्य समं शरीरम् ’ इत्यादिना आसनादिकल्पनापुरःसरं बहुप्रपञ्चयोगविधानं श्वेताश्वतरोपनिषदि दृश्यते लिङ्गानि च वैदि- कानि योगविषयाणि सहस्रश उपलभ्यन्ते ‘ तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ’ इति ‘ विद्या- मेतां योगविधिं च कृत्स्नम् ’ इतिचैवमादीनि योगशास्त्रेऽपि । अथ तत्त्वदर्शनोपायो योग इति सम्यग्दर्श- नाभ्युपायत्वेनैव योगोऽङ्गीक्रियतेऽतः संप्रतिपन्नार्थैकदेशत्वादष्टकादिस्मृतिवद्योगस्मृतिरप्यनपवदनीया भवि- ष्यतीति इयमप्यधिका शङ्काऽतिदेशेन निवर्त्यते अर्थैकदेशसंप्रतिपत्तावप्यर्थैकदेशविप्रतिपत्तेः पूर्वोक्ताया दर्शनात् सतीष्वप्यध्यात्मविषयासु बह्वीषु स्मृतिषु सांख्ययोगस्मृत्योरेव निराकरणे यत्नः कृतः सांख्ययोगौ हि परमपुरुषार्थसाधनत्वेन लोके प्रख्यातौ शिष्टैश्च प्रगृहीतौ लिङ्गेनोपबृंहितौ तत्कारणं ‘सांख्ययोगाभिपन्नम् ज्ञात्वा देवं मुच्यते सर्वपाशैः’ इति निराकरणं तु न सांख्यज्ञानेन वेदनिरपेक्षेण योगमार्गेण वा निःश्रेयसम- धिगम्यते श्रुतिर्हि वैदिकादात्मैकविज्ञानादन्यन्निःश्रेयससाधनं वारयति “ तमेव विदित्वाऽतिमृत्युमेति

नान्यः पन्था विद्यतेऽयनाय " इति द्वैतिनो हि ते सांख्ययोगाश्च नात्मैकत्वदर्शिनः यत्तु दर्शनमुक्तं तत्कारणसांख्ययोगाभिपन्नमिति वैदिकमेव तत्र ज्ञानं ध्यानं च सांख्ययोगशब्दाभ्यामभिलप्यते प्रत्यासत्तेरित्यवगन्तव्यम्। येन त्वंशेन न विरुध्यते तेनेष्टमेव सांख्ययोगस्मृत्योः सावकाशत्वम्। तद्यथा"असङ्गो ह्ययं पुरुषः" इत्येवमादिश्रुतिप्रसिद्धमेव पुरुषस्य विशुद्धत्वं निर्गुणपुरुषनिरूपणेन सांख्यैरुपगम्यते तथा योगैरपि। "अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः" इत्येवमादिश्रुतिप्रसिद्धमेव निवृत्तिनिष्ठत्वं प्रव्रज्याद्युपदेशेनाभ्युपगम्यते। एतेन सर्वाणि तर्कस्मरणानि प्रतिवक्तव्यानि। तान्यपि तर्कोपपत्तिभ्यां तत्त्वज्ञानायोपकुर्वन्तीति चेत् उपकुर्वन्तु नाम तत्त्वज्ञानं तु वेदान्तवाक्येभ्य एव भवति "नावेदविन्मनुते तं बृहन्तम्। तं त्वौपनिषदं पुरुषं पृच्छामि" इत्येवमादिश्रुतिभ्यः इति। तस्मादेतद्भाष्यादुदाहृतश्रुतिभ्यो गीतास्मृतिभ्यश्च औपनिषदानां परमहंसानां चित्तदोषनिरासार्थं श्रुत्यविरोधितत्त्वज्ञानसाधनभूतयोगाभ्यासे प्रवृत्तेरौचित्याच्च। अत एव चौपनिषदा इत्यसङ्गतमित्यलं विस्तरेण ॥ २९ ॥

प० टी०—एवं निरन्तरमन्तर्ध्यानावस्थस्य देहानुबन्धेनात्मानुभवमुक्त्वाधुना कदापि बाह्यदृष्टेः सर्वात्मकत्वेनात्मप्रतीतिमीशावास्योपनिषदुक्तां दर्शयति—**सर्वभूतस्थमिति**। योगेनाभ्यसनेन युक्तः समाहित आत्मा मनो यस्यैवंविध आत्मानं समष्टिरूपं सर्वभूतेषु स्थूलव्यष्टिरूपेष्वन्तर्यामित्वेन तिष्ठन्तमीक्षते पश्यति तथा सर्वभूतान्यात्मनि स्थूलसमष्टिरूपे जलतरङ्गवत्तादात्म्येन पश्यति। अत एव सर्वत्र समदर्शनः सर्वभूतेषु समं तारतम्यविवर्जितं दर्शनं प्रतीतिर्यस्य स तथा। श्रुतिश्च—"यस्तु सर्वाणि भूतानि आत्मन्येवानुपश्यति। सर्वभूतेषु चात्मानं न तदा विचिकित्सति" इति। भाष्यम्—यः पुरुषः सर्वाणि भूतान्यात्मन्येव पश्यति जले तरङ्गानिव तथा सर्वभूतेष्वात्मानमेव पश्यति तरङ्गेषु जलमिव। एवंभूतश्चेत्तदा न विचिकित्सति तारतम्यविचारं न करोतीत्यर्थः ॥ २९ ॥

रा० टी०—एवं युञ्जन्निति ध्यानप्रकरणस्य फलकथनेनोपसंहृत्येदानीं ध्येयमाह—**सर्वेति**। भोक्तारमिति पञ्चमान्ते मच्चित्तो युक्त आसीतेत्यत्रैवाध्याये ध्येयोक्तावपीहोत्तमाधिकारिणां ध्येयस्योक्तिरिति ज्ञेयम्। आत्मानं परमात्मानं ब्रह्मादिसर्वप्राणिगत आत्मनि परमात्मनि सर्वत्र ब्रह्मादितृणान्तेषु भगवन्तमैश्वर्यादिना साम्येन पश्यन्समदर्शनो योगयुक्तात्मा समाधियुक्तमनस्कः ईक्षते पश्यतीत्यर्थः ॥ २९ ॥

**यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ॥**
**तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ ३० ॥**

त० टी०—केवलात्मसमत्वदर्शिनः सकाशात्सर्वत्र परमात्मदर्शिनः श्रैष्ठ्यमाह—**य इति**। यो योगारूढस्तत्त्वदर्शी सर्वत्र ब्रह्मादिपशुकीटान्तेषु प्राणिमात्रेषु वासुदेवं भगवन्तं सर्वस्यान्तर्नियन्तारं पश्यति, सर्वं च ब्रह्मादिप्राणिजातं मयि आधारभूते स्वतन्त्रे च आधेयतया नियम्यतया आयत्ततयाऽवस्थितं पश्यति, तस्यैवंभूतस्य मद्दर्शिनोऽहं न प्रणश्यामि अदृश्यो न भवामि, स च मे न प्रणश्यति स विद्वान् मम वासुदेवस्य भगवतो न प्रणश्यति न परोक्षीभवति। अहं कृपया तज्ज्ञानविषयो भूत्वा तं सदा स्वदर्शनयोग्यं करोमीत्यर्थः ॥ ३० ॥

म० टी०—एवं शुद्धं त्वंपदार्थं निरूप्य शुद्धं तत्पदार्थं निरूपयति—**यो मामिति**। यो योगी मामीश्वरं तत्पदार्थमशेषप्रपञ्चकारणमायौपाधिकमुपाधिविवेकेन सर्वत्र प्रपञ्चे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वोपाधिविनिर्मुक्तं परमार्थसत्यमानन्दघनमनन्तं पश्यति योगजेन प्रत्यक्षेणापरोक्षीकरोति तथा सर्वं च प्रपञ्चजातं मायया मय्यारोपितं मद्भिन्नतया मृषात्वेनैव पश्यति तस्यैवं विवेकदर्शिनोऽहं तत्पदार्थो भग-

वान्न प्रणश्यामि ईश्वरः कश्चिन्मद्भिन्नोऽस्तीति परोक्षज्ञानविषयो न भवामि किंतु योगजापरोक्षज्ञानविषयो भवामि । यद्यपि वाक्यजापरोक्षज्ञानविषयत्वं त्वंपदार्थाभेदेनैव तथापि केवलस्यापि तत्पदार्थस्य योगजापरोक्षज्ञानविषयत्वमुपपद्यत एव । एवं योगजेन प्रत्यक्षेण मामपरोक्षीकुर्वन् स च मे न प्रणश्यति परोक्षो न भवति स्वात्मा हि मम स विद्वानतिप्रियत्वात्सर्वदा मदपरोक्षज्ञानगोचरो भवति, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्युक्तेः । तथैव शरशय्यास्थभीष्मध्यानस्य युधिष्ठिरं प्रति भगवद्वचनोक्तेः अविद्वांस्तु स्वात्मानमपि सन्तं भगवन्तं न पश्यति अतो भगवान् पश्यन्नपि तं न पश्यति " स एनमविदितो न भुनक्ति " इति श्रुतेः । विद्वांस्तु सदैव सन्निहितो भगवतोऽनुग्रहभाजनमित्यर्थः ॥ ३० ॥

**शं० टी०**—उक्तरीत्या स्वात्मनः सर्वभूतस्थत्वं सर्वभूताधारत्वं च पश्यतो ब्रह्मविदश्च स्वस्य च स्वरूपेणैकत्वं बोधयितुं स्वस्यापि सर्वभूतस्थत्वं सर्वभूताधिवासत्वं च सूचयन्नेवमीश्वरस्य स्वस्य च स्वरूपेणैकत्वमेवाप्रतिबद्धवृत्त्या पश्यतो ब्रह्मविद्यतेस्तद्दर्शनस्य फलमाह—**य इति** । य उक्तसाधनसंपत्त्या योगारूढो ब्रह्मविद्यतिर्मा सच्चिदानन्दैकरसं परं ब्रह्म सर्वत्र ब्रह्मादिस्तम्बपर्यन्तेषु भूतेषु प्रत्यगात्मस्वरूपेण स्थितं पश्यति तथैवोक्तलक्षणे मयि परे ब्रह्मण्यव्याकृतादिस्थूलान्तं जगच्च सर्वं व्योम्नि गन्धर्वनगरवदाभासमात्रं निःसत्ताकं पश्यति तस्यैवं स्वस्य च मम च सर्वभूतस्थत्वसर्वभूताधारत्वलक्षणाभ्यां नियताभ्यां श्रुतियुक्तिबलाच्च स्वरूपेणैकत्वमेव सदैव पश्यतो ब्रह्मवित्तमस्याहं सच्चिदानन्दैकरसं परं ब्रह्म न प्रणश्यामि प्रणाशोऽदर्शनं वृत्तेरविषयत्वं न गच्छामि किंतु तिष्ठतो गच्छत आसीनस्य वा शयानस्य वाप्युन्मिषतो निमिषतो भुञ्जतो वा यथेच्छया तिष्ठतस्तद्बुद्धिवृत्तेः सदा सर्वत्र चक्षुषो रूपवत्परमानन्दमावहन्विषयो भवामीत्यर्थः । यथा घटः स्वद्रष्टुः स्वयं भिन्न एव भूत्वा विषयो भवति तथा ब्रह्मापि सर्वत्र स्वं पश्यतो ब्रह्मविदः स्वयं भिन्नमेव सद्विषयं भवति तथात्वे "उदरमन्तरं कुरुते । अथ तस्य भयं भवति" इतिश्रवणात् । एवं भेददृष्टेः सतोऽपि मोक्षाभावप्रसङ्गाद्भेददृष्टिं परिहर्तुमाह—**स चेति** । स च ब्रह्मविदपि मे मम चिदेकरसस्य निर्विशेषस्य ब्रह्मणो न प्रणश्यति प्रणाशो नामानात्मतादात्म्यापत्तिरेव विदुषः यथा वैधर्म्यापत्तिः पुरुषस्य नरकाद्यनर्थहेतुस्तथा ब्रह्मविदो विपरीतभावापत्तिरेव जन्माद्यनर्थे हेतुर्यतस्ततोऽयं क्वचिदप्यनात्मन्यात्मभावं न करोति किंतु देवदत्तः स्वदेह इव ब्रह्मैवाहमिति स्वात्मना विषयीकृते निर्विशेषे परे ब्रह्मण्येव सर्वदाहंवृत्त्या तिष्ठतीत्यर्थः ॥ ३० ॥

**श्री० टी०**—एवंभूतात्मज्ञानस्य सर्वभूतात्मतया मदुपासनं मुख्यं कारणमित्याह—**य इति** । मां परमेश्वरं सर्वत्र भूतमात्रे यः पश्यति सर्वं च प्राणिमात्रं मयि यः पश्यति तस्याहं न प्रणश्यामि अदृश्यो न भवामि स च ममादृश्यो न भवति प्रत्यक्षो भूत्वा कृपादृष्ट्या तं विलोक्यानुगृह्णामीत्यर्थः ॥ ३० ॥

**स० टी०**—त्वंपदार्थं निरूप्यैवं शुद्धं तत्त्वैक्यसिद्धये ॥ विशुद्धस्तत्पदार्थोऽपि हरिणात्र निरूप्यते ॥ १ ॥ यो योगी तत्पदार्थं मां जगज्जन्मादिकारणम् ॥ मायोपाधिविवेकेन समस्तजगतीश्वरम् ॥ २ ॥ सत्तास्फुरणरूपेणानुस्यूतं निरुपाधिकम् ॥ अद्वयानन्दमात्मानमपरोक्षीकरोति वै ॥ ३ ॥ तथा सर्वं जगन्मिथ्यारोपितं माययेक्षते ॥ तस्यैवं दर्शिनो नाहं तत्पदार्थो महेश्वरः ॥ ४ ॥ परोक्षज्ञानविषयो भवामि स्वात्मतां गतः ॥ ईश्वरः कश्चिदन्योऽस्ति मत्तश्चेति परोक्षधीः ॥ ५ ॥ या पुरासीन्मदात्मत्वधिया सा विप्रणश्यति ॥ विद्वान्मद्रूप एवास्ति न परोक्षो ममापि सः ॥ ६ ॥ अविद्वांस्तु न तत्त्वेन पश्यतीश्वरमान्तरम् ॥ अतो न तं परेशोऽपि पश्यन्नपि प्रपश्यति ॥ ७ ॥ ज्ञानी नित्यापरोक्षत्वादीशानुग्रहभाजनम् ॥ ८ ॥ ३० ॥

**भा० टी०**—एकत्वदर्शनस्य फलमाह—**य इति** । यो मां वासुदेवं प्रत्यगभिन्नं सर्वत्र तस्मिन्नधिष्ठानरूपं पश्यत्यपरोक्षीकरोति स सर्वं च ब्रह्मादिभूतजातं मयि प्रत्यगभिन्ने वासुदेवे कल्पितं पश्यति तस्य ब्रह्मात्मै-

क्यसाक्षात्कारवतः अहं प्रत्यगभिन्नपरमात्मा न प्रणश्यामि अदृश्यः परोक्षो न भवामि स च विद्वानात्मैकत्वदर्शी मम प्रत्यगभिन्नस्य वासुदेवस्य न प्रणश्यति परोक्षो न भवति । यद्यपि विद्वानिवाविद्वानपि ईश्वरस्य न प्रणश्यति तथाप्यविदुषोऽविद्यया व्यवहितत्वात्परोक्षप्रायता । यत्तु एवं शुद्धं त्वंपदार्थं निरूप्य शुद्धं तत्पदार्थं निरूपयति यो योगी मामीश्वरं तत्पदार्थमशेषप्रपञ्चकारणं मायोपाधिविवेकेन सर्वत्र प्रपञ्चे सद्रूपेण स्फुरणरूपेण चानुस्यूतं सर्वोपाधिविनिर्मुक्तं परमार्थसत्यमानन्दघनमनन्तं पश्यति योगजेन प्रत्यक्षेणापरोक्षीकरोति तथा सर्वप्रपञ्चजातं मायया मय्यारोपितं मद्भिन्नतया मृषात्वेन एव पश्यति तस्यैव विवेकदर्शिनः अहं तत्पदार्थो भगवान्न प्रणश्यामि ईश्वरः कश्चिन्मदभिन्नोऽस्तीति परोक्षज्ञानविषयो न भवामि किंतु योगजापरोक्षज्ञानविषयो भवामि । यद्यपि वाक्यजापरोक्षज्ञानविषयत्वं पदार्थभेदेनैव तथापि केवलस्यापि तत्पदार्थस्य योगजापरोक्षज्ञानविषयत्वमुपपद्यत एव योगजेन प्रत्यक्षेण मामपरोक्षीकुर्वन्स च मे न प्रणश्यति परोक्षो न भवति स्वात्मा हि मम स विद्वानिति प्रियत्वात्सर्वदा मदपरोक्षज्ञानगोचरो भवति ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्युक्तेरिति केचित् । तत्र मूलतद्भाष्यस्वव्याख्यानविरुद्धा पातनिका "तं त्वौपनिषदं पुरुषं पृच्छामि । नावेदविन्मनुते तं बृहन्तम्" इत्यादिश्रुतिविरुद्धा योगजाखण्डापरोक्षज्ञानकल्पना च नादर्तव्या तस्येत्यादेः संकोचकपदाद्यभावेन कदाप्यहं तस्य परोक्षो न भवामीत्यर्थं विहाय कदाचित्समाध्यादिकाले योगजप्रत्यक्षेणेति कल्पनाया अयोगाच्चेति दिक् ॥ ३० ॥

**पु० टी०**—अथ सूक्ष्मसमष्टिरूपेण सर्वात्मकत्वेनात्मप्रतीतिमाह—**यो मामिति** । यः पुरुषो मां सूक्ष्मं समष्टिरूपं हिरण्यगर्भं सर्वत्र सूक्ष्मव्यष्टिरूपेषु सूक्ष्मशरीरेषु पश्यति सर्वं व्यष्टिरूपं मयि समष्टिरूपे पश्यति तस्य पुरुषस्याहं न प्रणश्यामि सदैवानुभवारूढस्तिष्ठामि स च पुरुषो मे न प्रणश्यति मत्कृपाकटाक्षशरण एव तिष्ठतीत्यर्थः ॥ ३० ॥

**रा० टी०**—सर्वभूतस्थात्मध्यानविशेषस्य फलमाह—**यो मामिति** । सर्वत्र ब्रह्मादितृणान्तेषु स्थितं मां यः पश्यति सर्वं च ब्रह्मादिजगत् मयि मदधीनं पश्यति तस्याहं न प्रणश्यामि सर्वदा योगक्षेमवहः स्यामित्यर्थः । स च मे न प्रणश्यति सदा मद्भक्तो भवतीत्यर्थः ॥ ३० ॥

**सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः ॥**
**सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ ३१ ॥**

**त० टी०**—ततोऽप्यधिकां योगारूढदशामाह—**सर्वभूतस्थितमिति** । सर्वेषु भूतेषु प्राणिषु परिच्छिन्नेषु स्थितमपरिच्छिन्नतया व्याप्यावस्थितं मां भगवन्तं वासुदेवं व्यापकाद्व्याप्यस्य पृथक्स्थितिःप्रवृत्त्यनर्हत्वादेकत्वमभेदमास्थितः सन्सर्वं मदभेदेन पश्यन् यो भजते सर्वत्र मदात्मकत्वबुद्धिं करोतीत्यर्थः । तथोक्तं विष्णुपुराणे प्रह्लादेन 'मय्यन्यत्र तथाशेषभूतेषु भुवनेषु च । तवैव व्याप्तिरैश्वर्यगुणसूचनकी प्रभो । सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इति । स योगी सर्वथा वर्तमानोऽपि ध्यानयोगेन कर्मणा वा कर्मत्यागेन वा स्वेच्छया येन केन प्रकारेण वर्तमानोऽप्यखण्डेन मदनुभवेन मय्येव वर्तते, न मत्तो वियुज्यत इत्यर्थः ॥ ३१ ॥

**म० टी०**—एवं त्वंपदार्थं तत्पदार्थं च शुद्धं निरूप्य तत्त्वमसीतिवाक्यार्थं निरूपयति—**सर्वभूतेति** । सर्वेषु भूतेष्वधिष्ठानतया स्थितं सर्वानुस्यूतसन्मात्रं मामीश्वरं तत्पदलक्ष्यं स्वेन त्वंपदलक्ष्येण सहैकत्वमत्यन्ताभेदमास्थितः सन् घटाकाशो महाकाश इत्यत्रेवोपाधिभेदनिराकरणेन निश्चिन्वन् यो भजति अहं ब्रह्मास्मीति वेदान्तवाक्यजेन तत्त्वसाक्षात्कारेणापरोक्षीकरोति सोऽविद्यातत्कार्यनिवृत्त्या जीवन्मुक्तः कृत-

कृत्य एव भवति । यावत्तु तस्य बाधितानुवृत्त्या शरीरादिदर्शनमनुवर्तते तावत्प्रारब्धकर्मप्राबल्यात् सर्व-कर्मत्यागेन वा याज्ञवल्क्यादिवत् विहितेन कर्मणा वा जनकादिवत् प्रतिषिद्धेन कर्मणा वा दत्तात्रेयादिवत् सर्वथा येनकेनापि रूपेण वर्तमानोऽपि व्यवहरन्नपि स योगी ब्रह्माहमस्मीति विद्वान्मयि परमात्मन्येवाभे-देन वर्तते । सर्वथा तस्य मोक्षं प्रति नास्ति प्रतिबन्धशङ्का " तस्य ह न देवाश्चनाभूत्या ईशत आत्मा ह्येषां स भवति " इति श्रुतेः । देवा महाप्रभावा अपि तस्य मोक्षाभवनाय नेशते किमुतान्ये क्षुद्रा इत्यर्थः । ब्रह्मविदो निषिद्धकर्मणि प्रवर्तकयो रागद्वेषयोरसंभवेन निषिद्धकर्मासंभवेऽपि तदङ्गीकृत्य ज्ञानस्तुत्यर्थमिद-मुक्तं सर्वथा वर्तमानोऽपीति हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यत इतिवत् ।। ३१ ।।

**शं० टी०—**एवं योगानुष्ठानसंभावितसम्यग्दर्शनस्य सर्वस्य ब्रह्ममात्रत्वावगाहिनः फलं सदा सर्वत्र ब्रह्म-दर्शनं ब्रह्मण्येवात्मत्वदर्शनं सर्वदा ब्रह्मानन्दानुभूतिश्चेति सूचयित्वाऽधुना त्वेवंलक्षणो ब्रह्मवित्तमः स्वप्रा-रब्धानुरूपेण देहे नानाधर्मवत्यपि सति स्वयं स्वनिष्ठयैव वर्तमानः सन् मुक्तिं प्राप्नोतीत्याह—**सर्वभूत-स्थितमिति** । " एकमेवाद्वितीयं ब्रह्म । नेह नानास्ति किंचन । सर्वं ह्येतद्ब्रह्म । अयमात्मा ब्रह्म । अहं ब्र-ह्मास्मि " इत्यादिश्रुत्यर्थविचारसमुत्थज्ञानबलेन योगानुष्ठानसमुत्पन्नस्वानुभूतिबलेन चैकत्वमास्थितः " सर्व-मिदमहं च ब्रह्मैव" इति सदैकत्वमेवास्थितः सर्वं ब्रह्मैवेति दृढनिश्चययुक्तो भूत्वा यो ब्रह्मविद्यतिः सर्वभूतस्थं महदादिस्थूलपर्यन्तं सर्वभूतजातं बहिरन्तः सदैकरूपेणायःपिण्डमग्निरिव सर्वतो व्याप्य तिष्ठतीति सर्वभूतस्थं मां निर्विशेषं परं ब्रह्म भजति ब्रह्मैवाहमिति प्रत्यग्दृष्ट्या स्वं मामेव साक्षाद्विज्ञाय मद्भावं यो भजतीत्यर्थः । स योगी मद्भावापन्नो ब्रह्मवित्सर्वथा वर्तमानः स्वप्रारब्धानुरूपेण विविधचेष्टावद्देहचेष्टया लोकदृष्ट्या बाल-वन्मूढवदुन्मत्तवच्छिष्टवदशिष्टवत्प्रतीयमानोऽपि स्वदृष्ट्या निर्विकारब्रह्मात्मनैव स्थितो ब्रह्मवित्तमः पतितेऽस्मिन् देहे मयि वर्तते मदात्मना मयि तिष्ठति । यद्वा मयीतितृतीयार्थे सप्तमी मया ब्रह्मात्मना तिष्ठति विदेहमुक्तिं प्राप्नोतीत्यर्थः ।। ३१ ।।

**श्री० टी०—**न चैवंभूतो विधिकिंकरः स्यादित्याह—**सर्वभूतस्थितमिति** । सर्वेषु भूतेषु स्थितं मामभेद-मास्थित आश्रितो यो भजति स योगी ज्ञानी सन्सर्वथा कर्मत्यागेनापि वर्तमानो मय्येव वर्तते मुच्यते, न तु भ्रश्यतीत्यर्थः ।। ३१ ।।

**स० टी०—**तत्त्वंपदार्थमुक्त्वैवमखण्डार्थो निरूप्यते ।। ब्रह्मादिस्थावरान्तेषु भूतेषूच्चावचेषु यः ।। १ ।। निर्विशेषं चिदानन्दे मामद्वैतं निरञ्जनम् ।। गुणरूपक्रियावस्तुविक्रियाद्येकहेतुकम् ।। २ ।। भेदं त्यक्त्वा-न्यजं शुद्धं सच्चिन्मात्रतया स्थितम् ।। तत्पदार्थैकलक्ष्यस्य त्वमो लक्ष्येण साक्षिणा ।। ३ ।। इहैकत्वं श्रुतौ सिद्धमत्यन्ताभेदमास्थितः ।। अहं ब्रह्मेति वेदान्तवाक्यजज्ञानचक्षुषा ।। ४ ।। अपरोक्षीकरोत्याशु त्यक्त्वा-विद्यां च तत्कृतम् ।। कृतकृत्यतया सोऽयं जीवन्मुक्त उदारधीः ।। ५ ।। यावत्तस्य शरीरादिदर्शनं चानुव-र्तते ।। आभासमात्रं बुद्धस्य यथा स्वाप्नस्य दर्शनम् ।। ६ ।। प्रारब्धकर्मप्राबल्यात्तावत्कर्माणि वा त्यजन् ।। कुर्वन्वा विहितं कर्म निषिद्धं वा समाचरन् ।। ७ ।। येन केनापि रूपेण योगी व्यवहरन्नपि ।। ब्रह्मास्मीति धिया विद्वान्मय्येव परमात्मनि ।। ८ ।। ऐक्येन वर्तते नित्यमद्वैते वैष्णवे पदे ।। नित्यमुक्तस्वभावत्वात्कर्म-भिर्नैव लिप्यते ।। ९ ।। धर्माधर्माद्यतीते हि पदे नित्यं विराजते ।। १० ।। यस्योदारकृपाकटाक्षविलसद्वै-राग्यमुख्योदयात्सम्यक्तत्त्वमसीतिनैगमगिरोद्भूतात्मबोधाग्निना ।। दग्ध्वा ज्ञानमशेषभेदजनकं धीराः परे चिद्घने तिष्ठन्त्यात्मपदप्रदं तमनिशं कृष्णं भजेऽहं सदा ।। ११ ।। ३१ ।।

**भा० टी०—**पूर्वश्लोकार्थं सम्यग्दर्शनं पूर्वार्धेनानूद्य तत्फलं मोक्षमाह—**सर्वेति** । पूर्वोक्तेन प्रकारेण सर्वेषु ब्रह्मादिभूतेषु प्रत्यग्रूपेण स्थितं मां परमात्मानं वासुदेवं य एकत्वमहमेव वासुदेव इत्येवंरूपमास्थितः सम्य-

गपरोक्षीकृतवान् स योगी सम्यग्दर्शी सर्वथा सर्वप्रकारेण विधिप्रतिषेधाकैङ्कर्येण वर्तमानोऽपि अपिशब्देन तस्य रागादिरहितस्य यमनियमादिसंस्कारवतः स्वैरवृत्त्यसंभवेऽपि ज्ञानस्तुत्यर्थं तामङ्गीकरोतीति द्योत्यते । मयि वैष्णवे परमे पदे वर्तते स नित्यमुक्त एव मोक्षं प्रति न केनचित्प्रतिबुध्यत इत्यर्थः । यत्तु तदेवं भाक्तानि सुखान्यभिधायार्जुनोपदेशच्छलेन ज्ञानमार्गे लोकानां प्रवृत्तिसिद्धये भाक्तान् ज्ञानयोगिनोऽप्युत्तरोत्तरातिशयेनाह—सर्वेति यत्संन्यासात्प्रागेव गृहस्थः सन् सर्वभूतस्थं सर्वाणि भूतानि कार्यकरणाकारेण परिणतानि तत्स्थं तत्तादात्म्यभ्रमविषय इत्यात्मानं प्रत्यञ्चमीक्षते शास्त्रजन्यापातज्ञानविषयतां नयतीत्येवं सर्वभूतान्यात्मतादात्म्यं भ्रमविषयाणीति शास्त्रजन्यापातज्ञानविषयतां नयति सोऽन्योन्याध्यासज्ञानी अयोगयुक्तोऽपि कर्मयोगज्ञानयोगाभ्यामसंस्पृष्टोऽपि सर्वत्र समदर्शनो ज्ञानयोगी ज्ञेयः इति यत्तदपि ज्ञेयपदाध्याहारैर्योज्यम् । एवमात्मानात्मनोरन्योन्याध्यासापातज्ञानसंपन्नं भाक्तं योगिनमभिधाय ततोऽधिकं तमाह—य इति । मां सर्वज्ञं सर्वशक्तिकं सर्वत्र पश्यति सर्वभूतेष्वीश्वरो जीवकलया प्रविष्ट इति शास्त्रजन्यापातज्ञानविषयतां नयति तस्यापातत एव ऐकात्म्यज्ञानसंपन्नस्याहं न प्रणश्यामि नान्तःकरणादपयामि स च मे मम संबन्धी सन् मत्प्रसादादेव न प्रणश्यति नानर्थं प्राप्नोतीत्यर्थः । अतः सोऽपि भाक्तो ज्ञानयोगी ज्ञेय इति भावः । ततोऽपि किंचिदधिकं तमाह—सर्वेति । एकत्वमास्थित इति जीवब्रह्मणोरौपाधिको भेद उपाधीनामसत्त्वादित्यापातज्ञानवानित्यर्थः । एवंभूतः सन् यो मां सर्वभूतेषु सेवते स सर्वथा आवर्तमानोऽपि संसारयात्रामनुवर्तनशीलोऽपि योगी ज्ञेयः यतो मामनुवर्तते मां भजति पूर्वोक्तप्रकारेणेति ज्ञेयम् । तद्यदोरध्याहारेण योज्यमितीतरैः कल्पितं तदसत्, एतादृशकल्पनाया बह्वध्याहारग्रस्ताया अस्वारसिकायाः प्रकरणविरुद्धाया व्यर्थत्वात् ॥ ३१ ॥

प० टी०—अथैतदनन्तरं सर्वदृश्यजातमात्माकारेण पश्यतीत्याह—सर्वेति । यः सर्वभूताकारेण स्थितमेकत्वमास्थितः सन् भजत्यनुवर्तते स वर्तमानोऽपि नामरूपाकारेण स्थितोऽपि मयि वर्तते मदाकारो भवति श्रुतिरपि—"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः" इति । भाष्यम्—यस्य विजानतो विज्ञानवतः पुरुषस्य सर्वाणि भूतात्मकं विश्वमात्मैवाभूत् । भूतभावनाराहित्येनात्माकारमेव जातं तस्यैकत्वमद्वैतमनुपश्यतः को मोहो मायाविलासरूपमज्ञानं कुतस्तथा तत्प्रयुक्तः शोकश्च कुत इत्यर्थः ॥ ३१ ॥

रा० टी०—यो मामितिश्लोकोक्तमेव स्पष्टयति—सर्वेति । य एकत्वमास्थितः सर्वत्र परमेश्वर एवेत्यास्थितो ज्ञानी सर्वभूतस्थं मां भजति सेवते स योगी सर्वप्रकारेण न्यायेनान्यायेन वा वर्तमानोऽपि मयि वर्तते । अन्यायप्रवृत्तावपि ज्ञानिनो मोक्षो नियत एवेति भावः । तदाह सूत्रे "कामकारेण चैके" इति । आनन्दह्रासस्त्वस्त्येवेति ज्ञेयम् ॥ ३१ ॥

**आत्मौपम्येन सर्वत्र समं पश्यति योऽर्जुन ॥**
**सुखं वा यदि वा दुःखं स योगी परमो मतः ॥ ३२ ॥**

त० टी०—उक्तेभ्यः सर्वेभ्यः श्रेष्ठयोगिनमाह—आत्मौपम्येनेति । आत्मनः स्वस्योपमा आत्मोपमा तस्या भाव आत्मौपम्यं तेन स्वसादृश्येन सर्वत्र प्राणिमात्रे सुखं वा यदि वा दुखं समं तुल्यं यः पश्यति, स्वस्यानिष्टं यथा नेच्छति नोत्पादयति च तथा परस्याप्यनिष्टं नेच्छति नोत्पादयति च रागद्वेषाभावात् स योगी आत्मज्ञः परमः श्रेष्ठो मतः । अथवा आत्मन अन्येषामात्मनां ज्ञानस्वरूपत्वेन ब्रह्मात्मकत्वेन च साम्यं भगवद्भावापत्तिरेव सर्वेषां परमपुरुषार्थ इत्यनाद्यज्ञानावृतज्ञानत्वेन सर्वे न जानन्ति, भगवत्प्राप्तिप्रतिबन्धकीभूतपुण्यपापकर्मप्रवाहपतितत्वात्, तेषु कदाचिन्निर्हेतुककृपाकटाक्षविषयीभूतो यो जीवः स

तु प्रवृत्तिमार्गे ग्लानिबुद्धिः सत्सङ्गपूर्वकसदाचार्योपसत्त्या तदुपदिष्टमोक्षसाधनक्रमेण शुद्धान्तःकरणः सन् ध्यानयोगे प्रवृत्तस्तत्परिपाकलब्धात्मपरमात्मयाथात्म्यज्ञानेन नष्टसंचितक्रियमाणकर्मा प्रारब्धमात्रं भुञ्जान इदं विचारयति, पुण्यपापकार्ययोः सुखदुःखयोरुभयोरपि भगवत्प्राप्तिप्रतिबन्धकत्वं सुखभोगे पुण्यक्षयो दुःखभोगे पापक्षयो भवति । तथा स्तुतिनिन्दयोर्हर्षविषादद्वारेण पुण्यपापक्षयहेतुत्वं, तस्मान्मे स्तुतिनिन्दाकारिणो जना न मित्रशत्रुभावेन विषमा भवन्त्यपि तु पुण्यपापरूपसंसारबन्धक्षयहेतुत्वेन सर्वेऽपि हितकारिणः । यथा पादशृङ्खलयोः काञ्चनायसयोर्बन्धने विशेषाभावात्ततो मोचकाः सर्वेऽपि समा एवेति पश्यति, अत एव सर्वत्रात्मतुल्यत्वेन यथा मम सुखं दुःखं पुण्यपापक्षयकरं तथा सर्वस्येति समं पश्यति ॥ ३२ ॥

म० टी०--एवमुत्पन्नेऽपि तत्त्वबोधे कश्चिन्मनोनाशवासनाक्षययोरभावाज्जीवन्मुक्तिसुखं नानुभवति चित्तविक्षेपेण च दृष्टदुःखमनुभवति सोऽपरमो योगी देहपाते कैवल्यभागित्वात् देहसद्भावपर्यन्तं च दृष्टदुःखानुभवात् तत्त्वज्ञानमनोनाशवासनाक्षयाणां तु युगपदभ्यासादृष्टदुःखनिवृत्तिपूर्वकं जीवन्मुक्तिसुखमनुभवन् प्रारब्धकर्मवशात् समाधेर्व्युत्थानकाले—आत्मौपम्येनेति । आत्मैवौपम्यमुपमा तेनात्मदृष्टान्तेन सर्वत्र प्राणिजाते सुखं वा यदि वा दुःखं समं तुल्यं यः पश्यति स्वस्यानिष्टं यथा न संपादयति एवं परस्याप्यनिष्टं यो न संपादयति प्रद्वेषशून्यत्वात् । एवं स्वस्येष्टं यथा संपादयति तथा परस्यापीष्टं यः संपादयति रागशून्यत्वात् स निर्वासनतयोपशान्तमनाः योगी ब्रह्मवित् परमः श्रेष्ठो मतः पूर्वस्मात्, हे अर्जुन अतस्तत्त्वज्ञानमनोनाशवासनाक्षयाणामक्रममभ्यासाय महान् प्रयत्न आस्थेय इत्यर्थः । तत्र इदं सर्वं द्वैतजातमद्वितीये चिदानन्दात्मनि मायया कल्पितत्वान्मृषैव आत्मैवैकः परमार्थसत्यः सच्चिदानन्दाद्वयोऽहमस्मीति ज्ञानं तत्त्वज्ञानं प्रदीपज्वालासंतानवद्वृत्तिसंतानरूपेण परिणममानमन्तःकरणद्रव्यं मननात्मकत्वान्मन इत्युच्यते । तस्य नाशो नाम वृत्तिरूपपरिणामं परित्यज्य सर्ववृत्तिविरोधिना निरोधाकारेण परिणामः । पूर्वापरपरामर्शमन्तरेण सहसोत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुश्चित्तगतः संस्कारविशेषो वासना पूर्वपूर्वाभ्यासेन चित्ते वास्यमानत्वात् । तस्याः क्षयो नाम विवेकजन्यायां चित्तप्रशमवासनायां दृढायां सत्यपि बाह्ये निमित्ते क्रोधाद्यनुत्पत्तिः । तत्र तत्त्वज्ञाने सति मिथ्याभूते जगति नरविषाणादाविव धीवृत्त्यनुदयादात्मनश्च दृष्टत्वेन पुनर्वृत्त्यनुपयोगान्निरिन्धनाग्निवन्मनो नश्यति । नष्टे च मनसि संस्कारोद्बोधकस्य बाह्यस्य निमित्तस्याप्रतीतौ वासना क्षीयते । क्षीणायां वासनायां हेत्वभावेन क्रोधादिवृत्त्यनुदयान्मनो नश्यति । नष्टे च मनसि शमदमादिसंपत्त्या तत्त्वज्ञानमुदेति । एवमुत्पन्ने तत्त्वज्ञाने रागद्वेषादिरूपा वासना क्षीयते । क्षीणायां च वासनायां प्रतिबन्धाभावात्तत्त्वज्ञानोदय इति परस्परकारणत्वं दर्शनीयम् । अत एव भगवान् वसिष्ठ आह 'तत्त्वज्ञानं मनोनाशो वासनाक्षय एव च । मिथः कारणतां गत्वा दुःसाध्यानि स्थितानि हि ॥ तस्माद्राघव यत्नेन पौरुषेण विवेकिना । भोगेच्छां दूरतस्त्यक्त्वा त्रयमेतत्समाश्रय' इति । पौरुषो यत्नः येनकेनाप्युपायेनावश्यं संपादयिष्यामीत्येवंविधोत्साहरूपो निर्बन्धः । विवेको नाम विविच्य निश्चयः । तत्त्वज्ञानस्य श्रवणादिकं साधनं, मनोनाशस्य योगः, वासनाक्षयस्य प्रतिकूलवासनोत्पादनमिति एतादृशविवेकयुक्तेन पौरुषेण प्रयत्नेन भोगेच्छायाः स्वल्पाया अपि हविषा कृष्णवर्त्मेवेति न्यायेन वासनावृद्धिहेतुत्वाद्दूरत इत्युक्तम् । द्विविधो हि विद्याधिकारी कृतोपास्तिरकृतोपास्तिश्च । तत्र य उपास्यसाक्षात्कारपर्यन्तामुपास्तिं कृत्वा तत्त्वज्ञानाय प्रवृत्तस्तस्य वासनाक्षयमनोनाशयोर्दृढतरत्वेन ज्ञानादूर्ध्वं जीवन्मुक्तिः स्वत एव सिध्यति । इदानीन्तनस्तु प्रायेणाकृतोपास्तिरेव मुमुक्षुरौत्सुक्यमात्रात् सहसा विद्यायां प्रवर्तते । योगं विना चिज्जडविवेकमात्रेणैव च मनोनाशवासनाक्षयौ तात्कालिकौ संपाद्य शमदमादिसंपत्त्या श्रव-

णमनननिदिध्यासनानि संपादयति । तैश्च दृढाभ्यस्तैः सर्वबन्धविच्छेदि तत्त्वज्ञानमुदेति । अविद्याग्रन्थिरब्रह्मत्वं हृदयग्रन्थिः संशयाः कर्माण्यसर्वकामत्वं मृत्युः पुनर्जन्म चेत्यनेकविधो बन्धो ज्ञानान्निवर्तते । तथा च श्रूयते "यो वेद निहितं गुहायां सोऽविद्याग्रन्थिं विकिरतीह सोम्य । ब्रह्म वेद ब्रह्मैव भवति । भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान्स ब्रह्मणा विपश्चिता । तमेव विदित्वातिमृत्युमेति । यस्तु विज्ञानवान् भवत्यमनस्कः सदा शुचिः । स तु तत्पदमाप्नोति यस्माद्भूयो न जायते । य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति" इत्यसर्वत्वनिवृत्तिफलमुदाहार्यम् । सेयं विदेहमुक्तिः सत्यपि देहे ज्ञानोत्पत्तिसमकालीना ज्ञेया, ब्रह्मण्यविद्याध्यारोपितानामेतेषां बन्धानामविद्यानाशे सति निवृत्तौ पुनरुत्पत्त्यसंभवात् । अतः शैथिल्यहेत्वभावात्तत्त्वज्ञानं तस्यानुवर्तते । मनोनाशवासनाक्षयौ तु दृढाभ्यासाभावाद्भोगप्रदेन प्रारब्धेन कर्मणा बाध्यमानत्वाच्च सवातप्रदेशप्रदीपवत्सहसा निवर्तेते । अत इदानीन्तनस्य तत्त्वज्ञानिनः प्राक्सिद्धे तत्त्वज्ञाने न प्रयत्नापेक्षा किंतु मनोनाशवासनाक्षयौ प्रयत्नसाध्याविति । तत्र मनोनाशोऽसंप्रज्ञातसमाधिनिरूपणेन निरूपितः प्राक् । वासनाक्षयस्त्विदानीं निरूप्यते । तत्र वासनास्वरूपं वसिष्ठ आह 'दृढभावनया त्यक्तपूर्वापरविचारणम् । यदादानं पदार्थस्य वासना सा प्रकीर्तिता' अत्र च स्वस्वदेशाचारकुलधर्मस्वभावभेदतद्गतापशब्दसुशब्दादिषु प्राणिनामभिनिवेशः सामान्येनोदाहरणम् । सा च वासना द्विविधा मलिना शुद्धा च । शुद्धा दैवी संपत् शास्त्रसंस्कारप्राबल्यात् तत्त्वज्ञानसाधनत्वेनैकरूपैव । मलिना तु द्विविधा बाह्याऽभ्यन्तरा च । बाह्या तु त्रिविधा लोकवासना शास्त्रवासना देहवासना चेति । सर्वे जना यथा न निन्दन्ति तथैवाचरिष्यामीत्यशक्यार्थाभिनिवेशो लोकवासना तस्याश्च 'को लोकमाराधयितुं समर्थः' इति न्यायेन संपादयितुमशक्यत्वात् पुरुषार्थानुपयोगित्वाच्च मलिनत्वम् । शास्त्रवासना तु त्रिविधा पाठव्यसनं बहुशास्त्रव्यसनमनुष्ठानव्यसनं चेति क्रमेण भरद्वाजस्य दुर्वाससो निदाघस्य च प्रसिद्धा । मलिनत्वं चास्याः क्लेशावहत्वात् पुरुषार्थानुपयोगित्वाद्दर्पहेतुत्वाज्जन्महेतुत्वाच्च । देहवासनापि त्रिविधा आत्मत्वभ्रान्तिर्गुणाधानभ्रान्तिर्दोषापनयनभ्रान्तिश्चेति । तत्रात्मत्वभ्रान्तिर्विरोचनादिषु प्रसिद्धा सार्वलौकिकी । गुणाधानं द्विविधं लौकिकं शास्त्रीयं च । समीचीनशब्दादिविषयसंपादनं लौकिकं, गङ्गास्नानशालग्रामतीर्थादिसंपादनं शास्त्रीयम् । दोषापनयनमपि द्विविधं लौकिकं शास्त्रीयं च । चिकित्सकोक्तैरौषधैर्व्याध्याद्यपनयनं लौकिकं, वैदिकस्नानाचमनादिभिरशौचाद्यपनयनं वैदिकम् । एतस्याश्च सर्वप्रकाराया मलिनत्वमप्रामाणिकत्वादशक्यत्वात्पुरुषार्थानुपयोगित्वात्पुनर्जन्महेतुत्वाच्च शास्त्रे प्रसिद्धम् । तदेतल्लोकशास्त्रदेहवासनात्रयमविवेकिनामुपादेयत्वेन प्रतिभासमानमपि विविदिषोर्वेदनोत्पत्तिविरोधित्वाद्विदुषो ज्ञाननिष्ठाविरोधित्वाच्च विवेकिभिर्हेयम् । तदेवं बाह्यविषयवासना त्रिविधा निरूपिता । आभ्यन्तरवासना तु कामक्रोधदम्भदर्पाद्यासुरसंपद्रूपा सर्वानर्थमूलं मानसी वासनेत्युच्यते । तदेवं बाह्याभ्यन्तरवासनाचतुष्टयस्य शुद्धवासनया क्षयः संपादनीयः । तदुक्तं वसिष्ठेन 'मानसीर्वासनाः पूर्वं त्यक्त्वा विषयवासनाः । मैत्र्यादिवासना राम गृहाणामलवासनाः' इति । तत्र विषयवासनाशब्देन पूर्वोक्तास्तिस्रो लोकशास्त्रदेहवासना विवक्षिताः, मानसवासनाशब्देन कामक्रोधदम्भदर्पाद्यासुरसंपद्विवक्षिता । यद्वा शब्दस्पर्शरूपरसगन्धा विषयाः । तेषां भुज्यमानत्वदशाजन्यः संस्कारो विषयवासना, काम्यमानत्वदशाजन्यः संस्कारो मानसवासना । अस्मिन्पक्षे पूर्वोक्तानां चतसृणामनयोरेवान्तर्भावः बाह्याभ्यन्तरव्यतिरेकेण वासनान्तरासंभवात् । तासां वासनानां परित्यागो नाम तद्विरुद्धमैत्र्यादिवासनोत्पादनम् । ताश्च मैत्र्यादिवासनाः भगवता पतञ्जलिना सूत्रिताः प्राक् संक्षेपेण व्याख्याता अपि पुनर्व्याख्यायन्ते । चित्तं हि

रागद्वेषपुण्यपापैः कलुषीक्रियते तत्र सुखानुशयी रागः मोहादनुभूयमानं सुखमनुशेते कश्चिद्धीवृत्तिविशेषो राजसः सर्वं सुखजातीयं मे भूयादिति । तच्च दृष्टादृष्टसामग्र्यभावात्संपादयितुमशक्यमतः स रागश्चित्तं कलुषीकरोति । यदा तु सुखिषु प्राणिष्वयं मैत्रीं भावयेत् सर्वेऽप्येते सुखिनो मदीया इति तदा तत्सुखं स्वकीयमेव संपन्नमिति भावयतस्तत्र रागो निवर्तते यथा स्वस्य राज्यनिवृत्तावपि पुत्रादिराज्यमेव स्वकीयं राज्यं तद्वत् । निवृत्ते च रागे वर्षाण्यपाये जलमिव चित्तं प्रसीदति । तथाच दुःखानुशयी द्वेषः दुःखमनुशेते कश्चिद्धीवृत्तिविशेषस्तमोनुगतरजःपरिणाम ईदृशं सर्वं दुःखं सर्वदा मे मा भूदिति । तच्च शत्रुव्याघ्रादिषु सत्सु न निवारयितुं शक्यम् । न च सर्वे ते दुःखहेतवो हन्तुं शक्यन्ते । अतः स द्वेषः सदा हृदयं दहति । यदा तु स्वस्येव परेषां सर्वेषामपि दुःखं मा भूदिति करुणां दुःखिषु भावयेत् तदा वैर्यादिद्वेषनिवृत्तौ चित्तं प्रसीदति । तथा च स्मर्यते 'प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा । आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः' इति । एतदेवेहाप्युक्तमात्मौपम्येन सर्वत्रेत्यादि । तथा प्राणिनः स्वभावत एव पुण्यं नानुतिष्ठन्ति पापं त्वनुतिष्ठन्ति । तदाहुः 'पुण्यस्य फलमिच्छन्ति पुण्यं नेच्छन्ति मानवाः । न पापफलमिच्छन्ति पापं कुर्वन्ति यत्नतः' इति । ते च पुण्यपापे अक्रियमाणक्रियमाणे पश्चात्तापं जनयतः । स च श्रुत्यानूदितः "किमहं साधु नाकरवं किमहं पापमकरवम्" इति । यद्यसौ पुण्यपुरुषेषु मुदितां भावयेत्तदा तद्वासनावान् स्वयमेवाप्रमत्तः अशुक्लकृष्णे पुण्ये प्रवर्तते । तदुक्तम् 'कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम्' अयोगिनां त्रिविधं शुक्लं शुभं कृष्णमशुभं शुक्लकृष्णं शुभाशुभमिति । तथा पापपुरुषेषूपेक्षां भावयन्स्वयमपि तद्वासनावान् पापान्निवर्तते । ततश्च पुण्याकरणपापकरणनिमित्तस्य पश्चात्तापस्याभावे चित्तं प्रसीदति । एवं सुखिषु मैत्रीं भावयतो न केवलं रागो निवर्तते किंत्वसूयेर्ष्यादयोऽपि निवर्तन्ते । परगुणेषु दोषाविष्करणमसूया । परगुणानामसहनमीर्ष्या । यदा मैत्रीवशात्परसुखं स्वीयमेव संपन्नं तदा परगुणेषु कथमसूयादिकं संभवेत् । तथा दुःखिषु करुणां भावयतः शत्रुवधादिकरो द्वेषो यदा निवर्तते तदा दुःखित्वप्रतियोगिकस्वसुखित्वप्रयुक्तदर्पोऽपि निवर्तते । एवं दोषान्तरनिवृत्तिरप्यूहनीया वासिष्ठरामायणादिषु । तदेवं तत्त्वज्ञानं मनोनाशो वासनाक्षयश्चेति त्रयमभ्यसनीयम् । तत्र केनापि द्वारेण पुनःपुनस्तत्त्वानुस्मरणं तत्त्वज्ञानाभ्यासः । तदुक्तम् 'तच्चिन्तनं तत्कथनमन्योन्यं तत्प्रबोधनम् । एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ सर्गादावेव नोत्पन्नं दृश्यं नास्त्येव सर्वदा । इदं जगदहं चेति बोधाभ्यासं विदुः परम्' इति । दृश्यावभासविरोधियोगाभ्यासो मनोनिरोधाभ्यासः । तदुक्तम् 'अत्यन्ताभावसंपत्तौ ज्ञातुर्ज्ञेयस्य वस्तुनः । युक्त्या शास्त्रैर्यतन्ते ये तेऽप्यत्राभ्यासिनः स्थिताः' इति । ज्ञातृज्ञेययोर्मिथ्यात्वधीरभावसंपत्तिः स्वरूपेणाप्यप्रतीतिरत्यन्ताभावसंपत्तिस्तदर्थं युक्त्या योगेन 'दृश्यासंभवबोधेन रागद्वेषादितानवे । वृत्ति (रति) र्घनोदिता याऽसौ ब्रह्माभ्यासः स उच्यते' इति रागद्वेषादिक्षीणतारूपवासनाक्षयाभ्यास उक्तः । त[illegible]दुपपन्नमेतत्तत्त्वज्ञानाभ्यासेन मनोनाशाभ्यासेन वासनाक्षयाभ्यासेन च रागद्वेषशून्यतया यः स्व[illegible]खादिषु समदृष्टिः स परमो योगी मतो यस्तु विषमदृष्टिः स तत्त्वज्ञानवानप्यपरमो योगीति ॥ ३२ ॥

शं० टी०—'सर्वभूतसुहृच्छान्तः' इति 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति स्मरणात्सर्वभूतसुहृत्तया मनोवाक्कायकर्मभिः प्राणिपीडामकुर्वत एव श्रवणं मननं तज्जन्यज्ञानं च तत्फलं मोक्षश्च सिध्यति नान्यथातो मुमुक्षोर्यतः श्रवणादिनिष्ठस्य स्वसाम्येन सर्वप्राणिनां सुखं दुःखं च परिज्ञाय तेषामुपद्रवः कथंचिदपि न कर्तव्य इति बोधयितुमिदमाह—आत्मौपम्येनेति । आत्मौपम्येन सर्वप्राणिसुखदुःखवेदनकर्मण्यात्मा स्वयमेवोपमा दृष्टान्तो यस्य स आत्मोपमस्तस्य भाव आत्मौपम्यं तेन स्वसादृश्येन सर्वत्र सर्वप्राणिषु । वाशब्दश्चार्थो यदिशब्दोऽप्यर्थः । सर्वत्र सुखं च दुःखं चापि यः समं पश्यति यथा स्वस्य

सुखमिष्टं दुःखमनिष्टं भवति तथैव सर्वप्राणिनामपीति विज्ञाय वाङ्मनःक्रियाभिः परेषां क्वचित्कदाचित्कथंचिदपि विक्षेपं न करोतीत्यर्थः। एवंलक्षणः स योगी यतिः परम उत्कृष्टो मतः संमतः। यद्वा आत्मौपम्येन नित्यमुक्तस्वरूपत्वेन यथाहं देहतद्धर्मकर्मसुखदुःखादिसंबन्धरहितस्तथा सर्वेऽपि च देहिनो देहतद्धर्मतत्कर्मसुखदुःखादिसंबन्धरहिता एवेत्यात्मौपम्येन यद्यपि सर्वेषां च नित्यमुक्तत्वं प्रत्यग्दृष्ट्या विजानाति तथापि बाह्यदृष्ट्या सुखं च दुःखं च समं स्वसमं सर्वत्र सर्वभूतेषु यो ब्रह्मवित्पश्यति 'कीटवद्विचरेन्महीम्' इत्यादिस्मृतिप्रामाण्यान्मुक्तत्वान्न मे पापलेशोऽस्तीत्यभिमानमुत्सृज्य सर्वत्रात्मबुद्ध्या प्राणिमात्रस्य विक्षेपं यो न करोतीत्यर्थः। एवं सर्वप्राणिषु स्वबुद्ध्या अनुकूलवर्ती स योगी योगनिष्ठो ब्रह्मविद्यतिः परमः ज्ञानिनां सर्वेषामुत्तम इति ममाभिमत इत्यर्थः ॥ ३२ ॥

**श्री० टी०**—एवं च मां भजतां योगिनां मध्ये सर्वभूतानुकम्पी श्रेष्ठ इत्याह—**आत्मौपम्येनेति** । आत्मौपम्येन स्वसादृश्येन यथा मम सुखं प्रियं दुःखं चाप्रियं तथान्येषामपीति सर्वत्र समं पश्यन् सुखमेव सर्वेषां यो वाञ्छति न तु कस्यापि दुःखं स योगी श्रेष्ठो ममाभिमत इत्यर्थः ॥ ३२ ॥

**स० टी०**—स्वदृष्टान्तेन सर्वत्र प्राणिजाते चतुर्विधे ॥ सुखं वा यदि वा दुःखं तुल्यं यः परिपश्यति ॥ १ ॥ यथा मम सुखं नित्यमिष्टमेवं हि देहिनाम् ॥ सर्वेषामनुकूलं स्यादिति पश्यति सन्मतिः ॥ २ ॥ प्रतिकूलं यथा दुःखं ममैवं सर्वदेहिनाम् ॥ प्रतिकूलं तथा चायं सर्वभूतहिते रतः ॥ ३ ॥ कस्यचिन्मनसा वाचा पीडां नाचरतीह यः ॥ कर्मणा वा स योगी तु सर्वोत्कृष्टतया मतः ॥ ४ ॥ ३२ ॥

**भा० टी०**—ननु सर्वथा वर्तमानोऽपीत्युक्त्या कस्यचिद्दुःखहेतुभूतापि तस्य प्रवृत्तिः प्राप्नोति चेत्तर्हि तल्लक्षणं शृण्वित्याशयेनाह—**आत्मेति** । आत्मा स्वयमेव उपमाया भाव औपम्यं तेन यः सर्वेषु भूतेषु । वाशब्दौ चार्थे । सुखं च यच्च दुःखं समं पश्यति यथा मम सुखदुःखे अनुकूलप्रतिकूले तथा सर्वस्यापीति तुल्यतया सर्वत्र समं पश्यति न कस्यचित्प्रतिकूलमाचरति अहिंसक इत्यर्थः। स सर्वेषां योगिनां मध्ये परमश्रेष्ठो योगी मे मम मतः अभिमतः। तथाच महता प्रयत्नेनापि परमयोगित्वलाभाय एतल्लक्षणं संपादनीयमित्याशयः। यद्यपि यः सर्वप्रकारेण वर्तते सोऽपि मुच्यत एव तथाप्यत्र निषिद्धाद्याचरणात्सकलङ्को भवति अयं तु तथात्वाभावादत्रापि निष्कलङ्कः शुद्ध इति सूचयन्नाह—**अर्जुनेति** ॥ ३२ ॥

**प० टी०**—अथैतादृशस्यापि पुरुषस्य लोकव्यवहारवच्चेष्टमानस्य दशामाह—**आत्मौपम्येनेति** । यः पुरुषः सर्वत्र सर्वभूतेषु सुखं दुःखं वात्मौपम्येन पश्यति यथा मे आत्मसुखमिष्टं संसारदुःखमनिष्टं तथैव सर्वत्र भूयादिति पश्यति स परमश्चरमदशां प्राप्तो योगी मतः ॥ ३२ ॥

**रा० टी०**—समदर्शन इत्युक्ते गोगवयादिवद्भवति किं साम्यदर्शनमित्याकाङ्क्षायामेकत्वमास्थित इति साम्यदर्शनं स्वयमेव व्याख्यातमिदानीं भगवदनुवर्तिविषयतया साम्यदर्शनं स्वयमेव व्याचष्टे—**आत्मेति** । यथा सुखं स्वस्य प्रियं दुःखं चाप्रियं तथान्येषामपि भगवद्भक्तानामित्येवमात्मौपम्येन स्वसादृश्येन सर्वत्र भगवदनुवर्तिषु समं यः पश्यति सुखमेव सर्वभक्तेषु यो वाञ्छति स्वात्मन इवेति यावत् स योगी परमो मत इति विष्णवनुवर्तिषु स्वात्मनीव स्नेहं कुर्वन् श्रेष्ठो मत इति फलितार्थः ॥ ३२ ॥

**अर्जुन उवाच—योऽयं योगस्त्वया प्रोक्तः साम्येन मधुसूदन ॥**
**एतस्याहं न पश्यामि चञ्चलत्वात्स्थितिं स्थिराम् ॥ ३३ ॥**

**त० टी०**—उक्तस्य समत्वदर्शनलक्षणस्य योगस्यासंभावितत्वं मन्वानोऽर्जुन उवाच—**योऽयमिति** । योऽयं सर्वत्र समदर्शनरूपः परमो योगः साम्येन वैषम्यहेतुरागद्वेषादिनिराकरणेन त्वया सर्वज्ञेन

गुरुणोक्तः, हे मधुसूदन दुर्जनविनाशेन सद्धर्मस्थापक एतस्य त्वदुक्तस्य मनोनिरोधलक्षणस्य योगस्य स्थिरां स्थितिं दीर्घकालस्थायिनीं न पश्यामि न संभावयामि । तत्र हेतुमाह—चञ्चलत्वादिति । मनस इति शेषः ॥ ३३ ॥

म० टी०—उक्तमर्थमाक्षिपन् ब्रूतेऽर्जुनः—योऽयं योग इति । योऽयं सर्वत्रसमदृष्टिलक्षणः परमो योगः साम्येन समत्वेन चित्तगतानां रागद्वेषादीनां विषमदृष्टिहेतूनां निराकरणेन त्वया सर्वज्ञेनेश्वरेणोक्तः हे मधुसूदन सर्ववैदिकसंप्रदायप्रवर्तक एतस्य त्वदुक्तस्य सर्वमनोवृत्तिनिरोधलक्षणस्य योगस्य स्थितिं विद्यमानतां स्थिरां दीर्घकालानुवर्तिनीं न पश्यामि न संभावयामि अहमस्मद्विधोऽन्यो वा योगाभ्यासनिपुणः । कस्मान्न संभावयसि तत्राह—चञ्चलत्वात् । मनस इति शेषः ॥ ३३ ॥

शं० टी०—आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेदिति यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृतेत्यादिना मनस आत्मसंस्थत्वं निवातस्थप्रदीपवन्निश्चलत्वं च योगिभिर्योगसिद्धौ संपादनीयमिति श्रुत्वान्तःकरणस्यात्मसंस्थितत्वस्थिरत्वसिद्धेरुपायजिज्ञासयाऽर्जुन उवाच—य इति । योगी युञ्जीत सततमित्यादिना मुमुक्षोर्यतेः कैवल्यार्थिनः कर्तव्यत्वेन योऽयं ध्यानयोगः साम्येन साधारण्येन त्वया प्रोक्तः न तु मनोनिरोधनसाधननिरूपणपूर्वकं विशेषेणोक्त इत्यर्थः । ततो मनसश्चञ्चलत्वादेतस्य प्रतिपादितस्य योगस्य स्थिरां निश्चलां स्थितिं निष्ठामहं न पश्यामि ब्रह्मण्यन्तःकरणस्थिरीभावस्य साधनमहं न जानामीत्यर्थः ॥ ३३ ॥

श्री० टी०—उक्तलक्षणस्य योगस्यासंभवं मन्वानोऽर्जुन उवाच—योऽयमिति । साम्येन मनसो लयविक्षेपशून्यतया केवलात्माकारावस्थानेन योऽयं योगस्त्वया प्रोक्त एतस्य योगस्य स्थिरां दीर्घकालं स्थितिं न पश्यामि मनसश्चञ्चलत्वात् ॥ ३३ ॥

स० टी०—दुःसंपाद्यत्वमालक्ष्य योगस्योक्तस्य चार्जुनः ॥ तत्प्राप्त्युपायं शुश्रूषुः पृच्छति स्म हरिं प्रति ॥ १ ॥ योऽयं सर्वत्र साम्येन योगः प्रोक्तः परात्मना ॥ सर्वज्ञेन महेशेन त्वया निगमयोनिना ॥ २ ॥ एतस्याहं त्वदुक्तस्य योगस्य निश्चलात्मनः ॥ न पश्यामि स्थितिं सत्तां दीर्घकालानुवर्तिनीम् ॥ ३ ॥ मनसोऽत्यन्तचाञ्चल्यान्नैवं संभावयाम्यहम् ॥ ४ ॥ ३३ ॥

भा० टी०—एतादृशं योगमशक्यं मन्यमानस्तदुपायं ध्रुवं जिज्ञासुरर्जुन उवाच—योऽयमिति । योऽयं साम्येन समत्वलक्षणो योगस्त्वया प्रोक्त एतस्य स्थिरां निश्चलां स्थितिमहं न पश्यामि नोपलभे चञ्चलत्वात्, मनस इति शेषः । मधुसूदनेति संबोधयन् तमोरजसोः सूदनेन मम चित्तं त्वमचञ्चलं संपादयितुं समर्थोऽसीति सूचयति ॥ ३३ ॥

प० टी०—अथैतस्य योगस्य दुःसाध्यत्वं मन्यमानोऽर्जुनः प्राह—योऽयमिति । मनसः साम्येन विक्षेपशून्येन योऽयं योगः केवलमात्माकारावस्थानुरूपस्त्वया प्रोक्त एतस्याहं शाश्वतीं स्थितिं न पश्यामि कुतो मनसश्चञ्चलत्वादनेकविक्षेपैरास्थिरत्वाद्, अत एव मधुसूदनेति संबुद्धिः, यतो मध्वादिदैत्यनिबर्हणे शक्तोऽसि परं त्वस्मन्मनो निग्रहीतुं कुण्ठितशक्तिः सन्नकिंचित्करानस्मानेवोपदिशसीत्यर्थः ॥ ३३ ॥

रा० टी०—भगवदुक्तयोगस्याननुष्ठानलक्षणमप्रामाण्यमाशङ्कते—योऽयमिति । हे मधुसूदन साम्येन भगवतः साम्येन सर्वत्रैक्येन तथा भगवदनुवर्तिषु चात्मौपम्यरूपसाम्येनेति वा मनस एकाग्रत्वेनेति वा, योऽयं ध्यानयोगस्त्वया प्रोक्तः एतस्य योगस्य चञ्चलत्वात्स्थिरां स्थितिं न पश्यामि ॥ ३३ ॥

**चञ्चलं हि मनः कृष्ण प्रमाथि बलवद्दृढम् ॥**
**तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ ३४ ॥**

त० टी०–उक्तं मनसश्चञ्चलत्वं सर्वजनप्रसिद्धमेवेति स्फुटयति–चञ्चलमिति। चञ्चलं चपलस्वभावं मनः हि प्रसिद्धमेवैतत्। हे कृष्णेति संबोधनेन स्वभक्तपापकर्षकस्त्वं ममेदं प्राप्तं मनोनिग्रहरूपदुःखं निरासयेति सूचितम्। पुनः कीदृशं मनः प्रमाथि प्रमथनशीलं देहेन्द्रियाणां क्षोभकम्। किंच बलवत् अभीष्टविषयाभिमुखं सत् ततो निवर्तयितुमशक्यम्। किंच दृढं विविधविषयवासनानुबद्धतया भेत्तुमशक्यम्। तथाच चञ्चलस्य प्रमाथिनो दृढतया बलवत्तरस्य मनसो निग्रहं दुष्करमहं मन्ये। यथाऽऽकाशे दोधूयमानस्य प्रबलस्य वायोर्घटादिषु निरोधनमशक्यं तथा मनसोऽपीत्यर्थः ॥ ३४ ॥

म० टी०–सर्वलोकप्रसिद्धत्वेन तदेव चञ्चलत्वमुपपादयति–चञ्चलमिति। चञ्चलमत्यर्थं चलं सदा चलनस्वभावं मनः हि प्रसिद्धमेवैतत् भक्तानां पापादिदोषान् सर्वथा निवारयितुमशक्यानपि कृषति निवारयति तेषामेव सर्वथा प्राप्तुमशक्यानपि पुरुषार्थानाकर्षति प्रापयतीति वा कृष्णस्तेन रूपेण संबोधयन् दुर्निवारमपि चित्तचाञ्चल्यं निवार्य दुष्प्रापमपि समाधिसुखं त्वमेव प्रापयितुं शक्नोषीति सूचयति। न केवलमत्यर्थं चञ्चलं किंतु प्रमाथि शरीरमिन्द्रियाणि च प्रमथितुं क्षोभयितुं शीलं यस्य तत् क्षोभकतया शरीरेन्द्रियसंघातस्य विवशताहेतुरित्यर्थः। किंच बलवत् अभिप्रेताद्विषयात्केनाप्युपायेन निवारयितुमशक्यम्। किंच दृढं विषयवासनासहस्रानुस्यूततया भेत्तुमशक्यम्। तन्तुनागवदच्छेद्यमितिभाष्ये तन्तुनागो नागपाशः, ताꣳतनीति गुर्जरादौ प्रसिद्धो महाह्रदनिवासी जन्तुविशेषो वा। तस्यातिदृढतया बलवतो बलवत्तया प्रमाथिनः प्रमाथितयाऽतिचञ्चलस्य महामत्तवनगजस्येव मनसो निग्रहं निरोधं निर्वृत्तिकतयाऽवस्थानं सुदुष्करं सर्वथा कर्तुमशक्यमहं मन्ये वायोरिव यथाकाशे दोधूयमानस्य वायोर्निश्चलत्वं संपाद्य निरोधनमशक्यं तद्वदित्यर्थः। अयं भावः जातेऽपि तत्त्वज्ञाने प्रारब्धकर्मभोगाय जीवतः पुरुषस्य कर्तृत्वभोक्तृत्वसुखदुःखरागद्वेषादिलक्षणश्चित्तधर्मः क्लेशहेतुत्वाद्बाधितानुवृत्त्यापि बन्धो भवति चित्तवृत्तिनिरोधरूपेण तु योगेन तस्य निवारणं जीवन्मुक्तिरित्युच्यते। यस्याः संपादनेन स योगी परमो मत इत्युक्तम्। तत्रेदमुच्यते–बन्धः किं साक्षिणो निवार्यते किं वा चित्तात्। नाद्यस्तत्त्वज्ञानेनैव साक्षिणो बन्धस्य निवारितत्वात्। न द्वितीयः स्वभावविपर्ययायोगात् विरोधिसद्भावाच्च। नहि जलादार्द्रत्वमग्नेर्वौष्ण्यं निवारयितुं शक्यते 'प्रतिक्षणपरिणामिनो हि भावा ऋते चितिशक्तेः' इतिन्यायेन प्रतिक्षणपरिणामस्वभावत्वाच्चित्तस्य प्रारब्धभोगेन च कर्मणा कृत्स्नाऽविद्यातत्कार्यनाशने प्रवृत्तस्य तत्त्वज्ञानस्यापि प्रतिबन्धं कृत्वा स्वफलदानाय देहेन्द्रियादिकमवस्थापितम्। न च कर्मणा स्वफलसुखदुःखादिभोगश्चित्तवृत्तिभिर्विना संपादयितुं शक्यते तस्माद्यद्यपि स्वाभाविकानामपि चित्तपरिणामानां कथंचिद्योगेनाभिभवः शक्येत कर्तुं तथापि तत्त्वज्ञानादिव योगादपि प्रारब्धफलस्य कर्मणः प्राबल्यादवश्यंभाविनि चित्तस्य चाञ्चल्ये योगेन तन्निवारणमशक्यमहं स्वाबोधादेव मन्ये। तस्मादनुपपन्नमेतदात्मौपम्येन सर्वत्र समदर्शी परमो योगी मत इत्यर्जुनस्याक्षेपः ॥ ३४ ॥

शं० टी०–यदुक्तं तदेव सविशेषं विस्पष्टयति–चञ्चलमिति। 'कृषिर्भूवाचकः शब्दोणश्च निर्वृतिवाचकः। तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति सदानन्दस्वरूपत्वात्परमात्मा कृष्ण इत्युच्यते तस्य संबुद्धिर्हे कृष्ण मनश्चञ्चलं चपलं यद्यपि पक्ष्मणां चञ्चलत्वमस्ति तथापि तत्कृतोऽनर्थः कश्चिदपि नास्ति न तथेदं किंतु प्रमाथि च तत्तद्विषयवासनाभिस्तत्कार्यै रागद्वेषलोभादिदोषैश्च धीरमपि पुरुषं प्रमश्नाति विक्षोभयतीति प्रमाथि प्रमथनशीलं पण्डितमपि परवशं करोतीत्यर्थः। यद्यपि विषादेः प्रमथनशीलत्वमस्ति तथापि मन्त्रादिना तन्निग्रहीतुं शक्यते न तथेदं किंतु बलवत्सारवन्महाजववत्स्वशक्त्यावेगवत्त्वान्न मन्त्रादिसाधनैर्निरोद्धुं शक्यत इत्यर्थः। यथा महावेगवतां बाणानां साधनान्तरेण छेदः सिध्यति न तथैतस्य छेदः संभवति तत्कथमिति चेद्दृढं वज्रसारं सूक्ष्मं च छेदस्य विषयो न भवति यत एवंलक्षणं मन-

स्तत एतस्य मनसो वायोरिव निग्रहं सुदुष्करं मन्ये उपायकोटिभिः सुतरां निरोद्धुमशक्यं मन्य इत्यर्थः। 'अप्यब्धिपानान्महतः सुमेरून्मूलनादपि। अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः' इत्यादिशास्त्रप्रसिद्धिद्योतनार्थो हिशब्दः॥ ३४॥

**श्री० टी०**—एतत्स्फुटयति—**चञ्चलमिति**। चञ्चलं स्वभावेनैव चपलं, किंच प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकमित्यर्थः। किंच बलवद्विचारेणापि जेतुमशक्यम्। किंच दृढं विषयवासनानुबद्धतया दुर्भेद्यम् अतो यथाऽऽकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधनमशक्यं तथा तस्य मनसोऽपि निग्रहं निरोधं सुदुष्करं सर्वथा कर्तुमशक्यं मन्ये॥ ३४॥

**स० टी०**—अत्यर्थचलशीलं हि प्रसिद्धं मन एव तत्॥ हे कृष्ण भक्तदोषाणां सर्वथा विनिवारक॥ १॥ इन्द्रियाणां शरीरस्य क्षोभकत्वात्प्रमाथि तत्॥ नैव केनाप्युपायेन नियन्तुं शक्यते बलात्॥२॥ दृढं भेत्तुमशक्यं चाप्यच्छेद्यं तन्तुनागवत्॥ अनादिवासनाजालैः स्यूतत्वेन निरङ्कुशम्॥ ३॥ महामत्तगजस्येव वनस्थस्यास्य निग्रहम॥ निर्वृत्तिकतया सम्यगवस्थानं सुदुष्करम्॥ ४॥ यथा दोधूयमानस्य वायोराकाशगामिनः॥ निरोधो घटवेश्मादौ कर्तुं कैश्चिन्न शक्यते॥ ५॥ अप्यब्धिपानान्महतो मेरोरुन्मूलनादपि॥ अपि वह्न्यशनात्साधो विषमश्चित्तनिग्रहः॥ ६॥ इत्येवं मनसो दार्ढ्यं वासिष्ठे सम्यगीरितम्॥ ७॥ ३४॥

**भा० टी०**—मनसश्चञ्चलत्वं प्रसिद्धमित्याह—**चञ्चलमिति**। चञ्चलं प्रसिद्धं मनः भक्तजनमायाकर्षणात्कृष्णः तस्य संबोधनं हे कृष्णेति। तथाच कृष्णेतिसंबोधयन् मम मनःस्थिरताप्रतिबन्धकीभूतपापाद्यपकर्षणं कुर्विति सूचयति। न केवलमत्यन्तचञ्चलमेवापि तु प्रमाथि च प्रमथ्नाति विक्षिपति परवशीकरोति देहेन्द्रियादीनीति प्रमाथि प्रमथनशीलम्। किंच बलवत्तरं केनचिन्नियन्तुमशक्यम्। किंच दृढं नागपाशवदच्छेद्यं तस्यैवंभूतस्य मनसो निग्रहं वायुनिग्रहमिव सुदुष्करमतिकष्टतरमहं मन्ये स्वबुद्ध्या जानामि। चञ्चलमिति विशेषणेन साम्यरूपस्य योगस्य स्थिरां स्थितिं कर्तुमयोग्यमित्युक्तम्। इन्द्रियनिग्रहेण तस्याचञ्चलत्वं संपादनीयमित्याशङ्क्य प्रमाथीत्युक्तम्। बलवदित्यनेन प्रमथनसामर्थ्यं मनसः प्रदर्शितम्। दृढमिति विषयलाम्पट्यात् विच्छेत्तुमशक्यमिति विवेकः॥ ३४॥

**प० टी०**—अथ पुनः प्रश्नार्थमेव प्रकटयति—**चञ्चलमिति**। भो कृष्ण तस्य मनसो निग्रहं निरोधं सुदुष्करं सुतरां दुःखेन कर्तुमशक्यं मन्ये। कस्येव वायोरिव। यथाकाशे दोधूयमानस्य वायोः कुम्भादिषु निरोधः कर्तुं न शक्यते नहि वायोरेकत्रावस्थानं युज्यते तद्वत्। अथ तस्य दुर्निग्रहत्वं चतुर्भिः प्रकारैरुपन्यस्यति—**चञ्चलमिति**। चञ्चलमेकत्रानवस्थितं, प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकं, बलवद्विचारेणापि जेतुमशक्यम्, दृढमनादिविषयवासनानुविद्धतया वैराग्यादिना दुर्भेद्यम्॥ ३४॥

**रा० टी०**—चञ्चलत्वादित्यत्र कस्येति शङ्कां निरस्यन्मनोनिग्रहेणास्तु योगस्य स्थिरतेति शङ्कां निराह—**चञ्चलमिति**। मनश्चञ्चलं हि प्रसिद्धम्। प्रमाथि प्रमथनशीलं देहेन्द्रियक्षोभकरं किंच बलवत् विवेकेनापि जेतुमशक्यम्। दृढं विषयवासनानुविद्धतया दुर्भेदं साधुविषये नेतुमशक्यम्। अत आकाशे दोधूयमानस्य वायोः वस्त्रेण कुम्भादिना वा निरोधनमशक्यं यथा तथा तस्य मनसो निग्रहं निरोधनं दुष्करमहं मन्ये जानामि॥ ३४॥

**श्रीभगवानुवाच—असंशयं महाबाहो मनो दुर्निग्रहं चलम्॥**
**अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते॥ ३५॥**

**त० टी०**—अथार्जुनवचनोक्तार्थाङ्गीकारपूर्वकं मनोनिग्रहोपायं श्रीभगवानुवाच—असंशयमिति । तत्र तावत्सामान्यजनेन यत्कर्तुमशक्यं तत् प्रयत्नवता पुरुषविशेषेण कर्तुं शक्यमित्यभिप्रायेण संबोधयति—हे महाबाहो शत्रुनिग्रहणे महान्तौ बाहू यस्यैवंभूतस्त्वं मनोरूपशत्रुनिग्रहे समर्थो भविष्यसीति भावः । हे कौन्तेय चञ्चलत्वादिना वायुवन्मनो दुर्निग्रहं दुःखेनापि ग्रहीतुमशक्यमिति यद्ब्रवीषि तदसंशयं नास्त्यत्र संशयस्तथाऽपि कातरतां विहाय प्रयत्नेन निग्राह्यमित्याह—अभ्यासेनेति । तुशब्दः प्रयत्नशैथिल्यव्यावृत्तिपरः । अभ्यासेन मनोवृत्तेः शनैः शनैर्विषयवैमुख्यकरणपूर्वकमात्माभिमुखीकरणमभ्यासस्तेन । विषयवैमुख्यकरणेऽपि हेतुः—वैराग्येण चेति । आत्मव्यतिरिक्तेषु विषयेषु दोषबुद्ध्युत्पादनेन तदुपेक्षणं वैराग्यं, तेन च गृह्यते वशीक्रियते ॥ ३५ ॥

**म० टी०**—तमिममाक्षेपं परिहरन् श्रीभगवानुवाच—असंशयमिति । सम्यग्विदितं ते चित्तचेष्टितमतो निग्रहीतुं शक्ष्यसीति संतोषेण संबोधयति—हे महाबाहो महान्तौ साक्षान्महादेवेनापि सह कृतप्रहरणौ बाहू यस्येति निरतिशयमुत्कर्षं सूचयति । प्रारब्धकर्मप्राबल्यादसंयतात्मना दुर्निग्रहं दुःखेनापि निग्रहीतुमशक्यं प्रमाथि बलवद्दृढमिति विशेषणत्रयं पिण्डीकृत्यैतदुक्तं चलं स्वभावचञ्चलं मन इत्यसंशयं नास्त्येव संशयोऽत्र सत्यमेवैतद्ब्रवीषीत्यर्थः । एवं सत्यपि संयतात्मना समाधिमात्रोपायेन योगिनाऽभ्यासेन वैराग्येण च गृह्यते निगृह्यते सर्ववृत्तिशून्यं क्रियते तन्मन इत्यर्थः । अनिग्रहीतुरसंयतात्मनः सकाशात्संयतात्मनो निग्रहीतुर्विशेषद्योतनाय तुशब्दः । मनोनिग्रहेऽभ्यासवैराग्ययोः समुच्चयबोधनाय चशब्दः । हे कौन्तेयेतिपितृष्वस्रपुत्रस्त्वमवश्यं मया सुखीकर्तव्य इति स्नेहसंबन्धसूचनेनाश्वासयति । अत्र प्रथमार्धेन चित्तस्य हठनिग्रहो न संभवतीति द्वितीयार्धेन तु क्रमनिग्रहः संभवतीत्युक्तम् । द्विविधो हि मनसो निग्रहः हठेन क्रमेण च । तत्र चक्षुःश्रोत्रादीनि ज्ञानेन्द्रियाणि वाक्पाण्यादीनि कर्मेन्द्रियाणि च तद्गोलकमात्रोपरोधेन हठान्निगृह्यन्ते तद्दृष्टान्तेन मनोऽपि हठेन निग्रहीष्यामीति मूढस्य भ्रान्तिर्भवति । न च तथा निग्रहीतुं शक्यते तद्गोलकस्य हृदयकमलस्य निरोद्धुमशक्यत्वात् । अत एव च क्रमनिग्रह एव युक्तः । तदेतद्भगवान् वसिष्ठ आह 'उपविश्योपविश्यैव चित्तज्ञेन मुहुर्मुहुः । न शक्यते मनो जेतुं विना युक्तिमनिन्दिताम् ॥ अङ्कुशेन विना मत्तो यथा दुष्टमतङ्गजः । अध्यात्मविद्याधिगमः साधुसङ्गम एव च ॥ वासनासंपरित्यागः प्राणस्पन्दनिरोधनम् । एतास्ता युक्तयः पुष्टाः सन्ति चित्तजये किल ॥ सतीषु युक्तिष्वेतासु हठान्नियमयन्ति ये । चेतस्ते दीपमुत्सृज्य विनिघ्नन्ति तमोऽञ्जनैः' इति । क्रमनिग्रहे चाध्यात्मविद्याधिगम एक उपायः । सा हि दृश्यस्य मिथ्यात्वं दृग्वस्तुनश्च परमार्थसत्यपरमानन्दस्वप्रकाशत्वं बोधयति । तथा च सत्येतन्मनः स्वगोचरेषु दृश्येषु मिथ्यात्वेन प्रयोजनाभावं प्रयोजनवति च परमार्थसत्यपरमानन्दरूपे दृग्वस्तुनि स्वप्रकाशत्वेन स्वागोचरत्वं बुद्ध्वा निरिन्धनाग्निवत्स्वयमेवोपशाम्यति यस्तु बोधितमपि तत्त्वं न सम्यग्बुध्यते यो वा विस्मरति तयोः साधुसङ्गम एवोपायः । साधवो हि पुनः पुनर्बोधयन्ति स्मारयन्ति च । यस्तु विद्यामदादिदुर्वासनया पीड्यमानो न साधूननुवर्तितुमुत्सहते तस्य पूर्वोक्तविवेकेन वासनापरित्याग एवोपायः । यस्तु वासनानामतिप्राबल्यात्तास्त्यक्तुं न शक्नोति तस्य प्राणस्पन्दनिरोध एवोपायः । प्राणस्पन्दवासनयोश्चित्तप्रेरकत्वात्तयोर्निरोधे चित्तशान्तिरुपपद्यते । तदेतदाह स एव 'द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने । एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥ प्राणायामदृढाभ्यासैर्युक्त्या च गुरुदत्तया । आसनाशनयोगेन प्राणस्पन्दो निरुध्यते ॥ असङ्गव्यवहारित्वाद्भवभावनवर्जनात् । शरीरनाशदर्शित्वाद्वासना न प्रवर्तते । वासनासंपरित्यागाच्चित्तं गच्छत्यचित्तताम् ॥ प्राणस्पन्दनिरोधाच्च यथेच्छसि तथा कुरु । एतावन्मात्रकं मन्ये रूपं चित्तस्य राघव ॥ यद्भावनं वस्तुनोऽन्तर्वस्तुत्वेन रसेन च । यदा न भाव्यते किंचिद्धेयोपादेयरूपि यत् ॥ स्थीयते

सकलं त्यक्त्वा तदा चित्तं न जायते । अवासनत्वात्सततं यदा न मनुते मनः ॥ अमनस्ता तदोदेति परमात्मपदप्रदा ' इति । अत्र द्वावेवोपायौ पर्यवसितौ प्राणस्पन्दनिरोधार्थमभ्यासः वासनापरित्यागार्थं च वैराग्यमिति । साधुसङ्गमाध्यात्मविद्याधिगमौ त्वभ्यासवैराग्योपपादकतयान्यथासिद्धौ तयोरेवान्तर्भवतः । अत एव भगवताऽभ्यासेन वैराग्येण चेति द्वयमेवोक्तम् । अत एव भगवान् पतञ्जलिरसूत्रयत् ' अभ्यासवैराग्याभ्यां तन्निरोधः ' इति । तासां प्रागुक्तानां प्रमाणविपर्ययविकल्पनिद्रास्मृतिरूपेण पञ्चविधानामनन्तानामासुरत्वेन क्लिष्टानां दैवत्वेनाक्लिष्टानामपि वृत्तीनां सर्वासामपि निरोधो निरिन्धनाग्निवदुपशमाख्यः परिणामोऽभ्यासेन वैराग्येण च समुच्चितेन भवति । तदुक्तं योगभाष्ये—चित्तनदीनामोभयतो वाहिनी वहति कल्याणाय वहति पापाय च । तत्र या कैवल्यप्राग्भारा विवेकनिम्ना सा कल्याणवहा या त्वविवेकनिम्ना संसारप्राग्भारा सा पापवहा । तत्र वैराग्येण विषयस्रोतः खिलीक्रियते विवेकदर्शनाभ्यासेन च कल्याणस्रोत उद्घाट्यते इत्युभयाधीनश्चित्तवृत्तिनिरोध इति। प्राग्भारनिम्नपदे 'तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम्' इत्यत्र व्याख्याते। यथा तीव्रवेगोपेतं नदीप्रवाहं सेतुबन्धनेन निवार्य कुल्याप्रणयनेन क्षेत्राभिमुखं तिर्यक्प्रवाहान्तरमुत्पाद्यते तथा वैराग्येण चित्तनद्या विषयप्रवाहं निवार्य समाध्यभ्यासेन प्रशान्तवाहिता संपाद्यत इति द्वारभेदात्समुच्चय एव । एकद्वारत्वे हि व्रीहियववद्विकल्पः स्यादिति मन्त्रजपदेवताध्यानादीनां क्रियारूपाणामावृत्तिलक्षणोऽभ्यासः संभवति । सर्वव्यापारोपरमस्य तु समाधेः को नामाभ्यास इति शङ्कां निवारयितुमभ्यासं सूत्रयति स्म ' तत्र स्थितौ यत्नोऽभ्यासः ' इति । तत्र स्वरूपावस्थिते द्रष्टरि शुद्धे चिदात्मनि चित्तस्यावृत्तिकस्य प्रशान्तवाहितारूपा निश्चलता स्थितिस्तदर्थं यत्नो मानस उत्साहः स्वभावचाञ्चल्याद्बहिःप्रवाहशीलं चित्तं सर्वथा निरोत्स्यामीत्येवंविधः स आवर्त्यमानोऽभ्यास उच्यते । 'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' अनिर्वेदेन दीर्घकालासेवितो विच्छेदाभावेन निरन्तरासेवितः सत्कारेण श्रद्धातिशयेन वासेवितः सोऽभ्यासो दृढभूमिर्विषयसुखवासनया चालयितुमशक्यो भवति । अदीर्घकालत्वे दीर्घकालत्वेऽपि विच्छिद्य विच्छिद्य सेवने श्रद्धातिशयाभावे च लयविक्षेपकषायसुखास्वादानामपरिहारे व्युत्थानसंस्कारप्राबल्याददृढभूमिरभ्यासः फलाय न स्यादिति त्रयमुपात्तम् । वैराग्यं तु द्विविधमपरं परं च । यतमानसंज्ञाव्यतिरेकसंज्ञैकेन्द्रियसंज्ञावशीकारसंज्ञाभेदैरपरं चतुर्धा । तत्र पूर्वभूमिजयेनोत्तरभूमिसंपादनविवक्षया चतुर्थमेवासूत्रयत् ' दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम् ' इति। स्त्रियोऽन्नपानमैश्वर्यमित्यादयो दृष्टा विषयाः, स्वर्गो विदेहता प्रकृतिलय इत्यादयो वैदिकत्वेनानुश्रविका विषयास्तेषूभयविधेष्वपि सत्यामेव तृष्णाया विवेकतारतम्येन यतमानादित्रयं भवति । अत्र जगति किं सारं किमसारमिति गुरुशास्त्राभ्यां ज्ञास्यामीत्युद्योगो यतमानम् । स्वचित्ते पूर्वविद्यमानदोषाणां मध्येऽभ्यस्यमानविवेकेनैते पक्वाः एतेऽवशिष्टा इति चिकित्सकवद्विवेचनं व्यतिरेकः । दृष्टानुश्रविकविषयप्रवृत्तेर्दुःखात्मत्वबोधेन बहिरिन्द्रियप्रवृत्तिमजनयन्त्या अपि तृष्णायाः औत्सुक्यमात्रेण मनस्यवस्थानमेकेन्द्रियम् । मनस्यपि तृष्णाशून्यत्वेन सर्वथा वैतृष्ण्यं तृष्णाविरोधिनी चित्तवृत्तिर्ज्ञानप्रसादरूपा वशीकारसंज्ञा वैराग्यं संप्रज्ञातस्य समाधेरन्तरङ्गं साधनमसंप्रज्ञातस्य तु बहिरङ्गम् । तस्य त्वन्तरङ्गसाधनं परमेव वैराग्यम् । तच्चासूत्रयत् ' तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ' इति । संप्रज्ञातसमाधिपाटवेन गुणत्रयात्मकात्प्रधानाद्विविक्तस्य पुरुषस्य ख्यातिः साक्षात्कार उत्पद्यते । ततश्चाशेषगुणत्रयव्यवहारेषु वैतृष्ण्यं यद्भवति तत्परं श्रेष्ठं फलभूतं वैराग्यं तत्परिपाकनिमित्ताच्च चित्तोपशमपरिपाकादविलम्बेन कैवल्यमिति ॥ ३९ ॥

शं० टी०—मनसो दुर्निग्रहत्वं यच्चलोकशास्त्रप्रसिद्धमेवेत्यङ्गीकृत्य तदेवानुवदन् मुमुक्षोस्तन्निग्रहसाधनं च प्रतिपादयति श्रीभगवान्—असंशयमितिद्वाभ्याम् । यद्यपि चञ्चलत्वात्प्रमाथित्वाद्बलवत्त्वाद्दृढत्वाच्च

मनसो दुर्निग्रहत्वे त्वसंशयं संशयो नास्ति तथापि तन्निग्रहोपायस्त्वेवमेवोच्यते तं शृणु। वैराग्येण श्रुतिस्मृतियुक्तिभिरुक्तरीत्या सर्वस्यापि च विश्वस्य मिथ्यात्वमेव सम्यक्पश्यतो विदुषः विषयेष्वसत्त्वतुच्छत्वबन्धकत्वबुद्धिः सम्यगुदेति। तया च तीव्रमोक्षेच्छया च समुत्पन्नं यद्विषयवैरस्यं तदेव वैराग्यं, तेन वैराग्येण गृह्यते मनो निगृह्यते पदार्थमिथ्यात्वज्ञानेन रागद्वेषादिदोषास्तद्वेगहेतवो विनिवर्तन्ते, तन्निवृत्त्या मनो वशवर्ति निश्चलं च भवतीत्यर्थः। ननु रागद्वेषादिदोषशून्येषु बालादिषु मनश्चाञ्चल्यमेव दृश्यते कथं रागद्वेषादिराहित्येन वैराग्यमात्रेण च मनसो निश्चलत्वं सिध्यतीत्याशङ्कायां न तेषां पदार्थमिथ्यात्वज्ञानं, रागाद्यभावश्च, न संभवति मनोनैश्चल्यं च तथाप्यङ्गयभावे सत्यङ्गमात्रेण कार्यं न सिध्यत्यतोऽङ्गिना भवितव्यमित्याशयेनाह—अभ्यासेनेति। विजातीयप्रत्ययतिरस्कारपूर्विका सजातीयप्रत्ययावृत्तिरभ्यासस्तेन तीव्रमोक्षेच्छातीव्रवैराग्यैकसाधनेन चिरकालं नित्यनिरन्तरभाविना ब्रह्मप्रत्ययाभ्यासेन विजातीयप्रत्ययानां निःशेषविनाशे सति तत्तद्वासनानां निःशेषसंक्षयात् 'निमित्तापाये नैमित्तिकस्याप्यपायः' इतिन्यायेन चलननिमित्तानां बाह्यवासनानामपाये मनः स्वयमेव निश्चलं भवत्यतस्तीव्रमोक्षेच्छावैराग्यसंवलितसत्प्रत्ययाभ्यास एव मनोनिग्रहे तन्नैश्चल्ये च परमकारणं तेनैव सम्यगनुष्ठितेन मनो निश्चलं भवतीत्यर्थः॥ ३५॥

**श्री० टी०**—तदुक्तं चञ्चलत्वादिकमङ्गीकृत्यैव मनोनिग्रहोपायं श्रीभगवानुवाच—**असंशयमिति**। चञ्चलत्वादिना मनो निरोद्धुमशक्यमिति यद्वदसि एतन्निःसंशयमेव तथापि तु विषयाचिन्तनपूर्वकमभ्यासेन परमात्माकारप्रत्ययावृत्त्या विषयवैतृष्ण्येन च गृह्यते निगृह्यते। अभ्यासेन लयप्रतिबन्धाद्वैराग्येण च विक्षेपप्रतिबन्धादुपरतवृत्तिकं सत्परमात्माकारेण परिणतं तिष्ठतीत्यर्थः। तदुक्तं योगशास्त्रे—'मनसो वृत्तिशून्यस्य ब्रह्माकारतया स्थितिः। याऽसंप्रज्ञातनामासौ समाधिरभिधीयते' इति॥ ३५॥

**स० टी०**—इत्येवमर्जुनप्रश्नं श्रुत्वोवाच जगद्गुरुः॥ सत्यमेवं यथा ब्रूषे चञ्चलं मन आधिदम्॥ १॥ महाबाहुतया त्वं तु निग्रहीतुं च शक्ष्यसि॥ प्रारब्धकर्मप्राबल्यान्नरेणासंयतात्मना॥ २॥ दुःखेनापि मनोऽशक्यं निग्रहीतुं चलं दृढम्॥ एवं सत्यपि धीरेण समाधौ तत्परेण तत्॥ ३॥ अभ्यासेन विशुद्धेन वैराग्येण निगृह्यते॥ अभ्यासो नाम कस्यांचिच्चित्तभूमौ निरन्तरम्॥ ४॥ समानप्रत्ययावृत्तिश्चित्तस्याधिवियोगिनः॥ दृष्टादृष्टेषु भोगेषु दोषग्रस्तत्वदर्शनात्॥ ५॥ विषयेषु यद्वैतृष्ण्यं वैराग्यं तदुदीरितम्॥ ताभ्यां निगृह्यते तस्यात्यन्तविक्षेपशीलता॥ ६॥ ३५॥

**भा० टी०**—प्रश्नमभिनन्दन् श्रीभगवानुवाच—**असंशयमिति**। असंशयं मनश्चलं दुर्निग्रहं चेत्यस्मिन्नर्थे संशयो नास्ति। यद्यपि दुर्निग्रहं तथापि तु अभ्यासेन चित्तभूमौ कस्यांचिद्विजातीयप्रत्ययानन्तरितसमानप्रत्ययावृत्तिलक्षणेन वैराग्यं नाम दृष्टादृष्टेषु भोगेषु दोषदर्शनाभ्यासाद्वैतृष्ण्यं तेन च गृह्यते विक्षिप्तत्वादिकं त्यक्त्वा निरुध्यत इत्यर्थः। पूर्वार्धे महाबाहो इति संबोधयन्महाबाहुनाऽतिबलेन जितनिवातकवचादिना त्वयापि यद्येवमुच्यते तर्हि मनसो दुर्निग्रहत्वे संशयो नास्तीति सूचयति। बाह्वादिबलसाध्यो मनसो निग्रहो न भवति किंत्वभ्यासवैराग्यसाध्यः यथातिप्रबलै राजभिः स्वगृहे वासयितुं दुर्घटो दुर्वासा अपि तव मात्राऽबलया कुन्त्या विषयेषु वैराग्येण तत्सेवनपरत्वं परित्यज्य तच्छुश्रूषाभ्यासेन च स्वगृहे निवासितः प्रसादितश्च तथा त्वं तत्पुत्रो मदुक्तेनोपायेन दुर्निग्रहमपि मनो निग्रहीतुं योग्योऽसीति सूचयन्नाह-हे कौन्तेयेति ३५

**प० टी०**—अथ द्विप्रकारं निग्रहोपायमुपदिशन् भगवानाह—**असंशयमिति**। चञ्चलत्वादिस्वभावं मनो निरोद्धुमशक्यमिति यद्वदसि तदसंशयं निःसंदिग्धमेव। तथापि अभ्यासेन वैराग्येण च गृह्यते वशीक्रियते। तत्राभ्यासो नाम निरन्तरमात्मानुध्यानं वैराग्यं च विषयवैरस्यम्। नन्वेतत्परस्पराश्रयमिति प्रतिभाति यतो मनसि निगृहीतेऽभ्यासो वैराग्यं वा सिध्यति तथाभ्यासवैराग्याभ्यां मनो निगृह्यत इति चेत्स-

त्यम् । एतस्योभयस्य विचाराधीनत्वात् तत्प्रश्नोत्तरं भगवता प्रागेव दत्तं शनैः शनैरुपरमेदिति, तदेव अभ्यासेन च कौन्तेय वैराग्येण च गृह्यते इत्यनेन स्मारितम् । तथाहि । तत्र परमार्थप्राप्तौ तावदात्मविचार एव शरणमिति "द्रष्टव्यः श्रोतव्यो मन्तव्यः" इति । तद्यथा "वेदाहमेतम्" इत्यादिश्रुतयो वदन्ति । तत्रात्मा देहेन्द्रियादिविलक्षणस्तद्द्रष्टृत्वान्नहि घटद्रष्टा घट एव संभवति । अथ स कीदृगस्तीति विचारे तावद्रूपरसादिग्राहकत्वे प्रतिक्षणमन्वेषणीयः स एव प्रस्तुतमभ्यासः । तथोत्पत्तेरनन्तरमेतावत्समयं मया सुखदुःखयोर्मध्ये किमधिकमनुभूतमिति परामर्शे बाल्यपौगण्डकैशोरयौवनवार्धकाद्यवस्थासु बहुतरं दुःखमेव स्मर्यते । तथा विषयलाभार्थं प्रयत्नो भूयान् प्राणपर्यवसायी वाऽतः स दुःखरूपो भोगसमयस्तु निमेषमात्रं तावदेव सुखं तदपि मत्स्यामिषन्यायेन परिणतिविरसत्वाद्दुःखपर्यवसाय्येवेति विचारेण वैराग्यप्रकारः । किंच चञ्चले विषयलोलुपेऽपि मनस्यभ्यासो विरागश्च संभवति । तदुक्तं योगशास्त्रे—'यत्रैव याति चपलं ननु चित्तमेतत्तत्रैव भाति परमेश्वर एव साक्षात् । प्राग्दुःखदोऽथ विरमे विरसः पदार्थस्त्वात्मा चिरं सुखद इत्यनिशं विचिन्त्य' इति । अत एव कौन्तेय महाबाहो इति संबुद्ध्या विवेकत्यागयोर्ग्रहणम् । वयं त्वास्मभावस्थाः साहाय्यं करिष्याम एवेत्यर्थः ॥ ३५ ॥

रा० टी०—अर्जुनोक्तं मनश्चाञ्चल्यादिकमङ्गीकृत्य मनोनिग्रहोपायं भगवानाह—असंशयमिति । हे महाबाहो स्वभावतश्चञ्चलं मनोऽसंशयं यथा भवति तथा दुर्निग्रहं दुःखेन निरोध्यं तथाप्यभ्यासवैराग्याभ्यां तु निगृह्यते ॥ ३५ ॥

**असंयतात्मना योगो दुष्प्राप इति मे मतिः ॥**
**वश्यात्मना तु यतता शक्योऽवाप्तुमुपायतः ॥ ३६ ॥**

त० टी०—अन्यथाऽन्यस्य न योगप्राप्तिरित्याह—असंयतात्मनेति । असंयतो विषयेभ्यो न निगृहीत आत्मा मनो येन सः, असंयतात्मा तेन पुरुषेण योगः पूर्वोक्तयोगः समत्वदर्शनलक्षणो दुष्प्रापः प्राप्तुमशक्य इति मे मतिर्मम संमतिः । वश्यात्मना तु अभ्यासवैराग्याभ्यां वश्यत्वं प्रापित आत्मा मनो येन स वश्यात्मा तेन यतता प्रयत्नं कुर्वता उपायत उक्तोपायेन योगोऽवाप्तुं शक्यः ॥ ३६ ॥

म० टी०—यत्तु त्वमवोचः प्रारब्धभोगेन कर्मणा तत्त्वज्ञानादपि प्रबलेन स्वफलदानाय मनसो वृत्तिषूत्पाद्यमानासु कथं तासां निरोधः कर्तुं शक्य इति तत्रोच्यते–असंयतात्मनेति । उत्पन्नेऽपि तत्त्वसाक्षात्कारे वेदान्तव्याख्यानादिव्यासङ्गाद्वालस्यादिदोषाद्वाऽभ्यासवैराग्याभ्यां न संयतो निरुद्ध आत्मान्तःकरणं येन तेनासंयतात्मना तत्त्वसाक्षात्कारवतापि योगो मनोवृत्तिनिरोधः दुष्प्रापः दुःखेनापि प्राप्तुं न शक्यते प्रारब्धकर्मकृताच्चित्तचाञ्चल्यादिति चेत्त्वं वदसि तत्र मे मतिः मम संमतिस्तत्तथैवेत्यर्थः । केन तर्हि प्राप्यते उच्यते वश्यात्मना तु वैराग्यपरिपाकेन वासनाक्षये सति वश्यः स्वाधीनो विषयपारतन्त्र्यशून्य आत्मान्तःकरणं यस्य तेन । तुशब्दोऽसंयतात्मनो वैलक्षण्यद्योतनार्थोऽवधारणार्थो वा । एतादृशेनापि यतता यतमानेन वैराग्येण विषयस्रोतःखिलीकरणेऽप्यात्मस्रोतउद्घाटनार्थमभ्यासं प्रागुक्तं कुर्वता योगः सर्वचित्तवृत्तिनिरोधः शक्योऽवाप्तुं चित्तचाञ्चल्यनिमित्तानि प्रारब्धकर्माण्यप्यभिभूय प्राप्तुं शक्यः । कथमतिबलवतामारब्धभोगानां कर्मणामभिभवः । उच्यते—उपायतः उपायात् उपायः पुरुषकारस्तस्य लौकिकस्य वैदिकस्य वा प्रारब्धकर्मापेक्षया प्राबल्यात् । अन्यथा लौकिकानां कृष्यादिप्रयत्नस्य वैदिकानां ज्योतिष्टोमादिप्रयत्नस्य च वैयर्थ्यापत्तेः सर्वत्र प्रारब्धकर्मसदसत्त्वविकल्पग्रासात् । प्रारब्धकर्मसत्त्वे तत एव फलप्राप्तेः किं पौरुषेण प्रयत्नेन, तदसत्त्वे तु सर्वथा फलाऽसंभवात्किं तेनेति । अथ कर्मणः स्वय

मदृष्टरूपस्य दृष्टसाधनसंपत्तिव्यतिरेकेण फलजननासमर्थत्वादपेक्षितः कृष्यादौ पुरुषप्रयत्न इति चेद्, योगाभ्यासेऽपि समं समाधानं तत्साध्यायाः जीवन्मुक्तेरपि सुखातिशयरूपत्वेन प्रारब्धकर्मफलान्तर्भावात्। अथवा यथा प्रारब्धफलं कर्म तत्त्वज्ञानात्प्रबलमिति कल्प्यते दृष्टत्वात् तथा तस्मादपि कर्मणो योगाभ्यासः प्रबलोऽस्तु शास्त्रीयस्य प्रयत्नस्य सर्वत्र ततः प्राबल्यदर्शनात्। तथाचाह भगवान् वसिष्ठः 'सर्वमेवेह हि सदा संसारे रघुनन्दन। सम्यक्प्रयुक्तात्सर्वेण पौरुषात्समवाप्यते। उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम्। तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम्' उच्छास्त्रं शास्त्रप्रतिषिद्धमनर्थाय नरकाय शास्त्रितं शास्त्रविहितं अन्तःकरणशुद्धिद्वारा परमार्थाय चतुर्ष्वर्थेषु परमाय मोक्षाय 'शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित्। पौरुषेण प्रयत्नेन योजनीया शुभे पथि॥ अशुभेषु समाविष्टं शुभेष्वेवाऽवतारय। स्वमनः पुरुषार्थेन बलेन बलिनां वर॥ द्रागभ्यासवशाद्याति यदा ते वासनोदयम्। तदाऽभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन' वासना शुभेति शेषः 'संदिग्धायामपि भृशं शुभामेव समाहर। शुभायां वासनावृद्धौ तात दोषो न कश्चन॥ अव्युत्पन्नमना यावद्भवानज्ञाततत्पदः। गुरुशास्त्रप्रमाणैस्त्वं निर्णीतं तावदाचर॥ ततः पक्वकषायेण नूनं विज्ञातवस्तुना। शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निरोधिना' इति। तस्मात्साक्षिगतस्य संसारस्याविवेकनिबन्धनस्य विवेकसाक्षात्कारादपनयेऽपि प्रारब्धकर्मपर्यवस्थापितस्य चित्तस्य स्वाभाविकीनामपि वृत्तीनां योगाभ्यासप्रयत्नेनापनये सति जीवन्मुक्तः परमो योगी। चित्तवृत्तिनिरोधाभावे तु तत्त्वज्ञानवानप्यपरमो योगीति सिद्धमवशिष्टं जीवन्मुक्तिविवेके सविस्तरमनुसंधेयम्॥ ३६॥

**शं० टी०**—किंच—**असंयतात्मनेति**। तीव्रमोक्षेच्छावैराग्याभावयुक्तेनासंयतात्मना असंयतः ज्ञातेऽप्यात्मनि तत्तद्वासनया बहिरेव प्रवृत्तिस्ततश्चिरकालं नित्यं निरन्तरमत्यन्तास्थया ब्रह्मण्यस्थापित आत्मा मनो यस्य तेनासंयतात्मना समाधिमकुर्वता यतिना योगो ज्ञानयोगः सदा सर्वत्र ब्रह्ममात्रदर्शनलक्षणोऽप्रतिबद्धः शुक्तिकासंदर्शनेन शुक्तिप्रत्ययवदधिष्ठानब्रह्मदर्शनसमुत्पन्नः सन्ततो यो ब्रह्मप्रत्ययः स दुष्प्रापः नित्यनिरन्तराभ्यासश्रमदुःखेन विना प्राप्तुमशक्यो दुष्प्राप इति मे ममेश्वरस्य मतिर्निश्चयः कृतास्वपि श्रवणकोटिषु यतेः समाधिना विना सम्यक् दर्शनं न सिध्यतीत्यर्थः। मुमुक्षोर्यतेः समाधिनैव सम्यग् ज्ञानं मोक्षश्च सिध्यत्यतः समाधिरेव कर्तव्य इति सूचयितुमाह—**वश्यात्मनेति**। पूर्वस्मादस्य वैलक्षण्यद्योतनार्थस्तुशब्दः। वश्यात्मना वश्यः स्वायत्तस्तीव्रमोक्षेच्छातीव्रवैराग्याभ्यां सुतरां विषयेष्वप्रवर्तित आत्मा मन इन्द्रियग्रामश्च येन तेन वश्यात्मना यततात्यन्तश्रद्धया यथाकालं यथालक्षणं योगसिद्ध्यै यत्नं कुर्वतैव यतिना योग उक्तलक्षणोऽनेनैवोपायेन अवाप्तुं प्राप्तुं शक्यो भवति नान्येनेत्यर्थः॥ ३६॥

**श्री० टी०**—एतावांस्त्विह निश्चय इत्याह—**असंयतात्मनेति**। असंयतात्मा उक्तप्रकारेणाभ्यासवैराग्याभ्यामसंयत आत्मा चित्तं यस्य तेन पुरुषेणायं योगो दुष्प्रापः प्राप्तुमशक्यः अभ्यासवैराग्याभ्यां वश्यो वशवर्ती आत्मा चित्तं यस्य तेन पुरुषेण पुनश्चानेनैवोपायेन प्रयत्नं कुर्वता योगः प्राप्तुं शक्यः॥ ३६॥

**स० टी०**—ताभ्यामसंयतं यस्य मनो विक्षेपशालिनः॥ चित्तवृत्तिनिरोधाख्यो योगस्तस्यातिदुर्लभः॥ १॥ प्रारब्धकर्मप्राबल्याच्चाञ्चल्यादिमतोऽस्य यत्॥ दुर्निग्रहत्वं चित्तस्य तत्र मे संमतिर्हरेः॥ २॥ वैराग्यपरिपाकेन वासनानां क्षये सति॥ वश्यः स्वाधीन आत्मान्तःकरणं यस्य तेन तु॥ ३॥ ईदृशेनापि पूर्वोक्तमभ्यासं कुर्वतादरात्॥ चित्तचाञ्चल्यकारीणि कर्माण्येवाभिभूय च॥ ४॥ प्राप्तुं शक्यः स योगो हि चित्तवृत्तिनिरोधकः॥ स शक्योऽभिभवः कर्तुं कथं प्रारब्धकर्मणाम्॥ ५॥ मैवं भोः सोऽप्युपायेन कर्तुं शक्यो विवेकिना॥ शास्त्रीयस्य प्रयत्नस्य प्राबल्यादपि कर्मणाम्॥ ६॥ कर्तुं चाभिभवः शक्यो वासिष्ठेऽपि तथेरितम्॥ सर्वमेवेह हि सदा संसारे रघुनन्दन॥ ७॥ सम्यक्प्रयुक्ता-

त्सर्वेण पौरुषात्समवाप्यते ॥ उच्छास्त्रं शास्त्रितं चेति पौरुषं द्विविधं स्मृतम् ॥ ८ ॥ तत्रोच्छास्त्रमनर्थाय परमार्थाय शास्त्रितम् ॥ शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासनासरित् ॥ ९ ॥ पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥ अशुभेषु समाविष्टं शुभेष्वेवावतारय ॥ १० ॥ स्वमनः पुरुषार्थेन बलेन बलिनां वर ॥ द्रागभ्यासवशाद्याति यदा ते वासनोदयम् ॥ ११ ॥ तदाभ्यासस्य साफल्यं विद्धि त्वमरिमर्दन ॥ अव्युच्छिन्नमना यावद्भवानज्ञाततत्पदः ॥ १२ ॥ गुरुशास्त्रप्रमाणैस्त्वं निर्णीतं तावदाचर ॥ ततः पक्वकषायेण नूनं विज्ञातवस्तुना ॥ १३ ॥ शुभोऽप्यसौ त्वया त्याज्यो वासनौघो निरोधिना ॥ तस्मात्पौरुषमाश्रित्य शक्यः प्रारब्धकर्मणाम् ॥ १४ ॥ कर्तुं चाभिभवोऽपीति सिद्धमित्याशयो हरेः ॥ १५ ॥ योगाभ्यासपरैर्मनोऽनवरतं संस्थाप्यते यत्र खे ब्रह्मात्मेन्द्र इतीश्वरोऽद्वय इति श्रुत्यात्र यो गीयते ॥ वैराग्यादिगुणाः सतां च सुलभा यद्भक्तिलेशान्नृणां सोऽस्माकं हृदि सर्वदार्जुनसखो भूयान्मुकुन्दो हरिः ॥ १६ ॥ ३६ ॥

**भा० टी०—असंयतेति ।** असंयतमभ्यासवैराग्याभ्यामनायत्तं चित्तं यस्य तेन आत्मौपम्येनेत्यनेनोक्तो योगो दुष्प्रापः प्राप्तुमशक्यः वशीकृतचित्तेन तूपायतः अभ्यासवैराग्यरूपोपायात् भूयोऽपि यतता प्रयत्नं कुर्वता योगोऽवाप्तुं प्राप्तुं शक्यः ॥ ३६ ॥

**प० टी०—**अथोभयप्रकारविधुरस्य योगो दुःसाध्यस्तथा तदुभयोपेतस्य सुसाध्य इत्याह—**असंयतात्मनेति ।** अभ्यासवैराग्याभ्यामसंयत आत्मा चित्तं यस्य तेन योगो दुष्प्रापः प्राप्तुमशक्यस्तथोभाभ्यां वश्यो वशवर्ती आत्मा यस्य तेन यतता प्रयत्नं कुर्वता पुरुषेणोपायतोऽभ्यासवैराग्यरूपादाप्तुं प्राप्तुं शक्य इति मे मतिर्ममाभिमतम् ॥ ३६ ॥

**रा० टी०—**ननु यथा मत्तमातङ्गः स्वयमेव श्रान्तः सन् शान्तो भवति तथा विषयैस्तृप्तं मनः कदाचित्स्वयमेव नियतं भवति किमभ्यासादिनेत्यत आह—**असंयतेति ।** अभ्यासादितोऽवशीकृतचित्तेन योगो दुष्प्रापोऽसाध्यः इति मे मतिः । अभ्यासादिना वश्यात्मना वशीकृतमनस्केन तु पुंसा यतता पुनरनेनोपायेन यत्नं कुर्वता योगोऽवाप्तुं शक्य इत्यर्थः ॥ ३६ ॥

## अर्जुन उवाच—अयतिः श्रद्धयोपेतो योगाच्चलितमानसः ॥
## अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति ॥ ३७ ॥

**त० टी०—**एवं युञ्जन्नेवमित्यादिनाऽत्यन्तसुखानुभवरूपं सदा परमात्मदर्शनं च योगफलमभ्यासवैराग्याद्युपायैनैव तत्प्राप्तिं च भगवतः संश्रुत्य तच्चैवमेवेति निश्चित्य यस्तूक्तयोगे तदुपाये च श्रद्धया प्रवृत्तोऽपि शिथिलप्रयत्नश्चेत्तस्याभ्यासाभावेन योगो न सिद्ध्येत्ततः परा गतिः कुतः स्यादिति संदिहानोऽर्जुन उवाच—**अयतिरिति ।** यो मुमुक्षुः श्रद्धयोपेतः श्रद्धापूर्वकं योगे प्रवृत्तोऽपि अयतिरल्पयत्नः शिथिलप्रयत्न इत्यर्थः । तथा योगाच्चलितमानसः अन्तकाले योगादात्मैकाग्र्याच्चलितं मानसं मनो यस्य विषयाभिमुखमना इत्यर्थः । स योगसंसिद्धिं योगस्य संसिद्धिं योगफलं सम्यगात्मदर्शनमप्राप्य हे कृष्ण ! कां गतिं गच्छति ॥ ३७ ॥

**म० टी०—**एवं प्राक्तनेन ग्रन्थेनोत्पन्नतत्त्वज्ञानोऽनुत्पन्नजीवन्मुक्तिरपरमो योगी मतः, उत्पन्नतत्त्वज्ञान उत्पन्नजीवन्मुक्तिस्तु परमो योगी मत इत्युक्तम् । तयोरुभयोरपि ज्ञानादज्ञाननाशेऽपि यावत्प्रारब्धभोगं कर्म देहेन्द्रियसंघातावस्थानात्प्रारब्धभोगकर्मापाये च वर्तमानदेहेन्द्रियसंघातापायात्पुनरुत्पादकाभावाद्विदेहकैवल्यं प्रति कापि नास्त्याशङ्का । यस्तु प्राक्कृतकर्मभिर्लब्धविविदिषापर्यन्तचित्तशुद्धिः कृतकार्यत्वात्सर्वाणि

कर्माणि परित्यज्य प्राप्तपरमहंसपरिव्राजकभावः परमहंसपरिव्राजकमात्मसाक्षात्कारेण जीवन्मुक्तं परप्रबोधनदक्षं गुरुमुपसृत्य ततो वेदान्तमहावाक्योपदेशं प्राप्य तत्रासंभावनाविपरीतभावनाख्यप्रतिबन्धनिरासाय 'अथातो ब्रह्मजिज्ञासा' इत्यादि 'अनावृत्तिः शब्दात्' इत्यन्तया चतुर्लक्षणमीमांसया श्रवणमनननिदिध्यासनानि गुरुप्रसादात्कर्तुमारभते स श्रद्दधानोऽपि सन्नायुषोऽल्पत्वेनाल्पप्रयत्नत्वादलब्धज्ञानपरिपाकः श्रवणमनननिदिध्यासनेषु क्रियमाणेष्वेव मध्ये व्यापद्यते स ज्ञानपरिपाकशून्यत्वेनानष्टाज्ञानो न मुच्यते नाप्युपासनासहितकर्मफलं देवलोकमनुभवत्यर्चिरादिमार्गेण नापि केवलकर्मफलं पितृलोकमनुभवति धूमादिमार्गेण कर्मणामुपासनानां च त्यक्तत्वात् । अत एतादृशो योगभ्रष्टः कीटादिभावेन कष्टां गतिमियादज्ञत्वे सति देवयानपितृयानमार्गासंबन्धित्वात् वर्णाश्रमाचारभ्रष्टवदथवा कष्टां गतिं नेयात् शास्त्रनिन्दितकर्मशून्यत्वाद्ग्रामदेववदिति संशयपर्याकुलमनाः अर्जुन उवाच—**अयतिरित्यादि** । यतिर्यत्नशीलः अल्पार्थे नञ् अलवणा यवागूरित्यादिवदयतिरल्पयत्नः श्रद्धया गुरुवेदान्तवाक्येषु विश्वासबुद्धिरूपयोपेतो युक्तः श्रद्धा च स्वसहचरितानां शमादीनामुपलक्षणम् " शान्तो दान्त उपरतस्तितिक्षुः श्रद्धान्वितो भूत्वात्मन्येवात्मानं पश्यति " इति श्रुतेः । तेन नित्यानित्यवस्तुविवेक इहामुत्रभोगविरागः शमदमोपरतितितिक्षाश्रद्धादिसंपन्मुमुक्षुता चेति साधनचतुष्टयसंपन्नः गुरुमुपसृत्य वेदान्तवाक्यश्रवणादि कुर्वन्नपि परमायुषोऽल्पत्वेन मरणकाले चेन्द्रियाणां व्याकुलत्वेन साधनानुष्ठानासंभवात् योगाच्चलितमानसः योगाच्छ्रवणादिपरिपाकलब्धजन्मनस्तत्त्वसाक्षात्काराच्चलितं तत्फलमप्राप्तं मानसं यस्य सः योगानिष्पत्त्यैवाप्राप्य योगसंसिद्धिं तत्त्वज्ञाननिमित्तामज्ञानतत्कार्यनिवृत्तिमपुनरावृत्तिसहितामप्राप्यातत्त्वज्ञ एव मृतः सन् कां गतिं हे कृष्ण गच्छति सुगतिं दुर्गतिं वा कर्मणां परित्यागाज्ज्ञानस्य चानुत्पत्तेः शास्त्रोक्तमोक्षसाधनानुष्ठायित्वाच्छास्त्रगर्हितकर्मशून्यत्वाच्च ॥३७॥

**शं० टी०**—एवं योगप्राप्त्युपायं ज्ञात्वा पुनरिदानीमिहामुत्र च सुखकारणानि श्रौतादीनि कर्माणि सर्वाणि च संन्यस्य योगनिष्ठायां प्रवृत्तस्य यतेर्योगसिद्ध्यसंभवकाले एव मृतस्य स्वर्गापवर्गसाधनविधुरस्य का वा गतिर्भविष्यतीत्याशङ्कया तां गतिं ज्ञातुकामोऽर्जुन उवाच—**अयतिरिति** । योगानुष्ठानेनैव सम्यग्ज्ञानं तेनैव मोक्ष इति निश्चयपूर्वकयास्तिक्यबुद्ध्योपेतः संपन्नोऽप्ययतिः यतते योगसिद्ध्यै यत्नं करोतीति यतिः समाध्यनुष्ठानप्रयत्नवान् स न भवतीत्ययतिः ' श्रेयांसि बहुविघ्नानि भवन्ति महतामपि ' इतिन्यायेन प्रतिबन्धककर्मवशात्संप्राप्तविचित्रविघ्नविशेषैः समाधिप्रमत्तस्तत एव योगाच्चलितमानसः ब्रह्मैवाहमिति ब्रह्मण्येवात्मना धीनैश्चल्यं योगस्तस्माद्योगादन्तकालेऽन्यथा वा चलितं बाह्यवासनया दुष्कर्मणा च विपरीतभावापन्नं मानसं यस्य स चलितमानसो विनष्टस्मृतिरेवंलक्षणो योगी यतिर्योगसंसिद्धिं विदेहमुक्त्या पुरुषं योजयतीति योगः सम्यग्ज्ञानं तस्य संसिद्धिर्निरन्तरसमाध्यनुष्ठित्याऽप्रतिबद्धता सर्वमिदमहं च ब्रह्मैवेत्यप्रतिबद्धं सम्यग्दर्शनं योगसंसिद्धिस्तां समाधिफलमप्राप्य स्वयं मृत्वा कां गतिं गच्छति । अत्र कामित्यविज्ञातपदार्थज्ञानार्थकः किंशब्दो नत्वाक्षेपाद्यर्थकः, गम्यत इति गतिस्तेन प्राप्तव्योऽर्थः क इत्यर्थः । स्वर्गसंपादककर्मानुष्ठानाभावात्स्वर्गप्राप्त्यभावः विष्ण्वादिदेवतोपास्त्यभावात्तल्लोकप्राप्त्यभावः, समाधिसंभावितसम्यग्दर्शनाभावान्मुक्तिप्राप्त्यभावः, पापाचरणाभावाद्दुर्योनिदुर्गतिप्राप्त्यभावश्च ततोऽप्राप्तयोगसंसिद्धेर्यतेः का वा गतिर्भविष्यति तां वदेत्यभिप्रायः । नन्वत्र कां गतिं कृष्ण गच्छतीत्यर्जुनस्य प्रश्नोऽनुपपन्न एव भवति योगसंसिद्धेरप्राप्तत्वेऽपि यतेरेतस्य प्राक्तनपुण्यकर्मसंभवात्तदनुरूपस्वर्गादिलोकप्राप्त्युपपत्तेरिति चेन्न, तेषां चित्तशुद्धावेवोपक्षीणत्वात् ' जन्मान्तरसहस्रेषु यज्ञदानतपोध्वरैः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ स्ववर्णाश्रमधर्मेण तपसा हरितोषणात् । साधनं प्रभवेत्पुंसां वैराग्यादिचतुष्टयम् ॥ नित्यनैमित्तिकैरेव नियमेनेश्वरार्पितैः बहुजन्मकृतैर्विप्रः सत्त्वशुद्धिं समश्नुते ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति

मानवः' इति च प्राक्तनानामीश्वरार्पितानां पुण्यकर्मणां चित्तशुद्ध्येकप्रयोजनवत्त्वस्मरणात् । ननु तर्हि 'संन्यासाद्ब्रह्मणः स्थानम्' इत्यादिस्मृतिप्रसिद्धसंन्यासक्रियामात्रलभ्या ब्रह्मलोकगतिर्विद्यत एवेति चेन्न, तत्संन्यासस्यान्यथासिद्धत्वात् "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" 'संन्यस्य श्रवणं कुर्यात्' इत्यादिश्रुतिस्मृतिविहितसंन्यासस्य श्रुत्यङ्गत्वेन श्रवणाद्यर्थसिद्धावेवोपक्षीणस्वशक्तिकत्वाद्ब्रह्मलोकप्रापकत्वानुपपत्तेः, यथा "ज्योतिष्टोमेन स्वर्गकामो यजेत" इतिविहितज्योतिष्टोमयागस्य स्वर्गप्रापणे एवोपक्लृप्तसंकल्पत्वात्स्वर्गप्रापण एव सामर्थ्यं न तु ब्रह्मादिलोकप्रापणे तथा श्रवणाद्यर्थसिद्धावेवोपक्लृप्तस्य विविदिषासंन्यासस्य श्रवणाद्यर्थप्रापण एव सामर्थ्यं न तु फलान्तरप्रापणे "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इतिश्रुतिनियमात्ततः श्रवणाद्यङ्गत्वेन कृतस्य विविदिषासंन्यासस्य श्रवणादावेवोपक्षीणत्वाद्यतेस्तदतिरिक्तपुण्यकर्माऽनुपलम्भाच्च युक्त एवाऽर्जुनस्य प्रश्न इति सिद्धम् । ननु तर्हि 'संन्यासाद्ब्रह्मणः स्थानम्' इत्यादिस्मृतिवाक्यानामानर्थक्यं स्यादिति चेदुच्यते—संन्यासाद्ब्रह्मणः स्थानमितिसंन्यासस्य ब्रह्मस्थानं फलं स्मर्यते तद्विद्वत्संन्यासस्य वा विविदिषासंन्यासस्य वा उताऽपत्संन्यासस्य वा। नाद्यः "न तस्य प्राणा उत्क्रामन्ति" इति विदुषः प्राणोत्क्रमणाभावश्रवणात्तत्कर्तृकसंन्यासफलत्वानुपपत्तेः। न द्वितीयः विविदिषासंन्यासस्य श्रवणाद्यर्थसिद्ध्येकफलत्वात्पुनः फलान्तरकल्पनायोगात्पारिशेष्यादापत्संन्यासस्यैव ब्रह्मलोकः फलमित्यवसीयते । तथैव स्मर्यते 'आपद्यपि च कुर्वीत संन्यासं ब्राह्मणोत्तमः । यदनुष्ठानमात्रेण प्रयाति ब्रह्मणः पदम्' इत्यतः 'संन्यासाद्ब्रह्मणः स्थानम्' इत्यादिस्मृतिवाक्यानामापत्संन्यासविषयत्वेन सार्थकत्वान्न कदाचिदप्यनुपपत्तिः । नन्वापदि संन्यस्यापि पुनर्जीवित्वा विवेकी श्रवणादिना ज्ञानं संपाद्य मुक्तो भवति कथमापत्संन्यासस्य ब्रह्मलोकैकफलत्वमिति चेदुच्यते जन्मान्तरे मोक्षेच्छया संन्यस्य श्रवणं कृतवतस्तस्य प्रतिबन्धवशाज्ज्ञानानुत्पत्तौ पुनरत्रापि जन्मन्यापद्युपदेशेन पूर्वसंस्कारवशात्संन्यस्य श्रुत्या मत्या च ज्ञानं प्राप्य मुक्तो भवतीसमेवार्थं श्रीभगवानपि वक्ष्यति 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इत्यादिना ततो न कश्चिदत्र विरोधः । नन्वप्राप्तयोगसंसिद्धेरपि योगिनो यतेः संन्यासस्य श्रवणाद्युपक्षीणत्वेऽपि 'भिक्षाटनं जपः शौचं स्नानं ध्यानं सुरार्चनम् । कर्तव्यानि षडेतानि यतीनां नृपदण्डवत् ॥ स्वशाखोपनिषद्गीताम्' इत्यादिस्मृत्युक्तमन्त्रजपस्तोत्रसुरार्चनादिपुण्यकर्मणः स्वर्गादिहेतोः संभवादस्त्येव तत्प्राप्यः पुण्यलोक इति चेन्न, स्तोत्रमन्त्रजपादेर्भेदप्रत्ययघटितत्वेन विपरीतभावहेतुत्वाद्ब्रह्मविद्द्विषयत्वानुपपत्तेः 'नैतादृशं ब्राह्मणस्यास्ति वित्तम्' 'उपरमः क्रियाभ्यः' 'नैव धर्मी न चाधर्मी तूष्णीं किंचिदचिन्तयेत्' इति योगिनो यतेः सर्वकर्मोपरमस्मरणात् 'ध्यानयोगपरो नित्यम्' इत्यत्र निदिध्यासोः क्रियान्तरानवकाशार्थं नित्यपदमिति श्रीभाष्यकृद्भिर्व्याख्यातत्वाच्च निरन्तरयोगनिष्ठापरस्य यतेर्मन्त्रजपादिपुण्यकर्मानुष्ठानानुपपत्तौ तत्फलभूतपुण्यलोकगतिर्न संभवत्येवात एवार्जुनः पृच्छति कां गतिं कृष्ण गच्छतीति ॥ ३७ ॥

**श्री० टी०**—अभ्यासवैराग्याभावेन कथंचिदप्राप्तसम्यग्ज्ञानः किं फलमाप्नोतीत्यर्जुन उवाच—**अयतिरिति**। प्रथमं श्रद्धयोपेत एव योगे प्रवृत्तः न तु मिथ्याचारतया ततः परं तु अयतिः न सम्यग्यतते शिथिलाभ्यास इत्यर्थः । तथा योगाच्चलितं मानसं विषयप्रवणं चित्तं यस्य मन्दवैराग्य इत्यर्थः । एवमभ्यासवैराग्यशैथिल्याद्योगस्य संसिद्धिं फलं ज्ञानमप्राप्य कां गतिं प्राप्नोति ॥ ३७ ॥

**स० टी०**—योगाभ्यासप्रवृत्तेन संन्यस्तं सर्वकर्म तत् ॥ इहामुत्रफलप्राप्तिहेतुभूतं मुमुक्षुणा ॥ १ ॥ योगसिद्धिफलं मोक्षसाधनं तत्त्वदर्शनम् ॥ न प्राप्तं योगमार्गाच्च प्रयाणे चलिता मतिः ॥ २ ॥ यस्य तस्याभितो नाशमालक्ष्योवाच पाण्डवः ॥ गुरुवेदान्तवाक्येषु विश्वासेन युतोऽपि यः ॥ ३ ॥ विरक्तः साधनो-

पेतः प्रवृत्तो योगपद्धतौ ॥ शिथिलप्रयत्नोऽभ्यासे दैवान्मध्ये मृतो यदि ॥ ४ ॥ योगसिद्धिमसंप्राप्य कां गतिं याति सोऽच्युत ॥ ५ ॥ ३७ ॥

भा० टी०–योगभ्रष्टस्य स्वर्गमोक्षयोरभावमाशङ्क्यार्जुन उवाच–अयतिरिति । अयतिरयत्नशीलो योगमार्गे श्रद्धया आस्तिक्यबुद्ध्या चोपेतः युक्तोऽन्तकाले योगाच्चलितं मानसं मनो यस्य सो भ्रष्टस्मृतिः योगसंसिद्धिं योगफलं सम्यग्दर्शनमप्राप्य कां गतिं गच्छति । अयमाशयः योगाभ्यासाङ्गीकरणेन समस्तकर्मणां संन्यासात् कर्मफलस्य गन्तव्यस्य स्वर्गादेरभावः योगाच्चलितचित्तत्वात् योगफलस्य सम्यग्ज्ञानस्यालाभात्पृच्छति कां गतिं गच्छतीति । तत्तत्स्थानं प्रत्याकर्षणशीलेन त्वया यां गतिं प्रति योगभ्रष्टो नीयते तां त्वमेव वक्तुं योग्योऽसीति सूचयन्नाह–हे कृष्णेति । यत्त्वत्रार्जुनोऽगृहीतसंन्यासानामापाततः शास्त्रोत्थात्मानात्मविवेकानामुभयविधवैराग्यवतामीश्वरार्पणबुद्ध्यैवावश्यकं कर्म कुर्वतां मोक्षमार्गप्रवृत्तानां यदि मध्ये मरणादिनाऽप्राप्य संन्यासं मोचकज्ञाने विघ्नवतां गतिं पृच्छति–अयतिरिति । अयतिः संन्यासमोचकज्ञानासंपन्नः हे कृष्ण कां गतिं गच्छतीति संबन्धः । ननु किमत्र प्रष्टव्यं तत्तत्कर्मानुगुणां गतिं गमिष्यतीत्याशङ्क्याह–श्रद्धयोपेत इति । श्रद्धा मोक्षे ईश्वरे चास्तिक्यबुद्धिः तयोपेतः मोक्षार्थं सत्त्वशुद्धये ईश्वरार्पणबुद्ध्या आवश्यकं कर्म कुर्वन्निति भावः । तर्हि मोक्षमेव प्राप्स्यतीत्याशङ्क्याह–अप्राप्येति । योगो ज्ञानयोगः स एव संसिद्धिः संसिद्धिशब्दवाच्यमोक्षसाधनत्वादुपचारात् तामप्राप्यानुत्पन्ने मोचकज्ञान इत्यर्थः । ज्ञानाभावे कुतो मोक्षप्राप्तिरिति भावः । कुतो वोक्तश्रद्धोपेतस्य योगसंसिद्ध्यप्राप्तिस्तत्राह–योगाच्चलितमानस इति । अत्र केचिद्योगाच्चलितमानस इत्यस्य मृत इति व्याचक्षते केचित्तु विषयेष्वासक्त इति वदन्ति अन्येतु किं मम मोक्षेण काम्यान्यागादीनेव तत्तल्लोकप्राप्तये करिष्यामीति चेष्टितमानस इति व्याख्यां वर्णयन्तीति भाष्यविरुद्धमितरैः कल्पितं तच्चिन्त्यम् । एवमुक्तप्रकारेणादौ मोक्षार्थं सत्त्वशुद्धये ईश्वरार्पणबुद्ध्याऽऽवश्यकं कर्म कुर्वतः किं मम मोक्षेण काम्यान्यागादीनेव करिष्यामीति योगाच्चलितमानसस्य काम्याग्निष्टोमाद्यनुष्ठानसंभवेन गतेरुक्तत्वात् प्रश्नविवरणरूपस्योत्तरश्लोकस्योत्तरस्य चासङ्गत्यापत्तेः । एतेनायतिरित्यादि परास्तं, त्यक्तसर्वकर्मणः अप्राप्तसम्यग्दर्शनस्यैवोभयभ्रष्टत्वात् । यदपि योगो ज्ञानयोग इत्यादि तदपि न, मुख्यार्थसंभवे उपचारायोगात् । यदपि व्याख्यानान्तरप्रदर्शनं तदपि न, प्रथमव्याख्यानस्यापदार्थत्वात् द्वितीयस्य तृतीयान्तर्भावादिति दिक् ॥ ३७ ॥

प० टी०–अथोभयशून्यत्वेन शिथिलाभ्यासवतः का गतिरित्यर्जुनः पृच्छति–अयतिरिति । प्रथमं श्रद्धयोपेत ईश्वरार्पणतया कर्म कुर्वाणः सन् योगे प्रवृत्तो न तु मिथ्याचारतया परं तु न सम्यग्यतते, योगसामग्रीविकलः सन् योगाच्चलितं विषयासक्तं मानसं यस्य स तथाभूतो योगसंसिद्धिमप्राप्य कां गतिं गच्छति ॥ ३७ ॥

रा० टी०–अभ्यासादिहीनस्य फलं पृच्छति–अयतिरिति । अयतिरप्रयत्नः श्रद्धया आस्तिक्यबुद्ध्या उपेतो युक्तः योगात् ध्यानरूपोपायात् चलितमानसः योगसंसिद्धिं ध्यानसंपूर्तिं ध्यानफलं ज्ञानमिति यावत् । अप्राप्य हे कृष्ण कां गतिं गच्छतीति ॥ ३७ ॥

**कच्चिन्नोभयविभ्रष्टश्छिन्नाभ्रमिव नश्यति ॥**
**अप्रतिष्ठो महाबाहो विमूढो ब्रह्मणः पथि ॥ ३८ ॥**

त० टी०–एतत्प्रश्नाभिप्रायं स्वयमेव विवृणोति–कच्चिदिति । कां गतिं गच्छतीति कस्ते संदेह इति चेच्छृणु, प्रथमं योगाय फलाभिसंधिरहितकर्मानुष्ठानात्स्वर्गादिप्राप्तिसाधनभूतयथावद्यज्ञादिकर्मानु-

ष्ठानाभावान्न स्वर्गादि किमपि फलं प्राप्नोति, अतोऽप्रतिष्ठो निराश्रयः, ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ज्ञाने विमूढस्तत्साधनभूताद्योगाच्च्युतः एवमुभयविभ्रष्टः कर्ममार्गाज्ज्ञानमार्गाच्च विभ्रष्टः कच्चिन्नश्यति। तत्र दृष्टान्तः—छिन्नाभ्रमिव। यथा वायुना छिन्नं पूर्वस्मान्मेघाद्भ्रष्टमुत्तरं महान्तं मेघमप्राप्तमभ्रखण्डं मध्य एव विनश्यति, तथा योगभ्रष्टः पूर्वस्मात्कर्ममार्गाद्विच्छिन्न उत्तरं ज्ञानमार्गमप्राप्तः सन् कर्मफलं ज्ञानफलं च प्राप्तुमयोग्यो विनश्यति किमिति संशयः ॥ ३८ ॥

म० टी०—एतदेव संशयबीजं विवृणोति—कच्चिदिति साभिलाषप्रश्ने। हे महाबाहो महान्तः सर्वेषां भक्तानां सर्वोपद्रवनिवारणसमर्थाः पुरुषार्थचतुष्टयदानसमर्था वा चत्वारो बाहवो यस्येति प्रश्ननिमित्तक्रोधाभावस्तदुत्तरदानसहिष्णुत्वं च सूचितम्। ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे ज्ञाने विमूढः विक्षिप्तः अनुत्पन्नब्रह्मात्म्यैक्यसाक्षात्कार इति यावत्। अप्रतिष्ठः देवयानपितृयानमार्गगमनहेतुभ्यामुपासनाकर्मभ्यां प्रतिष्ठाभ्यां साधनाभ्यां रहितः सोपासनानां सर्वेषां कर्मणां परित्यागात् एतादृश उभयविभ्रष्टः कर्ममार्गाज्ज्ञानमार्गाच्च विभ्रष्टश्छिन्नाभ्रमिव वायुना छिन्नं विशकलितं पूर्वस्मान्मेघाद्भ्रष्टमुत्तरं मेघमप्राप्तमभ्रं यथा वृष्ट्ययोग्यं सदन्तराल एव नश्यति तथा योगभ्रष्टोऽपि पूर्वस्मात्कर्ममार्गाद्विच्छिन्न उत्तरं च ज्ञानमार्गमप्राप्तोऽन्तराल एव नश्यति कर्मफलं ज्ञानफलं च लब्धुमयोग्यो न किमिति प्रश्नार्थः। एतेन ज्ञानकर्मसमुच्चयो निराकृतः एतस्मिन्हि पक्षे ज्ञानफलालाभेऽपि कर्मफललाभसंभवेनोभयविभ्रष्टत्वासंभवात्। न च तस्य कर्मफलसंभवेऽपि फलकामनात्यागात्तत्फलभ्रंशवचनमवकल्पत इति वाच्यं, निष्कामानामपि कर्मणां फलसद्भावस्यापस्तम्बवचनाद्युदाहरणेन बहुशः प्रतिपादितत्वात्। तस्मात्सर्वकर्मत्यागिनं प्रत्येवायं प्रश्नः अनर्थप्राप्तिशङ्कायास्तत्रैव संभवात् ॥ ३८ ॥

शं० टी०—किंच—कच्चिदिति। ब्रह्मणः पथि ब्रह्ममार्गे योगनिष्ठायां विमूढः विशिष्य मूढो विमूढः प्रतिबन्धककर्मदोषेण विपरीतभावं प्राप्तः समाधिनिष्ठाप्रच्युत इत्यर्थः। तत एवाप्रतिष्ठः प्रतितिष्ठत्यनयेति प्रतिष्ठा आधारस्तद्रहितोऽप्रतिष्ठः ज्ञानकर्मान्यतरालम्बनरहितो यतिः स्वयमुभयविभ्रष्टः योगनिष्ठाप्रच्युतत्वाज्ज्ञानफलभ्रष्टः सर्वकर्मसंन्यासात्कर्मफलभ्रष्टश्चैवमुभयविधगतिशून्यः सन् छिन्नाभ्रमिव प्रागगच्छन्मेघमण्डलसंबन्धरहितं पश्चादागच्छन्मेघमण्डलसंबन्धराहित्यं च यन्मध्यवर्ति स्वल्पमभ्रं तद्वायुना छिन्नं सद्यथान्तराले नश्यति स्वरूपनाशं प्राप्नोति तथायमपि नश्यति कच्चित्तद्वत्स्वरूपनाशं प्राप्नोति वा किमित्यर्थः ॥ ३८ ॥

श्री० टी०—प्रश्नाभिप्रायं विवृणोति—कच्चिदिति। कर्मणामीश्वरार्पितत्वादननुष्ठानाच्च न तावत्कर्मफलं स्वर्गादिकं प्राप्नोति योगानिष्पत्तेश्च न मोक्षं प्राप्नोति एवमुभयस्माद्भ्रष्टः अप्रतिष्ठो निराश्रयः अत एव ब्रह्मणः प्राप्त्युपाये पथि मार्गे विमूढः सन्कच्चित्किं नश्यति किंवा न नश्यतीत्यर्थः। नाशे दृष्टान्तः—यथा छिन्नमभ्रं पूर्वस्मादभ्राद्विश्लिष्टमभ्रान्तरं चाप्राप्तं सन्मध्य एव विलीयते तद्वदित्यर्थः ॥ ३८ ॥

स० टी०—कर्ममार्गात्तथा योगाद्विभ्रष्टः सन्न किं द्रुयात् ॥ छिन्नाभ्रमिव नश्येद्वा सोऽन्तराले निराश्रयः ॥ १ ॥ विमूढो ब्रह्मविन्मार्गे त्यक्तकर्माश्रयो यतः ॥ भक्तानां दोषसंदोहवारणे यस्य बाहवः ॥ २ ॥ समर्थाः सुखदाने च महाबाहो त्वमित्यहो ॥ ३ ॥ ३८ ॥

भा० टी०—स्वाशयं स्फुटयति—कच्चिदिति। कच्चिदिति प्रश्ने। उभयविभ्रष्टः सर्वकर्मणां त्यागात् कर्ममार्गात् सम्यग्दर्शनालाभाद्योगाच्च विभ्रष्टः स किं नश्यत्युत न नश्यति। उभयविभ्रष्टत्वमेव दर्शयति द्वाभ्यां विशेषणाभ्याम्—अप्रतिष्ठो निराश्रयः कर्ममार्गरूपाश्रयरहितः ब्रह्मणः पथि ब्रह्मप्राप्तिमार्गे विमूढः ज्ञानमार्गावष्टम्भशून्यः। उभयविभ्रष्टस्य नाशे दृष्टान्तमाह—छिन्नाभ्रमिव यथा पूर्वस्मादभ्राद्विच्छिन्नोऽभ्रैकदेशः परमभ्रमप्राप्य मध्य एव नश्यति तद्वत्। महाबाहो इति संबोधयन् भक्तोद्धारणसमर्थैरतिप्रबलैर्बाहुभिर्युक्ते

त्वयि सति तस्य नाशो न युक्त इति द्योतयति । यत्तु—'प्रश्नमेव विवृणोति कच्चिदिति किमित्यस्मिन्नर्थे । नश्यति नरकं प्राप्नोति किं वा तस्य गत्यन्तरमस्तीति किमापेक्षितं पक्षान्तरं पूरणीयम् । ननु नरकपातान्तस्तस्य को वापराध इत्याशङ्क्याह—ब्रह्मणः पथि विमूढ इति । ननु कृतानां काम्यकर्मणां तथा चित्तशुद्ध्यर्थमनुष्ठितानामावश्यककर्मणां फलं प्राप्स्यति कुतोऽस्य नरकप्राप्तिरित्याशङ्क्याह—उभयविभ्रष्ट इति । कृतैरावश्यककर्मभिश्चित्तशुद्धौ जातायामपि तदुपेयमोचकज्ञानपरिभ्रष्टः किमन्यत्तेषामावश्यककर्मणां फलं प्राप्नुयात् तथा स्वात्मानं कर्तृत्वादिरहितं कर्मण्यनधिकारिणं निश्चित्य ब्रह्मार्पणं ब्रह्महविरित्याद्युक्तमार्गेण शुद्ध्यर्थं कर्माचरणात् कथं वा कर्मण्यधिकारी स्यादित्युभयविभ्रष्टपदस्यार्थः । ननु किमित्येवं ब्रह्मणः पथि तस्य विमूढतेत्यत उक्तमप्रतिष्ठ इति । प्रतिष्ठा क्षुद्रपुरुषार्थपरित्यागेन परमार्थशक्तिलक्षणा तद्राहित इत्यर्थः ।' इतीतरैः कल्पितं तदसत्, काम्यकर्मणां फलस्यावश्यंभावेनोभयभ्रष्टत्वाभावात् । तथा स्वात्मानमित्यादेः किं मम मोक्षेण काम्यादीनेव तत्तल्लोकप्राप्तये करिष्यामीति स्वपूर्वग्रन्थविरुद्धत्वात् । नहि काम्यकर्ममार्गे प्रवृत्तस्ततो भ्रष्ट इति शङ्कितुं शक्यते अतः संन्यासीति भाष्यटीकायामुक्तत्वाच्च । एतेनाप्रतिष्ठशब्दार्थोऽपि प्रत्युक्तः, विमूढो ब्रह्मणः पथीत्यनेनैव परमपुरुषार्थाशक्तेरुक्तत्वात् ॥ ३८ ॥

प० टी०—प्रश्नाभिप्रायं विशदयन् पुनराह—कच्चिदिति द्वाभ्याम् । पूर्वं श्रद्धया कर्मणामीश्वरार्पणतया स्वर्गादिफलभ्रष्टः पुनर्योगाच्चलितत्वादनधिगतमोक्ष एवमुभयविभ्रष्टः संछिन्नाभ्रमिवाग्रतः पृष्ठतो वा सहायीभूताभ्रान्तराभावान्मध्यस्थितमभ्रं यथा विलीयते तद्वद्ब्रह्मणः पथि मोक्षमार्गे विमूढोऽत एवाप्रतिष्ठो निराश्रयः कच्चिन्नश्यति ॥ ३८ ॥

श्री० टी०—कच्चिदिति । कच्चित्किमित्यर्थः । उभयविभ्रष्टः उभयस्मात्स्वर्गापवर्गरूपाद्विभ्रष्टः प्रच्युतः ऐहिकामुष्मिकपुमर्थाद्विभ्रष्ट इति वा । यद्वा स्वर्गाद्युपायात् काम्यकर्मानुष्ठानादपवर्गोपायाद्ध्यानाच्च विभ्रष्टः अप्रतिष्ठो निराश्रयः अत एव ब्रह्मणः पथि परब्रह्मप्राप्त्युपाये विमूढः वायुना द्वेधाकृतमेघ इव किं नश्यति नरकाद्यनर्थं प्राप्नोत्युत न नश्यति ॥ ३८ ॥

**एतन्मे संशयं कृष्ण छेत्तुमर्हस्यशेषतः ॥**
**त्वदन्यः संशयस्यास्य छेत्ता न ह्युपपद्यते ॥ ३९ ॥**

त० टी०—उक्तसंशयच्छेदनाय भगवन्तं प्रार्थयते—एतदिति । हे कृष्ण स्वभक्तकश्मलनाशक एतन्मे संशयमशेषतस्त्वं छेत्तुमपनेतुमर्हसि । यतस्त्वदन्यः त्वत्तः परमेश्वरात्सर्वज्ञात्परमसुहृदोऽन्यः कश्चिदपि ऋषिर्वा देवो वाऽस्य संशयस्य छेत्ता सम्यगुत्तरदानेन नाशयिता न ह्युपपद्यते न संभवति । जीवत्वेनासर्वज्ञत्वादिति भावः ॥ ३९ ॥

म० टी०—यथोपदर्शितसंशयापाकरणाय भगवन्तमन्तर्यामिणमर्थयते पार्थः—एतन्मे इति । एतत् एतं पूर्वोपदर्शितं मे मम संशयं हे कृष्ण छेत्तुमपनेतुमर्हस्यशेषतः संशयमूलाधर्माद्युच्छेदेन । मदन्यः कश्चिदृषिर्वा देवो वा त्वदीयमिमं संशयमुच्छेत्स्यतीत्याशङ्क्याह—त्वदन्यः त्वत् परमेश्वरात्सर्वज्ञाच्छास्त्रकृतः परमगुरोः कारुणिकादन्यः अनीश्वरत्वेनासर्वज्ञः कश्चिदृषिर्वा देवो वाऽस्य योगभ्रष्टपरलोकगतिविषयस्य संशयस्य छेत्ता सम्यगुत्तरदानेन नाशयिता हि यस्मान्नोपपद्यते न संभवति तस्मात्त्वमेव प्रत्यक्षदर्शी सर्वस्य परमगुरुः संशयमेतं मम छेत्तुमर्हसीत्यर्थः ॥ ३९ ॥

शं० टी०—एतमिति । हे कृष्ण सदानन्दस्वरूप परमात्मन् त्वमेव सर्वज्ञः परमेश्वरः मे ममैतं प्रति-

१ एतमिति शंकरानन्दीकृतसंमतः पाठः ।

पादितं संशयमशेषतो निःशेषं यथा तथा छेत्तुं श्रुतिस्मृतियुक्तिभिर्निरसितुमर्हसि समर्थोऽसीत्यर्थः । यस्मिन् छिन्ने सति मुमुक्षवो निर्भयाः सन्तः सर्वकर्माणि संन्यस्य योगनिष्ठायां प्रवर्तेरन् । ननु देवा वा ऋषयो वा सर्वज्ञा महान्तस्ते संशयं छेत्स्यन्ति ते प्रष्टव्या इत्याशङ्कायामाह—**त्वदन्य इति** । 'अहमादिर्हि देवानां महर्षीणां च सर्वशः' इति वचनात्त्वमेव देवानां ऋषीणां चादिः सर्वज्ञस्त्वत्तोऽन्यस्त्वदन्यो देवो वा ऋषिर्वा यः कश्चिदप्यस्य संशयस्यच्छेत्ता निवर्तको नोपपद्यते न संभवतीत्यर्थः । मेधावी छिन्नसंशय इति सर्वसंशयच्छेत्तृत्वं तव शास्त्रप्रसिद्धमिति प्रसिद्धिद्योतनार्थो हिशब्दः ॥ ३९ ॥

**श्री० टी०**—त्वयैव सर्वज्ञेनायं मम संदेहो निरसनीयः त्वत्तोऽन्यस्त्वेतत्संदेहनिवर्तको नास्तीत्याह—**एतन्मे इति** । एतत् एनं छेत्ता निवर्तकः । स्पष्टमन्यत् ॥ ३९ ॥

**स० टी०**—तदेतत्संशयं सर्वं छेत्तुं योग्यस्त्वमेव हि ॥ त्वत्तो महेश्वरादन्यः कश्चिद्देवो मुनिर्न वा ॥ १ ॥ सम्यगुत्तरदानेन संशयस्यास्य सर्वतः ॥ छेत्ता संभवतीत्यस्मात्सर्वज्ञस्त्वं जगद्गुरुः ॥ २ ॥ प्रत्यक्षदर्शी सर्वस्य संशयं छेत्तुमर्हसि ॥ ३ ॥ ३९ ॥

**भा० टी०**—संशयमुक्त्वा तच्छेदनं प्रार्थयते—**एतदिति** । एतन्मे मम संशयं हे कृष्ण छेत्तुमपनेतुमर्हस्यशेषतः । उक्त एव कृष्णपदाभिप्रायोऽत्रापि द्रष्टव्यः । नन्वन्यः कश्चिद्देवो वा ऋषिर्वा छेत्स्यति किमेवं प्रार्थनयेत्यत आह—त्वत्तः कृष्णादधिकारिणमाकृष्य तत्तत्स्थानप्रापकात् तत्तत्कर्मफलप्रदातुः सर्वेश्वरात् सर्वज्ञादन्योऽनीश्वरोऽसर्वज्ञः कश्चिदृषिर्वा देवो वास्य संशयस्य छेत्ताऽपनेता हि यस्मान्न संभवत्यतः त्वमेव छेत्तुमर्हसीत्यर्थः । यत्तु एतन्मे पृष्टं हे कृष्णासंशयं यथा भवति तथाऽशेषतः सर्वात्मना छेत्तुं निराकर्तुमर्हसीति तन्न, संशयस्यास्येत्यनुरोधप्रसङ्गात् ॥ ३९ ॥

**प० टी०**—एतदेनं मे संशयं छेत्तुं भो कृष्ण त्वमेवार्हसीति प्रश्नः । शेषं स्पष्टम् ॥ ३९ ॥

**रा० टी०**—एतदिति । एतन्मे संशयं एतं संशयम् । व्यक्तोऽर्थः ॥ ३९ ॥

**श्रीभगवानुवाच—पार्थनैवेह नामुत्र विनाशस्तस्य विद्यते ॥**
**नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ॥ ४० ॥**

**त० टी०**—एवमर्जुनस्य संशयनिरासाय प्रश्नस्योत्तरं श्रीभगवानुवाच—**पार्थेत्यादिभिः** । हे पार्थ तस्य त्वदुक्तस्य त्यक्तस्वर्गादिसाधनकर्मणो यथाशक्त्याऽनभिसंहितफलकर्मानुष्ठातुर्योगे प्रवृत्तस्याभ्यासवैराग्यशैथिल्याद्योगाद्भ्रष्टस्य मुमुक्षोरिह लोकेऽमुत्र परलोके वा विनाशो नैव विद्यते, सकामेतरजनवद्दुर्गतिर्न संभवति । यथा सकामस्य देवाद्याराधने प्रवृत्तस्य तत्कर्मफलमनवाप्यादावेव कर्मणो भ्रष्टस्येह लोकेऽपकीर्तिर्भोगानवाप्तेर्विनाशः मृतस्य च परत्र पश्वादियोनिप्राप्तिरूपा दुर्गतिर्भवति, न तथाऽस्य योगिन इत्यर्थः । एतत्कुतस्तत्राह—**नहीति** । हि यस्मात्कल्याणकृत् शुभाचरणः कश्चिदपि दुर्गतिमुक्तरूपां लोकद्वयहानिं न गच्छति, अयं तु शास्त्रविहितशुभकारी सर्वोत्कृष्टो न गच्छतीति किमु वक्तव्यमित्यर्थः । तनोत्यात्मानमिति तत् स एव तातः पिता तद्रूपत्वात्पुत्रोऽपि तात उच्यते शिष्यस्य पुत्रस्थानीयत्वाभिप्रायेण ताततेति संबोधनं कृपाविशेषद्योतनाय ॥ ४० ॥

**म० टी०**—एवमर्जुनस्य योगिनं प्रति नाशाशङ्कां परिहरन्नुत्तरं श्रीभगवानुवाच—**पार्थ नैवेहेति** । उभयविभ्रष्टो योगी नश्यतीति कोऽर्थः किमिह लोके शिष्टगर्हणीयो भवति वेदविहितकर्मत्यागात् यथा कश्चिदुच्छृङ्खलः, किं वा परत्र निकृष्टां गतिं प्राप्नोति । यथोक्तं श्रुत्या "अथैतयोः पथोर्न कतरेण च न ते कीटाः पतङ्गा यदिदं दन्दशूकम्" इति । तथा चोक्तं मनुना 'वान्ताश्युल्कामुखः प्रेतो विप्रो धर्मात्स्वका-

च्युतः' इत्यादि तदुभयमपि नेत्याह–हे पार्थ नैवेह नामुत्र विनाशस्तस्य यथाशास्त्रं कृतसर्वकर्मसंन्यासस्य सर्वतो विरक्तस्य गुरुमुपसृत्य वेदान्तश्रवणादि कुर्वतोऽन्तराले मृतस्य योगभ्रष्टस्य विद्यते उभयत्रापि तस्य विनाशो नास्तीत्यत्र हेतुमाह–हि यस्मात् कल्याणकृत् शास्त्रविहितकारी कश्चिदपि दुर्गतिमिहाकीर्तिं परत्र च कीटादिरूपतां न गच्छति अयं तु सर्वोत्कृष्ट एव सन् दुर्गतिं न गच्छतीति किमु वक्तव्यमित्यर्थः तनोत्यात्मानं पुत्ररूपेणेति पिता तत उच्यते स्वार्थिकेऽणि तत एव तातः राक्षसवायसादिवत् पितैव च पुत्ररूपेण भवतीति पुत्रस्थानीयस्य शिष्यस्य तातेति संबोधनं कृपातिशयसूचनार्थम् । यदुक्तं योगभ्रष्टः कष्टां गतिं गच्छति अज्ञत्वे सति देवयानपितृयानमार्गान्यतरासंबन्धित्वात् स्वधर्मभ्रष्टवदिति तदयुक्तं, एतस्य देवयानमार्गासंबन्धित्वेन हेतोरसिद्धत्वात् । पञ्चाग्निविद्यायाम् " य इत्थं विदुर्ये चामी अरण्ये श्रद्धां सत्यमुपासते तेऽर्चिरभिसंभवन्ति" इत्यविशेषेण पञ्चाग्निविदामिवातत्क्रतूनां श्रद्धासत्यवतां मुमुक्षूणामपि देवयानमार्गेण ब्रह्मलोकप्राप्तिकथनात् श्रवणादिपरायणस्य च योगभ्रष्टस्य श्रद्धान्वितो भूत्वेत्यनेन श्रद्धायाः प्राप्तत्वात् " शान्तो दान्तः " इत्यनेन चानृतभाषणरूपवाग्व्यापारनिरोधरूपस्य सत्यस्य लब्धत्वात् बहिरिन्द्रियाणामुच्छृङ्खलव्यापारनिरोधो हि दमः योगशास्त्रे च ' अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः' इति योगाङ्गत्वेनोक्तत्वात् । यदि तु सत्यशब्देन ब्रह्मैवोच्यते तदापि न क्षतिः वेदान्तश्रवणादेरपि सत्यब्रह्मचिन्तनरूपत्वात् अतत्क्रतुत्वेऽपि च पञ्चाग्निविदामिव ब्रह्मलोकप्राप्तिसंभवात् । तथाच स्मृतिः ' संन्यासाद्ब्रह्मणः स्थानम्' इति । तथा प्रात्यहिकवेदान्तवाक्यविचारस्यापि कृच्छ्राशीतिफलतुल्यफलत्वं स्मर्यते । एवं च संन्यासश्रद्धासत्यब्रह्मविचाराणामन्यतमस्यापि ब्रह्मलोकप्राप्तिसाधनत्वात्समुदितानां तेषां तत्साधनत्वं किं चित्रम् । अत एव सर्वसुकृतरूपत्वं योगिचरितस्य तैत्तिरीया आमनन्ति " तस्य ह वा एवं विदुषो यज्ञस्य " इत्यादिना । स्मर्यते च ' स्नातं तेन समस्ततीर्थसलिले सर्वापि दत्तावनिर्यज्ञानां च कृतं सहस्रमखिला देवाश्च संपूजिताः । संसाराच्च समुद्धृताः स्वपितरस्त्रैलोक्यपूज्यो ह्यसौ यस्य ब्रह्मविचारणे क्षणमपि स्थैर्यं मनः प्राप्नुयात् ' इति ॥ ४० ॥

शं० टी०–"न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत् " इति संन्यासस्य ब्रह्मस्वरूपत्वं सर्वतपोभ्यश्च वरिष्ठत्वं श्रूयते तथैव " वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः " इति संन्यासयोगवतां यतीनां शुद्धसत्त्वत्वं वेदान्तार्थविज्ञातृत्वं च श्रूयते " ऋतं तपः सत्यं तपः श्रुतं तपः शान्तं तपः " इति ." शमेन शान्ताः शिवमाचरन्ति शमेन नाकं मुनयोऽन्वविन्दन् तस्माच्छमं परमं वदन्ति । दमेन दान्ताः किल्बिषमवधुन्वन्ति । दमेन ब्रह्मचारिणः सुवरगच्छन् । दमो भूतानां दुराधर्षम् । सत्यं परं परं सत्यम् सत्येन न सुवर्गाल्लोकाच्च्यवन्ते कदाचन सतां हि सत्यम्" इत्यादिना वाक्यजातेन ऋतसत्यश्रुतशान्तादीनां मुमुक्षुधर्माणां श्रुत्या तपस्त्वमुच्यते ' मानसं वै प्राजापत्यम् ' इति ' मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः ' इति ' अश्वमेधसहस्राणि वाजपेयशतानि च । एकस्य ध्यानयोगस्य कलां नार्हन्ति षोडशीम् ' इति समाधेः परमतपस्त्वं श्रूयते स्मर्यते च । " अथ यद्यज्ञ इत्याचक्षते । ब्रह्मचर्यमेव ब्रह्मलोकं निगच्छति ब्रह्मचर्यैकनिष्ठया " अहिंसा परमो धर्मो यया याति त्रिविष्टपम् ' इति ' तपसामपि सर्वेषां वैराग्यं परमं तपः ' इति ' सत्यं तीर्थं क्षमा तीर्थं तीर्थमिन्द्रियनिग्रहः । सर्वभूतदया तीर्थं तीर्थमार्जवमेव च ' इति ब्रह्मचर्यादीनां मुमुक्षुधर्माणां परममहत्त्वं श्रूयते स्मर्यते च । विघ्ननिहतयोगानां जडभरतवीतहव्यादीनां जन्मान्तरे योगपारंगतत्वं विष्णुपुराणवासिष्ठादिषु प्रसिद्धम् । एवं निरुक्तलक्षणैः संन्यासऋतसत्यशमदमाद्युत्तमतपोभिर्ब्रह्मचर्याद्युत्तमधर्मैरपि विशिष्टस्य योगिनो यतेः कचिद्दुष्कर्मवशाद्योगभ्रंशे सत्यपि ब्रह्मविद इहाप्यमुत्रापि न कश्चिदनर्थोऽस्तीति

बोधयितुं श्रीभगवानुवाच–पार्थेति । स्वदत्तां ब्रह्मविद्यां शिष्यप्रशिष्यद्वारा तनोति विस्तारयतीति तातस्तस्य संबुद्धिर्हे तात पार्थ तस्य समाधिनिष्ठायां प्रवृत्तस्य संन्यासकृतसत्यशमदमाद्युत्तमतपोविशिष्टस्य ब्रह्मचर्याहिंसादिविशिष्टधर्मवतो योगिनो यतेर्दुष्कर्मवशाद्ब्रह्ममार्गप्रच्युतत्वेऽपि इहास्मिँल्लोके विनाशो हानिः शिष्टगर्हणाप्राप्तप्रतिष्ठाभङ्गलक्षणो नैवास्ति ब्रह्मनिष्ठायां श्रद्धावत्त्वादिविशिष्टगुणवत्त्वाद्ब्रह्मचर्याद्युत्तमधर्मवत्त्वाच्च शिष्टनिन्दाऽप्रसक्तेः । नहि दुष्कर्मप्रापितैराध्यात्मिकाद्युपद्रवैर्विघ्नतः स्वधर्मनिष्ठं पुरुषं शिष्टा निन्दितुमर्हन्ति यथा विधिना संकल्पपूर्वकं शालां प्रविश्याग्नीषोमीयान्तं कृतस्य यज्ञकर्मणो दैवात्सति विघ्ने यजमानमास्थावन्तं श्रोत्रिया न निन्दितुमर्हन्ति तद्वदतो नैवास्यात्र प्रतिष्ठाभङ्गलक्षणो नाशस्तथैवामुत्र परस्मिँल्लोके विनाशो दुर्योनिदुर्गतिप्राप्तिलक्षणो नास्ति कल्याणकृत्त्वादमुष्य यतेः । नहि कल्याणकृच्छुभकृत्कश्चित्पुरुषो दुर्गतिं गच्छति किंतु सद्गतिमेव गच्छति । तथाच श्रुतिः " तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वा " इति । यद्वा ' अतिकल्याणरूपत्वान्नित्यकल्याणसंश्रयात् । स्मर्तॄणां वरदत्वाच्च ब्रह्म तन्मङ्गलं विदुः ' इति ' मङ्गलानां च मङ्गलम् ' इति ' पवित्रं मङ्गलं परम् ' इति परब्रह्मणो मङ्गलस्वरूपत्वस्मरणात्कल्याणं मङ्गलस्वरूपं ब्रह्म करोति स्वात्मना साक्षाद्विजानातीति कल्याणकृद्ब्रह्मवित्कश्चिद्ब्राह्मणो वा क्षत्रियो वाऽन्यो वा योगभ्रंशं प्राप्य दुर्गतिं निरयं न गच्छति जडभरतादौ तत्प्रसिद्धमिति प्रसिद्धिद्योतनार्थो हिशब्दः । ननु ध्यानयोगादौ प्रवृत्तो यो यतिः स ब्रह्मविदेव न भवति तस्य ब्रह्मवित्त्वे ध्यानाभ्यासक्रियाऽयोगात् ध्यानयोगाभ्यासोऽपि स्वाध्यायाभ्यासवत्क्रियैव भवति ' तस्य कार्यं न विद्यते ' इति ' नैवास्ति किंचित्कर्तव्यम् ' इति च ब्रह्मविदः कर्तव्याभावस्मरणादिति चेत्सत्यं नास्त्येव कर्तव्यं ब्रह्मविदः कृतकृत्यस्य यस्य चक्षुषो रूपवद्बहिरन्तर्ब्रह्मोपलब्धिस्तथापि भवानत्र प्रष्टव्यः " आत्मा वा अरे द्रष्टव्यः श्रोतव्यो निदिध्यासितव्यः " इति मुमुक्षोः कर्तव्यत्वेन निदिध्यासा श्रूयते सा कृतश्रवणस्य किमकृतश्रवणस्य वा । न द्वितीयः वेदान्तार्थविचारशून्यस्यात्मानात्मविवेकविभागज्ञानाभावान्निदिध्यासाऽनुपपत्तेः । आद्ये श्रवणादिना विज्ञातात्मतत्त्वस्य वा उत अविज्ञातात्मतत्त्वस्येति । न द्वितीयः अविज्ञातात्मतत्त्वस्य निदिध्यासाऽयोगात् निदिध्यासा नाम विजातीयप्रत्ययतिरस्कारपूर्विका सजातीयप्रत्ययावृत्तिः खलु सैषा सम्यग्विदितात्मतत्त्वस्यैव सिध्यति नेतरस्य यथा घटप्रत्ययस्य विजातीयः पटप्रत्यय इति ज्ञानं घटपटयोः स्वरूपं लक्षणं च विजानत एव सिध्यति तद्विज्ञानं च तयोः संदर्शनं कृतवत एव सिध्यति नान्यस्य तद्वदात्मप्रत्ययानामनात्मप्रत्यया विजातीया इति ज्ञानमात्मानात्मनोः स्वरूपं लक्षणं च विज्ञातवत एव सिध्यति तादृग्विज्ञानं तत्साक्षात्कारवत एव सिध्यति नेतरस्य नहि कश्चिदप्यदृष्टं गण्डभेरुण्डं दृष्टगरुडादिवद्भावयितुं शक्नोति यथा पितरं तथा प्रपितामहं वा तद्वदविज्ञातात्मतत्त्वस्तदनुभवशून्यः कश्चिदप्यनात्मवदात्मानं भावयितुं न शक्नोति स्वानुभवाभावात् ततोऽनात्मवत्तद्विलक्षणत्वेनात्मस्वरूपं सम्यग्विदितवत एव निरुक्तलक्षणा निदिध्यासा समाधिश्च कर्तव्यो भवति ' तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ' इति ' तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ " इत्युक्त्वा निरुक्तलक्षणमात्मानं विज्ञातवतामेव "ओमित्येवं ध्यायथ आत्मानम्" इति चात्मध्यानं विदधाति श्रुतिः । नन्वात्मविदः किमर्थं ध्यानं समाधिर्वेति न मन्तव्यं ध्यानसमाध्योरात्मतत्त्वज्ञानाप्रतिबन्धहेतुत्वात् " सर्वमिदमहं च ब्रह्मैव " इति सर्वस्य स्वस्य च ब्रह्ममात्रत्वविज्ञानं ब्रह्मण्येवात्मताज्ञानं चाप्रतिबद्धं श्रुतिमात्रेण न सिध्यति विनैव ध्यानसमाधिभ्यां "समाहितो भूत्वात्मन्येवात्मानं पश्यति सर्वमात्मानं पश्यति" इति ब्रह्मविदो ब्रह्मण्येवात्मत्वविज्ञानस्याप्रतिबद्धत्वसिद्धये सार्वात्म्यसिद्धये च समाधिं विदधाति श्रुतिरतो ब्रह्मविदोऽप्यप्रतिबद्धज्ञानसिद्धये निदिध्यासादिरवश्यं कर्तव्य इति सिद्धम् ॥ ४० ॥

श्री० टी०–अत्रोत्तरं श्रीभगवानुवाच–पार्थेति सार्धैश्चतुर्भिः । इह लोके नाश उभयभ्रंशात्पातित्यम्,

अमुत्र परलोके नाशो नरकप्राप्तिः तदुभयं तस्य नास्त्येव यतः कल्याणकृच्छुभकारी कश्चिदपि दुर्गतिं न गच्छति अयं च शुभकारी श्रद्धया योगे प्रवृत्तत्वात् । तातेति लोकरीत्योपलालयन्संबोधयति ॥ ४० ॥

स० टी०—अर्जुनस्यैवमाशङ्कां निराकुर्वन्नुवाच ह ॥ श्रीमन्नारायणः कृष्णः शरणागतवत्सलः ॥ १ ॥ मुमुक्षोस्तस्य वेदान्तश्रवणादि प्रकुर्वतः ॥ चित्तवृत्तिनिरोधे हि प्रवृत्तस्य विरागिणः ॥ २ ॥ अन्तराले मृतस्यापि विनाशो नोभयत्र वै ॥ नेह शिष्टविनिन्दास्य यथाशास्त्रं प्रकुर्वतः ॥ ३ ॥ नानिष्टां गतिमाप्नोति परत्रान्याज्ञजन्तुवत् ॥ यस्माच्छास्त्रानुगः कश्चिच्छुभकृद्दुर्गतिं गतिम् ॥ ४ ॥ इहाकीर्तिं परत्रापि कुत्सितां नैव गच्छति ॥ अयं तु सर्वतः श्रेष्ठः कथं गच्छेद्धि दुर्गतिम् ॥ ५ ॥ शिष्यस्य पुत्ररूपेण कृपापात्रत्वसूचनम् ॥ तातेतिपदतः साक्षाद्धरिणा कृतमर्जुने ॥ ६ ॥ ४० ॥

भा० टी०—एवमर्जुनेन संशयच्छेदनाय प्रार्थितः तं छेत्तुं श्रीभगवानुवाच—पार्थेति । तस्य योगभ्रष्टस्येहास्मिँल्लोकेऽमुत्र परलोके वा विनाशः पूर्वस्माद्धीनजन्मलाभो नरकप्राप्तिर्वा न विद्यते हि यस्मात्कल्याणकृच्छुभकृत्कश्चिदपि दुर्गतिं न गच्छति न प्राप्नोति तनोत्यात्मानं पुत्ररूपेणेति पिता तात उच्यते पितैव पुत्ररूपेणोत्पद्यते इति पुत्रोऽपि तात इत्युच्यते शिष्यस्यापि पुत्रसमत्वादाह—हे तातेति । नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते । स्वल्पमप्यस्य धर्मस्य त्रायते महतो भयादिति मदुक्तं दिक्प्रदर्शकमल्पबुद्धित्वात्स्त्रीस्वभावेन त्वया विस्मृत्य पृष्टमिति पार्थेतिसंबोधनेन ध्वनितम् । तथापि शिष्यत्वेन पुत्रतुल्यत्वात्पुनः पुनर्विस्तरेण मया बोधनीयोऽसीतिसूचनायोक्तं तातेति । यत्तु इहामुत्र प्रवृत्तस्येति शेषः । ततश्च इह यत्फलं मोचकज्ञानलक्षणमनुत्र फलं स्वर्गादिलक्षणं तत्साधने प्रवृत्तस्येत्यर्थ इति तन्न, भाष्योक्तप्रकारेण सम्यग्वाक्यार्थोपपत्तौ लक्षणाया अध्याहारस्य च व्यर्थत्वात् ॥ ४० ॥

प० टी०—अत्रोत्तरं भगवानाह—पार्थेति । तस्य पुरुषस्येहामुत्र वा नाशो नास्ति इह लोकेऽधमयोनिप्राप्तिर्नाशः अमुत्र च निरयप्राप्तिर्नाशः, एवमुभयत्र नाशो नास्ति । कुतः भो तात तनोत्यात्मानं पुत्ररूपेणेति तातः पुत्रः, एवमर्जुनस्य परमप्रेमास्पदत्वात्तातेति संबुद्धिः । हि यस्मात्कारणात्कल्याणकृत्पूर्वमीश्वरार्पणतया कर्म कुर्वन् कश्चिदपि दुर्गतिं न गच्छति ॥ ४० ॥

रा० टी०—प्रश्नस्योत्तरमाह सार्धैश्चतुर्भिः—पार्थेति । हे पार्थ इह लोके अमुत्र परलोके च नाशस्तस्य नास्ति । इह नाशस्तिर्यगादिदुर्गतिप्राप्तिः, परत्र नाशो नरकप्राप्तिः, तद्द्वयं तस्य योगभ्रष्टस्य नेत्यर्थः । नञ्द्वयमादरार्थम् । कुत इत्यत उक्तम्—नहीति । कल्याणकृत् श्रद्धया किंचित्कालं ध्यानादिकृदित्यर्थः ॥४०॥

**प्राप्य पुण्यकृतां लोकानुषित्वा शाश्वतीः समाः ॥**
**शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते ॥ ४१ ॥**

त० टी०—यदि योगभ्रष्टो मृतो दुर्गतिं न गच्छति तर्हि कां गतिं गच्छतीत्यपेक्षायामाह—प्राप्येति । श्रद्धया योगे प्रवृत्तः केनचिददृष्टेन यादृशभोगाकाङ्क्षया योगाद्भ्रष्टो मृतो योगी सोऽल्पकालाभ्यस्तस्यापि योगस्य प्रभावात्पुण्यकृतामतिपुण्यकारिणां लोकान्प्राप्य तत्र तद्योग्यान्कल्याणतमान्भोगान्यथेष्टं भोक्तुं शाश्वतीः समाः बहून्संवत्सरानुषित्वा वासं कृत्वा तत्सुखभोगे तृप्तस्ततः शुचीनां सदाचारयुक्तानां श्रीमतां धनाढ्यानां गेहे जायते जन्म प्राप्नोति ॥ ४१ ॥

म० टी०—तदेवं योगभ्रष्टस्य शुभकृत्त्वेन लोकद्वयेऽपि नाशाभावे किं भवतीत्युच्यते—प्राप्येति । योगमार्गप्रवृत्तः सर्वकर्मसंन्यासी वेदान्तश्रवणादि कुर्वन्नन्तराले म्रियमाणः कश्चित्पूर्वोपचितभोगवासनाप्रादुर्भावाद्विषयेभ्यः स्पृहयति कश्चित्तु वैराग्यभावनादार्ढ्यान्न स्पृहयति तयोः प्रथमः प्राप्य पुण्यकृतामश्वमे-

धयाजिनां लोकानर्चिरादिमार्गेण ब्रह्मलोकान् एकस्मिन्नपि भोगभूमिभेदापेक्षया बहुवचनम्। तत्र चोषित्वा वासमनुभूय शाश्वतीर्ब्रह्मपरिमाणेनाक्षयाः समाः संवत्सरान् तदन्ते शुचीनां शुद्धानां श्रीमतां विभूतिमतां महाराजचक्रवर्तिनां गेहे कुले भोगवासनाशेषसद्भावादजातशत्रुजनकादिवद्योगभ्रष्टोऽभिजायते भोगवासनाप्राबल्यात् ब्रह्मलोकान्ते सर्वकर्मसंन्यासायोग्यो महाराजो भवतीत्यर्थः ॥ ४१ ॥

शं० टी०—उक्तरीत्या समाधिं कृतवतो ब्रह्मविदो दुष्कर्मवशात्समाधिविघ्ने सति मृतस्य यतेर्दुर्गतिर्नास्ति किंतु सद्गतिरेवेत्याह—प्राप्येति। योगमार्गे प्रवृत्तो ब्रह्मविद्यतिरप्राप्तयोगसंसिद्धिः सन् मृत्वा 'वाजिमेधसहस्राणि राजसूयशतानि च। वाजपेयसहस्राणि अश्वमेधशतानि च ॥ एकस्य ज्ञानयोगस्य कलां नार्हन्ति षोडशीम्' इति 'मनसश्चेन्द्रियाणां च ह्यैकाग्र्यं परमं तपः' इत्यश्वमेधादिक्रतुकोट्यपेक्षया ध्यानयोगलेशस्य महत्तरपुण्यकर्मत्वस्मरणात्परमतपस्त्वाच्च तत्पुण्यकर्ममहिम्नैव स्वयं पुण्यकृतामश्वमेधादिमहाक्रतुकारिणां महालोकान् प्राप्य तत्र शाश्वतीः बह्वीः समाः संवत्सरानुषित्वा तत्रत्यभोगाननुभूयेत्यर्थः। तद्भोगक्षये पुनरिहलोके शुचीनां योनिबीजकर्मादिशुद्धिमतां श्रीमतां भाग्यवतां च गृहिणां गेहे वंशे योगभ्रष्टोऽभिजायते समुत्पन्नो भवति न तु कर्मभ्रष्टः कर्मिणः सति कर्मभ्रंशे पुण्यलोकप्राप्तिः शुचिश्रीमद्गेहे अभिजननं च न संभवति तैलपाकवत्साङ्गस्यैव कर्मणः फलावश्यंभावित्वनियमान्न तथा योगिनः तस्य देवतादर्शनवद्यावद्योगानुष्ठानं तावत्तावत्फलवद्भवति तत एव योगभ्रंशेऽपि योगिनः पुण्यलोकप्राप्तिः शुचिश्रीमत्कुलप्रसूतिश्चेत्यर्थः ॥ ४१ ॥

श्री० टी०—तर्हि किमसौ प्राप्नोतीत्यपेक्षायामाह—प्राप्येति। पुण्यकारिणामश्वमेधादियाजिनां लोकान्प्राप्य तत्र शाश्वतीः समाः बहून्संवत्सरानुषित्वा वाससुखमनुभूय शुचीनां सदाचाराणां श्रीमतां धनिनां गेहे स योगभ्रष्टो जन्म प्राप्नोति ॥ ४१ ॥

स० टी०—योगमार्गे प्रवृत्तः सन्योऽन्तराले मृतो विधेः ॥ स गत्वा साधको लोकानश्वमेधादियाजिनाम् ॥ १ ॥ कोटीः संवत्सराणां स वासं कृत्वा ततः क्षये ॥ यथोक्तकारिणां गेहे धनिनां जायते सताम् ॥ २ ॥ वासनाशेषसद्भावादल्पवैराग्यवान्यदि ॥ जनकादिवदेवासौ राज्ञां गेहेऽभिजायते ॥ ३ ॥ ४१ ॥

भा० टी०—दुर्गत्यभावमुक्त्वा सुगतिमाह—प्राप्येति। योगभ्रष्टो योगमार्गे प्रवृत्तस्त्यक्तसर्वकर्मा तत्त्वज्ञानमलब्ध्वैव मृतः पुण्यकृतामश्वमेधादियाजिनां लोकांस्तैः प्राप्यान्ब्रह्मलोकादीन्प्राप्य तत्र च शाश्वतीः समाः असंख्यातान्संवत्सरानुषित्वा वासमनुभूय तद्भोगक्षये श्रीमतां धनदुर्मदान्धतां तेषां वारयति—शुचीनां यथोक्तेन स्वधर्माचरणेन पवित्राणां गेहे कुले जायते उत्पद्यते ॥ ४१ ॥

प० टी०—किं तर्हि तत्र, प्रथममल्पकालयोगभ्रष्टस्य गतिमाह—प्राप्येति। स योगभ्रष्टः पुण्यकृतामश्वमेधयाजिनां लोकान् प्राप्य तत्र शाश्वतीः समा बहुतरसंवत्सरानुषित्वा भुक्त्वा शुचीनां सदाचारपरायणानां श्रीमतां धनिनां गेहे जायते उत्पद्यते ॥ ४१ ॥

रा० टी०—तर्हि किं प्राप्नोतीत्यत आह—प्राप्येति। पुण्यकृतान् पुण्यसंपाद्यान्लोकान्प्राप्य तेषु शाश्वतीः समाः अनेकसंवत्सरानुषित्वा शुचीनां श्रीमतां धनिनां गेहे अभिजायते ॥ ४१ ॥

**अथवा योगिनामेव कुले भवति धीमताम् ॥**
**एतद्धि दुर्लभतरं लोके जन्म यदीदृशम् ॥ ४२ ॥**

त० टी०—इयमुत्तमभोगाकाङ्क्षया योगभ्रष्टस्य गतिरुक्ता। इदानीं भोगानपेक्षकस्य बह्वभ्यस्तयोगस्य कथञ्चिद्भ्रंशे ततोऽप्यतिश्रेष्ठं जन्म भवतीति पक्षान्तरमाह—अथवेति। शास्त्रज्ञानदार्ढ्येन विषयभोगवासनाशून्यो ज्ञानवैराग्यादिगुणाढ्यः कथञ्चिद्योगाभ्यासाच्चलितश्चेद्भोगवासनाविरहात्पुण्यकृतां

लोकान् प्राप्य योगिनां योगाभ्यासवतामेव प्रमादकारणधनहीनानामेव शुचीनां धीमतां ज्ञानिनां ब्राह्मणानां कुले भवति जायते नतु श्रीमतां कर्मिणां ब्राह्मणानां राज्ञां वा कुले। यद्यपि शुचीनां श्रीमतां राज्ञां ब्राह्मणानां वा कुलेऽपि जन्म दुर्लभं बहुसुकृतसाध्यत्वाज्ज्ञानमार्गाविरोधित्वाच्च, तथाऽपि सात्त्विकानां धनहीनानां ज्ञानिनां योगाभ्यासवतां ब्राह्मणानां कुले यज्जन्म एतद्धि लोके दुर्लभतरमतिशयेन दुष्प्रापं, सर्वप्रमादकारणशून्यत्वेन मोक्षान्तरङ्गत्वात् ॥ ४२ ॥

म० टी०-द्वितीयं प्रतिपक्षान्तरमाह-अथवेति । श्रद्धावैराग्यादिकल्याणगुणाधिक्ये तु भोगवासनाविरहात्पुण्यकृतां लोकानप्राप्यैव योगिनामेव दरिद्राणां ब्राह्मणानां न तु श्रीमतां राज्ञां कुले भवति धीमतां ब्रह्मविद्यावताम् । एतेन योगिनामिति न कर्मिग्रहणं यच्छुचीनां श्रीमतां राज्ञां गृहे योगभ्रष्टजन्म तदपि दुर्लभं अनेकसुकृतसाध्यत्वान्मोक्षपर्यवसायित्वाच्च । यत्तु शुचीनां दरिद्राणां ब्राह्मणानां ब्रह्मविद्यावतां कुले जन्म एतद्धि प्रसिद्धं शुकादिवत् दुर्लभतरं दुर्लभादपि दुर्लभं लोके यदीदृशं सर्वप्रमादकारणशून्यं जन्मेति द्वितीयः स्तूयते भोगवासनाशून्यत्वेन सर्वकर्मसंन्यासार्हत्वात् ॥ ४२ ॥

शं० टी०-'मनोहराणां भोज्यानां युवतीनां च वाससाम् । वित्तस्यापि च सान्निध्याच्चलेच्चित्तं सतामपि ॥ तत्सान्निध्यं ततस्त्यक्त्वा मुमुक्षुर्दूरतो वसेत्' इतिन्यायेन विषयसान्निध्यस्यैव विक्षेपकत्वे श्रीमद्गेहे समुत्पन्नस्य तस्योत्तमभक्तस्य योगिनो विषयभोगानुषक्त्या रागद्वेषादिभिर्मनःक्षोभं विना पुनर्विवेकवैराग्यादिविज्ञानयोगश्च क्षिप्रं न सेत्स्यतीति योगसिद्धेः कालव्यवधानमसहमानः सन्नाह-अथवेति । अथवा श्रीमद्विलक्षणानां दरिद्राणां शुचीनां धीमतामेव योगिनां कुले भवति जायते । यद्वा योगी ब्रह्मविन्मृतिकाले यदि प्राक्तनकर्मवशात् हृदये विषयभोगेच्छावेगवान् तदा पुण्यकृताँल्लोकाननुभूय शेषानुभूत्यै श्रीमतां गेहे अभिजायते । यदि हृदये चित्तशोधकसत्कर्मविशेषवशात्तीव्रमोक्षेच्छावैराग्यवेगस्तदा स योगी, अथवा अथशब्द आनन्तर्यार्थः वाशब्दोऽवधारणार्थः । अथैव देहपातानन्तरमेव धीमतां ज्ञानिनां तत्रापि योगिनां ज्ञानयोगनिष्ठानामेव कुले भवति प्रभवतीत्यर्थः । ईदृशं तद्वैराग्यमोक्षेच्छावेगानुरूपं ब्रह्मनिष्ठानामेव ज्ञानिनां कुले समनन्तरभावि यज्जन्म तदेतद्दुर्लभतरं हि एतदत्यन्तदुर्लभं खलु गृहिणां ज्ञानित्वं दुर्लभं तत्रापि तादृशानां ब्रह्मनिष्ठानामेव कुले लोकान्तरं योन्यन्तरमगत्वा कालव्यवधानं विना यज्जननं दुर्लभतरमेव महत्तरेण तपसा लभ्यं भवति नत्वल्पेन तत एवोच्यते दुर्लभतरमिति । ननु योगिनामेव ज्ञानिनां गृहमेधिनां कुले भवतीति यदुक्तं तन्नोपपद्यते गृहिणां ब्रह्मवेदनाऽसंभवात् ज्ञानोत्पत्तेरधिकारासंभवाच्च शमदमवैराग्यसंन्यासाद्यन्तरङ्गसाधनशून्यानां बहिर्मुखानां तेषां श्रवणादिना ज्ञानमपरोक्षं न संभवति विना यतिं तत्रापि परमहंसान् । तदुक्तम् 'ब्रह्मात्मैकत्वविज्ञानं वेदान्तश्रवणादिना । जायते परहंसस्य यतेर्मुख्याधिकारिणः ॥ नाश्रमान्तरनिष्ठस्य' इति ततस्तेषां ज्ञानाभावे कुतो योगनिष्ठेति चेत्तर्हि धीमतां कर्मशास्त्रार्थज्ञानवतां योगिनां कर्मयोगिनां कुले भवतीति ब्रूम इति चेन्न, तथात्वे जन्मनो दुर्लभतरत्वाभावप्रसङ्गाच्छ्रोत्रियकुलाभिजननस्य सत्कर्मवत्साधारण्याद्ये ये सत्कर्मवन्तस्ते ते श्रोत्रियकुले एवाभिजायन्ते "रमणीयचरणा रमणीयां योनिमापद्येरन्" इतिश्रुतेः । ततो जन्मनो दुर्लभतरत्वानुपपत्तिप्रसूतार्थापत्त्या गृहिणामपि केषांचिदीश्वरप्रसादवतां शुद्धात्मनां ज्ञानं ज्ञानयोगित्वं चाभ्युपगन्तव्यम् अन्यथा वसिष्ठागस्त्यादीनां जनकाश्वपत्यादीनां च प्राचामाधुनिकानां च वाचस्पतिखण्डनकारादीनामनात्मज्ञत्वप्रसङ्गात् । तर्हि 'अथात-' इति सूत्रस्थाथशब्दसूचितश्रवणसाधनवैधुर्येऽपि श्रवणादिना ज्ञानसिद्धावथशब्दस्यानर्थक्यं स्यादिति चेन्न-तेषामपि जन्मान्तरे शमदमसंन्यासादिसाधनवत्त्वस्योत्पन्नज्ञानेनानुमीयमानत्वादथशब्दस्यार्थवत्त्वोपपत्तेः । न च शमदमसंन्यासाद्युत्तमसाधनवच्छ्रवणादिजन्यज्ञानेन तेषां तत्रैव मुक्तिसिद्धौ पुनर्जनिकथा कुत इति

वाच्यं, तादृक्साधनसंपत्तावपि तेषां प्रतिबन्धवशात्सम्यग्ज्ञानानुत्पत्तौ मोक्षासंभवाज्जन्मान्तरे तु तन्निवृत्त्या सम्यग्ज्ञानं योगनिष्ठा परमोपशान्तिरपि संभवति 'क्रमात्तस्यापि जायते' इति स्मृतिवाक्यशेषात्क्रमादा-श्रमक्रमाज्जन्मक्रमाद्वा चित्तपरिपाकक्रमाद्वा तस्याप्याश्रमान्तरवतोऽपि ज्ञानं जायत इत्यर्थः। तर्हि तेषां व्युत्थानप्रसङ्ग इति न च वाच्यं विषयानुभावककर्मणा व्युत्थाननिरोधसंभवान्निरन्तरब्रह्मनिष्ठानां नित्या-नन्दामृतरसपायिनां तेषां संन्याससाध्याभावाच्च। तर्हि विषयानुभूतेर्ब्रह्मानुभूतेश्च परस्परविरोधादे-काधिकरणत्वानुपपत्तिरिति न वक्तव्यं तद्दृष्ट्या विषयानुभूतेराभासत्वेन स्वप्नार्थवन्मिथ्यात्वोपपत्तेः। तर्हि व्यवहारलोपप्रसङ्ग इति चेन्न, क्वचित्क्रियते क्वचिन्न क्रियते तेन तेषां सर्वामिथ्यात्वदर्शिनां प्रत्य-वायाद्यनर्थाभावात्। 'शौचमाचमनं स्नानं न तु चोदनया चरेत्। अन्यांश्च नियमान् ज्ञानी यथाहं लील-येश्वरः' इति ज्ञानिनामीश्वरवद्विधितन्नियमभङ्गदोषाद्यभावस्मरणात्॥ ४२॥

श्री० टी०—अल्पकालाभ्यस्तयोगभ्रंशे गतिरियमुक्ता, चिराभ्यस्तयोगभ्रंशे तु पक्षान्तरमाह—अथवेति। योगनिष्ठानां धीमतां ज्ञानिनामेव कुले जायते न तु पूर्वोक्तानामनारूढयोगाना कुले जायते। एतज्जन्म स्तौति—एतदिति। ईदृशं यज्जन्म एतद्धि लोके दुर्लभतरम्, मोक्षहेतुत्वात्॥ ४२॥

स० टी०—वैराग्यादिगुणाधिक्ये वासनाविरहान्मुनिः॥ योगभ्रष्टः सुकृतिनां लोकानप्राप्य योगिनाम् ॥ १॥ ब्राह्मणानां दरिद्राणां ब्रह्मविद्यावतां कुले॥ जायते तत्कुले जन्म दुर्लभादपि दुर्लभम्॥ २॥ पुण्यसाध्यतया जन्म राज्ञां गेहेऽपि दुर्लभम्॥ तस्मादपीदृशं जन्म योगिगेहेऽतिदुर्लभम्॥ ३॥ सप्त-व्याधादशार्णेषु मृगाः कालंजरे गिरौ॥ चक्रवाकाः शरद्वीपे हंसाः सरसि मानसे॥ ४॥ तेऽपि जाताः कुरुक्षेत्रे ब्राह्मणा वेदपारगाः॥ प्रस्थिता दीर्घमध्वानं यूयं तेभ्योऽवसीदथ॥ ५॥ तदुक्तं हरिवंशेऽत्र वंश-प्रस्तावनस्थले॥ ६॥ ४२॥

भा० टी०—वैराग्याधिक्ये पक्षान्तरमाह—अथवेति। योगिनामेवेश्वराराधनलक्षणयोगवतां धनादि-रक्षणविषयभोगादिव्यग्रत्वे योगित्वं न संभवतीत्यतः पूर्वपक्षे श्रीमतामित्युक्तत्वाच्च भाष्ये दरिद्राणामित्युक्त-मत एव तत्त्वविचारयोग्यबुद्धिमतां कुले भवति जायते यदीदृशं जन्म तदेतल्लोके दुर्लभतरमतिदुर्लभं पुनः-प्रतिबन्धकाभावात् श्रीमतां कुलापेक्षया दरिद्राणां कुले जन्म श्रेष्ठतरमित्यर्थः॥ ४२॥

प० टी०—अथ चिराभ्यस्तयोगभ्रंशे पक्षान्तरमाह—अथवेति। अथवा योगिनां योगनिष्ठानां तथा धीमतां ज्ञानिनामेव कुले जायते न तु पूर्वोक्तानामनारूढयोगानाम् एतदीदृशं यज्जन्म तद्दुर्लभतरं मोक्ष-हेतुत्वात्॥ ४२॥

रा० टी०—धीमतां ज्ञानिनां योगिनां कुले वंशे वा भवति। यत् ईदृक् जन्म उक्तं द्विविधं जन्म एतत् दुर्लभं कष्टलभ्यं न सुलभसाध्यं हि प्रसिद्धम्॥ ४२॥

**तत्र तं बुद्धिसंयोगं लभते पौर्वदैहिकम्[1]।**
**यतते च ततो भूयः संसिद्धौ कुरुनन्दन॥ ४३॥**

त० टी०—उक्तस्य जन्मद्वयस्य दुर्लभत्वं यतस्तद्दर्शयति—तत्रेति। तत्र द्विविधेऽपि जन्मनि पूर्व-देहे भवं पौर्वदैहिकं सुप्तप्रबुद्धवत्तमेवात्मपरमात्मध्यानविषयकबुद्धिसंयोगं लभते। ततस्तल्लाभानन्तरं भूयोऽधिकसंसिद्धौ यतते। यथा पुनरन्तरायहतो न भवति तथा यत्नं कुरुते॥ ४३॥

म० टी०—एतादृशजन्मद्वयस्य दुर्लभत्वं कस्मात् यस्मात्—तत्रेति। तत्र द्विप्रकारेऽपि जन्मनि पूर्व-देहे भवं पौर्वदेहिकं सर्वकर्मसंन्यासगुरूपसदनश्रवणमननिदिध्यासनानां मध्ये यावत्पर्यन्तमनुष्ठितं ताव-

१ देहिकमिति मधुसूदनश्रीधरपरमार्थप्रपाकारसंमतः पाठः।

त्पर्यन्तमेव तं ब्रह्मात्मैक्यविषयया बुद्ध्या संयोगं तत्साधनकलापमिति यावत् लभते प्राप्नोति । न केवलं लभत एव किंतु ततस्तल्लाभानन्तरं भूयोऽधिकं लब्धाया भूमेरग्रिमां भूमिं संपादयितुं संसिद्धौ संसिद्धिर्मोक्षस्तन्निमित्तं यतते च प्रयत्नं करोति च यावन्मोक्षं भूमिकाः संपादयतीत्यर्थः । हे कुरुनन्दन तवापि शुचीनां श्रीमतां कुले योगभ्रष्टजन्म जातमिति पूर्ववासनावशादनायासेनैव ज्ञानलाभो भविष्यतीति सूचयितुं महाप्रभावस्य कुरोः कीर्तनम् । अयमर्थो भगवद्वसिष्ठवचने व्यक्तः । यथा श्रीरामोवाच ‘ एकामथ द्वितीयां वा तृतीयां भूमिकामुत । आरूढस्य मृतस्याथ कीदृशी भगवन् गतिः ’ । पूर्वं हि सप्तभूमयो व्याख्याताः तत्र नित्यानित्यवस्तुविवेकपूर्वकादिहामुत्रार्थभोगवैराग्याच्छमदमश्रद्धातितिक्षासर्वकर्मसंन्यासादिपुरःसरा मुमुक्षा शुभेच्छाख्या प्रथमा भूमिका साधनचतुष्टयसंपदिति यावत् । ततो गुरुमुपसृत्य वेदान्तवाक्यविचारणात्मिका द्वितीया भूमिका । श्रवणमननसंपदिति यावत् । ततः श्रवणमननपरिनिष्पन्नस्य तत्त्वज्ञानस्य निर्विचिकित्सतारूपा तनुमानसा नाम तृतीया भूमिका निदिध्यासनसंपदिति यावत् । चतुर्थी भूमिका तु तत्त्वसाक्षात्कार एव । पञ्चमषष्ठसप्तमभूमयस्तु जीवन्मुक्तेरवान्तरभेदा इति तृतीये प्राग्व्याख्यातम् । तत्र चतुर्थीं भूमिं प्राप्तस्य मृतस्य जीवन्मुक्त्यभावेऽपि विदेहकैवल्यं प्रति नास्त्येव संशयः तदुत्तरभूमित्रयं प्राप्तस्तु जीवन्नपि मुक्तः किमु विदेह इति नास्त्येव भूमिकाचतुष्टये शङ्का । साधनभूतभूमिकात्रये तु कर्मत्यागाज्ज्ञानालाभाच्च भवति शङ्केति तत्रैव प्रश्नः । श्रीवसिष्ठः—‘ योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः । भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ततः सुरविमानेषु लोकपालपुरेषु च । मेरूपवनकुञ्जेषु रमते रममणीसखः ॥ ततः सुकृतसंभारे दुष्कृते च पुराकृते । भोगक्षयात्परिक्षीणे जायन्ते योगिनो भुवि ॥ शुचीनां श्रीमतां गेहे गुप्ते गुणवतां सताम् । जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥ तत्र प्राग्भावनाऽभ्यस्तं योगभूमिक्रमं बुधाः । दृष्ट्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥’ इति । अत्र प्रागुपचितभोगवासनाप्राबल्यादल्पकालाभ्यस्तवैराग्यवासनादौर्बल्येन प्राणोत्क्रान्तिसमये प्रादुर्भूतभोगस्पृहः सर्वकर्मसंन्यासी यः स एवोक्तः यस्तु वैराग्यवासनाप्राबल्यात्प्रकृष्टपुण्यप्रकटितपरमेश्वरप्रसादवशेन प्राणोत्क्रान्तिसमयेऽनुद्भूतभोगस्पृहः संन्यासी भोगव्यवधानं विनैव ब्राह्मणानामेव ब्रह्मविदां सर्वप्रमादकारणशून्ये कुले समुत्पन्नस्तस्य प्राक्तनसंस्काराभिव्यक्तेरनायासेनैव संभवान्नास्ति पूर्वस्येव मोक्षं प्रत्याशङ्केति स च वसिष्ठेनोक्तो, भगवता तु परमकारुणिकेनाथवेति पक्षान्तरं कृत्वोक्त एव । स्पष्टमन्यत् ॥ ४२ ॥

शं० टी०—‘ शिलोञ्छवृत्त्या परितुष्टचित्तो धर्मं महान्तं विरजं जुषाणः । मय्यर्पितात्मा गृहे एव तिष्ठन्नातिप्रसक्तः समुपैति शान्तिम् ’ इत्यादिवचनप्रामाण्याल्लक्षकोटिसंख्याकेषु गृहिष्वपि यः कश्चिदीश्वरप्रसादपात्रीभूतो गृहस्थो ज्ञानी ज्ञानयोगी च संभवति यतस्ततो ज्ञानिनामेव योगिनां गृहिणां गृहे योगभ्रष्टस्याशुयोगसिद्ध्यै जन्माङ्गीकर्तव्यमिममेवार्थं स्पष्टयितुमाह—तत्रेति । तत्र ज्ञानवतां योगिनां कुले जन्म लब्ध्वा स योगी पौर्वदैहिकं पूर्वस्मिन् देहे भवं पौर्वदैहिकं पूर्वजन्मन्यनुष्ठितश्रवणादिसंभवं ज्ञानिना योगवता च पित्रादिनोपदिष्टं तं बुद्धिसंयोगं यद्धर्मवान् पिता भवति तमेव धर्मं पुत्रायोपदिशति प्रायेण तदिदं लोकप्रसिद्धं यः प्राक्जन्मन्यनुष्ठितत्वादग्निवदन्तर्लीनात्मना स्थितः ब्रह्मविदा पित्रा वेदान्तवाक्यैर्व्यक्तीकृतस्तं बुद्धिसंयोगं बुद्धिर्ज्ञानं परावरैकत्वप्रवेदनलक्षणं तदेव समीचीनो योगो मुक्तिसिद्धौ परमोपायस्तं बुद्धिसंयोगं ज्ञानयोगं लभते प्राग्जन्मन्येवानुबद्धत्वात्स्वल्पोपदेशेनैवाल्पकालेन प्राप्नोतीत्यर्थः । एतावन्मात्रेण पुमान् कृतार्थो न भवति ज्ञानस्य सम्यक्त्वसंपादनेन विना ततो मुमुक्षोस्तदवश्यं संपादनीयमिति सूचयितुमाह—यतत इति । ततः पित्रादेर्ज्ञानयोगलब्ध्यनन्तरं संसिद्धौ ज्ञानस्य सम्यक्त्वसिद्धिनिमित्तं भूयः पुनरस्मिन् जन्मन्यपि यतते च प्रयत्नमपि करोति । यद्वा ततस्तस्मादेव संस्कारवेगादेव भूयोऽधिकतरं यतते च ज्ञानस्याप्रतिबद्धत्वसिद्ध्ये पूर्ववन्नियमेन गुरूपदिष्टरीत्या नित्यं निरन्तरं च समाधिं करोतीत्यर्थः ॥ ४३ ॥

**श्री० टी०**—ततः किमत आह—तत्रेतिसार्धेन । तत्र द्विःप्रकारेऽपि जन्मनि पूर्वदेहे भवं पौर्वदेहिकं तमेव ब्रह्मविषयया बुद्ध्या संयोगं लभते । ततश्च भूयोऽधिकं संसिद्धौ मोक्षे प्रयत्नं करोति ॥ ४३ ॥

**स० टी०**—यतस्तेषां कुले बुद्ध्या संयोगं लभतेऽन्यया ॥ पूर्वदेहसमुद्भूतप्रबलाङ्कुरयानया ॥ १ ॥ पूर्वस्मादेव संस्काराद्यत्नं बहुतरं ततः ॥ करोति तत्त्वविज्ञानसंसिद्धौ योगतत्परः ॥ २ ॥ तवापि श्रीमतां गेहे जन्मास्ति कुरुनन्दन ॥ अनायासात्तव ज्ञानं भविष्यत्येवमाशयः ॥ ३ ॥ अयमर्थोऽपि वासिष्ठे व्यक्त-श्रीरामचोदनात् ॥ एकामथ द्वितीयां वा तृतीयां भूमिकामुत ॥ ४ ॥ आरूढस्य मृतस्याथ कीदृशी भगवन्गतिः ॥ योगभूमिकयोत्क्रान्तजीवितस्य शरीरिणः ॥ ५ ॥ भूमिकांशानुसारेण क्षीयते पूर्वदुष्कृतम् ॥ ततः सुरविमानेषु लोकपालपुरेषु च ॥ ६ ॥ मेरूपवनकुञ्जेषु रमते रमणीसखः ॥ ततः सुकृतसंभारे दुष्कृते च पुरा कृते ॥ ७ ॥ भोगक्षयात्परिक्षीणे जायन्ते योगिनो भुवि ॥ शुचीनां श्रीमतां गेहे कुले गुणवतां सताम् ॥ ८ ॥ जनित्वा योगमेवैते सेवन्ते योगवासिताः ॥ तत्र प्राग्भावनाभ्यस्तं योगं भूमिक्रमं बुधाः ॥ ९ ॥ दृष्ट्वा परिपतन्त्युच्चैरुत्तरं भूमिकाक्रमम् ॥ १० ॥ ४३ ॥

**भा० टी०**—एतादृशजन्मनो दुर्लभतरत्वं कस्मात् यस्मात्तत्र योगिनां कुले तं पौर्वदेहिकं पूर्वदेहे भवं बुद्धिसंयोगं बुद्ध्या निष्कामकर्मणा शुद्धया श्रवणादिसंपन्नया संयोगं लभते प्राप्नोति ततस्तस्मात्पूर्वदेहाभ्या-ससंस्काराद्भूयो बहुतरं संसिद्धौ मोक्षार्थं यतते तत्त्वसाक्षात्कारं यत्नेन संपादयतीत्यर्थः । यत्त्वेतादृशजन्म-द्वयदुर्लभत्वं कस्माद्यस्मात् तत्र द्विप्रकारेऽपि जन्मनीति तदुपेक्ष्यमथवेत्यादिनोक्तपक्षस्य श्रैष्ठ्यप्रतिज्ञाया हेतोरावश्यकत्वात् अन्यथोभयोरपि साम्यप्रसङ्गे प्रतिज्ञाघातापत्तेः । योगिनां श्रीमतां कुले जातस्य यथा योगित्वं बुद्धिमत्त्वं च भवति तथा क्षात्रधर्मेऽतिकुशलस्य कुरोर्वंशे जातस्य तवापि स्वकुलोचितधर्मसंबन्ध आवश्यक इति सूचयन्नाह—हे कुरुनन्दनेति ॥ ४३ ॥

**प० टी०**—तत्र किं भवतीत्याह सार्धेन—तत्रेति । तत्र योगिनां कुले तं पौर्वदेहिकं प्राक्संस्कारागतं बुद्धिसंयोगं लभते । ततस्तेन बुद्धिसंयोगेन संसिद्धौ मोक्षसाधने यतते बहुतरं प्रयत्नं करोति ॥ ४३ ॥

**रा० टी०**—तत्र द्विप्रकारेऽपि जन्मनि पौर्वदेहिकं पूर्वदेहे भवं तं बुद्धिसंयोगं भगवति मनोयोगं ध्यानमिति यावत् । लभते ततो भूयः पौर्वदेहिकादधिकं संसिद्धौ ध्यानसंपूर्तौ यतते यत्नं करोति हे कुरुनन्दन ॥ ४३ ॥

## पूर्वाभ्यासेन तेनैव ह्रियते ह्यवशोऽपि सः ॥
## जिज्ञासुरपि योगस्य शब्दब्रह्मातिवर्तते ॥ ४४ ॥

**त० टी०**—ननु योगिनां कुले जातस्य भोगव्यवधानाभावाद्भवतु सुप्तप्रबुद्धवत् झटिति योगे प्रवृत्तिः । श्रीमतां गृहे जातस्य तु बहुभोगजन्यप्रमादसंभवात्कथं पौर्वदेहिकबुद्धियोगलाभेन योगे प्रवृत्तिरिति चेत्तत्राह—पूर्वाभ्यासेनेति । पूर्वजन्मनि कृतोऽभ्यासः पूर्वाभ्यासस्तज्जन्यसंस्कारेण स योगभ्रष्टोऽवशोऽपि बहुकालभोगान्तरायात्स्वयमनिच्छन्नपि ह्रियते, बलात्कारेण स्ववशीक्रियते भोग-वासनाया निवर्त्य योग एव प्रवर्त्यते । अतो योगस्य जिज्ञासुरपि योगस्वरूपं ज्ञातुमिच्छुरपि न तु प्राप्त-योगः, तथाभूतोऽपि प्राग्जन्मार्जितयोगस्योद्बुद्धज्ञानसंस्कारादिह जन्मनि शब्दब्रह्मातिवर्तते, कर्म-प्रतिपादकवेदपूर्वभागमतिवर्तते वेदोक्तकर्मफलमतिक्रम्य वर्तते । कर्माधिकारमुपेक्ष्य ज्ञानाधिकार एव निष्ठां करोतीत्यर्थः ॥ ४४ ॥

**म० टी०**—ननु यो ब्रह्मविदा ब्राह्मणानां सर्वप्रमादकारणशून्ये कुले समुत्पन्नस्तस्य मध्ये विषयभोगव्य-वधानाभावादव्यवहितप्राग्भवीयसंस्कारोद्बोधात्पुनरपि सर्वकर्मसंन्यासपूर्वको ज्ञानसाधनलाभो भवतु नाम ।

यस्तु श्रीमतां महाराजचक्रवर्तिनां कुले बहुविधविषयभोगव्यवधानेनोत्पन्नस्तस्य विषयभोगवासनाप्राबल्यात्प्रमादकारणसंभवाच्च कथमतिव्यवहितज्ञानसंस्कारोद्बोधः क्षत्रियत्वेन सर्वकर्मसंन्यासानर्हस्य कथं वा ज्ञानसाधनलाभ इति तत्रोच्यते–पूर्वाभ्यासेनेति । अतिचिरव्यवहितजन्मोपचितेनापि तेनैव पूर्वाभ्यासेन प्रागर्जितज्ञानसंस्कारेणावशोऽपि मोक्षसाधनायाप्रयतमानोऽपि ह्रियते स्ववशीक्रियते अकस्मादेव भोगवासनाभ्यो व्युत्थाप्य मोक्षसाधनोन्मुखः क्रियते ज्ञानवासनाया एवाल्पकालाभ्यस्ताया अपि वस्तुविषयत्वेनावस्तुविषयाभ्यो भोगवासनाभ्यः प्राबल्यात्पश्य यथा त्वमेव युद्धे प्रवृत्तो ज्ञानायाप्रयतमानोऽपि पूर्वसंस्कारप्राबल्यादकस्मादेव रणभूमौ ज्ञानोन्मुखोऽभूरिति अत एव प्रागुक्तं नेहाभिक्रमनाशोऽस्तीति । अनेकजन्मसहस्रव्यवहितोऽपि ज्ञानसंस्कारः स्वकार्यं करोत्येव सर्वविरोध्युपमर्देनेत्यभिप्रायः । सर्वकर्मसंन्यासाभावेऽपि हि क्षत्रियस्य ज्ञानाधिकारः स्थित एव यथा पाटच्चरेण बहूनां रक्षिणां मध्ये विद्यमानमपि अश्वादिद्रव्यं स्वयमनिच्छदपि तान्सर्वानभिभूय स्वसामर्थ्यविशेषादेवापह्रियते पश्चात्तु कदापहृतमिति विमर्शो भवति एवं बहूनां ज्ञानप्रतिबन्धकानां मध्ये विद्यमानोऽपि योगभ्रष्टः स्वयमनिच्छन्नपि ज्ञानसंस्कारेण बलवता स्वसामर्थ्यविशेषादेव सर्वान् प्रतिबन्धकानभिभूयात्मवशीक्रियत इति हृञः प्रयोगेण सूचितम् । अत एव संस्कारप्राबल्यात् जिज्ञासुर्ज्ञातुमिच्छुरपि योगस्य मोक्षसाधनज्ञानस्य विषयं ब्रह्म प्रथमभूमिकायां स्थितः संन्यासीति यावत् सोऽपि तस्यामेव भूमिकायां मृतोऽन्तराले बहून् विषयान् भुक्त्वा महाराजचक्रवर्तिनां कुले समुत्पन्नोऽपि योगभ्रष्टः प्रागुपचितज्ञानसंस्कारप्राबल्यात् तस्मिञ्जन्मनि शब्दब्रह्म वेदं कर्मप्रतिपादकं अतिवर्तते अतिक्रम्य तिष्ठति कर्माधिकारातिक्रमेण ज्ञानाधिकारी भवतीत्यर्थः । एतेनापि ज्ञानकर्मसमुच्चयो निराकृत इति द्रष्टव्यं समुच्चये हि ज्ञानिनोऽपि कर्मकाण्डातिक्रमाभावात् ॥ ४४ ॥

शं० टी०–निरन्तरं समाध्यनुष्ठाने कारणमाह–पूर्वाभ्यासेनेति । हि यस्मात्कारणात्पूर्वाभ्यासेन पूर्वस्मिन् जन्मनि श्रद्धया तीव्रमोक्षेच्छया अत्यन्तवैराग्येण च चिरकालं नित्यं निरन्तरं च नियमेन कृतो योऽभ्यासः संततसमाध्यावृत्तिस्तेनैव संस्कारात्मना बुद्धिस्थेनाभ्यासवेगेन सर्वाणि कर्माणि विधिना त्याजयित्वा स योगभ्रष्टो यतिः स्वयमवशोऽप्यनिच्छन्नपि ह्रियते बलात्कारेण योगनिष्ठायामेव स्थाप्यते न तु कर्मनिष्ठायां नैव विषयभोगनिष्ठायां च तस्मादेव संसिद्धिनिमित्तं भूयः पूर्वस्मादधिकतरं यतते चेति पूर्वेणान्वयः । ननु "अहरहः संध्यामुपासीत । उदिते सूर्ये प्रातर्जुहोति । दर्शपौर्णमासाभ्यां यजेत । यावज्जीवमग्निहोत्रं जुहोति " ' श्रौतं चापि तथा स्मार्तं कर्मालम्ब्य वसेद्द्विजः । तद्विहीनः पतत्येव ह्यालम्बरहितान्धवत् ' इत्यादिश्रुतिस्मृत्युपदेशमनादृत्यैव ब्राह्मणः सन् श्रौतं स्मार्तं च कर्म सर्वं संन्यस्यायं कथं योगनिष्ठायामेव प्रवर्तत इत्याशङ्कायाम् ' जन्मान्तरसहस्रेषु बुद्धिर्या भाविता पुरा । तामेव भजते जन्तुरुपदेशो निरर्थकः ' इतिन्यायेन जन्मान्तरे कर्मी चेत्कर्मरतो धर्मी चेद्धर्मरतः पापी चेत्पापरतो भक्तश्चेद्भक्तिरतो ज्ञानी चेज्ज्ञानरतो योगी चेद्योगरतो भवति स्वस्वसंस्कारानुरूपेण नैवोपदेशतत्परो भवति विना संस्कारेण जनस्तथैवायमपि वेदशास्त्रादिकं सर्वमधीत्य तदर्थं च विचार्य " न कर्मणा न प्रजया " इत्यादिश्रुतिवाक्यैः कर्मणो मोक्षाऽसाधनत्वं निश्चित्य प्राक्तनज्ञानयोगाभ्याससंस्कारवेगात्कर्म वैदिकं च सर्वं संन्यस्य ब्रह्मनिष्ठायामेव तिष्ठतीति किमु वक्तव्यं मुमुक्षुरपि सर्वं कर्म संन्यस्य श्रवणादावेव वर्तते इत्याह–जिज्ञासुरिति । योगस्य श्रवणादिसंजातविज्ञानवन्तं योगिनं स्वभावं ब्रह्मभावं योजयति गमयतीति योगो निर्विशेषः परमात्मा परं ब्रह्म तस्य योगस्य जिज्ञासुस्तत्स्वरूपं ज्ञातुमिच्छुर्जिज्ञासुर्मुमुक्षुरपि मोक्षैककामनया शब्दब्रह्म वेदस्तं तदुपदेशं तत्प्रतिपाद्यं कर्म चातिवर्तते " एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति । वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत् " इत्यादिश्रुतिस्मृतिबलाज्जिज्ञासुरपि वेदं वेदोक्तं कर्म च सर्वं संन्यस्य श्रवणादावेव प्रवर्तत इत्यर्थः ॥ ४४ ॥

**श्री० टी०**—तत्र हेतुः—पूर्वेति । तेनैव पूर्वदेहकृताभ्यासेनावशोऽपि कुतश्चिदन्तरायादनिच्छन्नपि संह्रियते विषयेभ्यः परावर्त्य ब्रह्मनिष्ठः क्रियते । तदेवं पूर्वाभ्यासवशेन प्रयत्नं कुर्वन् शनैर्मुच्यत इतीममर्थं कैमुत्यन्यायेन स्फुटयति—जिज्ञासुरिति सार्धेन । योगस्य स्वरूपं जिज्ञासुरेव केवलं न तु प्राप्तयोगः एवंभूतो योगे प्रविष्टमात्रोऽपि पापवशाद्योगभ्रष्टोऽपि शब्दब्रह्म वेदमतिवर्तते वेदोक्तकर्मफलान्यतिक्रामति तेभ्योऽधिकं फलं प्राप्य मुच्यत इत्यर्थः ॥ ४४ ॥

**स० टी०**—पूर्वजन्मकृताभ्याससंस्कारेणावशोऽपि सन् ॥ मोक्षमार्गे प्रवृत्तोऽपि स्ववशीक्रियते बलात् ॥ १ ॥ अकस्मादेव व्युत्थाप्य भोगवासनतो जनः ॥ ज्ञानसंस्कारप्राबल्यात्क्रियते साधनोन्मुखः ॥ २ ॥ अल्पकालमपि ज्ञानाभ्यासवासनया तया ॥ सम्यगभ्यस्तया तस्या वासनाया विशेषतः ॥ ३ ॥ सद्वस्तुविषयत्वेन प्राबल्यादन्यगोचरात् ॥ यथा त्वमेव युद्धेऽस्मिन्पूर्वाभ्यासवशेन च ॥ ४ ॥ ज्ञानाभ्यासोन्मुखोऽकस्मादेवाभूरिति चाशयः ॥ अतः संस्कारप्राबल्याज्ज्ञातुमिच्छुरपीह यः ॥ ५ ॥ मोक्षसाधनबोधस्य विषयं ब्रह्मचिद्घनम् ॥ भुक्त्वा भोगान्बहून्स्वर्गे जन्म प्राप्योत्तमे कुले ॥ ६ ॥ योगभ्रष्टोऽपि वेदोक्तकर्मानुष्ठानजं फलम् ॥ अतीत्य वर्तते तर्हि किं वाच्यं ब्रह्मवेदिनः ॥ ७ ॥ ४४ ॥

**भा० टी०**—कथंभूतं बुद्धिसंयोगं लभत इत्यपेक्षायां तेनैव पूर्वाभ्यासेनावशस्यापि योगभ्रष्टस्य बुद्धि प्रत्येवाहरणरूपमित्याह—पूर्वेति । यः पूर्वजन्मनि कृतोभ्यासस्तेनैव बलवता हि यस्मादवशः पित्राद्यधीनोऽपि सः योगभ्रष्टो ह्रियते स्ववशीक्रियते योगाभ्याससंस्काराद्बलवत्तरस्याधर्मस्य प्रतिबन्धकस्याभावात् '। प्रतिबन्धे सत्यपि पूर्वाभ्यासस्तत्क्षयं प्रतीक्षते नतु तस्य नाशोऽस्ति एतदेव कैमुत्येन द्रढयति—योगस्य जिज्ञासुर्न तु यतमानो योगी सोऽपि शब्दब्रह्म वेदोक्तकर्मानुष्ठानफलमतिवर्तते मुञ्चति किमुत यो योगं ज्ञात्वा तन्निष्ठोऽभ्यासं कुर्यात् । एतेन ननु योगिनां दरिद्राणां कुले जातस्य बुद्धिसंयोगोऽस्तु नाम शुचीनां श्रीमतां कुले उत्पन्नस्य द्रव्यजनितभोगादिप्रतिबन्धवशाद्बुद्धिसंयोगो न भविष्यतीत्याशङ्कापि परास्ता ॥४४॥

**प० टी०**—तत्र हेतुमाह—पूर्वेति । तेनैव पूर्वाभ्याससंस्कारेणावशोऽपि कुतश्चिदन्तरायादनिच्छन्नपि ह्रियते बलात्कारेण विषयेभ्यः परावर्त्य ब्रह्मनिष्ठः क्रियते । तदुक्तं विष्णुपुराणे ' अनिष्पन्नसमाधिस्तु परब्रह्मोपलब्धिमान् । यद्यन्तरायदोषेण दुष्यते ह्यस्य मानसे । जन्मान्तरैरस्य सतो मुक्तिः पूर्वस्य जायते ? । विनिष्पन्नसमाधिस्तु मुक्तिमत्रैव जन्मनि । प्राप्नोति योगी योगाग्निदग्धकर्मा च योऽचिरात् ॥' इति । अथ योगसामर्थ्यमाह—जिज्ञासुरिति । योगस्वरूपं जिज्ञासुरपि योगप्रविष्टमात्रोऽपि शब्दब्रह्मातिवर्तते शब्दात्मकं ब्रह्म शब्दब्रह्म वेदस्तदुक्तफलानि स्वर्गादीन्यतिवर्तते अतिक्रामति तेभ्योऽधिकं फलं प्राप्य मुच्यत इत्यर्थः। एवं मन्दप्रयत्नोऽपि योगी परां गतिं याति ॥ ४४ ॥

**रा० टी०**—पूर्वेति। तेनैव पूर्वाभ्यासेनावशोऽपि सन् ह्रियते ध्यानादौ बुद्धिपूर्वं स्वरसतया प्रवृत्तिहीनोऽपि पूर्वाभ्यासवशात् ध्यानादिकर्मणि प्रवर्तत इत्यर्थः । योगभ्रष्टस्य पुण्यलोकादिकमित्येतत्कैमुत्येनाप्याह—जिज्ञासुरपीति। योगस्य ध्यानयोगस्य जिज्ञासुरपि केवलं योगज्ञानेच्छुरपि। "न लोकाव्यय—" इति नत्रा निर्दिष्टस्य अनित्यत्वाद्योगस्येति साधु। शब्दब्रह्मविधिनिषेधरूपशब्दब्रह्मातिवर्तेत विधिनिषेधातीतो भवति मुक्तो भवतीति यावत्। किमु किंचित्कालं योगानुष्ठातेति भावः ॥ ४४ ॥

## प्रयत्नाद्यतमानस्तु योगी संशुद्धकिल्बिषः ॥
## अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ॥ ४५ ॥

**त० टी०**—किं तर्हि कर्मप्रतिपादकवेदातिवर्तनात्तस्मिन्नेव जन्मनि सिद्धयोगो भूत्वा मुच्यते जन्मान्तरे वेत्यपेक्षायामाह—प्रयत्नादिति । पूर्वमभ्यासवैराग्यशैथिल्याद्योगभ्रंशात्पुनर्जन्म जातमिदानीं

पुनर्जन्म यथा न स्यात्तथा यतितव्यमिति व्यवसायं कृत्वा प्रयत्नात्पूर्वकृतयत्नादपि प्रकर्षेणाधिकं यतमानोऽतिप्रयत्नं कुर्वन् योगी पूर्वाभ्यस्तयोगसंस्कारवान् तेनैव योगे प्रयत्नविशेषजन्यपावनत्वेन संशुद्धकिल्बिषः सम्यक् शुद्धानि धौतानि किल्बिषाणि योगप्रतिबन्धकान्यनेकजन्ममलानि यस्य सः, अत एवानेकैर्जन्मभिः कृतयोगाभ्यासाच्चरमजन्मनि संसिद्धः सम्यक्सिद्धध्यानसंपन्नः, ततस्तदनन्तरमेव परां गतिं मुक्तिरूपामुत्कृष्टां गतिं फलं याति प्राप्नोति ॥ ४५ ॥

स० टी०—यदा चैवं प्रथमभूमिकायां मृतोऽपि अनेकभोगवासनाव्यवहितमपि विविधप्रमादकारणवति महाराजकुलेऽपि जन्म लब्ध्वापि योगभ्रष्टः पूर्वोपचितज्ञानसंस्कारप्राबल्येन कर्माधिकारमतिक्रम्य ज्ञानाधिकारी भवति तदा किमु वक्तव्यं द्वितीयायां तृतीयायां वा भूमिकायां मृतो विषयभोगान्ते लब्धमहाराजकुलजन्मा यदि वा भोगमकृत्वैव लब्धब्रह्मविद्ब्राह्मणकुलजन्मा योगभ्रष्टः कर्माधिकारातिक्रमेण ज्ञानाधिकारी भूत्वा तत्साधनानि संपाद्य तत्फललाभेन संसारबन्धनान्मुच्यत इति । तदेतदाह—प्रयत्नादिति । प्रयत्नात्पूर्वकृतादप्यधिकमधिकं यतमानः प्रयत्नातिरेकं कुर्वन् योगी पूर्वोपचितसंस्कारवान् तेनैव योगप्रयत्नपुण्येन संशुद्धकिल्बिषः धौतज्ञानप्रतिबन्धकपापमलः अत एव संस्कारोपचयात्पुण्योपचयाच्च अनेकैर्जन्मभिः संसिद्धः संस्कारातिरेकेण पुण्यातिरेकेण च प्राप्तचरमजन्मा ततः साधनपरिपाकाद्याति परां प्रकृष्टां गतिं मुक्तिं नास्त्येवात्र कश्चित्संशय इत्यर्थः ॥ ४९ ॥

शं० टी०—योगविषये तीव्रमोक्षेच्छावैराग्याभ्यां कृताधिकतरप्रयत्नस्य यतेः फलमाह—प्रयत्नादिति । प्रयत्नात्समाधौ प्रकृष्टो यत्नः प्रयत्नस्तस्मात्संसिद्धै यतमानस्तत्परतया नित्यं निरन्तरं च नियमेन समाधिनिष्ठां कुर्वाणस्तु कालान्तरफलसिद्धेर्मन्दप्रयत्नाद्धिक्षोरेनं व्यावर्तयितुं तु शब्दः। प्रकृष्टप्रयत्नस्तीव्रमोक्षेच्छुर्योगी ब्रह्मविद्यतिः संशुद्धकिल्बिषः निरन्तरसमाधिनिष्ठया सम्यक् शोधितं निर्यापितं किल्बिषमज्ञानतत्कार्यलक्षणं यस्य सः संशुद्धकिल्बिषः निःशेषविनष्टबाह्यवासनातत्कार्यकामकर्मफलः सन्ननेकजन्मसंसिद्धः अनेकेष्वेकव्यतिरिक्तेषु कपिञ्जलाधिकरणन्यायेन बहुवचनस्य त्रित्वे पर्यवसानादेकद्वित्रिषु जन्मसु संसिद्धः संसिद्धिः सम्यग्दर्शनं तद्वान् संसिद्धोऽप्रतिबद्धविज्ञानो निःशेषविनष्टभेदप्रत्ययो भूत्वा ततस्तेन सम्यग्दर्शनेनैव परां परमपुरुषार्थभूतां गतिं स्वात्मनाऽधिगम्यत इति गतिः स्वस्वरूपभूता परमावस्था तां विदेहमुक्तिं याति निर्विशेषनित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाऽद्वितीयब्रह्मात्मना स्वेन रूपेण तिष्ठतीत्यर्थः । एतेन तीव्रमोक्षेच्छोर्यतेः श्रवणमनननिदिध्यासासमाधिषु क्रियान्तरानवकाशेनाधिकतरप्रयत्नेन भवितव्यमल्पप्रयत्नस्य तु चिरतरेणैव कालेन मुक्तिरिति सूचितं भवति ॥ ४९ ॥

श्री० टी०—यदैवं मन्दप्रयत्नोऽपि योगी परां गतिं याति तदा यस्तु योगी प्रयत्नादुत्तरोत्तरमधिकं योगे यतमानो यत्नं कुर्वन् योगेनैव संशुद्धकिल्बिषो विधूतपापः सोऽनेकेषु जन्मसूपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा ततः श्रेष्ठां गतिं यातीति किं वक्तव्यमित्यर्थः ॥ ४९ ॥

स० टी०—योगभ्रष्टो वरं जन्म लब्ध्वा ब्रह्मविदां कुले ॥ तत्त्वज्ञानेऽधिकारी सञ्ज्ञानसाधनतत्परः ॥ १ ॥ ज्ञानलाभेन संसारबन्धनान्मुच्यते त्विति ॥ यतमानोऽधिकं योगी यत्नात्पूर्वकृतादपि ॥ २ ॥ योगप्रयत्नपुण्येन धौतपापमलोऽभितः ॥ संस्कारोपचयात्पुण्योपचयाद्बहुजन्मभिः ॥ ३ ॥ संस्कारातिशयात्सिद्धः पुण्यातिशययोगतः ॥ लब्धपाश्चात्यजन्मासौ साधनातिशयात्ततः ॥ ४ ॥ साक्षात्कृत्य परं तत्त्वं मुक्तिं प्राप्नोति सद्गतिम् ॥ ५ ॥ ४९ ॥

भा० टी०—इतश्च योगित्वं श्रेय इत्याह—प्रयत्नादिति । प्रयत्नादधिकयत्नात्प्रकर्षेण यत्नेन यतमानस्तु योगी संशुद्धकिल्बिषः संशुद्धपापोऽनेकेषु जन्मसु किंचित्किंचित्संस्कारजातमुपचित्य तेनोपचितेनानेकज-

न्मकृतेन संसिद्धोऽनेकजन्मसंसिद्धस्ततः प्राप्ततत्त्वसाक्षात्कारः सन् परां मोक्षाख्यां गतिं याति । यत्तु तत इति तच्छब्देन प्रकृतं चलितमानसत्वं परामृशति ततश्चलितमानसत्वाद्धेतोः । अयं भावः चलितत्वदशायां काम्यानि कर्माणि यानि कृतानि तेषां प्रत्येकं फलदातृत्वाद्युगपत्सर्वकर्मफलसंयोगासंभवात् एकैकस्य फलमनुभूय शुचीनां श्रीमतां योगिनां वा गेहे जन्मानुभूय पुनः कर्मयोगे यतमानः तत्तत्काम्यकर्मसंख्याकजन्मान्यनुभूय ज्ञानसंपन्नः सन् मोक्षं प्रतिपद्यत इति । प्रयत्नादिति कर्मणि ल्यब्लोपे पञ्चमी प्रयत्नं प्राप्येयर्थः । कर्मयोगी कर्मानुष्ठाता । योगिनं विशिनष्टि—यतमान इति । उज्झितदर्प इत्यर्थः । शुचीनां श्रीमतां योगिनां वा कुलेऽहमुत्पन्न इत्यभिमानवर्जित इति भाव इति तच्चिन्त्यं, निरर्थकायाः ल्यब्लोपकल्पनायाः प्रकृष्टपरामर्शकल्पनाया उत्तरश्लोकेन सर्वतः श्रेष्ठत्वेन वर्ण्यमानस्य योगिनः कर्मयोगिपरत्वेन वर्णनस्य जिज्ञासुरपीत्यननुरोधेन यतमानपदव्याख्यानस्य चायुक्तत्वादिति दिक् ॥ ४५ ॥

प० टी०—किं पुनः प्रयत्नादित्याह—अथेति । अथ प्रयत्नादुत्तरोत्तरमधिकयोगेन यतमानो यत्नं कुर्वन् योगेनैव संशुद्धकिल्बिषो विधूतपापः सोऽप्यनेकेषु जन्मसूपचितेन योगेन संसिद्धः सम्यग्ज्ञानी भूत्वा श्रेष्ठां गतिं यातीति किं वक्तव्यमित्यर्थः ॥ ४५ ॥

रा० टी०—योगजिज्ञासामात्रेण मुक्तिश्चेत्तदनुष्ठानं व्यर्थमित्यतो न तावन्मात्रेण मुक्तिरपित्वनेकजन्मनीत्याह—प्रयत्नादिति । योगजिज्ञासुरपीत्यनुषङ्गः योगं ज्ञात्वेति शेषः । यतमानः प्रयत्नं कुर्वंस्ततः प्रयत्नाद्योगी ध्यानयोगवान्सन्संशुद्धकिल्बिषः निर्धूतपापः अनेकजन्मभिः संसिद्धोऽपरोक्षज्ञानी अनेकजन्मसंसिद्धः ततः अपरोक्षज्ञानात् परां गतिं यातीति ॥ ४५ ॥

**तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥**
**कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ॥ ४६ ॥**

त० टी०—अतः सर्वसाधनेभ्यो योग एवाधिकतरः श्रेयोऽर्थिनोपादेय इत्याह—तपस्विभ्य इति । तपस्विभ्यः कृच्छ्रचान्द्रायणादि तप एव पुरुषार्थसाधनं विद्यते येषां ते तथा तेभ्यो योगी अधिकः श्रेष्ठः ज्ञानं शास्त्रजन्यं परोक्षं तद्वद्भ्योऽपि योगी अधिको मतः कर्मिभ्यः अग्निहोत्रादिकर्मवद्भ्यश्च योगी अधिको मतस्तस्मात्त्वं योगी भव हे अर्जुन ॥ ४६ ॥

म० टी०—इदानीं योगी स्तूयतेऽर्जुनं प्रति श्रद्धातिशयोत्पादनपूर्वकं योगं विधातुम्—तपस्विभ्य इति । तपस्विभ्यः कृच्छ्रचान्द्रायणादितपःपरायणेभ्योऽपि अधिक उत्कृष्टो योगी तत्त्वज्ञानोत्पत्त्यनन्तरं मनोनाशवासनाक्षयकारी "विद्यया तदारोहन्ति यत्र कामाः परागताः । न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः ॥" इति श्रुतेः । अत एव कर्मिभ्यो दक्षिणासहितज्योतिष्टोमादिकर्मानुष्ठायिभ्यश्चाधिको योगी कर्मिणां तपस्विनां चाज्ञत्वेन मोक्षानर्हत्वात् । ज्ञानिभ्योऽपि परोक्षज्ञानवद्भ्योऽपि अपरोक्षज्ञानवानधिको मतो योगी । एवमपरोक्षज्ञानवद्भ्योऽपि मनोनाशवासनाक्षयाभावादजीवन्मुक्तेभ्यो मनोनाशवासनाक्षयवत्त्वेन जीवन्मुक्तो योग्यधिको मतः मम संमतः । यस्मादेवं तस्मादधिकाधिकप्रयत्नबलात्त्वं योगभ्रष्ट इदानीं तत्त्वज्ञानमनोनाशवासनाक्षयैर्युगपत्संपादितैर्योगी जीवन्मुक्तो यः स योगी परमो मत इति प्रागुक्तः स तादृशो भव साधनपरिपाकात् हे अर्जुनेति शुद्धेति संबोधनार्थः ॥ ४६ ॥

शं० टी०—यतः शमदमसंन्यासाद्युत्तमसाधनसंपत्तिमताधिकतरप्रयत्नसमनुष्ठितसमाधिनिष्ठासंभावितादैतविज्ञानवतैव योगिना प्राप्यो भवति मोक्षस्ततस्तस्याद्वैतविज्ञानवत एव योगिनोऽन्यसाधनानुष्ठातृभ्य आधिक्यमाह—तपस्विभ्य इति । तपस्विनस्तापसाः कृच्छ्रचान्द्रायणादिपञ्चाग्निमध्यस्थत्वादितपोनिरता मुमुक्षवस्तेभ्यो योगी उक्तलक्षणो ब्रह्मविद्यतिरधिको भवति 'तपसा कल्मषं हन्ति' इतिस्मरणात्तेषां तपसः

पापनिवृत्त्येकप्रयोजनवत्त्वेनाल्पफलत्वात्तेभ्योऽल्पप्रयोजनवद्भ्यः प्राजापत्यादिलोकगामिभ्यो ज्ञाननिष्ठया पुनरावृत्तिनिर्मुक्तविदेहमुक्तिपथगामी ब्रह्मविदुत्तमोऽधिको भवतीत्यर्थः । ज्ञानिभ्यो मीमांसादिशास्त्रार्थविद्भ्योऽप्यधिक उत्तमो मतः संमतः तेषां शास्त्रार्थज्ञानस्य धर्मानुष्ठानानुष्ठापनैकप्रयोजनत्वेनाल्पफलकत्वात् । यद्यपि 'यस्तु व्याकुरुते वाचं यस्तु मीमांसते गिरम् । तावुभौ पुण्यकर्माणौ पङ्क्तिपावनपावनौ' इति तेषां पुण्यकर्मत्वं पावकत्वं च विद्यते तथापि तेन पुण्यलोकप्राप्तिः पुनरावृत्तिरप्यस्त्यतस्तेभ्य उक्तलक्षणो योग्येवाधिको भवति । किंच कर्मिभ्योऽग्निहोत्रादिवैदिककर्मनिष्ठेभ्यश्च योग्येवाधिको भवति । यद्यपि "अपाम सोमममृता अभूम" इति । "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति कर्मिणाममृतत्वं सुकृतस्याक्षय्यत्वं च श्रूयते तथापि तस्याग्निष्टोमादिपुण्यकर्मापेक्षयाक्षय्यत्वं न तु स्वाभाविकं तथैवामरत्वं च मर्त्यापेक्षया पुनःपुनर्मरणराहित्यं न तु मुक्तिः यतः "नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति" इति कर्मिणां पुनरावृत्तिः श्रूयते ततः कर्मिभ्यश्च निरुक्तलक्षणो योग्येवाधिक उत्तमो भवति । चकार उक्तेभ्योऽनुक्तेभ्यः सांख्ययोगादिमतनिष्ठेभ्यः सर्वेभ्यो ज्ञाननिष्ठो ब्रह्मविदेव श्रेष्ठ इति ज्ञापनार्थः । यस्मादेवं तस्मान्मुमुक्षुश्चेत्त्वं योगी भव हे अर्जुन योगनिष्ठाजनितसम्यग्ज्ञानबलेन पुनरावृत्तिरहितं ब्राह्मं पदं विदेहकैवल्याख्यं प्राप्स्यसीत्यर्थः ॥ ४६ ॥

**श्री० टी०**—यस्मादेवं तस्मात्—तपस्विभ्य इति । कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्योऽपि ज्ञानिभ्यः शास्त्रज्ञानवद्भ्योऽपि कर्मिभ्यः इष्टापूर्तादिकर्मकारिभ्योऽपि योगी श्रेष्ठोऽभिमतस्तस्मात्त्वं योगी भव ॥ ४६ ॥

**स० टी०**—श्रद्धाधिक्योदयायाथ योगी संस्तूयतेऽधुना ॥ तपःकृच्छ्रोपवासादितत्परेभ्योऽपि योग्यसौ ॥ १ ॥ उत्कृष्टो ब्रह्मविज्ज्ञानी निर्वृत्तिकमना यतः ॥ ज्योतिष्टोमादिकर्मानुष्ठायिभ्यश्चाधिको मतः ॥ २ ॥ मोक्षानर्हतयाज्ञत्वात्कर्मिणां च तपस्विनाम् ॥ परोक्षज्ञानवद्भ्योऽप्यपरोक्षज्ञानिनो वराः ॥ ३ ॥ तेभ्योऽप्येवं मनोनाशवासनाक्षयसंयुतः ॥ जीवन्मुक्तो मुनिर्योगी श्रेष्ठः सर्वोत्तमो मतः ॥ ४ ॥ ४६ ॥

**भा० टी०**—योगस्यावश्यसंपादनार्थं सर्वाधिक्यं साधयति—तपस्विभ्य इति । तपस्विभ्यः शरीरादिकार्श्यकारिव्रतादिपरेभ्योऽप्यधिको योगी पूर्वोक्तः ज्ञानिभ्यः शास्त्रीयपरोक्षज्ञानवद्भ्योऽप्यधिको मतोऽभिमतः कर्मिभ्योऽग्निहोत्रादिकर्मवद्भ्योऽप्यधिक उत्कृष्टः तस्माद्योगी भव । स्वधर्माचरणेन शुद्धचित्तस्य तव योगिभावः सुगम इति सूचयन्नाह—हे अर्जुनेति । योगेन शुद्धब्रह्मसाक्षात्कारं लब्ध्वैव त्वमन्वर्थसंज्ञो भविष्यसीति सूचनार्थं वा संबोधनम् । योगी अत्र ध्यानयोगी विवक्षितः पूर्वोत्तरग्रन्थानुरोधात् ध्यानयोगस्यैवोपसंहार्यत्वाच्च । एतेन ज्ञानिभ्योऽपि परोक्षज्ञानवद्भ्योऽपि अपरोक्षज्ञानवानधिको मतः योगी एवमपरोक्षज्ञानवद्भ्योऽपि मनोनाशवासनाक्षयाभावादजीवन्मुक्तेभ्यो मनोवासनाक्षयवत्त्वेन जीवन्मुक्तो योग्यधिको मत इत्यादि प्रत्युक्तं, योगी कर्मयोगीतिव्याख्यानमपि प्रकरणविरोधादुपेक्ष्यम् ॥ ४६ ॥

**प० टी०**—तपस्विभ्य इति । तपस्विभ्यः कृच्छ्रचान्द्रायणादितपोनिष्ठेभ्यो ज्ञानिभ्यः शास्त्रविद्भ्यः कर्मिभ्य इष्टापूर्तकारिभ्योऽपि योगी श्रेष्ठोऽभिमतस्तस्मात्त्वं योगी भव ॥ ४६ ॥

**रा० टी०**—योगं स्तौति—तपस्विभ्य इति । कृच्छ्रचान्द्रायणादितपोयुक्तेभ्योऽयोगिज्ञानिभ्योऽपि योगी ध्यानानुष्ठाताधिको मतः । तस्मात्सर्वाधिकत्वाद्योगस्येत्यर्थः ॥ ४६ ॥

**योगिनामपि सर्वेषां मद्गतेनान्तरात्मना ॥**
**श्रद्धावान्भजते यो मां स मे युक्ततमो मतः ॥ ४७ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे अध्यात्मयोगो[1] नाम षष्ठोऽध्यायः ॥ ६ ॥**

१ आत्मसंयमयोगो नामेति प्रायः सर्वेषु टीकापुस्तकेषु मूले पाठ उपलभ्यते ।

त० टी०—तपस्व्यादिभ्यो योगिनः श्रैष्ठ्यमुक्त्वेदानीं सर्वयोग्युत्कृष्टं योगिनं वदन्नध्यायमुपसंहरति—योगिनामिति। तपस्विकर्म्यादिभ्यो योगी श्रेष्ठः, योगिनामपि आत्मसमाधिपराणां हिरण्यगर्भरुद्रेन्द्रादित्याद्याराधनलक्षणयोगवतां च सर्वेषामपि मध्ये जन्मान्तरसहस्रार्जितपुण्यसंचयलब्धसदाचार्योपदेशजनितसर्वज्ञसर्वशक्तिसर्वकारणसर्वकर्मफलप्रदात्रीश्वरपरमात्मपुरुषोत्तमादिशब्दाभिधेयमदितरदेवफलसाधनादिष्वतिफल्गुबुद्धिपूर्वकानन्यत्वभावनया मयि परमानन्दघने भगवति वासुदेवे निरतिशयप्रीतिवशाद्गतेन निविष्टेनान्तरात्मना चित्तेन श्रद्धावान् गुरुशास्त्रोक्तः सर्वाभीष्टप्रदोऽयमेवेति सर्वात्मना मया भजनीय इति विश्वासवान् यो मामीश्वरेश्वरं ज्ञानबलशक्त्यादिवात्सल्यकारुण्यदयाद्यनन्तकल्याणगुणाब्धिं सर्वशरण्यं प्रणतार्तिहरं स्वभक्तकामपूर्त्यर्थमेव यदुकुलेऽवतीर्णं वसुदेवसूनुं भजते अर्चनवन्दनध्यानादिना सततं सेवते स मे युक्ततमः सर्वेभ्यो युक्तेभ्यः समाहितचित्तेभ्यो युक्ततमोऽत्यर्थं समाहितचित्तः श्रेष्ठतमः मे मम परमेश्वरस्य सर्वज्ञस्य मतः निश्चितः अतस्त्वमपि मदनन्यभक्तो भवेति भावः। तदेवं भगवत्प्राप्त्यन्तरङ्गोपायभगवदनन्यभक्तिस्वरूपयुक्ततमत्वलाभाय त्वंपदार्थभूतप्रकृतिवियुक्तात्मस्वरूपज्ञानं तदङ्गभूतनिष्कामकर्मप्रकारभेदवैराग्येन्द्रियमनोनिग्रहपूर्वकध्यानयोगाभ्यासोपदेशेनाध्यायषट्कं समापितम् ॥ ४७ ॥

कर्मोपशमवैराग्यपूर्वकं योगमुक्तवान् ॥ अध्याये भगवानस्मिन्परमागतिसाधनम् ॥ १ ॥
त्वंपदार्थो भगवता साधनक्रमयोगतः ॥ अस्मिन्नध्यायषट्के वै भक्तोत्कर्षश्च वर्णितः ॥ २ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां षष्ठोऽध्यायः ॥ ६ ॥

म० टी०—इदानीं सर्वयोगिश्रेष्ठं योगिनं वदन्नध्यायमुपसंहरति—योगिनामिति। योगिनां वसुरुद्रादित्यादिक्षुद्रदेवताभक्तानां सर्वेषामपि मध्ये मयि भगवति वासुदेवे पुण्यपरिपाकविशेषाद्गतेन प्रीतिवशान्निविष्टेन मद्गतेनान्तरात्मनान्तःकरणेन प्राग्भवीयसंस्कारपाटवात्साधुसङ्गाच्च मद्भजन एव श्रद्धावानतिशयेन श्रद्दधानः सन् भजते सेवते सततं चिन्तयति यो मां नारायणमीश्वरेश्वरं सगुणं निर्गुणं वा मनुष्योऽयमीश्वरान्तरसाधारणोऽयमित्यादिभ्रमं हित्वा स एव मद्भक्तो योगी युक्ततमः सर्वेभ्यः समाहितचित्तेभ्यो युक्तेभ्यः श्रेष्ठो मे मम परमेश्वरस्य सर्वज्ञस्य मतो निश्चितः समानेऽपि योगाभ्यासक्लेशे समानेऽपि भजनायासे मद्भक्तिशून्येभ्यो मद्भक्तस्यैव श्रेष्ठत्वात्त्वं मद्भक्तः परमो युक्ततमोऽनायासेन भवितुं शक्ष्यसीति भावः। तदनेनाध्यायेन कर्मयोगस्य बुद्धिशुद्धिहेतोर्मर्यादां दर्शयता ततश्च कृतसर्वकर्मसंन्यासस्य साङ्गं योगं विवृण्वता मनोनिग्रहोपायं चाक्षेपनिरासपूर्वकमुपदिशता योगभ्रष्टस्य पुरुषार्थशून्यताशङ्कां च शिथिलयता कर्मकाण्डं त्वंपदार्थनिरूपणं च समापितम्। अतःपरं श्रद्धावान् भजते यो मामिति सूचितं भक्तियोगं भजनीयं च भगवन्तं वासुदेवं तत्पदार्थं निरूपयितुमग्रिममध्यायषट्कमारभ्यत इति शिवम् ॥४७॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायामध्यात्मयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

शं० टी०—विदेहमुक्तेरसाधारणकारणसम्यग्ज्ञानसिद्ध्यै समाधिनिष्ठायामधिष्ठितवतो योगिनः परमपुरुषार्थसाधकत्वात्तापसादिभ्योऽधिकत्वं प्रतिपाद्येदानीं सर्वदा समाध्यनुष्ठानाभावे श्रवणश्रावणकोट्यापि सम्यग् ज्ञानं न सिध्यति तदभावे विदेहमुक्तिश्च ततो मुमुक्षोर्यतेरवश्यं समाधिः कर्तव्य इति ज्ञापयितुं तस्य समाधिश्रमाद्व्याहतो देशकालमूलबन्धासननियमादिश्रमरहितं समाधिं सूचयितुमिच्छया तन्निष्ठावन्तं स्तौति—योगिनामिति। "सर्वं खल्विदं ब्रह्म। सर्वं ह्येतद्ब्रह्म। ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतिशतैः

'सोऽहं स च त्वं स च सर्वमेतत्' 'भूतानि विष्णुर्भुवनानि विष्णुः', 'वासुदेवः सर्वम्' इत्यादिस्मृतिसहस्रैरिदं सर्वं ब्रह्मैव ब्रह्मविवर्तत्वान्मरुजलवदित्यादियुक्तिकोटिभिश्च निर्धारितेऽर्थे सर्वस्य ब्रह्ममात्रत्वे श्रद्धावान् श्रद्धा नाम विपरीतभावनाराहित्येनोक्तार्थानुवृत्तबुद्धिवृत्तिविशेषस्तद्वानेव सन् यो मुमुक्षुर्ब्रह्मविद्यतिर्मद्गतेन श्रुतं दृष्टं स्पृष्टं मतं विज्ञातं च सर्वं ब्रह्मैवेति विपरीतप्रत्ययराहित्येन पूर्वोक्तश्रुतिस्मृतियुक्तिभिर्निर्धारिते सच्चिदानन्दैकरसे मय्यद्वितीये परे ब्रह्मणि गतेन बहिरन्तः सर्वत्र मत्सत्तानुवर्तिनान्तरात्मना चेतसा निरुक्तलक्षणं मां भजते "सर्वमिदमहं च ब्रह्मैव" इति स्वं जगच्च सर्वं ब्रह्मैव पश्यति आहारविहारशयनासनादिषु सर्वास्ववस्थासु च वृत्त्यन्तरराहिततया सर्वदा मामेव परमात्मानं स्वात्मना योऽनुसंधत्त इत्यर्थः । योगिनां विराड्हिरण्यगर्भेश्वराद्युपासकानां सर्वेषामपि पञ्चम्यर्थे षष्ठी योगिभ्यः सर्वेभ्य इत्यर्थः । स एव युक्ततमः यतो विराडाद्युपासका योगिनस्त्वविद्यापटलव्यवहितदृष्टयोपास्योपासकादिभेदमालम्ब्य विराडाद्युपासते अयं तु श्रवणादिजन्यज्ञानाग्निनिर्दग्धद्वैतभ्रमपटलो भूत्वा स्वस्य च सर्वस्य जगतश्च ब्रह्ममात्रत्वमेव पश्यति तत एव युक्ततमो योगी श्रेष्ठ इति मे ममेश्वरस्य मतोऽभिमत इत्यर्थः । एतेन यो ब्रह्मवित्तेन सर्वदा ब्रह्मनिष्ठयैव स्थातव्यमिति बोधितं भवति प्रत्यग्दृष्ट्या वृत्त्यन्तरराहित्येन सर्वस्य ब्रह्ममात्रत्वदर्शनमेव सुकरः समाधिरिति सूचितं च ॥ ४७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां षष्ठोऽध्यायः ॥ ६ ॥

**श्री० टी०–**योगिनामपि यमनियमादिपराणां मध्ये मद्भक्तः श्रेष्ठ इत्याह–**योगिनामिति** । मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं वासुदेवं श्रद्धायुक्तः सन् भजते स योगयुक्तेषु श्रेष्ठो मम संमतः अतो मद्भक्तो भवेति भावः ॥ ४७ ॥

आत्मयोगमवोचद्यो भक्तियोगशिरोमणिम् । तं वन्दे परमानन्दं माधवं भक्तशेवधिम् ॥ १ ॥

इति सुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायामध्यात्मयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

**स० टी०–**सर्वयोगिवरं श्रीशभक्तं श्रीशो वदन्हरिः ॥ उपसंहरतीदानीमध्यायं योगतत्परम् ॥ १ ॥ योगिनां वसुरुद्रादिभक्तानां भेदचेतसाम् ॥ सर्वेषामपि मध्ये यो वासुदेवे मयीश्वरे ॥ २ ॥ पुण्यपुञ्जोदयात्प्रेम्णा निविष्टेनान्तरात्मना ॥ प्राग्भवार्जितसंस्कारपाटवात्साधुसंगमात् ॥ ३ ॥ श्रद्दधानः सदा भूत्वा चिन्तयत्यादराच्च माम् ॥ सगुणं निर्गुणं वापि नारायणमधीश्वरम् ॥ ४ ॥ अनन्यभक्त्या परया स मद्भक्तो ह्यनन्यधीः ॥ सर्वेभ्यो युक्तचित्तेभ्यः श्रेष्ठो नित्यसमाहितः ॥ ५ ॥ सर्वज्ञस्य ममात्यन्तनिश्रितो नात्र संशयः ॥ योगाभ्यासश्रमे तुल्ये समाने भजनश्रमे ॥ ६ ॥ मद्भक्तस्यैव मुख्यत्वं मत्पराङ्मुखयोगिनः ॥ त्वं मद्भक्ततयात्यन्तयुक्तो भवितुमर्जुन ॥ ७ ॥ अनायासेन शीघ्रं च शक्ष्यसीत्याशयो हरेः ॥ ८ ॥ योगी योगबलेन संसृतिमिमां त्यक्त्वात्मसौख्ये स्थितः कर्मी कर्मजलोकभोगरसिकस्तास्मिन्नुपाये रतः ॥ अस्माकं तु नवीनवारिदरुचिर्मन्दस्मितेनाञ्चितो गोगोपीजनवत्सलः सुखनिधिः कृष्णः शरण्यो गतिः ॥ ९ ॥ ४७ ॥

निरूपितमिहाध्याये कर्मसंन्यासपूर्वकम् ॥ तत्त्वज्ञानैककरणं चित्तवृत्तिनिरोधनम् ॥ १ ॥ एवमध्यायषट्केन त्वंपदार्थनिरूपणम् ॥ त्रिधाऽशुद्धिनिरासेन त्रिधाशुद्धियुतं कृतम् ॥ २ ॥ पापाख्याऽशुद्धिरतुला निष्कामैः कर्मभिर्हता ॥ ततो रजोगुणोद्भूतविक्षेपाशुद्धिरान्तरी ॥ ३ ॥ चित्तवृत्तिनिरोधेन प्रत्यग्ध्यानेन नाशिता ॥ त्वंपदार्थपरिज्ञानाभिधा शुद्धिस्तृतीयका ॥ ४ ॥ देहादिभ्यः पृथक्कृत्य साक्षिणं तद्विवेचनात् ॥

साप्यशुद्धिर्हृता सम्यगुपदेशवचोमृतैः ॥ ५ ॥ एवं भगवता सम्यक्त्वंपदार्थनिरूपणम् ॥ कृतं येन नमस्तस्मै श्रीकृष्णाख्याय वेधसे ॥ ६ ॥ योगो ज्ञानं च कर्म श्रुतिविशदफलं यस्य भक्त्या जनानां ब्रह्मादीनां नियन्ता विजयरथगतो यन्तृरूपेण योऽभूत् ॥ योगिध्येयस्वरूपो निरवधिसुखदो ब्रह्मविद्यागुरुर्यः कृष्णोऽसौ भक्तिवश्यो वसतु मम हृदि स्वात्मभूतो ममाद्धा ॥ ७ ॥

इतिभावप्रकाशे श्रीसदानन्दविदा कृते ॥ चित्तवृत्तिनिरोधाख्यः षष्ठः संपूर्णतां गतः ॥ ६ ॥

एतदध्यायटीकाश्लोकसंख्या ॥ २६१ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ २०६६ ॥

भा० टी०—योगिनामन्यदेवताध्यानयुक्तानामपि सर्वेषां मध्ये मद्गतेन मयि वासुदेवेन समाहितेनान्तरात्मनान्तःकरणेन श्रद्धावान्वासुदेवान्न परं किंचिदिति श्रद्दधानः सन् यो मां भजते सेवते स मेऽतिशयेन युक्तो युक्ततमः सर्वोत्तमो ध्यानयोगी मतोऽभिप्रेतः अतस्त्वमेतादृशो ध्यानयोगी भवेत्याशयः । तदनेन षष्ठाध्यायेन कर्मयोगस्य संन्यासहेतोर्मर्यादारूपं साङ्गं ध्यानयोगं मनोनिग्रहोपायं योगभ्रष्टस्य दुर्गत्यभावेन सुगतया मोक्षाप्तिं वासुदेवभजनस्य श्रैष्ठ्यं च दर्शयताऽनेन साधनेन शुद्धत्वंपदार्थाभिज्ञस्य वाक्यार्थज्ञानान्मोक्ष इति प्रसाधितम् ॥ ४७ ॥

ईशाराधनतत्परेण मनसा कर्मादिसंतन्वता कर्तृत्वादिविवर्जितेन निगमैर्लब्धा विशुद्धात्मता ।
येनाप्तुं परमैकतां सुखघनां स्वं नौमि तं शाश्वतं प्रत्यञ्चं परमार्थतो भ्रमवशाज्जीवं स्वरूपाच्युतम् ॥ १ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां भाष्योत्कर्षदीपिकायां षष्ठोऽध्यायः ॥ ६ ॥

प० टी०—अथ यमनियमपरायणानां योगिनामपि मद्भक्तः श्रेष्ठ इत्याह—**योगिनामिति** । मद्गतेन मय्यासक्तेनान्तरात्मना मनसा यो मां परमेश्वरं श्रद्धया युक्तः सन् भजते स योगयुक्तेषु श्रेष्ठो मे मतोऽतो मद्भक्तो भवेति भावः । यतो मद्भक्तो मत्प्रसादेन सकलसाधनयोगपद्यवान् स्वत एव भवतीत्यर्थः । श्रुतिरपि—" योगे योगे तवस्तरं वाजे वाजे हवामहे । सखाय इन्द्रमूतये " इति भाष्यम्—शुनःशेपः प्राणापानयोर्योगे मनःपवनयोर्योगे दुःसाध्ये सति यतस्तत्र विघ्नकर्तृभिः कामक्रोधादिभिः सह पुनः पुनर्वाजे संग्रामे समुपस्थिते सति वयं त्वामिन्द्रं परमात्मानं हवामहे आह्वयामः । किमर्थम्, ऊतये रक्षणार्थम् निर्वाहार्थमित्यर्थः । किंभूतं त्वाम्, तवस्तरम् अतिशयेन रक्षितारम् । किंभूता वयम्, सखायः परमप्रेमास्पदत्वेनानुग्राह्याः । तदुक्तम्—' एह्येहि बुद्धे भवभीतिशान्त्यै गच्छाशु गोविन्दपदारविन्दम् । यद्यन्तरा त्वां विषया निहन्युः क्रोश त्वमम्भोरुहलोचनेति ' ॥ ४७ ॥

अथाध्यायतात्पर्यम् ।

प्रोक्तो विज्ञानयोगः स्थिरमनसि सदात्मानुसंधानरूपो नो चेदभ्यासयोगो बहिरुपविशते चासनादिक्रमेण । अन्तर्योगानुवृत्तौ स्वयमुपरमते दृश्यतः प्राप्य तोषं वैराग्याभ्यासयोगात्परिहरति शनैर्वेगमित्याह षष्ठे ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगद्गीताटीकायां परमार्थप्रपायामभ्यासयोगो नाम षष्ठोऽध्यायः ॥ ६ ॥

रा० टी०—ध्यानवत्स्वपि तारतम्यमाह—**योगिनामिति** । सर्वेषामपि योगिनां मध्ये श्रद्धाशब्दोदितभक्तिमान्यः स युक्तो मतः । तत्रापि भक्तिमत्स्वपि यो मां भजते सेवते स युक्ततरः । तत्रापि मद्गतेनान्तरात्मना मद्गतान्तःकरणेन फलकामनां विना भजते स युक्ततमो मत इति योगिष्वप्युत्तम इति मे मतः ॥ ४७ ॥

इति श्रीमद्भगवद्गीतार्थसंग्रहे श्रीराघवेन्द्रयतिकृते षष्ठोऽध्यायः ॥ ६ ॥

**इति श्रीमद्भगवद्गीतायां कर्मकाण्डाख्यं प्रथमषट्कं समाप्तम् ।**

# विक्रेयसंस्कृतपुस्तकानि ।

## श्रीमद्भगवद्गीता ।

### प्रथमगुच्छः ।

**Bhagavat=Geeta with 7 commentaries**

( प्रथमोगुच्छः )आनन्दगिरिकृतटीकासंवलितशांकरभाष्य–जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्य) भाष्य–रामानुजभाष्य–पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी–नीलकण्ठीसमेता । मन्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ६–०–०.

## श्रीमद्भगवद्गीता ।

### द्वितीयो गुच्छः । प्रथमषट्कम् ।

**Bhagavat=Geeta with 8 another commentaries 1st part**

निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता–'तत्त्वप्रकाशिका' श्रीमधुसूदनसरस्वतीकृता 'गूढार्थदीपिका' श्रीशङ्करानन्दप्रणीता–'तात्पर्यबोधिनी' श्रीधरस्वामिकृता–'सुबोधिनी' श्रीसदानन्दविरचितः–'भावप्रकाशः' श्रीधनपतिसूरिविरचिता–'भाष्योत्कर्षदीपिका' दैवज्ञपण्डितश्रीसूर्यविरचिता–'परमार्थप्रपा'पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः–'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, दृढा न क्लिश्नीयुरिति । पत्रसंख्या सार्धपञ्चशतानि । अग्रेतने च षट्के शीघ्रमेव प्रकाशयिष्यामः । प्रथमषट्कस्य मूल्यम् रू.३–१२–०.

## श्रीमद्वाल्मीकिरामायणम् ।

### बालकाण्डम् ।

**Valmiki Ramayana with 3 well=known commentaries 1st part**

सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुःशृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर–शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च षड्भिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । अत्र पारायणकृतां सौकर्याय पत्रस्याग्रे श्लोकाः स्थूलाक्षरैरधोरेखया टीकाभ्यः पृथक्कृत्य स्थापिताः । टीकाश्च प्रतिश्लोकं प्रविभज्य रामायणतिलकः, रामायणशिरोमणिः, रामायणभूषणं चेति क्रमेण निवेशिताः । अस्य श्लोकस्येदं टीकात्रितयमिति परिज्ञानाय मूलस्थश्लोकाङ्कस्तिलकटीकाया आदौ स्थूलाकारेण परिदर्शितः । मूलं तु तिलकटीकानुरोधि स्थापितम् । तत्रादृष्टाः शिरोमणिकृता भूषणकृता च धृताः पाठाष्टिप्पनीरूपेणाधस्ताद्दर्शिताः । अधिकपाठस्तु मूल एव चिह्नयित्वा यथास्थानं स्थापितः । पत्रसंख्या च चतुःशतेभ्योऽधिका । अग्रेतनानि खण्डानि यथाक्रमं क्षिप्रमेव प्रकाशयिष्यामः । प्रथमखण्डस्य मूल्यम् रू. ३–०–०.

## कारिकावली ।

### सिद्धान्तमुक्तावलीसा

**Karikavalee with Siddhanta=Muktavali and other notes**

न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यम् किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्यास्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु

च पत्रेषु स्थूलाक्षरैर्मुद्रिता। अस्याः सार्धशताभ्यधिकपत्रयुताया अपि सर्वसौलभ्याय मूल्यमतीव न्यूनं स्थापितम्। मूल्यम्. रू. ०–७–०.

## कुमारसंभवं महाकाव्यम्।

**Kumar Sambhav with 3 known commentaries**

कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्यालंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति। मूल्यम् रू. १–४–०.

## स्तोत्रमुक्ताहारः।

**Stotra=muktahar containing 256 Stotras**

अस्मिन् २९६ स्तोत्राणि संगृहीतानि। यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः। अस्माभिः पूर्वमत्रुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकमत्रुमिति। मूल्यम्. रू.०–८–०.

## विदुरनीतिः।

**Vidura=Niti with a commentary**

संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी। मू. रू. ०–४–०.

## रघुवंशमहाकाव्यम्।

**Raghuvamsha with a commentary by Mallinatha**

श्रीकालिदासकृतम्। मल्लिनाथकृतसंजीविन्याख्यटीकासहितम्। मूल्यम् रू. ०–१०–०.

## वेदान्तरहस्यम्।

**Vedanta Rahasya**

वेदान्तवागीशभट्टाचार्यविरचितम्। अत्राद्वैतमतसिद्धान्तो निरूपितः। उपपत्तिश्च प्रदर्शिता। भाषाऽतिसरला प्रौढा च। मूल्यम्. रू. ०–१–०.

## उत्तरगीता।

**Uttara=Geeta with a commentary**

गौडपादीयदीपिकाख्यव्याख्यायुता। भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम्। मूल्यम् रू. ०–२–०.

## विशिष्टाद्वैतमतविजयवादः।

**Vishishtadvaita=Mata=Vijaya=Vada**

नरहरिपण्डितकृतः। अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम्। मूल्यम् रू. ०–१–०.

## प्रारब्धमुद्रणा ग्रन्थाः।

## तैत्तिरीयोपनिषत्।

**Taittiriya=Upanishat**

श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन सहिता।

## संस्कारमयूखः।

**Samskar Mayukha**

श्रीनीलकण्ठभट्टसुतेन विदुषा श्रीशंकरभट्टेन कृतः।

## वैशेषिकदर्शनम्।

**Vaisheshika Darshana with several commentaries**

श्रीशंकरमिश्रकृतवैशेषिकसूत्रोपस्कारप्रभृतिव्याख्यानत्रयोपेतम्।

'गुजराती' प्रिंटिंग् मुद्रणालयाधिपतिः।

कोट सासून बिल्डिंग–मुंबई.

# SHRIMAD-BHAGVAD-GEETA

CONTAINING EIGHT COMMENTARIES OF

KESHAVA KASHMIRI BHATTACHARYA called *Tattva-Prakashika*, MADHU-SOODAN SARASVATI called *Goodhartha-Deepika*, SHANKARANAND called *Tatparya-Bodhini*, SHREEDHARA SWAMI called *Subodhini*, SADANAND called *Bhawa-Prakasha*, DHANAPATI SOORI called *Bhashyotkarsh-Deepika*, DAIVADNYA PANDIT SURYA called *Para-Martha-Prapa*, AND RAGHAVENDRA called *Artha-Samgraha*

**Second Part of the Second Series**

Containing the Second Six Adhyayas

EDITED BY

**MAHADEVA GANGADHAR BAKRE**



Printed and Published at

**THE GUJARATI PRINTING PRESS**

by Manilal Itcharam Desai

SASSOON BUILDINGS, CIRCLE, FORT,

BOMBAY



SHAKA 1834 A. D. 1913

**Price Rs. 2=12=0**

# श्रीमद्भगवद्गीता ।

केशवकाश्मीरिभट्टाचार्यकृत–तत्त्वप्रकाशिका–मधुसूदनसरस्वतीकृत–गूढार्थदीपिका–
शंकरानन्दकृत–तात्पर्यबोधिनी–श्रीधरस्वामिकृत–सुबोधिनी–सदानन्दकृत–
भावप्रकाश–धनपतिसूरिकृत–भाष्योत्कर्षदीपिका–दैवज्ञपण्डितसूर्यकृत–
परमार्थप्रपा–राघवेन्द्रकृता–ऽर्थसंग्रहे–त्यष्टटीकोपेता ।

द्वितीयगुच्छस्य द्वितीयो भागः ।

सप्तमादिद्वादशाध्यायान्तः ।

बाक्रेइत्युपाह्वगङ्गाधरभट्टात्मजमहादेवशर्मणा संशोधितः ।

मुम्बय्यां
'गुजराती' मुद्रणालयाधिपतिना स्वीये मुद्रणागारे मुद्रयित्वा प्रकाशितः ।
शकः १८३४, ख्रिस्ताब्दः १९१२.

मूल्यं पादोनं रूपकत्रयम् ।



तत्सद्ब्रह्मणे नमः।

तत्त्वप्रकाशिकाद्यष्टटीकोपेता

# श्रीमद्भगवद्गीता।

## द्वितीयं षट्कं (उपासनाकाण्डम्)



### सप्तमोऽध्यायः।

**श्रीभगवानुवाच—मय्यासक्तमनाः पार्थ योगं युञ्जन्मदाश्रयः॥**
**असंशयं समग्रं मां यथा ज्ञास्यसि तच्छृणु॥ १॥**

त० टी०—सर्वेश्वरं हरिं कृष्णं भक्तिगम्यं परात्परम्। वन्दे भक्तिप्रदं नित्यं मायाध्वान्तनिवारकम्॥
तदेवं मुमुक्षूणां भगवद्भावापत्तिलक्षणं परमपुरुषार्थं तत्प्राप्त्युपायभूतं तदनन्यभक्तियोगं च वक्तुं त-
त्साधनभूतं प्राप्तुः प्रत्यगात्मनस्त्वंपदार्थस्य ज्ञानं निष्कामकर्मोपशमवैराग्ययोगादिसाधनैः प्रथमेनाध्या-
यषट्केन निरूपितम्। इदानीं भगवद्भक्तियोगं भजनीयं गुणशक्त्यैश्वर्यादिविशिष्टं तत्पदार्थं परब्रह्मभूत-
वासुदेवस्वरूपं च भक्तभेदांश्च तत्प्रतियोग्यभक्तभेदांश्च निरूपयितुं मध्यमषट्कमारभ्यते। तत्रापि भज-
नीयस्वरूपं भक्तांश्च निरूपयितुं सप्तमाध्यायारम्भः। तत्र तावत्पूर्वाध्यायान्ते योगिनामपि सर्वेषां
मद्गतेनान्तरात्मना। श्रद्धावान्भजते यो मां स मे युक्ततमो मतः इत्युक्तम्, तत्र कीदृशं ते स्वरूपं कथं
च भक्तस्त्वां ज्ञात्वा त्वद्गतान्तरात्मा भूत्वा त्वां भजेदिति प्रष्टव्यं, तदर्जुनेनापृष्टमपि स्वयमेव कृपया
निरूपयितुं श्रीभगवानुवाच—मय्यासक्तमना इति। मयि दोषगन्धास्पृष्टमहिम्नि अनन्तकल्याणगु-
णशक्त्यैश्वर्याश्रये भगवति वासुदेवे आसक्तं दृढं निबद्धं मनो येन स मय्यासक्तमनाः पार्थेति संबोध-
नेन पृथाया मद्भक्तायाः पितृस्वसुः पुत्रस्त्वं मेऽनुग्राह्योऽसीति सूचितम्। योगं युञ्जन्मनःसमाधानं
कुर्वन् मदाश्रयः अहमेवेश्वरेश्वर आश्रयो न तु देवमनुष्याद्यन्यः कश्चित्कस्मैचिदर्थाय समाश्रयणीयो
यस्य स त्वमेवंभूतः सन्नसंशयं निःसंशयं यथा स्यात्तथा समग्रं समस्तविभूतिबलशक्त्यैश्वर्यादिसहितं
मां यथा ज्ञास्यसि येन ज्ञानेन ज्ञास्यसि तज्ज्ञानं मयोच्यमानं शृणु॥ १॥

म० टी०—यद्भक्तिं न विना मुक्तिर्यः सेव्यः सर्वयोगिनाम्। तं वन्दे परमानन्दघनं श्रीनन्दनन्दनम्॥
एवं कर्मसंन्यासात्मकसाधनप्रधानेन प्रथमषट्केन ज्ञेयं त्वंपदलक्ष्यं संयोगं व्याख्यायाऽधुना ध्येयब्रह्मप्रतिपाद-

नप्रधानेन मध्यमेन षट्केन तत्पदार्थो व्याख्यातव्यः । तत्रापि योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान् भजते यो मां स मे युक्ततमो मतः इति प्रागुक्तस्य भगवद्वचनस्य व्याख्यानाय सप्तमोऽध्यायः आरभ्यते । तत्र कीदृशं भगवतो रूपं भजनीयं कथं वा तद्गतोऽन्तरात्मा स्यादित्येतद् द्वयं प्रष्टव्यमर्जुनेनापृष्टमपि परमकारुणिकतया स्वयमेव विवक्षुः श्रीभगवानुवाच–मय्यासक्त इत्यादिना । मयि परमेश्वरे सकलजगदायतनत्वादिविविधविभूतिभागिनि आसक्तं विषयान्तरपरिहारेण सर्वदा निविष्टं मनो यस्य तव स त्वम् अत एव मदाश्रयो मदेकशरणः राजाश्रयो भार्याद्यासक्तमनाश्च राजभृत्यः प्रसिद्धो मुमुक्षुस्तु मदाश्रयो मदासक्तमनाश्च त्वं त्वद्विधो वा योगं युञ्जन्मनःसमाधानं षष्ठोक्तप्रकारेण कुर्वन् असंशयं यथा भवत्येवं समग्रं सर्वविभूतिबलशक्त्यैश्वर्यादिसंपन्नं मां यथा येन प्रकारेण ज्ञास्यसि तच्छृणूच्यमानं मया ॥ १ ॥

शं० टी०–पूर्वं षष्ठाध्यायेन ज्ञानयोगमारुरुक्षोः कर्मैव साधनं तस्यैव योगमारूढस्य सर्वकर्मसंन्यासः साधनमिति कर्मतत्संन्यासयोः क्रमाच्चित्तशुद्धिं ज्ञानयोगसिद्धिं प्रति च कारणत्वं प्रतिपाद्य योगं साङ्गं सलक्षणं च निरूप्य योगभ्रष्टस्य नाशशङ्कामपास्य यो ब्रह्मवित्तेन सदा ब्रह्मनिष्ठयैव स्थातव्यमित्युक्तमिदानीं यन्निष्ठया ब्रह्मवित्तिष्ठति तद्ब्रह्म कीदृशं किंलक्षणं कथं वा तेन तत्र स्थातव्यमित्याशङ्कायां तन्निरूपयितुं सप्तमाध्याय आरभ्यते । तत्रादौ ईश्वरैकशरणतया शुश्रूषुणा मोक्षार्थिना श्रोतव्यार्थं सावधानेन भवितव्यमिति ज्ञापयितुमर्जुनं मदाश्रयो मन्मनाश्च भूत्वा मयोच्यमानमर्थं सावधानतया शृण्विति बोधयितुं श्रीभगवानुवाच–मयीति । हे पार्थ त्वं योगं, तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञितमित्युक्तलक्षणं युञ्जन् युयुक्षन् कर्तुमिच्छन् मदाश्रयः अहमेव सर्वात्मा सर्वान्तर्यामी भक्तत्राणपरायणः परमेश्वर आश्रय आलम्बनं शरणं यस्य स मदाश्रयः यथा स्वर्गकाम्यग्निहोत्रादिकर्माश्रयः यथा वा जयैषी शस्त्रास्त्रादिसाधनाश्रयो भवति तथा मुमुक्षुर्योगी मदाश्रयः 'ईश्वरानुग्रहादेव पुंसामद्वैतवासना' इति स्मरणात् मदाश्रयेण खलु मुमुक्षोर्ज्ञानं तत्साधनपौष्कल्यं मोक्षश्च निर्विघ्नेन सिध्यत्यतस्त्वं मदाश्रयः सन् मयि वक्ष्यमाणलक्षणे ज्ञातव्ये परे ब्रह्मण्येवासक्तमनाः मल्लक्षणमत्तत्त्वमन्महत्त्वविचारतदवगमतन्निश्चयादावेवासक्तं संलग्नं मनो यस्य स मय्यासक्तमना भूत्वा नत्वन्यत्रासक्तमनाः सन् मां मायया तद्गुणतद्धर्मतच्छक्तितद्वैभवोपलक्षितं वस्तुतस्तद्रहितं च परमात्मानं प्रतिपाद्यमानमसंशयं संशयं विना समग्रं साक्षात्कारपर्यवसानं यथा येन प्रकारेण ज्ञास्यसि इदं खलु परं तत्त्वमिति ज्ञातुं शक्नुयास्तत्तथा वक्ष्यामि शृणुष्वेत्यर्थः ॥ १ ॥

श्री० टी०–विज्ञेयमात्मनस्तत्त्वं संयोगं समुदाहृतम् । भजनीयमथेदानीमैश्वरं रूपमीर्यते ॥ पूर्वाध्यायान्ते मद्गतेनान्तरात्मना यो मां भजते स मे युक्ततमो मत इत्युक्तं, तत्र कीदृशस्त्वं यस्य भक्तिः कर्तव्येत्यपेक्षायां स्वस्वरूपं निरूपयिष्यन् श्रीभगवानुवाच–मय्यासक्तमना इति । मयि परमेश्वरे आसक्तमभिनिविष्टं मनो यस्य सः मदाश्रयः अहमेवाश्रयो यस्यानन्यशरणः सन्योगं युञ्जन्नभ्यसन् असंशयं यथा भवत्येवं मां समग्रं विभूतिबलैश्वर्यादिसहितं यथा ज्ञास्यसि तदिदं मया वक्ष्यमाणं शृणु ॥ १ ॥

स० टी०–घनश्यामं वामं सततमभिरामं क्रतुपतिं श्रियोधामाकामं विमलसुखरामं मुनिगतिम् ॥ सुदामाद्यारामं विविहरललामं श्रुतिमतिं श्रये रामारामं भवगतिविरामं व्रजरतिम् ॥ १ ॥ ज्ञेयं व्याख्याय षट्केन त्वंपदार्थमथाधुना ॥ ध्येयं ज्ञेयं समादेयं तत्पदार्थं वदत्यजः ॥ २ ॥ षट्कस्यान्त्येन पद्येन भक्तियोगो हि सूत्रितः ॥ विवरीतुं तमध्यायषट्केनारभते हरिः ॥ ३ ॥ ब्रह्मविद्याप्रधानाङ्गो योगो भगवतेरितः ॥ इदानीं सर्वयोगानामुत्तमो योग उच्यते ॥ ४ ॥ इत्थमुत्थानिकाभेदे सत्यप्यर्थैक्यमस्त्यतः ॥ व्याख्यायन्ते चिदानन्दपदाम्भोजरजःश्रियः ॥ ५ ॥ भक्तियोगो हि योगानामुत्तमो भगवत्प्रियः ॥ भगवत्कृपया साक्षाज्ज्ञायते हृदि देहिनाम् ॥ ६ ॥ कर्मभ्रष्टा जना लोके जायन्ते दुष्टसंसृतौ ॥ योगभ्रष्टास्तु

जायन्ते शुचीनां श्रीमतां कुले ॥ ७ ॥ नारायणपदाम्भोजरजःश्रीप्रेमसंवृते ॥ भक्तियोगे सकृत्पुंसां प्रवेशे पुण्यपुञ्जतः ॥ ८ ॥ भ्रष्टशब्दः परिभ्रष्टो नाविष्टोऽपीह लभ्यते ॥ अतः सच्छूद्धयोपेतो नारायणपदाम्बुजम् ॥ ९ ॥ भजेदनन्यया भक्त्या नैरन्तर्येण सज्जनः ॥ तत्र श्रीहरिरेवादौ भजनीयं स्वरूपतः ॥ १० ॥ कीदृशं भजनं तस्य तद्गतेनान्तरात्मना ॥ कथमित्येवमाकाङ्क्षामालक्ष्यैवार्जुनस्य च ॥ ११ ॥ स्वयं वाक्यमुवाचेदं वक्ष्यमाणं कृपानिधिः ॥ मयीश्वरे हरौ साक्षाज्जगज्जन्मादिकारणे ॥ १२ ॥ समासक्तं मनो यस्य त्यक्त्वान्यविषयं सदा ॥ कुर्वंश्चित्तसमाधानं मां समाश्रित्य सर्वदा ॥ १३ ॥ ईदृशस्त्वं हि मामीशं भगवन्तमधोक्षजम् ॥ समग्रैश्वर्यसंपन्नं यथा ज्ञास्यसि तन्मया ॥ १४ ॥ उच्यमानं शृणु स्पष्टं निःसंदेहतयाऽर्जुन ॥ १५ ॥ १ ॥

**भा० टी०**—यतो जातं येन स्थितमिदमशेषं प्रविलयं प्रयात्याद्ये यस्मिन् श्रुतिभिरुदिते जन्तव इमे । भवन्त्येकं ब्रह्मामलममृतमाराध्य यमहं शिवं रामं कृष्णं तमजमजरं नौम्यखिलगम् ॥ एवं त्वंपदार्थं निरूप्य तत्पदार्थं निरूपयितुं पूर्वाध्यायान्ते योगिनामपि सर्वेषां मद्गतेनान्तरात्मना । श्रद्धावान्भजते यो मां स मे युक्ततमो मत इत्युक्तं, तत्रेदृशं मदीयं तत्त्वमनेन प्रकारेण मद्गतान्तरात्मा स्यादित्येतद्वक्तुमिच्छुः श्रीभगवानुवाच—**मयीति** । मयि वक्ष्यमाणविशेषणे परमेश्वरे आसक्तं मनो यस्य सः । मायि मनआसक्तिसंपादनं तव सुलभमिति सूचयन्नाह—**पार्थेति** । योगं युञ्जन्मनःसमाधानं कुर्वन्मदाश्रयः अहमेव परमेश्वर आश्रयो यस्य नतु कस्मैचित्पुरुषार्थायेहामुत्रलभ्याय राज्यादिर्यज्ञदानादिर्वा आश्रयो यस्य सः त्वं मय्यासक्तमना मदाश्रयः सन् असंशयं यथा स्यात्तथा मां यथा येन प्रकारेण ज्ञास्यसि तं वक्ष्यमाणप्रकारं शृणु । ननु मदग्रे भवान् स्थितोऽसंशयं मया ज्ञायत एवातः किमिदमुच्यते इत्याशङ्क्याह—**समग्रमिति** । समस्तविभूतिबलशक्त्यैश्वर्यादिगुणसंपन्नं सगुणं निर्गुणं च मामसंशयं यथा ज्ञास्यसि तच्छृणिवत्यर्थः ॥ १ ॥

**प० टी०**—पूर्वाध्यायान्ते मद्गतेनान्तरात्मनेत्यादिनाभ्यासयोगेन कृत्वा देहावच्छेदेनान्तर्यामित्वेन स्थितस्य स्वस्वरूपस्य प्रतीतिमभिधायेदानीं सर्वात्मकत्वेनावस्थितस्य प्रतीतिसाधनोपायं दर्शयन् स्वमायावैभवमैश्वर्यं च प्रकटीकरोति—**मयीति** । मयि परमेश्वरे आसक्तमत्यादृतं मनो यस्य स तथा मदाश्रयोऽहमेवाश्रयो यस्य मदेकशरणः सन् योगं युञ्जन्नभ्यस्यन्नसंशयं यथा भवति तथा मां समग्रं विभूतिबलशक्त्यैश्वर्यादिसहितं यथा ज्ञास्यसि तदिदं मया वक्ष्यमाणं शृणु । सर्वापेक्षया योगाभ्यासो हि महत्तरं कार्यं तदाश्रयव्यतिरेकेण निर्विघ्नं न सेत्स्यतीति कृत्वा ममाश्रयमवलम्ब्य प्रवृत्तस्य सुखोपायेन योगसिद्धिर्भवतीत्यर्थः ॥ १ ॥

**रा० टी०**—बुद्धिर्योगे त्विमां शृण्विति भगवज्ज्ञानोपायं प्रतिज्ञाय कामादिवर्जनयुक्तनिवृत्तकर्मानुष्ठानरूपकर्मयोगं ज्ञानस्य बहिरङ्गोपायमापञ्चमाध्यायान्तं ज्ञानान्तरङ्गसाधनं ध्यानरूपं योगं च षष्ठे निरूप्याधुना पूर्वोक्तं ध्यानं भक्तिपूर्वकमेवानुष्ठितं ज्ञानसाधनं न चैद्यादेरिव द्वेषपूर्वकमतो भक्त्यर्थं भगवन्माहात्म्यं मयीत्यादिनाऽध्यायषट्केनोच्यते । न त्वेवाहमित्यादिना पूर्वषट्के भगवन्माहात्म्योक्तावपि साधनस्यैव प्राचुर्येणोक्तिः । उत्तरषट्के कचित्कचित्साधनस्योक्तावपि प्राचुर्येणैव भगवन्महिम्नो वर्णनान्न पूर्वोत्तरषट्कयोः सांकर्यम् । तयोः पौर्वापर्यबीजं तु यदर्थं साधनं निरूपितं तज्ज्ञानाय ज्ञातव्यमाहात्म्यनिरूपणात्कार्यकारणभावरूपं योगं युञ्जन्समग्रं मां यथा ज्ञास्यसि तच्छृणिवति प्रतिज्ञाकरणादेव व्यक्तमिति श्रोतारमभिमुखीकुर्वन्भगवन्माहात्म्यं वक्तुं प्रतिजानीते—**मयीति** । मयि श्रीकृष्णे आ अत्यन्तं सक्तमनाः अतीवस्नेहयुक्तमनाः योगं द्विरूपं ज्ञानोपायं युञ्जन्ननुतिष्ठन्मदाश्रयः भगवानेव मया सर्वं कारयति स एव मे शरणं

तस्मिन्नेवाहं स्थित इति जानन्नित्यर्थः। असंशयं समग्रमिति क्रियाविशेषणम्। तव असंशयं समग्रं च यथा भवति तथा मां यथा येन प्रकारेण ज्ञास्यसि तच्छृणु तत्प्रकारकमज्ञानजनकवचनं श्रुत्वा तत्र निष्ठां कुर्वित्यर्थः। तदित्यस्य तथेति वार्थः ॥ १ ॥

**ज्ञानं तेऽहं सविज्ञानमिदं वक्ष्याम्यशेषतः ॥**
**यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते ॥ २ ॥**

त० टी०—तदेव ज्ञानं श्रोतारमभिमुखीकरणाय स्तौति—ज्ञानमिति। इदं ज्ञानं शास्त्रीयं सविज्ञानं विज्ञानं स्वानुभवस्तत्सहितमशेषतस्ते तुभ्यमहं वक्ष्यामि। नहीदं साकाङ्क्षमित्याह—यज्ज्ञानं ज्ञात्वा इह श्रेयोमार्गे स्थितस्य मुमुक्षोर्ज्ञातव्यं नावशिष्यते, ज्ञातव्यान्तरनिरपेक्षमित्यर्थः ॥ २ ॥

म० टी०—ज्ञास्यसीत्युक्ते परोक्षमेव तज्ज्ञानं स्यादिति शङ्कां व्यावर्तयन् स्तौति श्रोतुराभिमुख्याय—ज्ञानमिति। इदं मद्विषयं स्वतोऽपरोक्षज्ञानं असंभावनादिप्रतिबन्धेन फलमजनयत्परोक्षमित्युपचर्यते असंभावनादिनिरासे तु विचारपरिपाकान्ते तेनैव प्रमाणेन जनितं ज्ञानं प्रतिबन्धाभावात्फलं जनयदपरोक्षमित्युच्यते। विचारपरिपाकनिष्पन्नत्वाच्च तदेव विज्ञानं तेन विज्ञानेन सहितमिदमपरोक्षमेव ज्ञानं शास्त्रजन्यं ते तुभ्यमहं परमाप्तः वक्ष्याम्यशेषतः साधनफलादिसहितत्वेन निरवशेषं कथयिष्यामि। श्रौतीमेकविज्ञानेन सर्वविज्ञानप्रतिज्ञामनुसरन्नाह—यत् ज्ञानं नित्यचैतन्यरूपं ज्ञात्वा वेदान्तजन्यमनोवृत्तिविषयीकृत्य इह व्यवहारभूमौ भूयः पुनरपि अन्यत्किंचिदपि ज्ञातव्यं नावशिष्यते सर्वाधिष्ठानसन्मात्रज्ञानेन कल्पितानां सर्वेषां बाधे सन्मात्रपरिशेषात् तन्मात्रज्ञानेनैव त्वं कृतार्थो भविष्यसीत्यभिप्रायः ॥ २ ॥

शं० टी०—यदुपदेक्ष्यामीति प्रतिज्ञातं तद्वेदनमेवाह—ज्ञानमिति। अहं ते तुभ्यं ज्ञानं मद्विषयकमिदमधुना वक्ष्यमाणं सविज्ञानं विज्ञानसहितमुपदेशोत्तरक्षणभाव्यनुभवसंयुक्तमशेषतः यावता वस्त्वनुभूयते तावदशेषं वक्ष्याम्युपदेक्ष्यामि यज्ज्ञात्वा मयोपदिष्टं यज्ज्ञानं प्राप्येह ब्रह्मविषये तव भूयः पुनर्ज्ञातव्यं प्राप्तव्यमन्यत्पुरुषार्थसाधनं नावशिष्यते नापेक्ष्यते, अनेनैव कृतार्थो भविष्यसीत्यर्थः। यद्वा जगद्गुरुरेषोऽहं ते मुमुक्षवे शुद्धात्मने तुभ्यं ज्ञानं "सत्यं ज्ञानमनन्तं ब्रह्म" इतिश्रवणात् ज्ञानैकस्वरूपमिदं विद्वद्भिः प्रत्यक्षेणानुभूयमानमहमर्थत्वेन साक्षादपरोक्षमिति वा इदंतया निर्दिष्टं ब्रह्म सविज्ञानमनुभवसहितं तदनुभवो यथा स्यात्तथाऽशेषतः समग्रं वक्ष्याम्युपदेक्ष्यामि यज्ज्ञात्वा यत्साक्षादनुभूय यस्मिन् विज्ञात इत्यर्थः। इह भूयः पुनर्न विज्ञातव्यं वस्त्ववशिष्यते "येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्" इति "कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इत्येकविज्ञानेन सर्वविज्ञानश्रवणान्मयि परे ब्रह्मणि विज्ञाते न विदुषः पुनर्ज्ञेयान्तरावशेषो विद्यते मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थः ॥ २ ॥

श्री० टी०—वक्ष्यमाणं स्तौति—ज्ञानमिति। ज्ञानं शास्त्रीयं विज्ञानमनुभवस्तत्सहितमिदं मद्विषयमशेषतः साकल्येन वक्ष्यामि यज्ज्ञात्वा इह श्रेयोमार्गे वर्तमानस्य पुनरन्यज्ज्ञातव्यमवशिष्टं न भवति तेनैव कृतार्थो भवतीत्यर्थः ॥ २ ॥

स० टी०—तच्छ्रोतुराभिमुख्याय स्तौति ज्ञानं स्वगोचरम् ॥ इदं मद्विषयं ज्ञानमपरोक्षं स्वतो यतः ॥ १ ॥ परोक्षं प्रतिबन्धेन ज्ञानमित्युपचर्यते ॥ तन्निरासे प्रमाणेन सविचारेण यत्पुनः ॥ २ ॥ विज्ञानेन युतं सत्तन्मत्स्वरूपावसानकम् ॥ शास्त्रजं ते परोक्षं च परमाप्तोऽहमीश्वरः ॥ ३ ॥ कथयिष्याम्यशेषेण सफलं च ससाधनम् ॥ नित्यचैतन्यरूपं यदागमान्तजया धिया ॥ ४ ॥ विषयीकृत्य लोकेऽस्मिन्पुनरन्यन्मनागपि ॥ जिज्ञासोस्तव वान्यस्य ज्ञातव्यं नावशिष्यते ॥ ५ ॥ सर्वाधिष्ठानसन्मात्रज्ञानेऽध्यारोपितं

जगत् ।। तज्ज्ञानाद्बाधितं सर्वं ज्ञेयं किमवशिष्यताम् ।। ६ ।। तन्मात्रज्ञानतस्त्वं तु कृतकृत्यो भविष्यसि ।। ७ ।। परब्रह्मज्ञाने जगदिदमशेषं सुविदितं यतः प्रोक्तं श्रुत्या बहुविधसुदृष्टान्तकथनैः ।। यदा विश्वं सर्वं भगवति हरौ भ्रान्तिकलितं तदा ब्रह्मज्ञानाद्विदितमलमस्त्येव निगमात् ।। ८ ।। २ ।।

**भा० टी०**–ज्ञास्यसीत्युक्तं तत्र ज्ञानं स्तौति–**ज्ञानमिति** । अत्र भाष्ये तच्च मद्विषयं ज्ञानं ते तुभ्यमहं सविज्ञानं विज्ञानसहितं स्वानुभवेन संयुक्तमिदं वक्ष्यामि कथयिष्याम्यशेषतः कात्स्न्र्येन तज्ज्ञानं विवक्षितं स्तौति श्रोतुरभिमुखीकरणाय–यज्ज्ञात्वा यज्ज्ञानं ज्ञात्वा नेह भूयः पुनर्ज्ञातव्यं पुरुषार्थसाधनमवशिष्यते नावशेषो भवतीति मत्तत्त्वज्ञो यः स सर्वज्ञो भवतीत्यर्थ इति । अस्मिन्भाष्ये ज्ञास्यसीत्युक्त्या परोक्षज्ञानशङ्कायां तन्निवृत्त्यर्थं तदुक्तिप्रकारमेव विवृणोति–तच्चेति । इदयमरोक्षज्ञानं चैतन्यं तस्य सविज्ञानस्य प्रतिलम्भे किं स्यादित्याशङ्क्याह–**यज्ज्ञात्वेति** । इदमा चैतन्यस्य परोक्षत्वं व्यावर्त्यते तदेव सविज्ञानामिति विशेषणेन स्फुटयत इति तट्टीकाकृतः तदेवाह–ज्ञानमिति । ज्ञानं शुद्धप्रज्ञानं शुद्धप्रज्ञानघनं ब्रह्म "सत्यं ज्ञानमनन्तं ब्रह्म । विज्ञानमानन्दं ब्रह्म" इति श्रुतं ते तुभ्यमहं वक्ष्यामि अशेषतः साधनकलापसहितम् । किं वचनमात्रजेन परोक्षज्ञानेन शब्दस्य स्वविषये परोक्षज्ञानजनकत्वनियमादित्याशङ्क्याह–सविज्ञानमनुभवसहितं दशमस्त्वमसीत्यादौ शब्दादप्यपरोक्षज्ञानोत्पत्तिदर्शनादित्यन्ये । वस्तुतस्तु तच्च मद्विषयं ज्ञानमिति भाष्याद्भाष्यकृतामयमर्थो नाभिप्रेतः सविज्ञानमिति मूलान्मूलानुगुणोऽपि न भवति । तस्मान्मूलतद्भाष्यानुरोधेन ज्ञानं शास्त्रजन्यं विज्ञानमनुभव इति व्याख्येयं यज्ज्ञात्वेत्यस्य तु यज्ज्ञात्वा न पुनर्मोहमेवं यास्यसि पाण्डवेतिश्लोकस्थभाष्यानुसारेण मद्विषयं ज्ञानं शास्त्रजन्यं सविज्ञानं लब्ध्वेत्यर्थ इत्यविरोधः । मद्विषयस्य ज्ञानस्य सकलाधिष्ठानविषयत्वादन्यज्ज्ञातव्यं नावशिष्यते "येनाश्रुतं श्रुतं भवति" इत्यादिश्रुतेरिति भावः । यत्त्विदं मद्विषयं विज्ञानेन सहितमपरोक्षमेव ज्ञानं शास्त्रजन्यं ते तुभ्यमहं वक्ष्यामि यज्ज्ञानं नित्यचैतन्यरूपं ज्ञात्वा वेदान्तजन्यमनोवृत्तिविषयीकृत्येति तत्र यज्ज्ञानमित्याद्युपेक्ष्यं, यच्छब्दस्य प्रस्तुतपरामर्शकत्वेन सविज्ञानस्य ज्ञानस्य यदा परामृष्टस्य चैतन्यरूपार्थकत्वायोगात् ।। २ ।।

**प० टी०**–**ज्ञानमिति** । ज्ञानं शास्त्रोत्थं विज्ञानं मद्विषयानुभवस्तेन सहितमशेषतः साकल्येन वक्ष्यामि, यज्ज्ञात्वेह श्रेयोमार्गेऽन्यज्ज्ञातव्यं नावशिष्यते । मम साकल्येन सर्वात्मकत्वे ज्ञाते सति तदतिरिक्तं किं ज्ञातव्यमस्तीत्यर्थः ।। २ ।।

**रा० टी०**–श्रवणं प्रवचनाधीनमित्याह–**ज्ञानमिति** । ज्ञानविज्ञानशब्दौ कर्मार्थल्युडन्तौ । हे पार्थ ते तुभ्यमिदं मदीयं विज्ञानसहितं ज्ञानं विशेषेण ज्ञातव्यसहितं ज्ञातव्यं माहात्म्यं सामान्यं विशेषमाहात्म्यं च वक्ष्यामीत्यर्थः । अशेषत इत्यस्य यावदर्जुनयोग्यं तावन्मध्ये शिष्यमाणमकृत्वेत्यर्थः । वक्ष्यमाणं स्तौति–**यदिति** । यन्माहात्म्यं ज्ञात्वा भूयः पुनरन्यज्ज्ञातव्यमिह मदुक्तेऽर्थे नावशिष्यते ।। २ ।।

**मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।।**
**यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ।। ३ ।।**

**त० टी०**–वक्ष्यमाणं ज्ञानमतिदुर्लभमित्याह–**मनुष्याणामिति** । मनुष्याः शास्त्रीयाधिकारयोग्यास्तेषां सहस्रेषु कश्चिदेकः सिद्धये आत्मतत्त्वज्ञानाय यतते । यततां यतमानानां सहस्रेषु कश्चिदात्मानं यथावद्वेत्ति । तादृशानां ज्ञानसिद्धानामपि सहस्रेषु कश्चिन्मां परमात्मानं वेत्ति । मद्विदामपि सहस्रेषु कश्चिदेव मां तत्त्वतः यथाऽवस्थितस्वरूपं वेत्ति पराभक्तिं विना तत्त्वतो ज्ञानासंभवात् । भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः इति वक्ष्यमाणत्वात् ।। ३ ।।

म० टी०–अतिदुर्लभं चैतन्मदनुग्रहमन्तरेण महाफलं ज्ञानं यतः–मनुष्याणामिति। मनुष्याणां शास्त्रीयज्ञानकर्मयोग्यानां सहस्रेषु मध्ये कश्चिदेकोऽनेकजन्मकृतसुकृतसमासादितनित्यानित्यवस्तुविवेकः सन् यतति यतते सिद्धये सत्त्वशुद्धिद्वारा ज्ञानोत्पत्तये यततां यतमानानां ज्ञानाय सिद्धानां प्रागर्जितसुकृतानां साधकानामपि मध्ये कश्चिदेकः श्रवणमनननिदिध्यासनपरिपाकान्ते मामीश्वरं वेत्ति साक्षात्करोति तत्त्वतः प्रत्यगभेदेन तत्त्वमसीत्यादिगुरूपदिष्टमहावाक्येभ्यः अनेकेषु मनुष्येष्वात्मज्ञानसाधनानुष्ठायी परमदुर्लभः साधनानुष्ठायिष्वपि मध्ये फलभागी परमदुर्लभ इति किं वक्तव्यमस्य ज्ञानस्य माहात्म्यमित्यभिप्रायः॥३॥

शं० टी०–नन्वहमर्थत्वे ब्रह्मणः कथं तज्ज्ञानं ब्रह्मैवाहमिति सर्वत्र नोपलभ्यते इति चेत्सत्यं, नोपलभ्यते यद्यपि "यत्साक्षादपरोक्षाद्ब्रह्म" इतिश्रुत्याप्युच्यते ब्रह्मणः साक्षादपरोक्षत्वं तथाप्यनेकजन्मार्जितपुण्यपुञ्जसमुद्भावितचित्तपरिपाकसमुत्पन्नविवेकवैराग्यशमदमसंन्यासाद्युत्तमसाधनवतामेव परमेश्वरानुग्रहपात्रीभूतानां श्रवणमननादिभिस्तज्ज्ञानं सिध्यति न तु मलिनचित्तानामीश्वरकृपादूरवर्तिनां कामानलदंदह्यमानानां सर्वगताप्यर्कप्रभा यथान्धानामत एव स्वज्ञानं दुर्लभमित्याह–मनुष्याणामिति। मनुष्याणां सहस्रेषु मनुष्याणामिति मनुष्यत्वग्रहणं तदितरेषां बन्धमोक्षज्ञानाभावसूचनार्थम् ततो मनुष्याणामेव बन्धमोक्षज्ञानशास्त्रतदर्थग्रहणाधिकार इति मनुष्यत्वं प्राप्तवतां तत्रापि ब्राह्मणत्वमवश्यं मोक्षाय यतितव्यमिति ज्ञापयितुं मनुष्याणामित्युक्तम्। तत्र मनुष्याणामपि पापपूरितदेहानां सर्वेषां मुक्त्ययोग्यत्वं सूचयितुं सहस्रेष्वित्युक्तम्। सहस्रेष्वित्ययुतनियुतलक्षाणामुपलक्षणं देवकृपैकलभ्याया मुमुक्षाया अतिदुर्लभत्वात्। एवमुक्तसंख्यावन्मनुष्येषु कश्चिदेव मोक्षैककामनया श्रद्धाभक्तिभ्यामीश्वरार्पणबुद्ध्या बहुजन्मसमनुष्ठितपुण्यकर्मपरिपाकेन शुद्धात्मा सन् विवेकवैराग्यशमदमाद्युत्तमसाधनसंपन्नो भूत्वा सिद्धये ज्ञानसिद्धये यतति यतते नित्यनिरन्तरश्रवणादिनिष्ठया यत्नं करोतीत्यर्थः। अयमेव सिद्धो यस्य चित्तं दृष्टादृष्टसर्वविषयवैमुख्यं प्राप्य श्रवणादावेव तिष्ठति एवमुक्तलक्षणसंपन्नानां ज्ञानसिद्धौ एव श्रवणाद्येकनिष्ठानां सिद्धानामपि सहस्रेषु कोटिपर्यन्तेषु कश्चिदेव गुर्वात्मेश्वरसुप्रसादसंपन्नो नित्यनिरन्तरनिर्विकल्पकसमाधिनिष्ठापरिश्रान्तो ब्रह्मविदुत्तमः वासुदेवः सर्वमिति साक्षान्मामानन्दैकरसं चिद्घनमद्वितीयं परं ब्रह्म वेत्ति विजानाति। ननु विष्णुमीश्वरं रामं कृष्णं च देवमनुष्यादयः सर्वे जानन्ति कथं कश्चिदेव मां वेत्तीत्युच्यत इति चेन्न, ते मामयथाभूतस्वरूपमेव जानन्ति स्वतो भिन्नं परिच्छिन्नं न तु यथार्थस्वरूपमित्याह–तत्त्वत इति। तत्त्वतः श्रुत्या एतस्मिन्नदृश्येऽनात्म्य इति दृश्यवैशिष्ट्यरहितत्वेन प्रतिपादितं मायातत्कार्यलेशसंबन्धशून्यं नित्यशुद्धबुद्धमुक्तस्वभावमानन्दैकतनुमद्वितीयं मां परं ब्रह्मविदुत्तम एक एव स्वात्मना साक्षाद्विजानाति नान्य इत्यर्थः। एतेन वर्णानां ब्राह्मणादीनां सर्वेषां मुमुक्षुतायाश्चित्तशुद्धेर्ज्ञानोद्देशेनैव नियतश्रवणादिप्रवृत्तेस्तत्समुत्पन्नसम्यग्ज्ञानासिद्धेश्च तदेकद्वारकमुक्तेरपि च पूर्वपूर्वापेक्षया क्रमेणोत्तरोत्तरस्यातिदुर्लभत्वं सूचितमतः प्रयत्नेनोक्तसाधनसंपत्त्या मुक्तिः संपादनीया विवेकवतामिति सिद्धम्॥ ३॥

श्री० टी०–मद्भक्तिं विना तु मज्ज्ञानं दुर्लभमित्याह–मनुष्याणामिति। असंख्यातानां जीवानां मध्ये मनुष्यव्यतिरिक्तानां श्रेयसि प्रवृत्तिरेव नास्ति मनुष्याणां तु सहस्रेषु मध्ये कश्चिदेव प्रकृष्टपुण्यवशात्सिद्धये आत्मज्ञानाय यतते। प्रयत्नं कुर्वतामपि सहस्रेषु कश्चिदेव प्रकृष्टपुण्यवशादात्मानं वेत्ति। तादृशानां चात्मज्ञानसिद्धानां सहस्रेषु कश्चिदेव मां परमात्मानं मत्प्रसादेन तत्त्वतो वेत्ति। तदेवमतिदुर्लभमपि मज्ज्ञानं तुभ्यमहं वक्ष्यामीत्यर्थः॥ ३॥

स० टी०–मत्कृपामन्तरेणेदं दुर्लभं तन्महाफलम्॥ कर्मज्ञानादियोग्यानां सहस्रेषु नृजन्मनाम्॥१॥ मध्ये कश्चिद्विवेकी सन्यतते चित्तशुद्धये॥ ज्ञानाय यतमानानां सिद्धानां च विपश्चिताम्॥ २॥ मध्ये

कश्चिन्महानेकः सम्यग्ज्ञानेन मां हरिम् ।। साक्षात्करोति तत्त्वेन प्रत्यग्रूपेण चिद्घनम् ।। ३ ।। मत्तत्त्वज्ञोऽस्ति सर्वज्ञो दुर्लभो जगतीतले ।। किं वाच्यं ज्ञानमाहात्म्यं श्रीहरेरयमाशयः ।। ४ ।। ३ ।।

**भा० टी०**—अतो मद्विषयं तत्त्वज्ञानं सार्वज्ञ्यसंपादकत्वादतिदुर्लभमित्याह—**मनुष्याणामिति** । मनुष्याणामनेकयोनिषु पुण्यवशाल्लब्धदेहानां सहस्रेषु असंख्यातेषु 'शतं सहस्रं लक्षं च सर्वमक्षय्यवाचकम्' इत्युक्तेः अक्षय्यमित्यस्यासंख्यातमित्यर्थः । कश्चिदनेकजन्मार्जितपुण्यपुञ्जवशाल्लब्धविवेकादिसाधनो यतते यत्नं श्रवणादिरूपं करोति यततामपि यतमानानामपि सिद्धानां मुमुक्षूणां साधकत्वेऽपि सिद्धत्वकथनं तेषामुत्कर्षद्योतनार्थम् । अपरे तु सिद्धये आत्मज्ञानाय यतते यततामपि सहस्रेषु कश्चिदेव प्रकृष्टपुण्यवशादात्मानं वेत्ति तादृशानामप्यात्मज्ञानसिद्धानां सहस्रेषु कश्चिदेव मां परमात्मानं मत्प्रसादेन तत्त्वतो वेत्तीति वर्णयन्ति, अस्मिन्पक्षे मुख्यसिद्धशब्दार्थालाभस्त्वस्त्येवात्मपदाध्याहारस्य कश्चिदित्यस्य वेत्तीत्यस्य चावृत्तेरध्याहारस्य वा क्लेशोऽतिरिच्यते इत्ययं पक्षाश्चिन्त्यः । तेषां मध्ये कश्चिदेव मां परमेश्वरं तत्त्वतो यथावत् स्वाभिन्नत्वेन वेत्ति जानाति ।। ३ ।।

**प० टी०**—अथैतस्य दुर्लभत्वमाह—**मनुष्याणामिति** । असंख्यातानां जीवानां मध्ये मनुष्याणां सहस्रेषु कश्चिद्विरलः सुकृतातिशयशाली सिद्धये स्वात्मज्ञानाय प्रवर्तते । तथा प्रयत्नं कुर्वतामपि सिद्धानां सहस्रेषु कश्चिन्मदनुग्रहपात्रं, मां तत्त्वतो याथातथ्येन वेत्ति। एतादृशमतिदुर्लभं तुभ्यमहं वक्ष्यामीत्यर्थः।।३।।

**रा० टी०**—अवशिष्टं नास्तीति प्रतिज्ञाते ज्ञाने आदरजननाय तस्य दौर्लभ्यमाह—**मनुष्याणामिति** । कश्चिदेव पुण्यवान्पुरुषः सिद्धये ज्ञानाय यतति यतते । यततां ज्ञानार्थं यतमानानामपि मध्ये कश्चिदेव सिद्धिमान्भवतीति योज्यम् । सिद्धानां ज्ञानिनामपि मध्ये कश्चिदेव तत्त्वतो मां वेत्ति यथावज्जानाति ।। ३ ।।

**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।।**
**अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।। ४ ।।**

**त० टी०—समग्रं मां यथा ज्ञास्यसीति पूर्वमुक्तं तदेव वक्तुं, तावत्प्रकृतिशब्दवाच्यपरापरशक्तिद्वयस्वरूपमाह—भूमिरिति द्वाभ्याम्। भूम्यादिपञ्चशब्दैस्तत्कारणभूतानि गन्धादिपञ्चतन्मात्राणि गृह्यन्ते, न स्थूलभूतानि तेषां विकारत्वेन प्रकृतित्वाभावात् । मनःशब्देन तत्कारणभूताहंकारो गृह्यते । बुद्धिशब्देन समष्टिबुद्धिर्महतत्त्वं गृह्यते । अहंकारशब्देन तत्कारणं माया । इत्येवमष्टधा भिन्नेयमाकाशादिपञ्चमहाभूतदशेन्द्रियमन इति षोडशविकारादिचराचरस्य जगतः प्रकृतिरुपादानभूता मे मदीया शक्तिरिति विद्धि ।। ४ ।।**

**म० टी०**—एवं प्ररोचनेन श्रोतारमभिमुखीकृत्यात्मनः सर्वात्मकत्वेन परिपूर्णत्वमवतारयन्नादावपरां प्रकृतिमुपन्यस्यति—**भूमिराप इति**। साङ्ख्यैर्हि पञ्चतन्मात्राण्यहंकारो महानव्यक्तमित्यष्टौ प्रकृतयः पञ्च महाभूतानि पञ्च कर्मेन्द्रियाणि पञ्च ज्ञानेन्द्रियाणि उभयसाधारणं मनश्चेति षोडशविकारा उच्यन्ते । एतान्येव चतुर्विंशतिस्तत्त्वानि। तत्र भूमिरापोऽनलोवायुः खमिति पृथिव्यप्तेजोवाय्वाकाशाख्यपञ्चमहाभूतसूक्ष्मावस्थारूपाणि गन्धरसरूपस्पर्शशब्दात्मकानि पञ्च तन्मात्राणि लक्ष्यन्ते। बुद्ध्यहंकारशब्दौ तु स्वार्थावेव । मनःशब्देन च परिशिष्टमव्यक्तं लक्ष्यते । प्रकृतिशब्दसामानाधिकरण्येन स्वार्थहानेरावश्यकत्वात् मनःशब्देन वा स्वकारणमहंकारो लक्ष्यते पञ्चतन्मात्रसन्निकर्षात् । बुद्धिशब्दस्त्वहंकारकारणे महत्तत्त्वे मुख्यवृत्तिरेव अहंकारशब्देन च सर्ववासनावासितमविद्यात्मकमव्यक्तं लक्ष्यते प्रवर्तकत्वाद्यसाधारणधर्मयोगाच्च । इत्युक्तप्रकारेण इयमपरोक्षा साक्षिभास्यत्वात् प्रकृतिर्मायाख्या पारमेश्वरी शक्तिरनिर्वचनीयस्वभावा त्रिगुणात्मिका अष्टधा

भिन्ना अष्टभिः प्रकारैर्भेदमागता सर्वोऽपि जडवर्गोऽत्रैवान्तर्भवतीत्यर्थः । स्वसिद्धान्ते च ईक्षणसंकल्पात्मकौ मायापरिणामावेव । बुद्ध्यहंकारौ पञ्च तन्मात्राणि चापञ्चीकृतपञ्चमहाभूतानीत्यसकृदवोचाम ॥ ४ ॥

शं० टी०—कीदृशं ब्रह्म किंलक्षणमिति पृष्टवते ज्ञानं तेऽहं सविज्ञानमिति ब्रह्मणो ज्ञानस्वरूपत्वं लक्षणमित्युक्त्वेदानीं "तदनन्यत्वमारम्भणशब्दादिभ्यः" इति "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्यर्थावष्टम्भेन ब्रह्मकार्यत्वात्तद्विवर्तत्वाच्च जगत्सर्वं ब्रह्मैवेति बोधयितुं निर्विकारस्यापि स्वस्य ब्रह्मणः प्रकृतिद्वारा जगत्कारणत्वसिद्धये आदावपरां प्रकृतिं निर्दिशति—**भूमिरिति** । भूमिर्गन्धतन्मात्रलक्षणा कारणात्मिका सूक्ष्मा न तु स्थूला कार्यात्मिका भिन्ना प्रकृतिरष्टधेतिभूम्यादीनामष्टानामपि प्रकृतित्वाभिधानात् । 'महदाद्याः प्रकृतिविकृतयः सप्त' इति महदादिभूम्यन्तानां सप्तानामपि विकृतित्वस्मरणात् कथं प्रकृतित्वमिति न शङ्कनीयं तासामपि जगदारम्भकत्वात्प्रकृतित्वोपपत्तेः । तथैवापोऽपि रसतन्मात्राः, अनलो रूपतन्मात्रः, वायुः स्पर्शतन्मात्रः, खमाकाशं शब्दतन्मात्रं, मन इति संकल्पविकल्पयोरहंकारप्रधानत्वात्तदात्मकेन मनसा तत्कारणमहंकारो गृह्यते, बुद्धिरितिशब्देन सर्वसमष्टिर्महत्तत्त्वं लक्ष्यते, अहंकार इत्यहंकारवासनाविशिष्टमविद्यात्मकमव्यक्तमुच्यते, बीजे शाखापर्णपुष्पादिवासनावदव्यक्ते सर्वकारणे महदादिसर्वविकारवासनासंभवात् 'कारणगुणा हि कार्यगुणानारभन्ते' इतिन्यायात् इयं प्रकृतिः कार्यैकवेद्या स्वयमुक्तप्रकारेणाष्टधा भिन्ना मे मम परमात्मनो निर्गुणस्यापि स्वगुणद्वारा गुणित्वे सृष्ट्यादिकारणत्वे च हेतुरुपाधिः सैषैव "मायां तु प्रकृतिं विद्यात्" इतिश्रुतेः यत्कार्यमेतन्मरुमरीचिकाकल्पं जगज्जालमिति ॥ ४ ॥

श्री० टी०—एवं श्रोतारमभिमुखीकृत्येदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन् परापरभेदेन प्रकृतिद्वयमाह—**भूमिरितिद्वाभ्याम्** । भूम्यादिशब्दैः पञ्चगन्धादितन्मात्राण्युच्यन्ते, मनःशब्देन तत्कारणभूतोऽहंकारः बुद्धिशब्देन तत्कारणभूतं महत्तत्त्वमहंकारशब्देन तत्कारणमविद्येत्येवमष्टधा भिन्ना । यद्वा भूम्यादिशब्दैः पञ्चमहाभूतानि सूक्ष्मैः सहैकीकृत्य गृह्यन्ते अहंकारशब्देनैवाहंकारस्तेनैव तत्कार्याणीन्द्रियाण्यपि गृह्यन्ते, बुद्धिरिति महत्तत्त्वं, मनःशब्देन मनसैवोन्नेयमव्यक्तरूपं प्रधानम्, इत्यनेन प्रकारेण मे प्रकृतिर्मायाख्या शक्तिरष्टधा भिन्ना विभागं प्राप्ता । चतुर्विंशतिभेदभिन्नाप्यष्टस्वेवान्तर्भावविवक्षयाष्टधा भिन्नेत्युक्तम् । तथाच वक्ष्यमाणक्षेत्राध्याये इमामेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयिष्यति—'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इति ॥ ४ ॥

स० टी०—एवं प्ररोचनेनाभिमुखीकृत्यार्जुनं हरिः ॥ आत्मनः सर्वरूपत्वात्पूर्णत्वमवतारयन् ॥ १ ॥ क्षेत्राख्यां प्रकृतिं स्वीयामुपन्यस्यति संग्रहात् ॥ भूम्यादिपञ्चभूतानि सूक्ष्मावस्थात्मकानि हि ॥ २ ॥ तन्मात्राण्येव लक्ष्यन्ते मनोऽहंकार इष्यते ॥ बुद्धिशब्दान्महत्तत्त्वमहंकारस्य कारणम् ॥ ३ ॥ अविद्यात्मकमव्यक्तं वासनानन्त्यवासितम् ॥ अहंकारपदेनोक्तं सर्वकारणकारणम् ॥ ४ ॥ इत्येवमुक्तरीत्येयं साक्षिभास्यतयाक्षगा ॥ शक्तिः प्रकृतिधर्माख्याऽनिर्वाच्या त्रिगुणात्मिका ॥ ५ ॥ प्रकारैरष्टभिर्भेदमागता पारमेश्वरी ॥ अन्तर्भूतोऽत्र सर्वोऽपि जडवर्गः प्रपञ्चगः ॥ ६ ॥ ४ ॥

भा० टी०—यज्ज्ञात्वा नेह भूयोन्यज्ज्ञातव्यमवशिष्यत इत्युक्तेन श्रोतारमभिमुखी कृत्य तदुपपत्तये चेतनाचेतनप्रपञ्चस्य स्वस्मिन्परमात्मन्यध्यस्तत्वबोधनायाह—**भूमिरिति** । आकाशादिभिः शब्दस्पर्शरूपरसगन्धाख्यानि तन्मात्राणि लक्ष्यन्ते इतीयं मे भिन्ना प्रकृतिरष्टधेति वाक्यशेषात् मनःशब्देन तत्कारणमहंकारो लक्ष्यते बुद्धिरित्यहंकारकारणं महत्तत्वं गृह्यन्तेऽहंकार इत्यविद्यासंमिश्रमव्यक्तं लक्ष्यते यथा विषसंमिश्रमन्नं विषमित्युच्यते तथाहंकारवासनावदव्यक्तं मूलकारणमहंकार इत्युच्यते । यत्तु बुद्ध्यहंकारशब्दौ तु स्वार्थावेव मनःशब्देनावशिष्टमव्यक्तं लक्ष्यते इति यत्पक्षान्तरं कैश्चित्प्रदर्शितं तदरुचिग्रस्तं तद्बीजं तु क्रमत्यागप्रसङ्गादि ।

यत्तु भूम्यादिशब्दैः पञ्चमहाभूतानि सूक्ष्मैः सहैकीकृत्य गृह्यन्ते, अहंकारशब्देनैवाहंकारस्तेनैव तत्कार्याणीन्द्रियाण्यपि गृह्यन्ते, बुद्धिरिति महत्तत्वं, मनःशब्देन तु मनसैवोन्नेयमव्यक्तरूपं प्रधानमिति। अनेन रूपेण प्रकृतिर्मायाख्या शक्तिरष्टधा भिन्ना विभागं प्राप्ता चतुर्विंशतिभेदभिन्नैवेत्यष्टास्वेवान्तर्भावविवक्षयाष्टधा भिन्नेत्युक्तम्। तथाच वक्ष्यमाणक्षेत्राध्याये इय(मा)मेव प्रकृतिं चतुर्विंशतितत्त्वात्मना प्रपञ्चयिष्यति 'महाभूतान्यहंकारो बुद्धिरव्यक्तमेव च । इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः' इत्यपरे वर्णयन्ति । तत्रेदमवधेयम् 'मूलप्रकृतिरविकृतिः प्रकृतिविकृतयो महदाद्याः सप्त षोडशकस्तु विकारः' इतिसांख्योक्तप्रकारेणाष्टस्वेव प्रकृतित्वव्यवहारो न विकारेषु । अत्रापि इतीयं मे भिन्ना प्रकृतिरष्टधेति वचनादष्टौ प्रकृतय एव गृह्यन्ते विकारस्य तु एतद्योनीनि भूतानीति भूतपदाभिधेयस्य सर्वस्याप्युपादानम्। क्षेत्राध्याये तु क्षेत्रनिरूपणावसरे इदमुक्तम् 'तत्क्षेत्रमित्यारभ्य इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः । एतत्क्षेत्रं समासेन सविकारमुदाहृतम्' इत्यन्तम्। यत्त्वन्ये नात्राव्यक्तमहदहंकारपञ्चतन्मात्राण्येवाष्टौ सांख्याभिमता एव प्रकृतयो ग्राह्या इति नियमोऽस्ति "मनसा ह्येव पश्यति मनसा शृणोति" इति मनस इन्द्रियान्तरप्रकृतित्वश्रवणेन नवापि प्रकृतयः तथाचैवं योज्यं इयं मे मद्भिन्ना प्रकृतिरव्याकृताख्या भूम्यादिभेदेनाष्टधेति। मूलप्रकृतेरत्र भूम्यादिसहपाठाज्जन्यत्वमवगम्यते न सांख्यानामिवाजन्यत्वं 'तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम' इति 'अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते' इति तस्या अपि प्रभवप्रलययोः स्मरणादिति व्याचख्युस्तत्प्रकृताननुगुणम्। मे प्रकृतिर्भूम्यादिरूपेणाष्टधा भिन्नेति योजनायामितीयमित्यनूद्याङ्गुलिनिर्देशेन भूम्यादीनां प्रकृतित्वबोधनानुपपत्तेः निर्देशानुसरणे तु मनःशब्देनोक्तश्रुत्या तस्य प्रकृतित्वात्तस्यैव ग्रहस्तद्ग्रहे मूलप्रकृतिग्रहे चोभयोरुपादाने वाष्टधेति विरोधापत्तेः। मनसः प्रकृतित्ववर्णनमप्यसंगतमुदाहृतश्रुत्या तदलाभात्। मनसा करणेनेन्द्रियद्वारकेण पश्यतीति श्रुत्यर्थाभ्युपगमात् करणं विना द्वारस्याकिंचित्करत्वात् । किंच विद्यारण्यादिभिराचार्यैर्मनसः श्रोत्राद्युत्पन्नमिति न प्रदर्शितं किंतु–'वियत्पवनतेजोम्बुभुवो भूतानि जज्ञिरे । सत्त्वांशैः पञ्चभिस्तेषां क्रमाद्धीन्द्रियपञ्चकम् ॥ रजोंशैः पञ्चभिस्तेषां क्रमात्कर्मेन्द्रियाणि तु' इति भूतेभ्य इन्द्रियाणामुत्पत्तिर्दर्शिता। पुराणेषु तु अहंकारादेव सात्त्विकादिरूपेण त्रिविधात् समनस्कानामिन्द्रियदेवतानां त्वगादीन्द्रियाणां भूतानां च क्रमात्सेति सर्वथापि मनस इन्द्रियं प्रति प्रकृतित्वं नास्ति। यत्र क्वापि मनसस्तत्कल्पकत्वं श्रूयते तत्रापि मनउपाधिकस्यात्मन उपाधिप्रधानस्येति द्रष्टव्यम् "वदन्वाक्पश्यंश्चक्षुः शृण्वन् श्रोत्रम्" इत्यादि श्रुतेः। यदपि प्रकृतेः सादित्वं साधितं तदपि सिद्धान्तविरुद्धं मायाऽविद्यारूपेण द्विविधाया अपि मूलप्रकृतेः सर्वैरपि वेदान्तिभिरनादित्वेन सिद्धान्तितत्वात्तदुत्पत्तिलयवचनानि त्वाविर्भावतिरोभावपराणि अन्यथा तत्कारणभूतायाः प्रकृतेरावश्यकत्वेनानवस्थापातादिति दिक् । इतीयं यथोक्ता प्रकृतिर्मे मम माया पारमेश्वरी अष्टधा अष्टाभिः प्रकारैर्भिन्ना भेदमागता ॥ ४ ॥

**प० टी०**–एवं निरूपणीयार्थे श्रोतारमभिमुखीकृत्येदानीं प्रकृतिद्वारा सृष्ट्यादिकर्तृत्वेनेश्वरतत्त्वं प्रतिज्ञातं निरूपयिष्यन् परापरभेदेन प्रकृतिद्वयमाह–**भूमिरिति** द्वाभ्याम् । भूम्यादीनि पञ्च सूक्ष्माणि पञ्च तन्मात्रारूपाणि भूतानि, मनःशब्देन तत्कारणीभूतोऽहंकारः, बुद्धिशब्देन तत्कारणीभूतं महत्तत्त्वम्, अहंकारशब्देन प्रथमाध्यासरूपा तत्कारणमविद्येत्येवं प्रकृतिर्मायाष्टधाष्टप्रकारा भिन्नेतिपदेन त्रयोदशाध्याये 'महाभूतान्यहंकारः' इत्यादिचतुर्विंशतितत्त्वात्मना वक्ष्यमाणायाः प्रकृतेरत्रैवान्तर्भाव इत्युक्तम् ॥ ४ ॥

**रा० टी०**–एवमुपोद्घातमुक्त्वाऽधुना प्रथमप्रतिज्ञातं ज्ञानपदोक्तं ज्ञातव्यं तावदाह–**भूमिरित्यादि**श्लोकचतुष्टयेन । भूम्यादिपञ्च महाभूतानि मनस्तत्त्वबुद्धितत्त्वे च । अहंकारपदेन महत्तत्त्वमुपलक्षणीयम् । अहंकारश्चेति चशब्दान्वयः । इत्येवं मदधीना प्रकृतिरष्टधा भिन्ना । उद्दिष्टापेक्षया अष्टधेत्युक्तिः उपलक्षितापेक्षया नवधेति ज्ञेयम् । मत्प्रेरिता प्रकृतिः पृथिव्यादिकार्यरूपेणैव भिन्नेत्यर्थः ॥ ४ ॥

# अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् ॥
# जीवभूतां महाबाहो ययेदं धार्यते जगत् ॥ ५ ॥

**त० टी०**—अष्टधा या प्रोक्ता प्रकृतिः सेयमपरा निकृष्टा जडत्वात्परार्थत्वाच्च । इतस्त्वचेतनभूतायाः प्रकृतेरन्यां विलक्षणां स्वरूपतः स्वभावतश्चात्यन्तविजातीयां परां तस्याः भोक्तृतया प्रकृष्टां जीवभूतां चेतनां प्रकृतिं शक्तिं मे मदीयां मदात्मिकां विद्धि । यया जीवभूतया चेतनया क्षेत्रज्ञाख्ययाऽनादिकर्मवशादन्तःप्रविष्टया इदं शरीरादिरूपं क्षेत्रसंज्ञकं जडजातं जगद्धार्यते । उभयोर्विष्णुशक्तित्वं विष्णुपुराणे स्पष्टमुक्तम्—'विष्णुशक्तिः परा प्रोक्ता क्षेत्रज्ञाख्या तथाऽपरा' इति ॥ ५ ॥

**म० टी०**—एवं क्षेत्रलक्षणायाः प्रकृतेरपरत्वं वदन् क्षेत्रज्ञलक्षणां परां प्रकृतिमाह—**अपरेयमिति** । या प्रागष्टधोक्ता प्रकृतिः सर्वाचेतनवर्गरूपा सेयमपरा निकृष्टा जडत्वात्परार्थत्वात्संसारबन्धरूपत्वाच्च । इतस्त्वचेतनवर्गरूपायाः क्षेत्रलक्षणायाः प्रकृतेरन्यां विलक्षणां तुशब्दाद्यथाकथंचिदप्यभेदायोग्यां जीवभूतां चेतनात्मिकां क्षेत्रज्ञलक्षणां मे ममात्मभूतां विशुद्धां परां प्रकृष्टां प्रकृतिं विद्धि । हे महाबाहो यया क्षेत्रज्ञलक्षणया जीवभूतयाऽन्तरनुप्रविष्टया प्रकृत्या इदं जगदचेतनजातं धार्यते स्वतो विशीर्य(द्?) उत्तभ्यते "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतेः । नहि जीवरहितं धारयितुं शक्यमित्यभिप्रायः ॥ ५ ॥

**शं० टी०**—एवं सृष्ट्यादिहेतोः प्रकृतेरष्टधा स्वरूपं निरूप्य एतस्या एव प्रकृत्यन्तराद्भिन्नत्वं नाम च वदन् तामपि प्रकृतिं निर्दिशति—**अपरेयामिति** । या पूर्वोक्ता प्रकृतिः सेयमपरा नाम्ना चापरा परप्रकृतेर्भिन्ना निकृष्टा च अनृतत्वाज्जडत्वाद्दुःखात्मकत्वादशुद्धत्वात् पुरुषाधीनत्वात्तद्धेयत्वात् ज्ञानेन तन्निवर्त्यत्वाच्च तदपेक्षया निकृष्टत्वम् । पराया अपरावैलक्षण्यद्योतनार्थस्तुशब्दः । इत उक्तायाः प्रकृतेरन्यां भिन्नां विलक्षणां च परां शुद्धत्वेन तदुपजीव्यत्वेन सत्तास्फूर्तिप्रदत्वेन च श्रेष्ठाम् "परास्य शक्तिर्विविधैव श्रूयते" इतिप्रसिद्धां मे प्रकृतिं जीवभूतां क्षेत्रज्ञरूपां विद्धि विजानीहि, यया क्षेत्रज्ञरूपया परया प्रकृत्यान्तरङ्गस्थया जगदिदं धार्यते सर्वत्र देहेन्द्रियादिरूपं जगज्जीवेन खलु धार्यते अहंममेत्यभिमानेन तोषणपोषणरक्षणादिक्रिया संपाद्यते तथा बहिरपि घटोऽयं पटोऽयमिति सत्तास्फूर्तिप्रदानेन नामरूपादिभेदकल्पनया भोग्यत्वसंभावनया विनियोगेन च जगतो निर्वाहोऽप्यनेनैव क्रियत इत्यर्थः ॥ ५ ॥

**श्री० टी०**—अपरामिमां प्रकृतिमुपसंहरन्परां प्रकृतिमाह—**अपरेति** । अष्टधोक्ता या प्रकृतिः इयमपरा निकृष्टा जडत्वात् परार्थत्वाच्च । इतः सकाशात्परां प्रकृष्टामन्यां जीवभूतां जीवस्वरूपां मे प्रकृतिं विद्धि जानीहि । परत्वे हेतुः—यया चेतनया क्षेत्रज्ञरूपया स्वकर्मद्वारेणेदं जगद्धार्यते ॥ ५ ॥

**स० टी०**—प्रकृतेः क्षेत्ररूपाया अस्यास्तत्त्वं वदन्हरिः ॥ क्षेत्रज्ञलक्षणां प्राह प्रकृतिं चिद्घनां पराम् ॥ १ ॥ अष्टधोक्ता निकृष्टेयं प्रकृतिर्मलिनानृता ॥ संसारबन्धरूपत्वात्परार्थत्वाज्जडत्वतः ॥ २ ॥ इतोऽन्यां प्रकृतिं शुद्धां प्रकृष्टां चेतनात्मिकाम् ॥ ममात्मभूतां जानीहि परां क्षेत्रज्ञलक्षणाम् ॥ ३ ॥ यया क्षेत्रज्ञरूपिण्या सर्वस्यान्तःप्रविष्टया ॥ जगज्जडमिदं सर्वं धार्यते विशरारवम् ॥ ४ ॥ ५ ॥

**भा० टी०**—अचेतनवर्गस्य स्वस्मिन्कल्पितत्वं वक्तुं प्रकृतेरष्टधा परिणाममभिधाय विकारावच्छिन्नस्य कार्यकल्पस्य तथात्वं वक्तुं चैतन्यस्याविद्यावच्छिन्नस्य प्रकृतित्वमुक्तां प्रकृतिमनूद्य दर्शयति—**अपरेति**। अपरा निकृष्टाऽशुद्धत्वात् अनर्थकरत्वात् संसारस्वरूपत्वात् बन्धनात्मकत्वात् इयमष्टप्रकारा इतोऽस्या अन्यां कथमप्यनन्यत्वव्यावृत्त्यर्थस्तुशब्दः विशुद्धत्वात् प्रकृतिं परामुत्कृष्टां जीवभूतां क्षेत्रज्ञलक्षणां प्राणधारणनिमित्तभूतां ममात्मभूतां विद्धि जानीहि । नहि जीवरहितं जगद्धारयितुं शक्यमित्याशयेन प्रकृत्यन्तरादस्याः प्रकृतेरवान्तरविशेषमाह—

यया जगदन्तःप्रविष्टया अनेन "जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इतिश्रुतेर्धार्यते स्वतो विशीर्यज्जगदचेतनवर्गः विष्टभ्यते यथा महाबाहुना त्वया स्वतो विनश्यत् राज्यं क्षत्रधर्मं च धारयितुं शक्यते तथेति सूचयन्नाह—महाबाहो इति ॥ ५ ॥

प० टी०—इदानीं परापरत्वविभागमाह—**अपरेयमिति** । इयमष्टधा निरूपिता प्रकृतिरपरा निकृष्टा जडत्वादितः सकाशात्परामुत्कृष्टामन्यां जीवभूतां जानीहि । परत्वे हेतुः—यया चेतनया क्षेत्रज्ञरूपया स्वकर्मद्वारेणेदं जगद्धार्यते ॥ ५ ॥

श० टी०—न केवलं जडप्रकृतिरेव स्वकार्येण सह मद्वशा किंतु ब्रह्मादिजगन्माता चित्प्रकृतिरपीत्याह—**अपरेति** । यद्वा हरेः परत्वं वक्तुं तदुपयोगितया परावरवस्तुनी आह—**अपरेति** । इयं प्रागुक्तजडप्रकृतिः जीवा अप्युपलक्ष्यन्ते । जडप्रकृतिः जीवाश्चापराः अधमाः । इतस्तु जडप्रकृत्यादितस्तु अन्यां जीवभूतां सर्वजीवदेहेषु स्थित्वा तदीयान्प्राणांस्तद्देहेषु धारयतीति जीवेत्युक्ता । 'जीव प्राणधारणे' इति धातोः । सा च सा भूता च सर्वदा विद्यमाना च जीवभूता ताम् । 'भू सत्तायाम्' इति धातोः । मे मदधीनां प्रकृतिं चित्प्रकृतिं मुक्ता अप्युपलक्ष्यन्ते । श्रियं मुक्तांश्च परां परानुत्तमान्विद्धि । परत्वे हेतुः—ययेति श्रियेत्यर्थः । मुक्तानां पराभासत्वात् ययेत्येवोक्तम् । इदं ब्रह्मादिजगद्धार्यत इति ॥ ५ ॥

## एतद्योनीनि भूतानि सर्वाणीत्युपधारय ॥
## अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ ६ ॥

त० टी०—स्वकीयप्रकृतिद्वयकार्यत्वात्सर्वजगतः स्वकार्यत्वमाह—**एतदिति** । एते जडचेतने क्षेत्रक्षेत्रज्ञसंज्ञके प्रकृती योनी कारणभूते येषां तान्येतद्योनीनि चराचराणि सर्वाणि भूतानि प्राणवन्ति शरीराणि इत्युपधारय जानीहि । तत्राचेतनप्रकृतिः स्वरूपपरिणामेन चेतनरूपा तु स्वकर्मणा निमित्तेन तेषु प्रविश्य भोक्तृत्वेनाधारत्वेन च योनिः । नहि जीवं विना देहानां स्थितिर्वृद्धिश्च संभवति, ते च मदीये शक्तिरूपे, शक्तेः शक्तिमतः पृथक्स्थितिप्रवृत्त्यनर्हत्वात् मदधीने, शक्तिकार्यं शक्तिमत्येव पर्यवस्यति । अतोऽहमेव कृत्स्नस्य जगतः प्रभवः प्रभवत्यस्मादिति प्रभवः परमकारणमित्यर्थः । तथा प्रलयः प्रलीयतेऽस्मिन्ननेनेति वा प्रलयः संहारस्थानं संहारको वा कर्ता संहर्ता चाहमेवेत्यर्थः ॥ ६ ॥

म० टी०—उक्तप्रकृतिद्वये कार्यलिङ्गकमनुमानं प्रमाणयन् स्वस्य तद्द्वारा जगत्सृष्ट्यादिकारणत्वं दर्शयति—**एतद्योनीनीति** । एते अपरत्वेन परत्वेन च प्रागुक्ते क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनिर्येषां तान्येतद्योनीनि भूतानि भवनधर्मकाणि सर्वाणि चेतनाचेतनात्मकानि जनिमन्ति निखिलानीत्येवमुपधारय जानीहि कार्याणां चिदचिद्ग्रन्थिरूपत्वात्तत्कारणमपि चिदचिद्ग्रन्थिरूपमनुमिन्वित्यर्थः । एवं क्षेत्रक्षेत्रज्ञलक्षणे ममोपाधिभूते यतः प्रकृती भवतस्ततस्तद्द्वाराऽहं सर्वज्ञः सर्वेश्वरोऽनन्तशक्तिमायोपाधिः कृत्स्नस्य चराचरात्मकस्य जगतः सर्वस्य कार्यवर्गस्य प्रभव उत्पत्तिकारणं प्रलयस्तथा विनाशकारणं स्वाप्निकस्येव प्रपञ्चस्य मायिकस्य मायाश्रयत्वविषयत्वाभ्यां मायाव्यहमेवोपादानं द्रष्टा चेत्यर्थः ॥ ६ ॥

शं० टी०—उक्तस्य प्रकृतिद्वयस्य कार्यमाह—**एतदिति** । एतन्निरुक्तलक्षणं प्रकृतिद्वयं योनिः कारणं येषां तानि एतद्योनीनि भवन्ति जन्मना सत्तां भजन्तीति भूतानि ब्रह्मादिस्तम्बान्तानि जङ्गमानि स्थावराणि च वृत्तवर्तमानवर्तिष्यमाणानि जनिमन्ति सर्वाण्यपीत्युपधारय अवधारयेत्यर्थः । ननु त्वत्प्रकृत्योरेव जगत्कारणत्वे "यतो वा इमानि भूतानि" इत्यादिश्रुतिप्रसिद्धं जगत्कारणत्वं तव

कुत इत्याकाङ्क्षायां तत्कार्यं यज्जगज्जननं तन्मत्कार्यमेव भवति मद्व्याप्त्या खलु तयोर्जगज्जननशक्तिर्न तु केवलयोः यथा जीवव्याप्त्या देहस्य पुण्यपापक्रियाकरणशक्तिर्न तु केवलस्य तथात्वे तस्यैव स्वर्गादि-भोगप्रसङ्गात्ततस्तदुपाधिकस्य जीवस्यैव तत्करणं यथा तथैतद्द्वयोपाधिकस्य ममैव सर्वज्ञस्य सर्वजगज्जन-कत्वं यतः "सोऽकामयत बहुः स्याम्" इति ममैव बहुभवनसंकल्पः श्रूयते ततोऽहमेव सर्वजगत्कारणमित्याह-अहमिति । कृत्स्नस्य स्थूलस्य सूक्ष्मस्य कारणस्य च सर्वस्य जगतोऽहमेव प्रभवः प्रभवत्यस्मादिति प्रभवः उपादानं तथा प्रलयश्च उपसर्गवशात्प्रलीयते निष्पाद्यतेऽनेनेति प्रलयो निमित्तकारणं चोभयमप्यह-मेवेत्यर्थः ॥ ६ ॥

श्री० टी०—अनयोः प्रकृतित्वं दर्शयन्स्वस्य तद्द्वारा सृष्ट्यादिकारणत्वमाह--एतदिति । एते क्षेत्रक्षेत्रज्ञ-रूपे प्रकृती योनी कारणभूते येषां तान्येतद्योनीनि स्थावरजङ्गमात्मकानि सर्वाणि भूतानीत्युपधारय बु-ध्यस्व । तत्र जडा प्रकृतिर्देहरूपेण परिणमते चेतना तु मदंशभूता भोक्तृत्वेन देहेषु प्रविश्य स्वकर्मणा तानि धारयति । ते च मदीये प्रकृती मत्तः संभूते अतोऽहमेव कृत्स्नस्य सप्रकृतिकस्य जगतः प्रभवः प्रक-र्षेण भवत्यस्मादिति प्रभवः परं कारणमहमित्यर्थः । तथा प्रलीयतेऽनेनेति प्रलयः संहर्ताप्यहमेवेति भावः॥६॥

स० टी०—एते परापरे प्रोक्ते क्षेत्रक्षेत्रज्ञलक्षणे ॥ प्रकृती योनिरस्त्येषामेतद्योनीनि तानि वै ॥ १ ॥ चराचराणि सर्वाणि भूतानीत्युपधारय ॥ एवं चोपाधिभूते मे क्षेत्रक्षेत्रज्ञलक्षणे ॥ २ ॥ जगतः प्रकृती यस्मात्तद्द्वाराहं ततो हरिः ॥ सर्वज्ञोऽनन्तशक्तिश्च मायोपाधिरधीश्वरः ॥ ३ ॥ सर्वस्य कार्यवर्गस्य जगतो जन्मकारणम् ॥ विनाशकारणं तद्वत्स्थिरजङ्गमरूपिणः ॥ ४ ॥ स्वाप्निकस्येव विश्वस्य मायिकस्यास्य सर्वतः ॥ उपादानं तथा द्रष्टा मायावित्वादहं हरिः ॥ ५ ॥ ६ ॥

भा० टी०—उक्तप्रकृतिद्वये भूतानि चेतनाचेतनपरापरप्रकृतिकानि चेतनाचेतनरूपत्वात्सर्वेषां भूतानां,यथा मृन्मयो घटो मृत्प्रकृतिक इति कार्यलिङ्गकमनुमानं प्रमाणयंस्तद्द्वारा स्वस्य तत्पदार्थस्याभिन्ननिमित्तोपादानका-रणत्वं दर्शयति—एतदिति । एते परापरे क्षेत्रक्षेत्रज्ञलक्षणे प्रकृती योनी कारणभूते येषां सर्वेषां चेतनाचेत-नानां जरायुजाण्डजस्वेदजादीनां भूतानां तानि भूतान्येतद्योनीनीत्युपधारय निश्चयेन जानीहि यस्मान्मम प्रकृती सर्वेषां भूतानां कारणभूते तस्मात्स्वप्रकृतिद्वयद्वाराऽहं सर्वज्ञ ईश्वरो वेदान्तप्रतिपाद्यः कृत्स्नस्य समग्रस्य जगतः प्रभवः उत्पत्तिः प्रलयो विनाशः उत्पत्तिविनाशकारणमित्यर्थः । तथाच भगवतो व्यासस्य सूत्राणि—'जन्माद्यस्य यतः, प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्, अभिध्योपदेशाच्च, साक्षाच्चोभयाम्नानात्, आत्मकृतेः परिणामात्, योनिश्च हि गीयते' इति । पूर्वाधिकरणे ब्रह्म जिज्ञास्यमित्युक्तं किंलक्षणं पुनस्तद्ब्रह्मेत्यत आह भगवान् सूत्रकारः—जन्मोत्पत्तिरादिर्यस्य तदिदं जन्मस्थितिभङ्गं जन्मादि अस्य प्रत्यक्षादिसंनिधापितस्य विचित्रस्य जगतो यतो यस्मात्सर्वज्ञात् सर्वशक्तेः कारणाद्भवति तद्ब्रह्म । तथाच श्रुतिः "यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्ब्रह्म तद्विजिज्ञासस्व" इति तथाच जगज्जन्मादिकारणत्वं ब्रह्मणो लक्षणमुक्तं तच्च घटादीनां मृदादिवत् प्रकृतित्वे कुलालादिवन्निमि-त्तत्वे समानामित्यतो भवति विमर्शः किमात्मकं पुनर्ब्रह्मणः कारणत्वं स्यादिति तत्र निमित्तकारणत्वमेव केवलं स्यादिति प्रतिभाति कस्मादीक्षापूर्वककर्तृत्वश्रवणात् "स ईक्षांचक्रे । स प्राणमसृजत" इत्यादि-श्रुतिभ्यः । ईक्षापूर्वकं च कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु दृष्टं अनेककारकपूर्विका च क्रियाफल-सिद्धिर्लोके दृष्टा स च न्यायः आदिकर्तर्यपि युक्तः संक्रामयितुम् । ईश्वरत्वप्रसिद्धेश्च । ईश्वराणां हि राजवैव-स्वतादीनां निमित्तकारणत्वमेव केवलं प्रतीयते तद्वत्परमेश्वरस्यापि निमित्तकारणत्वमेव प्रतिपत्तुं युक्तम् । कार्यं चेदं जगत्सावयवमचेतनमशुद्धं च दृश्यते तस्य कारणेनापि तत्सदृशेनैव भाव्यं कार्यकारणयोर्दृष्ट-

टादिरूपयोः सादृश्यदर्शनात्। ब्रह्म च "निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्" इत्यादिश्रुतिभ्यो नैवंविधमवगम्यते पारिशेष्यात्ततोऽन्यदुपादानकारणमशुद्ध्यादिगुणकं स्मृतिप्रसिद्धमभ्युपेयम्। ब्रह्मकारणत्वश्रुतेर्निमित्तमात्रे पर्यवसानादित्येवं प्राप्त आह—प्रकृतिश्च। उपादानकारणं ब्रह्माभ्युपेयं निमित्तकारणं च। न केवलं निमित्तकारणमेव। तत्र हेतुमाह—प्रतिज्ञादृष्टान्तानुपरोधात् एवं प्रतिज्ञादृष्टान्तौ श्रौतौ नोपरुध्येते। प्रतिज्ञा तावत् उत तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्येकविज्ञानेन सर्वविज्ञानं प्रतिज्ञातं तत्रोपादानकारणे विज्ञाते सर्वं विज्ञातं भवति कार्यस्योपादानकारणाव्यतिरेकात् तक्षादिनिमित्तकारणात्प्रासादादेः कार्यस्य लोकेऽव्यतिरेकानुपलब्धेर्नास्ति निमित्तकारणाव्यतिरेकः कार्यस्य। दृष्टान्तोऽपि "यथा सौम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" इत्युपादानकारणगोचर एव आम्नायते। एवं यथासंभवं प्रतिवेदान्तं प्रतिज्ञादृष्टान्तौ प्रकृतित्वप्रसाधनौ प्रत्येतव्यौ। यतो वा इमानि भूतानि जायन्त इत्यत्र यत इतीयमपि पञ्चमी प्रकृतिलक्षणे एवापादाने द्रष्टव्या "जनिकर्तुः प्रकृतिः" इति विशेषस्मरणात्। निमित्तत्वं तु अधिष्ठात्रन्तराभावादधिगन्तव्यं प्रागुत्पत्तेरेकमेवाद्वितीयमित्यवधारणात् अधिष्ठात्रन्तरत्वे एकविज्ञानेन सर्वविज्ञानस्यासंभवेन प्रतिज्ञादृष्टान्तोपरोधस्यात्रापि प्रसङ्गाच्च तस्याधिष्ठात्रन्तराभावाद्ब्रह्मणः कर्तृत्वमुपादानान्तराभावात् प्रकृतित्वम्। ब्रह्मणः कर्तृत्वप्रकृतित्वे हेत्वन्तरमाह—अभिध्येति। 'सोऽकामयत बहु स्यां प्रजायेय' इति 'तदैक्षत बहु स्यां प्रजायेय' इतिचाभिध्यापूर्विकायाः स्वातन्त्र्यप्रवृत्तेः कर्तेति गम्यते। बहु स्यामिति प्रत्यगात्मविषयत्वात् बहुभवनाभिध्यानस्य प्रकृतिरिति। ब्रह्मणः प्रकृतित्वे हेत्वन्तरमाह—साक्षादिति "सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशे प्रत्यस्तं यन्ति" इतिश्रुत्या साक्षाद्ब्रह्मैव कारणमुपादायोभयोः प्रभवप्रलययोराम्नानात्। यद्धि यस्मादुत्पद्यते यस्मिंश्च प्रलीयते तत्तस्योपादानं प्रसिद्धं यथा घटरुचकादेः मृत्सुवर्णादि। तत्रैव हेत्वन्तरमाह—आत्मकृतेरिति। तदात्मानं स्वयमकुरुतेत्यात्मनः आत्मानमिति कर्मत्वस्य स्वयमकुरुतेति कर्तृत्वस्य च दर्शनात्। ननु पूर्वसिद्धस्य सतः कर्तृत्वेन व्यवस्थितस्य क्रियमाणत्वं कथमिति चेत्तत्राह—परिणामादिति। घटादिरूपेण मृदादिवत्पूर्वसिद्धस्यापि सत आत्मनो विशेषेणात्मना परिणामात् स्वयमिति विशेषणाच्च निमित्तान्तरानपेक्षत्वं च प्रतीयते। परिणामादिति पृथक्सूत्रं वा। इतश्च ब्रह्मप्रकृतिः "सच्चत्यच्चाभवन्निरुक्तं चानिरुक्तं च" इत्यादिना ब्रह्मण एव विकारात्मना परिणामाम्नानात्। तत्र हेत्वन्तरमाह—योनिरिति। "कर्तारमीशं पुरुषं ब्रह्मयोनिम्" इति "यद्भूतयोनिं परिपश्यन्ति धीराः" इति च वेदान्तेषु हि यस्माद्योनिश्च ब्रह्म गीयते योनिशब्दश्च प्रकृतिवचनः लोके समधिगतः पृथिवी योनिरौषधिवनस्पतीनामिति। यत्पुनरुक्तम् ईक्षापूर्वकं कर्तृत्वं निमित्तकारणेष्वेव कुलालादिषु लोके दृष्टं नोपादानेष्वित्यादि तत्प्रत्युच्यते। न लोकवदिह भवितव्यं नह्ययमनुमानगम्योऽर्थः शब्दगम्यता चास्यार्थस्यातो यथाशब्दमिह भवितव्यं शब्दश्चेक्षितुरीश्वरस्य प्रकृतित्वं प्रतिपादयतीत्यवोचाम तथाचेश्वरकारणत्ववादिश्रुत्यनुसारिणीनां 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। यत्तत्सूक्ष्ममविज्ञेयं, स ह्यन्तरात्मा भूतानां क्षेत्रज्ञश्चेति कथ्यते॥ तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तम। अव्यक्तं पुरुषे ब्रह्मन्निर्गुणे संप्रलीयते॥ अतश्च संक्षेपमिदं शृणुध्वं नारायणः सर्वमिदं पुराणः। स सर्गकाले च करोति सर्वं संहारकाले च तदत्ति भूयः॥ तस्मात्कायाः प्रभवन्ति सर्वे स मूलं शाश्वतिकः स नित्यः' इत्याद्यनेकासामीश्वरस्याभिन्ननिमित्तोपादानकारणतायाः प्रतिपादकानां स्मृतीनामेवार्थ उपादेयो नत्वचेतनं प्रधानं स्वतन्त्रं जगतः कारणम्, अण्वादयो जगत उपादानकारणमीश्वरस्तु निमित्तकारणमिति प्रतिपादकानां सांख्यादिस्मृतीनां गीतादिस्मृतीनां वेदानुरोधिनीनामुपादेयत्वावश्यकत्वेन तद्विरोधिनीनामेव हेयत्वौचित्यात्। ननु जगत उपादानं ब्रह्म नोपपद्यते चेतनादानन्दघनाच्छुद्धाद्ब्रह्मणोऽचेतनस्य सुखदुः-

खमोहात्मकस्य प्रीतिपरितापविषादादिहेतोः स्वर्गनरकाद्युच्चावचरूपस्याशुद्धस्यात्यन्तविलक्षणत्वात् विलक्षणानां चोपादानोपादेयभावो लोके नैव दृश्यते नहि घटादिकार्यं सुवर्णोपादानकं भवति न वा मुकुटादिकार्यं मृदुपादानकं तस्माज्जगत्सदृशमचेतनं प्रधानादिकमेव जगदुपादानमभ्युपेयम् । तदैक्षत बहुस्यामित्यादिचेतनकारणवादास्तु युक्तिविरोधादचेतनप्रधानपरतया उपचारादीश्वरस्य निमित्तत्वमात्रपरतया वा नेया अचेतनेऽपि चेतनवदुपचारदर्शनात् यथा "मृदब्रवीदापोऽब्रुवन्" इति "तत्तेज ऐक्षत ता आपः ऐक्षन्त ते हेमे प्राणा अहं श्रेयसे विवदमाना ब्रह्म जग्मुः" इति "तेह वाचमूचुस्त्वन्न उद्गाय" इत्यादिषु श्रुतिषु, लोकेऽपि प्रत्यासन्नपतनतां कूलस्यालक्ष्य कूलं पिपतिषतीत्यचेतनेऽपि चेतनवदुपचारो दृष्ट इति चेदुच्यते—किं यत्किंचिद्वैलक्षण्याज्जगदीश्वरोपादानकं नोपपद्यते उत बहुवैलक्षण्यात् । नाद्यः चेतनायतनात् शरीरात्तदनायतनाद्रोमयाद्याचातद्विधस्य केशादेर्वृश्चिकस्य चोत्पत्तिदर्शनात् । न द्वितीयः उदाहृतप्रकृतिविकारयो रूपादिभेदेन बहुवैलक्षण्यस्योपलभ्यमानत्वात् । किंच ययोः प्रकृतिविकारभावस्तयोः सादृश्यं किमात्यन्तिकमुत यत्किंचित् । आद्ये प्रकृतिविकारभाव एव प्रलीयेत द्वितीये तु शरीरादीनां पार्थिवत्वादिस्वभावस्य केशादिष्वनुवृत्तिरिव ब्रह्मणोऽपि सत्तालक्षणस्य स्वभावस्याकाशादावनुवृत्तिर्दृश्यते इति नानुपपत्तिः । किंचेश्वरकारणत्वनिषेधकं वैलक्षण्यं किमशेषस्येश्वरस्वभावस्याननुवर्तनमुत यस्यकस्यचित् उत चैतन्यस्य । आद्यपक्षद्वये उक्तमेव हेतुद्वयमनुसंधेयम् । न तृतीयः समस्तस्य वस्तुजातस्येश्वरप्रकृतिकत्ववादिनं प्रति यच्चैतन्येनानन्वितं तदनीश्वरप्रकृतिकं दृष्टमिति वक्तुमशक्यत्वेन दृष्टान्ताभावात् । ननु यदि चेतनं शुद्धं शब्दादिहीनं ब्रह्म तद्विपरीतस्याचेतनस्याशुद्धस्य स्थूलत्वसावयवत्वपरिच्छिन्नत्वादिधर्मकस्य शब्दादिमतश्च कार्यस्य कारणमिष्यते तर्हि प्रागुत्पत्तेः कार्यासत्वप्रसङ्गस्य सत्कार्यवादिनस्तवानिष्टस्यापत्तिः । किंच प्रलये ईश्वरेणाविभागमापद्यमानं कार्यं स्वीयेन धर्मेण कारणमपि दूषयेत् इति ब्रह्मणोऽप्यशुद्ध्यादिमत्त्वप्रसङ्गः । अपि चास्मिन्नीश्वरकारणवादेऽपरमप्यसमञ्जसं सर्वस्य विभागस्याविभागगतस्य पुनरुद्भवे नियमकारणाभावात् भोक्तृभोग्यादिविभागेनोत्पत्तिर्न प्राप्नोतीति । किंच सर्वेषां भोक्तॄणां ब्रह्मणैक्यं प्राप्तानां कर्मादिनिमित्तप्रलयेऽपि पुनरुत्पत्तिस्वीकारे मुक्तानामपि पुनरुत्पत्तिप्रसङ्गः । यदीदं जगत्प्रलये विभक्तमेव तिष्ठतीति चेत् प्रलयस्यैवासंभवापत्तिरिति चेदुच्यते यथेदानीं कार्यं कारणात्मना सत्तथा प्रागुत्पत्तेरपीति गम्यते । यत्तूक्तं प्रलय ईश्वरेणाविभागमापन्नमित्यादि तन्न, न दूषयतीत्यत्र दृष्टान्तस्य सत्त्वात्तद्यथा घटादयो मृदादिप्रकृतिका विकारा विभागावस्थायामुच्चावचमध्यमप्रभेदाः सन्तः पुनः कारणाविभागमापन्ना न कारणं स्वधर्मेण दूषयन्ति कारणे कार्यस्य स्वधर्मेण स्थित्यभ्युपगमप्रसङ्गाच्च । किंच कार्यस्य कारणानन्यत्वं न प्रलये एवापि तु त्रिष्वपि कालेषु "आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वं पुरस्तात् सर्वं खल्विदं ब्रह्म" इत्येवमादिश्रुतिष्वविशेषेण कार्यस्य कारणानन्यत्वश्रवणात् । कार्यस्य कारणानन्यत्वेऽपि यथा स्वयं प्रसारितया मायया मायावी त्रिष्वपि कालेषु न संस्पृश्यते तस्या अवस्तुत्वात् तथा परमात्मापि संसारमायया न संस्पृश्यत इति कल्पितस्य गुणेन दोषेण वाधिष्ठानस्यान्यथात्वायोगात् । यदपि सर्वस्य विभागस्येत्यादि तदपि न । यथा सुषुप्तिसमाध्यादावपि स्वाभाविक्यामविभागप्राप्तौ सत्यां मिथ्याज्ञानस्यानपोदितत्वात् पुनः प्रबोधे पूर्ववत् विभागो भवत्येवमिहापि भविष्यतीत्यदोषात् । एतेन मुक्तानां पुनरुत्पत्तिप्रसङ्गः प्रत्युक्तः सम्यग्ज्ञानेन मिथ्याज्ञानस्यापोदितत्वात् । किंच शब्दादिहीनात्प्रधानादेः शब्दादिमतो जगतो वैलक्षण्यान्न जगत्प्रधानादिप्रकृतिकमिति विलक्षणत्वान्नेदं जगत् ब्रह्मप्रकृतिकमित्याद्युक्तदोषाणां प्रधानादिकारणवादेऽपि तुल्यत्वादस्मिन्पक्षे न शङ्कितव्यास्तस्मादीश्वरकारणवाद एव युक्तियुक्तः श्रुतिस्मृतीतिहासपुराणतात्पर्यसिद्धः सर्वैर्मुमुक्षुभिरभ्युपेयः । एतेन चेतनकर्तृकसपीक्षणं प्रधानादावौपचारिकं मृदब्रवीदित्यादिव-

दिति प्रत्युक्तं मुख्यसंभवे औपचारिकाश्रयणानौचित्यात् "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति ईक्षितुर्जीवात्मभावेन प्रवेशश्रवणाच्च । मृदब्रवी-दित्येवंजातीयकया श्रुत्यापि मृदाद्यभिमानिन्यो वागाद्यभिमानिन्यश्च चेतना देवता वदनसंवदनादिषु चेतनोचितव्यवहारेषु व्यपदिश्यन्ते । कूलं पिपतिषतीत्यत्रापि कूलस्य पतनेच्छा चेतनरूपाधिष्ठानापेक्षा । प्रकृतित्वं चेश्वरस्य 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति सूत्रे साधितमेवेति । स्पष्टं चेदमाकरे ॥ ६ ॥

प० टी०—अथ तदेवाह—**एतद्योनीनीति** । एतत्परापरनामकं प्रकृतिद्वयमेव योनिः कारणं येषां तानि सर्वाणि स्थावरजङ्गमात्मकानि भूतानीत्यवधारय बुध्यस्व । तत्र जडा प्रकृतिर्देहरूपेण परिणमते चेतना तु मदंशभूता भोज्यत्वेन देहेषु प्रविश्य स्वकर्मणा तानि धारयति । ते मदीये प्रकृती मत्तः संभूतेऽतोऽहमेव कृत्स्नस्य सप्रकृतिकस्य जगतः प्रभवः प्रकर्षेण भवत्यस्मादिति प्रभवः परमकारणमह-मित्यर्थः । तथा प्रलीयतेऽनेनेति प्रलयः संहर्ताप्यहमेव । अत्र ऋक्शाखीया श्रुतिः—"य इमा विश्वा भुवनानि जुह्वदृषिर्होता न्यषीदत्पिता नः । स आशिषा द्रविणमिच्छमानः प्रथमच्छदवराँ आविवेश" इति । भाष्य-म्—'य इमेति त्रयोदशर्चं सूक्तं वैश्वकर्मदैवत्यं त्रैष्टुभम्' इति सर्वानुक्रमः । य इमेति । यो विश्वकर्मा पर-मेश्वर इमा इमानि विश्वा भूतानि जुह्वत् प्रलयकाले प्राप्ते पृथिव्यादीनिमान्सप्तलोकान् स्वात्मन्याहुतिप्रक्षे-पवत्संहरन् ऋषिरतीन्द्रियार्थद्रष्टा सर्वज्ञो होता संहाररूपस्य होमस्य कर्ता नोऽस्माकं पिता जनको निषसाद स्वरूपेण स्थितवान् लोकान् संहृत्य स्वयमेक एवासीत् । आत्मा वा इदमग्र एक एवासीत्सदेव सौम्येद-मग्र आसीदित्यादिश्रुतेश्च । स तादृशः परमेश्वर आशिषा बहु स्यां प्रजायेयेत्येवंरूपया पुनः सिसृक्षया द्रविणमिच्छमानो धनोपलक्षितजगद्भोगमाकाङ्क्षमाणः प्रथमच्छत् प्रथमं मुख्यं निष्प्रपञ्चं पारमार्थिकं रूपमा-वृण्वन् अवरान् स्वसृष्टान् प्राणिहृदयप्रवेशानाविवेश जीवरूपेणाविष्टवान् । अत्र सृष्टिकाले प्रथमच्छत्पदेन भूतेष्वात्मानं जुहवामीति वाजसनेयब्राह्मणार्थो दर्शितः । ब्राह्मणं च "हन्ताहं भूतेष्वात्मानं जुहवामि भूतान्यात्मनीति तत्सर्वेषु भूतेष्वात्मानं हुत्वा" इति ॥ ६ ॥

रा० टी०—ननु देहेन्द्रियादेरपि सत्त्वेन प्रकृत्योरेवेशाधीनत्वमहिमोक्तिः कथमित्यतो देहादिसर्वकार्यजा-तस्य प्रकृत्योरेवान्तर्भाव इति दर्शयितुमाह—**एतदिति** । शरीरेन्द्रियविषयलक्षणकार्यसहितानि जीवजातरूप-भूतानि सर्वाण्येतद्योनीनि जडाजडप्रकृतिकारणकानि यथासंभवं तदुत्पन्नानीत्युपधारय जानीहि । पूर्वं प्रकृत्योरवरत्वं परत्वं च वाक्यभेदेनोक्त्वा म इति स्वत्वशत्वं चोक्त्वा ययेदं धार्यते जगदिति एत-द्योनीनीति जगद्धारकत्वकारणत्वे कथिते । तत्र प्रकृती एव भगवद्वशे जगज्जन्मस्थितिविलयास्तु प्रकृत्यधीना एव नेशाधीना इतिप्रतीतिनिरासार्थमाह—**अहमिति** । प्रभवप्रलययोः सत्ताप्रतीतिकारणत्वादहं प्रभव प्रलयश्चेत्युक्तिः । प्रभवप्रलयभोक्तृत्वाच्च तथोक्तिः । जगत्प्रभवादिभोक्तृत्वं च यथा पुत्रादिप्रभवो रिपुप्रलय-श्चोपलब्धः सुखहेतुरित्युपलब्धुः पित्रादेस्तद्भोक्तृत्वं तथा हरेरिति ज्ञेयम् । प्रभवाद्युपलब्धेर्भगवत्सुखहेतुत्वं च 'आगमिष्यत्सुखं चापि तद्वास्त्येव सदापि तु । तथाप्यचिन्त्यशक्तित्वाज्जातं सुख(मितीर्यते)मितीव च' इतिस्मृत्युक्तदिशा ज्ञेयम् । प्रकृतिद्वारा कृत्स्नजगत्कर्ताहमेवेति भावः ॥ ६ ॥

**मत्तः परतरं नान्यत्किंचिदस्ति धनंजय ॥**
**मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ ७ ॥**

त० टी०—सर्वजगद्योनिभूतप्रकृतिद्वयाधिष्ठातृत्वादात्मनः सर्वोत्तमत्वं सर्वाधारत्वं चाह—**मत्त इति** । यतः सर्वजगद्योनीभूते चेतनाचेतने मदाश्रये, तस्मान्मत्तः सर्वेश्वरात्परतरं श्रेष्ठं जगत्कारणभूतं

स्वतन्त्रं किंचिदपि वस्तु नास्ति हे धनंजय " न तत्समश्चाभ्यधिकश्च दृश्यते । स कारणं कारणाधिपाधिपः सर्वस्य वशी सर्वस्येशानः स विश्वकृद्विश्वकृदात्मयोनिः प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादिश्रुतिभ्यः। 'कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्ययः । कृष्णस्य हि कृते भूतमिदं विश्वं चराचरम्' इति स्मृतेश्च । सर्वस्याश्रयोऽप्यहमेवेत्याह–मयीति । सर्वमिदं चिज्जडजातं जगत् सर्वस्यात्मतयाऽवस्थिते मयि प्रोतमाश्रितम् । तत्र दृष्टान्तः–सूत्रे मणिगणा इवेति । यथा मणीनां स्थितिप्रवृत्ती सूत्राधीने तथा सर्वस्य स्थितिप्रवृत्ती मदधीने " यच्च किंचिज्जगत्यस्मिन्दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः " इति श्रुतेः 'बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम्' इति स्मृतेश्च ॥ ७ ॥

म० टी०–यस्मादहमेव मायया सर्वस्य जगतो जन्मस्थितिभङ्गहेतुस्तस्मात्परमार्थतः–मत्तः परतरमिति। निखिलदृश्याकारपरिणतमायाधिष्ठानात्सर्वभासकान्मत्तः सद्रूपेण स्फुरणरूपेण च सर्वानुस्यूतात्स्वप्रकाशपरमानन्दचैतन्यघनात्परमार्थसन्मात्रात्स्वप्रदृश इव स्वाप्निकं मायाविन इव मायिकं शुक्तिशकलावच्छिन्नचैतन्यादिवत्तदज्ञानकल्पितं रजतं परतरं परमार्थसत्यमन्यत्किंचिदपि नास्ति हे धनंजय मयि कल्पितं परमार्थतो न मत्तो भिद्यत इत्यर्थः 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति न्यायात् व्यवहारदृष्ट्या तु मयि सद्रूपे स्फुरणरूपे च सर्वमिदं जडजातं प्रोतं ग्रथितं मत्सत्तया सदिव मत्स्फुरणेन च स्फुरदिव व्यवहाराय मायामयाय कल्पते । सर्वस्य चैतन्यग्रथितत्वमात्रे दृष्टान्तः सूत्रे मणिगणा इवेति । अथवा सूत्रे तैजसात्मनि हिरण्यगर्भे स्वप्नदृशि स्वप्नप्रोता मणिगणा इवेति सर्वांशे दृष्टान्तो व्याख्येयः ।अन्ये तु 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इति सूत्रोक्तस्य पूर्वपक्षस्योत्तरत्वेन श्लोकमिमं व्याचक्षते मत्तः सर्वज्ञात्सर्वशक्तेः सर्वकारणात्परतरं प्रशस्यतरं सर्वस्य जगतः सृष्टिसंहारयोः स्वतन्त्रं कारणमन्यन्नास्ति हे धनंजय यस्मादेवं तस्मान्मयि सर्वकारणे सर्वमिदं कार्यजातं प्रोतं ग्रथितं नान्यत्र । सूत्रे मणिगणा इवेति दृष्टान्तस्तु ग्रथितत्वमात्रे न तु कारणत्वे कनके कुण्डलादिवदिति तु योग्यो दृष्टान्तः॥ ७॥

शं० टी०–केचिद्ब्रह्मणो व्यतिरिक्तं कारणं कल्पयित्वा जगतस्तत्कारणाधारत्वं श्रुतिविरुद्धं वर्णयन्ति तन्मतनिरासं कुर्वन् सर्वाधारोऽहमेवेत्याह–मत्त इति । मत्तः प्रकृत्युपाधिकात् सत्यादिलक्षणात्परमेश्वरात्परतरं कारणं सांख्यपरिकल्पितप्रधानशब्दवाच्यं नैयायिकपरिगृहीतपरमाणुलक्षणं वा अन्यद्वा किंचिदपि नास्ति प्रकृत्यादीनां कारणत्वे प्रमाणाभावात् । " यतो वा " इत्यादिश्रुतिरेव प्रमाणमिति चेन्न, " ईक्षतेर्नाशब्दम्" इत्याद्यधिकरणजातेन जगत्कारणस्य चेतनत्वादिधर्मवत्त्वप्रतिपादनेन श्रुत्यर्थाविषयतया प्रकृत्यादेः कारणत्वस्य निरस्तत्वात् । "यः सर्वज्ञः सर्वविद्यस्य ज्ञानमयं तपः" इति "एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य, प्रभवाप्ययौ हि भूतानाम् " इत्यादिश्रुतिप्रसिद्धत्वादहमेव चेतनः सर्वज्ञः सर्वजगत्कारणमित्यर्थः । किंच कस्मिन्सर्वे संप्रतिष्ठिता भवन्तीत्युपक्रम्य श्रुत्या रसातलादिब्रह्मान्तान् सर्वलोकानपोह्य सर्वे लोका आत्मनि ब्रह्मणि मणय इवोताः प्रोताश्चेति सर्वलोकानां सर्वात्मनि ब्रह्मण्येवोतप्रोतत्वप्रतिपादनाल्लोकानां प्रकृत्याद्याधारत्वं मिथ्या कर्तुमहमेव सर्वाधार इत्याह–मयीति । सूत्रे मणिगणा इव मय्येव स्वकारणे सर्वाधिष्ठाने ब्रह्मणीदं चराचरात्मकमव्याकृतादि स्थूलान्तं जगत्सर्वं प्रोतमनुगतं भवति तन्तुषु पटवत् सूत्रे मणिगणवत् मत्सत्तामेवानुवृत्त्य तिष्ठति न पृथग्विद्यत इत्यर्थः । ननु दृष्टान्ते तावदस्य मण्याधारसूत्रस्य तत्र प्रोतसौवर्णादिमणीनां च यथा भेदस्तथा त्वयि प्रोतस्य जगतस्तदाधारस्य च तवापि भेदो युक्त एवेति चेन्न, सूक्ष्मबुद्ध्या युक्त्या च विचार्यमाणे भेदादर्शनात् । स्थूलबुद्धीनां सूत्रस्य मणीनां च भेदे प्रतीयमानेऽपि सूक्ष्मबुद्धीनां युक्त्या विचार्यमाणे सूत्रमणिगणयोराधाराधेययोर्द्वयोरपि भौतिकत्वेनैक-

त्वमेवावगम्यते न तु भेदः । तत्र रूपव्यक्तिविशेषकृतो भेदो विद्यत एवेति चेन्न, तस्य मूढव्यवहृत्यै कल्पितत्वेनाप्रामाणिकत्वाद्रूपत्वावच्छिन्नरूपस्य सर्वत्रैकत्वे सिद्धे तद्विशेषस्यौपाधिकत्वेनास्वाभाविकत्वात् मिथ्यात्वोपपत्तेः चित्रपटेऽपि सर्वत्रानुगतरूपस्यैकत्वदर्शनाद् भौतिकत्वसामान्यस्य सर्वानुगतत्वात्तद्विशिष्टस्य वस्तुन एकत्वोपपत्त्या सर्वमिदं भौतिकमिति सर्वत्र भौतिकैकप्रत्यये जाते तत्र व्यक्तिविशेषकल्पितप्रत्ययानुदयाद् अयं समुद्र इत्यत्र तरङ्गफेनबुद्बुदादिप्रत्ययादर्शनात् प्रधाने गृहीतेऽप्रधानग्रहणस्यान्याय्यत्वाद्व्यक्तिविशेषकृतभेदाऽसिद्धेः यथैकस्या एव भूमेः स्वास्थ्यगृहादिकल्पनया भेदव्यवहारस्तथा भौतिकत्वेनैकत्वेऽपि सूत्रादौ सूत्रमिति मणिरिति भेदो व्यवहारायैव कल्पितो न वास्तवस्तथात्वे भौतिकत्वाभावप्रसङ्गाद् भेदस्य निरूपयितुमशक्यत्वाच्च तदेकत्वमेवाभ्युपगन्तव्यं यथा दृष्टान्ते तथैव दार्ष्टान्तिकेऽपि ब्रह्मजगतोरप्येकत्वमेवाङ्गीकर्तव्यमन्यथा ब्रह्मैवेदं सर्वमित्याद्यद्वैतप्रतिपादकश्रुतिविरोधप्रसङ्गादित्यर्थः ॥ ७ ॥

**श्री० टी०**—यस्मादेवं तस्मात्-**मत्त इति** । मत्तः सकाशात्परतरं श्रेष्ठं जगतः सृष्टिसंहारयोः स्वतन्त्रं कारणं किंचिदपि नास्ति । स्थितिहेतुरप्यहमेवेत्याह-**मयीति** । मयि सर्वमिदं जगत् प्रोतं ग्रथितमाश्रितमित्यर्थः । दृष्टान्तः स्पष्टः ॥ ७ ॥

**स० टी०**—यतोऽहं सर्वजगतो जन्मस्थित्यादिकारणम् ॥ ततो मत्तो महामायाधिष्ठानाज्जगदीशितुः ॥ १ ॥ सत्ता स्फुरणरूपेणानुस्यूतात्स्वप्रकाशतः ॥ वस्तु सत्यं परं किंचिन्नान्यदस्ति धनंजय ॥ २ ॥ न मय्यारोपितं मत्तो भिद्यते परमार्थतः ॥ व्यवहारदृशा सर्वं सच्चिद्रूपे मयीश्वरे ॥ ३ ॥ जडजातमिदं सर्वं प्रोतं मत्सत्तया ततम् ॥ प्रोतत्वमात्रे दृष्टान्तः सूत्रे मणिगणा इति ॥ ४ ॥ स्वाप्निका मणयो यद्वत्स्वप्रद्रष्टरि कल्पिताः ॥ सूत्रे तैजसरूपेऽस्तु सर्वांशे वा निदर्शनम् ॥ ५ ॥ ७ ॥

**भा० टी०**—यस्मादेवं तस्मान्मत्तः परमेश्वरात्परतरमन्यत्कारणान्तरं किंचिन्नास्ति न विद्यते अहमेव सर्वस्मात्परः जगत्कारणमित्यर्थः। परतराभावप्रदर्शनेन 'परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः' इति सूत्रोक्ता शङ्कापि परिहृता। परमेश्वरात्परमन्यदस्ति कुतः अयमात्मा स सेतुरिति सेतोश्चतुष्पादित्याद्युन्मानस्य सता सोम्य तदा संपन्नो भवतीति संबन्धस्य अथ य एषोऽन्तरादित्ये य एषोऽन्तरक्षिणीति भेदस्य व्यपदेशेभ्य इति तदर्थः । तथाच सिद्धान्तसूत्राणि 'सामान्यात्तु, बुद्ध्यर्थः पादवत्, स्थानविशेषात्प्रकाशादिवत्, उपपत्तेश्च, तथान्यप्रतिषेधात्, अनेन सर्वगतत्वमायामशब्दादिभ्यः' इति । तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः न ब्रह्मणोऽन्यत् किंचिद्भवितुमर्हति प्रमाणाभावात् नह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितमनन्यत्वं च कारणात्कार्यस्य । न च ब्रह्मव्यतिरिक्तं किंचिदजं संभवति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमित्यवधारणादेकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानान्न ब्रह्मव्यतिरिक्तवस्त्वास्तित्वमवकल्पते । ननु सेत्वादिव्यपदेशो ब्रह्मव्यतिरिक्तत्वं सूचयतीत्युक्तं तत्प्रत्युच्यते सेतुसामान्यात्सेतुशब्द आत्मनि प्रत्युक्त इति श्लिष्यते जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनोऽतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते सेतुं तीर्त्वेत्यपि तरतेरतिक्रमासंभवात् प्राप्नोत्यर्थे एव वर्तते यथा व्याकरणं तीर्ण इति प्राप्त उच्यते नातिक्रान्तस्तद्वत् उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः किंतु बुद्ध्यर्थ उपासनार्थः पादवत् यथा मनआकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वाक्प्राणचक्षुःश्रोत्राणीति मनःसंबन्धिनः पादाः कल्पिताः चत्वारश्चाग्निवायुसूर्यदिशः आकाशसंबन्धिनः आध्यानाय तद्वत् । यद्वा व्यवहाराय कार्षापणपादविभागकल्पनावत् । यदप्युक्तं संबन्धव्यपदेशाद्भेदव्यपदेशाच्च परमेश्वरात्परमिति तदप्यसत्, यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते संबन्धव्यपदेशे तावदयमर्थः बुद्ध्याद्युपाधिस्थानविशेषयोगात् स्वप्नजागरयोर्विज्ञानस्योपाध्युपशमे

सुषुप्तौ य उपशमः स परमात्मना संबन्ध इत्युपाध्यपेक्षयोपचर्यते न मितत्वापेक्षया तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयैव न स्वरूपभेदापेक्षया । तत्र दृष्टान्तमाह—प्रकाशवत् । यथैकस्यैव सूर्यादिप्रकाशस्य सूचीपाशादिषूपाध्यपेक्षयैव संबन्धभेदव्यपदेशौ तद्वत् मुख्य एव संबन्धादिः किं न स्यादित्याशङ्क्याह—उपपत्तेश्च उपचारस्यैवोपपत्तेश्च । एवं सेत्वादिव्यपदेशान्परपक्षे हेतूनुन्मथ्य संप्रति स्वपक्षं हेत्वन्तरेणोपसंहरति—तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते । तथाहि "स एवाधस्तादहमेवाधस्तादात्मैवाधस्तात्स एवोपरिष्टात् सर्वं तं परादात् योन्यत्रात्मनः सर्वं वेद ब्रह्मैवेदं सर्वमात्मैवेदं सर्वं नेह नानास्ति किंचन यस्मात्परं नापरमस्ति किंचित्तेदतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्" इत्येवमादीनि स्वप्रकरणस्थानि अन्यार्थत्वेन परिणेतुमशक्यमानानि ब्रह्मव्यतिरिक्तं वस्त्वन्तरं वारयन्ति सर्वान्तरश्रुतेश्च न परमात्मनोऽन्तरोऽन्य आत्मास्तीत्यवधार्यते अनेन सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति । सर्वगतत्वं चास्यायामशब्दादिभ्यो विज्ञायते आयामशब्दो व्यापिवचनः ' यावान्वायमाकाशस्तावानेषोऽन्तर्हृदय आकाशः, आकाशवत्सर्वगतश्च नित्यः, ज्यायान् दिवो ज्यायानन्तरिक्षात्, नित्यः, सर्वगतः स्थाणुः' इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनो बोधयन्तीति दिग्विजये उत्तरगोग्रहे च राज्ञो भीष्मादींश्च विजित्य धनमाहृतवतस्त्वत्तः परतर एतादृशकर्मकर्ताऽन्यो यथा नास्ति तथा मत्तः परमन्यज्जगत्कारणं नास्तीति ध्वनयन् संबोधयति धनंजयेति । यत एवं तस्मान्मयि परमेश्वरे सर्वमिदं कार्यकारणात्मकं जगत्प्रोतं ग्रथितं यथा सूत्रे मणिगणा ग्रथितास्तद्वत्, अनेन स्थितिहेतुत्वमपि स्वस्यैव दर्शितम् । केचित्तु यस्मादहमेव मायया सर्वस्य जगतो जन्मस्थितिभङ्गहेतुस्तस्मात्परमार्थतो मत्तो निखिलदृश्याकारपरिणतमायाधिष्ठानात्परमार्थसत्यात्परतरं परमार्थसत्यमन्यत्किंचिन्नास्ति मयि कल्पितं परमार्थतो मत्तो न भिद्यत इत्यर्थः । 'तदनन्यत्वमारम्भणशब्दादिभ्यः' इति न्यायात् । व्यवहारदृष्ट्या तु मयि सद्रूपे स्फुरणरूपे च सर्वमिदं जडजातं प्रोतं ग्रथितं मत्सत्तया सदिव मत्स्फुरणेन स्फुरदिव व्यवहाराय मायामयाय कल्पते । सर्वस्य चैतन्यग्रथितत्वमात्रे दृष्टान्तः सूत्रे मणिगणा इव । अथवा सूत्रे तैजसात्मनि हिरण्यगर्भे स्वप्नदृशि स्वप्नप्राप्ता मणिगणा इव इति सर्वांशेऽपि दृष्टान्तो व्याख्येय इति वर्णयन्ति । अस्मिन्पक्षे नेह नानास्ति किंचनेतिवन्मत्तोऽन्यत् किंचिन्नास्तीत्येतावतैव मत्तः परमार्थसतोऽन्यद्भिन्नं किंचिद्वस्तु परमार्थसन्नास्तीत्यर्थस्य निर्वाहे मयि सर्वमिदं कल्पितं मनसि स्वप्नपदार्था इवेति वक्तव्ये परतरपदस्य प्रयोजनं प्रोतमित्यादेः स्वारस्यं च चिन्त्यम् ॥ ७ ॥

प० टी०—यस्मादेवं तस्मात्—**मत्त इति** । मत्तः सकाशात् परतरमुत्कृष्टमन्यत्किंचिदपि नास्ति यद्भासते तदवरमेव । पूर्वं प्रभवलयनिमित्तमहमेवास्मीत्युक्तमिदानीं स्थितिनिमित्तमहमेवास्मीत्याह—**मयीति** । इदं सर्वं विचित्रं भूतजातं मयि प्रोतम् । किमिव सूत्रे मणिगणा इव । गणशब्देन विचित्रवर्णप्रमाणाकृतयो मणय एकस्मिन् सूत्रे प्रोतास्तिष्ठन्ति तद्वत् ॥ ७ ॥

रा० टी०—ननु परावरप्रकृत्योः स्वाधीनत्वोक्त्यैव स्वस्यावरत्वस्य परत्वस्य चायोगात् अवरत्वस्य बाधादुत्तरवाक्याविरोधायोगात् परतरत्वशब्दितं सर्वोत्तमत्वं तव प्राप्तमित्यस्तु जगत्पितृत्वं तद्वत्सर्वोत्तमान्तरस्यापि जगत्पितृत्वाद्युपपत्तेः कथमहमेव कृत्स्नस्येत्याद्युक्तिरुपपद्यत इत्यत आह—**मत्त इति** । मत्तोऽन्यत्परतरशब्दितं सर्वोत्तमं किंचिनास्ति येनाहमेवेत्युक्तिरयुक्ता स्यात् । यद्वा अन्यत्परतरं नेत्युक्त्या अर्थात् तात्पर्यगत्या लब्धमहमेव परतर इत्यादौ योजयित्वा पश्चान्मत्त इत्यादि योज्यम् । तथाचावतारिकायामुक्तदिशा लब्धस्यापि परतरत्वस्यात्रोक्तिः अपरतत्त्वं यथा भूम्यादिभेदेनानेकविधं यथा चापरतत्त्वं श्रीदेवीमुक्तभेदेनानेकं तथा परतरमप्यनेकविधमुतैकमेवेति जिज्ञासायामहमेक एवेति ज्ञापयितुमिति ध्येय(ज्ञे)

यम् । न केवलं जगतः प्रभवप्रलयौ मदधीनौ किंतु स्थितिरपि मदधीनेत्याह—मयीति । इदं सर्वं प्रकृत्यादिजगत् ॥ ७ ॥

**रसोऽहमप्सु कौन्तेय प्रभाऽस्मि शशिसूर्ययोः ॥**
**प्रणवः सर्ववेदेषु शब्दः खे पौरुषं नृषु ॥ ८ ॥**

**त० टी०**—एवं सर्वात्मत्वादात्मनः सर्वरूपतां दर्शयितुं सर्ववस्तुसाररूपतामाह—**रसोऽहमित्या**दिपञ्चभिः । हे कौन्तेय अप्सु सारभूतो रसो रसतन्मात्ररूपेणापामाश्रयोऽहं स्थितः । तथा शशिसूर्ययोः प्रभाऽहमस्मि, तयोः प्रकाशरूपेण स्थितः । सर्ववेदेषु वैखरीरूपेणाविर्भूतेषु तन्मूलभूतः प्रणव ॐकारोऽहमस्मि । खे आकाशे शब्दः शब्दतन्मात्ररूपोऽहमस्मि । नृषु पुरुषेषु पौरुषं पुरुषसारभूतं यतः पुरुषत्वख्यातिः सोऽहमित्यर्थः ॥ ८ ॥

**म० टी०**—अबादीनां रसादिषु प्रोतत्वप्रतीतेः कथं त्वयि सर्वमिदं प्रोतमिति च न शङ्क्यं रसादिरूपेण ममैव स्थितत्वादित्याह पञ्चभिः श्लोकैः—**रसोहमप्सु कौन्तेय** इति । रसः पुण्यो मधुरस्तन्मात्ररूपः सर्वासामपां सारः कारणभूतो योऽप्सु सर्वास्वनुगतः सोऽहम् हे कौन्तेय तद्रूपे मयि सर्वा आपः प्रोता इत्यर्थः । एवं सर्वेषु पर्यायेषु व्याख्यातव्यम् । इयं विभूतिराध्यानायोपदिश्यत इति नातीवाभिनिवेष्टव्यम् तथा प्रभा प्रकाशः शशिसूर्ययोरहमस्मि प्रकाशसामान्यरूपे मयि शशिसूर्यौ प्रोतावित्यर्थः । तथा प्रणव ओङ्कारः सर्ववेदेष्वनुस्यूतोऽहम “ तद्यथा शङ्कुना सर्वाणि पर्णानि संतृण्णान्येवमोङ्कारेण सर्वा वाक् ” इति श्रुतेः संतृण्णानि ग्रथितानि सर्वा वाक् सर्वो वेद इत्यर्थः । शब्दः पुण्यस्तन्मात्ररूपः खे आकाशेऽनुस्यूतोऽहम् । पौरुषं पुरुषत्वसामान्यं नृषु पुरुषेषु यदनुस्यूतं तदहम् । सामान्यरूपे मयि सर्वे विशेषाः प्रोताः श्रौतैर्दुन्दुभ्यादिदृष्टान्तैरिति सर्वत्र द्रष्टव्यम् ॥ ८ ॥

**शं० टी०**—तस्मादेव “यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यं यदादित्यस्य रोहितं रूपम्” इत्यादिश्रुत्युक्तप्रकारेण रसप्रभाप्रणवादिरूपेणाबादेः कारणात्मना तिष्ठतः स्वस्मात् पृथगबर्कादीनां सत्ताऽभावं प्रतिपादयति स्वाऽभिन्नत्वसिद्धये—**रसोऽहमिति** । अहमप्सु रसोऽस्मि रसरूपेण तिष्ठाम्यतो रसात्मके मयि स्वकारणे आपः प्रोता मदात्मना मदेकसत्ताः सन्त्यो मयि तिष्ठन्ति मृत्कार्यस्य घटस्य मृदात्मना मृद्व्यवस्थानं प्रत्यक्षसिद्धं तद्वत् न तु पृथग्विद्यन्त इत्यर्थः । तथा शशिसूर्ययोरहं प्रभास्मि तत्कारणप्रभारूपेण तयोस्तिष्ठामि ततस्तदात्मके स्वकारणे मयि तौ प्रोतौ मदेकसत्ताकौ भूत्वा तौ मदात्मना मय्येव विद्येते नतु मत्तः पृथगित्यर्थः । सर्ववेदेषु ऋगादिष्वहं प्रणवोऽस्मि ॐकाररूपेण तिष्ठामि प्रणवात्मके मयि स्वकारणे सर्वे वेदाः प्रोता मदेकसत्ताका भूत्वा मयि प्रणवे तिष्ठन्तीत्यर्थः । खे व्योम्न्यहं शब्दोऽस्मि तत्कारणशब्दरूपेण तिष्ठामि । तदात्मके मयि स्वकारणे खं प्रोतं ततो मदेकसत्ताकं सत् मदात्मना मयि तिष्ठति । नृषु पुरुषेष्वहं पौरुषमस्मि अहं पौरुषं पुरुषभावः पुंलक्षणं येनायं पुमानिति ज्ञायते तदात्मके मयि पुरुषाः प्रोताः मदेकसत्तया मदभिन्नाः सन्तो मयि तिष्ठन्तीत्यर्थः ॥ ८ ॥

**श्री० टी०**—जगतः स्थितिहेतुत्वं प्रपञ्चयति—**रसोऽहमिति** पञ्चभिः । अप्सु रसोऽहं रसतन्मात्ररूपया विभूत्या तदाश्रयत्वेनाप्सु स्थितोऽहमित्यर्थः । तथा शशिसूर्ययोः प्रभास्मि चन्द्रेऽर्के च प्रकाशरूपया विभूत्या तदाश्रयत्वेन स्थितोऽहमित्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । सर्वेषु वेदेषु वैखरीरूपेषु तन्मूलभूतः प्रणव ओङ्कारोऽस्मि । खे आकाशे शब्दतन्मात्ररूपोऽस्मि । नृषु पुरुषेषु पौरुषमुद्यमोऽस्मि उद्यमे हि पुरुषास्तिष्ठन्ति ॥ ८ ॥

स० टी०-रसादिषु जलादीनां ग्रथितत्वप्रतीतितः ।। त्वयि सर्वं कथं प्रोतं नेति शङ्क्यं कुतः शृणु ।। १ ।। रसोऽस्म्यहमपां सार आपः प्रोता रसे मयि ।। इन्दुर्कयोः प्रभासारः प्रभारूपे च तौ मयि ।। २ ।। प्रोतौ तथैव वेदेष्वोङ्कारोऽनुस्यूत ईश्वरः ।। प्रोतं शब्दात्मनि व्योम मयीशे सर्वकारणे ।। ३ ।। यतः पुंबुद्धिरेतेषां नराणां पौरुषं हि तत् ।। तदात्मनि मयि प्रोताः पुरुषाः परमेश्वरे ।। ४ ।। ८ ।।

भा० टी०-नन्वबादीनां रसादिषु प्रोतत्वप्रतीतेस्त्वय्येव सर्वं कथं प्रोतमित्याशङ्क्य रसादिरूपे मय्येवाबादिकं प्रोतमित्याह-रस इति । अपां यः सारो रसः पुण्यो गन्ध इति गन्धस्य पुण्यत्वप्रदर्शनं रसादेरपि पुण्यत्वोपलक्षणार्थं रसः पुण्यो मधुरस्तस्मिन् रसरूपे मयि आपः प्रोताः कौन्तेयेति संबोधयन् अस्मन्मातुलेये त्वयि कथं सर्वं प्रोतमित्यसंभावनां मा कुर्विति ध्वनयति । तथा प्रभा प्रकाशस्तस्मिन्प्रकाशरूपे मयि शशिसूर्यौ प्रोतौ तथा सर्ववेदसारभूते प्रणवे ओङ्काररूपे मयि सर्वे वेदाः प्रोताः । तथा आकाशानुस्यूते पुण्ये शब्दे शब्दतन्मात्ररूपे मयि आकाशः प्रोतस्तथा पौरुषं पुरुषस्य भावः पुंबुद्धिः पुरुषसारभूता तस्मिन्पौरुषरूपे मयि पुरुषाः प्रोताः ।। ८ ।।

प० टी०-अथ जगत्स्थितिहेतुत्वमाह-रसोऽहमिति पञ्चभिः । अप्सूदकेषु रसोऽहमस्मि रसतन्मात्रतया विभूत्याश्रयत्वेन स्थितोऽस्मि । तथा शशिसूर्ययोः प्रभास्मि चन्द्रेऽर्के वा प्रकाशरूपया विभूत्यास्मि । एवमुत्तरत्रापि द्रष्टव्यम् । सर्ववेदेषु वैखरीरूपेण प्रणवो वागुज ॐकारोऽस्मि । खे आकाशे शब्दतन्मात्ररूपोऽस्मि । नृषु पुरुषेषु पौरुषमुद्योगरूपोऽस्मि ।। ८ ।।

रा० टी०-ज्ञानं तेऽहमिति ज्ञानपदेन प्रतिज्ञातं ज्ञातव्यं भूमिराप इत्यादिश्लोकचतुष्टयेनोक्त्वाधुना विज्ञानपदेन प्राक् प्रतिज्ञातं विशेषेण ज्ञातव्यं हरेरलौकिकमाहात्म्यमाह-रस इति । अप्सु सारभूतो यो रसस्तस्य अपामनागन्तुकधर्मस्वभावत्वे अब्धर्मेषु संख्यादिषु सारत्वे रसत्वे विशेषतो हरेः कारणत्वात्तद्भोक्तृत्वाच्च रसोऽहमित्यभेदोक्तिः । शशिसूर्ययोर्या प्रभा तस्याः शशिसूर्ययोरनागन्तुकधर्मत्वे चन्द्रसूर्यधर्मेषु सारत्वे प्रभात्वे विशेषतः कारणत्वात्प्रभाहमस्मीत्यभेदोक्तिः । सर्ववेदेषु सारभूतो यः प्रणवस्तस्य वेदसारत्वं प्रणवत्वं चेशाधीनमित्यभेदोक्तिः । खे आकाशे यः शब्दः ध्वन्यात्मकस्तस्याकाशानागन्तुकधर्मत्वं संख्याद्याकाशधर्मेषु सारत्वं शब्दत्वं चेशायत्तं तद्भोग्यश्च शब्द इति शब्दोऽहमस्मीत्युच्यते । नृषु यत्पौरुषं स्त्रीव्यावृत्तः प्रागल्भ्यविशेषस्तस्य सत्ताप्रतीतिकारणत्वात्पौरुषमहमस्मीत्युच्यते ।। ८ ।।

**पुण्यो गन्धः पृथिव्यां च तेजश्चास्मि विभावसौ ॥**
**जीवनं सर्वभूतेषु तपश्चास्मि तपस्विषु ॥ ९ ॥**

त० टी०-पुण्यः सुरभिरविकृतो गन्धः सर्वपृथिव्याः सारभूतो गन्धतन्मात्राख्यः पृथिव्यां व्याप्तोऽहम् । चकारोऽबादिषु पुण्यरसादिसमुच्चयार्थः । किंच विभावसौ वह्नौ यत्तेजः स्वाभाविकसर्वदहनप्रकाशनसामर्थ्यं तदप्यहमस्मि । सर्वभूतेषु प्राणिषु जीवनं प्राणधारणमायुस्तदप्यहमस्मि । तपस्विषु तपःप्रधानेषु वानप्रस्थादिषु यत्तपः शीतोष्णादिद्वन्द्वसहनसामर्थ्यं तदहमस्मि ।। ९ ।।

म० टी०-पुण्यः सुरभिरविकृतो गन्धः सर्वपृथिवीसामान्यरूपस्तन्मात्राख्यः पृथिव्यामनुस्यूतोऽहम् । चकारो रसादीनामपि पुण्यत्वसमुच्चयार्थः । शब्दस्पर्शरूपरसगन्धानां हि स्वभावत एव पुण्यत्वमविकृतत्वं प्राणिनामधर्मविशेषात्तु तेषामपुण्यत्वं न तु स्वभावत इति द्रष्टव्यम् । तथा विभावसावग्नौ यत्तेजः सर्वदहनप्रकाशनसामर्थ्यरूपमुष्णस्पर्शसहितं सितभास्वरं रूपं पुण्यं तदहमस्मि । चकाराद्वायौ पुण्यः उष्णस्पर्शोपराणामाप्यायकः शीतस्पर्शः सोऽप्यहमिति द्रष्टव्यम् । सर्वभूतेषु सर्वेषु प्राणिषु जीवनं प्राणधारणमायुरहम-

स्मि तद्रूपे मयि सर्वे प्राणिनः प्रोता इत्यर्थः । तपस्विषु नित्यं तपोयुक्तेषु वानप्रस्थादिषु यत्तपः शीतोष्णक्षुत्पिपासादिद्वन्द्वसहनसामर्थ्यरूपं तदहमस्मि तद्रूपे मयि तपस्विनः प्रोताः विशेषणाभावे विशिष्टाभावात् । तपश्चेति चकारेण चित्तैकाग्र्यमान्तरं जिह्वोपस्थादिनिग्रहलक्षणं बाह्यं च सर्वं तपः समुच्चीयते ॥९॥

**शं० टी०**—किंच—पुण्यो गन्ध इति । पृथिव्यां चाहं पुण्यो गन्धोऽस्मि पुण्यो मनोहरश्च शुद्धश्च गन्धस्य मनोहरत्वशुद्धत्वोक्तिरबाकाशादिकारणभूतरसशब्दादीनामुपलक्षणार्थं पञ्चानामपि पृथिव्यादिकारणानां गन्धरसादीनां वास्तवं यन्मनोहरत्वं शुद्धत्वं तद्योगिप्रत्यक्षं दुष्टत्वं तु कार्यद्रव्यान्तरसंसर्गादेव जायते भोक्तृकर्मानुरूपेण नतु स्वभावतोऽस्ति यो मनोहरः शुद्धो गन्धस्तेन रूपेण पृथिव्यां तिष्ठामि गन्धात्मके स्वकारणे मयि पृथिवी प्रोता गन्धात्मके मयि गन्धमयात्मना तिष्ठतीत्यर्थः । विभावसावग्नावहं तेजोऽस्मि तेजःस्वरूपे स्वकारणे मय्यग्निः प्रोतः मत्सत्तया तेजोमयो भूत्वा मदभिन्नः सन् मदात्मना तेजःस्वरूपे मयि तिष्ठतीत्यर्थः । सर्वेषु भूतेषु प्राणिष्वहं जीवनमस्मि जीवनं जीवनकरणमन्नादिस्तेन रूपेण भुक्तान्नरसात्मना प्राणिषु तिष्ठामि ततस्तेऽन्नरसात्मके स्वकारणे मयि प्रोतास्ततो मत्सत्तयान्नरसमया भूत्वा तदात्मना मय्यन्नरसात्मके तिष्ठन्तीत्यर्थः । तपः कृच्छ्रचान्द्रायणादिकं चित्तैकाग्र्यं वा पञ्चाग्निमध्यावस्थानं वा येषामस्ति ते तपस्विनस्तेषु चाहं तपोऽस्मि तपोरूपेण तिष्ठामि ततस्ते तपोमये मयि प्रोतास्तपोमात्रात्मकाः सन्तस्तपःस्वरूपे मयि तिष्ठन्ति न तु मत्तो व्यतिरिच्यन्त इत्यर्थः । ननु तपस्विनां तपस्त्वपां रसवत्कारणं न भवति किंतु धर्मः, तपसः कारणत्वे सिद्धे खलु तव कारणभावस्तेषां कारणमात्रत्वं च संपद्येत तदभावे कथमुच्यते तपश्चास्मि तपस्विष्विति चेन्न, धर्मस्यापि तपसः स्वर्गादिफलजनकत्वेन कारणत्वसंभवात् धर्मवतां यो धर्मः स्वर्गादिफलहेतुः सोऽप्यहमेव यथा व्यवहारहेतुर्धर्माविरुद्धः कामो वक्ष्यमाणस्तद्वत्ततो धर्मिणो धर्मस्वरूपे मयि मदात्मना तिष्ठन्ति धर्ममात्रस्य मत्स्वरूपत्वं धर्मिणां तन्मात्रत्वं च बोधयितुं तपश्चास्मीत्युक्तं तप इतिधर्ममात्रस्योपलक्षणम् । ननु कार्यस्य कारणमात्रत्वं घटादौ दृष्टं श्रुतं च कथं धर्मिणो धर्ममात्राकारता धर्मे तन्मात्रत्वेनावस्थानं च संभवतीति चेदुच्यते । वह्नेर्दाहकत्वं धर्मः स चाग्निं सर्वतो व्याप्य तिष्ठति दाहकत्वस्याग्नौ सर्वत्रोपलम्भात्तद्भिनाग्नेः पृथक्स्वरूपाभावात् तदाकारता तदात्मना तत्रावस्थानं च दृश्यते तद्वत् सर्वत्र द्रष्टव्यम् ॥ ९ ॥

**श्री० टी०**—किंच—पुण्य इति । पुण्योऽविकृतो गन्धः गन्धतन्मात्रं पृथिव्या आश्रयभूतमहमित्यर्थः । यद्वा विभूतिरूपेणाश्रयत्वस्य विवक्षितत्वात् सुरभिगन्धस्यैवोत्कृष्टतया विभूतित्वात्पुण्यो गन्ध इत्युक्तम् । तथा विभावसावग्नौ यत्तेजः सहजा दीप्तिस्तदहम् । सर्वभूतेषु जीवनं प्राणधारणमायुरहमित्यर्थः । तपस्विषु वानप्रस्थादिषु द्वन्द्वसहनरूपं तपोऽस्मि ॥ ९ ॥

**स० टी०**—गन्धोऽहं पावनो भूमौ गन्धभूते मही मयि ॥ प्रोता गन्धस्य पुण्यत्वं स्वभावादेव संमतम् ॥ १ ॥ चात्पुण्यत्वं रसादीनां स्वभावादेव गम्यताम् ॥ गन्धादीनामपुण्यत्वं प्राणिनामघदोषतः ॥ २ ॥ तेजः प्रकाशरूपं यत्सितभास्वरमग्निगम् ॥ तदहं मयि तद्रूपे ग्रथितोऽसौ विभावसुः ॥ ३ ॥ चकारात्पावनस्पर्शो यो वायौ सोऽप्यहं हरिः ॥ प्राणधारणमायुर्यत्सर्वप्राणिषु जीवनम् ॥ ४ ॥ तदहं मयि तद्रूपे संप्रोताः प्राणिनोऽखिलाः ॥ तपो द्वन्द्वसहिष्णुत्वमहमस्मि तपस्विषु ॥ ५ ॥ तपोरूपे मयि प्रोता युक्तचित्तास्तपस्विनः ॥ ६ ॥ ९ ॥

**भा० टी०**—पृथ्वीसारभूते सुरभिगन्धे गन्धतन्मात्रभूते मयि पृथिवी प्रोता । रसादेः पुण्यत्वं स्वभावादेवापुण्यत्वं त्वविद्याऽधर्माद्यपेक्षं संसारिणां भूतविशेषनिमित्तजं भवति । अग्निसारभूते तेजसि तेजोरूपे मयि विभावसुरग्निः प्रोतः । तथा जीवने सर्वभूतसारभूते आयूरूपे अन्नरूपे वा तस्मिंस्तद्रूपे मयि सर्वे भूताः प्रोतास्तपस्विसारभूते तपोरूपे मयि तपस्विनः प्रोताः ॥ ९ ॥

**प० टी०**–किं च–पुण्येति । पुण्योऽविकृतो गन्धो गन्धतन्मात्रं पृथिव्यामहमस्मि । विभावसावग्नौ यद्दीप्तं तेजस्तदहम् । सर्वभूतेषु जीवनं प्राणधारणमायुरहमित्यर्थः । तपस्विषु वानप्रस्थादिषु तपो द्वन्द्वसहिष्णुत्वरूपेणाहमस्मि ॥ ९ ॥

**रा० टी०**–पृथिव्यां यः पुण्यो गन्धः शुभगन्धस्तस्य भूम्यनागन्तुकधर्मत्वे स्वभावत्वे पृथिवीधर्मेषु सारत्वे गन्धत्वे हरिः कारणं गन्धभोक्ता चेति गन्धोऽहमस्मीत्युच्यते । अहमस्मीति सर्वत्रानुषङ्गः । विभावसौ यत्तेजो दाहसामर्थ्यं तदुक्तहेतुबलादहमस्मीत्युच्यते । सर्वभूतानां सारभूतं यज्जीवनं तन्नियन्तृत्वात्तदप्यहमस्मीत्युच्यते । तपस्विषु सारभूतं यत्तपः कृच्छ्रादि तदप्यहमस्मि तन्नियामकत्वहेतुनेति भावः ॥९॥

**बीजं मां सर्वभूतानां विद्धि पार्थ सनातनम् ॥**
**बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम् ॥ १० ॥**

**त० टी०**–किंच–बीजमिति । सर्वेषां स्थावरजङ्गमानां भूतानां बीजं कारणं सनातनं नित्यं सर्वकार्येष्वनुस्यूतं हे पार्थ मां विद्धि, मद्विभूतिं जानीहीत्यर्थः । तथा बुद्धिस्तत्त्वविवेचनरूपा प्रज्ञा तद्वतां सा बुद्धिरहमस्मि, तदभावे पशुत्वाविशेषात् 'ज्ञानेन हीनाः पशुभिः समानाः' इति सनत्सुजातवचनात् । तेजस्विनां यत्तेजः पराभिभवनसामर्थ्यं तदहमस्मि ॥ १० ॥

**म० टी०**–सर्वाणि भूतानि स्वस्वबीजेषु प्रोतानि नतु त्वयीति चेन्नेत्याह–बीजं मामिति । यत्सर्वभूतानां स्थावरजङ्गमानामेकं बीजं कारणं सनातनं नित्यं बीजान्तरानपेक्षं न तु प्रतिव्यक्तिभिन्नमनित्यं वा तदव्याकृताख्यं सर्वबीजं मामेव विद्धि न तु मद्भिन्नम् । हे पार्थ अतो युक्तमेकस्मिन्नेव मयि सर्वबीजे प्रोतत्वं सर्वेषामित्यर्थः । किंच बुद्धिस्तत्त्वातत्त्वविवेकसामर्थ्यं तादृशबुद्धिमतामहमस्मि बुद्धिरूपे मयि बुद्धिमन्तः प्रोता विशेषणाभावे विशिष्टाभावस्योक्तत्वात् । तथा तेजः प्रागल्भ्यं पराभिभवसामर्थ्यं परैश्चानभिभाव्यत्वं तेजस्विनां तथाविधप्रागल्भ्ययुक्तानां यत्तदहमस्मि तेजोरूपे मयि तेजस्विनः प्रोता इत्यर्थः ॥ १० ॥

**शं० टी०**–नन्वाकाशाद्वायुर्वायोरग्निरित्यादिना पूर्वपूर्वस्य कारणत्वमुत्तरोत्तरस्य तु कार्यत्वं श्रूयते ततस्तत्तत्कारणे तत्तत्कार्यं प्रोतं भवति कथं त्वय्यश्रुतकारणत्वे त्वबादिकं प्रोतमित्युच्यत इत्याशङ्कायां न, आत्मन आकाशः संभूत इत्यात्मशब्दवाच्यान्मत्त एवेश्वरादाकाशस्य संभूतिश्रवणादहमेव सर्वजगदुत्पत्तेः प्रकृष्टं कारणमित्याह–बीजं मामिति । मामेवेश्वरं बीजं सर्वेषामप्याकाशादिभूतानामाविर्भूतिकारणं विद्धि विजानीहि । ननु यथा भूतानां तथा तवापि कारणान्तरमस्तीत्याशङ्कायां "सा काष्ठा सा परा गतिः" इति "विश्वस्मादिन्द्र उत्तरः" इति "न तस्य कश्चिज्जनिता" इति च श्रवणादहमेव सर्वस्मादुत्तरः सर्वस्याप्यादिकारणं न तु मम कारणमस्तीत्याह–सनातनमिति । सर्वस्मात् प्राक्तनं स्वयं निष्कारणमित्यर्थः । ततो यदुक्तं मत्तः परतरमिति मयि सर्वमिति तत्सिद्धम् । एतेन स्वस्यैव सर्वकारणत्वं सर्वस्यापि स्वमात्रत्वं च स्थापितं तथापीदानीं बुद्ध्यादीनामात्मप्रकाशत्वं बोधयितुमर्थात्तद्वतां तत्कारणत्वं तन्मात्रत्वं चाह–बुद्धिरिति । बुध्यते आत्मानात्मा च धर्माधर्मादिरप्यवगम्यतेऽनयेति बुद्धिः प्रज्ञा तद्वतामहं बुद्धिः बुद्धिरूपं कारणमस्मि मयि बुद्ध्यात्मके ते प्रोताः सन्तो मदात्मना मयि तिष्ठन्तीत्यर्थः । तेजः प्रागल्भ्यं चेतनधर्मत्वादात्मप्रकाशप्रवृत्तिहेतुकं परेषामप्रधृष्यमभिभावकं च यत्तेजस्तद्वतामहं तेजोरूपं कारणमस्मि तदात्मके मयि ते प्रोता मदात्मना मयि तिष्ठन्तीत्यर्थः ॥ १० ॥

**श्री० टी०**–किंच बीजमिति । सर्वेषां चराचराणां भूतानां बीजं सजातीयकार्योत्पादनसामर्थ्यं सनातनं नित्यमुत्तरोत्तरसर्वकार्येष्वनुस्यूतं तदेव बीजं मद्विभूतिं विद्धि न तु प्रतिव्यक्तिविनश्यत् । तथा बुद्धिमतां बुद्धिः प्रज्ञाहमस्मि । तेजस्विनां प्रगल्भानां तेजः प्रागल्भ्यमहम् ॥ १० ॥

स० टी०—स्वस्वबीजेषु भूतानि प्रोतानि न त्वयीति चेत् ॥ आब्रह्मस्थावरान्तानां भूतानां यच्चिरंतनम् ॥१॥ बीजमव्याकृताख्यं मां विद्धि प्रोतान्यतो मयि ॥ बुद्धिर्विवेकसामर्थ्यं तद्रूपे ग्रथिता मयि ॥ २ ॥ बुद्धिमन्तो विना बुद्धिं तादृशीं न विवेकिनः ॥ पराभिभवसामर्थ्यं तेजः प्रागल्भ्यमुच्यते ॥ ३ ॥ परैश्चानभिभाव्यत्वं यत्तत्तेजस्विनामहम् ॥ तेजस्विनः परिप्रोतास्तेजोरूपे मयीश्वरे ॥ ४ ॥ १० ॥

भा० टी०—ननु सर्वाणि भूतानि स्वस्वकारणे प्रोतानि कथं तेषां त्वयि प्रोतत्वमित्याशङ्क्याह—बीजं जन्मादिकारणं सर्वभूतानां मां विद्धि जानीहि। यथा सर्वेषां पाण्डवानां युष्माकं साक्षान्माद्या मन्त्रदानेन परंपरया च पृथैव बीजं तथेति द्योतयन्नाह—हे पार्थेति। बीजान्तरापेक्षयानवस्थां वारयति—सनातनं चिरंतनं बुद्धिरन्तःकरणस्य विवेकशक्तिर्ब्रह्म सत्यं जगन्मिथ्येति विवेचनसामर्थ्यं तद्रूपे मयि बुद्धिमन्तः प्रोताः। तथा तेजसि प्रागल्भ्यभूते मयि तेजस्विनः प्रोताः ॥ १० ॥

प० टी०—किं च—बीजमिति। सर्वभूतानां चराचराणां बीजमङ्कुरोत्पादनसामर्थ्यं सनातनं नित्यमुत्तरोत्तरं सर्वकार्येष्वनुस्यूतं तदहमस्मि। तथा बुद्धिमतां बुद्धिः प्रज्ञाहमस्मि तेजस्विनां तेजः प्रागल्भ्यमहमेवास्मि ॥ १० ॥

रा० टी०—सर्वभूतानां बीजं व्यञ्जकत्वाद्बीजमिव बीजं म विद्धि न परिणामिकारणम्। बुद्धिमतां ज्ञानिनां या बुद्धिः साप्यहमस्मि। बुद्धिमद्धर्मेषु सारत्वे बुद्धित्वे बुद्धिमद्धर्मत्वे नियामकोऽहमिति बुद्धिरहमस्मीत्युच्यते। एवं तेज इत्यपि ध्येयम्। अप्शशिसूर्यादेरवधितयोक्तस्य सर्वस्योक्तदिशा रसादेरिवेशायत्तत्वाविशेषेऽपि रसोऽहमस्मीत्यादिरूपेण निष्कृष्योक्तिः लोके कुविन्दादिः पटादिद्रव्येष्वेव व्यापारवाननुभूयते न तु तदीयगन्धरसादिगुणेषु तन्निष्ठगन्धत्वादिधर्मेषु च पृथग्व्यापारवान् किंतु पटादिजन्मानुषङ्गिकजन्मान एव न तथा भगवान्। अपि तु अबादिधर्मेषु रसादिषु तद्धर्मेषु रसत्वादिषु पृथक्प्रयत्नवान्। न त्वबादिनियमानुषङ्गिकसत्तादिका इति दर्शयितुमबादिभोगादप्यतिशयेन रसादिभोगः परमेश्वरस्येति दर्शयितुं च। किंच रसादयो ह्यत्र हरेरुपासने प्रतिमात्वेन विवक्षिताः रसोऽहमस्मीत्युपासीतेत्यादिरूपेण प्रतिमायां चाभेदोक्तिर्नाम ब्रह्मेत्युपासीतेत्यादौ प्रसिद्धा। तथाचाबादिषु भगवदुपासनापेक्षया रसादिषु तदुपास्तेरतिशयाच्च विशिष्योक्तिः। अपिच ज्ञानार्थिनो हि रसाद्यभिमानिदेहेषु भगवान्सर्वत्र तिष्ठति अबाद्यभिमानिनस्तु तत्पार्षदा इत्युपासते ततोऽपि विशिष्योक्तिः। यद्वा 'सर्वत्र विष्णोरुत्कर्षज्ञानं ज्ञानमितीर्यते। तद्विशेषपरिज्ञानं विज्ञानमिति गीयते' इतिस्मृत्या सर्वत्र सामान्यतो विष्णोरुत्कर्षज्ञानं ज्ञानपदेन विवक्षितम्। अपरेयमित्यादिनोक्तदिशा जडप्रकृतिब्रह्मादिजीवाश्चावराः आसुरजना अवरतराः श्रीर्मुक्तजनाश्च पराः। तत्रापि श्रीर्मुख्यपरा कदापि दुःखासंबन्धात्। मुक्तास्तु पराभासाः कदाचिद्दुःखसंबन्धात्। ते सर्वे हर्यधीनाः। हरिस्तु परतरः। अत्र तरशब्दस्तमबर्थश्च भवति हरेरन्यस्य परतमस्याभावादयमेव परतम इति वक्तव्यत्वात्। परत्वेनोक्तश्रीमुक्तानां हरेश्च मध्ये कस्यचित्परतरस्याभावेनायमेव परतरश्चेति वाच्यत्वात्। हरिरेव परतरः परतमश्च ततोऽन्यत्परतरं परतमं वा किंचिन्नास्ति। न च मुक्ताः पराः श्रीः परतरेति शङ्क्यम् 'मुक्तस्तु स्यात्पराभासः' इतितात्पर्योक्त्या तेषां परत्वाभावात्। 'अभावादन्तरान्यस्य त्विहैकार्थौ तरप्तमौ' इतिस्मृतेश्चेत्येवं परापरतत्त्वविवेचनपूर्वं हरेः सर्वोत्तमत्वं ज्ञानं तेऽहं सविज्ञानमिति प्रतिज्ञातं ज्ञानं विज्ञानं च द्वयमपि भूमिरित्यादिश्लोकचतुष्टयेनोक्तम्। तद्विज्ञानमेव सर्वस्य तदधीनत्वप्रदर्शनेनाह—रस इत्यादिना। अत्र रसादिशब्दास्तद्वोकृत्वतन्नियन्तृत्वहेतुना भगवन्नामानः। तथाहि अप्स्वित्यादिसप्तम्योऽधिकरणसप्तम्यः। अप्सु स्थित्वा रसमाददामीति तं प्रेरयामि चेति रसनामाहमस्मि। शशिसूर्ययोः स्थित्वा स्वयं प्रभासमानत्वात्प्रभाहमस्मि। सर्ववेदेषु स्थित्वा स्वात्मानं प्रणौति स्तावकं प्रेरयति

इति प्रणवनामास्मि । खे स्थित्वा शब्दं प्रेरयतीति शब्दनामास्मि । स्वयं पुण्यः पुण्यगन्धः सन्पृथिव्यां स्थित्वा सुरभ्यसुरभितया गन्धं प्रेरयतीति गन्धनामा । विभावसावग्नौ स्थित्वा तेजःप्रेरकत्वात्तेजोनामा । भूतेषु स्थित्वा जीवनदत्त्वाज्जीवननामा । तपस्विषु स्थित्वा तपः कुरुते तपःप्रेरयति चेति तपोनामा । बीजप्रेरकत्वाद्बीजनामा । बुद्धिमतां सप्तम्यर्थे षष्ठी । बुद्धिमत्सु स्थित्वा बोद्धृत्वाद्बुद्धिप्रेरकत्वाद्बुद्धिनामा । तेजस्विषु स्थित्वा तेजःप्रेरयतीति तेजोनामा । अबादिसर्ववस्तूनां रसगन्धप्रभादिधर्मान्व्यवस्थया ददातीति रसादिनामा(हं) हरिरित्यर्थः ॥ १० ॥

**बलं बलवतां चाहं कामरागविवर्जितम् ॥**
**धर्माविरुद्धो भूतेषु कामोऽस्मि भरतर्षभ ॥ ११ ॥**

**त० टी०—किंच—बलमिति।** कामोऽप्राप्ते वस्तुनि इदं मे भूयादिति तत्प्राप्त्यभिलाषः, अभिलषितेऽर्थे प्राप्तेऽपि इदं सदा तिष्ठेन्न कदापि क्षीयतामिति राजसश्चित्तरञ्जनात्मको रागस्ताभ्यां वर्जितं बलवतां सात्त्विकं स्वधर्मानुष्ठानरूपं बलमहमस्मि । धर्मो वेदविहितः सदाचाररूपस्तेनाविरुद्धोऽनुकूलो भूतेषु प्राणिषु कामः शास्त्रसंमतः स्त्रीपुत्रवित्तादिविषयो योऽभिलाषः सोऽहमस्मि हे भरतर्षभ ॥ ११ ॥

**म० टी०—बलमिति ।** अप्राप्तो विषयः प्राप्तिकारणाभावेऽपि प्राप्यतामित्याकारश्चित्तवृत्तिविशेषः कामः प्राप्तो विषयः क्षयकारणे सत्यपि न क्षीयतामित्येवमाकारश्चित्तवृत्तिविशेषो रञ्जनात्मा रागस्ताभ्यां विशेषेण वर्जितं सर्वथा तदकारणं रजस्तमोविरहितं यत्स्वधर्मानुष्ठानाय देहेन्द्रियादिधारणसामर्थ्यं सात्त्विकं बलं बलवतां तादृशसात्त्विकबलयुक्तानां संसारपराङ्मुखानां तदहमस्मि तद्रूपे मयि बलवन्तः प्रोता इत्यर्थः । चशब्दस्तुशब्दार्थो भिन्नक्रमः कामरागविवर्जितमेव बलं मद्रूपत्वेन ध्येयं नतु संसारिणां कामरागकारणं बलमित्यर्थः । क्रोधार्थो वा रागशब्दो व्याख्येयः । धर्मो धर्मशास्त्रं तेनाविरुद्धोऽप्रतिषिद्धो धर्मानुकूलो वा यो भूतेषु प्राणिषु कामः शास्त्रानुमतजायापुत्रवित्तादिविषयोऽभिलाषः सोऽहमस्मि । हे भरतर्षभ शास्त्राविरुद्धकामभूते मयि तथाविधकामयुक्तानां भूतानां प्रोतत्वमित्यर्थः ॥ ११ ॥

**शं० टी०—बलमिति ।** कामरागविवर्जितं कामः सन्निकृष्टविषयापेक्षाप्रकृष्टप्रवृत्तिहेतुः रागस्त्वप्राप्तविषयाशाप्रवृत्तिहेतुस्ताभ्यां विवर्जितं कामक्रोधादिवेगसमुत्पन्नं मानसमैन्द्रियकं च बलं यत्ततो भिन्नं शरीरमात्राश्रयं देहयात्रामात्रोपयोगि बलं तदहमस्मि बलवतां देहशक्तिमतां बलात्मके मयि स्वकारणे ते प्रोताः सन्तो मदात्मना मयि तिष्ठन्ति । ननु " काममय एवायं पुरुषः " इत्यादिना पुरुषव्यापारस्य सर्वस्यापि काममूलकत्वमेव श्रूयते दृश्यते च । कामरागाभावे पुंसो देहयात्रा वा स्वधर्मो वा कथं सेत्स्यतीत्याकाङ्क्षायामाह—धर्मेति । भूतेषु वर्णाश्रमिषु धर्माविरुद्धः धर्मस्य शास्त्रीयस्याविरुद्धस्त्वविरोधी स्वस्याश्रमधर्मस्य साधको न तु बाधकः उत्पथहेतुश्च यः कामः सोऽहमस्मि, तेषु कामात्मनाहं तिष्ठामि मयि कामात्मके स्वकारणे ते प्रोताः सन्तो मयि मदात्मना मृदि घटवत्तिष्ठन्ति न तु स्वरूपेण मत्तो भिद्यन्त इत्यर्थः । प्राणिनिष्ठबलस्य चेष्टाहेतोः कामस्य च चेतनधर्मत्वेनात्मप्रकाश्यत्वं द्रष्टव्यम् ॥ ११ ॥

**श्री० टी०—किंच—बलमिति ।** कामोऽप्राप्ते वस्तुन्यभिलाषो राजसः, रागः पुनरभिलषितेऽर्थे प्राप्तेऽपि पुनरधिकेऽर्थे चित्तरञ्जनात्मकस्तृष्णापरपर्यायस्तामसस्ताभ्यां विवर्जितं बलवतां बलमहमस्मि । सात्त्विकं स्वधर्मानुष्ठानसामर्थ्यमहमित्यर्थः । स्वधर्मेणाविरुद्धः स्वदारेषु पुत्रोत्पत्तिमात्रोपयोगी कामोऽहम् ॥ ११ ॥

**स० टी०—**प्राप्तिसामग्र्यभावेऽपि प्राप्यतामिति वाञ्छनम् ॥ अप्राप्तविषये कामो रागः प्राप्तेऽस्ति रञ्जना ॥ १ ॥ न क्षीयतामितीच्छा स्यात्सत्यपि क्षयकारणे ॥ ताभ्यां विवर्जितः स्वीयधर्मानुष्ठानसिद्धये ॥२॥

बलं देहेन्द्रियादीनां सामर्थ्यं यच्च धारणे ॥ तद्रूपे मयि संप्रोता बलवन्तः शरीरिणः ॥ ३ ॥ धर्मशास्त्राविरुद्धो यः कामः प्राणिषु धर्मकृत् ॥ शरीरयात्रासिद्ध्यर्थं कामो वा भोजनादिषु ॥ ४ ॥ सोऽहं तस्मिन्मयि प्रोताः कामिनो धर्मतत्पराः ॥ ५ ॥ ११ ॥

**भा० टी०**—बलं सामर्थ्यमोजस्तस्मिन्कामरागविवर्जिते कामोऽप्राप्तेषु विषयेषु प्राप्त्यभिलाषो रागः प्राप्तेषु तेषु रञ्जनात्मकः प्रेम्णोऽतिशयः । क्रोधार्थो वा रागशब्दो व्याख्येयः । अस्मिन्पक्षे लक्षणादोष इति बोध्यम् । तद्रहिते देहधारणमात्रप्रयोजने बलभूते मयि बलवन्तः प्रोताः तथा धर्मेण शास्त्रविहितेनाविरुद्धे देहधारणार्थेऽशनपानादिविषये कामे तद्रूपे मयि कामवतां भूतानां प्रोतत्वम् । भरतर्षभेतिसंबोधयन् भरतैः क्षत्रियवरैः सेवितं युद्धात्मकधर्मस्य साधकं कामरागविवर्जितं क्षत्रधर्मेण युद्धेन देहधारणमात्रप्रयोजनकं मद्विभूत्यात्मकं बलं स्वधर्मेण शत्रून्विजित्य धर्माविरुद्धमन्नपानादिविषयकं कामं च मद्विभूतिरूपं भरतानां मध्ये श्रेष्ठस्त्वं त्यक्तुं नार्हसीति सूचयति ॥ ११ ॥

**प० टी०**—किं च—**बलमिति** । बलवतां कामरागविवर्जितं बलमहमस्मि । तत्र कामोऽप्राप्ते वस्तुन्यभिलाषो राजसः, रागः पुनरभिलषितेऽर्थे प्राप्तेऽभिरञ्जनात्मकस्तृष्णापरपर्यायस्तामसस्ताभ्यां वर्जितम् । यद्वा बलवतां पुरुषार्थवतां वीराणां बलं शौर्यं कामेषु विषयेषु रागः प्रीतिस्तद्विवर्जितम् निःसङ्गत्वेन स्वधर्माचरणरूपमित्यर्थः । भूतेषु धर्माविरुद्धः स्वदारेषु पुत्रोत्पत्तिमात्रोपयोगी कामो मदनरूपेणास्मि ॥ ११ ॥

**रा० टी०**—**बलमिति** । बलवतां बलवत्सु स्थित्वा कामरागविवर्जितं बलमस्मि । विषयभोगनिरपेक्षतया नित्यपूर्णबलवत्त्वात्कामवर्जितबलात्मास्मि । अस्थाने अप्रयुज्यमानत्वाद्रागविवर्जितबलात्मास्मीत्यर्थः । रागिणो ह्यस्थानेऽपि बलं प्रयुञ्जते । भूतेषु धर्माविरुद्धो यः कामः सोऽस्मीत्यर्थः । अत्र पुण्यो गन्ध इति कामरागविवर्जितमिति गन्धबलादेः पुण्यत्वादिविशेषणोपादानं तु गन्धबलकामादिषु विशिष्टेष्वेव भगवानुपास्यः न त्वशुचिषु धर्मविरुद्धेष्विति ज्ञापनायेति ध्येयम ॥ ११ ॥

**ये चैव सात्त्विका भावा राजसास्तामसाश्च ये ॥**
**मत्त एवेति तान्विद्धि न त्वहं तेषु ते मयि ॥ १२ ॥**

**त० टी०**—किं बहुना सर्वभावानामहमेव कारणमित्याह—ये चेति । ये चान्येऽपि सात्त्विका भावाश्चित्तपरिणामाः शमदमादयः, ये च राजसा हर्षादयः ये च तामसाः शोकमोहप्रमादादयः प्राणिनां स्वानादिकर्मवशाज्जायन्ते तान्सर्वान्मत्त एव जातानिति विद्धि, तत्तत्कर्मानुसारिमदनुभावितान्विद्धीत्यर्थः । ननु हेतुभूतस्य तवापि ते स्युरिति चेन्नेत्याह—न त्वहमिति । तुशब्दो वैलक्षण्यद्योतनार्थः । तेषां मत्तो जातत्वेऽपि अहं तु तेषु न वर्ते जीववत्तदधीनोऽहं न भवामीत्यर्थः । ते तु मयि मदधीनतया मयि वर्तन्ते । अथवा सात्त्विका भावा देवा राजसा मनुष्यास्तामसास्तिर्यगादयो मत्त एव जातास्तेषु नाहं वर्ते, कार्यार्थं लीलार्थं वा तेषु कृतावतारोऽप्यहमजहद्गुणशक्तित्वात्तत्सजातीयो न भवामीत्यर्थः । ते तु मदधीनस्थितिकत्वात्सदा मयि वर्तन्ते इत्यर्थः । अतश्चेतनाचेतनात्मकमखिलं जगन्मत्त एवोत्पद्यते मय्येव प्रलीयते मय्येवावतिष्ठते च । कारणावस्थायां कार्यावस्थायां च कारणत्वेनाश्रयत्वेन स्वतन्त्रत्वेन चाहमेव परतरो न मत्तोऽन्यत्किमपि वस्तु गुणशक्त्यादिभिः परमस्तीति सिद्धम् ॥ १२ ॥

**म० टी०**—किमेवं परिगणनेन—ये चैवेति । ये चान्येऽपि भावाश्चित्तपरिणामाः सात्त्विकाः शमदमादयः

ये च राजसा हर्षदर्पादयः ये च तामसाः शोकमोहादयः प्राणिनामविद्याकर्मादिवशाज्जायन्ते तान्मत्त एव जायमानान् इति अहं कृत्स्नस्य जगतः प्रभव इत्याद्युक्तप्रकारेण विद्धि समस्तानेव । अथवा सात्त्विका राजसास्तामसाश्च भावाः सर्वेऽपि जडवर्गा व्याख्येयाः विशेषहेत्वभावात् एवकारश्च समस्ताऽवधारणार्थः । एवमपि न त्वहं तेषु मत्तो जातत्वेऽपि तद्वशस्तद्विकाररूषितो रज्जुखण्ड इव कल्पितसर्पविकाररूषितोऽहं न भवामि संसारीव ते तु भावा मयि रज्ज्वामिव सर्पादयः कल्पिता मदधीनसत्तास्फूर्तिकाः मदधीना इत्यर्थः ॥ १२ ॥

शं० टी०—मत्तः परतरमित्युपक्रम्य योऽर्थः संग्रहेण प्रतिपादितस्तमेवार्थं रसोऽहमित्यादिना कामोऽस्मि भरतर्षभेत्यन्तेन ग्रन्थेन रसप्रभाद्यात्मना स्वस्य कारणत्वमपि चन्द्रादीनां कार्यत्वं कारणे रसादिरूपे स्वस्मिन् तेषां प्रोतत्वं कारणमात्रत्वं च प्रतिपाद्य तमेवोपक्रान्तमर्थमुपसंहर्तुमिदानीं सामान्येन सर्वेषां पदार्थानां स्वस्मादेव जगदेकबीजादुत्पत्तिमुत्पन्नानां स्वस्मिन्नेव स्वात्मनावस्थितिं च प्रतिपादयति—ये चैवेति । इह लोके सात्त्विकाः सत्त्वगुणप्रधाना एव भावाः पदार्थाः देवा ऋषयो ब्राह्मणाः शर्करादयश्च, ये च राजसाः रजोगुणप्रधाना एव भावा गन्धर्वा यक्षाः क्षत्रिया मरीच्यादयः पदार्थाः, ये च तामसास्तमोगुणप्रधाना एव भावा राक्षसाः क्रव्यादाः शूद्राः गृञ्जनादयः पदार्था जायन्ते जाताः जनिष्यमाणाश्च एतान् सर्वान् तत्तद्गुणोपाधिकाज्जगद्बीजान्मत्त एव जातान्विद्धि विजानीहि न त्वन्यस्मात् मद्व्यतिरिक्तस्य कारणत्वनिषेधादित्येवकारार्थस्तेषु सात्त्विकादिपदार्थेष्वहं सत्त्वरजस्तमोगुणरूपेण कारणात्मना तिष्ठाम्यतस्ते मयि सत्त्वादिगुणात्मके स्वकारणे प्रोताः सन्तो मदात्मनैव तिष्ठन्तीत्यर्थः । यथा सत्त्वगुणकार्यं शर्करादि माधुर्यमात्रमेव भवति यथा रजोगुणकार्यं मरीचिः कटुमात्र एव भवति यथा तमोगुणकार्यं गृञ्जनं मत्ततामात्रमेव भवति तदिदं सर्वप्रत्यक्षम् । एवमेव ब्रह्मकार्यं जगत्सर्वं ब्रह्ममात्रमेवेति बोद्धव्यम् । एतेन मत्तः परतरं नान्यत्, मयि सर्वमिदं प्रोतमित्यारभ्य राजसास्तामसाश्च ये इत्यन्तेन ग्रन्थेन मायाशबलितस्य ब्रह्मणो मृद्वत्परिणामकारणत्वपक्षमाश्रित्य कार्यस्य कारणमात्रत्वं मृद्घटादौ सम्यग्दृष्टान्तन्यायेन "सर्वं खल्विदं ब्रह्म" इत्यादिपूर्वोक्तश्रुतिबलेन च ब्रह्मकार्यस्य जगतो ब्रह्ममात्रत्वमेव सम्यग् निर्धार्य मुमुक्षुभिः सम्यक्श्रुतवेदान्तैर्विज्ञाततदर्थैर्यतिभिः श्रुतं दृष्टं स्पृष्टं मतं विज्ञातं च सर्वमिदमहं च ब्रह्मैवेति—प्राक्तनीं वासनाकृतां नामरूपभेदकल्पनां निःशेषमुत्सृज्य स्वस्मिन् सर्वत्र च—ब्रह्मबुद्धिरेव प्रयत्नेन संपादनीयाऽयमेव समाधिः या सर्वत्र ब्रह्माकारवृत्तिर्ब्रह्मत्ववासना चैषा यथा दृढा निरन्तरा वश्या स्यात्तथा वर्तितव्यमिति, सूचितं भवति । "सर्वं खल्विदं ब्रह्म, तज्जलानिति, शान्त उपासीत" इत्येषा श्रुतिरेवास्यार्थस्य प्रमाणम् । एवं स्वस्य ब्रह्मणो मायोपाधिकस्य ( सच्छब्दवाच्यमविद्याशबलं ब्रह्म ? ) "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतिप्रसिद्धं परिणामलक्षणं जगत्कारणत्वं प्रतिपाद्य ब्रह्मणः परिपूर्णस्य सर्वाधारस्य च परिणामकारणत्वपक्षे रसोऽहमप्स्वित्यबादिषु कारणतया रसाद्यात्मना स्थितत्वे परिच्छिन्नत्तिस्तद्गुणदोषवत्ता जलं मधुरमिति तदधीनसत्तावत्ता च तत्सत्त्वे सति सत्त्वं तन्नाशे नाश इति विकारित्वं चेत्याद्यनर्थागमः प्रसज्यत इति तन्निवृत्तये स्वस्य दृश्यसंबन्धाभावसिद्धये च "अस्थूलमनण्वह्रस्वम्" इत्यादिश्रुतिसिद्धानिर्विशेषस्वरूपत्वावधारणाय पूर्वोक्तसमाधिनिष्ठया परिशुद्धात्मनां यतीनां निर्विशेष एव परे ब्रह्मण्यात्मत्वधीसिद्धये चाबादिषु रसाद्यात्मनावस्थितत्वं निषेधति—नत्वहमिति । ननु ब्रह्मणो जगत्कारणत्वे निषिद्धे सति "यतो वा" इत्यादिश्रुतीनां 'अहं कृत्स्नस्य जगतः' इत्यादिस्मृतीनां च ब्रह्मणो जगदुपादानत्ववादिनीनामप्रामाण्यमेव स्यादिति चेन्न, तासामद्वैतावधारणतत्परत्वात्प्रामाण्योपपत्तेः द्वैतिनः केचित् प्रकृतेरण्वादेश्च जगत्कारणत्वं वदन्तस्तत्कार्यं जगद्ब्रह्मणो व्यतिरिक्तं कल्पयित्वा श्रुति

सिद्धमद्वैतमपाकुर्वन्ति तेनाद्वैतश्रुतीनां व्याहतिस्तां स्वयमसहमाना यतो वेत्यादिश्रुतयो ब्रह्मण एव जगत्कारणत्वं कार्यस्य कारणाव्यतिरिक्तत्वं च बहुदृष्टान्तैः प्रतिपाद्याद्वैतमेव निर्वहन्ति ततः सृष्टिश्रुतीनामद्वैतसिद्धावेव तात्पर्यं न तु स्वार्थे "वायुर्वै क्षेपिष्ठा देवता" इत्यादिश्रुतीनां यथा तद्वत् विध्येकार्थानामर्थवादश्रुतीनां विधिना सह प्रामाण्यं यथा तथाऽद्वैतश्रुत्येकार्थानां सृष्टिश्रुतीनां स्मृतीनां च "एकमेवाद्वितीयं ब्रह्म" इत्याद्यद्वैतश्रुतिभिर्विज्ञानमेकमित्यादिस्मृतिभिश्च सहैवास्ति प्रामाण्यं नात्र कुशङ्कावकाशः। ननु तर्हि प्रकृतेः परमाण्वादेश्च यथा तथा ब्रह्मणोऽपि कारणत्वानङ्गीकारे जगन्निष्कारणकमेव स्यादिति चेदस्त्येव जगत्कारणमधिष्ठानाज्ञानलक्षणस्त्वदीयभ्रम इति ब्रूमस्तत एव श्रीभगवानाह—न त्वहमिति। तुशब्दो व्यावृत्त्यर्थश्चार्थो वा। एतद्योनीनीत्युक्तत्वादेतेषु मायामयेषु रज्जुसर्पवत्प्रतीतिमात्रेष्वबादिषु रसादिरूपेण नाहं तु कारणमस्मि किंतु मायैवास्ति मायया खलु मयि निर्विशेषे विशेषाकारेण तेषां प्रतीतिर्यथा मरौ जलप्रतीतिस्तथा तत एव "विकल्पो नहि वस्तु मायामात्रमिदं द्वैतम्। असत्त्वादन्यस्य" इत्यादिश्रुतिभिः 'यथा स्वप्नप्रपञ्चोऽयम्' इत्यादिस्मृतिभिः इदं सर्वं मिथ्या मायाकार्यत्वादैन्द्रजालिकवदित्यादियुक्तिभिश्च जगतो मायाकार्यत्वादेव मिथ्यात्वं नियमेन प्रतिपाद्यते। जाग्रत्स्वप्नयोर्व्यभिचरितस्य प्रपञ्चस्य प्रत्यक्षेण सुषुप्तावभावदर्शनाच्च जगतो मायाकार्यत्वं प्रतीतिमात्रत्वं च युक्तं ततस्तेषु मरुजलवत् प्रतीतिमात्रेष्वबादिषु परिपूर्णस्याप्रमेयस्य निष्कलस्य निष्क्रियस्यासङ्गस्यामूर्तस्याविकारिणस्तदेकाधारतया तत्रावस्थानं न संभवति तदभावे तद्गुणदोषपरिच्छित्त्यादिर्न संभावयितुं शक्यते यथा भ्रमकल्पितसर्पे रज्जोरवस्थानं तद्धर्माणां क्रौर्यादीनां विषस्य वाऽन्यस्य वा संबन्धः कल्पयितुं न शक्यते तद्वत्। ननु भूतेष्वबादिषु तव परिपूर्णस्यासङ्गस्यापरिच्छिन्नस्यैवैकदेशे स्थितिर्मास्तु भूतानां तु त्वयि स्थितिः संभवेदित्यत आह—ते मयीति। ते चाबादयो भावा मय्यदृश्यत्वादिगुणके कूटस्थासङ्गचिद्रूपे परे ब्रह्मणि वस्तुतो न सन्ति "नेह नानास्ति किंचन। नहीदं सर्वं कदाचित्। नह्यस्ति द्वैतसिद्धिः" इति च श्रुतेः। यत एवं ततस्त्रिष्वपि कालेषु सजातीयविजातीयस्वगतभेदराहितं नित्यशुद्धबुद्धमुक्तस्वभावमद्वितीयमानन्दैकरसं परं ब्रह्मैकमेवास्तीति सिद्धम् "एकमेवाद्वितीयं ब्रह्म" इतिश्रुतेः॥ १२॥

**श्री० टी०—किंच—ये चेति।** ये चान्येऽपि सात्त्विका भावाः शमदमादयः राजसाश्च द्वेषदर्पादयः तामसाश्च ये शोकमोहादयः प्राणिनां स्वकर्मवशाज्जायन्ते तान्सर्वान्मत्त एव जातानिति विद्धि मदीयप्रकृतिगुणत्रयकार्यत्वात्। एवमपि तेष्वहं न वर्ते जीववत्तदधीनोऽहं न भवामीत्यर्थः। ते तु मदधीनाः सन्तो मयि वर्तन्त इत्यर्थः॥ १२॥

**स० टी०—**भावाश्चित्तपरिणामाः सात्त्विका ये शमादयः॥ राजसा हर्षदर्पाद्या मोहाद्यास्तामसाश्च ये॥ १॥ विद्याकर्मादिवशतो जायन्ते देहिनां हि तान्॥ मत्तः सर्वेश्वरात्सर्वाञ्जायमानानवेहि भोः॥ २॥ न त्वहं तेषु भावेषु मज्जातत्वेऽपि सर्वतः॥ नाहमस्मि तदायत्तो मदायत्ता भवन्ति ते॥ ३॥ मत्तः पृथङ् न ते सन्ति तेभ्यो भिन्नो स्म्यहं सदा॥ रज्जौ सर्पादयो यद्वत्कल्पिता अपि तद्धर्मैः॥ ४॥ रज्जोर्नास्ति मनाग्लेपस्तथा मम न तद्धर्मैः॥ ५॥ १२॥

**भा० टी०—किंच—ये चेति।** ये सात्त्विकाः सत्त्वोद्भूताः भावाः पदार्थाः राजसाः रजउद्भूताः तामसास्तमउद्भूताश्च ये केचित्प्राणिनां स्वकर्मवशाज्जायन्ते तान्सर्वान्मत्त एव जातानिति विद्धि जानीहि। तर्हि संसारिणामिव तवापि तदधीनत्वं स्यात्तथा च त्वय्यपि विक्रियावत्त्वदूष्यत्वप्रसक्तिरित्याशङ्क्याह—नत्वहं तेषु। यद्यपि मत्तस्ते जायन्ते तथाप्यहं संसारिणामिव तदधीनो न भवामि। ननु तेऽपि किं स्वतन्त्रा नेत्याह ते मयि मद्वशा मयि कल्पितत्वान्मदधीनसत्तास्फूर्तिका इत्यर्थः। तथाचाधिष्ठानस्य मम कल्पितगुणदोषासंस्पर्शित्वं कल्पितस्य च मदधीनसत्तास्फूर्तिकत्वमिति भावः॥ १२॥

प० टी०—किं च—ये चैवेति । ये चान्ये सात्त्विका भावाः शमदमादयो राजसा हर्षदर्पादयस्तामसाः शोकमोहादयः प्राणिनां स्वकर्मवशाज्जायन्ते तान् सर्वान्मत्त एव जातान् विद्धि मदीयप्रकृतिगुणकार्यत्वात् । अथापितस्तेषु तेषु पदार्थेषु कारणात्मना तत्तद्रूपेण वर्तमानोऽप्यसङ्गत्वेन तिष्ठामीत्याह—न त्वहमिति । तेषु पदार्थेषु नाहं तद्धर्मान् स्पृशामि अथवा ते प्रातिभासिकत्वान्मयि न सन्ति शुक्तिकायां रजतमिव ॥ १२ ॥

रा० टी०—न केवलं रसादिधर्मप्रेरकः किं नामाऽबादिसर्वप्रेरकश्चेत्याह—ये चेति । ये च भावाः पदार्थाः सात्त्विकाः सत्त्वगुणविकाराः राजसास्तामसाश्च तान्सर्वान्पदार्थान्मत्त एवोत्पन्नान्विद्धि । तथा ते मयोत्पन्नाः ? पदार्थाः मयि मदाधारतया मदुपजीवनेनेति यावत् वर्तन्त इति विद्धि । यथेदं जगत् त्वदधीनं तथा त्वमपि किमेतदधीन इत्यतो नेत्याह—नत्वहं तेष्विति। तदुपजीवने नाहं नैव तिष्ठामीत्यर्थः । ये च ये चेति पृथगुक्तिः सर्वेषां त्रिगुणविकारत्वेऽपि सत्त्वादिप्राचुर्याभिप्रायेणेति ज्ञेयम् ॥ १२ ॥

**त्रिभिर्गुणमयैर्भावैरेभिः सर्वमिदं जगत् ॥**
**मोहितं नाभिजानाति मामेभ्यः परमव्ययम् ॥ १३ ॥**

त० टी०—नन्वेवं सर्वेश्वरं सर्वनियन्तारं सर्वकारणं दोषास्पृष्टं स्वतन्त्रं त्वामयं जनः कुतो न जानाति, जानाति चेत्कथं संसारी भवतीत्यपेक्षायामाह—त्रिभिरिति । एभिः पूर्वोक्तैस्त्रिभिस्त्रिविधैर्गुणमयैर्भावैः सत्त्वादिगुणकार्यभूतैर्बुद्धीन्द्रियशरीरैर्हर्षलोभकामक्रोधादिभिश्च सर्वमिदं जगत् जीवजातं मोहितमाच्छादितज्ञानं सत् मां नाभिजानाति, सर्वेषां प्रवर्तकः स्वतन्त्रः कश्चिदीश्वरोऽस्तीति सामान्यतया जानदपि साक्षात्परब्रह्मैव परवैकुण्ठाधिपः स्वभक्तहितायावतीर्णो वासुदेव इति मां न जानाति । कथंभूतं मामेभ्यो गुणमयभावेभ्यः परं तेभ्यो विलक्षणं तैरस्पृष्टमित्यर्थः । अत एवाव्ययं व्ययरहितं कदाचिदपि गुणशक्त्याद्यन्यथाभावशून्यमित्यर्थः । एवंभूतगुणशक्त्यादिमतो मम साक्षाज्ज्ञानाभावान्नोक्तत्रिगुणमयभावहेतुमायातिक्रमस्तत एव न संसारोपरम इति भावः ॥ १३ ॥

म० टी०—तव परमेश्वरस्य स्वातन्त्र्ये नित्यशुद्धबुद्धमुक्तस्वभावत्वे च सति कुतो जगतस्त्वदात्मकस्य संसारित्वम् । एवंविधमत्स्वरूपापरिज्ञानादिति चेत् तदेव कुत इत्यत आह—त्रिभिरिति । एभिः प्रागुक्तैस्त्रिभिस्त्रिविधैर्गुणमयैः सत्त्वरजस्तमोगुणविकारैर्भावैः सर्वैरपि भवनधर्मभिः सर्वमिदं जगत्प्राणिजातं मोहितं विवेकायोग्यत्वमापादितं सत् एभ्यो गुणमयेभ्यो भावेभ्यः परम् एषां कल्पनाधिष्ठानमत्यन्तविलक्षणमव्ययं सर्वविक्रियाशून्यमप्रपञ्चमानन्दघनमात्मप्रकाशमव्यवहितमपि मां नाभिजानाति ततश्च स्वरूपापरिचयात्संसरतीवेत्यहो दौर्भाग्यमविवेकिजनस्येत्यनुक्रोशं दर्शयति भगवान् ॥ १३ ॥

शं० टी०—ननु त्वां परिपूर्णं सच्चिदानन्दैकरसमद्वितीयं परं ब्रह्म कस्मादयं लोको निःशेषसंसारदुःखविच्छित्त्यै न विजानातीत्याकाङ्क्षायां तत्कारणमाह—त्रिभिर्गुणमयैरिति । गुणमयैः सत्त्वादिगुणपरिणामैस्त्रिभिस्त्रिप्रकारैः सात्त्विकैः राजसैस्तामसैश्च भावैर्भोग्यपदार्थैरेतैरनुभूयमानैः शब्दादिविषयैर्बन्धकैस्तत्प्रवृत्तिकारणै रागद्वेषादिभिश्च मोहितं मोहः सदसद्विवेकाभावस्तं प्रापितं 'इन्द्रियाभ्यामजय्याभ्यां द्वाभ्यामेव हृतं जगत् । अहो उपस्थजिह्वाभ्यां ब्रह्मादि मशकावधि' इतिन्यायेनानाद्यविद्यया विषयभोगलाम्पट्यमेवानुगमितमिदं जगज्जङ्गमप्राणिजातं सर्वं च एभ्यः सत्त्वादिगुणेभ्यो गुणकार्येभ्यश्चाकाशादिभूतेभ्यः सर्वेभ्यो दृश्येभ्यः परं भिन्नं नित्यत्वेन निर्गुणत्वेन शुद्धत्वेन बोधैकरसत्वेनानन्दघनत्वेन विलक्षणं चाव्ययमविक्रियं शाश्वतं परिपूर्णमद्वितीयं मां परं ब्रह्म नाभिजानाति तत्र कश्चित् त्वा मत्वापि ब्रह्म परोक्षमेव जानाति नत्विदमेवाहमि-

त्याभिमुख्येन स्वात्मना वेत्तीत्यर्थः । यद्वा गुणमयैः सत्त्वादिगुणविकारैर्मनोमयो विज्ञानमयश्च ज्ञानेन्द्रिया-ण्यग्न्यादिदेवाश्च सत्त्वविकाराः प्राणादयः कर्मेन्द्रियाणि च रजोविकारा आनन्दमयश्चान्नमयश्च तमोविकारौ एवं सत्त्वादिगुणमयैस्त्रिविधैर्भावैरात्मन उपाधित्वेन भाव्यन्ते इति भावाः स्थूलसूक्ष्मकारणदेहास्तैरित्थंभावे तृतीया । देहत्रितयात्मना स्थितमिदं जगत् प्राणिजातं सर्वं मोहितं पञ्चकोशात्मकमिदं शरीरमेवाह-मित्यनाद्यविद्यया आवरणात्मिकया वासनात्मिकया च त्रिगुणमय्या देह एवात्मबुद्धिं प्रापितं सत् स्वयमेभ्यः स्थूलसूक्ष्मकारणदेहेभ्यः परं नित्यत्वशुद्धत्वसूक्ष्मत्वान्तरत्वकूटस्थत्वासङ्गत्वचिद्रूपत्वानन्दैकरसत्व-सर्वज्ञत्वसर्वसाक्षित्वसर्वप्रकाशकत्वादिधर्मैर्विलक्षणमनावृततया सर्वदा प्रकाशमानमहमर्थतया प्रत्यक्षेण सुषु-प्तावपि प्रतीयमानमेकात्मकमेकरूपं निर्विशेषं मां प्रत्यग्रूपं परं ब्रह्म नाभिजानाति अयमेवाहमिति क्षुद्वद्रोगवदारोग्यवद्भोजनादिसुखवद्देहेन्द्रियादिभ्यो भिन्नतया स्वात्मना न कोऽपि साक्षात्करोति अहो इदमे-वात्यद्भुततरमिति मन्यते श्रीभगवान् ॥ १३ ॥

**श्री० टी०**—एवंभूतं त्वां परमेश्वरमयं जनः किमिति न जानातीत्यत आह—**त्रिभिरिति** । त्रिभिस्त्रि-विधैरेभिः पूर्वोक्तैः गुणमयैः कामलोभादिभिर्गुणविकारैः भावैः स्वभावैर्मोहितमिदं जगत् अतो मां नाभिजानाति । कथंभूतम् एभ्यो भावेभ्यः परमेभिरसंस्पृष्टमेतेषां नियन्तारमत एवाव्ययं निर्विकारमित्यर्थः ॥ १३ ॥

**स० टी०**—एवंभूतं न जानन्ति भगवन्तं हि मां जनाः ॥ निर्गुणं गुणदाहार्थमित्याक्रोशति माधवः ॥ १ ॥ रागद्वेषप्रमादादिप्रकारैर्गुणजन्मभिः ॥ पदार्थैर्मोहितं सर्वं प्राणिमात्रमिदं किल ॥ २ ॥ एभ्यो गुणमयेभ्यो मां सर्वाधिष्ठानमीश्वरम् ॥ समस्तविक्रियाशून्यं परं चातिविलक्षणम् ॥ ३ ॥ आनन्दघनमा-त्मानं स्वप्रकाशं निरञ्जनम् ॥ न जानाति ततः स्वात्माज्ञानादेव कुसंसृतौ ॥४॥ भ्रमत्यहो सुदौर्भाग्यमवि-वेकिजनस्य च ॥ इत्याक्रोशं कृपासिन्धुर्दर्शयत्यान्ध्यमुक्तये ॥ ५ ॥ १३ ॥

**भा० टी०**—एवंभूतमपि मामीश्वरं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वात्मानं निर्गुणं संसारमूलोच्छेदाय जगन्नाभिजानातीत्याक्रोशं दर्शयन्स्वाज्ञाने निमित्तमाह—**त्रिभिरिति** । त्रिभिस्त्रिविधैः गुणमयैर्गुणविकारैः भावैः पदार्थैः रागद्वेषमोहादिभिः सर्वमिदं जगत् चराचरात्मकं मोहितं विवेकाच्छादकमोहं प्रापितं सन्मामेभ्यो गुणतद्विकारेभ्यः परमतिरिक्तमत एवाव्ययं व्ययरहितं जन्मादिसर्वभावविकारविवर्जितमित्यर्थः । नाभिजा-नाति स्वाभिन्नत्वेन न साक्षात्करोतीत्यर्थः ॥ १३ ॥

**प० टी०**—अथैतदेव प्रकटयन्नाह—**त्रिभिरिति** । एभिर्गुणैः सत्त्वरजस्तमोभिस्त्रिभिर्भावैः प्रकृतेः स्वभावै-रिदं सर्वं जगन्मोहितं यतो मामेभ्यो गुणेभ्यः परमधिकरणरूपं बाधरहितं नाभिजानाति प्रातिभासिकरज-तार्थं धावमानः शुक्तिकां न वेत्तीत्यर्थः ॥ १३ ॥

**रा० टी०**—ननु विज्ञानोक्त्युपसंहारपरपूर्वश्लोके सत्त्वादिगुणनिष्पन्नानां सर्वपदार्थानां भगवानेव कारणं तदाश्रयश्चेत्युक्तं तेनैव गुणातीत इति चोक्तप्रायं तदयुक्तं तथात्वे गुणातीतत्वेन अज्ञायमानत्वस्य सगुण-त्वेन ज्ञायमानत्वस्य च तत्वायोगादित्यत आह—**त्रिभिरिति** । त्रित्वं योग्यतया गुणविशेषणं सत्त्वरजस्त-मोरूपत्रिगुणमयैः गुणत्रयात्मकैरित्यर्थः । तादात्म्यार्थोऽयं मयट् । भावैः पदार्थैः उपादानोपादेययोरभेदात् त्रिगुणतत्कार्यरूपैः एभिर्भावैः पदार्थैरित्यर्थः । यद्वा गुणमयैस्त्रिभिः प्रागुक्तरीत्या सात्त्विकादिभेदभिन्नैरेभिः प्रमितैर्भावैः पदार्थैः मोहितं सत् इदं ज्ञानिभिन्नं जगदेभ्यो गुणतद्विकारेभ्यः परं व्यतिरिक्तमत एव देह-तोऽप्यव्ययं मां नाभिजानाति विपरीतं च जानातीत्यर्थः । अत्र एभिरिति सर्वपदार्थानां गुणमयत्वप्रदर्श-नाय प्रमितसर्वपरामर्शित्वात्तस्य । न च भगवद्विषयकसगुणत्वादिमोहस्य कथं गुणमयात्मकाः पदार्थाः

कारणं येन गुणमयैर्भावैर्मोहितमित्युक्तिर्युक्ता स्यादिति शङ्क्यं लोके गुणमयदेहादिकं दृष्ट्वा ईश्वरदेहादिरप्येतादृशः देहत्वादिति हेतुना गुणमयमिति मोहितमिति तात्पर्यात् । ज्ञानिनो यथावत्तया जानन्तीति तद्व्यावृत्त्यर्थमिदमिति जगद्विशेषणम् । उपायाभावादज्ञजनस्य गुणातीतत्वेन भगवतोऽनुपलम्भः । देहाद्यत्वा(?)नुमानाभासेन सगुणतया विपरीतोपलम्भश्चेत्युक्तं भवति ॥ १३ ॥

**दैवी ह्येषा गुणमयी मम माया दुरत्यया ॥**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥ १४ ॥**

**त० टी०**—ननु " गौरनाद्यन्तवती जनित्री भूतभाविनी सितासिता च रक्ता च " इत्यादिश्रुतेर्मायागुणप्रवाहस्यानाद्यनन्तत्वाभिधानात्तन्मोहितानां जीवानामस्वातन्त्र्येण तत्परिहर्तुमशक्यत्वान्न कदाऽपि कस्यापि मायातिक्रमः स्यादित्याशङ्क्यासाधारणं मायातरणोपायमाह—दैवीति । "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेताः केवलो निर्गुणश्च" इति श्रुतिप्रतिपादितस्य देवस्य स्वतो द्योतमानस्य चिदानन्दघनस्य कर्मनियन्तुः सर्वव्यापकत्वेऽपि चेतनाचेतनजगद्गुणदोषसंबन्धवर्जितस्यातिशयसाम्यशून्यस्य भगवतो नियम्यभूता दैवी एषा त्रिगुणमयकार्यद्वारा सर्वप्रत्यक्षा गुणमयी, सत्त्वरजस्तमोगुणमयात्मिका मम परमेश्वरस्य सर्वज्ञस्य सर्वशक्तेः सर्वकार्योत्पादनशक्तिर्मायाशब्दवाच्या " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इतिश्रुतेः । दुरत्यया ममानुग्रहमन्तरेणोपायसहस्रैरपि दुस्तरा हि निश्चितमेतत्तथापि " नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, तद्यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इत्यादिश्रुतिभ्योऽनन्ता एव जीवास्तेषां मध्ये ये केचिन्मामेव सर्वेश्वरं सर्वज्ञं सर्वशक्ति मायानियन्तारं प्रपद्यन्ते स्वपुरुषार्थाभिमानं साधनान्तरं च विहाय साधनसाध्यरूपं निश्चित्य सर्वात्मना भजन्ते, आनुकूल्यसंकल्पादिकार्पण्यान्तां षड्विधां शरणागतिं मयि कुर्वन्तीत्यर्थः । त एवैतां मम मायां तरन्ति वर्जयन्तीत्यर्थः । न त्वन्ये, अवधारणस्योभयत्र संबन्धात् ' ये प्रपन्ना हृषीकेशं न ते मुह्यन्ति मानवाः । भये महति मग्नानां त्राता नित्यं जनार्दनः ' इति भीष्मपर्वणि वचनम् । वामने प्रह्लादश्चाह 'ये संश्रिता हरिमनन्तममध्यमाद्यं नारायणं सुरगुरुं शुभदं वरेण्यम् । शुद्धं खगेन्द्रगमनं कमलालयेशं ते धर्मराजभवनं न विशन्ति धीराः' इति ॥ १४ ॥

**म० टी०**—ननु यथोक्तानादिसिद्धमायागुणत्रयबद्धस्य जगतः स्वातन्त्र्याभावेन तत्परिवर्जनासामर्थ्यान्न कदाचिदपि मायाऽतिक्रमः स्याद्वस्तुविवेकासामर्थ्यहेतोः सदातनत्वादित्याशङ्क्य भगवदेकशरणतया तत्त्वज्ञानद्वारेण मायाऽतिक्रमः संभवतीत्याह—दैवी ह्येषेति । दैवी " एको देवः सर्वभूतेषु गूढः " इत्यादिश्रुतिप्रतिपादिते स्वतो द्योतनवति देवे स्वप्रकाशचैतन्यानन्दे निर्विभागे तदाश्रयतया तद्विषयतया च कल्पिताश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवलेत्युक्तेः एषा साक्षिप्रत्यक्षत्वेनापलापानर्हा हिशब्दाद्धर्मोपादानत्वादर्थापत्तिसिद्धा च गुणमयी सत्त्वरजस्तमोगुणत्रयात्मिका त्रिगुणरज्जुरिवातिदृढत्वेन बन्धनहेतुः मम मायाविनः परमेश्वरस्य सर्वजगत्कारणस्य सर्वज्ञस्य सर्वशक्तेः स्वभूता स्वाधीनत्वेन जगत्सृष्ट्यादिनिर्वाहिका माया तत्त्वप्रतिभासप्रतिबन्धेनातत्त्वप्रतिभासहेतुरावरणविक्षेपशक्तिद्वयवत्यविद्या सर्वप्रपञ्चप्रकृतिः " मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् " इति श्रुतेः । अत्रैवं प्रक्रिया जीवेश्वरजगद्विभागशून्ये शुद्धे चैतन्येऽध्यस्तानादिरविद्या सत्त्वप्राधान्येन स्वच्छदर्पण इव मुखाभासं चिदाभासमागृह्णाति ततश्च बिम्बस्थानीयः परमेश्वर उपाधिदोषानास्कन्दितः प्रतिबिम्बस्थानीयश्च जीव उपाधिदोषास्कान्दितः । ईश्वराच्च जीवभोगायाकाशादिक्रमेण शरीरेन्द्रियसंघातस्तद्भोग्यश्च कृत्स्नः प्रपञ्चो जायत इति कल्पना भवति । बिम्बप्रतिबिम्बमुखानुगत-

मुखस्वरूपवच्च ईशजीवानुगतं मायोपाधिचैतन्यं साक्षीति कल्प्यते । तेनैव स्वाध्यस्तता माया तत्कार्यं च कृत्स्नं प्रकाश्यते । अतः साक्ष्यभिप्रायेण दैवीति बिम्बेश्वराभिप्रायेण तु ममेति भगवतोक्तम् । यद्यप्यविद्याया एकत्वात् प्रतिबिम्ब एक एव जीवस्तथाप्यविद्यागतानामन्तःकरणसंस्काराणां भिन्नत्वात्तद्भेदेनान्तःकरणोपाधेस्तस्यात्र भेदव्यपदेशः—मामेव ये प्रपद्यन्ते, न मां दुष्कृतिनो मूढाः प्रपद्यन्ते, चतुर्विधा भजन्ते मामित्यादिः । श्रुतौ च "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्" इत्यादिः । अन्तःकरणोपाधिभेदापर्यालोचने तु जीवत्वप्रयोजकोपाधेरेकत्वादेकत्वेनैवात्र व्यपदेशः—क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु, प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि, ममैवांशो जीवलोके जीवभूतः सनातन इत्यादिः । श्रुतौ च "ब्रह्म वा इदमग्र आसीत्तदाऽऽत्मानमेव वेदाऽहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत् । एको देवः सर्वभूतेषु गूढः । अनेन जीवेनात्मनानुप्रविश्य । वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्प्यते" इत्यादिः । यद्यपि दर्पणगतश्चैत्रप्रतिबिम्बः स्वं परं च न जानात्यचेतनांशस्यैव तत्र प्रतिबिम्बितत्वात् तथापि चित्प्रतिबिम्बश्चित्त्वादेव स्वं परं च जानाति प्रतिबिम्बपक्षे बिम्बचैतन्य एवोपाधिस्थत्वमात्रस्य कल्पितत्वात् आभासपक्षे तस्यानिर्वचनीयत्वेऽपि जडविलक्षणत्वात् । स च यावत्स्वबिम्बैक्यमात्मनो न जानाति तावज्जलसूर्य इव जलगतकम्पादिकमुपाधिगतं विकारसहस्रमनुभवति, तदेतदाह दुरत्ययेति बिम्बभूतेश्वरैक्यसाक्षात्कारमन्तरेण अत्येतुं तरितुमशक्येति दुरत्यया अत एव जीवोन्तःकरणावच्छिन्नत्वात्तत्संबन्धमेवाक्ष्यादिद्वारा भासयन् किंचिज्ज्ञो भवति ततश्च जानामि करोमि भुञ्जे चेत्यनर्थशतभाजनं भवति स चेद्बिम्बभूतं भगवन्तमनन्तशक्तिं मायानियन्तारं सर्वविदं सर्वफलदातारमनिशमानन्दघनमूर्तिमनेकानवतारान् भक्तानुग्रहाय विदधतमाराधयति परमगुरुमशेषकर्मसमर्पणेन तदा बिम्बसमर्पितस्य प्रतिबिम्बे प्रतिफलनात्सर्वानपि पुरुषार्थानासादयति । एतदेवाभिप्रेत्य प्रह्लादेनोक्तम् 'नैवात्मनः प्रभुरयं निजलाभपूर्णो मानं जनादविदुषः करुणो वृणीते । यद्यज्जनो भगवते विदधीत मानं तच्चात्मने प्रतिमुखस्य यथा मुखश्रीः' इति दर्पणप्रतिबिम्बितस्य मुखस्य तिलकादिश्रीरपेक्षिता चेद्बिम्बभूते मुखे समर्पणीया सा स्वयमेव तत्र प्रतिफलति नान्यः कश्चित्तत्प्राप्तावुपायोऽस्ति यथा तथा बिम्बभूतेश्वरे समर्पितमेव तत्प्रतिबिम्बभूतो जीवो लभते नान्यः कश्चित्तस्य पुरुषार्थलाभेऽस्त्युपाय इति दृष्टान्तार्थः । तस्य यदा भगवन्तमनन्तमनवरतमाराधयतोऽन्तःकरणं ज्ञानप्रतिबन्धकपापेन रहितं ज्ञानानुकूलपुण्येन चोपचितं भवति तदाऽतिनिर्मले मुकुरमण्डल इव मुखमतिस्वच्छेऽन्तःकरणे सर्वकर्मत्यागशमदमादिपूर्वकगुरूपसदनवेदान्तवाक्यश्रवणमनननिदिध्यासनैः संस्कृते तत्त्वमसीति गुरूपदिष्टवेदान्तवाक्यकरणिकाऽहंब्रह्मास्मीत्यनात्माकारशून्या निरुपाधिचैतन्याकारा साक्षात्कारात्मिका वृत्तिरुदेति तस्यां च प्रतिफलितं चैतन्यं सद्य एव स्वविषयाश्रयामविद्यामुन्मूलयति दीप इव तमः ततस्तस्या नाशात्तया वृत्त्या सहाखिलस्य कार्यप्रपञ्चस्य नाशः उपादाननाशादुपादेयनाशस्य सर्वतन्त्रसिद्धान्तसिद्धत्वात् । तदेतदाह भगवान्—मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इति "आत्मेत्येवोपासीत तदात्मानमेवावेत् । तमेव धीरो विज्ञाय । तमेव विदित्वाऽतिमृत्युमेति" इत्यादिश्रुतिष्विवेहापि मामेवेत्येवकारोप्यनुपरक्तताप्रतिपत्त्यर्थः । मामेव सर्वोपाधिविरहितं चिदानन्दसदात्मानमखण्डं ये प्रपद्यन्ते वेदान्तवाक्यजन्यया निर्विकल्पकसाक्षात्काररूपया निर्वचनानर्हशुद्धचिदाकारत्वधर्मविशिष्टया सर्वसुकृतफलभूतया निदिध्यासनपरिपाकप्रसूतया चेतोवृत्त्या सर्वाज्ञानतत्कार्यविरोधिन्या विषयीकुर्वन्ति ते ये केचित् एतां दुरतिक्रमणीयामपि मायामखिलानर्थजन्मभुवमनायासेनैव तरन्ति अतिक्रामन्ति "तस्य ह न देवाश्च नाभूत्या ईशत आत्माह्येषां स भवति" इति श्रुतेः । सर्वोपाधिनिवृत्त्या सच्चिदानन्दघनरूपेणैव तिष्ठन्तीत्यर्थः । बहुवचनप्रयोगो देहेन्द्रियादिसंघातभेदनिबन्धनात्मभेदभ्रान्त्यनुवादार्थः ।

प्रपश्यन्तीति वक्तव्ये प्रपद्यन्त इत्युक्तेः ये मदेकशरणाः सन्तो मामेव भगवन्तं वासुदेवमीदृशमनन्तसौन्दर्य-सारसर्वस्वमखिलकलाकलापनिलयमभिनवपङ्कजशोभाधिकचरणकमलयुगलप्रभमनवरतवेणुवादननिरतवृन्दावनक्रीडासक्तमानसहेलोद्धृतगोवर्धनाख्यमहीधरं गोपालं निषूदितशिशुपालकंसादिदुष्टसंघमभिनवजलदशोभा-सर्वस्वहरणचरणं परमानन्दघनमथमूर्तिमतिवैरिश्चप्रपञ्चमनवरतमनुचिन्तयन्तो दिवसानतिवाहयन्ति ते मत्प्रे-ममहानन्दसमुद्रमग्नमनस्तया समस्तमायागुणविकारैर्नाभिभूयन्ते किंतु मद्विलासविनोदकुशला एते मदुन्मू-लनसमर्था इति शङ्कमानेव माया तेभ्योऽपसरति वारविलासिनीव क्रोधनेभ्यस्तपोधनेभ्यस्तस्मान्मायातरणार्थी मामीदृशमेव सन्ततमनुचिन्तयेदित्यप्यभिप्रेतं भगवतः । श्रुतयः स्मृतयश्चात्रार्थे प्रमाणीकर्तव्याः ॥ १४ ॥

शं० टी०—नन्वनाद्यविद्यया माययाऽनात्मन्येवात्मत्वभ्रमेण मोहितानां संसारदुःखाग्निना संतप्यमानानां प्राणिनां कथं तरणं सिध्यतीत्याकाङ्क्षायां तत्तरणोपायं विवक्षुरीश्वर आदौ तत्तरणे महान् प्रयत्नः कर्तव्य इति बोधयितुं तस्या दुर्जयत्वमाह—**दैवीति** । कालत्रयेऽप्यन्यानपेक्षया स्वयमेव दीव्यते प्रकाशत इति देवः परमात्मा निर्विशेषस्तस्मिन्नात्मन्याकाशे नीलिमवदाभासरूपेण मयि तिष्ठतीति दैवी । यद्वा तथाहि "प्राज्ञे सैषा-विद्या" इति श्रवणाद्देवे प्राज्ञे तिष्ठतीति दैवी गुणमयी गुणात्मिका माया मम स्वरूपस्य जलस्य शैवालमिवावरणीभूय तिष्ठति सैषा माया पुंसां दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा दुरत्यया दृष्टादृष्टविषयसुखतत्साधनसर्वस्वपरित्यागयमनियमादिदुःखेनैवात्येतुं शक्यते नान्येनात एव दुरत्यया दुर्जया हि खलु मायाया दुर्जयत्वं लोकशास्त्रप्रसिद्धम् । एवं मायाजये प्रयत्ना-धिक्यं बोधयित्वा तत्तरणोपायं च स्वयमेवाह—**मामेवेति** । निष्कामनयेश्वरार्पणबुद्ध्या बहुजन्मस्व-नुष्ठितपुण्यकर्मविशेषैः शुद्धात्मानः सन्तो विवेकवैराग्याभ्यां सर्वं संन्यस्य ब्रह्मविदुरोः सन्निधौ श्रद्धया तीव्र-मोक्षेच्छया प्राप्ततदेकनिष्ठया श्रवणं मननं च कृत्वा षष्ठेनोक्तरीत्या मामेव निर्गुणमद्वयत्वानात्म्यत्वा-दिलक्षणं चिदेकरसं परं ब्रह्म नित्यनिरन्तरनिर्विकल्पकसमाधिनिष्ठया क्रियान्तरानवकाशप्रदयैव ये यतयः प्रपद्यन्ते विपरीतप्रत्ययराहित्येन सर्वदा स्वात्मनानुसंदधते त एव गुर्वात्मेश्वरप्रसादातिशयात् सम्यगुत्पन्ना प्रतिबद्धपरावरैकत्वविज्ञानेनैवैतामावरणविक्षेपात्मिकां सर्वानर्थकारणभूतां सत्त्वरजस्तमोगुणमयीं मायां तत्कार्यं च विपरीतदर्शनलक्षणं तरन्ति सर्वमिदमहं च ब्रह्मैवेत्यप्रतिबद्धब्रह्मैकत्वप्रत्ययेन विध्वंसयन्ति नित्य-निरन्तरब्रह्मनिष्ठया रजोगुणान् रागादीन् तमोगुणान् विपरीतभावादीन् सत्त्वगुणाञ्छमादींश्च तत्कार्याणि च प्रवृत्तिनिवृत्त्यहंममेत्यादीनि सर्वाण्यतीत्य इहैव संसारान्मुक्ता भूत्वा विदेहमुक्तिसुखमखण्डमात्मीयं प्राप्नुव-न्ति नान्ये श्रवणमात्रेणात्मानं कृतार्थं मन्यमाना इत्यर्थः । अत्र मामेव ये प्रपद्यन्त इत्यस्मच्छब्देन सगुणं वस्तु न विवक्षितं तथात्वे तदुपास्त्या गुणमय्या मायाया अतिक्रमासंभवात् नहि गुणवदुपास्त्या सत्त्वादि-गुणातिक्रमणं भेददर्शननिवृत्तिश्च सिध्यति विषसेवयाऽमृतत्वसिद्धिवदमृतसेवयैवामृतत्वसिद्धि र्दुःसाध्या कथं सा विषसेवया सिध्येत् तद्वन्निर्गुणोपास्त्या मायायास्तत्कार्यस्य निःशेषनिवृत्त्यसंभवे-ऽनर्थकया सगुणोपास्त्या कथं तन्निवृत्तिः संभवेत् तत एव "यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते अथ तस्य भयं भवति" इति निर्विशेषोपासिनः क्वचिदीषद्भेदं पश्यतो विदुषोऽपि तद्भेददर्शनस्य संसारलक्षणं भयं श्रूयते किमुत सर्वदा भेदैकनिबन्धनां सगुणोपास्तिं कुर्वतः, उपास्त्यनुरूपत्वात्फलसिद्धेः नह्युपास्तिभेदे फलाभेदोऽस्ति नहि पिचुमन्दसेवावत आम्रसेवाफलमस्ति तद्वत् । तथाच श्रुतिः "यथा-क्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति तं यथायथोपास्ते तथैव भवति असन्नेव स भवति असद्ब्र-ह्मेति वेदचेत्" इत्यादिः । तथा स्मृतिश्च 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति माया खलु ब्रह्मात्मनोर्ब्रह्मजगतोश्च भेददर्शनहेतुस्तस्या एव प्रवर्धकमत्यन्तभेददर्शनलक्षणमयमुपास्यो ममाहमेनमुपासे

इत्यहंममपदप्रत्ययार्थभेदाश्रयं द्वैतोपासनमेव कुर्वतो यदि मायानिवृत्तिः स्यात्तदा प्राचीं दिशं गच्छतः कैलासप्राप्तिः स्यात् यस्मादेवं तस्मादत्रास्मच्छब्दार्थो निर्गुणमेव परं ब्रह्म तस्यैवोपास्तिं कुर्वत एव मायात्यय इति सिद्धम् ॥ १४ ॥

**श्री० टी०**–के तर्हि त्वां जानन्तीत्यत आह–**दैवी हीति** । दैवी अलौकिकी अत्यद्भुतेत्यर्थः । गुणमयी सत्त्वादिगुणविकारात्मिका मम परमेश्वरस्य शक्तिर्माया दुरत्यया दुस्तरा हि प्रसिद्धमेतत् तथापि ये मामेवेत्येवकारेणाव्यभिचारिण्या भक्त्या प्रपद्यन्ते भजन्ति ते मायामेतां दुस्तरामपि तरन्ति ततो मां जानन्तीति भावः ॥ १४ ॥

**स० टी०**–अनादिसिद्धा त्रिगुणा माया या तद्गुणैर्जगत् ॥ बद्धं तस्य ततो मुक्तिः कथं स्यादिति चेच्छृणु ॥ १ ॥ ययाऽयं मोहितो लोको मायया नैव वेत्ति माम् ॥ सैषा दैवी स्वयंज्योतिर्देवाश्रयतयानृता ॥ २ ॥ कल्पिता साक्षिप्रत्यक्षगम्या तद्विषया तथा ॥ गुणत्रयात्मिका बन्धहेतुस्त्रिगुणरज्जुवत् ॥ ३ ॥ मम मायाविनः सर्वशक्तेः सर्वविदो विभोः ॥ स्वाधीनत्वेन सृष्ट्यादिनिर्वाहिकतया मता ॥ ४ ॥ मायावरणविक्षेपशक्तिद्वयवती जडा ॥ सर्वप्रपञ्चप्रकृतिरविद्याऽज्ञानशब्दिता ॥ ५ ॥ अशक्या तरितुं जीवैर्मत्साक्षात्कारमन्तरा ॥ केनोपायेन तत्र च साक्षात्कारो भवेन्नृणाम् ॥ ६ ॥ स वक्तव्य इतीदानीमुच्यते कृपयात्मना ॥ ये मां मायानियन्तारं भगवन्तं जगद्गुरुम् ॥ ७ ॥ समस्तफलदातारं सर्वज्ञं सर्वशक्तिकम् ॥ नित्यानन्दघनात्मानं भक्तानुग्रहतत्परम् ॥ ८ ॥ सर्वोपाधिविनिर्मुक्तं त्यक्त्वान्यत्रोपरक्तताम् ॥ प्रपद्यन्तेऽन्तरात्मानमनन्यशरणा जनाः ॥ ९ ॥ सदानुचिन्तयन्तो मां दिवसान्क्षपयन्ति ये ॥ ते मत्प्रेममहानन्दवार्धिमग्नमनस्तया ॥ १० ॥ त्यक्त्वा मायागुणान्बन्धहेतून्मायां निहत्य च ॥ मत्प्रसादजबोधेन बाधेनातितरन्ति ताम् ॥ ११ ॥ मामेवेत्येवकारेण भगवच्छरणं विना ॥ न मायातरणोपायः कोऽप्यस्तीत्यत्र सूचितम् ॥ १२ ॥ मायां दुरत्ययां तर्तुमनायासाद्य इच्छति ॥ स मां शरण्यं सौन्दर्यसारसर्वस्वमीश्वरम् ॥ १३ ॥ सदानुचिन्तयेत्प्रेम्णा नान्यत्किंचिद्विचिन्तयेत् ॥ इति श्रीवासुदेवस्य तात्पर्यमिह गम्यते ॥ १४ ॥ चिदानन्दाकारं नवजलदशोभास्पदपदं महामायाधारं शुभगुणकलाग्रामनिलयम् ॥ शरण्यं भीतानां जनिमृतिभयात्त्राणचरणं प्रपद्येऽहं कृष्णं स्मितमधुरवक्त्रं विदधतम् ॥ १५ ॥ १४ ॥

**भा० टी०**–तर्ह्यनादिसिद्धां त्रिगुणात्मिकां दैवीं मायां जीवमोहिनीं केनोपायेनातिक्रामन्तीत्यपेक्षायामाह–**दैवी हीति** । देवस्य ममेश्वरस्य स्वभूता त्रिगुणमयी त्रिगुणात्मिका माया प्रकृतिः 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' सा प्रकृतिर्मायाऽविद्यारूपेण द्विधा "माया चाविद्या च स्वयमेव भवति" इति श्रुतेः । तदुक्तम् 'तमोरजःसत्त्वगुणा प्रकृतिर्द्विविधा मता । सत्त्वशुद्ध्यविशुद्धिभ्यां मायाविद्ये च ते मते ॥ मायाबिम्बो वशीकृत्य तां स्यात्सर्वज्ञ ईश्वरः । अविद्यावशगस्त्वन्यस्तद्वैचित्र्यादनेकधा' इति । तथाच माया प्रकृतिरविद्या मायामयी ईश्वरमधिष्ठानत्वेनाश्रित्य जीवान्मोहयति । तथाच शारीरकं भाष्यम्–अविद्यात्मिका हि बीजशक्तिरव्यक्तशब्दनिर्देश्या परमेश्वराश्रया मायामयी महासुषुप्तिर्यस्यां स्वरूपबोधरहिताः शेरते संसारिणो जीवास्तदव्यक्तमिति । मोहदा चाविद्यारूपेण संसारबीजभूतेन । सा चाविद्या जीवाश्रया परमात्मविषया वेदान्तवेद्यं वस्तु न जानामीत्यत्र तथैवानुभवात् । न चाविद्यायां सत्यां जीवपरमात्मविभागः सति चैतस्मिन् जीवाश्रयापरमात्मविषयाऽविद्येतीतरेतराश्रय इति वाच्यं, जीवाविद्ययोर्बीजाङ्कुरवदनादित्वात् । नन्वेतद्दृष्टान्तेन जीवानित्यत्वमिति चेन्न, उत्तरोत्तरजीवाभिव्यक्तीनां पूर्वपूर्वभ्रमनिमित्तत्वाश्रयणात् । नन्वविद्याया जीवाश्रितत्वे स्वस्य च तदाश्रितत्वे आत्माश्रय इति चेन्न, अनादित्वेनोत्पत्त्यभावात् । जीवस्य स्वतः प्रतीत्या तद्बलादविद्याया अपि प्रतीतिसंभवात् । नन्वेवमपि स्वस्कन्धारू-

ढारोहणवत् स्वाश्रिताश्रितत्वं विरुद्धमिति चेन्न, जीवाविद्ययोरमूर्तत्वेन कुण्डबदरवदधरोत्तरीभावायोग्य-त्वेनावच्छेद्यावच्छेदकत्वाश्रयणात्। अविद्यावच्छेदकोपाधिकं जीवत्वमिति जीवोऽविद्ययावच्छिद्यते सा च चैत-न्याश्रिता वृक्षाश्रितः श्येनसंयोगः शाखात्वेनेव जीवत्वेनावच्छिद्यते। नन्विदमपीतरेतराश्रयग्रस्तमिति चेन्न, एवंविधस्थलेऽन्योन्याश्रयस्यादोषात्। प्रमेयत्वावगाहिप्रमाणं निरूपकप्रमेयावच्छेद्यं प्रमेयं च स्वविशेषणी-भूतप्रमाणावच्छेद्यमित्येवमादिष्ववच्छेद्यावच्छेदकत्वस्यान्योन्याश्रयतन्त्रस्य दृष्टत्वात्। जीवाविद्ययोरधिष्ठानं तु ब्रह्म तस्यैव सर्वप्रपञ्चविवर्ताधिष्ठानत्वात्। तदुक्तम् 'अधिष्ठानं विवर्तानामाश्रयो ब्रह्म शुक्तिवत्। जीवा-विद्यादिकानां स्यादिति सर्वमनाकुलम्' इति। अत एव भगवताप्युक्तं दैवी ह्येषा मम मायेति। शुक्तिरेव यथा रजतरूपेणावभासते तथा पर एवात्मा अनाद्यविद्यावच्छेदलब्धजीवभावभेदेनावभासते स एव च देहे-न्द्रियादिभिरवच्छिद्यमानो बालैः शारीर इत्युपचर्यते। तादृशां च जीवानामविद्या न तु सर्वोपाधिविहीनस्य परमात्मनः। नन्वस्वतन्त्रोऽन्येन कारागृहे प्रवेश्यते परमात्मा तु सर्वज्ञः सर्वशक्तिश्च कस्मादकस्मात्संसारी संप-द्यते इति चेन्न, जीवस्यानादित्वेन शङ्काऽनवसरात्। तथाचाविद्यात्मनो जीवस्यैवाविद्याकल्पितसुखादिसंभोग उ-पपद्यते न तु परमात्मनः शुद्धबुद्धमुक्तस्वभावस्य निर्मृष्टनिखिलाविद्यातद्वासनस्येति हि यस्मादेषानुभवसिद्धाऽक-स्मादपलापानर्हा गुणमयी सत्त्वरजस्तमोमयी। प्रधानस्येव मायायाः स्वातन्त्र्यनिरासार्थं दैवीत्युक्तम्। देवस्येयं स्वभूता दैवी। कस्यदेवस्येयं च केत्यपेक्षायां मम। माया इत्युक्तम्। दुरत्यया दुःखेनात्ययोऽतिक्रमणं यस्याः सा। अतिक्रमणे तर्हि क उपाय इत्यपेक्षायामाह—**मामिति**। मामेव स्वात्मभूतमेवकारेण मायाया व्यावृत्ति-र्विवक्ष्यते। ये प्रपद्यन्ते सर्वात्मना प्रपन्ना भवन्ति ते मत्प्रसादाल्लब्धबुद्धियोगा मायामेतां दुरत्ययां सर्वभूत-मोहिनीं तरन्ति अतिक्रामन्ति संसारबन्धनान्मुच्यन्त इत्यर्थः। अत्रेदमवधेय—अनादिरनिर्वाच्या भूतप्रकृति-श्चिन्मात्रसंबन्धिनी माया तस्यां चित्प्रतिबिम्ब ईश्वरः। तस्या एवावरणविक्षेपशक्तिमदविद्याभिधानेषु परि-च्छिन्नानन्तप्रदेशेषु चित्प्रतिबिम्बो जीव इति केचित्। "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवति" इति श्रुतिसिद्धौ मूलप्रकृतेस्त्रिगुणात्मिकायाः द्वौ रूपभेदौ रजस्तमोनभिभूतशुद्धसत्त्वप्रधाना माया तदभिभूतमलिनसत्त्वप्रधानाऽविद्येति मायाऽविद्याभेदं कल्पयित्वा मायाप्रतिबिम्ब ईश्वरोऽविद्याप्रतिबिम्बो जीव इति केचिद्वर्णयन्ति। एकैव मूलप्रकृतिर्विक्षेपप्राधान्येन मायाशब्दितेश्वरोपाधिः आवरणप्राधान्ये-नाविद्याऽज्ञानशब्दिता जीवोपाधिरिति केचित्। "कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति-श्रुतिमनुसृत्याविद्यायां चित्प्रतिबिम्ब ईश्वरः अन्तःकरणे चित्प्रतिबिम्बो जीव इति केचित्। एवमुक्ते-ष्वेतेषु जीवेश्वरयोः प्रतिबिम्बविशेषत्वपक्षेषु यद्बिम्बस्थानीयं ब्रह्म तन्मुक्तप्राप्यम्। अन्ये तु जीव ईश्वरः शुद्धा चिदिति त्रैविध्यप्रक्रियां विहाय वस्तुत एकस्यैवाकाशस्य घटाकाशजलाकाशमहाकाशमेघाकाशभेदा-च्चातुर्विध्यमिवैकस्यैव चैतन्यस्य कूटस्थजीवब्रह्मेश्वरभेदेन चातुर्विध्यं परिकल्प्यं धीवासनोपरक्ताज्ञानो-पाधिरीश्वरः (?) अन्तःकरणोपाधिर्जीव इति दर्शयन्ति। अन्ये तु 'विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥' इति स्मृत्या एकस्यैवाज्ञानस्य जीवेश्वरविभागोपाधित्वप्रतिपाद-नाद् बिम्बप्रतिबिम्बभावेन जीवेश्वरयोर्विभागो नोभयोरपि प्रतिबिम्बभावेनोपाधिद्वयमन्तरेणोभयोः प्रतिबि-म्बत्वायोगात्। तत्रापि प्रतिबिम्बो जीवः बिम्बस्थानीय ईश्वर इति। स च प्रतिबिम्बभूतो जीव एक एवा-विद्योपाधिक एकमेव तदज्ञानं तदज्ञानकल्पितं च सर्वं जगत्तस्य स्वप्नदर्शनवद्यावदविद्यं सर्वो व्यवहारः। बद्धमुक्तव्यवस्थापि नास्ति जीवस्यैकत्वात्। शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितं-मिति वर्णयन्ति। परे तु रूपानुपहितप्रतिबिम्बो न युक्तः सुतरां नीरूपे। ननु नीरूपस्य गगनस्य जलादौ प्रतिबिम्बानुभवान्नीरूपस्य न प्रतिबिम्ब इति नास्ति नियम इति चेन्न, आलोकप्रतिबिम्बे गगनप्रतिबि-

म्बत्वव्यवहारस्य भ्रममात्रमूलकत्वात् । ध्वनिधर्माणामुदात्तादिस्वराणां सान्निधिमात्रेण व्यञ्जकतया वर्णेष्वारोपोपपत्त्या वर्णप्रतिबिम्बोपाधित्वकल्पनाया निष्प्रमाणकत्वेन ध्वनौ वर्णप्रतिबिम्बत्ववादोऽप्ययुक्तस्तस्माचाक्षुषस्यैव चाक्षुष एव प्रतिबिम्ब इति नियमस्य न क्वापि भङ्गोऽस्ति । चन्दनखण्डादिप्रतिबिम्बे चाक्षुषगुणानामेवानुभवात् तदा घ्राणेऽपि सौरभाननुभवाच्च मुखादिप्रतिबिम्बेऽपि चाक्षुषगुणानामेवोपलम्भः नतु मुखोच्चारितशब्दस्य । ननु गुहादिषु प्रतिध्वनिरूपस्य ध्वनिप्रतिबिम्बस्योपलम्भ इति चेन्न, पञ्चीकरणप्रक्रियायां दुन्दुभिसमुद्रदावानलझञ्झामारुतादिध्वनीनां पृथिव्यादिशब्दत्वेन प्रतिध्वनेरेवाकाशगुणत्वात्तस्यान्यशब्दप्रतिबिम्बत्वानुपपत्तेः । न च वर्णात्मकप्रतिशब्दस्य पूर्ववर्णप्रतिबिम्बत्वमिति वाच्यं, मूलध्वनिवदेव प्रतिध्वनेरपि वर्णाभिव्यञ्जकत्वोपपत्तेः । तस्माद्घटाकाशवदन्तःकरणाद्यवच्छिन्नं चैतन्यं जीवः तदनवच्छिन्न ईश्वर इति । नचैवम् "यो विज्ञाने तिष्ठन् विज्ञानमन्तरो यमयति" इत्यादिश्रुत्या ईश्वरस्यान्तर्यामिभावेन विकारान्तरावस्थानबोधकतया विरोधः ब्रह्माण्डान्तर्वर्तितत्तदन्तःकरणोपाधिभिस्तदन्तर्वर्तिचैतन्यस्य सर्वात्मना जीवभावेनावच्छेदात् तदवच्छेदरहितचैतन्यात्मकस्येश्वरस्य ब्रह्माण्डान्तःसत्त्वानापत्तेः । प्रतिबिम्बपक्षे तु जलगतस्वाभाविकाकाशे सत्येव प्रतिबिम्बाकाशदर्शनादेकत्र द्विगुणीकृत्य वृत्तिरुपपद्यत इति वाच्यं, अविद्याश्रयत्वान्तःकरणसंवलितत्वाद्युपाधिकाज्जीवादविद्याविषयत्वान्तःकरणासंवलितत्वाद्युपाधिकस्यान्तर्यामिणो भेदेनावस्थानस्योपपत्त्या श्रुति विरोधाभावात् । प्रतिबिम्बपक्षे तु अन्तर्यामिब्राह्मणस्यासामञ्जस्यं बहिःस्थपाषाणादिवज्जलान्तर्वर्तिपाषाणादेर्जले प्रतिबिम्बादर्शनादुपाध्यनन्तर्गतस्यैव चैतन्यस्य प्रतिबिम्ब इत्यवश्याङ्गीकर्तव्यत्वेन बिम्बभूतस्य विकारान्तरावस्थानायोगात् । एकत्र द्विगुणीकृत्य वृत्तिरित्यपि न, षडस्माकमनादय इति सिद्धान्ते जीवेश्वरभिन्नत्वेनाभ्युपगतस्य जीवादिसर्वप्रपञ्चविवर्ताधिष्ठानत्वेन सर्वगतस्य शुद्धचैतन्यस्याप्यन्तःकरणे सत्त्वस्यावर्जनीयत्वेन जीवोऽन्तर्यामी शुद्धचैतन्यं चेत्येकत्र त्रिगुणीकृत्य वृत्तेरुपपादनीयत्वापत्तेः । नचावच्छेदपक्षे 'यथा स्वयंज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा'॥ 'अत एव चोपमा सूर्यकादिवत्' इति श्रुतिसूत्रविरोध इति वाच्यं, भाष्यकारैरेवात एवेति सूत्रं व्याख्याय सूर्यादिवदात्मनः प्रतिबिम्बो न युज्यते इति तदाक्षेपकत्वेन 'अम्बुवदग्रहणात्तु न तथात्वम्' इति सूत्रं व्याख्याय'ततो वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्' इति सूत्रेण उक्तानुपपत्त्या आत्मनः प्रतिबिम्बनमनुपपन्नमित्यङ्गीकृत्यैव श्रुतिषु सूर्यादिप्रतिबिम्बोपादानस्य तात्पर्यान्तरवर्णनपरताया उक्तत्वात् । तथाच भाष्यम्—'यत एव चायमात्मा चैतन्यस्वरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपरमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमा दीयते शास्त्रेषु 'यथा स्वयं ज्योतिः' इत्यादि 'एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' इति चैवमादिषु । अत्र प्रत्यवस्थीयते—न जलसूर्यकादितुल्यत्वमिहोपपद्यते तद्वदग्रहणात् सूर्यादिभ्यो मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं च जलं गृह्यते तत्र युक्तः सूर्यादिप्रतिबिम्बोदयो नत्वात्मा मूर्तो नचास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः सर्वगतत्वात् सर्वानन्यत्वाच्च, तस्मादयुक्त उक्तोऽयं दृष्टान्त इति । अत्र प्रतिविधीयते युक्त एव त्वयं दृष्टान्तो विवक्षितांशसंभवात् नहि दृष्टान्तदार्ष्टान्तिकयोः कंचित्कचिद्विवक्षितमंशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात् । न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनं शास्त्रप्रणीतस्य त्वस्य प्रयोजकमात्रमुपन्यस्यते किं पुनरत्र विवक्षितं सारूप्यमिति तदुच्यते वृद्धिह्रासभाक्त्वमिति । जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते जलह्रासे ह्रसति जलचलने चलति जलभेदे भिद्यते इत्येवं जलधर्मानुविधायि भवति नतु परमार्थतः सूर्यस्य

तथात्वमस्त्येवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान् वृद्धिह्रासादीने-वमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोध इति। बृहदारण्यकभाष्येऽपि 'स एष इह प्रविष्ट आनखाग्रेभ्यः' इति-वाक्यव्याख्यानावसरे सर्वगतस्यात्मनः कः प्रवेशो नामेति विमृश्य प्रतिबिम्बनं प्रवेश इति पक्षं विप्रकृष्टदे-शाद्यभावेनैव दूषयित्वा देहादावात्मन उपलभ्यमानत्वं प्रवेशः नहि पाषाणादाविव देहादावात्मनोऽनुपलब्धि-रस्तीति प्रवेशपदार्थस्यान्यथोपपादनेन प्रतिबिम्बपक्षदूषणं स्थिरीकृतम्। तैत्तिरीयकभाष्येऽपि तत्सृष्ट्वा तदे-वानुप्राविशदितिवाक्ये प्रवेशविचारावसरे सूर्यकादिप्रतिबिम्बवत्प्रवेशः स्यादिति चेन्न, अपरिच्छिन्नत्वाद-मूर्तत्वाच्च परिच्छिन्नस्य मूर्तस्यान्यस्यान्यत्र प्रसादस्वाभाविके जलादौ सूर्यकादिप्रतिबिम्बोदयः स्यात्, नत्वा-त्मनोऽमूर्तत्वादाकाशादिकारणस्यात्मनो व्यापकत्वात्तद्विप्रकृष्टदेशप्रतिबिम्बाधारवस्त्वभावाच्च प्रतिबिम्बवत्प्रवे-शो न युक्त इति प्रतिबिम्बभावेन प्रवेशनिराकरणं भाष्यकृद्भिः कृतम्। एवं च प्रतिबिम्बपक्षे श्रुतिसूत्रभाष्य-विरोधोऽवच्छेदपक्षे तु तदभाव इति। अस्मिन्पक्षे श्रुतिसूत्रभाष्यानुग्रहोऽप्यस्ति। तथाहि 'घटसंवृतमा-काशं नीयमाने यथा घटे। घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः' इति जीवस्य नभोपमशब्देन घटसंवृताकाशतुल्यत्वमभिधायिन्या श्रुत्यावच्छिन्नचैतन्यस्यैवजीवरूपत्वमुक्तम्। 'अंशो नानाव्यपदेशात्' इति सूत्रेण 'जीव ईश्वरस्यांशो भवितुमर्हति यथाग्नेर्विस्फुलिङ्गोंऽश इवांशः नहि निरवयवस्य मुख्योंशः संभवति कस्मात्पुनर्निरवयवत्वात्स एव न भवति नानाव्यपदेशात् य आत्मनि तिष्ठन्य आत्मानमन्तरो यमयतीतिचैवमादिको भेदनिर्देशो नासति भेदे संभवति' इति भाष्येण च जीवचैतन्यस्य घटाकाशवदन्तः-करणावच्छिन्नत्वरूपमंशत्वं विवक्षितम्। यद्यपि 'आभास एव च' इति सूत्रेण 'आभास एव एष जीवः परस्यात्मनो जलसूर्यकादिवत्प्रतिपत्तव्यः' इति तद्भाष्येण च प्रतिबिम्बपक्ष उक्त इति प्रतिभाति तथापि परमाप्तयोः सूत्रकारभाष्यकारयोरेकत्र जीवस्य प्रतिबिम्बत्वस्वीकारोऽन्यत्र तन्निराकरणं च न संभवतीति किंचिदनु-रोधेन कस्मिंश्चिद्व्याख्यातव्ये प्रतिबिम्बत्वनिराकरणस्य युक्तियुक्तत्वेन आभास इति सूत्रे भाष्यकृद्भिरपि श्रुत्योपपत्त्या प्रतिबिम्बत्वस्यासमर्थितत्वात् तदेव सूत्रं तद्भाष्यं च—वृद्धिह्रासभाक्त्वमितिसूत्रोक्तन्यायात् 'अतश्च यथा नैकस्मिञ्जलसूर्यके कम्पमाने जलसूर्यकान्तरं कम्पते एवं नैकस्मिञ्जीवे कर्मफलसंबन्धिनि जीवान्त-रस्य तत्संबन्धः' इति तदधिकरणभाष्ये प्रतिबिम्बस्य दृष्टान्तत्वेनोक्तत्वाच्च—प्रतिबिम्बसादृश्यप्रतिपादनपरं व्या-ख्येयम्। तस्मात्प्रतिबिम्बासंभवादवच्छेदपक्षे विरोधाभावात्साधकस्य सत्त्वाच्च अवच्छेद्यचैतन्यस्य प्रतिबिम्ब-पक्षेऽपि संमतत्वेनोभयसंप्रतिपन्नत्वेन लाघवात्तस्यैव जीवत्वकल्पनौचित्यात् सर्वगतस्य चैतन्यस्यान्तःकरणा-दिनावच्छेदोऽवश्यंभावीत्यावश्यकत्वादवच्छेदो जीव इति। स चानेकः अन्तःकरणादीनां नानाभूतानां जीवोपाधित्वाभ्युपगमात्, "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत् यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ति एवमेवास्मादात्मनः सर्वे एत आत्मानो व्युच्चरन्ति" इत्यादिश्रुतेः, 'प्रतिषेधादिति चेन्न शारीरात्' इत्यधिकरणे बद्धमुक्तत्वप्रतिपादकभाष्यस्य नैकस्मिन् जीवे कर्मफलसंबन्धिनि जीवान्तरस्य तत्सबन्ध इति आभास इति सूत्रस्थस्य स च स्वात्मभूतानिव घटाकाशस्थानीयानविद्योपस्थापितनामरूप-कृतकार्यकरणसंघातानुरोधिनो जीवाख्यान्विज्ञानात्मनः प्रतीष्टे इति तदनन्यत्वमित्यधिकरणस्थस्य जीवा-त्मापि पुण्यापुण्यकर्मा सुखदुःखभुक् प्रतिशरीरं प्रविभक्त इति जीवात्मनामुत्पत्तिप्रलयावुच्येते इति नात्मे-त्यधिकरणस्थस्य च भाष्यस्य मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इत्यादिस्मृतेः 'एवं जीवाश्रिता भावा भवभावनयोहिताः। ब्रह्मणः कलिताकाराल्लक्षशोऽप्यथ कोटिशः॥ असंख्याताः पुरा जाता जायन्ते चापि चाद्य भो। उत्पतिष्यन्ति चैवाम्बुकणौघा इव निर्झरात्॥ स्ववासनावशावेशादाशाविव-शतां गताः। दशास्वतिविचित्रासु स्वयं निगडिताशयाः॥ भविष्यज्जातयः केचित्केचिद्भूतभवोद्भवाः।

वर्तमानभवाः केचित्केचित्त्वभवतां गताः ॥' अभवतां विदेहमुक्तिमिति टीकाकाराः 'जीवन्मुक्ता भ्रमन्तीह केचित्कल्याणभाजनाः । चिरमुक्ताः स्थिताः केचिन्नूनं परिणताः परे ॥' परे परमात्मनि परिणतास्तद्भावं प्राप्ता विदेहमुक्ता इति व्याख्यातारः 'केचिच्चिरेण कालेन भविष्यन्मुक्तयः शिवाः । केचिद्विशन्ति चिद्भावाः केवलीभावमात्मनः ॥' केवलीभावं कैवल्यमित्यादीतिहासस्य चास्मिन्पक्षे एवाञ्जस्यं नत्वेकजीववादे । नच नानाजीववादेऽपि 'ब्रह्मैव स्वाविद्यया संसरति स्वाविद्यया मुच्यते' इत्यर्थेन बृहदारण्यकभाष्यप्रतिपादितेन विरोध इति शङ्क्यं तद्भाष्यप्रतिपादितस्य ब्रह्मैव स्वाविद्यया नानान्तःकरणभावेन परिणतया नानाजीवभावं प्राप्य संसरति स्वविद्यया मुच्यते इत्यभिप्रायकत्वोपपत्तेः । नच जीवत्वोपाधिभूताया अविद्याया एकत्वाज्जीवैक्यसिद्धिरिति वाच्यम् "रूपं रूपं प्रतिरूपो बभूव । तदस्य रूपं प्रतिचक्षणाय । इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुत्याऽविद्याया नानात्वाभ्युपगमात् तदेकत्वश्रुत्यादीनां जात्यभिप्रायकत्वोपपत्तेः । अविद्याया एकत्वेऽपि "कार्योपाधिरयं जीवः" इति श्रुत्यनुसारेणान्तःकरणानामेव जीवत्वोपाधित्वोपगमसंभवाच्च अविद्याया नानात्वपक्षे विनिगमकाभावादनेकतन्त्वारब्धपटतुल्यः सर्वाविद्याकृतः प्रपञ्च इत्येके । तत्तदज्ञानकृतप्रातिभासिकरजतवत्तत्तदविद्याकृतो वियदादिप्रपञ्चः प्रतिपुरुषं भिन्नः ऐक्यप्रत्ययस्तु शुक्तिरूप्यैक्यप्रत्ययवदित्यन्ये । जीवाश्रितादविद्यानिचयाद्भिन्ना परमेश्वराश्रिता मायैव प्रपञ्चकारणं जीवानामविद्यास्तु आवरणमात्रे प्रातिभासिकसृष्टौ चोपयुज्यन्ते । नाहं प्रकाशः सर्वस्य योगमायासमावृतः इत्यादिवचने मायापदं जीवचैतन्ये संसारघटिकाऽविद्यापरमित्यपरे । तथाचोदाहृतश्रुत्याद्यनुसारिभ्यः 'अशोच्यानन्वशोचस्त्वं, न चैव न भविष्यामः सर्वे वयमतः परं, कामात्मानः स्वर्गपराः, भोगैश्वर्यप्रसक्तानां, कृपणाः फलहेतवः, कर्मजं बुद्धियुक्ता हि, या निशा सर्वभूतानां, ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनां, कर्मणैव हि संसिद्धिमास्थिता जनकादयः, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहं, एवं ज्ञात्वा कृतं कर्म पूर्वैरपि मुमुक्षुभिः, यत्सांख्यैः प्राप्यते स्थानं तद्योगैरपि गम्यते, ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः, तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः, पण्डिताः समदर्शिनः, इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः, लभन्ते ब्रह्मनिर्वाणमृषयः क्षीणकल्मषाः, मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते, न मां दुष्कृतिनो मूढाः, चतुर्विधा भजन्ते मां, जरामरणमोक्षाय मामाश्रित्य यतन्ति ये । ते ब्रह्म तद्विदुः कृत्स्नं, तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः, मत्स्थानि सर्वभूतानि, महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः, एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते, अन्ये त्वेवमजानन्तः, यज्ज्ञात्वा मुनयः सर्वे, निर्मानमोहा जितसङ्गदोषाः, विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः, यतन्तो योगिनश्चैनं, नष्टात्मानोऽल्पबुद्धयः, त्रिविधा भवति श्रद्धा देहिनाम्' इत्यादिभगवद्वचनेभ्योऽपि जीवानामनेकत्वमध्यवसीयते । क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत । प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥ इत्यादिवचनेष्वेकवचनं तु जात्यभिप्रायम् । एवम् "अनेन जीवेनात्मनानुप्रविश्य, वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इत्यादिश्रुतिष्वपि "एको देवः सर्वभूतेषु गूढः, इत्यादिश्रुतिस्तु परमात्मैकत्वप्रतिपादिका न तु जीवैकत्वप्रतिपादिका केवलो निर्गुणश्चेत्यादिविशेषणेभ्यः । तथाच भाष्यम्—भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः "एको देवः सर्वभूतेषु गूढः" इत्यादिश्रुतिभ्यः इत्यलं प्रासङ्गिकेन ॥ १४ ॥

प० टी०—कथं पुनर्मायामतिक्रामन्तीत्याह—दैवीति । एषा नानाविधजगदुपादानकारणत्वेन प्रतीयमानात एव गुणमयी दैव्यलौकिकसामर्थ्यवती यतो मम माया मदाश्रयवर्तिनी मदधीनत्वादन्येषां दुरत्यया दुःखेनापि नाशयितुमशक्या । तर्हि मोक्षोपायप्रयासो व्यर्थः स्यादित्याह—मामेवेति । ये मामेवेश्वरं

नान्यं प्रपद्यन्ते शरणं व्रजन्ति त एवैतामुक्तलक्षणां मायां तरन्ति नान्ये मदनुग्रहेण मत्साक्षात्कारात्स्वत एव नश्यन्तीत्यर्थः (?)। अथ दैवी मम मायेत्यत्र तैत्तिरीयकश्रुतिः—" देवीमहं निर्ऋतिं वन्दमानः पितेव पुत्रं दासये वचोभिः " इति । भाष्यम्—निर्ऋतिं राक्षसीं मायां देवीं सामर्थ्यवतीमहं वन्दमानः पुरस्कुर्वाणोऽनन्तरं वचोभिरुपनिषद्भिभागैर्दासये दासत्वेन नियोजयामि । किंवत्, पिता पुत्रमिव स्वाज्ञावशवर्तिनीं करोमीत्यर्थः । अथ दुरत्ययेत्यत्र ऋक्शाखीया श्रुतिः—"चतुष्कपर्दा युवतिः सुपेशा घृतप्रतीका वयुनानि वस्ते । तस्यां सुपर्णा वृषणा निषेदतुर्यत्र देवा दधिरे भागधेयम् । एकः सुपर्णः स समुद्रमाविवेश स इदं विश्वं भुवनं विचष्टे । तं पाकेन मनसा पश्यमन्तितस्तं माता रेह्लि स उ रेह्लि मातरम् ॥" रावणभाष्यम्—चत्वारः कपर्दा उत्कर्षा यस्याः सा चतुष्कपर्दा पूर्वोपक्रान्ता माया । अथ तानेवोत्कर्षानाह—युवतिरित्यादि । युवतिः सदा तरुणी कदापि वार्धकं न प्राप्नोत्ययमेक उत्कर्षः । तथा सुपेशा सुतरां पेशा पेशला कुशलाऽघटितघटनापटीयसी । तदुक्तम् ' यथा स्वप्नमुहूर्ते स्यात्संवत्सरशतभ्रमः । तथा मायाविलासोऽयं जायते जाग्रति भ्रमः ' इति । अयं द्वितीय उत्कर्षः । तथा घृतप्रतीका घृतवन्मिष्टं प्रतीकमुपक्रमो यस्याः सा परिणामे विषोपमेत्यर्थः । अयमेव तृतीय उत्कर्षः । तथा वयुनानीति वयुनानि ज्ञानानि वस्ते छादयति तद्विपरीतस्वभावत्वात् । तर्हि चतुरुत्कर्षवती मायैवास्ति कथमीश्वरप्रसिद्धिरित्याह—तस्यामिति।तस्यामुक्तलक्षणायां मायायां सुपर्णा सुपर्णौ शोभनपतनौ जीवेश्वरौ पक्षिणाविव वृषणौ सदसत्फलवर्षितारौ । द्विवचनस्य"वा छन्दसि" इत्यात्वम् । निषेदतुर्निषण्णौ स्थितौ । कुतो ज्ञातमेतदत आह—यत्रेति । यत्र भागधेयमर्थप्रकाशसामर्थ्यं द्योतयन्त्यर्थान्प्रकाशयन्ति । ते देवाश्चक्षुराद्या दधिरे धृतवन्तः । अनेन ज्ञानतिरोधानकर्त्र्या मायायाः सकाशादीश्वरस्य वैलक्षण्यं द्योतितम् । अथ सुपर्णाविति द्विवचनेनेश्वरस्य द्वैविध्यमापन्नं तत्परिहरति—एक इति । वस्तुतः सुपर्ण एक एव स समुद्रमाविवेश समुन्दयति तिरोधत्ते एवंविधं प्रपञ्चमाविवेश । " तत्सृष्ट्वा तदेवानुप्राविशत् " इति श्रुतेः । स इदं भुवनं स्थूलप्रपञ्चरूपं विचष्टे ज्ञातवान् । तं पाकेन परिपाकेन बुद्धिरूपेण मनसान्तितोऽभ्यन्तरतो यावदपश्यमद्राक्षं तावत्तं सुपर्णं माता माया रेह्लि लिह आस्वादने विसर्गे चेति विसृजति त्यजति । तथा उ इति निश्चितं सुपर्णो मातरं विसृजति । द्विवचनं तु तादात्म्यविषयकम् । अत एवाग्रतो वक्ष्यति " सुपर्णं विप्राः कवयो वचोभिरेकं सन्तं बहुधा कल्पयन्ति " इत्यादि । अथ मामेव ये प्रपद्यन्त इत्येतस्मिन्नर्थे तैत्तिरीयकसंहितास्वपि—"यत्ते देवी निर्ऋतिराबबन्ध दाम ग्रीवास्वविचर्त्यम् । इदं ते तद्विष्याम्यायुषो न मध्यादथाजीवः पितुमद्धि प्रमुक्तः " इति भाष्यम्—भो परमेश्वर ते देवी तव स्त्रीत्वेनाभिमता । " पतिश्च पत्नी वा भवताम् " इति श्रुतेः । उत्कर्षवती वा निर्ऋतिः राक्षसी माया ग्रीवासु मन्यासु यदिदं दाम बन्धनरज्जुमासमन्ताद्बबन्ध जीवानां बन्धनं कृतवती तत् ते इति त्वया कृत्वा द्विष्यामि दूरीकरोमि नाशयामीत्यर्थः । अस्य दुरत्ययत्वमाह—किंभूतं दाम, आयुषो मध्याज्जीवता पुरुषेणाविचर्त्यं विचरणशीलं विचर्त्यं तथाविधं न भवत्यविचाल्यमित्यर्थः । अथ बन्धननाशानन्तरं पितुशब्देन अन्नं पितुमज्जीवः । अन्नादिविषयासक्तो जीवः प्रमुक्तो भवति मुक्तदशां प्राप्नोति । नकारो निश्चयार्थः । एवमीश्वरानुसंधानेन मायाभिभवे मोक्षोपायः सुकर एवेत्यर्थः ॥ १४ ॥

रा० टी०—ननु ब्रह्मादिदेहेन्द्रियादिदृष्टान्तेन देहादित्वहेतुना भगवान् गुणमयदेह इति धीः कथं मोहः बाधकाभावात् । ज्ञानिनां धीर्बाधिकेति चेत् बहुतरपामरधीविरोधेन तस्या एवाल्पीयस्या अयथार्थत्वोपपत्तेः । न च तेषामेव कालान्तरे बाधधीः सेत्स्यतीति शङ्क्यम् अनादिकालेऽप्यजातस्योत्तरत्राप्यसंभवादित्यतो यथावज्ज्ञानाभावविपरीतज्ञानयोर्गुणाभिमानिनी दुर्गैव कारणम् । देहत्वाद्यनुमानं तु निमित्तमात्रमिति

भावेनाह—दैवीति । सृष्ट्यादिरूपक्रीडादिगुणविशिष्टस्य देवस्येयं दैवी देवसंबन्धिनी । को देव इत्यतो दैवीत्युक्तं विवृणोति ममेति । मदीया ममातिप्रियेति यावत् । एषा प्रमाणप्रमिता गुणमयी सत्त्वादिगुणात्मिका गुणाभिमानिनीति यावत् । माया दुर्गा मोहिकेति शेषः । कालान्तरे तत्कृतो मोहो निवर्ततामित्यत आह दुरत्ययेति । अत्येतुमशक्या तत्कृतं मोहं कोऽपि नात्येतुं शक्नोतीत्यर्थः । अतो न कस्यापि बाधकप्रत्ययो भवतीति भावः । मम मायेत्येवपूर्तौ दैवीत्युक्तिः मदीयतामात्रेण कथं दुरत्ययेत्यतः सृष्टिस्थितिलयादिगुणविशिष्टतयातिसमर्थमदतिप्रियत्वेन तस्या अप्यतिशयशक्तित्वादिति ज्ञापयितुम् । गुणमयीत्युक्तिस्तु गुणाभिमानित्वात्तमोगुणेनैवंविधं मोहं जनयतीति सूचयितुमिति ज्ञेयम् । ननु यदि न केवलमनुमानं किंतु भगवतोद्वलिता माया मोहहेतुस्तर्हि न कथंचिदत्येतुं शक्येति कस्यापि ज्ञानं न स्यादित्यत आह—**मामिति** । एवशब्दोऽत्र भगवत्प्रतिपत्तावित्थंभावसूचकः । अन्यत्परित्यज्य गुर्वादिवन्दनादिकमपि भगवद्भक्तत्वेनैव कुर्वन्तो मां ये प्रपद्यन्ते शरणं प्राप्नुवन्ति ते एतां मायां मायाकृतमोहं तरन्ति अतिक्रामन्तीत्यर्थः ॥ १४ ॥

**न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः ॥**
**माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ॥ १५ ॥**

**त० टी०—**यद्येवं तर्हि सर्वेऽपि शास्त्राचार्यद्वारेण सर्वानर्थहेतोर्मायायास्तारकं भवन्तमेव निश्चित्य किं न प्रपद्यन्ते इत्यपेक्षायां दुष्कृतयोगादित्याह—**न मामिति** । दुष्कृतिनोऽनादिपापसंचयवत्त्वान्मां न प्रपद्यन्ते ईश्वरेश्वरं ज्ञात्वा सर्वात्मना न भजन्ते । ते च दुष्कृततारतम्याच्चतुर्विधाः मूढा नराधमा माययाऽपहृतज्ञानाः आसुरं भावमाश्रिता इति । तत्र शास्त्रप्रतिपादितमपि भगवत्तत्त्वं बुद्धिमान्द्याज्ज्ञातुमनर्हाः प्राकृतेष्वेव देहेन्द्रियेषु रता मूढाः ये च शास्त्रप्रतिपादितं भगवत्तत्त्वं श्रोतुं ज्ञातुं बुद्धिमन्तोऽपि मदाश्रयणेऽश्रद्दधानाः प्राकृतविषयासक्तास्ते नराधमाः सम्यक्शास्त्रनिर्णीतमपि मत्स्वरूपगुणैश्वर्यविषयं ज्ञानं दुष्कृतबाहुल्यान्मय्यसंभावनाविपरीतभावनाजनिता तद्विपरीतार्थप्रतिपादकयुक्तिरूपा कपटपर्याया माया, तयाऽपहृतं नाशितं ज्ञानं येषां ते माययाऽपहृतज्ञानाः । ये चानादितो मद्विमुखा मत्स्वरूपगुणैश्वर्यविषयं सुदृढतरमपि ज्ञानं नाङ्गीकुर्वन्ति प्रत्युत मां मद्भक्तांश्च बुद्धिपूर्वकं द्विषन्ति ते आसुरं भावमाश्रिताः त एते उत्तरोत्तरं पापबहुलाः ॥ १५ ॥

**म० टी०—**यद्येवं तर्हि किमिति निखिलानर्थमूलमायोन्मूलनाय भवन्तं वासुदेवं भगवन्तमेवं सर्वे न प्रतिपद्यन्ते इत्याशङ्क्य चिरसंचितदुरितप्रतिबन्धान्न प्रपद्यन्ते इत्याह भगवान्—**न मामिति** । दुष्कृतिनः दुष्कृतेन पापेन सह नित्ययोगिनः अत एव नरेषु मध्येऽधमा इह साधुभिर्गर्हणीयाः परत्र चानर्थसहस्रभाजः कुतो दुष्कृतमनर्थहेतुमेव सदा कुर्वन्ति यतो मूढाः इदमर्थसाधनमिदमनर्थसाधनमिति विवेकशून्याः सति प्रमाणे कुतो न विविचन्ति यतो माययाऽपहृतज्ञानाः शरीरेन्द्रियसंघाततादात्म्यभ्रान्तिरूपेण परिणतया मायया पूर्वोक्तयाऽपहृतं प्रतिबद्धं ज्ञानं विवेकसामर्थ्यं येषां ते तथा । अत एव ते 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिनाग्रे वक्ष्यमाणमासुरं भावं हिंसानृतादिस्वभावमाश्रिता मत्प्रतिपत्त्ययोग्याः सन्तो न मां सर्वेश्वरं प्रपद्यन्ते न भजन्ते अहो दौर्भाग्यं तेषामित्यभिप्रायः ॥ १५ ॥

**शं० टी०—**ननु त्वदुपास्त्या सर्वानर्थकरीं मायां यदि तरन्ति तर्हि मीमांसकतार्किकादयो महापण्डिताः सर्वे कस्मात्त्वां नोपासत इत्याकाङ्क्षायामाह—**न मामिति** । क्रियत इति कर्म दुष्टं जननमरणादिदुःखप्रदं काम्यलक्षणं कर्म एषामस्ति ते दुष्कृतिनो मीमांसकाः पण्डिता अप्यपहृतज्ञानाः मायया कामादिरूपिण्यापहृतं तिरोभावितं ज्ञानं सदसद्विवेकलक्षणं येषां ते अपहृतज्ञानास्तत एवासुरं भावमिदमद्य मया लब्धमित्युक्तप्रकारमेवाश्रिताः सन्तो वेदान्तानां कर्तृस्तावकतया 'आम्नायस्य क्रियार्थत्वात्' इतिन्यायेन कर्मशेष-

त्वमेवाभ्युपगम्याविश्वासेन तद्विचारमेव न कुर्वन्ति कुतस्तेषां मज्ज्ञानं तदसत्त्वे कुतो मदुपास्तिप्रसक्तिस्तत एव मां न प्रपद्यन्ते । तार्किका वैशेषिकाश्च पण्डिता अपि माययापहृतज्ञानास्तत एव मूढाः सन्तो जगदुपादानमणव एवेति मामुपसर्जनं कृत्वा स्वस्वाभिमतपदार्थज्ञानादेव मुक्तिरित्यभिमानेन मद्विचारज्ञानशून्या भूत्वा मां न प्रपद्यन्ते । अन्ये चार्वाकजैनबौद्धादयो नराधमा अपि न मां प्रपद्यन्त एवेत्यर्थः ॥ १५ ॥

**श्री० टी०**—किमिति तर्हि सर्वे त्वामेव न भजन्ति तत्राह—**न मामिति** । नरेषु येऽधमास्ते मां न प्रपद्यन्ते न भजन्ति । अधमत्वे हेतुः—मूढाः विवेकशून्याः । तत्कुतः दुष्कृतिनः पापशीलाः अतो माययापहृतं निरस्तं शास्त्राचार्योपदेशाभ्यां जातमपि ज्ञानं येषां ते तथा अत एव 'दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च' इत्यादिना वक्ष्यमाणमासुरं भावं स्वभावं प्राप्ताः सन्तो न मां भजन्ति ॥ १५ ॥

**स० टी०**—मायासागरमुत्तर्तुं श्रीहरेश्चरणाम्बुजम् ॥ पोतभूतं शरण्यं ये श्रितास्ते मोक्षभागिनः ॥ १ ॥ साधनं कर्मयोगादि हरिभक्तिमपेक्ष्य तत् ॥ मुक्तेः कृष्णाङ्घ्रिभक्तिस्तु निरपेक्षैकसाधनम् ॥ २ ॥ हरिभक्तिं विना यद्यत्साधनं दुष्करं नृभिः ॥ क्रियते तद्वृथा तस्माद्धरिं सर्वात्मना श्रयेत् ॥ ३ ॥ महापुण्यफलं कृष्णभक्तौ विश्वास आदरात् ॥ तद्विहीनास्तु निन्द्यन्ते पापिनो हरिणा स्वयम् ॥ ४ ॥ मत्स्वरूपापरिज्ञानान्मूढाः स्युर्भोगलम्पटाः ॥ ततः पापसमाचारे प्रवृत्ताः स्युर्नराधमाः ॥ ५ ॥ ततो मायाहृतज्ञानाः शास्त्रेऽप्यनधिकारिणः ॥ ततस्ते ह्यासुरं भावं प्राप्ताः पश्वादिभिः समाः ॥ ६ ॥ मामीश्वरं सखायं स्वं पापोपहितबुद्धयः ॥ शरण्यं न प्रपद्यन्ते देहाद्यध्यासमाश्रिताः ॥ ७ ॥ नरोऽधिकारिणः कृष्णचरणाम्बुजसेवने ॥ तद्विहीना नराकाराः पशुभ्योऽप्यधमाः शठाः ॥ ८ ॥ मायया छादितं ज्ञानं येषां विषयरागिणाम् ॥ हिंसादिभावनाक्रान्ता गोविन्दं नाश्रयन्ति ते ॥ ९ ॥ १५ ॥

**भा० टी०**—यदि त्वां प्रपन्ना एतां मायां तरन्ति तर्हि कस्मात्त्वामेव परमेश्वरं सर्वे न प्रपद्यन्त इत्याकाङ्क्षायामाह—**नेति** । दुष्कृतिनः पापकारिणोऽत एव विमूढाः संमोहं प्राप्ताः अत एव नराणां स्वधर्मपराणां मध्येऽधमा निकृष्टाः यतो माययापहृतं मुषितं विवेकज्ञानं येषां ते आसुरं भावं हिंसानृतादिलक्षणमाश्रिता मां परमेश्वरं न प्रतिपद्यन्ते ॥ १५ ॥

**प० टी०**—अथ मदप्राप्तिनिमित्तं मायैवेत्याह—**न मामिति** । नरेषु येऽधमास्ते मा न प्रपद्यन्ते न भजन्ति । तत्र हेतुः मूढा विवेकशून्याः, तत्कुतो दुष्कृतिनः पापशीला अतो माययापहृतज्ञानाः सन्त आसुरं भावमाश्रिताः सन्ति शास्त्राचार्योपदेशतः प्राप्तज्ञाना अपि तदावरकीभूतमायातो दम्भदर्पाभिमानपारुष्याद्यभिनिवेशवन्तो मां न भजन्तीत्यर्थः। तदुक्तम्—'दुःसंकल्पविकल्पकूलयुगुला धैर्यद्रुमोन्मूलिनी कल्लोलैरभिमानमत्सरमुखैः षड्भिः परीतोर्मिका । आवर्तैर्ममतादिभिः परिवृत्ता दुःखैकधारान्विता पूर्णा मोहपयस्विनीव निभृतं चेतःस्थितिर्मायिनाम् ॥ १५ ॥

**रा० टी०**—ननु यदि त्वत्प्रतिपत्तिर्मायातरणोपायस्तर्हि त्वां प्रपद्य सर्वे किमिति मायां नात्यायन्नित्यत आह—**न मामिति** । दुष्कृतिनः पापशीलाः अत एव मूढाः विवेकहीनाः अत एव नराधमाः मायया हरीच्छया स्वभावेन च अभिभूताधिष्ठानयाथात्म्यज्ञानाः अतश्च मूढाः मिथ्याज्ञानिनः अत एवासुरं भावमासुरत्वमाश्रिताः अतो मां न प्रपद्यन्ते इति । असुष्विन्द्रियेषु रता असुरास्तदीयं भावमाश्रिता इत्यर्थः ॥१५॥

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ॥**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ १६ ॥**

**त० टी०**—ये तु पुण्यकर्माणस्ते श्रद्धाप्रीतियुक्ता मां भजन्त इत्याह—**चतुर्विधा इति** । सुकृ-

तिनः पूर्वजन्मसुकृतसंचयो विद्यते येषु ते जना मां भजन्ते तेऽपि सुकृततारतम्याच्चतुर्विधाः हे अर्जुन आर्तादयस्त्रयः सकामा अन्यो निष्काम एकान्ती । तत्र शत्रुव्याध्याद्यापदा ग्रस्त आर्तः । स यदि पूर्वं कृतपुण्यश्चेत्तर्हि तदार्तिनिवृत्तिमिच्छन्मां भजते अन्यथा दुर्गारुद्रविनायकभैरवादीन्भजते । आर्तो यथा जरासंधकारागृहनिगृहीतो राजसमूहः द्यूतसभायां वस्त्राकर्षणे द्रौपदी, ग्राहगृहीतो गजेन्द्रश्च वृकासुरात्पलायमानो रुद्रश्च । जिज्ञासुस्तत्त्वज्ञानार्थी मुमुक्षुः, यथा विदेहरहूगणयदुमुचुकुन्दादिः । अर्थार्थी भोगैश्वर्यविशिष्टपदभ्रष्टस्तल्लिप्सुर्मां भजते, यथेन्द्रो ध्रुवः सुग्रीवो विभीषणश्च । एते त्रयोऽपि स्वाभीष्टं प्राप्य मद्भजनात्क्रमेण मायां तरन्ति । ज्ञानी च सम्यङ्निर्णीतात्मपरमात्मतत्त्वविवेकज्ञः स च निष्काम एव तीर्णमायः सन् मामेव परमप्राप्यं जानन् भजते यथा सनकादिर्नारदशुकप्रह्लादभीष्मोद्धवादिः ॥ १६ ॥

म० टी०—ये त्वासुरभावरहिताः पुण्यकर्माणो विवेकिनस्ते पुण्यकर्मतारतम्येन चतुर्विधाः सन्तो मां भजन्ते क्रमेण च कामनाराहित्येन मत्प्रसादान्मायां तरन्तीत्याह—चतुर्विधेति । ये सुकृतिनः पूर्वजन्मकृतपुण्यसंचया जनाः सफलजन्मानस्त एव नान्ये ते मां भजन्ते सेवन्ते । हे अर्जुन ते च त्रयः सकामा एकोऽकाम इत्येवं चतुर्विधाः । के ते इत्यत आह—आर्तः आर्त्या शत्रुव्याध्याद्यापदा ग्रस्तस्तन्निवृत्तिमिच्छन् यथा मखभङ्गेन कुपित इन्द्रे वर्षति व्रजवासी जनः, यथा वा जरासंधकारागारवर्ती राजनिचयः, द्यूतसभायां वस्त्रापकर्षणे द्रौपदी च, ग्राहग्रस्तो गजेन्द्रश्च । जिज्ञासुरात्मज्ञानार्थी मुमुक्षुः यथा मुचुकुन्दः, यथा वा मैथिलो जनकः श्रुतदेवश्च, निवृत्ते मौसले यथा चोद्धवः । अर्थार्थी इह वा परत्र वा यद्भोगोपकरणं तल्लिप्सुः तत्रेह यथा सुग्रीवो विभीषणश्च यथा चोपमन्युः परत्र यथा ध्रुवः । एते त्रयोऽपि भगवद्भजनेन मायां तरन्ति । तत्र जिज्ञासुर्ज्ञानोत्पत्त्या साक्षादेव मायां तरति आर्तोऽर्थार्थी च जिज्ञासुत्वं प्राप्येति विशेषः । आर्तस्यार्थार्थिनश्च जिज्ञासुत्वसंभवाज्जिज्ञासोश्चार्तत्वज्ञानोपकरणार्थार्थित्वसंभवादुभयोर्मध्ये जिज्ञासुरुद्दिष्टः । तदेते त्रयः सकामा व्याख्याताः । निष्कामश्चतुर्थ इदानीमुच्यते । ज्ञानी च ज्ञानं भगवत्तत्त्वसाक्षात्कारस्तेन नित्ययुक्तो ज्ञानी तीर्णमायो निवृत्तसर्वकामः चकारो यस्य कस्यापि निष्कामप्रेमभक्तस्य ज्ञानिन्यन्तर्भावार्थः । हे भरतर्षभ त्वमपि जिज्ञासुर्वा ज्ञानी वेति कतमोऽहं भक्त इति मा शङ्किष्ठा इत्यर्थः । तत्र निष्कामभक्तो ज्ञानी यथा सनकादिर्यथा नारदो यथा प्रह्लादो यथा पृथुर्यथा वा शुकः । निष्कामः शुद्धप्रेमभक्तो यथा गोपिकादिर्यथा वाऽक्रूरयुधिष्ठिरादिः । कंसशिशुपालादयस्तु भयाद्द्वेषाच्च संततभगवच्चिन्तापरा अपि न भक्ताः भगवदनुरक्तेरभावात् । भगवदनुरक्तिरूपायास्तु भक्तेः स्वरूपं साधनं भेदास्तथा भक्तानामपि भगवद्भक्तिरसायनेऽस्माभिः सविशेषं प्रपञ्चिता इतीहोपरम्यते ॥ १६ ॥

शं० टी०—ननु महापण्डितानामप्येवंविधत्वे के पुनस्त्वां प्रपद्यन्ते इत्याकाङ्क्षायां ये शुद्धात्मानः शास्त्रतो गुरुतश्च मत्तत्त्वं श्रुत्वा मामेव सर्वेश्वरं सर्वार्थदं जानन्ति ते मां प्रपद्यन्ते । तथापि तेषां मद्भजनपराणां भेदोऽस्तीत्याह—चतुर्विधेति । इह जन्मनि जन्मान्तरेष्वनेकेषु च स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानव इत्यादिशास्त्रेण तदर्थज्ञेन च गुरुणा शिक्षिताः सन्तः ईश्वरार्पणबुद्ध्या सुष्ठु मन्त्रतन्त्राद्यलोपं यथा तथाऽनुष्ठितानि कृतानि श्रौतस्मार्तादीनि कर्माणि येषां सन्ति ते सुकृतिनः सत्कर्मानुष्ठानपरा विवेकिनो ये ते आर्तादिभेदेन चतुर्विधाश्चतुष्प्रकारा भूत्वा मां भजन्ते । तत्प्रकारमेवाह—आर्त इत्यादिना । आर्त आध्यात्मिकाद्युपद्रवेण निष्पीडितस्तदुपद्रवनिवृत्त्यै, नित्यानित्यपदार्थविवेकेनात्मतत्त्वं ज्ञातुमिच्छुर्जिज्ञासुर्मत्प्रसादसिद्ध्यै, ऐहिकामुष्मिकसुखतत्साधनकाम्यर्थार्थी कामसिद्ध्यै, ज्ञानी ब्रह्मविदुत्पन्नज्ञानस्याप्रतिबद्धत्वसिद्धये, एवं चतुर्विधा जना भजन्ते मां सगुणमीश्वराख्यमार्तादयस्त्रयोऽपि ज्ञानी तु निर्गुणं परं ब्रह्माख्यं मां भजतीदमेवाहमिति स्वात्मनानुसंधत्त इति ज्ञातव्यं ज्ञानीतिविशेषणसामर्थ्यात् ॥ १६ ॥

**श्री० टी०**–सुकृतिनस्तु मां भजन्ति, ते च सुकृततारतम्येन चतुर्विधा इत्याह–**चतुर्विधा** इति। पूर्वजन्मसु ये कृतपुण्या जनास्ते मां भजन्ति। ते तु चतुर्विधाः आर्तो रोगाद्यभिभूतः, स यदि पूर्वं कृतपुण्यस्तर्हि मां भजति अन्यथा क्षुद्रदेवताभजनेन संसरति। एवमुत्तरत्रापि द्रष्टव्यम्। जिज्ञासुरात्मज्ञानेच्छुः। अर्थार्थी अत्र वा परत्र वा भोगसाधनभूतार्थलिप्सुः। ज्ञानी च आत्मवित् ॥ १६ ॥

**स० टी०**–ये जनाः पुण्यकर्माणो मां परात्मानमीश्वरम् ॥ भजन्ते ते महात्मानः सन्ति लोके चतुर्विधाः ॥ १ ॥ आर्तो व्याध्यादिना ग्रस्तस्तन्निवृत्तीच्छया सुधीः ॥ ग्राहग्रस्तो यथा हस्ती यथा च द्रुपदात्मजा ॥ २ ॥ जिज्ञासुरात्मज्ञानार्थी जनकश्चोद्धवो यथा॥ परत्र वेह भोगार्थमर्थार्थी साधनेप्सुकः ॥ ३ ॥ विभीषणश्च सुग्रीवो यथामुत्र ध्रुवो यथा ॥ सकामाश्च त्रयोऽप्येते भगवद्भजनेन च ॥ ४ ॥ तरन्ति मायां तत्रापि जिज्ञासुर्ज्ञानलाभतः ॥ द्वौ तु जिज्ञासुतां प्राप्य ज्ञानेनेमां तरन्त्यमी ॥ ५ ॥ आर्तस्यार्थार्थिनश्चापि जिज्ञासुत्वस्य संभवात् ॥ जिज्ञासोरपि बोधोपकरणार्थार्थिता भवेत् ॥ ६ ॥ अतस्तयोर्द्वयोर्मध्ये जिज्ञासुर्हरिणेरितः ॥ निष्कामो भजते ज्ञानी विष्णुतत्त्वावबोधवान् ॥ ७ ॥ तीर्णमायो यथा व्याससनकादिरुदारधीः ॥ यो ना केवलनिष्कामो यथाऽक्रूरो युधिष्ठिरः ॥ ८ ॥ १६ ॥

**भा० टी०**–के पुनस्त्वां प्रतिपद्यन्ते इत्यपेक्षायामाह–**चतुर्विधा** इति। सुकृतिनः पुण्यकर्माणो जना नरोत्तमा मां भजन्ति। ते च पुण्यतारतम्येन चतुर्विधाः–आर्तो रोगादिजनितपीडापरिगृहीतः, जिज्ञासुः भगवत्तत्त्वं ज्ञातुमिच्छुः, अर्थार्थी धनादिकामः, ज्ञानी विष्णुतत्त्ववित्, चकाराज्ज्ञानिनो निष्कामत्वं सूचयति। अर्जुनेतिसंबोधयन् सुकृतकर्मणा स्वच्छतामापन्नस्यैव मद्भजनभाजनतेति ध्वनयति। सुकृतं च स्ववर्णाश्रमाविरोधि स्वकुलपरंपरागतम्। तथाच मद्भजनाधिकारकारकं क्षत्रियस्य विहितं स्वकुलपरंपरागतं युद्धं कर्तुमर्हसीति द्योतयन्नाह–भरतर्षभेति ॥ १६ ॥

**प० टी०**–अथ भजनसुकृततारतम्येन चातुर्विध्यमाह–**चतुर्विधा इति**। पूर्वजन्मनि कृतसुकृतसमूहाः सुकृतिनो मां भजन्ति। तदुक्तम्–'अनेकजन्मसाहस्रैस्तपोदानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति। अथोद्दिष्टं चातुर्विध्यमाह–**आर्तेति**। तत्रार्तो रोगाद्यभिभूतः स यदि पूर्वकृतपुण्यपुञ्जस्तदा मां भजत्यन्यथा क्षुद्रदेवोपासनेन संसरति। ननु भगवतो मोक्षैकदातृत्वप्रसिद्ध्या क्षुद्रफलार्थं भजनमसंभावितामिति चेन्न, ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति प्रतिज्ञातत्वात्। श्रुतिरपि–"यदि क्षतायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव। तमाहरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय" इति। भाष्यम्–क्षतायुरपमृत्युमान् गजेन्द्रादिः, परेत इहलोकाल्लोकान्तरं नीतः स्वबन्ध्वादिः, मृत्योरन्तिकं यमसमीपं नीतो गुरुबालकादिः, एवकारेण बुद्धिपूर्वकं नीतो न प्रमादेन तं प्राणिनं निर्ऋतेरुपस्थाद् यमसमीपतोऽप्याहरामि गुरुबालकवद्बलात्कारेणानयामि। अथ स पुनरपि मरिष्यति चेन्नेत्याह–एनं मृत्योर्मोचितं पुरुषं शतशारदाय शतवर्षपर्यन्तं जीवनाय यद्वा शतशब्दोऽनन्तसंख्यावाची। अमृतत्वायास्पार्शमभयकरेण स्पृशामि। तथा जिज्ञासुरात्मज्ञानेप्सुस्तथार्थार्थी अर्थमिहामुत्रफलभोगमर्थयते स तथा तथा ज्ञान्यात्मवित्। नन्वात्मविदः कृतकृत्यतया पुनर्भजनं कुत इति चेन्न, यत्प्रसादादात्मज्ञत्वोपकारः स कथं कृतज्ञेन विस्मर्यते। तदुक्तम्–'विस्मर्यते कृतविदा कथमार्तबन्धो' इत्यादि ॥ १६ ॥

**रा० टी०**–सुकृतिनो मां भजन्तः प्रपद्यन्ते तत्राप्यस्ति तारतम्यमित्याह–**चतुर्विधा इति**। ये सुकृतिनः पूर्वजन्मकृतपुण्यवन्तो जनाः मां भजन्ते सेवन्ते च। ते चतुर्विधाः आर्तः रोगाद्युपद्रुतः, जिज्ञासुः आत्मज्ञानेच्छुः, अर्थार्थी धनेच्छावान्, ज्ञानी चात्मतत्त्वविच्चेति। इतिशब्दोऽत्र ध्येयः। द्विः संबोधनमादरार्थम् ॥ १६ ॥

तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते ॥
प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १७ ॥

त० टी०–तेषां मध्ये ज्ञानी श्रेष्ठ इत्याह–तेषामिति । तेषां चतुर्विधानां मध्ये ज्ञानी तत्त्वज्ञानवान्विशिष्यते सर्वोत्कृष्टो भवतीत्यर्थः । कुतः यतो नित्ययुक्तः मयि भगवति सदाऽविच्छेदेनावेशितचेताः । किंच यथा सकामः पुरुषः स्त्रीपुत्राद्यात्मीयवर्गे नित्यावेशितमना अपि राजाद्यन्यं भजते न तथायं कंचिदन्यं भजते किंतु एकभक्तिरिति देवान्तरसाधनान्तरफलान्तरसंवन्धान्तरनिरासेन सर्वदेवसाधनफलसंबन्धरूपे एकस्मिन् समाभ्यधिकशून्ये भगवति चिदानन्दघने मय्येव मद्विषयिकैव भक्तिरर्चनवन्दनकीर्तनध्यानादिभजनं यस्य सः 'भजनं भक्तिरित्युक्तं वाङ्मनःकायकर्मभिः । भज इत्येष वै धातुः सेवायां परिकीर्तितः ॥ तस्मात्सेवा बुधैः प्रोक्ता भक्तिशब्देन भूयसी' इति स्मृतेः । हि यस्माज्ज्ञानिनोऽहमत्यर्थं प्रियः अनवधिकप्रीतिविषयः । तथैवोक्तं विष्णुपुराणे प्रह्लादेन 'या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु' । श्रीपराशरोऽप्याह—'स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः । न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः' इति । स च ज्ञानी तथैव ममाप्यतिप्रियः । "यथा त्वं सह पुत्रैश्च यथा रुद्रो गणैः सह । यथा श्रियाभियुक्तोऽहं तथा भक्तो मम प्रियः" इतिश्रुतेः 'नास्य भक्तात्प्रियतरो लोके कश्चन विद्यते' इति मोक्षधर्मे नारायणवचनाच्च १७॥

म० टी०–(ननु न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमा इत्यनेन तद्विलक्षणाः सुकृतिनो मां भजन्त इत्यर्थात्प्राप्तेऽपि तेषां चातुर्विध्यं चतुर्विधा भजन्ते मामित्यनेन दर्शितम् । ततस्ते सर्वे सुकृतिन एव निर्विशेषादिति चेत्तत्राह–) चतुर्विधानामपि सुकृतित्वे नियतेऽपि सुकृताधिक्येन निष्कामतया प्रेमाधिक्यात् ज्ञानी विशिष्यते इत्याह–तेषामिति। चतुर्विधानां तेषां मध्ये ज्ञानी तत्त्वज्ञानवान्निवृत्तसर्वकामः विशिष्यते सर्वतोऽतिरिच्यते सर्वोत्कृष्ट इत्यर्थः। यतो नित्ययुक्तः भगवति प्रत्यगभिन्ने सदासमाहितचेताः विक्षेपकाभावात् अत एवैकभक्तिः एकस्मिन्भगवत्येव भक्तिरनुरक्तिर्यस्य स तथा तस्यानुरक्तिविषयान्तराभावात् । हि यस्मात् प्रियो निरुपाधिप्रेमास्पदमत्यर्थमत्यन्तातिशयेन ज्ञानिनोऽहं प्रत्यगभिन्नः परमात्मा च तस्मादत्यर्थं स मम परमेश्वरस्य प्रियः आत्मा प्रियोऽतिशयेन भवतीति श्रुतिलोकयोः प्रसिद्धमेवेत्यर्थः ॥ १७ ॥

शं० टी०–नन्वत्र परोक्षज्ञानी विवक्षित इति चेन्न, परोक्षज्ञानिन एकभक्तिर्विशिष्यत इति ज्ञानी त्वात्मैव मे मतमित्येकभक्तित्वपरमात्माभिन्नत्वप्रतिपादनायोगात् । तर्हि ब्रह्मविदपि तत्प्रसादातिशयसिद्धये सगुणमीश्वरमेवोपास्त इति चेन्न, अयथार्थस्वरूपं भजतो भक्तगणस्यापेक्षया स्वस्य यथाभूतस्वरूपानुसंधानपरे ब्रह्मविद्येव परमेश्वरस्य समग्रानुग्रहकरणसंभवात् पितुः पुत्रेभ्यः सर्वेभ्योऽप्रयोजकेभ्यो विद्याविनयशीलवित्तार्जनकीर्तिप्रतिष्ठावति सत्पुत्र एव प्रीत्यतिशयकरणदर्शनात्तद्वत् "ॐमित्येवं ध्यायथ आत्मानं स्वस्ति वः पाराय तमसः परस्तात्" इति ब्रह्मविदां ध्येयवस्तुनो मायातत्कार्यलेशसंबन्धशून्यत्वश्रवणाच्च । "अथ योऽन्यां देवतामुपास्ते" इतिस्वाभिन्नत्वेन देवतान्तरोपासिनः पशुतुल्यत्वश्रवणाच्च जीवेशावाभासेन करोतीतीश्वरस्यापि मायाभासत्वश्रवणात्तत्रासत्त्वबुद्ध्या तद्विलक्षण एव सच्चिदानन्दैकरसे परे ब्रह्मण्येव सदा तदात्मना तिष्ठतस्तदानन्दामृतरसपायिनो ब्रह्मविदः सगुणे रुच्यसंभवात् सविशेषोपासनानुपपत्तेः । ब्रह्मविद उपासनमेवानुपपन्नमिति चेन्न, "तमेव धीरो विज्ञाय" इति ब्रह्मविद एव ज्ञानस्याप्रतिबद्धत्वसिद्धये प्रज्ञाकरणश्रवणात् । प्रज्ञाकरणं नाम सर्वत्र ब्रह्मदर्शनमेव । यत एवं ततो निर्विशेषमेव परं ब्रह्म ब्रह्मविद उपास्यमिति सिद्धो निर्विशेषपरत्वादेव महात्मानं ब्रह्मविदमार्तादिभ्यः सविशेषपरेभ्यो विशेषयति बहुभिर्विशेषणैः–तेषां ज्ञा-

नीति । नित्ययुक्तः नित्यं क्रियान्तरानवकाशं यथा तथा युक्तः सर्वदा ब्रह्मण्येव समाहितचित्त इत्यर्थः । यद्वा नित्ये मायातत्कार्यसंबन्धशून्यत्वादविक्रियेऽक्षरे परमात्मन्येव युक्तो न त्वनित्यपरः सर्वत्र ब्रह्मैव पश्यति न त्वन्यदित्यर्थः । द्रष्टा दृश्यमितिभेदे इदमाह—एकभक्तिरिति । स्वविषयीभूतवस्त्वाकारं भजतीति भक्तिरन्तःकरणवृत्तिः एका अहमिदमितिद्वैविध्यनिर्मुक्ता स्वस्य च ब्रह्मणश्चोभयोरेकत्वावगाहिन्यखण्डाकारा भक्तिर्वृत्तिर्यस्य स एकभक्तिः जगद्ब्रह्मणोरात्मब्रह्मणोश्चाभेददर्शननिष्ठ इत्यर्थः । तत एव ज्ञानिनो निर्विशेषः परमात्माहमेवात्मत्वादानन्दरूपत्वाच्चात्यर्थं प्रियः प्रेष्ठो न त्वन्यः "तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" इत्यादिश्रुतिप्रसिद्धिप्रकाशनार्थो हिशब्दः । तथा मम च जगदीश्वरस्यापि स ज्ञान्येव प्रियः प्रेष्ठ उक्तलक्षणत्वात् । यत एवं ततस्तेषामिति पञ्चम्यर्थे षष्ठी तेभ्यः सविशेषपदेभ्य आर्तादिभ्यो ज्ञानी नित्ययुक्तादिविशेषणैर्विशिष्यते श्रेष्ठो भवतीत्यर्थः ॥ १७ ॥

श्री० टी०—एतेषां मध्ये ज्ञानी श्रेष्ठ इत्याह—**तेषामिति** । तेषां मध्ये ज्ञानी विशिष्टः । तत्र हेतवः—नित्ययुक्तः सदा मन्निष्ठ एकस्मिन्मय्येव भक्तिर्यस्य सः ज्ञानिनो देहाद्यभिमानाभावेन चित्तविक्षेपाभावान्नित्ययुक्तत्वमेकान्तभक्तित्वं च संभवति नान्यस्य अत एव हि तस्याहमत्यन्तं प्रियः स च मम तस्मादेतैर्नित्ययुक्तत्वादिभिश्चतुर्भिर्हेतुभिः स उत्तम इत्यर्थः ॥ १७ ॥

स० टी०—तेषां चतुर्विधानां च मध्ये तत्त्वविदुत्तमः ॥ निवृत्तसर्वकामत्वात्सुकृताधिक्यहेतुना ॥ १ ॥ प्रेमाधिक्यात्स चोत्कृष्टः सर्वतः संमतो मम ॥ यतो भगवति प्रत्यगभिन्ने भ्रान्तिहानतः ॥ २ ॥ समाहितमना नित्यं विक्षेपाभावतो बुधः ॥ एकस्मिंश्चिद्घने शुद्धे भगवत्येव यस्य हि ॥ ३ ॥ सदानुरक्तिरत्यन्ता परप्रेमास्पदत्वतः ॥ विषयान्तरबाधाच्च नास्यान्यविषये रतिः ॥ ४ ॥ निरुपाधिपरप्रेमास्पदत्वेन प्रियोऽस्य च ॥ ज्ञानिनः परमात्माहं प्रत्यगभिन्न आन्तरः ॥ ५ ॥ ततोऽत्यर्थं स च ज्ञानी प्रियो भगवतो मम ॥ प्रियो ह्यात्मास्ति सर्वस्य लोकवेदप्रसिद्धितः ॥ ६ ॥ १७ ॥

भा० टी०—तेभ्यो ज्ञानिनः श्रैष्ठ्यमाह—**तेषामिति** । तेषां चतुर्णां मध्ये ज्ञानी विशिष्यते आधिक्यं प्राप्नोति यतस्तत्त्ववित्त्वान्नित्ययुक्तः कदापि मद्भजनं न त्यजति यत एकमेवाद्वितीयं ब्रह्म तत्त्वमसीत्यादिश्रुत्या निर्णीते प्रत्यगभिन्ने मयि भगवति वासुदेवे भक्तिर्वृत्तिसंततिरूपा यस्य सः प्रेमास्पदे वस्तुनि भक्तिर्भवति प्रेमास्पदश्च श्रुत्या लोकप्रसिद्ध्या चात्मा हि यस्मादहं ज्ञानिन आत्मत्वादत्यर्थमत्यन्तं प्रियः स च ज्ञानी मम वासुदेवस्यात्मैवातो ममात्यन्तं प्रियः ॥ १७ ॥

प० टी०—**तेषामिति** । तेषां चतुर्णां मध्ये ज्ञानी तत्त्वविदेकभक्तिरव्यभिचारिण्या भक्त्या युक्तो विशिष्यते विशेषं प्राप्नोति । यावत्पर्यन्तं जीवन्मुक्तो भवति तावत्पर्यन्तं सिद्ध्यादिविघ्नाभावमुद्दिश्य भक्तिं न त्यजतीत्यर्थः । अथ तस्य प्रेमानुबन्धमाह—**प्रिय इति** । हीति निश्चयेन ज्ञानिनः पुरुषस्याहमत्यन्तं प्रियो निरतिशयप्रेमास्पदम् । श्रुतिरपि—"तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा" तथा "आत्मनस्तु कामाय सर्वं प्रियं भवति" इति । स्पष्टार्थम् । च परं सोऽपि मम प्रियोऽनुग्राह्यत्वात् ॥ १७ ॥

रा० टी०—**तेषामिति** । नित्ययुक्तः सदा भगवत्समाधिमान् एकस्मिन् मय्येव प्राधान्येन भक्तिर्यस्यासौ एकभक्तिः विशिष्यते अतिशयितो भवति । कुत इत्यतो ममातिप्रियत्वादित्याह—प्रियो हीति ॥ १७ ॥

**उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥**
**आस्थितः स हि युक्तात्मा मामेवानुत्तमां गतिम् ॥ १८ ॥**

त० टी०—एवं चेत्तर्हि किमार्तादयस्त्रिविधा भक्तास्तेऽप्रिया अधमा इति चेत्तत्राह—उदारा इति। एते आर्तादयः सर्व एव उदारा वदान्याः, जन्मान्तरेषु बहुपुण्यानि कृतवन्तः। न ह्यल्पपुण्यैर्मद्भक्ता भवन्ति 'जन्मान्तरसहस्रेषु तपोदानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति वचनात्। अन्यथा मद्भक्ता न भवेयुः, किंतु रुद्रादित्यविनायकादिदेवभक्ता भवेयुस्तदपेक्षया मम भक्ताः सकामा अपि श्रेष्ठा मद्भजनादेव शनैर्निष्कामा भूत्वा मोक्षार्हा भवन्ति। 'न मे भक्तः प्रणश्यति, तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते' इत्यादिना वक्ष्यमाणत्वात्। ज्ञानी तु आत्मैव मनो देहो वेति मे मम मतं संमतं, नह्यात्मनोऽधिकः कश्चिदपि प्रियो भवति। हि यस्मात्स युक्तात्मा एकान्ती भक्तो मामेवानुत्तमां न ह्युत्तमा विद्यते यस्यास्तामनुत्तमां गतिं गम्यते इति गतिः प्राप्यं फलमास्थितः सर्वात्मनाश्रित इत्यर्थः ॥१८॥

म० टी०—तत्किमार्तादयस्तव न प्रियाः न अत्यर्थमिति विशेषणादित्याह—उदारा इति। एते आर्तादयः सकामा अपि मद्भक्ताः सर्वे त्रयोऽप्युदारा एव उत्कृष्टा एव पूर्वजन्मार्जितानेकसुकृतराशित्वात् अन्यथा हि मां न भजेयुरेव आर्तस्य जिज्ञासोरर्थार्थिनश्च मद्विमुखस्य क्षुद्रदेवताभक्तस्यापि बहुलमुपलम्भात् अतो मम प्रिया एव ते नहि ज्ञानवानज्ञो वा कश्चिदपि भक्तो ममाप्रियो भवति किंतु यस्य यादृशी मयि प्रीतिर्ममापि तत्र तादृशी प्रीतिरिति स्वभावसिद्धमेतत्। तत्र सकामानां त्रयाणां काम्यमानमपि प्रियमहमपि प्रियः ज्ञानिनस्तु प्रियान्तरशून्यस्याहमेव निरतिशयप्रीतिविषयः अतः सोऽपि मम निरतिशयप्रीतिविषय इति विशेषः अन्यथा हि मम कृतज्ञता न स्यात् कृतघ्नता च स्यात्। अत एवात्यर्थमिति विशेषणमुपात्तं प्राक्। यथा हि यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीत्यत्र तरबर्थस्य विवक्षितत्वाद्विद्यादिव्यतिरेकेण कृतमपि कर्म वीर्यवद्भवत्येव तथात्यर्थं ज्ञानी भक्तो मम प्रिय इत्युक्तेः यो ज्ञानव्यतिरेकेण भक्तः सोऽपि प्रिय इति पर्यवस्यत्येव अत्यर्थमिति विशेषणस्य विवक्षितत्वात्। उक्तं हि ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमिति। अतो मामात्मत्वेन ज्ञानवान् ज्ञानी आत्मैव न मत्तो भिन्नः किं त्वहमेव स इति मम मतं निश्चयः। तु शब्दः सकामभेददर्शित्रितयापेक्षया निष्कामत्वभेदादार्शित्वविशेषद्योतनार्थः। हि यस्मात्स ज्ञानी युक्तात्मा सदा मयि समाहितचित्तः सन् मां भगवन्तमनन्तमानन्दघनमात्मानमेवानुत्तमां सर्वोत्कृष्टां गतिं गन्तव्यं परमं फलमास्थितः अङ्गीकृतवान् न तु मद्भिन्नं किमपि फलं स मन्यत इत्यर्थः ॥ १८ ॥

शं० टी०—ननु ज्ञानिन एव तेभ्यः श्रेष्ठत्वे त्वितरेषां त्रयाणां निकृष्टत्वमेव प्राप्तं त्वद्भक्तानामिदं कथं युक्तमित्याकाङ्क्षायां तेऽपि च श्रेष्ठा एव भवन्तीत्याह—उदारा इति। अत्र सर्व इति सर्वशब्देन ज्ञानिनोऽप्यार्ताद्यन्तःपातित्वेऽपि ज्ञानीत्विति विभक्तत्वात्तद्व्यतिरिक्तानामेव सर्वशब्दवाच्यत्वम्। एते पूर्वोक्ताः सर्वे आर्तादयोऽप्युदारा उत्कृष्टत्वमेवारुणन्ती (?) त्युदारा उत्कृष्टा मद्भजनविमुखीभूतमीमांसकादिभ्यः श्रेष्ठा एव भवन्ति यस्मान्मदर्पणबुद्ध्या कर्मानुष्ठानं चित्तशुद्धिरयमेव परमेश्वर इति ज्ञानं मद्भजनं चात्यन्तदुर्लभमेते एतत्सर्वं प्राप्य मामेव भजन्ते तस्मादेतेषामपि श्रेष्ठत्वमस्त्येव। ननु भजनक्रियया ज्ञानिनोऽप्येतेषां च समे सति श्रेष्ठत्वे ज्ञानी विशिष्यत इति कथं सर्वसमस्य तव तत्र पक्षपात इत्यत आह—आस्थित इति। हि यस्मात्स ज्ञानी युक्तात्मा प्रत्यग्वृत्त्या सदा सर्वत्र मत्स्वरूपग्रहण एव युक्तोऽभिनिविष्ट आत्मा मनो यस्य स युक्तात्मा सन् अनुत्तमां यस्याः नित्यत्वेन महत्त्वेन सूक्ष्मत्वेनान्तरत्वेन ज्ञेयत्वेनानन्दत्वेन प्राप्यत्वेन च लोकशास्त्रप्रसिद्ध उत्तमः पदार्थः प्रमाणाबाधितो नास्ति साऽनुत्तमा तां गतिं ज्ञानेनैवैकेन गम्यत इति गतिस्तां केवलतां तदात्मकमेव मामास्थितः अयमेवाहमिति मामेव परं ब्रह्म चिदेकरसमद्वितीयमहमर्थं कृत्वा आ समन्तात् स्थितः आस्थितः पूर्णात्मना तिष्ठति न क्वचिदपि देहेन्द्रियादिभिः परिच्छिन्नो भवतीत्यर्थः। तस्मादेव ज्ञानी

श्रेष्ठ एवेति न किंतु मे मम परमेश्वरस्य पूर्वोक्तरीत्यात्मैव भवति ब्रह्मैवाहमिति सर्वदा पूर्णात्मना स्थितत्वात् स्वरूपमेव भवतीति मम मतं निश्चय इत्यर्थः। तस्मादेव सगुणभक्तेभ्यः सर्वेभ्यो ज्ञानी विशिष्यत इत्युक्तम्॥१८॥

**श्री० टी०**–तर्हि किमितरे त्रयस्त्वद्भक्ताः संसरन्ति नहि नहीत्याह–**उदारा इति**। सर्वेऽप्येते उदारा महान्तः मोक्षभाज एवेत्यर्थः। ज्ञानी पुनरात्मैवेति मे मतं निश्चयः हि यस्मात् स ज्ञानी युक्तात्मा मदेकचित्तः सन् न विद्यते उत्तमा यस्यास्तामनुत्तमां सर्वोत्तमां गतिं मामेवास्थितः आश्रितवान् मद्व्यतिरिक्तमन्यत्फलं न मन्यत इत्यर्थः ॥ १८ ॥

**स० टी०**–एते आर्तादयः सर्वे सकामा अपि मे प्रियाः ॥ पूर्वजन्मार्जितानेकपुण्यराशितयोत्तमा- ॥ १ ॥ अन्यथा न भजेयुर्मां सर्वपुण्यफलावधिम् ॥ क्षुद्रदेवान्भजन्तोऽपि दृश्यन्ते बहवो जनाः ॥ २ ॥ आर्तादयस्त्रयोऽप्येते मम भक्ता मम प्रियाः ॥ नह्यज्ञो ज्ञोऽपि मद्भक्तः कश्चिदप्यप्रियो मम ॥ ३ ॥ किंतु यस्य मयि प्रीतिर्यादृशी मेऽपि तादृशी ॥ प्रीतिरस्तीति स्वाभाव्यात्तत्रैते ये त्रयो मम ॥ ४ ॥ भक्तास्तेषां त्रयाणां च काम्यमानमपि प्रियम् ॥ प्रियोऽहमपि तस्माद्यो ज्ञानी तस्य तु सर्वतः ॥ ५ ॥ अहमेव प्रियोऽत्यन्तप्रेमास्पदतयान्तरः ॥ अतः सोऽपि ममात्यन्तप्रेमास्पदतया प्रियः ॥ ६ ॥ अन्यथा मे कृतज्ञत्वं न स्यात्स्याच्च कृतघ्नता ॥ अतो मामात्मभावेन ज्ञानवान्स्वानुभूतितः ॥ ७ ॥ साक्षात्कृत्य स्थितो नित्यचिदानन्दे य आत्मनि ॥ स आत्मैव न मद्भिन्नः किंत्वहं सर्वथैव सः ॥ ८ ॥ यतः समाहितमना मयि ज्ञानी निरन्तरम् ॥ भगवन्तमनन्तं मामानन्दघनमद्वयम् ॥ ९ ॥ आत्मानं परमोत्कृष्टां गतिं गन्तव्यमादरात् ॥ फलं स्वीकृतवान्नैव मद्भिन्नं मन्यते फलम् ॥ १० ॥ १८ ॥

**भा० टी०**–तर्हि किमार्तादयस्तवाप्रिया नात्मत्वेनात्यर्थमिति विशेषणादित्याह–**उदारा इति**। उदाराः सर्व एते त्रयोऽप्यन्येभ्यः आर्तादिभ्यः आर्त्यादिनिवृत्त्यर्थमितरदेवतादिभक्तेभ्य उत्कृष्टाः मम प्रिया एवेत्यर्थः। नहि कश्चिदार्तो वा जिज्ञासुर्वाऽर्थार्थी वा मद्भक्तो मम वासुदेवस्याप्रियो भवति परं तु ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहमित्युक्तत्वाद्यो यदर्थं मां भजति तमहमपि तत्फलदानेन भजामि यस्तु निष्कामी प्रेमातिशयेन मां भजति तमहमपि तथैव भजाम्यतो ज्ञानी ह्यत्यर्थं प्रियो भवतीति विशेषः। तत्कुत इति तत्राह–ज्ञानी तु ममात्मैव नान्यो यत इति मे मतं निश्चयः "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः। तुशब्दस्तेभ्यो विशेषद्योतनार्थः। ज्ञानी त्वात्मैवेत्यत्र हेतुमाह–आस्थित इति। हि यस्मात्स ज्ञानी अहमेव भगवान् वासुदेवो नान्योऽहमस्मीत्येवं युक्तः समाहित आत्मा चित्तं यस्य सः मामेव परं ब्रह्मानुत्तमां गतिं निरातिशयं गन्तव्यं गन्तुं प्रवृत्त इत्यर्थः ॥ १८ ॥

**प० टी०**–तर्हि किमितरे त्रयस्त्वद्भक्ताः संसरन्ति नहि नहीत्याह–**उदारा इति**। आर्तादयस्त्रयोऽप्युदारा मदर्पणपराः सन्तो मोक्षभागिन एव भवन्ति। ज्ञानी त्वात्मैव मत्स्वरूप एवेति मन्मतम्। सर्वविघ्नानां मूर्ध्नि पदं दत्त्वा मद्भावमागत इत्यर्थः। श्रुतिरपि शातपथी–"य एवं वेदाहं ब्रह्मास्मीति स इदꣳ सर्वं भवति तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषाꣳ स भवति" इति। भाष्यम्–यो ब्रह्माहमस्मीत्येवं वेद स इदं सर्वं भवति सर्वात्मको भवतीत्यर्थः। हीति निश्चयेन तस्य पुरुषस्याभूत्या अनैश्वर्याय च्यावनाय देवा इन्द्रादयोऽपि नेशते समर्था न भवन्ति। कुत एषामिन्द्रादीनामपि स आत्मान्तर्यामित्वेन प्रवर्तको भवतीत्यर्थः। एवं स युक्तात्मा पुरुषो मामेवानुत्तमां गतिमात्यन्तिकगातिस्वरूपमास्थित आश्रितः ॥ १८ ॥

**रा० टी०**–एकप्रशंसया प्राप्तेतरनिन्दां निराह–**उदारा इति**। एते चत्वारो जनाः। ज्ञानी मे आत्मैव स्वरूपमेव। अतिप्रियत्वान्मदधीनसत्तादिरिति ज्ञानवत्त्वाद्वा अभेदोपचारः। यद्वा आप्नोतीत्यात्मा

मत्प्राप्तिमानित्यर्थः । इति मे मतं सिद्धान्तः । स हि ज्ञानी अनुत्तमां गतिमुद्दिश्य युक्तात्मा समाधियुक्तमनाः मामास्थितः प्राप्त इति योजना ॥ १८ ॥

**बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ।**
**वासुदेवः सर्वमिति स महात्मा सुदुर्लभः ॥ १९ ॥**

**त० टी०**—ज्ञानी भक्तस्त्वतिदुर्लभ इत्याह—**बहूनामिति** । न ह्यल्पसुकृतजन्मना मत्प्रपत्तिनिष्ठा भवति, किंतु बहूनां पुण्याचारविशिष्टजन्मनामन्ते चरमजन्मनि ज्ञानवान्सन्मां प्रपद्यते साधनफलसंबन्धरूपं निश्चित्य निरतिशयप्रेम्णा भजते । ज्ञानस्य स्वरूपमाह—वासुदेवः सर्वमितीति । "सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत" इति श्रुतेर्यथा तज्जत्वात्तल्लत्वात्तदनत्वात्सर्वस्य जगतो ब्रह्मत्वं, तथा 'योऽयं तवागतो देव समीपं देवतागणः । स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान् । सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इत्यादिवाक्येभ्यो वासुदेवस्य सर्वगतत्वात्सर्वरूपत्वमित्येवंभूतज्ञानवान्स महात्मा महाविवेकसंपन्न आत्मा बुद्धिर्यस्यातः सुदुर्लभः, मनुष्याणां कोटिष्वपि कश्चिदेव स्यादिति भावः । तथोक्तं श्रीभागवते 'मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने' इति ॥ १९ ॥

**म० टी०**—यस्मादेवं तस्मात्—**बहूनामिति** । बहूनां जन्मनां किंचित्किंचित्पुण्योपचयहेतूनामन्ते चरमे जन्मनि सर्वसुकृतविपाकरूपे वासुदेवः सर्वमिति ज्ञानवान् सन् मां निरुपाधिप्रेमास्पदं प्रपद्यते सर्वदा समस्तप्रेमविषयत्वेन भजते सकलमिदमहं च वासुदेव इति दृष्ट्या सर्वप्रेम्णां मय्येव पर्यवसायित्वात् अतः स एवं ज्ञानपूर्वकमद्भक्तिमान् महात्मात्यन्तशुद्धान्तःकरणत्वाज्जीवन्मुक्तः सर्वोत्कृष्टो न तत्समोऽन्योऽस्ति अधिकस्तु नास्त्येव अतः सुदुर्लभः मनुष्याणां सहस्रेषु दुःखेनापि लब्धुं न शक्यः अतः स निरतिशयमत्प्रीतिविषय इति युक्तमेवेत्यर्थः ॥ १९ ॥

**शं० टी०**—एवं ज्ञानिनो ज्ञानाधिकत्वेन सर्वोत्तमत्वं प्रतिपाद्येदानीं कतिपयैर्जन्मभिर्ब्रह्मनिष्ठैकप्रयोजनैः सम्यक्परिपक्वविज्ञानेन विनष्टाशेषप्रतिबन्धकेन सर्वं ब्रह्मैव पश्यतो महात्मन एवं समुत्पन्नज्ञानस्य फलं विदेहमुक्तिं प्रतिपादयति—**बहूनामिति** । बहूनामनेकेषां द्वित्रिचतुःसंख्याकानां जन्मनां तत्र तं बुद्धिसंयोगमित्युक्तप्रकारेण सम्यग्ज्ञानसिद्ध्येकप्रयोजनानां जन्मनामन्ते चरमे जन्मनि प्राक्तनयाप्याधुनिकया च समाधिनिष्ठया निःशेषविनष्टविपरीतभावकारणकोटितया ब्रह्मविद् (?) वासुदेवः सर्वमित्यप्रतिबद्धवृत्त्या सर्वस्य वासुदेवमात्रत्वज्ञानवान् । ननु नामरूपक्रियाजातिविशेषैः पृथिव्यप्तेजोवाय्वादितत्कार्यभेदेन पृथक्सत्तावत्तया प्रत्यक्षेणोपलभ्यमानस्य जगतः सर्वस्य कथं वासुदेवः सर्वमिति तद्विलक्षणवासुदेवाभिन्नत्वं सिध्यतीति चेन्न, श्रुतियुक्तिभिर्विचार्यमाणे नामरूपादेस्तद्विशिष्टस्य जगतोऽपि ब्रह्मसत्ताव्यतिरेकेण सत्ताऽसिद्धेः मृदि घटवन्मरौ जलवद्ब्रह्मणि कल्पितस्य जगतः सति सत्तासंभवे नामरूपजात्यादिभिरनेकत्वं तद्विलक्षणत्वं च सिध्येत्तदभावात्तदसिद्धेः नहि घटस्य मृत्सत्ताव्यतिरेकेण प्रमाणैः सत्ता निरूपयितुं शक्यते । ननु पृथुबुध्नकम्बुग्रीवाद्याकारेण मृदो भिन्नतया घटस्वरूपस्योपलभ्यमानत्वात्तद्भिन्नस्य घटस्य तत्सत्ताभिन्नसत्तोपपद्यत एवेति चेन्न पृथुबुध्नत्वाद्याकारवत्तया मृद एव स्थितत्वाज्जडत्वगन्धवत्त्वादिमृद्धर्माणामव्यभिचारात् । स्थितिभेदाद्भेद एवेति चेन्न, मृद्येव स्थितिभेदस्य कल्पितत्वात्स्थितिभेदानुगतत्वेन मृद एवोपलभ्यमानत्वादुक्तधर्माव्यभिचाराच्च प्रत्यक्षेण घटस्य मृत्सत्ताभिन्नसत्ताया निरूपयितुमशक्यत्वात्तद्भिन्नत्वासिद्धेर्मृदभिन्नत्वस्य प्रत्यक्षत्वाद् घटस्य तद्भिन्नत्वं साधयितुमनुमानमशक्तं प्रत्यक्षेणासंदिग्धे चानुमानाऽप्रवृत्तेः घटादावप्येतन्न्यायस्य

युक्तत्वात्सादृश्यानुपपत्तावुपमानस्याप्यनुपपत्तिः । यथा "सौम्यैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात्" इति घटस्य मृण्मात्रत्वश्रवणाच्छब्देनापि घटस्य पृथक्सत्ता संपादयितुं न शक्यते तद्वज्जगतोऽपि मृदि घटवद्ब्रह्मणि कल्पितस्य सर्वप्रमाणैः पृथक्सत्ता संपादयितुं न शक्यते कल्पितत्वस्योभयसाधारण्यात् । ततः स्वतः सत्ताशून्यस्य जगतो ब्रह्माभिन्नत्वमेव सिद्धं पूर्वोक्तरीत्या जगत्सत्ताया बाधितत्वे तदाश्रयनामरूपजात्यादेरपि बाधितत्वात्स्वकार्यनिर्वाहानुपपत्तेः। यत एवं ततो वासुदेवः सर्वमिति भ्रान्त्या प्रतीतस्य सर्वस्याधिष्ठानाऽनन्यत्वेन वासुदेवमात्रत्वात्प्रत्यग्दृष्ट्याऽप्रतिबद्धया सकलमिदमहं च वासुदेव एवेति ज्ञानवान् सन् ब्रह्मविद्वरिष्ठः प्रारब्धशेषसमाप्तौ " तस्य तावदेव चिरम् " इतिश्रुत्युक्तरीत्या पतितेऽस्मिन् विद्वच्छरीरे निरस्ताशेषविशेषमपूर्वमनपरमनन्तरमबाह्यं सच्चिदानन्दैकरसमद्वितीयं मां परं ब्रह्म प्रतिपद्यते घटे नष्टे घटाकाशो महाकाशात्मना यथा तथोपाधौ विनष्टे परिच्छित्तिहेतोरभावात्पूर्णात्मना तिष्ठति विदेहकैवल्यं प्राप्नोतीत्यर्थः । एवमप्रतिबद्धवृत्त्या सर्वत्र ब्रह्ममात्रत्वदर्शी महात्मा पुरुषो ब्रह्मविद्वरिष्ठो लोके सुदुर्लभः शुकादिवत्कश्चिदेव न तु प्रायश इत्यभिप्रायः । यद्वा बहूनामनेकेषां सम्यग्ज्ञानसिद्धिकारणसमाध्येकप्रयोजनानां जन्मनामन्तेऽवसाने तत्तज्जन्मन्यनुष्ठितसमाधिविशेषैरविद्याकामादिप्रतिबन्धकजातस्य निःशेषनिवृत्त्या विशुद्धविज्ञानः सन् ज्ञानवान् ज्ञानी वासुदेवः सर्वं ब्रह्मैवेत्यप्रतिबद्धवृत्त्या मां सर्वात्मकं परं ब्रह्म प्रपद्यते इदमेवाहमिति स्वस्वरूपत्वेन विजानाति एवं सर्वं स्वं च ब्रह्मैव यो विजानाति स एष महात्मा महान् सर्वदा ब्रह्माकारेणैव वर्तत इति महानुत्कृष्टः आत्मान्तःकरणं यस्य स महात्मा महानुभावः लोके सुदुर्लभः सुतरां दुर्लभः सुदुर्लभो विरलः शतसहस्रेषु कृतश्रवणादिषु कश्चिदित्यर्थः ॥ १९ ॥

**श्री० टी०**–एवंभूतो मद्भक्तोऽतिदुर्लभ इत्याह–**बहूनामिति** । बहूनां जन्मनां किंचित्किंचित्पुण्योपचयेनान्ते चरमे जन्मनि ज्ञानवान्सन्सर्वमिदं चराचरं वासुदेव एवेति सर्वात्मदृष्ट्या मां प्रपद्यते भजति अतः स महात्माऽपरिच्छिन्नदृष्टिः सुदुर्लभः ॥ १९ ॥

**स० टी०**–पुण्योपचयहेतूनां बहूनां जन्मनां यतः ॥ पुण्यपुञ्जविपाकेऽन्ते चरमे जन्मनि स्वयम् ॥ १ ॥ वासुदेवः सर्वमिति ज्ञानवान्सन्नुदारधीः ॥ परप्रेमास्पदं मां च सर्वदानन्यमानसः ॥ २ ॥ सर्वं प्रेमास्पदत्वेन भजते मद्वपुश्च सन् ॥ अतः स एव मज्ज्ञानपूर्वकप्रेमवानपि ॥ ३ ॥ महात्मात्यन्तशुद्धान्तर्मना ब्रह्मात्मतत्त्वदृक् ॥ सर्वोत्कृष्टो न तत्तुल्योऽधिको वान्यो न कश्चन ॥ ४ ॥ मनुष्याणां सहस्रेषु दुःखेनापि स साधकैः ॥ अशक्यो लब्धुमेतस्मान्ममातीव प्रियोऽस्ति सः ॥ ५ ॥ १९ ॥

**भा० टी०**–ज्ञानी अतिदुर्लभ इति पुनरपि तं स्तौति–**बहूनामिति** । बहूनां जन्मनां ज्ञानार्थं पुण्यसंस्काराश्रयाणामन्ते सर्वपुण्यसंस्कारपरिपाकरूपे चरमजन्मनि लब्धपरिपाकज्ञानो मां वासुदेवं प्रत्यगात्मानं प्रपद्यते । कथं प्रपद्यत इत्यत आह–वासुदेवः सर्वमिति यदिदं सर्वं चराचरात्मकं भ्रान्त्या भाति तत्सर्वं किमपि वासुदेवातिरिक्तं न भवति "वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम्" "तदनन्यत्वमारम्भणशब्दादिभ्यः" इत्यादिश्रुतिसूत्रेभ्यः सर्वाधिष्ठानं मां ज्ञात्वा मामेव परमात्मानं निरतिशयनिरुपाधिप्रेमविषयत्वेन भजति स महात्मा न तत्समोऽभ्याधिको वान्योऽस्तीत्यर्थः । अतः सुदुर्लभः अतिशयेन दुर्लभः । तदुक्तम् ' मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ' इति ॥ १९ ॥

**प० टी०**–एवंभूतो भक्तो दुर्लभ इत्याह–**बहूनामिति** । बहूनां शुभाचारवतां जन्मनामन्ते चरमे जन्मनि वासुदेवः सर्वमिति ज्ञानवान् सर्वात्मदृष्ट्या मां प्रपद्यते भजति । स महात्माऽपरिच्छिन्नदृष्टिः स च दुर्लभः । अयमर्थः वासयति छादयति मायया विश्वमिति वासुस्तथा स्वप्रकाशेन दीव्यतीति देवस्त-

थाविधः सूत्रात्मा स एव सर्वमिति ज्ञानवान् । तदुक्तम्—'अहमेव परं ब्रह्म वासुदेवाख्यमव्ययम् । इति स्यान्निश्चितो मुक्तो बद्ध एवान्यथा भवेत् ' इति । तदेवं कामिनोऽपि सन्तः कामप्राप्तये परमेव भजन्ति ते कामान् प्राप्य शनैर्मुच्यन्त इत्युक्तम् ॥ १९ ॥

रा० टी०—एवंविधज्ञानी दुर्लभ इत्याह—बहूनामिति । बहूनां जन्मनामन्ते वासुदेवः सर्वं सर्वं वासुदेवाधीनसत्तादिमदिति ज्ञानवान् सर्वं संपूर्णं वस्तु वासुदेव एवेति ज्ञानवानिति वार्थः । एतेन भगवज्ज्ञानिनामेव मोक्ष इति कुत इति शङ्का निरस्ता भगवत एव पूर्णत्वेन ज्ञानादिदानसमर्थत्वादिति स मा प्रपद्यते स महात्मा तादृशज्ञानवान्सुदुर्लभः । एतेन वासुदेवज्ञानेन यदि मोक्षस्तर्हि सर्वेषां स स्यादिति शङ्का निरस्ता वासुदेवज्ञानेन मोक्षसत्त्वेऽपि न तज्ज्ञानिनः सर्वे अतो न सर्वेषां मोक्ष इति तात्पर्यात् ॥ १९ ॥

**कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यन्तेऽन्यदेवताः ॥**
**तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ २० ॥**

**त० टी०—तदेवमार्तादिचतुर्विधभक्तेषु ज्ञानिनो दुर्लभत्वकथनादुत्कर्ष उक्तः । इतरेषां त्रयाणामपि क्रमेण निष्कामत्वपूर्वकज्ञानद्वारा क्रमेण मोक्षभागित्वमुक्तमिदानीं स्वभक्तानामेवोत्कर्षद्योतनाय ये राजसतामसबहुलाः सुकृतहीनाः प्राचीनक्षुद्रकामवासनानिबद्धहृदयास्ते भगवद्व्यतिरिक्तदेवताराधनपरा भूत्वा संसरन्तीत्याह—कामैरिति चतुर्भिः । तैस्तैरनादिवासनानुसारिभिः स्त्रीपुत्रवित्तवशीकरणमोहनस्तम्भनशत्रुमारणोच्चाटनादिविषयैः कामैरभिलाषैर्हृतमपहृतं भगवतः सर्वेश्वराद्वैमुख्योत्पादनपूर्वकं तत्तदभिलाषपूरकत्वेनाभिमतान्यदेवताभिमुखीकृतं ज्ञानं ज्ञानकरणमन्तःकरणं येषां तेऽन्यदेवताः श्रीभगवतो वासुदेवादन्याः स्वतःशुद्धिहीनाः कालविद्रुता रजस्तमःप्रधानाः तं तं नियमं तत्तद्देवतासंबन्धिनियमं व्रतदीक्षाचिह्नविधारणतन्मन्त्रस्तोत्रजपादिरूपं तत्तत्तन्त्रेऽभिहितमास्थाय दृढबुद्ध्याऽऽश्रित्य प्रपद्यन्ते, अर्चनस्तवनमदक्षिणानमस्कारादिलक्षणभजनेन तदाश्रिता भवन्तीत्यर्थः । तत्रापि स्वकीयया प्रकृत्या पूर्वाभ्याससंस्कारजन्यस्वभावेन नियता वशीकृता इत्यर्थः ॥ २० ॥**

म० टी०—तदेवमार्तादिभक्तत्रयापेक्षया ज्ञानिनो भक्तस्योत्कर्षस्तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इत्यत्र प्रतिज्ञातो व्याख्यातः । अधुना तु सकामत्वे भेददर्शित्वे च समेऽपि देवतान्तरभक्तापेक्षयाऽऽर्तादीनां त्रयाणां स्वभक्तानामुत्कर्षः उदाराः सर्व एवैत इत्यत्र प्रतिज्ञातो भगवता व्याख्यायते यावदध्यायसमाप्ति । समानेऽप्यायासे सकामत्वे भेददर्शित्वे च मद्भक्ता भूमिकाक्रमेण सर्वोत्कृष्टं मोक्षाख्यं फलं लभन्ते क्षुद्रदेवताभक्तास्तु क्षुद्रमेव पुनः पुनः संसरणरूपं फलमतः सर्वेऽप्यार्ता जिज्ञासवोऽर्थार्थिनश्च मामेव प्रपन्नाः सन्तोऽनायासेन सर्वोत्कृष्टं मोक्षाख्यं फलं लभन्तामित्यभिप्रायः परमकारुणिकस्य भगवतः । तत्र परमपुरुषार्थफलमपि भगवद्भजनमुपेक्ष्य क्षुद्रफले क्षुद्रदेवताभजने पूर्ववासनाविशेष एवासाधारणो हेतुरित्याह—कामैरिति । मोहनस्तम्भनाकर्षणवशीकरणमारणोच्चाटनादिविषयैर्भगवत्सेवया लब्धुमशक्यत्वेनाभिमतैस्तैस्तैः क्षुद्रैः कामैरभिलाषैर्हृतमपहृतं भगवतो वासुदेवाद्विमुखीकृत्य तत्तत्फलदातृत्वाभिमतक्षुद्रदेवताभिमुख्यं नीतं ज्ञानमन्तःकरणं येषां तेऽन्यदेवताः भगवतो वासुदेवादन्याः क्षुद्रदेवतास्तं तं नियमं जपोपवासप्रदक्षिणानमस्कारादिरूपं तत्तद्देवताराधने प्रसिद्धं नियममास्थायाश्रित्य प्रपद्यन्ते भजन्ते तत्तत्क्षुद्रफलप्राप्तीच्छया क्षुद्रदेवतामध्येऽपि केचित्कांचिदेव भजन्ते स्वया प्रकृत्या नियताः असाधारणया पूर्वाभ्यासवासनया वशीकृताः सन्तः ॥ २० ॥

शं० टी०—ननु स्वस्वरूपमेव प्रत्यग्लक्षणं सर्वात्मकं ब्रह्मेति चेत्सर्वे किमात्मानमेव परिपूर्णमासन्नतरमश्रमलभ्यं न जानन्ति ज्ञात्वा किमिति मुक्तिं न प्राप्नुवन्तीत्याकाङ्क्षायां मदीयया माययापहृतविवेकवि-

ज्ञानाः सन्तो देवतान्तराराधनपरा भूत्वा मां न जानन्ति न भजन्ति तत्फलं च न प्राप्नुवन्तीत्याह—**कामैरिति**चतुर्भिः । " पश्यति पुत्रं पश्यति पौत्रं एतैरायुष्कामः आयुराशास्ते राष्ट्रकामः पशुकामः ब्रह्मवर्चसकामः " इत्यादिश्रुत्युक्तैः ' विष्णुलोकं स गच्छति ' ' शिवेन सह मोदते ' इत्यादिपुराणवचनोक्तैस्तैस्तैः पुत्रपौत्रपशुस्वर्गविष्ण्वादिलोकाविषयैस्तत्तद्देवतामहत्त्वप्रतिपादकवाक्यश्रवणसमुत्पन्नैः कामैर्मम मायालक्षणैर्हृतज्ञानाः हृतं तिरोभावितं ज्ञानं नित्यानित्यपदार्थविवेचने नित्यपदार्थवेदने तदनुसंधाने तत्फलसंपादनेऽशक्तं विवेकज्ञानं येषां ते हृतज्ञानाः सन्तो मीमांसकास्तार्किकाः शैवाः शाक्ता वैष्णवाश्चान्ये सर्वे जनाः स्वया स्वकीयया स्वान्तःकरणस्थया प्रकृत्या तत्तद्देवताराधने भजने तत्फलसंपादने च कृतिकारिण्या वासनया नियताः प्रेरिता भूत्वा तं तं तत्तत्कर्मानुष्ठाने तत्तद्देवताभजने च यो यो नियमस्तत्तच्छास्त्रेणोक्तो वैदिकः स्मार्तः पौराणिकस्तान्त्रिकश्च कर्मानुष्ठानजपहोमदानस्तोत्रपाठादिविषयो विध्यनतिक्रमस्तं तं नियममास्थायाश्रित्यान्यदेवताः अन्याः स्वात्मतत्त्वव्यतिरिक्ताः परस्य ब्रह्मणो भिन्ना देवताः सविशेषान् सोपाधिकान् ब्रह्मेन्द्रविष्ण्वादिदेवान् प्रपद्यन्ते तदुपास्त्या लभ्येषु फलेष्वनित्येषु तुच्छेषु नित्यत्वरम्यत्वेष्टत्वबुद्ध्या मोहितास्तत्सिद्ध्यै इन्द्रादीन् भजन्त इत्यर्थः ॥ २० ॥

**श्री० टी०**—तदेवं कामिनोऽपि सन्तः कामप्राप्तये परमेश्वरं मामेव ये भजन्ति ते कामान्प्राप्य शनैर्मुच्यन्त इत्युक्तम् । ये त्वत्यन्तं राजसास्तामसाश्च कामाभिभूताः क्षुद्रदेवताः सेवन्ते ते संसरन्तीत्याह—**कामैरिति**चतुर्भिः । ये तु तैस्तैः पुत्रकीर्तिशत्रुजयादिविषयैः कामैरपहृतविवेकाः सन्तः अन्याः क्षुद्राः भूतप्रेतयक्षादिदेवता भजन्ति किं कृत्वा तत्तद्देवताराधने यो यो नियम उपवासादिलक्षणस्तं तं नियमं स्वीकृत्य तत्रापि स्वकीयया प्रकृत्या पूर्वाभ्यासवासनया नियताः वशीकृताः सन्तो ॥ २० ॥

**स० टी०**—एवमार्तादिभक्तानां मध्ये ज्ञानी विशिष्यते ॥ इत्युक्तमधुना तेऽपि दुर्लभा अन्यभक्तितः ॥ १ ॥ सकामत्वे तथा भेददर्शित्वे च समेऽपि हि ॥ देवतान्तरभक्तेभ्यः स्वभक्तानामुदारता ॥ २ ॥ प्रतिज्ञाता पुरा सैव सम्यग्व्याख्यायतेऽन्ततः ॥ यतः समानेऽप्यायासे कृष्णभक्ताः क्रमेण च ॥ ३ ॥ सर्वोत्कृष्टं च मोक्षाख्यं लभन्ते फलमक्षयम् ॥ ये क्षुद्रदेवताभक्ताः क्षुद्रमेव पुनः पुनः ॥ ४ ॥ फलं संसरणात्मैव लभन्ते मन्दभाग्यतः ॥ पुरुषार्थफलं श्रीशभजनं समुपेक्ष्य यत् ॥ ५ ॥ भजनं क्षुद्रदेवानां तत्र कारणमुच्यते ॥ पुत्रपश्वादिविषयैः कामैः क्षुद्रैरनर्थदैः ॥ ६ ॥ तैस्तैर्भगवतो मत्तो विमुखीकृत्य मानसम् ॥ क्षुद्रदेवाभिमुख्यं च नीतं येषां सुरागिणाम् ॥ ७ ॥ तत्तत्फलप्रदातृत्वाभिमता यास्य देवता ॥ तस्या आराधने यो यः प्रसिद्धो नियमो भवेत् ॥ ८ ॥ तं तं जपोपवासादिनियमं समुपाश्रिताः ॥ तत्तत्क्षुद्रफलप्राप्तिवाञ्छयैवातिवञ्चिताः ॥ ९ ॥ असाधारणया पूर्वाभ्यस्तवासनया स्वया ॥ वशीकृताः परित्यज्य मा भजन्तेऽन्यदेवताः ॥ १० ॥ २० ॥

**भा० टी०**—चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुनेति चतुर्धात्वं सुकृतीनामुक्त्वा तेषां मध्ये ज्ञानिन उत्कर्षं निरूप्येतरेषामपि तेषां स्वभक्तानां परंपरया मोक्षभाक्त्वादुदाराः सर्व एवैते इत्युक्तं तत्र वासुदेवः सर्वमिति आत्मैव सर्वमित्येवं साक्षात् परंपरया वाऽप्रतिपत्तौ कारणमाह—**कामैरिति** । यथाकथंचिदपि स्वाभिमुखानामुदारतासूचनाय कामैस्तैस्तैः पुत्रपशुस्वर्गादिविषयैरिति भाष्ये आदिपदात्कीर्तिशत्रुजयमोहनस्तम्भनापकर्षणवशीकरणमारणोच्चाटनादयो गृह्यन्ते तैस्तैः कामैः हृतमपहृतं विवेकज्ञानं येषां ते हृतं भगवतो वासुदेवाद्विमुखीकृत्य तत्तत्फलदातृत्वाऽभिमतक्षुद्रदेवताभिमुख्यं नीतं ज्ञानमन्तःकरणं येषामिति वा अस्मिन्पक्षे उक्तार्थस्यान्यदेवताः प्रपद्यन्त इत्यनेन लाभात् हृतज्ञाना इत्यस्य वैयर्थ्यमन्यदेवताप्रतिपत्तौ विवेकशून्यत्वस्य हेतोरलाभश्च बोध्यः । अन्यदेवता वासुदेवान्मत्तः प्रत्यगभिन्नादन्या देवता अन्यदेवता

इति तेषां प्रतीतेरनुवादः । तं तं नियमं जपोपवासादिरूपं तत्तद्देवताराधने प्रसिद्धमास्थाय आश्रित्य इन्द्रादीन्प्रपद्यन्ते । तत्तन्नियमविशेषाश्रयणे हेतुमाह—प्रकृत्या स्वया स्वकीयया प्रकृतिः स्वभावः स च जन्मान्तरार्जितानेकदुष्कृतजन्यः संस्कारस्तया नियताः नियमिताः ॥ २० ॥

प० टी०—अथ तादितरानाह—**कामैस्तैस्तैर्हृतज्ञाना** इति चतुर्भिः । तैस्तैः पुत्रकलत्रमित्रशत्रुजयादिविषयैः कामैरपहृतविवेकाः सन्तोऽन्या मद्विलक्षणाः सर्वैश्वर्यसर्वज्ञत्वसर्वान्तर्यामित्वादिसामर्थ्यवर्जिताः क्षुद्रा भूतप्रेतयक्षादिदेवता भजन्ति । किं कृत्वा, तत्तद्देवताराधने यो यो नियम उपवासादिलक्षणस्तं तं नियममास्थाय स्वीकृत्य तत्रापि स्वकीयया प्रकृत्या पूर्वाभ्यासवासनया नियता वशीकृताः सन्तो देवताविशेषं भजन्ति तेषां मध्ये ॥ २० ॥

श० टी०—लोके भगवज्ज्ञानिनां बहूनां दृश्यमानत्वात्कथं दौर्लभ्यमित्यत आह—**कामैरिति** । तैस्तैः कामैः स्वस्वाभिमतकामैरिच्छाभिरपहृतज्ञानास्तं तं नियमं तत्तदागमोक्तनियममाश्रित्य स्वया प्रकृत्या प्रकृतिस्वभावः स्वकीयस्वभावेन नियताः वशीकृताः सन्तोऽन्यदेवताः ब्रह्मादिदेवताः प्रपद्यन्ते । ज्ञानितया दृश्यमानाः नानाविधकामापहृतभगवदुत्तमत्वज्ञानाः सन्तोऽन्यदेवतायाजिनोऽन्यदेवता एव प्रपद्यन्ते । शुद्धो भागवतो दुर्लभ इति भावः ॥ २० ॥

**यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ॥**
**तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥ २१ ॥**

**त० टी०—ननु ‘ सर्वदेवमयो हरिः ’ इति वचनात्सर्वदेवमयस्य हरेरेव सर्वदेवतामूर्तयस्तासां मध्ये यां कांचिदपि देवतामूर्तिं भजतस्तद्द्वारेण हरिभक्तिः स्यादिति नाशासनीयमित्याह—यो यो यामिति । अन्यदेवताभक्तानां मध्ये यो यो भक्तः यां यां तनुं देवतामूर्तिं श्रद्धया अर्चितुमर्चयितुमिच्छति, तदर्थं प्रवर्तते तस्य तस्य कामिनो भक्तस्य तामेव देवताविषयां श्रद्धां पूर्ववासनानुरूपामचलां दृढां विदधामि साधयामि तत्रैव नियोजयामि, नतु स्वविषयां श्रद्धां कारयामीत्यर्थः॥ २१ ॥**

म० टी०—तत्तद्देवताप्रसादात्तेषामपि सर्वेश्वरे भगवति वासुदेवे भक्तिर्भविष्यतीति न शङ्कनीयं यतः—**यो यो यां यामिति** । तेषां मध्ये यो यः कामी यां यां तनुं देवतामूर्तिं श्रद्धया जन्मान्तरवासनाबलप्रादुर्भूतया भक्त्या संयुक्तः सन्नर्चितुमर्चयितुमिच्छति प्रवर्तते चौरादिकस्यार्चयतेर्णिजभावपक्षे रूपमिदम् । तस्य तस्य कामिनस्तामेव देवतातनुं प्रति श्रद्धां पूर्ववासनावशात् प्राप्तां भक्तिमचलां स्थिरां विदधामि करोम्यहमन्तर्यामी नतु मद्विषयां श्रद्धां तस्य तस्य करोमीत्यर्थः । तामेव श्रद्धामिति व्याख्याने यच्छब्दानन्वयः स्पष्टस्तस्मात्प्रतिशब्दमध्याहृत्य व्याख्यातम् ॥ २१ ॥

शं० टी०—किंच—य इति । तेषां मध्ये शैवो वा वैष्णवो वा शाक्तो वा कर्मी वान्यो वा यो यो भक्त उपासको यां यां तनुं कामितार्थं तनोतीति तनुर्देवता तां शिवं वा विष्णुं वापीन्द्रमन्यं वा यया श्रद्धया स्वयाऽर्चितुं फलसिद्ध्यै आराधयितुमिच्छति तस्य तस्य भक्तस्य तस्यां तस्यामेव देवतायां शिवादौ तामेव श्रद्धामचलां स्थिरामहमात्मा बुद्धिस्थोऽन्तर्यामी विदधामि प्रयच्छामीत्यर्थः । अत्रायमभिप्रायः अङ्कुरस्थं जलमङ्कुरः पैप्पलो वा पैचुमन्दो वाम्रो वा स्वस्ववासनानुरूपेण यथा परिणमते तथास्य शक्तिं प्रयच्छति तद्वद्बुद्धिस्थ आत्मापि प्राणी स्वकर्मानुरूपवासनया यथा प्रवर्तितुमिच्छति तथा स्वसन्निधिमात्रेण तद्बुद्धेस्तत्प्रवृत्त्यनुरूपां शक्तिं संभावयति न तु सारथिरश्वमिव चोदयति अमूर्तस्याविकारिणः क्रियासंभवात् । तथा श्रुतिश्च “ य आदित्ये तिष्ठन्नादित्यादन्तरोऽयमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति य आत्मानि तिष्ठन् ” इति ॥ २१ ॥

**श्री० टी०**—देवताविशेषं ये भजन्ति तेषां मध्ये—**यो यो यामिति**। यो यो भक्तः यां यां तनुं देवतारूपां मदीयामेव मूर्तिं श्रद्धयाऽर्चितुमिच्छति प्रवर्तते तस्य तस्य भक्तस्य तत्तन्मूर्तिविषयां तामेव श्रद्धामचलां दृढामहमन्तर्यामी विदधामि करोमि ॥ २१ ॥

**स० टी०**—यो यः कामी तनुं यां यां देवतामूर्तिमिच्छति ॥ पूर्वाभ्यासोत्थया भक्त्या संयुतोऽर्चयितुं सदा ॥ १ ॥ कामिनस्तस्य तस्याहमन्तर्यामी महेश्वरः ॥ तामेव देवतामूर्तिं प्रति श्रद्धां पुरार्जिताम् ॥ २ ॥ करोमि न तु मद्भक्तिं तस्य तस्य करोम्यहम् ॥ नानाकामग्रहग्रस्ता मद्भक्तौ नाधिकारिणः ॥ ३ ॥ २१ ॥

**भा० टी०**—ननु तत्तत्कामैर्हृतज्ञानानामपि तेषां तत्तद्देवतानुग्रहात् क्रमेण विवेके लब्धे त्वयि वासुदेवे भक्तिर्भविष्यतीति चेत्तत्राह—**य इति**। यः कामी यां यां देवतातनुं श्रद्धया संयुक्तो भक्तः सन्नर्चितुं पूजयितुमिच्छति तस्य तस्य कामिनः श्रद्धां यया भक्तः सन्नर्चितुमिच्छति तामेवाचलां स्थिरां विदधामि करोमि। यां यां तनुमिति यच्छब्दान्वयस्तु यो यां देवतातनुमर्चितुमिच्छतीत्यादिवदद्भिराचार्यैरुत्तरश्लोकस्थतस्या इत्यनेन दर्शितः। एतेन यां देवतातनुं प्रति श्रद्धां विदधामि तामेव श्रद्धामितिव्याख्याने यच्छब्दानन्वयः स्पष्टस्तस्मात्प्रतिशब्दमध्याहृत्य व्याख्यातमिति प्रत्युक्तम्, तामेव श्रद्धामिति भाष्यकृद्व्याख्याने प्रतिशब्दाध्याहारं विनैव उक्तरीत्या यच्छब्दान्वयस्य स्पष्टत्वेनैवं वदतामज्ञताया अतिस्फुटत्वात् ॥ २१ ॥

**प० टी०**—**यो य इति**। यो यो भक्तो यां यां तनुं देवतारूपां मयान्तर्यामिणा कृत्वा मद्रूपां श्रद्धयार्चितुमिच्छति तस्य तस्य भक्तस्य तत्तन्मूर्तिविषयां तामेव श्रद्धामचलां दृढामहं भक्तानामन्तर्यामित्वेन विदधामि करोमि ॥ २१ ॥

**रा० टी०**—ननु मिश्रयाज्यपि क्रमेण भागवतो भवति किमित्यतः स किं नित्यत्रैविध्यरूपः उत शुद्धभागवतो निर्णायकाभावादिनिमित्तेनान्यदेवतायाजी। आद्ये आह—**यो य इति**। शुद्धभागवत—तमोयोग्याभ्यामन्यो विष्णुतत्त्वज्ञानविपरीतज्ञानाभ्यां हीनो यो यः कारणविशेषवशाद्यां यां ब्रह्मरुद्रादितनुं भक्तस्तद्भक्तिमान् श्रद्धया आस्तिक्यबुद्ध्यार्चितुमिच्छति तस्य तस्य तामेव श्रद्धामचलामहं विदधामि ॥ २१ ॥

**स तया श्रद्धया युक्तस्तस्या राधनमीहते ॥**
**लभते च ततः कामान्मयैव विहितान्हि तान् ॥ २२ ॥**

**त० टी०**—ततश्च स कामी भक्तस्तया मद्विहितया देवताविषयया श्रद्धया युक्तस्तस्या देवतातन्वा राधनमाराधनमीहते करोति। ततो देवतातन्वाः सकाशात्कामानभिलषितान्विषयान्पूर्वं संकल्पिताँल्लभते च। ननु त्वदितरदेवताभक्तस्य तत्प्रसादात्स्वेष्टसिद्धौ तस्या देवतायाः स्वातन्त्र्यं सिद्धं, तर्हि किं ते वैशिष्ट्यं यतस्तवाराधनस्यैव श्रैष्ठ्यं स्यादिति चेत्तत्राह—मयैव विहितानिति। सर्वकर्मफलप्रदात्रा तत्तद्देवतान्तर्यामिणा मयैव विहितांस्तदाराधनानुसारनिर्मितान् नहि देवतानां स्वातन्त्र्येण फलदाने शक्तिः। हि प्रसिद्धमेतच्छास्त्रे "कर्माध्यक्षः सर्वभूताधिवासः" इति वेदे 'एकस्त्वमस्य लोकस्य स्रष्टा संहारकस्तथा। अध्यक्षश्चानुमन्ता च गुणमायाविवर्जितः ॥ लोकयात्राप्रसिद्ध्यर्थं सृष्टब्रह्मादिरूपिणे। इज्यफलात्मने तुभ्यम्' इत्यादि सात्त्वततन्त्रे 'सकलफलप्रदो हि विष्णुः' इत्यादिशास्त्रे भगवत एव फलप्रदत्वं प्रसिद्धम् ॥ २२ ॥

**म० टी०**—**स तयेति**। स कामी तया मद्विहितया स्थिरया श्रद्धया युक्तस्तस्याः देवतातन्वा राधनमाराधनं पूजनमीहते निर्वर्तयति। उपसर्गरहितोऽपि राधयतिः पूजार्थः सोपसर्गत्वे ह्याकारः श्रूयेत। लभते च ततस्तस्याः देवतातन्वाः सकाशात्कामानीप्सितान् तान् पूर्वसंकल्पितान् हि प्रसिद्धं मयैव सर्वज्ञेन सर्वक-

१ शंकरानन्दपरमार्थप्रपाकारराघवानन्दा 'आराधनम्' इति छेदं स्वीकुर्वन्ति।

र्मफलदायिना तत्तद्देवतान्तर्यामिणा विहितान् तत्तत्फलविपाकसमये निर्मितान् हितान्मनःप्रियानित्यैकपद्यं वा अहितत्वेऽपि हिततया प्रतीयमानानित्यर्थः ॥ २२ ॥

**शं० टी०**—एवं देवतान्तरभक्तानां तत्तद्देवतायां दृढश्रद्धासिद्धिः स्वस्मादेवेति प्रतिपाद्य तेषां फलसिद्धिरपि तत्तद्देवताद्वारा स्वस्मादेवेत्याह—**स तयेति** । स च भक्तोऽपि तया उक्तरीत्या मया संभावितया श्रद्धया युक्तः सन् संधिरत्रार्षः । तस्याः स्वस्वदेवताया आराधनं तत्तद्देवताविषयं कर्म मन्त्रजपहोमादिलक्षणमीहते करोति पश्चान्मयैव तत्तद्देवतान्तर्यामिणा ततस्तत्तद्देवताद्वारा विहितान् दत्तान् देवतया दापितानित्यर्थः । हितानिष्टान्कामांश्च कामितार्थानपि लभते " एष एव साधुकर्म कारयति " इति " एको बहूनां यो विदधाति कामान् " इति च श्रवणान्ममैव कर्मकारयितृत्वं तत्तत्कर्मफलदातृत्वं चेति तत्तद्देवतानामनात्मत्वमनीश्वरत्वमस्वायत्तत्वं च सूचितं तेन चेतनमीश्वरं सर्वार्थदमात्मभूतमनायासलभ्यं मां त्यक्त्वा मूढा देवतान्तरमुक्तलक्षणं भजन्तीति व्यञ्जितं च ॥ २२ ॥

**श्री० टी०**—ततश्च—**स तयेति** । स भक्तस्तया दृढया श्रद्धया तस्यास्तनो राधनमाराधनमीहते करोति ततश्च ये संकल्पिताः कामास्तान्कामान् ततो देवताविशेषाल्लभते किंतु मयैव तत्तद्देवतान्तर्यामिणा विहितान्निर्मितान्, हि स्फुटमेतत्तद्देवतानामपि मदधीनत्वान्मन्मूर्तित्वाच्चेत्यर्थः ॥ २२ ॥

**स० टी०**—स कामी श्रद्धया युक्तो मद्विनिर्मितया तया ॥ तस्याश्च देवतातन्वाः पूजनं कुरुते सदा ॥ १ ॥ तस्यां आराधितायाः स देवतायाः सकाशतः ॥ ईप्सितांल्लभते कामांस्तान्मयैव विनिर्मितान् ॥२॥ हि प्रसिद्धं श्रुतौ लोके स्वकर्मफलदायिना ॥ भासमानान्हितत्वेनाहितत्वेऽपीति वार्थतः ॥ ३ ॥ २२ ॥

**भा० टी०**—**स तयेति** । यो यां देवतातनुमर्चितुमिच्छति स तया मद्विहितयाऽचलया श्रद्धया युक्तः तस्या देवतातन्वा राधनं आराधनमर्चनमीहते चेष्टते करोति ततस्तस्या आराधितायाः देवतातन्वाः सकाशादवश्यं कामानीप्सितान् लभते च हि यस्मान्मया कर्मफलविभागज्ञेन भगवता विहिताः निर्मिताः अतस्तान् । हि स्फुटमेतदिति तु तत्तद्देवतास्वातन्त्र्यप्रतिपादकशास्त्रे लोके चास्यास्फुटत्वादाचार्यैर्न व्याख्यातम् । हितानिति पदच्छेदे तु वस्तुतोऽहितानां कामानां हितत्वमौपचारिकं कल्पनीयम् ॥ २२ ॥

**प० टी०**—**स तयेति** । स भक्तस्तया श्रद्धया युक्तः संस्तस्यास्तनोराराधनमीहते करोति ततो ये संकल्पितास्तान् कामान् मयैव विहितान् दत्तानन्तर्यामित्वेन प्रयुक्ताद्देवताविशेषाल्लभन्ते । तदेवं यद्यपि सर्वा अपि देवता ममैव तनवोऽतस्तदाराधनमपि वस्तुतो ममाराधनमेव ॥ २२ ॥

**रा० टी०**—**स तयेति** । स च तया श्रद्धया युक्तस्तस्य देवस्याराधनमीहते करोति । ततस्तदाराधनात्तद्देवस्थेन मयैव विहितान् तान्स्वाभिप्रेतान्कामाँल्लभते च मदितरस्य फलदाने सामर्थ्याभावात् । द्वितीयेऽप्याह—**यो य इति** । भक्तः स्वतो विष्णुभक्त एव यो यः ज्ञात्वापि विष्णुं कारणान्तरवशादेव यां यां ब्रह्मादितनुं प्रागवदेवेहते इत्यन्तस्यार्थः । ततः क्रमेणेशानुग्रहप्राप्तगुरूपदेशद्वारा तस्य विष्णोराराधनमीहते । ततो भगवदाराधनान्मयैव विहितान्मोक्षादिकामाँल्लभते चेति ॥ २२ ॥

**अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥**
**देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥ २३ ॥**

**त० टी०**—स्यादेतदन्यदेवभक्ता अपि त्वद्दत्तानेव कामान्देवेभ्यो लभन्त इति । एवमपि न तेषां कापि क्षतिः फलसिद्धेरविशेषादतस्तेभ्यस्त्वद्भक्तानां को विशेष इति चेत्तत्राह—**अन्तवदिति** । तुशब्दो महान्तं विशेषं दर्शयति । अल्पमेधसां मन्दप्रज्ञत्वेन तत्त्वविवेचनेऽकुशलानां तेषां तत्तद्देवताभक्तानां

तद्देवताविशेषाराधनजं फलं तदध्यक्षेण मया दत्तमपि साक्षान्मदाराधनाभावादन्तवद्विनाश्येव भवति। कुतः यतो देवानिन्द्रादीन्ये यजन्ते ते देवयजस्तानेवान्तवतः कालविद्रुतान् देवान्यान्ति प्राप्नुवन्ति। यद्युपास्यभूता देवा एवान्तवन्तस्तर्हि तद्दत्तं फलमन्तवद्भवेदिति किमु वक्तव्यमिति भावः। मद्भक्तास्तु अपिशब्दात्प्रथमं मत्प्रसादात्कामानपि प्राप्नुवन्ति पश्चान्मद्भजनप्रभावान्निष्कामा भूत्वा मामनन्तस्वरूपगुणमहिमानं यान्ति प्राप्नुवन्ति अतः सकामा अपि मद्भक्ता अन्यदेवताभक्तवन्न संसरन्तीति महान्विशेषः ॥ २३ ॥

म० टी०—यद्यपि सर्वा अपि देवताः सर्वात्मनो ममैव तनवस्तदाराधनमपि वस्तुतो मदाराधनमेव सर्वत्रापि च फलदातान्तर्याम्यहमेव तथापि साक्षान्मद्भक्तानां च तेषां च वस्तुविवेकाविवेककृतं फलवैषम्यं भवतीत्याह—अन्तवत्त्विति। अल्पमेधसां मन्दप्रज्ञत्वेन वस्तुविवेकासमर्थानां तेषां तत्तद्देवताभक्तानां तन्मया विहितमपि तत्तद्देवताराधनजं फलमन्तवदेव विनाश्येव न तु मद्भक्तानां विवेकिनामिवानन्तं फलं तेषामित्यर्थः। कुत एवं यतो देवानिन्द्रादीनन्तवन्त एव देवयजो मदन्यदेवताराधनपरा यान्ति प्राप्नुवन्ति मद्भक्तास्तु त्रयः सकामाः प्रथमं मत्प्रसादादभीष्टान् कामान्प्राप्नुवन्ति अपिशब्दप्रयोगात् ततो मदुपासनापरिपाकान्मामनन्तमानन्दघनमीश्वरमपि यान्ति प्राप्नुवन्ति अत: समानेऽपि सकामत्वे मद्भक्तानामन्यदेवताभक्तानां च महदन्तरं तस्मात्साधूक्तमुदाराः सर्व एवैत इति ॥ २३ ॥

शं० टी०—काम एष क्रोध एष इति कामस्य दुष्पूरत्वं पातकित्वं वैरित्वं च पूर्वमेवोक्तं ततः काम एव सर्वानर्थबीजं तद्वता कृतं कर्म तत्फलं च ध्वंसप्रतियोगित्वादपुरुषार्थकरमेवेत्याह—अन्तवत्त्विति। अल्पमेधसामल्पा सदसद्विवेचनाऽसत्त्यागसदादानादिक्रियानर्हा मन्दा मेधा विवेकबुद्धिर्येषां तेषां कामिनां तत्फलमुपवासनियमायासबह्वर्थसाध्ययज्ञदानादिक्रियाप्रसन्नदेवताभ्य उपलब्धं फलं तदन्तवदेव तुशब्दोऽवधारणार्थः।सेवाया महद्विषयत्वे फलस्यापि महत्त्वं तद्विपरीतत्वे विपरीतत्वं 'महत्सेवां द्वारमाहुर्विमुक्तेः' इति प्रसिद्धं राजभटसेवादौ दृष्टं च।यस्मादेतैः सेविता देवताः सगुणत्वादनित्याः परिच्छिन्नाः सोपाधिकाश्चानीश्वराश्चाल्पविभूतयस्तासां सेवया भटसेवावदल्पमेव फलमनित्यं च तस्मात्तेषां कामिनां तत्तत्फलम् "यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते अन्तवदेवास्य तद्भवति" इतिश्रवणादन्तवन्नाशवदेव भवति न तु मोक्षवन्नित्यं, नह्यनित्योपासनया नित्यं महत्फलं सिध्यति। यस्मादेवं तस्माद्देवयजो देवान् ब्रह्मादीनिन्द्रादीन् यजन्ति तत्तच्छास्त्रोक्तविधिना भजन्तीति देवयजो देवताभक्तास्तानेव देवान्यान्ति "कर्मणा पितृलोको विद्यया देवलोकः" इति "देवो भूत्वा देवानप्येति" इति च श्रवणात्तत्तत्सारूप्यं प्राप्य तत्तद्देवतालोकं प्राप्नुवन्ति। एतेन सगुणोपासकानां देहायासक्लेशोऽप्यर्थव्ययक्लेशोऽप्यल्पफलत्वक्लेशश्चेत्यहो कष्टमिति गम्यते। एवं सगुणोपासकानामुपासनाफलं प्रतिपाद्य वासुदेवः सर्वमिति ज्ञानवान् मां प्रपद्यत इत्युक्तमर्थं पुण्यात्मनां श्रोतॄणां विवेकवतां स्वोपास्तावेव श्रद्धा भूयादिति पुनरपि प्रतिपादयति—मद्भक्ता इति। अपिशब्दस्त्वर्थः। मद्भक्ताः सदसद्विवेकवैराग्यशमदमसंन्यासाद्युत्तमसाधनसंपत्त्या ब्रह्मविद्वर्यप्रसत्त्या च श्रवणमननाभ्यामात्मानं मां परं ब्रह्म ज्ञात्वाजस्रमेकात्मिकया भक्त्या ये भजन्ति ते मद्भक्ता यतयस्तु मां परं ब्रह्मैव यान्ति "संप्राप्यैनमृषयो ज्ञानतृप्ताः कृतात्मानो वीतरागाः प्रशान्ताः। ते सर्वगं सर्वतः प्राप्य धीरा युक्तात्मानः सर्वमेवाविशन्ति" इतिश्रवणान्नित्यनिरतिशयानन्दं पुनरावृत्तिवर्जितं विदेहकैवल्यं प्राप्नुवन्तीत्यर्थः। तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इति यो मद्भक्तः स मे प्रिय इति ज्ञानिनोऽपि भक्तत्वप्रतिपादनादत्र मद्भक्ता इति ज्ञानिन एवोच्यन्ते न त्वितरे पूर्वं ज्ञानवान्मां प्रपद्यत इति स्वभक्तस्यैव ज्ञानिनः स्वप्राप्तिप्रतिपादनादितरभक्तस्य वासुदेवः सर्वमिति ज्ञानाऽसंभवाच्च सर्वारम्भपरित्यागीति सर्व-

कर्मपरित्यागायोगाच्च ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमिति स्वस्वरूपं तत्त्वतो विज्ञातवत एव। वक्ष्यति च विदेहमुक्तिं यत एवं ततोऽत्र भक्ता ब्रह्मविद एवेति ज्ञातव्यम् ॥ २३ ॥

**श्री० टी०**—तदेवं यद्यपि सर्वा अपि देवता ममैव मूर्तयः अतस्तदाराधनमपि वस्तुतो मदाराधनमेव तत्तत्फलदातापि चाहमेव तथापि साक्षान्मद्भक्तानां च तेषां च फलवैषम्यं भवतीत्याह—**अन्तवत्त्विति**। अल्पमेधसां परिच्छिन्नदृष्टीनां मया दत्तमपि तत्फलमन्तवत्तु विनाशि भवति। तदेवाह—देवान्यजन्तीति देवयजः ते देवानन्तवतो यान्ति मद्भक्तास्तु मामनाद्यन्तं परमानन्दं प्राप्नुवन्ति ॥ २३ ॥

**स० टी०**—यद्यपि देवताः सर्वा ममैव तनवो हरेः॥ तत्पूजनं ममैवास्ति पूजनं परमार्थतः॥ १॥ समस्तान्तर्यामितया फलदाताहमेव च॥ तथापि साक्षान्मद्भक्ता ये ये चान्यपरायणाः॥ २॥ विवेकतदभावाभ्यां फलं तेषां पृथक् पृथक्॥ अल्पबुद्धितया वस्तुविवेकाक्षमचेतसाम्॥ ३॥ देवतान्तरभक्तानां तदाराधनजं फलम्॥ विनाश्येव न तु स्थायि मद्भक्तानां तु नो तथा॥ ४॥ कुत एवं यतो देवानिन्द्रादीनेव नाशिनः॥ मदन्यदेवतापूजातत्पराः प्राप्नुवन्ति तान्॥ ५॥ मद्भक्तास्तु सकामा ये ते तावन्मत्प्रसादजान्॥ अभीष्टान्प्राप्नुवन्त्येव ततो मामद्वयं परम्॥ ६॥ उपास्तिपरिपाकान्ते प्राप्नुवन्त्यैश्वरं पदम्॥ समानेऽपि सकामत्वे मद्भक्तानां महात्मनाम्॥ ७॥ देवतान्तरभक्तानां महदस्त्यन्तरं यतः॥ उदाराः सर्व एवैते तस्मात्साधूक्तमित्यपि॥ ८॥ २३॥

**भा० टी०**—समानेऽप्यायासेऽन्तवत्फलसाधने तत्तद्देवताराधने प्रवर्तन्ते नतु मामेव भगवन्तं सर्वात्मानं तत्तत्कर्मफलप्रदं वासुदेवमनन्तफलाय प्रतिपद्यन्ते इत्यहो तेषामल्पबुद्धितेत्यनुक्रोशं दर्शयन्नाह—**अन्तवदिति**। तेषां तत्तद्देवताराधनपराणामल्पमेधसाम् "अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्" इतिश्रुतेरल्पे द्वैते मेधा बुद्धिर्येषां ते भेदबुद्धय इत्यर्थः। अल्पेऽन्तवत्फले बुद्धिर्येषामिति वा, अल्पे परिच्छिन्ने देवतान्तरे बुद्धिर्येषामिति वा, अल्पाऽनन्तफलाय वासुदेव एव भजनीयो न तु अन्तवत्फलाय देवतान्तरमिति विवेक्तुमक्षमत्वात् स्वल्पा बुद्धिर्येषामिति वा फलमन्तवद्विनाशि तु एव भवति तन्मया दत्तमपि। तदेवाह—यतो देवयज इन्द्राद्यर्चका देवानन्तवतो यान्ति गच्छन्ति मद्भक्तास्त्वार्तादयश्चत्वारोऽपि तत्तदीप्सितं लब्ध्वा क्रमेण मां वासुदेवं सच्चिदानन्दघनमनन्तं परमात्मानं मोक्षाभिधेयमपि यान्ति गच्छन्ति ॥ २३ ॥

**प० टी०**—अहमेव तत्तत्फलदाता तथापि साक्षान्मद्भक्तानां तेषां च फलवैषम्यं भवतीत्याह—**अन्तवदिति**। अल्पमेधसां परिच्छिन्नदृष्टीनां मया दत्तमपि तत्फलमन्तवद्भवति विनाशि भवति। तदेवाह देवान् यजन्ति ते देवयजस्तेऽन्तवतो देवान् यान्ति मद्भक्तास्ते मामनाद्यन्तं परमानन्दं प्राप्नुवन्ति। श्रुतिरपि शातपथी—"स यो हैतानन्तवत उपास्तेऽन्तवन्तꣳ स लोकं जयत्यथ यो हैताननन्तानुपास्तेऽनन्तꣳ स लोकं जयति" इति। जयति प्राप्नोति। शेषं स्पष्टम्॥ २३॥

**रा० टी०**—अन्यदेवतायाजिनामपि त्वत्त एव फलं चेत्कुतस्तत्त्यागेन त्वदाराधनमेव कार्यमित्यत आह—**अन्तवत्त्विति**। विष्णो रमाब्रह्मादिभ्यः परत्वं ज्ञात्वा अन्यदेवतायाजिनां तेषां फलमन्तवदेव कुतः अल्पमेधसामल्पफल एव बुद्धिमत्त्वादित्यर्थः। कथमन्तवत्त्वमित्यत उक्तम्—**देवानिति**। विष्णूत्कर्षं ज्ञात्वा ब्रह्मादिदेवयाजिनो ब्रह्मादिदेवान्यान्ति न तु मामतोऽन्तवत्फलम्। मद्भक्तास्तु मामपि देवान्प्राप्यान्ते मामपि यान्ति। अतोऽनन्तं तेषां फलम्। तस्मान्मदाराधनं प्राधान्येन अन्यदेवताराधनं च परिवारतया कार्यमिति ॥२३॥

**अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः॥**
**परं भावमजानन्तो ममाव्ययमनुत्तमम्॥ २४॥**

त० टी०—यद्येवं त्वदाराधनमेव सर्वोत्तमं चेत्तर्हि सर्वोऽपि लोको देवान्तरं हित्वा अनन्तफलदं देवदेवं सर्वेश्वरं त्वामेव निश्चित्य किमिति न भजतीत्यत आह—अव्यक्तमिति । 'यं न देवा न मुनयो न चाहं न च शंकरः । जानन्ति परमेशस्य तद्विष्णोः परमं पदम्' इतिवचनात् ब्रह्मशिवाद्यगोचर ईश्वरेश्वरः सर्वैर्ब्रह्मादिभिः स्वाभीष्टलाभाय कर्मभिराराधितः परमकारुण्यादाश्रितवत्सलत्वाच्च सर्वलोकहितायाजहत्स्वस्वरूपगुणशक्तिरेवाहं वसुदेवगृहेऽवतीर्ण इत्येवमव्ययं परं सर्वोत्कृष्टमत एवानुत्तमं मम भावं प्रादुर्भावमजानन्तोऽबुद्धयः सद्गुर्वाश्रयणाभावान्मज्ज्ञानार्हबुद्धिहीना इतः पूर्वमव्यक्तमनभिव्यक्तमिदानीं कर्मविशेषाद्वसुदेवगृहे व्यक्तिमापन्नं जन्मप्राप्तं क्षत्रियसजातीयं कंचिज्जीवविशेषं मन्यन्ते, नतु परमेश्वरमतो न मां कर्मभिराराधयन्ति किंतु मनुष्यबुद्ध्या मां विहायेन्द्रादिदेवानेवाराधयन्तीत्यर्थः ॥ २४ ॥

म० टी०—एवं भगवद्भजनस्य सर्वोत्तमफलत्वेऽपि कथं प्रायेण प्राणिनो भगवद्विमुखा इत्यत्र हेतुमाह भगवान्—अव्यक्तमिति । अव्यक्तं देहग्रहणात् प्राक् कार्याक्षमत्वेन स्थितमिदानीं वसुदेवगृहे व्यक्तिं भौतिकदेहावच्छेदेन कार्यक्षमतां प्राप्तं कंचिज्जीवमेव मन्यन्ते मामीश्वरमप्यबुद्धयो विवेकशून्याः अव्यक्तं सर्वकारणमपि मां व्यक्तिं कार्यरूपतां मत्स्यकूर्माद्यनेकावताररूपेण प्राप्तमिति वा । कथं ते जीवास्त्वां न विचिन्वन्ति तत्राबुद्धय इत्युक्तं हेतुं विवृणोति—परं सर्वकारणरूपमव्ययं नित्यं मम भावं स्वरूपं सोपाधिकमजानन्तस्तथा निरुपाधिकमप्यनुत्तमं सर्वोत्कृष्टमनतिशयाद्वितीयपरमानन्दघनमनन्तं मम स्वरूपमजानन्तो जीवानुकारिकार्यदर्शनाज्जीवमेव कंचिन्मां मन्यन्ते ततो मामनीश्वरत्वेनाभिमतं विहाय प्रसिद्धं देवतान्तरमेव भजन्ते ततश्चान्तवदेव फलं प्राप्नुवन्तीत्यर्थः । अग्रे च वक्ष्यते अवजानन्ति मां मूढा मानुषीं तनुमाश्रितमिति ॥ २४ ॥

शं० टी०—ननु महापण्डिता उक्ता भक्ताः सर्वेऽपि शास्त्रार्थं सम्यग् विचार्य ज्ञात्वा त्वामेव प्रत्यग्लक्षणमात्मानं निर्विशेषमविनाभूतमुपास्य कस्माद्विदेहमुक्तिं न प्राप्नुवन्तीत्याकाङ्क्षायामविद्यातत्कार्योपहताचित्तत्वान्मद्विषयकं ज्ञानं (विपरीतं विना?) समीचीनं नोदेति तदभावान्मत्प्राप्त्यभाव इति बोधयितुमाह—अव्यक्तमिति । अबुद्धय आत्मानात्मस्वरूपविवेचनतत्त्वाध्यवसायक्षमा बुद्धिर्मत्प्रसादजा येषां नास्ति ते स्वल्पबुद्धयो मूढाः पण्डिता अपि सदसद्विवेकशून्याः सन्तो ममात्मनोऽव्ययमव्यक्तादिस्थूलपर्यन्तस्य सर्वस्यापि दृश्यस्य नाशे सत्यपि स्वयं नाशरहितमत एवानुत्तमम् "सा काष्ठा सा परा गतिः" इतिश्रवणादुत्तमोत्तमं सर्वतः परिपूर्णं परं चेतनत्वेन सर्वप्रकाशकत्वेन सर्वाधारत्वेन सर्वद्रष्टृत्वेन च बुद्ध्यादेर्विलक्षणं भिन्नं च भावं परमं तत्त्वमजानन्तो भूत्वा अव्यक्तं न व्यज्यते केनापि प्रमाणेनेत्यव्यक्तः यद्वा व्यज्यत इति व्यक्तो विकारो देहेन्द्रियादिस्तद्बन्धरहितत्वादव्यक्तस्तं मामात्मानमहमर्थं व्यक्तिमापन्नं व्यक्तिर्देहस्तदात्मना स्थितं मन्यते 'त्वामात्मानं परं मत्वा परमात्मानमेव च । आत्मा पुनर्बहिर्मृग्यः अहोऽज्ञजनताज्ञता' इत्युक्तरीत्या मयि च देहं देहे च मामध्यस्यैकीकृत्य देह एवाहमिति देहमेवात्मानं पश्यन्तीत्यर्थः । एवमनात्मानमेवात्मानं पश्यतां कुतो ज्ञानं कुतो मुक्तिरिति सिद्धम् ॥ २४ ॥

श्री० टी०—ननु च समाने प्रयासे महति च फलविशेषे सति सर्वेऽपि किमिति देवतान्तरं हित्वा त्वामेव न भजन्ति तत्राह—अव्यक्तमिति । अव्यक्तं प्रपञ्चातीतं मां व्यक्तिं मनुष्यमत्स्यकूर्मादिभावं प्राप्तमल्पबुद्धयो मन्यन्ते । तत्र हेतुः मम परं भावं स्वरूपमजानन्तः । कथं भूतम् अव्ययं नित्यं न विद्यते उत्तमो यस्मात्तं भावमतो जगद्रक्षार्थं लीलयाविष्कृतनानाविशुद्धोर्जितसत्त्वमूर्तिं मां परमेश्वरं च स्वकर्मनिर्मितभौतिकदेहं च देवतान्तरं समं पश्यन्तो मन्दमतयो मां नातीवाद्रियन्ते प्रत्युत क्षिप्रफलदं देवतान्तरमेव भजन्ति ते चोक्तप्रकारेणान्तवत्फलं प्राप्नुवन्तीत्यर्थः ॥ २४ ॥

स० टी०—सर्वोत्तमफलं श्रीमद्भगवद्भजनं यदि ॥ कथं प्रायेण लोकास्ते भगवद्विमुखा इति ॥ १ ॥ अपेक्षायां हरिः प्राह स्वयं हेतुं जगद्गुरुः ॥ अव्यक्तमप्रकाशं मां प्राग्देहग्रहणात्स्थितम् ॥ २ ॥ वसुदेवगृहे व्यक्तिमस्मदादिवदागतम् ॥ इति मन्यन्त ईशानं विवेकरहिता जनाः ॥ ३ ॥ सर्वकारणमीशानं मां व्यक्तिं कार्यरूपताम् ॥ मत्स्यकूर्मादिरूपेण प्राप्तं वेत्यर्थ इष्यताम् ॥ ४ ॥ अविवेकितया मूढा विचारं नाश्रयन्ति ते ॥ सर्वकारणरूपं यन्नित्यं सोपाधिकं मम ॥ ५ ॥ तत्स्वरूपमजानन्तस्तथैव निरुपाधिकम् ॥ सर्वोत्कृष्टं परानन्दघनमद्वैतमक्षयम् ॥ ६ ॥ निर्विकल्पं स्वरूपं मे चिद्घनस्य महेशितुः ॥ अजानन्तो नृलोकानुकारिणं मां नरं विदुः ॥ ७ ॥ ततो मामीदृशं मत्वा देवतान्तरमाश्रिताः ॥ अन्तवत्तु फलं प्राप्य संसाराब्धौ भ्रमन्ति ते ॥ ८ ॥ मत्स्वरूपपरिज्ञानं महापुण्यफलं यतः ॥ तस्मात्त्वं मां विजानीहि सगुणं निर्गुणं च वा ॥ ९ ॥ तावन्मात्रेण मुक्तिस्ते भवितेत्याशयो हरेः ॥ १० ॥ २४ ॥

भा० टी०—तर्हि सर्वेऽपि देवतान्तरभजनं विहाय त्वामेव कुतो न प्रतिपद्यन्त इत्याशङ्क्य मदप्रतिपत्तौ मत्परमेश्वरभावाज्ञानमेव निमित्तमित्याह—**अव्यक्तमिति** । अव्यक्तमप्रकाशं लीलाविग्रहग्रहणात्पूर्वमिदानीं तद्ग्रहणावस्थायां व्यक्तिमापन्नं प्रकाशमागतं मां मन्यन्ते अबुद्धयो विवेकहीनाः । अबुद्धय इत्येतदुक्तं विवृणोति—ममाव्ययं व्ययरहितमनुत्तमं निरतिशयं परं भावं परमात्मस्वरूपं सोपाधिनिरुपाध्यात्मकमजानन्तोऽविवेकिनो नित्यप्रसिद्धमीश्वरमपि सन्तं मां पूर्वमसन्तमधुनैवोत्पन्नं मन्यन्ते इत्यर्थः ॥ २४ ॥

प० टी०—ननु च समाने प्रयासे महति च फलविशेषे सति सर्वेऽपि देवान्तरं हित्वा किमिति त्वामेव न भजन्तीत्याह—**अव्यक्तमिति** । अव्यक्तं प्रपञ्चातीतं मनुष्यमत्स्यकूर्मादिदेहधारित्वेन व्यक्तिमापन्नं प्राप्तमित्यल्पबुद्धयो मन्यन्ते । तत्र हेतुः, मम परं भावं तात्त्विकस्वरूपमजानन्तः । कथंभूतं भावमव्ययम्, अनुत्तमं न विद्यते उत्तमं यस्माज्जगद्रक्षणार्थमाविर्भूतं शुद्धसत्त्वरूपमुत्कृष्टफलदातारमजानन्तस्तत्कालफलदं देवतान्तरमुपासते तेषामन्तवत्फलं भवति ॥ २४ ॥

रा० टी०—ननु को विशेषस्तवान्येभ्यो ब्रह्मादिभ्यः येन त्वां प्राप्तानामनन्तफलं देवान्प्राप्तानामन्तवत्फलमित्यत आह—**अव्यक्तमिति** । अबुद्धयोऽज्ञानिनः परमितरविलक्षणमनुत्तममुत्तमरहितमव्ययं मम भावं प्रमाणाव्यभिचरिततत्त्वरूपं याथार्थ्यमजानन्तः अव्यक्तं कार्यदेहादिहीनं मां व्यक्तिमापन्नं कार्यदेहादियुक्तं मन्यन्ते कार्यदेहादिराहित्यं तद्युक्तान्यदेवेभ्यो मम विशेष इति भावः । यद्वा यथा देवयाजिनो मद्याजिनश्च त्रैविद्याः भागवताश्च वर्तन्ते तथा मद्द्वेषिणश्च केचन सन्तीत्याह—**अव्यक्तमिति** । सर्वात्मनाऽज्ञेयत्वहेतुना अव्यक्तपदार्थं मामीश्वरं व्यक्तिं सर्वात्मना ज्ञेयत्वमापन्नं प्राप्तं जीवमिति यावत् । मम परं भावमजानन्तोऽल्पबुद्धयोऽवमन्यन्ते जीवैक्यं मन्यन्त इत्यर्थः । यद्वा मयि सर्वमिदं प्रोतमित्यादावुक्तदिशा प्रेरकत्वादिमहामहिमवांश्चेद्भवांस्तत्कथं भवतः केचिज्जीवाभेदं मन्यन्त इत्यत आह—**अव्यक्तमिति** । प्रागुक्तदिशाऽव्यक्तं मामीश्वरं व्यक्तिमापन्नं जीवं जीवाभेदेन मां मन्यन्ते ये ते मम परं भावमजानन्तोऽल्पबुद्धयस्तमोयोग्या इत्यर्थः ॥ २४ ॥

**नाहं प्रकाशः सर्वस्य योगमायासमावृतः ॥**
**मूढोऽयं नाभिजानाति लोको मामजमव्ययम् ॥ २५ ॥**

त० टी०—ननु सर्वयोगिध्येयस्य दिव्याप्राकृताद्भुताविष्कृतरूपस्य शङ्खचक्रगदादिदिव्यायुधधारिणश्चतुर्भुजस्य श्रीवत्सकौस्तुभवनमालाकिरीटकुण्डलादिदिव्यलक्ष्मवतो ब्रह्मरुद्रादिजयिनो मन्मथगर्वापहारिणो युद्धे त्रिनयनसहस्राक्षादिजेतुर्नरकासुरजरासंधपौण्ड्रकचेदियादिसंहर्तुः सर्वदेवासुरमनुष्येष्वसंभावितपराक्रमस्य सर्वेश्वरस्य तव ज्ञानं सर्वेषां कुतो न जायते इत्यपेक्षायामाह—**नाहमिति** । सर्व-

जीवविजातीयस्वरूपगुणैश्वर्योऽप्यहं सर्वस्य लोकस्य जनस्याहं न प्रकाशः, अप्राकृतेन स्वेन रूपेण प्रकटो न भवामि किंतु कस्यचिदेव स्वानन्यभक्तस्य प्रकटो भवामि। तथोक्तं नारायणीयाख्याने श्वेतद्वीपपतिना नारदं प्रति 'एकतश्च द्वितश्चैव त्रितश्चैव महर्षयः। इदं मे समनुप्राप्ता मम दर्शनलालसाः॥ न च मां ते ददृशिरे नतु द्रक्ष्यति कश्चन। ऋते ह्येकान्तिकं चैषां त्वं चैवैकान्तिको मम' इति। तत्र हेतुमाह—योगमायासमावृत इति। योगो मत्संकल्पस्तदधीना माया योगमाया मनुष्यसमानरूपता तया अयमभक्तलोको मां यथावस्थितदिव्याप्राकृतरूपं न जानात्विति मदिच्छावशवर्तिन्या मायारूपजवनिकया समावृतः सम्यगाच्छन्नः न दर्शनमुपगच्छामि। तया योगमायया मूढ आवृतज्ञानोऽयं मद्भक्तव्यतिरिक्तः सर्वोऽपि लोको मामजं जीववत्कर्मनिमित्तजन्मशून्यं स्वेच्छया लीलार्थमाविर्भूतमव्ययमजहत्स्वरूपगुणशक्तिकं नाभिजानाति साक्षात्परमेश्वरोऽयमिति न जानाति किंतु मनुष्यविशेषमेव मन्यते॥ २५॥

म० टी०—ननु जन्मकालेऽपि सर्वयोगिध्येयं श्रीवैकुण्ठस्थमैश्वरमेव रूपमाविर्भावितवति संप्रति च श्रीवत्सकौस्तुभवनमालाकिरीटकुण्डलादिदिव्योपकरणशालिनि कम्बुकमलकौमोदकीचक्रवरधारिचतुर्भुजे श्रीमद्वैनतेयवाहने निखिलसुरलोकसंपादितराजराजेश्वराभिषेकादिमहावैभवे सर्वसुरासुरजेतरि विविधदिव्यलीलाविलासशीले सर्वावतारशिरोमणौ साक्षाद्वैकुण्ठनायके निखिललोकदुःखनिस्ताराय भुवमवतीर्णे विरिञ्चिप्रपञ्चासंभविनिरतिशयसौन्दर्यसारसर्वस्वमूर्तौ बाललीलाविमोहितविधातरि तरणिकिरणोज्ज्वलदिव्यपीताम्बरे निरुपमश्यामसुन्दरे करदीकृतपारिजातार्थपराजितपुरन्दरे बाणयुद्धविजितशशाङ्कशेखरे समस्तसुरासुरविजयिनरकप्रभृतिमहादैतेयप्रकरप्राणपर्यन्तसर्वस्वहारिणि श्रीदामादिपरमरङ्कमहावैभवकारिणि षोडशसहस्रदिव्यरूपधारिण्यपरिमेयगुणगरिमाणि महामहिमनि नारदमार्कण्डेयादिमहामुनिगणस्तुते त्वयि कथमविवेकिनोऽपि मनुष्यबुद्धिर्जीवबुद्धिर्वेत्यर्जुनाशङ्कामपनिनीषुराह भगवान्—**नाहमिति**। अहं सर्वस्य लोकस्य न प्रकाशः स्वेन रूपेण प्रकटो न भवामि किंतु केषांचिन्मद्भक्तानामेव प्रकटो भवामीत्यभिप्रायः। कथं सर्वस्य लोकस्य न प्रकट इत्यत्र हेतुमाह—योगमायासमावृतः। योगो मम संकल्पस्तद्वशवर्तिनी माया योगमाया तयाऽयमभक्तो जनो मां स्वरूपेण न जानात्विति संकल्पानुविधायिन्या मायया सम्यगावृतः सत्यपि ज्ञानकारणे ज्ञानविषयत्वायोग्यः कृतः अतो यदुक्तं परं भावमजानन्त इति तत्र मम संकल्प एव कारणमित्युक्तं भवति। अतो मम मायया मूढ आवृतज्ञानः सन्नयं चतुर्विधभक्तविलक्षणो लोकः सत्यपि ज्ञानकारणे मामजमव्ययमनाद्यनन्तं परमेश्वरं नाभिजानाति किंतु विपरीतदृष्ट्या मनुष्यमेव कंचिन्मन्यत इत्यर्थः। विद्यमानं वस्तुस्वरूपमावृणोत्यविद्यमानं च किंचिद्दर्शयतीति लौकिकमायायामपि प्रसिद्धमेतत्॥ २५॥

शं० टी०—सर्वास्ववस्थासु सर्वप्रकाशकतया प्रतीयमानं परिपूर्णं प्रत्यक्षमात्मतत्त्वं कथं न विजानात्ययं जन इत्याकाङ्क्षायामाह—**नाहमिति**। अहं प्रत्यग्लक्षणः परात्मा सर्वप्रकाशकोऽपि सर्वगतोऽपि सर्वस्यापि लोकस्य जनस्यात्मेश्वरप्रसादशून्यस्य ब्रह्मविद्वर्यानुग्रहविधुरस्य प्रकाशो ज्ञानविषयो न भवामि, मामनावृतस्वरूपमपि विना ब्रह्मविदोऽन्यः कोऽपि न जानातीत्यर्थः। लोकस्यात्मस्वरूपाज्ञाने कारणमाह—योगेति। स्ववृत्त्या पुरुषं जननमरणदुःखप्रवाहेन योजयतीति योगा सा चासौ माया च योगमाया तया तमोरूपया समावृतः योगमायासमावृतः यथा सूर्यप्रकाशके चक्षुषि काचपटलेनावृते सत्यहमन्ध इत्यध्यासेन पुमानन्धो भवति तथात्मप्रकाशके ज्ञानचक्षुषि मायया आवरणात्मिकया संवृते सत्यध्यासेनायं लोकोऽप्यज्ञो भवतीत्युच्यते योगमायासमावृतस्तत एव मूढो विपरीतभावं प्राप्तोऽयं लोको मामात्मभूतं प्रत्यक्षं पुरस्थं सूर्यमन्ध इव नाभिजानाति देहेन्द्रियादिभ्यो भिन्नतया स्फुटतरं प्रतीयमानमजमव्ययमात्मानं साक्षादयमहमिति

स्वात्मना न वेत्तीत्यर्थः । अजमित्यात्मनः कालत्रयेऽप्यव्याहतनित्यत्वबोधनार्थं विशेषणम् । अजामेकामित्यजत्वहेतुना मायाया अपि तथात्वे प्राप्ते तन्निवृत्त्यर्थमव्ययमिति विशेषणम् । ते ब्रह्मलोकेषु परान्तकाल इति प्रकृतेरपि लयः श्रूयते विद्वद्भिरनुभूयते च ततोऽव्ययत्वविशेषणमव्याहतम् ॥ २९ ॥

श्री० टी०—तेषां स्वाज्ञाने हेतुमाह—नाहमिति । सर्वस्य लोकस्य नाहं प्रकाशः प्रकटो न भवामि किंतु मद्भक्तानामेव यतो योगमायया समावृतः योगो युक्तिः मदीयः कोऽप्यचिन्त्यप्रज्ञाविलासः स एव माया अघटमानघटनापटीयस्त्वात्तया संछन्नः अत एव मत्स्वरूपज्ञाने मूढः सन्नयं लोकः अजमव्ययं च मां न जानाति ॥ २९ ॥

स० टी०—ननु श्रीमज्जन्मावसर इह सौन्दर्यजलधिस्वरूपं यद्ध्येयं सुरमुनिगणैरैश्वरपदम् ॥ स्वयं प्रादुर्भूतं निरवधिगुणैश्वर्यसहितं कथं तत्रावज्ञा भवति मितबुद्धेरपि हरौ ॥ १ ॥ तथाधुना कौस्तुभकुण्डलान्विते किरीटशोभावनमालशालिनि ॥ चतुर्भुजे कम्बुगदाब्जशोभिनि सुदर्शनालंकृतपाणिपङ्कजे ॥ २ ॥ श्रीकान्तिभूत्यादिविलाससंयुते श्रीवत्ससौन्दर्यगुणालये विभौ ॥ समस्तदेवासुरसिद्धनायके वैकुण्ठनाथे हि खगेशवाहने ॥ ३ ॥ देवेन्द्रसंपादितराजराजेश्वराभिषेकादिमहाविभूतौ ॥ समस्तदेवासुरजेतरीशे ब्रह्मादिभिर्वन्दितपादपीठे ॥ ४ ॥ अनेकलीलासुविलासशीले समस्तलोकोत्तरसर्वधर्मे ॥ समस्तलोकोद्धरणोन्मुखेऽजे स्वेच्छावतीर्णे भुवमद्भुताभे ॥ ५ ॥ विधिप्रपञ्चोत्तरधामसंयुते महातिसौन्दर्यरसाकरे हरौ ॥ उदारलीलाप्रविमोहिताखिले श्रुतिप्रगीतामलकीर्तिधामनि ॥ ६ ॥ सप्ताश्वभानूज्ज्वलदिव्यकान्तिमत्पीताम्बरे नूतनमेघसुन्दरे ॥ प्रभौ सुदामादिदरिद्रशातने स्वभक्तरक्षार्थमिहाश्वयन्तरि ॥ ७ ॥ सुरद्रुमार्थं जितपाकशासने बाणासुराजौ जितचन्द्रशेखरे ॥ सुरारिवंशोद्भवदुष्टघातिनि स्वभावसिद्धाखिलदिव्यकर्मणि ॥ ८ ॥ पराशरव्यासवसिष्ठनारदादिभिर्महद्भिर्मुनिभिः सदा स्तुते ॥ त्वयीदृशे स्यात्कथमल्पचेतसामपीड्यमानुष्यधिया ह्युपेक्षणम् ॥ ९ ॥ इत्यर्जुनस्यान्तरमादिदेवोऽभिलक्ष्य वाक्यं समुदाजहार ॥ एतादृशोऽहं भवता यथोक्तः सर्वस्य लोकस्य न चाक्षिगोऽस्मि ॥ १० ॥ स्वेन रूपेण सर्वस्य प्रकटो न भवाम्यहम् ॥ किंतु केषांचिदेवैवं मद्भक्तानां भवाम्यहम् ॥ ११ ॥ कथं सर्वस्य लोकस्य न प्रकाश इतीर्यते ॥ योगो ममैव संकल्पो माया तद्वशवर्तिनी ॥ १२ ॥ अभक्तोऽयं जनो मां न जानातित्वित्थं महेश्वरम् ॥ स्वरूपेणेतिसंकल्पानुसारिण्यैव मायया ॥ १३ ॥ ज्ञानगोचरतायोग्यः सत्यपि ज्ञानकारणे ॥ कुतोऽतः प्राङ्मया प्रोक्तं परं भावमितीह वै ॥ १४ ॥ गुणानां घटनं योगः सैव माया तया ह्यहम् ॥ संछन्नो लोकदृष्टयाद्धेत्यर्थो भाष्यकृतां मतः ॥ १५ ॥ अभक्तानां ममाज्ञाने संकल्पो मेऽस्ति कारणम् ॥ अतो मे माययाच्छन्नज्ञानः सन्मत्पराङ्मुखः ॥ १६ ॥ लोकोऽयं मामजं नित्यमनन्तं परमेश्वरम् ॥ नाभिजानाति सर्वज्ञं सत्यपि ज्ञानकारणे ॥ १७ ॥ किंतु मूढजनोऽयं मां विपरीतदृशान्यथा ॥ कंचिन्मनुष्यमेवात्र मन्यते मायया वृतः ॥ १८ ॥ विद्यमानं यथा वस्तु स्वरूपं ह्यावृणोत्यसौ ॥ अविद्यमानं यत्किंचिन्मायादर्शयतीत्यपि ॥ १९ ॥ प्रसिद्धमस्ति भोः पार्थ लोकेऽपीत्याशयो हरेः ॥ २० ॥ २९ ॥

भा० टी०—स्वाज्ञाने निमित्तमाह—नेति । अहं परमेश्वरः सर्वस्य लोकस्य परमेश्वरेण रूपेण प्रकटो न भवामि किंतु केषांचित्स्वभक्तानां प्रकाशोऽहमित्यभिप्रायः । तत्र हेतुमाह—योगेति । योगो गुणानां युक्तिर्घटनं सैव माया तया, यद्वा योगो भगवतश्चित्तं समाधिस्तत्कृता माया भगवत्संकल्पवशवर्तिनीति यावत् उभयथाप्यनाद्यनिर्वाच्यमज्ञानं तया योगमायया समावृतः संच्छन्नः आच्छादित इति यावत् हे योग योगिन । अर्शआद्यच्प्रत्ययान्तोऽयं योगशब्दः । अहं तत्पदार्थः सर्वस्य योगिनस्त्वंपदार्थमात्राभिज्ञस्य न प्रकाशोऽस्मि । तत्र हेतुः—मायया समावृत इति । अन्येषां पक्षस्तु अगतिकगत्याश्रयणात्मिकयाऽरुच्या ग्रस्तः अतोऽनाद्यनिर्वाच्याज्ञानेन मूढो मोहं गतोऽयं लोको मद्विमुखः मामजमव्ययं नाभिजानाति ॥२९॥

प० टी०—तेषां स्वाज्ञाने हेतुमाह—**नाहमिति** । सर्वस्य लोकस्य नाहं प्रकाशोऽन्तर्यामित्वेन वर्तमानोऽपि परतत्त्वप्रकाशको न भवामि किंतु मद्भक्तानामेव यतोऽयं लोको योगमायासमावृतः सन् मूढोऽस्त्यतो मामजमव्ययं न जानाति । यद्वा सर्वस्य लोकस्य ज्ञानरूपः प्रकाशोऽचिन्त्यैश्वर्यया योगमायया समावृतोऽस्मि परंतु नाहं समावृतो यतो योगमाया तु स्वाश्रयाव्यामोहिनी यथा शरावस्थितेन कलुषोदकेन प्रतिबिम्बप्रकाश एवाव्रियते न सूर्यः । अत एव मूढो लोक एवंविधमभितो वर्तमानं न जानाति । अत एवान्तवत्फलं लभते । मद्भक्तस्त्वजमनादिमव्ययमनन्तं मां जानात्यतोऽनश्वरं फलं लभत इत्यर्थः । तदुक्तं टिप्पणिकासु—'चित्संवित्सुखरूप आत्मनि कथं मायावृतत्वं भवेन्मार्तण्डस्तमसाव्रियेत किमहो किं त्वीक्षणं पश्यताम् । अज्ञानेन विधीयते जलमुचेवार्कस्तदुक्तं द्विधा विक्षेपावरणाभिधं मुनिवरैर्मोहस्य शक्तिद्वयम्' इति । अत्र ऋक्शाखीया श्रुतिरपि—"अजस्य नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुः । न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरं बभूव । नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति" इति सार्धऋक् । भाष्यम्—अजस्य जन्मरहितस्य महाभूतात्मकस्य विराजो नाभौ मध्ये हिरण्यगर्भाख्यमेकं लिङ्गदेहमर्पितं न्यस्तमिव स्थितम् । यस्मिन् लिङ्गदेहे विश्वानि सर्वाणि भुवनानि भूर्भुवःस्वरादीनि तस्थुः सूत्रे मणिगणा इव तिष्ठन्ति । तमित्युत्तरेणान्वयः । हे नरास्तं विश्वकर्माणमीश्वरं यूयं न विदाथ न विजानीथ । स को, य इमा इमानि जजान सूक्ष्मशरीरेण प्रविश्योत्पादितवान् । देवदत्तोऽहं यज्ञदत्तोऽहमित्याकारेण वयं न जानीम इति यदुच्यते तदसत्, न ह्यहंप्रत्ययगम्यं जीवरूपं विश्वकर्मणः परमेश्वरस्य तत्त्वम्, किंतु युष्माकमहंप्रत्ययगम्यानाम् । अन्यदहंप्रत्ययगम्यादतिरिक्तं सर्ववेदान्तवेद्यमीश्वरतत्त्वं बभूव भवति विद्यते । जीवरूपवत्तदपि कुतो न विद्म इति चेच्छ्रूयताम्—नीहारेण प्रावृता यूयं नीहारसदृशेनाज्ञानेन प्रावृता आच्छन्ना अतो न जानीथ । यथा नीहारो नात्यन्तमसद्दृष्टेरावरकत्वात्, काष्ठपाषाणाद्यवान्तरभेदं बोद्धुमशक्यत्वात् । एवमज्ञानमपि नात्यन्तमसदीश्वरतत्त्वावरकत्वात् । नापि सत् बोधमात्रनिवर्त्यत्वात् । ईदृशेनाज्ञानेन भवन्तः सर्वे जीवाः प्रावृताः । न केवलं प्रावृतत्वं किंच जल्प्याः देवोऽहं मनुष्योऽहमित्याद्यनृतजल्पपराः किं चासुतृपः केनाप्युपायेनासुंस्तर्पयन्त्युदरंभरा इत्यर्थः । नतु पारमेश्वरतत्त्वं विचारितवन्तः । किंच न केवलमिहलोकभोगमात्रतृप्ता उक्थशासो नानाविधेषु यज्ञेषूक्थं स्वर्गादिफलं शंसन्तः पृथिव्यां चरन्ति ॥ २५ ॥

रा० टी०—ननु तेषां त्वद्विषयविपरीतज्ञानकृतनिन्दया तव खेदोऽस्ति किमित्यतः परं भावमजानन्तोऽन्यथा मन्यन्त इत्युक्तविपरीतज्ञानहेतुभूतमज्ञानं न स्वतन्त्रं किंतु मदायत्तमेव, अतः कुतो मम खेद इतिभावेनास्य स्वाधीनतामाह—**नाहमिति** । योगेन सामर्थ्यलक्षणोपायेन मायया देव्या च । योगसहिता माया योगमायेति विग्रहः । समावृतोऽहं न सर्वस्य प्रकाशः । कर्मणि घञ् । प्रकाशविषयो न भवामि । अतो मयैव मूढोऽयं लोको मामजमव्ययं जन्मव्ययहीनं नाभिजानातीति ॥ २५ ॥

**वेदाहं समतीतानि वर्तमानानि चार्जुन ॥**
**भविष्याणि च भूतानि मां तु वेद न कश्चन ॥ २६ ॥**

त० टी०—योगमायासमावृतोऽहं लोकस्य न प्रकाश इत्युक्तमिदानीं मायाया नियन्तुर्मम तया कथंचित्कदाचिदपि न ज्ञानावरणं किंतु तद्वश्यानामेवेत्यतो मां न जानन्तीत्याह—**वेदाहमिति** । अहं परमेश्वरः स्वयोगमायया सर्वान् जीवान् व्यामोहयन्नपि स्वयं सर्वदाऽप्रतिबद्धज्ञानः समतीतानि बहुकालतो विनष्टानि वर्तमानानि च भविष्याणि चेति कालत्रयवर्तीनि भूतानि स्थावरजङ्गमानि सर्वाणि वेद जानामि हे अर्जुन अतोऽहं सर्वदाऽखण्डज्ञानत्वात्सर्वज्ञः । मां तु सर्वदा सर्वत्र विद्य-

मानमपि मायावश्यः कश्चन कोऽपि मद्भक्तिवर्जितो न वेद, अतो मायामोहितत्वान्मां न प्रायेण भजत इत्यर्थः ॥ २६ ॥

**म० टी०**—अतो मायया स्वाधीनया सर्वव्यामोहकत्वात्स्वयं चाप्रतिबद्धज्ञानत्वात्—**वेदाहमिति**। अहमप्रतिबद्धसर्वविज्ञानः मायया सर्वाँल्लोकान्मोहयन्नपि समतीतानि चिरविनष्टानि वर्तमानानि च भविष्याणि च एवं कालत्रयवर्तीनि भूतानि स्थावरजङ्गमानि सर्वाणि वेद जानामि, हे अर्जुन अतोऽहं सर्वज्ञः परमेश्वर इत्यत्र नास्ति संशय इत्यर्थः । मां तु तुशब्दो ज्ञानप्रतिबन्धद्योतनार्थः । मां सर्वदर्शिनमपि मायाविनमिव तन्मायामोहितः कश्चन कोऽपि मदनुग्रहभाजनं मद्भक्तं विना न वेद मन्मायामोहितत्वात् अतो मत्तत्त्ववेदनाभावादेव प्रायेण प्राणिनो मां न भजन्त इत्यभिप्रायः ॥ २६ ॥

**शं० टी०**—नाहं प्रकाशः सर्वस्येत्युक्त्या स्वस्यापि लोकवदविद्यावृतत्वे सर्वस्य जगतोऽप्यान्ध्यं प्रसज्येतातो नाहमविद्यया वृत इति तदभावं प्रतिपादयति—**वेदेति**। भोक्तुर्भोगार्थं मत्त एव भवन्तीति भूतानि मनोबुद्ध्यादीनि तत्प्रवर्तनानि च समतीतानि गतानि वर्तमानानि च भविष्याणि चाहं वेद जाग्रदाद्यवस्थासु तेषां सत्तां स्फूर्तिं प्रवर्तनशक्तिं च प्रयच्छन् सर्वदा प्रकाशमानः सन् प्रत्यग्रूपोऽहं विजानामि देहेन्द्रियादीनां प्रवृत्तिं निवृत्तिं चावस्थाभेदेन सत्तामसत्तां च साक्षादहं जानामीत्यर्थः । मायावृतत्वे प्राणिनां ज्ञानाभावः प्रवृत्त्यभावश्च ममापि वेदनाभावश्च प्रसज्येत तत्तदिष्टापत्तिरेवेति चेन्न, प्रत्यक्षविरोधप्रसङ्गात्प्राणिन इष्टमनिष्टं च जानन्ति प्रवर्तन्ते च तदिदं सर्वप्रत्यक्षं ततः प्राणिप्रवृत्त्या "जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते" इत्यादिश्रुत्या चात्मनो ममाविद्यावरणाऽभावः सिद्धस्तत एवाहं सर्वास्ववस्थासु सर्वदा सर्वं जानामि मां तु दृश्यत्वादनित्यत्वाज्जडत्वाच्च देहेन्द्रियग्रामः प्राणो वा मनो वा बुद्धिर्वाप्यन्यो वा कश्चन न वेद किंचिन्न जानातीत्यर्थः । "अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम्" इति श्रुतेः। तत एवाजत्वाव्ययत्वानुत्तमत्वादिविशेषणानि सार्थकानि । यद्वा सर्वप्रकाशकत्वेन सर्वास्ववस्थास्वहमर्थतया देदीप्यमानं बुद्ध्यादिसर्वपदार्थतद्धर्मतत्कर्मणां च ज्ञातारं मां कश्चन पण्डितोऽपि न वेद न जानातीत्यर्थः । यद्वा प्रत्यगभिन्नः परमात्माहं समतीतान्यतिक्रान्तानि वर्तमानानि च भविष्याणि च भूतानि सर्वप्राणिजातानि वेद वेद्मि मां तु प्रत्यग्लक्षणमात्मभूतमप्यहमर्थं कश्चन कोऽपि न वेद न शृणोति न मनुते न विजानाति न भजति चेत्यर्थः ॥ २६ ॥

**श्री० टी०**—सर्वोत्तमं मत्स्वरूपमजानन्त इत्युक्तम्। तदेव स्वस्य सर्वोत्तमत्वमनावृतज्ञानशक्तित्वेन दर्शयन्नन्येषामज्ञानमेवाह—**वेदेति**। समतीतानि विनष्टानि वर्तमानानि च भविष्याणि च भावीनि च त्रिकालवर्तीनि भूतानि स्थावरजङ्गमानि सर्वाण्यहं वेद जानामि मायाश्रयत्वान्मम तस्याः स्वाश्रयव्यामोहकत्वाभावात् इति प्रसिद्धम्। मां तु न कोऽपि वेत्ति मन्मायामोहितत्वात् । प्रसिद्धं हि लोके मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वं च ॥ २६ ॥

**स० टी०**—मम स्वाधीनया शक्त्या मायया मोहितो जनः ॥ नाभिजानाति मामीशं सगुणं निर्गुणं तथा ॥ १ ॥ ममेश्वरस्य विज्ञानं प्रतिबध्नाति नैव सा ॥ मदायत्ता न मद्भिन्ना वक्तुं शक्यान्यशक्तिवत् ॥ २ ॥ मायाविनो यथान्यस्य माया न प्रतिबन्धिका ॥ तथा महेशितुर्माया ममायत्तास्ति सर्वतः ॥ ३ ॥ इत्याह भगवान्स्वीयभक्तानां बोधवृद्धये ॥ अहं सर्वेश्वरो लोकान्मायया मोहयन्नपि ॥ ४ ॥ अतिक्रान्तानि भूतानि वर्तमानानि सर्वशः ॥ भविष्याणि च जानामि कालत्रयगतान्यपि ॥ ५ ॥ अतः परमसर्वज्ञो मायावी परमेश्वरः ॥ अहमस्म्यत्र संदेहो न कार्यो भवतार्जुन ॥ ६ ॥ मदनुग्रहपात्रं वै मद्भक्तं सद्गुणं विना ॥ कोऽपि वेद न मां लोको मन्मायामोहितत्वतः ॥ ७ ॥ मत्तत्त्ववेदनाभावाद्भजते मां

न मूढधीः ॥ ८ ॥ योऽज्ञः पुनाति सकलं हृदि वाचि वर्ती यं वेत्ति नैव विधिरुद्रनुतं हि कोऽपि ॥ येना-ततं निखिलमेव नमन्ति यस्मै देवा यतो जगदिदं तमजं भजेऽहम् ॥ ९ ॥ २६ ॥

भा० टी०—मायया त्वमावृतश्चेत्त्वापि लोकस्येव ज्ञानप्रतिबन्धः स्यादित्याशङ्क्याह—वेदेति । अहम-प्रतिबद्धज्ञानशक्तिः समतीतानि समतिक्रान्तानि वर्तमानानि भविष्याणि च भूतानि चराचरात्मकानि सर्वाणि वेद जानामि त्वमपि योगाद्यभ्यासेन स्वच्छान्तःकरणः सन् ज्ञातुं शक्तोऽसि । अहं तु नित्यशुद्धः सर्वोपाधिधर्माभिमानमलशून्यो जानामीति किमु वक्तव्यमिति सूचयन्संबोधयति—अर्जुनेति । मां तु पर-मात्मानं मद्भक्तं मच्छरणमेकं त्यक्त्वा न कश्चन वेद जानाति । तथाच यया मायया समावृतं मां लोको नाभि-जानाति नासौ मदीया सती ममेश्वरस्य मायाविनो ज्ञानं प्रतिबध्नाति मायात्वात् लौकिकमायावत् । यद्वा नाहं मायया प्रतिबद्धज्ञानः मायावित्त्वात् लौकिकमायाविवदिति भावः ॥ २६ ॥

प० टी०—तदेवं स्वस्य सर्वोत्तमत्वमनावृतशक्तित्वं दर्शयति—वेदाहमिति । समतीतान्यतिक्रान्तानि वर्तमानानि तथा भविष्याण्येवं त्रिकालवर्तीनि भूतानि स्थावरजङ्गमात्मकानि सर्वाण्यहं वेद जानामि माया-श्रयत्वान्मम तस्याश्चाश्रयव्यामोहकत्वाभावात् । मां च कोऽपि न वेद न वेत्ति मन्मायामोहितत्वात् । मायायाः स्वाश्रयाधीनत्वमन्यमोहकत्वं प्रसिद्धमेव ॥ २६ ॥

रा० टी०—ननु जवनिकाद्युभयभागवर्तिनोः परस्पराज्ञानवत् तवापि भूतविषयाज्ञानं स्यादित्यतो जव-निकास्थानीयापि माया न मां बध्नातीत्याह—वेदेति । मायाकृतबन्धहीनत्वादहं भूतभविष्यद्वर्तमानभूतानि प्राणिनो वेद जानामि । मां तु कश्चन कोऽपि यथावत्त्वेन न वेद मायाकृतबन्धसत्त्वाल्लोकस्येति ब्रह्मादिर-तिशक्तोऽपि किंचिदेव वेत्ति न सर्वथेति भावः ॥ २६ ॥

**इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन भारत ॥**
**सर्वभूतानि संमोहं सर्गे यान्ति परंतप ॥ २७ ॥**

त० टी०—तदेवं जीवानां भगवत्तत्त्वज्ञानाभावे मायाया हेतुत्वमुक्तं, पुनस्तदज्ञानदार्ढ्ये तत्का-र्यस्य हेतुत्वमाह—इच्छाद्वेषसमुत्थेनेति । इच्छानुकूलविषये रागः, द्वेषः प्रतिकूलविषयेऽप्रीति-स्ताभ्यां पूर्वपूर्वजन्मन्यभ्यस्ताभ्यां समुत्थेन सम्यगुत्पन्नेन शीतोष्णसुखदुःखादिरूपद्वन्द्वनिमित्तेन मोहेन अहं सुखी अहं दुःखीत्यादिविपर्ययरूपेण सर्वभूतानि प्राणिनः सर्गे स्थूलदेहोत्पत्तौ सत्यां संमोहं विभ्रमं सुखदुःखादिविशिष्टे नश्वरे देहे एवात्माभिमानं यान्ति प्राप्नुवन्ति नतु देहाद्यतिरि-क्तमात्मानं जानन्ति कुतो मां सर्वान्तर्यामिणं हे परंतप अतो रागद्वेषजन्यसंमोहाभिभूतान्तःकरणाः प्राणिनो मां सर्वेश्वरं न जानन्त्यतो न भजन्ते ॥ २७ ॥

म० टी०—योगमायां भगवत्तत्त्वविज्ञानप्रतिबन्धे हेतुमुक्त्वा देहेन्द्रियसंघाताभिमानातिशयपूर्वकं भोगा-भिनिवेशं हेत्वन्तरमाह—इच्छाद्वेष इति । इच्छाद्वेषाभ्यामनुकूलप्रतिकूलविषयाभ्यां समुत्थितेन शीतोष्णसुख-दुःखादिद्वन्द्वनिमित्तेन मोहेनाहं सुख्यहं दुःखीत्यादिविपर्ययेण सर्वाण्यपि भूतानि संमोहं विवेकायो-ग्यत्वं सर्गे स्थूलदेहोत्पत्तौ सत्यां यान्ति । हे भारत हे परंतपेति संबोधनद्वयस्य कुलमहिम्ना स्वरूपशक्त्या च त्वां द्वन्द्वमोहाख्यः शत्रुर्नाभिभवितुमलमिति भावः । नहीच्छाद्वेषरहितं किंचिदपि भूतमस्ति न च ताभ्यामाविष्टस्य बहिर्विषयमपि ज्ञानं संभवति किं पुनरात्मविषयमतो रागद्वेषव्याकुलान्तःकरणत्वात्सर्वा-ण्यपि भूतानि मां परमेश्वरमात्मभूतं न जानन्ति अतो न भजन्ते भजनीयमपि ॥ २७ ॥

शं० टी०—पूर्वं कामैस्तैस्तैर्हृतज्ञाना इति कामस्य ज्ञानप्रतिबन्धकत्वं यद्यप्युक्तं तथापीदानीं कामादीनां प्रतिबन्धकत्वं प्रवृत्तिदशायां वा उत पूर्वमेवेत्याकाङ्क्षायां पुरुषः प्राचीनपापकर्मवशात्कामरागादिकृतमोहवि-

शिष्टः सन्नेव जायत इत्याह—इच्छेति । इच्छाद्वेषसमुत्थेन इच्छाऽनुकूले प्रीतिरननुकूले त्वप्रीतिर्द्वेषस्ताभ्यां समुत्थेन समुत्पन्नेन द्वन्द्वमोहेन द्वन्द्वं सुखं दुःखं च तयोस्तत्साधनयोश्च विपरीतबुद्धिर्मोहः मोहो नाम विचित्तता विवेकाभावस्तेन द्वन्द्वमोहेन सर्वभूतानि सर्वप्राणिनोऽपि सर्गे उत्पत्तिकाल एव संमोहं मूढभावं प्राचीनकर्मदोषेण यान्ति नैवेदानीम् । यत एवं ततो जन्मान्तरीयमहापापसंभावितमोहदोषेणैव द्वन्द्वमोहविमूढाः मोक्षसाधने वेदान्ते तद्विचारे तज्जन्यज्ञाननिष्ठायां चाश्रद्धया न प्रवर्तन्ते प्रवृत्तानामपि तज्ज्ञानं नोत्पद्यते 'ज्ञानं नोत्पद्यते पुंसां पापोपहतचेतसाम्' इति स्मरणात् किंतु बन्धसाधने काम्ये कर्मणि देवतोपास्त्यादौ श्रद्धया भक्त्या च मोक्षसाधनत्वबुद्ध्या च नियमेन प्रवर्तन्ते तत्रापि यच्चित्तशोधकं न तत्र प्रवर्तन्ते प्रवर्तन्ते तु यन्मालिन्यकारणं जन्मादिदुःखबीजं तत्रैव एवं स्थूलमेव बाह्यं विविच्य न जानन्ति किमुतान्तरमतिसूक्ष्ममात्मतत्त्वं यत् द्वन्द्वमोहविमूढानां युक्तायुक्तार्थापरिज्ञानं तदिदं प्राग्भवीयपापकार्यमित्यवगच्छेदित्यर्थः ॥ २७ ॥

श्री० टी०—तदेवं मायाविषयत्वेन जीवानां परमेश्वराज्ञानमुक्तम्, तस्यैवाज्ञानस्य दृढत्वे कारणमाह—इच्छाद्वेषसमुत्थेनेति । सृज्यत इति सर्गः सर्गे स्थूलदेहोत्पत्तौ सत्यां तदनुकूले इच्छा तत्प्रतिकूले च द्वेषस्ताभ्यां समुत्थः समुद्भूतो यः शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तो मोहो विवेकभ्रंशस्तेन सर्वभूतानि संमोहमहमेव सुखी दुःखी चेति गाढतरमभिनिवेशं प्राप्नुवन्ति अतस्तानि मज्ज्ञानाभावान्न मां भजन्तीति भावः ॥ २७ ॥

स० टी०—मत्तत्त्ववेदनाभावान्मां भजन्ति न ये जनाः ॥ रागद्वेषग्रहग्रस्ता भ्रमन्त्येते कुसंसृतौ ॥१॥ भोगाद्यभिनिवेशेन सदेत्याह जगत्पतिः ॥ इच्छाद्वेषसमुद्भूतसुखादिद्वन्द्वहेतुना ॥ २ ॥ मोहेनाहं सुखी दुःखीत्यादिभ्रान्तिमयेन च ॥ समस्तान्यपि भूतानि विवेकायोग्यतां पराम् ॥ ३ ॥ स्थूलदेहोद्भवे यान्ति हे भारत परंतप ॥ त्वं तु वंशमहिम्नैव द्वन्द्वमोहारिघातकः ॥ ४ ॥ सुखदुःखादिसंप्राप्त्या रागद्वेषोद्भवो यदा ॥ तदा मोहं प्रयान्त्येव सर्वभूतानि सर्वशः ॥ ५ ॥ नहीच्छाद्वेषदोषेण विवशीकृतचेतसाम् ॥ बहिर्गोचरमप्यस्ति सम्यग्ज्ञानं भ्रमापहम् ॥ ६ ॥ किमु वाच्यं तदा ताभ्यां समाविष्टधियां नृणाम् ॥ प्रत्यगात्मनि न ज्ञानं समुत्पद्यत इत्यपि ॥ ७ ॥ २७ ॥

भा० टी०—भगवत्तत्त्वापरिज्ञाने मूलाज्ञानं निमित्तमुक्त्वा तत्र प्रतिबन्धकान्तरमाह—इच्छेति । इच्छाद्वेषाभ्यां रागद्वेषाभ्यामनुकूलप्रतिकूलविषयाभ्यामुत्थितेन शीतोष्णसुखदुःखनिमित्तेन मोहेन चित्तव्याकुलतापादकेन सर्वाणि भूतानि सर्गे उत्पत्तिकाले प्राप्ते संमोहमतिमूढतां यान्ति गच्छन्ति इच्छाद्वेषवशीकृतचित्तस्य बाह्यपदार्थेष्वपि यथाभूतार्थविषयं ज्ञानं नोत्पद्यते ताभ्यामाविष्टबुद्धेः संमूढस्य प्रत्यगात्मनि बहुप्रतिबन्धे सति तन्नोत्पद्यते इति किमु वक्तव्यमिति भारत परंतपेति संबोधनद्वयेनोत्तमवंशोद्भवत्वात् स्वतः शत्रुतापनत्वेनोत्कृष्टशक्तिमत्वाच्च उक्तप्रतिबन्धेन संमोहं गन्तुमयोग्योऽसीति सूचयति । यत्तु केन पुनर्निमित्तेनातीतादीनि भूतानि न जानन्तीत्याशङ्क्याह इच्छेति। इच्छाद्वेषसमुत्थेन द्वन्द्वमोहेन शोभनाशोभनसत्यासत्यनित्यानित्यात्मानात्मसु विपर्ययस्तेन सर्वभूतानि सर्गे सृष्टिविषये संमोहमविवेकं यान्ति। अयं भावः यो हि सृष्टे रूपमानन्दस्वरूपं च तत्त्वतो जानाति स ब्रह्मवित् सर्वज्ञत्वादतीतादीन् जानाति सृष्टौ च सर्वेषां मोहोऽस्ति अशोभने रूयादौ शोभनाध्यासादसत्ये प्रपञ्चे सत्यत्वाध्यासात् सत्ये चात्मनोऽसङ्गत्वेऽसत्यत्वाध्यासात् अनित्ये सर्गादौ नित्यत्वाध्यासादनात्मनि देहादावात्मत्वाध्यासात् अतो विपर्ययेण सृष्टिज्ञानं प्रतिबद्धं तेन च सार्वज्ञं न जायतेऽस्मदादीनामिति तच्चिन्त्यं, मां तु वेद न कश्चन इत्युक्त्या त्वदवेदनं केन प्रतिबन्धेनेति प्रश्नेनैवैतच्छ्लोकावतरणस्यौचित्येन तदनुसारिव्याख्यानस्यैव न्याय्यत्वात् उत्तरश्लोके भजन्ते मां दृढव्रता

इतिवाक्यशेषविरोधाच्च । विष्णुतत्त्वज्ञानाज्ज्ञातव्यान्तरानवशेषेऽपि ईश्वरवत्त्रैकालिकाखिलज्ञानस्यालाभाच्चेति दिक् ॥ २७ ॥

प० टी०–तदेवं जीवानां मायामोहितत्वेन परमेश्वराज्ञानमुक्तं, तस्यैवाज्ञानस्य दृढत्वे कारणमाह–इच्छाद्वेषेति । सृज्यत इति सर्गस्तस्मिन् सर्गे स्थूलदेहोत्पत्तौ सत्यां तदनुकूले इच्छा प्रतिकूले द्वेषस्ताभ्यां समुत्पन्नो यः शीतोष्णसुखदुःखादिद्वन्द्वनिमित्तो मोहो विवेकभ्रंशस्तेन सर्वभूतानि संमोहमहमेव सुखी दुःखी चेति गाढतमाभिनिवेशं प्राप्नुवन्त्यतस्तानि मज्ज्ञानाभावान्मां न भजन्तीति भावः ॥ २७ ॥

रा० टी०–पूर्वत्र दैवी ह्येषा गुणमयीति नाहं प्रकाश इति च गुणमयी माया भगवांश्च जीवाभेदादिविषयमोहे मुख्यं कारणमुक्तम् । इदानीमिच्छाद्वेषप्रवृद्धिजनितसुखदुःखादिद्वन्द्वविषयमोहोऽप्यवान्तरकारणमस्तीत्याह–इच्छेति । इच्छाद्वेषाभिवृद्धिजातेन द्वन्द्वमोहेन द्वन्द्वानि सुखदुःखलाभालाभादीनि तद्विषयमोहः दुःखादिर्यथा हेयस्तथा वैषयिकसुखादिरपि हेयः । तथाप्युपादेयत्वेन तस्य यज्ज्ञानं तद्रूपमिथ्याज्ञानेनेत्यर्थः । सर्वभूतानि सर्गे सर्गकाले सर्गकालमारभ्यैवेति यावत् । संमोहं भगवद्विषयजीवाभेदादिमिथ्याज्ञानं यान्तीत्यर्थः । यद्वा यत्केषांचिदद्वैतज्ञानं मदिच्छाधीनमिति यदुक्तं भगवता तद्युक्तम् 'ऐकात्म्यं नाम यदिदं केचिद्ब्रूयुरनैपुणाः । कामक्रोधाभिभूतत्वादहंकारवशंगताः' इत्यादाविच्छाद्वेषादेरेवाद्वैतज्ञानहेतुत्वोक्तेरित्यतस्तदवान्तरकारणं सर्गात्पूर्वमभावेन सर्गमारभ्यैवोत्पत्तेरितिभावेनाह–इच्छेति । इच्छाद्वेषोत्पन्नद्वन्द्वमोहेन जीवेश्वरौ तद्धर्मभूतानि सर्वज्ञत्वाल्पज्ञत्वस्वातन्त्र्यपारतन्त्र्यसर्वशक्त्यल्पशक्त्यादिरूपाणि च द्वन्द्वानि तद्विषयमिथ्याज्ञानेन सर्वभूतानि सर्गकालमारभ्यैव संमोहं उक्तद्वन्द्वमोहदार्ढ्यं यान्तीति। द्विःसंबोधनमादरार्थम् ॥ २७ ॥

**येषां त्वन्तगतं पापं जनानां पुण्यकर्मणाम् ॥**
**ते द्वन्द्वमोहनिर्मुक्ता भजन्ते मां दृढव्रताः ॥ २८ ॥**

त० टी०–ननु यदि सर्ग एव सर्वभूतानि संमोहं यान्ति चेत्कथं तर्हि केचित्त्वां भजन्तो दृश्यन्त इत्यत आह–येषामिति । येषां तु पूर्वजन्मसुकृतपुण्यकर्मणां जनानां सुकृतकार्यभूतोत्तमजन्मवतां पूर्वजन्मकृतपुण्यबलाज्जन्मत एव ज्ञानप्रतिबन्धकं पापमन्तगतमन्तमवसानं प्राप्तं नष्टमित्यर्थः । ते निष्पापाः सन्तो रागद्वेषनिमित्तेन द्वन्द्वमोहेन विपर्ययज्ञानेन निर्मुक्ता निःशेषेण मुक्तास्तत्त्वज्ञानार्हा दृढव्रताः सन्तो मां सर्वज्ञं सर्वकारणं सर्वेश्वरं सर्वकर्मफलप्रदातारमाश्रितवात्सल्यजलधिं भजन्ते सर्वात्मना सेवन्ते ॥ २८ ॥

म० टी०–यदि सर्वभूतानि संमोहं यान्ति कथं तर्हि चतुर्विधा भजन्ते मामित्युक्तम्, सत्यं सुकृतातिशयेन तेषां क्षीणपापत्वादित्याह–येषामिति । येषां तु इतरलोकविलक्षणानां जनानां सफलजन्मनां पुण्यकर्मणामनेकजन्मसु पुण्याचरणशीलानां तैस्तैः पुण्यैः कर्मभिर्ज्ञानप्रतिबन्धकं पापमन्तगतमन्तमवसानं प्राप्तं ते पापाभावेन तन्निमित्तेन द्वन्द्वमोहेन रागद्वेषादिनिबन्धनविपर्यासेन स्वत एव निर्मुक्ताः पुनरावृत्त्ययोग्यत्वेन त्यक्ताः दृढव्रताः अचाल्यसंकल्पाः सर्वथा भगवानेव भजनीयः स चैवंरूप एवेति प्रमाणजनिताप्रामाण्यशङ्काशून्यविज्ञानाः सन्तो मां परमात्मानं भजन्ते अनन्यशरणाः सन्तः सेवन्ते । एतादृशा एव चतुर्विधा भजन्ते मामित्यत्र सुकृतिशब्देनोक्ताः । अतः सर्वभूतानि संमोहं यान्तीत्युत्सर्गः । तेषां मध्ये ये सुकृतिनस्ते संमोहशून्याः मां भजन्त इत्यपवाद इति न विरोधः । अयमेवोत्सर्गः प्रागपि प्रतिपादितस्त्रिभिर्गुणमयैर्भावैरित्यत्र, तस्मात्सत्त्वशोधकपुण्यकर्मसंचयाय सर्वदा यतनीयमिति भावः ॥ २८ ॥

शं० टी०—तर्हि केन द्वन्द्वमोहनिवृत्तिः के पुनर्द्वन्द्वमोहनिर्मुक्ता भूत्वा त्वामात्मानं यथाभूतं विज्ञाय भजन्तीत्याकाङ्क्षायामाह—**येषां त्विति** । पुण्यकर्मणामत्यन्तश्रद्धया भक्त्या चेश्वरप्रीत्यै नियमेन बहुजन्मभिः कृतं सर्वकामविनिर्मुक्तमुक्तलक्षणसंपन्नं यज्ञदानतपोरूपं पुण्यं कर्म वैदिकं येषां तेषां पुण्यकर्मणां सत्कर्मैकनिष्ठानां येषां जनानां पापं प्राग्भवीयमन्तगतम् “धर्मेण पापमपनुदति” इतिश्रवणाद्यज्ञादिपुण्यकर्मभिर्येषां पापकर्म निःशेषं विनष्टं भवतीत्यर्थः । त एव पुण्यकर्मभिरीश्वरोपास्त्या च प्रतिबन्धनिवृत्त्या संप्राप्तचित्तप्रसादमहिम्ना द्वन्द्वमोहनिर्मुक्ताः सदसज्ज्ञानोदयप्रतिबन्धो यो द्वन्द्वमोहस्तस्मान्निर्मुक्ताः निष्क्रान्ताः सन्तः सर्वकर्मतत्साधनसंन्यासैकसाधनेन श्रुत्याचार्यप्रसादलब्धेन प्रत्यक्तत्त्वविज्ञानेन दृढव्रताः सर्वमिदमहं च ब्रह्मैवेतिदृढमप्रतिहतं व्रतं बुद्धिनिश्चयविशेषलक्षणं येषां ते दृढव्रताः श्रुतिस्मृतियुक्तिकोटिभिर्निर्णीतार्थे सनिश्चया भूत्वा मां निष्कलं निष्क्रियं निर्विशेषं निराकारं निरञ्जनं नित्यशुद्धबुद्धमुक्तस्वभावमानन्दैकरसं प्रत्यगभिन्नं परं ब्रह्माद्वितीयं भजन्ते नित्यनिरन्तरैकनिष्ठयाऽनुसंदधते नान्ये वैषयिकसुखभ्रमभ्रान्ता इत्यर्थः ॥ २८ ॥

श्री० टी०—कुतस्तर्हि केचन त्वां भजन्तो दृश्यन्ते तत्राह—**येषामिति** । येषां तु पुण्याचरणशीलानां सर्वं प्रतिबन्धकं पापमन्तगतं नष्टं ते द्वन्द्वनिमित्तेन मोहेन निर्मुक्ताः दृढव्रता एकान्तिनः सन्तो मां भजन्ते ॥ २८ ॥

स० टी०—यदि सर्वाणि भूतानि संमोहं यान्ति तत्कथम् ॥ चतुर्विधा भजन्ते मामित्युक्तमिति चेच्छृणु ॥ १ ॥ येषां प्राकृतभिन्नानां जनानामधिकारिणाम् ॥ बहुजन्मसु शास्त्रीयधर्मानुष्ठानतोऽसकृत् ॥ २ ॥ पुण्याचरणशीलानां तैस्तैः पुण्यैः स्वकर्मभिः ॥ धीप्रतिबन्धकं पापमवसानं गतं हि ते ॥ ३ ॥ पापाभावे च तद्धेतुरागद्वेषादिरूपिणा ॥ द्वन्द्वमोहेन निर्मुक्ताः सम्यक्शुद्धधियाऽन्विताः ॥ ४ ॥ अत्यन्ताश्चाल्पसंकल्पा विश्वस्ता मद्व्रतौ सदा ॥ सर्वथा भगवानेव भजनीयः स आदरात् ॥ ५ ॥ स चैवंरूप एवेति विनिश्चितधियो बुधाः ॥ अनन्यशरणाः सन्तः सेवन्ते मां चिदद्वयम् ॥ ६ ॥ चतुर्विधा भजन्ते मामित्यत्रोक्तास्त ईदृशाः ॥ तस्माद्धीशोधके पुण्ये यतितव्यं मनीषिभिः ॥ ७ ॥ श्रोतव्यो नित्यभगवान्ध्येयो ज्ञेयोऽर्च्य इत्यलम् ॥ ८ ॥ २८ ॥

भा० टी०—के पुनस्त्वां विदित्वा यथाशास्त्रमात्मभावेन भजन्ते इत्यपेक्षायामाह—**येषामिति** । येषां तु पुनर्जनानां पुण्यकर्मणां पुण्यं कर्म पापक्षयद्वारा सत्त्वशुद्धिकरं येषां ते पुण्यकर्माणस्तेषां पापमन्तं समाप्तिं गतं प्राप्तं ते यथोक्तद्वन्द्वमोहेन विनिर्मुक्ता वर्जिता अत एव दृढव्रताः एवमेवात्मतत्त्वं नान्यथेति एवं सर्वपरित्यागेन निश्चितविज्ञाना मां परमात्मानं भजन्ते ॥ २८ ॥

प० टी०—कुतस्तर्हि केचन भजन्तो दृश्यन्ते तत्राह—**येषामिति** । येषां सुकृताचरणवतां सद्गतिप्रतिबन्धकं पापमन्तं गतं नाशं प्राप्तं ते द्वन्द्वनिमित्तेन मोहेन निर्मुक्ताः सन्तो मां भजन्ते “नैनं पाप्मा तपति” इतिश्रुतेः ॥ २८ ॥

रा० टी०—सर्वभूतानि संमोहं यान्ति चेल्लुप्तो मुक्तिमार्ग इत्यतो द्वन्द्वमोहरहिताश्च केचित्सन्तीत्याह—**येषामिति** । येषां पुण्यकर्मणां जनानां पापमन्तं गतं नष्टं ते द्वन्द्वमोहनिर्मुक्ताः प्रागुक्तद्विविधद्वन्द्वविषयमिथ्याज्ञानहीनाः दृढव्रताः सन्तो मां भजन्त इत्यर्थः ॥ २८ ॥

**जरामरणमोक्षाय मामाश्रित्य यतन्ति ये ॥**
**ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलम् ॥ २९ ॥**

**त० टी०**–ततस्ते भगवन्तं भजमाना ज्ञातव्यविशेषान्विज्ञाय कृतार्था भवन्तीत्याह–**जरामरणेति**। जरामरणयोर्मोक्षाय निरासाय मां भजतां यथेष्टफलदातारमाश्रित्य शरणं गत्वा ये यतन्ति यतन्ते फलाभिसंधिशून्यानि मत्प्रीणनाय कर्माणि कुर्वन्ति, ते शुद्धान्तःकरणाः सन्तः तद्ब्रह्म विदुः कृत्स्नमध्यात्मं च विदुः कर्म चाखिलं विदुः ॥ २९ ॥

**म० टी०**–अथेदानीमर्जुनस्य प्रश्नमुत्थापयितुं सूत्रभूतौ श्लोकावुच्येते। अनयोरेव वृत्तिस्थानीयः उत्तरोऽध्यायो भविष्यति। **जरामरणमोक्षायेति**। ये संसारदुःखान्निर्विण्णाः जरामरणमोक्षाय जरामरणादिविविधदुःखसहसंसारदुःखनिरासाय तदेकहेतुं मां सगुणं भगवन्तमाश्रित्य इतरसर्ववैमुख्येन शरणं गत्वा यतन्ति यतन्ते मदर्पितानि फलाभिसंधिशून्यानि विहितानि कर्माणि कुर्वन्ति ते क्रमेण शुद्धान्तःकरणाः सन्तस्तज्जगत्कारणं मायाधिष्ठानं शुद्धं परं ब्रह्म निर्गुणं तत्पदलक्ष्यं मां विदुः। तथा आत्मानं शरीरमधिकृत्य प्रकाशमानं कृत्स्नमुपाध्यपरिच्छिन्नं त्वंपदलक्ष्यं विदुः कर्म च तदुभयवेदनसाधनं गुरूपसदनश्रवणमननाद्यखिलं निरवशेषं फलाव्यभिचारी विदुर्जानन्तीत्यर्थः ॥ २९ ॥

**शं० टी०**–मद्भक्ता यान्ति मामित्यत्र सर्वे किं त्वां न प्राप्नुवन्तीत्याकाङ्क्षायां मायातत्कार्यदोषेण संवृता मूढा मां न जानन्ति न भजन्ति च न प्राप्नुवन्ति। ये तु प्राचीनपुण्यातिशयेन सर्वपापनिवृत्तौ सत्यां सम्यगुदितचित्तप्रसादेन द्वन्द्वमोहान्निष्क्रम्य निरन्तरसमाधिनिष्ठया मां भजन्ते त एव मद्भक्ता यान्ति मामित्युक्तविदेहमुक्तिरेव चैतेषां समाधिनिष्ठासंपन्नसम्यग्ज्ञानस्य फलमिति ज्ञातव्यं न तु जरामरणमोक्षायेति वक्ष्यमाणं 'जरामरणमोक्षाय मामाश्रित्य यतन्ति ये। ते ब्रह्म तद्विदुः' इति जरामरणमोक्षमुद्दिश्यैव यत्नं कुर्वतां तन्मोक्षसाधनं सर्वस्य ब्रह्ममात्रत्वदर्शनमुच्यते तस्मात्तेषां ज्ञानी नित्ययुक्त इत्यारभ्यैतत्पर्यन्तं ब्रह्मविदां निर्विशेषब्रह्मैकनिष्ठानाम् " न तस्य प्राणा उत्क्रामन्ति। ब्रह्मैव सन् ब्रह्माप्येति। ब्रह्म वेद ब्रह्मैव भवति " इत्यादिश्रुत्येकप्रमाणानामत्रैव विदेहमुक्तिं प्रतिपाद्याधुना मन्दप्रज्ञानां सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मबुद्धिकरणलक्षणं सगुणोपासनं संक्षेपेणोपदिशति–**जरेति**। जरामरणमोक्षाय जन्ममृत्युप्रवाहनिःशेषनिवृत्तये सर्वकारणं सर्वात्मकं मां परमेश्वरमाश्रित्य भ्रमकल्पितनामरूपाद्यग्रहणेन सर्वदा मत्स्वरूपैकानुसंधानपरा भूत्वा ये मुमुक्षवो यतन्ते " सर्वं खल्विदं ब्रह्म " इत्यादिश्रुत्यर्थावष्टम्भेन सर्वत्र ब्रह्मप्रत्ययावृत्तिमेव ये कुर्वन्तीत्यर्थः। ते निरन्तरब्रह्मप्रत्ययावृत्तिमहिम्ना कृत्स्नमध्यात्मं ब्रह्मादिस्तम्बपर्यन्तेषु सर्वोपाधिष्वात्मत्वेन स्थितं प्रत्यग्रूपं वस्तु समस्तं कर्म च तस्य सुखदुःखाद्यनुभूतिकारणं कर्मापि समस्तं ब्रह्मैव विदुः ब्रह्म दृष्ट्वाध्यात्मं कर्म च सर्वं ब्रह्ममात्रत्वेन विजज्ञुरित्यर्थः। यथा तोयात्पृथगिव प्रतीयमानास्तरङ्गबुद्बुदादयो द्रवत्वशीतत्वशुक्लतादिभिर्जलधर्मैर्बहिरन्तर्व्याप्तत्वेन पृथग्रूपादिसंभावितसत्ताभावाज्जलान्न भिद्यन्ते किंतु जलमात्रा एव भवन्ति तरङ्गाद्याश्रितक्रियापि तरङ्गाद्यभिन्नत्वेन तरङ्गाद्यात्मकतोयमात्रत्वात् तरङ्गादेस्तत्क्रियायास्तोयमात्रत्वमेव तद्वद्ब्रह्मणोऽपि भिन्नानीव प्रतीयमानान्यध्यात्मादीनि वस्तूनि सत्त्वचित्त्वादिभिर्ब्रह्मधर्मैर्बहिरन्तर्व्याप्तत्वेन स्वतः सत्ताऽभावाद् ब्रह्मणो न भिद्यन्ते किंतु ब्रह्ममात्राण्येव भवन्ति तदाश्रितक्रियाप्यध्यात्माभिन्नत्वेन तदात्मकब्रह्माभिन्नत्वाच्च अध्यात्मनां च सर्वेषां कर्मणां च ब्रह्ममात्रत्वदर्शनं युक्तमेवेति सिद्धम् ॥ २९ ॥

**श्री० टी०**–एवं च मां भजन्तस्ते सर्वं विज्ञेयं विज्ञाय कृतार्था भवन्तीत्याह–**जरामरणेति**। जरामरणयोर्मोक्षाय निरासार्थं मामाश्रित्य ये प्रयतन्ते ते तत्परं ब्रह्म विदुः कृत्स्नमध्यात्मं च विदुः, येन तत्प्राप्तव्यं तं देहादिव्यतिरिक्तं शुद्धमात्मानं च जानन्तीत्यर्थः। तत्साधनभूतमखिलं सरहस्यं कर्म च जानन्ति ॥ २९ ॥

**स० टी०**–संसारदुःखान्निर्विण्णा जरामरणमुक्तये ॥ नानादुःखसहसंसारदुःखोच्छेदाय ये जनाः ॥ १ ॥ दुःखोच्छेदैकहेतुं मां वासुदेवं चतुर्भुजम् ॥ घनश्यामं रमानाथं किरीटोज्ज्वलमस्तकम् ॥ २ ॥ शङ्खचक्र-

गदापद्मवनमालाविभूषितम् ॥ ध्येयत्वेन समाश्रित्य सगुणं ब्रह्म चिद्घनम् ॥ ३ ॥ विहायेतरकर्तव्यं गत्वा शरणमादरात् ॥ मदर्पितानि कर्माणि विहितान्याचरन्ति ते ॥ ४ ॥ क्रमाच्छुद्धधियः सन्तस्तज्जगत्कारणं परम् ॥ मायाधिष्ठानमद्वैतं शुद्धं ब्रह्म च निर्गुणम् ॥ ५ ॥ विदुस्तत्पदलक्ष्यं मां साकल्येन यथातथम् ॥ शरीरमधिकृत्यैवं भासमानं चिदात्मकम् ॥ ६ ॥ देहाद्युपाध्यसंस्पृष्टं त्वमो लक्ष्यं विदुः परम् ॥ कर्मापि तद्द्वयज्ञानसाधनं शास्त्रसंमतम् ॥ ७ ॥ श्रवणाद्यखिलं चैतज्ज्ञानन्त्यव्यभिचारि यत् ॥ ८ ॥ २९ ॥

भा० टी०—किमर्थं भजन्तीत्यत आह—जरेति । जरामरणमोक्षाय मां परमेश्वरं सगुणमाश्रित्य ये पापरहिताः पुण्यकर्माणो द्वन्द्वमोहविनिर्मुक्ताः दृढव्रताः सन्तो यतन्ति यतन्ते ते यत्परं ब्रह्म तद्विदुः तथाकृत्स्नमध्यात्मं प्रत्यगात्मविषयं वस्तु कर्म च वक्ष्यमाणम् । यत्तु कर्म च तदुभयवेदनसाधनं गुरूपसदनश्रवणमननाद्याखिलं निरवशेषं फलाव्यभिचारीति केचित् तन्न, भूतभावोद्भवकरो विसर्गः कर्मसंज्ञित इति मूलतद्भाष्यस्य यागदानहोमात्मकं वैदिकं कर्मेत्यादिस्वोक्तेश्च विरोधस्य स्पष्टत्वात् । अखिलं प्रपञ्चं ब्रह्मानन्यं सर्वं विदुः । तथा चैवंज्ञानिनो जरामरणादिलक्षणात्संसारान्मुच्यन्त इति ॥ २९ ॥

प० टी०—अथ सुकृताचरणेऽपि मदाश्रयव्यतिरेकेण विरागस्तत्त्वावबोधो वा न भवतीत्याह—जरेति । अत्यन्तदुःखरूपयोर्जरामरणयोर्देहधर्मयोर्मोक्षाय नाशाय मां परमात्मानमाश्रित्य यतन्ते योगाभ्यासादिप्रयत्नं कुर्वन्ति ते तत्परं ब्रह्म विदुस्तज्ज्ञानोपायरूपं कृत्स्नं समग्रमध्यात्मं च विदुस्तथा तन्निमित्तभूतमखिलं फलाभिसंधिरहितं कर्म च विदुः ॥ २९ ॥

रा० टी०—भगवद्भजने किं फलं भवतीत्यतः प्रागुक्तभजनानुवादेन तस्य ब्रह्मज्ञानरूपं फलमाह—जरेति । ये साधुप्रकृतयः जरामरणमोक्षाय लक्षणया स्वर्गादिकामनिवृत्तये मामाश्रित्य यतन्ति यतन्ते भजन्त इत्यनुवादः । ते तद्ब्रह्म विदुः कृत्स्नमध्यात्मं विदुः जानन्ति । अखिलं कर्म च विदुः । जरामरणमोक्षायेत्येतन्मोक्षासक्तिरन्यासक्तितः प्रशस्तेति मोक्षासक्तिस्तुत्यर्थं वा प्रागुक्तदिशान्यकामनिवृत्त्यर्थं वा । न सर्वथा तदुद्देशेन भजनविधिः एकान्तभक्तानां मोक्षापेक्षाभावात् । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते इतिभगवद्भजनफलस्योक्तावपीह तदुक्तिः भगवद्भजनमेव ज्ञानद्वारा मायातरणोपायो नान्य इति ज्ञापनायेति ॥ २९ ॥

साधिभूताधिदैवं मां साधियज्ञं च ये विदुः ॥
प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतसः ॥ ३० ॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे
ज्ञानयोगो[1] नाम सप्तमोऽध्यायः ॥ ७ ॥

त० टी०—अन्यानपि वेत्तॄन्समुच्चीय तद्वेदनफलं वदन्नध्यायमुपसंहरति—साधिभूताधिदैवमिति । अधिभूतेनाधिदैवेन च तथा अधियज्ञेन च सह मां येऽर्थार्थिनो ज्ञानिनो वा विदुस्ते सर्वे प्रयाणकालेऽपि मरणसमयेऽपि स्वप्राप्यफलानुगुणं मां विदुः । ब्रह्माध्यात्माधिभूतादिशब्दानामर्थमनन्तराध्यायेऽर्जुनप्रश्नपूर्वकं श्रीभगवानेव वक्ष्यति ॥ ३० ॥

स्वैश्वर्यं भक्तश्रैष्ठ्यं च बन्धमोक्षादिकारणम् ॥ स्वभक्तकृपयैवेह सप्तमे हरिणोदितम् ॥
इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां सप्तमोऽध्यायः ॥ ७ ॥

---

१ ज्ञानविज्ञानयोगो नामेति पाठः।

**म० टी०**—न चैवंभूतानां मद्भक्तानां मृत्युकालेऽपि विवशकरणतया मद्विस्मरणं शङ्कनीयं यतः—**साधिभूतेति** । साधिभूताधिदैवमधिभूताधिदैवाभ्यां सहितं तथा साधियज्ञं च अधियज्ञेन च सहितं मां ये विदुश्चिन्तयन्ति ते युक्तचेतसः सर्वदा मयि समाहितचेतसः सन्तस्तत्संस्कारपाटवात् प्रयाणकाले प्राणोत्क्रमणकाले करणग्रामस्यात्यन्तव्यग्रतायामपि चकारादयत्नेनैव मत्कृपया मां सर्वात्मानं विदुर्जानन्ति तेषां मृतिकालेऽपि मदाकारैव चित्तवृत्तिः पूर्वोपचितसंस्कारपाटवाद्भवति । तथाच ते मद्भक्तियोगात् कृतार्था एवेति भावः । अधिभूताधिदैवाधियज्ञशब्दानुत्तरेऽध्यायेऽर्जुनप्रश्नपूर्वकं व्याख्यास्यति भगवानिति सर्वमनाविलम् । तदत्रोत्तमाधिकारिणं प्रति ज्ञेयं मध्यमाधिकारिणं प्रति च ध्येयं लक्षणया मुख्यया च वृत्त्या तत्पदप्रतिपाद्यं ब्रह्म निरूपितम् ॥ ३० ॥

इति मधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायामधिकारिभेदेन ज्ञेयध्येयप्रतिपाद्यतत्त्वब्रह्मनिरूपणं नाम सप्तमोऽध्यायः ॥ ७ ॥

**शं० टी०**—सर्वस्य ब्रह्ममात्रत्वदर्शनपरास्ते उपासका न केवलमध्यात्मकर्मणोरेव ब्रह्ममात्रत्वं विदुः किंत्वधिभूतादीनामपीत्याह—**साधिभूताधिदैवमिति** । कार्यं सर्वमधिभूतमधिदैवं हिरण्यगर्भश्चाद्यादिकमप्येताभ्यां सह वर्तत इति साधिभूताधिदैवमधिभूताधिदैवरूपेण स्थितमधियज्ञो यज्ञादिदेवता तेन सह वर्तत इति साधियज्ञमधियज्ञात्मना स्थितं च मां परं ब्रह्म सर्वात्मकं ये विदुः अध्यात्माधिभूताधिदैवाद्याकारेण सर्वात्मना प्रतीयमानं मां परं ब्रह्म ये नित्यनिरन्तरसमाधिनिष्ठया संभाविताप्रतिबद्धवृत्त्या ब्रह्मैवेदं सर्वमिति सर्वं ब्रह्मैव विदुस्ते मय्येव ब्रह्मणि युक्तचेतसः समाहितचित्ता भूत्वा प्रयाणकाले उत्क्रान्तिसमयेऽपि च देहेन्द्रियप्राणमनोबुद्ध्यादीनां व्याकुलीभावकालेऽपि विपरीतभावराहित्येन सर्वात्मानमेव मां विदुः पश्यन्ति न तु मत्तो भिन्नं देहेन्द्रियादिकं वात्मानं वा वेदनक्रियां वा प्राणिजातं वा देवतान्तरं वा न शृण्वन्ति न पश्यन्ति न स्मरन्ति चेत्यर्थः ॥ ३० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां सप्तमोऽध्यायः ॥ ७ ॥

**श्री० टी०**—नचैवंभूतानां योगभ्रंशशङ्कापीत्याह—**साधिभूताधिदैवमिति** । अधिभूतादिशब्दानामर्थं भगवानेवानन्तराध्याये व्याख्यास्यति । अधिभूतेनाधिदैवेन च सहाधियज्ञेन च सहितं ये मां जानन्ति ते युक्तचेतसः मय्यासक्तमनसः प्रयाणकालेऽपि मरणसमयेऽपि मां विदुर्जानन्ति न तु तदापि व्याकुलीभूय मां विस्मरन्ति अतो मद्भक्तानां न योगभ्रंशशङ्केत्यर्थः ॥ ३० ॥

अथाध्यायतात्पर्यम् ।

कृष्णभक्तैरयत्नेन ब्रम्हज्ञानमवाप्यते ॥ इति विज्ञानयोगाख्ये सप्तमे संप्रकाशितम् ॥ १ ॥

इति श्रीसुबोधिन्यां श्रीधरस्वामिविरचितायां टीकायां ज्ञानविज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

**स० टी०**—एवंभूतास्तु मद्भक्ता मृत्युकालेऽपि मां हरिम् ॥ न विस्मरन्ति किं वाच्यं जीवने सति साधवः ॥ १ ॥ येऽधिभूताधिदैवाभ्यां सहितं चिन्तयन्ति माम् ॥ अधियज्ञेन सहितं सर्वदा तत्परा मयि ॥ २ ॥ प्राणोत्क्रमणकालेऽपि तत्संस्कारैकपाटवात् ॥ अत्यन्तव्यग्रतायां च सधीन्द्रियगणस्य ते ॥ ३ ॥ अनायासेन मद्भक्ता मां विदुर्मदनुग्रहात् ॥ मृत्युकालेऽपि तेषां स्यान्मदाकारैकधीगतिः ॥ ४ ॥ पूर्वोपार्जितसंस्कारपाटवादेव सर्वथा ॥ तथा च ते कृतार्थाः स्युर्मद्भक्त्येत्याशयो हरेः ॥ ५ ॥ एवं सूत्रात्मश्लोकाभ्यां प्रश्नबीजं निधाय च ॥ विस्तरेणोत्तरं तस्य व्याख्यास्यति हरिः स्वयम् ॥ ६ ॥ तदत्र शुद्धबुद्धीनां ज्ञेयं ब्रह्म निरूपितम् ॥ मध्याधिकारिणां ध्येयं बोधाय हरिणेरितम् ॥ ७ ॥ ३० ॥

यो मायावी महेशः प्रकटितमहिमा वेदसिद्धान्तगीतो यो भक्तार्थं स्वरूपं सुरनरवनजं स्वेच्छया धत्त ईशः ॥
यस्यांघ्रिद्वन्द्वमीड्यं जनिमृतिजलधिं संतरन्त्याश्रिता ये तं श्रीकृष्णं हृदिस्थं सततमिह मुदा संश्रयेऽहं सुभक्त्या १
माया यस्यातिगूढा प्रचुरगुणयुता सर्वसंसारहेतुर्नो तर्तुं तैः सुशक्या हरिपदशरणं ये प्रपन्ना न भक्त्या ॥
यत्पादाम्भोरुहान्तर्भ्रमर इव जनः संप्रविश्यातिरत्या मग्नस्तत्रैव नित्यं तमिह मुररिपुं कृष्णमीशं प्रपद्ये ॥२॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ कृष्णभक्तिप्रधानोऽयं सप्तमः पूर्णतां गतः ॥
टीकाश्लोक संख्या ॥ २२१ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ २२८७ ॥

**भा० टी०**—ननु मरणकाले तेषां त्वद्विस्मरणस्य संभवात्कथं संसारान्मोक्ष इत्याशङ्क्याह—**सेति** । अधिभूतं चाधिदैवं चाधिभूताधिदैवमिति समाहारद्वन्द्वस्तेन सह वर्तत इति तं, अधियज्ञेन सह वर्तत इति तं च मां ये विदुः प्रयाणकाले मरणकालेऽपि च मां ते युक्तचेतसो विदुरतस्तेषां मोक्षप्राप्तौ न कोऽपि संदेह इति। साधिभूतादिपदार्थस्तु मूल एव स्फुटीभविष्यति । तदनेन सप्तमाध्यायेनोत्तमाधिकारिणं प्रति ज्ञेयं निरूपयता तज्ज्ञानार्थं मध्यमाधिकारिणं प्रति तत्पदवाच्यं प्रतिपादयता तत्पदवाच्यं तल्लक्ष्यं च प्रदर्शितम् ॥ ३० ॥

इति श्रीपरमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनु-
धनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां सप्तमोऽध्यायः ॥ ७ ॥

**प० टी०**—न चैवंभूतानां योगभ्रंशशङ्कापीत्याह—**साधिभूतेति** । अधिभूताधिदैवैः सह वर्तमानं मां ये विदुस्ते प्रयाणकाले निर्वाणसमयेऽपि युक्तचेतसस्तत्स्मरणवन्तः सन्तो मां विदुर्मां ज्ञात्वा तनुं त्यजन्ति न तु देहान्तवेदनाभिर्व्याकुलीक्रियन्ते, किं तु मत्प्रसादात्सावधानाः सन्तस्तनुं त्यजन्तीत्यर्थः॥३०॥

अथाध्यायतात्पर्यम् ।

चित्संविद्रूपतोऽन्तर्हृदयमनुगतो भासते प्रत्यगात्मा बाह्यं भूम्यादिभूतेष्वतिशयितगुणैः संप्रविष्टो विभाति ।
वेदेष्वोङ्काररूपः सवितरि महसा वीर्यवत्यूर्जितेन प्राप्तस्तं वेत्ति योऽसौ मम तनुरिति तत्सप्तमेनोक्तमास्ते १

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां
विज्ञानयोगो नाम सप्तमोऽध्यायः ॥ ७ ॥

**रा० टी०**—तद्ब्रह्मेत्युक्त्या ब्रह्म भगवतोऽन्यदितिशङ्कानिरासायाह—**साधिभूतेति** । अधिभूताधिदैवसहितं साधियज्ञमधियज्ञसहितं च मां ये विदुः अपि च प्रयाणकाले मां विदुस्ते युक्तचेतसः समाधियुक्तमनस्का इत्यर्थः । यद्वा प्रयाणकालेऽपि च मां विदुः स्मरन्ति युक्तचेतसो मामाश्रयन्ति ये जनास्ते तत् ब्रह्म विदुरिति ॥ ३० ॥

इति श्रीराघवेन्द्रयतिकृते श्रीमद्गीतार्थसंग्रहे सप्तमोऽध्यायः ॥ ७ ॥



## अथाष्टमोऽध्यायः।

**अर्जुन उवाच–किं तद्ब्रह्म किमध्यात्मं किं कर्म पुरुषोत्तम ॥**
**अधिभूतं च किं प्रोक्तमधिदैवं किमुच्यते ॥ १ ॥**

**त० टी०**–पूर्वाध्यायान्ते यथाधिकारिज्ञेया ब्रह्माध्यात्मादिसप्तपदार्था भगवता निर्दिष्टास्तद्व्याख्यारूपोऽयमष्टमाध्याय आरभ्यते। तत्र निर्दिष्टमात्रान्मुमुक्षुभिर्ज्ञातव्यान् ब्रह्माध्यात्मादिपदार्थान् बुभुत्सुरर्जुन उवाच–किं तद्ब्रह्मेति द्वाभ्याम्। जरामरणमोक्षाय भगवन्तं त्वामाश्रित्य यतमानानां ज्ञातव्यतयोक्तं तद्ब्रह्म किं, किमध्यात्मम् आत्मानं देहमधिकृत्य तस्मिन्प्राधान्यतया तिष्ठत्यध्यात्मं किं विवक्षितं तथा कर्म चाखिलमित्यत्र कर्म किं कीदृशं विवक्षितम्। त्वं सर्वज्ञो जानासि नान्य इति संबोधयति पुरुषोत्तम इति। अधिभूतं च किं प्रोक्तं भूतान्याकाशादीन्यधिकृत्य यत्कार्यं तदधिभूतशब्देनोच्यते किं वाऽन्यत् अधिदैवं किमुच्यते देवानामधिष्ठातृ इन्द्रादि किमन्यद्वा ॥ १ ॥

**म० टी०**–पूर्वाध्यायान्ते ते ब्रह्म तद्विदुः कृत्स्नमध्यात्मं कर्म चाखिलमित्यादिना सार्धश्लोकेन सप्तपदार्थाः ज्ञेयत्वेन भगवता सूत्रितास्तेषां वृत्तिस्थानीयोऽयमष्टमोऽध्याय आरभ्यते। तत्र सूत्रितानि सप्तवस्तूनि विशेषतो बुभुत्समानः श्लोकाभ्यामर्जुन उवाच–**किमिति**। तज्ज्ञेयत्वेनोक्तं ब्रह्म किं सोपाधिकं निरुपाधिकं वा, एवमात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मं किं श्रोत्रादिकरणग्रामो वा प्रत्यक्चैतन्यं वा, तथा कर्म चाखिलमित्यत्र किं कर्म यज्ञरूपमन्यद्वा "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति श्रुतौ द्वैविध्यश्रवणात्। तव मम च समत्वात् कथं त्वं मां पृच्छसीति शङ्कामपनुदन् सर्वपुरुषेभ्यः उत्तमस्य सर्वज्ञस्य तव न किंचिदज्ञेयमिति संबोधनेन सूचयति हे पुरुषोत्तमेति। अधिभूतं च किं प्रोक्तं पृथिव्यादिभूतमधिकृत्य यत्किंचित्कार्यमधिभूतपदेन विवक्षितं किंवा समस्तमेव कार्यजातम्। चकारः सर्वेषां प्रश्नानां समुच्चयार्थः। अधिदैवं किमुच्यते देवताविषयमनुध्यानं वा सर्वदैवतेष्वादित्यमण्डलादिष्वनुस्यूतं चैतन्यं वा ॥ १ ॥

**शं० टी०**–सप्तमाध्यायान्ते त्वदृश्यत्वादिगुणकं निर्विशेषं प्रमाणागम्यं परं ब्रह्म स्वात्मनाऽधिगन्तुमशक्तानां मन्दप्रज्ञानां भेददर्शनहेतुभूतबाह्यवासनापटलनिःशेषनिवृत्त्या चित्तप्रसादसिद्धौ निर्विशेषज्ञानयोग्यता सेत्स्यतीति सगुणब्रह्मोपासनमुपक्रम्य ते ब्रह्म तद्विदुरित्यादिना अध्यात्माधिभूताधिदैवाधियज्ञादीनां ब्रह्माभिन्नत्वदर्शनलक्षणमुपासनं सूचयित्वा इदानीं ब्रह्मादीनां स्वरूपं विविच्य दर्शयितुं प्रयाणकाले मुमुक्षोः कर्तव्यं ध्यातव्यं प्राप्तव्यं च वस्तु प्रतिपादयितुं पुनरावृत्तिसहितरहितस्थानयोः स्वरूपं बोधयितुं कर्मिणामुपासकानां च गन्तव्यं मार्गं प्रदर्शयितुं चाष्टमाध्याय आरभ्यते। तत्रादौ ते ब्रह्मेत्यादिना निर्दिष्टानां ब्रह्मादिपदानामनेकार्थत्वादत्र योग्यमर्थमजानानस्तद्बुभुत्सयार्जुन उवाच–**किं तदिति**। परावरयोरुभयोरपि ब्रह्मशब्दार्थत्वादत्र विवक्षितं परं वा किमपरं वा ब्रह्म तदुच्यताम्। आत्मानं देहमधितिष्ठतीत्यध्यात्मत्वं प्राणेन्द्रियादीनां प्रतीचश्च संभवति तस्मात् किमध्यात्मं प्राणो वा श्रोत्रादिर्वा उत आत्मा वा। कर्मणोऽपि श्रौतं स्मार्तं लौकिकं चेति त्रैविध्यात्कर्मशब्देन किं विवक्षितम्। भूतानां कार्यकारणभेदेन पृथिव्यादिभेदेन चानेकत्वसंभवादधिभूतमिति किं प्रोक्तं किं चाधिदैवतमित्यग्न्यादयो देवाः सर्वे वा उतैकदेशो वा तत्संबन्धि यत्किंचित्क्रियान्तरं वा किमुच्यते ॥ १ ॥

**श्री० टी०**–ब्रह्मकर्माधिभूतादि विदुः कृष्णैकचेतसः ॥ इत्युक्तं ब्रह्मकर्मादि स्पष्टमष्टम उच्यते ॥ १ ॥

पूर्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तानां पदार्थानां तत्त्वं जिज्ञासुरर्जुन उवाच—किं तद्ब्रह्मेति द्वाभ्याम् । स्पष्टोऽर्थः ॥ १ ॥

स० टी०—यशो भूतिर्धर्मो विषयविरतिः श्रीः श्रुतिमतिर्गुणाः साकल्येन प्रभवति सदा यत्र विमलाः ॥ प्रतिष्ठां संप्राप्ता भगवति पदे तं निरुपमं श्रये कृष्णं लक्ष्म्याश्रितममरपूज्यैश्च मुनिभिः ॥ १ ॥ सप्तमान्ते पदार्था ये हरिणा सप्त सूत्रिताः ॥ वृत्तिस्थानीय एतेषामधुनारभ्यतेऽष्टमः ॥ २ ॥ उपलभ्यार्जुनः प्रश्नबीजं कृष्णोपदेशतः ॥ पृच्छति स्म हरिं सप्तपदार्थज्ञानसिद्धये ॥ ३ ॥ ज्ञेयत्वेनेरितं ब्रह्म किं तत्सोपाधिकं त्वया ॥ किं निरुपाधिकं वोक्तं तथाध्यात्मं किमुच्यते ॥ ४ ॥ श्रोत्रादिकरणग्रामः प्रत्यक्चैतन्यमेव वा ॥ तथा कर्म किमत्रोक्तं यज्ञरूपमथापरम् ॥ ५ ॥ विज्ञानं तनुते यज्ञं कर्माणि तनुतेऽपि च ॥ इत्यत्र श्रुतिवाक्येऽपि द्वैविध्यं कर्मणः श्रुतम् ॥ ६ ॥ किं ते सर्वोत्तमस्यात्राज्ञातं वा पुरुषोत्तम ॥ अधिभूतपदेनोक्तं किं कार्यं पाञ्चभौतिकम् ॥ ७ ॥ किं वा समस्तमेवोक्तं कार्यजातं हि मायिकम् ॥ अधिदैवमनुध्यानं देवताविषयं च किम् ॥ ८ ॥ किं वानुस्यूतचैतन्यं सूर्यादेर्मण्डलादिषु ॥ ९ ॥ १ ॥

भा० टी०—सप्तमाध्यायान्ते ते ब्रह्म तद्विदुरित्यादिसार्धेनार्जुनस्य प्रश्नबीजानि भगवतोक्तानि । अतस्तत्प्रश्नार्थमर्जुन उवाच—किमित्यादिना । ते ब्रह्म तद्विदुः कृत्स्नमिति यदुक्तं तत्किं सगुणमुत निर्गुणं ब्रह्मशब्दस्योभयत्रापि संभवात् । यच्चोक्तं कृत्स्नमध्यात्ममिति तत्रात्मानं देहमधिकृत्य तस्मिन्नधिष्ठाने तिष्ठतीत्यध्यात्मशब्देन किं त्वगादीन्द्रियसमुदायो विवक्षित उत प्रत्यगात्मैव “ विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च ” इतिश्रुतौ कर्मद्वैविध्यश्रवणात्कर्म चाखिलमित्यत्रापि कीदृक्कर्म विवक्षितं किं लौकिकमुत वैदिकं यज्ञादिरूपम् । पुरुषोत्तमस्य न किंचिदज्ञातमिति सूचयन्नाह—पुरुषोत्तमेति । अधिभूतं च किं प्रोक्तं भूतेष्वाकाशादिषु वर्तमानं किंचिदेव गृह्यते उत सर्वमेव कार्यम् । अधिदैवं किमुच्यते किं देवताविषयमनुध्यानमुतादित्यमण्डलादिषु वर्तमानं चैतन्यम् ॥ १ ॥

प० टी०—एवं पूर्वाध्यायान्ते भगवदुपक्रान्तमध्यात्मप्रमुखसप्तप्रकाराणां स्वरूपं जिज्ञासुरर्जुनः पृच्छति किं तदिति द्वाभ्याम् । तत्र पूर्वपद्यं स्पष्टार्थम् ॥ १ ॥

रा० टी०—ते ब्रह्म तद्विदुरित्युक्तस्य प्रयाणकालेऽपि च मां विदुरित्युक्तस्य च व्याख्यानमत्र प्राधान्येन क्रियते । तत्प्रसङ्गादन्तकालस्मरणफलं तदुपायप्रकारो ब्रह्मप्राप्तिमार्गश्चात्रोच्यत इति पूर्वानन्तर्यमध्यायभेदः स्वस्मिन्नेकवाक्यता च । स्मरणविषयत्वप्राप्यत्वरूपो महिमैव वर्ण्यत इति षट्कान्तर्भावश्च ज्ञेयः । पूर्वत्र तद्ब्रह्म विदुरिति परोक्षनिर्देशेन ब्रह्म भगवतोऽन्यदिति प्रतीयते । तथा साधिभूतं साधिदैवं साधियज्ञं मां च विदुरिति योजनया भगवज्ज्ञानाद्ब्रह्मज्ञानमन्यदिति प्रतीयते । वासुदेवात्मकं ब्रह्मेत्यादौ भगवानेव ब्रह्मेति प्रतीयते । अतो विप्रतिपत्त्या जातसंशयात्पृच्छति—किं तद्ब्रह्मेति । अत्राद्यश्लोके किमिति स्वरूपप्रश्नः । द्वितीये कथमिति प्रकारप्रश्नः ॥ १ ॥

**अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदन ॥**
**प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिः ॥ २ ॥**

त० टी०—अधियज्ञः यज्ञेऽधिकृतः यदुद्देशेन यज्ञो निर्वर्त्यते स तत्संप्रदानभूतोऽत्रास्मिन्यज्ञाधिकारिजने क इन्द्रादिदेवविशेषो वा सर्वाधिष्ठाता सर्वात्मा परमेश्वरो वा । परमेश्वरश्चेत्सोऽस्मिन्देहे तद्बहिर्वा । स चाधियज्ञः कथं, केन प्रकारेण तस्याधियज्ञतेत्यर्थः । दैत्यराजनाशकस्य तवैतत्संशयनिवारणं कियदित्याशयेन संबोधयति—मधुसूदनेति । प्रयाणकाले मरणसमये नियतात्मभिः संयतचित्तैः कथं ज्ञेयोऽसि ॥ २ ॥

**म० टी०—अधियज्ञ इति ।** अधियज्ञो यज्ञमधिगतो देवतात्मा वा परब्रह्म वा । स च कथं केन प्रकारेण चिन्तनीयः किं तादात्म्येन किं वात्यन्ताभेदेन । सर्वथापि स किमस्मिन्देहे वर्तते ततो बहिर्वा । देहे चेत् स कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वा । अधियज्ञः कथं कोऽत्रेति न प्रश्नद्वयं किंतु सप्रकार एक एव प्रश्न इति द्रष्टव्यम् । परमकारुणिकत्वादनायासेनैव सर्वोपद्रवनिवारकस्य भगवतोऽनायासेन मत्संदेहोपद्रवनिवारणमीषत्करमुचितमेवेति सूचयन्संबोधयति—हे मधुसूदनेति । प्रयाणकाले च सर्वकरणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तेः कथं केन प्रकारेण नियतात्मभिः समाहितचित्तैर्ज्ञेयोऽसीत्युक्तशङ्कासूचनार्थश्चकारः । एतत्सर्वं सर्वज्ञत्वात्परमकारुणिकत्वाच्च शरणागतं मां प्रति कथयेत्यभिप्रायः ॥ २ ॥

**शं० टी०—अधियज्ञ इति ।** "विज्ञानं यज्ञं तनुते" इति । "यज्ञो वै विष्णुः" इति यज्ञमधिष्ठायावास्थितेरुभयत्रान्यत्रापि च संभवादत्र विज्ञानात्मा वा विष्णुर्वान्यो वा को विवक्षितः स । चात्र देहे कथं तिष्ठति साकारेण वाप्युत निराकारेण बुद्ध्याद्यन्यतमो वा भिन्नो वा । किं च प्रयाणकालेऽपि नियतात्मभिः समाहितचित्तैस्त्वं कथं केन प्रकारेण ज्ञेयो ज्ञातव्योऽसि सगुणरूपेण निर्गुणरूपेण वान्येन रूपेण वान्यथा वा सर्वं सम्यग्वक्तव्यमिति पृच्छति ॥ २ ॥

**श्री० टी०—किंच—अधियज्ञ इति ।** अत्र देहे यो यज्ञो निर्वर्तते तस्मिन्कोऽधियज्ञः अधिष्ठाता प्रयोजकः फलदाता च क इत्यर्थः । स्वरूपं पृष्ट्वा अधिष्ठानप्रकारं पृच्छति, कथं केन प्रकारेणासावस्मिन्देहे स्थितो यज्ञमधितिष्ठतीत्यर्थः । यज्ञग्रहणं सर्वकर्मणामुपलक्षणार्थम् । अन्तकाले च नियतचित्तैः पुरुषैः कथं केनोपायेन ज्ञेयोऽसि ॥ २ ॥

**स० टी०—**देवतात्माधियज्ञो वा परब्रह्माथवेरितम् ॥ स च केन प्रकारेण चिन्तनीयोऽधियज्ञकः ॥ १ ॥ किं तादात्म्येन किं वा सोऽत्यन्ताभेदेन चिन्त्यते ॥ सर्वथापि स देहेऽस्मिन्वर्तते वा ततो बहिः ॥ २ ॥ देहे चेत्किं स बुद्ध्यादिस्तद्भिन्नो वा स उच्यते ॥ करणग्रामवैयग्र्यान्मृत्युकालेऽतिदुःसहे ॥ ३ ॥ कथं ज्ञेयोऽसि चित्तस्य समाधेरप्यसंभवात् ॥ एतत्कथय सार्वज्ञ्यात्कृपालुत्वाच्च मां प्रति ॥ ४ ॥ कुरु मे संशयस्यास्य सूदनं त्वं मधोरिव ॥ ५ ॥ २ ॥

**भा० टी०—अधीति ।** अधियज्ञः कथं कोऽत्र यज्ञमधिगतो विज्ञानात्मा परमात्मा वा स च कथं केन प्रकारेण चिन्तनीयः किं तादात्म्येनोताभेदेन । सर्वथापि स किमस्मिन्देहे वर्तते उतास्माद्बहिः । देहे चेत्सकोऽत्र बहिश्चेत्स किं कुड्यादिरुत तद्व्यतिरिक्त इति प्रकारादिजिज्ञासयोक्तं कथं कोऽत्रेति । मधुसूदनेति संबोधयन् मधुसूदनस्य तव मत्संशयसूदनमतिसुकरमिति द्योतयति । यत्तूक्तं प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतस इति तत्र पृच्छति—प्रयाणेति । प्राणोत्क्रमणदशायां करणग्रामवैयग्र्याच्चित्तसमाधानानुपपत्तेर्नियतात्मभिः प्रयाणकाले कथं ज्ञेयोऽसीति भाष्यटीकानुसारी सप्तमप्रश्नार्थः । भाष्यकृद्भिस्तु सुगमत्वान्न प्रदर्शितः ॥ २ ॥

**प० टी०—अधियज्ञ इति ।** अत्र देहे यो यज्ञो वर्तते तस्मिन्कोऽधियज्ञोऽधिष्ठाता प्रयोजकस्तत्फलदाता च क इति प्रश्नस्योत्तरं भगवानाह ॥ २ ॥

**रा० टी०—**अधिगतो यज्ञमधियज्ञ इति प्रादिसमासो नाव्ययीभावः । अत्र देहे अधियज्ञः कथमित्यर्थः । अस्मिन्देहे अधियज्ञः क इति स्वरूपप्रश्नः । अस्मिन्देह इति पदद्वयकृत्यं परिहारवाक्ये वक्ष्यामः । अन्तकाले किमर्थं कथंभूतः केन प्रकारेण स्मर्तव्य इत्यर्थः ॥ २ ॥

**श्रीभगवानुवाच—अक्षरं ब्रह्म परमं स्वभावोऽध्यात्ममुच्यते ॥**
**भूतभावोद्भवकरो विसर्गः कर्मसंज्ञितः ॥ ३ ॥**

**त० टी०—**अर्जुनप्रश्नानामुत्तरं क्रमेण त्रिभिः श्लोकैः श्रीभगवानुवाच । तत्र तावत्त्रयाणामुत्तरमेके-

नाह—अक्षरमिति । अक्षरं न क्षरति न विनश्यतीत्यक्षरं क्षेत्रज्ञसमष्टिरूपम् "अविनाशी वाऽरेऽयमात्मा" इति श्रुतेः । "अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते" इत्यादिश्रुतेश्चाक्षरशब्दवाच्यं बद्धक्षेत्रज्ञस्वरूपं निर्दिष्टम् । परममक्षरं तु प्रकृतिवियुक्तात्मस्वरूपं ब्रह्मशब्दार्थतयाऽत्र ज्ञेयं, प्रकृतिवियुक्तस्य धर्मभूतज्ञानविकाशाद्ब्रह्मवत्सार्वज्ञ्ययोगादित्यर्थः । यद्यपि "एतद्वैतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इत्यादिश्रुतौ अक्षरशब्देन परमात्माऽपि निर्दिष्टस्तथाऽप्यत्र परमात्मा नोच्यते 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इत्यादिना भगवता स्वयमेवाक्षरात्परमात्मनो भेदेन वक्ष्यमाणत्वात् । स्वभावः प्रकृतिः आत्मानं जीवात्मानमधिकृत्य कार्यकारणकर्तृत्वादिहेतुत्वेन वर्तमानोऽध्यात्मशब्देनोच्यते 'कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते' इति वक्ष्यमाणवचनात् । बुद्धीन्द्रियभूतसूक्ष्मरूपेण परिणतः प्रकृत्याख्यः स्वभावश्चेतनाधिष्ठितोऽत्राध्यात्मशब्दवाच्य इत्यर्थः । तदुभयं प्राप्यतया त्याज्यतया च मुमुक्षुभिर्ज्ञातव्यम् । भूतानां स्थावरजङ्गमादिभेदभिन्नानां भाव उत्पत्तिः उद्भवो वृद्धिस्तौ भावोद्भवौ करोति यो विसर्ग इन्द्रादिदेवतोद्देशेन द्रव्यत्यागलक्षणो यज्ञदानादिरूपः स कर्मसंज्ञितः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः । सोऽपि पुनरावृत्तिहेतुत्वाद्धेयतया मुमुक्षुभिर्ज्ञातव्यः ॥ ३ ॥

म० टी०—एवं सप्तानां प्रश्नानां क्रमेणोत्तरं त्रिभिः श्लोकैः श्रीभगवानुवाच—अक्षरमित्यादिना । प्रश्नक्रमेण हि निर्णये प्रष्टुरभीष्टसिद्धिरनायासेन स्यादित्यभिप्रायवान् भगवानत्र श्लोके प्रश्नत्रयं क्रमेण निर्धारितवान् । एवं द्वितीयश्लोकेऽपि प्रश्नत्रयं तृतीयश्लोके त्वेकमिति विभागः । निरुपाधिकमेव ब्रह्मात्र विवक्षितं ब्रह्मशब्देन नतु सोपाधिकमिति प्रथमप्रश्नस्योत्तरमाह—अक्षरमिति । अक्षरं न क्षरतीत्यविनाशि अश्नुते वा सर्वमिति सर्वव्यापकमक्षरत्वात् "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु" इत्याद्युपक्रम्य "एतस्य वा अक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः, नान्यदतोऽस्ति द्रष्टृ" इत्यादि मध्ये परामृश्य "एतस्मिन्नु खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्च" इत्युपसंहृतं श्रुत्या सर्वोपाधिशून्यं सर्वस्य प्रशासितृ अव्याकृताकाशान्तस्य कृत्स्नस्य प्रपञ्चस्य धारयितृ अस्मिंश्च शरीरेन्द्रियसंघाते विज्ञातृ निरुपाधिकं चैतन्यं तदिह ब्रह्मेति विवक्षितम् । एतदेव विवृणोति—परममिति । परमं स्वप्रकाशपरमानन्दरूपं प्रशासनस्य कृत्स्नजडवर्गधारणस्य च लिङ्गस्य तत्रैवोपपत्तेः 'अक्षरमम्बरान्तधृतेः' इतिन्यायात् न त्विहाक्षरशब्दस्य वर्णमात्रे रूढत्वाच्छ्रुतिलिङ्गाधिकरणन्यायमूलकेन 'रूढिर्योगमपहरति' इतिन्यायेन रथकारशब्देन जातिविशेषवत्प्रणवाख्यमक्षरमेव ग्राह्यं तत्रोक्तलिङ्गासंभवात् ओमित्येकाक्षरं ब्रह्मेति च परेण विशेषणात् 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलम्' इति न्यायात् "वर्षासु रथकार आदधीत" इत्यत्र तु जातिविशेषे नास्त्यसंभव इति विशेषः। अनन्यथासिद्धेन तु लिङ्गेन श्रुतेर्बाधः 'आकाशस्तल्लिङ्गात्' इत्यादौ विवृतः । एतावांस्त्विह विशेषः—अनन्यथासिद्धेन लिङ्गेन श्रुतेर्बाधे यत्र योगः संभवति तत्र स एव गृह्यते मुख्यत्वात् यथा "आज्यैः स्तुवते, पृष्ठैः स्तुवते" इत्यादौ यथा चात्रैवाक्षरशब्दे । यत्र तु योगोऽपि न संभवति तत्र गौणी वृत्तिर्यथाऽऽकाशप्राणादिशब्देषु । आकाशशब्दस्यापि ब्रह्मणि आसमन्तात् काशत इति योगः संभवतीति चेत् स एव गृह्यतामिति पञ्चपादीकृतः । तथा च पारमर्षं सूत्रम् 'प्रसिद्धेश्च' इति । कृतमत्र विस्तरेण । तदेवं किं तद्ब्रह्मेति निर्णीतमधुना किमध्यात्ममिति निर्णीयते । यदक्षरं ब्रह्मेत्युक्तं तस्यैव स्वभावः स्वो भावः स्वरूपं प्रत्यक्चैतन्यं न तु स्वस्य भाव इति षष्ठीसमासः लक्षणाप्रसङ्गात्, षष्ठीतत्पुरुषबाधेन कर्मधारयपरिग्रहस्य श्रुतपदार्थान्वयेन निषादस्थपत्यधिकरणसिद्धत्वात् । तस्मान्न ब्रह्मणः संबन्धि किंतु ब्रह्मस्वरूपमेव आत्मानं देहमधिकृत्य भोक्तृतया वर्त-

मानमध्यात्ममुच्यते अध्यात्मशब्देनाभिधीयते न करणग्राम इत्यर्थः । यागदानहोमात्मकं वैदिकं कर्मैवात्र कर्मशब्देन विवक्षितमिति तृतीयप्रश्नोत्तरमाह—भूतानां भवनधर्मकाणां सर्वेषां स्थावरजङ्गमानां भावमुत्पत्तिमुद्भवं वृद्धिं च करोति यो विसर्गस्त्यागस्तत्तच्छास्त्रविहितो यागदानहोमात्मकः स इह कर्मसंज्ञितः कर्मशब्देनोक्त इति यावत् । तत्र देवतोद्देशेन द्रव्यत्यागो याग उत्तिष्ठद्धोमो वषट्कारप्रयोगान्तः । स एवोपविष्टहोमः स्वाहाकारप्रयोगान्त आसेचनपर्यन्तो होमः । परस्वत्वापत्तिपर्यन्तः स्वत्वत्यागो दानम् । सर्वत्र च त्यागांशोऽनुगतः । तस्य च भूतभावोद्भवकरत्वम् 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इति स्मृतेः, "ते वा एते आहुती हुते उत्क्रामतः" इत्यादिश्रुतेश्च ॥ ३ ॥

शं० टी०—किं तद्ब्रह्मेत्यादिना सप्तानामप्युक्तानां प्रश्नानां क्रमेण प्रष्टुरर्थावबोधसौकर्याय स्वाभिमतमर्थं श्रीभगवानुवाच—अक्षरमिति । अक्षरम् अजो नित्यः शाश्वत इति श्रवणाज्ज्ञानाज्ञानाभ्यां कालेनान्येन वा न क्षरति न नश्यतीत्यक्षरम्, यद्वा अव्याकृतं तत्कार्यं च सर्वं बहिरन्तश्चाग्निरयःपिण्डमिवाश्नोति व्याप्नोतीत्यक्षरं सत्यज्ञानादिलक्षणं परं ब्रह्म "एतद्वै तदक्षरं गार्गि—" इति श्रुतेः । ननु ॐमित्येकाक्षरमिति संयुक्तमेतत् क्षरमक्षरं चेति प्रणवस्याव्यक्तस्य चाप्यक्षरत्वं श्रूयते कथं ब्रह्मण एवाक्षरत्वमिति चेन्न, अक्षरस्य ब्रह्मणो वाचकत्वात् प्रणवस्याक्षरत्वं न तु नित्यत्वेनाक्षरत्वं "तस्य प्रकृतिलीनस्य" इति प्रलयश्रवणात् क्षरापेक्षयाऽव्यक्तस्याक्षरत्वं न तु नित्यत्वेन "क्षरं प्रधानममृताक्षरं हरः" इति प्रकृतेः क्षरत्वं परस्य ब्रह्मण एवाक्षरत्वं च श्रूयते ततो ब्रह्मैकमेवाक्षरं न ततोऽन्यदक्षरमस्ति । तर्हि विशेषणवैयर्थ्यं स्यादिति चेन्न, ब्रह्मणः सर्ववैलक्षण्यनिर्वाहार्थकत्वाद्विशेषणस्य सार्थकत्वोपपत्तेः । क्षरमक्षरमिति पदार्थत्वेनोभयोः समत्वे प्राप्ते परममिति विशेषणं ब्रह्मणो निरवयवत्वनिष्क्रियत्वनित्यत्वनिःसङ्गत्वनित्यशुद्धत्वनिरतिशयमहत्त्वातिसूक्ष्मत्वसद्घनत्वचिद्घनत्वानन्दघनत्वसर्वव्यापकत्वसर्वप्रकाशकत्वसर्वाधारत्वादिधर्मैः सर्वोत्तमत्वापादकं भवति । श्रूयते च "महतो व्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषः" इति । एवं विशेषणविशिष्टमक्षरं ब्रह्म पूर्वोक्तब्रह्मपदस्यार्थ इत्यर्थः । एवं ब्रह्मशब्दार्थमुक्त्वाध्यात्मपदस्यार्थमाह—स्वभाव इति । आत्मानं देहं बुद्ध्यन्तं ब्रह्माण्डं रविरिव प्रकाशयितुमधिष्ठाय तिष्ठतीत्यध्यात्मं यत्तत्परस्य ब्रह्मणः स्वभावः स्वरूपमेव । स्वभावो नामाध्यात्मं प्रत्यक्त्त्वं स्वयमेव भवतीति स्वभावः परं ब्रह्म स्वयमेव प्रतिशरीरं प्रत्यग्रूपेणाहमर्थोऽध्यात्मा ज्ञाता भवतीत्यर्थः । यथा घटादिषु विद्यमान आकाशो महाकाशस्वभावस्तथा ब्रह्मादिस्तम्बान्तेषु शरीरेष्वहमर्थत्वेन विद्यमानं चैतन्यं ब्रह्मचैतन्यमेव । तत एव तत्त्वमस्यादिवाक्यानां तयोरेकत्वप्रतिपादने प्रवृत्तिः । यत एवं ततः परस्य ब्रह्मणः स्वभाव एवाध्यात्ममित्युच्यते न तु प्राणेन्द्रियादिः । भूतभावोद्भवकरः भूतान्येव भावाः भूतभावाः स्थावरजङ्गमरूपपदार्थास्तेषामुद्भव उत्पत्तिः । उद्भव इति जरामरणादेरुपलक्षणं तं करोतीति भूतभावोद्भवकरः । विसर्गः देवतोद्देशेन द्रव्यत्यागो यज्ञः श्रौतस्मार्तादिलक्षणो वृष्ट्यादिद्वारा सर्वप्राणिजन्मकारणं यस्तदेव कर्मसंज्ञितं कर्मेत्यर्थः । न तु चलनमात्रम् ॥ ३ ॥

श्री० टी०—प्रश्नक्रमेणोत्तरं श्रीभगवानुवाच—अक्षरमिति त्रिभिः । न क्षरति न चलतीत्यक्षरम् । ननु जीवोऽप्यक्षरस्तत्राह—परमं यदक्षरं जगतां मूलकारणं तद्ब्रह्म "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति" इतिश्रुतेः । स्वस्यैव ब्रह्मण एवांशतो जीवरूपेण भवनं स्वभावः स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्तमानोऽध्यात्मशब्देनोच्यत इत्यर्थः । भूतानां जरायुजादीनां भाव उत्पत्तिः उद्भवश्च उत्कृष्टत्वेन भवनमुद्भवः 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इत्युक्तक्रमेण वृद्धिस्तौ भूतभावोद्भवौ करोति यः विसर्गः देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः सर्वकर्मणामुपलक्षणमेतत् स कर्मशब्दवाच्यः ॥ ३ ॥

स० टी०—प्रश्नक्रमानुसारेण भगवानुत्तरं त्रिभिः ॥ अनायासेन बोधार्थमुवाच हरिरीश्वरः ॥ १ ॥ निरुपाधिकमेवात्र ब्रह्म मेऽस्ति विवक्षितम् ॥ अविनाश्यक्षरं ब्रह्म सर्वव्यापकमुच्यते ॥ २ ॥ सर्वस्याव्याकृतान्तस्य जगतो धारकं परम् ॥ शरीरेन्द्रियसंघाते विज्ञातृ निरुपाधिकम् ॥ ३ ॥ चैतन्यं स्वप्रकाशं यत्तद्ब्रह्मेति मयेरितम् ॥ प्रतिदेहं च तस्यैव प्रत्यगात्मतया स्थितिः ॥ ४ ॥ स्वो भावः स्वस्वरूपं यत्प्रत्यक्चैतन्यमेव हि ॥ उच्यतेऽध्यात्मशब्देन नेन्द्रियग्राम इत्ययम् ॥ ५ ॥ यागहोमादिकमेव प्रोक्तं तत्कर्मशब्दतः ॥ विसर्गो देवतोद्देशात्पुरोडाशादिवस्तुनः ॥ ६ ॥ सर्वभूतसमुत्पत्तिकरो यागादिकर्म तत् ॥ यज्ञादेः कर्मणो बीजभूताद्वृष्ट्यादिकक्रमात् ॥ ७ ॥ चराचराणि भूतानि जायन्तेऽतस्तदुच्यते ॥ ८ ॥ ३ ॥

भा० टी०—क्रमेण कृतानां प्रश्नानां तथैव प्रतिवचने प्रश्नकर्तुरिष्टं सुखेन प्रश्नोत्तरदानं सिध्यतीत्याशयवानर्जुनकृतप्रश्नानां क्रमेण निर्णयाय श्रीभगवानुवाच । तत्र ते ब्रह्म तद्विदुः कृत्स्नमित्यत्र निर्गुणं ब्रह्म विवक्षितमिति प्रथमप्रश्नस्योत्तरमाह—**अक्षरं ब्रह्मेति** । यदुक्तं किं तद्ब्रह्मेति तदक्षरं न क्षरतीत्यक्षरं विनाशरहितमश्नुते व्याप्नोति सर्वमिति व्युत्पत्त्या वाक्षरं सर्वत्र व्यापकम् । रूढ्याक्षरशब्देनोङ्कारप्रतिपत्तिभ्रमं वारयति—परममिति । परत्वं निरतिशयं परमात्मन एव पृथिव्याद्याकाशान्तस्य विकारजातस्य धारणात् । तथाच सूत्रम् "अक्षरमम्बरान्तधृतेः" इति "कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च" इति "सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणाभिवदन्त्यस्थूलमनणु" इत्यादि श्रूयते । तत्र संशयः किमक्षरशब्देन वर्ण उच्यते किंवा परमेश्वर इति । तत्राक्षरसमाम्नाय इत्यादावक्षरशब्दस्य वर्णे प्रसिद्धत्वात्प्रसिद्ध्यतिक्रमस्य चायुक्तत्वादोङ्कार एवेदं सर्वमित्यादौ च श्रुत्यन्तरे वर्णस्याप्युपास्यत्वेन सर्वात्मत्वावधारणाद्वर्ण एवाक्षरशब्दवाच्य इत्येवं प्राप्त उच्यते—पर एव आत्माक्षरशब्दवाच्यः कस्मादम्बरान्तधृतेः पृथिव्यादेराकाशान्तस्य विकारजातस्य धारणात् । तत्र हि पृथिव्यादेः समस्तस्य विकारजातस्य कालत्रयप्रविभक्तस्याकाश एव तदोतं च प्रोतं चेत्याकाशप्रतिष्ठत्वमुक्त्वा कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेत्यनेन प्रश्नेनेदमक्षरमवतारितम्, तथाचोपसंहृतमेतस्मिन् खल्वक्षरे गार्ग्याकाश ओतश्च प्रोतश्चेति । न चेयमम्बरान्तधृतिर्ब्रह्मणोऽन्यत्र संभवति । यदप्योङ्कार एवेदं सर्वमिति तदपि ब्रह्मप्रतिपत्तिसाधनत्वात्स्तुत्यर्थं द्रष्टव्यम् । तस्मान्न क्षरत्यश्नुते वेति नित्यत्वव्याप्तिमत्त्वाभ्यामक्षरं परमेव ब्रह्मेति । परममितिविशेषणादक्षरशब्देन जीवप्रधानप्रतिपत्तिभ्रमोऽपि वारितः । तृतीयप्रश्नस्योत्तरमाह—भूतभावोद्भवकरः भूतानां भावो भूतभावः तस्योद्भवो भूतभावोद्भवस्तं करोतीति भूतभावोद्भवकरो भूतवस्तूत्पत्तिकर इति भाष्ये भूतान्येव भावास्तेषामुद्भवः समुत्पत्तिस्तां करोतीति व्युत्पत्तिं सिद्धवत्कृत्य विधान्तरेण व्युत्पादयति—भूतानामिति । भावः सद्भावो वस्तुभाव इति तट्टीकाकाराः । एवं च भूतानां भवनधर्मकाणां भाव उत्पत्तिः उद्भवो वृद्धिश्च तयोः करः भूतभावोद्भवकर इत्यादिव्युत्पत्तिसिद्धवत्कारोऽपि बोध्यः । विसर्जनं विसर्गः देवतोद्देशेन चरुपुरोडाशादेः द्रव्यस्य परित्यागः स एव विसर्गलक्षणो यज्ञादिरूपो वेदविहितः कर्मसंज्ञितः कर्मशब्देन मयोक्त इत्यर्थः । 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते । आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः' इतिस्मृतिर्भूतानां चराचराणामुद्भवमेतस्मात्कर्मणो दर्शयति ॥ ३ ॥

प० टी०—**अक्षरमिति** । न क्षरतीत्यक्षरं परमं जगतो मूलकारणं यत्राकाशादिकमप्येतत्प्रोतम् । श्रुतिरपि शातपथी—"सहोवाचैतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहमच्छायमतमोऽवाय्वनाकाशमसङ्गमस्पर्शमगन्धमरसमचक्षुष्कमश्रोत्रमवागमनोऽतेजस्कमप्राणमनामागोत्रमजरममरमभयममृतमरजोऽशब्दमविवृतम्" इत्यादि । स्पष्टार्थम् । अध्यात्मस्वरूपमाह—स्वभाव इति । स्वस्यैव ब्रह्मण एवांशतो जीवरूपेण भवनं स्वभावः स एवात्मानं देहमधिकृत्य भोक्तृत्वेन वर्तमानोऽध्यात्मशब्देनोच्यते । यद्वा इन्दति जानातीन्द्रोऽन्तरात्मा तमधिकृत्य वर्तत इतीन्द्रियमध्यात्ममित्यध्यात्मविदः । भूतानां जरा-

युजादीनां भावो वर्तमानत्वेन स्थितिरुद्भव उत्पत्तिस्तौ करोति यो विसर्गो देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः कर्मशब्देनोच्यते ॥ ३ ॥

रा० टी०—प्रश्नाष्टकस्यापि क्रमेणोत्तरमाह—अक्षरमित्यादिना। किं तद्ब्रह्मेति त्वया पृष्टं ब्रह्म परममक्षरमुत्तमाक्षरं परमाक्षरशब्दितं वस्तु। अत्र भगवतोऽन्यद्ब्रह्मेति शङ्कया किं ब्रह्मेतिप्रश्ने अहं ब्रह्मेति परिहारे कार्ये अक्षरं ब्रह्मेत्युक्तिः। तस्मादक्षरं तस्मादक्षरमित्याचक्षत एतमेव सन्तमित्यादौ विष्णावेवाक्षरत्वप्रसिद्धेरक्षरमित्युक्त्यैव विष्णुर्ब्रह्मेति वा अहमेव ब्रह्मेति वा फलितत्वात्। अज्ञानामक्षरत्वमपि स्वस्य ज्ञापनीयं तथैव वाच्येऽपि परममित्यक्षरविशेषणं तु 'अधमं त्वक्षरं या सा प्रकृतिर्जडरूपिका' इत्यादेः प्रकृत्यादेरप्यक्षरशब्दार्थत्वात्तद्व्यावृत्त्यर्थमिति ज्ञेयम्। आत्मानं जीवमधिकृत्य यदस्ति जीवोपकारित्वेन वर्तमानदेहेन्द्रियान्तःकरणरूपं तदध्यात्मम्। स्वभावशब्दः स्वस्य ते विदुरिति प्रकृतजीवस्य भवति उपकारित्वेन वर्तते इति व्युत्पत्त्या देहादिपदार्थवाची देहेन्द्रियान्तःकरणलक्षणः पदार्थः। अध्यात्ममिति प्रथमान्ताव्ययपदेनोक्तव्युत्पत्त्योच्यते। यद्वा अध्यात्मपदं सप्तम्यन्तमुपेत्य अध्यात्ममात्माधिकाराख्यग्रन्थे प्रतिपाद्यं किमिति चेत्तव प्रश्नः तदाध्यात्ममात्माधिकारग्रन्थप्रतिपाद्यं स्वभावः स्वशब्दः ते विदुरिति प्रकृतजीववाची भवति, सदैकप्रकारेणास्तीति भावः। स्वश्चासौ भावश्च सदैकरूपेण वर्तमानश्चेति स्वभावः। अध्यात्मशब्दितात्माधिकारग्रन्थोक्तस्तु सदैकप्रकारो जीव इत्यर्थः। स्व इत्येवोक्तौ स्वशब्दस्यात्मीयेऽपि प्रयोगादन्तःकरणादिरपि प्रतीयेत अतो भाव इत्युक्तिः। अन्नमयं सोम्य मन इत्यादेर्मनःप्रभृतेरन्नविकारत्वेनैकप्रकारत्वाभावात्। भाव इत्येवोक्तौ ईश्वरस्यापि सदैकरूपत्वात्तेन तस्य प्रतीतौ द्वितीयप्रश्नो नोत्तरितः स्यादतः स्व इत्युक्तिः। तेन च प्रकृतत्वाज्जीव एव परामृश्यत इति पदद्वयमप्यर्थवदेवेति भावः। किं कर्मेत्यस्योत्तरं भूतेत्यादि। भूतानां जीवानां भावानां जडपदार्थानां चोद्भवकरः उत्पत्तिकरो विसर्गो विशेषेण सर्जनमीश्वरकर्तृको व्यापारः कर्मेतिशब्दित इत्यर्थः ॥ ३ ॥

**अधिभूतं क्षरो भावः पुरुषश्चाधिदैवतम् ॥**
**अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥ ४ ॥**

त० टी०—ततस्त्रयाणां प्रश्नानामुत्तरमाह—अधिभूतमिति। अधिभूतशब्दनिर्दिष्टः क्षरो भावः क्षरतीति क्षरो विनाशी यो भावः वियदादिभूतपरिणामविशेषस्तदाश्रयः। शब्दस्पर्शादिर्गुणाश्च ऐहिक आमुष्मिकश्च सर्वोऽपि क्षरणस्वभावः। भूतमात्रमधिकृत्य भवत्यधिभूतमित्युच्यते, पुरुषो हिरण्यगर्भः समष्टिजीवात्मा सर्वजीवाभिमानी—"स वै शरीरी प्रथमः स वै पुरुष उच्यते। आदिकर्ता स भूतानां ब्रह्माऽग्रे समवर्तत" इति श्रुतेः। दैवतानि दिग्वातार्कवरुणाश्विनाख्यानि अधिकृत्य सर्वेषां श्रोत्रादिकरणान्यनुगृह्णातीत्याधिदैवतमुच्यते। अधियज्ञः यज्ञाधिष्ठाता सर्वकर्मप्रवर्तक अत्रास्मिन्यजमानदेहेऽन्तर्यामितया वर्तमानोऽहमेवाधियज्ञशब्दनिर्दिष्टः। यज्ञो हि देहनिर्वर्त्यत्वेन देहायत्तो दृष्टचरः, देहश्च सजीवो मदायत्तस्थितिप्रवृत्तिकत्वान्मत्प्रवर्त्यस्तस्मादहमधियज्ञः। अथवाऽधियज्ञः सर्वयज्ञाधिष्ठाता सर्वयज्ञफलदाता चात्रास्मिन्यज्ञाभिमानीन्द्रादिदेवतादेहेऽन्तर्यामितया वर्तमानः सर्वयज्ञफलप्रदाता तद्ध्रोक्ता चाहमेवेति हे देहभृतां वर सर्वप्राणिश्रेष्ठ त्वं मामेवं बोद्धुमर्हसीति संबोधनाभिप्रायः। इत्यैश्वर्यार्थिनां ज्ञातव्यतयाऽधिभूतादिपदार्था व्याख्याताः ॥ ४ ॥

म० टी०—संप्रत्यग्रिमप्रश्नत्रयस्योत्तरमाह—अधिभूतमिति। क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्तुभूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतमुच्यते पुरुषो हिरण्यगर्भः समष्टिलिङ्गात्मा व्यष्टिसर्वकरणानुग्राहकः "आत्मैवेदमग्र आसीत्पुरुषविधः" इत्युपक्रम्य "स यत् पूर्वोऽस्मात्सर्वस्मात्सर्वान् पाप्मन

औषत्तस्मात्पुरुषः " इत्यादिश्रुत्या प्रतिपादितः । चकारात् ' स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ' इत्यादिस्मृत्या च प्रतिपादितः । अधिदैवतं दैवतान्यादित्यादीन्यधिकृत्य चक्षुरादिकरणान्यनुगृह्णातीति । तथोच्यते अधियज्ञः सर्वयज्ञाधिष्ठाता सर्वयज्ञफलदायकश्च सर्वयज्ञाभिमानिनी विष्णवाख्या देवता " यज्ञो वै विष्णुः " इति श्रुतेः । स च विष्णुरधियज्ञोऽहं वासुदेव एव न मद्भिन्नः कश्चित् । अत एव परब्रह्मणः सकाशादत्यन्ताभेदेनैव प्रतिपत्तव्य इति कथमिति व्याख्यातम् । स चात्रास्मिन्मनुष्यदेहे यज्ञरूपेण वर्तते बुद्ध्यादिव्यतिरिक्तो विष्णुरूपत्वात् । एतेन स किमस्मिन्देहे ततो बहिर्वा, देहे चेत् कोऽत्र बुद्ध्यादिस्तद्व्यतिरिक्तो वेति संदेहो निरस्तः । मनुष्यदेहे च यज्ञस्यावस्थानं यज्ञस्य मनुष्यदेहनिर्वर्त्यत्वात् " पुरुषो वै यज्ञः पुरुषस्तेन यज्ञो यदेनं पुरुस्तेन तनुते " इत्यादि श्रुतेः हे देहभृतां वर सर्वप्राणिनां श्रेष्ठेति संबोधयन् प्रतिक्षणं मत्संभाषणात् कृतकृत्यस्त्वमेतद्बोधयोग्योऽसीति प्रोत्साहयत्यर्जुनं भगवान् । अर्जुनस्य सर्वप्राणिश्रेष्ठत्वं भगवदनुग्रहातिशयभाजनत्वात्प्रसिद्धमेव ॥ ४ ॥

**शं० टी०–अधिभूतमिति** । क्षरो भावः क्षरति नश्यतीति क्षरो भावो नश्वरः पदार्थः सर्वोऽप्यधिभूतमित्युच्यते न तु कारणं कार्यमित्यादिभेदोऽत्र विवक्षितः किंतु स्वकर्माधिकृत्य यद्यद्भवति तत्तज्जनिमद्वस्तु सर्वमधिभूतमित्यर्थः । अधिदैवं तु पुरुषः पूर्णमनेन सर्वं कार्यजातमिति पुरिशयनाद्वा पुरुषो " हिरण्यगर्भः समवर्तताग्रे भूतस्य " इति श्रुत्युक्तः समष्टिव्यष्टिसर्वशरीराभिमानी सर्वप्राणिकरणानां शक्तिप्रदाताऽधिदैवमित्युच्यते न तु क्रियान्तरम् । चकारः श्रोत्रादिचतुर्दशकरणप्रवर्तकदिग्वातार्कादीनां समुच्चयार्थः । अधियज्ञ इज्यते क्रियत इति यज्ञः श्रौतस्मार्तक्रियात्मको विसर्गः पूर्वोक्तस्तमधिकृत्य तिष्ठतीत्यधियज्ञोऽहमेव सर्वप्राणिनां कर्मतत्फलविभागं तत्परिपाकं प्रवृत्तिं निवृत्तिं च कुर्वन्नत्र देहे त्वहमेवेश्वरो नियन्तारमीत्यर्थः । यच्च " स्वभावं पचति विश्वयोनिः पाच्यांश्च सर्वान् परिणामयेद्यः" इति "एषोऽन्तर्याम्येष योनिः एष एव साधु कर्म कारयति" इति श्रुतेः पृथिव्यां तिष्ठन्नित्यादौ निराकारतया नियम्याभिन्नत्वं स्वरूपेण तु भिन्नत्वं तदगोचरत्वं च मम पृथिव्यादिनियन्तुः श्रुत्यैवोच्यते ततो न साकारता नापि विकारितादिर्मम, एवमेवास्मिन् देहे तिष्ठामीति भावः । एवमध्यात्मकर्माधिभूताधिदैवाधियज्ञस्वरूपेण सर्वात्मना स्थितं परं ब्रह्म निःशेषविसृष्टविपरीतप्रत्ययेन सर्वं ब्रह्मैवेत्येकवृत्त्या जरामरणमोक्षकामेन नित्यमुपासितव्यमिति प्रश्नप्रतिवचनयोस्तात्पर्यार्थः ॥ ४ ॥

**श्री० टी०–किंच–अधिभूतमिति** । क्षरो विनश्वरो भावो देहादिपदार्थो भूतं प्राणिमात्रमधिकृत्य भवतीत्यधिभूतमुच्यते, पुरुषो वैराजः सूर्यमण्डलमध्यवर्ती स्वांशभूतसर्वदेवतानामधिपतिरधिदैवतमुच्यते, अधिदैवतमधिष्ठात्री देवता " स वै शरीरी प्रथमः स वै पुरुष उच्यते । आदिकर्ता स भूताना ब्रह्माग्रे समवर्तत " इति श्रुतेः । अत्रास्मिन्देहेऽन्तर्यामित्वेन स्थितोऽहमेवाधियज्ञो यज्ञाधिष्ठात्री देवता यज्ञादिकर्मप्रवर्तकस्तत्फलदाता च कथमित्यस्योत्तरमनेनैवोक्तं द्रष्टव्यम् । अन्तर्यामिणोऽसङ्गत्वादिभिर्गुणैर्जीववैलक्षण्येन देहान्तर्वर्तित्वस्य प्रसिद्धत्वात् । तथाच श्रुतिः–"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति " इति । देहभृतां मध्ये श्रेष्ठ इति संबोधयन् त्वमप्येवंभूतमन्तर्यामिणं पराधीनस्वप्रवृत्तिनिवृत्त्यन्वयव्यतिरेकाभ्यां बोद्धुमर्हसीति सूचयति ॥ ४ ॥

**स० टी०–प्राणिजातं** हि यत्किंचिज्जनिमद्वस्तु मायिकम् ॥ अधिभूतपदेनोक्तं विनाशीभाव एव च ॥ १ ॥ पूर्णं सर्वमनेनेति शयनात्पूर्षु वेति वा ॥ सूर्यमण्डलमध्यस्थः पुरुषश्चाधिदैवतम् ॥ २ ॥ सर्वप्राणीन्द्रियाणां यः स्यादनुग्राहकः पुमान् ॥ हिरण्यगर्भ एवासावादित्यान्तर्गतः स्मृतः ॥ ३ ॥ स वै शरीरी प्रथमः स वै पुरुष उच्यते ॥ आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत ॥ ४ ॥ विष्णवाख्या देवता श्रौती सर्वयज्ञाभिमानिनी ॥ स विष्णुश्चाधियज्ञोऽहं वासुदेवो न मत्परः ॥ ५ ॥ अतो ब्रह्माद्वयानन्दाद-

त्यन्ताभेदतो हरेः ॥ प्रतिपत्तव्य एवास्मिन्नृदेहे यज्ञरूपतः ॥ ६ ॥ बुद्ध्यादिव्यतिरिक्तोऽस्ति विष्णुरूपतया स्थितः ॥ मनुष्यदेहे यज्ञस्यावस्थानं हरिणेरितम् ॥ ७ ॥ यतो मनुष्यदेहेन निर्वर्त्यत्वं हि कर्मणः ॥ त्वं सर्वदेहिनां श्रेष्ठो मत्सांनिध्यात्प्रतिक्षणम् ॥ ८ ॥ मया संभाषणादेतद्बोधयोग्योऽसि सर्वथा ॥ सर्वदेहिवरत्वं तु प्रसिद्धं नृसुरादिषु ॥ ९ ॥ अर्जुनस्यैव भगवत्प्रसादातिशयेन वै ॥ १० ॥ ४ ॥

**भा० टी०**–अधिभूतं च किं प्रोक्तमितिचतुर्थप्रश्नस्योत्तरमाह–**अधिभूतमिति** । भूतं प्राणिजातमधिकृत्य भवतीत्यधिभूतं क्षरो भावः क्षरतीति क्षरो विनाशी भावो यत्किंचिज्जनिमद्वस्त्वित्यर्थः । अधिदैवं किमुच्यत इतिपञ्चमप्रश्नस्योत्तरमाह–पुरुषश्चाधिदैवतं पूर्णमनेन सर्वमिति पुरुषः सर्वासु पूर्षु शयनाद्वा पुरुषः आदित्यान्तर्गतो हिरण्यगर्भः सर्वप्राणिकरणानुग्राहकः सोऽधिदैवतं दैवतान्यादित्यादीन्यधिकृत्य चक्षुरादिकरणग्राममनुगृह्णातीत्यधिदैवतमुच्यते । अधियज्ञः कथं कोऽत्र देहेऽस्मिन्मधुसूदनेति षष्ठप्रश्नस्योत्तरमाह–**अधियज्ञ इति** । यज्ञो हि देहेनोत्पाद्योऽतो देहसमवायी अतो देहस्तस्याधिकरणं भवति अस्मिन्देहेऽधियज्ञः सर्वयज्ञाभिमानिनी देवता विष्णवाख्या "यज्ञो वै विष्णुः" इतिश्रुतेः सोऽधियज्ञो विष्णुरहमेव कथमित्यवान्तरः प्रकारप्रश्नोऽप्यनेनैव परिहृतः । अधियज्ञो बुद्ध्यादिव्यतिरिक्तः परमात्माभिन्नोऽस्मिन्देहे प्रतिपत्तव्य इति देहान् बिभ्रतीति देहभृतस्तेषां सर्वेषां प्राणिनां वरः श्रेष्ठस्तस्य संबोधनं हे देहभृतां वरेति । उक्तं च भगवता प्रतिक्षणं संवादं संविदधानस्यार्जुनस्य सर्वेभ्यः प्राणिभ्यां श्रैष्ठ्यमिति भाष्यटीकाकाराः । एवंभूतं मां देहभृतां वरस्त्वं प्रतिपत्तुमर्हसीति सूचनार्थं वा संबोधनम् ॥ ४ ॥

**प० टी०**–**अधिभूतमिति** । क्षरो नश्वरो भावो देहादिपदार्थो भूतं प्राणिनमधिकृत्य वर्तते तदधिभूतं द्रष्टव्यश्रोतव्यादि वा पुरुषो वैराजः सूर्यमण्डलवर्ती–"यदैतन्मण्डलं तपति यश्चास्मिन् मण्डले पुरुषः" इति श्रुतेः । स्वस्वांशभूतसर्वदेवतानामाधिपतिरधिदैवमुच्यते अत्रास्मिन् देहेऽन्तर्यामित्वेन स्थितोऽहमेवाधियज्ञः यज्ञादिकर्मप्रवर्तकस्तत्फलदाता । ननु तर्ह्यध्यात्माधियज्ञयोः को भेद इति चेन्न, अन्तर्यामिणोऽसङ्गत्वादिगुणैर्जीववैलक्षण्यं तादात्म्येनेति श्रुतिनोदितम् । श्रुतिश्च–"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति" रावणभाष्यम्–अत्र लौकिकपक्षिद्वयदृष्टान्तेन जीवपरमात्मानौ स्तूयेते । यथा लोके द्वौ सुपर्णौ सुपतनौ शोभनगमनौ सयुजा समानयोगौ सखाया समानख्यानौ समानं वृक्षमेकं देहाकारवृक्षं परिषस्वजाते आश्रयतः । तयोरन्य एकः पिप्पलं फलं स्वादुतरमत्ति । अपरोऽनश्नन्नभिचाकशीत्यभिपश्यति । तद्वद्वौ सुवर्णस्थानीयौ क्षेत्रज्ञपरमात्मानौ सयुजा समानयोगौ । योगो नाम संबन्धः स च तादात्म्यलक्षणः स एवात्मा जीवात्मनः स्वरूपम् । एवमन्यस्यापीत्यैकात्म्ये । अत एव समानख्यानौ यस्य यादृशं ख्यानं स्फुरणं परमात्मनस्तदेवेतरस्याप्यत एव सखायौ एकरूपप्रकाशावित्यर्थः । अथाधियज्ञस्वरूपमन्तकाले च स्वरूपप्राप्तिस्तदेतत्प्रश्नद्वयं बहुश्रुतिसंमतं पुनर्व्याख्यास्यति । तत्र घोराङ्गिरसप्रतिपादितमधियज्ञमन्तकालप्राप्तिं चोपदिशन्नाह–**अधियज्ञोऽहमेवेति** । भो देहभृतां वर अत्र देहेऽहमेवाधियज्ञो यज्ञं शारीरयागमधिकृत्य वर्ततेऽसावधियज्ञोऽन्तर्यागवतः पुरुषस्यान्तर्यामित्वेन वर्तमानस्तत्प्रवर्तकस्तत्फलसंपादकोऽप्यहमेवेत्यर्थः । उक्तं च टिप्पणिकासु 'अध्यात्मादित्रयाभिज्ञो व्यवहारं करोति यः । शारीरं स च यज्ञोऽस्य तं यज्ञं पुरुषं विदुः ॥ १ ॥ संस्कृतान्नस्य यान् ग्रासानेवंवित्पुरुषोऽश्नुते । ता एवाहुतयः प्रोक्ता जाठरे जातवेदसि ॥२॥ पिपासितोऽम्भः पिबति सोमपानमथास्य तत् । यज्ञस्योपसदश्चेष्टा मृतिश्चावभृथोऽस्य च ॥३॥' इति । श्रुतिरपि छान्दोग्योपनिषत्सु "स यदशिशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः । अथ यदश्नाति यत्पिबति यद्रमते यदुपसदैरेत्यथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैरेव तदेत्यथ यत्तपो दानमार्जवमहिंसासत्यवचनमिति ता अस्य दक्षिणास्तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरण-

मेवावभृथस्तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलाया-मेतत्त्रयं प्रतिपद्येताक्षितमस्यच्युतमासि प्राणसंशितमसीति । तत्र द्वे ऋचौ भवतः । आदित्प्रत्नस्य रेतस उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् " इति । भाष्यम्—शारीरयज्ञसंपादी पुरुष आत्मानं यज्ञमनुमन्यते सोऽत्र तच्छब्देनोच्यते । स यदशिशिषति क्षुत्क्षामः सन्नशितुं भोक्तुमिच्छति तथा पिपासति तृषार्दितः सन् पातुमिच्छत्यत एव यन्न रमते क्षुत्पिपासाजनितदुःखमनुभवति ता अस्य यज्ञपुरुषस्य दीक्षा । यतो दीक्षायामनशनादिना क्लेशानुभव एव । यज्ञस्तु दीक्षोपसदस्तुतशस्त्रदक्षिणादिभिः संपद्यते । तत्र दीक्षा व्रतविशेषः । अथोपसद आह—अथेति । स यज्ञपुरुषो यदश्नाति जेमति तथा यज्जलं पिबति तथा रमतेऽन्नपानादिना सुखमनुभवति तैरुपसदैरेति वर्तते यत उपसदस्तु यज्ञजनितसुखानुभवरूपाः । अथ स्तुतशस्त्रानाह—यद्धसतीति । यज्ञपुरुषो यद्धसति विनोदकथाभिरीषद्धास्यमुखोपक्रमं कुरुते तथा जक्षति हसति तथा मैथुनमृतुकाले भार्यामनुगच्छति तानि स्तुतशस्त्राणि "द्वादश स्तोत्राणि द्वादश शस्त्राणि" इतिश्रुतेः । स्तुतं नाम-स्तोत्रमुद्गातुः स्तावकवाक्यसंदर्भस्तथा होतृपठ्यमान ऋक्संदर्भ उक्थापरपर्यायः शस्त्रशब्देनोच्यते । ऋक्शाखीयब्राह्मणेऽपि "अथानुस्तुतशस्त्रयोरेवैकाहिकं प्रातःसवनम्" इत्यादि । तैः स्तुतशस्त्रैरेति वर्तते । अथ दक्षिणा-माह—यत्तप इत्यादिना । प्रसिद्धास्य दक्षिणा धर्मपुष्टिकरत्वात् । अथैतस्य यज्ञपुरुषस्य चरमदेहोत्पत्तिं श्रुत्यन्तरोक्तामाह—तस्मादिति । यस्मादेवं यज्ञपुरुषस्वरूपं तस्मादन्यशाखोक्ताः श्रुतय आहुः "सोष्यत्यसोष्ट" इति । तस्य पुरुषस्य तद्देहातिक्रमे तन्माता सोष्यति प्रसविष्यति तथासोष्ट प्रासूतेत्युपक्रममात्रं दर्शितम् । तदत्र प्रागेवोक्तम्—"तस्य वैतस्य हृदयस्य पञ्च देवताः सुषयस्तथा पञ्च ब्रह्मपुरुषान्यो वेद तस्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकम्" इति । अत्र वीरशब्देन षड्रिपुजयशीलः प्रोच्यते । तथा बृहदारण्यकेऽपि—"तस्मात्पुत्रमनुशिष्टं लोक्यमाहुस्त्वं ब्रह्म त्वं यज्ञस्त्वं लोकः" इति । पित्रा पृष्टः सन् स पुत्रः प्रत्याह ब्रह्माहं यज्ञोऽहं लोक इति । इयमेव चरमदेहोत्पन्नस्य यज्ञपुरुषस्य परीक्षा । अनेन प्रकारेण पुनरुत्पादनं जन्मास्य । तद्देहपरित्याग एवावभृथो यज्ञान्तस्नानम् । अथोपसंहरन्नाह—तद्धैतद्धीति । एतन्निरूपितप्रमेयं घोरनामपूर्वक आङ्गिरस आचार्यो भगवते कृष्णाय देवकीपुत्रायोक्त्वा पुनरुवाच । तत्किम्, स यज्ञपुरुषोऽपिपास एव बभूव पिपासा रसादि-सकलविषयेच्छा तद्रहितो बभूव भवति । अनन्तरं सोऽन्तवेलायां प्राणलयसमये भगवदुपदिष्टं यजुर्मन्त्रत्रयं प्रतिपद्यते प्राप्नोति । तत्किम्, अक्षितमसीति प्रथमः । अच्युत मसीति द्वितीयः । प्राणशंसितमसीति तृतीयः । भाष्यम्—निर्याणकाले यज्ञपुरुषः स्वात्मानं वदति । भो जीव त्वमक्षितमपरिच्छिन्नमखण्डैकरसमसि, तथाच्युतमप्रच्युतस्वभावमसि, तथा प्राणः श्वासवायुस्तेन संशितं तनूकृतमसि लुप्तप्राणापानादिरसि । एवंविधस्तत्त्वमसीति महावाक्यसंदर्भः । अत्रास्मिन्नर्थे द्वे ऋचौ भवतस्ते यथा—"आदित्प्रत्नस्य रेतसो ज्योतिष्पश्यन्ति वासरम् । परो यदिध्यते दिवा ॥ १ ॥ उद्वयं तमसस्परि ज्योतिष्पश्यन्त उत्तरम् । देवं देवत्रासूर्यमगन्म ज्योतिरुत्तमम् ॥ २ ॥" भाष्यम्—आदिति समन्तात् । इदेवकारार्थे प्रत्नस्य पुराणस्य चिरन्तनस्य रेतसो बीजभूतस्य जगत्कारणस्य ब्रह्मणो ज्योतिः प्रकाशं वासरमहरहः पश्यन्ति पर इति लिङ्गविपर्यासः । ब्रह्मणो ज्योतिर्निवृत्तचक्षुषो ब्रह्मविदो ब्रह्मचर्यादिनिवृत्तिसाधननिरुद्धान्तःकरणा आ समन्ततो ज्योतिः पश्यन्तीत्यर्थः । तत्किम्, ज्योतिर्दिवि मूर्ध्नि स्वर्गे वा यदिध्यते दीप्यते । येन ज्योतिषाढ्यः सविता तपति चन्द्रमा भाति विद्युद्विद्योतते तारागणा भान्ति तदित्यर्थः । उद्वयमिति उदूर्ध्वं ज्योतिः स्वप्रकाशं तेजो वयं पश्यन्तः सन्तोऽप्यगन्म प्राप्तवन्तः । किंभूतं तेजः, तमसः परि तमसोऽज्ञानात् परि परित उत्कृष्टम् । देवं द्योतमानं देवत्र देवेषु मध्य आसूर्यं सूर्यं मर्यादीकृत्य द्योतमानम् । उत्तमं निरतिशयम् । तदुक्तं नारायणोपनिषत्सु—"तस्यैवंविदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदिर्लोमानि बर्हिर्वेदः शिखा

हृदयं यूपः काम आज्यं मन्युः पशुस्तपोऽग्निर्दमः शमयिता दक्षिणा वाग्घोता प्राण उद्गाता चक्षुरध्वर्युर्मनो ब्रह्मा श्रोत्रमग्नीद्यावद्ध्रियते सा दीक्षा यदश्नाति तद्धविर्यत्पिबति तदस्य सोमपानं यद्रमते तदुपसदः" इत्यलमतिविस्तरेण ॥ ४ ॥

**रा० टी०**—अधिभूतं च किमित्यस्योत्तरम्—अधिभूतमिति । भूतानि सदेहान् जीवानधिकृत्य तदुपकारित्वेन वर्तमानं वस्तु । क्षरो भावः विनाशी भावः कार्यभतः पदार्थः भवत्युत्पद्यत इति व्युत्पत्तेः । अधिदैवं किमित्यस्योत्तरं पुरुषश्चेत्यादि । अधिदैवतं दैवतानि सर्वदेवानधिकृत्य तत्स्वामित्वेन वा देवताप्रकरणे मुख्यतया प्रतिपाद्यत्वेन वा वर्तमानं च किमिति पृष्टं वस्तु पुरुषः पुरि देहे शेते तिष्ठतीति पुरुषो जीवः । स च सर्वजीवाभिमानी संकर्षणो ब्रह्मा वा ज्ञेयः । अस्मिन्देहेऽधियज्ञः क इत्यस्योत्तरमधियज्ञोऽहमेवेति । प्रागुक्तादिशाधियज्ञ इति प्रादिसमासः, अधिष्ठितो यज्ञोऽनेनेति बहुव्रीहिर्वा । अत्र लौकिकदेहे यज्ञाधिष्ठाताहमेवेत्यर्थः । अत्रेति देहविशेषणं ईश्वरदेहव्यावृत्त्यर्थं भगवतः प्राणिदेह इव स्वदेहे पृथगभावेन नियन्तृत्वाभावात् । कर्तृभोक्तृफलदातॄणां देहे प्रेरकत्वेन वर्तमानस्यात्र विवक्षितत्वात् । देह इत्युक्तिरप्यस्मिन्देहेऽधियज्ञः क इति कृतप्रश्नानुरोधात् प्रश्ने वा अधियज्ञः क इत्येवोक्तावग्न्यादेरप्यधियज्ञस्य हरेरन्यस्य सत्त्वात् । प्रश्नस्य तद्विषयत्वे सिद्धार्थतादोषप्रसक्तेस्तद्व्यावृत्त्यर्थं कर्तृभोक्तृफलदातॄणां देहे प्रेरकतया वर्तमानोऽधियज्ञः क इत्यर्थलाभाय देह इत्यवश्यं वाच्यत्वात् । किंच पूर्वाध्यायान्ते साधियज्ञं मां विदुरिति भगवतोऽधियज्ञसाहित्योक्त्याधियज्ञो भगवतोऽन्योऽग्न्यादिरिति प्राप्तशङ्काव्युदासाय च देह इत्युक्तिः । सर्वप्राणिदेहगताधियज्ञाख्यरूपविशेषापेक्षया साहित्याभिप्रायेण साधियज्ञं मामित्युक्तिरिति । देह इत्युक्त्या साहित्योक्तेर्गतिसूचनेन भगवदन्यत्वशङ्कानिरासात्साहित्योक्त्या प्राप्तभेदशङ्काया अवश्यं परिहार्यत्वादेव प्रथमप्राप्तस्यात्र देहेऽधियज्ञः कथं केन प्रकारेणेति प्रश्नस्य परिहारमनुक्त्वा क इति प्रश्न एव परिहृतः । किंच सर्वयज्ञभोक्तृत्वसर्वयज्ञप्रवर्तकत्वप्रकारेण हि भगवतोऽधियज्ञत्वं तच्च सर्वयज्ञभोक्तृत्वादिकं भोक्तारं यज्ञतपसामित्यादिपञ्चमान्तोक्तं श्रुतवतोऽर्जुनस्य सिद्धमित्यधियज्ञोऽहमिति भगवतो यज्ञाधिष्ठातृत्वरूपाधियज्ञत्वोक्त्या कथमधियज्ञ इत्यस्य भोक्तृत्वादिना प्रकारेणाधियज्ञत्वमिति परिहारस्य प्राप्तत्वाच्च तत्परिहारो नोक्त इति, यद्वा कथमित्यस्य किंलक्षणक इत्यर्थः । अधियज्ञोऽहमेवेत्यधियज्ञाभिन्नत्वेनोक्तस्य हरेः कविं पुराणमिति कवित्वादिलक्षणोक्त्या एवंलक्षणकोऽधियज्ञ इतिप्राप्तेर्नोक्तमुत्तरम् । देहाभतां वरेतिसंबुद्धिः । देहभृतां देह इति चोभयत्रान्वयो ज्ञेयः । श्लोकद्वयस्यायमर्थसंग्रहः । ब्रह्म मम व्याप्तरूपं परममक्षरमुच्यते । अध्यात्मं स्वभावः जीवचिदुपकारिदेहेन्द्रियान्तःकरणलक्षणपदार्थः जीवराशिर्वा । कर्म तु चराचरविषयकेश्वरकर्तृकसर्जनम् । अधिभूतं तु क्षरो भावः स देहजीवोपकार्युत्पत्तिविनाशवान्देहेन्द्रियाद्यन्यपदार्थ उच्यते । अधिदैवतं च पुरुषः ब्रह्मा संकर्षणो वा । अत्र देहस्थितोऽधिकयाज्यत्वहेतुनाधियज्ञाख्यो रूपविशेषोऽहमेवेति साहित्योक्त्या प्राप्तभेदशङ्कानिरासायैवकारप्रयोगः। यद्वा स्वभावो भगवत्स्वभावोऽध्यात्ममुच्यते अधिकत्वात् । क्षरो भावः सर्वजीवराशिरधिभूतं भूतशब्दितपृथिव्यादि जडाधिकत्वात् । "षकारः प्राण आत्मा" इति श्रुत्या षकारस्य चेष्टापर्यायप्राणवाचित्वात् पुरुप्राणत्वहेतुना पुरुषशब्दिता रमा अधिदैवतं । दैवतशब्दितो विष्णुरधिको यस्या इतिव्युत्पत्तेरिति । एतेन ते तद्ब्रह्मेत्यर्धद्वयस्यायमर्थः । ब्रह्म व्याप्तं तत् मे रूपं ते विदुः कृत्स्नमध्यात्मं जीवोपकारिदेहेन्द्रियान्तःकरणलक्षणं वस्तु जीवराशिं वा सृष्टिलक्षणं भगवत्कर्म चाखिलं विदुः साधिभूताधिदैवमधिभूतशब्दितसदेहजीवोपकारित्वेन स्थितोत्पत्तिविनाशिपृथिव्यादिपदार्थस्थत्वेन तन्नियन्तृतया तत्सहितं तद्गतरूपविशेषसहितमित्येके । पृथिव्यादिभूताधिकतयाधिभूतशब्दितसर्वजीवराशौ स्थिततया तत्सहितमिति वा । अधिदैवशब्दितसर्वजीवाधिपतौ ब्रह्मणि संकर्षणे वा स्थितत्वेन तत्स-

हितं तद्गतरूपविशेषसहितमित्येके, अधिदैवशब्दितरमासहितमिति वा । साधियज्ञं च अधियज्ञशब्दितसर्वप्राणिगतरूपविशेषसहितं च मां ये विदुरिति ॥ ४ ॥

**अन्तकाले च मामेव स्मरन्मुक्त्वा कलेवरम् ॥**
**यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥ ५ ॥**

**त० टी०**—सप्तमप्रश्नस्योत्तरमाह—अन्तकाले चेति । अन्तकाले प्राणवियोगसमये मामेव वासुदेवं भगवन्तं सर्वाभिलाषपूरकं स्मरन्सन् कलेवरं मुक्त्वा यः प्रयाति स मद्भावं याति, मम यो भावो यथोक्ताधियज्ञादिरूपस्तं सत्यज्ञानानन्दस्वरूपं वा, यथा मामनुसंधत्ते तथाविधाकारं प्राप्नोतीत्यर्थः । अत्र संशयो नास्ति । एतेनान्तकाले कथं ज्ञेयोऽसीत्यस्योत्तरं व्याख्यातम् ॥ ५ ॥

**म० टी०**—इदानीं प्रयाणकाले च कथं ज्ञेयोऽसीति सप्तमस्य प्रश्नस्योत्तरमाह—अन्तकाले चेति । मामेव भगवन्तं वासुदेवमधियज्ञं सगुणं निर्गुणं वा परममक्षरं ब्रह्म नत्वाध्यात्मादिकं स्मरन् सदा चिन्तयन् तत्संस्कारपाटवात्समस्तकरणग्रामवैयग्र्यवत्यन्तकालेऽपि स्मरन् कलेवरं मुक्त्वा शरीरेऽहंममाभिमानं त्यक्त्वा प्राणवियोगकाले यः प्रयाति सगुणध्यानपक्षेऽग्निर्ज्योतिरहः शुक्ल इत्यादिवक्ष्यमाणेन देवयानमार्गेण पितृयानमार्गात्प्रकर्षेण याति स उपासको मद्भावं मद्रूपतां निर्गुणब्रह्मभावं हिरण्यगर्भलोकभोगान्ते याति प्राप्नोति, निर्गुणब्रह्मस्मरणपक्षे तु कलेवरं त्यक्त्वा प्रयातीति लोकदृष्ट्यभिप्रायम् "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इति श्रुतेस्तस्य प्राणोत्क्रमणाभावेन गत्यभावात् स मद्भावं साक्षादेव याति " ब्रह्मैव सन्ब्रह्माप्येति " इति श्रुतेः नास्त्यत्र देहव्यतिरिक्त आत्मनि मद्भावप्राप्तौ वा संशयः । आत्मा देहाद्यतिरिक्तो न वा देहव्यतिरेकेऽपि ईश्वराद्भिन्नो न वेति संदेहो न विद्यते "छिद्यन्ते सर्वसंशयाः" इतिश्रुतेः । अत्र च कलेवरं मुक्त्वा प्रयातीति देहाद्भिन्नत्वं मद्भावं यातीति चेश्वरादभिन्नत्वं जीवस्योक्तमिति द्रष्टव्यम् ॥ ५ ॥

**शं० टी०**—साधिभूताधिदैवं मां साधियज्ञं च ये विदुः । प्रयाणकालेऽपि च मां ते विदुरिति साधिभूताधिदैवाधियज्ञरूपब्रह्मोपासकानामन्तकालेऽपि ब्रह्मवेदनं स्मरणलक्षणं यत् पूर्वमुपक्रान्तं तदिदानीं सफलं विस्तरेण प्रतिपादयति—अन्तकाल इति । एकवचनं बहुवचनस्योपलक्षणं योऽध्यात्माधिभूतादिभेदप्रत्ययराहित्येनोक्तलक्षणं मामेव परं ब्रह्म जरामरणमोक्षायाविच्छिन्नयोगनिष्ठयाऽजस्रमनुसंधत्ते स ब्रह्मविदन्तकाले च तथैवैकवृत्त्या मामेव स्मरन् ब्रह्मैवाहमिति स्वस्य ब्रह्मतामेव भावयन् नत्वध्यात्मादिकं स्मरन् तत्स्मरणे त्वहं ममेदमित्यादि व्यामोहः पुनः संसारहेतुः स्यात् ततः सर्वात्मना परं ब्रह्मैव मां ध्यायन् कलेवरं त्यक्त्वा मद्भावं ब्रह्मभावं याति मामेव प्राप्नोति । नास्त्यत्र संशयः मरणकाले परमेव ब्रह्म ध्यात्वा कलेवरं त्यक्तवतो ब्रह्मविदो ब्रह्मभावापत्तिः परोक्षत्वादस्ति वा नवेत्यस्मिन्नर्थे संशयो न कर्तव्यस्त्वयान्येन वा वैदिकेन यतो "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुत्यैवायमर्थो निर्धार्यते ततो ब्रह्मविद्यतिः सर्वदा ब्रह्मानुसंधानमेव कुर्वन्नन्तकालेऽपि स्वं ब्रह्मैव भावयन् ब्रह्मैव भवतीत्यर्थः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैर्यच्चित्तस्तेनैष प्राण आयाति "प्राणस्तेजसा युक्तः सहात्मना यथा संकल्पितं लोकं नयति" इति श्रवणात् ब्रह्मविदोऽन्तकालेऽपि च ब्रह्मात्मनैव स्थातव्यं न तु दृश्यात्मना, तदात्मना तिष्ठतो भाविशरीरविषया स्मृतिः स्मृत्यनुरूपा तच्छरीरप्राप्तिश्च भवति । ननु ब्रह्मविदः कर्माभावात् कुतो भाविशरीरस्मृतिस्तत्प्राप्तिश्चेति चेन्न, कर्म गतेर्विचित्रत्वादवगन्तुं न शक्यते । तर्हि तथाविधकर्मगत्या ब्रह्मानुसंधिरपि तदा निरुद्धः स्यादिति चेन्न, प्राक्तनचिरस्थिरनित्यनिरन्तराभ्यस्तयोगबलेन प्राणवेदनाज्ञानवत्कर्म तज्ज्ञानं च निरुध्यते तेनैव रुद्धविप-

रीतभावः सन् ब्रह्मैव ध्यायति ब्रह्मैव गच्छत्यत एवान्तकाले च मामेवैति । चकारैवकाराभ्यां ब्रह्मविदो विषयान्तरभावनाराहित्येनान्तकालेऽपि ब्रह्मात्मनैव स्थातव्यत्वं नियमयति श्रीभगवानिममेवार्थमग्रेऽपि स्पष्टयति। तर्हि तीर्थे श्वपचगृहे वेत्यादिवचनजातस्य का गतिरिति चेत् पुण्यापुण्यक्षेत्रतीर्थनिवासविचारो ब्रह्मविदो न कर्तव्यो ब्रह्मज्ञानेनैव विमुक्तिर्न तु क्षेत्रनिवासेनेति बोधनमेव गतिः पुण्यक्षेत्रेऽपि निष्ठाराहित्येनैव विस्मृतिं प्राप्यान्तकाले मृगमेव ध्यात्वा जडभरतो मृगत्वं प्राप्तवान् तस्मात्पूर्वमप्यन्तकाले च ब्रह्मविदो यतेर्ब्रह्मनिष्ठयैव स्थातव्यमिति सिद्धम् ॥ ५ ॥

श्री० टी०–प्रयाणकाले च कथं ज्ञेयोऽसीत्यनेन पृष्टमन्तकाले ज्ञानोपायं तत्फलं च दर्शयति–अन्तकाल इति । मामेवोक्तलक्षणमन्तर्यामिरूपं परमेश्वरं स्मरन्देहं त्यक्त्वा यः प्रकर्षेणार्चिरादिमार्गेण याति स मद्भावं मद्रूपतां याति, अत्र च संशयो नास्ति। स्मरणं ज्ञानोपायो मद्भावापत्तिश्च फलमित्यर्थः ॥ ५ ॥

स० टी०–सप्तमस्योत्तरं प्राह प्रश्नस्य भगवान्हरिः ॥ मामेव वासुदेवं यः सगुणं वाथ निर्गुणम् ॥ १ ॥ चिन्तयन्सततं बुद्ध्या तत्तत्संस्कारपाटवात् ॥ समस्तकरणग्रामवैयग्र्यसमये मृतौ ॥ २ ॥ स्मरन्कलेवरं मुक्त्वाहंममेतिधियं तथा ॥ त्यक्त्वा प्राणवियोगे यः सगुणध्यानवान्यदि ॥ ३ ॥ तदा स देवयानेन प्रयाति मदुपासकः ॥ मद्भावं निर्गुणं ब्रह्म ब्रह्मलोके विरिञ्चिना ॥ ४ ॥ सहभोगावसानेऽसौ प्राप्नोति ज्ञानलाभतः ॥ निर्गुणध्यानपक्षे तु प्रयातीत्यन्यदृष्टितः ॥ ५ ॥ न तस्य प्राणा इत्यत्र श्रुतौ ब्रह्मविदो मुनेः ॥ प्राणस्योत्क्रमणाभावे गत्यभाव उदीरितः ॥ ६ ॥ स साक्षादेव मद्भावं याति ब्रह्मैव सन्स्वयम् ॥ नास्त्यत्र संशयः कश्चिद्ब्रह्मैव ब्रह्मविद्यतः ॥ ७ ॥ अत्रायमाशयो विष्णोः प्रयाणसमये नृणाम् ॥ कफवातादिदोषेणात्यन्तव्यग्रधियामपि ॥ ८ ॥ स्वं स्वरूपं हरिः साक्षात्स्मारयत्यात्मानि स्थितः ॥ हरितत्त्वविदो भक्तांस्तथान्यत्र हरेर्वचः ॥ ९ ॥ स्वस्थचेष्टाश्च ये मर्त्याः स्मरन्ति मम नारद ॥ काष्ठपाषाणतुल्यांस्तानन्तकाले स्मराम्यहम् ॥ १० ॥ स्थिरचेतसि सुस्वस्थे शरीरे सति यो नरः ॥ धातुसाम्ये स्थिते स्मर्ता विश्वरूपं च मामकम् ॥ ११ ॥ ततस्तं म्रियमाणं तु काष्ठपाषाणसन्निभम् ॥ अहं स्मरामि मद्भक्तं नयामि परमां गतिम् ॥ १२ ॥ ५ ॥

भा० टी०–प्रयाणकाले चेत्यादिसप्तमप्रश्नस्योत्तरमाह–अन्तकाल इति । अन्तकाले च प्रयाणकाले प्राणोत्क्रमणकाले इति यावत् । मामेव परमेश्वरं विष्णुं स्मरन् चकारात्सदा भगवद्भावभावित इति ज्ञेयं, मामेवेतिविशेषणेनाध्यात्मादिविशिष्टत्वेन स्मरणं व्यावर्त्यते विशिष्टस्मरणे हि चित्तविक्षेपात्र प्रधानस्मरणमपि स्यात् कलेवरं शरीरं मुक्त्वा त्यक्त्वा यः प्रयाति गच्छति मद्भावं वैष्णवं तत्त्वं याति सगुणब्रह्मचिन्तकश्चेत्क्रमेण निर्गुणब्रह्मविच्चेत्सद्यः। अस्मिन्पक्षे कलेवरं मुक्त्वेति लोकदृष्ट्यभिप्रायम् "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इति श्रुतेः । अत्रास्मिन्नर्थे संशयः मद्भावं याति नवेति नास्ति न विद्यते "स एतान्ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते। "ब्रह्मविदाप्नोतिपरम्। ब्रह्म वेद ब्रह्मैव भवति" इत्यादिश्रुतेः। अत्र केचिन्नास्त्यत्र देहव्यतिरिक्त आत्मनि मद्भावप्राप्तौ वा संशयः आत्मा देहाद्व्यतिरिक्तो न वा देहव्यतिरेकेऽपि ईश्वराद्भिन्नो न वेति संदेहो न विद्यते "छिद्यन्ते सर्वसंशयाः" इतिश्रुतेः। अत्र च कलेवरं मुक्त्वा प्रयातीति देहाद्भिन्नत्वं मद्भावं यातीति चेश्वरादभिन्नत्वं जीवस्योक्तमिति द्रष्टव्यमिति तत्रेदं वक्तव्यं, प्रयाणकाले च कथं ज्ञेयोऽसि नियतात्मभिरिति प्रश्नप्रतिवचने देहाद्यतिरिक्तो न वेतिसंशयनिराकरणवर्णनमकाण्डेताण्डवं देहाद्व्यतिरिक्त आत्मेत्यर्थस्य सकृद्व्युत्पादितत्वेन संशयाप्रसक्त्याऽप्रसक्तप्रतिषेधश्च युक्तिभिर्निरूपितेर्थेऽपिपुनरुत्पन्नस्य संशयस्यार्थिकार्थेन निवृत्त्यसंभवश्च "छिद्यन्ते सर्वसंशयाः" इतिश्रुतिरपि परावरविद इति पदसत्त्वे उदाहर्तुं योग्येति दिक् ॥ ५ ॥

प० टी०—अन्तकाल इत्यनेनान्तकाले ज्ञानोपायं दर्शयति । मामेवोक्तलक्षणमन्तर्यामिरूपं परमेश्वरं स्मरन्देहं त्यक्त्वा प्रकर्षेणार्चिर्मार्गेण याति स मद्भावं मद्रूपतां प्राप्नोत्यत्र संशयो नास्ति ॥ ५ ॥

रा० टी०—अन्तकाले च किमर्थं स्मर्तव्योऽसीतिप्रश्नस्योत्तरमाह—अन्तकाले चेति । अन्तकाले मृतिकाले मामेव स्मरन्कलेवरं देहं त्यक्त्वा यः प्रयाति स मद्भावं मयि निर्दुःखनिरतिशयानन्दानुभवात्मिकां सत्तां याति संदेहोऽत्रार्थे नास्तीत्यर्थः । निर्दुःखनिरतिशयानन्दाभिव्यक्तिरूपमद्भावप्राप्त्यर्थं मत्स्मरणमन्तकाले कार्यमित्युक्तं भवति ॥ ५ ॥

यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ ६ ॥

त० टी०—अन्तकाले न केवलं मामेव स्मरतो मत्प्राप्तिः, किंतु यं कंचित्स्मरतस्तत्प्राप्तिरेव नियतेत्याह—यं यमिति । यं यं भावं देवराजादिविशेषं वा अन्यदपि यत्किंचिद्वा स्मरंश्चिन्तयन्नन्ते प्राणत्यागकाले कलेवरं त्यजति, तं तमेव स्मर्यमाणं भावमेति प्राप्नोति । तत्तत्स्मरणे हेतुमाह—सदा तद्भावभावित इति । सदा सर्वस्मिन्काले तस्य भावस्य भावो भावना अनुचिन्तनं तेन भावितो वासितान्तःकरणः ॥ ६ ॥

म० टी०—अन्तकाले भगवन्तमनुध्यायतो भगवत्प्राप्तिर्नियतेति वदितुमन्यदपि यं कंचित्काले ध्यायतो देहं त्यजतस्तत्प्राप्तिरवश्यं भाविनीति दर्शयति—यं यं चापीति । न केवलं मां स्मरन् मद्भावं यातीति नियमः किं तर्हि यं यं भावं देवताविशेषं चकारादन्यदपि यत्किंचिद्वा स्मरंश्चिन्तयन्नन्ते प्राणवियोगकाले कलेवरं त्यजति स तं तमेव स्मर्यमाणं भावमेव नान्यमेति प्राप्नोति । हे कौन्तेयेति पितृष्वसृपुत्रत्वेन स्नेहातिशयं सूचयति तेन चावश्यानुग्राह्यत्वं तेन च प्रतारणाशङ्काशून्यत्वमिति । अन्तकाले स्मरणोद्यमासंभवेऽपि पूर्वाभ्यासजनिता वासनैव स्मृतिहेतुरित्याह—सदा सर्वदा तस्मिन् देवताविशेषादौ भावो भावना वासना तद्भावः स भावितः संपादितो येन स तथा भावितत‌द्भाव इत्यर्थः । आहिताग्न्यादेराकृतिगणत्वाद्भावितपदस्य परनिपातः, तद्भावेन तच्चिन्तनेन भावितो वासितचित्त इति वा ॥ ६ ॥

शं० टी०—ननु ' पुण्येन पुण्यलोकम् ' इति न्यायेन देवयजां विष्णुयजां शिवयजां चाराधनमात्रेण तत्स्वरूपता सिध्यति यथा तथा ब्रह्मविदोऽपि निरन्तरश्रवणादिना ब्रह्मभावापत्तिः सिध्यति किमर्थमन्तकाले प्राणवेदना । प्राचुर्ये त्वन्तकाले च मामेवेति नियमेन ब्रह्मविदस्त्वद्ध्यानमवश्यं कर्तव्यमित्ययं निर्बन्ध इत्याशङ्कायां न विष्ण्वादिभक्तानामपि नित्यं चान्तकाले च तद्ध्यानमेव कुर्वतां तत्स्वरूपापत्तिस्तदितरेषां तु नियमेन भजतां तल्लोकप्राप्तिरेव सोऽयं नियमः सर्वसाधारणो न तु ब्रह्मविद एवेत्याह—यमिति । भक्तो वान्यो वा पुरुषस्तद्भावभावितः तस्य शिवादेर्वाभीष्टवस्तुनो वा शत्रोर्वान्यस्य वा भावः स्वरूपं भावितः भक्त्या प्रीत्या वा मोहेन वा द्वेषेण वा भयेन वा सर्वदा भावनाया बुद्धिवृत्तेर्विषयत्वमापादितो भवति येन स तद्भावभावितः सर्वदा तत्स्वरूपमेव भावयन्नन्तकाले यं यं वापि भावं शिवं वा विष्णुं वाऽन्यं वा प्रियमप्रियं पदार्थं पूर्वसंस्कारबलेन स्मरन् चिन्तयन्नेव कलेवरं त्यजति तं तमेव भावं स्वेन चिन्तितपदार्थस्वरूपमेवैति पूर्वकालीनोत्तरकालीनध्यानशक्तिमहिम्ना ध्येयस्वरूपमेव प्राप्नोति न त्वाराधनमात्रपुण्यकर्मणा । नहीन्द्रं यष्ट्वा विप्रः इन्द्रत्वं प्राप्नोति तद्वच्छ्रवणमात्रेण ब्रह्मविद्ब्रह्मभावं न गच्छति । तथा च श्रुतिः " नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन " इति । किंतु सदा तद्भावभावित एव तस्य ब्रह्मणो भावस्तद्भावो ब्रह्मस्वरूपं सदाऽयमेवाहमिति भावितः स्वात्मनानुभवसहितो येन स तद्भावभावितः, यद्वा तद्भावं

ब्रह्मभावं भावितो नित्यनिरन्तरसमाधिनिष्ठासंभावितसम्यग्ज्ञानेन प्रापितो यः स तद्भावभावितः सन्नेव ब्रह्मभावं गच्छति । तथा च श्रुतिः "यमेवैष वृणुते तेन लभ्यः" इति नित्यनिरन्तरध्यानेन ध्यातुर्ध्येयस्वरूपापत्तिर्भ्रमरकीटादौ दृष्टा च । यस्मादेवं तस्माद्ब्रह्मविदां यतीनां विदेहमुक्तिकामानां नित्यं चान्तकाले च ब्रह्मैवानुसंधातव्यं न क्वचिदपि बाह्यमिति सिद्धम् ॥ ६ ॥

**श्री० टी०**—न केवलं मां स्मरन्मद्भावं प्राप्नोतीति नियमः किं तर्हि-**यं यमिति** । यं यं भावं देवतान्तरं वाऽन्यमपि वा अन्तकाले स्मरन्देहं त्यजति तं तमेव स्मर्यमाणं भावं प्राप्नोति । अन्तकाले भावविशेषस्मरणे हेतुः—सदेति । सर्वदा तस्य भावो भावनानुचिन्तनं तेन भावितो वासितचित्तः ॥ ६ ॥

**स० टी०**—न मद्गोचर एवायं नियमः किंतु सर्वतः ॥ यं यं देवविशेषं वा यत्किंचिद्वस्तुमात्रकम् ॥ १ ॥ चिन्तयन्नन्तकालेऽसौ त्यजतीह कलेवरम् ॥ तं तं संस्मर्यमाणं स भावमेवैति नापरम् ॥ २ ॥ पितृष्वस्रात्मजत्वेनानुग्राह्योऽसीति सूच्यते ॥ कौन्तेयेतिपदेनात्र स्नेहातिशयसूचनात् ॥ ३ ॥ पूर्वाभ्यासार्जिता पुंसां वासना स्मृतिकारणम् ॥ सर्वदा येन योऽभ्यस्तो भावो देवादिगोचरः ॥ ४ ॥ स्मर्यमाणतया सोऽन्ते तं तमेवैति नापरम् ॥ ५ ॥ ६ ॥

**भा० टी०**—अन्तकाले मां स्मरन्मामेवैतीति नायं नियमः किंतु—**यं यमिति** । यं यँ वापि भावं देवतादिविशेषं स्मरन् चिन्तयन्नन्ते मरणकाले कलेवरं शरीरं त्यजति तं तमेव चिन्तितं भावमेवैति नान्यम् । यद्यपि यं यं चापीतिपाठश्चकारादन्यदपि यत्किंचिद्वा स्मरन्निति कैश्चिद्व्याख्यातस्तथापि भाष्यकारैर्व्याख्यातो न भवतीत्युपेक्षणीयः । अन्तकाले विवशस्यापि स्मृतिभवने किं कारणमिति तत्राह——सदा तद्भावभावितः । सदा सर्वदा तस्मिन्देवतादिविशेषे भावो भावना वासना स भावितोऽभ्यस्तो येन सः सन् सर्वदा तस्य भावो भावनाऽनुचिन्तनं तेन भावितो वासितचित्त इति व्युत्पत्तिं सिद्धवत्कृत्याचार्यैस्तथा व्युत्पादितमित्यविरोधः । कौन्तेयेतिसंबोधयन् संबन्धप्रदर्शनेन स्वस्मिन्सर्वदा भावनाभ्याससौलभ्यं द्योतयति ॥ ६ ॥

**प० टी०**—न केवलं मां स्मरन् मद्भावं प्राप्नोतीति नियमः किं तर्हीत्याह--**यं यमिति** । यं यं भावं देवतान्तरं वाप्यन्यमन्तकाले स्मरन् देहं त्यजति तं तमेव च स्मर्यमाणं भावं प्राप्नोति यथा जाग्रति स्मरणारूढं पदार्थं निद्रायामनुभवति । किंभूतः सदा निरन्तरं तद्भावेन स्मरणारूढपदार्थेन भावितो वासितचित्तः ॥ ६ ॥

**रा० टी०**—तत्कथमित्यतः सामान्यव्याप्तिमाह—**यं यमिति** । अथवा यं यमपि भावं पदार्थं अन्ते स्मरन्कलेवरं त्यजति तं तमेव भावं याति । अन्तकाले स्मरणोपायमाह—सदेति । सदा निरन्तरं तद्भावेन तस्मिन्नन्तर्गतेन मनसा 'तद्भावोन्तर्गतं मनः' इत्यभिधानात् । भावितो वासितः नित्यं तच्चिन्तया जाततद्गोचरस्मृतिजनकसंस्कारवानित्यर्थः । एवंरूपः पुमान् भावमन्ते स्मरँस्त्यजतीत्यन्वयः । एतच्च नित्यस्मृतिरूपं सदा तद्भावभावितत्वमपरोक्षज्ञानं जनयित्वा भोगेन प्रारब्धावसानानन्तरमन्तकाले स्मृतिहेतुः न साक्षादिति ज्ञेयम् । स्मरँस्त्यजतीति त्यागस्मरणयोरेककालत्वप्रतीतावप्यन्त इत्युक्तिस्त्यागकाले महादुःखात्स्मरणमसंभावितमिति मन्दाशङ्काव्युदासाय सर्वदा शरीरं हेयमिति मन्यमानानां ज्ञानिनां न देहत्यागो दुःखहेतुरतस्तदा स्मरणं नासंभावितमिति प्रदर्शनार्था । अज्ञस्यापि त्यागक्षणात्पूर्वमेव दुःखं न तु त्यागक्षण इति ॥ ६ ॥

**तस्मात्सर्वेषु कालेषु मामनुस्मर युध्य च ॥**
**मय्यर्पितमनोबुद्धिर्मामेवैष्यस्यसंशयः ॥ ७ ॥**

**स० टी०**—एवं सामान्यविषयभावनाविशेषात्तत्तत्प्राप्तिर्नियतेत्यतो मत्प्राप्त्यर्थं मुमुक्षुस्त्वं मत्स्मरणमेव कुर्वित्याह—तस्मादिति । यस्मात्सर्वकालाभ्यस्तविषय एवान्तकाले मनोनिष्ठा भवति तस्मा-

त्सर्वेषु कालेषु मां सर्वेश्वरं सर्वाभीष्टप्रदं निरन्तरमनुस्मर अनुचिन्तय, मत्स्मरणविरोधिपापनिरासाय युध्य च। श्रुतिस्मृतिविहितं वर्णाश्रमोचितं युद्धादिकं नित्यनैमित्तिकं कर्म च कुर्वित्यर्थः। एवं नित्यनैमित्तिककर्मानुष्ठानेनाशुद्धिक्षयान्मयि सर्वेश्वरे अर्पिते मनोबुद्धी येन त्वया स त्वं सर्वदा मच्चिन्तनपरः सन्मामेवैष्यसि प्राप्स्यसि। असंशयो नास्त्यत्र संशयः॥ ७॥

म० टी०—यस्मादेवं पूर्वस्मरणाभ्यासजनितान्त्या भावनैव तदानीं परवशस्य देहान्तरप्राप्तौ कारणम्—तस्मादिति। तस्मान्मद्विषयकान्त्यभावनोत्पत्त्यर्थं सर्वेषु कालेषु पूर्वमेवादरेण मां सगुणमीश्वरमनुस्मर चिन्तय यद्यन्तःकरणाशुद्धिवशान्न शक्नोषि सततमनुस्मर्तुं ततोऽन्तःकरणशुद्धये युध्य च, अन्तःकरणशुद्धयर्थं युद्धादिकं स्वधर्मं कुरु युध्येति युद्धस्वेत्यर्थः। एवं च नित्यनैमित्तिककर्मानुष्ठानेनाशुद्धिक्षयान्मयि भगवति वासुदेवे अर्पिते संकल्पाध्यवसायलक्षणे मनोबुद्धी येन त्वया स त्वमीदृशः सर्वदा मच्चिन्तनपरः सन्मामेवैष्यसि प्राप्स्यसि असंशयो नात्र संशयो विद्यते। इदं च सगुणब्रह्मचिन्तनमुपासकानामुक्तं तेषामन्त्यभावनासापेक्षत्वात्, निर्गुणब्रह्मज्ञानिनां तु ज्ञानसमकालमेवाज्ञाननिवृत्तिलक्षणाया मुक्तेः सिद्धत्वान्नास्त्यन्त्यभावनापेक्षेति द्रष्टव्यम्॥ ७॥

शं० टी०—ब्रह्मविदां यतीनां ध्यानस्यावश्यकर्तव्यत्वसिद्धये उक्तमेवार्थमर्जुनं विषयीकृत्य पुनर्द्रढयति—तस्मादिति। यस्माच्चरमकालीनादृश्यभावना अविद्यामूलकत्वाच्छरीरारम्भहेतुस्तस्मात्त्वमर्जुनः सर्वेषु च कालेष्वाहारविहारशयनासनादिषु सर्वास्ववस्थासु सर्वात्मके मयि ब्रह्मण्येवार्पिते मनोबुद्धी येन सोऽर्पितमनोबुद्धिः। अत्र मयीति विषयसप्तमी बुद्धिरहंवृत्तिरिदंवृत्तिर्मनस्तयोर्विषयं मामेव कृत्वा समर्पिते मदात्मना स्थापिते मनोबुद्धी येन स मय्यर्पितमनोबुद्धिः सन्नहमर्थमिदमर्थं च मामनुस्मर या मां स्मरति विषयीकरोति वृत्तिस्तामन्वेवानुसृत्यैव स्मरतामनुगतयैव सजातीयवृत्त्यानुसंधेहि न तु भिन्नवृत्त्यन्तरालं कुरु। तथा चेत् बाह्यवासना न नश्यति, तदभावे संसारो न निवर्तते ततः पुङ्खानुपुङ्खवदविच्छिन्नया सद्वृत्त्या सर्वमिदमहं च ब्रह्मैवेति सर्वदा मामनुसंधेहि। एवं सदानुसंधानं कुर्वन्मामेव परं ब्रह्मैष्यसि पूर्णानन्दैकरसात्मनावस्थानलक्षणं ब्रह्मभावं गमिष्यसि न तु पुनः शरीरम्। ममैवं भविष्यति वा न वेति संशयोऽत्र न कर्तव्यो मद्वचनं श्रद्धस्वेत्यर्थः। ननु विजातीयप्रत्ययराहित्येन सर्वदा सर्वं ब्रह्मैवेति पश्यतो मम कथं जीवितसिद्धिरित्यत आह—युध्य चेति। त्वं क्षत्रियः खलु स्वजीवनसाधनं युद्धं च कुरु। ननु ब्रह्मानुसंधेर्युद्धक्रियायाश्च प्रत्ययभेदेन साधनभेदेन स्थितिभेदेन च परस्परविरुद्धत्वात् द्वयोरेककालैकाधिकरणत्वासंभवात् कथं तद्द्वयं युगपत्कर्तुं शक्यत इति न शङ्कनीयं ब्रह्मार्पणं ब्रह्महविरितिपूर्वोक्तरीत्या कर्ता करणं च कार्यं भोक्ता भोज्यं भोजनं च सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मदृष्ट्या यच्छारीरं केवलं कर्म तत्कर्तव्यं न त्वतिरिक्तं विदुषोऽप्यतिप्रवृत्त्या वासनावृद्धिस्तया पुनरपि जन्मादिसंसारस्तस्मात् सर्वदाऽप्यन्तकाले च ब्रह्मविदो ब्रह्मानुसंधिरेव कर्तव्य इति सिद्धम्॥ ७॥

श्री० टी०—यस्मात्पूर्ववासनैवान्तकाले स्मृतिहेतुः नहि तदा विवशस्य स्मरणोद्यमः संभवति—तस्मात्सर्वदा मामनुस्मरानुचिन्तय सततं स्मरणं च चित्तशुद्धिं विना न भवति अतो युद्ध्य च युद्ध्यस्व, चित्तशुद्ध्यर्थं युद्धादिकं स्वधर्मं चानुतिष्ठेत्यर्थः। एवं मय्यर्पितं मनः संकल्पात्मकं बुद्धिश्च व्यवसायात्मिका येन त्वया स त्वं मामेव प्राप्स्यसि असंशयः संशयोऽत्र नास्ति॥ ७॥

स० टी०—यतोऽन्त्या भावना हेतुः प्राप्तौ देहान्तरस्य च॥ तस्मान्मद्विषयैकान्तभावनोत्पत्तिसिद्धये॥१॥ पूर्वमेवादरेण त्वं सर्वकालेषु मां हरिम्॥ सगुणं सर्वसौन्दर्यसारसर्वस्वमीश्वरम्॥ २॥ स्मिताङ्कितमुखं मेघश्यामं पीताम्बरं विभुम्॥ श्रीवत्साङ्कितवक्षःस्थकौस्तुभादिश्रियोज्ज्वलम्॥ ३॥ गरुडध्वजमाधारं सर्वस्य जगतः पतिम्॥ आनन्दसान्द्रं श्रीकान्तं करुणार्द्रं निरन्तरम्॥ ४॥ शङ्खचक्रगदापद्मवनमाला

विभूषितम् ॥ चिन्तयाविरतं प्रेम्णा द्रवीभूतेन चेतसा ॥ ९ ॥ यद्यन्तःकरणाशुद्धिवशात्त्वं नैव संततम् ॥ शक्नोषि मामनुस्मर्तुं ततः स्वान्तविशुद्धये ॥ ६ ॥ युद्धादिकं स्वधर्मं त्वं कुरु निष्कामचेतसा ॥ तेनाशुद्धिक्षयादेव वासुदेवे मयीश्वरे ॥ ७ ॥ येनार्पिते मनोबुद्धी संकल्पाध्यवसायकौ ॥ स त्वमेतादृशो नित्यं मच्चिन्तनपरायणः ॥ ८ ॥ मामेव वासुदेवं श्रीपरमानन्दविग्रहम् ॥ प्राप्स्यस्यत्र न संदेहो विद्यते भो मनागपि ॥ ९ ॥ सगुणध्यानिनामुक्तमन्त्यभावाद्यपेक्षणम् ॥ ज्ञानिनां भ्रान्तिदाहेन मुक्तिः स्यात्तल्लक्षणे यतः ॥ १० ॥ सदद्वैतेऽनृतद्वैते यदन्योन्यैक्यवीक्षणम् ॥ तस्यान्तकालस्तद्भेदबुद्धिरेव न चेतरः ॥ ११ ॥ नीरोग उपविष्टो वा रुग्णो वा विलुठन्भुवि ॥ मूर्छितो वात्यजत्वेष प्राणान्भ्रान्तिर्न सर्वथा ॥ १२ ॥ इत्युक्तेरपि द्रष्टव्यं ध्यानिज्ञानिविवेचनम् ॥ १३ ॥ यस्मिन्निदं विविधविश्वमजे विभूम्नि स्वाभाविकामृतसुखे वरिवर्ति नित्यम् ॥ सार्वज्ञ्यमुख्यगुणसंघमहोदधौ श्रीसेव्याङ्घ्रिपद्मयुगलं तमहं प्रपद्ये ॥ १४ ॥ ७ ॥

भा० टी०–यस्मादेवं सदाभ्यस्ता भावनान्तकालेऽपि सैवोद्भूता स्वविषयप्राप्तिकरा तस्मात्सर्वेषु कालेषु आदरनैरन्तर्याभ्यां मां सगुणं निर्गुणं वा यथाशास्त्रमनुस्मर युध्य च युध्यस्व स्ववर्णधर्मयुद्धं च कुरु 'न चलति निजवर्णधर्मतो यः सममतिरात्मसुहृद्विपक्षपक्षे । न हरति न च हन्ति किंचिदुच्चैः सितमनसं तमवेहि विष्णुभक्तम्' इति विष्णुपुराणे निजवर्णधर्मतोऽचलनं विष्णुभक्तलक्षणमुक्तम् भगवता च युध्य चेत्युक्तं तेनोपासनाकर्मसमुच्चयः । मयि अर्पिते मनोबुद्धी यस्य तव स त्वमेतादृशः सन्मामेवैष्यसि आगमिष्यसि अत्र संशयो न विद्यते ॥ ७ ॥

प० टी०–ननु तदा विवशस्य कथं स्मरणोद्यमः संभवतीत्याह–तस्मादिति । यस्मादेवं तस्मात्कारणात्सर्वेषु कालेषु सुखदुःखभोगसमयेषु मामनुस्मरानुवेलं स्मरणारूढं कुरु । तेन निरन्तरानुध्यानसंस्कारेणान्तकालेऽपि स्वत एव स्मरणं भाविष्यति नहि चित्तशुद्धिमन्तरेण स्मरणं भवत्यतो युध्यस्व संग्रामरूपं स्वधर्माचरणं कुरु । एवमवसाने मय्यर्पितमनोबुद्धिः सन्नसंशयं निश्चितं मामेवैष्यसि । देहान्तकाले मदाकार एव संकल्पो निश्चयो मय्येव । एवंकृते साति भक्तपक्षपातिनं मामेवैष्यसि । अत्र मामेवेत्येवकारादन्ययोगव्यवच्छेदः । तस्मादहमेवान्तर्यामित्वेन स्वस्मरणे प्रवर्तये किंतु देहावसानदुःखं विस्मार्य स्वाभिमुखमाकर्षयामीत्यर्थः । तदुक्तम्–'स्पर्शाश्मप्यश्मसारं नयति कनकतां चान्तिकं चुम्बकाश्मा सूतेऽग्निं सूर्यकान्तो द्रवति तदपरश्चन्द्रसूर्याभिमुख्यात् । हन्त्यन्नं संनिधानाद्विषमतिगहनो ह्यस्ति वस्तुप्रभावो जीवानां मुक्तिरेवं भवति भगवतः किं पुनर्भावनातः' इति । अधियज्ञस्वरूपं पूर्वलिखितमस्ति ॥ ७ ॥

रा० टी०–अन्तकालस्मरणस्य फलोक्तेरुपयोगमाह–तस्मादिति । नित्यं मत्स्मृतेः मत्प्राप्तिहेतुचरमकालीनमत्स्मरणकारणत्वादित्यर्थः । मय्यर्पितमनोबुद्धिः सन्युध्यस्व ॥ ७ ॥

## अभ्यासयोगयुक्तेन चेतसा नान्यगामिना ॥
## परमं पुरुषं दिव्यं याति पार्थानुचिन्तयन् ॥ ८ ॥

त० टी०–तदेवमर्जुनप्रश्नानामुत्तरमुक्त्वा आत्मप्राप्तिप्रकारं चाभिधायेदानीं योगिन उपासनप्रकारं वक्तुं तत्तदनुगुणं माप्यमाह–अभ्यासेति । अभ्यासोऽहरह उचितेषु सर्वेषु कालेषु उपास्यस्वरूपगुणादेर्मनसा संशीलनम् स एव योगः समाधिस्तेन युक्तेन तत्रैवाभिनिविष्टेन अत एव नान्यगामिना स्वध्येयान्नान्यं विषयं गन्तुं शीलमस्य तेन चेतसा परमं पुरुषं परमेश्वरं दिव्यं द्योतनात्मकमादित्यमण्डलमध्यस्थमनुचिन्तयन् हे पार्थ याति प्राप्नोति ॥ ८ ॥

म० टी०–तदेवं सप्तानामपि प्रश्नानामुत्तरमुक्त्वा प्रयाणकाले भगवदनुस्मरणस्य भगवत्प्राप्ति-

लक्षणं फलं विवरीतुमारभते—**अभ्यासेति** । अभ्यासः सजातीयप्रत्ययप्रवाहो मयि विजातीयप्रत्ययानन्तरितः षष्ठे प्राग्व्याख्यातः स एव योगः समाधिस्तेन युक्तं तत्रैव व्यापृतं आत्माकारवृत्तीतरवृत्तिशून्यं यच्चेतस्तेन चेतसा अभ्यासपाटवेन नान्यगामिना न अन्यत्र विषयान्तरे निरोधप्रयत्नं विनाऽपि गन्तुं शीलमस्येति तेन परमं निरतिशयं पुरुषं पूर्णं दिव्यं दिवि द्योतनात्मन्यादित्ये भवम् "यश्चासावादित्ये" इतिश्रुतेः याति गच्छति, हे पार्थ अनुचिन्तयन् शास्त्राचार्योपदेशमनुध्यायन् ॥ ८ ॥

**शं० टी०**—ननु ब्रह्मविदः स्वज्ञानदग्धाखिलकर्मणः कर्माभावात्कुतो भाविशरीरस्मृतिस्तत्प्राप्तिश्चेति चेत्कर्मगतेर्विचित्रत्वात् तत्तत्त्वमवगन्तुं न शक्यते । तर्हि तथाविधकर्मगत्या मरणकाले ब्रह्मानुसंधिरपि निरुद्धः स्यादिति चेन्न, प्राक्कालेनाभ्यासयोगबलेन योगी ब्रह्मस्वरूपानुलीनान्तःकरणतया स्वयं प्राणवेदनावत् कर्म तत्कार्यं च न मनुते यथा मद्यरसवेगेन तत्पायी प्रारब्धकृतं बाह्यं किंचिन्न मनुते किंतु मद्यरसवेगेन प्राप्तमेव कार्यं करोति तद्वदयमप्यभ्यासयोगबलेन ब्रह्मैव ध्यायति ब्रह्मैव गच्छतीत्याशयेनाह—**अभ्यासेति** । अभ्यासयोगयुक्तेन तीव्रमोक्षेच्छयाप्यतिवैराग्येण च तदेकपरत्वेन चिरकालं नित्यनिरन्तरं च क्रियमाणविजातीयप्रत्ययानन्तरिता या सजातीयप्रत्ययावृत्तिः सार्वकालिकी स एष एवाभ्यासः समाधिरेतदभ्यासेन प्राप्तो यो निर्विकल्पकसमाधिः स योगस्तेन युक्तेन ब्रह्माकारतां प्राप्तेन तत एव नान्यगामिना अन्यं भाविकर्म कार्यं प्राणेन्द्रियादिविक्षेपं वाऽन्यद्वा गन्तुं मन्तुं च शीलं वासना शक्तिर्नास्यास्तीति नान्यगामि तेन चेतसाऽनुचिन्तयन् उक्तरीत्या स्वरूपमेव ध्यायन् ब्रह्मवित्परमं निरतिशयमहत्त्वसंपन्नं दिव्यं प्रकाशैकरूपं पुरुषं याति प्राप्नोतीत्यर्थः ॥ ८ ॥

**श्री० टी०**—सन्ततस्मरणस्य चाभ्यासोऽन्तरङ्गं साधनमिति दर्शयन्नाह—**अभ्यासेति** । अभ्यासः सजातीयप्रत्ययप्रवाहः स एव योग उपायस्तेन युक्तेनैकाग्रेण अत एव नान्यं विषयं गन्तुं शीलं यस्य तेन चेतसा दिव्यं द्योतनात्मकं परमं पुरुषं परमेश्वरमनुचिन्तयन् हे पार्थ तमेव यातीति ॥ ८ ॥

**स० टी०**—सप्तानामुत्तरं प्रोच्य प्रश्नानामधुना हरिः ॥ भगवच्चिन्तनस्यैव भगवत्प्राप्तिलक्षणम् ॥ १ ॥ विवरीतुं फलं चात्र सम्यगारभते स्फुटम् ॥ वासुदेवे विभौ तुल्यप्रत्ययावृत्तिलक्षणः ॥ २ ॥ अभ्यासस्तेन युक्तं यच्चेतस्तत्रैव तत्परम् ॥ गन्तुं शीलं न चान्यत्र चेतसोऽस्येति तेन च ॥ ३ ॥ युक्तो याति परं दिव्यं सूर्यमण्डलमध्यगम् ॥ शास्त्राचार्योपदेशेन ध्यायन्नुत्तमपूरुषम् ॥ ४ ॥ ८ ॥

**भा० टी०**—किंच—**अभ्यासेति** । चित्तादिसमर्पणविषयभूते एकस्मिन्मयि वासुदेवे विजातीयप्रत्ययानन्तरितः सजातीयप्रत्ययावृत्तिलक्षणोऽभ्यासः स चासौ योगः समाधिस्तेन युक्तं तत्रैव व्यापृतं प्रत्ययावृत्तिव्यापाराविष्टमिति यावत्, तेन योगिनश्चेतसाऽनन्यगामिना नान्यस्मिन्विषये गन्तुं शीलमस्य तेन अभ्यासयोगादनन्यगामितां तत्फलभूतां प्राप्तेनेत्याशयः । परमं निरतिशयं पुरुषं पूर्णं द्योतमाने सूर्ये भवं यथाशास्त्राचार्योपदेशमनुध्यायन् याति गच्छति मत्प्राप्त्यर्थं मय्यभ्यासयोगयुक्तेनानन्यगामिना चेतसा परमं दिव्यं पुरुषं वासुदेवं मामनुचिन्तय । मच्चिन्तनं हि तव सुलभमिति ध्वनयन्नाह—हे पार्थेति ॥ ८ ॥

**प० टी०**—संततस्मरणस्याभ्यासोऽन्तरङ्गं कारणमित्याह—**अभ्यासेति** । अभ्यासो नाम स्त्रीपुत्रवित्तादिभ्यो मनसः प्रत्याहाररूपः । योगो नाम मयि योजनम् । तेन युक्तं समाहितं तेन तथाभूतेन चेतसाऽत एव नान्यगामिना पदार्थान्तरपराङ्मुखेन दिव्यं द्योतनात्मकं परमेश्वरमनुचिन्तयन् परमं पुरुषं परमात्मानं याति प्राप्नोति ॥ ८ ॥

**रा० टी०**—सदा तद्भावभावितत्वं स्पष्टयति—**अभ्यासेति** । अभ्यासः पुनः पुनरावर्तनं तद्रूपयोगेनोपा-

येन युक्तेन सहितेनानन्यगामिनानन्यविषयेण चेतसा परममुत्तमं दिव्यं सृष्ट्यादिक्रीडादिगुणयुक्तम् । दीव्यतेरौणादिको यक् । परममुत्तमं पुरि सर्वप्राणिदेहे शेते नियन्तृतया वर्तत इति वा पूर्णत्वाद्वा पुरुषाख्यम् । पृपालनपूरणयोरित्यतः कुषन्धातोरुकारः । अनुचिन्तयन्याति परमं पुरुषमित्यनुषङ्गः ॥ ८ ॥

**कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः ॥**
**सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ ९ ॥**

त० टी०–पुनस्तमेव प्राप्यं पुरुषं विशिनष्टि द्वाभ्याम्–कविमिति । कविं सर्वज्ञं, पुराणं पुरातनम्, अनुशासितारं सर्वस्य जगतो नियन्तारम्, अणोरणीयांसम् अणुपरिमाणकाज्जीवादेरपि तद्व्यापकत्वात्सूक्ष्मतरमित्यर्थः । सर्वस्य धातारं सर्वस्य जगत आधारं पोषकं च, अचिन्त्यरूपं अचिन्त्यमहिमत्वादि यदित्थमित्येवं चिन्तितुमनर्हं रूपं यस्य तम्, आदित्यवत्सकलजगत्प्रकाशको वर्णः प्रकाशो यस्य तं, तमसः परस्तात् तमःशब्दवाच्यप्रकृतिकालाभ्यां परस्तादत्यन्तभिन्नमित्यर्थः ॥ ९ ॥

म० टी०–पुनरपि तमेवानुचिन्तयितव्यं गन्तव्यं च पुरुषं विशिनष्टि–कविमिति । कविं क्रान्तदर्शिनं तेनातीतानागताद्यशेषवस्तुदर्शित्वेन सर्वज्ञं पुराणं चिरन्तनं सर्वकारणत्वादनादिमिति यावत् । अनुशासितारं सर्वस्य जगतो नियन्तारम्, अणोरणीयांसं सूक्ष्मादप्याकाशादेः सूक्ष्मतरं तदुपादानत्वात्, सर्वस्य कर्मफलजातस्य धातारं विचित्रतया प्राणिभ्यो विभक्तारम् 'फलमत उपपत्तेः' इति न्यायात्, न चिन्तयितुं शक्यमपरिमितमहिमत्वेन रूपं यस्य तम्। आदित्यस्येव सकलजगदवभासको वर्णः प्रकाशो यस्य तं सर्वस्य जगतोऽवभासकमिति यावत् । अत एव तमसः परस्तात् तमसो मोहान्धकारादज्ञानलक्षणात्परस्तात् प्रकाशरूपत्वेन तमोविरोधिनमिति यावत् अनुस्मरेच्चिन्तयेद्यः कश्चिदपि स तं यातीति पूर्वेणैव संबन्धः, स तं परं पुरुषमुपैति दिव्यमिति परेण वा संबन्धः ॥ ९ ॥

शं० टी०–"य एवमेतांल्लोकानात्मन्येव प्रतिष्ठितान् वेदात्मैव भवति" इति श्रुत्या सर्वात्मनः परमात्मन उपासनमुक्त्वा तस्यैवोपासकस्य योऽयं विज्ञानघन उत्क्रामन् केन कतरद्वावस्थानमुत्सृज्योत्क्रामतीत्युत्क्रमणमुपक्रम्य शरीरादुत्क्रमणप्रकारमेव वर्णयितुमपुनर्भवाय कोशं भिनत्ति। कोशं भित्त्वा शीर्षकपालं भिनत्ति। शीर्षकपालं भित्त्वा अक्षरं भिनत्ति। अक्षरं भित्त्वा मृत्युं भिनत्ति। मृत्युर्वै परे देवे एकी भवतीत्युक्तक्रमेणोत्क्रान्तस्य परदेवताप्राप्तिरुक्ता तथैवात्रापि साधिभूताधिदैवं मां साधियज्ञं च ये विदुरिति भगवता सर्वात्मकस्य स्वस्य परमात्मन उपासनमुक्त्वात्मतत्त्वोपासकस्योपास्तिपरिपाकदशायामन्तकाले च मामेवेत्युत्क्रमणं तदानीं विदुषः कर्तव्यं कार्यं च सूचयित्वेदानीमुत्क्रान्तस्योपासकस्य प्राप्तव्यं यदैश्वरं परतत्त्वमुपान्त्यश्लोकनिर्दिष्टं तदेव विशेषणैर्विशिनष्टि–कविमिति । कविमतीतानागतवर्तमानसर्वप्राणितद्धर्मतत्कर्माणि चित्रविचित्राणि तत्फलानि च साक्षादव्यवधानेन कोकवीति विजानातीति कविः सर्वज्ञस्तं तत एवानुशासितारं सर्वेषां प्राणिनां हृदये बुद्धिकोशे स्थित्वा तत्तत्प्राणिकर्माण्यनुसृत्य शासितारं नियन्तारमित्यर्थः । धातारं च सर्वस्य प्राणिजातस्य तत्कृतकर्मणामनेककोटिकल्पार्जितानां फलं तद्धत्त इति धातारं विधातारमित्यर्थः । अणोरतिसूक्ष्मस्याकाशादेरपि कारणत्वादणीयांसमतिसूक्ष्मममत एव सर्वकारणत्वात् पुराणमनादिमतिसूक्ष्मत्वादनादित्वादप्रमेयत्वादचिन्त्यरूपं वाङ्मनसागोचरमादित्यवर्णमादित्यस्येवानपायो नित्यो वर्णश्चैतन्यलक्षणः प्रकाशो यस्य स आदित्यवर्णस्तं तमसः परस्तात्तमसो मोहात्मकादज्ञानात्तत्कार्याच्च परतः स्थितमज्ञानतत्कार्यसंबन्धरहितामित्यर्थः । एवंरूपं परमात्मानं मां योऽनुस्मरेत् अनेकजन्मार्जितपुण्यपुञ्जपरिपाकासादितपरमेश्वरप्रसादसंपन्नः संस्मरेत् प्रागभ्यस्तयोगबलेनान्तकालेऽनुसंदध्यात् स तं परं पुरुषमुपैतीत्युत्तरेण संबन्धः ॥ ९ ॥

श्री० टी०—पुनरप्यनुचिन्तनीयं पुरुषं विशिनष्टि—कविमिति द्वाभ्याम् । कविं सर्वविद्यानिर्मातारं पुराणमनादिसिद्धम् अनुशासितारं नियन्तारम् अणोः सूक्ष्मादप्यणीयांसमतिसूक्ष्मम् आकाशकालदिग्भ्योऽप्यतिसूक्ष्मतरं सर्वस्य धातारं पोषकम् अपरिमितमहिमत्वादचिन्त्यरूपं मलीमसयोर्मनोबुद्ध्योरगोचरम् आदित्यवत्स्वपरप्रकाशात्मको वर्णः स्वरूपं यस्य तं तमसः प्रकृतेः परस्ताद्वर्तमानम् "वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्" इति श्रुतेः ॥ ९ ॥

स० टी०--पुनश्चिन्तयितव्यं तं गन्तव्यं चैव पूरुषम् ॥ नानाविशेषणैः शुद्धैर्विशिनष्टि हरिः स्वयम् ॥ १ ॥ अतीतानागतादेश्च सर्वस्यैव च वस्तुनः ॥ स्पष्टदर्शितया क्रान्तदर्शी सर्वज्ञ उच्यते ॥ २ ॥ तमनादितया सर्वकारणत्वाच्चिरन्तनम् ॥ समस्तस्य नियन्तारमाकाशादेश्च सूक्ष्मतः ॥ ३ ॥ तत्कारणतया सूक्ष्मतरं सर्वस्य कारणम् ॥ सर्वस्य फलजातस्य विचित्रत्वेन कर्मणाम् ॥ ४ ॥ प्राणिभ्यः संविभक्तारमचिन्त्यमहिमत्वतः ॥ नास्य चिन्तयितुं शक्यं रूपं केनापि तं तथा ॥ ५ ॥ आदित्यस्येव सर्वस्य प्रपञ्चस्यावभासकः ॥ प्रकाशो यस्य तं तस्मान्मोहान्धतमसः परम् ॥ ६ ॥ तमित्थं चिन्तयेद्यस्तु स तं यात्येव पूरुषम् ॥ ७ ॥ ९ ॥

भा० टी०--किंविशिष्टं च पुरुषं चिन्तयन्यातीत्यत आह—कविमिति । कविं क्रान्तदर्शिनं तेनातीतादिवस्तुज्ञानात्सर्वज्ञं पुराणं सर्वस्य कार्यकारणस्य हेतुत्वेनानादित्वाच्चिरन्तनम्, अनुशासितारमन्तर्यामिरूपेण नियन्तारम् अणोरणीयांसमणोः सूक्ष्मादाकाशादेरप्यणीयांसमतिशयेन सूक्ष्मं योऽनुचिन्तयेत् स तमेवानुचिन्तयन्यातीति पूर्वेण संबन्धः । य इत्यस्य यःकश्चिदित्यर्थः । एतेन ननु विशिष्टजात्यादिमतो यथोक्तचिन्तनं सफलं भवति नास्मदादेर्यस्यकस्यचिदिति शङ्का निरस्ता । सर्वस्य कर्मफलजातस्य धातारं विधातारं विचित्रतया प्राणिभ्यो विभज्य दातारं स हि सर्वाध्यक्षः देवगन्धर्वयक्षरक्षःपितृपिशाचभूतजरायुजाण्डजस्वेदजोद्भिज्जादिलक्षणस्य द्युवियत्पृथिव्यादित्यचन्द्रग्रहनक्षत्रविचित्रस्य विविधप्राण्युपभोगयोग्यस्थानसाधनसंबन्धिनोऽत्यन्तकुशलशिल्पिभिरपि मनसाप्यचिन्त्यनिर्माणस्य जगतः सृष्टिस्थितिसंहारान् विदधद्देशकालविशेषाभिज्ञतया कर्मिणां कर्मानुरूपं फलं संपादयति । ननु कर्मण एवाचिन्त्यप्रभावात् सर्वैश्च फलहेतुत्वेनाभ्युपगतात् तत्तत्फलप्राप्तिरभ्युपगन्तव्या । एवं च कृतं फलप्रदानायेश्वराधिककल्पनयेति चेन्न, प्रत्यक्षविनाशिनोऽभावरूपात्कर्मणो भावरूपस्य फलस्य प्राप्त्यसंभवात् । ननु कर्म विनश्यत्स्वकालमेव स्वानुरूपं फलमर्जयित्वा विनश्यति तत्फलमुपात्तमपि भोक्तुरयोग्यत्वाद्वा कर्मान्तरप्रतिबन्धाद्वा भोक्त्रा न भुज्यते भोक्तुर्योग्यताप्राप्त्या प्रतिबन्धापगमे वा तेन भोक्ष्यते इति चेन्न, नहि स्वर्ग आत्मानं लभतामित्यधिकारिणः कामयन्ते किंतु स्वर्गो भोग्योऽस्माकं भवत्वित्यतो यादृशमधिकारिणा काम्यते तादृशस्य फलत्वमिति भोग्यस्य फलत्वेन प्राक् भोक्तृसंबन्धात् भोग्यत्वासिद्ध्या फलत्वानुपपत्तेः । यत्कालं हि यत्सुखं दुःखं वा आत्मना भुज्यते तस्यैव लोके फलत्वं प्रसिद्धम् । किंच स्वर्गनरकौ तीव्रतमे सुखदुःखे इति तद्विषयेणानुभवने भोगापरनाम्नावश्यं भवितव्यं तस्मादनुभवयोग्ययोरननुभूयमानत्वेनाननुभूयमानशशशृङ्गवन्नास्तित्वं निश्चीयते । ननु कर्मजन्यादपूर्वात्फलमुत्पत्स्यते इति चेन्न, चेतनाऽप्रवर्तितस्य काष्ठलोष्ठसमस्याचेतनस्य चेतनप्रवृत्तिं विना फलोत्पत्त्यर्थं प्रवृत्त्यनुपपत्तेः । तत्सत्त्वे प्रमाणाभावाच्चार्थापत्तिः प्रमाणमिति चेन्न, ईश्वरासिद्धेरर्थापत्तिक्षयात् । "स वा एष महानज आत्मान्नादो वसुदानः" इत्येवंजातीयकया श्रुत्यापीश्वर एव कर्मफलहेतुरिति निश्चीयते । ननु स्वर्गकामो यजेतेत्येवमादिषु वाक्येषु धर्मस्य फलदातृत्वं श्रूयते विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इत्यवगम्यमानत्वात् । अन्यथा ह्यननुष्ठातृको याग आपद्येत तत्रास्योपदेशवैयर्थ्यं स्यात् । श्रुतिप्रामाण्याच्च यथा कर्मफलसंबन्धः श्रुत उपपद्यते तथा कल्पयितव्यः । न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्कालान्तरितं फलं दातुं शक्नोतीत्यतः कर्मणो

वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्था वाऽपूर्वं नामास्तीति तर्क्यते । उपपद्यते चायमर्थः । उक्तेन प्रकारेण ईश्वरः फलं ददातीत्यनुपपन्नमविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गाच्चानुष्ठानवैयर्थ्यापत्तेश्च । तस्माद्धर्मादेव फलमिति चेदुच्यते "एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति तं यमेभ्यो लोकेभ्य अधो निनीषते" इत्यादिश्रुतिषु धर्माधर्मयोः कारयितृत्वेनेश्वरस्य हेतुत्वं फलदातृत्वं च व्यपदिश्यते विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्जन्ते । तथा चेश्वरसिद्धिः कर्मणो वेत्यादि न परिकल्प्यम् । "स्वर्गकामो यजेत" इत्यादिं । श्रुतिरपि ईश्वरकारणवादिश्रुत्यनुरोधेन व्याख्येया । तथाच व्याससूत्राणि "फलमत उपपत्तेः । श्रुतत्वाच्च । धर्मं जैमिनिः।अत एव पूर्वं तु बादरायणो हेतुव्यपदेशात्।" फलमत ईश्वरात्कर्मभिराराधिताद्भवितुमर्हति कुतः उपपत्तेः । न केवलं उपपत्तेरेवेश्वरं फलहेतुं कल्पयामः किं तर्हि श्रुतत्वादपीश्वरं फलहेतुं मन्यामहे । तथाहि श्रुतिर्भवति स वा एषेत्याद्य । सिद्धान्तेनोपक्रम्य पूर्वपक्षं गृह्णाति जैमिनिराचार्यः फलस्य दातारं धर्मं मन्यते।अत एव हेतोः श्रुतेरुपपत्तेश्च बादरायणस्तु आचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते।केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं पक्षस्तुशब्देन व्यावर्त्यते नहि मृत्पिण्डदण्डादयोऽचेतनाश्चेतनकुम्भकाराद्यनधिष्ठिताः कुम्भाद्यारम्भाय प्रभवन्तो दृष्टाः कल्पना च दृष्टानुसारिण्येव युक्ता । तस्मादचेतनाधिष्ठितात् केवलादचेतनात्कर्मणस्तथाभूतादपूर्वाद्वा फलमित्यनुपपन्नम् । ननु कर्मादि चेतनाधिष्ठितमचेतनत्वान्मृदादिवदित्यनुमानेन सिद्धस्य कर्मादेर्जीवचैतन्याधिष्ठितत्वस्य साधनमिति चेन्न, कर्मस्वरूपसामान्यनियोगादिविशेषविज्ञानशून्यचैतन्यमात्रजीवस्य फलोत्पत्तावनुपयोगात् । फलसिद्धिपूर्वक्षणे शुभस्य कर्मणः सुखमितरस्य दुःखं ज्योतिष्टोमात्स्वर्ग इत्यादिसाक्षात्कारवदधिष्ठितत्वमस्माभिः साध्यते इति सिद्धसाधनस्याभावात् । किंच देवपूजात्मको यागो देवतां न प्रसादयन् फलं प्रसूते इत्यपि दृष्टविरुद्धं राजसेवात्मकमाराधनं राजानं प्रसाद्य फलाय कल्पते इति लोके दृष्टत्वात् । तस्माद्दृष्टानुगुण्याय यागादिभिः दानपरिचरणप्रणामाञ्जलिकरणस्तुतिमयीभिरतिश्रद्धागर्भाभिर्भक्तिभिश्चेश्वरप्रसत्तिरुत्पाद्यते।तथाचेश्वरप्रसादादेव स्थायिनः फलोत्पत्तेः कृतमपूर्वेण । एवमशुभेनापि कर्मणेश्वरविरोधनं श्रुतिस्मृतिप्रसिद्धम् । ततः स्थायिनोऽनिष्टफलोत्पत्तिः यथा राजा साधुकारिणमनुगृह्णाति पापकारिणं निगृह्णाति तेन च द्विष्टो रक्तो वा न भवति तथेश्वरोऽपि । ननु प्रधानप्रयोगेणेश्वरः प्रसीदतु अङ्गानुष्ठानं तर्हि किमर्थमिति चेत् यथा च परमापूर्वे कर्तव्ये उत्पत्त्यपूर्वाणामङ्गापूर्वाणां चोपयोगः एवं प्रधानाराधनेऽङ्गाराधनानामुपयोगः स्वाम्याराधन इव तदमात्यतत्प्रणयिजनाराधनानामिवेति सर्वं समानम् । तस्माद्दृष्टाविरोधेनेश्वराराधनात्फलं नत्वपूर्वात्कर्मणो वा केवलात् । हेतुव्यपदेशश्च श्रौतः स्मार्तश्च व्याख्यातः। अचिन्त्यरूपम् "अरूपवदेव हि तत्प्रधानत्वात् ।प्रकाशवच्चावैयर्थ्यात्। आह च तन्मात्रम्" इति सूत्रोक्तप्रकारेण वस्तुतः परमेश्वरस्य किंचिदपि रूपं नास्ति।अरूपवदेव हि रूपादिरहितमेव हि ब्रह्मावधारयितव्यं न रूपादिमत् कस्मात्तत्प्रधानत्वात् "अस्थूलमनण्वह्रस्वमदीर्घमशब्दमरूपमव्ययं तदेतद्ब्रह्मापूर्वमनपरमबाह्यमयमात्मा ब्रह्म सर्वानुभूः" इत्येवमादीनां वाक्यानां निराकारब्रह्मप्रधानत्वात् । तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम् । यद्याकाररहितं ब्रह्म तर्ह्याकारवद्विषयाणां श्रुतीनां का गतिरित्यत आह—प्रकाशवच्च । यथा सौरादिप्रकाशो वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धादृजुवक्रादिभावमापन्ने सूर्यादौ तद्भावमिव प्रतिपद्यते तथा ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तदाकारतामिव प्रतिपद्यते । तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते । अत आकारवद्विषयाणां श्रुतीनामवैयर्थ्यम् । आह च श्रुतिः—"चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म स यथा सैन्धवघनोऽन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव" इति । यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति न रसान्तरं तथा ब्रह्मणश्चैतन्यमेव तु निरन्तरं स्वरूपं

न तु चैतन्यादन्यदन्तर्बहिर्वा । दर्शयति च श्रुतिः परप्रतिषेधेन ब्रह्मणो निर्विशेषत्वम् "अथात आदेशो नेति नेति" इति "अन्यदेव तद्विदितादथो अविदितादधि । यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्येवमाद्याः । बाष्कलिना च वाद्धः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते "सहोवाचाधीहि भोः" इति । स ह तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच "ब्रूमः खलु त्वं तु न विजानास्युपशान्तोऽयमात्मा" इति । अपि च स्मृतिष्वपि परप्रतिषेधेनैवोपदिश्यते 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वामृतमश्नुते । अनादि मत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैव मां ज्ञातुमर्हसि' इति । एवं च न वास्तवं परमात्मनि रूपादिकं किंचिदस्ति । उपासनार्थं विद्यमानमपि परमेश्वरस्य काल्पनिकं रूपं न केनचिच्चिन्तयितुं शक्यत इत्यचिन्त्यरूपं, स्वयंप्रकाशस्यादित्यस्येव नित्यचैतन्यस्वप्रकाशरूपो वर्णो यस्य तं तमसोऽज्ञानलक्षणान्मोहान्धकारात्परस्तादुपरिष्टाद्व्यवस्थितं परमिति यावत् परमार्थतो मूलाज्ञानतत्कार्यास्पृष्टमित्यर्थः ॥ ९ ॥

प० टी०—अथ चिन्तनीयं पुरुषं विशिनष्टि—कविमितिद्वाभ्याम् । कविं सर्वज्ञं पुराणमनादिसिद्धमनुशासितारं नियन्तारमणोः सूक्ष्मादप्यणीयांसं सर्वस्य स्थूलसूक्ष्मप्रपञ्चस्य धातारमाश्रयभूतं सूक्ष्मत्वादेवाचिन्त्यरूपं तमसः प्रकृतेः परस्ताद्वर्तमानम् आदित्यवत् स्वपरप्रकाशरूपो वर्णः स्वरूपं यस्यैवंभूतं पुरुषम् ॥ ९ ॥

रा० टी०—कथंभूतः स्मर्तव्योऽसीति प्राकृतप्रश्नस्योत्तरमाह—कविमिति । कविं सर्वज्ञं पुराणमनादिमनुशासितारं शिक्षकमणोरणीयांसमत्यन्ताणुप्रमाणं सर्वस्य चराचराख्यविश्वस्य धातारं धारणपोषणकर्तारमचिन्त्यरूपं साकल्येन मनसोऽविषयमादित्यवर्णं रविप्रभं तमसः प्रकृतेर्मृत्योर्वा "मृत्युर्वाव तमः" इतिश्रुतेः ताभ्यां परस्तात् तदुभयास्पृष्टत्वेन स्थितमिति शेषः ॥ ९ ॥

**प्रयाणकाले मनसाऽचलेन भक्त्या युक्तो योगबलेन चैव ॥**
**भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥१०॥**

त० टी०—एवंभूतं पुरुषं प्रयाणकाले भक्त्या युक्तो योगबलेन समाधिबलेन च युक्तः सम्यक् सुषुम्णामार्गेण भ्रुवोर्मध्ये प्राणमावेश्य अत एवाचलेन निश्चलेन चेतसा योऽनुस्मरेत्स तं परं पुरुषं दिव्यं प्रकाशरूपमुपैति प्राप्नोति ॥ १० ॥

म० टी०—कदा तदनुस्मरणे प्रयत्नातिरेकोऽभ्यर्थ्यते तदाह—प्रयाणकाले इति । प्रयाणकाले अन्तकाले अचलेन एकाग्रेण मनसा तं पुरुषं योऽनुस्मरेदित्यनुवर्तते । कीदृशः भक्त्या परमेश्वरविषयेण परमेण प्रेम्णा युक्तः योगस्य समाधेर्बलेन तज्जनितसंस्कारसमूहेन व्युत्थानसंस्कारविरोधिना च युक्तः । एवं प्रथमं हृदयपुण्डरीके वशीकृत्य तत ऊर्ध्वगामिन्या सुषुम्नया नाड्या गुरूपदिष्टमार्गेण भूमिजयक्रमेण भ्रुवोर्मध्ये आज्ञाचक्रे प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तो ब्रह्मरन्ध्रादुत्क्रम्य स एवमुपासकस्तं कविं पुराणमनुशासितारमित्यादिलक्षणं परं पुरुषं दिव्यं द्योतनात्मकमुपैति प्रतिपद्यते ॥ १० ॥

शं० टी०—कविं पुराणमित्यादिलक्षणसंपन्नं परमात्मानमुपासीनो योगी कया साधनसंपत्त्या कदा स्वयं प्राप्नोतीत्याकाङ्क्षायामाह—प्रयाणकाल इति । तीव्रमोक्षेच्छावैराग्याभ्यामनन्यवृत्त्या नित्यं निरन्तरं च कविमित्यादिविशेषणसंपन्नपरमात्मानमनुसंदधानः स योगी प्रयाणकाले मृतिकाले संप्राप्ते सति स्वयमचलेन चिरकालनित्यनिरन्तरसजातीयप्रत्ययावृत्त्यभ्यासातिशयपटुत्ववशान्निश्चलेन विषयान्तरसंपर्कवर्जितेन मुक्तेः परमसाधनेन मनसा भक्त्या वृत्तेः स्वविषयाकारतपत्तिर्भक्तिस्तया च योगबलेन योगः समाधिस्तेन

संभावितं बलं चित्तस्य लक्ष्यैकाकारतापत्तिस्थैर्यलक्षणं तेनैवोत्तमसाधनेन युक्तः सन् "शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति " इति श्रुत्युक्तरीत्या पूर्वं कुम्भकेन हृदये प्राणापानावेकीकृत्य स्थापयित्वाऽनन्तरमिडापिङ्गले द्वे नाड्यौ ऊर्ध्वं चोर्ध्वगामिन्या सुषुम्नया नाड्या प्राणं भ्रुवोर्मध्ये लम्बिकान्तं सम्यगानीय शीर्षकपालं भित्त्वा श्रुत्युक्तरीत्या पृथिवीं भित्त्वापो भित्त्वा तेजो भित्त्वा वायुं भित्त्वाकाशं भित्त्वा मनो भित्त्वा भूतादिं भित्त्वा महान्तं भित्त्वाऽव्यक्तं भित्त्वाक्षरं भित्त्वा मृत्युं भित्त्वा तं कविं पुराणमित्युक्तलक्षणं दिव्यं प्रकाशैकस्वभावं परं पुरुषमुपैति प्राप्नोतीत्यर्थः । अन्तकाले च मामेवेत्यन्तकाले च ब्रह्मानुसंधानविधिः सदा तद्भावभावित इति तत्पूर्वमपि सर्वदा ब्रह्मानुसंधानविधिस्तस्मात् सर्वेषु कालेष्वित्युक्तार्थश्च अभ्यासयोगयुक्तेनेत्यनेनोक्तार्थश्च ब्रह्मविदां च सगुणोपासकानां चायमुपदेशः सम एव ज्ञातव्यः प्रयत्नेन कर्तव्यश्च । कविं पुराणमित्युक्तार्थस्तूपासकस्यैव न तु ब्रह्मविद् इति विवेकः ॥ १० ॥

श्री० टी०—सप्रपञ्चप्रकृतिं भित्त्वा यस्तिष्ठति एवंभूतं पुरुषमन्तकाले भक्तियुक्तो निश्चलेन विक्षेपरहितेन मनसा योऽनुस्मरेत् । मनोनैश्चल्ये हेतुः—योगबलेन सम्यक् सुषुम्नामार्गेण भ्रुवोर्मध्ये प्राणमावेश्येति । स तं परं पुरुषं परमात्मस्वरूपं दिव्यं द्योतनात्मकं प्राप्नोति ॥ १० ॥

स० टी०—अन्तकालेऽचलेनान्तःकरणेनानुसंस्मरेत् ॥ भगवद्विषयेणातिप्रेम्णा युक्तः समाधिना ॥ १ ॥ समाधिजन्यसंस्कारसमूहेन युतः पुमान् ॥ आदौ हृदि वशीकृत्य ततो भूमिजयक्रमात् ॥ २ ॥ सुषुम्नयोर्ध्वगामिन्या नाड्याऽऽचार्योक्तमार्गतः ॥ स्थापयित्वात्मनः प्राणमाज्ञाचक्रे समाहितः ॥ ३ ॥ ब्रह्मरन्ध्रात्स उत्क्रम्योपासकस्तं स्वचिन्तितम् ॥ कविं पुराणमित्यादिलक्षणं पुरुषं परम् ॥ ४ ॥ द्योतनात्मकमीशानमद्भुतं प्रतिपद्यते ॥ ५ ॥ १० ॥

भा० टी०—एवं चिन्तनाभ्यासी—**प्रयाणेति** । प्रयाणकाले मरणकाले अचलेन तत्तद्विषयं प्रति गमनं चलनं तद्वर्जितेन भगवतो वासुदेवस्योक्तविशेषणविशिष्टस्य भजनं भक्तिस्तया युक्तो योगबलं समाधिजसंस्कारजनितं चित्तस्थैर्यलक्षणं तेन च युक्तः पूर्वं हृदयपुण्डरीके चित्तं वशीकृत्य तत ऊर्ध्वगामिन्या नाड्या भूमिजयक्रमेण भ्रुवोर्मध्ये प्राणमावेश्य स्थापयित्वा सम्यगप्रमत्तः सन् स एवं विद्वान् यः कविं पुराणमित्यादिलक्षणः तं परं पुरुषमुपैति प्रतिपद्यते ॥ १० ॥

प० टी०—**प्रयाणेति** । प्रयाणकालेऽन्तकाले भक्त्या युक्तः संस्तन्निर्वाहितयोगबलेनाचलेन मनसा सम्यक् सुषुम्नाविवरेण भ्रुवोर्मध्ये प्राणमावेश्यानुस्मरेत् स तं पुरुषं दिव्यमुपैति ॥ १० ॥

रा० टी०—भक्त्या युक्तः सन्प्रयाणकाले योगबलेन भ्रुवोर्मध्ये प्राणमावेश्याचलेन मनसा यः स्मरेत स दिव्यं परमुत्तमं पुरुषमुपैतीति योजना । अत्रादित्यवर्णमिति सशरीरत्वप्राप्तेर्जन्मादिप्रसङ्गः इतिशङ्काव्युदासाय तमसः परस्तादित्युक्तम् । तद्देहस्याप्राकृतत्वान्न जन्मादिदोष इति भावः । योगबलेनैव भ्रुवोर्मध्ये प्राणमावेश्येत्येतद्वायुजयादिमन्मात्रासाधारणं नतु उचिक्रमिषोः सर्वस्य साधारणं वायुजयहीनानां ज्ञानभक्तिवैराग्यपूर्त्यैव मुक्तिसिद्धेः । वायुजयादिमतां तु ईषज्ज्ञानाद्यसंपूर्तावपि वायुजयादौ निपुणानां तद्बलादेवाल्पमुक्तिः किंचिच्छीघ्रं च भवतीति विशेष इति ॥ १० ॥

**यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।**
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण प्रवक्ष्ये ॥ ११ ॥**

त० टी०—सामान्यं योगमुक्त्वेदानीं योगाशिरोयोगं वक्तुं प्रतिजानीते—**यदक्षरमिति** । यदक्षरं

वेदविदो ब्राह्मणा वदन्ति । "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादिवचनैः प्रतिपादयन्ति। यत् वीतरागा निवृत्तसर्वविषयस्पृहा यतयो यत्नशीला विशन्ति, स्वस्यात्मानं नियामकं व्यापकं परमाधाररूपं साक्षादनुभूय प्रकृतिसंबन्धविनिर्मुक्ताः सन्तस्तदात्मीयतन्नियम्यतद्व्याप्यतदाधेयतया पृथक्स्थितिप्रवृत्त्यनर्हास्तिष्ठन्ति । यदिच्छन्तो यज्ज्ञातुमिच्छन्तो ब्रह्मचर्यं चरन्ति, तत् पद्यते गम्यते इति पदं प्राप्यं ते तुभ्यं संग्रहेण संक्षेपेण प्रवक्ष्ये, तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

म० टी०—इदानीं येनकेनचिदभिधानेन ध्यानकाले भगवदनुस्मरणे प्राप्ते "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्" इत्यादिश्रुतिप्रतिपादितत्वेन प्रणवेनैवाभिधानेन तदनुस्मरणं कर्तव्यं नान्येन मन्त्रादिनेति नियन्तुमुपक्रमते—यदक्षरमिति । यदक्षरमविनाशि ओङ्काराख्यं ब्रह्म वेदविदो वदन्ति "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादिवचनैः सर्वविशेषनिवर्तनेन प्रतिपादयन्ति । न केवलं प्रमाणकुशलैरेव प्रतिपन्नं किंतु मुक्तोपसृप्यतया तैरप्यनुभूतमित्याह—विशन्ति स्वरूपतया सम्यग्दर्शनेन यदक्षरं यतयो यत्नशीलाः संन्यासिनो वीतरागा निस्पृहाः । न केवलं सिद्धैरनुभूतं साधकानामपि सर्वोऽपि प्रयासस्तदर्थ इत्याह—यदिच्छन्तो ज्ञातुं नैष्ठिका ब्रह्मचारिणो ब्रह्मचर्यं गुरुकुलवासादि तपश्चरन्ति यावज्जीवं तदक्षराख्यं पदं पदनीयं ते तुभ्यं संग्रहेण संक्षेपेणाहं प्रवक्ष्ये प्रकर्षेण कथयिष्यामि यथा तव बोधो भवति तथा, अतस्तदक्षरं कथं मया ज्ञेयमित्याकुलो माभूरित्यभिप्रायः । अत्र च परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च यः पुनरेतं त्रिमात्रेणोमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत स तमधिगच्छतीत्यादिवचनैर्मन्दमध्यमबुद्धीनां क्रममुक्तिफलकमुपासनमुक्तं तदेवेहापि विवक्षितं भगवताऽतो योगधारणासहितमोङ्कारोपासनं तत्फलं स्वस्वरूपं ततोऽपुनरावृत्तिस्तन्मार्गश्चेत्यर्थजातमुच्यते यावदध्यायसमाप्ति ॥ ११ ॥

शं० टी०—यतीनां मुमुक्षूणां सद्गुरोः सकाशाद्यज्ज्ञातव्यं निर्विशेषं परं ब्रह्म तदनेन प्रस्तौति तेषां तीव्रमोक्षेच्छया प्रवृत्तिसिद्धये—यदिति । सर्वे वेदाः स्वस्वोपनिषन्मुखेन ब्रह्मैव प्रतिपादयन्ति। "आत्मा वा इदमेक एवाग्र आसीत्" इति "सर्वं तत्प्रज्ञानेत्रं प्रज्ञानं ब्रह्म" इति "सत्यं ज्ञानमनन्तं ब्रह्म । सत्यं चानृतं च सत्यमभवत् । स यश्चायं पुरुषः" इति ईशावास्यमिदं सर्वम् । अहं ब्रह्मास्मि" इति "सदेव सोम्येदमग्र आसीत् । ऐतदात्म्यमिदं सर्वम् । तत्त्वमसि" इति "सर्वं ह्येतद्ब्रह्म । अयमात्माब्रह्म" इत्यतः सर्वेषां वेदानां तात्पर्यविषयभूतोऽर्थः परं ब्रह्मैव भवति । तेन वेदविदो वेदार्थविदः वेदार्थमुक्तलक्षणं परं ब्रह्म साक्षात् स्वात्मना ये विदुस्ते वेदविदो ब्रह्मविदो याज्ञवल्क्यादयः सर्वे यदक्षरं न क्षरति ज्ञानाज्ञानादिनाशतत्साधनेन न नश्यतीत्यक्षरं नित्यकूटस्थमसङ्गचिदेकरसमद्वितीयं यत्परं ब्रह्म "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वम्" इति श्रुत्युक्तरीत्याऽशेषविशेषापवादेन निष्कलं निष्क्रियं शान्तमनन्तमभिवदन्ति शिष्येभ्य उपदिशन्ति वीतरागाः निःशेषविनष्टरागादिदोषाः सम्यग्ज्ञानसंपन्ना यतयः "संप्राप्यैनमृषयो ज्ञानतृप्ताः" इति श्रुत्युक्तप्रकारेण यत्परं ब्रह्म विशन्ति प्राप्नुवन्ति यत्परं ब्रह्म गुरोर्ज्ञातुमिच्छन्तः सन्तो महान्तो ब्राह्मणाः "भूय एव तपसा ब्रह्मचर्येण श्रद्धया संवत्सरं संवत्स्यथ" इति श्रुत्युक्तरीत्या गुरुसंनिधौ ब्रह्मचर्यं चरन्ति । ब्रह्मचर्यं नाम दृष्टादृष्टसर्वविषयसुखवैमुख्येनाहारादिनियमेन स्वधर्मेण च श्रद्धया भक्त्या च सद्गुरुसंनिधौ वेदान्तश्रवणमेव, तत्कुर्वन्ति । तदक्षरसंज्ञितं पदं ज्ञानेन पद्यते प्राप्यत इति पदं परं ब्रह्म ते तुभ्यं संग्रहेण परस्तस्मात्तु भावोऽन्य इति संक्षेपेणैव प्रवक्ष्ये प्रकर्षेण कथयिष्यामीत्यर्थः ॥ ११ ॥

श्री० टी०—केवलादभ्यासयोगादपि प्रणवाधारमभ्यासमन्तरङ्गं विधित्सुः प्रतिजानीते—यदक्षरमिति ।

यदक्षरं वेदान्तज्ञा वदन्ति " एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इति श्रुतेः। वीतो रागो येभ्यस्ते वीतरागा यतयः प्रयत्नवन्तो यद्विशन्ति यज्ज्ञातुमिच्छन्तो गुरुकुले ब्रह्मचर्यं चरन्ति तत्ते तुभ्यं पदं पद्यते गम्यते इति पदं प्राप्यं संग्रहेण संक्षेपेण प्रवक्ष्ये तत्प्राप्त्युपायं कथयिष्यामीत्यर्थः ॥ ११ ॥

स० टी०–प्रणवेनाभिधानेन वेदोक्तेन प्रधानतः ॥ भगवत्स्मरणं कार्यमित्याह भगवान्स्वयम् ॥ १ ॥ अविनाशि यदोङ्काराभिधं ब्रह्म वदन्ति च । वेदार्थज्ञा भिदाभ्रान्तिं त्यक्त्वा मानविदो बुधाः ॥ २ ॥ यत्स्वात्मैक्यधिया धीरा निःस्पृहा यत्नतत्पराः ॥ विशन्ति मुक्तपुरुषैः प्राप्यत्वेन मतं पदम् ॥ ३ ॥ यदिच्छन्तः परिज्ञातुं नैष्ठिका ब्रह्मचारिणः ॥ ब्रह्मचर्यं गुरोरन्ते निवासादि चरन्त्यलम् ॥ ४ ॥ संक्षेपेण प्रवक्ष्यामि तत्तुभ्यं पदमैश्वरम् ॥ कथं तदक्षरं ज्ञेयं माभूरित्याकुलस्त्वतः ॥ ५ ॥ ११ ॥

भा० टी०–इदानीं येनकेनचिन्मन्त्रादिना ध्यानकाले भगवदनुस्मरणे प्राप्ते "स यो ह वै तद्भगवन्मनुष्येष्वाप्रायणं तमोङ्कारमभिध्यायीत कतमं वाव स तेन लोकं जयति तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः" इत्युपक्रम्य "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत, "प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते। अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् । अन्यत्र धर्मादन्यत्राधर्मात्" इति चोपक्रम्य "सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योम्" इत्येतदित्यादिवचनैः परस्य ब्रह्मणो वाचकरूपेण प्रतिमावत्प्रतीकरूपेण च परब्रह्मप्राप्तिसाधनत्वेन मन्दमध्यमबुद्धीनां विवक्षितस्योङ्कारोपासनस्य कालान्तरमुक्तिफलं यदुक्तं तदेवेहापीत्योङ्कारेण भगवान् स्मर्तव्य इत्याशयेनाह–यदित्यादिना । यदक्षरं न क्षरतीत्यक्षरमविनाशि वेदविदो वेदार्थज्ञा वदन्ति " तद्वा एतदक्षरं गार्गि ब्राह्मणा अभिवदन्ति " इतिश्रुतेः " अस्थूलमनण्वह्रस्वमदीर्घमशब्दमरूपमव्ययम् " इत्यादिना सर्वविशेषनिवृत्तत्वेनाभिवदन्तीत्यर्थः । न केवलमभिवदन्त्येवापि तु सम्यग्दर्शनप्राप्तौ यतयो यत्नशीलाः संन्यासिनो वीतः अपगतो राग इति उपलक्षणं रागादिर्येभ्यस्ते वीतरागाः रागस्यैवोपादानं तु द्वेषादीनां मूलभूतो राग एवेत्यभिप्रायेण। यद्विशन्ति प्रविशन्ति सम्यग्ज्ञानप्राप्तौ सत्यां यदिच्छन्तो ज्ञातुमिति शेषः। ब्रह्मचर्यं गुरौ चरन्ति "तदेतद्वेदानुवचनेन ब्राह्मणा विविदिषन्ति" इतिश्रुतेः तत्पदं ते संग्रहेण संक्षेपेण प्रवक्ष्ये कथयिष्यामि ॥ ११ ॥

प० टी०–अथाभ्यासेन प्राप्तव्यं स्थानं वक्तुं प्रतिजानीते–यदक्षरमिति । वेदविदो वेदार्थज्ञा याज्ञवल्क्यादयो यदक्षरमिति वदन्ति न क्षरतीत्यक्षरम् "अस्थूलमनण्वह्रस्वम्" इत्यादिश्रुत्या प्राङ्निरूपितम् । तथा यद्वीतरागा विरागवन्तो यतयः प्रयत्नशीला विशन्त्यात्माकारतया तिष्ठन्ति । तथा यदिच्छन्तो ज्ञातुमिच्छन्तो गुरूपदिष्टं ब्रह्मचर्यं चरन्ति । तत्ते तुभ्यं पदं पद्यते गम्यतेऽनेनेति पदं संग्रहेण संक्षेपेण प्रवक्ष्ये ॥ ११ ॥

रा० टी०–वायुजयादिमतां मरणकाले कर्तव्यमेव सध्येयं स्पष्टयति–यदक्षरमिति । यद्वा केन प्रकारेण स्मर्तव्योऽसीतिप्रश्नस्योत्तरं सध्येयमुच्यते–यदक्षरमित्यादित्रिभिः । यत्पदमक्षरं सर्वथा नाशरहितं वेदविदो वदन्ति । यच्च पदं वीतरागाः अपगतकामादिदोषाः यतयः यत्नशीलाः विशन्ति प्रविशन्ति । यच्च पदमिच्छन्तः ब्रह्मचर्यं मनआदीनां ब्रह्मणि चरणं ब्रह्मचर्यं चरन्ति अनुतिष्ठन्ति । तत्पदं पद्यते मुमुक्षुभिः प्राप्यत इति पदम् । पदॢगतावित्यतः कर्मण्यकारप्रत्ययः । स्वरूपं संग्रहेण संक्षेपेण प्रवक्ष्ये, तत्पदस्मरणप्रकारं प्रवक्ष्यामीत्यर्थः ॥ ११ ॥

**सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ॥**
**मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥ १२ ॥**

**त० टी०**-तमेव प्रतिज्ञातमुपायं साङ्गमाह द्वाभ्याम्-**सर्वेति**। सर्वद्वाराणि श्रोत्रचक्षुरादीन्द्रियद्वाराणि संयम्य बाह्यविषयग्रहणायोग्यानि कृत्वा मनश्च हृदि निरुध्य बाह्यविषयसंकल्पशून्यं संपाद्य सर्वबाह्यक्रियाहेतुं प्राणं मूर्ध्नि भ्रूमध्यादुपरि ब्रह्मरन्ध्रे सुषुम्णामार्गेणावेश्य आत्मनो योगधारणां समाधिस्थैर्यमास्थितः सन् ॥ १२ ॥

**म० टी०**—तत्र प्रवक्ष्य इति प्रतिज्ञातमर्थं सोपकरणमाह द्वाभ्याम्—**सर्वद्वाराणी**त्यादिना। सर्वाणीन्द्रियद्वाराणि संयम्य स्वस्वविषयेभ्यः प्रत्याहृत्य विषयदोषदर्शनाभ्यासात्तद्विमुखतामापादितैः श्रोत्रादिभिः शब्दादिविषयग्रहणमकुर्वन्। बाह्येन्द्रियनिरोधेऽपि मनसः प्रचारः स्यादित्यत आह—मनो हृदि निरुध्य च अभ्यासवैराग्याभ्यां षष्ठे व्याख्याताभ्यां हृदयदेशे मनो निरुध्य निर्वृत्तिकतामापाद्य च अन्तरपि विषयचिन्तामकुर्वन्नित्यर्थः। एवं बहिरन्तरुपलब्धिद्वाराणि सर्वाणि संनिरुध्य क्रियाद्वारं प्राणमपि सर्वतो निगृह्य भूमिजयक्रमेण मूर्ध्न्याधाय भ्रुवोर्मध्ये तदुपरि च गुरूपदिष्टमार्गेणावेश्यात्मनो योगधारणामात्मविषयसमाधिरूपां धारणामास्थितः। आत्मन इति देवतादिव्यावृत्त्यर्थम् ॥ १२ ॥

**शं० टी०**—स तं परं पुरुषमुपैति दिव्यमिति योगिप्राप्यवस्तुवर्णनप्रसङ्गादागतं ज्ञानिप्राप्यस्य वस्तुनो वर्णनं यत्किंचित्कृत्वा प्रकृतमेव योगिप्रयाणं प्रतिपादयति—**सर्वेति**। सर्वद्वाराणि नासिके चक्षुषी श्रोत्रे मुखमधोबिलं लिङ्गं च वायोर्निर्गमद्वाराणि सर्वाणि संयम्य योगबलेन निरुध्य वहिरन्तर्व्यापृतिशीलं मनश्च हृदि निरुध्य प्राणवायुमपि सर्वाङ्गीणमाकृष्य हृदयमानीय एतं सुषुम्नया संयोज्य विशुद्धचक्रमनाहतचक्रमाज्ञाचक्रं चातिक्रम्य प्राणं मूर्ध्नि ब्रह्मरन्ध्रे द्वादशान्ते षोडशान्ते चाधाय योगधारणां योगप्रक्रियामुत्क्रमणगतिमास्थितः सन् योगी ॥ १२ ॥

**श्री० टी०**—प्रतिज्ञातमुपायं साङ्गमाह द्वाभ्याम्—**सर्वेति**। सर्वाणीन्द्रियद्वाराणि संयम्य प्रत्याहृत्य चक्षुरादिभिर्बाह्यविषयग्रहणमकुर्वन्नित्यर्थः। मनश्च हृदि निरुध्य बाह्यविषयस्मरणमकुर्वन्नित्यर्थः। मूर्ध्नि भ्रुवोर्मध्ये प्राणमाधाय योगस्य धारणां स्थैर्यमास्थित आश्रितवान्सन् ॥ १२ ॥

**स० टी०**—प्रत्याहृत्येन्द्रियद्वाराण्यखिलानि विवेकतः॥ सम्यक्समस्तभोगेभ्यो दोषदृष्ट्या विशेषतः ॥ १ ॥ वैराग्याभ्यासयोगेन निर्वृत्तिकं मनो यथा॥ भवेत्तथा स्वहृद्देशे संयम्यातिप्रयत्नतः ॥ २ ॥ क्रियाद्वारं तथा प्राणं सर्वतो विनिगृह्य च ॥ गुरूपदिष्टमार्गेण तथा भूमिजयक्रमात् ॥ ३ ॥ स्थापयित्वा भ्रुवोर्मध्ये धारणामात्मगोचराम् ॥ समाधिलक्षणां कर्तुं प्रवृत्तस्तां समास्थितः ॥ ४ ॥ १२ ॥

**भा० टी०**—सर्वाणि च शब्दादिविषयोपलब्धौ द्वाराणि श्रोत्रादीनीन्द्रियाणि संयम्य तत्तद्विषयेभ्यः संयमनं प्रत्याहरणं कृत्वा हृदि हृत्कमले मनो निरुध्य तत्तद्विषयस्मरणान्निरोधनं च कृत्वा निष्प्रचारमापाद्येति यावत्। तत्र वशीकृतेन मनसा हृदयादूर्ध्वगामिन्या नाड्योर्ध्वं भूमिकाजयक्रमेणारुह्यात्मनः स्वस्यप्राणं मूर्धन्याधाय संस्थाप्य योगधारणां धारयितुमास्थितः प्रवृत्तः सन्, आत्मनो योगधारणामिति वान्वयः ॥ १२ ॥

**प० टी०**—अथ प्रतिज्ञातमर्थं साङ्गमाह—**सर्वद्वाराणी**ति द्वाभ्याम्। सर्वद्वाराणीन्द्रियद्वाराणि संयम्य विषयेभ्यः प्रत्याहृत्य न केवलं नेत्रमीलनमात्रेण किंतु मनो हृदि निरुध्य बाह्यविषयानस्मरन्नित्यर्थः। मूर्ध्नि भ्रूमध्ये स्वस्य प्राणानाधायारोप्य योगधारणां स्थैर्यमास्थित आश्रितः। श्रुतिरपि ऋक्शाखायाम्—"युवा सुवासाः परिवीत आगात्स उ श्रेयान् भवति जायमानः। तं धीरासः कवय उन्नयन्ति स्वाध्यो ३ मनसा देवयन्तः" इति। भाष्यम्—बाल्यवार्धकाद्यैर्देहविकारैर्विरहितो युवा मुख्यप्राणो सुष्ठु वासः प्रावरणं यस्य सत्त्वाकारान्तःकरणवृत्तिप्रतिबिम्बितः परिवीतः शरीरावृतः सन्नगाज्जीवदशां प्राप्त उ इति निश्च-

येन स जायमानः प्रादुर्भूतः सन् श्रेयान् सत्कर्मनिरतो भवति । स स्वाध्यायः सुखेनाराध्यस्तमेवंविधं धीरासो दृढव्रताः कवयः क्रान्तदर्शिनो ज्ञानिनो देवयन्तो देवत्वं प्राप्तमिच्छन्तो मनसा सह उन्नयन्ति । सुषुम्ना-विवरेणोर्ध्वं नयन्ति । अत्रार्थे ब्राह्मणमपि—"युवा सुवासाः परिवीत आगादित्युत्तमया परिदधाति प्राणो वै युवा सुवासाः सोऽयं शरीरैः परिवृतः" इत्यादि । अथर्ववेदेऽप्याम्नातम्—"शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वगेता उत्क्रमणे भवन्ति" इति । भाष्यम्—शरीरान्तर्बहिः नाड्यः सन्ति । तासां मध्ये हृदयस्थव्यापारार्थमेकाधिकं शतं नाड्यः सन्ति । तासां मध्ये एका नाडी मूर्धा-नमभिलक्षीकृत्य निःसृता निर्गता तया नाड्योर्ध्वमायन् गच्छन् प्राणोऽमृतत्वमेति मुक्तो भवति । उत्क्रमणे प्राणोत्क्रमणे तु एता उक्तनाड्यो विष्वक् सर्वा अपि मूर्धानमभिनिस्सरन्ति । एवमुत्क्रान्तिसमये स्मर्त-व्योऽहमित्युपदिष्टम् ॥ १२ ॥

रा० टी०—एवं ध्येयस्वरूपं तत्स्मरणप्रकारोक्तिं च प्रतिज्ञायेदानीं तत्प्रकारमाह—सर्वेति । सर्वद्वाराणि वायुसंचारस्थानसर्वसुषुम्नोत्तरनाडीर्नियम्य हृदि हरति जगदिति हृन्नामके नारायणे । हरतेः क्विप् । "ह्रस्वस्य पिति कृति तुक्" । मनो निरुध्य चात्मनः प्राणं प्राणवायुं मूर्ध्नि सुषुम्नामार्गेण ब्रह्मरन्ध्रे आधाय योगधारणामास्थितः अखण्डस्मृतिरूपयोगधारण एवाभियुक्त इत्यर्थः ॥ १२ ॥

**ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ॥**
**यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥ १३ ॥**

**त० टी०—ओमित्येकमक्षरं ब्रह्मवाचकत्वाद्ब्रह्म व्याहरन्नुच्चरन् तद्वाच्यभूतं परं ब्रह्म मामनुस्मरन् मूर्धन्यया नाड्या देहं त्यजन् यः प्रयाति प्रकर्षेणार्चिरादिमार्गेण याति, स परमामुपनिषत्प्रतिपाद्यां गतिं प्राप्यं यथोपासनं मां प्राप्नोति ॥ १३ ॥**

म० टी०—ओमिति । ओमित्येकमक्षरं ब्रह्मवाचकत्वात्प्रतिमावद्ब्रह्मप्रतीकत्वाद्वा ब्रह्म व्याहरन्नुच्चरन् ओमिति व्याहरन्नित्येतावतैव निर्वाहे एकाक्षरमित्यनायासकथनेन स्तुत्यर्थं ओमिति व्याहरन् एकाक्षरं एकमद्वितीयमक्षरमविनाशि सर्वव्यापकं ब्रह्म माम् ओमित्यस्यार्थं स्मरन्निति वा तेन प्रणवं जपंस्तदभिधेय-भूतं च मां चिन्तयन्मूर्धन्यया नाड्या देहं त्यजन्यः प्रयाति स याति देवयानमार्गेण ब्रह्मलोकं गत्वा तद्भोगान्ते परमां प्रकृष्टां गतिं मद्रूपाम् । अत्र पतञ्जलिना 'तीव्रसंवेगानामासन्नः' समाधिलाभः इत्युक्त्वा 'ईश्वरप्रणिधानाद्वा' इत्युक्तं प्रणिधानं च व्याख्यातं 'तस्य वाचकः प्रणवः','तज्जपस्तदर्थभावनम्' इति 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति च । इह तु साक्षादेव ततः परमगतिलाभ इत्युक्तम् । तस्मादविरोधाय ओमित्येकाक्षरं ब्रह्म व्याहरन्मामनुस्मरन्नात्मनो योगधारणामास्थित इति व्याख्येयम् । विचित्रफलत्वोपप-त्तेर्वा न विरोधः ॥ १३ ॥

शं० टी०—ओमिति । एकं च तदक्षरं चैकाक्षरं ब्रह्मणो वाचकत्वाद्ब्रह्मेत्युच्यते प्रणवस्तमेकाक्षरमेव त्रिमात्रकं च दीर्घघण्टानादवदोमिति व्याहरन् वाचा प्रस्फुटमुच्चरन् तदर्थं कविं पुराणमित्युक्तलक्षणसंपन्नं मां परमेश्वरमनुस्मरन् मनसा ध्यायन् शीर्षकपालं भित्त्वा देहमत्र स्थूलं त्यजन्नेवं देहत्यागं कृत्वा यः सूक्ष्मेण प्रयाति पूर्वोक्तक्रमेण भूम्यादिकं भित्त्वा यो योगी गच्छति स क्रमेण परमां गतिं केवलतां याति विदेहमुक्तिं प्राप्नोतीत्यर्थः ॥ १३ ॥

श्री० टी०—ओमिति । ओमित्येकं यदक्षरं तदेव ब्रह्मवाचकत्वाद्वा प्रतिमादिवद्ब्रह्मप्रतीकत्वाद्वा ब्रह्म तद्व्याहरन्नुच्चारयन् तद्वाच्यं च मामनुस्मरन्नेव देहं त्यजन्यः प्रकर्षेण याति अर्चिरादिमार्गेण स परमां श्रेष्ठां गतिं मद्गतिं याति प्राप्नोति ॥ १३ ॥

स० टी०—ब्रह्मणो वाचकत्वात्तत्प्रतीकत्वात्समुच्चरन् ॥ ओमित्येकाक्षरं ब्रह्म सर्वव्यापकमद्वयम् ॥ १ ॥ ओमित्यस्यार्थमीशानं मां च सम्यगनुस्मरन् ॥ नाड्या मूर्धन्यया देहं त्यजन्धीरः प्रयाति यः ॥ २ ॥ स देवयानमार्गेण ब्रह्मलोकमुपासकः ॥ गत्वा भोगावसाने च मद्रूपां गतिमुत्तमाम् ॥ ३ ॥ प्राप्नोति ब्रह्मणा सार्धं संप्राप्ते प्रतिसंचरे ॥ ४ ॥ १३ ॥

भा० टी०—ओमिति । एकं च तदक्षरमेकाक्षरं ब्रह्म ब्रह्मणोऽभिधानभूतमभिधायकमिति यावत् । ओङ्कारं व्याहरन् उच्चारयन् तदभिधेयं परमात्मानं मामनुस्मरन्ननुचिन्तयन् । यत्तु ओमिति व्याहरन् एकाक्षरम् एकमक्षरम् एकमद्वितीयमक्षरमविनाशि सर्वव्यापकं ब्रह्म माम् ओमित्यस्यार्थं स्मरन्निति केचित् तन्न, एतद्वै सत्यकाम परं चापरं ब्रह्म यदोङ्कार इत्युपक्रम्य " यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत " इतिश्रुत्यनुसरणेन तद्विस्मरणस्य स्पष्टत्वात् । श्रुतिस्थत्रिमात्रशब्दस्यैकशब्देन व्याख्यानं भगवता क्रियते श्रुतौ त्रिमात्रेणेत्यस्य प्रथममकारेणाभिध्यायीत तत उकारेण ततो मकारेणेति भ्रमो मा भूदित्येतदर्थम्—ओमिति । त्रिमात्रमेकमेवाक्षरं व्याहरन् न तु मात्राभेदेनाक्षरत्रयं पृथक् पृथग्व्याहरन्नित्यर्थः । किंच 'रूढिर्योगमपहन्ति' इति न्यायात् अक्षरशब्द ओङ्कारेणैव संबध्यते तस्य वर्णे रूढत्वात् योगाश्रयणं तु रूढ्यसंभवे । तस्मात् श्रुत्यनुसारि व्यवहितान्वयरहितं रूढिपरित्यागदोषाग्रस्तं सर्वज्ञानां भाष्यकृतां व्याख्यानमेव हृद्यमिति दिक् । यः प्रयाति म्रियते देहं त्यजन् प्रयातीत्यनेनैव प्रयाणकालो मरणकाल उक्तः, देहं त्यजन्निति तद्विशेषणार्थं प्रयाणकाल आत्मनो देहत्यागमात्रं प्रयाणं न तु स्वरूपनाशेनेत्यर्थः । देहं त्यजन् यः प्रयाति स परमामुत्कृष्टामबाध्यां गतिं स्थानं मोक्षाख्यं ब्रह्म लोकप्राप्तिक्रमेण याति अभिगच्छति ॥ १३ ॥

प० टी०—अथ जाप्यं किमित्याह—ओमिति । ओमित्येकाक्षरं यस्य तदेकाक्षरं ब्रह्मैकाक्षरात्मको वेदो मात्रात्रयेण पूर्वोक्तयजुर्मन्त्रत्रयात्मैकस्तद्व्याहरन्नुच्चारयँस्तथा तदर्थरूपं मामनुस्मरन् यो जीवो देहं त्यजन् प्रकर्षेणार्चिर्मार्गेण यात्युत्क्रमते स परमां गतिं याति ॥ १३ ॥

रा० टी०—ओमिति । ओमित्येकमक्षरं वाचकं यस्य तदोमित्येकाक्षरं ब्रह्म परं ब्रह्म मां व्याहरन्ननुस्मरन् ओमित्युच्चार्य तद्वाच्यं ब्रह्मरूपं मामनुस्मरन्यः देहं त्यजन्प्रयाति प्रैति स याति परमां गतिम् ॥ १३ ॥

**अनन्यचेताः सततं यो मां स्मरति नित्यशः ।**
**तस्याहं सुलभः पार्थ नित्ययुक्तस्य योगिनः ॥ १४ ॥**

त० टी०—एवं सामान्ययोगिनो गतिरुक्ता इदानीं भगवदनन्यभक्तस्य योगिनः प्राप्तिप्रकारमाह—अनन्यचेता इति । नान्यस्मिन् चेतो यस्य सोऽनन्यचेता यः सततं निरन्तरमतिशयप्रेम्णा निरतिशयप्रियं मां स्मरति, तस्य नित्ययुक्तस्य नित्यं मद्योगं काङ्क्षमाणस्य निरतिशयमत्प्रियस्य योगिनोऽहमन्यैरचिन्त्यस्वरूपगुणैश्वर्योऽपि वात्सल्यकारुण्यसौहार्दादिगुणपरवशतया स्वभक्तदुःखवियोगाद्यसहमानः सुलभः सुखेनैव प्राप्यः । एतेन मदनन्यभक्तिहीनानां सर्वोपायवतामपि ब्रह्मलोकादिमत्समानैश्वर्यावधिफलावाप्तियोग्यत्वेऽपि नाहं सुलभो, भक्त्यैकवश्यस्वभावत्वात् " शृण्वन्तोऽपि बहवो यं न विद्युः, नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम् " इति श्रुतेः ' भक्तिरेवैनं दर्शयति भक्तिरेवैनं वर्धयति । भक्तिवशः पुरुषो भक्तिरेव भूयसी ' इत्यादेश्च ॥ १४ ॥

म० टी०—य एवं वायुनिरोधवैधुर्येण भ्रुवोर्मध्ये प्राणमावेश्य मूर्धन्यया नाड्या देहं त्यक्तुं स्वेच्छया न शक्नोति किंतु कर्मक्षयेणैव परवशो देहं त्यजति तस्य किं स्यादिति तदाह—अनन्यचेता इति । न विद्यते मदन्यविषये चेतो यस्य सोऽनन्यचेताः सततं निरन्तरं नित्यशो यावज्जीवं यो मां स्मरति तस्य स्ववशतया

परवशतया वा देहं त्यजतोऽपि नित्ययुक्तस्य सततसमाहितचित्तस्य योगिनः सुलभः सुखेन लभ्योऽहं परमेश्वरः इतरेषामतिदुर्लभोऽपि हे पार्थ तवाहमतिसुलभो मा भैषीरित्यभिप्रायः । अत्र तस्येति षष्ठी शेषे संबन्धसामान्ये । कर्तरि "न लोक–" इत्यादिना निषेधात् । अत्र चानन्यचेतस्त्वेन सत्कारोऽत्यादरः सततमिति नैरन्तर्यं नित्यश इति दीर्घकालत्वं स्मरणस्योक्तं तेन 'स तु दीर्घकालनैरन्तर्यसत्कारासेवितो दृढभूमिः' इति पातञ्जलं मतमनुसृतं भवति । तत्र स इत्यभ्यास उक्तोऽपि स्मरणपर्यवसायी तेन यावज्जीवं प्रतिक्षणं विक्षेपान्तरशून्यतया भगवदनुचिन्तनमेव परमगतिहेतुर्मूर्धन्यया नाड्या तु स्वेच्छया प्राणोत्क्रमणं भवतु न वेति नातीवाग्रहः ।। १४ ।।

**शं० टी०**–एवं परब्रह्मोपासकस्य परां गतिमुक्त्वा इदानीं श्रवणादिना विज्ञातात्मतत्त्वो यतिस्तीव्रमोक्षेच्छासमुदितवैराग्यवेगेन नित्यं निरन्तरं मां परं ब्रह्म योऽनुसंधत्ते तस्याहं सुलभ इति स्वकीयसौलभ्यं प्रतिपादयति–**अनन्यचेता इति** । अनन्यचेताः न विद्यते अन्यो ब्रह्मातिरिक्तो विषयो यस्य तदनन्यं विषयान्तरास्पृष्टं चेतो यस्य सोऽनन्यचेताः ब्रह्मण्येव समाहितचित्तः सन् यो ब्रह्मविन्नित्यशो नित्यं यावज्जीवं तत्रापि सततमविरामं सर्वदा मामेव परं ब्रह्म स्मरति ब्रह्मैवाहमिति स्वात्मनानुसंधत्ते तस्यैव नित्ययुक्तस्य सर्वदा मामेवानुसंदधतो योगिनो ब्रह्मनिष्ठस्य यतेरहं सुलभः सुतरामनायासेन लब्धुं शक्यः सुलभः अप्रयत्नेन प्राप्य इत्यर्थः । यस्मादस्य योगिन इव न प्राणायामाभ्यासक्लेशो नेन्द्रियनिग्रहश्रमो नापि मनोनिरोधायासो नापि च सुषुम्नयोर्ध्वगमनदुःखं नैव च शीर्षकपालभूम्याद्यावरणभेदव्यथा चास्तीषदपि किंत्वत्रैव तिष्ठतः प्रारब्धपरिक्षये स्वत एव प्राणेन्द्रियमनोबुद्ध्यादीनां सुषुप्ताविव ब्रह्मणि विलये सत्यप्रयत्नेन जीवः प्राज्ञमिव ब्रह्मविन्मां निर्विशेषं निष्कलं निष्क्रियं शान्तमनन्तमपूर्वमनपरमबाह्यमानन्दघनं परं ब्रह्म प्राप्नोति तस्माद्ब्रह्मविदो यतेर्ब्रह्मनिष्ठस्य मत्प्राप्तेः सुलभत्वादहं सुलभ इत्युच्यते । सुलभो नाम सुखप्राप्यस्ततस्त्वमनन्यचेताः सन् मां सर्वदा संस्मरेत्यर्थः ।। १४ ।।

**श्री० टी०**–एवं चान्तकाले धारणया मत्प्राप्तिर्नित्याभ्यासवत एव भवति नान्यस्येति पूर्वोक्तमेवानुस्मारयति–**अनन्येति** । नास्त्यन्यस्मिंश्चेतो यस्य तथाभूतः सन् यो मां सततं निरन्तरं नित्यशः प्रतिदिनं स्मरति तस्य नित्ययुक्तस्य समाहितस्याहं सुखेन लभ्योऽस्मि नान्यस्य ।। १४ ।।

**स० टी०**–य एवं स्वेच्छया देहं त्यक्तुं शक्नोति नो जनः ।। किंतु कर्मक्षयेणैव देहं परवशश्च सन् ।। १ ।। रोगादिभिस्त्यजत्यस्य किं स्यादित्युच्यते शृणु ।। मदन्यविषये चेतो नास्ति यस्य स एकधीः ।। २ ।। यो मां निरन्तरं यावज्जीवं स्मरति तस्य च ।। स्वेच्छया त्यजतो देहं पराधीनतयाथवा ।।३।। समाहितधियो नित्यं योगिनो मत्परस्य सः ।। अनायासेन लभ्योऽस्मि योऽन्येषामतिदुर्लभः ।। ४ ।। हे पार्थातिसुखेनैव लभ्यस्तेऽहं भयं त्यज ।। ५ ।। १४ ।।

**भा० टी०**–किंच–**अनन्येति** । अन्तकाले मत्स्मरणं मत्प्राप्तिकरं न सर्वस्य सुलभं किंतु योगी मां वासुदेवमनन्यचेता नान्यस्मिन्विषये चेतो यस्य सः अनेनात्यादर उक्तः, सततं सर्वदेति नैरन्तर्यमुक्तं, नित्यश इति दीर्घकालत्वं, तथाचात्यादरेण यावज्जीवं न तु षण्मासं वत्सरं वा नैरन्तर्येण यो मां परमेश्वरं स्मरति तस्य योगिनो नित्ययुक्तस्य सदा समाहितचित्तस्याहं सुलभः सुखेनानायासेन लभ्योऽन्तकालेऽनायासलब्धमत्स्मरणेनेति, यत एवमतोऽनन्यचेताः सन्मयि समाहितो भवेदित्याशयः । पार्थेतिसंबोधयन् तव तूक्तसाधनसौलभ्येन मत्प्राप्तिः सुलभेति सूचयति ।। १४ ।।

**प० टी०**–एवं मद्भक्तस्य तादृशीं दशामहमेव संपादयामीत्याह–**अनन्येति** । सततमनवरतं नान्यन्मदतिरिक्तं चेतसि यस्य स तथाभूतः सन् यो जीवद्दशायां नित्यशो मां स्मरति तस्य नित्ययुक्तस्य

समाहितमनसोऽहं सुलभः सुखेन प्राप्यो नान्यस्य, ध्यानादिक्लेशराहित्येनापि स्वयमाविर्भूय प्रकटो भवामीत्यर्थः ॥ १४ ॥

रा० टी०--अन्तकाले मत्स्मरणं नित्याभ्यासवत एव भवति नान्यथेति स्पष्टमाह-**अनन्यचेता** इति। सततमन्यविषयकचेतोहीनः सन् यो मां नित्यशः स्मरति तस्य नित्ययुक्तस्य नित्योपायवतः योगिनः संपूर्णोपायवतः अहं सुलभः अन्तकाले स्मृतिविषयो भवामीत्यर्थः। यद्वा सुलभः सुखेन लभ्यः प्राप्य इत्यर्थः ॥१४॥

**मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् ॥**
**नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ १५ ॥**

त० टी०--ननु यथा त्वदनन्यभक्तस्य भवान्सुलभस्तथाऽन्यदेवादिभक्तानामन्येऽपि सुलभाः 'यं यं वाऽपि स्मरन्भावं त्यजत्यन्ते कलेवरम्। तं तमेवैति' इत्युक्तत्वात्। एवं चेत्तर्ह्यन्यदेवादिफलप्राप्तेभ्योऽन्यभक्तेभ्यस्त्वद्भक्तानां को विशेष इति चेत्तत्राह—**मामिति**। मां सर्वेश्वरमानन्दघनं प्राप्य पुनरखिलगर्भवासादिदुःखालयं दुःखगृहमशाश्वतमस्थिरं जन्म प्राकृतदेहसंबन्धं नाप्नुवन्ति, यतो महात्मानः महाविवेकसंपन्नान्तःकरणा अत्यर्थमतिप्रियत्वेन मत्प्रसादकारणानि मदेकाराधनानि कर्माणि कृत्वा मदनुग्रहादेव परमां सर्वोत्कृष्टां संसिद्धिं मद्भावात्मिकां मुक्तिं गताः प्राप्ताः ॥ १५ ॥

म० टी०--भगवन्तं प्राप्ताः पुनरावर्तन्ते न वेति संदेहे नावर्तन्त इत्याह-**मामुपेत्येति**। मामीश्वरं प्राप्य पुनर्जन्म मनुष्यादिदेहसंबन्धं, कीदृशं दुःखालयं गर्भवासयोनिद्वारनिर्गमनाद्यनेकदुःखस्थानमशाश्वतमस्थिरं दृष्टनष्टप्रायं नाप्नुवन्ति पुनर्नावर्तन्त इत्यर्थः। यतो महात्मानः रजस्तमोमलराहितान्तःकरणाः शुद्धसत्त्वाः समुत्पन्नसम्यग्दर्शना मल्लोकभोगान्ते परमां सर्वोत्कृष्टां संसिद्धिं मुक्तिं गतास्ते, अत्र मां प्राप्य सिद्धिं गता इति वदतोपासकानां क्रममुक्तिर्दर्शिता ॥ १५ ॥

शं० टी०--सर्वकर्मसंन्यास्यैकाकी मौनी भैक्ष्यजीवी भूयो यत्र कुत्राप्युपविश्य सर्वमिदमहं च ब्रह्मैवेत्यध्यात्मदृष्ट्या सर्वदा सर्वं ब्रह्मैव यः पश्यति तस्य योगिनो ब्रह्मनिष्ठस्य यतेरहं सुलभ इति स्वप्राप्तिसुलभत्वं प्रतिपाद्येदानीं स्वं प्राप्तवतां फलमाह-**मामिति**। मां सच्चिदानन्दैकरसं परं ब्रह्मोपेत्य मदेकरसतां प्राप्य तत एव परमामनुत्तमां केवलानन्दमयीं संसिद्धिं मदात्मना स्थितिलक्षणां विदेहमुक्तिं गता महात्मानो महानुभावा यतयः, यद्वा महात्मानः महान्नित्यनिरन्तरब्रह्मनिष्ठया निःशेषविनष्टरजस्तमोगुणतत्कार्यत्वादतिस्वच्छतरत्वेन प्रकृष्टः केवलः शुद्धसत्त्वभावापन्न आत्मा मनो येषां ते महात्मानः सुप्रसन्नान्तःकरणाः तत एव परमामनुत्तमफलप्रदानोन्मुखीं संसिद्धिं सुखानुभूतौ दुःखानुभूतौ च वृत्तेर्ब्रह्मात्मना संस्थितिरेव संसिद्धिस्तां बहुजन्माभ्यस्तां सर्वास्वप्यवस्थास्वप्रतिबद्धामखण्डाकारवृत्तिलक्षणां गताः प्राप्ता यतयो ब्रह्मनिष्ठा मां कार्यकारणभावविकलं मायातत्कार्यलेशसंबन्धशून्यं सद्घनं चिद्घनमानन्दघनं परं ब्रह्मोपेत्य मद्भावं प्राप्य घटाकाशो महाकाशतामिव स्वयं ब्रह्मैकतां प्राप्य अशाश्वतं शाश्वतो ब्रह्मभावस्ततो विलक्षणत्वादशाश्वतं नश्वरं तत्रापि दुःखालयमाध्यात्मिकादिदुःखाश्रयं जन्म, अत्र जन्मना विकारेण विकारिजनिमच्छरीरं गृह्यते, विदेहमुक्तिं प्राप्ता ब्रह्मविदः पुनरनित्यं दुःखभूयिष्ठं शरीरं दैवं प्राजापत्यं वा गान्धर्वं वा मानुषं वान्यद्वा नाप्नुवन्ति कारणाभावादविद्याकामकर्माणि खलु शरीरप्राप्तिकारणं तेषां सर्वेषां सम्यग्ज्ञानमहाग्निज्वालाभिर्भस्मीभूतत्वात् मुक्ता न पुनरावर्तन्ते "न च पुनरावर्तते न च पुनरावर्तते" इति श्रुतेः। अभ्यासः संशयं विच्छिनत्तीत्यर्थः ॥ १५ ॥

श्री० टी०--यद्यप्येवं त्वं सुलभोऽसि ततः किमत आह-**मामिति**। उक्तलक्षणा महात्मानो मद्भक्ता

मां प्राप्य पुनर्दुःखाश्रयमनित्यं च जन्म न प्राप्नुवन्ति यतस्ते परमां सम्यक्सिद्धिं मोक्षमेव प्राप्ताः, पुनर्जन्मनो दुःखानां चालयं स्थानं ते मामुपेत्य न प्राप्नुवन्तीति वा ॥ १५ ॥

**स० टी०**–यस्मादेवं ततो नित्यं समाहितमना मयि ॥ अनन्यधीः स्यादामृत्योर्मुमुक्षुर्मत्परायणः ॥१॥ मद्भावं वैष्णवं तत्त्वं प्राप्य धीरा मुमुक्षवः ॥ नाप्नुवन्ति पुनर्देहसंबन्धं दुःखमन्दिरम् ॥ २ ॥ गर्भवासभगद्वारनिर्गमादिश्रमाकरम् ॥ दृष्टनष्टं भ्रमागारं जन्मदुःखालयं ततः ॥३॥ शुद्धसत्त्वा महात्मानो जातसम्यग्धियो बुधाः ॥ सर्वोत्कृष्टां विमोक्षाख्यां संसिद्धिं ते समागताः ॥ ४ ॥ १५ ॥

**भा० टी०**–किं त्वां प्राप्ताश्चन्द्रलोकादिव पुनरावर्तन्ते उत नेति संदिहानं प्रत्याह–**मामिति** । मामीश्वरमुपेत्य मद्भावं मत्सारूप्यादिकमापद्य पुनर्जन्म पुनरुत्पत्तिं पुनरावृत्तिमिति यावत् । किंविशिष्टं पुनर्जन्म न प्राप्नुवन्तीति तद्विशेषणमाह–दुःखालयं दुःखानामाध्यात्मिकाधिभौतिकाधिदैविकानामालयमालीयन्ते दुःखान्यस्मिन्निति दुःखालयं दुःखाश्रयमिति यावत् । तत्राध्यात्मिकं द्विविधं शारीरं मानसं च । वातपित्तश्लेष्मणां वैषम्यनिमित्तं शारीरं, कामक्रोधलोभमोहभयेर्ष्याविषयविशेषादर्शनादिनिबन्धनं मानसम् । सर्वं चैतदान्तरोपायसाध्यत्वादाध्यात्मिकम् मनुष्यपशुमृगपक्षिसरीसृपस्थावरनिमित्तमाधिभौतिकं यक्षराक्षसविनायकग्रहाद्यावेशनिबन्धनमाधिदैविकम् । आधिभौतिकमाधिदैविकं च दुःखं बाह्योपायसाध्यं पुनर्जन्मनो दुःखानां चालयं स्थानमिति अस्मिन्पक्षे मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यत इति वक्ष्यमाणाननुरोधो विशेष्याध्याहारापत्त्यादिदोषश्चापतत्यत आचार्यैरयं पक्ष उपेक्षितः । गर्भवासयोनिद्वारनिर्गमनादिदुःखानां दुःखत्रयेष्वन्तर्भावो बोध्यः । न केवलं दुःखालयम् अशाश्वतम् अशश्वद्भवमनवस्थितरूपं चेदृशं पुनर्जन्म नाप्नुवन्ति यतः महात्मानः विशुद्धचित्ताः तस्मिन्परमेश्वरे समुत्पन्नसम्यग्दर्शनाः संसिद्धिं परमां प्रकृष्टां मोक्षाभिधां गताः प्राप्ताः परमां सिद्धिं मोक्षं गता अगता अपि प्रत्यासन्नत्वात् गता एव । तथा ब्रह्मलोकगतान्प्रकृत्य स्मर्यते 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्' इति । प्रतिसंचरे ब्रह्मप्रलये परस्य चतुर्मुखस्यान्ते नाशे इत्यन्ये । अस्मिन्पक्षे आब्रह्मभुवनादित्युत्तरश्लोकविरोधो मुख्यार्थपरित्यागश्च बोध्यः ॥ १५ ॥

**प० टी०**–सुलभत्वे किं भवतीत्याह–**मामिति** । एवमुक्तलक्षणा महात्मानो महानुभावा मां परमात्मानं प्राप्य दुःखालयं सर्वदुःखनिदानमशाश्वतं नश्वरं पुनर्जन्म न प्राप्नुवन्ति, यतस्ते परमां सिद्धिं गताः ॥१५॥

**रा० टी०**–प्रागुक्तपरमगतिः केत्यतो मत्प्राप्तिरूपेति तदुपायोक्तिपूर्वं परमगतिविवरणार्थोऽयं श्लोकः । अत एव परमगतिः । सुलभ इत्युक्तभगवल्लाभश्च तत्प्राप्तिरूपमेव फलमिति भावेन तत्प्राप्तिं स्तौति–**मामिति** । महात्मानो ज्ञानिनो मामुपेत्य प्राप्य दुःखालयं दुःखाश्रयमशाश्वतमनित्यं नाशशिरस्कं जन्म देहयोगं पुनर्नाप्नुवन्ति । कुतः यतः परमां संसिद्धिं मोक्षलक्षणां गताः प्राप्ताः तत इति योजना ॥ १५ ॥

**आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥**
**मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते ॥ १६ ॥**

**त० टी०**–मदनन्यभक्तिहीनास्तु विविधधर्मानुष्ठानाद्ब्रह्मलोकपर्यन्तं प्राप्ता अपि पुनरावर्तन्त इत्याह–**आब्रह्मेति** । आब्रह्मभुवनात् ब्रह्मणो भुवनं ब्रह्मलोकस्तमभिव्याप्य सर्वे लोकास्तत्रस्था जनास्तद्भोगावसाने पुनरावर्तिनो भवन्ति, हे अर्जुन तेभ्यः स्वभक्तानां तुशब्देन महद्वैलक्षण्यं द्योतयति मां सर्वेश्वरं सत्यसंकल्पं निखिलजगदुत्पत्तिकारणं दोषास्पृष्टमाहात्म्यं भगवन्तमुपेत्य प्राप्य ये निर्वृता हे कौन्तेय तेषां जन्म न विद्यते ॥ १६ ॥

**म० टी०**—भगवन्तमुपागतानां सम्यग्दर्शिनामपुनरावृत्तौ कथितायां ततो विमुखानामसम्यग्दर्शिनां पुनरावृत्तिरर्थसिद्धेत्याह—**आब्रह्मेति**। आब्रह्मभुवनात् भवन्त्यत्र भूतानीति भुवनं लोकः अभिविधावाकारः ब्रह्मलोकेन सह सर्वेऽपि लोकाः मद्विमुखानामसम्यग्दर्शिनां भोगभूमयः पुनरावर्तिनः पुनरावर्तनशीलाः। ब्रह्मभवनादिति पाठे भवनं वासस्थानमिति स एवार्थः। हे अर्जुन स्वतःप्रसिद्धमहापौरुष। किं तद्वदेव त्वां प्राप्तानामपि पुनरावृत्तिर्नेत्याह—मामीश्वरमेकमुपेत्य तुशब्दो लोकान्तरवैलक्षण्यद्योतनार्थः अवधारणार्थो वा। मामेव प्राप्य निर्वृतानां हे कौन्तेय मातृतोऽपि प्रसिद्धमहानुभाव पुनर्जन्म न विद्यते पुनरावृत्तिर्नास्तीत्यर्थः। अत्रार्जुन कौन्तेयेति संबोधनद्वयेन स्वरूपतः कारणतश्च शुद्धिर्ज्ञानसंपत्तये सूचिता। अत्रेयं व्यवस्था ये क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नसम्यग्दर्शनानां ब्रह्मणा सह मोक्षः ये तु पञ्चाग्निविद्यादिभिरतत्क्रतवोऽपि तत्र गतास्तेषामवश्यंभावि पुनर्जन्म अत एव क्रममुक्त्यभिप्रायेण "ब्रह्मलोकमभिसंपद्यते न च पुनरावर्तते," "अनावृत्तिः शब्दात्" इति श्रुतिसूत्रयोरुपपत्तिः। इतरत्र "तेषामिह न पुनरावृत्तिः," "इमं मानवमावर्तं नावर्तन्ते" इतीहेममिति च विशेषणाद्गमनाधिकरणकल्पादन्यत्र पुनरावृत्तिः प्रतीयते॥ १६॥

**शं० टी०**—एवं ब्रह्मभावापन्नानां ब्रह्मविदां पुनरावृत्त्यभावं प्रतिपाद्य तदितरेषां श्रुतिशून्यानां तद्गतामप्यसम्यक्दर्शनवतां स्वेतरप्रातिमतां पुनरावृत्तिरस्त्येवेति सूचयन्नुक्तमेवार्थं पुनर्दृढीकरोति ब्रह्मविदां मुक्तिसिद्धावसंशयसिद्ध्यर्थं यतीनां सम्यग्दर्शनसिद्धौ प्रयत्नसूचनार्थं च—**आब्रह्मेति**। अत्र ब्रह्मशब्देन चतुर्मुख उच्यते 'सहस्रयुगपर्यन्तम्' इति कालनिर्णयश्रवणात्। आब्रह्मभुवनात् भवन्ति भूतान्यत्रेति सन्तीति वा भुवनं ब्रह्मणो भुवनं ब्रह्मभुवनं सत्यलोकः आब्रह्मभुवनात् ब्रह्मलोकमारभ्य सर्वे लोकाः पुनरावर्तिनः पुण्यवशात् प्राप्तान् पुनरावर्तयन्ति पुनर्भवमेव पुण्यक्षयान्ते प्रापयन्तीति पुनरावर्तिनः सत्यलोकादिलोकास्ततस्तल्लोकगतानां पुनरावृत्तिरस्त्येव, यावत्संपातमिति "नाकस्य पृष्ठे ते सुकृतेऽनुभूत्वेमं लोकं हीनतरं वा विशन्ति" इति श्रवणात्। न विद्यते अकं दुःखं यत्रेति सत्यलोकस्यैव नाकत्वं युक्तं, तदन्यत्र विद्यमानानां दैत्येभ्यः क्वचित् प्रलयाग्नेश्च दुःखसंभवादुक्तश्रुतिबलात् सत्यादिलोकगतानामपि पुनरावृत्तिः प्रामाणिकी। ननूक्तश्रुतिबलात् ब्रह्मभावं गतानां ब्रह्मविदामपि युक्ता पुनरावृत्तिरित्याशङ्कायां न "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ" इति। "यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते" इति "तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन" इति "सर्वं पाप्मानं तरति" इत्यादि श्रुतिभिर्ब्रह्मविदः सर्वपापप्रदाहो लेपाभावश्च प्रतिपाद्यते यतस्ततः 'कर्मणा जायते जन्तुः कर्मणैव प्रलीयते' इति 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इत्यादिश्रुतिस्मृत्युक्तप्रकारेण निर्दग्धकर्मणामेव शेषकर्मानुभूत्यै पुनरावृत्तिर्नतु ज्ञानाग्निनिर्दग्धाशेषकर्मणां ब्रह्मविदां तेषामावृत्त्यै कर्मशेषाभावान्न पुनरावृत्तिः प्रामाणिकी न च पुनरावर्तत इत्यनेकधा तन्निषेधाच्च। न तेषां पुतरावर्तनमस्तीति तुशब्देनैव व्यावर्तयन्नाह—**मामिति**। हे कौन्तेय शुद्धकुलोत्पन्नार्जुन मां सत्यज्ञानादिलक्षणं सदानन्दैकरसं परमात्मानमुपेत्य पूर्णात्मना तिष्ठतो ब्रह्मवित्तमस्य तु पुनर्जन्म पुनरावृत्तिर्न विद्यते नास्तीत्यर्थः। यद्वा मामुपेत्य तु विद्वान् पुनर्जन्म पुनरावृत्तिं न विद्यते न प्राप्नोति। विद सत्तायामिति धातोः प्राप्त्यर्थता वा विन्दतेर्वा दिवाद्यन्तःपातित्वं द्रष्टव्यम्॥ १६॥

**श्री० टी०**—एतदेव सर्वेष्वपि लोकेषु पुनरावृत्तिं दर्शयन्निर्धारयति—**आब्रह्मेति**। ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य सर्वे लोकाः पुनरावर्तनशीलाः ब्रह्मलोकस्यापि विनाशित्वात्तत्रत्यानामनुत्पन्नज्ञानानामवश्यं भावि पुनर्जन्म य एवं क्रममुक्तिफलाभिरुपासनाभिर्ब्रह्मलोकं प्राप्तास्तेषामेव तत्रोत्पन्नज्ञानानां ब्रह्मणा सह मोक्षो नान्येषाम्। तथाच 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृता-

त्मानः प्रविशन्ति परं पदम्' परस्यान्ते ब्रह्मणः परमायुषोऽन्ते कृतात्मानो ब्रह्मभावापादितमनोवृत्तयः कर्मद्वारेण येषां ब्रह्मलोकप्राप्तिस्तेषां न मोक्ष इति परिनिष्ठितिः, मामुपेत्य वर्तमानानां तु पुनर्जन्म नास्त्येवेत्यर्थः ॥ १६ ॥

**स० टी०**—भगवन्तं गतानां च सम्यग्ज्ञानवतां नृणाम् ॥ मुक्तिस्तद्विमुखानां तु पुनरावृत्तिरुच्यते ॥ १ ॥ ब्रह्मलोकेन सहिता लोका ये भोगभूमयः ॥ असम्यग्दर्शिनां सन्ति पुनरावर्तिनोऽखिलाः ॥ २ ॥ कर्मभिर्निर्मितानां हि स्थायित्वं नास्ति कर्हिचित् ॥ कर्मभिर्निर्मितास्ते स्युर्ब्रह्मलोकादयोऽखिलाः ॥ ३ ॥ मामनन्तपदं प्राप्य पुनरावृत्तिवर्जितम् ॥ न विद्यते पुनर्जन्म पुनरावृत्तिलक्षणम् ॥ ४ ॥ १६ ॥

**भा० टी०**—ये पुनर्मां न प्राप्नुवन्ति ब्रह्मलोकादिकं प्राप्ता अपि पुनरावर्तन्ते इत्याह—**आब्रह्मभुवनादिति**। ब्रह्मलोकसहिताः सर्वे लोकाः पुनरावर्तिनः पुनरावर्तनस्वभावाः मामीश्वरमेकमुपेत्य तु पुनर्जन्म पुनरुत्पत्तिः पुनरावृत्तिरिति यावत् न विद्यते। अर्जुनकौन्तेयेतिसंबोधनद्वयेन साक्षान्मद्भक्ताः मामुपेत्य न निवर्तन्ते इत्यत्र तु नास्ति संशयः ब्रह्मलोकं गता अपि ये अश्वमेधादिकर्मणा विगतपापत्वात्स्वच्छताभापन्नास्तत्र गतास्ते पुनरावर्तन्ते ये तु मत्संबन्धिहिरण्यगर्भाद्युपासकास्ते तत्रोत्पन्नसम्यग्दर्शनाः न पुनरावर्तन्ते इति व्यवस्थां सूचयति ॥ १६ ॥

**प० टी०**—अथावान्तरसिद्ध्या शाश्वतं सुखदं च देहमपेक्षमाणानां पुनरावृत्तिरस्तीत्याह—**आब्रह्मेति**। ब्रह्मणो भुवनं वासस्थानं ब्रह्मलोकस्तमभिव्याप्य ये लोका महर्लोकाद्या अपि पुनरावर्तिनो भवन्ति । ननु 'तपस्विनो दानशीला वीतरागास्तितिक्षवः। त्रिलोक्या उपरि स्थानं लभन्ते शोकवर्जितम्' इति पुराणोक्तत्वात्कथमुक्तं पुनरावर्तिन इति चेत्तत्रोच्यते, सुखेन चिरकालजीवितमपेक्ष्य सामवेदोक्तबृहद्रथन्तरवैरूपवैराजशार्करैवतनौन्धसकालेयाद्यष्टसामात्मिकामासन्दीं सस्तोमां महतीमृचमुपास्य साम्राज्यभौज्यस्वाराज्यवैराज्यादिक्रमेण पारमेष्ठ्यं सत्यलोकं प्राप्तास्तेऽप्यायुरहोरात्रनिद्राजागरादिलौकिकव्यवहारत्वात्पुनरावर्तन्त एव। श्रुतिरपि शातपथी—"यो वा एतदक्षरमविदित्वा गार्ग्यस्मिँल्लोके जुहोति ददाति तपस्यत्यपि बहूनि वर्षसहस्राण्यन्तवानेवास्य स लोको भवति" इति । भाष्यम्—अत्र वाचक्नवीं प्रति याज्ञवल्क्यो वदति भो गार्गि गर्गकन्ये वाचक्नवि यः पुरुष एतदनुभूयमानमक्षरं परं ब्रह्माविदित्वाज्ञात्वास्मिँल्लोके जुहोति होमं करोति ददाति तुलाभारेण, तपस्यति कृच्छ्रचान्द्रायणादिनैव यल्लोकार्थमेतावानुपायः स लोकोऽस्य पुरुषस्य बहून्यनेकानि वर्षसहस्राणि भुज्यमानोऽप्यन्तवानेव पुनश्च्यवनाय भवति। अथोक्तप्रमेयप्रतिपादकमृक्शाखीयं ब्राह्मणं च "अथात ऐन्द्रो महाभिषेकस्ते देवा अब्रुवन् सप्रजापतिका अयं वै देवतानाम्" इत्यादि । तथापस्तम्बसंहितास्वपि "सुपर्णोऽसि गरुत्मान् त्रिवृत्ते शिरो गायत्रं चक्षुः" इत्यादि। ग्रन्थविस्तरभयान्न लिख्यते शतश्लोकभाष्येऽस्माभिः सविस्तरं प्रोक्तमस्ति । अथ चोत्पन्नतत्त्वज्ञानिनस्ते मद्रूपतां प्राप्य विस्मृतसकलव्यवहाराः संसरणबीजभूतं जीवत्वं परिहाय ब्रह्मरूपास्तेषां पुनर्जन्म नास्तीत्याह—**मामुपेत्येति**। तथा च विस्मृतसकलव्यवहारत्वमेव मत्प्राप्त्यभिव्यञ्जकम्। श्रुतिरपि—"स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत नहास्योद्ग्रहणायेव स्याद्" इति । तथा "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते" इति ॥ १६ ॥

**रा० टी०**—ब्रह्मादीन्प्राप्तानामपि पुनर्जन्माभावात् किं विशिष्योच्यते मामुपेत्येत्यादि तत्राह—**आब्रह्मेति**। आङत्राभिविधौ। मेरुस्थब्रह्मसदनादारभ्यार्वाक्तनाः लोकाः तत्र गताः जना इति यावत्, पुनरावर्तिनः पुनर्भूमावागत्य जन्मादिमन्तो भवन्तीत्यर्थः। न तु मेरुस्थब्रह्मसदनादर्वाक्तनलोकस्थाः। पुनरावर्तिन इत्युक्त्या अर्थात् 'आमेरुब्रह्मसदनादाजनान्न जनिर्भुवि' इति स्मृत्या च तत उपरितनलोकस्थाः न

पुनरावर्तिन इति प्राप्तत्वात् । मामुपेत्य पुनर्जन्म नाप्नुवन्तीति कथमुच्यत इत्यतः तदेव पुनराह—मामिति । सत्यं मेरुस्थब्रह्मसदनाज्जनोलोकाद्योपरिस्थितानां जनिर्नेति । तथापि तल्लोकस्थत्वमात्रं न जन्माभावे प्रयोजकं किंतु तत्र स्थितं मामुपेत्य स्थितानामेव जन्म पुनर्न विद्यते अतः प्रागुक्तं नायुक्तमिति भावः । तदुक्तम् 'तथाप्यभावः सर्वत्र प्राप्यैव वसुदेवजम्' इति । अभावः जननाभाव इत्यर्थः । यत्तु आजनान्न जनिर्भुवीति जनोलोकादुपरिस्थितानामप्यपुनरावृत्त्युक्तेः ब्रह्मसदनादर्वाक् स्थिताः पुनरावर्तिनः तदुपरिस्थाः अपुनरावर्तिन इत्युक्तिरयुक्तेति चोद्यम् । तद्ब्रह्मभवनपदेन मेरुस्थब्रह्मसदनग्रहणात्परिहृतम् । सत्यलोकस्थब्रह्मसदनग्रहणेऽपि आब्रह्मभवनात्सत्यलोकस्थब्रह्मसदनादर्वाक्तनतपोलोकस्थजना अंशेन पुनरावर्तिन इत्यर्थः । न चाजनादिति वचनविरोधः तत्र स्मृतौ जनिर्नेत्यस्य कार्त्स्न्येन जनिर्नेत्यर्थकत्वात् । जनादिलोकस्थानामप्यंशेनापि भूमौ लयान्ते लयादौ च कार्त्स्न्येन जनिमृत्योर्भावात् । आब्रह्मभवनादित्यत्र तत उपर्यार्थिकजन्माभावोक्तिस्तु मुख्यजन्माद्यभावोपेतमुक्तजनविषया तेषामंशेनापि भूमौ जननाद्यभावादिति । एतेन आमेरु ब्रह्मसदनादाजनात्' इति स्मृत्या मेरुजनान्तरालिकानां जन्माजन्मनोरर्थात्प्राप्तेर्विरोध इति प्रत्युक्तं, अजनेर्मुक्तविषयत्वात् जनेरुक्तदिशा मुक्तेतरविषयत्वादिति । तदुक्तम् 'नियमाज्जन्मनोऽभावो मुक्तस्यैव' इत्यादि ॥ १६ ॥

**सहस्रयुगपर्यन्तमहर्यद्ब्रह्मणो विदुः ॥**
**रात्रिं युगसहस्रान्तां तेऽहोरात्रविदो जनाः ॥ १७ ॥**

त० टी०—ब्रह्मभुवनावधिगतानां लोकानां पुनरावर्तित्वे हेतुं कालपरिच्छिन्नत्वं दर्शयति—**सहस्रयुगपर्यन्तमिति** । सहस्रं युगानि पर्यन्तोऽवसानं यस्य तत् ब्रह्मणो यदहस्तद्ये विदुः, तथा युगसहस्रमन्तो यस्यास्तां रात्रिं च ये विदुस्ते जना अहोरात्रविदः बहुज्ञाः कालज्ञत्वात् । ये तु दिवाकरगत्यैवाहरादि जानन्ति न ते तथाऽहोरात्रविदः, अल्पज्ञा इत्यर्थः । अयं भावः मनुष्याणां यद्वर्षं तद्देवानामहोरात्रं भवति, तादृशैरहोरात्रैः पक्षमासादिक्रमेण द्वादशभिर्वर्षसहस्रैः ससंध्यं चतुर्युगं भवति, तथाविधं चतुर्युगसहस्रं ब्रह्मणोऽहर्दिनं भवति, तत्परिमाणिका च रात्रिस्तादृशैरहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणो द्विपरार्धसंज्ञकं परमायुर्भवति । अतः कालपरिच्छिन्नत्वेन तस्याप्यनित्यत्वात्तल्लोकगतानां पुनरावृत्तिर्युक्तैव । तथा तदधस्तान्महर्लोकादिगतानां पुनरावृत्तिर्बोध्या ॥ १७ ॥

म० टी०—ब्रह्मलोकसहिताः सर्वे लोकाः पुनरावर्तिनः कस्मात् कालपरिच्छिन्नत्वादित्याह—**सहस्रेति** । मनुष्यपरिमाणेन सहस्रयुगपर्यन्तं सहस्रं युगानि चतुर्युगानि पर्यन्तोऽवसानं यस्य तत् 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति हि पौराणिकं वचनम् । तादृशं ब्रह्मणः प्रजापतेरहर्दिनं यत् ये विदुः तथा रात्रिं युगसहस्रान्तां चतुर्युगसहस्रपर्यन्तां ये विदुरिति अनुवर्तते तेऽहोरात्रविदस्त एवाहोरात्रविदो योगिनो जनाः ये तु चन्द्रार्कगत्यैव विदुस्ते नाहोरात्रविदः स्वल्पदर्शित्वादित्यभिप्रायः ॥ १७ ॥

शं० टी०—एवं सर्वं प्राप्तवतः पुनरावृत्त्यभावं प्रतिपाद्येदानीं सत्यादिलोकेषु नित्यत्वनित्यसुखत्वानावर्तित्वबुद्ध्या पुण्यकर्माणि कृत्वा गत्वा पुनरागच्छन्तो निर्गच्छन्तः पुनः पुनर्जायमाना म्रियमाणाः सन्तः प्राणिनः सर्वे सर्वदा दुःखमेवानुभवन्ति प्ररोचनोक्तिभिर्मुह्यमाना अन्धपरंपरावत् गच्छन्तमनुगच्छन्ति च न कोऽप्यत्र वृत्तं विचारयति न तपति न विरज्यते अहो कष्टमज्ञत्वमिति तेषां सदसद्विवेकवैराग्यासत्त्यागसदुपादानप्रवृत्तिसिद्धये सत्यादिलोकानां कालपरिच्छिन्नानां ब्रह्मणो दिवारात्रिभ्यामाविर्भावं तिरोभावं च तद्दिवारात्रिभ्यां प्राणिनामपि सर्वेषामुत्पत्तिं प्रलयं च प्रतिपादयति—**सहस्रेति** त्रिभिः । अहोरात्रविदः 'दैविकानां युगानां च सहस्रपरिसंख्यया । ब्राह्ममेकमहर्ज्ञेयं तावती रात्रिरेव च' इत्युक्तरीत्या ब्रह्मणः

प्रजापतेरहोरात्रयोः कालपरिमाणमियदिति विदन्ति जानन्तीत्यहोरात्रविदो मन्वादयो ये महान्तः ब्रह्मणोऽहर्दिनं सहस्रयुगपर्यन्तं सहस्रसंख्याकैर्युगैर्दिव्यैः पर्यन्तं पर्यवसानं यस्य तत्सहस्रयुगपर्यन्तमुक्तयुगसहस्रपरिमाणकमेव यत् यथा विदुर्जानन्ति वदन्ति तथैव ते मन्वादयो रात्रिमपि युगसहस्रान्तां युगसहस्रपरिमाणवतीमेव विदुर्वदन्ति च ततो भ्रान्तैर्नित्यत्वेनाङ्गीकृतस्य सत्यलोकस्य प्रतीतिः सहस्रयुगपर्यन्तमेव ततः सत्यलोकस्यैवमनित्यत्वे सति ततोऽपराणां महरादीनां भूरादीनां चानित्यत्वे चाल्पसुखत्वे च का वार्तेति भावः ॥ १७ ॥

**श्री० टी०**—ननु च ' तपस्विनो दानशीला वीतरागास्तितिक्षवः । त्रिलोक्या उपरि स्थानं लभन्ते शोकवर्जितम्' इत्यादिपुराणवाक्यैस्त्रिलोक्याः सकाशान्महर्लोकादीनामुत्कृष्टत्वं गम्यते । विनाशित्वे च सर्वेषामविशिष्टे कथमसौ विशेषः स्यादित्याशङ्क्य बह्वल्पकालावस्थायित्वनिमित्तोऽसौ विशेष इत्याशयेन स्वमानेन शतवर्षायुषो ब्रह्मणोऽह्न्यहनि त्रिलोक्या उत्पत्तिर्निशि निशि च प्रलयो भवतीति दर्शयिष्यन् ब्रह्मणोऽहोरात्रयोः प्रमाणमाह—**सहस्रेति** । सहस्रं युगानि पर्यन्तोऽवसानं यस्य तद्ब्रह्मणो यदहस्तद्ये विदुः युगसहस्रमन्तो यस्यास्तां रात्रिं च योगबलेन ये विदुस्त एव सर्वज्ञा जना अहोरात्रविदः । येषां तु केवलं चन्द्रार्कगत्यैव ज्ञानं ते तथा अहोरात्रविदो न भवन्ति अल्पदर्शित्वात् । युगशब्देनात्र चतुर्युगमभिप्रेतम् 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते' इति विष्णुपुराणोक्तेः । ब्रह्मण इति च महर्लोकादिवासिनामप्युपलक्षणार्थम् । तत्रायं कालगणनाप्रकारः--मनुष्याणां यद्वर्षं तद्देवानामहोरात्रम् । तादृशैरहोरात्रैः पक्षमासादिकल्पनया द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति । चतुर्युगसहस्रं च ब्रह्मणो दिनम् । तावत्परिमाणैव रात्रिः । तादृशैश्चाहोरात्रैः पक्षमासादिक्रमेण वर्षशतं ब्रह्मणः परमायुरिति ॥ १७ ॥

**स० टी०**—लोकाः कालपरिच्छिन्नतया सर्वे विनश्वराः ॥ मत्प्राप्तिव्यतिरेकेण सुखं नेत्याह माधवः ॥ १ ॥ सहस्राणि युगान्येव यस्य पर्यवसानकम् ॥ तद्दिनं ब्रह्मणः स्रष्टुस्तावती रात्रिरिष्यते ॥ २ ॥ प्रजापतेर्दिनं रात्रिं विदुर्ये योगिनो जनाः ॥ अहोरात्रविदस्ते स्युर्नेतरे स्वल्पदर्शिनः ॥ ३ ॥ १७ ॥

**भा० टी०**—ब्रह्मलोकसहिता लोकाः पुनरावर्तिन इत्युक्तं तेषां कालपरिच्छिन्नत्वादिति हेतुनोपपादयति—**सहस्रमिति** । सहस्रं युगानि पर्यवसानं यस्याह्नस्तदहः सहस्रयुगपर्यन्तम् । युगशब्दोऽत्र चतुर्युगपरः 'चतुर्युगसहस्रं तु ब्रह्मणो दिनमुच्यते ' इति पुराणोक्तेः । चतुर्युगपरिमाणं तु मनुष्याणां यद्वर्षं तदेव देवानामहोरात्रम् । तादृशैरहोरात्रैः पक्षादिक्रमेण द्वादशभिर्वर्षसहस्रैश्चतुर्युगं भवति । तत्र वर्षचतुःसहस्रं कृतयुगं त्रिसहस्रं त्रेता द्विसहस्रं द्वापरं एकसहस्रं कलिः।अष्टशतं कृतयुगस्य पूर्वोत्तरसंध्ये । एवमग्रेऽपि युगक्रमेण षट्चतुर्द्विशतसंख्याकसंध्याक्रमो बोध्यः । सहस्रयगपर्यन्तं ब्रह्मणः प्रजापतेर्विराजोऽहर्दिनं विदुः, रात्रिमपि सहस्रयुगमन्तो यस्यास्तामहःपरिमाणामेव विदुः । के विदुरित्याह—तेऽहोरात्रविदो ब्रह्मणो दिनरात्रिकालसंख्याविदो जनाः न तु मनुष्यदिनरात्रिकालविद इत्यर्थः । यत एवं यथोक्ताहोरात्रावयवमासर्त्वयनसंवत्सरावयवशतसंख्यायुरवच्छिन्नः प्रजापतिस्तदन्तर्वर्तिलोका अपि यथायोग्यकालपरिच्छिन्ना अतो ब्रह्मलोकसहिताः सर्वे लोकाः पुनरावर्तिन इत्याशयः ॥ १७ ॥

**प० टी०**—अथ सत्यलोकव्यवहारमाह—**सहस्रेति** । यद्ब्रह्मणो यस्य ब्रह्मणः सहस्रयुगानि पर्यन्तोऽवसानं यस्यैवंविधमहर्दिनं विदुः । तथैव युगसहस्रान्तां रात्रिं विदुः । एवमहोरात्रं सोपपत्तिकत्वेन ये विदुस्ते जना अहोरात्रविदः । छान्दोग्येऽपि "सहस्रयुगपर्यन्तमहर्ब्राह्मं यदुच्यते" इति । अयमर्थः--कृतत्रेताद्वापरकलिसंज्ञकैश्चतुर्भिश्चरणैरेकैकं महायुगं, तानि सहस्रमितानि ब्रह्मणो दिनं, तावत्येव रात्रिस्तत्र सूर्यदर्शनादर्शननिमित्ते दिनरात्री भवतः, एवं सत्यलोकस्य सर्वलोकापेक्षयोच्चैःस्थितत्वात्तत्रत्याः सहस्रयुगपर्यन्तं सूर्य

पश्यन्ति तावदेव तेषां जाग्रदवस्थाऽनन्तरं तावत्कालमेव तेषां सुषुप्तिस्तत्र न पश्यन्ति । उक्तं च–'यदतिदूरगतो द्रुहिणः क्षितेः सततमाप्रलयं रविमीक्षते । भवति तावदयं शयितश्च तद्युगसहस्रयुगं द्युनिशं विधेः' इति । एवं मेरुशिरसि स्थितानां देवानां सौरवर्षमितमहोरात्रं पितॄणां तु चान्द्रमासेन मितम् । तथा लङ्कायमकोटिसिद्धपुरस्थितानां नित्यं त्रिंशद्घटीतुल्यं दिनं तावत्येव रात्रिः । एवमेतेषु नित्यं चरकालाभावाद्दिनरात्र्योः समत्वम् । इतरदेशेषु चरवशाद्दिनरात्र्योर्ह्रासवृद्धी भवेताम् । तेन प्रतिदेशं भिन्नाहोरात्रव्यवस्था । एवं यावत् षट्षष्टिमिता अक्षांशाश्चतुर्विंशतिर्लम्बांशा भवन्ति ततोऽनन्तरं चरादिव्यवहाराभावः । श्रुतिरपि ऋग्वेदे–"अपान्यदेत्यभ्यान्यदेति विश्वरूपे अहनी संचरेते । परिक्षितोस्तमो अन्या गुहाकरद्यौदुषाः शोशुचता रथेन" इति । भाष्यम्–विश्वरूपे बहुरूपे अहनी अहोरात्रे संचरेते सहाव्यवधानेन चरतः 'अहश्च कृष्णमहरर्जुनं च' इत्युक्तत्वादुभयोरहःशब्दवाच्यत्वम् । तयोर्मध्ये अन्यद्रात्रिरूपमहरपैति प्रतिलोमं गच्छति । अन्यद्दिवाख्यमहरभ्येत्याभिमुख्येनागच्छति । परिक्षितोः पर्यायेण निवसतोः प्राणिनामायुः क्षपयतोर्वा तयोरन्या रात्रिस्तमस्तमोरूपा गुहा पदार्थगूहनं करोति अन्योषाः शोशुचता शोभमानेन रथेन अद्यौत् प्रकाशयति । एवं पितृदेवसत्यलोकादिषु स्वस्वाहोरात्रपरिभाषया मासवर्षादिकल्पना । तथाच स्ववर्षपरिभाषया ब्रह्मणः शतवर्षमायुः स महाकल्पः । तदुक्तम्–'शतायुः शतानन्द एवं प्रदिष्टस्तदायुर्महाकल्प इत्युक्तमाद्यैः । यतोऽनादिमानेष कालस्ततोऽहं नवेद्यत्र पद्मोद्भवा ये गतास्तान्' इत्यादि मनसि धृत्वोक्तं पुनरावर्तिन इति । तथाहोरात्रविद इत्यनेन महाकल्पावान्तरकल्पमनुयुगचरणशकवर्षायनर्तुमासपक्षाहोरात्रयामनाडीविनाडीप्राणत्रुट्यादिकालावयवाभिज्ञत्वेन गोलज्ञा इत्युक्तम् ॥ १७ ॥

रा० टी०–मत्प्राप्तावेवापुनरावृत्तिरिति प्रतिज्ञामात्रेणोक्तस्य स्थापनायादौ सृष्टिप्रलयादिकर्तृत्वमात्मनो वक्तुमुपोद्घातमाह–सहस्रेति । सहस्रशब्दोऽत्र बहुशब्दपर्यायः । ये जनाः यत्परब्रह्मणोऽहस्तद्बहुयुगपर्यन्तं द्विपरार्धात्मकं विदुर्जानन्ति । ब्रह्मणः परब्रह्मणो रात्रिं च युगसहस्रान्तां बहुयुगान्तां द्विपरार्धात्मिकां विदुः तेऽहोरात्रविद इत्यर्थः । यदित्यस्य य इति वार्थः, य इति शेषो वा । परब्रह्मणः कूटस्थनित्यस्यापि सृष्ट्यादिसव्यापारनिर्व्यापारावस्थयोरुपचाराददहोरात्रत्वोक्तिः ॥ १७ ॥

**अव्यक्ताद्व्यक्तयः सर्वाः प्रभवन्त्यहरागमे ॥**
**रात्र्यागमे प्रलीयन्ते तत्रैवाव्यक्तसंज्ञके ॥ १८ ॥**

त० टी०–एवं कालपरिच्छिन्नत्वेन ब्रह्मलोकादिमहर्लोकान्तर्वर्तिनां पुनरावृत्तिर्निरूपिता । इदानीं स्वर्गादिलोकत्रयस्य ब्रह्मणोऽहर्निशयोरुत्पत्तिप्रलयावाह–अव्यक्तादिति । इहाव्यक्तशब्देन प्रकृतिपरिणामरूपं ब्रह्मणः शरीरमभिधीयते, अहरागमे ब्रह्मणः प्रबोधसमये अव्यक्ताद्ब्रह्मणो देहात् व्यक्तयः जीवानां देहेन्द्रियभोग्यभोगस्थानरूपाः प्रभवन्ति तत्तत्कर्मफलभोगायाभिव्यज्यन्ते । रात्र्यागमे तस्य स्वापकाले यतोऽव्यक्तात्संभूतास्तत्रैवाव्यक्तसंज्ञके प्रजापतिशरीरे प्रलीयन्ते ॥ १८ ॥

म० टी०–यथोक्तैरहोरात्रैः पक्षमासादिगणनया पूर्णं वर्षशतं प्रजापतेः परमायुरिति कालपरिच्छिन्नत्वेनानित्योऽसौ तेन तल्लोकात्पुनरावृत्तिर्युक्तैव ये तु ततोऽर्वाचीनास्तेषां तदहर्मात्रपरिच्छिन्नत्वात्तत्तल्लोकेभ्यः पुनरावृत्तिरिति किमु वक्तव्यमित्याह–अव्यक्तादिति । अत्र दैनंदिनसृष्टिप्रलययोरेव वक्तुमुपक्रान्तत्वात्तत्र चाकाशादीनां सत्त्वादव्यक्तशब्देनाव्याकृतावस्था नोच्यते किंतु प्रजापतेः स्वापावस्थैव स्वापावस्थः प्रजापतिरिति यावत् । अहरागमे प्रजापतेः प्रबोधसमये अव्यक्तात्तत्स्वापावस्थारूपाद्व्यक्तयः शरीरविषयादिरूपा भोगभूमयः प्रभवन्ति व्यवहारक्षमतयाऽभिव्यज्यन्ते रात्र्यागमे तस्य स्वापकाले पूर्वोक्ताः सर्वा अपि व्यक्तयः प्रलीयन्ते तिरो भवन्ति यत आविर्भूतास्तत्रैवाव्यक्तसंज्ञके कारणे प्रागुक्ते स्वापावस्थे प्रजापतौ ॥ १८ ॥

**शं० टी०**—एवं सत्यादिलोकानामनित्यत्वं प्रतिपाद्याधुना तल्लोकगतानां प्राणिनामातिदुःखमेवेत्याह—**अव्यक्तादिति**। कार्येण विनान्येन न व्यज्यत इत्यव्यक्तं ब्रह्मणः सुषुप्तमविद्यात्मकं नहि बुद्ध्यादिवत् सुषुप्तं व्यज्यते तत एवाव्यक्तमित्युच्यते मूलकारणाव्यक्तवद्ब्रह्म सुषुप्ताख्यमप्यव्यक्तं सर्वोत्पत्तिप्रलयकारणमव्यक्तत्वाऽविशेषात् प्रजापतेरहरागमे दिने प्राप्ते तस्मादुक्तलक्षणादव्यक्ताद्व्यक्तयः प्रमाणैर्व्यज्यन्ते गृह्यन्त इति व्यक्तयः सर्वाः स्थावरजङ्गमादिप्राणिकोटयः प्रभवन्ति बीजादङ्कुरवज्जायन्त इत्यर्थः। तथा ब्रह्मणो रात्र्यागमे रात्रौ प्राप्तायां तत्रैवाव्यक्तसंज्ञके अव्यक्तनाम्नि ब्रह्मणः सुषुप्ते प्रलीयन्ते व्रीह्यादयो बीज इव प्रकर्षेण लीयन्तेऽदर्शनं गच्छन्तीत्यर्थः। एतेन प्रजापतेरहोरात्रयोः सर्वप्राणिनामपरिहार्यं जननमरणदुःखमनन्तमिति सूचितम् ॥ १८ ॥

**श्री० टी०**—ततः किमत आह—**अव्यक्तादिति**। कार्यस्याव्यक्तं रूपं कारणात्मकं तस्मादव्यक्तात्कारणरूपात् व्यज्यन्ते अभिव्यज्यन्त इति व्यक्तयश्चराचराणि भूतानि प्रादुर्भवन्ति। कदा अहरागमे ब्रह्मणो दिनस्योपक्रमे तथा रात्रेरागमे ब्रह्मशयने तस्मिन्नेवाव्यक्तसंज्ञके कारणरूपे प्रलयं यान्ति। यद्वा तेऽहोरात्रविद इत्येतन्न विधीयते किंतु ते प्रसिद्धा अहोरात्रविदो जना यद्ब्रह्मणोऽहर्विदुस्तस्याह्न आगमे अव्यक्ताद्व्यक्तयः प्रभवन्ति यां च रात्रिं विदुस्तस्या रात्रेरागमे प्रलीयन्ते इति द्वयोरन्वयः ॥ १८ ॥

**स० टी०**—एवमुक्तैरहोरात्रैः पक्षमासादिसंख्यया ॥ पूर्णं वर्षशतं स्रष्टुः परमायुरितीरितम् ॥ १ ॥ तस्य कालपरिच्छिन्नतया नित्यत्वमीरितम् ॥ येऽर्वाग्जन्मलयाः सन्ति कुतस्तेषां स्थिरा गतिः ॥ २ ॥ तल्लोकप्राप्तिपर्यन्तेऽत्याह सर्वजगद्गुरुः ॥ स्वापावस्थाविधेरस्य प्रोक्तेहाव्यक्तशब्दतः ॥ ३ ॥ विधेः प्रबोधसमये स्वापावस्थात्मनस्ततः ॥ शरीरविषयाद्यात्मव्यक्तयो भोगभूमयः ॥ ४ ॥ व्यवहारक्षमत्वेन प्रभवन्त्यहरागमे ॥ स्वापकाले विधेरात्र्यागमे तत्रैव कारणे ॥ ५ ॥ अव्यक्तसंज्ञके सर्वा लीयन्ते व्यक्तयस्तथा ॥ ६ ॥ १८ ॥

**भा० टी०**—प्रजापतेरहोरात्रे यद्भवति तदाह—**अव्यक्तादिति**। अत्राव्यक्तशब्देन नाव्याकृतं गृह्यते दैनंदिनसृष्टिप्रलययोः प्रस्तुतत्वात्तत्र चाकाशादेरुत्पत्तिनाशानुक्तेस्तस्मादव्यक्तं प्रजापतेः स्वापावस्था। तस्माद्व्यज्यन्त इति व्यक्तयश्चराचरलक्षणा निखिलाः प्रजा भवन्ति आविर्भवन्ति न त्वसन्त्य उत्पद्यन्ते प्रलीयन्ते इत्यनुरोधात् युक्तियुक्तत्वाच्च सत्कार्यवादस्तावद्युक्तियुक्तो न त्वसत्कार्यवादः। तथाहि कारणव्यापारात्प्रागपि सत्कार्यं कारणव्यापारेण तर्हि किं साध्यत इति चेत्पूर्वं सत एव कार्यस्याविर्भाव इति ब्रूमः। यत्तु मृत्पिण्डादिध्वंसानन्तरं घटाद्युत्पत्तिर्दृश्यते न तत्र प्रध्वंसः कारणमपि तु भाव एव मृदाद्यवयवरूपः अन्यथाऽभावस्य सर्वत्र सुलभत्वेन सर्वत्र सर्वदा कार्योत्पत्तिः प्रसज्येत कारणव्यापारात्। असत्कार्यवादे तु असतः कार्यस्य सत्त्वं केनापि कर्तुमशक्यं, नहि शिल्पिलक्षेणापि सिकताभ्यस्तैलं कुड्यादेरङ्कुरमुत्पादयितुं शक्यं, किंच कार्येण संबद्धं ह्युपादानकारणं कार्यस्य जनकं संबन्धश्चासतः कार्यस्य कारणेन न संभवति। ननु मास्तु संबन्धोऽसंबद्धमेव कारणैः कार्यं कस्मान्न जन्यते तथा चासदेव कार्यमुत्पत्स्यत इति चेन्न, तथात्वेऽसंबद्धत्वाविशेषेण सर्वस्य कार्यजातस्य सर्वस्मात्कारणादुत्पत्तिप्रसङ्गात्। नन्वसंबद्धमपि सत्कारणं तदेव करोति यत्कारणं यत्र शक्तं, शक्तिश्च कार्यदर्शनादवगम्यते अतो नाव्यवस्थेति चेत्सा शक्तिः कारणाश्रया सर्वत्र उत शक्यमात्रे। आद्ये तदवस्थैवाव्यवस्था। न द्वितीयः असत्कार्यवादिनस्तव मते शक्यस्य कार्यस्यासत्त्वात्। ननु शक्तिभेद एवैतादृशो यतः यत्किंचिदेव कार्यमुत्पादयेत् न सर्वमिति चेत् स शक्तिविशेषः किं कार्यसंबद्धः कार्यमुत्पादयति उतासंबद्धो। नाद्यः असता संबन्धायोगात्। न द्वितीयः अव्यवस्थातादवस्थ्यादित्यन्यत्र विस्तरः। ब्रह्मणोऽह्नः आगमे तस्य प्रबोधकालेऽव्यक्ताद्व्यक्तयो भवन्ति तथा रात्र्यागमे ब्रह्मणः स्वापकाले सर्वा व्यक्तयोऽव्यक्तसंज्ञके पूर्वोक्ते प्रलीयन्ते ॥ १८ ॥

प० टी०—अथ यदर्थमेतावानुपक्रमस्तदाह—अव्यक्तादिति द्वाभ्याम्। कार्यस्याव्यक्तरूपं कारणात्मकं तस्मादव्यक्तात्कारणरूपात्सकाशात्सर्वा नानारूपकर्मात्मिका व्यक्तयः स्वरूपाण्यहरागमे ब्रह्मणो जाग्रदवस्थोपलक्षिते दिनारम्भे प्रभवन्ति प्रादुर्भवन्ति। तथा तस्यैव सुषुप्त्युपलक्षिते रात्र्यागमे तत्रैवाव्यक्तसंज्ञके विलीयन्ते। यस्य कस्यचित्कार्यस्य स्वकारणे लय इति प्रसिद्धम्। अस्मिन्नर्थे शातपथ्यः श्रुतयः पूर्वदर्शिता एव। इदानीमृक्शाखीयाः श्रुतयश्च—"ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत। ततो रात्र्यजायत ततः समुद्रो अर्णवः। समुद्रादर्णवादधि संवत्सरोऽजायत। अहोरात्राणि विदधद्विश्वस्य मिषतो वशी। सूर्याचन्द्रमसौ धाता यथा पूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः" इति। भाष्यम्—ऋतं सत्यसंकल्पः, सत्यं यथार्थभाषणम्। अभीद्धादभितः प्रकाशमानात्परमेश्वरादधिजायते अधिकत्वेनोत्कर्षेण जायते। प्रथमं जगत्स्रक्ष्यामिति संकल्पः। अनन्तरं बहु स्यां प्रजायेयेति सत्यप्रतिज्ञा समुत्पन्नेत्यर्थः। किंभूतादभीद्धात्तपसस्तपोरूपात् सृष्ट्यर्थं तपः कृतवतः। "स तपोऽतप्यत स तपस्तप्त्वा" इति श्रुतेः। ततो रात्रिरजायत रात्रिशब्देन काल उपलक्षितः सृष्टेर्निमित्तभूतः कालोऽप्याविर्भूतः। ततोऽनन्तरं समुदयति व्याप्नोतीति समुद्र आकाशदिगादिपदार्थ आसीत्। ततोऽर्णवः सागर आसीत्। ततः पूर्वोक्तप्रकारेण रूपकालात्संवत्सरः सृष्ट्यादौ तावदहोरात्रनिमित्तभूतः समयोपाधिरूपः संवत्सरात्मकः प्रजापतिरजायत "स एव संवत्सरः प्रजापतिः षोडशकलः" इति श्रुतेः। ततोऽहोरात्रिकं धाता स्रष्टा यथापूर्वं प्राचीनदिनादौ यथा कल्पयत्तथैवाद्यतने दिनादावकल्पयत् कल्पितवान्। किं तत् अहोरात्राणि तत्कारणीभूतौ सूर्याचन्द्रमसौ दिवं पृथिवीमन्तरिक्षमाकाशं स्वः स्वर्लोकं च। किंभूतः, मिषतो जागरादौ पश्यतो विश्वस्य सर्वलोकस्य वशी वशवर्ती, स्वत एव यथापूर्वं दर्शयतीत्यर्थः। अनया दृश्यप्रपञ्चस्य काल्पनिकत्वमुपपादितम्। तथा "नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम्" इति। भाष्यम्—जायमानः प्रादुर्भूतोऽह्नां केतुः सूर्य उषसां प्रातःकालानामग्रमुदयाचलमस्तकमेत्य प्राप्य नवो नवो भवति नवीन एवोत्पद्यते। तथा कण्वोपनिषत्सु "अथैष श्लोको भवति यतश्चोदेति सूर्योऽस्तं यत्र च गच्छति प्राणाद्वा एष उदेति प्राणेऽस्तमेति तं देवाश्चक्रिरे धर्मं स एवाद्य स उश्व" इति। भाष्यम्—पूर्वश्रुतौ चक्षुरादिकमात्मानुभवेनोपयुज्यते किं त्वसदेव विषयीकरोतीत्यत्रोपपत्तिश्रुतिरेव दर्शयति "तदैष श्लोको भवति" इति। तत्तत्रार्थे एष श्लोको वेदोपजीव्यः प्रसिद्धो मन्त्रोऽस्तीत्याह—सूर्य इति। सूर्यो यत्रास्तं गच्छति यतश्चोदयं प्राप्नोति तत्किं वस्त्विति विचार्यमाणे एष सूर्यः प्राणात् मुख्यप्राणात् सूत्रात्मनः सकाशादुदेति उदयं प्राप्नोति। ततस्तस्मिन् प्राणेऽस्तमेति लयं प्राप्नोति। एवं सति द्योतयन्त्यर्थान् प्रकाशयन्ति देवाश्चक्षुराद्यास्तमुदयास्तलक्षणं धर्मं नैसर्गिकं चक्रिरे मेनिरे। कथं स एव सूर्योऽद्य समुदितस्तथा स एव श्व उत्तरदिन इति। अत्रैतदुक्तं भवति—प्रत्यहमनुभूयमानौ सूर्योदयास्तौ न पारमार्थिकौ किंत्वापेक्षिकौ नेत्रगतावुदयास्तौ सूर्ये कल्प्येते न वस्तुतो नह्यहमुदितोऽस्तमितो वेति सूर्यो वेत्ति। तदुक्तम् 'विचार्यमाणे तरणाविवाहनि' इति। एवं सत्युदितानुदितहोमव्यवस्थाप्यापेक्षिकी ॥१८॥

रा० टी०—ततः किमित्यत आह—अव्यक्तादिति। ब्रह्मणोऽहरागमे महाप्रलयान्त इति यावत्। अव्यक्ताद्भगवतो व्यज्यन्त इति व्यक्तयः गुणवैषम्यादयः कार्यपदार्थाः प्रभवन्ति उत्पद्यन्ते। रात्र्यागमे व्यक्तसंज्ञके तत्रैव भगवति प्रलीयन्ते ॥ १८ ॥

**भूतग्रामः स एवायं भूत्वा भूत्वा प्रलीयते ॥**
**रात्र्यागमेऽवशः पार्थ प्रभवत्यहरागमे ॥ १९ ॥**

त० टी०—ननु ये प्राणिनः प्रलीयन्ते तेषां कृतकर्महानिः स्यात् ये चोत्पद्यन्ते तेषामकृताभ्यागमः

स्यादित्याशङ्कां वारयन् जन्ममरणादिदुःखात्मकेन संसारेणालमिति वैराग्यजननायाह—भूतग्राम इति। भूतानां चराचरप्राणिनां ग्रामः समूहो यः पूर्वस्मिन्कल्पे आसीत्स एवायमेतस्मिन्कल्पेऽहरागमे भूत्वा भूत्वा पुनः पुनर्देवमनुष्यादिभूत्पद्य रात्र्यागमे प्रलीयते, हे पार्थ ! पुनरवशः कर्मतन्त्रोऽहरागमे प्रभवति, प्रकर्षेण जायते प्रतिकल्पं न तस्य भेद इत्यर्थः। "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः" इति श्रुतेः। एवमुपरितना ब्रह्मलोकपर्यन्ता लोका ब्रह्मा च ब्रह्मणो वर्षशतात्मकाऽऽयुषोऽन्ते महाप्रलये पृथिव्यादिलयक्रमेण सर्वे परमात्मनि मय्येव लीयन्ते। तथा सुबालोपनिषद्याम्नायते "पृथिव्यप्सु प्रलीयते, आपस्तेजसि प्रलीयन्ते, तेजो वायौ प्रलीयते, वायुराकाशे प्रलीयते, आकाश इन्द्रियेषु, इन्द्रियाणि तन्मात्रेषु, तन्मात्राणि भूतादौ प्रलीयन्ते, भूतादिर्महति, महानव्यक्ते अव्यक्तमक्षरे, अक्षरं तमसि, तमः परे देवे एकी भवति" इति। तस्मात्परमात्मलोकव्यतिरिक्तस्य कृत्स्नस्य लोकस्योत्पत्तिप्रलयत्त्वात्तत्तल्लोकं प्राप्तानां हरिभक्तिहीनानां पुनरावृत्तिरवर्जनीया भगवन्तं प्राप्तानां तु न पुनरावृत्तिशङ्काऽपीति सिद्धम् ॥ १९ ॥

म० टी०—एवमाशुविनाशित्वेऽपि संसारस्य न निवृत्तिः क्लेशकर्मादिभिरवशतया पुनः पुनः प्रादुर्भावात्प्रादुर्भूतस्य च पुनः क्लेशादिवशेनैव तिरोभावात्संसारे विपरिवर्तमानानां सर्वेषामपि प्राणिनामस्वातन्त्र्यादवशानामेव जन्ममरणादिदुःखप्रबन्धसंबन्धादलमनेन संसारेणेति वैराग्योत्पत्त्यर्थं समाननामरूपत्वेन च पुनः पुनः प्रादुर्भावात् कृतनाशाकृताभ्यागमपरिहारार्थं चाऽऽह—भूतग्राम इति। भूतग्रामो भूतसमुदायः स्थावरजङ्गमलक्षणो यः पूर्वस्मिन्कल्पे स्थितः स एवायमेतस्मिन् कल्पे जायमानोऽपि न तु प्रतिकल्पमन्योन्यश्च असत्कार्यवादानभ्युपगमात् "सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो स्वः" इति श्रुतेः 'समाननामरूपत्वादावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च' इति न्यायाच। अवश इत्यविद्याकामकर्मादिपरतन्त्रः हे पार्थ स्पष्टमितरत् ॥ १९ ॥

शं० टी०—ननु तरङ्गबुद्बुदादिवद्ये ये प्राणिनो यदा यदा जनित्वा यद्यद्दुःखमनुभवन्ति तत्तद्दुःखं तेषामेव भवति न तु नवीनानां तदितरेषां कालान्तरे जातानां जनिष्यमाणानां चेति चेद्भवानत्र प्रष्टव्यः, पूर्वमसत एवेदानीं जातस्य सुखदुःखादिवैचित्र्यं प्रत्यक्षेणोपलभ्यते तत्कालस्वभावो वा प्राणिस्वभावो वा देशस्वभावो वा द्रव्यस्वभावो वा उत आधुनिककर्मस्वभावो वा। नाद्यः शीतवातादिवदेकदैव सर्वेषामपि तदागमप्रसङ्गात्। न द्वितीयः श्यामत्वरक्तत्वादिवत्सदानुगमप्रसङ्गात्। न तृतीयः सर्वेषामपि सर्वदा तदापत्तिप्रसङ्गात्। नापि चतुर्थः एकमहानदीजलपायिनां नरपशुमृगखगादीनां संततदुःखवैचित्र्यापत्तेः। नैव च पञ्चमः तर्णकस्याकर्मिणः सुखाद्यभावप्रसङ्गात्। तर्हि प्राक्तनकर्मवशादेवेति चेन्न, प्रागसज्जनिवादिनस्तव तदप्रसक्तेः। प्रत्यक्षप्रमाणवादी खलु भवान् प्रत्यक्षेणोपलभ्यमानस्यैतस्य गतिरुच्यतां तर्हि जीवादीनां प्राक्सद्भावमङ्गीकरिष्यामि सुखादिवैचित्र्यावगतेर्गत्यन्तरमपश्यन्नित्यसद्वादिनं जीवजगतोः प्राक्सद्भावमङ्गीकारयितुं कर्ममोक्षशास्त्रयोर्मुमुक्षुप्रवृत्तिसिद्ध्यर्थं जीववत्कर्मणां तत्कृतसंसारस्य चानादित्वं बोधयितुमिदमाह—भूतग्राम इति। पूर्वकल्पेषु यो भूतग्रामः प्राणिवर्गो जातः सोऽयमेवावशोऽस्वतन्त्रः स्वयमविद्ययास्मिताभिनिवेशपूर्वकं रागद्वेषाभ्यां कृतपुण्यापुण्यकर्माधीनः सन् तत्तत्कर्मफलानुभूत्यै कल्पे कल्पे भूत्वा भूत्वा तत्तत्फलमनुभूयानुभूय पुनः कृत्वाहरागमे प्रभवति रात्र्यागमे प्रलीयते नश्यति च। एवं घटीयन्त्रवत्पुण्यापुण्यकर्मवेगेन पुनःपुनर्जायते म्रियते चाध्यात्मिकादिदुःखेन व्यथते तपति च न कदाचिज्जन्ममरणप्रवाहपारं गच्छतीत्यर्थः ॥ १९ ॥

श्री० टी०—तत्र च कृतनाशाकृताभ्यागमशङ्कां वारयन् वैराग्यार्थं सृष्टिप्रलयप्रवाहस्याविच्छेदं दर्शयति—

भूतेति। भूतानां चराचरप्राणिनां ग्रामः समूहो यः प्रागासीत्स एवायमहरागमे भूत्वा भूत्वा रात्रेरागमे प्रलीयते प्रलीय पुनरप्यहरागमेऽवशः कर्मादिपरतन्त्रः प्रभवति नान्य इत्यर्थः ॥ १९ ॥

स० टी०—एवमाशुविनाशित्वेऽप्यस्य नास्ति परिक्षयः ॥ संसारदीर्घरोगस्य पञ्चक्लेशैः पुनः पुनः ॥ १ ॥ जायमानस्य तत्रैषां संसारे भ्रमतां नृणाम् ॥ अस्वातन्त्र्याज्जरामृत्युजन्मादिदुःखचक्रतः ॥ २ ॥ कदापि नास्ति विश्रान्तिरिति वैराग्यसिद्धये ॥ अकृताभ्यागमो दोषः कृतनाशस्तथापरः ॥ ३ ॥ स्याद्यदादिमती सृष्टिर्जायमाना विनश्वरा ॥ बन्धमोक्षव्यवस्थायाः साधकं शास्त्रमप्यथ ॥ ४ ॥ निष्फलं स्याद्यदा सृष्टिरादिमत्येव संमता ॥ एतद्दोषापनुत्त्यर्थं प्राहैवं श्रीरमापतिः ॥ ५ ॥ भूतग्रामो य एवासीत्पूर्वकल्पे स एव हि ॥ चराचरात्मको नान्यो भूत्वा भूत्वा प्रलीयते ॥ ६ ॥ निशागमे दिनादौ च स एवायं प्रजापते ॥ स्वाविद्यादिपराधीनो भूतग्रामो ह्यनेकधा ॥ ७ ॥ अविद्यादिक्लेशमूलकर्माशयवशादयम् ॥ भूतग्रामः परायत्तो जायते लीयते पुनः ॥ ८ ॥ स एवेति विरागादिसिद्धये हरिणोच्यते ॥ १९ ॥

भा० टी०—पूर्वकल्पीया एव प्रजा रात्र्यागमे अव्यक्ते प्रलीना अहरागमेऽव्यक्तादाविर्भवन्ति न तु ता विनष्टा अन्या एवास्मिन्कल्पे उत्पद्यन्ते इतीममर्थं स्फुटमाह—भूतग्राम इति । भूतसमुदायश्चराचरलक्षणो यः पूर्वस्मिन्कल्पे आसीत्स एवायं नान्यः अहरागमे पुनः पुनर्भूत्वा रात्र्यागमे पुनः पुनर्लीयते पुनरहरागमे प्रभवति प्रादुर्भवति अवशोऽविद्यादिपरतन्त्रः । पार्थेति संबोधयन् कुन्तीभोजसंबन्धेन यथा पृथैव कुन्ती संपन्ना न तु पृथान्यैव स्थितान्यैव कुन्ती जातेति ध्वनयति । अयमाशयः प्रतिकल्पं भूतग्रामस्याभिनवत्वेऽकृताभ्यागमकृतविप्रणाशदोषो बन्धमोक्षान्वयिन एकस्याभावात् बन्धमोक्षार्थस्य शास्त्रस्य प्रवृत्तिनिष्फलता चापतति तन्निरासार्थं भूतग्रामस्य प्रतिकल्पमैक्यमभ्युपेयम् । अविद्यास्मितारागद्वेषाभिनिवेशक्लेशमूलधर्माधर्माशयवशाच्चावशो भूतग्रामो भूत्वा भूत्वा प्रलीयत इत्यतोऽलमनेन संसारेणेति विरक्तो भूत्वा ज्ञानेन संसारोपरमं संपादयेदिति ॥ १९ ॥

प० टी०—एवं ये जीवास्तावद्रात्र्यागमेऽव्यक्ते स्वकारणे लीना भवन्ति त एव पुनर्दिवसारम्भे देहधारिणो भवन्तीत्याह—भूतग्राम इति । यो भूतग्रामो रात्र्यागमे स्वकारणेऽव्यक्ते लीयमानोऽभूत् स एवायं दिनादौ भूत्वा भूत्वा भूयः प्रादुर्भावं प्राप्य पुना रात्र्यागमे प्रलीयतेऽवशः कर्मपरतन्त्रः सन् पुनरहरागमे प्रभवति देहधारित्वमवलम्बते । तदुक्तमकुलागमे 'बहिर्मुखं पश्यति दृश्यजातमन्तर्मुखं पश्यति चित्स्वरूपम् । मध्ये तयोः स्वप्नमया हि सृष्टिरनादिरेवं मनसः स्वभावः' इति । टिप्पणिकासु 'अनिर्मिताः केनचिदीश्वरेण स्वाप्राः पदार्थाः प्रभवन्त्यकस्मात् । तस्मिन् क्षणे तज्जनितो जनस्य सत्यानुभूत्या सुखदुःखभोगः ॥ अनिर्मितः पूर्ववदाविरास्ते तद्वत्प्रपञ्चः स च जागरादौ । आसीत्पुरा चास्तमितः सुषुप्तावनादिसंस्कारवशं हि चेतः' इति ॥ १९ ॥

रा० टी०—महामहिमत्वख्यापनाय सृष्टिप्रलययोरविच्छेदमाह—भूतेति । प्राग्जन्मलयवत्त्वेनोक्तो यः स एवायं भूतग्रामश्चराचरसमुदायः ब्रह्मणोऽहरागमे प्रत्यहमिति यावत्, प्रभवति । भूत्वा भूत्वा चोत्पद्योत्पद्य रात्र्यागमेऽवशो भगवद्वशः सन्प्रलीयते, भूतग्रामो भूत्वा भूत्वा रात्र्यागमे प्रलीयते पुनरहरागमे प्रभवतीति वा योजना ॥ १९ ॥

**परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातनः ॥**
**यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ २० ॥**

त० टी०–प्रकृतिवियुक्तात्मस्वरूपं तु जन्ममरणादिभाववर्जितं हिरण्यगर्भादपि श्रेष्ठं तत्प्राप्तानामपि पुनरावृत्तिर्न भवतीत्याह–पर इति द्वाभ्याम् । तस्मात्पूर्वोक्ताच्चराचरभूतग्रामकारणाद्धिरण्यगर्भाख्याद्व्यक्तात्प्रकृतिसंसृष्टात्परः प्रकृतिवियुक्ततयोत्कृष्टो भावोऽन्यो भिन्नः अव्यक्तः शास्त्रमन्तरेण केनचित्प्रमाणेन न व्यज्यत इत्यव्यक्तः, सनातनः सदैकरूपतया नित्यः । नित्यत्वमेव साधयति–य इति । एतादृशो यो भावः स सर्वेषु भूतेषु स्थावरजङ्गमेषु नश्यत्सु अभावं गच्छत्सु न विनश्यति विनाशमभावं न प्राप्नोति ॥ २० ॥

म० टी०–एवमवशानामुत्पत्तिविनाशप्रदर्शनेनाब्रह्मभुवनाल्लोकाः पुनरावर्तिन इत्येतद्व्याख्यातमधुना मामुपेत्य पुनर्जन्म न विद्यत इत्येतद्व्याचष्टे द्वाभ्याम्–परस्तस्मादिति । तस्माच्चराचरस्थूलप्रपञ्चकारणभूताद्धिरण्यगर्भाख्यादव्यक्तात्परो व्यतिरिक्तः श्रेष्ठो वा तस्यापि कारणभूतः व्यतिरेकेऽपि सालक्षण्यं स्यादिति नेत्याह–अन्योऽत्यन्तविलक्षणः "न तस्य प्रतिमा अस्ति" इति श्रुतेः अव्यक्तो रूपादिहीनतया चक्षुराद्यगोचरो भावः कल्पितेषु सर्वेषु कार्येषु सद्रूपेणानुगतः अत एव सनातनो नित्यः तुशब्दो हेयादनित्यादव्यक्तादुपादेयत्वं नित्यस्याव्यक्तस्य वैलक्षण्यं सूचयति । एतादृशो यो भावः स हिरण्यगर्भ इव सर्वेषु भूतेषु नश्यत्स्वपि न विनश्यति उत्पद्यमानेष्वपि नोत्पद्यत इत्यर्थः । हिरण्यगर्भस्य तु कार्यस्य भूताभिमानित्वात्तदुत्पत्तिविनाशाभ्यां युक्तावेवोत्पत्तिविनाशौ न तु तदनभिमानिनोऽकार्यस्य परमेश्वरस्येति भावः ॥ २० ॥

शं० टी०–यस्मादेवं विषयसुखमोहग्रहग्रस्तानां दुःखपरंपरा तस्मात् विवेकिभिर्यथा मत्प्राप्तिः स्यात्तथा प्रयतितव्यमिति सूचयन्स्वस्याव्यक्ततत्कार्यलेशसंबन्धराहित्यं नित्यत्वं च प्रतिपादयति स्वं प्राप्तवतः संसारदुःखं पुनरावृत्तिश्च नास्तीति ज्ञापयितुम्–पर इति। तस्मात्पूर्वोक्तात् सर्वव्यक्तीनामुत्पत्तिप्रलयहेतोरव्यक्तात्त्वन्यो भिन्नो विलक्षणश्चाक्षराख्यो भावः परमात्मा स्वयमस्मादव्यक्तात्कारणाव्यक्ताच्च भिन्न एव भवति न व्यज्यते प्रमाणैः सर्वैर्मातुं न शक्यत इत्यव्यक्तोऽप्रमेयश्च । ननु उभयोरप्यव्यक्तत्वाविशेषात् कथमेतस्य तद्विलक्षणत्वमित्यत आह–पर इति । परः प्रकृष्टोऽनुत्तम इत्यर्थः "अव्यक्तात्तु परः पुरुषः" इति श्रुतेः । ननु कस्माद्धेतोरक्षरस्याव्यक्तात् प्रकृष्टत्वमित्यत आह–सनातन इति । सनातनोऽनादिर्नित्य इत्यर्थः । नित्यत्वं नाम भावस्य जन्मादिविक्रियानाश्रयत्वमेव।नैवैतदव्यक्तस्यास्ति सच्छब्दवाच्यमविद्याशबलं ब्रह्म"ब्रह्मणोऽव्यक्तम्"इत्यव्यक्तस्य प्रथमविकारत्वश्रवणाद्विकारित्वाऽवरत्वादिधर्मैरक्षरसालक्षण्यमनुपपन्नमित्यर्थः । यदुक्तमक्षरस्य नित्यत्वं तदेव विस्पष्टयति–य इति । यः सनातनोऽव्यक्तोऽक्षरः परमात्मा स सर्वेषु भूतेष्वव्यक्तमहदादिषु कालतो ज्ञानतो वा नश्यत्स्वभावं गतेषु सत्सु स्वतो वा परतो वा न विनश्यति कदापि नाशं न प्राप्नोतीत्यर्थः ॥ २० ॥

श्री० टी०–लोकानामनित्यत्वं प्रपञ्च्य परमेश्वरस्वरूपस्य नित्यत्वं प्रपञ्चयति–पर इति द्वाभ्याम् । तस्माच्चराचरकारणभूतादव्यक्तात्परस्तस्यापि कारणभूतो योऽन्यस्तद्विलक्षणोऽव्यक्तश्चक्षुराद्यगोचरो भावः सनातनोऽनादिः स तु सर्वेषु कार्यकारणलक्षणेषु भूतेषु नश्यत्स्वपि न विनश्यति ॥ २० ॥

स० टी०–एवं क्लेशवतां जन्ममृत्युचक्रे प्रवर्तनम् ॥ भगवद्भक्तिहीनानां व्याख्यातमधुना तु ये ॥ १ ॥ भगवद्भक्तिनिष्ठास्ते यं प्राप्यास्मिन्भवाम्बुधौ ॥ न पतन्ति विमुक्तास्तं स्वरूपं दर्शयत्यजः ॥ २ ॥ तस्माच्चराचरस्थूलजगद्धेतोर्विधेः परः ॥ व्यतिरिक्तोऽथवा श्रेष्ठो हेतुभूतो विधेरपि ॥ ३ ॥ न तस्य प्रतिमास्तीति श्रुत्यात्यन्तविलक्षणः ॥ अव्यक्त इन्द्रियातीतो रूपस्पर्शादिवर्जितः ॥ ४ ॥ अध्यस्तेषु च सर्वेषु कार्येष्वनुगतोऽक्षरः ॥ नित्यो य ईदृशो भावो नश्यत्स्वप्यखिलेषु च ॥ ५ ॥ भूतेषु जायमानेषु न नश्यति न जायते ॥ स्रष्टुर्हिरण्यगर्भस्य कार्यस्यात्राभिमानिनः ॥ ६ ॥ तदुत्पत्तिविनाशाभ्यां युक्ते स्तो नाशजन्मनी ॥ अधिष्ठानस्य सत्यस्याव्यक्तस्याकृत्रिमस्य च ॥ ७ ॥ परमेश्वरस्य विष्णोर्नास्ति जन्मादिविक्रिया ॥ ८ ॥ २० ॥

भा० टी०–अक्षरं ब्रह्म परमामित्युपक्रम्योमित्येकाक्षरं ब्रह्मेत्यादिना तत्प्राप्त्युपाय उपदिष्टः। अथेदानीमक्षरस्य प्राप्यस्य स्वरूपमाह–पर इत्यादिना। तस्मात्त्वव्यक्ताद्भूतग्रामबीजभूताविद्यालक्षणात्परो व्यतिरिक्तो भिन्नः अव्यक्तात् हिरण्यगर्भादिति वा अस्मिन्पक्षे "महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इतिश्रुत्या हिरण्यगर्भान्महानात्मेत्यनेन प्रतिपादितात्परत्वमव्यक्तशब्दप्रतिपादितायाः मूलप्रकृतेरुक्तं तदनुरोधेनात्रापि हिरण्यगर्भात्परस्य मूलप्रकृतिबोधकस्याव्यक्तशब्दस्य ग्रहणं प्राप्नोतीति इमं पक्षं विहायाचार्यैः "अव्यक्तात्पुरुषः परः" इतिश्रुतिरनुसृता। तुशब्दः संसारबीजभूतान्मूलप्रकृतिशब्दवाच्यादव्यक्तान्मोक्षाख्यस्य सकलप्रपञ्चशून्यस्य परमानन्दैकघनस्य परमात्मनोऽव्यक्तस्याक्षरस्य वैलक्षण्यद्योतनार्थः। भावः सत्तास्वरूपः अक्षराख्यं परं ब्रह्म स्वरूपतो व्यतिरिक्तत्वेऽपि लक्षणैक्यव्यावृत्त्यर्थं तुना द्योतितमर्थं तद्वाचकेनाप्याहान्य इति विलक्षण इत्यर्थः। यद्वा परशब्दस्य प्रकृष्टवाचिनो भावे विशेषणार्थत्वेन पुनरुक्तिशङ्कैव नास्तीत्येके। आचार्यैस्तु निकृष्टात्प्रकृष्टस्य विलक्षणत्वव्यतिरिक्तत्वध्रौव्यात्तुशब्दान्यशब्दयोरुभयोरपि वैयर्थ्यमभिप्रेत्य सुगमत्वाद्वायं पक्षस्त्यक्तः। वैलक्षण्यं स्फुटयति–सनातनः चिरन्तनः यः सर्वेषु भूतेषु हि हिरण्यगर्भादिषु विनश्यत्सु न विनश्यति स भावः परमात्मेत्यर्थः। तथाच सनातनत्वे सति अनश्वरत्वं परमात्मलक्षणं नाव्यक्त इति भावः॥ २०॥

प० टी०–अथ सर्वकारणीभूतस्य परमेश्वरस्य सकलव्यवहारातीतस्य शाश्वतत्वमाह–पर इति। तस्मात्कार्यकरणसंघातरूपादव्यक्तात्सकाशात्पर उत्कृष्टस्तत्कारणीभूतस्तस्मादन्यस्तद्विलक्षणश्चाव्यक्तश्चक्षुराद्यगोचरः सनातनोऽनादिर्यो भावश्चालकः पदार्थोऽस्ति स सर्वेषु भूतेषु नश्यत्सु न विनश्यति 'योऽवशिष्यते सोऽस्म्यहम्' इति स्मृतेः। तदुक्तमथर्ववल्लीषु "इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम्। सत्त्वादपि महानात्मा महतोऽव्यक्तमुत्तमम्। अव्यक्तात्परः पुरुषो व्यापको लिङ्ग एव च। यज्ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति" इति। ऋक्शाखायामपि–"अपश्यमस्य महतो महित्वममर्त्यस्य मर्त्यासु विक्षु। नानाहनू विभृते संभरेते असिन्वती बप्सती भूर्यत्तः" इति। भाष्यम्–अस्य महतः सर्वोत्कृष्टस्य महित्वं व्यापकत्वम् अपश्यमद्राक्षम्। किंभूतस्य मर्त्यासु मरणधर्मिकासु विक्षु प्रजास्वमर्त्यस्य सनातनस्य। येनेत्यध्याहारः येन महित्वेन कृत्वा नानाहनू प्राणिनामुत्तराधरे हनू शिप्रे विभृते भरणकृते दन्तैः संभरेते परिपूर्णे असिन्वती जिह्वया ग्रासं कलयन्त्यौ बप्सती दन्तैश्चूर्णयन्त्यौ भूरि यथा भवति तथा अत्तो भक्षयन्त्यौ गिलन्त्यौ- अचेतननानाशरीरेषु यद्भक्षणादि कर्म तदन्तर्गतेनैकेनैव पुरुषेणेत्यर्थः॥ २०॥

रा० टी०–भगवतोऽहोरात्रोक्त्या तस्यापि जगत इवान्यस्मादुत्पत्तिलयौ स्त इत्यतो नेत्याह–पर इत्यादि द्वाभ्याम्। अव्यक्तस्तु भगवांस्तु तस्मात्प्रभवप्रलयोपेताद्व्यक्ताद्भूतग्रामादन्यो विलक्षणो भावः स्वतन्त्रः परः उत्तमः सनातनोऽनादिश्च यो भगवान्सर्वेषु भूतेषु नश्यत्सु न विनश्यति॥ २०॥

**अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्॥**
**यं प्राप्य न निवर्तन्ते तद्धाम परमं मम॥ २१॥**

त० टी०–योऽव्यक्तोऽतीन्द्रियो भावोऽक्षर इत्युक्तः अक्षरं ब्रह्म परममित्यत्र मयैवोक्तः ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते, कूटस्थोऽक्षर उच्यते इत्यादौ वक्ष्यमाणश्च तं वेदविदः परमां गतिमाहुः प्रकृतिसंसृष्टाज्जीवात्परमामुत्कृष्टां स्वस्वरूपत्वाद्गतिं प्राप्यभूतामाहुः "स्वेन रूपेणाभिनिष्पद्यते" इत्यादिना। यमक्षरं प्रकृतिवियुक्तात्मस्वरूपं प्राप्य पुनर्न निवर्तन्ते संसारायेति शेषः। तच्छुद्धात्मस्वरूपं मम परमं धाम निवासस्थानं, यद्यपि प्रकृतिसंसृष्ट आत्माऽपि मम मूर्तेर्निवासस्थानं

तदनुग्रहायैव "अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि व्यवस्थितः। य आत्मानि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद। यस्यात्मा शरीरम्" इत्यादिश्रुतिभ्यः, सर्वस्य चाहं हृदि संनिविष्ट इति वक्ष्यमाणत्वाच्च तथाऽपि प्रकृतिवियुक्तात्मस्वरूपं तु परमं ततः श्रेष्ठं नित्यं धाम गृहमित्यर्थः ॥ २१ ॥

म० टी०–यो भाव इहाव्यक्त इत्यक्षर इति चोक्तोऽन्यत्रापि श्रुतिषु स्मृतिषु च तं भावमाहुः श्रुतयः स्मृतयश्च 'पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः' इत्याद्याः परमामुत्पत्तिविनाशशून्यस्वप्रकाशपरमानन्दरूपां गतिं पुरुषार्थविश्रान्तिं यं भावं प्राप्य न पुनः निवर्तन्ते संसाराय तद्धाम स्वरूपं मम विष्णोः परमं सर्वोत्कृष्टम्। मम धामेति राहोः शिर इतिवद्भेदकल्पनया षष्ठी। अतोऽहमेव परमा गतिरित्यर्थः॥ २१॥

शं० टी०–एवं सत्त्वं चाक्षरस्य प्रतिपाद्याधुना यः सनातनो भावोऽव्यक्तः प्रतिपादितः स एवाक्षरः परमात्मेति तं प्राप्तानामपुनरावृत्तिं च प्रतिपादयति–अव्यक्त इति। यः परत्वसनातनत्वाविनाशित्वादिधर्मैरविद्याख्यादव्यक्तादन्योऽव्यक्तोऽक्षर इत्युक्तस्तमेवाक्षरम्"महतः परमव्यक्तमव्यक्तात्पुरुषः परः। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इत्यादिश्रुतयः परमां नित्यनिरतिशयाद्वितीयाखण्डचिदानन्दैकरसत्वादनुत्तमां गतिं ज्ञानेनैकेन गम्यत इति गतिस्तां परं तत्त्वमित्याहुर्वदन्त्यतोऽक्षर एव नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दमद्वितीयं परं ब्रह्मेत्यर्थः। नन्वक्षर एवोक्तलक्षणं परं ब्रह्मास्तु तेन तव मम च किमित्याकाङ्क्षायां स एव परमात्मा तं प्राप्तवतां न पुनरावृत्तिरस्तीति द्वाव(ज्ञान?)सिद्धये त्वादृशैः कृतिभिर्यत्यतामिति सूचयितुं स्वस्य याथात्म्यं च बोधयितुमाह–यमिति। बहुजन्मसंचितपुण्यपुञ्जपरिपाकसंप्राप्तचित्तप्रसादमत्प्रसादपात्रीभूताः शमदमाद्युक्तमसाधनसंपन्ना धन्याः संन्यासिनः संततसमाधिनिष्ठाः संपादितसंसिद्धयः सन्तो यमक्षरं परं ब्रह्म प्राप्य पुनः संसाराय न निवर्तन्ते देहवन्तः पुनर्न भवन्ति तदेवाक्षरं परं ब्रह्म मायोपाधिकस्य ममेश्वरस्य धाम अप्राकृतमबाधितमनाद्यन्तं प्रकाशात्मकं स्वरूपं नैजमित्यर्थः ॥ २१ ॥

श्री० टी०–अविनाशे प्रमाणं दर्शयन्नाह–अव्यक्त इति। यो भावः अव्यक्तोऽतीन्द्रियोऽक्षरः प्रवेशनाशशून्य इति "तथाऽक्षरात्संभवतीह विश्वम्" इत्यादिश्रुतिष्वक्षर इत्युक्तः तं परमां गतिं गम्यं पुरुषार्थमाहुः "पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इत्यादिश्रुतयः। परमगतित्वमेवाह–यं प्राप्य पुनर्न निवर्तन्त इति। तच्च ममैव धाम स्वरूपम्। ममैवेत्युपचारे षष्ठी राहोः शिर इतिवत्। अतोऽहमेव परमा गतिरित्यर्थः ॥ २१ ॥

स० टी०–यो भाव इह चाव्यक्त इत्यक्षर इतीरितः ॥ तमुत्पत्तिविनाशाभ्यां शून्यमानन्दमव्ययम् ॥ १ ॥ पुरुषार्थस्य विश्रान्तिं तं प्राहुः परमां गतिम् ॥ श्रुतयः स्मृतयश्चैव पुरुषान्न परं त्विति ॥ २ ॥ यं भावं प्राप्य भूयो नो निवर्तन्तेऽत्र जन्मने ॥ तत्स्वरूपं परं विष्णोर्मम सर्वोत्तमोत्तमम् ॥ ३ ॥ अतोऽहमेव वेदान्तगम्योऽस्मि परमा गतिः ॥ ४ ॥ २१ ॥

भा० टी०–योऽसौ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्ति। अस्थूलमनणु एतस्य वाक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः। एतस्मिन्नु खल्वक्षरे गार्गि आकाश ओतश्च प्रोतश्च। पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इत्यादिश्रुतयस्तमेवाक्षरसंज्ञकमव्यक्तं भावं परमां प्रकृष्टां गतिं प्राप्यमाहुः यं प्राप्यं भावं प्राप्य गत्वा पुनः संसाराय न निवर्तन्ते जन्ममरणादिरूपां संसृतिं न प्राप्नुवन्ति मम विष्णोः परब्रह्मणः तत्परमं सर्वोत्कृष्टं धाम स्थानम् "तद्विष्णोः परमं पदम्" इतिश्रुतेः। श्रुतावत्र च राहोः शिर इतिवदभेदेऽपि भेदकल्पनया षष्ठी। अतोऽहमेव मोक्षाख्यं परमं स्थानमित्यर्थः ॥ २१ ॥

प० टी०–अथाविनाशित्वे प्रमाणं दर्शयति–अव्यक्त इति। योऽयं पूर्वमव्यक्तः सनातनो भाव उक्तः

सोऽक्षर इत्युच्यते । न क्षरतीत्यक्षरस्तमक्षरं परमां गतिमाहुः । तं कम्, यं प्राप्य योगिनो न निवर्तन्ते तन्ममैव परमं सर्वोत्कृष्टं धाम स्वरूपम् । मयि ज्ञाते तज्ज्ञातमित्यर्थः ॥ २१ ॥

रा० टी०—सर्वात्मना नाशाभावादेवाव्यक्तो भगवानक्षर इत्युक्तः "तस्मादक्षरं तस्मादक्षरम्" इति श्रुत्यादौ तां परमां गतिमाहुः । तामिति विधेयापेक्षया स्त्रिलिङ्गता । कुतोऽव्यक्तो भगवान्परमप्राप्य इत्यत आह—यं प्राप्येति । तन्मम धाम स्वरूपमित्यर्थः ॥ २१ ॥

**पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया ॥**
**यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम् ॥ २२ ॥**

त० टी०—एवमक्षरशब्दाभिहितस्य क्षेत्रज्ञस्य परमगतित्वाभिधानात्परमात्मनैक्यशङ्का मा भूदित्येतदर्थम् "प्रधानक्षेत्रज्ञपतिर्गुणेशः । अक्षरात्परतः परः । तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । न तत्समश्चाभ्यधिकश्च दृश्यते । नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । यमेवैष वृणुते तेन लभ्यः । भेदव्यपदेशाच्चान्यः । अधिकं तु भेदनिर्देशात् । पारं परं विष्णुरपारपारः परः परेभ्यः परमार्थरूपी । स ब्रह्मपारः परपारभूतः परः पराणामपि पारपारः" इत्यादिश्रुतिस्मृतिसूत्रैः सिद्धं प्रत्यगात्मनः परमेश्वरस्य स्वाभाविकं भेदं स्पष्टयति—पुरुष इति । हे पार्थ अनन्यया देवान्तरफलान्तराभिसन्धिशून्यया भक्त्या लभ्यस्तु स पुरुषः परः पूर्वोक्ताद्विलक्षणः । स कः यस्यान्तःस्थानि अन्तर्वर्तीनि पृथक्स्थितिप्रवृत्त्यनर्हाणि तिष्ठन्तीत्यर्थः । येन सर्वात्मना इदं विश्वं ततं व्याप्तं तं मां प्राप्तानामपुनरावृत्तिः मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम् । नाप्नुवन्ति महात्मानः इत्यादिनोक्तैव ॥ २२ ॥

म० टी०—इदानीमनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभ इति प्रागुक्तं भक्तियोगमेव तत्प्राप्त्युपायमाह—पुरुष इति । स परो निरतिशयः पुरुषः परमात्माहमेव अनन्यया न विद्यतेऽन्यो विषयो यस्यां तया प्रेमलक्षणया भक्त्यैव लभ्यो नान्यथा । स क इत्यपेक्षायामाह—यस्य पुरुषस्यान्तःस्थान्यन्तर्वर्तीनि भूतानि सर्वाणि कार्याणि कारणान्तर्वर्तित्वात्कार्यस्य । अत एव येन पुरुषेण सर्वमिदं कार्यजातं ततं व्याप्तं "यस्मात्परं नापरमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोऽस्ति कश्चित् । वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् । यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः । स पर्यगाच्छुक्रम्" इत्यादिश्रुतिभ्यः ॥ २२ ॥

शं० टी०—परस्तस्मात्त्वित्यादिश्लोकद्वयेन स्वस्य परस्य ब्रह्मणः स्वरूपं तत्प्राप्तानामपुनरावृत्तिं च प्रतिपाद्याधुना कथं तत्प्राप्स्यामः केन वा साधनेन नियतेनेत्याकाङ्क्षावतां परिशुद्धात्मनां मोक्षैककामानां तत्प्राप्तौ परमसाधनमाह—पुरुष इति । परः " अव्यक्तात्तु परः पुरुषः " इति श्रवणात् सर्वोत्तमः पुरुषः बहिरन्तःसर्वत्रैकरसत्वेन पूर्णत्वात् पुरुषः सोऽक्षरः परमात्मा अनन्यया न विद्यतेऽन्यः परमात्मातिरिक्तो विषयो यस्याः साऽनन्या सर्वत्र ब्रह्ममात्रग्राहिणी अहमिदंप्रत्ययनिर्मुक्ता तयाऽन्यया भक्त्या सर्वमिदमहं च ब्रह्मैवेति भजति वेत्ति विद्वाननयेति भक्तिर्ज्ञानं भजतिरत्र ज्ञानार्थः । तुशब्दोऽवधारणार्थः । भक्त्या ज्ञानेनैवाचार्यप्रसादलब्धेन समाधिनिष्ठया शुद्धेन लभ्यः प्राप्तव्यः परमात्मा न तु कर्मणा योगेन सांख्येन च ब्रह्म प्राप्तुं शक्यमित्यर्थः । ननु परं ब्रह्माऽतिसूक्ष्ममतीन्द्रियं च कथं मुमुक्षुरिदमेवाहमिति ज्ञातुं शक्नुयादित्याकाङ्क्षायामाह—यस्येति । यस्य निर्विशेषस्य परिपूर्णस्याऽद्वितीयस्य ब्रह्मणोऽन्तःस्थानि अन्तरन्तर्देशे दर्पणे नगरमिवाभासरूपेणेमानि भूतानि स्थितानि भवन्ति यद्यपि दर्पणे नगरं स्थितमिव प्रतीयते तथापि सन्निहितदृष्ट्या सम्यग्विलोक्यमाने दर्पणमेवास्ति न तु तत्र नगरं स्वयं स्वरूपेण विद्यते तद्वद्ब्रह्मण्यपि जगदस्तीव भाति ज्ञानदृष्ट्याऽधिष्ठानमा-

हिण्या परिशील्यमाने ब्रह्मैकमेवास्ति न तु तत्र जगत् । ननु यदुक्तं तत्सत्यमेव दर्पणे नगरं नास्तीति तथापि दर्पणस्य स्वच्छत्वात्तत्र प्रतीतेः पुरतो नगरमस्त्येव तद्वद्ब्रह्मणि स्वरूपेण जगतोऽभावेऽपि तत्र प्रतीत्यैतदन्यत्र जगदस्त्येवेति चेदस्त्येव ब्रह्मण्यद्वितीये जगत्कल्पयतः पुरुषस्य मलिनात्मनो बुद्धौ यथा स्वनेत्रस्थं पीतिमानं शङ्खे कल्पयति यथा स्वबुद्धिस्थं प्रपञ्चं स्वप्ने कल्पयति तथा पुरुषः स्वबुद्धिस्थमेव वासनामयं प्रपञ्चं निष्प्रपञ्चे ब्रह्मणि कल्पयति पश्यति च मूढः नहि स्वप्ने स्वरूपेण जगदस्ति विना बौद्धं वासनामयं, तस्य सत्यत्वे बाधाभावप्रसङ्गात् । तद्वद्ब्रह्मण्यपि पुरुषान्तःकरणवासनाकल्पितमेव नामरूपात्मकमिदं जगत् न तु वस्तुतोऽस्ति, तस्य सत्यत्वेनास्तीति निषेधायोगात् । यतः श्रुतिः "अथात आदेशो नेति नेत्यात्मा-गृह्यो नहि गृह्यते" इति चाऽरोपितं जगन्निषिध्यैव ब्रह्माधिगमयति ततो वासनया प्रतीयमानं नामरूपा-त्मकं जगत्सर्वं मिथ्यैवेत्यधिष्ठानसंदर्शनसंजातविज्ञानेन नेदं जगत्किंतु ब्रह्मैवेत्यधिष्ठानमात्रत्वावशेषं निषिध्य तन्निषेधावधिभूतं दर्पणवत्स्वच्छं वस्त्वन्तरशून्यं चिदेकरसं परं ब्रह्म इदमेवाहमिति शुद्धात्मना बुद्धिमता सद्गुर्वनुग्रहवता ज्ञातुं शक्यत एवेत्यभिप्रायेणोक्तं यस्यान्तःस्थानि भूतानीति । एवं ज्ञातुमशक्तस्य यतेरुपायान्तरमाह—येनेति । इदं परिदृश्यमानं जडं जगत्सर्वं येन प्रकाशैकरूपेण ब्रह्मणा ततं बहिरन्तश्च सर्वतो व्याप्तं प्रकाशितं च भवति "स पर्यगाच्छुक्रमकायम्" इति "तस्य भासा सर्वमिदं विभाति" इति च श्रुतेः । ततः प्रकाश्यस्य प्रकाशव्यतिरेकेण पृथक्स्वरूपाभावादग्निव्याप्तायःपिण्डादौ तद्दर्शनाद्ब्रह्मव्याप्तमिदं सर्वं ब्रह्मैवेति सर्वस्य ब्रह्ममात्रत्वविज्ञानेन स्वस्यापि ब्रह्ममात्रत्वं ज्ञातुं शक्यत एवेत्यर्थः ॥ २२ ॥

श्री० टी०—तत्प्राप्तौ च भक्तिरन्तरङ्गोपाय इत्युक्तमेवेत्याह—पुरुष इति । स चाहं परः पुरुषः अनन्यया न विद्यते अन्यः शरणत्वेन यस्य तया एकान्तभक्त्यैव लभ्यो नान्यथा । परत्वमेवाह यस्य कारणभूत-स्यान्तर्मध्ये भूतानि स्थितानि, येन च कारणभूतेन सर्वमिदं जगत्ततं व्याप्तम् ॥ २२ ॥

स० टी०—तत्प्राप्तौ साधनं मुख्यं मम भक्तिरितीर्यते ॥ सर्वोत्कृष्टः स पुरुषः परमात्माहमेव च ॥ १ ॥ प्रेमलक्षणया भक्त्या ज्ञानलक्षणयैव वा ॥ लभ्योऽस्मि नान्यथा कर्मकोटिभिः संचितैरपि ॥ २ ॥ वक्तव्यः स च कोऽस्तीत्याकाङ्क्षायामाह मापतिः ॥ यस्याधिष्ठानभूतस्यान्तर्वर्तीन्यखिलान्यपि ॥ ३ ॥ भूतानि कल्पि-तान्येव येन विश्वमिदं ततम् ॥ आकाशेनेव कुम्भादि सोऽहमेव महेश्वरः ॥ ४ ॥ २२ ॥

भा० टी०—तत्प्राप्तेरव्यभिचारि साधनमाह—पुरुष इति । स परः पुरुषः सर्वोत्तमः पुरि शयनात्पूर्णत्वाद्वा पुरुषः अनन्यया न विद्यतेऽन्यो विषयो यस्यां तयात्मविषययेति यावत् भक्त्या ज्ञानलक्षणयोत्तमभक्त्या । तदुक्तम् 'सर्वभूतेषु यः पश्येद्भगवद्भावमात्मनः । भूतानि भगवत्यात्मन्येष भागवतोत्तमः ॥ ईश्वरे तदधीनेषु बालिशेषु द्विषत्सु च । प्रेममैत्रीदयोपेक्षा यः करोति स मध्यमः ॥ अर्चायामेव हरये पूजां यः श्रद्धयेहते । न तद्भक्तेषु चान्येषु स भक्तः प्राकृतः स्मृतः ॥' इति 'वासुदेवः सर्वमिति स महात्मा सुदुर्लभः' "यो वै अन्यां देवतामुपास्ते अहमन्योऽसावन्य इति न स वेद" इति ॥ तस्मात्स परः पुरुषः अहमेव न तदभिन्नात्मनः किं-चित्पृथगस्तीत्यनन्यया भक्त्या लभ्यः लब्धुं शक्यः । ननु स तु सदैव प्राप्तः इत्याशङ्क्य द्विविधो हि लाभोऽल-ब्धलाभोऽलब्धलाभश्चेति । तत्रालब्धस्य ग्रामादेः राजसेवादिना लाभ आद्यः । लब्धस्यैव ग्रैवेयकादेराप्तवाक्या-ल्लाभो द्वितीयः । तत्रान्त्यलाभोऽत्राभिप्रेत इत्याशयेन शङ्कामङ्गीकरोति । यस्य परस्य पुरुषस्यान्तर्मध्ये स्थानि स्थितानि भूतानि सर्वाणि कार्यजातानि, भूतानि यस्मिन्नधिष्ठाने कल्पितानीत्यर्थः । कल्पितं ह्यधिष्ठानस्यान्तर्भवति न व्यतिरिक्तं येन पुरुषेणेदं सर्वं जगत्ततं सत्तास्फूर्तिभ्यां व्याप्तम् । त्वमपि मत्प्राप्त्यव्यभिचारिसाधनभूतां भक्तिं यत्नेन संपादय ननु पृथातनयोऽहं मम तु भक्तिं विनैवेश्वरलाभो भविष्यतीति विश्रम्भाश्रयणं कुर्विति ध्वनयन् संबोधयति—हे पार्थेति । मद्विषयानन्या भक्तिस्तवानायासलभ्येति सूचनार्थं वा संबोधनम् ॥ २२ ॥

प० टी०—अथ तमेव विशिनष्टि—पुरुष इति । स एव पर उत्कृष्टः पुरुषः "एतावानस्य महिमातो ज्यायांश्च पुरुषः" इति श्रुतेः। स चाहं पुरुषोऽनन्ययाऽव्यभिचारिण्या भक्त्या लभ्यः। पुनः स क इत्याह—यस्यान्तर्यन्मध्ये सर्वाणि भूतानि सन्ति तथा येन सर्वमिदं दृश्यजातं तादात्म्यभावेन ततं विस्तारितं जले तरङ्गा इवेत्यर्थः ॥ २२ ॥

रा० टी०—भक्त्या युक्तो योगबलेन चैवेत्यत्र साधनान्तरैः सह भगवत्प्राप्तिसाधनत्वं भक्तेरुक्तं तत्र साधनान्तरसाम्यशङ्कानिरासाय भक्तेरेव परमसाधनत्वमितिभावेनाह—पुरुष इति । भूतानि यस्यान्तःस्थानि सर्वमिदं जगद्येन ततं व्याप्तं स परमः पुरुषः भगवाननन्ययाऽन्यासाधारणया तु भक्त्या लभ्यः प्राप्य इत्यर्थः । अत्र परमयेत्यनुक्तावपि पुनर्वचनबलादेव परमत्वलाभ इति भावः । उक्तं हि 'ओंपरेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः' इतिसूत्रे भक्तेः प्राधान्यम् ॥ २२ ॥

**यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः ॥**
**प्रयाता यान्ति तं कालं वक्ष्यामि भरतर्षभ ॥ २३ ॥**

त० टी०—तदेवमक्षरात्मानं प्राप्ताः परमपुरुषं भगवन्तं प्राप्ताश्च पुनरिह संसारे नावर्तन्ते अन्ये तु पुनरावर्तन्त इत्युक्तम् । तत्र केन मार्गेण गता नावर्तन्ते केन गता पुनरावर्तन्ते इत्यपेक्षायां देवयानं पितृयानं चेति मार्गद्वयं वक्तुं प्रतिजानीते—यत्रेति । प्राणोत्क्रमणानन्तरं यत्र यस्मिन्काले प्रयाता योगिनोऽनावृत्तिं यान्ति, यस्मिँश्च काले प्रयाता आवृत्तिं यान्ति तं कालं वक्ष्यामि भारतेत्यन्वयः । अत्र कालशब्देनाहरादिसंवत्सरान्तकालाभिमानिनीभिरातिवाहिकदेवताभिर्गन्तव्यो मार्ग उपलक्ष्यते । अग्निज्योतिषोः कालवाचित्वाभावादेवयानमार्गप्रतिपादकश्रुतौ "संवत्सरादादित्यमादित्याच्चन्द्रमसम्" इत्यादिदेवतावाचकेनैवोपसंहारात्, पूर्वापरदेवतावाचकपदसाहचर्यादहरादीनामपि कालाभिमानिदेवतापरत्वं युक्तम् । तथा च यस्मिन्कालाभिमानिदेवतोपलक्षितमार्गे प्रयाता योगिनः द्विविधा ज्ञानिनः कर्मिणश्च यथाक्रममनावृत्तिमावृत्तिं च यान्ति तं मार्गं वक्ष्यामीत्यर्थः ॥ २३ ॥

म० टी०—सगुणब्रह्मोपासकास्तत्पदं प्राप्य न निवर्तन्ते किंतु क्रमेण मुच्यन्ते । तत्र तल्लोकभोगात्प्रागनुत्पन्नसम्यग्दर्शनानां तेषां मार्गापेक्षा विद्यते नतु सम्यग्दर्शिनामिव तदनपेक्षेत्युपासकानां तल्लोकप्राप्तये देवयानमार्ग उपदिश्यते । पितृयानमार्गोपन्यासस्तु तस्य स्तुतये—यत्र काल इति । प्राणोत्क्रमणानन्तरं यत्र यस्मिन्काले कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिनो ध्यायिनः कर्मिणश्च अनावृत्तिमावृत्तिं च यान्ति देवयाने पथि प्रयाता ध्यायिनोऽनावृत्तिं यान्ति पितृयाने पथि प्रयाताश्च कर्मिण आवृत्तिं यान्ति । यद्यपि देवयानेऽपि पथि प्रयाताः पुनरावर्तन्ते इत्युक्तमा ब्रह्मभुवनाल्लोकाः पुनरावर्तिन इत्यत्र तथापि पितृयाने पथि गता आवर्तन्त एव न केऽपि तत्र क्रममुक्तिभाजः । देवयाने पथि गतास्तु यद्यपि केचिदावर्तन्ते प्रतीकोपासकास्तडिल्लोकपर्यन्तं गता हिरण्यगर्भपर्यन्तममानवपुरुषनीता अपि पञ्चाग्निविद्याद्युपासका अतत्क्रतवो भोगान्ते निवर्तन्त एव तथाऽपि दहराद्युपासकाः क्रमेण मुच्यन्ते भोगान्त इति न सर्व एवावर्तन्ते । अत एव पितृयानः पन्था नियमेनावृत्तिफलत्वान्निकृष्टः । अयं तु देवयानः पन्था अनावृत्तिफलत्वादतिप्रशस्त इति स्तुतिरुपपद्यते केषांचिदावृत्तावप्यनावृत्तिफलत्वस्यानपायात् । तं देवयानं पितृयानं च कालं कालाभिमानिदेवतोपलक्षितं मार्गं वक्ष्यामि हे भरतर्षभ । अत्र कालशब्दस्य मुख्यार्थत्वे अग्निर्ज्योतिर्धूमशब्दानामनुपपत्तिर्गतिसृतिशब्दयोश्चेति तदनुरोधेनैकस्मिन्कालपद एव लक्षणाश्रिता । कालाभिमानिदेवतानां मार्गद्वयेऽपि बाहुल्यात् । अग्निधूमयोस्तदितरयोः सतोरपि अग्निहोत्रशब्दवेदैकदेशेनाप्युपलक्षणं-

कालशब्देन। अन्यथा प्रातरग्निदेवताया अभावात्तत्प्रख्यं चान्यशास्त्रमित्यनेन तस्य नामधेयता न स्यात्। आम्रवणमिति च लौकिको दृष्टान्तः ॥ २३ ॥

शं० टी०—पुरुषः स परः पार्थेति परस्य ब्रह्मणो ज्ञानैकप्राप्यत्वमुक्तलक्षणेन ज्ञानेन ब्रह्मभावापन्नानां यतीनां यं प्राप्य न निवर्तन्ते इत्यपुनरावृत्तिलक्षणां विदेहमुक्तिं च तत्फलं प्रतिपाद्येदानीमुक्तप्रकारेण ब्रह्म ज्ञातुमशक्तानामशुद्धबुद्धीनां मुमुक्षूणां चित्तशुद्धये "एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोङ्कारः" इति परापरयोर्ब्रह्मणोरुपास्तौ प्रणवस्य प्रतीकत्वं सूचयित्वा तत्र "यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत" इति श्रुत्युक्तरीत्या प्लुतेनोच्चार्यमाणे ॐकारे परब्रह्मबुद्धिं कृत्वा तमेव ब्रह्मेति ये ध्यायन्ति तेषां प्रणवावेशितब्रह्मबुद्धीनामन्येषां च "तपः श्रद्धे ये ह्युपवसन्त्यरण्ये" इत्यादि श्रुत्युक्तसगुणोपासकानां क्रमेण विदेहमुक्तिं प्राप्स्यमानानां संन्यासयोगवतां प्रयाणकाले प्राप्ते तेषां का गतिरित्याकाङ्क्षायां तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धातप इत्युपासते तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवयानः पन्था:" इति। "अथ य इमे ग्राम इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वाऽथैतमध्वानं पुनर्निवर्तन्ते" इति। श्रुत्युक्तेनोत्तरायणेन ब्रह्मप्राप्तिरपुनरावृत्तिलक्षणेतिबोधयितुमुत्तरायणं तद्व्यावृत्त्यर्थमित्थं कर्मिणां कर्मफलमिति सूचनार्थं च दक्षिणायनमपीति मार्गद्वयं, तत्रैकेन गतानामपुनरावृत्तिमन्येन मार्गेण गतानां पुनरावृत्तिं च प्रतिपादयति—**यत्रेति**। योगिन इत्यत्र योगिनः योगिन इति जसि सरूपाणामेकशेषे कृते योगिन इति रूपसिद्धिः। तत्रैकेन योगिन इति पदेन संन्यासिन उच्यन्ते द्वितीयेन तु कर्मिणः। कर्मिणां कर्मफलसंन्यासयोगाद्गौणवृत्त्या योगित्वम्। योगिन उभयविधाः यत्र यस्मिन्काले प्रयाता मृताः सन्तः स्वयमनावृत्तिमावृत्तिं च यान्ति तं कालं वक्ष्यामि शृण्वित्यर्थः ॥ २३ ॥

श्री० टी०—तदेवं परमेश्वरोपासकास्तत्पदं प्राप्य न निवर्तन्ते अन्ये त्वावर्तन्त इत्युक्तम्। तत्र केन मार्गेण गता नावर्तन्ते केन वा गताश्चावर्तन्ते इत्यपेक्षायामाह—**यत्रेति**। यत्र यस्मिन्काले प्रयाता योगिनोऽनावृत्तिं यान्ति यस्मिंश्च काले प्रयाता आवृत्तिं यान्ति तं कालं वक्ष्यामीत्यन्वयः। अत्र च "रश्म्यनुसारी अतश्चायनेऽपि दक्षिणे" इति सूत्रितन्यायेनोत्तरायणादिकालविशेषमरणस्याविवक्षितत्वात् कालशब्देन कालभिमानिनीभिरातिवाहिकीभिर्देवताभिः प्राप्यो मार्ग उपलक्ष्यते। अतोऽयमर्थः—यस्मिन्कालाभिमानिदेवतोपलक्षिते मार्गे प्रयाता योगिन उपासकाः कर्मिणश्च यथाक्रममनावृत्तिमावृत्तिं च यान्ति तं कालाभिमानिदेवतोपलक्षितं मार्गं कथयिष्यामीति। अग्निज्योतिषोः कालाभिमानित्वाभावेऽपि भूयसामहरादिशब्दोक्तानां कालाभिमानित्वात्तत्साहचर्यादाम्रवणमित्यादिवत्कालशब्देनोपलक्षणमविरुद्धम् ॥ २३ ॥

स० टी०—प्रणवे ब्रह्मबुद्धीनां प्रकृतानां च योगिनाम् ॥ तेषा कालान्तरे मुक्तिभाजां ब्रह्माप्तयेऽधुना ॥ १ ॥ वक्तव्य उत्तरो मार्गो यत्रेत्यादिगिरा स्फुटम् ॥ उत्तरस्तुतये चात्र पितृयानप्रदर्शनम् ॥ २ ॥ यस्मिन्मार्गे मृता यान्ति योगिनो ह्यपुनर्भवम् ॥ यस्मिन्यान्ति पुनर्जन्म कर्मिणस्तमहं ब्रुवे ॥ ३ ॥ २३ ॥

भा० टी०—यद्यपीहैवात्मसाक्षात्कारवताम् "न तस्य प्राणा उत्क्रामन्ति अत्रैव समवलीयन्ते" इतिश्रुत्या गत्युत्क्रान्तिनिषेधाद्वक्ष्यमाणमार्गोपदेशस्तदर्थं नोपयुज्यते तथापि प्रणवावेशितबुद्धीनां प्रकृतानां योगिनां सगुणोपासकानां क्रममुक्तिभाजां केन क्रमेण ब्रह्मप्राप्तिरित्याकाङ्क्षायामुत्तरमार्गे निरूपितव्ये उत्तरमार्गेण गता न निवर्तन्ते दक्षिणेन गतास्तु पुनरावृत्तिभाज इति वक्तव्यस्तुत्यर्थं पितृयानमार्गोपदेशः—**यत्रेति**। यत्र

काले प्रयाता मृता योगिनो ध्यानयोगिन उपासका अनावृत्तिमपुनरावृत्तिं यान्ति कर्मयोगिनश्चावृत्तिं पुनरावृत्तिं यान्ति तं कालं वक्ष्यामि। कर्मिणः योगित्वमनुष्ठानयोगात् कर्मयोगेन योगिनामित्युक्तत्वात्। योगिन इत्यनेन प्रक्रान्ता ओमित्येकाक्षरमित्यादिनोक्ता ग्राह्यास्तेन पञ्चाग्निविद्योपासकानां देवयानमार्गेण ब्रह्मलोकं गतानामपि ततो निवृत्तौ न क्षतिः। कर्मयोगिनोऽप्युपासनासमुच्चितकर्मयोगिनो ग्राह्याः। भरतर्षभेति संबोधयन् भरता अपि निष्कामकर्मयोगसमुच्चितेनोपासनेनात्रैव साक्षात्कारं लब्ध्वा साक्षान्मुक्तिं देवयानमार्गेण गत्वा क्रमेण वा प्राप्तास्त्वं तु तेभ्यः ऋषभः श्रेष्ठस्तथैव भवितुं योग्योऽसीति सूचयति ॥ २३ ॥

प० टी०–अथ यं प्राप्य न निवर्तन्ते इति पूर्वमुक्तं तत्र मदुपासकानां योगिनां च पुनरावृत्त्यनावृत्त्युपलक्षकं तारतम्यभावेन मार्गद्वयमस्तीत्याह–**यत्रेति**। भो भरतर्षभ योगिनो यत्र यस्मिन् काले प्रयातास्त्यक्तदेहाः सन्तोऽनावृत्तिमपुनर्जन्मावृत्तिं च पुनर्जन्म यान्ति प्राप्नुवन्ति तं कालं वक्ष्यामि॥२३॥

रा० टी०–भगवन्तं प्राप्तानामन्येषां चापुनरावृत्तिपुनरावृत्ती कथिते तत्र यद्देवताधिष्ठितमार्गाभ्यां गतानामपुनरावृत्तिपुनरावृत्ती भवतः ता देवताः प्रतिज्ञापूर्वकमाह–**यत्रेत्यादित्रयेण**। काल इति यत्कालाभिमानिदेवताधिष्ठितमार्गे कालानभिमानिदेवताधिष्ठितमार्गे च प्रयाता योगिनः अनावृत्तिमावृत्तिं च यान्ति तं कालं तत्कालाभिमानिदेवता अन्यदेवताश्च वक्ष्यामीत्यर्थः ॥ २३ ॥

**अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम् ॥**
**तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ॥ २४ ॥**

**त० टी०–प्रतिज्ञातयोः तत्र तावदपुनरावृत्तिमार्गमाह–अग्निरिति। अग्निज्योतिःशब्दाभ्यां "तेऽर्चिषमभिसंभवन्ति" इति श्रुत्युक्तार्चिरभिमानिनी देवतोपलक्ष्यते, तथाऽहरभिमानिनी शुक्लपक्षाभिमानिनी षण्मासा उत्तरायणाभिमानिनी देवतोपलक्ष्यते। एतच्छ्रुत्युक्तानां संवत्सराद्यभिमानिदेवतानामुपलक्षणार्थम्। तथा च श्रुतिः " तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयति एष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते " इति छान्दोग्ये। तत्र देवयानमार्गे प्रयाता ब्रह्मविदो जना ब्रह्म गच्छन्ति ॥ २४ ॥**

म० टी०–तत्रोपासकानां देवयानं पन्थानमाह–**अग्नीति**। अग्निर्ज्योतिरित्यर्चिरभिमानिनी देवता लक्ष्यते अहरित्यहरभिमानिनी शुक्ल पक्ष इति शुल्कपक्षाभिमानिनी षण्मासा उत्तरायणमिति उत्तरायणरूपषण्मासाभिमानिनी देवतैव लक्ष्यते 'आतिवाहिकास्तल्लिङ्गात्' इति न्यायात्। एतच्चान्यासामपि श्रुत्युक्तानां देवतानामुपलक्षणार्थम्। तथा च श्रुतिः "तेऽर्चिरभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेतिमासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते" इति। अत्र श्रुत्यन्तरानुसारात्संवत्सरानन्तरं देवलोकदेवता ततो वायुदेवता तत आदित्य इत्याकरे निर्णीतम्। एवं विद्युतोऽनन्तरं वरुणेन्द्रप्रजापतयस्तावता मार्गपरिपूर्तिः। तत्रार्चिरहःशुक्लपक्षोत्तरायणदेवता इहोक्ताः। संवत्सरो देवलोको वायुरादित्यश्चन्द्रमा विद्युद्वरुण इन्द्रः प्रजापतिश्चेत्यनुक्ता अपि द्रष्टव्याः। तत्र देवयानमार्गे प्रयाता गच्छन्ति ब्रह्म कार्योपाधिकम् "कार्यं बादरिरस्य गत्युपपत्तेः" इति न्यायात्। निरुपाधिकं तु ब्रह्म तद्द्वारैव क्रममुक्तिफलत्वात्। ब्रह्मविदः सगुणब्रह्मोपासका जनाः। अत्रैतेन प्रतिपद्यमाना "इमं मानवमावर्तं नावर्तन्ते"

इति श्रुताविममिति विशेषणात् कल्पान्तरे केचिदावर्तन्त इति प्रतीयते । अत एवात्र भगवतोदासितं श्रौतमार्गकथनेनैव व्याख्यानात् ॥ २४ ॥

शं० टी०–योगिन इत्युभयविधानां योगिनां सामान्येनैकत्र मृतानामपुनरावृत्तिरन्यत्र मृतानां तु पुनरावृत्तिरित्यनियमेन परलोकप्राप्तौ सत्यामुभयेषाम् " स यथा कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते " इत्यादि श्रुतिबलात् ' क्रियाभेदात्फलभेदः ' इति न्यायेन च नियतमयनविभागं दर्शयति–अग्निरिति । तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरित्यग्न्यनन्तरमहरेव श्रूयते ननु ज्योतिः कथमत्राग्निर्ज्योतिरितिश्रुतिविरुद्धमुच्यत इति न शङ्कनीयं अर्चिःशब्दस्याग्निज्योतिषोरुभयोरपि साधारण्यात् श्रुत्यार्चिरित्युक्तं तदेवात्र विभज्य दर्शितं ततो न कोऽपि विरोधः । अग्निरुत्तरायणकालाभिमानिनी देवता ज्योतिश्च कालाभिमानिनी देवता अहरित्यहरभिमानिनी देवता शुक्लः शुक्लपक्षाभिमानिनी देवता षण्मासाः षण्मासाभिमानिनी देवता संवत्सरादीनामुपलक्षणमेतत् यत्रोत्तरायणकाले अग्न्यादयः कालाभिमानिनो भूत्वा तिष्ठन्ति तत्र तस्मिन्नुत्तरायणे प्रयाता मृताः सन्तो ब्रह्मविदः ब्रह्मोपास्यत्वेन ये विदुस्ते ब्रह्मविदो ब्रह्मोपासका योगिन उक्तक्रमेण ब्रह्म गच्छन्ति प्राप्नुवन्ति न साक्षात् " स तेजसि सूर्ये संपन्न इत्युक्त्वानन्तरं परात्परं पुरुषमीक्षत इति ब्रह्मप्राप्तेरन्तरालं श्रावयति श्रुतिः । सूर्य इत्यग्न्यादीनामुपलक्षणं तेन उक्तक्रमेणैव योगिनो ब्रह्म प्राप्नुवन्तीत्यर्थः । ननु " ब्रह्मविदः " इत्यविशेषश्रवणाद्योगिनामपि क्रममुक्तिरेवेति चेन्न, " न तस्य प्राणा उत्क्रामन्ति " इति ज्ञानिनामुत्क्रमणाभावश्रवणात् " ब्रह्मैव सन् ब्रह्माप्येति " इत्यन्तरालाभावश्च श्रूयते " अत्र ब्रह्म समश्नुते " इत्यादि श्रुतिविरोधप्रसङ्गाच्च नाशङ्का कर्तव्या । अत्रोत्तरायणे कालाभिमानित्वेनाग्न्यादिदेवतानामुपन्यासः, दक्षिणायने रात्र्यादौ मृतानामप्युपासकानामर्चिरादिमार्गेणैव ब्रह्मप्रापकत्वनियमार्थं ब्रह्मगन्तॄणां तत्तल्लोकेषु विश्रमार्थं तत्रत्यसुखानुभूत्यर्थं च । एवमन्यत्रापि द्रष्टव्यम् ॥ २४ ॥

श्री० टी०–तत्रानावृत्तिमार्गमाह–अग्निरिति । अग्निज्योतिःशब्दाभ्यां "तेऽर्चिषमभिसंभवन्ति" इति श्रुत्युक्तार्चिरभिमानिनी देवतोपलक्ष्यते । अहरिति दिवसाभिमानिनी शुक्ल इति शुक्लपक्षाभिमानिनी उत्तरायणरूपाः षण्मासा इत्युत्तरायणाभिमानिनी एतच्चान्यासामपि श्रुत्युक्तानां संवत्सरदेवलोकादिदेवतानामुपलक्षणार्थम् । एवंभूतो यो मार्गस्तत्र प्रयाता गताः भगवदुपासका जनाः ब्रह्म प्राप्नुवन्ति यतस्ते ब्रह्मविदः । तथा च श्रुतिः–" तेऽर्चिषमभिसंभवन्ति अर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान्षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकम्" इति । नहि सद्योमुक्तिभाजां सम्यग्दर्शननिष्ठानां गतिर्वा क्वचिदस्ति "न तस्य प्राणा उत्क्रामन्ति" इति श्रुतेः ॥ २४ ॥

स० टी०–अग्निर्ज्योतिरितीहार्चिरुक्ता कालाभिमानिनी ॥ देवता यदि वा ते द्वे देवते श्रुतिसंमते ॥ १ ॥ तथाहर्देवता तद्वच्छुक्लपक्षाभिमानिनी ॥ उत्तरायणषण्मासाभिमानिन्येव देवता ॥ २ ॥ अग्न्याद्या देवताः सर्वा योगिनः कालतो मृतान् ॥ प्रापयन्ति परं ब्रह्म मार्गभूताः क्रमेण ताः ॥ ३ ॥ तस्मिन्मार्गे मृता यान्ति ब्रह्मोपासनतत्पराः ॥ क्रमेण निर्गुणं ब्रह्म यत्र गत्वा न शोच्यते ॥ ४ ॥ सम्यग्दर्शननिष्ठानां नैव स्यातामुभे गती ॥ सद्यः प्राणपरित्यागान्मोक्षभाजां महात्मनाम् ॥ ५ ॥ २४ ॥

भा० टी०–तं कालं वक्ष्यामीति प्रतिज्ञानुरोधेन–अग्निरिति । अग्निः कालाभिमानिनी देवता एवं ज्योतिरपि कालाभिमानिनी देवतैव । अथवाग्निरग्निर्देवता ज्योतिर्ज्योतिर्देवतेति यथाश्रुते एव देवते । ननु यत्र काले तं कालं वक्ष्यामीति कथं युज्यते इति चेत् कालाभिमानिनीनां देवतानां मार्गद्वयेऽपि भूयसां वक्तव्यत्वे कालशब्देन सर्वासां देवतानामुपलक्ष्यत्वं विवक्षित्वा तथा निर्देशः यथान्येषां गन्तॄणां सत्त्वेऽपि छत्रिणां भूयस्त्वेन

छत्रिणो यान्तीति निर्देशः यथा वा वृक्षान्तराणां सत्त्वेऽप्याम्राणां भूयस्त्वादाम्रैरेव वनमिति निर्दिश्यते तद्वत्। एतेन कालाभिमानिदेवतोपलक्षितं मार्गं वक्ष्यामि कालशब्दस्य मुख्यार्थत्वेऽग्निर्ज्योतिर्धूमशब्दानामनुपपत्तिः गतिसृतिशब्दयोश्चेति प्रत्युक्तं यतोऽत्र किं यस्मिन्मार्गे जनाः सुखेन गच्छन्ति तं मार्गं वक्ष्यामीति प्रतिज्ञाय यथा कश्चिदुपदिशति आदौ गिरिस्ततो न्यग्रोधस्ततो नदीति तथा मार्गोपदेश उत यत्र सुखेन नगरं ग्रामं वा गच्छन्ति तं वक्ष्यामीति प्रतिज्ञाय कश्चिदुपदिशति आदौ वृषयानं ततोऽश्वयानं ततो नरयानं ततः पादयानमिति तद्वत्। आद्ये 'आतिवाहिकास्तल्लिङ्गात्' इत्याधिकरणविरोधः। द्वितीये उक्तरीत्याग्न्यादिशब्दानां सम्यगुपपत्त्या लक्षणावैयर्थ्यं श्रुतावातिवाहिका इतिन्यायेनार्चिरादीनामातिवाहिकत्वस्थापनादप्यग्न्यादीनामातिवाहिकत्वेन ग्राह्यत्वावश्यकत्वेन तं कालं वक्ष्यामीति प्रतिज्ञावाक्येऽपि कालाभिमानिन्यो देवता वक्ष्यामीत्यर्थस्यैव सम्यक्त्वं च यथा गमनाधिकरणे पृथिवीप्रदेशेऽस्मिन्मार्गे एते गच्छन्तीति व्यवहारस्तथा योगिगमनाधिकरणरूपासु कालाभिमानिनीष्वग्न्यादिषु देवतासु इति न वक्ष्यमाणगतिसृतिशब्दयोरनुपपत्तिः। यद्वा भाष्येऽपि कालशब्देन कालाभिमानिदेवतोपलक्षितं मार्गं वक्ष्यामीति व्याख्याय यथाकथंचिदविरोधः संपाद्यः। एतच्चान्यासामपि श्रुत्युक्तानां देवतानामुपलक्षणार्थम्। तथाच श्रुतिः—"तेऽर्चिषमभिसंभवन्त्यर्चिषोऽहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यःसंवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयत्येष ब्रह्मपथो देवपथ इमं मानवमावर्तं नावर्तन्ते" इति। अत्र श्रुतावपि श्रुत्यन्तरानुसारेण संवत्सराद्देवलोकं देवलोकाद्वायुं वायोरादित्यमिति विद्युतोऽनन्तरं च विद्युतो वरुणं वरुणादिन्द्रमिन्द्रात्प्रजापतिमिति बोध्यम्। तत्र तस्मिन्देवयाने प्रयाता मृता ब्रह्मविदः क्रमेण ब्रह्म गच्छन्ति। ब्रह्मविद इति ब्रह्मोपासका ग्राह्याः नतु सम्यग्दर्शननिष्ठाः सद्योमुक्तिभाजः "न तस्य प्राणा उत्क्रामन्ति" इत्यादिश्रुत्या तेषां गतिमागतिं च प्रतिषिध्य ब्रह्मसंलीनप्राणत्वब्रह्मभूतत्वप्रतिपादनात्। तथाच भगवतो व्यासस्य सूत्रम् 'कार्यं बादरिरस्य गत्युपपत्तेः' इति स एतान्ब्रह्म गमयतीत्यत्र विचिकित्स्यते—किं कार्यमपरं ब्रह्म गमयति आहोस्वित्परमेवाऽविकृतं मुख्यं ब्रह्मेति। कुतः संशयः ब्रह्मशब्दप्रयोगात् गतिश्रुतेश्च तत्र कार्यमेव सगुणमपरं ब्रह्म नयत्येतानमानवः पुरुष इति बादरिराचार्यो मन्यते। कुतः गत्युपपत्तेरस्य हि कार्यस्य ब्रह्मणो गन्तव्यत्वमुपपद्यते प्रदेशवत्त्वात् न तु परस्मिन्ब्रह्मणि गन्तृत्वं गन्तव्यत्वं गतिर्वाऽवकल्पते सर्वगतत्वात् प्रत्यगात्मत्वाच्च गन्तृणामिति ॥ २४ ॥

प० टी०—तत्र प्रथमं स्वोपासकानामवसानेऽर्चिर्मार्गमाह—अग्निरिति। तत्रार्चिर्मार्गोपलक्षकाः पञ्च सन्ति। तत्र संस्काराग्निर्द्वेधा दीप्तो धूमितश्च। एवमर्चिर्मार्गे दीप्तोऽग्निः। तत्र श्रुतिः—"अग्ने नय सुपथा राये अस्मान् विश्वानि देव वयुनानि विद्वान्। युयोध्यस्मज्जुहुराणमेनो भूयिष्ठां ते नम उक्तिं विधेम" इति। भाष्यम्—तत्र मुमुक्षुर्यावज्जीवमग्निशुश्रूषया प्रसादितमग्निं स्वनिर्याणे प्रार्थयते। भो देव दीप्यमानाग्ने अस्मान् सुपथार्चिर्मार्गेण नय। किमर्थं राये मुक्तिलक्षणाय धनाय। तथा भो विद्वन् ज्ञानवन् विश्वानि सर्वाणि वयुनानि ज्ञानानि देहीत्यध्याहारः। अथास्मिन्नर्थेऽस्मज्जुहुराणमस्मत्प्रतिबन्धकमेनः पातकं युयोधि नाशय। इतः परं ते तुभ्यं भूयिष्ठां मनोवाक्कायैः कृतामन्ते निर्याणे नमउक्तिं नमस्कारोक्तिं विधेम। यथोत्क्रमणसमये ज्योतिः प्रकाशकं रूपम्। श्रुतिरपि—"तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा" इति। स्पष्टार्थम्। तथाहरादीनां त्रयाणामर्चिर्मार्गोपलक्षणानां कालोपाधीनामहः शुक्लपक्षोत्तरायणानामभिमानिन्यो देवताः सन्ति ता एवोत्तरोत्तरमर्चिर्मार्गोपलक्षणानां कालोपाधीनामहः शुक्लपक्षोत्तरायणानामभिमानिन्यो देवताः सन्ति ता एवोत्तरोत्तरमर्चिर्मार्गप्रापका भवन्ति। तत्रार्चिर्मार्गे प्रयाता ब्रह्मविदो जीवास्त्यक्तदेहाः सन्तो ब्रह्म गच्छन्ति। अत्र शातपथी श्रुतिः—"ये चामी

अरण्ये श्रद्धाः सत्यमुपासते तेऽर्चिरभिसंभवन्त्यर्चिषोहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षण्मासानुदङ्ङादित्य एति मासेभ्यो देवलोकं देवलोकादादित्यमादित्याद्वैद्युतं तान्वैद्यतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति तेषामिह न पुनरावृत्तिरस्ति" इति । भाष्यम्—अरण्ये वानप्रस्थदशां प्राप्ताः श्रद्धा गुरुशास्त्रविश्वासाः सत्यं ब्रह्मोपासते तेऽर्चिर्मार्गेऽधिकारिणो भवन्ति । तमेव मार्गमाह—अर्चिस्तेजोऽहर्दिनमापूर्यमाणपक्षः शुक्लपक्षः मकरसंक्रमादितः षण्मासान् आदित्यः सूर्य उदगेति तदुत्तरायणं तेभ्यो मासेभ्यो देवलोकं तस्मादादित्यलोकं तस्मादपि वैद्युतं विद्युल्लोकं तस्मादपि मानसः पुरुषो लिङ्गदेहावृतो जीवो ब्रह्मलोकान् सत्यलोकान् गमयति प्राप्नोति । ते तेषु ब्रह्मलोकेषु परा उत्कृष्टास्तत्त्वज्ञानवन्तः परावतो दूरदेशादागता ये वसन्ति तेषामिह संसारे न पुनरावृत्तिरस्ति । ब्रह्मलोकप्राप्तावप्युत्पन्नतत्त्वज्ञानिन एव न पुनरावर्तन्त इत्यर्थः । इदं देवयानम् ॥ २४ ॥

रा० टी०—ता देवता उद्देशेनाह—अग्निरिति । अग्निनामकदेवता ज्योतिरिति अर्चिर्नामकदेवता, अहरहरभिमानिदेवता, अभिजिद्देवतासहितेत्यपि ध्येयम् । शुक्लः शुक्लपक्षाभिमानिनी पौर्णमास्यभिमानिना सहेति ग्राह्यं, षण्मासाभिमानिनी उत्तरायणाभिमानिनी विष्वभिमानिना सहेति ज्ञेयम् । तत्र क्रमेण निर्दिष्टाग्न्यादिदेवताधिष्ठितमार्गे प्रयाताः ब्रह्मविदो जनाः ब्रह्म गच्छन्ति ॥ २४ ॥

**धूमो रात्रिस्तथा कृष्णः षण्मासा दक्षिणायनम् ॥**
**तत्र चान्द्रमसं ज्योतिर्योगी प्राप्य निवर्तते ॥ २५ ॥**

त० टी०—पुनरावृत्तिमार्गमाह—धूम इति । अत्रापि धूमशब्देन धूममार्गाभिमानिनी देवता रात्र्यादिशब्दैश्च तत्तत्कालाभिमानिन्यो देवता उपलक्ष्यन्ते । एतदपि पितृलोकाकाशादीनामुपलक्षणम् । तत्र तस्मिन् पितृयानपथि प्रयातः योगी इष्टापूर्तादिपुण्यकर्मकारी जनः चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्र पुण्यकर्मफलं भुक्त्वा पुनर्निवर्तते । तथा च श्रुतिः "अथ य इमे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्ते यो यो ह्यन्नमत्ति यो रेतः सिञ्चति तद्भूय एव भवति" संपतत्यनेनेति संपातः कर्मतत्फलयोगो यावत्तावदुषित्वा आकाशादिक्रमेण धूममार्गमेव निवर्तत इत्यर्थः । "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोति यः । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे, तद्य इह रमणीयचरणा रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणाः कपूयां योनिमापद्येरन् श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा" इति । तस्मादावृत्तिमार्गादेतस्मात्पूर्वोक्तो नित्यसुखरूपोऽनावृत्तिमार्ग एव मुमुक्षुणा प्रार्थ्य इति भावः ॥२५॥

म० टी०—देवयानमार्गस्तुत्यर्थं पितृयानमार्गमाह—धूमो रात्रिरिति । अत्रापि धूम इति धूमाभिमानिनी देवता रात्रिरिति रात्र्यभिमानिनी कृष्ण इति कृष्णपक्षाभिमानिनी षण्मासा दक्षिणायनमिति दक्षिणायनाभिमानिनी लक्ष्यते । एतदप्यन्यासां श्रुत्युक्तानामुपलक्षणम् । तथाहि श्रुतिः "ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षड्दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तद्देवा भक्षयन्ति तस्मिन् यावत्संपातमुषित्वाथैतमेवा-

ध्वानं पुनर्निवर्तन्ते" इति। तत्र धूमरात्रिकृष्णपक्षदक्षिणायनदेवता इहोक्ताः पितृलोक आकाशश्चन्द्रमा इत्यनुक्ता अपि द्रष्टव्याः। तत्र तस्मिन् पथि प्रयाताश्चान्द्रमसं ज्योतिः फलं योगी कर्मयोगीष्टापूर्तदत्तकारी प्राप्य यावत्संपातमुषित्वा निवर्तते संपतत्यनेनेति संपातः कर्म तस्मादेतस्मादावृत्तिमार्गादनावृत्तिमार्गः श्रेयानित्यर्थः॥२५॥

शं० टी०—कर्मिणः स्वकृतकर्मफलमारोहणावरोहणादुःखं श्रुत्वा विवेकवैराग्याभ्या ब्रह्मवेदनसंपादनपरा भवन्त्विति बोधयितुं दक्षिणायनमृतानां फलमाह—धूम इति। धूमो धूमाभिमानिनी देवता रात्रिः रात्र्यभिमानिनी देवता कृष्णः कृष्णपक्षाभिमानिनी देवता षण्मासाः षण्मासाभिमानिनी देवता एताः यत्र दक्षिणायने कालाभिमानिन्यो भवन्ति। तत्र दक्षिणायने प्रयातो मृतो योगी कर्मयोगी चान्द्रमसं लोकं प्राप्य तत्र चान्द्रमसं चन्द्रमसः प्राप्तं ज्योतिरिष्टापूर्तादिपुण्यकर्मसंभवं फलं प्राप्यानुभूय 'कृतात्ययेऽनुशयवान्' इति न्यायेन कर्मफलभोगसंक्षयेऽशेषकर्मानुभूत्यै निवर्तते तेनैव मार्गेण मानवं लोकं पुनरायाति पुनर्गच्छत्येवं यातायातदुःखमनन्तमहो कष्टमविवेकिनामिति सूचितं भवति॥ २५ ॥

श्री० टी०—आवृत्तिमार्गमाह—धूम इति। धूमाभिमानिनी देवता रात्र्यादिशब्दैश्च पूर्ववदेव रात्रिकृष्णपक्षदक्षिणायनरूपषण्मासाभिमानिन्यस्तिस्रो देवता उपलक्ष्यन्ते। एताभिर्देवताभिरुपलक्षितो यो मार्गस्तत्र प्रयातः कर्मयोगी चान्द्रमसं ज्योतिस्तदुपलक्षितं स्वर्गलोकं प्राप्य तत्रेष्टापूर्तकर्मफलं भुक्त्वा पुनरावर्तते। अत्रापि श्रुतिः—"ते धूममभिसंभवन्ति धूमाद्रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान्षण्मासान्दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति" इत्यादिः। तदेवं निवृत्तिकर्मसहितोपासनया क्रममुक्तिः काम्यकर्मभिश्च स्वर्गभोगानन्तरमावृत्तिः निषिद्धकर्मभिस्तु नरकभोगान्तरमावृत्तिः क्षुद्रकर्मणां जन्तूनां त्वत्रैव पुनः पुनर्जन्मेति द्रष्टव्यम् ॥ २५ ॥

स० टी०—तथा धूमादिशब्दैश्च लक्ष्यन्ते देवता यतः ॥ मार्गभूता मृतांस्तांस्तान्प्रापयन्ति च कर्मिणः ॥ १ ॥ तस्मिन्मार्गे मृता यान्ति फलं चान्द्रमसं जनाः ॥ कर्मिणः कर्मसंसिद्धिं प्राप्य भुक्त्वा पतन्त्यधः ॥ २ ॥ पितृदेवैकभोग्यत्वं यस्माच्चन्द्रमसस्ततः ॥ लोकं चान्द्रमसं गत्वा कर्मिणोऽधः पतन्त्यमी॥३॥२५॥

भा० टी०—देवयानस्तुतये पितृयानमुपन्यस्यति—धूम इति। धूमादिशब्दैस्तत्तदभिमानिन्यो देवता अतिवाहिकाः पूर्ववद्ग्राह्याः न तु मार्गचिह्नानि भोगभूमयो वा। तत्र प्रयाता इति विभक्तिं विपरिणम्यानुषज्जते। तस्मिन्मार्गे मृत इत्यर्थः। योगी इष्टापूर्तदत्तकारी कर्मयोगी चन्द्रमसि चन्द्रे भवं चान्द्रमसं ज्योतिः फलं प्राप्य भुक्त्वा तत्क्षयात् पुनर्निवर्तते। एतदप्यन्यासां श्रुत्युक्तानामुपलक्षणार्थम्। तथा च श्रुतिः "ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान् षट् दक्षिणैति मासांस्तान्नैते संवत्सरमभिप्राप्नुवन्ति मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चन्द्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तते" इति। तथा च पुनःपुनरावृत्तिलक्षणादस्मान्मार्गात्पूर्वोक्तोऽपुनरावृत्तिलक्षणो मार्गो ज्यायानित्यभिप्रायः॥ २५ ॥

प० टी०—अथ पितृयानमाह—धूम इति। पूर्वोक्तमार्गाद्विपरीते धूममार्गे रात्रिकृष्णपक्षदक्षिणायनाभिमानिदेवताभिः पितृलोकं प्राप्य ते ततस्तत्रारोहणमार्गेण योगी चान्द्रमसं ज्योतिः प्राप्य पुनरवरोहणमार्गेण निवर्तते पुनरावर्तते। श्रुतिरपि—"अथ ये यज्ञेन दानेन तपसा लोकं यजन्ति ते धूममभिसंभवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्षमपक्षीयमाणपक्षाद्यान् षण्मासान् दक्षिणादित्य एति मासेभ्यः पितृलोकं पितृलोकाच्चन्द्रं ते चन्द्रं प्राप्यान्नं भवन्ति तांस्तत्र देवा यथा सोमं राजानमाप्यायस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति तेषां यदा तत्पर्यवैत्यथेममेवाकाशमभिनिष्पद्यन्त आकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं ते पृथिवीं प्राप्यान्नं भवन्ति त एवमेवानुपरिवर्तन्तेऽथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदि दन्दशूकम्"

भाष्यम्—तत्र चन्द्रमिति । चन्द्रं प्राप्यान्नं भवन्ति देवानामन्नत्वेन परिणमन्ति । यथा देवाः सोमं राजानमाप्यायस्वापक्षीयस्वेति मन्त्रेण भक्षयन्ति तथैनानपि भक्षयन्ति ततस्तेषां भक्षितानां यदा तत्पर्यवेत्यवरोहणमार्गेण निष्क्रमणं भवति अथ तदाकाशमभिनिष्पद्यन्ते अन्तरिक्षलोके प्रादुर्भवन्त्याकाशाद्वायुं वायोर्वृष्टिं वृष्टेः पृथिवीं तत्रान्नमोषधीस्त्वं प्राप्य ते एवममुना प्रकारेणानुवर्तन्ते कीटादियोनिं प्राप्नुवन्ति ततोऽप्यधमाधमयोनिं गच्छन्ति । तैत्तिरीयकेऽपि—"प्रजानन्तः प्रतिगृह्णन्ति पूर्वे प्राणमङ्गेभ्यः परियाचरन्तम् । सुवर्गं याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठ शरीरैः" इति । भाष्यम्—पूर्वे योगिनः प्रजानन्तस्तत्त्वज्ञानवन्तोऽङ्गेभ्यः शरीरेभ्यः पर्याचरन्तमुद्गच्छन्तं प्राणं प्रतिगृह्णन्ति स्वाधीनं कुर्वन्ति स्वेच्छया देहं त्यजन्ति । भो चेतस्त्वं तु देवयानैः पथिभिरर्चिरादिमार्गैः सुवर्गं स्वर्गं सत्यलोकं याहि, अथवा तत्कर्तुमशक्तश्चेत्तर्हि कर्मणा पितृलोकेप्सुः पितृयानेन कृत्वा पुनः शरीरैरवरोहणमार्गप्राप्तैरोषधीषु प्रतितिष्ठ अन्नत्वेन परिणतो भव परं तूभयमार्गपरिभ्रष्टो मा भवेत्यर्थः । ऋक्शाखायामपि "द्वे सृती अशृणवं पितॄणामहं देवानामुत मर्त्यानाम् । ताभ्यामिदं विश्वमेजत्समेति यदन्तरा पितरं मातरं च" इति । भाष्यम्—पितॄणां देवानामुतापि मनुष्याणां द्वे सृती द्वौ मार्गौ देवयानपितृयानाख्यावहमशृणवमश्रौषम् याभ्यां विश्वं पितरं पालकत्वेन पितृभूतां द्यां तथा धारकत्वेन मातृभूतां पृथिवीमन्तरा द्यावापृथिव्योर्मध्ये भवति तदिदं विश्वमग्निना संस्कृतं सदेतदेव लोकं पितृलोकं च गच्छंस्ताभ्यां मार्गाभ्यां समेति गच्छति ॥ २५ ॥

रा० टी०—धूम इत्यादिधूमाद्यभिमानिदेवतानिर्देशः । तत्र धूमादिदेवताधिष्ठितमार्गे प्रयाता इति योज्यम् । योगी कर्मयोगी । पूर्वत्र ब्रह्मविद इति अत्र योगीतिविशेषणाच्च क्रमान्मार्गद्वयस्य ज्ञानकर्मसाध्यत्वमुक्तं ध्येयम् । एतच्च मार्गद्वयमन्तकाले तद्विषयस्मृतिमतामेवेति ज्ञेयम् । तदाह सूत्रे 'योगिनः प्रति च स्मर्यते स्मार्ते चैते' इति ॥ २५ ॥

**शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते ।**
**एकया यात्यनावृत्तिमन्ययावर्तते पुनः ॥ २६ ॥**

त० टी०—उक्तौ मार्गौ नित्यतया निरूपयन्नुपसंहरति—शुक्लकृष्णे इति । शुक्ला अर्चिरादिका प्रकाशमयत्वात्, कृष्णा धूमादिका तमोमयत्वात् । एते गती मार्गौ ज्ञानाधिकारिणः कर्माधिकारिणश्च द्विविधस्य जगतः शाश्वते अनादी मते शास्त्रज्ञैरिति शेषः । तयोरेकया शुक्लया कश्चिदधिकारी अनावृत्तिं याति । अन्यया कृष्णया पुण्यकर्मा पुनरावर्तते ॥ २६ ॥

म० टी०—उक्तौ मार्गावुपसंहरति—शुक्लेति । शुक्ला अर्चिरादिगतिः ज्ञानप्रकाशमयत्वात् कृष्णा धूमादिगतिः ज्ञानहीनत्वेन तमोमयत्वात् । ते एते शुक्लकृष्णे गती मार्गौ हि प्रसिद्धे । सगुणविद्याकर्माधिकारिणोः जगतः सर्वस्यापि शास्त्रज्ञस्य शाश्वते अनादी मते संसारस्यानादित्वात् तयोरेकया शुक्लया यात्यनावृत्तिं कश्चिदन्यया कृष्णया पुनरावर्तते सर्वोऽपि ॥ २६ ॥

शं० टी०—ननु कादाचित्कमेवैतदुःखं गृहिणामित्याशङ्कायामाह—शुक्लकृष्णे इति । शुक्लकृष्णे ज्ञानप्रकाशाधिकाग्न्यादिदेवताधिष्ठितत्वाद्विद्याप्राप्यत्वात् प्रकाशलोकभूयिष्ठत्वाद्ब्रह्मप्राप्तिहेतुत्वेनोत्कृष्टत्वाच्च देवयानलक्षणा गतिः शुक्ला भवति । अनतिप्रकाशदेवताधिष्ठितत्वात् धूमप्राचुर्यात् भूयः संसारहेतुत्वेन निकृष्टत्वाच्च पितृयानलक्षणा गतिः कृष्णा भवति । एवं शुक्लकृष्णे निर्मलमलिनस्वभावे एते पूर्वोक्ते गती मार्गौ जगतो लोकस्यात्र जगच्छब्देन ज्ञानकर्माधिकारिणो गृह्यन्ते न त्वन्ये केवलप्राकृतास्तेषां ज्ञानकर्मणोरनधिकारात्तो ज्ञानकर्मस्वधिकारिणामेव मोक्षार्थं कर्मफलानुभूत्यर्थं च "कर्मणा पितृलोको विद्यया देवलोकः" इत्यादि श्रुतिप्रसिद्धे एते पदव्यौ शाश्वते मते जीवानामनादित्वान्नित्यत्वादनन्तत्वाच्च तेषां यावत्संसारस्ता-

वत्पर्यन्तं स्वर्गसिद्धये मोक्षसिद्धये च द्वावप्येतौ मार्गौ नित्यावेव भवत इत्यर्थः । एवं तयोर्नित्यत्वं प्रतिपाद्य चोभयोर्नियतं फलमाह—एकयेति । एतयोर्द्वयोर्गत्योर्मध्ये एकया गत्या शुक्लया विद्वाननावृत्तिं मुक्तिं याति "न च पुनरावर्तते न च पुनरावर्तते" इति श्रुतेः । अन्यया गत्या कृष्णयाऽविद्वानावर्तते "प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे" इति श्रुतेः पुनर्जन्मादिसंसारायागच्छतीत्यर्थः ॥ २६ ॥

श्री० टी०—उक्तौ मार्गावुपसंहरति—शुक्लेति । शुक्लाऽर्चिरादिगतिः प्रकाशमयत्वात्, कृष्णा धूमादिगतिस्तमोमयत्वात् । एते गती मार्गौ ज्ञानकर्माधिकारिणो जगतः शाश्वते अनादी संमते संसारस्यानादिऽनात्वात् । तयोरेकया शुक्लयानावृत्तिं मोक्षं याति । अन्यया कृष्णया तु पुनरावर्तते ॥ २६ ॥

स० टी०—अर्चिरादिगतिः शुक्ला धीप्रकाशमयत्वतः ॥ धूमादिकगतिः कृष्णा ज्ञानहीनतया तमः ॥१॥ शास्त्रज्ञस्यापि सर्वस्य विद्याकर्माधिकारिणः ॥ एते गती प्रसिद्धे द्वे अनादिजगतो मते ॥ २ ॥ संसारस्याप्यनादित्वादनादित्वं तयोर्मतम् ॥ शुक्लया यात्यनावृत्तिं कृष्णयाऽऽवर्तते पुनः ॥ ३ ॥ २६ ॥

भा० टी०—शुक्ला ज्ञानप्रकाशहेतुत्वात्तदभावात्कृष्णा एते शुक्लकृष्णे गती मार्गौ जगतः उपासनायां कर्मणि चाधिकृतस्य शाश्वते नित्ये अनादिरूपे मते अभिप्रेते संसारस्यानादित्वात् । तत्रैकया शुक्लया गत्या अनावृत्तिं याति अन्यया कृष्णया गत्या पुनर्भूयः आवर्तते ॥ २६ ॥

प० टी०—तदेवं निवृत्तिकर्मोपासनया क्रममुक्तिं तथा काम्यकर्मभिः स्वर्गभोगानन्तरमावृत्तिमुक्त्वेदानीमुपसंहरन्नस्पष्टमाचष्टे—शुक्लकृष्णे इति । शुक्लार्चिरादिगतिः प्रकाशरूपिणी, कृष्णा धूमादिगतिस्तमोरूपिणी । एते गती मार्गौ ज्ञानकर्माधिकारिणो जगतः शाश्वते अनादी संमते संसारस्यानादित्वात् । तयोरेकया शुक्लयाऽनावृत्तिं मोक्षं गच्छति । अन्यया कृष्णया तु पुनरावर्तते ॥ २६ ॥

रा० टी०—उक्तौ मार्गौ निगमयति—शुक्लेति । एते प्रागुक्ते शुक्लकृष्णे गती मार्गौ जगतः ज्ञानकर्मयोगिजगत्संबन्धिनौ शाश्वते शाश्वत्यौ मते । एकया गतोऽनावृत्तिं याति अन्यया गतः पुनरावर्तत इति ॥२६॥

**नैते सृती पार्थ जानन्योगी मुह्यति कश्चन ॥**
**तस्मात्सर्वेषु कालेषु योगयुक्तो भवार्जुन ॥ २७ ॥**

त० टी०—उक्तस्य मार्गद्वयस्य ज्ञानफलं दर्शयन्योगमेव दृढीकरोति—नैते इति । एते सृती मार्गौ हे पार्थ परमपदप्राप्तये एका संसारावर्तनायापरेति जानन् हेयोपादेयतया विवेचयन् योगी ज्ञाननिष्ठो ध्याननिष्ठो वा कश्चन कश्चिदपि न मुह्यति पुनरावृत्तिनियतं स्वर्गादिफलं पुरुषार्थतया न प्रत्येति । यस्मादेवं तस्मादपुनरावृत्तये हे अर्जुन त्वं सर्वेषु कालेषु योगयुक्तो ज्ञाननिष्ठो ध्याननिष्ठो वा भव ॥ २७ ॥

म० टी०—गतेरुपास्यत्वाय तद्विज्ञानं स्तौति—नैते सृती पार्थ इति । एते सृती मार्गौ हे पार्थ जानन् क्रममोक्षायैका पुनःसंसारायापरेति निश्चिन्वन् योगी ध्याननिष्ठो न मुह्यति केवलं कर्म धूमादिमार्गप्रापकं कर्तव्यत्वेन न प्रत्येति कश्चन कश्चिदपि । तस्माद्योगस्यापुनरावृत्तिफलत्वात्सर्वेषु कालेषु योगयुक्तः समाहितचित्तो भवापुनरावृत्तये हे अर्जुन ॥ २७ ॥

शं० टी०—शुक्लया गतेः फलं मोक्षः कृष्णाया गतेः फलं बन्ध इति द्वयोर्गत्योः स्वरूपं फलं च कारणं च विदितवतो विदुषः प्रमादोऽत्र न कर्तव्य इति सूचयितुमाह—नैत इति । एते निरुक्तलक्षणोत्तरायणदक्षिणायनसंज्ञिके सृती पदव्यौ जानन् श्रुतिस्मृतियुक्तिभिस्तयोर्बन्धमोक्षकारणत्वं सम्यग् जानन् कश्चन कश्चिदपि योगी मोक्षेच्छया योगनिष्ठायां प्रवृत्तो हंसो वा परमहंसो वा मुमुक्षुर्न मुह्यति मोहो नाम मोक्षमार्गविरोधि-

मार्गस्मरणं प्रमादेनापि तदवलम्बनं च न करोति क्वचिदपि योगनिष्ठायां प्रमत्तो न भवेदित्यर्थः। यस्मादेतयोर्गत्योर्बन्धमोक्षहेतुत्वं प्रसिद्धं तस्मात्त्वं मुमुक्षुश्चेत् सर्वेषु कालेष्वाहारशयनासनादिष्वपि सर्वदा योगयुक्तो भव ब्रह्मानुसंधानमेव कुरु न क्वचिदपि बाह्यानुसंधानमित्यर्थः ॥ २७ ॥

श्री० टी०—मार्गज्ञानफलं दर्शयन् भक्तियोगमुपसंहरति—नैत इति। एते सृती मार्गौ हे पार्थ मोक्षसंसारप्रापकौ जानन् कश्चिदपि योगी न मुह्यति सुखबुद्ध्या स्वर्गादिफलं न कामयते किंतु परमेश्वरनिष्ठ एव भवतीत्यर्थः। स्पष्टमन्यत् ॥ २७ ॥

स० टी०—तत्रैका क्रममोक्षाय संसारायापरा स्मृता ॥ इत्येवं ध्याननिष्ठो हि निश्चिन्वन्नैव मुह्यति ॥ १ ॥ योगस्यापुनरावृत्तिफलत्वादेव सर्वदा ॥ निरन्तरं समाधानं चित्तं कुरु विमुक्तये ॥ २ ॥ २७ ॥

भा० टी०—एते सृती मार्गौ जानन् पुनरावृत्तिलक्षणसंसारायैकाऽपुनरावृत्तिलक्षणमोक्षायान्येऽति निश्चयवान्योगी ध्यानयोगी कश्चिदपि न मुह्यति। तस्मात्त्वमपि गतिद्वयं ज्ञात्वा मोहरहितः सर्वेषु कालेषु योगयुक्तः समाहितो भव हे अर्जुन। पूर्वार्धे पार्थेति संबोधनस्य मार्गद्वयज्ञाता योगाभ्यासेन क्रमेण मुच्यते न तु मातुर्गर्भे पुनरायातीत्यभिप्रायः। उत्तरार्धेऽर्जुनेति संबोधनस्य तु सर्वेषु कालेषु समाधानेनैव स्वस्वरूपं शुद्धं परं ब्रह्मावाप्स्यसीति ॥ २७ ॥

प० टी०—अथ मार्गज्ञानफलमाह—नैते इति। भो पार्थ योगी सन्नेते सृती मार्गौ जानन् कश्चिदपि न मुह्यति सुखबुद्ध्या स्वर्गादिसुखं न कामयते किंत्वात्मनिष्ठ एव भवति। तस्मात्सर्वेषु कालेषु भोजनादिसमयेष्वपि योगयुक्तो जीवब्रह्मणोरैक्ये परिनिष्ठितो भव ॥ २७ ॥

रा० टी०—मार्गयोरुक्तेः फलमाह—नैते इति। हे पार्थ एते प्रागुक्ते सृती मार्गौ जानन्योगी सृत्युपायभूतज्ञानकर्मानुष्ठानवान्। यद्वा योगी ब्रह्मापरोक्षज्ञानवानेते सृती जानन्साक्षात्कुर्वन्कश्चन कोऽपि न मुह्यति भगवद्विस्मृतिरूपमोहं न प्राप्नोति। तस्माद्योगस्य पुमर्थहेतुत्वात्सर्वदा भगवज्ज्ञानभक्तिपूर्वं स्वोचितनिवृत्तिकर्मानुष्ठानरूपोपाययुक्तो भवेति। द्विःसंबोधनमादरार्थम् ॥ २७ ॥

**वेदेषु यज्ञेषु तपस्सु चैव दानेषु यत्पुण्यफलं प्रदिष्टम् ॥**
**अत्येति तत्सर्वमिदं विदित्वा योगी परं स्थानमुपैति चाद्यम् ॥ २८ ॥**

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे तारकब्रह्मयोगो[1] नामाष्टमोऽध्यायः ॥ ८ ॥

त० टी०—तदेवमध्यायद्वयोक्तशास्त्रार्थनिर्णयस्य फलं वदन्नध्यायमुपसंहरति—वेदेष्विति। स्वाध्यायविधिना गुरुशुश्रूषणपूर्वकसम्यगधीतेषु वेदेषु यज्ञेषु साङ्गोपाङ्गतया श्रद्धया सम्यगनुष्ठितेषु तपस्सु शारीरमानसवाङ्मयेषु सम्यक् श्रद्धया सुतप्तेषु दानेषु देशे काले सुपात्रे च श्रद्धया प्रतिपादितेषु यत् पुण्यफलं प्रदिष्टं सुकृतस्य फलं निर्दिष्टं शास्त्रेण तत्सर्वमत्येति अतिक्रम्यात्यल्पमेतदिति निश्चयेनोपेक्ष्य तदुत्कृष्टानन्तफलमेति। किं कृत्वा इदमध्यायद्वयोक्तं भगवदैश्वर्याख्यसप्तप्रश्ननिर्णयार्थं विदित्वा सम्यगवधार्यानुष्ठाय च योगी ज्ञाननिष्ठो ध्याननिष्ठो वा भूत्वा परमुत्कृष्टं सर्वयोगिप्राप्यं स्थानं पारमेश्वरमाद्यं सनातनमुपैति प्राप्नोति ॥ २८ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायामष्टमोऽध्यायः ॥ ८ ॥

१ अक्षरब्रह्मयोगो नामेति क्वचित्पाठः।

**म० टी०**–पुनः श्रद्धावृद्ध्यर्थं योगं स्तौति–**वेदेष्विति** । वेदेषु दर्भपवित्रपाणित्वप्राङ्मुखत्वगुर्वधीनत्वादिभिः सम्यगधीतेषु यज्ञेष्वङ्गोपाङ्गसाहित्येन श्रद्धया सम्यगनुष्ठितेषु तपस्सु शास्त्रोक्तेषु मनोबुद्ध्याद्यैकाग्र्येण श्रद्धया सुतप्तेषु दानेषु तुलापुरुषादिषु देशे काले पात्रे च श्रद्धया सम्यग्दत्तेषु यत्पुण्यफलं पुण्यस्य धर्मस्य फलं स्वर्गस्वाराज्यादि प्रदिष्टं शास्त्रेण अत्येत्यतिक्रामति। तत्सर्वमिदं पूर्वोक्तसप्तप्रश्ननिरूपणद्वारेणोक्तं विदित्वा सम्यगनुष्ठानपर्यन्तमवधार्यानुष्ठाय च योगी ध्याननिष्ठः न केवलं तदतिक्रामति परं सर्वोत्कृष्टमैश्वरं स्थानमाद्यं सर्वकारणमुपैति च प्रतिपद्यते च सर्वकारणं ब्रह्मैव प्राप्नोतीत्यर्थः। तदनेनाध्यायेन ध्येयत्वेन तत्पदार्थो व्याख्यातः॥ २८॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायामधिकारिभेदेनाक्षरपरब्रह्मविवरणं नामाऽष्टमोऽध्यायः ॥ ८ ॥

**शं० टी०**–एवमुत्तरायणं दक्षिणायनं च योगिभिः कर्मिभिश्च गम्यं मार्गद्वयम् । तत्र गन्तॄणां योगिनां कर्मयोगिनां च फलं सम्यक् प्रतिपाद्याऽधुना सगुणब्रह्मोपासकस्यार्चिरादिलोके प्राप्यं सुखं ब्रह्मप्राप्तिं च विस्पष्टयति–**वेदेष्विति** । वेदेषु ऋगादिषु साङ्गेषु सलक्षणेष्वध्ययनविध्युक्तनियमेन सम्यगधीतेषु सत्सु यज्ञेष्वाधानाद्यश्वमेधान्तेषु यागेषु साद्गुण्येन साङ्गोपाङ्गसम्यगनुष्ठितेषु तपःसु कृच्छ्रचान्द्रायणादिष्ववैकल्येन सम्यगाचरितेषु दानेषु कन्यागवाश्वादिविषयेषु यथोक्तदेशकालपात्रादिसंपत्त्या सम्यक्कृतेषु सत्सु तत्कर्तॄणां यत्पुण्यफलं यदूर्ध्वलोकेषु भोक्तव्यं सुखं शास्त्रे प्रदिष्टं निर्दिष्टं तत्सर्वमपि इदमक्षरं ब्रह्मपरममित्यादिना निरूपितमध्यात्मकर्माधिभूताधिदैवाधियज्ञादिभेदनिर्मुक्तं ब्रह्म प्रणवालम्बनं वा विदित्वा श्रद्धाभक्तिभ्यामजस्रं सम्यगुपास्य योगी सगुणब्रह्मोपासकः स्वयमग्न्यादिब्रह्मभवनान्तेषु लोकेषु गमनकाले स्थाने स्थाने सम्यगग्न्यादिभिः पूज्यमानः सन् पूर्वोक्तं सुखमत्येति ततोऽप्यतिशयेन प्राप्नोति । नैतावन्मात्रमेव फलं ब्रह्मोपास्तेः किंतु स्थानं सर्वाधिष्ठानमाद्यं सर्वकारणं परं ब्रह्मोपैति प्राप्नोति च मुक्तिं च गच्छतीत्यर्थः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यामष्टमोऽध्यायः ॥ ८ ॥

**श्री० टी०**–अध्यायार्थमष्टप्रश्नार्थनिर्णयं सफलमुपसंहरति–**वेदेष्विति** । वेदेष्वध्ययनादिभिः यज्ञेष्वनुष्ठानादिभिः तपःसु कायशोषणादिभिः दानेषु च सत्पात्रार्पणादिभिः यत्पुण्यफलमुपदिष्टं शास्त्रेषु तत्सर्वमत्येति ततोऽपि श्रेष्ठं योगैश्वर्यं प्राप्नोति। किं कृत्वा इदमष्टप्रश्नार्थनिर्णयेनोक्तं तत्त्वं विदित्वा ततश्च योगी ज्ञानी भूत्वा परमुत्कृष्टमाद्यं जगन्मूलभूतं स्थानं विष्णोः परमं पदं प्राप्नोति ॥ २८ ॥

अष्टमेऽष्टविशिष्टेऽष्टसंपृष्टार्थाष्टनिर्णयैः ॥ अक्लिष्टमिष्टधाप्राप्तिः स्पष्टिताष्टमवर्त्मना ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां महापुरुषयोगो नामाष्टमोऽध्यायः ॥ ८ ॥

**स० टी०**–पुनः श्रद्धाविवृद्ध्यर्थं योगं स्तौति रमापतिः ॥ वेदोक्तव्रतसंदोहैरधीतेष्वागमेषु च ॥ १ ॥ साङ्गोपाङ्गेषु यज्ञेषु श्रद्धयानुष्ठितेषु च ॥ शास्त्रोक्तेषु सुतप्तेषु तपस्स्वैकाग्र्यया धिया ॥ २ ॥ देशे काले च पात्रे च तुलापुरुषकादिषु ॥ सम्यग्दत्तेषु यत्पुण्यं फलं स्वर्गादिकं स्मृतम् ॥ ३ ॥ श्रुतौ स्मृतौ पुराणे वा तत्सर्वमतिगच्छति ॥ योगी सम्यगिदं सप्तप्रश्नद्वारेण कीर्तितम् ॥ ४ ॥ ज्ञात्वा सम्यगनुष्ठानपर्यन्तमवधार्य च ॥ ध्याननिष्ठो ह्यनुष्ठाय प्रकृष्टं वैष्णवं पदम् ॥ ५ ॥ सर्वाधिष्ठानमानन्दं सुखेन प्रतिपद्यते ॥ ध्येयत्वेनात्र व्याख्यातस्तत्पदार्थो यथातथम् ॥ ६ ॥ २८ ॥

यो वेदान्तेऽक्षरात्मा बहुसुकृतवतां ध्येय आनन्दकन्दः प्रेम्णा लभ्यो य आराच्चरसचरमिदं कल्पितं यत्र धाम्नि ॥ यं प्राप्यावृत्तिशून्यो निवसति परमे स्वे महिम्न्यात्मनिष्ठस्तं श्रीकृष्णं मुकुन्दं स्मितमधुरमुखं सर्वदा संश्रयेऽहम् ॥

इति भावप्रकाशे श्रीसदानन्दविदाकृते ॥ ब्रह्मध्यानप्रधानोऽयमष्टमः पूर्णतां गतः ॥

एतदध्यायटीकाश्लोकसंख्या ॥ १४९ ॥ आदितष्टीकाश्लोकसंख्या ॥ २४३६ ॥

**भा० टी०**—श्रद्धाविवृद्ध्यर्थं योगस्य माहात्म्यं श्रावयति—**वेदेष्विति** । वेदेषु सम्यगधीतेषु अध्ययनस्य सम्यक्त्वं च पवित्रपाणित्वप्राङ्मुखत्वगुर्वधीनत्वब्रह्मचर्यपालनत्वादिसाहित्यं यज्ञेषु श्रद्धयाङ्गोपाङ्गसाहित्येन साद्गुण्येनानुष्ठितेषु तपःसु च शास्त्रोक्तेषु श्रद्धया मनोबुद्ध्याद्यैकाग्र्यपूर्वकं सुतप्तेषु दानेषु च सम्यग्दत्तेषु सम्यक्त्वं च गोदानादीनां श्रद्धया पुण्यकाले पुण्यदेशे च पात्रेभ्यो दीयमानत्वं स तेषु यत्पुण्यस्य फलं स्वर्गादि शास्त्रे प्रदिष्टमुपदिष्टं तत्सर्वं निखिलं फलमत्येति अतीत्य गच्छति, इदं सप्तमप्रश्ननिर्णयोक्तं तत्त्वं विदित्वा सम्यगवधार्यानुष्ठाय ध्यानयोगी परमैश्वरं स्थानमाद्यं सर्वकारणं ब्रह्मोपैति प्रतिपद्यते । यत्तु इदमष्टप्रश्ननिर्णयेनोक्तं तत्त्वं विदित्वेति तन्न, ते ब्रह्मेत्यादिना प्रश्नबीजानां सप्तत्वदर्शनात्प्रश्नसमाधाने चाष्टमप्रश्नोत्तरदानस्यादर्शनात्पूर्वाध्यायान्ते भगवतोपक्षिप्तानां ब्रह्माध्यात्मादिसप्तानां पदार्थानां तत्त्वं जिज्ञासुरर्जुन उवाचेति स्वपूर्वग्रन्थविरोधाच्च । एतेनाध्यायार्थमष्टप्रश्ननिर्णयार्थमुपसंहरतीत्यपि प्रत्युक्तम् । योगी ध्यानयोगी आद्यं परं क्रमेणोपैतीति बोध्यम् । तदनेनाष्टमाध्यायेन सप्तप्रश्ननिर्णये ध्येयं ब्रह्म प्रतिपादयता ध्यानयोगमार्गं च कर्मयोगमार्गादुत्कृष्टं दर्शयता ध्येयत्वेन तत्पदार्थो व्याख्यातः ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायामष्टमोऽध्यायः ॥ ८ ॥

**प० टी०**—अथ सर्वोपायापेक्षया ज्ञानयोगिन एवोत्तमपदप्राप्तिर्नान्यस्येत्याह—**वेदेष्विति** । वेदेष्वध्ययनादिभिर्यागेषु ज्योतिष्टोमादिषु तपस्सु कृच्छ्रचान्द्रायणादिषु दानेषु तुलाभारादिषु यद्धूममार्गप्रापकं पुण्यफलं प्रदिष्टं तद्योगी विदित्वा ज्ञानी भूत्वा सर्वमप्यतिक्रम्याद्यं परमुत्कृष्टं स्थानं प्रागुक्तं विष्णोः पदं प्राप्नोति ॥ २८ ॥

अथाध्यायतात्पर्यम् ।

गृह्णत्यात्मप्रकाशान्निजविषयमतोऽध्यात्ममत्रेन्द्रियं स्यात्सूर्याद्यं तत्प्रवृत्तिं प्रजनयति ततश्चाधिदैवं तदुक्तम् ।
रूपाद्यं चाधिभूतं यदनुगतमनुध्येयमात्मस्वरूपं तेनान्ते तस्य तिष्ठाम्यहमभिमुखमित्यष्टमे स्पष्टमाह ॥ ८ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां सप्तप्रश्नार्थनिर्णयो नामाष्टमोऽध्यायः ॥ ८ ॥

**रा० टी०**—अध्यायार्थं फलोक्त्योपसंहरति—**वेदेष्विति** । वेदाध्ययनयज्ञानुष्ठानकृच्छ्रादितपश्चरणेषु यदेव पुण्यफलं प्रदिष्टं निर्दिष्टमस्ति तत्सर्वमेवेति वा एवशब्दान्वयः । इदमध्यात्मादिस्वरूपं भगवतोऽशेषस्रष्टृत्वं शुक्लकृष्णमार्गादिकं च प्रागुक्तं विदित्वात्येति अतिक्रामति ततोऽतिशयितफलवान्भवति । किं तदित्यत आह—योगीति । ज्ञानोपायवान् आद्यं परं स्थानं विष्णोः स्थानमुपैति चेति । यद्वा 'मार्गौ ब्रह्म च यः पश्येत्साक्षादेवापरोक्षतः । सर्वपुण्यातिगोऽमुष्मिन्यात्यसौ ब्रह्म तत्परम्' इत्युक्तदिशा मार्गब्रह्ममात्रपरामर्शकोऽत्रेदंशब्दः । विदित्वेत्यस्य साक्षात्कृत्वेत्यर्थः ॥ २८ ॥

इति श्रीगीतार्थसंग्रहे राघवेन्द्रयतिकृतेऽष्टमोऽध्यायः ॥ ८ ॥

## अथ नवमोऽध्यायः ।

**श्रीभगवानुवाच–इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ॥**
**ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात् ॥ १ ॥**

त० टी०–पूर्वं सप्तमाष्टमाध्याययोर्भगवदैश्वर्यं भक्तविशेषा भक्त्यैव संसारोत्तरणपूर्वकभगवत्प्राप्तिस्तत्प्रकारनिर्धारणं प्राप्तौ ज्ञानयोगध्यानयोगयोरसाधारणोपायत्वं तद्वतोऽर्चिरादिगतया परमपदप्राप्तिस्तदभाववतः संसारावृत्तिरिति प्रतिपादितम् । इदानीं भगवत्तत्त्वज्ञानस्य स्वरूपं निरूपयितुं भक्तेश्चासाधारणं प्रभावं द्योतयितुं नवमाध्याय आरभ्यते । तत्र तावज्ज्ञानमाहात्म्यमभक्तनिन्दां च व्यञ्जयितुं श्रीभगवानुवाच–इदं त्विति । इदं गुह्यतमं गुह्यं धर्मज्ञानं ततो देहादिव्यतिरिक्तात्मज्ञानं गुह्यतरं, ततोऽपि परमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमं भक्त्यन्वितं परमात्मविषयकं ज्ञायते स्वरूपयाथात्म्यमनेनेति ज्ञानं विज्ञानसहितं उपास्योपासनगतविशेषज्ञानसहितमनसूयवे मयि दोषारोपणमकुर्वते ते तुभ्यं वक्ष्यामि। यज्ज्ञानं वक्ष्यमाणमनुष्ठानपर्यन्तं ज्ञात्वा अशुभात्संसारान्मत्प्राप्तिविरोधिनः सर्वस्माद्विमोक्ष्यसे ॥ १ ॥

म० टी०–पूर्वाध्याये मूर्धन्यनाडीद्वारकेण हृदयकण्ठभ्रूमध्यादिधारणासहितेन सर्वेन्द्रियद्वारसंयमगुणकेन योगेन स्वेच्छयोत्क्रान्तप्राणस्यार्चिरादिमार्गेण ब्रह्मलोकं प्रयातस्य तत्र सम्यग्ज्ञानोदयेन कल्पान्ते परब्रह्मप्राप्तिलक्षणा क्रममुक्तिर्व्याख्याता । तत्र चानेनैव प्रकारेण मुक्तिर्लभ्यते नान्यथेत्याशङ्क्य 'अनन्यचेताः सततं यो मां स्मरति नित्यशः । तस्याहं सुलभः' इत्यादिना भगवत्तत्त्वविज्ञानात्साक्षान्मोक्षप्राप्तिरभिहिता । तत्र चानन्या भक्तिरसाधारणो हेतुरित्युक्तम् पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया इति । तत्र पूर्वोक्तयोगधारणापूर्वकप्राणोत्क्रमणार्चिरादिमार्गगमनकालविलम्बादिक्लेशमन्तरेणैव साक्षान्मोक्षप्राप्तये भगवत्तत्त्वस्य तद्भक्तेश्च विस्तरेण ज्ञापनाय नवमोऽध्याय आरभ्यते । अष्टमे ध्येयब्रह्मनिरूपणेन तद्ध्याननिष्ठस्य गतिरुक्ता नवमे तु ज्ञेयब्रह्मनिरूपणेन ज्ञाननिष्ठस्य गतिरुच्यत इति संक्षेपः । तत्र वक्ष्यमाणज्ञानस्तुत्यर्थास्त्रयः श्लोकाः–इदमिति । इदं प्रागबहुधोक्तमग्रे च वक्ष्यमाणमधुनोच्यमानं ज्ञानं शब्दप्रमाणकं ब्रह्मतत्त्वविषयकं ते तुभ्यं प्रवक्ष्यामि । तुशब्दः पूर्वाध्यायोक्ताद्ध्यानाज्ज्ञानस्य वैलक्षण्यमाह । इदमेव सम्यग्ज्ञानं साक्षान्मोक्षप्राप्तिसाधनं न तु ध्यानं तस्याज्ञानानिवर्तकत्वात् । तत्त्वन्तःकरणशुद्धिद्वारेणेदमेव ज्ञानं संपाद्य क्रमेण मोक्षं जनयतीत्युक्तम् । कीदृशं ज्ञानं गुह्यतमं गोपनीयतममतिरहस्यत्वात् यतो विज्ञानसहितं ब्रह्मानुभवपर्यन्तं ईदृशमतिरहस्यमप्यहं शिष्यगुणाधिक्याद्वक्ष्यामि ते तुभ्यमनसूयवे असूया गुणेषु दोषदृष्टिस्तदाविष्करणादिफला सर्वदायमात्मैश्वर्यख्यापनेनात्मानं प्रशंसति मत्पुरस्तादित्येवंरूपा तद्रहिताय । अनेनार्जवसंयमावपि शिष्यगुणौ व्याख्यातौ । पुनः कीदृशं ज्ञानं यज्ज्ञात्वा प्राप्य मोक्ष्यसे सद्य एव संसारबन्धनादशुभात्सर्वदुःखहेतोः ॥ १ ॥

शं० टी०–मन्दबुद्धेश्चित्तशुद्ध्यर्थं योगमार्गेण ब्रह्मप्राप्त्यर्थं चाध्यात्मादिभेदरहितमक्षरशब्दवाच्यं ब्रह्मोपास्यत्वेनोपदिश्य तदुपासकस्य योगिनोऽर्चिरादिमार्गेण गमनं ब्रह्मप्राप्तिं चाष्टमे प्रतिपाद्येदानीं मुमुक्षूणामनेनैव मार्गेण मोक्षप्राप्तिर्नान्यथेति प्राप्तामाशङ्कां निवर्तयितुमधिकारिणां शुद्धबुद्धीनामिहैव मोक्षसिद्ध्यर्थं च साक्षात् मोक्षकारणं परब्रह्मविषयं ज्ञानं विज्ञानं च ब्रह्मस्वरूपं च परस्य ब्रह्मणः स्वस्य प्रकृतिकर्तृकेषु सृष्ट्यादिषु साक्षित्वासङ्गत्वोदासीनत्वादिधर्मांश्चोपासनाप्रकारभेदांश्च स्वस्य सार्वात्म्यं चान्यच्च प्रतिपादयितुं नवमाध्याय आरभ्यते । तत्रादावपृष्टोऽपि भक्तेषु दयाविष्टचित्ततया स्वयमेव ज्ञानं विज्ञानं तन्माहात्म्यं च प्रतिपादयितुं श्रीभगवानुवाच–इदमिति । परस्तस्मात्तु भावोऽन्य इति, पुरुषः स परः पार्थ इत्युपान्त्याऽध्याये निरूपितनिर्विशेष-

ब्रह्मणः सन्निहितत्वात्तद्विषयत्वेन भक्तानुग्रहेच्छावेगाद्बुद्ध्यारूढत्वेन च इदमितीदमा प्रत्यक्षेण ज्ञानं निर्दिष्टम्। तुशब्दो ब्रह्मज्ञानस्य यमनियमादिक्लेशरहितत्वात्साक्षान्मोक्षैकसाधनत्वाच्च सगुणज्ञानाद्विशिष्टत्वद्योतनार्थः। यतः सगुणं ज्ञानं ज्ञातृज्ञेयादिभेदमेव संपाद्यानर्थायैव भवति न तु पुरुषार्थाय "येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति" इति ब्रह्मणस्तेषां च भेदं पश्यतामविदुषामीश्वराधीनत्वं जन्मादिबन्धं च ब्रवीति श्रुतिः। इदं तु "ब्रह्म वेद ब्रह्मैव भवति" इतिश्रवणाद्ब्रह्मप्राप्तये एव भवत्यतः सगुणज्ञानाद्बन्धकाद्ब्रह्मज्ञानस्योत्पत्त्युत्तरक्षण एव मोक्षहेतोरुत्कृष्टत्वं सूच्यत इत्यर्थः। तुशब्देनोक्तमुत्कृष्टत्वमेव विस्पष्टयति। विज्ञानसहितमिति विज्ञानं नामाऽपरोक्षानुभवः "ब्रह्मैवेदं सर्वम्। अहं ब्रह्मास्मि इत्यादिश्रुत्युक्तरीत्या सर्वस्य स्वस्य च प्रत्यक्षेण ब्रह्ममात्रत्ववेदनं न तु पाताले सूर्यग्रहणमितिवत्तटस्थार्थावबोधनं निरुक्तलक्षणविज्ञानसहितं ज्ञानं साक्षान्मोक्षकारणं तत एव ब्रह्मज्ञानं विशेषयति—गुह्यतममिति। कार्यसिद्ध्यष्टैश्वर्यसिद्ध्यादियोगचर्याणां यानि रहस्यानि मन्त्रयन्त्रौषधानि तेभ्यः सर्वेभ्यो गुह्येभ्य उत्कृष्टं गुह्यतमं परमरहस्यमित्यर्थः। तत एव यस्मै कस्मै चायोग्याय दुर्गुणिने न देयं किंतु शुद्धात्मन एवेति सूचयितुमाह—अनसूयव इति। परगुणेषु दोषाविष्करणमसूया सेयं कामक्रोधलोभमोहेर्ष्यादीनामुपलक्षणम्। असूयादिदुर्गुणा यस्य न सन्ति सोऽनसूयुस्तस्मै अनसूयवे सद्गुणाय शिष्याय ते तुभ्यमिदं ज्ञानं प्रवक्ष्यामि सम्यगुपदेक्ष्यामीत्यर्थः। नन्विदं ज्ञानं प्राप्तवतो मम किं स्यादित्यत आह—यदिति। तीव्रमोक्षेच्छावैराग्यशमदमाद्युत्तमसाधनसंपन्नः सन् त्वं मयोच्यमानमुक्तविशेषणविशिष्टं यज्ज्ञानं ब्रह्मात्मैकत्वविषयं ज्ञात्वा प्राप्यानेनाधिगतात्मस्वरूपः सन् अशुभादनाद्यविद्यासंभावितसंसारदुःखप्रवाहान्मोक्ष्यसे मुक्तो भूत्वाऽखण्डानन्दैकरसब्रह्मात्मना सुखं स्थास्यसीत्यर्थः॥१॥

श्री० टी०—परेशः प्राप्यते शुद्धाभक्त्येति स्थितमष्टमे। नवमे तु तदैश्वर्यमत्याश्चर्यं प्रपञ्च्यते॥ एवं तावत्सप्तमाष्टमयोः स्वीयं पारमेश्वरं तत्त्वं भक्त्यैव सुलभं नान्यथेत्युक्त्वेदानीमचिन्त्यं स्वकीयमैश्वर्यं भक्तेश्चासाधारणप्रभावं प्रपञ्चयिष्यन् श्रीभगवानुवाच—इदं त्विति। विशेषेण ज्ञायतेऽनेनेति विज्ञानमुपासनं तत्सहितं ज्ञानमीश्वरविषयमिदं तु अनसूयवे पुनः पुनः स्वमाहात्म्यमेवोपदिशतीत्येवं परमकारुणिके मयि दोषदृष्टिरहिताय ते तुभ्यं वक्ष्यामि। तुशब्दो वैशिष्ट्ये। तदेवाह गुह्यतममित्यादिना। गुह्यं धर्मज्ञानं ततो देहादिव्यतिरिक्तात्मज्ञानं गुह्यतरं ततोऽपि परमात्मज्ञानमतिरहस्यत्वाद्गुह्यतमम्। यज्ज्ञात्वाऽशुभात्संसारान्मोक्ष्यसे सद्य एव मुक्तो भविष्यसि॥ १॥

स० टी०—परब्रह्मानन्दे सकलसुरवन्द्ये स्वरसतः क्षतद्वन्द्वे मन्दाकृतिदनुजकन्दाङ्कुरहरे॥ श्रियःकन्दे नन्दात्मज उदितचन्द्रस्मितमुखे मुकुन्दे स्पन्दो मे भवतु मनसो द्वन्द्वविरतेः॥ १॥ पूर्वाध्याये हि मूर्धन्यनाडीद्वारेण योगिनः॥ अक्षरात्मनि गोविन्दे ध्याननिष्ठां गतस्य वै॥ २॥ योगेन स्वेच्छयोत्क्रान्तप्राणस्यार्चिर्मुखाध्वना॥ ब्रह्मलोकं प्रयातस्य तत्र बोधोदयेन च॥ ३॥ कल्पान्ते ब्रह्मसंप्राप्तिर्व्याख्याता क्रममुक्तता॥ तत्रानेन प्रकारेण मुक्तिः स्यान्नान्यथा त्विति॥ ४॥ शङ्कायां हरिणा प्रोक्ता साक्षान्मुक्तिः स्ववेदिनः॥ अनन्यचेताः सततं यो मां स्मरति नित्यशः॥ ५॥ तस्याहं सुलभस्त्वेवं भगवत्तत्त्वबोधतः॥ अनन्या भक्तिरेवास्ति मुख्या हेतुः परागतेः॥ ६॥ पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया॥ इत्यसाधारणो हेतुरुक्ताऽनन्यरतिर्हरौ॥ ७॥ अतः सा भक्तिरधुना भगवत्तत्त्वधीयुता॥ वर्ण्यते नवमेऽध्याये तस्या माहात्म्यमेव च॥ ८॥ अष्टमे ध्येयरूपस्य ब्रह्मणः सन्निरूपणात्॥ गतिस्तद्ध्याननिष्ठस्य क्रममुक्तिरुदाहृता॥ ९॥ नवमे ज्ञाननिष्ठस्य ज्ञेयब्रह्मनिरूपणात्॥ उच्यते गतिरित्येवं तत्स्तुत्यर्थमिहादरात्॥ १०॥ श्लोकत्रयमुवाचेशो भगवान्हरिरव्ययः॥ इदं प्राग्बहुधा प्रोक्तं वक्ष्यमाणमिहाधुना॥ ११॥ शब्दप्रमाणकं ज्ञानं ब्रह्मतत्त्वैकगोचरम्॥ तुनोक्तध्यानतो ज्ञाने वैलक्षण्यमिहोच्यते॥ १२॥

सम्यग्ज्ञानमिदं साक्षान्मोक्षसंप्राप्तिसाधनम् ॥ गोपनीयतमं चातिरहस्यत्वेन संमतम् ॥ १३ ॥ ब्रह्मानुभवपर्यन्तं तुभ्यं गुह्यमपीदृशम् ॥ अहं शिष्यगुणाधिक्यात्प्रवक्ष्याम्यनसूयवे ॥ १४ ॥ स्वैश्वर्यख्यापनेनायं सदात्मानं प्रशंसति ॥ मदग्रे इत्यसूया तच्छून्यायार्जवशालिने ॥ १५ ॥ यत्प्राप्य मोक्ष्यसे सद्योऽशुभात्संसारबन्धनात् ॥ १६ ॥ १ ॥

भा० टी०—अष्टमे देवयानमार्गेणापुनरावृत्ति मोक्षं गच्छन्तीत्युक्तं तत्र तेनैव प्रकारेण मोक्षप्राप्तिर्नान्यथेति शङ्कामपनुदन् श्रीभगवानुवाच—इदमिति। पूर्वोक्तेष्वध्यायेषूक्तं वक्ष्यमाणं च ब्रह्मज्ञानं बुद्धौ संनिधीकृत्येदमित्युक्तम्। तुशब्दो ध्यानाज्ज्ञानस्य वैलक्षण्यद्योतनार्थः। ज्ञानस्य सविज्ञानस्य साक्षान्मोक्षसाधनत्वात् इदं तु ते ज्ञानं प्रवक्ष्यामीति संबन्धः। तच्च प्रत्यगभिन्नपरमात्मज्ञानम् 'वासुदेवः सर्वम्' इति। "आत्मैवेदं सर्वम्। अहं ब्रह्मास्मि। सर्वं खल्विदं ब्रह्म। एकमेवाद्वितीयम्। नेह नानास्ति किंचन। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतिस्मृत्युक्तं विज्ञानेनानुभवेन सहितं युक्तं गुह्यतमम्। अयमर्थः धर्मज्ञानं हि गुह्यमुपास्यज्ञानं गुह्यतरमखण्डार्थज्ञानं गुह्यतममतिगोप्यम्। ननु गुह्यतमं किमर्थं वदसीति चेत्त्वानसूयागुणेन वशीकृतो वक्ष्यामीत्याह—अनसूयव इति। गुणेषु दोषाविष्करणमसूया साक्षान्मोक्षसाधनं परमात्मज्ञानं तु तत्तल्लोकविषयभोगविरोधीति परमपुरुषार्थसाधने तत्त्वज्ञाने दोषदृष्टिस्तद्रहिताय सर्वदायमात्मैश्वर्यख्यापनेनात्मानं प्रशंसति मत्पुरस्तादित्येवंरूपासूयेति वाभ्यसूय[illegible] आत्मप्रशंसादिदोषाध्यारोपणेन ईश्वरत्वमजानन्न सहते इतिभाष्यात् यज्ज्ञानमुक्तविशेषणविशिष्टं ज्ञात[illegible] लब्ध्वाऽशुभात्संसारबन्धनान्मोक्ष्यसे मुक्तो भविष्यसीत्यर्थः। यत्तु इदं वक्ष्यमाणं तु पूर्वस्माद् ध्येयाद्वि[illegible] ज्ञेयं ज्ञानं ज्ञप्तिमात्रस्वरूपं ब्रह्म विज्ञानेनानुभवेन सहितं नतु केवलं पारोक्ष्येण यज्ज्ञानं ज्ञात्वा स[illegible]कृत्येत्यादि तदुपेक्ष्यं, विज्ञानसहितं राजविद्या राजगुह्यमश्रद्दधानाः पुरुषा धर्मस्यास्य परंतपेति मूले[illegible]ईं ब्रह्मज्ञानं विद्यानां राजा दीप्त्यतिशयवत्त्वाद्दीप्यते हीयमतिशयेन ब्रह्मविद्या आत्मज्ञानस्य धर्मस्या[illegible] तद्भाष्येण च विरोधस्य स्पष्टत्वादिति दिक् ॥ १ ॥

प० टी०—एवं पूर्वाध्याये भूतग्रामः स एवायमित्यादिवाक्यैर्दृश्यप्रपञ्चजातस्य नश्वरत्वगर्भितं मिथ्यात्वं दर्शयित्वेदानीं तदेवोपपत्त्या दृढीकर्तुं तथा योगवैभवतः स्वस्य सत्यत्वं दर्शयितुं नवमाध्यायप्रवृत्तिः। तत्र प्रथमं वक्ष्यमाणप्रमेयस्यातिरहस्यत्वेन दुर्लभत्वमाह—इदमित्यादित्रिभिः। कृपया वक्तुं प्रवृत्ते मय्यनसूयवे देहधारित्वादिदोषदृष्टिरहिताय ते तुभ्यं विज्ञानसहितं ज्ञानं वक्ष्यामि। ज्ञानं शास्त्राचार्योपदिष्टं विज्ञानमनुभवरूपम्। यदिदं गुह्यतममप्रकाश्यप्रमेयं स्वधर्माचरणादि ततोऽपि देहादिव्यतिरिक्तात्मस्वरूपं गुह्यतरं ततोऽपि परमात्मनः साक्षाद्दर्शनं गुह्यतमम्। तदेवाह—यदिति। यज्ज्ञात्वाशुभाद्दुःखदात्प्रपञ्चान्मोक्ष्यसे परमात्मप्रतीतौ प्रपञ्चातीतो भविष्यसि ॥ १ ॥

रा० टी०—सप्तमेऽध्याये साधिभूताधिदैवं मां साधियज्ञं च ये विदुरित्यादिनोक्तं भगवन्माहात्म्यमत्राध्याये प्रपञ्च्यते। नचैवं तदानन्तर्यमेवास्य शङ्क्यम् अध्यात्मादिपदानां निरूपणेन परिहारोक्त्यनन्तरमेवात्र साधिभूतादिवाक्यार्थभूतभगवन्माहात्म्यवर्णनस्यावसरादिति ध्येयम्। अतिचित्रमहिमानं वक्तुं तत्रादरजननाय प्रतिज्ञापूर्वं वक्ष्यमाणं प्रशंसति—इदं त्विति। गुह्यतममतिगोप्यमिदं वक्ष्यमाणं ज्ञानम्। कर्मणि ल्युट्। ज्ञातव्यं विशेषेण ज्ञातव्यसहितमनसूयवे असूयादिदोषहीनाय। एवंरूप एवाधिकारीति ज्ञापनायैतद्विशेषणोक्तिः। ते तुभ्यं प्रवक्ष्यामि यज्ज्ञात्वा अशुभान्मोक्ष्यसे। यच्छब्दस्येदं त्वित्यनेनान्वयः ॥१॥

**राजविद्याराजगुह्यं पवित्रमिदमुत्तमम् ॥**
**प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ २ ॥**

त० टी०—किंच—राजविद्येति। विद्यानां राजा राजविद्या सर्वाऽविद्यातत्कार्यनाशकत्वात्। तथा राजगुह्यं गुह्यानां राजा तत्तथा सर्वगुह्येषु श्रेष्ठं मदनुग्रहं विना जन्मसहस्रेणापि बहुभिरज्ञातत्वात्। उपसर्जनं पूर्वमित्यनेन विद्याशब्दस्य पूर्वनिपातार्हत्वेऽपि राजदन्तादित्वात्परनिपातः। पवित्रमिदमुत्तमं प्रायश्चित्तान्यपि पापानि नाशयन्त्यतस्तानि पवित्राणि, तथाऽपि यत्किंचिन्नाशितमपि तत्सूक्ष्मरूपेण तिष्ठत्येव यतः पुनः पुरुषस्य पापे प्रवृत्तिर्जायते, इदं तु अनेकजन्मसहस्रसंचितानां पापानां स्थूलसूक्ष्मावस्थानां सर्वेषां निरवशेषेण नाशकमतः सर्वोत्तमं पावनमिदमेव। प्रत्यक्षावगमम् अवगम्यते इत्यवगमो विषयः प्रत्यक्षभूतोऽवगमो विषयो यस्य तत्तथा, भक्तिरूपतापन्नेन ज्ञानेनोपास्यमानोऽहं तदानीमेवोपासितुः प्रत्यक्षतामुपगच्छामीत्यर्थः। ततश्च धर्म्यं धर्मादनपेतं धर्मो हि श्रेयःसाधनम्, इदं तु जन्मान्तरसहस्रेष्वनुष्ठितनिष्कामकर्मलभ्यत्वात्स्वरूपेणापि श्रेयोरूपम्, अत्यर्थमतिप्रियत्वेन मद्दर्शनापादकतया परमश्रेयोरूपमत्प्राप्तिसाधनमित्यर्थः। तर्हि दुःसंपाद्यं स्यान्नेत्याह—सुसुखं कर्तुं सद्गुरूपदेशजनितसम्यग्व्यवसायसहकृतकर्मार्पणादिना सुखं यथा स्यात्तथोपादेयमित्यर्थः। एवमप्यव्ययं कर्मकाण्डवत्किंचिदङ्गवैगुण्ये सति प्रत्यवायापादकतया स्वरूपतः फलतो वा विनाशि न भवतीत्यव्ययमक्षयं मत्प्राप्तिरूपं फलं साधयित्वाऽपि न क्षीयत इत्यव्ययमिति वाऽर्थः॥ २॥

म० टी०—पुनस्तदाभिमुख्याय तज्ज्ञानं स्तौति—राजविद्येति। राजविद्या सर्वासां विद्यानां राजा सर्वाविद्यानाशकत्वात् विद्यान्तरस्याविद्यैकदेशविरोधित्वात्, तथा राजगुह्यं सर्वेषां गुह्यानां राजा अनेकजन्मकृतसुकृतसाध्यत्वेन बहुभिरज्ञातत्वात् राजदन्तादित्वादुपसर्जनस्य परनिपातः। पवित्रमिदमुत्तमं प्रायश्चित्तैर्हि किंचिदेकमेव पापं निवर्त्यते निवृत्तं च तत्स्वकारणे सूक्ष्मरूपेण तिष्ठत्येव यतः पुनस्तत्पापमुपचिनोति पुरुषः इदं तु अनेकजन्मसहस्रसंचितानां सर्वेषामपि पापानां स्थूलसूक्ष्मावस्थानां तत्कारणस्य चाज्ञानस्य सद्य एवोच्छेदकमतः सर्वोत्तमं पावनमिदमेव। नचातीन्द्रिये धर्म इवात्र कस्यचित्संदेहः स्वरूपतः फलतश्च प्रत्यक्षत्वादित्याह—प्रत्यक्षावगममवगम्यतेऽनेनेत्यवगमो मानमवगम्यते प्राप्यत इत्यवगमः फलं प्रत्यक्षमवगमो मानमस्मिन्निति स्वरूपतः साक्षिप्रत्यक्षत्वं प्रत्यक्षोऽवगमोऽस्येति फलतः साक्षिप्रत्यक्षत्वं मयेदं विदितमतो नष्टमिदानीमत्र ममाज्ञानमिति हि सार्वलौकिकः साक्ष्यनुभवः। एवं लोकानुभवसिद्धत्वेऽपि तज्ज्ञानं धर्म्यं धर्मादनपेतमनेकजन्मसंचितनिष्कामधर्मफलम्। तर्हि दुःसंपादं स्यान्नेत्याह—सुसुखं कर्तुं गुरूपदर्शितविचारसहकृतेन वेदान्तवाक्येन सुखेन कर्तुं शक्यं न देशकालादिव्यवधानमपेक्षते प्रमाणवस्तुपरतन्त्रत्वाज्ज्ञानस्य। एवमनायाससाध्यत्वे स्वल्पफलत्वं स्यादत्यायाससाध्यानामेव कर्मणां महाफलत्वदर्शनादिति नेत्याह—अव्ययमिति। एवमनायाससाध्यस्याप्यस्य फलतो व्ययो नास्तीत्यव्ययमक्षयफलमित्यर्थः। कर्मणां त्वतिमहतामपि क्षयिफलत्वमेव "यो वा एतदक्षरं गार्ग्यविदित्वास्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति" इति श्रुतेः। तस्मात्सर्वोत्कृष्टत्वाच्छ्रद्धेयमेवात्मज्ञानम्॥ २॥

शं० टी०—उक्तस्यैव ज्ञानस्य जिग्राहयिषया माहात्म्यं प्रतिपादयति—राजविद्येति। राजविद्या विद्या ज्ञानानि सकलवेदशास्त्राध्ययनसमुत्पन्नानीहलोकपरलोकसाधनानि यानि तानि सर्वाणि पुंसः संसारवर्धकान्येव भवन्ति न तु निवर्तकानि ब्रह्मविद्या तु स्वोत्पत्तिमात्रेण विदुषो ब्रह्मतां गमयित्वा सकारणं संसारं निःशेषं निवर्तयति यथा प्रबोधः स्वाप्नं संसारं तद्दुःखं च तथा ततः सर्वासां विद्यानां राजा श्रेष्ठो भवत्यत उच्यते—राजविद्येति। यद्वा सर्वा विद्याः शास्त्रजन्याः सम्यगहंकारं वर्धयित्वाऽऽत्मतत्त्वं तिरोहितं कुर्वन्ति इयं तु "स आत्मा तत्त्वमसि" इतिवाक्यश्रवणमात्रेण संजाता सत्यनात्मन्यहंकारं नाशयित्वा सर्वसंसारधर्मनिर्मुक्तमात्मतत्त्वं राजयति प्रकाशतीति राज्ञी सा चासौ विद्या च राजविद्या राजगुह्यं च

गुह्याः संवरणीया मन्त्रयन्त्रदिव्यौषधादयः पदार्था वा मूल्या रत्नादयस्तेषां सर्वेषां राजाऽतिरहस्यत्वेन गोपनीयत्वाद्राजगुह्यं राजवत्संवरणीयत्वाद्वा राजगुह्यम् । किंच पवित्रं पुनातीति पवित्रं तत्रापीदं ब्रह्मज्ञानमनुत्तमं पवित्रं सूर्यानलानिलादयो देवा ऋगादयो वेदा गङ्गाद्याः सरितश्च प्रायश्चित्तान्यप्यशेषाणि भजतां नरकदुःखकारणं पापमेव नाशयन्ति तत्रापि तात्कालिकमेव पापं न तु पुण्यमिदं ब्रह्मज्ञानं तु "तदा विद्वान् पुण्यपापे विधूय" इतिश्रवणाच्छतकोटिब्रह्मकल्पार्जितं पापराशिं पुण्यराशिं च बहुजन्ममरणतदुःखप्रवाहकारणं तूलपर्वतानग्निरिव ध्वान्तपटलमर्क इव समूलं निर्मूल्य ब्रह्मविदं निष्कर्माणं करोत्यतो ब्रह्मज्ञानमेव ब्रह्मविष्णुशिवादीनामर्कादीनां च पावकत्वादुत्कृष्टतमं पवित्रं शुद्धिकरं वस्त्वित्यर्थः । ज्ञानस्यैतन्माहात्म्यं शास्त्रैकगम्यं वा प्रमाणान्तरगम्यं वा कालान्तरगम्यं वेत्याकाङ्क्षायां सूर्यस्य कार्येण सह गाढान्धकारविध्वंसकत्वं न केवलशास्त्रैकगम्यं किंतु प्रत्यक्षावगम्यं च यथा तथा ज्ञानस्यापीत्याह—**प्रत्यक्षावगममिति** । अवगम्यतेऽनेनेत्यवगमं प्रमाणं तत्तु प्रत्यक्षं वैदुष्यं प्रत्यक्षमवगमं यस्य तत्प्रत्यक्षावगमं ज्ञानमाहात्म्यं विद्वत्प्रत्यक्षमित्यर्थः । यद्वा अवगम्यतेऽनुभूयत इत्यवगमः फलं प्रत्यक्षोऽवगमो यस्य तत्प्रत्यक्षावगमं भोजनादिसुखवत् सद्यः प्रत्यक्षं ज्ञानफलं न तु धर्मादिफलवत्परोक्षमित्यर्थः । धर्म्यं च मुमुक्षोर्धर्ममवदर्हतीति धर्म्यं सर्वेषामाश्रमिणां स्वधर्मानुकूलमेव ज्ञानं न तु धर्मविरोधीत्यर्थः । यद्यपि गृहिणो धर्म्य एव चयनः सर्वतो मखादिक्रतुस्तथापि तस्य श्रमसाध्यत्वमस्ति न तथा ज्ञानस्येत्याह—**सुसुखमिति** । सुतरां देहेन्द्रियादिश्रमं विनैव तत्त्वज्ञप्रसादाद्रत्नादिज्ञानमिव ब्रह्मज्ञानमपि बुद्ध्यारूढं कर्तुं सुखमनायासमेव शुद्धात्मनां सुसंपादमित्यर्थः । ननु कटिकण्डूयनवज्ज्ञानस्याल्पक्रियासाध्यत्वे फलेनाप्यल्पत्वमेव स्यात् क्रियाभूयस्त्वे फलभूयस्त्वं क्रियाल्पीयस्त्वे फलस्याप्यल्पीयस्त्वं सर्वप्रसिद्धमित्याशङ्कायां न, अल्पीयस्या अपि चन्द्रालोकनक्रियायास्तद्दर्शिनस्तदाह्लादसुखस्य महत्त्वदर्शनात्तद्वज्ज्ञानस्याल्पक्रियासाध्यत्वेऽपि फलतो महत्त्वमस्तीत्याह—**अव्ययमिति** । फलतो न व्येतीत्यव्ययमव्ययफलम् "नह्यध्रुवैः प्राप्यते हि ध्रुवं तत्" इति ज्ञानप्राप्तस्य वस्तुनो ध्रुवत्वश्रवणात् ज्ञानस्याश्रमसाध्यत्वेऽप्यस्त्येव नित्यफलजनकत्वमित्यर्थः । ज्ञानस्य मोक्षसाधनत्वे बाधकप्रमाणाभावाद्वाऽव्ययमित्युक्तम् ॥ २ ॥

**श्री० टी०**—किंच—**राजविद्येति** । इदं ज्ञानं राजविद्या विद्यानां राजेति राजविद्या च गुह्यानां राजेति राजगुह्यं विद्यासु गोप्येषु च रहस्यमतिश्रेष्ठमित्यर्थः । राजदन्तादित्वादुपसर्जनस्य परत्वं राज्ञां विद्या राज्ञां गुह्यमिति वा । उत्तमं पवित्रमत्यन्तपावनमिदं ज्ञानिनां प्रत्यक्षावगमं च प्रत्यक्षः स्पष्टोऽवगमोऽवबोधो यस्य तत् प्रत्यक्षावगमं दृष्टफलमित्यर्थः । धर्म्यं च धर्मादनपेतं सर्वधर्मफलत्वात् कर्तुं सुसुखं च सुखेन कर्तुं शक्यमित्यर्थः । अव्ययं चाक्षयफलत्वात् ॥ २ ॥

**स० टी०**—पुनस्तदाभिमुख्याय तज्ज्ञानं स्तौति माधवः ॥ राजा हि सर्वविद्यानां सर्वाविद्याविनाशकम् ॥ १ ॥ दीप्यतेऽतिशयेनेऽयं ब्रह्मविद्या यतस्ततः ॥ रहस्यानां समस्तानां राजा गुह्यशिरोमणिः ॥ २ ॥ अनन्तजन्मसद्धर्मैः साध्यत्वेनाति दुर्लभम् ॥ कोटिजन्मार्जितानेककोटीनां पापकर्मणाम् ॥ ३ ॥ तद्धेतोरप्यविद्यायाः सद्यश्छेदकभावतः ॥ पावनं पावनानां च सर्वेषामिदमुत्तमम् ॥ ४ ॥ नातीन्द्रिये धर्म इव कस्याप्यत्रास्ति संशयः ॥ स्वरूपात्फलतश्चास्य प्रत्यक्षत्वादितीर्यते ॥ ५ ॥ मानं प्रत्यक्षमेवास्मिन्साक्षिप्रत्यक्षता यतः ॥ प्रत्यक्षोऽवगमोऽस्येति साक्षिप्रत्यक्षता फलात् ॥ ६ ॥ मानं करणव्युत्पत्त्या कर्मव्युत्पत्तितः फलम् ॥ अर्थोऽवगमशब्दस्याभिप्रेतः श्रीरमापतेः ॥ ७ ॥ मयेदं विदितं तस्मान्नष्टमत्र ममाधुना ॥ अज्ञानमिति सर्वत्र साक्षिप्रत्यक्ष इष्यते ॥ ८ ॥ कोटिजन्मार्जितैः पुण्यैः प्राप्यत्वाद्धर्म्यमुच्यते ॥ गुरूपदिष्टमार्गेण कर्तुं शक्यं सुखेन तत् ॥ ९ ॥ अनायासेन साध्यं सदक्षय्यं फलतो महत् ॥ सर्वोत्कृष्टतया ज्ञानं श्रद्धेयं सर्वथा ततः ॥ १० ॥ २ ॥

भा० टी०—तज्ज्ञानं स्तौति—राजविद्येति । राजविद्या विद्यानां सर्वासां राजा ब्रह्मविद्यावतः पूजातिशयदर्शनेन तस्या अतिशयेन देदीप्यमानत्वात् । तथाच श्रुतिः-"तस्मादात्मज्ञमर्चयेद्भूतिकामः" इति । भगवद्वचनं च 'निरपेक्षं मुनिं शान्तं निर्वैरं समदर्शनम् । अनुव्रजाम्यहं नित्यं पूयेयेत्यङ्घ्रिरेणुभिः' इति । तथा सर्वेषां गुह्यानामुत्कर्षवत्त्वेन गोप्यानां राजाऽत्युत्कर्षवत्त्वात् "राजदन्तादिषु परम्" इत्युपसर्जनस्य परनिपातः । इदं ब्रह्मज्ञानमुत्तमं पवित्रं सर्वेषां पावनानामपि शुद्धिकरत्वात् । अन्याद्धि प्रायश्चित्तादिरूपं पवित्रं यथाकथंचित्किंचित्पापं नाशयति इदं तु सर्वं धर्माधर्मादिलक्षणमनेकजन्मसंचितं समूलं कर्म नाशयति क्रियमाणं चाश्लिष्टं करोति । तथाच व्याससूत्रे " तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् इतरस्याप्येवमसंश्लेषः पाते तु" इति तस्मात्किं तस्य ब्रह्मज्ञानस्य परमपावनत्वं वक्तव्यमेतल्लवसदृशस्यान्यस्य पावनस्यानिरूपणात् । किंच न केवलं धर्मवच्छास्त्रगम्यं परोक्षमेवापि तु प्रत्यक्षावगमं प्रत्यक्षेण सुखादेरिवावगमो यस्येति भाष्यं प्रत्यक्षोऽवगमो मानमस्मिन्निति तथा, यद्वावगम्यत इत्यवगमः फलं प्रत्यक्षोऽवगमोऽस्येति दृष्टफलत्वं ज्ञानस्योच्यत इति तट्टीका । प्रथमपक्षेऽवगम्यतेऽनेनेत्यवगमो मानं प्रत्यक्षं तदस्मिन्निति स्वरूपतः साक्षिप्रत्यक्षत्वं, द्वितीयपक्षे फलतः तत्प्रत्यक्षत्वं मयेदं विदितमतो नष्टमिदानीं ममात्राज्ञानमिति सार्वजनीनः साक्ष्यनुभवः इति तदर्थः । प्रत्यक्षं नित्यापरोक्षं यत्प्रत्यक्षात्मवस्तु तदेव याथात्म्येनावगम्यतेऽनेनेत्यपि केचित्तदेतत्पक्षत्रयमपि भाष्यस्योपलक्षणार्थत्वेनोपादेयम् । नन्वनेकगुणवतोऽपि मांसभक्षणादेर्धर्मविरुद्धत्वं दृष्टं तथा आत्मज्ञानमपि किं न स्यादिति तत्राह—धर्म्यं धर्मादनपेतमनेकजन्मार्जितसुकृतसाध्यत्वात् । नन्वेवमपि दुःसंपाद्यं स्यादिति तत्राह—सुसुखं कर्तुं गुरूपदिष्टवेदान्तवाक्यैरज्ञाननिवृत्त्या सुखेनैव संपादयितुं शक्यं न देशकालऋत्विगाद्यपेक्षास्तीति । ननु लोके यन्महत्फलं तद्बह्वायाससाध्यकर्मसाध्यमल्पं त्वल्पायाससाध्यकर्मसाध्यं दृष्टं तद्वज्ज्ञानमपि कर्तुं सुखमल्पफलं भविष्यतीत्याशङ्क्य रत्नविवेकज्ञानस्याल्पायाससाध्यस्यापि महाफलदर्शनान्नेत्याह—अव्ययं नास्य ज्ञानस्य लोकवत्फलतो व्ययो नाशोऽस्तीत्यव्ययमतः श्रद्धयाऽवश्यं संपाद्यमिति भावः ॥ २ ॥

प० टी०—अथ प्रतिपाद्यप्रमेयस्यापि दुर्लभत्वं तारकत्वं चाह—राजविद्येति । विद्यानामध्यात्मविद्यानां राजा तथा गुह्यानां गुह्यार्थानां राजातिश्रेष्ठमित्यर्थः । पवित्रं शोधकम् उत्तममुत्कृष्टतमम् आत्मप्राप्त्यावन्तरङ्गकारणं प्रत्यक्षावगमं प्रत्यक्षेण प्रतीत्यावगमयितुं योग्यं धर्म्यं धर्मादनपेतं सर्वधर्मफलत्वात् कर्तुमनुष्ठातुं सुसुखं सुखेन शक्यं न तु कायद्रव्यक्लेशजनकम् अव्ययमक्षयफलत्वात् ॥ २ ॥

रा० टी०—पुनः प्रशंसति—राजेति । इदं वक्ष्यमाणं राजविद्या राज्ञी चासौ विद्या च राजविद्या विद्यानां प्रधानविद्येत्यर्थः । राजगुह्यं गुह्यानां गोप्यानां मध्ये प्रधानगोप्यं पवित्रं पावित्र्यहेतुमत एवोत्तमं प्रत्यक्षावगममक्षेषु प्रति प्रतिस्थितः प्रत्यक्षो भगवान् । कुगतिप्रादय इति प्रादिसमासो नाव्ययीभावः । अवगम्यते साक्षात्क्रियते येन तदवगमम । "ग्रहवृदृनिश्चिगमश्च" इति करणे गमेरप्प्रत्ययः । प्रत्यक्षस्य हरेरवगमं प्रत्यक्षावगमं सर्वेन्द्रियप्रेरकभगवदपरोक्षज्ञानसाधनं धर्म्यं सर्वाधारकत्वाद्धर्मो भगवान् । धृञ्धारण इत्यतः औणादिको मन्प्रत्ययः । धर्मादनपेतं तद्विषयं धर्म्यं सर्वधारकभगवद्विषयपरोक्षज्ञानमव्ययमक्षयमक्षयफलकं कर्तुं संपादयितुं सुसुखमत्यन्तसुलभमित्यर्थः । प्रवक्ष्यामीति पूर्वेणान्वयः ॥ २ ॥

**अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ॥**
**अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ३ ॥**

त० टी०—ननु यदीदं परमश्रेयःसाधनत्वेन सुकरत्वेन च सर्वोत्कृष्टं चेत्तर्हि सर्वेऽपीदमेवानुष्ठाय कुतो न मुच्यन्ते, किमर्थं संसारिणो भवन्तीति चेत्तत्राह—अश्रद्दधाना इति । अस्य भक्तिसहितज्ञा-

नलक्षणस्य परमधर्मस्येति कर्मणि षष्ठी, इमं धर्ममश्रद्दधानाः पुरुषाः पापबाहुल्येन दूषितान्तःकरणतया लघुत्वेन मन्यमाना मोक्षार्थमुपायान्तरेण कथंचिद्यतमाना अपि मद्वाक्ये विश्वासाभावान्मद्विमुखाः सन्तो मामप्राप्य मृत्युसंसारवर्त्मनि मृत्युयुक्ते संसारवर्त्मनि जन्ममरणात्मकस्य संसारस्य वर्त्मनि मार्गे मद्भक्तिहीने केवलकर्मादौ साधने निवर्तन्ते नितरां वर्तन्ते, सर्वदा परिभ्रमन्तीत्यर्थः ॥ ३ ॥

म० टी०—एवमप्यस्य सुकरत्वे सर्वोत्कृष्टत्वे च सर्वेऽपि कुतोऽत्र न प्रवर्तन्ते तथा च न कोऽपि संसारी स्यादित्यत आह—**अश्रद्दधाना इति** । अस्यात्मज्ञानाख्यस्य धर्मस्य स्वरूपे साधने फले च शास्त्रप्रतिपादितेऽपि अश्रद्दधानाः वेदविरोधिकुहेतुदर्शनदूषितान्तःकरणतया प्रामाण्यममन्यमानाः पापकारिणोऽसुरसंपदमारूढाः स्वमतिकल्पितेनोपायेन कथंचिद्यतमाना अपि शास्त्रविहितोपायाभावादप्राप्य मां मत्प्राप्तिसाधनमप्यलब्ध्वा निवर्तन्ते निश्चयेन वर्तन्ते क्व मृत्युयुक्ते संसारवर्त्मनि सर्वदा जननमरणप्रबन्धेन नारकितिर्यगादियोनिष्वेव भ्रमन्तीत्यर्थः ॥ ३ ॥

शं० टी०—एवं ज्ञानस्यानायाससाध्यत्वमव्ययफलजनकत्वं च प्रतिपाद्य निःशेषसंसारदुःखध्वान्तविध्वंसनकारणे ज्ञाने रविवदप्रयासलभ्ये विद्यमानेऽप्यन्धवदश्रद्धया मुक्तिमार्गमुत्सृज्य कामनया कर्मोपास्त्यादौ प्रवृत्तान् पुरुषान् दृष्ट्वा क्रोशन्निव दययेदमाह—**अश्रद्दधाना इति** । अस्योक्तगुणविशेषविशिष्टस्य धर्मस्याविद्यया जननमरणप्रवाहे पात्यमानाः पुरुषा ध्रियन्तेऽनेनेति धर्मो ज्ञानं तस्य मोक्षैकहेतोर्ज्ञानस्य स्वरूपे तत्फले मोक्षे च अश्रद्दधानाः श्रद्धा नाम कृतिहेतुः फलाप्त्यवसान आस्थाविशेषस्तच्छून्या दुर्विदग्धाः पुरुषा दुष्कर्मणा मोक्षे मोक्षसाधने ज्ञाने च श्रद्धाभक्तिप्रयत्नरहिताः सन्तो मामप्राप्य मामात्मानमानन्दैकरसं हस्तगतं मोक्षाख्यं फलमुत्सृज्य मृत्युसंसारवर्त्मनि मृत्युभूयिष्ठः संसारो मृत्युसंसारः नानायोनिषु नरके च पुनः पुनः पतनलक्षणस्तदेव वर्त्म तस्मिन्नेव निवर्तन्ते नितरां वर्तन्ते मुहुर्मुहुर्जायन्ते म्रियन्ते अहो बत दौर्विदग्ध्यमपारदुःखकारणम् । एतेन निरुक्तमहत्त्वविशिष्टात्मज्ञाने धर्मे ये यतयः श्रद्धावन्तो निष्ठावन्तश्च भवन्ति त एव मुक्ता भवन्तीति सूचितं भवति ॥ ३ ॥

श्री० टी०—नन्वेवमस्यातिसुकरत्वे के नाम संसारिणः स्युस्तत्राह—**अश्रद्दधाना इति** । अस्य भक्तिलक्षणज्ञानसहितस्य धर्मस्येति कर्मणि षष्ठ्यौ इम धर्ममश्रद्दधाना आस्तिक्येनास्वीकुर्वन्तः उपायान्तरेण मत्प्राप्तये कृतप्रयत्ना अपि मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि निवर्तन्ते मृत्युव्याप्ते संसारमार्गे परिभ्रमन्तीत्यर्थः ॥ ३ ॥

स० टी०—आत्मज्ञानाख्यधर्मस्य स्वरूपे साधने फले ॥ नास्तिका अप्रमात्वादिशङ्कया पापकारिणः ॥ ॥ १ ॥ आसुरीं संपदं रूढा वेदमानविरोधिनः ॥ मत्प्राप्तिसाधनं भेदभक्तिमप्यनवाप्य च ॥ २ ॥ ते मां भूमानमप्राप्य संसारे मृत्युसंयुते ॥ नारकीयातनादौ च भ्रमन्त्याकल्पमासुराः ॥ ३ ॥ अतस्ते मनुजाकारा वानरा गर्दभाश्च वा ॥ उपेक्ष्याः सर्वथा सद्भिरिति हार्दं रमापतेः ॥ ४ ॥ ३ ॥

भा० टी०—श्रद्धया ज्ञाननिष्ठानां ज्ञानप्राप्त्या मोक्षप्राप्तिरिति अन्वयमुखेन ज्ञानं स्तुत्वा व्यतिरेकमुखेन तत्स्तौति—**अश्रद्दधाना इति** । ये पुनरस्य धर्मस्य ब्रह्मज्ञानलक्षणस्य स्वरूपे फले वा श्रद्धाहीना नास्तिकाः अनेकजन्मार्जितपापैः पाप एव प्रवर्तिता देहमात्रात्मदर्शनमेव प्रतिपन्नाः केवलमसुतर्पणनिष्ठाः केनचिदुत्कटेन पुण्यलवेन मनुष्ययोनिं प्राप्ताः पुरुषा मामप्राप्य मृत्युयुक्ते संसारवर्त्मनि नरकतिर्यगादिप्राप्तिलक्षणे निवर्तन्ते निश्चयेनावर्तन्त इत्यर्थः । मामप्राप्येत्यस्य मत्प्राप्तिमार्गसाधनविशेषभक्तिमार्गमप्राप्येत्यर्थः, अन्यथा तेषां परमेश्वरप्राप्तिसंभावनाया अप्यभावादप्रसक्तप्रतिषेध आपद्येत । परंतपेति संबोधयन् परानश्रद्धादीन् शत्रून् तापयन् ब्रह्मज्ञाने श्रद्धां कर्तुं योग्योऽसि नत्वश्रद्धयाभिभूतः एतत्पङ्क्तौ निवेष्टुमिति सूचयति ॥ ३ ॥

प० टी०—एवं चेत्तर्हि सर्वेऽपि मुक्ता भवेयुरित्याह—अश्रद्दधाना इति । अस्य धर्मस्येति कर्मणि षष्ठीद्वयम् । इमं धर्ममश्रद्दधाना आस्तिक्यादननुष्ठातारः पुरुषा मामप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते भूयः संसरन्ति ॥ ३ ॥

रा० टी०—ननु त्वयोच्यमानं भगवदपरोक्षज्ञप्तिसाधनं तद्विषयपरोक्षज्ञानमुक्तगुणकं सुकरं चेन्न कोऽपि संसारी स्यादित्यतो वा अकुर्वतां किमनिष्टमित्यतो वाऽऽह—अश्रद्दधाना इति । धर्म्यस्य भगवद्विषयस्यास्य ज्ञानस्याश्रद्दधानाः पुमर्थहेतुत्वरूपश्रद्धाविहीनाः पुरुषाः मामप्राप्य मृत्युसंसारवर्त्मनि निवर्तन्ते नितरां वर्तन्ते पतन्तीत्यर्थः ॥ ३ ॥

**मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ॥**
**मत्स्थानि सर्वभूतानि न चाहं तेष्ववस्थितः ॥ ४ ॥**

त० टी०—एवं वक्तव्यतया प्रतिज्ञातं ज्ञानं निर्दिश्य श्रेयोऽनुबन्धितयाऽन्वयव्यतिरेकाभ्यां तत् स्तुत्वा श्रोतारमभिमुखीकृत्य निरूपयति—मयेति द्वाभ्याम् । इदं चेतनाचेतनात्मकं सर्वं जगत् अव्यक्तमूर्तिना अव्यक्ता इन्द्रियागोचरा मूर्तिर्यस्य तेनान्तर्यामिरूपेण मया ततं व्याप्तम् । मत्स्थानि मय्येव सर्वकारणकारणे आधेयतया स्थितानि सर्वाणि भूतानि स्थावरजङ्गमानि मत्तोऽन्यत्र स्थितिप्रवृत्त्यनर्हत्वान्मदधीनस्थितिप्रवृत्तिकान्येवेत्यर्थः । "योऽसौ सर्वेषु भूतेष्वाविश्य भूतानि विदधाति" इति श्रुतेः । 'बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम्' इति सभापर्वणि सहदेववचनात् । एवं चेत्तव कुत्र स्थितिरिति स्वाधारो वक्तव्य इति चेत्तत्राह—न चाहं तेष्ववस्थितः । अहं तेषु भूतेष्ववस्थितो न भवामि । यथाऽहं सर्वाधारस्तथा न मे कश्चिदाधारः स्वाधार एवाहं नान्याधीनस्थितिप्रवृत्तिक इत्यर्थः । तथा छान्दोग्ये प्रश्नोत्तराभ्यां निर्णीतं भूमविद्यायाम् "स भगवः कस्मिन्प्रतिष्ठित इति स्वमहिम्नि यदि वा न स्वमहिम्नीति गो अश्वमहिमेत्याचक्षते हस्तिहिरण्यदासभार्याक्षेत्राण्यायतनानीति नाहमेवं ब्रवीमीति होवाच ह्यन्यो ह्यस्मिन्प्रतिष्ठित इति स एवाधस्तात्स एवोपरिष्टात् स पश्चात्स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वम्" इति ॥ ४ ॥

म० टी०—तदेवं वक्तव्यतया प्रतिज्ञातस्य ज्ञानस्य विधिमुखेनेतरनिषेधमुखेन च स्तुत्याभिमुखीकृतमर्जुनं प्रति तदेवाह द्वाभ्याम्—मया ततमिति । इदं जगत्सर्वं भूतभौतिकतत्कारणरूपं दृश्यजातं मदज्ञानकल्पितं मयाऽधिष्ठानेन परमार्थसता सद्रूपेण स्फुरणरूपेण च ततं व्याप्तं रज्जुखण्डेनेव तदज्ञानकल्पितं सर्पधारादि । त्वया वासुदेवेन परिच्छिन्नेन सर्वं जगत् कथं व्याप्तं प्रत्यक्षविरोधादिति नेत्याह—अव्यक्ता सर्वकरणागोचरीभूता स्वप्रकाशाद्वयचैतन्यसदानन्दरूपा मूर्तिर्यस्य तेन मया व्याप्तमिदं सर्वं न त्वनेन देहेनेत्यर्थः । अत एव सन्तीव स्फुरन्तीव मद्रूपेण स्थितानि मत्स्थानि सर्वभूतानि स्थावराणि जङ्गमानि च परमार्थतस्तु न च नैवाहं तेषु कल्पितेषु भूतेष्ववस्थितः कल्पिताकल्पितयोः संबन्धायोगात् । अत एवोक्तं यत्र यदध्यस्तं तत्कृतेन गुणेन दोषेण वाऽणुमात्रेणापि न संबध्यत इति ॥ ४ ॥

शं० टी०—एवं ज्ञानस्य सर्वोत्तमत्वं सुलभत्वं दुर्भगालभ्यत्वं च प्रतिपाद्य पूर्वं यदुक्तं परस्तस्मात्तु भावोन्य इति यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततमिति तदिदानीं परस्य ब्रह्मणः स्वरूपं ज्ञानं विज्ञानं च प्रतिपादयति सार्धेन—मयेति । न केनापि प्रमाणेन व्यज्यते बोध्यत इत्यव्यक्ताऽप्रमेया मूर्तिः स्वरूपं यस्य सोऽव्यक्तमूर्तिः । ननु न केनापि प्रमाणेन बोध्यत इति यदुक्तं तन्न "तं त्वौपनिषदम्" इतिश्रवणाद्ब्रह्मणः श्रुतिबोध्यत्वमस्त्येवेति चेन्न श्रुतेरप्यगोचरत्वात्तद्बोधकत्वानुपपत्तेः । श्रुतिः खलु अस्थूलमि-

त्यादिना सर्वदृश्यनिषेधं कृत्वा यन्निषेधाऽविषयं सर्वदृश्यविलक्षणं तद्ब्रह्मेति बोधयति न तु साक्षादिदमिति। ननु "सत्यं ज्ञानम्" इति "आनन्दो ब्रह्म" इति च श्रुतिः सत्यादिस्वरूपं ब्रह्मेति बोधयत्येवेति चेन्न, तस्याः श्रुतेर्ब्रह्मणस्त्वसद्वैलक्षण्यप्रतिपादनपरत्वाज्जगतः सकारणस्यानृतजडदुःखात्मकस्य प्रत्यक्षत्वादर्थात्सिद्धं तद्वैलक्षण्यं ब्रह्मणस्तदेव श्रुत्याप्यसद्वैलक्षण्यमुपदेष्टुम् "सत्यं ज्ञानमनन्तं ब्रह्म। आनन्दो ब्रह्म" इत्युक्तं न तु साक्षादिदमित्युपदिश्यते वाग्रूपत्वाच्छ्रुतेस्तद्वृत्तेरविषयत्वाद्ब्रह्मणस्ततः सिद्धं सर्वप्रमाणाव्यज्यत्वं तेनाव्यक्तमूर्तिना निर्विशेषेण मया ब्रह्मणा सर्वमिदं जगत्ततं व्याप्तं यथा रूपवद्द्रव्यं जडं सर्वं सर्वत्र सूर्यालोकव्याप्तमेव सच्चक्षुर्ग्राह्यत्वमापद्यते न त्वव्याप्तं तद्वन्मया चिदेकस्वरूपेण बहिरन्तः सर्वतो व्याप्तमेव सज्जगत्सर्वं सर्वकरणव्यवहार्यत्वमापद्यते नत्वव्याप्तं स्वतो निरात्मकत्वादप्रकाशत्वाच्च "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। ततः सर्वमिदं जगन्मया सर्वतो व्याप्य प्रकाश्यत इत्यर्थः। एतेन सर्वजगत्प्रकाशकं यत्तद्ब्रह्मेतिज्ञानमुपदिष्टं भवति। किंच सर्वभूतानि सर्वाण्यव्यक्तमहदादीनि स्थूलान्तानि भूतानि चराणि स्थावराणि च सर्वाणि मत्स्थानि मय्यव्यक्तमूर्तौ तिष्ठन्तीति मत्स्थानीत्युच्यन्ते। यथा तोये तरङ्गबुद्बुदादयस्तोयसत्तया सत्तावन्तो भूत्वा तोये तिष्ठन्ति यथा वा नगरनिवासिनो दर्पणसत्तया सत्तावन्तो भूत्वा दर्पणे तिष्ठन्ति तथा सर्वाणि भूतानि मत्सत्तया सत्तां प्राप्य मयि तिष्ठन्तीत्यर्थः। "सदायतनाः सत्प्रतिष्ठाः" इतिश्रुतेः। एतेन सर्वभूताधारं यत्तद्ब्रह्मेतिज्ञानमुपदिष्टं भवति। परस्तस्मात्तु भावोऽन्यो व्यक्तोऽव्यक्तात्सनातन इत्यत्राव्यक्तात् परमात्मा पर उत्कृष्ट इति यदुक्तं स्वस्योत्कृष्टत्वमव्यक्तस्य तु निकृष्टत्वं तदेव पुनर्विस्पष्टयितुमव्यक्तस्य सकार्यस्य व्याप्यत्वेनाधेयत्वेन च निकृष्टत्वं स्वस्य व्यापकत्वेनाधारत्वेन चोत्कृष्टत्वं च दर्शयित्वा इदानीमेवं व्याप्यव्यापकभावेनाधाराधेयभावेन च भेदेऽङ्गीक्रियमाणे भेदस्य यथार्थत्वं भेददर्शिनां मुमुक्षूणां मोक्षाभावश्चाद्वैतश्रुतिविरोधश्च प्रसज्जत इति तं परिहर्तुम् "अथात आदेशो नेति नेति। न सन्नासन्न सदसत्" इत्यादिश्रुतिप्रसिद्धं सर्वदृश्यनिषेधं करोति ब्रह्मणोऽद्वितीयत्वसिद्धये—न चाहमित्यादिना। चकारोऽवधारणार्थः। तेष्वव्यक्तादिस्थूलान्तेषु भूतेषु ब्रह्मादिस्तम्बान्तेषु कूटस्थाऽसङ्गचिद्रूपः परमात्माहमन्तःप्रविश्यात्मरूपेण वा व्यापकत्वेन वा नैवावस्थितोऽस्मि गृहे वायुरिव बिले सर्प इवायःपिण्डमग्निरिवाहं विकारीव तेषु भूतेषु प्रविश्य व्याप्य वा नैव तिष्ठामीत्यर्थः। विकारिणः खलु वाय्वग्न्यादेर्गृहायःपिण्डादौ प्रवेशो व्याप्तिश्चोपपद्यते नत्वविकारिणो निरवयवस्याऽसङ्गस्याऽक्रियस्य मम परिपूर्णस्योपपद्यते यथाकाशस्य तथा। ननु घटाकाश इत्यत्र यथाऽऽकाशस्य घटे प्रविश्य स्थितिरुपयुज्यते तद्वद्भूतेषु तवाप्यस्त्विति चेन्न, आकाशस्यापि घटान्तःप्रवेशकल्पनाभ्रम एव निरवयवस्य चलनासंभवात्। ननु "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादिश्रुतिभिर्ब्रह्मणो भूतेषु प्रवेश उच्यत इति चेन्न, तस्याभासविषयत्वान्न ब्रह्मविषयत्वोपपत्तिः "निष्कलं निष्क्रियम्" इति "असङ्गो नहि सज्यते। आकाशवत्सर्वगतः" इति "पूर्णमदः" इति च ब्रह्मणो निरवयवत्वनिष्क्रियत्वासङ्गत्वपूर्णत्वश्रवणात्प्रवेशक्रिया वा व्यापनक्रिया वा संयोगो वान्यद्वा संभावयितुं न शक्यते ततस्तेषु प्रविश्याहं नैव स्थित इति सिद्धम्॥ ४॥

**श्री० टी०**—तदेवं वक्तव्यतया प्रस्तुतस्य ज्ञानस्य स्तुत्या श्रोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति—**मयेति द्वाभ्याम्**। अव्यक्ता अतीन्द्रिया मूर्तिः स्वरूपं यस्य तादृशेन मया कारणभूतेन सर्वमिदं जगत् ततं व्याप्तम् "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। अत एव कारणभूते मयि तिष्ठन्तीति मत्स्थानि सर्वाणि चराचराणि भूतानि। एवमपि घटादिषु स्वकार्येषु मृत्तिकेव तेषु भूतेषु नाहमवस्थित आकाशवदसङ्गत्वात्॥ ४॥

**स० टी०**—स्तुत्यादिना महीकृत्य ज्ञानं व्याख्यातुमीश्वरः॥ सम्यगारभते वेदसिद्धान्तं चाद्भुतोपमम्

॥ १ ॥ भूतभौतिकतद्धेतुरूपं दृश्यमिदं जगत् ॥ मयाधिष्ठानरूपेण व्याप्तं सच्चिन्मयात्मना ॥ २ ॥ कथं व्याप्तं त्वया सर्वं परिच्छिन्नेन हीति चेत् ॥ मैवं सर्वेन्द्रियातीतस्वप्रकाशैकमूर्तिना ॥ ३ ॥ मया व्याप्तमिदं सर्वमपरिच्छिन्नदेहिना ॥ सन्तीवान्तःस्फुरन्तीव मद्रूपेण स्थितानि भोः ॥ ४ ॥ मत्स्थानि सर्वभूतानि जङ्गमानि स्थिराणि च ॥ तेष्वध्यस्तेषु भूतेषु नैवाहं समवस्थितः ॥ ५ ॥ ब्रह्मादिसर्वभूतानि स्वात्मवन्त्यात्मना मया ॥ स्थितानि मय्यधिष्ठाने सत्तास्फूर्तिप्रदे हरौ ॥ ६ ॥ आकाशादपि सूक्ष्मत्वादसंसर्गितयाऽकलः ॥ आधेयत्वेन भूतेषु न चाहं तेष्ववस्थितः ॥ ७ ॥ नाध्यस्तगुणदोषाभ्यां लेपोऽधिष्ठानगोऽप्यणुः॥ रज्जुखण्डे तदज्ञानाध्यस्तैः सर्पादिभिर्यथा ॥ ८ ॥ इह भगवति शुद्धे मायिकं विश्वमेतत्प्रभवति नहि जातु स्पृष्टमीषद्विभूम्नि ॥ क्वचिदपि गगने नो नीलिमा स्पर्शगन्धौ गुण इव भुजगाद्यारोपितं चापि तत्र ॥ ९॥ ४॥

**भा० टी०**—एवमन्वयमुखेन व्यतिरेकमुखेन च ज्ञानं स्तुत्वा श्रोतारमभिमुखीकृत्य तत्स्वरूपमाह—**मयेति**। मया परमात्मना सच्चिदानन्दघनेनाव्यक्तमूर्तिना न व्यक्ता इन्द्रियागोचरा मूर्तिः स्वरूपं यस्य मम तेन मया इदं सर्वं जगत् ब्रह्मादिस्तम्बपर्यन्तं चराचरात्मकं ततं व्याप्तं शुक्त्या तत्र कल्पितं रूप्यमिवात एवाव्यक्तस्वरूपे सच्चिदानन्दघने परमात्मनि अधिष्ठानरूपे मयि स्थितानि कल्पितानि सर्वभूतानि। अधिष्ठानमेव हि अध्यस्तस्य स्वरूपं भवति। नहि रूप्यस्य शुक्त्यतिरिक्तं स्वरूपं केनचिन्निरूपयितुं शक्यम्। अहं च तेषामधिष्ठानत्वादात्मा स्वरूपं निरात्मकं च किंचिद्भूतं व्यवहारयोग्यं न भवति। अतो मयात्मनात्मवत्त्वेन स्थितानि सर्वेषां भूतानामधिष्ठानत्वादात्मनि स्वरूपभूते मयि सर्वाणि भूतानि स्थितानि नान्यत्रेत्यर्थः। तेषामात्मत्वेन परमात्मापि तेष्ववस्थित इति मूर्खाणामवभासतेऽतो ब्रवीमि नचाहं तेषु मयि कल्पितेषु सर्वभूतेष्ववस्थितः अमूर्तस्य मम केनापि संबन्धेन तत्रावस्थितेरनिरूपणात् ॥ ४ ॥

**प० टी०**—तदेवं वक्तव्यतया प्रस्तुतस्य राजविद्याराजगुह्याख्यधर्मस्य स्तुत्या स्तोतारमभिमुखीकृत्य तदेव ज्ञानं कथयति—**मयेति द्वाभ्याम्**। इदमिदंत्वेन भासमानं पुनर्जगद्गत्वरं सर्वं नामरूपकर्मात्मकं दृश्यजातं मयाधिकरणरूपेण कृत्वा ततं विस्तारं प्राप्तम्। किंभूतेन मयाव्यक्तमूर्तिना न व्यक्ता ज्ञाता मूर्तिः स्वरूपं यस्यैवंविधेनाज्ञातेन मया निमित्तभूतेन मदज्ञानान्मय्येवाविर्भूतम् अज्ञाततया शुक्त्या रजतमिवेत्यर्थः। तदुक्तं वासिष्ठे–'मदज्ञानोदितं विश्वं मय्येव लयमागतम्' इति। अथ मयेतितृतीयया परमात्मनो जगत्कारणत्वे प्राप्ते तद्व्यतिरेकेण निषेधयति—**मत्स्थानीति**। 'कारणं हि कार्यमभिव्याप्य तिष्ठति' इति न्यायेन यद्यपि सर्वभूतानि मयि तिष्ठन्तीति प्रतिभाति तथापि तेषु भूतेष्वहं न व्यवस्थितः। यथा यद्यपि शुक्तौ रजतं प्रतीयते तथापि रजते शुक्त्यंशो न प्रतीयते यदि प्रतीयेत तर्हि संभ्रम एव न स्यादित्यर्थः ॥ ४ ॥

**रा० टी०**—यस्य धर्म्यपदेन प्रत्यक्षावगमपदोक्तभगवज्ज्ञानसाधनत्वमुक्तं यच्च प्रवक्ष्यामीति प्रतिज्ञातं यच्च ज्ञात्वेत्यादिना प्रशंसितं यदकरणे च निन्दा कृता तज्ज्ञानविज्ञानयोर्मध्ये ज्ञानशब्दितं ज्ञातव्यं तावदाह—**मयेत्यादिना** अहं क्रतुरितिपर्यन्तेन। इदं सर्वं चराचरात्मकं जगदव्यक्तमूर्तिना बहुव्रीहिः। मया ततं व्याप्तम्। व्याप्तत्वे सर्वत्र कुतो न दृश्यत इत्यतोऽव्यक्तेति विशेषणम्। ततमित्युक्त्या जगत आधारता स्वस्याधेयता घटादेरिव प्राप्ता तां निराह—**मत्स्थानीति**। मदाधारतयैव सर्वभूतानि सजडजीवजातानि। तेषु चाहं नावस्थितः तदाधारतया तदुपजीवनेन न वर्त इत्यर्थः ॥ ४ ॥

**न च मत्स्थानि भूतानि पश्य मे योगमैश्वरम् ॥**
**भूतभृन्न च भूतस्थो ममात्मा भूतभावनः ॥ ५ ॥**

**त० टी०**—किंच—**न च मत्स्थानीति**। मयि स्थितान्यपि भूतानि न च स्थितानि पात्रे घृतादिवन्मयि संसक्तानि न भवन्ति ममासङ्गत्वात् "असङ्गो ह्ययं पुरुषः" इति श्रुतेः। नन्वेवं चेत्तर्हि

उक्तं व्यापकत्वमाश्रयत्वं च कथं संभावनीयं स्यादित्यत आह–पश्येति । मे परमेश्वरस्यैश्वरमसाधारणं योगमचिन्त्यशक्तिप्रभावं पश्य, अन्यत्रासंभावितत्वेऽपि अघटितघटनापटीयस्त्वसामर्थ्यरूपेण ममाचिन्त्यशक्तियोगेन न किमप्यसंभावनीयमित्यर्थः । तदेवोपपादयति–भूतभृदिति । बिभर्ति धारयति पोषयति वा तथाभूतोऽप्यहं न च भूतस्थो, यथा जीवो देहं धारयन्पालयन्वा तदहंकारेण तत्संसक्तो भवति, अहं तु भूतानां धारणपोषणकर्ताऽपि अहंकाराभावात्तत्संसक्तो न भवामीत्यर्थः । असङ्गत्वे कथं कार्योत्पत्तिरिति चेत्तत्राह–ममात्मा मम संकल्पलक्षण आत्मा मन एव भूतानां भावन उत्पादकः । "सोऽकामयत बहु स्यां प्रजायेय" इति श्रुतेः ॥ ५ ॥

म० टी०–न चेति । अत एव दिविष्ठ इवादित्ये कल्पितानि जलचलनादीनि मयि कल्पितानि भूतानि परमार्थतो मयि न सन्ति त्वमर्जुनः प्राकृतीं मनुष्यबुद्धिं हित्वा पश्य पर्यालोचय, मे योगं प्रभावमैश्वरमघटनघटनाचातुर्यं मायाविन इव ममावलोकयेत्यर्थः । नाहं कस्यचिदाधेयो नापि कस्यचिदाधारस्तथाप्यहं सर्वेषु भूतेषु मयि च सर्वाणि भूतानीति महतीयं माया यतो भूतानि सर्वाणि कार्याण्युपादानतया बिभर्ति धारयति पोषयतीति च भूतभृत् भूतानि सर्वाणि कर्तृतयोत्पादयतीति भूतभावनः एवमभिन्ननिमित्तोपादानभूतोऽपि ममात्मा मम परमार्थस्वरूपभूतः सच्चिदानन्दघनोऽस द्वितीयस्वरूपत्वान्न भूतस्थः परमार्थतो न भूतसंबन्धी स्वप्नदृगिव न परमार्थतः स्वकल्पितसंबन्धीत्यर्थः । ममात्मेति राहोः शिर इतिवत्कल्पनया षष्ठी ॥ ५ ॥

शं० टी०–नन्वविक्रियस्य पूर्णस्य तव परस्य ब्रह्मणो भूतेष्ववस्थितिर्व्याप्तिश्च मास्तु भूतानि तु त्वयि तिष्ठन्त्येवेत्याशङ्कायामाह–न च मत्स्थानीति । मय्यव्यक्तमूर्तौ चिदेकरसे परिपूर्णे ब्रह्मणि भूतान्यव्यक्तादिस्थूलान्तानि सकार्याणि स्थितानि च न भवन्ति भूतेषु च यथा नाहं तथा मयि च भूतानि न सन्तीत्यर्थः । ननु 'सर्वभूतनिवासोऽसि' इति तव सर्वभूताश्रयत्वं स्मर्यते कथं न च मत्स्थानि भूतानीत्युच्यत इति चेद्भवानत्र प्रष्टव्यः निष्कले निराकारे निर्विशेषे परिपूर्णे ब्रह्मणि किं भूतानि संयोगसंबन्धेन तिष्ठन्ति किं समवायसंबन्धेन वा उत तादात्म्यसंबन्धेन वा तिष्ठन्ति । आद्ये भूतानां ब्रह्मणश्च संयोगः सर्वतो वा उतैकदेशेन वा । नाद्यः परिच्छिन्नानामपरिच्छिन्नेन सर्वतः संयोगायोगात् । न द्वितीयः निरवयवस्य देशकल्पनासंभवात् । परमाणौ द्व्यणुकवत्तिष्ठन्त्विति चेन्न, निरवयवसावयवयोः संयोगानुपपत्तेः । नापि समवायः भूतानां ब्रह्मणश्चायुतसिद्धत्वाभावात् समवायासिद्धेः । नापि तृतीयः जडाजडयोस्तादात्म्यासंभवात् । तर्हि कः संबन्ध इति चेदध्याससंबन्ध इति ब्रूमः । ततो यत्र यदध्यस्तं तत्र तन्नाममात्रमेव भवति न तु वस्तुतोऽस्ति शुक्तिकारजतादौ तद्दर्शनात् । यत एवं ततो मयि परिपूर्णे परे ब्रह्मणि निर्विशेषे भूतानि न सन्त्येव भूतसद्भावे तत्कृतपरिच्छित्त्या पूर्णत्वासंभवात् "पूर्णमदः पूर्णमिदम्" इतिश्रुत्या ब्रह्मणः पूर्णत्वमेवोच्यते "तदेतद्ब्रह्माऽपूर्वमनपरमनन्तरमबाह्यम्" इति "एकमेवाऽद्वितीयं ब्रह्म" इति "एक एव हि रुद्रो न द्वितीयाय तस्थुः" इत्यादिश्रुतिशतैर्ब्रह्मणोऽद्वितीयत्वं नियमेन प्रतिपाद्यते यस्मान्मयि निष्कले निष्क्रिये निःसङ्गे निरन्तरे निराश्रये निर्विशेषे परिपूर्णे "नेह नानास्ति किंचन" इत्यादिश्रुतिप्रमाणकः प्रपञ्चाभावः प्रतिपादितस्तस्मान्मे मम पारमार्थिकमप्राकृतमैश्वरं ब्राह्मं योगं युज्यते ज्ञानेन प्राप्यत इति योगं स्वरूपं सद्घनं चिद्घनमानन्दघनमद्वितीयं पश्य इदमेवाहमिति स्वात्मना पश्य सदिदं ब्रह्मैवाहमिति स्वं ब्रह्मैव विद्धीत्यर्थः । ननु नेतिनेतीति सर्वदृश्यनिषेधे कृते तन्निषेधावधित्वेन जगदभाव एवावशिष्यते तत्र किमस्तीदं ब्रह्मैवाहमस्मीति विज्ञानमिति चेत् सत्यं प्रपञ्चाभावोऽत्र प्रतीयते तथापि श्रूयतामत्रोच्यते–दृश्यप्रपञ्चो येन भास्यमानो यदात्मना यत्र तिष्ठति तदभावोऽपि तेनैव भास्यमानस्तदात्मना तत्रैव तिष्ठति नान्यथा ततो जगत्तदभावयोः स्वरूपभूतं तदवभासकं तदधिष्ठानं निर्विशेषं निर्विकल्पं यत्तद्ब्रह्मेति

सूक्ष्मबुद्धिभिर्युक्तिकुशलैरवबुध्यताम्। तदिदं ब्रह्मस्वरूपं स्वापरोक्षं स्वेनैव वेद्यं स्वारोग्यवत्तत एव भगवानपि न च मत्स्थानि भूतानीति स्वस्मिन्नारोपितभूतजातं सर्वं निषिध्य तदवधित्वेन स्वमवशेषयति पश्य मे योगमैश्वरमिति, सर्वदृश्यनिषेधावधिभूतं तदभावावभासकं स्वं परं ब्रह्म सर्वे मुमुक्षवः शुद्धात्मानः स्वात्मना विजानन्त्विति। एतेन सर्वदृश्यनिषेधावधिलक्षणं सर्वाधिष्ठानं निर्विशेषं प्रज्ञानैकरसं यत्परं ब्रह्म तदेवाहमिति वेदनमेव विज्ञानमिति सूचितं भवति। ननु "सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति "सर्वभूतनिवासोऽसि" इति च ब्रह्मणः सर्वभूताधारत्वं श्रूयते स्मर्यते च, कथं न च मत्स्थानि भूतानीत्युच्यते इति चेत् सत्यं श्रुत्या स्मृत्या चोच्यते मम सर्वभूताश्रयत्वं तथापि न तत्पारमार्थिकं किंतु मायाविलसनमाश्रित्योच्यते लोकदृष्ट्या तत्तु मयाप्यङ्गीक्रियत एवेत्याशयेनाह सार्धेन—भूतभृदिति। अर्जुनः स्वयमयमेव साक्षात्परमेश्वर इति मयीश्वरत्वबुद्धिमत्त्वादहमात्मेत्युक्ते मद्देह एव परमात्मत्वबुद्धिं कुर्यादिति श्रीभगवानात्मशब्दार्थं स्वदेहाद्विभज्य भिन्नत्वेन निर्दिशति—ममात्मेति। अयमात्मा "सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयानन्दः परः प्रत्यगेकरसः" इत्यादिश्रुत्युक्तो ममास्येश्वरत्वाभिमानिन आत्माऽव्यक्तमूर्तिः प्रत्यग्लक्षणो भूतभावनः भूतान्याकाशादीनि पृथिव्यन्तानि सकार्याणि सर्वाणि भावयति स्वसत्तया स्वप्रकाशेन सत्तावन्ति प्रकाशवन्ति च करोतीति भूतभावनः सन् भूतभृत् स्वस्मिन्नारोपितानि भूतानि स्वसत्तया स्वमात्राणि बिभर्ति दधातीति भूतभृदेव भवति । चकारस्त्वर्थः। न तु भूतस्थः भूतेष्वात्मरूपेणाभिमानितया न तिष्ठतीति न भूतस्थ इत्युच्यते। आत्मनो भूतस्थत्वे 'विशेषणनाशाद्विशिष्टस्यापि नाशः' इतिन्यायेन भूतनाशात् स्वस्यापि नाशकथाप्रसङ्गात् तदीयकर्तृत्वभोक्तृत्वादिधर्मानुषङ्गश्च स्यादत उच्यते—न च भूतस्थ इति। नन्वात्मनो भूतस्थत्वाभावे तैः परिच्छित्तिः स्यादिति चेन्न, नभसि नीलिमवन्मयि कल्पितत्वात्तेषां स्वतः सत्ताभावात् परिच्छेदकत्वानुपपत्तेः। यद्वा अधिष्ठानव्यतिरेकेण भूतानां पृथक्स्वरूपाभावात् स्वमात्रेषु तेषु न पुनः स्थातव्यमित्युच्यते—न च भूतस्थ इति। तेन सिद्धं भूतान्येव मयि मरौ जलमिव व्योम्नि नैल्यमिव तिष्ठन्ति न तु भूतेष्वहमिति ॥ ५ ॥

श्री० टी०—किंच—नचेति। न च मयि स्थितानि भूतानि असङ्गत्वादेव मम। ननु तर्हि व्यापकत्वमाश्रयत्वं च पूर्वोक्तं विरुद्धमित्याशङ्क्याह—पश्येति । मे ऐश्वरमसाधारणं योगं युक्तिमघटितघटनाचातुर्यं पश्य मदीययोगमायावैभवस्यावितर्क्यत्वान्न विरुद्धं किंचिदित्यर्थः। अन्यदप्याश्चर्यं पश्येत्याह—भूतेति। भूतानि बिभर्ति धारयतीति भूतभृत् भूतानि भावयति पालयतीति भूतभावनः एवंभूतोऽपि ममात्मा परं स्वरूपं भूतस्थो न भवति। अयं भावः—यथा जीवो देहं बिभ्रत् पालयंश्चाहंकारेण तत्संश्लिष्टस्तिष्ठति एवमहं भूतानि धारयन्पालयन्नपि न तेषु तिष्ठामि निरहंकारत्वादिति ॥ ५ ॥

स० टी०—मय्यध्यस्तानि भूतानि न सन्ति मयि वस्तुतः ॥ दिविष्ठेऽर्के यथाध्यस्तं जलकम्पादिकं न हि ॥ १ ॥ हित्वा त्वं प्राकृतीं बुद्धिं प्रभावं मे विलोकय ॥ आधेयोऽहं न कस्यापि नाधारः कस्यचित्तथा ॥ २ ॥ तथाप्यहं समस्तेषु समस्तानि मयीति च ॥ भूतानीहास्ति मायेयं महतीत्यैश्वरं मम ॥ ३ ॥ यतो भूतानि सर्वाणि सर्वोपादानभावतः ॥ बिभर्ति धारयत्येष पोषयतीति भूतभृत् ॥ ४ ॥ उत्पादयति भूतानि कर्तृत्वाद्भूतभावनः ॥ ममात्मा भिन्नहेतूपादानभूतोऽपि वस्तुतः ॥ ५ ॥ चिदानन्दघनोऽसङ्गस्वरूपत्वान्न भूतगः ॥ वस्तुतो भूतसंबन्धी नास्त्येवात्मा ममेति च ॥ ६ ॥ राहोः शिर इतीवात्र षष्ठी कल्पनयेरिता ॥ भगवाँल्लोकदृष्ट्या वारोप्यात्राहंकृतिं तनौ ॥ ७ ॥ ममात्मेत्याह भगवद्भाष्यकारैरितीरितम् ॥ ८ ॥ ५ ॥

भा० टी०—अत एव सर्वसङ्गविवर्जिते मयि परमात्मनि वस्तुतस्तु भूतान्यपि सर्वाणि नच स्थितानि।

पश्य मे योगमैश्वरं योगं युक्तिं घटनां ममैश्वरं याथात्म्यभावम् । तथाच श्रुतिः–"असङ्गो नहि सज्जते" इति । इदं चान्यद्योगमघटितघटनापटीयस्त्वं पश्य भूतभृन्नच भूतस्थो ममात्माऽसङ्गित्वात् भूतेषु न तिष्ठतीति तथा वस्तुत एतादृशोऽपि सन् भूतानि स्थावरजङ्गमादीनि बिभर्ति धारयति पोषयतीति तथा भूतभावनः भूतानि भावयत्युत्पादयतीति तथा । ममात्मेति तु भेदमारोप्य राहोः शिर इतिवत्प्रयोगः ॥ ५ ॥

प० टी०–अथैतदेव प्रकटयन्नाह–न चेति । च परं भूतानि मत्स्थानि न भवन्ति । तथाच पूर्वं मत्स्थानि सर्वभूतानीति यदुक्तं तत्र नेति निषेधेन प्रातिभासिकत्वं द्योतितम् । तथाच भ्रमनिवृत्तिकाले शुक्तिकायां रजतं नास्त्येव । तदुक्तम् 'सौम्याम्भसि यथा वीचिर्न चास्ति न च नास्ति च । तथा जगद्ब्रह्मणीदं शून्याशून्यपदं गतम्' इति । अथाधिकरणं विना भ्रमोत्पत्तिर्नास्तीत्याह–पश्येति । दृश्यजाते प्रतीतेऽपि मे ऐश्वरं योगमीश्वरेण सह जात ऐश्वरो योग आध्यासिकः संबन्ध इति पश्य । तदेवाह–भूतभृदिति । ममात्मा मत्स्वरूपं भूतभृदधिकरणरूपेण भूतानि बिभर्ति परं न भूतस्थोऽसङ्गत्वात् । नह्याकाशे भूतानि तिष्ठन्त्याकाशो वा भूतेष्विति केनापि प्रतीयते । तथा ममात्मा भूतभावनो भूतानि भाव्यन्ते कल्प्यन्ते यस्मिन् स तथा ॥ ५ ॥

रा० टी०–त्वयि चेद्भूतानि तिष्ठन्ति तर्हि भूतले वर्तामहे भूतलशैत्यादिनाऽहं शीतो भवामीति ज्ञानमिव भगवति वयं वर्तामह इति धीः स्यात्, तथा वह्न्याद्यौष्ण्यशैत्याभ्यां भूतलादेरौष्ण्यशैत्यवदन्योन्यधर्मसंक्रान्तिश्च स्यादित्यत आह–न च मत्स्थानीति । त्वगिन्द्रियेण तं ज्ञात्वान्योन्यधर्मसंक्रान्तिं चासाद्य न तिष्ठन्ति भगवतः प्राकृतस्पर्शराहितत्वात् "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः । 'न दृश्यश्चक्षुषा चासौ न स्पृश्यः स्पर्शनेन च' इति स्मृतेः । भूताधारोऽपि कथं तदनाधार इत्यत उक्त पश्येत्यादि । ऐश्वरं ईश्वरसंबन्धिनं मे योगं सामर्थ्यम् 'योगोऽसावुपायः शक्तिरेव च' इतिवचनात् । पश्य मम तादृशीं शक्तिमित्यर्थः । पूर्वत्राव्यक्तमूर्तिनेति मूर्तावुक्तायां सास्मदादीनामिव भिन्नेति भ्रान्तिनिरासाय स्वलक्षणं भूताधारत्वादिकं स्वदेहस्याप्याह–भूतभृदिति । भूतभावनः भूतानामुत्पत्तिकर्ता ममात्मा मम देहः अहमिव भूतभृत् भूतस्थश्च न भवति इत्यर्थः । अत्र मम देह इति वक्तव्ये ममात्मेत्युक्तिः अचेतनस्य देहस्य कथं भगवल्लक्षणं स्यादितिशङ्का स्यात्तन्निवृत्तये तस्य चेतनत्वं पृथग्वाच्यं स्यादात्मपदप्रयोगे तु देहत्वं चेतनत्वं द्वयमप्युक्तं स्यात् आत्मपदस्य देहचेतनरूपोभयार्थत्वादिति ॥ ५ ॥

**यथाऽऽकाशस्थितो नित्यं वायुः सर्वत्रगो महान् ॥**
**तथा सर्वाणि भूतानि मत्स्थानीत्युपधारय ॥ ६ ॥**

त० टी०–असंसक्तयोरप्याधाराधेयभावं दृष्टान्तेनाह–यथेति । अवकाशात्मके आकाशे नित्यं स्थितो वायुः सर्वत्रगः सर्वत्रोर्ध्वाधस्तिर्यग्गच्छति, महान्महत्परिमाणकः एवंभूतोऽपि यथाऽऽकाशे न संश्लिष्यते असङ्गत्वात् तथाऽसङ्गस्वभावे मयि संश्लेषं विनैव सर्वाणि भूतानि स्थावरजङ्गमरूपाणि स्थितानि मदायत्तस्थितिप्रवृत्तिकानीत्युपधारयेत्येवं मम सर्वाधारत्वमसङ्गत्वं च विजानीहीत्यर्थः ॥ ६ ॥

म० टी०–असंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेनाह–यथाकाशेति । यथैवाऽसङ्गस्वभाव आकाशे स्थितो नित्यं सर्वदा उत्पत्तिस्थितिसंहारकालेषु वातीति वायुः सर्वदा चलनस्वभावः अत एव सर्वत्र गच्छतीति सर्वत्रगः महान् परिमाणतः एतादृशोऽपि न कदाप्याकाशेन सह संसृज्यते तथैवाऽसङ्गस्वभावे मयि संश्लेषमन्तरेणैव सर्वाणि भूतान्याकाशादीनि महान्ति सर्वत्रगानि च स्थितानीत्युपधारय विमृश्यावधारय ॥ ६ ॥

शं० टी०–ननु महान्ति खल्वाकाशादिभूतानि तेषां महतां सकार्याणां त्वय्यवस्थानं कथमुपपद्यत इत्याशङ्कायाम् "स दिवो ज्यायानन्तरिक्षाज्ज्यायान्" इति "एतावानस्य महिमातो ज्यायांश्च पुरुषः। पादोऽस्य विश्वाभूतानि त्रिपादस्यामृतं दिवि" इतिश्रवणात् बृहत्तमे मयि परे ब्रह्मणि चन्द्रे नीलिमवदेकदेश एवाव्यक्तादीनि भूतानि तिष्ठन्तीति सदृष्टान्तमुपपादयति–**यथेत्यादिना**। सर्वत्रग आकाशमस्पृश्यैव स्वयं सर्वत्र गच्छत्याविर्भावं तिरोभावं च भजन् सर्वतश्चेष्टत इति सर्वत्रगो महान् महत्परिमाणवान् वायुराकाशे भूताकाशे नित्यं सदा यथा स्थितो भवति तथा सर्वाणि भूतानि महदादिस्थूलान्तानि मत्स्थानि मयि परिपूर्णे निष्क्रिये निराकारे निरन्तरे परे ब्रह्मणि तिष्ठन्तीति मत्स्थानीत्येवोपधारयावधारयेत्यर्थः ॥ ६ ॥

श्री० टी०–असंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेनाह–**यथेति**। अवकाशं विनाऽवस्थानानुपपत्तेर्नित्यमाकाशे स्थितो वायुः सर्वत्रगोऽपि महानपि नाकाशेन संश्लिष्यते निरवयवत्वेन संश्लेषायोगात्, तथा सर्वाणि भूतानि मयि स्थितानीति जानीहि ॥ ६ ॥

स० टी०–आधाराधेयभावं श्रीभगवानाह सर्वगः ॥ दृष्टान्तेन प्रबोधार्थमत्यसंश्लिष्टयोरपि ॥ १ ॥ यथाऽसङ्गस्वभावेऽपि व्योम्नि वायुः स्थितः सदा ॥ सदा चलस्वभावोऽपि महांश्च परिमाणतः ॥ २ ॥ ईदृशोऽपि न वै व्योम्ना सह संसृज्यते कदा ॥ तथैवासङ्गचिद्रूपस्वभावे मयि सर्वगे ॥ ३ ॥ संश्लेषमन्तरेणैव सर्वगानि महान्त्यपि ॥ आकाशादीनि भूतानि स्थितानीत्यवधारय ॥ ४ ॥ गगनकुसुमसाम्यं विश्वमध्यस्तमीशे व्रजति विविधयुक्त्या ब्रह्मभिन्नं समस्तम् ॥ किरणजलमसत्यं रज्जुसर्पो यथा स्याद्भगवति परमात्मन्यद्वितीये तथेदम् ॥ ५ ॥ ६ ॥

भा० टी०–सर्वसङ्गविवर्जितेऽपि सर्वाणि भूतानि स्थितानीत्युक्तं, श्लोकद्वयेन तत्र दृष्टान्तमाह–**यथेति**। यथा लोके वायुः सर्वत्र गच्छतीति सर्वत्रगः परिमाणतो महान् एवंभूतोऽपि नित्यं सदा आकाशेऽसङ्गिनि तिष्ठतीति आकाशस्थः तथा सर्वाणि महान्ति सूक्ष्माणि च मयि असङ्गिनि स्थितानीत्युपधारय निश्चयेन जानीहि। यत्तु किं तद्ब्रह्मेतिप्रश्नस्योत्तरमुक्तम् अक्षरं परमं ब्रह्मेत्यक्षरसंज्ञः शुद्धस्त्वंपदार्थ एव निरुपाधिकं ब्रह्मेत्युक्तं तत्र निरुपाधिकं ब्रह्म श्लोकद्वयेन व्याख्यातम्। इदानीं तस्याक्षराख्येन जीवेनाभेदं सदृष्टान्तमाह–यथेति। वायुः सूत्रात्मा समष्टिलिङ्गत्वात् सर्वत्रगः महानित्यनेन बाह्यवायोर्व्यावृत्तिः। स यथा नित्यं कालत्रयेप्युत्पत्तेः प्राक् नाशादूर्ध्वं मध्ये च स्वकारणे आकाशेऽव्याकृते अभेदेन तिष्ठति तथा सर्वाणि भूतानि उपाधिनिष्कृष्टत्वंपदार्थरूपी चेतनवर्गः। बहुत्वं लोकाभिप्रायेण। एतेन जीवब्रह्माभेदकथनेन स्वभावोऽध्यात्ममुच्यत इति प्रागुक्तं ब्रह्मैव जीव इति विवृतमित्यन्ये। तत्रेदं वक्तव्यं–निरुपाधिकस्याक्षरस्य परब्रह्मणस्तत्त्वंपदलक्ष्यत्वेनोभयपदलक्ष्यत्वात् त्वंपदलक्ष्यत्वबोधकोपपदादेरभावाच्च शुद्धः त्वंपदार्थ एवेत्याद्यसङ्गतं, तत्रेत्यादिना विभागोऽप्यनुपपन्नः, मत्स्थानि सर्वभूतानीत्यस्य पूर्वमपि विद्यमानत्वात्। सर्वाणि भूतानीत्यस्योपाधिनिष्कृष्टत्वंपदार्थरूपी चेतनवर्ग इति व्याख्यानमप्यसङ्गतं, पूर्वोत्तरश्लोकेषु सर्वभूतानीत्यस्य स्थावरजङ्गमपरत्वेनात्रैवंपरत्वेऽसङ्गततायाः स्पष्टत्वात्। एवं सर्वोऽपि जीववर्ग इति स्वग्रन्थविरोधाच्च। एतेन नन्वेवमुपाधिरहितस्यैव ब्रह्मणि लयश्चेदुपाधेः का गतिरित्याशङ्क्याह–सर्वेतीति प्रत्युक्तमिति दिक् ॥ ६ ॥

प० टी०–अथासंश्लिष्टयोरप्याधाराधेयभावं दृष्टान्तेन द्रढयति–**यथेति**। अवकाशं विनावस्थानानुपपत्तेर्नित्यमाकाशस्थितो महान् सर्वगोऽपि वायुर्निरवयवेनाकाशेन सह न संश्लिष्यते तथा सर्वाणि भूतानि मयि वर्तमानान्यपि मयि न संश्लिष्यन्ते इत्युपधारय जानीहि। तदुक्तम्–'यथा विशुद्ध आकाशे सहसैवाभ्रमण्डलम्। भूत्वा विलीयते तद्वदात्मनीहाखिलं जगद्' इति ॥ ६ ॥

रा० टी०–भगवतः सर्वाधारत्वेऽप्यन्योन्यधर्मासंक्रान्त्यादिरसंभावित इत्यतो दृष्टान्तेन तदुपपाद-

यति–यथेति । अवकाशं विनावस्थित्ययोगान्नित्यमाकाशे स्थितो महान्वायुः सर्वत्रगोऽपि तत्तद्धर्मान्नाप्नोति । शैत्यसौरभादिकं तु वायुसंबद्धजलाद्यवयवगतमेव न वायुगतं तथा सर्वाणि भूतानि मत्स्थानि नान्योन्यधर्मसंक्रान्तिमन्तीत्युपधारयेति ॥ ६ ॥

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ॥**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ॥ ७ ॥**
**प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः ॥**
**भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात् ॥ ८ ॥**

त० टी०–ननु स्यादेतत्तथाऽपि भवान्भूतानां निमित्तकारणमुपादानं वा, निमित्तत्वे घटादीनां कुलालस्येवाधारत्वमनुपपन्नमुपादानत्वे यथा पृथिव्यां स्थितानां तत्कार्याणां घटादीनां तत्रैव लयः पुनस्तत एवोत्पत्तिर्विकारत्वेन प्रसिद्धा, तथा त्वयि स्थितानां भूतानां त्वय्येव लयः पुनस्त्वत्त एव परिणामेनोत्पत्तिः स्यात्तथात्वे तव परिणामित्वापत्त्या कथमसङ्गत्वमिति चेत्तत्राह–सर्वभूतानीति । सर्वाणि भूतानि स्थावरजङ्गमात्मकानि कल्पक्षये प्रलयसमये हे कौन्तेय मामिकां मन्नियम्यभूतां शक्तिं प्रकृतिं त्रिगुणात्मिकां मायां यान्ति, तत्र सूक्ष्मरूपेण लीयन्त इत्यर्थः । पुनस्तानि कल्पादौ सर्गकाले विसृजामि प्रकृत्यैक्यापन्नानि ततो नामरूपविभागेन व्यक्तीकरोमि अहं सर्वशक्त्याश्रयः परमेश्वरः । एवं च मच्छक्तिभूतायाः प्रकृतेरेवोत्पद्यन्ते, तत्रैव प्रलीयन्ते, स्थितिकालेऽपि तत्रैव तिष्ठन्ति । अत एव नच मत्स्थानि भूतानीत्युक्तम्, शक्तेः शक्तिमतः पृथक्स्थितिप्रवृत्त्यभावादभेदविवक्षया शक्तेः कार्यस्य शक्तिमतोऽप्यभिधानं मुख्यमेवातः शक्तिद्वारेण सर्वभूतोपादानत्वं तदुपादाने कारणान्तरानपेक्षणान्निमित्तत्वं चेत्यभिन्ननिमित्तोपादानकारणत्वं ममैव सिद्धम् । प्रकृतिरूपाया मच्छक्तेर्जडत्वेन स्वरूपाभेदासंभवात्परिणामादीनां तन्निष्ठत्वमेव, शक्तिविक्षेपलक्षणपरिणामाङ्गीकारात् । तस्मादचिन्त्ययोगमायेश्वरस्य मम स्वशक्त्यैव जगदुपादानत्वमाधारत्वं लयस्थानत्वं तद्धर्मास्पृष्टत्वं चेति सर्वमविरुद्धम् ॥ ७ ॥ उक्तार्थमेव स्पष्टयति–प्रकृतिमिति । स्वां स्वकीयां विचित्रपरिणामार्हां त्रिगुणमयीं प्रकृतिमचेतनशक्तिमवष्टभ्य कार्योत्पादनेच्छया स्वेक्षणविषयां कृत्वाऽष्टधा परिणमय्य इमं चतुर्विधं देवतिर्यङ्मनुष्यस्थावरादिरूपं प्रकृतेर्वशात्प्राचीनकर्मनिमित्ततत्तत्स्वभाववलादवशं परतन्त्रं कृत्स्नं भूतग्रामं पुनः पुनः सृष्टिसमये विसृजामि ॥ ८ ॥

म० टी०–एवमुत्पत्तिकाले स्थितिकाले च कल्पितेन प्रपञ्चेनाऽसङ्गस्यात्मनोऽसंश्लेषमुक्त्वा प्रलयेऽपि तमाह–सर्वभूतानीति । सर्वाणि भूतानि कल्पक्षये प्रलयकाले मामिकां मच्छक्तित्वेन कल्पितां प्रकृतिं त्रिगुणात्मिकां मायां स्वकारणभूतां यान्ति तत्रैव सूक्ष्मरूपेण लीयन्त इत्यर्थः । हे कौन्तेयेत्युक्तार्थम् । पुनस्तानि कल्पादौ सर्गकाले विसृजामि प्रकृतावविभागापन्नानि विभागेन व्यनज्मि अहं सर्वज्ञः सर्वशक्तिरीश्वरः ॥ ७ ॥ किंनिमित्ता परमेश्वरस्येयं सृष्टिर्न तावत्स्वभोगार्था तस्य सर्वसाक्षिभूतचैतन्यमात्रस्य भोक्तृत्वाभावात्तथात्वे वा संसारित्वेनेश्वरत्वव्याघातात् । नाप्यन्यो भोक्ता यदर्थेयं सृष्टिः चेतनान्तराभावात् ईश्वरस्यैव सर्वत्र जीवरूपेण स्थितत्वात् अचेतनस्य चाभोक्तृत्वात् । अत एव नापवर्गार्थापि सृष्टिः बन्धाभावादपवर्गविरोधित्वाच्चेत्याद्यनुपपत्तिः सृष्टेर्मायामयत्वं साधयन्ती नास्माकं प्रतिकूलेति न परिहर्तव्येत्यभिप्रेत्य मायामयत्वान्मिथ्यात्वं प्रपञ्चस्य वक्तुमारभते त्रिभिः–प्रकृतिं स्वामिति । प्रकृतिं मायाख्यामनिर्वचनीयां स्वां स्वस्मिन् कल्पितामवष्टभ्य स्वसत्तास्फूर्तिभ्यां दृढीकृत्य तस्याः प्रकृतेर्मायाया वशादविद्याऽस्मितारागद्वेषाभिनिवेश-

कारणावरणविक्षेपात्मकशक्तिप्रभावावशं परवशीभूतं जायमानमिमं सर्वप्रमाणसन्निधापितं भूतग्राममाकाशादिभूतसमुदायमहं मायावीव पुनः पुनर्विसृजामि विविधं सृजामि कल्पनामात्रेण स्वप्नदृगिव च स्वप्नप्रपञ्चम् ॥ ८ ॥

**शं० टी०**—एवं सर्वेषामपि भूतानामाकाशे वायुवत् स्वस्मिन्नेव स्थितिमुक्त्वा स्वस्मिन्नेव लयमुत्पत्तिं चाह—**सर्वभूतानीति**। अव्यक्ताद्व्यक्तय इति यत्पूर्वमुक्तं भूतानां प्रलयादिकं तत्तु दैनंदिनमिदानीं प्राकृतप्रलयाद्युच्यते। यानि मत्स्थानि तान्येव सर्वाणि भूतान्याकाशादीनि कल्पक्षये कल्पो ब्रह्मकल्पस्तस्य क्षये सति ब्रह्मप्रलये प्राप्ते सति मामिकां मदीयामपराख्यां प्रकृतिं त्रिगुणात्मिकां मायाम् "मायां तु प्रकृतिं विद्यात्" इतिश्रुतिप्रसिद्धां यान्ति स्वोत्पत्तिव्युत्क्रमेण प्रकृतौ प्रलीयन्ते इत्यर्थः। प्रकृतौ यानि लयं गतानि तान्येव भूतानि कल्पादौ ब्रह्मकल्पादौ पुनरप्यहं विसृजामि स्वप्रकृतिद्वारा यथाक्रमं यथालक्षणं च जगदुत्पादयामीत्यर्थः ॥ ७ ॥ "य एको वर्णो बहुधा शक्तियोगाद्वर्णाननेकान्निहितार्थो दधाति। विचैति चान्ते विश्वमादौ स देवः स नो बुद्ध्या शुभया संयुनक्ति" इतिश्रवणात् स्वयं कूटस्थासङ्गचिद्रूपोऽपि परमात्मा स्वोपाधिधर्मं भूतसृष्ट्यादिकं स्वधर्मत्वेन निर्दिशति अयमेव जगदुत्पत्तिस्थितिलयकर्ता सर्वविन्मोक्षप्रदाता च एनमाराध्य वयं कृतार्थाः स्याम इति मुमुक्षवः सगुणं समुपासतामितिसूचयितुं केचन, जगदनीश्वरं मन्यन्ते तन्मतं निरसयितुं वा—**प्रकृतिमिति**। मायाख्यां स्वां स्वोपाधिभूतां प्रकृतिं शुद्धसत्त्वात्मिकामवष्टभ्योपादायाऽहं परमेश्वरः प्रकृतेर्वशात् अविद्यास्मिताभिनिवेशरागद्वेषात्मिकायाः प्रकृतेः स्वभावादवशमस्वतन्त्रमनादिसंसारवासनाग्रस्तमिमं परिदृश्यमानं देवतिर्यगादिलक्षणं भूतग्रामं प्राणिजातं सर्वं संहृत्य पुनः पुनर्विसृजामि तदीयकर्मानुरूपेण नानायोनिषूत्पादयामीत्यर्थः। एतेन प्राणिनां कर्म निमित्तमात्रमहमेव स्रष्टा भर्ता संहर्ता नेता च न मत्तोऽन्यः कश्चिदस्तीति सूचितं भवति। तथाच श्रुतिः--"एष सर्वेश्वर एव भूतानाम्" इति ॥ ८ ॥

**श्री० टी०**—तदेवमसङ्गस्यैव योगमायया स्थितिहेतुत्वमुक्तं, तयैव सृष्टिप्रलयहेतुत्वं चाह—**सर्वेति**। कल्पक्षये प्रलयकाले सर्वाणि भूतानि मदीयां प्रकृतिं यान्ति त्रिगुणात्मिकायां मायायां लीयन्ते पुनः कल्पादौ सृष्टिकाले तानि विसृजामि विशेषेण सृजामि ॥ ७ ॥ नन्वसङ्गो निर्विकारश्च त्वं कथं सृजसीत्यपेक्षायामाह—**प्रकृतिमिति** द्वाभ्याम्। स्वां स्वीयां स्वाधीनां प्रकृतिमवष्टभ्याधिष्ठाय प्रलये लीनं सन्तं चतुर्विधमिमं सर्वं भूतग्रामं कर्मादिपरवशं पुनः पुनर्विविधं वा सृजामि। कथं प्रकृतेर्वशात् प्राचीनकर्मनिमित्ततत्तत्स्वभावबलात् ॥ ८ ॥

**स० टी०**—एवं सृष्टौ स्थितौ सङ्गाभावमुक्त्वाऽखिलैर्जडैः ॥ असङ्गत्वमथेदानीं प्रलये प्राह चात्मनः ॥ १ ॥ लये सर्वाणि भूतानि मच्छक्तित्वेन कल्पिताम् ॥ प्रकृतिं यान्ति मायाख्यां लीयन्ते तत्र वै यतः ॥ २ ॥ सर्गकाले विभागेन पुनस्तानि व्यनज्म्यहम् ॥ सर्वज्ञः सर्वशक्तिश्चाविभागत्वं गतान्यपि ॥३॥ ७॥ किंनिमित्तेश्वरस्येयं सृष्टिर्नो भोगसिद्धये ॥ साक्षिचिन्मात्ररूपत्वाद्भोक्तृत्वं नास्ति तस्य वै ॥ १ ॥ अत एव न मोक्षार्था बन्धाभावतयेशितुः ॥ न वाऽप्यन्योऽस्ति भोक्ताऽत्र तदन्यन्नास्ति चेतनम् ॥ २ ॥ जीवरूपेण तस्यैव सर्वत्रस्थितभावतः ॥ अचितो नास्ति भोक्तृत्वमित्याद्यनुपपत्तितः ॥ ३ ॥ सृष्टेर्मायामयत्वं ये साधयन्तोऽत्र वादिनः ॥ प्रतिकूला न चास्माकं निराकार्या न ते किल ॥ ४ ॥ इत्यभिप्रेत्य मिथ्यात्वं जगतो मायिकस्य च ॥ वक्तुमारभते श्रीशस्त्रिभिः श्लोकैरुदारगीः ॥ ५ ॥ प्रकृतिं स्वामनिर्वाच्यां मायां स्वस्मिन्प्रकल्पिताम् ॥ स्वसत्तास्फूर्तिदानेन दृढीकृत्याहमीश्वरः ॥ ६ ॥ मायाया प्रकृतेस्तस्याः प्रभावादखिलं जगत् ॥ स्वाविद्यादिपराधीनं प्रमाणैः सन्निधापितम् ॥ ७ ॥ भूतभौतिकसंघं च मायावीव पुनः पुनः ॥ विविधं स्वप्नदृग्वच्च संकल्पेन सृजाम्यहम् ॥ ८ ॥ गगनपवनतेजोवारि-

मह्यो विवर्ता भगवत इति सिद्धं सर्ववेदान्तजाले ॥ नहि तृणमपि विष्णोर्भिन्नसत्तां लभेत विधिशतमपि तद्वन्नैव विष्णोर्विभिन्नम् ॥ ९ ॥ ८ ॥

भा० टी०—आकाशे वायुरिवाकाशादीनि समस्तभूतानि स्थितिकाले मयि स्थितानीत्युक्तमिदानीं लय-काले उत्पत्तिकाले च मयि तिष्ठन्तीति वक्तुं स्वाधीनप्रकृतौ सर्वेषां भूतानां लयं स्वस्मादुत्पत्तिं चाह—सर्वेति। सर्वभूतानि प्रकृतिं त्रिगुणात्मिकामपरां मायां मामिकां मदीयां मदधीनामिति यावत् नतु स्वतन्त्रां कल्पक्षये यान्ति तस्यां लीयन्त इत्यर्थः । कल्पक्षय इत्यस्य सर्वभूतानि प्रकृतिमिति स्वारस्यात् ब्राह्मे प्रलयकाले इ-त्यर्थः । पुनर्भूयस्तानि ब्रह्मादीनि सर्वभूतानि कल्पादावुत्पत्तिकालेऽहं सृजामि पूर्ववदुत्पादयामि । एतादृशो-ऽहं त्वन्मातृभ्रातृपुत्ररूपेणाविर्भूत इत्यहो तव भाग्यमिति कौन्तेयेतिसंबोधनाशयः ॥ ७ ॥ ननु सृजाम्यह-मित्युक्त्या किं प्रकृतिं स्वामनधिष्ठायैव सृजसि नेत्याह—प्रकृतिमिति। प्रकृतिमविद्यालक्षणां त्रिगुणात्मिकां मायां स्वां स्वाधीनामवष्टभ्याधिष्ठायेमं प्रत्यक्षादिसंनिधापितं भूतानां ग्रामं समुदायं कृत्स्नं निखिलं प्रकृतेः स्वभावस्य वशादवशमविद्यादिदोषैः परवशीकृतं पुनः पुनः सृजामि। अनेन संसारस्यानादित्वं सूचितम् ॥८॥

प० टी०—तदेवासङ्गत्वेऽपि जगत्कारणत्वं जगतश्च मिथ्यात्वसहचरितं नश्वरत्वं मायया कृत्वा भवतीत्याह—सर्वभूतानीति द्वाभ्याम् । भो कौन्तेय कल्पक्षये कल्पप्रलये सर्वभूतानि मामिकां मत्संबन्धिनीं प्रकृतिं यान्ति । तथा कल्पादौ पुनस्तानि विसृजामि कुतः प्रकृतेर्वशात् प्राचीनकर्मनि-मित्तस्वभावबलात् ॥ ७ ॥ ८ ॥

रा० टी०—प्रतिज्ञातज्ञानप्रदर्शनाय मयेत्यादिना हरेर्व्याप्तत्वसर्वाधारत्वाद्युक्त्वा नचेत्यादिश्लोकद्वयेन तदु-पपाद्याधुना पुनः प्रतिज्ञातज्ञानप्रदर्शनार्थं प्रलयादिकारणत्वमाह—सर्वेति । कल्पक्षये प्रलयकाले सर्वाणि भूतानि सजडजीवजातानि मामिकां मदधीनां त्रिगुणात्मिकां प्रकृतिं यान्ति तत्र लीयन्ते । पुनस्तानि भूतानि कल्पादौ विशेषेण विविधतया चाहं सृजामि ॥ ७ ॥ सृष्टौ प्रकृतेरनुक्तेः साधनानि विनैव सृष्टिं करोतीति प्रतीतिनिरासायोक्तं विवृणोति—प्रकृतिमिति। स्वां स्वाधीनां प्रकृतिं त्रिगुणात्मिकामवष्टभ्य उ-पादानतयाश्रित्य प्रकृतेर्वशात्तदधीनत्वादवशं स्वानधीनं, यद्वा मदधीनप्रकृतिवशत्वादेवाकारवाच्यब्रह्मरूपम-दधीनमिमं कृत्स्नं भूतग्रामं पुनः पुनः विसृजामि । प्रकृत्यादिसाधनावष्टम्भो न तेन विना स्रष्टुमसामर्थ्यात् । किंतु लीलयैव । प्रकृत्यादेः साधनताशक्तेर्मदायत्तत्वादिति ज्ञापनाय स्वामिति विशेषणोक्तिः । तदुक्तं तदन-न्यत्वनये 'युक्तेः शब्दान्तराच्च' इतिसूत्रे ॥ ८ ॥

**न च मां तानि कर्माणि निबध्नन्ति धनञ्जय ॥**
**उदासीनवदासीनमसक्तं तेषु कर्मसु ॥ ९ ॥**

त० टी०—नन्वेवं विषमसृष्ट्यादीनि कर्माणि कुर्वतस्तव जीववद्बन्धः कुतो न स्यादित्याश-ङ्क्याह—न चेति । विषमरूपाण्यपि तानि सृष्ट्यादीनि कर्माणि मां न निबध्नन्ति हे धनञ्जय । तत्र हेतुगर्भितविशेषणमाह—उदासीनवदिति । उदासीनवदासीनं न केवलमुदासीनं कर्तृत्वानुप-पत्तेः । उदासीनवद्भावेऽपि हेतुः—असक्तं तेषु कर्मस्विति । तेषु जगत्सर्जनानुग्रहनिग्रहादिषु कर्मसु असक्तमासक्तिशून्यमाप्तकामत्वात् । आप्तकामस्यैव कर्मस्वनासक्तिर्भवति । आसक्तस्यैव कर्माणि बन्ध-मापादयन्तीत्यर्थः ॥ ९ ॥

म० टी०—अतः—न चेति । नच नैव सृष्टिस्थितिप्रलयाख्यानि तानि मायाविनेव स्वप्नदृशेव च मया क्रियमाणानि मां निबध्नन्ति अनुग्रहनिग्रहाभ्यां न सुकृतदुष्कृतभागिनं कुर्वन्ति मिथ्याभूतत्वात् । हे धन-ञ्जय युधिष्ठिरराजसूयार्थं सर्वान्राज्ञो जित्वा धनमाहृतवानिति महान्प्रभावः सूचितः प्रोत्साहनार्थम् । तानि

कर्माणि कुतो न बध्नन्ति तत्राह—उदासीनवदासीनं यथा कश्चिदुपेक्षको द्वयोर्विवदमानयोर्जयपराजयासंसर्गी तत्कृतहर्षविषादाभ्यामसंसृष्टो निर्विकार आस्ते तद्वन्निर्विकारतयाऽऽसीनम्। द्वयोर्विवदमानयोरिहाभावादुपेक्षकत्वमात्रसाधर्म्येण वतिप्रत्ययः । अत एव निर्विकारत्वात्तेषु सृष्ट्यादिकर्मस्वसक्तमहं करोमीत्यभिमानलक्षणेन सङ्गेन रहितं मां न निबध्नन्ति कर्माणीति युक्तमेव अन्यस्यापि हि कर्तृत्वाभावे फलसङ्गाभावे च कर्माणि न बन्धकारणानीत्युक्तमनेन । तदुभयसत्त्वे तु कोशकार इव कर्मभिर्बध्यते मूढ इत्यभिप्रायः ॥ ९ ॥

शं० टी०—नन्वेवं भूतग्रामं नानायोनिषु जनयतः पुनः पुनः संहरतः स्वर्गं नरकं च गमयतस्तवापि पुण्यपापकर्मसंश्लेषः स्यादित्याशङ्कायां न भूतानां संहारः सृष्टिः सुखदुःखादिफलप्रापणं च सर्वं प्रकृतेरेव कर्म नात्मनो ममाविक्रियस्यासङ्गस्याव्यक्तमूर्तेस्तत्कर्मलेशसंबन्धो वस्तुतः किंचिदस्तीति प्रकृतिकर्तृकेषु सृष्ट्यादिषु स्वस्यासङ्गोदासीनत्वमेव प्रतिपादयति—**न चेति** । चकारस्त्वर्थः । तानि भूतसृष्टिसंहारादीनि कर्माणि प्रकृतिकर्तृकानि मां तु परमात्मानमसङ्गमविक्रियं तटस्थं न निबध्नन्ति मम बन्धाय न भवन्ति मां न स्पृशन्तीत्यर्थः । स्वस्य तटस्थत्वमेव प्रतिपादयति-उदासीनवदिति । तेषु प्रकृतिकर्तृकेषु सृष्ट्यादिकर्मस्वसक्तं सक्तिर्नाम संयोगसंबन्धस्तद्रहितमसङ्गमत एवोदासीनवद् उदासीनस्तूष्णीमवस्थाता तटस्थस्तद्वदासीनं प्रकृतितत्कार्याणां साक्षित्वेन दूरतः स्थितं मां तत्कर्माणि न स्पृशन्तीत्यर्थः । एतेनोपाधितद्धर्मतत्कर्मस्वसक्तं तत्साक्षित्वेन स्थितमाकाशवदसङ्गमविक्रियमात्मानं यो विजानाति ब्रह्मविद्यतिः स कर्मभिरुपाधिकर्तृकैर्विहितप्रतिषिद्धैर्न निबध्यत इति सूचितं भवति ॥ ९ ॥

श्री० टी०—ननु एवं नानाविधानि कर्माणि कुर्वतस्तव जीववद्बन्धः कथं न स्यादित्याशङ्क्याह—**न चेति** । तानि सृष्ट्यादीनि कर्माणि मां न निबध्नन्ति कर्मासक्तिर्हि बन्धहेतुः सा चाप्तकामत्वान्मम नास्ति । अत उदासीनवद्वर्तमानस्य मे बन्धं नापादयन्ति । उदासीनत्वे कर्तृत्वानुपपत्तेः कर्तृत्वे चोदासीनत्वानुपपत्तेरुदासीनवत् स्थितमित्युक्तम् ॥ ९ ॥

स० टी०—भूतवर्गमिमं कृत्स्नं तारतम्यान्वितं सृजन् ॥ न तत्कर्तृत्वसंबन्धं भजामीत्याह मापतिः॥१॥ सृष्टिस्थितिलयाख्यानि क्रियमाणानि मायया ॥ मायाविनेव कर्माणि तानि स्वप्नदृशेव च ॥ २ ॥ निग्रहानुग्रहाभ्यां वा न निबध्नन्ति मां हरिम् ॥ मिथ्यात्वान्नैव कुर्वन्ति पुण्यपापादिभागिनम् ॥ ३ ॥ उपेक्षको यथा कश्चिद्द्वयोर्विवदमानयोः ॥ जयाजयाद्यसंसर्गी तत्रास्ते निर्विकारधीः ॥ ४ ॥ निर्विकारतया तद्वदासीनं निरहंकृतिम् ॥ तेषु कर्मसु तस्मान्मां न निबध्नन्ति तानि वै ॥ ५ ॥ अन्यस्यापि फलासङ्गाभावो निरभिमानिता ॥ सर्वकर्मस्वबन्धस्य कारणं हरिणेरितम् ॥ ६ ॥ ९ ॥

भा० टी०—ननु यथा जीवो विषमस्वभावत्वाद्बध्यते तथा त्वामपि देवनरतिर्यगादिरूपविषमसृष्टिकर्तारं वैषम्यावश्यंभावाद् धर्माधर्मादिकर्माणि कुतो न निबध्नन्तीत्याशङ्क्यास्य शुभं दास्याम्यस्याशुभमिति तत्तच्छुभाशुभदानात्मकेषु कर्मस्वसक्तं यथा कल्पवृक्षादिकमुदासीनं तत्तत्पुरुषस्य तत्तत्कर्मजन्यतत्तत्संकल्पानुसारितत्तत्फलोत्पत्तिकर्तारं तानि तानि कर्माणि न निबन्धन्ति तथा मामपीत्याह—**न चेति** । मामीश्वरं तानि भूतसमुदायस्य विष्टम्भविसर्गनिमित्तानि कर्माणि न निबध्नन्ति यथा युधिष्ठिरराजसूयार्थं धनं जेतुं प्रवृत्तं त्वां तत्र तत्र कृतानि निग्रहानुग्रहादीनि कर्माणि न निबन्धन्ति तत्तद्राज्ञः कर्मानुसारेण निग्रहानुग्रहादीनां त्वया संपादितत्वादिति धनंजयेतिसंबोधनाभिसंधिः । कर्माणि मां न निबध्नतीत्युक्तं तत्र हेतुमाह—उदासीनवदासीनमित्यादिना । तथाच फलासक्तिरहितस्याहंकरोमीत्यभिमानवर्जितस्य न तत्तत्कर्मभिः बन्धः अतोऽन्यस्यापि फलासक्तिकर्तृत्वाभावोऽबन्धस्य हेतुरन्यथा कोशकारवन्मूढः कर्मभिर्बध्यत इत्यभिप्रायः॥९॥

प० टी०—नन्वेवं नानाविधानि कर्माणि कुर्वतस्तवापि जीववद्बन्धः कथं न स्यादित्याह—न चेति । तानि सृष्ट्यादीनि कर्माणि मां न निबध्नन्ति । कर्मासक्तिर्हि बन्धहेतुः । अवाप्तसकलकामत्वान्मम नास्ति । किंभूतं मामुदासीनवदासीनं वर्तमानम् । ननूदासीनत्वे कर्तृत्वानुपपत्तेः कर्तृत्वे चोदासीनत्वानुपपत्तेरत-उदासीनवदित्युक्तम् ॥ ९ ॥

रा० टी०—ननु नानाविधसृष्टिं कुर्वतस्तव जीवस्येव कर्मबन्धोऽस्ति किमित्यतो नेत्याह—न चेति । तानि सृष्ट्यादीनि कर्माणि मां न निबध्नन्ति । कुतः उदासीनवदासीनम् । स्वत एव कर्तृत्वं न मायिकं चेत्कथमुदासीनतया वर्तनमित्यत उदासीनतयासीनमित्यनुक्त्वा उदासीनवदित्युक्तं वस्तुतोऽनुदासीनोऽप्युदासीनसदृशतया वर्तमानमित्यर्थः । किं तत्सादृश्यमित्यत उक्तमसक्तं तेषु कर्मस्विति । उदासीनस्य यथा सक्तिर्नास्ति तथा ममापि तत्र सृष्ट्यादिकर्मणि सक्तिशब्दितस्यादरस्य आयासस्य वाऽभावान्न निबध्नन्तीत्यर्थः ॥९॥

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥**
**हेतुनाऽनेन कौन्तेय जगद्विपरिवर्तते ॥ १० ॥**

**त० टी०—एकस्यैव कर्तृत्वमुदासीनत्वं चेति परस्परविरोधपरिहारार्थमाह—मयेति । अध्यक्षेणाधिष्ठात्रा नियन्त्रा च मयेक्षिता प्रकृतिस्त्रिगुणात्मिका माया सचराचरं जगत्प्रसूयते, उत्पादयति । अनेन मत्सन्निधानेन हेतुना हे कौन्तेय जगदुक्तस्वरूपं विपरिवर्तते, पुनः पुनर्जायते अतो न कश्चिद्विरोधः ॥ १० ॥**

म० टी०—भूतग्राममिमं विसृजाम्युदासीनवदासीनमिति च परस्परविरुद्धमिति शङ्कापरिहारार्थं पुनर्मायामयत्वमेव प्रकटयति—**मयाध्यक्षेणेति** । मया सर्वतो दृशिमात्रस्वरूपेणाविक्रियेणाध्यक्षेण नियन्त्रा भासकेनावभासिता प्रकृतिस्त्रिगुणात्मिका सत्त्वासत्त्वादिभिरनिर्वाच्या माया सूयत उत्पादयति सचराचरं जगत् मायाविनाधिष्ठितेव माया कल्पितगजतुरगादिकम् । न त्वहं सकार्यमायाभासनमन्तरेण करोमि व्यापारान्तरम् । हेतुना निमित्तेनानेनाध्यक्षत्वेन हे कौन्तेय जगत्सचराचरं विपरिवर्तते विविधं परिवर्तते जन्मादिविनाशान्तं विकारजातमनवरतमासादयतीत्यर्थः । अतो भासकत्वमात्रेण व्यापारेण विसृजामीत्युक्तं तावता चादित्यादेरिव कर्तृत्वाभावादुदासीनवदासीनमित्युक्तमिति न विरोधः । तदुक्तम् 'अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् । अज्ञानं तदुपाश्रित्य ब्रह्मकारणमुच्यते' इति श्रुतिस्मृतिवादाश्चात्रार्थे सहस्रश उदाहार्याः ॥ १० ॥

शं० टी०—यदुक्तं स्वस्य प्रकृतिकर्तृकेषु कर्मस्वसङ्गत्वमुदासीनत्वं च तदेव विस्पष्टयति—**मयेति** । राजवद्यस्य संनिधिमात्रेण प्रधानादिप्रवृत्तिः सोऽध्यक्षस्तेनाध्यक्षेण साक्षिणा कूटस्थासङ्गचिद्रूपेण मया स्वप्रवृत्तिहेतुनोपहिता सती प्रकृतिरेव सचराचरं चरं जङ्गममचरं स्थावरं चरं च अचरं च चराचरं तेन सह वर्तत इति सचराचरं जगत्सर्वं सूयते जनयति स्थापयति संहरते च अहं तु तत्तत्प्रवृत्तेः साक्षिमात्रः । अनेन साक्षिणो मम सांनिध्यमात्रेणैव हेतुना स्वप्रवृत्तिकारणेनाव्यक्तादि स्थूलान्तं समष्टिव्यष्ट्यात्मकं जगत्सर्वं विपरिवर्तते सर्वतश्चेष्टते । यथा सर्वसाक्षिणः सूर्यस्य सांनिध्यमात्रेण तत्प्रकाशबलेन सर्वेषां प्राणिनां प्रवृत्तिर्निवृत्तिश्च सिध्यति तथा सर्वसाक्षिणो मम सांनिध्यमात्रेण मत्प्रकाशबलेन देहेन्द्रियप्राणमनोबुद्ध्यादीनां स्वस्वविषये प्रवृत्तिर्निवृत्तिश्च इष्टानिष्टसुखादिज्ञानं च सिध्यति । एतावन्मात्रमेव मम कार्यं न तु कर्तृत्वं कारयितृत्वं भोक्तृत्वं भोजयितृत्वं दातृत्वं दापयितृत्वं वास्ति कूटस्थासङ्गचिन्मूर्तेरिति भावः ॥ १० ॥

श्री० टी०—तदेवोपपादयति **मयेति** । मयाऽध्यक्षेणाधिष्ठात्रा निमित्तभूतेन प्रकृतिः सचराचरं विश्वं

सूयते जनयति । अनेन मदधिष्ठानेन हेतुना इदं जगत् विपरिवर्तते । पुनः पुनर्जायते सान्निधिमात्रेणाधिष्ठातृत्वात्कर्तृत्वमुदासीनत्वं चाविरुद्धमिति भावः ॥ १० ॥

**स० टी०**—भूतग्रामं सृजामीति तथोदासीनवत्स्थितिः ॥ इत्यन्योन्यविरुद्धं स्यादित्याशङ्क्याह माधवः ॥ १ ॥ मया दृङ्मात्ररूपेणाध्यक्षेणाविक्रियात्मना ॥ नियन्त्रा प्रकृतिर्मायाभासकेनावभासिता ॥ २ ॥ सत्त्वादिभिरनिर्वाच्योत्पादयत्यखिलं जगत् ॥ मायाविनाश्रिता माया यथाध्यस्तं गजादिकम् ॥ ३ ॥ सृजत्यहं तथाध्यस्तं सृजामीदं चराचरम् ॥ नत्वहं सर्वकार्यात्मा मायाभासनमन्तरा ॥ ४ ॥ व्यापारान्तरमप्यत्र विद्धे विक्रियातिगः ॥ अनेनाध्यक्षभावेन निमित्तेन चराचरम् ॥५॥ जननादिविनाशान्तं विकारमनुयात्यदः ॥ अतोऽहं भासकत्वाख्यव्यापारेण सृजामि तत् ॥ ६ ॥ तावता सूर्यवन्नास्ति कर्तृत्वं मम सर्वथा ॥ उदासीनवदासीनमित्युक्तेर्न विरुद्धता ॥ ७ ॥ अस्य द्वैतेन्द्रजालस्य यदुपादानकारणम् ॥ अज्ञानं तदुपाश्रित्य ब्रह्म कारणमुच्यते ॥ ८ ॥ अपूर्वानपरं ब्रह्म तस्य कार्यं न कारणम् ॥ अधिष्ठानत्वमात्रेण कारणं ब्रह्म गीयते ॥ ९ ॥ इत्युक्तेरपि हेतुत्वं मायया न तु वस्तुतः ॥ प्रवृत्तिः सर्वजगतश्चिदधीना सदैव हि ॥ १० ॥ अतस्तदुभयं नैव विरुद्धं स्यात्परस्परम् ॥ ११ ॥ १० ॥

**भा० टी०**—ननु भूतग्राममिमं कृत्स्नं विसृजामि,उदासीन वदासीनमिति च विरुद्धमिदमुच्यते इति चेत्तत्राह—**मयेति** । मया चेतनरूपेण सर्वविक्रियाशून्येनाध्यक्षेण स्वामिना संनिधिमात्रेण सत्तास्फूर्तिप्रदानेन प्रवर्तकेन प्रवर्तिता प्रकृतिस्त्रिगुणात्मिकाऽविद्यालक्षणा मायाशब्दवाच्याऽनिर्वचनीया सचराचरं व्यक्ताव्यक्तात्मकं जगदुत्पादयति । तथाच मन्त्रवर्णः—" एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा । कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च " इति मूर्तित्रयात्मना भेदव्यावृत्त्यर्थमेक इति, जाड्यव्यावृत्त्यर्थमुक्तं देव इति, आदित्यवत्ताटस्थ्यं वारयति सर्वभूतेषु गूढ इति, बुद्ध्यादिवत्परिच्छिन्नत्वं निराकरोति सर्वव्यापीति, आकाशवदनात्मत्वं वारयति सर्वभूतान्तरात्मेति, जीववत्कर्मपराधीनत्वं तस्य निराचष्टे कर्माध्यक्षः कर्मणां तत्तत्फलप्रदानाय प्रवर्तकः, न केवलं कर्माध्यक्ष एवापि तु सर्वाधिष्ठानं कर्मवतां साक्षीचेत्याह सर्वभूताधिवासः, साक्षीति सर्वभूतेषु सत्तास्फूर्तिप्रदानायाधिवसति संनिहित इत्यर्थः । यद्वा सर्वाणि भूतानि अधिवसन्ति यस्मिन्नधिष्ठाने सः, दर्शनकर्तृत्वं वारयति चेता इति, विजातीयकृतं भेदं व्यवच्छिनत्ति केवल इति, अद्वितीय इत्यर्थः । स्वगतभेदं प्रत्याचष्टे निर्गुण इति, तथाच सूर्यवत्प्रकृतिसत्तास्फूर्तिप्रदानेन जगत्कर्तृत्वेऽप्युदासीनत्वमविरुद्धमिति भावः । अनेनाध्यक्षत्वेन हेतुना निमित्तेन सचराचरं जगद्विपरिवर्तते सर्वावस्थासु जाग्रदादिषु बाल्यादिषु चेदमहं भोक्ष्ये इदं पश्यामि इदं शृणोमीदं स्पृशामीदमास्वादयामीदं जिघ्रामीदं सुखदुःखमनुभवामि तदर्थमिदं धर्माधर्मलक्षणं कर्म करिष्ये इत्यादिः सर्वापि जगतः प्रवृत्तिः चेतनव्याप्तिं विना जडवर्गस्य न संभवति। तथाच मन्त्रवर्णः " यो अस्याध्यक्षः परमे व्योमन् " इत्यादिः। अस्य प्रत्यक्षादिसंनिधापितस्य जगतो योऽध्यक्षः सत्तास्फूर्तिप्रदानेन प्रवर्तकः सूर्यवन्निर्विकारः सः परमे प्रकृष्टे हार्दे व्योम्न्याऽऽकाशे स्थितो दुर्विज्ञेय इत्यर्थः। एतेनेदं फलितम्—ननु किंनिमित्तेयं परस्येश्वरस्य सृष्टिः किं स्वभोगार्था उत चेतनान्तरभोगार्था, उताचेतनार्था उतापवर्गार्था । नाद्यः एकस्य देवस्य सर्वाध्यक्षभूतचैतन्यस्य परमार्थसत आप्तकामस्य पूर्णस्य सर्वभोगास्पृष्टत्वात् । न द्वितीयः तद्व्यतिरिक्तचेतनान्तरस्याभावात् " एकमेवाद्वितीयम् " इतिश्रुतेः । नापि तृतीयः अचेतनसत्त्वस्य निरूपयितुमशक्यत्वात " नेह नानास्ति किंचन " इति श्रुतेरचेतनस्य भोक्तृत्वायोगाच्च । नापि चतुर्थः सृष्टेरपवर्गविरोधित्वात् । किंच कस्य मोक्षार्था स्वस्योतान्यस्य । नाद्यः स्वस्य नित्यमुक्तत्वात्, नान्त्योऽन्यस्यानिरूपणात् । इत्यादिशङ्का तदनुरूपं प्रतिवचनं च न युक्तं परस्य ब्रह्मणः मायानिबन्धने सर्गे उक्तशङ्कानवकाशत्वेन प्रतिवचनयोग्यताया अभावात् ।

किंच मायासर्गमभ्युपगच्छतां परत्र ब्रह्मणि नानाभावो वास्तवो न संभवतीति वदतामौपनिषदानामियमुक्तिरिष्टैव । तथाच मन्त्रवर्णः "को अद्धा वेद क इह प्रवोचत् । कुत आजाता कुत इयं विसृष्टिः" इत्यादिः । परमात्मनो दुर्विज्ञेयत्वं प्रतिपादयन् सृष्टिकर्तृत्वं तस्मिन्नाक्षिपति परमात्मानमद्धा साक्षात् को वेद घटमिव तदिदमिति न कोऽपि जानातीत्यर्थः । तस्मिन्परमात्मनि प्रवक्तापि संसारमण्डले नास्तीत्याह—क इहेति । शुद्धस्य परमात्मनः सर्वशब्दावाच्यत्वान्न कोऽपि प्रावोचदित्यर्थः । "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । तर्हि ब्रह्मज्ञानाय श्रवणादौ प्रवृत्तिबोधकानाम् "ब्रह्म वेद ब्रह्मैव भवति । तरति शोकमात्मवित्" इत्यादिकानां च श्रुतीनामप्रामाण्यमिति चेन्नैष दोषः, फलव्याप्तिप्रतिषेधेनाज्ञाननिबर्हणाय वृत्तिव्याप्तिस्वीकारेण चाविरोधात् । शब्दोऽपि साक्षान्न ब्रह्म प्रतिपादयति किंतु अज्ञाननिबर्हण एव तस्याचिन्त्या शक्तिरिति स्वीक्रियते । तथा सुप्ते देवदत्ते देवदत्तेतिशब्दो यथा तन्निद्रां नाशयति एवं तत्त्वमसीतिवाक्यमपि नाहं ब्रह्मेत्यज्ञानं निराकरोति । तदुक्तं सुरेश्वराचार्यैः—'दुर्बलत्वादविद्याया आत्मत्वाद्बोधरूपिणः । शब्दशक्तेरचिन्त्यत्वाद्विद्मस्तं मोहहानतः ॥ अगृहीत्वैव संबन्धमभिधानाभिधेययोः । हित्वा निद्रां प्रबुध्यन्ते सुषुप्ते बोधिताः परैः ॥ जाग्रद्वन्न यतः शब्दं सुषुप्ते वेत्ति कश्चन । ध्वस्तेऽतो ज्ञानतोऽज्ञाने ब्रह्मास्मीति भवेत्फलम् ॥ अविद्याघातिनः शब्दाद्याहंब्रह्मेतिधीर्भवेत् । नश्यत्यविद्यया सार्धं हत्वा रोगमिवौषधम्' इति । ननु जगतः सृष्टिकर्तृत्वेन परमात्मनो ज्ञेयत्वमिति चेत्तत्राह—कुत आजातेति । कूटस्थस्य तस्य स्वतः सृष्टिकर्तृत्वासंभवात् ! ननु अन्यस्मान्निमित्ताद्भविष्यतीति चेत्तत्राह कुत इति । अन्यस्य वस्तुनोऽभावादियं विविधा सृष्टिर्न कुतश्चिन्निमित्तादुत्पद्यते इत्यर्थः । ननु "यतो वा इमानि भूतानि जायन्ते" 'यतः सर्वाणि भूतानि भवन्त्यादियुगागमे । जन्माद्यस्य यतः' इत्यादिश्रुतिस्मृतिसूत्राणामप्रामाण्यप्रसङ्ग इति चेन्नैष दोषः, ब्रह्मणः सृष्टेरुत्पत्त्यादिप्रतिपादने श्रुत्यादीनां तात्पर्याभावात् 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इतिन्यायात् । तथाच ब्रह्म नास्तीत्यसत्त्वापादकावरणनिवृत्त्यर्थमध्यारोपनिरूपणं, किंचाध्यारोपस्यापि प्रपञ्चात्यन्तासत्त्वप्रतिपादने एव तात्पर्यं जगतः परमात्मसकाशादुत्पत्त्यादिप्रतिपादनेन तदत्यन्तासत्त्वस्य निरपवादत्वादन्यथा वायौ रूपं नास्तीत्यपवादमात्रेण तेजसि रूपस्य सत्तानपायान्न तस्यासत्त्वं प्रतीयते तथा ब्रह्मणि जगन्नास्तीत्यपवादमात्रेण प्रधानादौ तत्सत्त्वापत्त्या तदसिद्धेः । कथं तर्हि मिथ्याभूते प्रपञ्चे इदमुत्पन्नमिदं नष्टमिति वैदिकलौकिकव्यवहार इति चेत् अनाद्यनिर्वचनीयाज्ञानकल्पितं लौकिकमपवदितुं श्रुतिभिरनूद्यते इति गृहाण । तदुक्तम् 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः' इति । यथा पाण्डुनाध्यक्षेण कुन्ती त्वामुत्पादितवती तथा मयाध्यक्षेण प्रकृतिः सचराचरं जगदुत्पादयतीति कौन्तेयेतिसंबोधनस्य गूढाभिसंधिः ॥ १० ॥

प० टी०—अथैतदेवोपपादयति—**मयेति** । मयाध्यक्षेणाधिष्ठात्रा कृत्वा प्रकृतिः सचराचरं विश्वं सूयते जनयति । अनेनैव मदधिष्ठानरूपेण हेतुना निमित्तभूतेनेदं जगद्विपरिवर्तते पुनः पुनर्जायते । सांनिध्यमात्रेणाधिष्ठातृत्वं कर्तृत्वमुदासीनत्वं चाविरुद्धमिति भावः । अत्रैतदुक्तं भवति । सत्याश्रयव्यतिरेकेणासत्यावस्थानमेव नोपपद्यते शुक्तिकया विना रजतस्येवैवं सति रजतोत्पत्तिस्थितिविनाशान् शुक्तिर्न स्पृशति तद्वत्प्रकृतेऽपीत्यर्थः । अथादितो निरूपितार्थे ऋक्शाखीयश्रुतिसंदर्भः—"किं स्विदासीदधिष्ठानमारम्भणं कतमं स्वित्कथासीत् । यतो भूमिं जनयन्विश्वकर्मा विद्यामौर्णोन्महिना विश्वचक्षाः ॥ १ ॥ नासदासीन्नोसदासीत्तदानीं नासीद्रजो नो व्योमापरो यत् । किमावरीवः कुहकस्य शर्मन्नम्भःकिमासीद्गहनं गभीरम् ॥ २ ॥ न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यं न परः किं च नास ॥ ३ ॥" इति । आसां क्रमेण रावणभाष्यम्—किं स्विदासीदिति पूर्वमन्त्रे जगत्प्रलयकाले जगत्संहृत्य पश्चात्सिसृक्षायां द्यावापृथिव्योरुत्पादनवेलायामधिष्ठानं किं स्विदासीत् किं न किंचिदित्यर्थः । तथा

ऽऽरम्भणं कतमं स्विद् आरभ्यतेऽनेनेत्यारम्भणमुपादानकारणं कतमद्भवेत्तदपि नेत्यर्थः। यद्यपि संभवदारम्भणं कथमासीत्कथमभूत्किं सदसद्वा भवेदित्यर्थः। उभयमपि नोत्पद्यते। सच्चेदद्वैतत्वभङ्गः असच्चेत्तदात्मकयोर्द्यावापृथिव्योरुपादानानर्हत्वात् "नान्यत्किंचन मिषत्" इत्यादिश्रुतेश्च। यतो यस्मादधिष्ठानादारम्भणाच्च विश्वचक्षाः सर्वद्रष्टा परमेश्वरो भूमिं जनयन् वर्तते तथा द्यां दिवं व्यौर्णोत् व्यवृणोत्सृष्टवान्। महिना स्वमहित्वेन। अथैतस्य प्रश्नोत्तरस्य प्रतिपादिकां श्रुतिमाह नासदिति। अनया सृष्टेः प्राङ् निरस्तसमस्तप्रपञ्चलयावस्था निरूप्यते। प्रलयदशायामवस्थितं यदस्य जगतो मूलकारणं तदसच्छशविषाणवन्नीरूपाख्यं नासीत्। नहि तादृशात्कारणादस्य सतो जगत उत्पत्तिः संभवति तथा नो सदासीत्। परमार्थसतः परमात्मनोऽन्यत्सदस्तीत्युच्यमाने द्वैतत्वप्रसङ्गः। नापि व्यवहारसत् अग्रे व्यवहाराभावस्य वक्ष्यमाणत्वात्। तस्मादुभयविलक्षणमनिर्वाच्यमेवासीदित्यर्थः। अथ व्यावहारिकसत्त्वं निषेधति—तदानीमिति। लोको रजांस्युच्यत इति यास्कः। अत्र सामान्यापेक्षमेकवचनम्। एवं व्यवहारसत्ता पृथिव्यादीनामभावादित्यर्थः। तथा व्योमान्तरिक्षं तदपि नासीत्। पर इति सकारान्तं परस्तादित्यर्थे वर्तते। व्योम्नः परस्ताद्द्युलोकप्रभृतिसत्यलोकान्तं यदस्ति तदपि नासीदित्यर्थः। अनेन ब्रह्माण्डमपि निषिद्धं भवति। यत एतद्भासमानं भूतजातं पूर्वं नासीत् किं तु शुक्तिकारजतवन्मध्य एवोत्पन्नमिति श्रुत्या निरूपितम्। नत्वासीदिति धातोस्तदानीमित्यव्ययस्य च भूतकालवाचित्वाद्व्योमादीनामसंभवेऽपि किंचित्काल आसीदिति चेन्न "आनीदवातम्" इति श्रुत्या तस्यापि निषेधात्। अतः सकलमपि दृश्यजातं प्राङ्निरूपितसदसद्विलक्षणोपादानकं प्रातिभासिकमिति पर्यवसन्नम्। अथैतस्य ज्ञानैकनाश्यत्वेन प्रातिभासिकत्वं दृढीकुर्वन्नाह किमावरीव इति। प्रागुक्तं दृश्यजातं शर्मन्निति शर्मण्यबाधिते ब्रह्मणि किमावरीवः किमावरकं भवति वा नेत्यर्थः। अनेन यत्सदसद्विलक्षणमासीत्तस्त्वाश्रयाव्यामोहकमित्युक्तम्। यथा कुहकस्यैन्द्रजालिकस्य गहनं गभीरमक्षोभ्यमम्भस्तेन मायया रचितमम्भोमध्य एवोत्पन्नं सत्कुहकस्यावरकं भवति वा नेत्यर्थः। किं च न मृत्युरिति। तदानीं शर्मणि केवलस्वरूपे मृत्युर्जन्ममरणात्मको बन्धोऽमृतं मोक्षो वा नासीत्। यथा सूर्ये रात्र्या अह्नश्च प्रकेतो ज्ञानं नास्ति तद्वत्। तर्हि किं त्वानीदिति। एकमवातमप्राणं शुद्धं ब्रह्मैवासीत् "अप्राणो ह्यमना" इति श्रुतेः। तथा अप्राणमनामगोत्रमिति च। एवं तत्स्वधया स्वस्मिन् ध्रियते कल्प्यते सा स्वधा तया कृत्वासीत् कर्तृरूपेणासीदित्यत्र आनीदिति धातुः प्रयुक्तः। एवं मायाशबलितं सूत्रात्मसंज्ञमासीदित्युक्तम्। हेति निश्चयेन तस्मादन्यत्किं च किमपि नास नासीत् परस्तादग्रेऽवसानेऽपि तदेव॥ १०॥

रा० टी०—ननु पूर्वं प्रकृतिं स्वामवष्टभ्य विसृजामीत्युक्त्या उदासीनवदासीनमित्युक्त्या च निष्क्रियत्वं प्रतीयते। एवं तर्हि प्रकृतिरेव स्वातन्त्र्येण जगत्प्रसूयते त्वयि तु प्रकृतिसन्निधानात्कर्तृत्वोपचारमात्रमित्यापन्नमित्यत आह—मयेति। यद्यप्येषा शङ्का मामिकामिति स्वामिति असक्तं तेषु कर्मस्वित्युक्त्या निरस्ता तथापि स्वस्वातन्त्र्यं स्पष्टं वक्तुं प्रागुक्तपरिहाराच्छादनेनोक्तां शङ्कां हृदि कृत्वा मयेतिश्लोकेन पर्यहार्षीदिति ज्ञेयम्। अध्यक्षेणेति प्रातिपदिकेन साक्षात्कारः तृतीयया च कर्तृत्वमुच्यते। प्रकृतिहेतुकप्रसवं साक्षात्कुर्वता तत्प्रयोजककर्त्रा च मयेति दर्शनपूर्वकत्वात्प्रयोजकत्वस्यैवमुक्तिः। यद्वा अध्यक्षेणाधिपतिना मया प्रकृतिः सचरा[illegible]चरं जगत्प्रसूयते जनयति। अनेन मत्प्रयोजितप्रकृतिरूपहेतुना दर्शनपूर्वकं मद्रूपप्रयोजककर्तृरूपहेतुना च ज[illegible]द्विशेषेण परिवर्तते पुनः पुनर्जायते॥ १०॥

**अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्॥**
**परं भावमजानन्तो मम भूतमहेश्वरम्॥ ११॥**

त० टी०—एवंभूतं परमेश्वरं सर्वाधिष्ठातारं सर्वनियन्तारं सर्वज्ञं सर्वकारणत्वेऽपि दोषास्पृष्टस्वभावं त्वामाश्रित्य किमिति सर्वे न मुच्यन्त इत्यत आह—**अवजानन्तीति**। मूढा अनादिपापबाहुल्येन मत्स्वरूपादिविषयकाज्ञानावृतत्वान्मोहमापन्ना विपरीतज्ञाना मां भूतमहेश्वरं सर्वजगज्जन्मादिकारणं दोषास्पृष्टस्वभावं सर्वकर्मफलदं मुक्तोपसृप्यं वासुदेवमवजानन्ति, साक्षात्परमेश्वरोऽयमिति न मन्यन्तेऽतो नाद्रियन्ते इत्यर्थः। तेषामवज्ञाने भ्रमकल्पितं हेतुमाह—**मानुषीं तनुमाश्रितमिति**। कारुण्यादिगुणपरवशतया सर्वेषां समाश्रयणीयत्वाय भक्तानुग्रहाय च स्वेच्छया मनुष्याकारमाश्रितं मनुष्यतया प्रतीयमानं प्राकृतमानुषसमं मन्यन्ते। ततो भ्रान्त्या मुषितज्ञाना मम परं भावं कारुण्यादिगुणेक्षया भक्ताभिलाषपूरणाय मनुष्यत्वाद्याकारेणाविर्भवनरूपं परं तात्पर्यमजानन्तो मनुष्यमात्रभावनयेतरसजातीयं मत्वा नाश्रयन्त्यतो न मुच्यन्त इत्यर्थः॥ ११॥

म० टी०—एवं नित्यशुद्धबुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानमानन्दघनमनन्तमपि सन्तम्—**अवजानन्ति** मां साक्षादीश्वरोऽयमिति नाद्रियन्ते निन्दन्ति वा मूढा अविवेकिनो जनाः। तेषामवज्ञाहेतुं भ्रमं सूचयति **मानुषीं तनुमाश्रितं** मनुष्यतया प्रतीयमानां मूर्तिमात्मेच्छया भक्तानुग्रहार्थं गृहीतवन्तं मनुष्यतया प्रतीयमानेन देहेन व्यवहरन्तमिति यावत्। ततश्च मनुष्योऽयमिति भ्रान्त्याच्छादितान्तःकरणाः मम परं भावं प्रकृष्टं पारमार्थिकं तत्त्वं सर्वभूतानां महान्तमीश्वरमजानन्तो यन्नाद्रियन्ते निन्दन्ति वा तदनुरूपमेव मूढत्वस्य॥ ११॥

शं० टी०—एवं सर्वप्रकाशकं सर्वद्रष्टारं सर्वसाक्षिणं मामात्मानं पापिष्ठतमाः पशुकल्पा अवमन्यन्त इत्याह—**अवजानन्तीति**। "एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च॥" श्रुतेरयमर्थः—जगतो ब्रह्मादिभेदेन प्राप्तमीश्वरानेकत्वं निरस्यति—एक इति "एक एव हि रुद्रो न द्वितीयाय तस्थुः" इतिश्रुत्यन्तरप्रसिद्धेः। एतेन तेषामैश्वर्यं प्राकृतमनित्यं चाभासिकं चेति सूचितम्। तत एकत्वं कारणत्वं चाव्याकृते पर्यवसितं निरस्यति—देव इति। कालत्रयेऽपीतरानपेक्षयाऽखण्डचिदात्मना स्वयमेव दीप्यते प्रकाशत इति देवः अव्याकृतस्य जडत्वेन देवत्वाऽसंभवात् स्वतः कारणत्वानुपपत्तेः। एकत्वदेवत्वसंपत्त्या सूर्यस्य प्राप्तमीश्वरत्वं निरस्यति—सर्वभूतेष्विति। सर्वभूतेषु चिदेकरसात्मना स्थित इत्यर्थः। एतेन सूर्यस्यैकत्वे देवत्वेऽपि चिदात्मना भूतेष्ववस्थितत्वाऽभावादीश्वरत्वाभावः। सर्वभूतेषु सर्वदैकरूपेण चित्प्रकाशात्मना स्थितत्वे ब्रह्मणः प्राप्तं सर्ववेद्यत्वं निरस्यति गूढ इति। सर्वभूतेषु प्रकाशात्मना विद्यमानत्वेऽपि मेघैः सूर्यवदविद्यातत्कार्यैस्तिरोहितत्वात्परमात्मा न सर्वेषां वेद्यो भवतीत्यर्थः। भूतेषु गूढत्वे सति ब्रह्मणः प्राप्तं बुद्ध्यादिवत्परिच्छिन्नत्वं निरस्यति—सर्वव्यापीति। घटादिकं मृदिव जगद्बहिरन्तश्च सर्वतः स्वसत्तया व्याप्नोतीति सर्वव्यापी बहिरन्तःपूर्णत्वाद्ब्रह्मणः परिच्छित्त्यभाव इति भावः। गूढात्मना सर्वव्यापकत्वमाकाशे पर्यवसितं निरस्यति—सर्वभूतान्तरात्मेति। सर्वेषां भूतानामन्तर्बुद्धिगुहायामात्मरूपेण तिष्ठतीत्यर्थः। सर्वव्यापकत्वेऽप्याकाशस्य जडत्वेन सर्वभूतात्मत्वाऽसंभवाद्ब्रह्मत्वं न संभवति, सर्वभूतात्मत्वे ब्रह्मणः कर्मकर्तृत्वं तत्फलभोक्तृत्वं संसारित्वं च प्राप्तं निरस्यति—कर्माध्यक्ष इति। उपाधिमधिष्ठाय तद्धर्मानीक्षते इत्यध्यक्षः भूतानां तत्कर्मणां तत्फलभोगानां च साक्ष्येव भवत्यात्मा निरवयवत्वान्निष्क्रियत्वाच्च स्वयं कर्म किंचिन्न करोति नापि च भुङ्क्त इत्यर्थः। ब्रह्मणः सर्वभूतान्तरात्मत्वे सर्वभूताश्रयत्वं तदधीनत्वं च प्राप्तं निरस्यति—सर्वभूताधिवास इति। वसत्यस्मिन् सर्वमिति वासः अधिकतमश्चासौ वासश्चेत्यधिवासः अधिवसत्यस्मिन् सर्वमिति वाऽधिवासः शुक्तौ रजतवद्दर्पणे पुरवत्तस्मिन् कल्पितानां भूतानां परमात्माधिवासोऽधिष्ठानमेव भवति नतु स्वयं तदधिकरण इत्यर्थः। न केवलं

कर्मणामेव ज्ञाताऽयं भवत्यात्मा किंतु भूतानां तद्धर्माणां तत्कर्मणां तत्फलानुभूतीनां तदवस्थात्मनां च द्रष्टेत्याह–साक्षीति । बुद्धितद्विकाराणां सर्वेषां साक्षीत्यर्थः । साक्षादीक्षते इति साक्षीत्यात्मन ईक्षणक्रियाकर्तृत्वे प्राप्ते सत्याह–चेतेति । चेतयितृत्वमविक्रियत्वं स्वयमविक्रियात्मना सर्वं पश्यतीत्यर्थः । अविक्रियत्वे हेतुमाह–केवल इति । केवलो निरवयवः निरवयवत्वादविक्रियः स्वयमविक्रियः सन्नेव सर्वं पश्यतीत्यर्थः । शब्दगुणकमाकाशमिति निरवयवस्याप्याकाशस्य यथा गुणवत्त्वं तथा ब्रह्मणो निरवयवस्यापि सत्त्वचित्त्वादिगुणवत्त्वे प्राप्ते परिहरति श्रुतिः–निर्गुण इति । "आत्मन आकाशः संभूतः" इति आकाशस्य जनिश्रवणात्तस्य जनिमत्त्वेन सावयवत्वादाकाशस्य गुणवत्त्वं युक्तं निष्कलमिति ब्रह्मणो निरवयवत्वश्रवणाद्गुणवत्त्वमनुपपन्नमेव ततः सत्त्वचित्त्वादिस्वरूपमेव भवति न तु गुण इत्यर्थः । परस्य ब्रह्मणः सर्वविशेषाभावप्रतिपादनार्थश्चकारः । एवं श्रुतिनिरूपितलक्षणं भूतमहेश्वरं स्वसन्निधिमात्रेण प्रकृतिं प्राकृतं च सर्वमीष्टे चेष्टयतीतीश्वरः स्वयमविक्रियोऽप्ययसोऽयस्कान्त इव सर्वस्य प्रवृत्तिहेतुः "महतो महीयान्" इति श्रवणान्महत्तमत्वान्महांश्चासावीश्वरश्च महेश्वरः भूतानामव्यक्तादिस्थूलान्तानां महेश्वरो भूतमहेश्वरस्तं भूतमहेश्वरं सर्वस्य चेष्टाकारणं सर्वमहत्तमं परं नित्यत्वकूटस्थत्वासङ्गत्वसत्त्वचित्त्वानन्तत्वसर्वव्यापित्वसर्वज्ञत्वसर्वप्रकाशकत्वादिधर्मैः सर्वदृश्यविलक्षणं मम परस्य ब्रह्मण आकाशकल्पं सच्चिदानन्दैकरसं भावं स्वरूपमहंशब्दार्थमजानन्तः शास्त्राचार्येभ्यः किंचिदप्यविदितवन्तो मूढाः पशुकल्पा मानुषीं तनुमिति सर्वप्राणिशरीरमात्रस्योपलक्षणं, तनुं शरीरमाश्रितं स्वदेहे बुद्धिगुहायां सर्वप्रकाशकतया सर्वसाक्षित्वेन विद्यमानं मां प्रत्यग्लक्षणमात्मानमवजानन्ति तिरस्कुर्वन्ति मय्यहमर्थे स्वात्मन्यानन्दैकरसे मलमांसास्थिपिण्डं देहमारोप्य तद्धर्मान् कर्तृत्वभोक्तृत्वादीन् जरारोगादींश्चाऽध्यस्याऽवमन्यन्ते कर्ताऽहं भोक्ताऽहं बालोऽहं मूढोऽहं पापिष्ठोऽहं बधिरोऽन्धः काणः खञ्जः पङ्गुर्जीर्णोऽहं हतोऽहं मृतोऽहमित्येवं सर्वदा मम वैपरीत्यमेव संपादयन्तीत्यर्थः ॥ ११ ॥

श्री० टी०–नन्वेवंभूतं परमेश्वरं त्वां किमिति केचिन्नाद्रियन्ते तत्राह–**अवजानन्तीति** द्वाभ्याम् । सर्वभूतमहेश्वररूपं मदीयं परं भावं तत्त्वमजानन्तो मूढा मूर्खाः मामवजानन्त्यवमन्यन्ते । अवज्ञाने हेतुः–शुद्धसत्त्वमयीमपि तनुं भक्तेच्छावशान्मनुष्याकारामाश्रितवन्तम् ॥ ११ ॥

स० टी०–एवं नित्यविशुद्धं मामानन्दघनमद्वयम् ॥ नित्यमुक्तस्वभावं तमात्मानं सर्वदेहिनाम् ॥ १ ॥ परमेश्वरोऽयं साक्षादित्येवं दृढनिश्चयात् ॥ नाद्रियन्तेऽथ वा मूढा निन्दन्त्येवाविवेकिनः ॥ २ ॥ तेषां सूचयतीशोऽपि ह्यवज्ञाकारणं भ्रमम् ॥ मनुष्यत्वेन तद्बुद्ध्या भासमानो निजेच्छया ॥ ३ ॥ मूर्तिं गृहीतवन्तं मां स्वभक्तानुग्रहाय च ॥ तथा व्यवहरन्तं च नृनाटकतयाद्भुतम् ॥ ४ ॥ मनुष्योऽयमिति भ्रान्त्याऽऽवृतान्तःकरणाः शठाः ॥ प्रकृष्टं वास्तवं तत्त्वमजानन्तो ममेशितुः ॥ ५ ॥ ब्रह्मादिसर्वभूतानां महान्तं परमेश्वरम् ॥ इत्थं मां नाद्रियन्ते वा निन्दत्येवाविवेकिनः ॥ ६ ॥ तस्यानुरूपमेवास्ति मूढत्वस्येति च ध्वनिः ॥ ७ ॥ ११ ॥

भा० टी०–नन्वेवंभूतं शुद्धबुद्धमुक्तस्वभावं सर्वजन्तूनामात्मानं त्वां किमिति सर्वे आत्मत्वेन भेदेन वा न प्रतिपद्यन्ते प्रत्युतावजानन्तीति चेत्तत्राह–**अवजानन्तीति** । एवंभूतमपि मामवजानन्ति अवज्ञां परिभवमपरोक्षं परोक्षं च तिरस्कारं निन्दां च कुर्वन्तीति यावत् । भगवदवज्ञायां कारणमाह–मूढा इति विपरीतज्ञानाः । विपरीतज्ञाने निमित्तमाह–मानुषीं तनुमाश्रितं मनुष्यसंबन्धिनं देहमाश्रितं मनुष्यदेहेन व्यवहरन्तमिति यावत् । तथाच मनुष्यवद्देहाभिमानशून्ये साधकानुग्रहार्थं गृहीतमायामयलीलाविग्रहे मयि परब्रह्मणि देहसंबन्धदर्शनं विपर्ययबुद्धौ निमित्तमिति भावः । देहादिसंबन्धशून्ये परमात्मनि देहादिसंसर्गावलोकने हेतुमाह–परमिति । मम सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां महान्तमीश्वरं परं सर्वोत्कृष्टं भावं परमात्मतत्त्वमा-

काशवत्सर्वसङ्गविवर्जितमाकाशस्यापि मूलकारणभूतं स्वात्मस्वरूपमजानन्त इत्यर्थः । तथाच मम वास्तवस्वरूपाज्ञानमेव तत्र हेतुरित्याशयः ॥ ११ ॥

**प० टी०**—अथ प्रागुक्तं स्वकीयमध्यक्षत्वं प्रकटयन् जगत्कारणीभूतमायागतं मौढ्यं जीवेष्वनुवर्तत इत्याह—**अवजानन्तीति** । मम परमुत्कृष्टं भावं तत्त्वं प्रकटमप्यजानन्तो मूढाः सर्वभूतमहेश्वरं मामवजानन्त्यवमन्यन्ते । महच्छब्देन सर्वभूतनिवासत्वे सति तदन्तर्यामित्वेनेश्वरं नियन्तारं न गणयन्ति । कथमवाङ्मनसगोचरं चिन्मात्रं ज्ञास्यन्तीत्याह—मानुषीमिति । किंभूतं मां मानुषीं तनुमाश्रितम् । भक्तानुकम्पया ज्ञातुं सुलभां शुद्धसत्त्वमयीं मनोहारिणीं मनुष्याकारां मूर्तिमधिष्ठायाविर्भूतम् । तदुक्तम् "विश्वप्रकाशमपि योजनषट्सहस्रविस्तारमुक्तमृषिभिर्यदिहार्कबिम्बम् । मर्त्यैर्वितस्तिमितमीक्षत एतदेव पश्यन्ति मर्त्यमिव विश्वविभुं विमूढाः" इति । श्रुतिरपि ऋग्वेदे—"मया सोऽन्नमत्ति यो विपश्यति यः प्राणिति य ईंशृणोत्युक्तम् अमन्तवो मां त उपक्षियन्ति श्रुधिश्रुतश्रद्धिवन्ते वदामि" इति । भाष्यम्-अम्भृणस्य ब्रह्मरूपस्य महर्षेः कन्या वाङ्नाम्नी ब्रह्मरूपिणी वदति । योऽन्नमत्ति स भोक्तृत्वशक्तिरूपया मयैव कृत्वान्नमत्ति । तथा यो मनोभिरामं विषयं पश्यति सादरमवलोकयति यश्च प्राणिति श्वासोच्छ्वासादिकं करोति य ईं अयं शृणोति स मयैव कृत्वा एवं सति य ईदृशीमन्तर्यामिरूपेणावस्थितामुपकारिणीं न जानन्ति ते माममन्तवोऽमन्यमाना अजानन्तो मद्विषयज्ञानरहिताः सन्त उपक्षियन्ति उपक्षीणाः संसारेण दीना यातायातयातनाभिर्दीना भवन्ति । हे श्रुतविश्रुतसखे श्रुधि मया वक्ष्यमाणं शृणु । किं तच्छ्रोतव्यम् । श्रद्धिवं श्रद्धिः श्रद्धा तया युक्तं श्रद्धानेन लभ्यमित्यर्थः । ईदृशं ब्रह्मात्मकं वस्तु ते वदामि ॥ ११ ॥

**रा० टी०**—यद्येवं भवान् जगतः सृष्टिस्थितिसंहाराणां कर्ता तर्हि कुतः केचित्त्वामवजानन्ति । अवज्ञानेऽपि तेषामनर्थाभावात्सर्वकर्ता अहमिति प्रागुक्तमयुक्तमत आह—**अवजानन्तीत्यादिद्वयेन** । मानुषीं तनुमाश्रितं मानुषदेहमधिष्ठितोऽयमिति मूढलोकभ्रान्तिविषयं मामिति वा, अज्ञानामवज्ञानकारणतया मानुषीं मनुष्यदेहसादृश्येन प्रतीयमानां तनुमाश्रितमिति वार्थः । एतेनात्र हरेः मानुषदेहोक्तेस्तस्य चाधारेणान्योन्यधर्मसंक्रान्त्यादेरवश्यंभावाद्भूतभृन्न च भूतस्थ इति प्रागुक्तिरयुक्तेति निरस्तम् । तथा तनुतनुमतोरभेदेऽपि आश्रितमित्युक्तिश्चैत्रदेहश्चैत्राधीनो यथा तथा भगवद्देहोऽपि स्वाधीन इति स्वाधीनत्वगुणयोगाद्गौणीति ममात्मेत्यत्रत्याभेदोक्तिर्न विरुद्धेति ज्ञेयम् । एतादृशं मां मूढास्तामसा भूतमहेश्वरं भूतं सदा विद्यमानं महान्तमीश्वरं गुणपरिपूर्णं परमुत्तमं मम भावं याथार्थ्यमजानन्तोऽवजानन्ति अवमतया जानन्ति । ब्रह्मरुद्ररमादीनां साम्यदृष्टिरित्यादितात्पर्योक्तदिशान्यदप्यवज्ञानं ज्ञेयम् ॥ ११ ॥

**मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ॥**
**राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ १२ ॥**

**त० टी०**—ततस्ते मदवज्ञानजनितमहादुरिताः सर्वपुरुषार्थविधुराः क्रूरस्वभावा नरकार्हा इत्याह—**मोघाशा इति** । मामुपेक्ष्य चण्डीभैरवगजाननादय एवास्मद्वाञ्छितं दास्यन्तीत्येवंभूता मोघा निष्फला आशा येषां ते मोघाशा मत्प्रेरणं विना देवतान्तरस्य किंचित्फलदाने सामर्थ्याभावात्, अत एव मोघानि व्यर्थानि श्रममात्रशेषाणि कर्माण्यग्निहोत्रादीनि देवतान्तराराधनादीनि च येषां ते मोघकर्माणः । "फलमत उपपत्तेः" इति शास्त्रात् कर्मणां जडानां फलदाने शक्त्यभावात्फलदातुर्भगवतो विमुखत्वात् । तथा मोघं परमेश्वराप्रतिपादकं कुतर्कशास्त्रजनितं ज्ञानं येषां ते मोघज्ञानाः । सर्वत्र हेतुः--विचेतस इति । चित्ताधीशवासुदेवचिन्ताशून्यत्वाद्विक्षिप्तचित्ताः प्रमादिन इत्यर्थः । अत एव राक्षसीं तामसीं हिंसाद्वेषब-

हुलामासुरीं च काममदमात्सर्यदर्पादिप्रधानां मोहिनीं धर्मज्ञानविवेकमोहकर्त्रीं प्रकृतिं योनिं स्वभावं श्रा श्रिता भवन्तीति शेषः। अथवा एवंभूताः सन्तो मामवजानन्तीति पूर्वेणैवान्वयः। तेषां विशेषफलं च- 'ममात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः। तानहं द्विषतः क्रूरान्संसारेषु नराधमान्। क्षिपाम्यजस्रमशुभामासुरीष्वेव योनिषु॥ आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि। मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम्' इति वक्ष्यते। अतो व्यर्थजीवनास्ते उपेक्षणीयाः। तथा महाभारते श्रीनारदेनोक्तं सभापर्वणि- 'कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः। जीवन्मृतास्तु ते ज्ञेया न संभाष्याः कदाचन' इति॥ तथा वामने प्रह्लादेनोक्तम्—'वृथा वृत्तं वृथा यज्ञा वृथा वेदा वृथा श्रुतम्। वृथा तपश्च कीर्तिश्च यो द्वेष्टि मधुसूदनम्' इति॥ श्रीभागवतेऽपि-धिग्जन्म नस्त्रिवृद्विद्यां धिग्वृत्तं धिग्बहुज्ञताम्। धिक्कुलं धिक्क्रियादाक्ष्यं विमुखा ये त्वधोक्षजे। स्कान्दे 'स कर्ता सर्वधर्माणां भक्तो यस्तव केशव'। स कर्ता सर्वपापानां यो न भक्तस्तवाच्युत। निःशेषधर्मकर्ता वाऽप्यभक्तो निरयं व्रजेत्' इति॥ १२॥

म० टी०-ते च भगवदवज्ञाननिन्दनजनितमहादुरितप्रतिबद्धबुद्धयो निरन्तरं निरयनिवासार्हा एव- मोघाशेति। ईश्वरमन्तरेण कर्माण्येव नः फलं दास्यन्तीत्येवंरूपा मोघा निष्फलैवाशा फलप्रार्थना येषां ते अत एवेश्वरविमुखत्वान्मोघानि श्रममात्ररूपाण्यग्निहोत्रादीनि कर्माणि येषां ते तथा मोघमीश्वराप्रतिपादककुतर्कशास्त्रजनितं ज्ञानं येषां ते कुत एवं यतो विचेतसो भगवदवज्ञानजनितदुरितप्रतिबद्धविवेकविज्ञानाः। किंच ते भगवदवज्ञानवशात् राक्षसीं तामसीं अविहितहिंसाहेतुद्वेषप्रधानामासुरीं च राजसीं शास्त्रानभ्यनुज्ञातविषयभोगहेतुरागप्रधानां च मोहिनीं शास्त्रीयज्ञानभ्रंशहेतुं प्रकृतिं स्वभावमाश्रिता एव भवन्ति। ततश्च त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः। कामः क्रोधस्तथा लोभ इत्युक्तनरकद्वारभागितया नरकयातनामेव ते सततमनुभवन्तीत्यर्थः॥ १२॥

शं० टी०-"असुर्या नाम ते लोकाः" इत्यादिश्रुत्यर्थं प्रकाशयितुमात्मज्ञानविमुखानामात्मनः सर्वदा विपरीतभावमेव संपादयतां मूढानां स्वभावं वर्णयित्वा तेषामात्मज्ञानवैमुख्यस्य फलं श्रुत्युक्तमेव प्रतिपादयति-मोघाशा इति। ये तु मूढा मत्तत्त्वमविज्ञायात्मानं मामवजानन्ति ते मोघाशाः मोघा वितथा आशा मनोरथा येषां ते मोघाशाः "अक्षय्यं ह वै चातुर्मास्ययाजिनः सुकृतं भवति" इति प्ररोचनोक्त्या स्वर्गे शतकोटिकल्पपर्यन्तं वत्स्याम इति चातुर्मास्यं कृतवतां कामिनामाशायाः श्वोभावामर्त्यस्य यदन्तकैतदिविन्यायेन स्वल्पकालिकत्वात्तेषां वितथाशत्वं युक्तमेव। किंच मोघकर्माणः मोघानि निष्फलानि श्रौतानि स्मार्तानि च कर्माणि येषां ते मोघकर्माणः बहुश्रमसंपादितानां श्रौतादिपुण्यकर्मणां क्षणिकतुच्छजिह्वोपस्थसुखैकप्रयोजनत्वान्मोघकर्मत्वं युक्तम्। किंच मोघज्ञानाः मोघमनर्थसाधकमसद्गोचरं ज्ञानं सकलवेदशास्त्राध्ययनजन्यं येषां ते मोघज्ञानाः। 'ब्रह्मचारिवासोऽष्टाचत्वारिंशद्वर्षाणि' इति स्मरणाद्बहुकालिकसकलवेदशास्त्राध्ययनतदर्थविचारजनितं ज्ञानं सर्वं बन्धायैव जातं न तु मोक्षायातो युक्तं मोघज्ञानत्वम्। यतो मोघज्ञानास्तत एव विचेतसो विपरीतबुद्धयः सर्वदा देहमात्रात्मदर्शिनो भूत्वा राक्षसीम् 'अग्निहोत्रं च वेदाश्च राक्षसानां गृहे गृहे। दया सत्यं च शौचं च राक्षसानां न विद्यते' इत्येवंलक्षणा राक्षसास्तेषां संबन्धिनीं दया सत्यं शौचं क्षमा ह्रीर्दानमित्यादिसद्धर्मशून्यां क्रौर्यहिंसादम्भदर्पादिदुर्गुणैकप्रधानां राक्षसीं योनिं चाप्यासुरीम् इदमद्यमयालब्धमित्यादिनोक्तलक्षणवन्त आसुरास्तेषां स्वभावप्रचुरामासुरीं च मोहिनीमुपर्युपरिमूढत्वातिशयसंपादिनीमेव प्रकृतिं योनिं श्रिताः प्राप्ता भवन्ति। भूयो भूयः पुनः पुनरित्यर्थः। यद्वा ये त्वात्ममोक्षणे प्रयत्नमकृत्वा राक्षसीं वासुरीं वा मोहिनीमेव प्रकृतिं संपत्तिमाश्रिता भवन्ति ते जन्मनि जन्मनि मोघाशा मोघकर्माणो मोघज्ञाना विचेतस एव भवन्ति अर्थस्तूक्त एव॥ १२॥

**श्री० टी०**–किंच–**मोघाशा इति** । मत्तोऽन्यद्देवतान्तरं क्षिप्रं फलं दास्यतीत्येवंभूता मोघा निष्फलै-वाशा येषां ते अत एव मद्विमुखत्वान्मोघानि व्यर्थानि कर्माणि येषां ते मोघमेव नानाकुतर्काश्रितं शास्त्र-ज्ञानं येषां ते अत एव विचेतसो विक्षिप्तचित्ताः । सर्वत्र हेतुः–राक्षसीं तामसीं हिंसादिप्रचुराम् आसुरीं च राजसीं कामदर्पादिबहुलां मोहिनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावं श्रिता आश्रिताः सन्तो मामवजानन्तीति पूर्वेणान्वयः ॥ १२ ॥

**स० टी०**–ते श्रीनारायणावज्ञानिन्दनोद्भूतपातकैः ॥ विभ्रान्तबुद्धयो नित्यं निरयार्हा इतीर्यते ॥ १ ॥ फलं दास्यन्ति कर्माणि विनैवेश्वरमत्र नः ॥ इत्येवं निष्फलैवाशा येषां ते व्यर्थजीवनाः ॥ २ ॥ अत ईश्व-रवैमुख्याच्छ्रममात्रात्मकानि च ॥ अग्निहोत्रादिकर्माणि येषां ते व्यर्थचेष्टिताः ॥ ३ ॥ तथैव निष्फलं येषां ज्ञानं भ्रान्तं कुतर्कजम् ॥ ईशनिन्दादिजैः पापैः प्रतिबद्धधियो यतः ॥ ४ ॥ मदवज्ञावशात्ते च राक्षसीं तामसीं जनाः ॥ वृथाहिंसावृथाद्वेषप्रधानामासुरीं तथा ॥ ५ ॥ शास्त्रनिन्द्यकुभोगादिरागलोभादिकारिणीम् ॥ मोहिनीं शास्त्रजज्ञानभ्रंशहेतुं समाश्रिताः ॥ ६ ॥ प्रकृतिं दुःस्वभावाख्यां निरयार्हास्ततश्च ते ॥ ७ ॥ १२ ॥

**भा० टी०**–ततश्च तेषामनादरणेन तिरस्करणेन दिन्दया च हतानां सर्वपुरुषार्थभ्रष्टानामतिक्षु-द्राणां केनापि कापि प्रार्थना न सिध्यतीत्याह–**मोघाशा इति** । मोघा व्यर्था आशा आशिषस्तत्तद्वस्तुप्रा-र्थना येषां ते । ननु तेषां प्रार्थना अग्निहोत्रादिकर्मानुष्ठानात्सार्था भविष्यतीति चेत् भगवन्तमात्मानमव-जानतामग्निहोत्रादिकर्मणां श्रममात्रत्वेन नैष्फल्यान्नेत्याह–मोघकर्माण इति । मोघानि निष्फलान्येव श्रम-हेतुभूतानि अग्निहोत्रादीनि कर्माणि येषां ते । तदुक्तम् 'धर्मः स्वनुष्ठितः पुंसां विष्वक्सेनकथासु यः । नोत्पादयेद्यदि रतिं श्रम एव हि केवलम्' इति । ननु भगवन्तमवज्ञानन्तोऽपि ज्ञानिनो दृश्यन्ते ज्ञानाच्च तेषां मोक्षप्रार्थना सार्था भविष्यतीति चेत् भगवदवज्ञानसहितस्य तस्य साक्षात्काराहेतुत्वेन मोक्षा-हेतुत्वान्नेत्याह–मोघज्ञाना मोघं निष्फलं ज्ञानं येषां ते । तदुक्तम् 'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम् । कुतः पुनः शश्वदभद्रमीश्वरे नचार्पितं कर्म यदप्यकारणम्' इति । विगतचेतसो विग-तविवेकाश्चेति भाष्ये । चो हेतौ । यतो भगवदवज्ञानेन कर्मादीनि निष्फलानि तद्भक्त्या तु सफलानीति विवेकशून्या अत एतादृशास्ते भवन्तीत्यभिप्रायः । किंच यतो राक्षसीं रक्षसां प्रकृतिं स्वभावं छिन्धि भि-न्धि पिब खादेत्येवंरूपामासुरीमसुराणां च प्रकृतिं न देहि न जुहुधि परस्वमपहरेत्येवंरूपां मोहिनीं मोहकरीं देहात्माभिमानरूपां श्रिता आश्रिताः क्रूरकर्माणस्ते भवन्ति अतोऽपि तेषामुक्तविशेषणवत्त्वमित्यर्थः । यद्वा किंच न केवलमुक्तविशेषणवत्त्वमेव तेषामपि तु एतादृशा अपीत्याह–राक्षसीमिति । अथवा न केवलं वर्तमानदेह एवैतादृशाः किंतु वर्तमानदेहपातानन्तरमेतेषां तत्तदतिक्रूरयोनिप्राप्तिश्च निश्चितेत्याह–राक्षसी-मिति । तथाच श्रुतिः "असुर्या नाम ते लोका अन्धेन तमसा वृताः । ताँस्ते प्रेत्याभिगच्छन्ति ये केचा-त्महनो जनाः" इति ॥ १२ ॥

**प० टी०**–अथ तेषां मूढत्वमेव प्रकटयति–**मोघाशा इति** । मोघा निष्फला क्षुद्रदेवतोपासनया क्षण-भङ्गुरा क्षुद्रफलाशा येषां ते, अत एव मद्विमुखत्वान्मोघानि सान्तानि कर्माणि येषां ते, तथा मोघं कुत-र्काश्रितं ज्ञानं येषां ते विचेतसो विक्षिप्तचेतसः । अथ सर्वत्र हेतुमाह–**राक्षसीमित्यादि** । राक्षसीं तामसीं हिंसाप्रचुरामासुरीं कामक्रोधदर्पबहुलां मोहिनीं बुद्धिभ्रंशकरीं प्रकृतिं स्वभावमाश्रिताः सन्तो मामवजान-न्तीति पूर्वेणान्वयः । तदुक्तम्–'काचिद्व्यामोहमूर्तिः परपुरुषरता राक्षसी प्रादुरासीत्सा गर्भिण्यर्भकौघं विषममजनयत्पञ्चभूताभिधानम् । यात्येकं नीचमार्गैरतिजडमपरं धावतीतस्ततोऽन्यद्व्याप्यान्तःशून्यमन्यद्दहति तदपरं किं पुनस्तत्समाजे' इति ॥ १२ ॥

रा० टी०—अवजानतामनर्थाभावादितिहेतुरसिद्ध इतिभावेन फलमाह—**मोघेति** । मोघाशाः वृथाशाः भगवद्द्वेषिभिराशासितस्य संपदादेः प्राप्तावपि आमुष्मिकस्य न कस्यचिदप्याप्तिरित्यर्थः । मोघकर्माणः यज्ञादिकर्माणि च तेषां वृथैव । तत्त्वविषयकज्ञानं च तेषा वृथैवेति मोघज्ञानाः । ज्ञानस्य मोघत्वं नाम केनापि ब्रह्मरुद्रादिभक्त्याद्युपायेनानुत्पत्तिरेव । ॐ 'सर्वथापि तु त एवोभयलिङ्गात्' इतिसूत्रात् । विचेतसो विरुद्धमनस्काः किं बहुना कोऽप्यामुष्मिकः पुमर्थो नाप्यत एवेति ज्ञेयम् ।'द्वेषाच्चैद्यादयो नृपाः' इत्यादि नित्यध्यानस्तुत्याद्यर्थमिति भावः । ननु मौढ्यान्मिथ्याज्ञानमस्तु प्रज्वलनात्मको द्वेषः कुत इत्यतो वा अन्येषामविद्यमानं मौढ्यमेव तेषां कुत इत्यतो वा तस्य मूलकारणमाह—**राक्षसीमिति** । मोहिनीं बुद्धिभ्रंशकरीमासुरीमसुरसंबन्धिनीं प्रकृतिं स्वभावमाश्रिताः तमोयोग्याः मामवजानन्तीति पूर्वेणान्वयः ॥ १२ ॥

## महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ॥
## भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ १३ ॥

त० टी०—तर्हि के सफलजन्मानः श्लाघ्या इत्यपेक्षायामाह—**महात्मान इति** । महान् जन्मान्तरसहस्रार्जितपुण्यसंचयैर्विध्वस्तसमस्तपापतया क्षुद्रकामाद्यनभिभूतः परमतत्त्वविचारार्हत्वादुदार आत्मा चित्तं येषां ते महात्मानस्ते तु अभयं सत्त्वसंशुद्धिरित्यादिना वक्ष्यमाणां दैवीं सात्त्विकीं प्रकृतिमाश्रिता अत एवान्यस्मिन्मद्व्यतिरिक्ते वस्तुनि नास्ति मनो येषां तेऽनन्यमनसो भूतादिं सर्वजगत्कारणमव्ययमजहत्स्वरूपगुणशक्तिकं स्वानन्यभक्तानुग्रहार्थं यथाभक्ताभिलाषपूर्त्यर्थं मनुष्यसमानाकारेणावतीर्णं मां भजन्ति ॥ १३ ॥

म० टी०—भगवद्विमुखानां फलकामनायास्तत्प्रयुक्तस्य नित्यनैमित्तिककाम्यकर्मानुष्ठानस्य तत्प्रयुक्तस्य शास्त्रीयज्ञानस्य च वैयर्थ्यात्पारलौकिकफलतत्साधनशून्यास्तेनाप्यैहलौकिकं किंचित्फलमस्ति तेषां विवेकविज्ञानशून्यतया विचेतसो हि ते अतः सर्वपुरुषार्थबाह्याः शोच्या एव सर्वेषां ते वराका इत्युक्तम् । अधुना के सर्वपुरुषार्थभाजोऽशोच्याः ये भगवदेकशरणा इत्युच्यते—**महात्मानस्त्विति** । महाननेकजन्मकृतसुकृतैः संस्कृतः क्षुद्रकामाद्यनभिभूत आत्मान्तःकरणं येषां ते अत एव अभयं सत्त्वसंशुद्धिरित्यादिवक्ष्यमाणां दैवीं सात्त्विकीं प्रकृतिमाश्रिताः अत एवान्यस्मिन्मद्व्यतिरिक्ते नास्ति मनो येषां ते भूतादिं सर्वजगत्कारणमव्ययमविनाशिनं च मामीश्वरं ज्ञात्वा भजन्ति सेवन्ते ॥ १३ ॥

शं० टी०—एवमासुरसंपत्तिमतामविदुषां गतिं प्रतिपाद्याधुना दैवसंपत्तिमतां विदुषां स्थितिं प्रतिपादयितुं तत्रोत्तममध्यमाद्यधिकारिभेदेन ब्रह्मोपास्तेरपि भेदमाह त्रिभिः । तत्र दैवसंपत्तिमत्सूत्तमानाह—**महात्मान इति** । तुशब्दो ब्रह्मविदां मूढवैपरीत्यद्योतनार्थः । महात्मानः बहुजन्माराधितपरमेश्वरप्रसादातिशयात् सम्यङ्मृदितकषायत्वेन विषयग्रहवैमुख्यं प्राप्य सर्वदा प्रत्यक्प्रवणशीलत्वान्महानुत्कृष्ट आत्मा चित्तं येषां ते महात्मानः प्रसन्नचित्ताः केचिद्यतयो ब्रह्मविदः स्वयं दैवीं देवस्य परमात्मनः प्राप्तेरन्तरङ्गसाधनत्वाद्दैवीं तां प्रकृतिं संपत्तिं तीव्रमोक्षेच्छावैराग्यशमदमतितिक्षोपरमादिसत्त्वगुणपौष्कल्यलक्षणामाश्रिताः सन्तो मां भूतादिमव्ययं च ज्ञात्वा भूतादिर्भूतानामादिराविर्भूतिकारणं भूतादिरित्युक्तिस्तदनन्यत्वमितिन्यायात् कार्यस्य कारणमात्रत्वेन भूतानां पृथक्स्वरूपाभावाद्ब्रह्मणोऽद्वितीयत्वज्ञापनार्थं । कदल्यादेः कार्यनाशेन कारणस्यापि नाशदर्शनात्तद्वद्भूतनाशाद्ब्रह्मणोऽपि नाशप्रसक्तौ तं वारयति—**अव्ययमिति** । ज्ञानेन वाऽज्ञानेन वा कारणनाशेन वा कार्यनाशेन वा स्वतो वान्यतो वा येन केनापि न व्येतीत्यव्ययं नित्यं सर्वात्मकमद्वितीयमखण्डानन्दैकरसं मां परं ब्रह्म ज्ञात्वा श्रवणादिभिः स्वात्मना सम्यग्विज्ञायाऽनन्यमनसः मनो नाम

बुद्धिवृत्तिः न विद्यतेऽन्यो मद्व्यतिरिक्तो वृत्तेर्विषयत्वेन येषा तेऽनन्यमनसः वस्त्वन्तरदर्शनरहिताः सन्तो मां भजन्ति सर्वमिदमहं च ब्रह्मैवेत्यप्रतिबद्धवृत्त्या सदा सर्वं ब्रह्मैव पश्यन्तीत्यर्थः। तत एव महात्मान इति विशेषणमर्थवत् ॥ १३ ॥

**श्री० टी०**—के तर्हि त्वामाराधयन्तीत्यत आह—**महात्मानस्त्विति** । महात्मानः कामाद्यनभिभूतचित्ता यतः अभयं सत्त्वसंशुद्धिरित्यादिना वक्ष्यमाणां दैवीं प्रकृतिं स्वभावमाश्रिता अत एव मद्व्यतिरेकेण नास्त्यन्यस्मिन् मनो येषां ते तु भूतादिं जगत्कारणमव्ययं नित्यं च मां ज्ञात्वा भजन्ति ॥ १३ ॥

**स० टी०**—फलाशा कर्म च ज्ञानमैहिकामुष्मिकार्थदम् ॥ भगवद्विमुखानां स्यान्निष्फलं मूढचेतसाम् ॥ १ ॥ अतः सर्वपुमर्थेभ्यो बाह्याः शोच्यास्त एव च ॥ वराका इति संप्रोक्तमिदानीं के त उत्तमाः ॥ २ ॥ भगवच्छरणा ये स्युः पुरुषार्थैकभागिनः ॥ अशोच्याः सन्ति शिष्टास्त इत्याह भगवान् स्वयम् ॥ ३ ॥ बहुजन्मार्जितैः पुण्यैर्येषां धीः संस्कृता भवेत् ॥ कामैरनभिभूतास्ते महात्मानो गुणाकराः ॥ ४ ॥ अभयं सत्वसंशुद्धिरित्यादिप्रकृतिं श्रिताः ॥ अत एव न चान्यस्मिन्मनो येषां हि गोचरे ॥ ५ ॥ ते मां सर्वजगद्धेतुमविनाशिनमीश्वरम् ॥ ज्ञात्वाचार्योपदिष्टेन सेवन्ते वैदिकाध्वना ॥ ६ ॥ १३ ॥

**भा० टी०**—के पुनस्त्वां भजन्त इति तत्राह—**महात्मान इति** । तुशब्दोऽवधारणार्थः पूर्वेभ्योऽत्यन्तवैलक्षण्यद्योतनार्थ इति वा । ये पुनः श्रद्दधाना भगवद्भक्तिलक्षणे मोक्षमार्गे प्रवृत्ताः महान्प्रकृष्टोऽनेकजन्मार्जितयज्ञदानादिभिः शोधित आत्मा चित्तं येषां तेऽक्षुद्रचित्ताः अत एव दैवीं प्रकृतिं शमदमदयाश्रद्धादिलक्षणामाश्रिताः सन्तो मां परमेश्वरं भूतानामाकाशादीनामादिं कारणम् । ननु यदि दधिकारणदुग्धवत् वियदादिरूपेण परिणतत्वात् भूतादिः परमेश्वरस्तर्हि परिणामी स्यादित्याशङ्क्य शुक्तिरूप्यस्य शुक्तिरिव कारणमतः परिणामशून्योऽविनाशीत्याह—अव्ययमिति । ज्ञात्वाऽनन्यमनसो अन्यस्मिन्परमेश्वराद्व्यतिरिक्ते विषयादौ न विद्यते मनो येषां ते अनन्यस्मिन्प्रत्यगभिन्ने मनो येषामिति वा ते अनन्यमनसः सन्तो मां भजन्ति सेवन्ते । पार्थेति संबोधयन् त्वं त्वतिपुण्यशीलायाः पृथाया अपत्यत्वात् महात्मत्वादिविशेषणविशिष्टोऽसीति सूचयति ॥ १३ ॥

**प० टी०**—के तर्हि त्वामाराधयन्तीत्याशङ्क्य द्वेधा मदुपासकाः सन्तीत्याह—**महात्मान इति** । महान् कामक्रोधजयशील आत्मा मनो येषां ते महात्मानो दैवीं मोक्षसाधनीभूतां प्रकृतिं स्वभावं श्रिताः सन्तोऽनन्यमनसोऽव्यभिचारिण्या भक्त्योपेता मद्भक्ता मां सगुणब्रह्मत्वेन भजन्ति ज्ञानिनस्तु मामव्ययमनाद्यन्तं भूतादिस्थूलप्रपञ्चकारणीभूतं निर्गुणब्रह्मरूपं ज्ञात्वा भजन्ति ॥ १३ ॥

**रा० टी०**—ननु भगवतो दोषित्वादेवावजानन्तीति किं न स्यात् । तथात्वे दैवप्रकृतयोऽप्यवज्ञां कुर्युः । नचैवमस्तीत्याह—**महात्मानस्त्विति** । दैवीं मुक्तियोग्योत्तमजीवसंबन्धिनीं प्रकृतिं स्वभावमाश्रिताः महात्मानो महामनस्कास्तु भूतादिं भूतानां कारणमव्ययं चतुर्विधनाशहीनं मां ज्ञात्वानन्यमनसोऽन्यविषयकमनोहीना मदेकमनस्काः सन्तो मां भजन्ति सेवन्ते ॥ १३ ॥

## सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः ॥
## नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ १४ ॥

**त० टी०**—तेषां भजनप्रकारमाह—**सततमिति** । अत्यर्थमतिप्रियतया मत्स्वरूपगुणनामाभिनिविष्टान्तःकरणमद्गुणलीलाविशेषद्योतकनामानि स्मृत्वा पुलकितसर्वाङ्गा हर्षगद्गदकण्ठा माधव मुकुन्द मधुसूदन कृष्ण वासुदेवेत्येवमादीनि नामानि स्तोत्रप्रबन्धादीनि च सततं सर्वदा कीर्तयन्तः, यतन्तश्च मत्प्रसादासाधारणकारणभूतेषु मदर्चनवन्दननर्तननमस्कारलीलानुकरणादिकर्मसु यतमानाः भजना-

न्तरागतविक्षेपमसहमाना विक्षेपहेतून्स्वसंबन्धिनोऽप्युपेक्षमाणा इत्यर्थः । भक्त्या निरतिशयप्रेम्णा नमस्यन्तश्च 'पद्भ्यां दोर्भ्यां च जानुभ्यामुरसा शिरसा दृशा । मनसा वचसा चेति प्रमाणोऽष्टाङ्ग ईरितः' इत्युक्तप्रकारेणाष्टाङ्गैर्मन्मन्दिराजिरादिषु दण्डवत्प्रणामं कुर्वन्तो नित्ययुक्ताः क्षणमात्रमपि मद्वियोगमसहमाना मामुपासते, मत्सेवनैकजीवना भवन्तीत्यर्थः ॥ १४ ॥

म० टी०–ते केन प्रकारेण भजन्तीत्युच्यते द्वाभ्याम्–सततमिति । सततं सर्वदा ब्रह्मनिष्ठं गुरुमुपसृत्य वेदान्तवाक्यविचारेण गुरूपसदनेतरकाले च प्रणवजपोपनिषदावर्तनादिभिर्मां सर्वोपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपं कीर्तयन्तः वेदान्तशास्त्राध्ययनरूपश्रवणव्यापारविषयीकुर्वन्त इति यावत् । तथा यतन्तश्च गुरुसन्निधावन्यत्र वा वेदान्ताविरोधितर्कानुसंधानेनाप्रामाण्यशङ्कानास्कन्दितगुरूपदिष्टमत्स्वरूपावधारणाय यतमानाः श्रवणनिर्धारितार्थबाधशङ्कापनोदकतर्कानुसंधानरूपमननपरायणा इति यावत् । तथा दृढव्रताः दृढानि प्रतिपक्षैश्चालयितुमशक्यानि अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहादीनि व्रतानि येषां ते शमदमादिसाधनसंपन्ना इति यावत् । तथा चोक्तं पतञ्जलिना–'अहिंसासत्यास्तेयब्रह्मचर्यापरिग्रहा यमाः । ते तु जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्' इति जात्या ब्राह्मणत्वादिकया देशेन तीर्थादिना कालेन चतुर्दश्यादिना समयेन यज्ञाद्यन्यत्वेनानवच्छिना अहिंसादयः सार्वभौमाः क्षिप्तमूढविक्षिप्तभूमिष्वपि भाव्यमानाः कस्यामपि जातौ कस्मिन्नपि देशे कस्मिन्नपि काले यज्ञादिप्रयोजनेऽपि हिंसां न करिष्यामीत्येवंरूपेण किंचिदप्यपर्युदस्य सामान्येन प्रवृत्ता एते महाव्रतमित्युच्यन्त इत्यर्थः । तथा नमस्यन्तश्च मां कायवाङ्मनोभिर्नमस्कुर्वन्तश्च मां भगवन्तं वासुदेवं सकलकल्याणगुणनिधानमिष्टदेवतारूपेण गुरुरूपेण च स्थितं चकारात् 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति वन्दनसहचरितं श्रवणाद्यपि बोद्धव्यम् । अर्चनं पादसेवनमित्यपि गुरुरूपे तस्मिन् सुकरमेव । अत्र मामिति पुनर्वचनं सगुणरूपपरामर्शार्थम् अन्यथा वैयर्थ्यप्रसङ्गात् । तथा भक्त्या मद्विषयेण परेण प्रेम्णा नित्ययुक्ताः सर्वदा संयुक्ताः एतेन सर्वसाधनपौष्कल्यं प्रतिबन्धकाभावश्च दर्शितः "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति श्रुतेः । पतञ्जलिना चोक्तम् 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति । तत ईश्वरप्रणिधानात्प्रत्यक्चेतनस्य त्वंपदलक्ष्यस्याधिगमः साक्षात्कारो भवति अन्तरायाणां विघ्नानां चाभावो भवति इति सूत्रस्यार्थः । तदेवं शमदमादिसाधनसंपन्ना वेदान्तश्रवणमननपरायणाः परमेश्वरे परमगुरौ प्रेम्णा नमस्कारादिना च विगतविघ्नाः परिपूर्णसर्वसाधनाः सन्तो मामुपासते विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण श्रवणमननोत्तरभाविना सन्ततं चिन्तयन्ति महात्मानः अनेन निदिध्यासनं चरमसाधनं दर्शितम् । एतादृशसाधनपौष्कल्ये सति यद्वेदान्तवाक्यजमखण्डगोचरं साक्षात्काररूपमहं ब्रह्मास्मीति ज्ञानं तत्सर्वशङ्काकलङ्कास्पृष्टं सर्वसाधनफलभूतं स्वोत्पत्तिमात्रेण दीप इव तमः सकलमज्ञानं तत्कार्यं च नाशयतीति निरपेक्षमेव साक्षान्मोक्षहेतुर्न तु भूमिजयक्रमेण भ्रूमध्ये प्राणप्रवेशनं मूर्धन्यया नाड्या प्राणोत्क्रमणमर्चिरादिमार्गेण ब्रह्मलोकगमनं तद्भोगान्तकालविलम्बं वा प्रतीक्षते अतो यत्प्राक्प्रतिज्ञातम् इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे ज्ञानमिति तदेतदुक्तम् । फलं चास्याशुभान्मोक्षणं प्रागुक्तमेवेतीह पुनर्नोक्तम् । एवमत्रायं गम्भीरो भगवतोऽभिप्रायः । उत्तानार्थस्तु प्रकट एव ॥ १४ ॥

शं० टी०–एवमुत्तमानामुपास्तिप्रकारमुक्त्वाथ मध्यमानामुपास्तिप्रकारमाह–सततमिति । केचन मुमुक्षवः स्वात्मतत्त्वजिज्ञासया तीव्रमोक्षेच्छावैराग्याभ्यां च ससाधनं कर्माखिलं संन्यस्य दृढव्रताः स्वजीवनादावप्यपेक्षाराहित्येन ब्रह्मचर्याहिंसाद्युत्तमधर्मेण बहिरन्तरिन्द्रियनिग्रहेण च दृढं विच्छित्तिरहितं ज्ञानसंपादनपरत्वलक्षणं व्रतं नियमो येषां ते दृढव्रता भूत्वा सततं सर्वदा 'आसुप्तेरामृतेः कालं नयेद्वेदान्त-

चिन्तया ' इतिस्मरणादजस्रं मामेव प्रत्यग्लक्षणमात्मानमुद्दिश्य मत्साक्षात्कारसिद्धये सद्गुरुसन्निधौ वेदान्तान् कीर्तयन्तः पठन्तस्तदर्थमुपपत्तिभिर्विचारयन्तो ज्ञानं यथा सिध्येत्तथा यतन्तो यत्नं कुर्वन्तः "तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये " इति श्रवणाच्छ्रद्धया भक्त्या च ज्ञानदातारमीश्वरं मां नमस्यन्तः प्रार्थयन्तश्चैवं नित्ययुक्ता निरन्तरनियमोपेताः शुश्रूषवो मामुपासते, यद्वा नित्यो मोक्षस्तत्सिद्धये युक्ता नियता मामुपासते । सततं कीर्तयन्तो मामित्यनेन नामकीर्तनं विवक्षितमिति मूढबुद्धिभिर्न मन्तव्यमुपक्रमविरोधात् प्रकरणविरोधाद्विशेषणविरोधाच्च तदत्र न सिध्यति ॥ १४ ॥

**श्री० टी०**—तेषां भजनप्रकारमाह—**सततमिति** द्वाभ्याम् । सततं सर्वदा स्तोत्रमन्त्रादिभिः कीर्तयन्त-केचिन्मामुपासते सेवन्ते । दृढानि व्रतानि नियमा येषां तादृशाः सन्तो यतन्तश्चेश्वरपूजादिषु इन्द्रियोपसंहारादिषु च प्रयत्नं कुर्वन्तश्च केचिद्भक्त्या नमस्यन्तः प्रणमन्तश्चान्ये नित्ययुक्ता अनवरतमवहिताः सेवन्ते । भक्त्येति नित्ययुक्ता इति च कीर्तनादिष्वपि द्रष्टव्यम् ॥ १४ ॥

**स० टी०**—ते च केन प्रकारेण भजन्तीत्युच्यतेऽधुना ॥ उपसृत्य गुरुं ब्रह्मनिष्ठं वेदान्तसद्गिराम् ॥ १ ॥ विचारेण तथोंकारजपोपनिषदीरणैः ॥ वेदान्तप्रतिपाद्यं मां कीर्तयन्तोऽद्वयं सदा ॥ २ ॥ वेदान्तश्रवणेनैते निश्चिन्वन्तो हि मेति दिक् ॥ यतन्तो मननं नित्यं सत्तर्कैः श्रुतमादरात् ॥ ३ ॥ कुर्वन्तः संयुताः शान्तिदान्तिक्षान्त्यादिसाधनैः ॥ चालयितुमशक्यान्यहिंसासत्यमुखानि च ॥ ४ ॥ व्रतानि प्रतिपक्षैश्च येषां ते दृढसंयमाः ॥ कायेन मनसा वाचा नमस्कुर्वन्त आदरात् ॥ ५ ॥ मां सदा वासुदेवं श्रीभगवन्तं कृपानिधिम् ॥ इष्टदैवतरूपेण गुरुरूपेण च स्थितम् ॥ ६ ॥ भक्त्या मद्विषयेणातिप्रेम्णा युक्ताः सदैव माम् ॥ उपासते सजातीयप्रत्ययेन निरन्तरम् ॥ ७ ॥ विजातीयं तिरस्कृत्य निदिध्यासनतत्पराः ॥ इति साधनपौष्कल्ये सति वेदान्तवाक्यजम् ॥ ८ ॥ ब्रह्मैक्यगोचरं ज्ञानं साक्षात्कारात्मकं फलम् ॥ भवत्येव ततः सद्यो मुक्तिरित्याशयो हरेः ॥ ९ ॥ १४ ॥

**भा० टी०**—भजन्तीत्युक्तं तत्र भजनप्रकारजिज्ञासायामाह द्वाभ्याम्—**सततमिति** । निरन्तरं सर्वदा ब्रह्मस्वरूपं मां कीर्तयन्तः श्रोत्रियं ब्रह्मनिष्ठं गुरुमुपसंगम्य तन्मुखादुपनिषच्छ्रवणानन्तरमुपनिषद्भिः हरे गोविन्द वासुदेव दामोदर माधव मुकुन्देत्यादिनामभिश्च कीर्तयन्तः यतन्तश्च शमदमदयाहिंसास्तेयब्रह्मचर्यापरिग्रहादिभिर्यत्नं कुर्वन्तः अत एव दृढं स्थिरं केनापि चालयितुमशक्यं व्रतं शमदमादिरूपं येषा ते भक्त्या परप्रेम्णा मां हृदयेशयमन्तर्यामिरूपेण प्रत्यक्चेतनरूपेण च हृद्गुहावासिनमात्मानं नित्ययुक्ताः उद्युक्ताः सन्तो उपासते सेवन्ते। सततमित्यनेन कीर्तनादिव्यतिरिक्तकालव्यावृत्तिः। अत्र केचित् गुरूपसदनोत्तरकाले प्रणवजपोपनिषदावर्तनादिभिर्मां सर्वोपनिषत्प्रतिपाद्यं ब्रह्मस्वरूपं कीर्तयन्तः वेदान्तशास्त्राध्ययनरूपश्रवणव्यापारविषयीकुर्वन्त इति यावत्। तथा यतन्तश्च गुरुमुखाच्छ्रुतमत्स्वरूपावधारणाय यतमानाः श्रवणगृहीतार्थबाधकशङ्कानिवर्तकतर्कानुसंधानरूपं मननं यत्नेन संपादयन्त इति यावत् । तथा दृढानि अहिंसादिव्रतानि येषां ते दृढव्रताः शमदमादिसाधनसंपन्नाः इति यावत् । तथा नमस्यन्तश्च मां भगवन्तं वासुदेवमिष्टदेवतारूपेण गुरुरूपेण च स्थितं कायवाङ्मनोभिर्नमस्कुर्वन्तश्च । चकारात् 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्' इति वन्दनसहचरितं श्रवणाद्यपि बोध्यम्। पादसेवनमित्यपि गुरुरूपे परमात्मनि सुकरमेव । अत्र मामिति पुनर्वचनं सगुणरूपपरामर्शार्थम् अन्यथैकस्य वैयर्थ्यप्रसङ्गात् । तया भक्त्या मद्विषयेण परप्रेम्णा नित्ययुक्ता एतेन सर्वसाधनपौष्कल्यं प्रतिबन्धकाभावश्च दर्शितः । तथाच श्रुतिः "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति । तदेवं शमदमादिसाधनसंपन्नाः वेदान्तश्रवणमननपरायणाः परमेश्वरे परमगुरौ परप्रेम्णा नमस्कारादिना च विगत-

विघ्नाः परिपूर्णसाधनः सन्तो मामुपासते विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण श्रवणमननोत्तरभाविना सततं चिन्तयन्ति महात्मानोऽनेन निदिध्यासनं चरमसाधनं दर्शितमित्यादि वर्णयन्ति, तदेतद्भाष्यस्य सामान्यरूपस्याविरोधेनोपादेयम् ॥ १४ ॥

प० टी०–अथ भक्तानां भजनप्रकारमाह–सततमिति । सततं निरन्तरं कीर्तयन्तो मन्नामघोषं कुर्वन्तस्तथा दृढव्रता निश्चितसंकल्पाः सन्तो यतन्तः प्रयत्नं कुर्वन्तो भक्त्या न तु दम्भेन मद्विभूतीर्मूर्तीर्वा नमस्यन्तो नमस्कारं कुर्वन्तो नित्ययुक्ता नियमवन्त उपासते ॥ १४ ॥

रा० टी०–भजनप्रकारमाह–सततमिति । मां सततं कृष्णकृष्णेत्यादिरूपेण कीर्तयन्तः यतन्तः मत्पूजादौ यत्नं कुर्वन्तः दृढानि उपवासादिनियमव्रतानि येषां ते दृढव्रताः नित्ययुक्ताः नित्यं मयि मनोयोगवन्तः नित्यं कर्मज्ञानोपायवन्त इति वा, भक्त्या नमस्यन्तश्च मामुपासते ॥ १४ ॥

**ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते ॥**
**एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम् ॥ १५ ॥**

त० टी०–तेभ्योऽपि विशिष्टा महात्मानो मामुपासत इत्याह–ज्ञानयज्ञेनेति । अन्येऽपि महात्मानो मामुपासते । किं कुर्वन्तो ज्ञानयज्ञेन चकारात्पूर्वोक्तैः कीर्तनादिभिश्च यजन्तः पूजयन्तः । ज्ञानप्रकारमाह–एकत्वेन पृथक्त्वेनेति । सर्वाभेदेन सर्वभेदेन चेत्यर्थः । तदेवोपपादयति–बहुधा विश्वतोमुखमिति । विश्वतोमुखं विश्वान्तर्यामिणमेकत्वेन, बहुधा बहुप्रकारं व्यष्ट्यन्तर्यामिणं बहुत्वेन तद्वैलक्षण्येन च । तथाहि "सर्वं खल्विदं ब्रह्म तज्जलान्" इति "आत्मैवेदं सर्वं, वासुदेवः सर्वम्" इति 'सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः । सर्वगत्वादनन्तस्य स एवाहमवस्थितः' इत्यादिश्रुतिस्मृत्यभिहितसर्वचेतनाचेतनजगदात्मकत्वेन विश्वरूपं सन्तं मामेकत्वेनावगत्य "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान् । यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष ते आत्माऽन्तर्याम्यमृतः । वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च । सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इत्यादिश्रुतिभ्यो बहुधा बहुरूपं सन्तमपि मां तद्धर्मास्पृष्टस्वभावतया पृथक्त्वेन सर्वचेतनाचेतनजगतोऽत्यन्तवैलक्षण्येनोपासते इत्यर्थः ॥ १५ ॥

म० टी०–इदानीं य एवमुक्तश्रवणमनननिदिध्यासनासमर्थास्तेऽपि त्रिविधा उत्तमा मध्यमा मन्दाश्चेति सर्वेऽपि स्वानुरूप्येण मामुपासत इत्याह–ज्ञानयज्ञेनेति । अन्ये पूर्वोक्तसाधनानुष्ठानासमर्थाः ज्ञानयज्ञेन "त्वं वा अहमस्मि भगवो देव ते अहं वै त्वमसि" इत्यादिश्रुत्युक्तमहंग्रहोपासनं ज्ञानं स एव परमेश्वरयजनरूपत्वाद्यज्ञस्तेन । चकार एवार्थे, अपिशब्दः साधनान्तरत्यागार्थः । केचित्साधनान्तरनिस्पृहाः सन्त उपास्योपासकाभेदचिन्तारूपेण ज्ञानयज्ञेनैकत्वेन भेदव्यावृत्त्या मामेवोपासते चिन्तयन्त्युत्तमाः । अन्ये तु केचिन्मध्यमाः पृथक्त्वेनोपास्योपासकयोर्भेदेन "आदित्यो ब्रह्मेत्यादेशः" इत्यादिश्रुत्युक्तेन प्रतीकोपासनरूपेण ज्ञानयज्ञेन मामेवोपासते । अन्ये त्वहंग्रहोपासने प्रतीकोपासने वासमर्थाः केचिन्मन्दाः कांचिदन्यां देवतां चोपासीनाः कानिचित्कर्माणि वाकुर्वाणा बहुधा तैस्तैर्बहुभिः प्रकारैर्विश्वरूपं सर्वात्मानं मामेवोपासते तेन तेन ज्ञानयज्ञेनेति उत्तरोत्तराणां क्रमेण पूर्वपूर्वभूमिलाभः ॥ १५ ॥

शं० टी०–एवमात्मतत्त्वजिज्ञासूनां यतीनां मुमुक्षूणां वेदान्तश्रवणलक्षणमुपासनमुक्त्वा श्रवणमननाभ्यां सम्यग्विज्ञाततत्त्वानां यतीनां निदिध्यासादिलक्षणमात्मोपासनं प्रतिपादयति–ज्ञानयज्ञेनेति । ज्ञानय-

ज्ञेन ज्ञानं ब्रह्मात्मैकत्वविषयं तदेव ब्रह्मोपास्तेः साधनत्वाद्यज्ञ इत्युच्यते । इज्यतेऽनेनेति यज्ञो ज्ञानमेव यज्ञो ज्ञानयज्ञस्तेन ज्ञानयज्ञेन चाप्यन्ये केचिदपक्रान्तरात्मानो यजन्तो ब्रह्मैवाहमहमेव ब्रह्मेति स्वं ब्रह्मैव भावयन्तः सन्तो मां प्रत्यगभिन्नं परं ब्रह्मोपासते विपरीतभावनाविच्छित्त्यै नित्यमनुसंदधते । अपिशब्दः केचन कर्मिणः कर्मयज्ञेनोपासत इति सूचनार्थः । ननु ज्ञानयज्ञेन कथं तवोपास्तिर्भेदेनाभेदेन वा कर्तव्येत्याकाङ्क्षायाम् " स यश्चायम् " इति "अयमात्मा ब्रह्म" इति "अहं ब्रह्मास्मि" इत्यादिश्रुत्यर्थं ब्रह्मविदाऽऽचार्यमुखतः सरहस्यं सम्यगवगाह्य तमेवार्थं श्रुत्युक्तविशेषैः स्वात्मना सम्यगनुभूय भूयो भेदमनालम्ब्य तदेकत्वमेव सदा भावयितुं ये तु शक्तास्तैरेकत्वेनोपासितव्यमशक्तैर्भेदेनेति बोधयितुमाह—**एकत्वेन पृथक्त्वेनेति** । ज्ञानयज्ञेन ये तूपासनं कुर्वन्ति मुख्याधिकारिणः परमहंसा यतयस्त एकत्वेनाभेदेन ब्रह्मैवाहमिति स्वाभिन्नं मामुपासते ये तु मध्यमाधिकारिणो हंसकुटीचकादयस्ते तु पृथक्त्वेन भेदेन विश्वतोमुखं सर्वात्मकं मां बहुधानेकप्रकारम् "आदित्यो ब्रह्म" इति " मनो ब्रह्म " इति "ओमित्येतेनैवाक्षरेण" इत्यादिश्रुत्युक्तरीत्या बहुधाभेदेनोपासते । तत्राप्यनधिकारिणः केचन मुमुक्षवो वैदिकाः सोमेन यक्ष्य इत्यादिना कर्मयज्ञेन मामिन्द्रादिरूपमुपासते । तत्रापि केचन शिवविष्णुब्रह्मादित्यादिरूपं मां तन्त्रेण वैदिकेनोपासते ॥ १५ ॥

**श्री० टी०—किंच—ज्ञानेति** । वासुदेवः सर्वमित्येवं सर्वात्मत्वदर्शनं ज्ञानं तदेव यज्ञस्तेन ज्ञानयज्ञेन मां यजन्तः पूजयन्तोऽन्येऽप्युपासते । तत्रापि केचिदेकत्वेन एकमेव परं ब्रह्मेति परमार्थदर्शनरूपाभेदभावनया केचित् पृथक्त्वेन दासोऽहमिति पृथग्भावनया केचित्तु विश्वतोमुखं सर्वात्मकं मां बहुधा ब्रह्मरुद्रादिरूपेणोपासते ॥ १५ ॥

**स० टी०**—भगवद्गोचरं ज्ञानं प्रमारूपं प्रदर्श्य च ॥ तत्राक्षमधियां ब्रह्मोपासना बहुधोच्यते ॥ १ ॥ ज्ञानयज्ञेन वेदोक्ताहंग्रहोपासनेन च ॥ त्वं वाहमस्मि भगवो देवतेऽहमितीरिते ॥ २ ॥ ज्ञानं तदेव गोविन्दयजनं तेन तत्पराः ॥ उपास्योपासकाभेदचिन्तारूपेण निःस्पृहाः ॥ ३ ॥ मामेव भेदव्यावृत्त्या चिन्तयन्त्युत्तमा जनाः ॥ अन्ये भेदेन वेदोक्तादित्यो ब्रह्मेति तत्पराः ॥ ४ ॥ प्रतीकोपासनेनैते मध्यमा मामुपासते ॥ उभयत्राक्षमा कांचिदुपासीनाश्च देवताम् ॥ ५ ॥ अन्ये कर्माणि कुर्वाणाः प्रकारैर्बहुभिः सदा ॥ मामेवोपासते विश्वरूपं सर्वगतं हरिम् ॥ ६ ॥ १५ ॥

**भा० टी०**—एवमुपासनाप्रकारः सर्वोपासकसाधारणो दर्शितः । तत्रासाधारणं तमाह—**ज्ञानयज्ञेनेति** । ज्ञानयज्ञेन ज्ञानमेव परमात्मविषयं तत्पूजनरूपत्वाद्यज्ञस्तेन ज्ञानयज्ञेन यजन्तः पूजयन्तः मां परमात्मानमन्ये उत्तमाः । चकारः उक्तानामनुक्तानां च साधारणानामुपासनाप्रकाराणां समुच्चयार्थः । अपिशब्द इन्द्रादिदेवतोपासनापरित्यागार्थः, तथाचान्यामुपासनां परित्यज्य मामुपासत इत्यर्थः । तच्च ज्ञानमेकमेव परं ब्रह्मेति परमार्थदर्शनं तेन यजन्ते । यत्तु अन्ये पूर्वोक्तसाधनानुष्ठानासमर्था ज्ञानयज्ञेन " त्वं वाहमस्मि भगवति देवतेऽहं वै त्वमसि " इत्यादिश्रुत्युक्तमहंग्रहोपासनं ज्ञानमिति तच्चिन्त्यं, मुख्यामुख्ययोः मुख्ये संभवति अमुख्यग्रहणस्यान्याय्यत्वात् । एतेन ज्ञानयज्ञेन निर्विकल्पसमाधिना पातञ्जला इति प्रत्युक्तम् । केचिच्च पृथक्त्वेन स एव भगवान् विष्णुरादित्यचन्द्रादिरूपेण पृथक्पृथगवस्थित इति उपासते मध्यमाः । केचिच्च स एव भगवान् बहुधा व्यवस्थितो विश्वतोमुखो विश्वरूपस्तं बहुधा बहुप्रकारेण उपासते मन्दाः ॥ १५ ॥

**प० टी०**—अथ ज्ञानिनः कथं भजन्त इत्याह—**ज्ञानयज्ञेनेति** । अन्ये च ज्ञानयज्ञेन सर्वत्रात्मदर्शनरूपेण मां यजन्त एकत्वेन स्थूलसमष्टिरूपेण पृथक्त्वेनेन्द्रादिविभूतिरूपेण बहुधा सर्वदेहिषु वा मां विश्वतोमुखं विश्वरूपमुपासते । श्रुतिश्च—"हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् " इति । भाष्यम्—एतत्सर्वं व्यष्टिरूपं मिलित्वा ऋतं बृहत्

समष्टिरूपं सत्यं ब्रह्मैवास्ति । तदेवाह–हंस इति । हंसो जीवो ब्रह्मैव तथा शुचौ ज्ञाने ज्ञेयत्वेनास्तीति शुचिषद् वसुः स्थूलप्रपञ्चरूपो विराडप्यन्तरिक्षसदाकाशे वर्तमानः सोऽपि । यद्वा वसुर्यज्ञः, तथा जुहोतीति होता सोऽपि ब्रह्मैव । तथा वेदिषदुत्तरवेद्यां वर्तमानोऽतिथिरग्निः सोऽपि तथा दुरोणे यज्ञार्थस्थापिते द्रोणकलशे वर्तमानं दुरोणसत्, तथा नृपु मनुष्येषु तिष्ठतीति नृषत्, वरेषु देवेषु तिष्ठतीति वरसत्, तथा ऋते प्राणे तिष्ठतीति ऋतसत्, व्योम्नि तिष्ठतीति व्योमसत्, तथाऽब्जा उदकजा जीवा गोजा भूमिजा ऋतजा वायुजा अद्रिजा पर्वतजाश्चेति सर्वं ब्रह्मरूपम् ॥ १९ ॥

रा० टी०–अन्येऽपि च महात्मानो ज्ञानाख्ययज्ञेन मां यजन्तः पूजयन्तः मामुपासते, श्रवणमनन-ध्यानादि कुर्वन्तः परेभ्य उपदिशन्तश्च नित्यं भगवन्माहात्म्यज्ञाने रता इत्यर्थः । विश्वतोमुखं मुखशब्दोऽत्र सर्वावयवोपेतरूपपरः । विश्वस्मिन्सर्वत्र स्थितं मामेकत्वेन पृथक्त्वेन सर्वजगद्वैलक्षण्येन बहुधा च शुक्लनी-लपीतादिभेदेन बहुधोपासत इति वा । बहुधा बहव इत्यर्थः । दैवमेवापरे यज्ञमित्यादिना चतुर्थोक्तदिशा बहव उपासत इति वार्थः । यद्वा एकमूर्तिश्चतुर्मूर्तिरथवा पञ्चमूर्तिक इति तात्पर्योक्तदिशा सर्वरूपात्मकनारायण-रूपैकमूर्तित्वेन पृथक्त्वेन वासुदेवादिचतुर्मूर्तित्वेन बहुधा नारायणवासुदेवादिपञ्चमूर्तित्वेन विश्वतोमुखं द्वादश-चतुर्विंशत्यादिभेदेन स्थितं मामुपासत इत्यर्थः ॥ १९ ॥

**अहं क्रतुरहं यज्ञः स्वधाऽहमहमौषधम् ॥**
**मन्त्रोऽहमहमेवाज्यमहमग्निरहं हुतम् ॥ १६ ॥**

**त० टी०–उक्तमात्मनो बहुप्रकारत्वं प्रपञ्चयति–अहमित्यादिचतुर्भिः । क्रतुः श्रौतोऽग्निष्टो-मादिरहमेव । यज्ञो स्मार्तो महायज्ञाख्योऽप्यहमेव । स्वधा पितृगणपुष्टिदायिनी अहम्, औषधं चाहमेव, अहमेव मन्त्रो याज्यापुरोनुवाक्यादिः । आज्यं होमसाधनमहमेव । अग्निराहवनीयादिरहमेव । हुतं होमश्चाहमेव ॥ १६ ॥**

म० टी०–यदि बहुधोपासते तर्हि कथं त्वामेवेत्याशङ्क्यात्मनो विश्वरूपत्वं प्रपञ्चयति चतुर्भिः–अहं क्रतु-रहमिति । सर्वस्वरूपोऽहमिति वक्तव्ये तत्तदेकदेशकथनमवयुत्यानुवादेन वैश्वानरे द्वादशकपालेऽष्टाकपालत्वा-दिकथनवत् । क्रतुः श्रौतोऽग्निष्टोमादिः यज्ञः स्मार्तो वैश्वदेवादिः महायज्ञत्वेन श्रुतिस्मृतिप्रसिद्धः स्वधान्नं पितृभ्यो दीयमानमौषधमोषधिप्रभवमन्नं सर्वैः प्राणिभिर्भुज्यमानं भेषजं वा मन्त्रो याज्यापुरोनुवाक्यादिर्येनो-द्दिश्य हविर्दीयते देवेभ्यः आज्यं घृतं सर्वहविरुपलक्षणमिदं अग्निराहवनीयादिः हविःप्रक्षेपाधिकरणं, हुतं हवनं हविःप्रक्षेपः, एतत्सर्वमहं परमेश्वर एव । एतदेकैकज्ञानमपि भगवदुपासनमिति कथयितुं प्रत्येकमहं-शब्दः । क्रियाकारकफलजातं किमपि भगवदतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥

शं० टी०–ननु "यत्तदद्रेश्यम्" इति "तदरूपमनामयम्" "दिव्यो ह्यमूर्तः पुरुषः" इति परस्य ब्रह्मणो नामरूपाद्यभाव एव श्रूयते कथं नामरूपादिशून्यस्य तव दृश्येष्विन्द्रादिषु शिवादिषु च ब्रह्मबुद्ध्यो-पास्तिरुपपद्यत इत्याकाङ्क्षायाम् "इन्द्रो मायाभिः पुरुरूप ईयते" 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत्' "एकं सद्विप्रा बहुधा वदन्ति । इन्द्रं मित्रं वरुण-मग्निमाहुः" इत्यादिश्रुतिभिः परस्य ब्रह्मणो ममैव मायया सविशेषत्वं सार्वात्म्यं च प्रतिपाद्यते । तत इन्द्रा-दयः शिवादयः क्रतुयज्ञमन्त्रादयश्च जगच्च सर्वमप्यहमेवेति स्वस्य विश्वतोमुखत्वं प्रतिपादयति–अहमिति चतुर्भिः । यः क्रतुराधानाद्यश्वमेधान्तो यागः श्रुत्युक्तः सोऽहमेव । अद्वितीयार्थे एवकारः सर्वत्रान्वेति । यज्ञः औपासनादीशानबल्यन्तः स्मार्तोऽहमेव । क्रतुयज्ञयोरङ्गिनोर्ब्रह्मत्वे तदङ्गानां देवतायजमानादीनां

ब्रह्मत्वमेव बोद्धव्यम् । स्वधाशब्देन पितृभ्यो यत्क्रियते पार्वणश्राद्धादि तत्स्वधाशब्दितमहमेव । यत्प्राणिभिर्भुज्यते व्रीह्याद्यौषधिभ्यः समुत्पन्नमन्नं तदौषधमहमेव भोज्यस्य ब्रह्मत्वे भोक्तादीनां ब्रह्मत्वमेव सिद्धम् । येन देवताभ्यः पितृभ्यश्च स्वाहास्वधान्तेन हविर्दीयते स मन्त्रोऽहमेव । आज्यं चरुपुरोडाशाद्यहमेव । अग्निरप्यहमेव । हुतं हवनक्रियाचाप्यहमेव ॥ १६ ॥

**श्री० टी०**—सर्वात्मतां प्रपञ्चयति—**अहमिति चतुर्भिः** । क्रतुः श्रौतोऽग्निष्टोमादिः यज्ञस्तु स्मार्तः पञ्चमहायज्ञादिः स्वधा पित्रर्थे श्राद्धादिः औषधमोषधिप्रभवमन्नं भेषजं वा, मन्त्रो याज्यापुरोनुवाक्यादिः आज्यं होमादिसाधनम् अग्निराहवनीयादिः हुतं होमः एतत्सर्वमहमेव ॥ १६ ॥

**स० टी०**—बहुधोपासते ते चेत्कथं त्वामेव तत्पराः ॥ सेवन्त इत्यपेक्षायां प्राह स्वस्याखिलात्मताम् ॥१॥ श्रौतोऽध्वरोऽग्निष्टोमादिः क्रतुः स्मार्तस्तु यज्ञकः ॥ प्रसिद्धो वैश्वदेवादिर्महायज्ञतया स्मृतौ ॥ २ ॥ पितृभ्यो दीयमानं च यदन्नं तत्स्वधेरितम् ॥ प्राणिभिर्भुज्यमानं वा भेषजं वौषधं स्मृतम् ॥ ३ ॥ याज्या पुरोनुवाक्यादिमन्त्रो येनाध्वरे हविः ॥ देवेभ्यो दीयतेऽथाज्यं घृतं सर्वोपलक्षणम् ॥ ४ ॥ अग्निराहवनीयादिर्हविःप्रक्षेपणाश्रयः ॥ हुतं हवनमित्येतत्सर्वं विष्णुरहं हरिः ॥ ५ ॥ एतदेकैकविज्ञानमपि विष्णोरुपासनम् ॥ क्रियाकारकमुख्यं यत्सर्वं नास्ति हरेः पृथक् ॥ ६ ॥ १६ ॥

**भा० टी०**—ननु बहुभिः प्रकारैः यदि उपासते तर्हि कथं तेषां त्वदेकविषयमुपासनं सिध्यतीत्याशङ्क्य तत्तत्प्रकारभेदेन ध्यायन्तोऽपि मामेव ध्यायन्ति सर्वात्मकत्वान्ममेत्याशयेनाह—**अहमित्यादिना** । अहं क्रतुः श्रौतः कर्मभेदोऽहमेव । ननु क्रतुः संकल्पो देवताध्यानरूप इतिभाष्यकृद्भिः कुतो न व्याख्यातमिति चेत् यज्ञादिसमभिव्याहारादिति गृहाण । यज्ञः स्मार्तकर्मभेदो वैश्वदेवादिः सोऽप्यहमेव । पितृभ्यो यद्दीयतेऽन्नं तत्स्वधाशब्देन ग्राह्यं सर्वप्राणिभिर्यदद्यतेऽन्नं तदौषधं, यद्वा स्वधाशब्देन साधारणमन्नं गृह्यते औषधशब्देन व्याधिनिवर्तकमौषधं, येन पितृभ्यो देवेभ्यश्च हविर्दीयते स मन्त्र आज्यं हविः यस्मिन्हूयते सोऽग्निः हुतं हवनकर्म क्रियाकारकफलजातं मद्व्यतिरिक्तं नास्तीति समुदायार्थः ॥ १६ ॥

**प० टी०**—अथ सर्वरूपत्वं प्रपञ्चयति—**अहमिति चतुर्भिः** । तत्रापि बाह्यकर्मरूपत्वमादौ वदति । क्रतुः श्रौतो ज्योतिष्टोमादिर्यज्ञः स्मार्तः पञ्चमहायज्ञादिः स्वधा पित्रर्थं श्राद्धादिरौषधमोषधिप्रभवं भेषजमन्नं वा । मन्त्रः पुरोनुवाक्यादिराज्यं होमसाधनमग्निराहवनीयादिर्हुतं होम एतत्सर्वमहमेव ॥ १६ ॥

**रा० टी०**—ज्ञानं विज्ञानसहितं वक्ष्यामीति प्रतिज्ञातज्ञानविषयं निरूप्याधुना विज्ञानप्रदर्शनाय तद्विषयमाह—**अहं क्रतुरित्यादिचतुष्टयेन** । क्रतवः दीक्षाद्यवभृथान्तकर्मकलापाः ज्योतिष्टोमादयः यज्ञस्तु देवतोद्देशेन द्रव्यत्यागरूपं प्रधानं कर्म । कुरुपाण्डववत्सामान्यविशेषभावेन भेदो ज्ञेयः । स्वधा पितॄणां तिलोदकादिदानम् । अहं क्रतुरित्याद्यभेदोक्तिः रसोऽहमप्सु कौन्तेय इत्यादाविव क्रत्वादेः क्रतुत्वादिनियन्तृत्वेन क्रत्वङ्गहविरादिभोक्तृत्वादिना ध्येया ॥ १६ ॥

**पिताऽहमस्य जगतो माता धाता पितामहः ॥**
**वेद्यं पवित्रमोङ्कार ऋक्साम यजुरेव च ॥ १७ ॥**

**त० टी०**—**किंच—पितेति** । अस्य जगतः पितृत्वादिषु वर्तमानोऽहमेव । अत्र धातृशब्दो मातृपितृव्यतिरिक्ते उत्पत्तिप्रयोजके जनविशेषे वर्तते । वेद्यं ज्ञेयं वस्तु पवित्रं पावनमोङ्कारः प्रणवोऽहमेव । ऋगादिवेदाश्चाहमेव ॥ १७ ॥

**म० टी०**—**किंच—पितेति** । अस्य जगतः सर्वस्य प्राणिजातस्य पिता जनयिता, माता जनयित्री, धाता पोषयिता तत्तत्कर्मफलविधाता वा, पितामहः पितुःपिता, वेद्यं वेदितव्यं वस्तु, पूयतेऽनेनेति पवित्रं

पावनं शुद्धिहेतुर्गङ्गास्नानगायत्रीजपादि, वेदितव्ये ब्रह्मणि वेदनसाधनमोङ्कारः, नियताक्षरपादा ऋक्, गीतिविशिष्टा सैव साम, सामपदं तु गीतिमात्रस्यैवाभिधायकमित्यन्यत् । गीतिरहितमनियताक्षरं यजुः, एतत्रिविधं मन्त्रजातं कर्मोपयोगि । चकारादथर्वाङ्गिरसोऽपि गृह्यन्ते । एवकारोऽहमेवेत्यवधारणार्थः ॥१७॥

**शं० टी०–किंच–पितेति ।** " मायाशबलं ब्रह्म ब्रह्मणोऽव्यक्तमव्यक्तान्महान् महतोऽहंकारः अहंकारात्पञ्चतन्मात्राणि " इतिश्रवणादस्याकाशादिप्रपञ्चस्य पिता जनको भूतादिरहमेव । माताऽव्यक्तमपरा प्रकृतिरहमेव । पितामहोऽक्षरसंज्ञको मायोपाधिरीश्वरोऽहमेव । धाता पोष्टाऽहम् । यद्वेद्यं शब्दस्पर्शरूपादिलक्षणं वस्तु तत्सर्वमहमेव । अत्र यद्यत्पवित्रं शोधकं सूर्याग्निवाय्वबादि तत्सर्वमहमेव । ओंकारः परावरयोर्ब्रह्मणोर्वाचकः सोऽहमेव । ऋक्सामयजूंषि चकारादथर्वेतिहासपुराणादिकमहमेव ॥ १७ ॥

**श्री० टी०–किंच–पितेति ।** धाता कर्मफलविधाता, वेद्यं ज्ञेयं वस्तु, पवित्रं शोधकं प्रायश्चित्तात्मकं वा, ओङ्कारः प्रणवः, ऋग्वेदादयो वेदाश्च अहमेव । स्पष्टमन्यत् ॥ १७ ॥

**स० टी०–**सर्वस्य प्राणिजातस्य पिताऽस्य जगतोऽस्म्यहम् ॥ जनयित्री तथा कर्मफलदाता पितामहः ॥ १ ॥ वेदितव्यं पवित्रं च शुद्धिहेतुरहं हरिः ॥ ज्ञानसाधनमोंकारो नियताक्षरपादृक् ॥ २ ॥ साम गीतिविशिष्टा सा यजुर्ह्यनियताक्षरम् ॥ एतत्रिविधमत्रोक्तं श्रौतकर्मोपयोगि च ॥ ३ ॥ अथर्वाङ्गिरसोऽप्यत्र चाहृह्यन्तेऽहमस्मि ते ॥ ४ ॥ १७ ॥

**भा० टी०–किंच–पितेति ।** अस्य प्रत्यक्षादिसन्निधापितस्य जगतः स्थावरजङ्गमात्मकस्याहं पितोत्पादयिता, माता जनयित्री, धाता कर्मफलस्य प्राणिभ्यो विधाता, पितुः पिता पितामहः, वेद्यं वेदितव्यं ब्रह्मादि तद्वेदनसाधनमपि अहमेवेत्याह–पवित्रमित्यादि । पूयतेऽनेनेति पवित्रं पावनं यज्ञदानादि, ॐकारः प्रणवः, ऋक् ऋग्वेदः, एवमग्रेऽपि । चकारादथर्वाङ्गिरसो गृह्यन्ते ॥ १७ ॥

**प० टी०–**किंच सूक्ष्मप्रपञ्चरूपोऽप्यहमस्मीत्याह द्वाभ्याम्–**पितेति ।** पिता लिङ्गरूपो बीजप्रदत्वान्माता मानाश्रयत्वाद्धाता कर्मफलदाता वेद्यं ज्ञेयं वस्तु पवित्रं शोधकम् ॐकारो वाग्जोऽवाग्जश्चाहमृगादिवेदत्रयी चाहमेव ॥ १७ ॥

**रा० टी०–किंच–पितेति ।** अस्य जगतः पिता जनकः अहं माता धाता पोषकोऽहमिति सर्वत्रानुवृत्तिः । पितामहः पूज्यः वेद्यं ज्ञेयं वस्तु पवित्रं चाहमेव । यद्वा वेद्यपवित्रवस्तुनोर्वेद्यत्वपवित्रत्वप्रदत्वात्तथोच्यते । ॐकारादावोंकारत्वऋक्त्वादिनियन्तृत्वात्तद्वेद्यत्वादिना तदभेदो ध्येयः । यद्वा 'अर्च्यत्वादृक्समत्वाच्च' इत्यादिस्मृत्युक्तदिशा क्रत्वादिभिन्नस्य हरेर्योगवृत्त्या क्रत्वादिनामकत्वमिह ध्येयम् । तथाहि कृतिस्वरूपत्वात्क्रतुः । यदस्ति प्रामाणिकतया तज्जानातीति यज्ञनामा । स्वं स्वात्मानं धत्त इति स्वधा । उषदाहे कर्मणि घञ् । उषाः उष्टाः तापत्रयदग्धाः तेषां निधिरित्यौषधनामा । मानाज्ज्ञानात्त्रातीति मन्त्रनामा । आसमन्ताज्ज्यायस्त्वादाज्यनामा । अगस्य स्वतो गतिहीनस्य जगतो नेतेत्यग्निनामा । यज्ञादावाहूतत्वाद्धुतनामा । ॐ मित्यांक्रियत इत्योंकारः । अर्च्यत्वात्पूज्यत्वादृङ्नामा । सर्वरूपेषु समत्वात्सामनामा । याज्यत्वाद्यजुर्नामा ॥ १७ ॥

**गतिर्भर्ता प्रभुः साक्षी निवासः शरणं सुहृत् ॥**
**प्रभवः प्रलयः स्थानं निधानं बीजमव्ययम् ॥ १८ ॥**

**त० टी०–गतिरिति ।** गतिर्गम्यते इति गतिः फलं स्वर्गलोकादिः, भर्ता पोषको धारयिता वा, प्रभुर्नियन्ता, साक्षी साक्षाच्छुभाशुभकर्मद्रष्टा, निवासः निवासस्थानं, शरणमिष्टप्रापकतयाऽनिष्टनिवारकतया रक्षकः, सुहृत् हिताशंसी, प्रभवः प्रकर्षेण भवति कार्यमनेनेति प्रभवः स्रष्टा, प्रलीयतेऽनेनेति

**प्रलयः संहर्ता, तिष्ठत्यस्मिन्निति स्थानमाधारः, निधीयते भोगाऽयोग्यतया क्षिप्यतेऽस्मिन्निति निधानं प्रलयस्थानं, तथाऽव्ययं बीजं परं व्ययरहितं तत्तत्कारणं तत्सर्वमहमेव ॥ १८ ॥**

**म० टी०—किंच—गतिरिति ।** गम्यत इति गतिः कर्मफलम् 'ब्रह्मा विश्वसृजो धर्मो महानव्यक्तमेव च । उत्तमां सात्त्विकीमेतां गतिमाहुर्मनीषिणः' इत्येवं मन्वाद्युक्तं, भर्ता पोष्टा सुखसाधनस्यैव दाता, प्रभुः स्वामी मदीयोऽयमिति स्वीकर्ता साक्षी सर्वप्राणिनां शुभाशुभद्रष्टा, निवसन्त्यस्मिन्निति निवासो भोगस्थानं, शीर्यते दुःखमस्मिन्निति शरणं प्रपन्नानामार्तिहृत् , सुहृत् प्रत्युपकारानपेक्षः सन्नुपकारी, प्रभव उत्पत्तिः,प्रलयो विनाशः, स्थानं स्थितिः, यद्वा प्रकर्षेण भवन्त्यनेनेति प्रभवः स्रष्टा, प्रकर्षेण लीयन्तेऽनेनेति प्रलयः संहर्ता, तिष्ठन्त्यस्मिन्निति स्थानमाधारः, निधीयते निक्षिप्यते तत्कालभोगायोग्यतया कालान्तरोपभोग्यं वस्त्वस्मिन्निति निधानं सूक्ष्मरूपसर्ववस्त्वधिकरणं प्रलयावस्थानमिति यावत् शङ्खपद्मादिनिधिर्वा, बीजमुत्पत्तिकारणमव्ययमविनाशि नतु व्रीह्यादिवद्विनश्वरं, तेनानाद्यनन्तं यत्कारणं तदप्यहमेवेति पूर्वेणैव संबन्धः ॥ १८ ॥

**शं० टी०—किंच—गतिरिति ।** गतिर्गम्यते कर्मणा प्राप्यत इति गतिः कर्मफलं स्वर्गादिरहमेव । भर्ता धर्ता जगतः कूर्मादिरहमेव । प्रभुर्नियन्ताहमेव । प्राणिकृतकर्मणां साक्षी आदित्यचन्द्रावनलोऽनिलश्चेत्युक्तः सूर्यादिरहमेव । सर्वाणि भूतानि यस्मिन्निवसन्ति स निवासो भूतधात्र्यहमेव । आर्तानां शरणमार्तिहन्ताऽहमेव । सुहृत् दययैव प्राणिनामुपकर्ता चन्द्रः पर्जन्यो वायुर्वा सोऽहमेव । प्रभवः प्रभवत्यस्मात्सर्वमिति प्रभवः सर्वजगत्सृष्टिकारणं यः सोऽहमेव । प्रलयः सर्वस्य प्रकृष्टो लयो यस्मात्स प्रलयः सर्वजगत्संहर्तापि यः सोऽहमेव । स्थानमिति गर्भितणिजन्तं नाशदशापन्नं सर्वं यः स्थापयति स स्थानं स्थितिकारणमहमेव । निधानं निधीयते सर्वमस्मिन्निति निधानं कार्यकारणप्रपञ्चाधिष्ठानमहमेव । ज्ञानेन विनान्येन न व्येति न नश्यतीत्यव्ययं नाशरहितं जगद्बीजमव्याकृताख्यमप्यहमेव ॥ १८ ॥

**श्री० टी०—किंच—गतिरिति ।** गम्यत इति गतिः फलम् , भर्ता पोषणकर्ता, प्रभुः नियन्ता, साक्षी शुभाशुभद्रष्टा, निवासः भोगस्थानम् , शरणं रक्षकः, सुहृद्धितकर्ता प्रकर्षेण भवत्यनेनेति प्रभवः स्रष्टा, प्रलीयतेऽनेनेति प्रलयः संहर्ता, तिष्ठत्यस्मिन्निति स्थानमाधारः, निधीयतेऽस्मिन्निति निधानं लयस्थानं, बीजं कारणं तथाप्यव्ययमविनाशि न तु व्रीह्यादिबीजवन्नश्वरमित्यर्थः ॥ १८ ॥

**स० टी०—**गतिः कर्मफलं भर्ता पोष्टा शोभनसाधनैः ॥ प्रभुः स्वामी मदीयोऽयमिति स्वीकारसंमुखः ॥ १ ॥ साक्षी शुभाशुभद्रष्टा सर्वेषां प्राणिनां सदा ॥ भोगस्थानं निवासः स्याच्छरणं चार्तिहृत्सताम् ॥२॥ सुहृत्प्रत्युपकारानपेक्षः सन्नुपकारकः ॥ उत्पत्तिस्थितिरन्तो वा त्रयः स्रष्ट्रादयोऽथवा ॥ ३ ॥ कालान्तरोपभोगार्हवस्त्वाधारो निधानकम् ॥ निधिर्वा पद्मशङ्खादिर्बीजमुत्पत्तिकारणम् ॥ ४ ॥ अनाद्यनन्तमेवाहं सर्वं मत्तः पृथङ्न च ॥ ५ ॥ १८ ॥

**भा० टी०—किंच—गतिरिति ।** गतिः कर्मणः साक्षात्परंपरया च फलं स्वर्गादि भर्ता कर्मफलप्रदानेन पोषणकर्ता, प्रभुः सर्वस्य नियन्ता स्वामीति यावत्, साक्षी प्राणिनां शुभाशुभयोः पक्षपातविनिर्मुक्तमनुद्रष्टा, निवसन्ति प्राणिनोऽस्मिन्निवासः प्राणिवासस्थानमित्यर्थः निवसन्ति भोगाय प्राणिनोऽस्मिन्निति निवासो भोगस्थानमिति वा, शीर्यते दुःखमस्मिन्निति शरणमार्तानां मत्प्रपन्नानां पीडाहरः, सुहृत्प्रत्युपकारनिरपेक्षः सन् उपकारकर्ता, प्रभवनमिति प्रभव उत्पत्तिः, प्रलीयते विश्वमस्मिन्निति प्रलयः, यद्वा प्रकर्षेण भवत्यनेनेति प्रभवः स्रष्टा, प्रलीयतेऽनेनेति प्रलयः संहर्ता, भाष्यस्योपलक्षणार्थत्वादविरोधः तिष्ठत्यस्मिन् स्थितिकाले विश्वमिति स्थानं, निधीयते निक्षिप्यते कालान्तरोपभोग्यं प्राणिनां कर्मफलमस्मिन्निति निधानं शङ्खपद्मादिनिधिर्वा, भाष्यं तूपलक्षणार्थमित्युक्तमेव । बीजं प्ररोहधर्मिणां वस्तूनां प्ररोहकारणमव्ययं यावत्संसारभावित्वात्, नह्यबीजं किंचि-

त्प्ररोहति प्ररोहदर्शनाद्बीजसंततेर्नित्यत्वमिति गम्यते । अव्ययमविनाशि नतु व्रीह्यादिबीजवत् विनश्वरमिति वा । आचार्यैस्तु बीजशब्देन भगवतः सार्वात्म्यप्रतिपादकप्रकरणे पठितेन बीजमात्रं गृह्यते इत्यभिप्रायेणाव्ययपदस्य तत्रोपपत्तिर्दर्शिता । बीजशब्देन जगद्बीजस्य ब्रह्मण उपादाने तु अव्ययपदस्योपपन्नत्वेन सुगमत्वाद्ब्रह्मणः परमकारणतया उक्तत्वाच्चायं पक्ष उपेक्षित इति ध्येयम् । गत्यादिकं सर्वमहमेवेत्यर्थः ॥ १८ ॥

प० टी०–किंच–गतिरिति । गम्यतेऽनेनेति गतिश्चरणव्यापारहेतुर्भर्ता पोषयिता, प्रभुर्नियन्ता, साक्षी शुभाशुभद्रष्टा, निवासो भोगस्थानं, शरणं रक्षकः, सुहृत्प्रियतमः, प्रकृष्ट उत्तमो भवश्चरमदेहो यस्मात्, प्रकर्षेण लयोऽपुनर्भवो यस्मात्, निधीयते यस्मिन्निति निधानं, बीजं कारणं तच्चाव्ययमविनाशि न तु व्रीह्यादिबीजवन्नश्वरमित्यर्थ ॥ १८ ॥

रा० टी०–गतिरिति । मुमुक्षुभिरवगम्यत्वाद्गतिः, भर्ता पोषकः, प्रभुः स्वामी, साक्षात्सर्वमीक्षते इति साक्षी निवासः आश्रयः, शरणं भीतरक्षकः मुक्ताश्रय इतियावत्, सुहृदनिमित्तोपकारी, प्रभवः जगदुत्पत्तिकर्ता, प्रलयकर्तृत्वात्प्रलयोऽहम् । स्थानं सर्वाधारोहम् । नितरां धारकत्वाद्वा प्रलयकाले प्रकृत्यादिजगदत्र निधीयत इति वा निधानं प्रकृतिं प्राप्य पश्चात्तया हरौ निधीयत इत्यर्थः । तेन प्रकृतिं यान्ति भूतानीत्युक्त्यविरोधः । जगद्व्यञ्जकत्वाद्बीजं तथात्वेऽप्यविकारित्वप्रदर्शनायोक्तमव्ययमिति ॥ १८ ॥

**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च ॥**
**अमृतं चैव मृत्युश्च सदसच्चाहमर्जुन ॥ १९ ॥**

**त० टी०–आदित्यरूपेण ग्रीष्मेऽहमेव तपामि तापयामि । वर्षं पूर्ववृष्ट्यवशिष्टं रसं पृथिव्या निगृह्णामि शोषयामीत्यर्थः । तमेव निगृहीतं रसं पुनर्बहुगुणमुत्सृजामि च । अमृतं प्राणिनां जीवनं चाहमेव । मृत्युः प्राणिनां विनाशश्चाहम् । सदसच्च स्थूलं सूक्ष्मं चैतत्सर्वमहमेव । हे अर्जुन एवं सर्वात्मानं मामेव ज्ञात्वा यथाधिकारमेकधा बहुधा च मामेवोपासते इति पूर्वोक्तमुपसंहृतम् ॥ १९ ॥**

म० टी०–किंच–तपाम्यहमिति । तपाम्यहमादित्यः सन् ततश्च तापवशादहं वर्षं पूर्ववृष्टिरूपं रसं पृथिव्या निगृह्णाम्याकर्षामि । कैश्चिद्रश्मिभिरष्टसु मासेषु पुनस्तमेव निगृहीतं रसं चतुर्षु मासेषु कैश्चिद्रश्मिभिरुत्सृजामि च वृष्टिरूपेण प्रक्षिपामि च भूमौ अमृतं च देवानां सर्वप्राणिनां जीवनं वा । एवकारस्याहमित्यनेन संबन्धः । मृत्युश्च मर्त्यानां सर्वप्राणिनां विनाशो वा सत् यत्संबन्धितया यद्विद्यते तत्तत्र सत्, असच्च यत्संबन्धितया यन्न विद्यते तत्तत्रासत्, एतत्सर्वमहमेव । हे अर्जुन तस्मात्सर्वात्मानं मां विदित्वा स्वस्वाधिकारानुसारेण बहुभिः प्रकारैर्मामेवोपासत इत्युपपन्नम् ॥ १९ ॥

शं० टी०–किंच–तपामीति । आदित्यरूपोऽहं वसन्तग्रीष्मयोस्तपामि जगतस्तापक्रियां करोमि, जगत्सर्वं तापयामीत्यर्थः । कार्तिकाद्यष्टौ मासान वर्षं निगृह्णामि । वर्षासु चतुरो मासान्वर्षमुत्सृजामि । चकारादतिवृष्ट्यनावृष्टिभ्यां सुभिक्षं दुर्भिक्षं च करोमि । न म्रियन्ते येन देवतास्तदमृतमहमेव । म्रियन्ते प्राणिनो येन स मृत्युरहमेव । यदिदमस्तीतिनाम्ना रूपेण च निर्दिश्यते तद्व्यक्तं नामरूपात्मकं कार्यं सदित्युच्यते, तद्विलक्षणमव्यक्तं नामरूपकारणमसदित्युच्यते, तदुभयं सच्चाऽसच्चाहमेव चकारस्तयोरुभयोः सदसतोर्व्यक्ताव्यक्तयोर्निषेधे कृते तन्निषेधावधित्वेन स्थितं कार्यकारणभावविकलं निर्विषयं निर्विशेषं यत्परं वस्तु तदहमिति सूचनार्थः । एतेन क्रतुयज्ञादेः सदसदन्तस्य वस्तुनः सर्वस्य ब्रह्मस्वरूपत्वान्मुमुक्षुभिर्ब्रह्मबुद्ध्या यद्यद्वस्तूपास्यते तत्तदात्मना तूपास्यब्रह्मत्वान्मुमुक्षोश्चित्तशुद्धिः क्रमान्मोक्षसिद्धिश्च भवतीति सूचितम् । नन्वब्रह्मणि ब्रह्मबुद्ध्या क्रियमाणोपास्तिः कथं फलाय भवति कथं वा दृश्यं ब्रह्म भविष्यतीति चेद्भवानत्र प्रष्टव्यः, दृश्यं नाम यत्किं-

चिद्वस्त्वस्ति वा न वेति । न द्वितीयः, सर्वव्यवहारलोपप्रसङ्गात् । आद्ये दृश्यं वस्तु सद्रूपेणास्ति वा किम सद्रूपेणेति । न द्वितीयः, शशविषाणकल्पस्यासतो वस्तुनोऽस्तीतिनिर्देशायोगात् । तर्हि सद्रूपेणैवेति चेत्तत्त्वे सर्वं ब्रह्मैव ब्रह्मातिरिक्तस्य सत्त्वाभावात् । ननु सर्वस्य ब्रह्मत्वे घटपटादेर्नाशे सति ब्रह्मणोऽपि नाश प्रसङ्ग इति चेन्न, नाशस्य भ्रमकल्पितव्याप्यांशविषयत्वात्, यथा दण्डादिना कल्पितकम्बुग्रीवाद्याकारवतो घटस्यैव व्याप्यांशस्य नाशो दृश्यते ननु मृदो व्यापकांशस्य तथा भ्रमकल्पितनामरूपादेरेव व्याप्यांशस्य नाशो न तु व्यापकांशस्य सतः तन्नाशे दृश्याभावभानाभावप्रसङ्गात्ततो दृश्यं च दृश्याभावश्च सदात्मनैव तिष्ठतः सर्वं ब्रह्मैवेति सिद्धम् । तेनेष्टे वस्तुनि ब्रह्मबुद्धया कृतोपास्तिः फलायैव भवति भावनानुरूपत्वात्फलसिद्धेः ॥ १९ ॥

**श्री० टी०—**किंच—**तपामीति** । आदित्यात्मना स्थित्वा निदाघसमये तपामि जगतस्तापं करोमि । वृष्टिसमये च वर्षमुत्सृजामि विमुञ्चामि । कदाचित्तु वर्षं निगृह्णामि आकर्षामि । अमृतं जीवनं मृत्युश्च नाशः सत्स्थूलं दृश्यम् असच्च सूक्ष्ममदृश्यम् एतत्सर्वमहमेवेति मत्वा मामेव बहुधा उपासत इति पूर्वेणैवान्वयः॥१९॥

**स० टी०—**आदित्यः संस्तपामीदं ततस्तापवशादहम् ॥ वर्षं पूर्वरसं भूमेराकर्षाम्यर्करश्मिभिः ॥ १ ॥ कैश्चिदष्टासु मासेषु निगृहीतं रसं पुनः ॥ कैश्चिच्चतुर्षु मासेषु वृष्ट्या भूमौ क्षिपाम्यहम् ॥ २ ॥ देवानाममृतं सर्वप्राणिनां जीवनं च वा ॥ मर्त्यानां मृत्युरथवा विनाशः सर्वदेहिनाम् ॥ ३ ॥ अधिष्ठानतया यत्सदसदध्यस्तमस्ति यत् ॥ एतत्सर्वमहं मत्तः पृथङ्नैवास्ति किंचन ॥ ४ ॥ सर्वात्मानं विदित्वा मां स्वाधिकारानुसारतः ॥ एवं प्रकारैर्बहुभिर्मामेवोपासते बुधाः ॥ ५ ॥ १९ ॥

**भा० टी०—**किंच—**अहमिति** । अहमादित्यो भूत्वा कैश्चित्किरणैः ग्रीष्मर्तौ तपामि । कैश्चित्किरणैरहं वर्षं पूर्वं मयैव त्यक्तमष्टसु मासेषु निगृह्णामि । कैश्चित्किरणैरहं वर्षं पुनर्वर्षासूत्सृजामि । अमृतं चैव देवानामहमेव । मर्त्यानां मृत्युश्चाहमेव । सदसच्चाहमेव । यस्य कारणस्य संबन्धितया यत्कार्यं नामरूपाभ्यां व्यज्यते तदत्र सच्छब्देनोपादीयते कारणासंबन्धेन नामरूपाभ्यामनभिव्यक्तं कारणात्मना स्थितमसमदित्युच्यते । ननु सदसच्छब्दयोर्मुख्यार्थः कुतो नाङ्गीक्रियते इति चेत्, 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् । तदनन्यत्वमारम्भणशब्दादिभ्यः । विमतं मिथ्यादृश्यत्वात् परिछिन्नत्वात् जडत्वात् शुक्तिरूप्यवत् । तरति शोकमात्मवित् " इति श्रुत्युक्तबन्धोपलक्षितसंसारनिवृत्तेः प्रपञ्चमिथ्यात्वं विनानुपपत्तिरिति श्रुतिसूत्रानुमानार्थापत्तिभ्यः कार्यजातस्यासत्त्वावधारणात् सर्वाधिष्ठानस्य शून्यत्वायोगाच्चेति गृहाण । एवंभूतः सन्नपि वस्तुतः सर्वोपाधिविनिर्मुक्तः स्वच्छ एवास्मीति ध्वनयन् संबोधयति—हे **अर्जुनेति** ॥ १९ ॥

**प० टी०—**अथ स्थूलप्रपञ्चरूपोऽप्यहमेवेत्याह—**तपामीति** । कदाचित्प्रलयकाले द्वादशादित्यरूपेण तपामि भूतजातं शोषयामि । श्रुतिरपि नारायणोपनिषत्सु " आर्द्रं ज्वलति ज्योतिरहमस्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि " इत्यादि । भाष्यम्—प्रलयकाले आर्द्रं शुक्रशोणितोद्भवं प्राणिजातं ज्वलति द्वादशादित्यरूपेण संकर्षणमुखानलेन दह्यते तदा ज्योतीरूपस्तैजसो विराडस्मि । अथ यदा ज्योतिः सोऽपि ज्वलति तदा लिङ्गरूपं ब्रह्माहमस्मि । तथा वर्षं पर्जन्यं निगृह्णाम्याकर्षयाम्याकर्षणं करोमि । पुनः सृष्टिकाले वर्षं पर्जन्यमुत्सृजामि मुञ्चामि । अमृतं जीवनमहमेव मृत्युः क्रमप्राप्तः । एवमुपसंहरति—सदिति । सद्व्यवहारसत् स्थूलप्रपञ्चरूपमसत् सूक्ष्मप्रपञ्चरूपमहमेव ॥ १९ ॥

**रा० टी०—**किंच—**तपामीति** । अहमादित्यस्थस्तपामि तापं करोमि । मेघचक्रगतः सन्वर्षं वृष्टिमुत्सृजामि । निगृह्णामि उपसंहरामि । अहमिन्द्रियेषु स्थित्वा तेषां देहधारणेन मृतिं परिहरतीति हेतोरमृतमहम् । प्रलयकालादन्यकाले संहर्तृत्वान्मृत्युरहम् । सत्कार्यजातमहम् । असच्च कारणजातमहमेव । तन्नियन्तृत्वादे-

रभेदोक्तिः । अहमित्यसकृदुक्तिरुपचारनिवृत्त्यर्था । यद्वा साधुगुणपूर्णत्वात्सदित्युक्तोऽहम् । साधुगुणपूर्णपुरुषान्तरराहित्यादसदित्युक्तोऽहमेवेत्यर्थः ॥ १९ ॥

**त्रैविद्या मां सोमपाः पूतपापा यज्ञैरिष्ट्वा स्वर्गतिं प्रार्थयन्ते ॥**
**ते पुण्यमासाद्य सुरेन्द्रलोकमश्नन्ति दिव्यान् दिवि देवभोगान् ॥ २० ॥**

**त० टी०**—तदेवं भगवन्तमवजानतामभक्तानां राक्षस्यादिप्रकृतिनिरूपणेन तदनुरूपं फलमप्यर्थादुक्तम्। ततो ज्ञानभक्तिनिष्ठानां महात्मनां भक्तानां दैवीप्रकृतिनिरूपणेन भगवदनुग्रहफलं ज्ञेयम्। इदानीं येन भगवद्विरोधिनो न वा भक्ताः, किंतु स्वर्गादिफलकामुकाः केवलेन्द्रादिदेवभक्तास्तेषामिहामुत्र गतागतमेव फलमित्याह द्वाभ्याम्—त्रैविद्या इति । ऋग्यजुःसामाख्यास्तिस्रो विद्याः स्वाभीष्टार्थबोधिका येषां ते त्रिविद्यास्त्रिविद्या एव त्रैविद्याः वेदत्रय्युक्तकर्मनिष्ठा नतु त्रिविद्याशिरस्कोपनिषन्निष्ठा इत्यर्थः। वेदत्रयविहितैर्यज्ञैरग्निष्टोमादिभिर्वस्तुतो मामिन्द्रादिरूपमिष्ट्वा तथा मामजानन्तः केवलमिन्द्रादिबुद्ध्या पूजयित्वा यज्ञशेषं सोमं पिबन्तीति सोमपास्तत एव पूतपापाः स्वर्गादिविरोधिपापान्निर्मुक्ताः सन्तः स्वर्गगतिं स्वर्गप्राप्तिमेव गतिं यज्ञफलं ये प्रार्थयन्ते ते पुण्यफलरूपं सुरेन्द्रलोकमासाद्य दिवि स्वर्गे दिव्यान् दिवि भवान् देवसंबन्धिभोगानश्नन्ति भुञ्जते ॥ २० ॥

**म० टी०**—एवमेकत्वेन पृथक्त्वेन बहुधा चेति त्रिविधा अपि निष्कामाः सन्तो भगवन्तमुपासीनाः सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेण क्रमेण मुच्यन्ते । ये तु सकामाः सन्तो न केनापि प्रकारेण भगवन्तमुपासते किंतु स्वस्वकामसाधनानि काम्यान्येव कर्माण्यनुतिष्ठन्ति ते सत्त्वशोधकाभावेन ज्ञानसाधनमनधिरूढाः पुनः पुनर्जन्ममरणप्रबन्धेन सर्वदा संसारदुःखमेवानुभवन्तीत्याह द्वाभ्याम्—**त्रैविद्या मामिति** । ऋग्वेदयजुर्वेदसामवेदलक्षणा हौत्राध्वर्यवौद्गात्रप्रतिपत्तिहेतवस्तिस्रो विद्या येषां ते त्रिविद्याः त्रिविद्या एव स्वार्थिकतद्धितेन त्रैविद्यास्तिस्रो विद्या विदन्तीति वा, वेदत्रयविदो याज्ञिका यज्ञैरग्निष्टोमादिभिः क्रमेण सवनत्रये वसुरुद्रादित्यरूपिणं मामीश्वरमिष्ट्वा तद्रूपेण मामजानन्तोऽपि वस्तुवृत्तेन पूजयित्वा अभिष्टुत्य हुत्वा च सोमं पिबन्तीति सोमपाः सन्तस्तेनैव सोमपानेन पूतपापा निरस्तस्वर्गभोगप्रतिबन्धकपापाः सकामतया स्वर्गतिं प्रार्थयन्ते नतु सत्त्वशुद्धिज्ञानोत्पत्त्यादि ते दिवि स्वर्गे लोके पुण्यं पुण्यफलं सर्वोत्कृष्टं सुरेन्द्रलोकं शतक्रतोः स्थानमासाद्य दिव्यान् मनुष्यैरलभ्यान् देवभोगान् देवदेहोपभोग्यान् कामानश्नन्ति भुञ्जते ॥ २० ॥

**शं० टी०**—एवं मुमुक्षूणां मन्दबुद्धीनामुपास्तिसिद्ध्यै ऋत्वाद्यसदन्तं सर्वमहमेवेति सर्वस्य स्वमात्रत्वं प्रतिपाद्य राजविद्येत्यत्र ब्रह्मविद्याव्यतिरिक्तानां विद्यानां सकलवेदशास्त्राध्ययनजनितानां यदुक्तं संसारवर्धकत्वमेव तदेवाश्रद्दधानाः पुरुषा इत्यत्र निरूप्याधुनापि मुमुक्षूणां विवेकसिद्ध्यै पुनः प्रतिपादयति—**त्रैविद्या इति** द्वाभ्याम् । ऋग्यजुःसामरूपास्तिस्रश्च ता विद्याश्च त्रिविद्यास्ता ये अधीयन्ते ते त्रैविद्या ऋग्यजुःसामाध्ययनवन्तस्तदर्थज्ञानवन्तोऽपि ये कामिनः स्वयं सोमपाः सोमं पिबन्तीति सोमपाः तत एव पूतपापाः पूतानि निर्गतानि बहुविधानि पापानि येषां ते पूतपापाः सन्तो यज्ञैरग्निष्टोमातिरात्रादिभिः क्रतुभिः अष्टौ वसव एकादश रुद्राः द्वादशादित्याः प्रजापतिश्च वषट्कारश्चेत्युक्तदेवतास्वरूपं मां परमेश्वरमिष्ट्वा सम्यगाराध्य स्वर्गतिं स्वर्गप्राप्तिं प्रार्थयन्ते "स्वर्गे लोके न भयं किंचनास्ति । स्वर्गलोका अमृतत्वं भजन्ते" इति स्वर्गफलं श्रुत्वा स्वर्गो मे भूयादिति स्वर्गसुखमेव कामयन्ते ते स्वर्गकामाः पुण्यमग्निष्टोमादि पुण्यकर्मफलं सुरेन्द्रलोकं स्वर्गस्थानमासाद्य तत्र दिवि स्वर्गे दिव्यान्स्वर्गीयान्देवभोगान्देवानां ये भोगाः यच्छरीरं यद्योग्यं यत्सुखं तादृशानेव भोगान्सुखविशेषान् देवैः प्रापितान्वा देवभोगानश्नन्ति

अनुभुञ्जते ' यावत्संपातमुषित्वा ' इतिन्यायेन यावत्पुण्यफलानुभूतिनिर्णयस्तावत्पर्यन्तं स्वर्गभोगाननुभवन्तीत्यर्थः ॥ २० ॥

**श्री० टी०**—तदेवमवजानन्ति मां मूढा इत्यादिश्लोकद्वयेन क्षिप्रफलाशया देवतान्तरं भजन्तो मां नाद्रियन्त इत्यभक्ता दर्शिताः । महात्मानस्तु मां पार्थेत्यादिना च मद्भक्ता उक्ताः, तत्रैकत्वेन पृथक्त्वेन वा परमेश्वरं श्रीवासुदेवं ये न भजन्ति तेषां जन्ममृत्युप्रवाहो दुर्वार इत्याह द्वाभ्याम्—**त्रैविद्या मामिति** । ऋग्यजुःसामलक्षणास्तिस्रो विद्या येषां ते त्रिविद्याः त्रिविद्या एव त्रैविद्याः स्वार्थे तद्धितः तिस्रो विद्या अधीयते जानन्तीति वा त्रैविद्याः वेदत्रयोक्तकर्मपरा इत्यर्थः । वेदत्रयविहितैर्यज्ञैर्मामिष्ट्वा ममैव रूपं देवतान्तरमित्यजानन्तोऽपि वस्तुत इन्द्रादिरूपेण मामेवेष्ट्वा संपूज्य यज्ञशेषं सोमं पिबन्तीति सोमपाः तेनैव पूतपापाः शोधितकल्मषाः सन्तः स्वर्गतिं स्वर्गं प्रति गतिं ये प्रार्थयन्ते ते पुण्यफलरूपं सुरेन्द्रस्य लोकं स्वर्गमासाद्य प्राप्य दिवि स्वर्गे दिव्यानुत्तमान् देवानां भोगानश्नन्ति भुञ्जते ॥ २० ॥

**स० टी०**—एकत्वेन पृथक्त्वेन बहुधेति त्रिधा जनाः ॥ निष्कामाः समुपासीना भगवन्तमधोक्षजम् ॥ १ ॥ धीशुद्ध्या तत्त्वबोधाप्तिद्वारा मुच्यन्त एव ते ॥ ये सकामाः कथंचिन्न भगवन्तमुपासते ॥ २ ॥ किंतु काम्यानि कर्माण्यनुतिष्ठन्ति स्वकामतः ॥ ते सत्त्वशुद्ध्यभावेन तत्त्वज्ञानपराङ्मुखाः ॥ ३ ॥ पुनः पुनर्जरामृत्युप्रवन्धेनैव सर्वदा ॥ संसारदुःखभाजः स्युरित्याह भगवान् स्वयम् ॥ ४ ॥ तिस्रो विद्या ऋगाद्या हि हौत्रादिज्ञानहेतवः ॥ सन्ति येषां त्रिविद्यास्ते त्रैविद्याः स्वार्थतद्धितात् ॥ ५ ॥ तिस्रो विद्या विदन्तीति याज्ञिका वाध्वरैः क्रमात् ॥ अग्निष्टोमादिभिस्ते मा वस्वाद्यात्मानमीश्वरम् ॥ ६ ॥ तथात्वेनाप्यजानन्तः पूजयित्वा हि वस्तुतः ॥ अभिषुत्य हुत्वा सोमं पिबन्तीति च सोमपाः ॥ ७ ॥ तेनैव ध्वस्तस्वर्गाप्तिप्रतिबन्धककल्मषाः ॥ स्वर्गतिं प्रार्थयन्ते ते न तु धीशुद्धिमाकुलाः ॥ ८ ॥ ते स्वपुण्यफलं प्राप्य लब्ध्वा स्थानं शतक्रतोः ॥ देवदेहोपभोग्यांश्च कामानश्नन्ति नाकगान् ॥ ९ ॥ २० ॥

**भा० टी०**—एवं ये सततं कीर्तयन्तः यतन्तश्च दृढव्रताः नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ज्ञानयज्ञेन एकत्वेन पृथक्त्वेन बहुधा चोपासते इति पूर्वोक्तैर्वृत्तिप्रकारैः मां पूजयन्तस्ते साक्षात्परंपरया च मामेव प्राप्नुवन्तीत्यर्थादुक्ते इदानीमज्ञानां भगवद्भक्तिवर्जितानां केवलकर्मजडानां स्वर्गप्राप्त्यापि संसारानिवृत्तिरित्याह—**त्रैविद्या इत्यादिना** । ऋग्यजुःसामवेदप्रतिपादितकर्ममात्रज्ञाः याज्ञिकाः सोमं पिबन्तीति सोमपास्तेनैव सोमपानेन पूतानि पापानि स्वर्गप्रतिबन्धकानि येषां ते शुद्धकिल्बिषा धूतपापा इति यावत्, यज्ञैरग्निष्टोमादिभिर्मामिन्द्रवस्वादिरूपिणमजानन्तोऽपि वस्तुवृत्त्या तद्रूपिणं मामिष्ट्वा पूजयित्वा ये स्वर्गतिं स्वर्गगमनं गम्यत इति गतिः फलं स्वरेव गतिरिति वा, तां प्रार्थयन्ते ते च पुण्यं पुण्यफलं सुरेन्द्रस्य देवराजस्य पुरंदरस्य लोकं स्वर्गलोकमासाद्य संप्राप्य दिवि स्वर्गे दिव्यान् दिवि भवान् देवभोगान् देवैर्भोक्तुं योग्यान् भोगानश्नन्ति भुञ्जते ॥ २० ॥

**प० टी०**—अथैकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखमित्यादिप्रकारेण ये न भजन्ति तेषां जन्ममृत्युप्रवाहो दुर्वार इत्याह द्वाभ्याम्—**त्रैविद्या इति** । ऋग्यजुःसामलक्षणास्तिस्रो विद्यास्तास्तु कर्मफलप्रशंसनभागस्त्रैविद्यं तदनुष्ठातारस्त्रैविद्याः यज्ञावशेषीभूतं वल्लीरूपं सोमं पिबन्ति ते सोमपाः पूतपापाः शोधितकल्मषाः सन्तो मामिन्द्रादिदेवतारूपिणमिष्ट्वा पूजयित्वा स्वर्गलोकप्राप्तिं प्रार्थयन्ते ते पुण्यं पुण्यफलप्रदं सुरेन्द्रलोकमासाद्य प्राप्य दिवि स्वर्गे दिव्यान् देवोपभोग्यान् भोगानश्नन्ति भुञ्जते ॥ २० ॥

**रा० टी०**—ननु सर्वयज्ञादिभोक्तृत्वादिनाहं क्रतुरित्याद्युक्तिरिति प्रथमव्याख्यानं यत्तदयुक्तं तथात्वे त्रैविद्यकृतयज्ञभोक्तृत्वस्यापि प्राप्त्या तेषां भागवतानां च फलभेदो न स्यात् भगवद्भोगनिमित्तकत्वात्कर्मफलस्य

तस्य च सर्वत्र साम्यात् । इतो भागवतानुष्ठितभगवद्भजनस्य त्रैविद्यकृतयज्ञफलादप्यतिशयितफलमाह—**त्रैविद्येत्यादित्रयेण** । तिस्रो विद्या ऋग्यजुःसामलक्षणा येषां ते त्रिविद्याः त एव त्रैविद्याः । विष्णुं सर्वोत्तमं ज्ञात्वापि त्रय्यां मुखतः प्रतीयमानस्वर्गाद्युद्देश्यकान्यदेवतायजनं बुद्ध्वा तथैवानुष्ठायान्ते विष्णौ समर्पणं कुर्वन्तस्त्रैविद्याः मां यज्ञैरिष्ट्वान्ते मयि समर्प्य सोमपाः हुतशेषसोमरसपानवन्तोऽत एव पूतपापाः शोधितकल्मषाः सन्तः स्वर्गतिं स्वर्गमार्गं स्वराख्यप्राप्यं वा प्रतिमां प्रार्थयन्ते ते पुण्यं पुण्यलभ्यं सुरेन्द्रलोकं स्वर्गमासाद्य प्राप्य दिवि स्वर्गे दिव्यान् द्युलोकभवान् अलौकिकानिति वा भोगानश्नन्ति भुञ्जते ॥ २० ॥

**ते तं भुक्त्वा स्वर्गलोकं विशालं क्षीणे पुण्ये मर्त्यलोकं विशन्ति ॥**
**एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ॥ २१ ॥**

**त० टी०—ततश्च—ते तं भुक्त्वेति** । ते स्वर्गकामा इह यज्ञोद्भूतपुण्येन यत्प्रार्थितं तं विशालं विस्तीर्णं स्वर्गलोकं तज्जन्यं सुखं भुक्त्वा तद्भोगप्रापके पुण्ये क्षीणे सति पुनः पुण्योपचयाय मर्त्यलोकं कर्मभूमिं प्रविशन्ति, पुनर्गर्भवासादिदुःखानुभवपूर्वकं पुनरेवमुक्तप्रकारेण त्रयीधर्मं वेदत्रय्या प्रतिपादितं धर्ममनुप्रपन्ना अनुसृताः कामकामाः कामान्भोगान्कामयमाना गतागतं लभन्ते कर्म कृत्वा तत्फलभोगाय स्वर्गं यान्ति तत्र तत्सुखं भुक्त्वा क्षीणपुण्याः पुनरिहागत्य कर्म कुर्वन्तीत्येवं जन्ममरणरूपसंसारप्रवाहमनिशमनुभवन्तीत्यर्थः ॥ २१ ॥

**म० टी०**—ततः किमनिष्टमिति तदाह—**ते तमिति** । ते सकामास्तं काम्येन पुण्येन प्राप्तं विशालं विस्तीर्णं स्वर्गलोकं भुक्त्वा तद्भोगजनके पुण्ये क्षीणे सति तद्देहनाशात्पुनर्देहग्रहणाय मर्त्यलोकं विशन्ति पुनर्गर्भवासादियातना अनुभवन्तीत्यर्थः । पुनः पुनरेवमुक्तप्रकारेण । हिः प्रसिद्ध्यर्थः । त्रैधर्म्यं हौत्राध्वर्यवौद्गात्रधर्मत्रयार्हं ज्योतिष्टोमादिकं काम्यं कर्म । त्रयीधर्ममिति पाठेऽपि त्रय्या वेदत्रयेण प्रतिपादितं धर्ममिति स एवार्थः । अनुप्रपन्नाः अनादौ संसारे पूर्वप्रतिपत्त्यपेक्षयाऽनुशब्दः पूर्वप्रतिपत्त्यनन्तरं मनुष्यलोकमागत्य पुनः प्रतिपन्नाः कामकामा दिव्यान् भोगान् कामयमाना एव गतागतं लभन्ते, कर्म कृत्वा स्वर्गं यान्ति तत आगत्य पुनः कर्म कुर्वन्तीत्येवं गर्भवासादियातनाप्रवाहस्तेषामनिशमनुवर्तत इत्यभिप्रायः ॥ २१ ॥

**शं० टी०—किंच—ते तमिति** । ते सोमपाः स्वर्गकामिनः स्वर्गं गताः सन्तः विशालं स्वपुण्याधिक्येन बहुलं स्वर्गीयं सुखविशेषं भुक्त्वानुभूय पश्चात्तत्सुखभोगकारणे स्वपुण्ये क्षीणे सति मर्त्यलोकं विशन्ति तं देहं त्यक्त्वा पुनरत्र जायन्त इत्यर्थः । एवं त्रयीधर्मं त्रयो वेदास्त्रयी कर्मकाण्डं तेनोक्तो धर्मस्त्रयीधर्मः "त्रिकर्मकृत्तरति जन्ममृत्यू दक्षिणावन्तो अमृतत्वं भजन्ते" इत्याद्यर्थवादपूर्वकं वेदैरुक्तं धर्मं कर्मैवानुप्रपन्नाः श्रुत्युक्तं कर्मैव निःश्रेयसाभ्युदयसिद्धौ परमकारणं न शमो न च दमो नापि च संन्यासो नैव ज्ञानं नैवेश्वरश्चेति निश्चयमनुसृत्य केवलकर्मैकनिष्ठाः कामकामाः काम्यन्त इति कामाः भौमा दिव्याश्च विषयास्तानेव कामयन्त इति कामकामा विषयभोगलम्पटा मीमांसकाः पण्डिता अप्येवमुक्तप्रकारेण गतागतं गतं चागतं च गतागतं गमनागमनमेवानुपरतं कर्मफलं लभन्ते, तत आगत्य जायन्ते जाताः पुनर्मृत्वा स्वर्गं गच्छन्त्येवं जननमरणप्रवाहे कामिनो मज्जन्तीत्यर्थः ॥ २१ ॥

**श्री० टी०—ततश्च—ते तं भुक्त्वेति** । ते स्वर्गकामास्तं प्रार्थितं विपुलं स्वर्गलोकं तत्सुखं भुक्त्वा भोगप्रापके पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति । पुनरप्येवमेव वेदत्रय्या विहितं धर्ममनुसृताः कामकामाः भोगान्कामयमानाः गतागतं यातायातं लभन्ते ॥ २१ ॥

१ 'एवं हि त्रैधर्म्यमनुप्रपन्नाः' इति मधुसूदनसंमतः पाठः ।

**स० टी०**—विस्तीर्णं स्वर्गलोकं ते भुक्त्वा रम्भामृतादिना ॥ स्वप्राभेनैव भोगेन क्षीणे पुण्ये सतीष्टदे ॥ १॥ तद्देहनाशतो भूयो देहग्रहणसिद्धये ॥ पुनर्गर्भनिवासादियातनां कौ विशन्ति च ॥ २ ॥ एवं ते वैदिकं कर्म ज्योतिष्टोमादिकं पुनः ॥ कृत्वा तेन पुनः स्वर्गं मर्त्यलोकं पुनश्च ते ॥ ३ ॥ इत्थं गतागतं भोगकामुकास्ते निरन्तरम् ॥ लभन्ते संसृतौ दुःखं लभन्ते नैव निर्वृतिम् ॥ ४ ॥ २१ ॥

**भा० टी०**—एतादृशस्याप्यतिकष्टेनासादितस्यापि स्वर्गलोकस्य सान्तत्वादनिष्टतां बोधयति—**ते इति** । ते त्रैविद्याः तं स्वर्गलोकं विशालं विस्तीर्णं भुक्त्वा पुण्ये यज्ञादिरूपे भोगप्रदे भोगं दत्त्वा क्षीणे सति मर्त्यलोकं विशन्त्याविशन्ति गर्भवासादिदुःखमनुभवन्तीत्यर्थः । एवं यथोक्तेन प्रकारेण हि प्रसिद्धं त्रयाणां धर्माणां हौत्राध्वर्यवौद्गात्राणाम् ऋग्यजुःसामाख्यवेदत्रयबोधितानां समाहारस्त्रिधर्मं तदेव त्रैधर्म्यमिति । 'त्रयीधर्मम्' इति वा पाठः त्रय्या वेदत्रयेण प्रतिपादितमित्यर्थः । अयं पाठः कैश्चिद्व्याख्यातोऽपि भाष्यकृद्भिरव्याख्यातत्वान्नादर्तव्यः । अनुप्रपन्नाः प्रकर्षेणानुसृतवन्तः कामान् विषयान् कामयन्त इति कामकामाः गतागतं गमनागमनं मरणवेदनामनुभूय क्षणिकं स्वर्गादिकं प्रति गमनं ततः जन्मादिवेदनामनुभवितुमागमनं च लभन्ते नतु स्वातन्त्र्यं क्वचिदपि कर्माधीनत्वात्तेषाम् ॥ २१ ॥

**प० टी०**—ततः किं भवतीत्याह—**ते तमिति** । ते तमुक्तप्रकारं स्वर्गलोकं विशालं स्थूलफलदं भुक्त्वा पुण्ये क्षीणे सति मर्त्यलोकं विशन्ति देवदेहं त्यक्त्वा पुनर्लिङ्गदेहेन गर्भं प्रविशन्ति । एवममुना प्रकारेण त्रयीधर्मं त्रय्या दर्शितं फलप्रशंसनरूपं धर्ममनु लक्षीकृत्य प्रवृत्ता याज्ञिकाः कामान् विषयान् कामयन्ते ते कामकामाः सन्तो गतागतं यातायातं लभन्ते । श्रुतिरपि शातपथी—"आत्मानमेव लोकमुपासीत स य आत्मानमेव लोकमुपास्ते न हास्य कर्म क्षीयते । अस्माद्ध्येवात्मनो यद्यत्कामयते तत्तत्सृजते" इति । भाष्यम्—अन्यदेवतोपासनया नावरं(?)फलं प्राप्यत इति पूर्वमुक्तं तस्मादात्मानमेव लोकं लोक्यते प्राप्यते सर्वमनेनेति लोकस्तमेवात्मानमुपासीत नान्यम् । स य आत्मानमुपास्ते तस्य हेति निश्चयेन कर्म न क्षीयते भोगेनोपक्षीणं न भवति किंतु ज्ञानमुत्पाद्य मोक्षं प्रापयति । अथ स विषयसुखापेक्षश्चेत्तर्हि तदप्यात्मन एव प्राप्यत इत्याह—अस्मादिति । अस्मादात्मनः सकाशाद्यद्यत्कामयते तत्तत्सृजते सिद्ध्यादिकमुत्पादयति किं पुनरन्यत् । तदुक्तं टिप्पणिकासु—'यत्सत्यं तदुपासितव्यमधुना सत्यं यतो लभ्यतेऽसत्योपासनया तथैव च फलं स्वप्नोत्थराज्यादिवत् । आयासे सदृशेऽपि तुच्छफलदे मार्गे प्रवृत्तिः कथं मायावैभवमेतदेव तदिदं भक्त्या हरेर्वाप्यते' ॥ २१ ॥

**रा० टी०**-किंच—**ते तमिति** । ते स्वर्गकामेनान्यदेवतायाजिनस्तं विशालं विपुलं स्वर्गसुखं भुक्त्वा क्षीणे पुण्ये मर्त्यलोकं भूलोकं भुक्तावशिष्टपुण्ययुक्ताः सन्तः विशन्ति । तदाह सूत्रे—"कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्याम्" इति । पुनरप्येवं त्रयीधर्मं वेदोक्तं धर्ममनुप्रपन्ना अनुतिष्ठन्तः कामकामाः भोगेच्छवः गतागतं द्वन्द्वैकवद्भावः, गतेन सहितमागतमिति वा । स्वर्गं प्रति गमनं ततो मर्त्यलोकं प्रत्यागमनं च लभन्ते न कदाप्यपुनरावृत्तिं प्राप्नुवन्तीत्यर्थः ॥ २१ ॥

## अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते ॥
## तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥ २२ ॥

**त० टी०**—एवं सकामाः संसरन्तीत्युक्तं, निष्कामा मद्भक्तास्तु मदनुग्रहात्सर्वपुरुषार्थभाजो भवन्तीत्याह—**अनन्या इति** । न विद्यतेऽन्यो मद्व्यतिरिक्तः प्राप्य उपास्यो वा येषां तेऽनन्या मां परमप्राप्यं देवदेवं चिन्तयन्तो ये जनाः पर्युपासते परि सर्वतो देहेन्द्रियान्तःकरणैः सेवन्ते तेषां नित्या-

भियुक्तानां नित्यमनवरतमादरेण मयि मनोऽभियुञ्जतां योगं मत्प्राप्तिपर्यन्तस्य सर्वपुरुषार्थस्य प्रापणं क्षेमं तत्संरक्षणं पुनस्तदपायशङ्कावर्जनमित्यर्थः । अहमेव वहामि प्रापयामीत्यर्थः ॥ २२ ॥

**म० टी०**—निष्कामाः सम्यग्दर्शिनस्तु—**अनन्या इति** । अन्यो भेददृष्टिविषयो न विद्यते येषां तेऽनन्याः सर्वाद्वैतदर्शिनः सर्वभोगनिःस्पृहाः अहमेव भगवान्वासुदेवः सर्वात्मा न मद्व्यतिरिक्तं किंचिदस्तीति ज्ञात्वा तमेव प्रत्यञ्चं सदा चिन्तयन्तो मां नारायणमात्मत्वेन ये जनाः साधनचतुष्टयसंपन्नाः संन्यासिनः परि सर्वतोऽनवच्छिन्नतया पश्यन्ति ते मदनन्यतया कृतकृत्या एवेति शेषः । अद्वैतदर्शननिष्ठानामत्यन्तनिष्कामानां तेषां स्वयमप्रयतमानानां कथं योगक्षेमौ स्यातामित्यत आह—**तेषामिति** । तेषां नित्याभियुक्तानां नित्यमनवरतमादरेण ध्याने व्यापृतानां देहयात्रामात्रार्थमप्यप्रयतमानानां योगं च क्षेमं च अलब्धस्य लाभं लब्धस्य परिरक्षणं च शरीरस्थित्यर्थं योगक्षेममकामयमानानामपि वहामि प्रापयाम्यहं सर्वेश्वरः 'प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः । उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्' इति ह्युक्तम् । यद्यपि सर्वेषामपि योगक्षेमं वहति भगवाँस्तथाप्यन्येषां प्रयत्नमुत्पाद्य तद्द्वारा वहति ज्ञानिनां तु तदर्थं प्रयत्नमनुत्पाद्य वहतीति विशेषः ॥ २२ ॥

**शं० टी०**—एवमनीश्वरवादिनां कर्मैकशरणानां बाह्यज्ञानवता कामिनां गतिं प्रतिपाद्याधुना निर्द्वन्द्वानां नित्यसत्त्वस्थानां निर्योगक्षेमाणामात्मवतां निष्कामानां निरहंकारममकाराणां मदेकशरणानां ब्रह्मविदां योगक्षेममहमेव वहामीत्याह—**अनन्या इति** । अनन्याः न विद्यते अन्यो मद्व्यतिरिक्तो विषयस्त्वहंबुद्धेरिदंबुद्धेश्च येषां ते अनन्याः सदाऽद्वैतदर्शननिष्ठाः सन्तो ये यतयो मां निर्विशेषं नित्यानन्दैकरसं परं ब्रह्मैव चिन्तयन्तो बहिरन्तश्चैकवृत्त्या विषयानवगाहिन्या सर्वमिदमहं च ब्रह्मैवेति भावयन्तः पर्युपासते स्वं च सर्वं च सर्वदा ब्रह्मैव ये पश्यन्तीत्यर्थः । नित्याभियुक्तानां नित्यो निरन्तरोऽविच्छिन्नोऽभियोगः आभिमुख्येन बुद्धिवृत्तेर्वस्तुसंयोगः साक्षात्कारलक्षणस्तद्वन्तो ये ते नित्याभियुक्ता निरन्तरसमाहितचित्तास्तेषां नित्याभियुक्तानां ब्रह्मविदां योगक्षेमम् अप्राप्तस्यापेक्षितस्य वस्तुनः प्रापणं योगः, स्थितस्य परिपालनं क्षेमस्तदुभयमहमेव वहामि । यद्वा तेषां नित्याभियुक्तानां योगक्षेमं योगो निरन्तरब्रह्मनिष्ठा तस्य क्षेममाध्यात्मिकाद्युपद्रवैर्विच्छेदराहित्यं तदहं सर्वदा करोमीत्यर्थः ॥ २२ ॥

**श्री० टी०**—मद्भक्तास्तु मत्प्रसादेन कृतार्था भवन्तीत्याह—**अनन्या इति** । अनन्याः नास्ति मद्व्यतिरेकेणान्यत्काम्यं भजनीयं देवतान्तरं येषां तथाभूता ये जना मां चिन्तयन्तः सेवन्ते तेषां नित्याभियुक्तानां सर्वदा मदेकनिष्ठानां योगं धनादिलाभं क्षेमं च तत्पालनं मोक्षाख्यं च तैरप्रार्थितमप्यहमेव वहामि प्रापयामि ॥ २२ ॥

**स० टी०**—इत्थं सकामताढुःखं विचार्यागमयुक्तिभिः ॥ निष्कामाः सन्त उत्कृष्टा मां भजन्तीति कथ्यते ॥ १ ॥ भेददृग्गोचरा येषां नास्ति ते भोगनिःस्पृहाः ॥ अहमेवास्मि भगवान्वासुदेवोऽखिलात्मकः ॥ २ ॥ मत्तः किंचित्पृथङ्नास्तीत्येवं प्रत्यञ्चमद्वयम् ॥ ज्ञात्वात्मत्वेन मां विष्णुं चिन्तयन्तो निरन्तरम् ॥ ३ ॥ ये जनाः शान्तिदान्त्यादिसंपन्नाः सर्वतो धिया ॥ पश्यन्ति मदभेदेन कृतकृत्यास्त एव हि ॥ ४ ॥ अद्वैततत्त्वनिष्ठानां निष्कामानां त्वदात्मनाम् ॥ तेषामयतमानानां योगक्षेमौ कथं स्वयम् ॥५॥ स्यातामित्यत्र भगवानाह योगविदां गतिः ॥ आदरेण सदा ध्याने व्यापृतानां महात्मनाम् ॥ ६ ॥ तेषामनिच्छतां योगक्षेमं संप्रापयाम्यहम् ॥ सर्वेषां यद्यपीशोऽयं योगक्षेमं वहत्यपि ॥ ७ ॥ तथापि यत्नमुत्पाद्य तद्द्वारा वहतीश्वरः ॥ अन्येषां ज्ञानिनां त्वीशोऽनुत्पाद्येच्छाकृती स्वयम् ॥ ८ ॥ वहतीति विशेषोऽस्ति ज्ञानी त्वात्मेतिवाक्यतः ॥ ९ ॥ २२ ॥

भा० टी०—ननु कामकामानां तु तत्तत्कामनया कर्मानुष्ठाने कृते सति भोगादिकं सिध्यति ये पुनर्निष्कामाः तत्त्वदर्शिनस्त्वां पर्युपासते तेषां भोगकामनारहितानामपि शरीरस्थितिहेतुभूतौ योगक्षेमौ कथं स्यातामिति तत्राह—**अनन्या इति** । मत्तोऽपृथग्भूताः परं देवं वासुदेवं मामात्मत्वेन प्रतिपन्नाः सन्तो जना मां चिन्तयन्तोऽहमेव वासुदेव इति ज्ञात्वा प्रत्यगभिन्नं मां ध्यायन्तः पर्युपासते परितः सर्वतोऽनवच्छिन्नतया पश्यन्तीत्यर्थः । तेषां सम्यग्दर्शिनां नित्याभियुक्तानां नित्यं सततमत्यादरेण मच्चिन्तने व्यापृतानां योगक्षेमं वहाम्यहं योगश्च क्षेमश्चेति समाहारद्वन्द्वः अलब्धस्य प्रापणं योगः, लब्धस्य परिपालनं क्षेमस्तदुभयं वहामि प्रापयामि यतः कारणात् ज्ञानिनो ममात्मभूतत्वादतिप्रियाः । तदुक्तं उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतं स च मम प्रिय इति । यद्यप्यन्येषामपि भक्तानां योगक्षेमं भगवान्वहत्येव तथाप्यन्ये भक्तास्ते आत्मार्थं स्वयमपि योगक्षेममीहन्ते अनन्यदर्शिनस्तु नेति विशेषः ॥ २२ ॥

प० टी०—एवं क्षुद्रदेवतोपासकानां प्रयासवैयर्थ्यमुक्त्वा स्वोपासकानां सुखोपायप्राप्तिं दर्शयति—**अनन्या इति** । न विद्यते मत्तोऽन्यद्देवतान्तरं येषां तेऽनन्याः सन्तो ये जनाश्चिन्तयन्तः केवलं स्मरन्तो न तु द्रव्यव्ययकायक्लेशं कुर्वाणा मामुपासते तेषां नित्यं निरन्तरमभियुक्तानामभितो मद्योगदर्शिनामहं योगक्षेमं वहामि । अप्राप्तस्य प्राप्तिर्योगः प्राप्तस्य निर्विघ्नतया रक्षणं क्षेमं निर्वहामि ॥ २२ ॥

रा० टी०—त्रैविद्यानां फलमुक्त्वा भागवतानां फलमाह—**अनन्या इति** । न विद्यतेऽन्यश्चिन्त्यत्वेन येषां तेऽनन्याः अन्यदचिन्तयन्तो मां चिन्तयन्तो ये जनाः पर्युपासते भक्त्युद्रेकेणोपासते तेषां नित्याभियुक्तानां नित्यमभिसर्वस्मिन्देशे शरीरेन्द्रियमनोभिर्वा युक्तानां भगवत्सेवायुक्तानां नित्यं तत्स्मरणवतामिति वा योगक्षेमं द्वन्द्वैकवद्भावः योगस्य क्षेम इति वा । अप्राप्तप्राप्तिर्योगो मोक्षरूपः । तस्य क्षेमः अनन्तत्वं वहामि अहमपुनरावृत्तिलक्षणं पुरुषार्थं ददामीत्यर्थः । भगवतः सर्वयज्ञभोक्तृत्वाविशेषेऽपि त्रैविद्यभागवतयोः फलभेदो भगवद्भक्तजनरूपोपायभेदकृत इति द्योतनायानन्या इत्यादिविशेषणोक्तिः । तथाहि यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छतीत्यादौ पूर्वं त्रैविद्यानामन्यदेवतायाजित्वमुक्तं भागवतानां तद्विरोधितयाऽनन्या इत्युक्तम् । ननु मामभिजानन्ति तत्त्वेनेति त्रैविद्यानामतिशयभक्तिज्ञानाभाव उक्तः तत्त्वज्ञानाभावे भक्त्यभावस्य सिद्धत्वात् । भागवतानां तत्प्रतियोगितया भक्त्युद्रेकसूचनाय पर्युपासत इति परिशब्दप्रयोगः । तथोपासनस्यैव पर्युपासनत्वात् । स्वर्गतिं प्रार्थयन्ते कामकामा इति त्रैविद्यानां कामनमुक्तं तत्प्रतियोगितया भागवतानां चिन्तयन्तो मां मामेव चिन्तयन्ति न काममिति कामनाभाव उक्तः । मामिष्ट्वेति मामेव यजन्त इति त्रैविद्यानामन्ते समर्पणमुक्तं तत्प्रतियोगितया नित्याभियुक्तानामिति सदा तत्स्मरणतदुद्देशयुक्तत्वमुक्तम् । अतो द्वयोर्वैष्णवत्वेऽपि भगवद्भोग्यकर्मवत्त्वेऽपि फलहेतूपायभेदात्फलभेद इति ॥ २२ ॥

**येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः ॥**
**तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ २३ ॥**

त० टी०—ननु देवतान्तरस्यापि त्वदात्मकत्वात्त्वद्रूपत्वमेवातस्तद्भक्ता अपि त्वामेव भजन्ते । तथा च किं तेषां वैगुण्यं यतस्ते गतागतं लभन्त इत्याशङ्क्याह—**येऽपीति** । यथा मद्भक्ताः साक्षान्मामेव यजन्ते, तथा येऽपि जना अन्यदेवताभक्ताः श्रद्धयोपेताः सन्तस्ता एवेन्द्रादिदेवता यजन्ते तेऽपि हे कौन्तेय सर्वात्मानं देवादिदेहेऽपि मामेव यजन्तीति सत्यम् अपि त्वविधिपूर्वकं यथाऽवस्थितवस्तुज्ञानेनानुष्ठानमविधिपूर्वकमिन्द्राद्यन्तर्यामिणं मामज्ञात्वा मदुद्देशाभावेन केवलानिन्द्रादीन्यजन्तीत्यर्थः॥२३॥

म० टी०—नन्वन्या अपि देवतास्त्वमेव त्वद्व्यतिरिक्तस्य वस्त्वन्तरस्याभावात्, तथा च देवतान्तरभक्ता अपि त्वामेव भजन्त इति न कोऽपि विशेषः स्यात् तेन गतागतं कामकामा वसुरुद्रादित्यादिभक्ता लभन्ते

अनन्याश्चिन्तयन्तो मां तु कृतकृत्या इति कथमुक्तं तत्राह–येऽप्यन्यदेवतेति । यथा मद्भक्ता मामेव यजन्ति तथा येऽन्यदेवतानां वस्वादीनां भक्ता यजन्ते ज्योतिष्टोमादिभिः श्रद्धया आस्तिक्यबुद्ध्या अन्विताः तेऽपि मद्भक्ता इव हे कौन्तेय तत्तद्देवतारूपेण स्थितं मामेव यजन्ति पूजयन्ति अविधिपूर्वकमविधिरज्ञानं तत्पूर्वकं सर्वात्मत्वेन मामज्ञात्वा मद्भिन्नत्वेन वस्वादीन् कल्पयित्वा यजन्तीत्यर्थः ॥ २३ ॥

**शं० टी०**–नन्वहं क्रतुरित्यादिना क्रतुयज्ञमन्त्रदेवतादिकं सर्वमहमेवेति तवैव सार्वात्म्यं त्वयैव साक्षात्प्रतिपादितम् । कामकामा अपि इन्द्रादिदेवतारूपं त्वामेव क्रतुभिरुपासते त्वद्भक्तानां तेषां कथं मुख्यफलभ्रंशो जन्माद्यनर्थपातश्चेति चेदुच्यते " सर्वं ह्येतद्ब्रह्म । सर्वं खल्विदं ब्रह्म । इन्द्रं मित्रम् । एकं सद्विप्रा बहुधा वदन्ति " इत्यादिश्रुतिभिः ' भूतानि विष्णुः ' इत्यादिस्मृतिभिः सर्वं ब्रह्मैवेति प्रतिपाद्यते अहं क्रतुरिति ममैव सर्वात्मत्वं मयाप्युक्तं सर्वदेवात्मक एवाहं सत्यं तेऽपि मामेव क्रतुभिरुपासते तथापि श्रुतौ स्मृतौ मदुक्तौ च विश्वासमकृत्वाऽविद्यास्मितादिदोषेण सर्वं ब्रह्मैवेति मामज्ञात्वा स्वेषु देवेषु मन्त्रादिषु भेदबुद्धिममुञ्चमाना मामुपासते ततस्ते मद्भक्ता न भवन्ति किंतु देवयज एव भवन्ति तेनैव तेषां मुख्यफलभ्रंशोऽनर्थापातश्चेति सिंहावलोकनन्यायेन तत्पूर्वश्लोकार्थमनुसृत्य प्रतिपादयति–येऽपीति त्रिभिः । येऽप्यैहिकामुष्मिकफलार्थिनो ब्राह्मणादयः स्वेष्टदेवतासुतदाराधनेषु च श्रद्धया एषैव परदेवता त्वेतस्या आराधनेनाहं कृतार्थः स्यामित्यास्तिक्यबुद्ध्याऽन्विताः समेताः सन्तः स्वयमन्याः देवता इयं मम एतस्या आराधकोऽहमिति स्वभिन्नत्वेन गृहीताया इन्द्रादिदेवताया एव भक्तास्तदाराधने भक्तियुक्ता भूत्वा यजन्ते वैदिकेनैव तन्त्रेणोपासत इत्यर्थः । तेऽपीन्द्रादिदेवतायाजका यद्यपि मामेवेन्द्रादिदेवतारूपं यजन्ते ब्रह्मणः सर्वात्मकत्वादिन्द्रादिदेवतारूपेणाहमेव तैराराध्ये तथापि ते मामाविधिपूर्वकं यजन्ति न विद्यते विधिर्विध्यर्थज्ञानं च यत्र तदविध्यज्ञानं तत्पूर्वकं यजन्ति अहं क्रतुरित्युक्तप्रकारेण इज्यो याजको यजनं यागश्च सर्वं ब्रह्मैवेत्येवंज्ञानशून्या भूत्वा मां यजन्त इत्यर्थः ॥ २३ ॥

**श्री० टी०**–ननु च त्वद्व्यतिरेकेण वस्तुतो देवतान्तरस्याभावादिन्द्रादिसेविनोऽपि त्वद्भक्ता एवेति कथं ते गतागतं लभेरँस्तत्राह–येऽपीति । श्रद्धयोपेता भक्ताः सन्तो येऽपि जनाः यज्ञेनान्यदेवता इन्द्रादिरूपा यजन्ते तेऽपि मामेव यजन्तीति सत्यं किंतु अविधिपूर्वं मोक्षप्रापकं विधिं विना यजन्ति । अतस्ते पुनरावर्तन्ते ॥ २३ ॥

**स० टी०**–नन्वन्येऽपि त्वमेवेशो देवास्त्वत्तः पृथङ्न ते ॥ तद्भक्ता अपि सेवन्ते त्वामेवेत्यत्र का भिदा ॥ १ ॥ येन ते संसृतिं यान्ति त्वद्भक्ता नेति तद्वद ॥ अन्यदेवान्यजन्ते ये फलार्थं भेददर्शिनः ॥ २ ॥ आस्तिकास्तेऽपि मामेव यजन्त्यज्ञानपूर्वकम् ॥ सर्वात्मत्वेन मामीशमज्ञात्वा भेदवत्तया ॥ ३ ॥ कल्पयित्वा च वस्वादीन् यजन्तीत्याशयो हरेः ॥ ४ ॥ २३ ॥

**भा० टी०**–नन्वन्या अपि देवतास्त्वमेव त्वद्व्यतिरिक्तस्य देवतान्तरादेरभावात्तथाच तद्भक्ता अपि त्वामेव भजन्ते इति चेत्सत्यं तथापि इन्द्रादिदेवा वासुदेवाभिन्ना इति ज्ञानाभावात् तेषां मद्भक्तेभ्यो विशेष इत्याह–येऽपीति । येऽप्यन्यासु इन्द्रादिदेवतासु भक्ताः सन्तः श्रद्धया आस्तिक्यबुद्ध्या अन्विता युक्ता अन्यदेवतां यजन्ते पूजयन्ते तेऽपि वस्तुगत्या मामेव यजन्ति यथा कुन्तीसुतोऽपि त्वं वस्तुवृत्त्याऽस्मत्पितामहदौहित्र एवेति संबोधनाशयः । तथापि मद्भजने वासुदेवव्यतिरिक्तं वस्तु नास्तीति ज्ञानं विधिस्तदभावोऽविधिस्तत्पूर्वकं यजन्त इत्यर्थः ॥ २३ ॥

**प० टी०**–ननु पूर्वमुक्तं मामिष्ट्वा स्वर्गतिं प्रार्थयन्त इति तर्हि त्वत्पूजनादधिगतस्वर्गाः पुनः कथं स्वर्गाच्च्यवन्त इत्याशङ्क्याह–येऽपीति द्वाभ्याम् । येऽन्यदेवताभक्ता इन्द्रादिदेवतोपासका येऽपि श्रद्धया-

न्विताः सन्तो यजन्ते तेऽपि तदन्तर्यामित्वेन स्थितं मामेव यजन्ति परं त्वविधिपूर्वकं यजन्ति मोक्षप्रापकमद्वैतोपासनं विधिस्तदितरमविधिस्तत्पूर्वकं यजन्ति ॥ २३ ॥

रा० टी०—भागवतेभ्योऽन्यदेवतायाजिनां फलभेदं सहेतुकं प्रपञ्चयति—येऽपीति । अन्यदेवताभक्ता येऽपि श्रद्धयान्विताः सन्तो अन्यदेवता जयन्ते तदुद्देशेन हविस्त्यागं कुर्वन्ति तेऽपि मामेवाविधिपूर्वकं यजन्ति मदुद्देशेनैव कर्तव्येऽपि अन्योद्देशेन कृत्वा ते तत्कर्म अन्ते मय्यर्पयन्तीत्यविधिपूर्वकमासीन्मद्यजनमिति भावः ॥ २३ ॥

**अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च ॥**
**न तु मामभिजानन्ति तत्त्वेनातश्च्यवन्ति ते ॥ २४ ॥**

**त० टी०—तेषामविधिपूर्वकयजनं तत्फलं च स्पष्टयति—अहं हीति । हिरवधारणे । सर्वेषां यज्ञानां तत्तद्देवताऽऽत्मनाऽहमेव भोक्ता प्रभुश्च स्वामी च तत्र तत्र यज्ञफलदाता चाहमेव । एवं सर्वकर्मकर्तृदेवताध्यक्षं मां ते सकामास्तु तत्त्वेन नाभिजानन्ति अतः कर्मफलं भुक्त्वा तद्भोगान्ते च्यवन्ति पुनर्देहग्रहणाय धूममार्गेणावर्तन्ते, नतु साक्षान्मामेव तत्त्वेन, देवतासु वा मामेवान्तर्यामिणं यजन्तश्च्यवन्तीति भावः ॥ २४ ॥**

म० टी०—अविधिपूर्वकत्वं विवृण्वन् फलप्रच्युतिममीषामाह—अहं हीति । अहं भगवान् वासुदेव एव सर्वेषां यज्ञानां श्रौतानां स्मार्तानां च तत्तद्देवतारूपेण भोक्ता च स्वेनान्तर्यामिरूपेण अधियज्ञत्वात् प्रभुश्च फलदाता चेति हि प्रसिद्धमेतत् । देवतान्तरयाजिनस्तु मामीदृशं तत्त्वेन भोक्तृत्वेन प्रभुत्वेन च भगवान्वासुदेव एव वस्वादिरूपेण यज्ञानां भोक्ता स्वेन रूपेण च फलदाता न तदन्योऽस्ति कश्चिदाराध्य इत्येवंरूपेण न जानन्ति अतो मत्स्वरूपापरिज्ञानान्महताऽऽयासेनेष्ट्वाऽपि मय्यनर्पितकर्माणस्तत्तद्देवलोकं धूमादिमार्गेण गत्वा तद्भोगान्ते च्यवन्ति प्रच्यवन्ते तद्भोगजनककर्मक्षयात्तद्देहादिवियुक्ताः पुनर्देहग्रहणाय मनुष्यलोकं प्रत्यावर्तन्ते । ये तु तत्तद्देवतासु भगवन्तमेव सर्वान्तर्यामिणं पश्यन्तो यजन्ते ते भगवदर्पितकर्माणस्तद्विद्यासहितकर्मवशादर्चिरादिमार्गेण ब्रह्मलोकं गत्वा तत्रोत्पन्नसम्यग्दर्शनास्तद्भोगान्ते मुच्यन्त इति विवेकः ॥२४॥

शं० टी०—ननु "शुण्ठास्त्रयो (?) वैष्णवाः अग्नेर्घृतं विष्णोस्तण्डुलाः यज्ञो वै विष्णुः" इति त्वां यज्ञेषु भोक्तारं नेतारं च ज्ञात्वैव ते यजन्ते कथमज्ञानपूर्वकं यजन्तीत्यत आह—अहमिति । हिर्निरुक्तश्रुतिप्रसिद्धिद्योतनार्थः । यद्यपि सर्वयज्ञानां श्रौतानां स्मार्तानां च सर्वेषां यज्ञानामिन्द्रादिदेवतारूपेणाऽहमेव भोक्ता च प्रभुर्नेता चास्मि तथैव तेऽपि भोक्तारं प्रभुं च मां जानन्ति तथापि तत्त्वेन नतु जानन्ति "ब्रह्मार्पणं ब्रह्महविः । सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्युक्तप्रकारेण मदुक्तरीत्या च यज्ञो यज्ञभोक्ता यज्ञनेता च यजमानो याजकाश्चरुपुरोडाशादि चैतत्सर्वं ब्रह्मैव न ततोऽन्यत्किंचिदप्यस्तीति तत्त्वेन याथात्म्येन यथाभूतस्वरूपेण मां ब्रह्म न जानन्त्यतो मत्तत्त्वाज्ञानादेव ते देवतायाजकाश्च्यवन्ति च्यवन्ते परमपुरुषार्थाद्भ्रश्यन्ति कदापि न मुक्तिं विन्दन्तीत्यर्थः ॥ २४ ॥

श्री० टी०—एतदेव विवृणोति—अहं हीति । सर्वेषां यज्ञानां तत्तद्देवतारूपेणाहमेव भोक्ता प्रभुश्च स्वामी फलदातापि चाहमेवेत्यर्थः । एवंभूतं मां ते तत्त्वेन यथावन्नाभिजानन्ति अतश्च्यवन्ति प्रच्यवन्ते पुनरावर्तन्ते । ये तु सर्वदेवतासु मामेवान्तर्यामिणं पश्यन्तो यजन्ति ते तु नावर्तन्ते ॥ २४ ॥

स० टी०—अहं विष्णुः समस्तानां यज्ञानामाश्रयः प्रभुः ॥ मत्स्वामिका हि यज्ञास्ते यज्ञभोक्ता महीश्वरः ॥ १ ॥ तथा ते मां न जानन्ति यथावच्छास्त्रगोचरम् ॥ अतस्ते तत्फलं भुक्त्वा पतन्त्यस्यां कुसंसृतौ ॥ २ ॥ ये तु सर्वेश्वरं तत्तद्देवतास्वपि मां हरिम् ॥ प्रपश्यन्तो यजन्ते ते मुक्तिभाजः शनैः शनैः॥३॥२४॥

भा० टी०–एतदेव स्फोरयति–अहमिति । सर्वयज्ञानां श्रौतानां स्मार्तानां च देवतारूपेण भोक्तान्तर्यामिरूपेण फलप्रदातृरूपेण प्रभुरेव चाहं हि प्रसिद्धमेतत् । तथाचैतादृशं मां यतस्तत्त्वेन ये नाभिजानन्ति अतोऽविधिपूर्वकमिष्ट्वा यागफलभोगान्ते च्यवन्ति ते मर्त्यलोकं विशन्ति ॥ २४ ॥

प० टी०–एतदेव विविच्याह–अहमिति । हि यस्मात्कारणादहमेव सर्वयज्ञानां भोक्ता प्रभुः फलदाता च । एवं सति मां तत्त्वेन याथातथ्येन नाभिजानन्त्यतस्ते च्यवन्ति पुनर्मर्त्यलोके विशन्ति । अत्रैतदुक्तं भवति—देवर्षिपितृपूर्वकास्तावन्नश्वरनामरूपोपेता देहविशेषा मदुपाधयस्तत्तल्लोके वसन्ति तत्र तत्र सर्वेषामन्तर्याम्यहमेवास्येवंविधं मामज्ञात्वा पृथक्त्वेन तत्तदुपाध्युद्देशेन यत्कृतं यजनं तेनाहमेव संतर्पितो भवामि ततो मत्संतर्पणशेषेण तेऽपि संतर्पिता भवेयुः । तथा च मामद्वयानन्दमखण्डैकरसमुद्दिश्य यदुपासनं स एव विधिस्तथा मूढानां यदुपाध्युपासनमेवाविधिस्तत्पूर्वकं यजनं नश्वरफलं स्यात् । अत्र श्रुतिरपि शातपथी–" अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेवम् " इति । स्पष्टोऽर्थः। तथा " अथो अयं वात्मा सर्वेषां भूतानां लोकः स यज्जुहोति यद्यजते तेन देवानां लोकोऽथ यदनुब्रूते तेन ऋषीणामथ यत्प्रजामिच्छते यत्पितृभ्यो निपृणाति तेन पितृणामथ यन्मनुष्यान् वासयते यदेभ्योऽशनं ददाति तेन मनुष्याणामथ यत्पशुभ्यस्तृणोदकं विन्दाति तेन पशूनां यदस्य गृहेषु श्वापदा वयाꣳस्यापिपीलिकाभ्य उपजीवन्ति तेन तेषां लोको यथा ह वै स्वाय लोकायारिष्टमिच्छन् देवं हैवंविदे सर्वाणि भूतान्यरिष्टिमिच्छन्ति तद्वा एतद्विदितं मीमाꣳसितम्" इति । भाष्यम्–अथो अनन्तरं वा इति प्रकारान्तरेणोच्यते। तत्किम्, अय मात्मा सर्वेषां भूतानां लोकः संतर्पणस्थानं तथा च सोऽधिकारी ऋत्विग् यज्जुहोति मन्त्रपूर्वकं हविरग्नौ क्षिपति । तथा यद्यजते स्वातन्त्र्येण यज्ञकर्ता यद्वा श्रौतस्मार्तप्रकारेण तेन देवानामिन्द्रसूर्यादीनां लोक आत्मा संतर्पितो भवति । अथ यदनुब्रूते स्वाध्यायमधीते तेन ऋषीणां यत्पितृणामृणपरिहारिणीं प्रजामिच्छते इच्छति अथवा यत्पितृभ्यो निपृणाति श्राद्धे ददाति तेन पितृणां तथा मनुष्यान् वासयते आवासं कृत्वा ददाति तथा यदेभ्यो मनुष्येभ्योऽशनमन्नं ददाति तेन मनुष्याणां लोकोऽथ पशुभ्यो महिषीबलीवर्दादिभ्यस्तृणोदकं विन्दाति तेन तेषाम् । तथा यदस्य गृहेषु श्वापदाः श्वमार्जारादयो वयांसि पक्षिणः काककलविङ्कादयः पिपीलिका मर्यादीकृत्य कीटविशेषा उपजीवन्ति तेन तेषां लोक आत्मैव संतर्पितः स्यात् । यथा वै इति निश्चयेन स्वाय लोकाय परमात्मनेऽविष्टिं कुशलं वाञ्छति । एवमेतदेव विदितं ज्ञातमिति वदन्ति तथा मीमांसितं विचारितमेतदन्यदज्ञातमविचारितं चेत्यर्थः । तदुक्तं टिप्पणिकासु–' सुरर्षिपितृमानवप्रभृति दत्तमेवंविदा तदाहुरमृतप्रदं यदभवत्तदात्मार्पणम् । अदायि पदलब्धये क्रतुभुजामनेवंविदा गतं गतपरिश्रमप्रदमसत्यसंतर्पणात् ॥ १ ॥ ' तथा ' एकोऽनेकैः स्वरूपैर्नटति नटवरो दर्शयन् हावभावांस्तत्तद्रूपान् पृथगभिलषितेष्वत्र सामाजिकेषु । कस्मैचित्कश्चिदर्थं वितरति मुदितस्तेन संतर्पितः स्यादेकः सर्वान्तरात्मार्पणमखिलतनुभ्योऽर्पितं स्यात्तथैव ॥ २ ॥' इति । ऋग्वेदेऽपि–" हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । स दाधार पृथिवीं द्यामुतमां कस्मै देवाय हविषा विधेम " इति । भाष्यम्–' हिरण्यगर्भः इति दशर्चं सूक्तं त्रैष्टुभम् ' इति सर्वानुक्रमः । तत्र प्रथमा हिरण्यगर्भ इति । हिरण्मयोऽण्डो गर्भवद्यस्योदरे वर्तते सोऽसौ सूत्रात्मा हिरण्यगर्भोऽग्रे प्रपञ्चोत्पत्तेः प्राक् समवर्तत मायाध्यक्षात्सिसृक्षोः परमात्मनः सकाशात्समजायत । यद्यपि परमात्मैव हिरण्यगर्भस्तथापि तदुपाधिभूतानां वियदादीनां सूक्ष्मभूतानां ब्रह्मण उत्पत्तेस्तदुपहितोऽप्युत्पन्न इत्युच्यते । स च जातो जातमात्र एवैकोऽद्वितीयः सन् भूतस्य विकारजातस्य ब्रह्माण्डादेः सर्वस्य

जगातः पतिरीश्वर आसीत् । न केवलं पतिरासीत् किंतु पृथिवीं द्यां दिवं च दाधार धारयति । एवं सति तं सर्वात्मकमपहाय कस्मै देवाय हविषा कृत्वा विधेम परिचरेम सर्वं ब्रह्मार्पणमेव भवतीत्यर्थः ॥ २४ ॥

रा० टी०–तद्यज्ञस्यापि भगवद्भोग्यत्वात्कथमविधिपूर्वकतेत्यतो विधिपूर्वकत्वे कारणमाह–अहं हीति । सर्वयज्ञानां भोक्ता प्रभुश्च प्रवर्तक उद्देश्यश्च तादृशं मां तु तत्त्वेन अभि सम्यक् न जानन्ति । अभीत्यस्य सर्वोत्तमत्वेन हरिं जानन्तोऽपि यज्ञाद्युद्देश्यत्वादिना सम्यङ् न जानन्तीत्यर्थः। तत्त्वेनेत्यस्य तु ब्रह्माद्यन्यदेवतानां तु तत्परिवारत्वादिकं न सम्यग्जानन्तीत्यर्थः । हि यतोऽतस्ते च्यवन्ति स्वर्गान्मर्त्यलोकं विशन्तीति॥२४॥

**यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः ॥**
**भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥२५॥**

त० टी०–ननु देवतान्तराराधकानां च्युतिरेव भवति चेत्तर्हि 'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः । अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥ देवान्भावयतानेन ते देवा भावयन्तु वः । परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ' इति पूर्वं कथं देवतान्तराराधनं फलसहितमुपदिष्टमित्याशङ्क्य नाहं देवताऽऽराधनं निष्फलं ब्रवीमि किंतु यथादेवतानुरूपमेव फलं भवतीत्याह–यान्तीति । देवेष्विन्द्रादिषु व्रतं नियमो भक्तिर्वा येषां ते देवव्रताः, अथवा तेष्वेवेज्यबुद्धयस्ते तानेव देवविशेषान्यान्ति प्राप्नुवन्ति । पितृव्रताः पितृष्वग्निष्वात्तादिष्वेवेज्यबुद्ध्या नियमान्वितास्तानेव पितॄन्यान्ति । भूतेज्या भूतेषु यक्षरक्षोविनायकमातृगणादिषु इज्या पूज्यबुद्धिर्येषां ते तथा तद्यजननिष्ठास्तानि भूतान्येव यान्ति । एवं सत्त्वाधिका रजोऽधिकास्तमोऽधिकाश्चैते त्रिविधा देवव्रतादयः स्वस्वाराध्यदेवपितृभूतानुगृहीतास्तत्तत्समानैश्वर्यसामीप्यसारूप्यसायुज्याद्येकतरं भावं सर्वं वाऽपि प्राप्य तत्तद्भोगावसाने तैः सह मर्त्यलोके पतन्ति । मद्याजिनो मां साक्षाद्भगवन्तं यष्टुं शीलं येषां ते तु सात्त्विका दैवीसंपदमाश्रिता अनादिनिधनं कर्मक्लेशविपाकाद्यस्पृष्टस्वभावं समस्तेतरविलक्षणानन्तासंख्येयनित्यैश्वर्यशक्तिकमनवधिकातिशयानन्दं मामेव यान्ति, न पुनश्च्यवन्तीत्यर्थः । अतोऽन्यदेवभक्तेभ्यो मद्भक्तानां महान्विशेष इति भावः ॥ २५ ॥

म० टी०–देवतान्तरयाजिनामनावृत्तिफलाभावेऽपि तत्तद्देवतायागानुरूपक्षुद्रफलावाप्तिर्ध्रुवेति वदन् भगवद्याजिनां तेभ्यो वैलक्षण्यमाह–यान्ति देवेति । अविधिपूर्वकयाजिनो हि त्रिविधा अन्तःकरणोपाधिगुणत्रयभेदात् । तत्र सात्त्विका देवव्रताः देवा वसुरुद्रादित्यादयस्तत्संबन्धि व्रतं बल्युपहारप्रदक्षिणाप्रह्वीभावादिरूपं पूजनं येषां ते तानेव देवान्यान्ति " तं यथायथोपासते तदेव भवति " इति श्रुतेः । राजसास्तु पितृव्रताः श्राद्धादिक्रियाभिरग्निष्वात्तादीनां पितॄणामाराधकास्तानेव पितॄन्यान्ति । तथा तामसा भूतेज्या यक्षरक्षोविनायकमातृगणादीनां भूतानां पूजकास्तान्येव भूतानि यान्ति । अत्र देवपितृभूतशब्दाना तत्संबन्धिलक्षणयोष्ट्रमुखन्यायेन समासः मध्यमपदलोपिसमासानङ्गीकारात्प्रकृतिविकृतिभावाभावेन च तादर्थ्यचतुर्थीसमासायोगात् । अन्ते च पूजावाचीज्याशब्दप्रयोगात्पूर्वपर्यायद्वयेऽपि व्रतशब्दः पूजापर एव । एवं देवतान्तराराधनस्य तत्तद्देवतारूपत्वमन्तवत्फलमुक्त्वा भगवदाराधनस्य भगवद्रूपत्वमनन्तं फलमाह–यान्तीति । मां भगवन्तं यष्टुं पूजयितुं शीलं येषां ते मद्याजिनः सर्वासु देवतासु भगवद्भावदर्शिनो भगवदाराधनपरायणा मां भगवन्तमेव यान्ति, समानेऽप्यायासे भगवन्तमन्तर्यामिणमनन्तफलदमनाराध्य देवतान्तरमाराध्यान्तवत्फलं यान्तीत्यहो दुर्दैववैभवमज्ञानामित्यभिप्रायः ॥ २५ ॥

**शं० टी०**—तर्हि तेषां का वा गतिरित्याकाङ्क्षायां मुख्यफलाभावेऽपि तत्तद्देवतोपासनानुरूपं फलं भवतीत्याह—**यान्तीति**। देवव्रता देवेष्विन्द्रादिषु यज्ञदानादिनियमो व्रतं शिवविष्ण्वादिषु जपपूजोपवासादिनियमो व्रतं येषां ते देवव्रता देवयाजिनो देवानिन्द्रादीन् शिवविष्ण्वादींश्च यान्ति तत्तत्पदं गच्छन्तीत्यर्थः। पितृव्रताः पितृषु व्रतं श्राद्धभूरिभोजनादिनियमो येषां ते पितृव्रताः पितॄनग्निष्वात्तादीन् यान्ति। भूतेज्याः भूतानि विनायकवेतालदुर्गाक्षेत्रपालयक्षिण्यादयस्तानि जपहोमबल्यादिभिर्ये यजन्ति ते भूतेज्याः भूतानि यान्ति। मद्याजिनः मां सगुणं ब्रह्म "आदित्यो ब्रह्म मनो ब्रह्म सर्वं खल्विदं ब्रह्म" इति ये भेदेनाभेदेन च यजन्ति ते मद्याजिनः सगुणोपासका अप्यर्चिरादिक्रमेण मां यान्ति। अत्रत्योऽपिशब्दो निर्गुणं परं ब्रह्म स्वात्मना ये विदुस्तेषामुत्क्रमणाभावं प्राप्त्यभावं च सूचयति। यद्वा मद्याजिनो निर्गुणोपासकाः सगुणोपासका अपि मामेव परं ब्रह्म साक्षात्क्रमेण च यान्ति मद्भावं भजन्तीत्यर्थः। यद्यपि विवेकवैराग्यसंन्यासशमदमादिसंपत्त्या वेदान्तश्रवणादिना ब्रह्मज्ञानं सुलभं तत्फलप्राप्तिश्च सुलभा गमनादिश्रमशून्या तथापि नित्यश्रमसाध्यैर्जपहोमोपवासस्तोत्रपाठादिभिरतिदुष्करैः श्राद्धनियमैर्बह्वर्थव्ययैकप्रधानैर्देहायाससाध्यैश्च क्रतुयज्ञदानादिभिरुक्तैरनुक्तैश्च क्रियाविशेषैर्बहुश्रममूलैर्लब्धव्यं यत्फलं तदल्पकालिकं क्षयिष्णु सप्रतियोगिकं पुनरावृत्तिकरं च भवति पण्डितानामपि तत्रैव कामः संकल्पः प्रयत्नः प्रवृत्तिश्च दृश्यते न तु ज्ञाने ज्ञानशास्त्रे स्वल्पश्रमे नित्यफले अहो एषैव पारमेश्वरी माया जगन्मोहिनीति वयं मन्यामहे ॥ २५ ॥

**श्री० टी०**—तदेवोपपादयति—**यान्तीति**। देवेषु इन्द्रादिषु व्रतं नियमो येषां ते अन्तवतो देवान्यान्ति अतः पुनरावर्तन्ते। पितृषु व्रतं येषां श्राद्धादिक्रियापराणां ते पितॄन्यान्ति। भूतेषु विनायकमातृकादिषु इज्या पूजा येषां ते भूतानि यान्ति। मां यष्टुं शीलं येषां ते मद्याजिनस्ते तु मामेवाक्षयं परमानन्दरूपं नारायणं यान्ति ॥ २५ ॥

**स० टी०**—अनावृत्तिफलाभावेऽप्यन्यदैवतयाजिनाम् ॥ ध्रुवा क्षुद्रफलावाप्तिरित्येवं भगवान्वदन् ॥ १ ॥ भगवद्याजिनां तेभ्यो वैलक्षण्यं वदत्यलम् ॥ वसुरुद्रादयो देवास्तत्संबन्धि व्रतं हि तत् ॥ २ ॥ पूजनं चास्ति येषां ते वस्वादीनेव यान्ति वै ॥ अग्निष्वात्तादिपितॄणां ये श्राद्धादिभिरर्चकाः ॥ ३ ॥ तानेव यान्ति पितॄंस्ते राजसास्तत्परायणाः ॥ यक्षोरक्षोगणादीनां भूतानां पूजकाश्च तान् ॥ ४ ॥ यान्त्येवं भगवद्भक्ता मां विष्णुं परमेश्वरम् ॥ सदा पूजयितुं शीलं येषां मद्याजिनश्च ते ॥ ५ ॥ ये देवतासु सर्वासु भगवद्भावदर्शिनः ॥ ते मत्परायणा यान्ति मामेव परमेश्वरम् ॥६॥ अहो समानेऽप्यायासे त्यक्त्वान्यां क्षुद्रदेवताम् ॥ मामेव वासुदेवाख्यं भगवन्तं भजन्ति न ॥ ७ ॥ मदज्ञानादतीवाल्पफलभाजो भवन्ति ते ॥ अज्ञानां मन्दभाग्यानामहो दुर्दैवसंभवम् ॥ ८ ॥ इत्यभिप्राय ईशस्य कृपाब्धेर्जगतां गुरोः ॥९॥२५॥

**भा० टी०**—अविधिपूर्वकं यजतामपि फलमवश्यं भावीत्याह—**यान्तीति**। देवव्रता देवेषु व्रतं बल्युपहारप्रदक्षिणाप्रह्वीभावादिरूपो नियमो भक्तिश्च येषां ते देवानुपास्यानिन्द्रवस्वादीन् यान्ति गच्छन्ति "तं यथायथोपासते तदेव भवति" इतिश्रुतेः। तथा पितृष्वग्निष्वात्तादिषु व्रतं श्रादादिक्रियानियमो भक्तिश्च येषां ते पितॄन्यान्ति। तथा भूतेषु विनायकमातृगणचतुर्भगिन्यादिषु इज्या पूजा येषां ते भूतयाजका भूतानि यान्ति। तथा मद्यजने मम पूजने शीलं येषां ते मामेव भगवन्तं वासुदेवं यान्ति। आयासस्य समानत्वेऽप्यज्ञानान्मद्यजनमनल्पफलदं विहायान्यदेवादियजनमङ्गीकुर्वन्ति तेनाल्पफलभाजो भवन्तीत्यहो लोकानां मौढ्यमित्यभिप्रायः ॥ २५ ॥

**प० टी०**—एवमुपक्रान्तप्रमेयस्य फलितमर्थमाह—**यान्तीति**। देवेष्विन्द्रादिषु व्रतं नियमो येषां ते देवानन्तवतो यान्ति। तथा पितृव्रता नियमेन षण्णवतिश्राद्धकर्तारः पितॄन्यान्ति। भूतेषु विनायकमातृका-

दिष्विज्या येषां ते भूतानि यान्ति । तथा मां सर्वात्मकं यजन्ते ( ते ?) मद्याजिनो मां यान्ति मद्रूपतां प्राप्नुवन्ति । तथा च मत्संतर्पणेन सर्वे देवाः संतर्पिता भवन्तीत्यर्थः । तदुक्तम्–' स्मृत्या लोकेषु वर्णाश्रमविहितमदो नित्यकाम्यादिकर्म सर्वं ब्रह्मार्पणं स्यादिति निगमगिरः संगिरन्तेऽतिरम्ये । यन्नासानेत्रजिह्वाकरचरणशिरःश्रोत्रसंतर्पणेन तुष्येदद्रिश्च साक्षात्तरुरिव सकलो मूलसंतर्पणेन ? ॥ २५ ॥

शा० टी०–फलभेदं विविच्य प्रपञ्चयति–यान्तीति । भूतेज्या भूतेषु सप्तमातृकादिषु इज्या पूजा येषां ते भूतेज्याः । शिष्टं व्यक्तम् ॥ २५ ॥

**पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ॥**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥ २६ ॥**

त० दी०–किंच देवान्तरभजने तद्भक्तानां महान्प्रयासो मद्भक्तानां तु मदुपासनेऽतिसौकर्यमित्याह–पत्रमिति । अनायासलभ्यं पत्रं नवपल्लवं दूर्वाङ्कुरादि पुष्पं वा तोयं वाऽन्यत्किंचिद्वस्तु यः कश्चिदपि पुमान्मे मह्यं परमेश्वरायाप्तकामाय भक्त्या निरतिशयप्रीत्या सर्वं त्वदीयमेव न मम किंचिदिति त्वदनन्यभक्तोऽहं त्वदीयमेव तुभ्यं समर्पयामि पूर्णकामस्त्वं केवलं मदनुग्रहायाङ्गीकुरुष्वेति प्रार्थनया प्रयच्छति तस्य प्रयतात्मनः शुद्धमनसः प्रकर्षेण मदर्चने यतमनस इति वा तत्तथाविधभक्त्युपहृतमहं सर्वेश्वरोऽवाप्तसमस्तकामोऽप्यखिलब्रह्माण्डनायकोऽपि ब्रह्मेशेन्द्राद्याराधनाशक्योऽपि भक्ताधीनस्वभावत्वादश्नामि । तथोक्तं मोक्षधर्मे नारायणीयाख्याने–' यद्ब्रह्मा ऋषयश्चैव स्वयं पशुपतिश्च यत् । शेषाश्च विबुधश्रेष्ठा दैत्यदानवराक्षसाः ॥ नागाः सुपर्णगन्धर्वाः सिद्धा राजर्षयश्च ये । हव्यं कव्यं च सततं विधियुक्तं प्रयुञ्जते ॥ कृत्स्नं तु तस्य देवस्य चरणावुपतिष्ठते । याः क्रियाः संप्रयुक्ताश्च ह्येकान्तगतिबुद्धिभिः । ताः सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥ ' इति ॥ २६ ॥

म० टी०–तदेवं देवतान्तराणि परित्यज्यानन्तफलत्वाद्भगवत एवाराधनं कर्तव्यमतिसुकरत्वाच्चेत्याह–पत्रं पुष्पमिति । पत्रं पुष्पं फलं तोयमन्यद्वाऽनायासलभ्यं यत्किंचिद्वस्तु यः कश्चिदपि नरो मे मह्यमनन्तमहाविभूतिपतये परमेश्वराय भक्त्या न वासुदेवात्परमस्ति किंचिदितिबुद्धिपूर्विकया प्रीत्या प्रयच्छति ईश्वराय भृत्यवदुपकल्पयति मत्स्वत्वानास्पदद्रव्याभावात्सर्वस्यापि जगतो मयैवार्जितत्वात् अतो मदीयमेव सर्वं मह्यमर्पयति जनः तस्य प्रीत्या प्रयच्छतः प्रयतात्मनः शुद्धबुद्धेस्तत्पत्रपुष्पादि तुच्छमपि वस्तु अहं सर्वेश्वरोऽश्नामि अशनवत्प्रीत्या स्वीकृत्य तृप्यामि । अत्र वाच्यस्यात्यन्ततिरस्कारादर्शनलक्षितेन स्वीकारविशेषेण प्रीत्यतिशयहेतुत्वं व्यज्यते " न ह वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति " इति श्रुतेः । कस्मात्तुच्छमपि तदश्नासि यस्मात् भक्त्युपहृतं भक्त्या प्रीत्या समर्पितं तेन प्रीत्या समर्पणं मत्स्वीकारनिमित्तमित्यर्थः । अत्र भक्त्या प्रयच्छतीत्युक्त्वा पुनर्भक्त्युपहृतमिति वदन्नभक्तस्य ब्राह्मणत्वतपस्वित्वादि मत्स्वीकारनिमित्तं न भवतीति परिसंख्यां सूचयति । श्रीदामब्राह्मणानीततण्डुलकणभक्षणवत् प्रीतिविशेषप्रतिबद्धभक्ष्याभक्ष्यविज्ञानो बाल इव मात्राद्यर्पितं पत्रपुष्पादि भक्तार्पितं साक्षादेव भक्षयामीति वा, तेन भक्तिरेव मत्परितोषनिमित्तं न तु देवतान्तरवद्बल्युपहारादि बहुवित्तव्ययायाससाध्यं किंचिदिति देवतान्तरमपहाय मामेव भजेतेत्यभिप्रायः ॥ २६ ॥

शं० टी०–नन्वधिकारिणां महात्मनां ब्रह्मज्ञानं सुलभं तत्फलमप्यनावृत्तिलक्षणमनन्तमखण्डानन्दमद्वयं मोक्षाख्यं चातिसुलभमेव भवति तत्रानधिकारिणामतिमन्दप्रज्ञानां तु मुमुक्षूणां का वा गतिरित्याकाङ्क्षायां सतामारुरुक्षूणामपि भक्तानामहं सुलभ एवेत्याशयेनाह–पत्रमिति । पत्रं पुष्पं वा फलं तोयं वा शाल-

ग्रामे प्रतिमायां वा मे मह्यं यो मुमुक्षुर्भक्त्या श्रद्धया च प्रयच्छति तस्य प्रयतात्मनः शुद्धवृत्तेः सद्भक्त्योपहृतं समर्पितं तद्वस्त्वहं परमेश्वरः सम्यगश्नाम्यनुगृह्णामि तेनैव संतुष्टः स्यामित्यर्थः । " धिगनीशार्चनं जन्म " इतीश्वराराधनशून्यस्य जन्मनो निष्फलत्वश्रवणादीश्वराराधनस्य षट्कर्मान्तःपातित्वाच्चेश्वराराधनं मुमुक्षोरवश्यं कर्तव्यमिति सूचितं भवति । यद्वा ' अभ्यागतः स्वयं विष्णुः ' इतिस्मरणात्काले प्राप्ताय मे मद्रूपायातिथये पत्रं पक्वं शाकं वा फलं वा पुष्पं पुष्पशब्देन शलाटुरुच्यते, तं वा पक्वं तोयं वा स्वयं यद्भुङ्क्ते तद्भक्त्या श्रद्धया च यः प्रयच्छति दानमेव गृहस्थस्येति नियमात्स्वधर्मनिष्ठस्य भूतदयावतस्तस्य शुद्धात्मनः शुद्धभक्त्या ब्राह्मणमुखे उपहृतं समर्पित पत्रं वा तोयं तद्द्रव्यमहं परमेश्वरः साक्षात्तन्मुखेनाश्नामि भुञ्ज इत्यर्थः ॥ २६ ॥

**श्री० टी०**--तदेवं स्वभक्तानामक्षयफलत्वमुक्तम्, अनायासत्वं च स्वभक्तेर्दर्शयति--**पत्रमिति** । पत्रपुष्पादिमात्रमपि मह्यं भक्त्या प्रीत्या यः प्रयच्छति तस्य प्रयतात्मनः शुद्धचित्तस्य निष्कामभक्तस्य तत्पत्रपुष्पादिकं तेन भक्त्योपहृतं समर्पितमहमश्नामि प्रीत्या गृह्णामि । नहि महाविभूतिपतेः परमेश्वरस्य मम क्षुद्रदेवतानामिव बहुवित्तसाध्ययागादिभिः परितोषः स्यात्, किंतु भक्तिमात्रेण अतो भक्तेन समर्पितं यत्किंचित्पत्रादिमात्रमपि तदनुग्रहार्थमेवाश्नामीति भावः ॥ २६ ॥

**स० टी०**--अनावृत्तिफलावाप्त्यै कार्या भक्तिर्न केवलम् ॥ श्रीहरेः किंत्वनायासाराध्यत्वादपि सज्जनैः ॥ १ ॥ पत्रं पुष्पं फलं तोयमन्यद्वा वस्तु किंचन ॥ यदनायासलभ्यं यः कश्चनापि नृदेहभृत् ॥ २ ॥ अनन्तैश्वर्यपतये मह्यं श्रीविष्णवे सुधीः ॥ वासुदेवात्परं नास्ति किंचनेति मनीषया ॥ ३ ॥ प्रीत्या भृत्यवदेवासावीश्वरायार्पयत्यतः ॥ मत्स्वत्वानास्पदद्रव्याभावात्सर्वस्य वस्तुनः ॥ ४ ॥ मयार्जिततया सर्वं मदीयं मेऽर्पयत्ययम् ॥ प्रीत्या प्रयच्छतस्तस्य शुद्धबुद्धेर्महात्मनः ॥ ५ ॥ पुष्पपत्रादि तत्फल्गु वस्त्वहं परमेश्वरः ॥ स्वीकृत्याशनवत्प्रीत्या तृप्यामि प्रीतिभुग्घरिः ॥ ६ ॥ यस्मात्समर्पितं प्रीत्या मत्स्वीकारेऽस्ति कारणम् ॥ श्रीदामब्राह्मणानीततण्डुलाशनवद्यतः ॥ ७ ॥ परितोषनिमित्तं मे भक्तिरेव न वैभवम् ॥ अतो देवान्तरं हित्वा मामेव सततं भजेत् ॥ ८ ॥ २६ ॥

**भा० टी०**--न केवलं मम पूजकानां मत्प्राप्तिरूपमनावृत्तिलक्षणमनन्तफलमपि तु मत्पूजनसाधनानामतिसौलभ्यान्मद्यजनमतिसुलभमित्याह--**पत्रमिति** । पत्रं तुलसीपत्रं पुष्पं फलं तोयं जलं यो मे मह्यं भक्त्या परप्रेम्णा प्रयच्छति अर्पयति प्रयतात्मनः तत्पत्रादि भक्त्या उपहृतं समर्पितमश्नामि गृहीत्वा तृप्यामीत्यर्थः । सुदाम्नोपाहृततन्दुलवद्भक्षयामि इति वा । तस्माद्देवतान्तरादिपूजनं विहायाल्पायासलभ्यवस्तुसाध्यमनन्तफलदं मद्यजनमतिभक्त्या कर्तव्यमित्यभिप्रायः ॥ २६ ॥

**प० टी०**--तदेवपित्रादिप्राप्त्यर्थं कायक्लेशार्थव्ययादिना भूयानायासोऽस्ति मत्प्राप्तिस्तथा नेत्याह--**पत्रमिति** । तस्य प्रयतात्मनः शुद्धचित्तस्य पुरुषस्य तत्पत्रपुष्पादिकमहमश्नामि गृह्णामि नान्यस्य । तस्य कस्य, यो मे मह्यं भक्त्या भावेन प्रयच्छति न दम्भेन । तत्किम्, भक्त्युपहृतम् । भक्त्या भजनेनार्जवेनानीतं न तु बलात्कारेण चौर्येण वा । तस्मादवाप्तसकलकामोऽहं भक्त्यैव लभ्यो नोपचारैरित्यर्थः ॥ २६ ॥

**रा० टी०**--अन्यदेवताभजनस्याल्पफलत्वेऽपि तदेव कार्यं सुशकत्वात्, त्वद्भजनं तु दुर्बलैरशक्यं कर्तुं तवातिमाहिमत्वादित्यत आह--**पत्रमिति** । अनिषिद्धपत्रादिकं यो मह्यं भक्त्या ददाति । प्रयतात्मनः यम उपरमे प्रकर्षेणोपरतमनस्कस्य विषयविरक्तस्य भक्त्या समर्पितमश्नामि भक्त्यैवाहं तुष्टो भवामि न द्रव्यादिनेति भावः ॥ २६ ॥

**यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ॥**
**यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम् ॥ २७ ॥**

**त० टी०**—अहो महान्भक्तेः प्रभावो यतो महाविभूतिपतिरनन्तकोटिब्रह्माण्डनायकोऽपि भवान भक्त्याऽर्पितमतिफल्गु पत्रपुष्पाद्यपि अश्नाति। हन्त तर्हि भक्तस्यासाधारणं धर्मं वद येनाहमपि त्वद्भक्तः स्यामित्यत आह—**यत्करोषीति** । यत्स्वाभाविकं लौकिकं किंचित्कर्म तथा यद्देहधारणार्थमश्नासि, यज्जुहोषि वैदिकं होमकर्म करोषि। तथा यद्ददासि यत्तपस्यसि उपलक्षणमेतत्सर्वेषां नित्यनैमित्तिककर्मणाम् । तथा च यत्किंचित्स्वभावप्राप्तमाहारविहारेक्षणादिकं, यच्च शास्त्रविहितं होमदानव्रतस्नानादिकं सर्वं कर्म मदर्पणं मय्यर्पितं यथा स्यात्तथा कुरुष्व । कर्म कर्तृत्वमुपायमुपेयं च सर्वं मय्येवार्पयित्वा निर्भरत्वभवनपूर्वकं स्वस्यैहिकामुष्मिकस्य सर्वस्य शुभाशुभस्य मदधीनत्वव्यवसाय इति मदनन्यभक्तासाधारणो धर्मस्तस्मात्त्वं मदाराधनैकनिष्ठो मय्यर्पितसर्वस्वो भवेति भावः ॥ २७ ॥

**म० टी०**—कीदृशं ते भजनं तदाह—**यत्करोषीति** । यत्करोषि शास्त्रादृतेऽपि रागात्प्राप्तं गमनादि, यदश्नासि स्वयं तृप्त्यर्थं कर्मसिद्ध्यर्थं वा, तथा यज्जुहोषि शास्त्रबलान्नित्यमग्निहोत्रादिहोमं निर्वर्तयसि श्रौतस्मार्तसर्वहोमोपलक्षणमेतत् , तथा यद्ददासि अतिथिब्राह्मणादिभ्योऽन्नहिरण्यादि, तथा यत्तपस्यसि प्रतिसंवत्सरमज्ञातप्रामादिकपापनिवृत्तये चान्द्रायणादि चरसि उच्छृङ्खलप्रवृत्तिनिरासाय शरीरेन्द्रियसंघातं संयमयसीति वा, एतच्च सर्वेषां नित्यनैमित्तिककर्मणामुपलक्षणं तेन यत्तव प्राणिस्वभाववशाद्विनापि शास्त्रमवश्यंभावि गमनाशनादि यच्च शास्त्रवशादवश्यंभावि होमदानादि हे कौन्तेय तत्सर्वं लौकिकं वैदिकं च कर्मान्येनैव निमित्तेन क्रियमाणं मदर्पणं मय्यर्पितं यथा स्यात्तथा कुरुष्व । आत्मनेपदेन समर्पकनिष्ठमेव समर्पणफलं न तु मयि किंचिदिति दर्शयति। अवश्यंभाविनां कर्मणां मयि परमगुरौ समर्पणमेव मद्भजनं नतु तदर्थं पृथग्व्यापारः कश्चित्कर्तव्य इत्यभिप्रायः ॥ २७ ॥

**शं० टी०**—यस्मादहं साधूनां भक्तिसुलभस्तस्माद्यद्यत्कर्म करोषि तदखिलं मदर्पणं कुर्वित्याह—**यदिति** । विहितमलोकविद्विष्टं यल्लौकिकं कर्म करोषि यच्च शास्त्रीयमनायासलब्धमन्नमश्नासि यच्च चरुपुरोडाशादिहोम्यमग्न्यादिदेवताभ्यो जुहोषि यच्च पात्रेभ्य ओदनोदकधनधान्यकन्यागवादिविशिष्टं द्रव्यं ददासि यच्च तपस्यसि संध्यावन्दनादि वेदाध्ययनादि वा व्रतोपवासादिकं वा तपः करोषि लौकिकं वैदिकं च यद्यत्कर्म करोषि तत्सर्वं मदर्पणं कुरुष्व ब्रह्मार्पणबुद्ध्यैव सर्वं कर्म कुरुष्वेत्यर्थः ॥ २७ ॥

**श्री० टी०**—न च पत्रपुष्पादिकमपि यज्ञार्थं पशुसोमादिद्रव्यवन्मदर्थमेवोद्यमैरापाद्य समर्पणीयम् , किं तर्हि—**यदिति** । स्वभावतो वा शास्त्रतो वा यत्किंचित्कर्म करोषि तथा यदश्नासि यज्जुहोषि यद्ददासि यत्तपस्यसि तपः करोषि तत्सर्वं मय्यर्पितं यथा भवत्येवं कुरुष्व ॥ २७ ॥

**स० टी०**—यत्करोषि स्वतः प्राप्तं यदश्नासि स्वतृप्तये ॥ श्रौतं वा स्मार्तमथवा यज्जुहोषि विधेर्बलात् ॥ १ ॥ अतिथिब्राह्मणादिभ्यो हेमान्नादि ददासि यत् ॥ चान्द्रायणादिकं दोषशान्त्यै चरसि यत्तपः ॥ २ ॥ उच्छृङ्खलप्रवृत्तेर्वा निरासायात्मसंयमम् ॥ लौकिकं वैदिकं प्राणिस्वभावाद्वा करोषि यत् ॥ ३ ॥ मय्यर्पितं यथा तत्स्यात्कुरुष्व त्वं तथा सदा ॥ समर्पकगतं सर्वं समर्पणफलं यतः ॥ ४ ॥ इत्यात्मनेपदेनात्र हरिणा दर्शितं स्फुटम् ॥ अवश्यंभाविनां सर्वकर्मणां परमेश्वरे ॥ ५ ॥ प्रीत्या समर्पणं नित्यं भजनं मे मयेरितम् ॥ न तु काचित्तदर्थेऽस्ति कर्तव्या व्यापृतिः पृथक् ॥ ६ ॥ इत्येवं वासुदेवस्य श्रीहरेराशयः परः ॥ ७ ॥ २७ ॥

भा० टी०—यतः पत्रादिकमपि भक्त्युपहृतं गृह्णामि अतः सर्वमपि कर्म मय्यर्पितं यथा भवेत्तथा कर्तव्य-मिदमेव चातिसुलभं मद्यजनमित्याह—यत्करोषीति । यत्करोषि यद्रागादाचरसि यच्चाश्नासि यच्च जुहोषि श्रौतं स्मार्तं वा हवनं संपादयसि यच्च हिरण्यादि ब्राह्मणादिभ्यो ददासि प्रयच्छसि यत्तपस्यसि तपश्चरसि तन्मदर्पणं कुरुष्वेश्वरप्रेरणया तदर्थमेव सर्वं करोमीति बुद्ध्या मयि वासुदेवेऽर्पितं यथा भवति तथा कुरुष्व। मत्संबन्धित्वात्तवैतदतिसुलभमिति सूचयन्नाह—कौंतेयेति, यद्वा यथा कुन्ती भर्तुराज्ञया भवदादीनिन्द्रादि-सङ्गेनोत्पाद्यापि तत्कर्मसंबन्धवर्जिता तथा त्वमप्येवं कुर्वन् कर्मबन्धनैर्मोक्ष्यसे इति संबोधनस्य गूढा-भिप्रायः ॥ २७ ॥

प० टी०—तदेवं पत्रपुष्पाद्यर्पणार्थं मत्प्रतिमाविभूतिगवेषणप्रयासो मास्त्वित्याह—यदिति । स्वभावतः शास्त्रतो वा करचरणव्यापारेण यत्किंचित्कर्म करोषि यदश्नासि भोक्तुमिच्छसि जुहोष्यग्नौ क्षिपसि ददासि तपस्यसि च तत्सर्वं मदर्पणं कुरु । संकल्पमात्रेणैव मदर्पणं भवति न पुनर्दर्शनाद्यपेक्ष्येत्यर्थः ॥ २७ ॥

रा० टी०—यतोऽल्पमपि भक्त्यार्पितं मम प्रीतिकरमतस्त्वमपि तथा कुर्वित्युपसंहरति—यदिति ॥ २७॥

**शुभाशुभफलैरेवं मोक्ष्यसे कर्मबन्धनैः ॥**
**संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ॥ २८ ॥**

त० टी०—एवंवृत्तस्त्वं यत्फलं प्राप्स्यसि तच्छृणु—शुभाशुभफलैरिति । एवं मदुक्तप्रकारेण संन्यासः मयि सर्वकर्मकर्तृत्वादिसमर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य तथाभूतः सन् शुभाशुभे इष्टानिष्टे फलं येषां तैः कर्मबन्धनैः कर्मरूपैर्बन्धनैर्मोक्ष्यसे कर्मणां मय्यर्पितत्वात्तव तत्सं-बन्धानुपपत्तेः । ततश्च तैर्विमुक्तः सन्मामेवोपैष्यसि न पुनः संसारे वत्स्यसीत्यर्थः ॥ २८ ॥

म० टी०—एतादृशस्य भजनस्य फलमाह—शुभाशुभेति । एवमनायाससिद्धेऽपि सर्वकर्मसमर्पणरूपे मद्भजने सति शुभाशुभे इष्टानिष्टे फले येषां तैः कर्मबन्धनैर्बन्धरूपैः कर्मभिर्मोक्ष्यसे मयि समर्पितत्वात्तव तत्संबन्धानुपपत्तेः कर्मभिस्तत्फलैश्च न संस्रक्ष्यसे । ततश्च संन्यासयोगयुक्तात्मा संन्यासः सर्वकर्मणां भग-वति समर्पणं स एव योग इव चित्तशोधकत्वाद्योगस्तेन युक्तः शोधित आत्मान्तःकरणं यस्य स त्वं त्यक्तसर्वकर्मा वा कर्मबन्धनैर्जीवन्नेव विमुक्तः सन् सम्यग्दर्शनेनाज्ञानावरणनिवृत्त्या मामुपैष्यसि साक्षा-त्करिष्यस्यहं ब्रह्मास्मीति । ततः प्रारब्धकर्मक्षयात्पतितेऽस्मिन् शरीरे विदेहकैवल्यरूपं मा-मुपैष्यसि इदानीमपि मद्रूपः सन् सर्वोपाधिनिवृत्त्या मायिकभेदव्यवहारविषयो न भविष्यसीत्यर्थः ॥२८॥

शं० टी०—श्रौतं स्मार्तं वाऽन्यद्वापीश्वरार्पणबुद्ध्या कर्म कुर्वतस्तदनुष्ठितेः फलमाह—शुभाशुभफलैरिति। एवमीश्वरार्पणबुद्ध्या वैदिकमवैदिकं च युक्तं कर्म कुर्वाणस्त्वं शुभाशुभफलैः सुखदुःखप्रदैः स्वर्गनरकहेतुभिर्वा कर्मबन्धनैः कर्माण्येव बन्धनानि कर्मबन्धनानि तैर्मोक्ष्यसे मुक्तो भविष्यसि । ननु कर्मण्येवाधिकारस्त इति, नियतं कुरु कर्म त्वमिति, स्वधर्ममिति च विहितानामेव कर्मणां कर्तव्यत्वविधानात्कथं विहितानामशुभ-फलत्वमिति चेन्न, विहितानामप्यनुष्ठानवैकल्येऽशुभफलहेतुत्वोपपत्तेः "यस्याग्निहोत्रमदर्शमपौर्णमासम-चातुर्मास्यमनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमविधिना हुतमासप्तमांस्तस्य लोकान् हिनस्ति" इति। "स वाग्वज्रो यजमानं हिनस्ति" इत्यादिश्रुतेः स्मृतेश्च मन्त्रस्वरवर्णद्रव्यकालादिनियमवैपरीत्ये स्कन्ने भिन्ने च विहितानामप्यशुभफलकारित्वमुपपद्यते ततो 'नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते' इतिन्यायेने-श्वरार्पणबुद्ध्या श्रद्धाभक्तिभ्यां च कृतानां तु कर्मणां विपर्यासेऽपि प्रत्यवायाद्यसंभवात् । तथा संन्यासयोग-युक्तात्मा संन्यासः परमेश्वरे कर्मफलत्यागः स एव योगः कर्मबन्धमोक्षोपायस्तत्र सर्वकर्मफलसंन्यास एव

युक्तः सक्त आत्मा मनो यस्य तथोक्तः सन् कर्मबन्धनैर्विमुक्तः क्रमेण मां परमात्मानमुपैष्यसि विदेहमुक्तिं प्राप्स्यसीत्यर्थः । यद्वा सिद्ध्यसिद्ध्योः समो भूत्वा चेश्वरार्पणबुद्ध्या चाऽनेनेश्वरो मे प्रसीदत्वित्यादिकामनाराहित्येन चैवं नित्यं नैमित्तिकं च कर्म कुर्वाणस्त्वं स्वानुष्ठितसत्कर्मसमुत्पन्नचित्तशुद्धिद्वारा संप्राप्तात्मविज्ञानः सन् संन्यासयोगयुक्तात्मा नाहं कर्तास्मीति स्वस्य सम्यक्कूटस्थत्वासङ्गत्वविज्ञानेन संचिताद्यशेषकर्मसंबन्धाभावदर्शनमेव संन्यासयोगस्तस्मिन्संचितागामिवर्तमानसर्वकर्मतत्कर्त्रादिसंबन्धाभावदर्शन एव युक्तः समाहित आत्मा मनो यस्य स संन्यासयोगयुक्तात्मा भूत्वा शुभाशुभफलैः स्वर्गनरकसुखदुःखप्रापकैः कर्मबन्धनैः कर्माणि पुण्यापुण्यमिश्ररूपाणि संचितादीनि तान्येव पुरुषो जन्मादिभिर्बध्यते यैस्तानि बन्धनानि तैः कर्मबन्धनैर्मोक्ष्यसे । एवं विमुक्तः संन्यासयोगेन कर्मबन्धनैर्विमुक्तः सन् मां निर्विशेषं परं ब्रह्मान्तरालं विनैवोपैष्यसि विदेहकैवल्यं प्राप्स्यसीत्यर्थः ॥ २८ ॥

**श्री० टी०**—एवं च यत्फलं प्राप्स्यसि तच्छृणु—शुभेति । एवं कुर्वन्कर्मबन्धनैः कर्मनिमित्तैरिष्टानिष्टैः फलैर्मुक्तो भविष्यसि । कर्मणां मयि समर्पितत्वेन तव तत्फलसंबन्धानुपपत्तेः । तैश्च विमुक्तः सन् संन्यासयोगयुक्तात्मा संन्यासः कर्मणां मदर्पणं स एव योगस्तेन युक्त आत्मा चित्तं यस्य तथाभूतस्त्वं मां प्राप्स्यसि ॥ २८ ॥

**स० टी०**—भजनस्येदृशस्येशः फलमाह जगद्गुरुः ॥ एवं सिद्धेऽप्यनायासान्मद्भजने सतीष्टदे ॥ १ ॥ इष्टानिष्टे फले येषां तैस्त्वं कर्माख्यबन्धनैः ॥ मोक्ष्यसे न तु संसर्गं प्राप्स्यसीशसमर्पणात् ॥ २ ॥ संन्यासो मयि गोविन्दे सर्वकर्मसमर्पणम् ॥ धीशोधकतया योगस्तेन युक्तः समाहितः ॥ ३ ॥ शोधितो योग्यतां नीत आत्मा यस्यान्तरं मनः ॥ जीवन्नेव विमुक्तः सन्नज्ञानावृतिबाधनात् ॥ ४ ॥ साक्षात्कृतात्मतत्त्वः सन्मां कैवल्यपदाभिधम् ॥ पतितेऽस्मिन् शरीरे त्वं क्षयात्प्रारब्धकर्मणः ॥ ५ ॥ उपैष्यस्यधुना ब्रह्मरूपः सन्नेव मद्वपुः ॥ सर्वोपाधिनिवृत्त्या स्वे महिम्न्येव प्रतिष्ठितः ॥ ६ ॥ भविष्यसीति तात्पर्यं श्रीमद्भगवतो हरेः ॥ ७ ॥ २८ ॥

**भा० टी०**—एवं मदर्पणं कुर्वतस्तव यत्फलं भविष्यति तच्छृणु—शुभेति । शुभाशुभे इष्टानिष्टे फले येषां कर्मणां तान्येव बन्धनानि शुभाशुभफलैः कर्मरूपैर्बन्धनैरिति यावत् । एवं मदुक्तं कुर्वन् मोक्ष्यसे कर्मभिर्न बध्यसे इत्यर्थः । सोऽयं मदर्पणबुद्ध्या क्रियमाणकर्मसंन्यासयोगो नाम फलत्यागात्संन्यासश्चासौ कर्मत्वाद्योगश्च तेन युक्त आत्मा अन्तःकरणं यस्य स त्वं संन्यासः स्वरूपतः सर्वकर्मत्यागः स एव युज्यते ब्रह्मणानेनेति योगस्तेन युक्तस्तस्मिन्युक्तः समाहितो वा आत्मान्तःकरणं यस्य स त्वमित्यर्थस्तु सर्वकर्मत्यागरूपे मुख्यसंन्यासेऽर्जुनाधिकारो भगवतो नाभिप्रेत इत्यभिप्रेत्याचार्यैर्न प्रदर्शितः । संन्यासयोगयुक्तात्मा सन् ज्ञानप्राप्त्या जीवन्नेव कर्मबन्धनैर्विमुक्तः पतिते च देहे मां परमात्मानं सच्चिदानन्दघनं मोक्षाख्यमुपैष्यसि प्राप्स्यसि ॥ २८ ॥

**प० टी०**—तत्फलमाह—शुभाशुभेति । एवममुना प्रकारेण मदर्पणधिया क्रियमाणानां कर्मणां कर्मबन्धनैः कर्मनिबन्धनैः शुभाशुभफलैरिष्टानिष्टैर्मोक्ष्यसे विमुक्तो भविष्यसि । यथाग्नौ भर्जितबीजानामङ्कुरोत्पादकत्वं नास्ति तथैव ब्रह्मार्पणधिया कृतानां कर्मणां फलजनकत्वं नास्तीत्यर्थः । ततश्च संन्यासयोगेन प्रागुक्तेन युक्त आत्मा चित्तं यस्यैवंविधस्त्वं विमुक्तो जीवन्मुक्तदशां प्राप्य मामुपैष्यसि ॥ २८ ॥

**रा० टी०**—त्वदर्पणेन किमित्यत आह—शुभाशुभेति । शुभाशुभफलैरिति बहुव्रीहिः । एवं मयि सर्वसमर्पणे सति शुभाशुभफलकैः कर्मबन्धनैः मोक्ष्यसे । तदेव व्यनक्ति—संन्यासेति । फलत्यागकर्मानुष्ठानाभ्यां युक्तात्मा विमुक्तः सन्मामुपैष्यसि ॥ २८ ॥

समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः ॥
ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ २९ ॥

त० टी०—ननु यद्येवं त्वं स्वभक्तानेवात्मभावं प्रापयसि नान्यांस्तर्हि तवापि रागद्वेषयोगात्सर्वेश्वरत्वं कथं स्यादिति चेत्तत्राह—सम इति । सर्वेषु देवतिर्यङ्मनुष्यपश्वाद्यात्मनाऽवस्थितेषु जातिस्वभावज्ञानाज्ञानादिनोत्तममध्यमाधमेषु भूतेषु प्राणिषु भजनीयतयाऽन्तर्यामितया च समोऽहं, यतो न मे द्वेष्योऽस्ति न प्रियः । अपकृष्टजातिस्वभावज्ञानादिमताऽऽराध्यमानस्य मे न कश्चिदपकर्षो भवत्यतस्तथाभूतो मदाराधको मम द्वेषविषयो न भवति । तथोत्कृष्टजातिस्वभावज्ञानादिमता पुरुषेणाराध्यमानस्य मे कश्चिदुत्कर्षो न भवत्यतो जात्यादिभिरुत्कृष्टोऽयमित्येवं मत्प्रीतिविषयो न भवति । एवमपि ये तु जात्यादिनिकृष्टा उत्कृष्टा वा भक्त्या मां भजन्ति ते मयि चित्तवृत्त्या वर्तन्ते, अहमपि तेष्वनुग्राहकतया वर्ते, तेषां मद्वियोगो न भवतीत्यर्थः । यथा जात्यादिनिकृष्टा गजेन्द्रशबरीगुहकुब्ज्यादयः, उत्कृष्टाः श्रुतदेवबहुलाश्वभीष्मपाण्डवादयः, सर्वेऽपि मन्निष्ठा मदनुग्राह्यत्वेन समा एव । न त्वभक्ता दुर्योधनादयः । एवं न मे वैषम्यापत्तिः । यथा कल्पवृक्षः स्वाश्रितस्यैव मनोरथं पूरयति, यथा वाऽग्निः स्वाश्रितस्यैव शीतं तमश्च नाशयति, न तेन तस्य किंचिद्वैषम्यं तथा ममापि भक्तानेवानुगृह्णतो न किंचिद्वैषम्यमिति भावः । तथोक्तं श्रीभागवते युधिष्ठिरेण—'न ब्रह्मणः स्वपरभेदमतिस्तव स्यात्सर्वात्मनः समदृशः स्वसुखानुभूतेः । संसेवतां सुरतरोरिव ते प्रसादः सेवानुरूपमुदयो न विपर्ययोऽत्र ॥' इति ॥ २९ ॥

म० टी०—यदि भक्तानेवानुगृह्णासि नाभक्तान् ततो रागद्वेषवत्त्वेन कथं परमेश्वरः स्या इति नेत्याह—समोऽहमिति । सर्वेषु प्राणिषु समस्तुल्योऽहं सद्रूपेण स्फुरणरूपेणानन्दरूपेण च स्वाभाविकेनौपाधिकेन चान्तर्यामित्वेन अतो न मम द्वेषविषयः प्रीतिविषयो वा कश्चिदस्ति सावित्रस्येव गगनमण्डलव्यापिनः प्रकाशस्य । तर्हि कथं भक्ताभक्तयोः फलवैषम्यं तत्राह—ये भजन्ति तु ये तु भजन्ति सेवन्ते मां सर्वकर्मसमर्पणरूपया भक्त्या अभक्तापेक्षया भक्तानां विशेषद्योतनार्थस्तुशब्दः । कोऽसौ मयि ते ये मदर्पितैर्निष्कामैः कर्मभिः शोधितान्तःकरणास्ते निरस्तसमस्तरजस्तमोमलस्य सत्त्वोद्रेकेणातिस्वच्छस्यान्तःकरणस्य सदा मदाकारां वृत्तिमुपनिषन्मानेनोत्पादयन्तो मयि वर्तन्ते अहमप्यतिस्वच्छायां तदीयचित्तवृत्तौ प्रतिबिम्बितस्तेषु वर्ते । चकारोऽवधारणार्थस्त एव मयि तेष्वेवाहमिति । स्वच्छस्य हि द्रव्यस्यायमेव स्वभावो येन संबध्यते तदाकारं गृह्णातीति, स्वच्छद्रव्यसंबद्धस्य च वस्तुन एष एव स्वभावो यत्तत्र प्रतिफलतीति, तथा अस्वच्छद्रव्यस्याप्येष एव स्वभावो यत्स्वसंबद्धस्याप्याकारं न गृह्णातीति, अस्वच्छद्रव्यसंबद्धस्य च वस्तुन एष एव स्वभावो यत्तत्र न प्रतिफलतीति। यथा हि सर्वत्र विद्यमानोऽपि सावित्रः प्रकाशः स्वच्छे दर्पणादावेवाभिव्यज्यते न त्वस्वच्छे घटादौ, तावता न दर्पणे रज्यति न वा द्वेष्टि घटम् । एवं सर्वत्र समोऽपि स्वच्छे भक्तचित्तेऽभिव्यज्यमानोऽस्वच्छे चाभक्तचित्तेऽनभिव्यज्यमानोऽहं न रज्यामि कुत्रचित् न वा द्वेष्मि कंचित् सामग्रीमर्यादया जायमानस्य कार्यस्यापर्यनुयोज्यत्वात् वह्निवत्कल्पतरुवच्चावैषम्यं व्याख्येयम् ॥ २९ ॥

शं० टी०—परमात्मा भक्तानां मुक्तिं प्रयच्छति न त्वभक्तानामतो निर्दोषं हि समं ब्रह्मेतिस्मृत्युक्तं परमात्मनो यत्समत्वं तदुक्तिमात्रमेव वैषम्यं त्वस्त्येवेत्याशङ्कायां न, सर्वसमोऽपि भानुः शीतकाले स्वमनावृतदेशमासाद्य ये सेवन्ते तेषां शीतं नाशयति न त्वसेवमानानां ततस्तद्वैषम्यं भानुकृतं न भवति किंतु पुरुषकृतमेव यथा तथैव प्रकृतेऽपीति सूचयितुमाह—समोऽहमिति । सर्वभूतेषु सर्वेषु ब्रह्मादिस्तम्बपर्यन्तेषु

प्राणिष्वहं परमात्मा परिपूर्णो निर्विशेषः स्वयं घटमठादिष्वाकाशवत्समस्तुल्यस्वभाव एवास्मि न वाय्वादिवद्विषमस्तत एव मम न कश्चिदपि प्रियोऽस्ति नापि द्वेष्योऽप्रियोऽप्यस्ति "अप्राणो ह्यमनाः शुभ्रः" इति श्रवणादमनस्कस्य प्रियाप्रियत्वभावनायोगात् । ननु प्रियाप्रियत्वभावनाभावे कथं तर्हि केषांचिन्मुक्तिः केषांचिदमुक्तिरित्याशङ्कायां न, तत्पुरुषतन्त्रं न तु मत्तन्त्रमित्याह—**ये भजन्तीति** । स्वप्रयत्नेन तीव्रमोक्षेच्छया च शुभान्येव कर्माणि बहुजन्मभिः कृत्वा तत्परिपाकाच्छुद्धात्मानः सन्तः सर्वं संन्यस्य सद्गुरुप्रसादात् श्रवणादिना परतत्त्वं ज्ञात्वा ये पुरुषधौरेया भक्त्याऽखण्डवृत्त्या मां भजन्ति ब्रह्मैवाहमिति स्वमेव पूर्णात्मना स्थितं पश्यन्तीत्यर्थः । ते यतयो ब्रह्मनिष्ठाः स्वच्छस्वभावत्वात्सर्वदा मय्यानन्दात्मनि ब्रह्मणि स्वयं वर्तन्ते मयि मद्रूपेण तिष्ठन्तीत्यर्थः । अहं च निर्विशेषः परिपूर्णोऽपि तेषु ब्रह्मवित्सु तद्वृत्तेः सर्वदा चक्षुषो रूपवद्विषयीभूय तिष्ठामि यथा सर्वव्यापकः सर्वसमोऽप्याकाशः स्वच्छेषु जलदर्पणादिषु प्रतिबिम्बते नतु कुड्यादिषु तद्वदहमपि सत्सु भामि न त्वसत्सु । "तरति शोकमात्मवित्" इति श्रवणाद्ये मां विदुस्ते मुक्ता ये न विदुस्ते बद्धा भवन्त्यतो मद्वेदनमेव पुंप्रयत्नलभ्यं मुक्तिकारणं तदभावो बन्धकारणं न त्वहं न च गुरुर्नापि च शास्त्रं ततो न मम सर्वसमत्वव्याघात इति भावः । एतेन शीतनिवृत्तिः पुरुषप्रयत्नसाध्या यथा तथा भवमुक्तिरपि पुरुषप्रयत्नसाध्या नतु स्वयमेव सिध्यति तस्मान्मुमुक्षुभिर्मुक्त्यै प्रयतितव्यमिति सूचितं भवति ॥ २९ ॥

**श्री० टी०**—यदि भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यस्तर्हि तवापि किं रागद्वेषादिकृतं वैषम्यमस्ति नेत्याह—**सम इति** । समोऽहं सर्वेष्वपि भूतेषु अतो मे मम प्रियश्च द्वेष्यश्च नास्त्येव । एवं सत्यपि ये मां भजन्ति ते भक्ता मयि वर्तन्ते । अहमपि तेषु अनुग्राहकतया वर्ते । अयं भावः—यथाऽग्नेः स्वसेवकेष्वेव तमःशीतादिदुःखमपाकुर्वतोऽपि न वैषम्यं, यथा वा कल्पवृक्षस्य तथैव भक्तपक्षपातिनोऽपि मम न वैषम्यं किंतु मद्भक्तेरेवायं महिमेति ॥ २९ ॥

**स० टी०**—अनुगृह्णासि भक्तांश्चेन्नाभक्तांस्त्वं ततः कथम् ॥ रागद्वेषादिवत्त्वेन सर्वेशोऽसीति चेच्छृणु ॥ १ ॥ सर्वप्राणिषु तुल्योऽहं सच्चिदानन्दरूपतः ॥ अन्तर्यामितया तद्वन्न कश्चिद्द्वेषगोचरः ॥ २ ॥ प्रियो वा मे प्रकाशस्य सावित्रस्येव कश्चन ॥ कथं फलेऽस्ति वैषम्यं स्वभक्ताभक्तयोस्तदा ॥ ३ ॥ सेवन्ते ये तु मां भक्त्या सर्वकर्मार्पणाख्यया ॥ चित्तशुद्ध्यात्मबोधेन ते मय्यात्मनि चिद्घने ॥ ४ ॥ स्वभावात्सन्ति तत्त्वैकाकारवृत्त्याऽतिशुद्धया ॥ अहमप्यतिशुद्धायां सद्धीवृत्तौ निरन्तरम् ॥ ५ ॥ प्रतिबिम्बतया तेषु वर्त एव स्वभावतः ॥ यथाग्निर्नापनयति दूरस्थानां नृणां तमः ॥ ६ ॥ शीतं वा तेन न द्वेष्या अग्नेः स्युर्दूरगामिनः ॥ शीतं तमोऽपनयति समीपमुपसर्पताम् ॥ ७ ॥ तेन तेन प्रियास्तस्य तद्वत्कल्पतरोरपि ॥ स्वस्वकामानुसारेण विचित्रफलदायिनः ॥ ८ ॥ तथैव भक्त्यभक्तिभ्यां विचित्रफलदायिनः ॥ न वैषम्यं न नैर्घृण्यं भवेत्सर्वसमस्य मे ॥ ९ ॥ २९ ॥

**भा० टी०**—ननु मोक्षादिदानेन भक्ताननुगृह्णतस्तददानेनाभक्ताननुगृह्णतस्तव वैषम्यमिति चेत्तत्राह—**सम इति** । अहं परमात्मा सच्चिदानन्दघनः सर्वभूतेषु ब्रह्मादिस्तम्बपर्यन्तेषु समः समानः यतो मम द्वेषविषयः कश्चिदपि न भवति रागविषयश्च । एवं तर्हि कथं भक्ताननुगृह्णासि नेतराननिति तत्राह—**य इति** । तुशब्दः शङ्काव्यवच्छेदार्थः । यथा सवितृप्रकाशः स्वच्छास्वच्छदर्पणेषु समोऽपि स्वच्छेषु विशेषेण वर्तते नास्वच्छेषु, यथा वह्निः सर्वसमोऽपि सन्निहितानां शीतं नाशयति नासन्निहितानां, यथा वा कल्पवृक्षो भक्ताननुगृह्णाति नाभक्तान् एवं ये तु भक्त्या मां भजन्ते सेवन्ते ते स्वभावतो मयि वर्तन्ते मदाकाराकारितचित्तवृत्तयोऽनुग्रहभाजो भवन्तीत्यर्थः । अहं च तेषु स्वभावत एव वर्ते तेषां चित्तवृत्तौ स्वभावादेव प्रतिफलितोऽनुग्राहको भवामीत्यर्थः ॥ २९ ॥

प० टी०—तर्हि भक्तेभ्य एव मोक्षं ददासि नाभक्तेभ्यस्तेन तवापि रागद्वेषप्रयुक्तं वैषम्यं स्यादित्याह—समोऽहमिति । अहं सर्वभूतेषु समः समस्वभावोऽस्म्यतो मे मम द्वेष्यः प्रियो वा कश्चिदपि नास्ति किं तु ये मां भक्त्या भजन्ति ते मय्यनुग्राह्यत्वेन वर्तन्ते अहमपि तेष्वनुग्राहकत्वेन वर्ते, ये तु न भजन्ति ते यथावस्थिता एव तिष्ठन्ति, मयि तु रागद्वेषव्यवस्था नास्तीत्यर्थः । 'ये यथा मां प्रपद्यन्ते' इति पूर्वमेवोक्तम् । यथा मार्गे स्थितं वृक्षं केऽपि फलार्थिनः केऽपि पुष्पार्थिनः केऽपिच्छायार्थिनः श्रयन्ते ते स्वस्वाभिमतं लभन्ते वृक्षस्य तु नोभयत्रापेक्षोपेक्षा वा । श्रुतिरपि ऋग्वेदे—"या ते धामानि परमाणि यावमा या मध्यमा विश्वकर्मन्नुतेमाः । शिक्षा सखिभ्यो हविषि स्वधा वः स्वयं यजस्व तन्वं वृधानः" इति । भाष्यम्—भो विश्वकर्मन् विश्वानि सर्वाणि कर्माणि यदर्थमिति विश्वकर्मा परमेश्वरस्तस्य संबुद्धिस्ते तव या यानि परमाण्युत्कृष्टानि धामानि देवशरीराणि तथा यान्यवमान्यपकृष्टानि पश्वादिशरीराणि तथा यानि मध्यमा मध्यमानि मनुष्यशरीराणि सन्ति तेषु मध्ये सखिभ्यः स्वानुकूलेभ्यः शिक्षा ज्ञानोपदेशस्तथा हविषि प्रलयकाले होतव्यत्वेन प्राप्ते स्वप्रतिकूले जीवजाते वो युस्माकं स्वधा स्वस्मिन् ध्रियत आरोप्यते सा स्वधा मायाज्ञानमिति स्वयमेव प्राप्तमस्ति । त्वं तु तन्वं शरीरं वृधानो वर्धमानः प्रकटीकुर्वाणो यजस्व भजस्व अनुग्राहयस्वेत्यर्थः ॥ २९ ॥

रा० टी०—ननु भक्त्युपहृतमश्नामीत्युक्तदिशा यदि त्वं भक्तिप्रियस्तर्हि द्वेषिणामप्रियश्चेति स्यात् । तथाच भक्तेषु द्वेषिषु यथाक्रमं स्नेहद्वेषवत्त्वादल्पभक्तस्य कस्यचित्सुखरूपं बहुफलं ददासि अल्पद्वेषिणो बहुदुःखरूपं ददासि इत्यापद्यते राजादौ तथा दर्शनात् । एवं च वैषम्यनैर्घृण्ये प्राप्नुतस्तवेत्यत आह—समोऽहमिति । अहं सर्वेषु भूतेषु समः न वैषम्यादिमान् । यतो मे तदीयं द्वेषमपेक्ष्याधिकं द्वेष्यो नास्ति । तदीयां भक्तिमपेक्ष्याधिकः प्रियश्च नास्ति । किंतु तत्तदीयद्वेषभक्त्यनुसारेण तत्तत्सदृशफलद एवाहं । अतः समोहम् । नहि तत्तत्कर्मानुसारेण तत्तत्सदृशफलद एवाहं । अतः समोहम् । नहि तत्तत्कर्मानुसारेणानुशासिता यमो विषमो भवति तथात्वे समवर्ती परेतराडितिप्रसिद्धिविरोधात्तथैतिभावेन भक्तिमतां फलमाह—य इति । ये भक्त्या मां भजन्ति सेवन्ते ते मयि मदधीनाः मद्वशाः इति ज्ञानवन्तो भवन्ति । तेषु चाप्यहं तेषां वशोऽहमित्यर्थः । यद्वा सम इति पूर्वार्धे भक्तोऽभक्त इति पदद्वयमध्याहार्यम् । सर्वभूतेषु मे भक्तः द्वेष्यो नास्ति । अभक्तो मे प्रियो नास्ति । अतः समोहं । यदि भक्तेषु द्वेषमभक्तेषु प्रीतिं कुर्यां तर्ह्येव विषमः स्यां नचैवं किंतु भक्त्यनुसारेण फलद इतिभावेनाह—य इति । ये मयि प्रीत्या वर्तन्ते तेष्वहं प्रीत्या वर्त इत्यर्थः ॥ २९ ॥

**अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥**
**साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः ॥ ३० ॥**

त० टी०—किंचालौकिकं मम भक्तेः प्रभावं शृणु—अपि चेदिति द्वाभ्याम् । न तावन्मदनन्यभक्तानां दुराचारः संभवति, यदि कथंचित्स्यात्तत्संभावनापरावपिचेच्छब्दौ "अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु" इति सूत्रात् । केनचिज्जन्मान्तरीयेण बलिष्ठेन कर्मणा वैदिकाचारविरोधिनाऽन्त्यजादिसमुद्भवं शरीरं प्रापितः, उत्तमाधिकारार्हकुलजन्मापि केनचिद्बलीयसा भगवदीयापचारात्मकेन पापेन प्राप्तदुःसङ्गजन्यकर्मणा सत्संप्रदायोक्तशास्त्रीयसदाचारात्पतितो वा सुदुराचारशब्दवाच्यः । उभयथाऽपि संप्राप्तवैदिकाचारानर्हं इति यावत् । न तूत्तमाधिकारार्होऽपि यथेष्टाचारेण वर्तमानोऽत्र दुराचारो विवक्षितः, तस्यासुरकोटौ संनिविष्टत्वात् । एवं चोभयविधदुराचार-

दप्यधिकः पातकातिपातकमहापातकसर्वाशित्वकृतघ्नतादिविशिष्टो दुराचारः, पूर्वं तथाभूतोऽपि यः केनचिद्भाग्योदयेनानन्यभाक् अन्यसाधनान्यप्रयोजनान्यसंबन्धशून्यः सन् मां भजते, सर्वसाधनरूपं सर्वयोगक्षेमकर्तारं मुक्तप्राप्यं तद्भोग्यं सर्वसंबन्धाश्रयं मुमुक्षुध्येयं मां निश्चित्य सर्वात्मना सेवते मद्भजनैकावलम्बनो भवतीत्यर्थः । स साधुरेव मन्तव्यः सदाचारवानेकान्ती भक्त एव ज्ञातव्यः 'चतुर्विधा मम जना भक्ता एवेति ये श्रुताः । तेषामेकान्तिनः श्रेष्ठा ये चैवानन्यदेवताः ॥ अहमेव गतिस्तेषां निराशीः कर्मकारिणाम्' इत्युक्तैकान्तिलक्षणसंपन्नत्वात् । तत्र हेतुमाह–सम्यग्व्यवसितो हि स इति । हि यतः सम्यग्व्यवसायसंपत्तियुक्तः सर्वमुमुक्षुध्येयो जगज्जन्मादिहेतुर्वेदैकप्रमाणगम्यो वेदान्तप्रतिपाद्यो मुक्तप्राप्यो भगवान् श्रीपुरुषोत्तमो रमानिवासो गोपीप्रियो मदुपायोपेयः सर्वसंबन्धरूपो नान्यः कश्चित्साध्यसाधनसंबन्धत्वेन मया समाश्रयणीयोऽस्ति । यद्यपि मम पापबाहुल्येन वैदिकाचारयोग्यता नाभूत्, प्रत्युताधःपातार्हो ह्यभवं तथापि तेन निरतिशयदयाकारुण्यतितिक्षावात्सल्यादिगुणमहोदधिना भगवता स्वासाधारणगुणपारवश्यान्निर्हेतुककारुण्येनैव स्वानन्यभजनार्हमानुषभावं प्रापयित्वा स्वनियम्यभूतैर्मदीयात्मशरीरेन्द्रियादिभिरात्मानं भाजयित्वा स्वदीनानुकम्पित्वस्वभावप्रसिद्धये मां स्वानन्यभक्ततया ख्यापयति । तस्मात्तदुपकृतिं शिरसि निधाय स एवापारकारुण्यसिन्धुः सर्वात्मना मया भजनीय इति व्यवसाययुक्त इत्यर्थः ॥ ३० ॥

म० टी०–किंच मद्भक्तेरेवायं महिमा यत्समेऽपि वैषम्यमापादयति, शृणु तन्महिमानम्–अपीति । यःकश्चित्सुदुराचारोऽपि चेदजामिलादिरिव अनन्यभाक् सन् मां भजते कुतश्चिद्भाग्योदयात्सेवते स प्रागसाधुरपि साधुरेव मन्तव्यः हि यस्मात्सम्यग्व्यवसितः साधुनिश्चयवान् सः ॥ ३० ॥

शं० टी०–राजविद्येति विशेषणेन सूचितं ब्रह्मविद्याव्यतिरिक्तविद्यानां सकलवेदशास्त्राध्ययनसमुत्पन्नानां बन्धकत्वं मोघाशा इति त्रैविद्या मामित्यादौ प्रतिपाद्य ब्रह्मविद्यायाश्च मोक्षप्रदत्वं महात्मानस्त्विति यान्ति मद्याजिनोऽपि मामित्यादौ प्रतिपाद्याधुना पवित्रमिदमुत्तममिति ज्ञानस्य यत्पावकतमत्वं प्रतिज्ञातं तद्विशदयति–अपि चेदिति । यः कश्चिद्ब्राह्मणो वा क्षत्रियो वान्यो वा सुदुराचारः सुतरां जातितो वर्णतः क्रियातो वा स्वभावतो वात्यन्तदुष्ट आचारो वृत्तं यस्य स दुराचारोऽपि यद्यपि पापिष्ठोऽपि वा स्यात्तथापि जन्मान्तरीयपुण्यकर्मातिशयेन सद्गुरुप्रसादात्परतत्त्वं ज्ञात्वा स्वयमनन्यभाक् अन्यदनात्मस्वरूपं कर्तृत्वभोक्तृत्वादिधर्मविशिष्टं देहेन्द्रियादिकमात्मत्वेन भजतीत्यनन्यभाक् चित्तप्रसादजनितस्वयाथात्म्यविज्ञानेन तथा न भवतीत्यनन्यभाक् सन् मां परं ब्रह्म भजते ब्रह्मैवाहमित्यविक्रियं ब्रह्मैव सदा स्वमनुसंधत्ते स ब्रह्मवेत्ता साधुरेव सन् ज्ञानात्सदाचारवत्तया सत्पुरुष एवेति पण्डितैर्मन्तव्यः पौर्विकीयां पापी दुराचार इति बुद्धिं त्यक्त्वा ब्रह्मविदेष पुण्यतम एवेति विज्ञातव्य इत्यर्थः । तस्य पुण्यतमत्वमेव निश्चिनोति–सम्यगिति । हि यस्मात्कारणात्स पुरुषः सम्यग्व्यवसितः व्यवसीयते वस्तुयाथात्म्यं निश्चीयतेऽनेनेति व्यवसितं विज्ञानं तत्त्वनिश्चयात्मकं सम्यक् समीचीनं व्यवसितं जातिवर्णतद्धर्मतत्कर्मसंबन्धशून्यमाकाशवदतिनिर्मलं निष्क्रियं नित्यमुक्तस्वभावं यत्परं ब्रह्म तदेवाहमिति तत्त्वसाक्षात्कारजनितं स्वभावनिश्चयलक्षणं यस्य स सम्यग्व्यवसितः यस्मात्सम्यग्ज्ञानसंपन्नस्तस्मात्साधुरेवेति सर्वैर्ज्ञातव्यः पूजनीयश्चेति भावः । न वासुदेवभक्तानामिति न मे भक्तः प्रणश्यतीत्येतद्वाक्यार्थे विचार्यमाणे त्वस्यार्थ एवमपि भवति–अपि चेत्सुदुराचारः ब्रह्मनिष्ठो ब्रह्मवियतिः स्वयं भ्रमप्रमादाभ्यां सुदुराचारोऽप्यतिनिन्दिताचारोऽपि वा यदि स्यात् एकाकितया मौनितया च भिक्षाटनं कुर्वन्नभिशस्तपतितादीनामप्यन्नाद्यशनेन वा सति देशकालवैषम्ये दुष्टान्नभक्षणेन वा कचिच्चाण्डालादिसंपर्केण वाप्यत्यन्तदोषी भवेच्चेत् तथाप्यनन्यभाक् विष-

याकारं भजतीति भाक् वृत्तिर्न विद्यतेऽन्यो मद्व्यतिरिक्तो विषयो यस्याः साऽनन्या विषयान्तरशून्या भाक् वृत्तिर्यस्य सोऽनन्यभाक् सन् "अहमन्नमहमन्नमहमन्नादोऽहमन्नादः" इत्येतच्छ्रुत्युक्तरीत्या दाता दानं देयं च भोक्ता भोज्यं भोजनं च सर्वमहमेव ब्रह्मैवेति सर्वत्र ब्रह्मदृष्टिर्भूत्वा यो मां निर्विशेषं परं ब्रह्म भजते प्रत्यग्दृष्ट्या सर्वमिदमहं च ब्रह्मैवेत्यनुसंधत्ते एवं सर्वस्य स्वस्य च ब्रह्ममात्रत्वानुसंधानमात्रेण स ब्रह्मवित्साधुरेव शुद्ध एवेति पण्डितैर्मन्तव्यो ज्ञातव्य इत्यर्थः । ननु तदनुरूपप्रायश्चित्ताभावात् कथं शुद्ध एवेति ज्ञातुं शक्यत इत्यत आह—सम्यगिति । आत्मलाभान्न परं विद्यते 'सम्यग्दर्शनसंपन्नः कर्मभिर्न निबध्यते । दर्शनेन विहीनस्तु संस्कारं प्रतिपद्यते ॥ प्रायश्चित्तं ब्रह्मविदो यतेस्तु ब्रह्मवेदनम् । दोषप्रसक्तावन्यन्न (?) शास्त्रदृष्टं विधीयते ॥ अतिपापप्रसक्तोऽपि ध्यायन्निमिषमच्युतम् । भूयस्तपस्वी भवति पङ्क्तिपावनपावनः ॥ प्रायश्चित्तान्यशेषाणि तपःकर्मात्मिकानि वै । यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥ यदि कुर्यात्प्रमादेन योगी कर्म विगर्हितम् । योगेनैव दहेदंहो नान्यत्तत्र कदाचन ॥ स्वेस्वेऽधिकारे या निष्ठा स गुणः परिकीर्तितः । विपरीतस्तु दोषः स्यादुभयोरेष निश्चयः ॥" इत्यादिवचनैर्ज्ञानिनो ज्ञानमेव प्रायश्चित्तमिति। मन्वादीनां यन्निश्चितं तत्तु व्यवसितं समीचीनं व्यवसितं यस्य स सम्यग्व्यवसितः समीचीनप्रायश्चित्तवानेवेत्यर्थः । "तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ । यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते" इति "न लिप्यते कर्मणा पापकेन । उभे ह्येवैष एते तरति" इत्यादिश्रुतिप्रसिद्धिप्रकाशनार्थो हिशब्दः । अतिपापेऽतिवचनस्यायमर्थः अतिपापप्रसक्तोऽपि ब्रह्मविद्यतिर्भ्रमप्रमादाभ्यां वा देशकालादिवैषम्ये दुष्टान्नभक्षणलक्षणमत्यन्तपापं कृत्वापि निमिषं क्षणार्धमच्युतं नित्यकूटस्थमसङ्गमात्मानं ध्यायन् 'अकर्ताहमभोक्ताहमविकारोऽहमक्रियः' इति कर्तृकरणकार्येभ्यो भिन्नं स्वं निष्क्रियमेव परं ब्रह्म पश्यन्नित्यर्थः । तपस्वी 'शुचिदीनर्षिव्रतिनो वनस्थाश्च तपस्विनः' इत्यभिधानात् भूयः पुनरपि तपस्वी शुचिर्भवति पुनरपि तपःसंपन्नो वा । ननु ब्रह्मध्यानेन शुद्ध एव भवति तथाप्ययं व्यवहाराऽयोग्य एवेत्यत आह—पङ्क्तीति । ये त्रिसुपर्णं पठितारः ये च चतुर्वेदिनः ये वा वाजपेयचयनादिक्रतुकर्तारस्ते सर्वे पङ्क्तिपावनास्तानप्ययं पूजानमस्कारादिभिः पुनातीति पङ्क्तिपावनपावनः सर्वेषां पूज्यश्च भवतीत्यर्थः । प्रायश्चित्तानीत्यस्यायमर्थः—यान्यशेषाणि कृच्छ्रातिकृच्छ्रमहाकृच्छ्रचान्द्रायणादीनि प्रायश्चित्तानि तपोरूपाणि यानि वाजपेयराजसूयाश्वमेधादीनि कर्मात्मकान्यशेषाणि प्रायश्चित्तानि वै प्रसिद्धौ शास्त्रप्रसिद्धानीत्यर्थः । तेषामशेषाणामपि प्रायश्चित्तानां पञ्चम्यर्थे षष्ठी तेभ्यः सर्वेभ्यः कृष्णानुस्मरणं परम् 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इतिस्मरणात् कृष्णः सदानन्दस्वरूपः परमात्मा परं ब्रह्म तस्यानुस्मरणम् अविक्रियं ब्रह्मैवाहमिति गुरूपदेशानुरूपेण स्वात्मनानुभव एव परममुत्कृष्टतमं सुकरं च प्रायश्चित्तम् । अत्रायमभिप्रायः—यत्पापमुद्दिश्य कृच्छ्रादि क्रियते तेन तत्पापमेव गच्छति न त्वन्यत् संचितं चागामि च, कृष्णानुस्मरणं तु 'अहं ब्रह्मेति मां ध्यायन्नेकाग्रमनसा सकृत् । सर्वं तरति पाप्मानं कल्पकोटिशतैः कृतम्' इतिन्यायेन शतकोटिकल्पार्जितं भूतं भवच्च भावि च सर्वं पापं पुण्यं च विध्वस्य मोक्षं प्रयच्छत्यतो ब्रह्मानुसंधानं सर्वोत्तमं प्रायश्चित्तमिति ॥ ३० ॥

श्री० टी०—अपि च मद्भक्तेरवितर्क्यः प्रभाव इति दर्शयन्नाह—अपि चेदिति । अत्यन्तं दुराचारोऽपि यद्यप्यपृथक्त्वेन पृथग्देवता अपि वासुदेव एवेति बुद्ध्या नरो देवतान्तरभक्तिमकुर्वन्मामेव श्रीनारायणं भजते तर्हि साधुः श्रेष्ठ एव स मन्तव्यः । यतोऽसौ सम्यग्व्यसितः परमेश्वरभजनेनैव कृतार्थो भविष्यामीति शोभनमध्यवसायं कृतवान् ॥ ३० ॥

स० टी०—मद्भक्तेरेव माहात्म्यं यत्समेऽपि मयीश्वरे ॥ आपादयति वैषम्यं शृणु त्वं तत्समाहितः ॥१॥

अतीवकुत्सिताचारोऽजामिलादिरिवाप्रियः ॥ कुतश्चिद्भाग्यवशतः सेवते मामनन्यभाक् ॥ २ ॥ स प्राग-साधुरप्येष मन्तव्यः साधुरेव हि ॥ साधुनिश्चयवान्यस्मात्प्रवृत्तः सम्यगीश्वरे ॥ ३ ॥ ३० ॥

भा० टी०—शृणु मद्भक्तेर्महिमानं दुराचारानपि यया युक्ताननुगृह्णामीत्याह—**अपि चेदिति** । अपि चेद्यद्यपि सुदुराचारः सुष्ठु अत्यन्तं दुष्टः आचारः आचरणं यस्य स पूर्वं सुदुराचारोऽपि यो मां परमेश्वरमनन्यभाक् न विद्यतेऽन्यस्मिन्भक्तिर्यस्य सः भजते सेवते स साधुरेव मन्तव्यः। हि यस्मात्सम्यग्व्यवसितः सम्यक् यथावत् व्यवसायं निश्चयं प्राप्तः ॥ ३० ॥

प० टी०—अपि च मद्भक्तेरवितर्क्यः प्रभाव इत्याह—**अपि चेति** । सुतरामत्यन्तं दुराचारोऽपि संश्चेन्मां भजते । किंभूतोऽनन्यभाक् मत्तो नान्यद्देवतान्तरं भजते तत्पापपरिहारसमर्थे मय्यध्यवसायं कृतवान् ॥ ३० ॥

श० टी०—भक्तेः प्रशंसा क्रियते—**अपि चेदित्यादिना** । सुदुराचारोऽपि भगवद्भक्तो यः कश्चिद्देवांशः ऋष्यादिः स्वयोग्याधिकपुण्यापगमाय दैवादत्यन्तदुराचारोऽपि अनन्यभाक् स्वातन्त्र्येणान्यभजनहीनः सन्मां भजते चेत्स साधुरेव मन्तव्यः। कुतः हि यस्मात्स चन्द्रसूर्याद्यंशः सम्यग्व्यसितः संजातसमीचीनभगवत्तत्त्वनिश्चयवानत इत्यर्थः ॥ ३० ॥

**क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति ॥**
**कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति ॥ ३१ ॥**

त० टी०—ततश्च—**क्षिप्रमिति** । अनेन विश्वासात्मकेन दृढनिश्चयेन दुराचारं त्यक्त्वा क्षिप्रं शीघ्रमेव धर्मात्मा महाभागवतलक्षणसंपन्नो भवति । ततः शश्वच्छान्तिं मद्भावापत्तिलक्षणां मुक्तिं क्रमेण प्राप्नोति । ननु पूर्वाभ्यस्तदुराचारवशात्पुनस्तत्र रुचिश्चेत्तर्ह्यधर्मात्मत्वात्कथं साधुः कथं वा शान्तिं गच्छेत् किंतु नश्येदित्याशङ्क्य तथाविधव्यवसायवतो मद्भक्तस्य न कदाऽपि नाशशङ्का कार्येत्याह—**कौन्तेयेति** । हे कौन्तेय त्वं प्रतिजानीहि प्रतिज्ञां कुर्वित्यर्थः । किं प्रतिजानीयामित्यपेक्षायामाह—**न मे भक्तः प्रणश्यतीति** । मम परमकारुण्यवात्सल्यसौहार्दक्षमादीनानुकम्पासौशील्यसर्वशरण्यत्वाद्यनन्तकल्याणगुणसागरस्य सत्यसंकल्पस्य ज्ञानैश्वर्यादिषाड्गुण्यनिधेः श्रीपुरुषोत्तमस्य भगवतो माधवस्य भक्तो दुराचारसंपन्नोऽप्यनन्यशरणः सर्वसाधनहीनोऽपि न प्रणश्यति । अन्यजनवन्मामप्राप्य यमाधीनो भूत्वा संसारी न भवतीत्यर्थः । दृष्टान्ताश्चात्राजामिलभिक्षुगजगणिकाव्याधादयः । तथा चोक्तं शास्त्रे—'स्वपुरुषमभिवीक्ष्य पाशहस्तं वदति यमः किल तस्य कर्णमूले। परिहर मधुसूदनप्रपन्नान्प्रभुरहमन्यनृणां न वैष्णवानाम् ॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमुदीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥' इति वैष्णवे । श्रीसात्वते च 'दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा । समाश्रयेदादिदेवं श्रद्धया शरणं हि यः । निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः ॥' वैष्णवधर्मे च—'अपि पापेष्वभिरता मद्भक्ताः पाण्डुनन्दन। मुच्यन्ते पातकैः सर्वैः पद्मपत्रमिवाम्भसा ॥' इति । किं च 'मेरुमन्दिरमात्रोऽपि राशिः पापस्य कर्मणः । केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति ॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित्' इत्यादि ॥ ३१ ॥

म० टी०—अस्मादेव सम्यग्व्यवसायात्स हित्वा दुराचारताम्—**क्षिप्रमिति** । चिरकालमधर्मात्मापि मद्भजनमहिम्ना क्षिप्रं शीघ्रमेव भवति धर्मात्मा धर्मानुगतचित्तः, दुराचारत्वं झटित्येव त्यक्त्वा सदाचारो भवतीत्यर्थः । किंच शश्वन्नित्यं शान्तिं विषयभोगस्पृहानिवृत्तिं निगच्छति नितरां प्राप्नोत्यतिनिर्वेदात् । कश्चित्त्वद्भक्तः प्रागभ्यस्तं दुराचारत्वमत्यजन्न भवेदपि धर्मात्मा तथा च स नश्येदेवेति नेत्याह भक्तानुकम्पापर-

वशतया कुपित इव भगवान्—नैतदाश्चर्यं मन्वीथाः हे कौन्तेय निश्चितमेवेदृशं मद्भक्तेर्माहात्म्यमतो विप्रतिपन्नानां पुरस्तादपि त्वं प्रतिजानीहि सावज्ञं सगर्वं च प्रतिज्ञां कुरु न मे वासुदेवस्य भक्तोऽतिदुराचारोऽपि प्राणसंकटमापन्नोऽपि सुदुर्लभमयोग्यः सन् प्रार्थयमानोऽपि अतिमूढोऽशरणोऽपि न प्रणश्यति किंतु कृतार्थ एव भवति । दृष्टान्ताश्चाजामिलप्रह्लादध्रुवगजेन्द्रादयः प्रसिद्धा एव । शास्त्रं च 'न वासुदेवभक्तानामशुभं विद्यते क्वचित्' इति ॥ ३१ ॥

**शं० टी०**—कुर्वन्तु नाम कृच्छ्रचान्द्रायणाश्वमेधादीनि तपःकर्मात्मकानि प्रायश्चित्तानि तथापि तेषु यथोक्तदेशकालद्रव्यमन्त्रतन्त्रादिनियमावैकल्येन कृतेष्वेव शुद्धिः सिध्यति तत्रापि षड्रात्रद्वादशरात्रपक्षमाससंवत्सरादिव्यवधानेन दैर्घकालिकी शुद्धिः सा च पारोक्षिकी न तथा मद्ध्यानेनेत्याह—**क्षिप्रमिति** । ब्रह्मविद्यतिर्मद्ध्यानेन क्षिप्रं शीघ्रमेवोत्तरक्षणे प्रत्यग्वृत्त्या स्वस्याविक्रियब्रह्मात्मत्वदर्शनसमकाल एव धर्मात्मा पुण्यात्मा शुद्धो भवति न तत्र नियमावैकल्यं कालदैर्घ्यं पापनिवृत्तेः पारोक्ष्यं चास्तीत्यर्थः । एतावन्मात्रमेव न भवत्यपि तु शश्वच्छाश्वतीं शान्तिं मुक्तिं निगच्छति पुनरावृत्तिरहितां विदेहमुक्तिं प्राप्नोत्येवेत्येतदर्थनिश्चयार्थो नीत्युपसर्गः । ब्रह्मविद्यतेरन्तरागतदोषविशेषैर्मुक्तिर्न प्रतिबध्यत एवेत्यस्मिन्नर्थे प्रतिज्ञां कुर्वित्याह—**कौन्तेयेति** । ब्रह्मैवाहमिति ज्ञानयोगबलेन ब्रह्मभावं भजतीति भक्तो ब्रह्मवित् हे कौन्तेय मे मम भक्तो ब्रह्मनिष्ठो ब्रह्मविद्यतिर्न प्रणश्यति मध्येऽप्राप्तब्रह्मनिष्ठो विघ्नदोषेण दुर्गतिं दुर्योनिं वा न गच्छति किंतु विघ्नकोटीः सर्वा मदनुग्रहेण मन्निष्ठया च निर्मूल्य विदेहमुक्तिं प्राप्नोत्येव नात्र संशयस्त्वमस्मिन्नर्थे प्रतिजानीहि भगवद्भक्तो ब्रह्मविन्न नश्यतीति प्रतिज्ञां कुरु । योगक्षेमं वहाम्यहमिति मया प्रतिज्ञातत्वादीश्वरैकशरणानां ब्रह्मविदां ब्रह्मनिष्ठानां न विघ्नैर्मुक्तिः प्रतिहन्यत इति गजघण्टया घोषयेत्यर्थः ॥ ३१ ॥

**श्री० टी०**—ननु कथं समीचीनाध्यवसायमात्रेण साधुर्मन्तव्यस्तत्राह—**क्षिप्रमिति** । दुराचारोऽपि मां भजन्शीघ्रं धर्मचित्तो भवति ततश्च शश्वच्छान्तिं शाश्वतीमुपशान्तिं चित्तोपप्लवोपरमरूपां परमेश्वरनिष्ठां नितरां गच्छति प्राप्नोति । कुतर्ककर्कशवादिनो नैतन्मन्येरन्निति शङ्काव्याकुलचित्तमर्जुनं प्रोत्साहयति—हे कौन्तेय पटहकाहलादिमहाघोषपूर्वकं विवदमानानां सभां गत्वा बाहुमुत्क्षिप्य निःशङ्कं प्रतिजानीहि प्रतिज्ञां कुरु । कथं, मे परमेश्वरस्य भक्तः सुदुराचारोऽपि न प्रणश्यति अपि तु कृतार्थ एव भवतीति ततश्च ते त्वत्प्रौढिविजृम्भणविध्वंसितकुतर्का निःसंशयं त्वामेव गुरुत्वेनाश्रयेरन् ॥ ३१ ॥

**स० टी०**—स सम्यङ्निश्चयादस्मान्मत्प्रसादोन्मुखो जनः ॥ सुदुराचारतां हित्वा तथा पूर्वार्जितानघान् ॥ १ ॥ मत्सेवनमहिम्नैव शीघ्रं धर्मानुगान्तरः ॥ भूत्वा सम्यक् सदाचारः शान्तिं वैतृष्ण्यनामिकाम् ॥ २ ॥ प्राप्नोति नितरां तत्र मन्वीथा नैतदद्भुतम् ॥ मद्भक्तेरीदृशं यस्मान्माहात्म्यं निश्चितं महत् ॥ ३ ॥ अतो विप्रतिपन्नानां त्वं पुरस्तादपि स्वयम् ॥ सावज्ञं च सगर्वं च प्रतिज्ञां कुरु सर्वथा ॥ ४ ॥ मम श्रीवासुदेवस्य भक्तोऽनन्यरतिः सदा ॥ प्राणसंकटमापन्नो दुराचारोऽपि दुर्लभम् ॥ ५ ॥ वस्तु प्रार्थयमानोऽपि मूढोऽप्यशरणोऽपि सन् ॥ न प्रणश्यति किंत्वेष कृतार्थो भवति स्वयम् ॥ ६ ॥ प्रह्लादाजामिलौत्तानपादिहस्त्यादयो यथा ॥ न वासुदेवभक्तानामशुभं विद्यते क्वचित् ॥ ७ ॥ इत्यादिशास्त्रप्रामाण्यादित्यर्थः श्रीहरेर्गिराम् ॥ ८ ॥ ३१ ॥

**भा० टी०**—ननु किं त्वामनन्यभाक् भजन्नपि सुदुराचार एव तिष्ठति, नेत्याह—**क्षिप्रमिति** । अतः मद्भजनरूपसम्यग्व्यवसायसामर्थ्याद्बाह्यतां दुराचारतां च विहाय क्षिप्रं शीघ्रं धर्मात्मा धर्मे आत्मा चित्तं यस्य स धर्मचित्त एव भवति तत एव शश्वन्नित्यं शान्तिमुपशमं नितरां गच्छति प्राप्नोति । अस्मिन्नर्थेऽसंभावनां निरस्यन्नाह—कौन्तेय मे मम भक्तो न प्रणश्यतीति प्रतिजानीहि निश्चितां प्रतिज्ञां कुरु । यथा

कुन्ती इद्रादिसंसर्गं कृत्वापि मद्भक्तिमहिम्ना सर्वोत्तमा सतीत्वेन परिगणिता नाधर्मसंबन्धेन नाशयोग्या तथेति कौन्तेयेतिसंबोधनस्य गूढाभिप्रायः ॥ ३१ ॥

प० टी०–अथ तदेव सहेतुकमाह–**क्षिप्रमिति** । मद्भजनेन क्षिप्रं तत्कालमेव धर्मात्मा भवति शुद्धचित्तः सन् शाश्वतीं शान्तिं निगच्छति प्राप्नोति । तदुक्तम्–'विकर्म यच्चोत्पतितं कथंचिद्धुनोति सर्वं हृदि संनिविष्टः' इति । अत्रार्थे संदिहानमर्जुनं प्रोत्साहयन्नाह–न मे भक्त इति । मद्भक्तो मद्भजनशीलत्वाद्विधूतकल्मषः सन्न प्रणश्यतीति प्रतिजानीहि प्रतिज्ञां कुरु । अत्रोदाहरणमुद्धवोऽभूयतो मुनिशापेन सर्वथा-दवकुलसंहारेऽप्यात्यन्तिकभक्तियोगान्नाशं न प्राप्तवानित्यर्थः । 'नाम्नोऽस्ति यावती शक्तिः' इत्यादिना नाममात्रस्यैतादृक् सामर्थ्यं किं पुनरनन्यभजनस्येति तात्पर्यम् ॥ ३१ ॥

रा० टी०–सम्यग्व्यवसायवत्त्वेऽपि सुदुराचारः कुतः साधुर्मन्तव्यः इत्यत आह–**क्षिप्रमिति** । सम्यग्व्यवसायवत्त्वात्क्षिप्रं धर्मचित्तो भवति शश्वच्छान्तिं शाश्वतमोक्षं च सम्यगधिगच्छति । हे कौन्तेय मे भक्तः दुराचारोऽपि न प्रणश्यति नरकाद्यनर्थं न प्राप्नोति । एतच्च देवदेवांशऋष्यादिविषयं ज्ञेयम् ॥ ३१ ॥

**मां हि पार्थ व्यपाश्रित्य येऽपि स्युः पापयोनयः ।**
**स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिम् ॥ ३२ ॥**

त० टी०–दुःसङ्गादिजन्यदोषदुष्टं भक्तिः पावयित्वा भगवद्भावं प्रापयतीत्युक्तमिदानीं जातिस्वभावदोषदुष्टानपि परमगतिं प्रापयतीत्याह–**मां हीति** । येऽपि पापयोनयोऽधमजन्मानोऽन्त्यजादयः स्युः तथाऽध्ययनादिवर्जिताः स्त्रियः वैश्याः कृष्यादिमात्रनिकृष्टवृत्तिरताः न त्वन्यवृत्तयः स्त्रीशूद्रयोर्मध्ये गणनीयास्तथा शूद्रा उत्तमवैदिकधर्महीना अधमगतियोग्या अपि हे पार्थ तेऽपि मां व्यपाश्रित्यानन्यतया शरणमागत्य परां श्रेष्ठां गतिं यान्ति । हीति निश्चितम् ॥ ३२ ॥

म० टी०–एवमागन्तुकदोषेण दुष्टानां भगवद्भक्तिप्रभावान्निस्तारमुक्त्वा स्वाभाविकदोषेण दुष्टानामपि तमाह–**मां हीति** । हि निश्चितं हे पार्थ मां व्यपाश्रित्य शरणमागत्य येऽपि स्युः पापयोनयोऽन्त्यजास्तिर्यञ्चो वा जातिदोषेण दुष्टाः तथा वेदाध्ययनादिशून्यतया निकृष्टाः स्त्रियो वैश्याः कृष्यादिमात्ररताः तथा शूद्रा जातितोऽध्ययनाद्यभावेन च परमगत्ययोग्यास्तेऽपि यान्ति परां गतिम् । अपिशब्दात् प्रागुक्तदुराचारा अपि ॥ ३२ ॥

शं० टी०–एवमुपक्रान्तज्ञानस्य माहात्म्यं तत्फलं च प्रतिपाद्याधुना सुसुखं कर्तुमिति यदुक्तं तद्विशदयति–**मां हीति** द्वाभ्याम् । स्त्रियो वैश्यास्तथा शूद्रा येऽपि स्युरन्ये पापयोनयो नीचजन्मानो ये नीचकर्माणश्च म्लेच्छपुक्कसादयस्तेऽपि मां परमात्मानं सोपाधिकं निरुपाधिकं वा सद्गुरूपदेशजनितज्ञानेन व्यपाश्रित्य सम्यगुपास्य क्रमेण साक्षाद्वा परां गतिं परमपुरुषार्थं कैवल्यं प्राप्नुवन्तीत्यर्थः । हिशब्दः 'किरातहूणान्ध्रपुलिन्दपुल्कसा आभीरकङ्का यवनाः खशादयः । येऽन्ये च पापा यदुपाश्रयाश्रयाः शुध्यन्ति तस्मै प्रभविष्णवे नमः' इत्यादिशास्त्रप्रसिद्धिद्योतनार्थः । एतेन स्त्रीशूद्रादीनामपि शास्त्रप्रज्ञाशून्यानां ज्ञानतत्फलप्राप्तिप्रतिपादनेन ज्ञानस्यातिसुलभत्वं सूचितं भवति ॥ ३२ ॥

श्री० टी०–आचारभ्रष्टं मद्भक्तिः पवित्रीकरोतीति किमत्र चित्रं यतो मद्भक्तिर्दुष्कुलानप्यनधिकारिणोऽपि संसारान्मोचयतीत्याह–**मां हीति** । येऽपि पापयोनयः स्युः निकृष्टजन्मानोऽन्त्यजादयो भवेयुः येऽपि वैश्याः केवलं कृष्यादिनिरताः स्त्रियः शूद्रादयश्चाध्ययनादिरहिताः तेऽपि मां व्यपाश्रित्य संसेव्य परां गतिं यान्ति हि निश्चितम् ॥ ३२ ॥

**स० टी०**–एवमागन्तुकैर्दोषैर्दुष्टानामपि संसृतेः ॥ भगवद्भक्तिमाहात्म्यान्निस्तारमभिधाय च ॥ १ ॥ इदानीं जातिदोषेण दुष्टानामपि कथ्यते ॥ ये मां शरणमागत्य तिर्यञ्चो वान्त्यजा जनाः ॥ २ ॥ तथा स्त्रियोऽपि निष्कृष्टा वैश्याः कृष्यादितत्पराः ॥ शूद्राश्च जातितो वेदाध्ययनादेरभावतः ॥ ३ ॥ मोक्षायोग्यास्त एतेऽपि सर्वे यान्ति परां गतिम् ॥ ४ ॥ यस्याङ्घ्रिमाश्रितवतां भवपाशहानिर्यस्याङ्घ्रिपद्मविमुखा जनिमृत्युभाजः ॥ यन्नाम शोधकमनन्तभवोन्मुखानां पापीयसामपि स मे शरणं मुकुन्दः ॥ ५ ॥ ३२ ॥

**भा० टी०**–किंच–**मां हीति** । हे पार्थ येऽपि पापं योनिर्येषां ते पापयोनयः पापजन्मानस्तेऽपि मां वासुदेवं व्यपाश्रित्य ईश्वर एव भक्त्या प्रसादितोऽस्माकमुद्धर्तेत्याश्रयत्वेन गृहीत्वा परां प्रकृष्टां गतिं यान्ति गच्छन्ति । के ते पापयोनय इत्यत आह–स्त्रियो वैश्यास्तथा शूद्रा इति । तत्र स्त्रीशूद्राणां वेदाध्ययनादावनधिकृतानां पापबाहुल्याल्लब्धस्त्रीशूद्रजन्मनां पापयोनित्वं स्पष्टमेव । वैश्या अपि पूर्वजन्मनि ब्राह्मणाः क्षत्रियाः पापकर्मणा वैश्ययोनिमापन्नाः कृष्यादिरता ग्राह्याः । ननु येऽपि स्युः पापयोनयोऽन्त्यजास्तिर्यञ्चो वा जातिदोषेण दुष्टाः तथा स्त्रियो वैश्यास्तथा शूद्रास्तेऽपि यान्ति परां गतिमित्याचार्यैः कुतो न व्याख्यातमिति चेदुच्यते निकृष्टा अपि मां व्यपाश्रित्य परां गतिं यान्ति किं पुनरुत्कृष्टा इति ह्यर्थोऽत्र विवक्षितस्तत्र पापनिबन्धना निकृष्टता पुण्यनिमित्ता चोत्कृष्टता तथाच स्त्र्यादीनां निकृष्टत्वेन पापयोनित्वावश्यकत्वेनेदमेव पापयोनय इतिपदं स्त्र्यादौ संबध्यतेऽन्यथा पापयोनयोऽन्त्यजादयोऽपि ये स्युस्तेऽपि मामुपाश्रित्य परां गतिं यान्तीत्येतावतैव निर्वाहे स्त्र्याद्युपादानस्य वैयर्थ्यं स्यादिति दिक् । त्वं तु मत्पैतृष्वस्रेयत्वादत्युत्कृष्ट इति सूचयन् संबोधयति पार्थेति ॥ ३२ ॥

**प० टी०**–अथ नहि मद्भक्तिः कुलाचाराद्यपेक्षत इति प्रतीतिमुत्पादयन्नाह–**मामिति** । भो पार्थ हीति निश्चयेन मां व्यपाश्रित्यानन्यतया मदाश्रयं प्राप्य ये पापयोनयः स्युः पापाधिकारिणी योनिरुत्पत्तिर्येषां ते तथाविधास्तेऽपि परां गतिं यान्ति । अत्रार्थे प्रतीतिमुत्पादयति–**स्त्रिय इति** । ‘ अनृतं साहसं माया मूर्खत्वमतिलुब्धता ’ इत्यादिनिसर्गदोषोपहताः स्त्रियो गोपिकास्तत्रापि जारबुद्ध्या संगतास्तथा वैश्या कृष्यादिना गोरक्षणकर्तारो नन्दगोपप्रमुखास्तथा शूद्रास्तत्परिचारका अपि मदाश्रयेण परमां गतिं यान्तीति वस्तुमहिमा तावदलौकिक इति पूर्वमेव सदृष्टान्तमुक्तं स्पर्शाश्मप्यश्मसारमिति । श्रुतिरपि तैत्तिरीयके “ त्वामग्ने यजमाना अनुद्यून्विश्वा वसूनि दधिरे वार्याणि । त्वया सह द्रविणमिच्छमाना व्रजं गोमन्तमुशिजा विवव्रुः ” इति । भाष्यम्—भो अग्ने वैश्वानर विश्वरूप विश्वं वैश्वानरो विराडिति परिभाषोक्तेः । त्वामनुद्यून् प्रतिदिवसान् यजमाना यजन्तः पूजयन्तो वार्याणि वारयितुं योग्यान्यदेयान्यपि विश्वा विश्वानि सर्वाणि वसूनि धनानि दधिरेऽर्पितवन्तो यत उशिजो मेधाविनो मोक्षार्थिनो वसतिमपेक्षमाणा वा गोमन्तं धनप्रचुरं व्रजं गोकुलाख्यं घोषं विवव्रुर्वरयाञ्चक्रुः । किमुद्दिश्य, त्वया सह त्वत्संनिधानेन द्रविणं विषयभोगमिच्छमाना अपेक्षमाणास्तावतैव कृतार्थाः । ऋग्वेदेऽपि–“ ता वां वास्तून्युष्मासि गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य कृष्णः परमं पदमवभाति भूरि ” । भाष्यम्–वां वयमुष्मसि त्रिविधतापप्राप्तौ सत्यां तानि वास्तूनि गृहाणि गमध्यै गन्तुं प्राप्तुमयासो गन्तारः । तानि कानि, यत्र येषु गृहेषु भूरिशृङ्गा गावः सन्ति । शृङ्गा इत्युपलक्षणं तेन महाप्रमाणा महौधस्का इत्यर्थः । अहेत्यव्ययमेवकारार्थे । अत्रैव गेहेषु तस्योरुगायस्य उरुभिर्वेदैर्गीयमानस्य विष्णोर्भूरि महत्तरमलुप्तशक्तिमत् परमं पदं पारमार्थिकं रूपं कृष्णो यादवोऽस्तीति वेदैरुच्यत इत्यर्थः । सामसंहितास्वपि–“ प्र सो अग्ने तवोतिभिः सुवीराभिस्तरति वाजकर्मभिः यस्य त्वमावितथ ” इति । भाष्यम्–भो अग्ने विश्वरूप स पुरुषस्तवोतिभिस्तव रक्षणैः कृत्वा संसारं प्रतरति । किंभूताभिरूतिभिः, सुवीराभिः सुतरां शक्ताभिरत एव वाजकर्मभिर्वाजस्य बलस्य कर्मभिः

कारणरूपाभिः । यद्रक्षणेन कृत्वा सकलविघ्नमूर्ध्नि पदं धत्त इत्यर्थः । स कः पुरुषो यस्य त्वमावितथ सख्यं प्राप्तोऽसि । अत्रार्थे रैवतं सामापि " रेवतीर्नः सधमाद इन्द्रे सन्तु तु विवाजाः। क्षुमन्तो याभिर्मदेम " इति। भाष्यम्—इन्द्रे परमात्मनि भगवति सधमादेऽस्माभिः सह हर्षयुक्ते सति क्षुमन्तो नयन्तश्चारयन्तो वयं याभिर्गोभिर्मदेम हृष्येम । ता गावो रेवतीः क्षीराज्यादिधनवत्यस्तु विवाजाः प्रभूतबलाश्च सन्तु । एतस्य गानं सामदर्पणे—रारेवतीशब्द आत्वम् त्राधाद्रावामार्गाः । एतान्युद्घातकर्षणानि षट्क्षुमन्त इति नकार-लोपः । ईहाऔहोहोइडा एत एव स्तोमाः षट् ॥ ३२ ॥

रा० टी०–कैमुत्येन च भक्तेर्महिमानमाह–**मां हीत्यादिना** । हे पार्थ पापयोनयः स्वयमुत्तमवर्णा अपि पापहेतुका योनिर्जन्म येषां ते पापयोनयः । ते क इत्यत उक्तम्–**स्त्रिय इत्यादिना** । स्वतः पुमांसो-ऽपि पापात्सुद्युम्नस्येलात्वमिव स्त्रीत्वं प्राप्ता ये, ये च स्वतो ब्राह्मणादिरपि पापाद्वैश्यादिहीनवर्णतां प्राप्ताः शूद्रत्वं वा प्राप्ताः मामाश्रित्य वर्तेरन् मयि भक्तिमन्तो भवेयुस्तेऽपि परां गतिं यान्ति ॥ ३२ ॥

**किं पुनर्ब्राह्मणाः पुण्या भक्ता राजर्षयस्तथा ॥**
**अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम् ॥ ३३ ॥**

त० टि०–श्रेष्ठजातिगुणवतां तु परमां गतिं कैमुत्यन्यायेनाह–**किं पुनरिति** । यद्येवंभूताः पापयो-नयोऽपि परां गतिं यान्ति तर्हि पुण्याः सुकृतिनो ब्राह्मणास्तथा राजर्षयः राजानश्च ते ऋषयः सूक्ष्मदर्शिनः क्षत्रियश्रेष्ठा मम भक्ताः परां गतिं यान्तीति किमु वक्तव्यं नात्र संदेह इत्यर्थः । अतो मम भक्तिमेव परमपुरुषार्थासाधारणहेतुं मत्वा अनित्यमध्रुवमसुखं जन्ममरणाद्यनेकदुःखनिलयमिमं लोकं मनुष्यदेहं प्राप्य लब्ध्वा यावदयं न नश्येत्तावदन्यसुखसाधनं हित्वा शीघ्रमेव मां भजस्व अत्यादरेण सेवनं कुरु, मद्भजनेनैवास्य जन्मनः साफल्यं कुरु । अन्यथोत्तमकुलजन्मक्रियाकौशल्यादि व्यर्थमेव स्यादिति भावः ॥ ३३ ॥

म० टी०–एवं चेत्–**किमिति** । पुण्याः सदाचारा उत्तमयोनयश्च ब्राह्मणास्तथा राजर्षयः सूक्ष्मवस्तुविवेकिनः क्षत्रिया मम भक्ताः परां गतिं यान्तीति किं पुनर्वाच्यमत्र कस्यचिदपि संदेहाभावादित्यर्थः । यतो मद्भक्तेरी-दृशो महिमा अतो महता प्रयत्नेन इमं लोकं सर्वपुरुषार्थसाधनयोग्यमतिदुर्लभं च मनुष्यदेहमनित्यमाशुवि-नाशिनमसुखं गर्भवासाद्यनेकदुःखबहुलं लब्ध्वा यावदयं न नश्यति तावदतिशीघ्रमेव भजस्व मां शरण-माश्रयस्व अनित्यत्वादसुखत्वाच्चास्य विलम्बं सुखार्थमुद्यमं च मा कार्षीस्त्वं च राजर्षिरतो मद्भजनेनात्मानं सफलं कुरु अन्यथा ह्येतादृशं जन्म निष्फलमेव ते स्यादित्यर्थः ॥ ३३ ॥

शं० टी०–श्रवणमननाद्ययोग्यानामनक्षरमुखानामपि स्त्रीशूद्रादीनां ज्ञानतत्फलसिद्धौ किमुत वेदशा-स्त्राध्ययननिपुणानां सद्धर्मनिष्ठानां ब्राह्मणादीनां ज्ञानं तत्फलं च सेत्स्यतीति कैमुतिकन्यायेन ज्ञानस्या-तिसुलभत्वं सूचयन् शुद्धात्मनः सदसद्विवेकिनो ब्राह्मणादीन् मुमुक्षून् ज्ञानतत्फलसंपादने प्रवर्तयितुमाह–**किं पुनरिति** । पुण्या उत्तमजातयः अथवा पुण्यकर्माणः शुद्धात्मानो वा ब्राह्मणाः श्रोत्रियाः पुनस्तथा तथाविधा राजर्षयो राजसत्तमाः श्रवणादिभिर्लब्धज्ञानसंपत्त्या भक्त्या मन्निष्ठासंपन्ना भूत्वा परां निरति-शयानन्दरूपत्वादुत्तमां गतिं ज्ञानेन गम्यत इति गतिर्विदेहमुक्तिस्तां यान्तीति किमु वक्तव्यमित्यर्थः । ननु पुरुषार्थ इत्यत्र बहुव्रीहिर्वा कर्मधारयो वा तत्पुरुषो वा । नाद्यो न द्वितीयश्च अर्थसाङ्गत्याभावात् । न तृतीयोऽपि द्वितीयाचतुर्थीपञ्चमीषष्ठीसप्तमीतत्पुरुषः अयोग्यार्थत्वात् । ननु पुरुषस्य योग्योऽर्थः पुरुषार्थः इति षष्ठीतत्पुरुष उपयुज्यत एवेति चेन्न, धर्मादौ स्त्रीणामयोग्यत्वप्रसङ्गात्परिशेषात्पुरुषेण साध्योऽर्थः पुरु-षार्थ इति मोक्षस्यैव पुरुषार्थत्वं न तु धर्मार्थादेः धर्मार्थकामानां स्त्रीसाध्यत्वसंभवात् ' भर्तृशुश्रूषणं स्त्रीणा-

मग्निहोत्रनिषेवणम् ' इति स्त्रीणामपि स्वधर्मः शास्त्रीयः साध्यो विद्यत एव ततो धर्मस्यास्त्येव स्त्रीसाध्यता। तथैवार्थस्य कामस्यापि न तु मोक्षस्य तासां वेदशास्त्राध्ययनतदर्थविचारयोग्यत्वाभावात्तथैव शूद्रजातेरपि " आत्मा वा अरे द्रष्टव्यः श्रोतव्यः " इत्यात्मसाक्षात्कारमुद्दिश्य श्रवणविधानात् । ननु तासां वेदान्ताध्ययनयोग्यत्वाभावेऽपि श्रवणयोग्यतास्त्येवेति चेन्न, मन्तव्यश्चोपपत्तिभिरिति मननशक्त्यसंभवात् पदवाक्यप्रमाणज्ञस्यैव वेदान्तविचारमननतदर्थाध्यवसायसामर्थ्यं युज्यते नेतरस्य पुरुषस्यापि किमुत स्त्रीणां न युज्यत इत्यतः स्त्रीणां मोक्षसाधनसंपादनायोग्यत्वान्न मोक्षाधिकारः यथा पुरुषाणाम् । ततः पुरुषेण साध्योऽर्थः पुरुषार्थ इति मोक्षस्यैव मुख्यं पुरुषार्थत्वं धर्मादेस्तु गौणम् । ननु धर्मोऽपि मोक्षवत्पुरुषेण साध्य एवार्थो भवति " उदिते सूर्ये प्रातर्जुहोति । अहरहर्यजमानः स्वयमेवाग्निहोत्रं जुहोति । विद्वान् यजते " इति धर्मस्यापि पुरुषार्थत्वश्रवणादिति चेन्न, अग्निहोत्रादेः स्त्रीपुरस्कारकत्वेन केवलपुरुषसाध्यत्वासंभवाद्धर्मानुष्ठानस्य ज्ञानसिद्धेरङ्गत्वात्तत्साध्यमोक्षस्यैव प्रधानत्वं धर्मस्य गुणभावस्तेन मोक्ष एव पुरुषार्थ इति स्थितम् । ननु स्त्रियो वैश्यास्तथा शूद्रा इति स्त्रीशूद्राणामपि ज्ञानतत्फलसिद्धिश्च प्रतिपाद्यत इति चेन्न, तद्वचनस्य स्त्रीशूद्रादीनामपि ज्ञानतत्फलसिद्धौ किमुत ब्राह्मणादीनां ज्ञानं तत्फलं च सिध्यतीति ज्ञानतत्फलसौलभ्यप्रतिपादनपरत्वेन स्वार्थे तात्पर्याभावात्ततो न स्त्रीणां ज्ञानाधिकारः । ननु गार्गीसुलभादिस्त्रीणां धर्मव्याधादिशूद्राणां च ज्ञानसंपत्तिः श्रूयते कथं स्त्रीशूद्रादीनां ज्ञानाऽनधिकार इति चेदुच्यते धर्मव्याधः पूर्वं ब्राह्मणो ज्ञाननिष्ठः सन्नेव ब्राह्मणशापेन शूद्रो जातस्तत्रापि प्राक्तनपुण्यकर्मविशेषादेव ज्ञानी च । यथा ज्ञानिन एव ब्राह्मणस्य दुष्कर्मवशात् शूद्रयोनिस्तथा ब्राह्मणानामेव कर्मविशेषात्स्त्रीयोनिरुपपद्यते । तासामपि तज्ज्ञानं प्राग्भवीयमेव न त्वाधुनिकं स्त्रीणां वेदान्ताध्ययनतदर्थविचारानधिकारात् । अत एव ततः सिद्धं पुरुषेण साध्योऽर्थः पुरुषार्थो मोक्ष एवेति सोयं मोक्षः पुंस्त्वसिद्धेः साफल्याय पुरुषेण सदसद्विवेकवता मुमुक्षुणा सत्साधनसंन्यासपूर्वकं प्रयत्नेन संपादनीय इति बोधयितुमिदमाह—अनित्यमिति । नित्यो न भवतीत्यनित्यः "मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना" इति देहस्य मृत्युग्रस्तत्वश्रवणादनित्योऽनिश्चितस्वभावः श्वः स्थास्यतीति विश्वसितुमयोग्य इत्यर्थस्तमनित्यं एतेन 'श्वः कार्यमद्य कुर्वीत' इतिन्यायेन कालमविलम्ब्य पुरुषार्थसिद्धये धीमता क्षिप्रमेव प्रयतितव्यमिति सूचितम् । किंच असुखं दुःखात्मकमाध्यात्मिकाद्युपद्रवकोटिग्रस्तत्वाद्दुःखस्वरूपम् एतेन यदा स्वस्थता देहस्य तदैव मोक्षाय यतितव्यमिति सूचितम् । लोक्यत इति वात्मस्वरूपं लोकयतीति वा लोको मानवो देहस्तमिमं मुक्तिसाधनं प्राप्य देहः क्षणभङ्गुरो दुर्लभश्च मानुष इति ज्ञात्वा तीव्रमोक्षेच्छावैराग्याभ्यां तु मां परमात्मानं मुक्तिप्रदातारं सोपाधिकं वा निरुपाधिकं वा भजस्व श्रद्धाभक्तिभ्यामनुसंधेहि । यदि निर्विशेषविषयं ज्ञानमुपदिष्टं तेऽस्ति तदा निर्विशेषमेव मां महात्मानस्त्वित्युक्तरीत्या त्वमभेदेन भजस्व तदभावे सोपाधिकमेव भेदेन भजस्वेत्यभिप्रायः ॥३३॥

श्री० टी०—यदेवं तदा सत्कुलाः सदाचाराश्च मद्भक्ताः परां गतिं यान्तीति किं वक्तव्यमित्याह—किमिति । पुण्याः सुकृतिनो ब्राह्मणाः तथा राजानश्च ते ऋषयश्च क्षत्रियाः एवंभूताः परां गतिं यान्तीति किं वक्तव्यमित्यर्थः । अतस्त्वमिमं राजर्षिरूपं लोकं देहं प्राप्य लब्ध्वा मां भजस्व । किंच अनित्यमध्रुवमसुखं सुखरहितमिमं मर्त्यलोकं प्राप्यानित्यत्वाद्विलम्बमकुर्वन् असुखत्वाच्च सुखार्थोद्यमं हित्वा मामेव भजस्वेत्यर्थः ॥ ३३ ॥

स० टी०—ब्राह्मणा ये सदाचारास्तथैवोत्तमयोनयः ॥ तथा राजर्षयः पुण्याः सूक्ष्मवस्तुविवेकिनः ॥१॥
मद्भक्ता यान्ति मोक्षं ते किमु वाच्यमिहास्ति भोः ॥ मद्भक्तेरीदृशो यस्मान्महिमाऽतोऽतियत्नतः ॥ २ ॥
नरदेहमिमं प्राप्य पुरुषार्थैकसाधनम् ॥ क्षणभङ्गुरगर्भान्तर्वासदुःखादिभिर्हतम् ॥ ३ ॥ नश्यत्ययं न यावत्त्वं तावच्छीघ्रं भजस्व माम् ॥ अनित्यत्वादनानन्दरूपत्वाच्चास्य किंचन ॥ ४ ॥ विलम्बं मा कुरु त्वं

भो भोगार्थं मा स्पृहां कुरु ॥ दुर्लभं प्राप्य विप्रत्वं नृपत्वं वाऽथ यो नरः ॥ ५ ॥ शरणं नैति गोविन्दं दुर्दैवेनैष वञ्चितः ॥ अतस्त्वं पार्थ राजर्षिर्मामेव शरणं कुरु ॥ ६ ॥ नो चेत्ते जन्मसाफल्यं कथमित्याशयो हरेः ॥ ७ ॥ ३३ ॥

भा० टी०—किं पुनर्ब्राह्मणाः पुण्याः पुण्ययोनयः शमादिसंपन्नाः तथा पुण्ययोनयो राजानश्च ते ऋषयः सूक्ष्मदर्शिनो मद्भक्ताः क्षत्रियाः मां व्यपाश्रित्य परां गतिं यान्तीति किमु वक्तव्यमित्यर्थः । यस्मान्मद्भजनमेव परमपुरुषार्थसाधनमतोऽनित्यमसुखमिमं मनुष्यलोकं पुरुषार्थसाधनं प्राप्य मां वासुदेवं परमात्मानं भजस्व । अनित्यमित्यनेन कालान्तरे त्वद्भजनं करिष्यामीति वारितम् । सुखवर्जितमिति तद्भजने न सुखत्यागो भविष्यतीति, इममित्यनेन राजर्षिदेहं मत्संनिधियोग्यमतिदुर्लभमित्युक्तम् ॥ ३३ ॥

प० टी०—सत्येवं सत्कुलाचारवतः किं पुनरित्याह—**किं पुनरिति** । ब्राह्मणा वेदविदः पुण्याः सदाचारवन्तस्तत्रापि भक्ता मद्भजनशीलास्तथा राजानश्च ते ऋषयश्च जनकाद्याः पृथग्वा राजान ऋषयश्चेति परां गतिं यान्तीति किं चित्रम् । एवं त्वमपि राजर्षिरस्यतो मां भजस्वेत्यर्थः । तदुक्तं बोधसुधाकरे—'अयमुत्तमोऽयमधमो जात्या रूपेण संपदा वयसा । श्लाघ्योऽश्लाघ्यो वेत्थं न वेत्ति भगवाननुग्रहावसरे ॥ १ ॥ अन्तस्थभावभोक्ता यतोऽन्तरात्मा यथा महामेघः । खदिरश्चम्पक इति वा प्रवर्षणे किं विचारयति ॥ २ ॥' इति । श्रुतिरपि शातपथी—" तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथा ऋषीणां तथा मनुष्याणाम् " इति । भाष्यम्—तदात्माख्यं वस्तु देवानां मध्ये यो यः प्रत्यबुध्यत ज्ञातवान् स एव तदभवद्ब्रह्मरूपोऽभवत् तथैव ऋषीणां मनुष्याणां च तथा चात्मप्राप्तौ न जात्यादितारतम्यमित्यर्थः । ऋक्शाखायामपि—" सर्वे नन्दन्ति यशसा गतेन सभासाहेन सख्या सखायः " इति । भाष्यम्—न तस्य प्रतिमास्ति तस्य नाम महद्यश इति श्रुतेर्यशसा परमात्मना गतेन प्राप्तेन सर्वे देहिनो नन्दन्ति परमानन्दाप्लुता भवन्ति । किंभूतेन सभासाहेन सभामिन्द्रियसभां लौकिकव्यवहारं वा सहते आक्रमते तथाविधेन । पुनः किंभूतेन सख्योपकारकेण । किंभूताः सर्वे सखायः सर्वभूतसुहृत्तमास्तथा च सर्वभूतसुहृत्तमत्वमेवात्मप्राप्तेर्निदानं नतूत्तमाधमत्वमिति रावणभाष्यम् । ब्राह्मणं त्वेतां श्रुतिमधिदैविकस्थित्या व्याकरोति यशो वै सोमो राजेत्यादिना । अथ प्रकृतमनुसरामः । अस्मिन्नर्थे मा विलम्बं कुर्वित्याह—**अनित्यमिति** । इममनित्यं क्षणभङ्गुरमसुखं दुःखैकनिदानं लोकं मर्त्यलोकं मनुष्यदेहं प्राप्य मां परमात्मानं भजस्व नित्यं मदनुसंधानमेव मद्भजनम्, अत्र विलम्बो मास्त्वित्यनित्यानि पदानि । अतोऽप्यग्रेऽधमयोनिप्राप्तौ किं च लप्स्यतीत्यर्थः । श्रुतिरपि सामसंहितासु—" आवो राजानमध्वरस्य रुद्रं होतारं सत्ययजं रोदस्योः । अग्निं पुरा तनयित्नोरचिताद्धिरण्यरूपमवसे कृणुध्वम्" इति । भाष्यम्—भो यजमाना अणुचित्ताः सर्वेन्द्रियोपरमरूपान्मरणात्स्तनयित्नोराकस्मिकाशनिरूपात्पुरा पूर्वं जीवद्दशायामेवाग्निं प्रकाशमानं हिरण्यरूपं हिरण्यगर्भमीश्वरं राजानं स्वामिनं कृणुध्वं कुरुध्वम् । किमर्थमवसे रक्षणार्थं मरणे जाते सति पश्चान्न किमपि चलतीत्यर्थः । अथ तस्य स्वामित्वे कोऽतिशय इत्याह—किंभूतं रोदस्योर्मायाविलासरूपयोर्द्यावापृथिव्योर्होतारं होमकर्तारम् " य इमा विश्वा भुवनानि जुह्वद् " इति श्रुतेः । अत एव रुद्रं क्रूरम् । अथ न केवलं क्रूरं सत्ययजं सत्यस्यानन्दरूपस्य संगमयितारम् । तथाध्वरस्येति षष्ठ्या द्वितीयार्थोऽवगम्यते तथा च संप्राप्त्यै कृतयागाद्यनुष्ठानं पुरुषमावो रक्षितवान् ॥ ३३ ॥

रा० टी०—किमिति । पुण्याः पुण्यहेतुकाः ब्राह्मणाः शूद्रादिहीनवर्णा अपि स्वयं यदि पुण्यवशेन ब्राह्मणत्वं प्राप्ताः । तथा राजत्वं ऋषित्वं वा प्राप्ताः परां गति यान्ति । किं पुनः स्वाभाविकाः एते स्त्रीवैश्यादयः परां गतिं यान्तीति वाच्यमित्यर्थः । अत्र नैमित्तिकस्त्रीवैश्यादिग्रहणमध्ये नैमित्तिकपुंसां स्त्रियः पुमांसो वैश्याः शूद्रा

इत्यनुक्तिस्तु स्वभावतः स्त्रीणां केनापि हेतुना पुंस्त्वाभावेन नैमित्तिकपुंसामभावादेव न स्त्रियो यान्ति पुंस्त्वे तु स्वभावादेव याः स्त्रिय इत्युक्तेरिति । अतो भक्तेः साधनोत्तमत्वादेव अनित्यमसुखं सुखहीनमिमं भक्त्यादिसाधनभूतं लोकं देहं भूलोकं वा प्राप्य अविलम्बेन मां भजस्व ॥ ३३ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥**
**मामेवैष्यसि युक्त्वैवमात्मानं मत्परायणः ॥ ३४ ॥**

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुन-
संवादे राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

त० टी०—भजनस्वरूपमुपदिशन्नध्यायमुपसंहरति—मन्मना भवेति । मयि सर्वेश्वरे भगवति वासुदेवे स्वभावतोऽपास्तसमस्तदोषेऽशेषकल्याणगुणैकराशौ सर्वज्ञे सत्यसंकल्पे सर्वस्य जगतोऽभिन्ननिमित्तोपादानकारणे परब्रह्मणि पुरुषोत्तमाख्ये स्वयमवाप्तसमस्तकामे भक्ताभीष्टप्रदातरि भक्ताशेषदोषनिरसनस्वभावे सर्वशरण्ये सर्वस्वामिनि सौन्दर्यमाधुर्यलावण्यादिनिधिमूर्तौ ध्यातृमनोहारिणि मनो यस्य स तथा त्वं भवविषयिणां विषयेष्वनपायिनी प्रीतिवदनवच्छिन्नगङ्गाप्रवाहवन्मय्याविष्टमनो भवेत्यर्थः । यदि दृष्टश्रुतानुभूतानेकबाह्यपदार्थासक्तं मनो झटिति मय्यावेष्टुं न शक्नोषि चेत्तर्हि मद्भक्तो भव तत्साधनभूतां मद्भक्तिं कुर्वित्यर्थः । साधनभक्तिश्च 'सुरर्षेर्विहिता शास्त्रे हरिमुद्दिश्य या क्रिया । सैव भक्तिरिति प्रोक्ता यया भक्तिः परा भवेत् ॥' इति वचनाद्भगवदर्था क्रियैव । तामेव निर्दिशति—मद्याजीति । मद्यजनकरणशीलो भव, प्रत्यहं त्रिकालं द्विकालमेककालं वा विविधगन्धपुष्पतुलसीधूपदीपोत्तमवस्त्रभूषणनैवेद्यादिभिर्मम मूर्तिं शालग्रामादिमतिप्रीत्याऽर्चय । तथा मम जन्माद्युत्सवानुकरणमेकादश्युपवासजागरणनृत्यगीतादिकं च तच्च विभवे सति बहुधनसाध्यसामग्र्या कर्तव्यं, कृतस्य च साङ्गतासिद्ध्यर्थं कर्तृत्वाभिमानरूपनिवृत्तये च मनोवाक्कायैर्मह्यं प्रणामः कर्तव्य इत्याह—मां नमस्कुर्विति । 'सर्वं त्वदीयं न ममास्ति किंचिदहं त्वदीयो न ममाहमस्मि' इत्याद्युक्तप्रकारेण मयि सर्वस्वं समर्प्य स्वाभिमानं त्यजेत्यर्थः । 'द्व्यक्षरं तु भवेन्मृत्युस्त्र्यक्षरं ब्रह्म शाश्वतम् । ममेति च भवेन्मृत्युर्न ममेति च शाश्वतम् ॥' इति भारते व्यासोक्तेः । प्रीत्यतिशयेनाष्टाङ्गं पञ्चाङ्गं प्रणामं कुरु । प्रणाममाहात्म्यं च वामने प्रह्लादेनोक्तम्—'वैकुण्ठं खण्डपरशुं भगवन्तं भवच्छिदम् । प्रणिपत्य यथान्यायं न संसारे पुनर्भवेत् ॥' वैष्णवधर्मे च—'नम इत्येव यो ब्रूयान्मद्भक्तः श्रद्धयाऽन्वितः । तस्याक्षयो भवेल्लोकः श्वपाकस्यापि नारद ॥' इति । एवं साङ्गे मद्यजने कृते सति सुशकं मयि मनो नियोक्तुमित्याह—एवमुक्तप्रकारेणात्मानं मनो मयि युक्त्वा मत्परायणो मदेकशरणस्त्यक्तान्ययत्नः सन् मामेव नित्यं सच्चिदानन्दं मुक्तप्राप्यं तद्भोग्यं चैष्यसि प्राप्स्यसि ॥ ३४ ॥

भक्त्याऽन्वितं निजं ज्ञानं भक्तिवैभवमेव च । गुह्यमत्राह कृपया भगवांस्तं समाश्रये ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां नवमोऽध्यायः ॥ ९ ॥

म० टी०—भजनप्रकारं दर्शयन्नुपसंहरति राजभक्तस्यापि राजभृत्यस्य पुत्रादौ मनस्तथा स तन्मना अपि न तद्भक्त इत्यत उक्तम्—मन्मना भवेति । तथा मद्याजी मत्पूजनशीलः मां नमस्कुरु मनोवाक्कायैः एवमेभिः प्रकारैर्मत्परायणो मदेकशरणः सन्नात्मानमन्तःकरणं युक्त्वा मयि समाधाय मामेव परमानन्दघनं स्वप्रकाशं सर्वोपद्रवशून्यमभयमेष्यसि प्राप्स्यसि ॥ ३४ ॥

श्रीगोविन्दपदारविन्दमकरन्दास्वादशुद्धाशयाः संसाराम्बुधिमुत्तरन्ति सहसा पश्यन्ति पूर्णं महः ।
वेदान्तैरवधारयन्ति परमं श्रेयस्त्यजन्ति भ्रमं द्वैतं स्वप्रसमं विदन्ति विमलां विन्दन्ति चानन्दताम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायामधिकारिभेदेन राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

**शं० टी०**—निर्विशेषज्ञानानधिकारिणो मम सोपाधिकस्य तव भजनं कथं कर्तव्यमिति चेदुच्यते शृणु—**मन्मना इति।** मन्मनाः 'भूतानि विष्णुः' इति न्यायेन सर्वात्मके मयि लग्नं मनो यस्य स त्वं मन्मना भव वासुदेवः सर्वमिति जगत्सर्वं मामेव सदा भावय। यद्वा 'मनो मोक्षे निवेशयेत्' इति स्मरणान्मय्यानन्दात्मनि मोक्षस्वरूपे संस्थापितं मनो यस्य स मन्मना मोक्ष एवैकस्मिन्पुरुषार्थेऽतिसंसक्तमना भव न तु धर्मफले चार्थे च कामे चेत्यर्थः। मुमुक्षोरेवं मोक्षैककामत्वमुक्त्वा तस्य कर्तव्यमाह—मद्याजीति। मामेव परमेश्वरं श्रौतैः स्मार्तैश्च कर्मभिर्यष्टुं शीलमस्यास्तीति मद्याजी भव मामेव कर्मभिर्यजस्वेत्यर्थः। कर्मकरणे त्वग्न्यादिदेवतासु भेदबुद्धिर्न कर्तव्या किंतु मद्बुद्ध्या भवितव्यमित्याशयेनाह—मद्भक्त इति। 'ब्रह्मार्पणं ब्रह्महविः' इति न्यायेनेज्यो यजनं यजमानो यागश्च सर्वं ब्रह्मैवेति सर्वत्र मद्बुद्ध्या मां भजतीति मद्भक्तो भव सर्वत्र ब्रह्मबुद्धिं कुर्वित्यर्थः। तथैव मां नमस्कुरु वासुदेवः सर्वमिति सर्वं मामेव मत्वा नमस्कुरु 'आश्वचण्डालगोखरम्' इति स्मरणात्। यद्वा मातृपितृगुरुदेवतादिभ्यो मद्बुद्ध्या प्रणामं च कुरु। किंच मत्परायणः अहमेव परममयनं गतिर्यस्य स मत्परायणः सर्वावस्थासु सर्वदा परमेश्वर एव मम गतिरिति मच्छरणो भव, यद्वा मत्प्रीतय एव लौकिकं वैदिकं च सर्वं कर्म करोतीति मत्परायणः सन्नेवमुक्तप्रकारेण युक्त्वा योगं कृत्वा कर्मयोगेन मामुपास्यान्ते आत्मानं परमात्मानं मामेव परं ब्रह्मैष्यसि क्रमेण प्राप्स्यसि विदेहकैवल्यसुखं गमिष्यसीत्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां नवमोऽध्यायः ॥ ९ ॥

**श्री० टी०**—भजनप्रकारं दर्शयन्नुपसंहरति—**मन्मना इति।** मय्येव मनो यस्य स मन्मनास्त्वं भव। तथा ममैव भक्तः मत्सेवको भव। मद्याजी मद्यजनशीलो भव। मामेव च नमस्कुरु। एवमेभिः प्रकारैर्मत्परायणः सन्नात्मानं मनो मयि युक्त्वा समाधाय मामेव परमानन्दरूपमेष्यसि प्राप्स्यसि ॥ ३४ ॥

निजमैश्वर्यमाश्चर्यं भक्तेश्चाद्भुतवैभवम् ॥ नवमे राजगुह्याख्ये कृपयाऽवोचदच्युतः ॥ १ ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

**स० टी०**—भजनप्रकारं श्रीशो दर्शयन्नाह सद्वचः ॥ मनोमयीश्वरे यस्य सत्त्वं मद्भक्त एव सन् ॥ १ ॥ मद्याजी सततं भूत्वा मामेव त्वं नमस्कुरु ॥ मनोवाक्कायसद्भावैः प्रकारैरेभिरेव च ॥ २ ॥ मदेकशरणो भूत्वा समाधाय मनो मयि ॥ मामेव स्वप्रकाशं त्वं सच्चिदानन्दविग्रहम् ॥ ३ ॥ सर्वोपाधिविनिर्मुक्तमभयं प्राप्स्यसि स्वयम् ॥ ४ ॥ यद्विद्या राजविद्या त्रिभुवनविसृतो यस्य भूतेः कणांशो यस्मिन्यस्तान्तरात्मा त्यजति जडरतिं दुःखदां भ्रान्तिमूलाम् ॥ दुष्टाचारोऽपि यस्य प्रथितसुयशसो भक्तिलेशेन साधुस्तं भूमानं विशुद्धं विधिहरशरणं कृष्णमेवाश्रयामि ॥ ९ ॥ ३४ ॥

इति भावप्रकाशे श्रीसदानन्दविदाकृते ॥ तदर्थे ज्ञयताप्रोक्तिर्नवमः पूर्णतां गतः ॥

अध्यायटीकाश्लोकसंख्या ॥ २२६ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ २६६२ ॥

**भा० टी०**—भजनप्रकारमाह—**मन्मना इति।** मन्मना भव मयि परमेश्वरे एव मनो यस्य न रुयादौ स तथा भव मम भक्तो न तु भूतादेः। तथा मद्यजनशीलो भव न त्विन्द्रादेः। मामेव च नमस्कुरु न तु

मद्यतिरिक्तबुद्ध्यान्यान्। तथा चैवमात्मानमन्तःकरणं समाधाय मद्भजनप्रकारेण मत्परायणः सन्मामेवैष्यसि प्राप्स्यसीत्यर्थः। एवमुक्तप्रकारं भक्तियोगं विधाय आत्मानं समस्तभूतप्रत्यगात्माभिन्नपरमात्मानं मामेवैष्यसीति वा संबन्धः। तदनेन नवमाध्यायेन तत्पदलक्ष्यं ज्ञेयं ब्रह्म निरूपयता तदुपायभूतं भगवद्भजनमत्युत्तमफलदमतिसुलभं पापजन्मनामप्युद्धारकमत एवावश्यकमिति दर्शितम् ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां नवमोऽध्यायः ॥ ९ ॥

**प० टी०**—अथ भजनप्रकारमाह—**मन्मना इति**। मयि मनो यस्यासौ मन्मनाः संकल्पो मदाकार एव तथाविधो भव। मम भक्तो भव नान्यस्य क्षुद्रस्य। मद्याजी भव मदर्थमेव यजस्व। तथा तारतम्यविवर्जनेन मां सर्वत्रावस्थितं नमस्कुरु। तदुक्तम्—"विसृज्य स्मयमानान् स्वान् दृशं व्रीडां च दैहिकीम्। प्रणमेद्दण्डवद्भूमावाश्वचाण्डालगोखरम्" इति। युक्तो योगयुक्तो भूत्वा मामेवात्मानं परमानन्दरूपमेष्यसि प्राप्स्यसि। तदुक्तम्—'विलिखितमिवरूपं चित्तभित्तौ मुरारेः सुमन इव मनो यैरर्पितं तत्पदाब्जे। प्रतिपदमुदयद्भिः सात्त्विकैरङ्किताङ्गास्त इह भवपयोधेः पारमुल्लङ्घयन्ति॥' इति ॥ ३४ ॥

अथाध्यायतात्पर्यम्।

विश्वाभासः किलासौ मदधिकरणकः स्यान्मदज्ञानकार्यं यन्मिथ्या तद्धि सत्याश्रयमिति नियमो नैव मिथ्याश्रितं सत्। सत्ये सत्यं भ्रमान्ते न भजति सहसावस्थितिं मय्यसङ्गे तत्स्पर्शो वा कदाचिन्न भवति नवमेनोक्तमेतद्रहस्यम् ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां राजविद्याराजगुह्ययोगो नाम नवमोऽध्यायः ॥ ९ ॥

**रा० टी०**—भजनप्रकारं दर्शयन् तस्य फलमाह—**मन्मना इति**। एवं मन्मनस्त्वादिप्रकारेण मत्परायणः सन्नात्मानं मनो मयि युङ्क्त्वा मामेवैष्यसि प्राप्स्यसीति ॥ ३४ ॥

तत्सदिति श्रीमद्गीतार्थसंग्रहे श्रीराघवेन्द्रयतिकृते नवमोऽध्यायः ॥ ९ ॥



## अथ दशमोऽध्यायः ।

**श्रीभगवानुवाच-भूय एव महाबाहो शृणु मे परमं वचः ॥**
**यत्तेऽहं प्रीयमाणाय वक्ष्यामि हितकाम्यया ॥ १ ॥**

**त० टी०**—तदेवं सप्तमाष्टमाध्याययोर्भजनीयस्य परमेश्वरस्वरूपस्य भक्तिप्राप्यतयोक्तस्यैव नवमेऽध्याये ज्ञानमाहात्म्यकथनपूर्वकमभक्तनिन्दया भक्तानां परमफलनिरूपणेन च भक्तेर्माहात्म्यं द्योतितमिदानीं भक्त्युत्पत्तये तद्वृद्धये च निरङ्कुशं स्वैश्वर्यं वक्तुं तावदुक्तस्यापि महिम्नो बहुभिर्दुर्ज्ञेयत्वात्स्वभक्तहिताकाङ्क्षया पुनरर्जुनं संबोधयति(न्?) श्रीभगवानुवाच—भूय एवेति । भूय एव पुनरपि हे महाबाहो मे मदीयं परमं प्रकृष्टं सपरिकरपरमतत्त्वप्रकाशकं वचो वाक्यं मम महिमानं श्रुत्वा प्रीयमाणाय अमृतपानेनैव निरतिशयप्रीतिमते ते तुभ्यं हितकाम्यया भक्तिप्राप्तिवृद्धिरूपत्वद्धितकामनया यदहं वक्ष्यामि तदेकाग्रेण मनसा शृणु ॥ १ ॥

**म० टी०**—एवं सप्तमाष्टमनवमैस्तत्पदार्थस्य भगवतस्तत्त्वं सोपाधिकं निरुपाधिकं च दर्शितम् । तस्य च विभूतयः सोपाधिकस्य ध्याने निरुपाधिकस्य ज्ञाने चोपायभूताः रसोऽहमप्सु कौन्तेयेत्यादिना सप्तमे, अहं क्रतुरहं यज्ञ इत्यादिना नवमे च संक्षेपेणोक्ताः । अथेदानीं तासां विस्तरो वक्तव्यो भगवतो ध्यानाय, तत्त्वमपि दुर्विज्ञेयत्वात्पुनस्तस्य वक्तव्यं ज्ञानायेति दशमोऽध्याय आरभ्यते । तत्र प्रथममर्जुनं प्रोत्साहयितुम्—भूय एवेति । भूय एव पुनरपि हे महाबाहो शृणु मे मम परमं प्रकृष्टं वचः यत्ते तुभ्यं प्रीयमाणाय मद्वचनादमृतपानादिव प्रीतिमनुभवते वक्ष्याम्यहं परमाप्तस्तव हितकाम्यया इष्टप्राप्तीच्छया ॥ १ ॥

**शं० टी०**—पूर्वाध्यायान्ते मन्मना भव मद्भक्त इत्यर्जुनं प्रति मुमुक्षुस्त्वं चित्तशुद्धये तज्जन्यज्ञानद्वारा कैवल्यसिद्धये च सविशेषं मां ब्रह्मोपास्स्वेत्युक्तमिदानीं मन्दप्रज्ञस्य मुमुक्षोस्तस्यैव तीव्रमोक्षेच्छया स्वोपास्तौ क्षिप्रप्रवृत्तिसिद्धये स्वोपास्तेः फलं स्वस्य च परमात्मन उपास्यस्य सर्वज्ञत्वं सर्वेश्वरत्वं सर्वार्थप्रदातृत्वं भक्तानुग्राहकत्वं विभूतिविशेषं च प्रतिपादयितुं दशमाध्याय आरभ्यते । तत्रादावर्जुनस्य श्रोतुरुपास्तौ रुच्युत्पत्तये मनो रञ्जयितुमिदं श्रीभगवानुवाच—भूय इति । हे महाबाहो ज्ञातव्यस्य वस्तुनः परमसूक्ष्मत्वाद्दुर्विज्ञेयत्वात्सर्वव्यवहारागोचरत्वाच्च भूयः पुनरपि तदेव बोधयितुमुच्यमानं मे मम परमं परमार्थविषयं तन्निष्ठासिद्धिकारणं वचो वचनं शृणु, इदं श्रुत्वा तदर्थं ज्ञात्वा तरिष्यामीति तच्छ्रवणे प्रीयमाणाय प्रीतिं कुर्वते श्रवणोत्सुकायेत्यर्थः । ते तुभ्यं हितकाम्यया हितं नित्यनिरतिशयं सुखं तस्य संपादनेच्छया यद्वक्ष्यामि तच्छृणुवित्यर्थः । एतेन तच्छ्रुत्वा मत्वा तत्त्वं ज्ञात्वा तरिष्यामीति मोक्षैककामाय श्रद्धावत एव तत्त्वोपदेशः कर्तव्य इति सूचितम् ॥ १ ॥

**श्री० टी०**—उक्ताः संक्षेपतः पूर्वं सप्तमादौ विभूतयः ॥ दशमे ता वितन्यन्ते सर्वत्रेश्वरदृष्टये ॥ १ ॥ एवं तावत्सप्तमादिभिस्त्रिभिरध्यायैर्भजनीयं परमेश्वररूपं निरूपितम् । तद्विभूतयश्च सप्तमे रसोऽहमप्सु कौन्तेयेत्यादिना संक्षेपतो दर्शिताः । अष्टमे किं तद्ब्रह्म किमध्यात्ममित्यादिना अर्जुनाय सप्त पदार्था उपन्यस्तास्ताः परमेश्वरस्य विभूतय एव साधिभूताधिदैवमित्युक्तत्वात् । नवमे च अहं क्रतुरहं यज्ञ इत्यादिना तद्विभूतयो दर्शिताः । अथेदानीं ता एव विभूतीः प्रपञ्चयिष्यन् स्वभक्तेश्चावश्यं करणीयत्वं वर्णयिष्यन् श्रीभगवानुवाच—भूय एवेति । महान्तौ युद्धादिस्वधर्मानुष्ठाने महत्परिचर्यायां वा कुशलौ बाहू यस्य हे महाबाहो भूय एव

पुनरपि मे वचः शृणु। कथंभूतम्, परमं परमार्थनिष्ठं मद्वचनामृतेनैव प्रीतिं प्राप्नुवते ते तुभ्यं हितकाम्यया हितेच्छया यदहं वक्ष्यामि तत् ॥ १ ॥

**स० टी०**—पवित्रं श्रीभूमिं सकलगुणलक्ष्मीर्निधिनिधिं सवित्रन्तर्ध्येयं विमलमतिसेव्यं गतिगतिम् ॥ धराधीशाधीशं निखिलजगदीशं क्रतुपतिं विधीशेशं श्रीशं भज जन मुकुन्दं श्रुतिपदम् ॥ १ ॥ सप्तमादित्रयेणोक्तं सोपाधिनिरुपाधिकम् ॥ श्रीमद्भगवतस्तत्त्वं तत्पदार्थस्य धीकृते ॥ २ ॥ सविशेषस्य तस्य प्राग्ध्यानोपाया विभूतयः ॥ निर्विशेषस्य तस्यैव ज्ञानोपायास्तथेरिताः ॥ ३ ॥ अथेदानीं पुनस्तासां वक्तव्यो विस्तरो यतः ॥ दुर्विज्ञेयं परं तत्त्वं श्रीमद्भगवतो हरेः ॥ ४ ॥ अतो ज्ञानाय तत्तत्त्वं तद्ध्यानाय विभूतयः ॥ दशमे संप्रपञ्च्यन्ते मुमुक्षूणां हिताय च ॥ ५ ॥ प्रोत्साहयितुमत्रादौ श्रोतारं हरिरब्रवीत् ॥ पुनरप्यत्र शृणु मे प्रकृष्टं वच आदरात् ॥ ६ ॥ यत्तुभ्यं प्रीयमाणाय सुधापानादिवार्जुन ॥ प्रीतिं प्राप्नुवते नित्यं मद्वाक्यादत उत्तमम् ॥ ७ ॥ वक्ष्याम्यहं परो ह्यातस्तवाभीष्टाभिवाञ्छया ॥ ८ ॥ १ ॥

**भा० टी०**—सप्तमेऽध्यायेऽष्टमे च भगवतस्तत्त्वं सोपाधिकं विभूतयः सविशेषबोधोपयोगिन्यः प्रकाशिताः। नवमे च तत्त्वं निरुपाधिकं विभूतयो निर्विशेषबोधोपयोगिन्यः। अथेदानीं सविशेषध्याने निर्विशेषज्ञाने चोपायभूता येषु येषु भावेषु चिन्त्यः परमेश्वरस्ते ते भावा वक्तव्याः तत्त्वं च यद्यप्युक्तं तथापि दुर्विज्ञेयत्वात्पुनरपि वक्तव्यमिति मन्यमानः भगवानुवाच—भूय इति। भूय एव पुनरपि हे महाबाहो मे मम परमं प्रकृष्टं वचो वचनं शृणु। वचसः प्रकृष्टत्वं च प्रकृष्टवस्तुप्रकाशकत्वेन। यत्परमं वचस्ते तुभ्यमहं वक्ष्यामि। कुत इत्यत आह—प्रीयमाणाय यतस्त्वं मद्वचनं शृण्वन् अमृतमिव पिबन्नत्यन्तं प्रीयसेऽतस्तव हितकाम्यया हितकामनया यद्वक्ष्यामि तच्छृणु इत्यर्थः। श्रुत्वा च महाबाहुत्वं सार्थकं कुर्विति संबोधनाशयः ॥ १ ॥

**प० टी०**—एवं द्वितीयाध्यायमादीकृत्याध्यायाष्टके क्रमेण देहादिव्यतिरिक्तात्मस्वरूपदर्शनपूर्वकं तत्प्राप्त्युपायभूतकर्मनैष्कर्म्याभ्यासभक्तियोगांस्तदधिकारिणश्च निरूप्य स्थूलसूक्ष्मप्रपञ्चमिथ्यात्वदर्शनप्रसङ्गेन स्वसत्यत्वं च प्रकटयन् मुख्यप्राणापरपर्यायमपञ्चीकृतभूतविग्रहहिरण्यगर्भात्मकं स्वस्वरूपं निरूपितमिदानीं मध्यमप्राणापरपर्यायं पञ्चीकृतभूतविग्रहं स्थूलव्यष्टिसमष्ट्याकारं विराडात्मकस्वरूपं दर्शयितुं दशमैकादशाध्याययोः प्रवृत्तिः। तत्र दशमे व्यष्ट्यपरपर्याया विभूतिर्निरूप्यते। तत्रालौकिकसामर्थ्यवती व्यष्टिरेव विभूतिः सा च विश्वरूपाङ्गोद्भूतदेवदेवर्षिगन्धर्वसिद्धावतारपक्षिसमयछन्दःपशुमनुष्योरगवृक्षादिरूपैरनन्तास्ति। तत्र श्रुतिस्मृतिप्रसिद्धाः कियन्त्योऽपि दर्शयितुं भगवानुपक्रमते—भूय इति। महाबाहो इतिसंबुद्ध्यार्जुनस्य स्वाज्ञानोद्भूतप्रपञ्चजये परमपुरुषार्थाधिष्ठानमुक्तम्। भूय एव पुनरपि मे वचः शृणु। भूयःपदेन सप्तमनवमप्रोक्ताः काश्चिद्विभूतयः सन्तीति सूचितम्। किंभूतं वचः, परमं परमार्थनिरूपकं यदमृतोपमं ते तुभ्यं प्रीयमाणाय प्रीतिं प्राप्तवते हितकाम्यया हितेच्छया वक्ष्यामि ॥ १ ॥

**रा० टी०**—षष्ठेऽध्याये ध्यानयोग उक्तः। नवमान्ते च मन्मना इत्यादिना तद्ध्यानं स्मारितम्। तच्च ध्येयसापेक्षमतो ध्यानार्थं भगवद्विभूतिरूपाणि अत्राध्याये, अग्रे हन्त ते कथयिष्यामीत्यादिना प्राचुर्येण वक्ष्यन्नादौ बुद्ध्यादीनां महर्ष्यादीनां सामर्थ्यातिशयोपेततया निर्माणरूपं विशेषकारणत्वं च भगवतो वक्ति। यद्यपि भोक्तारं यज्ञतपसामित्यादिना पञ्चमान्तादौ ध्येयमुक्तं तथापि विशिष्टाधिकारिणां भगवद्विभूतय उपास्या इति तदुक्तिरत्रेति। उक्तरूपविशेषकारणत्वमपि विशिष्टाधिकारिध्येयमिति तस्याप्यत्रोक्तिः। ननु विभूतिरूपाण्यपि रसोऽहमप्सु कौन्तेयेत्यादिना अहं क्रतुरित्यादिना चोक्तान्येव सत्यं, अत्र विस्तरेणो-

च्यन्त इत्यदोषः । अत एवास्य विभूत्यध्याय इति व्यपदेशः । तदुक्तेर्बहुत्वेनैकवाक्यता चाध्यायस्य । विभूतिशब्दार्थमग्रे वक्ष्यामः । तत्र पार्थस्य श्रोतृत्वसंपत्तिप्रतिपादनाय तद्विशेषणोक्तिपूर्वं संबोध्य प्रतिजानीते—**भूय एवेति** । हे महाबाहो भूय एव पुनरेव मे परमं वचः माहात्म्यप्रतिपादकं वचनं शृणु श्रुत्वा तत्र निष्ठां कुरु । प्रीयमाणाय मद्वचः श्रुत्वा संतोषं प्रप्नुवते । अनेन श्रोतृत्वसंपत्तिरुक्ता । ते तुभ्यं हितकाम्यया हितेच्छया वक्ष्यामीति ॥ १ ॥

**न मे विदुः सुरगणाः प्रभवं न महर्षयः ॥**
**अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ २ ॥**

**त० टी०**—तव तत्त्वं केचिदन्येऽपि तत्त्वज्ञा न जानन्ति किं यतो भूयः स्वयमेव वक्ष्यसीत्यत आह—**न मे इति** । मे मम प्रभवं जीववत्कर्मनिमित्तजन्मरहितस्यापि प्रकृष्टमलौकिकं भवं जन्म नानाविभूतिगुणशक्तिभिराविर्भावविशेषं सुरगणा इन्द्रादयो महर्षयोऽतीन्द्रियवस्तुदर्शिनो भृग्वादयो न विदुर्न जानन्ति । तदज्ञाने हेतुः—**अहमिति** । हि यस्मादहं देवानां महर्षीणां च सर्वशः सर्वप्रकारैः उत्पादकत्वेन ज्ञानशक्त्यादिदातृत्वेन च आदिः कारणमतस्ते मत्कार्यभूता मद्दत्तपरिमितज्ञानवन्तो मत्स्वरूपैश्वर्यादिकं मदुपदेशं विना न जानन्तीत्यर्थः ॥ २ ॥

**म० टी०**—प्रागबहुधोक्तमेव किमर्थं पुनर्वक्ष्यसीत्यत आह—**न मे इति** । प्रभवं प्रभावं प्रभुशक्त्यतिशयं प्रभवनमुत्पत्तिमनेकविभूतिभिराविर्भावं वा सुरगणाः इन्द्रादयो महर्षयश्च भृग्वादयः सर्वज्ञा अपि न मे विदुः । तेषां तदज्ञाने हेतुमाह—अहं हि यस्मात् सर्वेषां देवानां महर्षीणां च सर्वशः सर्वैः प्रकारैरुत्पादकत्वेन बुद्ध्यादिप्रवर्तकत्वेन च निमित्तत्वेनोपादानत्वेन चादिः कारणमतो मद्विकारास्ते मत्प्रभावं न जानन्तीत्यर्थः ॥ २ ॥

**शं० टी०**—ननु मम तत्त्वोपदेष्टारो महान्तो व्यासादयः सन्ति तेषां परमं वचः श्रुतवतो ममापि ज्ञानं भविष्यति किमर्थं त्वयैव वक्तव्यमित्यत आह—**न म इति** । सुरगणा इन्द्रादयो देवा महर्षयो भृग्वादयो व्यासादयश्च मे मम महदादिसर्वप्रपञ्चस्रष्टुः परमेश्वरस्य प्रभवं प्रभावं सृष्टिस्थित्यदनप्रवेशनियमननिग्रहानुग्रहादिसामर्थ्यं सर्वशः सर्वप्रकारैर्न विदुः न विजानन्ति । ननु देवा भृग्वादयश्चादिमा दिव्यज्ञानसंपन्नाश्च कथं त्वत्प्रभावं न जानन्तीत्यत आह—**अहमिति** । हि यस्मात्कारणाद्देवानां महर्षीणां च सर्वेषामुत्पत्तेर्वैभवसिद्धेस्तपःसिद्धेर्योगसिद्धेर्दिव्यज्ञानसिद्धेश्चाप्यहमेवादिः कारणम् "तस्माच्च देवा बहुधा संप्रसूताः" इति "यस्मिन्युक्ता महर्षयो देवताश्च" इतिश्रवणान्मत्त एव तेषामुत्पत्तिः सर्वार्थसिद्धिश्चातो मत्तोऽर्वाचीनास्ते मम महत्त्वं न विजानन्ति यथा पितृमहत्त्वं शिशुः, ततो मम महत्त्वमहमेवोपदेक्ष्यामीति भावः ॥ २ ॥

**श्री० टी०**—उक्तस्यापि पुनर्वचने दुर्ज्ञेयत्वं हेतुमाह—**न म इति** । मे मम प्रकृष्टं भवं जन्मरहितस्यापि नानाविभूतिभिराविर्भावं सुरगणा अपि महर्षयो भृग्वादयोऽपि न जानन्ति । तत्र हेतुः—अहं हि देवानां महर्षीणां चादिः कारणं सर्वशः सर्वप्रकारैः उत्पादकत्वेन बुद्ध्यादिप्रवर्तकत्वेन च । अतो मदनुग्रहं विना मां केऽपि न जानन्तीत्यर्थः ॥ २ ॥

**स० टी०**—कुतः पूर्वोक्तमेव त्वं पुनर्वक्ष्यसि चेच्छृणु ॥ नानाविभूतिभिर्दिव्यमाविर्भावं विलक्षणम् ॥१॥ न शक्राद्याः सुरगणा न भृग्वाद्या महर्षयः ॥ सर्वज्ञा अपि मे विष्णोः प्रभावं ते विदुः परम् ॥ २ ॥ यतस्तेषां हि देवानां महर्षीणां च सर्वशः ॥ उत्पादकतया बुद्धिप्रेरकत्वेन सर्वथा ॥ ३ ॥ अहमादिर्जगत्कर्ता नातो जानन्ति मत्कलाम् ॥ ४ ॥ २ ॥

**भा० टी०**—ननु किमर्थं वक्ष्यसि त्वया वक्ष्यमाणस्य सुरादिभिर्ज्ञातत्वात्तत एव ममापि ज्ञानसंभवादिति चेत्तत्राह—**नेति** । मे मम प्रभवं प्रभुत्वातिशयमुत्पत्तिं वा सुरगणा इन्द्रादयो न विदुर्न जानन्ति, नापि भृ-

ग्वादयो महर्षयः । कुत इत्याह—हि यस्मादहं देवानां महर्षीणां च सर्वशः सर्वप्रकारैरुपादानत्वादिभिरादिः कारणं तस्मादित्यर्थः ॥ २ ॥

प० टी०—अथ स्ववचनस्यातिरहस्यत्वेन दुर्ज्ञेयत्वमाह—**न मे विदुरिति** । मे प्रभवं लीलया प्रादुर्भावं सुरगणास्तथा महर्षयो भृग्वादयोऽपि न विदुर्न जानन्ति । कुत इत्याह—**अहमिति** । हि यस्मात्कारणादहं सर्वशः सर्वेषां देवानां महर्षीणां चादिः कारणम् । अनादिसिद्धतया प्राचीनान्मत्तः सकाशाद्देवर्षीणामुत्पत्तिः। श्रुतिरपि—" मुखादिन्द्रश्चाग्निश्च प्राणाद्वायुरजायत " इति । तथा—" सप्तर्षयः प्रविहिताः शरीरे " इति । तथा कण्वा अपि—" तस्या सप्तऋषयः सप्ततीरे वागष्टमी " इति । भाष्यं तु—तीरे मुखसमीपे नेत्रश्रोत्रनासाजिह्वारूपसप्तेन्द्रियरूपाः सप्तर्षय इत्यर्थः ॥ २ ॥

रा० टी०—प्रतिज्ञातमहिमानमाह—**नम इति** । सुरगणा महर्षयश्च मे प्रभवं प्रभावं महिमानं न विदुः प्रभवमुत्पत्तिं मदधीनामुत्पात्तिं जगत इति योज्यम् । न विदुः न जानन्ति । देवादिजगतो भगवदधीनामुत्पत्तिं सुरगणादयो न जानन्ति किमुतान्य इत्यर्थः । यद्वा मे प्रभवं ममोत्पत्तिं सुरगणादयो न विदुरित्यर्थः । भगवन्महिमवज्जगदुत्पत्तिवच्च भगवदुत्पत्तिं विद्यमानां न जानन्तीति न भ्रमितव्यं किंतु महिमजगदुत्पत्त्योः सत्त्वमिव भगवदुत्पत्तेः सत्त्वमेव नास्तीति । तदभावादेव न विदुरिति ज्ञेयम् । प्रभावजगत्प्रभवयोरिव मे प्रभवः कुतो नेति चेत्तत्रोच्यते—**अहमादिरिति** । देवानां मनुष्याणां च उपलक्षणमेतत् । देवादिकृत्स्नजगतोऽहमादिः कारणं हि यतोऽतो मे प्रभवो नेति । सर्वस्य मत्सृष्टत्वेन मज्जनकस्यान्यस्याभावात्, असतश्च पूर्ववृत्तित्वरूपजनकत्वायोगात् । आत्माश्रयापत्त्या मयैव मज्जननायोगादिति भावः । तदाह सूत्रे—' ॐ असंभवस्तु सतोऽनुपपत्तेः ' इति ॥ २ ॥

**यो मामजमनादिं च वेत्ति लोकमहेश्वरम् ॥**
**असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ ३ ॥**

त० टी०—एवं देवर्ष्याद्यविज्ञेयमत्स्वरूपयाथात्म्यज्ञानं भक्त्युत्पत्तिप्रतिबन्धकपापनिरसनकारणमित्याह—**यो मामिति** । यस्मादहं देवानां महर्षीणां चादिर्न तु ममान्यः कश्चनादिर्विद्यते अतोऽहमनादिरनादित्वादेवाजः, तं मामजमनादिं लोकमहेश्वरं च यो वेत्ति । " हिरण्यगर्भः समवर्तताग्रे । यो देवानां प्रभवश्चोद्भवश्च । न सन्न चासच्छिव एव केवलः । एको रुद्रो न द्वितीयाय तस्थुः" इत्यादिश्रुतिभिर्ब्रह्मरुद्रयोः सर्वदेवादित्वतत्कारणत्वप्रतिपादनाल्लोकेश्वरत्वं तद्भगवतो वासुदेवस्यापि सामान्यं लोकेश्वरत्वमिति केषांचिद्ब्रह्मशिवादिसमत्वबुद्धेर्निरासाय " तमीश्वराणां परमं महेश्वरं तं देवतानां परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम् ॥" इत्यादिविशेषश्रुत्यभिहितपरममहेश्वरपर्यायलोकमहेश्वरशब्दवाच्यं मां वेत्तीत्युक्तम् । स मम लोकमहेश्वरत्ववेत्ता मर्त्येषु मनुष्येषु असंमूढः परब्रह्मणः पुरुषोत्तमस्य भगवत इतरदेवसाधारणत्वकल्पनं संमोहो महान् दोषस्तद्रहितः सन्मद्भक्त्युत्पत्तिविरोधिभिः सर्वपापैः प्रमुच्यते । ' यो मोहाद्विष्णुमन्येन हीनदेवेन दुर्मतिः साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः ॥ ' इति पञ्चरात्रवचनाद्भगवति विष्णौ इतरदेवसामान्यबुद्धीनां महापातकिनां भगवद्भक्तिर्न जायते, अत एवंभूतः संमोहो यत्नेन त्याज्य इति भावः ॥ ३ ॥

म० टी०—महाफलत्वाच्च कश्चिदेव भगवतः प्रभावं वेत्तीत्याह—**यो मामिति** । सर्वकारणत्वान्न विद्यते आदिः कारणं यस्य तमनादिमनादित्वादजं जन्मशून्यं लोकानां महान्तमीश्वरं च मां यो वेत्ति स मर्त्येषु मनुष्येषु मध्ये असंमूढः संमोहवर्जितः सर्वैः पापैर्मतिपूर्वकृतैरपि प्रमुच्यते प्रकर्षेण कारणोच्छेदात्तत्संस्काराभावरूपेण मुच्यते मुक्तो भवति ॥ ३ ॥

**शं० टी०**—ननु त्वयैव त्वन्महत्त्वमुपदिश्यतां तच्छ्रुतवतो मम तेन किं स्यादित्याकाङ्क्षायामाह—**य इति।** मर्त्येषु मरणशीलेषु शतकोटिसंख्याकेषु पण्डितेषु यो मुमुक्षया सदसद्विवेकवैराग्याभ्यामसंमूढः संमोहो विषयेष्विष्टताबुद्धिस्तद्रहितोऽसंमूढो विषयाशापिशाच्यवशो भूत्वा सुखसाधनं सर्वं संन्यस्य मत्प्रसादसंपन्नः सन् श्रवणमननादिसमुत्पन्नज्ञानेनाजं जन्मादिरहितम्। जन्माद्यसंभवे कारणमाह—अनादिमिति। "न तस्य कश्चिज्जनिता न चाधिपः" इति श्रवणादादिर्जन्मादिकारणं निमित्तमुपादानं च न विद्यते यस्य सोऽनादिस्तमत एवाजं नित्यम्। नन्वनादित्वाजत्वयोः शशविषाणस्यापि संभवात्तस्यापि नित्यत्वं स्यादित्यतिव्याप्तौ स्वस्य भावत्वमदृश्यत्वं परममहत्त्वं श्रुत्यनुमानगम्यत्वं च सूचयितुमाह—लोकमहेश्वरमिति। यस्य सन्निधिमात्रेण लोको जगत्सर्वं चेष्टते स ईश्वरः, यथा रथो जडो रथिकेन चेष्टते तथा जडं जगत्सर्वं चेतनेनैव चेष्टते ततो जगच्चेष्टाक्रियया तद्धेतोश्चेतनस्य सत्त्वभावत्वं परममहत्त्वं चानुमीयते—"य ईश अस्य जगतो नित्यमेव" इति श्रूयते च। ततोऽनादिमजं महांश्चासावीश्वरश्च महेश्वरो लोकस्य महेश्वरो लोकमहेश्वरस्तं सर्वप्रपञ्चप्रवर्तकं चकारात्कूटस्थासङ्गचिद्रूपं मां निर्विशेषं परं ब्रह्म वेत्ति यः साक्षादिदमेवाहमस्मीति स्वात्मना विजानाति स ब्रह्मविद्यतिः सर्वपापैः सर्वैर्बुद्धिपूर्वकैरबुद्धिपूर्वकैश्च पापैः पापकार्यैर्दुःखदुर्योनिदुर्गतिभिश्च प्रमुच्यते पापैः पापकार्यैश्च न किंचित्संबध्यत इत्यर्थः। ब्रह्मविदः सर्वात्मदर्शिनः बुद्धिपूर्वकं पापाचरणं न संभवति तत्सत्त्वे ब्रह्मवित्त्वासंभवात्। पापपुण्यकर्माचरणस्य देहजातिवर्णाश्रमाद्यभिमानैकमूलत्वात्तत्सत्त्वे त्वमुष्य ब्रह्मवित्त्वमेव न संभवति ब्रह्मवित्त्वं नाम ब्रह्मण्येव सर्वदृश्यविलक्षणे आत्मत्ववेदनं तत्सत्त्वे देहाद्यहंभावाभाव एव तत्सत्त्वे तु ब्रह्मण्यात्मत्वभावनाभावः द्वयोर्विपरीतप्रत्यययोस्तेजस्तिमिरयोरिव युगपत्क्रमाद्वाप्येकाधिकरणत्वं न संभवति असत्ये वानात्मन्यहंभावे तदाश्रितजात्याद्यभिमाने च विदुषः कर्मकर्तृत्वं नास्ति ततो न बुद्धिपूर्वकं विदुषः पापाचरणं संभवति। ननु देहात्मना पापं कृत्वा मया पापं कृतमिति कचित्कर्तृत्वप्रत्ययः पुनरविक्रियब्रह्मात्मना नाहं कर्तास्मीत्यकर्तृत्वप्रत्ययश्चैकस्य क्रमादुपयुज्यत एतेति चेन्न, तथात्वे सार्वात्म्यदर्शनविच्छित्तिप्रसङ्गात्सार्वात्म्यदर्शनं देहाद्यात्मत्वबुद्धिः पापाचरणं च विदुषो न संभवति अहं ब्रह्मविन्न मे दोषोऽस्तीति प्राणिहिंसां वा यथेष्टाचरणं वा यः करोति स ब्रह्मविदेव न भवति सर्वभूतसुहृच्छान्त इत्यादिब्रह्मविल्लक्षणाभावादतो न बुद्धिपूर्वकं विदुषः पापाचरणं किंत्वबुद्धिपूर्वकं कचित्संभवति ज्ञानेन तस्य निवृत्तिस्तथापि ज्ञानस्य माहात्म्यं स्तूयते द्विविधैरपि पापैः प्रमुच्यत इति, यद्वा अनादिं जन्मादिकारणवर्जितमत एवाजं जन्मादिसर्वविकारशून्यं लोकमहेश्वरं सर्वेषां लोकानां महान्तमीश्वरं निरतिशयैश्वर्यसंपन्नं निग्रहानुग्रहकर्तारं मोक्षप्रदातारं च मां परमात्मानं यो वेत्ति शास्त्राचार्योपदेशाभ्यां ज्ञात्वा मोक्षेच्छया यो मामुपास्ते स मर्त्येषु मृत्युग्रस्तेष्वयमेवासंमूढः, संमूढः सदसद्विवेकशून्यस्तद्विलक्षणत्वादसंमूढः। यस्मात्कामाग्निना सर्वेषु दंदह्यमानेषु स्वयं तदविषयो भूत्वा मोक्षमेवापेक्षमाणः सन् श्रद्धाभक्तिभ्यां मामुपास्ते तस्मादसावसंमूढो मद्भक्तः सर्वपापैर्यानि मनोवाक्कायकृतानि जन्मान्तरीयाण्याधुनिकानि च तैः सर्वैः पापैर्ज्ञानोत्पत्तेः प्रतिबन्धकैर्मदुपास्त्या प्रमुच्यते प्रकर्षेण निःशेषं मुच्यते प्रमुच्यते 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति स्मरणात्, सत्त्वप्रधानया मदुपास्त्या सर्वपापविनिर्मुक्तः सन् ज्ञानं प्राप्य मुक्तो भवतीत्यर्थः॥ ३॥

**श्री० टी०**—एवंभूतात्मज्ञाने फलमाह—**यो मामिति।** सर्वकारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिमत एवाजं जन्मशून्यं लोकानां महेश्वरं च मां यो वेत्ति स मनुष्येषु असंमूढः संमोहरहितः सन्सर्वपापैः प्रमुच्यते॥ ३॥

**स० टी०**—महाफलतया कश्चिदेव जानाति सज्जनः॥ श्रीमद्भगवतो दिव्यं प्रभावं हर्यनुग्रहात्॥ १॥ सर्वहेतुतया यस्य नास्त्यादिः कारणं हरेः॥ अनादित्वेन जन्मादिशून्यं लोकस्य सर्वतः॥ २॥ महान्त-

मीश्वरं यो मां वेत्ति मर्त्येषु मध्यत: ।। उत्तम: स च देहादावध्यासेन विवर्जित: ।। ३ ।। मुच्यते किल्बिषैः सर्वैर्बुद्धिपूर्वकृतैरपि ।। ४ ।। ३ ।।

भा० टी०–अजत्वेन सर्वभूतमहेश्वरत्वेन च मज्ज्ञानं केषांचिदसंमूढानां सुरादीनां भवति न तु एतावानीश्वरप्रभावः इदं परमेश्वरस्य जन्मेत्यतस्तावज्ज्ञानेन केवलं सर्वपापैः प्रमुच्यन्ते न तु प्रभववर्णने शक्ता भवन्तीत्यत: स्वप्रभव महमेव वक्ष्यामीत्यभिप्रायेणाह–य इति । यो मामीश्वरं सर्वकारणं कारणवर्जितमत एवाजमुत्पत्तिरहितं लोकानां महान्तमीश्वरं निरतिशयैश्वर्यवन्तं वेत्ति परमात्मानादित्वेनाज: सर्वलोकमहेश्वर इति यो जानाति स मर्त्येषु असंमूढ:, संमोहो नाम देहेन्द्रियादिविलक्षण: ईश्वरादभिन्नोऽकर्ताऽभोक्ता चाहमिति स्वस्वरूपास्फुरणं, तेन मत्कृपया रहित: सर्वैः ज्ञाताज्ञातैः संचितक्रियमाणैः प्रकर्षणोंविद्यानिवृत्तिपूर्वकमुच्यते ।। ३ ।।

प० टी०–अथ स्वज्ञाने फलमाह–यो मामिति । सर्वकारणत्वादेव न विद्यते आदिः कारणं यस्य तमनादिमत एवाजं जन्मरहितं सर्वलोकानां भूर्भुवःस्वर्महर्जनस्तपोमुख्यानां महान्तमीश्वरं चालकमेवंविधं मां यो वेत्ति स मर्त्येष्वसंमूढो मोहरहित: सन् सर्वपापैः प्रमुच्यते ।। ३ ।।

रा० टी०–स्वज्ञानान्मोक्षाख्यमहिमानं चाह–यो मामिति । योऽधिकारी अजमुत्पत्तिहीनम् अनश्वासावादिश्च तं सर्वचेष्टकं कारणभूतं च अनितेरन्तर्णीतण्यर्थात्पचाद्यच् । यद्वा अनस्य मुख्यप्राणस्य कारणं च, लोकानां महास्वामिनं मां वेत्ति जानाति स मर्त्येषु मनुष्येषु असंमूढ: संमोहहीन: भ्रान्तिहीन: सन्सर्वपापैः प्रमुच्यते मुक्तो भवति ।। ३ ।।

**बुद्धिर्ज्ञानमसंमोहः क्षमा सत्यं दमः शमः ।।**
**सुखं दुःखं भवोऽभावो भयं चाभयमेव च ।। ४ ।।**
**अहिंसा समता तुष्टिस्तपो दानं यशोऽयशः ।।**
**भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ।। ५ ।।**

त० टी०–उक्तं लोकमहेश्वरत्वमेव प्रतिपादयति–बुद्धिरित्यादित्रिभिः । बुद्धिः सारासारविवेचनरूपान्तःकरणावस्था, ज्ञानमात्मानात्मपदार्थाववबोधनम्, असंमोहो बोद्धव्यवस्तुविषयकभ्रमनिरासेन तत्स्वरूपावधारणम्, क्षमा चित्तविकारहेतौ सत्यप्यविकृतचित्तता, सत्यं यथादृष्टश्रुतवस्तुविषयकभाषणम्, दमो बाह्येन्द्रियाणां स्वस्वविषयेभ्यो नियमनं, शमोऽन्तःकरणस्यानर्थविषयेभ्यो नियमनम् । सुखमनुकूलवेदनीयं, दुःखं प्रतिकूलानुभवः, भव उद्भवः, अभावस्तद्विपर्ययः, भयमागामिदुःखस्य हेतुदर्शनजस्त्रासः, अभयं तन्निवृत्तिः, अहिंसा मनोवाक्कायैः प्राणिहिंसानिवृत्तिः, समता रागद्वेषराहित्यं, तुष्टिर्यथालाभेन संतोषः, तपः शारीरादि वक्ष्यमाणलक्षणं, दानं न्यायार्जितस्य धनादेर्देशे काले पात्रे प्रतिदानं, यश औदार्यादिगुणवत्तया श्लाघा, अयशः कार्पण्यादिदोषेण लोककुत्सनं, बुद्धिरित्यादयस्तद्विपरीताश्च भावाः पृथग्विधाः प्रतिव्यक्तिभिन्नाः प्राणिनां तत्तत्कर्मानुसारेण मत्त एव भवन्ति ।।४।।५।।

म० टी०–आत्मनो लोकमहेश्वरत्वं प्रपञ्चयति–बुद्धिरिति । बुद्धिरन्तःकरणस्य सूक्ष्मार्थविवेकसामर्थ्यं, ज्ञानमात्मानात्मसर्वपदार्थाववबोधः, असंमोहः प्रत्युत्पन्नेषु बोद्धव्येषु कर्तव्येषु चाव्याकुलतया विवेकेन प्रवृत्तिः, क्षमा आक्रुष्टस्य ताडितस्य वा निर्विकारचित्तता, सत्यं प्रमाणेनावबुद्धस्यार्थस्य तथैव भाषणं, दमो बाह्येन्द्रियाणां स्वविषयेभ्यो निवृत्तिः, शमोऽन्तःकरणस्य सा, सुखं धर्मासाधारणकारणकमनुकूलवेदनीयं, दुःखमधर्मासाधारणकारणकं प्रतिकूलवेदनीयं, भवः उत्पत्तिः, भावः सत्ता अभावोऽसत्तेति वा, भयं च त्रासस्तद्विपरीतमभयं,

एव च। एकश्चकार उक्तसमुच्चयार्थः अपरोऽनुक्तावुद्धयज्ञानादिसमुच्चयार्थः। एवेत्येते सर्वलोकप्रसिद्धा एवेत्यर्थः। मत्त एव भवन्तीत्युत्तरेणान्वयः ॥ ४ ॥ अहिंसा प्राणिनां पीडानिवृत्तिः, समता चित्तस्य रागद्वेषादिरहितावस्था, तुष्टिर्भोगेष्वेतावताऽलमिति बुद्धिः, तपः शास्त्रीयमार्गेण कायेन्द्रियशोषणं, दानं देशे काले श्रद्धया यथाशक्त्यर्थानां सत्पात्रे समर्पणं, यशो धर्मनिमित्ता लोकश्लाघारूपा प्रसिद्धिः, अयशस्त्वधर्मनिमित्ता लोकनिन्दारूपा प्रसिद्धिः, एते बुद्ध्यादयो भावाः कार्यविशेषाः सकारणकाः पृथग्विधाः धर्माधर्मादिसाधनवैचित्र्येण नानाविधाः भूतानां सर्वेषां प्राणिनां मत्तः परमेश्वरादेव भवन्ति नान्यस्मात्तस्मात्किं वाच्यं मम लोकमहेश्वरत्वमित्यर्थः ॥ ५ ॥

**शं० टी०**—स्वोपास्त्या सर्वपापविनिर्मुक्तानां मुमुक्षूणां स्वस्मादेव ज्ञानं ज्ञानसधनं च भवतीत्याह—**बुद्धिरिति द्वाभ्याम्**। ज्ञानं ब्रह्मात्मैकत्वविषयं परोक्षमपरोक्षं च बुद्धिस्तदेवाहमिति ज्ञातुर्ब्रह्ममात्रत्वनिश्चयात्मिका, असंमोहः पुनर्विपरीतभावनानुदयः, क्षमाऽऽध्यात्मिकाद्युपद्रवसहिष्णुता, सत्यं यथार्थवचनं सत्यमिति ब्रह्मचर्यादीनामुपलक्षणं, दमो बाह्येन्द्रियनिग्रहः, शमोन्तःकरणस्य विषयप्रवृत्त्युपरमः, अहिंसा ब्रह्मनिष्ठया स्वाऽहिंसनं, समता सर्वत्र समदर्शनं, तुष्टिः स्वानन्दानुभवः, तपश्चित्तैकाग्र्यं, दानं दण्डन्यासः मनोवाक्कायकर्मभिः प्रणिनामदण्डनमपीडनमित्यर्थः 'दण्डन्यासः परं दानम्' इति स्मरणात् । यशः ब्रह्मविदयमिति सर्वत्र कीर्तिः, अयशो दुष्कीर्तिः, अयश इत्यबुद्धिरज्ञानं संमोहः अक्षमा असत्यमदमोऽशमां हिंसा इत्यादीनामुक्तविपरीतानामुपलक्षणं, सुखं वैषयिकं, दुःखमाध्यात्मिकाद्युपद्रवनिमित्तकं, भवः उत्पत्तिरभावो विनाशः, भयं भूतेभ्यस्त्रासः अभयं तदभावः, एवं पृथग्विधा नानाप्रकारा उक्ता अनुक्ताः कामक्रोधलोभमोहदम्भदर्पासूयाऽहंकारादयो भावा विकारा राजसास्तामसाश्चाबुद्ध्याद्ययशोन्ता बन्धहेतवो गुणा मद्भजनशून्यानां भूतानां प्राणिनां मत्त एवेश्वराद्भवन्ति बुद्ध्यादियशोन्तानि मुक्तिसाधनानि मद्भजनवतां मत्त एव भवन्त्यतो मुमुक्षुभिर्मदुपासनमवश्यं कर्तव्यं, मदुपास्त्या सर्वपापनिवृत्तिर्ज्ञानं च ससाधनं सिध्यतीति भावः। एतेन "संसारमोक्षस्थितिबन्धहेतुः" इत्यादिश्रुतिप्रसिद्धं संसारबन्धतन्मोक्षकारणत्वं स्वस्य प्रतिपादितं भवति, तेन मुमुक्षुभजनीयत्वं च सिद्धमिति द्वयोरर्थः ॥ ४ ॥ ५ ॥

**श्री० टी०**—लोकमहेश्वरतामेव स्फुटयति—**बुद्धिरिति त्रिभिः**। बुद्धिः सारासारविवेकनैपुण्यं, ज्ञानमात्मविषयं, असंमोहो व्याकुलत्वाभावः, क्षमा सहिष्णुत्वं, सत्यं यथार्थभाषणं, दमो बाह्येन्द्रियसंयमः, शमोऽन्तःकरणसंयमः, सुखमनुकूलसंवेदनीयम्, दुःखं च तद्विपरीतं, भव उद्भवः अभावस्तद्विपरीतः, भयं त्रासः अभयं तद्विपरीतम्, अस्य श्लोकस्योत्तरेण मत्त एव भवन्तीत्युत्तरेणान्वयः ॥४॥ किंच—**अहिंसेति**। अहिंसा परपीडानिवृत्तिः, समता रागद्वेषादिराहित्यं मित्रामित्रतुल्यता च, तुष्टिर्दैवलब्धेन संतोषः, तपः शारीरादिवक्ष्यमाणं, दानं, न्यायार्जितधनादेः सत्पात्रार्पणं, यशः सत्कीर्तिः, अयशोऽपकीर्तिः, एते बुद्धिर्ज्ञानमित्यादयस्तद्विपरीताश्चाबुद्ध्यादयो नानाविधा भावाः प्राणिनां मत्तः सकाशादेव भवन्ति ॥ ५ ॥

**स० टी०**—सर्वलोकमहेशत्वं दर्शयत्यात्मनो हरिः ॥ अन्तःकरणसामर्थ्यं सूक्ष्माद्यर्थावबोधने ॥ १ ॥ बुद्धिर्ज्ञानं तथात्मादिपदार्थेष्वत्यभिज्ञता ॥ उपस्थितेषु कार्येषु बोद्धव्येषु च तत्क्षणे ॥ २ ॥ अव्याकुलतया सम्यक् प्रवृत्तिर्या विवेकतः ॥ असंमोहः क्षमा निन्दाताडनादौ समत्वधीः ॥ ३ ॥ प्रमाणेनावबुद्धस्य तथोक्तिः सत्यमर्थतः ॥ दमः स्यात्स्वस्वविषये बाह्येन्द्रियनिवर्तनम् ॥ ४ ॥ शमोऽन्तःकरणे शान्तिश्चित्तस्याह्लादनं सुखम् ॥ दुःखं चित्तस्य संतापो जन्मनाशौ भवाभवौ ॥ ५ ॥ भयं त्रासोऽभयं तस्माद्विपरीतमुदाहृतम् ॥ ६ ॥ ४ ॥ अहिंसा प्राणिपीडाया निवृत्तिः समता मुनेः ॥ चित्तस्य द्वेषरागादिशून्यावस्था प्रकीर्तिता ॥ १ ॥ तुष्टिर्भोगेषु लब्धेषु सदालंप्रत्ययो धियः ॥ तपः शास्त्रीयमार्गेण शरीरेन्द्रियशोषणम्

॥ २ ॥ यथाशक्ति स्ववित्तानां दानं पात्रे समर्पणम् ॥ यशो धर्मोद्भवा कीर्तिरकीर्तिः स्यादधर्मजा ॥ ३ ॥ एते बुद्ध्यादयो भावाः कार्यभेदाः सहेतुकाः ॥ धर्माधर्मादिहेतूनां वैचित्र्येण पृथग्विधाः ॥ ४ ॥ सर्वेषां प्राणिनां मत्तो भवन्ति परमेश्वरात् ॥ तस्माल्लोकमहेशत्वं किं वाच्यं श्रीहरेर्मम ॥ ५ ॥ ५ ॥

भा० टी०–स्वस्य लोकमहेश्वरत्वं देवादिबुद्ध्यगोचरत्वेन साधितं, तदेव प्रपञ्चयति–बुद्धिरिति। बुद्धिरन्तःकरणस्य सूक्ष्माद्यर्थाववोधनसामर्थ्यं, ज्ञानमात्मादिपदार्थाववोधः, असंमोहः प्रत्युत्पन्नेषु ज्ञातव्येषु विवेकपुरःसरा बुद्धिप्रवृत्तिः, आक्रुष्टस्य ताडितस्य वाऽविकृतचित्तता क्षमा, प्रमाणावगतार्थस्य यथार्थभाषणं सत्यं, बाह्येन्द्रियोपशमो दमः, अन्तःकरणशान्तिः शमः, आह्लादः सुखं, तापो दुःखं, भव उत्पत्तिः, अभावो नाशः, भयं त्रासः, अभयमत्रासः ॥ ४ ॥ अहिंसेति। अहिंसा प्राणिनामपीडा, समता समचित्तता, तुष्टिः संतोषोऽलंबुद्धिः, इन्द्रियसंयमपुरःसरं शास्त्रीयं देहपीडनं तपः, देशकालानुरोधेन शक्तिमनतिक्रम्य श्रद्धया पात्रेऽर्थानामर्पणं दानं, धर्मनिदाना कीर्तिर्यशः, अधर्मनिदानापकीर्तिरयशः, एते एथोक्ता भावाः पृथग्विधा नानाप्रकारा भूतानां स्वकर्मानुसारेण मत्त एवेश्वराद्भवन्ति अतोऽहमेव सर्वलोकमहेश्वरः सर्वैर्भोगमोक्षार्थं शरणीकरणीय इति भावः ॥ ५ ॥

प० टी०–लोकमहेश्वरतामेव दर्शयति–बुद्धिर्ज्ञानमितित्रिभिः। बुद्धिः सारासारविचारनैपुण्यम्, ज्ञानमात्मविषयम्, असंमोहोऽव्याकुलीभावः, क्षमा सहिष्णुत्वम्, सत्यं यथार्थभाषणम्, दमो बाह्येन्द्रियनिग्रहः, शमोऽन्तःकरणसंयमः, सुखमनुकूलवेदनम् दुःखं तद्विपरीतम्, भव उद्भवः अभावस्तद्विपरीतः, भयं त्रासः अभयं तद्विपरीतम् ॥ ४ ॥ अहिंसेति। अहिंसा परपीडानिवृत्तिः, समता रागद्वेषराहित्यम्, तुष्टिर्दैवलब्धेन संतोषः, तपः शारीरादि, दानं न्यायगतस्य धनस्य पात्रार्पणम्, यशः सत्कीर्तिरयशोऽपयशः, एवमेते बुद्ध्यादयस्तद्विपरीताश्च भूतानां पृथग्विधानां भावाः प्राणिनां स्वभावाः सर्वे मनःकोशरूपान्मत्तः सकाशादुद्भवन्ति। श्रुतिरपि–"कामः संकल्पो विचिकित्सा श्रद्धाश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति ॥ ५ ॥

रा० टी०–मुक्तिहेतुज्ञानविषयत्वमहिमानमुक्त्वा बुद्ध्यादिप्रदत्वमहिमानं चाह–बुद्धिरिति। यद्वाऽहमादिर्हि देवानामिति देवाद्युपलक्षितसर्वकारणत्वं स्वस्योक्तम्। तत्र केषांचिद्बुद्ध्यादीनां महर्ष्यादीनां च सामर्थ्यातिशयोपेततया निर्माणरूपविशेषकारणत्वोक्त्या प्रागुक्तं प्रपञ्चयति–बुद्धिरित्यादित्रयेण। बद्धिरन्तःकरणं कार्याकार्यनिश्चयो वा, ज्ञानं तु प्रतीतिसामान्यं, असंमोहः अकार्येच्छाभावः मिथ्याज्ञानाभावो वा, क्षमा क्रोधाभावेन सहापकर्तुरनपकरणं, सत्यं यथार्थज्ञानपूर्वकमनुष्ठानं वचनं वा, दम इन्द्रियनिग्रहः, शमो भगवन्निष्ठता, सुखमनुकूलवेदनीयं, दुःखं प्रतिकूलवेदनीयं, भव उत्पत्तिः, भावः सत्ता, भयं त्रासः, अभयं त्रासविरोधिमनोव्यापारः ॥ ४ ॥ अहिंसा परप्राणिपीडाभावः, समता द्वन्द्वेषु निर्विकारत्वं, तुष्टिर्विषयालंबुद्धिः, तपो ब्रह्मचर्यादि, दानं धर्मार्जितवित्तस्य परस्वत्वापादनं, यशः कीर्तिः, अयशोऽपकीर्तिः, पृथग्विधाः नानाविधाः एते भावाः धर्माः भूतानां प्राणिनां मत्त एव भवन्ति इति ॥ ५ ॥

**महर्षयः सप्त पूर्वे चत्वारो मनवस्तथा ॥**
**मद्भावा मानसा जाता येषां लोक इमाः प्रजाः ॥ ६ ॥**

त० टी०–किंच–महर्षय इति। महर्षयो वेदतदर्थद्रष्टारः सप्त भृग्वादयः तेभ्योऽपि पूर्वे प्रथमजाश्चत्वारो महर्षयः सनकादयः, तथा मनवः स्वायंभुवाद्याः। उपलक्षणं चैतद्रुद्रस्यापि। सर्वे चैते मानसा जाता हिरण्यगर्भात्मनः ममैव मनसः संकल्पाज्जाता न तु योनिजाः। तत्र सप्तर्षयः सनकाद्या रुद्रश्च मानसा एव। मनुः स्वायंभुवस्तत्पत्नी च हिरण्यगर्भस्य शरीरभागावेव। अन्ये मनवस्तु यो-

निजा इति विवेकः। तथोक्तं पुराणे–'भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम्। वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान्। सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः' इति। महाभारते मोक्षधर्मे तु–'मरीचिरङ्गिराश्चात्रिः पुलस्त्यः पुलहः क्रतुः। वसिष्ठ इति सप्तैते मनसा निर्मिता हि वै' इत्येवं मरीच्यादय उक्ताः। विष्णुपुराणे तु नवोक्ताः–'भृगुं पुलस्त्यं पुलहं क्रतुमङ्गिरसं तथा। मरीचिं दक्षमत्रिं च वसिष्ठं चैव मानसान्। नव ब्रह्माण इत्येते पुराणे निश्चयं गताः' इति। तथा 'सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा। न ते लोकेषु सज्जन्ते निरपेक्षाः प्रजासु ते। सर्वे ते चागतज्ञाना वीतरागा विमत्सराः' इति। पुनः कथंभूतास्ते मद्भावा मदीयो यो भावः जीवानां सृष्टिपालनसंहारमोक्षभावनं स मद्भावो विद्यते येषु ते मद्भावाः मदनुग्रहात्सर्जनपालनसंहरणमोक्षणशक्त्यन्विता इत्यर्थः। तत्र सप्त महर्षयः सर्जनशक्त्यन्विताः वेदोक्तप्रवृत्तिधर्मप्रवर्तका लोकाचार्याः। मनवः पालनशक्त्यन्विताः। रुद्रः संहरणशक्त्यन्वितः। सनन्दनादयस्तु संसारान्मोक्षणशक्त्यन्विता निवृत्तिधर्मप्रवर्तकाः मोक्षशास्त्रेषु लोकाचार्याः। तदुक्तं मोक्षधर्मे सप्तर्ष्युत्पत्त्यनन्तरम्–'एते वेदविदो मुख्या लोकाचार्याः प्रकीर्तिताः। प्रवृत्तिधर्मिणश्चैव प्राजापत्ये प्रकल्पिताः' इति। तथा तत्रैव सनकाद्युत्पत्त्यनन्तरमुक्तम्—'स्वयमागतविज्ञाना निवृत्तिं धर्ममाश्रिताः। एते योगविदो मुख्या लोकाचार्याः प्रकीर्तिताः॥ आचार्या मोक्षशास्त्रेषु मोक्षशास्त्रप्रवर्तकाः' इति। श्रीभागवते ब्रह्माप्याह—'तप्तं तपो विविधलोकसिसृक्षया मे आदौ सनात्स्वतपसश्च चतुः स नोऽभूत्। प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग् जगाद मुनयो यदचक्षतात्मन्' इति। एकादशे श्रीभगवताऽप्युक्तम्—'एतावान्योग आदिष्टो मच्छिष्यैः सनकादिभिः। सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा॥' इति। मनूनां पालनत्वं रुद्रस्य संहर्तृत्वं चोक्तं वैष्णवे 'विष्णुमन्वादयः कालः सर्वभूतानि च द्विज। स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः॥ रुद्रः कालान्तकाद्याश्च समस्ताश्चैव जन्तवः। चतुर्धा प्रलयायैता जनार्दनविभूतयः' इति। तेषां कार्यदर्शनेन सामर्थ्यं द्योतयति–येषां लोक इमा इति। येषां सप्तर्षीणां चतुर्णां सनकादीनां मनूनां च अस्मिंल्लोके इमा ब्राह्मणक्षत्रियाद्या यथायथं जन्मना विद्यया च पुत्रपौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाश्च प्रजाः संततयो विद्यन्ते। केचित्तु पूर्वे सप्त महर्षयोऽतीतमन्वन्तरे ये भृग्वादयः सप्तर्षयो नित्यसृष्टिप्रवर्तनाय ब्रह्मणो मनसः संभवाः, नित्यस्थितिप्रवर्तनाय ये च सावर्णिकादयश्चत्वारो मनवः स्थिता येषां संतानमये लोके जाता इमाः सर्वाः प्रजाः प्रतिक्षणमाप्रलयादपत्यानामुत्पादकाः पालकाश्च भवन्त्येवं व्याचक्षते, तदसङ्गतार्थकथनादप्रामाणिकम्। तथाहि न तावत्सप्तर्षीणां पूर्वत्वं सङ्गतं, सनकादीनां तेभ्योऽपि पूर्वत्वप्रतिपादनात्। किंच चत्वार इत्यनेनापि न मनूनां ग्रहणमुचितं यतः स्वायंभुवः स्वारोचिष उत्तमस्तामसो रैवतश्चाक्षुषः वैवस्वत एवं सावर्णिर्दक्षसावर्णिर्ब्रह्मसावर्णिर्धर्मसावर्णी रुद्रसावर्णिर्देवसावर्णिरिन्द्रसावर्णिरिति मनवश्चतुर्दश पुराणेषु प्रसिद्धास्तत्रातीतान्षड्वर्तमानं वैवस्वतं च विहाय 'सावर्णिर्भविता मनुः' इति वचनाद्भविष्यतां सावर्ण्यादिचतुर्णामेव ग्रहणे भगवतस्तात्पर्याभावात्। किंच भविष्यतां मनूनां ग्रहणे येषां लोक इमाः प्रजा इति प्रत्यक्षनिर्देशो विरुद्धः स्यात्। तस्मात् तद्व्याख्यानस्यासङ्गतत्वादुक्तार्थस्यैव साधुत्वमित्यलं विस्तरेण॥ ६॥

म० टी०–इतश्चैतदेवं महर्षयः वेदतदर्थद्रष्टारः सर्वज्ञा विद्यासंप्रदायप्रवर्तका भृग्वाद्याः सप्त पूर्वे सर्गाद्यकालाविर्भूताः। तथा च पुराणम् 'भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम्। वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान्॥ सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः' इति। तथा चत्वारो मनवः सावर्णा इति प्रसिद्धाः अथवा महर्षयः सप्त भृग्वाद्याः तेभ्योऽपि पूर्वे प्रथमाश्चत्वारः सनकाद्या महर्षयः मन-

वस्तथा स्वायंभुवाद्याश्चतुर्दश मयि परमेश्वरे भावो भावना येषां ते मद्भावा मच्चिन्तनपराः मद्भावनावशादाविर्भूतमदीयज्ञानैश्वर्यशक्तय इत्यर्थः । मानसाः मनसः संकल्पादेवोत्पन्नाः न तु योनिजाः अतो विशुद्धजन्मत्वेन सर्वप्राणिश्रेष्ठा मत्त एव हिरण्यगर्भात्मनो जाताः सर्गाद्यकाले प्रादुर्भूताः, येषां महर्षीणां सप्तानां भृग्वादीनां चतुर्णां च सनकादीनां मनूनां च चतुर्दशानामस्मिँल्लोके जन्मना च विद्यया च संततिभूता इमा ब्राह्मणाद्याः सर्वाः प्रजाः ॥ ६ ॥

**शं० टी०**–भवन्ति भावा भूतानामिति स्वस्य मुमुक्षूपास्यत्वे कारणं दुष्टशिष्टनिग्रहानुग्रहसामर्थ्यं बन्धमोक्षहेतुत्वं सर्वतन्त्रस्वातन्त्र्यं सर्वज्ञत्वं सर्वेश्वरत्वं च सूचयित्वाऽधुना सामान्येन स्वविभूतिं मन्दप्रज्ञानामुपासनीयं वस्तु निर्दिशति–**महर्षय इति** । पूर्वे सर्वेभ्यः प्राक्तनाः सप्त भृग्वादयो वसिष्ठान्ता महर्षयस्तथा पूर्वे प्राचीनाः स्वायंभुवादयश्चत्वारो मनवश्च मम जगत्स्रष्टुर्ब्रह्मणः संकल्पात्मकान्मनसो जाता मानसास्तत एव मद्भावा मम परमेश्वरस्य स्वरूपत्वेन भाव्यन्त इति मद्भावा मम विभूतय इत्यर्थः । लोके लोकत्रितये येषां भृग्वादीनां स्वायंभुवादीनां च संबन्धिन्य इमाः सर्वत्र परिदृश्यन्ते स्थावरजङ्गमात्मिकाः प्रजा एताः सर्वा अपि मम विभूतय एवेत्यभिप्रायः । एतेन चराचरात्मकं विश्वं सर्वं मम ब्रह्मणो विभूतिरेवेति सूचितं भवति ॥ ६ ॥

**श्री० टी०**–किंच–**महर्षय इति** । सप्त महर्षयो भृग्वादयः 'सप्त ब्रह्माण इत्येते पुराणे निश्चयं गताः' इत्यादिपुराणप्रसिद्धाः तेभ्योऽपि पूर्वेऽन्ये चत्वारो महर्षयः सनकादयः तथा मनवः स्वायंभुवादयः मद्भावा मदीयो भावः प्रभावो येषु ते हिरण्यगर्भात्मनो ममैव मनसः संकल्पमात्राज्जाताः । प्रभावमेवाह–येषामिति । येषां भृग्वादीनां च सनकादीनां मनूनां च इमा ब्राह्मणाद्या लोके वर्धमाना यथायथं पुत्रपौत्रादिरूपाः शिष्यप्रशिष्यादिरूपाश्च प्रजा जाताः प्रवर्तन्ते ॥ ६ ॥

**स० टी०**–वेदवेदार्थद्रष्टारः सर्वज्ञा ये महर्षयः ॥ सर्गाद्यकाले संभूताः संप्रदायप्रवर्तकाः ॥ १ ॥ सावर्णा मनवस्तद्वच्चत्वारो यदि वाऽपरे ॥ सप्त भृग्वादयस्तेभ्यः प्रथमाः सनकादयः ॥ २ ॥ स्वायंभुवादयस्तद्वन्मनवो ये चतुर्दश ॥ मयीशे भावना येषां मच्चिन्तनपरा हि ते ॥ ३ ॥ मद्भावनावशादाविर्भूतमज्ज्ञानशक्तयः ॥ संकल्पादेव संभूता न तु योनिसमुद्भवाः ॥ ४ ॥ अतो विशुद्धजन्मत्वात्सर्वप्राणिवरा मताः ॥ प्रादुर्भूता हि सर्गादौ मत्तो विश्वसृगात्मनः ॥ ५ ॥ येषां सप्तमहर्षीणां मनूनां च तथैव च ॥ चतुर्णां सनकादीनामस्मिँल्लोके च जन्मना ॥ ६ ॥ विद्यया च प्रजाः सर्वा ब्राह्मणाद्या इमाः किल ॥७॥६॥

**भा० टी०**–स्वसामर्थ्ययुक्तानां स्वेनोत्पादितानां भृग्वादीनामपि लोकेश्वरत्वं प्रसिद्धं किं वक्तव्यं मम लोकमहेश्वरत्वमित्याह–**महर्षय इति** । महर्षयः सप्त भृग्वादयः पूर्वेऽतीतकालसंबन्धिनो 'भृगुं मरीचिमत्रिं च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान्' इत्युक्ताश्चत्वारो मनवस्तथा 'सावर्णिस्तु मनुर्योऽसौ मैत्रेय भविता ततः । नवमो दक्षसावर्णिर्मैत्रेय भविता मनुः ॥ एकादशश्च भविता धर्मसावर्णिको मनुः । रुद्रपुत्रस्तु सावर्णो भविता द्वादशो मनुः' इति विष्णुपुराणादौ सावर्णा इति प्रसिद्धाः महर्षयः सप्त भृग्वादयः तेभ्योऽपि पूर्वे प्रथमाश्चत्वारः सनकाद्या महर्षयः मनवस्तथा स्वयंभुवाद्याश्चतुर्दशेति वा । अस्मिन्पक्षे सनकाद्याश्चतुर्दशेत्यध्याहारदोषमभिप्रेत्याचार्यैरयं पक्षो न प्रदर्शितः । ते च मद्भावा मद्गतभावना मयि परमात्मनि भावना येषामतो वैष्णवेन सामर्थ्येन युक्ता मानसा मया मनसैवोत्पादिताः सन्तो जाताः उत्पन्ना यथायथं योनितोऽयोनितश्च । येषां महर्षीणां मनूनां च लोके इमा विद्यया जन्मना च संततिभूताः प्रजाः स्थावरजङ्गमलक्षणाः ॥ ६ ॥

**प० टी०**–अथ सृष्टिकर्तारोऽपि मत्त एवोद्भूता इत्याह–**महर्षय इति** । सप्त महर्षयो 'भृगुं मरीचिमत्रिं

च पुलस्त्यं पुलहं क्रतुम् । वसिष्ठं च महातेजाः सोऽसृजन्मनसा सुतान् ' तेभ्योऽपि चत्वारः सनकादयस्तथा मनवश्चतुर्दश स्वायंभुवादयो मद्भावा मत्सामर्थ्यवन्तो हिरण्यगर्भात्मनो मम मानसाः संकल्पमात्राज्जाता येषां पुत्रपौत्रादिरूपा इमाः प्रजा लोके वर्तन्ते । इत्यनेन ब्रह्मादिस्तम्बपर्यन्तं या सृष्टिः सा सांकल्पिकी काल्पनिकी न कार्यकरणसंघातरूपा " यथापूर्वमकल्पयत् " इति श्रुतेः ॥ ६ ॥

रा० टी०—न केवलं भूतानां बुद्ध्यादिधर्माः मत्तो भवन्ति किंतु भूतान्यपि मत्त एव भवन्तीत्याह—महर्षय इति । ' मरीचिरत्र्यङ्गिरसौ पुलस्त्यः पुलहः क्रतुः । वसिष्ठश्च महातेजाः पूर्वे सप्तर्षयः स्मृताः ' इत्युक्ताः पूर्वे पूर्वमन्वन्तरस्थाः सप्त महर्षयः मानसाः ब्रह्मणो मनोपत्यतया जाताः पूर्वे प्राथमिकाश्चत्वारः स्वायंभुवस्वारोचिषरैवतोत्तमाख्याः मनवः । यद्वा मनु अवबोधने इत्यतः उप्रत्यये बोधवैशेष्याद्ब्रह्माद्या देवाः विप्रक्षत्रियवैश्यशूद्रभेदेन चतुर्धा स्थितत्वाच्चत्वारः । उक्तं हि बृहद्भाष्ये प्रथमाध्याये चतुर्थेऽव्याकृतब्रह्मणे । ' विष्णोर्ब्राह्मणजातिः संजज्ञे ब्रह्मा चतुर्मुखः । इतोऽग्रे जगतस्तस्मात्क्षत्रजातिरजायत ॥ वायुः सदाशिवोऽनन्तो गरुडः शक्र एव च । कामश्च वरुणश्चैव सोमः सूर्यो यमस्तथा ॥ एवमाद्याः क्षत्रियास्तु देवता ब्रह्मनिर्मिताः ' इति । तथा 'विवस्वदिन्द्रवरुणविष्णुभ्योऽन्ये दितेः सुताः । रुद्रादन्ये तथा रुद्राः वायोरन्ये च वायवः ॥ अग्नेरन्ये च वसवो वैश्या इत्येव कीर्तिताः' तथा ' अश्विनौ पृथिवी चैव कालो मृत्यव एव च । शूद्रदेवाः समुद्दिष्टा देववर्णा इति स्मृताः ' इति च । विवस्वदिन्द्रवरुणानां क्षत्रियत्वाद्विष्णोरवर्णत्वात्तेभ्योऽन्येऽष्टावादित्या ग्राह्या इति विष्णुभ्य इत्युक्तम् । अग्नेर्ब्राह्मणत्वादग्नेरन्य इत्युक्तम् । सप्तैव वसवो वैश्याः । सदाशिवस्य क्षत्रियत्वाद्रुद्रान्य इत्युक्तं, दशैव रुद्रा वैश्या इत्यर्थः । मद्भावा मत्तो भावो जन्म येषां ते मद्भावाः मत्त एवोत्पत्तिमन्त इत्यर्थः । लोके इमाः प्रजा येषां प्रागुक्तमनूनां पुत्रपौत्रादिरूपेण वर्तन्ते ते मद्भावा इत्यन्वयः । न च ' ततो मनून्ससर्जान्ते मनसा लोकभावनान् ' इत्युक्त्या ब्रह्मसृष्टानां स्वायंभुवादीनां कथं मद्भावा इत्युक्तिरिति शङ्क्यं, ब्रह्मान्तर्यामिणो मत्तो जनिमन्त इत्यर्थकत्वान्मद्भावा इत्यस्य, ब्रह्मा तु द्वारमात्रम् । न चैवमपि प्रियव्रताद्यपत्यतादशायामेवोत्पन्नानां तेषां मनुसंज्ञकत्वेन मानसत्ववेलायां तदभावेन मनव इति उक्तिरयुक्तेति वाच्यं, मानसदेहात्यागेनैव प्रियव्रतादावुत्पन्नानां द्वयोर्देहयोरैक्येन मनुत्वोपपत्तेः, इत्येतद्भाष्यटीकायामेवोक्तेः ॥ ६ ॥

## एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥
## सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥

**त० टी०—एवमुक्तबुद्ध्यादेर्महर्ष्यादेर्विभूतित्वं तद्याथात्म्यज्ञानस्य फलं चाह—एतामिति । एतां संप्रत्युक्तां बुद्ध्यादिमहर्ष्यादिरूपां मम विभुतिमैश्वर्यं योगं च तत्तदर्थनिर्माणसामर्थ्यं तत्त्वतो याथात्म्येन यो वेत्ति सोऽविकम्पेनाप्रचलितेन दृढेनेति यावत् , योगेन भक्त्याख्येन युज्यते युक्तो भवति नास्त्यत्र संशयः ॥ ७ ॥**

म० टी०—एवं सोपाधिकस्य भगवतः प्रभावमुक्त्वा तज्ज्ञानफलमाह—**एतामिति** । एतां प्रागुक्तां बुद्ध्यादिमहर्ष्यादिरूपां विभूतिं विविधभावं तत्तद्रूपेणावस्थितिं योगं च तत्तदर्थनिर्माणसामर्थ्यं परमैश्वर्यमिति यावत् , मम यो वेत्ति तत्त्वतः यथावत् सोऽविकम्पेनाप्रचलितेन योगेन सम्यग्ज्ञानस्थैर्यलक्षणेन समाधिना युज्यते नात्र संशयः प्रतिबन्धः कश्चित् ॥ ७ ॥

शं० टी०—एवमात्मीयं योगजमैश्वर्यं विभूतिं च प्रतिपाद्यैतद्द्वयं सम्यग्विदितवतस्तद्वेदनस्य फलमाह—**एतामिति** । मम निर्विशेषस्यैव परस्य ब्रह्मणः एतां प्रतिपादितां विभूतिं मायया विविधाकारेण भवनं विभूतिस्तां सर्वात्मतां योगं च मायायोगजमैश्वर्यं सृष्टिस्थित्यदनप्रवेशनियमननिग्रहानुग्रहादिसामर्थ्यं चैतत्सर्वं

तत्त्वतो याथार्थ्येन यो विचक्षणः शास्त्राचार्योपदेशजन्यविवेकविज्ञानेन वेत्ति नेदं जगत्किंतु परमात्मन: स्वरूपमेवेति सर्वं मत्स्वरूपत्वेन मामेव बन्धमोक्षयोः सर्वस्य च कारणत्वेन सम्यग्विजानाति स मुमुक्षु: रविकम्पेन विकम्पो विकल्पस्तद्रहितेन योगेन मदुपास्तियोगेन युज्यते युक्तो भवति मोक्षेच्छया सर्वत्र विरक्तो भूत्वा श्रद्धाभक्तिभ्यां वासुदेवः सर्वमिति सर्वत्र मद्बुद्ध्या मामेवोपास्ते नात्र संशयः, मुमुक्षुः सर्वं संन्यस्य श्रवणादिनिष्ठया मामेवोपास्त इत्यत्र संशयो न कर्तव्य इत्यर्थः ॥ ७ ॥

श्री० टी०—यथोक्तविभूत्यादितत्त्वज्ञानस्य फलमाह—**एतामिति** । एतां भृग्वादिलक्षणां मम विभूतिं योगं चैश्वर्यलक्षणं तत्त्वतो यो वेत्ति सोऽविकम्पेन निःसंशयेन योगेन सम्यग्दर्शनेन युक्तो भवति नास्त्यत्र संशयः ॥ ७ ॥

स० टी०—एवमुक्त्वा भगवतः प्रभावं सविशेषतः ॥ तज्ज्ञानफलमाहात्र भगवान्सात्वतां पतिः ॥ १ ॥ विस्तारसंज्ञिकामेतां विभूतिं पूर्वकीर्तिताम् ॥ योगं च परमैश्वर्यं सर्वसामर्थ्यमद्भुतम् ॥ २ ॥ यथावन्मम यो वेत्ति सोऽत्यन्ताचलितेन च ॥ सम्यग्धीस्थैर्यरूपेण युज्यते सत्समाधिना ॥ ३ ॥ न कश्चित्प्रतिबन्धोऽत्र शङ्कनीयः कदाचन ॥ ४ ॥ ७ ॥

भा० टी०—स्वप्रभावमुक्त्वा तज्ज्ञानफलमाह—**एतामिति** । एतां यथोक्तां विभूतिं विविधभावं विस्तारमिति यावत् । परमात्मनस्तदर्थघटनसामर्थ्यं योगः यल्लेशसंबन्धेन भृग्वादयो ज्ञानादिमन्तो भवन्ति, यद्वा योगैश्वर्यसामर्थ्यं सर्वज्ञत्वं योगजन्यं योगशब्देनाभिधीयते तं यस्तत्त्वतो यथावद्वेत्ति जानाति सोऽप्रकम्पेनाप्रचलितेन योगेन निरुपाधिब्रह्मसम्यग्ज्ञानलक्षणेन युज्यते युक्तो भवति अस्मिन्नर्थे संशयो नास्ति ॥ ७ ॥

प० टी०—अथोक्तपरंपरायास्तत्त्वज्ञानस्य फलमाह—**एतामिति** । एतां भृग्वादिलक्षणां मद्विभूतिं योगमैश्वरलक्षणं तत्त्वतो यो वेत्ति सोऽविकम्पेन स्थिरेण ममैश्वर्येण युज्यते युक्तो भवति, नात्र संशयो नार्थवादोऽयमित्यर्थः ॥ ७ ॥

रा० टी०—उक्तमाहात्म्यज्ञानस्य फलमाह—**एतामिति** । एतां न मे विदुः सुरगणा इत्यादिनोक्तां विभूतिं विशिष्टभवनं सुरगणाद्यवेद्यत्वरूपां महत्तां वक्ष्यमाणनानाविधभवनं वा योगं च बुद्ध्यादिसर्वस्रष्टृत्वोक्त्या लब्धं प्रभवपदस्य प्रभावमिति व्याख्यानेन प्रभवपदेनोक्तं वा मम सामर्थ्यं च ' युज्यतेऽनेन योगोऽसावुपायः शक्तिरेव च ' इत्युक्तेः तत्त्वतो यो वेत्ति सोऽविकम्पेन निश्चलेन योगेन ध्यानरूपोपायेन युज्यते युक्तो भवति, अत्रार्थे संशयो नेत्यर्थः ॥ ७ ॥

**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥**
**इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥**

त० टी०—उक्तविभूतियाथात्म्यज्ञानिनां भक्त्युद्रेकं दर्शयति—**अहमिति** । अहं जिज्ञास्यभूतजगज्जन्मादिलक्षणलक्षितपरब्रह्मस्वरूपः सर्वस्य ब्रह्मादिस्थावरान्तस्य जगतः प्रभव उत्पत्तिकारणम् । मत्त एवास्य सर्वं देवमनुष्यादिलोकगमनागमनं वृद्धिह्रासादिकं प्रवर्तते, इत्येवं मत्वा बुधा यथावदवबोधयुक्ता भावसमन्विताः प्रवृद्धप्रेमप्रवाहा मां निरतिशयप्रीतिविषयं भजन्ते ॥ ८ ॥

म० टी०—यादृशेन विभूतियोगयोर्ज्ञानेनाविकम्पयोगप्राप्तिस्तद्दर्शयति चतुर्भिः—**अहमिति** । अहं परं ब्रह्म वासुदेवाख्यं सर्वस्य जगतः प्रभव उत्पत्तिकारणमुपादानं निमित्तं च स्थितिनाशादि च सर्वं मत्त एव प्रवर्तते भवति, मयैवान्तर्यामिणा सर्वज्ञेन सर्वशक्तिना प्रेर्यमाणं स्वस्वमर्यादामनतिक्रम्य सर्वं जगत्प्रवर्तते चेष्टत इति वा । इत्येवं मत्वा बुधा विवेकेनावगततत्त्वाः भावेन परमार्थतत्त्वग्रहरूपेण प्रेम्णा समन्विताः सन्तो मां भजन्ते ॥ ८ ॥

शं० टी०—तस्य वस्तुतत्त्वनिश्चयप्रकारं चोपासिंत च विस्पष्टयति—अहमिति। अहं निर्विशेषः परमात्मैव मायाशबलितः सन् सर्वस्य प्रपञ्चस्य प्रभवः प्रभवत्यस्मादिति प्रभव उपादानं 'कार्यं सर्वं कारणमात्रमेव' इति न्यायेन सर्वं परमात्मस्वरूपमेवेति च मत्तः परमात्मनः सकाशादेव बुद्धिर्ज्ञानमित्युक्तरीत्या मोक्षसाधनं मोक्षश्च बन्धसाधनं संसारश्च सर्गश्चाभ्युदयः सर्वं प्रवर्तते प्राणिनां प्रवृत्तिर्निवृत्तिश्च सिध्यत्यतः सर्वकारणं समेश्वर एवेति मत्वा श्रुतियुक्तिभिर्निश्चित्य बुधाः परोक्षज्ञानिनो मुमुक्षवः भावसमन्विताः भावः सर्वं ब्रह्मैवेत्येवंलक्षणस्तेन समन्विताः सर्वत्र मद्भावनायुक्ताः सन्तः सर्वदा मां सर्वात्मकं परमात्मानं भजन्ते शृण्वते मन्वते ध्यायन्त्येवमुपासत इत्यर्थः ॥ ८ ॥

श्री० टी०—यथा च विभूतियोगयोर्ज्ञानेन सम्यग्ज्ञानावाप्तिस्तद्दर्शयति—अहमित्यादिचतुर्भिः । अहं सर्वस्य जगतः प्रभवः भृग्वादिरूपविभूतिद्वारेणोत्पत्तिहेतुः। मत्त एव चास्य सर्वस्य बुद्धिर्ज्ञानमसंमोह इत्यादि सर्वं प्रवर्तत इति एवं मत्वाऽवबुध्य बुधा विवेकिनो भावसमन्विताः प्रीतियुक्ता मा भजन्ते ॥ ८ ॥

स० टी०—अहं श्रीवासुदेवोऽस्य सर्वस्य जगतः प्रभुः ॥ उपादानं निमित्तं च मत्तः सर्वलयस्थिती ॥ १ ॥ मयान्तर्यामिणा सर्वशक्तिना सर्ववेदिना ॥ प्रेर्यमाणं जगत्सर्वं स्वस्वकार्ये प्रवर्तते ॥ २ ॥ इत्येवं सद्विवेकेन ज्ञाततत्त्वाः सदा बुधाः ॥ प्रेम्णा वास्तवतत्त्वैक्यबोधेनैव समन्विताः ॥ ३ ॥ भजन्ते मां परानन्दघनं श्रीपरमेश्वरम् ॥ ४ ॥ यस्मिन्निदं जगदशेषमशेषहेतौ मायाविलासपरिभावितमच्छबोधे ॥ कालत्रयेऽर्कमरुभूजलवन्मृषैव मा भाति तत्र रमतां हृदयं हरौ मे ॥ ५ ॥ ८ ॥

भा० टी०—ननु कथं तावकविभूतियोगज्ञानेनाविकम्पयोगप्राप्तिस्त्वदुपासनायास्तत्प्राप्तिसाधनत्वादित्याशङ्क्य विभूतियोगज्ञानमहिम्ना प्राप्तया मदुपासनया मद्दत्तेनाविकम्पयोगेन युज्यते इत्याह—अहमिति चतुर्भिः । अहं परमात्मा वासुदेवाभिधः सर्वस्य ब्रह्मादिस्थावरान्तस्य प्रभवः प्रभवत्यस्मादिति प्रभवः प्रकृतिरभिन्ननिमित्तोपादानं मत्त एव सर्वज्ञात्सर्वेश्वरात्सर्वं स्थितिनाशक्रियाफलोपभोगलक्षणं जगत्प्रवर्तते इति मत्वा वासुदेव एव सर्वात्मा सर्वेश्वरः सर्वज्ञः सर्वोपादानं सर्वनियन्ता भजनीय इति श्रुत्वा मननेन निश्चित्य भजन्ते सेवन्ते। के ते इत्यत आह—बुधा अवगतसंसारतत्त्वाः, संसारासारज्ञानवतामेव भगवद्भजनेऽधिकार इति भावः। भावो भावना अयमेव भगवान् वासुदेवः, परमार्थतत्त्वमित्याभिनिवेशस्तेन सम्यग्युक्ताः ॥ ८ ॥

प० टी०—यथा विभूतियोगयोर्ज्ञानेन तत्त्वज्ञानं भवति तद्दर्शयति—अहमिति चतुर्भिः। अहं सर्वस्य भृग्वादिमन्वन्तप्रपञ्चस्य प्रभवः कारणं तथा मत्तः सकाशात्सर्वं प्रवर्तते व्यवहार इति मत्वाऽनुभवेन ज्ञात्वा भावसमन्विताः प्रीतियुक्ता बुधा ज्ञानिनो मां भजन्ते ॥ ८ ॥

रा० टी०—उक्तफले विश्वासजननार्थं पूर्वोक्तमहिमज्ञानपूर्वं मां भजन्तः सन्तीत्यहमित्यादिद्वाभ्यामुक्त्वा पुनस्तेषामित्यादिद्वाभ्यां फलं च व्यनक्ति—अहमिति। प्रभवत्यस्मादिति प्रभवः सर्वस्याहमुत्पादक इत्यर्थः। मत्तः सर्वं प्रवर्तते इष्टानिष्टप्राप्तिपरिहाराद्यनुकूलव्यापारवद्भवति । लयादिरपि मदायत्त इत्युपलक्ष्यते इति मत्वा बुधाः ज्ञानिनः भावसमन्विताः भावेन भक्त्या समुपेताः सन्तः मां भजन्ते पत्रपुष्पादिभिरर्चयन्ति ध्यायन्ति चेत्यर्थः । अत्र पूर्वार्धेनैव मामित्यस्य लाभात्पुनर्मामित्युक्तिर्जीवेश्वरैक्याभिप्रायेण स्वात्मानमुद्दिश्याहमेव सर्वस्य प्रभव इति मत्वा भजन्त इति प्रतीतिनिरासाय ॥ ८ ॥

**मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ॥**
**कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥**

त० टी०—तेषां प्रेमवृद्धिपूर्वकभजनमेव विवृणोति—मच्चित्ता इति । मयि भगवति वासुदेवे चित्तं येषां ते मच्चित्ताः, मद्गतप्राणाः मामेव गताः प्राप्ताः प्राणाश्चक्षुरादीन्द्रियाणि येषां ते मद्रूपादिदर्शना-

घेकविषयीभूतचक्षुरादिव्यापारा इत्यर्थः, मद्भजनार्थैकजीवना इति वा । स्वसमानविद्वद्गोष्ठीषु परस्परमन्योऽन्यं युक्तिभिः श्रुतिस्मृत्यादिप्रमाणैश्च मामेव बोधयन्तः जिगीषाद्यभावान्मत्स्वरूपगुणज्ञापनेन सौहार्दं कुर्वन्त इत्यर्थः । स्वन्यूनबोधेषु च मामेव कथयन्तः, तत्कृपया मदीयान् गुणान् मदीयान्यतिमानुषान्यद्भुतानि कर्माणि च कथयन्तः सन्तस्तुष्यन्ति च रमन्ति च । वक्तारोऽनन्यप्रयोजनेन श्रोतृप्रश्नेन तुष्यन्ति अनुमोदन्ते श्रोतारश्च तदद्भुतगुणकर्मश्रवणेन रमन्ति रमन्ते ॥ ९ ॥

म० टी०—प्रेमपूर्वकं भजनमेव विवृणोति—मच्चित्ता इति । मयि भगवति चित्तं येषां ते मच्चित्ताः तथा मद्गता मां प्राप्ताः प्राणाश्चक्षुरादयो येषां ते मद्गतप्राणा मद्भजननिमित्तचक्षुरादिव्यापारा मय्युपसंहृतसर्वकरणा वा अथवा मद्गतप्राणाः मद्भजनार्थजीवना मद्भजनातिरिक्तप्रयोजनशून्यजीवना इति यावत् । विद्वद्गोष्ठीषु परस्परमन्योन्यं श्रुतिभिर्युक्तिभिश्च मामेव बोधयन्तः तत्त्वबुभुत्सुकथया ज्ञापयन्तः तथा स्वशिष्येभ्यश्च मामेव कथयन्त उपदिशन्तश्च मयि चित्तार्पणं तथा बाह्यकरणार्पणं तथा जीवनार्पणमेवं समानामन्योन्यं मद्बोधनं स्वन्यूनेभ्यश्च मदुपदेशनमित्येवंरूपं यन्मद्भजनं तेनैव तुष्यन्ति च एतावतैव लब्धसर्वार्था वयमलमन्येन लब्धव्येनेत्येवंप्रत्ययरूपं संतोषं प्राप्नुवन्ति च तेन संतोषेण रमन्ति च रमन्ते च प्रियसंगमेनेवोत्तमं सुखमनुभवन्ति च । तदुक्तं पतञ्जलिना—'संतोषादनुत्तमः सुखलाभः' इति । उक्तं च पुराणे—'यच्च कामसुखं लोके यच्च दिव्यं महत्सुखम् । तृष्णाक्षयसुखस्यैते नार्हतः षोडशीं कलाम्' इति । तृष्णाक्षयः संतोषः ॥ ९ ॥

शं० टी०—तदुपास्तिप्रकारमेवाह—मच्चित्ता इति । मच्चित्ता मयि सर्वभूतात्मके सविशेषे ब्रह्मणि चित्तं सर्वं ब्रह्मैवेति वासनापन्नं येषां ते मच्चित्ताः, मद्गतप्राणाः मद्गता मत्तत्त्वप्रतिपादकवाक्योच्चारणे तदर्थश्रवणे तन्निश्चितार्थदर्शने च तत्पराः प्राणा वागादीन्द्रियाणि येषां ते मद्गतप्राणा भूत्वा बुधाः परस्परं स्वस्वप्रज्ञानुसारेण वाक्यार्थं बोधयन्तस्तथा परस्परं स्वानुभवं कथयन्तश्च सन्तः स्वानुभवानुरूपेण तुष्यन्ति चानन्दन्ति च सदैवं वेदान्तेषु रमन्ते सर्वं मामेव पश्यन्तः शृण्वन्तो भावयन्तश्च कालं नयन्तीत्यर्थः ॥ ९ ॥

श्री० टी०—प्रीतिपूर्वकं भजनमेवाह—मच्चित्ता इति । मय्येव चित्तं येषां ते मच्चित्ताः मामेव गताः प्राप्ताः प्राणा इन्द्रियाणि येषां ते मद्गतप्राणाः मदर्पितजीवना इति वा, एवंभूतास्ते बुधाः अन्योऽन्यं मां न्यायोपेतैः श्रुत्यादिप्रमाणैर्बोधयन्तः बुद्ध्वा च मां कथयन्तः संकीर्तयन्तः सन्तो नित्यं तुष्यन्ति अनुमोदनेन तुष्टिं यान्ति रमन्ति च निर्वृतिं यान्ति ॥ ९ ॥

स० टी०—विवृणोति तमेवेशो भजनं प्रेमपूर्वकम् ॥ येषां मयीश्वरे चित्तं मद्गतेन्द्रियवृत्तयः ॥ १ ॥ मद्गतं जीवनं येषां मद्भजनोन्मुखाश्च ते ॥ मामेव सत्सभायां ये श्रुतिभिर्युक्तिभिः सदा ॥ २ ॥ तत्त्वजिज्ञासुकथया ज्ञापयन्तः परस्परम् ॥ स्वशिष्येभ्यश्च मामेवोपदिशन्तो निरन्तरम् ॥ ३ ॥ इत्येवं मत्परप्रेम्णा भजनेनैव सर्वदा ॥ संतोषं प्राप्नुवन्त्यन्तः प्राप्तप्राप्यतयाऽऽदरात् ॥ ४ ॥ संतोषेण रमन्ते च मत्प्रेमविवशीकृताः ॥ प्रियस्य संगमेनैवानुभवन्ति सुखं परम् ॥ ५ ॥ अत्युत्तमसुखप्राप्तिः संतोषादेव नान्यतः ॥ ६ ॥ ९ ॥

भा० टी०—किंचैवं भजन्तीत्याह—मच्चित्ता इति । मच्चित्ता मयि वासुदेवे चित्तं येषां ते मां गताः प्राप्ताः प्राणाश्चक्षुरादयो येषां ते मय्युपसंहृतसर्वकरणाः मद्गतजीवना इति वा आचार्यात् श्रुत्वा वादकथया समानेषु परस्परं बोधयन्तः मां ज्ञानबलादियुक्तं शिष्येभ्यः कथयन्तः मद्भजनेनैव तुष्यन्ति संतोषमुपयान्ति तेनैव च रमन्ति रतिं प्राप्नुवन्ति न स्त्र्यादिना ॥ ९ ॥

प० टी०—प्रीतिपूर्वकं भजनमाह—मच्चित्ता इति । मय्येव चित्तं येषां ते मच्चित्ता अन्तर्निष्ठा मयि गताः

प्राणा इन्द्रियाणि येषां ते बहिरपि मद्रूपं जगत्पश्यन्तः । एवमनुभूतमर्थं परस्परं श्रुतिवाक्यैर्बोधयन्तस्तथा भक्त्या मां कथयन्तः कीर्तयन्तः सन्तस्तुष्यन्ति तेन रमन्ति निर्वृतिं लभन्ते ॥ ९ ॥

रा० टी०—पुनर्भजनप्रकारमेवाह—मच्चित्ता इति । मन्निष्ठमनस्का: मद्गतप्राणा: मद्विषयचेष्टावन्त: बोधयन्त: शिष्यान्प्रति बोधयन्तो मामुपदेशेनेति योज्यं, परस्परं मां कथयन्त: कीर्तयन्तश्च । नित्यमिति सर्वत्रान्वेति । तुष्यन्ति तृप्ता भवन्ति विषयेष्वलंबुद्धिमन्तो भवन्ति । तत्र हेतु: रमन्ति च सुखमनुभवन्ति चेति ॥९॥

**तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥**
**ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥**

त० टी०—तथाविधानां फलमाह—तेषामिति । सततं सर्वदा युक्तानां मयि निबद्धहृदयानां प्रीतिपूर्वकं भजतां तं बुद्धियोगं ज्ञानयोगमहं ददामि येन बुद्धियोगेन मामुपयान्ति प्राप्नुवन्ति ॥ १० ॥

म० टी०—तेषामिति । ते यथोक्तेन प्रकारेण भजन्ते मां सततं सर्वदा युक्तानां भगवत्येकाग्रबुद्धीनामत एव लाभपूजाख्यात्याद्यनभिसंधाय प्रीतिपूर्वकमेव भजतां सेवमानानां तेषामविकम्पेन योगेनेति यः प्रागुक्तस्तं बुद्धियोगं मत्तत्त्वविषयं सम्यग्दर्शनं ददामि उत्पादयामि येन बुद्धियोगेन मामीश्वरमात्मत्वेनोपयान्ति ये मच्चित्तत्वादिप्रकारैर्मां भजन्ते ते ॥ १० ॥

शं० टी०—एवं मुमुक्षूणां श्रवणश्रावणादिभेदेन भजनप्रकारमुक्त्वाऽधुना स्वानुग्रहप्रकारमाह—तेषामिति द्वाभ्याम् । सततयुक्तानां सततं सर्वदा वेदान्तश्रवणादिष्वेव परिनिष्ठितानां प्रीतिपूर्वकं स्वस्वरूपसाक्षात्कारसिद्धये आसक्तिविशेषः प्रीतिस्तत्पूर्वकं श्रवणादिजन्यज्ञानानुरूपेण मां भजतां ध्यायतां तेषामहं परमात्मा तमेव बुद्धियोगं बुद्धिः स्वरूपज्ञानं सैव योगो बुद्धियोगस्तं ददामि तेषां नित्यनिरन्तरश्रवणादिनिष्ठानामत्यन्तप्रीतिपूर्वकया मदुपास्त्या प्रीतः सन्नेवाहं सम्यग्दर्शनलक्षणं सर्वमिदमहं च ब्रह्मैवेति सर्वस्य चिदेकरसब्रह्ममात्रत्वावगाहकं ज्ञानयोगं मत्प्राप्तिप्रतिबन्धनिवर्तकं प्रयच्छामीत्यर्थः । श्रवणादिभिर्मद्भजननिष्ठा मदनुग्रहपात्रीभूतास्ते मद्भक्ता येन यादृशेन बुद्धियोगेन मां निर्विशेषं व्योमवन्निराकारं नित्यकूटस्थासङ्गचिद्रूपं सदानन्दैकरसं परं ब्रह्माद्वितीयमुपयान्ति इदमेवाहमित्यनात्मन्यात्मभावमुत्सृज्य मामेव स्वात्मत्वेन जानन्ति तादृशं मत्साक्षात्कारं प्रयच्छामीत्यर्थः । एतेन दिव्यमणिलक्षणं लक्षणज्ञाच्छृण्वतां तदुक्तिभिर्लक्षणं गृह्णतां लक्ष्ये सूक्ष्मबुद्ध्या युक्त्या च लक्षणमन्वेषयतां लक्ष्यलक्षणयोः साङ्गत्यमालोचयतां तदेव पुनः पुनः शृण्वतां लोचयतां सम्यक्पश्यतामेवेश्वरानुग्रहान्मणितत्त्वं विज्ञायते न मणिं बहिः कीर्तयतामतत्त्वज्ञाच्छृण्वतामनालोचयतामसूक्ष्मबुद्धीनामयुक्तिकुशलानामसम्यग्दृष्टीनामनीश्वरप्रसादवतां दिव्यमणितत्त्वं गोचरीभवति तथैव ब्रह्मतत्त्वमपीति सूचितं भवति ॥ १० ॥ यद्वा मम यो वेत्ति तत्त्वत इत्येतद्वाक्यार्थे सम्यग्विचार्यमाणे एतां विभूतिमित्यादि येन मामुपयान्ति ते इत्यन्तानां चतुर्णां श्लोकानामेवमर्थः । एतां विभूतिं योगं च मम यो वेत्ति तत्त्वतः ॥ सोऽविकम्पेन योगेन युज्यते नात्र संशयः ॥ ७ ॥ एतां यथोक्तां विभूतिं महत्त्वविस्तारं योगं च सृष्टिस्थितिलयप्रवेशनियमनादिक्रियासामर्थ्यं च सर्वं मम निर्विशेषस्याविक्रियस्य परस्य ब्रह्मणो माययैव न तु वस्तुतोऽस्तीति तत्त्वतो यथाभूतार्थदर्शनेन यो ब्रह्मविद्यतिः सद्गुरुप्रसादलब्धात्मविज्ञानो वेत्ति सर्वमिदं मायिकं मिथ्यैवेति विजानाति स ब्रह्मविदविकम्पेन विकम्पो विक्षेपस्तद्रहितेन ब्रह्मात्मैकत्वविज्ञानदाढर्याद्विकल्पनिर्मुक्तेन योगेन सम्यग्दर्शनलक्षणेन युज्यते देहादावात्मभावमुत्सृज्य ब्रह्मैवाहमिति ब्रह्मण्येवात्मत्वबुद्ध्या निश्चलो भवति न पुनरहमिदं ममेति विकल्पं भजते नात्र संशयः कर्तव्यः ॥ ७ ॥ "मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम्" इत्यादिश्रुतिप्रसिद्धं ब्रह्मात्मैकत्वविज्ञाननिष्ठावतामनुभवमाह—अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ॥ इति

मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ ८ ॥ प्रतीयमानस्यास्य सर्वस्य जगतोऽहमेव परं ब्रह्म प्रभवः उपादानं मय्येव सर्वं प्रतीतमित्यर्थः । मत्तो मत्सन्निधानादेव सर्वं जगत्प्रवर्तत इत्यर्थः । इत्येवं जगत्प्रतीतेस्तत्प्रवृत्तेश्च स्वमेव परं ब्रह्म कारणं मत्वा बुधा ब्रह्मविदो भावसमन्विता भावो ब्रह्मण्येवात्मभावस्तेन समन्विताः समेताः सन्तो मां परं ब्रह्म भजन्ते ब्रह्मैवाहमहमेव ब्रह्मेत्यनुसंदधत इत्यर्थः ॥ ८ ॥ तद्भजनप्रकारमेवाह—मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् ॥ कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ ९ ॥ शास्त्रार्थं शिष्यान्बोधयन्तः परस्परं स्वस्वानुभवं कथयन्तस्ते बुधा मच्चित्ता मय्येव प्रत्यगभिन्ने परे ब्रह्मणि चित्तं मदाकाराकारितं येषां ते मच्चित्ता मद्गतप्राणा मद्गता मद्भावं गमिताः प्रत्यग्वृत्त्या मदात्मना प्रविलापिताः प्राणा इन्द्रियादयो येषां ते मद्गतप्राणाः सन्तः वृत्त्यारूढं मामानन्दैकरसमनुभूय तुष्यन्ति च संतोषं वहन्ति नित्यमेवं रमन्ति मय्येव सर्वदा रमन्ते च मामेव नित्यं बोधयन्तः कथयन्तो ध्यायन्तश्च बुधाः कालं नयन्तीत्यर्थः ॥ ९ ॥ एवं ब्रह्मविदां यतीनां स्वभक्तानां स्वभजनप्रकारमुक्त्वाऽधुना स्वानुग्रहप्रकारमाह—तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् ॥ ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ १० ॥ सततयुक्तानां सततं सर्वदा युक्तानां मयि परे ब्रह्मण्येव सदा समाहितचित्तानामेव भजतां मामेव भजन्तीति भजन्तो भक्तास्तेषां भजतां भक्तानां तेषां बुधानां ब्रह्मविदां प्रीतिपूर्वकं भक्तास्तेऽतीव मे प्रिया इति वचनादैहिकामुष्मिकं सुखं तत्साधनजातं च सर्वं संन्यस्य स्वदेहजीवनादावप्याशां परित्यज्य मोक्षैकवाञ्छया मदीयमेव परं तत्त्वं सच्चिदानन्दघनमितरानवगाह्यमजस्रं तदेकप्रीत्या भजत्सु तेषूत्तमभक्तेषु समुत्पन्ना या प्रीतिः एते मद्भक्तवर्या मत्प्राप्तयेऽत्यन्तश्रमं कुर्वन्तीति दयारसार्द्रान्तःकरणवृत्तिविशेषः प्रीतिस्तत्पूर्वकमेवाहं बुद्धियोगं बुद्धिर्निःशेषनिर्मुक्तविपरीतप्रत्ययं सन्मात्रैकविषयं सम्यग्दर्शनं तेन योगं वृत्तेः संयोगं ददामि अहमिदमदइत्यादिभेदप्रत्ययशून्यां ब्रह्मैकगोचरामखण्डात्मिकां वृत्तिं प्रयच्छामीत्यर्थः । येन यादृशेन मत्प्रसादप्राप्तेन बुद्धियोगेन ते बुधाः मामद्वितीयं निर्विशेषं सच्चिदानन्दघनं परं ब्रह्मोपयान्ति स्वात्मत्वेन विज्ञाय तद्भावं प्राप्नुवन्ति तं प्रयच्छामीत्यर्थः । एतेन शतधा कृतश्रवणश्रावणानामपि यतीनां सततयुक्तानामेवेश्वरः प्रसीदति प्रसन्नः सन्सम्यग्दर्शनं च प्रयच्छति नेतरेषामतो मुमुक्षूणां विज्ञातात्मतत्त्वानां यतीनां निरन्तरब्रह्मनिष्ठया भवितव्यमिति सूचितम् ॥ १० ॥

**श्री० टी०**—एवंभूतानां च सम्यग्ज्ञानमहं ददामीत्याह—तेषामिति । एवं सततयुक्तानां मय्यासक्तानां प्रीतिपूर्वकं भजतां तेषां तं बुद्धिरूपं योगमुपायं ददामि । तमिति कं येनोपायेन ते भक्ता मां प्राप्नुवन्ति॥१०॥

**स० टी०**—यथोक्तेन प्रकारेण भजन्ते मां य उत्तमाः ॥ तेषामेकाग्रबद्धीनां सततं परमेश्वरे ॥ १ ॥ लाभाद्यनभिसंधाय प्रीतिपूर्वकमेव हि ॥ भजतां सेवमानानां बुद्धियोगं पुरेरितम् ॥ २ ॥ मत्तत्त्वविषयं सम्यग्दर्शनं तं ददाम्यहम् ॥ येन ते बुद्धियोगेन मामजं परमेश्वरम् ॥ ३ ॥ आत्मत्वेनोपयान्त्येते ये पुरोक्ताश्च मद्गताः ॥ ४ ॥ यस्यावतारचरितश्रवणादिशुद्धस्वान्ता विवेकविरतिप्रभृतीन् गुणांश्च ॥ प्राप्यात्मबोधमचीरितबन्धपाशा मुक्तास्तमीश्वरमहं हरिमाश्रयेऽन्तः ॥ ५ ॥ १० ॥

**भा० टी०**—तेषामिति । तेषां सततयुक्तानां सततं निरन्तरमभियुक्तानाम् । किमर्थित्वादिपूर्वकं नेत्याह—प्रीतिः स्नेहस्तत्पूर्वकं भजतां प्रेमलक्षणभक्तिमतामित्यर्थः । तं सम्यग्ज्ञानलक्षणमविकम्पबुद्धियोगं ददामि येन बुद्धियोगेन मां परमात्मानमात्मत्वेनोपयान्ति प्रतिपद्यन्ते साक्षात्कुर्वन्तीत्यर्थः । ते ये मां मच्चित्तत्वादिप्रकारैर्भजन्ते ॥ १० ॥

**प० टी०**—एवंभूतानां ज्ञानप्रदोऽहमेवेत्याह—तेषामिति । तेषां पूर्वोक्तानां सततयुक्तानां मय्यासक्तानां प्रीतिपूर्वकं भजतां च तं बुद्धियोगं ददामि । येन ज्ञानयोगेन ते मामुपयान्ति ॥ १० ॥

रा०टी०—सततयुक्तानां नित्यं मयि निबद्धचित्तानां प्रीतिपूर्वकं मां भजतां तेषां तमेव बुद्धियोगं ज्ञानरूपं मुक्त्युपायं ददामि येन बुद्धियोगेन मामुपयान्ति तमित्यन्वयः ॥ १० ॥

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ॥**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता ॥ ११ ॥**

त० टी०—किंच—तेषामिति । तेषामेव प्रीतिपूर्वकं भजतामेवानुकम्पार्थमनुग्रहार्थमात्मभावस्थो बुद्धिवृत्तौ स्थितः सन्नज्ञानजं प्राचीनकर्मरूपाज्ञानजं तमो धर्मभूतज्ञानावरणं भास्वता प्रकाशमानेन मद्विषयकज्ञानाख्येन दीपेन नाशयामि ॥ ११ ॥

म० टी०—दीयमानस्य बुद्धियोगस्यात्मप्राप्तौ फले मध्यवर्तिनं व्यापारमाह—तेषामिति । तेषामेव कथं श्रेयः स्यादित्यनुग्रहार्थमात्मभावस्थ आत्माकारान्तःकरणवृत्तौ विषयत्वेन स्थितोऽहं स्वप्रकाशचैतन्यानन्दाद्वयलक्षण आत्मा तेनैव मद्विषयान्तःकरणपरिणामरूपेण ज्ञानदीपेन दीपसदृशेन ज्ञानेन भास्वता चिदाभासयुक्तेनाप्रतिबद्धेनाज्ञानजमज्ञानोपादानकं तमो मिथ्याप्रत्ययलक्षणं स्वविषयावरणमन्धकारं तदुपादानाज्ञाननाशेन नाशयामि सर्वभ्रमोपादानस्याज्ञानस्य ज्ञाननिवर्त्यत्वादुपादाननाशनिवर्त्यत्वाच्चोपादेयस्य। यथा दीपेनान्धकारे निवर्तनीये दीपोत्पत्तिमन्तरेण न कर्मणोऽभ्यासस्य चापेक्षा विद्यमानस्यैव च वस्तुनोऽभिव्यक्तिस्ततो नानुत्पन्नस्य कस्यचिदुत्पत्तिस्तथा ज्ञानेनाज्ञाने निवर्तनीये न ज्ञानोत्पत्तिमन्तरेणान्यस्य कर्मणोऽभ्यासस्य वापेक्षा विद्यमानस्यैव च ब्रह्मभावस्य मोक्षस्याभिव्यक्तिस्ततो नानुत्पन्नस्योत्पत्तिर्येन क्षयित्वं कर्मादिसापेक्षत्वं वा भवेदिति रूपकालंकारेण सूचितोऽर्थः । भास्वतेत्यनेन तीव्रपवनादेरिवासंभावनादेः प्रतिबन्धकस्याभावः सूचितः । ज्ञानस्य च दीपसाधर्म्यं स्वविषयावरणनिवर्तकत्वं स्वव्यवहारे सजातीयपरानपेक्षत्वं स्वोत्पत्त्यतिरिक्तसहकार्यनपेक्षत्वमित्यादि रूपकबीजं द्रष्टव्यम् ॥ ११ ॥

शं० टी०—ननु "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रवणादनन्तस्य परिपूर्णस्य ब्रह्मणस्तव प्राप्तिस्तेषामस्त्येव । ददामि बुद्धियोगं तं येन मामुपयान्ति ते इत्युक्तिरयुक्तेति चेत्सत्यं, सर्वात्मकं मां परं ब्रह्म सर्वे प्राप्ता एव भवन्ति तथाप्यज्ञानेन मां प्राप्तमप्राप्तमेव मन्यन्ते मूढाः, यथा प्राप्तमप्यर्कालोकमप्राप्तमिव मन्यन्ते जात्यन्धास्तद्वत्तत एव मद्भजनशीला ये तेषां मत्प्राप्तिज्ञानावरकमज्ञानमहं नाशयामीत्याह—तेषामिति । मच्चित्तत्वादिभिः सततयुक्तत्वादिभिश्च ज्ञानपरिपाकसाधनैर्ये मां भवमुक्त्यै भजन्ति तेषां मद्भजनैकनिष्ठानां ब्रह्मविदामनुकम्पार्थमेते निरन्तरसमाधिनिष्ठालक्षणे मद्भजने श्राम्यन्त्यमीषां श्रमनिवृत्तिः कथं स्यादिति समुत्पन्ना याऽनुकम्पा दया तदर्थं तन्निमित्तमेवाहं परमात्माऽऽत्मभावस्थः आत्मनः प्रतीचो मम भावो भावना ध्यानात्मिका वृत्तिस्तत्रस्थः मद्ध्यानवृत्तेश्चक्षुषः सूर्य इव सम्यग्विषयीभूयेत्यर्थः । यद्वा आत्मान्तःकरणं तस्य भावो वृत्तिस्तत्र प्रत्यग्रूपेण तिष्ठतीत्यात्मभावस्थः प्रत्यग्वृत्तावाविर्भूतः सन् ज्ञानदीपेन ज्ञायते वस्तुतत्त्वमनेनेति ज्ञानमात्मस्वरूपप्रकाशको बुद्धिवृत्तिविशेषः स एव दीपो ज्ञानदीपस्तेन ज्ञानदीपेन भास्वता नित्यनिरन्तरसमाधिनिष्ठासंभाविताप्रतिबद्धभावेन निरङ्कुशप्रकाशवता ज्ञानदीपेनाज्ञानजमज्ञानमनाद्यविद्यालक्षणं तस्माज्जातमज्ञानजमावरणात्मकं तमो नाशयामि घटाद्यावरकं तम उदयाचलारूढः सूर्यः स्वप्रभया यथा विध्वंसयाति तथा । मामेव निरन्तरं ध्यायतां सतां धीवृत्तिफलकारूढो भूत्वाऽहं मत्प्रकाशव्याप्तधीवृत्तिविशेषेण मत्स्वरूपावरकमविद्याध्वान्तं निःशेषं विध्वस्य स्वात्मतत्त्वमविद्यातत्कार्यतद्धर्मतत्कर्मतल्लक्षणतदवस्थातदाभाससंबन्धलेशशून्यमाकाशवन्नित्यनिरन्तरं निर्विकल्पं निराकारं निर्विकारं निरञ्जनं निष्क्रियं नित्यशुद्धबुद्धमुक्तस्वभावमात्मानमनाद्यनन्तमखण्डानन्दैकरसं परिपूर्णमिदमेवाहमिति मय्येव परे ब्रह्मण्यात्मतत्त्वप्रत्ययो विस्पष्टतरो यथा स्यात्तथा प्रकाशयामीत्यर्थः । एतेन "यमेवैष वृणुते

तेन लभ्यः । तस्यैष आत्मा विवृणुते तनुं स्वाम् ' इति एतच्छ्रुत्युक्तरीत्या तीव्रमोक्षेच्छातीव्रवैराग्याभ्यां निदिध्याससमाधिषु परिश्रान्तस्यैव यतेरीश्वरप्रसादस्तेनैव सम्यग्दर्शनं तत एवाविद्याध्वान्तनिःशेषनिवृत्तिस्तयैव विदेहकैवल्यसुखसिद्धिरिति सूचितम् ॥ ११ ॥

श्री० टी०—बुद्धियोगं दत्त्वा च तस्यानुभवपर्यन्ततामापाद्याविद्याकृतं संसारं नाशयामीत्याह—तेषामिति । तेषामनुकम्पार्थमनुग्रहार्थमेवाज्ञानाज्जातं तमः संसाराख्यं नाशयामि । कुत्र स्थितः सन्केन वा साधनेन तमो नाशयसीत्यत आह—आत्मभावस्थः बुद्धिवृत्तौ स्थितः सन् भास्वता विस्फुरता ज्ञानलक्षणेन दीपेन नाशयामि ॥ ११ ॥

स० टी०—दीयमानस्य योगस्य ब्रह्मप्राप्तौ फले हरिः ॥ सुखबोधाय संप्राह व्यापारं मध्यवर्तिनम् ॥ १ ॥ तेषामेव कथं श्रेयो भवेदित्यनुकम्पया ॥ आत्मैकाकारधीवृत्तौ विषयत्वेन संस्थितः ॥ २ ॥ स्वप्रकाशचिदानन्दाद्वयात्माहं निरामयः ॥ धीपरिणामरूपेण ज्ञानदीपेन भास्वता ॥ ३ ॥ चैतन्याभासयुक्तेनाप्रतिबद्धेन सर्वतः ॥ आज्ञानहेतुकं ध्वान्तं मिथ्याप्रत्ययलक्षणम् ॥ ४ ॥ तद्धेत्वज्ञाननाशेन नाशयामि स्वगोचरम् ॥ यथा निवर्तनीये हि दीपेन तिमिरेऽखिले ॥ ५ ॥ दीपोत्पत्तिं विना नान्यत्कर्माभ्यासाद्यपेक्षणम् ॥ तथा ज्ञानेन चाज्ञाने नाशनीयेऽत्यनर्थदे ॥ ६ ॥ ज्ञानोत्पत्तिं विना नान्यत्कर्माभ्यासाद्यपेक्षणम् ॥ स्वच्छेन ज्ञानदीपेन विवेकप्रत्ययात्मना ॥ ७ ॥ हरिभक्तिप्रसादात्मस्वच्छस्नेहयुतेन च ॥ मत्प्रेमाभिनिवेशानुकूलवातेरितेन च ॥ ८ ॥ ब्रह्मचर्यादिसंस्कारयुक्तप्रज्ञासुवर्तिना ॥ विरक्तपुरुषस्यान्तःकरणाधारशोभिना ॥ ९ ॥ रागद्वेषाद्यसंस्पृष्टचित्तसद्मस्थितेन च ॥ ऐकाग्र्यध्यानजनितसम्यग्दर्शनभास्वता ॥ १० ॥ नाशितं मोहतिमिरं समूलं सविलासकम् ॥ येषां ते बन्धनिर्मुक्ताः साक्षात्स्युः पुरुषोत्तमाः ॥ ११ ॥ ११ ॥

भा० टी०—मत्प्राप्तिप्रतिबन्धकनाशकं बुद्धियोगं ददामीत्याशयेनाह—तेषामेवेति । तेषामेव मच्चित्तत्वादिप्रकारैर्भजतामनुकम्पार्थं दयाहेतोरहमज्ञानजं मूलाज्ञानाज्जातं मिथ्याप्रत्ययलक्षणं तमो मोहान्धकारं ज्ञानदीपेन नाशयामि । अचेतनस्य नाशकत्वासंभवादहमित्युक्तं निखिलभ्रमाधिष्ठानत्वेनाखिलभासकस्य केवलचैतन्यस्यापि तदसंभवात् । आत्मभावस्थो ज्ञानदीपेन भास्वतेत्युक्तमात्मनो भावोऽन्तःकरणाशयस्तस्मिन्नवस्थितः तत्त्वमस्यादिमहावाक्योत्थान्तःकरणवृत्त्यभिव्यक्तः सन् तेनैव वृत्तिज्ञानदीपेन भक्त्यादिना भास्वता देदीप्यमानेन समूलाज्ञानं मत्प्राप्तिप्रतिबन्धकं मिथ्याप्रत्ययलक्षणं तमो नाशयामीत्यर्थः ॥ ११ ॥

प० टी०—ननु ज्ञानदातृत्वमुपदेशाद्भवति स च साक्षाद्दर्शनाभावात्कथं युज्यत इत्याह—तेषामिति । तेषां प्रीतिपूर्वकं भजतामनुकम्पया कृपया ज्ञानाज्जातं तमः संसाराख्यमहमेव नाशयामि । कुतः स्थित आत्मभावस्थो बुद्धौ वर्तमानः । केन भास्वता प्रकाशवता ज्ञानदीपेन । अत्र श्रुतिरप्यथर्ववल्लीषु "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्" इति । भाष्यम्—अयमात्मा प्रवचनेन प्रकृष्टं वचनं प्रवचनमुपदेशस्तेन न लभ्यो न मेधया युक्त्या लभ्यो नापि बहुना श्रुतेन शास्त्रश्रवणेन । किं त्वेष आत्मा यं पुरुषं वृणुतेऽनुकम्प्यत्वेन गणयति तस्यैष आत्मा स्वां तनूं स्वस्वरूपं विवृणुते सत्त्वान्तःकरणवृत्तिस्थितो विवरयति प्रकाशयति । तदुक्तं वासिष्ठे—' न शास्त्रैर्नापि गुरुणा दृश्यते परमेश्वरः । दृश्यते स्वात्मनैवात्मा स्वया सत्त्वस्थया धिया ' इति । टिप्पणिकासु—' आदर्शे प्रतिरूपदर्शकमयी शक्तिर्निसर्गस्थिता, द्रष्टा तत्र मलापकर्षणविधिं संपाद्यते केवलम् । तद्वच्चित्परिणामरूपमनसः शाबल्यसंशोधने, सत्कर्मेश्वरभक्तितः स्वत इहैवात्मप्रकाशो भवेत् ' इति । ऋग्वेदेऽपि—"यस्तित्याज सचिविदं सखायं न तस्य वाच्यपि भागो अस्ति । यदीं शृणोत्यलकं शृणोति नहि प्रवेद सुकृतस्य पन्थाम्" इति । रावणभाष्यम्—अत्र सचिशब्दः सखिवाची । सचीन् सखीन् परमप्रेमास्पदं विषयान् वेत्तीति सचिवित्तमुपकारकम्

अत एव सखायं परमात्मानं यः पुरुषस्तित्याज त्यक्तवान् आत्मवहिर्मुख इत्यर्थः । तस्य पठनात्मिकायामपि वाचि सत्यत्वभागो नास्ति किं पुनर्जल्पनायाम् । तथा ईमित्यव्ययम् । बहिर्मुखं यच्छृणोति शास्त्रश्रवणं करोति तदलकमलीकमसत्यम् । हि यस्मात्कारणात् सुकृतस्य सत्यस्य ब्रह्मणः पन्थां पन्थानं मार्गं न वेद न जानाति । तथा " मुह्यन्त्वन्ये अभितो जनास इहास्माकं मघवा सूरिरस्तु " इति । भाष्यम्—जनासो जना अभितः सर्वप्रकारेण मुह्यन्तु मोहं प्राप्नुवन्तु परंत्विह शरीरेऽस्माकं मुमुक्षूणामिन्द्रापरपर्यायः परमात्मा सूरिरुपदेष्टास्तु ॥ ११ ॥

रा० टी०—अनाद्यज्ञानकृतबन्धसत्त्वात्कथं तत्प्राप्तिरित्यत आह—तेषामेवेति । तेषामनुकम्पार्थमनुग्रहार्थमेव न तु किंचित्फलमुद्दिश्य अहमज्ञानजं तेषां तमः सुखदुःखादिक्लेशरूपबन्धं भास्वता विरोधिनाशनदक्षतया प्रकाशमानेन ज्ञानाख्यदीपेन आत्मभावस्थः तदीयचित्तवृत्तिस्थः सन्नाशयामीति ॥ ११ ॥

**अर्जुन उवाच—परं ब्रह्म परं धाम पवित्रं परमं भवान् ॥**
**पुरुषं शाश्वतं दिव्यमादिदेवमजं विभुम् ॥ १२ ॥**
**आहुस्त्वामृषयः सर्वे देवर्षिर्नारदस्तथा ॥**
**असितो देवलो व्यासः स्वयं चैव ब्रवीषि मे ॥ १३ ॥**

त० टी०—एवं भगवतो निरतिशयैश्वर्यं संक्षेपतो विभूतिं च श्रुत्वा प्रवृद्धश्रद्धया विस्तरेण ज्ञातुकामस्त्वदुक्तं सर्वं मयाऽवधारितमिति प्रत्याययितुं भगवत्तत्त्वमर्जुन उवाच—परं ब्रह्मेति । परं ब्रह्म परं धाम परमं पवित्रमिति ' तद्ब्रह्म परमं धाम तद्ध्येयं मोक्षकाङ्क्षिणा । श्रुतिवाक्योदितं सूक्ष्मं तद्विष्णोः परमं पदम् । ' पवित्राणां पवित्रं यः ' पवित्राणां हि गोविन्दः पवित्रं परमुच्यते । पुण्यानामपि पुण्योऽसौ मङ्गलानां च मङ्गलम् ' इत्यादिशास्त्रे य उच्यते स एव भवान् । यतः शाश्वतं सर्वदैकरूपं पुरुषं दिवि परमे व्योम्नि भवं विद्यमानं दिव्यम् । आदिश्चासौ देवश्च स्वयंप्रकाशस्तं देवानामादिः कारणमिति वा । तथाऽजं जन्मरहितं विभुं व्यापकं त्वामाहुरित्युत्तरेण संबन्धः ॥ १२ ॥ एवंभूतं त्वामृषयः सूक्ष्मार्थदर्शिनः सर्वे भृग्वादय आहुस्तथा देवर्षिर्नारदः, असितो, देवलश्च, व्यासः कृष्णद्वैपायनः, स्वयं त्वमेव च साक्षान्मे मह्यं ब्रवीषि । तथोक्तं भीष्मपर्वणि ब्रह्मस्तवे–' शृणु चेदं महाराज ब्रह्मप्रोक्तं स्तवं मम । ब्रह्मर्षिभिश्च देवैश्च यः पुरा कथितो भुवि ॥ साध्यानामपि देवानामपि सर्वेश्वरः प्रभुः । लोकभावनभावज्ञ इति त्वां नारदोऽब्रवीत् । भूतं भव्यं भविष्यं च मार्कण्डेयोऽभ्युवाच ह । यज्ञं त्वां चैव यज्ञानां तपश्च तपसामपि ॥ देवानामपि देवं च त्वामाह भगवान् भृगुः । पुराणं चैव परमं विष्णो रूपं तवेति वै ॥ वासुदेवो वसूनां त्वं शक्रं स्थापयिता तथा । देव देवोऽसि देवानामिति द्वैपायनोऽब्रवीत् ॥ एवं प्रजापतेः सर्गे दक्षमाहुः प्रजापतिम् । स्रष्टारं सर्वदेवानामङ्गिरास्त्वां तथाऽब्रवीत् ॥ अव्यक्तं ते शरीरस्थं व्यक्तं ते मनसि स्थितम् । देवानां संभवश्चेति देवलस्त्वसितोऽब्रवीत् ॥ शिरसा ते दिवं व्याप्तं बाहुभ्यां पृथिवी तथा । जठरं ते त्रयो लोकाः पुरुषोऽसि सनातनः ॥ एवं त्वामभिजानन्ति तपसा भाविता नराः । आत्मदर्शनतृप्तानामृषीणां चापि सत्तम ॥ राजर्षीणामुदाराणां चाहवेष्वनिवर्तिनाम् । सर्वधर्मप्रधानानां त्वं गतिर्मधुसूदन ॥ इति नित्यं योगविद्भिर्भगवान् पुरुषोत्तमः । सनत्कुमारप्रमुखैः स्तूयतेऽभ्यर्च्यते हरिः " इति । तत्रैव ब्रह्मदेवर्षिसंवादे–' ततो देवर्षिगन्धर्वा विस्मयं परमं गताः । कौतूहलपराः सर्वे पितामहमथाऽब्रुवन् ॥ को न्वयं भो भगवता प्रणम्य विनयाद्विभो । वाग्भिः स्तुतो वरिष्ठाभिः

श्रोतुमिच्छाम तं वयम् ॥ एवमुक्तस्तु भगवान्प्रत्युवाच पितामहः । देवब्रह्मर्षिगन्धर्वान्सर्वान्मधुरया गिरा ॥ यत्तत् परं भविष्यं च भविता यच्च यत्परम् । भूतात्मा यः प्रभुश्चैव ब्रह्म यच्च परं पदम् ॥ तेनास्मि कृतसंवादः प्रसन्नेन नरर्षभाः । जगतोऽनुग्रहार्थाय याचितो मे जगत्पतिः ॥ मानुषं लोकमातिष्ठ वासुदेव इति श्रुतः । असुराणां वधार्थाय संभवस्व महीतले ॥ संग्रामे निहता ये ते दैत्यदानवराक्षसाः । त इमे नृषु संभूता घोररूपा महाबलाः ॥ तेषां वधार्थं भगवान्नरेण सहितो वशी । मानुषीं योनिमास्थाय चरिष्यति महीतले ॥ नरनारायणौ तौ तु पुराणावृषिसत्तमौ । अजेयौ हि रणे यत्तौ समेतावमरैरपि ॥ समितौ मानुषे लोके संभूतावमितद्युती । मूढास्त्वेतौ न जानन्ति नरनारायणावृषी ॥ यस्याहमात्मजः पुत्रः सर्वस्य जगतः पतिः । वासुदेवोऽर्चनीयो वः सर्वलोकमहेश्वरः ॥ न वो मनुष्योऽयमिति कदाचित्सुरसत्तमाः । अवज्ञेयो महावीर्यः शङ्खचक्रगदाधरः ॥ एतत्परमकं ब्रह्म एतत्परमकं यशः । एतदक्षरमव्यक्तमेतद्वै शाश्वतं महत् ॥ यत्तत्पुरुषसंज्ञं वै गीयते ज्ञायते न च । एतत्परमकं तेज एतत्परमकं सुखम् ॥ एतत्परमकं सत्यं कीर्तितं विश्वकर्मणा । तस्मात्सर्वैः सुरैः सेन्द्रैर्लोकैश्चामितविक्रमः ॥ नावज्ञेयो वासुदेवो मनुष्योऽयमिति प्रभुः । यश्च मानुषमात्रोऽयमिति ब्रूयात्स मन्दधीः ॥ हृषीकेशमवज्ञानात्तमाहुः पुरुषाधमम् ' इति । हरिवंशे शिवोऽपि देवर्षीन्प्रति—' एवं जानीत हे विप्रा ये भक्ता द्रष्टुमागताः । एतदेव परं वस्तु नैतस्मात्परमस्ति वः ॥ एतदेव विजानीध्वमेतद्वः परमं तपः । एतदेव सदा विप्रा ध्येयं संयतमानसैः ॥ एतद्वः परमं श्रेय एतद्वः परमं धनम् । एतद्वो जन्मनः कृत्यमेतद्वस्तपसः फलम् ॥ एष वः पुण्यनिलय एष धर्मः सनातनः । एष वो मोक्षदाता च एष मार्ग उदाहृतः ॥ एष पुण्यप्रदः साक्षादेतद्वः कर्मणां फलम् । एतदेव प्रशंसन्ति विद्वांसो ब्रह्मवादिनः ॥ एष त्रयीगतिर्विप्राः प्रार्थ्या ब्रह्मविदां सदा । एतदेव प्रशंसन्ति सांख्ययोगं समाश्रिताः ॥ एष ब्रह्मविदां मार्गः कथितो वेदवादिभिः । एवमेव विजानीत नात्र कार्या विचारणा ॥ हरिरेकः सदा ध्येयो भवद्भिः सत्त्वमास्थितैः । नान्या गतिर्हि देवोऽस्ति विष्णोर्नारायणात्परः ॥' इति । तथा ' अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । मत्तः परतरं नान्यत्, अहमादिर्हि देवानां महर्षीणां च सर्वशः ' इत्यादिना च स्वयमेव मह्यं ब्रवीषि ॥ १३ ॥

म० टी०—परमिति । एवं भगवतो विभूतिं योगं च श्रुत्वा परमोत्कण्ठितः परं ब्रह्म परं धाम आश्रयः प्रकाशो वा परमं पवित्रं पावनं च भवानेव यतः पुरुषं परमात्मानं शाश्वतं सर्वदैकरूपं दिवि परमे व्योम्नि स्वस्वरूपे भवं दिव्यं सर्वप्रपञ्चातीतम् आदिं च सर्वकारणं देवं च द्योतनात्मकं स्वप्रकाशमादिदेवमत एवाजं विभुं सर्वगतं त्वामाहुरिति संबन्धः ॥ १२ ॥ आहुरिति । आहुः कथयन्ति त्वामनन्तमहिमानमृषयस्तत्त्वज्ञाननिष्ठाः सर्वे भृगुवसिष्ठादयः तथा देवर्षिर्नारदः असितो देवलश्च धौम्यस्य ज्येष्ठो भ्राता व्यासश्च भगवान् कृष्णद्वैपायनः एतेऽपि त्वां पूर्वोक्तविशेषणं मे मह्यमाहुः साक्षात् किमन्यैर्वक्तृभिः स्वयमेव त्वं च मह्यं ब्रवीषि । अत्र ऋषित्वेऽपि साक्षाद्वक्तॄणां नारदादीनामतिविशिष्टत्वात्पृथग्ग्रहणम् ॥ १३ ॥

शं० टी०—एवं मन्दप्रज्ञस्य मुमुक्षोः स्वमुपासितुं सामान्येन विभूतियोगं प्रतिपाद्य स्वोपास्त्या विशुद्धात्मनो विज्ञातात्मतत्त्वस्य यतेर्निर्विशेषोपासनं तत्फलं च भगवता सम्यक्प्रतिपादितं तच्छ्रुत्वा स्वयं निर्विशेषस्वरूपस्य मूढानुपास्यत्वं निश्चित्य मुमुक्षोरतिमन्दबुद्धेः सर्वात्मकमीश्वरस्वरूपं सविशेषमप्युपासितुमशक्यमिति मन्वानस्तदनुजिघृक्षया तद्बुद्धेरनुरूपं सोपाधिकस्यैव परमेश्वरस्य स्वरूपविशेषं विस्तरेण प्रष्टुकामः सन्नर्जुनः परमेश्वरं स्तौति—परमिति द्वाभ्याम् । परं सविशेषाद्विलक्षणमप्राकृतमतिसूक्ष्ममतीन्द्रियमनुदयास्तमयमवृद्धिक्षयमनाद्यन्तमप्रमेयं धाम केवलकूटस्थासङ्गचित्सकृत्स्मृतिमात्रेण शतकोटिकल्पार्जितपापपटलवि-

ध्वंसकत्वात्परममुत्कृष्टतमं वाय्वर्काग्न्यादीनामपि पावकत्वात्तेभ्योऽप्युत्तमं पवित्रं पावनं यत् "सत्यं ज्ञानमनन्तं ब्रह्म" इति "पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम्" इत्यादिश्रुतिस्मृतिप्रसिद्धं निर्विशेषं परं ब्रह्म तद्भवानेव नान्य इत्यर्थः। ननु त्वमेव परं ब्रह्मेति निर्धार्यते, कथमेतत्त्वया विदितमित्याकाङ्क्षायामाप्तवाक्याद्विज्ञातमिति सूचयितुमाह–**पुरुषमिति**। देवर्षिर्नारदस्तथैवासितो देवलो व्यास इत्याद्याः सर्वे ऋषयस्त्वां शाश्वतं नित्यं दिवि स्वे महिम्नि स्थातुं योग्यं दिव्यं दिव्यव्याकृताकाशे बुद्धिगुहायां भवति सत्तां भजतीति वा तं दिव्यमादिदेवं सर्वकारणत्वादादिर्द्योतनशीलत्वाद्देवः स चासौ देवश्च तमादिदेवमजं जन्मादिविकारवर्जितं विभुं व्यापकं परिपूर्णं पुरुषं परमात्मानमाहुर्वदन्ति, भक्त्या पृष्टा मह्यं कथयन्तीत्यर्थः। एतेन बहुभ्यः श्रोतव्यं ज्ञातव्यं वस्त्विति सूचितं भवति। किंच स्वयं चैव त्वमपि भोक्तारं यज्ञतपसामिति, सर्वभूतस्थितं यो मामिति च स्वं परमात्मानं मे मह्यं ब्रवीषि कथयसि यस्मात्तस्मात्त्वमेव परं ब्रह्मेति द्वयोरर्थः॥ १२ ॥१३॥

श्री० टी०–संक्षेपेणोक्ता विभूतीर्विस्तरेण जिज्ञासुर्भगवन्तं स्तुवन्नर्जुन उवाच–**परं ब्रह्मेति** सप्तभिः। परं ब्रह्म च परं धाम चाश्रयः परमं च पवित्रं भवानेव। कुत इत्यत आह–यतः शाश्वतं नित्यं पुरुषं तथा दिव्यं द्योतनात्मकं स्वप्रकाशं च आदिश्चासौ देवश्च तं देवानामादिभूतमित्यर्थः। तथा अजं अजन्मानं विभुं च व्यापकं त्वामेवाहुः॥ १२ ॥ के त इत्यत आह–**आहुरिति**। ऋषयः भृग्वादयः सर्वे देवर्षिश्च नारदः असितश्च देवलश्च व्यासश्च स्वयं त्वमेव च साक्षान्मे मह्यं ब्रवीषि ॥ १३ ॥

स० टी०–एवं भगवतो योगं विभूतिं चाद्भुतोपमाम्॥ श्रुत्वार्जुन उवाचेदं परमोत्कण्ठितो हरौ॥ १॥ परं ब्रह्माद्वयानन्दं परं धामाश्रयो महः॥ प्रकृष्टं पावनं यस्माद्भवानेव परं पदम् ॥ २ ॥ पुरुषं परमात्मानं सर्वदैकरसं यतः॥ दिवि व्योम्नि भवं सर्वप्रपञ्चातीतमद्भुतम्॥ ३ ॥ समस्तकारणं देवं स्वज्योतिर्द्योतनात्मकम्॥ अत एव जनैः शून्यं विभुं सर्वगतं ध्रुवम्॥ ४ ॥ १२ ॥ कथयन्ति वशिष्ठाद्या ऋषयस्त्वां विदां वराः॥ देवर्षिर्नारदो लोकशास्त्राव्याहतदर्शनः ॥ १ ॥ असितो देवलो धौम्यज्येष्ठभ्राता तथैव च॥ व्यासश्च भगवान्कृष्णद्वैपायन उदारगीः ॥ २ ॥ एतेऽपि मह्यं त्वामाहुः पूर्वोक्तगुणसंयुतम्॥ किमन्यैर्वक्तृभिः साक्षात्स्वयमेव ब्रवीषि मे ॥ ३ ॥ नारदादेर्विशिष्टत्वादृषित्वेऽपि पृथक् स्मृतिः॥४॥१३॥

भा० टी०–मच्चित्तत्वादिप्रकारकभक्तिद्वाराऽविकम्पयोगसाधनभूतौ विभूतियोगौ संक्षेपतः श्रुत्वा विस्तरश्रवणोत्सुक अर्जुन उवाच–**परमिति**। भवान् वासुदेवः परमक्षरं निरञ्जनं निर्गुणं ब्रह्म। परस्य ब्रह्मणो लक्षणमाह–परं धाम परं तेजः सूर्यादितेजसामपि तेजः "यस्य भासा सर्वमिदं विभाति" इति श्रुतेः। अस्यार्थस्य निरञ्जने ब्रह्मणि सामञ्जस्यमभिप्रेत्य परं धाम परं स्थानमित्यर्थः आचार्यैरुपेक्षितः। पवित्रं पावनं परमं प्रकृष्टं ज्ञानमात्रेण सवासनाऽविद्याकामकर्मभ्यो मोचकत्वादेतादृशं परं ब्रह्म भवानेव नान्यः। नन्वेतत्त्वया कुतो ज्ञातमिति चेदाप्तवाक्यादित्याह–पुरुषं पुरि शयं पूर्णं परमात्मानमत एव शाश्वतं सर्वदैकरसं दिव्यं दिवि परमे व्योम्नि हृदयाकाशे भवं दिव्यमादिदेवं सर्वेषां ब्रह्मादिदेवानामादिभवमत एवाजं विभुं विभवनशीलं विभवनमित्यस्य विविधं भवनमिति व्यापनमिति वार्थः ॥ १२ ॥ ईदृशं त्वामेव ऋषयो मन्त्रद्रष्टारः सर्वे आहुः। नारदादीनां श्रैष्ठ्यद्योतनार्थं पृथग्ग्रहणम्। किमन्यैरिति सूचयन्नाह–स्वयं चैव ब्रवीषीति ॥ १३ ॥

प० टी०–एवं भगवदुक्तमवधार्यार्जुनः प्राह–**परं ब्रह्मेति सप्तभिः** ॥ १२ ॥ परं ब्रह्मादिभिर्नवभिर्विशेषणैरुपेतं त्वां सर्वे ऋषय आहुस्तेषु विशेषतो नारदो देवर्षिराह असितो देवलश्चाह ततोऽपि विशेषेण व्यासः प्राह तथा नेमे विदुः सुरगणा इत्यादिवाक्यैर्मां प्रति स्वयमपि ब्रवीषि ॥ १३ ॥

रा० टी०–एवं संक्षेपेणोक्तं विभूतिं योगं च श्रुत्वा विस्तरेण ज्ञातुकामः तत्स्तुतिपूर्वकं तद्वक्तुं प्रार्थयते–

परमित्यादिभिः सप्तभिः । हे केशवेत्यग्रेतनमाकृष्यते । भवान्परमुत्तमं ब्रह्म परिपूर्णं वस्तु परं धाम उत्तमाश्रयः परमं पवित्रं त्वामृषयो वसिष्ठाद्या देवर्षिर्नारदोऽसितादयश्च पुरुषं पूर्णषड्गुणं शाश्वतं निर्विकारं दिव्यं लोकविलक्षणमादिदेवमजं जन्महीनं विभुं विशिष्टतया विविधतया च भवनहेतुना विभुशब्दवाच्यमाहुः ॥ १२ ॥ अहं सर्वस्येत्यादिना स्वयं च मे मह्यं ब्रवीषि वदसि ॥ १३ ॥

**सर्वमेतदृतं मन्ये यन्मां वदसि केशव ।**
**नहि ते भगवन् व्यक्तिं विदुर्देवा न दानवाः ॥ १४ ॥**

त० टी०–एतत्तथ्यमेवेत्याह–**सर्वमिति** । ऋषिभिर्यदुक्तं हे केशव त्वं च यन्मां प्रवदसि, एतत्सर्वमृतं सत्यमेवाहं मन्ये, न मे त्वदैश्वर्यादौ काऽप्यसंभावनेत्यर्थः । अतो यदुक्तम् ‘न मे विदुः सुरगणाः प्रभवं न महर्षयः’ इत्यादि तत्तथैव । हे भगवन् समग्रज्ञानशक्तिबलैश्वर्यवीर्यतेजसां निधे ते तव व्यक्तिं प्रकटनप्रकारं परिमितज्ञाना देवा न विदुः दानवाश्च न विदुः ॥ १४ ॥

म० टी०–**सर्वमिति** । सर्वमेतदुक्तमृषिभिश्च त्वया च तदृतं सत्यमेवाहं मन्ये यन्मां प्रति वदसि केशव नहि त्वद्वचसि मम कुत्राप्यप्रामाण्यशङ्का तच्च सर्वज्ञत्वात्त्वं जानासीति केशौ ब्रह्मरुद्रौ सर्वेशावप्यनुकम्प्यतया वात्यवगच्छतीति व्युत्पत्तिमाश्रित्य निरतिशयैश्वर्यप्रतिपादकेन केशवपदेन सूचितम् । अतो यदुक्तं न मे विदुः सुरगणाः प्रभवं न महर्षय इत्यादि तत्तथैव हि यस्मात् हे भगवन् समग्रैश्वर्यादिसंपन्न ते तव व्यक्तिं प्रभावं ज्ञानातिशयशालिनोऽपि देवा न विदुर्नापि दानवाः न महर्षय इत्यपि द्रष्टव्यम् ॥ १४ ॥

शं० टी०–ननु मयापि शतधाप्युक्तमृषिभिरपि सहस्रधा कथितं तदस्तु तव निश्चयः कथमित्यत आह–**सर्वमिति** । हे केशव बहूनि मे व्यतीतानीति, मत्तः परतरं नान्यदिति, न मे विदुः सुरगणा इति महर्षयः सप्त पूर्वे इति च मां प्रति यद्वदसि तदेतत्सर्वमहमृतं सत्यमेव मन्ये परमाप्तत्वात्परेश्वरत्वाद्वेदनकारणत्वाच्च तव वचनं यथार्थमित्येवावधारय इत्यर्थः । हि यस्मात्कारणाद्देवा दानवाश्चार्वाचीनास्तस्मात्ते व्यक्तिं व्यज्यते सर्वमस्या इति व्यञ्जयतीति वा व्यक्तिस्तां तव स्वरूपमैश्वरमचिन्त्यमनन्तवैभवमप्रमेयप्रभावमनाद्यन्तं देवाः सर्वज्ञा अपीन्द्रादयो न विदुः दानवा मध्वादयोऽपि न विदुस्ततोऽर्वाचीनाः किंचिज्ज्ञा मनुष्या न विदुरिति किमु वक्तव्यमित्यर्थः ॥ १४ ॥

श्री० टी०–अतो ममेदानीं त्वदैश्वर्ये असंभावना निवृत्तेत्याह–**सर्वमिति** । एतद्भवानेव परं ब्रह्मेत्यादि सर्वमपि ऋतं सत्यं मन्ये । यन्मां प्रति त्वं कथयसि न मे विदुः सुरगणा इत्यादि तदपि सत्यमेव मन्य इत्याह–**नहीति** । हे भगवंस्ते तव व्यक्तिं देवा न विदुः अस्मदनुग्रहार्थमियमभिव्यक्तिरिति न जानन्ति दानवाश्चास्मन्निग्रहार्थमिति न विदुरेवेति ॥ १४ ॥

सं० टी०– सर्वमेतत्त्वयोक्तं यदृषिभिश्च यदीरितम् ॥ सत्यमेव ह्यहं मन्ये यन्मां प्रति वदस्यज ॥ १ ॥ न मे प्रामाण्यशङ्कास्ति कुत्रापि त्वदुदीरिते ॥ विधीशावप्यनुग्राह्यौ किमज्ञातं तव प्रभो ॥ २ ॥ सर्वैश्वर्यादिसंपन्नं प्रभावं ते सुरा अपि ॥ ज्ञानातिशयसंपन्ना न विदुर्नापि दानवाः ॥ ३ ॥ न वा महर्षयश्चैव तत्सर्वं तत्तथैव हि ॥ ४ ॥ १४ ॥

भा० टी०–**सर्वमिति** । एतत्सर्वं सत्यं मन्ये यन्मां वदसि केशव ब्रह्मादीन्प्रत्यन्तर्यामितया गच्छतीति सः तस्य संबोधनं हे केशवेति ब्रह्मादिमुखेनापि त्वमेव वदसीति भावः । हि यस्मात्ते तव व्यक्तिं प्रभावं देवा न विदुः ‘ ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । वैराग्यस्य च ज्ञानस्य षण्णां भग इतीङ्गना ’ इत्युक्तो भगवांस्त्वमेव स्वप्रभावं कथयितुं समर्थोऽसि न त्वन्यः स्वसामर्थ्येनेति सूचयन्नाह–हे भगवन्निति ॥ १४ ॥

**प० टी०—सर्वमिति।** एवं यद्वदसि तत्सर्वमृतं सत्यं मन्ये। तत्किम्, भो भगवंस्ते व्यक्तिं स्वरूपं देवा दानवाश्च हीति निश्चयबुद्ध्या न विदुरिति॥ १४॥

**रा० टी०—सर्वमिति।** हे केशव यन्मां प्रति वदसि सर्वमेतन्माहात्म्यमृतं सत्यमेव मन्ये। केशवशब्दार्थ उक्तः प्रथमाध्याये। हे भगवन् षड्गुणयुक्त ते व्यक्तिं सामर्थ्यातिशयं देवा दानवाश्च न विदुः। हीति 'न यस्येन्द्रो वरुणो न मित्रः' इत्यादौ प्रसिद्धमित्यर्थः॥ १४॥

**स्वयमेवाऽऽत्मनाऽऽत्मानं वेत्थ त्वं पुरुषोत्तम॥**
**भूतभावन भूतेश देवदेव जगत्पते॥ १५॥**

**त० टी०—कस्तर्हि वेदेत्यपेक्षायामाह—स्वयमेवेति। हे पुरुषोत्तम स्वयमेव त्वमात्मानमात्मनाऽऽत्मा साधारणेन ज्ञानेन वेत्थ। पुरुषोत्तमत्वं विवृणोति—चतुर्भिर्विशेषणैः। हे भूतभावन भूतानि सर्वाणि भावयत्युत्पादयतीति, तथा हे भूतेश सर्वेषां भूतानां नियन्तः, हे देवदेव देवानामादित्यादीनामपि प्रकाशक, हे जगत्पते सर्वस्य जगतः पालक। एवंभूतं त्वां प्रार्थयामीत्यभिप्रायः॥ १५॥**

**म० टी०—**यतस्त्वं तेषां सर्वेषामादिरशक्यज्ञानश्चातः स्वयमेव अन्योपदेशादिकमन्तरेणैव त्वमेवात्मना स्वरूपेणात्मानं निरुपाधिकं सोपाधिकं च निरुपाधिकं प्रत्यक्त्वेनाविषयतया सोपाधिकं च निरतिशयज्ञानैश्वर्यादिशक्तिमत्त्वेन वेत्थ जानासि नान्यः कश्चित्। अन्यैर्ज्ञातुमशक्यमहं कथं जानीयामित्याशङ्कामपनुदन् प्रेमौत्कण्ठ्येन बहुधा संबोधयति—**स्वयमिति।** हे पुरुषोत्तम त्वदपेक्षया सर्वेऽपि पुरुषा अपकृष्टा एव अतस्तेषामशक्यं सर्वोत्तमस्य तव शक्यमेवेत्यभिप्रायः। पुरुषोत्तमत्वमेव विवृणोति पुनश्चतुर्भिः संबोधनैः—भूतानि सर्वाणि भावयत्युत्पादयतीति हे भूतभावन सर्वभूतपितः, पितापि कश्चिन्नेष्ट(?)स्तत्राह—हे भूतेश सर्वभूतनियन्तः, नियन्तापि कश्चिन्नाराध्यस्तत्राह—हे देवदेव देवानां सर्वाराध्यानामप्याराध्य आराध्योऽपि कश्चिन्न पालयितृत्वेन पतिस्तत्राह—हे जगत्पते हिताहितोपदेशक वेदप्रणेतृत्वेन सर्वस्य जगतः पालयितः। एतादृशसर्वविशेषणविशिष्टस्त्वं सर्वेषां पिता सर्वेषां गुरुः सर्वेषां राजाऽतः सर्वैः प्रकारैः सर्वेषामाराध्य इति किं वाच्यं पुरुषोत्तमत्वं तवेति भावः॥ १५॥

**शं० टी०—**यस्मात्त्वं देवऋष्यादीनामादिस्तस्मात् स्वयमेवात्मानं जानासीत्याह—**स्वयमिति।** भूतान्याकाशादीनि स्तम्बान्तानि भावयति स्वस्मादेव संभावयतीति भूतभावन भूतेश तान्येव भूतानीष्टे स्वयमन्तर्यामिरूपेण प्रवर्तयतीति भूतेश अग्न्यादयः खलु वागादीन्यधिष्ठाय जगत्प्रवर्तयन्तीत्यत आह—देवदेवेति। देवानपि वह्न्यादीन्देवयति चेष्टयतीति देवदेव "य आदित्ये तिष्ठन्" इत्यादिश्रुतेः, देवानामपि देव पूज्येति वा, देवदेव स्वेन सृष्टं जगत्सर्वमन्नोदकादिरूपेण नियन्तृत्वरूपेण च पातीति जगत्पते, पूर्णत्वात्पुरुषः सर्वमहत्त्वादुत्तमः पुरुषश्चासावुत्तमश्च हे पुरुषोत्तम, स्वयमेव त्वमात्मना स्वेनैव स्वमात्मानं वेत्थ पुरुषः स्वाङ्गसंपत्तिं बलपुष्टिजवारोग्यानारोग्याङ्गगुणवैकल्यावैकल्यधैर्यादिलक्षणां यथा तथात्मीयवैभवं मायायोगविशेषविशेषितं त्वमेव जानासि न त्वन्यः परिच्छिन्नः किंचिज्ज्ञ इति भावः॥ १५॥

**श्री० टी०—**किं तर्हि—**स्वयमिति।** स्वयमेव त्वमेवात्मानं वेत्थ जानासि नान्यः तदप्यात्मना स्वेनैव वेत्थ न साधनान्तरेण। अत्यादरेण बहुधा संबोधयति हे पुरुषोत्तम पुरुषेषूत्तम पुरुषोत्तम। पुरुषोत्तमत्वे हेतुगर्भाणि विशेषणानि संबोधनानि हे भूतभावन भूतोत्पादक, भूतानामीश नियन्तः, देवानामादित्यादीनां देव प्रकाशक, जगत्पते विश्वपालक॥ १५॥

**स० टी०—**यतस्त्वमेषां सर्वेषां पिताऽचिन्त्यगतिः प्रभुः॥ स्वयमेवोपदेशादिमन्तरेण त्वमेव च॥ १॥ प्रत्यक्त्वेन स्वरूपेण स्वात्मानं निरुपाधिकम्॥ जानास्यविषयत्वेन तथा सोपाधिकं स्वयम्॥ २॥ त्वं

सर्वातिशयज्ञानैश्वर्यादिशक्तिमत्तया ॥ जानासि नापरः कश्चित्त्वां ज्ञातुं पुरुषोत्तमम् ॥ ३ ॥ समर्थोऽसि यतः सर्वे पुरुषास्त्वदपेक्षया ॥ अपकृष्टा अतस्तेषामशक्यं ज्ञानमस्ति ते ॥ ४ ॥ सर्वभूतपिता सर्वोत्पादकत्वेन संमतः ॥ पितापि कश्चिन्नैवेष्टे त्वं तु सर्वनियामकः ॥ ५ ॥ नियन्ता कश्चिन्नाराध्यस्त्वं त्वाराध्यो दिवौकसाम् ॥ आराध्योऽपि न कश्चित्स्यात्पालयितृतया पतिः ॥ ६ ॥ त्वं तु वेदप्रणेतृत्वाद्धितादेरुपदेशतः॥ पतिः सर्वस्य जगतो रक्षकत्वेन संमतः॥ ७ ॥ सर्वैरेतादृशैरेव विशिष्टस्त्वं विशेषणैः ॥ सर्वेषां जनकः स्वामी गुरू राजा महेश्वरः ॥ ८ ॥ अतः सर्वैः प्रकारैस्त्वमाराध्यः सर्वदेहिनाम् ॥ किं वाच्यं ते जगत्स्वामिन्पुरुषौत्कृष्ट्यमद्भुतम् ॥ ९ ॥ १५ ॥

**भा० टी०**–अतः **–स्वयमिति**। सर्वेषामादिस्त्वं स्वयमेवान्योपदेशमन्तरेणात्मना नत्वन्तःकरणादिकरणेनात्मानं निरुपाधिकं सोपाधिकं च निरतिशयज्ञानैश्वर्यबलादिशक्तिमन्तं जानासि नत्वन्यस्त्वदननुगृहीतः। भगवतः निरुपाधिकात्मज्ञानसामर्थ्यं संबोधनेनाप्याह–हे पुरुषोत्तमेति । निरुपाधिकः परमात्मा त्वं निरुपाधिकं स्वस्वरूपं वेत्थेति भावः। सोपाधिकोऽपि जगत्कर्तृत्वादिमांस्त्वमेवातस्तमपि त्वमेव जानासीति ध्वनयन् चतुर्धा संबोधयति–भूतभावनेत्यादिना । भूतोत्पादक भूतेश भूतनियन्तर्देवदेव देवानां सूर्यादीनामपि द्योतक जगत्पते जगत्पालक तथा च जगत उत्पत्तिस्थितिनियमनकर्ता त्वमेव । ननु ब्रह्मादयः सूर्यादयो रुद्रादय एतत्कर्तारो दृश्यन्ते इत्याशङ्क्य देवानां ब्रह्मादीनामपि देव त्वदधिष्ठिता एव ते उत्पत्त्यादिकर्तारो न स्वतन्त्रा इति भावः ॥ १५ ॥

**प० टी०**–किंतु–**स्वयमिति** । स्वयमेवात्मना स्वरूपेण प्रमाणान्तरागोचरमात्मानं वेत्थ जानासि। अत एव पुरुषोत्तमेति संबुद्धिः । श्रुतिरपि–" एतावानस्य महिमातो ज्यायांश्च पूरुषः " इति । भूतानि भाव्यन्ते कल्प्यन्ते यस्मिन्निति भूतभावन भूतेश पृथिव्यादिमहाभूतस्वामिन् ॥ १५ ॥

**रा० टी०**–तर्हि को जानातीत्यत आह–**स्वयमेवेति** । हे पुरुषोत्तम त्वं स्वयमेवान्यदनपेक्ष्यात्मना स्वसामर्थ्येनात्मानं वेत्थ जानासि । भूतभावन भूतानामुत्पादक भूतेश भूतनियामक ॥ १५ ॥

**वक्तुमर्हस्यशेषेण दिव्या ह्यात्मविभूतयः ॥**
**याभिर्विभूतिभिर्लोकानिमांस्त्वं व्याप्य तिष्ठसि ॥ १६ ॥**

**त० टी०**–प्रार्थनां व्यनक्ति–**वक्तुमिति** । दिव्याः सर्वोत्कृष्टा आत्मनस्तवासाधारणा या विभूतयस्तास्त्वमेवाशेषेण वक्तुमर्हसि । ताः काः याभिर्विभूतिभिर्युक्तस्त्वमिमाँल्लोकान्व्याप्य तिष्ठसि ॥ १६ ॥

**म० टी०**–यस्मादन्येषां सर्वेषां ज्ञातुमशक्या अवश्यं ज्ञातव्याश्च तव विभूतयः तस्मात्–**वक्तुमिति** । याभिर्विभूतिभिरिमान्सर्वाँल्लोकान् व्याप्य त्वं तिष्ठसि तास्तवाऽसाधारणा विभूतयो दिव्या असर्वज्ञैर्ज्ञातुमशक्या हि यस्मात्तस्मात्सर्वज्ञस्त्वमेव ताः अशेषेण वक्तुमर्हसि ॥ १६ ॥

**शं० टी०**–यतः स्वेनैकेन वेद्यमहिमा त्वमतः स्वतस्त्वमेवेदं मह्यमुपदिशेत्याह–**वक्तुमिति** । दिव्यास्तेजोबलपौरुषशक्तिप्रकाशादिगुणैरप्राकृता आत्मनस्ते परमेश्वरस्य या विभूतयो महत्त्वविस्तारास्ता अशेषेण साकल्येन स्वीयमहत्त्वपारज्ञस्त्वमेव मे मह्यं वक्तुमर्हसि, याभिर्विभूतिभिरात्मनो विविधैर्भावैरिमान्परिदृश्यमानाँल्लोकान् स्वर्गमर्त्यादीन्व्याप्याऽऽपूर्य तिष्ठसि ॥ १६ ॥

**श्री० टी०**–यस्मात्तवाभिव्यक्तिं त्वमेव वेत्सि न देवादयस्तस्मात्–**वक्तुमर्हसीति** । या आत्मनस्तव दिव्या अत्यद्भुता विभूयस्ताः सर्वा वक्तुं त्वमेवार्हसि योग्यो भवसि। याभिरिति विभूतीनां विशेषणं स्पष्टार्थम् ॥१६॥

**स० टी०**–यस्माज्ज्ञातुं हि सर्वेषामशक्यास्ते विभूतयः ॥ ज्ञातव्याश्चाप्यवश्यं मे तस्माद्याभिर्विभूतिभिः

॥ १ ॥ सर्वांल्लोकानिमान्व्याप्य तिष्ठसि त्वं तवैव ताः ॥ दिव्या ज्ञातुमशक्या हि यस्मात्तस्मात्त्वमेव च ॥ २ ॥ सर्वज्ञः सर्वशक्तिश्च वक्तुमर्हस्यशेषतः ॥ ३ ॥ १६ ॥

**भा० टी०**–अतो **वक्तुमिति** । प्राकृता हि आत्मनो विभूतयः माहात्म्यविस्तारा: यास्ता वक्तुमर्हसि याभिर्विभूतिभिस्त्वमिमान् लोकान्व्याप्य तिष्ठसि ॥ १६ ॥

**प० टी०**–**वक्तुमिति** । दिव्या देवरूपिण्य आत्मविभूतयोऽशेषेण विस्तरेण वक्तुमर्हसि । याभिर्विभूतिभिरिमाँल्लोकान् भूर्भुवःस्वरादीन् व्याप्य तिष्ठसि ॥ १६ ॥

**रा० टी०**–एवं स्तुत्वा प्रार्थयते–**वक्तुमिति** । दिव्याः या विभूतयः, याभिर्विभूतिभिस्त्वमिमाँल्लोकान्व्याप्य तिष्ठसि ता विभूतीरशेषेण वक्तुमर्हसीत्यर्थः । विभूतयो नाम विविधतया नानारूपतया रामकृष्णादितया भूतानि रूपाणि, यद्वा 'येषां विष्णुस्वरूपाणां सन्निधेरन्यवस्तुषु । विशिष्टत्वं स्वजातेः स्याद्विभूत्याख्यानि तानि तु' इत्युक्तदिशा स्वसंनिधिनिमित्तेन वस्तुषु स्वजात्युत्तमतापादकरूपाणि ॥ १६ ॥

**कथं विद्यामहं योगिंस्त्वां सदा परिचिन्तयन् ॥**
**केषु केषु च भावेषु चिन्त्योऽसि भगवन्मया ॥ १७ ॥**

**त० टी०**–किमिह प्रयोजनं विभूतिकथनस्येत्यपेक्षायामाह–**कथमिति** । योगोऽचिन्त्यगुणशक्त्यैश्वर्यं तदस्यास्तीति योगी तत्संबुद्धौ हे योगिन् निरतिशयैश्वर्यगुणशालिन् अहमत्यल्पज्ञानशक्तिः भक्त्या त्वां सदा परिचिन्तयन् चिन्तयितुं प्रवृत्तः चिन्तनीयं त्वामाचिन्त्यैश्वर्यज्ञानशक्तिकं कथं विद्याम्, साकल्येन त्वां कोऽपि चिन्तयितुं न शक्नोति अतः केषु केषु च भावेषु च पदार्थेषु मया चिन्त्योऽसि हे भगवन् ॥ १७ ॥

**म० टी०**–किं प्रयोजनं तत्कथनस्य तदाह द्वाभ्याम्–**कथमिति** । योगो निरतिशयैश्वर्यादिशक्तिः सोऽस्यास्तीति हे योगिन् निरतिशयैश्वर्यादिशक्तिशालिन् अहमतिस्थूलमतिस्त्वां देवादिभिरपि ज्ञातुमशक्यं कथं विद्यां जानीयां सदा परिचिन्तयन् सर्वदा ध्यायन् । ननु मद्विभूतिषु मां ध्यायन् ज्ञास्यसि तत्राह–केषु केषु च भावेषु चेतनाचेतनात्मकेषु वस्तुषु त्वद्विभूतिभूतेषु मया चिन्त्योऽसि हे भगवन् ॥ १७ ॥

**शं० टी०**–किंच–**कथमिति** । योगिन्मायायोगजमैश्वर्यं योग इत्युच्यते सोऽस्यास्तीति योगी हे योगिंस्त्वां सविशेषं परिचिन्तयन् सदा सर्वत्र ध्यायंस्तुवन्नमस्कुर्वन्नहं शुद्धात्मा सन् त्वामवाङ्मनसगोचरं निर्विशेषं परं ब्रह्म कथं विद्यां केन प्रकारेण जानीयां, तादृशमहत्त्वविशिष्टं तव विभूतिविशेषं मे वक्तुमर्हसीति पूर्वेणान्वयः । त्वां कथं विद्यामिति प्रश्नो वा । हे भगवन् जडाजडभेदेन देवदानवमर्त्यादिभेदेन वा बहुविधेषु भावेषु पदार्थेषु केषु केषु त्वं मया मुमुक्षुणा चिन्त्योऽसि ध्यातव्योऽसि 'सर्वं विष्णुमयं जगत्' इतिन्यायेन त्वदात्मके जगति कुत्र कुत्र तव विशेषस्फूर्तिः कुत्र कुत्र तव ध्यानं विशिष्य मया कर्तव्यमित्यर्थः ॥ १७ ॥

**श्री० टी०**–कथनप्रयोजनं दर्शयन् प्रार्थयते–**कथमिति** द्वाभ्याम् । हे योगिन् कथं कैर्विभूतिभेदैः सदा परिचिन्तयन्नहं त्वां विद्यां जानीयाम् । विभूतिभेदेन चिन्त्योऽपि त्वं केषु केषु पदार्थेषु मया चिन्तनीयोऽसि ॥ १७ ॥

**स० टी०**–हे निरतिशयैश्वर्यशक्तिशालिन् जगद्गुरो ॥ अतिस्थूलमतिस्त्वाहं देवाद्यैरपि सर्वथा ॥ १ ॥ अशक्यं संपरिज्ञातुं जानीयां कथमीदृशम् ॥ सदा ध्यायंस्तथा केषु केषु चिज्जडवस्तुषु ॥ २ ॥ त्वद्विभूतिस्वरूपेषु चिन्त्योऽसि भगवन्मया ॥ ३ ॥ १७ ॥

**भा० टी०–कथमिति।** हे योगिन् अहं स्थूलबुद्धिस्त्वां केन प्रकारेण परिसमन्ताच्चिन्तयन् सूक्ष्मबुद्धिर्भूत्वा जानीयाम् अघटितघटनं योगस्तद्वान् त्वं मामपि त्वां ज्ञातुमयोग्यं योग्यं कर्तुमर्हसीति संबोधनाशयः। केषु केषु च भावेषु पदार्थेषु मया ध्येयोऽसि तत्तत्पदार्थेषु स्वैश्वर्यादिमत्पदार्थं वदेति द्योतयन्नाह–हे भगवन्निति ॥१७॥

**प० टी०–कथमिति।** भो योगिन्नचिन्त्यैश्वर्य त्वां व्यष्टिरूपेण स्थितमहं केन कथं प्रकारेण विद्यां विजानीयां, केषु केषु भावेषु स्वकीयावासस्थलेषु मया चिन्त्योऽसि, तत्तद्भावदर्शनेन तव स्मरणं भविष्यतीत्यर्थः ॥ १७ ॥

**रा० टी०–**नित्यं मच्चिन्तनया विभूतिरूपाणि जानीहि किं मद्वचनप्रार्थनयेत्यत आह–**कथमिति।** त्वां परिचिन्तयन्नप्यहं त्वद्वचनाभावे हे योगिन्ननन्तशक्ते विभूतीः कथं विद्यां जानीयामतो हे भगवन्मया केषु केषु भावेषु पदार्थेषु तेषां स्वजात्युत्तमतापादकतया स्थितः सन् चिन्त्योऽसि ॥ १७ ॥

**विस्तरेणात्मनो योगं विभूतिं च जनार्दन ॥**
**भूयः कथय तृप्तिर्हि शृण्वतो नास्ति मेऽमृतम् ॥ १८ ॥**

**त० टी०–**अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते, रसोऽहमप्सु कौन्तेयेत्यादिना सप्तमे, मया ततमिदं सर्वं, मन्त्रोऽहमहमेवाज्यमित्यादिना नवमे च मयाऽऽत्मयोगो विभूतिश्चोक्ता एव, किं पुनः पृच्छसीत्यत आह–**विस्तरेणेति।** यद्यपि पूर्वं त्वयोक्तं तथाऽपि संक्षेपेणैव, इदानीमात्मनो योगं विभूतिं च विस्तरेण भूयः पुनः कथय। सर्वैः स्वं स्वं श्रेयस्त्वमर्द्यसे याच्यसे हे जनार्दन हि यस्मान्माहात्म्यवाचकं त्वद्वचनामृतं शृण्वतो मे तृप्तिरमृतं पिबत इवालंबुद्धिर्नास्ति ॥ १८ ॥

**म० टी०–अतः–विस्तरेणेति।** आत्मनस्तव योगं सर्वशक्तित्वादिलक्षणमैश्वर्यातिशयं विभूतिं च ध्यानालम्बनं विस्तरेण संक्षेपेण सप्तमे नवमे चोक्तमपि भूयः पुनः कथय। सर्वैर्जनैरभ्युदयनिःश्रेयसप्रयोजनं याच्यस इति हे जनार्दन अतो ममापि याच्ञा त्वय्युचितैव। उक्तस्य पुनः कथनं कुतो याचसे तत्राह–तृप्तिरलंप्रत्ययेनेच्छाविच्छित्तिर्नास्ति हि यस्माच्छृण्वतः श्रवणेन पिबतस्त्वद्वाक्यममृतममृतवत्पदे पदे स्वादु स्वादु। अत्र तद्वाक्यमित्यनुक्तेरपह्नुत्यातिशयोक्तिरूपकसंकरोऽयं माधुर्यातिशयानुभवेनोत्कण्ठातिशयं व्यनक्ति ॥ १८ ॥

**शं० टी०–**प्रकृतं प्रश्नमुपसंहरति–**विस्तरेणेति।** जायत इति जनो दृश्यवर्गस्तमन्तर्बहिश्च सर्वतोऽर्दति व्याप्नोतीति जनार्दनस्तस्य संबुद्धिर्हे जनार्दन सर्वव्यापिन् आत्मनः परमात्मनस्तवेश्वरस्य योगं मायाकृतमैश्वर्यविशेषं विभूतिं च भूयः पुनरपि विस्तरेण नामरूपादिभेदैर्विशेषेण कथय। ननु अक्षरं ब्रह्म परममिति अहं क्रतुरहं यज्ञ इति, महर्षयः सप्त पूर्वे इत्यष्टमे नवमे दशमे च समासव्यासाभ्यां विभूतिरुक्ता पिष्टपेषणन्यायेन पुनरुक्त्या किं साध्यमित्यत आह–तृप्तिरिति। हि यस्मात्कारणात्तव परमेश्वरस्य वागमृतं शृण्वतः श्रोत्राभ्यां पिबतो मे तृप्तिर्नास्ति तस्मात्पुनः कथय। अत्रायमभिप्रायः अष्टमे अध्यात्मादिभेदभिन्नं सर्वं ब्रह्मेत्युपास्स्वेत्युक्तं, तत्र सर्वात्मनि नामरूपजात्यादिभेदवासनादोषदूषितान्तःकरणस्य मूढबुद्धेर्भेदबुद्धिं विना अभेदबुद्ध्यनुदयादुपास्तिर्न संभवति, नवमेऽप्यहंक्रतुरिति सार्वात्म्यमेव प्रतिपादितं तत्रापि च मनो विशेषालम्बनाभावान्न प्रविशति, दशमेऽपि सामान्येनैवोक्तं न तत्रापि मनसो विशेषालम्बनं दृश्यते ततो मूढबुद्धेस्तदुपास्तौ बुद्धिस्थैर्याय विभूतिविशेषो विस्तरेण वक्तव्य इति ॥ १८ ॥

**श्री० टी०–**तदेवं बहिर्मुखेऽपि चित्ते तत्र तत्र विभूतिभेदेन त्वच्चिन्तैव यथा भवेत्तथा विस्तरेण कथ-

त्याह–**विस्तरेणेति** । आत्मनस्तव योगं सर्वज्ञत्वसर्वशक्तित्वादिलक्षणं योगैश्वर्यं विभूतिं च विस्तरेण पुनः कथय हि यस्मात्त्वद्वाक्यममृतरूपं शृण्वतो मम तृप्तिरलंबुद्धिर्नास्ति ॥ १८ ॥

**स० टी०**–आत्मनस्तव योगं त्वं सार्वज्ञ्यादिनिरङ्कुशम् ॥ ऐश्वर्यातिशयं तद्वद्विभूतिं ध्यानगोचराम् ॥१॥ संक्षेपेण पुरा प्रोक्तां सप्तमे नवमे त्वया ॥ पुनर्देवेश कथय विस्तरेणाधुना स्फुटम् ॥ २ ॥ याच्यसे त्वं जनैः सर्वैर्भोगमोक्षप्रयोजनम् ॥ अतो ममापि याच्ञेयं सर्वथैवोचिता त्वयि ॥ ३ ॥ कथनं पुनरुक्तस्य किमर्थं याचसे शृणु ॥ त्वद्वाक्यममृतं यस्माच्छ्रोत्रेण पिबतो मम ॥ ४ ॥ नास्त्यलंप्रत्ययेनेच्छाविच्छित्तिः स्वादुवत्परम् ॥ माधुर्यातिशयादेव त्वद्वाक्यमिति नेरितम् ॥ ५ ॥ उत्कण्ठातिशयेनोक्तममृतं चेति केवलम् ॥ ६ ॥ १८ ॥

**भा० टी०**–ननु सप्तमे नवमे च विभूतिरैश्वर्यं च दर्शितं तत्किमिति पुनः पृच्छसि तत्राह–**विस्तरेणेति** । स्वस्य योगैश्वर्यशक्तिविशेषं विभूतिं च पूर्वोक्तमपि योगादि भूयो विस्तरेण कथय हे जनार्दन देव शत्रुजनानामसुराणां प्राणवियोगनरकादिगमयितृत्वात्, तथाचास्मच्छत्रुजनानां रागद्वेषादीनां नाशनाय ध्येययोगविभूतिकथनं तव नामानुरूपत्वाद्योग्यमित्याशयः। यद्वाऽभ्युदयनिःश्रेयसपुरुषार्थप्रयोजनं सर्वैर्जनैर्याच्यते इति तथा संबोधयन् ममापि याच्ञा त्वयि युक्तैवेति सूचयति । हि यस्मात्तव वाक्यामृतं शृण्वतो मम तृप्तिर्नास्ति । नीरसत्वप्रयुक्ततृप्तिव्यावृत्तयेऽमृतमित्युक्तं, रसाज्ञानप्रयुक्ततृप्तिव्यावर्तनाय मे रसज्ञस्येत्युक्तं, उदरे पूर्णेऽमृतेऽप्यलंबुद्धिर्भवतीति तद्व्यवच्छेदाय शृण्वत इत्युक्तम्, आकाशात्मकस्य श्रोत्रस्य शब्देन गुणेन पूर्णताया असंभवात् तृप्तिर्नास्तीति ॥ १८ ॥

**प० टी०**–**विस्तरेणेति** । पूर्वं सप्तमादिषु सामान्यतः कथिता एव परं तु भूयो विस्तरेण कथयतस्ते वचनामृतं शृण्वतो मे तृप्तिर्नास्ति ॥ १८ ॥

**रा० टी०**–**विस्तरेणेति** । तामात्मनो विभूतिं वस्तूनां विशिष्टताप्रदमात्मनो रूपं विविधतया नानाविधतया भूतं रूपं च, एकवचनं समुदायाशयं, योगं सामर्थ्यं च विस्तरेण भूयः पुनः पुनः कथय ते वचोमृतं शृण्वतो मे तृप्तिर्नास्ति । जनार्दनशब्दार्थ उक्तस्तृतीयाध्याये ॥ १८ ॥

## श्रीभगवानुवाच–हन्त ते कथयिष्यामि दिव्या ह्यात्मविभूतयः ॥
## प्राधान्यतः कुरुश्रेष्ठ नास्त्यन्तो विस्तरस्य मे ॥ १९ ॥

**त० टी०**–एवं प्रार्थितः श्रीभगवानुवाच–**हन्तेति** । संबोधनेनानुकम्पां द्योतयति । हे कुरुश्रेष्ठ दिव्याः सर्वोत्कृष्टा या आत्मनो मम विभूतयस्ताः प्राधान्यतः ते तुभ्यं कथयिष्यामि हि यतो मम विभूतीनां विस्तरस्यान्तो नास्ति ॥ १९ ॥

**म० टी०**–अत्रोत्तरम्–**हन्तेति** । हन्तेत्यनुमतौ । यत्त्वया प्रार्थितं तत्करिष्यामि मा व्याकुलोऽभूरित्यर्जुनं समाश्वास्य तदेव कर्तुमारभते–कथयिष्यामि प्राधान्यतस्ता विभूतीर्या दिव्या हि प्रसिद्धा आत्मनो ममासाधारणा विभूतयः । हे कुरुश्रेष्ठ विस्तरेण तु कथनमशक्यं यतो नास्त्यन्तो विस्तरस्य मे विभूतीनामतः प्रधानभूताः काश्चिदेव विभूतीर्वक्ष्यामीत्यर्थः ॥ १९ ॥

**शं० टी०**–स्वयं सर्वज्ञोऽप्यर्जुनप्रश्नवाक्येन मूढबुद्धेः प्रज्ञामान्द्यमुद्दिश्य परितप्यन्निव दयया मन्दप्रज्ञाननुग्रहीतुमिदं श्रीभगवानुवाच–**हन्त ते इति** । हन्त बतैवं वा मूढबुद्धेः प्रज्ञा हे कुरुश्रेष्ठ तद्बुद्ध्यनुरूपा मम या दिव्या अप्राकृता विभूतयः स्वरूपविशेषास्तास्ते तुभ्यं कथयिष्यामि प्राधान्यतः प्राधान्येन, येषु येषु मम विभूतिभेदेषु तेजःशक्तिबलपौरुषविद्यामहत्त्वगुणविशेषैर्या या विभूतिः प्रधाना श्रेष्ठा भवति तां

तां विभूतिं मूढानां प्रीत्युत्साहश्रद्धाभक्तिजनयित्रीं कथयामीत्यर्थः । ननु विशिष्टा अविशिष्टाश्च सर्वा विभूतयः कथ्यन्तामित्यत आह—नास्तीति । मे विभूतीनां मायाऽपरिमितशक्तिविजृम्भितानां विस्तरस्य बहुलस्यान्तो नास्ति गङ्गावालुकानां समुद्रजलकणानां नक्षत्राणां च संख्यापरिसमाप्तिरस्ति न तु मम विभूतिविस्तरस्येत्यर्थः ॥ १९ ॥

श्री० टी०—एवं प्रार्थितः सन् श्रीभगवानुवाच—हन्तेति । हन्तेत्यनुकम्पासंबोधने । दिव्या या मम विभूतयस्ताः प्राधान्येन तुभ्यं कथयिष्यामि यतोऽवान्तरविभूतिविस्तरस्य मदीयस्यान्तो नास्ति अतः प्रधानभूताः कतिचिद्वर्णयिष्यामि ॥ १९ ॥

स० टी०—परमोत्कण्ठितं पार्थं विश्रम्भयितुमीश्वरः ॥ प्रोक्तवानुत्तरं सम्यक्करुणानिधिरादरात् ॥ १ ॥ हन्तेत्यनुमतौ ज्ञेयं यत्त्वया प्रार्थितं किल ॥ तत्करिष्यामि माभूस्त्वं व्याकुलोऽनुमतिस्त्वियम् ॥ २ ॥ इत्यर्जुनं समाश्वास्य कर्तुमारभते हि तत् ॥ ममासाधारणा दिव्याः प्रसिद्धा या विभूतयः ॥ ३ ॥ अशक्या विस्तराद्वक्तुं नास्त्यन्तो विस्तरस्य मे ॥ अतः प्रधानभूतास्ता विभूतीः काश्चिदेव हि ॥ ४ ॥ तुभ्यं संकथयिष्यामि कुरुश्रेष्ठो यतो भवान् ॥ ५ ॥ १९ ॥

भा० टी०—एवं पृष्टो भगवानुवाच—हन्तेति । हन्तेदानीं या आत्मनो विभूतयस्ताः कथयिष्यामि प्राधान्यतः प्रधानां तां तां विभूतिमित्यर्थः । कुरुश्रेष्ठेति संबोधयन् त्वमधिकारीति सूचयति । विस्तरेण कथयेत्युक्तं तत्राह—मे विभूतीनां विस्तरस्यान्तो नास्ति ॥ १९ ॥

प० टी०—ततः श्रीभगवान् वक्तुमुपक्रमते—हन्तेति । हन्तेत्यादरेण ते तुभ्यं दिव्या आत्मविभूतयः प्राधान्यतो मुख्यत्वेन कथयिष्यामि हि यस्मात् कारणाद्धे कुरुश्रेष्ठ मे विस्तरस्यान्तो नास्ति ॥ १९ ॥

रा० टी०—वक्तुमर्हस्यशेषेणेत्यस्योत्तरं वदन्प्रतिज्ञां तावत्करोति—हन्तेति । हन्त हर्षे । या दिव्याः आत्मविभूतयः वस्तूनां विशिष्टताप्रदरूपाणि विविधस्वरूपाणि च तानि रूपाणि प्राधान्यतः प्रधानतया स्थितानि ते तुभ्यं कथयिष्यामि । मे विस्तरस्य विभूतिराशेरन्तः समाप्तिर्नास्ति अतो नाशेषेण वचनं युक्तमिति भावः ॥ १९ ॥

**अहमात्मा गुडाकेश सर्वभूताशयस्थितः ॥**
**अहमादिश्च मध्यं च भूतानामन्त एव च ॥ २० ॥**

त० टी०—विभूतिं वक्तुं तावद्विभूतिमदात्मस्वरूपं निर्दिशति—अहमिति । हे गुडाकेश गुडाका निद्रा तस्या जयेनेश जितनिद्रेत्यर्थः। सर्वेषां भूतानां प्राणिनामाशये हृदयेऽन्तर्यामिरूपेण स्थितः आत्माऽहं भूतानामादिरुत्पत्तिश्च मध्यं स्थितिश्च अन्तश्च नाशः, सर्वभूतानामुत्पत्तिस्थितिनाशहेतुरहमेवेत्यर्थः॥ २० ॥

म० टी०—तत्र प्रथमं तावन्मुख्यं चिन्तनीयं शृणु—अहमिति । सर्वभूतानामाशये हृद्देशेऽन्तर्यामिरूपेण प्रत्यगात्मरूपेण च स्थित आत्मा चैतन्यानन्दघनस्त्वयाऽहं वासुदेव एवेति ध्येयः । हे गुडाकेश जितनिद्रेति ध्यानसामर्थ्यं सूचयति । एवं ध्यानासामर्थ्ये तु वक्ष्यमाणानि ध्यानानि कार्याणि । तत्राप्यादौ ध्येयमाह—अहमिति । अहमेवादिश्च उत्पत्तिर्भूतानां प्राणिनां चेतनत्वेन लोके व्यवह्रियमाणानां मध्यं च स्थितिः अन्तश्च नाशः सर्वचेतनवर्गाणामुत्पत्तिस्थितिनाशरूपेण तत्कारणरूपेण चाहमेव ध्येय इत्यर्थः ॥२०॥

शं० टी०—मुमुक्षूणां चित्तशुद्ध्यै उपास्यान्विभूतिविशेषान्वक्ष्यामीत्युक्ते मुख्याधिकारिणामेतदुपास्तेरेव कर्तव्यत्वप्राप्तौ तेषां निर्विशेष एवोपास्यो न तु सविशेष इति ज्ञापयितुमादौ ब्रह्मविदुपास्यं वस्तु निर्दि-

शति—अहमिति । गुडाका निद्रा तस्या ईशः गुडाकेशः स्ववशनिद्र इत्यर्थः । हे गुडाकेश सर्वभूताशयस्थितः सर्वेषां ब्रह्मादिस्तम्बान्तानां प्राणिनामाशये आ समन्तात्सर्वतः शेते शयान इव नैश्चल्येनात्मा तिष्ठति यत्र स आशयो बुद्धिगुहा तत्र स्वरूपत्वेन सर्वप्रकाशकत्वेन साक्षित्वेन च तिष्ठतीति सर्वभूताशयस्थितः सर्वभूताधिवासः कूटस्थासङ्गचिद्रूप आत्मा प्रत्यगात्माहं ब्रह्मविदां यतीनामुपास्य इत्यर्थः । "अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति यतयः क्षीणदोषाः" इत्यादिश्रुतेः । एवं मुख्याधिकारिणामुपास्यं निरूप्य मध्यमाधिकारिणामुपास्यमाह—अहमिति । भूतानामाकाशादीनामादिरुपादानमव्यक्तं तद्रूपश्च भूतानां मध्यं स्थितिर्व्यक्तस्वरूपश्च भूतानामन्त एव चान्तः प्रलयस्तद्रूपश्चाहमुपास्यः प्रपञ्चकारणरूपेण च प्रपञ्चरूपेण च प्रपञ्चप्रलयरूपेणापि च स्थितोऽहं सगुणः परमात्मा मध्यमानामुपास्य इत्यर्थः ॥ २० ॥

**श्री० टी०**—तत्र प्रथममैश्वरं रूपं कथयति—अहमिति । हे गुडाकेश सर्वेषां भूतानामाशयेष्वन्तःकरणेषु सर्वज्ञत्वादिगुणैर्नियन्तृत्वेनावस्थितः परमात्माहमादिर्जन्म मध्यं स्थितिः अन्तः संहारः, सर्वभूतानां जन्मादिहेतुश्चाहमेवेत्यर्थः ॥ २० ॥

**म० टी०**—तत्रादौ चिन्तनीयं यन्मुख्यं तत्प्रथमं शृणु ॥ हृद्देशे सर्वभूतानामन्तर्यामितया स्थितः ॥१॥ प्रत्यगात्मात्मना चैव परानन्दघनोऽच्युतः ॥ त्वयैव वासुदेवोऽहं ध्येयो नित्यं जितालस ॥ २ ॥ चेतनानां समस्तानां यतोऽहं जन्मकारणम् ॥ मध्ये स्थितिर्लयोऽन्ते च मत्तो भिन्नं न किंचन ॥ ३ ॥ सर्वचेतनवर्गाणां जनिस्थितिलयात्मना ॥ तत्कारणात्मना वाहमेव ध्येय इतीरितः ॥ ४ ॥ २० ॥

**भा० टी०**—योगं विभूतिं च कथयेति त्वया पृष्टं तत्र प्रथमं तावन्मदीयं योगं शृणु—अहमिति । अहं वासुदेव आत्मा प्रत्यगात्मा सर्वेषां भूतानामाशयेऽन्तःकरणे स्थितः । एतज्जिताज्ञाननिद्रैरेव ज्ञातव्यमिति द्योतयन् संबोधयति—हे गुडाकेशेति । एतदशक्तस्याहमादिः कारणं भूतानां मध्यः स्थितिरन्तः प्रलयश्च, तथाच सर्वभूतान्तरात्मत्वेन ध्यातुमशक्तेनोत्पत्त्यादिकर्तृत्वेनाहं ध्येय इत्याशयः ॥ २० ॥

**प० टी०**—अथ विभूतिनिरूपणे तावत्स्वकीयं मूलभूतस्वरूपमाह—अहमिति सपादेन । भो गुडाकेश जितनिद्र अतति व्याप्नोतीत्यहमात्मा हिरण्यगर्भः । किंभूतः, सर्वभूताशयस्थितः सर्वाणि महाभूतानि विद्यन्ते यस्मिन्निति सर्वभूतो विराट् तत्राशयत्वेन लिङ्गरूपेण स्थितः "अजस्य नाभावध्येकमर्पितम्" इत्यादिश्रुतयः प्राङ्निरूपिता एव । अथ तदेवाह—अहमेव भूतानामादिर्मध्यं चान्तश्च । मय्येव भूतानां जन्मस्थितिलयाः सलिले तरङ्गाणामिव भवन्ति । च परमादित्यानां देवानामपि 'आदित्या ऋभवोऽस्वप्नाः' इत्यमरोक्तेः । यतोऽहं विष्णुर्व्यापनशीलो मयैव समष्टिरूपेण कृत्वा देवा अपि व्यवहरन्तीत्यर्थः । यद्वा सर्वादिषु त्यशब्दोऽमूर्तवाची श्रुतिसिद्धस्तेन सर्वेषामादिभूतानि त्यान्यमूर्तानि महदादीनि तेषामादित्यानां व्यापनशीलो विष्णुर्वैकुण्ठवास्यहमस्मीति स्वकीयं सगुणं रूपान्तरं प्रकटीकृतम् । पुंस्याकारो द्विवचने, क्लीबे भूम्नीति । यथा द्वावित्यत्र द्वा विश्वानीत्यत्र विश्वा योऽसावादित्ये पुरुषः । श्रुतिश्च "अहं रुद्रेभिर्वसुभिश्चराम्यहमादित्यैरुत विश्वदेवैः । अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा" इति । भाष्यम्—अत्र सर्वानुक्रमस्तावत् अहमित्यष्टर्चं सूक्तम् अम्भृणस्य महर्षेर्दुहिता वाङ्नाम्नी ब्रह्मविदुषी स्वात्मानमस्तौषीत् । अतः सा ऋषिः सच्चित्सुखात्मकः सर्वगतः परमात्मा देवतानेन ह्येषा तादात्म्यमनुभवन्ती सर्वस्याधिष्ठानत्वेन स्वात्मानं स्तौति । तत्र प्रथमाहं रुद्रेभिरिति । अहं ब्रह्मरूपा रुद्रेभी रुद्रैरेकादशभिश्चरामि, तथा वसुभिरष्टभिश्चरामि, इत्थंभूते तृतीया, तदात्मना चरामि । तथादित्यैर्द्वादशभिर्विश्वेदेवैश्चान्तर्यामित्वेनापि चरामीत्याह—अहमिति । मित्रावरुणा मित्रं वरुणं चेति द्विवचनस्य "वा छन्दसि" इति द्वितीयाया

आकारः । परिभाषास्वपि—पुंस्याकारो द्विवचने, क्लीबे भून्नीति । यथा द्वावित्यत्र विश्वानीत्यत्र द्वा विश्वा । "योसावादित्ये पुरुषः सोऽसावहम्" इतिश्रुतेः उभा उभौ मित्रावश्विनौ देवौ च बिभर्मि ॥ २० ॥

रा० टी०—केषु केषु च भावेषु चिन्त्य इत्यस्य प्रश्नस्य सर्वभूतेष्वपि चिन्त्य इति भावेन सर्वभूतस्थत्वं तावत्सामान्यतो वक्ति—अहमिति । हे गुडाकेश जितनिद्र अहमात्मा व्याप्तोऽपि सर्वभूतानां हृदयगुहायां स्थितः, अहमेव भूतानामादिर्मध्यमन्तश्च, सृष्टिस्थितिलयकर्ता चेत्यर्थः ॥ २० ॥

**आदित्यानामहं विष्णुर्ज्योतिषां रविरंशुमान् ।**
**मरीचिर्मरुतामस्मि नक्षत्राणामहं शशी ॥ २१ ॥**

**त० टी०—इदानीं विभूतीर्दर्शयति—आदित्यानामित्यारभ्य यावदध्यायसमाप्तिम् । आदित्यानां द्वादशानां मध्ये विष्णुनामाऽऽदित्योऽहं, ज्योतिषां जगति प्रकाशकानां मध्ये अंशुमान् जगद्व्यापिरश्म्याश्रयो रविः सूर्योऽहं, मरुतां वायूनां मध्ये मरीचिनामाहमस्मि । नक्षत्राणामधिपः शशी चन्द्रमा अहं मद्विभूतिः ॥ २१ ॥**

म० टी०—एतदशक्तेन बाह्यानि ध्यानानि कार्याणीत्याह यावदध्यायसमाप्ति—आदित्यानामिति । आदित्यानां द्वादशानां मध्ये विष्णुर्विष्णुनामादित्योऽहं वामनावतारो वा, ज्योतिषां प्रकाशकानां मध्येऽहं रविरंशुमान् विश्वव्यापी प्रकाशकः, मरुतां सप्तसप्तकानां मध्ये मरीचिनामाहं, नक्षत्राणामधिपतिरहं शशी चन्द्रमाः । निर्धारणे षष्ठी । अत्र प्रायेण निर्धारणे षष्ठी क्वचित्संबन्धेऽपि यथा भूतानामस्मि चेतनेत्यादौ । वामनरामादयश्चावताराः सर्वैश्वर्यशालिनोऽप्यनेन रूपेण ध्यानविवक्षया विभूतिषु पठ्यन्ते । वृष्णीनां वासुदेवोऽस्मीत्येतेन रूपेण ध्यानविवक्षया स्वस्यापि स्वविभूतिमध्ये पाठवत् । अतः परं च प्रायेणायमध्यायः स्पष्टार्थ इति क्वचित्किंचिद्व्याख्यास्यामः ॥ २१ ॥

शं० टी०—एवमुत्तममध्यमानामुपास्यभेदं निरूप्याऽधुनाऽधमानामुपासनार्थमात्मीयानेव विभूतिविशेषान्निरूपयति—आदित्यानामिति । द्वादशादित्याः सर्वेऽपि मम विभूतिरेव नामरूपादिभिर्विशेषाय भवतीति विभूतिस्तेषामादित्यानां मध्ये तु विष्णुरहं विष्णुर्नामादित्यः प्रभावातिशयेन मम विभूतिविशेषः, सोऽयं परमेश्वर एवेति मद्बुद्ध्योपास्य इत्यर्थः । ज्योतिश्चक्रे वर्तमानानि ज्योतींषि सर्वाणि च मम विभूतिरेव तेषां मध्ये त्वंशुमान् रविरहं तेजआधिक्येन मम विभूतिविशेषः, सोऽयं परमेश्वर एवेति मद्बुद्ध्योपास्य इत्यर्थः । मरुत इति देवताविशेषा मम विभूतिरेव तेषां मध्ये मरीचिरहं मरीचिर्नाम देवता मम विभूतिविशेषो मद्बुद्ध्योपास्य इत्यर्थः । अश्विन्यादिनक्षत्राणि सर्वाणि मम विभूतिरेव तेषां मध्ये शश्यहं शोभाधिक्येन मम विभूतिविशेषः सोऽयं मद्बुद्ध्योपास्य इत्यर्थः । एवं सर्वत्र षष्ठ्यन्तानां विभूतित्वं प्रथमान्तानां द्वितीयान्तानां च तद्विशेषत्वं चेश्वरत्वेनोपास्यत्वं च द्रष्टव्यम् ॥ २१ ॥

श्री० टी०—इदानीं विभूतीः कथयति—आदित्यानामित्यादिना यावदध्यायसमाप्ति । आदित्यानां द्वादशानां मध्ये विष्णुर्वामनोऽहम् । ज्योतिषां प्रकाशानां मध्येंऽशुमान्विश्वव्यापकरश्मियुक्तो रविः सूर्योऽहम् । मरुतां देवविशेषाणां मध्ये मरीचिर्नामाहमस्मि, यद्वा सप्त मरुद्गणा वायवस्तेषां मध्य इति । ते च आवहः प्रवहः विवहः परावहः उद्वहः संवहः परिवह इति मरुद्गणाः । नक्षत्राणां मध्ये चन्द्रोऽहम् । अत्र च आदित्यानामहं विष्णुरित्यादिषु प्रायशो निर्धारणे षष्ठी । क्वचिच्च भूतानामस्मि चेतनेत्यादिषु संबन्धे षष्ठी । तच्च तत्र तत्रैव दर्शयिष्यामः । विष्णुरित्याद्यवतारेष्वपि प्रभावातिशयमात्रविवक्षया विभूतित्वेन निर्दिश्यते अतः परं चाध्यायस्य स्पष्टार्थत्वेऽपि क्वचित् किंचिद्व्याख्यास्यामः ॥ २१ ॥

**स० टी०**—तत्राशक्तैर्बुधैश्चिन्त्यो येषु तांश्च वदाम्यहम् ॥ आदित्यानां द्वादशानां मध्येऽहं विष्णुसंज्ञितः ॥ १ ॥ आदित्यो वामनो वास्मि, षष्ठी निर्धारणेऽखिला ॥ अत्र प्रायेण संबन्धे क्वचिदेवेति संग्रहः ॥ २ ॥ रामादयोऽवतारास्तु समस्तैश्वर्यशालिनः ॥ तेन तेन स्वरूपेणाप्यत्र ध्यानविवक्षया ॥ ३ ॥ स्वयं महेश्वराः साक्षात्पठ्यन्ते ते विभूतिषु ॥ वृष्णीनां वासुदेवोऽस्मीत्यत्र स्वस्यापि शार्ङ्गिणः ॥ ४ ॥ श्रीविष्णोस्तेन रूपेण सम्यक् ध्यानविवक्षया ॥ दर्शितत्वात्तथैवाग्रे वक्ष्यते तत्र तत्र च ॥ ५ ॥ प्रकाशकानां मध्येऽहं रविर्विश्वप्रकाशकः ॥ मरुतां सप्तसप्तानां मरीचिर्नामतोऽस्म्यहम् ॥ ६ ॥ नक्षत्राधिपतिश्चन्द्रो नक्षत्राणामहं हरिः ॥ ७ ॥ २१ ॥

**भा० टी०**—एवमात्मनो योगमुक्त्वा तत्र तत्र ध्येया विभूतीराह—**आदित्यानामिति** । आदित्यानां विष्णुः शक्रोऽर्यमा धाता त्वष्टा पूषा विवस्वान् सविता मित्रो वरुणः अंशो भगश्चेत्युक्तानां द्वादशानां विष्णुर्नामादित्योऽहम् वामनावतारो वेति व्याख्यानस्यापि विष्णुर्नामादित्यो वामनावतारोऽहमित्यर्थावगमेनाचार्योक्तव्याख्यानान्तर्भूतत्वाद्वेत्युक्तिरपार्था, यद्वा अरुणः सूर्यो भानुस्तपनश्चन्द्रमा मित्रो हिरण्यवीर्यो रविरर्यमा गभस्तिर्दिवाकरो विष्णुरित्युक्तानामादिनात्यानां विष्णुरित्यभिप्रायेणाचार्यैरेवमुक्तमिति बोध्यम् । प्रकाशयितॄणां जगद्व्यापिरश्मिवान्सूर्यः, मरुतां देवताभेदानां मरीचिनामास्मि । नक्षत्राणामधिपतिश्चन्द्रोऽहमस्मि ॥ २१ ॥

**प० टी०**—अथ विभूतीर्वर्णयन् प्रत्यक्षदेवरूपिणीं विभूतिं दर्शयति—**ज्योतिषामिति** । ज्योतिषां तैजसपदार्थानामग्न्यादीनां मध्येंऽशुमान् स्वकरप्रसरेण त्रिलोकीप्रकाशको रविः सूर्योऽहम् । मरुतां मरुद्गणानां देववैश्यानां मध्ये मरीचिरहम् । तथा नक्षत्राणां तारकाणां मध्ये शशी चन्द्रोऽहम् ॥ २१ ॥

**रा० टी०**—द्विविधं भगवतो विभूतिरूपं प्रत्यक्षं तिरोहितं च । तत्र प्रत्यक्षं विष्णुकपिलव्यासवासुदेवरामादिरूपं, तिरोहितं तु पदार्थेष्वन्यत उत्कर्षप्रदत्वेन सन्निहितम् । द्विविधविभूतिरूपाणि संकलय्याह—**आदित्यानामिति** । द्वादशादित्यानां मध्ये अहं विष्णुरस्मि, सर्वत्र व्याप्तत्वात्सर्वेषु प्रविष्टत्वाद्वा विष्णुनामास्मि । विष्लृ व्याप्तावित्यतः क्नुप्रत्ययः । विशप्रवेशन इत्यतः प्रत्यये शकारस्य षत्वे विष्णुरिति सिद्धेः । केषु केष्विति पृष्टस्योत्तरमाह—**ज्योतिषामिति** । ज्योतिषां प्रकाशरूपाणां मध्ये अंशुमान्विश्वव्यापिरश्मियुक्तो रविरहमस्मि, ज्योतीरूपेभ्यो रवेराधिक्यहेतुतया रवेण वेदशब्देन ईयते ज्ञायते इति व्युत्पत्त्या रविनामकः सन् रवौ सन्निहितोऽस्मीत्यर्थः । रवशब्द उपपदे इण्गतावित्यतः क्विप् उपपदान्तलोपः । मरुतामेकोनपञ्चाशन्मरुतां मध्ये तेभ्यो मरीचिनाम्नो मरुत आधिक्यहेतुतयाऽमरशब्दोक्तोदकवान् मेघो मरी तं चालयतीति व्युत्पत्त्या मरीचिनामा सन्मरीचिमरुति सन्निहितोऽस्मि । नक्षत्राणां मध्ये तेभ्यः शशिन आधिक्यहेतुतया शशिशब्दितातिसुखवत्त्वहेतुना शशिनामा सन् शशिनि चन्द्रे स्थितोऽस्मि । एवमग्रे सर्वत्र तिरोहितेष्वर्थो ध्येयः । ग्रन्थगौरवभयान्निरुक्तिमात्रं वक्ष्यामः ॥ २१ ॥

**वेदानां सामवेदोऽस्मि देवानामस्मि वासवः ।**
**इन्द्रियाणां मनश्चास्मि भूतानामस्मि चेतना ॥ २२ ॥**

**त० टी०**—**वेदानामिति** । चतुर्णां वेदानां मध्ये गानमाधुर्येणोत्कृष्टः सामवेदोऽहमस्मि । देवानां वासव इन्द्र उत्कृष्टः सोऽहमस्मि । इन्द्रियाणामेकादशानां मध्ये प्रधानं मनोऽहमस्मि । भूतानां चेतनावतां या चेतना साऽहमेव ॥ २२ ॥

**म० टी०**—**वेदानामिति** । चतुर्णां वेदानां मध्ये गानमाधुर्येणातिरमणीयः सामवेदोऽहमस्मि । वासव इन्द्रः

सर्वदेवाधिपतिः, इन्द्रियाणामेकादशानां प्रवर्तकं मनः, भूतानां सर्वप्राणिसंबन्धिनां परिणामानां मध्ये चिदभिव्यञ्जिका बुद्धेर्वृत्तिश्चेतनाहमस्मि ॥ २२ ॥

**शं० टी०—वेदानामिति ।** भवन्तीति भूतानि शरीराणि जीवाधिष्ठितानि तेषां मध्ये चेतना बुद्ध्यादिस्थूलान्तं सर्वं चेतयतीति चेतना साभासा बुद्धिवृत्तिः साऽहमस्मीत्यर्थः । शिष्टं स्पष्टम् ॥ २२ ॥

**श्री० टी०—वेदानामिति ।** वासव इन्द्रः भूतानां संबन्धिनी चेतना ज्ञानशक्तिरहमस्मि ॥ २२ ॥

**स० टी०—**मध्ये चतुर्णां वेदानां सामवेदोऽस्म्यहं हरिः ॥ रुद्रादित्यादिदेवानां मध्येऽहं पाकशासनः ॥ १ ॥ एकादशेन्द्रियाणां च मनोऽहं तत्प्रवर्तकम् ॥ कार्यकारणसंघाते चिदभिव्यञ्जका धियः ॥ २ ॥ वृत्तिः समस्तभूतानां चेतनानामहं हरिः ॥ ३ ॥ २२ ॥

**भा० टी०—वेदेति ।** वासवः इन्द्रः चेतना कार्यकरणसंघातेऽभिव्यक्ता बुद्धिवृत्तिः ॥ २२ ॥

**प० टी०—वेदानामिति ।** ऋगादिचतुर्णां वेदानां मध्ये सामवेदोऽस्मि । सामात्मकः सामवेदः सा चामश्चेति विग्रहात् सा ऋक् अमो गीतरूपः स्वरस्तयोर्मिथुनं साम । ब्राह्मणं च—" सैव नाम ऋगासीदमो नाम साम सा वा ऋक्सामोपावदन् मिथुनं संभवाव प्रजात्या इति नेत्यब्रवीत्साम ज्यायान्वा अतो मम महिमा " इति । भाष्यम्—सा चामश्चेति द्वौ पदार्थौ तत्र सेतितच्छब्देन ऋगेव प्रोक्ता । अमश्च गीतिरूपः स्वरस्तत्र । कण्वा अपि—तस्य हैतस्य साम्नो यः स्वं वेद भवति हास्य स्वं तस्य वै स्वर एव स्वमिति । एतं सा ऋक् सामोपसमीपं गत्वा इत्यवदत् । इति किम् आवां प्रजात्यै प्रजायै मिथुनं दाम्पत्यं संभवावेति । ततः साम नेत्यब्रवीन्निषेधं चकार । यतः साम ज्यायानादिभूतम् अतो मम महिमा मत्सामर्थ्यमधिकं वर्तते किमेकया ऋचा । अतस्ते द्वे ऋचौ भूत्वा उपावदतामित्यादि । एवमृगाद्यपेक्षया साम्न उपजीव्यत्वेनाधिकत्वमित्युक्तम् । यद्वा सामसंबन्धिन्यो यास्ताः सर्वा ईश्वरस्तावकत्वेन पावमान्यो भवन्ति "अथातः पावमानामोहः (?)" इति श्रुतेः । एवं ताः पठनमात्रेण पापहन्त्र्यो भवन्ति "तत्पावमानीभिरहं पुनामि" इति परिशिष्टोक्तेस्तेनापि सामवेदस्य विभूतित्वम् । तथा देवानां मध्ये वासव इन्द्रोऽहम् । तथा इन्द्रियाणामेकादशानां मध्ये मनोऽहम् । भूतानां संबन्धिनी चेतना ज्ञानशक्तिरहम् ॥ २२ ॥

**रा० टी०—वेदेति ।** साम्यहेतुना सामवेदनहेतुना वेदे स्थितः सामवेदनामा । वसन्त्यत्रेति वासः सर्वदेशः तत्र वर्तत इति वासवः । वसतेरधिकरणे घञ् तस्मिन्नुपपदे वृतुधातोर्डः । अवबोधरूपत्वान्मनः मनुतेरसुन् । चेतो नेतृत्वाच्चेतना । स्त्रीरूपेण चेतनायां स्थितत्वात्स्त्रीलिङ्गम्, यद्वा भूतानां चेतनारूपसारधर्मद इत्यर्थः । चेतना नाम चेतसो व्याप्तिः । सा च 'बहुस्मरणशक्तिश्च चेतनेत्यभिधीयते' इत्युक्तदिशा ज्ञेया ॥ २२ ॥

## रुद्राणां शंकरश्चास्मि वित्तेशो यक्षरक्षसाम् ॥
## वसूनां पावकश्चास्मि मेरुः शिखरिणामहम् ॥ २३ ॥

**त० टी०—रुद्राणामिति । एकादशरुद्राणां मध्ये शंकरोऽहमस्मि । यक्षरक्षसां पतिर्यो वित्तेशः कुबेरः सोऽहं, वसूनामष्टानां मध्ये पावकोऽग्निश्चास्मि । शिखरिणां शिखरवतामत्युच्छितो मेरुरहम् ॥ २३ ॥**

**म० टी०—रुद्राणामिति ।** रुद्राणामेकादशानां मध्ये शंकरः, वित्तेशो धनाध्यक्षः कुबेरः यक्षरक्षसां यक्षाणां राक्षसानां च, वसूनामष्टानां पावकोऽग्निः, मेरुः सुमेरुः शिखरिणां शिखरवतामत्युच्छ्रितानां पर्वतानाम् ॥ २३ ॥

**शं० टी०—रुद्राणामिति ।** शिखरिणां शिखरवतामत्युन्नतानां मध्ये मेरुरहं, रुद्राणामेकादशानां मध्ये शंकराख्यो यः कश्चिद्रुद्रः सोऽहं, वित्तेशः कुबेरः, वसूनां मध्ये पावकोऽग्निः ॥ २३ ॥

**श्री० टी०—रुद्राणामिति ।** यक्षरक्षसामिति राक्षसानामपि क्रूरत्वादिसाम्याद्यक्षैः सहैकीकृत्य निर्देशः तेषां मध्ये वित्तेशः कुबेरोऽस्मि । पावकोऽग्निः, शिखरिणां शिखरवताम् उच्छ्रितानां मध्ये मेरुः ॥ २३ ॥

**स० टी०**—य एकादशरुद्राणां शंकरः सोऽस्म्यहम् हरिः ॥ यक्षाणां रक्षसां मध्ये कुबेरोऽहं धनाधिपः ॥ १ ॥ वसूनामग्निरष्टानां मध्ये ध्येयोऽहमीश्वरः ॥ मेरुः शिखरिणां मध्ये देवतानां निवासभूः ॥२॥२३॥

**भा० टी०—रुद्राणामिति।** रुद्राणां वीरभद्रशंभुगिरिशाजैकपादाहिर्बुध्न्यपिनाकिभवानीशकपालिदिक्पतिस्थाणुरुद्रसंज्ञानामेकादशानां शं करोतीति शंकरः शंभुश्चास्मि, शं भवत्यस्मादिति व्युत्पत्तेः। वित्तेशः कुबेरः वसूनां ध्रुवाध्वरापसोमानलानिलप्रत्यूषप्रभाससंज्ञानामष्टानामग्निरस्मि। शिखरवतामत्युच्छ्रितानां मेरुरहम् २३

**प० टी०—रुद्राणामिति।** रुद्राणामेकादशानां मध्ये शंकरोऽहमस्मि। तथा यक्षरक्षसामतिक्रूराणां मध्ये वित्तेशः कुबेरोऽहम्। तथा वसूनां मध्ये पावकोऽग्निनामाहम्। तथा शिखरिणां पर्वतानां मध्ये मेरुरहम् ॥ २३ ॥

**रा०टी०—रुद्राणामिति।** सुखकारणत्वाच्छंकरनामा, वित्तस्वामित्वाद्वित्तेशनामा कुबेरस्थः, पावकः पावयति शोधयतीति व्युत्पत्त्या पावकनामा पवशुद्धावित्यतोऽन्तर्णीतण्यर्थाण्ण्वुल् शुद्धिकर्तेत्यर्थः। मेरुरित्यत्र मा ईरुरिति विभागः ईरयति प्रेरयतीति ईरः प्रेरकः माशब्दो निषेधार्थः ईरः प्रेरकोऽस्यान्यो मा नास्तीति मेरः मेर एव मेरुः। ईरप्रेरण इत्यतः ताच्छील्यार्थे उप्रत्ययः। शिखरिणां पर्वतानाम् ॥ २३ ॥

## पुरोधसां च मुख्यं मां विद्धि पार्थ बृहस्पतिम्।
## सेनानीनामहं स्कन्दः सरसामस्मि सागरः ॥ २४ ॥

**त० टी०—पुरोधसामिति।** पुरोधसां पुरोहितानां मध्ये य उत्कृष्टो बृहस्पतिस्तं मां विद्धि। सेनानीनां सेनापतीनां मध्ये स्कन्दोऽहमस्मि। सरसां स्थिरजलाशयानां मध्ये सागरोऽहमस्मि ॥ २४ ॥

**म० टी०—पुरोधसामिति।** इन्द्रस्य सर्वराजश्रेष्ठत्वात्तत्पुरोधसं बृहस्पतिं सर्वेषां पुरोधसां राजपुरोहितानां मध्ये मुख्यं श्रेष्ठं मामेव हे पार्थ विद्धि जानीहि। सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दो गुहः अहमस्मि। सरसां देवखातजलाशयानां मध्ये सागरः सगरपुत्रैः खातो जलाशयोऽहमस्मि ॥ २४ ॥

**शं० टी०—पुरोधसामिति।** सरांसि पुण्यतीर्थानि तेषां मध्ये सागरोऽहम् ॥ २४ ॥

**श्री० टी०—पुरोधसामिति।** पुरोधसां मध्ये देवपुरोहितत्वान्मुख्यं बृहस्पतिं मां विद्धि। सेनानीनां सेनापतीनां मध्ये देवसेनापतिः स्कन्दोऽहमस्मि। सरसां स्थिरजलाशयानां मध्ये समुद्रोऽस्मि॥२४॥

**स० टी०**—राज्ञां पुरोधसां मध्ये शक्राचार्यो बृहस्पतिः ॥ देवसेनापतिः स्कन्दः सेनानीनामहं बली ॥ १ ॥ सागरः सरसां मध्ये निर्मितानां च दैवतैः ॥ २ ॥ २४ ॥

**भा० टी०—पुरोधसामिति।** पुरोधसां राजपुरोहितानामिन्द्रपुरोहितत्वान्मुख्यं पुरोहितं बृहस्पतिं जानीहि। यथा त्वं पार्थानां मुख्य इति सूचयन्नाह—पार्थेति। सेनापतीनां कार्तिकेयः देवसेनापतिः। सरसां देवखातजलाशयानां सागरोऽस्मि ॥ २४ ॥

**प० टी०—पुरोधसामिति।** पुरोधसां देवपुरोहितानां मध्ये मां बृहस्पतिं मुख्यं विद्धि। तथा सेनानीनां देवसेनाधिपतीनां मध्ये स्कन्दोऽहम्। तथा सरसां जलाशयानां मध्ये सागरोऽहम् ॥ २४ ॥

**रा० टी०—पुरोधसामिति।** पुरोधसां पुरोहितानां बृहतां पतित्वाद्बृहस्पतिनामानं, सेनानीनां सेनानेतॄणां स्कन्दनात्स्वस्माज्जगतो निष्कासनात्स्कन्दनामा, स्कन्दिर्गतिशोषणयोरिति धातोरच्। सरसां सरोवराणां सागरः, गिरतीति गिरः गॄनिगरणे पचाद्यच्। सारस्य गरः सागरः रशब्दलोपो निरुक्तत्वात्। सारभोक्तृत्वात्सागरनामा समुद्रस्थः ॥ २४ ॥

**महर्षीणां भृगुरहं गिरामस्म्येकमक्षरम् ॥**
**यज्ञानां जपयज्ञोऽस्मि स्थावराणां हिमालयः ॥ २५ ॥**

**त० टी०—महर्षीणामिति** । उत्कृष्टर्षीणां मध्येऽतितेजस्वी भृगुरहं, गिरां वाचामेकप्रणवाख्य-मक्षरमहमस्मि । यज्ञानामुत्कृष्टो जपयज्ञोऽस्मि । स्थावराणां स्थितिमतां हिमालयोऽहमास्मि ॥ २५ ॥

**म० टी०—महर्षीणामिति** । महर्षीणां सप्तब्रह्मणां मध्ये भृगुरतितेजस्वित्वादहं, गिरां वाचां पदलक्षणानां मध्ये एकमक्षरं पदमोङ्कारोऽहमस्मि । यज्ञानां मध्ये जपयज्ञोऽहिंसादिदोषशून्यत्वेनात्यन्तशोधकोऽहमस्मि । स्थावराणां स्थितिमतां मध्ये हिमालयोऽहं, शिखरवतां मध्ये हि मेरुरहमित्युक्तमतः स्थावरत्वेन शिखरवत्त्वेन चार्थभेदाददोषः ॥ २५ ॥

**शं० टी०—महर्षीणामिति** । गिरामर्थवाचकपदानां मध्ये एकाक्षरं प्रणवोऽहम् । स्थावराणामचलानां मध्ये हिमालयोऽहम् ॥ २५ ॥

**श्री० टी०—महर्षीणामिति** । गिरां वाचां पदात्मिकानां मध्ये एकमक्षरमोंकाराख्यं पदमस्मि । यज्ञानां श्रौतस्मार्तानां मध्ये जपरूपो यज्ञोऽहम् ॥ २५ ॥

**स० टी०—महर्षीणां** महातेजा भृगुरस्मि विदां वर ॥ वाचां पदात्मनां मध्येऽक्षरमोंकार ईश्वरः ॥ १ ॥ जपयज्ञोऽस्मि यज्ञानां शोधकः प्राण्यहिंसकः ॥ अहं स्थितिमतां मध्ये ध्येयत्वेन हिमालयः ॥ २ ॥ २५ ॥

**भा० टी०—महर्षीणामिति** । गिरां वाक्यपदलक्षणानामेकमक्षरमोंकारोऽस्मि । स्थावराणां स्थितिमताम् ॥ २५ ॥

**प० टी०—महर्षीणामिति** । तथा महर्षीणां सप्तानां मध्ये भृगुरस्मि । गिरां चतुर्विधवाणीनां मध्ये एकमक्षरमोङ्कारोऽहम् । यज्ञानां ज्योतिष्टोमादीनां मध्ये जपयज्ञोऽहम् । स्थावराणां मध्ये हिमालयोऽहम् ॥ २५ ॥

**रा० टी०—महर्षीणामिति** । विरोधिनां भर्जनाद्दहनाद्भृगुनामा भृगुस्थः । मुख्यत्वादेकम् । चतुर्विधनाशहीनत्वादक्षरनामा प्रणवस्थः । जान् जातान्पातीति जपः याज्यत्वाद्यज्ञः जपश्चासौ यज्ञश्चेति व्युत्पत्त्या जपयज्ञनामा जपरूपयज्ञस्थः । स्थावराणां गतिहीनानां हिमालय इति ह्रीश्च मा च तयोरालय आश्रयः ह्रीमालयः स एव हिमालयः ह्रीश्रीशब्दितलक्ष्मीरूपद्वयस्य आश्रयत्वाद्धिमवत्पर्वतस्थः ॥ २५ ॥

**अश्वत्थः सर्ववृक्षाणां देवर्षीणां च नारदः ॥**
**गन्धर्वाणां चित्ररथः सिद्धानां कपिलो मुनिः ॥ २६ ॥**
**उच्चैःश्रवसमश्वानां विद्धि माममृतोद्भवम् ॥**
**ऐरावतं गजेन्द्राणां नराणां च नराधिपम् ॥ २७ ॥**

**त० टी०—अश्वत्थ इति** । सर्ववृक्षाणां मध्ये पूज्योऽश्वत्थोऽहम् । देवर्षीणां मध्ये परमवैष्णवो नारदोऽहमस्मि । गन्धर्वाणां देवगायकानां मध्ये चित्ररथोऽहम् । सिद्धानां जन्मनैवाधिगतज्ञानवैराग्यैश्वर्यादिसर्वपुरुषार्थानां मध्ये कपिलो मुनिरहम् ॥ २६ ॥ **उच्चैःश्रवसमिति** । अश्वानां मध्ये उच्चैःश्रवसममृतमथनोद्भवमश्वं मां विद्धि । गजेन्द्राणां मध्ये ऐरावतममृतमथनोद्भवं मां विद्धि । नराणां च मध्ये नराधिपं राजानं मां विद्धि ॥ २७ ॥

**म० टी०—अश्वत्थ इति** । सर्वेषां वृक्षाणां वनस्पतीनामन्येषां च अश्वत्थः, देवा एव सन्तो ये मन्त्रदर्शित्वेन ऋषित्वं प्राप्तास्ते देवर्षयस्तेषां मध्ये नारदोऽहमस्मि । गन्धर्वाणां गानधर्मणां देवगायकानां मध्ये चित्ररथोऽहमस्मि । सिद्धानां जन्मनैव विना प्रयत्नं धर्मज्ञानवैराग्यैश्वर्यातिशयं प्राप्तानामधिगतपरमार्थानां मध्ये कपिलो मुनिरहम् ।

॥ २६ ॥ अश्वानां मध्ये उच्चैःश्रवसममृतमथनोद्भवमश्वं मां विद्धि । ऐरावतं गजममृतमथनोद्भवं गजेन्द्राणां मध्ये मां विद्धि । नराणां च मध्ये नराधिपं राजानं मां विद्धीत्यनुषज्यते ॥ २७ ॥

**शं० टी०–अश्वत्थ** इत्यादिद्वयोः स्पष्टोऽर्थः ॥ २६ ॥ २७ ॥

**श्री० टी०–अश्वत्थ** इति । देवा एव सन्तो मन्त्रदर्शनेन य ऋषित्वं प्राप्तास्तेषां मध्ये नारदोऽस्मि । सिद्धानां उत्पत्तित एवाधिगतपरमार्थतत्त्वानां मध्ये कपिलाख्यो मुनिरस्मि ॥ २६ ॥ **उच्चैःश्रवसमिति** । अमृतार्थं क्षीराब्धिमथनादुद्भूतमुच्चैःश्रवसं नामाश्वं मद्विभूतिं विद्धि । अमृतोद्भवमित्येतदैरावतेऽपि संबध्यते । नराधिपं राजानं मां विद्धि ॥ २७ ॥

**स० टी०**–पिप्पलः सर्ववृक्षाणां मध्ये ध्येयोऽहमादरात् ॥ मन्त्रदर्शितया देवाः सन्तो ये चर्षितां गताः ॥ १ ॥ ते च देवर्षयस्तेषां नारदोऽस्मि सुहृत्सताम् ॥ गानधर्मविशिष्टानां मध्ये चित्ररथोऽस्म्यहम् ॥ २ ॥ जन्मनैव महान्तो ये धर्मज्ञानादिभिर्गताः ॥ सिद्धत्वं कपिलस्तेषां सिद्धानां ध्येय ईश्वरः ॥ ३ ॥ २६ ॥ उच्चैःश्रवसमश्वानां मां जानीहि सुधोद्भवम् ॥ ऐरावतमिरावत्या अपत्यं हास्तिनां वरम् ॥ १ ॥ सुधामथनजं विद्धि मामेव ध्येयमीश्वरम् ॥ नृणां मध्ये नृपं विद्धि मामेव जगतः पतिम् ॥ २ ॥ २७ ॥

**भा० टी०–अश्वत्थ इति** । देवानामेव सतां मन्त्रदर्शित्वात् ऋषित्वं प्राप्तानां नारदोऽस्मि । सिद्धानां जन्मनैव धर्मज्ञानादिनिरतिशयं प्राप्तानाम् ॥ २६ ॥ अमृतोद्भवममृतमथनोद्भवमिदमैरावतेऽपि संबन्धनीयम् । नराधिपं राजानम् ॥ २७ ॥

**प० टी०–अश्वत्थ इति** । सर्ववृक्षाणां मध्येऽश्वत्थः पिप्पलो मद्विभूतिः । देवाः सन्तो यदृषयस्तेषु नारदोऽहम् । गन्धर्वाणां मध्ये चित्ररथः, उत्पत्तित एवाधिगतपरमार्थानां सिद्धानां कपिलोऽहम् ॥ २६ ॥ **उच्चैःश्रवसमिति** । अमृतोद्भवं क्षीरोदमथनोद्भूतमुच्चैःश्रवसं सप्तमुखमश्वं मद्विभूतिं विद्धि । गजेन्द्राणां मध्ये चतुर्दन्तमैरावतं मद्विभूतिं विद्धि ॥ २७ ॥

**रा० टी०–अश्वत्थ इति** । अश्ववत्तिष्ठतीत्यश्वत्थनामाश्वत्थगतः, नराणामपेक्षितं नारं तद्ददातीति नारदनामा नारदस्थः, विचित्राधिदेवादिरथवत्त्वाच्चित्ररथनामा तन्नामकगन्धर्वस्थितः, सुखरूपत्वात्कः पाल्यते जगदनेनेति पिः पा रक्षण इत्यतः किः, आतो लोप इटिचेत्याकारलोपः लीयते जगदनेनेति लः लीं श्लेषण इत्यतो डः, ला दान इत्यतो वा कः, कश्चासौ पिश्चासौ लश्चेति कपिलः, सुखं पिबत्यनुभवति लीलयेति वा कपिलः ॥ २६ ॥ अत्युत्कृष्टकीर्तिमत्त्वहेतुना उच्चैःश्रवोनामानममृतोद्भवं क्षीरसमुद्रजातोच्चैःश्रवःस्थं विद्धि । तदैरं मदीयं सर इति मुक्तिस्थसरसो लक्ष्म्यात्मकत्वोक्तेः ऐरं श्रीः तामवतीति ऐरावतनामानमिन्द्रवाहनस्थं विद्धि । नरेश्वरत्वहेतुना नराधिपनामानं चक्रवर्त्यादिस्थं विद्धि ॥ २७ ॥

## आयुधानामहं वज्रं धेनूनामस्मि कामधुक् ॥
## प्रजनश्चास्मि कन्दर्पः सर्पाणामस्मि वासुकिः ॥ २८ ॥

**त० टी०–आयुधानामिति** । आयुधानामस्त्राणां मध्ये वज्रं दधीच्यस्थिनिर्मितमस्त्रमहम्, धेनूनां हविर्दोग्ध्रीणां च मध्ये कामान्दोग्धीति कामधुक् क्षीरसमुद्रमथनोद्भवा धेनुरहमस्मि । प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पः कामोऽहमस्मि नतु केवलभोगहेतुः । सर्पाणामेकशिरसां मध्ये तेषां राजा वासुकिरहमस्मि ॥ २८ ॥

**म० टी०–आयुधेति** । आयुधानामस्त्राणां मध्ये वज्रं दधीचेरस्थिसंभवमस्त्रमहमस्मि । धेनूनां दोग्ध्रीणां मध्ये कामं दोग्धीति कामधुक् समुद्रमथनोद्भवा वसिष्ठस्य कामधेनुरहमस्मि । कामानां मध्ये प्रजनः प्रजनयिता पुत्रोत्पत्त्यर्थो यः कन्दर्पः कामः सोऽहमस्मि । चकारस्त्वर्थो रतिमात्रहेतुकामव्यावृत्त्यर्थः । सर्पाश्च नागाश्च जातिभेदाद्भिद्यन्ते तत्र सर्पाणां मध्ये तेषां राजा वासुकिरहमस्मि ॥ २८ ॥

**शं० टी०-आयुधानामिति ।** कामधुक् कामधेनुः, प्रजनयिता कन्दर्पः कामोऽहम् ॥ २८ ॥

**श्री० टी०-आयुधानामिति ।** आयुधानां मध्ये वज्रं, कामान् दोग्धीति कामधुक्, प्रजनः प्रजोत्पत्तिहेतुः कन्दर्पः कामोऽस्मि, न केवलं संभोगप्रधानः कामो मद्विभूतिः अशास्त्रीयत्वात् सर्पाणां सविषाणां राजा वासुकिरस्मि ॥ २८ ॥

**स० टी०-**आयुधानामहं वज्रं दधीचेरस्थिसंभवम् ॥ सर्वकामैकदोग्ध्रीणां वसिष्ठस्यास्मि कामधुक् ॥१॥ प्रजाजनयिता कामो धर्महेतुरहं हरिः ॥ वासुकिः सर्पराजोऽहं सर्पाणामस्मि धार्मिकः ॥ २ ॥ २८ ॥

**भा० टी०-आयुधानामिति ।** वज्रं दधीच्यस्थिसंभवं प्रजनश्च पुत्रप्रजननहेतुः कामः ॥ २८ ॥

**प० टी०-आयुधानामिति ।** आयुधानां शस्त्राणां मध्ये वज्रमहम्, धेनूनां मध्ये समुत्पन्नां कामधेनुं मद्विभूतिं विद्धि, प्रजनो विधिवत्प्रजोत्पत्तिहेतुः कन्दर्पोऽहमस्मि । सर्पाणां सविषाणां मध्ये वासुकिरस्मि॥२८॥

**रा० टी०-आयुधानामिति ।** सर्वदोषवर्जितत्वादरिभिर्वर्जनाद्वा वज्रनामा इन्द्रायुधस्थः, कामितार्थदोग्धृत्वात्कामधुङ्नामा कामधेनुस्थः, कं सुखं तस्य दरः प्रभेदाः तान्पिबत्यनुभवतीति कन्दर्पनामा, प्रकृष्टजननकारणमन्मथस्थः, सर्पाणामेकशिरसां वासस्य कं वासकमतिशयार्थ उकारः वासुकः तद्दातृत्वेन तद्वान्वासुकिः मत्वर्थक इकारप्रत्ययः ' वासुकिर्वाससुखदः ' इति निरुक्तेः ॥ २८ ॥

## अनन्तश्चास्मि नागानां वरुणो यादसामहम् ॥
## पितॄणामर्यमा चास्मि यमः संयमतामहम् ॥ २९ ॥

**त० टी०-अनन्त इति । नागास्तेभ्यो भिन्नजातीया अनेकशिरसस्तेषां मध्येऽनन्तः शेषो वैराग्यसत्त्वादिगुणविशिष्टोऽहमस्मि । यादसां जलजन्तूनामधिपो वरुणोऽहं, पितॄणां मध्येऽर्यमा नामाहमस्मि । संयमतां नियमनं कुर्वतां मध्ये धर्माधर्मयोः फलदानेनानुग्रहनिग्रहकर्ता यमो वैवस्वतोऽहमस्मि ॥ २९ ॥**

**म० टी०-अनन्त इति ।** नागानां जातिभेदानां मध्ये तेषां राजाऽनन्तश्च शेषाख्योऽहमस्मि । यादसां जलचराणां मध्ये तेषां राजा वरुणोऽहमस्मि । पितॄणां मध्ये अर्यमा नाम पितृराजश्चाहमस्मि । संयमतां संयमं धर्माधर्मफलदानेनानुग्रहं निग्रहं च कुर्वतां मध्ये यमोऽहमस्मि ॥ २९ ॥

**शं० टी०-अनन्त इति ।** नागानां मध्ये अनन्तः शेषोऽहं, यादसां जलदेवतानां मध्ये वरुणोऽहं, संयमतां दुष्टनिग्रहं कुर्वतां मध्ये यमोऽहम् ॥ २९ ॥

**श्री० टी०-अनन्त इति ।** नागानां निर्विषाणां राजा अनन्तः शेषोऽस्मि । यादसां जलचराणां राजा वरुणोऽहमस्मि । पितॄणां राजा अर्यमाऽस्मि । संयमतां नियमनं कुर्वतां मध्ये यमोऽहमस्मि ॥ २९ ॥

**स० टी०-**अनन्तो नागराजोऽहं नागानां भगवत्कला॥जलेश्वराणां वरुणो राजाऽहं सर्वयादसाम् ॥१॥ अर्यमा पितृराजोऽहं पितॄणां सर्वभोगदः ॥ यमोऽहं धर्मराजाख्यः संयमनं प्रकुर्वताम् ॥ २ ॥ २९ ॥

**भा० टी०-अनन्त इति ।** अनन्तः शेषः यादसा जलदेवतानां, संयमतां सम्यङ्नियमनं कुर्वताम् ॥२९॥

**प० टी०-अनन्त इति ।** नागानां निर्विषाणां मध्येऽनन्तो मद्विभूतिः । यादसां जलाधिवासिनां वरुणोऽहम् । पितॄणां मध्येऽर्यमास्मि ॥ २९ ॥

**रा० टी०-अनन्त इति ।** नागानामनेकशिरसां देशकालगुणानन्त्यहेतुनाऽनन्तनामा शेषगतः;यादसां जलचराणामुत्कृष्टानन्ददत्वाद्वरुणनामा वरुणस्थः ' णश्च निर्वृतिवाचकः' इत्युक्तेः । वरशब्दस्य उकारोऽन्तादेशः वृणोतीति वा वरुणः वृञ उणूप्रत्ययः । ऋगतावितिं धातोर्यत्प्रत्यये अर्यं ज्ञेयं तन्माति जानातीत्यर्यमनामा तन्नामकपितृस्थः, संयमतां नियमनं कुर्वतां यमः नियमनहेतुना यमनामा यमाख्यसारधर्मप्रद इत्यर्थः॥२९॥

**प्रह्लादश्चास्मि दैत्यानां कालः कलयतामहम् ॥**
**मृगाणां च मृगेन्द्रोऽहं वैनतेयश्च पक्षिणाम् ॥ ३० ॥**

**त० टी०—प्रह्लाद इति ।** दैत्यानां दितिसंभवानां मध्ये प्रकर्षेणाह्लादयति सुखयति साधूनिति प्रह्लादश्चास्मि। कलयतां गणनां कुर्वतां मध्ये कालः सर्वकार्यपरिणामहेतुः कलामुहूर्तादिमयो यः सोऽहं, मृगेन्द्रः सिंहो, वैनतेयो गरुडः ॥ ३० ॥

**म० टी०—प्रह्लादेति।** दैत्यानां दितिवंश्यानां मध्ये प्रकर्षेण ह्लादयत्यानन्दयति परमसात्त्विकत्वेन सर्वानिति प्रह्लादश्चास्मि। कलयतां संख्यानं गणनं कुर्वतां मध्ये कालोऽहं, मृगेन्द्रः सिंहः मृगाणां पशूनां मध्येऽहं, वैनतेयश्च पक्षिणां विनतापुत्रो गरुडः ॥ ३० ॥

**शं० टी०—प्रह्लाद इति ।** शुभमशुभं वृद्धिं क्षयं च कलयतां कुर्वतां मध्ये कालोऽहम् ॥ ३० ॥

**श्री० टी०—प्रह्लाद इति ।** दैत्यानां राजा प्रह्लादोऽस्मि। कलयतां वशीकुर्वतां गणयतां वा मध्ये कालोऽहं, मृगेन्द्रः सिंहः । पक्षिणां मध्ये गरुडोऽस्मि ॥ ३० ॥

**स० टी०—**दितिवंशोद्भवानां च प्रह्लादोऽस्मि सतां वर। गगनं कुर्वतां मध्ये कालोऽहं सर्वविश्वगः ॥१॥ मृगाणां मृगराजोऽहं पक्षिणां विनतासुतः ॥ २ ॥ ३० ॥

**भा० टी०—प्रह्लादेति।** कलयतां वशीकुर्वतां, संख्यां कुर्वतां वा । मृगेंद्रः सिंहः व्याघ्रो वा । विनतासुतो वैनतेयो गरुडः ॥ ३० ॥

**प० टी०—प्रह्लाद इति ।** दैत्यानां मध्ये प्रह्लादो मद्विभूतिः कलयतामाक्रमवतां वस्तूनां मध्ये कालोऽहम् । मृगाणां श्वापदानां मध्ये मृगेन्द्रः सिंहोऽहम् । पक्षिणां मध्ये वैनतेयो विनतासुतो गरुडोऽहम् ॥३०॥

**रा० टी०—प्रह्लाद इति ।** प्रकृष्टः ह्लादः सुखं यस्येति प्रह्लादनामा तन्नामकदैत्यस्थः, कलयतामाकलयतां बन्धनादिकुर्वतां वा कालः, कलज्ञान इतिधातोः सर्वमाकलयतीति कालनामा कालस्थः, स्वात्मानं मृगयन्त्यन्वेषयन्तीति मृगाः भक्तास्तदधिपतित्वान्मृगेन्द्रनामा मृगेन्द्रस्थः, विशेषेण नताः विनतास्तेषां आश्रयतया तत्संबन्धी वैनतेयः 'वैनतेयो नतास्पदः' इति निर्वचनात् संबन्धे ढक् ॥ ३० ॥

**पवनः पवतामस्मि रामः शस्त्रभृतामहम् ।**
**झषाणां मकरश्चास्मि स्रोतसामस्मि जाह्नवी ॥ ३१ ॥**

**त० टी०—पवन इति ।** पवतां पावयितॄणां वेगवतां वा पवनो वायुरहं, शस्त्रधारिणां मध्ये रामो दाशरथिः परमवीरोऽहमेव साक्षान्नतु मे विभूतिः स्वरूपभेदाभावात्, किंतु शस्त्रभृच्छ्रेष्ठराघवकुले रामरूपो रावणहन्ता कोदण्डधार्यहमेव चिन्तनीय इति भावः । रामः परशुरामो वा । झषाणां मध्ये मकरो मत्स्यविशेषोऽहं स्रोतसां प्रवाहरूपजलानां नदीनां मध्ये सर्वश्रेष्ठा जाह्नवी जह्नुकन्या गङ्गाऽहमस्मि ॥ ३१ ॥

**म० टी०—पवन इति ।** पवतां पावयितॄणां वेगवतां वा मध्ये पवनो वायुरहमस्मि। शस्त्रभृतां शस्त्रधारिणां युद्धकुशलानां मध्ये रामो दाशरथिरखिलराक्षसकुलक्षयकरः परमवीरोऽहमस्मि । साक्षात्स्वरूपस्याप्यनेन रूपेण चिन्तनार्थं वृष्णीना वासुदेवोऽस्मीतिवदत्र पाठ इति प्रागुक्तम् । झषाणां मत्स्यानां मध्ये मकरो नाम तज्जातिविशेषः, स्रोतसां वेगेन चलज्जलानां नदीनां मध्ये सर्वनदीश्रेष्ठा जाह्नवी गङ्गाऽहमस्मि ॥३१॥

**शं० टी०—पवन इति ।** पवतां पावनकर्तॄणां मध्ये पवनो वायुरहं, शस्त्रभृतां मध्ये रामो दाशरथिरहं, स्रोतसां स्रोतोवतीनां नदीनां मध्ये जाह्नवी गङ्गाहम् ॥ ३१ ॥

श्री० टी०—पवन इति । पवतां पावयितॄणां वेगवतां वा मध्ये वायुरस्मि । शस्त्रभृतां वीराणां रामो दाशरथिः यद्वा परशुरामः, झषाणां मत्स्यानां मध्ये मकरो मत्स्यविशेषस्तिमिङ्गिलः, स्रोतसा प्रवाहोदकानां मध्ये भागीरथी ॥ ३१ ॥

स० टी०—पवनः पावयितॄणां सर्वप्राणकलेश्वरः ॥ शस्त्रास्त्रधारिणां मध्ये रामो दाशरथिर्विभुः ॥१॥ सर्वरक्षःकुलध्वंसी महावीरोऽहमीश्वरः ॥ साक्षाद्धि स्वस्वरूपस्यानेन रूपेण देहिनाम् ॥ २ ॥ चिन्तनार्थं दाशरथेः पाठो ज्ञेयो विभूतिषु ॥ ३ ॥ धनुष्पाणी रक्षःकुलवनदवाग्निर्द्विजगतिः प्रतापी संश्लिष्टो जनकतनयाबाहुलतया ॥ शरच्चन्द्राकारं स्मितमधुरवक्त्रामृतरुहं दधानो ध्येयोऽसौ रघुकुलरविर्लक्ष्मणसखः ॥ ४ ॥ कृतज्ञो मेधावी स्मृतिधृतिनिधिः शान्तिजलधिः कृपासिन्धुर्वीरो निरवधिसुखागारपद्दः ॥ प्रभुर्लावण्याब्धिर्दशरथकुमारोऽत्यभयदः सदा ध्येयो हीत्थं रघुकुलहिमांशुः स्वहृदये ॥ ५ ॥ अनेकमत्स्यजातीनां मकराख्योऽहमीश्वरः ॥ चलज्जलानां वेगेन गङ्गाहं सरितां वरा ॥ ६ ॥ ३१ ॥

भा० टी०—पवन इति । पवतां पावयितॄणाम् , रामः श्रीरामचन्द्रः । झषाणां मत्स्यादीनां मकरो नाम जातिविशेषः । स्रोतसां स्रवन्तीनां नदीनां जाह्नवी गङ्गा ॥ ३१ ॥

प० टी०—पवन इति । प्लवतां वेगवतां मध्ये पवनः, शस्त्रभृतां वीराणां मध्ये रामो दाशरथिरहम् । झषाणां मत्स्यानां मध्ये मकरो यादोविशेषः । स्रोतसां प्रवाहाणां मध्ये जाह्नवी मद्विभूतिः ॥ ३१ ॥

रा० टी०—पवन इति । पवतां शोधकानां वेगवतां वा पान्तीति पाः पा रक्षणे क्विप् । पाभिः पालकैः वननीयत्वाद्भजनीयत्वात्पवनः पवनस्थः, लोकं रमयतीति रामः लोकोऽस्माद्रमत इति वा रामः रमेर्घञ् । झषाणां मीनानां माङ् मान इत्यतो माशब्देन ज्ञानं तस्याल्पताज्ञापनाय ह्रस्वतया निर्देशः ' ऊनार्थे चोनमिष्यते, इत्युक्तेः । लोकस्य मम् अल्पज्ञानं करोतीति मकरनामा मकराख्यजन्तुगतः, असारतया संसारं जहतस्त्यजतोऽवति रक्षतीति जाह्नवीनामा गङ्गास्थः ॥ ३१ ॥

**सर्गाणामादिरन्तश्च मध्यं चैवाहमर्जुन ॥**
**अध्यात्मविद्या विद्यानां वादः प्रवदतामहम् ॥ ३२ ॥**

त० टी०—सर्गाणामिति । सर्गाणां सृज्यानामाकाशाद्यचेतनानामादिरन्तश्च मध्यं च उत्पत्तिस्थितिलया अहमेव । हे अर्जुन विद्यानां श्रेयःसाधनभूतानां मध्ये अध्यात्मविद्या आत्मानौ तत्त्वंपदार्थावधिकृत्य या विद्या तत्स्वरूपगुणसंबन्धवेदनात्मिकाऽध्यात्मविद्या परमनिःश्रेयोरूपमोक्षसाधनभूतत्वादतिश्रेष्ठाऽहं, प्रवदतां प्रकर्षेण वदतां वादिनां संबन्धिन्यो या वादजल्पवितण्डात्मिकास्तिस्रः कथास्तासां मध्ये वादोऽहं, तत्र वीतरागद्वेषयोस्तत्त्वबुभुत्स्वोः सतीर्थयोर्गुरुशिष्ययोर्वा तत्त्वनिर्णयार्थं युक्तिप्रमाणाभ्यां स्थापनदूषणाभ्यां च स्वपक्षप्रतिपक्षपरिग्रहरूपा कथा वादः । तत्त्वसंरक्षणार्थं जल्पवितण्डे बीजरोहसंरक्षणार्थं कण्टकशाखाप्रावरणवत् । यत्र द्वयोर्जिगीष्वोस्तर्कप्रमाणाभ्यां स्वपक्षस्थापनपूर्विका छलजातिनिग्रहैः परपक्षनिरासफला कथा जल्पः । यत्र तु छलजातिनिग्रहस्थानैः परपक्षो दूष्यते एव नतु स्वपक्षः स्थाप्यते सा कथा वितण्डा । तत्राभिप्रायान्तरेण प्रयुक्तस्य शब्दस्यार्थान्तरं प्रकल्प्य दूषणं छलम् । असदुत्तरं जातिः । सा च साधर्म्यवैधर्म्यादिभेदाद्बहुधा । अपजयहेतुर्निग्रहस्थानम् । तदपि प्रतिज्ञाहानिप्रतिज्ञान्तरादिभेदादनेकविधम् ॥ ३२ ॥

म० टी०—सर्गाणामिति । सर्गाणामचेतनसृष्टीनामादिरन्तश्च मध्यं चोत्पत्तिस्थितिलया अहमेव, हे अर्जुन भूतानां जीवाविष्टानां चेतनत्वेन प्रसिद्धचेतनत्वेन प्रसिद्धानामेवादिरन्तश्च मध्यं चेत्युक्तमुपक्रमे-

इह त्वचेतनसर्गाणामिति न पौनरुक्त्यम् । विद्यानां मध्ये अध्यात्मविद्या मोक्षहेतुरात्मतत्त्वविद्याहं, प्रवदतां प्रवदत्संबन्धिनां कथाभेदानां वादजल्पवितण्डात्मकानां मध्ये वादोऽहं, भूतानामस्मि चेतनेत्यत्र यथा भूतशब्देन तत्संबन्धिनः परिणामा लक्षितास्तथेह प्रवदच्छब्देन तत्संबन्धिनः कथाभेदा लभ्यन्ते अतो निर्धारणोपपत्तिः । यथाश्रुते तूभयत्रापि संबन्धे षष्ठी । तत्र तत्त्वबुभुत्स्वोर्वीतरागयोः सब्रह्मचारिणोर्गुरुशिष्ययोर्वा प्रमाणेन तर्केण च साधनदूषणात्मा सपक्षप्रतिपक्षपरिग्रहस्तत्त्वनिर्णयपर्यन्तो वादः । तदुक्तम् 'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः' इति गौ० १।४१ । वादफलस्य तत्त्वनिर्णयस्य दुर्दुरूढवादिनिराकरणेन संरक्षणार्थं विजिगीषुकथे जल्पवितण्डे जयपराजयमात्रपर्यन्ते । तदुक्तम् 'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखाप्रावरणवत्' इति । छलजातिनिग्रहस्थानैः परपक्षो दूष्यत इति जल्पे वितण्डायां च समानम् । तत्र वितण्डायामेकेन स्वपक्षः स्थाप्यत एव अन्येन च स दूष्यत एव, जल्पे तूभाभ्यामपि स्वपक्षः स्थाप्यते उभाभ्यामपि परपक्षो दुष्यत इति विशेषः । तदुक्तम् 'यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः' १।४२। 'स प्रतिपक्षस्थापनाहीनो वितण्डा' इति १।४३। अतो वितण्डाद्वयशरीरत्वाज्जल्पो नाम नैका कथा किंतु शक्त्यतिशयज्ञानार्थं समयबन्धमात्रेण प्रवर्तत इति खण्डनकाराः। तत्त्वाध्यवसायपर्यवसायित्वेन तु वादस्य श्रेष्ठत्वमुक्तमेव ॥ ३२ ॥

**शं० टी०**—आदित्यादिविभूतीनां विष्णवादिविभूतिविशेषाणां च स्वमात्रत्वं सूचयितुं विकाराणां सर्वेषामादिर्मध्यं चान्तश्चाहमेव सर्वात्मा परिपूर्ण इत्याह—**सर्गाणामिति** । सृज्यन्त इति सर्गा महदादिस्थूलान्ता विकारास्तेषामादिरुपादानकारणमहमेव, घटकरकादेर्मृद्वन्मत्त एव सर्वं समुत्पन्नमित्यर्थः "तस्मात्सर्वमभवत्" इतिश्रुतेः। ननु सर्वविकारकारणत्वेनादौ सत्यपि सद्भावे तव कार्यदशायां सत्ताऽदर्शनात्सार्वात्म्यं पूर्णत्वं च न संभवतीत्याशङ्कायामाह—मध्यं चैवेति। मृत्कार्ये घटादौ गन्धवत्त्वादेर्मृद्धर्मस्य संदर्शनान्मृद एव समन्वयस्तेन घटादि सर्वं मृदेव यथा तथा महदादिषु सत्तास्फूर्त्यादेर्मद्धर्मस्य संदर्शनान्ममैव समन्वयस्तेन सर्वमहमेव यस्मादेवं तस्मात्प्रपञ्चस्य मध्यं चाहमेव विकारात्मना स्थितोऽस्मीति सिद्धम् । ननु विकारात्मना स्थितत्वे तव विकारनाशान्नाशप्रसक्तौ तव सत्ताऽभावादनित्यत्वमसर्वात्मत्वमपूर्णत्वं च स्यादित्याशङ्कायामाह—अनन्तश्चेति। कार्यस्यान्तस्त्वदर्शनलक्षणो यः सोऽप्यहमेव कल्पितरूपस्य घटस्य नाशे सति तत्कारणस्य तदनुवृत्ताया मृदो नाशाभावादस्त्येव कपालतच्चूर्णाद्यनुवृत्ताया मृदः सत्ता तद्वन्महदादिसर्वविकारनाशेऽपि तत्कारणभूततदनुवृत्तमत्सत्ताया नाशाभावादस्त्येव मम सद्भावो नित्यत्वं सार्वात्म्यं पूर्णत्वं च यतो विकाराणामादिरन्तश्च मध्यं चाहमेव मदतिरिक्तस्य वस्तुनः प्रमाणतो निरूपयितुमशक्यत्वादत आदित्यादिविभूतयो विष्णवादिविभूतिविशेषाश्च सर्वेऽप्यहमेवेति सिद्धम् । यद्वा 'सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः' इतिवचनात्सृजन्त इति सर्गाः प्राणिनस्तेषामादिः सृष्टिकारणं ब्रह्माहमेव, अन्तश्च अन्तं करोतीत्यन्तः संहारकर्ता शिवः सोऽप्यहमेव, तथा मध्यं च मध्यशब्देनात्र तदुभयमध्यवर्ती स्थितिकर्ता विष्णुर्लक्ष्यते सोऽप्यहमेवेत्यर्थः । विद्या ज्ञानहेतवः सर्वे वेदाः शास्त्राणि च तासां मध्ये मोक्षहेतुत्वादध्यात्मविद्या उपनिषदस्त्वहमेव, प्रवदतां विवादं कुर्वताम् अत्र प्रवदच्छब्देन वादजल्पवितण्डादयो लक्ष्यन्ते तेषां मध्ये त्वर्थनिर्णयहेतुत्वाद्वादोऽहमित्यर्थः ॥ ३२ ॥

**श्री० टी०**—**सर्गाणामिति** । सृज्यन्त इति सर्गा आकाशादयस्तेषामादिरन्तश्च मध्यं चैवाहं अहमादिश्च मध्यं चेत्यत्र सृष्ट्यादिकर्तृत्वं पारमैश्वर्यमुक्तम् अत्र तूत्पत्तिप्रलयस्थितयो मद्विभूतित्वेन ध्येया इत्युच्यत इति विशेषः । अध्यात्मविद्या आत्मविद्या प्रवदतां वादिनां संबन्धिन्यो वादजल्पवितण्डाख्यास्तिस्रः कथाः

प्रसिद्धाः तासां मध्ये वादोऽहम् । यत्र द्वाभ्यामपि प्रमाणतस्तर्कतश्च स्वपक्षः स्थाप्यते परपक्षश्च छलजातिनिग्रहस्थानैर्दूष्यते स जल्पो नाम । यत्र त्वेकः स्वपक्षं स्थापयति अन्यस्तु छलजातिनिग्रहस्थानैस्तत्पक्षं दूषयति न तु स्वपक्षं साधयति सा वितण्डा नाम कथा । तत्र जल्पवितण्डे विजिगीषमाणयोर्वादिनोः शक्तिपरीक्षामात्रफले, वादस्तु वीतरागयोः शिष्याचार्ययोरन्ययोर्वा तत्त्वनिर्णयफलः, अतोऽसौ श्रेष्ठत्वान्मद्विभूतिरित्यर्थः ॥ ३२ ॥

**स० टी०**—जन्मस्थितिलयाः सर्वसृष्टीनामहमर्जुन ॥ जीवाधिष्ठितभूतानां पूर्वमुक्तमुपक्रमे ॥ १ ॥ अध्यात्मविद्या विद्यानां मोक्षहेतुरहं हरिः ॥ वादजल्पवितण्डानां मध्ये वादोऽहमीश्वरः ॥ २ ॥ तत्र तत्त्वबुभुत्स्वोर्वा शिष्यदैशिकयोस्तथा ॥ प्रमाणेन च तर्केण साधने दूषणात्मकः ॥ ३ ॥ तत्त्वनिर्णयपर्यन्तः पक्षद्वयपरिग्रहः ॥ वादः स्याच्छास्त्रसिद्धान्तनिर्णये हेतुरुत्तमः ॥ ४ ॥ विजिगीषुकथे जल्पवितण्डे भ्रान्तिशालिनाम् ॥ जयाजयफले लोकप्रतिष्ठामात्रहेतुके ॥ ५ ॥ यत्रैकेन स्वकः पक्षः स्थाप्यते दूष्यतेऽन्यतः ॥ सा वितण्डा कथा ज्ञेया लौकिकी चातुरी कला ॥ ६ ॥ स्वपक्षः स्थाप्यते जल्पे उभाभ्यामेव युक्तिभिः ॥ दूष्यते परपक्षश्च विशेषोऽयं तयोर्द्वयोः ॥ ७ ॥ ३२ ॥

**भा० टी०**—सर्गाणामिति । सर्गाणां सृष्टीनामुत्पत्तिस्थितिप्रलया अहमेतादृशोऽपि परमार्थतः शुद्ध एवेति द्योतयन्नाह—हे अर्जुनेति । एतज्ज्ञानं शुद्धात्मज्ञानसाधनमिति वा संबोधनाशयः । अहमादिश्च मध्यं च भूतानामन्त एव चेत्युपक्रमे भूतानां जीवाविष्टानामहमाद्यादिरित्युक्तमिह तु सर्वस्यैव सर्गमात्रस्येति न पौनरुक्त्यम् । नन्वहमादिश्च मध्यं चेत्यत्र सृष्ट्यादिकर्तृत्वं परमैश्वर्यमुक्तमत्र तूत्पत्तिप्रलयस्थितयो मद्विभूतित्वेन ध्येया इत्युच्यते इति विशेष इत्यनेन प्रकारेण विशेष आचार्यैः कुतो नोक्त इति चेत्, आद्यादिशब्दानामुभयत्रैकरूपत्वेन विशेषाश्रुतत्वात् । उपक्रमे पूर्वार्धभूतशब्दानुरोधेन भूतशब्दस्य जीवाविष्टभूतबोधकत्वेन सृज्यमात्रबोधकसर्गशब्दे च विशेषस्य श्रुतत्वात्, श्रुतहान्यश्रुतकल्पनाभयादिति गृहाण । विद्यानामध्यात्मविद्याहमस्मि मोक्षार्थत्वादध्यात्मविद्यायाः । प्रवदतामित्यनेन वादजल्पवितण्डानां ग्रहणम् । वादादिस्वरूपबोधकानि गौतमसूत्राणि—'प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः । यथोक्तोपपन्नः छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः । स प्रतिपक्षस्थापनहीना वितण्डा' इति । पक्षप्रतिपक्षौ विप्रतिपत्तिकोटी तयोः परिग्रहो वादः साधनोद्देश्यकोक्तिप्रत्युक्तिरूपवचनसंदर्भः । ननु तावन्मात्रं कथान्तरसाधारणमत आह—प्रमाणेत्यादिना । प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः । अत्र कारणस्याव्याप्यस्योपपत्तित आरोपादूह इत्यन्वयः । उपालम्भः दूषणं प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां साधनोपालम्भौ यत्र स तथा । ज्ञानमत्रानाहार्यं विवक्षितं सिद्धान्तेनाविरुद्धः पञ्चावयवैरुपपन्न इत्येतद्विशेषणद्वयं निग्रहस्थानविशेषनियमार्थम् । जल्पं लक्षयति—यथेति । यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः । तथाच प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्यां न तु ज्ञानेऽनाहार्यत्वं विवक्षितमारोपितप्रमाणभावेनापि जल्पस्य निर्वाहात्, छलादिभिः साधनस्य परकीयानुमानस्योपालम्भो यत्रेत्यर्थः । छलेत्यादिना विजिगीषुकथात्वं बोध्यते । विजिगीषुर्हि छलादिकं करोति । तथाचोभयपक्षस्थापनवती विजिगीषुकथा जल्प इत्यर्थः । वितण्डां लक्षयति—सेति । स जल्पः स्थापनद्वयवत्त्वं विहाय जल्पैकदेशः प्रतिपक्षो द्वितीयः पक्षः, तथाच प्रतिपक्षस्थापनहीना विजिगीषुकथा वितण्डेति । तथाचार्थनिर्णयहेतुत्वाद्वादस्य श्रेष्ठत्वाद्वादोऽहमस्मि ॥ ३२ ॥

**प० टी०**—सर्गाणामिति । सृज्यन्त इति सर्गा आकाशादयस्तेषामादिर्मूलमन्तः पर्यन्तो मध्यं स्थिति-

रहमेव । विद्यानां चतुर्दशानां मध्ये आत्मप्रतिपादिकाध्यात्मविद्याहम् , अन्यासां तु स्वस्वमताभिनिवेशेन मत्सरादिजनकत्वात् । उक्तं च—' रे रे मत्सर जीव वत्सरशतं येन त्वया निर्जितं, शास्त्राणामिदमूर्जितं प्रयततां त्वद्ध्वंशविछित्तये । यस्मात्तद्गुरुतामपास्य च कृथाः स्वान्यायुधान्यन्यथा, स्वीयं स्थापयितुं मतं परमतच्छेदं कथं कुर्वते ' इति । अत एवाह—वादः प्रवदतामिति । प्रवदतां परस्परं विवादजल्पवितण्डारूपाः कथाः कुर्वतां मध्ये तत्त्वबुभुत्सोः कथारूपो वादोऽहम् ॥ ३२ ॥

रा० टी०—सर्गाणामिति । सृज्यन्त इति सर्गाः भूतानि तेषां सृष्टिस्थितिलयहेतुरहमेवेत्यर्थः । आत्मनो जीवानधिकृत्य पतित्वेन वर्तते ज्ञप्तिस्वरूपश्चेत्यध्यात्मविद्यानामा ब्रह्मविद्यास्थः, प्रवदतां जल्पवितण्डादिकथां कुर्वतां वाच्यत्वहेतुना वादनामा वादकथास्थः ॥ ३२ ॥

**अक्षराणामकारोऽस्मि द्वन्द्वः सामासिकस्य च ॥**
**अहमेवाक्षयः कालो धाताऽहं [1]विश्वतोमुखः ॥ ३३ ॥**

**त० टी०—अक्षराणामिति । अक्षराणां वर्णानां मध्ये सर्ववाङ्मयत्वाच्छ्रेष्ठोऽकारोऽहमस्मि "अकारो वै सर्वा वाक्" इति श्रुतेः । द्वन्द्वः सामासिकस्य च समासानां समूहः सामासिकस्तस्य मध्ये द्वन्द्वः समासोऽहं, स चोभयपदार्थप्रधानत्वाच्छ्रेष्ठः । अक्षयः सर्वसंहारकः कालोऽहमेव । कालः कलयतामहमित्यत्र तु क्षणादिरूपः क्षयी काल उक्तः, इह तु तस्यापि प्रवर्तकः कालकाल इति । "ज्ञः कालकालो गुणी सर्वविद्यः" इति श्रुतौ प्रसिद्धः । महाभारते चोद्योगपर्वणि—'कालचक्रं जगच्चक्रं युगचक्रं च केशवः । आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥ कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च । ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥' धाता विश्वतोमुखः प्राणिमात्रभर्ताऽहम् ॥ ३३ ॥**

म० टी०—अक्षराणामिति । अक्षराणां सर्वेषां वर्णानां मध्ये अकारोऽहमस्मि " अकारो वै सर्वा वाक् " इति श्रुतेस्तस्य श्रेष्ठत्वं प्रसिद्धम् । द्वन्द्वः समास उभयपदार्थप्रधानः सामासिकस्य समाससमूहस्य मध्येऽहमस्मि । पूर्वपदार्थप्रधानोऽव्ययीभावः, उत्तरपदार्थप्रधानस्तत्पुरुषः, अन्यपदार्थप्रधानो बहुव्रीहिरिति तेषामुभयपदार्थसाम्याभावेनापकृष्टत्वात् । क्षयिकालाभिमानी अक्षयः परमेश्वराख्यः कालस्यापि कालः " ज्ञः कालकालो गुणी सर्वविद्यः " इत्यादिश्रुतिप्रसिद्धोऽहमेव । कालः कलयतामहमित्यत्र तु क्षयी काल उक्त इति भेदः । कर्मफलविधातॄणां मध्ये विश्वतोमुखः सर्वतोमुखो धाता सर्वकर्मफलदातेश्वरोऽहमित्यर्थः ॥ ३३ ॥

शं० टी०—अक्षराणामिति । वर्णानामकारोऽहं, सामासिकस्य समासानां समूहः सामासिकस्तत्र द्वन्द्वः समासोऽहं, विश्वतोमुखः धाता कर्मफलप्रदाताहम् । शिष्टं स्पष्टम् ॥ ३३ ॥

श्री० टी०—अक्षराणामिति । अक्षराणां वर्णानां मध्ये अकारोऽस्मि तस्य सर्ववाङ्मयत्वेन श्रेष्ठत्वात् । तथाच श्रुतिः—"अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवति" इति । सामासिकस्य समाससमूहस्य मध्ये द्वन्द्वः रामकृष्णावित्यादिसमासोऽस्मि, उभयपदप्रधानत्वेन श्रेष्ठत्वात् । अक्षयः प्रवाहरूपाः कालोऽहमेव कालः कलयतामित्यत्रायुर्गणनात्मकः संवत्सरशताद्यायुःस्वरूपः काल उक्तः स च तस्मिन्नायुषि क्षीणे सति क्षीयते अत्र तु प्रवाहात्मकोऽक्षयः काल उच्यत इति विशेषः । कर्मफलविधातॄणां मध्ये विश्वतोमुखो धाता सर्वकर्मफलविधाताहमित्यर्थः ॥ ३३ ॥

स० टी०—वर्णानां सर्ववाग्रूपतयाकारः श्रुतेर्मतः ॥ समासस्य समूहेऽहं द्वन्दोऽस्म्युभयतो वरः ॥ १ ॥ कालोऽहं परमेशाख्यः कालकालोऽक्षयः परः ॥ क्षयी कालाभिमानी यः पूर्वोक्तः स विलक्षणः ॥ २ ॥ धाताहं सर्वतः पूर्णः प्राणिकर्मफलप्रदः ॥ ३ ॥ ३३ ॥

---

१ सर्वतोमुख इति क्वचित्पाठः ।

भा० टी०–अक्षराणामिति। अक्षराणामकारो वर्णोऽस्मि ' अकारो वै सर्वा वाक्। अकारो वासुदेवः स्यात् ' इत्युक्तेः। सामासिकस्याव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वसमाससमुदायस्य द्वन्द्वः समासोऽस्मि तस्योभयपदप्रधानत्वेन श्रेष्ठत्वात्। ननु सममेकत्र आसनं समासो विदुषां वा गुरुशिष्याणां वा मन्त्रार्थं कथार्थं वा एकत्रावस्थानं तत्र विदितमर्थजातं सामासिकं चातुर्थिकष्ठक् "ठस्येकः" इतीकादेशः "यस्येति च–" इत्यलोपः। तस्य मध्ये द्वन्द्वो रहस्योऽर्थोऽहम्। द्वन्द्वं रहस्येति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धमिति भाष्यकारैः कुतो न व्याख्यातमिति चेत् समासशब्दस्याव्ययीभावादौ द्वन्द्वशब्दस्य द्वन्द्वसमासे च योगरूढेः केवलयोगापेक्षया प्रबलत्वात्, प्रकृते द्वन्द्वशब्दस्य पुंस्त्वेन निर्देशात्। अक्षराणामकारोऽस्मीति समभिव्याहाराच्चेति गृहाण। अन्यथाक्षराणाम् "अक्षय्यं ह वै चातुर्मास्ययाजिनां सुकृतं भवति। प्राणा वै सत्यम्" इत्यादिनाऽक्षयत्वेन प्रतिपादितानां न करोतीत्यकारः कर्तृत्वादिवर्जितः परमात्माहं, तस्य परमार्थसत्यत्वात्। यद्वाऽक्षराणां व्यापकानां करोतीति करः कर एव कारः स्वार्थिकः प्रज्ञाद्यण्प्रत्ययः नकारोऽकारः आकाशोऽहम्। एकत्र रणभूमौ आसनमासोऽवस्थानं तत्र भवं युद्धजातं सामासिकं तस्य मध्ये द्वन्द्वः द्वन्द्वयुद्धमहं, इत्यादि यत्किंचित्कल्पयितुं शक्यं तस्मादाचार्योक्तमेव सम्यगिति दिक्। अक्षयः क्षयवर्जितः कालोऽहमेव, यद्वा कालस्यापि कालः परमेश्वरोऽहमेव। फलदातॄणां मध्ये सर्वस्य विश्वस्य कर्मफलस्य विधाता सर्वतोमुखोऽहमेवेत्यर्थः ॥ ३३ ॥

प० टी०–अक्षराणामिति। अक्षराणां स्वरवर्णानां मध्येऽकारः प्रथमः स्वरस्तस्य सर्वत्रानुस्यूतत्वात् स चाहम्। सामासिकस्य तत्पुरुषादिसमाससमूहस्य द्वन्द्वो रामकृष्णावित्युभयपदप्रधानोऽहम्। अक्षयोऽनाद्यन्तः कालोऽहमेव। विश्वतोमुखो विराड् धाता कर्मफलदाता ॥ ३३ ॥

रा० टी०–अक्षराणामिति। अइत्याक्रियमाणत्वादकारनामा अकारस्थः, सामासिकस्य समाससमूहस्य। बहिरन्तर्द्विरूपत्वेन द्वन्द्वनामा द्वन्द्वसमासस्थः, क्षयहीनत्वादक्षयनामा, संहर्तृत्वात्कालनामा सन् अक्षयकालस्थः, उत्तरावधिशून्यांशिकालगतः कलच्छेदने इति धातोः। धाता धारणपोषणकर्ता डुधाञ् धारणपोषणयोः। सर्वदिङ्मुखत्वहेतुना विश्वतोमुखनामा चतुर्मुखस्थ इत्येके, सर्वत्रस्थितमुखोपलक्षितसर्वावयववानित्यर्थ इत्यन्ये ॥ ३३ ॥

**मृत्युः सर्वहरश्चाहमुद्भवश्च भविष्यताम् ॥**
**कीर्तिः श्रीर्वाक्च नारीणां स्मृतिर्मेधा धृतिः क्षमा ॥ ३४ ॥**

त० टी०–मृत्युरिति। संहारकारिणां मध्ये सर्वहरः सर्वसंहारकारी मृत्युरहं, भविष्यतामुत्पत्स्यमानानामुद्भव उद्भावनमुत्पादनमहमित्यर्थः। नारीणां मध्ये कीर्तिश्च श्रीश्च वाक्चाहं, स्मृतिर्मेधा धृतिः क्षमेति सप्तधर्मपत्न्योऽहमेव, यासां लेशयोगेनापि नरः सर्वलोकप्रशस्यो भवति ताः कीर्त्याद्याः सप्तस्त्रियो मम विभूतिरित्यर्थः ॥ ३४ ॥

म० टी०–मृत्युरिति। संहारकारिणां मध्ये सर्वहरः सर्वसंहारकारी मृत्युरहं, भविष्यतां भाविकल्याणानां य उद्भव उत्कर्षः स चाहमेव, नारीणां मध्ये कीर्तिः श्रीर्वाक् स्मृतिर्मेधा धृतिः क्षमेति च सप्त धर्मपत्न्योऽहमेव, तत्र कीर्तिर्धार्मिकत्वनिमित्ता प्रशस्तत्वेन नानादिग्देशीयसर्वलोकज्ञानविषयतारूपा ख्यातिः। श्रीधर्मार्थकामसंपत् शरीरशोभा वा कान्तिर्वा। वाक् सरस्वती सर्वस्यार्थस्य प्रकाशिका संस्कृता वाणी। चकारान्मूर्त्यादयोऽपि धर्मपत्न्यो गृह्यन्ते। स्मृतिश्चिरानुभूतार्थस्मरणशक्तिः। अनेकग्रन्थार्थधारणाशक्तिर्मेधा। धृतिरवसादेऽपि शरीरेन्द्रियसंघातोत्तम्भनशक्तिः, उच्छृङ्खलप्रवृत्तिकारणेन चापलप्राप्तौ तन्निवर्तनशक्तिर्वा। क्षमा हर्षविषाद-

योरविकृतचित्तता यासामाभासमात्रसंबन्धेनापि जनः सर्वलोकादरणीयो भवति तासां सर्वस्त्रीपूत्तमत्वमतिप्रसिद्धमेव ॥ ३४ ॥

शं० टी०—मृत्युरिति । सर्वं हरतीति सर्वहरो मृत्युरहं, भविष्यतां भाविनां मध्ये उद्भवोऽभ्युदयोऽहं, नारीणां मध्ये कीर्त्यादिक्षमान्ता देवताः स्त्रियोऽहम् ॥ ३४ ॥

श्री० टी०—मृत्युरिति । संहारकारिणां मध्ये सर्वहरो मृत्युरहं भविष्यतां भाविकल्याणानां प्राणिनामुद्भवः अभ्युदयोऽहं नारीणां स्त्रीणां मध्ये कीर्त्याद्याः सप्तदेवतारूपाः स्त्रियोऽहं, यासामाभासमात्रयोगेन प्राणिनः श्लाघ्या भवन्ति ताः कीर्त्याद्याः स्त्रियो मद्विभूतयः ॥ ३४ ॥

स० टी०—संहारकारिणां मध्ये मृत्युः सर्वहरो ह्यहम् ॥ भाविकल्याणरूपाणां समुत्कर्षोऽहमेव च॥१॥ कीर्तिः सद्धर्मतः ख्यातिः श्रीर्धर्मार्थादिसंपदा ॥ वाग्वाणी संस्कृता सर्वपदार्थानां प्रकाशिका ॥ २ ॥ स्मृतिश्चिरानुभूतार्थस्मरणे शक्तिरद्भुता ॥ मेधा ह्यनेकग्रन्थार्थधारणाशक्तिरान्तरी ॥ ३ ॥ अवसादेऽपि देहादिसंघातोत्तम्भिका धृतिः ॥ क्षमा हर्षविषादादिहेतौ धीर्निर्विकारता ॥ ४ ॥ धर्मपत्न्य इमा मुख्या नारीणामहमेव च ॥ यासामाभासमात्रस्य संबन्धेनापि जन्तवः ॥ ५ ॥ आदर्तव्याः समस्तेषु सन्ति लोकेषु साधवः ॥ ६ ॥ ३४ ॥

भा० टी०—मृत्युरिति। मृत्युः सर्वहरः प्राणहरस्तस्य सर्वहरत्वात् धनादिहरस्तु न सर्वहरः,यद्वा प्रलयकाले सर्वहरः परमेश्वररूपो मृत्युरहम् । भविष्यतां भाविकल्याणानामुत्कर्षप्राप्तियोग्यानां मध्ये उत्कर्षाभ्युदयप्राप्तिहेतुरहम्, नारीणां कीर्त्यादयो नार्योऽहं यासामाभासमात्रेणापि लोकः कृतार्थमात्मानं मन्यते ॥ ३४ ॥

प० टी०—मृत्युरिति । सर्वहरः सर्वसंहारको मृत्युरहम्, भविष्यतां भाविनां प्राणिनामुद्भवो वर्तमानकल्पानन्तरमागामिकल्पे प्राण्युद्भवकर्ताहमेव, नारीणां स्त्रीलिङ्गवाचकानां मध्ये कीर्त्यादयः सप्तदेवता यदर्जनेन लोकः श्लाघ्यो भवति ता मद्विभूतयः । तत्र कीर्तिर्नाम सद्भिर्या गीयते न नटविटादिभिः, श्रीः शोभा, वाग्वाणी यया सर्वप्राणिनां व्यवहारश्चलति सा चतुर्विधा परा पश्यन्ती मध्यमा वैखरी च "चत्वारि वाक्परिमिता पदानि" इति श्रुतेः । तासां पृथक् स्वरूपं तु "बृहस्पतेः प्रथमं वाचो अग्रम्" इति श्रुत्या दर्शितं मण्डलब्राह्मणेऽपि "सैषा त्रय्येव विद्या तपति" इति "वाग्वै तत्पश्यन्ती वदति" इति एवं ताल्वोष्ठपुटसंयोगाज्जाता वैखरी । तदुक्तं शतश्लोके—'यो वर्णोच्चारहेतोर्घटयति रसनाम्' इति । सा द्वेधा राष्ट्री मन्द्रा च। तत्र राष्ट्रसंबन्धाज्जाता राष्ट्री देशभाषेत्यर्थः । मन्द्रा मननगम्या वेदवाणी "यद्वाग्वदन्त्यविचेतनानि" इति श्रुतेः । एवं साम निश्वासरूपत्वान्मद्विभूतिरित्यर्थः । एताः श्रुतयः शतश्लोकभाष्येऽस्माभिः सम्यग्व्याख्याता इह तु विस्तरभयान्न लिखिताः ॥ ३४ ॥

रा० टी०—मृत्युरिति । सर्वहरो मारकत्वहेतुना मृत्युनामा मृत्युस्थः भविष्यतामुत्पत्स्यमानानामुद्भावयतीति व्युत्पत्त्योद्भवनामा उद्भवस्थः, कीर्त्यत्वाश्रयत्ववक्तृत्वहेतुभिः कीर्तिश्रीवाङ्नामा सन् कीर्तौ श्रियां वाचि च स्थितः, स्मरणीयत्वात्स्मृतिनामा स्मृतिस्थः, मेधाधृतिक्षमारूपत्वात्तत्तन्नामा मेधाधृतिक्षमास्थः ॥ ३४ ॥

**बृहत्साम तथा साम्नां गायत्री छन्दसामहम् ॥**
**मासानां मार्गशीर्षोऽहमृतूनां कुसुमाकरः ॥ ३५ ॥**

त० टी०—बृहत्सामेति । पूर्वं वेदेषु साम्नो वैशिष्ट्यमुक्तं साम्नामपि विशेषो "यं त्वामिन्द्र हवामहे" इत्यस्यामृचि गानविशेषभूतं बृहत्साम, तच्च सर्वप्राणिनामीश्वरत्वेनेन्द्रस्तोत्रत्वादन्यतः श्रेष्ठं मद्विभूतिरित्यर्थः । छन्दसां नियताक्षरपादत्वरूपछन्दोविशिष्टानां मन्त्राणां मध्ये द्विजत्वापादकत्वेन

प्रातरादिसवनत्रयवाचित्वेन च सोमाहरणेन च सर्वर्चां श्रेष्ठा गायत्री ऋगहमित्यर्थः । मासानां द्वादशानां मध्ये मार्गशीर्षः । षण्णामृतूनां मध्ये कुसुमाकरो वसन्तः, । "वसन्ते ब्राह्मणमुपनयीत । वसन्ते ब्राह्मणोऽग्नीनादधीत" इत्यादिशास्त्रेण ब्राह्मधर्मसंबन्धितयाऽभिधीयमानत्वाच्छ्रेष्ठोऽहम् ॥ ३५ ॥

**म० टी०–बृहदिति** । वेदानां सामवेदोऽस्मीत्युक्तं तत्रायमन्यो विशेषः साम्नामृगक्षरारूढानां गीतिविशेषाणां मध्ये " त्वामिद्धि हवामहे " इत्यस्यामृचि गीतिविशेषो बृहत्साम तच्चातिरात्रे पृष्ठस्तोत्रं सर्वेश्वरत्वेनेन्द्रस्तुतिरूपमन्यतः श्रेष्ठत्वादहं, छन्दसां नियताक्षरपादत्वरूपछन्दोविशिष्टानामृचां मध्ये । द्विजातेर्द्वितीयजन्महेतुत्वेन प्रातःसवनादिसवनत्रयव्यापित्वेन त्रिष्टुप्जगतीभ्यां सोमाहरणार्थं गताभ्यां सोमो न लब्धोऽक्षराणि च हारितानि जगत्या त्रीणि त्रिष्टुभैकमिति चत्वारि तैरक्षरैः सह सोमस्याहरणेन च सर्वश्रेष्ठा गायत्री ऋगहं, चतुरक्षराणि ह वा अग्रे छन्दांस्यासुस्ततो जगती सोममच्छापतत्सा त्रीण्यक्षराणि हित्वा जगाम ततस्त्रिष्टुप् सोममच्छापतत्सैकमक्षरं हित्वाऽपतत्ततो गायत्री सोममच्छापतत्सा तानि चाक्षराणि हरन्त्यागच्छत् सोमं च तस्मादष्टाक्षरा गायत्री"इत्युपक्रम्य तदाहुः"गायत्राणि वै सर्वाणि सवनानि गायत्री ह्येवैतदुपसृजमाना" इति शतपथश्रुतेः " गायत्री वा इदं सर्वं भूतम् " इत्यादिछान्दोग्यश्रुतेश्च मासानां द्वादशानां मध्येऽभिनवशालिवास्तूकशाकादिशाली शीतातपशून्यत्वेन च सुखहेतुर्मार्गशीर्षोऽहं, ऋतूनां षण्णां मध्ये कुसुमाकरां सर्वसुगन्धिकुसुमानामाकरोऽतिरमणीयो वसन्तः " वसन्ते ब्राह्मणमुपनयीत । वसन्ते ब्राह्मणोऽग्नीनादधीत । वसन्ते वसन्ते ज्योतिषा यजेत । तद्वै वसन्त एवाभ्यारभेत । वसन्तो वै ब्राह्मणस्यर्तुः ' इत्यादिशास्त्रप्रसिद्धोऽहमस्मि ॥ ३५ ॥

**शं० टी०–बृहत्सामेति** । सामवेदे यानि सामानि रथन्तरादीनि तेषां मध्ये बृहत्सामाहं, छन्दसां गायत्र्यादिछन्दोयुक्तानां मन्त्राणां मध्ये चतुर्विंशत्यक्षरा गायत्री अहं, कुसुमाकरो वसन्तोऽहम् । शिष्टं स्पष्टम् ॥ ३५ ॥

**श्री० टी०–बृहत्सामेति** । "त्वामिन्द्र हवामहे" इत्यस्यामृचि गीयमानं बृहत्साम तेन चेन्द्रः सर्वेश्वरत्वेन स्तूयत इति श्रैष्ठ्यं दर्शितम् । छन्दोविशिष्टानां मन्त्राणां मध्ये गायत्र्यहं द्विजत्वापादकत्वेन सोमाहरणेन च श्रेष्ठत्वात् । कुसुमाकरो वसन्तः ॥ ३५ ॥

**स० टी०–वेदानां** सामवेदोऽस्मीत्युक्तं तत्रापरा भिदा ॥ साम्नामृगक्षरारूढगीतिभेदात्मनामहम् ॥ १ ॥ बृहत्सामातिरात्रे तत्पृष्ठं स्तोत्रं महत्तरम् ॥ सर्वेश्वरतयेन्द्रस्य स्तुतिरूपमितोऽप्यहम ॥ २ ॥ गायत्री वा इदं सर्वमित्यादौ ब्रह्मरूपतः ॥ छान्दोग्ये संस्तुता सम्यक् तथा शतपथश्रुतौ ॥ ३ ॥ मध्ये छन्दोविशिष्टानां नियताक्षरभागृचाम् ॥ सर्वात्मत्वेन निर्णीता गायत्री छन्दसामहम् ॥ ४ ॥ मासानां मार्गशीर्षोऽहं सुखहेतुतया वरः ॥ नातिशीतं न चात्युष्णं यस्मिन्धान्यादिशालिनि ॥ ५ ॥ पुष्पाणामाकरो यस्माद्ब्राह्मणानामृतुर्यतः ॥ रमणीयवसन्तोऽसावृतूनामहमित्यतः ॥ ६ ॥ ३५ ॥

**भा० टी०–बृहदिति** । साम्नां गीतिविशेषाणां बृहत्साम " त्वामिन्द्र हवामहे " इत्यस्यामृचि गीतिविशेषे सर्वेश्वरत्वेनेन्द्रस्तुतिरूपमतिरात्रे पृष्ठस्तोत्रं श्रेष्ठत्वादहम् । नियताक्षरपादरूपच्छन्दोविशिष्टानामृचां मध्ये द्विजत्वादिहेतुर्गायत्री ऋगहम् । मासानां मार्गशीर्षः सस्यादिसंपन्नत्वेन सुखजनकत्वात् । कुसुमाकरो वसन्तः पुष्पाकरत्वेन शोभनत्वात् ॥ ३५ ॥

**प० टी०–बृहदिति** । साम्नां चतुर्दशाधिकाष्टसहस्रसंमितानां मध्ये ईश्वरस्तावकानि कानिचित्पावमान्यानि रथन्तरादीनि सन्ति तेषु बृहत्साम मद्विभूतिः । एतदग्रिमाध्याये स्पष्टं निरूपयिष्यामः । तथा छन्दसामुष्णिगादीनां मध्ये गायत्री प्रथमा । गायन्तं त्रायते सा गायत्री चतुर्विंशत्यक्षरा ततश्चतुरक्षरवृ-

ष्ट्र्योष्णिगादिच्छन्दसां निष्पत्तिः सापि परमेश्वरप्रतिपादिकेति मद्विभूतिरुक्ता । तथाहि " तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् " अत्र कण्वसंहिताभाष्यकारस्तु तत्सवितुरिति विश्वामित्रः सावित्री गायत्री तदिति षष्ठ्या विपरिणाम्यते तस्य सवितुः सर्वस्य प्रसवदातुरादित्यान्तर्गतपुरुषस्य " योऽसावादित्ये पुरुषः " इति श्रुतेः देवस्य द्योतमानस्य हिरण्यगर्भोपाध्यवच्छिन्नस्य विज्ञानानन्दस्वभावस्य ब्रह्मणो वरेण्यं सर्वोत्कृष्टं भर्गस्तेजो धीमहि ध्यै चिन्तायाम्, अस्य छान्दसं संप्रसारणं ध्यायामश्चिन्तयामः । यद्वा किंभूतं भर्गः, सवितुः सूर्यस्यापि वरेण्यमुपजीव्यम् ' यदादित्यगतं तेजः ' इत्युक्तत्वात् । तस्य कस्य, यो नोऽस्माकं धियो धीः प्रचोदयात् । चुद प्रेरणे प्रकर्षेण प्रेरयति । तस्य सवितुः संबन्धि वरेण्यं वीर्यं तेजो ध्यायाम इति संबन्धः । अत्रैतदुक्तं भवति । सत्यज्ञानानन्दात्मकः सविता सर्वजगदुपादानाश्रयतया जगत्कर्ता सर्वोपाधिभिश्चिक्रीडिषुस्तत्तदुपाधिधर्मान् विजिगीषुः स्वकमनीयत्वादिमहिम्नो दिदर्शयिषुः स्वयं वशीकृतमायः सर्वात्मनामात्मभूतोऽन्तर्यामी देवोऽस्माकं धियो धीः प्रचोदयात्, ददामि बुद्धियोगं तमिति भगवदुक्तेः । तस्य सवितुर्देवस्यात्मभूतं वरेण्यं ध्यातॄणां संसारक्लेशमूलभर्जकं भर्गस्तेजः परं ज्योतिः सततं ध्यायाम इत्यर्थः । तथा मासानां द्वादशानां मध्ये मार्गशीर्षोऽहम् । मासास्तावच्चान्द्रमानेन भवन्ति चन्द्रनक्षत्रनामकाश्च यथा यस्यां पौर्णमास्यां चित्रानक्षत्रं स चैत्रमासः । तद्वद्विशाखाद्यैर्वैशाखादयः । प्रकृते तु मृगशिरःसंबन्धान्मार्गशीर्षः । एवं मृगशिरःस्वामी चन्द्रस्तथा ' स्वनामनक्षत्रसमाननाथा मासाः ' इत्युक्तत्वान्मासेशोऽपि स एव, पूर्णिमास्वामी च स एव । एवं मासनक्षत्रतिथीनामेकदैवतत्वेन पुण्यतमत्वं, अतो मद्विभूतिरित्यर्थः । यद्वा मृगशिरःपूर्णिमासंबन्धेन वर्षादिरभिहितः 'स्तस्मिन्नेवाग्रहायणी' इत्यभिधानात्, आग्रहायणं यस्यां साऽऽग्रहायणीत्यर्थः । अत एवाग्रहायणिक इति मार्गशीर्षनाम, अतोऽस्य मासस्य मुख्यत्वाद्विभूतित्वम् । तथा शिशिरादिषण्णामृतूनां मध्ये कुसुमाकरो वसन्तोऽस्मि सर्वेषामानन्दकरत्वाद्विष्णुवाश्रयत्वाच्च ॥ ३५ ॥

रा० टी०—बृहदिति । बृहत्सारत्वाद्बृहत्सः अमेयत्वादमः बृहत्सश्चासावमश्चेति बृहत्सामनामा रथन्तरवैरूपवैराजशाक्करादिसाम्नां मध्ये तदाधिक्यहेतुतया बृहत्सामस्थः स्वगायकांस्त्रातीति व्युत्पत्त्या गायत्रीनामा, त्रिष्टुब्जगत्यादिछन्दोभ्य आधिक्यहेतुतया गायत्रीछन्दःस्थः, मार्गाणां शीर्षस्थानत्वान्मार्गशीर्षनामा मासेभ्य आधिक्यहेतुतया मार्गशीर्षमासस्थः, कुत्सितां सुष्ठुभूतां च मां ज्ञानं करोतीति कुसुमाकरनामा, अन्यऋतुभ्य आधिक्यहेतुना वसन्तऋतुस्थः ॥ ३५ ॥

**द्यूतं छलयतामस्मि तेजस्तेजस्विनामहम् ॥**
**जयोऽस्मि व्यवसायोऽस्मि सत्त्वं सत्त्ववतामहम् ॥ ३६ ॥**

त० टी०—द्यूतमिति । छलयतां छलं परवञ्चनं कुर्वतां संबन्धि द्यूतमक्षदेवनादिलक्षणमहं, तेजस्विनां प्रतापिनां संबन्धि तेजः पराभिभवसामर्थ्यमहं, जेतॄणां जयोऽस्मि । व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि । सत्त्ववतां सात्त्विकानां ज्ञानवैराग्यादिलक्षणं सत्कार्यरूपं सत्त्वमहमस्मि ॥ ३६ ॥

म० टी०—द्यूतमिति । छलयतां छलस्य परवञ्चनस्य कर्तॄणां संबन्धि द्यूतमक्षदेवनादिलक्षणं सर्वस्वापहारकारणमहमस्मि । तेजस्विनामत्युग्रप्रभावानां संबन्धि तेजोऽप्रतिहताज्ञत्वमहमस्मि । जेतॄणां पराजितापेक्षयोत्कर्षलक्षणो जयोऽस्मि । व्यवसायिनां व्यवसायः फलाव्यभिचार्युद्यमोऽहमस्मि । सत्त्ववतां सात्त्विकानां धर्मः ज्ञानवैराग्यैश्वर्यलक्षणं सत्त्वकार्यमेवात्र सत्त्वमहम् ॥ ३६ ॥

शं० टी०—द्यूतमिति । छलं कपटस्तं कुर्वतां मायया परस्वहारिणां मध्ये द्यूतमहम् । सारिकाभिः क्रीडनं

द्यूतं सर्वस्वहरणकारणम् । तेजः प्रागल्भ्यं तद्वतां तेजोऽहं, जेतॄणां जयोऽहं, व्यवसायः उद्योगस्तद्वतां व्यवसायोऽहम् ॥ ३६ ॥

**श्री० टी०—द्यूतमिति** । छलयतामन्योन्यवञ्चनपराणां संबन्धि द्यूतमस्मि । तेजस्विनां प्रभाववतां तेजः प्रभावोऽस्मि । जेतॄणां जयोऽस्मि । व्यवसायिनामुद्यमवतां व्यवसाय उद्यमोऽस्मि । सत्त्ववतां सात्त्विकानां सत्त्वमहम् ॥ ३६ ॥

**स० टी०—द्यूतं** छलस्य कर्तॄणा यत्सर्वस्यापहारकृत् ॥ अतीवोग्रप्रभावानां तेजस्तेजस्विनामहम् ॥ १ ॥ जेतॄणामहमुत्कर्षलक्षणो जय एव च ॥ शश्वत्फलोद्यमोऽहं च जनानां व्यवसायिनाम् ॥ २ ॥ सात्त्विकानामहं सत्त्वं धर्मज्ञानादिलक्षणम् ॥ ३ ॥ ३६ ॥

**भा० टी०—द्यूतमिति** । छलस्य परवञ्चनस्य कर्तॄणां मध्ये द्यूतं, अक्षदेवनादिरूपम् । जेतॄणां जयस्य कर्तॄणां व्यवसायो निश्चयः फलहेतुरुद्यमो वा ॥ ३६ ॥

**प० टी०—द्यूतमिति** । छलयतामन्योन्यवञ्चनपराणामुत्कृष्टमोहकशक्तिरूपं द्यूतम् । येन धर्मादयोऽपि मोहिताः सन्तः किंचिन्न विदुः सा मद्विभूतिः । जेतॄणां जयोऽस्मि । व्यवसायिनामुद्यमवतां व्यवसायोऽहम्। सात्त्विकानां सत्त्वगुणोऽहम् ॥ ३६ ॥

**रा० टी०—द्यूतमिति** । छलयतां कापट्यमाचरतां क्रीडापरत्वहेतुना द्यूतनामा द्यूतस्थः, प्रकाशत्वात्तेजोनामा तेजःस्थः, जयिनां जयरूपसारप्रदत्वहेतुना जयोऽस्मि । व्यवसायो निश्चयः व्यवसायिनां व्यवसायरूपसारधर्मदातास्मीत्यर्थो ज्ञेयः । सत्त्ववतां सत्त्वरूपसारधर्मप्रदोऽस्मीत्यर्थः ॥ ३६ ॥

## वृष्णीनां वासुदेवोऽस्मि पाण्डवानां धनञ्जयः ॥
## मुनीनामप्यहं व्यासः कवीनामुशना कवि ॥ ३७ ॥

**त० टी०—वृष्णीनामिति** । वृष्णीनां प्रवरो वासुदेवो वसुदेवसूनुर्यो लोके प्रसिद्धः सोऽहं साक्षात्त्वदुपदेष्टा परमात्मैव नतु विभूतिरर्थान्तराभावात् किंतूक्तवक्ष्यमाणविभूतीशोऽहमित्यर्थः । विभूतिमध्ये पाठस्तु विभूतिमानहमनेनैव रूपेण चिन्तनीय इत्येतदर्थः । पाण्डवानां धनञ्जयस्त्वमेव मद्विभूतिः । मुनीनां मननेनात्मयाथात्म्यदर्शिनां मध्ये वेदव्यासोऽहमस्मि । कवयः क्रान्तदर्शिनस्तेषां मध्ये उशना कविः शुक्रः ॥ ३७ ॥

**म० टी०—वृष्णीनामिति** । साक्षादीश्वरस्यापि विभूतिमध्ये पाठस्तेन रूपेण चिन्तनार्थ इति प्रागेवोक्तम् । वृष्णीनां मध्ये वासुदेवो वसुदेवपुत्रत्वेन प्रसिद्धस्त्वदुपदेष्टाऽयमहं, तथा पाण्डवानां मध्ये धनञ्जयस्त्वमेवाहं, मुनीनां मननशीलानामपि मध्ये वेदव्यासोऽहं; कवीनां क्रान्तदर्शिनां सूक्ष्मार्थविवेकिनां मध्ये उशना कविरिति ख्यातः शुक्रोऽहम् ॥ ३७ ॥

**शं० टी०—वृष्णीनामिति** । कवीनां तत्त्वज्ञानां मध्ये उशना शुक्रोऽहम् ॥ ३७ ॥

**श्री० टी०—वृष्णीनामिति** । वासुदेवो योऽहं त्वामुपदिशामि धनंजयस्त्वमेव मद्विभूतिः । मुनीनां वेदार्थमननशीलानां वेदव्यासोऽहमस्मि । कवीनां काव्यदर्शिनां मध्ये उशना नाम कविः शुक्रः ॥ ३७ ॥

**स० टी०—वृष्णीनां** त्वत्सखः साक्षाद्वासुदेवोऽहमव्ययः ॥ साक्षाच्छ्रीवासुदेवस्य महामायाविनो हरेः ॥ १ ॥ विभूतिमध्ये श्रीशस्य पाठो ध्यानार्थ इष्यते ॥ वसुदेवसुतत्वेन चिदानन्दघनात्मनः ॥ २ ॥ सुरप्रार्थ्योद्भूतिर्यदुकुलपयोधौ रसमयः समाह्लादाह्लादो भ्रमतिमिरविध्वंसिकरजः ॥ भृशं शृङ्गारार्द्रौ परिमितगतिः स्वच्छवलयो

हृदाकाशे ध्येयोऽद्भुतवपुरयं कृष्ण उडुपः ॥ २ ॥ पाण्डवानां त्वमेवासि मद्विभूतिर्धनंजयः । मुनीनां सर्ववेदार्थाभिज्ञानां बादरायणः ॥ ४ ॥ कवीनामस्म्यहं शुक्रः सुसूक्ष्मार्थविवेकिनाम् ॥ ५ ॥ ३७ ॥

**भा० टी०—वृष्णीनामिति** । मुनीनां मौनशीलानां सकलपदार्थविदां कवीनां क्रान्तदर्शिनामुशना शुक्रः ॥ ३७ ॥

**प० टी०—वृष्णीनामिति** । यादवानां मध्ये वसुदेवस्यापत्यं वासुदेवो बलभद्रोऽस्मि । अन्यथैकस्यैव मुख्यत्वं विभूतित्वं च नोपपद्यते । पाण्डवानां मध्ये धनंजयस्त्वं मद्विभूतिः, मुनीनां वेदार्थमननशीलानां मध्ये वेदव्यासोऽस्मि । कवीनां क्रान्तदर्शिनां मध्ये उशना भृगुपुत्रः कविः शुक्रः ॥ ३७ ॥

**रा० टी०—वृष्णीनामिति** । वासयति सर्वमाच्छादयति निवासयतीति वा वासुः, वस आच्छादने वस निवास इत्यतो वा ण्यन्तादुण् । सर्वत्र वसतीति वा वासुः वसतेरुण् । स चासौ देवश्च क्रीडादिगुणविशिष्टश्चेति वासुदेवः । धनं जयतीति धनंजयनामा धनंजयस्थः, सर्वस्माद्विशिष्टत्वाद्विः आ समन्तात्सः गतः, सृगतावित्यतो डः । विश्वासावासश्च सर्वगतश्चेति व्यासः, यद्वा विशिष्टा आसा स्थितिर्यस्यासौ व्यासः, आस उपवेशने इतिधातोः । उश इच्छायामितिधातोः सर्गादीच्छावत्त्वादुशनानामा सन्नुशना कविः उशनसि कवौ स्थित इत्यर्थः ॥ ३७ ॥

## दण्डो दमयतामस्मि नीतिरस्मि जिगीषताम् ॥
## मौनं चैवास्मि गुह्यानां ज्ञानं ज्ञानवतामहम् ॥ ३८ ॥

**त० टी०—दण्ड इति** । दमयतां उत्पथवर्तिनो जनान् पथि प्रवर्तनार्थं दण्डं कुर्वतां निग्रहहेतुर्दण्डोऽहमस्मि । जिगीषतां जेतुमिच्छतां जयोपायो नीतिरहमस्मि । गुह्यानां गोप्यानां गोपनहेतुर्मौनं वाचो यमोऽहमस्मि । ज्ञानवतां तत्त्वज्ञानिनां यज्ज्ञानं तदहम् ॥ ३८ ॥

**म० टी०—दण्ड इति** । दमयतामदान्तानुत्पथान् पथि प्रवर्तयतामुत्पथप्रवृत्तौ निग्रहहेतुर्दण्डोऽहमस्मि । जिगीषतां जेतुमिच्छतां नीतिर्न्यायो जयोपायस्य प्रकाशकोऽहमस्मि । गुह्यानां गोप्यानां गोपनहेतुर्मौनं वाचंयमत्वमहमस्मि, नहिं तूर्ष्णीस्थितस्याभिप्रायो ज्ञायते । गुह्यानां गोप्यानां मध्ये सन्यासश्रवणमननपूर्वकमात्मनो निदिध्यासनलक्षणं मौनं चाहमस्मि । ज्ञानवतां ज्ञानिनां यच्छ्रवणमनननिदिध्यासनपरिपाकप्रभवमद्वितीयात्मसाक्षात्काररूपं सर्वाज्ञानविरोधि ज्ञानं तदहमस्मि ॥ ३८ ॥

**शं० टी०—दण्ड इति** । दमयतां दुष्टशिक्षां कुर्वतां दण्डो दण्डनक्रियाहमस्मि । जिगीषतां जेतुमिच्छता नीतिर्न्यायो धर्ममार्गः शास्त्रीयो यः सोऽहमस्मि । गुह्यानां गोपनीयानां मध्ये मौनं मननशीलत्वं यत्तदहमस्मि । ज्ञानवतां यज्ज्ञानं ब्रह्मात्मैक्यविषयं मुक्तिसाधनं तदहमस्मि ॥ ३८ ॥

**श्री० टी०—दण्ड इति** । दमयतां दमनकर्तॄणां संबन्धी दण्डोऽस्मि, येन असंयता अपि संयतां भवन्ति स दण्डो मद्विभूतिः । जेतुमिच्छतां संबन्धिनी सामाद्युपायरूपा नीतिरस्मि । गुह्यानां गोप्यानां गोपनहेतुर्मौनमवचनमहमस्मि, नहि तूर्ष्णीं स्थितस्याभिप्रायो ज्ञायते । ज्ञानवतां तत्त्वज्ञानिना यज्ज्ञानं तदहम् ॥ ३८ ॥

**स० टी०—दान्तिहेतुरदान्तानां दण्डो दमयतामहम् ॥ नीतिरस्मि जयेप्सूनां जयोपायप्रकाशकः ॥१॥ वाचंयमत्वं गोप्यानामभिप्रायस्य गूढता ॥ निदिध्यासनमेवात्र मौनं वा गुह्यमस्म्यहम् ॥ २ ॥ अज्ञाननाशकं ब्रह्मज्ञानं ज्ञानवतामहम् ॥ ३ ॥ ३८ ॥

भा० टी०–दण्ड इति । दण्डोऽदान्तदमनकारणं दमयतां दमनकर्तॄणां, जिगीषतां जेतुमिच्छतां जयहेतुर्नीतिरहम् । गुह्यानां गोप्यानां मौनं तूष्णींभावोऽहम् ॥ ३८ ॥

प० टी०–दण्ड इति । दमनकर्तॄणां संबन्धी दण्डोऽस्मि, येनासंयताः संयता भवन्ति । जेतुमिच्छतां संबन्धिनी नीतिरस्मि । गुह्यानां गोपनीयानां मौनमवचनमस्मि । तथा ज्ञानवतां ज्ञानमस्मि ॥ ३८ ॥

रा० टी०–दण्ड इति । दमयतां दण्डं कुर्वतां दण्डनहेतुना दण्डनामा दण्डनरूपधर्मदातास्मीत्यर्थः । जिगीषतां नीतिरस्मि नीतिरूपसारप्रदोऽस्मि । गुह्यानां गोपनीयानां मुनीनामीड्यत्वसंबन्धेन मुनीनामिदं मौनं शब्दस्वभावान्नपुंसकता, मुनिसंबन्धितया मौननामा मौनस्थः, ज्ञानवता ज्ञानाख्यसारदोऽहमित्यर्थः । स्वयं च ज्ञानरूपत्वेन ज्ञाननामा । अत्र शश्यादिषु विजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तम्, नक्षत्रादीनां विजातीयत्वात् । सत्त्वं सत्त्ववतामित्यादौ धर्मिषु सत्त्वादिसारधर्मदं विभूतिरूपमुक्तं ज्ञेयम् । तथैव दर्शितमस्माभिस्तत्र तत्रैव । रुद्राणां शंकर इत्यादौ सजातीयश्रैष्ठ्यदं विभूतिरूपमुक्तम् । वासवोशनोधनंजययज्ञवज्रसामवेदानां सजातीयैकदेशाधिक्यदं विभूतिरूपमुक्तं तेषां सजातीयसर्वश्रैष्ठ्याभावात् । देवेषु कवित्वादिगुणेषु च ब्रह्मणः, पार्थेषु भीमस्य, यज्ञेषु ज्ञानयज्ञस्य, आयुधेषु चक्रस्य, वेदेषु ऋग्वेदस्याधिक्यात् ॥३८॥

## यच्चापि सर्वभूतानां बीजं तदहमर्जुन ॥
## न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥ ३९ ॥

त० टी०–यच्चेति । यदपि च सर्वभूतानां सर्वावस्थाऽवस्थितानां चराचरप्राणिनां बीजं प्ररोहकारणं तदहं, हे अर्जुन तत्र हेतुः आब्रह्मस्तम्बपर्यन्तं व्यापकेन मया विना यत्स्यात्तच्चरमचरं वा वस्तु नास्त्येव, सर्वस्य मदविनाभावात् । सर्वकारणव्यापकत्वात् सर्वं कार्यमेव । कारणकारणोऽहमित्यर्थः "सकारणं कारणाधिपाधिपः" इति श्रुतेः ॥ ३९ ॥

म० टी०–यच्चेति । यदपि च सर्वभूतानां प्ररोहकारणं बीजं तन्मायोपाधिकं चैतन्यमहमेव, हे अर्जुन मया विना यत्स्याद्भवेच्चरमचरं वा भूतं वस्तु तन्नास्त्येव यतः सर्वं मत्कार्यमेवेत्यर्थः ॥ ३९ ॥

शं० टी०–एवं विभूतिविशेषमुक्त्वा तदुपक्रान्तमुपसंहर्तुम् 'कार्यं सर्वं कारणमात्रमेव' इतिन्यायमनुसृत्य सामान्येन सर्वमहमेवेत्याह–यच्चेति । यच्च सर्वेषामप्याकाशादीनां बीजं संभूतिकारणमव्याकृताख्यं जगद्योनिस्तदहं, एतेन कार्यस्य कारणमात्रत्वात्सर्वमहमेवेति सूचितम् । सिद्धमेवार्थं व्यतिरेकमुखेनाह–न तदस्तीति । मया सच्चिदानन्दस्वरूपेणानन्तेन ब्रह्मणा विना भूतं मत्सत्ताऽव्याप्तं मद्भिन्नं चरमचरं वा यद्वस्तु स्यात्तज्जगत्त्रयेऽपि नास्ति, मद्व्यतिरिक्तं सद्वाऽसद्वा यत्किंचिद्यत्र कुत्रापि येनकेनापि संभावयितुं न शक्यमित्यर्थः । एतेन सर्वमहमेवेति सिद्धम् " ब्रह्मैवेदं सर्वम् " इति श्रुतेः ॥ ३९ ॥

श्री० टी०–यदिति । यदपि च सर्वभूतानां बीजं प्ररोहकारणं तदहं, तत्र हेतुः–मया विना यत्स्यात भवेत् तच्चराचरं भूतं नास्त्येवेति ॥ ३९ ॥

स० टी०–मायोपाधिकचैतन्यं बीजं यत्सर्वदेहिनाम् ॥ तदहं न पृथङ्मत्तः किंचिदस्ति चराचरम् ॥१॥ मदात्मना ततं सर्वं चराचरमिदं जगत् ॥ २ ॥ ३९ ॥

भा० टी०–यच्चेति । बीजं प्ररोहकारणमेतन्माद्विभूतिज्ञानमन्तःकरणशोधकमिति सूचयन्नाह–हे अर्जुनेति । प्रकृतमुपसंहरन्विभूतिसंक्षेपमाह—नेति । स्थावरजङ्गमभूतं मया विना यद्भवेत्तन्नास्ति, मया त्यक्तस्य निरात्मकस्य शून्यत्वापत्तेर्मदात्मकं सर्वमित्यर्थः ॥ ३९ ॥

पु० टी०—यच्चेति । सर्वभूतानां बीजं प्ररोहकारणं तदहमस्मि । तदेव द्रढयति—चराचरं न तदस्ति यन्मया विना स्यान्मद्व्यतिरेकेण भवति । यतोऽन्नरूपोऽहमन्नाद्रेतो रेतसः सर्वम् ॥ ३९ ॥

रा० टी०—यच्चेति । बीजं कारणं तदप्यहमेव श्रैष्ठ्यदत्वेन । भगवतः सर्वगतत्वं कुतो मानादित्यत आह—न तदिति । मया विना यद्भूतं स्यात्तच्चराचरं नास्ति, यतोऽतोऽहं सर्वत्र स्थित इत्यर्थः । यद्वा रविप्रभृतिषु श्रैष्ठ्यदत्वेन तव सन्निधावुक्ते, ज्योतिरादिषु नेति प्राप्तमतः सर्वत्राहमस्मीति व्यतिरेकमुखेनाह—न तदिति ॥ ३९ ॥

**नान्तोऽस्ति मम दिव्यानां विभूतीनां परंतप ।**
**एष तूद्देशतः प्रोक्तो विभूतेर्विस्तरो मया ॥ ४० ॥**

त० टी०—विभूतिं संक्षिपंस्तदियत्तां विनिषेधति—नान्त इति । हे परन्तप मम दिव्यानां विभूतीनामन्त इयत्ता नास्ति । अतस्ताः साकल्येन न केनापि विदुषा ज्ञातुं वक्तुं वा शक्याः, एष तु विभूतेर्विस्तरस्तुभ्यमुद्देशत एकदेशेन मया प्रोक्तः ॥ ४० ॥

म० टी०—प्रकरणार्थमुपसंहरन् विभूतिं संक्षिपति—नास्तीति । हे परंतप परेषां शत्रूणां कामक्रोधलोभादीनां तापजनक मम दिव्यानां विभूतीनामन्त इयत्ता नास्ति अतः सर्वज्ञेनापि सा न शक्यते ज्ञातुं वक्तुं वा सन्मात्रविषयत्वात्सर्वज्ञतायाः । एष तु त्वां प्रत्युद्देशत एकदेशेन प्रोक्तो विभूतेर्विस्तरो विस्तारो मया ॥ ४० ॥

शं० टी०—यस्माज्जगत्सर्वं ममैव विभूतिस्तस्मान्मद्विभूतीनामन्तो नास्तीत्याह—नान्तोऽस्तीति । निर्विशेषे परे ब्रह्मणि स्वविकारैर्महदादिभिः साकमाविर्भावतिरोभावाभ्यां दीव्यति क्रीडतीति दिव्या त्रिगुणात्मिका माया ततो जाता दिव्या विभूतयस्तासां दिव्यानां मम ब्रह्मणो विभूतीनामन्तो नास्ति, मन्मायाशक्तीनां तद्विकाराणां चानन्तत्वान्मम विभूतयोऽनन्तास्ततस्तासामन्तः इयत्ता नास्तीत्यर्थः । नन्वादित्यानामहं विष्णुरित्यादिना कथमुक्तमित्यत आह—एष इति । य इदानीं ते विभूतेर्विस्तरो मया प्रोक्तः स एष तूद्देशतस्त्वामुद्दिश्य संक्षेपेण प्रोक्तो न तु विस्तरेण, मम ब्रह्मणो विभूतिः साकल्येन शतकोटिकल्पैरपि वक्तुं ज्ञातुं च न शक्यत इत्यर्थः ॥ ४० ॥

श्री० टी०—प्रकरणार्थमुपसंहरति—नान्त इति । अनन्तत्वाद्विभूतीनां ताः साकल्येन वक्तुं न शक्यन्ते एष तु विभूतेर्विस्तर उद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥

स० टी०—इयत्ता नास्ति दिव्यानां विभूतीनां ममेशितुः ॥ सर्वज्ञेनापि वक्तुं वा ज्ञातुं वा नैव शक्यते ॥ १ ॥ इयत्ता मद्विभूतीनामनन्तानां कथंचन ॥ विभूतेरेष विस्तारः प्रोक्तस्ते चैकदेशतः ॥ २ ॥ ४० ॥

भा० टी०—नेति । मम दिव्यानामन्तो नास्ति परमेश्वरविभूतीनामियत्तारहितानामियत्ता केनचिद्वक्तुं ज्ञातुं वा न शक्या । एषतूद्देशत एकदेशेन विभूतीनां विस्तरो मया प्रोक्तः । उक्तविभूतिपरिचिन्तनेन परान् रागद्वेषादीञ्छत्रूँस्तापयेति संबोधनाशयः ॥ ४० ॥

पु० टी०—इदानीमुपसंहरन्नाह—नान्त इति । भो परंतप मम दिव्यानां विभूतीनामन्तो नास्ति, किंत्वेष विभूतीनां विस्तरो मयोद्देशतः संक्षेपतः प्रोक्तः ॥ ४० ॥

रा० टी०—संक्षेपकरणे कारणं दर्शयन्नुपसंहरति—नान्त इति । अन्तः पर्यवसितिः । अत्र एष इति पदमावर्तते एष अहमात्मा गुडाकेशेति आदित्यानामहं विष्णुरित्यादिना विभूतिरूपसंक्षेप उद्देशतः शृङ्ग्राहिकया इदमिति विशिष्य निर्देशेन मया प्रोक्तः । एष तु वक्ष्यमाणतया हृदिस्थस्तु विभूतेर्विस्तरो मया प्रोक्तः प्रोच्यते । वर्तमाने निष्ठाप्रत्ययः, पुरा प्रोक्त इति वार्थः ॥ ४० ॥

  

**यद्यद्विभूतिमत्सत्त्वं श्रीमदूर्जितमेव वा ॥**
**तत्तदेवावगच्छ त्वं मम तेजोंऽशसंभवम् ॥ ४१ ॥**

**त० टी०**–एवमपि सर्वासां विभूतीनां कश्चिदन्योऽप्युद्देशो मदनुग्रहाय भवता कर्तव्य इति चेत्तत्राह–यद्यदिति । विभूतिमत् ऐश्वर्ययुक्तं, श्रीमत् श्रीः संपत् कान्तिर्वा तया युक्तम् , ऊर्जितं ज्ञानबलशक्त्याद्यतिशययुक्तं यद्यत्सत्त्वं वस्तुमात्रं तत्तदेव मम तेजसः प्रभावस्यांशेन संभवं संपन्नमवगच्छ जानीहि ॥ ४१ ॥

**म० टी०**–अनुक्ता अपि भगवतो विभूतीः संग्रहीतुमुपलक्षणमिदमुच्यते–यद्यदिति । यद्यत्सत्त्वं प्राणि विभूतिमदैश्वर्ययुक्तं तथा श्रीमत् श्रीर्लक्ष्मीः संपत् शोभा कान्तिर्वा तया युक्तं, तथा ऊर्जितं बलाद्यतिशयेन युक्तं तत्तदेव मम तेजसः शक्तेरंशेन संभूतं त्वमवगच्छ जानीहि ॥ ४१ ॥

**शं० टी०**–नन्वेवं चेत्तर्हि तव विभूतिविशेषः सर्वत्र कथं ज्ञातव्य इत्याकाङ्क्षायां वक्ष्यमाणलक्षणैर्ज्ञातव्य इत्याशयेनाह–यद्यदिति । लोकेऽत्र परत्र यद्यत्सत्त्वं द्रव्यं चेतनमचेतनं वा विभूतिमद्विभूतिः प्राजापत्यस्य वा प्रभावस्य वा धनस्य वा पुण्यकर्माणां वा विद्याया वा तपसो वा शौर्यधैर्यौदार्यशमदमादिसद्गुणानां वा ज्ञानस्य वा समृद्धिरस्यास्तीति विभूतिमत् दृश्यते तथोर्जितमोजसा तेजसा वा तरसा वा बलेन वा पौरुषेण वा सारेण वाप्याकारेण वा दार्ढ्येन वा उत्साहेन वा महत्तरमूर्जितं यद्यदृश्यते तथा श्रीमच्छ्रीः शोभा लक्ष्मीर्वा कान्तिर्वा सरस्वती वा बुद्धिर्वा कीर्तिर्वा स्फूर्तिर्वाऽस्यास्तीति श्रीमद्यद्यदृश्यते तत्तद्वस्तु मम परमेश्वरस्य तेजोंऽशसंभवं सद्गुणैर्मे प्रभावं तेजयति प्रकाशयतीति तेजो मम शक्तिस्तस्या अंशः कला स एव संभव उत्पत्तिकारणं यस्य तन्मम तेजोंऽशसंभवमवगच्छ एतत्परमेश्वरस्य विभूतिविशेष इति त्वं जानीहीत्यर्थः ॥ ४१ ॥

**श्री० टी०**–पुनश्च साकाङ्क्षं प्रति कथंचित् साकल्येन कथयति–यद्यदिति । विभूतिमदैश्वर्ययुक्तं श्रीमत्संपत्तियुक्तम् ऊर्जितं केनचित्प्रभावबलादिना गुणेनातिशयितं यद्यत्सत्त्वं वस्तुमात्रं तत्तदेव मम तेजसः प्रभावस्यांशेन संभूतं जानीहि ॥ ४१ ॥

**स० टी०**–संग्रहीतुमनुक्ता हि विभूतीरीशितुर्हरेः ॥ सम्यक् बोधाय तदिदमुपलक्षणमुच्यते ॥ १ ॥ लोके विभूतियुक्तं यद्यत्प्राणि श्रीयुतं भवेत् ॥ बलाद्यैश्वर्ययुक्तं वा तत्तत्सर्वं मदंशजम् ॥ २ ॥ जानीहि त्वं न मत्तोऽन्यत्किंचिद्वस्त्वस्ति जागतम् ॥ ३ ॥ ४१ ॥

**भा० टी०**–इदं त्ववधेयमित्याह–यदिति । यद्यत्सत्त्वं वस्तु विभूतिरैश्वर्यं तद्युक्तं श्रीर्लक्ष्मीस्तया युक्तम् ऊर्जितमेव वा उत्साहयुक्तमेव वा तत्तन्मत्तेजसोंऽशः एकदेशः संभवो यस्य तदवगच्छ त्वं विजानीहि ॥ ४१ ॥

**प० टी०**–अथ विभूतीनां साधारणलक्षणमाह–यदिति । यद्यद्विभूतिमदैश्वर्ययुक्तं सत्त्वं प्राणिविशेषः श्रीमच्छोभातिशयशाल्यूर्जितं केनापि भावेनातिशायितं तत्तन्मम तेजोंऽशसंभवमवगच्छ ॥ ४१ ॥

**रा० टी०**–तमेव विभूतिविस्तरं लक्षणोक्त्याह–यद्यदिति । यद्यत्सत्त्वं वस्तु विभूतिमत्स्वजातितः श्रैष्ठ्योपेतं श्रीमत्संपद्युक्तमूर्जितमभिवृद्ध्युपेतं वा तत्तद्वस्तु मम तेजोरूपेण प्रकाशरूपेणांशेन सह भवतीति तेजोंऽशसंभवमेवावगच्छ जानीहि ॥ ४१ ॥

**अथवा बहुनैतेन किं ज्ञातेन तवार्जुन ॥**
**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ ४२ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥**

त० टी०—एवं संक्षिप्य विभूतिमुक्त्वा पुनः प्रकारान्तरेण संक्षिप्य वदन्नध्यायमुपसंहरति—अथवेति । अथ वा पक्षान्तरे । हे अर्जुन बहुनैतेन पृथक् पृथक् ज्ञातेन तव किं कार्यं स्यात् । सर्वसनिष्कर्षार्थमुच्यमानं शृणु—विष्टभ्येति । इदं कृत्स्नं निखिलं जगदेकांशेन एकदेशस्याप्यत्यल्पांशेन अयुतायुतांशेनेत्यर्थः । विष्टभ्य धृत्वा स्थितोऽहम् । तथोक्तं वैष्णवे पराशरेण—"यस्यायुतायुतयशांशे विश्वशक्तिरियं स्थिता" इति । तस्मात्सर्वस्य चेतनाचेतनस्य जगतो मदायत्तस्थितिप्रवृत्तितया मद्व्यतिरेकाभावान्मद्रूपमेव सर्वमनुसंधत्स्वेति भावः ॥ ४२ ॥

विभूतिज्ञानतो यस्य नृणां भक्तिर्भवेदिति ॥ विभूतिः कृपया प्रोक्ता तं श्रीमाधवमाश्रये ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां दशमोऽध्यायः ॥ १० ॥

म० टी०—एवमवयवशो विभूतिमुक्त्वा साकल्येन तामाह—अथवेति पक्षान्तरे । बहुनैतेन सावशेषेण ज्ञातेन किं तव स्यात् हे अर्जुन इदं कृत्स्नं सर्वं जगदेकांशेन एकदेशमात्रेण विष्टभ्य विधृत्य व्याप्य वाहमेव स्थितो न मद्व्यतिरिक्तं किंचिदस्ति "पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि" इति श्रुतेः । तस्मात् किमनेन परिच्छिन्नदर्शनेन सर्वत्र मद्दृष्टिमेव कुर्वित्यभिप्रायः ॥ ४२ ॥

कुर्वन्ति केऽपि कृतिनः क्वचिदप्यनन्ते स्वान्तं विधाय विषयान्तरशान्तिमेव ।
त्वत्पादपद्मविगलन्मकरन्दबिदुमास्वाद्य माद्यति मुहुर्मधुभिन्मनो मे ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायामधिकारिभेदेन विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

शं० टी०—एवं मुमुक्षूणामातिमन्दबुद्धीनामुपासनार्थमयं परमात्मनो विभूतिविशेषत्वात् परमेश्वर एवेति ज्ञानार्थं च आदित्यानामहं विष्णुरित्येतदारभ्य ज्ञानं ज्ञानवतामहमित्येतदन्तेन ग्रन्थेन स्वविभूतिविशेषान्प्रतिपाद्याधुना विभूतिविशेषज्ञानस्य तदुपास्तेरप्यकिंचित्करत्वसूचनद्वारा सविशेषमेव परमेश्वरमधिकारिणां प्रज्ञावतामुपासनीयं वस्तूपदिशन्नध्यायमुपसंहरति—अथवेति। मदीयविभूतयस्त्वनन्तास्ता वक्तुं ज्ञातुं न शक्यन्ते अथवा अयमयं मम विभूतिविशेष इति बहवो मम विभूतिविशेषा उक्ता अपि शुद्धात्मनो मुख्याधिकारिणस्तव बहुना बहुप्रकारेण अनेन मद्विषयकेण ज्ञानेन किं किं फलं स्यात्तज्ज्ञानेन तदुपास्त्या च चित्तशुद्धिर्वा मोक्षो वा न किंचित्फलं सिध्यतीत्यर्थः। ननु विष्ण्वादिव्यक्तिविशेषाणामपि तत्स्वरूपत्वात्तदुपास्त्या तज्ज्ञानेन च मुख्यं फलं स्यादेवेत्याशङ्कायां न, विभूतिविशेषाणामप्यनन्तत्वात्तेष्वीश्वरत्वबुद्धौ सत्यामनेकेश्वरत्वज्ञानं स्यान्न तन्मोक्षहेतुर्भवति विभूतीनामानन्तत्वे तदुपास्तिरेकेन कर्तुं न शक्यते तासां च गुणविशेषतारतम्याच्चित्तस्य रागादिकालुष्यं विना प्रसादोऽपि न सिध्यत्यतो मुमुक्षुर्मुख्याधिकारी त्वं मामेवैकं सर्वात्मकं परमेश्वरं भवमुक्त्यै भजस्वेति सूचयितुमाह—विष्टभ्येति। अहं निर्विशेष एव परमात्मा स्वयमिदं परिदृश्यमानं मायाकार्यं स्थावरजङ्गमात्मकं कृत्स्नं जगदेकांशेन यथा निरवयवस्याप्याकाशस्य मेघावच्छेदेन मेघाकाश इति भागकल्पना तथा निरंशस्यापि परस्य ब्रह्मणो मायातत्कार्यावच्छेदेन तदुपहितचैतन्यस्यांशत्वं कल्प्यते तेन कल्पितेनांशेन "पादोऽस्य विश्वा भूतानि" इति श्रवणान्मायोपाधिकेन पादेन विष्टभ्य सर्वतो व्याप्य स्थितोऽस्मि विश्वात्मनाऽहमेव तिष्ठामि "सहस्रशीर्षा पुरुषः। सहस्रशीर्षं देवम्" इत्यादिश्रुतिप्रसिद्धं विश्वरूपं मामेकमेवेश्वरं भजस्व मद्भजनेन कृतार्थो भविष्यसीत्यर्थः ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीमच्छंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां दशमोऽध्यायः ॥ १० ॥

**श्री० टी०**—अथवा किमनेन परिछिन्नज्ञानेन सर्वत्र समदृष्टिमेव कुर्वित्याह—**अथवेति** । बहुना पृथग् पृथग् ज्ञातेन किं तव कार्यं यस्मादिदं सर्वं जगदेकांशेन एकदेशमात्रेण विष्टभ्य धृत्वा व्याप्येति वा अहमेव स्थितः न मद्व्यतिरिक्तं किंचिदस्ति "पादोऽस्य विश्वा भूतानि" इति श्रुतेः ॥ ४२ ॥

इन्द्रियद्वारतश्चित्ते बहिर्धावति सत्यपि । ईशदृष्टिविधानाय विभूतीर्दशमेऽब्रवीत् ॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

**स० टी०**—श्रीभगवान्विभूतिं स्वामुक्त्वाऽवयवशोऽधुना ॥ साकल्येनैकतामाह करुणामृतसागरः ॥ १ ॥ ज्ञानेन सविशेषेण किं ते स्यादेवमादिना ॥ व्याप्यैकदेशमात्रेण जगत्सर्वमहं स्थितः ॥ २ ॥ किमनेन परिच्छिन्नदर्शनेन तवार्जुन ॥ मद्दृष्टिं कुरु सर्वत्र सर्वानर्थक्षयंकरीम् ॥ ३ ॥ पादोऽस्य विश्वा भूतानीत्यादिश्रुत्याहमीश्वरः ॥ एक एव विनिर्णीतस्तं त्वं मां विद्धि सर्वथा ॥ ४ ॥ ४२ ॥ यस्यैश्वर्यादिभावं मुनिदिविजगणा नैव जानन्ति सर्वे यस्येक्षामात्रसिद्धं चरमचरमिदं सृज्यजालं सहेशैः ॥ यस्यान्तो नास्ति भूतेरतिगहनगतेरंशतो येन सर्वं विश्वं व्याप्तं तमीशं सकलसुरपतिं कृष्णमाद्यं नतोऽस्मि ॥ १ ॥ यं योगिनो विगतभोगभराभिलाषाः शान्ताः समाधिनिरता विगतैषणाङ्काः ॥ प्राणान्नियम्य हृदि सौख्यपदं विशुद्धं ध्यायन्ति तं यदुपतिं हृदि चिन्तयामि ॥ २ ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ तदर्थध्येयनिष्ठाख्यो दशमः पूर्णतां गतः ॥ १० ॥

एतदध्यायगतटीकाश्लोकसंख्या ॥ १७६ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ २८३८ ॥

**भा० टी०**—एवं संक्षेपविस्तराभ्यां विभूतीरुक्त्वाऽशक्तं प्रत्याह—**अथवेति** । एतेन बहुना ज्ञातेन तव किं चित्तशोधकस्यैतज्ज्ञानस्य शुद्धचित्ते शक्ते त्वयि प्रयोजनाभावादिति ध्वनयन्संबोधयति—हे अर्जुनेति । तर्हि मया किं चिन्तनीयमित्यपेक्षायामाह—इदं सर्वं जगदेकांशेनावष्टभ्य स्तम्भनं कृत्वाऽहं स्थितः । तथाच श्रुतिः— " पादोऽस्य विश्वा भूतानि " इति । अथवाऽनेन श्लोकेनार्जुनपृष्टो योग उक्तः । एवं दशमाध्यायेन ज्ञेयं ज्ञानोपायभूतं योगविभूतिमद् ध्येयज्ञानं प्रदर्शयता तत्पदार्थो निरूपितः ॥ ४२ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यश्रीदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां दशमोऽध्यायः ॥ १० ॥

**प० टी०**—अथ किमनेन परिच्छिन्नदर्शनेन वृक्षन्यायेन समष्टिव्यष्ट्यात्मकोऽहमेवेत्याह—**अथवेति** । अथवा बहुना पृथक्त्वेन ज्ञातेन तव किं कार्यम् । किं त्विदं कृत्स्नं समग्रं जगच्चराचरं एकांशेनैकदेशमात्रेण विष्टभ्याभिव्याप्य स्थितोऽहमेवास्मि " पादोऽस्य विश्वा भूतानि " इति श्रुतेः । ऋग्वेदे च—" किं स्विद्वनं क उ स वृक्ष आस यतो द्यावापृथिवी निष्टतक्षुः । मनीषिणो मनसा पृच्छतेव तद्यदध्यतिष्ठद्भुवनानि धारयन् " भाष्यम्—पूर्वस्यामृच्युक्तं ब्रह्मैव भूम्यादिकारणमिति तदेवानयोः प्रश्नकथनव्याजेनोच्यते । लोको हि प्रौढं प्रासादं निर्मिमाणः कस्मिंश्चित्प्रौढवने कंचिन्महान्तं वृक्षं छित्त्वा तक्षणादिना स्तंभादिकं संपादयति । इह तु परमेश्वरः प्रेरयिता । जगत्स्रष्टारो यतोऽस्माद्वनाद्यं वृक्षमादाय द्यावापृथिवी निष्टतक्षुः द्यावापृथिव्यौ निष्पादितवन्तस्तद्वनं किं स्वित् किंनामकं स्यात् तथा उ इति निर्धारणे कः स वृक्ष आस कस्तादृशो महान् वृक्षोऽभूत् । हे मनीषिणो मनस ईश्वरास्तदुभयं मनसा जिज्ञासायुक्तेन पृच्छतेव पृच्छतैव किंचेश्वरो भुवनानि धारयन् यत्स्थानमध्यतिष्ठदपि पृच्छत एतस्य सर्वस्याप्युत्तरं ब्रह्मवनं ब्रह्मवृक्षः समष्टिव्यष्टिरूपेण ब्रह्मैवासीदित्यादिकम् । अनेनाग्रिमाध्यायस्य संगतिरपि दर्शिता ॥ ४२ ॥

अथाध्यायतात्पर्यम् ।

अत्यन्तोत्कर्षशाली ननु सततमिहामुत्रसर्वोत्तमोऽहं त्वेकैकोत्कर्षभाजः सुरमुनिमनुजश्वापदाद्यास्त एते ।
व्यष्टीरूपा मदंशा इति खलु भवता पूजनीयाः क्रमेण तेन द्रक्ष्यस्यथो मामिह मयि दशमे प्राह पार्थं परात्मा ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां विभूतियोगो नाम दशमोऽध्यायः ॥ १० ॥

रा० टी०–लक्षणमुखेनोक्ततत्तद्वस्तुनिष्ठविभूतिविस्तरादप्यधिकविभूतिविस्तरमाह–अथवेति । अथवेति पक्षान्तरे । एतेन बहुना विभूत्यादियुक्तरविप्रभृतितत्तद्वस्तुनिष्ठपरिच्छिन्नविभूतिरूपाणां विस्तरेण ज्ञातेन तव किं न किमपि फलम्, वक्ष्यमाणव्याप्तज्ञानफलादल्पफलत्वादाक्षेपः न तु वैफल्यादिति भावः । तर्हि किं ज्ञातव्यमित्यत आह–विष्टभ्येति । इदं प्रमाणावगतं कृत्स्नं जगदेकांशेन अनन्तांशमध्ये एकांशेनैव विष्टभ्य व्याप्य स्थितः सर्वांशेन व्याप्तुं जगत्सहस्रमपि नालमतः तादृशापर्यवसितव्याप्तिमानहमतस्तज्ज्ञानमावश्यकमिति भावः । नचैतज्ज्ञानादेव मोक्षसिद्धौ प्रागुक्तपरिच्छिन्नविभूतिरूपाणा ज्ञानं व्यर्थमिति तदुक्तिर्व्यर्थेति शङ्क्यं, "अज्ञात्वैनं सर्वविशेषयुक्तं देवं परं को विमुच्येत बन्धात्" इति श्रुत्या प्रागुक्तज्ञानस्यावश्यकत्वात् । महाफलाधिकारित्वात्तवोभयज्ञानमावश्यकं न विशेषज्ञानमात्रेणालमिति तवैतेन ज्ञातेन किमितिभावेन तवेत्युक्तम् ॥ ४२ ॥

इति श्रीमद्गीतार्थसंग्रहे राघवेन्द्रयतिकृते दशमोऽध्यायः ॥ १० ॥

---

## अथ एकादशोऽध्यायः ।

**अर्जुन उवाच–मदनुग्रहाय परमं गुह्यमध्यात्मसंज्ञितम् ॥**
**यत्त्वयोक्तं वचस्तेन मोहोऽयं विगतो मम ॥ १ ॥**

त० टी०–तदेवं भक्त्युत्पत्तये तद्वृद्धये च भगवता स्वविभूतिरुक्ता, तदन्ते च विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति विश्वव्यापकं पारमेश्वरं रूपं निर्दिष्टं, तद्दिदृक्षुः पूर्वोक्तमभिनन्दन्नर्जुन उवाच–मदनुग्रहायेति चतुर्भिः । देहात्माभिमानरूपमोहेन मोहितस्य ममानुग्रहैकप्रयोजनाय मां शोकसागरादुद्धर्तुं परमं गुह्यं परमरहस्यमध्यात्मसंज्ञितमध्यात्मशब्दवाच्यं देहादिभ्य आत्मविवेकविषयं वचो वाक्यं न त्वेवाहं जातु नासमित्यारभ्य तस्माद्योगी भवार्जुनेत्येतदन्तं यत्त्वयोक्तं तेन ममायं मोहोऽहमेषां हन्ता मयैते हन्यन्ते इत्यादिलक्षणो भ्रमो विगतो विनष्टः आत्मनः कर्तृत्वाभावनिश्चयात् ॥ १ ॥

म० टी०–पूर्वाध्याये नानाविभूतीरुक्त्वा विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदिति विश्वात्मकं पारमेश्वरं रूपं भगवतान्तेऽभिहितं श्रुत्वा परमोत्कण्ठितस्तत्साक्षात्कर्तुमिच्छन् पूर्वोक्तमभिनन्दन्–मदिति । मदनुग्रहाय शोकनिवृत्त्युपकाराय परमं निरतिशयपुरुषार्थपर्यवसायि गुह्यं गोप्यं यस्मै कस्मैचिद्वक्तुमनर्हमपि अध्यात्मसंज्ञितमध्यात्ममितिशब्दितमात्मानात्मविवेकविषयमशोच्यानन्वशोचस्त्वमित्यादि षष्ठाध्यायपर्यन्तं त्वंपदार्थप्रधानं यत्त्वया परमकारुणिकेन सर्वज्ञेनोक्तं वचो वाक्यं तेन वाक्येनाहमेषां हन्ता मयैते हन्यन्त इत्यादि विविधविपर्यासलक्षणो मोहोऽयमनुभवसाक्षिको विगतो विनष्टो मम तत्रासक्तदात्मनः सर्वविक्रियाशून्यत्वोक्तेः ॥ १ ॥

शं० टी०—दशमे मन्दप्रज्ञानां मनःशुद्धिद्वारा मोक्षसिद्धये स्वविभूतिविशेषानुपासनार्थं प्रतिपाद्याऽमन्दप्रज्ञानां तु विष्टभ्याहमित्यादिना विश्वात्मकमैश्वरमेव सोपाधिकं स्वरूपमुपास्यत्वेन सूचयित्वेदानीमर्जुनप्रार्थनया विश्वरूपं मायाविलासविजृम्भितं स्वरूपमत्यद्भुतं दर्शयितुं स्वत एव सृष्ट्यादिक्रियां प्रकाशयितुं स्वसाक्षात्कारस्यातिदुर्लभत्वं भक्त्यैकगम्यत्वं च प्रतिपादयितुमेकादशाध्याय आरभ्यते । तत्रादौ सर्वजगत्कारणं सर्वात्मकं सर्वैश्वर्यसंपन्नं स्वरूपं स्वस्योपास्यत्वेन बोधितं श्रुत्वा तत्साक्षात्कर्तुकामः सन् भगवत्कृतानुग्रहानुवादेन भगवन्तमभिमुखीकर्तुमर्जुन उवाच—**मदिति** । मदनुग्रहाय एते भ्रातृपुत्रादयो मदीया म्रियन्ते हन्तैतेषामहमिति शोकमोहसागरे मज्जतो ममानुग्रहाय मोहेन शोचन्तं मां कृपयाऽनुग्रहीतुमित्यर्थः । यदध्यात्मसंज्ञितमात्मयाथात्म्यप्रकाशकम् अशोच्यानन्वशोचस्त्वं, नायं हन्ति न हन्यते, न जायते म्रियते वा कदाचित्, वेदाविनाशिनं नित्यं, अच्छेद्योऽयमित्यादिलक्षणं परमं परमार्थविषयमात्मनः कर्तृत्वभोक्तृत्वादिभ्रमापनोदकमत एव गुह्यं गोपनीयमयोग्यानामसद्धर्माणामश्रद्धात्मनामदेयं यद्वचस्त्वयोक्तमुपदिष्टं तेन वचसाऽऽत्मानात्मस्वरूपप्रकाशकेन मिथ्याज्ञाननिवर्तकेनायं पूर्वोक्तलक्षणो मोहश्चित्तभ्रमो विगतः विशिष्य गतो विगतः, त्वत्कृपया विनष्टमोहो जातोऽस्मीत्यर्थः ॥ १ ॥

श्री० टी०—विभूतिवैभवं प्रोच्य कृपया परया हरिः । दिदृक्षोरर्जुनस्याथ विश्वरूपमदर्शयत् ॥ १ ॥ पूर्वाध्यायान्ते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् इति विश्वात्मकं पारमेश्वरं रूपमुपक्षिप्तं तद्दिदृक्षुः पूर्वोक्तमभिनन्दन्नर्जुन उवाच—**मदनुग्रहायेति चतुर्भिः** । ममानुग्रहाय शोकनिवृत्तये परमं परमार्थनिष्ठं गुह्यं गोप्यमपि अध्यात्ममितिसंज्ञितं आत्मानात्मविवेकविषयं यत् त्वयोक्तं वचः अशोच्यानन्वशोचस्त्वमित्यादि षष्ठाध्यायपर्यन्तं यद्वाक्यं तेन ममायं मोहोऽहं हन्ता एते हन्यन्त इत्यादिलक्षणो भ्रमो विगतः विनष्टः आत्मनः कर्तृत्वाद्यभावोक्तेः ॥ १ ॥

स० टी०—सदा लक्ष्म्यावासे सकलमुनिवन्द्ये सुखनिधौ महाभाग्यैर्ध्येये चिदणुमकरन्दे सुमतिदे ॥ विधीशाद्यास्वाद्येऽङ्कुशयवसुचिह्ने रतिपदे मनोभृङ्गो मे श्रीहरिपदसरोजे प्रविशतु ॥ १ ॥ पूर्वाध्याये विभूतीः स्वाः प्रोक्त्वान्ते प्रोक्तवानिति ॥ विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥ २ ॥ इति विश्वात्मकं रूपं श्रुत्वा भगवतेरितम् ॥ तत्साक्षात्कर्तुकामः सन्पूर्वोक्तमभिनन्दति ॥ ३ ॥ अर्जुनो भगवद्भक्तिविशुद्धान्तर्मना यतः ॥ मम शोकनिवृत्त्यर्थं वाक्यं गोप्यं त्वयेरितम् ॥ ४ ॥ यदुत्कृष्टफले मोक्षे पर्यवसायि सर्वथा ॥ आत्मानात्मविवेकैकविषयं संशयापहम् ॥ ५ ॥ तेन मोहो विनष्टो मे देहाद्यध्यासलक्षणः ॥ अशोच्यानन्वशोचस्त्वमित्यारभ्य विवेचनम् ॥ ६ ॥ षष्ठाध्यायान्तमेवोक्तं त्वंपदार्थस्य मुख्यतः ॥ तेन हन्ताऽहमेतेषां हन्यन्ते ते मयेति च ॥ ७ ॥ मोहो नष्टोऽक्रियं श्रुत्वा स्वात्मानमजरामरम् ॥ तथैव सप्तमाध्यायादारभ्य दशमान्ततः ॥ ८ ॥ तत्पदार्थो विनिर्णीतः श्रीहरेर्वचसा श्रुतः ॥ कृष्णपादारविन्दे यन्मानसं षट्पदायते ॥ ९ ॥ माया दुरत्यया तीर्णा तेनेत्थं तेन निश्चितम् ॥ १० ॥ १ ॥

भा० टी०—एवं विभूतीर्निरतिशयैश्वर्यं च श्रुत्वा साक्षात्कर्तुमिच्छन्नर्जुन उवाच—**मदन्विति** । मदनुग्रहार्थं परममुत्कृष्टं परमपुरुषार्थसाधनत्वाद्गोप्यमध्यात्मसंज्ञितं वचस्त्वंपदार्थप्रधानमशोच्यानित्यादि यत्त्वयोक्तं तेन ममायं मोहोऽहंममेतिप्रत्ययजनकः कर्तृत्वादिरहितात्मस्वरूपावरको विगतो विशेषेण निवृत्तः ॥ १ ॥

प० टी०—पूर्वाध्यायान्ते विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगदित्युक्तं तर्हि तादृग्रूपं कीदृग्भविष्यतीति द्रष्टुमपेक्षमाणोऽर्जुनः प्रार्थयन् पृच्छति—**मदनुग्रहायेति** चतुर्भिः । ममानुग्रहाय शोकनिवृत्तये परमं रहस्यं गुह्यं गोप्यमध्यात्मसंज्ञितमात्मानात्मविवेकरूपं देही नित्यमवध्योऽयमिति, तथा-

ऽव्यक्तं व्यक्तिमापन्नमिति, तथा मया ततमिदं विश्वमिति, तथा समोऽहं सर्वभूतेष्वित्यादि यद्वच उक्तं तेन मे मोहो विगतो निःशेषो गतः ॥ १ ॥

श्री० टी०–पूर्वान्ते विष्टभ्याहमिदं कृत्स्नमिति व्याप्तरूपोपासनं संक्षेपेणोक्तं, संक्षेपेणोक्तरूपस्य बुद्धाव-नारोहेणाशक्यध्यानत्वात्तद्ध्यानसौकर्याय प्राक्संक्षेपेणोक्तविश्वरूपास्थितिरत्र विस्तरेणोच्यत इति पूर्वानन्तर्य-मर्थभेदश्चास्येति ध्येयम् । विश्वरूपं ज्ञातुं तत्प्रष्टुकामः प्रागुक्तमनुवदत्यर्जुनः–मदनुग्रहायेति द्वाभ्याम् । परमं गुह्यमतिगोप्यमात्मानं भगवन्तमधिकृत्य स्थितमध्यात्ममध्यात्मनामकं यद्वचस्त्वया मदनुग्रहायोक्तं तेन बन्धुस्नेहादिरूपोऽयं मोहो विगतोऽपगतः मम ॥ १ ॥

**भवाप्ययौ हि भूतानां श्रुतौ विस्तरशो मया ॥**
**त्वत्तः कमलपत्राक्ष माहात्म्यमपि चाव्ययम् ॥ २ ॥**

**त० टी०–किंच–भवाप्ययाविति ।** भूतानां भवाप्ययावुत्पत्तिप्रलयौ मत्त एव भवत इति त्वत्त एव विस्तरशो मया श्रुतौ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेत्यादिना । कमलपत्रे इव विशाले सुप्रसन्ने अक्षिणी यस्य तव हे कमलपत्राक्ष उपलक्षणं चैतन्माधुर्यसौकुमार्यादिविग्रहगुणानां, तथा च निरतिशयसौन्दर्यसौकुमार्यमाधुर्यलावण्यादिगुणनिधे इत्यर्थः । न केवलं त्वत्तो भूतानां भवा-प्ययावेव श्रुतौ अपि तु सर्वेश्वरस्य तव माहात्म्यमपि अव्ययमक्षयं श्रुतं, सृष्ट्यादिकर्तृत्वेऽप्यकर्तृत्वं, सर्वनियन्तृत्वेऽप्यौदासीन्यं, सर्वव्यापित्वेऽपि तद्दोषास्पृष्टत्वं, शुभाशुभकर्मकारयितृत्वेऽप्यवैषम्यं, तत्तत्फलदातृत्वेऽप्यनैर्घृण्यं, बन्धमोक्षादिविचित्रफलदातृत्वेऽपि समत्वं, प्रकृतिकालकर्मादिनियन्तृत्वं, स-र्वोपास्यत्वं, सर्वानतिक्रमणीयत्वं, स्वभक्तदोषक्षपणस्वभावत्वमित्याद्यपरिमितमहत्त्वं च श्रुतमित्यर्थः ॥२॥

म० टी०–तथा सप्तमादारभ्य दशमपर्यन्तं तत्पदार्थनिर्णयप्रधानमपि भगवतो वचनं मया श्रुतमित्याह–भवेति । भूतानां भवाप्ययावुत्पत्तिप्रलयौ त्वत्त एव भवन्तौ त्वत्त एव विस्तरशो मया श्रुतौ नतु संक्षेपे-णासकृदित्यर्थः । कमलस्य पत्रे इव दीर्घे रक्तान्ते परममनोरमे अक्षिणी यस्य तव स त्वं हे कमलप-त्राक्ष अतिसौन्दर्यातिशयोल्लेखोयं प्रेमातिशयात् । न केवलं भवाप्ययौ त्वत्तः श्रुतौ महात्मनस्तव भावो माहात्म्यमनतिशयैश्वर्यं विश्वसृष्ट्यादिकर्तृत्वेऽप्यविकारित्वं शुभाशुभकर्मकारयितृत्वेऽप्यवैषम्यं बन्धमोक्षादि-विचित्रफलदातृत्वेऽप्यसङ्गौदासीन्यमन्यदपि सर्वात्मत्वादि सोपाधिकं निरुपाधिकमपि चाव्ययमक्षयं मया श्रुतमिति परिणतमनुवर्तते चकारात् ॥ २ ॥

शं० टी०–एवं भगवत्कृतोपकारानुवादेन भगवन्तं स्तुत्वा तत्स्वरूपदिदृक्षया तन्माहात्म्यं प्रस्तौति–**भवाप्ययाविति ।** कं ब्रह्मसुखं स्वरूपानन्दस्तमलति प्रकाशयतीति कमलमात्मज्ञानं यत्तदेव पतनात्त्रायत इति पत्रं कमलं च तत्पत्रं च कमलपत्रं तेनाऽक्ष्यते प्राप्यत इति हे कमलपत्राक्ष ज्ञानैकगम्य परमात्मन् हि यस्मात्कारणादहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा, प्रकृतिं स्वामवष्टभ्य, अहं सर्वस्य प्रभव इति त्वत्तः ईश्वरादेव भूतानामाकाशादीनां तत्कार्याणां च सर्वेषां भवाप्ययौ उत्पत्तिप्रलयौ विस्तरशो बहुशो मया त्वत्सकाशाच्छ्रुतौ, किंच अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च, सर्वभूतमहेश्वरं, मत्तः सर्वं प्रवर्तते, इति माहात्म्यं महान् सर्वव्यापक आत्मा स्वरूपं यस्य स महात्मा तस्य भावो माहात्म्यं सार्वात्म्यमपि चका-रात्सर्वेश्वरत्वं च बहुशो मया त्वत्तः श्रुतमित्यर्थः ॥ २ ॥

श्री० टी०–किंच–**भवाप्ययाविति ।** भूतानां भवाप्ययौ सृष्टिप्रलयौ त्वत्तः सकाशादेव भवतः इति श्रुतौ मया अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा इत्यादौ विस्तरशः पुनः पुनः कमलपत्रे इव सुप्रसन्ने विशाले अक्षिणी यस्य तव हे कमलपत्राक्ष । माहात्म्यमपि चाव्ययम् अक्षयं श्रुतं विश्वसृष्ट्यादिकर्तृत्वेऽपि

सर्वनियन्तृत्वेऽपि शुभाशुभकर्मकारयितृत्वेऽपि बन्धमोक्षादिविचित्रफलदातृत्वेऽपि अविकारावैषम्यासङ्गौदासीन्यादिलक्षणमपरिमितं महत्त्वं च श्रुतम् । अव्यक्तं व्यक्तिमापन्नं मन्यन्ते, मया ततमिदं सर्वं, न च मां तानि कर्माणि निबध्नन्ति, समोऽहं सर्वभूतेषु, इत्यादिना अतस्त्वत्परतन्त्रत्वादपि जीवानामहं कर्तेत्यादिर्मदीयो मोहो विगत इति भावः ॥ २ ॥

स० टी०—भूतानां जन्मविलयौ विस्तराद्भवतः श्रुतौ ॥ पद्मपत्रविशालाक्ष तवैश्वर्यमपि श्रुतम् ॥ १ ॥ विश्वसृष्ट्यादिकर्तृत्वेऽप्यविकारित्वमात्मनः ॥ शुभादेः कारयितृत्वेऽप्यवैषम्यं महेशितुः ॥ २ ॥ विचित्रफलदातृत्वेऽप्यौदासीन्यमसङ्गता ॥ इत्यादि तव माहात्म्यमक्षयं च श्रुतं मया ॥ ३ ॥ २ ॥

भा० टी०—किंचायं वासुदेवो मम मातुलेय इति त्वयि मनुष्यत्वप्रतीत्युत्पादकस्येश्वरस्वरूपावरकस्य मोहस्य निवर्तकमपि वचो मया श्रुतमित्याशयवानाह—भवेति । भवाप्ययौ उत्पत्तिप्रलयौ भूतानां त्वत्तो भवत इति त्वत्तो मया श्रुतौ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तत इत्यादिना । तदपि न संक्षेपतोऽपि त्वसकृदित्याह—विस्तरश इति । कमलपत्रे इव विशाले रक्तान्ते अक्षिणी यस्य सः कमलपत्राक्ष इत्यङ्गीकृतकमलपत्राक्षरूपात्त्वत्त एव भूतानां पालनमिति द्योतनाय तथा संबोधनम् । महात्मनो भावो माहात्म्यमपि त्वदीयमव्ययमपक्षयरहितमैश्वर्यं मया श्रुतमिति विपरिणामेनानुषज्जते ॥ २ ॥

प० टी०—भवाप्ययाविति । ततस्त्वत्तः सकाशाद्भूतानां भवाप्ययावुत्पत्तिप्रलयौ अहं कृत्स्नस्य जगतः प्रभवः प्रलय इत्यादिवाक्यैर्विस्तरशो विस्तरेण मया श्रुतौ । अव्ययमविनाशि माहात्म्यं सामर्थ्यमपि श्रुतम् । विश्वसृष्ट्यादिकर्तृत्वेऽप्यकर्तृत्वं सर्वनियन्तृत्वेऽप्यसङ्गत्वं विचित्रफलदातृत्वेऽप्युदासीनत्वलक्षणं माहात्म्यमित्यर्थः ॥ २ ॥

रा० टी०—भवेति । हे कमलदलवदायतनेत्र त्वत्तः भूतानां भवाप्ययौ अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेत्यादिना सप्तमाध्यायादिषु विस्तरशो मया श्रुतौ अव्ययं माहात्म्यमपि च श्रुतम् ॥ २ ॥

**एवमेतद्यथाऽऽत्थ त्वमात्मानं परमेश्वर ॥**
**द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तम ॥ ३ ॥**

**त० टी०—किंच—एवमिति । हे परमेश्वर यथा येन प्रकारेण निरतिशयैश्वर्याश्रयमात्मानं त्वमात्थ ब्रवीषि एवमेवैतत् त्वद्वचसि मेऽविश्वासो नास्तीत्यर्थः । तथाऽपि हे पुरुषोत्तम तवैश्वरं शक्तिबलवीर्यतेजोभिः संपन्नमद्भुतं रूपं द्रष्टुमिच्छामि ॥ ३ ॥**

म० टी०—एवमिति । हे परमेश्वर यथा येन प्रकारेण सोपाधिकेन निरुपाधिकेन च निरतिशयैश्वर्येणात्मानं त्वमात्थ कथयसि त्वम् एवमेतन्नान्यथा, त्वद्वचसि कुत्रापि ममाविश्वासशङ्का नास्त्येवेत्यर्थः । यद्यप्येवं तथापि कृतार्थीबुभूषया द्रष्टुमिच्छामि ते तव रूपमैश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नमद्भुतम् । हे पुरुषोत्तमेति संबोधनेन त्वद्वचस्यविश्वासो मम नास्ति दिदृक्षा च महती वर्तत इति सर्वज्ञत्वात्त्वं जानासि सर्वान्तर्यामित्वाच्चेति सूचयति ॥ ३ ॥

शं० टी०—तस्मा ... सर्वं सत्यमेवेत्याह—एवमिति । सर्वातिशयमहत्त्वात्परमः सर्वव्याप्तिहेतुत्वादीश्वरः हे परमेश्वर सर्वज्ञस्त्वं मम भूतमहेश्वरमित्यात्मानमात्मस्वरूपं यथाऽऽत्थ येन प्रकारेण स्थितं वक्षि एतदेवं यथार्थमेव सर्वकारणं सर्वव्यापकं च सर्वनियन्तृ चैव तवैश्वरं रूपं नान्यथेश्वरवचनमस्ति न तत्र परीक्षा कर्तव्या किंतु त्वदनुग्रहपात्रीभूतस्य ममैवं तृष्णेत्याह—द्रष्टुमिति । पुरुषाभ्यां व्याकृताव्याकृताभ्यां स्वमहिम्नोत्तमत्वात् हे पुरुषोत्तम मज्जन्मसाफल्याय तवैश्वरं समग्रैश्वर्यज्ञानतेजःशक्तिसंपन्नं सर्वात्मकं स्वरूपं द्रष्टुमिच्छामि तथा ममेच्छास्तीत्यर्थः ॥ ३ ॥

श्री० टी०—किंच—एवमिति । भवाप्ययौ हि भूतानामित्यादि मया श्रुतं यथा चेदानीमात्मानं त्वमात्थ विष्टभ्याहमिदं कृत्स्नमित्येवं कथयसि हे परमेश्वर एवमेतदत्राप्यविश्वासो मम नास्तीत्यर्थः । तथापि हे पुरुषोत्तम तवैश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नं त्वद्रूपं कौतूहलादहं द्रष्टुमिच्छामि ॥ ३ ॥

स० टी०—यथा येन प्रकारेण परमेश्वर मापते ॥ सोपाधिकात्मना तद्वन्निरुपाधिकरूपतः ॥ १ ॥ परमैश्वर्यसंपन्नं स्वात्मानं कथयस्यलम् ॥ एवमेवैतदस्तीह नास्ति शङ्का मनागपि ॥ २ ॥ यद्यप्येवं तथाप्यत्राहं कृतार्थीबुभूषया ॥ द्रष्टुमिच्छामि ते रूपं ज्ञानैश्वर्यादिसंयुतम् ॥ ३ ॥ सर्वशक्त्याश्रयं श्रीमत्पारमेश्वरमद्भुतम् ॥ त्वद्वाक्ये नास्त्यविश्वासो दिदृक्षा महती च मे ॥ ४ ॥ अन्तर्यामितया वेत्सि पुरुषोत्तम चान्तरम् ॥ ५ ॥ ३ ॥

भा० टी०—त्वदुक्तं सर्वं यथार्थमित्यभिनन्दन्नभीष्टमाविष्करोति—एवमिति । यथा येन प्रकारेण त्वं कथयसि एतदेवमेव न ममासंभावना विपरीतभावना वा परमेश्वरे त्वयि वक्तरि असंभावनादेरसंभवादिति सूचयन्संबोधयति—हे परमेश्वरेति । यद्यप्येवं तथापि कृतार्थीबुभूषया ते रूपं द्रष्टुमिच्छामि । निरुपाधिकदर्शनासंभवमभिप्रेत्य रूपं विशिनष्टि—ऐश्वरमैश्वर्यशक्त्यादिसंपन्नम् । पुरुषोत्तमेति संबोधयन् वस्तुतः क्षराक्षरातीतस्य तव क्षराक्षरात्मकमैश्वरं रूपमत्यद्भुतमिति तद्दर्शने ममोत्कण्ठा महती वर्तते इति ध्वनयति ॥ ३ ॥

प० टी०—एवमिति । विष्टभ्याहमिदं कृत्स्नमितीदानीमात्मानं त्वं यदात्थ यद्वक्ष्यसि एतत्ते ऐश्वरं ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिः संपन्नं रूप द्रष्टुमिच्छामि । पुरुषोत्तमेति संबुद्ध्या अलौकिकदर्शनकौतूहलदिदृक्षाऽस्तीति सूचितम् । श्रुतिरपि वामदेव्येन साम्नोपदिशति—"कया नश्चित्र आभुवदूती सदा वृधः सखा । कया शचिष्ठया वृता" इति । भाष्यम्—वामदेवः वृधः सदा सदा वर्धमानः समष्टिरूपः परमात्मा चित्रश्चायनीयः पूजनीयः । यद्वा विचित्राकृतिमयः सखा मित्रभूतः परमात्मा कया ऊती ऊत्या संतर्पणेन कर्मणा वा नो अस्मानानुभवत् आभिमुख्येनाभवत् । अनुभवगोचरोऽभवत्यादिवाक्यैरेतादृग्रूपदर्शने वेदोऽपि वामदेवस्य मनोरथं प्रकटीकरोति किं पुनरहमित्यर्थः । तदुक्तं हरिवंशे—'भाण्डीरे सुखमासीनं विहरन्तं जनार्दनम् । वामदेवभरद्वाजौ द्रष्टुं प्राप्तौ जगन्मयम् । तथा यान्तौ समालोक्य विज्ञाय च तदीप्सितम् । उभयोर्दर्शयामास विश्वरूपं स्ववर्ष्मणि । ततस्तावूचतुः कृष्णं सर्वदेवात्मकं विभुम् । त्वमादिः सर्वभूतानां मध्यमन्तस्तथा भवान् । यान्येव वस्तुजातानि लोकजातानि माधव । तव गात्रेषु पश्यामस्त्रिमूर्तीः सर्वदेवताः । जितषड्वैरिणः शान्ता दान्ता योगेश्वरेश्वराः । त्वामीदृशं ते पश्यन्ति नान्य इत्येव विद्महे' इति । अथ वामदेवस्य साम्नः प्रवृत्तिरापस्तम्बशाखायाम्—"विश्वेभिर्देवैः पृतना जयामि जागतेन छन्दसा सप्तदशेन स्तोमेन वामदेव्येन साम्ना वषट्कारेण वज्रेण" इति । अत्र सामगायने स्तोभस्तोमादिलक्षणमस्माभिः सामभाष्ये प्रोक्तम् । तत्रैव भरद्वाजोऽपि—'कर्मणां फलदाता च फलदः कर्म कुर्वताम् । निषेद्धा दुष्टसत्त्वानां ग्रहदैत्योग्ररक्षसाम्' श्रुतिरपि—"रक्षोहणम्" इति सूक्तेन । एतदप्यग्रे निरूप्यते ॥ ३ ॥

रा० टी०—तद्वचनं स्तुवञ्ज्ञातव्यविश्वरूपाविर्भावं प्रार्थयते—एवमित्यादिद्वाभ्याम् । हे परमेश्वर यथा येन प्रकारेणात्मानं त्वमात्थ वदसि एतद्वचनमेवमेव सत्यमेव । हे पुरुषोत्तम ऐश्वरमाचिन्त्यशक्तिकं ते रूपं द्रष्टुमिच्छामि ॥ ३ ॥

**मन्यसे यदि तच्छक्यं मया द्रष्टुमिति प्रभो ॥**
**योगेश्वर ततो मे त्वं दर्शयात्मानमव्ययम् ॥ ४ ॥**

**त० टी०**–ननु मद्रूपदर्शने तवेच्छाऽस्तीति स्यादेतत्तु देवादिदर्शनाशक्यं कथं द्रष्टुमर्हसीत्याशङ्क्याह–**मन्यस इति**। हे प्रभो सर्वसामर्थ्याश्रय तत्सर्वस्याधारभूतमैश्वरं रूपं मयाऽर्जुनेन त्वदनुग्राह्येण द्रष्टुं शक्यमिति यदि जानासि, तर्हि योगेश्वर योगः सर्वसाधनकदम्बस्तस्येश्वर सर्वसाधनानां त्वदनुग्रहं विनाऽकिंचित्करत्वमित्यर्थः। ततः स्वानुग्रहादेव मेऽनन्यसाधनाय त्वं करुणार्णव अव्ययं नित्यमात्मन ऐश्वरं रूपं दर्शय दृष्टिविषयीकारयेत्यर्थः ॥ ४ ॥

**म० टी०**–द्रष्टुमयोग्ये कुतस्ते दिदृक्षेत्याशङ्क्याह–**मन्यसे इति**। प्रभवति सृष्टिस्थितिसंहारप्रवेशप्रशासनेष्विति प्रभुः हे प्रभो सर्वस्वामिन् तत्तवैश्वरं रूपं मयार्जुनेन द्रष्टुं शक्यमिति यदि मन्यसे जानासीच्छसि वा हे योगेश्वर सर्वेषामणिमादिसिद्धिशालिनां योगानां योगिनामीश्वर ततस्त्वदिच्छावशादेव मे मह्यमत्यर्थमर्थिने त्वं परमकारुणिको दर्शय चाक्षुषज्ञानविषयीकारय आत्मानमैश्वररूपविशिष्टमव्ययमक्षयम्॥४॥

**शं० टी०**–तदेव प्रार्थयते–**मन्यस इति**। सृष्टिस्थितिलयप्रवेशनियमनसमर्थत्वात् हे प्रभो तव स्वरूपं मया द्रष्टुं शक्यमिति यदि मन्यसे जानासीच्छसि वा ब्रह्मात्मैकत्वदर्शनलक्षणो ज्ञानयोगो योगस्तस्येश्वर हे योगेश्वर ततो मे त्वं दर्शयात्मानं स्वरूपमव्ययं, अव्ययस्योपाधित्वादव्ययफलहेतुत्वाद्वाऽव्ययं यदुपास्त्या शुद्धात्मा सन् पुमान् मुक्तो भवति ॥ ४ ॥

**श्री० टी०**–न चाहं द्रष्टुमिच्छामीत्येतावतैव त्वया तद्रूपं दर्शयितव्यं किं तर्हि–**मन्यस इति**। योगिन एव योगास्तेषामीश्वर मया अर्जुनेन तद्रूपं द्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि तद्रूपवन्तमात्मानमव्ययं नित्यं मम दर्शय ॥ ४ ॥

**स० टी०**–सृष्टिस्थितिलयादिभ्यः प्रभुः प्रभवतीह यः ॥ हे प्रभो सकलस्वामिन् रूपं यत्तत्तवैश्वरम् ॥१॥ मयार्जुनेन शक्यं चेद्द्रष्टुं चिन्तयसीश्वर ॥ हे योगेश्वर सर्वेषां योगिनां सिद्धिशालिनाम् ॥ २ ॥ योगानां चैव सर्वेषामीश्वरोऽसि रमापते ॥ त्वदीयेच्छावशादेव मह्यमत्यार्थिने विभो ॥ ३ ॥ आत्मानमैश्वरं रूपमक्षयं करुणानिधे ॥ चाक्षुषज्ञानविषयिकारय त्वमिहाधुना ॥ ४ ॥ ४ ॥

**भा० टी०**–**मन्यस इति**। यदि मया द्रष्टुं शक्यं त्वं मन्यसे चिन्तयसि ततो मे मह्यं मदर्थमात्मानमव्ययमपक्षयरहितं दर्शय दृष्टिगोचरं कुरु नत्वाज्ञां करोमि किंतु प्रार्थयामि ब्रह्मादिप्रभौ त्वय्याज्ञाया अयुक्तत्वादिति सूचयन्नाह–हे प्रभो इति। मम दर्शनासामर्थ्येऽपि त्वं दर्शयितुं समर्थोऽसीति वा संबोधनाशयः। यतो योगानां मत्वर्थलक्षणया योगिनामैश्वररूपदर्शने समर्थानां त्वमीश्वरस्तस्मान्मामपि योगिनं विधायात्मानं दर्शयेति ध्वनयन्संबोधयति–हे योगेश्वरेति ॥ ४ ॥

**प० टी०**–अथैतद्रूपदर्शनं केवलमनुग्रहैकलभ्यमित्याह–**मन्यस इति**। योगेश्वर योगिन एव योगास्तेषामीश्वरस्ततस्तर्ह्यात्मानं दर्शय ॥ ४ ॥

**रा० टी०**–**मन्यस इति**। हे प्रभो समर्थ तद्रूपं मया द्रष्टुं शक्यमिति यदि मन्यसे ततस्तर्हि योगेश्वर सर्वोपायपते त्वमव्ययमात्मानं स्वरूपं मे मह्यं दर्शय। प्रार्थनायां लोट्। प्रभो इति वचनं तवातिसमर्थत्वात्त्वच्छक्त्यैवातीन्द्रियस्यापि दर्शनं स्यादिति ज्ञापनाय ॥ ४ ॥

**श्रीभगवानुवाच–पश्य मे पार्थ रूपाणि शतशोऽथ सहस्रशः ॥**
**नानाविधानि दिव्यानि नानावर्णाकृतीनि च ॥ ५ ॥**
**पश्यादित्यान्वसून् रुद्रानश्विनौ मरुतस्तथा ॥**
**बहून्यदृष्टपूर्वाणि पश्याश्चर्याणि भारत ॥ ६ ॥**

त० टी०–एवं स्वानन्यभक्तेनार्जुनेन प्रार्थितः स्वैश्वरं रूपं दर्शयितुकामस्तद्दर्शनेऽर्जुनं द्रढयन् श्रीभगवानुवाच–पश्येति । हे पार्थ पृथाया मम भक्तायाः पुत्र शतशोऽथ सहस्रशोऽपरिमितानि नानाविधानि अनेकप्रकाराणि दिव्यान्यलौकिकानि नानानीलपीतादयो वर्णा आकृतयश्चावयवसंस्थानविशेषा येषां तानि नानावर्णाकृतीनि मम रूपाणि पश्य दर्शनयोग्यो भवेत्यर्थः । तस्य दुर्दर्शत्वात् । रूपस्यैकत्वेऽपि विचित्राऽपरिमितत्वाद्रूपाणीति बहुवचनम् । तान्येव निर्दिशति–पश्येति द्वाभ्याम् । हे भारत मम देहे आदित्यान् द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुत एकोनपञ्चाशतपश्य । उपलक्षणमिदमन्येषां देवानाम् । तत्रापि नैतावदेव अपि तु बहूनि अन्यानि अदृष्टपूर्वाणि इह लोके त्वयाऽन्येन वा केनचिदपि पूर्वमदृष्टानि रूपाणि आश्चर्याणि अद्भुतानि पश्य ॥ ९ ॥ ६ ॥

म० टी०–एवमत्यन्तभक्तेनार्जुनेन प्रार्थितः सन्–पश्येति । अत्र क्रमेण श्लोकचतुष्टयेऽपि पश्येत्यावृत्त्याऽत्यद्भुतरूपाणि दर्शयिष्यामि त्वं सावधानो भवेत्यर्जुनमभिमुखीकरोति भगवान् । शतशोऽथ सहस्रश इत्यपरिमितानि तानि च नानाविधान्यनेकप्रकाराणि दिव्यान्यत्यद्भुतानि नाना विलक्षणा वर्णा नीलपीतादिप्रकारास्तथा आकृतयश्चावयवसंस्थानविशेषा येषां तानि नानावर्णाकृतीनि च मे मम रूपाणि पश्य । अर्हे लोट् द्रष्टुमर्हो भव हे पार्थ ॥ ९ ॥ दिव्यानि रूपाणि पश्येत्युक्त्वा तान्येव लेशतोऽनुक्रामति द्वाभ्याम्–पश्येति । पश्यादित्यान् द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुतः सप्तसप्तकानेकोनपञ्चाशत्, तथाऽन्यानपि देवानित्यर्थः । बहून्यन्यान्यदृष्टपूर्वाणि पूर्वमदृष्टानि मनुष्यलोके त्वया त्वत्तोऽन्येन वा केनचित् पश्याश्चर्याण्यद्भुतानि हे भारत । अत्र शतशोऽथ सहस्रशः नानाविधानीत्यस्य विवरणं बहूनीति आदित्यानित्यादि च, अदृष्टपूर्वाणीति दिव्यानीत्यस्य, आश्चर्याणीति नानावर्णाकृतीनीत्यस्येति, द्रष्टव्यम् ॥ ६ ॥

शं० टी०–एवं प्रार्थितोऽर्जुनेन श्रीभगवानुवाच–पश्येति । दिवो मायाया जातानि दिव्यानि नानावर्णानि नानाकाराणि च नानाप्रकाराणि शतशः सहस्रशश्च बहून्यथानन्तरमेव पश्य नतु कालान्तरे । ननु द्रष्टुमिच्छामि ते रूपमिति, दर्शयात्मानमिति चार्जुनेन तवैश्वरं रूपं दर्शयेत्युक्ते त्रिविक्रमाकारवत् स्वाकारं वैष्णवं रूपमदर्शयित्वा पश्य मे पार्थ रूपाणीति बहूनामादित्यादिरूपाणां प्रदर्शनं भगवतस्त्वयुक्तमेव औषधमानयेत्युक्ते पर्वतानयनवदिति न शङ्कनीयं,अव्यक्तादि स्तम्बपर्यन्तं स्थूलसूक्ष्मकारणप्रपञ्चरूपेण च समष्टिव्यष्टिरूपेण च सर्वात्मना स्थितम् "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ दिशः श्रोत्रे वाग्विवृताश्च वेदाः वायु प्राणो हृदयं विश्वमस्य पद्भ्यां पृथिवी ह्येष सर्वभूतान्तरात्मा । सहस्रशीर्षं देवं" इत्यादिश्रुतिप्रसिद्धं प्रकृतं प्राकृतं च सर्वमीश्वरस्य कारणब्रह्मणः स्वरूपमेव बहुधा विश्वतोमुखमिति स्वेनैवोक्तत्वात् । ननु केवलशङ्खचक्रादिचिह्नितं रूपं तस्यापि प्राकृतत्वेनात्रैवान्तर्भूतत्वात्ततः सर्वात्मकं सर्वकारणं सर्वोत्तममैश्वरं रूपं यत्तदेवार्जुनस्य द्रष्टुमिष्टत्वाद्भगवता दर्शितं न किंचिदत्रानुपयुक्तमस्ति । किंच–अदृष्टपूर्वाणि पूर्वं येन केनाप्यदृष्टानि बहून्यसंख्यान्याश्चर्याण्यद्भुतानि रूपाणि पश्येति द्वयोरर्थः ॥ ९ ॥ ६ ॥

श्री० टी०–एवं प्रार्थितः सन्नत्यद्भुतं रूपं दर्शयिष्यन् सावधानो भवेत्येवमर्जुनमभिमुखीकरोति श्रीभगवानुवाच–पश्येति चतुर्भिः । रूपस्यैकत्वेऽपि नानाविधत्वाद्रूपाणीति बहुवचनम् । अपरिमितान्यनेकप्रकाराणि दिव्यान्यलौकिकानि मम रूपाणि पश्य, वर्णाः शुक्लकृष्णादयः आकृतयोऽवयवसन्निवेशविशेषाः नाना अनेके वर्णा आकृतयश्च येषां तानि नानावर्णाकृतीनि च ॥ ९ ॥ तान्येवाह–पश्येति । आदित्यादीन्मम देहे पश्य मरुत एकोनपञ्चाशद्देवविशेषान् अदृष्टपूर्वाणि त्वया वाऽन्ययेन वा पूर्वमदृष्टानि रूपाणि आश्चर्याण्यत्यद्भुतानि ॥ ६ ॥

स० टी०–एवमत्यन्तभक्तेन प्रार्थितो हरिरब्रवीत् ॥ अत्यद्भुतानि रूपाणि दर्शयिष्यामि सर्वशः ॥ १ ॥ सावधानो भवेत्येमावभिमुख्याय तस्य च ॥ पश्येत्यस्येरिता वृत्तिरत्र श्लोकचतुष्टये ॥ २ ॥ अनन्तानि स्वरूपाणि दिव्यान्यत्यद्भुतानि मे ॥ तथानेकप्रकाराणि द्रष्टुमर्हो भवार्जुन ॥ ३ ॥ वर्णा नानाविधा येषां नीलपीतारुणादयः ॥ तथावयवसंस्थानभेदो येषामनेकधा ॥ ४ ॥ तानि मे पश्य रूपाणि सावधानेन चेतसा ॥ ५ ॥ ५ ॥ पश्येत्युक्त्वांशतो द्वाभ्यां तान्यनुक्रामतीश्वरः ॥ पश्य त्वं द्वादशादित्यान्वसूनष्टाश्विनावुभौ ॥ १ ॥ रुद्रानेकादशैकोनपञ्चाशन्मरुतस्तथा ॥ तथान्यानपि देवांस्त्वं द्रष्टुमर्हो भवार्जुन ॥ २ ॥ बहूनि प्रागदृष्टानि त्वया वान्येन केनचित् ॥ अत्यद्भुतैकरूपाणि पश्य भारतभूषण ॥ ६ ॥

भा० टी०–एवं प्रेरितो भगवानुवाच–पश्येति । पश्य मम शतशोऽथ सहस्रशः असंख्यातानि रूपाणि नानाविधानि अनेकप्रकाराणि दिव्यानि अप्राकृतानि नाना नीलपीतादिप्रकारा वर्णास्तथाऽऽकृतयोऽवयवसन्निवेशविशेषाः येषां तानि यतस्त्वं पृथापुत्रः मम प्रेमास्पदः सखाऽतः पश्येति द्योतयन् संबोधयति–हे पार्थेति ॥ ५ ॥ आदित्यान्द्वादश, वसूनष्टौ, रुद्रानेकादश, अश्विनौ द्वौ, मरुत एकोनपञ्चाशत्, तथा बहून्यन्यानि मनुष्यलोके त्वया अन्येन वा पूर्वं न दृष्टानि उत्तमवंशोद्भवत्वात्तव दर्शनेऽधिकार इति सूचयन्नाह–भारतेति । यस्मिन् वंशे त्वमुत्पन्नस्तत्रोत्पन्नैः कैश्चिदप्येतन्न दृष्टमिति वा संबोधनाशयः ॥ ६ ॥

प० टी०–अथ भगवानप्यलौकिकं रूपं दिदृक्षन्तमर्जुनं संमुखीकरोति–पश्येत्यादिचतुर्भिः । भो पार्थ मे शतशः सहस्रशश्च रूपाणि पश्य । शतशो मुख्यविभूतिरूपाणि सहस्रशोऽवान्तररूपाणि । सहस्रशब्दोऽनन्तसंख्यावाची वा । नानाविधानि नानाप्रकाराणि । तदेवाह–नानावर्णाः शुक्लादयो नानाकृतय आकारा येषां तानि ॥ ५ ॥ अथ तान्येवाह–पश्येति । द्वादशादित्यानष्टवसून् । द्वावश्विनौ । एकोनपञ्चाशन्मरुतस्तथान्यान्यदृष्टपूर्वाणि पूर्वमदृष्टान्यत एवाश्चर्यजनकानि । मे रूपाणीति पूर्वमुक्तं तर्हि मत्तः पृथङ् न तिष्ठन्तीति तान्यन्वेष्टुं देशतः कालतो वा प्रयासो नास्तीत्याह ॥ ६ ॥

रा० टी०–एवं कौतूहलान्वितेन पार्थेन प्रार्थितो भगवान् रूपं दिदर्शयिषुरादौ दर्शनं कुर्विति विधत्ते–पश्येत्यादिना चतुष्टयेन । ते रूपं द्रष्टुमिच्छामीत्येकरूपदृष्टिप्रार्थनेऽपि दिव्यान्यप्राकृतानि, नानाभूताः शुक्लादिवर्णाः आकृतयः संस्थानविशेषाः येषां तानि, शतशः सहस्रशः बहूनीति यावत् मे रूपाणि हे पार्थ पश्येति बहुरूपदर्शनोक्तिः एकस्यैव रूपस्याचिन्त्यशक्त्या विशेषबलेन चानन्तरूपसमुदायात्मकत्वाभिप्रायेणेति ज्ञेयम् । नानाविधानीत्यस्य विवरणं नानावर्णेत्यादि ॥ ५ ॥ पश्येत्युक्तौ कस्तत्र विशेष इत्यत आह–पश्येति । द्वादशादित्यानष्टौ वसूनेकादश रुद्रानेकोनपञ्चाशन्मरुतः । तथाशब्दः समुच्चये । अदृष्टपूर्वाणि पूर्वमदृष्टानि बहूनि आश्चर्याणि अद्भुतानि च ॥ ६ ॥

**इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरम् ॥**
**मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि ॥ ७ ॥**

त० टी०–किंच–इहैकस्थमिति । इहास्मिन्मम देहे तत्राप्येकस्थम् एकस्मिन्नवयवदेशे स्थितं कृत्स्नं सचराचरं जङ्गमस्थावरसहितं जगत् अद्याधुनैव पश्य । हे गुडाकेश यच्चान्यद्भयाभयोद्भवनाशजयपराजयादिकं द्रष्टुमिच्छसि तदप्येकदेहे देश एव संदेहनिरासाय पश्य ॥ ७ ॥

म० टी०–न केवलमेतावदेव समस्तं जगदपि मद्देहस्थं द्रष्टुमर्हसीत्याह–इहेति । इहास्मिन्मम देहे एकस्थमेकस्मिन्नेवावयवरूपेण स्थितं जगत् कृत्स्नं समस्तं सचराचरं जङ्गमस्थावरसहितं तत्र तत्र परिभ्रमता वर्षकोटिसहस्रेणापि द्रष्टुमशक्यमद्याधुनैव पश्य हे गुडाकेश यच्चान्यज्जयपराजयादिकं द्रष्टुमिच्छसि तदपि संदेहोच्छेदाय पश्य ॥ ७ ॥

शं० टी०–कुत्र द्रष्टव्यमित्याकाङ्क्षायामाह–इहेति । गुडा वर्तुलत्वप्रधाना आसमन्तात्केशा यस्य स गुडाकेशः हे गुडाकेश सचराचरं स्थावरजङ्गमोपेतं सर्वमेकत्रैव तिष्ठतीत्येकस्थं कृत्स्नं जगदिहास्मिन् मम देहे विश्वात्मके अद्य पश्य यच्चान्यत्परेषां पराजयं नाशनं वा द्रष्टुमिच्छसि तदपि मय्येव पश्येत्यर्थः ॥ ७ ॥

श्री० टी०–किंच–इहेति । तत्र तत्र परिभ्रमता वर्षकोटिभिरपि द्रष्टुमशक्यं कृत्स्नमपि चराचरसहितं जगदिहास्मिन्मम देहेऽवयवरूपेणैकत्रैव स्थितमद्याधुनैव पश्य यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकं जयपराजयादिकं च यदप्यन्यद्द्रष्टुमिच्छसि तत्सर्वं पश्य ॥ ७ ॥

स० टी०–त्वं ममास्मिन् शरीरेऽद्य ह्येकस्मिन्सकलं जगत् ॥ एकावयवरूपेण स्थितं सस्थाणुजङ्गमम् ॥ १ ॥ वर्षकोटिसहस्रेण भ्रमता तत्र तत्र यत् ॥ अशक्यं द्रष्टुमद्य त्वं तत्पश्य जितनिद्रक ॥ २ ॥ जयाजयादिकं यद्यत्संदिग्धं द्रष्टुमिच्छसि ॥ पश्य संदेहनाशाय तत्सर्वं मच्छरीरगम् ॥ ३ ॥ ७ ॥

भा० टी०–न केवलमेतावदेवापि तु–इहेति । इह मम देहे एकस्थमेकस्मिन्नवयवे स्थितं सर्वं जगत्स्थावरजङ्गमसहितमद्येदानीं पश्य यच्चान्यज्जयपराजयादि द्रष्टुमिच्छसि तदपि यद्वा जयेम यदि वा नो जयेयुरिति संदेहापनुत्तये पश्य । यच्चान्यज्जगदाश्रयभूतं कारणस्वरूपं जगतश्चावस्थाविशेषादिकमतीतमनागतं विप्रकृष्टं व्यवहितं स्थूलं सूक्ष्मं चेति आदिशब्दार्थः । हे गुडाकेशेति संबोधयन् द्रष्टुं सावधानो भवेति सूचयति ॥ ७ ॥

प० टी०–इहैकस्थमिति । इह पुरोवर्तिनि बीजं मां सर्वभूतानामित्युक्तत्वात् सकलबीजभूते मनुष्याकृतिके मम देहे कृत्स्नं सर्वं जगदेकस्थमेकत्र स्थितमद्याधुनैव पश्य । तदुक्तम्–'पार्थो रथस्थं द्विभुजस्वरूपं ददर्श देहं खलु विश्वरूपम् । न विश्वरूपे ददृशे रथस्थं यद्विश्वरूपस्य निदानमेतत्' इति । यतः पूर्वं स्वशरीरान्तर्मार्कण्डेयमुनयेऽनन्तरं शरीरैकदेशे जनन्यै विश्वरूपं दर्शितवान् । तदुक्तमारण्यके पर्वणि काम्यकवनोपविष्टं कृष्णसहितं युधिष्ठिरं प्रति मार्कण्डेयेन–'ततः कदाचित्पश्यामि तस्मिन् सलिलविप्लवे । न्यग्रोधं सुमहान्तं वै तच्छाखायां नराधिप ॥ उपविष्टं तु पर्यङ्के पूर्णेन्दुसदृशाननम् । फुल्लपद्मविशालाक्षं बालं श्रीवत्सलाञ्छनम् ॥ ततो बालेन तेन स्वं सहसा विवृतं मुखम् । तस्याहमवशो वक्त्रं दैवयोगात्प्रवेशितः ॥ तत्र प्रविष्टस्तत्कुक्षावपश्यन्निखिलं जगत् । यः स देवो मया दृष्टः पुरा पद्मनिभेक्षणः ॥ स एष पुरुषव्याघ्र संबन्धी ते जनार्दनः । अस्यैव वरदानेन स्मृतिर्न प्रजहाति माम् ॥ दीर्घमायुश्च कौन्तेय स्वच्छन्दमरणं च वै । स एष कृष्णो वार्ष्णेयः पुराणः पुरुषोत्तमः । आस्ते हरिरचिन्त्यात्मा क्रीडन्निव महाभुजः ॥ भागवतेऽपि–'सा तत्र ददृशे विश्वं जगत्स्थास्नु च खं दिशः । साद्रिद्वीपाब्धिभूगोलं सवाय्वग्नीन्दुतारकम्' इति । एवं सति किं पुनः सकलदेह इत्यर्थः । अथ किं पुनर्भूते जातमित्याह–यच्चेति । यच्चान्यत्कारणीभूतं ब्रह्मादिदेवताविशेषादिकं वा द्रष्टुमिच्छसि तदपि पश्येत्यर्थः । अथ शतशोऽथ सहस्रश इत्यत्र श्रुतिरपि–"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्त्वात्यतिष्ठद्दशाङ्गुलम्" इति । भाष्यम्–सहस्रशीर्षेति षोडशर्चं सूक्तं, नारायणो नाम ऋषिः, अन्त्या त्रिष्टुप्, शेषा अनुष्टुभः, अव्यक्तादिमहदादिचेतनो यः पुरुषः स देवतेति सर्वानुक्रमस्तत्र प्रथमा सहस्रशीर्षेति । सर्वप्राणिसमष्टिरूपो ब्रह्माण्डदेहो विराडाख्यो यः पुरुषः सोऽयं सहस्रशीर्षा सहस्रशब्दस्योपलक्षणत्वात् अनन्तैः शीर्षैः शिरोभिर्युक्त इत्यर्थः । यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्रशीर्षत्वम्, एवं सहस्राक्षत्वं सहस्रपादत्वं च । स पुरुषो भूमिं ब्रह्माण्डगोलरूपां विश्वतः सर्वतो वृत्त्वा परिवेष्ट्य दशाङ्गुलपरिमितं देशमत्यतिष्ठत् अतिक्रम्य व्यवस्थितः । दशाङ्गुलमित्युपलक्षणं तेन ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थित इत्यर्थः । यद्वा "ॐभूः ॐभुवः ॐस्वः ॐमहः ॐजनः ॐतपः ॐसत्यं ॐतत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि । धियो यो नः प्रचोदयात् । ॐमापो ज्योतीरसोऽमृतं ब्रह्मभूर्भुवः सुवरोम्" इति दशप्रणवात्मकगायत्र्युपदिष्टप्रदेशं दशाङ्गुलमत्यतिष्ठदिति केचित् ॥ ७ ॥

रा० टी०—इहेति । मम देहे मदीये रूपे पश्य । कृत्स्नमित्यस्य विवरणं सचराचरमिति । जगदिह तव प्रदर्शनीयं मम देहे एकस्थमेकदेशस्थमद्य पश्य हे गुडाकेश जितनिद्र यच्चान्यद्द्रष्टुमिच्छसि तत्सर्वं मम देहे पश्य ॥ ७ ॥

**न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा ॥**
**दिव्यं ददामि ते चक्षुः पश्य मे योगमैश्वरम् ॥ ८ ॥**

**त० टी०—**यदुक्तं मन्यसे यदि तच्छक्यमिति तस्योत्तरमाह—**न तु मामिति** । अहं दिव्यं स्वकीयं रूपं दर्शयिष्यामि त्वं तु अनेनैव प्राकृतेन प्राकृताल्पवस्तुदर्शनक्षमेण स्वचक्षुषा मामप्राकृतमपरिमेयं द्रष्टुं न शक्यसे समर्थो योग्यो न भविष्यसि अतस्त्वदनुग्रहाय दिव्यमप्राकृतरूपदर्शनक्षमं चक्षुस्ते तुभ्यं ददामि तेन ममासाधारणं योगमघटनघटनापटीयस्त्वसामर्थ्यमैश्वरमीश्वरासाधारणं पश्य ॥ ८ ॥

म० टी०—यत्तूक्तं मन्यसे यदि तच्छक्यं मया द्रष्टुमिति तत्र विशेषमाह—**न त्विति** । अनेनैव प्राकृतेन स्वचक्षुषा स्वभावसिद्धेन चक्षुषा मां दिव्यरूपं द्रष्टुं नतु शक्यसे न शक्नोषि तु एव । शक्ष्यस इति पाठे शक्तो न भविष्यसीत्यर्थः । सौवादिकस्यापि शक्नोतेर्दैवादिकः श्यन् छान्दस इति वा दिवादौ पाठो वेत्येव सांप्रदायिकम् । तर्हि त्वां द्रष्टुं कथं शक्नुयामत आह दिव्यमप्राकृतं मम दिव्यरूपदर्शनक्षमं ददामि ते तुभ्यं चक्षुस्तेन दिव्येन चक्षुषा पश्य मे योगमघटनघटनासामर्थ्यातिशयमैश्वरमीश्वरस्य ममासाधारणम् ॥ ८ ॥

शं० टी०—किंच—**न त्विति** । यथा पूर्वमिन्द्रादीन् दृष्टवानसि तथा मां त्वप्राकृतं दिव्यं तेजःपुञ्जं विश्वरूपधरमप्रमेयमनेन प्राकृतेन चर्ममयेन चक्षुषा त्वं द्रष्टुं न शक्यसे न शक्नोषीत्यर्थः । तर्हि मम का वा गतिरित्याकाङ्क्षायामाह—**दिव्यमिति** । ते तुभ्यं मद्दर्शनयोग्यं तेजोमयं चक्षुर्ददामि येन मां द्रष्टुं शक्ष्यसे तेन चक्षुषा मे ममैश्वरमीश्वरत्वकारणं योगं योगमायाविजृम्भितं स्वरूपं पश्येत्यर्थः ॥ ८ ॥

श्री० टी०—यदुक्तमर्जुनेन मन्यसे यदि तच्छक्यमिति, तत्राह—**न त्विति** । अनेनैव तु स्वीयेन चर्मचक्षुषा मां द्रष्टुं न शक्यसे शक्तो न भविष्यसि अतोऽहं दिव्यमलौकिकं ज्ञानात्मकं चक्षुस्तुभ्यं ददामि ममैश्वरमसाधारणं योगं युक्तिमघटितघटनासामर्थ्यं पश्य ॥ ८ ॥

स० टी०—अनेन प्राकृतेन त्वं न शक्नोषि स्वचक्षुषा ॥ दिव्यं विश्वात्मकं द्रष्टुं सर्वाश्चर्यमयं हि माम् ॥ १ ॥ ददाम्यप्राकृतं चक्षुः क्षमं यद्दिव्यदर्शने ॥ दिव्येन चक्षुषा तेन महामायाश्रयं परम् ॥ २ ॥ ममासाधारणं रूपं पश्य त्वं चाद्भुतोपमम् ॥ ३ ॥ ८ ॥

भा० टी०—एवमुक्ते स्वचक्षुषा द्रष्टुं प्रवृत्तं न किमपि दृष्टवन्तमतो खिन्नमर्जुनमालक्ष्याह—**नेति** । मां विश्वरूपधरं परमप्राकृतमनेनैव प्राकृतेन स्वचक्षुषा द्रष्टुं न तु शक्यसे तर्हि किमर्थं पश्येति त्वयोक्तमिति तत्राह—**दिव्यमिति** । दिव्यमप्राकृतमैश्वररूपदर्शनयोग्यं चक्षुस्तुभ्यं ददामि तेन चक्षुषा ममैश्वरं योगं शक्त्यतिशयं पश्य ॥ ८ ॥

प० टी०—अथैतादृगद्भुतरूपदर्शनं चर्मचक्षुषा कथं स्यादित्याह—**न त्विति** । अनेन वर्तमानेनैव स्वचक्षुषा म ऐश्वरमलौकिकं योगं द्रष्टुं न शक्यसे तर्हि तुभ्यमहमन्तर्यामी दिव्यं सत्त्वाकारान्तःकरणवृत्तिसहकृतं ज्ञानात्मकं चक्षुर्ददामि, ततः पश्य, यथाञ्जनसंस्कारेणातीन्द्रियमपि निधानं दृश्यते तथैवेत्यर्थः । दैवात्मकृष्णाञ्जनदिव्यदृष्टिरिति पूर्वमेवोक्तम् । टिप्पणिकास्वपि—'देवकीतनयसेवकीकृतं यैर्मनागपि मनो विनोदतः । अञ्जनीभवति कज्जलोचनस्तादृशो गतिनिधानसाधने' इति । एवमेवान्यैरपि दिव्यदृष्टिदानपूर्वकं कृ-

१ शक्ष्यसे इति पाठः ।

ण्णदेहावयवेषु विश्वरूपं दृष्टमित्युद्योगपर्वणि पाण्डवदौत्येन कौरवसभां प्रति भगवद्याने प्रोक्तम्–' विदुरेणैवमुक्ते तु केशवः परवीरहा । दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् ॥ एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन । परिभूय तु दुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णय । इहादित्याश्च रुद्रश्च तथैव च महर्षयः ॥ एवमुक्त्वा जहासोच्चैः केशवः परवीरहा । तस्यास्यात्स्मयतः शौरेर्विद्युद्रूपा महात्मनः ॥ अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्चिषः । तस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ॥ प्रादुरास्तां तथा दोर्भ्यां संकर्षणधनञ्जयौ । भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः । अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्तथा । आविर्बभूवुः कृष्णाङ्गात्समुद्यतमहायुधाः । शंखचक्रगदाशक्तीः शार्ङ्गलाङ्गलनन्दकम् । अदृश्यान्युद्यतान्येव सर्वप्रहरणानि च ॥ नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः । नेत्राभ्यां वक्षसश्चैव श्रोत्राभ्यां च समन्ततः ॥ प्रादुरासन् महारौद्राः सधूमाः पावकार्चिषः । रोमकूपेषु च तथा सूर्यस्येव मरीचयः । तं दृष्ट्वा महदाश्चर्यं केशवस्य महात्मनः । न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ॥ ऋते भीष्मं च द्रोणं च विदुरं सञ्जयं तथा । प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः ॥ तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले । देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ ' इति ॥ ८ ॥

रा० टी०–त्वं द्रष्टुमिच्छसि मयाप्युच्यते पश्येति तथापि–न त्विति । त्वं त्वनेन स्वचक्षुषा मां द्रष्टुं न शक्यसे न शक्तो भविष्यसि अतस्ते दिव्यमलौकिकं चक्षुर्ददामि दर्शनशक्तिं ददामि । ऐश्वरम् ईश्वरभूतमत्संबन्धि योगं सामर्थ्यं पश्येति ॥ ८ ॥

**सञ्जय उवाच–एवमुक्त्वा ततो राजन्महायोगेश्वरो हरिः ॥**
**दर्शयामास पार्थाय परमं रूपमैश्वरम् ॥ ९ ॥**

**त० टी०**–एवं भगवद्रूपदर्शनाय भक्त्याऽर्जुनेन प्रार्थितो भगवान् दिव्यं चक्षुः प्रदाय यादृशं पारमेश्वरं रूपं तस्मै कृपया दर्शयामासैतद्धृतराष्ट्रं प्रति सञ्जय उवाच–एवमुक्त्वेत्यादिषड्भिः । हे राजन् एवमुक्तप्रकारेणोक्त्वा महांश्चासौ योगेश्वरश्च हरिः पार्थाय परमं दिव्यमैश्वरं रूपं दर्शयामास ॥ ९ ॥

म० टी०–भगवानर्जुनाय दिव्यं रूपं दर्शितवान् स च तद्दृष्ट्वा विस्मयाविष्टो भगवन्तं विज्ञापितवानितीमं वृत्तान्तमेवमुक्त्वेत्यादिभिः षड्भिः श्लोकैर्धृतराष्ट्रं प्रति–एवमिति । एवं न तु मां शक्यसे द्रष्टुमनेन चक्षुषाऽतो दिव्यं ददामि ते चक्षुरित्युक्त्वा ततो दिव्यचक्षुःप्रदानादनन्तरं हे राजन् धृतराष्ट्र स्थिरो भव श्रवणाय महान्सर्वोत्कृष्टश्चासौ योगेश्वरश्चेति महायोगेश्वरो हरिर्भक्तानां सर्वक्लेशापहारी भगवान् दर्शनायोग्यमपि दर्शयामास पार्थाय एकान्तभक्ताय परमं दिव्यं रूपमैश्वरम् ॥ ९ ॥

शं० टी०–एवमिति । योगो योगमाया सकार्या तस्याः प्रवृत्तेः कारणत्वादीश्वरो महांश्चासौ योगेश्वरश्च महायोगेश्वरः स्वसाक्षात्कारवतामविद्यां सकार्यां हरतीति हरिः परमात्मा ऐश्वरमीश्वरसंबन्धि परमं निरतिशयं रूपं दर्शयामासेत्यर्थः ॥ ९ ॥

श्री० टी०–एवमुक्त्वा भगवानर्जुनाय रूपं दर्शितवान् । तच्च रूपं दृष्ट्वार्जुनः श्रीकृष्णं विज्ञापितवानितीममर्थं एवमुक्त्वेत्यादिभिः षड्भिः श्लोकैर्धृतराष्ट्रं प्रति संजय उवाच–एवमिति । हे राजन् धृतराष्ट्र महांश्चासौ योगेश्वरश्च हरिः परममैश्वरं रूपं दर्शितवान् ॥ ९ ॥

स० टी०–समस्ताश्चर्यनिलयं समस्तैश्वर्यसंयुतम् ॥ भगवान्प्रार्थितो रूपं दर्शयामास जिष्णवे ॥ १ ॥ तद्दृष्ट्वा विस्मयाविष्टः स विज्ञापितवान्हरिम् ॥ इतीमं सर्ववृत्तान्तं धृतराष्ट्रनृपं प्रति ॥ २ ॥ उवाच संजयः

षड्भिः श्लोकैरैश्वर्यतत्परैः ॥ दिव्यं ददामि ते चक्षुरेवमुक्त्वार्जुनं प्रति ॥ ३ ॥ सर्वोत्कृष्टोऽस्ति यो योगस्तस्यासौ परमेश्वरः ॥ दिव्यचक्षुः प्रदायादौ दर्शयामास तद्वपुः ॥ ४ ॥ भक्तक्लेशहरः स्वामी दर्शनानर्हमप्यसौ ॥ दर्शयामास पार्थाय दिव्यं तत्पारमेश्वरम् ॥ ५ ॥ ९ ॥

भा० टी०—एतादृशो भगवतो वासुदेवस्य महिमार्जुनपक्षपातश्चेति सूचयन् धृतराष्ट्रं प्रति संजय उवाच—एवमिति । एवं यथोक्तेन प्रकारेणोक्त्वा ततोऽनन्तरं महांश्चासौ योगेश्वरो हरिः पार्थाय परमप्रेमास्पदाय परममैश्वररूपं दर्शयामास । हरिरित्यनेन स्वभक्तानां पार्थानां दुःखहरण उद्यत इत्युक्तं महायोगेश्वर इत्यनेन विश्वरूपप्रदर्शनादिना येनकेनापि प्रकारेण तद्धरणेऽतिसमर्थ इति सूचितम् एतादृशकृष्णानुगृहीतैः पाण्डवैस्त्वं संधिं न कृतवान्न करोषि चातो राजनीतिहीनो नाममात्रेण राजासीति हे राजन्निति संबोधनेन ध्वनितम् ॥ ९ ॥

प० टी०—अथ प्रकृतमनुसरामः । एवमुक्त्वा भगवानर्जुनाय रूपं दर्शितवान् तच्च रूपं दृष्ट्वाऽर्जुनः श्रीकृष्णं विज्ञापितवानितीमं वृत्तान्तं धृतराष्ट्रं प्रति सञ्जय उवाच—एवमुक्त्वेति । षड्भिः श्लोकैः भो राजन् धृतराष्ट्र महायोगेश्वरो हरिः महान्तश्च ते योगेश्वराश्च महायोगेश्वराः, योगो हि जीवब्रह्मैक्यं तत्रेश्वराः समर्थाः शुकवामदेवयाज्ञवल्क्यप्रभृतयस्तेषामपीश्वरः कृष्णः पार्थाय परमं पारमार्थिकं रूपमैश्वरमघटितघटनापटीयो दर्शयामास ॥ ९ ॥

रा० टी०—अनन्तरवृत्तान्तं धृतराष्ट्रं प्रति संजय उवाच । तदाह—एवमिति, पश्य मे पार्थ रूपाणीत्यादिप्रकारेणोक्त्वेत्यर्थः । महतां योगानामुपायानामनन्तशक्तीनां वेश्वरः । कुत एतदित्यत उक्तम्—हरिरिति । सर्वयज्ञादिभागहरणाद्धरिः ( परममनेकविभवोपेतं ) । 'इडोपहूतं गेहेषु हरे भागं क्रतुष्वहम् । वर्णो मे हरितः श्रेष्ठः तस्माद्धरिरिति स्मृतः' इति मोक्षधर्मोक्तेः । गेहेषु इष्टिगृहेष्वित्यर्थः । हरतेरिकारप्रत्ययः । अप्राकृतविग्रहस्य साकारस्यानन्तपूजास्थानेषु युगपत्सन्निधानेन भागहारिणो महायोगेश्वरत्वं किं वक्तव्यमिति भावः ॥ ९ ॥

**अनेकवक्त्रनयनमनेकाद्भुतदर्शनम् ॥**
**अनेकदिव्याभरणं दिव्यानेकोद्यतायुधम् ॥ १० ॥**
**दिव्यमाल्याम्बरधरं दिव्यगन्धानुलेपनम् ॥**
**सर्वाश्चर्यमयं देवमनन्तं विश्वतोमुखम् ॥ ११ ॥**

त० टी०—तदेव रूपं विशिनष्टि द्वाभ्याम्—अनेकेति । अनेकानि वक्त्राणि नयनानि च यस्मिन् तत्, अनेकानामद्भुतानां दर्शनं यस्मिन् तत्, अनेकानि दिव्यान्याभरणानि यस्मिन् तत्, दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तत् ॥ १० ॥ दिव्येति । दिव्यानि माल्याम्बराणि च धारयति तथा दिव्यगन्धवदनुलेपनं यस्य तत्, सर्वाश्चर्यमयम् अनेकाश्चर्यप्रचुरं देवं द्योतनात्मकमनन्तं त्रिविधपरिच्छेदशून्यं सर्वतो मुखानि यस्य तत् ॥ ११ ॥

म० टी०—तदेव रूपं विशिनष्टि—अनेकेति । अनेकानि वक्त्राणि नयनानि च यस्मिन्रूपे, अनेकानामद्भुतानां विस्मयहेतूनां दर्शनं यस्मिन्, अनेकानि दिव्यान्याभरणानि भूषणानि यस्मिन्, दिव्यान्यनेकान्युद्यतान्यायुधानि अस्त्राणि यस्मिंस्तत्तथा रूपम् ॥ १० ॥ दिव्यानि माल्यानि पुष्पमयानि रत्नमयानि च तथा दिव्याम्बराणि वस्त्राणि च ध्रियन्ते येन तद्दिव्यमाल्याम्बरधरं दिव्यो गन्धोऽस्येति दिव्यगन्धस्तदनुलेपनं

यस्य तत् सर्वाश्चर्यमयमनेकाद्भुतप्रचुरं देवं द्योतनात्मकं अनन्तमपरिच्छिन्नं विश्वतः सर्वतो मुखानि यस्मिन् तद्रूपं दर्शयामासेति पूर्वेण संबन्धः, अर्जुनो ददर्शेत्यध्याहारो वा ॥ ११ ॥

**शं० टी०–**तद्रूपमेव वर्णयति–**अनेकेति द्वाभ्याम्** । अनेकान्यपरिमितान्यद्भुतान्याश्चर्यकराणि दर्शनान्यूर्ध्वाधस्तिर्यक्पश्यन्त्यो विकृताः सौम्याः साधारणा भयंकराश्चित्रा दृष्टयो यस्य तदनेकाद्भुतदर्शनं, दिव्यानि प्रचण्डप्रकाशवन्त्यनेकान्युद्यतान्युद्धृतानि चक्रगदाद्यायुधानि यस्य तद्दिव्यानेकोद्यतायुधं रूपम् ॥ १० ॥ किंच–**दिव्येति** । सर्वाश्चर्यमयं तेजोबलवीर्यशक्तिरूपगुणावयवावस्थानादिविशेषैः सर्वैराश्चर्यप्रचुरं सर्वतः स्वयमेव दीव्यते प्रकाशत इति देवं सर्वतोमुखं सर्वात्मकमत एवानन्तमपरिच्छिन्नं स्वरूपं दर्शयामासेति पूर्वेणान्वयः ॥ ११ ॥

**श्री० टी०–**कथंभूतं तदित्यत आह–**अनेकेति** । अनेकानि वक्त्राणि नयनानि च यस्मिँस्तत् अनेकानामद्भुतानां दर्शनं यस्मिँस्तत्, अनेकानि दिव्याभरणानि यस्मिँस्तत्, दिव्यान्यनेकानि उद्यतानि आयुधानि च यस्मिंस्तत् ॥ १० ॥ किंच–**दिव्येति** । दिव्यानि माल्यान्यम्बराणि च धारयतीति तथा, दिव्यो गन्धो यस्य तादृशमनुलेपनं यस्य तत्, सर्वाश्चर्यमयमनेकाश्चर्यप्रायं देवं द्योतनात्मकम् अनन्तमपरिच्छिन्नं विश्वतः सर्वतो मुखानि यस्मिंस्तत् ॥ ११ ॥

**स० टी०–**तदेव रूपं श्रीविष्णोर्विशिनष्टि स संजयः ॥ यस्मिन्वक्त्राण्यनेकानि नेत्राणि तत्तथा वपुः ॥ १ ॥ अद्भुतानामनेकेषां यस्मिन्रूपेऽस्ति दर्शनम् ॥ यस्मिन्दिव्यान्यनेकानि भूषणानि च तत्तथा ॥२॥ यस्मिन् दिव्यान्यनेकानि प्रोद्यतान्यायुधानि तत् ॥ ३ ॥ १० ॥ ध्रियन्ते येन दिव्यानि माल्यानि वसनानि तत् ॥ दिव्यो गन्धोऽस्य तेनानुलेपनं यस्य तत्तथा ॥ १ ॥ अनेकाश्चर्यप्रचुरमनन्तं द्योतनात्मकम् ॥ तद्रूपमपरिच्छिन्नं सर्वतोमुखसंयुतम् ॥ २ ॥ दर्शयामास पार्थायेत्यनेनान्वय इष्यते ॥ ३ ॥ ११ ॥

**भा० टी०–**परममैश्वरं रूपं विशिनष्टि–**अनेकेति** । अनेकानि मुखानि नेत्राणि च यस्मिंस्तत्, अनेकानि विस्मायकानि दर्शनानि यस्मिंस्तत्, तथानेकानि दिव्यान्यलौकिकानि भूषणान्यङ्गदादीनि यस्मिंतस्त, तथा दिव्यान्यनेकान्युद्यतान्यायुधानि यस्मिंस्तत्, दर्शयामासेति पूर्वेण संबन्धः ॥ १० ॥ उक्तरूपवन्तं भगवन्तं विशिनष्टि दिव्यानि पुष्पाणि वस्त्राणि ध्रियन्ते येन तं दिव्यगन्धस्यानुलेपनं यस्य तं सर्वाश्चर्यप्रायं देवमनन्तं सर्वभूतात्मकत्वात् सर्वतोमुखं दर्शयामासार्जुनो ददर्शेत्यध्याहारो वा । अत्र यद्यप्येतानि रूपविशेषणानि प्रतिभान्ति यथापि देवशब्दस्येश्वरवाचकस्य विशेष्यत्वमभिप्रेत्याचार्यैरित्थं व्याख्यातम्॥ ११॥

**प० टी०–अनेकेति** । ततोऽनेकवक्त्रनयनमित्यादितः श्लोकद्वयं रूपवर्णनार्थं स्पष्टार्थम् ॥ १० ॥ ११ ॥

**रा० टी०–**तद्रूपमाह–**अनेकेति** । अनेकानि वक्त्राणि नयनानि यस्य तत् । अनेकशब्दोऽनन्तवाची । अनेकेषामद्भुतानां दर्शनं यस्मिन्नित्यनेकाद्भुतदर्शनं रूपं दर्शयामासेत्यनुषङ्गः । सर्वाश्चर्यमयं सर्वाश्चर्यात्मकम् । तादात्म्यार्थे मयट् । देवं क्रीडादिगुणमनन्तं देशकालगुणापरिच्छिन्नं विश्वतोमुखं सर्वदिक्षु मुखं यस्य तद्विश्वतोमुखमनन्तमुखमिति वा ॥ १० ॥ ११ ॥

## दिवि सूर्यसहस्रस्य भवेद्युगपदुत्थिता ॥
## यदि भाः सदृशी सा स्याद्भासस्तस्य महात्मनः ॥ १२ ॥

**त० टी०–**देवमित्युक्तं, कीदृशी तस्य दीप्तिरित्यपेक्षायां तस्या अभूतोपमामाह–**दिवीति** । दिवि

आकाशे सूर्यसहस्रस्य युगपदुत्थितस्य युगपदुत्थिता भाः प्रभा यदि भवेत्तदा सा तस्य महात्मनो विश्वरूपस्य भासः प्रभायाः सदृशी उपमा स्यात्, अन्योपमा तु नास्त्येवेत्यर्थः । एवं चैकदा दिवि सूर्यसहस्रस्योत्थानमसंभावितं तदभावे तत्सादृश्याभाव इत्यभूतोपमया निरुपमत्वमेव व्यक्तीकृतम्॥१२॥

म० टी०—दैवमित्युक्तं विवृणोति—दिवीति । दिवि अन्तरिक्षे सूर्याणां सहस्रस्य अपरिमितसूर्यसमूहस्य युगपदुदितस्य युगपदुत्थिता भाः प्रभा यदि भवेत् तदा सा तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी तुल्या यदि स्याद्यदि वा न स्यात् ततोऽपि नूनं विश्वरूपस्यैव भा अतिरिच्येतेत्यहं मन्ये, अन्या तूपमा नास्त्येवेत्यर्थः । अत्राविद्यमानाध्यवसायात्तदभावेनोपमाभावपरादभूतोपमारूपेयमतिशयोक्तिरुत्प्रेक्षां व्यञ्जयन्ती सर्वथा निरुपमत्वमेव व्यनक्ति, उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेतामित्यादिवत् ॥ १२ ॥

शं० टी०—विश्वरूपस्य यद्देवत्वं तदेव विशदयति—दिवीति । दिव्याकाशे युगपदेकदैवोत्थितस्य सर्याणां सहस्रस्य युगपदुत्थिता समकालोदिता मेघाद्यावरणवर्जिता च या भाः प्रभा विद्यते सा विश्वरूपस्य भासः प्रकाशस्य स्फुरणसंपत्त्या स्वयं यदि सदृशी स्यात् समानकक्षा भवेच्चेत्तदा विश्वरूपप्रकाशस्य सदृशीति वक्तुं शक्यते, द्वयोः स्फुरणसंपत्तौ विचार्यमाणायां सूर्यसहस्रप्रभापेक्षया विश्वरूपप्रकाश एवाधिको भविष्यतीति मन्य इति भावः॥ १२ ॥

श्री० टी०—विश्वरूपदीप्तेर्निरुपमत्वमाह—दिवीति । दिव्याकाशे सूर्यसहस्रस्य युगपदुत्थितस्य यदि युगपदुत्थिता भाः प्रभा भवेत् तर्हि सा तदा महात्मनो विश्वरूपस्य भासः प्रभायाः कथंचित्सदृशी स्यात् नान्योपमाऽस्तीत्यर्थः । तथाभूतं रूपं दर्शयामासेति पूर्वेणान्वयः ॥ १२ ॥

स० टी०—अन्तरिक्षेसहस्रस्य समूहस्य विवस्वताम् ॥ युगपच्चोत्थितस्य स्यात्प्रभा युगपदुत्थिता ॥१॥ तदा सा विश्वरूपस्य दीप्तिस्तुल्या भवेन्न वा ॥ ततोऽपि विश्वरूपस्य प्रभा सैवातिरिच्यते ॥ २ ॥ इत्यहं स्वधिया मन्ये नान्यास्तीहोपमैव हि ॥ ३ ॥ १२ ॥

भा० टी०—तत्र दृष्टान्ताकाङ्क्षायामाह—दिवीति । दिवि अन्तरिक्षे स्वर्गे वा सूर्याणां सहस्रस्य युगपदुत्थितस्य युगपदुत्थिता भा यदि भवेत् सा तस्य महात्मनो विश्वरूपस्य भासः दीप्तेः सदृशी तुल्या स्यात् यदि वा न स्यादिति विश्वरूपस्य भा अतिरिच्यत इत्याशयः ॥ १२ ॥

प० टी०—अथ वैश्वरूपतेजसो दृष्टान्ताभावं दर्शयति—दिवीति । तस्य महात्मनो विश्वरूपस्य भासो दीप्तेः सदृशी समाना भा दीप्तिस्तर्ह्येव स्यात् । तर्हि कथम् , यदि दिव्याकाशे सूर्यसहस्रस्य युगपदेकवारमुत्थिता उदिता स्यादित्यभूतोपमालंकारः ॥ १२ ॥

रा० टी०—किंच—दिवीति । दिव्याकाशे सूर्यसहस्रस्यानन्तसूर्यराशेः युगपदुत्थितस्येति शेषः । प्रभा युगपदुत्थिता स्यात्सा प्रभा तस्य महात्मनो विश्वरूपस्य भासः प्रभायाः सदृशी स्यात् नान्यास्त्युपमेत्यर्थः॥१२॥

**तत्रैकस्थं जगत्कृत्स्नं प्रविभक्तमनेकधा ॥**
**अपश्यद्देवदेवस्य शरीरे पाण्डवस्तदा ॥ १३ ॥**

त० टी०—ततो यथा भगवतोक्तं तथार्जुनस्तद्देहे दृष्टवानित्याह—तत्रेति । तत्र तस्मिन्ननुपमे देवदेवस्य विश्वरूपे शरीरे एकत्र स्थितमनेकधा प्रविभक्तं ब्रह्मादिविविधविचित्रदेवतिर्यङ्मनुष्यस्थावरादिपृथिव्यन्तरिक्षनदीपर्वतस्वर्गपातालादिभेदभिन्नं चेतनाचेतनात्मकं कृत्स्नं जगत् भगवत्प्रसादलब्धतद्दर्शनार्हदिव्यचक्षुः पाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥

म० टी०—इहैकस्थं जगत्कृत्स्नं पश्याद्य सचराचरमिति भगवदाज्ञप्तमप्यनुभूतवानर्जुन इत्याह—तत्रेति । एकस्थमेकत्र स्थितं जगत् कृत्स्नं प्रविभक्तमनेकधा देवपितृमनुष्यादिनानाप्रकारैः अपश्यद्देवदेवस्य भगवतः तत्र विश्वरूपे शरीरे पाण्डवोऽर्जुनस्तदा विश्वरूपाश्चर्यदर्शनदशायाम् ॥ १३ ॥

शं० टी०—इहैकस्थं जगत्कृत्स्नमिति यथोक्तं भगवता तथैवार्जुनोऽपि दृष्टवानित्याह—तत्रेति । यदा यस्मिन् क्षणे दिव्यं चक्षुर्दत्तं तदैव पाण्डवो देवदेवस्य तत्रैव विश्वात्मके शरीरे एकस्थमपि देवर्षिगन्धर्वादिभेदेनानेकधा प्रविभक्तं कृत्स्नं जगदपश्यत् ॥ १३ ॥

श्री० टी०—ततः किं वृत्तमित्यपेक्षायामाह संजयः—तत्रेति । अनेकधा प्रविभक्तं नानाविभागेनावस्थितं कृत्स्नं जगद्देवदेवस्य शरीरे तदवयवत्वेनैकत्रैव पृथक् पृथगवस्थितं तदापाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥

स० टी०—तत्रैकत्र स्थितं सर्वं प्रविभक्तं जगत्पृथक् ॥ देवपितृमनुष्यादिप्रकारैर्भिन्नमद्भुतम् ॥ १ ॥ दृष्टवानर्जुनो देहे देवदेवस्य शार्ङ्गिणः ॥ तदाश्चर्यमयानेकदर्शनावसरे किल ॥ २ ॥ १३ ॥

भा० टी०—न केवलं विश्वरूपधरं देवमर्जुनो दृष्टवानपि तु देवस्य देहे एकस्थं सर्वं जगदनुभूतवानित्याह-तत्रेति । तत्र तस्मिन् विश्वरूपे देवदेवस्य शरीरे एकत्र स्थितं सर्वं जगद्देवपितृमनुष्यादिभेदैरनेकप्रकारेण प्रकर्षेण विभागयुक्तं पाण्डवोऽर्जुनो दृष्टवान् । अहो भगवद्भक्तस्यार्जुनस्य पितुः पाण्डोर्भाग्यातिशयः ईश्वरविमुखस्य दुर्योधनस्य पितुस्तवाभाग्यातिशयश्चेति पाण्डवपदेन ध्वनितम् ॥ १३ ॥

प० टी०—तत्रेति । तत्र देवदेवस्य शरीरेऽनेकधा प्रविभक्तं भिन्नभिन्ननामरूपकर्मात्मकं कृत्स्नं समग्रं जगदेकस्थमेकाश्रयं तदा तस्मिन्नवसरे पाण्डवोऽर्जुनोऽपश्यत् ॥ १३ ॥

रा० टी०—ततः किं जातमित्यत आह—तत्रेति । भगवता प्रदर्शिते सति देवदेवस्य शरीरे विश्वरूपे देवदानवमानवादिभेदेनानेकधा प्रविभक्तं कृत्स्नं जगदेकस्थमेकदेशस्थं तदापश्यत् ॥ १३ ॥

## ततः स विस्मयाविष्टो हृष्टरोमा धनंजयः ॥
## प्रणम्य शिरसा देवं कृताञ्जलिरभाषत ॥ १४ ॥

त० टी०—ततः किं वृत्तमित्यपेक्षायामाह—तत इति । ततस्तदद्भुतरूपदर्शनाद्विस्मयो योऽलौकिकान्तश्चमत्कारस्तेनाविष्टो व्याप्तस्तत एव हृष्टरोमा उत्पुलकिततनूरुहः स धनंजयः देवं तमेव विश्वरूपं शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वा अभाषत उक्तवान् ॥ १४ ॥

म० टी०—एवमद्भुतदर्शनेऽप्यर्जुनो न बिभयाञ्चकार नापि नेत्रे संचचार नापि संभ्रमात्कर्तव्यं विसस्मार नापि तस्माद्देशादपससार किंत्वतिधीरत्वात्तत्कालोचितमेव व्यवजहार महति चित्तक्षोभेऽपीत्याह—तत इति । ततस्तद्दर्शनादनन्तरं विस्मयेनाद्भुतदर्शनप्रभवेनालौकिकचित्तचमत्कारविशेषेणाविष्टो व्याप्तः अत एव हृष्टरोमा पुलकितः सन् स प्रख्यातमहादेवसंग्रामादिप्रभावः धनञ्जयः युधिष्ठिरराजसूये उत्तरगोग्रहे च सर्वान् वीरान् जित्वा धनमाहृतवानिति प्रथितमहापराक्रमोऽतिधीरः साक्षादग्निरिति वा महातेजस्वित्वात् देवं तमेव विश्वरूपधरं नारायणं शिरसा भूमिलग्नेन प्रणम्य प्रकर्षेण भक्तिश्रद्धातिशयेन नत्वा नमस्कृत्य कृताञ्जलिः संपुटीकृतहस्तयुगः सन्नभाषतोक्तवान् अत्र विस्मयाख्यस्थायिभावस्यार्जुनगतस्यालम्बनविभावेन भगवता विश्वरूपेणोद्दीपनविभावेनासकृत्तद्दर्शनेनानुभावेन सात्त्विकरोमहर्षेण नमस्कारेणाञ्जलिकरणेन चाव्यभिचारिणा चानुभावाक्षिप्तेन वा धृतिमतिहर्षवितर्कादिना परिपोषात्सवासनानां श्रोतॄणां तादृशश्चित्तचमत्कारोऽपि तद्भेदानध्यवसायात्परिपोषं गतः परमानन्दास्वादरूपेणाद्भुतरसो भवतीति सूचितम् ॥ १४ ॥

शं० टी०—दृष्ट्वा किंकृतवानित्यत आह—तत इति । स्पष्टम् ॥ १४ ॥

श्री० टी०—एवं दृष्ट्वा किं कृतवानित्यत आह—तत इति। ततो दर्शनानन्तरं विस्मयेनाविष्टो व्याप्तः सन् हृष्टान्युत्पुलकितानि रोमाणि यस्य स धनंजयो देवं तमेव शिरसा प्रणम्य कृताञ्जलिः संपुटीकृतहस्तो भूत्वाऽभाषत उक्तवान् ॥ १४ ॥

स० टी०—एवं दिव्याद्भुतं रूपं दृष्ट्वा भगवतोऽर्जुनः ॥ न बिभयाञ्चकारासौ संचचार न चक्षुषी ॥ १ ॥ विसस्मार न कर्तव्यं स्थानान्नापससार ह ॥ किंतु धीरतया चक्रे व्यवहारं यथोचितम् ॥ २ ॥ चित्तक्षोभेऽपि महति प्राहेत्येवं स संजयः ॥ तद्रूपदर्शनाज्जातविस्मयेनावृतस्ततः ॥ ३ ॥ हृष्टरोमाञ्चनो भूत्वा विश्वरूपधरं हरिम् ॥ भूमिलग्नेन शिरसा भक्तिश्रद्धासमन्वितः ॥ ४ ॥ प्रकर्षेण नमस्कृत्य स्वाभिमानं विहाय च ॥ संपुटीकृतहस्तः सन्नुवाचानतकन्धरः ॥ ५ ॥ १४ ॥

भा० टी०—ततः किमकरोदित्यपेक्षायामाह—तत इति। तत एकस्थकृत्स्नजगद्दर्शनानन्तरं सः प्राथितप्रभावो धनंजयोऽर्जुनो विस्मयाविष्टः आश्चर्यबुद्धियुक्तः, तल्लिङ्गमाह हृष्टानि पुलकितानि रोमाणि यस्य प्रणम्य प्रकर्षेणोत्कटभक्त्या नमनं कृत्वा शिरसा देवं विश्वरूपधरं नमस्कारार्थं संपुटीकृतहस्तः सन् उक्तवान् विश्वरूपदर्शनात्पूर्वमपि खाण्डवदाहादिना प्राथितप्रभावो राजसूये गोग्रहे च राजभ्यो धनस्य भीष्मादिभ्यो गोधनस्य च हरणात् धनंजयोऽधुना पुनर्दृष्टविश्वरूप इति राज्याशां त्वं मा कुर्विति स धनंजय इति पदाभ्यां ध्वनितम् ॥ १४ ॥

प० टी०—ततः किमासीदित्याह—तत इति। ततो दर्शनानन्तरं धनञ्जयोऽर्जुनोऽद्भुतदर्शनोत्पन्नेन विस्मयेनाविष्टो व्याप्तः। एवमद्भुतरसाविर्भावेन हृदयरोमाञ्चाङ्कितः सन् देवं कृष्णं शिरसा प्रणम्य कृताञ्जलिः सन्नभाषत ॥ १४ ॥

रा० टी०—दर्शनानन्तरं किमकरोदित्यत आह—तत इति। ततः दर्शनानन्तरम् ॥ १४ ॥

**अर्जुन उवाच—पश्यामि देवांस्तव देव देहे सर्वांस्तथा भूतविशेषसंघान् ॥**
**ब्रह्माणमीशं कमलासनस्थमृषींश्च सर्वानुरगांश्च दिव्यान् ॥१५॥**

त० टी०—अर्जुन उवाच—पश्यामीति। हे देवदेव तव देहे सर्वानिन्द्रवस्वादीन्देवान् पश्यामि। तथा सर्वान् भूतविशेषाणां स्थावरजङ्गमात्मकानां जरायुजाण्डजादिभेदभिन्नानां वा संघान् समूहान्, तथा ब्रह्माणं चतुर्मुखं ब्रह्माण्डाधिपं, तथेशं शङ्करं, कथंभूतं कमलासनस्थं कमलासने ब्रह्मणि स्थितं तदानुकूल्ये वर्तमानं, तथा सर्वान् भृगुमरीच्यादीनृषीन्, तथोरगान् वासुकितक्षकप्रभृतीन्सर्पान् पश्यामीति सर्वत्रान्वेति ॥ १५ ॥

म० टी०—यद्भगवता दर्शितं विश्वरूपं तद्भगवद्दत्तेन दिव्येन चक्षुषा सर्वलोकादृश्यमपि पश्याम्यहो मम भाग्यप्रकर्ष इति स्वानुभवमाविष्कुर्वन्—पश्यामीति। पश्यामि चाक्षुषज्ञानविषयीकरोमि हे देव तव देहे विश्वरूपे देवान्वस्वादीन्सर्वान् तथा भूतविशेषाणां स्थावराणां जङ्गमानां च नानासंस्थानानां संघान्समूहान् तथा ब्रह्माणं चतुर्मुखमीशमीशितारं सर्वेषां कमलासनस्थं पृथिवीपद्ममध्ये मेरुकर्णिकासनस्थं भगवन्नाभिकमलासनस्थमिति वा तथा ऋषींश्च सर्वान्वसिष्ठादीन् ब्रह्मपुत्रान् उरगांश्च दिव्यानप्राकृतान् वासुकिप्रभृतीन् पश्यामीति सर्वत्रान्वयः ॥ १५ ॥

शं० टी०—पश्य मे पार्थ रूपाणि, पश्यादित्यान्वसूनिति त्वया यथोक्तं तथैव पश्यामीत्याहार्जुनः—पश्यामीति। हे देव तव देहे भूतविशेषसंघान् भूतविशेषा देवतिर्यगादिविभेदभिन्नाः प्राणिविशेषास्तेषां संघान्। तानेव विशेषयति—देवानिति। तत्रापि विशेषयति—ब्रह्माणमिति। ईशं सर्वप्राणिनां नियन्तारं कमलासनस्थं ब्रह्माणं चतुर्मुखं ऋषीन् नारदसनकादीन् दिव्यानुरगान् शेषवासुक्यादीन् पश्यामीत्यर्थः ॥ १५ ॥

श्री० टी०—भाषणमेवाह—पश्यामीति सप्तदशभिः। हे देव तव देहे देवानादित्यादीन् पश्यामि तथा सर्वान् भूतविशेषाणां जरायुजाण्डजादीनां संघांश्च, तथा दिव्यानृषीन्वसिष्ठादीन् उरगांश्च तक्षकादीन्, तथा तेषां देवादीनामीशं स्वामिनं ब्रह्माणं च। कथंभूतं कमलासनस्थं पृथ्वीपद्मकर्णिकायां मेरौ स्थितम्, यद्वा त्वन्नाभिपद्मासनस्थम् ॥ १५ ॥

स० टी०—दर्शितं विश्वरूपं यच्छ्रीमद्भगवताद्भुतम् ॥ तद्दत्तेनैव दिव्येन सर्वाद्दश्यमपीह तत् ॥ १ ॥ अहो पश्यामि नेत्रेण मम भाग्यप्रकर्षतः ॥ इति स्वानुभवं प्रादुष्कुर्वन्प्रोवाच पाण्डवः ॥ २ ॥ पश्यामि तव देहेऽस्मिन्विश्वरूपे सुरानहम् ॥ समस्तानेव वस्वादींस्त्वद्दत्तेनैव चक्षुषा ॥ ३ ॥ तथा भूतविशेषाणां स्थाणुजङ्गमरूपिणाम् ॥ नानासंस्थानयुक्तानां समूहान्नेत्रगोचरान् ॥ ४ ॥ चतुर्मुखं समस्तानामीशितारं त्वयि स्थितम् ॥ भूपद्ममध्ये मेर्वाख्यकर्णिकासनसंस्थितम् ॥ ५ ॥ तथैवर्षीन्वसिष्ठादीन्समस्तान्मन्त्रदर्शिनः ॥ वासुकिप्रभृतीन्सर्पान्दिव्यान्दिविभवांस्तथा ॥ ६ ॥ १५ ॥

भा० टी०—स्वानुभवमाविष्कुर्वन्नर्जुन उवाच—पश्यामीति। हे देव तव देहे देवानिन्द्रादीन् सर्वान्पश्यामि तथा भूतविशेषाणां चराचराणां समूहान्पश्यामि किंच ब्रह्माणं प्रजानां नियन्तारं पद्मासनस्थमृषींश्च वसिष्ठादीन् सर्वानुरगांश्च वासुकिप्रभृतीन् दिव्यान् पश्यामीति सर्वत्र संबन्धनीयं, देवादीनां भूतविशेषान्तर्भूतत्वेऽपि तेषामुत्कर्षात्पृथगुपादानं ब्रह्मणो देवत्वेऽपि तज्जनकत्वात्पृथग्ग्रहणम् ॥ १५ ॥

प० टी०—किमभाषतेत्याह—पश्यामीति सप्तदशभिः। भो देव दीप्यमान तव देहे स्वर्गस्थान् देवान् पश्यामि। तथा भूमिस्थान् सर्वान् भूतविशेषाणां जरायुजाण्डजादीनां संघान् समूहांस्तथा दिव्यन्तरिक्षे वर्तमानानृषीन् पुलस्त्यक्रत्वादींस्तथा पाताले स्थितानुरगांश्च पश्यामि। किं च। सत्यलोकनिवासिनं ब्रह्माणं तथा कैलासनिवासिनमीश्वरं पश्यामि। किं च कमलया लक्ष्म्या सहासने गरुडासने स्थितो विष्णुस्तमपि वैकुण्ठवासिनं पश्यामीति दिव्यदृष्टिदानस्य फलमुक्तम् ॥ १५ ॥

रा० टी०—किमभाषतेत्यतो दृष्टरूपानुवादपूर्वं स्तुतिमकरोदित्याह—अर्जुन उवाचेत्यादिना। पश्यामीति। सर्वान्देवान् सर्वान्प्राणिविशेषसमूहांश्चेत्यर्थः। ब्रह्माणं चतुर्मुखं, कमलासने चतुर्मुखे स्थितमीशं रुद्रम्। तदुक्तं पाद्मे—' विष्णुं समाश्रितो ब्रह्मा ब्रह्मणोऽङ्कगतो हरः। हरस्याङ्गविशेषेषु देवाः सर्वेऽपि संस्थिताः ' इति। तव देहे देवानित्यत्रापि परंपरयेति ज्ञेयम्। दिव्यानद्भुतानुरगान्सर्पांश्च तव देहे पश्यामि ॥ १५ ॥

**अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोऽनन्तरूपम् ॥**
**नान्तं न मध्यं न पुनस्तवादिं पश्यामि विश्वेश्वर विश्वरूपम् ॥ १६ ॥**

त० टी०—किंच—अनेकेति। अनेकानि बाहूदरवक्त्रनेत्राणि यस्य तमनन्तरूपं त्वां सर्वतः पश्यामि। हे विश्वेश्वर विश्वनियन्तः हे विश्वरूप यतस्त्वमनन्तः अतस्तव नान्तमवसानं न मध्यं न पुनरादिं पश्यामि ॥ १६ ॥

म० टी०—यत्र भगवद्देहे सर्वमिदं दृष्टवान् तमेव विशिनष्टि—अनेकेति। बाहवश्च उदराणि वक्त्राणि नेत्राणि चानेकानि यस्य तमनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वा त्वां सर्वतः सर्वत्र अनन्तानि रूपाणि यस्येति तं तव तु पुनर्नान्तमवसानं न मध्यं नाप्यादिं पश्यामि सर्वगतत्वात् हे विश्वेश्वर हे विश्वरूप संबोधनद्वयमतिसंभ्रमात् ॥ १६ ॥

शं० टी०—किंच—अनेकेति। अनेकबाहूदरवक्त्रनेत्रमनन्तरूपमनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि हे विश्वेश्वर विश्वरूप तव नान्तं न मध्यं पुनरादिं च न पश्यामि ॥ १६ ॥

श्री० टी०–किंच **अनेकेति** । अनेकानि बाह्वादीनि यस्य तादृशं त्वां पश्यामि अनन्तानि रूपाणि यस्य तं त्वां सर्वतः पश्यामि तव तु अन्तं मध्यमादिं च न पश्यामि सर्वगतत्वात् ।। १६ ।।

स० टी०–बाहवश्चोदराणीह वक्त्राणि नयनानि च ।। यस्यानेकानि तं त्वाहं पश्यामि विश्वरूपिणम् ।। ।। १ ।। सर्वत्रानन्तरूपं चापरिच्छिन्नं महत्तरम् ।। नावसानं न मध्यं ते नादिं पश्याम्यहं तव ।। २ ।। हे विश्वेश समस्तात्मन्नित्येवं संभ्रमाद्वचः ।। ३ ।। १६ ।।

भा० टी०–यस्य देहे सर्वं दृष्टं तं देहवन्तं विशिनष्टि–**अनेकेति** । अनेकानि बाह्वादीनि यस्य तं त्वां सर्वत्रानन्तानि रूपाण्यस्येति तं पश्यामि तवादिमन्तं मध्यं पुनर्न पश्यामि विश्वदर्शनं तव देहे युक्तं, विश्वरूपत्वात्तवेति सूचनार्थं हे विश्वरूपेति संबोधनम् । विश्वस्याद्यन्तमध्यवत्त्वेऽपि तव तद्वत्त्वं नास्ति विश्वरूपत्वेऽपि विश्वेश्वरत्वात्तवेति द्योतनार्थं विश्वेश्वरेति संबोधनम् ।। १६ ।।

प० टी०–अथ विश्वरूपं वर्णयति–**अनेकेति द्वाभ्याम्** । भो विश्वेश्वर ते विश्वरूपं विश्वात्मकं रूपं यद्वा 'विश्वं विष्णुर्वषट्कारः' इत्यादिना विश्वं विष्णुस्वरूपं रूपे शरीरे यस्य तथाविधं ते इति त्वां पश्यामि किं भूतम्, अनेकबाहूदरवक्त्रनेत्रम् अनेकेषां बाहूदरवक्त्रनेत्राण्येव बाहूदरवक्त्रनेत्राणि यस्य । सर्वतः समन्ततोऽनन्तरूपमसंख्यातरूपमेव सर्वं पश्यामि । परं त्वेतत्त्रितयं न पश्यामि । तत्किम्, ते अन्तं पर्यवसानं मध्यं स्थितिमादिमाविर्भावं पूर्वं कमलासनस्थमिति पदेन सामान्यतो विष्णोः स्वरूपं यद्द्रष्टुमित्युक्तं तदेव गदाचक्राद्यायुधोपलक्षणं यथा पुराणेषु श्रुतमभूत्तथा " इदं विष्णुर्विचक्रमे त्रेधा निदधे पदम् " इति श्रुतिप्रतिपादितं त्रिविक्रमाकारेण दृष्टमित्याह ।। १६ ।।

रा० टी०–**अनेकेति** । अनेकबाहूदरवक्त्रनेत्रमित्यत्रापि अनेकनयनमित्यत्रेवानेकशब्दोऽनन्तवाची । प्रागुक्तानुवादरूपत्वादपौनरुक्त्यम् । सर्वतः सर्वस्मिन्देशे अनन्तान्यपरिमितानि रूपाणि यस्य तम् । हे विश्वरूप पूर्णरूप सर्वं समस्तं विश्वं च अनन्तं पूर्णमेव चेत्युक्तेः विश्वेश्वरजगत्पते तवादिं मध्यमन्तं वा न पश्यामि । नञः त्रिरुक्तिरादरार्था । अत एवाद्यन्तयोरभावादेव मध्याभावसिद्धौ पुनर्मध्यं नेत्युपचारनिवृत्त्यर्थम् ।। १६ ।।

**किरीटिनं गदिनं चक्रिणं च तेजोराशिं सर्वतो दीप्तिमन्तम् ।।**
**पश्यामि त्वां दुर्निरीक्ष्यं समन्ताद्दीप्तानलार्कद्युतिमप्रमेयम् ।। १७ ।।**

त० टी०–पुनर्विश्वरूपं भगवन्तं विशिनष्टि–**किरीटिनमिति** । किरीटमुकुटादिमन्तं तेजोराशिं तेजःपुञ्जभूतं तत एव सर्वतो दीप्तिमन्तमत एव दुर्निरीक्ष्यं दुःखेन द्रष्टुं शक्यम् । सर्वतो दीप्तिमन्तमित्युक्तमिदानीं तस्य दीप्तेरुपमामाह–दीप्तानलार्कयोर्द्युतेरिव द्युतिः प्रकाशो यस्य तमतएवाप्रमेयम् इयानिति प्रमातुमशक्यं त्वां समन्तात् पश्यामि ।। १७ ।।

म० टी०–तमेव विश्वरूपं भगवन्तं प्रकारान्तरेण विशिनष्टि किरीटगदाचक्रधारिणं च सर्वतो दीप्तिमन्तं तेजोराशिं च अत एव दुर्निरीक्ष्यं दिव्येन चक्षुषा विना निरीक्षितुमशक्यं, सयकारपाठे दुःशब्दोपहववचनः अनिरीक्ष्यमिति यावत् । दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिर्यस्य तमप्रमेयमित्थमयमिति परिच्छेत्तुमशक्यं त्वा त्वां समन्तात्सर्वतः पश्यामि दिव्येन चक्षुषा । अतोऽधिकारिभेदाद्दुर्निरीक्ष्यं पश्यामीति न विरोधः ।। १७ ।।

शं० टी०–किंच–**किरीटिनमिति** । तेजोराशिं तेजःपुञ्जमत एव सर्वतो दीप्तिमन्तं प्रकाशयुक्तमत एव दीप्तानलार्कद्युतिं जाज्वल्यमानसूर्यानलसन्निभमत एवाप्रमेयं परिच्छेदरहितं चक्षुःप्रमाणागोचरमत एव समन्तात्सर्वतो दुर्निरीक्ष्यं दुःखेन द्रष्टुं शक्यं पश्यामि शिष्टं स्पष्टम् ।। १७ ।।

श्री० टी०—किंच—किरीटिनमिति । किरीटिनं मुकुटवन्तं गदिनं गदावन्तं चक्रिणं चक्रवन्तं च सर्वतो दीप्तिमन्तं तेजःपुञ्जरूपम् च, तथा दुर्निरीक्ष्यं द्रष्टुमशक्यम् । तत्र हेतुः—दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिस्तेजो यस्य तम्, अत एवाप्रमेयमेवंभूत इति निश्चेतुमशक्यम् त्वां समन्ततः पश्यामि ॥ १७ ॥

स० टी०—तं प्रकारान्तरेणेशं विशिनष्टि चिदद्वयम् ॥ गदाकिरीटचक्रादिधारिणं तेजसां निधिम् ॥१॥ सर्वतो दीप्तियुक्तं च पश्यामीशानमद्भुतम् ॥ विना दिव्येन नेत्रेण त्वामशक्यं निरीक्षितुम् ॥२॥ सर्वतो दीप्तयोर्वह्निसूर्ययोरिव भायुतम् ॥ अत्यशक्यं परिच्छेत्तुमित्थं चायमियानिति ॥ ३ ॥ १७ ॥

भा० टी०—किंच किरीटिनं शिरोभूषणविशेषवन्तं गदास्यातीति गदी तं, चक्रमस्यातीति चक्री तं, अत एव समन्ततः सर्वत्र दीप्ताग्निसूर्ययोः कान्तिरिव कान्तिर्यस्य तं, अत एव दुर्निरीक्ष्यं दुःखेन निरीक्ष्यं किरीटादिमत्त्वेऽप्यप्रमेयमशक्यपरिच्छेदं त्वां पश्यामि ॥ १७ ॥

प० टी०—किरीटिनमिति । किरीटिनं मुकुटवन्तं गदिनं गदाहस्तं चक्रिणं सुदर्शनवन्तं पश्यामि । अनेनोर्ध्वहस्ताभ्यां क्रमेण गदाचक्रे तथाधरहस्ताभ्यां पद्मशङ्खौ बिभ्राणमेवं चतुर्भुजं त्रिविक्रमरूपं पश्यामीत्युक्तम् । तथा त्वां सर्वतस्तेजोराशिं तेजःसमूहरूपं दीप्तिमन्तं प्रसरप्रकाशं समन्ताद्दुर्निरीक्ष्यं द्रष्टुमशक्यं दीप्तानलार्कद्युतिं ज्वलदग्निसूर्ययोर्दीप्तिर्यस्य । अप्रमेयं मनसाप्यतर्क्यम् । अयमर्थः—त्रिविक्रमस्वरूपं तु स्वरूपेणैव चरणविक्षेपमात्रव्याप्तब्रह्माण्डकटाहं तादृशमपि तव देहे पश्यामि किं पुनरन्यत् । एतदेव मनसि निधाय महापुराणेऽप्युक्तम्—'क्वाहं तमोमहदहंखचराग्निवार्भूःसंवेष्टिताण्डघटसप्तवितस्तिकायः' इत्यादि ॥१७॥

रा० टी०—दीप्तयोरनलार्कयोर्द्युतिरिव द्युतिः प्रकाशो यस्य तमित्युक्त्वा प्राप्तपरिमितत्वशङ्काव्युदासायोक्तमप्रमेयमिति अमितद्युतिमित्यर्थः ॥ १७ ॥

**त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् ॥**
**त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ १८ ॥**

**त० टी०—अप्रमेयमहित्वात्त्वमेवं मतोऽसीत्याह-त्वमिति । उपनिषत्सु "एतदक्षरमविदित्वा गार्ग्यस्माल्लोकात्प्रैति स कृपणः एतस्य वाऽक्षरस्य प्रशासने गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिना वेदितव्यं परममक्षरं त्वमेव । अस्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानमाश्रयः, यतस्त्वमव्ययः स्वरूपतो गुणतो महिम्नश्च न व्येषि न हीयसे अत एव शाश्वतधर्मगोप्ता शाश्वतस्य नित्यस्य वेदप्रतिपाद्यस्य धर्मस्य यज्ञादेः त्वदाराधनभूतस्य भागवतस्य धर्मस्य वा गोप्ता रक्षकः । यतः सनातनः सदैकरसस्वरूपः पुराणः पुरुषो मे मया मतो ज्ञातोऽसि ॥ १८ ॥**

म० टी०—एवं तवातर्क्यनिरतिशयैश्वर्यदर्शनादनुमिनोमि—त्वमिति । त्वमेवाक्षरं परमं ब्रह्म वेदितव्यं मुमुक्षुभिर्वेदान्तश्रवणादिना त्वमेवास्य विश्वस्य परं प्रकृष्टं निधीयतेऽस्मिन्निति निधानमाश्रयः अत एव त्वमव्ययो नित्यः शाश्वतस्य नित्यवेदप्रतिपाद्यतया नित्यस्य धर्मस्य गोप्ता पालयिता, शाश्वतेति संबोधनं वा तस्मिन्पक्षेऽव्ययो विनाशरहितः अत एव सनातनश्चिरन्तनः पुरुषो यः परमात्मा स एव त्वं मे मतो विदितोऽसि ॥ १८ ॥

शं० टी०—त्वदीयैतन्महामायायोगसंभाविताद्भुतस्वरूपमहत्त्वदर्शनेनैव त्वामेवमहं मन्य इत्याह—**त्वमक्षरमिति** । अक्षरं निरवयवत्वान्निराश्रयत्वात्क्रियानाश्रयत्वात्क्रियाऽविषयत्वादनन्तत्वाच्च न क्षरतीत्यक्षरं नित्यकूटस्थं "एतद्वै तदक्षरं गार्गि इति श्रुतेः" तत एव परममुत्तमोत्तमं "अव्यक्तात्तु परः पुरुषः" इति श्रुतेः। तत एव परमार्थत्वात्परमपुरुषार्थत्वाच्च वेदितव्यं मुमुक्षुभिर्ज्ञातव्यं " स आत्मा स विज्ञेयः " इति श्रुतेः ।

वेदितव्यं परमं यदक्षरं निर्विशेषं परं ब्रह्म तत्त्वमेव । तथापि जगद्बीजं मत्तोऽन्यदस्तीत्यत आह—त्वमस्येति । अस्य महदादिस्थूलपर्यन्तस्य विश्वस्य सर्वविकारजातस्य यन्निधानं निधीयते सर्वमस्मिन्निति निधानं जगद्बीजमव्याकृताख्यं त्वमेव 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' इति "परस्मान्न सन्नासन्न सदसादिति आत्मन एव त्रैविध्यं सर्वत्र योनित्वमपि " इति श्रुतेः ' मत्तः परतरं ' इति स्मृतेश्च । ननु यद्यप्यहमेव परं ब्रह्म निर्विशेषं जगत्कारणं चाऽहमेव तथापि मत्तोऽन्यः कश्चिदीश्वरोऽस्ति ज्ञातव्य उपास्यश्चेत्यत आह—**त्वमव्यय इति** । न विद्यते व्ययो ज्ञानाज्ञानाभ्यामन्यैर्वा विनाशो यस्य सोऽव्ययो नित्यः शाश्वतधर्मगोप्ता शश्वद्भवतीति शाश्वतो वेदस्तेनोक्ता ये धर्मा ज्ञानकर्मादयस्तेषां गोप्ता वर्णाश्रमधर्मरक्षकः सृष्ट्यादिकर्ता ईश्वरोऽपि त्वमेव " एष भूताधिपतिरेष भूतपाल एष सेतुर्विधरण एषां लोकानामसंभेदाय " इति श्रुतेः । ननु निर्विशेषं परं ब्रह्म सविशेषमपरं ब्रह्माप्यहमेव तथापि मत्तोऽन्यो जीवोऽस्ति भेदायेत्यत आह—सनातन इति । " न जीवो म्रियत इति श्रवणात् सनातनो नित्यः पुरुषः पुरि शयनात्पुरुष आत्मापि त्वमेव " अयमात्मा ब्रह्म " इति श्रुतेः ॥ १८ ॥

**श्री० टी०**—यस्मादेवं तवातर्क्यमैश्वर्यं तस्मात्—**त्वमिति** । त्वमेवाक्षरं परमं ब्रह्म । कथंभूतं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यम् । त्वमेवास्य विश्वस्य परं निधानम् निधीयतेऽस्मिन्निति निधानं प्रकृष्टाश्रयः अत एव त्वमव्ययो नित्यः शाश्वतस्य नित्यस्य धर्मस्य गोप्ता पालकः सनातनश्चिरन्तनः पुरुषो मे मतः संमतोऽसि ॥ १८ ॥

**स० टी०**—एवं तवात्यतर्क्यश्रीतेजऐश्वर्यदर्शनात् ॥ इत्थं शास्त्रोत्थया बुद्ध्या सम्यगनुमिनोम्यहम् ॥ १ ॥ त्वमक्षरं परं ब्रह्म वेदितव्यं मुमुक्षिभिः ॥ वैराग्यादियुतैः सम्यग्वेदान्तश्रवणादिना ॥ २ ॥ विश्वस्यास्य समस्तस्य परोत्कृष्टस्त्वमाश्रयः ॥ अत एवासि नित्यस्त्वं शाश्वतो धर्मरक्षकः ॥ ३ ॥ धर्मस्य नित्यवेदेन प्रतिपाद्यतयास्य च ॥ त्वं हि पालयिता नाशशून्यस्तस्माच्चिरंतनः ॥ ४ ॥ परमात्मासि पुरुषो विदितो मे परात्परः ॥ ५ ॥ १८ ॥

**भा० टी०**—दृष्ट्वा चानुमिनोमि—**त्वमिति** । त्वमक्षरं न क्षरतीत्यक्षरं परमं ब्रह्म श्रवणादिना मुमुक्षुभिर्वेदितव्यं ज्ञातव्यं त्वमेव यतोऽस्य विश्वस्य परं प्रकृष्टं निधानं निधीयतेऽस्मिन्निति निधानं परः आश्रयस्त्वमेव किंच त्वमव्ययो विनाशरहितः पुनश्च शश्वद्भवस्य नित्यस्य नित्यवेदबोधितस्य धर्मस्य गोप्ता रक्षकोऽतस्त्वं चिरंतनः पुरुषो ममाभिमतः ॥ १८ ॥

**प० टी०**—अथाप्रमेयत्वमेवाह—**त्वमक्षरमिति** । न क्षरतीत्यक्षरं परं ब्रह्म त्वमेव परममात्यन्तिकं वेदितव्यं मुमुक्षुभिर्ज्ञातव्यं यस्मिन् ज्ञाते सर्वमिदं विज्ञातं भवतीत्यर्थः । त्वमस्य दृश्यमानस्य विश्वस्य परमुत्कृष्टं निधानं निधीयते यस्मिन् प्रकृष्ट आश्रयः । अव्ययो नित्यः शाश्वता ये मोक्षप्रापका धर्मास्तेषां गोप्ता रक्षिता निर्वाहकः सनातनः पुराणः । एवं विधस्त्वं पुरुषः पुरुषोत्तमो मे मतः ॥ १८ ॥

**रा० टी०**—**त्वमिति** । परं निधानं मुख्याश्रयः । शाश्वतधर्मगोप्ता अनादिपरंपराप्राप्तधर्मरक्षकः । अव्ययो ह्रासहीनः सनातनोऽनादिनित्यः पुरुषो मे मतः ॥ १८ ॥

**अनादिमध्यान्तमनन्तवीर्यमनन्तबाहुं शशिसूर्यनेत्रम् ॥**
**पश्यामि त्वां दीप्तहुताशवक्त्रं स्वतेजसा विश्वमिदं तपन्तम् ॥१९॥**

**त० टी०**—पुनरनुभूतरूपमेव वर्णयति—**अनादीति** । अनादिमध्यान्तमादिमध्यान्तरहितम्, अनन्तवीर्यं निरतिशयप्रभावम्, अनन्ता बाहवो यस्य तं, शशिसूर्यौ नेत्रे यस्य शशिवत्सूर्यवच्च तापहरप्र-

तापके च नेत्रे यस्येति वा, स्वभक्तानां देवादीनां तापहरं तद्विपरीतानामसुराणां तापकरं च नेत्रं यस्य तम्। दीप्तहुताशवक्त्रं प्रदीप्तकालानलवत्संहारकं वक्त्रं यस्य अत एव स्वतेजसा विश्वमिदं तपन्तं स्वकीयेन तेजसा विश्वं तापयन्तं पराभवं कुर्वन्तं त्वां पश्यामि ॥ १९ ॥

म० टी०–किंच अनादीति । आदिरुत्पत्तिर्मध्यं स्थितिरन्तो विनाशस्तद्रहितमनादिमध्यान्तमनन्तं वीर्यं प्रभावो यस्य तं, अनन्ता बाहवो यस्य तं, उपलक्षणमेतन्मुखादीनामपि शशिसूर्यौ नेत्रे यस्य तं, दीप्तो हुताशो वक्त्रं यस्य वक्त्रेषु यस्येति वा तं, स्वतेजसा विश्वमिदं तपन्तं संतापयन्तं त्वा त्वां पश्यामि ॥ १९ ॥

शं० टी०–ननु "सत्यं ज्ञानमनन्तं ब्रह्म । यतो वा इमानि । एष सर्वेश्वरः प्रज्ञानं ब्रह्म" इत्यादिश्रुतिप्रामाण्यं त्वया यदुक्तं तत्सत्यमेव तथापि मत्तो भिन्नं जगदस्तीत्याशङ्कायां "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुत्यर्थमवष्टभ्य तदपि त्वमेवेत्याह–अनादीति । अनादिमध्यान्तमादिमध्यान्तरहितं वीराणां कर्म वीर्यमनन्तमपारं वीर्यं यस्य तमनन्तवीर्यम्, अनन्तबाहुमनन्ताः संख्यातीता बाहवो यस्य तमनन्तबाहुं शशिसूर्यौ नेत्रे यस्य तं शशिसूर्यनेत्रं दीप्तः शिखाभिर्जाज्वल्यमानो हुताशो वक्त्रं यस्य तं दीप्तहुताशवक्त्रं स्वतेजसा सूर्यवत्तपन्तं प्रज्वलन्तं त्वामिदं विश्वं पश्यामि इदं विश्वं त्वमेवेति त्वदभिन्नं विश्वं पश्यामि, त्वां विश्वात्मना स्थितं पश्यामीत्यर्थः ॥ १९ ॥

श्री० टी०–किंच–अनादीति । अनादिमध्यान्तमुत्पत्तिस्थितिप्रलयरहितम् अनन्तं वीर्यं प्रभावो यस्य तम्, अनन्तबाहुं अनन्ता वीर्यवन्तो बाहवो यस्य तम्, शशिसूर्यौ नेत्रे यस्य तम्, तादृशं त्वां पश्यामि तथा दीप्तो हुताशोऽग्निर्वक्त्रेषु यस्य तम्, स्वतेजसा इदं विश्वं तपन्तं संतापयन्तं पश्यामि ॥ १९ ॥

स० टी०–आदिर्मध्यं तथान्तश्च यस्य ते नास्ति कर्हिचित् ॥ अपरिच्छिन्नवीर्यत्वादनन्ता यस्य बाहवः ॥ १ ॥ नेत्रे यस्येन्दुसूर्यौ स्तः प्रचण्डाग्निसमाननम् ॥ स्वतेजसाखिलं विश्वं तापयन्तमिदं तथा ॥२॥ तं त्वां पश्यामि विश्वेशं व्याप्तं येन जगत्रयम् ॥ ३ ॥ १९ ॥

भा० टी०–भगवतः परमपुरुषत्वं प्रकारान्तरेण निरूपयति–अनादीति । आदिमध्यान्तवर्जितमनन्तवीर्यमपरिमितपराक्रमं यतोऽनन्ता बाहवो यस्य चन्द्रसूर्यौ नेत्रे यस्य दीप्तश्चासौ वह्निश्च वक्त्रं यस्य तं, अतः स्वतेजसा इदं विश्वं संतापयन्तं त्वां पश्यामि ॥ १९ ॥

प० टी०–किं च स्वजनमात्रहिंसाभयाद्रणान्निवृत्तेन कालरूपपरमेश्वरदर्शनप्रार्थनया त्रैलोक्यहिंसापि मयैव कारितेति मन्यमानः पश्चात्तापमनुवदन्नाह–अनादीति । न विद्यन्ते आदिमध्यान्ता यस्य । अनन्तवीर्यमनन्तशक्तिम् । अनन्ता बाहवो यस्य । शशिसूर्यनेत्रं सांमुख्येन वर्तमानौ पूर्णचन्द्रसूर्यौ नेत्रे यस्य यद्वा शशिसूर्ययोरपि नेत्रीभूतम् । दीप्तहुताशो ज्वलदग्निर्वक्त्रं मुखं यस्य । स्वतेजसा इदं विश्वं तपन्तं संतापयन्तम् । जगत्संहारं कर्तुमिव प्रवृत्तं पश्यामि ॥ १९ ॥

रा० टी०–अनादीति । अनादिमध्यान्तमादिमध्यान्तशून्यं गुणतोऽत्रादिमध्यान्तहीनत्वमुच्यते । नान्तं न मध्यमित्यत्र देशतः । अतो न पौनरुक्त्यम् । शशिसूर्यौ नेत्रयोर्यस्य तमिति वा जन्यजनकभावेन वाऽभेदोक्तिः । देवानां बहुरूपत्वादनेकाश्रयत्वं युक्तमिति "चन्द्रमा मनसो जातः" इति मनोजाततया तदाश्रयत्वमप्यविरुद्धम् । दीप्तहुताशवक्त्रमिति जन्यजनकभावेनाश्रयाश्रयिभावेन वेति ध्येयम् ॥ १९ ॥

**द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः ॥**
**दृष्ट्वाऽद्भुतं रूपमुग्रं तवेदं लोकत्रयं प्रव्यथितं महात्मन् ॥ २० ॥**

त० टी०–तद्रूपस्य सर्वलोकासह्यत्वमाह–द्यावापृथिव्योरिति । द्यौश्च पृथिवी च तयोर्मध्ये

इदमन्तरमवकाशं त्वयैवैकेन व्याप्तं दिशश्च सर्वा व्याप्ताः, एवमद्भुतमत्याश्चर्यं तवेदमुग्ररूपं दृष्ट्वा लोकत्रयं प्रव्यथितमिति भीतियुक्ततया व्याकुलं पश्यामि। हे महात्मन् महानात्मा दीनानुकम्पी स्वभावो यस्य स त्वमनुकम्पिस्वभावत्वादेतद्रूपोपसंहारेणैताननुगृहाणेति भावः ॥ २० ॥

**म० टी०**–प्रकृतस्य भगवद्रूपस्य व्याप्तिमाह–**द्यावेति**। द्यावापृथिव्योरिदमन्तरमन्तरिक्षं हि एव त्वयैवैकेन व्याप्तं दिशश्च सर्वा व्याप्ताः दृष्ट्वाद्भुतमत्यन्तविस्मयकरमिदमुग्रं दुरधिगमं महातेजस्वित्वात्तव रूपमुपलभ्य लोकत्रयं प्रव्यथितमत्यन्तभीतं जातं हे महात्मन् साधूनामभयदायक इतःपरमिदमुपसंहरेत्यभिप्रायः॥२०॥

**शं० टी०**–तदेव विस्पष्टयति–**द्यावेति**। हि यस्मात्कारणात् द्यावापृथिव्योः भूम्यन्तरिक्षयोरन्तरमन्तरालं सर्वं त्वयैकेन विश्वात्मना स्थितेन व्याप्तं पूर्णं तथा प्राच्याद्याः सर्वा दिशश्च व्याप्ताः पूर्णाः उपलक्षणमेतच्चराचरात्मकं विश्वं सर्वं त्वया व्याप्तं 'येन यद्व्याप्तं तत्तन्मात्रमेव' इति न्यायेन त्वद्व्याप्तं विश्वं त्वन्मात्रमेवातः सर्वं विश्वं त्वमेवेत्यर्थः। ब्रह्मैवेदं सर्वं" इति श्रुतेः। एवं सार्वात्म्यं प्रतिपाद्य प्रकृतं विश्वरूपं प्रस्तौति–**दृष्ट्वेत्यादिना**। महात्मन् महान् महत्तरो विश्वमय आत्मा देहो यस्य स महात्मा तस्य संबुद्धिः हे महात्मन् अद्भुतमाश्चर्यकरमुग्रमतिभयंकरं च तवेदं रूपं दृष्ट्वा लोकत्रयं त्रिलोकस्थं प्राणिजातं सर्वं प्रव्यथितं, क्षुब्धं व्याकुलं च भवतीत्यर्थः ॥ २० ॥

**श्री० टी०**–किंच–**द्यावापृथिव्योरिति**। द्यावापृथिव्योरिदमन्तरं हि अन्तरिक्षं त्वयैकेन व्याप्तं दिशश्च सर्वा व्याप्ताः अद्भुतमदृष्टपूर्वं त्वदीयमिदमुग्रं घोरं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामि इति पूर्वस्यैवानुषङ्गः ॥ २० ॥

**स० टी०**–विश्वरूपभृता व्याप्तं द्यावाभूम्योर्यदन्तरम् ॥ दिशः सर्वास्त्वयैकेन व्याप्तास्ते रूपमीदृशम् ॥ १ ॥ अतिविस्मापकं दृष्ट्वा महातेजस्वतस्तव ॥ उग्ररूपमिदं लोकत्रयं भीतमतीव च ॥ २ ॥ साधूनामभयं देहि त्वं महात्मतया हरे ॥ ३ ॥ २० ॥

**भा० टी०**–**द्यावेति**। द्यावापृथिव्योरन्तरमन्तरिक्षं त्वयैकेन विश्वरूपधरेण व्याप्तं दिशश्च सर्वा त्वया व्याप्ताः हि यस्मात्तस्मात्तवेदमुग्रं रूपं दृष्ट्वा लोकत्रय प्रव्यथितं पीडितमत इदमुपसंहर। महात्मनोऽक्षुद्रस्वभावस्य तव निर्दोषलोकपीडनं नोचितमित्याशयेनाह–हे महात्मन्निति ॥ २० ॥

**प० टी०**–**द्यावापृथिव्योरिति**। द्यावापृथिव्योरन्तरमन्तरिक्षं त्वयैकेनैव व्याप्तम्। तथा सर्वा दिशश्च व्याप्ताः। भो महात्मन् विश्वरूप एवमेतादृशमुग्रं तव रूपं दृष्ट्वा लोकत्रयं प्रव्यथितम्। प्रकर्षेण संहारं प्राप्तमिवाति पश्यामि। श्रुतिरपि वाजसनेयसंहितासु–" परीत्य भूतानि परीत्य लोकान् परीत्य सर्वाः प्रदिशो दिशश्च। उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश"। भाष्यम्–ऋतस्य सत्यस्य परब्रह्मणः प्रथमजां प्रथमजातां शबलत्वेनोपस्थितां तनुमुपस्थायाधिष्ठाय आत्मना स्वरूपेण कृत्वात्मानमभितः संविवेश प्रविष्टवान्। किं कृत्वा, भूतानि पृथिव्यादीनि परीत्याभिव्याप्य लोकान् भूर्भुवःस्वरादीन् दिशश्च प्रदिशश्चेति तद्वत् ॥ २० ॥

**रा० टी०**–**द्यावेति**। द्यावापृथिव्योरिदमन्तरं मध्यमेकेन त्वया एकरूपेण त्वया व्याप्तं रूपान्तरैस्तु सर्वा दिशो व्याप्ता इत्यर्थः। त्वयेत्येकवचनेनैवैकेनेति लाभे पुनरेकेनेत्युक्तिः एकेन रूपेण द्यावापृथिव्यन्तरव्याप्तिसूचनाय। हे महात्मंस्तवेदमुग्रं भयंकरमद्भुतं रूपं दृष्ट्वा लोकत्रयं प्रव्यथितमतिभीतं पश्यामीत्यन्वयः। भूमेर्भारहाराय प्रवृत्तत्वादुग्रमिव नतूग्रमेव तदुग्रत्वमपि केषांचित्संहार्यत्वकारणविशेषादनभ्यासरूपकारणाद्वा। अभ्यासे तु आनन्द एव तद्दर्शनाद्भवति। अत्र लोकत्रयपदेन लोकत्रयस्थभक्तवर्गग्रहः अभक्तानां तद्दृष्टेरेवाभावात्। यद्वा तद्रूपमदृष्ट्वापि मनसा तदनुसंधायैव बिभ्यज्जनं दृष्ट्वार्जुनोऽहमिव एते-

ऽपि दृष्ट्वा बिभ्यतीति बुद्ध्वा लोकत्रयं प्रव्यथितं पश्यामीत्याहेति ज्ञेयम् । अस्मिन्पक्षे लोकत्रयशब्दो भक्ताभक्तवर्गपरः ॥ २० ॥

**अमी हि त्वां सुरसंघा विशन्ति केचिद्भीताः प्राञ्जलयो गृणन्ति ॥**
**स्वस्तीत्युक्त्वा महर्षिसिद्धसंघाः स्तुवन्ति त्वां स्तुतिभिः पुष्कलाभिः ॥२१॥**

**त० टी०**—लोकत्रयं प्रव्यथितमित्युक्तं तदेव विवृणोति--**अमी हीति** त्रिभिः । अमी सुरसंघाः शरणार्थिनस्त्वमेव परमाश्रयं विशन्ति आश्रयन्ते । तेषु केचित्त्वात्युग्ररूपं दृष्ट्वा भीताः सन्तो दूरत एव स्थिताः प्राञ्जलयो भूत्वा गृणन्ति । जय जय पाहीत्यादिवाक्यान्युच्चारयन्ति । महर्षिसिद्धसंघा जगद्विनाशनिमित्तानि वक्राण्यग्निज्योतींषि महोल्कानीवोपलक्ष्य जगतः स्वस्ति भूयादित्युक्त्वा सर्वलोकसंरक्षणाय त्वां पुष्कलाभिर्महदर्थयुक्ताभिः स्तुतिभिर्भगवन्माहात्म्यप्रतिपादिकाभिर्वाग्भिः स्तुवन्ति ॥२१॥

**म० टी०**—अधुना भूभारसंहारकारित्वमात्मनः प्रकटयन्तं भगवन्तं पश्यन्नाह—**अमी हीति** । अमी हि सुरसंघा वस्वादिदेवगणा भूभारावतारार्थं मनुष्यरूपेणावतीर्णाः युध्यमानाः सन्तस्त्वा त्वां विशन्ति प्रविशन्तो दृश्यन्ते एवमसुरसंघा इति पदच्छेदेन भूभारभूताः दुर्योधनादयस्त्वां विशन्तीत्यपि वक्तव्यम् । एवमुभयोरपि सेनयोः केचिद्भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयो गृणन्ति स्तुवन्ति त्वां, एवं प्रत्युपस्थिते युद्धे उत्पातादिनिमित्तान्युपलक्ष्य स्वस्त्यस्तु सर्वस्य जगत इत्युक्त्वा महर्षिसिद्धसंधा नारदप्रभृतयो युद्धदर्शनार्थमागता विश्वविनाशपरिहाराय स्तुवन्ति त्वां स्तुतिभिर्गुणोत्कर्षप्रतिपादिकाभिर्वाग्भिः पुष्कलाभिः परिपूर्णार्थाभिः ॥ २१ ॥

**शं० टी०**—किंच **अमी हीति** । हि यस्मात्त्वं शाश्वतधर्मगोप्ता तस्मादुग्रमप्यत्यद्भुतस्वरूपं त्वां द्रष्टुं केचिद्बलाधिकाः सुरसंघाः सुराणां देवानां संघाः सुरसंघा स्तव समीपं विशन्ति केचिदबला भीताः सन्तो दूरादेव प्राञ्जलयो भूत्वा गृणन्ति स्तुवन्ति तत्र महर्षिसिद्धसंघाः महर्षयो भृग्वादयः सिद्धाः कापिलादयस्तेषां संघाः स्वस्तीत्युक्त्वा पुष्कलाभिः शब्दार्थपुष्टियुक्ताभिः स्तुतिभिस्त्वां स्तुवन्ति ॥ २१ ॥

**श्री० टी०**—किंच—**अमी हीति** । अमी सुरसंघाः भीताः सन्तः त्वां विशन्ति शरणं प्रविशन्ति तेषां मध्ये केचिदतिभीताः दूरत एव स्थित्वा कृतसंपुटकरयुगुलाः सन्तो गृणन्ति जयजय. रक्षरक्षेति प्रार्थयन्ते । स्पष्टमन्यत् ॥ २१ ॥

**स० टी०**—अथ भूभारसंहारकारित्वं स्वात्मनः परम् ॥ पश्यन्प्रकटयन्तं श्रीभगवन्तमुवाच ह ॥ १ ॥ भुवो भारावतारार्थं देवसंघाः सहस्रशः ॥ नृरूपेणावतीर्णा ये युध्यमाना विशन्ति ते ॥ २ ॥ त्वामेवासुरसंघाश्च दुर्योधनमुखा नृपाः ॥ दृश्यन्ते प्रविशन्तोऽत्र भीताः प्राञ्जलयो विभुम् ॥ ३ ॥ स्तुवन्ति त्वां परे शक्ताः सन्तोऽप्यत्र पलायने ॥ उत्पातादिनिमित्तानि ह्युपलभ्य महारणे ॥ ४ ॥ स्वस्त्यस्तु सर्वभूतेभ्य इत्युच्चार्य पुनः पुनः ॥ महर्षीणां च सिद्धानां समूहास्त्वां स्तुवन्ति च ॥ ५ ॥ स्तुतिभिः परिपूर्णाभिर्गुणैरैश्वर्यबोधकैः ॥ ६ ॥ २१ ॥

**भा० टी०**—इदानीं यद्वा जयेम यदि वा नो जयेयुरित्यर्जुनसंशयनिर्णयाय पाण्डवानां जयमैकान्तिकं दर्शयितुं प्रवृत्ते भूभाराहरणार्थिनं भगवन्तं पश्यन्नाह—**अमीति** । अमी हि युध्यमानाः भूभारहरणार्थं मनुष्यरूपेणावतीर्णा वस्वादिदेवसंघास्त्वां प्रविशन्तीति त्वामिति पाठ आचार्यैर्व्याख्यात इति भात्यन्यथा त्वा त्वामिति भाष्यपाठोऽपेक्षितः असुरसंधा इति पदं छित्त्वा भूता दुर्योधनादयस्त्वां विशन्तीत्यपि वक्तव्यमिति तट्टीकाकारोक्तिस्तु त्वेति पाठे संगच्छत इति ज्ञेयम् । तत्र केचिद्भीताः पलायनेऽप्यशक्ताः सन्तः प्राञ्जलयः

सन्तो गृणन्तः स्तुवन्ति । किंच युद्धदर्शनार्थमागता महर्षिसिद्धसंघा नारदादयो युद्धे प्रत्युपस्थिते तु जगत्क्षयहेतूत्पातादीनि उपलक्ष्य स्वस्त्यस्तु जगत इत्युक्त्वा संपूर्णाभिः स्तुतिभिः स्तुवन्ति ॥ २१ ॥

प० टी०–तदेवाह–अमी हीति । सुरसंघा देवसमूहास्त्वामतिभीषणं दृष्ट्वेतः परं क गन्तव्यमिति व्याकुलचित्तास्त्वामेव प्रविशन्ति । तथा महर्षयश्च सिद्धसंघा गन्धर्वचारणादयस्त्वां त्रिलोकीप्रभुं मत्वा स्वस्तीत्याशीर्वचनमुक्त्वा त्वां पुष्कलाभिर्दीर्घाभिः स्तुतिभिः स्तुवन्ति । एतदर्थे नौधसं सामास्ति–" तं वोदस्समृषीषहं वसोर्मदानमन्धसः । अभिवत्सं न स स्वरेषु धेनव इन्द्रं गीर्भिर्नवामहे " इति । भाष्यम्–नौधा ऋषिः इन्द्रं परमात्मानं स्तौति । हे ऋत्विग्यजमाना दस्मं दर्शनीयं ऋषीषहं ऋषीषा बाधकास्तेषामभिभवितारम् । पुनः कीदृशं, वसोर्दुःखस्य वासयितारमाच्छादकम् । तथान्धसः सोमलक्षणस्यान्नपानेन मदानं मोदमानं तादृशमिन्द्रं गीर्भिः स्तुतिलक्षणाभिर्वाग्भिरभिनवामहेऽभिष्टुमोऽभितः शब्दयामः । कुत्र सस्वरेषु दिवसेषु वयमभिष्टुमः, तत्र दृष्टान्तः वत्सं यथा नवप्रसूतिका धेनवः सस्वरेषु सुष्ठु अस्यन्ते दीयन्ते गावोऽत्रेति सस्वराणि गोष्ठानि तेषु वत्समभिलक्ष्य शब्दयन्ति तद्वत्परमप्रेमास्पदं त्वामित्यर्थः ॥ २१ ॥

रा० टी०–अन्यदपि स्वदृष्टमाहार्जुनः–अमी हीति । सुरसंघाः मुक्तदेववर्गाः ' प्रवेशो निर्गमश्चैव मुक्तानां स्वेच्छया भवेत् ' इति वचनात् । तेन पश्यामि देवांस्तव देव देह इत्यनेन न पौनरुक्त्यम, अत्रमुक्तानां तत्रामुक्तानामुक्तेः । पुष्कलाभिर्गुणपूर्णाभिः स्तुतिभिः स्तुवन्ति ॥ २१ ॥

**रुद्रादित्या वसवो ये च साध्या विश्वेऽश्विनौ मरुतश्चोष्मपाश्च ॥**
**गन्धर्वयक्षासुरसिद्धसंघा वीक्षन्ते त्वां विस्मिताश्चैव सर्वे ॥ २२ ॥**

त० टी०–किंच–रुद्रादित्या इति । रुद्रादय ऊष्मपाः पितरः " ऊष्मभागा हि पितरः " इति श्रुतेः । ' यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ' इति स्मृतेश्च । एते सर्वेऽपि विस्मितास्त्वां वीक्षन्ते ॥ २२ ॥

म० टी०–किंचान्यत्–रुद्रेति । रुद्राश्चादित्याश्च वसवो ये च साध्या नाम देवगणा विश्वे तुल्यविभक्तिकविश्वेदेवशब्दाभ्यामुच्यमाना देवगणाः अश्विनौ नासत्यदस्रौ मरुत एकोनपञ्चाशद्देवगणाः ऊष्मपाश्च पितरः गन्धर्वाणां यक्षाणामसुराणां सिद्धानां च जातिभेदानां संघाः समूहा वीक्षन्ते पश्यन्ति त्वा त्वां तादृशाद्भुतदर्शनात्ते सर्व एव विस्मिताश्च विस्मयमलौकिकचमत्कारविशेषमापद्यन्ते च ॥ २२ ॥

शं० टी०–एवं सामान्येनोक्त्वा विशेषमाह–रुद्रेति । रुद्रादित्या वसवस्तथान्ये ये च साध्या देवताभेदा विश्वे विश्वेदेवा अश्विनौ मरुतो देवविशेषाश्चोष्मपाः पितरस्ते च "ऊष्मभागा हि पितरः" इति श्रवणात् गन्धर्वा यक्षा असुराः सिद्धास्तेषां संघाश्च सर्वे विस्मिता आश्चर्यवन्तो भूत्वा त्वां वीक्षन्ते ॥ २२ ॥

श्री० टी०–किंच–रुद्रेति । रुद्राश्चादित्याश्च वसवश्च ये च साध्या नाम देवाः विश्वेदेवाः अश्विनौ देवौ मरुतो मरुद्गणाः ऊष्माणं पिबन्तीत्यूष्मपाः पितरः " ऊष्मभागा हि पितरः " इत्यादिश्रुतेः स्मृतिश्च–' यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ' इति । गन्धर्वाश्च यक्षाश्चासुराश्च विरोचनादयः सिद्धानां संघाश्च ते सर्व एव विस्मिताः सन्तस्त्वां वीक्षन्त इत्यन्वयः ॥ २२ ॥

स० टी०–रुद्रा वसव आदित्याः साध्या विश्वेऽश्विनौ तथा ॥ मरुतः पितरश्चैते गन्धर्वाणां समूहकाः ॥ १ ॥ यक्षाणामसुराणां च सिद्धानां ये व्रजास्तथा ॥ त एते विस्मिताः सन्तस्तादृशाद्भुतदर्शनम् ॥ २ ॥ पश्यन्ति त्वां महद्भूतं विश्वरूपमलौकिकम् ॥ अलौकिकचमत्कारमापद्यन्तेऽखिला अपि ॥ ३ ॥ २२ ॥

भा० टी०–किंचैतद्रूपं दृष्ट्वा नाहमेव विस्मयाविष्टोऽपि तु रुद्रादयोऽपीत्याह–**रुद्रेति** । ऊष्माणं पिबन्तीत्यूष्मपाः पितरः 'ऊष्मभागा हि पितरः' यावदुष्णं भवेदन्नं यावदश्नन्ति वाग्यताः । पितरस्तावदश्नन्ति यावन्नोक्ता हविर्गुणाः ॥ इति श्रुतिस्मृतिभ्याम् । गन्धर्वा हाहाहूहूप्रभृतयः यक्षाः कुबेरादयः असुरा विरोचनादयः सिद्धाः कपिलादयस्तेषां संघाः समूहास्त्वां पश्यन्ति सर्वे विस्मिता विस्मयं प्राप्ता एव च ॥ २२ ॥

प० टी०–अथ केऽप्यतिचकितत्वेन स्तोतुमशक्तास्तूष्णीं तस्थुरित्याह–**रुद्रादित्या** इति । रुद्रा एकादश, आदित्या द्वादश, वसवोऽष्टौ, ये च साध्या विश्वेदेवा अश्विनौ मरुद्गणा ऊष्म पिबन्ति ते ऊष्मपाः पितरः, गन्धर्वयक्षास्तथासुरसिद्धसङ्घा अद्भुतदर्शनाद्विस्मिताः सन्तस्त्वां वीक्षन्ते तूष्णीमवलोक्य स्थिताः ॥ २२ ॥

रा० टी०–रुद्रेति । ऊष्मपाः पितरः "ऊष्मभागा हि पितरः" इति श्रुतेः । गन्धर्वादीनां संघाः ॥२२॥

**रूपं महत्ते बहुवक्त्रनेत्रं महाबाहो बहुबाहूरुपादम् ॥**
**बहूदरं बहुदंष्ट्राकरालं दृष्ट्वा लोकाः प्रव्यथितास्तथाहम् ॥ २३ ॥**

त० टी०–किंच–**रूपमिति** । हे महाबाहो ते तव रूपं दृष्ट्वा सर्वे लोका जनाः प्रव्यथिता भयाकुलचित्ता भवन्ति । तथाऽहं प्रव्यथितोऽस्मि । कीदृशं ते रूपं महदतिप्रमाणं, बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत्, । बहवो बाहव ऊरवः पादाश्च यस्मिन् तत् । बहून्युदराणि यस्मिन् तत्, बह्वीभिर्दंष्ट्राभिः करालमतिभयानकम् ॥ २३ ॥

म० टी०–लोकत्रयं प्रव्यथितमित्युक्तमुपसंहरति–**रूपमिति** । हे महाबाहो ते तव रूपं दृष्ट्वा लोकाः सर्वेऽपि प्राणिनः प्रव्यथितास्तथाऽहं प्रव्यथितो भयेन । कीदृशं ते रूपं महत् अतिप्रमाणं बहूनि वक्त्राणि नेत्राणि च यस्मिन् तत्, बहवो बाहव ऊरवः पादाश्च यस्मिन् तत्, बहून्युदराणि यस्मिन् तत्, बहुभिर्दंष्ट्राभिः करालमतिभयानकं दृष्ट्वैव मत्सहिताः सर्वे लोका भयेन पीडिता इत्यर्थः ॥ २३ ॥

शं० टी०–एवं देवादीनां प्रवेशनं स्तवनं विस्मयदर्शनं चोक्त्वाऽधुना भयंकराकारदर्शनेन लोकानां स्वस्य च भयकार्यं प्रतिपादयति–**रूपमिति त्रिभिः** । बहूनि बहुविधानि च वक्त्राणि च नेत्राणि च यस्मिंस्तद्बहुवक्त्रनेत्रं बहवो बाहव ऊरवश्च पादाश्च यस्मिंस्तद्बहुबाहूरुपादं बहुभिर्दंष्ट्राभिः करालं विकृतं महदतिपरिमाणं ते रूपं स्वरूपं दृष्ट्वा लोकाः प्राणिनः सर्वे प्रव्यथिताः प्रकर्षेण व्यथिताः प्रव्यथिता महाव्यथां प्राप्तास्तथैवाहमपि व्यथितोऽस्मीत्यर्थः ॥ २३ ॥

श्री० टी०–किंच–**रूपमिति** । हे महाबाहो ! महदत्यूर्जितं तव रूपं दृष्ट्वा लोकाः सर्वे प्रव्यथिताः अतिभीताः तथाऽहं च प्रव्यथितोऽस्मि । कीदृशं रूपं दृष्ट्वा बहूनि वक्त्राणि नेत्राणि च यस्मिंस्तत्, बहवो बाहव ऊरवः पादाश्च यस्मिंस्तत् बहूनि उदराणि यस्मिंस्तत् बहुभिर्दंष्ट्राभिः करालं विकृतं रौद्रमित्यर्थः ॥२३॥

स० टी०–अतिप्रमाणं ते रूपं बहुनेत्रमुखान्वितम् ॥ बहवो बाहवो यस्मिन्पादाः सन्ति तथोरवः ॥१॥ उदराणि बहून्येवं बहुदंष्ट्राभिरुग्रकम ॥ तथारूपममी लोका दृष्ट्वा भीता अहं तथा ॥ २ ॥ २३ ॥

भा० टी०–रुद्रादयः किमर्थं विस्मयापन्ना इति चेत् यस्मात्सर्वे लोकाः करालं तव रूपं दृष्ट्वा पीडिता इत्याह–**रूपमिति** । तव रूपं महदतिप्रमाणं तदेवाह–बहूनि मुखानि चक्षूंषि च यस्मिंस्तत् बहूनि बाह्वादीनि यस्मिंस्तत् अत एव हे महाबाहो बहूनि उदराणि यस्मिंस्तत बहुभिर्दंष्ट्राभिः करालं विकृतं तत दृष्ट्वा लौकिकाः प्राणिनः प्रव्यथिता भयेन प्रचलिताः । ननु प्रव्यथितैर्लोकैः किं तव त्वं तु न व्यथित इत्यत आह तथाहमपि व्यथितः ॥ २३ ॥

प० टी०—एवं स्थितिरूपेण विश्वरूपं दर्शयन्निदानीं संहाररूपेण पश्यति । अतिभयानकरूदर्शनेन तदुदरवर्तिनां लोकानां स्वस्य च भयं नाटयति—रूपमिति । ते तव रूपं करालमत्युल्बणं दृष्ट्वा लोकाः कौरवसैनिकाश्चूर्णीकृतैरुत्तमाङ्गैरित्यादिवक्ष्यमाणवाक्यैः प्रव्यथिता नाशं पर्यवसिता (?) इति च दृष्ट्वा एते दैवान्नष्टा एव परं तु मया क्षात्रधर्मप्रतिष्ठापकजगद्गुरुवाक्यमविगणय्य व्यर्थं संग्रामादुपरतमित्यहमपि प्रव्यथितोऽस्मीत्यर्थः ॥ २३ ॥

रा० टी०—रूपमिति । बहुदंष्ट्राभिः करालं विरूपम् । लोकाः भक्तवर्गाः भक्ताभक्तवर्गार्थत्वे तु लोकत्रयमित्यत्रैवाभिप्रायो ध्येयः । तथाहमपि प्रव्यथितः ॥ २३ ॥

**नभस्पृशं दीप्तमनेकवर्णं व्यात्ताननं दीप्तविशालनेत्रम् ॥**
**दृष्ट्वा हि त्वां प्रव्यथितान्तरात्मा धृतिं न विन्दामि शमं च विष्णो॥२४॥**

त० टी०—अहं त्वतिव्याकुलचित्तोऽस्मीत्याह—नभःस्पृशमिति । अत्र नभःशब्दो "योऽस्याध्यक्षः परमे व्योमन् तदक्षरे परमे व्योमान्" इत्यादिश्रुत्यभिहितप्रकृत्यतीतपरमव्योमवाचकः सर्वविकाराश्रयभूतत्रिगुणाश्रयप्रकृतेः सर्वावस्थावस्थितस्य पुरुषस्य चाश्रयतया वर्तमानत्वान्नभः परमव्योम स्पृशते इति नभस्पृशं, दीप्तं प्रज्वलितम्, अनेके सितकृष्णपीतादयो वर्णा यस्य तमनेकवर्णं व्यात्तानि विवृतानि आननानि यस्य तं, दीप्तानि विशालानि नेत्राणि यस्य तमेवंभूतं त्वां दृष्ट्वा प्रव्यथितान्तरात्मा प्रकर्षेण व्यथितान्तःकरणोऽहं धृतिं देहधारणं न विन्दामि न लभे । शमं चेन्द्रियाणां शान्तिं च न लभे । हे विष्णो बाह्याभ्यन्तरव्यापक मम बाह्याभ्यन्तरव्यथां त्वं जानासीत्यभिप्रायः ॥ २४ ॥

म० टी०—भयानकत्वमेव प्रपञ्चयति—नभ इति । न केवलं प्रव्यथित एवाहं त्वां दृष्ट्वा किंतु प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यं देहेन्द्रियादिधारणसामर्थ्यं शमं च मनःप्रसादं न विन्दामि न लभे हे विष्णो । त्वां कीदृशं नभःस्पृशमन्तरिक्षव्यापिनं दीप्तं प्रज्वलितम् अनेकवर्णं भयंकरनानासंस्थानयुक्तम् व्यात्ताननं विवृतमुखं दीप्तविशालनेत्रं प्रज्वलितविस्तीर्णचक्षुषं त्वां दृष्ट्वा हि एव प्रव्यथितान्तरात्माहं धृतिं शमं च न विन्दामीत्यन्वयः ॥ २४ ॥

शं० टी०—व्यथाप्राप्तिकारणमेव स्पष्टयति—नभःस्पृशमिति । हिशब्दोऽवधारणार्थः । हे विष्णो सर्वव्यापिन् नभःस्पृशमभ्रंकषं, यद्वा नभोवत्सर्वं स्पृशतीति नभःस्पृशं सर्वव्यापकं तेजोविशेषेण दीप्तं जाज्वल्यमानं, अनेकवर्णं वर्ण्यन्त इति वर्णा रूपाण्यनेकान्यनेकविधानि यत्र तदनेकवर्णं ब्रह्मादिनानाविधविचित्ररूपविशेषविशिष्टं, व्यात्तानि विस्फारितान्याननानि यत्र तं व्यात्ताननं, सूर्यमण्डलवद्दीप्तानि विशालानि विकृतानि च नेत्राणि यत्र तं दीप्तविशालनेत्रं त्वां दृष्ट्वैव प्रव्यथितान्तरात्मा भयक्षुब्धान्तरङ्गः सन् धृतिं धैर्यं शमं मनःस्वास्थ्यं च न विन्दाम्यविचकितोऽस्मीत्यर्थः ॥ २४ ॥

श्री० टी०—न केवलं भीतोऽहमित्येतावदेव अपितु—नभःस्पृशमिति । नभः स्पृशतीति नभःस्पृक् तं अन्तरिक्षव्यापिनमित्यर्थः । दीप्तं तेजोयुक्तम् अनेके वर्णा यस्य तमनेकवर्णम् । व्यात्तानि विवृतान्याननानि यस्य तम्, दीप्तानि विशालानि नेत्राणि यस्य तम्, एवंभूतं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्य सोऽहं धृतिं धैर्यमुपशमं च न लभे ॥ २४ ॥

स० टी०—नभोव्यापिनमत्यन्तं प्रज्वलन्तं समंततः ॥ नानासंस्थानसंयुक्तं भीषणं विवृताननम् ॥ १ ॥ दीप्तविस्तीर्णनेत्रं त्वां दृष्ट्वा भीतं मनो मम ॥ नापि धैर्यं लभे विष्णो न शान्तिं मनसो लभे ॥२॥ २४ ॥

भा० टी०—स्वव्यथायां कारणमाह—नभ इति । नभःस्पृशं द्युस्पृशं दीप्तं ज्वलितं, अनेके नाना भयं-

करा वर्णा यस्मिंस्तं, व्यात्तानि विवृतानि भयंकराणि मुखानि यस्मिंस्तं, प्रज्वलितानि विस्तीर्णानि नेत्राणि यस्मिंस्तं त्वां दृष्ट्वा प्रव्यथितश्चलितोऽन्तरात्मा मनो यस्य सोऽहं धैर्यं न लभेऽत एव शमं मनस्तुष्टिं न लभे। व्यापनशीलता तव मया दृष्टाऽधुना द्रष्टुमसमर्थोऽस्मीति सूचयन्नाह–हे विष्णो इति। व्यापनशीलस्त्वं मनोगतमपि जानासीति वा संबोधनाशयः॥ २४॥

प० टी०–किं च–नभ इति। नभोऽन्तरिक्षं स्पृशतीति नभःस्पृक् तं नभःस्पृशम्। दीप्तं प्रज्वलितमनेकवर्णम्, व्यात्तं प्रसारितमाननं यस्येति। दीप्तानि प्रज्वलितानि विशालानि नेत्राणि यस्य। विष्णो व्यापक एवंविधं त्वां दृष्ट्वा प्रव्यथितोऽन्तरात्मा मनो यस्यैवंविधोऽहं धृतिं धैर्यमुपशमं वा न विन्दामि॥२४॥

रा० टी०–नभ इति। व्यात्ताननं विवृतमुखम्। अन्तरात्मा मनः। न विन्दामि न प्राप्नोमि। शमं सुखं च न विन्दामि न प्राप्नोमि। विष्णुशब्दार्थ उक्तः दशमेऽध्याये॥ २४॥

**दंष्ट्राकरालानि च ते मुखानि दृष्ट्वैव कालानलसंनिभानि॥**
**दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास॥ २५॥**

त० टी०–किंच दंष्ट्रेति। दंष्ट्राभिः करालानि भयानकानि कालानलवत्सर्वसंहारे प्रवृत्तानि ते मुखानि दृष्ट्वैव भयावेशेन दिशो न जाने, शर्म सुखं च न लभे। तस्माद्धे देवेश ब्रह्मादिदेवानां लोकेश्वराणामपीश्वर हे जगन्निवास प्रसीद प्रसन्नो भव। यथाऽहं भयनिवृत्त्या प्रकृतिस्थो भवेयं तथा कुर्वित्यर्थः॥ २५॥

म० टी०–दंष्ट्रेति। दंष्ट्राभिः करालानि विकृतत्वेन भयंकराणि प्रलयकालानलसदृशानि च ते मुखानि दृष्ट्वैव नतु तानि प्राप्य भयवशेन दिशः पूर्वापरादिविवेकेन न जाने अतो न लभे च शर्म सुखं त्वद्रूपदर्शनेऽपि अतो हे देवेश हे जगन्निवास प्रसीद प्रसन्नो भव मां प्रति यथा भयाभावेन त्वद्दर्शनजं सुखं प्राप्नुयामिति शेषः॥ २५॥

शं० टी०–उक्तमेवार्थं प्रकारान्तरेण वदन् भगवत्प्रसादं प्रार्थयते–दंष्ट्रेति। जगतां निवासो यः स हे जगन्निवास देवेश अन्यानपेक्षया स्वयमेव दीप्यते प्रकाशत इति देवः स्वसान्निधानात्सर्वमीष्टे चेष्टयतीति ईशः दिशो न जाने भयेन चित्तस्वास्थ्यजं शर्म सुखं च न लभे न प्राप्नोमि भीतोऽस्मि प्रसीद प्रसन्नो भव। शिष्टं स्पष्टम्॥ २५॥

श्री० टी०–किंच–दंष्ट्रेति। भो देवेश तव मुखानि दृष्ट्वा भयावेशेन दिशो न जानामि शर्म च सुखं न लभे भो जगन्निवास प्रसन्नो भव कीदृशानि मुखानि दंष्ट्राभिः करालानि कालानलः प्रलयाग्निस्तत्सदृशानि॥ २५॥

स० टी०–भयंकराणि दंष्ट्राभिर्विकृतत्वान्मुखानि ते॥ प्रलयानलतुल्यानि दृष्ट्वात्रातिभयान्वितः॥१॥ पूर्वापरविवेकेन न जानेऽहं दिशो भ्रमात्॥ न लभेऽहं सुखं स्वामिंस्त्वद्रूपस्यापि दर्शने॥ २॥ प्रसन्नो भव देवेश जगदाधार मां प्रति॥ यथाऽहं निर्भयो भूत्वा त्वद्दर्शनसुखं लभे॥ ३॥ २५॥

भा० टी०–दंष्ट्राभिः करालानि विकृतानि प्रलयकालाग्निसदृशानि च दृष्ट्वैव न तु प्राप्य दिशः पूर्वापरविवेकेन न जानामि शर्म सुखं च न लभेऽतो हे देवेश हे जगन्निवास प्रसीद प्रसन्नो भव तव देवेशत्वं जगन्निवासत्वं च प्रत्यक्षेण मयोपलब्धं यदर्थं मम प्रार्थना आसीदिति द्योतनार्थं संबोधनद्वयम्॥ २५॥

प० टी०–अथ भयातिशयेन स्वस्य कांदिशीकत्वमनुवदति–दंष्ट्रेति। दंष्ट्राभिः करालानि भयानकानि। कालानलः संकर्षणमुखानलस्तत्सदृशानि ते मुखानि दृष्ट्वाहं दिशो न जाने प्रागपरादिभागेन दिशां ज्ञानं

सूर्येण कृत्वा भवति सोऽपि तव नाभिभूतोऽस्तीत्यर्थः । तथैतःपरं किं भवतीति व्याकुलचित्तत्वेन शर्म विश्रमं न लभे । अथ भयोपशमस्त्वयैव विधेय इत्याह प्रसीदेति । स्पष्टम् ॥ २५ ॥

रा० टी०–दंष्ट्रेति । दंष्ट्राकरालानि दंष्ट्राभिर्विरूपाणि कालेति प्रलयकालाग्निसन्निभानि समप्रभाणि । न जाने न जानामि शर्म सुखं च न विन्दामि । जगन्निवास जगदाधार ॥ २५ ॥

**अमी च त्वां धृतराष्ट्रस्य पुत्राः सर्वे सहैवावनिपालसंघैः ॥**
**भीष्मो द्रोणः सूतपुत्रस्तथाऽसौ सहास्मदीयैरपि योधमुख्यैः ॥ २६ ॥**

त० टी०–प्रसीद देवेशेत्यनेन भयनिवृत्तिलक्षणप्रसादार्थं प्रार्थितेन भगवता देवासुरसंग्रामे निहतानामुभयसैन्ये राजच्छद्मनाऽवस्थितानां भूभाररूपाणामसुराणां धार्तराष्ट्रादीनां संहारार्थं भवतो जयकीर्तिप्रख्यापनाय च मयैतद्रूपमाविष्कृतमतस्त्वं मा भैषीरिति सूचनाय पार्थाय प्रदर्शितम् । स च पार्थो भाविनमपि स्वविजयं परेषां पराजयं च, 'मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसि' इत्यादिष्टं तत्प्रसादलब्धदिव्येन चक्षुषा पश्यन्नाह–अमीत्यादिपञ्चभिः । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वे अवनिपालानां शल्यजयद्रथादीनां राज्ञां संघैः समूहैः सह तव वक्त्राणि विशन्तीत्युत्तरेणान्वयः । न केवलं दुर्योधनादयो विशन्त्यपि तु सर्वैरजेयत्वेनाभिमतो भीष्मः परशुरामादधिगतास्त्रविद्यः तथा द्रोणः तथाऽसौ सदा मम द्वेषी सूतपुत्रः कर्णः, न केवलमेत एव विशन्ति, किंतु अस्मदीयैरपि योधमुख्यैस्तत्प्रतियोद्धृभिः शिखण्डिधृष्टद्युम्नादिभिः सह ॥ २६ ॥

म० टी०–अस्माकं जयं परेषां पराजयं च सर्वदा द्रष्टुमिष्टं पश्य मम देहे गुडाकेश यच्चान्यद्द्रष्टुमिच्छसीति भगवदादिष्टमधुना पश्यामीत्याह पञ्चभिः–अमीति । अमीच धृतराष्ट्रस्य पुत्रा दुर्योधनप्रभृतयः शतं सोदरा युयुत्सुं विना सर्वे त्वां त्वरमाणा विशन्तीत्यग्रेतनेनान्वयः अतिभयसूचकत्वेन क्रियापदन्यूनत्वमत्र गुण एव सहैवावनिपालानां शल्यादीनां राज्ञां संघैस्त्वां विशन्ति न केवलं दुर्योधनादय एव विशन्ति किंतु अजेयत्वेन सर्वैः संभावितोऽपि भीष्मो द्रोणः सूतपुत्रः कर्णस्तथासौ सर्वदा मम विद्वेष्टा-सहास्मदीयैरपि परकीयैरिव धृष्टद्युम्नप्रभृतिभिर्योधमुख्यैस्त्वां विशन्तीत्यन्वयः ॥ २६ ॥

शं० टी०–यच्चान्यद्द्रक्ष्यसीति यदुक्तं स्वजयं परेषां पराजयं च द्रष्टासीति तदप्यत्र दृष्ट्वाह–अमीचेति चतुर्भिः । चकारस्य सर्वपदेन संबन्धः । अमी पुरोदृश्यमाना धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वे चावनिपालसंघैः सहैव त्वा त्वां विशन्ति विशधातोरत्रापि संबन्धः भीष्मो द्रोणस्तथासौ सूतपुत्रः कर्णश्चास्मदीयैरपि योधमुख्यैर्द्रुपदधृष्टद्युम्नादिभिः सह ॥ २६ ॥

श्री० टी०–यच्चान्यद्द्रष्टुमिच्छसीत्यनेनास्मिन् संग्रामे भाविजयपराजयादिकं च मम देहे पश्येति यद्भगवतोक्तं तदिदानीं पश्यन्नाह–अमी चेति पञ्चभिः । अमी धृतराष्ट्रस्य पुत्रा दुर्योधनादयः सर्वे अवनिपालानां जयद्रथादीनां राज्ञां संघैः सहैव तव वक्त्राणि विशन्तीत्युत्तरेणान्वयः तथा भीष्मश्च द्रोणश्चासौ सूतपुत्रः कर्णश्च न केवलं त एव विशन्ति अपि तु प्रतियोद्धारो येऽस्मदीया योधमुख्याः शिखण्डीधृष्टद्युम्नादयस्तैः सह ॥ २६ ॥

स० टी०–येभ्यः पराजयाशङ्का ममासीत्ते नृपा अमी ॥ दुर्योधनप्रभृतयो धृतराष्ट्रसुताः शतम् ॥ १ ॥ शल्यादीनां महीपानां समूहैः सह तेऽखिलाः ॥ त्वां विशन्ति तथा भीष्मद्रोणकर्णादयोऽप्यमी ॥ २ ॥ अजेयत्वेन ये लोके शूराः संभाविता हि ते ॥ अस्मदीयैः सहानेकैर्धृष्टद्युम्नादिभिस्तथा ॥ ३ ॥ योधमुख्यैर्विशन्ति त्वामित्यनेनान्वयोऽस्य च ॥ ४ ॥ २६ ॥

**भा० टी०**–पराजयाशङ्कापि मम निवृत्ता इत्याशयेनाह–**अमी चेति** । अमी च त्वा त्वां धृतराष्ट्रस्य पुत्रा दुर्योधनादयस्त्वरमाणा विशन्तीति परेणान्वयः सर्वे युयुत्सुव्यतिरिक्ता अवनिपालानां राज्ञां जयद्रथादीनां समूहैः सहैव किंच येषु परेषा जयाशा तेऽपि भीष्मादयः सूतपुत्रः कर्णोऽसौ ममातीवशत्रुः अस्मदीयैरपि योधानां प्रधानैः शिखण्डिधृष्टद्युम्नादिभिः सहैव ॥ २६ ॥

**प० टी०**–अथान्यदपूर्वं पश्यामीत्याह–**अमीचेति पञ्चभिः** । तत्र रणे मरिष्यमाणानां भक्तानां च भाविनीं दृश्यमानां गतिं प्रथमतो निरूपयामि । तत्र भीष्मो द्रोणः सूतपुत्रः कर्णस्ते धर्म्ययुद्धकर्तारो भगवद्भक्ताश्च तथाविधैरेवास्मदीयैर्योधमुख्यैः शिखण्डिधृष्टद्युम्नादिभिः सहापुनर्भवप्रदं त्वां विशन्ति ॥ २६ ॥

**रा० टी०**–**अमीति** । त्वा त्वां सूतपुत्रः कर्णः योधमुख्यैः योधेषु भटेषु प्रधानैः अस्मदीयैः सह ॥२६॥

**वक्त्राणि ते त्वरमाणा विशन्ति दंष्ट्राकरालानि भयानकानि ॥**
**केचिद्विलग्ना दशनान्तरेषु संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः ॥ २७ ॥**

**त० टी०**–एते सर्वे त्वरमाणा वेगवन्तस्ते तव दंष्ट्राभिः करालानि भयङ्कराणि वक्त्राणि विशन्ति । तत्र केचित् चूर्णितैरुत्तमाङ्गैश्चूर्णीकृतशिरोभिरुपलक्षिता दशनान्तरेषु दन्तानां संधिषु विशेषेण लग्ना दृश्यन्ते ॥ २७ ॥

**म० टी०**–अमी धृतराष्ट्रपुत्रप्रभृतयः सर्वेऽपि ते तव दंष्ट्राकरालानि भयानकानि वक्त्राणि त्वरमाणा विशन्ति तत्र च केचिच्चूर्णितैरुत्तमाङ्गैः शिरोभिर्विशिष्टा दशनान्तरेषु विलग्नाः विशेषेण संलग्नाः दृश्यन्ते मया सम्यगसंदेहेन ॥ २७ ॥

**शं० टी०**–**वक्त्राणीति** । त्वरमाणाः सन्तः भयानकानि भयंकराणि दंष्ट्राकरालानि ते वक्त्राणि विशन्ति प्रविशन्ति तत्र केचिद्योधमुख्याश्चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिरुपलक्षिताः सन्तो दशनान्तरेषु दन्तविवरेषु संदृश्यन्ते ॥ २७ ॥

**श्री० टी०**–**वक्त्राणीति** । य एते सर्वे त्वरमाणा धावन्तस्तव दंष्ट्राभिः करालानि भयंकराणि वक्त्राणि विशंति तेषां मध्ये केचिच्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिरुपलक्षिता दन्तसंधिषु संश्लिष्टाः संदृश्यन्ते ॥ २७ ॥

**स० टी०**–तव दंष्ट्राकरालानि वक्त्राणि ते त्वरान्विताः ॥ विशन्ति भीषणान्येते सर्वे दुर्योधनादयः ॥१॥ तत्र चूर्णीकृतैः केचिच्छिरोभिः संयुता भटाः ॥ दन्तान्तरेषु संलग्ना दृश्यन्ते ते मया स्फुटम् ॥ २ ॥२७॥

**भा० टी०**–किंच **वक्त्राणीति** । तव मुखानि दंष्ट्राकरालानि अत एव भयंकराणि त्वरायुक्ता विशन्ति तत्र प्रविष्टानां मध्ये केचिद्दन्तान्तरेषु चूर्णितैः शिरोभिर्विलग्ना भक्षितमांसमिव संदृश्यते उपलभ्यन्ते ॥२७॥

**प० टी०**–**वक्त्राणीति** । तथामी कूटकारित्वेनाततायित्वेनात्रैव प्रसिद्धा धृतराष्ट्रस्य पुत्रा दुर्योधनदुःशासनादय एकोत्तरशतं तथाविधैरेवावनिपालानां संघैः सह त्वरमाणा यातनार्थं वेगवत्तरास्तव वक्त्राणि विशन्ति । किंभूतानि वक्त्राणि दंष्ट्राकरालान्यत एव भयानकानि तत्र केचिद्दुष्कृतिनश्चूर्णितैश्चूर्णीकृतैरुत्तमाङ्गैः शिरोभिर्दशनान्तरेषु दन्तसन्धिषु विलग्नाः संश्लिष्टा दृश्यन्ते ॥ २७ ॥

**रा० टी०**–**वक्त्राणीति** । ते प्रागुक्तधृतराष्ट्रपुत्रादयस्ते तव वक्त्राणि विशन्तीत्यत्र तेषां भगवन्मुखाभिमुखचेष्टाभावेऽपि भगवानेवानेकमुखैः सेनाद्वयस्थयोधान् ग्रसित्वा तिष्ठतीत्युपचारेण विशन्तीत्युक्तिर्ज्ञेया । एवमग्रेऽपि । केचित्तस्मिन्मुहूर्त एव मरिष्यमाणाः । केचिद्दशनांतरेषु विलग्नाः चूर्णितैः शतशः सूक्ष्मरेखोपेतशीर्णघटवत् शतशः सूक्ष्मरेखोपेततया भिन्नैः उत्तमाङ्गैः शिरोभिरुपलक्षिताः सन्तः दृश्यन्ते मयेत्यर्थः । मन्ददृष्टीनामन्येषां तथादृष्ट्यभावेऽप्यर्जुनस्य दिव्यदृष्टिमत्त्वात्तथा दर्शनं युक्तमिति ज्ञेयम् । यथान्यैरदृष्टापि पुरूरवसो जराश्विभ्यां दृष्टा तथेति व्यक्तमेतद्विष्णुधर्मे एकोनविंशेऽध्याये ॥ २७ ॥

**यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति ॥**
**तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभिविज्वलन्ति ॥ २८ ॥**

**त० टी०**–ते कथं प्रविशन्तीत्यपेक्षायां तेषां प्रवेशस्य दृष्टान्तमाह–**यथेति** । यथा नदीनां नानामार्गगानां बहवोऽम्बूनां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तः समुद्रमेव द्रवन्ति प्रविशन्ति, तथा नरलोकवीरा अभिविज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि विशन्ति ॥ २८ ॥

**म० टी०**–राज्ञां भगवन्मुखप्रवेशने निदर्शनमाह–**यथेति** । यथा नदीनामनेकमार्गप्रवृत्तानां बहवोऽम्बूनां जलानां वेगा वेगवन्तः प्रवाहाः समुद्राभिमुखाः सन्तः समुद्रमेव द्रवन्ति विशन्ति तथा तवामी नरलोकवीरा विशन्ति वक्त्राण्यभितः सर्वतो ज्वलन्ति अभिविज्वलन्तीति वा पाठः ॥ २८ ॥

**शं० टी०**–पुनरपि तेषां भगवद्वक्त्रप्रवेशनमेव सदृष्टान्तं प्रतिपादयति–**यथेति** । नरलोके मर्त्यलोके वीराः शूरा नरलोकवीरा भीष्मादयः । शिष्टः स्पष्टार्थः ॥ २८ ॥

**श्री० टी०**–प्रवेशमेव दृष्टान्तेनाह–**यथेति** । नदीनामनेकमार्गप्रवृत्तानां बहवः अम्बूनां वारीणां वेगाः प्रवाहाः समुद्राभिमुखाः सन्तो यथा समुद्रमेव द्रवन्ति प्रविशन्ति तथा अमी ये नरलोकवीरास्ते अभिविज्वलन्ति सर्वतः प्रदीप्यमानानि तव वक्त्राणि प्रविशन्ति ॥ २८ ॥

**स० टी०**–कथं ते प्रविशन्त्येतद्दृष्टान्ताभ्यां निदर्श्यते ॥ बहुमार्गप्रवृत्तानां नदीनां बहवोऽप्यपाम् ॥१॥ वेगवन्तः प्रवाहा वै समुद्राभिमुखा यथा ॥ समुद्रं प्रविशन्त्येवं नृणां वीरा महत्तराः ॥ २ ॥ भीष्मद्रोणादयः सर्वे तव वक्त्राणि सर्वतः ॥ प्रविशन्ति ज्वलन्त्येते महाकालेन योजिताः ॥ ३ ॥ २८ ॥

**भा० टी०**–तत्र दृष्टान्तमाह–**यथेति** । यथा नदीनां स्रवन्तीनां बहवो जलानां वेगाः समुद्रमेवाभिमुखाः प्रतिमुखा द्रवन्ति विशन्ति तथाऽमी नरलोकवीरा तव मुखान्यभिविज्वलन्ति प्रकाशमानानि विशन्ति ॥ २८ ॥

**प० टी०**–अथोभयत्र दृष्टान्तमाह–**यथेति** । यथा बहवो नानामार्गप्रवृत्ता नदीनामम्बुवेगाः प्रवाहाः समुद्रमेव द्रवन्ति प्रविशन्ति प्रविश्य च समुद्राकारा भवन्ति तथा तवाभिमुखा अनुकूला नरलोकवीरा उत्साहशालिनो भीष्मद्रोणादयस्त्वां विशन्ति । तथा ये त्वभिविज्वलन्ति अभितो जाज्वल्यमानानि वक्त्राणि विशन्ति ॥ २८ ॥

**रा० टी०**–**यथेति** । विज्वलन्ति दीप्यमानानि वक्त्राणि ॥ २८ ॥

**यथा प्रदीप्तं ज्वलनं पतङ्गा विशन्ति नाशाय समृद्धवेगाः ॥**
**तथैव नाशाय विशन्ति लोकास्तवापि वक्त्राणि समृद्धवेगाः ॥२९॥**

**त० टी०**–अबुद्धिपूर्वकप्रवेशे नदीवेगं दृष्टान्तमुक्त्वा बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह–**यथेति** । यथा पतङ्गाः शलभाः समृद्धवेगाः सन्तः प्रदीप्तं ज्वलनमग्निं बुद्धिपूर्वकं नाशाय मरणायैव विशन्ति, तथैव नाशायैवैते लोका दुर्योधनादयः सर्वेऽपि समृद्धवेगास्तव वक्त्राणि प्रविशन्ति ॥ २९ ॥

**म० टी०**–अबुद्धिपूर्वकप्रवेशे नदीवेगं दृष्टान्तमुक्त्वा बुद्धिपूर्वकप्रवेशे दृष्टान्तमाह–**यथेति** । यथा पतङ्गाः शलभाः समृद्धवेगाः सन्तो बुद्धिपूर्वं प्रदीप्तं ज्वलनं विशन्ति नाशाय मरणायैव तथैव नाशाय विशन्ति लोका एते दुर्योधनप्रभृतयः सर्वेऽपि तव वक्त्राणि समृद्धवेगाः बुद्धिपूर्वमनायत्या ॥ २९ ॥

**शं० टी०**–किमर्थं वक्त्राणि प्रविशन्तीत्याकाङ्क्षायां प्रवेशनप्रयोजनं सदृष्टान्तमुपपादयति–**यथेति** । समृद्धवेगाः प्रचण्डवेगाः पतङ्गाः शलभाः लोकाः शत्रुजनाः शिष्टं स्पष्टम् ॥ २९ ॥

श्री० टी०–अवशत्वेन प्रवेशे नदीवेगदृष्टान्त उक्तः। बुद्धिपूर्वक प्रवेशे दृष्टान्तमाह–यथेति। प्रदीप्तं ज्वलनमग्निं पतङ्गाः सूक्ष्मपक्षिविशेषा बुद्धिपूर्वकं समृद्धो वेगो येषां ते यथा नाशाय मरणायैव विशन्ति तथैव लोका एते जना अपि तव मुखानि प्रविशन्ति ॥ २९ ॥

स० टी०–यथा पतङ्गा उद्भूतवेगास्ते बुद्धिपूर्वकम् ॥ विशन्त्यग्निं ज्वलन्तं च स्वनाशाय तथैव ते॥१॥ दुर्योधनादयः सर्वे वेगवन्तो मुखानि ते ॥ मरणाय विशन्तीमे बुद्धिपूर्वं प्रवाहतः ॥ २ ॥ २९ ॥

भा० टी०–अम्बुवेगाः समुद्रं विशन्ति न तु जलभावविनाशं प्राप्नुवन्ति। एते तु नाशाय प्रविशन्तीत्यतो दृष्टान्तान्तरमाह–यथेति। यथा प्रदीप्तमग्निं पतङ्गाः क्षुद्रपक्षिविशेषाः समृद्धवेगा विनाशाय विशन्ति तथैव समृद्धवेगा लोकाः प्राणिनस्तवापि मुखानि विनाशाय विशन्ति ॥ २९ ॥

प० टी०–यथेति। ते तथा बुद्धिपूर्वकं, समृद्धो वेगो येषां ते शलभा नाशाय मृत्यवे प्रदीप्तं ज्वलनं विशन्ति तथैव लोकास्तदनुवर्तिनोऽपि तव वक्त्राणि विशन्ति ॥ २९ ॥

रा० टी०–यथेति। तवापि वक्त्राणि समृद्धवेगा इत्यत्र भगवता अतितीव्रं ग्रस्यमानत्वात्तथोपचर्यन्त इति भावः ॥ २९ ॥

**लेलिह्यसे ग्रसमानः समन्ताल्लोकान् समग्रान्वदनैर्ज्वलद्भिः ॥**
**तेजोभिरापूर्य जगत्समग्रं भासस्तवोग्राः प्रतपन्ति विष्णो ॥३०॥**

त० टी०–त्वं त्वेतान्निरवशेषान् ग्रसन् हृष्टः प्रतीयस इत्याह–लेलिह्यस इति। वेगेन विशतो लोकान् दुर्योधनादीन्समग्रान् राज्ञो ज्वलद्भिर्वदनैः समन्तात्सर्वतः कोपावेशेन ग्रसमानः तद्रुधिरासिक्तावोष्ठपुटौ महासिंह इव लेलिह्यसे पुनःपुनरास्वादयसि किंच हे विष्णो तवोग्रा घोरा असह्या भासो रश्मयस्तेजोभिः प्रकाशैर्जगत्समग्रमापूर्य व्याप्य प्रतपन्ति संतापयन्ति ॥ ३० ॥

म० टी०–योद्धुकामानां राज्ञां भगवन्मुखप्रवेशप्रकारमुक्त्वा तदा भगवतस्तद्भासां च प्रवृत्तिप्रकारमाह–लेलिह्यस इति। एवं वेगेन प्रविशतो लोकान्दुर्योधनादीन्समग्रान्सर्वान्ग्रसमानोऽन्तःप्रवेशयन् ज्वलद्भिर्वदनैः समन्तात्सर्वतस्त्वं लेलिह्यसे आस्वादयसि तेजोभिर्भाभिरापूर्य जगत्समग्रं यस्मात्त्वं भाभिर्जगदापूरयसि तस्मात्तवोग्रास्तीव्रा भासो दीप्तयः प्रज्वलतो ज्वलनस्येव प्रतपन्ति संतापं जनयन्ति हे विष्णो व्यापनशील ॥३०॥

शं० टी०–एवं प्रवेशनप्रयोजनमुक्त्वा तद्दशायां परमेश्वरस्य कृत्यमाह–लेलिह्यस इति। ज्वलद्भिर्बहिःप्रवर्ग्याग्निवज्ज्वाल्यमानैर्वदनैः समन्तात्सर्वतः प्रविष्टान् समग्रानशेषान् लोकान् शत्रुजनान् ग्रसमानोऽन्तर्गिलन् सन् त्वं च जिह्वाभिर्लेलिह्यसे तालुलेहनं करोषि। हे विष्णो तेजोभिः स्वप्रकाशैः समग्रं सर्वं जगदापूर्य व्याप्य तवोग्राः प्रचण्डा भासो दीप्तयः प्रतपन्ति ग्रीष्मार्कवत्तापं कुर्वन्ति ॥ ३० ॥

श्री० टी०–ततः किमत आह–लेलिह्यस इति। ग्रसमानो गिलन् समग्रान् लोकान् सर्वानेतान्वीरान् समंतात्सर्वतो लेलिह्यसे अतिशयेन भक्षयसि कैः ज्वलद्भिर्वदनैः। किंच हे विष्णो ! तव भासो दीप्तयस्तेजोभिर्विस्फुरणैः समस्तं जगद्व्याप्य उग्रास्तीव्राः सत्यः प्रतपन्ति संतापयन्ति ॥ ३० ॥

स० टी०–नृपाणां योद्धुकामानां श्रीमद्भगवतो मुखे ॥ प्रवेशप्रकारं प्रोच्य तदा भगवतो हरेः ॥ १ ॥ तद्भासां संप्रवृत्तेश्च प्रकारं प्राह पाण्डवः ॥ आस्वादयसि तान्सर्वान्दुर्योधनमुखान्नृपान् ॥ २ ॥ ग्रसमानोऽतिवेगेन विशतस्त्वां समन्ततः। अन्तः प्रवेशयन्वक्त्रैः प्रज्वलद्भिः समन्ततः ॥ ३ ॥ समस्तं जगदापूर्य तेजोभिः सर्वतस्तव ॥ दीप्तयस्तीव्रवह्न्याभाः संतापं जनयन्त्यमूः ॥ ४ ॥ ३० ॥

भा० टी०–लेलिह्यस इति। सर्वे स्वनाशाय तव वक्त्राणि विशन्ति त्वं पुनः समन्ततः समग्राँल्लोकान्

ज्वलद्भिर्वदनैर्ग्रसमानोन्तःप्रवेशयन् लेलिह्यसे आस्वादयसि । किंच तवोग्रा अतिक्रूरा भासो दीप्तयः सर्वं जगत्तेजोभिरापूर्य संव्याप्य प्रतपन्ति प्रतापं कुर्वन्ति यतस्त्वं व्यापनशीलोऽतस्ता अपि तादृशा इति द्योतयन्संबोधयति—हे विष्णो इति ॥ ३० ॥

प० टी०—लेलिह्यस इति । समग्रान् लोकान् समन्ततो वदनैर्ज्वलद्भिर्ग्रसमानो गिलन् सन् पुनरतृप्तो लेलिह्यसे सृक्किणीः स्पृशसि भो विष्णो व्यापनशील तव भासो दीप्तयस्तेजोभिः स्फुरणैः समस्तं जगद्व्याप्य तीव्राः सत्यः प्रतपन्ति तापयन्ति । अत्र ऋग्वेदश्रुतिरपि—"रक्षोहणं वाजिनमाजिघर्मि मित्रं प्रथिष्ठमुपयामि शर्म । शिशानो अग्निः क्रतुभिः समिद्धः स नो दिवा सरिषः पातु नक्तम् ॥ १ ॥ अयोदंष्ट्रो अर्चिषा यातुधानानुपस्पृश जातवेदः समिद्धः । आजिह्वया मूरदेवान् रभस्व क्रव्यादोऽवृक्त्व्यपिधत्स्वासन्" ॥ २ ॥ भाष्यं—रक्षोहणमिति पञ्चविंशत्यृचं सूक्तं भरद्वाजऋषिः । अनुक्रान्तं च रक्षोहणं पञ्चाधिकं संहाराभिहरणे परित्वाग्नेरित्येषा जप्येति सर्वानुक्रमः । तत्र प्रथमा रक्षोहणमिति । रक्षसां हन्तारं वाजिनं बलवन्तं चाग्निमाजिघर्मि अग्निं वैश्वानराख्यं विश्वरूपमीश्वरम् आजिघर्मि घृतेन जुहोमि प्रदीप्तं तीक्ष्णीकृतमित्यर्थः । शरणमुपयामि । सोऽयमाग्निः शिशानो ज्वालाभिस्तीक्ष्णीभूतः क्रतुभिः कर्मपरैः पुरुषैः प्रज्वालितः किं च सोऽग्निर्नोऽस्मान् दिवा अहर्निशो हिंसकाद्रक्षसः सकाशात्पातु रक्षतु । अथ द्वितीया हि जातवेदः वैश्वानरेश्वर त्वं समिद्धः सम्यग्दीप्तः अयोदंष्ट्रः लोहशलाकावत्तीक्ष्णदंष्ट्रः सन् यातुधानानर्चिषा ज्वालयोपस्पृश दहेत्यर्थः । किं च त्वं मूरदेवान् मूलदेवान् राक्षसान् जिह्वया ज्वालया रभस्व मारयस्वेत्यर्थः । मारयित्वा च क्रव्यादो मांसभक्षकान् वृक्त्व्य छित्त्वा आसन् आस्ये पिधत्स्व आच्छादय ॥ ३० ॥

रा० टी०—लेलिह्यस इति । समग्रांल्लोकान् जनान् ज्वलद्भिर्वदनैः समन्ताद्ग्रसमानः मुखांतःकुर्वाणः लेलिह्यसे कोपेन रुधिरासिक्तमोष्ठपुटादिकं जिह्वाग्रेणास्वादयसीवासकृत्स्पृशसि । हे विष्णो तवोग्रास्तीक्ष्णा भासः प्रभाः तेजोभिः प्रकाशनशक्तिभिः समग्रं जगदापूर्य व्याप्य प्रतपन्ति देहादिपदार्थेषूष्माणं जनयन्ति ॥ ३० ॥

**आख्याहि मे को भवानुग्ररूपो नमोऽस्तु ते देववर प्रसीद ॥**
**विज्ञातुमिच्छामि भवन्तमाद्यं नहि प्रजानामि तव प्रवृत्तिम् ॥ ३१ ॥**

त० टी०—पूर्वं द्रष्टुमिच्छामि ते रूपमैश्वरं पुरुषोत्तमेति पारमेश्वरं रूपं साक्षात्कर्तुं प्रार्थितेन भगवता निरङ्कुशैश्वर्ययुक्तं रूपं प्रदर्शितमिदानीमतिघोररूपमाविष्कृतं दृष्ट्वा संदिह्य पृच्छति—आख्याहीति । उग्ररूपोऽतिकरालाकृतिः को भवानिति मे मह्यमनुग्राह्याय आख्याहि कथय । ते तुभ्यं नमोऽस्तु । हे देववर प्रसीद प्रसन्नो भव । भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि । ननु त्वत्प्रार्थनयैव मयैतदैश्वरं रूपमाविष्कृतं स एव वासुदेवोऽस्मि कथं पुनः को भवानिति पृच्छसीत्यत आह—नहीति । हि यतस्तव प्रवृत्तिं न जानामि । एवं संहर्तृरूपेण किं कर्तुं प्रवृत्तोऽसि मदनुग्रहायैश्वररूपप्रदर्शने प्रवृत्तस्य घोररूपाविष्करणे कोऽभिप्राय इति भावः ॥ ३१ ॥

म० टी०—यस्मादेवं तस्मात्—आख्याहीति । एवमुग्ररूपः क्रूराकारः को भवानित्याख्याहि कथय मे मह्यमत्यन्तानुग्राह्याय अत एव नमोऽस्तु ते तुभ्यं सर्वगुरवे हे देववर प्रसीद प्रसादं क्रौर्यत्यागं कुरु विज्ञातुं विशेषण ज्ञातुमिच्छामि भवन्तमाद्यं सर्वकारणं, नहि यस्मात्तव सखाऽपि सन् प्रजानामि तव प्रवृत्तिं चेष्टाम् ॥ ३१ ॥

शं० टी०—यस्मात्कल्पान्ते प्राणिनः कालान्तक इव महाशूरानपि प्रज्वलद्वदनैर्गिलसि विचार्यमाणे

महाद्भुतं तव कृत्यं तस्मात् को भवानिति पृच्छन्तं मां तव स्वरूपं ब्रूहीत्याह–आख्याहीति। हे देववर देवताश्रेष्ठ ते नमोऽस्तु त्वां नमस्कृत्य पृच्छामि प्रसीद औग्र्यं त्यक्त्वा प्रसन्नो भव। उग्ररूपः उग्रस्य प्रलयकालरुद्रस्य रूपमिव रूपमाकारो यस्य, यद्वा उग्रं सर्वलोकभयंकरं रूपं यस्य स उग्ररूपः को भवान् प्रलयकालरुद्रो वा प्रलयाग्निर्वा महामृत्युर्वा कालान्तको वा परमपुरुषो वाऽन्यो वा तव स्वरूपं प्रवृत्तिं च मे मह्यमाख्याहि कथय। आसमन्तादत्तुं प्रवृत्त आद्यः, यद्वा आदौ भव आद्यस्तं जगतः संहारकर्तॄणामग्रेसरं जगदाद्यमीश्वरं वा भवन्तं विज्ञातुमिच्छामि कथयेत्यर्थः। ननु मदीयं स्वरूपं मच्चेष्टादर्शनेनैव ज्ञातुं शक्यते को भवानिति कोऽयं प्रश्न इत्यत आह–नहीति। हि यस्मादहं मनुष्यः किंचिज्ज्ञश्च तस्मात्तव प्रवृत्तिं न प्रजानाम्यतस्त्वमेव ब्रूहीत्यर्थः॥ ३१॥

**श्री० टी०**–यत एवं तस्मात्–आख्याहीति। भवानुग्ररूपः क इत्याख्याहि कथय ते तुभ्यं नमोऽस्तु हे देववर प्रसीद प्रसन्नो भव भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि यतस्तव प्रवृत्तिं चेष्टां किमर्थमेवं प्रवृत्तोऽसीति न जानामि एवंभूतस्य तव प्रवृत्तिं वार्तामपि न जानामीति वा॥ ३१॥

**स० टी०**–को भवानुग्ररूपस्त्वं मह्यं कथय सद्गुरो॥ अत एव नमस्तुभ्यमस्तु सर्वेश्वराय च॥ १॥ प्रसन्नो भव भक्तायानुग्राह्यायादिदैवत॥ भवन्तं ज्ञातुमिच्छामि सर्वहेतुं विशेषतः॥ २॥ तव चेष्टां न जानामि यस्मात्तव सखापि सन्॥ ३॥ ३१॥

**भा० टी०**–आख्याहीति। यत एवमुग्रस्वभावोऽत आख्याहि कथय को भवान् शुद्धसत्वप्रधानः सौम्यस्वभावस्त्वं विष्णुर्मया पूर्वं ज्ञात इदानीं तमःप्रधान उग्रस्वभाववान् क इत्यर्थः। नाहमाज्ञां करोमि अपि तु नम्रीभूय पृच्छामीत्याशयवान्नमस्करोति। ते तुभ्यं नमोऽस्तु हे देववर देवानां मुख्य प्रसीद प्रसादं कुरु देववरस्य तवैव प्रसादो ममापेक्षितो न तु देवानामिति संबोधनाशयः। भवन्तमाद्यमादिकारणं विशेषेण ज्ञातुमिच्छामि। ननु स्वयमेव जानीहि किमर्थं पृच्छसीति तत्राह–हि यस्मात्त्वदीयां चेष्टां न जानामि॥ ३१॥

**प० टी०**–अथ भविष्यदर्थदर्शनादाश्चर्यवान् पुनः पृच्छति–आख्याहीति। उग्ररूपो भवान् क इति मे आख्याहि कथयस्व ते तुभ्यं नमोऽस्तु हे देववर प्रसन्नो भव भवन्तमाद्यं पुरुषं विशेषेण ज्ञातुमिच्छामि। यतो दृष्टेऽपि रूपे तव प्रवृत्तिं किमर्थं प्रवृत्तोऽसीति तव चेष्टां न जानामि॥ ३१॥

**रा० टी०**–भगवत्स्वरूपं तदीयगुणकर्माणि जानन्नप्यर्जुनः अज्ञातगुणकर्मविशेषज्ञानार्थं पृच्छति–आख्याहीति। उग्ररूपो भवान्कः किंधर्मकः किमर्थमुग्ररूप इत्यर्थः॥ ३१॥

## श्रीभगवानुवाच–कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान्समाहर्तुमिह प्रवृत्तः॥
## ऋतेऽपि त्वा न भविष्यन्ति सर्वे येऽवस्थिताः प्रत्यनीकेषु योधाः॥३२॥

**त० टी०**–एवं प्रार्थितः स्वस्य घोररूपस्य प्रवृत्तिनिमित्तं ज्ञापयन् श्रीभगवानुवाच–कालोऽस्मीति। कलयति गणयति लोकानामवसानमिति कालः सोऽहमस्मि। अत एव लोकक्षयकृत् प्रवृद्धः स्वशक्तिसामर्थ्येन वृद्धिं गतः। किं कर्तुं तव प्रवृत्तिरित्यस्योत्तरमाह–लोकान्दुर्योधनादीन् जनान्समाहर्तुं भक्षयितुमिहास्मिन्समये प्रवृत्तोऽस्मि। अत ऋतेऽपि त्वामर्जुनं योद्धारमृतेऽपि त्वदुद्योगं विनाऽपि मत्संकल्पादेव प्रत्यनीकेषु प्रतिपक्षसैन्येषु ये योधा योद्धारो भीष्मद्रोणकर्णप्रभृतयोऽवस्थितास्ते सर्वेऽपि न भविष्यन्ति विनङ्क्ष्यन्तीत्यर्थः॥ ३२॥

**म० टी०**–एवमर्जुनेन प्रार्थितो यः स्वयं यदर्थां च स्वप्रवृत्तिस्तत्सर्वं त्रिभिः श्लोकैः भगवानुवाच–काल इति। कालः क्रियाशक्त्युपहितः सर्वस्य संहर्ता परमेश्वरोऽस्मि भवामीदानीं प्रवृद्धो वृद्धिंगतः यदर्थं प्रवृत्तस्तच्छृणु लोकान् दुर्योधनादीन् समाहर्तुं सम्यगाहर्तुं भक्षयितुं प्रवृत्तोऽहमिहास्मिन्काले। मत्प्रवृत्तिं विना

कथमेवं स्यादिति चेन्नेत्याह ऋतेऽपि त्वा त्वामर्जुनं योद्धारं विनाऽपि त्वद्व्यापारं विनाऽपि मद्व्यापारेणैव न भविष्यन्ति विनङ्क्ष्यन्ति सर्वे भीष्मद्रोणकर्णप्रभृतयो याद्धुमनर्हत्वेन संभाविता अन्येऽपि येऽवस्थिताः प्रत्यनीकेषु प्रतिपक्षसैन्येषु योधा योद्धारः सर्वेऽपि मया हतत्वादेव न भविष्यन्ति तत्र तव व्यापारोऽकिंचित्कर इत्यर्थः ॥ ३२ ॥

शं० टी०—स्वं स्वप्रवृत्तिं चाख्यातुं श्रीभगवानुवाच—**कालोऽस्मीति** । लोकक्षयकृल्लोकानां भूमेर्भारायमाणानां प्राणिनां क्षयं नाशनं करोतीति लोकक्षयकृत्प्रवृद्धः प्रचण्डः कालोऽस्मि सर्वप्राणिसंहारहेतुः कालोऽहमित्यर्थः । इति स्वं ख्यापयित्वा स्वप्रवृत्तिमाह—लोकानिति । इहात्र समवेतान् लोकान् जनान् समाहर्तुं प्रवृत्तोऽस्मि । ननु लोकसंहारार्थं प्रवृत्तेन त्वया मां विना संहारः कर्तुं न शक्य इत्यत आह—ऋतेऽपीति । प्रत्यनीकेषु प्रतिपक्षसेनास्ववस्थिताः सज्जीभूय वर्तमानास्तव दुर्जया भीष्मद्रोणकर्णादयस्ते-च सर्वे त्वामृतेऽपि त्वत्प्रवृत्त्यभावेऽपि न भविष्यन्ति न स्थास्यन्ति मयि महामृत्यौ समुपस्थिते के नु जीविष्यन्ति सर्वेऽपि म्रियन्त इत्यर्थः ॥ ३२ ॥

श्री० टी०—एवं प्रार्थितः सन् श्रीभगवानुवाच—**कालोऽस्मीति त्रिभिः** । लोकानां क्षयकर्ता प्रवृद्धोऽत्युग्रः कालोऽस्मि लोकान्प्राणिनः संहर्तुमिह लोके प्रवृत्तोऽस्मि अतः—ऋतेऽपि त्वामिति । त्वां हन्तारं विनाऽपि न भविष्यन्ति न जीविष्यन्ति यद्यपि त्वया न हन्तव्या एते तथापि मया कालात्मना ग्रस्ताः सन्तो मरिष्यन्त्येव । के ते प्रत्यनीकेषु अनीकान्यनीकानि प्रति भीष्मद्रोणादीनां सर्वासु सेनासु ये योद्धारोऽवस्थितास्ते सर्वेऽपि ॥ ३२ ॥

स० टी०—एवं संप्रार्थितो विष्णुर्जिष्णुनाऽतिप्रियेण सः ॥ स्वयं यश्च यदर्थां च प्रवृत्तिस्तत्रिभिर्वदन् ॥ १ ॥ उवाच परमैश्वर्यनिधिः श्रीभगवानिति ॥ कालोऽहं सर्वसंहर्ता क्रियाशक्त्युपबृंहितः ॥ २ ॥ सर्वेश्वरो भवामीहेदानीं वृद्धिं गतः पराम् ॥ लोकान्दुर्योधनादींश्च सर्वान्भक्षयितुं ह्यहम् ॥ ३ ॥ प्रवृत्तोऽस्मि जगत्कर्ता पाता संहारकृद्विभुः ॥ मत्प्रवृत्तिं विना ह्येवं कथ स्यादिति चेच्छृणु ॥ ४ ॥ त्वामर्जुनं विना शूरं त्वद्व्यापारं विनापि ते ॥ मद्व्यापारेण शुद्धेन भीष्मद्रोणादयोऽखिलाः ॥ ५ ॥ विनङ्क्ष्यन्त्यत्यजेयत्वाल्लोके संभाविता अपि ॥ ये चाप्यवस्थिता अन्ये प्रतिपक्षचमूषु भोः ॥ ६ ॥ योद्धारस्ते मया सर्वे हतत्वादेव सन्ति नो ॥ व्यापारस्तव तत्र स्यादकिंचित्कर एव हि ॥ ७ ॥ ३२ ॥

भा० टी०—एवं पृष्टः श्रीभगवानुवाच—**कालेति** । लोकक्षयं करोतीति लोकक्षयकृत्कालोऽस्मि प्रवृद्धः प्रवृद्धिं प्राप्तः इहास्मिन्काले । नन्विहास्मिँल्लोके संग्रामे वेत्याचार्यैः कुतो न व्याख्यातमिति चेत् कालस्यैव प्रकृतत्वात् प्रधानत्वाच्च सर्वनाम्नश्च प्रधानपरामर्शित्वनियमात् । लोकान्समाहर्तुं प्रवृत्तः किं सर्वे लोका न भविष्यन्तीत्यत आह—ये सैन्यं प्रत्यवस्थिता भीष्मद्रोणादयस्ते सर्वे नभविष्यन्ति । ननु मां युद्धकर्तारं विना कथं सर्वेषां नाश इति चेत्तत्राह—ऋतेऽपि त्वा त्वां त्वयि त्यक्तयुद्धव्यापारे सत्यपि मया कालरूपेणावश्यं विनाशनीया इति भावः ॥ ३२ ॥

प० टी०—एवं प्रार्थितः सन् भगवानाह—**काल इति** । प्रकर्षेण वृद्धो वृद्धिं प्राप्तो लोकक्षयकृज्जगद्भक्षकः कालः सन् लोकान् समाहर्तुमेव प्रवृत्तोऽस्मि । तदेवाह ये प्रत्यनीकेषु अनीकान्यनीकानि प्रति प्रत्यनीकं भूयः सेनासु येऽवस्थिताः संमुखीभूता योधाः सुभटास्ते सर्वे नभविष्यन्ति न जीविष्यन्ति तर्हि मम गतिः केत्याह त्वा इति । त्वामृते त्वां विना न मे भक्तः प्रणश्यतीत्युक्तत्वात् ॥ ३२ ॥

रा० टी०—एवमर्थितो भगवान्स्वगुणादीनाह—**कालोऽस्मीति** । कल बन्धने कल संहरणे कल ज्ञाने कल विद्रावणे कल कामधेनुरिति धातुपाठात् । पूर्णसद्गुणैः कलितत्वात्संबद्धत्वात्कालः पूर्णसद्गुणोऽस्मीत्यर्थः ।

तथा जगद्बन्धनसंहरणबोधनविद्रावणादिकर्मयुक्तत्वाच्च कालोऽस्मीत्यर्थः । कलतेः कर्मणि कर्तरि च अण् घञ्प्रत्ययो वा । किमर्थमुग्ररूप इत्यस्योत्तरं लोकक्षयकृदित्यादि । प्रवृद्धो देशकालतः परिपूर्णः, अनादिनित्य इति वा । लोकस्य क्षयकृद्भवन्निह युद्धमण्डलगतान् लोकान् जनान्प्रत्यक्षत एव संहर्तुं प्रवृत्तोऽस्मि तर्हि पार्थानामपि संहर्तुं प्रवृत्तः किमित्यत आह—ऋतेऽपीति । अपिर्धर्मादिसमुच्चये । धर्मादिपञ्चपाण्डवान् अश्वत्थामकृतवर्मकृपांश्च विनेत्यर्थः । प्रत्यनीकेषु परस्परं प्रतिस्पर्धितया स्थिते सेनाद्वये । अक्षौहिणीबहुत्वाभिप्रायेण बहुवचनम् । येऽवस्थिता योधास्ते सर्वे न भविष्यन्तीत्यर्थः ॥ ३२ ॥

**तस्मात्त्वमुत्तिष्ठ यशो लभस्व जित्वा शत्रून्भुङ्क्ष्व राज्यं समृद्धम् ॥**
**मयैवैते निहताः पूर्वमेव निमित्तमात्रं भव सव्यसाचिन् ॥ ३३ ॥**

**त० टी०**—एवं च यथाऽहं स्वातन्त्र्येण सर्वलोकस्य पालकस्तथा संहर्ताऽप्यहमेव स्वतन्त्रोऽन्येषां मदधीनं कर्तृत्वमनुसंधेयमित्याह—**तस्मादिति** । यस्मादहमेव संहर्ता तस्मात्त्वं तान्प्रति युद्धायोत्तिष्ठ । देवैरपि दुर्जया भीष्मद्रोणादयोऽर्जुनेन जिता इत्येवंभूतं यशो लभस्व । ऊर्जिताञ्छत्रून् दुर्योधनादीन् जित्वा समृद्धं राज्यं भुङ्क्ष्व । एते च तव शत्रवस्त्वदीययुद्धात्पूर्वमेव मयैव कालात्मना निहता हृतायुषः अतस्त्वमेतेषां हनने निमित्तमात्रं भव, मया हन्यमानानां शस्त्रादिस्थानीयो भव । हे सव्यसाचिन् सव्येन वामहस्तेनापि शरान्सचितुं संधातुं शीलं यस्येति तथा हस्तद्वयेन संप्रहर्तुं समर्थेत्यर्थः ॥ ३३ ॥

**म० टी०**—यस्मादेवं तस्मात्त्वद्व्यापारमन्तरेणापि यस्मादेते विनङ्क्ष्यन्त्येव—**तस्मादिति** । तस्मात्त्वमुत्तिष्ठ उद्युक्तो भव युद्धाय देवैरपि दुर्जया भीष्मद्रोणादयोऽतिरथा झटित्येवार्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व महद्भिः पुण्यैरेव हि यशो लभ्यते अयत्नतश्च जित्वा शत्रून् दुर्योधनादीन् भुङ्क्ष्व स्वोपसर्जनत्वेन भोग्यतां प्रापय समृद्धं राज्यमकण्टकम् एते च तव शत्रवो मयैव कालात्मना निहताः संहृतायुषः त्वदीययुद्धात्पूर्वमेव केवलं तव यशोलाभाय रथान्न पातिताः अतस्त्वं निमित्तमात्रं, अर्जुनेनैते निर्जिता इति सार्वलौकिकव्यपदेशास्पदं भव हे सव्यसाचिन् सव्येन वामेन हस्तेनापि शरान् सचितुं संधातुं शीलं यस्य तादृशस्य तव भीष्मद्रोणादिजयो नासंभावितस्तस्मात्त्वद्व्यापारानन्तरं मया रथात्पात्यमानेष्वेतेषु तवैव कर्तृत्वं लोकाः कल्पयिष्यन्तीत्यभिप्रायः ॥ ३३ ॥

**शं० टी०**—एवं स्वं स्वप्रवृत्तिं चोक्त्वा फलितमाह—**तस्मादिति** । महामृत्युना मयैव सर्वेष्वेतेषु म्रियमाणेषु सत्सु न योत्स्य इति तव प्रवृत्त्यभावो निष्फलो यस्मात्तस्मात्त्वमुत्तिष्ठ युद्धाय सन्नद्धो भव यशो लभस्व देवानामप्यजय्यान् भीष्मादीनर्जुनो जितवानिति कीर्तिमाप्नुहि शत्रून् दुर्योधनादीन् जित्वा शत्रुजयेन लब्धं समृद्धं सर्वैश्वर्यसंपन्नं राज्यं भुङ्क्ष्व । भीष्मादिष्वतिरथेषु सत्सु शत्रुजयो दुर्लभ एवेत्यर्जुनस्याशङ्कां निःशेषयितुमाह—**मयैवेति** । यद्यपि शस्त्रास्त्रबलपराक्रमसंपत्त्या भीष्मादयो दुर्जया एव तथाप्येते त्वत्प्रवृत्तेः पूर्वं मयैवेश्वरेण तेजोबलपौरुषमाकृष्य निःसारतां गमयित्वा निहताः जीर्णपर्णवत्पतनोन्मुखीकृता भवन्तीत्यर्थः । सव्येन वामहस्तेन शरान् सचितुं प्रयोक्तुं शीलमस्यास्तीति सव्यसाची तस्य संबुद्धौ हे सव्यसाचिन् । पर्णपातने वायुवत्तेषां पातने त्वं निमित्तमात्रं भव न तत्र तव प्रयत्नविशेषोऽस्तीत्यर्थः ॥ ३३ ॥

**श्री० टी०**—यस्मादेवं **तस्मादिति** । तस्मात्त्वं युद्धायोत्तिष्ठ देवैरपि दुर्जया भीष्मद्रोणादयोऽर्जुनेन निर्जिता इत्येवंभूतं यशो लभस्व प्राप्नुहि अयत्नेन शत्रून् जित्वा समृद्धं राज्यं भुंक्ष्व एते च तव शत्रवस्त्वदीययुद्धात्पूर्वमेव मयैव कालात्मना निहतप्रायाः तथापि त्वं निमित्तमात्रं भव । हे सव्यसाचिन् सव्येन वामहस्तेन सचितुं शरान् संधातुं शीलं यस्येति व्युत्पत्त्या वामेनापि बाणक्षेपात् सव्यसाचीत्युच्यते ॥३३॥

**स० टी०**–त्वद्व्यापारं विनाऽप्येते मयैव निहता यतः ॥ तस्मात्त्वं भव युद्धाय समुद्यक्तोऽत्र केवलम् ॥ १ ॥ भीष्मादयो महाशूरा अजेया अमरैरपि ॥ अर्जुनेन जिता इत्थं लभस्व त्वं यशोऽमलम् ॥ २ ॥ जित्वाशत्रूननायासाद्भुङ्क्ष्व राज्यमकण्टकम् ॥ मयैवैते हताः पूर्वं निमित्तं केवलं भव ॥ ३ ॥ रथान्न पातितास्ते त्वद्यशोलाभाय केवलम् ॥ शरान्वामेन संधातुं शीलं यस्य तवेति सः ॥ ४ ॥ त्वद्व्यापारोत्तरं तस्मान्मयैवैतेषु तद्रथात् ॥ पात्यमानेषु कर्तृत्वं कल्पयिष्यन्ति ते त्वयि ॥ ५ ॥ ३३ ॥

**भा० टी०**–**तस्मादिति** । यस्मात्त्वां विनाप्येते न भविष्यन्त्येव तस्मात्त्वमुत्तिष्ठ स्थित्वा युध्यस्व । ननु माम् ऋतेऽपि कार्यनिर्वाहे किमर्थं युद्धाय मां नियोजयसीति चेत् त्वदीययशःप्रख्यापनायेत्याशयेनाह–यशो लभस्व देवैरपि जेतुमशक्याः भीष्मादयोऽतिरथा अर्जुनेन जिता इति यशः मदाराधनादिजन्यपुण्यजनितं लभस्व शत्रून्दुर्योधनादीन् जित्वा समृद्धमसपत्नमकण्टकं राज्यं भुङ्क्ष्व एतेषां विजये तव परिश्रमो नास्तीत्याशयेनाह–एते तव शत्रवः पूर्वमेव मयैव निश्चयेन हताः । ननु कथं स्थिता इति चेत्तव यशोदानाय त्वां निमित्तीकर्तुमित्याशयेनाह–निमित्तमात्रं त्वं भव हे सव्यसाचिन् सव्येन वामेन हस्तेनापि बाणान्सचितुं संधातुं शीलमस्येति तथा तं संबोधयन् निमित्तमात्रं भूत्वा सव्यसाचित्वं सार्थकं कुर्विति सूचयति ॥ ३३ ॥

**प० टी०**–अत एवाह–**तस्मादिति** । तस्मात्कारणात् त्वं युद्धायोत्तिष्ठ । तत्फलं देवैरपि दुर्जया भीष्मद्रोणादयोऽर्जुनेन निर्जिता इति यशो लभस्व । ततः शत्रून् जित्वा समृद्धं देशबलकोशदुर्गाद्युपेतं राज्यं भुङ्क्ष्व । अथ शत्रुजये एवमेवोद्दिश्य बृहत्सामापि परमेश्वरं स्तौतीत्याशयो नृहरेः तथा हि "औ हो इत्वामिद्धि हवामहा एसातौवाजास्थाकारावाः तुवाऔहोवावृत्रायिषुवा इन्द्राः सप्ततिं नारात्वां काष्ठाऔहोवासूअर्वाता उहुवाहाउअसा" अत्र तु औहोइति च संबुद्धौ विकल्पे हाउगद्यत इति ऊहग्रन्थोक्तेः । तथा अदीर्घं दीर्घवत्कुर्यादिति सामशिक्षासु गानक्रमो दर्शितः । अथ संहितापाठस्तु । त्वामिद्धि हवामहे सातौ वाजस्य कारवः । त्वां वृत्रेष्विन्द्रसप्ततिं नरस्त्वां काष्ठास्वर्वतः" इति । भाष्यं–भो इन्द्र परमात्मन् वयं नरो मनुष्याः कारवः स्तोतारो वाजस्य बलस्य सातौ लाभे काङ्क्षमाणे त्वामिच्छामेव हवामहे आहूयाव आकारयाम इत्यर्थः । तथा वृत्रेष्वावरकेषु उपस्थितेषु सत्सु त्वामेवाह्वयामः तथा अर्वतः संग्रामस्य काष्ठासु मर्यादासु व्यूहरचनया धर्म्ययुद्धेषु त्वामेव सप्ततिं भक्तपक्षपातिनं प्रभुमाह्वयामो नान्यमित्यर्थः । आपस्तम्बशाखायां च–" इन्द्रेण देवेन पृतना जयामि त्रैष्टुभेन छन्दसा पञ्चदशेन स्तोमेन बृहता साम्ना वषट्कारेण सहजानिति" । भाष्यम्–इन्द्रेण परमात्मना देवेन कृत्वा पृतनाः शत्रुसेना जयामि । तत्रानुष्ठानमाह बृहता साम्ना तदुपासनया । किंभूतेन त्रैष्टुभेन चतुश्चत्वारिंशदक्षरेण छन्दसा तथा पञ्चदशस्तोमेन । ब्राह्मणं च "पञ्चभ्यो हिं करोति स तिसृभिः स एकयेति ।" अयमर्थः–एकं सूक्तं त्रिरावर्तनीयं तत्र प्रथमावृत्तौ प्रथमाद्या ऋचस्त्रिरभ्यासः द्वितीयावृत्तौ मध्यमायास्त्रितीयावृत्तावुत्तमायाः सोऽयं पञ्चदशस्तोमस्तेन एवमनयोपासनया वषट्कारो वज्रीभूय शत्रून् हिनस्ति । प्रकृते तु शत्रवः सहजास्तानित्यर्थः । सायनभाष्यकारैराधिदैविकाभिप्रायेण बाह्यसंग्रामविषयो दर्शितः । रावणभाष्ये तु अध्यात्मरीत्याभ्यन्तरसंग्रामविषयो दर्शितः । वेटभाष्ये तूभयमपि । अत्रार्थे ऋक्शाखायाः श्रुतिरपि–" संसृष्टं धनमुभयं समाकृतमस्मभ्यं दत्तां वरुणश्च मन्युः । भियं दधाना हृदयेषु शत्रवः पराजिता सो अपनिलयन्ताम् " । भाष्यम्–अस्मभ्यमस्मदर्थं परमेश्वरेण समाकृतं यथायोग्यमुभयं धनं संसृष्टं सम्यक्प्रकारेणनिर्मितमाध्यात्मिकमधिदैवतं च । तयोर्दातारौ द्वौ । आध्यात्मिकस्य दाता वरुणः प्रकाशकः परमात्मा । अन्यस्य मन्युरिन्द्रो बृहस्पतिरिति श्रुतेरिन्द्र ऐश्वर्यवान् देवतासु इन्द्रः । अथोभयधनस्य फलमाह–भियमिति । येन धनेन हृदयेषु प्राणिनाम-

न्तःकरणेषु शत्रवः षट् सपत्ना भियं दधानाः सन्तः स्वत एव युद्धं विनापि अपनिलयन्तां नाशं प्राप्नुवन्तीत्यध्यात्मपक्षे। अपरत्र तु हृदयेषु स्वान्तःकरणेषु भियं दधानाः सन्तः स्वत एव युद्धं विनापि अपनिलयन्तां नाशमायान्त्विति । अथ प्रकृतमनुसरामः एवं शत्रुपराजये तव प्रयासो नास्ति । कुतः एते पूर्वं मयैव निहताः सन्तीति त्वयैव दृष्टम् । अतः परं भोः सव्यसाचिन्नर्जुन त्वं निमित्तमात्रं भव । अत्रैतदुक्तं भवति । पूर्वमहं रुद्रं निमित्तमात्रं कृत्वा स्वनिर्मिते धनुषि कल्पान्तकालानलसमः स्वयं बाणो भूत्वा दुर्जयमपि त्रिपुरमधाक्षम् । संप्रति त्वां निमित्तमात्रं कृत्वा यतो जगत्सृष्टिप्रलयसमर्थसंकल्पानामस्माकं कुरुकुलदलने कियानायासोऽस्तीत्यर्थः । श्रुतिरपि—"अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हंतवा उ"—भाष्यम्—अहं रुद्राय महादेवार्थं मेरुतुल्यमलौकिकं धनुरातनोमि विस्तारयामि किमुद्दिश्य । ब्रह्मद्विषे ब्रह्मद्वेष्टारं शत्रुं त्रिपुरं दैत्यं हन्तवे हन्तुं नाशयितुं तदुक्तं 'रथः क्षोणी यन्ता' इत्यादि ॥ ३३ ॥

रा० टी०—पूर्वं द्वितीये 'न चैतद्विद्मः कतरन्नो गरीयो यद्वा जयेम यदि वा नो जयेयुः' इति वदन्तं पार्थं प्रति संदेहेऽपि युद्धे प्रवृत्तिर्युक्ता पक्षद्वयेऽपि फललाभात् । हतो वा प्राप्स्यसे स्वर्गं जित्वा वा भोक्ष्यसे महीमित्युत्तरमुक्तम् । इदानीं तव पराजयशङ्का नास्तीत्याह—**तस्मादिति**द्वयेन । यस्मादहमेव लोकान्समाहर्तुमिह प्रवृत्तः । तस्माद्विजये संदेहाभावादुत्तिष्ठ योद्धुं सन्नद्धो भव । शत्रून् जित्वा यशो लभस्व समृद्धं राज्यं भुङ्क्ष्व । पूर्वमेव मया निहताः निहतप्रायाः अपहृतायुष्ट्वेन सन्निहितमरणाः सन्ति । तान्प्रत्यक्षतो हन्तुं हे सव्यसाचिंस्त्वं निमित्तमात्रं भव । पश्चादपि त्वयि स्थित्वाहमेव हनिष्यामीति भावः ॥ ३३ ॥

**द्रोणं च भीष्मं च जयद्रथं च कर्णं तथाऽन्यानपि योधवीरान् ॥**
**मया हतांस्त्वं जहि मा व्यथिष्ठा युद्ध्यस्व जेतासि रणे सपत्नान् ॥ ३४ ॥**

**त० टी०—नन्** द्रोणो मम गुरुर्धनुर्वेदाचार्यः परशुरामाल्लब्धदिव्यास्त्रस्तथा भीष्मोऽपि शन्तनुवरलब्धस्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च द्वन्द्वयुद्धे परशुरामेणाप्यजेयः, तथा जयद्रथोऽस्मज्जयार्थमाराधितगिरिशो दिव्यास्त्रसंपन्नश्च, तथा कर्णः सूर्यस्यानन्यभक्तो दिव्यास्त्रसंपन्नश्च, अन्ये च कृपाश्वत्थामप्रभृतयो दुर्जयवीरा विद्यन्ते तेषु सत्सु कथं शत्रून् जित्वा राज्यं भोक्ष्ये कथं वा यशो लप्स्ये इत्यर्जुनस्याशङ्कां निरासयन्नाह—**द्रोणं चेति** । द्रोणभीष्मकर्णादींस्त्वयाऽजेयत्वेन कल्पितान्सर्वानेव योधवीरान्कृतापराधतया मयैव कालात्मना हतान् हतायुषस्त्वं जहि । त्वत्संयुगमात्रावशेषितप्राणानां हनने न ते प्रयासो भविष्यति । अतो मा व्यथिष्ठाः तदजेयत्वनिमित्तां गुरुबन्धुवधनिमित्तां वा व्यथां पीडां मा गाः । अतो निःशङ्को युध्यस्व, रणे संग्रामे सपत्नान् शत्रून् जेता जेष्यसि ॥ ३४ ॥

म० टी०—ननु द्रोणो ब्राह्मणोत्तमो धनुर्वेदाचार्यो मम गुरुर्विशेषेण च दिव्यास्त्रसंपन्नस्तथा भीष्मः स्वच्छन्दमृत्युर्दिव्यास्त्रसंपन्नश्च परशुरामेण द्वन्द्वयुद्धमुपगम्यापि न पराजितस्तथा यस्य पिता वृद्धक्षत्रस्तपश्चरति मम पुत्रस्य शिरो यो भूमौ पातयिष्यति तस्यापि शिरस्तत्कालं भूमौ पतिष्यतीति स जयद्रथोऽपि जेतुमशक्यः स्वयमपि महादेवाराधनपरो दिव्यास्त्रसंपन्नश्च तथा कर्णोऽपि स्वयं सूर्यसमः तदाराधनेन दिव्यास्त्रसंपन्नश्च वासवदत्तया चैकपुरुषघातिन्याऽमोघीकर्तुमशक्यया शक्त्या विशिष्टस्तथा कृपाश्वत्थामभूरिश्रवःप्रभृतयो महानुभावाः सर्वथा दुर्जया एवैतेषु सत्सु कथं जित्वा शत्रून् राज्यं भोक्ष्ये कथं वा यशो लप्स्य इत्याशङ्कामर्जुनस्यापनेतुमाह तदाशङ्काविषयान्नामभिः कथयन्—**द्रोणमिति** । द्रोणादींस्त्वदाशङ्काविषयीभूतान् सर्वानेव योधवीरान् कालात्मना मया हतानेव त्वं जहि हतानां हनने को वा परिश्रमः अतो मा व्यथिष्ठाः कथमेवं शक्ष्यामीति व्यथां भयनिमित्तां पीडां मा गाः भयं त्यक्त्वा युध्यस्व जेतासि जेष्यस्यचिरेणैव रणे संग्रामे सपत्नान् सर्वानपि शत्रून् । अत्र द्रोणं च भीष्मं च जयद्रथं चेति चकारत्रयेण

पूर्वोक्ताजेयत्वशङ्कानूद्यते तथाशब्देन कर्णेऽपि अन्यानपि योधवीरानित्यत्रापिशब्देन तस्मात् कुतोऽपि स्वस्य पराजयं वधनिमित्तं पापं च माशङ्किष्ठा इत्यभिप्रायः । ' कथं भीष्ममहं सङ्ख्ये द्रोणं च मधुसूदन । इषुभिः प्रतियोत्स्यामि पूजार्हौ ' इत्यत्रेवात्रापि समुदायान्वयानन्तरं प्रत्येकान्वयो द्रष्टव्यः ॥ ३४॥

**शं० टी०**—उक्तमेवार्थं निर्विचिकित्सत्वाय विस्पष्टयति—**द्रोणमिति** । द्रोणं भीष्मं कर्णं जयद्रथं च तथान्यानपि भगदत्तसौमदत्त्यादींश्च योधवीरान्मया तेजोबलपौरुषाकर्षणेन हतान् हतप्रायांस्त्वं जहि बाणैः पातय तत्र मा व्यथिष्ठाः द्रोणो दिव्यास्त्रसंपन्न इति तथाविधः स्वच्छन्दमरणो भीष्म इति वा सर्ववीर्यशक्तियुक्तः कर्णो दुर्जय इति पितृवरेणावध्यः सैन्धव इति चेतसीषदपि व्यथां मा कुरु किंतु मदनुग्रहेण रणे सपत्नान् दुर्योधनादीन् शत्रून् जेतासि जेष्यस्यत्र न संशयः । यस्मादेवं तस्माद्युध्यस्वेति नात्र विधिः किंतु मुक्तेः कारणं ज्ञानं तत्कारणं चित्तशुद्धिस्तत्कारणं स्वधर्मानुष्ठितिरिति सूचयन्निव वक्ति—**युध्यस्वेति** । मुमुक्षुस्त्वं स्वधर्ममनुवर्तस्वेति तात्पर्यार्थः । एतेन भक्त्या समाराधितः परमेश्वरः स्वभक्तानां दुर्लभमपि कार्यं सुलभं करोतीति सूचितं भवतीत्यर्थः ॥ ३४ ॥

**श्री० टी०**—न चैतद्विद्मः कतरन्नो गरीय इत्यादिर्या शङ्का साऽपि न कार्येत्याह—**द्रोणं चेति** । येभ्यस्त्वं शङ्कसे तान् द्रोणादीन्मयैव हतांस्त्वं जहि घातय मा व्यथिष्ठाः शोकं माकार्षीः सपत्नान् शत्रून् रणे युद्धे निश्चितं जेतासि जेष्यसि ॥ ३४ ॥

**स० टी०**—धनुर्वेदाचार्यो मम गुरुरयं द्रोण उचितैः स्वयं दिव्यैरस्त्रैर्युत इह विजेतुं न सुशकः ॥ तथा भीष्मो वीरो रणभुवि गतोऽत्यन्तसुबलो न जेतुं शक्योऽभूद्युधि परशुरामेण च पुरा ॥ १ ॥ तथा जयद्रथो यस्य पितोग्रे तपसि स्थितः ॥ यः शिरो मम पुत्रस्य पृथिव्यां पातयिष्यति ॥ २ ॥ पतिष्यति स्वयं तस्य शिरश्चेति विनिश्चयः ॥ तथा कर्णोऽपि संपन्नशक्त्या वासवदत्तया ॥ ३ ॥ एकातिवीरघातिन्या मोघीकर्तुमशक्यया ॥ स्वयं च सूर्यपुत्रोऽस्ति दिव्यास्त्रबलसंयुतः ॥ ४ ॥ तथान्येऽपि महाशूरा अश्वत्थामकृपादयः ॥ सर्वथा दुर्जयाः सन्ति तेषु सत्सु कथं जयः ॥ ५ ॥ कथं निष्कण्टकं राज्यं यशो लप्स्येऽथवा कथम् ॥ इत्यर्जुनाशयं श्रीशोऽभिलक्ष्याहोत्तरं वचः ॥ ६ ॥ द्रोणं भीष्मं तथा कर्णं जयद्रथमथापरान् ॥ योधवीरांस्त्वदाशङ्कागोचरानखिलानिलानिमान् ॥ ७ ॥ कालात्मना मयेशेन हतांस्त्वं जहि संगरे ॥ हतानां हनने को वा तव पार्थ परिश्रमः ॥ ८ ॥ यथा बोधप्रतापेन ध्वस्तं विश्वं सहेतुकम् ॥ तत्त्वमस्यादिवाग्जन्मधीर्हिनस्ति प्रमात्मिका ॥ ९ ॥ तथा त्वं मत्प्रतापेन विध्वस्तं शत्रुसैनिकम् ॥ जहि स्थैर्यं समाश्रित्य न ते तद्धनने श्रमः ॥ १० ॥ शक्ष्याम्यहं कथं त्वेवं पीडां मा गा भयोद्भवाम् ॥ युध्यस्व त्वं भयं त्यक्त्वा जेष्यस्येव रणे रिपून् ॥ ११ ॥ तस्मात्कुतोऽपि स्वस्य त्वं मा शंकिष्ठाः पराजयम् ॥ पापं वधनिमित्तं वा श्रीहरेरयमाशयः ॥ १२ ॥ ३४ ॥

**भा० टी०**—येषु येषु योधेष्वर्जुनस्याशङ्का तांस्तान्व्यपदिशति—**द्रोणमिति** । द्रोणं च धनुर्वेदाचार्यं दिव्यास्त्रसंपन्नमात्मनश्च विशेषतो गुरुं भीष्मं च स्वच्छन्दमृत्युं दिव्यास्त्रसंपन्नं परशुरामेणापि द्वन्द्वयुद्धेऽपराजितं जयद्रथं चास्य पिता तपश्चरति मम पुत्रस्य शिरो भूमौ यः पातयिष्यति तस्यापि शिरः पतिष्यतीति तं कर्णं च कन्यया कुन्त्या संतुष्टाद्दुर्वाससो लब्धेन मन्त्रेणाहूतात्सूर्यादुत्पादितमिन्द्रदत्तया शक्त्या त्वमोघया दिव्यास्त्रैश्च संपन्नं तथान्यानपि योधमुख्यान् भगदत्तादीन्मया कालरूपेण हतान् निमित्तमात्रेण त्वं जहि अतो मा व्यथिष्ठास्तेभ्यो भयं मा कार्षीः भयं त्यक्त्वा च युध्यस्व यतः सपत्नान् शत्रून्दुर्योधनादीन् रणे युद्धे निःसंशयं जेतासि ॥ ३४ ॥

**प० टी०**—**द्रोणं चेति** । द्रोणं भीष्मं जयद्रथं कर्णं च तथान्यानपि योधेषु वीरान् मया संहारकालरूपेण

हतानपहृतशक्तीन् जहि मारय परं तु मा व्यथिष्ठा मा भैषीः। निर्भयः सन्युध्यस्व। रणे संग्रामे सपत्नान् शत्रून् जेतासि जेष्यसि ॥ ३४ ॥

रा० टी०—ननु द्रोणो धनुर्विद्याचार्यः भीष्मः स्वच्छन्दमृत्युः। योऽस्य शिरः छित्वा भूमौ पातयेत्तच्छिरो भेत्स्यत इति पितुर्वरेण बलिष्ठः सैन्धवः। वासवशक्त्या कर्णो बलवान्। एवमन्ये च बलिष्ठाः सन्ति। ते कथं मया जेया इत्यत आह—द्रोणं चेति ॥ ३४ ॥

**सञ्जय उवाच—एतच्छ्रुत्वा वचनं केशवस्य कृताञ्जलिर्वेपमानः किरीटी ॥**
**नमस्कृत्वा भूय एवाह कृष्णं सगद्गदं भीतभीतः प्रणम्य ॥३५॥**

**त० टी०—ततः किंवृत्तमिति धृतराष्ट्रापेक्षायां सञ्जय उवाच-एतदिति। एतत्पूर्वं पद्यत्रयेणोक्तं केशवस्य वचनं श्रुत्वा कृताञ्जलिः संपुटीकृतहस्तः वेपमानोऽत्याश्चर्यघोरासह्यतेजोरूपदर्शनेन कम्पमानः किरीटी अर्जुनः कृष्णं स्वभक्तपापकर्षकं नमस्कृत्वा नमस्कृत्य भूयः पुनरप्याह उक्तवान्। कथमाह भयहर्षाद्यावेशेनाव्यक्तस्खलिताक्षरोच्चारणादिरूपः कण्ठविकारो गद्गदस्तेन सह वर्तत इति सगद्गदं यथा स्यात्तथा भीतभीतः भीतादपि भीतोऽतिशयेन भीतः सन् अतिनम्रीभूयेत्यर्थः ॥ ३५ ॥**

म० टी०—द्रोणभीष्मजयद्रथकर्णेषु जयाशाविषयेषु हतेषु निराश्रयो दुर्योधनो हत एवेत्यनुसंधाय जयाशां परित्यज्य यदि धार्तराष्ट्रः संधिं कुर्यात्तदा शान्तिरुभयेषां भवेदित्यभिप्रायवान् ततः किं वृत्तमित्यपेक्षायां—एतदिति। एतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वा कृताञ्जलिः किरीटी इन्द्रदत्तकिरीटः परमवीरत्वेन प्रसिद्धो वेपमानः परमाश्चर्यदर्शनजनितेन संभ्रमेण कम्पमानोऽर्जुनः कृष्णं भक्ताघकर्षणं भगवन्तं नमस्कृत्वा नमस्कृत्य भूयः पुनरप्याह उक्तवान् सगद्गदं भयेन हर्षेण चाश्रुपूर्णनेत्रत्वे सति कफरुद्धकण्ठतया वाचो मन्दत्वसकम्पत्वादिर्विकारः सगद्गदस्तद्युक्तं यथा स्यात् भीतभीतः अतिशयेन भीतः सन् पूर्वं नमस्कृत्य पुनरपि प्रणम्यात्यन्तनम्रो भूत्वाहेति संबन्धः ॥ ३५ ॥

शं० टी०—प्रवृत्तमर्थं सर्वं धृतराष्ट्राय संजय उवाच—एतदिति। किरीट्यर्जुनो भयभक्तिभ्यां वेपमानः कम्पमानः सन् कृताञ्जलिर्भूत्वा केशवस्यैतदुक्तप्रकारकं वचनं श्रुत्वा हस्ताभ्यां नमस्कृत्वा साष्टाङ्गं च भूमौ प्रणम्य सगद्गदं हर्षातिशयेनानन्दाश्रुजलवेगेन च कुण्ठितकण्ठध्वनिर्यथा तथा भीतभीतोऽत्यन्तभययुक्तः सन् भूय एवेदं वचनं कृष्णमाह ॥ ३५ ॥

श्री० टी०—तयोर्यद्वृत्तं तद्धृतराष्ट्रं प्रति संजय उवाच—एतदिति। एतत्पूर्वश्लोकत्रयात्मकं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीट्यर्जुनः कृताञ्जलिः संपुटीकृतहस्तः कृष्णं नमस्कृत्य पुनरप्याह उक्तवान्। कथमाह भयहर्षाद्यावेशवशाद्गद्गदेन कण्ठकम्पनेन सह वर्तत इति सगद्गदं यथा भवति तथा। किंच भीतादपि भीतः सन् प्रणम्य अवनतो भूत्वा ॥ ३५ ॥

स० टी०—हते भीष्मे तथा द्रोणे कर्णे च विनिपातिते ॥ जयद्रथप्रभृतिषु हतेषु जयशंसिषु ॥ १ ॥ हतो दुर्योधनो नूनं तैर्विना स निराश्रयः ॥ इत्यन्तरनुसंधाय धृतराष्ट्रो नृपो यदि ॥ २ ॥ स्वजयाशां परित्यज्य संधिं कुर्यात्तदा स्वयम् ॥ उभयेषां भवेच्छान्तिरित्यभिप्रायवांस्ततः ॥ ३ ॥ किं वृत्तमित्यपेक्षायामुवाचेति स संजयः ॥ पूर्वोक्तं वच आकर्ण्य केशवस्य महेशितुः ॥ ४ ॥ इन्द्रदत्तकिरीटेन युक्तोऽसौ शूरसत्तमः ॥ निवातकवचादीनां रणे संहारकोऽर्जुनः ॥ ५ ॥ कृताञ्जलिः कम्पमानः परमाश्चर्यदर्शनात् ॥ नमस्कृत्य पुनः कृष्णं भक्तक्लेशापहं विभुम् ॥ ६ ॥ प्राह सगद्गदं वाक्यं श्रवणेऽतिसुखावहम् ॥ हर्षेण च भयेनाश्रुपूर्णाक्षित्वे सति स्वयम् ॥ ७ ॥ कफरुद्धगलत्वेन विकारो यो गिरां भवेत् ॥ मन्दत्वसप्रक-

स्पत्स्वरूपः सोऽयं हि गद्गदः ॥ ८ ॥ तद्युक्तं वचनं प्राहात्यन्तभीतश्च संस्तथा ॥ प्राङ्नमस्कृत्य भूयोऽपि प्रणम्यानतकन्धरः ॥ ९ ॥ ३९ ॥

**भा० टी०**–भीष्मस्य पतनमुक्तमेव द्रोणादीनामपि ईश्वरेण निहतानां पतनं भविष्यत्येवेति श्रुत्वा द्रोणादिषु जयाशाविषयभूतेषु चतुर्षु अजेयेष्वपि अर्जुनेन निहतेषु निराश्रयो दुर्योधनो निहत एवेति मत्वा धृतराष्ट्रः जयं प्रति निराशः सन् संधिं करिष्यति ततः शान्तिरुभयेषां भविष्यतीत्याशयेन संजय उवाच–**एतदिति** । एतत्पूर्वोक्तं केशवस्य वचनं श्रुत्वा वेपमानः कम्पमानः किरीटी अर्जुनः कृताञ्जलिः सन्नमस्कृत्वा भयाविष्टस्य दुःखेनाभिघातात्स्नेहाविष्टस्य हर्षोद्भवादश्रुपूर्णनेत्रत्वे सति श्लेष्मणा कण्ठावरोधाद्गद्गदया मन्दया वाचा सह वर्तत इति सगद्गदं यथा स्यात्तथा भूय एव कृष्णमाह–उक्तवान् भीतभीतः पुनः पुनर्भयाविष्टचित्तः प्रणम्य नम्रीभूयाहेति संबन्धः । यत्तु अत्राहेति पदच्छेदे पुनरर्जुन उवाचेति पुनरुक्तं स्यादतः प्रणम्यार्जुन उवाचेत्येव संबन्धः नतु प्रणम्याहेति का तर्हि आहेतिक्रियायाः गतिः नेयं क्रिया अहेति प्रसिद्धच्यर्थमव्ययमित्यदोषः इति तत्प्रामादिकं ततः सविस्मयाविष्टो हृष्टरोमा धनंजयः प्रणम्य शिरसा देवं कृताञ्जलिरभाषत अर्जुन उवाचेत्यादौ एवमेव शैलीदर्शनेन पुनरुक्त्यापादनस्य तत्समाधानस्य चाकिंचित्करत्वात् ॥ ३९ ॥

**प० टी०**–अथ धृतराष्ट्रं प्रति सञ्जय उवाच–**एतदिति** । किरीटी अर्जुन एतत्केशवस्य वचनं श्रुत्वा वपमानः कम्पमानः सन् कृताञ्जलिर्भूत्वा सगद्गदं कम्पितस्वरं यथा भवति तथा भीतभीतः सन् प्रणम्य दण्डवत्पतित्वा भूयः पूर्वोपन्यस्तं भक्ताभक्तकोटिद्वयगतिं कृष्णं प्रत्याह ॥ ३९ ॥

**रा० टी०**–ततः किं जातमिति धार्तराष्ट्रहार्दं परिहर्तुं संजय उवाच किमित्यत आह–**एतदित्यादिना** । वेपमानः भयकम्पिताङ्गः । भीतभीतः अत्यन्तभीतः ॥ ३९ ॥

**अर्जुन उवाच–स्थाने हृषीकेश तव प्रकीर्त्या जगत्प्रहृष्यत्यनुरज्यते च ॥**
**रक्षांसि भीतानि दिशो द्रवन्ति, सर्वे नमस्यन्ति च सिद्धसंघाः ॥३६॥**

**त० टी०–अर्जुन उवाच–स्थान इत्येकादशभिः । स्थाने इत्यव्ययं युक्तमित्यास्मिन्नर्थे । हे हृषीकेश सर्वेन्द्रियप्रवर्तक यतस्त्वमेवंभूतात्य तप्रभावो भक्तवत्सलश्च अतस्तव प्रकीर्त्या यशःप्रकीर्तनेन श्रवणेन च न केवलमहमेव हृष्यामि किंतु देवगन्धर्वयक्षकिन्नरादिजगत् चेतनमात्रं प्रहृष्यति, प्रकर्षेण हर्षमाप्नोति । तथाऽनुरज्यते चानुरागमुपैति, एतत् स्थाने युक्तमित्यर्थः । तथा रक्षांसि रक्षोगणानि भीतानि दिशो द्रवन्ति सर्वासु दिक्षु पलायन्ते इति यत् । तथा सिद्धानां तपोमन्त्रादिसिद्धिं प्राप्तानां संघाः समूहा नमस्यन्ति चेति यत्, एतत्सर्वं स्थाने युक्तमेवेत्यर्थः ॥ ३६ ॥**

**म० टी०**–अर्जुन उवाच एकादशभिः–**स्थाने इति** । स्थाने इत्यव्ययं युक्तमित्यर्थे हे हृषीकेश सर्वेन्द्रियप्रवर्तक यतस्त्वमेवमत्यन्ताद्भुतप्रभावो भक्तवत्सलश्च ततस्तव प्रकीर्त्या प्रकृष्टया कीर्त्या निरतिशयप्राशस्त्यस्य कीर्तनेन श्रवणेन च न केवलमहमेव प्रहृष्यामि किंतु सर्वमेव जगच्चेतनमात्रं रक्षोविरोधि प्रहृष्यति प्रकृष्टं हर्षमाप्नोति इति यत्तत् स्थाने युक्तमेवेत्यर्थः । तथा सर्वं जगदनुरज्यते च तद्विषयमनुरागमुपैतीति च यत्तदपि युक्तमेव । तथा रक्षांसि भीतानि भयाविष्टानि सन्ति दिशो द्रवन्ति सर्वासु दिक्षु पलायन्त इति यत्तदपि युक्तमेव, तथा सर्वे सिद्धानां कपिलादीनां संघा नमस्यन्ति चेति यत्तदपि युक्तमेव, सर्वत्र तव प्रकीर्त्येत्यस्यान्वयः । स्थाने इत्यस्य च । अयं श्लोको रक्षोघ्नमन्त्रत्वेन मन्त्रशास्त्रे प्रसिद्धः ॥ ३६ ॥

**शं० टी०—स्थाने इति** । हे हृषीकेश तव प्रकीर्त्या त्वन्महत्त्वकीर्तनेन श्रुतेन सर्वं जगत् प्रहृष्यति प्रकृष्टं हर्षं वहतीति यत्तत् स्थाने युक्तं तव सर्वजगद्धर्षविषयत्वमित्यर्थः । तव प्रकीर्त्या जगत्त्वय्यनुरज्यते अनुरागं चोपैतीति यत्तत् स्थाने युक्तं तव तदनुरक्तिविषयत्वमित्यर्थः । तव प्रकीर्त्या भीतानि रक्षांसि दिशो द्रवन्तीति यत्तत् स्थाने युक्तं तव रक्षःपलायनहेतुत्वमित्यर्थः । सिद्धसंघाः सिद्धानां देवताविशेषाणां संघास्त्वां नमस्यन्तीति यत्तत्स्थाने युक्तं तव सर्वदेवनमस्कारविषयत्वमित्यर्थः । यद्वा हे हृषीकेश 'कालोऽस्मि लोकक्षयकृत्प्रवृद्धो लोकान् समाहर्तुमिह प्रवृत्तः' इति भूमेर्भारायमाणसर्वदुष्टलोकसंहारार्थं प्रवृत्तोऽस्मीत्युक्तलक्षणया तव प्रकीर्त्या प्रकृष्टवचनेन श्रुतेन जगत्साधुलोकः प्रहृष्यति संतोषमुपैतीति यत्तत् स्थाने युक्तं सर्वेश्वरेण सर्वलोकत्राणपरायणेन भवता सर्वदुष्टसंहारे क्रियमाणे साधूनां प्रहर्षणं युक्तमेवेत्यर्थः । तव प्रकीर्त्या जगत्साधुलोकस्त्वयि भक्तवत्सले सर्वभूतहृदि परमात्मन्यनुरज्यते अनुरागं वहतीति यत्तत् स्थाने युक्तं, लोकोपद्रवनिवारणोद्युक्ते परमकृपालौ परमेश्वरे त्वयि साधूनामनुरागजननं युक्तमेवेत्यर्थः । तव प्रकीर्त्या दुष्टान् संहर्तुं प्रवृत्तोऽस्मीति तव प्रकृष्टवचनेन श्रुतेन रक्षांसि भीतानि राक्षसाः सर्वे भीताः सन्तो दिशो द्रवन्ति दिक्कोणान् प्रति पलायन्ते तव प्रकीर्त्या सर्वलोकसुखकाङ्क्षिणः सिद्धसंघाः सर्वे त्वां नमस्यन्ति सिद्धा इति देवजात्युपलक्षणं देवऋषिसिद्धगन्धर्वचारणादयः सर्वे स्वामिंस्तत्तथैव कर्तव्यमिति प्रार्थनापूर्वकं त्वां प्रणमन्तीत्यर्थः ॥ ३६ ॥

**श्री० टी०**—स्थान इत्येकादशभिरर्जुनस्योक्तिः । स्थाने इत्यव्ययं युक्तमित्यस्मिन्नर्थे । हे ऋषीकेश यत एवं त्वमद्भुतप्रभावो भक्तवत्सलश्च अतस्तव प्रकीर्त्या माहात्म्यसंकीर्तनेन न केवलमहमेव प्रहृष्यामि किंतु जगत्सर्वं प्रहृष्यति प्रकर्षेण हर्षं प्राप्नोति एतत्तु स्थाने युक्तमित्यर्थः । तथा जगदनुरज्यते अनुरागं चोपैति इति यत् तथा रक्षांसि भीतानि सन्ति दिशः प्रति द्रवन्ति पलायन्त इति यत सर्वे योगतपोमन्त्रादिसिद्धानां संघा नमस्यन्ति प्रणमन्तीति यत् एतच्च स्थाने युक्तमेव न चित्रमित्यर्थः ॥ ३६ ॥

**स० टी०**—सर्वेन्द्रियगणाधीश त्वमत्यन्ताद्भुतेश्वरः ॥ कीर्तनेन तवात्यन्तप्राशस्त्यश्रवणेन च ॥ १ ॥ नाहमेव प्रहृष्यामि केवलं किं तु सर्वतः ॥ जगच्चेतनमात्रं हि दुष्टरक्षोविरोधि यत् ॥ २ ॥ प्रकृष्टं हर्षमाप्नोतीत्येवं यद्युक्तमेव तत् ॥ त्वद्विषये जगत्सर्वमनुरागमुपैति यत् ॥ ३ ॥ युक्तं तदपि तद्वच्च भयाविष्टानि सन्ति यत् ॥ सर्वासु दिक्षु रक्षांसि पलायन्तेऽति सांप्रतम् ॥ ४ ॥ सिद्धानां कपिलादीनां समूहास्त्वां जगद्गुरुम् ॥ नमस्यन्तीति यत्तच्च युक्तमेव जगद्गुरो ॥ ५ ॥ प्रकीर्त्येत्यस्य सर्वत्र तवेत्यस्य तथान्वयः ॥ स्थानेइतिपदस्यार्थो विषये तद्विशेषणम् ॥ ६ ॥ स सर्वात्मा सुहृत्स्वामी हर्षादिविषयो हरिः ॥ ७ ॥ ३६ ॥

**भा० टी०**—हे हृषीकेश तव माहात्म्यप्रकीर्तनेन यज्जगत् प्रहर्षं प्राप्नोत्यनुरागं चोपैति तत्स्थाने युक्तमित्यर्थः । यद्वा तव प्रकीर्त्या यज्जगत्प्रहृष्यत्यनुरज्यते च तत् स्थाने हर्षादिस्थितियोग्यविषये यतस्त्वं हृषीकेशः सर्वेन्द्रियनियन्ता सर्वान्तर्यामी सर्वसुहृदिति सूचनार्थं संबोधनम् । किंच यद्रक्षांसि भयाविष्टानि दिशो द्रवन्ति पलाय गच्छन्ति यच्च सिद्धानां कपिलादीनां समुदायाः नमस्कुर्वन्ति तच्च स्थाने इति पूर्ववत्॥३६॥

**प० टी०—स्थान इति** । तवाद्भुतसामर्थ्यं भक्तवात्सल्यरूपया कीर्त्या त्वदनुपथं जगत्प्रहृष्यति संतुष्टं भवति त्वद्विश्वासेनानुरज्यतेऽनुरागं प्राप्नोतीति स्थाने युक्तमेव । एतदुभयमवलोक्य सर्वे सिद्धसङ्घाः कपिलादयस्त्वा नमस्यन्तीति स्थाने युक्तमेव ॥ ३६ ॥

**रा० टी०**— तद्वचनमाह—**स्थान इत्यादिना** । हे हृषीकेश सर्वेन्द्रियप्रेरक तव प्रकीर्त्या जगत्प्रहृष्यति अनुरज्यते चेत्यादि स्थाने । अव्ययमेतत् युक्तमेवेत्यर्थः ॥ ३६ ॥

**कस्माच्च ते न नमेरन्महात्मन् गरीयसे ब्रह्मणोऽप्यादिकर्त्रे ॥
अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् ॥ ३७ ॥**

**त० टी०**–युक्ततामेवोपपादयति–**कस्मादिति** । हे महात्मन् ते तुभ्यं महर्षिसिद्धसंघाः कस्मान्न नमेरन् नमस्कारं न कुर्युः, कथंभूताय ते ब्रह्मणो हिरण्यगर्भस्यापि गरीयसे गुरुतमाय । आदिकर्त्रे ब्रह्मणोऽपि जनकाय । हे अनन्त त्रिविधपरिच्छेदशून्य देवेश सर्वदेवाधीश जगन्निवास सर्वचेतनाचेतनजगदाश्रय चेतनाचेतनसर्ववस्तुरूपोऽपि त्वमेवेत्याह–**त्वमक्षरमिति** । न क्षरतीत्यक्षरं क्षेत्रज्ञस्वरूपं " न जायते म्रियते वा विपश्चित् " इत्यादिश्रुतिसिद्धो जीवात्माऽक्षरशब्दवाच्यस्त्वमेव । सदसच्छब्दवाच्यं कार्यकारणोभयावस्थं प्रकृतितत्त्वं त्वमेव । तत्परं यत् यस्मात्सदसद्रूपप्रकृतितत्संसृष्टाज्जीवात्परं तुरीयं तत्त्वं यत्तदपि त्वमेव । तस्मात्सर्वे नमन्तीति न किमपि चित्रमित्यर्थः ॥ ३७ ॥

**म० टी०**–भगवतो हर्षादिविषयत्वे हेतुमाह–**कस्मादिति** । कस्माच्च हेतोस्ते तुभ्यं न नमेरन्न नमस्कुर्युः सिद्धसंघाः सर्वेऽपि हे महात्मन् परमोदारचित्त हे अनन्त सर्वपरिच्छेदशून्य हे देवेश हिरण्यगर्भादीनामपि देवानां नियन्तः हे जगन्निवास सर्वाश्रय तुभ्यं कीदृशाय ब्रह्मणोऽपि गरीयसे गुरुतराय आदिकर्त्रे । ब्रह्मणोऽपि जनकाय नियन्तृत्वमुपदेष्टृत्वं जनकत्वमित्यादिरेकैकोऽपि हेतुर्नमस्कार्यताप्रयोजकः किं पुनर्महात्मत्वानन्तत्वजगन्निवासत्वादिनानाकल्याणगुणसमुच्चित इत्यनाश्चर्यतासूचनार्थं नमस्कारस्य–**कस्माच्चेति** । वाशब्दार्थश्चकारः । किंच सत् विधिमुखेन प्रतीयमानमस्तीति असन्निषेधमुखेन प्रतीयमानं नास्तीति अथवा सत् व्यक्तम् असत् अव्यक्तं त्वमेव, तथा तत्परं ताभ्यां सदसद्भ्यां परं मूलकारणं यदक्षरं ब्रह्म तदपि त्वमेव त्वद्भिन्नं किमपि नास्तीत्यर्थः । तत्परं यदित्यत्र यच्छब्दात्प्राक् चकारमपि केचित्पठन्ति । एतैर्हेतुभिस्त्वां सर्वे नमस्यन्तीति न किमपि चित्रमित्यर्थः ॥ ३७ ॥

**शं० टी०**–भगवतः सर्वदेवनमस्कार्यत्वे हेतून् वदन् काका सर्वनमस्कार्यत्वमापादयति–**कस्मादिति** । चकारस्त्वर्थः । महान्महत्तरः सर्वोत्कृष्ट आत्मा स्वभावो यस्य स हे महात्मन् ते तुभ्यं सिद्धादयः सर्वे देवाः कस्मात्तु हेतोर्न नमेरन् केन हेतुना त्वां न नमेयुः सर्वप्रकारैर्विचार्यमाणे त्वामेव नमस्करिष्यन्तीत्यर्थः । नन्वहमपि लोकसाधारणः केन विशेषेण मह्यं नमस्कुर्युरित्याशङ्कायां न ज्ञानैश्वर्यबलवीर्यतेजःशक्तिविशेषैः परमार्थतश्च भवानेव सर्वोत्तमः सर्वनमस्कार्य इति । सर्वनमस्कार्यत्वे हेतूनाह–गरीयसे इत्यादिना । गरीयसे ज्ञानादिभिरुक्तैर्विशेषैर्यः सर्वोत्तमः सर्वगरीयांस्तस्मै गरीयसे गुरुतराय ज्ञानादिभिः सर्वेभ्यो गरीयस्त्वादित्यर्थः । किंच ब्रह्मणोऽप्यादिकर्त्रे ब्रह्मणो हिरण्यगर्भस्य सर्वभूतपतेरपि सर्वाराध्यस्यादिकर्त्रे आदिर्जनिकारणं कर्ता नियामकः स चासौ कर्ता च तस्मै, तस्यापि स्रष्टृत्वादीश्वरत्वाच्च तव सर्वनमस्कार्यत्वे किं वक्तव्यमित्यर्थः । पुनरपि हेत्वन्तराण्याह–**अनन्तेति** । हे अनन्त देवेश जगन्निवासेत्यनन्तत्वाद्देवानामीश्वरत्वाज्जगन्निवासत्वाच्च सर्वदेवनमस्कार्योऽसीत्यर्थः । " अनन्तश्चात्मा यो देवानामधिपो यस्मिँल्लोका अधिश्रिताः " इति श्रुतेः । ननु ममानन्तत्वं न संभवति जगत्तत्कारणाभ्यां व्यवधानादित्याशङ्कायामाह–**सदसदिति** । नामरूपाभ्यामस्तीति यन्निर्दिश्यते तत्सत्कार्यं जगत्तद्विलक्षणमसज्जगत्कारणमव्याकृतं तदुभयं सदसच्च त्वमेव " सर्वं ह्येतद्ब्रह्म " इति श्रुतेः । ननु सदसद्रूपत्वेऽपि ममानन्तत्वं न संभवति परेण ब्रह्मणा व्यवधानादित्यत आह–त्वमक्षरमिति । तत्परं तयोर्जगदव्याकृतयोः कार्यकारणयोर्नित्यत्वेन सच्चिदानन्दरूपत्वेन निरतिशयमहत्त्वेनातिसूक्ष्मत्वेन परं विलक्षणं कारणं च "यो वा एतदक्षरं गार्ग्यविदित्वा" इत्यादिश्रुतिप्रसिद्धं यदक्षरं कदापि केनापि कथंचिदपि न क्षरतीत्यक्षरं नित्यकूटस्थं सच्चिदानन्दैकरसमद्वितीयं

निर्विशेषं तत्परं ब्रह्म त्वमेव त्वत्तो नान्यत्ततोऽनन्तत्वं सिद्धं "सत्यं ज्ञानमनन्तं ब्रह्म इति श्रुतेः । यत एवं ततः सर्वदेवनमस्कार्यत्वं तव युक्तमिति तात्पर्यार्थः ॥ ३७ ॥

**श्री० टी०**—तत्र हेतुमाह—**कस्मादिति** । हे महात्मन् हे अनन्त हे देवेश हे जगन्निवास कस्माद्धेतोस्ते तुभ्यं न नमेरन् नमस्कारं न कुर्युः । कथंभूताय ब्रह्मणोऽपि गरीयसे गुरुतराय आदिकर्त्रे च ब्रह्मणोऽपि जनकाय । किंच सत् व्यक्तमसदव्यक्तं च ताभ्यां परं मूलकारणं यदक्षरं ब्रह्म तच्च त्वमेव एतैर्नवभिर्हेतुभिस्त्वां सर्वे नमस्यन्तीति न चित्रमित्यर्थः ॥ ३७ ॥

**स० टी०**—हर्षादिविषयत्वेऽपि हेतुमाह जगत्पतेः ॥ कस्माद्धेतोर्न ते तुभ्यं नमस्कुर्युः पुरेऽरिताः ॥ १ ॥ सर्वेऽपि हे महात्मंस्त्वं परमोदारचिद्घनः ॥ अपरिच्छिन्न देवेश नियन्ता त्वं विधेरपि ॥ २ ॥ हे समस्ताश्रयेशान तुभ्यं कीदृग्विधाय च ॥ ब्रह्मणोऽपि नियन्त्रे तत्पित्रे तद्देशिकाय च ॥ ३ ॥ किं च प्रतीयमानं यत्तत्सद्विधिमुखेन वै ॥ नास्तीति भानविषयमसत्तद्यन्निषेधतः ॥ ४ ॥ व्यक्ताव्यक्तं च वा सर्वं सदसद्भ्यां परं तथा ॥ यदक्षरं परं ब्रह्म तदपि त्वं परात्पर ॥ ५ ॥ त्वत्तो भिन्नं नच स्थूलं न सूक्ष्मं नापि कारणम् ॥ त्वमात्मा सर्ववस्तूनां त्वामेतैर्हेतुभिर्विभुम् ॥ ६ ॥ सर्वे लोका नमन्तीति न चित्रं किमपीश्वरे ॥ ७ ॥ ३७ ॥

**भा० टी०**—इदं भगवतो हर्षादिविषयत्वं युक्तमेवेत्याशयेनाह—**कस्मादिति** । कस्माच्च ते तुभ्यं न नमेरन् न नमस्कुर्युः, नमस्काराकरणे हेतुर्नास्तीत्यर्थः । नमस्कारादिकरणे तु हेतुर्वर्तते इत्याशयेनाह—हे महात्मन् परमात्मन् । महात्मत्वं लक्ष्यति—गरीयसे गुरुतराय यतो ब्रह्मणो हिरण्यगर्भस्याप्यादिकर्त्रे आदिकारणायाभिन्ननिमित्तोपादानत्वद्योतनायादिपदं भगवतो गुरुतरत्वं ब्रह्मण आदिकर्तृत्वं च प्रतिपादयन्नाह—हे अनन्त यस्य देशकालवस्तुकृतः परिच्छेदो नास्ति तस्य तवैव गुरुतरत्वमुपपद्यत इति भावः । हे देवेश देवानां ब्रह्मादीनामीश जगन्निवास जगदधिष्ठान तथाच सर्वनियन्ता सर्वाधिष्ठानं त्वमेवादिकर्तेत्याशयः । एवं तत्पदवाच्यं निरूप्य लक्ष्यं निरूपयति—त्वमक्षरमिति । यद्वेदान्तप्रतिपाद्यं किं तत् सदसत्सद्बुद्धिग्यमानं विद्यत इति विधिमुखेन प्रतीयमानं व्यक्तं कार्यमिति यावत् असच्च यन्नास्तीति बुद्धिः निषेधमुखेन प्रतीयमाना अव्यक्तविषया कारणबुद्धिरिति यावत् सदसदुपाधिकत्वादक्षरत्वमपि सदसत् तत्त्वतस्तु सदसद्भ्यां परं तत्त्वमेवातस्ते कस्मान्न नमेरन्नित्यर्थः ॥ ३७ ॥

**प० टी०**—तत्र हेतुमाह—**कस्मादिति** । भो महात्मन् महाशब्दव्यपदेश्य भोऽनन्त देवेश जगन्निवास ते सिद्धाः कपिलादयस्ते तुभ्यं वा कस्माद्धेतोर्न नमेरन् नमस्कारं न कुर्युः । किंभूताय तुभ्यम् । ब्रह्मणो जगत्स्रष्टुरपि गरीयसे श्रेष्ठतमाय आदिकर्त्रे च । किं पुनरन्यस्य । यद्यस्मात् कारणात् त्वमक्षरं ब्रह्म सद् व्यक्तम् असदव्यक्तम् ताभ्यां परं मूलकारणम् ॥ ३७ ॥

**रा० टी०**—कथं युक्तमित्यत आह—**कस्मादिति** । हे महात्मन्महांश्चासावात्मा च तस्य संबुद्धिः महात्मन् । महच्छब्दोऽत्र पूर्णवाची । आत्मशब्दोऽपि यच्चाप्नोतीत्यादिस्मृतेराद्यादानविषयानुभवानित्यसत्तारूपार्थचतुष्टयवाची, पूर्णाद्यादिमन्नित्यर्थः । गरीयसे गुरुतमाय ब्रह्मणश्चतुर्मुखस्याप्यादिकर्त्रे ते तुभ्यं कस्मान्न नमेरन् नमेयुरेव । अनन्त अन्तशून्य । देवानामीश जगदाश्रय यत्सदसद्भावाभावात्मकं जगत्तत्परं तदुत्तममक्षरं त्वमेवेत्यर्थः ॥ ३७ ॥

**त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ॥**
**वेत्ताऽसि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप ॥ ३८ ॥**

**त० टी०–किंच–त्वमिति** । त्वमादिदेवो देवानामादिः, यतः पुराणोऽनादिः पुरुषः अतस्त्वमस्य विश्वस्य परं निधानं निधीयतेऽस्मिन्निति निधानं विश्वस्यात्मतया परमाधारभूतस्त्वमेवेत्यर्थः। विश्ववेत्ता प्रत्यक्षतया ज्ञाता त्वमसि । वेद्यं च वस्तुजातं त्वमेव । परं च धाम स्थानं वैष्णवं पदं वैकुण्ठाख्यं त्वमेव । अत एव हे अनन्तरूप त्वया विश्वं ततं व्याप्तम् । एतैरपि विशेषणैस्त्वमेव नमस्कार्य इति भावः ॥ ३८ ॥

**म० टी०–**भक्त्युद्रेकात्पुनरपि स्तौति–**त्वमिति** । त्वमादिदेवो जगतः सर्गहेतुत्वात् पुरुषः पूरयिता पुराणोऽनादिः त्वमस्य विश्वस्य परं निधानं लयस्थानत्वान्निधीयते सर्वमस्मिन्निति एवं सृष्टिप्रलयस्थानत्वेनोपादानत्वमुक्त्वा सर्वज्ञत्वेन प्रधानं व्यावर्तयन्निमित्ततामाह वेत्ता वेदिता सर्वस्यापि द्वैतापत्तिं वारयति यच्च वेद्यं तदपि त्वमेवासि वेदनरूपे वेदितरि परमार्थसंबन्धाभावेन सर्वस्य वेद्यस्य कल्पितत्वात् अत एव परं च धाम यत्सच्चिदानन्दघनमविद्यातत्कार्यनिर्मुक्तं विष्णोः परमं पदं तदपि त्वमेवासि त्वया सद्रूपेण स्फुरणरूपेण च कारणेन ततं व्याप्तमिदं स्वतः सत्तास्फूर्तिशून्यं विश्वं कार्यं मायिकसंबन्धेनैव स्थितिकाले हे अनन्तरूप अपरिच्छिन्नस्वरूप ॥ ३८ ॥

**शं० टी०–**"ब्रह्मैवेदं सर्वं" इत्यादिश्रुत्यर्थावष्टम्भेन सविशेषं निर्विशेषं च सर्वं त्वमेवेति भगवतः सार्वात्म्यं प्रतिपादयति–**त्वमिति** । पूर्णत्वात्पुरुषः स्वयं निर्विकारत्वात्पुराणः सनातनः आदिदेवः जगत्कारणत्वादादिः स्वयमेव दीव्यत इति देवः आदिश्चासौ देवश्चादिदेवः सृष्ट्यादिकर्ता मायोपाधिकः परमेश्वरस्त्वमेवास्य परिदृश्यमानस्य विश्वस्य निधानं मृदि घटादय इव जले तरङ्गादय इव यत्र महदादयो विकाराः सर्वे निधीयन्ते तन्निधानं जगद्बीजं माया च त्वमेवासि बुद्धिं तद्विकारानहंकारममकारादीन् साक्षादव्यवधानेन सर्वदा यो वेत्ति जानाति स वेत्ता सर्वसाक्षी प्रत्यगात्मापि त्वमेवासि, तद्वेद्यं बुद्धितद्विकारादिसर्वदृश्यजातं त्वमेवासि । किंच परं सर्वदृश्यविलक्षणतया सर्वमहत्तमं मायातत्कार्यलेशसंबन्धशून्यं जीवेशजगदाभासकल्पनाधिष्ठानं नित्यशुद्धबुद्धमुक्तस्वभावं निर्विशेषं निराभासं नित्यानन्दैकरसमद्वितीयं यत्तुरीयं परं धाम परं ज्योतिः परं ब्रह्म तच्चापि त्वमेवासि अनन्तमन्तशून्यं रूपं चिदात्मकं स्वरूपं यस्य स हे अनन्तरूप यतस्त्वया ब्रह्मणा सद्रूपेण भ्रमकल्पितमिदं सर्वं ततं व्याप्तं 'येन यद्व्याप्तं तत्तन्मात्रमेव' इतिन्यायेन त्वया व्याप्तमिदं सर्वं त्वन्मात्रमेवातः सर्वं त्वमेव तेनैवानन्तरूपोऽसि त्वमद्वितीय इत्यर्थः ॥ ३८ ॥

**श्री० टी०–किंच–त्वमिति** । त्वमादिदेवः देवानामादिः यतः पुराणः अनादिपुरुषस्त्वम् अत एव त्वमस्य विश्वस्य परं निधानं लयस्थानं तथा विश्वस्य वेत्ता वेदिता ज्ञाता च त्वम् । यच्च वेद्यं वस्तुजातं परं च धाम वैष्णवं पदं तदपि त्वमेवासि अत एव हे अनन्तरूप त्वयैव विश्वमिदं ततं व्याप्तं एतैश्च सप्तभिर्हेतुभिस्त्वमेव नमस्कार्य इति भावः ॥ ३८ ॥

**स० टी०–**भक्त्युद्रेकात्पुनः स्तौति भगवन्तमुदारधीः ॥ जगतः सर्गहेतुत्वादादिदेवः सनातनः ॥१॥ त्वमनादिरशेषस्य लयस्थानतयास्य च ॥ निधानं जगतः सर्वोपादानत्वेन कारणम् ॥२॥ वेदिता सर्वविश्वस्य वेदनार्हं त्वमेव च ॥ समस्तस्यापि वेद्यस्य ज्ञातरि ज्ञानरूपिणि ॥ ३ ॥ कल्पितत्वान्न संबन्धो वास्तवो दृश्यसाक्षिणोः ॥ अविद्यादिविनिर्मुक्तं सच्चिदानन्दमद्वयम् ॥ ४ ॥ यत्परं धाम विष्णवाख्यं तत्त्वमेव परं पदम् ॥ सत्तास्फूर्तिस्वरूपेण त्वया व्याप्तमिदं जगत् ॥ ५ ॥ स्वतः सत्तादिशून्यं तद्विश्वं कार्यं हि मायिकम् ॥ त्वयि मायिकसंबन्धात्स्थितिकालेऽस्ति सर्वग ॥ ६ ॥ ३८ ॥

**भा० टी०–**पुनरपि स्तौति–**त्वमादीति** । त्वमादिदेवः ब्रह्मादिजनकत्वात् भगवतस्ताटस्थ्यं वारयति, पुरि शयनात्पुरुष इति पुरिविनाशान्नाशाशङ्कां वारयति, पुराणः चिरंतनः त्वमस्य विश्वस्य परं निधानं

महाप्रलयादौ सर्वं जगन्निधीयतेऽस्मिन्निति परं प्रकृष्टं निधानं लयस्थानमतो न कर्तृमात्रमपि तु प्रकृतिरूपीति भावः । किंच—वेत्तासि ज्ञातासि सर्वस्यैव वेद्यजातस्य भेदं बारयति वेद्यं च यद्य ज्ञातुं योग्यं वस्तु तच्चासि प्राप्यमपि परं त्वमेवेत्याह—परं च धाम परमं वैष्णवपदं मोक्षाख्यं स च मोक्षाख्यस्त्वं न कचिन्मेरुपृष्ठादौ तिष्ठसि किंतु त्वया परमधाम्ना ततं व्याप्तं समस्तं विश्वं यतस्तव रूपाणां कैवल्यादीनामन्तः परिच्छेदो न विद्यते इति हेऽनन्तरूप ॥ ३८ ॥

पू० टी०—तदेवाह—त्वमिति । आदिभूतो देवः स्थूलसूक्ष्मप्रपञ्चकारणीभूतः सूत्रात्मा त्वमेव स एव पुराणः पुरुषो हिरण्यगर्भस्त्वमेव । ततो विश्वस्य चराचरस्य निधानं लयस्थानं विराडाख्यं त्वमेव । ततो जीवरूपेण वेत्ता त्वमेवासि भो अनन्तरूप समष्टिरूप परं धाम निवासस्थानं ब्रह्माण्डं त्वया ततं विस्तारितं तदपि त्वमेव एवमेक एव त्वं निरूपितप्रकारैर्वर्तस इत्यर्थः । श्रुतिरपि—"योनः पिता जनिता यो विधाता धामानि वेद भुवनानि विश्वा । यो देवानां नामधा एक एव तं संप्रश्नु भुवना यन्त्यन्ये" इति । भाष्यम्—"यो नोऽस्माकं पिता बीजरूपः सूत्रसंज्ञो जनिता निर्मापकः सूक्ष्मभूतरूपो हिरण्यगर्भस्ततः स्थूलभूतैर्विदधातीति विधाता विराट् ततो विश्वा विश्वानि सर्वाणि धामानि शरीराणि भुवनानि भूर्भुवःस्वरादीनि जीवरूपेण यो वेदैवं यो देवानामुक्तस्वरूपाणां नामधा सूत्रादिनामप्रकारैरनेकोऽप्येक एव । तमेवंविधं भुवना भुवनानि चराचरादीनि प्रश्नयन्ति कीदृशः परमेश्वर इति प्रश्नं कुर्वन्तीत्यर्थः । अथोक्तार्थवैलोम्येन श्रुतिरेव प्रश्नोत्तरं वदति "एकपाद्भूयो द्विपदो विचक्रमे द्विपात्त्रिपादमभ्येति पश्चात् । चतुष्पादेति द्विपदामभिस्वरे संपश्यन् पङ्क्तीरुपतिष्ठमानः" इति । भाष्यम्—जीवो ब्रह्मैकपादमित्युक्तत्वादेकपाज्जीवो भूयोऽभ्यासादिना द्विपदो विराड्रूपं प्रचक्रमे प्राप्नोति । पश्चादनन्तरं द्विपाद्वैराजं ब्रह्म मे पादं हिरण्यगर्भाख्यम् । "त्रिपादूर्ध्वउदैद्" इति श्रुतेः । तदपि चतुष्पात्पूर्णं ब्रह्मेति । एवं द्विपदां मनुष्याणामभिस्वरे हृदयाकाशे एकपादादिपङ्क्तीः संपश्यन् साक्षित्वेन पश्यन्नुपतिष्ठमानोऽस्ति स एव परमेश्वर इत्यर्थः ॥ ३८ ॥

रा० टी०—त्वमिति । निधानमाश्रयः वेत्तासि वेदितासि परिज्ञातासि । वेद्यं च त्वमेव । परं धाम तेजोजातं च त्वमेव । अनन्तरूप कालतोऽन्तहीनं रूपं यस्य तस्य संबुद्धिः । नच नान्तं न मध्यं न पुनस्तवादिं पश्यामीत्यनेन त्वया ततमित्यस्य पौनरुक्त्यं शङ्क्यं, नान्तं पश्यामीत्युक्ते विद्यमानमप्यन्तं स्वयं न पश्यामीत्यपि प्रतीत्या परिमाणानन्त्यं नेश्वरस्य सिध्यतीत्यतो न केवलमहं न पश्यामि त्वया ततं च विश्वमित्युक्तत्वेन सप्रयोजनत्वान्न पुनरुक्तिरिति ज्ञेयमिति । द्यावापृथिव्योरिदमन्तरं हि व्याप्तं त्वयैकेन दिशश्च सर्वाः इति । त्वया ततं विश्वमनन्तरूपमित्याद्यभ्यासो विष्णोर्देशकालगुणैः आनन्त्ये स्वस्य महातात्पर्यज्ञापनार्थ इति न पौनरुक्त्यम् ॥ ३८ ॥

**वायुर्यमोऽग्निर्वरुणः शशाङ्कः प्रजापतिस्त्वं प्रपितामहश्च ॥**
**नमो नमस्तेऽस्तु सहस्रकृत्वः पुनश्च भूयोऽपि नमो नमस्ते ॥ ३९ ॥**

त० टी०—किंच—वायुरिति । वाय्वादिरूपस्त्वं, सर्वप्रजायाः सन्ततेः पतिः सर्वस्य जनकः पितामहस्त्वं तस्यापि जनकत्वात् प्रपितामहश्च त्वमेव । एवं सर्वात्मभूतोऽसि, तस्मात्ते तुभ्यं सहस्रकृत्वः सहस्रवारान्नमो नमोऽस्तु । पुनश्च भूयोऽपि नमो नमः ॥ ३९ ॥

म० टी०—वायुर्यमोग्निर्वरुणः शशाङ्कः सूर्यादीनामप्युपलक्षणमेतत्, प्रजापतिर्विराट् हिरण्यगर्भश्च प्रपितामहश्च पितामहस्य हिरण्यगर्भस्यापि पिता च त्वं यस्मादेवं सर्वदेवात्मकत्वात्त्वमेव सर्वैर्नमस्कार्योऽसि तस्मान्ममाऽपि वराकस्य नमो नमस्ते तुभ्यमस्तु सहस्रकृत्वः पुनश्च भूयोऽपि पुनरपि नमो नमस्ते । भक्तिश्रद्धातिशयेन नमस्कारेष्वलंप्रत्ययाभावोऽनया नमस्कारावृत्त्या सूच्यते ॥ ३९ ॥

**शं० टी०**—यस्मादेवं तस्मात्सर्वं त्वमेवेति त्वं यज्ञस्त्वं विष्णुस्त्वं वषट्कार इत्यादिश्रुतिप्रसिद्धमर्थं प्रतिपादयति—**वायुरिति** । वायुः यमः अग्निः वरुणः शशाङ्कश्चन्द्रः प्रजापतिः सर्वलोकपितामहश्चतुर्मुखश्च प्रपितामहस्तत्पिता विष्णुरपि त्वमेवेत्यर्थः । एवं सर्वं त्वमेवेति भगवतः सार्वात्म्यं सार्धेन प्रतिपाद्याधुना श्रद्धाभक्तिवेगेन सर्वात्मानं परमेश्वरं नमस्करोति सार्धेन—**नमो नमस्ते**ऽस्त्वित्यादिना । स्पष्टोऽयमर्थः ॥ ३९ ॥

**श्री० टी०**—इतश्च त्वमेव सर्वैर्नमस्कार्यः सर्वदेवात्मकत्वादिति स्तुवन्स्वयमपि नमस्करोति—**वायुरिति** । वाय्वादिरूपस्त्वमिति सर्वदेवतात्मकत्वोपलक्षणार्थमुक्तम् । प्रजापतिः पितामहः तस्यापि जनकत्वात् प्रपितामहस्त्वमतस्ते तुभ्यं सहस्रकृत्वः सहस्रशो नमोऽस्तु भूयोऽपि पुनरपि सहस्रकृत्वो नमो नम इति भक्तिश्रद्धाभरातिरेकेण नमस्कारेषु तृप्तिमनधिगच्छन्बहुशः प्रणमति ॥ ३९ ॥

**स० टी०**—वायुः सर्वजगत्प्राणो यमः प्राणिनियामकः ॥ अग्निः समस्तदेवानां मुखं प्राण्यन्नपाचकः ॥ १ ॥ प्राणाप्यायनकर्ताऽसौ वरुणो रसपालकः ॥ शशाङ्क ओषधिस्वामी तथा सूर्यादयोऽधिपाः ॥ २ ॥ प्रजापतिर्विराट्संम्राट्सृष्टिकर्ता च विश्वसृक् ॥ पितामहस्य स्रष्टुश्च पिता त्वं जगदीश्वरः ॥ ३ ॥ सर्वदेवात्मकत्वेन नमस्कार्योऽसि सर्वकैः ॥ यतस्तस्माद्वराकस्य ममाप्यस्तु नमो नमः ॥ ४ ॥ तुभ्यं सर्वात्मने भूयो भूयोऽप्यस्तु सहस्रशः ॥ सहस्रकृत्वो भूयोऽपि तुभ्यमस्तु नमो नमः ॥ ५ ॥ भक्त्याधिक्यान्नमस्कारेष्वलंबुद्धेरभावतः ॥ अत्रानया नमस्कारावृत्त्या सूच्यत इत्यपि ॥ ६ ॥ ३९ ॥

**भा० टी०**—किंच वाय्वादिस्त्वं शशाङ्कश्चन्द्रः प्रजापतिः कश्यपादिर्हिरण्यगर्भान्तः पितामहस्य हिरण्यगर्भस्यापि पिता तथाच "इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः ससुपर्णो गरुत्मान् । एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः" इत्यादिमन्त्रब्राह्मणवादाः यत एतादृशस्त्वं जगदुत्पत्त्यादिकर्ता सर्वेश्वरः सर्वज्ञः सर्वगम्यः सर्वात्माऽपरिच्छिन्नः सर्वनमस्कार्योऽतोऽपरिमितनमस्कारेणापि मम तृप्तिर्नास्तीत्याशयेनाह—नमो नमस्ते इत्यादिना ॥ ३९ ॥

**प० टी०**—अथानन्तरूपत्वमेव प्रकटयति—**वायुरिति** । वाय्वादिभिः सप्तभिः प्रकारैस्त्वमेवासि तस्मै ते तुभ्यं नमो नमोऽस्तु, आदरे वीप्सा । अथ किं पुनः सप्तरूपात्मने सहस्रकृत्वः सहस्रप्रकारात्मने भूयोऽपि नमो नमः ॥ ३९ ॥

**रा० टी०**—गुणान्तरयुक्तत्वेन पुनः स्तौति—**वायुरिति** । वायुर्बलज्ञानरूपः, यमः दोषोपरतिमान् । अग्निः स्वतो गतिहीनजगन्नेता, वृणुते भक्तानिति वरुणः, अतिसुखाङ्कितत्वाच्छशाङ्कः । प्रजापालनात् प्रजापतिः ॥ ३९ ॥

**नमः पुरस्तादथ पृष्ठतस्ते नमोऽस्तु ते सर्वत एव सर्व ॥**
**अनन्तवीर्यामितविक्रमस्त्वं सर्वं समाप्नोषि ततोऽसि सर्वः ॥४०॥**

**त० टी०**—अत्याश्चर्यरूपं भगवन्तं दृष्ट्वाऽत्यद्भुतभक्तिप्रवाहवेगेन सर्वतो नमस्करोति—**नम इति** । ते तुभ्यं पुरस्तादग्रभागेऽथ पृष्ठतोऽपि नमोऽस्तु । किं बहुना सर्वत एव ते नमोऽस्तु । सर्वतः कृतो नमस्कारो मे कथं स्यादित्यत आह—हे **सर्वेति** । कथमहं सर्व इति चेत्तत्राह—हे अनन्तवीर्यामितविक्रमोऽपरिमितपराक्रमस्त्वं यतः सर्वं जगत्सम्यगात्मतयाऽऽप्नोषि, व्याप्नोषि ततः सर्वोऽसि । एतेन पूर्वोक्तवाय्वादिसर्वचेतनाचेतनजगत्सामानाधिकरण्यनिर्देशस्तदात्मतया व्याप्त्यैव सूपपन्नः नतु मायावाद्यभिमतविवर्ताधिष्ठानत्वेनेति सिद्धम् ॥ ४० ॥

**म० टी०**—नम इति । तुभ्यं पुरस्तात् अग्रभागे नमोऽस्तु तुभ्यं पुरो नमस्तात् इति वा । अथशब्दः समु-

ग्रये । पृष्ठतोऽपि तुभ्यं नमस्तात् नमोऽस्तु ते तुभ्यं सर्वत एव सर्वासु दिक्षु स्थिताय हे सर्व वीर्यं शारीरबलं विक्रमः शिक्षा शस्त्रप्रयोगकौशलम् 'एकं वीर्याधिकं मन्य उतैकं शिक्षयाधिकम्' इत्युक्तेर्भीमदुर्योधनयोरन्येषु च एकैकं व्यवस्थितं त्वं तु अनन्तवीर्यश्चामितविक्रमश्चेति समस्तमेकं पदम् , अनन्तवीर्येति संबोधनं वा । सर्वं समस्तं जगत् समाप्नोषि सम्यगेकेन सद्रूपेणाप्नोषि सर्वात्मना व्याप्नोषि ततस्तस्मात्सर्वोऽसि त्वदतिरिक्तं किमपि नास्तीत्यर्थः ॥ ४० ॥

शं० टी०—भक्तिवेगोत्थसंतोषातिशयेन स्तुवन् पुनः सर्वतो नमस्करोति—**नम इति** । हे सर्व सर्वात्मन् सर्वात्मने ते पुरस्तात्पृष्ठतोऽपि नमः सर्वतः सर्वत्रापि ते नमोऽस्तु हे सर्वेति विशेषणात्सर्वात्मनः प्रागादिदिग्विभागो यद्यपि न संभवति दिग्विभागहेतोः सूर्यस्यापि सर्वात्मन्यन्तर्भूतत्वात्तथापि नमः पुरस्तादिति स्वदृष्टिगत्योक्तं नतु वस्तुगत्या नतु हे सर्वेति नाम्नोक्तं नत्वर्थत इति मन्तव्यं तथात्वे अनन्तजगन्निवासेति त्वमादिदेव इत्यादिवाक्यार्थव्याघातप्रसंगात्तत एव सर्वशब्दार्थं स्वयमेव निर्वर्त्यानन्तेत्यादिना तत्सिद्धौ हेतुमाह—**अनन्तवीर्यामित**विक्रम इति । सर्वतो विशिष्य ईरयितुं प्रसारयितुं योग्यं वीर्यं तेजः विक्रमशब्देन व्यापनशीलत्वं लक्ष्यते अनन्तं वीर्यं यस्य सः अमितो विक्रमो यस्य सः उभयोः कर्मधारये अनन्तवीर्यामितविक्रमः हेतुगर्भितमिदं विशेषणं, अनन्तवीर्यामितविक्रमत्वात्त्वं सर्वं जगद्यतः समाप्नोषि बहिरन्तः सर्वतो वह्निरयःपिण्डमिव वीर्येण तेजसा स्फूर्त्या विक्रमेण सत्तया च सम्यग्व्याप्तवानसि तत एव सर्वोऽसि सर्वात्मकोऽसीत्यर्थः । एतेन नामरूपात्मकं जगत्सर्वं त्वमेव त्वत्तोऽन्यदणुमात्रमपि निरात्मकत्वान्निरूपयितुं न संभवतीति सूचितम ॥ ४० ॥

श्री० टी०—किंच—**नम इति** । हे सर्व सर्वात्मन् सर्वास्वपि दिक्षु तुभ्यं नमोऽस्तु सर्वात्मकत्वमुपपादयन्नाह—अनन्तं वीर्यं सामर्थ्यं यस्य तथापि अमितो विक्रमः पराक्रमो यस्य सः, एवं भूतस्त्वं सर्वं विश्वं सम्यगन्तर्बहिश्च समाप्नोषि व्याप्नोषि, सुवर्णमिव कटककुण्डलादि स्वकार्यं व्याप्य वर्तसे ततः सर्वस्वरूपोऽसि ॥ ४० ॥

स० टी०—अग्रभागे नमस्तुभ्यं पृष्ठतोऽपि नमोऽस्तु ते ॥ दिक्षु स्थिताय सर्वासु सर्वरूप नमोऽस्तु ते ॥ १ ॥ अपरिच्छिन्नवीर्यस्त्वं तथाऽमितपराक्रमः ॥ जगत्सर्वं त्वमेकेन सद्रूपेणाखिलात्मना ॥ २ ॥ सम्यग्व्याप्नोष्यतः सर्वस्त्वं त्वत्तो न पृथङ्मनाक् ॥ ३ ॥ ४० ॥

भा० टी०—पुरस्तात् पूर्वस्यां दिशि तत्तद्रूपेण स्थिताय ते तुभ्यं अथ पृष्ठतस्ते तुभ्यं नमोऽस्तु सर्वत एव सर्वासु दिक्षु स्थिताय यतो हे सर्व । यद्वा पुरस्तात्कर्मणामादौ पृष्ठतस्तेषां समाप्तौ सर्वतः मध्येऽपि ते नमोऽस्त्विति, अस्मिन्पक्षे कर्मणामित्यध्याहारदोषः सर्वत इत्यादिसंकोचे मानाभावश्च बोध्यः । हे सर्वेत्युक्तं निरूपयति—अनन्तं वीर्यं सामर्थ्यं यस्य अमितः पराक्रमः शस्त्रादिविषये यस्य अनन्तवीर्यश्चासौ अमितविक्रमश्च सः त्वं हेऽनन्तवीर्येति व्यस्तपक्षस्त्वाचार्यैः गौरवात् विशेषाभावाच्च न प्रदर्शितः सर्वमखिलं विश्वं सम्यगाप्नोषि व्याप्नोति यतस्ततोऽसि सर्वः त्वया विनाभूतं न किंचिदस्तीत्यर्थः॥ ४० ॥

प० टी०—अथापरिच्छिन्नायापि तुभ्यं नमस्कार इति रथन्तरसामाभिप्रायेण नमस्करोति—**नम इति** । भो सर्वात्मक पुरस्तादग्रतः पृष्ठतश्च ते तुभ्यं नमः किं पुनः दिग्द्वयसंस्थिताय सर्वतः सर्वदिक्षु स्थिताय नमोऽस्तु । अथ न केवलं दृश्यमात्रत्वेन स्थितोऽसीत्याह भो स्वामिन्ननन्तवीर्यः सन्नमितविक्रमबलौजसा समेतः । श्रुतिश्च—" विष्णोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि " इति । भाष्यम्—नुकमिति निपातोऽवधारणार्थः तस्य विष्णोर्वीर्याणि प्रवोचं ब्रवीमि यः पृथिव्यन्तरिक्षसंबन्धीनि रजांसि लोकान् विममे निर्मितवान एवं त्वं सर्वं समाप्नोषि अन्तर्बहिर्व्याप्नोषि ततस्तेन कारणेन सर्वोऽसि

सर्वात्मकोऽसि । " तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः " इति श्रुतेः । तथा रथन्तरं सामापि " अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः " इति संहितापाठः । सामगानं च " अभित्वा शूरनो नुमो वा आदुग्धा इव धेनवः । ईशानमस्यजगतः सुवाद्दशाम् आईशानमयिद्रातास्थुषावहाउअस् " । भाष्यम्—भो इन्द्र परमात्मन् शूर शत्रुनिबर्हण वयं त्वामभि अभितः समन्ततो नुमः नमस्कुर्मः । कथं भूतं त्वाम् अस्य जगतो जंगमस्य तस्थुषः स्थावरस्यापीशानं नियामकम् । क इव वयम् , अदुग्धा अकृतदोहना धेनव इव क्षीरेण पूर्णाः सत्यः वत्सानि विस्मृत्य त्वां यान्ति तथा वयमपि सर्वं विषयजातं विस्मृत्य त्वामेव सर्वगतं नमस्कुर्मः । स्वर्दृशं जगत्प्रकाशकमीशानमपि पादस्यावृत्तिरादरार्था । तथापस्तंबोऽपि " अग्निना देवेन पृतना जयामि गायत्रेण च्छन्दसा त्रिवृता स्तोमेन रथन्तरेण साम्ना वषट्कारेण वज्रेण पूर्वजान् भ्रातृव्यानधरान्पातयामि " इति । भाष्यम्—अग्निना विश्वरूपेण देवेन दीप्यमानेन कृत्वा पृतनाः शत्रुसेना जयामि गायत्रेण चतुर्विंशत्यक्षरेण त्रिवृता स्तोमेन ब्राह्मणं ' तिसृभ्यो हिंकरोति स प्रथमया ' इत्यादि । अयमर्थः । सूक्तत्रयगतानामृचां गानं त्रिभिः पर्यायैः कृतं तत्र प्रथमे पर्याये त्रिषु सूक्तेष्वाद्यास्तिस्र ऋचः, द्वितीये मध्यमतिसृभ्य इति तृतीयार्थे पञ्चमी हिंकरोति गायति शेषं स्पष्टम् ॥ ४० ॥

रा० टी०—सर्वतः दक्षिणोत्तरादिसर्वपार्श्वेभ्यः नमोऽस्तु ते हे सर्व परिपूर्ण । ननु "सर्वं खल्विदं ब्रह्म" इति श्रुतौ इदं सर्वं च जगद्ब्रह्मेति सर्वस्य जगतो ब्रह्मात्मकत्वोक्तेस्त्वमस्य विश्वस्य परं निधानम् । त्वया ततमिदं विश्वमित्याद्ययुक्तमित्यतः श्रुतिगतसर्वशब्दार्थमाह—**सर्वमिति** । सर्वं विश्वं समाप्नोषि व्याप्नोषि यतस्ततःसर्वोऽसि " सर्वं खल्विदं ब्रह्म । पुरुष एवेदं सर्वं " इत्यादिश्रुतिस्थसर्वशब्दवाच्योऽसि । इदं ब्रह्म सर्वं खलु सर्वजगद्व्यापि खल्वित्यादिरूपेण श्रुत्यर्थो ज्ञेयः न तु जगदात्मकत्वेनेत्यभिप्रायः ॥ ४० ॥

**सखेति मत्वा प्रसभं यदुक्तं हे कृष्ण हे यादव हे सखेति ॥**
**अजानता महिमानं तवेदं मया प्रमादात्प्रणयेन वाऽपि ॥ ४१ ॥**
**यच्चावहासार्थमसत्कृतोऽसि विहारशय्यासनभोजनेषु ॥**
**एकोऽथवाप्यच्युत तत्समक्षं तत् क्षामये त्वामहमप्रमेयम् ॥ ४२ ॥**

त० टी०—अहो पुनः पुनरग्रतः पृष्ठतश्च भूयो भूयः किमिति नमस्करोषीत्यपेक्षायां त्वन्माहात्म्यापरिज्ञानाद्यत्ते बहुशो मयाऽपराधाः कृतास्तन्निवृत्तये इदानीं परमकारुणिकं त्वां क्षमापयामीत्याह—**सखेतीति द्वाभ्याम्** । इदं सर्वगरीयस्त्वब्रह्मादिकर्तृत्वसर्वनमस्कार्यत्वादिकं तव महिमानमजानता मया प्रमादान्मोहात्प्रणयेन स्नेहेन वा सखेति त्वं मम समानवया इति मत्वा प्रसभं विनयोपेतं हठेन वा हे कृष्ण हे यादव हे सखेति यदुक्तम् , । यच्चावहासार्थं परिहासार्थं विहारशय्यासनभोजनेषु सहकृतेषु मयाऽसत्कृतोऽसि, तिरस्कृतोऽसि एकः सखीन्विहाय रहसि स्थितः, अथवा तत्समक्षं तेषां परिहसतां सखीनां समक्षं साक्षात् हे अच्युत सर्वदा नित्यैकरस तत्सर्वमपराधजातं त्वामप्रमेयमचिन्त्यप्रभावं क्षामये क्षमापये ॥ ४१ ॥ ४२ ॥

म० टी०—यतोऽहं त्वन्माहात्म्यापरिज्ञानादपराधानजस्रमकार्षं ततः परमकारुणिकं त्वां प्रणम्यापराधक्षमां कारयामीत्याह द्वाभ्याम्—**सखेति** । त्वं मम सखा समानवया इति मत्वा प्रसभं स्वोत्कर्षख्यापनरूपेणाभिभवेन यदुक्तं मया तवेदं विश्वरूपं तथा महिमानमैश्वर्यातिशयमजानता पुंल्लिङ्गपाठे इमं विश्वरूपा-

१ अपहासेति रा. पाठः ।

त्मकं महिमानमजानता प्रमादाच्चित्तविक्षेपात्प्रणयेन स्नेहेन वापि। किमुक्तमित्याह-हे कृष्ण हे यादव हे सखेति ॥ ४१ ॥ यच्चावहासार्थं परिहासार्थं विहारशय्यासनभोजनेषु विहारः क्रीडा व्यायामो वा, शय्या तूलिकाद्यास्तरणविशेषः, आसनं सिंहासनादि, भोजनं बहूनां पङ्क्त्यावशनं तेषु विषयभूतेषु असत्कृतोऽसि मया परिभूतोऽसि एकः सखीन्विहाय रहसि स्थितो वा त्वम् अथवा तत्समक्षं तेषां सखीनां परिहसतां समक्षं वा हे अच्युत सर्वदा निर्विकार तत्सर्वं वचनरूपमसत्करणरूपं चापराधजातं क्षामये क्षामयामि त्वामप्रमेयमचिन्त्यप्रभावमचिन्त्यप्रभावेन निर्विकारेण च परमकारुणिकेन भगवता त्वन्माहात्म्यानभिज्ञस्य ममापराधाः क्षन्तव्या इत्यर्थः ॥ ४२ ॥

**शं० टी०**—एवं स्तुत्वा नत्वा प्राक्तनं स्वापराधं क्षमापयति—**सखेति द्वाभ्याम्** । तवाऽपरिमिततेजोबलवीर्यसमग्रैश्वर्यसंपन्नस्य सर्वोत्तमस्य सृष्ट्यादिकर्तुः परमेश्वरस्य इदं परिदृश्यमानं महिमानं विश्वात्मकं स्वरूपमजानताऽज्ञातवता मया ममायं सखा स्निग्ध इति मातुलेय इति च मत्वा हे कृष्ण हे यादव हे सखेति प्रमादाद्वा प्रणयेन स्नेहेन वापि प्रसभं हठादुच्चावचं वचनं यद्यदुक्तं तत्सर्वं क्षामये क्षम्यतामिति प्रार्थय इत्युत्तरेण संबन्धः । अत्र हे सखेति संधिरार्षः । महिमानं तवेदमिति प्रचुरः पाठः । तवेममिति पाठान्तरमप्यस्ति तवेदं महिमानमितीदंपदस्य महिमानमित्यस्य च कन्येयं कुलभूषणमितिवल्लिङ्गव्यत्ययेन सामानाधिकरण्यम् । इदंशब्दस्य पुल्लिङ्गत्वे न विचारः ॥ किंच—**यच्चेति** । न च्यवते सदैकरूपेणाविक्रियात्मना कूटवत्तिष्ठतीत्यच्युतः हे अच्युत परमात्मन् विहारशय्यासनभोजनेषु विहारः क्रीडा, शय्या शयनं, सिंहासनपरिस्तरणादिषूपवेशनमासनं, भोजनमन्नोदकादिस्वीकारस्तेषु त्वमेकः रहस्येक एव स्थितः सन् अथवा बहूनां समक्षं मया मातुलेय इति बुद्ध्याऽवहासार्थं परिहासाय यद्यच्चकाराद्यावदसत्कृतोऽवमानितोऽसि तत्तदपराधजातं सर्वं त्वामप्रमेयमचिन्त्यमहिमानं परमेश्वरं क्षामये क्षमस्वेति प्रार्थय इत्यर्थः ॥ ४१ ॥ ४२ ॥

**श्री० टी०**—इदानीं भगवन्तं क्षमापयति—**सखेति द्वाभ्याम्** । त्वं प्राकृतः सखेति मत्वा प्रसभं हठेन तिरस्कारेण यदुक्तं तत्क्षामये त्वामित्युत्तरेणान्वयः । किं तत् हे कृष्ण हे यादव हे सखेति च संधिरार्षः । प्रसभोक्तौ हेतुः—तव महिमानमिदं च विश्वरूपमजानता मया प्रमादात्प्रणयेन स्नेहेनापि वा यदुक्तमिति ॥ ४१ ॥ किंच—**यच्चेति** । हे अच्युत यच्च परिहासार्थं क्रीडादिषु तिरस्कृतोऽसि एकः केवलः सखीन्विना रहसि स्थित इत्यर्थः । अथवा तत्समक्षं तेषां परिहसतां सखीनां समक्षं पुरतोऽपि तत्सर्वमपराधजातं त्वामप्रमेयमचिन्त्यप्रभावं क्षामये क्षमां कारयामि ॥ ४२ ॥

**स० टी०**—त्वत्प्रभावापरिज्ञानाद्यतोऽहं नित्यशो हरेः ॥ अपराधमकार्षं यत्ततस्त्वां करुणाकरम् ॥१॥ कारयामि प्रणम्याहमपराधक्षमामिति ॥ मया तुल्यवया हीति मत्वा स्वोत्कर्षताभ्रमात् ॥ २ ॥ हे कृष्ण यादव सखे चेति मूढेन साम्यतः ॥ अभिभूय यदुक्तं ते महिमानमजानता ॥ ३ ॥ प्रमादाच्चित्तविक्षेपात्प्रोक्तं स्नेहेन वा मया ॥ ४ ॥ ४१ ॥ यच्चैव परिहासार्थं क्रीडाशय्यासनादिषु ॥ मया त्वं परिभूतोऽसि रहसि स्थित एव वा ॥ १ ॥ यद्वा तेषां सखीनां च समक्षं हाससंसदि ॥ हे निर्विकार तत्सर्वमपराधसहस्रकम् ॥ २ ॥ क्षमां त्वां कारयेऽचिन्त्यप्रभावाहं कृपां कुरु ॥ अतोऽचिन्त्यप्रभावेण निर्विकारेण च त्वया॥३॥ अतिकारुणिकेनैव त्वन्माहात्म्याप्रवेदिनः॥ ममापराधाः क्षन्तव्याः श्रीमद्भगवताऽधुना॥४॥४२॥

**भा० टी०**—एवं स्तुत्वा स्वापराधमज्ञानकृतं क्षमापयते—**सखेति** । सखा समानवया इति मत्वा ज्ञात्वा विपरीतबुद्ध्या प्रसभं प्रसह्याभिभूय यदुक्तं हे कृष्ण हे यादव हे सखेति । सखेति संधिरार्षः । तत्त्वां क्षामये इत्युत्तरेण संबन्धः । क्षमायोग्यतां सूचयन् अपराधस्याज्ञानपूर्वकत्वमाह—अजानता तव महिमानं माहात्म्यं तवेदमीश्वरस्य विश्वरूपमजानता अज्ञानिना मूढेन । इममितिपाठे तु इमं महि-

मानमिति सामानाधिकरण्यम् । आविर्भूतैश्वर्यस्याप्यज्ञाने हेतुमाह—प्रमादात् विक्षिप्तचित्ततया प्रणयेन स्नेहनिमित्तविश्रम्भेण वापि मया यदुक्तमिति संबन्धः ॥ यच्चावहासार्थं परिहासप्रयोजनायासत्कृतोऽसि परिभूतोऽसि विहरणं विहारः क्रीडा पादव्यायामो वा, शयनं शय्या, आसनमास्थायिका सिंहासनादि, भोजनमदनमित्येतेषु विहारादिषु असत्करणं चोत्कृष्टेन सह निकृष्टस्य समानतया प्रवृत्तिः एकः परोक्षः रहसि सन्नसत्कृतोऽसि अथवा समक्षं प्रत्यक्षमपि तत् असत्कृतोऽसि परोक्षं वा प्रत्यक्षं वा तदसत्करणं यन्मया परिभूतोऽसि तत्सर्वमपराधजातं त्वामहं क्षामये क्षमां कारये । पूर्वं मातुलेयं स्वसमानं ज्ञात्वाऽसत्कृत्येदानीमप्रमेयं बुद्ध्वा क्षामय इत्याशयेनाह—अप्रमेयमिति । असत्कृतोऽहं क्षमां न करोमीति न वाच्यं यतो सत्करणेन स्वपदात्सर्वोत्तमात् सदैवाप्रच्युत इति ध्वनयन् संबोधयति हेऽच्युतेति ॥ ४१ ॥ ४२ ॥

प० टी०—इदानीं स्वापराधं क्षमापयन्नाह—**सखेति द्वाभ्याम्** । त्वां प्राकृतः सखेति मया प्रसभं तिरस्कारेण यदुक्तं तत्कथम् हे कृष्ण हे यादव हे सखे इत्येकवचनेन सखेति शिलोपे जाते सन्धिश्छान्दसः। किंभूतेन मया इदमनुभूयमानं तव महिमानमजानता । अथ तिरस्कारप्रकारानाह—प्रमादात्प्रश्रयेणानवधानेन वा प्रणयेन प्रीत्या वा ॥ ४१ ॥ **यच्चेति** । यद्वाऽवहासार्थं परिहासनिमित्तं विहारे क्रीडायामेकत्र शयने सभासंनिवेशे भोजने च पङ्क्तावसत्कृतोऽस्यवज्ञातोऽसि । किं भूतस्त्वमथ वा एकलः रहसि स्थितस्तत्सर्वमपराधजातं त्वामप्रमेयमचिन्त्याप्रमेयप्रभावं क्षमापये क्षमां कारयामि । अयमर्थः । सामवेदे बृहद्रथन्तरादिपावमान्यस्तुतिभिः प्रसन्नाद्भगवतो यशो लभस्वेत्यादि नश्वरं फलं न वृणे किं स्वपराधमेव क्षमापये तेन पुनश्चतुर्भुजरूपदर्शनान्मुक्तिं प्राप्नुयां यतः कृतापराधस्यैव पुंसो नश्वरफलप्राप्तिरित्याशयोऽर्जुनस्य । श्रुतिरपि वाजसनेयारण्यके—"अथातः पवमानानामेवाभ्यारोहः स वै खलु प्रस्तोता साम प्रस्तौति स यत्र प्रस्तुयात्तदेतानि जपेदसतो मा सद्गमय तमसो ज्योतिर्गमय मृत्योर्मामृतं गमय" इति । भाष्यम्—अथात ईश्वरस्य स्तावकवाक्योपक्रमात्पवमानानां पावमान्यश्रुतीनामभ्यारोह उत्कर्षः । वै यस्मात्स प्रस्तोता परमेश्वरस्य प्रकर्षेण स्तोता सन् सामरूपं परमेश्वरं स्तौति । स यत्र यदा प्रस्तुयात् स्तुतिं कुर्यात् तदैतानि त्रीणि यजूंषि जपेत् । तान्याह " असतो मा सद्गमय ॥ १ ॥ तमसो मा ज्योतिर्गमय ॥ २ ॥ मृत्योर्मामृतं गमय ॥ ३ ॥ " भाष्यम्—असतोऽसद्रूपात्प्रपञ्चान्मां सद्गमय ब्रह्म बोधय । तथा तमसोऽज्ञानान्मां ज्योतिः प्रकाशरूपं गमय । तथा मृत्योः संसारान्मामममृतं गमयेति । तैत्तिरीयकेऽपि—" यथा मध्ये समुद्रस्य प्लवमन्वर्जेयुस्तादृक् तदनुत्सर्गंबृहद्रथन्तराभ्यां मित्वा प्रतिष्ठां गच्छति " । यथा समुद्रस्य मध्ये पतिताः प्लवं नौकामन्वर्जेयुः श्रयन्ति तादृक्तदनुत्सर्गं तन्निर्विशेषं बृहद्रथन्तराभ्यामज्ञानाब्धिं मित्वा स्वल्पं ज्ञात्वा प्रतिष्ठां ब्रह्मणि स्थितिं गच्छन्ति । अथ नश्वरं फलमिन्द्रादिस्तुतिभिर्लभ्यते । श्रुतिरपि—" अथ यानीतराणि स्तोत्राणि तेष्वात्मनेऽन्नाद्यमागायेत्तस्मात्तदुत्तेषु वरं वृणीत यं कामं कामयते तमागायेत्" इति । भाष्यम्—अथेत्यनन्तरं यानीतराणि पावमान्यश्रुत्यातिरिक्तानि स्तोत्राणि स्तुतिवाक्यानि तेष्वात्मने स्वात्मार्थमन्नाद्यं फलमागायेत् प्रार्थयेत् । तस्मात्प्रसन्नाद्देवताविशेषाद्यं कामं कामयते यद्वरं वृणीत तदागायेत् प्राप्नुयात् ॥ ४२ ॥

रा० टी०—एतादृशमाहात्म्यं भगवन्तं प्रति यदपराद्धं तत्क्षन्तव्यमित्याह—**सखेत्यादिना** । इदं प्रागुक्तं जगत्स्रष्टृत्वादिकं महिमानमजानता मया प्रमादात्पारवश्यात्प्रणयेन वा स्नेहेन वा सखेति मत्वा हे कृष्ण हे यादव हे सखेति प्रसभमबहुमानं यथा तथा यदुक्तं तत्क्षामये क्षमापये इत्यग्रेतनेनान्वयः । हे सख इति विच्छिद्य वक्तव्ये संधिश्छान्दसः ॥ ४१ ॥ किंच—**यच्चेति** । अथवेति पक्षान्तरे । हे अच्युत सर्वगुणैश्च्युतिहीन विहारः क्रीडा तदादिषु एकोऽपि त्वं सर्वोत्तमोऽपि असत्कारानर्होऽपि इति यावत् । यदपहासार्थ-

मसत्कृतोऽसि अवमतोऽसि तदप्रमेयं त्वां समक्षं त्वत्पुरतोऽहं क्षमापये क्षमस्वेति प्रार्थये । एकशब्दे एशब्द एकवाची कशब्दस्तु करोतेरन्तर्णीतण्यर्थात् केवलाद्वा डप्रत्यये क इति कर्तृवाची कारयितृवाची च । ए एकोऽसहाय एव कः कर्ता कारयिता चेत्येकः सर्वोत्तमः अन्यनिरपेक्षकर्तृत्वादिमत एव सर्वोत्तमत्वादिति । अत्र एकशब्दः सर्वोत्तमपरो ध्येयः ॥ ४२ ॥

**पिताऽसि लोकस्य चराचरस्य त्वमस्य पूज्यश्च गुरुर्गरीयान् ॥**
**न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽप्यप्रतिमप्रभाव ॥ ४३ ॥**

**त० टी०**—अप्रमेयत्वमेवोपपादयति–पितेति । अस्य चराचरस्य लोकस्य पिता जनकस्त्वमसि पूज्यश्चासि गुरुश्च शास्त्रोपदेष्टा अतो गरीयान् गुरोरपि गुरुत्वेन पूज्यतमः । हे अमितप्रभाव यत एवंभूतस्त्वं तस्मात्त्वत्समो लोकत्रये नास्ति । यदि त्वत्सम एव नास्ति तर्हि अभ्यधिकः कुतोऽन्यः, त्वदधिकः कुतः स्यात्, नास्ति नासीन्न भविष्यत्येवेत्यर्थः ॥ ४३ ॥

**म० टी०**—अचिन्त्यप्रभाववत्तामेव प्रपञ्चयति–पितेति । अस्य चराचरस्य लोकस्य पिता जनकस्त्वमसि पूज्यश्चासि सर्वेश्वरत्वात्, गुरुश्चासि शास्त्रोपदेष्टा, अतः सर्वैः प्रकारैर्गरीयान् गुरुतरोऽसि अत एव न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्यो लोकत्रयेऽपि हे अमितप्रभाव यस्य समोऽपि नास्ति द्वितीयस्य परमेश्वरस्याभावात् तस्याधिकोऽन्यः कुतः स्यात्सर्वथा न संभाव्यत एवेत्यर्थः ॥ ४३ ॥

**शं० टी०**—ननु यथा गदादयस्तव तथैवाहमपि, किं क्षामये त्वामिति प्रार्थनयेत्याशङ्कायां न, भवान् सर्वलोकपूज्यः परमेश्वर इति सहेतुकं पूज्यत्वमेव प्रतिपादयति–पितेति । चराचरस्य स्थावरजङ्गमात्मकस्यास्यानुभूयमानस्य लोकस्य सर्वप्राणिजातस्य त्वं पिता जनकोऽसि "यतो वा इमानि" इति श्रवणात् त्वं सर्वेषां भूतानां जनयितेत्यर्थः । न केवलं पितैव त्वं सर्वलोकस्य किंतु महान् गुरुरप्यसीत्याह–गुरुरिति । सकलानर्थबीजभूताऽविद्या तत्कार्यविध्वंसकतत्त्वज्ञानोपदेशेन गरीयान् सर्वोत्तमो गुरुश्चासि यस्मात्तस्मात्त्वं पूज्यः सर्वलोकानां किमुत ममैवेति । ननु मत्तोऽप्यधिका ब्रह्मादयो महनीयाः सन्त्येवेत्यत आह–**न त्वत्सम** इति । "आत्मन आकाशः संभूतः" इति "अस्य महतो भूतस्य" इति च श्रवणादाकाशादिसर्वभूतजनकत्वे धर्मज्ञानमूलसकलवेदोपदेष्टृत्वे च लोकत्रयेऽपि गरीयान् महत्तमस्त्वत्समोऽन्यो नास्ति तत्सत्त्वे चेश्वरान्तरसिद्ध्या सर्वव्यवहारलोपप्रसङ्गात्, नहीश्वरे द्वितीये सत्येकस्य सिसृक्षायामन्यस्य संजिहीर्षायां सत्यां व्यवहारः सिद्ध्यत्यतस्त्वत्समो न कश्चिदस्तीत्यर्थः । त्वत्समस्यैवासंभवे सत्युक्तधर्मैरभ्यधिकस्त्वत्तो महत्तमोऽन्यः कुतः स्यात् न कुत्रापि संभवतीत्यर्थः "न तत्समश्चाभ्यधिकश्च दृश्यते" इति श्रुतेः । त्वत्समस्यैव पुरुषस्यासंभवे हेतुमाह–अप्रतिमेति । प्रतिमीयतेऽनयेति प्रतिमा सादृश्यं न विद्यते यस्यासावप्रतिमः प्रभावः सामर्थ्यं मायायोगजं प्रपञ्चबन्धमोक्षादिकार्यघटनाऽघटनपटीयस्त्वलक्षणं यस्य सोऽप्रतिमप्रभावस्तस्य संबुद्धिर्हे अप्रतिमप्रभाव निरतिशयमहत्त्वसंपन्नेत्यर्थः ॥ ४३ ॥

**श्री० टी०**—अचिन्त्यप्रभावतामेवाह–पितेति । न विद्यते प्रतिमा उपमा यस्य सोऽप्रतिमः तथाविधः प्रभावो यस्य तव हे अप्रतिमप्रभाव त्वमस्य चराचरस्य लोकस्य पिता जनकोऽसि अत एव पूज्यश्च गुरुश्च गुरोरपि गरीयान् गुरुतरः अतो लोकत्रयेऽपि त्वत्सम एव तावदन्यो नास्ति परमेश्वरस्यान्यस्याभावात् त्वत्तोऽभ्यधिकः पुनः कुतः स्यात् ॥ ४३ ॥

**स० टी०**—अत्यचिन्त्यप्रभावत्वं प्रपञ्चयति पाण्डवः ॥ चराचरस्य लोकस्य पिता त्वं पूज्य ईश्वर ॥ १ ॥ गुरुः शास्त्रोपदेष्टाऽसि गरीयान्सर्वथाऽप्यसि ॥ त्वत्समो नास्ति कुत्रापि कुतः स्यादधिको हरेः ॥ २ ॥ त्वत्तोऽन्यस्येश्वरस्यैवाभावादप्रतिमेश्वर ॥ ३ ॥ ४३ ॥

भा० टी०-मयाऽतीवानुचितमेव कृतं क्षमापनं च कर्तव्यमेव त्वया च क्षन्तव्यमेव यतः-पितेति । त्वं प्राणिनिकायस्य स्थावरजङ्गमस्य पिता जनकोऽसि पूज्यः पूजार्हश्चासि यतो गुरुर्धर्मब्रह्मोपदेष्टा गरीयान् गुरुतरोऽसि । भगवतो गुरुतरत्वे हेतुमाह-न त्वत्समस्तुल्योऽस्ति द्वितीयस्येश्वरस्याभावात् ईश्वरसत्त्वे प्रत्येकमैकमत्ये कारणाभावान्नानामतित्वे चैकस्य संजिहीर्षायामपरस्य सिसृक्षासंभवाद् अपरस्य पालनेच्छायामेकस्य संजिहीर्षासंभवाद् व्यवहारलोपप्रसङ्गापत्त्यानेकेश्वरवादस्यायुक्तत्वादिति भावः । त्वत्तुल्य एवान्यो न संभवति कुत एव लोकत्रयेऽपि सर्वस्मिँल्लोकेऽन्योऽभ्यधिकः कुतोऽन्यो लोकत्रयेऽपीति वा हेतुहेतुमद्भावः भाष्यस्योपलक्षणार्थत्वादविरोधः । हेऽप्रतिमप्रभाव प्रतिमीयते यया सा प्रतिमा उपमा न विद्यते उपमा यस्य स चासौ प्रभावो यस्य स तथा अतस्त्वमेव सर्वेषां पित्रादीति भावः ॥ ४३ ॥

प० टी०-अथ क्षमापने बीजमाह-पितेति । पितोत्पादकः पूज्यः पूजनीयः गुरुरुपदेष्टा ततोऽपि गरीयान् । दृष्टान्ताभावं कथयति-अप्रतिमप्रभावः त्वत्सदृशोऽन्यः परमेश्वरो नास्ति कुतस्त्वत्तोऽधिकः । श्रुतिरपि रथन्तरसामोत्तरा । " न त्वा वामन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते " इति । अत्र वामिति विना । शेषं स्पष्टार्थम् ॥ ४३ ॥

रा० टी०-असत्कारानर्हतामेव गुणान्तरोक्त्या व्यनक्ति-पितासीत्यादिना । त्वमस्य चराचरस्य लोकस्य पितासि जनकोऽसि । अत एव पूज्यो गरीयान् गुरुरत्यन्तं गुरुश्च अप्रतिमप्रभाव अनुपमैश्वर्य ॥ ४३ ॥

**तस्मात्प्रणम्य प्रणिधाय कायं प्रसादये त्वामहमीशमीड्यम् ॥**
**पितेव पुत्रस्य सखेव सख्युः प्रियः प्रियायार्हसि देव सोढुम् ॥ ४४ ॥**

त० टी०-एवं सर्वोत्तमत्वेन संस्तुत्य, पूर्वपरिचितसौम्यरूपदर्शनाकाङ्क्षया लोकसिद्धप्रियसंबन्धनिदर्शनेन भगवन्तं प्रसादाभिमुखीकरोति-तस्मादिति । यस्मात्त्वं सर्वस्य पिता गुरुतमः पूज्यश्चातिशयसाम्यरहितश्च तस्मात् प्रणम्य, कथं प्रणिधाय कायं भूमौ दण्डवन्निपत्य ईशं सर्वलोकस्वामिनमीड्यं स्तुत्यं त्वामहं प्रसादये मद्विषयानुग्रहाभिमुखं कामये । हे देव सर्वसंबन्धिरूपेण दीव्यति व्यवहरतीति तथा, कृतापराधस्यापि पुत्रस्य पितेव, सख्युः सखेव, प्रियायाः प्रिय इव, प्रणामपूर्वकं प्रार्थितः सर्वापराधं सोढ्वा प्रसीदति तथा ममापराधं सोढुमर्हसि । प्रियः प्रियायार्हसीत्यत्रेवशब्दस्य लोपः संधिश्चार्षः ॥ ४४ ॥

म० टी०-यस्मादेवम्-तस्मादिति । तस्मात्प्रणम्य नमस्कृत्य त्वां प्रणिधाय प्रकर्षेण नीचैर्धृत्वा कायं दण्डवद्भूमौ पतित्वेति यावत् प्रसादये त्वामीशमीड्यं सर्वस्तुत्यमहमपराधी अतो हे देव पितेव पुत्रस्यापराधं सखेव सख्युरपराधं प्रियः पतिरिव प्रियायाः पतिव्रताया अपराधं, ममापराधं त्वं सोढुं क्षन्तुमर्हसि अनन्यशरणत्वान्मम । प्रियायार्हसीत्यत्रेवशब्दलोपः सन्धिश्च छान्दसः ॥ ४४ ॥

शं० टी०-जगद्गुरुत्वेन जगज्जनकत्वेन च सर्वलोकपूज्यस्य तव परमेश्वरस्य मया नापराद्धव्यं प्रमादेन यदपराद्धं तत्क्षन्तव्यमिति प्रार्थय इत्युक्त्वा प्रणामपूर्वकं प्रसादयति-तस्मादिति । यस्मान्निरतिशयमहत्त्वसंपन्नः परमेश्वरस्त्वं तस्मात्कायं प्रणिधाय अष्टभिरङ्गैः संश्लेषो यथा स्यात्तथा भूमौ स्थापयित्वा प्रणम्य ब्रह्मादिभिरीड्यं स्तुत्यमीशं परमेश्वरं प्रसादये प्रसन्नो भवेति प्रार्थये हे देव मया प्रार्थितस्त्वं पुत्रस्यापराधं पितेव सख्युरपराधं सखेव प्रियायाः प्रेयस्याः स्त्रियोऽपराधं प्रिय इव ममापराधं सोढुं क्षन्तुमर्हसीत्यर्थः । प्रियायार्हसीत्यत्र संधिरार्षः ॥ ४४ ॥

श्री० टी०—यस्मादेवम्—तस्मादिति । तस्मात्त्वामीशं जगतः स्वामिनमीड्यं स्तुत्यं प्रसादये प्रसादयामि । कथं कायं प्रणिधाय दण्डवन्निपात्य प्रणम्य प्रकर्षेण नत्वा अतस्त्वं ममापराधं सोढुं क्षन्तुमर्हसि । कस्य क इव पुत्रस्यापराधं कृपया पिता यथा सहते सख्युर्मित्रस्यापराधं सखा निरुपाधिबन्धुर्यथा प्रियश्च प्रियाया अपराधं तत्प्रियार्थं यथा तद्वत् ॥ ४४ ॥

स० टी०—तस्मात्त्वाऽहं नमस्कृत्य पतित्वा दण्डवत्क्षितौ ॥ प्रसादयेऽखिलस्तुत्यं त्वामीश्वरपदास्पदम् ॥ १ ॥ यथा पुत्रस्य क्षमते ह्यपराधं पिता यथा ॥ सख्युः सखा पतिः सत्या भार्यायाः क्षमते यथा ॥ २ ॥ तथा ममापराधं त्वं सोढुमर्हसि केशव ॥ अनन्यशरणत्वाच्च कल्याणगुणसागर ॥ ३ ॥ इत्थं स्तुवन्तमनिशं जगतामधीशः कृष्णः कृपाजलधिरात्मवतां शरण्यः ॥ स्वीयं पदं नयति शान्तिसुखैकधाम यस्तं भजे सततमीशमहं मुकुन्दम् ॥ ४ ॥ ४४ ॥

भा० टी०—यस्मादेवं—तस्मादिति । तस्मात्कायं शरीरं प्रणिधाय प्रकर्षेण नीचैः कृत्वा दण्डवद्भूमौ पातयित्वा प्रणम्य त्वामहं प्रसादये प्रसादं कारये । इदमत्यावश्यकमित्यत्रान्यदपि हेतुद्वयमाह—ईशं ईशितारं सर्वनियन्तारमीड्यं स्तोतुं योग्यम् । त्वं च पिता यथा पुत्रस्यापराधं क्षमते यथा च सख्युः सखा यथा च प्रियायाः भार्यायाः प्रियः भर्तेति तद्वत्क्षन्तुं योग्योऽसि । जगज्जनकत्वात् पितृत्वं, "सयुजौ सखायौ" इतिमन्त्रवर्णात्सखित्वं, निखिलप्रपञ्चपोषकत्वात् भर्तृत्वं च तवास्तीति पित्रादिवन्मुख्यपित्रादिस्त्वमवश्यं सोढुमर्हसीति सूचयन्दृष्टान्तत्रयोपादानम् । प्रियायार्हसीति संधिरार्षः । किंच नरनाट्यात्मकक्रीडाविधानार्थं मम बुद्ध्यावरणं त्वयैव कृतमिति ध्वनयन्संबोधयति हे देवेति ॥ ४४ ॥

प० टी०—यद्येवं तस्मात्कायं प्रणिधाय दण्डवन्निपात्य त्वामहं प्रसादये प्रसन्नं करोमि । किंभूतमीशं नियन्तारमीड्यं स्तुत्यम् । अनेन प्रकारेण त्वमप्यपराधं सोढुमर्हसि । कस्य क इव पिता पुत्रस्येव, सख्युः सखेव, प्रियः सुहृत् प्रियार्थं प्रियाय । अथ नश्वरफलार्थं श्रुतिः—"त्रातारमिन्द्रमवितारमिन्द्रं हवे हवे सुहवम्" इत्यादिः । अथ प्रमेयसंग्रहश्लोकश्च 'युद्धानध्यवसायिनोऽपि भगवद्भूमानभिज्ञस्य मे तद्वाक्यास्तमितादरस्य नृहरिप्रोक्ता इमा आशिषः । युक्ता यन्मृतमारणात्प्रयशसां साम्राज्यभोगश्चिरादास्तामित्यपराधजातमधुना श्लाघ्यं हरेर्दर्शनम्' ॥ ४४ ॥

रा० टी०—यस्मादुक्तमहिमा तस्मात्कायं भूमौ प्रणिधाय ईशमीड्यं स्तुत्यं त्वा त्वां प्रणम्य प्रसादये । हे देव पित्रादिः पुत्रादेरिवापराधं सोढुमर्हसि ॥ ४४ ॥

**अदृष्टपूर्वं हृषितोऽस्मि दृष्ट्वा भयेन च प्रव्यथितं मनो मे ॥**
**तदेव मे दर्शय देव रूपं प्रसीद देवेश जगन्निवास ॥ ४५ ॥**
**किरीटिनं गदिनं चक्रहस्तमिच्छामि त्वां द्रष्टुमहं तथैव ॥**
**तेनैव रूपेण चतुर्भुजेन सहस्रबाहो भव विश्वमूर्ते ॥ ४६ ॥**

त० टी०—एवं संबन्धज्ञापनेन क्षमापयित्वा भगवन्तं प्रसन्नमुपलक्ष्य स्वाभिलषितं प्रार्थयते—अदृष्टपूर्वमिति द्वाभ्याम् । पूर्वं कदाऽप्यदृष्टं तवेदं रूपं दृष्ट्वा हृषितोऽस्मि हृष्टोऽस्मि । घोररूपदर्शनजेन भयेन मे मनः प्रव्यथितं व्याकुलीकृतम् । अतो हे देव तदेव पूर्वपरिचितं प्रसन्नं रूपं मे दर्शय । हे देवदेवेश देवानां ब्रह्मादीनामपीश, जगन्निवास सर्वजगदाश्रयभूत, प्रसीद तत्सौम्यरूपप्रदर्शनात्मकं प्रसादं मे कुर्वित्यर्थः ॥ ४५ ॥ तद्रूपमेवानुवदति—किरीटिनमिति । तथैव पूर्ववदेव किरीटिनं

गदिनं चक्रहस्तं च त्वां द्रष्टुमिच्छामि । अतो हे सहस्रबाहो विश्वमूर्ते इदं रूपमुपसंहृत्य तेनैव पूर्वेण किरीटादियुक्तेन चतुर्भुजेन रूपेणैव भव प्रकटो भवेत्यर्थः ॥ ४६ ॥

म० टी०—एवमपराधक्षमां प्रार्थ्य पुनः प्राग्रूपदर्शनं विश्वरूपोपसंहारेण प्रार्थयते द्वाभ्याम्—अदृष्टेति । कदाप्यदृष्टपूर्वं पूर्वमदृष्टं विश्वरूपं दृष्ट्वा हृषितो हृष्टोऽस्मि तद्विकृतरूपदर्शनजेन भयेन च प्रव्यथितं व्याकुलीकृतं मनो मे अतस्तदेव प्राचीनमेव मम प्राणापेक्षयाऽपि प्रियं रूपं मे दर्शय हे देव हे देवेश हे जगन्निवास प्रसीद प्राग्रूपदर्शनरूपं प्रसादं मे कुरु ॥ ४५ ॥ तदेव रूपं विवृणोति—किरीटिनमिति । किरीटवन्तं गदावन्तं चक्रहस्तं च त्वा त्वां द्रष्टुमिच्छाम्यहं तथैव पूर्ववदेव अतस्तेनैव रूपेण चतुर्भुजेन वसुदेवात्मजत्वेन भव इदानीं हे सहस्रबाहो हे विश्वमूर्ते उपसंहृत्य विश्वरूपं, पूर्वरूपेणैव प्रकटो भवेत्यर्थः । एतेन सर्वदा चतुर्भुजादिरूपमर्जुनेन भगवतो दृश्यत इत्युक्तम् ॥ ४६ ॥

शं० टी०—देवेश जगन्निवासेति प्रसादयन् स्तुवन् विश्वरूपोपसंहारं प्रार्थयते—अदृष्टपूर्वमिति । अदृष्टपूर्वं कदाचिदप्यदृष्टं विश्वरूपं दृष्ट्वा हृषितो हृष्टः संतुष्टोऽस्मि तथापि बहूदरवक्त्रादिभिर्विकृतत्वाद्भयेन मे मनो व्यथितं व्याकुलं च भवति हे देव प्रसीद प्रसन्नो भव, तदेव प्राक्तनमेव सौम्यं कार्ष्णं रूपं मे मह्यं दर्शय दृष्टिविषयं कुर्वित्यर्थः ॥ ४५ ॥ तदेवेत्युक्त्वा त्वनिर्धारितत्वाद्दृष्टव्यं रूपं विशेषणैर्विशिनष्टि—किरीटिनमिति । पूर्वं यथा तथैव किरीटिनं गदिनं चक्रहस्तं त्वामिदानीं द्रष्टुमिच्छामि यत इदं रूपं भयानकं ततश्चतुर्भुजेन भुजचतुष्टयवता तेनैव वासुदेवेन रूपेण शान्तेन युक्तो भव । तदा चतुर्भुजविशिष्टरूपाभावं सूचयितुमाह—सहस्रेति । सहस्रं बाहवो यस्य हे सहस्रबाहो विश्वं मूर्तिर्यस्य हे विश्वमूर्ते सर्वात्मन् एतद्रूपमुपसंहृत्य प्राचीनं शान्तं रूपं दर्शयेत्यर्थः ॥ ४६ ॥

श्री० टी०—एवं क्षमापयित्वा प्रार्थयते—अदृष्टपूर्वमिति द्वाभ्याम् । हे देव पूर्वमदृष्टं तव रूपं दृष्ट्वा हृषितो हृष्टोऽस्मि तथा भयेन च मे मनः प्रव्यथितं प्रचलितं तस्मान्मम व्यथानिवृत्तये तदेव रूपं दर्शय हे देवेश हे जगन्निवास प्रसन्नो भव ॥ ४५ ॥ तदेव रूपं विशेषयन्नाह—किरीटिनमिति । किरीटिनं गदावन्तं चक्रहस्तं च त्वां द्रष्टुमिच्छामि पूर्वं यथा दृष्टोऽसि तथैव । अतो हे सहस्रबाहो विश्वमूर्ते इदं विश्वरूपं संहृत्य तेनैव किरीटादियुक्तेन चतुर्भुजेन रूपेण भव आविर्भव । तदनेन श्रीकृष्णमर्जुनः पूर्वमपि किरीटादियुक्तमेव पश्यतीति गम्यते । यत्तु पूर्वमुक्तं विश्वरूपदर्शने किरीटिनं गदिनं चक्रिणं च पश्यामीति तद्बहुकिरीटाद्यभिप्रायेण, यद्वा एतावन्तं कालं यं त्वां किरीटिनं गदिनं चक्रिणं च सुप्रसन्नमपश्यं तमेव इदानीं तेजोराशिं दुर्निरीक्ष्यं पश्यामीत्येवं तत्र बहुवचनव्यक्तिरित्यविरोधः ॥ ४६ ॥

स० टी०—अपराधक्षमां प्रार्थ्य पुनः प्राग्रूपदर्शनम् ॥ विश्वरूपोपसंहारद्वारा प्रार्थयतेऽधुना ॥ १ ॥ कदाप्यदृष्टं पूर्वं यद्विश्वरूपं महत्तरम् ॥ दृष्ट्वा हृष्टोऽस्मि तद्रूपं श्रीमद्भगवतो हरेः ॥ २ ॥ भीषणत्वाद्भयेनैव मनो मे व्याकुलीकृतम् ॥ अतस्तदेव प्राचीनं मम प्राणादपि प्रियम् ॥३॥ मह्यं दर्शय देवेश प्रसीद जगतां पते ॥ ४॥४५॥ प्रार्थनीयं स्वरूपं तद्विवृणोति हरेर्जयः ॥ किरीटिनं गदावन्तं चक्रहस्तमहं प्रियम् ॥ १ ॥ पूर्ववद्द्रष्टुमिच्छामि त्वां श्रियो वासमच्युतम् ॥ चतुर्भुजेन तेनैव रूपेण प्रकटो भव ॥ २ ॥ सहस्रबाहो विश्वात्मन्नुपसंहृत्य सर्वतः ॥ विश्वरूपं स्वसौम्येन रूपेण प्रकटो भव ॥ ३ ॥ ४६ ॥

भा० टी०—एवमपराधक्षमां प्रार्थ्याभिलषितं प्रार्थयते—अदृष्टेति द्वाभ्याम् । मयान्यैर्वा कदाचिदपि न दृष्टपूर्वमिदं तव विश्वरूपं दृष्ट्वा हृषितोऽस्मि हर्षं प्राप्तोऽस्मि । अदृष्टपूर्वत्वादेव भयेन च व्यथितं दुःखितं मे मनः अतो यस्मिन्निदं विश्वरूपं त्वया प्रदर्शितं तदेव मुख्यरूपं मम प्रदर्शय । प्रदर्शनं चैतद्रूपाधिष्ठानत्वेन स्थितस्यैव प्रद्योतनमात्रं त्वया कर्तव्यमस्ति न तूत्पाद्य प्रदर्शयितव्यमिति देवेतिसंबोधनस्य गूढाभिसंधिः ।

दैवरूपं द्योतनात्मकं रूपमित्येकं वा पदं तव देवेशत्वं जगन्निवासत्वं च मया प्रत्यक्षीकृतमतो मज्जिज्ञासासमाप्त्या मदर्थस्यैतद्रूपस्य तिरोधानमेवोचितमिति द्योतनार्थं संबोधनद्वयं हे देवेश हे जगन्निवासेति ॥ ४५ ॥ तदेवेत्युक्तं विशदयति—**किरीटिनमिति**। किरीटवन्तं तथा गदावन्तं चक्रं सुदर्शनं हस्ते यस्य तादृशं त्वामहं द्रष्टुमिच्छामि तस्मान्मदिच्छानुसारेणैव हे सहस्रबाहो हे विश्वमूर्ते मदिच्छापरिसमाप्त्या पुनरपि विश्वमूर्तित्वं तिरोधाय तेनैव रूपेण वसुदेवपुत्रमूर्तिरूपेण सहस्रबाहुत्वं तिरोधाय चतुर्भुजेन तथैव पूर्वरूपेण प्रकटीभवेत्यर्थः ॥ ४६ ॥

**प० टी०**—अथ क्षमाप्य प्रार्थयते—**अदृष्टपूर्वमिति** द्वाभ्याम्। पूर्वं जन्म जन्मान्तरेऽपि न दृष्टमित्यदृष्टपूर्वं विश्वरूपान्तश्चतुर्भुजं रूपं दृष्ट्वा मादृशानामयमलभ्यलाभ इति हृषितोऽस्मि। अनन्तरं दंष्ट्राकरालानि रूपाणि दृष्ट्वा भयेन मे मनः प्रव्यथितम्। अतः परं भो देवेश जगन्निवास प्रसीद प्रसन्नो भव। प्रसादे किं याचनीयमित्याह—तदेव प्रथममुपलब्धं हर्षजनकं चतुर्भुजं रूपं मे इति मां दर्शय। तावतैव कृतार्थः स्यामित्यर्थः ॥ ४५ ॥ अथोपक्रमे दृष्टपूर्वं कीदृशमित्याह—**किरीटिनमिति**। मुकुटवन्तं गदिनं चक्रिणं चेत्युपलक्षणं तेन सर्वायुधयुतमिति ज्ञेयम्। अत्रायमर्थः। विश्वरूपदर्शनोपक्रमे दिव्यदृष्ट्या यच्चतुर्भुजं तेजोरूपमिति मनोरमं रूपं दृष्टं तद्वैकुण्ठं विना नान्यत्रानुभवगोचरं भवतीति पूर्वं पुराणादिभ्यः श्रुतमासीत्तदप्रयासतो मयात्र दृष्टमिति हर्षजनकं तथानन्तरं दंष्ट्राकरालमत्युग्रं यत्तद्भयजनकमतस्तदेव किरीटाद्युपस्कृतं रूपं द्रष्टुमिच्छामि न तु भयजनकम् तस्माद्भो विश्वमूर्ते सहस्रबाहो तेनैव चतुर्भुजेन रूपेण भवाविर्भव। अथ विश्वरूपदर्शनात् प्राक् निरन्तरमर्जुनश्चतुर्भुजमेव रूपं दृष्टवानिति चेत्तर्हि पश्यामि देवांस्तव देव देहे इत्यत्र किरीटिनं गदिनं चक्रिणं चेति पुनर्वक्तुं न युज्यते किं च चतुर्भुजं रूपं हि दैवं न मानुषं तथा च प्रथमतो दैवरूपप्रतीतौ यच्चावहासार्थमसत्कृतोऽसि इति न युज्यते, किं च अवजानन्ति मां मूढा मानुषीं तनुमाश्रितं, तथा दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दनेत्युपक्रमोपसंहाराभ्यां सर्वमनुष्यसाधारणस्य द्विभुजरूपस्यैव निर्देशात् ॥ ४६ ॥

**रा० टी०**—एवं क्षमाप्य प्रार्थयते—**अदृष्टेति**। हे देव पूर्वमदृष्टमदृष्टपूर्वं तव रूपं दृष्ट्वा हृषितोऽस्मि। तथा भयेन च मे मनः प्रव्यथितं प्रचलितम्। अतो हे देवेश जगन्निवास तदेव रूपं मे दर्शय प्रसीद ॥४५॥ तदेवेत्युक्तं रूपमाह—**किरीटिनमिति**। यथा विश्वरूपं दृष्टवानस्मि तथैव तेनैव चतुर्भुजेन रूपेण त्वां द्रष्टुमिच्छामि। हे सहस्रबाहो अनन्तबाहो विश्वमूर्ते गुणपूर्णविग्रहेति वा विश्वस्मिन्मूर्तिर्यस्येति वार्थः ॥ ४६ ॥

## श्रीभगवानुवाच—मया प्रसन्नेन तवार्जुनेदं रूपं परं दर्शितमात्मयोगात् ॥
## तेजोमयं विश्वमनन्तमाद्यं यन्मे त्वदन्येन न दृष्टपूर्वम् ॥४७॥

**त० टी०**—एवमर्जुनेन प्रसादितस्तदेव स्वं रूपं दर्शयितुं तावद्विश्वरूपं मया तवानुग्रहायैव दर्शितमित्याश्वासयन् श्रीभगवानुवाच—**मयेति** त्रिभिः। हे अर्जुन किमिति त्वं भीतोऽसि यतो मया प्रसन्नेन त्वत्प्रसादार्थं तेजोमयं विश्वं सर्वात्मभूतमनन्तमन्तरहितमाद्यं कृत्स्नस्यादिभूतं यत्त्वदन्येन केनापि न दृष्टपूर्वं तदिदं परं श्रेष्ठतरं रूपं तव आत्मयोगात् आत्मनः सत्यसंकल्पत्वयोगाद्दर्शितम् ॥ ४७ ॥

**म० टी०**—एवमर्जुनेन प्रसादितो भयबाधितमर्जुनमुपलभ्योपसंहृत्य विश्वरूपमुचितेन वचनेन तमाश्वासयन् त्रिभिः—**मयेति**। हे अर्जुन मा भैषीः यतो मया प्रसन्नेन त्वद्विषयकृपातिशयवता इदं विश्वरूपात्मकं परं श्रेष्ठं रूपं तव दर्शितमात्मयोगात् असाधारणान्निजसामर्थ्यात्। परत्वं विवृणोति—तेजोमयं तेजःप्रचुरं विश्वं समस्तमनन्तमाद्यं च यन्मम रूपं त्वदन्येन केनापि न दृष्टपूर्वं पूर्वं न दृष्टम् ॥ ४७ ॥

**शं० टी०**—स्थाने हृषीकेशेत्यादिना स्तुतवन्तं विश्वरूपसंदर्शनेन प्रहृष्टं तद्भयेन च क्लिष्टमर्जुनमाश्वासयितुं विश्वरूपसंदर्शनमतिदुर्लभं मदनुग्रहेण ते लब्धमित्युपश्लोकयितुं च श्रीभगवानुवाच—**मयेति**। हे अर्जुन त्वदीयभक्त्यतिशयात्प्रसन्नेन त्वय्यनुग्रहवता मया तेजोमयं कोटिसूर्यप्रकाशं विश्वं विश्वात्मकं तत एवानन्तमन्तवर्जितमिदं दृश्यमानं रूपमात्मयोगादात्मनः स्वस्य योगान्मायायोगसामर्थ्यात्ते भक्ताग्रगण्यस्य दर्शितम्, इतरेषां श्रवणविषयमेव तवैव दृष्टिविषयं गमितमित्यर्थः। ननु धृतराष्ट्रगृहे भीष्मादीनां बाल्ये यशोदायाश्चाक्रूरस्यापीदं त्वया दर्शितमेव मया प्रसन्नेन दर्शितमिति कथमित्याशङ्कायां तदवान्तरं रूपमुत्तमं न भवति इदं तु सर्वाग्र्यमन्यैरदृष्टं चेत्याह—यन्म इति। त्वदन्येन भक्तवर्यात्त्वत्तोऽन्येन येन केनापि न दृष्टपूर्वं मे मम परमेश्वरस्य यत्स्वरूपमाद्यमादिकालीनमीश्वरत्वकारणं सर्वोत्तमं तदेवैतत्ते दर्शितं तव भाग्याल्लब्धं, ममैतद्रूपसंदर्शनेन कृतार्थोऽसीत्यर्थः ॥ ४७ ॥

**श्री० टी०**—एवं प्रार्थितः संत्रस्तमाश्वासयन् श्रीभगवानुवाच—**मयेति** त्रिभिः। हे अर्जुन किमिति त्वं बिभेषि यतो मया प्रसन्नेन कृपया तवेदं परमुत्तमं रूपं दर्शितम् आत्मनो मम योगाद्योगमायासामर्थ्यात्। परत्वमेवाह—तेजोमयं विश्वं विश्वात्मकमनन्तमाद्यं च यन्मम रूपं त्वदन्येन त्वादृशाद्भक्तादन्येन न पूर्वं दृष्टं तत् ॥ ४७ ॥

**स० टी०**—एवं प्रसादितो विष्णुर्भीतं दृष्ट्वाऽर्जुनं प्रियम् ॥ उपसंहृत्य तद्रूपमुवाचाश्वासयन् गिरा ॥१॥ मा भैषीस्त्वं यतः पार्थ प्रसन्नेन मया तव ॥ विश्वरूपात्मकं श्रेष्ठं दर्शितं करुणावशात् ॥ २ ॥ असाधारणसामर्थ्यादात्मयोगाभिधात्परम् ॥ तेजोमयं समस्तं यच्चाद्यमन्तविवर्जितम् ॥ ३ ॥ त्वदन्येन न केनापि दृष्टपूर्वं कथंचन ॥ ४ ॥ ४७ ॥

**भा० टी०**—अर्जुनं भीतमुपलक्ष्य विश्वरूपं तिरोधाय प्रियवचसा आश्वासयन् श्रीभगवानुवाच—**मयेति**। मया प्रसन्नेन त्वय्यनुग्रहबुद्धिमता इदं परं पारमेश्वरं रूपं तव दर्शितं यतस्त्वं फलाभिसंधिरहितत्वात् शुद्धो मद्भक्त इति ध्वनयन्संबोधयति हेऽर्जुनेति। आत्मनो योगैश्वर्यस्य सामर्थ्यात्तेजोमयं तेजःप्रायं विश्वं समस्त सर्वात्मकमनन्तमन्तविधुरमादिभवमाद्यं सर्वादौ सत् यन्मे विश्वरूपमिदं त्वदन्येन केनचित्पूर्वं न दृष्टम् ॥ ४७ ॥

**प० टी०**—अथाश्वासयन् भगवानाह—**मयेति** त्रिभिः। त्वया यदुक्तं प्रव्यथितान्तरात्मा धृतिं न विन्दामीति तर्ह्याकस्मिकाद्भुतभयानकरूपदर्शनेन भयमुत्पद्यते प्रकृते तु प्रसन्नेन मया दिव्यदृष्टिदानपूर्वकं तव तुभ्यमात्मयोगान्निजमायावैभवेन परमुत्कृष्टं रूपं दर्शितम्। अत एव चतुर्भिर्विशेषणैराह तेजोमयं विश्वमनन्तमाद्यं यत्त्वदन्येन केनाप्यदृष्टपूर्वम् ॥ ४७ ॥

**रा० टी०**—भक्त्यतिशयोत्पादनाय विश्वरूपप्रदर्शनस्य दौर्लभ्यमाह—**मयेति**। हे अर्जुन प्रसन्नेन मया आत्मयोगात् स्वरूपसामर्थ्यात्परमुत्तममिदं रूपं तव दर्शितम्। तद्विशिनष्टि—तेजोमयं प्रचुरतेजस्स्वरूपम्। विश्वं पूर्णमनन्तं देशकालाद्यपरिच्छिन्नम्। त्वदन्येन न दृष्टपूर्वमित्यस्य त्वत्तोऽधमैरदृष्टपूर्वमित्यर्थः। तैरपि स्वयोग्यतानुरोधेन दृष्टत्वेऽपि अर्जुनवन्न दृष्टमित्यदृष्टत्वोक्तिः। तथा त्वया त्विन्द्रशरीरेण दृष्टपूर्वमित्यपि त्वदन्येनेति विशेषणाल्लभ्यते। यन्मे रूपं दर्शितमित्यन्वयः। अत्र विश्वरूपस्य परमित्युत्तमत्वोक्तिः अज्ञजनापेक्षयैव ब्रह्मादीनां कृष्णाद्यवतारेष्वपि परत्वधीसत्त्वादिति ॥ ४७ ॥

**न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः ॥**
**एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ॥ ४८ ॥**

**त० टी०**–एतद्रूपदर्शनं मत्प्रसादेन विना दुर्लभम् अतो मदनुग्रहेणैव तद्दृष्ट्वा त्वं कृतार्थोऽसीत्याह–न वेदेति । न वेदानां चतुर्णामपि अध्ययनैर्गुरुमुखादक्षरराशिग्रहणरूपैस्तथा यज्ञानां मीमांसाकल्पसूत्रादिलक्षणानां यज्ञविद्यानां साङ्गयज्ञकर्मप्रतिपादकानामध्ययनैरर्थविचाररूपैः न दानैर्भूमितुलाकन्यान्नादीनां पात्रेष्वर्पणरूपैः, नच क्रियाभिरग्निहोत्रादिश्रौतकर्मभिः न चोग्रैस्तपोभिः कृच्छ्रचान्द्रायणादिभिः, एवंरूपोऽहं नृलोके मनुष्यलोके हे कुरुप्रवीर त्वदन्येन मदनुग्रहरहितेन द्रष्टुं शक्यः, अपि तु मत्प्रसादभाजनेन त्वादृशेनैव द्रष्टुं शक्य इत्यर्थः । शक्य अहमित्यत्र विसर्गलोप आर्षः । एकेनापि नकारेणोक्तार्थसिद्धौ चतुर्भिर्नकारैर्दर्शनप्रतिषेधाभ्यासः स्वसाक्षात्कारं प्रति स्वानुग्रहस्यैवासाधारणहेतुत्वज्ञापनाय । तथा च श्रुतिः "शृण्वन्तोऽपि बहवोऽयं न विद्युः । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्" इति ।। ४८ ।।

**म० टी०**–एतद्रूपदर्शनात्मकमतिदुर्लभं मत्प्रसादं लब्ध्वा कृतार्थ एवासि त्वमित्याह–नेति । वेदानां चतुर्णामपि अध्ययनैरक्षरग्रहणरूपैः तथा मीमांसाकल्पसूत्रादिद्वारा यज्ञानां वेदबोधितकर्मणामध्ययनैरर्थविचाररूपैर्वेदयज्ञाध्ययनैः दानैस्तुलापुरुषादिभिः क्रियाभिरग्निहोत्रादिश्रौतकर्मभिः तपोभिः कृच्छ्रचान्द्रायणादिभिरुग्रैः कायेन्द्रियशोषकत्वेन दुष्करैः एवंरूपोऽहं न शक्यः नृलोके मनुष्यलोके द्रष्टुं त्वदन्येन मदनुग्रहहीनेन हे कुरुप्रवीर । शक्योऽहमिति वक्तव्ये विसर्गलोपश्छान्दसः । प्रत्येकं नकाराभ्यासो निषेधदार्ढ्याय । न च क्रियाभिरित्यत्र चकारादनुक्तसाधनान्तरसमुच्चयः ।। ४८ ।।

**शं० टी०**–एतद्रूपदर्शनस्य दुर्लभत्वमेव प्रतिपादयति–न वेदेति । वेदयज्ञाध्ययनैर्द्वन्द्वान्ते श्रूयमाणस्याध्ययनशब्दस्य प्रत्येकं संबन्धः वेदाध्ययनैर्यज्ञाध्ययनैरिति नियमेन ऋगादीनां चतुर्णां वेदानामध्ययनानि वेदाध्ययनानि तैर्यज्ञियमन्त्रदेवताप्रयोगप्रतिपादकवेदार्थज्ञानाध्ययनानि यज्ञाध्ययनानि तैः । ननु वेदाध्ययनेनैव यज्ञाध्ययनस्य संभवात्पुनर्यज्ञार्थमध्ययनं न कर्तव्यमेवेति चेन्न, वेदाध्ययनकाल एव बहूनां तदर्थविचारयोग्यत्वासंभवात्पदप्रमाणाध्ययनपूर्वकत्वाद्विचारस्य "अथातो धर्मजिज्ञासा" इति धर्मजिज्ञासाया वेदतदङ्गाध्ययनानन्तरभावित्वश्रवणात् प्रथममक्षरग्रहणार्थमनन्तरमर्थज्ञानार्थं चाध्ययनं कर्तव्यमेवेति सिद्धम् । दानैः कन्यागवादिभिः क्रियाभिः श्रौतस्मार्तकर्मानुष्ठानैरुग्रैः कर्तुमशक्यैस्तपोभिः कृच्छ्रचान्द्रायणादिभिरपि पुण्यकर्मविशेषैरपि एवंरूपो विश्वात्मकोऽहं परमेश्वरो नृलोके भूलोके त्वदन्येन मद्भक्तवर्यात्त्वतोऽन्येन द्रष्टुमशक्योऽस्मि मत्प्रसादविमुखानां द्रष्टुमशक्योऽहमित्यर्थः । शक्यतेऽहं नृलोक इति सिद्धे सत्यपि संधौ कारकक्रियायामर्थगौरवं बुद्ध्वा वा शक्य इत्युक्तम् (?) । आर्षत्वात्संध्यभावो न दोषाय ।। ४८ ।।

**श्री० टी०**–एतद्दर्शनमतिदुर्लभं लब्ध्वा त्वं कृतार्थोऽसीत्याह–नेति । वेदाध्ययनातिरेकेण यज्ञाध्ययनस्याभावाद्यज्ञशब्देन यज्ञविद्याः कल्पसूत्राद्या लक्ष्यन्ते वेदानां यज्ञविद्यानां चाध्ययनैरित्यर्थः । नच दानैर्न च क्रियाभिरग्निहोत्रादिभिः नचोग्रैस्तपोभिश्चान्द्रायणादिभिः एवंरूपोऽहं त्वदन्येन मनुष्यलोके द्रष्टुं शक्यः अपि तु त्वमेव केवलं मत्प्रसादेन दृष्ट्वा कृतार्थोऽसि ।। ४८ ।।

**स० टी०**–एतन्मद्रूपमैश्वर्यपदं दृष्ट्वा सुदुर्लभम् ।। कृतार्थोऽसि त्वमित्याह तद्दौर्लभ्यं वदन्हरिः ।।१।। अध्ययनेन वेदानां वेदार्थसुविचारणैः ।। तुलापुरुषादिदानैः श्रौतकर्मभिरप्युत ।। २ ।। कृच्छ्रादिभिस्तपोभिर्वा दुष्करैर्देहशोषकैः ।। एवंरूपो न शक्योऽहं त्वदन्येन महीतले ।। ३ ।। द्रष्टुं कुरुकुलश्रेष्ठ मदनुग्रहमन्तरा ।। ४ ।। ४८ ।।

**भा० टी०**–मम विश्वरूपदर्शनेन कृतार्थ एव त्वं संपन्न इत्याशयेनाह–नेति । न वेदानां चतुर्णामप्यध्ययनैः गुरूच्चारणानुच्चारणलक्षणैः यज्ञाध्ययनैर्यज्ञविज्ञानस्य मीमांसाकल्पसूत्रादेरध्ययनैर्न दानैर्गोदाना-

दिभिर्न च क्रियाभिः श्रौतस्मार्तक्रियाकलापैर्न तपोभिश्चान्द्रायणादिभिरुग्रैः घोरैर्देहशोषणैरेवं यथाप्रदर्शितं विश्वरूपं यस्य स एवंरूपोऽहं त्वदन्येन मदनुग्रहवर्जितेन द्रष्टुं शक्यः अन्ये कुरवः केचित्कुरुवीराश्च त्वं तु मदेतद्रूपदर्शनलब्धप्रकर्षः कुरुप्रवीरः संपन्न इति सूचयन्नाह—हे कुरुप्रवीर ॥ ४८ ॥

प० टी०—अथास्य दुर्लभत्वमाह—न वेदयज्ञैरिति । वेदा ऋगादयो यज्ञा अश्वमेधादयः अध्ययनं शास्त्रपठनं तैः नापि तुलापुरुषादिदानैर्न च क्रियाभिः श्रौतस्मार्तकर्मभिः तपोभिः कृच्छ्रचान्द्रायणादिभिः नृलोके मनुष्यलोके अर्जकभूमौ त्वदन्येन द्रष्टुमशक्यः कुरुप्रवीरेति निर्भयत्वेऽपि भयोत्पत्तिरयुक्तेति सूचितम् ॥ ४८ ॥

रा० टी०—ननु अर्जुनादवरैः स्वतोऽर्जुनवन्न दृष्टमपि विश्वरूपं वेदादिसाधनैरर्जुनेनेव तदवरैरपि तथा दृश्यतामित्यत आह—न वेदेति । वेदानां यज्ञानां चाध्ययनैरग्निहोत्रक्रियाभिः उग्रैः कृच्छ्रचान्द्रायणादितपोभिरेवंरूपः प्राक्प्रदर्शितविश्वरूपोऽहं नृलोके त्वदन्येन त्वत्तोऽवरेण त्वद्वद्द्रष्टुं न शक्य इत्यर्थः । सर्वात्मनाऽर्जुनादन्येनादृष्टार्थत्वे दृष्टवाद्भुतं रूपमिति प्रागुक्तविरोध इति ज्ञेयम् ॥ ४८ ॥

**मा ते व्यथा मा च विमूढभावो दृष्ट्वा रूपं घोरमीदृङ्ममेदम् ॥**
**व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव मे रूपमिदं प्रपश्य ॥ ४९ ॥**

त० टी०—एवं त्वदनुग्रहार्थमाविष्कृतमिदं रूपं दृष्ट्वा ते व्यथा भवति चेत्तर्हि तदेव रूपं दर्शयामीत्याह—मा ते इति । ईदृक् घोरं मदीयमिदं रूपं दृष्ट्वा या ते व्यथा यश्च विमूढभावोऽन्तःकरणविभ्रमः तदुभयं मा भूत् किंतु व्यपेतभीर्विशेषेणापगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेवेदं मम रूपं प्रपश्य ॥ ४९ ॥

म० टी०—एवं त्वदनुग्रहार्थमाविर्भूतेन रूपेणानेन चेत्तवोद्वेगस्तर्हि—मेति । इदं घोरमीदृक् अनेकबाह्वादियुक्तत्वेन भयंकरं मम रूपं दृष्ट्वा स्थितस्य ते तव या व्यथा भयनिमित्ता पीडा सा मा भूत् तथा मद्रूपदर्शनेऽपि यो विमूढभावो व्याकुलचित्तत्वमपरितोषः सोऽपि मा भूत् किंतु व्यपेतभीरपगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेव चतुर्भुजं वासुदेवत्वादिविशिष्टं त्वया सदा पूर्वदृष्टं रूपमिदं विश्वरूपोपसंहारेण प्रकटीक्रियमाणं प्रपश्य प्रकर्षेण भयराहित्येन संतोषेण च पश्य ॥ ४९ ॥

शं० टी०—यद्रूपसंदर्शनेन तव मनसो व्यथाऽऽसीत्तद्रूपमुपसंहरिष्यामि व्यथा मास्त्वित्याह—मा त इति । बहुबाहूदरादियुक्तमीदृगेवंलक्षणं घोरं भयंकरं रूपं दृष्ट्वा ते व्यथा परितापो मास्तु विमूढभावश्चित्तव्यामोहश्च मास्तु, किंतु व्यपेतभीः गतभयो भूत्वा प्रीतमनाः सन् तत्कार्ष्णमेव ममेदं रूपं पुनरपि पश्य दृष्ट्वा प्रशान्तो भवेत्यर्थः ॥ ४९ ॥

श्री० टी०—एवमपि चेत्तवेदं घोरं रूपं दृष्ट्वा व्यथा भवति तर्हि तदेव रूपं दर्शयामीत्याह—मा त इति । ईदृक् ईदृशं मदीयं घोरं रूपं दृष्ट्वा ते व्यथा मास्तु, विमूढभावो विमूढत्वं च मास्तु, व्यपगतभयः प्रीतमनाश्च सन् पुनस्त्वं तदेवेदं मम रूपं प्रकर्षेण पश्य ॥ ४९ ॥

स० टी०—मा ते भयनिमित्तेयं पीडा भून्मा विमूढता ॥ इदं घोरं महद्रूपमीदृक् चातिभयंकरम् ॥ १ ॥ दृष्ट्वा सर्वात्मकं नानाकारयुक्तं ममैश्वरम् ॥ निर्भयो भव प्रीतात्मा पुनस्त्वं पश्य मद्वपुः ॥ २ ॥ तदेव च घनश्यामं चतुर्बाहुं श्रियोज्ज्वलम् ॥ ३ ॥ ४९ ॥

भा० टी०—तव प्रसन्नतायै प्रदर्शितेन विश्वरूपेण तव व्यथादिकं चेत्तर्हि तदेव मे रूपं पश्येत्याह—मा ते इति । ईदृक् घोरं ममेदं रूपं दृष्ट्वा तव व्यथा भयं मा भूत्, मा च विमूढभावो व्याकुलचित्तता । तथाच व्यपेतभीः व्यथारहितः प्रीतमनाश्च सन् तदेव स्वेष्टं चतुर्भुजं शङ्खचक्रगदापद्मधरं घनश्यामं मम रूपमिदं मया प्रत्यक्षीकृतं प्रकर्षेण विश्वरूपदर्शनजनितव्यथादिनिवृत्त्यर्थं पश्य ॥ ४९ ॥

प० टी०—अत एवाह—मा ते व्यथेति । इदं घोरं भयानकं मे रूपं दृष्ट्वा ते व्यथा भयभङ्गुरत्वं विमूढभावो भ्रान्तत्वं मास्तु । अतःपरं व्यपेतभीः प्रीतमनाः सन् तदेव पूर्वानुभूतं पुनः पश्य ॥ ४९ ॥

रा० टी०—अदृष्टपूर्वमित्यादिना प्रार्थितस्योत्तरमाह—मा त इति । घोरं संहर्तृरूपमीदृगीदृशमनन्तबाह्वादिरूपं दृष्ट्वा ते व्यथा मास्तु, विमूढभावो विमूढत्वं च मास्तु, व्यपगतभयः प्रीतमनाश्च सन्पुनस्त्वं तदेव रूपं पूर्वदृष्टमेव रूपं प्रपश्येति ॥ ४९ ॥

**सञ्जय उवाच—इत्यर्जुनं वासुदेवस्तथोक्त्वा स्वकं रूपं दर्शयामास भूयः ॥**
**आश्वासयामास च भीतमेनं भूत्वा पुनः सौम्यवपुर्महात्मा ॥५०॥**

त० टी०—एवमुक्त्वा भगवान्पूर्वरूपमेवार्जुनाय दर्शयामासेति सञ्जय उवाच—इतीति । इत्येवमर्जुनं वसुदेवसूनुरुक्त्वा भूयः पुनः किरीटादियुक्तं चतुर्भुजं स्वकीयं रूपं दर्शयामास, घोररूपदर्शनेन भीतमेनमर्जुनं पुनः सौम्यवपुर्भूत्वा आश्वासयामास च महात्मा परमकारुणिकः सार्वज्ञवात्सल्यादिमहद्गुणाश्रयः ॥ ५० ॥

म० टी०—इतीति । वासुदेवोर्जुनमिति प्रागुक्तमुक्त्वा यथा पूर्वमासीत्तथा स्वकं रूपं किरिटमकरकुण्डलगदाचक्रादियुक्तं चतुर्भुजं श्रीवत्सकौस्तुभवनमालापीताम्बरादिशोभितं दर्शयामास भूयः पुनः आश्वासयामास च भीतमेनमर्जुनं भूत्वा पुनः पूर्ववत्सौम्यवपुरनुग्रशरीरो महात्मा परमकारुणिकः सर्वेश्वरः सर्वज्ञ इत्यादिकल्याणगुणाकरः ॥ ५० ॥

शं० टी०—इत्यर्जुनमिति । महानप्रमेय आत्मा स्वभावो यस्य स महात्मा वासुदेवस्तथा तदैव व्यपेतभीः प्रीतमनाः पुनस्त्वं तदेव रूपं मे पश्येत्युक्त्वैव तत्क्षणे स्वकं रूपं दर्शयामास उपसंहारदर्शनयोर्निमीलनोन्मीलनवत्स्वायत्तत्वज्ञापनार्थं तथेत्युक्तम् । पुनः सौम्यवपुर्भूत्वा धैर्यवचनैरेनमाश्वासयामासाभयं चकार ॥ ५० ॥

श्री० टी०—एवमुक्त्वा प्राक्तनमेव रूपं दर्शितवानिति संजय उवाच—इतीति । श्रीवासुदेवोऽर्जुनमेवमुक्त्वा यथा पूर्वमासीत्तथैव किरीटादियुक्तं चतुर्भुजं स्वीयं रूपं पुनर्दर्शयामास, एनमर्जुनं भीतमेव प्रसन्नवपुर्भूत्वा पुनरप्याश्वासितवान् महात्मा विश्वरूपः कृपालुरिति वा ॥ ५० ॥

स० टी०—इत्येवमर्जुनं प्रोच्य स्वकीयं रूपमीश्वरः ॥ किरीटिनं गदाशङ्खचक्रादियुतमद्भुतम् ॥ १ ॥ चतुर्भुजं च श्रीवत्सकौस्तुभप्रभयाऽन्वितम् ॥ वनमालापरीताङ्गं हारकेयूरशोभितम् ॥२॥ पीताम्बरधरं सर्वसौन्दर्यरसवारिधिम् ॥ दर्शयामास भीतं तं भूत्वा सौम्यवपुर्हरिः ॥ ३ ॥ पुनराश्वासयामास पूर्ववत्करुणाकरः ॥ सर्वज्ञः सर्वशक्तिश्च कल्याणगुणसागरः ॥ ४ ॥ ५० ॥

भा० टी०—एतद्वृत्तान्तं धृतराष्ट्राय संजयो निवेदितवानित्याह—संजय उवाचेति । इत्येवमर्जुनं वासुदेवस्तथाभूतं वचनमुक्त्वा वासुदेव इत्यनेन स्वकमित्यस्य वसुदेवगृहे जातं स्वकीयं रूपमित्यर्थं सूचयति । दर्शयामास दर्शितवान् पुनः पुनराश्वासितवान् च पुनः सौम्यवपुः प्रसन्नदेहो भूत्वा । नन्वेवं क्षणिकाचित्तेऽर्जुने क्षोभं कुतो न कृतवानित्याशङ्कानिवृत्त्यर्थमाह—महात्मा कारुण्यादिगुणगणाकरः, तस्य भगवतो युक्तमेव पूर्वपरिचितसौम्यवपुःप्रदर्शनेनार्जुनाश्वासनमिति भावः ॥ ५० ॥

प० टी०—पुनः सञ्जय आह—इतीति । इत्युक्तप्रकारं वासुदेव उक्त्वा स्वकं रूपं चतुर्भुजं दर्शयामास । पुनरनन्तरं महात्मा विष्णुर्विश्वरूपः सौम्यवपुर्मनुष्याकृतिर्भूत्वा भीतमेनमर्जुनमाश्वासयामास ॥ ५० ॥

रा० टी०—ततः किं जातमिति धार्तराष्ट्रहार्दं निरसितुं संजय उवाच—इत्यर्जुनमित्यादिना । इत्युक्त्वेत्य-

न्वयः । तथाशब्दः समुच्चये । स्वकं रूपं दर्शयामास चेत्यर्थः । स्वं स्वकीयतया प्रदर्शनीयमित्यर्थः । विश्वरूपं न स्वकीयमिदं तु स्वकीयमिति लोकभ्रान्तिविषयमिति यावत् । भीतमेनं भूय आश्वासयामास च । किं कृत्वा महात्मा सौम्यवपुर्भूत्वेति ॥ ५० ॥

**अर्जुन उवाच—दृष्ट्वेदं मानुषं रूपं तव सौम्यं जनार्दन ॥**
**इदानीमस्मि संवृत्तः सचेताः प्रकृतिं गतः ॥ ५१ ॥**

त० टी०—भगवतैवमाश्वासितो व्यपेतभयः सन्नर्जुन उवाच–दृष्ट्वेति । हे जनार्दन निरतिशयसौन्दर्यसौकुमार्यमाधुर्यलावण्यादिदिव्यगुणनिधि मानुषं मनुष्यसंस्थानविशिष्टमतिसौम्यं तवेदं रूपं दृष्ट्वा इदानीं सचेता अव्याकुलचित्तः संवृत्तोऽस्मि, तथा प्रकृतिं साध्वसनिवृत्त्या स्वास्थ्यं गतोऽस्मि ॥५१॥

म० टी०—दृष्ट्वेति । ततो निर्भयः सन् इदानीं सचेताः भयकृतव्यामोहाभावेनाव्याकुलचित्तः संवृत्तोऽस्मि तथा प्रकृतिं भयकृतव्यथाराहित्येन स्वास्थ्यं गतोऽस्मि । स्पष्टमन्यत् ॥ ५१ ॥

शं० टी०—मानवरूपदर्शनेनाश्वासवचनेन च स्वस्थः सन्नर्जुन उवाच–दृष्ट्वेदमिति । सौम्यं शान्तं तवेदं रूपं दृष्ट्वेदानीं विकृतिं भयकम्पादिलक्षणां त्यक्त्वा प्रकृतिं स्वभावं गतोऽस्मि सचेताः स्वस्थचित्तः संवृत्तो जातोऽस्मीत्यर्थः ॥ ५१ ॥

श्री० टी०—ततो निर्भयः सन्नर्जुन उवाच–दृष्ट्वेति । सचेताः प्रसन्नचित्त इदानीं संवृत्तः जातोऽस्मि प्रकृतिं स्वास्थ्यं च प्राप्तोऽस्मि । शेषं स्पष्टम् ॥ ५१ ॥

स० टी०—ततोऽसौ निर्भयो भूत्वा वाक्यमाहार्जुनो हरिम् ॥ दृष्ट्वेदं सौम्यरूपं ते वासुदेवाभिधं परम् ॥ १ ॥ इदानीं निर्भयो भूत्वा स्वास्थ्यं प्राप्यात्मतां गतः ॥ २ ॥ ५१ ॥

भा० टी०—स्वाभिलषितं रूपं दृष्ट्वाऽर्जुन उवाच–दृष्ट्वेति । दृष्ट्वेदं प्रत्यक्षं मानुषं नराकारं मत्सखं सौम्यं प्रसन्नं तव रूपमिदानीं सचेताः प्रसन्नमनाः प्रकृतिं स्वभावं गतः प्राप्तः संवृत्तः संजातोऽस्मि । जनार्दनेति संबोधयन् जनानसुरानर्दयति पीडयतीति जनार्दनस्तद्दर्शनजन्यं भयमिदानीं सौम्यरूपदर्शनेन निवृत्तमिति सूचयति ॥ ५१ ॥

प० टी०—पुनरर्जुनः प्राह–दृष्ट्वेदमिति । मानुषं मनुष्यैर्द्रष्टुं योग्यं सचेताः प्रसन्नचित्तः संवृत्तो जातोऽस्मि प्रकृतिं स्वास्थ्यं च गतोऽस्मि ॥ ५१ ॥

रा० टी०—विश्वरूपतिरोधानेन कृष्णरूपप्रदर्शनेनाश्वासितोऽस्मीत्याहार्जुनो–दृष्ट्वेति । किंच मनुष्यवदृश्यमानत्वान्मानुषमिदं सौम्यमक्रूरं तव रूपं दृष्ट्वा इदानीं सचेताः प्रसन्नचित्तः संवृत्तो जातोऽस्मि । प्रकृतिं पूर्वस्वभावं स्वस्थतां गतोऽस्मीत्यन्वयः ॥ ५१ ॥

**श्रीभगवानुवाच–सुदुर्दर्शमिदं रूपं दृष्टवानसि यन्मम ॥**
**देवा अप्यस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः ॥ ५२ ॥**

त० टी०—दर्शितस्य विश्वरूपस्य स्वानुग्रहं विना दुर्दर्शत्वं श्रीभगवानुवाच–सुदुर्दर्शमिति । सर्वाश्रयं सर्वकारणभूतं मम विश्वरूपं यत्त्वं दृष्टवानसि, तदिदं सुदुर्दर्शं सुतरां द्रष्टुमशक्यं, यतो देवा अपि अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः नतु दृष्टवन्तो न वा द्रक्ष्यन्ति ॥ ५२ ॥

म० टी०—स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् चतुर्भिः–सुदुरिति । मम यद्रूपमिदानीं त्वं दृष्टवानसि इदं विश्वरूपं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यं यतो देवा अप्यस्य रूपस्य नित्यं सर्वदा दर्शनकाङ्क्षिणो न तु त्वमिव पूर्वं दृष्टवन्तो न वाऽग्रे द्रक्ष्यन्तीत्यभिप्रायः दर्शनाकाङ्क्षाया नित्यत्वोक्तेः ॥ ५२ ॥

शं० टी०—प्रशान्तमर्जुनं दृष्ट्वा प्राह्लादयितुं श्रीभगवानुवाच—सुदुर्दर्शमिति । अपरिमिततेजोमयत्वाद्दुःखेन दर्शनं यस्य तद्दुर्दर्शं सुतरां दुर्दर्शं सुदुर्दर्शं यदिदं दर्शितलक्षणं मम विश्वाख्यं रूपं तत्त्वं दृष्टवानसि खलु एतद्दर्शनमलभ्यं भाग्यात्तव लब्धमित्यर्थः । अलभ्यत्वमेव विशदयति—देवा इति । तेजोबलपौरुषैरुत्कृष्टा देवा इन्द्रादयोऽपि ममाऽस्य रूपस्य नित्यं दर्शनकाङ्क्षिणः सर्वदैवं रूपं द्रष्टुमपेक्षन्ते नतु त्वं यथा दृष्टवानसि तथा दृष्टवन्तो भवन्ति, देवानामपि दुर्लभं मद्दर्शनमित्यर्थः ॥ ९२ ॥

श्री० टी०—स्वकृतस्यानुग्रहस्यातिदुर्लभत्वं दर्शयन् श्रीभगवानुवाच—सुदुर्दर्शमिति । यन्मम विश्वरूपं त्वं दृष्टवानसि इदं सुदुर्दर्शमत्यन्तं द्रष्टुमशक्यं यतो देवा अप्यस्य रूपस्य सर्वदा दर्शनमिच्छन्ति केवलं न पुनरिदं पश्यन्ति ॥ ९२ ॥

स० टी०—स्वकृतस्य प्रसादस्य दुर्लभत्वं प्रदर्शयन् ॥ उवाच भगवानेवं स्वभावस्थं जयं प्रति ॥१॥ विश्वरूपं मदीयं यत्त्वमिदं दृष्टवानसि ॥ तदत्यन्तमशक्यं हि द्रष्टुं देववरैरपि ॥ २ ॥ देवास्तद्द्रष्टुमिच्छन्ति सततं सात्त्विका अपि ॥ नतु त्वमिव पूर्वं ते दृष्टवन्तः कदाचन ॥ ३ ॥ नचैवाग्रेऽपि द्रक्ष्यन्ति श्रीहरेरयमाशयः ॥ ४ ॥ ९२ ॥

भा० टी०—एवं श्रुत्वा स्वकृतस्यातिदुर्लभस्यानुग्रहस्य वैयर्थ्यपरिहाराय श्रीभगवानुवाच—सुदुरिति । यन्मम रूपं मदनुग्रहेण त्वं दृष्टवानसि तदिदमन्येषां सुष्ठु दुःखेनात्यन्तकष्टेन दर्शनमस्येति सुदुर्दर्शं यतोऽत्युत्तमाः सात्त्विकास्तद्दर्शनार्थिनश्च देवा इन्द्रादयोऽपि न तत्त्वमिव दृष्टवन्तो न च द्रक्ष्यन्तीत्याशयेनाह—देवा इति ॥ ९२ ॥

प० टी०—पुनर्भगवान्—सुदुर्दर्शमिति । सुदुर्दर्शं सुतरां दुःखेनापि द्रष्टुमशक्यं मम रूपं यद्दृष्टवानसि, अस्य रूपस्य देवा अपि नित्यं दर्शनमिच्छन्ति मनोरथमात्रं कुर्वन्ति परं तु न प्राप्नुवन्ति ॥ ९२ ॥

रा० टी०—भयंकरं रूपं किमर्थं दर्शितवानसीत्यतः विश्वरूपदृष्टेर्महिमानमाह भगवान्—सुदुर्दर्शमिति । यन्मम रूपं दृष्टवानसि, अस्य रूपस्य नित्यं दर्शनकाङ्क्षिणो ये देवाः तेऽपि यद्दृष्टवन्तस्तदिदं सुदुर्दर्शं, केषांचित्सुखेन दर्शनीयं केषांचित्सुखेन दुःखेन च दर्शनीयमित्यर्थः । देवानामप्यपेक्षितत्वात्तव शत्रुवधे निमित्तमात्रत्वज्ञापनाय चैतद्रूपं दर्शितमिति भावः ॥ ९२ ॥

## नाहं वेदैर्न तपसा न दानेन न चेज्यया ॥
## शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५३ ॥

त० टी०—एतत्कुतस्तत्राह—नाहमिति । वेदैरध्ययनाध्यापनश्रवणार्थमननादिविषयैरुपनिषद्व्यतिरिक्तैः तपोदानेज्यादिभिश्च एवंविधोऽहं द्रष्टुं न शक्यः, यथा मां त्वं दृष्टवानसि ॥ ९३ ॥

म० टी०—कस्माद्देवा एतद्रूपं न दृष्टवन्तो न वा द्रक्ष्यन्ति मद्भक्तिशून्यत्वादित्याह—नाहमिति । न वेदयज्ञाध्ययनैरित्यादिना गतार्थः श्लोकः परमदुर्लभत्वख्यापनाय पुनरभ्यस्तः ॥ ९३ ॥

शं० टी०—जन्मान्तरेषु भोगेच्छया यथोक्तविधिना वेदाध्ययनादिपुण्यकर्मातिशयानुष्ठानाद्देवभावं गतानां मद्भक्तिशून्यानां तेषामिन्द्रादीनां मद्दर्शनमलब्धमिति सूचयितुं वेदादीनां स्वस्वरूपसाक्षात्कारे साधनत्वं निषेधति—नाहमिति । न वेदैः सकलवेदाध्ययनैर्न तपसा कृच्छ्रादिना, न दानेन कन्यादिना न चेज्यया श्रौतस्मार्तकर्मभिरप्येवंविधो विश्वरूपोऽहं द्रष्टुं न शक्योऽस्मि यथा मां त्वं दृष्टवानसि तथा वेदाध्ययनादिपुण्यकर्माणो मां सविशेषमेव द्रष्टुं न शक्नुवन्ति कुतो निर्विशेषं साक्षात्कुर्युरित्यर्थः । एतेन न वेदयज्ञाध्ययनैरिति प्रतिपादितस्यैवार्थस्य नाहं वेदैरिति पुनः प्रतिपादनेन कर्मणां मोक्षं प्रति साक्षात्साधनत्वं कथंचिदपि न सिध्यतीति सम्यक्सूचितं भवति ॥ ५३ ॥

श्री० टी०—तत्र हेतुः—नाहमिति। स्पष्टार्थः ॥ ५३ ॥

स० टी०—कुत एतन्न देवास्ते दृष्टवन्तो न वा पुनः ॥ द्रक्ष्यन्तीति शृणु त्वं मद्भक्तिर्या प्रेमलक्षणा ॥१॥ न येषां सा समुत्पन्ना न ते तत्राधिकारिणः ॥ वेदैरधीतैस्तपसा दानैर्यज्ञैरहं हरिः ॥ २ ॥ द्रष्टुमेवंविधो नास्मि शक्यो दृष्टो यथा त्वया ॥ ३ ॥ ५३ ॥

भा० टी०—तत्र हेत्वाकाङ्क्षायामाह—नेति। यथा विश्वरूपं मां त्वं दृष्टवानसि एवंविधोऽहं न वेदैः ऋगादिभिः न तपसोग्रेण चान्द्रायणादिना न दानेन गोदानादिना न चेज्यया यज्ञेन पूजया वाऽन्यैर्मदत्यन्तानुग्रहरहितैर्द्रष्टुं शक्यः ॥ ५३ ॥

प० टी०—नाहं वेदैरिति। गतार्थम् ॥ ५३ ॥

रा० टी०—किंचातिदुर्लभदर्शनं ते मया कारितमिति भावेनाह—नाहमिति। यथा दृष्टवानसि एवंविधो विश्वरूपवानित्यर्थः ॥ ५३ ॥

**भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥ ५४ ॥**

त० टी०—यद्येतैर्न द्रष्टुं शक्यस्तर्हि केनोपायेन द्रष्टुं शक्यो भवानित्यपेक्षायामाह—भक्त्येति। तुशब्दः भक्तेः सर्वसाधनेभ्यः स्वातन्त्र्येणोत्कर्षद्योतनपरः। अनन्यया साधनसाध्यसंबन्धरूपतया मदेकनिष्ठया भक्त्या तु एवंभूतो विश्वरूपोऽहं तत्त्वेन परमार्थतो ज्ञातुं शक्यः, हे अर्जुन तत्त्वेन द्रष्टुं च साक्षात् कर्तुं शक्यः। प्रवेष्टुं च मच्छक्त्यात्मना मदाधेयतयाऽवस्थातुं शक्यः। हे परंतप परापरशक्तिरूपत्वाच्चेतनाचेतनरूपविश्वस्य 'विष्णुशक्तिः परा प्रोक्ता चेतनाख्या तथाऽपरा' इति वैष्णवे जनकवाक्यात् 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्' इति स्वयमप्युक्तवात्। तस्माद्देवादीनां वेदादिभिर्दर्शनाशक्यत्वं यदुक्तं तद्भक्तिहीनानामेवेति फलितम् ॥ ५४ ॥

म० टी०—यदि वेदतपोदानेज्याभिर्द्रष्टुमशक्यस्त्वं तर्हि केनोपायेन द्रष्टुं शक्योऽसीत्यत आह—भक्त्येति। साधनान्तरव्यावृत्त्यर्थस्तुशब्दः। भक्त्यैवानन्यया मदेकनिष्ठया निरतिशयप्रीत्या एवंविधो दिव्यरूपधरोऽहं ज्ञातुं शक्यः शास्त्रतो हे अर्जुन। शक्य अहमिति छान्दसो विसर्गलोपः। पूर्ववत् न केवलं शास्त्रतो ज्ञातुं शक्योऽनन्यया भक्त्या किंतु तत्त्वेन द्रष्टुं च स्वरूपेण साक्षात्कर्तुं च शक्यो वेदान्तवाक्यश्रवणमनननिदिध्यासनपरिपाकेण ततश्च स्वरूपसाक्षात्कारादविद्यातत्कार्यनिवृत्तौ तत्त्वेन प्रवेष्टुं च मद्रूपतयैवाप्तुं चाहं शक्यो हे परंतप अज्ञानशत्रुदमनेऽतिप्रवेशयोग्यतां सूचयति ॥ ५४ ॥

शं० टी०—ननु वेदादीनामसाधनत्वं तर्हि केन तव साक्षात्कार इत्याकाङ्क्षायामाह—भक्त्येति। तुशब्दोऽन्यस्यासाधनत्वनिर्धारणार्थः। "सर्वं खल्विदं ब्रह्म" इत्यादिशास्त्रार्थोपदेशजन्यज्ञानसमुत्पन्नयाऽनन्यया श्रुतं दृष्टं स्पृष्टं मतं विज्ञातं च सर्वं ब्रह्मैवेति सर्वस्य स्वस्य च ब्रह्ममात्रत्वावगाहिन्या प्रत्ययान्तरशून्यया भक्त्या त्वनुसंधानेनैव एवंरूपो विश्वात्मकोऽहं परमात्मा सम्यगाराधितः सन् तत्त्वेन यथार्थस्वरूपेण इदमेव परमार्थं वस्त्विति ज्ञातुं निश्चेतुं द्रष्टुमिदमेवाहमिति स्वात्मना साक्षात्कर्तुमपि प्रवेष्टुं च विदेहीभूय मदात्मनाऽवस्थातुमपि च शक्योऽस्मि, निर्विशेषब्रह्मात्मना ज्ञानस्य विषयो भवामीत्यर्थः। अत्रायमभिप्रायः मुमुक्षोर्मुख्याधिकारिणश्चित्तशुद्धये सविशेषविश्वरूपस्य ब्रह्मण उपास्तौ श्रद्धाभक्तिभ्यामजस्रं ब्रह्मैवेदं सर्वमिति कृतायां तया भेदप्रत्ययनाशात्परिशुद्धात्मनो निर्विशेषं परं ब्रह्म ज्ञातुं साक्षात्कर्तुं तदात्मनावस्थानलक्षणां विदेहमुक्तिं च प्राप्तुमपि त्वयमेव विषयो भवतीति ॥ ५४ ॥

श्री० टी०—केनोपायेन तर्हि त्वं द्रष्टुं शक्य इति तत्राह—भक्त्येति । अनन्यया मदेकनिष्ठया भक्त्या तु एवंभूतो विश्वरूपोऽहं तत्त्वेन परमार्थतो ज्ञातुं शक्यः शास्त्रतः द्रष्टुं प्रत्यक्षतः प्रवेष्टुं च तादात्म्येन शक्यो नान्यैरुपायैः ॥ ५४ ॥

स० टी०—यदि द्रष्टुमशक्यस्त्वं तपोवेदाध्वरादिभिः ॥ केनोपायेन तत्तर्हि द्रष्टुं शक्योऽसि चेति चेत् ॥ १ ॥ साधनान्तरव्यावृत्त्यै तुशब्दो बोध्य उत्तमैः ॥ मदेकनिष्ठया प्रेमभक्त्यैवाहं महेश्वरः ॥ २ ॥ दिव्यरूपधरो ज्ञातुं शक्यः शास्त्रान्नरोत्तमैः ॥ साक्षात्कर्तुं स्वरूपेण वेदवाक्योत्थया धिया ॥ ३ ॥ शक्यश्चास्मि सदा प्रेमभक्त्यैवाराधितो जनैः ॥ साक्षात्कारादविद्यातत्कार्यहान्या च तत्त्वतः ॥ ४ ॥ मत्स्वरूपतयैवाप्तुं शक्योऽहं हे परंतप ॥ अनन्ययैव भक्त्या त्वं सदा मामाश्रयार्जुन ॥ ५ ॥ ५४ ॥

भा० टी०—उक्तसाधनैस्त्वं द्रष्टुमशक्यस्तर्हि केनोपायेन द्रष्टुं शक्य इत्यत आह—भक्त्येति । भक्त्या तु भक्तीतरसाधनव्यवच्छेदार्थस्तुशब्दः । किं भक्तिमात्रं त्वद्दर्शनहेतुरित्यतस्तां विशिनष्टि—अनन्यया भगवतो वासुदेवादन्यत्र पृथक् कदाचिदपि या न भवति तया ईश्वरे परानुरक्तिलक्षणया वासुदेवादन्यत्र सर्वकरणप्रवृत्तिनिवारकया अहमेवंविधो विश्वरूपधरः शास्त्रेणासंभावनादिनिवृत्तिपुरःसरं ज्ञातुं द्रष्टुं च त्वमिव साक्षात्कर्तुं च तत्त्वेन तत्त्वतः प्रवेष्टुं च श्रवणादिना तत्त्वसाक्षात्कारेण मोक्षमेकीभावलक्षणं जीवन्मुक्तिं विदेहकैवल्याख्यं च गन्तुमित्यर्थः । ननु "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन" इति श्रुत्या साधनत्वेन बोधितानां वेदानुवचनादीनां का गतिरित्याशङ्क्य साङ्गैस्तैरेतज्जन्मनि जन्मान्तरे वा कृतैश्चित्तशुद्ध्या मय्यनन्या मनआदिशत्रुतापनशमदमादिसंपन्ना भक्तिस्ततो मत्स्वरूपज्ञानादीति भक्तिद्वारा तेषां साधनत्वाददोष इत्याशयेन संबोधनाभ्यां समाधत्ते हेऽर्जुन हे परंतपेति ॥ ५४ ॥

प० टी०—किं तु—भक्त्येति । भोऽर्जुन एवंविधोऽहमनन्ययाऽव्यभिचारिण्या भक्त्या तत्त्वेन ज्ञातुं शास्त्रतः प्रत्यक्षतः प्रवेष्टुं तादात्म्येन शक्यो नान्यथा ॥ ५४ ॥

रा० टी०—केनोपायेन द्रष्टुं शक्य इत्यत आह—भक्त्येति । वेदादितो विशेषद्योतकस्तुशब्दः । अनन्ययाऽन्यासाधारणया असहाययेति वा । तत्त्वेन ज्ञातुं द्रष्टुं प्रवेष्टुं सायुज्यं प्राप्तुं च शक्योऽहमिति ॥ ५४ ॥

**मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः ॥**
**निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥ ५५ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे**
**विश्वरूपदर्शनयोगोनाम एकादशोऽध्यायः ॥ ११ ॥**

त० टी०—एवमनन्यया भक्त्या येन पुरुषेण स्वस्य ज्ञातुं द्रष्टुं प्रवेष्टुं च शक्यत्वमुक्तं तस्य वृत्तिं फलं च वदन्नध्यायमुपसंहरति—मत्कर्मकृदिति । यत्किंचिद्वेदाध्ययनादि सर्वं कर्म मदाराधनरूपं यः करोति स मत्कर्मकृत्, तथा मत्परमः अहमेव परमः प्राप्यभूतः पुरुषार्थो यस्य नतु स्वर्गस्त्रीपुत्रधनादिर्मत्कर्मफलं तथा सः अत एव मद्भक्तः मत्कीर्तनश्रवणध्यानार्चनादिमद्भजनेनैव कालक्षेपं यः करोति स तथा । ननु पूर्वसिद्धस्त्रीपुत्रादिस्नेहे तद्भरणार्थमावश्यककर्मान्तरे च सति कथमुक्तप्रकारस्त्वद्भक्तः स्यादिति चेत्तत्राह—सङ्गवर्जित इति मद्भक्तेतरसर्वसङ्गशून्यः । एवमपि सर्वभूतेषु यो निर्वैरः अपकारिजनेष्वपि द्वेषाभिनिवेशवर्जितो यः स मामेति विश्वमायानिवृत्तिपूर्वकमद्भावापत्तिमाप्नोति, न पुनरावर्तते इत्यर्थः ॥ ५५ ॥

**इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां विश्वरूपदर्शनयोगो नाम एकादशोऽध्यायः ॥ ११ ॥**

**म० टी०**–अधुना सर्वस्य गीताशास्त्रस्य सारभूतोऽर्थो निःश्रेयसार्थिनामनुष्ठानाय पुञ्जीकृत्योच्यते–**मत्कर्मेति**। मदर्थं कर्म वेदविहितं करोतीति मत्कर्मकृत्। स्वर्गादिकामनायां सत्यां कथमेवमिति नेत्याह–मत्परमः अहमेव परमः प्राप्तव्यत्वेन निश्चितो न तु स्वर्गादिर्यस्य सः अत एव मत्प्राप्त्याशया मद्भक्तः सर्वैः प्रकारैर्मम भजनपरः। पुत्रादिषु स्नेहे सति कथमेवं स्यादिति नेत्याह–सङ्गवर्जितः बाह्यवस्तुस्पृहाशून्यः। शत्रुषु द्वेषे सति कथमेवं स्यादिति नेत्याह–निर्वैरः सर्वभूतेषु अपकारिष्वपि द्वेषशून्यो यः स मामेत्यभेदेन हे पाण्डव अयमर्थस्त्वया ज्ञातुमिष्टो मयोपदिष्टो नातः परं किंचित्कर्तव्यमस्तीत्यर्थः॥ ५५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां विश्वरूपदर्शननिरूपणं नामैकादशोऽध्यायः॥ ११॥

**शं० टी०**–इत्येवं भक्तेर्ब्रह्मप्राप्तौ कारणत्वमुक्त्वाऽधुना वक्ष्यमाणसाधनपञ्चकसंपत्त्या यो मां भजति तस्यैव चित्तप्रसादः सम्यग्ज्ञानं मोक्षश्च सिध्यतीति सूचयन्नध्यायमुपसंहरति–**मत्कर्मकृदिति**। मत्कर्मकृत् मदर्थमेव कर्म लौकिकं वैदिकं च चेष्टामात्रं सर्वमपि करोति न तु स्वार्थमीषदपि यः स मत्कर्मकृत्, मत्परमः यदर्थं पुरुषः कर्म करोति तदेव फलं प्रतिपद्यते नान्यत्तद्वदयमपि मदर्थं कर्म कुर्वन् सन् मामेव प्रतिपद्यते ततोऽहमेव कृतकर्मणां फलभूता परमाऽनुत्तमा गतिरस्येति मत्परमः, यद्वा स एव रक्षकः स एवाश्रयणीयः स एव प्रार्थनीयः स एव प्राप्तव्यः स एवाधारः स एव गतिश्चास्माकमिति निरतिशयप्रीत्याहमेव परमो रक्षकत्वादिधर्मैरुत्कृष्टतमो यस्य स मत्परमः, यद्वा मीयते पदार्थोऽयनेति मा मा नामेन्द्रियाणां वृत्तिः मत्परा सर्वत्र मत्स्वरूपग्रहणपरा मा इन्द्रियवृत्तिर्यस्य स मत्परमस्तत एव मद्भक्तः सर्वात्मानं मां सर्वत्र सर्वदा भजति चक्षुरादीनां विषयभूतं वस्तु सर्वं ब्रह्मैवेत्यनुसंदधातीति मद्भक्तः सङ्गवर्जितः पुत्रमित्रकलत्रादिषु रक्तिहेतुष्वसद्बुद्ध्यानुषक्तिरहितः। तर्हि तेष्वनुरागाभावे द्वेषस्तु स्यादेवेत्याशङ्कायामाह–**निर्वैर इति**। सर्वभूतेषु स्वस्योपद्रवकारिषु सत्स्वपि निर्वैरः वैरं शत्रुत्वबुद्धिः सर्वत्र ब्रह्मभावनया सा निर्गता यस्य स निर्वैर उपशान्तसर्वविकारो यो मुमुक्षुर्भवति स भक्तवर्यो निर्विशेषब्रह्मविज्ञानेनात्मप्रसादसंपन्नः सन्मां परं ब्रह्मैति विदेहकैवल्यं प्राप्नोतीत्यर्थः॥ ५५॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीमच्छंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यामेकादशोऽध्यायः॥ ११॥

**श्री० टी०**–अतः सर्वशास्त्रसारं परमं रहस्यं शृण्वित्याह–**मत्कर्मकृदिति**। मदर्थं कर्म करोतीति मत्कर्मकृत् अहमेव परमः पुरुषार्थो यस्य सः ममैव भक्तो मामेवाश्रितः पुत्रादिषु सङ्गवर्जितो निर्वैरश्च सर्वभूतेषु एवंभूतो यः स मां प्राप्नोति नान्य इति॥ ५५॥

देवैरपि सुदुर्दर्शं तपोज्ञानादिकोटिभिः॥ भक्ताय भगवानेवं विश्वरूपमदर्शयत्॥ १॥

इति श्रीधरस्वामिविरचितायां सुबोधिन्यां टीकायां विश्वरूपदर्शनं नामैकादशोऽध्यायः॥ ११॥

**स० टी०**–गीताशास्त्रस्य सर्वस्य सारभूतोऽर्थ आदरात्॥ निःश्रेयसार्थिनां सम्यगनुष्ठानाय चाधुना॥ १॥ पुञ्जीकृत्योच्यते श्रीमद्धरिणा करुणाब्धिना॥ मदर्थं कर्म वेदोक्तं कुर्वन्यो मत्परायणः॥ २॥ सुप्राप्यत्वेन यस्याहं निश्चितो नापरोऽर्थकः॥ मदवाप्त्या शयानश्च मद्भक्तः सर्वथोत्तमः॥ ३॥ मामेव सर्वथा प्रीत्या सर्वोत्साहेन सर्वदा॥ सर्वात्मना यो भजते मत्प्रेम्णाऽऽविष्टमानसः॥ ४॥ पुत्रवित्तकलत्रादौ भोगेषु स्नेहवर्जितः॥ सर्वभूतेषु मद्दृष्ट्या त्यक्तशत्रुमतिः पुमान्॥ ५॥ स्वस्यात्यन्तापकारादिवृत्तेष्वप्युपकारकृत्॥ ईदृशो दम्भशून्यो यो मद्भक्तो मामुपैति सः॥ ६॥ परा गतिरहं तस्य हरिरेव न चापरा॥ अयमर्थस्त्वया ज्ञातुमिष्टोऽतस्ते मयोदितः॥ ७॥ नातः परं च कर्तव्यं किंचिदित्याशयो हरेः॥८॥५५॥

सम्यग्वेदैरधीतैः श्रुतिमतिविधिना कृत्वनुष्ठानतोऽपि स्वान्तः क्लेशैस्तपोभिर्निजसमकनकैर्ब्राह्मणेभ्योऽपि दत्तैः।यः शक्यो नैव लोके कथमपि दिविजैर्द्रष्टुमिच्छद्भिरीशः शक्यो योऽनन्यभक्त्या प्रविशतु हृदयं मे स कृष्णः सभक्तिः ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ हरिप्रसादमाहात्म्यं पूर्तिमेकादशो गतः ॥

एतदध्यायगतटीकासंख्या ॥२२७॥ आदित आरभ्य टीकाश्लोकसंख्या ॥३०६९॥

**भा० टी०**—इदानीं शास्त्रसारभूतस्य गीताशास्त्रस्य सारभूतमर्थं निःश्रेयसप्रयोजनकं संगृह्यावश्यमनुष्ठानायातिकारुणिको भगवानाह—**मत्कर्मेति** । मदर्थं मत्प्रीत्यर्थं वेदविहितं कर्म करोतीति मत्कर्मकृत् यतोऽहमेव परमः प्रकृष्टः प्राप्यो यस्य नतु स्वर्गादिः स तथा मत्प्राप्तिसाधनेन सर्वात्मना सर्वप्रकारैः सर्वोत्साहेन मद्भजनेन युक्तः । धनाद्यासक्त्या भगवद्भजनं न सिद्ध्यत्यत आह—धनपुत्रमित्रकलत्रादिषु सङ्गवर्जित आसक्तिरहितः । भूतेषु सवैरस्य मदनन्या भक्तिरतिदूरतरेत्याह—सर्वभूतेषु निर्वैरः साधारणेषु स्वस्यात्यन्तापकारकेष्वपि शत्रुभाववर्जितः य ईदृशो दम्भरहितो मद्भक्तः स मामेति अभेदेन साक्षात्करोति, अहमेव तस्य परा गतिर्नान्येत्यर्थः । अयं सारसंग्रहो मया तवोपदिष्टः यतो भवान् मत्पितृभामापत्यत्वादतिप्रेमास्पद इत्याशयेनाह—पाण्डवेति ॥ ५५ ॥ तदनेनैकादशाध्यायेन विश्वरूपप्रतिपादकेन सर्वेश्वरस्य सर्वात्मनः सर्वज्ञस्यानन्यया भक्त्या तत्स्वरूपज्ञानादिप्रदर्शकेन तत्पदवाच्योऽर्थो निरूपितः ॥

चिदानन्दे यत्रादितिजनरयक्षासुरयुतं विभातं त्रैलोक्यं सति भवति नाश्चर्यजनकम् ।
अनन्ताण्डाधारे तमजमजरात्मानममृतं शिवं कृष्णं वन्दे निखिलहृदिगं द्रष्टुमभयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायामेकादशोऽध्यायः ॥ ११ ॥

**प० टी०**—अत्र रहस्यं शृण्वित्याह—**मत्कर्मकृदिति** । मदर्थं कर्म करोतीति मत्कर्मकृत्, अहमेव परमः पुरुषार्थो यस्य, मयि भक्तो मदाश्रितः, पुत्रकलत्रादिषु सङ्गवर्जितः, सर्वभूतेषु निर्वैरो भवति स मां प्राप्नोति नान्यः । तदुक्तमस्माभिर्भक्तिशते—' नानारङ्गैरनङ्गायुधमभिलिखिताश्चित्रिणोऽभ्यासलभ्यं सौरभ्यं नैव तस्मिन् न च सरथहयं मण्डलं चण्डरश्मेः । तीव्रं तेजस्त्रिलोकीतिमिरनिरसनं तद्वदानन्दसान्द्रं संन्यासाभ्यासभाजो न सुलभमपि तु श्रीयदूत्तंसभक्त्या ' ॥ ५५ ॥

अध्यायतात्पर्यं तु ।

मानुष्यं मन्यसे चेन्मयि तदिदमये भूर्भुवःस्वर्महोऽन्तःस्वीकारं वैभवं चाभयममृतगतिं द्रष्टुमिच्छास्ति ते चेत् ।
तत्पश्यारातिवर्गं निहतमिह मया दत्तया दिव्यदृष्ट्या ब्रह्मादीन् देवदेवानिति यदुपतिना प्रोक्तमेकादशेऽस्मिन् ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां विश्वरूपाख्यमध्यमप्रमाणनिरूपणं नामैकादशोऽध्यायः ॥ ११ ॥

**रा० टी०**—अनन्ययेत्युक्त्या जातान्यत्यागभ्रान्तिं निराह—**मत्कर्मकृदिति** । अहमेव परमो यस्य स तथा, मदुत्तमताज्ञानवानित्यर्थः । सङ्गवर्जितः फलस्नेहहीनः यः स मामेतीति ॥ ५५ ॥

इति श्रीमद्गीतार्थसंग्रहे राघवेन्द्रयतिकृते एकादशोऽध्यायः ॥ ११ ॥



## अथ द्वादशोऽध्यायः ।

**अर्जुन उवाच–एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते ॥**
**ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ १ ॥**

त० टी०–पूर्वाध्यायान्ते मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेत्यनेन भगवदनन्यभक्तस्य भगवत्प्राप्तिफलमित्युक्तम् । अष्टमेऽध्याये परस्तस्मात्तु भावोऽन्योऽव्यक्तोऽव्यक्तात्सनातन इत्यादिश्लोकेन प्रकृतिसंसृष्टाद्धिरण्यगर्भात्प्रकृतिवियुक्ततयोत्कृष्टो भावो भिन्नो लौकिकपदार्थविलक्षणः शास्त्रमन्तरेण केनापि प्रकारेण न व्यज्यत इत्यव्यक्तः सनातनो नित्यः प्रत्यगात्मोक्तः । तस्यैव अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिमित्यनेनाक्षरत्वपरमागतित्वं परमत्वं चोक्तम् । एवं द्वयोः प्राप्यत्वाभिधानादुभयोः कस्य श्रैष्ठ्यफलत्वं, कस्य वा सुखप्राप्यत्वं प्राप्यानुगुणं, के वा साधकाः श्रेष्ठा इति विशेषजिज्ञासया अर्जुन उवाच–एवमिति । एवं मत्कर्मकृन्मत्परम इत्यादिनोक्तेन प्रकारेण सततयुक्तास्त्वन्निष्ठाः सन्तो ये भक्ताः सर्वज्ञं सर्वशक्तिं निरवधिकातिशयैश्वर्यं परमप्राप्यं भगवन्तं त्वामेव पर्युपासते सर्वतः सेवन्ते, ये चाप्यक्षरमविनाशि प्रत्यगात्मस्वरूपं तदेव चक्षुरादिकरणेनानभिव्यक्तमुपासते, तेषामुभयेषां मध्ये के योगवित्तमाः योगमुत्तमप्राप्त्युपायं विदन्ति ते योगविदस्तेषु परमफलप्राप्तिसाधनवित्त्वाद्योगवित्तमाः श्रेष्ठा इत्यर्थः ॥ १ ॥

म० टी०–पूर्वाध्यायान्ते मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेत्युक्तं तत्र मच्छब्दार्थे संदेहः किं निराकारमेव सर्वस्वरूपं वस्तु मच्छब्देनोक्तं भगवता किं वा साकारमिति उभयत्रापि प्रयोगदर्शनात् , बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते । वासुदेवः सर्वमिति स महात्मा सुदुर्लभ इत्यादौ निराकारं वस्तु व्यपदिष्टं, विश्वरूपदर्शनानन्तरं च नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथेति साकारं वस्तु, उभयोश्च भगवदुपदेशयोरधिकारिभेदेनैव व्यवस्थया भवितव्यं अन्यथा विरोधात्, तत्रैवं सति मया मुमुक्षुणा किं निराकारमेव वस्तु चिन्तनीयं किंवा साकारमिति स्वाधिकारनिश्चयाय सगुणनिर्गुणविद्ययोर्विशेषबुभुत्सया–एवमिति । एवं मत्कर्मकृदित्याद्यनन्तरोक्तप्रकारेण सततयुक्ता नैरन्तर्येण भगवत्कर्मादौ सावधानतया प्रवृत्ता भक्ताः साकारवस्त्वेकशरणाः सन्तस्त्वामेवंविधं साकारं ये पर्युपासते सततं चिन्तयन्ति ये चापि सर्वतो विरक्तास्त्यक्तसर्वकर्माणोऽक्षरं न क्षरत्यश्नुते वेत्यक्षरम् "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादि श्रुतिप्रतिषिद्धसर्वोपाधिरहितं निर्गुणं ब्रह्म अत एवाव्यक्तं सर्वकरणागोचरं निराकरं त्वां पर्युपासते तेषामुभयेषां मध्ये के योगवित्तमाः अतिशयेन योगविदः योगं समाधिं विन्दन्ति विदन्तीति वा योगविदः उभयेऽपि तेषां मध्ये के श्रेष्ठा योगिनः केषां ज्ञानं मयानुसरणीयमित्यर्थः ॥ १ ॥

शं० टी०–नवमाध्यायान्ते मन्मना भव मद्भक्त इति चित्तशुद्धये स्वोपास्तिः कर्तव्येत्युक्ते तव स्वरूपे ज्ञाते खलूपास्तिः कर्तुं शक्यत इत्याकाङ्क्षायां मन्दप्रज्ञानामुपासनार्थं विष्ण्वादिविभूतिविशेषानुपदिश्य तत्र मुख्याधिकारिण एकांशेन स्थितो जगदिति विश्वात्मकमैश्वरं रूपमुपास्यमिति सूचयित्वा यदेतद्रूपं मुमुक्षूपासनीयं तदहं पश्येयमिति प्रार्थितवतेऽर्जुनाय तद्दर्शयित्वा ममैतद्रूपमुक्तसाधनसंपत्त्या यः समुपास्ते स ज्ञानेन कैवल्यं परमपुरुषार्थं प्राप्नोतीति स्वोपास्तेर्महाफलवत्त्वं प्रतिपाद्याधुना सगुणनिर्गुणोपासकानां तारतम्यविशेषं सगुणोपासकानां स्वोपास्तेः साधनान्तराणि च निर्गुणब्रह्मविदां समुत्पन्नज्ञानरक्षार्थं साधन-

विशेषं च निरूपयितुं द्वादशाध्याय आरभ्यते । तत्रादौ न जायते म्रियते वेत्यादिना परं ब्रह्म ज्ञेयत्वेनोक्त्वा निस्त्रैगुण्यो भवार्जुनेति तद्बुद्धय इति महात्मानस्तु मां पार्थेति मद्भक्ता यान्ति मामपीति च परस्य ब्रह्मण उपासनं तत्फलं च निरुक्तं सप्तमेऽष्टमे नवमे दशमे एकादशे च सगुणब्रह्मणोऽपि स्वरूपमुपासनं च सफलं प्रतिपादितं तदेतद्रूपद्वयं श्रुत्वा द्वयोरेतयोः पक्षयोर्विशेषे विज्ञाते सुकरे मुमुक्षवः प्रवर्तेरन्निति बुद्ध्या सगुणनिर्गुणोपासकानां तारतम्यविशेषं ज्ञातुमिच्छया भगवन्तं प्रष्टुमर्जुन उवाच—**एवमिति** । एवमेवं-प्रकारैस्त्वत्कर्मकृत्त्वत्वत्परमत्वत्वद्भक्तत्वासङ्गत्वनिर्वैरत्वलक्षणैः साधनैः सततयुक्ताः सततं सर्वदाऽभिन्नतया युक्ता विशिष्टा भूत्वा ये भक्ताः सगुणनिष्ठास्त्वां विश्वरूपं सर्वज्ञं सर्वकारणं परमेश्वरं पर्युपासते भजन्ते । किंच अव्यक्तं शब्दादिविशेषाभावान्न व्यज्यत इत्यव्यक्तं सर्वेन्द्रियागोचरमस्थूलमनण्वह्रस्वमित्यादिश्रुति-प्रसिद्धमक्षरं स्वस्मिन्नध्यस्तं सर्वं महदादिस्थूलान्तमश्नुत इत्यक्षरमपि निर्विशेषं त्वां परं ब्रह्म ये च ब्रह्मविदः शमदमादिभिरद्वेष्टृत्वादिभिः सत्साधनैः संपन्नाः सन्तः पर्युपासते निरन्तरमनुसंदधते तेषामेतेषामुभयेषां मध्ये के योगवित्तमाः योगः समाधिस्तं विदन्ति प्राप्नुवन्तीति योगविदस्तेषां मध्ये के विशिष्टयोगिन इत्यर्थः । अत्रायमभिप्रायः । मुमुक्षूणां सगुणोपासनं निर्गुणोपासनं चोभयमपि मोक्षसाधनं त्वयोपदिष्टं तत्र सुकरं किं साक्षान्मोक्षहेतुः किं तद्भक्तव्यमिति ॥ १ ॥

**श्री० टी०**—निर्गुणोपासनस्यैवं सगुणोपासनस्य च ॥ श्रेयः कतरदित्येवं निर्णेतुं द्वादशोद्यमः ॥ १ ॥ पूर्वाध्यायान्ते मत्कर्मकृन्मत्परम इत्येवं भक्तिनिष्ठस्य श्रेष्ठत्वमुक्तम् । कौन्तेय प्रतिजानीहीत्या-दिना च तत्र तत्र तस्यैव श्रेष्ठत्वं वर्णितं, तथा तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत इत्यादिना सर्वं ज्ञान-प्लवेनैव वृजिनं संतरिष्यसीत्यादिना च ज्ञाननिष्ठस्य श्रेष्ठत्वमुक्तम् । एवमुभयोः श्रैष्ठ्येऽपि विशेषजिज्ञासया भगवन्तं प्रति अर्जुन उवाच—**एवमिति** । एवं सर्वकर्मार्पणादिना सततं युक्तास्त्वन्निष्ठाः सन्तो ये भक्ता-स्त्वां विश्वरूपं सर्वज्ञं सर्वशक्तिं पर्युपासते ध्यायन्ति ये चाप्यक्षरं ब्रह्म अव्यक्तं निर्विशेषमुपासते तेषा-मुभयेषां मध्ये अतिशयेन के योगविदः श्रेष्ठा इत्यर्थः ॥ १ ॥

**स० टी०**—अनादौ संसारे जनिमृतिमये भ्रान्तिनिबिडे निमग्नानां पुंसां क्वचिदपि सुखं नास्ति विम-लम् ॥ तपोभिर्वा दानैः क्रतुभिरपि वेदानुवचनैर्ऋतेऽत्यन्तप्रेम्णा हरिपदसरोजेऽच्छसुखदे ॥ १ ॥ अतोऽहं ते नाथ श्रुतिविशदकीर्तेर्मधुरिपोः शरण्यं पादाब्जं भ्रमर इव शान्त्यादिनिलयम् ॥ सदा ध्यातुं प्रेम्णा रति-मतिगतीनां निजगृहं धिया याचे ज्ञातुं तव निजवपुश्चाद्वयमजम् ॥ २ ॥ मत्कर्मकृन्मत्परमो मद्भक्तो यः स एति माम् ॥ पूर्वाध्यायान्त इत्यत्र मच्छब्दार्थोऽस्ति संशयः ॥ ३ ॥ किं निराकारमेवोक्तं वस्तु मच्छ-ब्दतोऽथवा ॥ साकारमिति मच्छब्द उभयत्रापि दृश्यते ॥ ४ ॥ बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ॥ शक्य एवं विधो द्रष्टुं दृष्टवानसि मां यथा ॥ ५ ॥ इत्येवमुभयोर्विष्णोरुपदेशोऽस्ति वस्तुनोः ॥ तत्रा-धिकारिभेदेन भवितव्यं व्यवस्थया ॥ ६ ॥ तत्र किं चिन्तनीयं स्यान्मया वस्तु मुमुक्षुणा ॥ साकारं वा निराकारमिति संदेहशान्तये ॥ ७ ॥ विद्ययोरुभयोर्मध्ये का स्याच्छ्रेष्ठतरा मता ॥ हरेरेवं बुभुत्सुः सन्न-र्जुनः परिपृच्छति ॥ ८ ॥ मत्कर्मकृन्मत्परम इत्यत्रोक्तप्रकारतः ॥ सावधानतया नित्यं ये प्रवृत्ता महो-त्सवे ॥ ९ ॥ अनन्यशरणाः सन्तस्त्वत्कर्मादौ त्वयेरिते ॥ त्वामेवं विश्वरूपं श्रीभगवन्तं गुणालयम् ॥ १० ॥ नैरन्तर्येण साकारं चिन्तयन्ति विचक्षणाः ॥ ये च संन्यस्तकर्माणस्त्यक्तसर्वैषणा बुधाः ॥ ११ ॥ परं ब्रह्माक्षरं शुद्धं निर्गुणं निष्कलं शिवम् ॥ सर्वोपाधिविनिर्मुक्तं निराकारं निरामयम् ॥ १२ ॥ त्वां पर्यु-पासते नित्यमखण्डात्मानमव्ययम् ॥ के विशिष्टतरास्तेषामुभयेषां हि योगिनाम् ॥ १३ ॥ मया मुमुक्षुणा स्थेयं केषामाश्रित्य सन्मतम् ॥ १४ ॥ १ ॥

**भा० टी०**—यत्कृपालवमात्रेण मूर्खो भवति पण्डितः ॥ तं वन्दे परमानन्दं विष्णुं जिष्णुं शिबे

गुरुम् ॥ १ ॥ द्वितीयाद्यध्यायेषु विभूत्यध्यायान्तेषु त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन । निर्द्वन्द्वो नित्यसत्त्वस्थो निर्योगक्षेम आत्मवान् ॥ यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥ नैव तस्य कृतेनार्थो नाकृतेनेह कश्चन । न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः ॥ यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । तत्स्वयं योगसंसिद्धः कालेनात्मनि विन्दति ॥ तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः । गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः ॥ योन्तःसुखोन्तरारामस्तथान्तर्ज्योतिरेव यः । स योगी ब्रह्मनिर्वाणं ब्रह्मभूतोऽधिगच्छति ॥ यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥ सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः । सर्वथा वर्तमानोऽपि स योगी मयि वर्तते ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः । परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥ परस्तस्मात्तु भावोऽन्यो ऽव्यक्तोऽव्यक्तात्सनातनः ॥ ७ ॥ यः स सर्वेषु भूतेषु नश्यत्सु न विनश्यति ॥ अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ॥ ८ ॥ राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि ॥ ९ ॥ न मे विदुः सुरगणाः प्रभवं न महर्षयः । अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ यो मामजमनादिं च वेत्ति लोकमहेश्वरम् । असंमूढः स मर्त्येषु सर्वपापैः प्रमुच्यते ॥ १० ॥ इत्यादिना परमात्मनो ब्रह्मणोऽक्षरस्य विध्वस्तसर्वविशेषस्योपासनमुक्तम् । एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ॥ मत्तः परतरं नान्यत्किंचिदस्ति धनंजय । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ॥ १ ॥ कविं पुराणमनुशासितारमणोरणीयांसमनुस्मरेद्यः । सर्वस्य धातारमचिन्त्यरूपमादित्यवर्णं तमसः परस्तात् ॥ प्रयाणकाले मनसा चलेन भक्त्या युक्तो योगबलेन चैव । भ्रुवोर्मध्ये प्राणमावेश्य सम्यक् स तं परं पुरुषमुपैति दिव्यम् ॥ ८ ॥ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते । इति मत्वा भजन्ते मां बुधा भावसमन्विताः ॥ मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च॥१०॥इत्यादिना तत्र तत्र सर्वयोगैश्वर्यादिमत्सत्त्वोपधिकस्येश्वरस्योपासनमुक्तं विश्वरूपाध्याये च ऐश्वर्यं परमेश्वरस्योपासनार्थं प्रदर्शितं तच्च दर्शयित्वा मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेति उक्तं, अत: अनयोर्निर्विशेषसविशेषोपासनरूपयोः पक्षयोः को वा विशिष्टतर इति ज्ञातुकामोऽर्जुन उवाच—एवमिति । एवं मत्कर्मकृदित्याद्युक्तप्रकारेण सततयुक्ताः नैरन्तर्येण भगवत्कर्मादौ समाधानतया प्रवृत्ता ये भक्ता अनन्यशरणाः सन्तस्त्वां तत्र तत्र प्रदर्शितं सर्वयोगैश्वर्यसर्वज्ञानशक्तिमत्सत्त्वोपाधिमीश्वरं विश्वरूपं पर्युपासते ध्यायन्ति ये च त्यक्तपुत्रवित्तलोकैषणाः संन्यस्तसर्वकर्माणो द्वितीयप्रभृतिष्वध्यायेषूक्तमक्षरं न क्षरतीत्यश्नुते वेत्यक्षरं ब्रह्माद्वयं परमात्मानं विध्वस्तसर्वविशेषमव्यक्तम् इन्द्रियैर्न व्यज्यत इति अव्यक्तमकरणगोचरं पर्युपासते प्रत्यगभिन्नत्वेनानुसंधानं कुर्वन्ति तेषामुभयेषां मध्ये केऽतिशयेन योगज्ञा इत्यर्थः । अत्र केचित्पूर्वाध्यायान्ते मत्कर्मकृदित्युक्तं तत्र मच्छब्दार्थे संदेहः किं निराकारमेव सर्वस्वरूपं वस्तु मच्छब्देनोक्तं भगवता किं वा साकारमिति उभयत्रापि पूर्वं प्रयोगदर्शनात् । उभयोश्च भगवदुपदेशयोरधिकारिभेदेनैव व्यवस्थया भवितव्यं तत्रैवंसति मया मुमुक्षुणा किं निराकारमेव वस्तु चिन्तनीयं किंवा साकारमिति निश्चयाय सगुणनिर्गुणविद्ययोर्विशेषबुभुत्सयाऽर्जुन आह—**एवमिति** । एवं मत्कर्मकृदित्याद्यनन्तरोक्तप्रकारेणेत्यादि वर्णयन्ति तद्विचार्यं, एवं सततयुक्ता ये भक्ता इत्यत्र एवमित्यव्यवहितं मत्कर्मकृदित्यादिनोक्तं प्रकारं

परामृशन्नर्जुनः मच्छब्दार्थे संदेहवानिति वक्तुमशक्यत्वात् । नचैवं सततयुक्ता ये भक्तास्त्वां सगुणं पर्युपासते ये चाप्येवं सततयुक्ता अक्षरमव्यक्तं पर्युपासते तेषामुभयेषां के योगवित्तमाः मत्कर्मकृदित्यत्र भगवतो मच्छब्दार्थः को वाऽभिप्रेत इत्यर्थे नादोष इति वाच्यं, येऽपि सर्वतो विरक्तास्त्यक्तसर्वकर्माणोऽक्षरमिति स्वपरग्रन्थविरोधात् एवमित्यस्योत्तरार्धेनान्वेतुमशक्यत्वात् । किंच सन्निहितेन सगुणप्रतिपादकप्रकरणेन मत्कर्मकृदिति लिङ्गेन च निर्णयस्य सत्त्वात्संदेह एव न घटते प्रत्युत्तरं चैतत्संशयानुरूपं न भवतीति दिक् ॥ १ ॥

प० टी०—पूर्वाध्यायान्ते मत्कर्मकृन्मत्परम इत्यनेन सर्वोपायैरगम्यस्य विश्वरूपस्वरूपस्य ज्ञाने दर्शने प्राप्तौ वा श्रेष्ठोऽधिकारी प्रोक्तः पूर्वं तु ज्ञानी त्वात्मैव मे मतं तथा स योगी परमो मतस्तथा "ब्रह्मविदाप्नोति परम्" इति श्रुतेश्च योगज्ञानादिसंपदुपेतः श्रेष्ठ उक्तस्तयोर्मध्ये कस्य श्रेष्ठत्वमिति प्रश्नव्याजेन परं ब्रह्म जिज्ञासुरर्जुनः पृच्छति—**एवमिति** । एवमुक्तप्रकारेण सर्वकर्मार्पणादिना सततयुक्तास्त्वन्निष्ठा ये भक्तास्त्वां विश्वरूपं सर्वज्ञं सर्वशक्तिं पर्युपासते ध्यायन्ति । ये चाप्यक्षरं ब्रह्माव्यक्तं निर्विशेषमुपासते तेषामुभयेषां मध्ये योगवित्तमाः के इति प्रश्नः ॥ १ ॥

रा० टी०—देवदेव्युपासनयोर्मध्ये देवोपासनस्याधिक्याय तदुपासनमाहास्मिन्नध्याये । भगवदुपास्त्याधिक्यपरत्वादस्य भगवन्माहात्म्यप्रदूषकान्तर्भावश्च । तमेवं विद्वानित्यादौ भगवदुपास्तेरिव "श्रियं वसाना अमृतत्वमायन्" इत्यादिश्रुतौ श्रियं प्रत्युपासीना अमृतत्वं प्राप्ता इति श्रीदेव्युपास्तेरपि मुक्तिहेतुत्वावगमेन जायमानपरकीयसंदेहमाहृत्य विशेषयुक्तिबुभुत्सया पृच्छति—**एवमिति** । नच देव्युपास्तेर्मुक्तिहेतुत्वमुपचरितम्, अन्तवत्तु फलं तेषामिति साप्तमिकन्यायात् । अतो नास्य संदेहहेतुत्वमिति शङ्क्यं, ब्रह्मादिदेवानां जनिमृतिमत्त्वेन तदुपास्तेरन्तवत्फलकत्वेऽपि श्रियस्तु चतुष्कपर्देत्यादौ नित्ययौवनज्ञानमयत्वदेवपूज्यत्वादिमहामहिम्नः श्रवणेन तदुपास्तेर्मुक्तिहेतुत्वसंभवेन संदेहहेतुत्वं मन्वानस्यायं प्रश्नः । ये भक्ताः सततयुक्ताः सततं ध्यानकर्मयोगवन्तः एवं दृष्टश्रुतरूपं त्वामेवं मत्कर्मकृदित्याद्युक्तप्रकारेण पर्युपासते, येऽपि चाक्षरनामकमव्यक्तं चित्प्रकृतिं परिश्रद्धया भक्त्यादिपूर्वकमुपासते तेषां मध्ये के योगवित्तमाः मोक्षोपायेषु श्रेष्ठाः, इत्युवाचार्जुनः इत्यन्वयः । एवमित्यस्य त्वामित्यत्रोपासत इत्यत्र चान्वयः । एवमित्यस्य पूर्वपरामर्शित्वात्पूर्वानन्तर्यमप्यस्याध्यायस्य ध्येयम् । अत्राव्यक्तमित्येव वाच्ये अक्षरमिति तद्विशेषणोक्तिः क्षरणवद्भ्यो ब्रह्मादिदेवान्तरेभ्यो वैलक्षण्यप्रदर्शनेन प्रश्नसंभावनार्था ॥ १ ॥

**श्रीभगवानुवाच—मय्यावेश्य मनो ये मां नित्ययुक्ता उपासते ॥**
**श्रद्धया परयोपेतास्ते मे युक्ततमा मताः ॥ २ ॥**

त० टी०—तत्र प्रथमाः श्रेष्ठा इत्युत्तरं श्रीभगवानुवाच—**मयीति** । सार्वज्ञ्यवात्सल्यादिगुणाब्धौ स्वाश्रितदोषक्षपणस्वभावे मयि मन आवेश्यैकाग्रं कृत्वा नित्ययुक्ताः क्षणाद्यपरिच्छेदेन मदनुध्यानसंपन्नाः सन्तः परयोत्कृष्टया श्रद्धयोपेता युक्ता ये मामुपासते आराधयन्ति, ते मे मम युक्ततमा मता अभिमताः ॥ २ ॥

म० टी०—तत्र सर्वज्ञो भगवानर्जुनस्य सगुणविद्यायामेवाधिकारं पश्यंस्तं प्रति तां विधास्यति यथाधिकारं तारतम्योपेतानि च साधनानि अतः प्रथमं साकारब्रह्मविद्यां प्ररोचयितुं स्तुवन् प्रथमाः श्रेष्ठा इत्युत्तरम्—**मयीति** । मयि भगवति वासुदेवे परमेश्वरे सगुणे ब्रह्मणि मन आवेश्यानन्यशरणतया निरतिशयप्रियतया च प्रवेश्य हिङ्गुलरङ्ग इव जतु तन्मयं कृत्वा ये मां सर्वयोगेश्वराणामीश्वरं सर्वज्ञं समस्तक-

ल्याणगुणनिलयं साकारं नित्ययुक्ताः सततोद्युक्ताः श्रद्धया परया प्रकृष्टया सात्त्विक्योपेताः सन्त उपासते सदा चिन्तयन्ति ते युक्ततमाः मे मम मता अभिप्रेताः ते हि सदा मदासक्तचित्ततया मामेव विषयान्तरविमुखाश्चिन्तयन्तोऽहोरात्राण्यतिवाहयन्ति अतस्त एव युक्ततमा मता अभिमताः ॥ २ ॥

**शं० टी०**—एवं पृष्टवते आरुरुक्षोः प्रथममेवोत्तमं साधनं सुकरं द्वितीयं त्वारूढस्येति सूचयन्नारुरुक्षवेऽर्जुनायादिममेव प्ररोचनपूर्वकमुपदेष्टुं श्रीभगवानुवाच—**मयीति** । मोक्षस्वरूपे मयि मनः सम्यगावेश्य मोक्षमेव वाञ्छन्तः सन्त इत्यर्थः, यद्वा मयि मत्स्वरूपे दृष्टं स्पृष्टं श्रुतं मतं च सर्वं ब्रह्मैवेति सर्वस्य मन्मात्रत्वग्रहण एव मन आवेश्य सम्यङ्निधाय, यद्वा मयि मद्ध्यान एव न तु विषयचिन्तने मन आवेश्य नित्ययुक्ता मत्कर्मकृत्त्वादिधर्मेषु नित्यमजस्रं युक्ता नियता भूत्वा परया निश्चलया श्रद्धया उक्तसाधनैः परमेश्वरोपास्तौ कृतायां चित्तशुद्धिस्ततो ज्ञानं च तेन मोक्षोऽपि सिध्यति वा न वेत्यादिसंशयनिर्मुक्तयाऽऽस्तिक्यबुद्ध्या समुपेताः सन्तः स्वधर्मं स्वाश्रमं स्वजनं स्वलक्षणं चापरित्यज्यैवातिभक्त्या ये मां विश्वरूपं सर्वज्ञं सर्वात्मकं परमेश्वरमुपासते सदा सर्वत्र सर्वं मामेव भावयन्ति त एव युक्ततमा योगिश्रेष्ठा इति मे मता मया निश्चिता इत्यर्थः । गृह एव वर्तमाना मोक्षैककामनया मत्कर्मकृत्त्वादिमोक्षसाधनपरिनिष्ठिता भूत्वा सदा सर्वं मामेव भावयन्तः सन्तो ये कालं नयन्ति तेषामेव युक्तं योगिवरिष्ठत्वमित्यभिप्रायः । एतेन स्वाधिकारानुरूपं सगुणोपासनमेवारुरुक्षोर्मुमुक्षोः सुकरं स्वार्थदं साधनमिति सूचितं भवति ॥ २ ॥

**श्री० टी०**—तत्र प्रथमाः श्रेष्ठा इत्युत्तरं श्रीभगवानुवाच—**मयीति** । मयि परमेश्वरे सर्वज्ञत्वादिगुणविशिष्टे मन आवेश्यैकाग्रं कृत्वा नित्ययुक्ता मदर्थकर्मानुष्ठानादिना मन्निष्ठाः सन्तः श्रेष्ठया श्रद्धया युक्ता ये मामाराधयन्ति ते युक्ततमा मता ममाभिमताः ॥ २ ॥

**स० टी०**—अनयोर्योगयोर्मध्ये पृच्छ्यते सुशकोऽस्ति कः ॥ योगो वा पृच्छ्यते साक्षान्मोक्षहेतुरिति क्रमात् ॥ १ ॥ विकल्प्य भगवानेवं सर्वज्ञो भक्तवत्सलः ॥ उत्तरं प्राह सगुणब्रह्मनिष्ठाप्रशंसया ॥ २ ॥ वासुदेवे भगवति मयीड्ये परमेश्वरे ॥ सगुणे ब्रह्मणि स्वच्छमनन्यशरणं मनः ॥ ३ ॥ प्रवेश्य मन्मयं कृत्वा ये मां योगेश्वरेश्वरम् ॥ सर्वज्ञं सर्वकल्याणनिधिं साकारमद्भुतम् ॥ ४ सात्त्विक्या श्रद्धयोपेताः सदोद्युक्ता निरन्तरम् ॥ चिन्तयन्ति त एते मेऽभिप्रेता योगवित्तमाः ॥ ५ ॥ सुशको योग एतेषां मत इत्याशयो हरेः ॥ ६ ॥ २ ॥

**भा० टी०**—सविशेषनिर्विशेषोपासनयोः सुशकत्वगुणेन किमुपासनं श्रेष्ठमिति पृच्छते किं वा साक्षान्मोक्षहेतुत्वेन गुणेनेति विकल्प्य साक्षान्मोक्षहेतुत्वेन श्रैष्ठ्यं निर्विशेषोपासनस्योक्तं वक्ष्यमाणं च सुशकत्वेन तु प्रथमस्य शृण्वित्याशयवान् श्रीभगवानुवाच—**मयीति** । मयि विश्वरूपे परमेश्वरे त्रिगुणमायानटीनर्तके सर्वात्मनि परमप्रेमास्पदे ये मनः आवेश्य समाधाय भक्ताः सन्तो मां समस्तयोगादीश्वराधीश्वरं सर्वज्ञं त्यक्तरागादिरूपक्लेशनिमित्तभूतानाद्यज्ञानाविद्यालक्षणमिथ्यादृष्टिं नित्ययुक्ता मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डवेत्येवं सततयुक्ताः श्रद्धया परया प्रकृष्टया ईश्वरभजनादेवोद्धार इति निश्चयापन्नाः उपासते ते मम युक्ततमाः श्रेष्ठतमा मता अभिप्रेता यतो विषयान्तरविमुखाः नैरन्तर्येण मयि मन आवेश्य मामेवाहर्निशं चिन्तयन्तीत्यत इति भावः । ये तु मे मम ज्ञानी त्वात्मैव मे मतमिति ज्ञानिनमात्मत्वेनैव पश्यतो मूर्खेष्वपि कारुण्यात्पक्षपातवतः सर्वज्ञस्य युक्ततमा मता इति वदन्ति तेषां पक्षेऽस्मिन्प्रकरणे एतदुक्तेः सामञ्जस्यं चिन्त्यं भगवता कारुण्यात्पक्षपातेन युक्ततमत्वेनाभिमतानां भगवद्भक्तानां सुशकोपासने प्रवृत्ता अतो युक्ततमा इति वस्तुवृत्त्याऽभिप्रेतस्य श्रेष्ठतमत्वस्यासिद्धेः स्पष्टत्वात् ॥ २ ॥

**प० टी०**–तत्र भगवानुत्तरयति–**मयीति द्वाभ्याम्** । मयि परमेश्वरे सर्वज्ञादिगुणोपेते मन आवेश्यैकाग्रं कृत्वा नित्ययुक्ता मदर्थकर्मानुष्ठानादिना मन्निष्ठाः सन्तः परया श्रद्धयाऽऽस्तिक्यबुद्ध्योपेतास्ते युक्ततमा इति मे मताः ॥ २ ॥

**रा० टी०**–अव्यक्तोपासकान्मदुपासका एवोत्तमा इत्याह–**मयीति** । ये मयि सम्यङ्मन आवेश्य नित्ययुक्ताः नित्यं कर्मयोगध्यानयोगवत्त्वेन नित्ययुक्ताः परया श्रद्धयोपेताश्च सन्तः मामुपासते ते युक्ततमाः मोक्षोपायवत्सु श्रेष्ठाः मे मता इत्यर्थः ॥ २ ॥

ये त्वक्षरमनिर्देश्यमव्यक्तं पर्युपासते ॥
सर्वत्रगमचिन्त्यं च कूटस्थमचलं ध्रुवम् ॥ ३ ॥
सन्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः ॥
ते प्राप्नुवन्ति मामेव सर्वभूतहिते रताः ॥ ४ ॥

**त० टी०**–तर्हीतरे न श्रेष्ठास्ते किं वा फलं प्राप्नुवन्तीत्यत आह–**ये त्विति द्वाभ्याम्** । ये तु मदुपासकेतरा अक्षरं प्रत्यगात्मस्वरूपमनिर्देश्यं देहादिविलक्षणत्वादेवमनुष्यादिशब्दनिर्देशानर्हमत एवाव्यक्तं चक्षुराद्यविषयं सर्वत्रगमचिन्त्यं च सर्वत्र देवमनुष्यादिदेहे वर्तमानमपि तद्विलक्षणत्वाद्देवादिरूपेण चिन्तयितुमनर्हमत एव कूटस्थं कूटे देवमनुष्यादिदेहसमूहे क्रमेणावस्थितमपि तदाकारं न भवति स्वासाधारणाकार एव सर्वत्र तिष्ठति, निर्विकारमपरिणामीत्यर्थः । अपरिणामित्वेनैव स्वासाधारणाकारान्न चलतीत्यचलमत एव ध्रुवं नित्यम् ॥ ३ ॥ **सन्नियम्येति** । इन्द्रियग्रामं सर्वेभ्यः स्वव्यापारेभ्यः सम्यङ्नियम्य सर्वत्र देवादिविषमाकारेष्वात्मसु ज्ञानैकाकारदर्शनेन समबुद्धयः समबुद्धित्वादेव सर्वभूतहिते रताः, एवंभूताः सन्तो येऽक्षरमुपासते, ते मामेव मत्समानाकारं मदंशमेव प्राप्नुवन्ति, नतु संसरन्तीत्यर्थः । "तं यथा यथोपासते तथा तथा भवन्ति" इति श्रुतेः अक्षरोपासका अक्षरात्मानमेव मां प्राप्नुवन्तीत्यर्थः ॥ ४ ॥

**म० टी०**–निर्गुणब्रह्मविदपेक्षया सगुणब्रह्मविदां कोऽतिशयो येन त एव युक्ततमास्तवाभिमता इत्यपेक्षायां तमतिशयं वक्तुं तन्निरूपकान्निर्गुणब्रह्मविदः प्रस्तौति द्वाभ्याम्–**ये त्विति** । येऽक्षरं मामुपासते तेऽपि मामेव प्राप्नुवन्तीति द्वितीयगतेनान्वयः । पूर्वेभ्यो वैलक्षण्यद्योतनाय तुशब्दः । अक्षरं निर्विशेषं ब्रह्म वाचक्नवीब्राह्मणे प्रसिद्धं तस्य समर्पणाय सप्तविशेषणानि । अनिर्देश्यं शब्देन व्यपदेष्टुमशक्यं यतोऽव्यक्तं शब्दप्रवृत्तिनिमित्तैर्जातिगुणक्रियासंबन्धै रहितं जातिं गुणं क्रियां संबन्धं वा द्वारीकृत्य शब्दप्रवृत्तेर्निर्विशेषे प्रवृत्त्ययोगात् । कुतो जात्यादिराहित्यमत आह–सर्वत्रगं सर्वव्यापि सर्वकारणमतो जात्यादिशून्यं परिच्छिन्नस्य कार्यस्यैव जात्यादियोगदर्शनात् आकाशादीनामपि कार्यत्वाभ्युपगमाच्च । अत एवाचिन्त्यं शब्दवृत्तेरिव मनोवृत्तेरपि न विषयः तस्या अपि परिच्छिन्नविषयत्वात् "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इति श्रुतेः । तर्हि कथम् "तं त्वौपनिषदं पुरुषं पृच्छामि" इति "दृश्यते त्वग्र्यया बुद्ध्या" इति च श्रुतिः 'शास्त्रयोनित्वात्' इति सूत्रं च, उच्यते अविद्याकल्पितसंबन्धेन शब्दजन्यायां बुद्धिवृत्तौ चरमायां परमानन्दबोधरूपे शुद्धे वस्तुनि प्रतिबिम्बितेऽविद्यातत्कार्ययोः कल्पितयोर्निवृत्त्युपपत्तेरुपचारेण विषयत्वाभिधानात्, अतस्तत्र कल्पितमविद्यासंबन्धं प्रतिपादयितुमाह–कूटस्थं यन्मिथ्याभूतं सत्यतया प्रतीयते तत्कूटमिति लोकैरुच्यते यथा कूटकार्षापणः कूटसाक्षित्वमित्यादौ अज्ञानमपि मायाख्यं सह कार्यप्रपञ्चेन मिथ्याभूतमपि लौकिकैः सत्यतया प्रतीयमानं कूटं तस्मिन्नाध्यासिकेन संबन्धेनाधिष्ठानतया तिष्ठतीति कूट-

स्थमज्ञानतत्कार्याधिष्ठानमित्यर्थः, एतेन सर्वानुपपत्तिपरिहारः कृतः। अत एव सर्वविकाराणामविद्याकल्पितत्वात्तदधिष्ठानं साक्षिचैतन्यं निर्विकारमित्याह—अचलं चलनं विकारः तद्रहितं, अचलत्वादेव ध्रुवं अपरिणामि नित्यम् एतादृशं शुद्धं ब्रह्म मां पर्युपासते श्रवणेन प्रमाणगतामसंभावनामपोह्य मननेन च प्रमेयगतामनन्तरं विपरीतभावनानिवृत्तये ध्यायन्ति विजातीयप्रत्ययतिरस्कारेण तैलधारावदविच्छिन्नसमानप्रत्ययप्रवाहेण निदिध्यासनसंज्ञकेन ध्यानेन विषयीकुर्वन्तीत्यर्थः। कथं पुनर्विषयेन्द्रियसंयोगे सति विजातीयप्रत्ययतिरस्कारः अत आह—संनियम्य स्वविषयेभ्य उपसंहृत्येन्द्रियग्रामं करणसमुदायम्, एतेन शमदमादिसंपत्तिरुक्ता। विषयभोगवासनायां सत्यां कुत इन्द्रियाणां ततो निवृत्तिस्तत्राह—सर्वत्र विषये समा तुल्या हर्षविषादाभ्यां रागद्वेषाभ्यां च रहिता मतिर्येषां सम्यग्ज्ञानेन तत्कारणस्याज्ञानस्यापनीतत्वाद्विषयेषु दोषदर्शनाभ्यासेन स्पृहाया निरसनाच्च ते सर्वत्र समबुद्धयः, एतेन वशीकारसंज्ञावैराग्यमुक्तम्। अत एव सर्वत्रात्मदृष्ट्या हिंसाकारणद्वेषरहितत्वात् सर्वभूतहिते रताः "अभयं सर्वभूतेभ्यो मत्तः स्वाहा" इति मन्त्रेण दत्तसर्वभूताभयदक्षिणाः कृतसंन्यासा इति यावत् 'अभयं सर्वभूतेभ्यो दत्त्वा संन्यासमाचरेत्' इतिस्मृतेः एवंविधाः सर्वसाधनसंपन्नाः सन्तः स्वयं ब्रह्मभूता निर्विचिकित्सेन साक्षात्कारेण सर्वसाधनफलभूतेन मामक्षरं ब्रह्मैव ते प्राप्नुवन्ति पूर्वमपि मद्रूपा एव सन्तोऽविद्यानिवृत्त्या मद्रूपा एव तिष्ठन्तीत्यर्थः, "ब्रह्मैवसन्ब्रह्माप्येति। ब्रह्मवेद ब्रह्मैव भवति" इत्यादि श्रुतिभ्यः। इहापि च ज्ञानी त्वात्मैव मे मतमित्युक्तम्॥ ३॥ ४॥

शं० टी०—मुमुक्षूणां मन्दप्रज्ञानां सगुणोपास्तौ प्रवृत्तिसिद्धये ते मे युक्ततमा इति कर्मयोगिनः स्तुत्वाऽधुना परस्य ब्रह्मणः स्वरूपं साधकानां साधनसंपत्तिं च प्रतिपादयन्निर्गुणोपासकानां युक्ततमत्वं तदुपास्तेः साक्षान्मोक्षैकसाधनत्वं च फलप्रकाशनेन स्वयमेव सिध्यतीति ब्रह्मविदां ब्रह्मोपास्तेः फलमाह—ये त्विति द्वाभ्याम्। उपासकानामुपास्तेरुपास्यस्य च क्रमात्साधनतः फलतः स्वरूपतश्च पूर्वस्माद्वैलक्षण्यद्योतनार्थस्तुशब्दः। इन्द्रियग्रामं संनियम्य सन्निरुध्य विषयग्रहणायेन्द्रियेषु चलितेषु मनोऽपि चलति तेन समाधिर्भिद्यते तत इन्द्रियाणां विषयग्रहणवैमुख्यं संपाद्येत्यर्थः। सर्वभूतहिते मशकपिपीलिकादीनां च सर्वेषां भूतानां हिते उपद्रवानाचरणे 'जनकृपानैष्ठुर्यमुत्सृज्यताम्' इति न्यायेनाहिताऽनाचरणे च रता निरताः, यद्वा सर्वेषां ब्रह्मादिस्तम्बान्तानां भूतानां प्राणिनां हिते परमप्रेमास्पदत्वात्प्रियतमे प्रत्यगात्मनि रताः सर्वत्र प्रत्यग्रूपेण स्थितमात्मानं सर्वात्मकोऽहमिति स्वात्मना पश्यन्त इत्यर्थः। तत एव सर्वत्र प्रपञ्चे समबुद्धयो ब्रह्मदृष्टयः सन्तो ये तु यतयो ब्रह्मविदः स्वयमव्यक्तं शब्दस्पर्शरूपाद्यभावान्न व्यज्यत इत्यव्यक्तं सर्वेन्द्रियागोचरं तत एवानिर्देश्यं वागादिभिरिदमिति निर्देष्टुमशक्यं सर्वत्रगं गगनवन्निराकारं परिपूर्णमव्यक्तत्वादचिन्त्यमत एव कूटस्थं कूटवदकम्प्यतया तिष्ठतीति कूटस्थं तत एवाचलं चलनवर्जितं तत एव ध्रुवं शाश्वतमेवंलक्षणमक्षरं परं ब्रह्म पर्युपासते सर्वदानुसंदधते, सर्वं निर्विशेषं ब्रह्मैव ये पश्यन्तीत्यर्थः। ते ब्रह्मनिष्ठा मामेव सच्चिदानन्दैकरसं परं ब्रह्म प्राप्नुवन्ति, सगुणोपासकाः पूर्वोक्ता भक्तास्त्वग्न्यादिदेवान् प्राप्य क्रमेण मां प्राप्नुवन्ति। अक्षरोपासकास्तूत्क्रान्तिं देवतान्तरप्राप्तिं च विना साक्षाद्ब्रह्मैव मां प्राप्नुवन्तीत्यर्थः। यत एवं ततः साक्षाद्ब्रह्मप्राप्तिरेव ब्रह्मविदामब्रह्मविदां च युक्ततमत्वमयुक्ततमत्वं च विस्पष्टयति। यथा पराऽनपेक्ष्या तदपेक्ष्या च राजसान्निध्यं प्राप्तवतामाप्ततमत्वमनाप्ततमत्वं च तत्प्राप्तिरेव विशदयति तद्वत्तेन युक्ततमत्वं पूर्वेषामौपचारिकमिति सिद्धम्। निर्गुणोपास्तेरेव साक्षात्साधनत्वं ब्रह्मप्राप्त्या सूचितं भवति। एतेन सदसद्विवेकवतां पण्डितानां शुद्धात्मनां तीव्रमोक्षेच्छावतां सर्वकर्मसंन्यासपूर्वकं श्रवणादिना ब्रह्म ज्ञात्वा तदुपास्तिरेव कर्तव्या विदेहकैवल्यसिद्धय इति सूचितं भवति॥ ३॥ ४॥

श्री० टी०–तर्हि इतरे किं न श्रेष्ठा इत्यत आह–ये त्विति द्वाभ्याम् । ये त्वक्षरं पर्युपासते ध्यायन्ति तेऽपि मामेव प्राप्नुवन्तीति द्वयोरन्वयः । अक्षरस्य लक्षणमनिर्देश्यमित्यादि अनिर्देश्यं शब्देन निर्देष्टुमशक्यम् । यतोऽव्यक्तं रूपादिहीनं सर्वत्रगं सर्वव्यापि अव्यक्तत्वादेवाचिन्त्यं कूटस्थं कूटे मायाप्रपञ्चे अधिष्ठानत्वेन स्थितम् अचलं स्पन्दनरहितम् अत एव ध्रुवं नित्यं वृद्ध्यादिरहितम् । संनियम्येति । स्पष्टम् ॥ ३ ॥ ४ ॥

स० टी०–द्वितीयश्चेत्तदा तस्य वक्ष्यमाणतयाऽधुना ॥ नास्ति प्रष्टव्यता तत्रेत्याह श्रीमद्रमापतिः ॥१॥ येऽक्षरं निर्विशेषं मां निर्गुणं पर्युपासते ॥ मामेव प्राप्नुवन्तीति द्वितीयेनान्वयोऽस्त्ययि ॥ २ ॥ वैलक्षण्यं च पूर्वेभ्यस्तुशब्देनात्र सूच्यते ॥ अनिर्देश्यमशक्यं यद्व्यपदेष्टुं गिराऽक्षरम् ॥ ३ ॥ यतोऽव्यक्तं गिरां वृत्तिहेतुजातिगुणोज्झितम् ॥ गुणजातिक्रियायोगं द्वारीकृत्य गिरां यतः ॥ ४ ॥ प्रवृत्तिर्निर्विशेषे तु नास्ति तेषामभावतः ॥ कुतो जात्यादिराहित्यमित्यत्राह रमापतिः ॥ ५ ॥ सर्वत्रगं यतो व्यापि सर्वकारणमद्वयम् ॥ परिच्छिन्नस्य कार्यस्य जात्यादेर्योगदर्शनात् ॥ ६ ॥ अपरिच्छिन्नचिद्धातोर्नास्ति तद्योग इत्यतः ॥ अचिन्त्यं तन्मनोवृत्तेरप्यगोचरमक्षरम् ॥ ७ ॥ माया तत्कार्यरूपे यत्कूटेऽधिष्ठानभावतः ॥ तिष्ठत्याध्यासिकेनैव संबन्धेनाविकारि च ॥ ८ ॥ कूटस्थत्वेन सर्वेषां दोषाणां वारणं कृतम् ॥ अतो मायाविकाराणामधिष्ठानतया चलम् ॥ ९ ॥ अत एव ध्रुवं नित्यं परिणामविवर्जितम् ॥ शुद्धमेतादृशं ब्रह्म वेदान्तश्रवणादिभिः ॥ १० ॥ उपास्यार्थं यथाशास्त्रं विषयीकृत्य संततम् ॥ तुल्यप्रत्ययसंततया तैलधारावदासनम् ॥ ११ ॥ यदस्त्युपासनं तेन निदिध्यासनसंज्ञिना ॥ साक्षात्कुर्वन्ति मां प्रत्यगभिन्नं चिद्घनं सुखम् ॥ १२ ॥ ३ ॥ विषयेन्द्रियसंयोगे सति विक्षेपकारणे ॥ कथं पुनर्विजातीयप्रत्ययानां तिरस्कृतिः ॥ १ ॥ अत आहेन्द्रियग्राममुपसंहृत्य सर्वतः ॥ उक्ता शमादिसंपत्तिरेतेन सुविपश्चिताम् ॥२॥ सति भोगाभिलाषे स्यादिन्द्रियाणां न संयमः ॥ अतः सर्वत्र भोगेषु तुल्या येषां मतिः सदा ॥३॥ शून्या हर्षविषादाभ्यां रागद्वेषोज्झिता मतिः ॥ सम्यग्ज्ञानेन तद्धेतोरज्ञानस्य विनाशनात् ॥ ४ ॥ विषयेषु पुराभ्यस्तदोषदृष्टेर्बलात्स्वयम् ॥ अभिलाषनिवृत्तेः स्यादिन्द्रियाणां सुसंयमः ॥५॥ एतेनैव वशीकारसंज्ञं वैराग्यमीरितम् ॥ अत एवात्मदृष्टेश्चैते हिंसाकारणवर्जिताः ॥ ६ ॥ सर्वदा सर्वभूतानां हित एव रता बुधाः ॥ अभयं सर्वभूतेभ्यो मत्तः स्वाहेति मन्त्रतः ॥ ७ ॥ दत्ता यैः सर्वभूतेभ्योऽप्यभयात्मकदक्षिणा ॥ एतेन कृतसंन्यासाः स्मृतौ सिद्धाः प्रकीर्तिताः ॥ ८ ॥ अभयं सर्वभूतेभ्यो दत्त्वा संन्यासमाचरेत् ॥ सर्वसाधनसंपन्नाः सन्त एवंविधा जनाः ॥ ९ ॥ ब्रह्मभूताः स्वयं साक्षात्कारेण फलरूपिणा ॥ मामक्षरं परं ब्रह्म शुद्धमेवाप्नुवन्ति ते ॥ १० ॥ प्रागपि स्वात्मभूता मेऽविद्याहान्याऽद्वये मयि ॥ तिष्ठन्तीत्याशयो विष्णोः श्रीमद्भगवतो हरेः ॥ ११ ॥ ४ ॥

भा० टी०–निर्गुणोपासनस्य साक्षान्मोक्षहेतुत्वेनातिश्रैष्ठ्यं बोधयन् सुशकत्वेन सगुणोपासनस्य श्रेष्ठतां बोधयति–ये त्विति । तुशब्दो निर्विशेषोपासनस्य सविशेषोपासनफलत्वात्पूर्वेभ्यः श्रैष्ठ्यद्योतनार्थः । ये तु अक्षरं न क्षरत्यश्नुते वेत्यक्षरम् "एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमपूर्वमनपरम्" इत्यादिश्रुतया सर्वधर्मशून्यत्वेन बोधितं ब्रह्मणो निर्विशेषं स्वरूपं लक्षयति निर्देष्टुं न शक्यते शब्दाप्रतिपाद्यमित्यर्थः । यतोऽव्यक्तं प्रत्यक्षादिप्रमाणैर्न व्यज्यत इत्यव्यक्तं रूपादिभिः शब्दप्रवृत्तिनिमित्तैः संज्ञाजातिगुणक्रियासंबन्धैश्च रहितत्वादित्यर्थः । यतोऽनिर्देश्यमतोऽव्यक्तं रूपादिहीनमिति वाऽस्मिन्पक्षे हेतुहेतुमद्भावासामञ्जस्यमभिप्रेत्यायं पक्ष आचार्यैरुपेक्षितः । अव्यक्तत्वं कुत इत्यत आह–सर्वत्रगं सर्वाधिष्ठानत्वात् सर्वस्मिन्नाकाशवद्व्यापकमतः केनापि प्रमाणेन परिच्छेत्तुमशक्यमव्यक्तमित्यर्थः । यद्वा ननु एवं तर्हि शून्यत्वमेव ब्रह्मण आगतमिति तत्राह–सर्वत्रगं सर्वेषु व्यभिचरत्सु घटपटादिष्वव्यभिचरितसद्रूपेण व्यापकं सर्वस्य सत्तास्फूर्तिप्रदातुः शून्यत्वासंभवादिति भावः । अव्यक्तत्वादचिन्त्यं करणागोचरस्य मनसा चिन्तयितुमशक्यत्वात् । तथाच श्रुतिः–" यतो वाचो निवर्तन्ते अप्राप्य मनसा सह "

इति । एतेन सर्वत्रगं चेत्सर्वैः कुतो नावगम्यते इति शङ्का निरस्ता सर्वप्रमाणापरिच्छेद्यस्यातिकुशलेनापि चिन्तयितुमप्यशक्यस्य सर्वावगतिविषयताया दूरनिरस्तत्वात् । नन्वेवं चेत् " तं त्वौपनिषदं पुरुषं पृच्छामि । दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः । मनसैवानुद्रष्टव्यम् । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः " 'अनन्याश्चिन्तयन्तो माम्' 'शास्त्रयोनित्वात्' इत्यादिश्रुतिस्मृतिसूत्राणां का गतिरिति चेत्तत्राह–कूटस्थं दृश्यमानगुणकमन्तर्दोषं वस्तु कूटशब्दप्रतिपाद्यं कूटरूपकं कौटसाक्ष्यं कूटकार्षापण इत्यादौ तथाभूते कूटशब्दस्य प्रयोगदर्शनात् " तद्धेदं तर्ह्यव्याकृतमासीत् माया चाविद्या च स्वयमेव भवति " 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्'। 'दैवी ह्येषा गुणमयी मम माया दुरत्यया' इत्यादौ मायादिशब्दिततया प्रसिद्धमविद्यादि तदिहानेकसंसारबीजमन्तर्दोषं कूटशब्देन ग्राह्यं तस्मिन् कूटेऽध्यक्षतयाऽधिष्ठानतया तिष्ठतीति कूटस्थं भाष्येऽविद्यादीति आदिपदात् अहंकारादिकं ग्राह्यं, तथाच ब्रह्मण्यारोपितस्याविद्यादेर्निवृत्तये उपचारेण निर्विशेषस्य शास्त्रविषयत्वमिति भावः । यद्वा अत एव राशिरिव स्थितं कूटस्थं निर्विकारमत एवाचलं, अध्यस्तस्याविद्यादेर्गुणदोषाभ्यां गुणदोषवत्त्वेन स्वस्वरूपान्न चलतीत्यचलमित्यर्थः । अत एव ध्रुवं नित्यं सदैकरसमिति यावत् एतादृशमक्षरं ये पर्युपासते परि समन्तादुपासते श्रवणमननाभ्यामुपास्यस्यार्थस्य विषयीकरणेन सामीप्यमुपगम्यानवच्छिन्नतैलधारावत् समानप्रत्ययप्रवाहेण दीर्घकालमासनं निदिध्यासनं कुर्वन्तीत्यर्थः ॥३॥ उपासनस्य प्रकारं फलं चाह–**संनियम्येति** । इन्द्रियग्राममिन्द्रियसमूहं संनियम्य स्वविषयेभ्य उपसंहृत्य सर्वत्र समबुद्धयः सर्वस्मिन्काले इष्टानिष्टप्राप्तौ समा रागद्वेषरहिता बुद्धिर्येषां तेऽत एव सर्वेषां भूतानां हिते रताः प्रीतिमन्तः ये एवंप्रकारेणाक्षरमुपासते ते मां परमात्मानं प्राप्नुवन्ति । एवकारेणैषामेव साक्षान्मोक्षप्राप्तियोग्यतां बोधयति । प्राप्तिरप्यत्र विस्मृतग्रैवेयकस्य प्राप्तस्य प्राप्तिरिव बोध्या नत्वप्राप्तस्य ग्रामादेः प्राप्तिरिव " विमुक्तश्च विमुच्यते " इतिश्रुतेः ' ज्ञानी त्वात्मैव मे मतम् ' इति स्मृतेश्च ॥ ४ ॥

**प० टी०**–तर्हीतरे किं न श्रेष्ठा इत्याह–**ये त्विति** । ये त्वनिर्देश्यं निर्देष्टुमशक्यमत एवाक्षरमव्यक्तं च सर्वत्रगं व्यापकमचिन्त्यं चिन्तयितुमशक्यं कूटे मायाप्रपञ्चेऽधिष्ठानत्वेन स्थितम् अचलं वृद्ध्यादिरहितं स्वरूपं सर्वत्र समदर्शिनः पुरुषा इन्द्रियग्रामं संनियम्य पर्युपासते ते मामेव प्राप्नुवन्ति । उभयोः फलेऽविसंवादोऽस्तीत्यर्थः ॥ ३ ॥ ४ ॥

**रा० टी०**–नन्वव्यक्तोपासकानां मोक्षाभावे " श्रियं वसाना अमृतत्वमायन् " इत्यादिश्रुतिविरोधः, मोक्षसत्त्वे च कथं त्वदुपासकानामेव युक्ततमत्वं फलसाम्यादित्यत आह–**ये त्विति** । यद्वोक्तश्रुत्यादिनाऽव्यक्तोपासकानां मत्प्राप्तिरूपमोक्षसत्त्वेऽपि तदुपासनं कष्टसाध्यं मदुपासनं न तथा अतो मदुपासका एवोत्तमा इत्याह–**ये त्वित्यादिना** श्लोकपञ्चकेन । अक्षरमविनाशि सूक्ष्मत्वाद् अनिर्देश्यमप्रसिद्धत्वात्, जगदुपादानप्रकृत्यभिमानित्वाचाव्यक्तनामकं श्रीतत्त्वं पर्युपासते विष्णुभक्तिविष्णूत्तमत्वज्ञानविष्णूपासनादिपूर्वकमुपासते । तद्विशिनष्टि–सर्वत्रगमिति देशतो व्याप्तं, गुणबाहुल्यादचिन्त्यं, कूटस्थं कूटेऽव्याकृताकाशे अभिमानितया स्थितं, कदापि स्वपदादभ्रष्टत्वादचलं ध्रुवं निर्विकारमिति ॥ ३ ॥ तदुपासनायामितिकर्तव्यतामाह–**संनियम्येति** । इन्द्रियग्राममिन्द्रियसमुदायं संनियम्य विषयेभ्य उपसंहृत्य सर्वत्र समबुद्धयः षष्ठाध्यायोक्तदिशा सम्यग्ज्ञानवन्तः सर्वभूतहिते रताश्च सन्तः पर्युपासत इत्यन्वयः । अत्राक्षरत्वादिविशेषणं मोक्षदानशक्तिद्योतनाय । ते मामेव प्राप्नुवन्तीति ॥ ४ ॥

**क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् ॥**
**अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ५ ॥**

त० टी०—ननु यद्यक्षरोपासका अपि तद्रूपं त्वामेव प्राप्नुवन्ति तर्हि पूर्वोक्तानामेतेभ्यः को विशेषो यतस्तेषां युक्ततमत्वमुक्तमित्यपेक्षायामाह–क्लेश इति । अव्यक्ते पूर्वोक्तेऽक्षरे आसक्तं चेतो येषां तेषामव्यक्तचेतसां क्लेशोऽधिकतरः हि यतोऽव्यक्ता गतिरव्यक्तविषया गतिर्मनोनिष्ठा देहवद्भिर्देहात्माभिमानयुक्तैर्दुःखं दुःखेनावाप्यते, देहाभिमानवतां तद्विलक्षणशुद्धात्मनिष्ठाया दुर्लभत्वादित्यर्थः ॥ ५ ॥

म० टी०—इदानीमेतेभ्यः पूर्वेषामतिशयं दर्शयन्नाह–क्लेश इति । पूर्वेषामपि विषयेभ्य आहृत्य सगुणे ब्रह्मणि मनआवेशे सततं तत्कर्मपरायणत्वे च परश्रद्धोपेतत्वे च क्लेशोऽधिको भवत्येव किंतु अव्यक्तासक्तचेतसां निर्गुणब्रह्मचिन्तनपराणां तेषां पूर्वोक्तसाधनवतां क्लेश आयासोऽधिकतरः अतिशयेनाधिकः । अत्र स्वयमेव हेतुमाह भगवान्–अव्यक्ता हि गतिः हि यस्मादक्षरात्मकं गन्तव्यं फलभूतं ब्रह्म दुःखं यथा स्यात्तथा कृच्छ्रेण देहवद्भिर्देहमानिभिरवाप्यते सर्वकर्मसंन्यासं कृत्वा गुरुमुपसृत्य वेदान्तवाक्यानां तेन तेन विचारेण तत्तद्भ्रमनिराकरणे महान् प्रयासः प्रत्यक्षसिद्धस्ततः क्लेशोऽधिकतरस्तेषामित्युक्तम् । यद्यप्येकमेव फलं तथापि ये दुष्करेणोपायेन प्राप्नुवन्ति तदपेक्षया सुकरेणोपायेन प्राप्नुवन्तो भवन्ति श्रेष्ठा इत्यभिप्रायः ॥ ५ ॥

शं० टी०—अपक्वचित्तानामक्षरोपास्तौ क्लेशाधिक्यमिति सूचयितुमाह–क्लेश इति । यद्यपि व्यक्तस्य ममेश्वरस्योपासकानामपि मत्कर्मकृत्त्वादिधर्मसिद्धावस्त्येवाधिकक्लेशस्तथाप्येतदपेक्षया अव्यक्तासक्तचेतसाम् अव्यक्ते सर्वेन्द्रियागोचरे अदृश्यादिगुणकेऽतर्क्येऽचिन्त्येऽप्रमेये परे ब्रह्मण्यासक्तं तद्भावापत्त्यै यतमानं चेतो येषां तेषामव्यक्तासक्तचेतसां निराकारं परं ब्रह्म निदिध्यासयतां यतीनां विषयत्यागकृत आश्रमधर्मकृतो यमनियमाद्यभ्यासकृतोऽसत्प्रत्ययनिरासकृतो निराकारे ब्रह्मणि मनःस्थापनकृतश्च क्लेशोऽधिकतरो भवति । एकैकस्य साधनस्य सिद्धेर्दुष्करत्वात्तत्राप्यनात्मन्यहंभावपरित्यागो ब्रह्मणापि कर्तुं न शक्यते । तथा ब्रह्मणि जगत्प्रत्ययपरित्यागोऽपि तत्त्यागस्य निरन्तरक्लेशसाध्यत्वाद्ब्रह्मविदामाधिकतर एव क्लेश इत्यर्थः । इममर्थं स्वयमेव विस्पष्टयति श्रीभगवान्–अव्यक्तेति । हि यस्मात्कारणादव्यक्ताऽव्यक्तात्मिका गतिस्तद्भावापत्तिर्देहवद्भिर्देहतादात्म्यवद्भिः पुंभिर्दुःखं यथा तथाऽवाप्यते, दुःखेनात्यन्तक्लेशेन प्राप्यत इत्यर्थः । न हि सामान्यप्रयत्नेन देहाद्यहंकारः पुंसो निवर्तते चिरकालनित्यनिरन्तरनियतनिर्विकल्पसमाधिनिष्ठाविशेषाधिक्येन विना सति यस्मिन्निःशेषविनष्टे ब्रह्मण्येवात्मत्वं सिध्यत्यतो युक्तमव्यक्तासक्तचेतसां क्लेशाधिकतरत्वं तेषां या देहाद्यहंकारविच्छित्तिः साधनसंपत्तिः साऽग्रे कथ्यते ॥ ५ ॥

श्री० टी०—ननु च तेऽपि चेत्त्वामेव प्राप्नुवन्ति तर्हीतरेषां युक्ततमत्वं कुत इत्यपेक्षायां क्लेशाक्लेशकृतं विशेषमाह–क्लेश इति त्रिभिः । अव्यक्ते निर्विशेषे अक्षरे आसक्तं चेतो येषां तेषां क्लेशोऽधिकतरः हि यस्मादव्यक्तविषया गतिर्निष्ठा देहाभिमानिभिः दुःखं यथा भवत्येवमवाप्यते देहाभिमानिनां नित्यं प्रत्यक्प्रवणत्वस्य दुर्घटत्वादिति भावः ॥ ५ ॥

स० टी०—किमाधिक्यं तदा तेषामेतेभ्यः पूर्वयोगिनाम् ॥ इत्यत्राह जगन्नाथः सर्वनिष्ठास्पदास्पदम् ॥ १ ॥ पूर्वेषामपि भोगेभ्य आहृत्य सगुणे हरौ ॥ मनःप्रवेशे तत्कर्मरतत्वे च निरन्तरम् ॥ २ ॥ परश्रद्धान्वितत्वे च तेषां क्लेशोऽधिकोऽस्त्यपि ॥ परंतु निर्गुणब्रह्मचिन्तनासक्तचेतसाम् ॥ ३ ॥ आयासोऽतिशये नास्ति हेतुमत्राह मापतिः ॥ यतोऽक्षरात्मकं ब्रह्म गन्तव्यं तत्फलात्मकम् ॥ ४ ॥ दुःखं यथा तथा चैव कृच्छ्रेणैतदवाप्यते ॥ सर्वसाधनसंपन्नैरपि देहाभिमानिभिः ॥ ५ ॥ अतोऽक्षरधियां देहाभिमानत्यागहेतुकः ॥ वेदान्तश्रवणाद्यैश्च संदेहापनयात्मकः ॥ ६ ॥ क्लेशोऽधिकतरः प्रोक्तः पूर्वापेक्षो विपश्चिताम् ॥

यद्यप्येकफलं तेषामुभयेषा तथापि तु ॥ ७ ॥ सगुणब्रह्मनिष्ठाना सुकरोपायतो हरे: ॥ पदं प्राप्नुवता श्रैष्ठ्यं संमतं तदपेक्षया ॥ ८ ॥ यथा ब्रह्मविदां तत्त्वसाक्षात्कारेण मुक्तता ॥ तथा सगुणनिष्ठानामीश्वराराधनेन च ॥ ९ ॥ निरस्तप्रतिबन्धाना विनाऽऽचार्योपदेशनम् ॥ श्रवणादेर्विना वृत्तिमीश्वरानुग्रहेण च ॥ १० ॥ तत्त्वज्ञानोदयेनैव सकार्याज्ञानबाधनात् ॥ प्रह्लादादिवदेवैषां कैवल्यं भवति स्वयम् ॥ ११ ॥ ब्रह्मलोकगतानां वा भोगैश्वर्यावसानत: ॥ भवेत्कैवल्यसंसिद्धिर्ब्रह्मविद्याफलं परम् ॥ १२ ॥ ९ ॥

भा० टी०–एवं चेत्तर्हि एतेषां सत्तमतां कुतो न ब्रूषे कुतश्च सगुणोपासकान् सत्तमानुक्तवानसीत्याशङ्क्य स्वस्वरूपाणां सतां युक्ततमत्वस्यायुक्ततमत्वस्य वाऽवक्तव्यत्वात् सगुणोपासने क्लेशाऽधिकतराभावाच्चेत्याशयेनाह–क्लेश इति । यद्यपि सगुणोपासकानां मत्कर्मपरायणतादौ क्लेशोऽधिकोऽस्त्येव तथाप्यक्षरोपासकानां देहाभिमानपरित्यागनिबन्धनोऽधिकतर: क्लेश: अव्यक्ते करणागोचरे तत्प्राप्त्यर्थमासक्तं चेतश्चित्तं येषां तेषामव्यक्तासक्तचेतसां हि यस्मादव्यक्ताक्षरात्मिका गतिर्देहवद्भिर्देहाभिमानवद्भिर्दु:खं यथा स्यात्तथाऽतिकष्टेनेति यावत्, अवाप्यतेऽत: क्लेशोऽधिकतर इत्युक्तम् ॥ ९ ॥

प० टी०–तत्रापि पूर्व: श्रेष्ठ इत्याह–क्लेश इति । अव्यक्तेऽक्षर आसक्तं चेतो येषां तेषां क्लेशोऽधिकतर:, हि यस्मादव्यक्तविषया गतिर्देहवद्भिर्देहाभिमानिभिर्दु:खं यथा स्यात्तथा प्राप्यते ॥ ९ ॥

रा० टी०–अव्यक्तोपासकानामपि त्वत्प्राप्तिरूपमोक्षसत्त्वे कथं त्वदुपासकानामुत्तमतेत्यत आह–क्लेश इति । अव्यक्ते विष्णुविनाकृतश्रीतत्त्वे आसक्तचित्तानां तेषां क्लेश: अधिकतर: । अत्यन्ताधिक: कथमित्यत आह–अव्यक्ता हीति । गतिशब्दो गम्यतेऽनेनेति करणव्युत्पत्त्या मार्गपर:, अव्यक्तशब्दस्तदुपासनं लक्षयित्वा तद्वारकलक्षक:, अव्यक्तोपासनद्वारको भगवत्प्राप्तिमार्ग: दु:खं यथा भवति तथा देहवद्भिरवाप्यते हि । प्रागुक्तपरिशब्दार्थपूर्वकमुपासनम् । इन्द्रियग्रामातिनियमनं षष्ठोक्तप्रकारेण सर्वत्र समबुद्धित्वं सर्वभूतहितकरत्वं सुद्वाचारं च विना न देवीप्रसाद:, तेन विना नेश्वरप्रसाद:, तेन विना न तत्प्राप्तिरिति तदुपास्तिद्वारकभगवत्प्राप्तिमार्गस्य क्लेशतरत्वं ध्येयम् ॥ ९ ॥

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परा: ॥**
**अनन्येनैव योगेन मां ध्यायन्त उपासते ॥ ६ ॥**
**तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥**
**भवामि न चिरात् पार्थ मय्यावेशितचेतसाम् ॥ ७ ॥**

त० टी०–मद्भक्तानां तु अनायासेनाल्पकालेनैव मत्प्राप्तिर्भवतीत्याह–ये त्विति द्वाभ्याम् । ये तु जन्मसमये मत्कृपाकटाक्षावलोकिता लौकिकानि देहयात्रार्थकानि वैदिकानि यागदानाग्निहोत्रप्रभृतीनि सर्वाणि कर्माणि फलाभिसंधिवर्जितानि मत्प्रसादैकप्रयोजनानि अत्यर्थप्रेष्ठे मयि संन्यस्य सम्यक्तयाऽर्प्य मत्परा अहमेव परं प्राप्यं येषां ते तथा भूत्वा मां भगवन्तं वासुदेवं ध्यायन्तश्चिन्तयन्तोऽनन्येनैव योगेन न विद्यतेऽन्यो भजनीय: प्राप्यश्च यस्मिन् तेन भक्तियोगेनोपासते, ध्रुवास्मृतिरूपां चित्तवृत्तिं मयि निवेशयन्तीत्यर्थ: ॥ ६ ॥ तेषामुक्तप्रकारेण मय्यावेशितचेतसाम् अहं वात्सल्यकारुण्यदयादिनिधि: मृत्योरपि मृत्यु: स्वभक्तदु:खासहिष्णुर्मृत्युयुक्तात्संसारसागरादचिरेणैव समुद्धर्ता भवामि, हे पार्थ उद्धृत्य च नित्यनिरतिशयानन्दरूपामात्मभावापत्तिं मुक्तिं ददामीत्यर्थ: ॥ ७ ॥

म० टी०–ननु फलैक्ये क्लेशाल्पत्वाधिक्याभ्यामुत्कर्षनिष्कर्षौ स्यातां तदेव तु नास्ति निर्गुणब्रह्मविदां हि फलमविद्यातत्कार्यनिवृत्त्या निर्विशेषपरमानन्दबोधब्रह्मरूपता सगुणब्रह्मविदां त्वधिष्ठानप्रमाया अभा-

वेनाविद्यानिवृत्त्यभावादैश्वर्यविशेषः कार्यब्रह्मलोकगतानां फलं, अतः फलाधिक्यार्थमायासाधिक्यं न न्यूनतामापादयतीति चेन्न, सगुणोपासनया निरस्तसर्वप्रतिबन्धानां विना गुरूपदेशं विना च श्रवणमननिदिध्यासनाद्यावृत्तिक्लेशं स्वयमाविर्भूतेन वेदान्तवाक्येनेश्वरप्रसादसहकृतेन तत्त्वज्ञानोदयादविद्यातत्कार्यनिवृत्त्या ब्रह्मलोक एवैश्वर्यभोगान्ते निर्गुणब्रह्मविद्याफलपरमकैवल्योपपत्तेः "स एतस्मात् जीवघनात् परात् परं पुरिशयं पुरुषमीक्षते" इति श्रुतेः। स प्राप्तहिरण्यगर्भैश्वर्यो भोगान्ते एतस्माज्जीवघनात् सर्वजीवसमष्टिरूपात् परात्छ्रेष्ठात् हिरण्यगर्भात्परं विलक्षणं श्रेष्ठं च पुरिशयं स्वहृदयगुहानिविष्टं पुरुषं पूर्णं प्रत्यगभिन्नमद्वितीयं परमात्मानमीक्षते स्वयमाविर्भूतेन वेदान्तप्रमाणेन साक्षात्करोति तावता च मुक्तो भवतीत्यर्थः। तथा च विनापि प्रागुक्तक्लेशेन सगुणब्रह्मविदामीश्वरप्रसादेन निर्गुणब्रह्मविद्याफलप्राप्तिरितीममर्थमाह द्वाभ्याम्—ये त्विति। तुशब्द उक्ताशङ्कानिवृत्त्यर्थः। ये सर्वाणि कर्माणि मयि संन्यस्य सगुणे वासुदेवे समर्प्य मत्पराः अहं भगवान् वासुदेव एव परः प्रकृष्टः प्रीतिविषयो येषां ते तथा सन्तोऽनन्येनैव योगेन न विद्यते मां भगवन्तं मुक्त्वाऽन्यदालम्बनं यस्य तादृशेनैव योगेन समाधिना एकान्तभक्तियोगापरनाम्ना मां भगवन्तं वासुदेवं सकलसौन्दर्यसारनिधानमानन्दघनविग्रहं द्विभुजं चतुर्भुजं वा समस्तजनमनोमोहिनीं मुरलीमतिमनोहरैः सप्तभिः स्वरैरापूरयन्तं वा दरकमलकौमोदकीरथाङ्गसङ्गिपाणिपल्लवं वा नरसिंहराघवादिरूपं वा यथादर्शितविश्वरूपं वा ध्यायन्तश्चिन्तयन्त उपासते समानाकारमविच्छिन्नं चित्तवृत्तिप्रवाहं संतन्वते समीपवर्तितया आसते तिष्ठन्ति वा ॥ ६ ॥ तेषां मय्यावेशितचेतसां मयि यथोक्ते आवेशितमेकाग्रतया प्रवेशितं चेतो यैस्तेषामहं सततोपासितो भगवान् मृत्युसंसारसागरात् मृत्युयुक्तो यः संसारो मिथ्याज्ञानतत्कार्यप्रपञ्चः स एव सागर इव दुस्तरस्तस्मात् समुद्धर्ता सम्यगनायासेन उदूर्ध्वे सर्वबाधावधिभूते शुद्धे ब्रह्मणि धर्ता धारयिता ज्ञानावष्टम्भदानेन भवामि नचिरात् क्षिप्रमेव तस्मिन्नेव जन्मनि। हे पार्थेति संबोधनमाश्वासार्थम् ॥ ७ ॥

शं० टी०—यस्मादेवं तस्मादनायासेनाक्षरोपास्तिसिद्धेः कारणं सगुणोपास्तिः सावश्यं मुमुक्षुभिः कर्तव्या ये तु तन्निष्ठास्ते सुखेनाक्षरोपास्तिं तत्प्राप्तिं च गच्छन्तीत्युभयसाध्यसाधनभावमङ्गीकृत्य साधनस्यैवावश्यकर्तव्यतां सूचयितुमाह—ये त्विति। तुशब्दः पूर्वोपासकव्यावृत्त्यर्थः। ये तु सगुणोपासका मद्भक्ताः सर्वाणि वैदिकान्यवैदिकानि च कर्माणि मयि परमेश्वरे संन्यस्य मदर्पितानि कृत्वा मत्पराः मदेकप्रवणाः सन्तः, यद्वा अहमेव विश्वरूपः परमात्मा परः स्वस्मादन्यः श्रोतव्यो द्रष्टव्यः स्प्रष्टव्यो मन्तव्यो ज्ञातव्यश्च पदार्थो येषां ते मत्पराः स्वव्यतिरिक्ते वस्तुनि सर्वत्र मद्बुद्धय इत्यर्थः। तत एवानन्येन न विद्यते मद्व्यतिरिक्तं बुद्धेरालम्बनं यत्र सोऽनन्यस्तेनैव योगेन समाधिना मां विश्वरूपं सर्वात्मकं परमेश्वरं ध्यायन्त उपासते मदाकारवृत्त्या सदा मामेव ये भजन्तीत्यर्थः॥ ६ ॥ एवं सगुणोपास्त्या शुद्धात्मनामक्षरोपास्तिस्तत्फलप्राप्तिश्च सुलभेति सूचयितुं सगुणोपास्तेः फलमाह—तेषामिति। मयि विश्वरूपे "एष सर्वभूतान्तरात्मा" इत्यादिश्रुतिप्रसिद्धे परमेश्वर एवावेशितं सर्वं ब्रह्मैवेतिभावनायामेव स्थापितं चेतो येषां तेषां सर्वदा सर्वथा मामेव भजतां मद्भजनेन संप्राप्तसत्त्वशुद्धीनां तेषां मद्भक्तानां नचिराच्छीघ्रं मदुपास्त्या सम्यक्चित्तशुद्ध्युत्पत्त्युत्तरक्षण एव तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ तेषामेवानुकम्पार्थमहमज्ञानजं तमः। नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता॥ इत्युक्तप्रकारेणाहं परमेश्वरः सम्यग्दर्शनलक्षणं ज्ञानयोगं दत्त्वा ज्ञानदीपेनाज्ञानध्वान्तविध्वंसनं च कृत्वा सम्यङ्निर्गुणब्रह्मनिष्ठां संपाद्येत्यर्थः। मृत्युसंसारसागरात् म्रियन्ते पुनः पुनः प्राणिनो यस्मात्स मृत्युरज्ञानं सर्वानर्थकारणं तेन युक्तस्तत्कार्यभूतोऽहंममेत्यादिप्रवृत्तिलक्षणः संसारः सोऽयं निरवधिकत्वात् दुस्तरत्वात्तापत्रयवडवानलमयत्वाच्च सागरवद्भवतीति मृत्युसंसारसागरस्तस्मादुद्धर्तास्मि समुद्धरणकर्ता भवामि, ब्रह्मज्ञानं तन्निष्ठा तत्प्रा-

तिश्च यथा सिद्ध्येत्तथाऽनुग्रहं करोमीत्यर्थः । एतेन सगुणोपास्तिरङ्गं निर्गुणोपास्तिरङ्गी तयोः फलं तु मोक्ष एव मत्प्रसादैकलभ्य इति सूचितं भवति ॥ ७ ॥

**श्री० टी०**—मद्भक्तानां तु मत्प्रसादादनायासत एव सिद्धिर्भवतीत्याह—**ये त्विति द्वाभ्याम्** । मयि परमेश्वरे सर्वाणि कर्माणि संन्यस्य समर्प्य मत्परा भूत्वा मां ध्यायन्तः अनन्येन न विद्यते अन्यो भजनीयो यस्मिँस्तेनैव एकान्तभक्तियोगेनोपासत इत्यर्थः ॥ ६ ॥ **तेषामिति** । एवं मयि आवेशितं चेतो यैस्तेषां मृत्युयुक्तात्संसारसागरादहं सम्यगुद्धर्ता अचिरेणैव भवामि ॥ ७ ॥

**स० टी०**—योगिनामुभयेषां प्राङ्मुमुक्षूणां विभज्य वै ॥ निष्ठोक्ता तत्फलं मोक्षः सद्यः कालान्तरे स्मृतः ॥ १ ॥ इदानीं भक्तिरसिका भोगमोक्षादिनिःस्पृहाः ॥ ये सन्ति विरलाः कृष्णपादपद्मरसग्रहाः ॥ २ ॥ तेषामनिच्छतामप्याश्वहं मोक्षपदे परे ॥ सतां धारयितेत्याह प्रेमभक्तिप्रियो हरिः ॥ ३ ॥ यद्यपीशोऽस्ति सर्वेषां मोक्षदाता जनार्दनः ॥ तथापि यत्नमुत्पाद्य मुमुक्षुत्वं च योगिनाम् ॥ ४ ॥ मोक्षे धारयिता स्वामी ज्ञानद्वाराधिकारिणाम् ॥ निष्कामानां तु भक्तानां कृष्णपादानुरागिणाम् ॥ ५ ॥ न मुमुक्षाबुभुक्षे स्तः प्रह्लादेन तथेरितम् ॥ नाथ योनिसहस्रेषु येषु येषु व्रजाम्यहम् ॥ ६ ॥ तेषु तेष्वच्युता भक्तिस्त्वय्यच्युत सदास्तु मे ॥ या प्रीतिरविवेकानां विषयेष्वनपायिनी ॥ ७ ॥ त्वामनुस्मरतः सा मे हृदयान्मापसर्पतु ॥ अतस्तेभ्योऽप्यनिच्छद्भ्यः स्वयं मोक्षं जनार्दनः ॥ ८ ॥ ददातीति विशेषोऽपि तुशब्देनात्र सूच्यते ॥ ये तु सर्वाणि कर्माणि वासुदेवे मयीश्वरे ॥ ९ ॥ समर्प्यात्यन्तमत्प्रेम्णा मत्पराः सन्त आदरात् ॥ नान्यदालम्बनं यस्य भगवन्तं विहाय माम् ॥ १० ॥ तेन भक्त्याख्ययोगेन वासुदेवं रमापतिम् ॥ मामेव सर्वसौन्दर्यसारसर्वस्वमीश्वरम् ॥ ११ ॥ चिन्तयन्तः सदानन्दं विषयीकर्तुमुद्यताः ॥ चित्तवृत्त्यैकसंतत्या तिष्ठन्त्यान्तरगे मयि ॥ १२॥ ॥ ६ ॥ तेषामेकाग्रभावेन मय्यावेशितचेतसाम् ॥ मिथ्याज्ञानं च तत्कार्यं मृत्युस्तद्रूपसागरात् ॥ १ ॥ अनायासेन सर्वोर्ध्वे शुद्धे ब्रह्मणि चिद्घने ॥ सर्वबाधावधौ तत्त्वज्ञानदानेन सत्वरम् ॥ २ ॥ अहं धारयिता पार्थ तस्मिन्नेवैकजन्मनि ॥ ३ ॥ यस्यातिसौष्ठवगुणामृतसारवार्धेः सौन्दर्यसाररसिकाः प्रशमेऽप्यनीप्साः ॥ लोकान्पुनन्ति कृपयाङ्घ्रिरजोभिरद्धा तं वासुदेवमुपयामि सतां शरण्यम् ॥ ४ ॥ ७ ॥

**भा० टी०**—अक्षरोपासका मामेव प्राप्नुवन्तीत्युक्त्या तेषां साक्षात्स्वप्राप्तियोग्यत्वमुक्तं ये तु पूर्वे ते तु बहुश्रवणादिनाऽधिकतरक्लेशमन्तरेणैव मदत्तज्ञानेन संसारान्मुच्यन्त इत्याशयेनाह—**ये त्विति द्वाभ्याम्** । ये तु सगुणोपासकाः सर्वाणि कर्माणि मयि परमेश्वरे संन्यस्य समर्प्य अहं परः परमपुरुषार्थत्वेनोपास्यो येषां ते मत्पराः न स्वर्गादिपराः एतादृशाः सन्तोऽनन्येनैव योगेन न विद्यते विश्वरूपं देवमात्मानमीश्वरमनन्तगुणनिधिं तत्तद्रूपेण भूतलेऽवतीर्णं मुक्त्वान्यदालम्बनं यस्य तेन योगेन समाधिना मां ध्यायन्तश्चिन्तयन्त उपासते मयि परमेश्वरे विश्वरूपे आवेशितं प्रवेशितं चित्तं येषां तेषां नचिरात् शीघ्रमेव मृत्युयुक्तात्संसारसमुद्रादहमुद्धर्ता भवामि अनन्यभक्त्या संतुष्टः सन् बुद्धियोगं दत्त्वा मूलाज्ञानसहिततत्कार्यरूपात्संसाराउद्धरामीत्यभिप्रायः। तदुक्तम् मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् । कथयन्तश्च मां नित्यं तुष्यन्ति च रमन्ति च ॥ तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ हे पार्थेति संबोधयन् यथा पृथासुतानां भवतां भक्त्या वशीकृतस्तत्तत्संकटादुद्धर्ता तथेति ध्वनयति ॥ ६ ॥ ७ ॥

**प० टी०**—मद्भक्तानां त्वप्रयासेन प्राप्तिर्भवतीत्याह—**ये त्विति** । तथा—**तेषामिति**। मयि आवेशितं प्रवेशितं चित्तं यैस्तेषां पुरुषाणां मृत्युसंसारसागरादहमचिरेण समुद्धर्ता भवामि । मृत्युः संसरणं संसारो जन्म एवं जन्ममरणरूपात्सागरात् । तेषां केषां, ये तु सर्वाणि कर्माणि मयि संन्यस्य समर्प्य मत्परा मदेकनिष्ठाः सन्तः न विद्यतेऽन्यो भजनीयो यस्मिन्नित्यनन्ययोगस्तेन मां ध्यायन्त उपासते उपासनां कुर्वते

तेषामिति । अत्रायमर्थः—दुःसाध्यं कर्माश्रयं विना न सिध्यति । यथा तरणाभ्यासवतोऽपि बाहुभ्यां भागीरथीं तितीर्षोस्तुम्बिकाश्रयेण भवितव्यम्, अन्यथा श्रान्तहस्तपादः सन् मध्य एव निमज्जति । एवं कर्मयोगज्ञानवानपि मदाश्रयं विना ब्रह्मसायुज्यं न प्राप्नोति, यतः सिद्ध्यादिविक्षेपशतैः पुनर्निवर्तते । तदुक्तं महापुराणे—' तथा न ते माधव तावकाः क्वचिद्भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः । त्वयाभिगुप्ता विचरन्ति निर्भया विनायकानीकपमूर्धसु प्रभो ' इत्यादि ॥ ६ ॥ ७ ॥

रा० टी०—मदुपासने न तथा क्लेश इत्याह—ये त्विति । पूर्वस्माद्वैलक्षण्यद्योतकस्तुशब्दः । ये तु सर्वाणि कर्माणि मयि संन्यस्य सर्वस्वतन्त्रो हरिरेव मयि स्थित्वा स्वपूजात्वेन कर्माणि स्वाधीनकर्त्रा मया कारयतीत्यनुसंधाय समर्प्येति वा, मत्पराः अहमेवोत्तम इति जानन्तः अनन्येनैव योगेन अव्यक्तोपासनां विना कृतेन ध्यानेन केवलमद्विषयध्यानेनापीति यावत् , मां ध्यायन्त उपासते । अत्र उपासत इत्युक्त्या पर्युपासत इत्युक्ताव्यक्तोपासनमिव नातिशयितोपासनम् । अतीवेन्द्रियनियमनादिकं मत्प्रसादेनापेक्षितमिति न क्लेश इति सूचितम् । तथा नचिरादित्यनेनाव्यक्तापरोक्षे यावान् प्रयासस्तावता यदि मामुपासते तदूनेन वा तदा मदपरोक्षमेव भवतीत्यतोऽपि न क्लेश इति सूचितम् । तेषामहं समुद्धर्ता भवामीत्यनेनेन्द्रियसंयमाद्यूनभावेऽपि देवीवद्देवो नोपेक्षते किंतु तानि साधनानि भक्तिमतः स्वयमेवाप्रयत्नेन ददातीति चातिसौकर्यं भक्तानां भगवदुपासने इति भावः । यद्वा क्लेशोऽधिकतर इति श्लोके अव्यक्तोपास्तिमार्गस्य क्लेशतरत्वोक्त्यैव सुष्ठ्वाचारादेरूनत्वेऽपि मत्प्रसादो भवत्येवेत्यक्लेशत्वान्मदुपास्तिमार्ग एव श्रेष्ठ इति तात्पर्यगत्योक्तप्रायत्वाद्भेत्वन्तरेणापि भगवदुपास्तिमार्गः श्रेष्ठ इत्याह—ये त्विति । पूर्वार्धस्य प्रागिवार्थः । अनन्येनैव अन्यशब्दो लक्ष्म्याद्यन्यदेवतावाची सन् तन्निष्ठस्वातन्त्र्यापरिवारत्वविषयपरः स न भवतीत्यनन्यः तेन योगेन ध्यानेन भगवदधीनतया तत्परिवारत्वेन लक्ष्मीब्रह्मादिसहितेन ध्यानयोगेनेति यावत् । 'अङ्गावबद्धास्तु' इत्यादिसूत्रात् मां ध्यायन्त उपासते ॥ ६ ॥ तेषां मय्यावेशितचेतसामहं मृत्युसंसारसागरात् मृत्युरूपसंसारसमुद्रान्नचिराच्छीघ्रं समुद्धर्ता भवामीत्यर्थः । अत्र नचिरादित्युक्त्या श्रिया सह भगवदुपासने द्वयोरपि परमप्रसादसंभवेन अचिरान्मोक्षो भवति पृथगव्यक्तोपासनपक्षे तु पूर्वं किंचिद्भगवदुपासनं कृत्वा बहुकालं पृथक् श्रियमुपास्य पुनः श्रिया सह भगवदुपासनं तु निरन्तरं कार्यम् । ततो मुक्तिरिति चिरेणैव भवतीत्यतोऽचिरेण मुक्तिहेतुत्वाच्च भगवदुपासनमेवाधिकमित्युक्तं भवति । तदुक्तम्—'विष्णुना सहिता ध्याता देवी तुष्टिं परां व्रजेत् ' इत्यादि ॥ ७ ॥

## मय्येव मन आधत्स्व मयि बुद्धिं निवेशय ॥
## निवसिष्यसि मय्येव अत उर्ध्वं न संशयः ॥ ८ ॥

त० टी०—एवं स्वानन्यभक्तानां मृत्युसंसारसागरान्मोचकः परमानन्ददाता चाहमेवातस्त्वमप्येवं कुर्वित्याह—मय्येवेति । चेतसः शुभाश्रये भक्तप्रिये ईश्वरेश्वरे मय्येव नतु देवान्तरे फलान्तरे वा मन आधत्स्व समाधानं कुरुष्व । मय्येव बुद्धिमध्यवसायात्मिकां निवेशय, भगवान् वासुदेव एव भजनीयः प्राप्यश्चेति निश्चयं कुर्वित्यर्थः । एवं मय्यावेशितमनोबुद्धिः सन्नत ऊर्ध्वमेतद्देहान्ते मय्येव निवसिष्यसि नितरां वत्स्यसि, मदाश्रितो भूत्वा न कदाऽपि वियोक्ष्यसे इत्यर्थः, अत्र संशयो नास्ति ॥ ८ ॥

म० टी०—तदेवमियता प्रबन्धेन सगुणोपासनां स्तुत्वेदानीं साधनातिरेकं विधत्ते—मय्येवेति । मय्येव सगुणे ब्रह्मणि मनः संकल्पविकल्पात्मकमाधत्स्व स्थापय । सर्वा मनोवृत्तीर्मद्विषया एव कुरु । एवकारानुषङ्गेण मय्येव बुद्धिं मद्व्यवसायलक्षणां निवेशय, सर्वा बुद्धिवृत्तीर्मद्विषया एव कुरु विषयान्तरपरित्यागेन सर्वदा मां चिन्तये-

त्यर्थः । ततः किं स्यादित्यत आह—निवसिष्यासि निवत्स्यसि लब्धज्ञानः सन्मदात्मना मय्येव शुद्धे ब्रह्मण्येव अत ऊर्ध्वं एतद्देहान्ते न संशयो नात्र प्रतिबन्धशङ्का कर्तव्येत्यर्थः । एव अत ऊर्ध्वमित्यत्र संध्यभावः श्लोकपूरणार्थः ॥ ८ ॥

**शं० टी०**—यस्मादक्षरज्ञानं तत्फलं च मत्प्रसादैकलभ्यं मत्प्रसादोऽपि मदुपास्त्येकलभ्यस्तस्मान्मदुपासनं कुर्वित्याह—**मय्येवेति** । मकारं प्रयुज्य संधिः कर्तुं शक्यते तथापि स्वस्य बहुव्याकरणज्ञत्वप्रकाशनार्थमत ऊर्ध्वमित्युक्तम् । मय्येव विश्वरूपे सगुणे न तु निराकारे केवलेऽक्षरे मदुपास्त्या विना तज्ज्ञानस्य तदुपास्तेश्चातिदुर्लभत्वात् मन आधत्स्व सर्वत्र वृत्तेर्विषयं मामेव कुरु न तु शब्दादिकमित्यर्थः । किंच मय्येवोक्तलक्षणे बुद्धिं वस्तुतत्त्वावधारणशीलामन्तःकरणवृत्तिं विशेषात्मिकां निवेशय इदं सर्वं ब्रह्मैवेति निश्चयवत्या बुद्ध्या सदा मामनुसंधेहीत्यर्थः । अत ऊर्ध्वं निर्विशेषज्ञानं प्राप्य तद्बलेन देहसंबन्धमुत्सृज्य निर्विशेषात्मना मय्येव निर्विशेषे परे ब्रह्मणि निवसिष्यसि विदेहकैवल्यं प्राप्स्यसि । नास्त्यत्र संशयः । मद्भक्तस्य तव प्रतिबन्धासंभवात् कैवल्यं सिध्यति वा न वेति संदेहो न कर्तव्यः किंतु मदेकाश्रयस्य मदुपास्त्या चित्तशुद्धिस्तया ज्ञानं तेन विदेहकैवल्यं च निष्प्रत्यूहेनैव सिध्यतीत्यर्थः ॥ ८ ॥

**श्री० टी०**—यस्मादेवं तस्मात्—**मय्येवेति** । मय्येव संकल्पविकल्पात्मकं मन आधत्स्व स्थिरीकुरु बुद्धिमपि व्यवसायात्मिकां मय्येव प्रवेशय एवं कुर्वन्मत्प्रसादेन लब्धज्ञानः सन्नत ऊर्ध्वं देहान्ते मरणानन्तरं मय्येव निवसिष्यसि निवत्स्यसि मदात्मना वासं करिष्यसि नात्र संशयः । तथा च श्रुतिः—"देहान्ते देवस्तारकं परब्रह्म व्याचष्टे" इति ॥ ८ ॥

**स० टी०**—प्रबन्धेनेयता ह्येवं सगुणोपासनं हरिः ॥ स्तुत्वेदानीं विधत्तेऽत्र मय्येवेत्यादिना स्फुटम् ॥ १ ॥ मय्येव सगुणे विष्णौ संकल्पाद्यात्मकं मनः ॥ स्थापय त्वं तथा बुद्धिं निश्चयैकस्वरूपिणीम् ॥ २ ॥ विषयान्तरसंत्यागान्मामीशमनुचिन्तय ॥ एवं चिन्तयतस्ते यत्फलं स्याच्छृणु तत्स्फुटम् ॥ ३ ॥ निवत्स्यसि मयि ध्येये लब्धज्ञानो मदात्मना ॥ एतद्देहलयादूर्ध्वं नात्र शङ्कास्ति काचन ॥ ४ ॥ ब्रह्मादयोऽपि सततं श्रुतिसारविज्ञा यस्मिन् रता ह्यवगणय्य पदं स्वकीयम् ॥ पद्मा रता कमलपद्मविहाय यत्र श्रीशं तमेव मनसा हरिमाश्रयामि ॥ ५ ॥ ८ ॥

**भा० टी०**—यतोऽधिकतरक्लेशमन्तरेण भगवदुपासकानामुद्धारस्तस्मात्—**मयीति** । मय्येव विश्वरूपे परमात्मनि एवकारेणोपास्यान्तरस्य फलस्य च व्यवच्छेदः । मनः संकल्पविकल्पात्मकं स्थापय मय्येव निश्चयं कुर्वन्तीं बुद्धिं निवेशय ततः किं स्यादत आह—अतः शरीरपातादूर्ध्वं मय्येव निवसिष्यसि निवत्स्यसि निश्चयेन मदात्मना मयि वासं करिष्यस्येवास्मिन्नर्थे संशयो न कर्तव्यः ॥ ८ ॥

**प० टी०**—यद्येवं तर्हि—**मय्येवेति** । संकल्पविकल्पात्मकं मनो मय्येवाधत्स्व स्थिरीकुरु । तथा बुद्धिं व्यवसायात्मिकां मयि निवेशय प्रवेशय । अत ऊर्ध्वमतोऽनन्तरं मय्येव निवसिष्यसि मदाकारो भविष्यसि । तदुक्तम्—'चेतो मत्तमतङ्गजं मदभरभ्रान्तं भ्रमन्तं दिशो दुःसंकल्पविकल्पदन्तदलितप्रोद्दामधैर्यद्रुमम् । उद्यद्गाढतरप्रबोधनिगडं भूयः समाक्रामितुं धात्रा योजितमद्भुतं नरहरेरालानमाङ्घ्रिद्वयम्' ॥ ८ ॥

**रा० टी०**—एवमुक्तदिशा भगवदुपास्तेरेवोत्तमत्वात्तदेव कुरु । तदशक्तौ तत्सिद्ध्यर्थमुपायान्तराणि संपादयेत्याह—**मयीत्यादिचतुष्टयेन** । मय्येव मन आधत्स्व आधेहि मामुपास्स्वेति यावत् । तदलाभे मयि बुद्धिं निवेशय मद्विषयं ज्ञानं संपादय । अत ऊर्ध्वं मत्संपत्त्यनन्तरं मय्येव निवसिष्यसि निर्दुःखानन्दानुभवात्मिकां स्थितिं प्राप्स्यसि ॥ ८ ॥

# अथ चित्तं समाधातुं न शक्नोषि मयि स्थिरम् ॥
# अभ्यासयोगेन ततो मामिच्छाप्तुं धनंजय ॥ ९ ॥

त० टी०—अत्राशक्तस्य सुकरोपायमाह—अथेति । अथ पक्षान्तरे । स्थिरं निश्चलं यथा स्यात्तथा मयि चित्तं समाधातुं यदि न शक्नोषि, ततोऽभ्यासयोगेन निरतिशयसौन्दर्यमाधुर्यलावण्यादिगुणनिधेर्मद्दिव्यमूर्तेः पुनः पुनश्चिन्तनेन मत्प्रियदिव्यनामस्तोत्रादिकीर्तनादिरूपेण वाऽभ्यासयोगेन मां प्राप्तुमिच्छ, हे धनंजय ॥ ९ ॥

म० टी०—इदानीं सगुणब्रह्मध्यानाशक्तानामशक्तितारतम्येन प्रथमं प्रतिमादौ बाह्ये भगवद्ध्यानाभ्यासस्तदशक्तौ भागवतधर्मानुष्ठानं तदशक्तौ सर्वकर्मफलत्याग इति त्रीणि साधनानि त्रिभिः श्लोकैर्विधत्ते—अथेति । अथ पक्षान्तरे स्थिरं यथा स्यात्तथा चित्तं समाधातुं स्थापयितुं मयि न शक्नोषि चेत्तत एकस्मिन् प्रतिमादावालम्बने सर्वतः समाहृत्य चेतसः पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधिस्तेनाभ्यासयोगेन मामाप्तुमिच्छ यतस्व हे धनञ्जय बहून् शत्रुन् जित्वा धनमाहृतवानसि राजसूयाद्यर्थमेकं मनःशत्रुं जित्वा तत्त्वज्ञानधनमाहरिष्यसीति न तवाश्चर्यमिति संबोधनार्थः ॥ ९ ॥

शं० टी०—विश्वरूपोपासनमनेकविपरीतप्रत्ययकोटिप्रतिबन्धकमुक्तरीत्या कर्तुमशक्तानामतिमन्दप्रज्ञानां साधनान्तराण्युपदिशति—अथेति । प्रज्ञाबलेन ज्ञानधनं जयतीति हे धनंजय, अथवोक्तरीत्या मयि विरूपे परमात्मनि स्थिरं निश्चलं यथा तथा चित्तं समाधातुं सम्यक् स्थापयितुं यदि न शक्नोषि तर्हि त्वमभ्यासयोगेन विपरीतप्रत्ययान् तिरस्कृत्य सजातीयप्रत्ययावृत्तिरभ्यासः घटपटादिप्रत्ययप्रविलापनपूर्वकं सर्वमिदं भौतिकमेवेति सर्वप्रमाणसिद्धे सर्वस्य भौतिकत्वप्रत्यये चिरकालं नित्यं निरन्तरं तात्पर्येण समभ्यस्यमाने सदा सर्वत्र भौतिकप्रत्ययो विपरीतप्रत्ययानन्तरितो दृढतरः समुदेति तेन मनश्चलनहेतूनां घटादिप्रत्ययानां सवासनानां संक्षये सति मनः सुस्थिरं भवति। एवं सर्वस्य भौतिकमात्रत्वप्रत्ययाभ्यासः सगुणब्रह्मोपासितसिद्धेरुपायत्वाद्योग इत्युच्यते । स चासौ योगश्च तेनाऽभ्यासयोगेन मनसि निश्चले सति ततस्तदनन्तरं विश्वरूपं मां परमेश्वरमाप्तुं सर्वत्र भौतिकत्वप्रत्ययं त्यक्त्वा सर्वं ब्रह्मैवेति सगुणं ब्रह्म मां विश्वरूपं ब्रह्म प्रत्ययैरुपासितुमिच्छ त्वमिच्छां कुरु, सर्वं ब्रह्मैवेति सर्वं मामेव भावयेत्यर्थः ॥ ९ ॥

श्री० टी०—अत्राशक्तं प्रति सुगमोपायमाह—अथेति । स्थिरं यथा भवत्येवं मयि चित्तं धारयितुं यदि शक्तो न भवसि तर्हि विक्षिप्तं चित्तं पुनः पुनः प्रत्याहृत्य ममानुस्मरणलक्षणो योऽभ्यासस्तेन मां प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥

स० टी०—इदानीं सगुणब्रह्मध्यानाशक्तौ नृणां हरिः ॥ अशक्तितारतम्येन विधत्ते साधनत्रयम् ॥ १ ॥ प्रतिमादौ हरिध्यानाभ्यासः स्यात्प्रथमं नृणाम् ॥ तदशक्तौ नृभिः कार्यो धर्मो भागवतः सदा ॥ २ ॥ सर्वकर्मफलत्यागस्तदशक्तौ च साधनम् ॥ अशक्तितारतम्येन साधनत्रयमुच्यते ॥ ३ ॥ मदुक्तरीत्या चित्तं चेन्न त्वं स्थापयितुं क्षमः ॥ मयीश्वरे वासुदेवे निश्चलं तर्हि सर्वदा ॥ ४ ॥ आहृत्य सर्वतो बाह्यादेकस्मिन्नवलम्बने ॥ चेतसः स्थापनं भूयो भूयोऽभ्यासः स उच्यते ॥ ५ ॥ तत्पूर्वकसमाधिर्यस्तेन मां प्राप्तुमीश्वरम् ॥ यतस्व प्रतिमादौ त्वं चित्तं कुरु समाहितम् ॥ ६ ॥ ९ ॥

भा० टी०—एतत्कर्तुमशक्तस्य स्वप्राप्तावुपायान्तरमाह—अथेति । अथैवमुक्तप्रकारेण मयि चित्तमचलं यथा स्यात्तथा समाधातुं स्थापयितुमसमर्थोऽसि चेत्ततश्चित्तस्यैकस्मिन्नालम्बने आभ्यन्तरे बाह्ये वा प्रतिमादौ सर्वतः समाहृत्य पुनः पुनः स्थापनमभ्यासस्तत्पूर्वको योगः समाधानलक्षणस्तेन मां विश्वरूपमाप्तुं

प्राप्तुं इच्छ प्रार्थयस्व । धनंजयेति संबोधयन् यथा धनुर्विद्याभ्यासबलाद्राजभ्यो धनं भीष्मादिभ्यो गोधनं चाहृतवानसि तथाभ्यासयोगेन मामप्याहर्तुं योग्योऽसीति सूचयति ॥ ९ ॥

प० टी०—अथोक्तोपायाशक्तत्वे पुनरुपायान्तरमाह—**अथेति** । अथ मयि चित्तं स्थिरं निश्चलं समाधातुं कर्तुं न शक्नोषि तर्हि प्रत्याहृत्य मदनुस्मरणरूपोऽभ्यासस्तेन मामाप्तुं प्राप्तुमिच्छ प्रयत्नं कुरु ॥ ९ ॥

रा० टी०—**अथेति** । अथेत्यर्थान्तरे । स्थिरं यथा तथा मयि चित्तं समाधातुं न शक्नोषि । ततो मनःसमाधानाशक्तत्वात्पुनः पुनः प्रत्याहारेण भगवन्मनःसमाधानरूपाभ्यासलक्षणोपायेन मामाप्तुं ज्ञातुमिच्छ ॥ ९ ॥

**अभ्यासेऽप्यसमर्थोऽसि मत्कर्मपरमो भव ॥**
**मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ॥ १० ॥**

त० टी०—तत्राप्यशक्तस्योपायान्तरमाह—**अभ्यासेऽपीति** । यद्येवंविधमद्रूपस्मरणनामकीर्तनाद्यभ्यासेऽप्यसमर्थोऽसि चेत्तर्हि मत्कर्मपरमो भव । मदीयानि कर्माणि मन्दिरनिर्माणतुलसीपुष्पादिवाटिकाकरणमन्दिरमार्जनलेपनदीपप्रकाशनतुलसीपुष्पाहरणमन्मूर्तिस्नापनोद्वर्तनगन्धपुष्पधूपदीपनैवेद्यार्पणप्रदक्षिणनमस्कारस्तुत्यादीनि श्रद्धाप्रीत्यतिशयेन तत्परमो भव । एवंभूतानि कर्माण्यपि मदर्थं कुर्वन्नचिरादभ्यासयोगपूर्विकां मयि स्थिरां चित्तस्थितिं लब्ध्वा मत्प्राप्तिरूपां सिद्धिमवाप्स्यसि ॥ १० ॥

म० टी०—**अभ्यास इति** । मत्प्रीणनार्थं कर्म मत्कर्म श्रवणकीर्तनादिभागवतधर्मस्तत्परमस्तदेकनिष्ठो भव अभ्याससामर्थ्ये मदर्थं भागवतधर्मसंज्ञकानि कर्माण्यपि कुर्वन् सिद्धिं ब्रह्मभावलक्षणां सत्त्वशुद्धिज्ञानोत्पत्तिद्वारेणावाप्स्यसि ॥ १० ॥

शं० टी०—उक्तलक्षणाभ्यासयोगेनापि ब्रह्मोपासितुमशक्तस्यातिमन्दबुद्धेः साधनान्तरमाह—**अभ्यासेऽपीति** । अभ्यासेऽपि सजातीयप्रत्ययावृत्तिलक्षणाभ्यासेऽपि यदि त्वमसमर्थोऽशक्तोऽसि तर्हि त्वमभ्यासयोगमकृत्वैव नियमेन मत्कर्मपरमो मत्कर्म वैदिकं लौकिकं च सर्वं कर्म मदर्थमेव न तु स्वार्थमीषदपि तत् परमं प्रधानं तात्पर्येण कर्तव्यं न तु ध्यानादिकं यस्य स मत्कर्मपरमो भव यथा राजार्थं भटस्तथा मदर्थमेव सर्वं कर्म कुर्वित्यर्थः । एवमीश्वरार्थमेव कर्म कुर्वतस्तदनुष्ठानस्य फलमाह—**मदर्थमिति** । नियमेन श्रद्धया च मदर्थमेव सर्वाणि कर्माणि कुर्वन्नपि तदनुष्ठानसंभावितचित्तशुद्धिजन्यज्ञानद्वारा सिद्धिं कैवल्यसिद्धिं प्राप्स्यसीत्यर्थः । एतेनाज्ञस्येश्वरोद्देशेन सर्वकर्माचरणमभ्यासापेक्षया मुक्तेः सुखसाधनमिति सूचितं भवति ॥ १० ॥

श्री० टी०—यदि पुनर्नैवं तत्राह—**अभ्यास इति** । अभ्यासेऽपि यद्यशक्तोऽसि तर्हि मत्प्रीत्यर्थानि यानि कर्माणि एकादश्युपवासव्रतचर्यानामसंकीर्तनादीनि तदनुष्ठानमेव परमं यस्य तादृशो भव । एवंभूतानि कर्माण्यपि मदर्थं कुर्वन्मोक्षं प्राप्स्यसि ॥ १० ॥

स० टी०—तत्रापि यद्यशक्तोऽसि तदा मत्प्रीतिसाधनम् ॥ मत्कीर्तनं मच्छ्रवणं मदर्चेत्यादिकर्म यत् ॥ १ ॥ धर्मो भागवतः स स्यात्तस्मिन्नेकरतो भव ॥ एवं भागवतान्धर्मान्कुर्वन्निष्कामचेतसा ॥ २ ॥ सत्त्वशुद्ध्यात्मविज्ञानोत्पत्तिद्वारेण मत्पराम् ॥ सिद्धिं प्राप्स्यसि सच्छान्ति ब्रह्मभावैकलक्षणाम् ॥ ३ ॥ १० ॥

भा० टी०—सर्वतश्चित्तमाहृत्यैकात्मालम्बने पुनः पुनः स्थापनेऽशक्तं प्रत्युपायान्तरमाह—**अभ्यासे इति** । अभ्यासेऽप्यसमर्थोऽसि चेन्मदर्थमपि कर्म मत्प्रीत्यर्थं यत्कर्म तत्परमस्तत्प्रधानो भव अभ्यासेन विना मदर्थमपि केवलं कुर्वन् सिद्धिं ब्रह्मस्वभावं मोक्षं सत्त्वशुद्धियोगज्ञानप्राप्तिद्वारा प्राप्स्यसीत्यर्थः ॥ १० ॥

प० टी०—यदि पुनः—**अभ्यास इति** । मदनुस्मरणरूपेऽभ्यासे यद्यसमर्थोऽसि तर्हि मदर्थं यानि

कर्माणि तपोदानव्रतादीनि तान्येव परमं यस्य तदेकनिष्ठो भव । एवंविधानि कर्माणि मदर्थं कुर्वन्नपि सिद्धिं प्राप्स्यसि ॥ १० ॥

**रा० टी०**—अभ्यासेऽप्यशक्तोऽसि तदा मत्प्रीत्यर्थं मद्विषयकर्मानुष्ठानमेव परममुत्तमं यस्य स तथा तादृशो भव । तावता कथमिष्टसिद्धिरित्यत आह—**मदर्थमिति** । कुर्वन्नपीत्यर्थः ॥ १० ॥

## अथैतदप्यशक्तोऽसि कर्तुं मद्योगमाश्रितः ॥
## सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥ ११ ॥

**त० टी०**—उक्तकेवलभगवत्संबन्धिकर्मपरत्वेऽप्यशक्तस्योपायान्तरमाह—**अथैतदपीति** । यदि मद्भक्तियोगमाश्रितः सन्नेतदपि मत्प्रसादहेतूक्तप्रकारकं मत्कर्मापि कर्तुमशक्तोऽसि ततस्तस्मात्सर्वेषां नित्यनैमित्तिकानामावश्यकानामग्निहोत्रादिकर्मणां फलत्यागं कुरु । यतात्मवान् संयतचित्तः सन् फलाभिसंधिशून्यानि सर्वकर्माणि कुर्वन्नन्तःकरणशुद्धिपूर्वकमात्मज्ञानभक्तिद्वारा मद्भावं प्राप्नोषीति भावः ॥ ११ ॥

**म० टी०**—**अथेति** । अथ बहिर्विषयाकृष्टचेतस्त्वादेतन्मत्कर्मपरत्वमपि कर्तुं न शक्नोषि ततो मद्योगं मदेकशरणत्वमाश्रितो मयि सर्वकर्मसमर्पणं मद्योगस्तं वाश्रितः सन् यतात्मवान् यतः संयतसर्वेन्द्रियः आत्मवान् विवेकी च सन् सर्वकर्मफलत्यागं कुरु फलाभिसन्धिं त्यज इत्यर्थः ॥ ११ ॥

**शं० टी०**—उक्तलक्षणकर्मानुष्ठानेऽप्यसमर्थस्यात्यन्तमन्दबुद्धेः साधनान्तरमाह सर्वदा मदुपासनमेव मुमुक्षोरवश्यं कर्तव्यमिति सूचयितुम्—**अथेति** । अथवोक्तरीत्या मामुद्दिश्यैव कर्म प्राधान्येन कर्तुं यदि त्वं न शक्नोषि तर्हि यतात्मवान् यतः संयतः कामसंकल्पविमुखीकृत आत्मा चित्तमस्यास्तीति यतात्मवान् नियतचित्तो भूत्वा मद्योगमाश्रितः कर्मणानेन प्रीयतां भगवानिति मयि परमेश्वरे क्रियमाणानां सर्वेषां कर्मणां योजनं मद्योगः मयि सर्वकर्मसमर्पणं सर्वकर्मसंन्यास इति यावत्तमाश्रितः सन् ततः समनुष्ठितकर्मणां मत्समर्पणानन्तरमेव सर्वकर्मफलत्यागं कृतानां सर्वेषां कर्मणां यानि फलानि तेषां त्यागः संन्यासस्तं कुरु कर्मफलेषु कामं परित्यजेत्यर्थः । मयि समर्पितेषु सत्सु कर्मसु परार्थेष्विव फलकामासंभवाद्यथा सर्वकर्मपरित्यागस्तथैव तव मुक्तिरित्यभिप्रायः । एतेन कर्मफलेषु सुतरां कामं परित्यज्येश्वरार्पणबुद्ध्या विध्युक्तकर्माचरणमतिमूढस्यापि मुक्तेः सुखसाधनमिति सूचितम् ॥ ११ ॥

**श्री० टी०**—अत्यन्तं भगवद्धर्मपरिनिष्ठायामशक्तस्य पक्षान्तरमाह—**अथैतदपीति** । यद्येतदपि कर्तुमशक्तोऽसि तर्हि मद्योगं मदेकशरणत्वमाश्रितः सन्सर्वेषां दृष्टार्थानामावश्यकानां चाग्निहोत्रादिकर्मणां फलानि नियतचित्तो भूत्वा परित्यज । एतदुक्तं भवति । मया तावदीश्वराज्ञया यथाशक्ति कर्माणि कर्तव्यानि फलं पुनर्दृष्टमदृष्टं वा परमेश्वराधीनमित्येवं मयि भारमारोप्य फलासक्तिं परित्यज्य वर्तमानो मत्प्रसादेन कृतार्थो भविष्यसीति तात्पर्यम् ॥ ११ ॥

**स० टी०**—विषयाक्रान्तचित्तत्वाद्यद्यशक्तोऽसि कर्म तत् ॥ कर्तुं तर्ह्यखिलं कर्म समर्प्य जगदीश्वरे ॥ १ ॥ मयि मच्छरणो भूत्वा विवेकी संयतेन्द्रियः ॥ सर्वकर्मफलासङ्गं त्यज त्वं मुक्तिसिद्धये ॥ २ ॥ ११ ॥

**भा० टी०**—तर्हि विषयाकृष्टचित्तत्वात् भगवत्कर्मपरतायामशक्तं प्रत्युपायान्तरमाह—**अथेति** । अथैतदपि कर्तुमशक्तोऽसि चेत्तर्हि मद्योगमाश्रितः मयि सर्वाणि कर्माणि संन्यस्य तेषामनुष्ठानं मद्योगस्तमाश्रितः मदेकशरणत्वमाश्रितः सन् तदनन्तरं सर्वेषां कर्मणां फलसंन्यासं कुरु विवेकसंयतचित्तः सन् इत्यर्थः ॥ ११ ॥

**प० टी०**—यदि पुनः—**अथेति** । यद्येतदपि कर्तुमशक्तोऽसि तर्हि मद्योगं मदेकशरणत्वमास्थित आश्रित

सन् सर्वेषामावश्यकानां कर्मणां फलानि नियतचित्तो भूत्वा परित्यज । अत्रैतदुक्तं भवति । मया तावदीश्वरप्रेरणया यथाशक्ति कर्माणि कर्तव्यानि फलं पुनर्दृष्टमदृष्टं वा परमेश्वराधीनोऽहमित्येवं मयि भारमारोप्य फलाभिलाषं परित्यज्य वर्तमानो मत्प्रसादात्कृतार्थो भविष्यसि ॥ ११ ॥

रा० टी०—अथेति प्राग्वत् । एतदपि सर्वाण्यपि जपार्चनादीनि कर्माणि मदुद्देश्यकानि मत्प्रीत्यर्थकानीत्यनुष्ठानमपि कर्तुमशक्तोऽसि तर्हि देवतान्तरोद्देशेन कर्माणि कृत्वान्ते मयि समर्पणरूपं मद्योगं मत्कर्मवत्त्वे उपायमन्ते मयि समर्पणं सर्वकर्मणां वैष्णवत्वेन करणे य उपायस्तमाश्रितो भव । ततो मद्योगात् यतात्मवान् नियतमनस्कः सर्वकर्मफलत्यागं कुर्वित्यर्थः । सर्वप्रकारेणापि मदुपासनमेव त्वदुपलक्षितैः सर्वैः कार्यमिति तात्पर्यार्थः ॥ ११ ॥

**श्रेयो हि ज्ञानमभ्यासाज्ज्ञानाद्ध्यानं विशिष्यते ॥**
**ध्यानात्कर्मफलत्यागस्त्यागाच्छान्तिरनन्तरम् ॥ १२ ॥**

त० टी०—तदेवं भगवत्प्राप्त्यसाधारणकारणतदेकनिविष्टमनोबुद्धित्वलक्षणपरभक्तियोग एव श्रेयस्कामैः संपाद्यस्तत्राशक्तानामशक्तितारतम्यात्क्रमेणाभ्यासयोगभगवत्कर्मनिष्ठासर्वकर्मफलत्यागेष्वधिकार आदिष्टः, इदानीं कर्मत्यागस्यैवान्तःकरणशुद्धिद्वारा परंपरया भगवत्प्राप्तिहेतुभूतपरभक्तिसाधनत्वात्तमेव स्तौति—श्रेयो हीति । केवलश्रवणादिरूपादभ्यासात्सद्युक्तिसद्गुरुशास्त्रोपदेशजं परोक्षज्ञानं श्रेयः श्रेष्ठं, प्रत्यगात्मविषयकपरोक्षज्ञानात् तत्साक्षात्कारहेतुर्ध्यानं विशिष्यते, आत्महितत्वे श्रेष्ठतरं भवति "ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतेः । ध्यानादप्यनिष्पन्नरूपान्मुमुक्षुकृतः कर्मफलत्यागो विशिष्यते, इत्यनुषज्यते । त्यागात् श्रेयोऽर्थिना यतचित्ततया कृतात्कर्मफलत्यागात् फलाभिसंधिशून्यकर्मानुष्ठानादनन्तरमेव निरस्तपापतया मनःशान्तिर्भवति 'प्रजहाति यदा कामान्सर्वान्पार्थ मनोगतान् । आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते' इत्यनेन सर्वकामत्यागस्यैव परमशान्तिफलकत्वाभिधानात् "यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते" इति श्रुतेश्च ॥ १२ ॥

म० टी०—इदानीमत्रैव साधनविधानपर्यवसानादिमं सर्वकर्मफलत्यागं स्तौति—श्रेय इति । श्रेयः प्रशस्यतरं हि एव ज्ञानं शब्दयुक्तिभ्यामात्मनिश्चयः अभ्यासात् ज्ञानार्थश्रवणाभ्यासात् ज्ञानाच्छ्रवणमननपरिनिष्पन्नादपि ध्यानं निदिध्यासनसंज्ञं विशिष्यते अतिशयितं भवति साक्षात्काराव्यवहितहेतुत्वात् । तदेवं सर्वसाधनश्रेष्ठं ध्यानं ततोऽप्यतिशयितत्वेनाज्ञकृतः कर्मफलत्यागः स्तूयते ध्यानात्कर्मफलत्यागो विशिष्यत इत्यनुषज्यते। त्यागात् नियतचित्तेन पुंसा कृतात्सर्वकर्मफलत्यागात् शान्तिरुपशमः सहेतुकस्य संसारस्यानन्तरमव्यवधानेन नतु कालान्तरमपेक्षते । अत्र 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतोभवत्यत्र ब्रह्म समश्नुते' इत्यादिश्रुतिषु प्रजहाति यदा कामान्सर्वानित्यादि स्थितप्रज्ञलक्षणेषु च सर्वकामत्यागस्यामृतत्वसाधनत्वमवगतं कर्मफलानि च कामास्तत्त्यागोऽपि कामत्यागत्वसामान्यात् सर्वकामत्यागफलेन स्तूयते यथागस्त्येन ब्राह्मणेन समुद्रः पीत इति यथा वा जामदग्न्येन ब्राह्मणेन निःक्षत्रा पृथिवी कृतेति ब्राह्मणत्वसामान्यादिदानींतना अपि ब्राह्मणा अपरिमेयपराक्रमत्वेन स्तूयन्ते तद्वत् ॥ १२ ॥

शं० टी०—एवं यतात्मत्वपूर्वकं त्वं सर्वकर्मफलत्यागं कुर्वित्युपदिश्यात्रैव मुमुक्षोरपण्डितस्य प्रवृत्तिसिद्धये रुचिमुत्पादयितुं सर्वकर्मफलत्याग एव सर्वेभ्यो मोक्षसाधनेभ्य उत्तमं साधनमिति तं स्तौति—श्रेय इति । मुमुक्षोरभ्यासात्सर्वसंन्यासपूर्वकाद्यमनियमादिश्रमसाध्याच्छ्रवणाद्यभ्यासाज्ज्ञानं श्रवणमन-

नसंभावितश्रुतियुक्तिजन्यं ब्रह्मात्मैकत्ववेदनलक्षणं श्रेयो हि मोक्षस्य श्रेष्ठतरं साधनं खल्विति हिशब्दः सर्वशास्त्रप्रसिद्धिद्योतनार्थः। ज्ञानात् सप्रतिबन्धकात् प्रतिबन्धनिवृत्तिकारणं ध्यानं सजातीयप्रत्ययावृत्तिलक्षणं विशिष्यते जन्मादिहेतोरविद्याकामसंकल्पादिप्रतिबन्धस्य निवर्तकत्वाद्विशिष्टतरं भवति निरुक्तलक्षणाद्ध्यानात्कर्मफलत्यागो विशिष्यते मनोनैश्चल्यस्यातिदुर्लभत्वाद्विपरीतप्रत्ययनिवारणस्याप्यतिदुष्करत्वान्नित्यनिरन्तरप्रयत्नैकसाध्यत्वाच्च ध्यानं महत्तरक्लेशसाध्यं यतस्ततो यथाशक्तिकृतानां कर्मणां फलपरित्यागस्तु निरुक्तश्रमरहितत्वेन मोक्षं प्रत्यन्तरङ्गसाधनत्वेन च ध्यानाद्विशिष्टतरो भवति कामनाशकत्वधर्मस्योभयत्र तुल्यत्वेऽप्युक्तश्रमरहितत्वेन ततः श्रेष्ठतरो भवति यदनुष्ठानादनन्तरमुत्तरकाल एव तदनुष्ठातुः सर्वकर्मसंन्यासवतो नियतचित्तस्य कामसंकल्पादिदोषनिर्मुक्तस्य शुद्धबुद्धेः कर्मयोगिनः संसारोपशमो मोक्षः सिध्यतीत्यर्थः। ननु कर्मफलत्यागादेव मोक्षे सिद्धे "तरति शोकमात्मवित्, तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय" इत्यादिबहुश्रुतिविरोधो ज्ञानान्मुक्तिरिति सर्वशास्त्रज्ञसमयविरोधश्च स्यादिति चेन्न, त्यागाच्छान्तिरनन्तरमित्यस्य वाक्यस्य कर्मफलत्यागस्तुतिपरत्वात्, स्तुतेः प्रवृत्तिप्ररोचनार्थत्वाच्च। अथ चित्तं समाधातुमित्यारभ्य मुमुक्षोरतिमन्दप्रज्ञस्याभ्यासेऽपीश्वरोद्देशेन कर्तव्ये कर्मण्यप्यशक्तस्य चित्तशुद्धिसाधनत्वेन करणीयतया कर्मफलत्यागस्य विधानादस्यैव मुख्यत्वे प्राथम्येनैव निर्देशप्रसङ्गात् मत्कर्मकृन्मत्परम इत्यादिसाधनपञ्चकविधानवैयर्थ्यापत्तेश्च "आत्मा वा अरे द्रष्टव्यः" इत्यात्मसाक्षात्कारमुद्दिश्य श्रवणादिविधेरानर्थक्यप्रसङ्गाच्च। ततः कर्मफलत्यागस्तुतिरेवैषा ब्रह्मण्यर्पितेषु सत्सु कर्मसु पुनस्तत्र तत्फले च संकल्पः कामोऽपि न संभवति तदनुदय एव चित्तस्य शुद्धिस्तया सकृदुपदेशादेव ज्ञानं तेन मोक्षः सिध्यतीत्युपायेन गूढतमं स्वार्थे कर्मणि प्रवर्तयितुं कर्मफलत्यागः स्तूयते श्रेयो हीत्यादिना, ततो नात्र श्रुतिविरोधो नापि समयविरोधश्च। यद्वा मय्येव मन आधत्स्वेत्यारभ्य सर्वकर्मफलत्यागं ततः कुरु यतात्मवानित्यन्तेन ग्रन्थेन मुमुक्षूणां चित्तशुद्धेः परमकारणमधिकारिभेदेन गुरुलघ्वादिभेदभिन्नं सगुणोपासनं कर्तव्यत्वेन प्रतिपाद्याधुना सगुणोपास्त्या परिशुद्धबुद्धेस्तदुपास्तेः फलभूतमक्षरोपासनं कर्तव्यमिति बोधयितुं तदुपासनस्य श्रवणादेरुत्तरोत्तरस्योत्कृष्टत्वं प्रतिपादयति—**श्रेयो हीति**। मुमुक्षोः परिशुद्धात्मनस्त्वभ्यासः श्रवणाद्यभ्यासः श्रेयान् सगुणोपासनेभ्यः सर्वेभ्यः श्रेष्ठो भवति "ज्ञानादेव तु कैवल्यम्" इति श्रुत्यैव तुशब्देनेतरव्यावृत्तिपूर्वकं ज्ञानस्यैव साक्षान्मोक्षकारणत्वावधारणात् तत्सिद्धेः प्रकृष्टं कारणं श्रवणादिरेव ज्ञानहेतोः श्रवणादेरभावे पूर्वोपासनानैष्फल्यमेव यतस्ततो युक्तं श्रवणाद्यभ्यासस्य तेभ्यः श्रेयस्त्वं स एव मोक्षैककामस्य शुद्धात्मनः सर्वकर्मसंन्यासपूर्वकं कर्तव्य इति श्रेय इत्युक्त्या बोधितं भवति "आत्मा वा अरे द्रष्टव्यः सोऽन्वेष्टव्यः" इति 'संन्यस्य श्रवणं कुर्यात्' इत्यादिश्रुतिस्मृतिप्रसिद्धिद्योतनार्थो हिशब्दः। अभ्यासाच्छ्रवणाद्यभ्यासाज्ज्ञानं तज्जन्यं ब्रह्मात्मैकत्वग्राहकं श्रेयस्ततः श्रेष्ठतरं ज्ञानानुत्पत्तावभ्यासस्य निःफलत्वाद्युक्तं ज्ञानस्य ततः श्रेष्ठतरत्वम्। अत्रापि श्रेय इत्युक्त्या बहूनां ब्रह्मविदां सन्निधौ बहुधा श्रुत्वावश्यं ज्ञानं संपादनीयमिति बोधितं भवति। तस्माज्ज्ञानादपि सप्रतिबन्धात्तन्निवृत्तिकारणं ध्यानमुक्तलक्षणं विशिष्यते "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति श्रवणाद्ध्यानस्याप्रतिबन्धसाक्षात्कारहेतुत्वाद्युक्तं ज्ञानाद्विशिष्टत्वम्। ध्यानात्कर्मफलत्यागः प्रत्यग्वृत्तेर्वासनायाः कर्मत्वेन यत्फलति दृश्यजातं तत्कर्मफलमित्युच्यते तस्य त्यागः नित्यनिरन्तरनिर्विकल्पकसमाधिनिष्ठया दर्शनं बहिरन्तः सर्वत्र सर्वथा ब्रह्ममात्रोपलम्भः कर्मफलत्यागो ध्यानाद्विशिष्यते "यत्र त्वस्य सर्वमात्मैवाभूत्" इति श्रवणान्निरवशेषितसर्वविशेषत्वात्कर्मफलत्यागस्य त्रिपुटिमतो ध्यानाद्विशिष्टत्वं युक्तं त्यागात्सर्वकर्मफलत्यागान्निर्विकल्पकसमाधेर्निःशेषविनष्टविपरीतवासनाग्रन्थेर्विदुषस्त्वनन्तरमेतद्देहपातानन्तर-

मेव शान्तिरात्यन्तिकसंसारोपशमो ब्रह्मात्मनावस्थानलक्षणं विदेहकैवल्यं सिध्यतीत्यर्थः । उभयत्रापि विशिष्यत इत्युक्त्या मोक्षैककामस्य ज्ञानस्याप्रतिबद्धत्वसिद्धये सविकल्पको निर्विकल्पश्च समाधिरवश्यं कर्तव्य इति बोधितं भवति ॥ १२ ॥

**श्री० टी०**–तमिमं फलत्यागं स्तौति–**श्रेयो हीति** । सम्यग्ज्ञानरहितादभ्यासाद्युक्तिसहितोपदेशपूर्वकं ज्ञानं श्रेष्ठं तस्मादपि तत्पूर्वकं ध्यानं श्रेष्ठम् "ततस्तु तं पश्यति निष्कलं ध्यायमानः" इति श्रुतेः तस्मादपि उक्तलक्षणः कर्मफलत्यागः श्रेष्ठः । तस्मादेवंभूतात्कर्मफलत्यागात्कर्मसु तत्फलेषु चासक्तिनिवृत्त्या मत्प्रसादेन च समनन्तरमेव संसारशान्तिर्भवति ॥ १२ ॥

**स० टी०**–इदानीं साधनस्यात्र विधेः पर्यवसानतः ॥ सर्वकर्मफलत्यागमिमं स्तौति हरिः स्वयम् ॥ १ ॥ ज्ञानार्थश्रवणाभ्यासाज्ज्ञानं श्रेष्ठतरं भवेत् ॥ निष्पन्नं श्रुतियुक्तिभ्यां ततो ध्यानं विशिष्यते ॥ २ ॥ निदिध्यासनसंज्ञं यत्तत्त्वज्ञानैककारणम् ॥ ततोऽप्यज्ञकृतः कर्मफलत्यागो विशिष्यते ॥ ३ ॥ इत्येवं स्तूयते तस्मात्सहेतोः संसृतेः क्षयः ॥ तत्क्षणे शान्तिसिद्धिर्न कालान्तरमपेक्षते ॥ ४ ॥ यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः ॥ अथ मर्त्योऽमृतो भवत्यत्र ब्रह्मसमश्नुते ॥ ५ ॥ प्रजहाति यदा कामानित्यदौ च श्रुतौ स्मृतौ ॥ सर्वकामपरित्यागो मोक्षहेतुतया मतः ॥ ६ ॥ सर्वकर्मफलत्यागः कामत्यागत्वसाम्यतः ॥ स्तूयते केवलं यस्माद्रोचनार्था त्वियं स्तुतिः ॥ ७ ॥ यथागस्त्येन पीतः प्राग्ब्राह्मणेनाब्धिरित्यतः ॥ ब्राह्मणा ब्राह्मणत्वेन स्तूयन्तेऽद्यतना अपि ॥ ८ ॥ तथात्रापि परित्यागसामान्यात्स्तूयते हि सः ॥ तदेवं दुष्करत्वेनाक्षरोपासनतो वरम् ॥ ९ ॥ सगुणोपासनं प्रोक्तं सुकरत्वादिहेतुना ॥ अशक्तितारतम्यानुवादेन भगवान् स्वयम् ॥ १० ॥ विदधौ साधनान्यत्र दृष्ट्वा मन्दाधिकारिणः ॥ कथं तु नाम मद्भक्ता भूत्वा मुख्याधिकारिणः ॥ ११ ॥ विशेयुः फलभूतायां विद्यायामक्षरात्मनः ॥ इत्यभिप्राय ईशस्य तदुक्तं सांप्रदायिकैः ॥ १२ ॥ निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः ॥ ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ १३ ॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् ॥ तदेवाविर्भवेत्साक्षादुपेक्ष्योपाधिकल्पनम् ॥ १४ ॥ अक्षरोपासकास्तस्माद्रस्तुतो योगवित्तमाः ॥ प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः ॥ १५ ॥ उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम् ॥ इत्यादौ ज्ञानिप्राशस्त्यमत्यन्तं हरिणेरितम् ॥ १६ ॥ तेषामेव त्वया ज्ञानं समासाद्याधिकारिताम् ॥ सदानुसरणीयं चेत्याशयः श्रीहरेरयम् ॥ १७ ॥ १२ ॥

**भा० टी०**–इदानीमवश्यकर्तव्यतायै सर्वकर्मफलसंन्यासं स्तौति–**श्रेयो हीति** । विवेकपूर्वकाज्ज्ञानार्थाच्छ्रवणाभ्यासात् श्रुतियुक्तिभ्यामात्मनिश्चयरूपं ज्ञानं श्रेयः प्रशस्यतरम् । ज्ञानादपि निदिध्यासनशून्याज्ज्ञानपूर्वकं ध्यानं विशिष्यते प्रशस्यं भवति । ध्यानादपि कर्मफलत्यागो विशिष्यते यद्वाभ्यासान्निदिध्यासनाज्ज्ञानं श्रवणमननजं परोक्षं श्रेयः ज्ञानादपि ध्यानं विष्णोः श्रवणकीर्तनादि विशिष्यते, ततोऽपि कर्मफलत्याग इति तदेतदरुचिग्रस्तं, अरुचिबीजं तु परोक्षादेर्निदिध्यासनस्य श्रैष्ठ्यप्रसिद्धिः । एवं मद्योगमाश्रितस्यात्मवतः सर्वकर्मफलत्यागात् सहेतुकस्य संसारस्य शान्तिरुपशमोऽनन्तरमेव स्यान्न तु कालान्तरमपेक्षते । नन्वेवम् "तरति शोकमात्मवित् । तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय । ज्ञानादेव तु कैवल्यम् । ऋते ज्ञानान्न मोक्षः" 'यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः । तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥ नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥' इत्यादिश्रुतिस्मृतिप्रसिद्धिर्विरुध्यत इति चेन्न । प्रकृतवचनस्य स्तुतिपरत्वात् । अक्षरोपासनादीनां साधनानां मध्ये पूर्वपूर्वानुष्ठानाशक्तावुत्तरोत्तरस्यानुष्ठेयत्वेनोपदेशात्त्यागे चोपदेशपर्यवसानादज्ञस्य कर्मणि प्रवृत्तस्य पूर्व-

पूर्वोपदिष्टसाधनेऽशक्तस्य सर्वकर्मफलत्यागः उपदिष्टः स्तूयते प्रवृत्त्यर्थम् 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि श्रिताः। अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते॥' प्रजहाति यदा कामान्सर्वान्पार्थमनोगतान्। आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते॥ इत्यादिश्रुतिस्मृतिभ्यां विदुषो ध्याननिष्ठस्य कामानां सर्वकर्मफलानां त्यागादनन्तरं शान्तेरुक्तत्वादज्ञकृतसर्वकर्मत्यागस्यापि सर्वकाम्यकर्मत्यागसामान्यात् कर्मफलसंन्यासस्तुतिः प्ररोचनार्था, यथाऽगस्त्येन ब्राह्मणेन समुद्रः पीतः यथा वा परशुरामेण ब्राह्मणेनैकविंशतिवारं निःक्षत्रा पृथिवी कृतेति ब्राह्मणत्वसामान्यादिदानींतना ब्राह्मणाः स्तूयन्ते ॥ १२ ॥

पु० टी०—अथ फलत्यागप्रशंसामाह—**श्रेय इति**। केवलं करचरणव्यापाररूपादभ्यासात्सम्यग् ज्ञानं श्रेयः श्रेष्ठम् तस्मादपि भक्तिपूर्वकं ध्यानं निर्विषयैकाग्र्यं विशिष्यते तस्मात्कर्मफलत्यागः स्वत एवोपरमात्कर्मफलराहित्यम्। तस्माच्छान्तिः सर्वोपरमतो मत्प्रसादात्परात्मसुखम् ॥ १२ ॥

रा० टी०—मयीत्यादिनोक्तध्यानालाभे ज्ञानं तदलाभेऽभ्यासयोग इत्येतत्समर्थयते—**श्रेयो हीति**। अज्ञानपूर्वकादभ्यासाज्ज्ञानं श्रेयः, ज्ञानमात्राज्ज्ञानपूर्वकध्यानं श्रेयः, तस्माद्ध्यानाज्ज्ञानपूर्वकसकामध्यानादित्यर्थः। एतादृशसकामध्यानात्कर्मफलत्यागोपलक्षिततादृशनिष्कामध्यानं श्रेय इति ध्येयम्। फलत्यागात्कर्मफलत्यागोपलक्षितनिष्कामध्यानादित्यर्थः। अपरोक्षज्ञानं श्रेय इति योज्यम्। अनन्तरं शान्तिर्मोक्ष इत्यर्थः ॥ १२ ॥

## अद्वेष्टा सर्वभूतानां मैत्रः करुण एव च ॥
## निर्ममो निरहंकारः समदुःखसुखः क्षमी ॥ १३ ॥

**त० टी०—त्यागाच्छान्तिरनन्तरमित्युक्तम्। इदानीमेवंभूतनिष्कामकर्मकर्तुर्भक्तिमभीप्सोः शीघ्रमेव भगवत्प्रसादहेतूनुपादेयान्गुणानाह—अद्वेष्टेत्यादि सप्तभिः। सर्वाणि भूतानि मदपराधानुगुणमीश्वरप्रेरितानि मह्यं द्विषन्ति नैषां कश्चिदपराध इत्यनुसंधानेन सर्वभूतानामद्वेष्टाऽनपकारी, तथा तेषु मैत्री हिताशंसनं तद्वान् मैत्रः, यतः करुणः तेष्वेव दुःखितेषु दयावान्, तथा निर्ममः देहेन्द्रियेषु तत्संबन्धिषु च ममताशून्यः, निरहंकारः अनात्मनि देहादावात्मबुद्धिरहंकारस्तद्रहितः। तत एव समदुःखसुखः, अत एव क्षमी सुखदुःखहेतुषु चित्तविकाररहितत्वात् क्षमावानित्यर्थः ॥ १३ ॥**

म० टी०—तदेवं मन्दमधिकारिणं प्रत्यतिदुष्करत्वेनाक्षरोपासननिन्दया सुकरं सगुणोपासनं विधायाशक्तितारतम्यानुवादेनान्यान्यपि साधनानि विदधौ भगवान् वासुदेवः कथं नु नाम सर्वप्रतिबन्धरहितः सन्नुत्तमाधिकारितया फलभूतायामक्षरविद्यायामवतरेदित्यभिप्रायेण साधनस्य फलार्थत्वात्। तदुक्तम् 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः। ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात्। तदेवाविर्भवेत्साक्षादपेतोपाधिकल्पनम्॥' इति। भगवता पतञ्जलिना चोक्तम् 'समाधिसिद्धिरीश्वरप्रणिधानात्' इति 'ततः प्रत्यक्चेतनाधिगमोऽप्यन्तरायाभावश्च' इति च। तत इतीश्वरप्रणिधानादित्यर्थः। तदेवमक्षरोपासननिन्दा सगुणोपासनस्तुतये न तु हेयतया, उदितहोमविधावनुदितहोमनिन्दावत् 'नहि निन्दा निन्द्यं निन्दितुं प्रवर्ततेऽपि तु विधेयं स्तोतुम्' इति न्यायात्। तस्मादक्षरोपासका एव परमार्थतो योगवित्तमाः प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः। उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्। इत्यादिना पुनः पुनः प्रशस्ततमतयोक्तास्तेषामेव ज्ञानं धर्मजातं चानुसरणीयमधिकारमासाद्य त्वयेत्यर्जुनं बुबोधयिषुः परमहितैषी भगवानभेददर्शिनः कृतकृत्यानक्षरोपासकान्प्रस्तौति सप्तभिः—**अद्वेष्टेति**। सर्वाणि भूतान्यात्मत्वेन पश्यन्नात्मनो दुःखहेतावपि प्रतिकूलबुद्ध्यभावान्न द्वेष्टा सर्वभूतानां किंतु मैत्रो मैत्री

स्निग्धता तद्वान् यतः करुणः करुणा दुःखितेषु दया तद्वान् सर्वभूताभयदाता परमहंसपरिव्राजक इत्यर्थः। निर्ममः देहेऽपि ममेति प्रत्ययरहितः निरहंकारः वृत्तस्वाध्यायादिकृताहंकाराान्निष्क्रान्तः द्वेषरागयोरप्रवर्तकत्वेन समे दुःखसुखे यस्य सः अत एव क्षमी आक्रोशनताडनादिनाऽपि न विक्रियामापद्यते ॥ १३ ॥

**शं० टी०**—निरुक्तशान्तिलक्षणं ब्रह्मभावं विदेहकैवल्यं प्राप्तुमिच्छया यस्त्वद्वेष्टृत्वादिधर्मसंपन्नो भूत्वा ब्रह्मनिष्ठायामेव तिष्ठति स एव मद्भक्तो मम प्रिय इति ब्रह्मविदं स्तौति यतीनां सम्यग्ज्ञानसिद्धये ब्रह्मनिष्ठा कर्तव्येति सूचयितुं सप्तभिः—**अद्वेष्टेत्यादिना** । सर्वभूतानां सर्वेषामपि प्राणिनामद्वेष्टा द्वेषो नामाप्रीतिस्तामात्मन उपद्रवं कुर्वतोऽपि जन्तोर्यस्य कस्यापि न करोति मनोवाक्कायकर्मभिर्नाचरतीत्यद्वेष्टा निर्विकल्पसमाधिनिष्ठया निर्मूलितभेदप्रत्ययत्वादहमेवेदं सर्वमिति सर्वात्मभावापन्नस्य विदुषो द्वैतप्रत्ययानुत्पत्तौ स्वस्वरूपे सर्वत्र प्रीतिमत्तया द्वेषबुद्ध्यसंभवात्सर्वेषामपि भूतानामद्वेष्टैव भवति ब्रह्मवित्यतिः सत्येकस्मिन् रागे तदपकारिषु द्वेषः स्यात्सर्वात्मभावापन्नस्यैकत्र रागासंभवाद्विदुषो युक्तं सर्वभूताद्वेष्टृत्वं, अद्वेष्टेत्युक्त्या विदुषो रागद्वेषाद्यभावस्तेन मुक्तेः प्रतिबन्धाभावश्च सूचितो भवति । किंच सर्वेषां भूतानां मित्रवदनुकूलतया वर्तत इति मैत्रः स्वात्मभूतेषु भूतेषु सर्वत्र मित्रवद्वर्तनं विदुषो युक्तम् । मित्रत्वसिद्धेः कारणमाह—करुण इति । करुणयैव सर्वेषामानुकूल्ये वर्तते न तु गुणबुद्ध्या गुणस्यापि दोषवद्बन्धकत्वात् । करुण इत्यत्र मतुबर्थेऽच्प्रत्ययः । अद्वेष्टृत्वादिधर्मत्रितयसिद्धेः कारणमाह—**निर्मम इति** । परदेहवत्स्वदेहान्निर्गतो ममभावो यस्य स निर्ममः रागद्वेषहेतोर्ममताबन्धान्निर्मुक्त इत्यर्थः । तदभावादेवामुष्याद्वेष्टृत्वादिधर्मत्रितयसिद्धिः निर्ममत्वसिद्धेः कारणमाह—निरहंकार इति । ब्रह्मैवाहमिति । परे ब्रह्मण्येवात्मभावापत्त्या देहान्निःशेषेण निर्गताहंबुद्धिर्यस्य स निरहंकारः निरन्तरब्रह्मनिष्ठया ब्रह्मण्येव निरूढात्मबुद्धेरेव देहादावहंभावो विच्छिद्यते तत एव निर्ममत्वं सिध्यति नहि देहेऽहंबुद्धौ सत्यां ममतेषदपि गच्छति ततो देहेऽहंभावाऽभावादेव विदुषो निर्ममत्वं तत एव समदुःखसुखः समे अनिष्टत्वेष्टत्वबुद्धिं त्यक्त्वैकरूपेण गृहीते दुःखसुखे द्वेषरागयोर्जनके यस्य ब्रह्मनिष्ठया तिष्ठतो यतेः स समदुःखसुखः सुखदुःखयोः प्राप्तौ हर्षविषादरहित इत्यर्थः । उभयत्र समबुद्धिसिद्धेर्हेतुमाह—क्षमीति । तितिक्षुराध्यात्मिकादिदुःखानां संतापविलापराहित्येन सहनशील एव क्षमीत्यर्थः । "वृक्ष इव तिष्ठासेच्छिद्यमानो न कुप्येत न कम्पेत" इति श्रुतेः ॥ १३ ॥

**श्री० टी०**—एवंभूतस्य भक्तस्य क्षिप्रमेव परमेश्वरप्रसादहेतून् धर्मानाह—**अद्वेष्टेत्यष्टभिः** । सर्वभूतानां यथायथमद्वेष्टा मैत्रः करुणश्च, उत्तमेषु द्वेषशून्यः, समेषु मित्रतया वर्तत इति मैत्रः, हीनेषु कृपालुरित्यर्थः। निर्ममो निरहंकारश्च कृपालुत्वादेवान्यैः सह समे दुःखसुखे यस्य स क्षमी क्षमावान् ॥ १३ ॥

**स० टी०**—अथ तत्त्वविदां धर्मजातं मोक्षैकसाधनम् ॥ मुमुक्षूणां हितार्थाय हरिणात्रोपदिश्यते ॥ १ ॥ पश्यन्सर्वाणि भूतानि स्वात्मत्वेनाक्षरात्मवित् ॥ दुःखहेतावपि स्वस्य प्रतिकूलधियोज्झितः ॥ २ ॥ न द्वेष्टा सर्वभूतानां किंतु मैत्रीयुतोऽखिले ॥ दुःखितेषु दयावांश्च सर्वभूताभयप्रदः ॥ ३ ॥ देहे देहोपकरणे ममेति प्रत्ययोज्झितः ॥ अद्वैतात्मावबोधेन निष्क्रान्तोऽहंकृतेर्मलात् ॥ ४ ॥ रागद्वेषविहीनत्वाद्यस्य दुःखसुखे समे ॥ आक्रुष्टस्ताडितो वान्यैर्निर्विकारमनाः क्षमी ॥ ५ ॥ १३ ॥

**भा० टी०**—ते प्राप्नुवन्ति मामेव सर्वभूतहिते रता इत्यनेनाक्षरोपासकानां मोक्षप्राप्तौ स्वातन्त्र्यमुक्त्वा क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसामित्यादिनाऽक्षरोपासनायां मन्दमतित्वादनधिकारिणामुद्धाराय करुणानिधिना भगवताऽधिकतरक्लेशं तत्र प्रदर्श्य आत्मेश्वरभेदमाश्रित्य विश्वरूपे परमेश्वरे चित्तसमाधानलक्षणयोगादिकमुक्तं तथा चान्तस्तद्धर्मोपदेशादिति सूत्रस्थे कल्पतरौ 'निर्विशेषं परं ब्रह्म साक्षात्कर्तुमनीश्वराः । ये मन्दास्तेऽनुकम्प्यन्ते सविशेषनिरूपणैः ॥ वशीकृते मनस्येषां सगुणब्रह्मशीलनात् । तदेवाविर्भवेत्साक्षाद-

चेतोपाधिकल्पनम्' इति एवमत्रापि भगवानभेददर्शित्वात्स्वात्मभूतानामक्षररूपाणां समुद्धरणकर्मवचनमयुक्तं मन्वानः सविशेषोपासकानामुद्धरणं स्वाधीनं मन्यमानः अक्षरोपासनायामधिकारसंपत्त्यर्थं सगुणोपासनां स्तौति नतु मोक्षस्यानन्यसाधनत्वेन श्रुतिस्मृतिन्यायेतिहासपुराणैस्तत्र तत्र प्रतिपादिताया इतरसाधनफलभूताया अक्षरोपासनायाः हेयतायै। तस्मादस्मिन् जन्मनि जन्मान्तरे वा पूर्वपूर्वसाधनानुष्ठानक्रमेण प्राप्ताक्षरोपासनानां सम्यग्ज्ञाननिष्ठानां संन्यासिनां त्यक्तपुत्रदारवित्तैषणानामद्वेष्टृत्वादिधर्मसमुदायः साक्षात्स्वातन्त्र्येण मोक्षसाधनं वक्तुकाम आह भगवान्--अद्वेष्टेति। सर्वभूतानां यथायथं स्वस्मादुत्कृष्टेषु स्वस्मिन्द्वेषकर्तृषु च द्वेषवर्जितः समानेषु मित्रतया वर्तत इति मैत्रः अज्ञेषु दुःखितेषु करुणा दया तद्वान्यतः सर्वाणि भूतान्यात्मत्वेनानुपश्यति। यद्वा सर्वाणि भूतान्यात्मत्वेन पश्यन्नात्मनो दुःखहेतावपि प्रतिकूलबुद्ध्यभावादद्वेष्टा सर्वभूतानां, न केवलमद्वेष्टा सर्वभूतानां किंतु मैत्रः स्नेहवान् यतः करुणः। यद्वा सर्वभूतानामद्वेष्टा तर्हि द्वेषवर्जित उदासीनः स्यान्नेत्याह—मैत्रः। तर्हि उपकारमपेक्ष्योपकारकर्ता बन्धनहेतुस्नेहयुक्तश्च स्यान्नेत्याह—करुणः कृपावान् सर्वभूताभयप्रदः संन्यासी इत्यर्थः। दुःखितेषु कृपया मैत्रः नतु रागादुपकारापेक्षया वा ममत्वेन गृहीतस्य गेहादेः अहंकारास्पदत्वेन कल्पितस्य च देहादेः प्रतिकूलेषु द्वेषोऽनुकूलेषु रागश्च लोकस्य दृश्यते तत्त्वविदः संन्यासिनस्त्वेतन्नास्तीत्याह—निर्ममो निरहंकारः ममेतिप्रत्ययवर्जितः ममतास्पदानां गेहादीनां त्यागात् वृत्तस्वाध्यायकृतादहंकारप्रत्ययान्निर्गतः अत एव समे द्वेषरागयोरप्रवर्तके सुखदुःखे यस्यात एव क्षमी क्षमावान् आक्रुष्टोऽपि ताडितोऽप्यविक्रिय एवास्त इत्यर्थः॥ १३॥

**प० टी०**—अथ प्रसादजनकान् धर्मानाह—अद्वेष्टेत्यष्टभिः। तत्रापि प्रथमं युग्मम्। सर्वभूतानामद्वेष्टा द्वेषशून्यस्तर्ह्युदासीनः स्यादित्याह—मैत्र इति। तत्रोत्तमानामतिपूज्यत्वेनाप्रसक्तेः समेषु मैत्रः अपकृष्टेषु करुणः एवं सति तेषु निर्ममो ममताशून्यः तथा सत्यहङ्कारशून्यः किं च समे सुखदुःखे यस्य क्षमी क्षमावान्॥ १३॥

**रा० टी०**—ये तु सर्वाणि कर्माणीत्युक्तं तदुपलक्षितधर्मान्तरोक्त्या प्रपञ्चयति—अद्वेष्टेत्यादिना। अद्वेष्टा अप्रियमकुर्वन्, क्लेशस्थानं निरूप्य ततो रक्षिता मैत्रः, करुणः कृपावान्, निर्ममः ममेदमिति स्वातन्त्र्यबुद्धिहीनः, निरहंकारः अविद्यमानात्मगुणाभिमानमोहहीनः, हेयतया दुःखसमं वैषयिकसुखं यस्य स समदुःखसुखः, क्षमी सहिष्णुः॥ १३॥

**संतुष्टः सततं योगी यतात्मा दृढनिश्चयः॥**
**मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः॥ १४॥**

**तं० टी०**—किंच—संतुष्ट इति। देहधारणार्थं यदृच्छाप्राप्तेन गुणवता निर्गुणेन वा येन केनापि भोजनाच्छादनादिना संतोषवान्, सततं योगी नित्यमात्मप्रवणीकृतान्तःकरणः, यतात्मा संयतदेहेन्द्रियः, दृढनिश्चयः गुरुशास्त्रोक्तार्थेषु एवमेवेति निश्चलबुद्धिः, एवंभूतो मद्भक्तो निष्कामकर्मयोगेन मां भजते, स मे प्रियः॥ १४॥

**म० टी०**—तस्यैव विशेषणान्तराणि सततं शरीरस्थितिकारणस्य लाभेऽलाभे च संतुष्टः उत्पन्नालंप्रत्ययः तथा गुणवल्लाभे विपर्यये च सततमिति सर्वत्र संबध्यते। योगी समाहितचित्तः यतात्मा संयतशरीरेन्द्रियादिसंघातः दृढः कुतार्किकैरभिभवितुमशक्यतया स्थिरो निश्चयोऽहमस्म्यकर्त्रभोक्तृसच्चिदानन्दाद्वितीयं ब्रह्मेत्यध्यवसायो यस्य स दृढनिश्चयः स्थितप्रज्ञ इत्यर्थः। मयि भगवति वासुदेवे शुद्धे ब्रह्मणि अर्पितमनोबुद्धिः समर्पितान्तःकरणः ईदृशो यो मद्भक्तः शुद्धाक्षरब्रह्मवित् स मे प्रियः सदात्मत्वात्॥ १४॥

**शां० टी०**—तर्हि कथं स्थातव्यमित्यत आह—**संतुष्ट इति** । सततमिति विशेषणपञ्चकेनापि संबध्यते सुखदुःखयोर्मानावमानयोर्लाभालाभयोश्च सततं सर्वदाऽपि संतुष्टः ब्रह्मानन्दानुभूत्या संतोषयुक्तः सन्नेव प्रसन्नवदनो भवति । सदानन्दयुक्तत्वे हेतुमाह—योगीति। सर्वदा ब्रह्मण्येवानन्दात्मनि चित्तनैश्चल्येन स्थितिर्योगोऽस्यास्तीति योगी सदात्माराम इत्यर्थः ।योगित्वसिद्धेर्हेतुमाह—यतात्मेति । सततं यतः संयतः समं कायशिरोग्रीवमित्युक्तलक्षणेन स्थापित आत्मा देहो यस्य स यतात्मा । सत्येव कार्यकारणसंघातनिरोधे समाधिः समाधिमत एव विपरीतप्रत्ययनाशस्तत एव सम्यग्ज्ञानं तद्वत एव विदेहमुक्तिरतो यतेः सदा समाधिना भवितव्यमिति सूचितम् । यद्वा यतो निरुद्ध आत्मा स्वभावो वासना यस्य स यतात्मा सततं योगी यतात्मेति विशेषणाभ्यां नैश्चल्येन योगसिद्धेः कारणमाह—दृढनिश्चय इति । निरन्तरसमाधिसंजातसम्यग्ज्ञानस्य विषयभूते परे ब्रह्मण्येवात्मत्वानुभूत्या समुत्पन्नो ब्रह्मैवाहं न तु संसारीत्येवं लक्षणो दृढः प्रमाणान्तरप्रत्ययान्तरैरच्छेद्यः स्वभावनिश्चयो यस्य स दृढनिश्चयः मूढो देहे यथा तथा ब्रह्मण्येवारूढाऽहंबुद्धिरित्यर्थः । यद्वा नित्यनिरन्तरसमाधिनिष्ठासंभूतेनाधिष्ठानयाथात्म्यसंदर्शनेनारोपितवस्तुतत्प्रत्यययोरभावे सिद्धे सर्वमिदमहं च ब्रह्मैवेति सर्वस्य स्वस्य च साक्षाद्ब्रह्ममात्रत्वाधिगमलक्षणो दृढः प्रमाणान्तराकम्प्यो निश्चयो वस्तुतत्त्वावधारणरूपो यस्य स दृढनिश्चयः एवं दृढनिश्चयत्वासिद्धेः कारणमाह—**मय्यर्पितमनोबुद्धिरिति** । अहंवृत्तिर्बुद्धिरिदं वृत्तिर्मनः इदमहमात्मिके मनोबुद्धी मय्येव प्रत्यगभिन्ने पूर्णे ब्रह्मण्यर्पिते सर्वदा मदेकविषयत्वेन स्थापिते येन स मय्यर्पितमनोबुद्धिः अहंबुद्धेरिदंबुद्धेश्च मामेव विषयं कृत्वा यः सर्वदा मामनुसंधत्ते मद्भक्तो मदनुसंधानपरः सदा सर्वत्र ब्रह्ममात्रदर्शी ब्रह्मविद्यतिः स मे ईश्वरस्य प्रियः आत्मभूतत्वात्सर्वेषामात्मैव खलु प्रियः ज्ञानी त्वात्मैव मे मतमिति ज्ञानिनः स्वात्मत्वेनावधृतत्वादात्मभूतो ज्ञान्येव मम नित्यप्रियस्तदन्ये तु नैमित्तिकप्रिया इत्यर्थः । प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रिय इत्युक्त एवार्थः पुनरप्यत्र शुद्धात्मनां विवेकवतां सूक्ष्मबुद्धीनां वयमपि ब्रह्मीभूयेश्वरस्य प्रिया भविष्याम इति श्रवणमनननिदिध्यासनसमाधिषु प्रवृत्तिसंभूत्यर्थं प्रतिपादितः ॥ १४ ॥

**श्री० टी०**—**संतुष्ट इति** । सततं लाभे अलाभे च संतुष्टः प्रसन्नचित्तः योगी अप्रमत्तः यतात्मा संयतस्वभावः दृढो मद्विषयो निश्चयो यस्य मय्यर्पिते मनोबुद्धी येन एवंभूतो यो मद्भक्तः स मे प्रियः ॥ १४ ॥

**स० टी०**—प्राप्ताऽलंप्रत्ययो लाभालाभयोः सर्वदा वशी ॥ समाहितमना दान्त शरीरेन्द्रिय आत्मनि ॥ १ ॥ अचाल्यो निश्चयो यस्य वादिभिश्च कुतार्किकैः ॥ समर्पितान्तःकरणो वासुदेवे परे मयि ॥ २ ॥ ईदृशो मत्स्वरूपोऽसौ मद्भक्तोऽतिप्रियो मम ॥ ३ ॥ १४ ॥

**भा० टी०**—अक्षरोपासकं ज्ञानवन्तं विशेषणान्तरैर्विशिनष्टि—**संतुष्ट इति** । सततमिति सर्वत्र संबध्यते देहस्थितिकारणस्य लाभेऽलाभे च सततं संतुष्टः नित्यं जातालंप्रत्ययः समुपसर्गेण तुष्टेः परिपक्वता बोध्यते तथा गुणवल्लाभे तद्विपर्यये च संतुष्टः यतः सततं योगी योगाभ्यासेन समाहितान्तःकरणः यतः सततं संयतात्मा संयतकार्यकरणसंघातः अत एव संयतात्मेति वा यतः सततं दृढः कुतर्कवादिना नाभिभवनीयः स्थिरः निश्चयोऽध्यवसाय आत्मतत्त्वविषयो यस्य सः अत एव दृढनिश्चय इति वा यतः सततं मयि परमात्मनि संकल्पविकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिश्च ते मय्येव स्थापिते यस्य स यतो मय्यर्पितमनोबुद्धिरिति वा य ईदृशो मद्भक्तः शुद्धाक्षरात्मज्ञानवान् मद्भजनपरो मे मम प्रियः ' उदाराः सर्व एवैते ज्ञानी त्वात्मैव मे मतम्। प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रियः ॥ ' इति सप्तमाध्याये सूचितस्यार्थस्यायं प्रपञ्चः ॥ १४ ॥

**प० टी०**—**संतुष्ट इति** । सततं निरन्तरं लाभेऽलाभे वा संतुष्टः प्रसन्नचित्तः योगी अप्रमत्तो यतात्मा

संयतचित्तः दृढः अचलः मद्विषयो निश्चयो यस्य मयि अर्पिते मनोबुद्धी यस्य एवंविधो यो मद्भक्तः स मे प्रियः सखा ॥ १४ ॥

रा० टी०-संतुष्ट इति । संतुष्टः अलंबुद्धिमान्, योगी कर्मध्यानरूपज्ञानोपायवान्, यतात्मा विषयेभ्य उपसंहृतचित्तः, दृढनिश्चयः अप्रामाण्यशङ्काशून्यतत्त्वनिश्चयवान्, मय्यर्पिते मनोबुद्धी यस्य स तथोक्तः ॥ १४॥

**यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः ॥**
**हर्षामर्षभयोद्वेगैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥**

त० टी०-किंच यस्मादिति । यस्मात्सकाशाल्लोको नोद्विजते भयान्न क्षुभ्यति लोकोद्वेगकरं कर्म किंचिन्न करोतीत्यर्थः । यश्च लोकान्निमित्तान्नोद्विजते यमुद्दिश्य सर्वो लोक उद्वेगकरं कर्म न कुर्यात्सर्वाविरोधित्वनिश्चयादित्यर्थः । अत एव हर्षः स्वप्रियवस्तुलाभे प्रीतिविशेषः, अमर्षः परसुखलाभाद्यसहनं, भयं त्रासः उद्वेगश्चित्तव्याकुलतारूपो विकारः, एतैर्मुक्तो यः स च सोऽपि मे प्रियः ॥ १५ ॥

म० टी०-पुनस्तस्यैव विशेषणानि-यस्मादिति । यस्मात्सर्वभूताभयदायिनः संन्यासिनो हेतोर्नोद्विजते न संतप्यते लोको यः कश्चिदपि जनः तथा लोकान्निरपराधोद्वेजनैकव्रतात् खलजनान्नोद्विजते च यः अद्वैतदर्शित्वात् परमकारुणिकत्वेन क्षमाशीलत्वाच्च । किंच हर्षः स्वस्य प्रियलाभे रोमाञ्चाश्रुपातादिहेतुरानन्दाभिव्यञ्जकश्चित्तवृत्तिविशेषः अमर्षः परोत्कर्षासहनरूपश्चित्तवृत्तिविशेषः, भयं व्याघ्रादिदर्शनाधीनश्चित्तवृत्तिविशेषस्त्रासः, उद्वेगः एकाकी कथं विजने सर्वपरिग्रहशून्यो जीविष्यामीत्येवंविधो व्याकुलतारूपश्चित्तवृत्तिविशेषस्तैर्हर्षामर्षभयोद्वेगैर्मुक्तो यः अद्वैतदर्शितया तदयोग्यत्वेन तैरेव स्वयं परित्यक्तो न तु तेषां त्यागाय स्वयं व्यापृत इति यावत् । चद्वयेन यो मद्भक्त इत्यनुकृष्यते ईदृशो मद्भक्तो यः स मे प्रिय इति पूर्ववत् ॥ १५ ॥

शं० टी०-अद्वेष्टृत्वादीनि स्थिरमतित्वान्तानि त्रयस्त्रिंशत्सिद्धस्य लक्षणानि साधकस्य तु ज्ञानपरिपाकसाधनान्यवश्यं संपादनीयानीति सूचयितुमध्यायसमाप्त्यन्तं तानि प्रतिपादयति-यस्मादिति । लोको जनो यस्मान्नोद्विजते उद्वेगं यथा न भजते यस्य ब्रह्मविद आगमनश्रवणदर्शनादिना प्राणिवर्गो न विक्षिप्यत इत्यर्थः । लोकादुपद्रवकारिणश्चोरसर्पव्याघ्रादेर्यः स्वयं च नोद्विजते तेषामागमनदर्शनस्पर्शनादिभिरुद्वेगं यथा न प्राप्नोतीत्यर्थः हर्षामर्षभयोद्वेगैर्मुक्तः इष्टप्राप्तौ हर्षः रोगाद्युपद्रवप्राप्तावमर्षोऽसहिष्णुता चोरसर्पादेः क्रूरजन्तोर्दर्शनादिना भयं प्राणहरणहेतोरनर्थस्य प्राप्तावुद्वेगोऽप्यथ सर्वैरेतैश्चित्तविकारैः स्वाज्ञानकृतैर्मुक्तः सन् हर्षादीनां विपरीतधर्मेषु परिनिष्ठितो भूत्वा यो मन्निष्ठायामेव तिष्ठति स मम प्रिय इत्युक्त एवार्थः ॥ १५ ॥

श्री० टी०-किंच-यस्मादिति । यस्मात्सकाशाल्लोको जनो नोद्विजते भयशङ्कया संक्षोभं न प्राप्नोति यश्च लोकान्नोद्विजते यश्च स्वाभाविकैर्हर्षादिभिर्मुक्तः तत्र हर्षः स्वस्येष्टार्थलाभ उत्साहः अमर्षः परस्य लाभेऽसहनम् । भयं त्रासः उद्वेगो भयादिनिमित्तचित्तक्षोभः एतैर्विमुक्तो यो मद्भक्तः स च मे प्रियः॥१५॥

स० टी०-संतप्य तेन यः कश्चिदपि ब्रह्मविदो यतः ॥ न यः संतप्यते दुष्टजनादप्यद्वयात्मवित् ॥ १ ॥ प्रियलाभे मनोवृत्तिः सुखाभिव्यञ्जिकाऽस्ति या ॥ रोमाञ्चनाश्रुपातादिहेतुः सा हर्षशब्दिता ॥२॥ इष्टघातेऽसहिष्णुत्वममर्षश्च भयं तथा ॥ चित्तव्याकुलतोद्वेग इत्येतैर्भ्रान्तिहेतुकैः ॥ ३ ॥ स्वयमेव परित्यक्तस्तत्त्वदर्शी स मे प्रियः ॥ ४ ॥ १५ ॥

भा० टी०-तमेव विशेषणान्तरैर्विशिनष्टि-यस्मादिति । यस्मात्तत्त्वविदः संन्यासिनो लोकः सर्वो जनो नोद्विजते उद्वेगं संतापं संक्षोभं न गच्छति लोकान्नोद्विजते च यः अत एव हर्षामर्षभयोद्वेगैर्मु-

क्तः प्रियलाभेऽन्तःकरणस्योत्कर्षो रोमाञ्चाश्रुपातादिलिङ्गो हर्षः, अभिलषितप्रतिघातेऽसहिष्णुताऽमर्षः, व्याघ्रादिदर्शननिबन्धनस्त्रासो भयं, दुर्जनैराक्रुष्टे ताडितेऽपि चित्तस्योद्विग्नता उद्वेगस्तैर्मुक्तो यः स च मे प्रियः ॥ १५ ॥

प० टी०—किं च—यस्मादिति । स मे प्रिय इत्युक्ते स कः यस्माल्लोको नोद्विजते सर्वभूतेष्वीश्वराधिष्ठानान्वीक्षणात् तदुक्तम्—'नोन्मत्तात्पिशुनाज्जनाद्विरमते सर्वात्मभूतः पुमांस्तस्मात्सर्वसुहृत्तमादपि जनो नाशङ्कते कश्चन । अत्युग्रैर्जलजन्तुभिर्जलनिधिर्नैवाधिमेति क्षणं नो यादांसि भजन्ति भीतिमुदधेरत्यूर्जितात्सर्वतः ' इति । किं च हर्षामर्षभयोद्वेगैर्यो मुक्तः हर्षः स्वार्थलाभ उत्साहः, अमर्षः परलाभे असहमानत्वम्, भयं त्रासः उद्वेगो भयादिनिमित्तचित्तक्षोभः ॥ १५ ॥

रा० टी०—किंच—यस्मादिति । यस्माल्लोको नोद्विजते न बिभेति लोकस्य भयहेतुर्यो न भवति, यश्च सर्वमीशाधीनं बुद्ध्वा लोकाज्जनात् नोद्विजते, यश्च हर्षामर्षभयोद्वेगैः हर्षो नाम सदा धर्माय मनःप्रवृत्तिः, अमर्षो रोषः, उद्वेगो मनःकम्पविशेषस्तैर्मुक्तो हीनः । स चेत्यत्र भक्त इत्यनुषज्जते । मे प्रियः ॥ १५ ॥

**अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः ॥**
**सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

**त० टी०—किंच—अनपेक्ष इति । अनपेक्षः यदृच्छाप्राप्तेष्वपि लौकिकपदार्थेषु स्पृहारहितः, शुचिर्बाह्याभ्यन्तरशुद्धियुक्तः, दक्षः ज्ञातव्येषु शास्त्रीयेषु कर्तव्येषु च ज्ञातुं कर्तुं च समर्थः, उदासीनः मित्राद्युद्देशेन पक्षपातविवर्जितः, गतव्यथः कुत्रचिदसंमानोपेक्षणादिना या मानसी व्यथा तया शून्यः, परमार्थानुपयुक्तान्सर्वान्कर्मारम्भान् परित्यक्तुं शीलं यस्य एवंभूतो यो मद्भक्तः स मे प्रियः ॥ १६ ॥**

म० टी०—किंच—अनपेक्ष इति । निरपेक्षः सर्वेषु भोगोपकरणेषु यदृच्छोपनीतेष्वपि निःस्पृहः शुचिर्बाह्याभ्यन्तरशौचसंपन्नः दक्षः उपस्थितेषु ज्ञातव्येषु कर्तव्येषु च सद्य एव ज्ञातुं कर्तुं च समर्थः, उदासीनः न कस्यचिन्मित्रादेः पक्षं भजते यः, गतव्यथः परैस्ताड्यमानस्यापि गता नोत्पन्ना व्यथा पीडा यस्य सः, उत्पन्नायामपि व्यथायामपकर्तृष्वनपकर्तृत्वं क्षमित्वं, व्यथाकारणेषु सत्स्वप्यनुत्पन्नव्यथत्वं गतव्यथत्वमिति भेदः, ऐहिकामुष्मिकफलानि सर्वाणि कर्माणि सर्वारम्भास्तान्परित्यक्तुं शीलं यस्य स सर्वारम्भपरित्यागी संन्यासी यो मद्भक्तः स मे प्रियः ॥ १६ ॥

शं० टी०—ब्रह्मविदो लक्षणान्तराण्याह—अनपेक्ष इति । दृष्टे श्रुतेऽपि च वस्तुनि सर्वत्र देहजीवनादावप्यसद्बुद्ध्या जीवत एव मुक्तत्वान्मोक्षेऽप्यपेक्षा न विद्यते यस्य ब्रह्मनिष्ठस्य यतेः सोऽनपेक्षः सर्वकामनिर्मुक्त इत्यर्थः । शुचिः कर्मस्वसंगमः शौचमिति न्यायेन देहेन्द्रियादिभिरेव न तु स्वेन क्रियमाणेष्वन्नादानविसर्गादिषु दुष्टेष्वदुष्टेषु च कर्मसु कर्मण्यकर्मत्वदर्शनेन स्वस्य तैः संबन्धाभावादकर्त्रात्मदर्शी ब्रह्मविदेव शुचिर्नित्यशुद्ध इत्यर्थः । दक्षः श्रुतिस्मृतीतिहासपुराणन्यायमीमांसादिसर्वशास्त्राणामध्ययनाध्यापनतदर्थप्रकाशनानुष्ठानानुष्ठापनेषु सर्वेष्वपि च कर्मसु स्वयं बोद्धुं बोधयितुं कर्तुं कारयितुं च समर्थ इत्यर्थः । तथापि सर्वारम्भपरित्यागी आरभ्यन्त इत्यारम्भाः सर्वे च ते आरम्भाश्च सर्वारम्भाः कर्माणि लौकिकानि वैदिकानि च सर्वाणि कर्माण्यविद्याकामसंकल्पाहंकारादिदोषप्रवर्धकत्वेन ज्ञानतत्फलप्रतिबन्धकत्वात् तानि परित्यक्तुं शीलमस्यास्तीति सर्वारम्भपरित्यागी सर्वकर्मसंन्यासीत्यर्थः । ननु विहिताचरणं धर्मस्तत्त्यागस्त्वधर्मः अधर्मे धर्मबुद्धिर्धर्मे त्वधर्मबुद्धिश्च श्रोत्रियस्य विवेकिनः संतापायैव भवति । कथं धर्मं त्यक्त्वा स्वयमधर्मं कृत्वा श्रोत्रियो न संतपतीत्याशङ्कायां न कर्मणां मोक्षं प्रत्यसाधनत्वात्समुत्पन्नज्ञानस्य प्रतिबन्धकत्वाच्च मुमुक्षोस्तत्त्यागस्य न्यायसिद्धत्वात् न्यायानुवर्तित्वाद्विद्वान्न तपतीत्याह—गतव्यथ इति । गता चिन्ता-

न्निर्गता व्यथा कृत्याकृत्यानुष्ठानानुष्ठानकृतः संतापो यस्य स गतव्यथः कृत्याकृत्ययोरनात्मकर्तृकयोरक-र्त्रात्मदर्शी ब्रह्मविन्न तपतीत्यर्थः "नैनं कृताकृते तपतः" इति श्रुतेः। तर्हि कथं तिष्ठतीत्यत आह—उदासीन इति। आहारादौ कर्मणि युक्तेऽयुक्ते च देहेन्द्रियादिषु स्वारब्धानुरूपेण प्रवृत्तेषु सत्सु स्वयं तटस्थवदुदासीनः साक्षीभूत्वाऽविक्रियात्मना तूष्णीं तिष्ठतीत्यर्थः। एवंलक्षणो यो मद्भक्तः स मे प्रिय इत्युक्तार्थः ॥ १६ ॥

**श्री० टी०**—किं च—**अनपेक्ष इति**। अनपेक्षो यदृच्छोपस्थितेऽप्यर्थे निःस्पृहः, शुचिर्बाह्याभ्यन्तरशौच-संपन्नः दक्षोऽनलसः उदासीनः पक्षपातरहितः गतव्यथ आधिशून्यः सर्वान्दृष्टार्थानारम्भानुद्यमान्परित्यक्तुं शीलं यस्य सः एवंभूतः सन् यो मद्भक्तः स मे प्रियः ॥ १६ ॥

**स० टी०**—निःस्पृहः सर्वभोगेषु बाह्याभ्यन्तरशौचवान्॥ उपस्थितेषु कार्येषु सद्यो ज्ञातुं क्षमोऽर्थतः ॥ १ ॥ कस्यचिन्नैव मित्रादेः पक्षं भजति निर्भयः॥ दुर्जनैस्ताड्यमानोऽपि योऽनुत्पन्नव्यथोऽथवा ॥ २ ॥ इहामुत्रार्थकर्माणि त्यक्तुं शीलं हि यस्य सः॥ मद्भक्तस्तत्त्ववद्भङ्गित्यं प्रियो भगवतो मम ॥ ३ ॥ १६ ॥

**भा० टी०**—निरपेक्षत्वादिकमपि ज्ञानिनो विशेषणमित्याशयेनाह—**अनपेक्ष इति**। अनपेक्षः देहेन्द्रिय-विषयसंबन्धेषु सर्वेष्वपेक्षणीयेषु यदृच्छयोपलब्धेष्वपेक्षाशून्यः निस्पृहः, शुचिः मृद्वारिनिमित्तेन बाह्येन द-यादिनाभ्यन्तरेण च शौचेन संपन्नः पुण्यापुण्याभ्यामलिप्त इति वा अस्मिन्पक्षे प्रकरणविरोधः पुण्यापुण्ये न करोत्यतस्ताभ्यामलिप्त इत्यर्थे तु शुभाशुभपरित्यागीत्यनेन पौनरुक्त्यं बोध्यम्। दक्षः प्रत्युत्पन्नेषु कर्तव्येषु यथावज्ज्ञातुं कर्तुं च कुशलो न त्वलसः कस्यचिन्मित्रादेः पक्षपातं न भजत इत्युदासीनः। यत्तु मानाप-मानादौ समवृत्तिरुदासीन इति तन्न, तथा मानापमानयोरित्यादिना पौनरुक्त्यापत्तेस्ताडितुमुद्यतादपि व्य-थानिमित्तं गतं भयं यस्मान्न च क्षमीत्यनेन पौनरुक्त्यं परैस्ताडितस्य प्रत्युत्पन्नायामपि पीडायां तन्निमित्तं ताडनकर्तृषु ताडनाद्यकर्तृत्वं क्षमित्वमित्यभ्युपगमात् अत एवैहिकामुष्मिकदुःखनिवृत्तितत्सुखप्राप्त्यर्थानि कर्माणि आरभ्यन्त इत्यारम्भास्तान् परित्यक्तुं शीलमस्य स सर्वारम्भपरित्यागी यतो भयहेतुभूतसर्वारम्भ-परित्यागी अतो गतव्यथ इति वा यो मद्भक्तः स मे प्रियः ॥ १६ ॥

**प० टी०**—किंच—**अनपेक्ष इति**। अनपेक्षो यदृच्छोपस्थितेऽप्यर्थे निस्पृहः शुचिर्बाह्याभ्यन्तरशौचसं-पन्नो दक्षोऽनलस उदासीनः पक्षपातशून्यो गतव्यथ आधिशून्यः। सर्वेषां दृष्टादृष्टार्थानामारम्भान् परि-त्यक्तुं शीलं यस्यैवंभूतः स मे प्रियः ॥ १६ ॥

**रा० टी०**—किंच—**अनपेक्ष इति**। अनपेक्षो भगवत्प्रीत्यन्यत्र काप्यपेक्षाहीनः, शुचिः बाह्यान्तरशुद्धि-मान्, दक्षः भगवत्कर्मकरणे पटुः उदासीनः कर्तव्योपकारापकारयोरुपेक्षकः, गतव्यथः परकृतापकारैरप्रा-प्तमनःक्लेशः, सर्वारम्भपरित्यागीत्यस्य अवैष्णवसर्वारम्भपरित्यागी सर्वारम्भाभिमानत्यागी सर्वारम्भफलत्यागी, भगवति सर्वारम्भसमर्पणरूपत्यागवानिति चतुर्धार्थः ॥ १६ ॥

## यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति ॥
## शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ १७ ॥

**त० टी०**—किञ्च—**य इति**। प्रियं प्राप्य यो न हृष्यति, अप्रियं प्राप्य न द्वेष्टि, प्रियार्थनाशे च न शोचति, अप्राप्तमर्थं कंचिन्न काङ्क्षति, शुभाशुभपरित्यागी शुभाशुभसाधनभूतकर्म त्यक्तुं शीलमस्य तथा, एवंभूतो यो भक्तिमान्स मे प्रियः ॥ १७ ॥

**म० टी०**—किं च समदुःखसुख इत्येतद्विवृणोति—**यो नेति**। यो न हृष्यति इष्टप्राप्तौ न द्वेष्टि अनिष्टप्राप्तौ न शोचति प्राप्तेविष्टयोगे न काङ्क्षति अप्राप्तेष्टसंयोगे, सर्वारम्भपरित्यागीत्येतद्विवृणोति। शुभाशुभे सुखसा-धनदुःखसाधने कर्मणी परित्यक्तुं शीलमस्येति शुभाशुभपरित्यागी भक्तिमान यः स मे प्रियः ॥ १७ ॥

**शं० टी०**—रागद्वेषातिरिक्तो मुक्तेः प्रतिबन्धो न कश्चिदस्ति मुमुक्षोस्तावदवश्यं परिहर्तव्याविति सूचयितुं मुक्तस्य तद्राहित्यं लक्षणमित्याह—**य इति** । यो ब्रह्मविद्यतिः स्वयं परेच्छया अनिच्छया वा प्राप्तेऽपीष्टे वस्तुनि न हृष्यति परप्रयत्नेनापि तत्र हर्षं न करोतीत्यर्थः तथैवानिष्टं प्राप्य न द्वेष्टि स्वानिष्टप्रापकेऽप्यनिष्टेऽर्थे अप्रीतिं न करोतीत्यर्थः महत्यनर्थे संप्राप्ते सति न शोचति स्वनिष्ठया धैर्येण च तदविषयात्मज्ञानबलेनापि च स्वयमश्रुमोक्षं विलापं च न करोतीत्यर्थः । तथा प्राप्तस्यानर्थस्य निवृत्तिं न काङ्क्षति प्रारब्धभोगक्षयमन्तरा वाञ्छामात्रेण तन्निवृत्तेरसंभवात्तितिक्षया तत्प्रतीकाराय न किञ्चिद्यतत इत्यर्थः किंच शुभाशुभपरित्यागी शुभानि पुण्यान्यशुभानि पापान्यज्ञानसहभावीनि इच्छयाऽनिच्छया वा चिदाभासेन क्रियमाणानि कर्माण्यकर्मत्वज्ञानेन नाहं कर्ताऽस्मीति परित्यक्तुं स्वस्माद्विश्लेषयितुं शीलमस्यास्तीति शुभाशुभपरित्यागी देहेन्द्रियादिभिरेव कृतैः कर्मभिः प्रत्यग्दृष्ट्या स्वयं न श्लिष्यत इत्यर्थः तद्यथा "पुष्करपलाशे" इत्यादि श्रुतेः य एवं लक्षणो भक्तिमान् ज्ञानवान्यतिः स मे प्रिय इत्युक्त एवार्थः ॥ १७ ॥

**श्री० टी०**—किं च—**यो नेति** । प्रियं प्राप्य यो न हृष्यति अप्रियं प्राप्य यो न द्वेष्टि इष्टार्थनाशे सति यो न शोचति अप्राप्तमर्थं यो न काङ्क्षति शुभाशुभे पुण्यपापे परित्यक्तुं शीलं यस्य सः एवंभूतो भूत्वा यो मद्भक्तिमान्स मे प्रियः ॥ १७ ॥

**स० टी०**—न हृष्यतीष्टसंपत्तौ तप्यते न विपर्यये ॥ न शोचतीष्टनाशे यो नाप्राप्तमभिकाङ्क्षति ॥ १ ॥ पुण्यपापे परित्यक्तुं शीलं यस्य स मे प्रियः ॥ २ ॥ १७ ॥

**भा० टी०**—किंच हर्षादिराहित्यमपि तत्त्वविदो विशेषणमित्याशयेनाह—**य इति** । यत्तु एतमेव श्लोकं व्याचष्टे त्रिभिः श्लोकैर्य इति तदुपेक्ष्यं भाष्योक्तरीत्याऽपौनरुक्त्यसंभवे व्याख्यानव्याख्येयकल्पनाया अन्याय्यत्वात् । यः इष्टप्राप्तौ न हृष्यति हर्षं न प्राप्नोति अनिष्टप्राप्तौ न द्वेष्टि द्वेषं न करोति अद्वेष्टा सर्वभूतानामित्यत्र सर्वभूतेषु सामान्यद्वेषाभावस्वाभाविक उक्तः अत्र त्वनिष्टप्राप्तौ तत्प्रयुक्तद्वेषविशेषाभाव इत्यपौनरुक्त्यं प्रियवियोगे न शोचति शोकं मानसं तापं नाङ्गीकरोति अप्राप्तं च न काङ्क्षति शुभाशुभे पुण्यपापे कर्मणी परित्यक्तुं शीलमस्येति तथा सर्वारम्भपरित्यागीत्यनेन वेदोक्तनित्यनैमित्तिककाम्यकर्मातिरिक्तसर्वारम्भपरित्यागीति सर्वपदसंकोचो माऽभूदित्यत उक्तं शुभाशुभपरित्यागीति भक्तिमान् यः स मे प्रियः ॥ १७ ॥

**प० टी०**—किंच—**यो न हृष्यतीति** । प्रियं प्राप्य न हृष्यति अप्रियं प्राप्य न द्वेष्टि गते मृते वा न शोचति । अप्राप्तं न काङ्क्षति शुभाशुभे पुण्यपापे त्यक्तुं शीलं यस्य । शेषं पूर्ववत् ॥ १७ ॥

**रा० टी०**—हर्षामर्षभयोद्वेगैर्मुक्त इत्युक्ते निष्ठाप्रत्ययेनातीततत्त्वप्रतीत्या कालान्तरे हर्षादिमानिति शङ्का स्यात् तन्निरासाय तद्व्यनक्ति—**यो न हृष्यतीत्यादिना** । "नानद्यतनवत्क्रियाप्रबन्धसामीप्ययोः" इति सूत्रेण क्रियासातत्यरूपक्रियाप्रबन्धे विहितलट्प्रत्ययान्तत्वेन हृष्यतीत्यादेर्यावज्जीवं हृष्यतीत्यादिरर्थः । न हृष्यति न द्वेष्टीत्यादिरूपेण नञ्संबन्धे सति कदापि न हृष्यतीत्यादिरर्थो भवतीति भावः । उदाहृतं च वृत्तौ तार्तीयतृतीयपादे यावज्जीवमन्नमदादित्यादि । सर्वारम्भपरित्यागीति सामान्यत उक्तं विशिष्योक्त्या व्यनक्ति—**शुभाशुभेति** । ज्ञानभक्तिवैराग्याद्यन्यशुभत्यागीत्यर्थः । अत एव तदन्यन्न काङ्क्षतीत्यर्थो न काङ्क्षतीत्यस्य ज्ञेयः । एवं लोकान्नोद्विजत इत्यस्यापि हर्षामर्षभयमुक्त इत्यनेनापौनरुक्त्यं ध्येयमुक्तशङ्कानिरासार्थत्वादिति ॥ १७ ॥

**समः शत्रौ च मित्रे च तथा मानापमानयोः ॥**
**शीतोष्णसुखदुःखेषु समः सङ्गविवर्जितः ॥ १८ ॥**

तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् ॥
अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥ १९ ॥

त० टी०—किञ्च—सम इति । शत्रौ मित्रे च समः, द्वेषरागशून्यः, तथा मानापमानयोस्तथा शीतोष्णादिषु समः सङ्गविवर्जितः कुत्राप्यासक्तिरहितः ॥ १८ ॥ तुल्येति । तुल्ये निन्दास्तुती यस्य सः मौनी संयतवाक्, येन केन यदृच्छाप्राप्तेन संतुष्टः, अनिकेतः नियतवासरहितः, स्थिरा आत्मनि व्यवसायात्मिका मतिर्यस्य स स्थिरमतिः, एवंभूतो भक्तिमान् नरो मे प्रियो भवति ॥ १९ ॥

म० टी०—किं च—सम इति । पूर्वस्यैव प्रपञ्चः । सङ्गविवर्जितः चेतनाचेतनसर्वविषयशोभनाध्यासरहितः, सर्वथा हर्षविषादशून्य इत्यर्थः । स्पष्टमन्यत् ॥ १८ ॥ किंच—तुल्येति । निन्दा दोषकथनं स्तुतिर्गुणकथनं ते दुःखसुखाजनकतया तुल्ये यस्य स तथा मौनी संयतवाक् ननु शरीरयात्रानिर्वाहाय वाग्व्यापारोऽपेक्षित एव नेत्याह—संतुष्टो येन केनचित् स्वप्रयत्नमन्तरेणैव बलवत्प्रारब्धकर्मोपनीतेन शरीरस्थितिहेतुमात्रेणाशनादिना संतुष्टः निवृत्तस्पृहः । किंच- अनिकेतो नियतनिवासरहितः स्थिरा परमार्थवस्तुविषया मतिर्यस्य सः स्थिरमतिः ईदृशो यो भक्तिमान् स मे प्रियो नरः अत्र पुनः पुनर्भक्तेरुपादानं भक्तिरेवापवर्गस्य पुष्कलं कारणमिति द्रढयितुम् ॥ १९ ॥

शं० टी०—इदं ब्रह्मविद्यतेर्लक्षणं विशिष्टतरं विकारहेतुष्वप्यविकारात्मनाऽवस्थानरूपं सर्वप्रत्यक्षमित्याह—सम इति द्वाभ्याम् लोके त्वपकर्ता शत्रुरुपकर्ता तु मित्रं लोकदृष्टिमनुसृत्य तं न्यायमत्राह न तु विद्वद्दृष्टिं अहमेवेदं सर्वमिति सर्वात्मदर्शिनो विदुषः शत्रुमित्रादिभेदप्रत्ययासंभवात्प्रारब्धवशाद्देहस्य कश्चिदपकारी भवति कश्चिदुपकारी भवति तत्र शत्रौ मित्रे च स्वयं विद्वान् समः समदर्शनस्तथा तत्कृतयोर्मानावमानयोः पूजातिरस्कारयोः संतोषविषादहेत्वोरपि समो निर्विकार एव भवतीत्यर्थः । तथैव शीतोष्णसुखदुःखेषु प्राप्तेषु समः समदर्श्येव भवति किंच तुल्यनिन्दास्तुतिः निन्दा विद्यमानानामविद्यमानानां वा दोषाणां प्रत्यक्षेण वर्णनं स्तुतिस्तु तथाविधगुणानां प्रत्यक्षेण कीर्तनं निन्दा च स्तुतिश्च निन्दास्तुती अनात्मगोचरे तुल्ये समे यस्य स तुल्यनिन्दास्तुतिस्तयोः समो निर्विकार इत्यर्थः । मानावमानयोः शीतोष्णादिषु च समदर्शनसिद्धेर्हेतुमाह—सङ्गविवर्जित इति । मानावमानशीतोष्णादीनामनुभविता साभासोऽहंकारस्तत्तादात्म्याध्यास एव सङ्गस्तेन विवर्जितः विज्ञानात्मविषयकमानावमानादेरविषये परे ब्रह्मण्यात्मभावापन्नतया स्वयं तत्संबन्धरहित एव सन् सर्वत्र समदर्श्येव भवतीत्यर्थः । तत एव मौनी वाचंयमी वाच्याभावात् । नहि सर्वं ब्रह्मैव पश्यतो विदुषो वाच्यमस्ति तदभावादेव विद्वान्मौनी " विजानन्विद्वान् भवते नातिवादी " इति श्रुतेः । प्रारब्धवशात्प्राप्तेन येन केन शिष्टेन वाऽशिष्टेन वा सदसत्त्वभावनानिर्मुक्तेन भैक्षेण वस्तुनाऽल्पेन महता वा संतुष्टः संतृप्तः संप्राप्तालंप्रत्यय इत्यर्थः । 'येन केनचिदाशित' इति स्मृतेः अनिकेतः निकेतो निवासो नियतो न विद्यते यस्य यतेः सोऽनिकेतः ग्रामैकरात्र इत्यर्थः " अष्टौमाःस्वेकाकी यतिश्चरेत् " इति श्रुतेः स्थिरमतिः विपरीतभावनाजनकेषु मानावमानशीतोष्णादिषु सुखदुःखादिषु प्राप्तेष्वपि सर्वमिदमहं च ब्रह्मैवेति सर्वदा सर्वत्र ब्रह्माकारापन्ना एकवृत्त्या स्थिरा निश्चला मतिर्मननशीला चित्तवृत्तिर्यस्य स स्थिरमतिः स्थिरप्रज्ञ इत्यर्थः । दृढनिश्चय इति ज्ञानस्य मानान्तरबाधराहित्यं, स्थिरमतिरिति वृत्तिनैश्चल्यमिति तयोर्भेदः । भक्तिमान् 'एकान्तभक्तिर्गोविन्दे यत्सर्वत्र तदीक्षणम् । अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे । लक्षणं भक्तियोगस्य निर्गुणस्य व्युदाहृतम्' अस्यार्थः अहैतुकी निमित्तरहिता विपरीतप्रत्ययनिवृत्त्यादिप्रयोजनवर्जिता ब्रह्मविदां स्वभावसिद्धा चाव्यवहिताऽविच्छिन्ना च वृत्त्यन्तरवर्जिता पुरुषोत्तमे प्रत्यगभिन्ने परमात्मनि या भक्तिरखण्डाकारवृत्तिस्तदेव निर्गुणस्य

निर्गुणविषयस्य भक्तियोगस्य भक्तेर्लक्षणं स्वरूपं महद्भिरुदाहृतमुक्तमित्यर्थः । निरुक्तलक्षणा मुख्या भक्तिरस्यास्तीति भक्तिमान् ब्रह्मनिष्ठो यो नरः स्वनिष्ठया स्वं ब्रह्मैव नारयति प्रापयति न तु योन्यन्तरं लोकान्तरं चेति नरो ब्रह्मविद्यतिः स मे प्रिय इत्युक्त एवार्थः ॥ १८ ॥ १९ ॥

**श्री० टी०** किं च--**सम इति** । शत्रौ च मित्रे च सम एकरूपः मानापमानयोरपि तथा सम एव हर्षविषादशून्य इत्यर्थः । शीतोष्णयोः सुखदुःखयोश्च समः संगविवर्जितः क्वचिदप्यनासक्तः ॥ १८ ॥ **तुल्य इति** । तुल्ये निन्दास्तुती यस्य मौनी संयतवाक् येन केनचिद्यथालब्धेन संतुष्टः अनिकेतो नियतवासशून्यः स्थिरमतिः व्यवस्थितचित्तः एवंभूतो मद्भक्तिमान्यः स मे प्रियो नरः ॥ १९ ॥

**स० टी०**–शत्रौ मित्रे च पूजायां समः परिभवे च यः ॥ शीतोष्णादावसह्येऽपि समोऽध्यासविवर्जितः ॥ १ ॥ १८ ॥ तुल्ये निन्दास्तुती दोषगुणकीर्तनलक्षणे ॥ यस्य संयतवाङ्मौनी संतुष्टो येन केन चित् ॥ १ ॥ शरीरयात्रामात्रार्थे प्राप्तेऽपि विगतस्पृहः ॥ शून्यो नियतवासेन स्थिरा यस्याद्वये मतिः ॥ २ ॥ ईदृशो भक्तिमांस्तत्त्वदर्शी नित्यं मम प्रियः ॥ पुनः पुनरुपादानं भक्तेस्तेनेति गम्यते ॥ ३ ॥ पुष्कलं कारणं मोक्षे भगवद्भक्तिरेव हि ॥ ४ ॥ १९ ॥

**भा० टी०**–किंच-**सम इति** । समः शत्रौ च मित्रे च तथा मानापमानयोः पूजापरिभवयोः शीतोष्णसुखदुःखेषु समः समदुःखसुखः इत्यत्र सामान्यसुखदुःखयोर्ग्रहणम् अत्र तु शीतोष्णनिबन्धनयोरित्यपौनरुक्त्यम् । एतत्सर्वं कुत इत्यत आह–यतः सर्वत्र सङ्गेन संसर्गेण विवर्जितः सङ्गस्यैव सर्वदोषजनकत्वात् न कस्यापि सङ्गं करोतीत्यर्थः । अद्वेष्टेत्यादिना द्वेषादिविशेषाभाव उक्तः संप्रति सर्वत्रैवाविकृतचित्तत्वमुच्यते सर्वत्र चेतने रुयादावचेतने चन्दनादावित्यर्थ इति भाष्यटीकाकृतः ॥ १८ ॥ किंचैतदपि तत्त्वविदो विशेषणमित्याह–**तुल्येति** । दोषानुवर्णनं निन्दा, गुणानुकीर्तनं स्तुतिः, तुल्ये निन्दास्तुती यस्य स निन्दास्तुतिभ्यां विषादं हर्षं च न प्राप्नोतीत्यर्थः । अत एव स्वयमपि कस्यचिन्निन्दां स्तुतिं वा न करोतीत्याह–मौनी यतवाक् । ननु वाग्व्यापारस्य चित्तानुकूलपदार्थलाभार्थमपेक्षितत्वात्कथं मौनीति चेत्तत्राह–संतुष्टो येनकेनचित् प्रारब्धवशादागतेन शरीरस्थितिहेतुमात्रेण समीचीनेनासमीचीनेन वा सम्यक् तुष्टः तदतिरिक्ते तृष्णाशून्यस्तदभावाच्च विषयप्राप्त्यर्थवाग्व्यापारादिवर्जित इत्यर्थः । तथाच स्मृतिः ' येन केनचिदाच्छिन्नो येनकेनचिदाशितः । यत्र क्वचन शायी स्यात्तं देवा ब्राह्मणं विदुः ' इति । वासस्थानमपि तस्य नियतं नास्तीत्याह–अनिकेतः निकेत आश्रयो निवासो नियतो न विद्यते यस्य स तथा च स्मृत्यन्तरम्–' न कुड्ये नोदके सङ्गो न चैले न त्रिपुष्करे । नागारे नासने नान्ने यस्य वै मोक्षवित्तु सः ' इति । एतत्सर्वं कुत इत्यत आह–स्थिरमतिः स्थिरा परमार्थविषया मतिर्यस्य स दृढतया परमात्मनि यस्य मतिः स्थिता स इति यावत् । यत एवमतः स्थिरमतिरिति वा एतादृशो भक्तिमान् नरो मे प्रियः ' तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यत ' इति तत्त्वविदो भक्तस्य श्रैष्ठ्यमुपक्षिप्तं तदेव द्रढयितुं पुनः पुनस्तस्यैवान्येषां विशेषणानां विशिष्यत्वेन स्वप्रेमास्पदत्वेन च ग्रहणम् । तथाच भाष्यम् ' उत्तमां परमार्थज्ञानलक्षणां भक्तिमास्थितास्तेऽतीव मे प्रियाः ' इत्यादि । पुनः पुनर्भक्तेर्ग्रहणमपवर्गमार्गस्य परमार्थज्ञानस्योपायत्वार्थमिति तु भाष्यटीकाकृतः ॥ १९ ॥

**प० टी०**–किं च द्वाभ्याम्–**समः शत्रौ चेति । तुल्यनिन्दास्तुतिरिति** । शत्रौ मित्रे च समः समस्वभावः । तदुक्तम्–' संवर्धकं छेत्तुमुपागतं वा छायादिभिर्विश्रमिणं करोति । वृक्षो यथा तद्वदरौ च मित्रे समस्वभावो हरिदासवर्यः' इति । तथा मानापमानयोः शीतोष्णसुखदुःखादिद्वन्द्वेषु समो हर्षविषादरहितः सङ्गविवर्जितः क्वचिदप्यनासक्तः ॥ १८ ॥ तुल्य इति । निन्दया न कुप्यति, स्तुत्या न श्लाघते, मौनी

संयतवाक्, येनकेनचिद्यथालाभेन संतुष्टः, न विद्यते निकेतनं नियमितं स्थलं यस्य, स्थिरमतिर्व्यवसितचित्तः तथा सति भक्तिमान् स मे प्रियः ॥ १९ ॥

रा० टी०—किंच—सम इति । समः शत्रौ च मित्रे चेत्यादि पूर्वं समदुःखसुख इति सामान्येनोक्तं तद्विशिष्योक्त्या व्यनक्ति—शीतोष्णेत्यादि । शीतोष्णादिविषयजन्यसुखदुःखेषु समः उत्सेकानुत्सेकहीनः, सङ्गविवर्जितः फलस्नेहहीनः ॥ १८ ॥ किंच—तुल्येति । तुल्यनिन्दास्तुतिः हेयत्वेन निन्दायास्तुल्या स्तुतिर्यस्य स तथा, अनिकेतः अनियतवासः अकारवाच्यभगवद्दाश्रयो वा, स्थिरमतिः कुतर्कैरचञ्चलज्ञानः, यो मद्भक्तः भक्तिमानिति भक्तेर्बहुवारोक्तिरद्वेष्टेत्यादिनोक्तेषु धर्मेषु भक्तेराधिक्यज्ञापनाय । अत्र सुखादिषु साम्यं हर्षादिराहित्यं च प्रायेणेति ज्ञेयम् । प्रायः सुखादिषु समः प्रायो हर्षादिवर्जित इत्यादेः । संतुष्टः सततमित्यस्य संतुष्टो येनकेनचिदित्येतद्व्याख्यानरूपमित्यपौनरुक्त्यम् ॥ १९ ॥

ये तु धर्म्यामृतमिदं यथोक्तं पर्युपासते ॥
श्रद्दधाना मत्परमा भक्तास्तेऽतीव मे प्रियाः ॥ २० ॥

इति श्रीभगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे
श्रीकृष्णार्जुनसंवादे द्वादशोऽध्यायः ॥ १२ ॥

त० टी०—एवमद्वेष्टृत्वादिधर्मजातं भगवद्भक्तिकामेनोपादेयमित्युक्तमिदानीं मय्याऽऽवेश्य मनो ये मामित्यादिनोपक्रान्तस्यानन्यभक्तियोगस्यैव सर्वश्रैष्ठ्यं प्रतिपादयन्नध्यायमुपसंहरति—ये त्विति । तुशब्द उक्तेभ्योऽपि श्रैष्ठ्याद्वैलक्षण्यदर्शनार्थः । ये तु जन्मान्तरसहस्रेष्वनुष्ठितनिष्कामकर्मतया क्षीणपापा अद्वेष्टृत्वादिगुणसंपन्ना धर्म्यामृतमुक्तप्रकारधर्मादनपेतममृतप्रापकत्वादमृतमिदं मदुपासनात्मकं भक्तियोगं यथोक्तं मय्यावेश्य मनो ये मां, ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परा इत्याद्युक्तप्रकारं पर्युपासते सर्वात्मनाऽनुतिष्ठन्ते श्रद्धां कुर्वन्तो मत्परमास्ते भक्ता अतितरां मे प्रियाः । न ततोऽधिकोऽन्यः प्रिय इत्यर्थः ॥ २० ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

म० टी०—अद्वेष्टेत्यादिनाऽक्षरोपासकादीनां जीवन्मुक्तानां संन्यासिनां लक्षणभूतं स्वभावसिद्धं धर्मजातमुक्तम् । यथोक्तं वार्तिके 'उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः । अयत्नतो भवन्त्येव न तु साधनरूपिणः' इति । एतदेव च पुरा स्थितप्रज्ञलक्षणरूपेणाभिहितम् । तदिदं धर्मजातं प्रयत्नेन संपाद्यमानं मुमुक्षोर्मोक्षसाधनं भवतीति प्रतिपादयन्नुपसंहरति—ये त्विति । ये तु संन्यासिनो मुमुक्षवो धर्मामृतं धर्मरूपममृतम् अमृतत्वसाधनत्वात् अमृतवदास्वाद्यत्वाद्वा इदं यथोक्तम् अद्वेष्टा सर्वभूतानामित्यादिना प्रतिपादितं पर्युपासतेऽनुतिष्ठन्ति प्रयत्नेन श्रद्दधानाः सन्तो मत्परमाः अहं भगवानक्षरात्मा वासुदेव एव परमः प्राप्तव्यो निरतिशया गतिर्येषां ते मत्परमाः भक्ताः मां निरुपाधिकं ब्रह्म भजमानास्तेऽतीव मे प्रियाः 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इति पूर्वसूचितस्यायमुपसंहारः । यस्माद्धर्मामृतमिदं श्रद्धयानुतिष्ठन् भगवतो विष्णोः परमेश्वरस्यातीव प्रियो भवति तस्मादिदं ज्ञानवतः स्वभावसिद्धतया लक्षणमपि मुमुक्षुणात्मत-

१ धर्मामृतमिति मधुसूदनभाष्योत्कर्षदीपिकाकाराभ्यां धृतः पाठः ।

 

स्वजिज्ञासुनात्मज्ञानोपायत्वेन यत्नादनुष्ठेयं विष्णोः परमं पदं जिगमिषुणेति वाक्यार्थः । तदेवं सोपाधिकब्रह्माभिध्यानपरिपाकान्निरुपाधिकं ब्रह्मानुसंदधानस्याद्वेष्टृत्वादिधर्मविशिष्टस्य मुख्यस्याधिकारिणः श्रवणमननिदिध्यासनान्यावर्तयतो वेदान्तवाक्यार्थतत्त्वसाक्षात्कारसंभवात्ततो मुक्त्युपपत्तेर्मुक्तिहेतुवेदान्तमहावाक्यार्थान्वययोग्यस्तत्पदार्थोऽनुसंधेय इति मध्यमेन षट्केन सिद्धम् ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वती-
विरचितायां श्रीमद्भगवद्गीतागूढार्थदीपिकायामधिकारिभेदेन भक्तियो-
गविवरणं नाम द्वादशोऽध्यायः ॥ १२ ॥

शं० टी०—अद्वेष्टा सर्वभूतानामित्यारभ्यात्र यदुक्तं ब्रह्मनिष्ठस्य ब्रह्मविदो लक्षणजातं तत्सर्वं मोक्षैककामैः सर्वतो विरक्तैः साधकैर्यतिभिः श्रवणमननाभ्यां समुत्पन्नज्ञानस्य परिपाकैकसाधनमवश्यं संपादनीयमिति बोधयितुं तत्संपादननिष्ठान् साधकान् प्रस्तुवन्नध्यायमुपसंहरति—ये त्विति । तुशब्दः सिद्धेभ्यः साधकानां व्यावृत्त्यर्थः । ये तु मद्भावापत्तिमेव प्रार्थयमानाः सुखसाधनं सिद्धं सर्वं संन्यस्य श्रवणादिना संपन्नज्ञानवन्तो यतयः श्रद्दधाना इदं मुक्तेः परमसाधनमवश्यमनुष्ठेयमिति विश्वासवन्तः सन्तो मत्परमाः अहं निर्विशेषं परं ब्रह्मैव परमं निरतिशयस्थानं प्राप्तव्यमिति येषां ते मत्परमा मय्येव परमार्थत्वबुद्धयो भूत्वा, यद्वा अहमेव परमो निरतिशयैश्वर्यसंपन्नो विश्वाधिकोऽनुल्लङ्घ्याज्ञ ईश्वर इति धीर्येषां ते मत्परमा मयि परमेश्वरत्वबुद्ध्या मदाज्ञावशवर्तिनो भूत्वा यथोक्तमद्वेष्टा सर्वभूतानामित्यादिना मया प्रतिपादितं धर्म्यामृतं यतीनां स्वधर्मत्वेन प्रयत्नादनुष्ठेयत्वाद्धर्म्यं, यद्वा मुमुक्षुत्वधर्मेण प्राप्यं धर्म्यम् अमृतस्य मोक्षस्य नियतसाधनत्वादमृतमिदमद्वेष्टृत्वादिसाधनजातं पर्युपासते नित्यं समनुतिष्ठन्ति ते मद्भक्ता मद्भावनानिष्ठा मे ममेश्वरस्यातीवात्यन्तं प्रियाः परप्रेमाश्रया भवन्ति लोके सर्वेषां यथोक्तकारिणस्त्वत्यन्तप्रियाः सन्तो दृष्टास्तद्वद्यथोक्तकारिणो ये तु यतयो भवन्ति ते ममात्यन्तप्रिया इति स्वोक्ते मोक्षसाधने तेषां प्रवृत्तिसिद्धय इयं स्तुतिः ततः परमेश्वरस्यातिप्रियत्वसिद्धये भवबन्धविमुक्तये च यथोक्तमिदं धर्म्यामृतं यतिभिः कृतश्रवणैर्मोक्षैककामैः प्रयत्नेनानुष्ठातव्यमिति सिद्धम् ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ
गीतातात्पर्यबोधिन्यां द्वादशोऽध्यायः ॥ १२ ॥

श्री० टी०—उक्तं धर्मजातं सफलमुपसंहरति—ये त्विति । यथोक्तमुक्तप्रकारं धर्मं एवामृतममृतत्वसाधनत्वात् धर्म्यामृतमिदमिति केचित्पठन्ति तद्ये उपासते अनुतिष्ठन्ति श्रद्धां कुर्वन्तो मत्परमाश्च सन्तो मद्भक्ताः तेऽतीव मे प्रिया इति ॥ २० ॥

दुःखमव्यक्तवर्त्मैतद्बहुविघ्नमतो बुधः । सुखं कृष्णपदाम्भोजभक्तिसत्पथमाभजेत् ॥
इति सुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

स० टी०—अद्वेष्टृत्वादिचिह्नानि जीवन्मुक्तशरीरिणाम् ॥ स्वभावभूतानीमानि तदुक्तं वार्तिके स्फुटम् ॥ १ ॥ उत्पन्नात्मावबोधस्य ह्यद्वेष्टृत्वादयो गुणाः ॥ अयत्नतो भवन्त्येव न तु साधनरूपिणः ॥ २ ॥ संपाद्यमानं यत्नेन धर्मजातमिदं सतः ॥ विरक्तस्यात्मजिज्ञासोर्मुमुक्षोर्मोक्षसाधनम् ॥ ३ ॥ इत्युपपादयन्नीश उपसंहरतीह तत् ॥ ये सन्मुमुक्षवो धर्मजातं सर्वं मयेरितम् ॥ ४ ॥ मोक्षहेतुतयाऽऽस्वाद्यामृतवत्पर्युपासते ॥ यत्नेन श्रद्धयोपेता अनुतिष्ठन्ति मत्पराः ॥ ५ ॥ आश्रिता उत्तमां भक्तिं ब्रह्मैक्य-

ज्ञानलक्षणाम् ॥ भगवान्वासुदेवोऽहं येषां प्राप्यतया मतः ॥ ६ ॥ भक्तास्तेऽत्यन्तमन्निष्ठा ममात्यन्तप्रियाः सदा ॥ यस्माद्धर्ममिमं सम्यगनुतिष्ठन्प्रियो हरेः ॥ ७ ॥ तस्मान्मुमुक्षुणा यत्नात्संपाद्यः श्रद्धयैव सः ॥ तदेवं सगुणब्रह्माभिध्यानपरिपाकतः ॥ ८ ॥ ब्रह्मानुसंदधानस्याद्वेष्टृत्वादियुतस्य च ॥ मुमुक्षोर्ज्ञानसंसिद्ध्यै श्रवणाद्यनुतिष्ठतः ॥ ९ ॥ तत्त्वसाक्षात्कृतेर्मोक्षसिद्धिरस्ति निरङ्कुशा ॥ तद्धेतुश्रुतिवाक्यार्थान्वययोग्यो मुमुक्षुभिः ॥ १० ॥ तत्पदार्थोऽनुसंधेय इति सिद्धं हि मध्यमे ॥ भक्तियोगप्रधानोऽयं मध्यमः पूर्णतां गतः ॥ ११ ॥ २० ॥

यो ब्रह्मात्माक्षराख्यः शमदमनिरतैर्नित्यमध्यात्मविद्भिर्ध्येयोऽप्यत्यन्तसूक्ष्मस्तनुयुगमतिभिर्दुष्कराराधनोऽज्ञैः ।
भक्तिर्यस्योदितान्तर्हृदि सपदि जनान्मोचयेद्भ्रान्तिजन्याद्देहाद्यध्यासपाशात्स च वसतु मतौ कृष्ण एवेश्वरो मे॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते । युग्मोपासाविवेकोऽयं द्वादशः पूर्णतां गतः ॥

एतदध्यायगतटीकाश्लोकसंख्या ॥ १३९ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ ३२०० ॥

भा० टी०—अद्वेष्टा सर्वभूतानामित्यादिनाऽक्षरोपासकानां निवृत्तसर्वैषणानां संन्यासिनां परमार्थज्ञाननिष्ठानां धर्मजातमुपपाद्योपसंहरति—**ये त्विति** । ये तु इदमद्वेष्टा सर्वभूतानामित्यादिना यथोक्तं धर्मामृतं धर्मश्च तदमृतत्वसाधनत्वादमृतं नतु स्वरूपतः कष्टात्मकत्वात् साधनजातस्य, ये तु श्रद्दधानाः परया श्रद्धया युक्ताः सन्तो मत्परमा अहमेवाक्षरात्मा परमो निरतिशया गतिर्येषां ते पर्युपासतेऽनुतिष्ठन्ति मद्भक्ताः उत्तमां परमार्थज्ञानलक्षणां भक्तिमास्थितास्ते मे मम वासुदेवस्य परमात्मनोऽतिशयेन प्रियाः प्रियो हि ज्ञानिनोत्यर्थमहं स च मम प्रिय इति यत्सूचितं तत्प्रतिपाद्योपसंहृतं भक्तास्तेऽतीव मे प्रिया इति यस्माद्यथोक्तमिदं धर्मामृतमनुतिष्ठन् भगवतो वासुदेवस्यातिशयेन प्रियो भवति तस्माद्वासुदेवस्य विष्णोः प्रियं धाम जिगमिषुणा मुमुक्षुणा इदं धर्मामृतं यथावद्यत्नतोऽनुष्ठेयमिति वाक्यार्थः । एवं द्वादशाध्यायेन सोपाधिकध्यानपरिपाकान्निरुपाधिकमक्षरमनुसंदधानस्याद्वेष्टा सर्वभूतानामित्यादिधर्मविशिष्टस्य श्रवणाद्यावर्तनेन परमार्थज्ञानवतो मुख्याधिकारिणः साक्षान्मोक्षप्राप्तियोग्यत्वं निरूपयता सोपाधिकनिरुपाधिकस्तत्पदार्थः प्रदर्शितः ॥ २० ॥

यं संराध्य दुरत्ययां प्रकृतिमुन्मुच्याप्नुवन्त्यक्षरं ध्येयं ज्ञेयमनेकयोगविभवैर्युक्तं परं कारणम् ।
विश्वाकारमनाद्यनन्तममलं भक्तप्रियं माधवं देवेशं शुभमध्यषट्कविदितं तं तत्पदार्थं भजे ॥

सुधाधाराधारं विधुरमधराद्यैरघहरं धराधाराधारं निखिलजगदाधारमजरम् ।
निराधारं सारं जलजजमुखैर्ध्येयचरणं शिवं कृष्णं वन्दे सकलजनकं भक्तिसुलभम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीबालस्वामिपूज्यपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां द्वादशोऽध्यायः ॥ १२ ॥

प० टी०—अथोपसंहरन्नाह—**ये त्विति** । उक्तं धर्मसंबन्ध्यमृतं मोक्षसाधनत्वाद्यथोक्तं यथावदुक्तं श्रद्दधानाः श्रद्धावन्तो मत्परमा अहमेव परमो येषां ते तेऽतीव मे प्रियाः ॥ २० ॥

अथाध्यायतात्पर्यं तु ।

नानाविक्षेपविघ्नैरुपहतमनसालम्बशून्येन भूयो ह्यव्यक्तोपास्तिमेके विदधति सुचिरं लौकिकाचार्यतोऽन्यै ।
भक्तिं योगेश्वराणामपि परमगुरौ कुर्वते स्वात्मलब्ध्यै तत्क्लेशे तारतम्यं विशदमभिहितं द्वादशाध्यायमध्ये ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां परमार्थप्रपायां भक्तियोगो नाम द्वादशोऽध्यायः ॥१२॥

रा० टी०—अद्वेष्टा सर्वभूतानामित्यादावद्वेषादिकं यत्पृथक् प्रीतिमात्रसाधनमुक्तम् । स मे प्रियः स च

मे प्रिय इत्यादिना तत्सर्वं मिलितं यत्रास्ति स तु मेऽत्यन्तं प्रिय इति प्रागुक्तं पिण्डीकृत्योपसंहरति—ये त्विति । धर्म्यामृतं धारकत्वाद्धर्मो विष्णुस्तदुपासनाङ्गत्वादुपचारेण धर्मसाधनं धर्म्यम् अमृतशब्दितमुक्तिसाधनममृतं धर्म्यं च तदमृतं च धर्म्यामृतं यथोक्तमद्वेष्टेत्यादिनोक्तमद्वेषादिकं प्रीतिसाधनं समस्तं श्रद्दधानाः आस्तिक्यवन्तः मत्परमाः मदुत्तमताज्ञानिनः सन्तो ये पर्युपासते सम्यगनुतिष्ठन्ति ते भक्ताः अतीव मे प्रिया इत्यर्थः ॥ २० ॥

इति श्रीमद्गीतार्थसंग्रहे श्रीमद्राघवेन्द्रयतिकृते भक्तियोगो नाम द्वादशोऽध्यायः ॥ १२ ॥

---

इति द्वितीयं षट्कम् ।

# ‘ गुजराती ’ मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

## श्रीमद्भगवद्गीता

### Bhagavat=Geeta with 7 commentaries

१ प्रथमो गुच्छः-आनन्दगिरिकृतटीकासंवलितशांकरभाष्य-जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय-(माध्व) भाष्य-रामानुजभाष्य-पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी-नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ६-०-०.

## श्रीमद्भगवद्गीता

### Bhagavat=Geeta with 8 other commentaries 1st part

२ द्वितीयो गुच्छः । प्रथमषट्कम्-निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता-‘तत्त्वप्रकाशिका’ श्रीमधुसूदनसरस्वतीकृता-‘गूढार्थदीपिका’ श्रीशङ्करानन्दप्रणीता-‘तात्पर्यबोधिनी’ श्रीधरस्वामिकृता-‘सुबोधिनी’ श्रीसदानन्द विरचितः-‘भावप्रकाशः’ श्रीधनपतिसूरिविरचिता-‘भाष्योत्कर्षदीपिका’ दैवज्ञपण्डितश्रीसूर्यविरचिता-‘परमार्थप्रपा’ पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः-‘अर्थसंग्रहः’ इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, दृष्टा मा क्लेशिषतेति । पत्रसंख्या सार्धपञ्चशतानि । मूल्यम् रू. ३-१२-०.

द्वितीयो गुच्छः । द्वितीयं षट्कम् । षष्ठादिद्वादशाध्यायान्तम् । तत्त्वप्रकाशिकाद्यष्टटीकोपेतम् । मूल्यम् रु. २-१२-०

### Uttara=Geeta with a commentary

३ उत्तरगीता-गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मूल्यम् रू. ०-३-०.

## श्रीमद्वाल्मीकिरामायणम्

### Valmiki Ramayana with 3 well=known commentaries 1st part

४ बालकाण्डम्-सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर-शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च षड्भिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । मूल्यम् रू. ३-०-०.

### Stotra=muktahar containing 256 Stotras

५ स्तोत्रमुक्ताहारः-अस्मिन् २५६ स्तोत्राणि संगृहीतानि । यद्यपि सन्ति भूरीणि स्तोत्रपुस्तकानि मुद्रितानि भूरिभिस्तथापि न तेष्वियतां स्तोत्ररत्नानां संग्रहः । अस्माभिः पूर्वमप्रमुद्रितानां स्तोत्राणां पुस्तकानि काश्यादिक्षेत्रेभ्यो भूयसा प्रयासेन द्रविणव्ययेन च समासाद्य तेभ्यश्च प्रसादगुणयुक्तानि स्तोत्राणि संकलय्य संशोध्य च तानि भाविकजनानां कृतेऽत्र समावेशितानि तदाशास्महे श्रद्धावन्तो जनाः सफलयिष्यन्ति प्रयत्नमस्माकमस्मामिति । मूल्यम् रू.०-८-०.

### Samskar Mayukha

६ संस्कारमयूखः—मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । अत्र संस्काराणां स्वरूपं कालः इतिकर्तव्यता वर्णधर्मा आश्रमधर्माश्च विस्तरतो मूलवचनोपन्यासपुरःसरं निरूपिताः । मूलवचनानि चाप्रतिपत्तिविप्रतिपत्तिसंभवानास्थलेषु क्रमेण पर्यायशब्दप्रदर्शनेन मीमांसकाभिमतन्यायानुसरणेन च व्याख्यातानि । अन्ते कातीयसूत्रानुसारिप्रयोगाश्च दत्ताः । पूर्वं वाराणस्यादिषु मुद्रितोऽप्ययं वर्णपदवाक्यभ्रंशविपर्ययादिदोषप्रचुरतयाऽप्रविभक्तविषयतया च भृशं दुर्बोधो विपरीतबोधकरश्चासीत् । अस्माभिस्तु ग्रन्थकृतैव पुनः शोधितस्य वर्धितस्य चास्य ग्रन्थस्य पुस्तकमासाद्य विषयांश्च प्रविभज्य शोधने च महान्तमायासमास्थाय मुद्रितः । मू. रू. ०-१२-०

### Manu Smriti

७ मनुस्मृतिः—कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. १-८-०

### Vidura=Niti with a commentary

८ विदुरनीतिः-संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ०-४-०.

**Vedanta Rahasya**

९ वेदान्तरहस्यम्–वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम्. रू. ०–१–०.

**Vishishtadvaita=Mata=Vijaya=Vada**

१० विशिष्टाद्वैतमतविजयवादः–नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ०–१–०.

**Kumar Sambhav with 3 known commentaries**

११ कुमारसंभवं महाकाव्यम्–कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्यालंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. १–४–०.

**Raghuvamsha with a commentary by Mallinatha**

१२ रघुवंशमहाकाव्यम्–श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मूल्यम् रू. ०–१०–०.

## कारिकावली

**Karikavalee with Siddhanta=Muktavali and other notes**

१३ सिद्धान्तमुक्तावलीसहिता–न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित–जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता । सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मूल्यम्. रू. ०–७–०.

**Vaisheshika Darshana with several commentaries**

१४ वैशेषिकदर्शनम्–श्रीशंकरमिश्रकृत–वैशेषिकसूत्रोपस्कार–जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत–विवृति–चन्द्रकान्तभट्टाचार्यप्रणीत–भाष्यसहितम् । मू. रू. २–०–०.

**Vadartha Samgriha**

१५ वादार्थसंग्रहः (प्रथमो भागः)—अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ०–६–०

---

**Chandrakanta**

चन्द्रकान्त ( वेदान्त ज्ञानका सुखग्रन्थ. ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "चन्द्रकान्त" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराथी' पत्रके मुख्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासार-विवेक–प्रवीण, वैश्यकुलभूषण श्रीमान् शेठ इच्छाराम सूर्यराम देसाईके शुद्ध हृदयमें दैदिप्यमान प्रबोध-रत्न–भाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रु. २–८

---

## प्रारब्धमुद्रणा ग्रन्थाः ।

**Taittiriya=Upanishat**

१६ तैत्तिरीयोपनिषत्–श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्याप्रकाशेन च सहिता ।

**Mimansa Nyaya Bindu**

१७ मीमांसान्यायबिन्दुः—वैद्यनाथकृतः पूर्वमीमांसाग्रन्थः ।

**Laghu Shabdendushekhar**

१८ लघुशब्देन्दुशेखरः—परिष्कारटिप्पनीयुतः ।

**Prayashchittendushekhar**

१९ प्रायश्चित्तेन्दुशेखरः—नागेशभट्टकृतः ।

**Maha Bhagavata**

२० महाभागवतम्—देवीपुराणम् ।

'गुजराती' मुद्रणालयाधिपतिः ।
कोट खासन बिल्डिंग–मुंबई.

# SHRIMAD-BHAGVAD-GEETA

## CONTAINING EIGHT COMMENTARIES

KESHAVA KASHMIRI BHATTACHARYA'S *Tattva-Prakashika*, MADHU-SUDANA SARASVATI'S *Gudhartha-Deepika*, SHANKARANANDA'S *Tatparya-Bodhini*, SHREEDHARA SWAMI'S *Subodhini*, SADANANDA'S *Bhava-Prakasha*, DHANAPATI SURI'S *Bhashyotkarsha-Deepika*, DAIVAJNYA PANDITA SURYA'S *Paramartha-Prapa*, AND RAGHAVENDRA'S called *Artha-Samgraha*.

**Third Part of the Second Series**

Containing the Last Six Adhyayas

EDITED BY

**DINKER VISHNU GOKHALE**, B. A.



Printed and Published by Manilal Itcharam Desai at

**THE GUJARATI PRINTING PRESS,**

SASSOON BUILDINGS, CIRCLE, FORT,

BOMBAY.



SHAKA 1835 A. D. 1915

**Price Rs. 3=8=0**

# श्रीमद्भगवद्गीता ।

केशवकाश्मीरिभट्टाचार्यकृत–तत्त्वप्रकाशिका–मधुसूदनसरस्वतीकृत–गूढार्थदीपिका–शंकरानन्दकृत–तात्पर्यबोधिनी–श्रीधरस्वामिकृत–सुबोधिनी–सदानन्दकृत–भावप्रकाश–धनपतिसूरिकृत–भाष्योत्कर्षदीपिका–दैवज्ञपण्डितसूर्यकृत–परमार्थप्रपा–राघवेन्द्रकृता–ऽर्थसंग्रहे–त्यष्टटीकोपेता ।

द्वितीयगुच्छस्य तृतीयो भागः ।

त्रयोदशाध्यायमारभ्यासमाप्ति ।

दिनकर विष्णु गोखले, बी. ए.,
इत्यनेन संशोधितः

मुम्बय्यां

'गुजराती' मुद्रणालयाधिपतिना स्वीये मुद्रणागारे मुद्रयित्वा प्रकाशितः ।

शकः १८३५ खिस्ताब्दः १९१५.

मूल्यं सार्धं रूपकत्रयम् ।



तत्सद्ब्रह्मणे नमः ।

तत्त्वप्रकाशिकाद्यष्टटीकोपेता

# श्रीमद्भगवद्गीता ।

## तृतीयं षट्कं ( ज्ञानकाण्डम् )



### त्रयोदशोऽध्यायः ।

**अर्जुन उवाच–प्रकृतिं[1] पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ॥**

रा० टी०–पूर्वषट्कद्वयोक्तार्थसंग्रहपरोऽयमध्यायः । तथाहि यत्प्रथमषट्के त्रैगुण्यविषया वेदा इत्यादिना प्राचुर्येण ज्ञानसाधनमाषष्ठसमाप्तेरुक्तम् । यच्च तत्र द्वितीयेऽध्याये न त्वेवाहमित्यादिनाऽनादिनित्यत्वादिना जीवस्वरूपमुक्तं । यच्च द्वितीयषट्के भगवत्स्वरूपमुक्तं यदपि सप्तमे भूमिराप इत्यादिना क्षेत्रशब्दितं भगवदावासस्थानमुक्तं तद्विकीर्णतयोक्तं सर्वं बुद्ध्यारोहार्थं संक्षिप्यास्मिन्नध्याये प्रश्नपूर्वकं प्रदर्श्यते–प्रकृतिमित्यादिना । पुरुषं जीवम् । ज्ञानं ज्ञानसाधनम् ॥ १ ॥

**श्रीभगवानुवाच–इदं शरीरं कौन्तेय क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥ १ ॥**

त० टी०–तदेवं यत्प्राप्त्यसाधारणोपायस्याङ्गभूतं प्राप्तुः प्रत्यगात्मनो याथात्म्यं सपरिकरं ज्ञानयोगकर्मयोगलक्षणनिष्ठाद्वयसहितं प्रथमषट्के निरूपितं, तस्य परमप्राप्यस्य भगवतस्तत्त्वयाथात्म्यं तन्माहात्म्यैश्वर्यज्ञानपूर्वकोऽङ्गी तदनन्यभक्तियोगश्च मध्यमे षट्के निरूपितः । इदानीं षट्कद्वयोदितप्रकृतिपुरुषपरमात्मनां स्वरूपस्वभावसंबन्धयाथात्म्यविवेकं तदधिकारिनिर्णयाय दैवासुरसंपद्विभागं श्रद्धाहारयज्ञतपोदानत्यागकर्तृबुद्ध्यादीनां गुणतस्त्रैविध्यं दैवींसंपदमाश्रितानां सात्त्विकानन्यभक्तानां ज्ञानवैराग्यवतां पराभक्त्यैव भगवत्प्राप्तिलक्षणं निरतिशयानन्तफलं च निरूपयितुमन्तिमः षट्क आरभ्यते । तत्र तेषामहं समुद्धर्ता मृत्युसंसारसागरादिति पूर्वाध्यायोक्तस्वभक्तसंसारोद्धरणस्योपायं ससाधनं प्रकृतिपुरुषविवेकं दर्शयितुं त्रयोदशाध्यायारम्भः । तत्र तावत् अपरेयमितस्त्वन्यां प्रकृतिं

---

[1] राघवेन्द्रयतिवर्जं सर्वे व्याख्यातार इमं प्रक्षिप्तं मत्वा न व्याचख्युः ।

विद्धि मे परामित्युक्तयोः परापरशक्तिरूपयोः संयुक्तयोरपि शरीरात्मनोः स्वरूपं विवेचयन् श्रीभगवानुवाच-इदं शरीरमिति । इदं भूतेन्द्रियसंघातरूपं चेतनभोगायतनं देवोऽहं मनुष्योऽहं स्थूलोऽहं कृशोऽहमित्यादिनाऽऽत्मतादात्म्येन प्रतीयमानमपि भोक्तुरात्मनो विलक्षणं शीर्यते इति शरीरं हे कौन्तेय क्षेत्रमित्यभिधीयते । सस्यस्येव कर्तुर्भोक्तुरात्मनः शुभाशुभकर्मणां तद्भोगस्य चोत्पत्तिस्थानमभिधीयते । शरीरयाथात्म्यविद्भिरिति शेषः । एतद्भूतादिसंघातरूपं ममेदमिति यो वेत्ति आत्मनो भेदेन जानाति-तं क्षेत्रज्ञ इति तद्विद आत्मयाथात्म्यज्ञाः प्राहुः । क्षेत्रात् कृषीवलवत् क्षेत्रज्ञोऽत्यन्तविलक्षण इति प्रकर्षेणाहुरित्यर्थः । यद्यप्यतिप्राकृताः स्थूलोऽहं कृशोऽहं मनुष्योऽहमिति शरीराभेदेनात्मानमनुसंदधते तथाऽपि मम देहे सुखं मम देहे दुःखं मम देहे पीडा ममेदं शरीरमिति भेदेनापि बहवोऽनुसंदधाना दृश्यन्तेऽतस्तद्विद इत्युक्तं, तस्मादतिमूर्खाणां देहात्मनोर्विवेकाभावेऽपि शास्त्राधिकारिणां तद्विवेकोऽस्त्येव ॥ १ ॥

म० टी०—'ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं ज्योतिः किंचन योगिनो यदि परं पश्यन्ति पश्यन्तु ते । अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं कालिन्दीपुलिनेषु यत् किमपि तन्नीलं महो धावति ॥' प्रथममध्यमषट्कयोस्तत्त्वंपदार्थावुक्तावुत्तरस्तु षट्को वाक्यार्थनिष्ठः सम्यग्धीप्रधानोऽधुनारभ्यते । तत्र तेषामहं समुद्धर्ता मृत्युसंसारसागराद्भवामीति प्रागुक्तं, न चात्माज्ञानलक्षणान्मृत्योरात्मज्ञानं विनोद्धरणं संभवति, अतो यादृशेनात्मज्ञानेन मृत्युसंसारनिवृत्तिर्येन च तत्त्वज्ञानेन युक्ता अद्वेष्टृत्वादिगुणशालिनः संन्यासिनः प्राग्व्याख्यातास्तदात्मतत्त्वज्ञानं वक्तव्यम् । तच्चाद्वितीयेन परमात्मना सह जीवस्याभेदमेव विषयीकरोति, तद्भेदभ्रमहेतुकत्वात् सर्वानर्थस्य । तत्र जीवानां संसारिणां प्रतिक्षेत्रं भिन्नानामसंसारिणैकेन परमात्मना कथमभेदः स्यादित्याशङ्कायां संसारस्य भिन्नत्वस्य चाविद्याकल्पितानात्मधर्मत्वान्न जीवस्य संसारित्वं भिन्नत्वं चेति वचनीयं, तदर्थं देहेन्द्रियान्तःकरणेभ्यः क्षेत्रेभ्यो विवेकेन क्षेत्रज्ञः पुरुषो जीवः प्रतिक्षेत्रमेक एव निर्विकार इति प्रतिपादनाय क्षेत्रक्षेत्रज्ञविवेकः क्रियतेऽस्मिन्नध्याये । तत्र ये द्वे प्रकृती भूम्यादिक्षेत्ररूपतया जीवरूपक्षेत्रज्ञतया चापरपरशब्दवाच्ये सप्तमाध्याये सूचिते तद्विवेकेन तत्त्वं निरूपयिष्यन् श्रीभगवानुवाच—इदमिति । इदं इन्द्रियान्तःकरणसहितं भोगायतनं शरीरं हे कौन्तेय क्षेत्रमित्यभिधीयते, सस्यस्येवास्मिन्नसकृत्कर्मणः फलस्य निर्वृत्तेः । एतद्यो वेत्ति अहं ममेत्यभिमन्यते तं क्षेत्रज्ञमिति प्राहुः, कृषीवलवत्तत्फलभोक्तृत्वात् तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकविदः । अत्र चाभिधीयत इति कर्मणि प्रयोगेण क्षेत्रस्य जडत्वात् कर्मत्वं क्षेत्रज्ञशब्दे च द्वितीयां विनैवेतिशब्दमाहरन् स्वप्रकाशत्वात्कर्मत्वाभावमभिप्रैति । तत्रापि क्षेत्रं यैः कैश्चिदप्यभिधीयते न तत्र कर्तृगतविशेषापेक्षा क्षेत्रज्ञं तु कर्मत्वमन्तरेणैव विवेकिन एवाहुः स्थूलदृशामगोचरत्वादिति कथयितुं विलक्षणवचनव्यक्त्यैकत्र कर्तृपदोपादानेन च निर्दिशति भगवान् ॥ १ ॥

शं० टी०—मुमुक्षूणां सत्त्वशुद्ध्यर्थमीश्वरोपास्तिरवश्यं कर्तव्येति तेषां मन्दातिमन्दात्यन्तमन्दप्रज्ञावतामुपासनाभेदं चोपास्त्या परिशुद्धात्मनामक्षरोपास्तिर्विदेहमुक्त्यै कर्तव्येति सूचयितुं श्रवणादेरुत्तरोत्तरस्योत्कृष्टत्वं च प्रतिपाद्य ब्रह्मात्मैकत्वविज्ञानेनानात्मबन्धनिर्मुक्तानां जीवन्मुक्तानां ब्रह्मविदामद्वेष्टृत्वादिकं लक्षणं साधकानां तु तदेव साधनमनुष्ठातव्यमिति बोधयित्वाधुना जिज्ञासोर्मोक्षैककामस्य कथं ब्रह्मात्मैकत्वविज्ञानं किं ब्रह्म कस्त्वात्मा कः पुनरनात्मा तत्कृतो बन्धश्च कः स कथं ज्ञानेन निवर्तते किं ज्ञानं ज्ञानसाधनं च कथं वा जीवन्मुक्तिश्चेत्याकाङ्क्षायां क्षेत्रक्षेत्रज्ञयोरनात्मात्मशब्दार्थयोः प्रकृतिपुरुषयोर्विवेचनं विविक्तस्यात्मनः क्षेत्रज्ञस्य ब्रह्मणैकत्वं विविक्तयोरपि क्षेत्रक्षेत्रज्ञयोर्वैलक्षण्यज्ञानदार्ढ्यार्थं पुनः पुनर्विवेचनं प्रकृतेर्बन्धकत्व

मात्मनोऽप्यध्यासकृतो बन्ध इति बोधयितुमात्मनोऽद्वितीयत्वं च सम्यक् प्रतिपादयितुं त्रयोदशाध्याय आरभ्यते। तत्रादौ क्षेत्रज्ञं क्षेत्रात् संक्षेपेण विविच्य विविक्तस्यात्मनो ब्रह्मणैकत्वं बोधयितुं श्रीभगवानुवाच—इदमिति। सत्त्वादीनां त्रयाणां गुणानां साम्यावस्थालक्षणा या स्वपरा प्रकृतिः सैव भोक्तः पुरुषस्यादृष्टद्वारे-श्वरप्रेरणया गुणवैषम्यं प्राप्य सुखदुःखानुभूतेर्बन्धस्य च मोक्षस्यापि च साधनतया स्व स्मैव देहेन्द्रियप्राण-मनोबुद्ध्यादिरूपेण रागद्वेषादिरूपेण शमदमादिरूपेण च शब्दादिविषयरूपेणापि जागराद्याकारेणापि च बहुधा परिणमते तदेवेदं कार्यकरणसंघातलक्षणं प्रत्यक्षेणानुभूयमानं शरीरं क्षेत्रं रागद्वेषादिदोषविशिष्टः पुमान् क्षीयतेऽनेनेति वा, क्षितेः क्षयात्संसारात्मकादनर्थाच्छमादियुक्तं पुरुषं त्रायत इति वा, सर्वदा दीपशि-खावत् स्वयं क्षिणोतीति वा, सुखदुःखादिफलोत्पादने क्षेत्रवदाचरतीति वा, क्षेत्रमिति क्षेत्रशब्देनाभिधीयत विद्वद्भिरित्यर्थः। प्रकृतिः प्राकृतं च दृश्यजातं सर्वं क्षेत्रं तदेवेदं शरीरमिति क्षेत्रशब्देनानात्मस्वरूपं निरू-प्याथात्मस्वरूपं बोधयितुमाह—**एतदिति**। एतदनुभयमानं शरीरलक्षणं क्षेत्रं यो वेत्ति स्वाभाविकेन ज्ञानेना-पादतलमस्तकं विषयीकृत्याहमिति गुरूपदेशजन्येन च स्वस्य विषयभूतं बुद्ध्यादिस्थूलान्तमिदं शरीरमिदं चक्षुरयं प्राणोऽयं शब्दोऽयं गन्ध इति यः प्रत्यक्षेणेदंशब्दप्रत्ययार्थं कृत्स्नं दृश्यजातं विजानाति तं क्षेत्र-स्यानात्मनो दृश्यजातस्य वेदितारमहंपदप्रत्ययार्थं चेतनं पुरुषं क्षेत्रज्ञ इति क्षेत्रं प्रकृतिं प्राकृतं च सर्वं दृश्यं स्वतोऽभिन्नं जानातीति क्षेत्रज्ञ आत्मेति प्राहुः बहिरन्तः सर्वत्र दृश्यं सर्वं प्रत्यक्षादिप्रमाणैः साक्षाद्व्य-वधानेन विना च यो विजानाति स एव क्षेत्रज्ञ आत्मेति तद्विदः आत्मस्वरूपज्ञाः सन्तो वदन्ति। यद्वा तयोः क्षेत्रक्षेत्रज्ञयोः स्वरूपं ज्ञेयत्वज्ञातृत्वप्रकाश्यत्वप्रकाशकत्वविकारित्वाविकारित्वादिलक्षणैः परस्परविलक्षणं ये विजानन्ति ते तद्विद आत्मानात्मस्वरूपज्ञा वसिष्ठादयो ज्ञेयं सर्वमनात्मा तज्ज्ञाता त्वात्मैवाहंपदार्थ इति निगद-न्तीत्यर्थः। ननु कार्यकरणसंघातव्यतिरिक्तो न कश्चिदहंपदार्थो ज्ञातोपलभ्यते कथमिदं शरीरं क्षेत्रमेतद्यो वेत्ति स क्षेत्रज्ञ इत्युच्यते प्रत्यक्षादिप्रमाणविरोधात्। अहं गच्छाम्यहं भुञ्ज इति गन्तव्यभोक्तव्यपदार्थज्ञातृत्वं क्रियाकरणं च संघातस्यैव दृश्यते अयमेतस्य पुत्रो भवति एतत्सदृशत्वादित्यनुमानेनोपमानेन चेदंशब्दार्थः संघात एव भवति आयुराशास्ते यजमानोऽसाविति संघातस्यैवायुराद्याशासा श्रूयते असावित्यदःशब्दस्य प्रत्यक्षार्थवाचकत्वादिति चेद्भवानत्र प्रष्टव्यः। ज्ञातात्र देहो वा इन्द्रियगणो वा प्राणो वा मनो वा बुद्धिर्वा अहंकारो वा उत समुदायो वेति। नाद्यः स्वापपारवश्यादौ देहस्य ज्ञानादर्शनात् पादे मे वेदना शिरसि मे सुखमिति देहस्य सुखदुःखज्ञातुर्देहान्यत्वेनोपलभ्यमानत्वाच्च। न द्वितीयः दृष्टिर्मे मन्दा वाङ्मे स्पष्टेति तत्सौ-ष्ठवासौष्ठवपरिज्ञातुस्तद्भिन्नत्वेनावगमात्। न तृतीयः निद्रादौ स्वपरज्ञानादर्शनात्। न चतुर्थो, न पञ्चमो, नापि षष्ठश्च। मनो मे व्यथितं बुद्धिर्मे चपला दुष्टो मेऽहंकार इति मनआदीनां स्वान्यज्ञेयत्वावगमात् यज्ज्ञेयं तज्जडमिति ज्ञेयस्य घटादेर्जडत्वदर्शनात् जडस्य मनआदेर्ज्ञातृत्वासंभवात्, तेषां तु तथात्वे घटस्यापि तथात्वं स्याज्ज्ञेयत्वस्योभयसाधारण्यात्। नैव च सप्तमः, अवयवानामचेतनत्वे त्ववयविनोऽपि काष्ठभारवदचेतनत्वा-ज्ज्ञातृत्वानुपपत्तेः। तर्हि चैत्रेण ज्ञातस्य मैत्रस्याप्यचेतनत्वं प्रसज्येतेति चेत्तदिष्टापत्तेः। चैत्रेण मैत्रशरीरस्यैव ज्ञातत्वाच्छरीरादेरचेतनत्वस्य साधितत्वान्नास्माकमेतदनर्थाय भवति किंच देहादेर्ज्ञाता देहादिभ्यो भिन्न एव भवति ज्ञातृत्वात् घटज्ञातृवदित्यादियुक्तिभिः चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टेत्यादिश्रुतिभिश्च सम्यग्विचार्यमाणे क्षेत्रस्यानात्मनस्तद्धर्माणां तदवस्थानां च ज्ञाता क्षेत्राद्भिन्न एव भवति न तु क्षेत्रं देहेन्द्रियादिलक्षणं तथात्वे ममेदं शरीरं चक्षुरिति शरीरादिषु स्वभिन्नत्व-ज्ञानं न स्यात्। स्वभिन्नत्वज्ञानस्य विवेकिप्रसिद्धत्वात् क्षेत्रात क्षेत्रज्ञो भिन्न एव। तत एवोच्यते भगवता सर्वज्ञेन 'इदं शरीरं क्षेत्रम्'एतद्यो वेत्ति स क्षेत्रज्ञ इति। त्वदुक्तं प्रत्यक्षादिप्रमाणमविवेकिविषयमतो न कश्चिदत्र

विरोधः । ननु क्षेत्राद्व्यतिरिक्तः क्षेत्रज्ञो नाम क्षेत्रज्ञाता अयमिति न कश्चिदुपलभ्यते उपलम्भाभावात्तदभाव एवेति चेद्भवानत्र प्रष्टव्यः । किं क्षेत्राभाव उच्यते उत क्षेत्रज्ञाभाव इति । नाद्यः, प्रत्यक्षेणोपलभ्यमानस्य क्षेत्रस्याभावकथनायोगात् । न द्वितीयः, क्षेत्रोपलब्धुः क्षेत्रज्ञस्याभावे इदं शरीरमयं घटः पटोऽयमित्यादि दृश्यप्रत्ययाभावप्रसङ्गात् सूर्याभाववत् क्षेत्रज्ञाभावे जगदान्ध्यं प्रसज्येत, क्षेत्रज्ञेन खलु सूर्यवत् स्वमहसा महदादिस्थूलान्तं दृश्यजातं बहिरन्तर्व्याप्येदं सर्वं भास्यते इदमिदमिति सर्वं ज्ञायते च अन्यथा त्वान्तरमहदादीनां बहिर्घटादिपदार्थानां सुखादिप्रत्ययानां जाग्रदाद्यवस्थानां च स्वरूपविवेकविज्ञानाभावप्रसङ्गात् प्रत्यक्षादिसर्वप्रमाणानामहमादिप्रमेयानां च सर्वेषां प्रामाण्यं यतः सिध्यति तदभावः केन संपादयितुं शक्यते तदभावे स्वाभावप्रसङ्गात् । ननु चिदाभासोऽस्त्येव प्रमाता सर्वप्रमाणानां प्रामाण्यनिर्वोढेति चेन्न । तस्यापि विकार्यन्तःपातित्वेन सर्वज्ञत्वानुपपत्तेः । अन्तःकरणविकारैः सार्धं क्षणे क्षणे विकृतिं गच्छतश्चिदाभासस्यापि विकारित्वात्तद्भावानुसारित्वाच्च जाग्रदाद्यवस्थास्वस्य सर्वस्य व्यवहारस्य विज्ञानायोगात् । ननु विश्वादयः सन्त्येवाऽवस्थाविज्ञातार इति चेन्न क्षेत्रज्ञानेकत्वप्रसंगात्, एतद्यो वेत्तीत्येकवचनेन क्षेत्रज्ञैकत्वश्रवणादभिमानस्य विकारित्वाज्जाग्रदाद्यवस्थाभिमानवतां विश्वादीनां विकारित्वेन नित्यत्वाऽसंभवादेकस्यावस्थात्रितयज्ञानानुपपत्तेः, यो जागरमन्वभूवं यः स्वप्नमद्राक्षं यः सुखमस्वाप्सं सोऽहं तिष्ठामीति अवस्थाज्ञातुर्विश्वादिभ्यो भिन्नत्वावगमात् तेषामविकारित्वं च न सिद्धयति तदसिद्धौ अवस्थात्रितयज्ञानं च न सिध्यति, अतस्तेभ्यो भिन्नोऽविकारी नित्यश्चैकश्चेतनश्च क्षेत्रस्य सर्वस्यापि ज्ञाता क्षेत्रज्ञ आत्मैवेति सिद्धम् । नन्वात्मनः क्षेत्रज्ञत्वमस्तु तथाप्ययमिति स्वयं क्षेत्रज्ञाता नोपलभ्यते तत्कथमिति चेदुच्यते ज्ञात्रन्तराभावात् तदुपलम्भाभावः ज्ञात्रन्तराभ्युपगमे त्वनवस्थाप्रसंगात् क्षेत्रज्ञस्यायमिति ज्ञातत्वे क्षेत्रभावापत्त्या क्षेत्रज्ञत्वं हीयेत अनित्यत्वाचेतनत्वादिदोषश्च स्यात् 'एको देवः' इति 'एक एव साक्षी स्वप्रकाशः' इति "अजो नित्यः शाश्वत" इत्यादि श्रुतिविरोधप्रसक्तेश्च । अत आत्मा घटादिवन्न ज्ञानविषयः । ननु "तरति शोकमात्मवित्" इत्यात्मवेदनवतः शोकतरणं श्रूयते कथमयमस्मीत्यात्मन्यविज्ञाते शोकतरणं विदुषः सिध्येदतोऽयमित्यात्मा कथं ज्ञायत इति चेच्छ्रौतेनैव ज्ञानेनात्मा ज्ञातव्यस्तत्कथमिति चेदुच्यते, "नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञानघनं न प्रज्ञं नाप्रज्ञमदृश्यमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इति श्रुत्या नान्तःप्रज्ञमित्यादिना तैजसविश्वादिभ्यो भिन्नत्वं तेषामनात्मत्वं च प्रतिपाद्य अदृश्यमित्यहमादिसर्वदृश्यभिन्नत्वव्यवहार्यमिति कर्मेन्द्रियाविषयत्वमग्राह्यमिति ज्ञानेन्द्रियाविषयत्वमलक्षणमित्यनुमानागम्यत्वमचिन्त्यमिति मनसोऽप्यगोचरत्वमव्यपदेश्यमिति वागविषयत्वमेकात्मप्रत्ययसारमिति चिदेकरसत्वं स्वगतभेदराहित्यं च प्रपञ्चोपशममिति विजातीयभेदराहित्यमद्वैतमिति सजातीयभेदराहित्यं च शिवमिति आनन्दघनत्वं चतुर्थमिति स्वाभासविश्वादित्रितयमपेक्ष्य तुर्यत्वं सर्वदृश्यवैलक्षण्यं च सम्यगात्मनः प्रतिपाद्य य एवं सर्वदृश्यविलक्षणश्चिदानन्दैकरसः स एवात्मा स्वलक्षणलक्षितः सोऽयमहमस्मीति विद्वद्भिः स्वात्मना ज्ञेयो ज्ञातव्य इति बोध्यते अनेन श्रौतेन ज्ञानेनाविद्यातत्कार्यसंबन्धरहितमात्मानं स्वं ज्ञात्वा विद्वान् संसारान्मुक्तो भवत्यतः सर्वदृश्यविलक्षणत्वं क्षेत्रज्ञत्वं चात्मनो लक्षणमिति सिद्धम् ॥ १ ॥

श्री० टी०–'भक्तानामहमुद्धर्ता संसारादित्यवादि यत् ॥ त्रयोदशेऽथ तत्सिद्ध्यै तत्त्वज्ञानमुदीर्यते' ॥ १ ॥ तेषामहं समुद्धर्ता मृत्युसंसारसागरात् भवामीति पूर्वं प्रतिज्ञातम् । न चात्मज्ञानं विना संसारादुद्धरणं संभवतीति तत्त्वज्ञानोपदेशार्थं प्रकृतिपुरुषविवेकाध्याय आरभ्यते तत्र यत्सप्तमेऽध्याये अपरा परा चेति प्रकृतिद्वयमुक्तं तयोरविवेकाज्जीवभावमापन्नस्य चिदंशस्यायं संसारः याभ्यां च जीवोपभोगार्थमी-

श्वरः सृष्ट्यादिषु प्रवर्तते तदेव प्रकृतिद्वयं क्षेत्रक्षेत्रज्ञशब्दवाच्यं परस्परं विविक्तं तत्त्वतो निरूपयिष्यन् श्रीभगवानुवाच—इदमिति । इदं भोगायतनं शरीरं क्षेत्रमित्यभिधीयते संसारस्य प्ररोहभूमित्वात् एतद्यो वेत्ति अहं ममेति मन्यते तं क्षेत्रज्ञ इति प्राहुः। कृषीवलवत्तत्फलभोक्तृत्वात् तद्विदः क्षेत्रक्षेत्रज्ञयोर्विवेकज्ञाः ॥ १ ॥

स० टी०—मुमुक्षूणां वित्तं स्थिरचरनिमित्तं स्थिरपदं महामायाचित्तं श्रुतिहृदयमद्वैतचरितम् ॥ अखण्डानन्दं श्रीपतिमजमनन्तं यदुपतिं मुकुन्दं नन्दाङ्के विलसितमहं नौमि शतशः ॥ १ ॥ तदेवं मध्यमैः षड्भिरध्यायैर्भगवान् हरिः ॥ तत्पदार्थोऽनुसंधेयो मुक्तये चेत्युदीरितम् ॥ २ ॥ अन्तःकरणसंशुद्धिर्विवेकादिचतुष्टयम् ॥ ज्ञानं मोक्षो हरेर्भक्त्या सिद्ध्यत्येतच्चतुष्टयम् ॥ ३ ॥ हरिभक्तिं विना कर्म न स्याद्धीशुद्धिकारणम् ॥ न वा सिद्ध्येद्विवेकादि न ज्ञानं नापि मुक्तता ॥ ४ ॥ दुरत्यया हरेर्माया सर्वव्यामोहकारिणी ॥ हरिभक्तिं समाश्रित्य ततुं शक्या मुमुक्षुभिः ॥ ५ ॥ हरिरेव जगत्सर्वं हरेर्भिन्नं न किंचन ॥ तस्मात्सच्छ्रद्धयोपेतैरुपास्यो मुक्तये हरिः ॥ ६ ॥ इत्थं निरूपितं षड्भिरध्यायैर्मध्यमैरिति ॥ उपासनाप्रधानोऽसौ काण्डः संपूर्णतां गतः ॥७॥ तथा प्रागादिषट्केन त्वंपदार्थो निरूपितः ॥ इदानीमुत्तरः षट्कोऽखण्डवाक्यार्थगोचरः ॥ ८ ॥ सम्यग्बोधप्रधानोऽयं सम्यगारभ्यते ततः ॥ प्रत्यगात्मप्रमादाख्यान्मृत्योरुद्धरणं नृणाम् ॥ ९ ॥ प्रत्यगात्मावबोधेन विना नास्तीति निश्चितम् ॥ यादृगात्मावबोधेन मृत्योरुद्धरणं भवेत् ॥ १० ॥ यादृग्बोधयुताः पूर्वं जीवन्मुक्ततयेरिताः ॥ तादृगात्मावबोधोऽत्र वक्तव्यो बन्धमुक्तये ॥ ११ ॥ स बोधो ब्रह्मणा साकं जीवस्याभेदमेव च ॥ विषयीकुरुते यस्मात्तद्विदानर्थकारिणी ॥ १२ ॥ तत्र संसारिणो जीवाः प्रतिक्षेत्रं विलक्षणाः ॥ कथमेकेन शुद्धेन तेषामैक्यं परात्मना ॥ १३ ॥ इत्याशङ्कापनोदाय भगवान्परमेश्वरः ॥ संसारित्वं च भिन्नत्वमविद्याकल्पितं परे ॥ १४ ॥ शुद्धा हि वस्तुतो जीवाः परमात्मस्वरूपिणः ॥ एवं हृदि निधायादौ क्षेत्रेभ्योऽस्य विवेचनम् ॥ १५ ॥ देहेन्द्रियादिरूपेभ्यः क्षेत्रज्ञस्य करोत्यजः ॥ विवेके सति जीवोऽयं क्षेत्रज्ञः पुरुषः परः ॥ १६ ॥ एक एव प्रतिक्षेत्रं निर्विकारोऽद्वयात्मकः ॥ एतन्निरूपणायैव क्षेत्रक्षेत्रज्ञयोर्द्वयोः ॥ १७ ॥ विवेकः क्रियते ह्यस्मिन्नध्याये हरिणा स्वयम् ॥ सप्तमे प्रकृती द्वे प्राक्परापरगिरेरिते ॥ १८ ॥ भूम्यादिक्षेत्ररूपोक्ता क्षेत्रज्ञो जीवशब्दितः ॥ तत्त्वं तयोर्विवेकेन निरूपयितुमीश्वरः ॥ १९ ॥ उवाच भ्रान्तितिमिरविध्वंसनकरं वचः ॥ इदं भोगालयं स्थूलं सेन्द्रियं समनो जडम् ॥ २० ॥ शरीरं दृश्यमनृतं क्षेत्रमित्यभिधीयते ॥ असकृत्कर्मणां सिद्धिः सस्यानामिव देहके ॥ २१ ॥ अहंममाभिमानेन क्षेत्रं यो वेत्ति सर्वतः ॥ तं क्षेत्रज्ञ इति प्राहुः क्षेत्रक्षेत्रज्ञवेदिनः ॥ २२ ॥ अभिधीयत इत्यत्र कर्मण्येव प्रयोगतः ॥ क्षेत्रस्य जाड्यात्कर्मत्वमस्तीत्येवं प्रदर्शितम् ॥ २३ ॥ विना द्वितीयं क्षेत्रज्ञ इतीत्यत्रेतिशब्दतः ॥ क्षेत्रज्ञे स्वप्रकाशत्वात्कर्मत्वाभाव इष्यते ॥ २४ ॥ अतः क्षेत्राभिधाने हि न विशेषोऽस्ति कर्तृगः ॥ स्थूलं वस्तु जडं क्षेत्रं यैः कैश्चिदभिधीयते ॥ २५ ॥ क्षेत्रज्ञं स्वप्रकाशत्वाद्विना कर्मत्वमेव तम् ॥ सम्यग्विवेकिनः प्राहुरज्ञान्यविषयत्वतः ॥ २६ ॥ १ ॥

भा० टी०—यो मायां जगदेकमोहनकरीमाश्रित्य सृष्ट्वालयं देहं जीवतयानुविश्य मतिभिः संयाति नानात्मताम् । वन्दे तं परमार्थतः सुखघनं ब्रह्माद्वयं केवलं कृष्णं वेदशिरोभिरेव विदितं श्रीशंकरं शाश्वतम् ॥ १ ॥ आकाशस्य यथा घटादिभिरसौ भेदो न चास्त्यर्थतः एवं ब्रह्मणि निर्गुणेऽतिविमले बुद्ध्यादिभिः कल्पितः । यस्मिन्नेकरसे विमायममितं तं वासुदेवं भजे सत्यानन्दचिदात्मकं गुरुगुरुं शर्वं तमोनाशकम् ॥२॥ देवीं भक्तजनार्थसार्थजननीं प्रत्यूहदैत्यार्दिनीं भानुं भानुमृगेन्द्रसूदितमहाविघ्नौघनागं प्रभुम् । शुण्डावज्रनिरस्तसर्वदुरिताऽगं पावनं मङ्गलं ध्येयं नौमि गजाननं सुरगणैरिन्द्रं गणानां विभुम् ॥ ३ ॥ एवं षट्कद्वयेन त्वंपदार्थं तत्पदार्थं च प्रतिपाद्याखण्डार्थप्रतिपादनाय तृतीयषट्कमारभ्यते तत्र—भूमिरापोऽनलो

वायुः खं मनो बुद्धिरेव च । अहंकार इतीयं मे भिन्ना प्रकृतिरष्टधा ।। अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्यते जगत् ।। एतद्योनीनि भूतानि सर्वाणीत्युपधारय । अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथेति सप्तमेऽध्याये त्रिगुणात्मिका क्षेत्रलक्षणा संसारहेतुत्वादपरैका अन्या च जीवभूता क्षेत्रज्ञलक्षणा ईश्वरात्मकत्वात्परेतीश्वरस्य द्वे प्रकृती सूचिते याभ्यामीश्वरो जगदुत्पत्त्यादिहेतुत्वं प्रतिपद्यते तत्र क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयनिरूपणद्वारा तद्वत ईश्वरस्य तत्त्वनिर्णयार्थं द्वादशाध्याये च अद्वेष्टा सर्वभूतानां मैत्रः करुण एव चेत्यादितत्त्वज्ञविशेषणान्युक्तानि येन पुनस्तत्त्वज्ञानेन संपन्ना यथोक्तविशेषणविशिष्टा मम प्रिया भवन्तीत्यतस्तत्त्वज्ञानावधारणार्थं च श्रीभगवानुवाच—**इदमित्यादिना** । इदं प्रत्यक्षादिनोपलभ्यमानं दृश्यम् । इदमोक्तं विशिनष्टि शरीरं त्रिगुणात्मिका प्रकृतिः सर्वकार्यकरणविषयाकारेण परिणता पुरुषस्य भोगापवर्गयोरर्थयोरेव कर्तव्यतया देहेन्द्रियाद्याकारेण संहन्यते सोऽयं संघातः शरीरशब्देनोच्यते इदं शरीरं हे कौन्तेय क्षतात्त्राणात्क्षेत्रं क्षिणोत्यात्मानमविद्यया, त्राति तं विद्यया, क्षीयते नश्यति क्षरति अपक्षीयतेऽतोऽपि क्षेत्रमित्यभिधीयते क्षेत्रवदस्मिन्कर्मफलं निष्पद्यते इति वा यथा कुन्ती त्वत्प्रादुर्भावस्थानत्वात् क्षेत्रं तथात्मनोऽभिव्यक्तिस्थानत्वादपीदं क्षेत्रमिति संबोधनाशयः । अनेन शरीरस्यात्मनोऽन्यत्वं बोधितं क्षेत्रशब्दादुपस्थितमितिपदं क्षेत्रशब्दविषयमन्यथा वैयर्थ्यात् क्षेत्रमित्येवमनेन क्षेत्रशब्देनाभिधीयते कथ्यत इत्यर्थः । दृश्यं शरीरं प्रदर्श्य ततोऽतिरिक्तं द्रष्टारमात्मानं दर्शयति—**एतच्छरीरं** क्षेत्रं यो वेत्ति आपादतलमस्तकं मनुष्योऽहं ममेदं शरीरमिति स्वाभाविकेन, शरीरं नात्मा दृश्यत्वात् घटवदित्यौपदेशिकेन स्वातिरिक्तत्वेन वा ज्ञानेन जानाति विषयीकरोति तं तद्विदस्तौ क्षेत्रक्षेत्रज्ञौ दृश्यत्वेन द्रष्टृत्वेन विदन्तीति तथा तं क्षेत्रज्ञ इति प्राहुः क्षेत्रज्ञ इत्येवं क्षेत्रज्ञशब्देन तं कथयन्तीत्यर्थः ।। १ ।।

प० टी०—पूर्वाध्याये सगुणनिर्गुणोपासनाभेदेन ब्रह्मप्राप्तावधिकारिद्वयमुक्तं तत्र क्रमेण मुक्तेः सुखसाध्यत्वं च दर्शितं तत्रापि सुखरूपसाधनवतः सगुणोपासकस्य धर्माः श्लोकाष्टकेनोपदिष्टाः । अथ क्लेशरूपसाधनवतो निर्गुणोपासकस्य बहुसामग्रीसाध्यतत्त्वज्ञानपूर्विका प्राप्तिरिति दर्शयितुं प्रथमतः क्षेत्रक्षेत्रज्ञयोः स्वरूपं भगवानुपदिशति—**इदमिति** । इदं भोगायतनं शरीरं संसारतरुप्ररोहभूमिकत्वात्क्षेत्रमित्यभिधीयते नामनिर्देशः क्रियते । अथ सामान्यतः क्षेत्रज्ञस्वरूपमाह—**एतदिति** । एतत्क्षेत्रं यो वेत्ति जानाति तं क्षेत्रज्ञमिति तद्विदः प्राहुः । अनेन देहातिरिक्तः क्षेत्रज्ञः कश्चिदस्तीति सूचितम् । यतोऽन्वयव्यतिरेकाभ्यां देहस्य घटादिवज्जाड्यनिश्चयेन स्वकीयद्रष्टृत्वं न संभवति । मृतशरीरे दाहदुःखानभिज्ञत्वदर्शनात् । एवं यथा घटद्रष्टा घटाद्भिन्नो भवति तथा देहद्रष्टापीत्यर्थः ।। १ ।।

रा० टी०—ननु भगवत्स्वरूपज्ञानस्यैव पूर्वोक्तदिशा मुक्तिहेतुत्वात्तत्स्वरूपोक्तिर्युक्ता । क्षेत्रस्वरूपं महाभूतानीत्यादिना किमर्थमत्रोच्यत इति चेन्न, क्षेत्रज्ञत्वविशिष्टभगवज्ज्ञानोपयोगित्वात्क्षेत्रोक्तिरिति क्षेत्रोद्देशपूर्वं भगवतः क्षेत्रज्ञत्वमाह—**इदमिति** । कौन्तेय इदं शरीरमव्यक्तमहदहंकारादिकं भगवदावासस्थानत्वात् क्षीयते स्थीयतेऽत्र भगवतेति व्युत्पत्त्या क्षेत्रमित्यभिधीयते । एतदव्यक्तादिकं क्षेत्रशब्दितं यो वेत्ति जानाति तं तद्विदः क्षेत्रविदः क्षेत्रज्ञमिति प्राहुरित्यर्थः । शरीरशब्दस्याव्यक्तादिपरत्वं च स्वपरिणामदेहादिवियोगद्वारा जीवस्य हिंसादिहेतुत्वात् शर् शॄ हिंसायामिति धातोः, भगवता प्रेर्यत्वादीरं च । ईरप्रेरण इति धातोः । शर् च तदीरं चेति शरीरमिति व्युत्पत्तेरिति ज्ञेयम् । तेन संघातश्चेतनेति संघातपदेन क्षेत्रविकारेष्वेकदेशत्वेनोक्तशरीरस्य कथं समस्तक्षेत्रत्वमुच्यत इति शङ्का निरस्ता ।। २ ।।

**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।।**
**क्षेत्रक्षेत्रज्ञयोर्ज्ञानं यत्तज्ज्ञानं मतं मम ।। २ ।।**

त० टी०—एवं संसृष्टयोः शरीरात्मभूतयोः प्रकृतिपुरुषयोः क्षेत्रक्षेत्रज्ञत्वेन विवेकः प्रदर्शितः। अथ स्वेन तयोः संबन्धज्ञानाकाङ्क्षायाम् एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखमित्यनेन नवमे सामान्येन सर्वस्य जगतः संबन्धप्रकार उक्तोऽपि क्षेत्रज्ञस्य विभज्य नोक्तः, इदानीं तस्य स्वतादात्म्यमाह—क्षेत्रज्ञं चापीति। पूर्वम् 'अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा। मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव। मया ततमिदं सर्वं जगदव्यक्तमूर्तिना। मत्स्थानि सर्वभूतानि, इहैकस्थं जगत् कृत्स्नं पश्याद्य सचराचरम्' इत्यादिना सर्वस्य जगतो मत्तः पृथक्स्थितिप्रवृत्त्यभावेन मदभिन्नत्वं, 'न चाहं तेष्ववस्थितः, नच मत्स्थानि भूतानि पश्य मे योगमैश्वरं, मयाऽध्यक्षेण प्रकृतिः यते सचराचरम्' इत्यादिना मद्भिन्नत्वं चोक्तं ततोऽन्यज्जानासि, सर्वं समाप्नोषि ततोऽसि सर्व इति त्वयाऽप्युक्तमेव। किंतु पूर्वाध्याये ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः। अनन्येनैव योगेन मां ध्यायन्त उपासते। तेषामहं समुद्धर्ता मृत्युसंसारसागरादित्यादिना पराप्रकृतिभूतस्य जीवपुरुषादिशब्दाभिधेयस्य क्षेत्रज्ञस्य ध्यातृत्वोपासकत्वोद्धार्यत्वेन प्रतीतं केवलभिन्नत्वं न मन्तव्यमपि तु सर्वक्षेत्रेषु देवतिर्यङ्मनुष्यादिशरीरेषु क्षेत्रज्ञमपि मां विद्धि, मदात्मकत्वेन मदभिन्नं जानीहि। चशब्देनात्मनस्तद्वैलक्षण्यमपि समुच्चिनोति। मां ततो विलक्षणं च विद्धीत्यर्थः। तथा च श्रुतयः "ऐतदात्म्यमिदं सर्वं तत् सत्यं स आत्मा तत्त्वमसि श्वेतकेतो, अयमात्मा ब्रह्म, सर्वं खल्विदं ब्रह्म, तज्जलानिति अभयं वै जनक प्राप्तोऽसि, यदात्मानं वेदाहं ब्रह्मास्मीति" इत्यादिका भगवतः सर्वात्मत्वेन सर्वसामानाधिकरण्यवाचिकाः। तथा सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः, वायुर्यथैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव एकस्तथा सर्वभूतान्तरात्मा रूपं रूपं प्रतिरूपो बहिश्च" इत्यादिका भगवतः सर्वरूपत्वेऽपि सर्ववैलक्षण्यबोधिकाः। एवं मदात्मकत्वेन मद्व्याप्यत्वेन मत्तोऽपृथक्सिद्धतया मत्तादात्म्यरूपं क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं मम सर्वज्ञस्य वेदान्तकृतो वेदविदः सर्वेश्वरस्य मतं संमतम्। अतो मम मताद्यदन्यथा ये मन्यन्ते तदज्ञानमित्यर्थः। केचित्तु क्षेत्रज्ञं चापि मां विद्धीति समानाधिकरणनिर्देशेन परमात्मैवाविद्योपाधिवशात्परिच्छिन्नः क्षेत्रज्ञः संसारीव जातः, तमविद्योपाधित्यागेन शुद्धमसंसारिणं मां परमेश्वरमेव जानीहीति भगवतस्तात्पर्यं कल्पयन्ति, तदसत् सर्वशास्त्रविरुद्धत्वात्। तथाहि न तावत् क्षेत्रज्ञानां ब्रह्मस्वरूपैक्यं शास्त्रप्रमाणेन वक्तुं शक्यं "नित्यो नित्यानां चेतनश्चेतनानामेको बहूनां यो विदधाति कामान्, ज्ञाज्ञौ द्वावजावीशानीशौ, द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति, प्रधानक्षेत्रज्ञपतिर्गुणेशः, अक्षरात् परतः परः, सर्वस्य वशी सर्वस्येशानः, एको वशी सर्वगः कृष्ण ईड्यः, अन्तः प्रविष्टः शास्ता जनानां, य आत्मनि तिष्ठन्नात्मनोऽन्तरो यमात्मा न वेद यस्यात्मा शरीरम्, एष ते आत्माऽन्तर्याम्यमृतः, संसारबन्धस्थितिमोक्षहेतुः" इत्यादिश्रुतीनां "भेदव्यपदेशाच्चान्यः, भेदव्यपदेशाच्च, अनुपपत्तेस्तु न शारीरः, कर्मकर्तृव्यपदेशाच्च, पत्यादिशब्देभ्यः, अधिकं तु भेदनिर्देशात्" इत्यादिब्रह्मसूत्राणां 'इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च॥ ससुरासुरगन्धर्वं सयक्षोरगराक्षसम्। जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम्॥ अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम्। जीवभूतां महाबाहो ययेदं धार्यते जगत्॥ विष्णुशक्तिः परा प्रोक्ता चेतनाख्या तथाऽपरा। ममैवांशो जीवलोके जीवभूतः सनातनः॥ द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च। क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः। अज्ञो जन्तुरनीशश्च स्वात्मनः सुखदुःखयोः॥ ईश्वरप्रेरितो गच्छे-

त्स्वर्गं वा श्वभ्रमेव वा। दासभूताः स्वतः सर्वे ह्यात्मानः परमात्मनः ॥ नान्यथा लक्षणं तेषां बन्धे मोक्षे च विद्यते। तत्र यः परमात्मा तु स नित्यो निर्गुणः स्मृतः ॥ न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा। कर्मात्मा त्वपरो योऽसौ मोक्षबन्धैः स युज्यते ॥ स सप्तदशकेनापि राशिना युज्यते पुनः। तवान्तरात्मा मम च ये चान्ये देहिसंज्ञिताः ॥ सर्वेषां साक्षिभूतोऽसौ न ग्राह्यः केनचित् क्वचित् इति भेदैकविषयाणामितिहासपुराणादिवाक्यानां च निर्विषयत्वापत्त्या बाधप्रसङ्गात्। तथात्वे चार्थनास्तिकत्वापत्तिर्दुर्वारा। अयं दोषः केवलभेदवादिमतेऽपि समानः। तन्मतेऽभेदवाक्यानां बाधप्रसङ्गात्, नह्येकविधवाक्यबाधं विना केवलभेदोऽभेदो वा सिद्ध्यति। ननु भेदवाक्यानां नाहमीश्वर इत्यादिप्रतीतिसिद्धप्रत्यक्षभेदाविषयत्वेन नैराकाङ्क्ष्यान्न बाधप्रसङ्गः। अन्यथा सर्वस्य ब्रह्माभेदप्रतिपादकानां सहस्रशो वाक्यानां विरोधः स्यादिति चेन्न, जीवेश्वरभेदस्य प्रत्यक्षत्वाभावात् भेदप्रत्यक्षस्य प्रतियोगिप्रत्यक्षत्वाधीनत्वात्, जीवेश्वरयोरतीन्द्रियत्वेन प्रत्यक्षत्वस्यासंभवात्। नाहमीश्वर इत्यादिप्रतीतेस्तु शास्त्रोक्तसर्वज्ञत्वाचिन्त्यशक्तित्वस्वतन्त्रत्वसर्वनियन्तृत्वजगज्जन्मादिकारणत्वादीश्वरत्वप्रयोजकाणां धर्माणामात्मन्यसंभावितत्वेन याथार्थ्यात्। आत्मनोऽल्पज्ञत्वाल्पशक्तित्वतान्नियम्यत्वतदधीनत्वज्ञानात्। न चाविद्यात्मकोपाधिपरिच्छेदापेक्षमेवेश्वरत्वं सर्वज्ञत्वं सर्वशक्तित्वं न परमार्थतो विद्ययाऽपास्तसर्वोपाधिरूपे आत्मनीशितव्यसर्वज्ञत्वाल्पज्ञत्वादिव्यवहार उपपद्यते इति वाच्यं, परमात्मनो ब्रह्मणः सजातीयविजातीयस्वगतभेदशून्यत्वमेकत्वमसङ्गत्वं स्वयंप्रकाशत्वं चाभ्युपगम्य पुनस्तस्योपाधिवश्यत्वपरिच्छिन्नत्वाज्ञत्वाल्पज्ञत्वादिकल्पनस्य महद्विरुद्धत्वात्। मे माता वन्ध्येतिवद्वदतो व्याघाताच्च। प्रचण्डमार्तण्डमण्डलेऽन्धकारवत्स्वयम्प्रकाशस्वरूपेऽविद्याऽवच्छेदमनुन्मत्तः को ब्रूयात्। किंच अविद्यासंबन्धः सहेतुको निर्हेतुको वा? नाद्यः, अप्रसिद्धत्वात्। अविद्याब्रह्मेतरस्य तृतीयस्य तत्कार्यत्वेन तदानीमभावात्। न द्वितीयः, निर्हेतुकाऽविद्या स्वयमेव संबध्यते चेत्तर्हि एकस्यैवोपाधिवश्यत्वेन निवर्तकचेतनान्तराभावात् कदाऽपि तन्निवृत्तिर्न स्यात्। अनिर्मोक्षश्च स्यात्। न च स्वसामर्थ्येनैवाविद्यां निवर्तयति नेतरापेक्षेति वाच्यम्, एवं चेत्स्वयम्प्रकाशस्य स्वतन्त्रस्य समर्थस्याविद्यासंबधस्यैवानर्हत्वात्। तथाहि अविद्यायाः स्वरूपं ब्रह्म जानाति न वा। जानाति चेत् को वा सर्वज्ञः स्वतन्त्रः सन् श्वशूकरतिर्यक्कीटनारक्यादियोनितज्जन्यदुःखहेतुभूताऽविद्या—स्वरूपं जानन् तया युज्येत। न जानाति चेदज्ञत्वादेव ब्रह्मत्वहानिरतः सर्वथा ब्रह्मण्यविद्यायोगो वक्तुमनुपपन्नः। नन्वविद्यातत्कार्यं च मिथ्याज्ञानं न परमार्थवस्तु दूषयितुं समर्थं न ह्यूषरदेशं स्नेहेन पङ्कीकर्तुं शक्नोति मरीच्युदकं, तथाऽविद्या क्षेत्रज्ञस्य न किंचित्कर्तुं शक्नोतीति चेन्न, यदि तस्या दोषकारित्वमेव नास्ति तर्हि तन्निवृत्त्यर्थमुपायस्य वैयर्थ्यात्। बन्धमोक्षव्यवस्थायास्तद्विषयकशास्त्रस्यानर्थक्यप्रसङ्गाच्च। एवं ब्रह्मण्यविद्यासंबन्धस्य वक्तुमशक्यत्वात्तत्कृतं जीवेश्वरविभागं मन्यमाना भ्रान्ता जगद्व्यामोहकाः श्रेयोऽर्थिभिरुपेक्षणीयाः। नापि सर्वब्रह्माभेदप्रतिपादकानां वाक्यानां विरोधः शङ्कनीयः, तेषां क्षेत्रक्षेत्रज्ञप्रकृतिपुरुषक्षराक्षरादिशब्दाभिधेयस्य जडचेतनजातस्य ब्रह्मात्मकत्वतद्व्याप्यत्वतदधीनत्वादिहेतुभिर्ब्रह्मणः सर्वात्मत्वसर्वव्यापकत्वस्वतन्त्रत्वादिभिरभेदप्रतिपादनेन चरितार्थत्वात्। तथाहि "अन्तः प्रविष्टः शास्ता जनानां, सर्वात्मा, यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा, अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः, अहमात्मा गुडाकेश सर्वभूताशयस्थितः, इन्द्रियाणि मनो बुद्धिः सत्त्वं तेजो बलं धृतिः। वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च, योऽयं तवागतो देव समीपे देवतागणः। स त्वमेव जगत्स्रष्टा यतः सर्वगतो भवान्, सर्वगत्वादनन्तस्य स एवाहमवस्थितः, सर्वं समाप्नोषि

ततोऽसि सर्वः" तथा "यदासीत्तदधीनमासीत् सर्वस्य वशी सर्वस्येशानः आत्मा हि परमः स्वतन्त्रोऽधिगुणः, जीवोऽल्पशक्तिरस्वतन्त्रोऽवरः, सत्त्वं स्वातन्त्र्यमुद्दिष्टं तच्च कृष्णे न चापरे। अस्वातन्त्र्यात्तदन्येषामसत्त्वं विद्धि भारत। किमनेन जगन्नाथ सर्वं त्वद्वशगं जगत्" इत्यादिश्रुतिस्मृतीतिहासपुराणादिवाक्येभ्यः यद्यदायत्तस्थितिप्रवृत्तिकं वस्तु तत्तदभेदव्यपदेशार्हमिति व्याप्तिमामनन्ति छान्दोगाः प्राणेन्द्रियसंवादे "न वै वाचो न चक्षूंषि न मन इत्याचक्षते प्राण इत्येवाचक्षत" इति। तथा भेदव्यपदेशाश्च क्षेत्रक्षेत्रज्ञपरमात्मनां स्वरूपस्वभाववैलक्षण्यप्रतिपादनेन मुख्यार्थतयैव सूपपन्नाः। "सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद नान्योऽतोऽस्ति द्रष्टा द्वितीयाद्वै भयं भवति" इत्यादिभेदनिषेधव्यपदेशास्तु परमात्मेतरस्वतन्त्रत्वावच्छिन्नवस्तुनिषेधेन सूपपन्नाः। एवं च न कस्यापि वाक्यस्य विरोधशङ्कागन्धोऽपि। अत एव भेदविषयकाणामभेदविषयकाणां च वाक्यानां परस्परं बाध्यबाधकभावो वक्तुं न शक्यः, तुल्यबलत्वात्। इदमेव तात्पर्यं हृदि निधाय भगवान् सूत्रकारः परस्परविरुद्धार्थकानां भेदवाक्यानामभेदवाक्यानां चाविरोधेन समन्वयप्रकारदर्शनाय चेतनाचेतनयोर्ब्रह्मणा स्वाभाविकभेदाभेदसंबन्धस्यैव निर्दोषत्वख्यापनाय घटकसूत्राणि प्रणीतवान्। "अंशो नानाव्यपदेशादन्यथा चापि दासकितवादित्वमधीयत एके, उभयव्यपदेशात्त्वहिकुण्डलवत्, प्रकाशाश्रयवद्वा तेजस्त्वात्" इति। "एकः सन् बहुधा विचचार एको देवो बहुधा बहून् प्रविष्टः त्वमेकोऽसि बहुधा बहून्प्रविष्ट." इत्याद्याः घटकश्रुतयश्च। तथैवोक्तार्थघटकानि स्मृतिपुराणवाक्यानि कानि चिदुदाह्रियन्ते, तथाह मनुः–'एकत्वे सति नानात्वं नानात्वे सति चैकता। अचिन्त्यं ब्रह्मणो रूपं कस्तद्वेदितुमर्हति" इति। "ज्ञानयज्ञेन चाप्यन्ये यजन्तो मामुपासते। एकत्वेन पृथक्त्वेन बहुधा विश्वतोमुखम्" इति भगवद्वाक्यं च। विष्णुपुराणे प्रह्लाद आह "ॐनमो वासुदेवाय तस्मै भगवते सदा। व्यतिरिक्तं न यस्यास्ति व्यतिरिक्तोऽखिलस्य यः॥ नित्यानित्यप्रपञ्चात्मन् निष्प्रपञ्चामलाश्रित। एकानेक नमस्तुभ्यं वासुदेवादिकारण॥ यः स्थूलसूक्ष्मः प्रकटः प्रकाशो यः सर्वभूतो न च सर्वभूतः। विश्वं यतश्चैतदविश्वहेतो नमोऽस्तु तस्मै पुरुषोत्तमाय" इति। तत्रैव ध्रुवस्तुतौ "पृथग्भूतैकभूताय भूतभूतात्मने नमः" इति। हरिवंशे घण्टाकर्णश्च "अनेकमेकं बहुधा वदन्ति श्रुतिस्मृतिन्यायनिविष्टचित्ताः। आहुर्यमात्मानमजं पुराणं द्रष्टुं तमीशं वयमुद्यताः स्म" इति। श्रीभागवते प्रथमस्कन्धे श्रीनारदो व्यासं प्रति 'इदं हि विश्वं भगवानिवेतरो यतो जगत्स्थाननिरोधसंभवाः। तद्धि स्वयं वेद भवांस्तथाऽपि वै प्रादेशमात्रं भवतः प्रदर्शितम्' द्वितीयस्कन्धे ब्रह्मापि नारदायाह–'सोऽयं तेऽभिहितस्तात भगवान् हरिरीश्वरः। समासेन हरेर्नान्यदन्यस्मात्सदसच्च यत्' इति। तस्मात्सर्वश्रुतिस्मृतीतिहासपुराणादिवाक्याविरुद्धो भगवत्सूत्रकारसंमतश्चिदचितोर्ब्रह्मणा स्वाभाविकभेदाभेद एव संबन्धः सत्संप्रदायिभिरुपादेयः। केवलभेदः केवलाभेदश्चोक्तशास्त्रविरुद्धत्वाद्भ्रान्तिपरिगृहीतत्वाच्चोपेक्षणीयः। अपरे तु देवमनुष्यादिक्षेत्रेषु वेत्तृत्वैकाकारं क्षेत्रज्ञं च मां विद्धि मदात्मकं विद्धि, चापीति अपिशब्दात् क्षेत्रमपि मां विद्धीत्युक्तमवगम्यते, यथा क्षेत्रं क्षेत्रज्ञैकविशेषणस्वभावतया तदपृथक्सिद्धेस्तत्सामानाधिकरण्येनैव निर्दिष्टं, तथा क्षेत्रं क्षेत्रज्ञश्च मद्विशेषणैकस्वभावतया मदपृथक्सिद्धेर्मत्सामानाधिकरण्येनैव निर्देश्याविति हि–वक्ष्यति क्षेत्रज्ञात् बद्धमुक्तोभयावस्थात् क्षराक्षरशब्दनिर्दिष्टादर्थान्तरत्वं परस्य ब्रह्मणो वासुदेवस्य उत्तमः पुरुषस्त्वन्य इति पृथिव्यादिसंघातरूपस्य भगवच्छरीरैकस्वभावतया भगवदात्मकत्वं श्रुतयो वदन्ति "यः पृथिव्यां तिष्ठन् पृथिव्यन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति स ते आत्माऽन्तर्याम्यमृतः" इत्यारभ्य "य आत्मनि तिष्ठन्नात्मनोऽन्तरोऽयमात्मा न वेद यस्यात्मा शरीरं य

आत्मानमन्तरो यमयति स ते आत्माऽन्तर्याम्यमृत" इत्याद्याः । इदमेवान्तर्यामितया सर्वक्षेत्रज्ञानामवस्थानं भगवतस्तत्सामानाधिकरण्येन व्यपदेशहेतुरित्येवं सामानाधिकरण्यमुपपाद्य अचिद्वस्तुनः परस्य च ब्रह्मणो भोग्यत्वेन भोक्तृत्वेनेशितृत्वेन च स्वरूपस्वभावविवेकं (च) श्रुतिभिः प्रतिपाद्य "हन्ताऽहमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य सच्च त्यच्चाभवत् विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत्" इति स्वात्मकजीवानुप्रवेशेन नामरूपव्याकरणवचनात् सर्वे वाचकशब्दा अचिज्जीवविशिष्टपरमात्मवाचका इति कारणावस्थपरमात्मवाचिना शब्देन कार्यवाचिनः शब्दस्य सामानाधिकरण्यं मुख्यवृत्तम् । अतः स्थूलसूक्ष्मचिदचित्प्रकारं ब्रह्मैव कार्यं कारणं चेति विशिष्टाद्वैतमङ्गीकृत्य भोक्तृभोग्यनियन्तृभूतचिदचिद्ब्रह्मणां स्वरूपस्वभावभेदाङ्गीकारेण धर्मसाङ्कर्यमपि वारयन्ति । विशेषणस्य विशिष्टवस्त्वेकदेशत्वेनाभेदव्यवहारो मुख्यः, विशेषणविशेष्ययोः स्वरूपस्वभावभेदेन भेदव्यवहारो मुख्य इति सर्ववाक्यानामविरोधप्रकारं च वर्णयन्ति तत् प्रयासमात्रम् । भेदाभेदव्यवहारयोर्मुख्यत्वाङ्गीकारेणास्मन्मतप्रवेशात् । यतोऽस्माभिर्भेदाभेदस्यैव श्रुतिस्मृतिसूत्रैर्निगदं(?)साधितत्वात् । यदवशिष्टं ब्रह्मणश्चिदचिद्विशिष्टत्वं, तदसंभवमेव, चिदचितोर्विशेषणत्वानुपपत्तेः । तथाहि इतरव्यावर्तकत्वं विशेषणत्वमिति सर्वशास्त्रसमानस्य विशेषणलक्षणस्य चिदचितोः समन्वयाभावात् । चिदचिद्ब्रह्मेति तत्त्वत्रयेतरवस्त्वभावादनङ्गीकाराच्च । एवं च यथा शृङ्गसास्नादिमत्त्वेन गोत्वलक्षणेन महिष्यादयो व्यावर्त्यन्ते तथा विशेषणत्वेनाभिमताभ्यां चिदचित्पदार्थाभ्यां किं वा वस्तु व्यावर्त्यते इति वक्तव्यम् । न तावद्ब्रह्मान्तरमस्ति व्यावर्त्यम् "एकमेवाद्वितीयम्" इति श्रुत्या तस्यैकत्वावधारणात् । नापि चेतनाचेतना एव तयोर्व्यावर्त्यत्वाङ्गीकारेण व्यावर्तकत्वरूपविशेषणत्वासंभवात् । एवं तन्मते व्यावर्त्यं किंचिन्न सिध्यति । व्यावर्त्यासिद्धौ कुतो व्यावर्तकता । तयोः व्यावर्तकत्वाभावे विशेषणत्वं न शक्यते वक्तुं विशेषणत्वासिद्धौ तद्विशिष्टत्वमनुन्मत्तः को ब्रूयात् किंच चिदचितोर्ब्रह्मविशेषणत्वे श्रुतेः स्मृतेः सूत्रस्य वा प्रमाणाभावात्तद्विशिष्टत्ववचनमप्रामाणिकमेव । तस्माद्यथा मायावादिनां शास्त्रानुभवविरुद्धोऽपि ब्रह्मण्यविद्याऽध्यासाङ्गीकारस्तथाऽनुपपन्नमपि विशिष्टाद्वैतं दुराग्रहेण संप्रदायस्वातन्त्र्यसिद्ध्यर्थमङ्गीकृतमित्यलं विस्तरेण । तस्मादुक्तार्थस्यैव शास्त्रानुभवसिद्धत्वाच्छ्रेयोऽर्थिभिरुपादेयत्वम् ॥ २ ॥

म० टी०—एवं देहेन्द्रियादिविलक्षणं स्वप्रकाशं क्षेत्रज्ञमभिधाय तस्य पारमार्थिकं तत्त्वमसंसारिपरमात्मनैक्यमाह—क्षेत्रज्ञमिति । सर्वक्षेत्रेषु य एकः क्षेत्रज्ञः स्वप्रकाशचैतन्यरूपो नित्यो विभुश्च तमविद्याध्यारोपितकर्तृत्वभोक्तृत्वादिसंसारधर्मक्षेत्रज्ञमाविद्यकरूपपरित्यागेन मामीश्वरमसंसारिणमद्वितीयब्रह्मानन्दरूपं विद्धि जानीहि हे भारत । एवं च क्षेत्रं मायाकल्पितं मिथ्या, क्षेत्रज्ञश्च परमार्थसत्यस्तद्भ्रमाधिष्ठानमिति क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तदेव मोक्षसाधनत्वाज्ज्ञानमविद्याविरोधिप्रकाशरूपं मम मतम्, अन्यत्त्वज्ञानमेव तदविरोधित्वादित्यभिप्रायः । अत्र जीवेश्वरयोराविद्यको भेदः पारमार्थिकस्त्वभेद इत्यत्र युक्तयो भाष्यकृद्भिर्वर्णिताः । अस्माभिस्तु ग्रन्थविस्तरभयात्प्रागेव बहुधोक्तत्वाच्च नोपन्यस्ताः ॥ २ ॥

शं० टी०—एवमिदं शरीरं क्षेत्रमेतद्यो वेत्ति स क्षेत्रज्ञ इत्यनात्मनोऽप्यात्मनश्च स्वरूपं गृहप्रदीपवत् विभज्य दर्शयित्वा क्षेत्रज्ञस्यात्मनः श्रुत्यादिप्रमाणसिद्धं ब्रह्माभिन्नत्वं प्रतिपादयति ब्रह्मणः परोक्षत्वसद्वितीयत्वनिवृत्तये आत्मनोऽप्यात्यन्तिकसंसारनिवृत्तये चानन्दरूपत्वसिद्धये च —क्षेत्रज्ञमिति । मायामखण्डवृत्त्यैव सदा रमत इति हे भारत सर्वक्षेत्रेषु सर्वेषु ब्रह्मादिस्तम्बपर्यन्तेषु क्षेत्रैरुक्तलक्षणेषु शरीरेषु यः क्षेत्रज्ञस्तत्तत्क्षेत्रतद्धर्मतत्कर्मतदवस्थानां च ज्ञाता एकः परिपूर्णोऽपि स्वयं घटादिभिराकाशवदविद्यया स्वात्मनि कल्पि-

तैस्तैस्तैरुपाधिभिः सुखदुःखादिप्रत्ययैश्च विभक्त इव प्रतिशरीरमहमहमित्यहंप्रत्ययार्थत्वेन स्थितः सर्वप्रत्ययसाक्षी प्रत्यग्लक्षणस्तमुक्तलक्षणेन सर्वेभ्यः क्षेत्रेभ्यः सम्यग्विभक्तं तत्तदुपाधितद्धर्मतत्कर्माद्यस्पृष्टं तत्तच्छब्दप्रत्ययागोचरमाकाशवन्निराकारं निर्विकारं निरञ्जनं कूटस्थासङ्गचिद्रूपमात्मानं मां सर्वश्रुतिप्रसिद्धं सत्यज्ञानादिलक्षणं निर्विशेषं परं ब्रह्म विद्धि "अयमात्मा ब्रह्म" इति श्रवणादात्मानं परं ब्रह्मेत्यवगच्छेत्यर्थः। सर्वशरीरेष्वात्मैकत्वं पूर्वमेव प्रतिपादितं सर्वक्षेत्रेष्वहमर्थत्वेन स्थित आत्मा ब्रह्मैवेति अवेहीत्यर्थः। एवं क्षेत्राद्विभक्तं क्षेत्रज्ञं च मामेव यथा वेत्सि तथा क्षेत्रस्याविद्याकार्यत्वेन स्वतः सत्ताभावान्मयि ब्रह्मण्यधिष्ठाने कल्पितं क्षेत्रमपि मामेव विद्धि अवेहि। अत्रापि हि क्षेत्रस्य क्षेत्रज्ञवत् ब्रह्माभिन्नत्वं बोधयति। अन्यथा द्वैतहेतोर्देहादिप्रपञ्चस्य पृथग्विद्यमानत्वे ब्रह्मणोऽद्वितीयत्वं न सिध्यति तदभावे अद्वैतश्रुतिविरोधः स्यात्ततः क्षेत्रज्ञं च क्षेत्रमपि मां विद्धीति द्वयोरपि ब्रह्मत्वप्रतिपादनं युक्तं, तेन च स्वापेक्ष्यं च प्रयोजनं तयोर्ब्रह्माभिन्नत्वज्ञानदृढीकरणमेव ततः क्षेत्रं क्षेत्रज्ञश्च सर्वं ब्रह्मैवेति सिद्धम्। तथा च श्रुतिः स्मृतिश्च— "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्ममेतत्" 'वासुदेवात्मकान्याहुः क्षेत्रं क्षेत्रज्ञ एव च' इति। ननु क्षेत्रक्षेत्रज्ञयोरुभयोरपि यदीष्टं ब्रह्ममात्रत्वं तर्हि सर्वं ब्रह्मैवेत्युक्त्या सर्वस्य ब्रह्ममात्रत्वं सिध्यति किमिदं शरीरं कौन्तेयेत्यादिग्रन्थगौरवेणेति न शङ्कनीयम्। इदं शरीरं क्षेत्रमिति प्रकृतिं प्राकृतं च सर्वं दृश्यं क्षेत्रमेवेत्यनात्मस्वरूपं निरूप्य एतद्यो वेत्ति स क्षेत्रज्ञ इति क्षेत्रज्ञस्यात्मनः क्षेत्रतद्धर्मतत्कर्मतदवस्थासंबन्धलेशराहित्ये प्रतिपादिते क्षेत्राद्विभिन्नमकर्तारमभोक्तारमविक्रियं कूटस्थासङ्गचिद्रूपं क्षेत्रज्ञमेव स्वं साक्षाद्विदितवतः सतामसतां च देहेन्द्रियादिव्यापाराणां सर्वदा तटस्थमेवात्मानं प्रत्यग्वृत्त्या पश्यतो विदुषः क्षेत्रधर्मैः कर्तृत्वभोक्तृत्वादिभिर्जरारोगादिभिश्च तत्कर्मभिः पुण्यपापैस्तद्गोचरैर्मानावमानैश्च विक्षेपो न संभवत्येवं जीवन्मुक्तिसुखं चागामिसंचितादिसर्वकर्मक्षयश्च सिध्यति। क्षेत्रज्ञं चापि मां विद्धीति न्यायेन क्षेत्रं क्षेत्रज्ञं स्वं सर्वं च ब्रह्मैव पश्यतस्तु द्वैतप्रत्ययाभावात् सर्वदा वासनाक्षयो मनोनाशश्च। ततः प्रारब्धक्षयान्ते विदेहकैवल्यं तत्सुखं च सिध्यतीतीममर्थं सूचयितुं क्षेत्रक्षेत्रज्ञयोर्विभजनं तयोर्ब्रह्ममात्रत्वं च प्रतिपाद्याधुना क्षेत्रक्षेत्रज्ञयोर्ब्रह्माभिन्नत्वदर्शनलक्षणमेव ज्ञानं मुक्तेः परमकारणमिति निश्चिनोति—क्षेत्रक्षेत्रज्ञयोरिति। यद्यपि पुरुषः प्रकृतेर्भिन्नस्तद्गुणकर्मसंबन्धलेशशून्यः सदाऽसङ्गचिद्रूप एवेत्येवंलक्षणं प्रकृतिपुरुषयोः परस्परभिन्नत्वविज्ञानं मुक्तेः परममकारणमिति सांख्या मन्यन्ते तथापि प्रकृतिसान्निध्यात् बाधितानुवृत्त्या पुरुषस्य पुनः पुनः संसारः प्रतीयते न तु निःशेषेण निवर्तते। निःशेषसंसारनिवृत्तिः खलु मोक्षो ब्रह्मात्मनावस्थानलक्षणः "निरञ्जनः परमं साम्यमुपैति" इत्यादिश्रुतिप्रसिद्धः स एष परावरैकत्वज्ञानैकलभ्यः "तस्मिन् दृष्टे परावरे" इति श्रवणात्ततः परावरैकत्वविषयकमेव ज्ञानं निःशेषसंसारध्वान्तविध्वंसकं विदेहमुक्तेः परमकारणमिति मत्त्वोच्यते क्षेत्रक्षेत्रज्ञयोरिति। क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोर्ज्ञानं यत्तयोर्याथात्म्यवेदनं सर्वमिदमहं च ब्रह्मैवेति प्रत्यग्दृष्ट्या क्षेत्रस्य क्षेत्रज्ञस्य च ब्रह्ममात्रत्वदर्शनलक्षणं तदेव सम्यग्ज्ञानमात्यन्तिकसंसारनिवृत्तिकारणमिति सर्वज्ञस्य ममेश्वरस्य मतमभिमतं निश्चय इत्यर्थः। यद्वा येन ज्ञानेन क्षेत्रक्षेत्रज्ञयोस्तत्त्वं ज्ञाता ज्ञेयं च सर्वं ब्रह्मैवेत्यवगम्यते तदेव मम ब्रह्मणो ज्ञानमिति मतं क्षेत्रक्षेत्रज्ञयोरप्रतिबद्धवृत्त्या ब्रह्ममात्रत्वावगमनमेव ब्रह्मज्ञानं कैवल्यकारणमिति ऋषीणामभिमतं निश्चितमित्यर्थः। ननु सर्वक्षेत्रेषु क्षेत्रज्ञ आत्मा ब्रह्मैवेति जीवेश्वरयोरेकत्वमनुपपन्नं प्रत्यक्षादिसर्वप्रमाणविरोधात्, प्रत्यक्षेण हि जीवस्य जन्ममृत्युसुखदुःखादिलक्षणः संसारः कर्मैकनिबन्धन उपलभ्यते; तद्वता जीवेनेश्वरस्यैकत्वे त्वीश्वरव्यतिरेकेण भोक्त्रन्तराभावादीश्वरस्यैव संसारप्रसङ्गात् तथात्वे तु "अनश्नन्नन्यो अभिचाकशीति" इत्यादिश्रुतिविरोधः प्रत्यक्षविरोधश्च स्यात्। जीवस्य वापीश्वराभिन्नत्वे जीवव्यतिरिक्तेश्वराभावात् जीवस्यैव

सर्वनियन्तृत्वं स्यात् । स्वतन्त्रस्य तस्य संसारानुपयोगात् संसारस्यात्यन्ताभावः प्रसज्येत, संसारसंसारिणोरु-भयोरप्यभावे प्रत्यक्षविरोधश्च कर्मानुगान्यनुक्रमेण देही स्थानेषु रूपाण्यभिसंप्रपद्यते "तयोरन्यः पिप्पलं स्वाद्वत्ति" इत्यादिश्रुतिविरोधश्च; "द्वा सुपर्णा सयुजा" इत्यादिभेदशास्त्रविरोधोऽपि च स्यात् "मन्त्रेषु कर्माणि कवयो यान्यपश्यन् तानि त्रेतायां बहुधा सन्ततानि तान्याचरथ नियतं सत्यकामाः" इत्यादि कर्मशास्त्रस्य " तरति शोकमात्मवित् । आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यः " इत्यादि ज्ञानशास्त्रस्य चानर्थक्यं स्यात् । जीव ईश्वराद्भिन्नः जननादिमत्त्वात् किंचिज्ज्ञत्वात् निकृष्टोपाधिमत्त्वात् नित्यदुःखित्वात् नियम्यत्वाच्चेत्यनुमानविरोधाच्च तयोरेकत्वं न सिध्यतीति चेन्न, बहुश्रुतिस्मृतिविरोधापत्तेः । तथाहि " अयमात्मा ब्रह्म । प्रज्ञानं ब्रह्म । अहं ब्रह्मास्मि । तद्वा एतत् ब्रह्माद्वयं, सदानन्दचिन्मात्रमात्मैव । तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव अत्र ह्येव न विचिकित्स्यं सूक्ष्मात्सूक्ष्मतरं नित्यं तत्त्वमेव त्वमेव तत् । तत्त्वमसि । स एकः" इत्यादिबहुश्रुतिभिः 'सोऽहं स च त्वं स च सर्वमेतत् । आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति । एकस्त्वमात्मा पुरुषः पुराणः, सकलमिदमहं च वासुदेवः । जीवो ब्रह्मैव नापरः । सर्वे वयमतः परम् । भोक्तारं यज्ञतपसाम् । क्षेत्रज्ञं चापि मां विद्धि । उपद्रष्टानुमन्ता च' इत्यादि स्मृतिभिश्च ब्रह्मात्मनोरेकत्वमेव नियमेन प्रतिपाद्यते । आत्मा ब्रह्मैव भवति सद्रूपत्वाच्चिद्रूपत्वादानन्दरूपत्वादविक्रियत्वादसङ्गत्वात् परिपूर्णत्वाच्च यन्नैवं तन्नैवं यथा बुद्ध्यादिः । जीवेश्वरयोर्भेदोऽसत्यः उपाधिकल्पितत्वात् घटाकाशमहाकाशवत् । जीवोपाधिर्मिथ्या मायाकार्यत्वात् स्वप्नार्थवदित्यादिभिर्युक्तिभिश्च सम्यग्विचार्यमाणे तयोरभेद एवावगम्यते नैवेषदपि च भेदः । सति तु तयोर्भेदे भेददर्शननिषेधायोगात् । नात्र काचन भिदास्ति नैवात्र काचनभिदास्ति अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो " मृत्योः स मृत्युमाप्नोति " इति श्रुत्यैव पौनःपुन्येन भेददर्शनं निषिध्यते भेदद्रष्टुर्महाननर्थोऽप्युच्यते, ततस्तयोरभेद एव सम्यग्विज्ञातव्यो मुमुक्षुभिः । नन्वहं सुखी दुःखीति प्रत्यक्षेण जीवस्य संसार उपलभ्यते कथं संसारिणोऽप्यसंसारिणश्चैक्यं सिध्यतीति चेन्न, आत्मनः संसारो मिथ्या अविद्याध्यारोपितत्वात् जरादिवदित्यात्मनि प्रतीतसंसारस्याविद्याकार्यत्वेन मिथ्यात्वोपपत्तेः " अमूढो मूढ इव व्यवहरन्नास्ते मायया एव " इति श्रवणादात्मा स्वयमसंसार्येव सन्नविद्यया संसारीव प्रतीयते करणदोषाच्छङ्खः पीत इव यथा तद्वत् ; वस्तुतस्तु "अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वयात्मानन्दः परः प्रत्यगेकरसः" इति श्रवणान्नित्यशुद्धबुद्धमुक्तस्वभाव एव भवति । संसारस्त्वनात्मधर्मः सन्नेवाविद्ययात्मन्यध्यारोपितश्चक्षुर्धर्मः पीतिमा शङ्ख इव संसारो नात्मधर्मः ज्ञेयत्वाद्रूपवदिति संसारस्यानात्मधर्मत्व मे वावगम्यते न त्वात्मधर्मत्वं, तस्यात्मधर्मत्वे त्वात्मनः कदापि मोक्षो न स्यात् । श्रूयते च हि मोक्षः " तरति शोकमात्मवित् । विमुक्तश्च विमुच्यते " इति । " ब्रह्मैवसन् ब्रह्माप्येति " इति च । यत एवं तत आत्मनोऽविद्यारोपितसंसारित्वप्रतीतिदशायां स्वप्न इव प्रत्यक्षादिप्रमाणसिद्धद्वैतव्यवहारस्य सर्वस्यापि संभवान्न कोऽपि विरोधो न कर्मज्ञानशास्त्रानर्थक्यं च संभवति । विद्याविर्भूतिदशायां प्रबोधे स्वप्नसंसाराभाववदाविद्यकसंसाराभावान्नित्यशुद्धबोधस्वभावस्यात्मनः परिपूर्णस्य ब्रह्माभिन्नत्वं न विरुध्यते तत एव प्रमाणशिरोमण्या सर्वज्ञया श्रुत्यापि " ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो " इति सर्वस्याप्याकाशादिस्थूलान्तस्यात्मनः संसारनिमित्तस्य द्वैतप्रपञ्चस्याविद्याकार्यस्य अधिष्ठानसत्तैकालम्बनस्य स्वतः सत्ताशून्यस्य ऐतदात्म्यमिति सन्मात्रत्वं बोधयित्वा भेदहेतोर्विशेषस्याभावाच्चिदेकरसस्यात्मनः तत्त्वमसीति ब्रह्मत्वं प्रतिपाद्यते ब्रह्मणोऽद्वितीयत्वसिद्ध्यै । सति द्वैते त्वद्वैतश्रुतिस्मृतीनां व्याकोपः स्यात् " सत्यं ज्ञानमनन्तं ब्रह्म । एकमेवाद्वितीयं ब्रह्म । एको रुद्रो न द्वितीयोऽवतस्थे । एको देवो नारायणः । एक एव हि भूतात्मा । एकं सद्विप्रा बहुधा वदन्ति । एकः सन् बहुधा विचचार ।

एकं सन्तं बहुधा कल्पयन्ति । एको दाधारभुवनानि विश्वा । एको देवो बहुधा सन्निविष्टः । त्वमेकोऽसि बहूननुप्रविष्टः । तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम् । ईशावास्यमिदं सर्वम् । सद्धीदं सर्वं चिद्धीदं सर्वम् । पुरुष एवेदं सर्वम् । ब्रह्मैवेदं विश्वमिदं वरिष्ठम् । मायामात्रमिदं द्वैतम् । नेह नानास्ति किंचन । नह्यस्ति द्वैतसिद्धिः" इत्यादिश्रुतिभिः 'तस्मान्न विज्ञानमृतेऽस्ति किंचित् । ज्ञानं विशुद्धं विमलं विशोकम् । एकः समस्तं यदिहास्ति किंचित् । विशुद्धं ज्ञानमेवैकम् । मत्तः परतरं नान्यत् । वासुदेवः सर्वम्' इति, 'सर्वभूतस्थितं यो माम् । वेदार्थः परमाद्वैतम्' इत्यादिस्मृतिभिश्च ब्रह्माद्वितीयमनन्तत्वात् सर्वात्मकत्वात् यन्नैवं तन्नैवं यथा नभः। ब्रह्माद्वितीयं वस्त्वन्तरशून्यत्वात् सुषुप्तवदित्यादियुक्तिभिश्च ब्रह्मणोऽद्वितीयत्वं प्रतिपाद्यते। तस्मात्सर्वश्रुतिस्मृतिप्रसिद्धमेव क्षेत्रज्ञस्यात्मनो ब्रह्मत्वम् । तत एव क्षेत्रज्ञं चापि मां विद्धीति भगवतोच्यते सर्वज्ञेन । ननु नात्र जीवेश्वरयोरेकत्वं प्रतिपाद्यते भगवता किंतु ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठतीतिन्यायेन सर्वक्षेत्रेष्वन्तर्यामित्वेन तिष्ठतः स्वस्वरूपस्यैवैकत्वं प्रतिपाद्यते । सर्वभूतेष्वन्तर्यामीश्वर एक एवेति मूढानामीश्वरैकत्वविज्ञानायेति चेद्भवानत्र प्रष्टव्यः । किमीश्वरः स्वयं सावयवो भूत्वा भूतानि यमयति किं निरवयवः सन्नेव वा उतोभयात्मको वेति । नाद्यः सावयवत्वे त्वीश्वरस्य विकारित्वानित्यत्वादिदोषप्रसङ्गाच्छ्रुतिविरोधाच्च "यस्यादित्यः शरीरम्" इत्यादिश्रुत्यातिरिक्तशरीराभावश्रवणात्सावयवत्वे परिच्छिन्नत्वस्तया पूर्णत्वव्याघातश्चैकत्वानुपपत्तिश्च स्यात् । न द्वितीयः "यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः । एष त आत्मा सर्वान्तरः" इतिश्रवणादीश्वरस्य प्राणित्वप्राणनक्रियावत्त्वप्रसक्त्याऽशरीरत्वानुपपत्तेः। तथात्वे तु "अशरीरं शरीरेषु" इति "अप्राणो ह्यमनाः शुभ्रः" इत्यादिश्रुतिविरोधोऽपि स्यात् । न तृतीयः निरवयवत्वतदन्यत्वयोः सामानाधिकरण्यासिद्धेः ईश्वरस्यैव क्षेत्रज्ञत्वे 'पुरुषः सुखदुःखानाम्' इत्युक्तन्यायेन जीवत्वं सुखदुःखादिभोक्तृत्वं च स्यात्, कारणं गुणसंगोऽस्येत्युक्तेः सदसद्योनिजन्मप्रसङ्गाच्च । ननु क्षेत्रज्ञ आत्मेति पक्षेऽप्ययं दोषः स्यादेवेति चेन्न, अविद्यया त्वात्मनो जन्माद्यनर्थाङ्गीकाराद्विद्यया तन्निवृत्त्युपपत्तेश्च । तेन ब्रह्मत्वं न विहन्यते 'बन्धो मोक्ष इति व्याख्या गुणतो मे न वस्तुतः । गुणस्य मायामूलत्वान्न मे मोक्षो न बन्धनम्" इतीश्वरेणैवोक्तत्वात् । तत आत्मनस्त्वविद्यया जीवत्वे त्वयोक्तविकल्पानवकाशः विद्यया ब्रह्मत्वं च सिध्यति ततो नात्र काचिदनुपपत्तिरिति सिद्धम् ॥ २ ॥

**श्री० टी०**—तदेवं संसारिणः स्वरूपमुक्तमिदानीं तस्यैव पारमार्थिकमसंसारिस्वरूपमाह—क्षेत्रज्ञमिति । तं च क्षेत्रज्ञं संसारिणं जीवं वस्तुतः सर्वक्षेत्रेष्वनुगतं मामेव विद्धि "तत्त्वमसि" इति श्रुत्या लक्षितेन चिदंशेन मद्रूपस्योक्तत्वात् । आदरार्थमेव तज्ज्ञानं स्तौति क्षेत्रक्षेत्रज्ञयोर्यदेवं वैलक्षण्येन ज्ञानं तदेव मोक्षहेतुत्वान्मम ज्ञानं मतमन्यत्तु वृथा पाण्डित्यं बन्धहेतुत्वादित्यर्थः । तदुक्तम्—'तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये ॥ आयासायापरं कर्म विद्यान्या शिल्पनैपुणम्' इति ॥ २ ॥

**स० टी०**—एवं देहेन्द्रियादिभ्यस्त्वंपदार्थो विलक्षणः ॥ क्षेत्रज्ञः स्वप्रकाशोऽस्तीत्यभिधाय श्रुतेर्मतम् ॥ १ ॥ तस्य यद्वास्तवं तत्त्वं महावाक्यार्थमद्वयम् ॥ ब्रह्मात्मैक्यं स्वयं प्राह भगवान्करुणानिधिः ॥ २ ॥ ब्रह्मादिस्थावरान्तेषु सर्वक्षेत्रेषु चिद्घनः ॥ क्षेत्रज्ञ एक एवास्ति स्वप्रकाशोऽद्वयो विभुः ॥ ३ ॥ तस्मिन्नविद्ययाऽध्यस्तं कर्तृत्वाद्यखिलं भ्रमम् ॥ परित्यज्य तमात्मानं क्षेत्रज्ञं मामवेहि भोः ॥ ४ ॥ अहमेवाद्वयानन्दः प्रत्यगात्माक्षरोऽचलः ॥ सर्वक्षेत्रेषु मय्येव कल्पितेष्वनृतेषु च ॥ ५ ॥ जीवान्तर्यामिसाक्ष्यात्मतया तत्र स्थितः स्त्रयम् ॥ मायया कल्पितो भेदः क्षेत्रज्ञे मयि चिद्घने ॥ ६ ॥ विद्यया तां च तत्कार्यं भेदं त्यक्त्वात्मगोचरम् ॥ निर्विकारं सदा मुक्तं मामखण्डं चिदद्वयम् ॥ ७ ॥ विद्धि त्वं प्रत्यगात्मानं क्षेत्राद्भिन्नं स्वमादरात् ॥ यतो मायाकृतो बन्धः क्षेत्रज्ञे न तु वस्तुतः ॥ ८ ॥ नित्यमुक्तस्वभावोऽतः क्षेत्रज्ञोऽहं

महेश्वरः ॥ परात्मनोऽप्यनन्तस्य क्षेत्रज्ञत्वमविद्यया ॥ ९ ॥ क्षेत्रज्ञं चापि मां विद्धीत्येवं सत्युपपद्यते ॥ सर्वज्ञत्वादयो धर्मा मायया परमेश्वरे ॥ १० ॥ कल्पितास्तेन सत्येऽस्मिन्कथं स्युः स्वात्मनीश्वरे ॥ तथाल्पज्ञत्वमुख्या ये धर्मा मायाप्रकल्पिताः ॥ ११ ॥ नैव तैरात्मनः सङ्गः कूटस्थस्यामलात्मनः ॥ तेन जीवगतो बन्धो न प्रसज्येत ईश्वरे ॥ १२ ॥ न सार्वज्ञ्यादयो धर्मा जीवे वा सन्त्यसंकरात् ॥ यत औपाधिको भेदः परमेश्वरजीवयोः ॥ १३ ॥ व्यवहारस्थलेऽस्माभिः स्वीकृतस्तत एतयोः ॥ धर्माणां संकरो नास्ति न तत्राभेद इष्यते ॥१४॥ ननु स्वाभाविको भेदः प्रसिद्धोऽस्तीशजीवयोः ॥ प्रत्यक्षेणानुमानेन वेदान्तैः स्मृतिभिस्तथा ॥ १५ ॥ प्रत्यक्षं तावदस्त्यत्र भेदे जीवेशयोः स्फुटम् ॥ नाहं सर्वज्ञ इत्याद्यनुभवो निर्विवादतः ॥ १६ ॥ न चानध्यक्षभावत्वाद्ब्रह्मणः परमात्मनः ॥ तद्भिदापि न चाध्यक्षास्तीति वाच्यं कदाचन॥१७॥ यत्सत्त्वं तर्कितं यत्रानुपलब्धिविरोधि च ॥ तदभावः सदाध्यक्षगोचरस्तत्र संमतः ॥ १८ ॥ यस्मादभावप्रत्यक्षे प्रत्यक्षं प्रतियोगिनः ॥ अन्वयव्यतिरेकाभ्यां व्यभिचारान्न कारणम् ॥ १९ ॥ पृथिवीत्वाद्यभावस्य जलाणौ नैव दृश्यते ॥ प्रत्यक्षत्वमतो नास्ति स्वतन्त्रत्वस्य चान्वयः ॥ २० ॥ स्तम्भः पिशाचो नास्तीति प्रत्यक्षस्य च दर्शनात् ॥ अस्त्येवं व्यतिरेकेऽपि व्यभिचारस्तयोर्द्वयोः ॥ २१ ॥ अतो भानानुसारेण कल्प्यं सद्भिः प्रयोजकम् ॥ अन्यथा जीवपरयोरभेदश्रुतिसद्गिराम् ॥ २२ ॥ अप्रसक्तनिषेधस्य कर्तृत्वं भवतां मते ॥ किं च जीवेशसद्भेदबोधिवेदगिरां स्वतः ॥ २३ ॥ प्रमाणत्वान्न शङ्क्या स्यादनुवादकता त्वया ॥ तत्रैव वेदतात्पर्यं न त्वैक्ये तव संमते ॥ २४ ॥ ननु बुद्धिविशिष्टस्य भेद ईशात्प्रतीयते ॥ स ममापीष्ट एवास्ति व्यवहारस्थले किल ॥ २५ ॥ यश्च नेष्टो विशुद्धस्य परस्मात्प्रत्यगात्मनः ॥ भेदः सोऽत्र न भातीत्याशङ्कायामभिधीयते ॥ २६ ॥ सुप्तज्ञानाश्रयस्यैव भेद ईशात्प्रतीयते ॥ सुप्तज्ञानाश्रयस्तेऽस्ति प्रत्यगात्मा हि चिन्मयः ॥ २७ ॥ योऽधुनात्राहमस्वाप्सं यस्य मे ज्ञानमीदृशम् ॥ संसारी सोऽहमानन्दस्वरूपात्परमेश्वरात् ॥ २८ ॥ भिन्नोऽस्मीत्यावृतेर्भ्रान्तेः संसारस्याश्रयो हि यः ॥ स जीवो भिन्न एवास्ति परस्मान्नित्यमुक्ततः ॥ २९ ॥ ईश्वरस्यापि भेदोऽस्ति जीवात्संसारिणोऽज्ञतः ॥ ममैवांशो जीवलोक इत्यादितदुदीरणात् ॥ ३० ॥ तेनैवानुमितं तस्य प्रत्यक्षमपि साधकम् ॥ दुःखाननुभवितृत्वादभ्रान्तत्वात्सुखत्वतः ॥ ३१ ॥ असंसारितया ब्रह्म जीवाद्भिन्नं विनिश्चितम् ॥ असर्वज्ञतयाऽसर्वशक्तित्वाद्भ्रान्तभावतः ॥ ३२ ॥ अस्वतन्त्रतया जीवो ब्रह्मणो भिन्न ईर्यते ॥ इत्यध्यक्षानुमानाभ्यां सिद्धो भेदस्तयोर्द्वयोः ॥ ३३ ॥ द्वा सुपर्णेति मुख्यास्ति श्रुतिर्भेदैकतत्परा ॥ शारीरश्चोभयेऽपि हि भेदेनैनमधीयते ॥ ३४ ॥ इत्यादीन्यपि सूत्राणि भेदनिष्ठानि सन्ति च ॥ न च प्रत्यक्षप्राप्तस्यानुवादोऽयं श्रुतेः स्मृतेः ॥ ३५ ॥ प्रत्यक्षस्य प्रमाणत्वे भेदसिद्धिस्ततोऽपि च ॥ आगमस्यानुवादत्वेऽपीष्टसिद्धिर्भवेन्मम ॥ ३६ ॥ भेदप्रत्यक्षदार्ढ्यस्य हेतुत्वादेव न क्षतिः ॥ अनभ्यस्तजले पुंसस्तृषार्तस्यादितः स्वयम् ॥ ३७ ॥ प्रवृत्तमानदार्ढ्याय मानान्तरप्रवृत्तिवत् ॥ अग्नेरौष्ण्यगताध्यक्षप्रामाण्यनिश्चये सति ॥ ३८ ॥ अग्निर्हिमस्य चेत्येवमनुवादोऽपि साधकः ॥ भेदप्रत्यक्षदार्ढ्याय तथात्रापि स इष्यताम् ॥ ३९ ॥ किंच भेदश्रुतेर्मानं मूर्धन्यायाः स्वतो यतः ॥ भेदाध्यक्षानपेक्षत्वान्न सापेक्षानुवादता ॥ ४० ॥ निरपेक्षानुवादत्वं नाप्रामाण्यस्य साधकम् ॥ धारावाहकबुद्धेर्हि यथा प्रामाण्यमिष्यते ॥ ४१ ॥ निरपेक्षानुवादत्वे तथात्रापीष्यतां श्रुतेः ॥ अपि च द्वा सुपर्णेति मुख्या याः श्रुतिसद्गिरः ॥ ४२ ॥ अस्त्यनुवादमात्रत्वे विचारान्तरमप्यथ ॥ निरर्थकानुवादस्यायोगादेषा विचारणा ॥ ४३ ॥ विधिस्तुत्यर्थमथवाऽन्यविधानार्थमेव वा ॥ अनुवाद्यनिषेधायानुवादो वेष्यते श्रुतेः ॥ ४४ ॥ नाद्योऽस्ति वायुः क्षेपिष्ठेत्यादिवत्स्तुतये मतः ॥ विध्येकवाक्यता नास्ति नार्थवादत्वमस्त्यतः ॥ ४५ ॥ द्वितीयेऽन्यविधानायानुवादत्वे त्वया तदा ॥ तात्त्विक-

त्वमनूद्यस्य वक्तव्यं स्याद्विचारतः ॥ ४६ ॥ मानेनान्यविधानायानूदितस्य च दृश्यते ॥ नियमस्तात्त्विकत्वस्य यथा दध्ना जुहोत्यपि ॥ ४७ ॥ नानुवाद्यनिषेधायानुवादोऽस्तीह च श्रुतेः ॥ वाक्येऽस्मिन्नेह नानास्ति किंचनेति निषेधके ॥ ४८ ॥ भेदस्य किंचनेत्यत्रानूदितत्वात्पृथग्वृथा ॥ अनुवादो मतोऽन्यत्र द्वा सुपर्णेति च श्रुतौ ॥ ४९ ॥ द्वा सुपर्णेति वाक्यस्याज्ञातज्ञापकलक्षणम् ॥ अस्त्येव विशिषत्वमनश्नन्निति साद्विधेः ॥ ५० ॥ जीवसंघात्परो भिन्नोऽचिन्त्य इत्यादिकश्रुतेः ॥ नान्योऽतोऽस्तीति वाक्यं स्यात्प्रत्युतैक्यानुवादकम् ॥ ५१ ॥ अनादिवादिसंसिद्धाभेदप्रातिर्यतः क्षितौ ॥ तत्त्वमस्यादिवाक्यं तु नैव भेदविरोध्यपि ॥ ५२ ॥ तदाश्रयतया यद्वा तज्जन्यत्वेन तस्य च ॥ तद्व्यपदेश इत्येवं तत्त्वमित्यत्र निर्णयः ॥ ५३ ॥ दौर्बल्यं विदितार्थत्वाद्यदि भेदश्रुतेर्मतम् ॥ विरुद्धार्थतया तर्हि दौर्बल्यमभिदा श्रुतेः ॥ ५४ ॥ यद्यध्यक्षाविरुद्धैक्यपरा चैक्यश्रुतिर्मता ॥ तर्हि भेदश्रुतिर्लोकसिद्धभेदपरास्तु भोः ॥ ५५ ॥ यदि षड्विधतात्पर्यलिङ्गवत्त्वेन सर्वतः ॥ प्रबलैक्यश्रुतिस्तर्हि तत्तुल्यं स्याद्भिदाश्रुतेः ॥ ५६ ॥ उपक्रमोपसंहारावभ्यासोऽपूर्वता फलम् ॥ अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये ॥ ५७ ॥ एतच्च षड्विधं लिङ्गं भेदे तात्पर्यनिर्णये ॥ अस्त्येव तत्कथं चेत्याकाङ्क्षायामभिधीयते ॥ ५८ ॥ आथर्वणश्रुतौ भेदे द्वा सुपर्णेत्युपक्रमः ॥ परं साम्यमुपैतीत्थमुपसंहार इष्यते ॥५९॥ भिन्नाश्रयतया लोके सादृश्यस्य च दर्शनम् ॥ अतोऽस्त्यत्रोपसंहारो भेदमात्रैकगोचरः ॥ ६० ॥ तयोरन्यस्तथानश्नन्नन्य इत्यादिकश्रुतौ ॥ अभ्यासोऽस्ति तथान्यत्र भिदा सत्यमिति श्रुतौ ॥ ६१ ॥ शास्त्रैकगम्यो यो भेद ईश्वरप्रतियोगिकः ॥ कालत्रयेऽप्यबाध्योऽस्ति तथा तद्धर्मिकोऽपि यः ॥६२॥ विना धर्म्यादिविज्ञानं भेदज्ञानं न जायते ॥ धर्मिणः परमेशस्य यदि वा प्रतियोगिनः ॥ ६३ ॥ मानान्तरागोचरत्वात्तद्भेदोऽपि तथेष्यते ॥ अतः शास्त्रं विना प्राप्तेरपूर्वत्वमपीष्यते ॥ ६४ ॥ पुण्यपापे विधूयेति फलं सम्यगुदाहृतम् ॥ अस्य महिमानमिति वीतशोक-इति श्रुतौ ॥ ६५ ॥ स्तुतिरूपोऽर्थवादोऽस्ति न फलं यत ईशितुः ॥ महिमा यः स जीवस्य नैव संभवतीत्यपि ॥ ६६ ॥ अनश्नन्नन्य इत्येवमुपपत्तिरपीरिता ॥ इत्थं हि षड्विधं लिङ्गं भेदे तात्पर्यनिर्णये ॥६७॥ निषेधवाक्यरूपत्वात्प्रबलैक्यश्रुतिर्यदि ॥ असद्वेत्यादिवाक्यं स्यात्प्रबलं तर्हि वैदिकम् ॥ ६८ ॥ अतोऽप्यैक्यनिषेधात्मा भेद एव श्रुतेर्मतः ॥ किंच भेदश्रुतिश्चैव प्रबलैक्यश्रुतेर्भवेत् ॥६९॥ प्रत्यक्षादिकसंवादात्तथा निरवकाशिका ॥ यत ऐक्यश्रुतिर्ब्रह्मपदवाच्ये परेश्वरे ॥ ७० ॥ तत्परा न हि लोकेऽस्मिन्सजातीयः परेशितुः ॥ न हि भेदश्रुतिस्तद्वद्भेदाभावेऽवकाशगा ॥ ७१ ॥ न व्यावहारिकोऽयं च भेदो मुक्तावपि श्रुतेः ॥ स कामानश्नुते सर्वान्ब्रह्मणेति भिदा श्रुता ॥ ७२ ॥ नहि सावान्तरा मुक्तिर्मुख्येयं हरिणेरिता ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ ७३ ॥ सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ इति सर्गाद्यभावोक्तेः परमा मुक्तिरेव सा ॥ ७४ ॥ भूमविद्याफलं प्रोक्तं छान्दोग्येऽपि तथैव च ॥ तस्य सर्वेषु लोकेषु कामचारो भवत्यथ ॥ ७५ ॥ एकधा भवतीत्यत्र भेदस्योक्तिः श्रुता श्रुतौ ॥ परं ज्योतिरुपेत्यादौ स्वेन रूपेण तद्विदः ॥ ७६ ॥ आविर्भावोक्तितो मुक्तिस्तत्र भेदः श्रुतः स्फुटम् ॥ पुण्यपापे विधूयेति सर्वकर्मक्षयश्रुतेः ॥ ७७ ॥ मुक्तिः सा परमा ज्ञेया नातः सावान्तरा भवेत् ॥ प्रेरितारं यदा जुष्टं पश्यत्यन्यं महेश्वरम् ॥ ७८ ॥ तेनामृतत्वमेतीति भेदधीर्मुक्तिसाधनम् ॥ प्रत्युतैक्ये प्रमाणं नो किंचिदस्तीह साधकम् ॥ ७९ ॥ आत्मत्वान्नैव भिद्यन्ते जीवा वै परमात्मनः ॥ परमात्मवदेवेत्यनुमानं मानमत्र चेत् ॥ ८० ॥ मैवं प्रत्यक्षमानेनापहृतो विषयोऽस्य भोः ॥ विज्ञातृत्वादिरूपस्य ह्यात्मत्वस्य मते तव ॥ ८१ ॥ हेतोरासिद्धेस्तद्वन्मे वेद्यत्वादेरसिद्धता ॥ न वाप्यैक्ये श्रुतिर्मानं तस्या अन्यपरत्वतः ॥ ८२ ॥ प्रत्यक्षादिकसंसिद्धभेदश्रुतिविरोधतः ॥ तस्माच्छ्रुत्यादिसिद्धत्वाज्जीवेश्वरभिदा स्वतः ॥ ८३ ॥ परमार्थस्वरूपास्ती-

त्येवं भेदनयो जयी ॥ अतः स्वाभाविके भेदे सत्यत्रेश्वरजीवयोः ॥ ८४ ॥ क्षेत्रज्ञब्रह्मणोरैक्यं कथं भगवतो मतम् ॥ संमतं स्याद्यतोऽवादि त्वयैक्यं ब्रह्मजीवयोः ॥ ८५ ॥ तस्मात्क्षेत्रज्ञमित्यादेरयमर्थो हरेर्मतः ॥ सर्वक्षेत्रेषु देवादिदेहेषु फलशालिषु ॥ ८६ ॥ ज्ञातृत्वैकान्त्यमात्मानं क्षेत्रज्ञं मां मदात्मकम् ॥ विद्धि चापीत्यपेर्मा त्वं विद्धि क्षेत्रमपीश्वरम् ॥ ८७ ॥ क्षेत्रज्ञपरयोर्देहदेहिभावनिबन्धनम् ॥ सामानाधिकरण्यं मां क्षेत्रज्ञमिति युज्यते ॥ ८८ ॥ जीवरूपशरीरेण युक्तान्तर्यामिणश्रितः ॥ त्वमर्थस्य तदर्थेन सर्वज्ञेन परात्मना ॥ ८९ ॥ अभेदबोधनं श्रीमद्धरिणैवं निरूप्यते ॥ जीवस्येशशरीरत्वाच्छरीरी परमेश्वरः ॥ ९० ॥ तयोरैक्यं स्वरूपेण प्रतिषिद्धं पुरैव च ॥ तज्जन्यत्वेन वा तस्य तद्व्यपदेश इष्यते ॥ ९१ ॥ तदाश्रयतया वास्तु क्षेत्रज्ञं विद्धि मामिति ॥ आत्मत्वजीवक्षेत्रज्ञशब्दानां हि नियन्तरि ॥९२॥ सर्वान्तर्यामिणीशेऽस्ति शक्तिरागमसंमता ॥ अन्तर्यामिपरं मानं श्रुतेर्वाक्यं सहस्रशः ॥ ९३ ॥ अत आह स्म भगवान्क्षेत्रज्ञं विद्धि मामिति ॥ क्षेत्रक्षेत्रज्ञयोरेवं विवेकविषयं तयोः ॥ ९४ ॥ मदात्मकत्वविषयं ज्ञानमुक्तमिहोत्तमम् ॥ तदेवादेयमादृत्य ज्ञानमित्येव मे मतम् ॥ ९५ ॥ इत्थं स्वाभाविके भेदे सत्येवेश्वरजीवयोः ॥ उक्तरीत्यास्त्यभेदोक्तिर्नान्यथातिविरोधतः ॥९६॥ सार्वज्ञ्यादिगुणानन्तशक्त्यैश्वर्यादिशालिना ॥ अनैश्वर्यादिदुष्टस्याभेदो नैवास्ति युक्तिभाक् ॥ ९७ ॥ उपदेश्योपदेशादिव्यवहारोऽपि दुर्घटः ॥ ऐक्यवादे ततोऽप्येष भेदपक्षोऽतियुक्तिमान् ॥ ९८॥ एवं चिदचिदीशानां स्वरूपेण स्वभावतः ॥ भेदं सम्यग्वदन्तीना श्रुतीनामविरोधतः ॥ ९९ ॥ भिन्नोऽचिन्त्यो महेशः स्थिरचरगणतः क्षेत्रवित्क्षेत्रदेहः शेष्यन्तर्यामिगीर्भिः स्मृतिभिरपि भिदा यस्य जीवात्सदेष्टा ॥ प्रत्यक्षादिप्रमाणैरहमनुभवतः सिद्धभेदो वरिष्ठः कृष्णः क्व कास्ति जीवो भ्रमशतवलितो भेदसिद्धिर्मतेत्थम् ॥ १०० ॥ अत्राभिधीयते श्रौतसिद्धान्तो हरिसंमतः ॥ स्यादेवं यदि संसिद्धयेद्भेदो जीवेशयोर्दृढः ॥ १ ॥ मानशून्यतया नास्ति परमार्था भिदाऽनयोः ॥ नान्योऽतोस्तीति सद्वाक्यं भेदमेनं प्रबाधते ॥ २ ॥ जीवेशयोरभेदे तु प्रमाणं श्रुतयोऽखिलाः ॥ सूत्राणि स्मृतयो विद्वन्निर्णीतानुभवोऽनघः ॥३ ॥ पारमार्थिकता भेदे जातिर्गोत्वादिवन्न हि ॥ सत्तातिरिक्ताया जातेः सत्ताव्याप्यत्वसंभवात् ॥ ४ ॥ पदार्थमात्रे नैवास्ति जातिः काचन संमता ॥ सामान्यादौ यतो जातिर्नैवाङ्गीक्रियते बुधैः ॥ ५ ॥ पराभिमतसत्ताख्यजातेर्द्रव्यादिकत्रये ॥ वृत्तित्वान्नैव सा भेदे भावधर्मतयेष्यते ॥ ६ ॥ न वा प्रामाणिकत्वं स्याद्भेदस्य श्रुतिबाधनात् ॥ प्रत्यक्षाबाध्यभेदस्य बाधिका शतशः श्रुतिः ॥ ७ ॥ प्रत्यक्षाबाध्यमात्रेण न हि सत्या भिदा भवेत् ॥ चन्द्रे प्रादेशिकत्वं च प्रत्यक्षाबाध्यमस्त्यपि ॥ ८ ॥ शास्त्रतो बाध्यमस्त्येव तथा भेदोऽपि बाध्यते ॥ नान्योऽतोऽस्तीत्यतो द्रष्टा न श्रोताऽतो विलक्षणः ॥ ९ ॥ इत्यादिभेदबाधेन ब्रह्मात्मैक्यपरा श्रुतिः ॥ नन्वन्यपरतास्त्यस्याः श्रुतेरन्यविरोधतः ॥ ११० ॥ भिन्नोऽचिन्त्यो जीवसंघादित्यस्याः साऽनुवादिका ॥ मैवं श्रुतित्वमेवास्य दुर्भणं वचसो यतः ॥ ११ ॥ न प्रसिद्धासु शाखासु पाठः कुत्रापि दृश्यते ॥ श्रुतित्वेऽप्यस्य नाभेदप्रतिषेधकता भवेत् ॥ १२ ॥ प्रत्युतास्यैव वाक्यस्य भेदबाधकतेर्यते ॥ जीवसंघान्न भिन्नोऽयं चिन्त्य इत्यर्थतः स्फुटम् ॥ १३ ॥ शब्दतो वार्थतो वाक्यं नाभेदप्रतिषेधकम् ॥ किं चायं प्रतिषेधोऽपि कस्याभेदस्य बाधकः ॥ १४ ॥ प्रातीतिकस्याभेदस्य किं व्यावहारिकस्य वा ॥ उताहो वास्तवस्यास्ति नाद्यः संगच्छते शृणु ॥ १५ ॥ शुक्तिरूप्यादिवन्नायमपरोक्षप्रतीतिभाक् ॥ भेदप्रमाविरोधाच्च नायं प्रातीतिको भवेत् ॥ १६ ॥ न द्वितीयोऽनयोर्यस्मात्तुल्यसत्ताकयोर्द्वयोः ॥ विरोधादेकदैकत्र विभेदाभेदयोः स्वतः ॥ १७ ॥ वास्तवस्याप्यभेदस्य निषेधो नोपपद्यते ॥ न व्यावहारिको भेदो ह्यभेदं पारमार्थिकम् ॥ १८ ॥ बाधतेऽतोऽप्यबाध्योऽस्ति ह्यभेदः श्रुतिसंमतः ॥ एतेन भेदवाक्येन जीवतादात्म्यमीश्वरे ॥ १९ ॥ प्रतिषिध्यत इत्येवं प्रत्युक्तं तत्कथं शृणु ॥ न जीवस्याविच्छिन्नस्य यद्रूपं

व्यावहारिकम् ॥ १२० ॥ तदेव ब्रह्मणो रूपं वेदान्तिभिरितीष्यते ॥ नान्योऽतोऽस्तीति वाक्यार्थोऽप्यभेदः परमार्थतः ॥ २१ ॥ ननु भेदोऽपि मानेन सिद्धोऽस्ति श्रुतिवाक्यतः ॥ सत्य आत्मा सत्यो जीवः सत्यं भिदा सतीति चेत् ॥ २२ ॥ मैवं प्रसिद्धशाखासु नेदं वाक्यं प्रदृश्यते ॥ श्रुतित्वेऽप्यस्य भेदापवादश्रुति-विरोधतः ॥ २३ ॥ न स्यात्स्वार्थपरत्वं तद्वास्त्वभेदपरं वचः ॥ सत्य आत्मेति चिद्धातोस्त्रिकालाबाध्य-तेरिता ॥ २४ ॥ नन्वात्मनो हि सत्यत्वे जीवत्वमपि वास्तवम् ॥ किं न स्यादिति शङ्कायामसत्यो जीव उच्यते ॥२५॥ विशिष्टप्रतिषेधस्य संक्रमः स्याद्विशेषणे ॥ विशेष्यबाधे सत्येवं जीवत्वं नैव वास्तवम् ॥२६॥ बहुश्रुत्यनुरोधेन भेदोऽसत्य इति श्रुतेः ॥ अनेनेह भिदा सत्या सजातीया निराकृता ॥ २७ ॥ सत्यं भिदा सत्यमिति विजातीयनिराकृतिः ॥ पञ्चभूतात्मकं विश्वं सत्यशब्देन कीर्तितम् ॥ २८ ॥ सच्च त्यच्चाभवत्सत्यं भिदा भिद्यत एव तत् ॥ इत्यसत्यमनिर्वाच्यं तद्वाख्याय पुनर्वचः ॥ २९ ॥ भिदा सत्यं भिदेत्येव काकाक्षिन्यायतो भवेत् ॥ उभयत्रान्वयीत्येवं तद्वाक्यं भेदबाधकम् ॥ १३० ॥ विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ॥ आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥ ३१ ॥ इत्येवं भेदमाहत्य स्मृतिरेषा निषेधति ॥ आत्मेति तूपगच्छन्ति ग्राहयन्ति च सज्जनाः ॥ ३२ ॥ इत्यादीन्यपि सूत्राणि भेदं चापवदन्त्यलम् ॥ अभेदश्रुतिरेवं हि तत्परत्वेन हेतुना ॥३३॥ स्वतो बलवती ज्ञेयाप्यज्ञातज्ञापकत्वतः ॥ तदात्मानमेवावेदहं ब्रह्मास्मीति वाक्यतः ॥ ३४ ॥ ब्रह्मात्मैक्यधिया मोक्षः सर्वात्मत्वाखिलक्षणः ॥ प्रति-वेदान्तमस्त्येव लिङ्गमात्मैक्यनिर्णये ॥ ३५ ॥ अतः स्वार्थपराऽभेदश्रुतिर्बलवती भवेत् ॥ न च भेदेऽस्ति तात्पर्यं कस्या अपि श्रुतेः स्मृतेः ॥ ३६ ॥ ननूक्तं द्वासुपर्णेतिश्रुतेर्भेदपरत्वकम् ॥ मैवं तस्या हि भेदानुवादा-त्तत्प्रतिषेधतः ॥३७॥ अभेद एव तात्पर्यं न भेदे तत्कथं शृणु ॥ ब्रह्मात्मैवेदममृतं पुरस्तादितिवाक्यतः ॥३८॥ सर्वात्मत्वे विनिर्दिष्टे ब्रह्मणः परमात्मनः ॥ भोक्तृभेदाच्च भोक्तृ स्याद्ब्रह्मापि तर्हि तच्च न ॥ ३९ ॥ युक्तं तस्मान्न सर्वात्मब्रह्मेत्याशङ्क्य पठ्यते ॥ मन्त्रोऽयं द्वा सुपर्णेति तस्यार्थोऽयमुदीर्यते ॥ १४० ॥ यौ द्वौ जीवेश्वरौ बिम्बप्रतिबिम्बस्वरूपिणौ ॥ अस्मिन् शरीरे वर्तेते तयोर्मध्येऽन्य ईशितुः ॥ ४१ ॥ धीप्रतिबि-म्बभूतस्तद्भेदाध्यासतो भ्रमी ॥ स तद्धर्माभिमानी सन्भुङ्क्ते कर्मफलं ततः ॥ ४२ ॥ स एवान्यः स्वयं बिम्बभूतः साक्षी चिदद्वयः ॥ बुद्धितादात्म्यशून्यः संश्चिदानन्दघनात्मना ॥ ४३ ॥ अनश्नन्भोगशून्यः सन्नुदासीनः प्रकाशते ॥ अनश्नन्निति भोक्तृत्वनिषेधः प्रत्यगात्मनः ॥ ४४ ॥ सर्वथा तत्र जीवस्य साक्षा-द्भोगनिषेधतः ॥ कस्य स्यात्तर्हि भोक्तृत्वमित्याशङ्क्याह वेदगीः ॥ ४५ ॥ स एवाध्यस्तया बुद्ध्या तादा-त्म्याध्यासतः फलम् ॥ भुङ्क्त इत्थं न भोक्तृत्वधीविरोधोऽपि चिद्घने ॥ ४६ ॥ अतः पैङ्गिरहस्येऽस्य व्या-ख्यानं शुद्धसत्त्वयोः ॥ सत्त्वं चिच्छायया युक्तमन्तःकरणमुच्यते ॥ ४७ ॥ क्षेत्रज्ञः शुद्ध आत्मा चिद्घनः साक्षी तथेरितः ॥ सत्त्वे भोक्तृत्वमापाद्य शुद्धे तच्च निषिध्यते ॥ ४८ ॥ भेदानुवादपूर्वेण मन्त्रोऽयं शुद्ध-चिद्घने ॥ तत्परो न तु जीवेशभेदमप्यवगाहते ॥४९॥ अत आविद्यकं भोक्तृभावमेवमनूद्य सः ॥ द्वा सुप-र्णेति निर्दुष्टचैतन्यात्मैक्यतत्परः ॥ १५० ॥ ब्रह्मात्मनो हि जीवस्य नित्यमुक्तस्य वस्तुनः ॥ बुद्धितादा-त्म्यमात्रेण संसारित्वं न वस्तुतः ॥ ५१ ॥ उपक्रमादितात्पर्यलिङ्गाभावाद्भिदाश्रुतेः ॥ न भेदपरता सिध्ये-द्वृथा तत्साधनश्रमः ॥ ५२ ॥ त्वन्मते च तयोर्मध्य एकोऽश्नातीत्युदीरिते ॥ अर्थादीशो न चाश्नातीत्येवं सिद्धे पृथग्वचः ॥ ५३ ॥ वृथा स्यादनुवादस्य गतौ सत्यां न संभवः ॥ पश्यत्ययं देवदत्तो वामेनाक्ष्णे-त्युदीरणात् ॥ ५४ ॥ न पश्यतीतरेणेति निषेधोऽर्थाद्धि सिध्यति ॥ द्वा सुपर्णेति मन्त्रोऽयं शुद्धब्रह्मात्म-तत्परः ॥ ५५ ॥ अशनायादिराहित्यं वस्तुतः प्रत्यगात्मनः ॥ भोगस्य कल्पितत्वात्तदधिष्ठानेऽप्यसङ्गता ॥ ५६ ॥ यदा भुङ्क्ते तदैवायं न भुङ्क्ते परमार्थतः ॥ भासमानेऽपि वर्णे खे न खे वर्णोऽस्ति वस्तुतः ॥५७॥

जीवेश्वराश्रये देहे समाने पुरुषोऽप्ययम् ॥ निमग्नोऽविद्यया भाति कर्तृत्वाद्यभिमानतः ॥ ९८ ॥ मोहावृतस्वरूपत्वाच्छोचतीव न वस्तुतः ॥ अतो ब्रह्मात्मनोरैक्यसाक्षात्कारोदयादयम् ॥ ९९ ॥ देहत्रयात्पृथग्भूतं देहत्रितयसाक्षिणम् ॥ कार्यकरणसंघातैः सेवितं जुष्टमुच्यते ॥ १६० ॥ शोधितं त्वंपदार्थं वा सन्तमीशं च पश्यति ॥ साक्षात्करोति स्वात्मानं ब्रह्मभूतमकल्मषम् ॥ ६१ ॥ तदास्य महिमानं स्वमपरिच्छिन्नमक्षयम् ॥ एत्यानन्दं स्वयं वीतशोक इत्यर्थिका श्रुतिः ॥ ६२ ॥ स्यात्तात्पर्यवती भेदे कथं ब्रह्मैक्यगोचरा ॥ यद्वा जुष्टं विवेकाद्यैः शोधिताशयकिल्बिषैः ॥ ६३ ॥ सनकाद्यैः सदा सेव्यमानमात्मतयान्तरम् ॥ अन्यं देहत्रयाद्भिन्नमीदृशं यर्हि पश्यति ॥ ६४ ॥ न त्वन्यं जीवतो भिन्नं पश्यतीत्यर्थ इष्यते ॥ त्वयोक्तानां विकल्पानां नास्त्यतः सावकाशता ॥ ६५ ॥ न हेतुर्भेदधीर्मुक्तेः साक्षाच्छ्रुतिविरोधतः ॥ तं ज्ञात्वा मृत्युमत्येति नान्यः पन्था विमुक्तये ॥ ६६ ॥ भेदेऽस्य महिमानं स यातीत्येतद्विरुद्धकम् ॥ नान्योऽन्यदीयं प्राप्नोति महिमानमिहाञ्जसा ॥ ६७ ॥ तत्तुल्यं भजतीत्येवं कल्पनापि न युज्यते ॥ नापि स्तुतिपरत्वेन व्याख्येयं मुख्यसंभवात् ॥ ६८ ॥ ब्रह्म वेद स ब्रह्मैव भवतीतिश्रुतेरपि ॥ निरञ्जनपदेनात्राविद्याराहित्यमुच्यते ॥ ६९ ॥ परमं साम्यमित्यैक्यमाहाद्वैतामृतं परम् ॥ यस्मादत्यन्तसादृश्यमेकत्वे पर्यवस्यति ॥ १७० ॥ अल्पमप्यन्तरं कुर्वन्भयं यातीति दोषतः ॥ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ॥ ७१ ॥ अन्योऽसावन्य एवाहमिति देवपशुः श्रुतः ॥ नात्र काचिद्भिदेत्येवं भेदनिन्दाश्रुतिर्बहुः ॥ ७२ ॥ तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ यन्मदन्यन्न चास्तीह तत्कस्मान्नु बिभेम्यहम् ॥ ७३ ॥ य एवं वेद ब्रह्माहमिति सर्वं भवत्ययम् ॥ इत्यभेदधिया मोक्षाभयप्राप्तिप्रदर्शनात् ॥ ७४ ॥ यत्तु मुक्तौ भिदा सत्त्वात्परमार्थात्तदप्यसत् ॥ सर्वात्मत्वावबोधेन विदुषो ब्रह्मता श्रुतेः ॥ ७५ ॥ विरोधान्नास्ति भेदस्य गन्धोऽपि परजीवयोः ॥ इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ ७६ ॥ इत्यभेदपरं वाक्यं वैधर्म्यप्रतिषेधतः ॥ क्षेत्रज्ञं चापि मां विद्धि ज्ञानी त्वात्मैव मे मतम् ॥ ७७ ॥ अविभक्तं च भूतेषु समं सर्वेष्विति स्फुटम् ॥ साक्षाज्जगद्गुरुः श्रीशः प्राहाभेदं स्वजीवयोः ॥ ७८ ॥ नामरूपाद्विमुक्तः सन्निति मुक्तौ श्रुतिः स्वयम् ॥ नामरूपादिराहित्यं प्रतिपादयति स्फुटम् ॥ ७९ ॥ सादृश्ययोगतः साम्यं सर्वात्मत्वमितीष्यते ॥ तस्मात्तत्सर्वमभवदित्यादिश्रुतिदर्शनात् ॥ १८० ॥ एतेन द्वा सुपर्णादेर्भेदे यस्तु पुरा त्वया ॥ उपक्रमादिरुद्दिष्टः स च सम्यङ्निराकृतः ॥ ८१ ॥ उपक्रमादिकं लिङ्गं ब्रह्मैक्ये सर्वतः श्रुतौ ॥ निर्णीतं तच्च वेदान्तभाष्यादौ सूरिभिर्नयैः ॥ ८२ ॥ यत्तूक्तं सकलान्कामानश्नुते ब्रह्मणा सह ॥ सहत्वं ब्रह्मणो भेदं विना नेति तदप्यसत् ॥ ८३ ॥ कामभोगे हि विदुषः सहत्वं ब्रह्मणा कथम् ॥ किं पुत्रेण सहायातः पितेत्यत्र यथा भवेत् ॥ ८४ ॥ पितृगत्यनुकूलं हि पुत्रेऽपि गमनं तथा ॥ ब्रह्मण्यपि भवेद्भोगो विद्वद्भोगानुकूलतः ॥ ८५ ॥ तथा च नित्यतृप्तत्वविरोधः स्यान्मते तव ॥ भोगेऽनुज्ञातृतेशस्य सर्वत्रास्त्यविशेषतः ॥ ८६ ॥ मुक्तौ विशेषनिर्देशवैयर्थ्यं तव सर्वथा ॥ किं च राजा स्वभृत्येन सह भुङ्क्ते यथा तथा ॥ ८७ ॥ भुङ्क्ते विद्ब्रह्मणा तर्ह्यप्राधान्यं ब्रह्मणो भवेत् ॥ ब्रह्मणः सर्वशेषित्वमपि भज्येत ते मते ॥ ८८ ॥ ननु स्वामी यथा दासीबालकस्यापि पोषकः ॥ न तच्छेषस्तथेशोऽपि मुक्तभोगानुकूलतः ॥ ८९ ॥ मैवं स्वामिनि मानुष्ये भाविभृत्योपकारवत् ॥ ईश्वरे ह्याप्तकामे नोपकारः कोऽपि तत्कृतः ॥ १९० ॥ तस्माद्ब्रह्मण ईशस्य सहत्वायोगतो न हि ॥ सहयोगे तृतीयास्ति न वा मुक्तौ भिदाण्वपि ॥ ९१ ॥ किं तु पृथग्जनानां यत्सुखं स्यात्कामभोगजम् ॥ क्रमेण तद्विमुक्तोऽयं युगपत्सुखमश्नुते ॥ ९२ ॥ सर्वानन्दलवानां हि ब्रह्मानन्दार्णवे लयः ॥ आप्तकामो भवेद्विद्वानित्यभिप्राय आगमे ॥ ९३ ॥ सोऽश्नुते सकलान्कामानक्रमेण सुरर्षभाः ॥ विदितब्रह्मरूपेण जीवन्मुक्तो न संशयः ॥ ९४ ॥ इत्येवं ब्रह्मगीताया-

मतस्या अर्थ ईरितः ॥ सर्वेष्वित्यादिवाक्यं यद्भूमप्रकरणे स्थितम् ॥ ९५ ॥ तत्सार्वज्ञ्यपरं यद्वा निर्गुणोपासनास्तुतिः ॥ न तद्भेदपरं यस्मान्निन्दिता तत्र भेदधीः ॥ ९६ ॥ यदल्पं भिन्नमस्तीति तन्मर्त्यमिति वाक्यतः ॥ तस्मान्नास्ति श्रुतिर्भेदे प्रमाणमिति साधितम् ॥ ९७ ॥ नाप्यध्यक्षं यतस्तद्धि सत्तामात्रैकगोचरम् ॥ सा चाधिष्ठानचिद्व्योम न ततो व्यतिरिच्यते ॥ ९८ ॥ प्रत्यक्षमस्त्युदासीनं भेदसत्ताप्रसाधने ॥ अन्यस्य भेदसत्तायां प्रमाणस्याप्यभावतः ॥ ९९ ॥ ननु प्रतीयमानाया भेदनिष्ठतया हि सा ॥ सत्ता कथं भवेदात्मसत्तेत्यत्र शृणूत्तरम् ॥ २०० ॥ अधिष्ठानात्मसत्तातोऽध्यस्तसत्ता न भिद्यते ॥ तदात्मानं स्वयं ब्रह्माकुरुतेति प्रमाणतः ॥ १ ॥ परब्रह्मविवर्तस्य जगतो ब्रह्मतो न हि ॥ सत्ता भिन्ना ततोऽध्यक्षं ब्रह्मसत्तैकगोचरम् ॥ २ ॥ कार्यकारणभावोऽपि जगतो ब्रह्मणोऽस्ति यः ॥ कल्पितो यत आत्मायं न कार्यं नापि कारणम् ॥ ३ ॥ इतोऽपि भेदसत्ताया ग्राहि प्रत्यक्षमात्रकम् ॥ जलादौ गन्धप्रत्यक्षवदन्यविषयं भवेत् ॥ ४ ॥ ममैवांश इतीशस्य वाक्यमद्वैतबोधकम् ॥ नांशांशिपरमद्वैतपरागमविरोधतः ॥ ५ ॥ अध्यस्त एव भेदोऽत्र ब्रह्मात्मैक्येऽखिलश्रुतेः ॥ नान्योऽतोऽस्तीति वाक्येन तस्मादैक्यनयो जयी ॥ ६ ॥ नाध्यक्षविषयो भेदः परमार्थो न च श्रुतेः ॥ कल्पितो यो न तेनास्ति क्षतिरद्वैतवादिनाम् ॥ ७ ॥ तस्मादद्वैतसिद्धान्तविजये दुन्दुभिः श्रुतिः ॥ नान्योऽतोऽस्तीति जयति भेदवादिशुगावहा ॥ ८ ॥ किं चाध्यक्षेण भेदोऽपि गृह्यते न चिदात्मनः ॥ शुद्धस्य किं तु जीवस्य धीतादात्म्यं गतस्य च ॥ ९ ॥ अहमित्यनुभूतिर्हि भेदमत्रावगाहते ॥ सा धीतादात्म्यमापन्नमात्मानं जीवशब्दितम् ॥ २१० ॥ विषयीकुरुते नैषा शुद्धमानन्दसाक्षिणम् ॥ ननु संसारिणोऽज्ञानाद्याश्रयस्यात्मनः किल ॥ ११ ॥ सुप्तिसंबन्धिनो भेदोऽहंविज्ञानेऽनुभूयते ॥ कथं बुद्ध्यवच्छिन्नस्यैवैष भेदोऽनुभूयते ॥ १२ ॥ मैवमज्ञानकाले योऽहमित्यनुभवे नृणाम् ॥ भाति तस्माद्विभिन्नोऽस्ति साक्षी प्रत्यक्चिदात्मनः ॥ १३ ॥ यदज्ञानकृता देहादिष्वहंधीर्दृढा नृणाम् ॥ भवेत्तथेशभेदादिभ्रान्तिधीरपि वै दृढा ॥ १४ ॥ तद्विज्ञानदशायां तु नेशभेदोऽनुभूयते ॥ ईश्वरात्साक्षिणो भेदः केनचिन्नानुभूयते ॥ १५ ॥ बुद्ध्यधिष्ठानचिद्व्योम्नः सुप्तादेरपि धर्मिता ॥ भातु तेन क्षतिर्नास्ति शुद्धस्यासङ्गिनो विभोः ॥ १६ ॥ केवलाज्ञानदोषेण भात्यज्ञोऽहमिति भ्रमः ॥ नाहमीश इति भ्रान्तिः सत्यज्ञानेऽस्य दृश्यते ॥ १७ ॥ तन्निवृत्त्या न सा भ्रान्तिर्दृश्यते विदुषः क्वचित् ॥ किं त्वहं ब्रह्म चिद्व्योमस्वभावोऽस्मीति धीरुदेत् ॥ १८ ॥ न तं विदाथ य इमा जजानेत्यादिवेदगीः ॥ अज्ञानहेतुकं भेदं वदतीश्वरजीवयोः ॥ १९ ॥ अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ॥ इति मोहो विनिर्दिष्टो हरिणा ज्ञानहेतुकः ॥ २२० ॥ सार्वज्ञाल्पज्ञतादेस्तु मायया कल्पितत्वतः ॥ न भेदस्तत्कृतः सत्यः परमेश्वरजीवयोः ॥ २१ ॥ व्यावहारिकभेदोऽस्तु परमेश्वरजीवयोः ॥ व्यवहारस्थलेऽस्माभिरपि स्वीक्रियते स च ॥ २२ ॥ व्यवहारेऽस्तु सर्वज्ञ उपास्यः परमेश्वरः ॥ उपासकोऽस्तु जीवोऽयं श्रुतिस्मृतिप्रमाणतः ॥ २३ ॥ अतः सार्वज्ञमूढत्वे निरुपाधौ चिदद्वये ॥ मायया कल्पिते तत्र लौहित्यं स्फटिके यथा ॥२४॥ भेदधीश्चेद्यथार्था स्यात्तदा भेददृशो भयम् ॥ नैव ब्रूयाच्छ्रुतिस्तस्माद्भेदधीर्विभ्रमात्मिका ॥ २५ ॥ अभेदो यदि नेष्टः स्यान्मोक्षं तद्वानतो न सा ॥ ब्रूयाद्ब्रूते ततो विद्मो ह्यभेदः श्रुतिसंमतः ॥२६॥ यत्तु क्षेत्रज्ञमित्यत्र व्याख्यातं परजीवयोः ॥ नास्त्यैक्यं किं तु जीवस्य शरीरत्वात्परेशितुः ॥ २७ ॥ तद्व्यपदेश इत्यादि तत्तुच्छं तत्कथं शृणु ॥ तद्व्यपदेश इत्यत्र किमभिप्रेतमस्ति ते ॥ २८ ॥ किं तदाश्रयता वस्तुवृत्त्या वा कल्पिताथवा ॥ नाद्यो जीवपराभेदः श्रुतिस्मृतिशतैर्नयात् ॥ २९ ॥ सिद्धोऽस्ति वस्तुतो जीवे न पराश्रयता भवेत् ॥ न द्वितीयो यतस्तस्याः कल्पितताया अविद्यया ॥ २३० ॥ तत्त्वावेदकवेदान्तप्रमेयत्वं न संभवेत् ॥ अहं ब्रह्मास्मि तत्त्वं भोस्तत्त्वमेव त्वमेव तत् ॥ ३१ ॥ आत्मा ब्रह्मैव ब्रह्मात्मै-

वेत्यत्रात्मबुभुत्सुभिः ॥ विचिकित्स्यं न हीत्यादिमहावाक्येषु बोधिषु ॥ ३२ ॥ त्वदुक्तकल्पनायोगान्न भेदोऽस्ति मनागपि ॥ किंचात्मजीवक्षेत्रज्ञशब्दानां हि नियन्तरि ॥३३ ॥ लक्षणा ते मता किंवा मुख्यार्थत्वमथेश्वरे ॥ नाद्योऽनुपपत्त्यभावादीश्वरे लक्षणां विना ॥ ३४ ॥ न द्वितीयो यतो जीवो न शरीरं परेशितुः ॥ न हि जीवः परस्यास्ति भोगायतनमञ्जसा ॥३५॥ जीवस्येशशरीरत्वे तद्वाचकपदस्य च ॥ प्रवृत्तिः स्यादनायासात्तद्युक्तेऽपि शरीरिणि ॥ ३६ ॥ नैवमस्ति यतो जीवे न शरीरस्य लक्षणम् ॥ ननु साक्षात्प्रयत्नेन जन्यव्यापारवत्त्वकम् ॥ ३७ ॥ शरीरलक्षणं तच्च जीवेऽप्यस्ति तथेष्यते ॥ साक्षात्तस्येशयत्नस्याधिष्ठेयत्वादिहेति चेत् ॥ ३८ ॥ अङ्गुल्यादेरपीत्थं स्यात्साक्षाद्यत्नाश्रयत्वतः ॥ शरीरत्वं न तद्युक्तं सर्वलोकविरोधतः ॥ ३९ ॥ सत्यन्त्यावयवित्वे चेच्छरीरत्वं तदप्यहो ॥ जीवेऽन्त्यावयवित्वस्याप्यभावान्नैव सांप्रतम् ॥ २४० ॥ ब्रह्मण्यपि प्रयत्नस्याभावाच्चैतन्न सांप्रतम् ॥ वेदान्तवेद्ये चिद्धातौ ब्रह्मण्यक्रिय आत्मनि ॥ ४१ ॥ अनित्यस्याथ नित्यस्य प्रयत्नस्यास्त्ययोग्यता ॥ अतो जीवस्य नास्त्येतद्यत्नाधिष्ठेयता किल ॥ ४२ ॥ किंचेश्वरे शरीरित्वं वक्तुमेव न शक्यते ॥ सशरीरस्य नास्त्येव प्रियाप्रियनिवारणम् ॥ ४३ ॥ निष्कलस्यातिशुद्धस्य स्वतन्त्रस्य महेशितुः ॥ न संभवेच्छरीरित्वं वाङ्मनोऽतिगतस्य च ॥ ४४ ॥ शरीरत्वं प्रपञ्चेऽपि दुर्घटं नश्वरे चले ॥ अविद्याकल्पितं विश्वं क्षेत्ररूपं परे पदे ॥ ४५ ॥ कथं वा तच्छरीरं स्याद्भोगायतनमीशितुः ॥ भोक्तृत्वमपि नास्तीशे नित्यतृप्ते निरामये ॥ ४६ ॥ भोक्तृत्वं च शरीरित्वं मायया प्रत्यगात्मनि ॥ कल्पितं तेन संसारी प्रत्यगात्मावभासते ॥ ४७ ॥ तन्निषेधेन शुद्धत्वं प्रत्यगात्मनि चिद्घने ॥ अभोक्तृत्वमदेहत्वमसंसारित्वमिष्यते ॥ ४८ ॥ कथं वेदान्तवेद्येऽस्मिन् शरीरित्वं त्वयेरितम् ॥ अन्तर्यामि ब्राह्मणं तु सर्वं विश्वं चराचरम् ॥४९॥ ब्रह्मणा व्याप्तमित्येतत्परं नान्यत्र तत्परम् ॥ चित्सत्ताभ्यां जगत्सर्वं ब्रह्मणा ततमन्यथा ॥२५०॥ न च स्यान्न स्फुरेन्नैव चेष्टेतानृतमित्यपि ॥ श्रुत्या प्रदर्शितं चान्तर्यामिब्राह्मण उत्तमम् ॥ ५१ ॥ न जीवपरयोर्देहदेहिभावनिबन्धनम् ॥ सामानाधिकरण्यं मां क्षेत्रज्ञमित्यतः स्फुटम् ॥ ५२ ॥ ब्राह्मणोऽस्य मुखमासीदितिवज्जीवजन्म च ॥ अस्त्येवेहेश्वराद्देहविशिष्टत्वेन तत्ततः ॥ ५३ ॥ क्षेत्रज्ञं चापि मां विद्धीत्याह विष्णुः किलेति चेत् ॥ मैवं नास्तीश्वराज्जन्म केवलस्यात्मनोऽजनेः ॥ ५४ ॥ अनादित्वाद्विशुद्धत्वान्नित्यत्वाच्चिद्घनत्वतः ॥ शरीरेण विशिष्टस्य पृथक्त्वं शुद्धजीवतः ॥ ५५ ॥ उत्पत्तिर्देहमात्रस्य श्रुतौ प्रोक्ता न चात्मनः ॥ अन्यथा सर्ववेदान्तविरोधं को निवारयेत् ॥ ५६ ॥ सर्वभूतेषु गूढोऽयं साक्ष्येको देव उत्तमः ॥ स एषोऽत्र प्रविष्टोऽस्ति सृष्ट्वा सर्वं चराचरम् ॥ ५७ ॥ स वै प्रविष्टः सर्वेषु मायया बहुरूपधृक् ॥ अमूढो मूढवत्सोऽयं व्यवहर्ताऽऽस्त आग्रहात् ॥ ५८ ॥ इत्यत्रानुप्रविष्टस्य मूढत्वव्यवहर्तृते ॥ श्रूयेतेऽनेन जीवेन प्रविष्ट इति च श्रुतेः ॥ ५९ ॥ स्वप्रकाशस्य सत्यस्य शुद्धस्य परमात्मनः ॥ जीवरूपेण देहेषु प्रवेशः श्रूयते श्रुतौ ॥ २६० ॥ वेदाविनाशिनं नित्यं य एनमजमव्ययम् ॥ नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः ॥ ६१ ॥ अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते ॥ उत्पत्त्यसंभवादित्थं श्रुतिसूत्रगणेष्वपि ॥ ६२ ॥ श्रीविष्णोः परिपूर्णस्य क्षेत्रज्ञत्वं हरेर्मतम् ॥ अत आह हरिः साक्षात्क्षेत्रज्ञं विद्धि मामिति ॥६३॥ श्रीविष्णोर्न पृथग्जीवो विभुर्नाणुर्न मध्यमः ॥ किंत्वात्मा सर्वभूतानां विष्णुरेव न चापरः ॥६४॥ क्षेत्रज्ञत्वं च क्षेत्रत्वं माययाध्यस्तमीश्वरे ॥ ईश्वरात्मावबोधेन शिष्यते विष्णुरव्ययः ॥ ६५ ॥ उपदेश्योपदेशादिव्यवहारस्तु कल्पितः ॥ ब्रह्मात्म्यैक्यमते सम्यक् सिद्ध्यत्येव निरङ्कुशम् ॥ ६६ ॥ स्ववशीकृतमायत्वाद्भगवाञ्जगतां गुरुः ॥ उपदेष्टास्ति सर्वत्राचार्यदेहेष्वपि स्वयम् ॥ ६७ ॥ स्ववर्णाश्रमसद्धर्मैर्नानाजन्मस्वनुष्ठितैः ॥ आराधितो हरिस्तुष्टो विद्यामुपदिशत्यजः ॥ ६८ ॥ स्वतः सिद्धात्मविज्ञानः स्वसाम्राज्य-

पदे स्थितः ॥ जीवाज्ञानानुसारेण तेभ्यो ह्युपदिशत्यसौ ॥ ६९ ॥ उपदेश्योपदेशादिर्यावदज्ञानभाव्ययम् ॥ भेदो ध्वस्ते महामोहे ज्ञाने नास्ति मनागपि ॥ २७० ॥ तत्त्वज्ञानात्पुरैवायं व्यवहारोऽप्यपेक्ष्यते ॥ तत्सिद्धौ मास्तु सर्वेयं व्यवहारपरंपरा ॥ ७१ ॥ यमेष वृणुते देवः स वेत्त्येनं न चापरः ॥ ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ ७२ ॥ इत्यादिमानसिद्धेऽर्थे न विवादोऽस्ति धीमताम् ॥ कल्पितेनापि भेदेनाप्युपदेशपरंपरा ॥ ७३ ॥ स्वप्नोपदिष्टमन्त्रादावर्थसिद्धिरिवेष्यते ॥ यथा वर्णेषु दीर्घत्वादयो धर्मा ध्वनेरपि ॥ ७४ ॥ आरोपिता अपि ह्येते संप्रतिपत्तिहेतवः ॥ तथारोपितभेदोऽपि तत्त्वविज्ञानकारणम् ॥७५॥ संभवत्येव वेदान्ताः प्रमाणं सर्वथात्र नः ॥ एतेन स्वर्गनरकौ बन्धमोक्षौ भवाभवौ ॥ ७६ ॥ व्याख्यातौ मातृनिष्ठत्वान्न ते सन्ति परे पदे ॥ निर्दुष्टेऽपि मते दोषोद्भावनं मन्दबुद्धयः ॥ ७७ ॥ कुर्वन्ति यदि कुर्वन्तु तेन का क्षतिरस्ति नः ॥ न हि मन्दधियां वेदसिद्धान्तोद्घाटने स्वयम् ॥ ७८ ॥ सामर्थ्यं किंतु गोविन्दकृपापाङ्गनिरीक्षणात् ॥ तत्तु सज्जननिर्णीतमार्गे श्रद्धावतां भवेत् ॥ ७९ ॥ सत्सु चेद्दोषकालुष्यं क्व गतिस्तर्हि दुर्धियाम् ॥ अतो निर्दुष्टमालोच्य मतं ग्राह्यं श्रुतेर्हरेः ॥ २८० ॥ क्षेत्रज्ञं मां मदीयं त्वं विद्धीत्यादि यदर्थतः ॥ व्याख्यानमसमीचीनतयैतत्खण्डितं बुधैः ॥ ८१ ॥ भेदाभेदमतं तद्वत्खण्डितं बहुसूरिभिः ॥ न युक्तं बन्धमोक्षादेरप्यसंभवतो नयैः ॥ ८२ ॥ भेदाभेदमते तत्त्वं पदार्थौ ब्रह्मजीवकौ ॥ दुर्निरूपौ नयैस्तत्र कस्तावत्त्वंपदार्थकः ॥ ८३ ॥ जीवस्ते संमतः किं स भेदाभेदोभयात्मकः ॥ भिदाभिदाभ्यामंशाभ्यामंशी किंवा न चाग्रिमः ॥ ८४ ॥ जीवस्यावस्तुतादोषान्न हि जीवो भिदाभिदे ॥ तयोस्तु परतन्त्रत्वात्समुदायो न संभवेत् ॥ ८५ ॥ द्वितीये यद्यभेदांशो ब्रह्म तर्ह्यस्तु तस्य च ॥ जीवांशत्वं हि जीवस्य सावयवत्वमाप्नुयात् ॥ ८६ ॥ नाभेदांशो यदि ब्रह्म तर्ह्यत्यन्तभिदानयोः ॥ तथा च ज्ञानमोक्षादिव्यवहारो न संभवेत् ॥ ८७ ॥ शास्त्रोपदेशः कस्यायं नाभेदांशस्य संभवेत् ॥ ब्रह्मरूपतया तस्य नोपदेशाद्यपेक्षता ॥ ८८ ॥ भेदांशस्योपदेशो नाहं ब्रह्मास्मीत्ययोगतः ॥ मोक्षेऽपि न भिदांशस्य स्यादभेदो विरोधतः ॥ ८९ ॥ न चाविद्यादिदोषोऽस्याभेदांशस्यापि संभवेत् ॥ ब्रह्मण्यपि प्रसज्येत नापि भेदांशगः स च ॥ २९० ॥ उपाधिजननात्पूर्वं भेदाभावादथापि च ॥ उपाधिमनपेक्ष्यैव भिन्नोंऽशो जीव उच्यते ॥ ९१ ॥ तदंशनाशे जीवस्य नाशात्कस्य विमुक्तता ॥ ब्रह्मणस्त्वभिदांशस्य नित्यमुक्तत्वमेव हि ॥ ९२ ॥ मोक्षेऽपि भिन्नाभिन्नश्चेत्तर्हि ब्रह्मैव तत्त्ववित् ॥ इत्येवकारस्वारस्यं न स्यान्मोक्षेऽपि संसृतेः ॥ ९३ ॥ अनेकदोषदुष्टत्वाद्भेदाभेदमतं स्वतः ॥ खण्डितं सर्वथा हेयतयोपेक्ष्यमितीरितम् ॥ ९४ ॥ शांकरे दिग्जयेऽस्माभिर्बहुधेत्युपरस्यते ॥ अत आविद्यको भेदः परमेश्वरजीवयोः ॥ ९५ ॥ तात्त्विकं त्वैक्यमेवास्ति वेदान्तैः सिद्धमित्यलम् ॥ विस्तरेणेति जयति ब्रह्मात्मैक्यपरा श्रुतिः ॥ ९६ ॥ श्रुतिरपि परमार्थं ब्रह्मभावं विशुद्धं वदति जडविकारान्संव्युदस्य प्रतीचः ॥ विमलसुखघनैक्यं तत्त्वमस्यादिवाक्यैः स्मृतिरपि शतशश्च प्राह तत्त्वैक्यनिष्ठाम् ॥ ९७ ॥ न चायं संसारी भवति हरितो भिन्न उदितः स एवादौ सृष्ट्वा प्रविशति हरिर्जीववपुषा ॥ न चान्योऽस्माद्दृष्टेत्यपवदति भेदं श्रुतिशिरः प्रवेशः संबन्धो भ्रमकलित एवास्य नियतः ॥ ९८ ॥ अहं कर्तेत्याद्या भ्रमवशत एवास्य कलना भ्रमे नष्टे नश्यत्यहमिति ममेत्यान्ध्यकलना ॥ अतः क्षेत्रज्ञं मामिति वदति जीवात्मपरयोर्हरिः शुद्धं तत्त्वं निरवधिसुखं चैक्यममृतम् ॥ ९९ ॥ अतः पूर्वोक्त एवार्थः श्रीहरेः संमतः श्रुतेः ॥ न तत्र भेदकलना न भेदाभेदविभ्रमः ॥ ३०० ॥ जीवत्वं मायया शुद्धे कल्पितं बोधतः क्षतम् ॥ शुद्धमैक्यं तयोः सिद्धं भेदस्त्वाविद्यकोऽनयोः ॥ १ ॥ न ह्यविद्याकृतो भेदः परमार्थपदं स्पृशेत् ॥ अध्यस्तगुणदोषाभ्यां नाधिष्ठानस्य संगता ॥ २ ॥ आकाशे कल्पितं नैल्यमूषरे वा जलं भ्रमात् ॥ न रूपवत्कृतं व्योम नैल्येनेह मनागपि ॥ ३ ॥ न वा पङ्कीकृतो देशः कल्पितेनाम्भसोषरः ॥

तथाऽविद्याकृतं ब्रह्माधिष्ठानं न स्पृशेन्मलम् ॥ ४ ॥ संसारिता महेशे वा जीवे सर्वज्ञताऽथवा ॥ न शङ्क्योपाधिभेदेन तयोर्भेदो यतो मतः ॥ ५ ॥ एकमेवाद्वितीयं यद्वस्तु ब्रह्माजरामरम् ॥ स्वाविद्यया तदेवेह द्विधा भिन्नमुपाधितः ॥ ६ ॥ अविद्याऽपि त्रिधा भिन्ना गुणत्रयविभागतः ॥ विशुद्धसत्त्वं मायेति सर्वशक्तिनियामिका ॥ ७ ॥ रजस्तमोभ्यां मलिनमविद्येत्युच्यते बुधैः ॥ तमःप्रधाना प्रकृतिस्तृतीया भूतकारिणी ॥८॥ मायाशक्त्याश्रयो ब्रह्म परमेश इतीरितः ॥ स सर्वज्ञः सर्वशक्तिर्जगज्जन्मादिकारणम् ॥ ९ ॥ न तस्यावृतिविक्षेपौ कर्तुं शक्ता महेश्वरी ॥ स स्वप्रकाशचित्सौख्यसंविदालिङ्गितो यतः ॥ ३१० ॥ नित्यमुक्तस्वभावत्वात्स्वे महिम्न्येव तिष्ठति ॥ सृष्ट्यादिकरणेऽप्यस्य न श्रमः सर्वशक्तितः ॥ ११ ॥ यदविद्याश्रयो ब्रह्म स क्षेत्रज्ञ इतीरितः ॥ तस्यावृतस्वरूपत्वात्संसारित्वमितीरितम् ॥ १२ ॥ स्वाविद्याध्यस्तकर्तृत्वभोक्तृत्वाद्यभिमानतः ॥ वस्तुतः शुद्ध एवासौ क्षेत्रज्ञः पुरुषोत्तमः ॥ १३ ॥ तमःप्रधानया शक्त्या ब्रह्माण्डं कल्पितं परे ॥ समष्टिव्यष्टिभेदेन द्विविधं तदुदीरितम् ॥ १४ ॥ जीवे त्वंपदवाच्यार्थे व्यष्ट्याख्यं तत्प्रकल्पितम् ॥ ईशे तत्पदवाच्यार्थे समष्ट्याख्यं प्रकल्पितम् ॥ १५ ॥ तद्द्वयं क्षेत्रशब्देन समष्टिव्यष्टिसंज्ञकम् ॥ उक्तं भगवता तत्र क्षेत्रज्ञो भगवानसौ ॥ १६ ॥ तद्द्वयं भेदकं क्षेत्रं त्यक्त्वा मायामयं जडम् ॥ शुद्धं क्षेत्रज्ञमात्मानं प्रत्यञ्चं ब्रह्म वेत्ति यः ॥ १७ ॥ स सम्यग्ज्ञानवान्धीरो मतो भगवतो हरेः ॥ तदेवमनृतं क्षेत्रं मायया कल्पितं परे ॥ १८ ॥ सत्यक्षेत्रज्ञ एवैतद्ब्रह्माधिष्ठानमद्वयः ॥ क्षेत्रक्षेत्रज्ञयोरेवं यज्ज्ञानं वेदमानजम् ॥ १९ ॥ तदेव मोक्षहेतुत्वाज्ज्ञानमज्ञानबाधकम् ॥ मम श्रीवासुदेवस्य मतं नान्यद्ब्रह्मात्मकम् ॥ ३२० ॥ अत्रायमाशयो विष्णोरागमस्यापि संमतः ॥ वस्तुतो ब्रह्मचिन्मात्रमेकमेवाद्वयं परम् ॥ २१ ॥ असङ्गोदासीनं कर्तृभोक्तृभावादिवर्जितम् ॥ तदेवाविद्यया स्वस्मिन्संसारित्वं प्रकल्प्य च ॥ २२ ॥ जीवेश्वरभिदां तद्वदध्यस्यावृतचिद्वपुः ॥ विस्मृत्यात्मपदं शुद्धं जीवोऽहमिति मन्यते ॥ २३ ॥ स जीवोऽप्यन्धतमसि निमग्नो लिङ्गसंवृतः ॥ जन्ममृत्युमयीं घोरां संसृतिं भजते भ्रमात् ॥ २४ ॥ उपाधौ क्षेत्ररूपेऽस्मिन्नहमित्यभिमानवान् ॥ क्षेत्रज्ञो जन्तुरज्ञोऽसौ जीव इत्यभिशब्दितः ॥ २५ ॥ पापपुण्यमयी संविदुद्भूतास्य दृढान्तरा ॥ अविद्याकामकर्मादिमलैराच्छादितान्तरः ॥ २६ ॥ पुनर्जन्म पुनर्मृत्युं प्रयात्याकल्पमातुरः ॥ कदाचित्पुण्यसंपत्त्या त्यक्तपापमलो नरः ॥ २७ ॥ ईश्वराभिमुखत्वैकहेतुं भक्तिं परां हरौ ॥ कृत्वा शुद्धिं ततः प्राप्य वैराग्यादियुतः सुधीः ॥ २८ ॥ उपसृत्य गुरुं तस्माच्छ्रुत्वा वेदान्तसद्वचः ॥ तत्त्वमस्यादितज्जन्यबोधेनात्मानमद्वयम् ॥ २९ ॥ साक्षात्कृत्य स्वयं साक्षात्पुरुषोत्तम एव सः ॥ अत आह हरिः साक्षात्क्षेत्रज्ञं विद्धि मामिति ॥ ३३० ॥ २ ॥

भा० टी०—एवं दृश्यानां दुःखादीनामनात्मधर्मत्वसिद्धये द्रष्टारं शरीराद्यतिरिक्तं प्रदर्श्य किमेतावन्मात्रेण ज्ञानेन ज्ञातव्यौ एतावन्मात्रेणैव ज्ञानेन मोक्षस्य सांख्याभिमतत्वादित्याशङ्कानिरासायात्मनः सर्वदेहेष्वैक्योक्तिपूर्वकं स्वेन परमार्थेनाक्षरेण परब्रह्मणाऽभेदं दर्शयति—**क्षेत्रज्ञं चापीति** । क्षेत्रज्ञं क्षेत्रज्ञातारं दृश्यात् क्षेत्रात् शरीरान्निष्कृष्टं द्रष्टारम् । चापीतिनिपातौ जीवस्याक्षरत्वज्ञानस्य शरीरादन्यत्वज्ञानेन समुच्चयार्थौ भिन्नक्रमौ । न सांख्यवद्दृश्यादन्यमेव क्षेत्रज्ञं विद्धि जानीहि किंतु मां मदभिन्नं चापि क्षेत्रज्ञं विद्धीति संबन्धः, यद्वा चकारः क्षेत्रज्ञज्ञानं समुच्चिनोति । अपिरेवार्थः । सर्वक्षेत्रेषु द्रष्टारं क्षेत्रज्ञमन्यं विद्धि तं च मामसंसारिणं परमेश्वरमेव विद्धीत्यर्थः । सर्वक्षेत्रेषु यः क्षेत्रज्ञः ब्रह्मादिस्तम्बपर्यन्ताऽनेकक्षेत्रोपाधिप्रविभक्तस्तं निरस्तसमस्तोपाधिभेदं सदसदादिशब्दप्रत्ययागोचरं मां विद्धीत्यभिप्रायः । यथा भरतवंशोद्भवत्वाद्भारतस्त्वं तथा मयि कल्पितः क्षेत्रज्ञोऽहमेवेति ध्वनयन्संबोधयति—भारतेति । उत्तमवंश्यत्वादेतज्ज्ञातुं योग्योऽसीति वा संबोधनाशयः । नन्वेतत्किमर्थं ज्ञातव्यमित्यपेक्षायां मोक्षानन्यसाधनसम्यग्ज्ञानत्वेन मदभिप्रेतत्वादित्याह—क्षेत्रेति ।

यस्माद्दृश्यद्रष्टृप्रत्यगभिन्नपरमात्मयाथात्म्यव्यतिरेकेण ज्ञानगोचरस्यावशिष्टस्यान्यस्यासत्त्वात् क्षेत्रक्षेत्रज्ञयोर्ज्ञेयभूतयोर्यज्ज्ञानं—क्षेत्रमात्मनि कल्पितं दृश्यं, क्षेत्रज्ञश्च परमेश्वराभिन्नः प्रत्यगात्मा, तौ क्षेत्रक्षेत्रज्ञौ येन ज्ञानेन गोचरीक्रियेते—तज्ज्ञानं सम्यग्ज्ञानमिति मम वासुदेवस्य परमेश्वरस्य विष्णोः शास्त्रयोनेरभिप्रेतमित्यर्थः। ननु जीवेश्वरयोरेकत्वे सर्वक्षेत्रेष्वेकः ईश्वरो नान्यस्तद्व्यतिरिक्तो भोक्तेति जीवस्येश्वरेऽन्तर्भावो न वक्तुं शक्यः। संसारालम्बनस्य जीवस्येश्वरादन्यस्याभावे संसारस्य निरालम्बनत्वानुपपत्त्या परस्यैव संसारित्वप्रसङ्गात्। संसारिणि जीवे ईश्वरस्यान्तर्भावोऽपि न शक्यते वक्तुं संसारिणोऽन्यस्याभावात् तस्य चापहतपाप्मत्वादिगुणकस्य विपरीतगुणकत्वेन ग्रहणानुपपत्त्या संसारित्वस्यानिष्टत्वेन संसाराभावप्रसङ्गात्। नच प्रसङ्गद्वयमपीष्टमिति वाच्यं, संसाराभावे "तयोरन्यः पिप्पलं स्वाद्वत्ति" इत्यादिबन्धशास्त्रस्य तद्धेतुकर्मविषयककर्मकाण्डस्य चानर्थक्यापत्तेः। ईश्वराश्रिते च संसारे "अनश्नन्नन्यो अभिचाकशीति" इतीश्वरासंसारित्वबोधकस्य शास्त्रस्य मोक्षतद्धेतुज्ञानप्रतिपादकस्य च ज्ञानकाण्डस्य वैयर्थ्यप्रसङ्गाच्च। किंच प्रत्यक्षादिविरोधादपि संसारभावप्रसङ्गस्यानिष्टत्वं सुखदुःखतद्धेतुलक्षणस्य संसारस्य प्रत्यक्षेणोपलभ्यमानत्वात्। संसारः विचित्रहेतुकः विचित्रकार्यत्वात् प्रासादादिवदित्यनुमानाच्च संसाराभावप्रसङ्गस्यानिष्टत्वं तस्मादात्मेश्वरैकत्वमनुपपत्तिग्रस्तत्वान्न युक्तम्। अपि च जीवेश्वरयोरैक्यमेव न संभवति परोक्षापरोक्षत्वातिविरुद्धधर्मवत्त्वाद्—ईश्वराद्भिन्नोऽहं कर्ता भोक्ता चेति सर्वप्रमाणोपजीव्येन ज्येष्ठेन प्रत्यक्षेण गृहीतस्य प्रत्ययस्य वाक्यप्रमाणजन्यज्ञानेन बाधायोगाच्च। तस्मात्क्षेत्रज्ञं चापि मां विद्धीत्यादि वदतो भगवतो नात्मेश्वरैकत्वबोधने तात्पर्यं किंतु प्रतिमादिषु विष्ण्वादिदर्शनमिव क्षेत्रज्ञे मद्दृष्टिर्विधेयेति चेन्न, ज्ञानाज्ञानयोः स्वरूपतः फलतश्चान्यत्वोपपत्त्या जीवेश्वरयोरैक्येऽप्यज्ञानकृतं संसारित्वं ज्ञानकृतमसंसारित्वमिति विभागेनानुपपत्त्यभावात्, विरुद्धधर्माणां ब्रह्मण्यध्यस्तत्वात्, शुद्धचैतन्ययोरभेदस्याविरुद्धत्वाच्च। तथाच "दूरमेते विपरीते विषूची अविद्या या च विद्येति ज्ञाता। विद्याऽभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त। श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरीत्य विविनक्ति धीरः। श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद्वृणीते" इति श्रुतिभ्यां स्वरूपतः फलतश्च विलक्षणत्वेन विद्याविद्ये निर्दिष्टे। दूरं दूरेण महतान्तरेण विपरीते विवेकाविवेकात्मत्वात् तमःप्रकाशवत् परस्परव्यावृत्तात्मिके विषूची विषूच्यौ नानागती बन्धमोक्षहेतुत्वात् भिन्नफले। के ते इत्यत आह—अविद्या या च विद्येति। ज्ञातावगता पण्डितैस्तत्र विद्याभीप्सिनं विद्यार्थिनं नचिकेतसं त्वा त्वामहं मन्ये। यस्मादविद्वद्बुद्धिप्रलोभिनः कामा अप्सरःप्रभृतयो बहवोऽपि त्वां नालोलुपन्त श्रेयोमार्गाद्विच्छेदं न कृतवन्तः साधनतः फलतश्च मन्दबुद्धीनां दुर्विवेकरूपत्वात्। व्यामिश्रीभूते इव श्रेयश्च प्रेयश्च मनुष्यं आ इतः प्राप्नुतः। अतो हंस इवाम्भसः पयस्तौ श्रेयःप्रेयःपदार्थौ संपरीत्य सम्यक् परिगम्य मनसालोक्य धीरो धीमान् गुरुलाघवं विविनक्ति पृथक्करोति; विविच्य च धीरः श्रेयो हि श्रेयो मोक्षलक्षणमेवाभिवृणीते प्रेयसोऽभ्यर्हितत्वात्। यस्तु मन्दोऽल्पबुद्धिः सदसद्विवेकासामर्थ्याद्योगक्षेमात् योगक्षेमनिमित्तं शरीराद्युपचयरक्षणनिमित्तं प्रेयः पशुपुत्रादिलक्षणं वृणीते इति श्रुत्योरर्थः। किंच "द्वाविमावथ पन्थानौ" इत्यादि वदता वेदव्यासेनात्र च निष्ठाद्वयं दर्शयता भगवता ते विलक्षणेऽभिहिते। अत्राविद्या च संसारहेतुभूता सह कार्येण मोक्षहेतुभूतया विद्यया हातव्येति श्रुतिस्मृतिन्यायेभ्योऽवगम्यते। तथाच श्रुतयः—"इह चेदवेदीदथ सत्यमस्ति। न चेदिहावेदीन्महती विनष्टिः। तमेवं विद्वानमृत इह भवति। तमेव विदित्वाऽतिमृत्युमेति। नान्यः पन्था विद्यतेऽयनाय। विद्वान्न बिभेति कुतश्चन। उदरमन्तरं कुरुते, अथ तस्य भयं भवति। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति। अविद्यायामन्तरे वर्तमानाः स्वयं धीराः पण्डितं मन्यमाना दन्द्रम्यमाणाः परियन्ति मूढाः अन्धेनैव नीय-

माना यथान्धाः। असुर्या नाम ते लोका अन्धेन तमसावृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः। तरति शोकमात्मवित्। ब्रह्मविदाप्नोति परम्। ब्रह्म वेद ब्रह्मैव भवति। अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानाम्। आत्मवित्सः स इदं सर्वं भवति। भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे। यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति" इत्याद्याः सहस्रशः। स्मृतयश्च 'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः। अन्यथा सन्तमात्मानं योऽन्यथा प्रतिपद्यते। किं तेन न कृतं पापं चौरेणात्मापहारिणा। ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः। तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम्। इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः। समं पश्यन्हि सर्वत्र' इत्याद्याः। अनर्थनिवृत्तिर्ज्ञानफलमनर्थप्राप्तिरज्ञानफलमित्येतदन्वयव्यतिरेकन्यायादपि सिध्यति। तदुक्तं पुराणे—'सर्पान्कुशाग्राणि तथोदपानं ज्ञात्वा मनुष्याः परिवर्जयन्ति। अज्ञानतस्तं च पतन्ति केचिज्ज्ञाने फलं पश्य यथा विशिष्टम्' इति। इह जीवदवस्थायां चेच्छब्देन विद्योदयदौर्लभ्यं द्योत्यते। अवेदीदहं ब्रह्मेति ज्ञातवान्। अथ ज्ञानानन्तरमेव सत्यमवितथमबाध्यं कैवल्यमस्ति स्यात्, न चेदिहावेदीद् इह चेन्न विजानीयात् तर्हि महती विनष्टिः जन्ममरणादिलक्षणा संसृतिरस्ति तमेव परमात्मानमेव विदित्वा ज्ञात्वा विदित्वैवेति वाऽतिमृत्युमेति मृत्युमत्येति अतिक्रामति। मुच्यते। अयनाय मोक्षाय। उदरमत्यल्पमपि अविद्यायामन्तरे मध्ये घनीभूत इव तमसि वर्तमानाः पुत्रधनादितृष्णापाशशतैरावेष्ट्यमानाः स्वयं धीरा धीमन्तो नत्वन्यैर्धीरत्वेनाभिमता अपण्डितमात्मानं पण्डितं शास्त्रकुशलं मन्यमाना ये एतादृशास्ते दन्द्रम्यमाणा अत्यन्तं कुटिलामनेकरूपां गतिं गच्छन्तः परियन्ति जरामरणादिदुःखे परिगच्छन्ति, यतो मूढा अविवेकिनः। तत्र दृष्टान्तः अन्धेनैव दृष्टिहीनेनैव विषमे पथि नीयमाना यथान्धाः महान्तमनर्थं प्राप्नुवन्ति तद्वदिति कठिनश्रुत्यक्षरार्थः। तथाच देहेन्द्रियाद्यनात्मसु आत्मबुद्धिमतोऽज्ञस्य रागद्वेषादिप्रयुक्तस्य धर्माधर्मानुष्ठानकर्तुः जन्ममरणादिलक्षणसंसारभाक्त्वं देहेन्द्रियादिव्यतिरिक्तात्मदर्शिनो रागद्वेषादिप्रहाणापेक्षधर्माधर्मप्रवृत्त्युपशमात् मोक्षभाक्त्वं श्रुतिस्मृतिन्यायादवगतं न केनचिद्वादिना कयाचिदपि युक्त्या वारयितुं शक्यम्। एवं चोक्तप्रकारेण ज्ञानाज्ञानयोः स्वरूपतः कार्यतश्च भेदे सति वस्तुतः क्षेत्रज्ञस्यैवेश्वरस्य सतोऽविद्याकृतबुद्ध्याद्युपाधिभेदात् संसारित्वमाविद्यकमाभासरूपं प्रातिभासिकं सिध्यति। यथा पुरःस्थिते वस्तुतः स्थाणावविद्याकृतेऽतस्मिँस्तद्बुद्धिलक्षणे पुरुष इति निश्चये जातेऽपि पुरुषधर्मः शिरःपाण्यादिमत्त्वं न स्थाणोर्भवति तद्धर्मो वक्रत्वादिमत्त्वं वा न पुरुषस्य दृश्यते, तथा देहाद्यनात्मस्वात्मभावनिश्चयेऽविद्याकृते सर्वजन्तुप्रसिद्धे जाते न चैतन्यं देहादिधर्मो देहादेर्धर्मो न वा जाड्यजरामरणादिश्चैतन्यस्य। ननु जाड्यादेरनात्मधर्मत्वेऽपि सुखादेरात्मधर्मत्वं किं न स्यादिति चेन्न, "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इतिश्रुत्या विमतं सुखदुःखमोहात्मकत्वादिरात्मनो धर्मो न भवति अविद्याकृतत्वाविशेषाज्जरामृत्युवदिति युक्त्या च सुखदुःखादीनामनात्मधर्मत्वासिद्धेः। ननु स्थाणुपुरुषयोर्ज्ञेययोरेव सतोर्ज्ञात्राऽविद्ययान्योन्यस्मिन्नध्यस्तत्वाद्देहात्मनोऽस्तु ज्ञेयज्ञात्रोरेवाध्यासाद्दृष्टान्तदार्ष्टान्तिकयोर्वैषम्येण स्थाणौ पुरुषत्ववदाविद्यकत्वं देहादेरयुक्तम्। अध्यासव्यापकस्योभयोर्ज्ञेयत्वस्य व्यावृत्त्या व्याप्यस्याध्यासस्यापि व्यावृत्तेः। तस्माद्देहधर्मो ज्ञेयोऽपि सुखादिरात्मनो भवतीति चेदुच्यते—अविद्याध्यासमात्रं हि दृष्टान्तदार्ष्टान्तिकयोः साधर्म्यं विवक्षितमुभयोर्ज्ञेयत्वं तु नाध्यासव्यापकं स्वप्ने ज्ञातरि ज्ञेयाध्यासदर्शनात्। सुखदुःखमोहेच्छादीनां देहादेः क्षेत्रस्य धर्माणामात्मधर्मत्वं चेत्तर्हि विशेषहेत्वभावाद्चैतन्यं जरामरणादिकं चात्मनो दुर्वारं स्यात्। सुखादेरात्मधर्मत्वाभावे तु विमतं सुखादिकमात्मधर्मो न भवति अविद्यारोपितत्वाद्, आगमापायित्वाद्, दृश्यत्वात्, जडत्वात्, जरादिवदित्यस्ति हेतुरतः सुखादीनां क्षेत्रधर्मत्वमेव

युक्तं नात्मधर्मत्वम् । एवं च सर्वक्षेत्रेष्वपि सतो भगवतः क्षेत्रज्ञात्मकस्येश्वरस्य संसारित्वगन्धमात्रापि न शङ्कनीया। यथा बालैरध्यारोपितेन तलमलिनत्वादिना आकाशस्यास्पर्शस्तथा कर्तृत्वभोक्तृत्वलक्षणेन संसारेण ज्ञेयस्थेन ज्ञातर्यविद्यारोपितेन ज्ञातुर्वस्तुतः स्पर्शाभावात् । नन्वविद्यावत्वात्क्षेत्रज्ञस्य तदध्यस्तं संसारित्वमपि स्वाभाविकं स्यादिति चेन्न, तामसे आवरणात्मके तिमिरादिदोषे सत्यग्रहणादेरविद्यात्रयस्योपलब्धेर्विवेकप्रकाशात्मके क्षेत्रज्ञे तामसत्वेनावरणात्मिकाया अविद्याया अभावेनाग्रहणविपरीतग्रहणसंशयानामप्यनुपपत्त्या तस्य स्वाभाविकसंसारित्वस्याभावात् । नन्वेवं तर्हि 'आत्मानं न जानामि मनुष्योऽहम्' इत्यादिप्रत्ययदर्शनात् ज्ञातुर्धर्मोऽविद्या, तद्धर्मवत्त्वं च ज्ञातुः संसारित्वं तथाचेश्वर एव क्षेत्रज्ञो संसारी चेति विप्रतिषिद्धमिति चेन्न, यतो यथा चक्षुषि तैमिरिकत्वादिदोषे सति विपरीतग्रहणादिकं दृश्यते दोषापगमे च न दृश्यते इत्यन्वयव्यतिरेकाभ्यां निमित्तं नैमित्तिकं च करणस्य चक्षुष एव न तु गृहीतृधर्मस्तथा सर्वत्राग्रहणादिप्रत्ययास्तद्धेतवश्च दोषाः कस्यचित्करणस्यैव भवितुमर्हन्ति । तथाचावरणाद्यात्मिकाविद्या अन्तःकरणस्य धर्मो नतु क्षेत्रज्ञस्य । तथाचायं प्रयोगः निमित्तनैमित्तिकाऽविद्या तत्त्वतो न ज्ञातृधर्मो दोषत्वात्तत्कार्यत्वाद्वा तिमिरादिदोषवत् तज्जन्यविपरीतग्रहणवद्वा । किंचाग्रहणादिस्तद्धेतुर्दोषश्च तत्त्वतो न ज्ञातृधर्मः ज्ञेयत्वात् प्रदीपप्रकाशवत् । यज्ज्ञेयं तत्स्वातिरिक्तज्ञेयं यथा प्रदीपप्रकाश इति व्याप्त्याऽग्रहणादेरपि ज्ञेयत्वेन स्वातिरिक्तज्ञेयत्वावश्यंभावात् । ज्ञाता न ज्ञेयधर्मवान् ज्ञातृत्वात् यथा देवदत्तो न स्वज्ञेयघटादिरूपादिमान् सर्वकरणवियोगे च कैवल्ये सर्ववादिभिरविद्यादिदोषवत्त्वानभ्युपगमात् । अविद्यादिस्तत्त्वतो न ज्ञातृधर्मो व्यभिचारित्वात् स्थूलत्वकृशत्वादिवत् । अपिचाविद्यादिरात्मनो ज्ञातुर्धर्मः किमग्न्यौष्ण्यवत्स्वाभाविकः किंवा आगन्तुकः । नाद्यः स्वाभाविकेन धर्मेण कदाचिदपि वियोगाभावेनानिर्मोक्षप्रसङ्गात् आगन्तुकोऽपि किं स्वत उत परतः । नाद्यः अनिर्मोक्षप्रसङ्गादेव । न द्वितीयः विभुत्वादविक्रियत्वात् निरवयवत्वादसङ्गत्वादद्वयत्वाच्चात्मनः व्योमवत्केनचित्कचित्संयोगानुपपत्त्या परतस्तस्मिन्नग्रहणादेर्वक्तुमशक्यत्वात् । तस्मात्सिद्धं क्षेत्रज्ञस्य कालत्रयेऽपीश्वरत्वम्, "अनादित्वान्निर्गुणत्वात्परमात्मायमव्ययः । शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते ॥ यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते। सर्वत्रावस्थितो देहे तथात्मा नोपलिप्यते ॥" इत्यादीश्वरवचनात् । "सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" अन्तःकरणव्यतिरिक्तः अहमिति प्रतीयमानो जीवः परस्मान्न भिद्यते चेतनत्वाद्ब्रह्मवदित्यादिश्रुतियुक्तिभ्यश्च । ननु सर्वप्रमाणोपजीव्यतया श्रेष्ठेन ज्येष्ठेन नाहमीश्वर इत्येवंरूपेण प्रत्यक्षेण भेदस्योपलभ्यमानत्वात् तद्विरुद्धं क्षेत्रज्ञेश्वरयोरैक्यं श्रुतियुक्तिभिर्बोधयितुं न शक्यते। ननु प्रत्यक्षस्य व्यावहारिकभेदविषयत्वेन श्रुत्यादिजन्यज्ञानेन बाधसंभवादविरोध इति चेन्न, भेदग्राहिप्रत्यक्षस्याहमीश्वर इति तद्विरोधिप्रत्ययाभावेन बाधासंभवात्। ननु क्षेत्रज्ञेश्वरभेदप्रत्यक्षे किं बहिरिन्द्रियं चक्षुरादि हेतुः किं वा मनः । नाद्यः बाह्येन्द्रियाणां रूपादिरहितात्मग्रहणसामर्थ्याभावेन तद्गतभेदग्रहणेऽप्यसामर्थ्यात् । न द्वितीयः प्रमाणान्तरसहकारिणो मनसः पृथक्प्रमाणत्वायोगात् । तस्मात्क्लृप्तकारणाभावाद्भेदप्रत्यक्षं भ्रान्तिरिति चेन्न, सुखादिप्रत्यक्षस्य प्रमाणान्तराजन्यत्वेन मनस एव तत्प्रमाणत्वे आत्मनोऽपि तत्प्रमाणत्वेन तद्गतभेदस्यापि तत्प्रमाणत्वात् । नन्वतीन्द्रियेश्वरप्रतियोगिकभेदस्याप्यतीन्द्रियत्वादीश्वरभेदः कथं प्रत्यक्षः अभावप्रत्यक्षस्य प्रतियोगिप्रत्यक्षतन्त्रत्वादिति चेन्न, मनस्त्वे घटत्वाभावस्याप्रत्यक्षत्वात् । घटत्वे मनस्त्वाभावस्य प्रत्यक्षत्वाच्च प्रतियोगिप्रत्यक्षस्याभावप्रत्यक्षे तन्त्रत्वाभावात् । तथाच यत्र घटत्वादौ यस्य मनस्त्वादेः सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्षः । ततश्च क्षेत्रज्ञे ईश्वराभेदो यदि स्यात्तर्हि उपलभ्येत यतो नोपलभ्यते तस्मात्तद्भेदः

प्रत्यक्षः । नच स्थूलोऽहमित्यादिप्रत्ययगोचरः स्थौल्यादिर्यथा शरीराद्युपाधिकतयात्मनि कल्पितस्तथा शरीरविशिष्टस्यैवेश्वरभेदानुभवात् भेदप्रत्ययोऽप्यौपाधिकत्वात्कल्पित इति वाच्यम् । जाग्रत्स्वप्नयोरेकशरीरानवभासेऽपि योऽहं स्वप्ने सोऽहमिदानीं मनुष्यः खट्वारूढ इत्यहंप्रत्ययस्यैकरूपस्यानुवर्तमानत्वेन देहातिरिक्तात्मनोऽहमितिप्रत्यक्षप्रत्ययगोचरत्वाभ्युपगमावश्यकत्वेन तत्र प्रतीयमानस्येश्वरप्रतियोगिकभेदस्यौपाधिकत्वायोगेनाकल्पितत्वादिति चेदुच्यते, मनो न प्रमाणं किंचित्प्रमाणसहकारित्वात्कालादिवद्व्यतिरेके चक्षुरादिवत् अनन्यथासिद्धप्रमेयशून्यत्वाच्च । मनो न प्रमाकरणं तदाश्रयत्वात्प्रमातृवत् । तदुक्तम् 'प्रमाणसहकारित्वाद्विषयस्याप्यभावतः । न प्रमाणं मनोऽस्माकं प्रमादेराश्रयत्वतः '। यदपि सुखादिप्रत्यक्षस्येत्यादि तदपि न, सुखादिव्यवहारः स्वविषयज्ञानजन्यः अर्थज्ञापनेच्छाधीनजडव्यवहारत्वात् संमतवदित्यनुमानात् । किंच मनो न भेदे प्रमाणमसन्निकृष्टत्वात्संमतवत् मनसो भेदेन संयोगसमवायतादात्म्यानामन्यतमो न भवति इति सुप्रसिद्धम् । अन्यश्चेन्द्रियसन्निकर्षोऽप्रसिद्धः। असन्निकृष्टं चेन्द्रियमर्थं नैव गृह्णाति । तदुक्तम् 'संयोगादेरयुक्तत्वात्तदन्यस्याप्रसिद्धितः । सन्निकर्षस्य तेनेदं भेदासङ्ग्येव मानसम् ' इति । यत्तु मनस्त्वे घटत्वप्रतियोगिकाभावस्येत्यादि तदपि न, प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वं तत्प्रतियोग्युपलब्धिव्याप्यत्वेनैव वक्तव्यम्। एवं चान्यत्र प्रतियोगिसत्त्वस्याभावस्थलीयोपलम्भाव्याप्तत्वेन तत्रत्यानुपलब्धिविरोधित्वायोगात्। यत्रेत्यादिवत्कुरभावाधिकरणे एव प्रतियोगिसत्त्वतदुपलम्भयोर्वाच्यत्वापत्तेः । किंच यथा लौकिकोपदेशस्य सहकारिणोऽभावाद्ब्राह्मणत्वाद्यनुपलम्भस्तदभावं विनोपपन्नस्तथा " आचार्यवान्पुरुषो वेद । नावेदविन्मनुते तं बृहन्तम् । श्रोतव्यो मन्तव्यः " इत्यादिना बोधितस्य सहकार्यन्तरस्याभावेन क्षेत्रज्ञे ब्रह्माभेदानुपलम्भोऽप्यभावं विनोपपद्यते । अपिच तमसाऽऽवृतस्य घटस्य सत्त्वं यथा नानुपलब्धिविरोधि तथा " नीहारेण प्रावृताजल्प्या च; अनृतेन हि प्रगूढा " अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । भवत्यभेदो भेदश्च तस्याज्ञानकृतो भवेत् ' इत्यादिश्रुतिस्मृतिभ्योऽज्ञानेनावृतत्वप्रतीतेर्ज्ञातृब्रह्माभेदसत्त्वं नानुपलब्धिविरोधि । किंच यथा मनसानुपलम्भान्न धर्माद्यभावसिद्धिस्तथा "यन्मनसा न मनुते; तं त्वौपनिषदं पुरुषं पृच्छामि " ' सर्वे वेदा यत्पदमामनन्ति ' इत्यादिश्रुत्या मनोऽगम्यस्य प्रत्यगभिन्नस्य ब्रह्मणः मनसानुपलम्भादभावो न सिध्यति । यदपि जाग्रत्स्वप्नयोरित्यादि तदपि न, नाहमीश्वर इति भेदानुभवस्याहमिहेति परिछिन्नतयाऽनुभूयमाने जीवेऽनुभूयमानत्वात् निरुपाध्यात्मनश्च परिच्छेदासंभवात् घटाकाशवत्परिच्छेदस्यौपाधिकत्वेन तद्गतभेदस्याप्यौपाधिकत्वात् प्रत्यक्षस्य व्यावहारिकसत्तामुपजीव्य प्रवृत्तं श्रुत्यादि तस्य पारमार्थिकसत्तां निराकारोत्यतो नोपजीव्यविरोधः । ज्येष्ठत्वमपि तस्य बाध्यत्वे हेतुर्न तु बाधकत्वे । कनीयसा शुक्तिज्ञानेन ज्येष्ठस्य रजतज्ञानस्य बाधदर्शनात्, प्रत्यक्षं श्रुत्यादिबाध्यं ज्येष्ठत्वात् रजतज्ञानवत् । ननु क्षेत्रज्ञस्येश्वराभिन्नत्वे सति संसारसंसारित्वाभावे शास्त्रस्य प्रत्यक्षादेश्च आनर्थक्याद् वास्तवत्वमेव संसारसंसारित्वयोरिति चेत् किं विद्यावस्थायां शास्त्राद्यानर्थक्यमुताविद्यावस्थायाम् । आद्ये मुक्तात्मनां संसारसंसारित्वव्यवहारस्य सर्वैरप्यात्मवादिभिरनिष्टत्वेन तैर्यथाशास्त्राद्यानर्थक्यदोषो नैवाभ्युपगतस्तथास्माभिरपि द्वितीये च यथा सर्वेषां द्वैतिनां मते बन्धावस्थायामेव शास्त्राद्यर्थवत्त्वं न मुक्तावस्थायामेवम् । ननु द्वैतिनां मते आत्मनो बन्धमुक्त्यवस्थयोर्वास्तवत्वेन हेयोपादेयसाधनसद्भावेन शास्त्रादेरर्थवत्त्वं सिध्यति नत्वद्वैतिनामविद्याकृतत्वात् । द्वैतस्यापरमार्थत्वेनात्मनो बन्धावस्थाया अवास्तवत्वादिति चेत् आत्मनो वास्तवे बन्धमुक्त्यवस्थे युगपत्स्यातां क्रमेण वा । नाद्यः एककालीनस्थितिगतिवदेकस्मिन्युगपद्विरोधात् । द्वितीयेऽपि तयोर्निर्निमित्तत्वं सनिमित्तत्वं वा । नाद्यः, अनिर्मोक्षप्रसङ्गात् । द्वितीये स्वतोऽभावादपरमार्थत्वप्रसङ्गेन बन्धमोक्षावस्थे न वास्तवे अस्वाभाविकत्वात् स्फटिकलौहित्यवदित्यभ्युपगमहानापत्तेः । किंचावस्थयोर्वास्तवत्वामि-

च्छता तयोर्यौगपद्यासंभवेन क्रमनिरूपणार्थं बन्धावस्थापूर्वं प्रकल्प्यानादिमत्यन्तवती तथा मोक्षावस्था पश्चात् प्रकल्प्या आदिमत्यनन्ता तच्च यदनादिभावरूपं तन्नित्यं यथात्मा; यत्सादिभावरूपं तदन्तवद्यथा घटादीति व्याप्तिद्वयविरुद्धम् । अपि च क्रमभाविनीभ्यामवस्थाभ्यामात्मा संबध्यते न वा । आद्ये किं पूर्वावस्थया सहैवोत्तरावस्थया संबध्यते किंवा पूर्वावस्थां विहाय । आद्येऽनिर्मोक्षप्रसङ्गः । द्वितीये आत्मनः सातिशयत्वापत्त्या नित्यत्वमुपपादयितुमशक्यम् । अन्त्ये द्वैतिनामपि शास्त्राद्यानर्थक्यदोषस्यापरिहार्यत्वान्नाद्वैतवादिना परिहर्तव्यम् । तर्हि पक्षद्वयेऽपि दोषाविशेषान्नाद्वैतमतानुरागे हेतुरिति चेन्न, अद्वैतमते शास्त्राद्यानर्थक्याभावात् भोक्तृत्वकर्तृत्वयोर्देहादृष्टयोर्वा फलहेत्वोरनात्मनोरहं कर्ताहं भोक्ताहं मनुष्य इत्याद्यात्मदर्शनवतोऽविदुषोऽधिकारिणः संभवात् न शास्त्राद्यानर्थक्यम् । ननु विद्वद्विषयं शास्त्रं किं न स्यादिति चेन्न, विदुषां फलहेतुभ्यामात्मनोऽन्यत्वदर्शने सति तयोरहमित्यात्मदर्शनानुपपत्तेः । नहि जलाग्न्योश्छायातपयोर्वा भेददर्शी अत्यन्तमूढोऽपि तयोरेकात्मतां पश्यति किमुत विवेकी। तस्माद्विधिनिषेधशास्त्रं न विद्वद्विषयम्। नहि देवदत्त त्वमिदं कुर्विति देवदत्ते नियुक्ते तत्रस्थो नियोगं शृण्वन्नपि विष्णुमित्रोऽहं नियुक्त इति नियोगं प्रतिपद्यते । ननु देवदत्ते नियुक्ते कदाचिद्विष्णुमित्रो विनियुक्तोऽस्मीति प्रतिपद्यते इति चेत्सत्यं, नियोगविषयान्नियोज्यादात्मनो विवेकाग्रहणात् भ्रान्त्या प्रतिपत्त्युत्पत्तेः । तथा फलहेत्वोरप्यात्मनो विवेकाग्रहणात् अविद्वान्संभवत्येव विधिनिषेधशास्त्राधिकारी । ननु यो विद्योदयात्पूर्वमनुभूतोऽविद्योत्पन्नदेहाद्यभिमानसंबन्धस्तदपेक्षया सत्यपि फलहेत्वोरात्मान्यत्वदर्शने इष्टफलहेत्वोः प्रवर्तितोऽस्म्यनिष्टफलहेत्वोर्निवर्तितोऽस्मीति शास्त्रार्थविषया प्रवृत्तिर्युक्तैव यथा पितृपुत्रभ्रात्रादीनामितरेतरात्मान्यत्वदर्शने सत्यपि पितरमधिकृत्य विधौ निषेधे वा तस्य तदनुष्ठानाशक्तौ पुत्रस्य तद्विषयाधीरिष्टा, एवं पुत्रस्यानुष्ठानाशक्तस्य पितुरित्यन्योन्यनियोगप्रतिषेधार्था प्रतिपत्तिरिति चेन्न, पुत्रादीनां मिथ्याभिमानात् । मिथो नियोगादिप्रतिपत्तिसत्त्वेऽपि व्यतिरिक्तात्मदर्शनप्रतिपत्तेः प्रागेव फलहेत्वोरात्माभिमानस्य प्रसिद्धत्वेन विदुषस्तदयोगात् । किंच 'सर्वापेक्षा च यज्ञादिश्रुतेः' इत्यधिकरणे सम्यग्ज्ञानस्यादृष्टसाध्यत्वोक्त्या अनुष्ठितविधिनिषेधार्थौ हि फलहेतुभ्यामात्मनोऽन्यत्वं प्रतिपद्यते। सत्यदृष्टे सम्यग्ज्ञानदर्शनात्, असति च तस्मिन् अशुद्धचित्तस्य तददर्शनादन्वयव्यतिरेकाभ्याम् "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इतिश्रुत्या च विधिनिषेधानुष्ठानात्पूर्वं ताभ्यामात्मनोऽन्यत्वं न प्रतिपद्यते । तस्मादविद्वद्विषयं विधिनिषेधशास्त्रमिति सिद्धम् । ननु "स्वर्गकामो यजेत" 'कलञ्जं न भक्षयेत्' इत्यादावात्मनो देहाद्व्यतिरेकं पश्यतां देहाद्यभिमानरूपाधिकारहेत्वभावात् देहादावात्मत्वमनुभवतामपि पारलौकिकप्रतिपत्त्यभावात् प्रवृत्तिनिवृत्त्यभावेन कर्तुरभावात् शास्त्रानर्थक्यमिति चेन्न, प्रत्यगभिन्नब्रह्मविदः परलोकाभावविदश्चानात्मवादिनः प्रवृत्तिनिवृत्त्यभावेऽपि विधिनिषेधशास्त्रान्यथानुपपत्त्याऽनुमितात्मास्तित्वस्य निर्विशेषात्मस्वरूपानभिज्ञस्य कर्मफले स्वर्गादौ नरकादौ च संजाततृष्णस्योत्पन्नत्रासस्य च श्रद्दधानस्य प्रवृत्तिनिवृत्त्योः सर्वप्रत्यक्षसिद्धत्वेन शास्त्रानर्थक्याभावात् । ननु विवेकिनां देहादिभ्यो निष्कृष्टमात्मानं दृष्टवतां विधिनिषेधयोरधिकाराभावेन प्रवृत्तिनिवृत्त्यभावे 'यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥' इति न्यायेन तदनुगच्छतां तेषां विधिनिषेधशास्त्रेऽप्रवृत्तिदर्शनात्तत्राप्रवृत्तौ शास्त्रानर्थक्यमिति चेत्, किं सर्वेषां विवेकित्वाच्छास्त्रानर्थक्यमुच्यत उत कस्यचित् । नाद्यः 'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ॥' इति न्यायेन सर्वेषां विवेकित्वाभावात् । न द्वितीयः मूढानां प्रवृत्तिनिवृत्त्यो रागादिदोषाधीनत्वेन विवेक्यनुगामित्वाभावात्, श्येनाद्यभिचारादिकर्मणि विवेकिनामप्रवृत्तावपि इतरेषां प्रवृत्तिदर्शनेन तदप्रवृत्तावितरेषामप्यप्रवृत्तिरिति

नियन्तुमशक्यत्वात्, "स्वभावस्तु प्रवर्तते" इत्युक्तत्वेन प्रवृत्तेः स्वभावाख्याज्ञानकार्यत्वाद्विवेकिनां प्रवृत्त्यभावेऽप्यज्ञानां प्रवृत्त्यभावायोगात् । तस्मादविद्यामात्रः विधिनिषेधाधीनप्रवृत्तिनिवृत्त्यात्मको बन्धः यथादृष्टाविद्वद्विषयः । न केवलस्य क्षेत्रज्ञस्याविद्या तत्कार्यं च । यथा मिथ्याभूतं मरीच्युदकमूषरदेशं मृद्वीकर्तुं न शक्नोति तथा मिथ्याज्ञानस्य परमार्थवस्तुदूषणेऽसामर्थ्यमतो भगवतेदमुक्तं " क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत " इति । नन्वीश्वरोऽस्मीति स्वस्येश्वरत्वं कुतो न बुध्यत इति चेत् ज्ञानस्याज्ञानेनावृतत्वात्तदुक्तम् " अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः " इति । एवं चोक्तयुक्त्या " त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि अहं ब्रह्मास्मि तत्सत्यं स आत्मा तत्त्वमसि " इत्यादिश्रुत्या असकृदुपदेशाच्च प्रतिमायां विष्णुबुद्धिरिव क्षेत्रज्ञ ईश्वरबुद्धिरिति बालविमोहनमात्रं गौणत्वप्रसङ्गात् वाक्यवैरूप्याच्च " अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद; मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति । सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद " इत्यादिश्रुतिभिर्भेददर्शनस्य निषिद्धत्वाच्च । यत्पुनरुक्तं विरुद्धधर्मवत्त्वादैक्यं न संभवतीति तदपि न; विरुद्धधर्मताया मिथ्यात्वोपपत्त्या जहदजहल्लक्षणया सोऽयं देवदत्त इतिवदैक्यस्य सुवचत्वात् । तस्मात्क्षेत्रज्ञस्येश्वराभिन्नस्य न संसारसंस्पर्शः । ननु संसारिणामिवाहं ब्राह्मण एवमाभिजात्यादिविशिष्टः इदं पुत्रक्षेत्रकलत्रादिकं ममेति पण्डितानामपि संसारित्वप्रतीतेः क्षेत्रज्ञस्य वस्तुतः संसारासंस्पर्शे विद्वदनुभवः विरुध्येदिति चेत् नेदं पाण्डित्यं कूटस्थासंसार्यात्मदर्शनं किंतु क्षेत्रज्ञ एवात्मदर्शनं क्षेत्रज्ञं कूटस्थं पश्यताम् अयमहं कर्ता ममेदं भोग्यं स्यान्ममानेन कर्मणेदं फलं सेत्स्यतीति प्रत्ययो न संभवति । कूटस्थात्मधीविरुद्धत्वादस्य प्रत्ययस्य । नन्वविक्रियात्मदर्शिनो भोगकर्माकाङ्क्षयोरभावे कः शास्त्राधिकारीति चेत् फलार्थित्वादविद्वानधिकारीति गृहाण । ननु विदुषः कूटस्थात्मदर्शिनः फलार्थित्वाभावात् प्रवृत्त्यनुपपत्तौ निषेधाधीननिवृत्तेरपि दुर्वचत्वात्तस्य निवृत्तिनिष्ठत्वं न सिध्यतीति चेत्सत्यम्, तथापि कार्यकरणसंघातव्यापारोपरमे निवृत्तिरुपचर्यते । इदं चान्यत्पाण्डित्यं कस्यचित्पण्डितंमन्यस्य—क्षेत्रज्ञ ईश्वर एव क्षेत्रं चान्यत् क्षेत्रज्ञविषयः, अहं तु वस्तुतः संसारी सुखी दुःखी च । ननु संसारित्वस्य वास्तवत्वे तदनिवृत्त्या पुरुषार्थासिद्धिरिति चेन्न, क्षेत्रं ज्ञात्वा ततो निष्कृष्टस्य क्षेत्रज्ञस्य ज्ञानेन मम संसारोपरमस्य कर्तव्यत्वात् । ननु क्षेत्रज्ञज्ञानं कथं संसारोपरत्युत्पादकमिति चेत् ध्यानेनेश्वरं क्षेत्रज्ञं साक्षात्कृत्य तत्स्वरूपावस्थानेनेति गृहाण । तथाचाहं वस्तुतः संसारी असंसारिणः क्षेत्रज्ञादीश्वरादन्यस्तस्मान्मम संसारिणोऽसंसारीश्वरत्वं कर्तव्यमित्येवं यो बुध्यते यो वा तथाविधं ज्ञानं त्वया संपादनीयमिति बोधयति नासौ क्षेत्रज्ञः, अन्यथोपदेशानर्थक्यमित्येवं मन्यमानो पण्डितापसदः " अयमात्मा ब्रह्म " इत्याद्यात्मनो ब्रह्मत्वबोधकश्रुत्या प्रतिपादितोपपत्त्या च विरोधात् । ननु संसारस्य वस्तुत्वाभ्युपगमात्संसारावस्थायां कर्मकाण्डस्यार्थवत्त्वं संसारनिरासेनात्मनो ब्रह्मत्वे ध्यानादिना साधिते मोक्षावस्थायां ज्ञानकाण्डस्यार्थवत्त्वं तत्कथं यथोक्तज्ञानवान्पण्डितापसद इत्युच्यते इति चेद्, उच्यते—संसारमोक्षयोः शास्त्रस्य चार्थवत्त्वं करोमीति मन्यमानः पण्डितापसद एव । यतः कल्पितं संसारित्वमधिकृत्य साध्यसाधनसंबन्धं बोधयतः कर्मकाण्डस्य तथाविधं संसारित्वं पराकृत्याखण्डैकरसे प्रत्यग्ब्रह्मणि पर्यवस्यतः ज्ञानकाण्डस्य चार्थवत्त्वमात्मनः शास्त्रसिद्धं ब्रह्मत्वं च त्यक्त्वा संसारित्वस्य वास्तवत्वमात्मनोऽब्रह्मत्वं च कल्पयन्नात्महा भूत्वा शास्त्रार्थसंप्रदायरहितत्वात् " तत्त्वमसि " इतिवत्प्रसिद्धक्षेत्रज्ञानुवादेनाप्रसिद्धं तस्येश्वरत्वं क्षेत्रज्ञं चापि मां विद्धीत्युपदेशतः श्रुतं तस्य हानिमश्रुतस्य जीवेश्वरयोर्भेदस्य कल्पनां च कुर्वन्स्वयं मूढो क्षेत्रज्ञं चापि मां विद्धीत्यनेन सर्वक्षेत्रान्तर्यामी परो जीवादन्यो निरूप्यते, नतु जीवस्येश्वरत्वं बोध्यते इत्यन्यांश्च व्यामोहयति । तस्मादसंप्रदायवित् यथोक्तं पाण्डित्यं पुरस्कृत्य सर्वशास्त्रार्थविदपि मूर्खवदुपेक्षणीयः । तथाच विद्याविद्ययोर्वैलक्षण्याभ्यु-

पगमात् ईश्वरस्य क्षेत्रज्ञैकत्वे संसारित्वं प्राप्नोति क्षेत्रज्ञानां चेश्वरैकत्वे संसारिणोऽभावात्संसाराभावप्रसङ्ग इत्येतौ दोषौ प्रत्युक्तौ, अविद्यापरिकल्पितदोषेण तद्विषयं वस्तु न दुष्यतीत्यत्र दृष्टान्तस्योक्तत्वात्। संसारसंसारिणोरविद्याकल्पितत्वेनोपपत्तेः। नन्वविद्या संसारसंसारिणौ कल्पयन्ती आश्रयान्तराभावात् क्षेत्रज्ञाश्रया तस्य च तद्वत्त्वमेव संसारित्वं नचाविद्यावत्त्वमविद्याकृतमनस्थाप्रसङ्गात्। ननूत्खातदन्तोरगवदविद्या किं करिष्यतीति चेन्नाहं दुःख्यहं सुखीति तत्कृतस्य दुःखित्वादेः प्रत्यक्षसिद्धत्वादिति चेन्न, क्षेत्रज्ञ आपाद्यमानस्य दोषजातस्य ज्ञेयत्वोपपत्त्या क्षेत्रधर्मत्वेन क्षेत्रधर्मत्वाभावात्। न च क्षेत्रद्वारा क्षेत्रज्ञस्तत्कृतदोषवत्तया दुष्यति ज्ञेयेन ज्ञातुः संसर्गे ज्ञेयत्वाभावप्रसङ्गेन तेन ज्ञातुः संसर्गानुपपत्तेः। ननु धर्मधर्मित्वेन संसर्गेऽपि ज्ञेयत्वे का क्षतिरिति चेत् अविद्यावत्त्वदुःखित्वादेरात्मधर्मत्वे स्वधर्मस्य च स्वज्ञेयत्वे स्वस्यापि स्वज्ञेयत्वापत्त्या कर्मकर्तृविरोध इति गृहाण। किंच विमतं नात्माश्रितं तज्ज्ञेयत्वात् रूपादिवदित्यनुमानात्। दुःखित्वादेः प्रत्यक्षेणोपलभ्यमानत्वेन ज्ञेयत्वेनात्मधर्मत्वं न संभवति तद्धर्मत्वे वा ज्ञेयत्वं, किंच महाभूतानीत्यादिना ज्ञेयमात्रस्य क्षेत्रान्तर्भावकथनाद् एतद्यो वेत्तीत्युक्त्या क्षेत्रज्ञस्य ज्ञातृत्वनिर्णयात् ज्ञेयं सर्वं क्षेत्रं ज्ञातैव क्षेत्रज्ञ इत्यवधार्यते। तस्मात्प्रमाणयुक्त्याख्यावष्टम्भान्तराभावात् केवलाविद्यावष्टम्भाद् अविद्यादुःखित्वादेः क्षेत्रज्ञधर्मत्वं तस्य च प्रत्यक्षोपलभ्यत्वमिति विरुद्धमुच्यते। ननु यया अविद्यया विरुद्धमपि निर्वोढुं शक्यते तस्याः स्वातन्त्र्याभावात् चितोऽन्यस्य वास्तववस्तुनोऽविद्यमानत्वात्। आविद्यकस्य च विद्यमानत्वेऽपि तस्य तत्कार्यतया तदाश्रयत्वासंभवात् अविद्या कस्येति चेत्, किमाश्रयमात्रं पृच्छसि तद्विशेषं वा। आद्ये तस्यादृश्यत्वेन पारतन्त्र्यात् किंचिन्निष्ठैव दृश्यते। तथाच यमाश्रयते तस्यैव सेत्यतो नाश्रयमात्रं प्रष्टव्यं तस्योपलभ्यमानत्वात्। आश्रयविशेषस्योपलभ्यमानत्वादेव। न द्वितीयः, नहि गोमत्युपलभ्यमाने गावः कस्येति प्रश्नो युज्यते। ननु गवां तद्वतश्च प्रत्यक्षत्वात्तत्संबन्धोऽपि प्रत्यक्ष इति तत्प्रश्नो यथा निरर्थकः तथाऽविद्यातद्वतोश्च प्रत्यक्षत्वाभावात् प्रश्नानर्थक्याभावात् दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यमिति चेदप्रत्यक्षेणाविद्यावताऽविद्यासंबन्धे ज्ञाते तव किं स्यात्। नन्वविद्याया अनर्थहेतुत्वात् परिहर्तव्या स्यादिति चेत् यस्यास्ति सा स तां परिहरिष्यति। ननु ममैवाविद्या तत्परिहारे मयैव प्रयतितव्यमिति चेत् तर्ह्यविद्यां तद्वन्तं चात्मानं जानासीत्यतः प्रश्नानर्थक्यम्। ननु जानन्नपि तद्विषयप्रत्यक्षाभावात्पृच्छामीति चेत् अहमविद्यावानविद्याकार्यवत्त्वात् व्यतिरेकेण मुक्तात्मवदित्यनुमानेन चेत् जानासि तर्हि संबन्धग्रहणं कथं? ज्ञातैवात्मा स्वस्याविद्यासंबन्धं जानाति किंवान्यो ज्ञाता। नाद्यः स्वस्याविद्यां प्रति ज्ञातृत्वकालेऽविद्याश्रयत्वेन गृहीतत्वात् तज्ज्ञातृत्वेनैवोपयुक्तस्यात्मात्मनः कर्मकर्तृविरोधात्तस्याः स्वात्मनि संबन्धग्रहासंभवात्। न द्वितीयः अनवस्थाप्रसङ्गात्। तथाचाविद्यादिकं ज्ञेयं ज्ञेयमेव ज्ञाता च ज्ञातैवातोऽविद्यादुःखित्वाद्यैर्न ज्ञातुः क्षेत्रज्ञस्य किंचिदुष्यति। ननु दोषवत्क्षेत्रज्ञातृत्वमेवात्मनो दोष इति चेत् किं ज्ञातृत्वं ज्ञानक्रियाकर्तृत्वमुत ज्ञानस्वरूपत्वम्। नाद्यः तदनभ्युपगमेन तत्प्रयुक्तदोषाभावात्। द्वितीये यथोष्णतामात्रेण वह्नेस्तापे तापयितृत्वोपचारस्तथा विज्ञानस्वरूपस्याऽविक्रियात्मनो विज्ञातृत्वोपचाराददोष इत्यलं विस्तरेण ॥ २ ॥

प० टी०—अथ विशेषतः क्षेत्रज्ञं निरूपयति—क्षेत्रज्ञमिति। च परं देहाभिमानित्वेन शारीरभोगं भुञ्जानं क्षेत्रज्ञमपि वस्तुतः सर्वक्षेत्रेषु सूत्रवदनुगतं मां विद्धि "तत्त्वमसि" इति श्रुत्या लक्षितेन चिदंशेन मद्रूपस्योक्तत्वात्। तदुक्तम्—'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः। कार्यकारणतां हित्वा पूर्णबोधोऽवशिष्यते' इति। एवमुपाधिद्वयपरित्यागे पूर्णबोधस्वरूपमेव मद्रूपम्। तत्पदलक्षणस्य त्वंपदलक्ष्येण सहैकत्वमित्यर्थः। अथ ज्ञानस्वरूपं दर्शयति—क्षेत्रक्षेत्रज्ञयोर्वैलक्षण्येन यज्ज्ञानं तज्ज्ञानमिति मतमभिमतम्। तस्मादात्मानात्मविवेको ज्ञानमित्युक्तं भवति ॥ २ ॥

रा० टी०–जीवस्यापि किंचित्क्षेत्रज्ञानात्स किं क्षेत्रज्ञ इत्यत आह–क्षेत्रज्ञं चेति। सर्वक्षेत्रेष्वव्यक्तादिषु क्षेत्रज्ञं तु मां विद्धि न जीवम्। क्षेत्रक्षेत्रज्ञयोर्यज्ज्ञानं तज्ज्ञानं मम सम्यग्ज्ञानं मतमित्यर्थः। अत्र सर्वक्षेत्रेष्वित्युक्तिरिदं शरीरमित्यत्र शरीरपदोक्ताव्यक्तादेः क्षीयतेऽत्रेश्वरेणेति व्युत्पत्त्या क्षेत्रपदवाच्यत्वमिति सूचनाय ॥ ३ ॥

**तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत् ॥**
**स च यो यत्प्रभावश्च तत्समासेन मे शृणु ॥ ३ ॥**

**त० टी०–एवं निर्णीतस्वसंबन्धज्ञानयोः क्षेत्रक्षेत्रज्ञयोः स्वरूपयाथात्म्यं संक्षेपेण वक्तुं प्रतिजानीते–तदिति। तत् इदं शरीरमिति। पूर्वोक्तं क्षेत्रं यच्च यद्द्रव्यं यादृक् धर्मतो यत्प्रकारं यद्विकारि यैर्विकारैर्युक्तं यतश्च प्रकृतिपुरुषसंयोगाद्भवति यत्स्वरूपं स च क्षेत्रज्ञः यो यत्स्वरूपः यत्प्रभावः ये चास्य प्रभावास्तत्समासेन संक्षेपेण मे मत्तः शृणु ॥ ३ ॥**

म० टी०–संक्षेपेणोक्तमर्थं विवरीतुमारभते–तदिति। तदिदं शरीरमिति प्रागुक्तं जडवर्गरूपं क्षेत्रं यच्च स्वरूपेण जडदृश्यपरिच्छिन्नादिस्वभावं यादृक् च इच्छादिधर्मकं यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं, यतश्च कारणात् यत्कार्यमुत्पद्यत इति शेषः। अथवा यतः प्रकृतिपुरुषसंयोगाद्भवति; यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः। अत्रानियमेन चकारप्रयोगात् सर्वसमुच्चयो द्रष्टव्यः। स च क्षेत्रज्ञो यः स्वरूपतः स्वप्रकाशचैतन्यानन्दस्वभावः। यत्प्रभावश्च ये प्रभावा उपाधिकृताः शक्तयो यस्य तत् क्षेत्रक्षेत्रज्ञयाथात्म्यं सर्वविशेषणविशिष्टं समासेन संक्षेपेण मे मम वचनाच्छृणु श्रुत्वाऽवधारयेत्यर्थः ॥ ३ ॥

शं० टी०–एवमेतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इत्यनेन क्षेत्रज्ञस्यात्मनो ज्ञत्वमेव धर्मो नत्वहंकारममकारकर्तृत्वभोक्तृत्वादिलक्षणः संसारः, स तु ज्ञेयत्वेन क्षेत्रस्यैव धर्म इति सूचयित्वा क्षेत्रज्ञं चापि मां विद्धीत्यनेन सर्वक्षेत्रेभ्यो विभक्तस्यात्मनश्चिदेकरसस्य परिच्छित्त्यभावे पूर्णत्वादयमात्मा ब्रह्मेतिन्यायेन ब्रह्मत्वं प्रतिपाद्याधुना श्रुतियुक्तिभिः क्षेत्रक्षेत्रज्ञयोर्विवेके सम्यक्कृत एव पुंसः संसारित्वभ्रमो निःशेषेण निवर्तते नान्यथेति बोधयितुं पुनरपि क्षेत्रक्षेत्रज्ञयोः स्वरूपं विशेषतः सम्यग्विभज्य प्रदर्शयितुमाह–तदिति। इदं शरीरमिति यदुक्तं तत्क्षेत्रं स्वयं स्वरूपेण यच्च यत्स्वरूपकं, स्वाभाविकेन रूपेण यादृग्भवति, यद्विकारि च यैर्विकारैर्महदादिलक्षणैः स्वपरिणामात्मकैर्विकार्यवयवि भवति, स्वधर्मैर्यादृक् यादृशधर्मकं यैर्धर्मैः स्वयं धर्मि भवति, यतश्च यद् यतो यस्मात् क्षेत्रशब्दितात्कारणाद्यच्च कार्यं पुंसः संभवति क्षेत्रज्ञस्योपाधिर्भूत्वा स्वयं यत्कार्यं जनयतीत्यर्थः। तत् क्षेत्रं क्षेत्रज्ञस्य संसारकारणं मुमुक्षुणा सम्यग्ज्ञातव्यं, यस्मिन् ज्ञाते स्वयं संसारी न भवति। किंच एतद्यो वेत्तीत्युक्तः क्षेत्रज्ञः स्वरूपेण यश्च यादृशो भवति, स्वयाथात्म्येन यत्स्वरूपको भववीत्यर्थः। यत्प्रभावश्च उपाधियोगाद्यादृशस्वभाववान् भवति ततः स विज्ञातव्यः। यस्मिन् विज्ञाते स्वयं मुक्तो भवति तत्तयोः क्षेत्रक्षेत्रज्ञयोः स्वरूपं समासेन संक्षेपेणैव नतु विस्तरत उच्यमानं मे मत्तः शृणु। श्रुत्वा तदर्थं सम्यगवधारय तन्निष्ठो भव, तदेव श्रवणस्य फलं न तूपेक्षणं विस्मरणं वा ॥ ३ ॥

श्री० टी०–अत्र यद्यपि चतुर्विंशतिभेदैर्भिन्ना प्रकृतिः क्षेत्रमित्यभिप्रेतं तथापि देहरूपेण परिणतायामेव तस्यामहंभावेनाविवेकः स्फुट इति तद्विवेकार्थमिदं शरीरं क्षेत्रमित्याद्युक्तं तदेतत्प्रपञ्चयिष्यन् प्रतिजानीते–तत्क्षेत्रमिति। यदुक्तं मया क्षेत्रं तच्च क्षेत्रं यत्स्वरूपतो जडं दृश्यादिस्वभावं, यादृक् यादृशं चेच्छादिधर्मकं, यद्विकारि यैरिन्द्रियादिविकारैर्युक्तं, यतश्च प्रकृतिपुरुषसंयोगाद्भवति, यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः। स च क्षेत्रज्ञो यः स्वरूपतः यत्प्रभावश्च अचिन्त्यैश्वर्ययोगेन यैः प्रभावैः संपन्नः तत्सर्वं संक्षेपतो मत्तः शृणु ॥ ३ ॥

स० टी०—एवं चाखण्डवाक्यार्थमभिधाय समासतः ॥ विस्तरेणैतमेवार्थं वक्तुमारभते हरिः ॥ १ ॥ जडवर्गात्मकं क्षेत्रं तच्छरीरमितीरितम् ॥ जडं दृश्यं परिच्छिन्नं यच्च वस्तुस्वरूपतः ॥ २ ॥ इच्छादिधर्मकं यादृग्यैर्विकारैः समन्वितम् ॥ यतश्चोत्पद्यते हेतोर्यत्कार्यं सचराचरम् ॥ ३ ॥ स क्षेत्रज्ञः स्वरूपेण यश्चिदानन्दसद्वपुः ॥ य उपाधिकृता यस्य प्रभावाः शक्तयोऽर्थतः ॥ ४ ॥ क्षेत्रक्षेत्रज्ञयाथात्म्यं युतं सर्वैर्विशेषणैः ॥ शृणु संक्षेपतस्त्वं मे वाक्याच्छ्रुत्वावधारय ॥ ५ ॥ चकारपञ्चकेनात्र ज्ञेयः सर्वसमुच्चयः ॥ ६ ॥ ३ ॥

भा० टी०—इदं शरीरमित्यादिनोपादिष्टस्य क्षेत्राध्यायार्थस्य संग्रहश्लोकं प्रतिपत्तिसौकर्यार्थमुपन्यस्यति—तदिति । इदं शरीरमिति यन्निर्दिष्टं तत्तदा परामृशति । यच्चेदं निर्दिष्टं क्षेत्रं स्वरूपतो जडं स्थावरजङ्गमादिभेदैर्भिन्नं दृश्यत्वादिस्वभावं तत् । यादृक् च स्वकीयैर्धर्मैः यादृशं यत्प्रकारकं च, यद्विकारि ये विकारा अस्य तत् । यतो यस्माच्च यत्कार्यमुत्पद्यत इति शेषः । यतश्च प्रकृतिपुरुषसंयोगाद्भवति । यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमिति त्वाचार्यैर्यच्चेत्यस्मिन्नुक्तस्य यत्पदार्थस्यान्तर्भावाद्यत्पदवैयर्थ्यमभिप्रेत्य न व्याख्यातम् । अत्र चकाराः सर्वे समुच्चयार्थाः । स च क्षेत्रज्ञो यः निर्दिष्टः स्वरूपतः सच्चिदानन्दस्वभावः यत्प्रभावः प्रभावा उपाधिकृताः शक्तयो यस्य स तद्यथोक्तविशेषणविशिष्टक्षेत्रक्षेत्रज्ञयाथात्म्यं समासेन संक्षेपेण मे मम वाक्याच्छृणु श्रुत्वाऽवधारयेत्यर्थः ॥ ३ ॥

प० टी०—तदेतत्प्रपञ्चयिष्यन् प्रतिजानीते—तत्क्षेत्रमिति । तत्क्षेत्रं यत्स्वरूपतो जडदृश्यादिस्वभावं यादृग् यादृशं चेच्छादिधर्मकं यद्विकारीन्द्रियादिविकारैर्युक्तं यतश्च प्रकृतिपुरुषसंयोगाद्भवति । यदिति । यदिति यैः स्थावरजङ्गमादिभेदैर्भिन्नमित्यर्थः । स च क्षेत्रज्ञो यः स्वरूपतः प्रभावतश्चरितैश्वर्ययोगेन यैः प्रभावैः संपन्नस्तत्सर्वं मे मत्तः समासेन संक्षेपतः शृणु ॥ ३ ॥

रा० टी०—क्षेत्रादिस्वरूपं वक्तुं प्रतिजानीते—तत्क्षत्रमिति । तत्क्षेत्रं यद्भगवन्निवासस्थानतया क्षेत्रपदोक्तम् । देहद्वारा जीवहिंसाहेतुतया ईश्वरप्रेर्यत्वहेतुना च शरीरपदेन प्रकृतमव्यक्तादि । यच्च यत्स्वरूपं यादृक् यत्प्रकारं यद्विकारि । कर्मधारयान्मतुप् । येन विकारेण संयुक्तम् । यतः यादृशप्रवृत्त्यनुकूलधर्मयुक्तात्पुरुषात् । यत् इणः शत्रन्तं रूपं गतिमत् । प्रवर्तत इति यावत् । स च प्रवर्तकः यः यत्स्वरूपः यत्प्रभावः यादृशप्रवृत्त्यनुकूलधर्मेतरसामर्थ्यवाँस्तत्सर्वं समासेन संक्षेपेण मे सकाशाच्छृणु श्रुत्वा निष्ठां कुरु ॥ ३ ॥

**ऋषिभिर्बहुधा गीतं छन्दोभिर्विविधैः पृथक् ॥**
**ब्रह्मसूत्रपदैश्चैव हेतुमद्भिर्विनिश्चितैः ॥ ४ ॥**

त० टी०—कैर्विस्तरेणोक्तं यतः संक्षेपेणोच्यत इत्यपेक्षायामाह—ऋषिभिरिति । ऋषिभिः पराशरव्यासादिभिर्बहुधा बहुप्रकारेण गीतं निरूपितं छन्दोभिर्विविधैः पृथक् विविधैः छन्दोभिः ऋग्यजुःसामाथर्वभिः क्षेत्रक्षेत्रज्ञयोः स्वरूपं पृथग्गीतम् "तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्योऽन्नमन्नात्पुरुषः स वा एष पुरुषोऽन्नरसमयः" इति क्षेत्रमन्नमयपुरुषं शरीरमभिधाय तदनन्तरं प्राणमयं मनोमयं च पुरुषमभिधाय "तस्माद्वा एतस्मान्मनोमयादन्योऽन्तर आत्मा विज्ञानमयः" इति क्षेत्रज्ञस्वरूपं निरूपितम् । तथा ब्रह्मसूत्रपदैः ब्रह्म सूत्र्यते वेष्ट्यतेऽल्पाक्षरैर्यैस्तानि ब्रह्मसूत्राणि तानि च पदानि च तैर्ब्रह्मसूत्रपदैः वेदेषु

१ विनिश्चितम्—इति पाठः ।

विस्तृतं स्वरूपगुणविभूतिसहितं ब्रह्मतत्त्वं सारवद्भिरल्पाक्षरैः संक्षिप्योच्यते यैस्तानि ब्रह्मसूत्राणीत्यर्थः। तान्येव पदानि तैः हेतुमद्भिः अज्ञातार्थबोधको हेतुस्तद्वद्भिः, पुनर्विनिश्चितैः विदुषामसंदिग्धार्थैः, तथा चोक्तम् " अल्पाक्षरमसंदिग्धं सारवद्विश्वतो मुखम् । अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः " इति। तथा च ब्रह्मसूत्रैः शारीरकमीमांसासूत्रैः क्षेत्रक्षेत्रज्ञस्वरूपयाथात्म्यं प्रतिपादितमित्यर्थः । ननु यानि ब्रह्मप्रतिपादकानि न तैः क्षेत्रक्षेत्रज्ञप्रतिपादनं यैः क्षेत्रक्षेत्रज्ञप्रतिपादनं तेषां कथं ब्रह्मसूत्रत्वमिति चेच्छृणु ब्रह्मस्वरूपनिरूपणासाधारणहेतूनां जगज्जन्माद्युपादानत्वतन्नियन्तृत्वतत्प्रवर्तकत्वस्वतन्त्रत्वव्यापकत्वतदनुग्राहकत्वादिधर्माणां ब्रह्मोपादेयत्वतन्नियम्यत्वतत्प्रवर्त्यत्वतत्तन्त्रत्वतद्व्याप्यत्वतदनुग्राह्यत्वादिधर्मावच्छिन्नक्षेत्रक्षेत्रज्ञस्वरूपनिरूपणं विनाऽनुपपत्तेरतस्तत्प्रतिपादनस्यापि ब्रह्मप्रतिपादनोपयोगित्वाद्ब्रह्मप्रतिपादनमेवेति सर्वेषां ब्रह्मसूत्रत्वमेवेत्यविरोधः । तथा च " न वियदश्रुतेः " इत्यादिभिः कार्यकारणभावेन क्षेत्रनिर्णय उक्तः । " नात्मा श्रुतेर्नित्यत्वाच्च ताभ्यः ज्ञोऽत एव " इत्यादिभिः क्षेत्रज्ञनिर्णय उक्तः । एवमृष्यादिभिः क्षेत्रक्षेत्रज्ञयाथात्म्यं बहुधा गीतं, मया संक्षेपेण स्पष्टमुच्यमानं शृण्वित्यर्थः ॥ ४ ॥

म० टी०—कैर्विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायां श्रोतृबुद्धिप्ररोचनार्थं स्तुवन्नाह—ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रेषु धारणाध्यानविषयत्वेन बहुधा गीतं निरूपितम्, एतेन योगशास्त्रप्रतिपाद्यत्वमुक्तम्। विविधैर्नित्यनैमित्तिककाम्यकर्मादिविषयैः छन्दोभिर्ऋगादिमन्त्रैर्ब्राह्मणैश्च पृथग्विवेकतो गीतम् । एतेन कर्मकाण्डप्रतिपाद्यत्वमुक्तम् । ब्रह्मसूत्रपदैश्चैव ब्रह्म सूत्र्यते सूच्यते किंचिद्व्यवधानेन प्रतिपाद्यत एभिरिति ब्रह्मसूत्राणि " यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति " इत्यादीनि तटस्थलक्षणपराण्युपनिषद्वाक्यानि तथा पद्यते ब्रह्म साक्षात्प्रतिपाद्यते एभिरिति पदानि स्वरूपलक्षणपराणि " सत्यं ज्ञानमनन्तं ब्रह्म " इत्यादीनि तैर्ब्रह्मसूत्रैः पदैश्च हेतुमद्भिः " सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् " इत्युपक्रम्य " तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जायेत " इति नास्तिकमतमुपन्यस्य "कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेत " इत्यादियुक्तीः प्रतिपादयद्भिः विनिश्चितैः उपक्रमोपसंहारैकवाक्यतया संदेहशून्यार्थप्रतिपादकैः बहुधा गीतं च । एतेन ज्ञानकाण्डप्रतिपाद्यत्वमुक्तम् । एवमेतैरतिविस्तरेणोक्तं क्षेत्रक्षेत्रज्ञयाथात्म्यं संक्षेपेण तुभ्यं कथयिष्यामि तच्छृण्वित्यर्थः । अथवा ब्रह्मसूत्राणि तानि पदानि चेति कर्मधारयः । तत्र विद्यासूत्राणि 'आत्मेत्येवोपासीत' इत्यादीनि, अविद्यासूत्राणि ' न स वेद यथा पशुः ' इत्यादीनि तैर्गीतमिति ॥ ४ ॥

शं० टी०—श्रुतिभिः सूत्रैर्महर्षिभिश्चायमर्थः सुनिश्चित इति विवक्षितार्थस्य सर्वशास्त्रतदर्थज्ञप्रसिद्धत्वमाह श्रोतुः श्रद्धयाऽऽस्थया च प्रवृत्तिसिद्धये—ऋषिभिरिति । क्षेत्रक्षेत्रज्ञयोः स्वरूपं वासिष्ठविष्णुपुराणादिषु ऋषिभिर्वसिष्ठपराशरादिभिर्बहुधा बहुप्रकारं गीतं प्रतिपादितम् । विविधैः शाखाभेदेन बहुप्रकारैः छन्दोभिः ऋगादिवेदैः " स ईक्षते । कथं न्विदं मदृते स्यात् " इति । " स वा एष पुरुषोऽन्नरसमयः । अन्योऽन्तर आत्मा प्राणमयः । एतस्मिन्नदृश्येऽनात्म्ये " इत्यादिना तयोः स्वरूपं पृथग्विभज्य गीतं कथितमित्यर्थः । हेतुमद्भिः हेतवोऽर्थसाधका युक्तयस्तद्वद्भिर्विनिश्चितैस्तत्त्वनिश्चायकैर्निश्चितार्थैः । ब्रह्मसूत्रपदैः ब्रह्मणः सूचकानि ब्रह्मसूत्राणि तान्येव पदानि पद्यते वस्तुतत्त्वं ज्ञायते एभिरिति पदानि तैर्ब्रह्मसूत्रपदैर्वेदान्तसूत्रैः ' जन्माद्यस्य यतः ' इत्यादिभिस्तयोर्याथात्म्यं गीतं विविच्य सम्यक् प्रकाशितमित्यर्थः ॥ ४ ॥

श्री० टी०—कैर्विस्तरेणोक्तस्यायं संक्षेप इत्यपेक्षायामाह—ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्योगशास्त्रे-

ध्यानधारणादिविषयत्वेन वैराजादिरूपेण बहुधा गीतं निरूपितम् । विविधैर्विचित्रैश्च नित्यनैमित्तिककाम्यककर्मादिविषयैश्छन्दोभिर्वेदैर्नानायजनीयदेवतादिरूपेण बहुधा गीतं ब्रह्मणः सूत्रैः पदैश्च ब्रह्म सूत्र्यते सूच्यते एभिरिति ब्रह्मसूत्राणि "यतो वा इमानि भूतानि जायन्ते" इत्यादीनि तटस्थलक्षणपराण्युपनिषद्वाक्यानि । तथा च ब्रह्म पद्यते गम्यते साक्षाज्ज्ञायते एभिरिति पदानि स्वरूपलक्षणपराणि "सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादीनि तैश्च बहुधा गीतम् । किंच हेतुमद्भिः "सदेव सौम्येदमग्र आसीत्कथमसतः सज्जायेत" इति, तथा "को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात्, एष ह्येवानन्दयाति" इत्यादियुक्तिमद्भिः, अन्याद् अपानचेष्टां कः कुर्यात्, प्राण्यात् प्राणानां व्यापारं को वा कुर्यादिति श्रुतिपदयोरर्थः । विनिश्चितैरुपक्रमोपसंहारैकवाक्यतया असंदिग्धार्थप्रतिपादकैरित्यर्थः । तदेवमेतैर्विस्तरेणोक्तं दुःसंग्रहं संक्षेपतस्तुभ्यं कथयिष्यामि तच्छृण्वित्यर्थः । यद्वा "अथातो ब्रह्मजिज्ञासा" इत्यादीनि ब्रह्मसूत्राणि गृह्यन्ते तान्येव ब्रह्म पद्यते निश्चीयते एभिरिति पदानि तैर्हेतुमद्भिः "ईक्षतेर्नाशब्दम् । आनन्दमयोऽभ्यासात्" इत्यादिभिर्युक्तिमद्भिर्विनिश्चितार्थैः । शेषं समानम् ॥ ४ ॥

स० टी०—कैरिदं विस्तरेणोक्तं यस्य संक्षेप उच्यते ॥ इत्यत्राह स्तुवन्नीशः श्रोतृधीरोचनाय तत् ॥ १ ॥ ऋषिभिः सर्वधर्मज्ञैर्वसिष्ठादिभिरादरात् ॥ बहुधा तत्त्वशुद्ध्यर्थं मोक्षोपाये निरूपितम् ॥ २ ॥ ऋगादिमन्त्रैरुक्तं यद्ब्राह्मणैश्च विवेकतः ॥ यैर्वाक्यैः सूच्यते ब्रह्म गम्यते युक्तिसंयुतैः ॥ ३ ॥ उपक्रमोपसंहाराद्यैक्यवाक्यतयादरात् ॥ निश्चयोत्पादकैः सम्यग्गीतमद्वैततत्परैः ॥ ४ ॥ सदेवेत्यादिवाक्यैर्यैर्हेतुमद्भिर्विनिश्चितैः ॥ कुतस्तु खलु सोम्येदं स्यादित्यादिकहेतुभिः ॥ ५ ॥ नास्तिकादिनिरासाय बहुधा गीतमित्यपि ॥ एतैर्यद्विस्तरेणोक्तं तत्संक्षेपेण ते ब्रुवे ॥ ६ ॥ ४ ॥

भा० टी०—श्रोतृप्ररोचनाय क्षेत्रक्षेत्रज्ञयाथात्म्यं स्तौति—ऋषिभिरिति । ऋषिभिर्वसिष्ठादिभिर्वासिष्ठादौ बहुधा बहुप्रकारं गीतं कथितं न केवलमाप्तोक्तमेव क्षेत्रादियाथात्म्ये प्रमाणमपि तु छन्दांसीत्याह । छन्दोभिः ऋगादिभिर्विविधैः शाखाभेदेन नानाप्रकारैः पृथग्विवेकतो गीतम् । उक्तार्थे श्रुतिस्मृती प्रमाणमभिधाय युक्तिमाह—ब्रह्मेति । ब्रह्मणः सूचकानि वाक्यानि ब्रह्मसूत्राणि तैः पद्यते ज्ञायते ब्रह्मेति तानि पदान्युच्यन्ते तैरेवं क्षेत्रक्षेत्रज्ञयाथात्म्यं गीतमित्यनुवर्तते "आत्मेत्येवोपासीत" इत्येवमादिभिर्हि ब्रह्मसूत्रपदैः आत्मा ज्ञायते हेतुमद्भिर्युक्तियुक्तैः विनिश्चितैः न संशयरूपैः निश्चितप्रत्ययोत्पादकैः इति भाष्ये । आदिपदात् "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति । सत्यं ज्ञानमनन्तं ब्रह्म । तत्त्वमसि । ब्रह्मविदाप्नोति परम् । न स वेद यथा पशुः" इत्यादीनि सूत्रपदानि गृह्यन्ते । तथाच ब्रह्मसूत्राणि च तानि पदानीति भाष्योक्तलघुभूतकर्मधारयं विहाय ब्रह्मसूत्राणि च पदानि चेति समासो न प्रदर्शनीयः फलाभावात् । हेतुमद्भिर्युक्तियुक्तैः "सदेव सोम्येदमग्र आसीत् । कथमसतः तज्जायेत" इति । तथा "को ह्येवान्यात्कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छ । अद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ । तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ । सन्मूलाः सोम्येमाः प्रजाः" इत्यादिभिः । यद्वा अथातो ब्रह्मजिज्ञासेत्यादीन्यपि सूत्राण्यत्र गृहीतानि अन्यथा छन्दोभिरित्यादिना पौनरुक्त्यादिति मत्वा विशिनष्टि—हेतुमद्भिरिति । यद् ऋष्यादिभिर्गीतं तत्समासेन शृण्वित्यन्वयः ॥ ४ ॥

प० टी०—अथ कैर्विस्तरेणोक्तस्यायं संक्षेप इत्याह—ऋषिभिरिति । ऋषिभिर्याज्ञवल्क्यवसिष्ठादिभिरष्टाङ्गयोगधारणावैराग्यनित्यनैमित्तिककर्मव्रतोपवासादिमर्यादया बहुधा गीतं निरूपितम् । छन्दोभिर्वेदैर्विविधैर्मन्त्रब्राह्मणादिरूपैर्नानायजनीयदेवतादिरूपेण गीतम् । ब्रह्मणः सूत्रैः पदैश्च । ब्रह्म सूत्र्यते यैः पदैः

" विज्ञानमानन्दं ब्रह्म । सत्यं ज्ञानमनन्तं ब्रह्म । यतो वा इमानि भूतानि जायन्ते " इत्यादिभिरुपनिषद्विभागैर्हेतुमद्भिः " सदेव सोम्येदमग्र आसीत्कथमसतः सज्जायेत " इत्यादियुक्तिमद्भिर्विनिश्चितार्थैः ॥ ४ ॥

रा० टी०—श्रोतृविश्वासजननायोच्यमानं प्रामाणिकमित्याह—**ऋषिभिरिति** । तदित्यनुषज्जते । यच्छृणित्युक्तं क्षेत्रादिस्वरूपं तदृषिभिर्बहुधा गीतं, गै शब्दे, उक्तमित्यर्थः । विविधैः छन्दोभिर्वेदैः प्रत्येकं गीतमिति सर्वत्रानुषज्जते । हेतुमद्भिः न्यायोपेतैः ब्रह्मसूत्रपदैश्च विनिश्चितमेव शृण्वित्यन्वयः ॥ ५ ॥

**महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च ॥**
**इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः ॥ ५ ॥**

त० टी०—तत्र तावत् क्षेत्रस्वरूपमाह—**महाभूतानीति** द्वाभ्याम् । महाभूतानि शरीरोपादानद्रव्याणि पृथिव्यप्तेजोवाय्वाकाशाख्यानि, अहङ्कारस्तत्कारणं भूतादिः, बुद्धिर्महत्तत्त्वम्, अव्यक्तं गुणत्रयात्मकं प्रधानम्, इत्यष्टधा प्रकृतिः, इन्द्रियाणि दशैकं च श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च ज्ञानेन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि कर्मेन्द्रियाणि, एकं च मनः, इन्द्रियगोचराः श्रोत्रादीन्द्रियविषयाः शब्दस्पर्शरूपरसगन्धाः पञ्च इति चतुर्विंशति तत्त्वानि सांख्याः कथयन्ति ॥ ५ ॥

म० टी०—एवं प्ररोचितायार्जुनाय क्षेत्रस्वरूपं तावदाह द्वाभ्याम्—**महाभूतानीति** । महान्ति भूतानि भूम्यादीनि पञ्च, अहंकारस्तत्कारणभूतोऽभिमानलक्षणः, बुद्धिरहङ्कारकारणं महत्तत्त्वमध्यवसायलक्षणं, अव्यक्तं तत्कारणं सत्त्वरजस्तमोगुणात्मकं प्रधानं सर्वकारणं न कस्यापि कार्यं, एवकारः प्रकृत्यवधारणार्थः। एतावत्येवाष्टधा प्रकृतिः । चशब्दो भेदसमुच्चयार्थः । तदेवं सांख्यमतेन व्याख्यातम् औपनिषदानां तु अव्यक्तमव्याकृतमनिर्वचनीयं मायाख्या पारमेश्वरीशक्तिः । मम माया दुरत्ययेत्युक्तम् । बुद्धिः सर्गादौ तद्विषयमीक्षणं, अहङ्कारः ईक्षणानन्तरमहं बहु स्यामिति संकल्पः, तत आकाशादिक्रमेण पञ्चभूतोत्पत्तिरिति । न ह्यव्यक्तमहदहंकाराः सांख्यसिद्धा औपनिषदैरुपगम्यन्ते अशब्दत्वादिहेतुभिरिति स्थितम् 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' "ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्" इति श्रुतिप्रतिपादितमव्यक्तं, "तदैक्षत" इतीक्षणरूपा बुद्धिः, "बहु स्यां प्रजायेय' इति बहुभवनसंकल्परूपोऽहंकारः, " तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवी " इति पञ्चभूतानि श्रौतानि । अयमेव पक्षः साधीयान् । इन्द्रियाणि दशैकं च श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि पञ्च बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थाख्यानि पञ्च कर्मेन्द्रियाणीति तानि एकं च मनः संकल्पविकल्पात्मकं पञ्च चेन्द्रियगोचराः शब्दस्पर्शरूपरसगन्धास्ते बुद्धीन्द्रियाणां ज्ञाप्यत्वेन विषयाः कर्मेन्द्रियाणां तु कार्यत्वेन । तान्येतानि सांख्याश्चतुर्विंशति तत्त्वान्याचक्षते ॥ ५ ॥

शं० टी०—एवं क्षेत्रक्षेत्रज्ञयोः स्वरूपविवेचनस्य सर्ववेदशास्त्रतदर्थज्ञप्रसिद्धत्वं प्रतिपाद्य तत्र प्रथमोद्दिष्टं क्षेत्रं प्रतिपादयति—**महाभूतानीति** द्वाभ्याम् । महाभूतानि भवन्तीति भूतान्याकाशादीनि सूक्ष्माण्यपञ्चीकृतानि । स्थूलानि तु पञ्च चेन्द्रियगोचरा इति वक्ष्यति । तत्रोऽत्र तन्मात्राण्येव गृह्यन्ते भूतशब्देन । महान्ति च तानि भूतानि च महाभूतानि सर्वकार्यव्यापकत्वाद्भूतानां महत्त्वम् । अहंकारो महाभूतकारणम् "अहंकारात्पञ्च तन्मात्राणि" इति श्रुतेः । बुद्धिर्महत्तत्त्वमहंकारकारणम् "महतोऽहंकारः" इति श्रुतेः । महतः कारणमव्यक्तं मूलप्रकृतिर्महदादिवत्र व्यज्यत इत्यव्यक्तमव्याकृतं जगद्बीजं त्रिगुणात्मकं परमेश्वरशक्तिरपरा "भिन्ना प्रकृतिरष्टधा । अपरेयम्" इति च "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्युक्तलक्षणाष्टधा भिन्ना त्वपरैव प्रकृतिरिति प्रकृतिस्वरूपावधारणार्थ एवकारश्चकारः समुच्चयार्थः । अव्यक्तमेव क्षेत्रस्य स्वाभाविकं रूपं महदादिभिः सप्तभिः "इन्द्रियाणि दशैकं च पञ्च चेन्द्रियगोचराः" इति वक्ष्यमाणैश्च षोडशभिर्विकारैर्यद्विकारीत्युक्त-

विशेषणवतः क्षेत्रस्यैव वैकारिकं रूपं चक्षुरादीनि वागादीनि च दशेन्द्रियाणि एकमन्तरिन्द्रियं मनश्चैकादश तथेन्द्रियगोचराः शब्दादयः पञ्च च मिलित्वा षोडश विकाराः पञ्च महाभूतानि महदहंकारावव्यक्तं च चतुर्विंशतिपदार्थाः 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारः' इति सांख्यानां चतुर्विंशति तत्त्वानि भवन्ति ॥ ५ ॥

**श्री० टी०**—तत्र क्षेत्रस्वरूपमाह—**महाभूतानीति** द्वाभ्याम् । महाभूतानि भूम्यादीनि पञ्च, अहंकारस्तत्कारणभूतः, बुद्धिर्विज्ञानात्मकं महत्तत्त्वं, अव्यक्तं मूलप्रकृतिः, इन्द्रियाणि बाह्यानि दश, श्रोत्रत्वग्घ्राणदृग्जिह्वावाग्दोर्मेढ्राङ्घ्रिपायव इति, एकं च मनः, इन्द्रियगोचराश्च पञ्च तन्मात्ररूपा एव शब्दादयः आकाशादिविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च, तदेवं चतुर्विंशतितत्त्वान्युक्तानि ॥ ५ ॥

**स० टी०**—एवं प्ररोचितायाह भगवानर्जुनाय च ॥ आदौ क्षेत्रस्वरूपं तत्सर्वानर्थाश्रयत्वतः ॥ १ ॥ भूम्यादिपञ्च भूतानि महान्ति व्यापकत्वतः ॥ तत्कारणमहंकारो बुद्धिस्तत्कारणं महत् ॥ २ ॥ तत्कारणं प्रधानं स्यादव्यक्तं त्रिगुणात्मकम् ॥ इत्थं साङ्ख्यमतेनैतद्व्याख्यातं स्वमतेन तु ॥ ३ ॥ अव्यक्तशब्दिता माया शक्तिर्या पारमेश्वरी ॥ अनिर्वाच्येति सर्गादौ तद्विषयं यदीक्षणम् ॥ ४ ॥ सा बुद्धिः स्यादहंकारस्त्वीक्षणानन्तरं हि यः ॥ बहु स्यामिति संकल्पस्ततो व्योमादिपञ्चकम् ॥ ५ ॥ इत्येवमष्टधा भिन्ना या प्रोक्ता प्रकृतिः पुरा ॥ श्रोत्रादिपञ्चकं चैव मनोवागादिपञ्चकम् ॥ ६ ॥ शब्दादिविषयाः पञ्च तान्येतानि हि कापिलाः ॥ चतुर्विंशतितत्त्वानि प्राहुस्तत्क्षेत्रमुच्यते ॥ ७ ॥ ५ ॥

**भा० टी०**—एवं क्षेत्रादियाथात्म्यस्तुत्याऽभिमुखीकृतायार्जुनाय किं तदिति जिज्ञासवे यथोद्देशं क्षेत्रं निर्दिशति—**महाभूतानीति** । सर्वविकारव्यापकत्वान्महान्ति च तानि भूतानि सूक्ष्माणि अहंप्रत्ययरूपोऽहंकारः महाभूतकारणं बुद्धिरध्यवसायलक्षणाहंकारकारणं, न व्यक्तमव्यक्तमव्याकृतमीश्वरशक्तिर्माया 'मायां तु प्रकृतिं विद्यात्', 'मम माया दुरत्यया' इत्युक्ता । एवशब्दोऽवधारणार्थः । एतावत्येवाष्टधा भिन्ना प्रकृतिरित्यर्थः । चकारः मूलप्रकृत्या सह तन्मात्रादिभेदानां समुच्चयार्थः । इन्द्रियाणि दश श्रोत्रत्वक्चक्षूरसनघ्राणाख्यानि ज्ञानोत्पादकत्वाज्ज्ञानेन्द्रियाणि पञ्च, वाक्पाणिपादपायूपस्थाख्यानि कर्मनिर्वर्तकत्वात्कर्मेन्द्रियाणि पञ्च, एकम् कादशं संकल्पविकल्पात्मकं मनः, पञ्चेन्द्रियाणां गोचराः विषयाः शब्दस्पर्शरूपरसगन्धाख्यगुणविशिष्टानि स्थलभूतानीत्यर्थः । तान्येतानि 'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकस्तु विकारः' इतिवादिनः सांख्याश्चतुर्विंशतितत्त्वानि व्याचक्षते ॥ ५ ॥

**प० टी०**—तत्र प्रथमं क्षेत्रस्वरूपमाह—**महाभूतानीति** द्वाभ्याम् । महाभूतानि भूम्यादीन्यनुभवगोचरत्वात्प्रथममुपन्यस्यति । अहंकारस्तत्कारणीभूतः स त्रिविधः सात्त्विकादिभेदेन । स च क्रमेण ज्ञानशक्तिक्रियाशक्तिद्रव्यशक्त्युत्पादकः । तत्र तामसाहंकारादाकाशादिद्रव्यशक्तीनां शब्दादितन्मात्राणामुत्पत्तिरनन्तरं बुद्धिर्विज्ञानात्मकं महत्तत्त्वम्, अव्यक्तं मूलप्रकृतिः, इन्द्रियाणि बाह्यानि दश, एकं मनः, इन्द्रियगोचराश्च पञ्च तन्मात्रारूपा एवं शब्दादय आकाशादविशेषगुणतया व्यक्ताः सन्त इन्द्रियविषयाः पञ्च, तदेवं चतुर्विंशतितत्त्वान्युक्तानि ॥ ५ ॥

**रा० टी०**—क्षेत्रं यच्च यादृक् च तच्छृणिवति प्रतिज्ञातमाह—**महाभूतानीति** । पञ्च महाभूतानि, महत्तत्त्वमप्यहंकारशब्देन गृह्यते । बुद्धिरन्तःकरणविशेषः, अव्यक्तं त्रिगुणात्मकं प्रधानं, इन्द्रियाणि दशैकं चेति ज्ञानेन्द्रियकर्मेन्द्रियमनोभेदेनैकादशेन्द्रियाणि, इन्द्रियगोचराः श्रोत्रादिविषयाः शब्दाद्याः पञ्च च, एतत्क्षेत्रं समासेन संक्षेपेण महाभूतत्वादिप्रकारोपेतमुदाहृतमित्यन्वयः ॥ ६ ॥

इच्छा द्वेषः सुखं दुःखं संघातश्चेतना धृतिः ।
एतत् क्षेत्रं समासेन सविकारमुदाहृतम् ॥ ६ ॥

त० टी०—इह तु इच्छादयो धर्मा अधिका अङ्गीकृताः । तत्र सुखहेतुतयाऽभिमतवस्त्वीप्सा इच्छा, द्वेषः प्रतिकूलवस्तुनिरासात्मिका चित्तवृत्तिः, सुखं पुण्यजन्यानुकूलविषयानुभवः । यद्यपीच्छाद्वेषसुखदुःखान्यात्मनो धर्माः 'पुरुषः सुखदुखानां भोक्तृत्वे हेतुरुच्यते' इति वक्ष्यमाणत्वात् । तथाऽपि तेषामात्मनः क्षेत्रसंबन्धप्रयुक्तत्वात्तज्जन्यतवाच्च क्षेत्राश्रितत्वमप्युच्यते । संघातश्चेतनभोगायतनभूतः पञ्चमहाभूतपरिणामः, चेतना विषयानुभवयोग्यदेहेन्द्रियावैकल्यावल्यावस्था, धृतिः वैकल्यहेतौ सति देहेन्द्रियावष्टम्भको धर्मविशेषः । एतत् दृश्यमानं सर्वं प्रकृत्यादिपृथिव्यन्तद्रव्यपरिणामरूपम्, इन्द्रियमनइच्छादिधर्मोद्भवहेतुभूतं चेतनसुखदुःखादिभोगागारं क्षेत्रं देहान्तरबीजभूतपुण्यपापोद्गमभूमिभूतं समासेन संक्षेपेण सविकारं जन्ममरणावस्थान्तरादिपरिणामयुक्तमुदाहृतमुक्तम् ॥ ६ ॥

म० टी०—इच्छा सुखे तत्साधने चेदं मे भूयादिति स्पृहात्मा चित्तवृत्तिः काम इति राग इति चोच्यते, द्वेषः दुःखे तत्साधने चेदं मे मा भूयादिति स्पृहाविरोधिनी चित्तवृत्तिः क्रोध इतीर्ष्येति चोच्यते । सुखं निरुपाधीच्छाविषयीभूता धर्मासाधारणकारणिका चित्तवृत्तिः परमात्मसुखव्यञ्जिका । दुःखं निरुपाधिद्वेषविषयीभूता चित्तवृत्तिरधर्मासाधारणकारणिका । संघातः पञ्चमहाभूतपरिणामः सेन्द्रियं शरीरम् । चेतना स्वरूपज्ञानव्यञ्जिका प्रमाणासाधारणकारणिका चित्तवृत्तिर्ज्ञानाख्या । धृतिरवसन्नानां देहेन्द्रियाणामवष्टम्भहेतुः प्रयत्नः । उपलक्षणमेतदिच्छादिग्रहणं सर्वान्तःकरणधर्माणाम् । तथाच श्रुतिः "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति। मृद्घट इतिवदुपादानाभेदेन कार्याणां कामादीनां मनोधर्मत्वमाह—एतदिति । एतत्परिदृश्यमानं सर्वं महाभूतादिधृत्यन्तं जडं क्षेत्रज्ञेन साक्षिणावभास्यमानत्वात्तदनात्मकं क्षेत्रं भास्यमचेतनं समासेनोदाहृतमुक्तम् । ननु शरीरेन्द्रियसंघात एव चेतनः क्षेत्रज्ञ इति लोकायतिकाः, चेतना क्षणिकं ज्ञानमेवात्मेति सुगताः, इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति नैय्यायिकाः, तत्कथं क्षेत्रमेवैतत्सर्वमिति तत्राह—सविकारमिति । विकारो जन्मादिर्नाशान्तः परिणामो नैरुक्तैः पठितः, तत्सहितं सविकारमिदं महाभूतादिधृत्यन्तमतो न विकारसाक्षि स्वोत्पत्तिविनाशयोः स्वेन द्रष्टुमशक्यत्वात् । अन्येषामपि स्वधर्माणां स्वदर्शनमन्तरेण दर्शनानुपपत्तेः ' स्वेनैव स्वदर्शने च कर्तृकर्मविरोधात् निर्विकार एव सर्वविकारसाक्षी । तदुक्तम् ' नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः । धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः ' इति । तेन विकारित्वमेव क्षेत्रचिह्नं नतु परिगणनमित्यर्थः ॥ ६ ॥

शं० टी०—यादृक्चेत्युक्तविशेषणं स्फुटयति—इच्छेति । भोग्यानीच्छत्यनयेति इच्छा रागः विषयेषु प्रीतिः, द्वेषोऽप्रीतिः, इच्छाद्वेष इति सत्त्वगुणानां शमदमदयाक्षान्त्यादीनां, तमोगुणानां निद्रालस्यमोहादीनामुपलक्षणम् । इच्छाद्वेषादयो राजससात्त्विकतामसाः सर्वे क्षेत्रान्तःपातिनोऽन्तःकरणस्य धर्मत्वात्क्षेत्रं स्वयमेतैर्जन्मादिभिश्च धर्मि भवति, इच्छाद्वेषादिभिः पुण्यापुण्यकर्महेतुत्वात्स्वयमेव कर्मि च भवति । इच्छादीनां पुण्यादिकर्मणां च क्षेत्रधर्मत्वेन ज्ञेयत्वेन च क्षेत्रत्वमेव । इष्टानिष्टवस्तुसान्निध्यात्प्रतीयमानं सुखं दुःखं चान्तःकरणपरिणामविशेषत्वात्तद्धर्मावेव न त्वात्मधर्मौ । अयं रागोऽयं द्वेष इति, इदं सुखमिदं दुःखमिति ज्ञायमानत्वात्सुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मादीनामात्मधर्मत्वे ज्ञेयत्वानुपपत्तेः । ज्ञायन्ते हि घटवत्सुखदुःखेच्छादयो धर्मास्ततस्तेषां रूपवदनात्मधर्मत्वमेव । यद्यपि तार्किकैः सुखदुःखादय आत्मधर्मा इत्युररीकृतं तर्ह्यप्यात्मनोऽन्तःकरणस्यैव धर्मा न तु प्रतीचः । निरवयवसावयवयोः संयोगसमवायान्यतरासंभवात्तयोरयुतसिद्धत्वाभावाच्च न ह्यात्मा गुणी भवति

"केवलो निर्गुणश्च" इतिश्रुतेः। नापि क्रियावान् "निष्कलं निष्क्रियम्" इति श्रुतेः। निष्कलत्वान्नाप्यवयवी, असङ्गत्वादात्मनो न येन केनापि संयोगः समवायश्च संभवति। तेषां यदि आत्मधर्मत्वं तर्हि नित्यत्वं चैतन्यवत्सदोपलभ्यमानत्वं च स्यात्ततो रागद्वेषसुखदुःखादिधर्मकं जन्मजरादिधर्मकं च क्षेत्रमेवेति सिद्धम्। तत एव भगवतापि इच्छा द्वेषः सुखं दुःखमितीच्छादीनां क्षेत्रान्तःपातित्वमेव प्रतिपादितम्। किंच संघातः करचरणादिसंहतिरूपो देहोऽपि क्षेत्रमेव। बुद्धौ तप्तायःपिण्डे अग्निरिव य आत्मचैतन्याभासो बुद्धिवृत्तिविशिष्टः शब्दादिविषयावभासकः स एव चेतना। सा च बुद्ध्या सह साक्षिणो विषयत्वेन ज्ञेयत्वात्तद्भावभावित्वाच्च क्षेत्रमेव। धृतिः धैर्यलक्षणो बुद्धिवृत्तिविशेषः सापि ज्ञेयत्वात्क्षेत्रमेव। धृतिरिति कामसंकल्पविचिकित्सादीनामिदंकारममकारादिसर्वप्रत्ययानामुपलक्षणं, तेन यद्यदात्मनो ज्ञेयं तत्तत्सर्वं क्षेत्रमेवेति सिद्धम्। सविकारं विकारैर्महदादिभिः शब्दादिभिश्च सह वर्तत इति सविकारं सधर्मं चैतत्क्षेत्रं समासेन ते समुदाहृतं सम्यङ्निरूपितमित्यर्थः ॥ ६ ॥

श्री० टी०–इच्छेति। इच्छादयः प्रसिद्धाः, संघातः शरीरं, चेतना ज्ञानात्मिका मनोवृत्तिः, धृतिर्धैर्यं, एते इच्छादयो दृश्यत्वान्नात्मधर्मा अपि तु मनोधर्मा एव अतः क्षेत्रान्तःपातिन एव। उपलक्षणं चैतत्संकल्पादीनाम्। तथा च श्रुतिः–"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति। अनेन च यादृगिति प्रतिज्ञाताः क्षेत्रधर्मा दर्शिताः। एतत्क्षेत्रं सविकारं इन्द्रियादिविकारसहितं संक्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः ॥ ६ ॥

स० टी०–अथेदानीं च यान्याहुः काणादा आत्मनो गुणान् ॥ क्षेत्रधर्मास्त एते तु प्राहेतीशो न तद्गुणाः ॥ १ ॥ सुखे तत्साधने चेदं भूयान्मे चेति या स्पृहा ॥ चित्तवृत्तिर्भवेत्सेच्छा कामरागापराभिधा ॥ २ ॥ दुःखे तत्साधने चेदं मा भूदित्येव चित्तगा ॥ वृत्तिः सा द्वेष इत्याहुः क्रोधेर्ष्याद्यपराभिधा ॥ ३ ॥ निरुपाधीच्छाविषया धर्मासाधारणोद्भवा ॥ चित्तवृत्तिः सुखं तत्स्यात्सुखाभिव्यञ्जिऽऽकात्मनः ॥ ४ ॥ तथैव द्वेषविषयाऽधर्मासाधारणोद्भवा ॥ चित्तवृत्तिर्हि सा दुःखमित्याहुर्मायिकांशजम् ॥ ५ ॥ पञ्चभूतविकारात्मसंघातः सेन्द्रियं वपुः ॥ चेतना चित्तवृत्तिर्या वेदान्तादिप्रमाणजा ॥ ६ ॥ ज्ञानाख्या सा स्वरूपस्य ज्ञानाभिव्यञ्जिका मता ॥ धृतिर्देहेन्द्रियादेर्याऽवसन्नस्याशुधारिणी ॥ ७ ॥ इच्छादिग्रहणं चात्र सर्वेषामुपलक्षणम् ॥ अन्तःकरणधर्माणां सर्वं तत्क्षेत्रमुच्यते ॥ ८ ॥ जन्मनाशादियुक्तं यत्सविकारं तदुच्यते ॥ महाभूतादिधृत्यन्तं सविकारं समासतः ॥ ९ ॥ एतत्क्षेत्रमिति प्रोक्तं क्षेत्रज्ञस्तु ततः पृथक् ॥ निर्विकारः स एवास्य साक्षी क्षेत्रस्य भासकः ॥ १० ॥ क्षेत्रचिह्नं विकारित्वं निर्विकारस्ततः परम् ॥ "नर्ते स्याद्विक्रियां दुःखी साक्षिता का विकारिणः ॥ ११ ॥ धीविक्रियासहस्राणां साक्ष्यतोऽहमविक्रियः" ॥ १२ ॥ ६ ॥

भा० टी०–एवं क्षेत्रस्वरूपनिर्देशेनैव तत्क्षेत्रं यच्च यादृक्चेति व्याख्यायेच्छादीनामात्मविकारत्वनिवृत्तये क्षेत्रविकारत्वनिरूपणेन यद्विकारीत्येतन्निरूपयन्नात्मगुणा इति यानाचक्षते वैशेषिकास्तेऽपि क्षेत्रधर्मा एव न तु क्षेत्रज्ञस्येत्याशयेनाह–इच्छेति। इच्छा पूर्वोपलब्धसुखहेतुसजातीये हेतौ उपलभमाने इदं मे स्यादिति स्पृहा, तथानुभूतदुःखहेतुसजातीये हेतावुपलभमाने इदं मे मा भूदिति चित्तवृत्तिर्द्वेषः, तथा प्रसन्नत्वात्मकमनुकूलं सुखं, प्रतिकूलात्मकं दुःखं, देहेन्द्रियाणां संहतिः संघातः, तस्मिन्नभिव्यक्तान्तःकरणवृत्तिरात्मचैतन्याभासानुविद्धा चेतना, ययाऽवसादप्राप्तानि देहेन्द्रियाणि ध्रियन्ते सा धृतिः, इच्छादिग्रहणं संकल्पविकल्पाद्यन्तःकरणधर्मोपलक्षणार्थम्। तथाच श्रुतिः "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धाधृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति। तथाचेच्छादीनां ज्ञेयत्वाज्ज्ञेयान्तःकरणधर्मत्वप्रतिपादनेन श्रुत्या सर्वज्ञेन

भगवता च वैशेषिकमतस्य हेयत्वं बोधितम् । क्षेत्रनिरूपणमुपसंहरति–एतत्क्षेत्रं सविकारं विकारेण महदादिना तद्विकारेण चेच्छादिना सहितं समासेन संक्षेपेणोदाहृतमुक्तम् । यस्य क्षेत्रभेदजातस्य संहतिरिदं शरीरं क्षेत्रमित्युक्तं तत्क्षेत्रं महाभूतादिभेदभिन्नं धृत्यन्तं विरक्तस्य ज्ञानाधिकाराय वैराग्यार्थं व्याख्यातमित्यर्थः ॥ ६ ॥

प० टी०–इच्छेति । इच्छादयः प्रसिद्धाः, संघातः शरीरचेतना, ज्ञानात्मिका मनोवृत्तिर्धृतिर्धैर्यम् । एते चेच्छादयो दृश्यत्वान्नात्मधर्मा अपि तु मनोधर्मा अतः क्षेत्रान्तःपातिन एव । उपलक्षणं चैतत्संकल्पादीनाम् । श्रुतिरपि–"कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति । अनेन यादृगिति पूर्वप्रतिज्ञाताः क्षेत्रधर्मा दर्शिताः । एतत्क्षेत्रं सविकारं महदादिविकारसहितं संक्षेपेण तुभ्यं मयोक्तमिति क्षेत्रोपसंहारः ॥ ६ ॥

रा० टी०–क्षेत्रं यद्विकारीति प्रतिज्ञातक्षेत्रविकारानाह–इच्छेति । संघातो देहः, चेतना चेतसो व्याप्तिः, धृतिर्धैर्यं, एतत्प्रागुक्तं क्षेत्रमिच्छादिविकारोपेतं संक्षेपेणोक्तमित्यर्थः । महाभूतादिक्षेत्राभिमानिनः तद्विकारेच्छाद्यभिमानिनश्चावश्यं ज्ञेयत्वादुच्यन्ते–आकाशाभिमानी विघ्नेशः, वायुमानी मुख्यवायुजो मरीचिनामा, अग्निमानी वह्निः, अबभिमानी वरुणः, भूमिमानिनी धरादेवी, अहंकारः शिवः, महान्ब्रह्मा, बुद्धिरुमा, अव्यक्तं श्रीदेवी, इन्द्रियेषु मनोभिमानिनः स्कन्देन्द्रानिरुद्धाः, श्रोत्रं चन्द्रः, त्वक् वायुसुतो मरुत, चक्षुः सूर्यः, जिह्वा वरुणस्य रूपान्तरं, घ्राणमश्विनौ, वागग्निः, हस्तौ वायुसुतौ मरुतौ, पादौ तु विष्णुनाविष्टौ शचीसुतौ यज्ञशंभुनामकौ, पायुर्यमः, उपस्थः शिवः मनुश्च, इन्द्रियगोचरेषु शब्दस्पर्शरूपरसगन्धाभिमानिनः शिवपुत्राः पञ्च ज्ञेयाः विकारेषु, इच्छा श्रीर्भारती च, द्वेषदुःखाभिमानिनौ कलिद्वापरौ, सुखं मुख्यवायुः, धृतिः सरस्वती भारती च, चेतना श्रीः, संघातमानिनोऽन्ये चेतना ज्ञेयाः, अभिमानिनां प्रागुक्तव्युत्पत्त्या भगवन्निवासत्वादेव क्षेत्रनामत्वम् । क्षेत्रविकारित्वमपि महदादिभ्योऽतिशयेन विकारितया स्थितत्वादिति ज्ञेयम् ॥ ७ ॥

**अमानित्वमदम्भित्वमहिंसा क्षान्तिरार्जवम् ॥**
**आचार्योपासनं शौचं स्थैर्यमात्मविनिग्रहः ॥ ७ ॥**

त० टी०–एवं क्षेत्रं प्रतिपाद्य तद्विलक्षणं क्षेत्रज्ञस्वरूपं प्रतिपादयितुं वेत्तुस्तज्ज्ञानयोग्यतापादनाय साधनान्याह–अमानित्वमित्यादि पञ्चभिः । यत्किंचिद्गुणवत्तया पूज्यजनेष्वपि स्वपूज्यत्वबुद्धिर्मानस्तद्वत्त्वं मानित्वं तद्रहितत्वममानित्वम्, अदम्भित्वं धर्मित्वख्यापनायाविधिवद्धर्मलेशानुष्ठानं दम्भस्तद्वत्त्वं दम्भित्वं तद्रहितत्वम्, अहिंसा वाङ्मनःकायैः परपीडावर्जनं, क्षान्तिः परैरपकृतेऽपि निर्विकारचित्ततया तदपराधोपेक्षा, आर्जवं वाङ्मनःकायानां समत्वमकौटिल्यमिति यावत्, आचार्योपासनम् आचार्यः "श्रोत्रियं ब्रह्मनिष्ठम्" 'आचार्यो वेदसंपन्नो विष्णुभक्तो विमत्सरः । मन्त्रज्ञो मन्त्रभक्तश्च सदा मन्त्राश्रयः शुचिः ॥ गुरुभक्तिसमायुक्तः पुराणज्ञो विशेषतः । एवं लक्षणसंपन्नो गुरुरित्यभिधीयते" इतिश्रुतिस्मृत्युक्तलक्षणो विवक्षितः, मोक्षमार्गदर्शित्वात् । तस्योपासनं निर्मायिकतया वाङ्मनःकायैः सेवनं, शौचं बाह्याभ्यन्तरभेदाद्द्विविधं, बाह्यं मृज्जलादिना कायेन्द्रियशुद्धिः, आभ्यन्तरं मनोमलरागादीनां विवेकेनापनयनं, स्थैर्यं परमार्थोपाये प्रवृत्तस्य विघ्नबाहुल्ये प्राप्तेऽपि उद्वेगाभावेन तदपरित्यज्यावस्थानम्, आत्मविनिग्रहः देहेन्द्रियसंघस्य शास्त्रविरुद्धासत्प्रवृत्तेर्निवर्तनम् ॥ ७ ॥

म० टी०–एवं क्षेत्रं प्रतिपाद्य तत्साक्षिणं क्षेत्रज्ञं क्षेत्राद्विवेकेन विस्तरात्प्रतिपादयितुं तज्ज्ञानयोग्यत्वाया-

  

मानित्वादिसाधनान्याह ज्ञेयं यत्तदित्यतः प्राक्तनैः पञ्चभिः—**अमानित्वमिति** । विद्यमानैरविद्यमानैर्वा गुणैरात्मनः श्लाघनं मानित्वं, लाभपूजाख्यात्यर्थं स्वधर्मप्रकटीकरणं दम्भित्वं, कायवाङ्मनोभिः प्राणिनां पीडनं हिंसा, तेषां वर्जनममानित्वमदम्भित्वमहिंसेत्युक्तं, परापराधे चित्तविकारहेतौ प्राप्तेऽपि निर्विकारचित्ततया तदपराधसहनं क्षान्तिः, आर्जवमकौटिल्यं यथाहृदयं व्यवहरणं परप्रतारणाराहित्यमिति यावत्, आचार्यो मोक्षसाधनस्योपदेष्टाऽत्र विवक्षितो न तु मनूक्त उपनीयाध्यापकः तस्य शुश्रूषानमस्कारादिप्रयोगेण सेवनमाचार्योपासनं, शौचं बाह्यं कायमलानां मृज्जलाभ्यां क्षालनमाभ्यन्तरं च मनोमलानां रागादीनां विषयदोषदर्शनरूपप्रतिपक्षभावनयाऽपनयनं, स्थैर्यं मोक्षसाधने प्रवृत्तस्यानेकविधविघ्नप्राप्तावपि तदपरित्यागेन पुनःपुनर्यत्नाधिक्यं, आत्मविनिग्रह आत्मनो देहेन्द्रियसंघातस्य स्वभावप्राप्तां मोक्षप्रतिकूले प्रवृत्तिं निरुध्य मोक्षसाधन एव व्यवस्थापनम् ॥ ७ ॥

**शं० टी०**—एवं महाभूतान्यहंकार इत्यादिना क्षेत्रस्य स्वरूपं निरूप्याथ क्षेत्रज्ञे निरूपितव्ये सति तज्ज्ञानं तत्साधनाभावे न सिध्यति जिज्ञासोस्तन्नियतसाधनसंपत्तिमतस्तज्ज्ञानं सुलभमित्यादावेवात्मज्ञानोत्पत्तिसाधनान्याह पञ्चभिः—**अमानित्वमिति** । स्वस्मिन्नुत्कृष्टत्वबुद्धिर्मानः प्रतिष्ठार्थमात्मन्युत्कर्षारोपणहेतुः, सोऽस्यास्तीति मानी तस्य भावो मानित्वं तदभावस्त्वमानित्वं, ज्ञानोत्पत्तिहेतोश्चित्तशुद्धेः प्रतिबन्धो मानस्तथैव दम्भित्वादयश्च तदभावेन मुमुक्षोर्भवितव्यमित्यर्थः । वेषभाषाक्रियाचातुर्यादिभिः स्वमहत्त्वप्रकटनं दम्भस्तद्वत्त्वं दम्भित्वं तद्रहितत्वमदम्भित्वं, मनोवाक्कायकर्मभिः प्राणिपीडानाचरणमहिंसा भूतदयैकलभ्या, ब्रह्मचर्यादीनामियमुपलक्षणम् । चिन्ताविलापराहित्येनाध्यात्मिकाद्युपद्रवसहनं क्षान्तिः, स्वधर्मे मनोवाक्कायप्रवृत्तेः सदैकरूपत्वमार्जवम्, आचार्योपासनं ज्ञानोपदेष्टुराचार्यस्य श्रद्धाभक्तिभ्यां शुश्रूषादिक्रिययाऽऽराधनमुपासनम् । शौचं द्विविधं बाह्यमाभ्यन्तरं च । बाह्यं मृज्जलाभ्यामस्पृश्याभक्ष्याग्राह्यत्यागेन च । आभ्यन्तरं, रागद्वेषलोभमोहगर्वकाठिन्यादिमलानां तत्प्रतिकूलगुणावष्टम्भेन क्षालनमन्तःशौचं, आत्मनोऽन्तःकरणस्य विषयभोगवासनाग्रस्तस्य विषयध्यानश्रवणदर्शनादौ सुतरां प्रवृत्तिनिरोध आत्मविनिग्रहः, निगृहीतस्य मनसो नैश्चल्येन मोक्षेच्छया श्रवणादावेव स्थापनं स्थैर्यम् ॥ ७ ॥

**श्री० टी०**—इदानीमुक्तलक्षणात्क्षेत्राद्विविक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यँस्तज्ज्ञानसाधनान्याह—**अमानित्वमिति पञ्चभिः** । अमानित्वं स्वगुणश्लाघाराहित्यम्, अदम्भित्वं दम्भराहित्यं, अहिंसा परपीडावर्जनं, क्षान्तिः सहिष्णुत्वम्, आर्जवमवक्रता, आचार्योपासनं सद्गुरुसेवा, शौचं बाह्यमाभ्यन्तरं च । तत्र बाह्यं मृज्जलादिना आभ्यन्तरं च रागादिमलक्षालनम् । तथा च स्मृतिः—'शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथाऽऽन्तरम्' इति । स्थैर्यं सन्मार्गे प्रवृत्तस्य तदेकनिष्ठता, आत्मविनिग्रहः शरीरसंयमः, एतज्ज्ञानमिति प्रोक्तमिति पञ्चमेनान्वयः ॥ ७ ॥

**स० टी०**—एवं क्षेत्रमुदाहृत्य क्षेत्रज्ञं तस्य साक्षिणम् ॥ क्षेत्राद्विवेकतो वक्तुं विस्तरेण हरिर्विभुः ॥ १ ॥ तज्ज्ञानयोग्यतासिद्ध्यै साधनान्याह सर्ववित् ॥ विद्यमानैर्गुणैर्वाप्यविद्यमानैरुतात्मनः ॥ २ ॥ श्लाघनं किल मानित्वं स्वपूज्यत्वाभिमानिता ॥ स्वधर्मख्यापनं लाभपूजार्थं हि दम्भिता ॥ ३ ॥ प्राणिनां पीडनं हिंसा कायेन मनसा गिरा ॥ एतेषां वर्जनं ज्ञानं ज्ञानसाधनभावतः ॥ ४ ॥ परापराधे प्राप्तेऽपि चेतोविकृतिकारणे ॥ बुद्धेरविक्रिया क्षान्तिरकौटिल्यं तथार्जवम् ॥ ५ ॥ परप्रतारणाशून्यं व्यवहार उपस्थिते ॥ मोक्षमार्गोपदेष्टा सद्गुरुराचार्य ईरितः ॥ ६ ॥ तस्य शुश्रूषणं भक्त्या ज्ञानसाधनमुत्तमम् ॥ मृज्जलाभ्यां बहिःशौचं शरीरमलशोधनम् ॥ ७ ॥ शत्रुभावनया त्यागो रागादेरान्तरं स्मृतम् ॥ मोक्षमार्गे प्रवृत्तस्य स्थैर्यं विघ्नैरचाल्यता ॥ ८ ॥ देहेन्द्रियादिवर्गस्य प्रवृत्तिर्या स्वभावतः ॥ तां निरुद्ध्याथ सन्मार्गे स्थापनं ज्ञानसाधनम् ॥ ९ ॥ ७ ॥

भा० टी०—सप्रभावं क्षेत्रज्ञं ज्ञेयं यत्तदित्यादिना निरूपयितुं यस्मिन्सत्यमृतत्त्वसाधनक्षेत्रज्ञज्ञानयोग्योऽधिकृतो भवति तं तत्त्वज्ञानसाधनगणम् ' आयुर्वै घृतम् ' इतिवज्ज्ञानममानित्वादिलक्षणं विदधाति—**अमानित्वमित्यादिना ।** विद्यमानाविद्यमानगुणैः आत्मनः श्लाघनं मानित्वं तद्वर्जितत्वममानित्वं, पूजालाभाद्यर्थं स्वधर्मानुष्ठानप्रकटीकरणं दम्भित्वं तस्याभावोऽदम्भित्वं, कायादिभिः प्राणिनामपीडनमहिंसा, परापराधप्राप्तौ चित्तस्याविकृतता क्षान्तिः, आर्जवमृजुभावोऽवक्रत्वं, आचार्यस्य मोक्षसाधनोपदेष्टुः कायादिना शुश्रूषादिप्रयोगेण सेवनमाचार्योपासनं, कायमलानां मृज्जलाभ्यां प्रक्षालनमन्तश्च रागादिमलानां मोक्षप्रतिपक्षभावनया अपनयः शौचं, तथाच स्मृतिः ' शौचं हि द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ' इति । मोक्षमार्गे प्रवृत्तस्यानेकान्तरायप्राप्तावपि तन्निवृत्त्यर्थं प्रयत्नपुरःसरं तत्रैव कृतव्यवसायित्वं स्थैर्यं, आत्मोपकारकत्वादात्मनो देहेन्द्रियादिसंघातस्य स्वभावेन सर्वतः प्रवृत्तस्य सर्वस्मान्मोक्षप्रतिकूलमार्गात्प्रतिरुध्य सन्मार्गे स्थापनमात्मविनिग्रहः । अमानित्वादीनामेतज्ज्ञानमिति प्रोक्तमित्यनेन संबन्धः ॥ ७ ॥

प० टी०—इदानीमुक्तलक्षणात्क्षेत्राद्विविक्ततया ज्ञेयं शुद्धं क्षेत्रज्ञं विस्तरेण वर्णयिष्यन् तज्ज्ञानसाधनान्याह—**अमानित्वमिति** पञ्चभिः । अमानित्वं स्वगुणश्लाघाराहित्यम् । तदुक्तम् 'मानापमाने दुःखी स्यान्नैव साधारणो जनः । अतो दुःखनिदानत्वान्मानं योगी परित्यजेत्' इति । तथाऽदम्भित्वं दम्भराहित्यम् । तदुक्तम्—'कृतं दम्भाददम्भाद्वा कर्म तुल्यश्रमं भवेत् । श्रमैकफलमाद्यं स्याद्वितीयं सुखसाधनम् ' इति । तथा अहिंसा परपीडानिवृत्तिः । तदुक्तम्—'स्वयं बिभेति हिंस्रेभ्यस्तान्पापान्वेद्मि तैर्हतः । सुखी स्यामिति विज्ञाय परपीडां विवर्जयेत् ' इति । क्षान्तिः सहिष्णुता, आर्जवमवक्रता, आचार्योपासनं सद्गुरुसेवा "आचार्यवान्पुरुषो वेद" इति श्रुतेः । तदुक्तं शतश्लोके—'यद्यप्युद्दामबुद्धिः पठनपरिणमद्वेदशास्त्राक्षरार्थो न ह्याचार्यं विनासौ तदपि परिचिनोत्येतदुक्तं रहस्यम् । ब्रूते नामापि यद्यप्यजिरनिवसतामन्यवक्त्राच्छ्रुतानि प्रायस्तं तं पदार्थं नहि कथकमृते वेत्त्युपोद्घायकोऽपि' इति । ' शौचं च द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्या स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ' इति । स्थैर्यं तदेकनिष्ठता, आत्मविनिग्रहः शरीरसंयमः । एतज्ज्ञानमिति प्रोक्तमिति पञ्चमेनान्वयः ॥ ७ ॥

रा० टी०—एवं प्रतिज्ञातार्थषट्कमध्ये यादृक्च यद्विकारीति त्रयमुक्त्वा यतश्च यदिति वक्ष्यन् ततः प्राक् स च यो यत्प्रभावश्चेति प्रतिज्ञातार्थद्वयं ज्ञेयं यत्तदित्यादिना वक्तुं न यादृशतादृशेन श्रवणेन तदनुभवारूढं भवतीतिभावेन वक्ष्यमाणज्ञेयद्वयभूतभगवज्ज्ञानस्य साधनान्याह—**अमानित्वमित्यादि**पञ्चकेन । अमानित्वमात्मनः श्लाघनराहित्यं, आत्माल्पत्वं ज्ञात्वापि महत्त्वप्रदर्शनं दम्भस्तद्राहित्यमदम्भित्वं, क्षान्तिः सहिष्णुत्वम्, आर्जवं सन्मार्गे मनोवाक्कायकर्मणामवैपरीत्यम्, आचार्योपासनं ज्ञानिनां सेवा, शौचं बाह्यान्तरशुद्धिः ' शौचं तु द्विविधं प्रोक्तं बाह्यमाभ्यन्तरं तथा । मृज्जलाभ्यां स्मृतं बाह्यं भावशुद्धिस्तथान्तरम् ' इतिस्मृतेः । स्थैर्यं भयादिना स्वधर्मादचलनम्, आत्मविनिग्रहः विशेषेण मनसो नियमनम् ॥ ८ ॥

**इन्द्रियार्थेषु वैराग्यमनहङ्कार एव च ॥**
**जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् ॥ ८ ॥**

त० टी०—किंच—**इन्द्रियार्थेष्विति ।** इन्द्रियार्थेषु शब्दादिविषयेषु दोषदृष्ट्युत्पादनेन रागराहित्यं वैराग्यम्, अनहङ्कारः अभिजनजातिक्रियाभिरात्मन उत्कृष्टत्वाभिमानो गर्वोऽहङ्कारस्तद्राहित्यं, जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनम् । प्राकृतशरीरवत्त्वे जन्ममृत्युजराव्याधिदुःखादिरूपदोषाणाम-

वर्जनीयत्वात्तदनुदर्शनं पुनःपुनरनुसंधानम् "न ह वा शरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति अशरीरं वाव सन्तं प्रियाप्रिये न स्पृशतः" इति श्रुतेः ॥ ८ ॥

म० टी०—किंच—इन्द्रियेति । इन्द्रियार्थेषु शब्दादिषु दृष्टेष्वानुश्रविकेषु वा भोगेषु रागविरोधिन्यस्पृहात्मिका चित्तवृत्तिर्वैराग्यं, आत्मश्लाघनाभावेऽपि मनसि प्रादुर्भूतोऽहं सर्वोत्कृष्ट इति गर्वोऽहङ्कारस्तदभावोऽनहङ्कारः । अयोगव्यवच्छेदार्थ एवकारः । समुच्चयार्थश्चकारः । तेनामानित्वादीनां विंशतिसंख्याकानां समुच्चितो योग एव ज्ञानमिति प्रोक्तं, न त्वेकस्याप्यभाव इत्यर्थः । जन्मनो गर्भवासयोनिद्वारनिःसरणरूपस्य मृत्योः सर्वमर्मच्छेदनरूपस्य जरायाः प्रज्ञाशक्तितेजोनिरोधपरपरिभवादिरूपायाः व्याधीनां ज्वरातिसारादिरूपाणां दुःखानामिष्टवियोगानिष्टसंयोगजानामध्यात्माधिभूताधिदैवनिमित्तानां, दोषस्य वातपित्तश्लेष्ममलमूत्रादिपरिपूर्णत्वेन कायजुगुप्सितत्वस्य चानुदर्शनं पुनः पुनरालोचनं जन्मादिदुःखान्तेषु दोषस्यानुदर्शनं जन्मादिव्याध्यन्तेषु दुःखरूपदोषस्यानुदर्शनमिति वा । इदं च विषयवैराग्यहेतुत्वेनात्मदर्शनस्योपकरोति ॥ ८ ॥

शं० टी०—स्थैर्यसिद्धेः साधनमाह—इन्द्रियार्थेष्विति । इन्द्रियार्थेषु शब्दादिषु भोग्यपदार्थेषु तेषु श्रुतेषु दृष्टेषु च सर्वत्र वैराग्यं निःशेषरागत्याग एव मनोनिग्रहे तन्नैश्चल्ये च कारणं, यतेरिदमेव सम्यक्संपादनीयम् । तथैवानहंकारश्च जातिवर्णाश्रमाचारविद्याकुलशीलादिभिः श्रेष्ठत्वाभिमानोऽहंकारः, जात्यादिष्वहंकारहेतुषु सत्स्वपि बन्धकत्वबुद्ध्या तद्रहितत्वमनहंकारः । अयमेव ज्ञानसिद्धौ मुख्यकारणमिति निश्चयार्थ एवकारश्चकारः समुच्चयार्थः । सर्वत्र वैराग्यसंजनने तत्कार्यनिष्पत्तौ च परमकारणं जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनमेव जन्मनि मृत्यौ जरायां व्याधिषु दुःखस्य दोषस्य चानुदर्शनं शास्त्रं स्वानुभवं चानुसृत्यालोचनम् । जन्मपदेन तत्सन्निहितो गर्भवासोऽपि गृह्यते गर्भे नवमासं पिण्डीभूत्वाऽवस्थानं मलकृमिदंशनं मातुर्जठराग्निदहनं तदीयविषमशयनगमनादिना संघट्टनं सुदृढजरायुवेष्टनादिमहद्दुःखं मलमूत्रमध्येऽवस्थानं तद्रसपानं च दोषः; जन्मनि प्रसववायुना कर्षणं योनियन्त्रनिष्पीडनं महद्दुःखं, तद्द्वारा गमनं दोषः; मरणे सर्वनाड्याकर्षणं मर्मकृन्तनं प्राणाकुञ्चनमूर्ध्वश्वासो मरणतापश्च महद्दुःखं, याम्याकर्षणेन व्यथया च मलजलपातादिदोषः, मृत्युपदेन तत्सन्निकृष्टो नरकवासोऽपि गृह्यते; कुम्भीपाकरौरवासिपत्रवनवैतरण्यादिषु याम्यपातनं महद्दुःखं, श्लेष्मरक्तपूयरेतोमलमूत्रह्रदेषु वासो महद्दुःखं, श्लेष्मादिपानं दोषश्च; जरायां सर्वगात्रशैथिल्यं मान्द्यं बाधिर्यं गद्गदवाक्कम्पादिकं व्युत्थानादौ पतनस्वजनपरिभवश्च महद्दुःखं, मलजललालापातश्च दोषः; व्याधिषु दौर्बल्यं शीतज्वरादिवेगपरितापादिकं कषायपानादिकं महद्दुःखं, देहदौर्गन्ध्यस्वेदादिर्दोषः—एवं जन्मादिषु पुनः पुनर्दुःखदोषानुदर्शनेन विवेकिनः पुण्यशीलस्य सर्वत्र तीव्रं वैराग्यं मोक्षेच्छा च तत्सिद्ध्यै प्रवृत्तिश्च सिध्यत्यत एतद्दर्शनं मुमुक्षोः सम्यक्कर्तव्यमित्यर्थः ॥ ८ ॥

श्री० टी०—किंच—इन्द्रियार्थेष्विति । जन्मादिषु दुःखदोषयोरनुदर्शनं पुनः पुनरालोचनं दुःखस्वरूपस्य दोषस्यानुदर्शनमिति वा । स्पष्टमन्यत् ॥ ८ ॥

स० टी०—दृष्टादृष्टेषु भोगेषु वृत्ती रागविरोधिनी ॥ यास्त्यस्पृहात्मिका तत्स्याद्वैराग्यं ज्ञानसाधनम् ॥ १ ॥ वैराग्यादियुतत्वेन सर्वोत्कृष्टोऽस्म्यहं बुधः ॥ इति गर्वोऽस्त्यहंकारस्तदभावोऽनहंकृतिः ॥ २ ॥ अयोगव्यच्छेदार्थ एवकार इहेरितः ॥ समुच्चयार्थश्चस्त्वत्र तेनोक्तानां समुच्चितिः ॥ ३ ॥ विंशतेः साधनानां च योग एवात्र साधनम् ॥ ज्ञानमित्युक्तमेकस्याप्यभावो नैव संमतः ॥ ४ ॥ जन्मनो गर्भवासादियोनिद्वारेण निःसृतेः ॥ मर्मच्छेदनरूपस्य मृत्योर्दुःखाकरस्य च ॥ ५ ॥ प्रज्ञाशक्तिनिरोधादिरूपाया जरसस्तथा ॥ व्याधीनां ज्वरमुख्यानां दुःखानां बहुरूपिणाम् ॥ ६ ॥ आध्यात्मिकादिरूपाणामिष्टानिष्टयुजां तथा ॥ दोषस्य

वातपित्तासृक्श्लेष्ममूत्रमलादिभिः ॥ ७ ॥ पूर्णत्वेन वपुर्निन्दितत्वस्यालोचनं पुनः ॥ व्याध्यन्तेष्वथवा दुःखरूपदोषानुदर्शनम् ॥ ८ ॥ इदं च भोगवैराग्यहेतुत्वेनात्मदर्शने ॥ सम्यगुपकरोत्येवं भूयो भूयोऽनुदर्शनम् ॥ ९ ॥ ८ ॥

**भा० टी०**—किंच—इन्द्रियेष्विति । ऐहिकामुष्मिकेन्द्रियार्थेषु शब्दादिविषयेषु रागाभावो वैराग्यम्, अहं सर्वोत्तम इति मनसि प्रादुर्भूतो गर्वोऽहंकारस्तदभावोऽनहंकारः । गर्वस्योक्तानुक्तनाशकत्वादनहंकारस्यावश्यसंपाद्यत्वद्योतनार्थः—अयोगव्यवच्छेदार्थ एवकारः, समुच्चयार्थश्चकारः । तेनामानित्वादीनां विंशतिसंख्याकानां समुच्चितो योग एव ज्ञानमिति प्रोक्तं, नतु एकस्याप्यभाव इत्यर्थ इति केचित् । आचार्यैस्तु सुगमत्वादव्ययार्थः सर्वत्र न प्रदर्श्यते । जन्ममृत्युजराव्याधिदुःखदोषानुदर्शनं जन्मादिषु दुःखान्तेषु प्रत्येकं दोषानुदर्शनं, यद्वा दुःखान्येव दोषो दुखदोषस्तस्य जन्मादिषु दर्शनमालोचनं जन्मादयो दुःखनिमित्तत्वाद्दुःखं दुःखानि पुनः स्वरूपेणैव दुःखमित्येवं जन्मादिषु दुःखदोषानुदर्शनात् देहेन्द्रियादिविषयाणां भोगेषु वैराग्यमुपजायते । ततश्चात्मदर्शनाय प्रत्यगात्मनि करणानां प्रवृत्तिर्भवतीत्येवं ज्ञानहेतुत्वाज्जन्मादिषु दुःखदोषानुदर्शनं ज्ञानमुच्यते । तथा चोक्तं विष्णुपुराणे—'आध्यात्मिकादि मैत्रेय ज्ञात्वा तापत्रयं बुधः । उत्पन्नज्ञानवैराग्यः प्राप्नोत्यात्यन्तिकं लयम् ॥ आध्यात्मिको वै द्विविधः शारीरो मानसस्तथा । शारीरो बहुभिर्भेदैर्भिद्यते श्रूयतां च सः ॥ शिरोरोगप्रतिश्यायज्वरशूलभगंदरैः । गुल्मार्शःश्वासश्वयथुच्छर्द्यादिभिरनेकधा ॥ तथाऽक्षिरोगातीसारकुष्ठाङ्गामयसंज्ञिकैः । भिद्यते देहजस्तापो मानसं श्रोतुमर्हसि ॥ कामक्रोधभयद्वेषलोभमोहविषादजः । शोकासूयावमानेर्ष्यामात्सर्यादिभवस्तथा ॥ मानसोऽपि द्विजश्रेष्ठ तापो भवति नैकधा । इत्येवमादिकैर्भेदैस्तापो ह्याध्यात्मिकः स्मृतः ॥ मृगपक्षिमनुष्याद्यैः पिशाचोरगराक्षसैः । सरीसृपाद्यैश्च नृणां जन्यते चाधिभौतिकः ॥ शीतोष्णवातवर्षाम्बुविद्युदादिसमुद्भवः । तापो द्विजवरश्रेष्ठ कथ्यते चाधिदैविकः ॥ गर्भजन्मजराज्ञानमृत्युनारकजं तथा । दुःखं सहस्रशो भेदैर्भिद्यते मुनिसत्तम ॥ सुकुमारतनुर्गर्भे जन्तुर्बहुमलावृते । उल्बसंवेष्टितो भुग्नपृष्ठग्रीवास्थिसंहतिः ॥ अत्यम्लकटुतीक्ष्णोष्णलवणैर्मातृभोजनैः । अतितापिभिरत्यर्थं वर्धमानातिवेदनः ॥ प्रसारणाकुञ्चनादेर्नाङ्गानां प्रभुरात्मनः । शकृन्मूत्रमहापङ्कशायी सर्वत्र पीडितः ॥ निरुच्छ्वासः सचैतन्यः स्मरञ्जन्मशतान्यथ । आस्ते गर्भेऽतिदुःखेन निजकर्मनिबन्धनः ॥ जायमानः पुरीषासृङ्मूत्रशुक्राविलाननः । प्राजापत्येन वातेन पीड्यमानास्थिबन्धनः ॥ अधोमुखो वै क्रियते प्रबलैः सूतिमारुतैः । क्लेशैर्निष्क्रान्तिमाप्नोति जठरान्मातुरातुरः ॥ मूर्च्छामवाप्य महतीं संस्पृष्टो बाह्यवायुना । विज्ञानभ्रंशमाप्नोति जातश्च मुनिसत्तम ॥ कण्टकैरिव तुन्नाङ्गः क्रकचैरिव दारितः । पूतिव्रणान्निःपतितो धरायां क्रिमिको यथा ॥ जराजर्जरदेहश्च शिथिलावयवः पुमान् । विगलच्छीर्णदशनो वलीस्नायुशिरावृतः ॥ दूरप्रनष्टनयनो व्योमान्तर्गततारकः । नासाविवरनिर्यातलोमपुञ्जश्चलद्वपुः ॥ प्रकटीकृतसर्वास्थिर्नतपृष्ठास्थिसंहतिः । उत्सन्नजठराग्नित्वादल्पाहारोऽविचेष्टितः ॥ कृच्छ्रचङ्क्रमणोत्थानशयनासनचेष्टितः । मन्दीभवच्छ्रोत्रनेत्रः स्रवल्लालाविलाननः ॥ आपन्नैस्तैः समस्तैश्च करणैर्मरणोन्मुखः । तत्क्षणेऽप्यनुभूतानामस्मर्ताऽखिलवस्तुनाम् ॥ सकृदुच्चरिते वाक्ये समुद्भूतमहाश्रमः । श्वासकासमहायाससमुद्भूतप्रजागरः ॥ अन्येनोत्थाप्यतेऽन्येन तथा संवेश्यते जरी । भृत्यात्मपुत्रदाराणामवमानास्पदीकृतः ॥ प्रक्षीणाखिलशौचश्च विहाराहारसंस्पृहः । हास्यः परिजनस्यापि निर्घृणाशेषबान्धवः ॥ अनुभूतमिवान्यस्मिञ्जन्मन्यात्मविचेष्टितम् । संस्मरन्यौवने दीर्घं निश्वसत्यतितापितः ॥ एवमादीनि दुःखानि जरायामनुभूय वै । मरणे यानि दुःखानि प्राप्नोति शृणु तान्यपि ॥ श्लथग्रीवाङ्घ्रिहस्तोऽथ व्याप्तो वेपथुना भृशम् । मुहुर्ग्लान्या परवशो मुहुर्ज्ञानलवान्वितः ॥ हिरण्यधान्यतनयभार्याभृत्यगृहादिषु । एते कथं भवि-

ष्यन्ति ममेति ममताकुलः ॥ मर्मभिद्भिर्महारोगैः क्रकचैरिव दारुणैः । शरैरिवान्तकास्योग्रैश्छिद्यमानास्थिबन्धनः ॥ विवर्तमानताराक्षिर्हस्तं पादं मुहुः क्षिपन् । संशुष्यमाणताल्वोष्ठकण्ठो घुरघुरायते ॥ निरुद्धकण्ठो दोषौघैरुदानश्वासपीडितः । तापेन महता व्याप्तस्तृषा चार्तस्तथा क्षुधा ॥ क्लेशादुत्क्रान्तिमाप्नोति याम्यकिंकरपीडितः । ततश्च यातनादेहं क्लेशेन प्रतिपद्यते । एतान्यन्यानि चोग्राणि दुःखानि मरणे नृणाम् ॥३९॥ इत्यादिभाष्यस्योपलक्षणार्थत्वेन जन्मादिषु दुःखदोषयोरनुदर्शनं जन्ममृत्युजराव्याधिदुःखदोषाणामनुदर्शनमिति वा । दोषश्च वातपित्तश्लेष्ममलमूत्रादिपरिपूर्णत्वेन कायजुगुप्सितत्वरूपः दैन्यादिरूपश्चेत्यपि बोध्यम् ॥ ९ ॥

प० टी०—किंच—इन्द्रियार्थेषु रूपरसादिविषयेषु वैराग्यं वैतृष्ण्यं तथा एतावानहमस्मीत्यहंकाराभावः । जन्मादिदुःखदोषयोरनुपदं दर्शनं पुनः पुनरालोचनम् । तदुक्तम्—'आरम्भाद्बहुरामयैरुपहतं ज्ञात्वापि नोपेक्षसे काचिल्लग्नहुताशवेश्मनि सुखं स्थातुं चिरं वाञ्छसि । त्यक्ष्यस्येव वनापदीनमसकृद्व्याक्रोशमानः क्षणाद्भ्रश्यद्धैर्यविवेकसंपदभितो व्यामूढचित्तः सखे' ॥ ८ ॥

रा० टी०—इन्द्रियेति । इन्द्रियार्थेषु वैराग्यं शब्दादिषु रागाभावः । अनहंकारः अविद्यमानात्मगुणाभिमानमोहाभावः, जन्मादिषु दुःखदोषयोरनुदर्शनमिति वा, दुःखस्वरूपस्य दोषस्यानुदर्शनमिति वा, अनुक्षणमनुसंधानमित्यर्थः ॥ ९ ॥

**असक्तिरनभिष्वङ्गः पुत्रदारगृहादिषु ॥**
**नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ ९ ॥**

**त० टी०—किंच—असक्तिरिति । ममेदमिति प्रीत्यतिशयः सक्तिस्तद्राहित्यमसक्तिः, अनात्मनि तत्संबन्धिषु च आत्माभिमानोऽभिष्वङ्गस्तद्राहित्यमनभिष्वङ्गः । असक्त्यनभिष्वङ्गयोर्विषयमाह—पुत्रदारगृहादिष्विति । आदिना वित्तपशुभृत्यप्रभृतिसंबन्धिग्रहणं सर्वत्र स्नेहवर्जनमित्यर्थः । इष्टानिष्टयोरुपपत्तिषु नित्यं सर्वदा समचित्तत्वं हर्षविषादाभाव इत्यर्थः ॥ ९ ॥**

म० टी०—किंच—असक्तिरिति । सक्तिर्ममेदमित्येतावन्मात्रेण प्रीतिः, अभिष्वङ्गस्त्वहमेवायमित्यनन्यत्वभावनया प्रीत्यतिशयः, अन्यस्मिन् सुखिनि दुःखिनि वाऽहमेव सुखि दुःखी चेति तद्राहित्यमसक्तिरनभिष्वङ्ग इति चोक्तम् । कुत्र सक्त्यभिष्वङ्गौ वर्जनीया अत आह—पुत्रदारगृहादिषु पुत्रेषु दारेषु गृहेषु, आदिग्रहणादन्येष्वपि भृत्यादिषु सर्वेषु स्नेहविषयेष्वित्यर्थः । नित्यं च सर्वदा च समचित्तत्वं हर्षविषादशून्यमनस्त्वमिष्टानिष्टोपपत्तिषु, उपपत्तिः प्राप्तिः, इष्टोपपत्तिषु हर्षाभावोऽनिष्टोपपत्तिषु विषादाभाव इत्यर्थः । चः समुच्चये॥९॥

शं० टी०—जन्मादिषु दुःखदोषदर्शनस्य फलमाह—असक्तिरिति । असक्तिः सक्तिर्भोगेष्वन्तःकरणस्य सङ्गो रागस्तदभावोऽसक्तिः—अप्राप्त इव प्राप्ते वस्तुनि सर्वत्र विषयमात्रे प्रीतिराहित्यमसक्तिशब्दार्थः । अनभिष्वङ्गः नाभिष्वङ्गोऽनभिष्वङ्गः समीचीनत्वबुद्ध्या ममतया चाजस्रमिष्टं विषयमालिङ्ग्य चित्तस्यावस्थानमभिष्वङ्गस्तदभावोऽनभिष्वङ्गः मुमुक्षूणां सुसंपाद्यः । कुत्रेत्याकाङ्क्षायामाह—पुत्रदारगृहादिषु । आदिशब्देन धनक्षेत्रादि गृह्यते । तेषु चित्तस्य लग्नता न कर्तव्येत्यर्थः । ननु अनभिष्वङ्गः पुत्रदारगृहादिष्वित्यनेन गृहस्थानामेव श्रवणाद्यधिकारो नतु यतीनामितरेषां च । तेषामधिकारित्वे पुत्रादिष्वभिष्वङ्गो न कर्तव्य इति व्यतिरेकेण निषेधायोगात्; सत्स्वेव पुत्रादिष्वभिष्वङ्गः प्रसज्यते । प्रसक्तस्यैव निषेधो युक्तो न त्वप्रसक्तस्य । नहि नानलं पिबेदिति निषेध उपयुज्यते । ततः प्रसक्तप्रतिषेधबलात् गृहस्थानामेव श्रवणाधिकारो नाश्रमान्तरानिष्ठानामिति चेद्भवानत्र प्रष्टव्यः । गृहिणां वेदान्तश्रवणं मोक्षाय वा, उत अक्षरलाभाय वा, विलासार्थं वेति ।

नाद्यः साधनानुपपत्तौ साध्यासिद्धेः श्रवणस्य व्यङ्गत्वे तत्साध्यज्ञानसिद्ध्यसंभवान्मोक्षाभावः 'संन्यस्य श्रवणं कुर्यात्' इति संन्यासस्य श्रवणाङ्गत्वं स्मर्यते। 'अथातो ब्रह्मजिज्ञासा' इत्यत्राप्यथशब्दस्य संन्यासादिसाधनसिद्ध्यनन्तरमेव जिज्ञासा कर्तव्येत्यानन्तर्यार्थकत्वं कथ्यते। ततः संन्यासाद्यन्तरङ्गसाधनशून्यानां गृहिणामेव श्रवणानधिकारो नतु मोक्षेच्छया संन्यस्तसर्वकर्मतत्साधनानां यतीनां, ब्रह्मात्मैकत्वविज्ञानं वेदान्तश्रवणादिना जायते परमहंसस्य यतेर्मुख्याधिकारिणः नाश्रमान्तरनिष्ठस्येत्यङ्गशून्यानां कृतेऽपि श्रवणे ज्ञानानुत्पत्तिस्मरणात्ततो यतीनामेव परमहंसानां श्रवणाधिकारो ज्ञानतत्फलप्राप्त्यधिकारश्च--"वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे" इति श्रुतेः। न द्वितीयः निरन्तरविक्षेपवतां संसारिणां यथावदक्षरलाभासिद्धेः। नापि तृतीयश्च काव्यनाटकादिवदत्र चमत्काराभावात्। यत एवं ततो यतीनामेव श्रवणादियोग्यत्वमिति सिद्धम्। ननु मोक्षेच्छया संन्यस्तसर्वकर्मणां यतीनामेव श्रवणाधिकारित्वे पुत्रदारादिष्वभिष्वङ्गो न कर्तव्य इति निषेधवचनस्यानर्थक्यमिति चेन्न, तेषामपि पूर्ववासनया त्यक्तेष्वपि पुत्रदारादिष्वभिष्वङ्गप्रसङ्गात्तन्निषेधपरत्वोपपत्तेः। "मनसो वशे सर्वमिदं बभूव। भीष्मो हि देवः सहसः सहीयान्" इति, 'बन्धाय विषयासक्तम्' इति, 'प्रमाथि बलवद्दृढम्' इति, 'ध्यायतो विषयान्पुंसः सङ्गस्तेषूपजायते' इति, 'विद्ध्येनमिह वैरिणम्' इति, 'ज्ञानिनो नित्यवैरिणा' इति च कामसंकल्पादिविकारवतोऽनादिदुर्वासनावासितान्तःकरणस्य दुर्धर्षत्वं दुर्निग्रहत्वं बन्धकत्वं विषयस्मृतिमात्रेणानर्थकारित्वं ज्ञानिषु बद्धवैरित्वं च श्रूयते स्मर्यते च। ततः संन्यासिनामपि त्यक्तेषु तेषु तेषु दुर्वासनया क्वचिदभिष्वङ्गस्तद्वार्ताश्रवणादिभिः प्रसज्यते, यथा विद्यमानेषु तुच्छेष्वपि कौपीनकन्थादिष्विदं समीचीनमिदमसमीचीनमिति सक्तिः, तथा। ततस्तद्द्वयं प्रमादेनापि न कर्तव्यमिति व्यतिरेकमुखेनोपदिश्यते—असक्तिरनभिष्वङ्गः पुत्रदारगृहादिष्विति। गृहस्थानामधिकारित्वे त्विदं विशेषणमनुपपन्नं 'नित्यं च समचित्तत्वमिष्टानिष्टोपपत्तिषु' इति इष्टानिष्टोपपत्तिषु इष्टं सुखं तत्साधनं च, अनिष्टं दुःखं तत्साधनं च तेषामुपपत्तिषु संप्राप्तिषु नित्यं सर्वदा समचित्तत्वं समं हर्षविषादमुखविकासवैवर्ण्यादिबाह्याभ्यन्तरविकारनिर्मुक्तं चित्तं यस्य विदुषस्तस्य भावः समचित्तत्वमविक्रियात्मनावस्थानं न संसारिणामुपपद्यते। नहि पुत्रोत्पत्तौ हर्षो वारयितुं शक्यते नापि तन्मरणे विषादादिश्च। ततो नैवैषामत्राधिकार इति सिद्धम्॥९॥

**श्री० टी०—किंच—असक्तिरिति।** असक्तिः पुत्रादिपदार्थेषु प्रीतित्यागः, अनभिष्वङ्गः पुत्रादीनां सुखे दुःखे चाहमेव सुखी दुःखी चेत्यध्यासातिरेकाभावः। इष्टानिष्टयोरुपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वम् ॥ ९ ॥

**स० टी०—**सक्तिर्ममेदमित्येव प्रीतिमात्रमुदीरिता ॥ अभिष्वङ्गस्तु पुत्रादौ तादात्म्याध्यासलक्षणः ॥१॥ अन्यस्मिन्पुत्रभार्यादौ सुखदुःखान्विते सति ॥ अहमेव सुखी दुःखीत्यादिरूपदुराग्रहः ॥ २ ॥ वर्ज्यौ तौ सक्त्यभिष्वङ्गौ पुत्रदारगृहादिषु ॥ इष्टानिष्टपरिप्राप्तौ सर्वदा समचित्तता ॥ ३ ॥ इष्टप्राप्तौ न हर्षः स्यान्नानिष्टाप्तौ विषादता ॥ ४ ॥ ९ ॥

**भा० टी०—किंच—असक्तिरिति।** असक्तिः सङ्गनिमित्तेषु विषयेषु प्रीतिमात्रस्याभावः, अनभिष्वङ्गः अन्यस्मिन्पुत्रादौ सुखिनि दुःखिनि वा जीवति मृते वाऽहमेव सुखी दुःखी च जीवामि मरिष्यामीति चेति पुत्रादिषु तादात्म्यभावनालक्षणस्याभिष्वङ्गस्याभावः। आदिपदादन्यदप्यत्यन्तेष्टं दासपश्वादिकं गृह्यते। इष्टानामनिष्टानां चोपपत्तिषु प्राप्तिषु नित्यं सर्वदा समचित्तत्वं, इष्टोपपत्तिषु हर्षस्यानिष्टोपपत्तिषु कोपस्य च वर्जनं तच्चैतत्त्रयमपि ज्ञानान्तरङ्गसाधनत्वाज्ज्ञानमित्यर्थः ॥ ९ ॥

**प० टी०—किंच—असक्तिरिति।** पुत्रादिष्वसक्तिः प्रीतित्यागोऽनभिष्वङ्गः पुत्रदारगृहादिगतसुखदुः-

स्वयोः स्वस्मिन्नारोपणम् । श्रुतिरपि शातपथी "आत्मैवेदमग्र आसीदेक एव सोऽकामयत जाया मे स्यादथ प्रजायेयाथ वित्तं मे स्यादथ कर्म कुर्वीयेत्येतावान्वै कामो नेत्संश्च नातो भूयो विन्देत्" इति । भाष्यम्—अग्रे वयोवस्थातः पूर्वमिदमयमात्मा देहमात्रत्वेनैक एवासीत्; स जाया मे स्यादित्यकामयताभिलषितवान्; अनन्तरं प्रजायेय प्रजारूपेण स्यामिति; अथ तन्निर्वाहार्थं मे वित्तं स्यादिति सोऽकामयत; तदर्थं कर्म कुर्वीयेति—एवमेतावान्वै कामो नेत्सत् सन्न भवति परिणामे दुःखरूपत्वात् । तथापि अतो जायादिप्रपञ्चादन्यद्भूयो महत्तरं न विन्देत् न जानाति बाह्यगार्हस्थ्येन मोहितत्वात् । अथैतदपेक्ष्यान्तरं गार्हस्थ्यं श्रेय इत्याह श्रुतिः । तथा इष्टानिष्टोपपत्तिषु सर्वदा समचित्तत्वम् ॥ ९ ॥

रा० टी०—असक्तिरिति । पुत्रदारगृहादिषु असक्तिः स्नेहाभावः, अनभिष्वङ्गः अतिपक्वस्नेहाभावः, इष्टानिष्टोपपत्तिषु उपपत्तिः प्राप्तिः तत्र नित्यं समचित्तत्वं हर्षविषादयोरभावः ॥ १० ॥

**मयि चानन्ययोगेन भक्तिरव्यभिचारिणी ॥**
**विविक्तदेशसेवित्वमरतिर्जनसंसदि ॥ १० ॥**

**त० टी०—किंच—मयीति ।** मयि भगवति वासुदेवे सर्वेश्वरे अनन्ययोगेन न मत्तोऽन्यो देवादिरुपास्यः फलं वाऽस्तीत्यनन्यसंबन्धेनेत्यर्थः । भक्तिः सेवनात्मिका बाह्यान्तःकरणवृत्तिः अव्यभिचारिणी केनचित् कामान्तरेण पुरुषान्तरेण वा प्रतिहर्तुमशक्या दृढेत्यर्थः । तथा विविक्तो भगवदाराधनविरोधिजनसंसर्गवर्जितो देशस्तत्सेवनशीलत्वं विविक्तदेशसेवित्वम् । जनानां भगवद्भक्तिज्ञानहीनानां विषयप्रवणानां संसदि समाजे अरतिः प्रीत्यभावः असंगतिरित्यर्थः । सतां संगतिस्तु कर्तव्या । तथोक्तं च्यवननहुषसंवादे—'सद्भिरेव सहासीत सद्भिः कुर्वीत संगमम् । सद्भिर्विवादं मैत्रीं च नासद्भिः किंचिदाचरेत् ॥ सङ्गः सर्वात्मना हेयः स च त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम्' इति ॥ १० ॥

**म० टी०—किंच—मयीति ।** मयि च भगवति वासुदेवे परमेश्वरे भक्तिः सर्वोत्कृष्टत्वज्ञानपूर्विका प्रीतिः अनन्ययोगेन नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवंनिश्चयेनाव्यभिचारिणी केनापि प्रतिकूलेन हेतुना निवारयितुमशक्या । सापि ज्ञानहेतुः 'प्रीतिर्न यावन्मयि वासुदेवे न मुच्यते देहयोगेन तावत्' इत्युक्तेः । विविक्तः स्वभावतः संस्कारतो वा शुद्धोऽशुचिभिः सर्पव्याघ्रादिभिश्च रहितः सुरधुनीपुलिनादिः चित्तप्रसादकरो देशस्तत्सेवनशीलत्वं विविक्तदेशसेवित्वम् । तथा च श्रुतिः—"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश्रयादिभिः । मनोनुकूले न तु चक्षुपीडने गुहानिवाताश्रयणे प्रयोजयेत् ॥" इति जनानामात्मज्ञानविमुखानां विषयभोगलम्पटतोपदेशकानां संसदि समवाये तत्त्वज्ञानप्रतिकूलायामरतिररमणं साधूनां तु संसदि तत्त्वज्ञानानुकूलायां रतिरुचितैव । तथा चोक्तम् ' सङ्गः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ' इति ॥ १० ॥

**शं० टी०—किंच—मयीति ।** अनन्ययोगेन न विद्यते परमेश्वरादन्यः शरणं ममेत्येवं निश्चयलक्षणस्त्वनन्यः योगो भक्तियोगः अनन्यश्चासौ योगश्च तेनाऽनन्ययोगेन मयि सर्वेश्वरे सर्वलोकशरण्ये सर्वात्मन्यव्यभिचारिणी नियता भक्तिर्भजनं च ज्ञानसाधनं मत्प्रसादैकलभ्यत्वाज्ज्ञानस्य अतो मदेकशरणेन मुमुक्षुणा मद्भजनं सर्वदा कर्तव्यमित्यर्थः । यद्वा विविक्तदेशसेवित्वमितिवचनसामर्थ्यादयमर्थः—अनन्ययोगेन अन्यो विजातीयप्रत्ययो न विद्यते यत्र सोऽनन्ययोगः समाधिरनन्यश्चासौ योगश्च तेनानन्ययोगेन सजातीयप्रत्ययावृत्तिलक्षणेन मयि मां निर्विशेषं परं ब्रह्म विषयीकृत्य ब्रह्मैवाहमहमेव ब्रह्मेति भक्तिर्भजन-

मनुसंधानं सर्वदा करणीयं ज्ञानस्याप्रतिबन्धकत्वसिद्धिकारणत्वाज्ज्ञानमित्युच्यते । किंच विविक्तदेशसेवित्वं विविक्तान् जनसंमर्दरहितान् नदीपुलिनगिरिकुहरारामारण्याद्येकान्तप्रदेशान् निदिध्यासससिद्ध्यर्थं सेवितुं शीलमस्यास्तीति विविक्तदेशसेवी " शून्यागारदेवतागृहतृणकूटवल्मीकवृक्षमूलकुलालशालाग्निहोत्रनदीपुलिनगिरिकुहरकन्दरकोटरनिर्झरस्थण्डिलेषु तेष्वनिकेतवासी" इतिश्रुतेः, तस्य भावो विविक्तदेशसेवित्वं जनसंसदि जनानां बहिर्मुखानां संसदि संघाते वसितुमरतिररुचिश्च ॥ १० ॥

**श्री० टी०-किंच-मयि चेति** । मयि परमेश्वरे अनन्ययोगेन सर्वात्मदृष्ट्या अव्यभिचारिणी एकान्तभक्तिः; विविक्तः शुद्धचित्तप्रसादकरः, तं देशं सेवितुं शीलं यस्य तस्य भावस्तत्त्वम् । प्राकृतानां जनानां संसदि सभायामरती रत्यभावः ॥ १० ॥

**स० टी०-**वासुदेवे भगवति मयि श्रीपरमेश्वरे ॥ सर्वोत्कृष्टत्वविज्ञानपूर्विका प्रीतिरुत्तमा ॥ १ ॥ वासुदेवात्परो नान्यः पुमर्थः स च मे गतिः ॥ इत्येवं निश्चयेनान्तर्या विघ्नैर्नाभिभूयते ॥ २ ॥ सा भक्तिरुत्तमं ज्ञानसाधनं ज्ञानमुच्यते ॥ स्वभावतो वा संस्काराच्छुद्धो देशो यथोक्तितः ॥ ३ ॥ तमेव सेवितुं शीलमस्य तद्भाव एव तत् ॥ प्राकृतानां जनानां च सदा भोगैकचेतसाम् ॥ ४ ॥ सभायामरतिः शास्त्रप्रतिकूलानुवादिनाम् ॥ साधूनां तत्त्वनिष्ठानां सभायां तूचिता रतिः ॥ ५ ॥ 'सङ्गः सर्वात्मना हेयः स चेद्धातुं न शक्यते ॥ स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम्' ॥ ६ ॥ इत्थं मदालसामात्राप्यलर्के प्रत्युदीरितम् ॥ ७ ॥ १० ॥

**भा० टी०-किंच-मयीति** । मयि च परमेश्वरेऽनन्ययोगेन नान्यो भगवतो वासुदेवात्परोऽस्त्यतः स एव नो गतिरित्येवं निश्चिताऽव्यभिचारणी बुद्धिरनन्ययोगोऽपृथक्समाधिस्तेन भजनं भक्तिः केनापि कारणेन न व्यभिचरणशीलाऽव्यभिचारिणी । सा च ज्ञानान्तरङ्गसाधनत्वाज्ज्ञानम् । तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम् । ददामि बुद्धियोगं तं येन मामुपयान्ति ते ॥ वासुदेवे भगवति भक्तियोगः प्रयोजितः । जनयत्याशु वैराग्यं ज्ञानं यत्तदहैतुकम् ॥ इत्युक्तेः । विविक्तं स्वभावतः संस्कारेण वा अशुच्यादिभिः सर्पव्याघ्रादिभिश्च वर्जितं वननदीतटदेवालयादिदेशं सेवितुं शीलमस्येति विविक्तदेशसेवी तस्य भावो विविक्तदेशसेवित्वम्; यतो विविक्तात्मभावनाचित्तप्रसादहेतुभूतेषु विविक्तदेशेषु सिध्यत्यतो विविक्तदेशसेवित्वं ज्ञानसाधनत्वाज्ज्ञानम् । तथाच श्रुतिः-"समे शुचौ शर्करावह्निवालुकाविवर्जिते शब्दजलाश(श्र)यादिभिः । मनोऽनुकूले नतु चक्षुःपीडने गुहानिवाताश्रयणे नि(प्र)योजयेत्" इति । जनानां प्राकृतानां विषयलम्पटानामविनीतानां कलहोन्मिषितचित्तानां संसत् समवायस्तत्रारातिरप्रीतिर्न तु संस्कारवतां विनीतानां तत्त्वविदां संसदि, तस्याः ज्ञानोपकारकत्वात् । तथा चोक्तम् 'सङ्गः सर्वात्मना हेयः स चेत्त्यक्तुं न शक्यते । स सद्भिः सह कर्तव्यः सन्तः सङ्गस्य भेषजम्' इति ॥ १० ॥

**प० टी०-किंच-मयीति** । मयि परमेश्वरेऽनन्ययोगेन सर्वात्मदृष्ट्याऽव्यभिचारिण्येकान्तभक्तिः । विविक्तश्चित्तशुद्धिप्रसादकरो यो देशस्तत्र निवासे शीलं यस्य । प्राकृतानां जनानां संसदि सभायामरतिः ॥ १० ॥

**रा० टी०-मयीति** । अनन्ययोगेन रमाब्रह्मादिस्वातन्त्र्यासंबन्धेन तदविषयिणीति यावत् । अत एवाव्यभिचारिणी मयि भक्तिः । विविक्तदेशसेवित्वं जनसंमर्दहीनशुद्धस्थानस्थितिः ॥ ११ ॥

## अध्यात्मज्ञाननित्यत्वं तत्त्वज्ञानार्थदर्शनम् ॥
## एतज्ज्ञानमिति प्रोक्तमज्ञानं यदतोऽन्यथा ॥ ११ ॥

**त० टी०-किंच-अध्यात्मेति** । आत्मानमधिकृत्य प्रवृत्तं ज्ञानमध्यात्मज्ञानमनात्मविविक्तात्म-

याथात्म्यज्ञानमित्यर्थः । तस्मिन्नित्यत्वं तत्रैव सदा निष्ठत्वं तत्त्वज्ञानस्यार्थः प्रयोजनं निःशेषाविद्यानिवृत्तिपूर्वकं निरतिशयानन्दभगवद्भावापत्तिलक्षणो मोक्षस्तस्य दर्शनमालोचनम् । एतदमानित्वादिविंशकं ज्ञानं ज्ञायते तत्त्वमनेनेति ज्ञानमिति प्रोक्तम् । अतोऽन्यथा उक्तादस्माद्विपरीतं यन्मानदम्भादिमत्त्वं तदज्ञानमिति प्रोक्तं ज्ञानविरोधिभूतं मुमुक्षुणा यत्नेन त्याज्यमित्यर्थः ॥ ११ ॥

**म० टी०–किंच–अध्यात्मेति ।** अध्यात्मज्ञानमात्मानमधिकृत्य प्रवृत्तमात्मानात्मविवेकज्ञानमध्यात्मज्ञानं तस्मिन्नित्यत्वं तत्रैव निष्ठावत्त्वम् । विवेकनिष्ठो हि वाक्यार्थज्ञानसमर्थो भवति । तत्त्वज्ञानस्याहं ब्रह्मास्मीति साक्षात्कारस्य वेदान्तवाक्यकरणकस्य अमानित्वादिसर्वसाधनपरिपाकफलस्यार्थः प्रयोजनमविद्यातत्कार्यात्मकनिखिलदुःखनिवृत्तिरूपः परमानन्दात्मावाप्तिरूपश्च मोक्षस्तस्य दर्शनमालोचनं, तत्त्वज्ञानफलालोचने हि तत्साधने प्रवृत्तिः स्यात् । एतदमानित्वादितत्त्वज्ञानार्थदर्शनान्तं विंशतिसंख्याकं ज्ञानमिति प्रोक्तं ज्ञानार्थत्वात् । अतोऽन्यथास्माद्विपरीतं मानित्वादि यत्तदज्ञानमिति प्रोक्तं ज्ञानविरोधित्वात्, तस्मादज्ञानपरित्यागेन ज्ञानमेवोपादेयमिति भावः ॥ ११ ॥

**शं० टी०–किंच–अध्यात्मेति ।** "आत्मा वा इदमेक एवाग्र आसीत् । आत्मैवेदमग्र आसीत्पुरुषविधः । आत्मा वा अरे द्रष्टव्यः" इत्यादिना आत्मानमधिकृत्य प्रवृत्तमध्यात्मं ज्ञायते आत्मतत्त्वमनेनेति ज्ञानमध्यात्मं च तज्ज्ञानं चाध्यात्मज्ञानं वेदान्तशास्त्रं तत्र नित्यत्वं निरतत्वं तदेकप्रावण्यमेव ज्ञानोत्पत्तेर्मुख्यं साधनं तत एव ज्ञानमित्युक्तम् । तत्त्वज्ञानार्थदर्शनं तत्त्वज्ञानस्यार्थः फलरूपो मोक्षस्तस्य दर्शनं तत्सिद्धिप्रक्रियालोचनं च । मोक्षः खलु ब्रह्मात्मनावस्थानम् । स श्रवणेन श्रावणेन वा मननेन वा निदिध्यासया वा समाधिना वा सर्वकामप्रमोकेन वाऽन्यथा वा सिध्यतीति युक्त्या स्वानुभूत्या च ज्ञानपौष्कल्यसिद्धिसाधनसंपत्तिमालोच्य स्वाधिकारानुरूपं तत्साधनं क्रमेण समनुतिष्ठेदिति बोधयति तत्त्वज्ञानार्थदर्शनम् इति भगवान् । ततो मोक्षैककामस्य यतेरमानित्वादिज्ञानसाधनं प्रयत्नेन संपादनीयं यत्सिद्धया ज्ञानं सिद्ध्यति ज्ञानसिद्ध्यैव मोक्षो यतः । निरुक्तमन्तरङ्गसाधनं ज्ञानस्योपसंहरति–एतदिति । अमानित्वमारभ्य तत्त्वज्ञानार्थदर्शनान्तं यदुक्तं तदेतद्विंशतिसंख्याकं ज्ञानसाधनं ज्ञानोत्पत्तिकारणत्वाज्ज्ञानमिति महर्षिभिः प्रोक्तमत एतस्मादमानित्वादिलक्षणाज्ज्ञानसाधनादन्यथा यदन्यद्विपरीतं मानित्वदम्भित्वहिंसाऽक्षान्त्यनार्जवादिकं रजस्तमोगुणजातं सर्वमज्ञानमज्ञानवृद्धिसाधनं संसारकारणं ज्ञानप्रतिबन्धकं च; ततो, मानित्वादिकं सम्यगज्ञातव्यं ज्ञात्वा मुमुक्षुभिः सम्यक्परिहरणीयमित्यर्थः ॥ ११ ॥

**श्री० टी०–किंच–अध्यात्मेति ।** आत्मानमधिकृत्य वर्तमानमध्यात्मज्ञानं तस्मिन्नित्यत्वं नित्यभावः त्वंपदार्थशुद्धिनिष्ठत्वमित्यर्थः । तत्त्वज्ञानस्यार्थः प्रयोजनं मोक्षः तस्य दर्शनं मोक्षस्य सर्वोत्कृष्टतालोचनमित्यर्थः । एतदमानित्वमदम्भित्वमित्यादिविंशतिसंख्यात्मकं यदुक्तमेतज्ज्ञानमिति प्रोक्तं ज्ञानसाधनत्वात् । अतोऽन्यथास्माद्विपरीतं मानित्वादि यदेतदज्ञानमिति प्रोक्तं वसिष्ठादिभिः ज्ञानविरोधित्वात् । अतः सर्वथा त्याज्यमित्यर्थः ॥ ११ ॥

**स० टी०–**आत्मादिविषयं ज्ञानमध्यात्मज्ञानमुच्यते ॥ तत्रैव सततं निष्ठावत्त्वं ज्ञानैकसाधनम् ॥ १ ॥ विवेकनिष्ठो वाक्यार्थज्ञाने हि भवति क्षमः ॥ तत्त्वज्ञानस्य वेदान्तवाक्यप्रामाणिकस्य च ॥ २ ॥ अहं ब्रह्मास्मीति साक्षात्कारस्य भ्रान्तिघातिनः ॥ अमानित्वादिकरणपरिपाकफलस्य च ॥ ३ ॥ प्रयोजनमविद्यातत्कार्यदुःखादिबाधनम् ॥ चिद्रूपपरमानन्दावाप्तिर्मोक्षश्च तस्य यत् ॥ ४ ॥ आलोचनं तदप्यात्मज्ञानसाधनमीरितम् ॥ एतद्विंशतिसंख्याकं ज्ञानार्थत्वेन हेतुना ॥५॥ ज्ञानमित्युक्तमस्माद्यद्विपरीतमनर्थदम्॥ मानित्वादि तदज्ञानमुक्तं ज्ञानविरोधि यत् ॥६ ॥ अतोऽज्ञानपरित्यागाद्ग्राह्यं पूर्वोदितं जनैः ॥ ७॥ ११ ॥

**भा० टी०**–किंच–अध्यात्मेति । आत्मनमधिकृत्य प्रवृत्तमात्मानात्मविवेकज्ञानमध्यात्मज्ञानं तस्मिन्नित्यभावो नित्यत्वं सततं तत्रैव निष्ठावत्त्वमध्यात्मज्ञाननित्यत्वं, अमानित्वादिसाधनानां यत्नेन साधितानां प्रकर्षपर्यन्तत्वम्, तन्निमित्तं तत्त्वज्ञानम्। तदिति सर्वनाम। सर्वं च ब्रह्म तस्य नाम तदिति तस्य ब्रह्मणो भावो याथात्म्यं तस्य ज्ञानं तत्त्वज्ञानम् "सत्यं ज्ञानमनन्तं ब्रह्म । एकमेवाद्वितीयम् । नेह नानास्ति किंचन । वाचारम्भणं विकारो नामधेयम्" इति श्रुत्युक्तस्य ब्रह्मजगतो याथात्म्यस्य ज्ञानं तत्त्वज्ञानमिति वा तस्यार्थः। प्रयोजनं सर्वानर्थनिवृत्तिपरमानन्दप्राप्तिस्वरूपो मोक्षस्तस्य दर्शनम् "न स पुनरावर्तते" इति श्रुत्या 'यद्गत्वा न निवर्तन्ते तद्धाम परमं मम' इति स्मृत्या च तस्यैव नित्यत्वबोधनात्। "तद्यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इत्यादि श्रुत्या प्रत्यक्षादिना च धर्मार्थकामानामनित्यत्वावगमाच्च मोक्ष एव सर्वोत्कृष्टत्वात्परमपुरुषार्थः। स च तत्त्वज्ञानस्य फलं नान्यस्य "तरति शोकमात्मवित्। तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतेरित्येवं तत्त्वज्ञानार्थालोचने हि तत्साधनानुष्ठाने प्रवृत्तिर्भवति। एतदमानित्वादि तत्त्वज्ञानार्थदर्शनान्तं विंशतिसंख्याकमुक्तं ज्ञानसाधनत्वाज्ज्ञानमिति प्रोक्तं श्रुतिस्मृतीतिहासपुराणादिषु प्रकर्षेणोक्तं कथितमतोऽस्माद्यथोक्तादन्यथा विपरीतम् 'हिंसामानित्वदम्भित्वमक्षमानार्जवं तथा। आचार्यासेवनाशौचास्थैर्यमात्माविनिग्रहः॥ इन्द्रियार्थेष्ववैराग्यमहंकारस्तथैव च। जन्ममृत्युजराव्याधिदुःखदोषाप्रदर्शनम् ॥ तथा सक्तिरभिष्वङ्गः पुत्रदारगृहादिषु । नित्यं चासमचित्तत्वमिष्टानिष्टोपपत्तिषु ॥ मयि नानन्ययोगेन भक्तिरव्यभिचारिणी। विकीर्णदेशसेवित्वमारतिर्जनसंसदि॥ नाध्यात्मज्ञाननित्यत्वं ज्ञानार्थादर्शनं तथा । इत्येतज्ज्ञेयमज्ञानं हेयं संसारकारणम् ॥' तथाचैतत्परित्यागेन संसारोपरमायामानित्वादिकमुपेयमिति भावः ॥ ११ ॥

**प० टी०**–किंच–अध्यात्मेति । आत्मानमधिकृत्य वर्तत इत्यध्यात्मज्ञानं तस्मिन्नित्यत्वं नित्यभावस्तत्त्वंपदार्थशुद्धिनिष्ठत्वमित्यर्थः। न त्वज्ञानस्यार्थः प्रयोजनं मोक्षस्तस्य दर्शनं सर्वोत्कृष्टत्वालोचनम् । एतदमानित्वमदम्भित्वमित्यादिविंशतिप्रकारं ज्ञानं ज्ञानसाधनं प्रोक्तम् । अतोऽन्यथास्माद्विपरीतं मानित्वादि यदेतदज्ञानमिति ज्ञानविरोधित्वात् । अतः सर्वथा त्याज्यमित्यर्थः ॥ ११ ॥

**रा० टी०**–अध्यात्मेति। अध्यात्मज्ञाननित्यत्वमात्मानमधिकृत्य स्थिते ज्ञाने नियतत्वम्। तत्त्वज्ञानार्थदर्शनमपरोक्षज्ञानार्थं शास्त्रपर्यालोचनम्। एतदमानित्वमित्यादिनोक्तं विंशतिधर्मजातं ज्ञानमिति ज्ञायतेऽनेनेति करणव्युत्पत्त्या ज्ञानसाधनं प्रोक्तम्। अतोऽन्यथा यदस्ति तदज्ञानं ज्ञानसाधनं नेत्यर्थः। यद्वा ज्ञानशब्दः भावव्युत्पत्त्या संवित्परश्च । तत्त्वज्ञानार्थस्य तत्त्वज्ञानविषयस्य विष्णोर्दर्शनमपरोक्षज्ञानमित्यर्थः। एतद्भगवद्विषयापरोक्षज्ञानं ज्ञानमिति प्रोक्तम् । अतोऽन्यथा यत् तज्ज्ञानं न भवतीति इह ज्ञानशब्दो ज्ञानतत्साधनोभयपरः। तत्त्वज्ञानार्थदर्शनमित्ययमप्युक्तदिशा शास्त्रपर्यालोचनरूपज्ञानसाधनपरः अपरोक्षज्ञानपरश्च ततश्चैतच्छब्देनोभय परामृश्य ज्ञानशब्देन भावकरणोभयव्युत्पत्त्या ज्ञानसाधनत्वज्ञानत्वयोर्विधानं युक्तमिति ज्ञेयम् ॥१२॥

**ज्ञेयं यत् तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते ॥**
**अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ॥ १२ ॥**

**त० टी०**–यदर्थममानित्वादिसाधनवृन्दमुक्तं तज्ज्ञेयं प्रकृतिवियुक्तं क्षेत्रज्ञस्वरूपमाह–ज्ञेयमिति। उक्तैः साधनैर्ज्ञेयं यत्प्रत्यगात्मस्वरूपं तत्प्रवक्ष्यामि । तज्ज्ञानस्य फलं नाल्पमित्याह—यज्ज्ञात्वाऽमृतमश्नुते इति । यत् प्रकृतिवियुक्तात्मस्वरूपं ज्ञात्वा अमृतं जन्मजरामरणादिप्राकृतधर्मैरहितं शुद्धमात्मस्वरूपमश्नुते प्राप्नोति। तदेवाह–अनादीति । न आदिर्जन्म यस्य तदनादि, मत्परम् अहं परो गुण-

शक्त्यादिभिरुत्कृष्टो यस्मात्तन्मत्परम् "स एतस्माज्जीवघनात्परात्परं पुरिशयं पुरुषमीक्षते" इति श्रुतेः, 'प्रधानपुरुषव्यक्तकालानां कारणं परमं हि यत्। पश्यन्ति सूरयो नित्यं तद्विष्णोः परमं पदम्' इति स्मृतेश्च निवृत्ताखिलाविद्यस्य प्रत्यगात्मनः शुद्धस्वरूपं ब्रह्म । आवरणाभावात् बृहद्गुणयोगेन ब्रह्मत्वमविरुद्धम् "बृहन्तो गुणा अस्मिन्निति ब्रह्म" इति श्रुतेः। मुक्तस्य "परमं साम्यमुपैति" इति साम्याभिधानात् "सर्वं ह पश्यः पश्यति" इति सार्वज्ञ्ययोगाच्च ब्रह्मत्वं युक्तम्। न सत्तन्नासदुच्यते। तदात्मस्वरूपं न सत् न चासत् शास्त्र उच्यते, कार्यावस्थायां नामरूपविभागार्हं द्रव्यं सच्छब्देनोच्यते। कारणावस्थायां नामरूपाविभागानर्हं द्रव्यमसच्छब्देनोच्यते। तथा च श्रुतिः "असद्वा इदमग्र आसीत्तो वै सदजायत। तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियत" इति। तदुभयावस्थारहितत्वात्सदसच्छब्दाभ्यां नोच्यते "न जायते म्रियते वा विपश्चिद्" इति श्रुतेः ॥ १२ ॥

म० टी०–एभिः साधनैर्ज्ञानशब्दितैः किं ज्ञेयमित्यपेक्षायामाह–ज्ञेयं यत्तदित्यादिषड्भिः। यत् ज्ञेयं मुमुक्षुणा तत्प्रवक्ष्यामि प्रकर्षेण स्पष्टतया वक्ष्यामि। श्रोतुरभिमुखीकरणाय फलेन स्तुवन्नाह–यत् वक्ष्यमाणं ज्ञेयं ज्ञात्वाऽमृतममृतत्वमश्नुते संसारान्मुच्यत इत्यर्थः। किं तत्? अनादिमत् आदिमन्न भवतीत्यनादिमत्, परं निरतिशयं ब्रह्म सर्वतोऽनवच्छिन्नं परमात्मवस्तु। अत्रानादीत्येतावतैव बहुव्रीहिणार्थलाभेऽप्यतिशायने नित्ययोगे वा मतुपः प्रयोगः। अनादीति च मत्परमिति च पदं केचिदिच्छन्ति। मत्सगुणात् ब्रह्मणः परं निर्विशेषरूपं ब्रह्मेत्यर्थः। अहं वासुदेवाख्या परा शक्तिर्यस्येति त्वपव्याख्यानं, निर्विशेषस्य ब्रह्मणः प्रतिपाद्यत्वेन तत्र शक्तिमत्त्वस्यावक्तव्यत्वात्। निर्विशेषत्वमेवाह–न सत्तन्नासदुच्यते। विधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते; निषेधमुखेन प्रमाणस्य विषयस्त्वसच्छब्देन। इदं तु तदुभयविलक्षणं निर्विशेषत्वात् स्वप्रकाशचैतन्यरूपत्वाच्च "यतो वाचो निवर्तन्ते अप्राप्य मनसा सह" इत्यादिश्रुतेः। यस्मात्तत् ब्रह्म न सद्भावत्वाश्रयः, नासदभावत्वाश्रयः, अतो नोच्यते केनापि शब्देन मुख्यया वृत्त्या शब्दप्रवृत्तिहेतूनां तत्रासंभवात्। तद्यथा गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः, शुक्लः कृष्ण इति वा गुणतः, धनी गोमानिति वा संबन्धतोऽर्थं प्रत्याययति शब्दः। अत्र क्रियागुणसंबन्धेभ्यो विलक्षणः सर्वोऽपि धर्मो जातिरूप उपाधिरूपो वा जातिपदेन संगृहीतः। यदृच्छाशब्दोऽपि डित्थडपित्थादिर्यं कंचिद्धर्मं स्वात्मानं वा प्रवृत्तिनिमित्तीकृत्य प्रवर्तत। इति सोऽपि जातिशब्दः। एवमाकाशशब्दोऽपि तार्किकाणां शब्दाश्रयत्वादिरूपं यं कंचिद्धर्मं पुरस्कृत्य प्रवर्तते। स्वमते तु पृथिव्यादिवदाकाशव्यक्तीनां जन्यानामनेकत्वादाकाशत्वमपि जातिरेवेति सोऽपि जातिशब्दः। आकाशातिरिक्ता च दिङ् नास्त्येव। कालश्च नेश्वरादतिरिच्यते। अतिरेके वा दिक्कालशब्दावप्युपाधिविशेषप्रवृत्तिनिमित्तकाविति जातिशब्दावेव। तस्मात् प्रवृत्तिनिमित्तचातुर्विध्याच्चतुर्विध एव शब्दः। तत्र न सत्तन्नासदिति जातिनिषेधः क्रियागुणसंबन्धानामपि निषेधोपलक्षणार्थः। "एकमेवाद्वितीयम्" इति जातिनिषेधस्तस्या अनेकव्यक्तिवृत्तेरेकस्मिन्नसंभवात्। "निर्गुणं निष्क्रियं शान्तम्" इति गुणक्रियासंबन्धानां क्रमेण निषेधः; "असङ्गो ह्ययं पुरुषः" इति च। "अथात आदेशो नेति नेति" इति च सर्वनिषेधः। तस्मात् ब्रह्म न केनचिच्छब्देनोच्यत इति युक्तम्। तर्हि कथं प्रवक्ष्यामीत्युक्तं कथं वा 'शास्त्रयोनित्वात्' इति सूत्रम्? यथाकथंचिल्लक्षणया शब्देन प्रतिपादनादिति गृहाण। प्रतिपादनप्रकारश्च "आश्चर्यवत्पश्यति कश्चिदेनम्" इत्यत्र व्याख्यातः। विस्तरस्तु भाष्ये द्रष्टव्यः ॥ १२ ॥

शं० टी०–एवं ज्ञानोत्पत्तिसहकारिकारणसामग्रीममानित्वादिलक्षणां निरूप्य निरुक्तसाधनसंपत्त्या कृतेन श्रवणादिना समुत्पन्नज्ञानस्य यतेर्यज्ज्ञातव्यं वस्तु तन्निरूपयति–ज्ञेयमिति। मुमुक्षोः कृतश्रवणस्य तदुत्पन्नज्ञानवतो यतेर्यज्ज्ञेयं श्रीगुरोर्मुखाद्यज्ज्ञातव्यं वस्तु तत्प्रवक्ष्यामि उपदेक्ष्यामि। ननु तज्ज्ञानेन किम-

स्माकमित्यत आह–यदिति। तत्त्वमस्यादिवाक्यार्थं विचार्य विचारजन्यज्ञानेन यद्वस्तु ज्ञात्वाऽमृतं वक्ष्यमाणलक्षणं परं ब्रह्माश्नुते "एतदमृतमभयमेतद्ब्रह्म" इति श्रवणादमृतं ब्रह्म विद्वान् प्राप्नोति "ब्रह्मविदाप्नोति परम्" इति श्रुतेः। एवं फलवादेन श्रोतारमभिमुखीकृत्य यत्प्रतिज्ञातं प्रवक्ष्यामीति तत्प्रतिपादयति–अनादिमदिति। मुमुक्षुणा ज्ञातव्यं तद्ब्रह्म अनादिमत् आदिः कारणं जन्म वा यस्यास्ति तदादिमत्कार्यं महदादिस्थूलान्तं, स्वयं ततो विलक्षणत्वाद्ब्रह्म अनादिमत्सर्वस्माद्विकारजातादन्यादित्यर्थः। अनादिमत्त्वमक्षरत्वान्मूलप्रकृतेरविकृतेरव्याकृतस्याप्यस्ति ततो व्यावर्तयितुं विशेषणं परमिति। निरवयवत्वेन नित्यकूटस्थासङ्गचिद्रूपत्वेन ज्ञत्वेनान्तरत्वेन परममहत्त्वेन च ब्रह्म स्वयमव्यक्तात्परमन्यदेव "अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः" इति श्रुतेरनादिमत्त्वात्परत्वाच्च ब्रह्म व्यक्ताव्यक्ताभ्यां कार्यकारणाभ्यामन्यदेवेति सिद्धम् "अन्यदेव तद्विदितादथो अविदितादधि" इतिश्रुतेः। ननु "तत्क्षेत्रं यच्च यादृक्च यद्विकारि यतश्च यत्। स च यो यत्प्रभावश्च तत्समासेन मे शृणु" इति क्षेत्रक्षेत्रज्ञयोर्याथात्म्यप्रतिपादनमुपक्रम्य महाभूतानीत्यादिना क्षेत्रस्वरूपं प्रतिपादितं, ततः क्षेत्रज्ञस्य स्वरूपे प्रतिपादितव्ये तत्त्यक्त्वा उपक्रान्तमनादिमत्परं ब्रह्मेति कथमनुपक्रान्तं ब्रह्मस्वरूपं प्रतिपाद्यते उपक्रमविरोधः स्यादिति चेन्न, तयोरभेदावधारणाद्विरोधानुपपत्तेः। "नायं हन्ति न हन्यते" इति क्षेत्रज्ञस्यात्मनोऽविक्रियत्वं बोधयितुमुपक्रम्य, तदेव न जायत इत्यादिना विस्पष्टीकृत्य नित्यः सर्वगत इति नित्यकूटस्थासङ्गचिद्रूपत्वं व्यापकत्वं च प्रतिबोध्य, येन भूतान्यशेषेणेति ब्रह्माभिन्नत्वं सूचयित्वा, भोक्तारं यज्ञतपसामिति सर्वभूतस्थमात्मानं यो मां पश्यति सर्वत्रेति च तयोरेकत्वमेवानुभाव्य, ज्ञानी त्वात्मैव मे मतमिति कण्ठरवेणैक्यमेवोक्त्वा, श्रुतिस्मृतिकोटिप्रसिद्धमुक्तमेव ब्रह्मात्मैक्यं क्षेत्रज्ञं चापि मां विद्धीति सुविस्पष्टतरं प्रतिपाद्य, भगवता क्षेत्रज्ञ एव ब्रह्म ब्रह्मैव क्षेत्रज्ञ इति तयोरभेद एव मूढैरप्यमूढैश्च सर्वैर्ज्ञातव्य इति स च यो यत्प्रभावश्च तत्समासेन मे शृण्विति ज्ञेयत्वेनोपक्रान्तमेव क्षेत्रज्ञं विधेयप्राधान्येन नपुंसकलिङ्गेन ज्ञेयं यत्तत्प्रवक्ष्यामीति परामृश्य, तद्याथात्म्यं बोधयितुमनादिमत्परं ब्रह्मेत्युक्तं, तेन क्षेत्रज्ञब्रह्मशब्दयोरर्थ एक एवेत्युपक्रान्तोपपादितवाक्यार्थविवेकज्ञाननिपुणैर्विद्वद्भिर्ज्ञातव्य इति सिद्धम्। एवमनादिमत्परं ब्रह्मेति ब्रह्मणः सर्वदृश्यवैलक्षण्यं सूचयित्वा स च यो यत्प्रभावश्चेत्यत्र यच्छब्दविवक्षितं तद्याथात्म्यम् "नेति नेतीत्यात्माऽगृह्यो नहि गृह्यते" इति "अथात आदेशो नेति नेति" इत्यादिश्रुत्यर्थमनुसृत्यातन्निषेधद्वारा बोधयितुमाह–न सत्तन्नासदुच्यते इति। यदिदमिदमिति नामरूपक्रियाजातिगुणविशेषैर्निर्देष्टुमर्हति तदभिव्यक्तनामरूपादिविशेषं महदादि कार्यजातं सर्वं सदित्युच्यते तद्विलक्षणत्वात्तत्कारणमव्यक्तमसदित्युच्यते। निरुक्तलक्षणं सद्ब्रह्म न भवति जनिमत्त्वान्नामरूपादिमत्त्वाद्दृश्यत्वाच्च घटवत्तद्विलक्षणत्वाद्ब्रह्मणः। नहि ब्रह्मणो जनिरस्ति "अजो नित्यः" इति श्रुतेः। नापि नामरूपादिकमस्ति "अग्राह्यमगोत्रमशब्दमस्पर्शमरूपम्" इति च श्रुतेः। नापि च दृश्यत्वम् "अदृष्टमव्यवहार्यम्" इति श्रुतेः, यतस्ततो ब्रह्म महदादिसर्वविकारजाताद्भिन्नमेवेत्यर्थः। एवं न सत्तदिति कार्यस्य ब्रह्मत्वं निषिध्य कारणस्यापि तद्भावं निषेधयति–नासदुच्यत इति। सद्विलक्षणं सर्वजगत्कारणं यदव्याकृतं तद्ब्रह्म न भवति सावयवत्वाज्ज्ञेयत्वाज्जडत्वाच्च। बीजवत्कार्यस्य सावयवत्वादिधर्मवैशिष्ट्यदर्शनात्कारणस्यापि तद्धर्मवैशिष्ट्यं युक्तं मृदादिषु तद्दर्शनात्; 'कारणगुणा हि कार्यगुणानारभन्ते' इति न्यायाच्च यत्सावयवं तद्विकारि यद्विकारि तदनित्यमित्यनित्यत्वाच्च ज्ञेयत्वाज्जडत्वम्, अहमज्ञ इत्यव्यक्तस्य ज्ञेयत्वं स्पष्टम्। तद्विलक्षणमेव परं ब्रह्म। नहि ब्रह्मणः सावयवत्वमस्ति "निष्कलं निष्क्रियम्" इति श्रुतेः। नापि जडत्वम् "साक्षी चेता" इति श्रुतेः। नापि च ज्ञेयत्वम् "स वेत्ति वेद्यं न च तस्यास्ति वेत्ता" इति श्रुतेः। ननु सदसच्छब्दवाच्ययोर्व्यक्ताव्यक्तयोः कार्यकारणयोरुभयोरपि ब्रह्मत्वे निषिध्यमाने तदभावं विना तन्निषेधावधितया स्थितं वस्तु यत्किंचिन्न पश्यामः। तत् ज्ञेयश-

त्वदर्थोऽप्रामाणिक एवेति चेद्भवानत्र प्रष्टव्यः। तयोर्निषेधावधिभूतोऽभावः सन्वा, किमसन्वा, उतोभयविधो वा, स स्वयं स्वत एव भाति वा उत परतो वेति। नाद्यः तस्य सद्भावेन सदन्तःपातित्वात्; न सदिति निषेधे सति पुनः स्वनिषेधावधित्वानुपपत्तेः। न द्वितीयः स्वतः सत्तारहितस्य तस्यासतः शशविषाणवच्छून्यत्वान्निषेधावधित्वासंभवात्। न तृतीयः सत्त्वासत्त्वयोः परस्परविरुद्धयोरेकाधिकरणत्वानुपपत्तावेकस्य तद्वत्तासिद्धेरभावोऽस्तीत्यभावस्यास्तिमत्त्वे सत्तावत्त्वेन भावत्वादभावोऽस्तीति निर्देशोऽनुपपन्न एव। अयमस्तीति प्रत्यक्षेण निर्देशो भावस्यैव नत्वभावस्य युज्यते, विषयविषयिणोरन्योन्यात्वयवसंयोगाभावात्। सत्येवान्योन्यात्वयवसंयोगे घटादेर्विषयत्वं दृष्टं नासतः। योऽस्तिमान् चक्षुर्विषयः स भाव एव नत्वभावः। अस्तिमत्त्वाभावत्वयोरेकाधिकरणत्वायोगात्। तदङ्गीकारेऽपि नापि चतुर्थः अभावस्य ज्ञेयत्वेन जडत्वाद्धटस्येव स्वतो भानासंभवात्। तर्ह्यन्यत एवेति चेदभावस्य भासकं वस्तु विद्यते वा न वा। न द्वितीयः तदभावे सूर्याभावे घटादिवदभावस्य भानाभावप्रसङ्गात्। अस्त्येवेति चेद्यदभावस्य भासकं वस्तु तदेव ब्रह्मेति ब्रूमः। तत्सद्भावे त्वमेवास्माकं प्रमाणम्। श्रुतिश्च "अन्यदेव विदितात् अन्यत्र धर्मादन्यत्राधर्मात्" इत्यादिः। "न प्रकृतिर्न विकृतिः पुरुषः" इति, 'सुषुप्तवच्छून्यवदप्रतर्क्यं तन्मूलभूतं पदमामनन्ति' इत्यादिस्मृतयश्च। यस्मात् "अदृश्येऽनात्म्ये" इति "अस्थूलमनणु" इत्यादिश्रुतिभिरध्यस्ताशेषविशेषनिषेधेनैव ब्रह्मणोऽधिगमितत्वात्तदिदं ज्ञेयं सर्वश्रुतिप्रसिद्धं प्रामाणिकमेव। तस्मात् सदसतोर्भिन्नं तन्निषेधावधिभूतं तदभावभासकं निर्विशेषं नित्यशुद्धबुद्धमुक्तसत्यपरमानन्दाद्वितीयमेव परं ब्रह्म इदमेवाहमस्मीति मुमुक्षुभिः स्वात्मना ज्ञातव्यं वस्तु न तु सन्नाप्यसच्चेति सिद्धम्॥ १२॥

**श्री० टी०**—एभिः साधनैर्यज्ज्ञेयं तदाह—**ज्ञेयमिति षड्भिः**। यज्ज्ञेयं तत्प्रवक्ष्यामि। श्रोतुरादरसिद्धये ज्ञानफलं दर्शयति। यद्वक्ष्यमाणं ज्ञात्वाऽमृतं मोक्षं प्राप्नोति। किं तत्? अनादिमत् आदिमन्न भवतीत्यनादिमत् परं निरतिशयं ब्रह्म। अनादीत्येतावतैव बहुव्रीहिणा अनादित्वे सिद्धेऽपि पुनर्मतुपः प्रयोगश्छान्दसः, यद्वा अनादीति मत्परमिति च पदद्वयं मम विष्णोः परं निर्विशेषं रूपं ब्रह्मेत्यर्थः। तदेवाह न सत् न चासदुच्यते। विधिमुखेन प्रमाणस्य विषयः सच्छब्देनोच्यते। निषेधस्य विषयस्त्वसच्छब्देनोच्यते। इदं तु तदुभयविलक्षणं अविषयत्वादित्यर्थः॥ १२॥

**स० टी०**—किं ज्ञानेन यथोक्तेन ज्ञेयमित्यत आह च॥ ज्ञेयं मुमुक्षुणा यत्तत्स्पष्टं वक्ष्याम्यहं हरिः॥ १॥ तत्फलेन स्तुवन्नाह श्रोतारं च प्रवर्तयन्॥ ज्ञेयं यद्वक्ष्यमाणं च ज्ञात्वा बन्धात्प्रमुच्यते॥ २॥ आदिमन्नैव यद्ब्रह्म परमात्मचिदद्वयम्॥ बहुव्रीहिसमासेनैवार्थलाभेऽपि वस्तुनः॥ ३॥ प्रयोगो मतुपो ज्ञेयो नित्ययोगेऽतिशायने॥ निर्विशेषं परं ब्रह्म वस्तु वाचामगोचरम्॥ ४॥ विधिद्वारा प्रमाणस्य विषयः सद्गिरोच्यते॥ निषेधद्वारतो मानविषयोऽसद्गिरोच्यते॥ ५॥ इदं तु निर्विशेषत्वात्स्वप्रकाशतयाऽद्वयम्॥ उभयस्माद्विभिन्नं तज्ज्ञेयं ब्रह्म परात्परम्॥ ६॥ प्रतियोगिव्यवच्छेदशून्यत्वादेव चिद्घनम्॥ यतो वाचो निवर्तन्ते अप्राप्य मनसा सह॥ ७॥ इत्यादिश्रुतिवाक्येभ्यः शब्दातीतं विनिश्चितम्॥ न भावत्वाश्रयो ब्रह्म नाभावत्वाश्रयोऽस्त्यतः॥ ८॥ नैव केनापि शब्देन मुख्यया वृत्त्या तदुच्यते॥ शब्दप्रवृत्तिहेतूनां जात्यादीनामभावतः॥ ९॥ ज्ञेयस्य ब्रह्मणो नास्ति शब्दबोध्यत्वमञ्जसा॥ लोके गुणक्रियाजातिसंबन्धा हेतवो गिराम्॥ १०॥ प्रवृत्तेस्ते न सन्त्यस्मिन्निर्गुणत्वादिहेतुभिः॥ शुक्लः पचति गौरश्वो धनी गोमानिति स्फुटम्॥ ११॥ दृष्टा प्रवृत्तिरेतासां गुणाद्यैर्हेतुभिर्गिराम्॥ निर्गुणं निष्क्रियं शुद्धमेकमेवाद्वितीयकम्॥ १२॥ ब्रह्म तस्मान्न केनापि वक्तुं शब्देन शक्यते॥ कथं तर्हि प्रवक्ष्यामीत्येवं भगवतेरितम्॥ १३॥ शृणु लक्षणया वस्तुप्रतिपादनमेव तत्॥ यथाकथंचिज्जिज्ञासोर्बोधनार्थं गिरो-

च्यते ॥ १४ ॥ वस्तुतो वचनातीतं सर्ववेदान्तसंमतम् ॥ निर्गुणं निष्क्रियं शान्तं तथाऽसङ्गो ह्ययं पुमान् ॥ १५ ॥ नेति नेतीति शतशः सन्ति वाक्यानि च श्रुतेः ॥ नैतदस्ति न नास्तीदं द्वयोर्मोहोद्भवत्वतः ॥ १६ ॥ न सत्तन्नासदित्येवं प्राह विश्वेश्वरोऽपि हि ॥ आविर्भावतिरोभावौ बुद्धेर्यत्साक्षिकाविह ॥ १७ ॥ तमेकमन्तरात्मानं विद्यादव्यभिचारिणम् ॥ इत्युक्तं संप्रदायज्ञैर्वार्तिके श्रीसुरेश्वरैः ॥ १८ ॥ १२ ॥

भा० टी०—यथोक्तज्ञानसाधनेन ज्ञानशब्दितेन ज्ञेयं किमित्याकाङ्क्षायामाह—ज्ञेयमिति । उक्तज्ञानसाधनपरिपाकलब्धसाक्षात्कारवृत्तिविषयं ज्ञेयम् । न चैवमन्तःकरणवृत्तिविषयत्वेन ब्रह्मणो दृश्यत्वं तस्य वृत्तिविषयत्वेन ज्ञेयत्वेऽपि फलविषयत्वाभावेन दृश्यत्वाभावात् । तथाच श्रुतिः—" स वेत्ति वेद्यं न च तस्यास्ति वेत्ता । विज्ञातारमरे केन विजानीयात् " इत्याद्या । ज्ञेयं यत्तत्प्रकर्षेण यथावत् वक्ष्यामि । फलप्रदर्शनेन श्रोतारं रोचयन्नभिमुखीकरोति—यज्ज्ञेयं ज्ञात्वाऽमृतमपुनरावृत्तिलक्षणं मोक्षमश्नुते मुक्तो भवतीत्यर्थः । किं तदित्यत आह—अनादिमत् । आदिरस्यास्तीत्यादिमत् नादिमदनादिमत् परं निरतिशयं ब्रह्म ज्ञेयमित्यर्थः । यत्तु अनादिमदितिच्छेदे बहुव्रीहिणोक्तेऽर्थे मतुप आनर्थक्यप्रसङ्गादुक्तार्थानामप्रयोगादितिन्यायात् मत्परमितिच्छेदः, अहं वासुदेवाख्या परा शक्तिर्यस्य तन्मत्परमित्यर्थ इति तन्न, न सत्तन्नासदुच्यते इति सर्वविशेषप्रतिषेधेन विजिज्ञापयिषितत्वेन विशिष्टशक्तिमत्त्वप्रदर्शनस्य विप्रतिषिद्धत्वेनोक्तार्थासंभवात् । तस्मान्मतुपो बहुव्रीहिसमानार्थत्वेऽपि अतिशायने नित्ययोगे वा श्लोकपूरणार्थः प्रयोगः । ननु मम विष्णोः परं निर्विशेषं रूपं मत्तः सगुणाद्ब्रह्मणः परमिति वा, यद्वा आदिमच्च ततः परं चादिमत्परे कार्यकारणे ताभ्यामन्यदनादिमत् परमित्येवं मतुपः सार्थकत्वसंभवे किमित्याचार्यैरेवमुक्तमिति चेत् परमितिविशेषणादेव सगुणात्परस्य निर्विशेषस्य लाभेन मत्पदवैयर्थ्यं मत्तः परतरं नान्यदित्यादिना विरोधं परपदस्य पूर्वनिपातापत्तिं कार्यकारणान्यत्वस्य न सदित्यादिविशेषणेऽन्तर्भावं चाभिप्रेत्येति गृहाण । एतेनानादिमत्परमित्येकं पदम् । अनादिर्माया तद्वतो मायावच्छिन्नादनाद्यज्ञानवतो जीवात्परं निर्मायमज्ञानकृतजीवत्वोपाधिरहितं चेत्येवमादि यत्किंचित्कल्पनमस्मदादिभिः क्रियमाणमपि हेयं परमिति विशेषणेनैवोक्तार्थस्य लाभेनानादिमत्पदस्य वैयर्थ्यात् । अनादिमत्परं ब्रह्म ज्ञेयममृतत्वफलं मयोच्यत इति प्ररोचनेनाभिमुखीकृत्याह—सत्कार्यमभिव्यक्तनामरूपत्वात्, असत्कारणं तद्विपर्ययात् । तथाच तज्ज्ञेयं सन्नोच्यते नाप्यसदुच्यते । ननु ज्ञेयं वक्ष्यामीति महता कण्ठरवेणोद्घुष्य न सत्तन्नासदुच्यत इत्यननुरूपमुक्तमिति चेन्न, स्वयंज्योतीरूपस्य परब्रह्मणः विधिमुखेनोपदेशायोगादध्यस्तातद्धर्मनिवृत्तये निषेधद्वारोपदेशस्य श्रुतिषु प्रसिद्धेरारोपितविशेषनिषेधरूपस्य प्रवचनस्य प्रतिज्ञानुरूपत्वात् । तथाच श्रुतयः "अथात आदेशो नेति नेति । अस्थूलमनणु । अपूर्वमनपरम्" इत्यादयः । एवं च ज्ञेयस्य ब्रह्मणो वाचोऽगोचरत्वात् श्रुत्यादौ निषेधमुखेनैवोपदेशो नत्विदं तदिति विधिमुखेनेति भावः । ननु ब्रह्मणोऽस्तिशब्दावाच्यत्वे नाऽस्तिशब्दवाच्यशशविषाणवन्नास्तित्वप्रसङ्ग इति चेन्न, शशशृङ्गवद्ब्रह्मणो नास्तिधीविषयत्वाभावात् । ननु सर्वासां बुद्धीनामस्तिनास्तित्वानुगतत्वेन ब्रह्मणोऽन्यतरबुद्ध्यविषयत्वेनानिर्वाच्यत्वं दुर्वारमिति चेन्न, इन्द्रियग्राह्यघटादेरुभयबुद्धिविषयाद्विलक्षणस्यातीन्द्रियस्य ब्रह्मणस्तदविषयत्वेऽपि शब्दैकप्रमाणगम्यत्वेन ज्ञेयत्वानपायात् । किंच गौरश्व इति वा जातितः, पचति पठतीति वा क्रियातः,शुक्लः कृष्ण इति वा गुणतः,धनी गोमानिति वा संबन्धतः, सर्वो गवादिशब्दोऽर्थं प्रत्याययति । नतु ब्रह्मजात्यादिमदतो न सदादिशब्दवाच्यम् । तथाच श्रुतयः "अगोत्रमवर्णम् निष्क्रियं शान्तम् । केवलो निर्गुणश्च । एकमेवाद्वितीयम्" इत्याद्याः।तथाचाविषयत्वादात्मत्वात्केनापि शब्देन मुख्यया वृत्त्या ब्रह्म नोच्यत इति युक्तम् "यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" इत्यादिश्रुति-

श्यश्च। "तं त्वौपनिषदं पुरुषं पृच्छामि" इत्यत्र तु निषेधमुखोपदेशेनोपनिषत्प्रतिपाद्यमित्यर्थ इत्यविरोधः। यत्तु—"पूरणार्थात्पॄ इत्यस्माद्धातोः परशब्दव्युत्पत्तेः परं पूर्णं त्रिविधपरिच्छेदशून्यम्। ननु देशकालवस्तूनामद्वैतमतेऽसत्त्वात्कुतस्तत्कृतपरिच्छेद इत्याशङ्क्याविद्याविलासत्वं तेषां वक्तुं ब्रह्म विशिनष्टि—आनादिमदिति। अनादि अज्ञानं तद्वत्तत्संबन्धीत्यर्थः। तेन देशादीनां संभव इति भावः। नन्वयं शान्तिकर्मणि वेतालोदयः यदज्ञानमेवानादि द्वितीयमङ्गीक्रियत इत्याशङ्क्याज्ञानं विशिनष्टि—न सदिति। तदज्ञानं न सदुच्यते बाध्यतया सत्त्वेनानिरूपणात्, तथा नासदुच्यते अपरोक्षतया प्रतीतेरतस्तस्यानिर्वचनात्। भुजङ्गेनेव रज्जुर्नाज्ञानेन ब्रह्म सद्वितीयमिति भावः। यद्वास्मिन्व्याख्याने द्वितीयनकारवैयर्थ्याद्ब्रह्मैव विशेषणीयं तद्ब्रह्म न सन्नासदिति नोच्यतेऽनिर्वचनीयं न भवति सत्त्वेन निरूपणादतोऽर्थादनाद्यज्ञानमेवानिर्वचनीयमित्यर्थः"। इति तच्चिन्त्यं, ज्ञेयप्रवचनं प्रतिज्ञायाज्ञाननिरूपणस्यानौचित्यात्। अज्ञानवतो जीवस्य ज्ञातत्वेन ज्ञेयत्वाभावात् ब्रह्मविशेषणीयमिति पक्षे तत्सदुच्यते इत्येतावतैव निर्वाहेऽवशिष्टस्य वैयर्थ्यापत्तेः "नासदासीन्नो सदासीत्" इत्यादिश्रुत्या विरोधापत्तेश्चेति दिक् ॥ १२ ॥

प० टी०—एभिः साधनैर्यज्ज्ञेयं तदाह—ज्ञेयमिति षड्भिः। यज्ज्ञेयं तत्ते प्रवक्ष्यामि। श्रोतुरवधानसिद्धये ज्ञानफलमाह—यदिति। यद्वक्ष्यमाणं ज्ञात्वामृतं मोक्षमश्नुते प्राप्नोति। किं तद्? आदिमन्न भवतीत्यनादिमत् परं निरतिशयं ब्रह्म, यद्वा मत्परं मत्तः परं निर्विशेषं ब्रह्म। तदेवाह—न सदिति। तद्ब्रह्म न सन्नाप्यसद् विधिमुखेन प्रमाणस्य विषयः सदित्युच्यते निषेधविषयस्त्वसत्। इदं तु तदुभयविलक्षणमतिविषयत्वात् ॥ १२ ॥

रा० टी०—एवं ज्ञानं ज्ञानसाधनं चोक्त्वाऽधुना स च यो यत्प्रभावश्चेति प्रतिज्ञातज्ञेयस्वरूपं तत्प्रभावं च प्रतिज्ञापूर्वमाह—ज्ञेयमित्यादिना। आदरजननाय तज्ज्ञानस्य फलमाह—यज्ज्ञात्वेति। स च य इति प्रतिज्ञातज्ञेयस्वरूपोक्तिः। परं ब्रह्मेति नामोक्त्या तत्स्वरूपस्यावगतेः अहमेवेति वक्तव्ये अक्षरं ब्रह्म परममिति अष्टमोक्तदिशा ब्रह्म स्वयमेवेति सिद्धमिति भावः। स च यत्प्रभाव इत्युक्तमाह—अनादिमदित्यादिना। आदिरेषामस्तीत्यादिमन्ति देहेन्द्रियादीनि। ततो बहुव्रीहिः प्राकृतदेहेन्द्रियगुणकर्मादिहीनामित्यर्थः। भगवान्क्षेत्रान्तर्गतो भूत्वा क्षेत्रज्ञ इत्युच्यते किमित्यतो नेत्याह—नेति। तद्ब्रह्म सद्व्यक्तशब्दितकार्यजातान्तर्गतं नेत्युच्यते। असदव्यक्तशब्दितकारणान्तर्गतं नेत्युच्यते 'व्यक्ताव्यक्तविलक्षणः' इतिस्मृतेः, यद्वा मूर्तामूर्तव्यतीतत्वात् 'नसत्तन्नासदुच्यते' इति स्मृत्युक्तदिशा मूर्तं नामूर्तं च नेत्युच्यत इति नेति नेतीत्यादिश्रुताविन्यर्थः ॥ १३ ॥

**सर्वतःपाणिपादं तत्सर्वतोऽक्षिशिरोमुखम्।**
**सर्वतःश्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ १३ ॥**

त० टी०—तस्य ब्रह्मत्वमुपपादयति—सर्वत इति पञ्चभिः। अयं भावः "अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः। अनिन्द्रियोऽपि सर्वतः पश्यति सर्वतः शृणोति सर्वत आदत्ते" इत्यादिश्रुत्या परमात्मनो यथा पाणिपादादिसर्वेन्द्रियरहितत्वेऽपि आदानगमनादिदर्शनश्रवणादिसर्वकार्यकर्तृत्वं तादृशशक्तियोगादेव निरूपितं, तद्वत्। तथा "तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति" 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इतिश्रुतिस्मृतिभ्यां मुक्तानां तत्साम्यस्य प्रतिपादनात्। तत्साम्यापन्नानां प्रत्यगात्मनामपीन्द्रियनिरपेक्षैवादानगमनदर्शनादिक्रिया संभवतीत्यतः सर्वतःपाणिपादं तदित्युक्तं तत्परिशुद्धात्मस्वरूपं सर्वतः पाणिपादक्रियाकृदित्यर्थः। तथा सर्वतश्चक्षुःशिरोमुखकार्यकृत्, सर्वतः श्रुतिमत् श्रवणेन्द्रियशक्तिमत्, लोके सर्वमावृत्य तिष्ठति लोके यद्वस्तुजातं

तत्सर्वं स्वज्ञानेनावृत्य ज्ञानगोचरीकृत्य तिष्ठति । तदा निःशेषाविद्यानिवृत्त्या धर्मभूतज्ञानस्य व्यापकत्वात् प्रत्यगात्मनो व्यापकधर्मयोगादेव विभुत्वस्य विवक्षितत्वात् । तथा चाह भगवान्सूत्रकारः 'तद्गुणसारत्वात् तद्व्यपदेशः प्राज्ञवत्' इति ॥ १३ ॥

म० टी०—एवं निरुपाधिकस्य ब्रह्मणः सच्छब्दप्रत्ययाविषयत्वादसत्त्वाशङ्कायां नासदित्यनेनापास्तायामपि विस्तरेण तदाशङ्कानिवृत्त्यर्थं सर्वप्राणिकरणोपाधिद्वारेण चेतनक्षेत्रज्ञरूपतया तदस्तित्वं प्रतिपादयन्नाह—सर्वत इति । सर्वतः सर्वेषु देहेषु पाणयः पादाश्चाचेतनाः स्वस्वव्यापारेषु प्रवर्तनीया यस्य चेतनस्य क्षेत्रज्ञस्य तत्सर्वतःपाणिपादं ज्ञेयं ब्रह्म, सर्वाचेतनप्रवृत्तीनां चेतनाधिष्ठानपूर्वकत्वात्तस्मिन् क्षेत्रज्ञे चेतने ब्रह्मणि ज्ञेये सर्वाचेतनवर्गप्रवृत्तिहेतौ नास्ति नास्तिताशङ्केत्यर्थः । एवं सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य प्रवर्तनीयानि सन्ति तत्सर्वतोऽक्षिशिरोमुखम् । एवं सर्वतः श्रुतयः श्रवणेन्द्रियाणि यस्य प्रवर्तनीयत्वेन सन्ति तत्सर्वतःश्रुतिमत् । लोके सर्वप्राणिनिकाये एकमेव नित्यं विभु च सर्वमचेतनवर्गमावृत्य स्वसत्तया स्फूर्त्या चाध्यासिकेन संबन्धेन व्याप्य तिष्ठति निर्विकारमेव स्थितिं लभते न तु स्वाध्यस्तस्य जडप्रपञ्चस्य दोषेण गुणेन वाऽणुमात्रेणापि संबध्यत इत्यर्थः । यथा च सर्वेषु देहेष्वेकमेव चेतनं नित्यं विभु च न प्रतिदेहं भिन्नं तथा प्रपञ्चितं प्राक् ॥ १३ ॥

शं० टी०—एवं स च यो यत्प्रभावश्चेत्यत्र यच्छब्दविवक्षितं क्षेत्रज्ञस्यात्मनो नैजं तत्त्वं प्रकृतिप्राकृतविलक्षणं यतिभिर्विदेहमुक्त्यै स्वात्मना ज्ञातव्यमिति निरूप्याधुना सर्वश्रुतिप्रसिद्धस्यापि ब्रह्मणो विदिताविदितान्यत्वेन परोक्षत्वात्तत्सद्भावस्य संशयितत्वे यत्संनिधिमात्रेण देहेन्द्रियादयश्चेष्टन्ते तच्चेष्टाकारणं ब्रह्मेति युक्त्या तत्सत्त्वमनुमानतो ज्ञातुं शक्यत इति बोधयितुं क्षेत्रज्ञस्य यत्प्रभावश्चेतिविशेषणविवक्षितं सर्वप्राणिकरणोपाधिमत्त्वलक्षणं विशेषितं रूपं श्रुतिप्रसिद्धं प्रतिपादयति—सर्वत इति । यज्ज्ञेयत्वेनोपक्रान्तमनादिमत्त्वादिलक्षणं तद्ब्रह्म सर्वतःपाणिपादं सर्वतः पाणयः पादाश्च सर्वप्राणिसंबन्धिनो यस्य तत्सर्वतःपाणिपादम् । पाणिपादपदमनुक्तकर्मेन्द्रियाणामुपलक्षणम् । सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्सर्वतोऽक्षिशिरोमुखम् । अक्षिपदमनुक्तज्ञानेन्द्रियाणां मनोबुद्ध्यादीनां चोपलक्षणम् । सर्वतःशिरोग्रहणं देहानेकत्वसूचनार्थम् । घटमठादिविशेषणैराकाशो यथा तथा ब्रह्मादिपिपीलिकान्तदेहविशेषणैर्नामरूपाभ्यां स्वयं विशेष्यत इत्यर्थः । सर्वतः श्रुतयः श्रोत्राणि यस्य तत्सर्वतःश्रुतिमत् । लोके लोक्यत इति लोकः प्राणिवर्गस्तस्मिन् लोक इति द्वितीयार्थे सप्तमी । लोकं प्राणिसमुदायं प्रकृतिं प्राकृतं च सर्वं बहिरन्तः सर्वतः स्वरूपेण चैतन्येनावृत्य घटमठादिकमाकाश इव व्याप्य तिष्ठति । स व्याप्तदेहेन्द्रियादिकमयोऽयस्कान्त इव चेष्टयति स्वयं न चलतीत्यर्थः । निर्विशेषस्य ब्रह्मण इदं पाणिपादादिविशेषणविशेषितं रूपमौपाधिकं मायिकं च ननु स्वाभाविकं स्वाभाविकत्वे निषेधायोगान्निषिध्यते हि वैशेषिकं रूपं न सत्तन्नासदुच्यत इति । तर्हीदमप्रामाणिकमिति चेन्न, "सर्वतःपाणिपादं तत्सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥ सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् । सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्" इत्यादिश्रुतिप्रमाणकत्वादैश्वरं रूपं व्यवहारे तत्सत्यमेव, यदेतदाराध्य तत्प्रसादेन मुमुक्षुर्मुक्तिं गच्छति । तदुक्तं च मत्कर्मकृन्मत्परम इति निर्विशेषस्य क्षेत्रज्ञस्यात्मनः सविशेषस्वरूपोपन्यासस्तत्सद्भावद्योतनार्थः । सर्वतःपाणिपादादिलक्षणं प्रतिपादितं क्षेत्रं जानातीति वा क्षेत्रधर्मैः स्वयं ज्ञायत इति वा क्षेत्रज्ञः । तथाहि पाणिपादबुद्धीन्द्रियादयश्चेतनशक्तिनिमित्तस्वव्यापाराः स्वतो जडत्वाच्चर्मदारुमयप्रतिमादिवत् ; देहेन्द्रियादयः स्वतो जडाश्चेतनाधिष्ठात्रन्तर्बुद्धिपूर्वकं प्रवृत्तिमत्त्वाद्रथादिवत् । एवं सर्वप्राणिदेहेन्द्रियाद्युपाधिभिर्ज्ञेयस्य ब्रह्मणोऽस्तित्वमवगम्यते । एतदर्थमेव क्षेत्रज्ञस्यात्मनोऽसङ्गस्यापि पाणिपादादिमत्त्वमौपाधिकं मिथ्याभूतमप्युररीकृत्यो-

च्यते भगवता मुमुक्षुणां स्वतत्त्वाभिगमाय शाखाग्रे चन्द्र इतिवत्। ततस्तदेव पारमार्थिकं रूपं यन्न सत्तन्नासदुच्यत इत्युक्तम्। एतेन सर्वक्षेत्रेषु परस्परभिन्नेषु क्षेत्रज्ञस्यात्मन एकत्वं स्वसन्निधिमात्रेण तत्तद्देहेन्द्रियादिप्रवृत्तिनिमित्तत्वं प्रवर्तकत्वेन प्रवर्त्येभ्यस्तेभ्यो भिन्नत्वं निरवयवत्वं नित्यत्वं चेतनत्वमसङ्गत्वमसंसारित्वं पूर्णत्वं च बोधितं भवति ॥ १३ ॥

श्री० टी०—नन्वेवं ब्रह्मणः सदसद्विलक्षणत्वे सति "सर्वं खल्विदं ब्रह्म। ब्रह्मैवेदं सर्वम्" इत्यादिश्रुतिभिर्विरुद्ध्येतेत्याशङ्क्य "पराऽस्य शक्तिर्विविधैव श्रूयते। स्वाभाविकी ज्ञानबलक्रिया च" इत्यादि श्रुतिप्रसिद्धयाऽचिन्त्यशक्त्या सर्वात्मतां तस्य दर्शयन्नाह—**सर्वत इति** पञ्चभिः। सर्वतः सर्वत्र पाणयः पादाश्च यस्य तत्, सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्, सर्वतः श्रुतिमच्छ्रवणेन्द्रियैर्युक्तं सल्लोके सर्वमावृत्य व्याप्य तिष्ठति सर्वप्राणिवृत्तिभिः पाण्यादिभिरुपाधिभिः सर्वव्यवहारास्पदत्वेन तिष्ठतीत्यर्थः ॥ १३ ॥

स० टी०—एवं च निर्विशेषस्य ब्रह्मणः सदसद्गिरा ॥ वक्तुं चेन्नास्ति सामर्थ्यं प्रत्ययाविषयत्वतः ॥ १ ॥ असत्त्वमेव किं न स्यात्तर्हि ज्ञेयस्य सर्वथा ॥ इत्याशङ्कानिवृत्त्यर्थं तदस्तित्वं प्रदर्शयन् ॥ २ ॥ सर्वप्राणीन्द्रियोपाधिद्वारेणास्याखिलात्मताम् ॥ सच्चिदानन्दक्षेत्रज्ञरूपत्वेनाह केशवः ॥ ३ ॥ यस्य सर्वेषु देहेषु पाणयश्चरणा जडाः ॥ स्वस्वव्यापारविषये प्रवृत्त्या चेतनस्य तत् ॥ ४ ॥ सर्वाचेतनवृत्तीनां चिदधिष्ठानतावशात् ॥ प्रवृत्तिरस्त्यतो ज्ञेयं सर्वतःपाणिपादवत् ॥ ५ ॥ तस्मिंश्चिद्ब्रह्मणि ज्ञेये जडवर्गप्रवर्तके ॥ नैवास्ति नास्तिताशङ्का काचिदित्याशयो हरेः ॥ ६ ॥ यस्यैव सर्वतोऽक्षीणि शिरांसि च मुखानि च ॥ सन्ति प्रवर्तनीयानि तज्ज्ञेयं सर्वशक्तिमत् ॥ ७ ॥ सर्वतो यस्य चिद्धातोर्लोकेऽस्ति श्रवणेन्द्रियम् ॥ सर्वं जडसमूहं तद्व्याप्याप्यत्यन्तनिश्चलम् ॥ ८ ॥ स्वसत्तया स्वस्फूर्त्या तदध्यस्तं सर्वमात्मनि ॥ चालयन्नपि नो याति तत्कृतां विकृतिं मनाक् ॥ ९ ॥ रूपमौपाधिकं मिथ्यैवास्तित्वाधिगमाय तत् । ज्ञेयधर्मवदित्येवं परिकल्प्योच्यते तथा ॥ १० ॥ यथा सर्वेषु देहेषु चिद्घनं नित्यमद्वयपू ॥ एकमेवास्ति नो भिन्नं तथा प्राग्वर्णितं स्फुटम् ॥ ११ ॥ १२ ॥

भा० टी०—ननु सर्वविशेषरहितस्य वागाद्यगोचरस्य सच्छब्दाविषयत्वादसत्त्वाशङ्कायां न सदित्यनेन संक्षेपतः समाहितायामपि प्रत्यक्त्वेनेन्द्रियप्रवृत्त्यादिहेतुत्वेन कल्पितद्वैतसत्तास्फूर्तिप्रदत्वेन च ज्ञेयस्यास्तित्वं प्रतिपादयन्नादौ यथाऽचेतनानां रथादीनां चेतनाधीना प्रवृत्तिस्तथा सर्वप्राणिकरणानामचेतनानाम्; तच्च प्रत्यक्चैतन्यं ब्रह्मैवेति विस्तरेण तदाशङ्कानिवृत्त्यर्थमाह—**सर्वत इति**। सर्वतः सर्वत्र पाणयो हस्ताः पादाश्च यस्य तज्ज्ञेयं तथा यद्यपि पाण्यादीनां देहस्थत्वेनात्माधर्मत्वं तथापि करणप्रवृत्तिश्चेतनाधिष्ठानपूर्विका प्रेक्षापूर्वकप्रवृत्तित्वात् रथादिप्रवृत्तिवदिति सर्वप्राणिकरणोपाधिभिः क्षेत्रज्ञास्तित्वं विभाव्यते। ननूक्तरीत्या चेतनास्तित्वसिद्धावपि कथं क्षेत्रज्ञास्तित्वमिति चेत् चेतन एव क्षेत्रोपाधितः क्षेत्रज्ञ इत्युच्यते इत्यतस्तदस्तित्वं क्षेत्रज्ञास्तित्वमेव। ननु क्षेत्रोपाधितश्चैतन्यस्य क्षेत्रज्ञत्वेऽपि पाण्यादिमत्त्वं कथमिति चेत् क्षेत्रस्य पाण्यादिभिरनेकधा भिन्नत्वेन तदुपाधितः क्षेत्रज्ञस्यापि पाण्यादिमत्तायाः सुवचत्वात्। न सत्तन्नासदुच्यते इति निर्विशेषत्वेन ज्ञेयत्वोक्तिस्तु क्षेत्रोपाधिकृतस्य विशेषजातस्य मिथ्यात्वात् क्षेत्रज्ञस्य तदपनयेन सुवचा। ननु पाण्यादिमत्त्वस्यैवोपाधिकृतस्य मिथ्यात्वात् ज्ञेयप्रवचनाधिकारे तदुक्तिरपार्थेति चेन्न, ज्ञेयास्तित्वबोधनाय ज्ञेयधर्मवत् परिकल्प्य तथाभूतपाण्याद्युक्तेः सार्थकत्वात्। तदुक्तं संप्रदायविद्भिः 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति सर्वतोऽक्षीणि शिरांसि मुखानि च यस्य तत्। सर्वतः श्रुतिः श्रवणेन्द्रियमस्त्यस्य तत्। पाणिपादमुखवत्त्वमवशिष्टकर्मेन्द्रियवत्त्वस्याक्षिश्रुतिमत्त्वं चावशिष्टज्ञानेन्द्रियवत्त्वस्य मनोबुध्यादिमत्त्वस्य चोपलक्षणम्। सर्वत्र सर्वदेहावयवत्वेन गम्यमानाः पाणिपादादयो ज्ञेयस्य परमात्मनः सन्नि-

धिमात्रेण प्रवर्तनसमर्थस्य सत्त्वं निमित्तीकृत्य स्वकार्यवन्तो भवन्तीत्यतो ज्ञेयसद्भावलिङ्गानि ज्ञेयस्येत्युपचारत उच्यते । लोके सर्वप्राणिसमुदाये सर्वं चराचरं सत्तादिनाऽऽध्यासिकसंबन्धेनावृत्य संव्याप्य तिष्ठति निर्विशेषामेव स्थितिं लभते नतु चलति । अध्यारोपितसविशेषप्रपञ्चेन सविशेषत्वं नैव लभत इत्यर्थः ॥ १३ ॥

प० टी०—अथ प्रमाणविषयीभूतस्य सतो विचित्रशक्तित्वं दर्शयन्नाह—सर्वत इति पञ्चभिः । तज्ज्ञानं क्रियाशक्तिमद् ब्रह्म सर्वतः समन्ततः पाणिपादा यस्य, सर्वतोऽक्षीणि शिरांसि यस्य, सर्वतः श्रुतिमच्छ्रवणयुक्तं सल्लोके सर्वमावृत्य व्याप्य तिष्ठति । श्रुतिरपि—"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् । सं बाहुभ्यां धमति सं पतत्रैर्द्यावाभूमी जनयन् देव एकः" इति । भाष्यम्—अनया सर्वात्मकत्वेन कुलालादिविलक्षणत्वादधिष्ठानाद्यभावेऽपि स्रष्टुं शक्नोतीत्याह विश्वतश्चक्षुः सर्वतो व्याप्तचक्षुः उतापि च विश्वतोमुखः स तथा विश्वतोबाहुः उतापि विश्वतस्पात् । स एव परमेश्वरः स्वस्मिन् त्रैलोक्यमुत्पादयति कथमित्युच्यते । बाहुभ्यां दिवसं धमति । धमतिर्गतिकर्मा । सम्यक् प्रेरयाति । तथा पतत्रैर्गमनशीलैः पादैः पृथिवीं संधमति, उभयोरेव श्रवणं प्राधान्याभिप्रायम् । एवं द्यां पृथिवीं च जनयन् देवो द्योतमानः परमेश्वर एकोऽसहाय एव वर्तते ॥ १३ ॥

रा० टी०—पुनस्तत्प्रभावमाह—सर्वत इति । कथं जगद्वैलक्षण्यं हरेरित्यतो वाह—सर्वत इति । तत्प्रागुक्तं परं ब्रह्म सर्वतः सर्वावयवेषु पाणिपादं द्वन्द्वैकवद्भावः प्राण्यङ्गत्वात् । तेन तच्छक्तिर्लक्ष्यते । पाणिपादादिशक्तिमत्सर्वेऽप्यवयवाः स्वस्वेतरावयवशक्तिमन्त इत्यर्थः । शुक्लकृष्णकेशावतारयोर्बलरामकृष्णयोः पाणिपादादिशक्तेर्दर्शनात् । एवं सर्वतः सर्वावयवेषु चक्षुरादिशक्तिमदित्यर्थः । सर्वतः सर्वावयवेषु श्रुतिमच्छ्रोत्रेन्द्रियशक्तिमत् सर्वेन्द्रियाणां विषयान्कर्माणि च सर्वेन्द्रियैः वेत्ति करोति चेति यावत् । लोके जगति सर्वं वस्तु आवृत्य तिष्ठति व्याप्य वर्तते । यद्वा सर्वतः सर्वत्र देशे स्थितं तद्ब्रह्म पाणिपादाक्षिशिरःप्रभृत्यवयवोपेतं सत् लोके सर्वं वस्तु व्याप्य तिष्ठति इति । अणोरणुतरैः पाणिपादाद्यवयवोपेतैः अनन्तरूपैः सर्वत्र स्थितं सदव्याप्तरूपेण च सर्वमपि व्याप्य वर्तते ब्रह्मेति भावः ॥ १४ ॥

## सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम् ॥
## असक्तं सर्वभृच्चैव निर्गुणं गुणभोक्तृ च ॥ १४ ॥

त० टी०—किंच—सर्वेन्द्रियेति । सर्वाणीन्द्रियाणि ज्ञानकर्मात्मकानि बाह्यकरणानि, अन्तर्ज्ञानकरणे मनोबुद्धी, तेषां गुणानां शब्दादिवागादिसंकल्पाध्यवसायादीनामाभासः प्रकाशो येन तत्सर्वेन्द्रियगुणाभासं, नह्यात्मानं विनेन्द्रियविषयप्रकाशः संभवति । स्वयं च सर्वेन्द्रियविवर्जितम्, इन्द्रियवृत्तिं विनाऽपि सर्वं जानातीत्यर्थः । असक्तं देहादिसङ्गरहितम्, सर्वभृच्चैव देवमनुष्यादिदेहभरणसमर्थम् । तदुक्तम्—इतस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूतां महाबाहो ययेदं धार्य्यते जगदिति । तथा निर्गुणं गुणभोक्तृ च सत्त्वादिगुणरहितं सत्त्वादिगुणभोगसमर्थं च ॥ १४ ॥

म० टी०—'अध्यारोपापवादाभ्यां निःप्रपञ्चं प्रपञ्च्यते' इति न्यायमनुसृत्य सर्वप्रपञ्चाध्यारोपेणानादिमत्परं ब्रह्मेति व्याख्यातमधुना तदपवादेन न सत्तन्नासदुच्यत इति व्याख्यातुमारभते निरुपाधिस्वरूपज्ञानाय—सर्वेन्द्रियेति । परमार्थतः सर्वेन्द्रियविवर्जितं तन्मायया सर्वेन्द्रियगुणाभासं सर्वेषां बहिष्करणानां श्रोत्रादीनामन्तःकरणयोश्च बुद्धिमनसोर्गुणैरध्यवसायसंकल्पश्रवणवचनादिभिस्तत्तद्विषयरूपतयाऽवभासत इव सर्वेन्द्रियव्यापारैर्व्यापृतमिव तज्ज्ञेयं ब्रह्म "ध्यायतीव लेलायतीव" इति श्रुतेः । अत्र ध्यानं बुद्धीन्द्रि-

व्यापारोपलक्षणं, लेलायनं चलनं कर्मेन्द्रियव्यापारोपलक्षणार्थं, तथा परमार्थतोऽसक्तं सर्वसंबन्धशून्यमेव मायया सर्वभृच्च सदात्मना सर्वं कल्पितं धारयति पोषयतीति च सर्वभृत्, निरधिष्ठानभ्रमायोगात्। तथा परमार्थतो निर्गुणं सत्त्वरजस्तमोगुणरहितमेव गुणभोक्तृ च गुणानां सत्त्वरजस्तमसां शब्दादिद्वारा सुखदुःखमोहाकारेण परिणतानां भोक्तृ उपलब्धृ च तज्ज्ञेयं ब्रह्मेत्यर्थः ॥ १४ ॥

शं० टी०—ननु तर्हि क्षेत्रज्ञस्यैवेश्वरत्वं प्राप्तमिति चेत्तदर्थमेव खलु गीताशास्त्रारम्भः, यस्मात् क्षेत्रज्ञं चापि मां विद्धीति बोधयति। क्षेत्रज्ञलक्षणसंपत्तिमेव प्रतिपादयति—**सर्वेन्द्रियेति** चतुर्भिः श्लोकैः। स्वस्वविषयान् शब्दादीन् इन्दयन्ति बोधयन्तीतीन्द्रियाणि सर्वाणि श्रोत्रादीनि वागादीनि बाह्यान्यन्तरिन्द्रियं मनश्च। आत्मोपाधित्वाविशेषाद्बुद्धिश्चाध्यवसायलक्षणा। एतेषामिन्द्रियाणां गुणाः स्पष्टत्वास्पष्टत्वदुष्टत्वादुष्टत्वादयः श्रवणस्पर्शनवचनादानसंकल्पाध्यवसायादयोऽवभास्यन्ते येन तत्सर्वेन्द्रियगुणाभासं बुद्ध्यादयः स्वान्यप्राप्तप्रकाशाः स्वतो जडत्वात्तप्तायःपिण्डवद्बुद्ध्यादयो जडाः ज्ञेयत्वाद्घटादिवदिति बुद्ध्यादीनां तद्गुणानां यत्प्रकाशकं ज्ञातृ तद्ब्रह्मेत्यवगन्तुं शक्यते। यद्वा सर्वेन्द्रियगुणैः श्रवणादिभिरवभासत इति सर्वेन्द्रियगुणाभासमिन्द्रियाण्यधिष्ठातृप्रयोज्यानि प्रयोज्यकरणत्वाद्वास्यादिवदिति करणक्रियया क्षेत्रज्ञसद्भावोऽधिगम्यत इत्युक्तं सर्वेन्द्रियगुणाभासमिति। नन्वसङ्गस्याक्रियस्याऽत्मनः कथं करणप्रयोक्तृत्वमिति चेन्न, तस्यात्मन्यारोपितत्वेन विरोधानुपपत्तेः। यथा पद्मविकासः पद्मधर्मः सूर्ये आरोप्यते पद्मं विकासयति सूर्य इति, तथैवोपाधिधर्मः श्रवणादिरात्मन्यध्यस्यते आत्मसद्भावाधिगमाय आत्मा करणानि प्रवर्तयतीति। तेन तद्व्यापारैर्व्यापारीव भाति, यथा वृक्षचलनेन नभश्चलितमिव "ध्यायतीव लेलायतीव" इति श्रुतेः। ननु "पश्यत्यचक्षुः स शृणोत्यकर्णः" इत्यात्मनः स्वतः श्रवणादिरहितत्वेऽप्युपाधिद्वारा श्रवणादिक्रियावत्त्वं श्रूयते तत्कथं श्रवणादिव्यापाराभाव उच्यत इति चेन्न, श्रुतेस्तत्र तात्पर्याभावात्। 'वशी सर्वस्य लोकस्य स्थावरस्य चरस्य च' इतीश्वरस्य वशित्वं सर्वलोकनिग्रहानुग्रहकारित्वम्। तेन देहेन्द्रियादिवैशिष्ट्ये प्राप्ते तद्राहित्यं प्रतिपादयति श्रुतिः, नतु परमात्मनः क्रियावत्त्वं, तथात्वे "निष्कलं निष्क्रियं। वृक्ष इव स्तब्धो दिवि तिष्ठति। स्थाणुरचलोऽयं सनातनः। सर्वमावृत्य तिष्ठति" इत्यादिश्रुतिस्मृतिविरोधप्रसङ्गात्। तत आत्मा वृक्षे चलिते आकाशवदुपाधौ चलति सति चलतीव भाति, नतु स्वयं चलति निरवयवत्वात्पूर्णत्वान्निराकारत्वान्निरिन्द्रियत्वाच्च। तत एवात्मनः सद्भावाधिगमायाङ्गीकृतोपाधिसंबन्धराहित्यमेव बोधयितुमाह—**सर्वेन्द्रियविवर्जितमिति**। सर्वैरुक्तैरिन्द्रियैस्तदाश्रयेण च तत्कृतैः पुण्यपापादिकर्मभिरपि वर्जितं रहितमित्यर्थः। आत्मनो देहेन्द्रियादिसंबन्धासिद्धेर्हेतुमाह—**असक्तमिति**। निरवयवत्वाद्येन केनापि संयोगादिसंबन्धवर्जितमसक्तमसङ्गमित्यर्थः "असङ्गो ह्ययं पुरुषः" इति श्रुतेः। सर्वेन्द्रियविवर्जितमित्युक्त्या त्वात्मनो देहेन्द्रियादयः सन्ति किंत्वसङ्गत्वात्तैर्वर्जित इति प्राप्ते तत्सद्भावमप्यपनुदति—**निर्गुणमिति**। गुणाः गुणकार्यभूता देहेन्द्रियादयस्तद्रहितत्वान्निर्गुणम्'यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रं तदपाणिपादम्। नित्यं विभुं सर्वगतं सुसूक्ष्मम्" इति "अशरीरं शरीरेषु, । अशरीरो निरिन्द्रियोऽप्राणोऽमनाः सच्चिदानन्दमात्रः" इत्यादिश्रुतेः। एतेन सर्वतः पाणिपादमिति ब्रह्मणः सत्त्वाधिगमायैव पाणिपादाद्युपाध्युपन्यासो नतु स्वरूपाधिगमायेति सुसूचितं तथात्वे निर्गुणमिति निषेधानुपपत्तेः। यद्वा निर्गुणं गुणरहितं सतः केवलस्य गुणानभ्युपगमात्। नहि ब्रह्मणः सत्त्वादयो रूपादयो वा सुखादयो वा। यद्योगात्स्वयं गुणि स्यात्सत्त्वादिभिर्गुणित्वे गुणनाशाद्गुणिनोऽपि नाश इति नाशः प्रसज्येत। गुणिनो नित्यत्वे तद्गुणानामपि नित्यत्वमिति चेन्न, तन्नित्यत्वे मानाभावात्। "सत्यकामः सत्यसंकल्पः" इति श्रुतिरेव मानमिति चेन्न, अत्रत्यसत्यशब्दस्यामोघार्थकत्वेन नित्यत्वबोधकत्वाभावात् नित्यत्वे सृष्टिकामस्य सर्वदा सृष्टिप्रसङ्गात् विकल्पो नहि वस्तु इति गुणानां

गुणकार्याणामप्यवस्तुत्वश्रवणात् । नापि च रूपादय "अशब्दमस्पर्शम्" इति ब्रह्मणो रूपाद्यभावश्रवणात् । रूपादिमत्त्वे सावयवत्वेनानित्यत्वं प्रसज्येत । सुखादयस्तु ज्ञेयत्वेन क्षेत्रधर्मत्वात्तज्ज्ञातुरात्मनो न संभवन्ति । "साक्षी चेता केवलो निर्गुणश्च" इति श्रुत्यैव निर्गुणत्वावधारणाच्च गुणरहितमेव परं ब्रह्मेत्यर्थः । यद्यपि ब्रह्म स्वयं सत्त्वादिगुणतत्कार्यशून्यमेव, तथापि गुणभोक्तृ च गुणानां सत्त्वादिगुणकार्याणां देहेन्द्रियादीनां शब्दादीनां सुखादीनां च भोक्तृ, उपलब्धृबुद्ध्यादिसांनिध्यात् ज्ञेयजातं सर्वं जानातीत्यर्थः । उपलब्धृ ब्रह्मेत्युक्त्या ब्रह्मणः प्राप्तं परिच्छिन्नत्वं सद्वितीयत्वं चापनुदति—सर्वभृच्चेति । स्वस्मिन्नारोपितं सर्वमव्यक्तादि स्थूलान्तं स्वसत्तास्फूर्तिभ्यां सत्तावत् स्फूर्तिमच्च कृत्वा स्वमात्रत्वेन बिभर्तीति सर्वभृत्, प्रपञ्चे सर्वत्र सदन्वयाच्चिदन्वयाच्च । " सद्धीदं सर्वम् । चिद्धीदं सर्वम् " इति श्रवणाच्च सर्वं ब्रह्मैवेत्यर्थः " सत्यं चानृतं च सत्यमभवत् " इति श्रुतेः । ततो ब्रह्मव्यतिरिक्तवस्त्वभावान्न ब्रह्मणः परिच्छिन्नत्वं नापि सद्वितीयत्वमिति सिद्धम् ॥ १४ ॥

**श्री० टी०**—किंच—**सर्वेन्द्रियेति** । सर्वेषां चक्षुरादीनामिन्द्रियाणां गुणेषु रूपाद्याकारासु वृत्तिषु तत्तदाकारेण भासत इति तथा, सर्वाणीन्द्रियाणि गुणांश्च तत्तद्विषयानाभासयतीति वा; सर्वेन्द्रियैर्विवर्जितं च । तथा च श्रुतिः—" अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः " इत्यादि । असक्तं सङ्गशून्यम् । तथापि सर्वं बिभर्तीति सर्वभृत् सर्वस्याधारभूतम्, तदेव निर्गुणं सत्त्वादिगुणरहितं गुणभोक्तृ गुणानां सत्त्वादीनां भोक्तृ च पालकम् ॥ १४ ॥

**स० टी०**—अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते ॥ इति न्यायेन तज्ज्ञेयं विश्वाध्यारोपणेन च ॥ १ ॥ व्याख्यातमधुना विश्वापवादेन तदुच्यते ॥ बाह्यान्तरेन्द्रियातीतं वस्तुतो ब्रह्म चिद्घनम् ॥ २ ॥ बाह्यान्तरेन्द्रियाणां तत्सर्वेषामखिलैर्गुणैः ॥ संकल्पश्रवणाद्यैश्च मायया ह्यवभासते ॥ ३ ॥ सर्वेन्द्रियाणां व्यापारैर्ज्ञेयं व्यापृतवद्भवेत् ॥ ध्यायती वेति वाक्येऽपि ध्यानं लेलायनं तथा ॥ ४ ॥ बुद्धेः कर्मेन्द्रियाणां च व्यापार उपलक्ष्यते ॥ सर्वसंबन्धशून्यं सद्धारयत्यखिलं जगत् ॥ ५ ॥ मायया कल्पितं स्वस्मिन्सत्तया स्फुरणेन च ॥ वस्तुतस्तद्गुणैर्हीनं मायया गुणभोक्तृ च ॥६ ॥ सत्त्वादीनां परिणामवतां शब्दादिभिः पृथक् ॥ सुखाद्याकारतस्तेषामुपलब्धचिदद्वयम् ॥ ७ ॥ १४ ॥

**भा० टी०**—उपाधिभूतपाण्यादीन्द्रियाध्यारोपणं विना ज्ञेयस्य साक्षादेव तद्वत्ताभ्रमनिरासायाह—**सर्वेति** । सर्वाणि च तानीन्द्रियाणि श्रोत्रवागादीनि बुद्धीन्द्रियकर्मेन्द्रियाणि ज्ञेयोपाधित्वस्य तुल्यत्वादन्तःकरणोपाधिद्वारेणैव श्रोत्रादीनामप्युपाधित्वाच्च सर्वेन्द्रियग्रहणेनान्तःकरणे बुद्धिमनसी अपि गृह्येते । तथा-चान्तःकरणबहिःकरणोपाधिभूतैः सर्वेन्द्रियाणां गुणैरध्यवसायसंकल्पश्रवणवदनादिभिरवभासते तत् ज्ञेयं सर्वेन्द्रियव्यापारैर्व्यावृत्तमिव भवतीत्यर्थः "ध्यायतीव लेलायतीव " इति श्रुतेः । बुद्धौ ध्यायन्त्यां ध्यायतीव, चलन्त्यां च तस्यां चलतीव चिन्तनचलनाभ्यामन्तःकरणबहिःकरणव्यापार उपलक्ष्यते इति श्रुत्यर्थः । व्यापृतमेव ब्रह्मेति भ्रमनिराकरणायाह—सर्वेन्द्रियविवर्जितं विशेषेण कालत्रयेऽपि सर्वकरणरहितमतो न करणव्यापारैः वस्तुतो व्यापृतं तज्ज्ञेयमित्यर्थः । ननु " अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः । स वेत्ति वेद्यं नच तस्यास्ति वेत्ता तमाहुरग्र्यं पुरुषं महान्तम " इत्यादिमन्त्रेण साक्षादेव ज्ञेयस्य वेगवद्विहरणादिक्रियावत्ताप्रतीत्या कुतोऽस्य करणव्यापारैः व्यापृतत्वमेव न व्याख्यायत इति चेत् " ध्यायतीव " इतिश्रुत्यनुसारेण मन्त्रस्यापि सर्वेन्द्रियोपाधिगुणानुगुण्यभजनशक्तिमत् तज्ज्ञेयमित्येवंप्रदर्शनार्थत्वेन "अन्धो मणिमविन्दत्" इत्यादिमन्त्रार्थवादवदस्यार्थवादस्य अतः साक्षादेव जवनादिक्रियावत्त्वरूपेऽर्थे तात्पर्याभावेन प्रकृते प्रतिकूलताया अभावात् । सर्वकरणविवर्जितत्वादसक्तं सर्वसङ्गविनिर्मुक्तं " असङ्गो हि" इति श्रुतेः । वस्तुतः सर्वसङ्गविवर्जितमपि सर्वाधिष्ठानमित्याह—सर्वभृच्चैव स्वसत्तामात्रेणाधिष्ठानतया

सर्वं पुष्णातीत्यर्थः। तथाचायं प्रयोगः—विमतं सत्यध्यस्तं प्रत्येकं सदनुविद्धधीबोध्यत्वात्प्रत्येकं चन्द्रानुविद्धधीबोध्यचन्द्रभेदवदिति। तथाच सर्वस्यापि व्यावहारिकप्रातिभासिकपदार्थजातस्य निरास्पदत्वाभावात् विचार्यमाणे तस्य सदास्पदत्वात् सर्वभृज्ज्ञेयमित्यर्थः। सर्वाधिष्ठानत्वेऽपि वस्तुतस्तस्य निर्गुणत्वमाह—निर्गुणं गुणैः सत्त्वरजस्तमोभिः शून्यं तज्ज्ञेयम्। यद्यप्येवं तथापि मायया गुणभोक्तृ च। गुणानां सत्त्वादीनां शब्दादिद्वारेण सुखदुःखमोहाकारेण परिणतानां भोक्तृ उपलब्धृ ज्ञेयं ब्रह्मेत्यर्थः॥ १४॥

प० टी०—किंच—सर्वेन्द्रियेति। सर्वेषां चक्षुरादीनामिन्द्रियाणां गुणेषु रूपाद्याकारासु वृत्तिषु तत्तदाकारेण भासत इति तथा सर्वेन्द्रियैर्वर्जितं च। श्रुतिरपि—"अपाणिपादो जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः" इति। स्पष्टार्था। असक्तं सङ्गशून्यं तथापि सर्वं बिभर्तीति सर्वभृच्च तदेव निर्गुणं सत्त्वादिगुणरहितम्। गुणानां सत्त्वादीनां भोक्तृ पालकम्॥ १४॥

रा० टी०—किंच—सर्वेन्द्रियेति। सर्वेन्द्रियगुणाभासं तद्ब्रह्म सर्वाणीन्द्रियाणि गुणान् शब्दादिविषयांश्चाभासयति प्रत्याययति प्रत्येति वा सर्वेन्द्रियगुणाभासं भासृ दीप्तौ इत्यतः पचाद्यच्। प्राकृतानां भिन्नानां चेन्द्रियाणामभावात्सर्वेन्द्रियविवर्जितं, असक्तं निर्लेपम्। सर्वं भुङ्क्ते इति सर्वभुक् सर्वसंहर्तृ इति वा सर्वसारभोक्तृ इति वार्थः। सर्वभृच्चेति पाठान्तरं। गुणभोक्तृ च सर्वकल्याणगुणभोक्तृ चेत्यर्थः॥ १९॥

**बहिरन्तश्च भूतानामचरं चरमेव च।**
**सूक्ष्मत्वात्तदविज्ञेयं दूरस्थं चान्तिके च तत्॥ १५॥**

त० टी०—किंच बहिरिति—भूतानां पृथिव्यादीनां कार्यकारणत्वाभावात्तेभ्यो बहिर्विलक्षणं तेषामन्तश्च वर्तते आधारत्वात् पञ्चभूतात्मकशरीराद्विलक्षणं तदन्तर्गतं चेत्यर्थः। अचरं चरमेव च, स्वभावतोऽचरं स्थिरं देहित्वेन चरं, सूक्ष्मत्वादणुपरिमाणत्वात्तदात्मस्वरूपमविज्ञेयं देहे वर्तमानमपि संसारिभिर्देहात्पृथक्त्वेन नो विज्ञेयं, दूरस्थं चान्तिके च तत्। उत्क्रामानित्वादिहीनानामतिदूरस्थं, तद्वतां चान्तिके निकटे च वर्तते॥ १९॥

म० टी०—बहिरिति। भूतानां भवनधर्मणां सर्वेषां कार्याणां कल्पितानामकल्पितमधिष्ठानमेकमेव बहिरन्तश्च रज्जुरिव स्वकल्पितानां सर्पधारादीनां सर्वात्मना व्यापकमित्यर्थः। अत एव अचरं स्थावरं चरं च जङ्गमं भूतजातं तदेव अधिष्ठानात्मकत्वात्, कल्पितानां न ततः किंचिद्व्यतिरिच्यत इत्यर्थः। एवं सर्वात्मकत्वेऽपि सूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयमिदमेवमिति स्पष्टज्ञानार्हं न भवति। अत एवात्मज्ञानसाधनशून्यानां वर्षसहस्रकोट्याप्यप्राप्यत्वात्। दूरस्थं च योजनलक्षकोट्यन्तरितमिव तत्। ज्ञानसाधनसंपन्नानां तु अन्तिके च तदत्यव्यवहितमेव आत्मत्वात् "दूरात् सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" इत्यादिश्रुतिभ्यः॥ १९॥

शं० टी०—ननु नामरूपात्मकस्य द्वैतप्रपञ्चस्य सतः पृथक्तया प्रत्यक्षेणोपलभ्यमानत्वात्कथं सर्वं ब्रह्मैवेत्याकाङ्क्षायां न—बहिरन्तश्चाग्निना व्याप्तायसः पृथक् सत्ताभावाद्वह्निमात्रमेव यथा तथा बहिरन्तश्च ब्रह्मणा व्याप्तस्य जगतोऽपि स्वतः सत्ताभावाद्ब्रह्ममात्रत्वमेवेत्याह—बहिरिति। यन्मुमुक्षोर्ज्ञेयत्वेनोपक्रान्तं तद्ब्रह्म भूतानामव्यक्तादिस्थूलान्तानामन्तश्च बहिश्च वह्निरयःपिण्डमिव सर्वतो व्याप्य स्थितं भवति, नतु केनापि परिच्छिन्नं निरवयवत्वादतिसूक्ष्मत्वाच्चाकाशवन्न केनापि परिच्छेत्तुं शक्यते। नहि निरवयवमतिसूक्ष्मं चाकाशं घटादिभिः परिच्छेत्तुं शक्यं परमसूक्ष्मत्वेन तेषामविषयत्वात्। किंतु सर्वं बहिरन्तः सर्वतो व्याप्य तिष्ठति तद्वद्ब्रह्मापीत्यर्थः। तथाच श्रुतिः "तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः" इति, मया ततमिदं सर्वमित्युक्तं

च । नन्वयःपिण्डमग्निवद्भूतानामन्तर्बहिश्च व्याप्यावस्थितत्वेनापरिच्छिन्नत्वेऽपि ब्रह्मणस्त्वग्नेरयःपिण्डवद्व्याप्यांशो द्वैतभावो विद्यत एव । सत्येतस्मिन् कथमद्वैतसिद्धिरित्याशङ्कायां न—"प्राणो ह्येष सर्वभूतैर्विभाति" इति श्रवणाद्ब्रह्मविवर्तत्वाज्जगतः पृथक्सत्ताभावात्प्रत्यग्दृष्ट्या समीक्ष्यमाणे सर्वं ब्रह्मैवेत्याह—अचरमिति । यत्क्रियावत्तच्चरं तद्विलक्षणमचरं स्थावरं जङ्गमं च सर्वभूताभासं ब्रह्मैव रजताभासो यथा शुक्तिस्तद्वदित्यर्थः "सर्वं ह्येतद्ब्रह्म" इति श्रुतेः । ननु सर्वात्मकं परिपूर्णमद्वितीयं च ब्रह्म तर्हि सर्वैरिदमिति गृह्येत, तत्कथं न गृह्यत इत्याकाङ्क्षायामाह—सूक्ष्मत्वादिति । यद्यपि सर्वात्मकं परिपूर्णमद्वितीयं च परं ब्रह्म तथापि स्वयमाकाशादप्यातिसूक्ष्मं "सूक्ष्मात्सूक्ष्मतरं नित्यम्" इति श्रुतेः । महदव्यक्तादेरपि सूक्ष्मत्वात्तद्ब्रह्मविज्ञेयं स्वात्मभूतमपि श्रुत्याचार्येश्वरात्मप्रसादशून्यानामविशुद्धबुद्धीनां विज्ञातुमशक्यमेव यथान्धानां स्वरूपं तद्वत् । इममेवार्थं विस्पष्टयति—दूरस्थमिति । विवेकवैराग्यशमदमादिनियतसाधनशून्यानां कृतश्रवणानामपि मलिनान्तरात्मनां स्वरूपमपि तद्ब्रह्म दूरस्थं चक्रवालादतिदूरगतमेव भवति जन्मशतकोट्यापि प्राप्तुमशक्यमित्यर्थः । यदशुद्धबुद्धीनां दूरतरं तदेव ब्रह्म विद्वदनुग्रहवतां प्रशान्तात्मनामन्तिके । चकारोऽवधारणार्थः । समीप एव हृदये स्वात्मनाऽवगन्तुं शक्यमित्यर्थः । "दूरात्सुदूरे तदिहान्तिके च । पश्यत्स्विहैव निहितं गुहायाम्" इति श्रुतेः ॥ १९ ॥

**श्री० टी०**—किंच—**बहिरिति** । भूतानां चराचराणां स्वकार्याणां बहिश्चान्तश्च तदेव सुवर्णमिव कटककुण्डलादीनाम्, जलतरङ्गाणामन्तर्बहिश्च जलमिव । अचरं स्थावरं चरं जङ्गमं यद्भूतजातं तदेव कारणात्मकत्वात्कार्यस्य । एवमपि सूक्ष्मत्वाद्रूपादिहीनत्वात्तदविज्ञेयमिदं तदिति स्पष्टज्ञानार्हं न भवति । अत एवाविदुषां योजनलक्षान्तरितमिव दूरस्थं च सविकारायाः प्रकृतेः परत्वात् । विदुषां पुनः प्रत्यगात्मत्वादन्तिके च तन्नित्यं सान्निहितम् । तथा च मन्त्रः—"यदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः" इति । एजति चलति नैजति न चलति । तत् उ अन्तिके इति च्छेदः ॥ १९ ॥

**स० टी०**—सर्वेषां कल्पितानां तत्कार्याणां पारमार्थिकम् ॥ अधिष्ठानतया व्याप्तं बहिरन्तस्त्वनावृतम् ॥१॥ स्थावरं जङ्गमं यद्यद्भूतजातं प्रकल्पितम् ॥ तत्सर्वं ब्रह्म चिन्मात्रं न ततो व्यतिरिच्यते ॥२॥ कल्पितानामधिष्ठानस्वरूपत्वं न भिन्नता ॥ एवं सर्वात्मकत्वेऽपि दुर्लक्ष्यत्वादरूपि तत् ॥ ३ ॥ दुर्विज्ञेयमतोऽज्ञानां देहाद्यात्मधियां नृणाम् ॥ वर्णकोटिसहस्रैस्तदप्राप्यत्वात्सुदूरगम् ॥ ४ ॥ विदुषां स्वात्मरूपेण नित्यप्राप्तं समीपगम् ॥ ५ ॥ १९ ॥

**भा० टी०**—इतोऽपि ज्ञेयस्य ब्रह्मणोऽस्तित्वं ज्ञातव्यमित्याशयेनाह—**बहिरिति** । त्वक्पर्यन्तं देहमात्मत्वेनाविद्याकल्पितमपेक्ष्य तमेवावधिं कृत्वा बहिरुच्यते । तथा प्रत्यगात्मानमपेक्ष्य देहमेवावधिं कृत्वान्तरुच्यते । तथाच भूतेभ्यो बहिर्बाह्यं विषयाद्यात्मकं भूतानां चराचराणामन्तर्मध्ये प्रत्यग्भूतं ज्ञेयमित्यर्थः । मध्ये प्राप्तमभावं वारयति—अचरं चरमेव च । यन्मध्ये भूतात्मकनानाविधदेहात्मना भासमानमपि तदेव ज्ञेयं यथा रज्जौ भासमानः सर्पो रज्जुरेव तथा सति ज्ञेये भासमानं ज्ञेयमेवेत्यर्थः । यद्येवं तर्हि सर्वैरिदमिति किमर्थं न विज्ञेयमिति चेत्तत्राह—सूक्ष्मत्वात्तदविज्ञेयम् । यथा आम्रादिगते रूपे चक्षुषा दृश्यमानेऽप्ययोग्यत्वात् तत्स्थितं रसादि तेन न दृश्यते, तथा सर्वात्मकमपि ज्ञेयं सर्वस्मिन् ज्ञातेऽप्याकाशवदतीन्द्रियत्वात् तज्ज्ञेयमविज्ञेयम् । एतेन घटादिज्ञानेन ब्रह्मज्ञानमपि स्यात् घटाद्यात्मकत्वात् ब्रह्मण इति शङ्कापि निरस्ता । अत एवाविदुषां तत्प्राप्तिसाधनशून्यानामविज्ञाततया दूरस्थं वर्षसहस्रकोट्याप्यप्राप्यत्वात् । अन्तिके च यत् विदुषां तु "आत्मैवेदं सर्वं ब्रह्मैवेदं सर्वम्" इत्यादिप्रमाणतो नित्यविज्ञाततया स्वात्मभूतत्वात् व्यवधान-

रहितमित्यर्थः । तथाच श्रुतिः "तदेजति तन्नैजति तद्दूरे तद्वन्तिके। तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः । दूरात्सुदूरे तदिहान्तिके च पश्यत्स्विहैव निहितं गुहायाम्" इत्याद्या ॥ १५ ॥

पु० टी०—किंच—बहिरन्तश्चेति । भूतानां चराचराणां बहिर्बाह्यतोऽन्तश्च तदेव सुवर्णमिव कुण्डलादीनाम् । अचलं स्थावरजङ्गमं भूतजातं तदेव कारणात्मकत्वात्कार्यस्य । एवमपि सूक्ष्मत्वाद्रूपादिगुणातीतत्वादविज्ञेयम् । इदं तदित्याकारेण ज्ञानार्हं न भवत्यत एवाविदुषामतिदूरतः स्थितं, विदुषां पुनः प्रत्यगात्मत्वादन्तिके नित्यं संनिहितम् । यद्वा व्यापकत्वाद्धटान्तर्गताकाशवद्दूरेऽन्तिकेऽपि तदेव । श्रुतिरपीशावास्योपनिषत्सु—"तदेजति तन्नैजति तद्दूरे तद्वन्तिके । तदन्तरस्य सर्वस्य तदु सर्वस्यास्य बाह्यतः" इति । भाष्यम्—तदात्माख्यं वस्त्वेजति 'एजृ कम्पने' कम्पते । तथा तन्नैजति निष्कम्पमस्ति । "अनेजदेकं मनसो जवीयः" इति तत्रैवोक्तम् । तथा दूरेऽन्तिके च तदेव व्यापकत्वात् । अत एव तदस्य जगतोऽन्तरस्ति तदु तथा सर्वस्यास्य बाह्यतः । यथा घटान्तर्बहिरेक आकाशोऽस्ति ॥ १५ ॥

रा० टी०—किंच—बहिरन्त इति । भूतानां सर्वप्राणिनां बहिरन्तश्च परं ब्रह्म तिष्ठतीत्यनुषज्जते । अन्यथा भावराहित्यादचरं सर्वदेशेषु चरणाद्गमनाच्चरं सूक्ष्मत्वादप्रतिघत्वात्तद्ब्रह्माविज्ञेयमग्राह्यमिन्द्रियाविषयः सर्वगतत्वाद्दूरे आन्तिके समीपे च स्थितं तत् ॥ १६ ॥

**अविभक्तं च भूतेषु विभक्तमिव च स्थितम् ॥**
**भूतभर्तृ च तज्ज्ञेयं ग्रसिष्णु प्रभविष्णु च ॥ १६ ॥**

**त० टी०—किंच—अविभक्तमिति** । देवमनुष्यादिभूतेषु ज्ञातृत्वैकरूपतया वर्तमानमात्मवस्तु अविभक्तं भेदेन निर्देष्टुमशक्यम् । आत्मस्वरूपयाथात्म्यमविदुषां देवमनुष्याद्याकारमेव विजानतां विभक्तमिव च स्थितम् । भूतभर्तृ च । भूतानां प्राणवद्देहानां धारणकर्तृ च तज्ज्ञेयं ततोऽर्थान्तरत्वेन ज्ञेयं, भूतभर्तृत्वाद्ग्रसिष्णु अन्नादिग्रसनशीलम्, एवंभूतमपि मुक्तिदशायां प्रभविष्णु च प्रकर्षेण बहुधा भवनशीलम् "स एकधा भवति त्रिधा भवति पञ्चधा भवति सप्तधा नवधा चैव पुनश्चैकादशधा स्मृतः शतं च दश चैकश्च सहस्राणि च विंशति" इति श्रुतेः ॥ १६ ॥

म० टी०—यदुक्तमेकमेव सर्वमावृत्य तिष्ठतीति तद्विवृणोति प्रतिदेहमात्मभेदवादिनां निरासाय—अविभक्तमिति । भूतेषु सर्वप्राणिषु अविभक्तमभिन्नमेकमेव तत्, न तु प्रतिदेहं भिन्नं व्योमवत् सर्वव्यापकत्वात् । तथापि देहतादात्म्येन प्रतीयमानत्वात् प्रतिदेहं विभक्तमिव च स्थितं, औपाधिकत्वेनापारमार्थिको व्योम्नीव तत्र भेदावभास इत्यर्थः । ननु भवतु क्षेत्रज्ञः सर्वव्यापक एकः, ब्रह्म तु जगत्कारणं ततो भिन्नमेवेति नेत्याह—भूतभर्तृ च भूतानि सर्वाणि स्थितिकाले बिभर्तीति, तथा प्रलयकाले ग्रसिष्णु ग्रसनशीलं, उत्पत्तिकाले प्रभविष्णु च प्रभवनशीलं सर्वस्य, यथा रज्ज्वादिः सर्पादेर्मायाकल्पितस्य । तस्माद्यज्जगतः स्थितिलयोत्पत्तिकारणं ब्रह्म तदेव क्षेत्रज्ञं प्रतिदेहमेकं ज्ञेयं न ततोऽन्यदित्यर्थः ॥ १६ ॥

शं० टी०—यदुक्तमचरं चरमेव चेति ब्रह्मणः सर्वात्मकत्वं तन्न, सर्वत्र तल्लक्षणादर्शनात् । जङ्गमेष्वेव प्राणिशरीरेष्वहं ममेदमित्यादिवेदनलक्षणं चेतनत्वमवगम्यते, नतु स्थावरदेहेष्वतः परिच्छिन्नमेव ब्रह्मेत्याशङ्कायां न, ब्रह्मणः परिपूर्णस्यैव प्राणिनामन्तःकरणेष्वतिनिर्मलेषु स्फूर्तिर्न तु तदतिरिक्तेषु, यथा सर्वगतस्याप्याकाशस्य निर्मलेषु जलादिष्वेव प्रतिबिम्बता, यथैवातपाग्नेः सर्वगतस्यापि सूर्यकान्तेष्वेव स्फुरणं, यथा सर्वगतस्यापि रूपस्य चक्षुःषूपलम्भो नत्वन्यत्र । नैतावतामुष्य परिच्छित्तिः संभवति, तथैव ब्रह्मणोऽपि परिच्छिन्नवद्भानं न तत्प्रामाणिकं परिच्छेदे मानाभावात् । अस्त्येव प्रत्यक्षप्रमाणमिति चेन्न, प्रादेशमात्रश्चन्द्रः

नीलं नभ इत्यादौ तद्व्यभिचारात्। 'यदल्पं तन्मर्त्यम्' इति न्यायेन परिच्छिन्नत्वे त्वनित्यत्वप्रसङ्गात्ततः "सत्यं ज्ञानमनन्तं ब्रह्म" इति श्रवणाद्ब्रह्म पूर्णमेवेत्याह–**अविभक्तमिति**। विभक्तेषु नामरूपगुणक्रियाजातिस्वभावविशेषैः परस्परं भिन्नेषु ब्रह्मादिस्तम्बान्तेषु प्राणिष्वहमहमित्यहंपदार्थत्वेन प्रतीयमानत्वात्तैर्विभक्तैः प्राणिशरीरैर्विभक्तमिव स्थितं च भवति। तेनैव सांख्या आत्मनोऽसङ्गचिद्रूपत्वं परस्परभिन्नत्वमनेकत्वं च मन्यन्ते। तदसत्। श्रुतिन्यायविरोधात्। भ्रान्तानां घटादिभिराकाशवत्परिच्छिन्नमिव प्रतीयमानमपि तद्ब्रह्म स्वयं स्वरूपेणाविभक्तमेव, नतु भूतैर्विभक्तुं शक्यते निरवयवत्वादतिसूक्ष्मत्वादविषयत्वाच्च, तैर्विभक्तत्वे सावयवत्वानित्यत्वादिदोषप्रसङ्गात्, सर्वप्रपञ्चस्फूर्त्यभावप्रसङ्गाच्च; श्रुतिविरोधश्च प्रसज्यते, यतः "एको देवः सर्वभूतेषु गूढः। आकाशवत्सर्वगतश्च नित्यः। पूर्णं पुरुषेण सर्वम्। तदेतद्ब्रह्मापूर्वम्" इत्यादिश्रुतयो ब्रह्मण एकत्वं सर्वगतत्वं नित्यत्वमद्वितीयत्वं च नियमेन प्रतिपादयन्त्यतोऽविभक्तमेव, सर्वप्रकाशकत्वेनाप्यविभक्तमेव भवति। सौरालोकेनाविभक्तेनैव खलु विभक्तं घटपटादि भास्यं सर्वं व्याप्य ब्रह्माण्डं प्रकाश्यते नतु विभक्तेन, तथात्वे सर्वत्र सर्वेषां सर्वपदार्थस्फुरणासंभवात्। तद्वद्ब्रह्मणाप्यविभक्तेनैव बहिरन्तश्च सर्वतो व्याप्तेन स्थूलं सूक्ष्मं चाव्यक्तमहदादिदृश्यं सर्वं प्रकाश्यते। परिच्छिन्नत्वे बाह्यपदार्थभानाभावप्रसङ्गात्। भाति हि सर्वत्र सर्वं सर्वस्य "तस्य भासा सर्वमिदं विभाति" इति श्रुतेः। तत एव विभक्तमिव च स्थितमित्युक्तं भगवतापि। तेन ब्रह्मापरिच्छिन्नमेवेति सिद्धम्। तत एव ब्रह्मणोऽपरिच्छिन्नत्वाद्द्वितीयत्वसिद्धये जगतो ब्रह्मविवर्तत्वं सूचयति–**प्रभविष्णु**वति। अज्ञानदशायां तदेव ज्ञेयं ब्रह्माध्यात्मादिरूपेण प्रभवितुं रज्जुरिवारोपिताकारेण प्रत्येतुं शीलमस्यास्तीति प्रभविष्णु भ्रान्तानां प्रपञ्चाकारेण ब्रह्मैव भातीत्यर्थः। "सत्यं चानृतं च सत्यमभवत्" इति श्रुतेः। भूतभर्तृ च तदेव ब्रह्म स्वस्मिन्नारोपितानां व्योमादिभूतानां सत्तास्फूर्तिप्रदानेन भरणं करोति भूतभर्तृ च भवति। स्वस्मिन्नारोपितं सर्वं मूढव्यवहारार्थं बिभर्तीत्यर्थः। "व्यक्ताव्यक्तं भरते विश्वमीशः" इति श्रुतेः। तदेव ब्रह्म ग्रसिष्णु च प्रबोधदशायामधिष्ठानयाथात्म्यसंदर्शनकाले त्वारोपितं सर्वं स्वात्मना ग्रसितुं स्वस्मिन्नेव तिरोभावयितुं शीलमस्यास्तीति ग्रसिष्णु च भवति। "परेऽव्यये सर्व एकी भवन्ति" "सर्वे वेदा यत्रैकं भवन्ति" इति श्रवणाद्रज्जुरिवारोपितं सर्वं स्वात्मनोपसंहृत्य विपरीतभावमुत्सृज्य बोधमयीमविकारिणीं केवलामद्वैतां स्वसत्तां भजतीत्यर्थः॥ १६॥

**श्री० टी०–**किंच–**अविभक्तमिति**। भूतेषु स्थावरजङ्गमात्मकेषु अविभक्तं कारणात्मना अभिन्नं कार्यात्मना विभक्तं भिन्नमिवावस्थितं च। समुद्राज्जातं फेनादि समुद्रादन्यन्न भवति। तत्पूर्वोक्तं ज्ञेयं भूतानां भर्तृ च पोषकं स्थितिकाले, प्रलयकाले च ग्रसिष्णु ग्रसनशीलं, सृष्टिकाले च प्रभविष्णु नानाकार्यात्मना प्रभवनशीलम्॥ १६॥

**स० टी०–**यदुक्तमेकमेवेदं सर्वमावृत्य तिष्ठति॥ इत्येतद्विवृणोतीशो भेदवादनिवृत्तये॥ १॥ अभिन्नं सर्वभूतेषु व्योमवद्व्यापकं महत्॥ देहतादात्म्यरूपेण भासमानतया भ्रमात्॥ २॥ प्रतिदेहं विभागं तत्संप्राप्तमिव च स्थितम्॥ औपाधिकतयाऽध्यस्तभेदाभासेन का क्षतिः॥ ३॥ वास्तवाद्वैतचिद्धातोः क्षेत्रज्ञस्यात्मनो विभोः॥ ननु क्षेत्रज्ञ एकोऽस्तु व्यापकः सर्वजन्तुषु॥ ४॥ ब्रह्म तस्माद्विभिन्नं स्याज्जगज्जन्मादिकारणम्॥ मैवं ब्रह्मैव चिन्मात्रं क्षेत्रज्ञो ज्ञेयमद्वयम्॥ ५॥ स्थितौ बिभर्ति भूतानि लये ग्रसनशीलवत्॥ सृष्टौ सर्वप्रभवनशीलं ज्ञेयं तदद्वयम्॥ ६॥ यथा रज्ज्वादि सर्पादेः कल्पितस्य मृषात्मनः॥ जनिस्थितिलयाधारं तथा ब्रह्माखिलस्य तत्॥ ७॥ १६

**भा० टी०–**किं चेतोऽपि ज्ञेयास्तित्वमित्याह–**अविभक्तमिति**। अविभक्तं विभागशून्यं प्रतिदेहं व्योम-

वदेकं तद्देहे मानाभावाद्भिन्नत्वे च घटवदनात्मत्वापातात् । तथाच श्रुतिः—"एकमेवाद्वितीयम् । नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्याद्या । तेन प्रतिदेहं भिन्न आत्मेति सांख्यादिमतं श्रुतिस्मृतिविरुद्धं नादर्तव्यम् । कथं तर्हि देहभेदे भेदबुद्धिः इत्याशङ्क्य कल्पनयेत्याह—भूतेषु सर्वप्राणिषु विभक्तमिव च स्थितं मिथ्याभूतभेदवत्प्रतीतं जलमात्रेषु चन्द्रवत् देहेष्वेव विभाव्यमानत्वात् "एक एव तु भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्" इति श्रुतेः । एवं ज्ञेयस्य प्रत्यगात्मत्वेनास्तित्वमभिधाय परमेश्वरात्मनास्तित्वमाह—भूतभर्तृ च स्थितिकाले तज्ज्ञेयम् । भूतानि बिभर्ति धारयति पालयति चेति, तत्प्रलयकाले तदेव ग्रसिष्णु ग्रसनशीलं, उत्पत्तिकाले प्रभविष्णु प्रभवनशीलं, यथा कल्पितसर्पादीनां स्थितिकाले रज्ज्वादिरेव तान् बिभर्ति, बाधकाले च ग्रसिष्णुरुत्पत्तिकाले च प्रभविष्णुरित्यर्थः । तेन कार्यकारणत्वस्य वस्तुत्वाद्वैतमिति न शङ्कनीयम् ॥ १६ ॥

**प० टी०**—किंच—अविभक्तमिति । भूतेषु नानारूपात्मकेषु कारणात्मना विभक्तमेकं तरङ्गावर्तकल्लोलेष्वेकं जलमिवास्ति । यथा वा तरङ्गादीनामुत्पत्तिस्थितिलयानामुदकमेवाश्रयस्तद्वद्भूतभर्तृ स्थितिकाले पोषकं, ग्रसिष्णु संहारकाले ग्रसनशीलं, सृष्टिकाले प्रभविष्णु नानाकार्यात्मना प्रभवनशीलं तदेव ज्ञेयम् ॥ १६ ॥

**रा० टी०**—किंच—अविभक्तमिति । भूतेषु नानाविधप्राणिष्वविभक्तमेव विभक्तमिव स्थितम्, अज्ञानां तथा प्रतीतमिति यावत् । भूतभर्तृ भूतानां भर्तृ धारणपोषणकर्तृ तद्ब्रह्म ज्ञेयम् । ग्रसिष्णु प्रलये सर्वभक्षकं, प्रभविष्णु सृष्टिकाले सर्वोत्पादकं च ॥ १७ ॥

**ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ॥**
**ज्ञानं ज्ञेयं ज्ञानगम्यं हृदि सर्वस्य धिष्ठितम् ॥ १७ ॥**

**त० टी०**—किंच—ज्योतिषामिति । ज्योतिषां मणिद्युमणिदीपादीनामपि ज्योतिः प्रकाशकं, मणिद्युमणिदीपादयो विषयेन्द्रियसन्निकर्षविरोधितमोनिवर्तकाः, आत्मधर्मभूतज्ञानं तु आदित्यादिसर्वं प्राकृतं ज्योतिः प्रकाशयति, तेन विना सर्वप्रकाशानुपपत्तेः । यतस्तमसः परमुच्यते तमःशब्दावाच्या प्रकृतिस्तस्याः परं श्रेष्ठमुच्यते, अपरिणामित्वात् । प्रकृतेस्तु परिणामिस्वभावत्वात् । अतो ज्ञानं ज्ञानैकस्वरूपमिति ज्ञेयं ज्ञातव्यं ज्ञानगम्यं ज्ञानैरुक्तैरमानित्वादिभिर्ज्ञानसाधनैर्गम्यं प्राप्यं, सर्वस्य मनुष्यादेर्हृदि धिष्ठितमधिष्ठातृतयाऽवस्थितम् । विष्ठितमिति पाठे विशेषेण स्थितमित्यर्थः ॥ १७ ॥

**म० टी०**—ननु सर्वत्र विद्यमानमपि तन्नोपलभ्यते चेत्तर्हि जडमेव स्यात् । न, स्वयंज्योतिषोऽपि तस्य रूपादिहीनत्वेनेन्द्रियाद्यग्राह्यत्वोपपत्तेरित्याह—ज्योतिषामपीति । तत् ज्ञेयं ब्रह्म ज्योतिषामवभासकानामादित्यादीनां बुद्ध्यादीनां च बाह्यानामान्तराणामपि ज्योतिरवभासकं चैतन्यज्योतिषो जडज्योतिरवभासकत्वोपपत्तेः । "येन सूर्यस्तपति तेजसेद्धः तस्य भासा सर्वमिदं विभाति" इत्यादिश्रुतिभ्यश्च । वक्ष्यति च "यदादित्यगतं तेजः" इत्यादि । स्वयंजडत्वाभावेऽपि जडसंसृष्टं स्यादिति नेत्याह—तमसो जडवर्गात् परमविद्यातत्कार्याभ्यामपारमार्थिकाभ्यामसंस्पृष्टं पारमार्थिकं तद्ब्रह्म सदसतोः संबन्धायोगात् । उच्यते "अक्षरात्परतः परः" इत्यादि श्रुतिभिर्ब्रह्मवादिभिश्च । तदुक्तम् 'निःसङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा । आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते ॥' "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेश्च । आदित्यवर्णमिति स्वभाने प्रकाशान्तरानपेक्षं सर्वस्य प्रकाशकमित्यर्थः । यस्मात्तत्स्वयंज्योतिर्जडासंस्पृष्टमत एव तज्ज्ञानं प्रमाणजन्यचेतोवृत्त्यभिव्यक्तसंविद्रूपम् । अत एव तदेव ज्ञेयं ज्ञातुमर्हमज्ञातत्वात्, जडस्याज्ञातत्वाभावेन ज्ञातुम-

१ विष्ठितम्—इति पाठः ।

नर्हत्वात् । कथं तर्हि सर्वैर्न ज्ञायते तत्राह—ज्ञानगम्यं पूर्वोक्तेनामानित्वादिना तत्त्वज्ञानार्थदर्शनान्तेन साधनकलापेन ज्ञानहेतुतया ज्ञानशब्दितेन गम्यं प्राप्यं न तु तद्भिन्नेत्यर्थः । ननु साधनेन गम्यं चेत्तत् किं देशान्तरव्यवहितं नेत्याह—हृदि सर्वस्य विष्ठितं सर्वस्य प्राणिजातस्य हृदि बुद्धौ विष्ठितं सर्वत्र सामान्येन स्थितमपि विशेषरूपेण तत्र स्थितमभिव्यक्तं जीवरूपेणान्तर्यामिरूपेण च, सौरं तेज इवादर्शसूर्यकान्तादौ । अव्यवहितमेव वस्तुतो भ्रान्त्या व्यवहितमिव सर्वभ्रमकारणाज्ञाननिवृत्त्या प्राप्यत इवेत्यर्थः ॥ १७ ॥

शं० टी०—प्रभविष्णुत्वादेर्ब्रह्मलक्षणस्य प्रकृतेरप्यव्याकृतस्य संभवात्तस्या अपि ब्रह्मत्वे प्राप्ते परत्वादिविशेषणैः परिहरन् ब्रह्मणोऽवगत्यर्थं स्वरूपं तत्प्राप्तिनियतसाधनं तदुपलब्धिस्थानं च बोधयति—**ज्योतिषामिति ।** तज्ज्ञेयं ब्रह्म तमसः प्रकृतेरज्ञानाज्जगद्बीजात्परं भिन्नमेव । यतोऽज्ञोऽहमित्यज्ञानं स्वस्मिन्नध्यस्तं प्रत्यग्लक्षणेन ब्रह्मणाऽनुभूयते ततो ज्ञातृज्ञेयाद्भिन्नमेव भवति तत "एव अक्षरात्परतः परः" इति, "आदित्यवर्णं तमसः परस्तात्" इति "अव्यक्तात्तु परः पुरुषः" इत्यादिश्रुतिभिर्ब्रह्म जगद्बीजादज्ञानादव्याकृताद्भिन्नमित्येवोच्यते । तमसो भिन्नत्वे ब्रह्मणो विशेषणान्तरमाह—**ज्योतिरिति ।** हेतुगर्भितमिदं विशेषणं ब्रह्म तमसः प्रकृतेर्भिन्नं ज्योतिष्ट्वात् यन्नैवं तन्नैवं यथा घट इति युक्त्यापि ब्रह्मणोऽव्याकृताद्भिन्नत्वमेव सिध्यति । ज्योतिष्ट्वं प्रकाशस्वरूपत्वं प्रकाशकत्वं वा । 'यो जागरमन्वभूवं यः स्वप्नमद्राक्षं यः सुखमस्वाप्सं सोऽहमस्मि' इति व्यक्ताव्यक्तप्रकाशकत्वेनात्मनस्तदुभयभिन्नत्वे प्रत्यक्षम् आत्मा व्यक्ताव्यक्ताभ्यां कार्यकारणाभ्यां भिन्नस्तदुभयसाक्षित्वाद्यन्नैवं तन्नैवमित्यनुमानं च "अन्यदेव तद्विदितात्" इत्यादिश्रुतिश्च प्रमाणम् । ननु सूर्यादेर्बहिरन्तर्बुद्ध्यादेश्चाप्यस्ति ज्योतिष्ट्वमितरप्रकाशकत्वं कथं ब्रह्मण एवेत्याशङ्कायां, न, तेषामपि प्रकाशकत्वाद्ब्रह्मणो नातिव्याप्तिरित्याह—**ज्योतिषामिति ।** परप्रकाशकानामप्यादित्यादीनां बुद्ध्यादीनां च ज्योतिषां तद्ब्रह्म ज्योतिः प्रकाशकं भवति । आत्मज्योतिषैव खलु चैतन्यात्मकेन प्रकाशवन्तः सूर्यादयो बुद्ध्यादयश्च तप्तायःपिण्डवत्स्वातिरिक्तं प्रकाशयन्ति नतु स्वतः "येनादित्यस्तपति तेजसा भ्राजसा च । श्रोत्रस्य श्रोत्रं मनसो मनः" इति, "तस्य भासा सर्वमिदं विभाति" इति च श्रुतेः । एतेन बहिरन्तरर्थप्रकाशकानामादित्यादीनां मनोबुद्ध्यादीनां च भौतिकज्योतिषां प्रकाशकमाविर्भावतिरोभाववृद्धिक्षयपरिच्छेदादिरहितं नित्यं निरतिशयं स्वप्रकाशमप्राकृतज्योतिःस्वरूपं ब्रह्मेत्युपदिष्टं भवति । एवं मुमुक्षूणां ज्ञातव्यं ब्रह्मस्वरूपं 'न सत्तन्नासदुच्यते' इति अतन्निषेधमुखेन बोधयित्वा तदेव साकल्येन ज्योतिषामपि तज्ज्योतिरिति अप्राकृतज्योतिःस्वरूपं ब्रह्मेत्युपदिश्य नैतावन्मात्रोपदेशेन ब्रह्मसाक्षात्कारः सिध्यति विना विशेषोपदेशेनेति मत्वाऽस्मत्प्रत्ययार्थतया विद्वद्भिरनुभूयमानं बुद्धिगुहायामव्याकृताकाशे देदीप्यमानं बुध्यादिसाक्षिलक्षणं सर्वान्तरं सर्वप्रकाशकं कालत्रयाबाध्यमसङ्गमविक्रियं प्रत्यग्रूपं यदखण्डचैतन्यं तदेव ब्रह्मेति साक्षाद्विधिमुखेन बोधयितुमाह—**ज्ञानमिति ।** बहिरन्तः सर्वत्र परिपूर्णं स्वप्रकाशं सर्वप्रकाशकमनाधारमनाधेयमखण्डितमवाङ्मनसगोचरमनाद्यन्तं नित्यकूटस्थं निर्विशेषं नित्यं शुद्धं निराभासं यत्केवलं ज्ञानं तदेव ब्रह्म मुमुक्षोर्यतेः स्वात्मना ज्ञेयमवगन्तव्यमित्यर्थः । "सत्यं ज्ञानमनन्तं ब्रह्म । विज्ञानमानन्दं ब्रह्म" इति च श्रुतेः । 'ज्ञानं विशुद्धं विमलं विशोकम्' इति स्मृतेश्च । एवं यत्सर्वेन्द्रियगुणाभासं यत्सर्वभृत् यद्गुणभोक्तृ यत्प्रभविष्णु यद्भूतभर्तृ यद्ग्रसिष्णु यत्तमसः परं यच्च ज्योतिषां ज्योतिस्तद्ब्रह्मेति तटस्थलक्षणेन परोक्षतयोपदिष्टस्य वस्तुन एवापरोक्षत्वसिद्धये ज्ञानं ब्रह्मेति स्वरूपलक्षणेन ज्ञातव्यं ब्रह्मोपदिश्याधुना तदधिगमाय नियतं साधनं सूचयितुमाह—**ज्ञानगम्यमिति ।** सदसद्विवेकवैराग्यशमदमसंन्यासामानित्वाद्यन्तरङ्गसाधनसंपत्त्या ब्रह्मविद्गुरुसन्निधौ नित्यनिरन्तरसमनुष्ठितश्रवणमनननिदिध्यासाद्यनुष्ठानेन समुत्पन्नमनाद्यविद्यावासनाजातं संक्षिप्य सर्वविकल्पनिर्मुक्तं यज्ज्ञानं तेनैवैकेन श्रुत्याचार्येश्वरात्मप्रसादसंजातेन गम्यमवगम्यं ज्ञानेनाधिगम्यं नतु सांख्येन न योगेन न कर्मणा नाप्युपास्त्या

त्वाधिगम्यं भवति, किंतु सर्वाङ्गीणं स्वारोग्यसुखं यथा तथा स्वज्ञानेनैव स्वात्मना ब्रह्म ज्ञातव्यमित्यर्थः "मनसैवानुद्रष्टव्यम् । मनसैवेदमाप्तव्यम्" इति च श्रुतेः । एवं वस्तुस्वरूपं तत्प्राप्तिसाधनं चोक्त्वा तदुपलब्धिस्थानमाह—हृदीति । सर्वस्य ब्रह्मादिस्तम्बान्तस्य प्राणिजातस्य हृदि हृदये बुद्धिगुहायामव्याकृताकाशेऽधिष्ठितं सर्वप्राणिना बुद्धितद्व्यापारतदवस्थासाक्षितयाहऽमहमित्यहंपदप्रत्ययार्थत्वेन विशिष्य स्थितं तत्र विशिष्योपलभ्यमानं प्रत्यग्रूपं ब्रह्म ज्ञातव्यमित्यर्थः । यद्यपि ब्रह्माकाशवत्सर्वगतं परिपूर्णं तथापि निरवयवत्वान्निराकारत्वादतिसूक्ष्मत्वाच्च सर्वत्र नोपलभ्यते, किंतु सर्वगतोऽप्यातपाग्निः शुद्धस्फटिक इव निर्मलायां बुद्धावेवोपलभ्यते "गुहाहितं प्राणिभिर्गुह्यमानमाविःसन्निहितं गुहाचरम्" इति च श्रवणात्तत्रस्थं ब्रह्म ज्ञातव्यमित्युच्यते । हृदि सर्वस्य धिष्ठितमिति हृच्छब्दवाच्या बुद्धिरेव ब्रह्मोपलब्धिस्थानमित्यर्थः ॥ १७ ॥

**श्री० टी०**—किंच—**ज्योतिषामिति** । ज्योतिषां चन्द्रादित्यादीनामपि तज्ज्योतिः प्रकाशकं तत् "येन सूर्यस्तपति तेजसेद्धः । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ॥" इत्यादि श्रुतेः । अत एव तमसोऽज्ञानात्परं तेनासंस्पृष्टमुच्यते । "आदित्यवर्णं तमसः परस्तात्" इत्यादि श्रुतेः । ज्ञानं च तदेव बुद्धिवृत्तावभिव्यक्तं, तदेव रूपाद्याकारेण ज्ञेयं च, ज्ञानेन गम्यं च, अमानित्वमदम्भित्वमित्यादिलक्षणेन पूर्वोक्तेन ज्ञानसाधनेन प्राप्यमित्यर्थः । ज्ञानगम्यं विशिनाष्टि सर्वस्य प्राणिमात्रस्य हृदि धिष्ठितं विशेषेणाप्रच्युतस्वरूपेण नियन्तृतया स्थितम् । धिष्ठितमिति पाठेऽधिष्ठाय स्थितमित्यर्थः ॥ १७ ॥

**स० टी०**—सर्वत्र विद्यमानं सन्नोपलभ्यत एव चेत् ॥ तर्हि ज्ञेयं तमोरूपं स्यादित्यत्राह माधवः ॥ १ ॥ तज्ज्योतिर्ब्रह्म सर्वेषां सूर्यादीनां प्रभावताम् ॥ बाह्यानामान्तराणां च बुद्ध्यादीनां प्रकाशकम् ॥२॥ चैतन्यज्योतिषो भास्यं जडज्योतिर्यतो भवेत् ॥ अविद्यातमसोऽप्यस्तात्परं संसर्गवर्जितम् ॥ ३ ॥ यस्माज्ज्ञेयं स्वयं ज्योतिर्जडासंस्पृष्टमस्ति तत् ॥ निस्सङ्गस्य ससङ्गेन कूटस्थस्य विकारिणा ॥ ४ ॥ आत्मनोऽनात्मना योगो वास्तवो नोपपद्यते ॥ अत एव हि तज्ज्ञानं संविद्रूपं हृदि स्थिम् ॥ ५ ॥ प्रमाणजमनोवृत्तावभिव्यक्तं भ्रमापहम् ॥ अज्ञातत्वात्तदेवास्ति ज्ञातुं योग्यं चिदद्वयम् ॥ ६ ॥ जडस्याज्ञानताभावाज्ज्ञातुमर्हत्वमेव नो ॥ कथं तर्हि न सर्वैस्तज्ज्ञायते चेति चेच्छृणु ॥ ७ ॥ अमानित्वादिना तत्त्वज्ञानहेतुतयाऽमुना ॥ ज्ञानसंशब्दितेनैव गम्यं प्राप्यं न तद्विना ॥ ८ ॥ ननु साधनगम्यं चेत्तर्हि किं दूरदेशगम् ॥ मैवं भोः प्राणिजातस्य सर्वस्यैव हृदि स्थितम् ॥ ९ ॥ सामान्येनापि सर्वत्र स्थितं यद्यपि सर्वगम् ॥ विशेषेण तथाप्यत्र हृद्यभिव्यक्तमेव तत् ॥ १० ॥ जीवान्तर्यामिरूपेण सौरं तेज इवोदके ॥ वस्तुतः स्वात्मरूपं सद्भ्रान्त्या दूरमिव स्थितम् ॥ ११ ॥ भ्रान्त्यज्ञाननिवृत्त्या तत्संप्राप्यत इवेत्यपि ॥ १२ ॥ १७ ॥

**भा० टी०**—सर्वत्र विद्यमानं सन्नोपलभ्यते चेज्ज्ञेयं तर्हि तमः इति भ्रमनिवृत्त्यर्थमाह—**ज्योतिषामिति** । ज्योतिषामादित्यादीनां बुद्ध्यादीनामपि तज्ज्ञेयं ज्योतिस्तेषामात्मचैतन्यज्योतिरिद्धदीप्तिमत्वात् "येन सूर्यस्तपति तेजसेद्धः । न यत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वम् । तस्य भासा सर्वमिदं विभाति ।" 'यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम्' इत्यादिश्रुतिस्मृतिभ्यः ज्ञेयस्य ज्योतिःस्वरूपत्वेऽपि तमःस्पृष्टत्वभ्रमं वारयति । तमसो ज्ञानात्परमसंस्पृष्टमुच्यते "आदित्यवर्णं तमसः परस्तात्" इत्यादिश्रुतिभिः कथ्यत इत्यर्थः । किंच ज्ञायतेऽनेनेति ज्ञानममानित्वादिज्ञेयम्, ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिनोक्तं ज्ञेयमेव सत् ज्ञातं ज्ञानफलमिति ज्ञानगम्यमुच्यते । ज्ञायमानं तु ज्ञेयमतो ज्ञेयपदेन ज्ञानगम्यत्वान्न पौनरुक्त्यम् ज्ञानं ज्ञेयं ज्ञानगम्य-

मित्येतत्त्रयं सर्वस्य प्राणिजातस्य हृदि बुद्धौ विष्ठितं विशेषेण स्थितम् । धिष्ठितामितिपाठस्त्वाचार्यैरनादृतत्वादपपाठः । दुःसंपादनबुद्ध्या प्राप्तावसादस्य ज्ञानादेः प्रकटीकरणार्थं ज्ञानादेः दुःसंपादनबुद्ध्या प्राप्तावसादस्यार्जुनस्याश्वासनार्थे वा ज्ञेयप्रवचनोत्तरं भगवतेदमुक्तं हृदि विष्ठितमिति । बुद्धावेव तेषामनुभूयमानत्वात् । ननु तदेव वृत्तावभिव्यक्तं संविद्रूपं ज्ञानं रूपाद्याकारेण ज्ञेयं सर्वस्य प्राणिजातस्य हृदि बुद्धौ विष्ठितं सर्वत्र सामान्येन स्थितमपि विशेषरूपेण तत्र स्थितमभिव्यक्तजीवरूपेणान्तर्यामिरूपेण चेत्याचार्यैः कुतो न व्याख्यातमिति चेत्सुगमत्वात्स्वोक्तार्थे स्वरसाधिक्यादुक्तार्थस्य बहिरन्तश्च भूतानामित्यादावन्तर्भावाच्चेति गृहाण । अन्तर्भावप्रकारश्च बहिर्भूतेभ्यो बाह्यं रूपाद्याकारमन्तर्भूतानां हृदि अभिव्यक्तजीवरूपेणान्तर्यामिरूपेण च स्थितं ज्योतिषामपि तज्ज्योतिर्वृत्त्यभिव्यक्तसंविदादिरूपेण बुद्ध्यादीनां प्रकाशकमित्येवंरीत्या बोध्यः ॥ १७ ॥

प० टी०–किंच–ज्योतिषामिति । ज्योतिषां सूर्याग्निचन्द्रादीनां ज्योतिः प्रकाशकम् । न हि सूर्येण सूर्यो ज्ञायते किंतु चित्प्रयुक्तेन चक्षुषेत्यर्थः । आत्मज्योतिरेवायं पुरुषस्तथा "यस्य भासा सर्वमिदं विभाति" इतिश्रुतेः । यद्वा ज्योतिषां सूर्यादीनां मध्ये ज्योतीरूपत्वेन स्थितम् "येन सूर्यस्तपति योऽसावादित्यो हिरण्मयः पुरुषः सोऽसावहम्" इत्यादिश्रुतेः । किंच तमसोऽज्ञानात्परं परस्तात् "आदित्यवर्णं तमसः परस्तात्" इतिश्रुतेः । ज्ञानं बुद्धिवृत्त्यभिव्यक्तं तदेवं रूपाद्याकारेण ज्ञेयम् । यच्चोक्तम् 'ज्ञानस्याभ्यन्तरे ज्ञेयं माधुर्यं पयसो यथा' इति । ज्ञानगम्यममानित्वादिज्ञानसाधनगम्यम् । सर्वभूतजातस्य हृदि विष्ठितं विशेषेणाप्रच्युतरूपेण नियन्तृत्वेन स्थितम् ॥ १७ ॥

रा० टी०–किंच–ज्योतिषामिति । तद्ब्रह्म ज्योतिषां सूर्यादीनामपि ज्योतिः प्रकाशशक्तिप्रदम् । तमस अव्यक्तान्मृत्योः अज्ञानाद्वा परमतिक्रान्तमुच्यते "तमसः परस्तात्" इतिश्रुत्यादावित्यर्थः । ज्ञानं प्रकाशस्वरूपं, ज्ञेयं स्वेन ज्ञातव्यरूपं स्वप्रकाशमित्यर्थः । जीवानां स्वप्रकाशत्वेऽपि तस्येशाधीनत्वात्, अस्यान्यानपेक्षितत्वात् । स्वकर्मकत्वस्य क्रियात्वकर्मत्वयोरेकत्र विरोधेन दुर्घटत्वाच्च तदुक्तिर्भगवतो महिमेति यत्प्रभाव इत्यस्योत्तरं भवतीति भावः । ज्ञानगम्यमपरोक्षज्ञानेन मुक्तौ प्राप्यं सर्वस्य हृदि विष्ठितं विशेषेण स्थितम् । सर्वगतत्वेन दूरस्थमन्तिके च तत्सर्वमावृत्य तिष्ठतीत्युक्तावपि हृद्यल्पदेशे स्थित्युक्तिर्युक्ता । ॐ अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न, निचाय्यत्वादेवं व्योमवच्चेति ॐ । अन्यभावव्यावृत्तेश्चेत्यादिसूत्रेणाणुरूपेणावस्थितेरुक्तत्वात् । अत एव चरमित्युक्तिरप्युपपन्नेति भावः ॥ १८ ॥

**इति क्षेत्रं तथा ज्ञानं ज्ञेयं चोक्तं समासतः ॥**
**मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते ॥ १८ ॥**

त० टी०–उक्तं क्षेत्रादिकमधिकारिविशेषफलसहितमुपसंहरति–इति क्षेत्रमिति । इत्येवमुक्तप्रकारेण महाभूतान्यहङ्कार इत्यादिना संघातश्चेतना धृतिरित्यन्तं क्षेत्रयाथात्म्यं, तथा अमानित्वमित्यादि तत्त्वज्ञानार्थदर्शनमित्यन्तं ज्ञेयस्य क्षेत्रज्ञस्य ज्ञानसाधनं ज्ञानं ज्ञेयं च, अनादिमत्परमित्यादिना हृदि सर्वस्य धिष्ठितमित्यन्तेन ज्ञेयस्य क्षेत्रज्ञस्य च तत्त्वयाथात्म्यं संक्षेपेण मयोक्तम् । एतच्छास्त्राधिकारी पूर्वाध्यायोक्तो मद्भक्त एवेत्याह–मद्भक्त इति । एतत् क्षेत्रयाथात्म्यं क्षेत्रज्ञस्य प्राप्त्युपायं क्षेत्रज्ञस्वरूपयाथात्म्यं च विज्ञाय मद्भावायोपपद्यते मम यो भावो जन्ममरणादिराहित्यं तत्प्राप्तये योग्यो भवतीत्यर्थः ॥ १८ ॥

म० टी०–उक्तं क्षेत्रादिकमधिकारिणं फलं च वदन्नुपसंहरति–इतीति । इति अनेन पूर्वोक्तेन प्रकारेण क्षेत्रं महाभूतादि धृत्यन्तं, तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनान्तं, ज्ञेयं च अनादिमत्परं ब्रह्म विष्ठि-

तमित्यन्तं श्रुतिभ्यः स्मृतिभ्यश्चाकृष्य त्रयमपि मन्दबुद्ध्यनुग्रहाय मया संक्षेपेणोक्तम् । एतावानेव हि सर्वो वेदार्थो गीतार्थश्च । अस्मिंश्च पूर्वाध्यायोक्तलक्षणो मद्भक्त एवाधिकारीत्याह—मद्भक्तः मयि भगवति वासुदेवे परमगुरौ समर्पितसर्वात्मभावो मदेकशरणः स एतद्यथोक्तं क्षेत्रं ज्ञानं ज्ञेयं च विज्ञाय विवेकेन विदित्वा मद्भावाय सर्वानर्थशून्यपरमानन्दभावाय मोक्षायोपपद्यते मोक्षं प्राप्तुं योग्यो भवति "यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः" इति श्रुतेः । तस्मात्सर्वदा मदेकशरणः सन्नात्मज्ञानसाधनान्येव परमपुरुषार्थलिप्सुरनुवर्तेत तुच्छविषयभोगस्पृहां हित्वेत्यभिप्रायः ॥ १८ ॥

**शं० टी०**—उपक्रान्तमुपसंहरति—इतीति । इत्येवं समासतः संक्षेपेणैव क्षेत्रं क्षेत्रज्ञस्यात्मनः क्षेत्रतद्विकारतद्धर्म तत्कर्मतदवस्थासंबन्धापवादेन विशुद्धत्वसिद्ध्येकप्रयोजनं महाभूतादि धृत्यन्तं हेयवस्तुस्वरूपं तथा ज्ञानं श्रवणमननादिद्वारात्मज्ञानसिद्ध्येकसाधनममानित्वादिलक्षणं ज्ञेयं चानादिमत्परं ब्रह्मेत्यादिना ज्ञानमित्यन्तेन ग्रन्थेन तटस्थस्वरूपलक्षणाभ्यां प्रत्यगभिन्नस्य ब्रह्मणः स्वरूपमप्युक्तं जिज्ञासोर्मुमुक्षावतः स्वस्वरूपाधिगमाय सम्यक्प्रतिपादितमित्युक्त्वा एवं विशेषणविशिष्ट एवात्राधिकारीत्यत्राधिकारिलक्षणं वदन्नुक्तलक्षणं ब्रह्म स्वात्मना विदितवतो विदुषस्तद्वेदनस्य फलमाह—**मद्भक्त इत्यादिना** । मत्कर्मकृन्मत्परम इति ये तु सर्वाणि कर्माणीत्याद्युक्तलक्षणलक्षितो यः स मद्भक्तः मद्भजनेनैव शुद्धान्तःकरणसन् सदसद्विवेकसंन्यासशमदमाद्यमानित्वादिसाधनसंपन्नो भूत्वा ब्रह्मविदनुग्रहात् क्षेत्रक्षेत्रज्ञयोः स्वरूपं सम्यग्विविच्य क्षेत्रतद्धर्मादीन् परित्यज्य विशुद्धं केवलं चिन्मात्रं क्षेत्रज्ञलक्षणमेतन्निर्विशेषं परं ब्रह्म इदमेवाहमिति स्वात्मना विज्ञाय तत्तादात्म्यापत्त्या तत्रैवाहंबुद्धिं प्रतिष्ठाप्य ब्रह्मविद्यतिर्मद्भावाय मम ब्रह्मणो भावो मद्भावः कैवल्यं निर्विशेषब्रह्मात्मनावस्थानलक्षणं तस्मै उपपद्यते, पतितेऽस्मिन्नुपाधौ पूर्णात्मना तिष्ठतीत्यर्थः ॥ १८ ॥

**श्री० टी**—उक्तं क्षेत्रादिकमधिकारिफलसहितमुपसंहरति—इतीति । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं, तथा ज्ञानं च अमानित्वादि तत्त्वज्ञानार्थदर्शनान्तम्, ज्ञेयं च अनादिमत्परं ब्रह्मेत्यादिविष्ठितमित्यन्तम्, वसिष्ठादिभिर्विस्तरेणोक्तं सर्वमपि मया संक्षेपेणोक्तम् । एतच्च पूर्वाध्यायोक्तलक्षणो मद्भक्तो विज्ञाय मद्भावाय ब्रह्मत्वाय उपपद्यते योग्यो भवति ॥ १८ ॥

**स० टी०**—उक्तक्षेत्रादिकस्येशः फलं चैवाधिकारिणम् ॥ स्तुवन्नेवोपसंहारं करोत्याद्यः परः पुमान् ॥१॥ महाभूतादिधृत्यन्तं क्षेत्रमित्थमुदाहृतम् ॥ अमानित्वादि च प्रोक्तं विंशतिज्ञानसाधनम् ॥ २ ॥ ज्ञेयं ज्ञेयं यदित्यादि प्रोक्तमित्यन्तमद्वयम् ॥ एतत्त्रयं समासेन मयाकृष्य श्रुतेः स्मृतेः ॥ ३ ॥ एतावान्सर्ववेदार्थो गीतार्थश्चेत्युदाहृतम् ॥ कोऽत्राधिक्रियते सम्यग्दर्शनेऽत्रोच्यतेऽधुना ॥ ४ ॥ वासुदेवे भगवति मयि सर्वगुरौ हरौ ॥ यः समर्पितसर्वात्मभावो मच्छरणः पुमान् ॥ ५ ॥ स मद्भक्तो यथोक्तं तत्सम्यग्दर्शनलक्षणम् ॥ विदित्वा मम भावाय मोक्षायैवोपपद्यते ॥ ६ ॥ यस्मान्मद्भक्त एवात्र तत्त्वज्ञानेऽधिकारवान् ॥ तस्माद्भोगस्पृहां त्यक्त्वा मदेकशरणः सदा ॥ ७ ॥ अमानित्वादि संपाद्य तत्त्वज्ञानपरो भवेत् ॥ ८ ॥ १८ ॥

**भा० टी०**—प्रतिज्ञातार्थमुपपाद्योपसंहरति—इतीति । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनावसानं ज्ञेयं च ज्ञेयं यत्तदित्यादि तमसः परमुच्यते इत्येवमन्तमुक्तं हृदि सर्वस्य विष्ठितमित्यन्तमित्याधुनिकानामुक्तिस्तु नादर्तव्या । ज्ञानादेर्ज्ञेयप्रवचनपरत्वेऽस्वरसस्योक्तत्वात् । वसिष्ठादिभिर्यद्विस्तरेण गीतं तत्समासतः संक्षेपतो मया प्रतिपादितम् एतावानेव सर्ववेदार्थो गीतार्थश्चातः संक्षिप्य भगवतोपसंहृत्योक्तः । यथोक्तसम्यग्दर्शने कोऽधिकारीत्यत आह—मयि सर्वेश्वरे सर्वज्ञे परमगुरौ भगवति वासुदेवे यच्छृणोति स्पृशति पश्यति आस्वादयति जिघ्रति वा सर्वमेव श्रीभगवान्वासुदेव इत्येवंग्रहाविष्ट-

बुद्धितया समर्पितसर्वात्मभावो मद्भक्तः एतादृशः सन्नेतद्यथोक्तं क्षेत्रज्ञानज्ञेयानां याथात्म्यं विज्ञाय मद्भावाय परमात्मभावाय मोक्षायोपपद्यते योग्यो भवतीत्यर्थः ॥ १८ ॥

प० टी०—उक्तक्षेत्रादिकमुपसंहरन्नाह—इतीति । इत्येवं क्षेत्रं महाभूतादिधृत्यन्तं तथा ज्ञानममानित्वादि तत्त्वज्ञानार्थदर्शनान्तं, ज्ञेयमनादि मत्परं ब्रह्मेत्यादि हृदि सर्वस्य विष्ठितमित्यन्तं, वसिष्ठादिभिर्विस्तरेणोक्तम् । मया तु समासेन संक्षेपेणोक्तम् । एतत्तु पूर्वाध्यायोक्तलक्षणो मद्भक्तो विज्ञाय मद्भावाय ब्रह्मत्वायोपपद्यते योग्यो भवति । तदुक्तम् 'अग्नौ वपद्घृतं सर्वमग्निरेव भवेद्यथा । विदितं विदितं वेद्यं संविदेव भवेत्तथा ॥ कर्पूरो दीपसंसर्गाद्दीप एव भवेद्यथा । वेद्यवेदनसंसर्गात्संविदेव भवेत्तथा ॥ संविदितं संविदितं संविन्मयमेव भवति संवेद्यम् । अग्नावाहितमाहितमग्निमयं किं न जायते काष्ठम्' इति ॥ १८ ॥

रा० टी०—उक्तमुपसंहृत्य तज्ज्ञानं स्तौति—इति क्षेत्रमिति । महाभूतानीत्यादिना क्षेत्रम्, इच्छेत्यादिना तद्विकाराश्चेत्यपि ग्राह्यम् । ज्ञानशब्दोऽत्र ज्ञप्तितत्साधनोभयपरः अमानित्वमित्यादिना ज्ञानसाधनस्य तत्त्वज्ञानार्थदर्शनमित्यत्र भगवदपरोक्षज्ञप्तेश्चोक्तत्वात् । ज्ञेयं यत्तदित्यादिना ज्ञेयं चोक्तं समासतः संक्षेपेण । मद्भावाय मयि स्थितये उपपद्यते योग्यो भवति । यद्यप्यत्र ज्ञेये ब्रह्मणि प्रतिपादिते केन साधनेनेदं बुद्ध्यारूढं भवेदित्याकाङ्क्षायां ज्ञेयमित्यादिकं पूर्वमुक्त्वा अमानित्वमित्यादिकं तज्ज्ञानसाधनं पश्चाद्वाच्यं, तथापि साधनस्येच्छादिरूपक्षेत्रविकारेष्वन्तर्भावज्ञापनार्थत्वात् यत्प्रभावपदोक्तप्रेरकत्वस्यालौकिकप्रमेयस्य बुद्ध्यारोहे साधनानामप्युपयोगाच्च साधनानन्तरमेव यत्प्रभावश्चेत्यस्य वाच्यत्वात् तत्प्रसङ्गेन ज्ञेयस्यापि पश्चादेवोक्तिः । नन्वथापि उद्देशक्रमानुसारेण यतश्च यदित्येतत्प्रथममुक्त्वा स च यो यत्प्रभावश्चेत्येतत्पश्चाद्वक्तव्यमित्येतदप्यनेनैव निरस्तं, विकारान्तर्भावज्ञापनायेच्छाद्युक्त्यनन्तरममानित्वादेर्ज्ञानसाधनस्योपोद्घातप्रक्रियया पूर्वमेव वाच्यत्वेन तदनन्तरमेवोक्तदिशा स च यो यत्प्रभावश्चेत्युक्तस्य वाच्यत्वात् । बहुत्वाच्च स च यो यत्प्रभावश्चेत्येतदुक्त्यपेक्षया यतश्च यदित्येतदुक्तेरल्पत्वात्तत्सर्वोक्त्यनन्तरं पश्चाद्यतश्च यदित्यस्योक्तिः ॥ १९ ॥

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ॥**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसंभवान् ॥ १९ ॥**

त० टी०—तदेवं सप्तमाध्यायोक्ते ये परापरप्रकृतिशब्दाभिहिते शक्ती द्वे तेऽत्र क्षेत्रक्षेत्रज्ञशब्दाभ्यां विवृते । इदानीं क्षेत्रक्षेत्रज्ञावेव प्रकृतिपुरुषौ तयोरनादित्वमनादिसंसर्गं प्रकृतेश्च सर्वविकारोपादानत्वं चाह—प्रकृतिमिति । त्रिगुणात्मिकाऽचेतना क्षेत्रलक्षणाऽपरा शक्तिर्या प्रागुक्ता सा प्रकृतिरुच्यते । या तु तद्विलक्षणा चेतनरूपा क्षेत्रज्ञलक्षणा परा प्रकृतिरित्युक्ता सेह पुरुष इत्युच्यते । प्रकृतिं पुरुषं च उभावपि अनादी एव विद्धि, न विद्यते आदिः कारणं ययोस्तौ तथा, प्रकृतेः सर्वविकारोपादानत्वात् तस्या अपि प्रकृत्यन्तराङ्गीकारेऽनवस्थापत्तेश्च । पुरुषस्यापि मदंशत्वात् 'न जायते म्रियते वा विपश्चित्' इत्यजत्वाभिधानाच्चानादित्वं निर्विवादम् । विकारान् जीवानां बन्धहेतुभूतानिच्छाद्वेषादीन्गुणांश्चामानित्वादिकान् ज्ञानद्वारा मोक्षहेतुभूतान् प्रकृतिसंभवान् विद्धि । अनादिकर्मात्मिकाऽविद्यानिमित्तेन जीवसंसृष्टेयं प्रकृतिः क्षेत्रात्मना परिणता सती स्वविकारभूतैरिच्छाद्वेषादिभिः पुरुषस्य संसृतिहेतुर्भवति । सैवामानित्वादिभिः सत्त्वकार्यरूपैः स्वगुणैः पुरुषस्य मोक्षहेतुर्भवतीति भावः ॥ १९ ॥

म० टी०—तदनेन ग्रन्थेन तत् क्षेत्रं यच्च यादृक्चेत्येतद्व्याख्यातं, इदानीं यद्विकारि यतश्च यत्, स च यो यत्प्रभावश्चेत्येतावद्व्याख्यातव्यम् । तत्र प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन यद्विकारि यतश्च यदिति प्रकृ-

तिमित्यादिद्वाभ्यां प्रपञ्च्यते—स च यो यत्प्रभावश्चेति तु पुरुष इत्यादिद्वाभ्यामिति विवेकः। तत्र सप्तमे ईश्वरस्य द्वे प्रकृती परापरे क्षेत्रक्षेत्रज्ञलक्षणे उपन्यस्य एतद्योनीनि भूतानीत्युक्तं तत्रापरा प्रकृतिः क्षेत्रलक्षणा परा तु जीवलक्षणेति तयोरनादित्वमुक्त्वा तदुभययोनित्वं भूतानामुच्यते—**प्रकृतिमिति** । प्रकृतिर्मायाख्या त्रिगुणात्मिका पारमेश्वरी शक्तिः क्षेत्रलक्षणा या प्रागपरा प्रकृतिरित्युक्ता । या तु परा प्रकृतिर्जीवाख्या प्रागुक्ता स इह पुरुष इत्युक्त इति न पूर्वापरविरोधः । प्रकृतिं पुरुषं च उभावपि अनादी एव विद्धि न विद्यते आदिः कारणं ययोस्तौ । तथा प्रकृतेरनादित्वं सर्वजगत्कारणत्वात् । तस्या अपि कारणसापेक्षत्वेऽनवस्थाप्रसङ्गात् । पुरुषस्यानादित्वं तद्धर्माधर्मप्रयुक्तत्वात् कृत्स्नस्य जगतः जातस्य हर्षशोकभयसंप्रतिपत्तेः । अन्यथा कृतहान्यकृताभ्यागमप्रसङ्गात् । यतः प्रकृतिरनादिरतस्तस्या भूतयोनित्वमुक्तं प्रागुपपद्यत इत्याह—विकारांश्च षोडश पञ्चमहाभूतान्येकादशेन्द्रियाणि च गुणांश्च सत्त्वरजस्तमोरूपान् सुखदुःखमोहान् प्रकृतिसंभवानेव प्रकृतिकारणकानेव विद्धि जानीहि ॥ १९ ॥

**शं० टी०**—सर्वेषां वेदान्तानां गीतायाश्चार्थोऽत्र पर्यवसितस्तथापि सप्तमे एतद्योनीनि भूतानीति यत्परावरप्रकृत्योः संसारकारणत्वं जन्मादि तत्कारणत्वं च सूचितं तदिदानीं कार्यकारणकर्तृत्व इति यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गममिति विस्पष्टयितुं क्षेत्रक्षेत्रज्ञयोर्विवेके कृते सत्यप्यविदितं प्रकृतिपुरुषयोरनादित्वं, विकाराणां गुणानां च प्रकृतिकार्यत्वं, क्षेत्रस्य क्षेत्रज्ञे प्रतीयमानसंसारस्य गुणाध्यासमूलकत्वं, संसृतेः प्रकृतिधर्मत्वमात्मनो निर्विकारत्वमसङ्गत्वमकर्तृत्वमभोक्तृत्वमसंसारित्वं च विस्पष्टीकर्तुमुत्तरग्रन्थ आरभ्यते—**प्रकृतिमिति** । भिन्ना प्रकृतिरष्टधा अपरेयमिति या प्रतिपादिता सर्वविकारकारणमीश्वरस्य शक्तिस्त्रिगुणात्मिका माया तां प्रकृतिं पुरुषं च पुरुषस्त्वविद्योपाधिकः क्षेत्रज्ञः प्रकृतिं विद्धि मे परामित्युक्तलक्षणः राज्यसंबन्धान्मनुष्यस्य राजत्वं प्रभुत्वं च यथा तथा प्रकृतिसंबन्धात् क्षेत्रज्ञस्यापि प्रकृतित्वं जीवत्वं च प्रत्यक्त्वेन चेतनत्वेन प्रकाशकत्वेन च मूलप्रकृतेरुत्कृष्टत्वात्परा प्रकृतिरिति संज्ञां प्राप्तो यः पुरुषस्तं च । तावेतौ प्रकृतिपुरुषावनादी न विद्यते आदिः कारणं वाप्यादिमत्त्वं वा प्राक्कालपरिच्छेदो ययोस्तावनादी सर्वस्यादिभूतौ स्वयमादिरहिताविवेत्येवकारस्तयोरपीश्वरवन्नित्यत्वावधारणार्थः । नित्यं हीश्वरस्येश्वरत्वं तच्चेशितव्यापेक्षमीशेशितव्ययोर्नित्यत्वे सत्येवेश्वरस्येश्वरत्वं नित्यं स्यान्नान्यथा । ननु नक्षत्रान्तरयोगेनार्कस्य नक्षत्रित्ववत्प्रकृतेरनित्यत्वेऽपीश्वरस्य क्षणे क्षणे जायमानप्रकृत्यन्तरयोगे सतीश्वरस्य नित्यत्वसंभवात् किमर्थं तयोर्नित्यत्वाभ्युपगम इति चेन्न, "अजामेकाम्" इतिमूलप्रकृतेरजत्वैकत्वश्रवणात्प्रकृत्यन्तरायोगात् "प्रधानक्षेत्रज्ञपतिर्गुणेशः" इति परमात्मनः प्रकृतिद्वयेश्वरत्वश्रवणाच्च । तत ईश्वरत्वनिमित्तयोस्तयोरपीश्वरवन्नित्यत्वमेव । तयोरनित्यत्वे त्वीश्वरस्य क्वचिदीशितव्याभावे ईश्वरत्वं भज्येत, सृष्ट्यादौ पुण्यपापाद्यनपेक्ष्य निर्निमित्तं च जीवानां नानायोनिप्राप्तिप्रसङ्गस्तथा सुखदुःखादिकल्पना च स्यात्, तथात्वे जगत्स्रष्टुरीश्वरस्य वैषम्यनैर्घृण्ये च प्रसज्येयातां, प्रकृत्या बद्धो बद्धस्तन्मुक्तो मुक्त इति नियतयोर्बन्धमोक्षयोरव्यवस्था च स्यात्तथा सति बद्धानामपि मुक्तिर्मुक्तानामपि जन्मादिबन्धः प्रसज्येत बन्धमोक्षप्रतिपादकशास्त्रानर्थक्यं च स्यात् । तयोरनित्यत्वे एवमाद्यनर्थपरंपरा संभवति । ननु पुरुषशब्दवाच्यस्य जीवस्याधुनिकत्वान्नैवोक्तानर्थागम इति चेन्न, प्रत्यक्षादिप्रमाणविरोधापत्तेः । प्रत्यक्षेण खलु जीवानां सुखदुःखादिवैचित्र्यमुपलभ्यते तद्वैचित्र्यं कर्म निबन्धनमेव नतु पुरुषस्वातन्त्र्यनिबन्धनम् । तथात्वे सर्वेषां तदैकरूप्यापत्तेः तदन्यथानुपपत्त्या च धर्माधर्मनिमित्तः संसारो ह्यनुमीयते, ततोऽनुमानेन "यत्कर्म कुरुते तदभिसंपद्यते" इत्यादिश्रुतिभिरपि सुखादेः कर्मैकनिबन्धनत्वमभ्युपगन्तव्यम् । तद्धेतुरपि कर्म जन्मान्तरीयमेव नत्वाधुनिकम् । तर्णकादौ कर्मादर्शनात् कर्मणामनाधुनिकत्वे तत्कर्तुर्जीवस्य नित्यत्वमेवेति सिद्धम् "न जीवो म्रियते" इतिश्रुतेः । "अजामेकाम्" इति । "न जीवो म्रियते" इत्यादिश्रुतिभिस्तयोर्नित्यत्वे न काचिदनुपपत्तिरस्ति । नन्वीश्वरवत्प्रकृत्योरपि नित्यत्वे तद्वत आत्मनः कदापि मोक्षो न स्याद्ब्रह्मणोऽप्यद्वितीयत्वं च न सिध्यति ब्रह्मणस्त्वद्वितीयत्वं

तद्विज्ञानवतो मोक्षं च प्रतिपादयतः शास्त्रस्याप्यप्रामाण्यं च स्यादिति चेन्न, सर्वस्याप्येतस्य मायाकार्यत्वेन सम्यग्ज्ञानदशायां स्वप्नार्थवन्मिथ्यात्वोपपत्तेः । नहि प्रबोधदशायां निद्रायास्तत्कार्यस्य च सत्यत्वं दृष्टं, तद्ब्रह्म सत्तन्नासदुच्यते इत्युक्तरीत्यात्मयाथात्म्यविज्ञानदशायां मायातत्कार्ययोरसत्यत्वमेव " जीवेशावाभासेन करोति। माया चाविद्या च स्वयमेव भवति । मायामात्रमिदं द्वैतं, विकल्पो नहि वस्तु" इति मायायास्तत्कार्यस्याप्यसत्त्वश्रवणात्ततो ब्रह्मणोऽद्वितीयत्वं तद्विज्ञानवतो मोक्षश्च तत्प्रतिपादकशास्त्रस्य प्रामाण्यं च सिध्यति ' यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' इतिन्यायेनाज्ञानदशायां सर्वमर्थवदेव भवति । विवेकदशायां विचार्यमाणे सर्वं मिथ्यैवेति बोधयितुं भगवता प्रकृतिपुरुषविवेकमारभ्योच्यते—प्रकृतिं पुरुषं चैव विद्ध्यनादी-उभावपीति। प्रकृतिपुरुषावुभावप्यनादी नित्याविति विद्धि विजानीहि । किंच विकाराः देहेन्द्रियप्राणमनोबुद्ध्यहंकारादयश्च शब्दादीनि तन्मात्राण्यपि चैते सर्वे विकारास्तानेतान् गुणांश्च । गुणाः सुखदुःखेच्छाद्वेषलोभमोहकामसंकल्पादयो ये च शमदमादयो ये च भ्रमप्रमादादयः पुण्यपापादिलक्षणा इन्द्रियव्यापारास्तानेतान् सर्वानपि प्रकृतिसंभवान् प्रकृतिस्त्रिगुणात्मिकाऽव्यक्तशब्दवाच्या बीजादङ्कुरस्कन्धशाखापत्रपुष्पफलादिवत्तस्याः सकाशादेव समुत्पन्नान् विद्धि नत्वात्मसंभवान् निरवयवत्वादसङ्गत्वादविक्रियत्वाच्चात्मनस्ततः कस्याप्युत्पत्त्यनुपपत्तेः। किंतु भोक्तृदृष्टवशात्प्रकृतिः स्वयमेव गुणवैषम्यं प्राप्य महदादिविकारात्मना गुणात्मना च परिणमत इति विजानीहीत्यर्थः । विकाराणां गुणानां च प्रकृतिकार्यत्वे सिद्धे पुरुषस्यात्मनस्त्वकर्तृत्वमविकारित्वं निर्गुणत्वं च सिद्धमिति सूचितं भवति ॥ १९ ॥

**श्री० टी०**—तदेवं तत्क्षेत्रं यच्च यादृक्चेत्येतावत्प्रपञ्चितम् । इदानीं तु यद्विकारि यतश्च यत्, स च यो यत्प्रभावश्चेत्येतत्पूर्वं प्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति—**प्रकृतिमिति** पञ्चभिः। तत्र प्रकृतिपुरुषयोरादिमत्त्वे तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तिः स्यात् । अतस्तावुभावनादी विद्धि, अनादेरीश्वरस्य शक्तित्वात्प्रकृतिरनादिः पुरुषोऽपि तदंशत्वादनादिरेव । अत्र च परमेश्वरस्य तच्छक्तीनां चानादित्वं नित्यत्वं च श्रीमच्छंकरभगवद्भाष्यकृद्भिरतिप्रबन्धेनोपपादितमिति ग्रन्थबाहुल्यान्नास्माभिः प्रतन्यते । विकारांश्च देहेन्द्रियादीन् गुणांश्च गुणपरिणामान् सुखदुःखमोहादीन्प्रकृतेः संभवान् संभूतान्विद्धि ॥ १९ ॥

**म० टी०**—अथेदानीं भगवतः प्रकृती द्वे परापरे ॥ सप्तमे प्रागुपन्यस्य क्षेत्रक्षेत्रज्ञलक्षणे ॥ १ ॥ एतद्योनीनि भूतानीत्युक्तं तत्रापराभिधा ॥ या क्षेत्रलक्षणा प्रोक्ता परा क्षेत्रज्ञलक्षणा ॥ २ ॥ उक्तानयोरनादित्वं भूतयोनित्वमुच्यते ॥ प्रकृतिः क्षेत्ररूपा या माया सा त्रिगुणात्मिका ॥ ३ ॥ या जीवाख्या परा प्रोक्ता पुरुषः स इहोच्यते ॥ न विद्यते तयोरादिः कारणं विद्धि तौ तथा ॥ ४ ॥ अनादिजगतो हेतुरनादिः प्रकृतिर्मता ॥ हेत्वपेक्षा यदा तस्या अनवस्था भवेत्तदा ॥ ५ ॥ पुरुषस्याप्यनादित्वं धर्मादेराश्रयत्वतः ॥ जातस्य हर्षशोकादेः सर्वसंप्रतिपत्तितः ॥ ६ ॥ अन्यथा कृतहानादिदूषणं को निवारयेत् ॥ अतस्तयोरनादित्वं सिद्धं वैदिकसंमतम् ॥ ७ ॥ महाभूतानि पञ्चैवमेकादशेन्द्रियाणि च ॥ विकारांश्च गुणांश्चैव सुखाद्याकारधारिणः ॥ ८ ॥ मायाकारणकान्विद्धि नानारूपविपर्ययात् ॥ ९ ॥ १९ ॥

**भा० टी०**—सप्तमे ईश्वरस्य द्वे प्रकृती परापरे क्षेत्रक्षेत्रज्ञलक्षणे उपन्यस्य एतद्योनीनि भूतानीत्युक्तं तत्र प्रकृतिद्वयनिरूपणार्थमारब्धेऽस्मिन्नध्याये इदं शरीरमितिद्वाभ्यां क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयस्वरूपं निर्दिश्य तत्क्षेत्रं यच्च यादृक्चेत्यादिना तत्प्रतिपादितं प्रतिज्ञातं, ततो महाभूतानीत्यादिना यच्च यादृक्चेति प्रतिपाद्य स च यो यत्प्रभावश्चेति पुरुष इति द्वाभ्यां प्रतिपादयितुमादौ एतद्योनीनि भूतानीति निरूपणाय प्रतिज्ञातं यद्विकारि यतश्च यदिति प्रतिपादयति—**प्रकृतिमिति** द्वाभ्याम् । प्रकृतिरीश्वरस्य हि विकारकारणशक्तिस्त्रिगु-

णात्मिका माया 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरं, दैवी ह्येषा गुणमयी मम माया दुरत्यया इतिश्रुतिस्मृतिभ्यां पुरुषः क्षेत्रज्ञलक्षणा परा प्रकृतिः तौ प्रकृतिपुरुषावुभावपि अनादी एव नतु सादी इति विद्धि । नैकस्यापि सादित्वं इति द्रढयितुमुभावपीत्युक्तम् । न विद्यते आदिः कारणं ययोस्तावनादी । ईश्वरस्य नित्यत्वात् तत्प्रकृत्योरपि तथात्वेन भवितुं युक्तं संसारोत्पादनोपयुक्तमनादित्वं ययोस्ताभ्यां प्रकृतिभ्यामीश्वरस्य जगदुत्पत्तिस्थितिप्रलयहेतुत्वसंपत्त्या तद्वयवत्त्वमेव तस्येश्वरत्वम् । ननु प्रकृतिपुरुषयोरनादित्वे तयोरेव जगत्कर्तृत्वं नेश्वरस्य तयोरादिमत्त्वे त्वीश्वरस्य तत्कर्तृत्वं सिध्यतीत्यतो न अनादीति तत्पुरुषसमासो वक्तव्य इति चेन्न, प्रकृतिपुरुषयोरुत्पत्तेः प्रागीशितव्याभावादीश्वरस्यानीश्वरत्वप्रसङ्गात्, संसारस्य निर्निमित्तत्वे मुक्तानामपि संसारापत्तेरनिषेधादनिर्मोक्षप्रङ्गेन शास्त्रानर्थक्यप्रसङ्गात् । तदुदयात्पूर्वं बन्धस्याभावेन तन्निवृत्त्यात्मनो मोक्षस्याभावात् बन्धमोक्षाभावप्रसङ्गाच्च । प्रकृतिपुरुषयोरनादित्वे विकाराणां गुणानां च प्रकृतिकार्यत्वादात्मनो निर्विकारत्वं निर्गुणत्वं च सिध्यति । इदमेवाभिप्रेत्याह—विकारान्वक्ष्यमाणान् बुद्ध्यादिदेहेन्द्रियान्तान् गुणांश्चैव सुखदुःखमोहप्रत्ययाकारपरिणतान् सत्त्वरजस्तमःसंज्ञान् प्रकृतिसंभवान् त्रिगुणात्मिकमायापरिणामान् विद्धि जानीहि । पुरुषं च विद्धि विद्धीतिपुरुषादिशब्दावृत्त्या उत्तरार्धस्थविद्धीत्यस्य संबन्धेन योज्यं, तेन नित्यज्ञानस्वरूपस्य विवक्षितत्वात्पुरुषशब्दस्य कार्यकरणसंघाते प्रसिद्धेस्तस्य च सादित्वात्कथमनादित्वमिति शङ्का न प्रभवतीति क्लिष्टकल्पना तु पूर्वं महता प्रयत्नेन संघातात्पुरुषवैलक्षण्यप्रतिपादनादस्याः शङ्काया एवाभावात्सर्वज्ञैः आचार्यैः कथं कर्तव्येति तदकरणात् तेषां न्यूनता न शङ्कनीया ॥ १९॥

प० टी०—तदेवं क्षेत्रं यच्च यादृक्चेत्येतावत्प्रपञ्चितमिदानीं यद्विकारि यतश्च यत् स च यो यत्प्रभावश्चैवं पूर्वप्रतिज्ञातमेव प्रकृतिपुरुषयोः संसारहेतुत्वकथनेन प्रपञ्चयति—**प्रकृतिमिति** । संसारहेतुभूतयोः प्रकृतिपुरुषयोः सादित्वेन तयोरपि प्रकृत्यन्तरेण भाव्यमित्यनवस्थापत्तिः स्यादतस्तावुभावप्यनादी विद्धि । तयोः सादित्वं कल्पशतैरपि वक्तुं न शक्यते । "आनीतवातं स्वधया तदेकम्" इत्यादिश्रुतिभिर्भूतार्थस्यैवोक्तत्वात् । अथ जगत्प्रादुर्भावहेतुत्वं प्रकटयति—**विकारानिति** । विकारान् देहेन्द्रियादीन् गुणांश्च सत्त्वादिपरिणामान् सुखदुःखमोहादीन् प्रकृतेः संभूतान् विद्धि ॥ १९ ॥

रा० टी०—एवमुक्तदिशा यतश्च यदिति प्रतिज्ञातप्रेरकस्वरूपस्य प्रभावोक्त्यनन्तरं वाच्यत्वसिद्धौ प्रेरकज्ञानस्य प्रेर्यज्ञानसापेक्षत्वात्प्रेरणीयं सप्रकारं पुरुषादिरूपं क्षेत्रं तावदाह—**प्रकृतिमिति** । नचैतत्क्षेत्रमिति श्लोकेन प्रतिज्ञातमिति शङ्क्यं, यादृक्चेत्यनेन प्रतिज्ञातत्वात् । तर्हि महाभूतानीत्याद्युक्त्यवसरे प्रागेव वाच्यमिति न शङ्क्यं, वक्ष्यमाणप्रेरकस्वरूपोक्त्युपयोगितयाऽपेक्षितप्रेर्यस्वरूपस्यात्रावश्यं वाच्यत्वात्प्रागप्युक्तौ गौरवापत्तेरिति भावः । एवं च प्रकृतिपदेन महाभूतानीत्यादिना प्रागुक्तपञ्चविंशतितत्त्वानि गृह्यन्ते । विकारशब्देन च प्रागुक्तेच्छादयः सर्वे प्रकृतिविकाराः । पुरुषोऽत्र जीवः । प्रकृतिं पञ्चविंशतितत्त्वानि पुरुषं जीवं च उभावप्यनादी विद्धि । तथा प्रकृतिसंभवान्प्रधानोपादानकानिच्छादिविकारान्सत्त्वादिगुणांश्च विद्धीत्यर्थः । तथाचेश्वरातिरिक्तः सर्वोऽपि चेतनाचेतनवर्गः प्रेर्यप्रपञ्चोऽत्रोक्तो भवति । यद्वा प्रकृतिं चिदचित्प्रकृती पुरुषं जीवं परमात्मानं च उभौ उभे चेत्यपि संगृह्यते, आनादी विद्धीत्यर्थः । विकारानिच्छादीन्सत्त्वादिगुणांश्च प्रकृतिसंभवान् प्रकृत्युपादानकान्विद्धि । गुणानां विकारत्वेऽपीच्छाद्यपेक्षयाल्पविकारत्वादिच्छादीनामधिकविकारत्वविवक्षया पृथगुक्ताः ज्ञेयाः । तात्पर्यं तु प्रकृतिपदेन चिदचित्प्रकृत्योः पुरुषपदेन जीवेश्वरयोर्ग्रहणायोभावित्युक्तिरित्युक्तम् ॥ २० ॥

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते ॥**
**पुरुषः सुखदुःखानां भोक्तृत्वे हेतुरुच्यते ॥ २० ॥**

त० टी०–प्रकृतिकार्यमुक्त्वा संसृष्टयोः प्रकृतिपुरुषयोः कार्यभेदमाह–कार्यकारणेति । कार्यं शरीरं कारणानीन्द्रियाणि तेषां कर्तृत्वे क्रियाकारित्वे पुरुषाधिष्ठिता प्रकृतिर्हेतुरुच्यते । पुरुषः प्रकृतिसंसृष्टः सुखदुःखानां भोक्तृत्वे हेतुः, सुखदुःखानुभवाश्रय उच्यते । यावत्प्रकृतिसंसर्गस्तावत्पुरुषस्य सुखदुःखभोगोऽवर्जनीय इत्यर्थं ॥ २० ॥

म० टी०–विकाराणां प्रकृतिसंभवत्वं विवेचयन् पुरुषस्य संसारहेतुत्वं दर्शयति–कार्येति । कार्यं शरीरं कारणानीन्द्रियाणि तत्स्थानि त्रयोदश देहारम्भकाणि भूतानि । विषयाश्चेह कार्यग्रहणेन गृह्यन्ते, गुणाश्च सुखदुःखमोहात्मकाः करणाश्रयत्वात् करणग्रहणेन गृह्यन्ते । तेषां कार्यकारणानां कर्तृत्वे तदाकारपरिणामे हेतुः कारणं प्रकृतिरुच्यते महर्षिभिः । कार्यकारणेति दीर्घपाठेऽपि स एवार्थः । एवं प्रकृतेः संसारकारणत्वं व्याख्याय पुरुषस्यापि यादृशं तत्तदाह–पुरुषः क्षेत्रज्ञः परा प्रकृतिरिति प्राग्व्याख्यातः । स सुखदुःखानां सुखदुःखमोहानां भोग्यानां सर्वेषामपि भोक्तृत्वे वृत्त्युपरक्तोपलम्भे हेतुरुच्यते ॥ २० ॥

शं० टी०–विकाराणां गुणानां च प्रकृतिकार्यत्वमेव विशदयन् हेतुफलोत्पादकत्वेन प्रकृतेश्च तत्फलभोक्तृत्वेन पुरुषस्य चोभयोरपि संसारकारणत्वं सूचयितुमाह–कार्येति । कार्यकरणकर्तृत्वे कार्यं शरीरं कार्यस्य कारणानुमापकत्वादत्र कार्यपदेन महदादयः सप्त विकृतयः शब्दादयश्च तत्कारणानि गृह्यन्ते । करणानि दशेन्द्रियाणि मनश्च बुद्ध्यहंकारचित्तानि च चतुर्दश । करणपदेन वचनादयो दर्शनादयः कामसंकल्पाहंकरणसुखदुःखमोहात्मका बुद्धिप्रत्ययाश्च प्रकृतिसंभवाः सर्वेऽपि गृह्यन्ते । कार्यं च करणानि च तेषां कार्यकरणपदगृहीतानां कर्तृत्वे । कर्तृत्वं जनकत्वं तस्मिन् कार्यकरणकर्तृत्वे हेतुरुपादानकारणं प्रकृतिरेवेति तत्त्वज्ञैरुच्यते । अग्निसान्निध्यादय इवात्मसान्निध्यात्प्राण्यदृष्टानुरूपेण प्रकृतिरेव कार्यकरणात्मना विषयरूपेण सुखादिप्रत्ययरूपेण च हेतुफलात्मना परिणमत इति मुनयो वदन्तीत्यर्थः । कार्यकारणकर्तृत्व इति पाठे तु दशेन्द्रियाणि मनश्च शब्दादयः पञ्च चैते षोडश विकाराः कार्यपदेन गृह्यन्ते । सप्त विकृतयः कारणपदेन गृह्यन्ते । तेषां कार्यकारणानां कर्तृत्वे आरम्भकत्वे मूलप्रकृतिरेव हेतुरुच्यते, यद्वा कार्यकरणानां देहेन्द्रियमनोबुद्ध्यादीनां कर्तृत्वे कर्ता नियोक्ता तद्भावे विषयभोगवासनारूपा कर्मरूपा च प्रकृतिरेव कारणं निरवयवत्वान्नात्मेत्यर्थः । स्वभावस्तु प्रवर्तत इत्युक्तत्वादेवं प्रकृतेः संसारकारणत्वमुक्त्वा अविकारिणोऽप्यात्मनः संसारकारणत्वमाह–पुरुष इति । पुरि शयनात्पुरा सदैकरूपेणास्त इति वा स्वाज्ञानात्पुरमुषतीति वा पुरुषः बुद्धिकोशे सर्वसाक्षित्वेन वर्तमानः प्रत्यगात्मा । सुखदुःखानां सुखदुःखादिप्रत्ययानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुः स्वाभासानुविद्धान्तःकरणद्वारा सुखदुःखादिप्रत्ययानुभूतेः कारणमित्युच्यते । देहेन्द्रियाद्याकारेण विषयाकारेण सुखदुःखादिप्रत्ययाकारेण च प्रकृतेः परिणामे सति स्वाविद्यया कृतानात्माध्यासेनात्मनोऽपि स्वाभासद्वारा तदुपलब्धृत्वे सत्यहंममेतिसंसारः संभवति । तथा प्रकृतेः परिणामाभावे क्षेत्रज्ञस्योपलब्धृत्वाभावे चोक्तलक्षणः संसारो न संभवति । तदिदं जाग्रदादौ सुषुप्तौ च प्रत्यक्षं ततो यावद्देहेन्द्रियविषयसुखादिप्रत्ययसंबन्धः स्यादात्मनस्तावन्न संसारोपरमः सिध्यतीत्यर्थः ॥ २० ॥

श्री० टी०–विकाराणां प्रकृतिसंभवत्वं दर्शयन्पुरुषस्य संसारहेतुत्वं दर्शयति–कार्यकारणेति । कार्यं शरीरम् कारणानि सुखदुःखादिसाधनानीन्द्रियाणि तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुरुच्यते कपिलादिभिः । पुरुषो जीवस्तत्कृतसुखदुःखानां भोक्तृत्वे हेतुरुच्यते । अयं भावः–यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न संभवति तथा पुरुषस्याप्यविकारिणो भोक्तृत्वं न संभवति तथापि कर्तृत्वं नाम क्रियानिर्वर्तकत्वम् । तच्चाचेतनस्यापि चेतनादृष्टवशाच्चैतन्याधिष्ठितत्वात्संभवति, यथा वह्नेरूर्ध्वज्वलनम् वायोस्तिर्यग्गमनम् वत्सादृष्टवशात्स्तन्यपयसः क्षरणमित्यादि । अतः पुरुषसन्निधानात्प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वं च सुखदुःखसंवेदनम् । तच्चेतनधर्म एवेति प्रकृतिसन्निधानात्पुरुषस्य भोक्तृत्वमुच्यत इति ॥ २० ॥

स० टी०—मायिकत्वं विकाराणां विवेकेन विवेचयन् ॥ पुरुषस्याविवेकेन संसारित्वमिहोच्यते ॥ १ ॥ कार्यं शरीरमित्युक्तं करणानीन्द्रियाणि च ॥ कार्यशब्देन भूतानि गृह्यन्ते विषयास्तथा ॥ २ ॥ गुणाः करणाश्रयत्वात्सुखाद्याः करणोक्तितः ॥ तेषां कार्यकरणानामुत्पत्तौ कारणं परम् ॥ ३ ॥ माया प्रकृतिशब्दोक्ता प्रोच्यते सा महर्षिभिः ॥ प्रकृतेर्हेतुतामुक्त्वा पुरुषस्य तदुच्यते ॥ ४ ॥ क्षेत्रज्ञः सुखदुःखानां भोग्यानां हेतुरुच्यते ॥ चित्तवृत्त्युपरक्तोपलम्भे भोक्तृत्वशब्दिते ॥ ५ ॥ २० ॥

भा० टी०—के पुनर्विकारा गुणाश्च प्रकृतिसंभवा इत्याकाङ्क्षायां तान् प्रदर्शयन् प्रकृतेः संसारहेतुत्वं दर्शयति—**कार्येति** । कार्यं शरीरं कार्यग्रहणेन शरीरारम्भकानि भूतानि विषयाश्च गृह्यन्ते । करणानि देहस्थानि ज्ञानेन्द्रियपञ्चकं कर्मेन्द्रियपञ्चकं मनो बुद्धिरहंकारश्चेति त्रयोदश । करणग्रहणेन करणाश्रितत्वात् सुखदुःखमोहात्मकाः गुणाः गृह्यन्ते । तेषां कार्यकरणानां कर्तृत्वे उत्पादकत्वे प्रकृतिरारम्भकत्वेन हेतुः कारणमुच्यते । एवं कार्यकरणकर्तृत्वेन संसारस्य कारणं प्रकृतिरुक्ता । कार्यकारणकर्तृत्वे इति पाठेऽप्ययमेवार्थः । यद्वा एकादशेन्द्रियाणि पञ्च विषयाः षोडश विकाराः कार्यं महानहंकारो भूततन्मात्राणि पञ्चेति सप्त प्रकृतिविकृतयः कारणं तेषां कर्तृत्वे हेतुः प्रकृतिरुच्यते इत्यर्थः । एवमपरप्रकृतेः संसारकारणत्वं प्रदर्श्य परप्रकृतेस्तत्कारणत्वं दर्शयति—पुरुषः जीवः क्षेत्रज्ञः सुखदुःखानां भोग्यानां भोक्तृत्वे उपलब्धृत्वे हेतुरुच्यते । तथाच कार्यकरणसुखदुःखरूपेण हेतुफलात्मना प्रकृतेः परिणामाभावे पुरुषस्य च चेतनस्य तदुपलब्धृत्वेऽसति संसारो न संभवतीत्यतः प्रकृतिपुरुषयोः कार्यकरणकर्तृत्वेन सुखदुःखभोक्तृत्वेन च संसारकारणत्वमिति । संसारश्च सुखदुःखभोगः पुरुषस्य च सुखदुःखानां भोक्तृत्वं संसारित्वम् । अन्ये तु यथाभाष्यं व्याख्यातमित्युक्त्वा वर्णयन्ति । यद्वा पुरुषस्य कार्यत्वे कारणत्वे कर्तृत्वे च प्रकृतिरेव पुरुषतादात्म्यं प्राप्ता हेतुर्भवति । तथा प्रकृतेः सुखदुःखभोक्तृत्वे स्वच्छायाप्रदाने पुरुषः कारणं कार्यत्वादयः प्राकृतदेहेन्द्रियबुद्धिधर्माः सन्तश्चिदात्मन्यारोप्यन्ते गौरोऽहममुष्य पुत्रोऽहं काणोऽहं खञ्जोऽहं करोम्यहमकार्षमहमिति तथा चिच्छायापन्ना बुद्धिः चेतयाम्यहं सुखदुःखादीनुपलभे इति मन्यते । सोऽयं प्रकृतिपुरुषयोरन्योन्यधर्माध्यासः संसारस्य कारणमित्युपपादितं भवति । सांख्याभिमतं पुरुषस्य भोक्तृत्वमपि निरस्तं भवति, अन्यथा प्रकृतिः कर्त्री पुरुषो भोक्तेति कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यमापद्येत । न च भोक्तुर्निर्विकारित्वमपि वक्तुं शक्यमिति । अत्रेदमवधेयं यथामूलं व्याख्यानकर्तॄणां सर्वज्ञानां भाष्यकृतां व्याख्याने सांख्यमतस्येश्वरानधिष्ठितं जडं प्रधानं कर्तृ चेतनश्च भोक्तेत्येवंरूपस्य नास्ति प्रवेशः प्रकृतिरीश्वरस्य हि विकारकारणशक्तिस्त्रिगुणात्मिका माया पुरुषः जीवः क्षेत्रज्ञ इत्येवं तैरुक्तत्वात्, उत्तरश्लोके पुरुषो भोक्ता प्रकृतिस्थः प्रकृतावविद्यालक्षणायां स्थित इत्यादि वक्ष्यमाणत्वाच्च । तथा चाविद्यैक्याध्यासादात्मनो भोक्तृत्वेन संसारित्वमिति वस्तुतो निर्विकारत्वं दुर्निवारम् । यद्यपि प्रकृतिस्थस्य कर्तृत्वभोक्तृत्वे तथापि कर्तृत्वे उपाधिप्राधान्यात् प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वे तूपहितस्य प्राधान्यात् जीवस्य भोक्तृत्वमतो न वैयधिकरण्यदोषोऽपीत्यादि सर्वं भाष्यादेव लभ्यत इत्यतोऽध्याहारेण क्लिष्टकल्पनया च भाष्यातिरिक्तव्याख्यानप्रदर्शनं नोचितमिति । एतेन कार्यं यज्ञब्रह्महत्यादि कारणं पुरोडाशखड्गादि कर्तृत्वं साधनप्रयोक्तृत्वं तच्च तच्च तच्चेति द्वन्द्वे एकवद्भावः हेतुः प्रकृतिरुच्यते, एवं चेत्प्रकृतेरेव स्वर्गनरकादि भवेन्न जीवस्य । तथा च बन्धाभावान्न मोक्षे जीवानां प्रयत्नः स्यादित्यत आह—पुरुष इत्यादिकाः पूर्वोत्तरप्रकरणानुरोधविनिर्मुक्ता भाष्यबहिर्भूताः कल्पना निराकृता वेदितव्याः॥२०॥

प० टी०—अथ पुरुषस्यापि तथात्वं दर्शयति—**कार्यकारणेति** । पुरुषो जीवस्तत्कृतसुखदुःखादिकार्यं शरीरं कारणानि सुखदुःखानि साधनानीन्द्रियाणि तेषां कर्तृत्वे तदाकारपरिणामे प्रकृतिर्हेतुः पुरुषस्तु सुखदुःखानां भोक्तृत्वे हेतुः । अयं भावः । यद्यप्यचेतनायाः प्रकृतेः स्वतः कर्तृत्वं न संभवति तथा पुरुष-

स्याप्यविकारिणो भोक्तृत्वं न संभवति तथा कर्तृत्वं नाम क्रियानिर्वर्तकत्वं तत्त्वचेतनस्यापि चेतनादृष्टव-शात्संभवति । यथाग्नेरूर्ध्वज्वलनं वायोस्तिर्यक्प्लवनं वत्सादृष्टात्स्तन्यपयसः क्षरणमित्यादि । अतः पुरुष-संनिधानात् प्रकृतेः कर्तृत्वमुच्यते । भोक्तृत्वं सुखदुःखसंवेदनं तच्च चेतनाधर्म एवेति प्रकृतिसंनिधानात् पुरुषस्य भोक्तृत्वमिति ॥ २० ॥

रा० टी०–प्रकृतिसंभवत्वं विकाराणां व्यनक्ति–कार्येति । कार्यं शरीरं करणानीन्द्रियाणि । जीवस्य यद्देहेन्द्रियकर्तृत्वं तत्र कारणं चित्प्रकृतिरुच्यते । सुखदुःखानां भोक्तृत्वे जीवस्य प्रकृतिविकारसुखदुःखानां स्वीयतया साक्षात्काररूपे भोगे पुरुषो भगवान् हेतुरुच्यते । अत्र हरेः सर्वहेतुत्वेन जीवगतदेहेन्द्रियकर्तृत्व-हेतुत्वसत्त्वेऽपि, तथा देव्या जीवानां सुखदुःखभोगदानहेतुत्वसत्त्वेऽपि, देव्याः सुखदुःखभोगदाने प्रवृ-त्तिरल्पा कार्यकरणकर्तृत्वे भोगदानप्रवृत्त्यपेक्षयाधिका, अतः कार्यकरणकर्तृत्वे प्रकृतिर्हेतुरिति । पुरुषस्तु सुखदुःखभोगदानहेतुरिति विशिष्योक्तिर्युक्ता । अत एव पूर्वापरार्धयोरुच्यत इति द्विवारमुक्तिः । यद्वा कार्यकरणकर्तृत्वे देहेन्द्रियाणां परिणामक्रियायां प्रकृतिः प्रधानं हेतुरुच्यते पुरुषो जीवः सुखदुःखानां भोक्तृत्वे अनुभवे हेतुः कर्तोच्यते इत्यर्थः ॥ २१ ॥

**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान् ॥**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ॥ २१ ॥**

त० टी०–यदुक्तं पुरुषस्य सुखदुःखानां भोक्तृत्वं तत्स्वतो ज्ञानस्वरूपत्वेन सुखरूपस्य न संभ-वति । अतस्तद्भोगे हेतुमाह–पुरुष इति । स्वरूपेण सुखी निर्विकारोऽपि पुरुषः प्रकृतिस्थः उच्चाव-चदेहरूपपरिणतप्रकृतिस्थस्तत्संबद्धः हि एव प्रकृतिजान् गुणान् प्रकृतिसंसर्गजान्सत्त्वादिगुणकार्यभू-तान्सुखदुःखादीन् भुङ्क्ते, अनुभवति । प्रकृतिस्थत्वेऽपि हेतुमाह–कारणमिति । अस्य पुरुषस्य सदसद्योनिजन्मसु गुणसङ्गः कारणमित्यन्वयः । तत्र सत्त्वगुणकार्यभूताः सद्योनयो देवाः, तमोगुण-कार्यभूता असद्योनयो रक्षःपिशाचपश्वादयः, रजःकार्यभूताः सदसन्मिश्रयोनयो ब्राह्मणाद्या मनुष्याः तेषु शुभाशुभमिश्रफलभोगार्थं जन्मसु अस्य पुरुषस्य गुणसङ्गः, गुणेषु शब्दस्पर्शरूपादिष्विन्द्रियवि-षयेषु प्रियभोग्यत्वबुद्ध्या मनसोऽभिनिवेशरूपः कारणम् । सत्त्वादिगुणकार्यसुखाद्यासक्तोऽयं पुरु-षस्तत्साधनभूतेषु पुण्यपापकर्मसु प्रवर्तते । ततस्तत्फलानुभवाय सदसद्योनिषूत्तमाधमयोनिषु जायते, पुनस्तत्र कर्मारभते जायते च । एवं यावद्विषयत्यागपूर्वकं मोक्षसाधनभूतान् विशुद्धबुद्धिवैराग्यादीन् सेवते तावत्संसरतीति भावः ॥ २१ ॥

म० टी०–यत्पुरुषस्य सुखदुःखभोक्तृत्वं संसारित्वमित्युक्तं तस्य किं निमित्तमित्युच्यते–पुरुष इति । प्रकृतिर्माया तां मिथ्यैव तादात्म्येनोपगतः प्रकृतिस्थः हि एव पुरुषः भुङ्क्ते उपलभते प्रकृतिजान् गुणान् । अतः प्रकृतिजगुणोपलम्भहेतुषु सदसद्योनिजन्मसु सद्योनयो देवाद्यास्तेषु हि सात्त्विकमिष्टं फलं भुज्यते । असद्योनयः पश्वाद्यास्तेषु हि तामसमनिष्टं फलं भुज्यते । सदसद्योनयो धर्माधर्ममिश्रत्वात् ब्राह्मणाद्या मनु-ष्यास्तेषु हि राजसं मिश्रं फलं भुज्यते । अतस्तत्रास्य पुरुषस्य गुणसङ्गः सत्त्वरजस्तमोगुणात्मकप्रकृतितादा-त्म्याभिमान एव कारणं, न त्वसङ्गस्य तस्य स्वतः संसार इत्यर्थः । अथवा गुणसङ्गः गुणेषु शब्दादिषु सुखदुःखमोहात्मकेषु सङ्गोऽभिलाषः काम इति यावत् । स एवास्य सदसद्योनिजन्मसु कारणम् "स यथा-कामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत् कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इति श्रुतेः । अस्मिन्नपि पक्षे मूलकारणत्वेन प्रकृतितादात्म्याभिमानो द्रष्टव्यः ॥ २१ ॥

शं० टी०—ननु प्रकृतिपुरुषयोर्नित्यत्वात्तत्संबन्धोऽप्यात्मनो नित्य एव भवति। तेन संसारोऽपि नित्य एव स्यात्कदा कथं वात्मनः संसारमोक्षः सिध्यतीत्याकाङ्क्षायामात्मनो बुद्ध्यादिसंबन्धो नित्यो न भवति, निरवयवसावयवयोः संयोगसमवायादिसंबन्धासंभवात्। किंत्वाध्यासिकः। सोऽयं स्वाज्ञानैकनिबन्धनः सति विवेकविज्ञाने निवर्तत एवेति बोधयितुमात्मनः प्रकृतिसंबन्धात्संसारं तत्कारणं च विशदयति—पुरुष इति। पुरुष उक्तलक्षण आत्मा स्वयं कूटस्थासङ्गचिद्रूपोऽपि प्रकृतिस्थः। प्रकृतिः कार्यकरणसंघातः स्वाविवेकेनाय-मेवाहमिति तदात्मना तिष्ठतीति प्रकृतिस्थो नतु स्वस्थः शरीरतादात्म्यमापद्येत्यर्थः। तत एव तद्धर्मतत्कर्मवान् सन् प्रकृतिजान् प्रकृतेर्बुद्ध्यादिस्थूलान्तरूपायाः सकाशाज्जातान् प्रकृतिजान् प्राकृतान् गुणान् देहगुणा बाल्यस्थौल्यादयः, इन्द्रियगुणाः काणत्वखञ्जत्वादयः, प्राणस्य गुणाः क्षुधितत्वादयः, मनोगुणाः समीचीन-त्वादयो बुद्धिगुणाः कर्तृत्वभोक्तृत्वादयस्तानेतान् स्थूलसूक्ष्मकारणदेहधर्मान् सुखदुःखादिप्रत्ययांश्च स्वीयत्वे-नानुभुङ्क्ते। मनुष्योऽहं ब्राह्मणो गृही यतिर्मूढः पण्डितः शिष्टो भ्रष्टः कर्ता भोक्ता सुखी दुःखीति ममेदमिति च स्वयं प्रकृत्यात्मको भूत्वा तद्धर्मान् जन्मजराजातिवर्णाश्रमादीन् पुण्यपापादींश्च स्वधर्मत्वेनानुभवती-त्यर्थः। "आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः" इत्यादिश्रुतिप्रसिद्धिद्योतनार्थो हिशब्दः। अयमेव क्षेत्रज्ञ-स्यात्मनः संसारो यत्स्वयमन्यात्मको भूत्वा अन्यधर्मान् सतोऽप्यसतश्चात्मीयत्वेन मन्यते। नन्वक्रियस्या-सङ्गस्यात्मनः प्रकृतितादात्म्यापत्तौ तदीयधर्मकर्मस्वात्मीयत्वानुभूतौ च को हेतुरित्याकाङ्क्षायामाह—कारण-मिति। अस्य साक्षाद्विद्वद्भिरात्मत्वेनानुभूयमानस्य कूटस्थासङ्गचिद्रूपस्यात्मनः सदसद्योनिजन्मसु सद्योनयो देवऋषिब्राह्मणादिपुण्ययोनयः, असद्योनयो रक्षःपिशाचश्वपाकपश्वादिपापयोनयस्तासु जन्मानि तेषु सद-सद्योनिजन्मसु। अहंममेत्यादिसंसारस्य कारणं गुणसङ्गः गुणेषु दृष्टादृष्टेषु भोग्येषु सज्ज्यते पुमान् सक्तो-भवत्यनेनेति सङ्गः कामः, कामः खलु पुरुषस्य बन्धः सत्यामविद्यायां, पुमान् कामेनैवोच्चावचानि कर्माणि करोति तत्फलं च सुखदुःखात्मकं नानाजन्मभिः प्राप्नोति। तथाच श्रुतिः "स यथाकामो भवति" इति "कामान्यः कामयते मन्यमानः" इति च। यत एवं ततः स्वाविद्यैकमूलः काम एव पुरुषस्य नानायोनिषु जन्मजरामरणादिदुःखानुभूतिकारणमिति सिद्धम्। यद्वा गुणसङ्गः सज्ज्यते बध्यतेऽनेनेति सङ्गः गुणेषु देहेन्द्रियादिष्वहमित्यहंत्वाभिनिवेशलक्षणः शब्दादिष्विदं भोग्यमिति संभोग्याभिनिवेशरूपोऽप्यध्याससं-बन्धः सङ्गः एतमेवाविद्यामाहुः पण्डिताः। अविद्यावत एव हि पुरुषस्य कामः कर्मापि सदसद्योनिषु जन्मा-दिदुःखकारणं तन्निवृत्तिकारणमात्मयाथात्म्यविज्ञानमेव। तच्च 'न सत्तन्नासदुच्यते' इत्यात्मनः प्रकृतितद्विका-रतद्धर्मतत्कर्मसंबन्धलेशशून्यत्वसिद्धये अतन्निषेधद्वारा सद्भावसिद्धये ज्ञानं ज्ञेयं ज्ञानगम्यमिति स्वरूपनि-रूपणद्वारा च सम्यक्प्रतिपादितम्॥ २१॥

श्री० टी०—तथाप्यविकारिणो जन्मरहितस्य भोक्तृत्वं कथमित्यत आह—पुरुष इति। हि यस्मात्प्र-कृतिस्थः तत्कार्ये देहे तादात्म्येन स्थितः पुरुषः अतस्तज्जनितान्सुखादीन्भुङ्क्ते। अस्य च पुरुषस्य सतीषु देवा-दियोनिषु असतीषु च तिर्यगादियोनिषु यानि जन्मानि तेषु गुणसङ्गः गुणैः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः॥ २१॥

स० टी०—भोक्तृत्वं यत्सुखादीनां संसारित्वं यदीरितम्॥ पुंसस्तस्य निमित्तं किमित्यत्राह रमापतिः॥ १॥ मृषा तादात्म्यतो मायां गतोऽयं पुरुषो गुणान्॥ मायिकान्सुखदुःखादीन् भ्रान्त्योपलभते सदा॥ २॥ पण्डितोऽहं सुखी दुःखी मूढोऽहं चेत्यनेकधा॥ एवंरूपो य आसङ्गः सोऽज्ञाने सति कारणम्॥ ३॥ देवतिर्यङ्नरादीनां पुरुषस्यास्य जन्मसु॥ यद्वा गुणेषु कामाख्यः सङ्गः शब्दादिरूपिषु॥ ४॥ कारणं संसृतेर्मुख्यमुच्चावचजनेः सदा॥ अविद्यायां य आसङ्गस्तत्कार्येषु गुणेषु च॥ ५॥ कारणं संसृतेः

सोऽस्ति तादात्म्याध्यासलक्षणः ॥ हेयः स सर्वथा सङ्ग इत्येवमर्जुनाय च ॥ ६ ॥ उक्तं तथा च गीताख्ये शास्त्रे तस्य निवृत्तये ॥ सवैराग्यं ससंन्यासं ज्ञानमेव ह्युदाहृतम् ॥ ७ ॥ तत्र ज्ञानमुपन्यस्तं क्षेत्रक्षेत्रज्ञगोचरम् ॥ ध्वस्त्वाविद्यां च तत्कार्यं ज्ञात्वा ब्रह्म चिदद्वयम् ॥ ८ ॥ विमुच्यते गुणासङ्गात्तादात्म्याध्यासलक्षणात् ॥ ९ ॥ २१ ॥

भा० टी०–पुरुषस्य सुखदुःखभोक्तृत्वलक्षणसंसारित्वं किंनिमित्तमिति चेद्, अविद्यैक्याध्यासनिमित्तमित्याह–**पुरुष इति** । हि यस्मात्पुरुषो भोक्ता प्रकृतावविद्यालक्षणायां स्थितस्तदैक्याध्यासं प्राप्तस्तस्मात्सुखी दुःखी मूढः पण्डितोऽहमित्येवं प्रकृतेः जातान् सुखदुःखमोहाकाराभिव्यक्तान् गुणान् सत्त्वादीन् भुङ्क्ते उपलभते। प्रकृतिस्थस्तत्कार्ये देहे तादात्म्येन स्थित इति त्वाचार्यैः देहतादात्म्यस्याप्यविद्यातादात्म्याध्यासायत्तत्वं मुख्यार्थत्यागापत्तिं चाभिप्रेत्य न व्याख्यातम् । भोक्तृत्वलक्षणे संसारित्वे प्रकृतिस्थत्वं कारणमुक्त्वा जन्मनः प्रधानं कारणमाह–**कारणमिति** । अस्य पुरुषस्य भोक्तुः सत्यश्चासत्यश्च योनयः सद्योनयो देवादियोनयो असद्योनयः पश्वादियोनयः । योनिद्वयनिर्देशसामर्थ्यान्मध्यवर्तिन्यः सदसद्योनयो मनुष्ययोनयोऽपि द्रष्टव्याः। तासु जन्मानि तेषु विषयभूतेषु गुणसङ्गः गुणेषु सुखदुःखमोहात्मकेषु विषयेषु भुज्यमानेषु यस्तादात्म्यभावः आसक्तिर्वा स एव सत्यायामप्यविद्यायां प्रधानं कारणमित्यर्थः। "स यथाकामो भवति तत्क्रतुर्भवति यत्क्रतुर्भवति तत्कर्म कुरुते यत्कर्म कुरुते तदभिसंपद्यते" इतिश्रुतेः । सदसद्योनिजन्म स्वस्य संसारस्य गुणसङ्गः कारणमिति संसारपदमध्याहृत्य वा व्याख्येयम् । गुणसङ्गः सत्त्वरजस्तमोगुणात्मकप्रकृतितादात्म्याभिमान इति तु प्रकृतिमात्मत्वेन गतः प्रकृतिस्थ इत्यनेन पौनरुक्त्यमभिप्रेत्याचार्यैर्न व्याख्यातम् । गुणैः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गस्य विषयसङ्गाधीनत्वमभिप्रेत्य न प्रदर्शितम् "इन्द्रियेभ्यः परा ह्यर्थाः" इतिश्रुतेः। अन्ये तु–यद्वा प्रकृतिस्थो विद्वानविद्वान्वा गुणान्भुङ्क्ते 'पश्वादिभिश्चाविशेषात्' इतिन्यायात्। तर्किं विद्वानिवाविद्वानपि कुतो न मुच्यते अविद्वानिव विद्वानपि कुतो न बध्यत इत्याशङ्क्याह–**कारणमिति** । गुणेषु देहेन्द्रियविषयेषु सङ्गः अहमिदं ममेदमित्याभिनिवेशः स एव जन्मकारणं विदुषां तु तदभावात् न जन्म। समानेऽपि देहसंबन्धे यदा यक्षो देहाभिमानं धत्ते तदा स एव देहपीडया पीड्यते नतु देहपतिर्जीवः। यदा त्वयं देहाभिमानं धत्ते तदा नेतर इति प्रसिद्धम्। सङ्गस्य बन्धकत्वं न तु सांनिध्यमात्रं बन्धकमतो विद्वदविदुषोः समानेऽपि देहसंबन्धे सङ्गतदभावकृतो महाविशेष इति भावः–इति वर्णयन्ति । भाष्यकारैस्तु प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपीत्युपक्रमानुरोधेन पुरुषशब्दार्थप्रदर्शनसामञ्जस्यमभिप्रेत्यायमर्थो न प्रदर्शितः ॥ २१ ॥

प० टी०–तथाप्यकारणं जन्मरहितस्य भोक्तृत्वं कथमित्याह–**पुरुष इति** । हि यस्मात् कारणात् प्रकृतिस्थस्तत्कार्ये देहे स्थितोऽतस्तज्जनितान् सुखदुःखादीन् भुङ्क्ते । अस्य च पुरुषस्य सतीषु देवयोनिष्वसतीषु तिर्यगादियोनिषु यानि जन्मानि तेषु गुणसङ्गः शुभाशुभकर्मकारिभिरिन्द्रियैः सङ्गः कारणमित्यर्थः ॥ २१ ॥

रा० टी०–ननु प्रकृतिकृतदेहेन्द्रियसंबन्धेन सुखदुःखादिभोक्ता जीवस्तन्नियामिके देवदेव्याविति यत्तदयुक्तं, देहादिसंबन्धादेर्मिथ्यात्वादित्यत आह–**पुरुष इति** । पुरुषो जीवः प्रकृतिस्थः प्रकृतिकार्यदेहादौ स्थितः प्रकृतिजान् गुणान्सुखादीन् भुङ्क्ते । हीति निर्बाधानुभवसिद्धत्वं सूचयति । तेन तद्विरोधान्न मिथ्यात्वं सुखादेरित्युक्तं भवति । एतेन कार्यकरणकर्तृत्व इत्यत्र जीवदेहस्थत्वस्य भोक्तृत्वे सुखदुःखानामित्यत्र सुखादिभोगस्योक्तेस्ताभ्यामस्य पौनरुक्त्यमिति निरस्तं, मिथ्यात्वनिरासाय साक्ष्यनुभवविरोधं मिथ्यावादिना दर्शयितुं प्रागुक्तस्यैवात्र पुनरभिधानात् । शुद्धस्य जीवस्य प्रकृतिस्थत्वे किं कारणमित्यत आह–**कारणमिति** । अस्य जीवस्य ॥ २२ ॥

**उपद्रष्टाऽनुमन्ता च भर्ता भोक्ता महेश्वरः ॥**
**परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ॥ २२ ॥**

**त० टी०**–एवं गुणसङ्गकृतप्रकृतिसंसर्गात्पुरुषस्य संसारः नतु स्वतः स्वरूपेणेत्युक्तम् । तत्र कीदृशं तत्स्वरूपमित्यपेक्षायां तत्स्वरूपं विवेचयति–उपद्रष्टेति । अस्मिन् देहे प्रकृतिकार्यभूते वर्तमानोऽपि पुरुषः परो भिन्नः न तु स्वरूपेण संसारीत्यर्थः । तत्र हेतूनाह–उपद्रष्टेति । उप समीपे देहस्यावस्थापरिणामादेः साक्षिवद्रष्टा, तथाऽनुमन्ता च देहस्वभावप्रवृत्त्याद्यनुमोदिता च भवति । तथा भर्ता धारकः । तथा महेश्वरः देहयात्रानिर्वाहकतयेश्वराणामिवेन्द्रियाणामपि देहस्य धारकपालकतया महानीश्वरो महेश्वरः । अत एव परमात्मेति चाप्युक्तः, आत्मशब्देन विवक्षितानां देहेन्द्रियमनसां परमः श्रेष्ठः, आन्तरत्वाद्विज्ञानमयत्वाच्च क्षेत्रज्ञः परमात्मेत्युक्तः "तस्माद्वा एतस्मादन्योऽन्तरात्मा विज्ञानमयः" इति श्रुत्येत्यर्थः ॥ २२ ॥

**म० टी०**–तदेवं प्रकृतिमिथ्यातादात्म्यात्पुरुषस्य संसारो न स्वरूपेणेत्युक्तं, कीदृशं पुनस्तस्य स्वरूपं यत्र न संभवति संसार इत्याकाङ्क्षायां तस्य स्वरूपं साक्षान्निर्दिशन्नाह–उपद्रष्टेति । अस्मिन् प्रकृतिपरिणामे देहे जीवरूपेण वर्तमानोऽपि पुरुषः परः प्रकृतिगुणासंसृष्टः परमार्थतोऽसंसारी स्वेन रूपेणेत्यर्थः । यत उपद्रष्टा यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तत्समीपस्थोऽन्यः स्वयमव्यापृतो यज्ञविद्याकुशलत्वादृत्विग्यजमानव्यापारगुणदोषाणामीक्षिता तद्वत् कार्यकरणव्यापारेषु स्वयमव्यापृतो विलक्षणस्तेषां कार्यकरणानां सव्यापाराणां समीपस्थो द्रष्टा न तु कर्ता पुरुषः "स यत्तत्र किंचित्पश्यत्यनन्वागतस्तेन भवत्यसङ्गो ह्ययं पुरुषः" इति श्रुतेः । अथवा देहचक्षुर्मनोबुद्ध्यात्मसु द्रष्टृषु मध्ये बाह्यान् देहादीनपेक्ष्यात्यव्यवहितो द्रष्टात्मा पुरुष उपद्रष्टा । उपशब्दस्य सामीप्यार्थत्वात्तस्य चाव्यवधानरूपस्य प्रत्यगात्मन्येव पर्यवसानात् । अनुमन्ता च कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव सन्निधिमात्रेण तदनुकूलत्वादनुमन्ता, अथवा स्वव्यापारेषु प्रवृत्तान् देहेन्द्रियादीन्न निवारयति कदाचिदपि तत्साक्षिभूतः पुरुष इत्यनुमन्ता "साक्षी चेता" इति श्रुतेः । भर्ता देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्याभासविशिष्टानां स्वसत्तया स्फुरणेन च धारयिता पोषयिता च । भोक्ता बुद्धेः सुखदुःखमोहात्मकान् प्रत्ययान् स्वरूपचैतन्येन प्रकाशयतीति निर्विकार एवोपलब्धा । महेश्वरः सर्वात्मत्वात् स्वतन्त्रत्वाच्च महानीश्वरश्चेति महेश्वरः परमात्मा देहादिबुद्ध्यन्तानामविद्ययात्मत्वेन कल्पितानां परमः प्रकृष्ट उपद्रष्टृत्वादिपूर्वोक्तविशेषणविशिष्ट आत्मा परमात्मा इति अनेन शब्देनापि उक्तः कथितः श्रुतौ । चकारादुपद्रष्टेत्यादिशब्दैरपि स एव पुरुषः परः। "उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः" इत्यग्रेऽपि वक्ष्यते ॥ २२ ॥

**शं० टी०**–पुनरपि तदेव परं तत्त्वं मुमुक्षून् सम्यगधिगमयितुमात्मनः प्रकृतितत्कार्यसंबन्धराहित्यं तद्रहितत्वेन शुद्धस्य चिदेकरसस्य ब्रह्माभिन्नत्वं च बोधयति–उपद्रष्टेति । अस्मिन् देहे कार्यकरणसंघातलक्षणे योऽस्मत्पदप्रत्ययार्थः पुरुष आत्मा स देहेन्द्रियादिभ्यः परो भिन्न एव भवति। तत्कुतो यस्मादुपद्रष्टा सर्वस्य द्रष्टा चिदाभासस्तं च तद्व्यापारं च साक्षित्वेनोपरि पश्यतीत्युपद्रष्टा, यद्वा उप समीपे बुद्धेरपि अन्तरतया प्रत्यक्त्वेन स्थितः सन् बुद्धिं तद्व्यापारं च दृश्यजातं च सर्वं साक्षादविक्रियात्मना पश्यतीत्युपद्रष्टा । हेतुगर्भितमिदं विशेषणम् । आत्मा बुद्ध्यादेर्भिन्न उपद्रष्टृत्वाद्यज्ञोपद्रष्टृवदिति । नहि यज्ञोपद्रष्टा यजमानादिष्वन्यतमो भवति तदन्यतमत्वे उपद्रष्टृत्वानुपपत्तेः । उपद्रष्टृत्वं नाम व्यापार्यन्यत्वे सत्यव्यापृततया ताटस्थ्येन व्यापारितद्व्यापारदर्शनमात्रैकपरत्वम् । तत उपद्रष्टा

द्रष्टव्येभ्यः सर्वेभ्यो यजमानादिभ्यो भिन्न एव भवति यथा, तथाऽयमात्माऽप्युपद्रष्टृत्वाद्बुद्ध्यादिभ्यो भिन्न एव भवति। एतेनात्मनोऽविकारित्वं नित्यत्वमकर्तृत्वमभोक्तृत्वं च सूचितं भवति। किंच अनुमन्ता स्वस्वविषयेषु प्रवृत्तान्निवृत्तांश्च बुद्ध्यादीननु पश्चादेव मनुते बुध्यत इति अनुमन्ता बुद्ध्यादीनां प्रवृत्तिं निवृत्तिं तत्फलं चान्य एव जानातीत्यर्थः "उपद्रष्टानुमन्तैष आत्मा" इतिश्रुतेः। आत्मा देहादिभ्यः पर एव अनुमन्तृत्वात्तटस्थवदित्यात्मनः प्रकृतिप्राकृतेभ्यो भिन्नत्वसाधकमनुमानं सूचितम्। चकारः समुच्चयार्थः। किंच भर्ता स्वाविद्यया स्वस्मिन्नध्यस्तान्महदादिसर्वविकारान् सत्तास्फूर्तिप्रदानेन बिभर्तीति भर्ता। जलतरङ्गफेनबुद्बुदादीनां मरुरिव स्वस्मिन्नारोपितानां देहादिशब्दादिप्रत्ययानां स्वयमेवार्थो भूत्वा सत्तां स्फूर्तिं च तनोत्यात्मेत्यर्थः। भर्ता भरणीयेभ्यः पर एवेति भर्तृत्वमप्यात्मनो देहेन्द्रियादिभ्यो भिन्नत्वे पूर्ववद्व्यावर्तकं विशेषणम्। किंच भोक्ता स्वस्मिन्नध्यस्तमव्यक्तादिस्थूलान्तं सर्वं स्वमहसा चैतन्यात्मकेन तिमिरं रविरिव भुङ्क्ते स्वस्मिन्नेव तिरोभावयतीति भोक्ता। भ्रान्तिदशायां नानात्मना स्वयमेव प्रतीतोऽपि सम्यग्बोधदशायां स्वमात्रावशेषो भवतीत्यर्थः। भोक्ता भोज्यात्पर एवेति भोक्तृत्वमप्यात्मनो देहादिभिन्नत्वे पूर्ववद्व्यावर्तकं विशेषणम्। किंच महेश्वरः अव्यक्तादपि स्थूलमत्त्वान्महान् "महतो महीयान्" इतिश्रुतेः। महत्त्वमप्यात्मनो देहादिभिन्नत्वे हेतुः। आत्मा देहादिभ्यो भिन्नः महत्त्वादाकाशवत्। महत्त्वमपरिच्छिन्नत्वम्। नहि परिपूर्णस्य वस्तुनः परिच्छिन्नत्वं देहाद्यन्यतमत्वं च संभवति सर्वप्रमाणविरोधात्। किंच ईश्वरः चुम्बकस्य सन्निधौ अय इव यस्य सन्निधिमात्रेण वृ(बु?)द्ध्यादि सर्वं जडं चेष्टते स आत्मा ईश्वर ईशनशीलः सर्वप्रवृत्तिहेतुः "ईशानो भूतभव्यस्य" इतिश्रुतेः। आत्मा प्रकृतितत्कार्येभ्यो भिन्नः ईश्वरत्वाद्राजवदितीश्वरत्वमप्यात्मन इतरभिन्नत्वे हेतुस्तेन प्रकृतितद्विकारतद्धर्मतत्कर्मतदवस्थालेशराहित्यमात्मनः सिद्धम्। महांश्चासावीश्वरश्च महेश्वरः परिपूर्णः कूटस्थोऽसङ्गचिदेकरस आत्मेति विशेषणषट्केन व्यवस्थापितम्। ननु प्रत्यगात्मा परमात्मेति द्वैविध्ये कथमद्वैतसिद्धिरित्याशङ्कायां न, ब्रह्मण एव परिपूर्णस्यारोपिताविद्याकार्यैः परिच्छित्तिभानात्परिच्छिन्नत्वं क्षेत्रज्ञत्वं च कल्पितं, यथैकस्यैवाकाशस्य कल्पितघटोपाधिना परिच्छिन्नत्वम्, घटाकाशत्वं च कल्पितं, तद्वद्ब्रह्मणि प्रकृतिः प्राकृतं च सर्वमविद्यया कल्पितं मिथ्यैव भवति नतु सत्यं "त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रम्" "चिदेकरसो ह्ययमात्मा" इति "विकल्पो नहि वस्तु" इति "असत्वादन्यस्य" इत्यादिश्रुतिभिरिदं सर्वं मिथ्या मायाकार्यत्वादैन्द्रजालिकवदित्यादियुक्तिभिश्च विचार्यमाणे देहादिद्वैतप्रपञ्चस्य सर्वस्य मायाकार्यत्वेन मिथ्यात्वाद्द्वैतकारणत्वानुपपत्तेः ब्रह्मात्मनोर्भेदस्य महाकाशघटाकाशयोरिवोपाधिपरिकल्पितत्वादुपाधेरप्यविद्याकार्यत्वेन मिथ्यात्वाच्च तदसत्त्वे तयोरभेद एव। ततस्त्वद्वितीयत्वं ब्रह्मणो निरङ्कुशमिति बोधयितुं ब्रह्मात्मनोरेकत्वमाह—**परमात्मेति** चाप्युक्त इति। योऽस्मिन् देहे पुरुषोऽस्मत्प्रत्ययार्थो बुद्धितद्वृत्तिसाक्षिलक्षणो यस्मिन् प्रकृतिसांनिध्यात्कर्तृत्वभोक्तृत्वादिसंसारः कल्पितः उपद्रष्टृत्वादिलक्षणैर्विचार्यमाणे यः प्रकृतितद्विकारतद्धर्मतत्कर्मसंबन्धलेशशून्योऽसंसारी नित्यकूटस्थासङ्गचिद्रूपः स आत्मा परमात्मा ब्रह्मैव इति सर्वश्रुतिभिरुक्तः "तदेतदात्मानमोमित्यपश्यन्तः पश्यत तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैवात्र ह्येव न विचिकित्स्यम्" इति, "स आत्मा तत्त्वमसि श्वेतकेतो" इति, "अयमात्मा ब्रह्म" इति चेत्यादिभिर्ब्रह्मात्मनोरभेद एव सम्यक्प्रतिपादित इत्यर्थः। ततः क्षेत्रज्ञस्य ब्रह्मभावः स्वाभाविक एव नतु कल्पितः, यतः सर्वज्ञया सत्यवादिन्या प्रमाणशिरोमण्या श्रुत्या "तदेतत्सत्यमात्मा ब्रह्मैव ब्रह्मात्मैव" इति तयोरेकत्वमुच्यते तथैवेश्वरेणापि "क्षेत्रज्ञं चापि मां विद्धीति देहेऽस्मिन् पुरुषः परः" इति च। ततो ब्रह्मात्मनोरेकत्वे द्वैतहेतोरन्यस्याभावाद्ब्रह्मणोऽद्वितीयत्वं च निर्विचिकित्सं सिद्धम्॥ २२॥

श्री० टी०—तदनेन प्रकारेण प्रकृत्यविवेकात्पुरुषस्य संसारो न तु स्वरूपत इत्याशयेन तस्य स्वरू-

पमाह—उपद्रष्टेति । अस्मिन्प्रकृतिकार्ये देहे च वर्तमानोऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः । तत्र हेतवः—यस्मादुपद्रष्टा पृथग्भूत एव समीपे स्थित्वा द्रष्टा तथाऽनुमन्ता अनुमोदितेव सन्निधिमात्रेणानुग्राहकः "साक्षी चेता केवलो निर्गुणश्च" इत्यादि श्रुतेः । तथा ऐश्वरेण रूपेण भर्ता विधारक इति चोक्तः भोक्ता पालक इति च । महांश्चासावीश्वरश्चेति स ब्रह्मादीनामधिपतिरिति च परमात्मा अन्तर्यामीति चोक्तः श्रुत्या । तथा च श्रुतिः—"एष भूताधिपतिरेष लोकेश्वर एष लोकपालः" इत्यादिः ॥२२॥

स० टी०—तदेवं प्रकृतिस्थस्य मिथ्यातादात्म्यतोऽनया ॥ पुरुषस्यास्ति संसारो न स्वतश्चेत्युदीरितम् ॥ १ ॥ कीदृशं पुरुषस्यास्ति स्वरूपं यत्र संसृतिः ॥ स्वतो नास्तीत्यपेक्षायां पुरुषस्याद्वयस्य तत् ॥ २ ॥ यादृशं रूपमेतस्य क्षेत्रज्ञस्य मतं तथा ॥ साक्षादेव पुनस्तस्य निर्देशः क्रियतेऽधुना ॥ ३ ॥ अस्मिन्नाविद्यके देहे वर्तमानोऽपि पूरुषः ॥ परो देहाद्यसंस्पृष्टोऽसंसारी वस्तुतः स्वतः ॥ ४ ॥ यस्मादयमुपद्रष्टा समस्तव्यापृतेः परः ॥ यथर्त्विग्यजमानेषु व्यापृतेषु स्वकर्मणि ॥ ५ ॥ अव्यापृतस्तटस्थोऽन्यो यज्ञविद्याविशारदः ॥ ईक्षिता गुणदोषाणामृत्विगादेश्च कर्मणः ॥ ६ ॥ तथा देहेन्द्रियादीनां व्यापारेषु विलक्षणः ॥ स्वयमव्यापृतस्तेषां व्यापाराणां समीपगः ॥ ७ ॥ द्रष्टैव न तु कर्ताऽसौ साक्षित्वेनास्त्यविक्रियः ॥ द्रष्टारो बाह्यवस्तूनां देहश्चक्षुर्मनोधियः ॥ ८ ॥ तेषामाभ्यन्तरो द्रष्टोपद्रष्टा प्रत्यगन्तिगः ॥ अव्यवधानरूपस्योपशब्दार्थस्य चिद्घने ॥ ९ ॥ प्रत्यगात्माद्वये पर्यवसानादिति वार्थतः ॥ देहेन्द्रियादिचेष्टासु स्वयमव्यापृतोऽपि सन् ॥ १० ॥ प्रवृत्त इव सांनिध्यादनुमन्तावभासते ॥ यद्वा देहेन्द्रियादीन्संप्रवृत्तान्निजकर्मसु ॥ ११ ॥ न वारयति यः साक्षी सोऽनुमन्तेत्युदीरितः ॥ संघातस्य शरीरादेश्चिदाभासान्वितस्य च ॥ १२ ॥ स्वसत्तास्फूर्तिदानेन पोषको धारकस्तथा ॥ स भर्ता निर्विकारोऽपि सर्वाधिष्ठानभावतः ॥ १३ ॥ स्वचैतन्येन सर्वान्धीप्रत्ययांस्त्रिगुणात्मिकान् ॥ भासयत्युपलब्धोक्तो भोक्ता नैवेति विक्रियाम् ॥ १४ ॥ सर्वात्मत्वात्स्वतन्त्रत्वान्महानीशो महेश्वरः ॥ देहादिधिषणान्तानां कल्पितानामविद्यया ॥ १५ ॥ आत्मत्वेन गृहीतानां प्रकृष्टात्मान्तरान्तरः ॥ उक्तैर्विशेषणैर्युक्तः परमात्मेति शब्दितः ॥ १६ ॥ स एव पुरुषः साक्षादसंसारी स्वरूपतः ॥ क्षेत्रज्ञो नित्यमुक्तोऽपि भ्रान्त्या संसारितां गतः ॥ १७ ॥ वस्तुतो मत्स्वरूपोऽसौ क्षेत्रज्ञः पुरुषोत्तमः ॥ स एवात्मा परब्रह्म देहेऽस्मिन्पुरुषः स्मृतः ॥ १८ ॥ परमात्माऽद्वयानन्दो मायोपाधिविवर्जितः ॥ प्रत्यगात्मतया प्रोक्तः साक्षी सर्वान्तरः परः ॥ १९ ॥ देहेन्द्रियमनोबुद्ध्यादिभ्यो यस्तु विवेचितः ॥ क्षेत्रज्ञः पुरुषः साक्षी सोऽद्वयानन्दलक्षणः ॥ २० ॥ प्रत्यगात्माऽद्वयानन्दः प्रत्यग्रूपोऽद्वयात्मकः ॥ नानयोर्विद्यते भेदो विनोपाधी मनागपि ॥ २१ ॥ उपाध्योर्विनिवृत्तिस्तु ब्रह्मात्मैक्यधिया भवेत् ॥ ऐक्यधीहेतुरेवात्र बहुधा हरिणेरितः ॥ २२ ॥ २२ ॥

भा० टी०—पुरुषमेव साक्षान्निर्दिशति—उपद्रष्टेति । यथा ऋत्विग्यजमानेषु यज्ञकर्मव्यापृतेषु तटस्थोऽन्यो व्यापृतो यज्ञविद्याकुशलस्तद्व्यापारगुणदोषाणामीक्षिता तथा कार्यकरणानां व्यापारवतां समीपे स्थितः सन् स्वयमव्यापृतो द्रष्टा सन्निधिमात्रेण तेषां साक्षी । यद्वा देहचक्षुर्मनोबुद्ध्यात्मानो द्रष्टारस्तेषां बाह्यो द्रष्टा देहस्तत आरभ्यान्तरतमश्च प्रत्यक्समीप आत्मा द्रष्टा यतः परतरो नास्ति द्रष्टा सोऽतिशयसामीप्येन द्रष्टृत्वादुपद्रष्टा स्यात्। यज्ञोपद्रष्टृवद्वा सर्वविषयीकरणादुपद्रष्टा । ये स्वयं कुर्वन्तो व्यापारवन्तो भवन्ति तेषु कुर्वत्सु यास्तेषां क्रियास्तासु पार्श्वस्थस्य परितोषोऽनुमननमनुमोदनं तस्य सन्निधिमात्रेण कर्ता अनुमन्ता कार्यकरणप्रवृत्तिषु स्वयमप्रवृत्तोऽपि प्रवृत्त इव तदनुकूलो विभाव्यते तेन वानुमन्ता, स्वव्यापारेषु प्रवृत्तान् तत्साक्षीभूतः कदाचिदपि न निवारयतीति वाऽनुमन्ता, देहेन्द्रियमनोबुद्धीनां संहतानां चैतन्यात्मपारार्थ्येन निमित्तभूतेन चैतन्याभासानां स्वरूपावधारणस्य चैतन्यात्मकृतत्वात् भर्तात्मोच्यते । भोक्ता

नित्यचैतन्यस्वरूपेण बुद्धेः सुखःदुःखमोहात्मिकान् प्रत्ययान्सर्वविषयविषयान् विभक्ततयोपलब्धातो भोक्ता आत्मोच्यते सर्वात्मत्वात्स्वतन्त्रत्वाच्च । महांश्चासावीश्वरश्चेति महेश्वरः देहादिबुध्यन्तानां प्रत्यगात्मत्वेनाविद्यया प्रकल्पितानां परम उपद्रष्टृत्वादिलक्षण आत्मेति परमात्मा इति अनेन शब्देन चाप्युक्तः श्रुतौ कथितः। यः परमात्मा श्रुतावुक्तः स एव देहेऽस्मिन्पुरुषः परः अव्यक्तादुत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति वक्ष्यमाणः। श्रुतिः "साक्षी चेता केवलो निर्गुणश्च" "एष भूताऽधिपतिरेष लोकेश्वर एष लोकपालः" "ईशानं भूतभव्यस्य" "तत्सृष्ट्वा तदेवानुप्राविशत्" "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" "अव्यक्तात्पुरुषः परः" इत्याद्या ॥ २२ ॥

प० टी०—तदनेन प्रकारेण प्रकृत्यविवेकादेव पुरुषस्य संसारो न तु स्वरूपत इत्याशयेनाह—उपद्रष्टेति। अस्मिन् प्रकृतिकार्ये देहे वर्तमानेऽपि पुरुषः परो भिन्न एव न तद्गुणैर्युज्यत इत्यर्थः । तथानुमन्तानुमोदितैव सन्निधिमात्रेणानुग्राहकः। तथा ऐश्वरेण रूपेण भर्ता विधारक इति चोक्तः। भोक्ता पालक इति च। अत्र शातपथी श्रुतिः—"अदृष्टो द्रष्टाऽश्रुतः श्रोताऽमतो मन्ताविज्ञातो विज्ञाता नान्योऽस्ति द्रष्टा नान्योऽस्ति श्रोता नान्योऽस्ति मन्ता नान्योऽस्ति विज्ञातैष त आत्मान्तर्याम्यमृतोऽतोऽन्यदार्तम्" इति । भाष्यम्—अदृष्टो दर्शनायोग्यः सन् द्रष्टा विश्वसाक्षी एवं सर्वत्र तदपेक्षयाऽन्यो द्रष्टा नास्ति नापि श्रोता मन्ता विज्ञातापि एवंविध एषोन्तर्यामी आत्माऽमृतो नित्यमुक्तः अत आत्मनः सकाशादन्यदार्तम् अन्यदात्मनो विलक्षणं दृश्यजातमार्तं बाधितम् । शुक्तिकारजतवदित्यर्थः । किंभूतो महेश्वरः महांश्चासावीश्वरश्च ब्रह्मादीनामधिपतिः परम आत्मान्तर्यामी चोक्तः । श्रुतिरपि—" एष भूताधिपतिरेष लोकेश्वर एष लोकपालः " इति। अत्राधिपतिरीश्वर ईश्वरो नियन्ता लोकपालो भर्ता ॥ २२ ॥

रा० टी०—साध्वसाधुयोन्युत्पत्तौ सत्त्वादिगुणसङ्गो निमित्तमात्रकारणं भगवानेव तु स्वतन्त्रकारणमित्याह—उपद्रष्टेति । अनुमन्ता पुनः पुनः कर्तव्यस्य विशेषेणालोचकः, यद्वा अनु स्वानुकूल्येन स्वमनोऽविक्षेपकतयेति यावत् । मन्ता मत्या मतिपूर्वमिति यावत् । प्रेरयतीत्यनुमन्ता । तत्र हेतुरुपद्रष्टेति। सर्वेभ्य उपरिवर्तमानः । उत्तमः सन्निति यावत् । द्रष्टा भर्ता सर्व (धारकः) भारकः सर्वपोषक इति यावत् । भोक्ता सर्वकर्मफलसारभुक् । महाशक्तित्वान्महेश्वरः । परमात्मा परमचेतनः । इतिशब्दो हेत्वर्थः सन्सर्वत्रान्वीयमानः अनुमन्तृत्वे उपद्रष्टृत्वाद्भर्तृत्वादित्यादिरूपेण हेत्वर्थको ध्येयः । उपद्रष्टृत्वादिहेतुभ्योऽनुमन्ता पुरुष उक्त इति । चशब्दो हेतुसमुच्चये । कोऽनुमन्ता पुरुष इत्यतः अस्मिन्देहेऽप्युक्त इति उक्तं, देहस्थत्वेनोक्तश्च भगवान्स्वयमेव क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेष्विति स्वस्य देहस्थत्वेन प्रागुक्तत्वादिति भावः । एतेन यतश्च यदित्यनेन यादृग्धर्मविशिष्टाद्यत्क्षेत्रं प्रवर्तते एतन्मे शृणुवति प्राक् प्रतिज्ञातमप्युक्तं भवति । उपद्रष्टृत्वादिधर्मविशिष्टात्प्रवर्तत इति ॥ २३ ॥

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ॥**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥ २३ ॥**

त० टी०—उक्तपुरुषप्रकृतिविवेकज्ञानिनं स्तौति—य एवमिति । एवमुपद्रष्टृत्वादिस्वभावं पुरुषं प्रकृतिं च गुणैः सुखदुःखादिपरिणामैः सह यो वेत्ति स सर्वथा देवमनुष्यादिदेहे कस्मिंश्चित्सुखितया क्लिशितया वा वर्तमानोऽपि स भूयो नाभिजायते प्रकृत्या न संबध्यते । प्रजापतिवाक्योदितापहतपाप्मत्वादिधर्मकमनवच्छिन्नज्ञानमात्मानं देहान्ते प्राप्नोतीत्यर्थः ॥ २३ ॥

१ एनमिति राघवानन्दधृतः पाठः ।

म० टी०—तदेवं स च यो यत्प्रभावश्चेति व्याख्यातमिदानीं यज्ज्ञात्वाऽमृतमश्नुत इत्युक्तमुपसंहरति—य इति । य एवमुक्तेन प्रकारेण वेत्ति पुरुषमयमहमस्मीति साक्षात्करोति प्रकृतिं चाविद्यां गुणैः स्वविकारैः सह मिथ्याभूतामात्मविद्यया बाधितां वेत्ति निवृत्ते ममाज्ञानतत्कार्ये इति, स सर्वथा प्रारब्धकर्मवशादिन्द्रवद्विधिमतिक्रम्य वर्तमानोऽपि भूयो न जायते पतितेऽस्मिन् विद्वच्छरीरे पुनर्देहग्रहणं न करोति । अविद्यायां विद्यया नाशितायां तत्कार्यासंभवस्य बहुधोक्तत्वात् 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति न्यायात् । अपिशब्दाद्विधिमनतिक्रम्य वर्तमानः स्ववृत्तस्थो भूयो न जायत इति किमु वक्तव्यमित्यभिप्रायः ॥ २३ ॥

शं० टी०—एवं प्रकृतिपुरुषयोर्विभागं पुरुषस्य प्रकृतिसंबन्धराहित्यं ब्रह्माभिन्नत्वं च प्रतिपाद्य एवंलक्षणमात्मानं यो विजानाति स विदेहकैवल्यं प्राप्नोतीत्याह—य एवमिति । जन्मानेकसहस्रसमाराधितपरमेश्वरप्रसादसंपन्नः शुद्धात्मा यो मुमुक्षुरधिकारी ब्राह्मणः स्वयं सदसद्विवेकतीव्रवैराग्यशमदमसंन्यासाद्यन्तरङ्गसाधनसंपत्तिविशिष्टो भूत्वा ब्रह्मविद्गुरुसन्निधौ समनुष्ठितश्रवणादिजन्यज्ञानेनैवमुक्तप्रकारेण प्रकृतिमधिष्ठानाज्ञानतः कार्यकरणकर्तृकर्मफलरूपेण विजृम्भितामनाद्यनिर्वाच्यां सर्वानर्थमूलभूतामविद्यां गुणैर्महदादिस्थूलान्तैर्गुणकार्यैर्भोक्तृभोग्यात्मना स्थितैः सह मरोर्दर्शनेन जलप्रवाहमिवाधिष्ठानसंदर्शनेन मिथ्याभूतां वेत्ति, तथा पुरुषं क्षेत्रज्ञं च चिदाभासकर्तृककर्तृत्वभोक्तृत्वादिधर्माध्यारोपाधिष्ठानभूतं विद्यया सम्यक्निरस्ताशेषविशेषं सर्वोपाधिविनिर्मुक्तमुपद्रष्टृत्वादिलक्षणलक्षितमाद्यन्तरहितमाकाशवदत्यन्तविशुद्धमानन्दघनं चिदेकरसमात्मानं परं ब्रह्म वेत्ति । अयमेवाहमस्मि न तु कर्ता भोक्ता संसारीत्येतन्निरसनपूर्वकं प्रत्यगभिन्नं परं ब्रह्म प्रत्यग्दृष्ट्या स्वात्मना यो विजानाति स ब्रह्मविद्यातिः सर्वथा सर्वप्रकारेण वर्तमानोऽपि । यद्यपि सर्वात्मदर्शिनो विदुषः शुद्धात्मनः स्वव्यतिरेकेणान्यस्य ग्राह्यादेरभावात्प्रवृत्तिरेव न संभवति भेददर्शिनो रागादिमतः खलु प्रवृत्तिर्नतु विशुद्धवृत्त्या सर्वं ब्रह्मैव पश्यतः संभवति, तथापि दुष्टादुष्टप्रारब्धवशाद्देहे तदनुरूपेण प्रवृत्ते सति परदृष्ट्या विविधं प्रवृत्तवद्भाति, तथापि स्वदृष्ट्या स्वयमप्रवृत्त एव सन्निष्क्रियत्वान्नित्यमुक्तत्वान्निर्लेपत्वान्निर्मूलिताशेषकर्मत्वाच्च प्रारब्धक्षयात्पतितेऽस्मिन् देहे भूयः पुनर्नाभिजायते नोत्पद्यते । पुनरुत्पत्तेः कारणभूतानामविद्याकामादीनां सम्यग्ज्ञानाग्निनिर्दग्धत्वेन कारणाभावात्केवलभावं प्राप्नोतीत्यर्थः । किमु वक्तव्यं सद्वृत्तो नाभिजायत इत्यपेरर्थः । प्रकृतिपुरुषयोः स्वरूपं क्षीरनीरवत्सम्यग्विविच्य विज्ञाय प्रकृतिं च गुणैः सह विद्यया प्रविलाप्य ब्रह्मैवाहमित्यविक्रियब्रह्मात्मना तिष्ठतो यतेः सर्वथा वर्तनं यथेष्टाचरणं न संभवति । अनात्मन्यहंममाभिमानाभावात् सत्येवानात्मनि देहेन्द्रियादावहंममाभिनिवेशे इदं कर्तव्यमिदं भोक्तव्यमिति इच्छावेगे च पुंसः कर्माणि दुष्टेऽदुष्टे च प्रवृत्तिर्दृश्यते नासति । ततस्तद्विहीनस्य सर्वं ब्रह्मैव पश्यतो ब्रह्मविदः सत्यसति च प्रवृत्तिर्नोपयुज्यते । एवं सर्वत्र ब्रह्मदर्शनप्रपञ्चदर्शनयोः परस्परविरुद्धत्वात् । तर्हि सर्वथा वर्तमानोऽपीति वचनस्य व्याहतिः स्यादिति चेदुच्यते, ब्रह्मविदोऽपि ब्रह्मात्मना तिष्ठतो देहप्रारब्धवशात्कचिदाहारादौ नियमोल्लङ्घनं प्रसज्ज्यते । तेनैतस्य ज्ञानं तत्फलं च प्रतिहन्यत इति मूढानां प्रतिपत्तिस्तां वारयतीदं वचनं भागवतं सर्वथा वर्तमानोऽपि न स भूयोऽभिजायत इति । अतो नैतस्य व्याघात इति ॥२३॥

श्री० टी०—एवं प्रकृतिपुरुषविवेकज्ञानिनं स्तौति—य एवमिति । एवमुपद्रष्टृत्वादिरूपेण पुरुषं यो वेत्ति प्रकृतिं च गुणैः सुखदुःखादिपरिणामैः सहितां यो वेत्ति स पुरुषः सर्वथा विधिमतिलङ्घ्येह वर्तमानोऽपि पुनर्नाभिजायते मुच्यत एवेत्यर्थः ॥ २३ ॥

स० टी०—यथोक्तं प्रत्यगात्मैक्यं वेत्ति यस्तं स्तुवन् हरिः ॥ उपसंहरतीदानीं भगवान्भूतभावनः ॥ १ ॥ यथोक्तेन प्रकारेण यो मुमुक्षुरुदारधीः ॥ पुरुषं प्रत्यगात्मानं वेत्ति साक्षात्करोऽत्यजम् ॥ २ ॥

मिथ्याभूतामविद्याख्यां बाधितां स्वगुणैः सह ॥ प्रकृतिं वेत्त्यसंदेहो विध्वस्ताखिलबन्धनः ॥ ३ ॥ विनिवृत्ते ममाज्ञानतत्कार्ये चेत्यशेषतः ॥ स प्रारब्धवशाज्ज्ञानी वर्तमानोऽपि सर्वथा ॥ ४ ॥ शास्त्रीये लौकिके वापि कर्मण्युल्लङ्घ्य वा विधिम् ॥ लोकवन्नैव संसारं देहान्ते याति चिद्वपुः ॥ ५ ॥ पतितेऽस्मिन् शरीरेऽसौ पुनर्देहं कदाचन ॥ न गृह्णाति विनष्टायामविद्यायामशेषतः ॥ ६ ॥ स्ववृत्तिस्थो महात्मा यः सदाचारः स्वधर्मवान् ॥ न भूयो जायते सोऽत्र किमु वाच्यमिति स्फुटम् ॥ ७ ॥ अविद्याकामकर्मादिबीजं सकलसंसृतेः ॥ तत्त्वज्ञानाग्निना दग्धं पुनर्नारोहतीह तत् ॥ ८ ॥ बीजान्यग्न्युपदग्धानि ना रोहन्ति यथा पुनः ॥ ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥ ९ ॥ क्षीयन्ते चास्य कर्माणीत्येवं श्रुत्यापि निश्चितम् ॥ विस्तरस्त्वनुसंधेयो भाष्येऽत उपरम्यते ॥ १० ॥ २३ ॥

भा० टी०—क्षेत्रज्ञं चापि मां विद्धीत्युपन्यस्तमात्मतत्त्वं व्याख्यायोपसंहृतमिदानीं शुद्धार्थयोरैक्यरूपात्मतत्त्वस्य प्रागुक्तस्य ज्ञानं फलोक्त्या स्तौति—य इति । एवं यथोक्तेन प्रकारेण पुरुषं जीवेश्वरादिसर्वकल्पनाधिष्ठानं यो वेत्ति उक्तलक्षणः पुरुषोऽहमिति साक्षाज्जानाति प्रकृतिं चानाद्यनिर्वाच्यां सर्वानर्थोपाधिभूतां गुणैः स्वविकारैः सह प्रागुक्तैकत्वगोचरया विद्ययाऽभावमापादितां यो वेत्तीति संबन्धः । स सर्वथा वर्णाश्रमधर्मानुल्लङ्घ्य प्रवर्तमानोऽपि भूयः पुनः पतितेऽस्मिन् शरीरे देहान्तराय न जायते नोत्पद्यते । आवर्तमानो जन्ममालावानपि सर्वथा भूयो नाभिजायते इति कल्पना तु भाष्यबहिर्भूता नादर्तव्या, आवर्तमान इत्याद्युक्तेः फलाभावात् । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । ब्रह्मवेद ब्रह्मैव भवति । तस्य तावदेव चिरं यावन्न विमोक्ष्ये । इषीकातूलवच्च सर्वकर्माणि प्रदह्यन्ते । यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ॥ बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः । ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः ॥ अविद्याकामक्लेशबीजनिमित्तानां फलारम्भकाणां जन्मान्तराङ्कुरारम्भसामर्थ्यवतां कर्मणां ज्ञानाग्निनोक्तबीजदाहे सति जन्माङ्कुरारम्भसामर्थ्यं न घटत इति श्रुतिस्मृतियुक्तिभिरुक्तम् । विदुषो जन्माभावमभिप्रेत्य भगवतोक्तं न स भूयोऽभिजायत इति । एतेन ज्ञानोत्पत्तेः प्राकृतानां कर्मणामुत्तरकालभाविनामतिक्रान्तानेकजन्मकृतानां च फलमदत्त्वा प्रारब्धकर्मवन्नाशो न युक्तः । 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि' इत्यादिवचनात् । तस्मात्त्रिप्रकाराण्यपि कर्माणि त्रीणि जन्मानि संहतानि वा सर्वाण्येकं जन्मारभेरन् । अन्यथा कृतविप्रणाशे सर्वत्रानाश्वासप्रसङ्गः शास्त्रानर्थक्यं च स्यादिति शङ्का प्रत्युक्ता, सर्वकर्माणीतिविशेषणात् । सर्वेषां कर्मणां दाहस्य वक्तुं युक्तत्वात् । ननु ज्ञानोत्पत्त्युत्तरकालकृतानां सर्वकर्मणां ज्ञानसहभावित्वात् तेन दाहोऽस्तु नत्वन्येषाम् । तथाच न विशेषणवैयर्थ्यमिति चेन्न, संकोचे मानाभावात् । प्रारब्धकर्मणां मुक्तेषुवत्प्रवृत्तफलत्वात्तत्साम्यमनारब्धवेगेषुवदन्येषां कर्मणां न युज्यत इत्यतः पतितेऽस्मिन्विद्वच्छरीरे न स भूयोऽभिजायत इति युक्तमेवोक्तमिति सिद्धम् ॥ २३ ॥

प० टी०—एवं प्रकृतिपुरुषज्ञानिनं स्तौति—य एवमिति । एवमुपद्रष्टृत्वादिरूपेण यः पुरुषं वेत्ति तथा गुणैः सह सुखदुःखादिपरिणामसहितां प्रकृतिं वेत्ति स पुरुषो विधिमतिलङ्घ्य वर्तमानोऽपि पुनर्नाभिजायते मुच्यत इत्यर्थः ॥ २३ ॥

रा० टी०—प्रकृतिं पुरुषं चैव विद्धीत्युक्तार्थे बुभुत्सातिशयोत्पादनाय तज्ज्ञानफलमाह—य एनमिति । योऽधिकारी एनं पुरुषं जीवपराख्यद्विविधपुरुषं जडाजडाख्यद्विविधप्रकृतिं च तत्तद्गुणैः सह वेत्ति परोक्षतो विदित्वापरोक्षतो जानाति स पुमान्सर्वथा वर्तमानोऽपि प्रमादादन्यायप्रवृत्तिमानपि भूयः पुनर्नाभिजायते मुक्तो भवतीत्यर्थः । तदुक्तं सूत्रे 'कामकारेण चैके' इति ॥ २४ ॥

**ध्यानेनात्मनि पश्यन्ति केचिदात्मानमात्मना ॥**
**अन्ये सांख्येन योगेन कर्मयोगेन चापरे ॥ २४ ॥**

त० टी०—एवंभूतप्रकृतिवियुक्तात्मदर्शने साधनभेदप्रयुक्ताधिकारिभेदमाह—ध्यानेनेति द्वाभ्याम् । केचित्सदाचार्यमुखान्निश्चितात्मयाथात्म्या निष्पन्नयोगा ध्यानेन श्रवणमननाङ्गिभूतेन निदिध्यासनेन आत्मनि देहेऽवस्थितमात्मानमात्मना मनसा पश्यन्ति साक्षात्कुर्वन्ति । अन्येऽनिष्पन्नयोगाः सांख्येन योगेन निदिध्यासनाङ्गभूतश्रवणमननापरपर्यायेण प्रकृतिपुरुषविवेकात्मकेन योगेनात्मानं पश्यन्ति । अपरे च ततोऽपि निकृष्टाधिकारिणो ज्ञानयोगानधिकृताः कर्मयोगेनेश्वरार्पणबुद्ध्या क्रियमाणेन फलाभिसंधिरहितेन स्ववर्णाश्रमोचितेन कर्मयोगेनान्तःकणशुद्धिद्वारेण मनसो ध्यानयोग्यतोत्पादनेन पश्यन्तीत्यर्थः ॥ २४ ॥

म० टी०—अत्रात्मदर्शने साधनविकल्पा इमे कथ्यन्ते । इह हि चतुर्विधा जनाः केचिदुत्तमाः केचिन्मध्यमाः केचिन्मन्दाः केचिन्मन्दतरा इति । तत्रोत्तमानामात्मज्ञानसाधनमाह—ध्यानेनेति । ध्यानेन विजातीयप्रत्ययानन्तरितेन सजातीयप्रत्ययप्रवाहेण श्रवणमननफलभूतेनात्मचिन्तनेन निदिध्यासनशब्दोदितेन आत्मनि बुद्धौ पश्यन्ति साक्षात्कुर्वन्ति आत्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन केचिदुत्तमाः योगिनः । मध्यमानामात्मज्ञानसाधनमाह—अन्ये मध्यमाः सांख्येन योगेन निदिध्यासनपूर्वभाविना श्रवणमननरूपेण नित्यानित्यविवेकादिपूर्वकेण इमे गुणत्रयपरिणामा अनात्मानः सर्वे मिथ्याभूतास्तत्साक्षिभूतो नित्यो विभुर्निर्विकारः सत्यः समस्तजडसंबन्धशून्य आत्माहमित्येवं वेदान्तवाक्यविचारजन्येन चिन्तनेन, पश्यन्त्यात्मानमात्मनीति वर्तते । ध्यानोत्पत्तिद्वारेणेत्यर्थः । मन्दानां ज्ञानसाधनमाह—कर्मयोगेन ईश्वरार्पणबुद्ध्या क्रियमाणेन फलाभिसंधिरहितेन तत्तद्वर्णाश्रमोचितेन वेदविहितेन कर्मकलापेन चापरे मन्दाः पश्यन्त्यात्मानमात्मनीति वर्तते । सत्त्वशुद्ध्या श्रवणमननध्यानोत्पत्तिद्वारेणेत्यर्थः ॥ २४ ॥

शं० टी०—एवं ज्ञेयं यत्तत्प्रवक्ष्यामीत्यादिना निरूपितस्य ब्रह्मणः स्वरूपं विज्ञाय प्रकृतिं च विलाप्य सर्वमिदमहं च ब्रह्मैवेति सर्वं ब्रह्मैव पश्यतो यतेस्तद्विज्ञानस्य फलं विदेहकैवल्यं प्रतिपाद्याऽधुना मुमुक्षूणामेवोत्तममध्यमाधमाधिकारिणां निर्विशेषब्रह्मप्राप्तये तत्तदधिकारानुरूपाणि साधनान्याह—ध्यानेनेति द्वाभ्याम् । केचिदुत्तमाधिकारिणो यतयः 'विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरश्शरीरः' इत्यादिना 'एकान्ते सुखमास्यतां परतरे चेतः समाधीयताम्' इत्युक्तरीत्या तीव्रमोक्षेच्छावैराग्याभ्यां सर्वेभ्यो विषयेभ्य इन्द्रियाण्युपसंहृत्य मनसः प्रत्यगात्मन्येकाग्रतामापाद्य, ध्यानेन श्रवणादिसंस्कारजन्यज्ञानसाध्येन ध्यानेन विजातीयप्रत्ययानन्तरितसजातीयप्रत्ययप्रवाहीकरणलक्षणेनात्मनि बुद्धावेव सर्वद्दश्यप्रकाशकतया स्थितं निर्विशेषं निराकारमाकाशवत्परिपूर्णं चिदेकरसमात्मानं परमात्मानं स्वात्मना स्वस्वरूपत्वेन पश्यन्ति—भेदवासनानिवृत्तये श्रवणादिना ज्ञातं ब्रह्मैवाहमहमेव ब्रह्मेत्यात्मानं सर्वदा ब्रह्मैव भावयन्तीत्यर्थः । यद्वा "सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः" इति मायाकार्यस्य सर्वस्य सदास्पदत्वश्रवणात् भ्रान्त्या कल्पितं सर्वमव्यक्तादिस्थूलान्तमात्मनि परमात्मनि सर्वाधिष्ठाने प्रातिलोम्येन प्रविलाप्य, तेन प्रत्यस्तमिताशेषविशेषं सद्घनं चिद्घनमानन्दघनमात्मानं परमात्मानं परं ब्रह्म ध्यानेन ब्रह्माकाराकारितान्तःकरणवृत्त्या तैलधारावदविच्छिन्नया वृत्त्यन्तरनिर्मुक्तया ब्रह्मैवाहमित्यात्मना स्वस्वरूपत्वेन पश्यन्ति—स्वमेव ब्रह्म सर्वदा भावयन्तीत्यर्थः । अन्ये मध्यमाधिकारिणो निरुक्तध्यानयोगाक्षमाः यतयः सांख्येन सांख्यं नाम बुद्धेः सर्वास्वप्यवस्थास्वहं नित्यकूटस्थासङ्ग-

चिद्रूप एवास्मि, न कदापि चले, न कुर्वे, न भुञ्ज इति स्वस्य चैतन्याकारमात्रस्य प्रत्यग्वृत्त्या सर्वदा प्रकृतितद्गुणतद्विकारतद्धर्मतत्कर्मतदवस्थासंबन्धराहित्यदर्शनमेव संसारमोक्षस्योपायत्वेन सांख्यमेव योगस्तेन सांख्येन योगेनात्मनि बुद्धावात्मानं पश्यन्ति—स्वमकर्तारमभोक्तारं निष्क्रियमेव सर्वदा भावयन्तीत्यर्थः। अपरे च ध्यानसांख्ययोगयोः सदसद्विवेकवैराग्यसंन्यासैकसाधनयोरनधिकारिणो गृहिणोऽपि कर्मयोगेन मत्कर्मकृन्मत्परम इत्युक्तरीत्या परमेश्वरार्थं सकलकर्मानुष्ठानं कर्मयोगः मोक्षोपायत्वात्कर्मैव योगः कर्मयोगस्तेन चित्तशुद्धिसंपादनकारणेनाराधयन्तः सन्तः आत्मानं परमात्मानं विश्वरूपमानि बुद्धौ पश्यन्ति। वासुदेवः सर्वमिति बुद्ध्या सर्वं विष्णुं भावयन्ति, यद्वा परमेश्वरार्पणबुद्ध्या श्रद्धाभक्तिभ्यां समनुष्ठितेन कर्मयोगेन चित्तशुद्धिं प्राप्य तत्संपादितश्रवणादिजन्यज्ञानेनात्मनि बुद्धावात्मानमात्मना पश्यन्ति क्रमेणेत्यर्थः॥ २४॥

**श्री० टी०**—एवंभूतविविक्तात्मज्ञाने साधनविकल्पानाह—**ध्यानेनेति द्वाभ्याम्**। ध्यानेन आत्माकारप्रत्ययावृत्त्या आत्मनि देहे आत्मना मनसा एनमात्मानं केचित्पश्यन्ति। अन्ये तु सांख्येन प्रकृतिपुरुषवैलक्षण्यालोचनेन, योगेनाष्टाङ्गेनापरे, अपरे च कर्मयोगेन पश्यन्तीति सर्वत्रानुषङ्गः। एतेषां च ध्यानादीनां यथायोग्यं क्रमसमुच्चये सत्यपि तत्तन्निष्ठाभेदाभिप्रायेण विकल्पोक्तिः॥ २४॥

**स० टी०**—अत्रात्मदर्शने श्रीशः साधनान्याह शास्त्रतः॥ अधिकारानुसारेण विकल्पा ईरिता अमी॥ १॥ चतुर्विधा जना लोके केचित्स्युरुत्तमा बुधाः॥ केचित्स्युर्मध्यमाः केचिन्मन्दा मन्दतराः परे॥ २॥ तत्रोत्तमानां ब्रह्मैक्यज्ञानसाधनमुच्यते॥ सम्यक् श्रुतं मतं तत्त्वं ध्यानेनात्मनि संस्कृते॥ ३॥ सेन्द्रियं चित्तमायम्य निदिध्यासनरूपिणा॥ अखण्डं प्रत्यगात्मानं साक्षात्कुर्वन्ति चेतसा॥ ४॥ स्वबुद्धौ संस्कृतेनैके मुख्यास्ते ज्ञानयोगिनः॥ मध्यमाः सांख्ययोगेन वेदान्तश्रवणेन च॥ ५॥ नित्यानित्यविवेकेन युक्तिभिर्मननेन च॥ देहेन्द्रियादयः सर्वे विकाराः प्रकृतेरिमे॥६॥ मिथ्याभूता अनात्मानस्तेभ्यो भिन्नोऽहमान्तरः॥ साक्षिभूतो विभुर्नित्यो निर्विकारोऽस्मि केवलः॥ ७॥ जडसंबन्धशून्योऽहमित्येवं युक्तितत्पराः॥ बुद्धौ ध्यानपरिप्राप्त्या पश्यन्त्यात्मानमात्मना॥ ८॥ श्रुत्वा मत्वा निदिध्यास्य साक्षात्कुर्वन्ति ये जनाः॥ अखण्डं वस्तु सद्बुद्ध्या सावधानास्त उत्तमाः॥ ९॥ ये तु श्रुत्वाथ मनने तत्पराः श्रद्धया जनाः॥ किंचिद्ध्याने प्रविष्टास्ते मध्यमाः सांख्ययोगिनः॥ १०॥ ईश्वरार्पणबुद्ध्या ये मन्दाः कुर्वन्ति कर्म ते॥ फलाभिसंधिशून्येनानहंकारेण चेतसा॥ ११॥ स्ववर्णाश्रमधर्मेण सत्त्वशुद्ध्याधिकारिणः॥ भूत्वा बोधपरिप्राप्त्या पश्यन्त्यात्मानमात्मना॥ १२॥ २४॥

**भा० टी०**—एवं तत्त्वंपदार्थौ संशोध्य तयोरैक्यं प्रतिपादितमिदानीमात्मदर्शनोपायविकल्पान् यथाधिकारं प्रतिपादयति—**ध्यानेनेति**। केचिदुत्तमाधिकारिणो योगिनः एतज्जन्मनि जन्मान्तरे वा कृताभ्यां श्रवणमननाभ्यामसंभावनादिदोषनिर्मुक्ताः शब्दादिविषयेभ्यः श्रोत्रादीनि करणानि मनस्युपसंहृत्य मनश्च प्रत्यगात्मन्येकाग्रं विधाय तैलधारावत्संततऽविच्छिन्नप्रत्ययेन निदिध्यासनापरपर्यायेण ध्यानेनात्मनि बुद्धौ आत्मानं प्रत्यक्चेतनमात्मना ध्यानसंस्कृतेनान्तःकरणेन पश्यन्ति साक्षात्कुर्वन्ति। आत्मनि देह इति व्याख्याने तूक्तार्थापेक्षया सामञ्जस्यं चिन्त्यम्। अन्ये मध्यमाधिकारिणः श्रवणमननपरायणा इमे सत्त्वरजस्तमांसि गुणाः सविकाराः अनात्मानः मिथ्याभूतास्तद्व्यापारसाक्षीभूतोऽपरिणामी नित्यो गुणविलक्षणो विभुः सच्चिदानन्दघन आत्मेति वेदान्तविचारजन्येन चिन्तनात्मकेन सांख्येन योगेन ध्यानोत्पत्तिद्वारा आत्मन्यात्मानमात्मना पश्यन्तीति पूर्ववत्। अपरे मन्दाधिकारिणः कर्मैव योगार्थत्वगुणेन योगस्तेन कर्मयोगेन ईश्वरार्पणबुद्ध्याऽनुष्ठीयमानेन सत्त्वशुद्धिश्रवणमननध्यानापरोक्षज्ञानोत्पत्तिद्वारेणात्मन्यात्मानमात्मना पश्यन्तीति पूर्ववत्॥ २४॥

प० टी०–अथैवंविधविवेकेनात्मज्ञाने साधनविकल्पानाह–ध्यानेनेति द्वाभ्याम् । ध्यानेनात्माकारप्रत्यया-वृत्त्यात्मनि देह एवात्मना मनसैवात्मानं केचित्पश्यन्ति । श्रुतिरपि–"श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्यति सर्वस्यात्मा भवति" इति । स्पष्टोऽर्थः । तथान्येऽधिकारिणः सांख्येन योगेन प्रकृतिपुरुषवैलक्षण्यालोच-नेन पश्यन्ति । श्रुतिरपि ऋग्वेदे–"पतङ्गमक्तमसुरस्य मायया हृदा पश्यन्ति मनसा विपश्चितः । समुद्रे अन्तः कवयो विचक्षते मरीचीनां पदमिच्छन्ति वेधसः" इति । भाष्यम्–असुरस्य बलवतः परमेश्वरस्य माययाक्तं व्याप्तमत एव पतङ्गमनेकदेहपतनशीलं क्षेत्रज्ञं विपश्चितो ज्ञानवन्तः प्रथमसंकल्पात्मकेन मनसा-नन्तरं हृदा निश्चयात्मकबुद्धिरूपेणैवमात्मनैवात्मानं पश्यन्तीत्यर्थः । तमेव कवयः क्रान्तदर्शिनोऽन्तः स-मुद्रे विचक्षते । समुद्रयति व्याप्नोतीति समुद्रः प्रपञ्चस्तस्मिन् पश्यन्ति क्षीरान्तर्घृतमिवेत्यर्थः । तत्र वेधसो हिरण्यगर्भस्य मरीचीनां प्रकाशानां पदं स्थानमिच्छन्ति पदार्थप्रतीतिरूपेण गवेषयन्ति । अपरे कर्मयोगेन चित्तशुद्धिद्वारा पश्यन्ति । एवं यथाधिकारं विकल्पोक्तिः ॥ २४ ॥

रा० टी०–परमपुरुषादिदर्शने साधनमाह–ध्यानेनेति । केचिच्छ्रवणमननोपेताः ध्यानेनात्मना बुद्ध्यात्मानं भगवन्तमात्मनि देहे पश्यन्ति । अन्ये सांख्येन योगेन वेदोक्तभगवत्स्वरूपपरोक्षज्ञानेन–ध्यानेन चेत्यनुषज्यते–आत्मानं पश्यन्ति । अपरे श्रवणादिहीनाः कर्मयोगेन च कर्मरूपोपायेन सांख्येन ध्यानेन चेत्यनुषज्यते । साधुकर्मानुष्ठानलब्धभगवत्प्रसादजन्यश्रवणमननध्यानैरात्मानं पश्यन्ति । ध्यानेऽशक्तानां सांख्यसंपादनद्वारा ध्यानसंपादनेन । तत्राप्यशक्तानां कर्मोपायेन श्रवणादिसंपादनेनात्मदर्शनमित्यवस्थाभेद-माश्रित्यायमर्थो भाष्योक्तः । तात्पर्ये तु केचिदृषयः स्वप्रतिभयान्यतः श्रवणेन च हरिं ज्ञात्वा आत्मना मनसा आत्मनि हृदये आत्मानं परमात्मानं ध्यानेन पश्यन्ति साक्षात्कुर्वन्ति । केचिदित्युक्त्यान्ये नारदा-द्याः ऋषयस्तु बहिरपि पश्यन्ति इति सूचितम् । केचिदृषयो नारदाद्या बहिस्त्वपीति स्मृतेः । ऋषयोन्तः-प्रकाशा इति सूत्रभाष्योक्तश्रुतिस्तु नारदाद्यन्यविषयेति ज्ञातव्यम् । अन्ये देवास्तु सांख्येन योगेन स्वप्रतिभाख्य-ज्ञानरूपोपायेन ध्यानेन विनैव विष्णुप्रसादलब्धस्वप्रतिभाख्यज्ञानेन बहिरन्तश्च विष्णुं पश्यन्तीत्यर्थः । अपरे क्षत्रियवरा राजानः कर्मयोगेनाश्वमेधादिकर्मरूपोपायेन श्रवणेन स्वप्रतिभया च नित्यं भगवन्तं स्मर-न्तोऽश्वमेधादियज्ञकर्मकाले यज्ञभागार्थमागतमात्मानं पश्यन्तीत्यर्थः । श्रवणप्रतिभयोरल्पत्वादत्रानुक्तिः ॥२९॥

**अन्ये त्वेवमजानन्तः श्रुत्वाऽन्येभ्य उपासते ॥**
**तेऽपि चातितरन्त्येव मृत्युं श्रुतिपरायणाः ॥ २५ ॥**

त० टी०–ततो मन्दाधिकारिण आह–अन्ये त्विति । अन्ये तूक्तयोगादिसाधनेष्वनधिकृता एवमुक्तप्रकारेणात्मानमजानन्तोऽन्येभ्यस्तत्त्वदर्शिभ्यो गुरुभ्यः श्रुत्वा इत्थं तत्त्वं जानीतेत्युक्ताः सन्त उपासते–श्रद्धाविश्वासेनाङ्गीकुर्वन्ति । तेऽपि श्रुतिपरायणाः श्रद्धया श्रवणपरायणाः सन्तो मृत्युं संसारं क्रमेण तरन्ति । अपिशब्दाद्ये साधनसंपन्ना विचारसमर्थास्ते मृत्युं तरन्तीति किमु वक्त-व्यमिति सूचितम् ॥ २५ ॥

म० टी०–मन्दतराणां ज्ञानसाधनमाह–अन्य इति । अन्ये तु मन्दतराः, तुशब्दः पूर्वश्लोकोक्तत्रि-विधाधिकारिवैलक्षण्यद्योतनार्थः, एषूपायेष्वन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तोऽन्येभ्यः कारुणिकेभ्यः आचार्येभ्यः श्रुत्वेदमेवं चिन्तयतेत्युक्ता उपासते श्रद्दधानाः सन्तश्चिन्तयन्ति, तेऽपि चातितरन्त्येव मृत्युं संसारं श्रुतिपरायणाः स्वयं विचारासमर्था अपि श्रद्दधानतया गुरूपदेशश्रवणमात्रपरायणाः । तेऽपीत्यपिशब्दाद्ये स्वयं विचारसमर्थास्ते मृत्युमतितरन्तीति किमु वक्तव्यमित्यभिप्रायः ॥ २५ ॥

शं० टी०—इत्थं ध्यानसांख्ययोगयोः कर्मयोगे चाप्यधिकारिणां यतीनां गृहस्थानां च ब्राह्मणादीनां यथाधिकारं मोक्षसाधनमुपदिश्य परमदयालुतया श्रीभगवान् कर्मस्वप्यनधिकारिणां मुक्तिसाधनमाह—अन्ये त्विति । कर्माधिकारिभ्यस्त्रैवर्णिकेभ्यो ब्राह्मणादिभ्योऽन्ये तु कर्मस्वनधिकारिणः केवलपामराः स्त्रीशूद्रादयः किंचिदप्येवमुक्तेषु साधनेष्वेकमपि साधनमजानन्तः शास्त्राध्ययनतदर्थज्ञानयोग्यताभावादुक्तसाधनान्यतरं यथावज्ज्ञातुं कर्तुं चासमर्थाः सन्तः स्वयमन्येभ्यो ब्राह्मणादिभ्यो गुरुभ्यस्त्वमिदमेवं कुरु इदमेवमनुसंधेहीति श्रुत्वा श्रद्धया भक्त्या च श्रुतिपरायणाः श्रूयत इति श्रुतिः श्रुतोऽर्थस्तत्परायणास्तदेकप्रवणाः सन्त उपासते श्रुतमर्थं सम्यगनुतिष्ठन्ति तेऽपि परोपदेशानुवर्तिनः ईश्वरप्रसादचित्तशुद्धितत्फलसिद्ध्यादिक्रमेण मृत्युं मृत्युदुःखप्रधानं संसारमतितरन्त्यतिक्रामन्ति क्रमेण मुक्तिं गच्छन्तीत्यर्थः ॥ २५ ॥

श्री० टी०—अतिमन्दाधिकारिणां निस्तारोपायमाह—अन्य इति । अन्ये तु साङ्ख्ययोगादिमार्गेणैवंभूतमुपद्रष्टृत्वादिलक्षणमात्मानं साक्षात्कर्तुमजानन्तोऽन्येभ्य आचार्येभ्य उपदेशेन श्रुत्वा उपासते ध्यायन्ति । ते च श्रद्धयोपदेशश्रवणपरायणाः सन्तो मृत्युं संसारं शनैरतितरन्त्येव ॥ २६ ॥

स० टी०—अन्ये त्वेषु विकल्पेषूपायेनान्यतरेण च ॥ अजानन्तो विवेकेन यथोक्तात्मानमान्तरम् ॥१॥ आचार्येभ्यो दयालुभ्यः श्रुत्वा ये श्रद्धयान्विताः ॥ इदमेवं चिन्तयतेत्युक्ताः सन्त उपासते ॥ २ ॥ तेऽपि धीरास्तरन्त्येव मृत्युं संसारसागरम् ॥ स्वयं विचाराकुशलाः श्रद्धानतया जनाः ॥ ३ ॥ गुरूपदेशश्रवणे तत्परा मुक्तिभाजनाः ॥ ये विचारे स्वयं दक्षाः श्रद्धाना जितेन्द्रियाः ॥ ४ ॥ संसारं ते तरन्तीति किमु वाच्यं विचक्षणाः ॥ ५ ॥ २५ ॥

भा० टी०—मन्दतरानाह—अन्य इति । अन्ये तु—तुशब्दः पूर्वेभ्यो वैलक्षण्यद्योतनार्थः । एषु विकल्पेषु अन्यतरेणाप्येवं यथोक्तमात्मानमजानन्तः श्रुतिपरायणाः श्रुतिः श्रवणं परमयनं मोक्षमार्गप्रवृत्तौ परं साधनं येषां केवलं परोपदेशप्रमाणाः स्वयं विवेकरहिताः अन्येभ्यः आचार्येभ्य इदमेव चिन्तयतेति वदद्भ्यः श्रुत्वा श्रद्धानाः सन्तस्तदेवोपासते चिन्तयन्ति तेऽपि च मृत्युयुक्तं संसारमतितरन्त्येवातिक्रामन्त्येव । चकारः पूर्वोक्तसमुच्चयार्थः । तेऽप्यतितरन्ति पूर्वोक्तास्त्रयस्तरन्तीति किमु वक्तव्यमिति कैमुत्यन्यायबोधनार्थोऽपिशब्दः । तेषामुत्तमादित्वाभावेऽपि संसारातितरणे संशयो नास्तीत्यवधारणार्थः ॥ २५ ॥

प० टी०—अथातिमन्दाधिकारिणां निस्तारोपायमाह—अन्ये त्विति । अन्ये सांख्ययोगादिमार्गेणैवंभूतमुपद्रष्टेत्यादिलक्षणमात्मानं साक्षात्कर्तुमजानन्तस्तेऽन्येभ्य आचार्येभ्य उपदेशतः श्रुत्वोपासते ध्यायन्ति । तेऽपि श्रुतिपरायणा आचार्योपदेशश्रवणसादरा मृत्युमतितरन्त्येव ॥ २५ ॥

रा० टी०—अन्ये तु मनुष्यास्तु एवं स्वप्रतिभाबलेनात्मानमजानन्तः अन्येभ्यः श्रुत्वा मत्वेत्यपि ग्राह्यम् । उपासते ध्यायन्ति । ततः पश्यन्ति च । तेऽपि च अल्पतरप्रतिभावन्तोऽपि श्रुतिपरायणाः बहुश्रवणवन्तः सन्तः मृत्युसंसारमतितरन्त्येवेत्यर्थः ॥ २६ ॥

**यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् ॥**
**क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ ॥ २६ ॥**

त० टी०—एवं विविक्तात्मज्ञानं संसारनिवर्तनमित्युक्तमितः परं तद्दार्ढ्यार्थमेव प्रकृतिपुरुषविचारः क्रियते यावदध्यायसमाप्ति । तत्र तावत्प्रकृतिपुरुषसंसर्ग एव सर्वप्राणिसंभवहेतुरित्याह—यावदिति । यावत्किञ्चित्स्थावरजंगमं सत्त्वं प्राणिमात्रं संजायते उत्पद्यते, तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् प्रकृतिपुरुषयोः संयोगाद्भवतीति विद्धि । हे भरतर्षभ न केवलायाः प्रकृतेः, पुरुषाद्वा ॥ २६ ॥

म० टी०—संसारस्याविद्यकत्वाद्विद्यया मोक्ष उपपद्यत इत्येतस्यार्थस्यावधारणाय संसारतन्निवर्तकज्ञानयोः प्रपञ्चः क्रियते यावदध्यायसमाप्ति । तत्र कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वित्येतत्प्रागुक्तं विवृणोति—यावदिति । यावत् किमपि सत्त्वं वस्तु संजायते स्थावरं जङ्गमं वा तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् अविद्यातत्कार्यात्मकं जडमनिर्वचनीयं सदसत्त्वं दृश्यजातं क्षेत्रं तद्विलक्षणं तद्भासकं स्वप्रकाशपरमार्थसच्चैतन्यमसङ्गोदासीनं निर्धर्मकमद्वितीयं क्षेत्रज्ञं तयोः संयोगो मायावशादितरेतराविवेकनिमित्तो मिथ्यातादात्म्याध्यासः सत्यानृतमिथुनीकरणात्मकः, तस्मादेव संजायते तत्सर्वं कार्यजातमिति विद्धि हे भरतर्षभ । अतः स्वरूपाज्ञाननिबन्धनः संसारः स्वरूपज्ञानाद्विनङ्क्ष्टुमर्हति स्वप्नादिवदित्यभिप्रायः ॥ २६ ॥

शं० टी०—एतद्योनीनि भूतानीति यदुक्तं भूतानां संसारस्य क्षेत्रक्षेत्रज्ञलक्षणप्रकृतिद्वयसंबन्धकारणत्वं तदिदानीं विशदयति—मोक्षैककामैः पण्डितैः प्रकृतिद्वयसंबन्धः प्रयत्नेन परिहर्तव्य इति सूचयितुम्—यावदिति । स्थावरजङ्गमं स्थावररूपं जङ्गमरूपं यावद्यावत्परिमाणकं यत्किंचित् यद्यत्सत्त्वं प्राणि संजायते त्रिलोक्यां समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञसंयोगात् क्षेत्रक्षेत्रज्ञयोः संयोगात्संबन्धादेव संजायते । यत्किंचिदित्यविशेषग्रहणं देवमनुष्यादिषु सर्वत्रापि जनैः साधारणत्वसूचनार्थम् । क्षेत्रक्षेत्रज्ञयोः प्रकृतिपुरुषयोः संबन्धे सत्येव प्राणिजातं सर्वं समुत्पद्यते, जननादिदुःखमपरिच्छिन्नमनुभुङ्क्ते नान्यथेति विद्धि विजानीहि त्वं भरतर्षभ । प्रकृतिपुरुषयोः संबन्धे सत्येवाविद्यास्मितादयो विजृम्भन्ते जन्मादिदुःखहेतवस्ततः कर्माणि च जन्मबीजानि नासति । अतस्तयोः संबन्धः प्रयत्नेन तत्त्वज्ञैर्मोक्षसुखेच्छुभिर्यतिभिः परिहर्तव्य इत्यर्थः । ननु प्रकृतिपुरुषयोः संबन्धः को यस्मिन् सति पुंसः संसारो यदभावे तदभाव इति चेदुच्यते । न तयोः परस्परावयवसंश्लेषैकनिबन्धनः संयोगः संभवति सावयवनिरवयवयोः संयोगायोगात् " निष्कलं निष्क्रियम् " इति पुरुषस्यात्मनो निरवयवत्वश्रवणात् । ननु निरवयवस्याप्याकाशस्य विभुत्वसिद्धये सर्वमूर्तद्रव्यसंयोगित्वं विभुत्वमिति सर्वमूर्तद्रव्यैः संयोगोऽङ्गीकृत एवेति चेत्तथात्वे त्वाकाशस्य सावयवत्वं वर्षवाय्वग्न्यादिसंयोगात्क्लेदशोषप्लोषाद्यनर्थश्च स्यादनित्यत्वं च । सूक्ष्मत्वात्स्थूलैर्न संयुज्यत इति चेन्न । जलादीनां सूक्ष्मावयवैः सूक्ष्मस्यापि संयोगश्चोक्तानर्थश्च स्यात्ततो मूर्तद्रव्यसंयोगित्वकल्पनं भ्रम एव । किंतु निरवयवस्याकाशस्य सर्वमूर्तद्रव्यव्यापकत्वस्यैव तत्संयोगित्वव्यपदेशः, नतु साक्षादवयवसंश्लेषित्वस्य निरवयवत्वेनाकाशस्य तदसंभवात् । तद्वत्क्षेत्रज्ञस्यापि क्षेत्रेण संयोगो न संभवति नापि समवायश्च तयोरयुतसिद्धत्वाभावात् । उभयोरप्यसंभवे संबन्धान्तराभावात् । तर्हि कः संबन्ध इत्यत्रोच्यते—युष्मदस्मत्पदप्रत्ययार्थयोर्विषयविषयिणोरन्योन्यविरुद्धस्वभावयोः प्रकृतिपुरुषयोर्विपरीतगृहीतयोरन्योन्यस्मिन्नन्योन्यधर्माध्यासलक्षणस्तद्विवेकज्ञानाभावैकनिबन्धनः संबन्धः शुक्तिरजतयोरिव संभवत्यनादिसंस्कारजन्यस्तत्स्वरूपाज्ञानमूलको मिथ्याज्ञानलक्षणः सोऽयमेव पुंसः संसारकारणं तन्निवृत्तिकारणं, तयोः स्वरूपाविवेचनमेव । तदुच्यते—घटतद्द्रष्ट्रोरिव विषयविषयिणोः प्रकृतिपुरुषयोरन्योन्यविलक्षणयोः स्वरूपं ज्ञेयत्वज्ञातृत्वाभ्यां प्रकाश्यप्रकाशकत्वाभ्यां विकारित्वाविकारित्वाभ्यामनित्यत्वनित्यत्वाभ्यां सावयवत्वनिरवयवत्वाभ्यामनेकत्वैकत्वाभ्यां च परस्परविलक्षणमिदं शरीरं क्षेत्रम् । एतद्यो वेत्ति स क्षेत्रज्ञ इति सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितमिति ज्योतिषामपि तज्ज्योतिरिति तमसः परमिति ज्ञानमिति हृदि सर्वस्य विष्ठितमित्युक्तरीत्या क्षेत्रज्ञः क्षेत्राद्भिन्नः ज्ञातृत्वाद्घटज्ञातृवदित्यादियुक्तिभिर्विविच्य तिलतन्दुलवद्विभज्य क्षेत्राद्विभक्तं क्षेत्रज्ञं चिदेकरसमयमहमिति स्वात्मना विज्ञाय ततः प्रकृतिं न सत्तन्नासदुच्यत इत्युक्तरीत्यात्मनि प्रविलाप्य पुनराभासरूपायाः प्रकृतेस्तद्धर्मतत्कर्मणां चाहारादौ संश्लेषो यथा न स्यात्तथा सदात्मनिष्ठायामेव तिष्ठतो ब्रह्मविद्यतेः पुनरविद्यास्मितादयो दुःखहेतवस्तत्कार्याणि च कर्माण्यपि जन्मबीजानि न संभवन्ति । विदेहमुक्तिश्च करस्था भवत्यतः क्षेत्रक्षेत्रज्ञयोः

संयोगो यथा न स्यात्तथा ब्रह्मविद्भिर्ब्रह्मनिष्ठयैव स्थातव्यमिति सूचयितुं क्षेत्रक्षेत्रज्ञयोः संयोग एव विदामप्यविदां च सर्वेषां जन्मादिदुःखकारणमित्युच्यते जगद्गुरुणा यावत्संजायते किंचिदित्यादिना । तस्मात्सर्वदा सदात्मना स्थातव्यमिति सिद्धम् ॥ २६ ॥

**श्री० टी०**—तत्र कर्मयोगस्य तृतीयचतुर्थपञ्चमेषु प्रपञ्चितत्वात् ध्यानस्य योगस्य च षष्ठाष्टमयोः प्रपञ्चितत्वात् ध्यानादेश्च साङ्ख्यविविक्तात्मविषयत्वात्साङ्ख्यमेव प्रपञ्चयन्नाह—**यावदित्यादि** यावदध्यायसमाप्ति । यावत्किंचित् वस्तुमात्रं सत्त्वमुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोर्योगात्—अविवेककृतात्तादात्म्याध्यासाद्भवतीति जानीहि ॥ २६ ॥

**स० टी०**—संसाराख्यस्य बन्धस्याविद्यकत्वाद्धि विद्यया ॥ मोक्षोपपत्तिरस्तीत्येतस्यार्थस्यावधारणे ॥१॥ प्रपञ्चः क्रियते बन्धतन्निवर्तकबोधयोः ॥ स्थावरं जङ्गमं सत्त्वं यत्किंचिद्वस्तु जायते ॥ २ ॥ क्षेत्रक्षेत्रज्ञयोस्तच्चान्योन्याध्यासात्प्रजायते ॥ अनिर्वाच्यमविद्यातत्कार्यं क्षेत्रं जडात्मकम् ॥ ३ ॥ ततो भिन्नं चिदानन्दब्रह्मवस्तु चिदद्वयम् ॥ उदासीनं परं शुद्धं क्षेत्रज्ञं निर्गुणात्मकम् ॥ ४ ॥ तयोर्मायावशादन्योन्याविवेकानिमित्तकः ॥ मिथ्यातादात्म्यकोऽध्यासः सत्यानृतयुगात्मकः ॥ ५ ॥ तस्मादेवाखिलं सत्त्वजातं संजायते जगत् ॥ अतः स्वात्मापरिज्ञानहेतुको बन्ध एव यः ॥ ६ ॥ संसाराख्यः स आत्मैक्यज्ञानान्नश्यति सर्वथा ॥ स्वाप्नबन्धो यथा निद्राक्षये नश्यति तत्क्षणे ॥ ७ ॥ तथैवाविद्यको बन्धस्तत्त्वज्ञानाद्विनश्यति ॥ अत आध्यासिकं सर्वमाब्रह्मादितृणावधि ॥८॥ सत्यं ब्रह्मैव चेत्येवं विनिश्चित्य धिया बुधः ॥ स्वे महिम्नि स्वतःसिद्धे प्रतिष्ठां प्राप्य निश्चलाम् ॥९॥ जीवन्मुक्तो मुनिर्नित्यं कृतकृत्यः स तिष्ठति ॥ १० ॥ २६ ॥

**भा० टी०**—अत्र क्षेत्रज्ञं चापि मां विद्धीति क्षेत्रज्ञेश्वरैकत्वविषयं ज्ञानं मोक्षसाधनं यज्ज्ञात्वाऽमृतमश्नुते इत्युक्तं तत्र हेतुमाह—**यावदिति** । यत्किंचित्सत्त्वं वस्तु स्थावरजङ्गमं संजायते समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोः संयोगाज्जायत इत्येवं विद्धि जानीहि । एतज्ज्ञातुं योग्योऽसीति सूचयन्नाह—हे भरतर्षभेति । ननु क्षेत्रक्षेत्रज्ञयोः संयोगादिति भगवतोक्तं न संगच्छते क्षेत्रज्ञस्याकाशवन्निरवयवत्वेन क्षेत्रेण रज्ज्वेव घटस्यावयवसंश्लेषद्वारकस्य संबन्धविशेषस्य संयोगस्यासंभवात् । तन्तुपटयोरिव क्षेत्रक्षेत्रज्ञयोरितरेतरकार्यकारणभावानभ्युपगमेन लक्षणया समवायलक्षणस्याप्यसंभवात् तमःप्रकाशवद्विरुद्धस्वभावयोस्तादात्म्यासंभवाच्चेति चेन्न, रज्जुशुक्तिकादीनां तद्विवेकज्ञानाभावादध्यारोपितसर्परजतादिसंयोगवत् विषयविषयिणोर्भिन्नस्वभावयोः क्षेत्रक्षेत्रज्ञयोरितरेतरतद्धर्माध्यासलक्षणस्य संयोगस्य क्षेत्रक्षेत्रज्ञस्वरूपविवेकाभावनिबन्धनस्य संभवात् । तथाच यथाशास्त्रं मुञ्जादिवेषीकां यथोक्तलक्षणात्क्षेत्रात् यथोक्तलक्षणं क्षेत्रज्ञं विभज्य निरस्तसर्वोपाधिमीश्वराभिन्नं यः पश्यति क्षेत्रं च मायानिर्मितहस्तिस्वप्नदृष्टवस्तुगन्धर्वनगराद्विचन्द्ररज्जूरगवदसदेव सदिवाभासत इत्येवं निश्चितविज्ञानी यस्तस्य सम्यग्दर्शनेन जन्महेतोः मिथ्याज्ञानस्यापगमान्मोक्ष उपपद्यते नत्वन्यस्येत्यतो युक्तमुक्तं य एवं वेत्तीत्यादि ॥ २६ ॥

**प० टी०**—अथान्ये सांख्येन योगेन ध्यायन्तीति पूर्वमुक्तं तदेव प्रकटयन्नाह—**यावदिति** । यावत्किंचित्सत्त्वं वस्तुमात्रं स्थावरं जङ्गमं वा समुत्पद्यते तत्सर्वं क्षेत्रक्षेत्रज्ञयोर्योगादविवेककृतादात्माध्यासाद्भवतीति जानीहि प्रकृतिपुरुषयोगाद्बुद्धितत्त्वमित्यादि ॥ २६ ॥

**रा० टी०**—कार्योपादानत्वप्रकृत्युपादानकदेहयोगित्वसर्वत्रसमत्वरूपधर्मयुक्ततया प्रकृतिपुरुषेश्वरस्वरूपं पुनरप्याह—**यावदिति** । नचाप्रतिज्ञातोक्तिदोषः प्रकृतिपुरुषधर्मोक्तेः यादृक्चेत्यत्रेश्वरधर्मोक्तेश्च यत्प्रभाव इत्यत्र प्रतिज्ञातेऽन्तर्भावात् । यावत्स्थावरजङ्गमात्मकं सत्त्वं जीवजातं तत्क्षेत्रक्षेत्रज्ञसंयोगात् चित्प्रकृतिपरमात्मनोः संयोगाज्जायते प्रादुर्भवतीति विद्धि, यद्वा उपद्रष्टेत्यादिना सदसद्योनिजन्मसु भगवानेव स्वतन्त्रकारणमिति यदुक्तं तत्प्रपञ्चयति—**यावदिति** । उक्त एवार्थः ॥ २७ ॥

समं सर्वेषु भूतेषु तिष्ठन्तं परमेश्वरम् ॥
विनश्यत्स्वविनश्यन्तं यः पश्यति स पश्यति ॥ २७ ॥

त० टी०–प्रकृतिपुरुषसंयोगोद्भवं संसारमुक्त्वा तन्निवृत्तये प्रकृतिवियुक्तात्मदर्शनमाह–सममिति । सर्वेषु स्थावरजङ्गमेषु भूतेषु समं देवतिर्यङ्मनुष्यादिविषमाकारवियुक्ततया ज्ञानैकस्वरूपतया च समं यथा भवति तथा तिष्ठन्तं देहेन्द्रियमनसां परमेश्वरं विषमाकारेषु देहेषु विनश्यत्सु अविनश्यन्तं विनाशायोग्यतया नित्यं यः पश्यति स यथाऽवस्थितमात्मानं पश्यति ॥ २७ ॥

म० टी०–एवं संसारमविद्यात्मकमुक्त्वा तन्निवर्तकविद्याकथनाय य एवं वेत्ति पुरुषमिति प्रागुक्तं विवृणोति–सममिति । सर्वेषु भूतेषु भवनधर्मकेषु स्थावरजङ्गमात्मकेषु प्राणिषु अनेकविधजन्मादिपरिणामशीलतया गुणप्रधानभावापत्त्या च विषमेषु अत एव चञ्चलेषु प्रतिक्षणपरिणामिनो हि भावा नापरिणम्य क्षणमपि स्थातुमीशते । अत एव परस्परबाध्यबाधकभावापन्नेषु एवमपि विनश्यत्सु दृष्टनष्टस्वभावेषु मायागन्धर्वनगरादिप्रायेषु समं सर्वत्रैकरूपं प्रतिदेहमेकं जन्मादिपरिणामशून्यतया च तिष्ठन्तमपरिणममानं परमेश्वरं सर्वजडवर्गसत्तास्फूर्तिप्रदत्वेन बाध्यबाधकभावशून्यं सर्वदोषानास्कन्दितमविनश्यन्तं दृष्टनष्टप्रायसर्वद्वैतबाधेऽप्यबाधितम् । एवं सर्वप्रकारेण जडप्रपञ्चविलक्षणमात्मानं विवेकेन यः शास्त्रचक्षुषा पश्यति स एव पश्यत्यात्मानं जाग्रद्बोधेन स्वप्नभ्रमं बाधमान इव । अज्ञस्तु स्वप्नदर्शीव भ्रान्त्या विपरीतं पश्यन्न पश्यत्येव, अदर्शनात्मकत्वाद्भ्रमस्य । न हि रज्जुं सर्पतया पश्यन् पश्यतीति व्यपदिश्यते, रज्ज्वदर्शनात्मकत्वात्सर्पदर्शनस्य । एवं भूतान्यानुपरक्तशुद्धात्मदर्शनात्तददर्शनात्मिकाया अविद्याया निवृत्तिस्ततस्तत्कार्यसंसारनिवृत्तिरित्यभिप्रायः । अत्रात्मानमिति विशेष्यलाभो विशेषणमर्यादया । परमेश्वरमित्येव वा विशेष्यपदम् । विषमत्वचञ्चलत्वबाध्यबाधकरूपत्वलक्षणं जडगतं वैधर्म्यं समत्वतिष्ठत्त्वपरमेश्वरत्वरूपात्मविशेषणवशादर्थात्प्राप्तमन्यत्कण्ठोक्तमिति विवेकः ॥ २७ ॥

शं० टी०–कृतमपि क्षेत्रक्षेत्रज्ञयोर्विवेचनं पुनरपि तद्विवेकदार्ढ्यार्थं तत्तन्नियतविशेषणैः कुर्वन्नेवं विविक्तमात्मानं यः साक्षाद्विजानाति स यतिरेव जीवन्मुक्त इति सूचयितुमाह–सममिति । भवन्ति जनिलक्षणं विकारं भजन्तीति भूतानि ब्रह्मादिस्थावरान्तानि भूतानीत्युक्त्या भूतानामेव भवनं नत्वात्मन इत्यात्मनो नित्यस्य भवनाभावस्तन्निमित्तकास्तित्वाभावश्च सूचितः । तेषु भूतेषु नामरूपजातिक्रियागुणविशेषैः परस्परं विभक्तेषु विषमेषु सर्वेष्वपि प्राणिशरीरेष्वविभक्तं सममेकरूपमुत्कर्षापकर्षवर्जितं समरसं निर्विशेषमित्यर्थः । आत्मन्यारोपितभूतेष्वेव नामरूपजातिगुणादिकृतो विशेषः नत्वधिष्ठाने आत्मनि । निरवयवत्वान्निर्गुणत्वादात्मनः केवलस्योत्कर्षापकर्षानुपपत्तेः । सममित्युक्त्या वृद्ध्यपक्षयलक्षणौ भावविकारावात्मनो न स्त इति सूचितं भवति । किंच तिष्ठन्तं क्षरः सर्वाणि भूतानीतिन्यायेन क्षरस्वभावेषु भूतेषु प्रतिक्षणं विपरिणममाणेषु सत्सु स्वयं तद्रहिततया सर्वदैकरूपेण वर्तमानं निरवयवत्वादक्षरमाशैशवादापातं तत्तद्देहेन्द्रियादिषु विपरीतेषु सत्स्वहमस्मीत्यात्मसत्तायाः सदैकरूपत्वावगमात्सर्वदैकरूपेण स्थितमित्यर्थः । "अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्" इतिश्रुतेः भूतानामेव विपरिणामो न त्वात्मन इत्यात्मनो विपरिणामाभावः सूचितः । किंच अविनश्यन्तं जनिमत्त्वाद्भूतेषु नश्यत्सु सत्सु स्वयमविनश्यन्तं चरमविकारवर्जितं नित्यमित्यर्थः । सुषुप्तौ सर्वभूतप्रलये सुखमहमस्वाप्समित्यात्मसद्भावावगमादात्मनित्यत्वे प्रत्यक्षम् । आत्मा नित्यः अजत्वादित्यनुमानम् "अविनाशी वा अरेऽयमात्मा" इतिश्रुतिश्च प्रमाणम् । तत एव परमेश्वरं देहेन्द्रियप्राणमनोबुद्ध्यव्यक्तेभ्यः परमं नित्यत्वेनातिसूक्ष्मत्वेनान्तरत्वेन व्यापकत्वेन चेतनत्वेन प्रकाशकत्वेनाधिष्ठानत्वेनानन्दत्वेन चोत्कृष्टतममित्यर्थः । "इन्द्रियेभ्यः परा ह्यर्था ह्यर्थेभ्यः" इतिश्रुतेः ।

ईश्वरमीशनशीलमयस्कान्तवत्स्वसन्निधिमात्रेण प्रकृतेः प्रवृत्तिहेतुत्वमीश्वरत्वमात्मनो न तु राजादिवन्नियन्तृत्वं नैव कुर्वन्नकारयन्निति स्वभावस्तु प्रवर्तत इत्युक्तत्वात् । एवं समत्वकूटस्थत्वनित्यत्वचेतनत्वादिभिः स्वधर्मैर्विषमत्वसविक्रियत्वविनाशित्वजडत्वादिधर्मवतः क्षेत्राद्विलक्षणत्वेनोपलभ्यमानं निर्विशेषमस्मत्पदप्रत्यर्थमात्मानं क्षेत्रज्ञं क्षेत्रतद्धर्मतत्कर्मास्पृष्टं यः पश्यति नित्यनिरन्तरश्रवणमनननिदिध्याससमाधिभिः क्रमेण समनुष्ठितैः संभावितसम्यग्ज्ञानेन नित्यकूटस्थासङ्गचिद्रूपः प्रत्यगेवास्मि नतु कश्चित्संसारीति संसारिविलक्षणमात्मानं यः साक्षात्पश्यति स ब्रह्मविद्यतिर्यथाभूतस्वरूपं कर्तृत्वभोक्तृत्वादिसर्वसंसारधर्मवर्जितं सर्वोपाधिविनिर्मुक्तमाकाशवदत्यन्तनिर्मलं परिपूर्णमात्मानं स्वं मुक्तमेव सर्वावस्थासु सर्वदा पश्यति नत्वन्यः श्रवणमात्रेण स्वं कृतार्थं मन्यमान आत्मानं मुक्तं पश्यतीत्यर्थः । एतेन घटमठादिष्वाकाशस्येव ब्रह्मादिस्तम्बान्तशरीरेष्वात्मनो व्यापकत्वं समत्वमसङ्गत्वं नित्यत्वं निष्क्रियत्वं पूर्णत्वं च दृष्ट्वा प्रारब्धानुरूपेण देहेन्द्रियादिषु प्रवृत्तेषु सत्सु निवृत्तेषु वा स्वस्य तदुभयराहित्यमेव यः सर्वदा पश्यति स्वयमविकारात्मना पूर्णवृत्त्या तिष्ठति स एव जीवन्मुक्त इति सूचितं भवति ॥ २७ ॥

**श्री० टी०**—अविवेककृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह—**सममिति**। स्थावरजङ्गमात्मकेषु भूतेषु निर्विशेषं सद्रूपेण समं यथा भवत्येवं तिष्ठन्तं परमात्मानं यः पश्यति अत एव तेषु विनश्यत्स्वपि अविनश्यन्तं य पश्यति स एव सम्यक्पश्यति नान्यः ॥ २७ ॥

**स० टी०**—एवमाविद्यकं बन्धं विद्याबाध्यं प्रदर्श्य च ॥ तन्निवर्तकविद्यायाः स्थैर्यायात्राधुनोच्यते ॥१॥ सद्वस्तुनः स्वभावेनावैषम्यं विषमेष्वपि ॥ ब्रह्मादिस्थावरान्तेषु भूतेषु विषमेषु च ॥२॥ परिणामस्वभावत्वाच्चञ्चलेषु विरोधिषु ॥ बाध्यबाधकरूपत्वादन्योन्यं क्षणनाशिषु ॥ ३ ॥ दृष्टनष्टस्वभावेषु यः समं परमेश्वरम् ॥ सर्वत्रैकस्वरूपत्वात्प्रतिदेहमखण्डितम् ॥ ४ ॥ निर्विकारं स्थिरं सत्तास्फूर्तिदं जडवस्तुषु ॥ बाध्यबाधकताशून्यमबाध्यं दोषवर्जितम् ॥ ५ ॥ सर्वद्वैतस्य बाधेऽपि निर्विकल्पमबाधितम् ॥ एवं सर्वप्रकारेण जडवर्गविलक्षणम् ॥ ६ ॥ ब्रह्मात्मानं विवेकेन पश्यति श्रौतचक्षुषा ॥ स एव पश्यत्यात्मानं सकार्या ज्ञानबाधनात् ॥ ७ ॥ स्वप्नभ्रमं यथा त्यक्त्वा जाग्रद्बोधेन युक्तधीः ॥ स्वप्नभ्रमविनिर्मुक्तमात्मानं पश्यति स्फुटम् ॥ ८ ॥ स्वप्नदर्शी तु विभ्रान्त्या पश्यन्नपि न पश्यति ॥ तथाऽज्ञो भ्रान्तिबाहुल्यात्पश्यन्नपि न पश्यति ॥ ९ ॥ न हि सर्पतया रज्जुं पश्यन्नपि स पश्यति ॥ तथात्मत्वेन देहादिजडवर्गं विनश्वरम् ॥ १० ॥ पश्यन्नज्ञो विमूढात्मा चिदात्मानं न पश्यति ॥ तत्त्वदर्शी मुनिस्तस्मात्सम्यक्पश्यति नेतरः ॥ ११ ॥ एवमत्यन्तभिन्नत्वाद्दृश्यासंसर्गिणं परम् ॥ विशुद्धं प्रत्यगात्मानं साक्षात्कृत्याद्वयात्मना ॥ १२ ॥ सकार्याज्ञानबाधेन कृतकृत्यो भवेन्नरः ॥ १३ ॥ २७ ॥

**भा० टी०**—न स भूयोऽभिजायत इत्यनेन सम्यग्दर्शनफलमविद्यादिसंसारबीजनिवृत्तिद्वारेण जन्माभाव उक्तो जन्मकारणं चाविद्यानिमित्तकक्षेत्रक्षेत्रज्ञसंयोग उक्तः । अतः सर्वथापि सर्वानर्थमूलभूतस्याज्ञानस्य निवर्तकं सम्यग्दर्शनमुक्तमप्यतिसूक्ष्मार्थस्य पुनःपुनर्वचनेनाधिकारिभिदानुग्रहं मत्वा शब्दान्तरेण पुनराह—**समामि ति** । सर्वेषु ब्रह्मादिस्थावरान्तेषु भूतेषु भवनधर्मकेषु प्राणिषु परस्परमत्यन्तविषमेष्वनेकेषु समं तिष्ठन्तं निर्विशेषमेव स्थितिं कुर्वन्तं परमेश्वरं देहेन्द्रियाद्यात्मानमपेक्ष्य परमश्चासावीशनशीलश्च तं विनश्यत्सु सर्वेषां भावविकाराणां जन्मोत्तरभावित्वात् नाशेन षड्भावविकारा गृह्यन्ते सर्वभावविकारवत्सु अविनश्यन्तं सर्वविकाररहितं तथाच सर्वभूतेभ्योऽत्यन्तविलक्षणं प्रत्यगभिन्नं परमेश्वरं यः पश्यति स एव पश्यति नतु विपरीतदर्शी । यथाऽनेकचन्द्रदर्श्यपेक्षया एकचन्द्रदर्शी विशिष्यते तथा विभक्तानेकात्मविपर्यतदर्शिभ्यो यथोक्तात्मदर्श्यपीत्यर्थः ॥ २७ ॥

प० टी०—एवमविवेकात् कृतं संसारोद्भवमुक्त्वा तन्निवृत्तये विविक्तात्मविषयं सम्यग्दर्शनमाह—सममिति । सर्वेषु स्थावरजङ्गमेषु भूतेषु समं सद्रूपेण वर्तमानमीश्वरं यः पश्यति स एव पश्यति नान्यः । श्रुतिरपि शातपथी—" यद्वेव समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण तस्माद्वेव सामाश्नुते साम्नः सायुज्यᳬसलोकतां जयति य एवं वेद " इति । भाष्यम्—पूर्वं साचामश्चेति व्युत्पत्त्या सामस्वरूपमुक्तमिदानीं यद्वेति विकल्पेन समत्वमेव सामेत्याह । तत्र प्लुषिणातिसूक्ष्मजीवेन समः समो मशकेनेत्यादि य एवं वेद स साम्नः परमेश्वरस्य सायुज्यं जयति । अथ किंभूतेषु विनश्यत्सु । किंभूतमीश्वरमविनश्यन्तम् । यथा घटादिषु नष्टेषु तदन्तर्गत आकाशो न नश्यति । अत्र "अपश्यमस्य महतो महित्वम् " इत्यादिश्रुतयः पूर्वं व्याख्याताः ॥ २७ ॥

रा० टी०—क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेष्विति हरेः सर्वशरीरस्थत्वं यदुक्तं तदयुक्तम् । तथात्वेऽधिष्ठानतारतम्यात्तारतम्यम् । दुःखिसहावस्थानाद्दुःखं च स्यादित्यत आह—सममिति । सर्वेषु तारतम्योपेतेषु प्राणिषु तिष्ठन्तं परमेश्वरं अचिन्त्यशक्तिकं हरिं समं न्यूनाधिकहीनं सर्वत्राशेषसद्गुणोपेतम् । एवं यः पश्यति । विनश्यत्सु सुखदुःखजनिमृत्यादिदोषवत्सु भूतेषु तिष्ठन्तमविनश्यन्तं दुःखादिदोषहीनं यः पश्यति स पश्यति स एव यथार्थज्ञानवानित्यर्थः ॥ २८ ॥

**समं पश्यन् हि सर्वत्र समवस्थितमीश्वरम् ॥**
**न हिनस्त्यात्मनाऽऽत्मानं ततो याति परां गतिम् ॥ २८ ॥**

त० टी०—तदेवं समत्वेन दर्शनस्य फलमाह—सममिति । सर्वत्र देवमनुष्यादिदेहे समवस्थितं देवादिविषमाकारवियुक्तं सममीश्वरं देहेन्द्रियस्वामिनं हि एव पश्यन् आत्मना स्वेनैव आत्मानं न हिनस्ति, संसारे प्रक्षिप्य न विनाशयति । किंतु ततस्तस्मात् ज्ञानस्वरूपत्वेन सर्वत्र समानाकारदर्शनाभ्यासात्परां गतिं याति, प्रकृतिवियुक्तं शुद्धं भगवदात्मकमात्मानं प्राप्नोति मुच्यते इत्यर्थः । यस्तु देवमनुष्याद्याकारयुक्ततया सर्वत्र विषममात्मानं पश्यति स स्वात्मानं हिनस्ति संसारे प्रक्षिपति, तेन सर्वथा पापकारी भवति । तथा महाभारते शकुन्तलावाक्यम् " योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा " इति । आत्मघ्नानां गतिः श्रुतावुक्ता "असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चाऽऽत्महनो जनाः " इति ॥ २८ ॥

म० टी०—तदेतदात्मदर्शनं फलेन स्तौति रुच्युत्पत्तये—सममिति । समवस्थितं जन्मादिविनाशान्तभावविकारशून्यतया सम्यक्तयाऽवस्थितमित्यविनाशित्वलाभः । अन्यत्प्राग्व्याख्यातम् । एवं पूर्वोक्तविशेषणमात्मानं पश्यन् अयमहमस्मीति शास्त्रदृष्ट्या साक्षात्कुर्वन् न हिनस्त्यात्मनाऽऽत्मानम् । सर्वो ह्यज्ञः परमार्थसन्तमेकमकर्त्रभोक्तृपरमानन्दरूपमात्मानमविद्यया सति भात्यपि वस्तुनि नास्ति न भातीति प्रतीतिजननसमर्थया स्वयमेव तिरस्कुर्वन्नसन्तमिव करोतीति हिनस्त्येव तम् । तथाऽविद्ययाऽऽत्मत्वेन परिगृहीतं देहेन्द्रियसंघातमात्मानं पुरातनं हत्वा नवमादत्ते कर्मवशादिति हिनस्त्येव तम् । अत उभयथाप्यात्महैव सर्वोऽप्यज्ञः, यमधिकृत्येयं शकुन्तलावचनरूपा स्मृतिः ' योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा ' इति । श्रुतिश्च "असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इति असुर्या असुरस्य स्वभूताः आसुर्याः असुरसंपदा भोग्या इत्यर्थः । आत्महन इत्यनात्मन्यात्माभिमानिन इत्यर्थः । अतो य आत्मज्ञः सोऽनात्मन्यात्माभिमानं शुद्धात्मदर्शनेन बाधते । अतः

स्वरूपलाभान्न हिनास्त्यात्मनात्मानं ततो याति परां गतिम्। तत आत्महननाभावादविद्यातत्कार्यनिवृत्तिलक्षणां मुक्तिमधिगच्छतीत्यर्थः ॥ २८ ॥

**शं० टी०**—ब्रह्मविद्यतिः सर्वत्र परिपूर्णमात्मानमेवैकरूपेण सदा यत्पश्यति तेनैव नैरन्तर्यदर्शनेन मुक्तो भवतीत्याह—**सममिति**। श्रवणमननादिभिः समुत्पन्नविज्ञानेन इदमेवाहमस्मीत्यपरोक्षीकृतात्मतत्त्वो यतिः सर्वत्र ब्रह्मादिस्तम्बान्तेषु भूतेषु बहिरन्तश्च सर्वतः समवस्थितं सम्यगुत्कर्षापकर्षराहित्येनैकरीत्या घटमठादिष्वाकाशवन्नैरन्तर्येण व्याप्यावस्थितमत एव सममेकरसं निर्विशेषमीश्वरं रविवत्सर्वप्राणिप्रवृत्तिकारणमात्मानं परिपूर्णं पश्यन् हि यस्मात्कारणादात्मानं स्वमात्मना स्वेनैव न हिनस्ति न निहन्ति स्वयमेव स्वस्य हननं न करोतीत्यर्थः। आत्मनात्मनो हननं नाम निष्क्रियस्य निःसङ्गस्य निराकारस्य निर्लेपस्य चात्मनः स्वस्य पुनर्देहेन्द्रियादितादात्म्याध्यासेन कर्ताहं भोक्ता सुखी दुःखी शिष्टो भ्रष्टः सुकृती दुष्कृतीत्याद्यतद्धर्मतत्कर्मारोपणं कृत्वा यदप्रतीत्यापादनं तदेव हननं, येनात्महननदोषेण स्वयं कूटस्थासङ्गचिद्रूपोऽपि सदानन्दोऽपि देहीभूय कर्तृत्वभोक्तृत्वादिधर्मवान्सन् जन्ममृत्युदुःखसागरे मज्जति। तदेतदात्महननं विदेहकैवल्यार्थी सम्यग्विदितात्मतत्त्वो यतिर्न करोति किंतु बाह्यवासनाकृतामसत्प्रवृत्तिमुत्सृज्य सदात्मनिष्ठयैव तिष्ठति। ततः सदात्मज्ञाननिष्ठयैव निरस्ताज्ञानतत्कार्यः सन् परां नित्यनिरतिशयानन्दलक्षणां गतिं विदेहमुक्तिं याति प्राप्नोति "ब्रह्मसंस्थोऽमृतत्वमेति" इति ब्रह्मनिष्ठस्यैव स्वस्वरूपादप्रमाद्यतो यतेरमृतत्वसिद्धिश्रवणात् सर्वदा स्वरूपनिष्ठायामेव तिष्ठतो यतेर्मुक्तिरिति सिद्धम्। यद्वा सर्वेषु भूतेषु तिष्ठन्तमितिन्यायेन सर्वभूतेषु समवस्थितं सम्यगुत्कर्षापकर्षरहितत्वेन बहिरन्तः सर्वतो व्याप्य स्थितमीश्वरमुक्तलक्षणमात्मानं स्वस्मिन् सर्वत्र सममेकरसं परिपूर्णमेव पश्यन् हि यस्माद्ब्रह्मविद्यतिरात्मानं परिपूर्णं न हिनस्ति ब्राह्मणोऽयं शूद्रः शिष्टोऽयं भ्रष्टः इति इदं शुद्धमिदमशुद्धमिति भेददर्शनेन पूर्णस्यात्मनस्तिरोभावनमेव हिंसनं सम्यक्दर्शी विद्वान् मोक्षेच्छया सदा सर्वत्र समदर्शनमनुश्चानः सन् तदेतन्न करोति, किंतु सर्वमिदमहमेवेति सदा पूर्णमेवात्मानं पश्यति। ततस्तेनैव सर्वत्र ब्रह्मदर्शनेन निर्दग्धभेदगन्धो भूत्वा परां गतिं याति। यस्मात्सर्वत्र परिपूर्णमेवात्मानं सर्वदा पश्यन्नेव विद्वान्मुक्तो भवति, तस्मात् क्वचित्प्रमादेनाप्यनात्मनि तद्धर्मतत्कर्मस्वप्यहंममेत्यध्यासो जन्मादिदुःखहेतुर्विज्ञातात्मतत्त्वैर्यतिभिर्विदेहकैवल्यसुखार्थिभिर्न कर्तव्य इति सूचितं भवति ॥ २८ ॥

**श्री० टी०**—कुत इत्यत आह—**सममिति**। सर्वत्र भूतमात्रे समं सम्यगप्रच्युतस्वरूपेणावस्थितं परमात्मानं पश्यन् हि यस्मात् आत्मना स्वेनैवाऽऽत्मानं न हिनस्ति अविद्यया सच्चिदानन्दरूपमात्मानं तिरस्कृत्य न विनाशयति। ततश्च परा गतिं मोक्षमाप्नोति। यस्त्वेवं न पश्यति स हि देहात्मदर्शी देहेन सहात्मानं हिनस्ति। तथा च श्रुतिः—"असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः। तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इति ॥ २८

**स० टी०**—तदेतदात्मविज्ञानं फलेन स्तौति माधवः ॥ तुल्यत्वेन स्थितं यस्मात्सम्यग्दर्शी परेश्वरम् ॥ १ ॥ सर्वभूतेषु पूर्वोक्तविशेषेण समन्वितम् ॥ पश्यन्नात्मानमद्वैतमयमहमिति स्वयम् ॥ २ ॥ साक्षात्कुर्वन्धिया सम्यक्तत्त्वमस्यादिजातया ॥ स्वेन स्वं न हिनस्त्यस्मादर्शनान्मुक्तिमृच्छति ॥ ३ ॥ सर्वोऽज्ञ एकमात्मानमकर्तारमसाङ्गिनम् ॥ अविद्यया तिरस्कुर्वन्हिनस्त्येवात्मना स्वयम् ॥ ४ ॥ परानन्दघनं नित्यं विद्यमानमपीश्वरम् ॥ भ्रान्त्या ननु भवन्मूढो मायया वञ्चितः सुखात् ॥ ५ ॥ अविद्याध्यस्तदेहादिमात्मानं सुपुरातनम् ॥ हत्वा नूतनमादत्ते कर्मणातो हिनस्त्यसौ ॥ ६ ॥ सर्वोऽज्ञ आत्महा तस्मात्तथैव स्तः श्रुतिस्मृती ॥ असूर्यानाम ते लोका अन्धेन तमसाऽऽवृताः ॥ ७ ॥ तांस्ते प्रेत्याभिगच्छन्ति ये के चात्म-

हनो जनाः ॥ योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ॥ ८ ॥ किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ अतोऽयमात्मवित्त्यक्त्वा देहादावात्मताभ्रमम् ॥ ९ ॥ स्वात्मबोधेन तत्त्वैक्ये ज्ञाते स्वं न हिनस्त्यसौ ॥ आत्मनो हननादेवसकार्याज्ञानबाधनात् ॥ १० ॥ प्रकृष्टां गतिमानन्दावातिरूपां प्रयात्यसौ ॥ ११ ॥ २८ ॥

भा० टी०—श्रोतृप्ररोचनाय यथोक्तं सम्यग्दर्शनं फलवचनेन स्तौति—**सममिति** । सर्वत्र समं तुल्यतयावस्थितमीश्वरमुक्तलक्षणं समं पश्यन् उपलभमानः हि यस्मादात्मना स्वेनैव स्वात्मानं न हिनस्ति हिंसां न करोति ततस्तस्मात्परां प्रकृष्टां मोक्षाख्यां गतिं याति प्राप्नोति मुच्यत इत्यर्थः। अयमर्थः—सर्वो ह्यज्ञोऽत्यन्तप्रसिद्धं साक्षादपरोक्षमप्यात्मानं तिरस्कृत्यानात्मानमात्मत्वेन परिगृह्य तमपि धर्माधर्मौ कृत्वोपात्तमात्मानं हत्वाऽन्यमात्मानमुपादत्ते, तमपि हत्वाऽन्यमित्येवमुपात्तमुपात्तमात्मानं हन्तीत्यात्महा उच्यते । "असुर्या नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" ॥ 'अन्यथा सन्तमात्मानं योऽन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा' इत्यादि श्रुतिस्मृतिभ्यां परमार्थात्माप्यविद्वद्भिरविद्यया हत इव । अतः सर्वेऽप्यविद्वांस आत्महन एवोच्यन्ते । यस्त्वितरो यथोक्तात्मदर्शी स उभयथाप्यात्मना आत्मानं न हिनस्ति ततो याति परां गतिम् । एतेन कश्चिदपि प्राणी स्वयं स्वमात्मानं नैव हिनस्ति इत्यतो प्राप्तं हननं किमिति प्रतिषिध्यत इति शङ्का प्रत्युक्ता । आत्मशब्दस्य स्वस्मिन्मुख्यत्वादुक्तार्थे स्वरसाधिक्याच्चात्मना देहादिनात्मानं, यद्वा ऐक्यात्मदर्शित्वात्स्वात्मानमिवान्यमप्यात्मानं न हिनस्ति सर्वत्र दयालुर्भवतीति व्याख्यानमाचार्यैर्न प्रदर्शितम् ॥ २८ ॥

प० टी०—अथ पूर्वोक्तप्रकारस्य प्रयोजनमाह—**सममिति** । सर्वत्र सर्वभूतेषु समवस्थितमीश्वरं समं स्वसदृशं पश्यन् तारम्यवर्जितं वा पश्यन्नात्मना सर्वात्मना मनोवाक्कायैरात्मानं न हिनस्ति हिंसां न करोति ततस्तेनानुष्ठानेन परां गतिं याति । श्रुतिरपि—"यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न तदा विचिकित्सति" इति । भाष्यम्—यदैतमनुभवसिद्धं यतो देवं द्योतमानं भूतस्यातिक्रान्तस्य भव्यस्य भविष्यतो वा भूतजातस्येशानं नियामकमञ्जसा साक्षात्पश्यति तदा न विचिकित्सति हिंसावज्ञानिन्दारूपां विचिकित्सां न करोति ॥ २८ ॥

रा० टी०—साम्यादिज्ञानस्य फलमाह—**सममिति** । सर्वत्र समवस्थितं निर्दोषाशेषसद्गुणतया सम्यगवस्थितमीश्वरं समं सर्वत्र निर्दोषाशेषसद्गुणतयैकप्रकारं 'न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि' इति सूत्रोक्तदिशा पश्यन् , आत्मना बुद्ध्या आत्मानं स्वात्मानं न हिनस्ति नरके न पातयति, ततो ज्ञानात्परां गतिं मुक्तिं च यातीत्यर्थः ॥ २९ ॥

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः ॥**
**यः पश्यति तथाऽऽत्मानमकर्तारं स पश्यति ॥ २९ ॥**

त० टी०—ननु शुभाशुभकर्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमात्मनां समत्वं स्यादित्याशङ्क्याह—**प्रकृत्यैवेति** । देहेन्द्रियाकारेण परिणतया प्रकृत्यैव सर्वाणि सर्वशः सर्वप्रकारैः क्रियमाणानि कर्माणि यः पश्यति, तथाऽऽत्मानमकर्तारं तस्य यावत् प्रकृतिसंबन्धस्तावद्देहेन्द्रियाधीनकर्तृत्वादकर्तारं यः पश्यति, स यथाऽवस्थितमात्मानं पश्यति ॥ २९ ॥

म० टी०—ननु शुभाशुभकर्मकर्तारः प्रतिदेहं भिन्नाः आत्मानो विषमाश्च तत्तद्विचित्रफलभोक्तृत्वेनेति कथं सर्वभूतस्थमेकमात्मानं समं पश्यन्न हिनस्त्यात्मनात्मानमित्युक्तमत आह—**प्रकृत्यैवेति** । कर्माणि वाङ्-

नःकायारभ्याणि सर्वशः सर्वैः प्रकारैः प्रकृत्यैव देहेन्द्रियसंघाताकारपरिणतया सर्वविकारकारणभूतया त्रिगुणात्मिकया भगवन्माययैव क्रियमाणानि ननु पुरुषेण सर्वविकारशून्येन यो विवेकी पश्यति, एवं क्षेत्रेण क्रियमाणेष्वपि कर्मसु आत्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिविवर्जितमसङ्गमेकं सर्वत्र समं यः पश्यति, तथाशब्दः पश्यतीति क्रियाकर्षणार्थः, स पश्यति स परमार्थदर्शीति पूर्ववत् । सविकारस्य क्षेत्रस्य तत्तद्विचित्रकर्मकर्तृत्वेन प्रतिदेहं भेदेऽपि वैषम्येऽपि न निर्विशेषस्याकर्तुराकाशस्येव न भेदे प्रमाणं किंचिदात्मन इत्युपपादितं प्राक् ॥ २९ ॥

**शं० टी०**—ननु सुखदुःखविवेकाऽविवेकशूरत्वभीरुत्वादिगुणैः स्वकृतकर्मविशेषैरहमहमिति प्रत्ययभेदैश्च प्रतिशरीरमात्मसु भिन्नेषु सत्सु कथं सर्वेषु भूतेष्वात्मानं समं पश्यति यतिरित्याशङ्कायां न । "विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति "एष द्रष्टा स्प्रष्टा श्रोता कर्ता विज्ञानात्मा पुरुषः" इति च श्रवणाद्विज्ञानात्मन एव कर्मकरणं तत्फलानुभवः विवेकादिगुणाश्च प्रतिशरीरमहमहमित्यभिमानकृतो भेदश्च नत्वात्मनस्तस्यामनस्कत्वान्निरिन्द्रियत्वान्निरवयवत्वाच्च गुणानुपपत्तेः कर्मानुपपत्तेर्भेदानुपपत्तेश्च । ततः सर्वं कर्म प्रकृतिरेव करोति नत्वात्मा तेनास्य सर्वभूतसमत्वं सिध्यतीति बोधयितुमाह—**प्रकृत्यैवेति** । प्रकृतिस्त्रिगुणात्मिका माया देहेन्द्रियप्राणमनोबुद्ध्यादिरूपेण परिणता कार्यकरणकर्तृत्वे हेतुरित्युक्तलक्षणया तया प्रकृत्यैव । एवकारोऽन्ययोगव्यवच्छेदार्थः । कर्माणि श्रवणदर्शनस्पर्शनवचनादानविसर्गादीनि सर्वशः सर्वप्रकारैर्विहितानि प्रतिषिद्धानि च सर्वाणि क्रियमाणानि—चकारात्तत्फलानुभूतिं च—तयैव क्रियमाणानि यः पश्यति श्रुतियुक्त्यनुभूतिभिरात्मानात्मनोः प्रकृतिपुरुषयोः स्वरूपमुक्तरीत्या सम्यग्विविच्यानात्मनः सकाशादात्मनः स्वरूपं मुञ्जादिषीकामिव पृथग्विभक्तं स्वात्मत्वेन साक्षाद्विज्ञाय तदात्मना सदा स्थितवतो ब्रह्मविदस्तैरेव स्वतोऽविभक्तया प्रकृत्यैव सर्वाणि कर्माणि क्रियमाणान्युपलभ्यन्ते, तयैव क्रियमाणा तत्फलानुभूतिरप्युपलभ्यते नान्यस्य । एवमात्मानात्मविवेकज्ञानशक्त्या प्रकृतिकर्तृकामेव सर्वचेष्टां फलानुभूतिं च तथाशब्दस्यार्थस्तथात्मानमकर्तारं चाभोक्तारं निष्क्रियं नित्यकूटस्थं साक्षाद्यो यतिः पश्यति स एव स्वानुभूत्या प्रत्यग्दृष्ट्या ब्रह्मादिस्तम्बान्तेषु भूतेषु सर्वत्रात्मानमकर्तारमभोक्तारं सर्वोपाधिविनिर्मुक्तं सममेकरसमेव पश्यति तेन परां गतिं च याति नान्य इत्यर्थः । श्लोकत्रयेणापि सर्वभूतस्थमात्मानमिति श्रुतन्यायेन साक्षात्सर्वभूतेष्वात्मानं सममेव पश्यतो यतेर्मुक्तिरिति सूचितं भवति ॥ २९ ॥

**श्री० टी०**—ननु शुभाशुभकर्मकर्तृत्वेन वैषम्ये दृश्यमाने कथमात्मनः समत्वमित्याशङ्क्याह—**प्रकृत्यैवेति** । प्रकृत्यैव देहेन्द्रियाकारेण परिणतया सर्वशः सर्वैः प्रकारैः क्रियमाणानि कर्माणि यः पश्यति । तथात्मानं चाकर्तारं देहाभिमानेनैवात्मनः कर्तृत्वं न स्वतः इत्येवं यः पश्यति स एव सम्यक्पश्यति नान्य इत्यर्थः ॥ २९ ॥

**स० टी०**—शुभाशुभादिकर्तारः प्रतिदेहं विलक्षणाः ॥ विचित्रफलभोक्तारो विषमा विषमाश्रयाः ॥१॥ कथं समस्तभूतस्थमात्मानं सममद्वयम् ॥ पश्यन्नस्वं हिनस्तीति शङ्कायामाह मापतिः ॥ २ ॥ वाङ्मनःकायकृत्यानि प्रकारैरखिलैरपि ॥ देहाद्याकारया मिथ्या त्रिगुणात्मिकयानया ॥३॥ मायया क्रियमाणानि नात्मना विक्रियात्मना ॥ यः पश्यति विवेकेन तथा क्षेत्रेण सर्वथा ॥ ४ ॥ कर्मसु क्रियमाणेषु क्षेत्रज्ञमविकारिणम् ॥ असङ्गमेकं सर्वत्र यः पश्यत्यक्रियं बुधः ॥ ५ ॥ स परमार्थदर्शीति सम्यक्पश्यति वस्तुतः ॥ क्षेत्रस्य सविकारस्य वैषम्यं भिन्नता यतः ॥ ६ ॥ अकर्तुर्निर्विशेषस्य न वैषम्यं न भिन्नता ॥ ७ ॥ २९ ॥

**भा० टी०**—ननु सुखदुःखादिभिर्गुणैर्धर्माधर्माख्यैः स्वकर्मभिश्च वैलक्षण्यात् प्रतिदेहं भेदे तद्विशिष्टेष्वात्मसु साम्यदर्शनमनुपपन्नमिति चेत्तत्राह—**प्रकृत्येति** । प्रकृतिस्त्रिगुणात्मिका भगवतो माया "मायां

तु प्रकृतिं विद्यात् " इति श्रुतेः । तयैव च कर्माणि वाङ्मनःकायारभ्याणि क्रियमाणानि सर्वशः सर्वप्रकारैः । सर्वप्रकारत्वे च काम्यत्वनिषिद्धत्वादिना प्रकारबाहुल्यं यः पश्यति तथात्मानं क्षेत्रज्ञमकर्तारं सर्वोपाधिशून्यमेकं यः पश्यति स पश्यति परमार्थदर्शीति पूर्ववत् । निर्गुणस्याकर्तुर्निर्विशेषस्याकाशस्येव भेदे प्रमाणानुपपत्तेरित्यर्थः ॥ २९ ॥

पु० टी०–प्रथमोपायस्य फलमाह–**प्रकृत्येति** । सर्वशः सर्वप्रकारैः कर्माणि देहेन्द्रियादिरूपेण परिणतया प्रकृत्यैव क्रियमाणानीति यः पश्यति स एवात्मानमकर्तारं कर्तृत्वाभिमानशून्यं पश्यति ॥ २९ ॥

रा० टी०–नन्वीश्वरः कर्मानपेक्ष्यैवोपद्रष्टेत्यत्रोक्तदिशा यदि सदसद्योनिजन्मसु स्वतन्त्रकारणं, तर्हि तस्य वैषम्यादिदोषः स्यात् । कर्मापेक्षितायां स्वातन्त्र्यप्रच्युतिस्तस्य स्यात् । तस्यापि कर्त्रन्तरसत्त्वाच्च स्वातन्त्र्यहानिरेवेत्यत आह–**प्रकृत्येति** । ल्यबन्तमेतत् । चशब्दात्पूर्वप्रकृतेश्वरोऽनुषज्जते । ईश्वरेणैव प्रकृत्य पूर्वतनं जीवकर्म उद्बोध्य तदनुसृत्य क्रियमाणानि सर्वकर्माणि यः पश्यति, तथात्मानं परमात्मानमकर्तारं कर्तृहीनं यः पश्यति, स पश्यति परमेश्वरमित्यर्थः । यद्वा उपद्रष्टेत्यत्रोक्तभगवत्स्वातन्त्र्यज्ञानस्य फलमाह–**प्रकृत्येति** । तृतीयान्तमिदं चशब्दात्प्रकृतेश्वरेण कर्त्रा प्रकृत्या निमित्तभूतया क्रियमाणानि सर्वशः कर्माणि यः पश्यति, तथा स्वात्मानं चाकर्तारमस्वतन्त्रं च यः पश्यति स पश्यति हरिमित्यर्थः । तथाच सूत्रम् ' पूर्वं तु बादरायणो हेतुव्यपदेशात् ' इति । कर्तृराहित्यात्स्वातन्त्र्यम् । स्वाधीनसत्ताकतत्तदीयपूर्वकर्मापेक्ष्य सर्वं करोतीति न वैषम्यादिदोष इति भावः । तदुक्तं वैषम्यनैर्घृण्ये न सापेक्षत्वादिति ॥ ३० ॥

**यदा भूतपृथग्भावमेकस्थमनुपश्यति ॥**
**तत एव च विस्तारं ब्रह्म संपद्यते तदा ॥ ३० ॥**

**त० टी०–एवमात्मनः सर्वत्र समत्वं प्रतिपाद्य पुनस्तस्य क्रियया प्राप्तं वैषम्यं शरीररूपप्रकृतिनिमित्तत्वेन परिहृतम् । इदानीं देहभेदमपि कारणैकत्वदर्शनेन निराकुर्वंस्तथाद्रष्टुर्ब्रह्मसदृशात्मप्राप्तिमाह–यदेति । यदा यस्मिन्काले भूतपृथग्भावं देवतिर्यङ्मनुष्यादिभेदभिन्नं भावं देहरूपं कार्यमेकस्थमेकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ स्थितं स्थितिकाले अनुपश्यति सर्वदा अनुसन्धत्ते । तत एव च विस्तारं प्रकृतेः सकाशादेव भूतानां विस्तारं सृष्टिसमयेऽनुपश्यति । तदा भूतानां कारणद्रव्यात्मनैकत्वमनुपश्यन् ब्रह्म संपद्यते, ब्रह्मवदविच्छिन्नज्ञानं सममात्मानं प्राप्नोति ॥ ३० ॥**

म० टी०–तदेवमापाततः क्षेत्रभेददर्शनमभ्यनुज्ञाय क्षेत्रज्ञभेददर्शनमपाकृतम् । इदानीं तु क्षेत्रभेददर्शनमपि मायिकत्वेनापाकरोति–**यदेति** । यदा यस्मिन्काले भूतानां स्थावरजङ्गमानां सर्वेषामपि जडवर्गाणां पृथग्भावं पृथक्त्वं परस्परभिन्नत्वमेकस्थमकस्मिन्नेवात्मनि सद्रूपे स्थितं कल्पितं कल्पितस्याधिष्ठानादनतिरेकात् सद्रूपात्मस्वरूपादनतिरिक्तमनुपश्यति शास्त्राचार्योपदेशमनु स्वयमालोचयति आत्मैवेदं सर्वमिति । एवमपि मायावशात्तत एकस्मादात्मन एव विस्तारं भूतानां पृथग्भावं च स्वप्नमायादिवदनुपश्यति, ब्रह्म संपद्यते तदा सजातीयविजातीयभेददर्शनाभावात् ब्रह्मैव सर्वानर्थशून्यं भवति तस्मिन्काले । " यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र को मोहः कः शोक एकत्वमनुपश्यतः " इति श्रुतेः प्रकृत्यैव चेत्यत्रात्मभेदो निराकृतः । यदा भूतपृथग्भावमित्यत्र त्वनात्मभेदोऽपीति विशेषः ॥ ३० ॥

शं० टी०–ननु समं सर्वेषु भूतेष्विति समं पश्यन् हि सर्वत्रेति भूतानामात्मनश्चाधाराधेयत्वप्रतिपत्तौ सत्यां द्वैतमेवापतति । कथमेवं द्वैतदर्शिनस्ततो याति परां गतिमितिकैवल्यसिद्धिः प्रतिपाद्यत इत्याशङ्कायां न । केदारे कल्पितसेतूनामन्तराले भूमिस्तिष्ठति सेतवोऽपि भूमावेव तिष्ठन्ति विचार्यमाणे भूमयः सेतवोऽपि

सर्वं मृदेव भवति यथा, तथा कल्पितभूतेष्वात्मा तिष्ठति भूतान्यप्यात्मनि तिष्ठन्ति श्रुतियुक्तिभिर्विचार्यमाणे सर्वमात्मैव भवत्यत आत्मव्यतिरिक्तवस्त्वभावादात्मैकत्वदर्शनं विदुषः संभवति तेन ब्रह्मसंपत्तिश्चेति बोधयति—**यदेति** । नित्यनिरन्तरसमाधिनिष्ठानिर्मूलितद्वैतप्रत्ययो ब्रह्मविद्यतिर्यदा यस्मिन् काले भूतपृथग्भावं भूतानामाकाशादीनां तत्कार्याणां च सर्वेषां पृथग्भावं भिन्नपदार्थवत्प्रतीतिविषयत्वं पृथक्त्वमेकस्मिन्नेवात्मनि कल्पितं सत्पटे चित्रमिव दारुणि गजमिव प्रतीयमानमपि आत्मसत्ताव्यतिरेकेण पृथक्सत्ताभावादात्ममात्रमेवानुपश्यति श्रुत्याऽऽचार्योपदेशजन्यज्ञानानुरूपेणात्मैवेदं सर्वमिति पश्यति । प्रकृतिं तत्कार्यं च सर्वमारोपितमधिष्ठाने आत्मनि स्वस्वरूपे सद्वृत्त्या प्रविलाप्यात्मानमद्वितीयं पश्यतीत्यर्थः । यस्माद्यदुत्पद्यते तत्तन्मात्रमेवेतिन्यायेन प्रतीतिदशायामपि प्रपञ्चस्यात्ममात्रत्वं दर्शयितुमाह—**तत एवेति** । "तस्मात्तत्सर्वमभवत्" इति श्रवणात्तत एव तस्मादात्मनः सकाशादेव विस्तारं द्वैतप्रपञ्चस्य विस्फुरणं च पश्यति । मृदः सकाशादुत्पन्नघटादेर्मृण्मात्रत्वं प्रत्यक्षेण दृष्टं तद्वदात्मनः सकाशादुत्पन्नभूतविस्तारस्य प्रतीतिदशायामप्यात्मसत्ताव्यतिरेकेण स्वतः सत्ताभावादात्ममात्रत्वं पश्यति, अहमेवेदं सर्वमिति सर्वं स्वमेव पश्यति यदा तदैव सूर्यागमतमोपगमयोरिव ब्रह्मवेदनतत्फलयोरन्तरालाभावाद्यस्मिन् क्षणे सर्वमात्मानं पश्यति तत्क्षण एव ब्रह्मवित्तमो यतिर्ब्रह्म संपद्यते ब्रह्मभावं गच्छति—स्वस्योपाधिकृतपरिच्छेदराहित्येन पूर्णात्मना स्थितिरेव ब्रह्मभावस्तं प्राप्नोतीत्यर्थः ॥ ३० ॥

**श्री० टी०**—इदानीं तु भूतानां प्रकृतितावन्मात्रत्वेनाभेदाद्भूतभेदकृतमप्यात्मनो भेदमपश्यन् ब्रह्मत्वमुपैतीत्याह—**यदेति** । यदा भूतानां स्थावरजङ्गमानां पृथग्भावं भेदं पृथक्त्वं एकस्थमेकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ स्थितं प्रलये अनुपश्यति आलोचयति । तत एव च तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमयेऽनुपश्यति तदा प्रकृतितावन्मात्रत्वेन भूतानामप्यभेदं पश्यन्परिपूर्णं ब्रह्म संपद्यते ब्रह्मैव भवतीत्यर्थः ॥ ३० ॥

**स० टी०**—एवमापाततः क्षेत्रभेददर्शनमादिशन् ॥ क्षेत्रज्ञस्य भिदादृष्टिर्विवेकेन निराकृता ॥ १ ॥ इदानीं मायिकत्वेन क्षेत्रस्यापि भिदेक्षणम् ॥ अपाकरोति भगवान्दृश्यातीतोऽक्षरोऽद्वयः ॥ २ ॥ यस्मिन्काले समस्तानां स्थिरजङ्गमरूपिणाम् ॥ परस्परविभिन्नत्वमेकस्मिन्नात्मनि स्थितम् ॥ ३ ॥ अधिष्ठानादभिन्नत्वं कल्पितत्वेन सर्वतः ॥ शास्त्राचार्योपदेशेन स्वानुभूत्यानुपश्यति ॥ ४ ॥ मिथ्यात्मनां हि सर्वेषां सत्यादिगुणलक्षणम् ॥ व्याविद्धाशेषसंसारमात्मानं तं प्रचक्षते ॥ ५ ॥ न ह्यात्मवान्भवेत्सर्पो दण्डाद्यध्यासरूपिणा ॥ आत्मना वितथेनैव सर्पो रज्ज्वात्मनात्मवान् ॥ ६ ॥ इत्युक्तं वार्तिके द्वैतं व्याविद्धं ब्रह्मणेत्यपि ॥ अधिष्ठानाद्विभिन्नत्वं कल्पितानां यदा भवेत् ॥ ७ ॥ कल्पितत्वक्षतिस्तर्हि तथाधिष्ठानताक्षतिः ॥ सर्पदण्डस्रगादीनां कल्पितानां गुणेऽद्वये ॥ ८ ॥ न भेदो युक्तिभिः सिद्ध्येत्किंतु रज्ज्वात्मतैव हि ॥ एवं घटपटादीनां कल्पितानां चिदद्वये ॥ ९ ॥ अधिष्ठानस्वरूपत्वान्न भेदोऽस्ति मनागपि ॥ एवं मायावशात्तस्मादेकस्मादात्मनोऽद्वयात् ॥ १० ॥ स्वप्नवज्जडवर्गस्य पृथग्भावं प्रकल्पितम् ॥ स्वयमालोचयत्येष आत्मैवेदमिति श्रुतेः ॥ ११ ॥ तस्मिन्कालेऽनुभूत्यैवं त्यक्तभेदमतिः पुमान् ॥ सजातीयविजातीयभेददर्शनबाधतः ॥ १२ ॥ समस्तानर्थशून्यं तद्ब्रह्मैव भवति स्वयम् ॥ यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः ॥ १३ ॥ तत्र को मोहः कः शोक एकत्वमनुपश्यतः ॥ प्रकृत्यैवेतिपद्येऽस्मिन्नात्मभेदो निराकृतः ॥ १४ ॥ यदा भूतेतिपद्ये त्वनात्मभेदो निराकृतः ॥ १५ ॥ ३० ॥

**भा० टी०**—प्रकृतेर्विकाराणां च सांख्यवत्पुरुषादन्यत्वप्रसक्तिं निराकुर्वन्पुनरपि तदेव सम्यग्दर्शनं शब्दान्तरेण प्रपञ्चयति—**यदेति** । यदा यस्मिन्काले भूतानां पृथग्भावः पृथक्त्वमेकस्थमेकस्मिन्नात्मनि

प्रकृत्यादिसमस्तप्रपञ्चाधिष्ठाने प्रत्यगभिन्ने ब्रह्मणि सद्रूपे स्थितं कल्पितस्याधिष्ठानानतिरेकादात्मानतिरिक्त-मनु शास्त्राचार्योपदेशात् पश्चात्पश्यति " आत्मैवेदं सर्वं । सर्वं खल्विदं ब्रह्म । नेह नानास्ति किंचन । अहं ब्रह्मास्मि " इति साक्षात्करोति तत एव परमात्मन एव विस्तारम् " यतो वा इमानि भूतानि जायन्ते । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते । तस्माद्वा एतस्मादात्मन आकाशः संभूतः । तदैक्षत तत्तेजोऽसृजत " इति सर्वप्रपञ्चविस्तारमनुपश्यति तदा तस्मिन्काले ब्रह्म संपद्यते ब्रह्मैव भवतीत्यर्थः । "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः । एकस्यामेवेश्वरशक्तिरूपायां प्रकृतौ स्थितं प्रलयेऽनुपश्यति । तत एव च तस्या एव प्रकृतेः सकाशाद्भूतानां विस्तारं सृष्टिसमयेऽनुपश्यतीति तूक्तप्रसक्त्यनिरासं ब्रह्म संपद्यते इति कथनानुपपत्तिं चाभिप्रेत्याचार्यैर्न व्याख्यातम् ॥ ३० ॥

प० टी०—एवं समत्वात्कर्तृदर्शनेन ब्रह्मप्राप्तिमुक्त्वाधुना जगत एकत्वदर्शनादाह—**यदेति** । यदा नाना-नामरूपवतां भूतानां पृथग्भावं पृथगवस्थानमेकस्थमेकस्मिन् समष्टिरूपेण तिष्ठतीत्येकस्थमनुवेलं पश्यति । एकस्मिन् सूत्रे नानामणीनामिवेत्यर्थः । ततस्तेनैकरूपेण परमेश्वरेण सह विस्तारं पश्यति जलेन तरङ्गाणामिव तदा ब्रह्म संपद्यते ब्रह्मैव भवति ॥ ३० ॥

रा० टी०—न केवलं भगवतः सर्वप्रेरकत्वादिज्ञानमात्रेणालम् । किंतु तस्या 'अवस्थितेरिति काशकृत्स्नः' इति सूत्रोक्तदिशा सर्वाधारत्वाद्यपि ज्ञातव्यमित्युच्यते—**यदेति** । भूतपृथग्भावं भूतानां जीवानां पृथक्त्वं भेदमेकस्थमेकस्मिन्विष्णौ स्थितम् । किमुक्तं भवति ? विष्णुनान्योन्यं च पृथग्भूतं भूतग्राममेकविष्णवाश्रितं यदानुपश्यतीत्युक्तं भवति । तत एव विष्णुत एव विस्तारमुत्पत्तिं च भूतानामित्यन्वेति । अनु तारतम्येन पश्यति । तदा ब्रह्म संपद्यते प्राप्नोति ॥ ३१ ॥

## अनादित्वान्निर्गुणत्वात्परमात्माऽयमव्ययः ॥
## शरीरस्थोऽपि कौन्तेय ! न करोति न लिप्यते ॥ ३१ ॥

**त० टी०—ननु भवत्वात्मनः प्रकृतिवैलक्षण्यं तन्निमित्तं कर्तृत्वं च न स्वत इति । तथाऽपि शरीरेऽवस्थानदशायां तत्संबन्धनिमित्तैः कर्मभिस्तज्जन्यसुखदुःखादिभिश्च यदि लिप्येत तर्हि कथमकर्तृत्वं समत्वदर्शनं च स्यादित्याशङ्क्याह—अनादित्वादिति । आदिजन्मस्वरूपतस्तद्रहितत्वात्, निर्गुणत्वात्स्वरूपेण मायागुणसंबन्धरहितत्वात् अयं परमात्माऽव्ययः विनाशवर्जितः । देहमनोबुद्ध्योऽपि आत्मशब्दवाच्यास्तेभ्योऽपि परमत्वाच्छ्रेष्ठत्वादयं क्षेत्रज्ञः परमात्मेत्युक्तः । यदुत्पत्तिमत्प्रकृतिगुणवच्च वस्तु तस्य व्ययो नाशो भवति । अयं तु न तथा अतोऽव्ययस्तस्माच्छरीरस्थोऽपि शरीरे वर्तमानोऽपि हे कौन्तेय ! न करोति न लिप्यते । देहस्वभावैः परिणामादिभिर्न युज्यते ॥ ३१ ॥**

म० टी०—आत्मनः स्वतोऽकर्तृत्वेऽपि शरीरसंबन्धोपाधिकं कर्तृत्वं स्यादित्याशङ्कामपनुदन् यः पश्यति तथात्मानमकर्तारं स पश्यतीत्येतद्विवृणोति—**अनादित्वादिति** । अयमपरोक्षः परमात्मा परमेश्वराभिन्नः प्रत्यगात्मा अव्ययः न व्येतीत्यव्ययः सर्वविकारशून्य इत्यर्थः । तत्र व्ययो द्वेधा धर्मिस्वरूपस्यैवोत्पत्तिमत्तया वा धर्मिस्वरूपस्यानुत्पाद्यत्वेऽपि धर्माणामेवोत्पत्त्यादिमत्तया वा । तत्राद्यमपाकरोति—अनादित्वादिति । आदिः प्रागसत्त्वावस्था । सा च नास्ति सर्वदा सत आत्मनः । अतस्तस्य कारणाभावाज्जन्माभावः । न ह्यनादेर्जन्म संभवति । तदभावे च तदुत्तरभाविनो भावविकारा न संभवन्त्येव । अतो न स्वरूपेण व्येतीत्यर्थः । द्वितीयं निराकरोति—**निर्गुणत्वादिति** । निर्धर्मकत्वादित्यर्थः । नहि धर्मिणमविकृत्य कश्चिद्धर्म उपैत्यपैति वा धर्मधर्मिणोस्तादात्म्यादयं तु निर्धर्मकोऽतो न धर्मद्वारापि व्येतीत्यर्थः । " अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा " इति श्रुतेः । यस्मादेषः जायतेऽस्ति वर्धते विपरिणमतेऽपक्षीयते विनश्यतीत्येवं षड्भावविकार-

शून्यः आध्यासिकेन संबन्धेन शरीरस्थोऽपि तस्मिन्कुर्वत्स्वयमात्मा न करोति यथाध्यासिकेन संबन्धेन जलस्थः सविता तस्मिंश्चलत्यपि न चलत्येव तद्वत्। यतो न करोति किंचिदपि कर्म। अतः केनापि कर्मफलेन न लिप्यते। यो हि यत्कर्म करोति स तत्फलेन लिप्यते न त्वयमकर्तृत्वादित्यर्थः। इच्छा द्वेषः सुखं दुःखमित्यादीनां क्षेत्रधर्मत्वकथनात्, प्रकृत्यैव च कर्माणि क्रियमाणानीति मायाकार्यत्वव्यपदेशाच्च। अत एव परमार्थदर्शिनां सर्वकर्माधिकारनिवृत्तिरिति प्राग्व्याख्यातम्। एतेनात्मनो निर्धर्मकत्वकथनात् स्वगतभेदोऽपि निरस्तः, प्रकृत्यैव च कर्माणीत्यत्र सजातीयभेदो निवारितः, यदा भूतपृथग्भावमित्यत्र विजातीयभेदः, अनादित्वान्निर्गुणत्वादित्यत्र स्वगतो भेद इत्यद्वितीयं ब्रह्मैवात्मेति सिद्धम् ॥ ३१ ॥

शं० टी०—ननु समं सर्वेषु भूतेषु तिष्ठन्तमिति भूतेष्वात्मनो व्याप्यस्थितत्वे सत्याश्रयनाशादाश्रितस्यापि नाश इतिन्यायेन स्वाश्रयभूतेषु भूतेषु नश्यत्सु सत्स्वाश्रयिणोऽप्यात्मनो नाशप्रसङ्गात् दारुणि नष्टे दहनस्यापि नाशो दृष्टस्तद्वदुपाधिनाशादुपहितस्यापि नाशः स्यात्। अश्वगत्या तदधिष्ठितसारथेरपि गमनदर्शनात् प्रकृत्या कर्मसु क्रियमाणेषु सत्सु तत्स्थस्याप्यात्मनः कर्मकरणं तत्फलानुभूतिश्च स्यात्, कथमात्मनोऽकर्तृत्वं नित्यत्वं चेति सिंहावलोकनन्यायेनातीतश्लोकद्वयार्थमाशङ्क्यात्मनोऽजत्वान्निर्गुणत्वाच्च भूतानां नाशे सत्यपि न विनाशोऽस्ति कूटस्थत्वादात्मनो विक्रियाऽसंभवात्कर्तृत्वादिरपि न संभवतीत्याह—अनादित्वादिति। न विद्यते आदिः उत्पत्तिकारणं निमित्तमुपादानं वास्येत्यनादिरयमात्मा "न तस्य कश्चिज्जनिता न चाधिपः" इति जनयितृभावश्रवणान्निष्कारणकः। यद्वा न विद्यते आदिरादिमविकारो जनिलक्षणो भावधर्मो यस्य सोऽनादिर्निरवयवत्वादजः "अजो नित्यः" इतिश्रुतेः। अनादेर्भावोऽनादित्वं तस्माद्यत्सावयवं तदादिमद्यदादिमत्तद्विकारि यद्विकारि तद्व्येति भूतजातं, तस्मिन् स्वोपाधौ भूतजाते नष्टे सत्ययमात्मा निरवयवत्वेनानादित्वान्न व्येतीत्यव्ययः। सति कारणे 'कारणनाशात्कार्यस्यापि नाशः' इतिन्यायेन भूतानामिवात्मनोऽपि नाशः प्रसज्ज्येत तदभावादाश्रयनाशे सत्याकाशवन्न व्येतीत्यव्ययो नाशरहित इत्यर्थः। "अविनाशी वा अरेऽयमात्मा" इत्यात्मन उपाधिनाशेऽपि नाशाभावश्रवणात् निर्गुणत्वाच्च गुणाः सत्त्वादयः शब्दादयो वापीच्छादयस्तेभ्यो निर्गतो यः स निर्गुणः। यद्वा गुणा गुणकार्यभूताः प्राणादयः षोडशकलाशब्दवाच्यास्तेभ्यो निर्गतत्वान्निर्गुणो निरवयव इत्यर्थः। निर्गुणस्य भावो निर्गुणत्वं तस्मात्। यः सगुणः सगुणव्ययाद्व्येति भूतगणः, अयं तु निर्गुणत्वान्न व्येत्यात्मा सति गुणव्यये कारणव्यये च व्रीयात्तदभावान्न व्येतीत्यव्ययो नित्य इत्यर्थः। "नित्यो नित्यानाम्" इति श्रुतेः। नन्वात्मनोऽनादित्वेन निर्गुणत्वेन च कारणगुणनाशद्वारकनाशासंभवेऽपि घटादिवत्परतो वा वायुवत्स्वतो वा नाशः स्यादित्याशङ्कायामाह—परमात्मेति। परमश्चासावात्मेतीदं हेतुगर्भितं विशेषणद्वयम्। आत्मा खड्गाग्न्यादिभ्यो न नश्यति परमत्वात् यन्नैवं तन्नैवं यथा देह इति परमत्वमव्यक्तादपि निरवयवत्वेनातिसूक्ष्मत्वं निरातिशयमहत्त्वं च तस्मान्नाशयितुरविषय इत्यर्थः। आत्मत्वात्स्वतो नाशरहितः, आत्मत्वं प्रत्यक्त्वमहंप्रत्ययार्थता। सर्वावस्थासु सर्वदा सर्वैरहमस्मीत्यात्मसत्ताया अनुभूयमानत्वात् बुद्ध्यादिषु स्थूलान्तेषु प्रतिक्षणं विपरीतभावं गतेषु सत्स्वपि यस्मादेवं तस्मान्निरवयवो निराकारो नित्यो निष्क्रियः परिपूर्णश्चायमात्मा शरीरस्थोऽपि यद्यप्यात्मनः स्वे महिम्नि तिष्ठतः परममहतोऽधिकरणं नास्ति तथापि शरीरेष्वेवात्मोपलब्धेर्दर्शनाच्छरीरस्थ इत्युच्यते। ब्रह्मादिस्तम्बपर्यन्तशरीरेषु घटादिष्वाकाशवद्वर्तमानोऽप्यात्मा स्वयं तेषु प्रवृत्तेष्वपि पुण्यापुण्यलक्षणं कर्म यत्किंचिन्न करोति किंतु शरीरेषु बुद्धितद्वृत्तिसाक्षित्वेन तूष्णीं तिष्ठति, वायुना चलत्सु वृक्षेषु तस्थ आकाश इव न किंचिच्चेष्टते निरवयवस्य परिपूर्णस्य चलनासंभवादित्यर्थः। "वृक्ष इव स्तब्धो दिवि तिष्ठति" इति श्रुतेः। ननु कूटस्थस्यात्मनः स्वतः कर्मकरणाभावेऽपि देहे तिष्ठतस्तत्संयोगाद्देहेन्द्रियादिभिः क्रियमाणैः कर्मभि-

लेपः स्यात् 'तत्संयोगी च पञ्चमः' इति पापकर्त्रा सह स्थितिमात्रेणाकर्तुरपि पापलेपप्राप्तिः स्मर्यते । तन्न्यायेनात्रापि स्यादित्याशङ्कायां न । तत्संयोगीति संगित्वस्य पापलेपापत्तिहेतोस्तत्र श्रूयमाणत्वात्तत्संगिनः पापलेपः संभवेत्, न त्वसंयोगिनो दूरवर्तिनस्तथात्रापि निरवयवत्वेनातिसूक्ष्मत्वादात्मनो देहेन्द्रियादिभिस्तत्कृतकर्मभिश्च संयोगासंभवात् न तत्कृतकर्मलेप इत्याह न लिप्यत इति । देहेन्द्रियतद्विकारतदवस्थातद्व्यापृतिसाक्षित्वेनाविक्रियात्मना स्थित आत्मा स्वयमसङ्गत्वान्न तत्कृतकर्मभिर्लिप्यत इत्यर्थः ॥ ३१ ॥

**श्री० टी०**—तथापि परमेश्वरस्य संसारावस्थायां देहसंबन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिर्वैषम्यं दुष्परिहरमिति कुतः समदर्शनं तत्राह—**अनादित्वादिति** । यदुत्पत्तिमत् तदेव हि व्येति विनाशमेति । यच्च गुणवद्वस्तु तस्य गुणनाशे व्ययो भवति । अयं तु परमात्मा अनादिर्निर्गुणश्चातोऽव्ययः अविकारीत्यर्थः । तस्माच्छरीरे स्थितोऽपि किंचिन्न करोति न च कर्मफलैर्लिप्यत इति ॥ ३१ ॥

**स० टी०**—नन्वात्मनः स्वतो मास्तु कर्तृत्वमविकारिणः ॥ देहाद्यौपाधिकं किं न कर्तृत्वं स्यादिहात्मनः ॥ १ ॥ इत्याशङ्क्यान्यसंबन्धात्कर्तृत्वं खण्ड्यतेऽधुना ॥ अपरोक्षो य आत्मायं प्रत्यक्त्वादव्ययोऽक्षयः ॥ २ ॥ निर्विकारो ह्यनादित्वात्स्वरूपेण न जन्मभाक् ॥ निर्धर्मकतया नास्य जन्मधर्मनिमित्तकम् ॥ ३ ॥ प्रागसत्वं न चास्त्यस्याबाधितस्य कुतो जनिः ॥ न ह्यनादेर्भवेज्जन्म तदभावान्न चेतरे ॥ ४ ॥ विकाराः संभवन्त्यस्य कूटस्थस्याद्वयस्य च ॥ अविनाशी वेति श्रुत्या निर्धर्मकतयेरितः ॥ ५ ॥ यद्यप्याध्यासिकेनासौ संबन्धेन शरीरगः ॥ तथापि न करोत्यात्मा कुर्वत्यपि शरीरके ॥ ६ ॥ यथाध्यासिकसंबन्धाज्जलस्थोऽपि दिवाकरः ॥ चलत्यपि जलेनासौ चलत्येवं चिदक्रिया ॥ ७ ॥ यतः किंचिन्न कर्मात्मा करोति प्रत्यगद्वयः ॥ अतः कर्मफलेनासौ केनचिन्नोपलिप्यते ॥ ८ ॥ करोति यो हि यत्कर्म तत्फलेन स लिप्यते ॥ न त्वयं निर्विकारात्मा निष्क्रियो निर्मलो विभुः ॥ ९ ॥ इच्छा द्वेषः सुखं दुःखमित्यादीनां पुरा स्फुटम् ॥ क्षेत्रधर्मत्वकथनाद्धर्मः कोऽपि न चात्मनि ॥ १० ॥ प्रकृत्यैव च कर्माणीत्यत्र कर्तव्यमात्रकम् ॥ अविद्याकर्तृकं प्रोक्तं न किंचित्कर्म चिद्घने ॥ ११ ॥ अत एव परब्रह्मप्रत्यगात्मैक्यदर्शिनाम् ॥ सर्वकर्माधिकारस्य निवृत्तिः प्रागुदीरिता ॥ १२ ॥ निर्धर्मकत्वकथनान्निरस्ता स्वगता भिदा ॥ प्रकृत्यैवेति विध्वस्ता सजातीयभिदान्तरा ॥ १३ ॥ यदा भूतपृथग्भावमित्यत्र हरिणा स्वयम् ॥ विजातीयभिदा ध्वस्ता नानानर्थसमाश्रया ॥ १४ ॥ अनादित्वान्निर्गुणत्वादित्यत्र स्वगता भिदा ॥ विध्वस्तेत्यद्वितीयं तद्ब्रह्मैवात्मेति निर्णयः ॥ १५ ॥ ३१ ॥

**भा० टी०**—नन्वेकस्यात्मनः सर्वत्र समवस्थितत्वेन देहादिगतकर्तृत्वादिमत्त्वं प्राप्तं पवित्रस्यापि गङ्गाजलादेः अपवित्रप्राण्युदरान्तरदोषेण दोषवत्त्ववदिति तत्राह—**अनादित्वादिति** । अयं परमात्माव्ययोऽपक्षयरहितः कूटस्थ इत्यर्थः । तत्र व्ययस्त्रिविधः स्वभावतो वाऽवयवव्ययद्वारको वा गुणव्ययद्वारको वा । स्वतस्तु परब्रह्मणो न संभवतीति कथयितुं परमात्मेत्युक्तम् । द्वितीयासंभवे हेतुमाह—अनादित्वादिति । आदिः कारणं यस्य नास्ति तदनादि । घटादेरादिमत्त्वेन सावयवत्वाद्व्ययो दृष्टः, आत्मनस्त्वनादित्वेन निरवयवत्वादवयवद्वारको व्ययो न संभवतीत्यर्थः । तृतीयं निराकरोति—**निर्गुणत्वादिति** । तथा सगुणो गुणव्ययाद्व्येति, अयं तु निर्गुणत्वान्न व्येति गुणद्वारकोऽस्य व्ययो न संभवतीत्यर्थः । यत एवमतः शरीरस्थोऽपि शरीरेष्वात्मन उपलब्धिर्भवतीति शरीरस्थ उच्यते । सर्वगतत्वेन सर्वात्मत्वेन च देहादौ स्थितोऽपि स्वतो देहात्मना वा न करोति कूटस्थत्वाद्देहादेश्च तस्मिन्कल्पितत्वादित्यर्थः । कर्तृत्वाभावादेव कर्मफलेन न लिप्यते । कुन्त्युत्पन्नशरीरस्थस्यापि तव कर्तृत्वं लेपश्च नास्तीति संबोधनाशयः । ननु एवं यः शरीरस्थः करोति लिप्यते च स कः किमुक्तलक्षणादकर्तुरलिप्तादात्मनोऽन्यः किंवाऽनन्यः । नाद्यः तत्त्वमसि, क्षेत्रज्ञं

चापि मां विद्धीतिक्षेत्रज्ञेश्वरैकत्वप्रतिपादनानुपपत्तिप्रसङ्गात्। द्वितीये परमात्मनः कर्तृत्वाद्यभावेन प्रतीयमानस्य कर्तृत्वादेरधिकरणं वाच्यम्। तथाच सर्वथेदं दुरुपपादमिति चेन्न, स्वभावस्तु प्रवर्तते इत्यविद्यामात्रस्वभावो हि करोति लिप्यत इति व्यवहारदशायामाविद्यकस्य कर्तृत्वादेर्भगवतैव निरूपितत्वात्। एवं च प्रत्यगभिन्ने ब्रह्मण्याविद्यकं कर्तृत्वादि न पारमार्थिकमिति भगवता प्रोक्ते औपनिषदे परमार्थसांख्यदर्शने दुर्विज्ञेयत्वात् सांख्यवैशेषिकादिभिर्भ्रान्तिजन्यया पूर्वोक्तशङ्कया परित्यक्ते स्थितानां ज्ञाननिष्ठानामविद्यापरिकल्पितकर्तृत्वाद्यपगमेन मोक्षप्राप्तिः, नत्वन्यस्मिन् शुक्तिरूप्यकल्पे सांख्यादिपरिकल्पितमते निष्ठावतामिति ॥ ३१ ॥

प० टी०—अथ समत्वदर्शनेऽपि संसारावस्थायां देहसंबन्धनिमित्तैः कर्मभिस्तत्फलैश्च सुखदुःखादिभिर्वैषम्यं दुष्परिहरमित्याह—अनादित्वादिति। अयं परमात्मा शरीरस्थोऽपि न करोत्यकर्तैवास्ति। न तत्फलैर्लिप्यते। कुतोऽनादित्वान्निर्गुणत्वाच्च। यदुत्पत्तिमत्तन्नश्यति, तथा यद्गुणवत्तद्गुणक्षय उपक्षीणं भवति। परमात्मा त्वनादिर्निर्गुणश्चातोऽव्ययोऽविकारोऽतो न लिप्यते॥ ३१॥

रा० टी०—ननु सर्वभूतेषु तिष्ठतो न विनाश इत्युक्तम्। शरीरसंबन्धे व्ययादेरावश्यकत्वादित्यतो हेतूक्तिपूर्वं व्ययलेपाद्यभावमाह—अनादित्वादिति। शरीरस्थोऽप्ययं परमात्मा अनादित्वान्निर्गुणत्वात्सत्त्वादिगुणहीनत्वाच्चाव्ययः नाशादिव्ययहीनः। चिन्तासंतापदुःखादिना न लिप्यते न संबध्यते। लौकिकक्रियाविलक्षणक्रियावत्त्वान्न करोति च। अनादित्वहेतोर्भावत्वे सतीति विशेषणान्न प्रागभावे व्यभिचारः शङ्क्यः। यद्वा सर्वं खल्विदं ब्रह्म पुरुष एवेदं सर्वमित्यादिना विष्णोः सर्वचिदचिदात्मकत्वप्रतीतेर्वाद्यन्तरैस्तथोक्तेश्च कथं भूतानां विष्णोः पृथग्भाव इत्यतः श्रुतितात्पर्यापरिज्ञानादिप्राप्तमद्वैतं सहेतुकं निराह—अनादित्वादिति। अयं परमात्मा शरीरस्थोऽपि शरीराभिमानितया तत्स्थसुखदुःखादिभोक्तृतया शरीरस्थोऽत्र जीवोऽभिमतः शरीरस्थोऽपि न भवति। जीवात्मकोऽपि न भवति। किमु वाच्यं जडात्मको न भवतीति अपेरर्थः। कुतः अनादित्वात्, देहयोगनिमित्तादिमत्त्वहीनत्वादिति यावत्। सत्त्वादिगुणहीनत्वाद्देहव्ययनिमित्तव्ययहीनत्वात्। करोति सर्वकर्तृत्वान्न लिप्यते सर्वकरणनिमित्तफलाभोक्तृत्वाच्च। जीवस्य चोक्तहेतुपञ्चकविपर्ययवत्त्वादिति भावः। ईश्वरः करोति न लिप्यते। जीवस्तु 'परात्तु तच्छ्रुतेः' इति सूत्रोक्तदिशा कर्तृशक्तेरपीशाधीनतया स्वातन्त्र्याभावान्न करोति। पराधीनकर्तृतया लिप्यते चेति योजना॥ ३२॥

**यथा सर्वगतं सौक्ष्म्यादाकाशं नोपलिप्यते॥**
**सर्वत्रावस्थितो देहे तथाऽऽत्मा नोपलिप्यते॥ ३२॥**

त० टी०—तथाऽपि देहसंयोगे सति तद्धर्मैः कथं न लिप्यते इति शङ्कानिरासाय दृष्टान्तमाह—यथेति। यथाऽऽकाशं सर्वगतमपि सर्वैर्वस्तुभिः संयुक्तमपि सौक्ष्म्यात् सर्ववस्तुस्वभावैर्न लिप्यते, तथा सर्वत्रोत्तमेऽधमे वा देहेऽवस्थितोऽप्यात्मा न लिप्यते, दैहिकैर्गुणदोषैर्न युज्यत इत्यर्थः॥ ३२॥

म० टी०—शरीरस्थोऽपि तत्कर्मणा न लिप्यते स्वयमसङ्गत्वादित्यत्र दृष्टान्तमाह—यथेति। सौक्ष्म्यादसङ्गस्वभावत्वात् आकाशं सर्वगतमपि नोपलिप्यते पङ्कादिभिर्यथेति दृष्टान्तार्थः। स्पष्टमितरत्॥ ३२॥

शं० टी०—सर्वथाप्युपाधिः स्वप्रारब्धानुसारेण वर्तताम्। तत्रस्थोऽप्यात्मा तदीयधर्मकर्मावस्थाभिः किंचिदपि क्वचिन्न स्पृश्यत एवेति दृढनिश्चयवद्भिर्ब्रह्मविद्भिरात्मन्येवात्मभावापन्नैः स्वेषां कर्तृत्वभोक्तृत्वादिभ्रममुत्सृज्य मौनेन सदात्मानन्दरसास्वाद एव क्रियतामिति सूचयितुं श्रीभगवानुक्तमप्यात्मन उपाधिकृतकर्मलेपाभावमेव पुनरपि सदृष्टान्तं प्रतिपादयति मन्दप्रज्ञानामपि कर्तृत्वभोक्तृत्वभ्रमविच्छित्तये—यथेति। सर्वगतम्—आकाशस्य निरवयवत्वेन गमनासंभवात्सर्वं येन गतं व्याप्तं तत्सर्वगतं सर्वेष्वपि घटमठादिषु

मूर्तद्रव्येषु दुष्टेष्वदुष्टेषु च सर्वत्र बहिरन्तश्च व्याप्य वर्तमानमप्याकाशं सौक्ष्म्यात्स्वव्याप्तद्रव्यापेक्षया स्वयमतिसूक्ष्मत्वात्तत्तद्द्रव्यगुणदोषैः सुगन्धादिभिश्च वर्षवातातपवह्निधूमरजःपङ्कादिभिरपि यथा नोपलिप्यते लेप्यलेपकलेपनक्रियाऽविषयत्वात् येन केनापि लिप्तं न भवति न स्पृश्यत इत्यर्थः। तथा सर्वत्र सर्वेषु देहेषु जातावेकवचनम्। देवमनुष्यतिर्यगाद्युच्चावचशरीरेषु सर्वतो बहिरन्तर्व्याप्य वर्तमानोऽप्यात्मा सौक्ष्म्यात् "सूक्ष्माच्च तत्सूक्ष्मतरं विभाति" इति श्रवणात् अव्यक्तमहदादेरपि परमसूक्ष्मत्वाद्देहेन्द्रियप्राणमनोबुद्ध्यादिभिरधुना पूर्वं शतकोटिजन्मभिश्च कृतैः कर्मभिः पुण्यपापैर्नोपलिप्यते न किंचित्स्पृश्यत इत्यर्थः। एतेन सम्यग्दर्शनविध्वस्ताविद्यातत्कार्याणां ब्रह्मविदां यतीनां क्वचिदाहारादिनिमित्तकेन कर्मणा येन केनापि च लेपो नास्त्यतः कैवल्यसिद्धिप्रतिबन्धकद्वैतवासनानिःशेषनिवृत्तये स्वानन्दानुभूतये च समं पश्यन् हि सर्वत्रेत्युक्तरीत्या सर्वदा समदर्शननिष्ठयैव स्थातव्यमिति सूचितं भवति। ननु यथेष्टाचरणं निरुक्तवचनविरोधापत्तेः संन्यासश्रवणादिश्रमफलाभावापत्तेश्चातः सदा पूर्णवृत्त्या स्थातव्यमिति सिद्धम् ॥ ३२ ॥

**श्री० टी०**—तत्र दृष्टान्तमाह—**यथेति**। यथा सर्वत्र पङ्कादिष्वपि स्थितमाकाशं सौक्ष्म्यादसंगत्वात् पङ्कादिभिर्नोपलिप्यते तथा सर्वत्र उत्तमे मध्यमेऽधमे वा देहेऽवस्थितोऽप्यात्मा नोपलिप्यते दैहिकैर्गुणदोषैर्न युज्यत इत्यर्थः ॥ ३२ ॥

**स० टी०**—असङ्गत्वात्स्वयं प्रत्यग्लिप्यते नान्यकर्मणा ॥ इत्यत्राह सदृष्टान्तमलेपत्वं चिदात्मनः ॥ १ ॥ व्योमासङ्गस्वभावत्वात्सर्वगं नैव लिप्यते ॥ पङ्कादिभिर्यथा तद्वदात्माऽसङ्गो न लिप्यते ॥ २ ॥ असङ्गो ह्ययमात्मात्र श्रुतयः स्युः सहस्रशः ॥ एवं नित्यमसङ्गात्मतत्त्वं ज्ञात्वानुभूतितः ॥ ३ ॥ स्वाराज्यसिद्धिरस्तीति श्रीहरेरयमाशयः ॥ ४ ॥ ३२ ॥

**भा० टी०**—कर्तृत्वाभावान्न लिप्यत इति उक्तं तत्र दृष्टान्तमाह—**यथेति**। सर्वत्र देहादौ गतं स्थितमप्याकाशं खं यथा सौक्ष्म्यात् सूक्ष्मत्वादसङ्गस्वभावत्वात् देहादिगतकर्तृत्वादिभिर्न लिप्यते न संबध्यते तथा सर्वत्र सर्वस्मिन्नवस्थितः आत्मा देहे देहधर्मैर्न लिप्यत इत्यर्थः ॥ ३२ ॥

**प० टी०**—अत्र दृष्टान्तमाह—**यथेति**। यथा सर्वत्र पङ्कादिस्थितमाकाशं सौक्ष्म्यादसंगत्वात्पङ्कादिभिर्नोपलिप्यते तथा सर्वत्रोत्तमेऽधमे वा देहेऽवस्थितोऽप्यात्मा दैहिकैर्गुणैर्दोषैर्वा न लिप्यते न युज्यत इत्यर्थः ॥ ३२ ॥

**रा० टी०**—परमात्मनो लेपाभावं दृष्टान्तेनोपपादयति—**यथेति**। पङ्कादिसर्वगतमप्याकाशं सौक्ष्म्यादप्रतिघत्वान्नोपलिप्यते यथा, तथा सर्वत्र नीचोच्चादिदेहे स्थितोऽप्यात्मा परमात्मा नोपलिप्यते ॥ ३२ ॥

**यथा प्रकाशयत्येकः कृत्स्नं लोकमिमं रविः ॥**
**क्षेत्रं क्षेत्री तथा कृत्स्नं प्रकाशयति भारत ॥ ३३ ॥**

**त० टी०**—स्यादेतदात्मन आकाशदृष्टान्तेन समत्वं निर्लेपत्वं च, तथाऽप्याकाशवद्विभुश्चेदात्मा तर्हि तस्य सर्वत्र व्याप्त्या सर्वान्तर्वर्तिसुखदुःखाद्यनुभवः समानः स्यात्तथात्वेऽहं त्वमयमित्यादिप्रत्ययानां विभागाभावश्च स्यात्। तस्य मध्यमपरिमाणत्वे देहवन्नश्वरत्वापत्तेः पिपीलिकादेहे स्थितस्य तत्परिमितस्य तद्देहत्यागे कर्मवशाद्धस्त्यादिदेहगमने तत्राव्याप्यमानं स्यात्। हस्तिदेहस्थस्य तत्समस्य कर्मवशात् पिपीलिकादेहगमने सर्वप्रवेशो न स्यात्। अणुपरिमाणत्वे तु मेर्वेकाल्पदेशस्थसर्षपस्येव देहाल्पतमैकदेशस्थत्वेन सर्वावयववृत्तिसुखदुःखाद्यनुभवः प्रकाशकत्वं च न स्यादित्याशङ्कायामाह—**यथेति**। यथैकः परिच्छिन्नश्चादित्यः स्वप्रभया कृत्स्नमिमं लोकं प्रकाशयति तथा क्षेत्री क्षेत्रज्ञः अणुपरिमाणकोऽपि स्वधर्मभूतज्ञानेन कृत्स्नमापादतलमस्तकं क्षेत्रं प्रकाशयति। हे भारत न विभुपरिमाणको वा म-

ध्यमपरिमाणको वा उक्तदोषयोगात् अणुत्वपक्ष एव शास्त्रीयः। "यथाऽणुनश्चक्षुषः प्रकाशो व्याप्त एवमेवास्य पुरुषस्य प्रकाशो व्याप्तः, व्याप्तो वै पुरुषः" इति। "अणुर्वा ह्येष आत्मा चेतसा वेदितव्यो यस्मिन् प्राणः पञ्चधा संविवेश। वालाग्रशतभागस्य शतधा कल्पितस्य च। भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इत्यादिश्रुतिभ्यः। "उत्क्रान्तिगत्यागतीनाम्। नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात्। गुणाद्वा लोकवद्" इत्यादिसूत्रेभ्यश्च। अनुगीतायामपि 'यथा दीपः स्वशरणे दीप्यमानः प्रकाशते। एवमेव शरीराणि प्रकाशयति चेतनः' इति॥ ३३॥

म० टी०–न केवलमसङ्गस्वभावत्वादात्मा नोपलिप्यते प्रकाशकत्वादपि प्रकाश्यधर्मैर्न लिप्यत इति सदृष्टान्तमाह–**यथेति**। यथा रविरेक एव कृत्स्नं सर्वमिमं लोकं देहेन्द्रियसंघातं रूपवद्वस्तुमात्रमिति यावत्, प्रकाशयति न च प्रकाश्यधर्मैर्लिप्यते न वा प्रकाश्यभेदाद्भिद्यते, तथा क्षेत्री क्षेत्रज्ञ एक एव कृत्स्नं क्षेत्रं प्रकाशयति हे भारत। अत एव न प्रकाश्यधर्मैर्लिप्यते न वा प्रकाश्यभेदाद्भिद्यत इत्यर्थः "सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः। एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः" इति श्रुतेः॥ ३३॥

शं० टी०–श्रुतियुक्त्यनुभूतिभिरात्मनः प्रकृतिवैलक्षण्यं ज्ञात्वा प्रकृतिमात्मनि प्रविलाप्यात्मनः साम्यमेव सर्वदा पश्यतो यतेर्विदेहमुक्तिरिति निश्चित्य प्रकरणमुपसंहर्तुकामः श्रीभगवान् मुक्तेरात्मनः प्रकृतिवैलक्षण्यज्ञानमेवादिकारणमिति मन्दप्रज्ञानामुक्तज्ञाने निर्विचिकित्सत्वाय पुनरपि एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इत्युक्तलक्षणस्यात्मनः क्षेत्रज्ञस्य क्षेत्रवैलक्षण्यं रविदृष्टान्तेन विस्पष्टयति–**यथेति**। एक एव रविस्तेजोघनः इमं भूर्भुवरादिभेदभिन्नं कृत्स्नं लोकं ब्रह्माण्डं सर्वतो व्याप्य स्वतेजसा यथा प्रकाशयति सर्वेषां पदार्थानां स्वत एव सत्तां स्फूर्तिं च प्रयच्छति सूर्येणैव हि जडानां घटादिसर्वपदार्थानां घटोऽस्त्ययमिति सत्ता च स्फूर्तिश्च संभाव्यते, ततः कृत्स्नं नामरूपविशेषैरनेकधा भिन्नं ब्रह्माण्डं स्वयमभिन्नस्वभाव एक एव सूर्यः स्वभास्यविलक्षणस्तत्संबन्धरहितः सन् यथा प्रकाशयति तथा क्षेत्री क्षेत्रमव्यक्तादि स्थूलपर्यन्तं समष्टिव्यष्टिलक्षणं शरीरमस्यास्ति ज्ञेयत्वेन प्रकाश्यत्वेन च विषयीभूय तिष्ठतीति क्षेत्री क्षेत्रज्ञ आत्मा स्वयमेक एव चिद्घनः। क्षेत्रीत्युक्तिः क्षेत्रतत्स्वामिनोरिव क्षेत्रक्षेत्रज्ञयोरचेतनत्वचेतनत्वज्ञेयत्वज्ञातृत्वभास्यत्वभासकत्वादिधर्मैर्वैलक्षण्यद्योतनार्था। यतः क्षेत्रज्ञस्ततः क्षेत्राद्भिन्न आत्मापि क्षेत्रं महदादिसर्वविकारोपेतं नामरूपजातिक्रियागुणविशेषैरनेकभेदभिन्नं कृत्स्नं तदवस्थातद्धर्मतत्कर्मभिः सह सर्वं प्रकाशयति स्वस्मिन्नध्यस्तानां महदादिस्थूलान्तानां सर्वविकाराणां सत्तां स्फूर्तिं च प्रयच्छतीत्यर्थः। एतेन क्षेत्रज्ञस्यात्मनः क्षेत्रतद्विकारतद्धर्मतत्कर्मतदवस्थाज्ञातृत्वं चेतनत्वं नित्यत्वं सर्वक्षेत्रेष्वेकत्वं बुद्ध्यादिसर्वजडपदार्थप्रकाशकत्वं प्रकाशस्वरूपत्वं स्वप्रकाशत्वं वृद्धिक्षयाद्यविषयत्वमेकरूपत्वं सर्वव्यापकत्वमसङ्गत्वमविक्रियत्वमकर्तृत्वमकारयितृत्वमभोक्तृत्वमभोजयितृत्वं सर्वद्रष्टृत्वं सर्वदृश्यधर्मशून्यत्वं स्वसन्निधिमात्रेण सर्वप्रवृत्तिहेतुत्वं सर्वभास्यगुणदोषास्पृष्टत्वं स्वसाक्षित्वं स्वसाक्षात्कारेण तमस्तत्कार्यनिवर्तकत्वं च प्रतिपादितं भवति। एतेनोक्तलक्षणैः क्षेत्राद्भिन्नः क्षेत्रज्ञ आत्मा स्वात्मना सूक्ष्मबुद्धिभिर्युक्तिकुशलैर्यतिभिः सम्यगवगन्तुं शक्यत इति सूचितं भवति॥ ३३॥

श्री० टी०–असङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेनोक्तम्। प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न युज्यत इति रविदृष्टान्तेनाह–**यथेति**। स्पष्टार्थः॥ ३३॥

स० टी०–न केवलमसङ्गत्वादलेपत्वं चिदात्मनः॥ प्रकाशकतयाप्यस्य भास्यधर्मैर्न सङ्गता॥ १॥ सदृष्टान्तमिति प्राह भगवान्दीनवत्सलः॥ एक एव रविः सर्वं रूपवद्वस्तुमात्रकम्॥ २॥ यथा प्रका-

शयत्येष भास्यधर्मैर्न लिप्यते ॥ नापि प्रकाश्यभेदाद्वा भिद्यते किल भास्करः ॥ ३ ॥ तथैक एव क्षेत्रज्ञो भासयत्यखिलं जडम् ॥ नासौ प्रकाश्यधर्मैर्वा लिप्यते नापि भिद्यते ॥ ४ ॥ ३३ ॥

भा० टी०—प्रकाशरूपत्वाच्च प्रकाश्यधर्मैर्न लिप्यत इति दृष्टान्तेनाह—यथेति । यथा एको रविः सूर्यः कृत्स्नं सर्वमिमं प्रत्यक्षादिनानुभूयमानं लोकं प्रकाशयति अवभासयंश्चावभास्यधर्मैः न लिप्यते, तथा महाभूतादिधृत्यन्तं सर्वं क्षेत्रमेकः क्षेत्री प्रत्यगभिन्नः परमात्मा प्रकाशयति प्रकाशयंश्च प्रकाश्यधर्मैरेकः परमात्मा न लिप्यत इत्यर्थः । तथाच श्रुतिः " सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः " इति । यथा एक एव भरतः स्वनाम्ना भवदादीन्प्रकाशयति तथेति सूचयन्नाह—भारतेति ॥ ३३ ॥

प० टी०—एवमसङ्गत्वाल्लेपो नास्तीत्याकाशदृष्टान्तेनोक्तं प्रकाशकत्वाच्च प्रकाश्यधर्मैर्न युज्यत इति दृष्टान्तेनाह—यथेति । स्पष्टम् । उक्तं च—' यद्वत्सवितर्युदिते करोति कर्माणि जीवलोकोऽयम् । न च तानि करोति रविर्न कारयति तद्वदात्मापि ' इति ॥ ३३ ॥

रा० टी०—यत्क्षेत्रज्ञत्वविशिष्टतया भगवज्ज्ञानार्थं क्षेत्रादिकमुक्तं तत्क्षेत्रज्ञत्वं दृष्टान्तेन व्यनक्ति—यथेति । यथैको रविः इमं लोकं कृत्स्नं प्रकाशयति, तथैकः क्षेत्री क्षेत्रस्थः परमात्मा कृत्स्नं क्षेत्रं चेतनाचेतनरूपं प्रकाशयति ॥ ३४ ॥

**क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषा ॥**
**भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परम् ॥ ३४ ॥**

**इति श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे क्षेत्रक्षेत्रज्ञविभागयोगो नाम त्रयोदशोऽध्यायः ॥ १३ ॥**

त० टी०—उक्तमध्यायार्थं सफलमुपसंहरति—क्षेत्रक्षेत्रज्ञयोरिति । यथेह निरूपितयोः क्षेत्रक्षेत्रज्ञयोरेवमुक्तप्रकारेणान्तरं परस्परवैलक्षण्यं परिणामित्वापरिणामित्वरूपं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितक्षेत्रक्षेत्रज्ञस्वरूपयाथात्म्यज्ञानाख्येन चक्षुषा ये विदुः, तथा या चेयमुक्ता भूतानां प्राणिनां प्रकृतिस्तस्याः सकाशान्मोक्षं मोक्षोपायं च ये विदुर्विदित्वाऽनुतिष्ठन्ति, ते निवृत्ताशेषाविद्याः परं प्रकृतिवियुक्तं शुद्धात्मस्वरूपं यान्ति प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥

क्षेत्रक्षेत्रज्ञयोर्यो वै विवेकं कृपयाऽऽदिशत् । सर्वज्ञस्तं हरिं नित्यं व्रजामि शरणं गुरुम् ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां त्रयोदशोऽध्यायः ॥ १३ ॥

म० टी०—इदानीमध्यायार्थं सफलमुपसंहरति—क्षेत्रक्षेत्रज्ञयोरिति । क्षेत्रक्षेत्रज्ञयोः प्राग्व्याख्यातयोरेवमुक्तेन प्रकारेणान्तरं परस्परवैलक्षण्यं जाड्यचैतन्यविकारित्वनिर्विकारत्वादिरूपं ज्ञानचक्षुषा शास्त्राचार्योपदेशजनितात्मज्ञानरूपेण चक्षुषा ये विदुर्भूतप्रकृतिमोक्षं च भूतानां सर्वेषां प्रकृतिरविद्या मायाख्या तस्याः परमार्थात्मविद्यया मोक्षमभावगमनं च ये विदुर्जानन्ति यान्ति ते परं परमार्थात्मवस्तुस्वरूपं कैवल्यं, न पुनर्देहमाददत इत्यर्थः । तदेवममानित्वादिसाधननिष्ठस्य क्षेत्रक्षेत्रज्ञविवेकविज्ञानवतः सर्वानर्थनिवृत्त्या परमपुरुषार्थसिद्धिरिति सिद्धम् ॥ ३४ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां क्षेत्रक्षेत्रज्ञविवेको नाम त्रयोदशोऽध्यायः ॥ १३ ॥

**शं० टी०**—यावानध्यायार्थस्तावन्तमर्थं संक्षेपेण प्रतिपादयन्नध्यायमुपसंहरति—क्षेत्रक्षेत्रज्ञयोरिति। क्षेत्रक्षेत्रज्ञयोरिदं शरीरं कौन्तेय क्षेत्रमेतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति प्रतिपादितयोः प्रकृतिपुरुषयोरेवं महाभूतानीति ज्ञेयं यत्तदित्यादिवाक्यैः प्रतिपादितप्रकारेणान्तरं ज्ञेयत्वज्ञातृत्वादिविशेषणैर्वैलक्षण्यं स्वात्मतया तत्र क्षेत्रज्ञं च भूतप्रकृतिमोक्षं च। अत्र भूतशब्देन व्यक्तनामरूपात्मकं सच्छब्दितं जगदुच्यते, प्रकृतिपदेनाव्यक्तमस्पष्टनामरूपमसच्छब्दितं तत्कारणमुच्यते, तयोर्भूतप्रकृत्योर्मोक्षं न सत्तन्नासदुच्यत इत्युक्तप्रकारेणाभावापादनं च ज्ञानचक्षुषा निरुक्तामानित्वादिसाधनसंपत्त्या तीव्रमोक्षेच्छया च सम्यक्कृतश्रवणादिना समुत्पन्नं यज्ज्ञानं क्षेत्रक्षेत्रज्ञयोर्याथार्थ्यग्रहणक्षममतिसूक्ष्मं तदेव चक्षुस्तेन ज्ञानचक्षुषा ये मुमुक्षवो यतयो विदुः प्रकृतितत्कार्यविलापनाधिष्ठानभूतं निर्विशेषं नित्यशुद्धबुद्धमुक्तसत्यस्वभावं सदानन्दैकरसमपूर्वमनपरमनन्तरमबाह्यमद्वितीयं परं ब्रह्माहमेवेदमिति स्वात्मना विदुस्ते परमपुरुषार्थं विदेहकैवल्यं यान्ति प्राप्नुवन्तीत्यर्थः ॥ ३४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां त्रयोदशोऽध्यायः ॥ १३ ॥

**श्री० टी०**—अध्यायार्थमुपसंहरति—क्षेत्रक्षेत्रज्ञयोरिति । एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं भेदं विवेकज्ञानलक्षणेन चक्षुषा ये विदुः, तथा चेयमुक्ता भूतानां प्रकृतिस्तस्याः सकाशान्मोक्षं मोक्षोपायं ध्यानादिकं च ये विदुस्ते परं पदं यान्ति ॥ ३४ ॥

विविक्तौ येन तत्त्वेन मिश्रौ प्रकृतिपूरुषौ ॥ तं वन्दे परमानन्दं नन्दनन्दनमीश्वरम् ॥

इति श्रीधरस्वामिविरचितायां भगवद्गीताटीकायां सुबोधिन्यां त्रयोदशोऽध्यायः॥ १३॥

**स० टी०**—अध्यायार्थमशेषेणात्रोपसंहरतीश्वरः ॥ क्षेत्रक्षेत्रज्ञयोरेवं पूर्वं व्याख्यातयोर्भिदाम् ॥ १ ॥ जाड्यचैतन्यमिथ्यात्वसत्यत्वाद्यात्मिकां जनाः ॥ शास्त्राचार्योपदेशोत्थसम्यग्ज्ञानैकचक्षुषा ॥ २ ॥ ये जानन्ति तथा सर्वप्रपञ्चस्यास्य कारणम् ॥ अविद्यामात्मबोधेन तन्निवृत्तिं च ये विदुः ॥ ३ ॥ ते यान्ति परमं ब्रह्म कैवल्यमपुनर्भवम् ॥ ४ ॥ ३४ ॥

क्षेत्रक्षेत्रज्ञभेदं विमलमतिमतां प्राह मुक्त्यै य ईशो ज्ञानज्ञेयावबोधं प्रतिपदममृतं दर्शयामास सम्यक् ॥
भक्तेभ्यः प्रीतिमद्भ्यो विशदपदमुदेत्यस्य भक्त्या मुमुक्षोस्तं श्रीकान्तं मुकुन्दं निरवधिचरितं कृष्णमाराधयामि ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ अखण्डार्थैकनिष्ठोऽयं गतः पूर्तिं त्रयोदशः ॥
टीकाश्लोकसंख्या ॥ ६४० ॥ आदितष्टीकाश्लोकसंख्या ॥ ३८४० ॥

**भा० टी०**—अध्यायार्थं सफलमुपसंहरति—क्षेत्रज्ञेति । क्षेत्रक्षेत्रज्ञयोरुक्तप्रकारेण व्याख्यातयोरेवं यथाप्रदर्शितप्रकारेणान्तरमितरेतरवैलक्षण्यविशेषं कौटस्थ्यपरिणामादिलक्षणं शास्त्राचार्योपदेशजनितमात्मप्रत्यक्षं ज्ञानं चक्षुस्तेन ज्ञानचक्षुषा भूतानां प्रकृतिरविद्यालक्षणाऽव्यक्ताख्या तस्या भूतप्रकृतेः परमार्थात्मविद्यया मोक्षमभावगमनं ये विदुर्जानन्ति ते परं परमार्थतत्त्वं ब्रह्म यान्ति गच्छन्ति पुनर्देहं नाददते इत्यर्थः । तदनेन त्रयोदशाध्यायेनामानित्वादिकं निरूपयता तन्निष्ठस्य क्षेत्रक्षेत्रज्ञयाथात्म्यविज्ञानवतः सर्वानर्थनिवृत्त्या परिपूर्णपुरुषार्थसिद्धिरिति वदता तत्त्वंपदयोरैक्यं प्रतिपादितम् ॥ ३४ ॥

क्षेत्रक्षेत्रज्ञयाथात्म्यं सम्यग्येन प्रकाशितम् । वन्दे तं परमात्मानं शंकरं कृष्णमद्वयम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां श्रीगीताभाष्योत्कर्षदीपिकायां त्रयोदशोऽध्यायः ॥ १३ ॥

प० टी०—अध्यायार्थमुपसंहरति—क्षेत्रेति । एवमुक्तप्रकारेण क्षेत्रक्षेत्रज्ञयोरन्तरं परस्परवैलक्षण्यं ज्ञानलक्षणेन चक्षुषा ये विदुस्तथा भूतानां प्रकृतिस्तस्याः सकाशान्मोक्षोपायं ध्यानादिकं च ये विदुस्ते परं पदं यान्ति ॥ ३४ ॥

अध्यायतात्पर्यं तु ।

क्षेत्रक्षेत्रज्ञयोगे प्रकृतिपुरुषयोरन्तरं ज्ञानहेतोस्तत्त्वान्युक्तान्यथाद्या गुणविकृतिमयी कर्तृकार्यत्वहेतुः ।
भोक्तृत्वे हेतुरात्मा सुखतदितरयोरेक एवाखिलेषु क्षेत्री भास्वानिवैवं त्रिसहितदशमे पुंप्रकृत्योर्विचारः ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां
प्रकृतिपुरुषविवेको नाम त्रयोदशोऽध्यायः ॥ १३ ॥

रा० टी०—फलोक्त्याऽध्यायार्थमुपसंहरति—क्षेत्रेति । क्षेत्रक्षेत्रज्ञयोरेवमुक्तप्रकारेणान्तरं भेदं ज्ञानचक्षुषा विवेकदृष्ट्या ये विदुः । तथा भूतेभ्यः प्रकृतेश्च जीवानां मोक्षो येनेति वा, भूतानां जीवानामचेतनप्रकृतेः सकाशान्मोक्षो येनेति वा, तदभिमानित्वादिकं प्रागुक्तमोक्षसाधनं च ये विदुस्ते ब्रह्म यान्तीति ॥ ३९ ॥

इति श्रीमद्गीतार्थसंग्रहे राघवेन्द्रयतिकृते त्रयोदशोऽध्यायः ॥ १३ ॥

## अथ चतुर्दशोऽध्यायः ।

**श्रीभगवानुवाच—परं भूयः प्रवक्ष्यामि ज्ञानानां ज्ञानमुत्तमम् ॥**
**यज्ज्ञात्वा मुनयः सर्वे परां सिद्धिमितो गताः ॥ १ ॥**

त० टी०—त्रयोदशाध्याये यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ इति प्रकृतिपुरुषसंसर्गस्य सर्वचराचरकारणत्वं, कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु इति पुरुषस्य गुणमयसुखादिसङ्गो जन्मादिबन्धहेतुरिति चोक्तमिदानीं प्रकृतिस्वातन्त्र्यवादिनिरीश्वरसांख्यमतनिरासाय गुणानां बन्धनप्रकारदर्शनाय गुणात्ययप्रकारदर्शनाय च गुणातीतलक्षणं प्रकृतिलक्षणं च वक्तुं चतुर्दशाध्याय आरभ्यते । तत्र तावद्वक्ष्यमाणार्थं स्तुवन् श्रीभगवानुवाच—परं भूय इति द्वाभ्याम् । परं पूर्वोक्ताद्विलक्षणं प्रकृतिपुरुषसत्त्वादिगुणविषयं ज्ञानं भूयः पुनरपि प्रवक्ष्यामि । कथंभूतं तत्? ज्ञानानां तपःकर्मादिविषयाणां मध्ये उत्तमम् । उत्तमत्वं विवृणोति—यज्ज्ञानं ज्ञात्वा मननेन स्थिरीकृत्य सर्वे मुनयस्तन्मननशीला इतः संसारात्परां प्रकृतिवियुक्तात्मविषयां सिद्धिं गताः प्राप्ताः ॥ १ ॥

म० टी०—पूर्वाध्याये यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमं क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धीत्युक्तं तत्र निरीश्वरसांख्यमतनिराकरणेन क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वं वक्तव्यम्। एवं कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वित्युक्तं तत्र कस्मिन् गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नन्तीति वक्तव्यम् । तथा भूतप्रकृतिमोक्षं च ये विदुर्यान्ति ते परमित्युक्तं तत्र भूतप्रकृतिशब्दितेभ्यो गुणेभ्यः कथं मोक्षणं स्यान्मुक्तस्य च किं लक्षणमिति वक्तव्यं, तदेतत्सर्वं विस्तरेण वक्तुं चतुर्दशोऽध्याय आरभ्यते । तत्र वक्ष्यमाणमर्थं द्वाभ्यां स्तुवन् श्रोतॄणां रुच्युत्पत्तये भगवानुवाच—परमिति । ज्ञायतेऽनेनेति ज्ञानं परमात्मज्ञानसाधनं परं श्रेष्ठं परवस्तुविषयत्वात् । कीदृशं तत्? ज्ञानानां ज्ञानसाधनानां बहिरङ्गाणां यज्ञादीनां मध्ये उत्तमं उत्तमफलत्वात्, नत्वमानित्वादीनां तेषामन्तरङ्गत्वेनोत्तमफलत्वात्। परमित्यनेनोत्कृष्टविषयत्वमुक्तं, उत्तममित्यनेन तूत्कृष्टफलत्वमिति

भेदः । ईदृशं ज्ञानमहं प्रवक्ष्यामि भूयः पुनः पूर्वेष्वध्यायेष्वसकृदुक्तमपि यत् ज्ञानं ज्ञात्वाऽनुष्ठाय मुनयः मननशीलाः संन्यासिनः सर्वे परां सिद्धिं मोक्षाख्यमितो देहबन्धनाद्गताः प्राप्ताः ॥ १ ॥

**शं० टी०—**पूर्वाध्याये मुमुक्षोरात्मानात्मतत्त्वं विज्ञातुमिच्छत इदं शरीरं क्षेत्रमनात्मा, क्षेत्रज्ञ एवात्मा-हंपदार्थ इति बोधयित्वा क्षेत्राद्विभक्तस्यात्मनः क्षेत्रज्ञं चापि मां विद्धीति ब्रह्माभिन्नत्वं प्रतिपाद्य प्रकृतेरेव कर्तृत्वं भोक्तृत्वं चात्मनः प्रकृतितत्कर्मसाक्षिणस्तद्गुणसंगत एव संसारो न तु वस्तुत इत्युक्तम् । तत्र के गुणा-स्तेषु पुरुषस्य कथं सङ्गः कथं वा गुणाः पुरुषं बध्नन्ति गुणेभ्यो मोक्षणं च कथं, गुणमुक्तस्य च किं लक्ष-णमित्याकाङ्क्षायां प्रकृतेः प्रवृत्तिसामर्थ्यं तद्गुणविभागं गुणानां स्वरूपं कार्यं च बन्धकत्वं स्वस्वोत्कर्षेण पर-स्पराभिभावकत्वं तत्फलभेदं च गुणबद्धस्य फलं तन्मुक्तस्यापि फलं च गुणमुक्तस्य लक्षणं गुणातिक्रमणो-पायं चैतत्सर्वं कारणं गुणसङ्गोऽस्येति वाक्यार्थं विस्पष्टीकर्तुं चतुर्दशाध्याय आरभ्यते । तत्रादौ क्षेत्रक्षेत्रज्ञ-योर्भिन्नत्वं क्षेत्रज्ञस्य स्वस्य ब्रह्माभिन्नत्वं च विदितवतो ब्रह्मविद्यतेर्विदेहकैवल्यार्थिनः समुत्पन्नज्ञानरक्षार्थं वक्ष्यमाणज्ञानकार्य एव प्रवृत्तिसिद्धये गुणतत्कार्यज्ञानमेवोत्कृष्टं मुक्तेः परमकारणमिति बोधयितुं श्रीभग-वानुवाच—**परमिति** । त्रिभिर्गुणमयैर्भावैरिति, इच्छाद्वेषसमुत्थेनेति, राक्षसीमासुरीं चैवेति, असकृत्पूर्वमुक्त-मपि तद्विशेषप्रतिपत्तये भूयः पुनरपि ज्ञानं गुणतत्कार्यज्ञानं ज्ञानानां सांख्ययोगकर्मादिविषयकाणां मध्ये परं श्रेष्ठम् । परत्वे हेतुमाह—**उत्तममिति** । उत्तमस्य परमपुरुषार्थस्य मोक्षस्य कारणत्वादुत्तममिदं ज्ञानं प्रवक्ष्यामि मद्भक्ताय मुमुक्षवे ते सम्यगुपदेक्ष्यामीत्यर्थः । यद्वा क्षेत्रमनात्मा क्षेत्रज्ञस्त्वात्मा सत्यादिलक्षणं ब्रह्म ब्रह्मैव क्षेत्रज्ञ इत्येवंरूपाणि मोक्षविषयाणि यानि ज्ञानानि तेषां ज्ञानानां मध्ये इदं गुणतत्कार्यज्ञानं परं श्रेष्ठमुत्तमं च भवति । यद्यप्यात्मानात्मनोः पृथक्त्वज्ञानमात्मनो ब्रह्माभिन्नत्वज्ञानं प्रकृतिप्रविलापनज्ञानं च मुक्तेर्नियतमसाधारणमेव कारणं तथाप्यविद्याकामादिदोषवतस्तज्ज्ञानमविद्यादिभिः प्रतिबध्यते स्वफलं च न प्रयच्छति तत्प्रसिद्धं भारतादिषु । इदं गुणतत्कार्यज्ञानं तु ब्रह्मविदं गुणवासनाकृतबहिःप्रवृत्तेर्विमुखीकृत्य येन ज्ञानं तत्फलं च न प्रतिबध्यते तत्रैव सम्यग्दर्शननिष्ठायां प्रतिष्ठाप्य गुणेभ्यो मोचयित्वा विदेहमुक्तिं गमयति । तत इदं ज्ञानमात्मानात्मविवेकादिज्ञानेभ्य उत्तमं भवति यथा रोगज्ञानादौषधज्ञानादनुपानज्ञाना-त्पथ्यज्ञानाच्चायमपथ्यपदार्थः एतद्भक्षणमौषधस्याप्यारोग्यस्य च प्रतिबन्धकं भवतीति विज्ञानमपथ्याचर-णानिवृत्तेरारोग्यसिद्धेश्च कारणमुत्तमं भवति अपथ्याभावैकबलवत्त्वादौषधस्याप्यारोग्यसिद्धेश्च, तद्वत् ज्ञान-तत्फलप्रतिबन्धकानां गुणानां तत्कार्याणां च ज्ञानं पूर्वोक्तज्ञानानामुत्तमं भवति गुणतत्कार्यसंबन्धाभावैक-बलवत्त्वाज्ज्ञानस्य च तत्फलसिद्धेश्च । ततो युक्तं गुणतत्कार्यज्ञानस्य ज्ञानानामुत्तमत्वम् । तदेव विस्पष्टयति—**यज्ज्ञात्वेति** । श्रवणादिजन्यज्ञानसंरक्षाहेतुत्वेन गुणातिक्रमणहेतुत्वेन च मुक्तेः परमकारणं यद्गुणतत्कार्य-ज्ञानं ज्ञात्वा प्राप्य तज्ज्ञानेन यत्कर्तव्यं तत्कृत्वेत्यर्थः । मुनयो ब्रह्मविदः शुकादयो यतयः इतोऽस्मात्प्रकृ-ताद्गुणात्रितयान्मुक्ताः सन्तः परां पुनरावृत्तिरहितत्वेन नित्यनिरतिशयानन्दरूपत्वेन च सर्वसिद्धिभ्य उत्तमां सिद्धिं विदेहमुक्तिं गताः पूर्णत्वं प्राप्ता इत्यर्थः ॥ १ ॥

**श्री० टी०—**पुंप्रकृत्योः स्वतन्त्रत्वं वारयन् गुणसङ्गतः । प्राह संसारवैचित्र्यं विस्तरेण चतुर्दशे ॥ १॥

'यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभ' इत्युक्तम् । स च क्षेत्र-क्षेत्रज्ञयोः संयोगो निरीश्वरसाङ्ख्यानामिव न स्वातन्त्र्येण किंत्वीश्वरेच्छयैवेति कथनपूर्वकं 'कारणं गुण-संगोऽस्य सदसद्योनिजन्मसु' इत्यनेनोक्तं सत्त्वादिगुणकृतं संसारवैचित्र्यं प्रपञ्चयिष्यन्नेवं भूतं वक्ष्यमाण-मर्थं स्तौति—**श्रीभगवानुवाच परं भूय इति द्वाभ्याम्** । परं परमार्थनिष्ठं ज्ञायतेऽनेनेति ज्ञानमुपदेशं भूयो-ऽपि तुभ्यं प्रकर्षेण वक्ष्यामि । कथंभूतम्? ज्ञानानां तपःकर्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात् । तदेवाह—यज्ज्ञात्वा प्राप्य मुनयो मननशीलाः सर्वे इतो देहबन्धनात्परां सिद्धिं मोक्षं गताः प्राप्ताः ॥ १ ॥

**स० टी०**–गुणातीतालम्बं परमपदमम्भोधररुचं विचित्रारम्भान्तर्गतगुणकलालम्बममलम् ।। स्वयंभूशंभूश्रीनिधिगुणविलासाङ्कितपदं मुकुन्दं वन्देऽहं प्रकृतिगुणदम्भादिहरणम् ।। १ ।। पूर्वाध्याये जगत्सर्वं क्षेत्रक्षेत्रज्ञसंगतः ।। जायते तदिति प्रोक्तं तत्कथं चेति कथ्यते ।। २ ।। क्षेत्रक्षेत्रज्ञसंगस्येश्वराधीनत्ववर्णनात् ।। सांख्या निरीश्वरा अत्र निराकार्याश्चतुर्दशे ।। ३ ।। कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।। इत्युक्तं तत्र कस्मिन्वा गुणे सङ्गः कथं च वा ।। ४ ।। के वा गुणाः कथं वा ते बध्नन्ति किं स्वभावकाः ।। गुणेभ्यश्च कथं मोक्षः किं मुक्तस्य च लक्षणम् ।। ५ ।। तदेतद्विस्तरेणैव वक्तुमारभ्यतेऽधुना ।। परं भूयः प्रवक्ष्यामीत्याद्यध्यायश्चतुर्दशः ।। ६ ।। तत्र द्वाभ्यां स्तुवन्नर्थं वक्ष्यमाणं जगद्गुरुः ।। श्रोतॄणां रोचनार्थं श्रीभगवानाह सर्ववित् ।। ७ ।। ज्ञायतेऽनेन तज्ज्ञानं परात्मज्ञानसाधनम् ।। श्रेष्ठं श्रेष्ठास्पदत्वेन यज्ञादीनामिदं वरम् ।। ८ ।। बहिरङ्गसाधनानां मध्ये श्रेष्ठफलत्वतः ।। अमानित्वादिज्ञानानां त्वन्तरङ्गत्वमीरितम् ।।९।। उत्कृष्टविषयत्वं च परमित्यमुनेरितम् ।। उत्तमं चेत्यनेनोक्ता प्रकृष्टफलता तथा ।। १० ।। प्रवक्ष्यामीदृशं ज्ञानमुक्तमप्यसकृत्पुनः ।। शास्त्रार्थस्यावगन्तारो यज्ज्ञानं प्राप्य साधनम् ।। ११ ।। सर्वे प्रकृष्टां मोक्षाख्यां सिद्धिं प्राप्ता इतः परम् ।। देहबन्धं परित्यज्य कैवल्यैकपदं गताः ।। १२ ।। १ ।।

**भा० टी०**–यावत्संजायते किंचित्सत्त्वं स्थावरजङ्गमम् । क्षेत्रक्षेत्रज्ञसंयोगात्तद्विद्धि भरतर्षभेत्युक्तं तत्कथमिति प्रकाशनार्थमीश्वरतन्त्रयोः क्षेत्रक्षेत्रज्ञयोः जगत्कारणत्वं नतु सांख्यानामिव स्वतन्त्रयोरित्येवमर्थं च तथा कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्वित्युक्तं कस्मिन् गुणे कथं रागः के वा गुणाः कथं ते बध्नन्ति गुणेभ्यश्च मोक्षणं कथं स्यात् मुक्तस्य च लक्षणं वक्तव्यं, इत्येवमर्थं चाध्यायमारभमाण आदौ श्रोतृरुच्युत्पत्तये श्रीभगवानुवाच–**परमिति** । ज्ञानानां यज्ञादिज्ञेयवस्तुविषयाणां सर्वेषामुत्तमफलत्वादुत्तमं नत्वमानित्वादीनां तत्त्वज्ञानान्तरङ्गसाधनानाम् एतादृशं परमात्मसाक्षात्कारसाधनं ज्ञानं पूर्वेष्वध्यायेष्वसकृदुक्तमपि ब्रह्मणः सूक्ष्मत्वेन दुर्बोधत्वात् भूयः पुनरहं प्रकर्षेण वक्ष्यामि । यज्ज्ञानं ज्ञात्वा लब्ध्वा सर्वे मुनयो मननशीलाः परां सिद्धिं मोक्षाख्याम् इतोऽस्माद्देहबन्धनादूर्ध्वं गताः प्राप्ताः ।। १ ।।

**प० टी०**–पूर्वाध्याये महाभूतान्यहंकारः इत्यादिवाक्यैः क्षेत्रस्वरूपमेवोक्तं नोत्पत्तिस्तथा क्षेत्रस्य विकारत्वमेव दर्शितं न तु वैचित्र्यकारणं, तथा क्षेत्रज्ञानां सूक्ष्मव्यष्टिरूपेण निरूपणं न समष्टिरूपेणातस्तत्सर्वं चतुर्दशे वक्तुं भगवानुपक्रमते–**परं भूय इति द्वाभ्याम्** । परं परमार्थसाधकं ज्ञायतेऽनेनेति ज्ञानमुपदेशरूपं पूर्वं सूत्रप्रायं प्रोक्तमपि भूयः प्रवक्ष्यामि । किंभूतम्? ज्ञानानां तपःकर्मादिविषयाणां मध्ये उत्तमं मोक्षहेतुत्वात्, तदेवाह–**यदिति** । यज्ज्ञात्वा सर्वे मुनयो मननशीला याज्ञवल्क्यवामदेवाद्याः परमामात्यन्तिकीं सिद्धिं गताः ।। १ ।।

**रा० टी०**–बुद्धियोगे त्विमां शृण्विति द्वितीये प्रतिज्ञाय आषष्ठसमाप्तेः कामादिवर्जनादीतिकर्तव्यतासहितं कर्म ध्यानलक्षणं ज्ञानसाधनमुक्तम् । तत्रेतिकर्तव्यतांशमुत्तराध्यायपञ्चकेन प्रपञ्चयतीति षट्कार्थः । तत्र बन्धप्रकारे ज्ञाते सत्येव तन्मोचनसाधनस्य तदितिकर्तव्यस्य चानुष्ठानाय तत्प्रपञ्चनं युज्यते । बन्धश्च कारणं गुणसङ्गोऽस्येति पूर्वाध्यायोक्तदिशा त्रिगुणात्मकः, अतो यावत्संजायते इत्यादिना पूर्वाध्यायोक्तक्षेत्रक्षेत्रज्ञसंयोगहेतुकप्राणिजननविवरणपूर्वकं त्रिगुणविकारस्थितिं तदत्ययोपायं च दर्शयत्यस्मिन्नध्याये । कार्यते ह्यवशः कर्मेति तृतीयाध्याये संक्षेपेण त्रैगुण्यस्योक्तत्वेऽपीह तस्य विविच्य कीर्तनमिति ज्ञेयम् । श्रोतुरादरजननाय वक्ष्यमाणमर्थं प्रतिज्ञाय स्तौति–**परमिति द्वयेन** । परमन्यद्भूयः पुनः प्रवक्ष्यामि । तत्किमित्यत उक्तम्–**ज्ञानानामिति** । कर्मणि ल्युट् । ज्ञातव्यानां मध्ये उत्तमं ज्ञानं ज्ञातव्यम् । यज्ज्ञात्वा मुनयो मननशीलाः सर्वे इतः संसारात्परां सिद्धिं मोक्षं गताः प्राप्ताः ।। १ ।।

**इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥**
**सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति च ॥ २ ॥**

**त० टी०**—किंच—इदमिति । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुष्ठाय मम साधर्म्यमागता मत्साम्यं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते, गर्भवासदुःखं नानुभवन्ति । तथा प्रलये न व्यथन्ति प्रलयकालिकदुःखानि नानुभवन्ति, न पुनरावर्तन्त इत्यर्थः ॥ २ ॥

**म० टी०**—तस्याः सिद्धेरैकान्तिकत्वं दर्शयति—इदमिति । इदं यथोक्तं ज्ञानं ज्ञानसाधनमुपाश्रित्यानुष्ठाय मम परमेश्वरस्य साधर्म्यं मद्रूपतामत्यन्ताभेदेनागताः प्राप्ताः सन्तः सर्गेऽपि हिरण्यगर्भादिषूत्पद्यमानेष्वपि नोपजायन्ते प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति च न व्यथन्ते न च लीयन्त इत्यर्थः ॥ २ ॥

**शं० टी०**—यदुक्तं पुनरावृत्तिरहितत्वादिविशेषणैर्विदेहमुक्तेः परत्वं तदेव विस्पष्टयति, मुमुक्षुभिस्तत्सिद्धय एव यत्नः कर्तव्य इति सूचयितुम्—इदमिति । इदं वक्तुमुपक्रान्तं ज्ञानं गुणतत्कार्यविषयं मुक्तेः परमकारणमुपाश्रित्य गुणतत्कार्यज्ञानेन यदनुष्ठेयं तदुपाश्रित्य गुणत्रयतत्कार्यज्ञानेन निरन्तरब्रह्मनिष्ठया गुणत्रयातिक्रमणं कृत्वेत्यर्थः । "सत्यं ज्ञानमनन्तं ब्रह्म । अस्थूलमनण्वह्रस्वम्" इत्यादिश्रुतिप्रसिद्धस्य निर्विशेषस्य मम परस्य ब्रह्मणः साधर्म्यं पूर्णत्वं न तु समानजातिरूपादिमत्त्वं निरवयवस्य निर्गुणस्य निर्विशेषस्य ब्रह्मणो जात्यादिधर्मासंभवात् । सजातीयरूपे चतुर्भुजत्वादिधर्मवत्त्वे विदुषोऽपि ब्रह्मणा समानधर्मत्वं वक्तुं शक्यते "अजातमभूतमप्रतिष्ठितमशब्दमस्पर्शमरूपमरसमगन्धमव्ययम्" इति, "अप्राणममुखमश्रोत्रमवागमनोऽतेजस्कमचक्षुष्कमगोत्रमशिरस्कमपाणिपादम्" इति च सर्वधर्मनिषेधश्रवणाद्ब्रह्मणो दृश्यधर्मानुपपत्तेः तद्वत्त्वे परिच्छिन्नत्वसावयवत्वानित्यत्वादिदोषप्रसङ्गात्, "आकाशवत्सर्वगतश्च नित्यः । साक्षी चेता केवलो निर्गुणश्च" इत्यादिश्रुतिविरोधप्रसङ्गाच्च । तस्माद्ब्रह्मसाधर्म्यं पूर्णत्वमेव "पूर्णमदः पूर्णमिदम्" इति श्रुतेः । मम साधर्म्यं पूर्णत्वमागताः मद्भावं प्राप्ता मुनयो ब्रह्मविद्यतयः सर्गेऽपि महदादिप्राकृतसृष्टावपि नोपजायन्ते जनिबीजं प्रकृतिमतीत्य चिदेकरसतां प्राप्तत्वात्तेषां प्रकृतिसंबन्धाभावान्महासृष्टावपि नोत्पत्तिरित्यर्थः । तथा प्रलये महाप्रलये हिरण्यगर्भनाशेऽपि न व्यथन्ति न नश्यन्ति परमसूक्ष्मब्रह्मभावं गतानां तेषां प्रलयक्रियाऽविषयत्वान्न किंचिच्चलनमस्तीत्यर्थः । ननु ब्रह्मभावं प्राप्तानां मुक्तानां ब्रह्मविदामयमप्राप्तप्रतिषेधः क्रियते सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेति न शङ्कनीयम् । शिवविष्णवादिलोकेषु सारूप्यादिमुक्तिं गतानां महासृष्टौ सृष्टिर्महाप्रलये प्रलयश्च संभवति तद्वद्ब्रह्मभावं गतानामपि जन्मादि स्यादिति पण्डितानामपि संशयस्तन्निवृत्त्यर्थं मुमुक्षूणां निर्विचिकित्सतया विदेहमुक्तौ प्रवृत्त्यर्थं चेदमुच्यते सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चेति । ब्रह्मविद्व्यतिरिक्तानां मुक्तानामपि जन्मादिसंभवे इदमेव वचनं प्रमाणं वीतहव्यजयविजयादयश्च प्रमाणम् ॥ २ ॥

**श्री० टी०**—किंच—इदमिति । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्य इदं ज्ञानसाधनमनुष्ठाय मम साधर्म्यं मद्रूपत्वं प्राप्ताः सन्तः सर्गेऽपि ब्रह्मादिषूत्पद्यमानेष्वपि नोत्पद्यन्ते, तथा प्रलयेऽपि न व्यथन्ति, प्रलये दुःखानि नानुभवन्ति पुनर्नावर्तन्त इत्यर्थः ॥ २ ॥

**स० टी०**—ऐकान्तिकत्वमेतस्याः सिद्धेर्दर्शयतीश्वरः ॥ इदं सम्यगनुष्ठाय यथोक्तं ज्ञानसाधनम् ॥ १ ॥ मद्रूपतामभेदेन प्राप्ताः सन्तो विपश्चितः ॥ भूतेषूत्पद्यमानेषु नोत्पद्यन्ते कदाचन ॥ २ ॥ ब्रह्मणो नाशकालेऽपि न लीयन्ते चलन्ति न ॥ ३ ॥ २ ॥

**भा० टी०**—मोक्षाख्यसिद्धेः कर्मफलापेक्षया परमत्वे तत्साधनस्य ज्ञानस्य चोत्तमत्वे हेत्वाकाङ्क्षायां

सिद्धेरैकान्तिकत्वं दर्शयति—इदमिति । इदं यथोक्तं वक्ष्यमाणं च ज्ञानमुपाश्रित्य श्रवणादिज्ञानसाधनमनुष्ठाय मम परमात्मनः साधर्म्यं स्वरूपतामागताः प्राप्ता इत्यर्थः । " ब्रह्म वेद ब्रह्मैव भवति " इति श्रुतेः । नतु समानधर्मता साधर्म्यमिति भ्रमितव्यम् । गीताशास्त्रे क्षेत्रज्ञेश्वरयोर्भेदानभ्युपगमात्, प्रस्तुतं ज्ञानफलं विहाय अप्रस्तुतध्यानफलस्वीकारप्रसङ्गाच्च । सर्गेऽपि ब्रह्माद्युत्पत्तिकालेऽपि नोपजायन्ते, प्रलये ब्रह्मणोऽपि विनाशकाले न व्यथन्ति व्यथां नापद्यन्ते न चलन्तीत्यर्थः । अवान्तरसर्गादौ जन्मादिकं न प्राप्नुवन्तीति किमु वक्तव्यमित्यपिशब्दार्थः । 'परं सर्वोत्कृष्टं ब्रह्म तत्स्वरूपमाह—ज्ञानानाममानित्वादीनां यज्ञादीनां ज्ञानसाधनानां मध्ये यदुत्तमं ज्ञानं मोक्षफलत्वादन्तरङ्गम् । अहं घटं जानामीत्यत्राहमर्थस्य घटाकारवृत्तेर्घटस्य च ज्ञानमस्तीति विषयभेदात् ज्ञानत्रयमस्ति, तत्राद्यद्वयं नान्तरीयकम् । यच्चोत्तमं चरमं घटप्रकाशकफलरूपं ज्ञानं तदेव परं ब्रह्मेत्यर्थः । यथोक्तं वार्तिककारैः—' परागर्थप्रमेयेषु या फलत्वेन संगता । संवित्सैवेह ज्ञेयोऽर्थो वेदान्तोक्तिप्रमाणतः' इति । 'यज्ज्ञानं ज्ञात्वा वेदान्तवाक्यजन्यया धीवृत्त्या अपरोक्षीकृत्य....इदं ज्ञानं विषयविषयीरूपविकल्पविनिर्मुक्तमुपाश्रित्य' इत्यन्ये । अस्मिन्व्याख्याने ज्ञानानामिति निर्धारणषष्ठ्याः सामञ्जस्यं चिन्त्यं, साधनापेक्षया साधनोत्तमतायाः प्रतिपादनस्यैव सम्यक्त्वात् । किंच तत्स्वरूपमाह—ज्ञानं मोक्षफलत्वात् अन्तरङ्गम् । अहं घटं जानामीत्यादिपरस्परमसङ्गतमिति दिक् ॥ २ ॥

प० टी०—ज्ञानफलमाह—इदमिति । इदं वक्ष्यमाणं ज्ञानमुपाश्रित्यानुष्ठाय मम साधर्म्यं सारूप्यं प्राप्ताः सन्तः सर्गे आदिसर्गे ब्रह्मादिषूत्पद्यमानेष्वपि नोपजायन्ते नोत्पद्यन्ते । महाप्रलयेऽपि न व्यथन्ति प्रलयदुःखानि नानुभवन्ति ॥ २ ॥

रा० टी०—इदं ज्ञानं वक्ष्यमाणार्थज्ञानमुपाश्रित्य संपाद्य मम साधर्म्यं सारूप्यमागताः प्राप्ताः । शिष्टं व्यक्तम् ॥ २ ॥

**मम योनिर्महद्ब्रह्म तस्मिन् गर्भं दधाम्यहम् ॥**
**संभवः सर्वभूतानां ततो भवति भारत ॥ ३ ॥**

**त० टी०—एवं वक्ष्यमाणार्थं स्तुत्वा सर्वभूतोत्पत्तिः प्रकृतिपुरुषसंसर्गाद्भवति, तत्संसर्गश्च न सांख्यसिद्धान्तवत्तयोः स्वातन्त्र्येण किंतु मयैव कृत इत्याह—ममेति । मम परमेश्वरस्य नियम्यभूता त्रिगुणात्मिका प्रकृतिः योनिः सर्वभूतोत्पत्तिस्थानं देशकालानवच्छिन्नत्वात्सर्वकार्येभ्यो महत्त्वात्सर्वस्य बृंहणहेतुत्वाच्च महद्ब्रह्म तस्मिन् प्रकृतिरूपे महद्ब्रह्मणि योनौ गर्भं सर्वभूतादेर्हिरण्यगर्भस्यापि जन्मनो बीजं क्षेत्रज्ञसमष्टिं दधामि योजयामि । अहं सर्वज्ञः चेतनाचेतनशक्त्यधीश्वरः " बहु स्यां प्रजायेय " इति संकल्पपूर्वकमीक्षणं करोमि । प्रलये मयि लीनमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं पराशक्तिवाच्यं चेतनपुञ्जं कर्मफलभोगार्हमालोच्य भोग्यभूतयाऽपराशक्तिक्षेत्रशब्दवाच्यया योजयामीत्यर्थः । ततस्तस्माच्चेतनाचेतनप्रकृतिद्वयसंयोगात्मकाद्गर्भाधानात्सर्वभूतानां ब्रह्मादिस्तम्बपर्यन्तानां संभवो भवति हे भारत ॥ ३ ॥**

म० टी०—तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं नतु सांख्यसिद्धान्तवत् स्वतन्त्रयोरितीमं विवक्षितमर्थमाह द्वाभ्याम्—ममेति । सर्वकार्यापेक्षयाऽधिकत्वात्कारणं महत्, सर्वकार्याणां वृद्धिहेतुत्वरूपात् बृंहणत्वात् ब्रह्म, अव्याकृतं प्रकृतिस्त्रिगुणात्मिका माया महत् ब्रह्म । तच्च ममेश्वरस्य योनिर्गर्भाधानस्थानं तस्मिन् महति ब्रह्मणि योनौ गर्भं सर्वभूतजन्मकारणमहं 'बहु स्यां प्रजायेय' इतीक्षणरूपं संकल्पं दधामि धारयामि, तत्संकल्पविषयीकरोमीत्यर्थः । यथा हि कश्चित् पिता पुत्रमनुशयिनं व्रीह्याद्याहाररूपेण स्वस्मिन् लीनं शरीरेण योजयितुं योनौ रेतःसेकपूर्वकं गर्भमाधत्ते, तस्माच्च

गर्भाधानात् स पुत्रः शरीरेण युज्यते, तदर्थं च मध्ये कललाद्यवस्था भवन्ति, तथा प्रलये मयि लीनमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोग्येन क्षेत्रेण कार्यकरणसंघातेन योजयितुं चिदाभासाख्यरेतःसेकपूर्वकं मायावृत्तिरूपं गर्भमहमादधामि। तदर्थं च मध्ये आकाशवायुतेजोजलपृथिव्याद्युत्पत्त्यवस्थाः। ततो गर्भाधानात्संभव उत्पत्तिः सर्वभूतानां हिरण्यगर्भादीनां भवति हे भारत नत्वीश्वरकृतगर्भाधानं विनेत्यर्थः॥३॥

**शं० टी०**—एवं गुणतत्कार्यज्ञानस्य समुत्पन्नज्ञानस्य रक्षाहेतुत्वेन गुणातिक्रमणोपायत्वेन विदेहमुक्तेः कारणत्वं प्रतिपाद्य प्रकृतेस्तद्गुणानां च मच्छक्तिसामर्थ्यादेव स्वकार्यनिर्वाहक्षमत्वं न तु स्वत इति सूचयितुं प्रकृतेः स्वशक्तिसंबन्धवत्त्वं सर्वभूतोत्पादकत्वं च प्रतिपादयति—**ममेति**। ममेश्वरत्वोपाधिभूता मदात्मिका माया गुणत्रयसाम्यावस्थालक्षणा प्रकृतिर्योनिः सर्वभूतोत्पत्तिकारणं या सा सर्वेभ्यः स्वकार्येभ्यो महत्त्वेन महदिति स्वकार्याणां बृंहकत्वेन वा ब्रह्मण उपाधित्वेन वा ब्रह्मेत्युच्यते। तस्मिन् जगद्बीजे ब्रह्मणि अव्यक्ते साक्षात्परंपरया च कार्यकारणात्मना परिणामसिद्धये। तदवच्छिन्नचैतन्यैकलक्षणोऽहमीश्वरस्तदुपहितानन्तशक्तिसंपन्नो गर्भं स्वाभासलक्षणं प्रकृतितद्गुणविकारविजृम्भणकारणं दधामि निदधामि निक्षिपामीत्यर्थः। ततो मदाभाससंभावितसामर्थ्यादेव मदाभासशक्तिसमन्विता महतो ब्रह्मणः प्रकृतेः सकाशात्सर्वभूतानां महदादिक्रमेणाकाशादिसकलभूतानां भूतकार्याणां चतुर्विधप्राणिशरीराणां च संभव उत्पत्तिर्भवति सर्वाणि भूतानि संभवन्तीत्यर्थः॥ ३॥

**श्री० टी०**—तदेवं प्रशंसया श्रोतारमभिमुखीकृत्य परमेश्वराधीनयोः प्रकृतिपुरुषयोः सर्वभूतोत्पत्तिं प्रति हेतुत्वं न तु स्वतन्त्रयोरितीमं विवक्षितमर्थं कथयति—**ममेति**। देशतः कालतश्चानवच्छिन्नत्वान्महत् बृंहणत्वात्स्वकार्याणां वृद्धिहेतुत्वाद्वा ब्रह्म प्रकृतिरित्यर्थः। तन्महद्ब्रह्म मम परमेश्वरस्य योनिर्गर्भाधानस्थानं तस्मिन्नहं गर्भं जगद्विस्तारहेतुं चिदाभासं दधामि निक्षिपामि। प्रलये मयि लीनं सन्तमविद्याकामकर्मानुशयवन्तं क्षेत्रज्ञं सृष्टिसमये भोगयोग्येन क्षेत्रेण संयोजयामीत्यर्थः। ततो गर्भाधानात्सर्वभूतानां ब्रह्मादीनां संभव उत्पत्तिर्भवतीति॥ ३॥

**स० टी०**—श्रोतारं संमुखीकृत्य तदेवं सुप्रशंसया॥ क्षेत्रक्षेत्रज्ञयोरीशाधीनयोरेव हेतुता॥ १॥ न तु स्वतन्त्रयोः सर्वभूतोत्पत्तिं प्रति स्वयम्॥ साङ्ख्यं निरीश्वरं चेत्थं पराकर्तुमितीर्यते॥ २॥ स्वकार्यापेक्षयाधिक्यात्कारणं महदुच्यते॥ कार्याणां वृद्धिहेतुत्वाद्बृंहणत्वाच्च कारणम्॥ ३॥ ब्रह्मास्त्यव्याकृतं माया प्रकृतिस्त्रिगुणात्मिका॥ ममेश्वरस्य तच्चोक्तं योनिर्गर्भधृतेः स्थलम्॥ ४॥ तस्मिन्महति मायाख्ये सर्वभूतैककारणम्॥ गर्भमीक्षणसंकल्पं धारयाम्यहमीश्वरः॥ ५॥ तद्बहु स्यां प्रजायेयेतीक्षणरूपमीरितम्॥ यथा कश्चित्पिता पुत्रमनुशयिनमान्तरम्॥ ६॥ व्रीह्याद्याहाररूपेण स्वस्मिँल्लीनमलक्षणम्॥ योजयितुं शरीरेण योनौ रेतःप्रसेचनात्॥ ७॥ गर्भमाधत्त एतस्माद्गर्भाधानात्स पुत्रकः॥ युज्यते च शरीरेण तदर्थं मध्यगा अपि॥ ८॥ भवन्ति कलिलाद्या या अवस्था बहुधा हि ताः॥ तथा मयि लये लीनमविद्याकामकर्मभिः॥ ९॥ क्षेत्रज्ञं सृष्टिसमये क्षेत्रेणानर्थशालिना॥ कार्यकरणसंघातरूपेणाविद्यकात्मना॥ १०॥ योजयितुं चिदाभासाख्यरेतःसेकपूर्वकम्॥ मायावृत्त्याख्यगर्भं च धारयाम्यहमीश्वरः॥ ११॥ तदर्थं मध्य आकाशाद्युत्पत्त्यादिदशा अपि॥ गर्भाधानाज्जनिस्तस्माद्ब्रह्मादीनां शरीरिणाम्॥ १२॥ न त्वीश्वरकृतं चैवं गर्भाधानमृते जनिः॥ १३॥ ३॥

**भा० टी०**—ज्ञानस्तुत्या तदभिमुखाय समाहितचित्ताय क्षेत्रक्षेत्रज्ञसंयोग ईदृशो भूतकारणमिति विवक्षितमर्थमाह—**ममेति**। मम मदीया मदधिष्ठिता नतु स्वतन्त्रा माया त्रिगुणात्मिका प्रकृतिः सर्वभूतानां योनिः कारणम्। मम योनिः गर्भाधानस्थानमिति तु सुगमत्वादाचार्यैर्न व्याख्यातम्। योनिमेव विशिनष्टि।

सर्वकार्येभ्यो महत्वात्स्वविकाराणां भरणाच्च महद्ब्रह्म । महत्तत्त्वस्य प्रथमकार्यस्य ब्रह्म बृंहकं कारणमिति तु ब्रह्मशब्दस्य कारणरूपामुख्यार्थपरत्वं लघुभूतकर्मधारयत्यागं ब्रह्म महदिति वक्ष्यमाणाननुरोधे चासमञ्जसमभिप्रेत्याचार्यैर्न व्याख्यातम्। तस्मिन्महति ब्रह्माणि योनौ गर्भं हिंरण्यगर्भादिसर्वभूतानां जन्मकारणं बीजमहं दधामि निक्षिपामि । क्षेत्रक्षेत्रज्ञप्रकृतिद्वयशक्तिमानीश्वरोऽहमविद्याकामकर्मोपाधिस्वरूपानुविधायिनं क्षेत्रज्ञं क्षेत्रेण संयोजयामीत्यर्थः । ततस्तस्माद्गर्भाधानात्सर्वभूतानां हिरण्यगर्भादिस्तम्बपर्यन्तानां संभवः उत्पत्तिर्भवति । ननु हिरण्यगर्भस्य ततः संभवेऽपि सर्वेषां कथं ततः संभवः स्वस्वमातृपित्रादेस्तत्तद्भूतसंभवदर्शनादिति चेत्तत्राह—भारतेति । यथा पित्रादेरुत्पन्नानामपि भवदादीनां भरतोद्भवत्वेन भारतत्वं तथेति संबोधनाशयः ॥ ३ ॥

प० टी०—तदेवं श्रोतारमभिमुखीकृत्य परमेश्वराधीनप्रकृतिपुरुषयोः सर्वभूतोत्पत्तिहेतुत्वं न तु स्वतन्त्रयोरिति विवक्षितमर्थं कथयति—ममेति । मम योनिर्गर्भस्थानं महद्ब्रह्म देशतः कालतश्चापरिच्छिन्नं महद्बृंहणात् स्वकार्याणां वृद्धिहेतुभूतं ब्रह्मैवंविधं मायाख्यं तस्मिन् गर्भं हिरण्यगर्भरूपं दधामि । ततो गर्भाधानात् सकाशात् सर्वभूतानां ब्रह्मादीनां संभवो भवति ॥ ३ ॥

रा० टी०—प्रतिज्ञातार्थमाह—ममेति । महद्ब्रह्म महती चित्प्रकृतिः मम योनिः भार्या तस्मिन्ब्रह्मणि चित्प्रकृतौ गर्भं दधामि । चतुर्विंशतितत्त्वांशयुतान् जीवान्स्वोदरस्थान् रेतोरूपेण निर्वास्य चित्प्रकृत्युदरे निक्षिपामीत्यर्थः । ततस्तत्र निक्षेपाद्भूतानां प्राणिनां देहयोगरूपसंभवो जन्म भवति । ह्योऽत एव । युक्तेश्चेति सूत्रकृदुक्तेः ॥ ३ ॥

**सर्वयोनिषु कौन्तेय मूर्तयः संभवन्ति याः ॥**
**तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता ॥ ४ ॥**

त० टी०—न केवलं प्रलयानन्तरमेव मत्कृतप्रकृतिपुरुषसंयोगाद्भूतोत्पत्तिः, किंत्ववान्तरकार्यावस्थायामपि मदधीनत्वमित्याह—सर्वयोनिष्विति । सर्वासु देवासुरगन्धर्वयक्षराक्षसपितृमनुष्यपशुमृगपक्षिसर्पादियोनिषु या मूर्तयस्तनवः संभवन्ति उत्पद्यन्ते हे कौन्तेय तासां मूर्तीनां महद्ब्रह्म योनिर्मातृस्थानीया चित्संयुक्ता महदादिविशेषान्ता प्रकृतिः कारणमित्यर्थः । अहं सर्वशक्तिः सर्वेश्वरो बीजप्रदः गर्भाधानस्य कर्ता पितृस्थानीयः । तत्र तत्र तत्तत्कर्मानुसाराचेतनवर्गस्य संयोजकः, नतु तस्य स्वातन्त्र्यमित्यर्थः ॥ ४ ॥

म० टी०—ननु कथं सर्वभूतानां ततः संभवो देवादिदेहविशेषाणां कारणान्तरसंभवादित्याशङ्क्याह—सर्वेति । देवपितृमनुष्यपशुमृगादिसर्वयोनिषु या मूर्तयो जरायुजाण्डजस्वेदजोद्भिज्जादिभेदेन विलक्षणविविधसंस्थानास्तनवः संभवन्ति हे कौन्तेय तासां मूर्तीनां तत्तत्कारणभावापन्नं महत् ब्रह्मैव योनिर्मातृस्थानीया, अहं परमेश्वरो बीजप्रदः गर्भाधानस्य कर्ता पिता । तेन महतो ब्रह्मण एवावस्थाविशेषाः कारणान्तराणीति युक्तमुक्तं संभवः सर्वभूतानां ततो भवतीति ॥ ४ ॥

शं० टी०—प्रकृतेः स्वानुग्रहबलेन सर्वजगदुत्पादकत्वं प्रतिपाद्य तस्याः सर्वभूतप्रसवित्रीत्वेन सर्वस्य जगतो जननीत्वं गर्भाधानकारणत्वेन स्वस्य जनकत्वं च सूचयितुमाह—सर्वयोनिष्विति । सर्वयोनिषु देवमनुष्यतिर्यगादियोनिषु या मूर्तयः प्राणिदेहाः संभवन्ति समुत्पद्यन्ते तासां मूर्तीनां प्राणिनामित्येतत् महदुक्तलक्षणं ब्रह्म प्रकृतिर्योनिर्जननी भवति । बीजप्रदो गर्भप्रदाताहमीश्वरः पिता भवामीत्यर्थः । एतेन मातुः प्रकृतेः पितुरीश्वरस्य च मम प्रसादादेव मोक्ष इति सूचितम्। "ज्ञानप्रसादेन विशुद्धसत्त्व" इति "तं ह देवमात्मबुद्धिप्रकाशम्" इति च श्रुतेः। 'बुद्धिप्रसादाच्च शिवप्रसादाद्गुरुप्रसादात्पुरुषस्य मुक्तिः' इति स्मृतेश्च ॥४॥

श्री० टी०—न केवलं सृष्ट्युपक्रम एव मदधिष्ठिताभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिप्रकारः, अपि तु सर्वदैवेत्याह—**सर्वयोनिष्विति**। सर्वासु योनिषु मनुष्याद्यासु या मूर्तयः स्थावरजङ्गमात्मिका उत्पद्यन्ते तासां मूर्तीना महद्ब्रह्म प्रकृतिः योनिर्मातृस्थानीया। अहं च बीजप्रदः गर्भाधानादिकर्ता पिता ॥ ४ ॥

स० टी०—कथं समस्तभूतानां तत एवास्ति संभवः ॥ देवादिदेहभेदानां कारणान्तरसंभवात् ॥ १ ॥ शृणु देवमनुष्यादिसर्वयोनिषु मूर्तयः ॥ जरायुजादिभेदेन देहाः संस्थानलक्षणाः ॥ २ ॥ मूर्छिताङ्गावयवास्ताः संभवन्ति सहस्रशः ॥ कौन्तेय तासां मूर्तीनां तत्तत्कारणभावतः ॥ ३ ॥ महद्ब्रह्मैव तन्मातृस्थानीया योनिरुच्यते ॥ गर्भाधानस्य कर्ताहं जनकः परमेश्वरः ॥ ४ ॥ महतो ब्रह्मणस्तेनावस्थाभेदा अनेकधा ॥ हेत्वन्तराणि तस्मात्तत्कारणं जगतां महत् ॥ ५ ॥ ४ ॥

भा० टी०—न केवलं सृष्ट्युपक्रमे एव प्रकृतिः योनिरहं च गर्भाधानकर्ता, अपि तु सर्वदैवेत्याह—**सर्वयोनिष्विति**। देवपितृमनुष्यमृगादिसर्वयोनिषु या मूर्तयो देहसंस्थानलक्षणाः संभवन्ति हे कौन्तेय, यथा तव कुन्ती तथा तासां ब्रह्म महत्तत्र तत्र तत्तत्कारणरूपेणावस्थितं योनिः कारणमहमीशो बीजप्रदः गर्भाधानस्य कर्ता पिता। तथाच प्रकृतेरेवावस्थाविशेषेषु कारणान्तरेषु गर्भाधानकर्तुः परमेश्वरस्यैव सर्वत्र सत्त्वाद्युक्तमुक्तं संभवः सर्वभूतानां ततो भवति भारतेति ॥ ४ ॥

प० टी०—न केवलं सृष्ट्युपक्रममधिष्ठिताभ्यां प्रकृतिपुरुषाभ्यामयं भूतोत्पत्तिप्रकारोऽपि तु सर्वदैवेत्याह—**सर्वयोनिष्विति**। सर्वयोनिषु मनुष्यपशुपक्ष्यादिषु याः स्थावरजङ्गमात्मिका मूर्तय उत्पद्यन्ते तासां महद्ब्रह्म योनिरुत्पत्तिस्थानं मातृस्थानीयमित्यर्थः। अहं बीजप्रदो गर्भाधानकर्तात एव पिता निषेक्ता। श्रुतिरपि—"स (हैतावानास) यथा स्त्रीपुमा ५ सौ संपरिष्वक्तौ स इममेवात्मानं द्वेधापातयत्ततः पतिश्च पत्नी चाभवताम्" इत्यादि। भाष्यम्—सृष्टिक्रमे पूर्वं द्वितीयमैच्छदित्युक्तं स तेन सहैतावानेतावगासीत्। एतावान् कथं यथा स्त्रीपुमांसौ संपरिष्वक्तौ संमीलितावनन्तरं सृष्ट्यर्थमात्मा इममेव मायासंवलितमात्मानं द्वेधा द्विःप्रकारमपातयद् अपकृष्टमकरोत्। ततः पतिश्च पत्नी चाभवतां मिथुनमभूदित्यर्थः। "मिथुनं संभवाव प्रजात्यै" इति ब्राह्मणमपि ॥ ४ ॥

रा० टी०—न केवलमादिसर्ग एवानयोः कारणत्वं किंतु सर्वदेत्याह—सर्वेति। देवमनुष्यतिर्यगादियोनिषु याः मूर्तयः कार्यव्यक्तयः संभवन्ति तासां महद्ब्रह्म महालक्ष्मीः योनिः क्षेत्ररूपं कारणम्। अहं बीजप्रदः गर्भाधानकर्ता पिता ॥ ४ ॥

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः ॥**
**निबध्नन्ति महाबाहो देहे देहिनमव्ययम् ॥ ५ ॥**

त० टी०—तदेवं क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वप्रतिपादनेन सांख्यमतं निराकृत्य प्रकृतिसंसर्गेण पुरुषस्य बन्धं प्रतिपादयितुं तत्र के गुणाः कथं बध्नन्ति कथं ते ज्ञेया इति सर्वं दर्शयति—सत्त्वमित्यादिचतुर्दशभिः—सत्वं रजस्तम इति संज्ञकास्त्रयो गुणाः प्रकृतिसंभवाः। अत्र गुणा इति न रूपरसादिवद्द्रव्याश्रिताः किंतु प्रकृत्यवस्थाविशेषा यतो गुणसाम्यं प्रकृतिरित्युच्यते। सैव कालात्मना ईश्वरेण क्षोभिता सती महदादिकार्येषु गुणात्मनाऽभिव्यज्यते। तदुक्तं विष्णुपुराणे—'प्रधानं पुरुषं चैव प्रविश्यात्मेच्छया हरिः। क्षोभयामास संप्राप्ते सर्गकाले व्ययाव्ययौ ॥ स एव क्षोभको ब्रह्मन् क्षोभ्यश्च परमेश्वरः। स संकोचविकाशाभ्यां प्रधानत्वेऽपि च स्थितः ॥ गुणसाम्यात्ततस्तस्मात् क्षेत्रज्ञाधिष्ठितान्मुने। गुणव्यञ्जनसंभूतः सर्गकाले द्विजोत्तम ॥ सात्त्विको राजसश्चैव तामसश्च त्रिधा महान्' इति। तस्मात्प्रकृतिपरिणाम एव त्रयो गुणास्ते च स्वकार्यभूतमहदादिपृथिव्यन्तारब्धदेहसंब-

न्धिनं निबध्नन्ति स्वकार्यैः सुखदुःखादिभिः संयोजयन्ति । ननु तर्हि देही नित्यमवध्योऽयं देहे सर्वस्य भारतेति कथमुक्तमिति चेत्तत्राह—अव्ययमिति । देहे वर्तमानमपि स्वरूपान्यथाभावरहितं देहतदनुबन्धिष्वभिनिवेशापादनेन निबध्नतीत्यर्थः ॥ ९ ॥

म० टी०—तदेवं निरीश्वरसांख्यनिराकरणेन क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वमुक्तं, इदानीं कस्मिन् गुणे कथं सङ्गः के वा गुणाः कथं वा ते बध्नन्तीत्युच्यते—सत्त्वमित्यादिनान्यमित्यतःप्राक्चतुर्दशभिः । सत्त्वरजस्तम इत्येवंनामानो गुणा नित्यपरतन्त्राः पुरुषं प्रति सर्वेषामचेतनानां चेतनार्थत्वात्, नतु वैशेषिकाणां रूपादिवद्द्रव्याश्रिताः, नच गुणगुणिनोरन्यत्वमत्र विवक्षितं गुणत्रयात्मकत्वात्प्रकृतेः । तर्हि कथं प्रकृतिसंभवा इति उच्यते त्रयाणां गुणानां साम्यावस्था प्रकृतिर्माया भगवतस्तस्याः सकाशात् परस्पराङ्गाङ्गिभावेन वैषम्येण परिणताः प्रकृतिसंभवा इत्युच्यन्ते । ते च देहे प्रकृतिकार्ये शरीरेन्द्रियसंघाते देहिनं देहतादात्म्याध्यासापन्नं जीवं परमार्थतः सर्वविकारशून्यत्वेनाव्ययं निबध्नन्ति निर्विकारमेव सन्तं स्वविकारवत्तयोपदर्शयन्तीव भ्रान्त्या जलपात्राणीव दिवि स्थितमादित्यं प्रतिबिम्बाध्यासेन स्वकम्पादिमत्तया । यथा च पारमार्थिको बन्धो नास्ति तथा व्याख्यातं प्राक् शरीरस्थोऽपि कौन्तेय न करोति न लिप्यत इति ॥ ९ ॥

शं० टी०—प्रकृतेस्तद्गुणानां च स्वानुग्रहबलेनैव कार्यक्षमत्वं प्रतिपाद्य गुणविभागपूर्वकं गुणानां बन्धकत्वमाह—सत्त्वमिति । मुक्तेः परमसाधनत्वेनोत्कृष्टत्वात्सत्त्वस्य प्रथमोद्देशः । सर्वप्रवृत्तेः कारणत्वात्ततो रजसस्ततो निकृष्टत्वात्तमसश्च निर्देशः । सत्त्वमिति रज इति तम इत्येवंनामानो गुणाः प्रकृतिसंभवाः संभवत्यस्मादिति संभवः उपादानं प्रकृतिरेव संभवो येषां ते प्रकृतिसंभवाः । सत्त्वादयो रूपादिवद्द्रव्यमात्राश्रया न भवन्ति किंतु कार्यकारणयोरभेदन्यायेन प्रकृत्यात्मकत्वात्सर्वगता भवन्ति । तेन सर्वं गुणमयमेव जगत्तत एव बहिर्विषयरूपेणान्तश्च रागद्वेषलोभादिरूपेण निद्रालस्यप्रमादादिरूपेण च शमदमसत्यदयादाक्षिण्यादिरूपेण च वर्तमाना सत्त्वादिगुणाः स्वयमव्ययं नाशरहितमपि देहिनमात्मानमात्मविदमित्यर्थः । स्वविकारव्याप्त्या तिरोहितप्रत्यग्भावं देह एवात्मभावापन्नं च कृत्वा देहं बध्नति देहतद्धर्मतत्कर्मस्वहंममाभिमानाभिनिवेशं कारयित्वा जन्ममरणादिभिः संयोज्य नाशयन्तीत्यर्थः । ननु सर्वेन्द्रियविवर्जितमिति असक्तमिति प्रकृत्यैव च कर्माणीति न करोति न लिप्यत इति चात्मानः क्षेत्रज्ञस्य क्षेत्रतद्धर्मतत्कर्मरहितत्वमसङ्गत्वमकर्तृत्वमलिप्तत्वं च प्रतिपादितं, कथं कूटस्थासङ्गचिद्रूपस्य गुणैर्बध्यमानत्वमिति चेदुच्यते निष्कलस्य निष्क्रियस्यासङ्गस्य चात्मनस्त्वज्ञानदशायां ज्ञानदशायां वाप्यध्यासत एव बन्धो नतु वस्तुतोऽस्ति, तथात्वे मोक्षाभावप्रसङ्गात्ततो निरवयवस्यासङ्गस्याविरोधिनः प्रतीचः सूर्यस्य तमःसंबन्धवदविद्यातत्कार्यसंबन्धः कदापि न संभवति किंतु स्वानुभूतौ प्रमाद्यतो ब्रह्मविद्यतेरनात्माध्यासः सत्त्वादिभिर्भिद्यमानत्वं च संभवति नित्यनिरन्तरात्मानुभूत्या तमकुर्वत एव विदुषो दृष्टदुःखाभावः सदात्मानन्दरसानुभूतिश्च गुणातिक्रमणं च विदेहमुक्तिश्च सिध्यति । गुणदोषेण तं कृतवतस्तु यतेः संप्राप्तज्ञानसंकोचो विक्षेपश्च जन्मादिबन्धश्च भवति । तस्माद्देहेन्द्रियादिष्वन्यत्र बाहंममाध्यासराहित्यमेव विदुषो जीवन्मुक्तिस्तत्राहंममाध्यास एव बन्धः सत्त्वादिगुणदोषेण तं कृत्वा विद्वानपि बध्यते यथा सत्त्वगुणकृतदयादोषेण दूषितान्तरङ्गः सन्ननात्मन्यात्मभावं कृत्वा विद्वानपि भरतः कुरङ्गे च पोष्यत्वममत्वाध्यासं कृत्वा स्नेहपाशेन बद्धो जन्मादिबन्धं प्राप्तवान् । तस्मात्सत्त्वादिगुणतत्कार्यैरकम्पितेनैव विदुषा विदेहकैवल्यार्थिना सदात्मनिष्ठयैव स्थातव्यमिति बोधयितुमेव चतुर्दशाध्यायारम्भः ॥ ९ ॥

श्री० टी०—तदेवं परमेश्वराधीनाभ्यां प्रकृतिपुरुषाभ्यां सर्वभूतोत्पत्तिं निरूप्य इदानीं प्रकृतिसंयोगेन पुरुषस्य संसारं प्रपञ्चयति—सत्त्वमित्यादिचतुर्दशभिः । सत्त्वं रजस्तम इत्येवंसंज्ञकास्त्रयो गुणाः प्रकृति-

संभवाः प्रकृतितः संभव उद्भवो येषां ते तथोक्ताः । गुणसाम्यं प्रकृतिस्तस्याः सकाशात्पृथक्त्वेनाभिव्यक्ताः सन्तः प्रकृतिकार्ये देहे तादात्म्येन स्थितं देहिनं चिदंशं वस्तुतोऽव्ययं निर्विकारमेव सन्तं निबध्नन्ति स्वकार्यैः सुखदुःखमोहादिभिः संयोजयन्तीत्यर्थः ॥ ५ ॥

स० टी०—एवं निरीश्वराः साङ्ख्या हरिणैव निराकृताः ॥ क्षेत्रक्षेत्रज्ञसंयोग ईश्वराधीन इत्यतः ॥ १ ॥ कस्मिन्गुणे कथं संगो गुणाः के वा कथं च ते ॥ बध्नन्तीत्युच्यते श्लोकैश्चतुर्दशभिरेव च ॥ २ ॥ सत्त्वं रजस्तमइतिनामानो हि गुणा जडाः ॥ पुरुषं प्रति ते नित्यं परतन्त्रा भवन्त्यमी ॥ ३ ॥ अचेतनानां सर्वेषां चेतनार्थत्वहेतुना ॥ ननु द्रव्याश्रिता ज्ञेया वैशेषिकमता गुणाः ॥ ४ ॥ गुणगुणवतोरत्र नैवान्यत्वं विवक्षितम् ॥ गुणत्रयात्मिका मायाऽविद्या प्रकृतिरुच्यते ॥ ५ ॥ कथं प्रोक्तं तदात्रेति गुणाः प्रकृतिसंभवाः ॥ शृणूच्यते त्रयाणां या गुणानां समता दशा ॥ ६ ॥ माया प्रकृतिरित्युक्ता शक्तिर्भगवतो हरेः ॥ तस्याः सकाशादन्योन्याङ्गाङ्गिभावेन ते गुणाः ॥ ७ ॥ वैषम्येण परीणामं गताः प्रकृतिसंभवाः ॥ शरीरेन्द्रियसंघाते तदध्यासेन देहिनम् ॥ ८ ॥ वस्तुतो निर्विकारं तं बध्नन्तीव गुणा इमे ॥ यथाकाशस्थमादित्यं प्रतिबिम्बमुखेन हि ॥ ९ ॥ कम्पादिमत्तया वारि दर्शयत्यचलं चलम् ॥ तथैनं निर्विकारं ते स्वविकारैकवत्तया ॥ १० ॥ दर्शयन्तीव च भ्रान्त्या तादात्म्याध्यासरूपया ॥ ११ ॥ ५ ॥

भा० टी०—एवं द्वाभ्यां प्रकृतिपुरुषयोरीश्वरपारतन्त्र्यप्रतिपादनेन सांख्याभिमतं तयोः स्वातन्त्र्यं निरस्तम् । इदानीं के गुणाः कथं वा ते बध्नन्ति कस्मिन् गुणे कथं वा सङ्ग इति निरूपयति—सत्त्वमित्यादिचतुर्दशभिः । सत्त्वं रजस्तम इत्येवंनामानः, गुणा इति शब्दो न रूपादिवत्पारिभाषिकः सत्त्वादीनां द्रव्याश्रितत्वबोधकः प्रकृत्यात्मकानां तेषां सर्वाश्रयत्वात् । नापि गुणगुणिनोरन्यत्वमत्र विवक्षितं, अत्यन्तभेदे गवाश्ववत्तद्भावासंभवात् । तस्माद्गुणा इव नित्यपरतन्त्राः क्षेत्रज्ञं प्रति तमास्पदीकृत्यैव तेषां प्रतिलम्भात् प्रकृतिसंभवाः । त्रयाणां गुणानां साम्यावस्था प्रकृतिर्भगवतो माया संभवोऽभिव्यक्तिकारणं येषां ते देहे देहिनं देहमात्मानं मन्यमानं देहवन्तं जीवं वस्तुतोऽनादित्वादिति श्लोकेन प्रतिपादितमव्ययं निर्विकारं निबध्नन्ति। 'कुर्यान्मेरावणुधियम्' इति न्यायेन मायामाहात्म्यमिदं यदव्ययस्य बन्धनं तदपि मायिकत्वान्मिथ्याभूतमेव नतु वास्तवं, तेन न करोति न लिप्यते । लिप्यते न स पापेनेत्यादिना देही न लिप्यत इति पूर्वमुक्तं तत्कथमिह निबध्नतीत्यन्यथोच्यते इति न शङ्कनीयम् । महान्तौ समर्थौ वाजानुप्रलम्बौ बाहू यस्य स महाबाहुस्तस्य संबोधनं हे महाबाहो इति । अहमव्यय इति ज्ञानमेव गुणकृतबन्धान्मुक्तिसाधनं नतु महाबाहुरहमिति । बाहुसामर्थ्यस्यात्रानुपयोगात् प्रत्युत देहाभिमानस्य बन्धनसाधनत्वाच्चेतिद्योतनार्थम् ॥ ५ ॥

प० टी०—इदानीं प्रकृतिसंयोगेन पुरुषस्य संसारं प्रपञ्चयति—सत्त्वमित्यादितश्चतुर्भिः । सत्त्वं रजस्तम इति त्रयो गुणाः प्रकृतिसंभवाः। गुणानां साम्यावस्था प्रकृतिस्तस्याः सकाशात्पृथक्त्वेन गुणानामभिव्यक्तिरेव संभवशब्दार्थः । एवं ते प्रकृतिकार्ये देहतादात्म्येन स्थितं देहिनं चिदंशं वस्तुतोऽव्ययं निर्विकारमप्यहंकाराभिमानान्निबध्नन्ति स्वकार्यसुखदुःखादिभिः सह योजयन्ति । श्रुतिरपि तैत्तिरीयके "अजामेकां लोहितशुक्लकृष्णां बह्वीं प्रजां जनयन्तीं सरूपाम् । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इति । भाष्यम्—नन्वेकस्माज्जगदुपादानतः कथं कार्यवैचित्र्यमित्याशङ्क्य कारणमपि तथैवास्तीत्याह—अजामिति । अजामनादिमेकामेव गुणत्रयरूपिणीं यतो लोहितशुक्लकृष्णां रजःसत्त्वतमोमयीमतो विचित्रत्वाद्बह्वीं पृथङ्नामरूपकर्मात्मिकां प्रजां जनयन्तीं सरूपां यथाकर्म समानरूपाम् । अथ तच्छबलत्वशुद्धत्वभावेन क्षेत्रज्ञपरमात्मनोः स्वरूपमाह—अज इति । एवंविधां तामनुलक्षीकृत्य तत्कार्याणि विषयान् जुषमाणो भुञ्जानोऽजो जीवः शेते निद्रित इव व्यामूढदशां प्राप्नोति, अथान्यस्तद्विलक्षणोऽज एनामु-

तलक्षणां भुक्ता भोगा यया सा भुक्तभोगा तामजां जहाति त्यजति न स्पृशति यथा कश्चिद्विप्रः स्वप्ने शूद्रत्वं प्राप्तः पुनर्जाग्रद्दशायां स्वकीयं शुद्धस्वरूपं प्राप्नोति तद्वदित्यर्थः ॥ ५ ॥

श्री० टी०—एवं यावत्संजायत इत्युक्तं श्लोकद्वयेन विवृत्येदानीं यो हि बद्धोऽस्मीति जानाति स एव तन्निवृत्तिसाधनं विजिज्ञास्य ज्ञात्वाऽनुतिष्ठति । अतो बन्धोच्छेदसाधनानुष्ठानाय तत्साधनज्ञापनार्थं जिज्ञासामुत्पादयितुं गुणत्रयकृतबन्धप्रकारं तावदाह—सत्त्वमिति । प्रकृतिसंभवाः त्रिगुणात्मकजडप्रकृतितः संभवन्तस्तदंशभूताः सत्त्वं रजस्तम इति गुणाः तथा प्रकृतिसंभवाः चित्प्रकृतितः सृष्टिकाले विभज्यमानाः सद्गुणत्वसृष्ट्यादिरञ्जनकर्तृत्वजीवग्लपनहेतुत्वनिमित्तैः क्रमात्सत्त्वरजस्तमश्शब्दिताः श्रीभूदुर्गाख्याः गुणाः क्रमाद्गुणत्रयाभिमानिन्यः तिस्रो देव्यश्च देहे स्थितमव्ययं स्वरूपतो व्ययहीनं जीवं जात्येकवचनं, जीवजातं निबध्नन्ति । सर्वासां सर्वजीवबन्धकत्वेऽपि सत्त्वमानिनी श्रीः देवबन्धिका, रजोभिमानिनी भूर्मनुष्यबन्धिका, तमोभिमानिनी दुर्गा दैत्यबन्धिकेति विशेषो ज्ञेयः । अत्र देह इत्युक्तिर्भूतपूर्वगतया मुक्तानामपि देहित्वात्तद्व्यावृत्त्यर्था ॥ ५ ॥

**तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयम् ॥**
**सुखसङ्गेन बध्नाति ज्ञानसङ्गेन चानघ ॥ ६ ॥**

त० टी०—त्रयाणां गुणानां लक्षणं बन्धकत्वप्रकारं चाह त्रिभिः । तत्र तावत्सत्त्वस्याह—तत्रेति । तत्र तेषु त्रिषु गुणेषु मध्ये सत्त्वं निर्मलत्वात्स्वच्छत्वात्स्फटिकपात्रमिव प्रकाशकं सुखज्ञानावरणस्वभावरहितम् अनामयं निरुपद्रवं शान्तमित्यर्थः । स सत्त्वगुणः सुखसङ्गेन ज्ञानसङ्गेन च बध्नाति सुखेन ज्ञानेन च यः सङ्गः अहं सुखी ज्ञानी चेति ज्ञानसुखाभ्यां क्षेत्रज्ञं संयोजयति । पुनस्तत्साधने तत्फलानुभवे च प्रवर्तयति ॥ ६ ॥

म० टी०—तत्र को गुणः केन सङ्गेन बध्नातीत्युच्यते—तत्रेति । तत्र तेषु गुणेषु मध्ये सत्त्वं प्रकाशकं चैतन्यस्य तमोगुणकृतावरणतिरोधायकं निर्मलत्वात् स्वच्छत्वात् चिद्बिम्बग्रहणयोग्यत्वादिति यावत् । न केवलं चैतन्याभिव्यञ्जकं किं तु अनामयम् । आमयो दुःखं तद्विरोधि सुखस्यापि व्यञ्जकमित्यर्थः । तत् बध्नाति सुखसङ्गेन ज्ञानसङ्गेन च देहिनं, हे अनघ अव्यसन । सर्वत्र संबोधनानामभिप्रायः प्रागुक्तः स्मर्तव्यः । अत्र सुखज्ञानशब्दाभ्यामन्तःकरणपरिणामौ सद्व्यञ्जकावुच्येते । इच्छा द्वेषः दुःखं सुखं संघातश्चेतना धृतिरिति सुखचेतनयोरपीच्छादिवत् क्षेत्रधर्मत्वेन पाठात् । तत्रान्तःकरणधर्मस्य सुखस्य ज्ञानस्य चात्मन्यध्यासः सङ्गः । अहं सुखी अहं जान इति च । नहि विषयधर्मो विषयिणो भवति । तस्मादविद्यामात्रमेतदिति शतश उक्तं प्राक् ॥ ६ ॥

शं० टी०—सामान्येनैवं गुणसमष्टिकार्यं दर्शयित्वा प्रत्येकं गुणाना स्वरूपं कार्यं च प्रतिपादयति त्रयोदशभिः—तत्रेति । तत्र तेषु त्रिगुणेषु सत्त्वं सत्त्वगुणो निर्मलत्वात् मलाभ्यां रजस्तमोभ्यां निर्गतत्वेनातिस्वच्छत्वात्प्रकाशकं प्रत्यग्वस्तुस्वरूपावभासकमनामयं च । सत्त्वस्यामयो नाम विक्षेपो जाड्यं च । तत्कारणयो रजस्तमसोरभावादनामयमविक्षिप्तमजडं चैवंलक्षणमपि सत्त्वं स्वोपसृष्टं ब्रह्मविदमपि सुखसङ्गेन शब्दादीष्टविषयेन्द्रियसंपर्कजन्यं यत्सुखं तत्र सङ्गः सक्तिस्तेन बध्नाति विषयसुखलम्पटं करोतीत्यर्थः । यद्वा शमदमदयाहिंसाक्षान्त्यादिसाधनसंपत्त्या ब्रह्मविदं सुखसङ्गेन यदुपास्तिसाध्यं ब्राह्मं वैष्णवं शैवं वा पारलैकिकं सुखं तत्सङ्गेन तत्कामेन बध्नाति ब्रह्मज्ञानतत्सुखानुभूतिभ्यां च्यावयित्वा बहिर्मुखं करोतीत्यर्थः । किंच ज्ञानसङ्गेन ज्ञानं नानाशास्त्रार्थविचारजन्यं तत्र सङ्गः सज्जतेऽनेनेति सङ्गः कामस्तेन बध्नाति, तर्कमीमांसासांख्ययोगागमतन्त्राणामर्थज्ञानासक्तं ब्रह्मविदं च करोतीत्यर्थः । यद्वा ज्ञायते परमेश्वरोऽनेनेति ज्ञानमीश्वरमहत्त्वप्रतिपादकं

शास्त्रं तत्र सङ्गस्तत्प्रतिपाद्यमानपरमेश्वरगुणकथाश्रवणभजनकीर्तनादिष्वासक्तिस्तेन बध्नाति ब्रह्मनिष्ठायाः प्रच्याव्य तत्प्रवणं करोतीत्यर्थः ॥ ६ ॥

श्री० टी०—तत्र सत्त्वस्य लक्षणं बन्धकत्वप्रकारं चाह—तत्रेति । तत्र तेषां गुणानां मध्ये सत्त्वं निर्मलत्वात्स्वच्छत्वात् स्फटिकवत् प्रकाशकं भास्वरम् अनामयं च निरुपद्रवं शान्तमित्यर्थः । अतः शान्तत्वात्स्वकार्येण सुखेन यः सङ्गस्तेन बध्नाति । प्रकाशकत्वाच्च स्वकार्येण ज्ञानेन यः सङ्गस्तेन च बध्नाति हे अनघ निष्पाप ! अहं सुखी ज्ञानी चेति मनोधर्मास्तदभिमानिनि क्षेत्रज्ञे संयोजयतीत्यर्थः ॥ ६ ॥

स० टी०—को गुणः केन सङ्गेन बध्नातीत्युच्यतेऽधुना ॥ गुणेषु तेषु मध्ये यत्सत्त्वं स्वच्छतयाऽमलम् ॥ १ ॥ चिच्छायाग्रहयोग्यत्वात्तिरोधायकमावृतेः ॥ चितोऽभिव्यञ्जकं दुःखविरोधित्वात्सुखस्य च ॥ २॥ सुखज्ञाने मनोवृत्ती क्षेत्रधर्मतयेरिते ॥ तयोरात्मनि निःसङ्गेऽध्यासः सङ्ग इतीरितः ॥ ३॥ सुख्यहं ज्ञान्यहं चेति दृश्यधर्मोऽप्यविद्यया ॥ चिद्द्रष्टरि यतोऽध्यस्तो भाति भ्रान्त्या न वस्तुतः ॥ ४ ॥ ६ ॥

भा० टी०—किंलक्षणो गुणः केन सङ्गेन बध्नातीत्यपेक्षायामाह—तत्रेति । तेषु सत्त्वादिगुणेषु सत्त्वं निर्मलत्वात्स्फटिकवत्स्वच्छत्वात् प्रकाशकं चैतन्याभिव्यञ्जकमनामयं निरुपद्रवम् । एतादृशं सत्त्वं सुख्यहमितिविषयभूतस्य सुखस्य विषयिणि प्रत्यगात्मनि मृषैव संश्लेषापादनेन सुखसङ्गेन बध्नाति । अविद्ययैव ह्यन्यधर्मोऽन्यस्मिन्नारोप्यते इच्छादिकं धृत्यन्तं क्षेत्रस्य धर्म इत्युक्तं भगवतातोऽविद्ययैव स्वकीयधर्मभूतया विषयविषय्यविवेकलक्षणयाऽस्वात्मभूते सुखे सञ्जयतीवासङ्गं सक्तमिव करोति असुखिनं सुखिनमिव । तथाच यथोक्ताविद्यामाहात्म्यमिदं यदस्वरूपेऽतद्धर्मे च सक्तिसंपादनम् । प्रकारान्तरेण सत्त्वस्य निबन्धनहेतुत्वमाह—ज्ञानसङ्गेन चेति । ज्ञायतेऽनेनेति सत्त्वपरिणामो ज्ञानं तेन ज्ञान्यहमिति विपरीताभिमानेन सत्त्वमात्मानं निबध्नाति । ज्ञानमिति सुखसाहचर्यात् क्षेत्रस्यैवान्तःकरणस्य धर्मो नात्मनः । आत्मधर्मत्वे सङ्गानुपपत्तेर्बन्धामुपपत्तेश्च । सुख इव ज्ञानादौ सङ्गो मन्तव्यो हेऽनघाघशून्याव्यसन । अनघेति संबोधयन् सुखादिव्यसनाभावसंपत्त्या सत्त्वप्रयुक्तं बन्धनं नार्हसीति सूचयति, पापादिदोषहीनस्यैवात्र शास्त्रेऽधिकार इति द्योतयतीत्येके ॥ ६ ॥

प० टी०—अथ सत्त्वस्य लक्षणं बन्धकत्वं प्रकाशकत्वं चाह—तत्रेति । तत्र तेषां गुणानां मध्ये सत्त्वं स्फटिकशिलावन्निर्मलत्वात्प्रकाशकम् । अनामयं शान्तोपद्रवम् । अत एव स्वकार्येण सुखेन यः संगस्तेन प्रकाशकत्वाज् ज्ञानसङ्गस्तेन च देहिनं बध्नाति अहं सुखी ज्ञानी चेत्यभिमानिनं करोति ॥ ६ ॥

रा० टी०—श्रीभूदुर्गाभिः क्रियमाणं देवादित्रितयविषयबन्धप्रकारं विविच्याह—तत्रेत्यादित्रयेण । तत्र तेषु गुणेषु तासु देवीषु च सत्त्वं सत्त्वाभिमानिश्रीतत्त्वं निर्मलत्वात्, अनामयं न विद्यते आमयो व्याध्याद्युपद्रवो यस्मात्तत् तच्च प्रकाशकं तत्त्वज्ञानोत्पादकं सत् सुखसङ्गेन तत्त्वज्ञानसङ्गेन च देवान्बध्नाति ॥६॥

**रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् ॥**
**तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ॥ ७ ॥**

त० टी०—रजसो लक्षणं बन्धकत्वं चाह—रज इति । रागात्मकं रागो विषयेषु स्पृहा तदात्मकं चित्तस्य विषयाकारतापादकं विद्धि । तृष्णासङ्गसमुद्भवम् । तृष्णा प्राप्तेऽर्थेऽधिकाभिलाषः, सङ्गः प्राप्तेऽर्थे प्रीत्यतिशयेन तत्संश्लेषः, तयोः समुद्भवो यस्मात्तद्रजः हे कौन्तेय कर्मसङ्गेन कर्मसु दृष्टादृष्टार्थफलेषु अभिलाषविशेषेण तत्परता सङ्गस्तेन देहिनं बध्नाति ॥ ७ ॥

म० टी०—रज इति । रज्यते विषयेषु पुरुषोऽनेनेति रागः कामो गर्द्धः स एवात्मा स्वरूपं यस्य धर्म-

धर्मिणोस्तादात्म्यात् तद्रागात्मकं रजो विद्धि । अत एव अप्राप्ताभिलाषस्तृष्णा, प्राप्तस्योपस्थितेऽपि विनाशे संरक्षणाभिलाष आसङ्गस्तयोस्तृष्णासङ्गयोः संभवो यस्मात् तद्रजो निबध्नाति हे कौन्तेय कर्मसङ्गेन कर्मसु दृष्टादृष्टार्थेषु अहमिदं करोम्येतत् फलं भोक्ष्य इत्यभिनिवेशविशेषेण देहिनं वस्तुतोऽकर्तारमेव कर्तृत्वाभिमानिनं रजसः प्रवृत्तिहेतुत्वात् ॥ ७ ॥

**शं० टी०**—एवं निर्मलत्वं प्रकाशकत्वमविक्षिप्तत्वं च सत्त्वस्य स्वरूपं सुखसंयोजनं ज्ञानसयोजनं च तत्कार्यमपि निरूप्य रजसः स्वरूपं कार्यं चाह—**रज इति** । यत्सत्त्वं रज इत्युपक्रान्तं तद्रजो रजोगुणो रागात्मकं स्रगादिविषयेषु रज्यते पुमाननेनेति रागो रक्तिः स एवात्मा स्वरूपं यस्य तद्रागात्मकं रागस्वरूपकं रागैकवेद्यं च तृष्णासङ्गसमुद्भवं च । अप्राप्तेष्वर्थेष्वाशा तृष्णा, प्राप्तेषु ग्रहणेच्छा सङ्गस्तयोः समुद्भव उत्पत्तिर्यस्मात्तत्तृष्णासङ्गसमुद्भवं देशकालाभ्यां व्यवहिताव्यवहितार्थस्पृहाजनकं च रजो विद्धि रजोगुणं विजानीहीत्यर्थः । एवंलक्षणो रजोगुणो देहिनमात्मानमात्मविदमिति यावत् कर्मसङ्गेन कर्माण्यैहिकामुष्मिकार्थैकप्रयोजनानि लौकिकानि वैदिकानि च तेषु सङ्गः सक्तत्वं तत्परत्वं तेन बध्नाति स्वस्वरूपानुभूतेः प्रतार्य ब्रह्मविदमपि कर्मठं करोतीत्यर्थः ॥ ७ ॥

**श्री० टी०**—रजसो लक्षणं बन्धकत्वं चाह—**रजो रागेति** । रजःसंज्ञकं गुणं रागात्मकमनुरञ्जनरूपं विद्धि । अत एव तृष्णासङ्गसमुद्भवम्—तृष्णाऽप्राप्तेऽर्थेऽभिलाषः सङ्गः प्राप्तेऽर्थे प्रीतिः विशेषेणासक्तिस्तयोस्तृष्णासङ्गयोः समुद्भवो यस्मात्तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्मसु सङ्गेनासक्तया नितरां बध्नाति । तृष्णासङ्गाभ्यां हि कर्मस्वासक्तिर्भवति ॥ ७ ॥

**स० टी०**—भोगेषु रज्यतेऽनेनेति रागः कामसंज्ञकः ॥ स आत्मा यस्य रजसस्तादात्म्याद्धर्मधर्मिणोः ॥ १ ॥ तृष्णा प्राप्ताभिलाषा स्यात्प्राप्तस्योपस्थिते क्षये ॥ संरक्षणाभिलाषो यः स आसङ्गस्तयोर्जनिः ॥ २ ॥ यस्मात्तद्धि रजोऽप्येनं कर्मसङ्गेन देहिनम् ॥ करोम्यहमिदं कर्म तत्फलं भोक्ष्य इत्ययम् ॥ ३ ॥ आग्रहः कर्मसङ्गः स्यात्तेन बध्नात्यसङ्गिनम् ॥ वस्तुतस्तमकर्तारं कर्तृत्वाभिनिवेशतः ॥ ४ ॥ रजः प्रवृत्तिहेतुत्वात्स्ववशे स्थापयत्यमुम् ॥ ५ ॥ ७ ॥

**भा० टी०**—रजः किंलक्षणं कथं वा देहिनं बध्नातीत्यपेक्षायां तस्य लक्षणं बन्धकत्वं चाह—**रज इति** । रजः रागात्मकं रज्यते संसज्यतेऽनेन पुरुषो दृश्यैरिति रागो दृष्टादृष्टसुखतत्साधनविषयकः कामः गर्धः स एवात्मा यस्य तद्रागात्मकं विद्धि जानीहि । अप्राप्ताभिलाषस्तृष्णा प्राप्तविषये मनसः प्रीतिलक्षणः संश्लेषः आसङ्गः, समुद्भवत्यस्मादिति समुद्भवः तृष्णासङ्गयोः समुद्भवं निदानमेतादृशं तद्रजः । कर्मसङ्गेन दृष्टादृष्टार्थेषु कर्मसु सज्जनं तत्परता कर्मसङ्गस्तेन देहिनं निबध्नाति—अकर्तारमेव करोमीत्यभिमानेन प्रवर्तयतीत्यर्थः । बद्ध्वा च जननीजठरवासादिरूपां संसृतिं विस्तारयतीति ध्वनयन्नाह—हे कौन्तेयेति ॥ ७ ॥

**प० टी०**—रजःस्वभावमाह—**रज इति** । रजो रागात्मकं रञ्जनरूपं विद्धि जानीहि । किंभूतं तृष्णासङ्गसमुद्भवमप्राप्ताभिलाषस्तृष्णा प्राप्तप्रीतिः सङ्गस्तयोस्तृष्णासङ्गयोः समुद्भवो यस्मात्तद्रजो देहिनं दृष्टादृष्टार्थेषु कर्मसु सङ्गेनासक्त्या नितरां बध्नाति ॥ ७ ॥

**रा० टी०**—**रज इति** । तृष्णानामेदं मे भूयादित्याशा, सङ्गोवस्तुष्वासक्तिः । तयोः समुद्भवो यस्मात्तत् । रजोभिमानिनी भूदेवी भूतत्त्वं च रागात्मकं सृष्ट्यादिरञ्जनस्वरूपं विद्धि । तद्विविधं रजः कर्मयोगेन देहिनं मानुषं जीवं बध्नाति ॥ ७ ॥

**तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम् ॥**
**प्रमादालस्यनिद्राभिस्तन्निबध्नाति भारत ॥ ८ ॥**

**त० टी०**—तमसो लक्षणमाह—**तमस्त्विति**। तमस्तु अज्ञानजं—ज्ञानं वस्तुयाथात्म्यबोधस्ततोऽन्यदज्ञानं वस्तुस्वरूपान्यथाज्ञानं तद्रूपायाः प्रकृतेर्जातं विद्धि। मोहनं सर्वदेहिनां मोहोऽन्तःकरणविभ्रमः; अनित्यदुःखादिषु नित्यसुखादिबुद्धिः, तत्तमः प्रमादालस्यनिद्राभिर्देहिनं निबध्नाति। तत्र प्रमादः कर्तव्यस्य कार्यस्यानवधानता, आलस्यमुपस्थितेऽपि कार्ये उद्यमराहित्यम्, अत्यायासादिहेतुना सर्वेन्द्रियवृत्तिप्रवृत्त्युपरतिर्निद्रा, ताभिर्जाड्यतापादनेन निबध्नातीत्यर्थः॥ ८॥

**म० टी०**—**तमस्त्विति**। तुशब्दः सत्त्वरजोपेक्षया विशेषद्योतनार्थः। अज्ञानादावरणशक्तिरूपादुद्भूतमज्ञानजं तमो विद्धि अतः सर्वेषां देहिनां मोहनमविवेकरूपत्वेन भ्रान्तिजनकं प्रमादेनालस्येन निद्रया च तत्तमो निबध्नाति, देहिनमित्यनुषज्यते हे भारत। प्रमादो वस्तुविवेकासामर्थ्यं सत्त्वकार्यप्रकाशविरोधि, आलस्यं प्रवृत्त्यसामर्थ्यं रजःकार्यप्रवृत्तिविरोधि, उभयविरोधिनी तमोगुणालम्बना वृत्तिर्निद्रेति विवेकः॥ ८॥

**शं० टी०**—तमसोऽपि स्वरूपं कार्यं च प्रतिपादयति—**तम इति**। रजःसत्त्वाभ्यां दोषाधिकेन बन्धकत्वेन विशिष्टत्वात्तमसस्तदुत्कृष्टत्वबोधनार्थस्तुशब्दः। तमस्त्वज्ञानजं यत्र ज्ञानं सत्तां न लभते तदज्ञानं नतु ज्ञानाभावः, अभावस्य कार्यकारित्वासंभवात्। तस्माज्जातमज्ञानजम्। यद्यपि गुणाः प्रकृतिसंभवा इति त्रयाणां गुणानां प्रकृतिजन्यत्वस्य तुल्यत्वं, तथापि तमस्त्वज्ञानस्वभावाव्यभिचारादज्ञानजत्वविशेषणविशिष्टं, तत एव सर्वदेहिनां सर्वेषां ब्रह्मादिस्तम्बान्तानां प्राणिनां स्वोपसृष्टानामविशेषेण मोहनं मोहयति स्वाविर्भूत्या विद्यमानमेव सदसद्विवेकज्ञानं तिरोभावयतीति मोहनं, तमस्त्वज्ञानजं मोहकं स्वरूपतः ज्ञानावरकं च विद्धीत्यर्थः। तमसः संभवं स्वरूपं चोक्त्वा कार्यमाह—**प्रमादेति**। अज्ञानं जडं तदुत्पन्नत्वादेव विवेकविज्ञानावरकं तमः स्वयं प्रमादालस्यनिद्राभिः प्रयत्नेन कर्तव्ये कार्ये विस्मृतिः प्रमादः, कर्तव्येऽपि च कार्ये श्रद्धावैधुर्येणोत्साहाभाव आलस्यं, बुद्धिजाड्याधिक्येन कर्तव्यं परित्यज्य स्वापो निद्रा। निरुक्तैरनर्थैः प्रमादादिभिर्देहिनमात्मानमात्मज्ञमित्येतन्निबध्नाति नितरां स्वगुणेन मोहयित्वा, ब्रह्मविदमपि स्वनिष्ठाविमुखं करोतीत्यर्थः। बुद्धेर्नैर्मल्येन विषयसुखासक्त्या च सत्त्वाविर्भावं ज्ञात्वा विषयेषु रागाविर्भूत्या कर्मासक्त्या च रजआविर्भावं ज्ञात्वा, बुद्धिजाड्येन विपरीतप्रत्ययाविर्भूत्या प्रमादनिद्रालस्यादिभिश्च तमआविर्भावं च ज्ञात्वा, ब्रह्मविद्यतिः स्वयं सत्त्वादिगुणविकाराणामवशो भूत्वा तत्तद्विकारप्रतियोगिगुणावलम्बनेन गुणदोषान् पराभाव्य, सदात्मानुभूतावेव तिष्ठेदिति सूचितं भवति॥ ८॥

**श्री०टी०**—तमसो लक्षणं बन्धकत्वं चाह—**तम इति**। तमस्तु अज्ञानाज्जातम् आवरणशक्तिप्रधानात्प्रकृत्यंशादुद्भूतं विद्धीत्यर्थः। अतः सर्वेषां देहिनां मोहनं भ्रान्तिजनकम्। अत एव प्रमादेनालस्येन निद्रया च तत्तमो देहिनं निबध्नाति। तत्र प्रमादोऽनवधानम्, आलस्यमनुद्यमः, निद्रा चित्तस्यावसादाल्लयः॥ ८॥

**स० टी०**—तमः सत्वरजोभिन्नमज्ञानादावृतेः पदात्॥ उद्भूतं विद्धयतः सर्वभूतानां भ्रान्तिकारणम्॥ १॥ अविवेकतयाऽनर्थजालैर्बध्नाति देहिनम्॥ सत्त्वकार्यप्रकाशस्य विरोधी तत्त्ववस्तुनः॥ २॥ विवेकासामर्थ्यरूपः प्रमादोऽनवधानता॥ रजःकार्यप्रवृत्तेस्तु विरोध्यालस्यमुच्यते॥ ३॥ तमोगुणाश्रया वृत्तिर्निद्रोभयविरोधिनी॥ त्रिभिर्भावैस्तमोऽप्येनं स्ववशे स्थापयत्यदः॥ ४॥ ८॥

**भा० टी०**—तमस्तर्हि किंलक्षणं कथं वा पुरुषं निबध्नातीत्यपेक्षायां तस्य लक्षणं बन्धकत्वं चाह—**तमस्त्विति**। तुशब्दो विशेषद्योतनार्थः। अज्ञानाज्जातमज्ञानजं, यद्यपि त्रयाणामज्ञानजत्वं समानं तथापि तमसोऽज्ञानजत्वं विशेषणं तद्विपरीतस्वभावाऽनापत्तेः। विद्धि विजानीहि। सर्वदेहिनां सर्वेषां देहवतां मोहनं हिताहितादिविवेकप्रतिबन्धकम् कार्यान्तरासक्ततया चिकीर्षितस्य कर्तव्यस्याकरणं प्रमादः। यत्तु प्रमादो वस्तुविवेकासामर्थ्यमिति तदुपेक्ष्यं, उक्तार्थस्य मोहनमित्यस्मिन्नन्तर्भावसंभवात्। निरीहतयोत्साहप्रतिबन्धकं

त्वालस्यं, स्वापो निद्रा, प्रमादालस्यनिद्राभिस्तत्तमो निबध्नाति निर्विकारमेवात्मानं विकारयतीत्यर्थः । त्वं तु भरतवंशोद्भवत्वात् तमःकर्तृकबन्धनायोग्योऽसीति सूचयन्संबोधयति—भारतेति ॥ ८ ॥

प० टी०—तमोलक्षणमाह—तम इति । तमोऽज्ञानाज्जातमावरकस्य शक्तिप्रधानात्प्रकृत्यंशाज्जातं विद्धयतः सर्वेषां देहिनां मोहनं मोहजनकम् । अत एव प्रमादालस्यनिद्राभिर्बध्नाति । तत्र प्रमादोऽनवधानता, आलस्यमनुद्यमः, निद्रा चित्तस्यावसादो लयस्तैः ॥ ८ ॥

रा० टी०—तम इति । अज्ञानं जायते यतस्तदज्ञानजं तमस्तमोभिमानिनी दुर्गा तत्त्वं च सर्वदेहिनां मोहनं मिथ्याज्ञानजनकं विद्धि । तद्विरूपं तमः प्रमादादिभिर्दैत्यजनं निबध्नाति ॥ ८ ॥

**सत्त्वं सुखे सञ्जयति रजः कर्मणि भारत ॥**
**ज्ञानमावृत्य तु तमः प्रमादे सञ्जयत्युत ॥ ९ ॥**

**त० टी०—पुनर्गुणानां स्वस्वकार्यकरणे सामर्थ्यं संक्षेपत आह—सत्त्वमिति । सत्त्वं सुखे सञ्जयति दुःखादिहेतौर्विद्यमानत्वेऽपि अन्तःकरणस्य सुखाकारवृत्तौ देहिनं संयोजयति । एवं रजोगुणः सुखोपशान्त्यादिहेतौ सत्यपि कर्मण्येव सञ्जयति प्रवर्तयति । हे भारत तमस्तु गुरूपदेशेनोत्पद्यमानमपि ज्ञानमावृत्याच्छाद्य उपदिश्यमानस्य श्रेयसोऽनवधाने सङ्गं जनयति ॥ ९ ॥**

म० टी०—उक्तानां मध्ये कस्मिन्कार्ये कस्य गुणस्योत्कर्ष इति तत्राह—सत्त्वमिति । सत्त्वमुत्कृष्टं सत् सुखे सञ्जयति दुःखकारणमभिभूय सुखे संश्लेषयति । सर्वत्र देहिनमित्यनुषज्यते । एवं रज उत्कृष्टं सत् सुखकारणमभिभूय कर्माणि सञ्जयतीत्यनुषज्यते । तमस्तु प्रमाणबलेनोत्पद्यमानमपि सत्त्वकार्यं ज्ञानमावृत्य आच्छाद्य प्रमादे प्राप्तज्ञायमानताकस्याप्यज्ञाने सञ्जयति, उत अपि प्राप्तकर्तव्यताकस्याप्यकरणे आलस्ये तामस्यां च निद्रायां सञ्जयतीत्यर्थः ॥ ९ ॥

शं० टी०—ज्ञाननिष्ठापरिपन्थीभूतगुणकार्यनिरूपणं कुर्वता स्वेन उक्तमेव गुणकार्यं परिजिहीर्षोर्ब्रह्मविद्यतेस्तज्ज्ञानदार्ढ्याय पुनरप्याह—सत्त्वमिति । पुरुषं सत्त्वं सत्त्वगुणः सुखे वैषयिके संञ्जयति सक्तं करोति । रजः कर्मणि वैदिके चान्यत्र च सञ्जयति लगयति । तमस्तु ज्ञानं स्वरूपज्ञानमावृत्य प्रमादे नियमेन कर्तव्यज्ञाननिष्ठाविस्मरणे सञ्जयति । उतापीत्यर्थः । आलस्यादावपि सञ्जयतीत्यर्थः ॥ ९ ॥

श्री० टी०—सत्त्वादीनामेवं स्वस्वकार्यकरणे सामर्थ्यातिशयमाह—सत्त्वमिति । सत्त्वं सुखे संजयति श्लेषयति दुःखशोकादिकारणे सत्यपि सुखाभिमुखमेव देहिनं करोतीत्यर्थः । एवं सुखादिकारणे सत्यपि रजः कर्मण्येव संजयति । तमस्तु महत्सङ्गेनोत्पद्यमानमपि ज्ञानमावृत्याच्छाद्य प्रमादे संजयति महद्भिरुपदिश्यमानस्यार्थस्यानवधाने योजयति, उत अपि आलस्यादावपि संयोजयतीत्यर्थः ॥ ९ ॥

स० टी०—कस्मिन्कार्ये च कस्यास्ति गुणस्योत्कर्ष उच्यते ॥ उत्कृष्टं सत्त्वमात्मानं सुखे संश्लेषयत्यदः ॥ १ ॥ दुःखहेतुं तिरस्कृत्य सुखाभिव्यञ्जकं च सत् ॥ एवं रजः सदुत्कृष्टं विक्षेपकतया जनम् ॥ २ ॥ सुखहेतुं तिरस्कृत्य संश्लेषयति कर्मणि ॥ जायमानमपि ज्ञानं सत्त्वकार्यं प्रमाणतः ॥ ३ ॥ आच्छाद्याज्ञानसंबद्धे प्रमादे निक्षिपेत्तमः ॥ प्राप्तकर्तव्यताकस्याप्यालस्ये तद्विपर्यये ॥ ४ ॥ तामस्यां चैव निद्रायां देहिनं संजयत्यपि ॥ ५ ॥ ९ ॥

भा० टी०—पुनः संक्षेपेण गुणानां व्यापारमाह—सत्त्वमिति । सत्त्वं सुखे सञ्जयति संश्लेषयति, रजः कर्मणि सञ्जयतीत्यनुवर्तते, रजसा कर्मासक्तस्य भरतस्य वंशे समुद्भूतस्त्वं स्वकर्मण्यासक्तो न भवसीत्यतिचित्रमिति ध्वनयन्नाह—हे भारतेति । तमस्तु स्वेनावरणात्मनाज्ञानं सत्त्वकृतं विवेकमाच्छाद्य प्रमादे

प्राप्तकर्तव्यताऽकरणे सञ्जयति । अप्यर्थादुतशब्दादालस्यादिकं गृह्यते । प्राप्तज्ञायमानताकस्याप्यज्ञानं प्रमाद इति तु ज्ञानमावृत्येत्यस्मिन्नन्तर्भावमभिप्रेत्याचार्यैर्न व्याख्यातम् । तथाच सुखे साध्ये सत्त्वस्य, कर्मणि साध्ये रजसः, प्रमादादौ तमस उत्कर्ष इति भावः ॥ ९ ॥

प० टी०—अथ सत्त्वादीनामेव स्वस्वकार्यकरणे सामर्थ्यातिशयमाह—सत्त्वमिति । दुःखशोकादिकारणे सत्यपि सत्त्वं सुखे सञ्जयति संश्लेषयति देहिनं सुखाभिमुखमेव करोति । तथैव दुःखादिकारणे सत्यपि रजः कर्मण्येव सञ्जयति । तमस्तु तत्सङ्गेऽपि(?)ज्ञानमावृत्य प्रमादे सञ्जयत्यनवधानं करोति ॥ ९ ॥

रा० टी०—सत्त्वादीनां सुखादिसंपादनेनैव बन्धकत्वमिति नियमं द्रढयति—सत्त्वमिति । सत्त्वं सत्त्वाभिमानिनी श्रीश्च सुखे सुखविषये सञ्जयति प्रवर्तयतीत्यर्थः । रजः रजोभिमानिनी भूदेवी च कर्मविषये सञ्जयति । तमस्तु तमोभिमानिनी दुर्गा च ज्ञानमावृत्य मनसस्तत्त्वज्ञानशक्तिं प्रतिबध्य प्रमादे अधर्मे अधर्मबुद्ध्यादिरूपे सञ्जयति । उतशब्दादालस्यादिग्रहः ॥ ९ ॥

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ॥**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥ १० ॥**

**त० टी०—ननु त्रयाणां गुणानां सर्वत्र साहचर्यात् कार्यविभागः कथमिति चेत्तत्राह—रजस्तमश्चेति । यद्यपि सत्त्वादयस्त्रयो गुणाः प्रकृतिसंसृष्टात्मनः स्वरूपानुबन्धिनः, तथाऽपि गुणवृद्धिहेतुभूतत्रिविधागमादिदशपदार्थानां प्राचीनकर्मवशाद्यथायथोपजोषणात्सत्त्वादयः परस्परमुद्भवाभिभवरूपेण वर्तन्ते, अन्नादिना पुरुषस्यान्तःकरणं परिणमते "अन्नमयं हि सौम्य मनः आपोमयी वाग्" इति श्रुत्या तथाविधानात् 'आगमोऽपः प्रजा देशः कालः कर्म च जन्म च । ध्यानं मन्त्रोऽथ संस्कारो दशैते गुणहेतवः' इति भागवतोक्तेः । तथा च रजस्तमसी कदाचिदभिभूय सत्त्वमुद्भवति, तथा तमःसत्त्वेऽभिभूय रज उद्रिच्यते, कदाचिद्रजःसत्त्वेऽभिभूय तम उद्रिक्तं भवति ॥ १० ॥**

म० टी०—उक्तं कार्यं कदा कुर्वन्ति गुणा इत्युच्यते—रजस्तम इति । रजस्तमश्च युगपदुभावपि गुणावभिभूय सत्त्वं भवत्युद्भवति वर्धते यदा तदा स्वकार्यं प्रागुक्तमसाधारण्येन करोतीति शेषः । एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति यदा तदा स्वकार्यं प्रागुक्तं करोति । तथा तद्वदेव तमोऽपि सत्त्वं रजश्चेत्युभावपि गुणावभिभूय उद्भवति यदा तदा स्वकार्यं प्रागुक्तं करोतीत्यर्थः ॥ १० ॥

शं० टी०—ननु वेणीकरणे केशभागानामिव त्रयाणामपि गुणानां साम्येन प्रवृत्तौ सत्यां समष्ट्या स्वकार्यारम्भकत्वं विना कथं तेषां प्रत्येकं कार्यारम्भः संभवतीत्याकाङ्क्षायां प्राणिकर्मफलानुरूपेण गुणानां ह्रासो वृद्धिश्च भवति नतु साम्येन प्रवृत्तिस्तथात्वे कर्मतत्फलवैचित्र्यासंभवात्ततोऽमीषां गुणप्रधानभावेन प्रवृत्तिरिति बोधयितुमाह—रज इति । प्राण्यदृष्टेन सुखे साध्ये सति रजः रजोगुणं तमः तमोगुणं चाभिभूय ह्रस्वीकृत्य सत्त्वं स्वयमुत्कृष्टं भवति—गुणद्वयमङ्गीकृत्य स्वयमङ्गीभूय स्वकार्यं करोतीत्यर्थः । कर्मणि साध्ये सति सत्त्वं तमश्चाभिभूयैव रजोगुण उत्कृष्टो भवति—गुणद्वयमङ्गीकृत्य स्वयमङ्गीभूय स्वकार्यं करोतीत्यर्थः । तथा ज्ञानावरणे साध्ये सति रजः सत्त्वं चाभिभूय तमः स्वयमुत्कृष्टं भवति—तद्द्वयमङ्गीकृत्य स्वयमङ्गीभूय स्वकार्यं करोतीत्यर्थः ॥ १० ॥

श्री० टी०—तत्र हेतुमाह—रज इति । रजस्तमश्चेति गुणद्वयमभिभूय तिरस्कृत्य सत्त्वं भवत्यदृष्टवशादुद्भवति । ततः स्वकार्ये सुखे ज्ञानादौ संयोजयतीत्यर्थः । एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति । ततः स्वकार्ये तृष्णाकर्मादौ संयोजयति । एवं तमोऽपि सत्त्वं रजश्चाभिभूयोद्भवति । ततश्च स्वकार्ये प्रमादालस्यादौ संयोजयतीत्यर्थः ॥ १० ॥

स० टी०—उक्तं कार्यं कदा ह्येते कुर्वन्तीत्युच्यतेऽधुना ॥ रजस्तमश्च युगपदभिभूय गुणौ यदा ॥ १ ॥ सत्त्वं विवर्धते तर्हि स्वीयं कार्यं करोति तत् ॥ सत्त्वं तमोऽभिभूयैवं रजः स्वीयं करोति तत् ॥ २ ॥ सत्त्वं रजस्तिरस्कृत्य करोत्येवं स्वकं तमः ॥ ३ ॥ १० ॥

भा० टी०—इतराविरोधेन सत्त्वादयो गुणा युगपदुत्कृष्यन्ते विरोधेन वा क्रमेण वेत्यपेक्षायां सत्त्वोत्कर्षार्थिनामितराभिभवार्थं क्रमपक्षमाश्रित्याह—रज इति । रजस्तमश्चोभावप्यभिभूय तिरोधाय सत्त्वं भवत्युद्भवति वर्धते यदा, तदा रजस्तमसोस्तिरोधानदशायां लब्धात्मकं सत्त्वं स्वं कार्यं ज्ञानसुखाद्यारभत इति शेषः । भारतेति संबोधयन् भायां ब्रह्मविद्यायां रतेन रजस्तमसोस्तिरोधायिका सत्त्ववृद्धिः संपाद्येति द्योतयति । तथा रजोगुणो यदा सत्त्वं तमश्चैवोभावभिभूय वर्धते तदा कर्म तृष्णादि स्वं कार्यमारभते । एवं तमआख्योऽपि गुणो यदा सत्त्वं रजश्चैवोभावभिभूय वर्धते तदा ज्ञानावरणप्रमादादि स्वं कार्यमारभत इत्यर्थः ॥ १० ॥

प० टी०—अथ द्वयोरुपरमे एकस्योत्कर्षमाह—रजस्तम इति । रजस्तमश्चाभिभूय पराभूय सत्त्वं भवत्यदृष्टवशादुद्भवत्यतः स्वकार्ये सुखादौ संजयतीत्यर्थः । एवं रजोऽपि सत्त्वं तमश्चेति गुणद्वयमभिभूयोद्भवति । अतः स्वकार्ये तृष्णासङ्गादौ संजयति । एवं तमोऽपि सत्त्वं रजश्चोभावपि गुणावभिभूयोद्भवति । अतः स्वकार्ये प्रमादालस्यादौ संजयतीत्यर्थः ॥ १० ॥

रा० टी०—ननु त्रयाणां सर्वबन्धकत्वसाम्यात्कथं कस्यचिदेव गुणस्य कार्यं दृश्यते ?—इत्यतः उत्कटत्वानुत्कटत्वाभ्यामितिभावेनाह—रज इति । ईश्वरेच्छया सत्त्वमुत्कटं सद्रजस्तमश्चाभिभूय स्वकार्यदक्षं भवति । रजस्तथोत्कटं सत् तमः सत्त्वंचाभिभूय स्वकार्यदक्षं भवति । तमश्चोत्कटं सत् रजः सत्त्वं चाभिभूय स्वकार्यकारि भवति इत्यर्थः । अभिभवशब्दितकार्यशक्तिप्रतिबन्धो गुणानामेव, देवानां त्वौदासीन्यमेवेति ज्ञातव्यम् ॥ १० ॥

**सर्वद्वारेषु देहेऽस्मिन्प्रकाश उपजायते ॥**
**ज्ञानं यदा तदा विद्याद्विवृद्धं सत्त्वमित्युत ॥ ११ ॥**

त० टी०—सत्त्वादीनां वृद्धिं तत्कार्यद्वारेण जानीयादित्याह—सर्वद्वारेष्विति । सर्वेषु ज्ञानोपलब्धिस्थानेषु श्रोत्रादीन्द्रियेषु प्रकाशः शब्दादिविषयस्य यथावद्ग्रहणं तदेव ज्ञानं यदा उपजायते तदा ज्ञानप्रकाशात्मकेन लिङ्गेन विवृद्धं सत्त्वमिति विद्यात्, उत सुखसङ्गेनापि सत्त्वं विवृद्धं विद्यादित्यर्थः ॥ ११ ॥

म० टी०—इदानीमुद्भूतानां तेषां लिङ्गान्याह—सर्वेतित्रिभिः । अस्मिन्नात्मनो भोगायतने देहे सर्वेष्वपि द्वारेषु उपलब्धिसाधनेषु श्रोत्रादिकरणेषु यदा प्रकाशो बुद्धिपरिणामविशेषो विषयाकारः स्वविषयावरणविरोधी दीपवत्, तदेव ज्ञानं शब्दादिविषय उपजायते, तदाऽनेन शब्दादिविषयज्ञानाख्यप्रकाशेन लिङ्गेन प्रकाशात्मकं सत्त्वं विवृद्धमुद्भूतमिति विद्यात् जानीयात् । उत अपि सुखादिलिङ्गेनापि जानीयादित्यर्थः ॥ ११ ॥

शं० टी०—ननु सत्त्वादिगुणानां ह्रासो वृद्धिश्च कथं केन लिङ्गेन ज्ञायते ज्ञाते खलु तदुत्कर्षे तदुपशमाय यतितुं शक्यते नाज्ञात इत्याकाङ्क्षायामाह—सर्वेति । यदा यस्मिन्काले सर्वद्वारेषु सर्वेष्वन्तःकरणप्रवृत्तिद्वारेषु त्वक्चक्षुःश्रोत्रजिह्वाघ्राणेष्वस्मिन् देहे च ज्ञानं ज्ञानप्रसादलक्षणः प्रकाशः स्फुरणमुपजायते विजृम्भते, तदा सत्त्वं सत्त्वगुणं विवृद्धं प्रवृद्धमुतापि रजस्तमसोर्ह्रासमपि विद्यात् अन्तःकरणप्रसादातिशयेन लिङ्गेन सत्त्वस्य वृद्धिं तदन्यह्रासं च जानीयादित्यर्थः ॥ ११ ॥

श्री० टी०—इदानीं सत्त्वादीना वृद्धानां लिङ्गान्याह त्रिभिः—**सर्वद्वारेष्विति** । अस्मिन् आत्मनो भोगायतने देहे सर्वेष्वपि द्वारेषु श्रोत्रादिषु यदा शब्दादिज्ञानात्मकः प्रकाश उपजायते उत्पद्यते, तदा अनेन प्रकाशलिंगेन सत्त्वं विवृद्धं विद्याज्जानीयात् । उतशब्दात्सुखादिलिङ्गेनापि जानीयादित्युक्तम् ॥ ११ ॥

स० टी०—लिङ्गान्याह प्रवृद्धानां गुणानां त्रिभिरीश्वरः ॥ अस्मिन्भोगालये देहे श्रोत्रादिकरणेष्वपि ॥ १ ॥ यदा प्रकाशो धीवृत्तिविशेषो वस्तुगोचरः ॥ स्वगोचरावृतेर्यस्तु विरोधी दीपवद्भवेत् ॥ २ ॥ ज्ञानं तदेव शब्दादिविषयं चोपजायते ॥ तदा ज्ञानप्रकाशेन लिङ्गेनैतत्प्रकाशकम् ॥ ३ ॥ उद्भूतं सत्त्वमित्येवं विद्यात्तद्वत्सुखादिना ॥ ४ ॥ ११ ॥

भा० टी०—यदा यो गुण उद्भूतो भवति तदा तस्य किं लिङ्गमित्याकाङ्क्षायामाह—**सर्वद्वारेष्विति** । सर्वाण्यात्मन उपलब्धिद्वाराणि श्रोत्रादीनि करणानि सर्वद्वाराणि; तेषु निमित्तभूतेषु अस्मिन्देहेऽन्तःकरणस्य बुद्धेर्वृत्तिः प्रकाशस्तदेव ज्ञानं यदैवं प्रकाशः शब्दादिविषयज्ञानाख्यः उपजायते, तदा ज्ञानप्रकाशलिङ्गेन सत्त्वं विवृद्धमुद्भूतं विद्यात् विजानीयात् । अप्यर्थक उतशब्दः सुखादिलिङ्गसमुच्चयार्थः ॥ ११ ॥

प० टी०—अथ सत्त्वादीनामुपलब्धिप्रकारमाह—**सर्वद्वारेष्विति** । अस्मिन्नात्मनो भोगायतने शरीरे सर्वद्वारेषु श्रोत्रादिषु शब्दादिप्रकाशे सति यदा ज्ञानं स्वरूपस्फुरणमुत्पद्यते तदा सत्त्वं विवृद्धं वृद्धिं प्राप्तमिति विद्यात् ॥ ११ ॥

रा० टी०—केन लिङ्गेन सत्त्वादिवृद्धिर्ज्ञेयेत्यत आह—**सर्वेत्यादित्रयेण** । अस्मिन्देहे सर्वद्वारेषु श्रोत्रादिषु ज्ञानं शब्दादिज्ञानात्मकः प्रकाशः । उत शब्दात्सुखादि चोपजायते यदा तदा सत्त्वं विवृद्धमिति विद्याज्जानीयात् ॥ ११ ॥

## लोभः प्रवृत्तिरारम्भः कर्मणामशमः स्पृहा ॥
## रजस्येतानि जायन्ते विवृद्धे भरतर्षभ ॥ १२ ॥

त० टी०—रजोगुणवृद्धेर्लिङ्गमाह—**लोभ इति** । लोभः धनागमे सत्यपि तदत्यागपूर्वकमधिकागमेऽभिलाषः, प्रवृत्तिः क्रियासामान्यचेष्टा, आरम्भः देहगेहादिकर्मणामुद्योगः, कर्मणामशमः इदं कृत्वा पुनरेतत् करिष्यामीति सदा कर्मानुपरतिः, स्पृहा सर्वसामान्यवस्तुविषया तृष्णा, रजसि विवृद्धे एतानि लिङ्गानि जायन्ते । हे भरतर्षभ लोभादिभी रजः प्रवृद्धं विद्यादित्यर्थः ॥ १२ ॥

म० टी०—महति धनागमे जायमानेऽप्यनुक्षणं वर्धमानस्तदभिलाषो लोभः स्वविषयप्राप्त्यनिवर्त्य इच्छाविशेष इति यावत् । प्रवृत्तिर्निरन्तरं प्रयतमानता । आरम्भः कर्मणां बहुवित्तव्ययायासकराणां काम्यनिषिद्धलौकिकमहागृहादिविषयाणां व्यापाराणामुद्यमः । अशमः इदं कृत्वेदं करिष्यामीति संकल्पप्रवाहानुपरमः । स्पृहा उच्चावचेषु परधनेषु दृष्टमात्रेषु येन केनाप्युपायेनोपादित्सा । रजसि रागात्मके विवृद्धे एतानि रागात्मकानि लिङ्गानि जायन्ते हे भरतर्षभ । एतैर्लिङ्गैर्विवृद्धं रजो जानीयादित्यर्थः ॥ १२ ॥

शं० टी०—रजोवृद्धेरेतानि लिंङ्गानि जायन्त इत्याह—**लोभ इति** । लोभो विद्यमानवस्तुत्यागासहिष्णुता, प्रवृत्तिः सामान्येन सर्वेन्द्रियचेष्टा, लौकिकानां वैदिकानां च कर्मणामारम्भ उपक्रमः, अशमः कामसंकल्पादिभिरन्तःकरणस्योपशमाभावः, स्पृहा विषयेषु वाञ्छा, रजसि रजोगुणे विवृद्धे सत्येतानि कार्याणि जायन्ते । एतैर्लिङ्गै रजोवृद्धिमन्यह्रासं च जानीयादित्यर्थः ॥ १२ ॥

श्री० टी०—किंच—**लोभ इति** । लोभो धनाद्यागमे बहुधा जायमानेऽपि पुनः पुनर्वर्धमानोऽभिलाषः । प्रवृत्तिर्नित्यं कुर्वद्रूपता । कर्मणामारम्भो गृहादिनिर्माणोद्यमः । अशम इदं कृत्वा इदं करिष्यामीत्यादि-

संकल्पविकल्पानुपरमः । स्पृहा उच्चावचेषु दृष्टमात्रेषु वस्तुष्वितस्ततो जिघृक्षा । रजसि प्रवृद्धे सति एतानि लिङ्गानि जायन्ते । एतैर्लिङ्गै रजोगुणस्य वृद्धिं विद्यादित्यर्थः ॥ १२ ॥

स० टी०—अनुक्षणं वर्धमानोऽभिलाषो लोभ उच्यते ॥ अतीवधनलाभेऽपि यो न शाम्यति कर्हिचित् ॥ १ ॥ नित्यं प्रयतमानत्वं प्रवृत्ती राजसी कला ॥ गृहादिविषयाणां च व्यापाराणां य उद्यमः ॥ २ ॥ बह्वायासकराणां स्यादारम्भः काम्यकर्मणाम् ॥ इदं कृत्वा करिष्यामीदमित्येवाशमः स्मृतः ॥ ३ ॥ उच्चावचेषु वित्तेषु परस्यापीक्षितेषु च ॥ येन केनाप्युपायेनोपादित्सा प्रोच्यते स्पृहा ॥ ४ ॥ रागात्मकानि लिङ्गानि प्रवृद्धे च रजोगुणे ॥ उक्तान्येतानि जायन्ते विद्याल्लिङ्गै रजो महत् ॥ ५ ॥ १२ ॥

भा० टी०—सत्त्वस्योद्भूतस्य चिह्नमुक्त्वा तथाभूतस्य रजसस्तदाह—लोभ इति । लोभः स्वकीयधनादिबाहुल्येऽपि परद्रव्यादिषु लुब्धता । प्रवृत्तिः प्रवर्तनं सामान्यचेष्टा । आरम्भः काम्यनिषिद्धलौकिकविषयाणां व्यापाराणामुद्यमः । अशमः हर्षरागादिप्रवृत्तेरनुपरमः । सर्वसामान्यवस्तुविषया तृष्णा स्पृहा । रजसि गुणे विवृद्धे एतानि लिङ्गानि जायन्ते । लोभाद्युपलम्भाद्रजोविवृद्धिं विद्यादिति भावः । भरतेष्वयः ऋषभः श्रेष्ठस्त्वं रजसश्चिह्नान्याश्रयितुमयोग्योऽसीति सूचयन्नाह—हे भरतर्षभेति ॥ १२ ॥

प० टी०—अथ रजोवृद्धेरुपलब्धिमाह—लोभ इति । बहुधा धनागमे जायमानेऽपि पुनः पुनर्वर्धमानोऽभिलाषो लोभः, प्रवृत्तिस्तु क्रियमाणेच्छा, कर्मणामारम्भश्च, अशम इदं कृत्वेदं करिष्यामीति संकल्पविकल्पानामनुपरमः, दृष्टमात्रेषूच्चावचेषु वस्तुषु जिघृक्षा स्पृहा । एतानि लिङ्गानि रजसि प्रवृद्धे सति संभवन्ति ॥ १२ ॥

रा० टी०—लोभ इति । लोभो धनादेरत्यागेच्छा, प्रवृत्तिर्व्यर्थोद्योगः, काम्यकर्मणामारम्भः, अशमः चित्तस्यानुपरतिः, अप्राप्ताभिलाषः स्पृहा, एतानि विवृद्धे रजसि जायन्ते। एतै रजोवृद्धिर्ज्ञेयेति भावः॥१२॥

**अप्रकाशोऽप्रवृत्तिश्च प्रमादो मोह एव च ॥**
**तमस्येतानि जायन्ते विवृद्धे कुरुनन्दन ॥ १३ ॥**

त० टी०—तमसो वृद्धेर्लिङ्गान्याह—अप्रकाश इति । अप्रकाशः ज्ञानानुदयः, अप्रवृत्तिः कर्तव्येऽप्यनुद्यमः, प्रमादः कर्तव्यार्थानवधानता, मोहो विपर्ययज्ञानम्—एतानि तमसि विवृद्धे जायन्ते । एतैस्तमः प्रवृद्धं विद्यादित्यर्थः ॥ १३ ॥

म० टी०—अप्रकाश इति । अप्रकाशः सत्यप्युपदेशादौ बोधकारणे सर्वथा बोधायोग्यत्वम् । अप्रवृत्तिश्च सत्यप्यग्निहोत्रं जुहुयादित्यादौ प्रवृत्तिकारणे जनितबोधेऽपि शास्त्रे सर्वथा तत्प्रवृत्त्ययोग्यत्वम् । प्रमादस्तत्कालकर्तव्यत्वेन प्राप्तस्यार्थस्यानुसंधानाभावः। मोह एव च मोहो निद्राविपर्ययो वा। चौ समुच्चये । एवकारो व्यभिचारवारणार्थः । तमस्येव विवृद्धे एतानि लिङ्गानि जायन्ते हे कुरुनन्दन । अत एतैर्लिङ्गैरव्यभिचारिभिर्विवृद्धं तमो जानीयादित्यर्थः ॥ १३ ॥

शं० टी०—तमोवृद्धेर्लिङ्गान्याह—अप्रकाश इति । अप्रकाशो बुद्धेः स्फूर्त्यभावः, अप्रवृत्तिरालस्यं, प्रमादः कर्तव्यानवधानता, मोहो मूढता, चकारान्निद्रापारवश्यं चैतान्येव तमः प्रवृद्धेर्लिङ्गानि—एतैस्तमोवृद्धिं तदन्यह्रासं च विजानीयादित्यर्थः ॥ १३ ॥

श्री० टी०—किं च—अप्रकाश इति । अप्रकाशो विवेकभ्रंशः। अप्रवृत्तिरनुद्यमः । प्रमादः कर्तव्यार्थानुसंधानराहित्यम् । मोहो मिथ्याभिनिवेशः। तमसि प्रवृद्धे एतानि लिङ्गानि चिह्नानि जायन्ते। एतैस्तमसो वृद्धिं जानीयादित्यर्थः ॥ १३ ॥

स० टी०—अप्रकाशो ह्ययोग्यत्वं बोधे सत्यपि बोधके ॥ सति शास्त्रे तथा बोधे प्रवृत्तेः कारणेऽपि

च ॥ १ ॥ प्रवृत्त्ययोग्यता धर्मेऽप्रवृत्तिस्तामसी कला ॥ कर्तव्यत्वेन प्राप्तस्याऽननुसंधानमेव च ॥ २ ॥ प्रमाद ईरितो मोहो निद्रा वा स्याद्विपर्ययः ॥ वृद्धे तमसि जायन्ते लिङ्गान्येतानि सर्वथा ॥ ३ ॥ एतैः लिङ्गैस्तमो वृद्धं विद्यादव्यभिचारिभिः ॥ ४ ॥ १३ ॥

भा० टी०—उद्भूतस्य तमसश्चिह्नमाह—अप्रकाश इति । अप्रकाशः कर्तव्याकर्तव्यविवेकाभावः । अप्रवृत्तिः पूर्वोक्तप्रवृत्त्यभावः । प्रमादो व्याख्यातः विवेककार्यम् । मोहो ज्ञातव्याविवेको मूढतेत्यर्थः । चः आलस्यादिसमुच्चयार्थः । एवकारो व्यभिचारवाणार्थः । तमस्येव विवृद्धे एतानि लिङ्गानि जायन्ते । एतान्येवेति वा । अप्रकाशातिशयादिना विवृद्धं तमो विजानीयादिति भावः । त्वं तूत्तमवंशोद्भवस्तमसश्चिह्नान्याश्रयितुं नार्हसीति द्योतयितुमाह—हे कुरुनन्दनेति ॥ १३ ॥

प० टी०—अथ तमोलिङ्गमाह—अप्रकाश इति । अप्रकाशो विवेकभ्रंशः, अप्रवृत्तिरनुद्यमः, प्रमादः कर्तव्यार्थानुसंधानराहित्यम्, मोहो मिथ्याभिनिवेशः—तमसि विवृद्ध एतानि लिङ्गानि जायन्ते ॥ १३ ॥

रा० टी०—अप्रकाश इति । अप्रकाशः श्रोत्रादिषु शब्दादिज्ञानाभावः, अप्रवृत्तिरनुद्यमः प्रमादोऽनवधानं, मोहो विपर्ययः—एतानि तमसि विवृद्धे जायन्ते । एतैर्लिङ्गैस्तमोविवृद्धिर्ज्ञेयेति भावः ॥ १३ ॥

**यदा सत्त्वे प्रवृद्धे तु प्रलयं याति देहभृत् ॥**
**तदोत्तमविदां लोकानमलान्प्रतिपद्यते ॥ १४ ॥**

**त० टी०—इदानीं देहिनः सत्त्वादिगुणवृद्धौ मरणे गुणानुरूपलोकविशेषप्राप्तिमाह—यदेति द्वाभ्याम् । यदा सत्त्वे प्रवृद्धे सति देहभृज्जीवः प्रलयं याति मृत्युं प्राप्नोति, तदा उत्तमा देवादिहिरण्यगर्भान्तास्तद्विदां तदुपासकानां लोकान्स्वर्गादिसत्यान्तान् तत्तदुचितभोगस्थानविशेषानमलान् रजस्तमोमलरहितान् प्रतिपद्यते प्राप्नोति ॥ १४ ॥**

म० टी०—इदानीं मरणसमये विवृद्धानां सत्त्वादीनां फलविशेषमाह—यदेति । सत्त्वे प्रवृद्धे सति यदा प्रलयं मृत्युं याति प्राप्नोति देहभृत् देहाभिमानी जीवः, तदोत्तमा ये हिरण्यगर्भादयस्तद्विदां तदुपासकानां लोकान् देवसुखोपभोगस्थानविशेषानमलान् रजस्तमोमलरहितान् प्रतिपद्यते प्राप्नोति ॥ १४ ॥

शं० टी०—गुणानुषङ्गानुरूपेणैव मृतानां पारलौकिकी गतिर्नतु वर्णाश्रमाद्यनुरूपेणेति गुणानामेव मृत्यनन्तरं गतिकारणत्वं बोधयति—यदेति । तुशब्दस्तमोरजसोर्व्यावृत्त्यर्थः । यदा यस्मिन् काले सत्त्वे तु सत्त्वगुणे प्रवृद्धे सति देहभृत्प्राणी प्रलयं याति म्रियते तदोत्तमविदां हिरण्यगर्भादय उत्तमास्तान् विदन्त्युपासत इत्युत्तमविदस्तेषां प्राप्यानमलान् मलं जन्मजरादिदुःखमेव तद्रहितान् लोकान् हिरण्यगर्भादिलोकान् प्रतिपद्यते प्राप्नोतीत्यर्थः । ननु "यत्कर्म कुरुते तदभिसंपद्यते" इति पुण्यापुण्यकर्मानुरूपेण परलोकगतिः श्रूयते, कथं गुणानुगुण्येन गतिरुच्यते श्रुतिविरुद्धेति चेत्सत्यम् । प्राणिनां स्वकर्मानुरूपेणैव शुभाशुभगतिर्न तु वर्णाश्रमाद्यनुरूपेण नापि पाण्डित्यानुरूपेण संभवति, तथाप्यसुभृतां मृतिकाले जन्मान्तरीयपुण्यापुण्यकर्मवशादेव सत्त्वादिगुणोत्कर्षः, तदनुरूपेणैव ब्रह्मादिलोकप्राप्तिः । ततो न श्रुतिविरोधो न स्मृतिविरोधश्चेति सिद्धम् ॥ १४ ॥

श्री० टी०—मरणसमय एव वृद्धानां सत्त्वादीनां फलविशेषमाह—यदेति द्वाभ्याम् । सत्त्वे प्रवृद्धे सति यदा जीवो मृत्युं प्राप्नोति, तदा उत्तमान् हिरण्यगर्भादीन् विदन्ति उपासत इत्युत्तमविदस्तेषां ये अमलाः प्रकाशमया लोकाः सुखोपभोगस्थानविशेषास्तान्प्रतिपद्यते प्राप्नोति ॥ १४ ॥

स० टी०—सत्त्वादीनां प्रवृद्धानां मृत्युकालेऽधुना फलम् ॥ आह द्वाभ्यां विशेषेण भगवान्परमा

गतिः ॥ १ ॥ वृद्धे सत्त्वगुणे जीवो मृत्युं प्राप्नोति चेत्तदा ॥ हिरण्यगर्भमुख्या ये उपास्यत्वेन चोत्तमाः ॥२॥ तदुपासकसल्लोकान्दिव्यभोगोपबृंहितान् ॥ रजस्तमोमलैर्हीनांस्तानाप्नोति तदाऽञ्जसा ॥ ३ ॥ १४ ॥

भा० टी०—मरणद्वारेणापि यत्पारलौकिकं फलं प्राप्यते तदपि सहेतुकं सर्वं सत्त्वादिगुणप्रयुक्तमेवेति दर्शयन्नाह—**यदेति द्वाभ्याम्** । तत्र सत्त्ववृद्धिकृतं फलविशेषमाह—यदा सत्त्वे विवृद्धे उद्भूते देहभृज्जीवः प्रलयं मरणं याति प्राप्नोति तदा उत्तमविदां महत्तत्त्वहिरण्यगर्भादितत्त्वविदां तदुपासकानां लोकानागमसिद्धान् ब्रह्मलोकादीनमलान् रजस्तमसोरन्यतरदुद्भूतं मलं तेन रहितान् प्रतिपद्यते प्राप्नोतीत्यर्थः ॥१४ ॥

प० टी०—अथ मरण समये विवृद्धानां सत्त्वादीनां फलविशेषमाह—**यदेति** । सत्त्वे प्रवृद्धे सति यदा जीवः प्रलयं मृत्युं प्राप्नोति तदोत्तमविदामुत्तमं मुख्यप्राणं हिरण्यगर्भं विदन्त्युपासते त उत्तमविदस्तेषां लोकान् सिद्धयाविर्भावसुखानि प्राप्नुयात् ॥ १४ ॥

रा० टी०—सत्त्वादिगुणवृद्ध्यवस्थायां मृतानां गतिभेदमाह—**यदेतिद्वयेन** । यदा सत्त्वे विवृद्धे देहभृत्प्रलयं याति म्रियते तदोत्तमविदां विष्णुज्ञानिनाम् अमलान्निर्दोषान्लोकान्देहान्प्रतिपद्यते, सात्त्विककुले जायत इत्यर्थः ॥ १४ ॥

## रजसि प्रलयं गत्वा कर्मसङ्गिषु जायते ॥
## तथा प्रलीनस्तमसि मूढयोनिषु जायते ॥ १५ ॥

त० टी०—**रजसीति** । रजसि प्रवृद्धे प्रलयं मृत्युं गत्वा प्राप्य कर्मसङ्गिषु फलाभिसंधियुक्तकर्मस्वासक्तेषु मनुष्येषु जायते । तथा तमसि प्रवृद्धे प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते ॥१५॥

म० टी०—**रजसीति** । सति प्रलयं मृत्युं गत्वा प्राप्य कर्मसङ्गिषु श्रुतिस्मृतिविहितप्रतिषिद्धकर्मफलाधिकारिषु मनुष्येषु जायते । तथा तद्वदेव तमसि प्रवृद्धे प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते॥१५॥

शं० टी०—रजसस्तमसश्च उत्कर्षे मृतस्य गतिमाह—**रजसीति** । रजसि रजोगुणे प्रवृद्धे सति देहभृत्प्रलयं गत्वा रजःप्रवृद्धिवेगेन पुनः कर्मसंगिषु कर्मयोगयुक्तेषु मनुष्येषु जायत इत्यर्थः । तथा तमसि तमोगुणे प्रवृद्धे सति प्रलीनो मृतः प्राणी तमःप्रवृद्धिवेगेन मूढयोनिषु पश्वादिषु जायत इत्यर्थः ॥१५॥

श्री० टी०—किं च—**रजसीति** । रजसि प्रवृद्धे सति मृत्युं प्राप्य कर्मासक्तेषु मनुष्येषु जायते । तथा तमसि प्रवृद्धे सति प्रलीनो मृतो मूढयोनिषु पश्वादिषु जायते ॥ १५ ॥

स० टी०—वृद्धे रजसि संप्राप्य मृत्युं कर्माधिकारिषु ॥ जायतेऽसौ मनुष्येषु फलासक्तियुतेषु च॥ १॥ मृतः प्रवृद्धे तमसि पश्वादिषु प्रजायते ॥ २ ॥ १५ ॥

भा० टी०—रजःप्रवृद्धिकृतं फलविशेषमाह—**रजसीति** । रजसि प्रवृद्धे प्रलयं मरणं गत्वा प्राप्य देहभृत् कर्मसङ्गिषु कर्मासक्तियुक्तेषु मनुष्येषु जायते । यथा सत्त्वे रजसि च प्रवृद्धे मृतो देहभृत् ब्रह्मलोकादिषु मनुष्यलोके च देवादिषु मनुष्येषु च जायते । तथा तमसि प्रवृद्धे प्रलीनो मृतो देही मूढानां पश्वादीनां योनिषु जायत उत्पद्यत इत्यर्थः ॥ १५ ॥

प० टी०—**रजसीति** । रजोगुणवृद्धौ सत्यां प्रलयं मृत्युं प्राप्य कर्मासक्तेषु मनुष्येषु जायते । तथा तमसि प्रवृद्धे सति प्रलीनो मृतः सन् मूढयोनिषु पश्वादिषु जायते ॥ १५ ॥

रा० टी०—**रजसीति** । रजसि प्रवृद्धे प्रलयं गत्वा मृत्वा कर्मसंगिषु काम्यकर्मिणां कुले जायते । तथा तमसि प्रवृद्धे प्रलीनो मृतः मूढयोनिषु दैत्यानां कुलेषु जायते ॥ १५ ॥

## कर्मणः सुकृतस्याहुः सात्त्विकं निर्मलं फलम् ॥
## रजसस्तु फलं दुःखमज्ञानं तमसः फलम् ॥ १६ ॥

**त० टी०**—इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारा फलभेदमाह—**कर्मण इति**। सुकृतस्य सात्त्विकस्य कर्मणः सात्त्विकं निर्मलं प्रकाशसुखं फलमाहुः सांख्याचार्या महर्षयः । रजसः राजसस्य तु कर्मणः सकामस्य पुण्यपापमिश्रस्य राजसं फलं दुःखमल्पसुखं दुःखप्रायमित्यर्थः । तमसस्तामसस्य कर्मणोऽज्ञानं मूढत्वं फलमाहुः ॥ १६ ॥

**म० टी०**—इदानीं स्वानुरूपकर्मद्वारा सत्त्वादीनां विचित्रफलतां संक्षिप्याह-**कर्मण इति**। सुकृतस्य सात्त्विकस्य कर्मणो धर्मस्य सात्त्विकं सत्त्वेन निर्वृत्तं निर्मलं रजस्तमोमलामिश्रितं सुखं फलमाहुः परमर्षयः । रजसो राजसस्य तु कर्मणः पापमिश्रस्य पुण्यस्य फलं राजसं दुःखं दुःखबहुलमल्पसुखम्, कारणानुरूप्यात्कार्यस्य। अज्ञानमविवेकप्रायं दुःखं तामसं तमसस्तामसस्य कर्मणोऽधर्मस्य फलम्, आहुरित्यनुषज्यते । सात्त्विकादिकर्मलक्षणं च नियतं सङ्गरहितमित्यादिनाऽष्टादशे वक्ष्यति । अत्र रजस्तमःशब्दौ तत्कार्ये कर्मणि प्रयुक्तौ कार्यकारणयोरभेदोपचारात्। "गोभिः श्रीणीत मत्सरम्" इत्यत्र यथा गोशब्दस्तत्प्रभवे पयसि, यथा वा "धान्यमसि धिनुहि देवान्" इत्यत्र धान्यशब्दस्तत्प्रभवे तण्डुले। तत्र पयस्तण्डुलयोरिवात्रापि कर्मणः प्रकृतत्वात्॥ १६॥

**शं० टी०**—एवं गुणानां स्वरूपं बन्धकत्वं वृद्धिं वृद्धिकार्यं च प्रतिपाद्य सत्त्वादिगुणप्रधानानां कर्मणां फलमाह—**कर्मण इति**। सुकृतस्य शमदमश्रद्धादिसत्त्वगुणसंपत्त्या चेश्वरार्पणबुद्ध्या च सम्यगनुष्ठितस्य सात्त्विकस्य कर्मणः सात्त्विकं सत्त्वोपबृंहितं निर्मलं मलं दुःखं गुणवैषम्यकृतं ततो निर्मलं ब्राह्मं वैष्णवं वा सुखं फलं प्राहुर्मुनयो वदन्ति । रजसो राजसस्य रजोगुणप्रधानस्य कामसंकल्पादिपूर्वकं समनुष्ठितस्य कर्मणो दुःखं गमागमसंतापादिदुःखभूयिष्ठं स्वर्गसुखं फलं प्राहुः । तमसः तमोगुणनिष्पन्नस्य विधिनियमश्रद्धाशून्यस्य तामसस्य कर्मणस्त्वज्ञानं भोक्तृभोग्यगुणरसज्ञानशून्यं निद्रामयं सुखं फलं प्राहुरित्यर्थः ॥ १६ ॥

**श्री० टी०**—इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह—**कर्मण इति** । सुकृतस्य सात्त्विककर्मणः सात्त्विकं सत्त्वप्रधानं निर्मलं प्रकाशबहुलं सुखं फलमाहुः कपिलादयः । रजस इति राजसस्य कर्मण इत्यर्थः, कर्मफलकथनस्य प्रकृतत्वात् । तस्य दुःखं फलमाहुः । तमस इति तामसस्य कर्मण इत्यर्थः। तस्याज्ञानं मूढत्वं फलमाहुः । सात्त्विकादिकर्मलक्षणं च नियतं संगरहितमित्यादिनाऽष्टादशे वक्ष्यति ॥ १६॥

**स० टी०**—स्वानुरूपक्रियाद्वारा विचित्रफलतां हरिः ॥ संक्षिप्याहाधुना तेषां सत्त्वादीनां विशेषतः ॥ १ ॥ सात्त्विकस्य च धर्मस्य हीनं रजस्तमोमलैः ॥ फलं सत्त्वेन निर्वृत्तं प्राहुर्वेदविदां वराः ॥ २ ॥ पापमिश्रस्य पुण्यस्य फलं दुःखं हि राजसम् ॥ तामसस्याप्यधर्मस्य दुःखं मोहयितुं फलम् ॥ ३ ॥ अत्र रजस्तमःशब्दौ परौ तत्कार्यकर्मणि ॥ कार्यहेत्वोरभेदोपचाराद्धान्यमसीतिवत् ॥ ४ ॥ धान्यशब्दो यथा तत्र तदुद्भूतेऽस्ति तण्डुले ॥ तथा रजस्तमःशब्दौ तत्कार्ये कर्मणीत्यपि ॥ ५ ॥ गोभिः श्रीणीत वेत्यत्र गोशब्दोऽपि तदुद्भवे ॥ पयसि प्रकृतित्वात्स्याद्यथा तद्वदिहापि च ॥ ६ ॥ १६ ॥

**भा० टी०**—अतीतश्लोकयोः सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वस्य प्रतिपादकयोरर्थं संक्षिप्याह—**कर्मण इति**। कर्मणः सुकृतस्य पुण्यस्य सात्त्विकस्य सत्त्वकार्यस्याशुद्धिरहितस्येत्यर्थः । सात्त्विकं सत्त्वेन निर्वृत्तमेव निर्मलं रजस्तमःसमुद्भवान्मलाद्रहितं स्वर्गलोकादिषु भोग्यं सुखं फलमाहुः शिष्टाः। रजसस्तु राजसस्य कर्मण इत्यर्थः। कर्मण इति प्रकान्तत्वान्मर्त्यलोके भुज्यमानं कारणानुरूपं राजसं दुःखमेव आहुः। तथा तमसस्तामसस्य कर्मणोऽधर्मस्य पश्वादियोनिषु परिदृश्यमानमज्ञानं फलमाहुः ॥ १६ ॥

**प० टी०**—इदानीं सत्त्वादीनां स्वानुरूपकर्मद्वारेण विचित्रफलहेतुत्वमाह—**कर्मण इति**। सुकृतस्य सात्त्विकस्य कर्मणः फलं सात्त्विकं सत्त्वप्रधानं सुखं तथा निर्मलं प्रकाशबहुलं फलमाहुः । शेषं स्पष्टम्॥१६॥

रा० टी०—सात्त्विकादिकर्मणां फलमाह—कर्मण इत्यादिद्वयेन । विद्वत्कुलप्रसूतेन सुष्ठु कृतस्य कर्मणः सात्त्विकं निर्मलं दुःखगन्धहीनं फलमाहुः । रजसो राजसकर्मणस्तु दुःखं दुःखमिश्रं सुखमाहुः । तमसस्तु तामसकर्मणः अज्ञानमज्ञानकार्यं च फलमाहुः ॥ १६ ॥

**सत्त्वात्संजायते ज्ञानं रजसो लोभ एव च ॥**
**प्रमादमोहौ तमसो भवतोऽज्ञानमेव च ॥ १७ ॥**

त० टी०—एवंभूतफलभेदे कारणगुणस्वभावमेव हेतुमाह—सत्त्वादिति । सत्त्वगुणात्सर्वज्ञानेन्द्रियद्वारेण प्रकाशाख्यं ज्ञानं संजायते । अतः सात्त्विकस्य कर्मणः स्वानुरूपं प्रकाशसुखबहुलं फलं भवति । रजसो लोभो विषयधनादिप्राप्तावप्यधिकतरोऽभिलाषो जायते । तस्य दुःखहेतुत्वात्तत्पूर्वकस्य कर्मणो दुःखं फलं भवति । एवं प्रमादमोहौ तमसः सकाशाद्भवतो जायेते, अज्ञानमेव च भवति न तु प्रकाशसुखलेश इत्यर्थः ॥ १७ ॥

म० टी०—एतादृशफलवैचित्र्ये पूर्वोक्तमेव हेतुमाह—सत्त्वादिति । सर्वकरणद्वारकं प्रकाशरूपं ज्ञानं सत्त्वात्संजायते, अतस्तदनुरूपं सात्त्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति । रजसो लोभो विषयकोटिप्राप्त्याऽपि निवर्तयितुमशक्योऽभिलाषविशेषो जायते । तस्य च निरन्तरमुपचीयमानस्य पूरयितुमशक्यस्य सर्वदा दुःखहेतुत्वात् । तत्पूर्वकस्य राजसस्य कर्मणो दुःखं फलं भवति । एवं प्रमादमोहौ तमसः सकाशाद्भवतो जायेते । अज्ञानमेव च भवति । एवकारः प्रकाशप्रवृत्तिव्यावृत्त्यर्थः । अतस्तामसस्य कर्मणस्तामसमज्ञानादिप्रायमेव फलं भवतीति युक्तमेवेत्यर्थः । अत्र चाज्ञानमप्रकाशः । प्रमादो मोहश्चाप्रकाशोऽप्रवृत्तिश्चेत्यत्र व्याख्यातौ ॥ १७ ॥

शं० टी०—सत्त्वादिगुणानां कार्यान्तरमाह—कार्येण कारणज्ञानाय—सत्त्वादिति । सत्त्वात्सत्त्वगुणाविर्भूतेर्ज्ञानं कार्याकार्यविवेकज्ञानं संजायते समुत्पद्यते । रजसो रजोगुणाविर्भूतेर्लोभः पदार्थादितृष्णा संजायते । तमसस्तमोगुणाविर्भूतेः प्रमादमोहौ भवतः, अज्ञानं बुद्धिजाड्यमितिकर्तव्यताऽनभिज्ञत्वं च संजायत इत्यर्थः ॥ १७ ॥

श्री० टी०—तत्रैव हेतुमाह—सत्त्वादिति । सत्त्वाज्ज्ञानं संजायते । अतः सात्त्विकस्य कर्मणः प्रकाशबहुलं सुखं फलं भवति । रजसो लोभो जायते । तस्य च दुःखहेतुत्वात् तत्पूर्वकस्य कर्मणो दुःखं फलं भवति । तमसस्तु प्रमादमोहाज्ञानानि भवन्ति । ततस्तामसस्य कर्मणोऽज्ञानप्रापकं फलं भवतीति युक्तमेवेत्यर्थः ॥ १७ ॥

स० टी०—ईदृशे फलवैचित्र्ये हेतुमाह पुरेरितम् ॥ सत्त्वात्प्रकाशरूपं तज्ज्ञानं संजायते स्फुटम् ॥ १ ॥ रजसस्तूत्कटो लोभोऽभिलाषाख्योऽभिजायते ॥ प्रमादमोहौ व्याख्यातौ जायेते तमसो गुणात् ॥ २ ॥ प्रमादमोहयोर्हेतुरज्ञानं वृद्धिमेत्यतः ॥ ३ ॥ १७ ॥

भा० टी०—किंच गुणेभ्यो भवति एतादृशफलवैचित्र्यमित्यपेक्षायामाह—सत्त्वादिति । रजस्तमसी अभिभूय लब्धात्मकात्सत्त्वाज्ज्ञानं संजायते । रजसा सत्त्वं तमश्चाभिभूय लब्धस्वरूपाल्लोभः संजायते । चः प्रवृत्त्यादिसमुच्चयार्थः । एवकारो व्यभिचारवारणार्थः । एवं रजः सत्त्वं चाभिभूयोद्भूतात्तमसः प्रमादमोहौ भवतोऽज्ञानं च भवति । अव्ययार्थः प्राग्वत् । तथाच प्रकाशजनकसत्त्वकार्यस्य कर्मणः प्रकाशबहुलं सुखमेव फलमनुरूपं लोभादिजनकरजःकार्यस्य कर्मणः दुःखबहुलमेव फलमनुरूपं प्रमादादिजनकं तमःकार्यस्य कर्मणोऽज्ञानबहुलमेव फलमुचितमिति भावः ॥ १७ ॥

प० टी०—सत्त्वादिति । स्पष्टम् ॥ १७ ॥

रा० टी०—निर्मलत्वादिफलं च किमित्यतो विविच्याह—सत्त्वादित्यादिना । ज्ञानं परापरतत्त्वविषयं, लोभः स्त्रगादिविषयासक्तिः भवत एवेत्यन्वयः । अज्ञानं च भवतीत्यर्थः ॥ १७ ॥

**ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः ॥**
**जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः ॥ १८ ॥**

**त० टी०**—इदानीं सत्त्वादिवृत्तिस्थानां प्रागुक्तान्युत्तमादिलोकफलान्येवोर्ध्वमध्याधोगतित्वेनाह—ऊर्ध्वमिति । सत्त्वस्थाः सत्त्ववृत्तिस्थाः सात्त्विकधर्मप्रधाना ऊर्ध्वं गच्छन्ति सत्त्वोत्कर्षतारतम्याद्देवलोकात्सत्यलोकपर्यन्तं गच्छन्ति प्राप्नुवन्तीत्यर्थः, क्रमेण मुच्यन्तेऽपि । रजोगुणस्य लोभादिहेतुत्वाद्राजसा रजोवृत्तिस्थाः स्वर्गादिफलभोगसाधनभूतकाम्यकर्मनिरतास्तथाभूतकर्माद्यनुष्ठाय तत्फलमनुभूय पुनर्धूममार्गेणावृत्त्य मध्ये मनुष्यलोके जनित्वा पुनस्तदर्थमेव कर्मानुतिष्ठन्ति जायन्ते म्रियन्ते च । जघन्यगुणवृत्तिस्थाः—जघन्यो द्वाभ्यां निकृष्टं तमस्तस्य वृत्तिर्मोहालस्यनिद्राप्रमादादिस्तत्र स्थितास्तामसा अधो गच्छन्ति, तमोवृत्तितारतम्यात्तामिश्रान्धतामिश्रादिनरकान् प्राप्य तत्तत्कर्मानुरूपं दुःखं भुक्त्वा श्वशूकरादियोनिषूत्पद्यन्ते ॥ १८ ॥

**म० टी०**—इदानीं सत्त्वादिवृत्तस्थानां प्रागुक्तमेव फलमूर्ध्वमध्याधोभावेनाह—ऊर्ध्वमिति । अत्र तृतीये गुणे वृत्तशब्दप्रयोगादाद्ययोरपि वृत्तमेव विवक्षितम् । तेन सत्त्वस्थाः सत्त्ववृत्ते शास्त्रीये ज्ञाने कर्मणि च निरता ऊर्ध्वं सत्यलोकपर्यन्तं देवलोकं गच्छन्ति ते देवेषूत्पद्यन्ते ज्ञानकर्मतारतम्येन । तथा मध्ये मनुष्यलोके पुण्यपापमिश्रे तिष्ठन्ति, न तूर्ध्वं गच्छन्त्यधो वा । मनुष्येषूत्पद्यन्ते राजसा रजोगुणवृत्ते लोभादिपूर्वके राजसे कर्मणि निरताः । जघन्यगुणवृत्तस्थाः जघन्यस्य गुणद्वयापेक्षया पश्चाद्भाविनो निकृष्टस्य तमसो गुणस्य वृत्ते निद्रालस्यादौ स्थिताः अधो गच्छन्ति पश्वादिषूत्पद्यन्ते । ननु कदाचिज्जघन्यगुणवृत्तस्थाः सात्त्विका राजसाश्च भवन्त्यत आह—तामसाः सर्वदा तमःप्रधानाः । इतरेषां कदाचित्तद्वृत्तस्थत्वेऽपि न तत्प्रधानतेति भावः ॥ १८ ॥

**शं० टी०**—गुणानां ज्ञानादिकार्यमुक्त्वा सत्त्वादिगुणनिष्ठानां गतिमाह—ऊर्ध्वमिति । सत्त्वस्थाः मोक्षेच्छया सत्त्वगुणोत्पन्ने सदसद्विवेकज्ञाने ज्ञानकार्ये च परमेश्वरोपास्त्यादौ ये तिष्ठन्ति ते सत्त्वस्थाः पुरुषाः ऊर्ध्वम् ऊर्ध्वलोकं ब्रह्मविष्ण्वादिस्थानं गच्छन्ति राजसा रजोगुणनिष्पन्ने ज्ञाने कामसंकल्पादिगुणयुक्ते ज्ञानकार्ये च श्रौतादौ कर्मणि भोगेच्छया ये तिष्ठन्ति ते राजसाः पुरुषाः मध्ये ब्रह्मतिर्यग्लोकयोरन्तराले गमागमाभ्यां देवलोके मनुष्यलोके च तिष्ठन्ति । जघन्यो निकृष्टो यस्तमोगुणस्तद्वृत्तौ तमःप्रधाने ज्ञाने सदसद्विवेकवर्जिते कर्मणि वा ये तिष्ठन्ति ते जघन्यगुणवृत्तिस्थास्तामसाः पुरुषाः कृत्याकृत्यविवेकज्ञानशून्या अधो गच्छन्ति तिर्यग्योनिषु जायन्ते, पुनः पुनर्म्रियन्त इत्यर्थः ॥ १८ ॥

**श्री० टी०**—इदानीं सत्त्वादिवृत्तिशीलानां फलभेदमाह—ऊर्ध्वमिति । सत्त्वस्थाः सत्त्ववृत्तिस्थाः सत्त्ववृत्तिप्रधाना ऊर्ध्वं गच्छन्ति सत्त्वोत्कर्षतारतम्यादुत्तरोत्तरशतगुणानंदान्मनुष्यगन्धर्वपितृदेवादिलोकान् सत्यलोकपर्यन्तान् प्राप्नुवन्तीत्यर्थः । राजसास्तु तृष्णाद्याकुला मध्ये तिष्ठन्ति मनुष्यलोके एवोत्पद्यन्ते । जघन्योऽतिनिकृष्टस्तमोगुणस्तस्य वृत्तिः प्रमादमोहादिस्तत्र स्थिता अधो गच्छन्ति । तमोवृत्तितारतम्यात्तामिस्रादिषु निरयेषूत्पद्यन्ते ॥ १८ ॥

**स० टी०**—शास्त्रीये कर्मणि ज्ञाने रतास्तत्तारतम्यतः ॥ ते सत्यलोकपर्यन्तं यान्ति देवेषु जन्मना ॥ १ ॥ लोभादिपूर्वके वृत्ते रता ये राजसा जनाः ॥ मध्ये मनुष्यलोके ते पुण्यपापविमिश्रिते ॥ २ ॥ तिष्ठन्ति न तु गच्छन्ति चोर्ध्वं वाप्यथ वाप्यधः ॥ पश्वादिषु प्रजायन्ते निद्रालस्यादितत्पराः ॥ ३ ॥ तमःप्रधानास्तद्वृत्ते निद्रालस्यादिके रताः ॥ निकृष्टगुणवृत्तिस्था जायन्ते तामसाः सदा ॥ ४ ॥ न जातु सात्त्विका मूढा राजसा वा भवन्ति ते ॥ अतस्तमो रजस्... ॥ सुखार्थी सत्त्वमाश्रयेत् ॥ ५ ॥ १८ ॥

भा० टी०—तस्मात्सत्त्व एव स्थैर्यं नतु रजसि तमसि वेति बोधनाय सत्त्वादिगुणवृत्तस्थितानां फलभेदं वदन्नुपसंहरति—ऊर्ध्वमिति। अत्र तमसि वृत्तशब्दप्रयोगात् सत्त्वरजसोरपि वृत्तमेव विवक्षितम्। सत्त्वस्थाः सत्त्ववृत्ते शास्त्रीयोपासनायां कर्मणि च निरताः ऊर्ध्वं उपासनादितारतम्येन ब्रह्मलोकपर्यन्तं गच्छन्ति देवेषु उत्पद्यन्ते। तथा राजसाः रजोगुणवृत्ते लोभादिपूर्वके काम्यनिषिद्धादिराजसे कर्मणि स्थिताः मध्ये दुःखबहुलेऽल्पसुखे मनुष्यलोके तिष्ठन्ति मनुष्येषूत्पद्यन्ते। जघन्यः गुणद्वयापेक्षया निकृष्टः स चासौ गुणश्च तस्य जघन्यगुणस्य तमसः वृत्ते निद्रालस्यादौ स्थिता जघन्यगुणवृत्तस्था मूढाः सदैव तामसाः अधो गच्छन्ति पश्वादिषूत्पद्यन्ते ॥ १८ ॥

प० टी०—अथ सत्त्वादिवृत्तिशीलानां फलभेदानाह—ऊर्ध्वमिति। सत्त्वेऽविरतं तिष्ठन्ति ते सत्त्वस्थाः सत्त्वप्रधाना ऊर्ध्वं गच्छन्ति उत्तरोत्तरं शतगुणानन्दान्मनुष्यपितृदेवलोकान् गच्छन्ति। राजसास्तृष्णाकुला मध्ये मनुष्यलोक एव तिष्ठन्ति। जघन्यो निन्द्यगुणस्तमस्तद्वृत्तस्थास्तामसा अधोऽन्धतामिस्रासु योनिषूत्पद्यन्ते ॥ १८ ॥

रा० टी०—ज्ञानलोभप्रमादादेः सत्त्वादिगुणेभ्यः साक्षाज्जन्यत्वेऽपि तस्य स्वरूपतो फलत्वात्तज्जन्यफलान्याह—ऊर्ध्वमिति। सत्त्वस्थाः सात्त्विकाः ज्ञानेनोर्ध्वं जनआदिलोकं गच्छन्ति। राजसाः काम्यकर्मिणः मध्ये स्वर्गादौ तिष्ठन्ति। जघन्यगुणस्तमः तद्वृत्तिस्तत्परिणामाज्ञानं तन्निष्ठास्तद्वन्त इत्यर्थः। अधो निरयं गच्छन्ति ॥ १८ ॥

**नान्यं गुणेभ्यः कर्तारं यदा द्रष्टाऽनुपश्यति ॥**
**गुणेभ्यश्च परं वेत्ति मद्भावं सोऽधिगच्छति ॥ १९ ॥**

**त० टी०**—एवमेतावता कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मस्विति पूर्वाध्यायोदितस्य क्षेत्रज्ञबन्धहेतोर्गुणत्रयस्य लक्षणस्वभावबन्धनप्रकारा उक्ताः। इदानीमुक्तज्ञानस्य इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागता इत्युक्तस्वसाधर्म्यलक्षणपरमफलस्य प्राप्तिप्रकारमाह—नान्यमिति। अयं भावः, प्रथमं सात्त्विकाहारादिसेवया ज्ञानावरणहेतुरजस्तमोवृत्त्यभिभवेनोद्रिक्तसत्त्वनिष्ठो द्रष्टा यदा गुणेभ्योऽन्यं कर्तारं नानुपश्यति। किंतु गुणा एवानादिकर्मानुबन्धिनं जीवं स्वस्वकार्येषु प्रवर्तका इति वेत्ति, गुणेभ्यश्च परं विलक्षणमात्मानं च वेत्ति। बद्धावस्थायां गुणाधीनकर्तृत्वात्। गुणाश्च नात्मस्वरूपानुबन्धिनः, किंतु यावत्कर्मभाविनः सत्त्ववृद्ध्याऽमलान्तःकरणे सति आत्मयाथात्म्यज्ञानोपलब्ध्योपशमादिना सत्त्वस्यापि निवृत्त्या गुणकर्मनाशात् केवलात्माऽवतिष्ठते, अतो गुणेभ्यश्च परं वेत्तीत्युक्तम्। तदा स द्रष्टा मद्भावमधिगच्छति, मम यो भावो जन्मजरामरणादिविकाररराहित्येन नित्यानन्दानुभवरूपस्तं प्राप्नोति ॥ १९ ॥

म० टी०—अस्मिन्नध्याये वक्तव्यत्वेन प्रस्तुतमर्थत्रयम्। तत्र क्षेत्रक्षेत्रज्ञसंयोगस्येश्वराधीनत्वं के वा गुणाः कथं वा ते बध्नन्तीत्यर्थद्वयमुक्तम्। अधुना तु गुणेभ्यः कथं मोक्षणं मुक्तस्य च किं लक्षणमिति वक्तव्यमवशिष्यते। तत्र मिथ्याज्ञानात्मकत्वाद्गुणानां सम्यग् ज्ञानात्तेभ्यो मोक्षणमित्याह—नान्यमिति। गुणेभ्यः कार्यकारणविषयाकारपरिणतेभ्योऽन्यं कर्तारं यदा द्रष्टा विचारकुशलः सन्नानुपश्यति विचारमनु न पश्यति गुणा एवान्तःकरणबहिष्करणशरीरविषयभावापन्नाः सर्वकर्मणां कर्तार इति पश्यति, गुणेभ्यश्च तत्तदवस्थाविशेषेण परिणतेभ्यः परं गुणतत्कार्यासंस्पृष्टं तद्भासकमादित्यमिव जलतत्कम्पाद्यसंस्पृष्टं निर्विकारं सर्वसाक्षिणं सर्वत्र समं क्षेत्रज्ञमेकं वेत्ति, मद्भावं मद्रूपतां स द्रष्टाऽधिगच्छति ॥ १९ ॥

शं० टी०–त्रिभिर्गुणमयैर्भावैरिति, दैवी ह्येषा गुणमयी मम माया दुरत्ययेति, कारणं गुणसङ्गोऽस्येति च यदुक्तं गुणानां मोहकत्वं दुर्जयत्वं सदसद्योनिषु जन्मकारणत्वं च तस्यैव विस्पष्टत्वाय पुनरपि सत्त्वं रजस्तम इत्यादिना गुणानामेव सुखज्ञानतृष्णासक्तिकर्मप्रवृत्तिप्रमादालस्यनिद्रादिषु सञ्जकत्वेन पुरुषस्याविद्यादिदोषवतो गुणतत्कार्येष्वहंममेतिमिथ्याज्ञानेन तिष्ठतो देवमर्त्यतिर्यग्योनिषु जन्माद्यनर्थकारणत्वं प्रतिपाद्याधुना 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्युक्तरीत्या शास्त्राचार्यप्रसादेन मदनुग्रहेण च सम्यग्विविच्य, विज्ञातात्मानात्मस्वरूपो ब्रह्मविद्यतिर्गुणसङ्गकृतानर्थं विज्ञायानात्मवासनायाः स्वयमवशो भूत्वा, प्रत्यग्दृष्टिममुञ्चानः सन् सर्वास्ववस्थासु सर्वदा गुणानामेव कर्तृत्वं कारयितृत्वं भोक्तृत्वं च स्वस्यासङ्गत्वं गुणतत्कार्यतदवस्थासाक्षित्वं च पश्यन्, सदात्मनिष्ठया सकार्यान् त्रीन् गुणानतीत्य मुक्तो भवतीति प्रतिपादयति–**नान्यमिति द्वाभ्याम्** । "चक्षुषो द्रष्टा श्रोत्रस्य द्रष्टा वाचो द्रष्टा मनसो द्रष्टा बुद्धेर्द्रष्टा प्राणस्य द्रष्टा तमसो द्रष्टा सर्वस्य द्रष्टा" इति, "साक्षी चेता केवलो निर्गुणश्च" इति, "अप्राणो ह्यमनाः शुभ्रः" इत्यादिश्रुतिभिः, आत्मा देहेन्द्रियमनोबुद्ध्यादिभ्यो भिन्नः द्रष्टृत्वाद्धटद्रष्टृवदित्यादियुक्तिभिश्च देहेन्द्रियादिभ्यो भिन्नत्वेन स्वात्मना च सम्यग्विज्ञातात्मस्वरूपः स्वस्याविक्रियत्वद्रष्टा यतिर्यदा यस्मिन्काले समाधिना ज्ञानपरिपाकदशायां गुणेभ्यो गुणकार्यभूतदेहेन्द्रियादिभ्यस्त्वन्यं व्यतिरिक्तं कर्तारं नानुपश्यति–कायिकवाचिकमानसिकानां विहितानां प्रतिषिद्धानां सामान्यानां च सर्वेषामपि कर्मणां कर्तारं देहेन्द्रियातिरिक्तं नानुपश्यति–तत्तत्कर्मनिष्पत्त्युत्तरक्षण एव तत्तत्कर्मकर्तारं देहेन्द्रियादिकमेवावगच्छति–चक्षुरेव पश्यति, श्रोत्रमेव शृणोति, मन एव मनुते, बुद्धिरेव विजानाति, वागेव वदति, नाहमनिन्द्रिय इत्यात्मानमकर्तारमेव पश्यति गजारूढो गजस्यैव गमनं पश्यति न त्वात्मनो यथा, तथा ब्रह्मवित्स्वयं स्वतो भिन्नतया गृह्यमाणदेहेन्द्रियादीनामेव कर्तृत्वं, सत्त्वादिगुणकार्याणामविद्याकामादीनां कारयितृत्वं, विज्ञानात्मन एव तत्फलभोक्तृत्वं च पश्यति; नतु स्वस्य यानारूढो यथा, तद्वत् यदैवं ब्रह्मविद्यतिरात्मानात्मविवेकविज्ञानेन स्वान्यस्यैव देहेन्द्रियादेः कर्तृत्वं भोक्तृत्वं चानुपश्यति, तदैव गुणेभ्यो गुणकार्येभ्योऽहंकारादिभ्यश्च परं विलक्षणमकर्तारमभोक्तारमगन्तारममन्तारमबोद्धारमविकारमक्रियं क्षेत्रतद्धर्मतत्कर्मास्प्रष्टारमात्मानं वेत्ति–निष्कलं निष्क्रियं शान्तमाकाशवत्परिपूर्णं पश्यति । एवं देहेन्द्रियादेरेव कर्तृत्वमात्मनश्चाकर्तृत्वं यः स्वयं साक्षात्पश्यति, स विद्वान्मद्भावं मम निर्विशेषस्य परस्य ब्रह्मणो भावो मद्भावः मत्स्वरूपतां परिपूर्णत्वमधिगच्छति–नित्यनिरन्तरसमाध्यासादितसम्यग्ज्ञानेन सर्वमिदमहं च ब्रह्मैवेति सर्वस्य स्वस्य च ब्रह्ममात्रत्वमेव पश्यन् गुणतत्कार्यलक्षणमनर्थव्रातमतीत्य जीवन्नेव ब्रह्मात्मना तिष्ठति मुक्तो भवतीत्यर्थः ॥ १९ ॥

श्री० टी०–तदेवं प्रकृतिगुणसङ्गकृतं संसारं सप्रपञ्चमुक्त्वा इदानीं तद्विवेकतो मोक्षं दर्शयति–**नान्यमिति** । यदा तु द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारपरिणतेभ्यो गुणेभ्योऽन्यं कर्तारं नानुपश्यति, अपि तु गुणा एव कर्माणि कुर्वन्तीति पश्यति, गुणेभ्यश्च परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति स तु मद्भावं ब्रह्मत्वमधिगच्छति प्राप्नोति ॥ १९ ॥

स० टी०–अध्यायेऽस्मिन्नुपक्रान्तमर्थत्रयमिति द्वयम् ॥ त्रिषु प्रोक्तं तृतीयं चावशिष्टं वर्णयत्यजः ॥१॥ क्षेत्रक्षेत्रज्ञसंयोग ईश्वराधीन इत्यपि ॥ के वा गुणाः कथं वा ते बध्नन्तीत्यर्थकद्वयम् ॥ २ ॥ उक्त्वाऽधुना गुणेभ्योऽस्य मोक्षणं स्यात्कथं तथा ॥ लक्षणं किं विमुक्तस्य वाच्यमित्यवशिष्यते ॥ ३ ॥ मिथ्याज्ञानस्वरूपत्वाद्गुणानां तत्त्वबोधतः ॥ तेभ्यो मोक्षणमित्याह भगवान्करुणाकरः ॥ ४ ॥ कार्यकरणविषयाकारेण बहुधा गुणाः ॥ परिणामं गतास्तेभ्यः कर्तारं न विलक्षणम् ॥ ५ ॥ विचारकुशलो द्रष्टा यदा पश्यति वीक्षणात् ॥ देहेन्द्रियमनोबुद्धिविषयाकारतां गताः ॥६॥ गुणा एव हि कर्तारः सर्वदा सर्वकर्मणाम् ॥ इत्येवं

पश्यति द्रष्टा स्वानुभूत्या दृग्मैनयैः ॥ ७ ॥ तत्तदवस्थापन्नेभ्यो गुणेभ्यः परमक्रियम् ॥ गुणकार्याद्यसंस्पृष्टं गुणव्यापारसाक्षिणम् ॥ ८ ॥ सर्वत्र सममानन्दं क्षेत्रज्ञं चैकमक्षयम् ॥ चिद्घनं निष्कलं शुद्धं सर्ववृत्त्यवभासकम् ॥ ९ ॥ भास्यधर्मैरसंस्पृष्टमादित्यमिव वेत्ति यः ॥ स द्रष्टा जीवतां हित्वा मद्रूपत्वं च गच्छति ॥ १० ॥ १९ ॥

भा० टी०–प्रकृतिस्थस्वरूपेण मिथ्याज्ञानेन युक्तस्य पुरुषस्य भोग्येषु गुणेषु सुखदुःखमोहात्मकेषु सुखी दुःखी मूढोऽहमस्मीत्येवंरूपः सङ्गः पुरुषस्य सदसद्योनिजन्मप्राप्तिलक्षणस्य संसारस्य कारणमिति 'पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान्गुणान् । कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु' इति पूर्वाध्याये संक्षेपेण यदुक्तं, तदस्मिन्नध्याये सत्त्वं रजस्तम इति गुणाः प्रकृतिसंभवाः इत्यारभ्य गुणस्वरूपं गुणवृत्तं स्ववृत्तेन च गुणानां बन्धकत्वं गुणवृत्तनिबद्धस्य पुरुषस्य विविधा गतिरित्येतत्सर्वं मिथ्याज्ञानमूलं संसारकारणं विस्तरेण प्रतिपादितं, कस्मिन् गुणे कथं सङ्गः के वा गुणाः कथं ते बध्नन्तीत्याकाङ्क्षानिवृत्तये । अधुना गुणेभ्यो मोक्षणं च कथं स्यादित्याकाङ्क्षानिरासाय सम्यग्दर्शनं तेभ्यो मोक्षस्य साधनमित्याह–**नान्यमिति** । यदा द्रष्टा विविक्तात्मदर्शी विद्वान् सन् कार्यकरणविषयाकारपरिणतेभ्यो गुणेभ्यः कर्तारमन्यं नानुपश्यति–गुणा एव कार्यकरणाकारपरिणताः सर्वकर्मणां कर्तार इत्येवं पश्यति, गुणेभ्यश्च परं व्यतिरिक्तं गुणव्यापारसाक्षिभूतमात्मानं वेत्ति जानातीत्यर्थः ॥ १९ ॥

प० टी०–एवं गुणप्रवाहरूपं संसारं व्यावर्ण्येदानीम् 'इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः' इति पूर्वं प्रतिज्ञातमनुस्मरन् मोक्षप्रापकज्ञानोपायमाह–**नान्यमिति द्वाभ्याम्** । यदा द्रष्टा विवेकी भूत्वा बुद्ध्याद्याकारेण परिणतेभ्यो गुणेभ्यः सकाशादन्यं कर्तारं न पश्यति, अपि तु गुणा एव कर्माणि कुर्वन्तीति पश्यति, तथा गुणेभ्यः परं व्यतिरिक्तं तत्साक्षिणमात्मानं वेत्ति, स तु मद्भावं ब्रह्माधिगच्छति ॥ १९ ॥

श० टी०–एवं त्रयो गुणा विविच्योक्तास्तेषां जगद्बन्धकत्वं तेभ्यः साक्षात्परंपरया च जन्यफलानि चोक्तानि । एवं त्रैगुण्यस्य कार्यत्वे ह्यवश इत्यत्र संक्षेपेणोक्तस्येह विविच्य कीर्तने कृते सति, तर्हि गुणा एव सर्वोत्तमाः न तु ततोऽन्यः सर्वोत्तमोऽस्तीति शङ्का स्यात्तां निराकरोति–**नान्यमिति** । द्रष्टा जीवः यदा गुणेभ्योऽन्यं कर्तारं परिणामिकर्तारं नानुपश्यति, गुणेभ्यश्च परं स्वतन्त्रं परमात्मानं वेत्ति स ज्ञानी मद्भावं ज्ञानानन्दात्मिकां मयि स्थितिमधिगच्छति प्राप्नोति । यद्वा एतेभ्यो गुणेभ्योऽन्यं कर्तारमीशं यदानुपश्यति तदा द्रष्टैव ना नृशब्दोऽयं पुरुषः अन्यथा पशुः । न केवलं गुणेभ्योऽन्यत्वेन कर्तारं पश्यन् ना पुरुषः, किंतु गुणेभ्यः परमुत्तममुत्तमत्वेनापि पश्यन्पुरुषः । कुतः स एवं पश्यन्यस्मान्मद्भावमधिगच्छति अत इति ॥ १९ ॥

## गुणानेतानतीत्य त्रीन् देही देहसमुद्भवान् ॥
## जन्ममृत्युजरादुःखैर्विमुक्तोऽमृतमश्नुते ॥ २० ॥

त० टी०–तत्र प्रकारमाह–**गुणानेतानिति** । देही देहे वर्तमानोऽपि एतान् यथोक्तान्सत्त्वादीन् गुणान्देहसमुद्भवान्देहात्मना परिणतप्रकृतिसमुद्भवान् देहोत्पत्तिबीजभूतान्वा अतीत्य तद्विलक्षणात्मज्ञानात् तद्वृत्तिभिः स्वयमनभिभूय तत्कार्यभूतजन्ममृत्युजरादुःखैर्विमुक्तो विशेषेण निःशेषतया मुक्तोऽमृतमश्नुते मुक्तस्वरूपं प्राप्नोति, एवं मद्भावमधिगच्छति ॥ २० ॥

म० टी०–कथमधिगच्छतीत्युच्यते–**गुणानेतान्**मायात्मकांस्त्रीन्सत्त्वरजस्तमोनाम्नो देहसमुद्भवान् देहोत्पत्तिबीजभूतान् अतीत्य जीवन्नेव तत्त्वज्ञानेन बाधित्वा जन्ममृत्युजरादुःखैर्जन्मना मृत्युना जरया

दुःखैश्चाध्यात्मिकादिभिर्मायामयैर्विमुक्तो जीवन्नेव तत्संबन्धशून्यः सन् विद्वानमृतं मोक्षं मद्भावमश्नुते प्राप्नोति ॥ २० ॥

शं० टी०—कर्तृत्वभोक्तृत्वादिधर्मवद्भ्यो देहेन्द्रियादिभ्यो भिन्नमेवात्मानमविक्रियं विदित्वा ब्रह्मविद्यतिरजस्रं स्वानुभूत्या गुणत्रयातिक्रमणं कृत्वैव मुक्तो भवति नान्यथेति बोधयितुमाह—गुणानिति । मेघाद्भिन्नमादित्यं मेघतत्कार्यैरस्पष्टं च यथा, तथा देहेन्द्रियादिभ्यो भिन्नं देहतत्कार्यैरस्पृष्टमेवात्मानमकर्तारमभोक्तारं च विदित्वा देही ब्रह्मविद्यतिरेतान् चित्तप्रसादरागमोहलोभादिभिर्लिङ्गैर्ज्ञायमानान् सुखज्ञानकर्मप्रवृत्तिप्रमादादिष्वेव पुरुषस्य तात्पर्यमापाद्य ज्ञानं तत्फलं च प्रतिबध्नतस्तत एव देहसमुद्भवान् देहस्य समुद्भवो येभ्यस्ते देहसमुद्भवा देहारम्भकाः स्वपरिणामविशेषैर्दयासत्यशौचविनयदानशीलत्वादिभिः सात्त्विकैः, रागद्वेषलोभासूयादिभी राजसैः, मोहाभिनिवेशाहंकारममकारादिभिस्तामसैश्च विकारैः पुण्यपापाभ्यां च सत्त्वादिगुणा एव देहोत्पत्तिहेतवो भवन्ति । तानेतानुक्तलक्षणान् त्रीन् सत्त्वादिगुणान् गुणधर्मांश्चाविद्याकामादीनतीत्य प्रत्यग्वृत्त्या सर्वमिदमहं च ब्रह्मैवेति सर्वत्र ब्रह्ममात्रदर्शनाग्निना गुणान् गुणकार्यभूतानहंममेदमित्यादिविपरीतप्रत्ययान् सर्वान् निर्दह्य सत्तामात्रात्मको भूत्वा जन्ममृत्युजरादुःखैर्देहसंबन्धसंभावितैर्विमुक्तः जन्मादिदुःखैरस्पृष्टः सन्नमृतं विदेहकैवल्यमश्नुते—नित्याखण्डानन्दैकरसाद्वितीयब्रह्मात्मना तिष्ठतीत्यर्थः ॥ २० ॥

श्री० टी०—ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतार्थो भवतीत्याह—गुणानिति । देहाकारः समुद्भवः परिणामो येषां ते देहसमुद्भवाः तानेतांस्त्रीनपि गुणानतीत्यातिक्रम्य तत्कृतैर्जन्मादिभिर्विमुक्तः सन्नमृतमश्नुते ब्रह्मानन्दं प्राप्नोति ॥ २० ॥

स० टी०—त्वद्भावं स कथं यातीत्येवं चेच्छृणु तत्त्वतः ॥ मायात्मकान्गुणानेतान् रजःसत्त्वतमोऽभिधान् ॥ १ ॥ देहोत्पत्तौ निमित्तत्वाद्बीजभूतानतीत्य च ॥ जीवन्नेवात्मबोधेन त्रीनतिक्रम्य बाधितान् ॥२॥ जन्ममृत्युजरादुःखैस्तद्बाधेनैव बाधितैः ॥ जीवन्नेव विमुक्तः संस्तत्संसर्गविवर्जितः ॥ ३ ॥ विद्वान्कैवल्यमानन्दं मद्भावं याति मद्वपुः ॥ ४ ॥ २० ॥

भा० टी०—कथमधिगच्छतीत्यपेक्षायामाह—गुणानिति । गुणानेतान् यथोक्तान् मायात्मकांस्त्रीन्सत्त्वरजस्तमःसंज्ञकान् समुद्भवन्त्येभ्य इति समुद्भवाः देहस्य समुद्भवाः तान् देहसमुद्भवान् देहोत्पत्तिबीजभूतान् देही अतीत्य विद्वान् जीवन्नेवातिक्रम्य जन्ममृत्युजरादुःखै जन्म च मृत्युश्च जरा च दुःखानि च तैः जीवन्नेव मुक्तः सर्वानर्थविनिर्मुक्तः अमृतं ब्रह्मानन्दं मद्भावं मोक्षमश्नुते प्राप्नोतीत्यर्थः ॥ २० ॥

प० टी०—ततश्च गुणकृतसर्वानर्थनिवृत्त्या कृतकृत्यो भवतीत्याह—गुणानिति । देहाकारः समुद्भवः परिणामो येषां ते देहसमुद्भवास्तानेतांस्त्रीन् गुणानतीत्याक्रम्य जन्ममृत्युजरादुःखैर्विमुक्तः सन्नमृतं मोक्षमश्नुते ॥ २० ॥

रा० टी०—एवं सुखदुःखादिरूपबन्धस्य गुणत्रयनिबन्धनत्वात्तदत्यये सत्येव बन्धहानिर्नान्यथेत्याह—गुणानिति । तत्तद्गुणपरिणामिदेहेषु प्रकटीभूतान् त्रीन् गुणानतीत्यैव जन्मादिभिर्विमुक्तोऽमृतमश्नुते—परं ब्रह्म प्राप्नोति ॥ २० ॥

**अर्जुन उवाच—कैर्लिङ्गैस्त्रीन् गुणानेतानतीतो भवति प्रभो ॥**
**किमाचारः कथं चैतांस्त्रीन् गुणानतिवर्तते ॥ २१ ॥**

त० टी०—गुणानेतानतीत्य देही अमृतमश्नुते इति श्रुत्वा गुणातीतस्य लक्षणमाचारं गुणात्ययोपायं च जिज्ञासुरर्जुन उवाच—कैर्लिङ्गैरिति । एतांस्त्रीन्गुणान्योऽतीतः स कैर्लिङ्गैर्लक्षणैर्विशिष्टो

भवति, यैर्गुणातीत इति ज्ञायते तानि लिङ्गानि वदेत्यर्थः। हे प्रभो ! मत्संदेहनिवारणसमर्थ किमाचारः क आचारो यस्य स कीदृशाचार इत्यर्थः। कथं च केन प्रकारेण एतांस्त्रीन् गुणानतिवर्तते। गुणातिक्रमोपायः क इति मे ब्रूहीत्यर्थः॥ २१॥

म० टी०—गुणानेतानतीत्य जीवन्नेवामृतमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणं चाचारं च गुणातीतत्वोपायं च सम्यग्बुभुत्समानः (अर्जुन उवाच)। एतान् गुणानतीतो यः स कैर्लिङ्गैर्विशिष्टो भवति। यैर्लिङ्गैः स ज्ञातुं शक्यस्तानि मे ब्रूहीत्येकः प्रश्नः। प्रभुत्वाद्भृत्यदुःखं भगवतैव निवारणीयमिति सूचयन्संबोधयति—प्रभो इति। क आचारोऽस्येति किमाचारः। किं यथेष्टचेष्टः किं वा नियन्त्रित इति द्वितीयः प्रश्नः। कथं च केन च प्रकारेण एतांस्त्रीन् गुणानतिवर्ततेऽतिक्रामतीति गुणातीतत्वोपायः क इति तृतीयः प्रश्नः॥ २१॥

शं० टी०—देहव्यतिरिक्तात्मवेत्ता यतिर्जीवन्नेव त्रीन् गुणानतीत्य मुक्तो भवतीति श्रुत्वाऽतिविस्मितः सन् गुणातीतस्य लक्षणान्याचारं च गुणातिक्रमणोपायं च पृष्ट्वा ज्ञातुमर्जुन उवाच—कैरिति। प्रकृष्टभास्वररूपत्वात्प्रभुश्चिद्घनस्तस्य संबुद्धिः हे प्रभो एतानुक्तलक्षणान् त्रीन् गुणान् अतीतः समतिक्रम्य ब्रह्मात्मना स्थितो ब्रह्मविद्यतिः कैर्लिङ्गैर्लक्षणैर्ज्ञातो भवति। गुणातीतस्य सिद्धस्य कानि लक्षणानि यैरयं गुणातीत इति ज्ञातुं शक्यत इत्यर्थः। गुणातीतस्य किमाचारः कीदृग्विध आचारः?—किमयं वैदिकमाचरति किं लौकिकमाचरतीति वा उत यथेष्टमाचरतीत्यर्थः। एतान् स्वस्वविकारैः सागरोपमान् त्रीन् सत्त्वादिगुणान्—तुशब्दः साधनस्यदुर्लभत्वद्योतनार्थः—कथं तु केन प्रकारेणातिवर्तते केनोपायेनायं गुणत्रयातिक्रमणं करोतीत्येतत्प्रश्नत्रयं सम्यग्वक्तव्यमित्यर्थः॥ २१॥

श्री० टी०—गुणानेतानतीत्यामृतमश्नुत इत्येतच्छ्रुत्वा गुणातीतस्य लक्षणमाचारं गुणात्ययापोयं च सम्यग्बुभुत्सुरर्जुन उवाच—कैर्लिङ्गैरिति। हे प्रभो ! कैर्लिङ्गैः कीदृशैरात्मन्युत्पन्नैश्चिह्नैर्गुणातीतो देही भवतीतिलक्षणप्रश्नः। क आचारो यस्येति किमाचारः कथं वर्तत इत्यर्थः। कथं च केनोपायेनैतांस्त्रीनपि गुणानतीत्य वर्तते तत्कथयेति॥ २१॥

स० टी०—जीवन्नेव गुणानेतानतीत्यामृतमश्नुते॥ इत्येतद्वचनं श्रुत्वा पार्थो भगवतो हरेः॥ १॥ गुणातीतस्य चिह्नानि तथाऽऽचारं महात्मनः॥ सम्यग्बुभुत्समानः सन् गुणातीतत्वसाधनम्॥ २॥ उवाच वचनं चारु प्रश्नपीयूषपूरितम्॥ गुणानेतानतीतो यः स कैर्लिङ्गैर्युतः पुमान्॥ ३॥ ज्ञातुं शक्यः स यैर्लिङ्गैस्तानि मे ब्रूहि पृच्छतः॥ प्रभुत्वाद्भृत्यदुःखानि वारणीयानि सर्वथा॥ ४॥ श्रीमद्भगवतैवेति सूचयन्नाह हे प्रभो॥ किमाचारो गुणातीतः स्यात्प्रश्नोऽयं द्वितीयकः॥ ५॥ स किं यथेष्टचेष्टः स्यात्किं वा शास्त्रनियन्त्रितः॥ एतान्केन प्रकारेण गुणांस्त्रीनतिवर्तते॥ ६॥ को गुणातीततोपायः प्रश्नोऽयं च तृतीयकः॥ ७॥ २१॥

भा० टी०—गुणातिक्रमेण सर्वानर्थनिवृत्तिपूर्वकामृतप्राप्तिलक्षणं सम्यग्ज्ञानफलं भगवतोक्तं श्रुत्वा प्रश्नबीजं प्रतिलभ्य गुणातीतस्य लक्षणमाचारं गुणातिक्रमणोपायं च सम्यग्बुभुत्सुरर्जुन उवाच—कैरिति। एतानुक्तान् त्रीन् गुणान् कैर्लिङ्गैश्चिह्नैरतीतोऽतिक्रान्तो भवति—कैश्चिह्नैर्गुणातिक्रमणे प्रभुः समर्थो भवतीति सूचयन्संबोधयति—प्रभो इति। अस्मदादिप्रश्नसमाधानेऽतिसमर्थोऽसीति वा संबोधनाशयः। कोऽस्याचार इति किमाचारः कथं च केन प्रकारेणैतान् त्रीन् गुणान् अतिवर्तते लिङ्गैराचारेण च गुणातीतस्य लक्षणं गुणातिक्रमोपायं च वदेत्यर्थः॥ २१॥

प० टी०—एवमेतच्छ्रुत्वा गुणातीतस्य लक्षणं गुणात्ययोपायं च जिज्ञासुरर्जुनः पृच्छति—कैरिति। भो

प्रभो एतानुक्तप्रकारांस्त्रीन् गुणान् कैरात्मन्युत्पन्नैर्लिङ्गैश्चिह्नैरतीतो भवति ? तथाविधः किमाचारः कीदृश आचारो यस्येति किमाचारः कथं वर्तत इत्यर्थः । कथं च केनोपायेन तांस्त्रीन् गुणानतीतोऽतीत्य वर्तते इति प्रश्नः ॥ २१ ॥

रा० टी०–गुणानतीत्येत्युक्ते सति पृच्छति–कैरिति । एतान्सर्वबन्धकान्सत्त्वादिगुणानतीतोऽतिक्रान्तः पुमान्कैर्लिङ्गैर्लक्षणैर्युक्तो भवति । हे प्रभो किमाचारः कीदृशाचारवान् कथं केनोपायेनैतान् त्रीन् गुणानतिवर्तते ॥ २१ ॥

**श्रीभगवानुवाच–प्रकाशं च प्रवृत्तिं च मोहमेव च पाण्डव ॥**
**न द्वेष्टि संप्रवृत्तानि न निवृत्तानि काङ्क्षति ॥ २२ ॥**

**त० टी०–एवमर्जुनप्रश्नानुसारेण गुणातीतस्य लक्षणादिप्रतिवचनानि श्रीभगवानुवाच–पञ्चभिः श्लोकैः । तत्र तावत्कैर्लिङ्गैर्गुणातीतो भवतीत्यस्योत्तरम्–प्रकाशं चेति । प्रकाशं च सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यं, मोहमेव च तमःकार्यम्, उपलक्षणमेतत्सर्वाण्यपि गुणकार्याणि यथायथं संप्रवृत्तानि संस्कारानुगुणं प्राप्तानि प्रतिकूलबुद्ध्या न द्वेष्टि, तथा तदपायहेतुवशान्निवृत्तानि न काङ्क्षति न स्पृहयति । एवं द्वेषस्पृहाशून्यो यः गुणातीतः स उच्यते इति चतुर्थश्लोकगतेनान्वयः ॥ २२ ॥**

म० टी०–स्थितप्रज्ञस्य का भाषेत्यादिना पृष्टमपि प्रजहाति यदा कामानित्यादिना दत्तोत्तरमपि पुनः प्रकारान्तरेण बुभुत्समानः पृच्छतीत्यवधार्य प्रकारान्तरेण तस्य लक्षणादिकं पञ्चभिः श्लोकैः (श्रीभगवानुवाच)।–प्रकाशमिति । यस्तावत् कैर्लिङ्गैर्युक्तो गुणातीतो भवतीति प्रश्नस्तस्योत्तरं शृणु–प्रकाशं च सत्त्वकार्यं प्रवृत्तिं च रजःकार्यं मोहं च तमःकार्यम् । उपलक्षणमेतत् । सर्वाण्यपि गुणकार्याणि यथायथं संप्रवृत्तानि स्वसामग्रीवशादुद्भूतानि सन्ति दुःखरूपाण्यपि दुःखबुद्ध्या यो न द्वेष्टि । तथा विनाशसामग्रीवशान्निवृत्तानि तानि सुखरूपाण्यपि सन्ति सुखबुद्ध्या न काङ्क्षति न कामयते स्वप्नवन्मिथ्यात्वनिश्चयात् । एतादृशद्वेषरागशून्यो यः स गुणातीत उच्यत इति चतुर्थश्लोकगतेनान्वयः । इदं च स्वात्मप्रत्यक्षं लक्षणं स्वार्थमेव न परार्थं । न हि स्वाश्रितौ द्वेषतदभावौ रागतदभावौ च परः प्रत्येतुमर्हति ॥ २२ ॥

शं० टी०–तत्र प्रथमप्रश्नस्योत्तरं वक्तुं श्रीभगवानुवाच–प्रकाशमिति । गुणानां गुणकार्याणां च स्वयमविषयीभूय तदुभयं च चिद्वृत्त्या समतिक्रम्य ब्रह्मण्येव सदा तदात्मना यस्तिष्ठति स गुणातीतो ब्रह्मविद्यतिः–प्रकाशं च प्रकाशः सत्त्वविकारः विषयसुखज्ञानयोरासञ्जकश्चित्तेन्द्रियप्रसादः रसास्वादलक्षणः समाधेरन्तरायस्तं प्रकाशं च, प्रवृत्तिं च प्रवृत्तिः रजःकार्यं रागमूलकं मनसश्चेन्द्रियाणां च बहिःप्रावण्यं विक्षेपलक्षणः समाधेरन्तरायस्तामिन्द्रियाणां विषयप्रवृत्तिं च, मोहमेव च एवशब्दोऽप्यर्थः । मोहस्तमोविकारः निद्रालस्यप्रमादासञ्जकः लयः कषाय इत्येवंलक्षणः समाधेरन्तरायस्तं मोहमपि च–तान्येतानि सत्त्वरजस्तमःकार्याणि संप्रवृत्तानि सम्यक्प्रसक्तानि न द्वेष्टि प्राप्तेषु प्रकाशादिषु प्रतिकूलत्वबुद्ध्या द्वेषबुद्धिं न करोति, चिदाभासविषयत्वात्तेषां स्वस्य च संबन्धाभावान्न किंचिद्विक्षेपं प्राप्नोति यथा साधको निदिध्यासुः रसास्वादविक्षेपलयकषायरूपाणि प्रकाशादीनि समाधेर्विघ्नभूतानि सत्त्वादिगुणकार्याणि संप्रवृत्तानि द्वेष्टि ममैते समाधिविघ्नाः प्राप्ता इति विक्षिपति, निवृत्तानि काङ्क्षति च तेषां निवृत्त्यै दृश्यनिन्दादिप्रतिक्रियां च करोतीत्यर्थः । न तथायं गुणातीतः संसिद्धः प्रकाशादीनि संप्रवृत्तानि द्वेष्टि, न निवृत्तानि काङ्क्षति च, तेषां चिद्विलसितत्वेन ब्रह्मदृष्टावन्तर्भूतत्वात् निवृत्तिमपि नापेक्षत इत्यर्थः । सत्यध्यासतोऽप्यनात्मतादात्म्ये

रागद्वेषादयः संभवेयुः। नित्यनिरन्तरनिर्विकल्पकसमाध्यग्निनिर्दग्धाहंममाध्यासबन्धत्वाद्विदुषो रागद्वेषाद्यनात्मगुणाविर्भावाभावो युक्त इति भावः। एतेन विक्षेपकेषु गुणकार्येषु प्राप्तेष्वपि द्वेषाद्यभावो गुणातीतस्य लिङ्गमान्तरं स्वप्रत्यक्षमिति सूचितं भवति ॥ २२ ॥

श्री० टी०—स्थितप्रज्ञस्य का भाषेत्यादिना द्वितीयाध्याये पृष्टमपि दत्तोत्तरमपि पुनर्विशेषबुभुत्सया पृच्छतीति ज्ञात्वा प्रकारान्तरेण तस्य लक्षणादिकं श्रीभगवानुवाच—**प्रकाशं** **चेत्यादिषड्भिः** । तत्रैकेन लक्षणमाह—**प्रकाशं चेति** । प्रकाशं च सर्वद्वारेषु देहेऽस्मिन्निति पूर्वोक्तं सत्त्वकार्यं प्रवृत्तिं च रजःकार्यम् मोहं च तमःकार्यम् । उपलक्षणमेतत्सत्त्वादीनाम्। सर्वाण्यपि कार्याणि यथायथं संप्रवृत्तानि स्वतः प्राप्तानि सन्ति दुःखबुद्ध्या यो न द्वेष्टि, निवृत्तानि च सन्ति सुखबुद्ध्या न काङ्क्षति गुणातीतः स उच्यते इति चतुर्थेनान्वयः ॥ २२ ॥

स० टी०—स्थितप्रज्ञस्य केत्यत्र पृष्टं दत्तं मयोत्तरम् ॥ भूयो बुभुत्समानोऽयं प्रकारान्तरमर्जुनः ॥ १॥ पृच्छतीत्यवधार्याह हरिः पञ्चभिरुत्तरम् ॥ यैर्लिङ्गैः स्याद्गुणातीतस्तानि ते कथयाम्यहम् ॥ २ ॥ प्रकाशं सत्त्वकार्यं च प्रवृत्तिं राजसीं तथा ॥ तमःकार्यं तथा मोहमेतत्सर्वोपलक्षणम् ॥ ३ ॥ सर्वाणि गुणकार्याणि प्रवृत्तानि यथायथम् ॥ उद्भूतानि स्वसामग्रीवशाद्दुःखात्मकान्यपि ॥ ४ ॥ न द्वेष्टि दुःखबुद्ध्या यः सम्यङ्मिथ्यात्वनिश्चयात् ॥ निवृत्तानि तथा नाशसामग्रीवशतः स्वयम् ॥ ५ ॥ सन्त्यतिसुखरूपाणि सुखबुद्ध्या न काङ्क्षति ॥ स्वप्नवद्दृष्टनष्टत्वनिश्चयादीदृशो बुधः ॥ ६ ॥ रागद्वेषाद्यनाक्रान्तः स गुणातीत उच्यते ॥ इदं चिह्नं स्वसंवेद्यं स्वार्थमेवास्ति लक्षणम् ॥ ७ ॥ न ह्यन्योऽन्याश्रितौ रागद्वेषौ वेत्ति न तत्क्षयम् ॥ ८ ॥ २२ ॥

भा० टी०—एवं पृष्टः श्रीभगवानुवाच तत्र। कैर्लिङ्गैर्गुणातीतो भवतीति प्रश्नस्योत्तरमाह—**प्रकाशमिति** । प्रकाशं च सत्त्वकार्यं, प्रवृत्तिं च रजःकार्यं, मोहमेव च तमःकार्यम्। चकाराः सत्त्वादिसर्वकार्याणां समुच्चयार्थाः। इत्येतानि संप्रवृत्तानि सम्यग्विषयभावेनोद्भूतानि न द्वेष्टि यथाऽविद्वान्—मम तामसः प्रत्ययो जातस्तेनाहं मूढः, तथा राजसीप्रवृत्तिः ममोत्पन्ना दुःखात्मिका तेनाहं रजसा प्रवर्तितः प्रचलितः स्वरूपात्कष्टं मम वर्तते योऽयं स्वरूपावस्थानात् भ्रंशः, तथा सात्त्विको गुणः प्रकाशात्मा मां विवेकित्वमापादयन् सुखेन च संजयन् बध्नातीति संप्रवृत्तं सत्त्वादिकार्यं द्वेष्टि न तथा सम्यग्दर्शित्वेन गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः। सर्वतः यथा चाविद्वान् सात्त्विकादिः पुरुषः सत्त्वादिकार्याण्यात्मानं प्रति प्रकाशादीनि निवृत्तानि काङ्क्षति न तथा गुणातीतो निवृत्तानि काङ्क्षतीत्यर्थः। एवंविधो यः स गुणातीत उच्यते इति चतुर्थस्थेनान्वयः। एतादृशस्यैव जनकसंबन्धो नास्ति नत्वन्यस्येति ध्वनयन्संबोधयति—हे पाण्डवेति। एतच्चिह्नवत्त्वं गुणातीतस्य लक्षणं स्वार्थमेव स्वात्मप्रत्यक्षत्वात् न परप्रत्यक्षं स्वात्मविषयस्य द्वेषस्याकाङ्क्षायाश्च परैरदृश्यत्वात् ॥ २२ ॥

प० टी०—तत्रोत्तरं भगवानाह—**प्रकाशं चेति सप्तभिः** । तत्र प्रथममेकेन गुणातीतस्य लक्षणमाह—**प्रकाशं चेति** । सर्वद्वारेषु देहेऽस्मिन्निति पूर्वोक्तं सत्त्वकार्यं प्रवृत्तिश्च रजःकार्यं मोहस्तमःकार्यमित्युपलक्षणार्थमेतत्। सत्त्वादीनां सर्वाण्यपि कार्याणि यथायथं संप्रवृत्तानि स्वतः प्राप्तानि सन्ति दुःखबुद्ध्या न द्वेष्टि, निवृत्तानि च सन्ति च न काङ्क्षति गुणातीतः स उच्यत इति चतुर्थेनान्वयः ॥ २२ ॥

रा० टी०—इति पृष्टो भगवानुत्तरमाह—**प्रकाशं चेत्यादिना** । सत्त्वादयो गुणा हि द्विविधाः स्थूलाः सूक्ष्माश्च। स्थूलेभ्यो लौकिकाः प्रकाशप्रवृत्तिमोहाः जायन्ते। सूक्ष्मेभ्यस्तु परमेश्वरादिविषयाः। तत्राद्येभ्यः सत्त्वादिगुणेभ्यः क्रमाज्जातं प्रकाशं प्रवृत्तिशब्दितमुद्योगं मोहशब्दितमज्ञानं चेत्येतानि संप्रवृत्तानि प्रायो न द्वेष्टि। निवृत्तानि च न काङ्क्षति। गुणातीत इत्यनुषज्जते। द्वितीये तु विष्णुविषयप्रकाशं प्रवृत्तिं चेच्छति मोहं च

द्वेष्टीत्यर्थः। यद्वा पुरुषान्तरे स्थितप्रकाशादिसाधुगुणजातानि संप्रवृत्तानि न द्वेष्टि। मोहाद्यसाधुधर्मजातं निवृत्तं न काङ्क्षतीत्यर्थः। परस्येष्टानिष्टहानिप्राप्ती नेच्छति। गुणातीत इति भावः॥ २२॥

**उदासीनवदासीनो गुणैर्यो न विचाल्यते॥**
**गुणा वर्तन्त इत्येव योऽवतिष्ठति नेङ्गते॥ २३॥**

त० टी०–गुणातीतस्य लक्षणमुक्त्वा किमाचार इत्यस्योत्तरमाह–उदासीनवदिति त्रिभिः। यथोदासीनो न कस्यचित् पक्षं श्रयते, तथा गुणातिक्रमे प्रवृत्तो यो रागद्वेषशून्यतया कुत्रापि न सज्जते स्वरूपानुसंधान एवासीनः स्थितः गुणैः सुखदुःखाद्याकारेण परिणतैः सुखदुःखबुद्ध्या रागद्वेषाभ्यां यो न विचाल्यते स्वरूपावस्थानान्न प्रच्याव्यते, किंतु गुणाः स्वेषु कार्येषु प्रकाशादिषु वर्तन्ते इत्येवं मत्वा नेमे मम स्वरूपानुबन्धिन इति निश्चित्यावतिष्ठति स्वरूपेऽवतिष्ठते, अत एव नेङ्गते गुणानुरूपं न चेष्टते॥२३॥

म० टी०–एवं लक्षणमुक्त्वा गुणातीतः किमाचार इति द्वितीयप्रश्नस्य प्रतिवचनमाह–उदासीनेति-त्रिभिः। यथोदासीनो द्वयोर्विवदमानयोः कस्यचित् पक्षमभजमानो न रज्यति न वा द्वेष्टि तथाऽयमात्मवि-द्रागद्वेषशून्यतया स्वस्वरूप एवासीनो गुणैः सुखदुःखाद्याकारपरिणतैर्यो न विचाल्यते न प्रच्याव्यते स्वरू-पावस्थानात्, किंतु गुणा एवैते देहेन्द्रियविषयाकारपरिणताः परस्परस्मिन् वर्तन्ते। मम त्वादित्यस्येवैतत्सर्व-भासकस्य न केनापि भास्यधर्मेण संबन्धः। स्वप्नवन्मायामात्रश्चायं भास्यप्रपञ्चो जडः, स्वयंज्योतिःस्वभावस्त्वहं परमार्थसत्यो निर्विकारो द्वैतशून्यश्चेत्येवं निश्चित्य यः स्वरूपेऽवतिष्ठत्यवतिष्ठते। यो नु तिष्ठतीति वा पाठ-स्तत्र नुः पृथक्कार्यः। नेङ्गते नतु व्याप्रियते कुत्रचित्। गुणातीतः स उच्यत इति तृतीयगतेनान्वयः॥२३॥

शं० टी०–ननु गुणातीतो विद्वान् सत्त्वादिगुणकार्येषु संप्रवृत्तेषु सत्सु यदि द्वेषं न करोति तन्नि-वृत्तिं च न काङ्क्षति तर्हि सर्वं मिथ्येति तत्तद्गुणवृत्त्यनुरूपेण किं यथेष्टं वर्तत इत्याशङ्क्य। न–तस्य प्रवृत्तिहेतोरविद्याया वासनाख्यायाः सकार्याया निर्विकल्पकसमाध्यग्निनिर्दग्धत्वाद्वैदिके लौकिके चान्यत्रापि प्रवृत्तिर्न संभवति, किंतु स्वानन्दानुभूत्या स्वस्मिन्निश्चल एव तिष्ठति न किंचिद्विक्रियत इत्याह–उदासीन-वदिति। वादिप्रतिवादिनोरुभयोः कस्यापि पक्षमनवलम्ब्य तदुभयव्यापारद्रष्टा तटस्थः पुरुष उदासीन इत्युच्यते। तद्वद्विषयेषु प्रवर्तकानां प्रकाशदयादाक्षिण्यसत्यविनयरागद्वेषलोभमोहादीनां सत्त्वादिगुणानां तथा प्रवर्त्यानां देहेन्द्रियादीनां तद्व्यापाराणां च द्रष्टा स्वयमुदासीनवत्तेषां तद्व्यापाराणां च साक्षि-त्वेनासीनो दूरे वर्तमानः यो विद्वान् गुणैः प्रकाशादिभिः सात्त्विकै रागादिभी राजसैर्मोहादिभिस्तामसैश्च न विचाल्यते स्वनिष्ठाया न प्रच्याव्यते यथा बाह्यवासनाबद्धस्तथा ब्रह्माकारवृत्तेश्चालयितुं न शक्यत इत्यर्थः। ननु यद्येवं तर्ह्ययं विद्वान् देहयात्रायां कथं प्रवर्तत इत्याकाङ्क्षायामाह–गुणा इति। चिरकालं नित्यनिरन्तरनिर्विकल्पसमाधिनिष्ठया स्थिरीभूतप्रज्ञो यः संसिद्धो ब्रह्मवित्यतिः स गुणा देहेन्द्रियादय एक-फलानुभावककर्मणा यथाकालं प्रेर्यमाणाः सन्तो गुणेषु विषयेषु प्रवर्तन्ते भोजनादिक्रियां कुर्वन्ति, तेषां तद्व्यापाराणां च साक्षी प्रत्यग्रूपोऽहं तु न प्रवर्ते सदा निष्क्रिय एवास्मीत्यवतिष्ठते–ब्रह्माकारवृत्त्या ब्रह्म-ण्येव सदा तदात्मनावस्थानं करोति, नतु स्वयं गुणेभ्यो गुणकार्येभ्यश्च किंचिदपीङ्गते–चलति कर्ताहं भोक्ताहं ममेदं भोग्यमिति कर्तृत्वभोक्तृत्वाध्यासं न करोतीत्यर्थः। अवतिष्ठतीति परस्मैपदं छान्दसम्। एवं-लक्षणो यो ब्रह्मवित्तमः स गुणातीत इत्युच्यत इत्युत्तरेणान्वयः। एतेन गुणप्रेरणया देहेन्द्रियादीनां विषयेषु प्रवृत्तौ सत्यामप्यौदासीन्यमविकारित्वं च विदुषो गुणातीतत्वे लिङ्गमिति सूचितम्। किमाचार इति-प्रश्नस्योत्तरं च दत्तं भवति॥ २३॥

श्री० टी०—तदेवं स्वसंवेद्यं तस्य लक्षणमुक्त्वा परसंवेद्यं तस्य लक्षणं वक्तुं किमाचार इति द्वितीयप्रश्नस्योत्तरमाह—उदासीनवदिति त्रिभिः । उदासीनवत् साक्षितया आसीनः स्थितः सन् गुणैर्गुणकार्यैः सुखदुःखादिभिर्यो न विचाल्यते स्वरूपान्न प्रच्याव्यते, अपि तु गुणा एव स्वकार्येषु वर्तन्ते, एतैर्मम संबन्ध एव नास्तीति विवेकज्ञानेन यस्तूष्णीमवतिष्ठति । परस्मैपदमार्षम् । नेङ्गते न चलति ॥२३॥

स० टी०—एवं तल्लक्षणं प्रोच्य तदाचारोऽधुनोच्यते ॥ यथा कश्चिदुदासीनो द्वयोर्विवदमानयोः ॥ १॥ अभजन्कस्यचित्पक्षं न वा द्वेष्टि न रज्यते ॥ तथाऽयमात्मविद्रागद्वेषशून्यतयाऽऽत्मनि ॥ २ ॥ आसीनो न गुणैर्दुःखसुखाद्याकारतां गतैः ॥ स्वात्मावस्थानतो मोक्षसुखात्प्रच्याव्यतेऽण्वपि ॥ ३ ॥ देहेन्द्रियादिरूपेण गुणाः परिणता अमी ॥ परस्परस्मिन्वर्तन्ते मम त्वेषां न केनचित् ॥ ४ ॥ आदित्यस्येव सर्वावभासकस्य गुणेन वा ॥ दोषेण वास्ति संबन्धः स्वप्नवत्कल्पितेन च ॥ ५ ॥ स्वयंज्योतिःस्वभावोऽहं निर्विकारोऽच्युतोऽमलः ॥ प्रपञ्चोऽयं जडो मिथ्या भास्यः स्वाप्नप्रपञ्चवत् ॥ ६ ॥ य इत्येवं विनिश्चित्य स्वस्वरूपेऽवतिष्ठते ॥ न तु व्याप्रियते किंचिद्गुणातीतः स उच्यते ॥ ७ ॥ २३ ॥

भा० टी०—कैर्लिङ्गैरित्यादिप्रश्नं समाधायाथेदानीं किमाचार इतिप्रश्नस्योत्तरमाह त्रिभिः—उदासीनवदिति । उदासीनवत् यथोदासीनो न कस्यचित्पक्षं भजते, तथा कौटस्थ्यज्ञानेन निवृत्तकर्तृत्वाभिमान आत्मवित् गुणातिक्रमणोपायमार्गे तत्त्वज्ञानेऽवस्थितः आसीनः आत्मविवेकदर्शनावस्थातः गुणैर्न विचाल्यते न प्रच्याव्यते । तदेतत्स्पष्टयति—गुणाः कार्यकरणविषयाकारपरिणता अन्योऽन्यस्मिन्वर्तन्ते नाहमित्येवं निश्चित्य यः कूटस्थज्ञानेऽवतिष्ठति तेन नेङ्गते न चलति स्वरूपावस्थ एव भवतीत्यर्थः । अवपूर्वस्य तिष्ठतेरात्मनेपदे प्रयोक्तव्ये छन्दोभङ्गभयात् परस्मैपदप्रयोगः कृतः । अनुष्टुप्छन्दसि पञ्चमस्य लघुत्वनियमात् । अनुतिष्ठतीति वा पाठान्तरम् ॥ २३ ॥

प० टी०—तदेवं स्वसंवेद्यस्य लक्षणमुक्त्वा किमाचार इति द्वितीयप्रश्नोत्तरमाह—उदासीनवदिति त्रिभिः । उदासीनवत्साक्षितया तटस्थवदासीनः स्थितो गुणैर्गुणकार्यैः सुखदुःखादिभिर्यो न चाल्यतेऽपि तु गुणा एव स्वकार्येषु वर्तन्ते एतैर्मम संबन्धो नास्तीति विवेकेन यस्तूष्णीमवतिष्ठतीति । परस्मैपदमार्षम् । नेङ्गते न चलति ॥ २३ ॥

रा० टी०—एवं कैर्लिङ्गैरिति प्रश्नस्योत्तरमुक्त्वा किमाचार इत्यस्योत्तरमाह—उदासीनवदिति । यो गुणातीतः पुमानुदासीनवदासीनः न तूदासीन एव वैष्णवधर्मानुष्ठानात् । गुणैः सत्त्वादिभिर्न विचाल्यते तत्कृतविकारं न प्राप्नोति । गुणाः सत्त्वादयः परमेश्वरेच्छया प्रवर्तन्ते न स्वतन्त्रा इत्येवं योऽवतिष्ठति वेत्ति स नेङ्गते गुणकृतावैष्णवकर्मकरणाय न चेष्टत इति । वैष्णवान्येव कर्माण्याचरति नान्यानीति तदाचार इति भावः ॥ २३ ॥

**समदुःखसुखः स्वस्थः समलोष्टाश्मकाञ्चनः ॥**
**तुल्यप्रियाप्रियो धीरस्तुल्यनिन्दात्मसंस्तुतिः ॥ २४ ॥**

त० टी०—किंच-समदुःखसुख इति । समदुःखसुखः दुःखसुखयोः समचित्तः, यतः स्वस्थः स्वस्मिन्स्वरूपे स्थितः अत एव समलोष्टाश्मकाञ्चनः समानि लोष्टाश्मकाञ्चनानि यस्य स तथा । तत एव तुल्यप्रियाप्रियः तुल्यौ प्रियाप्रियौ विषयौ यस्य स तथा । धीरः गुणकार्यप्राप्तावपि विवेकादप्रचलितः। अत एव तुल्यनिन्दात्मसंस्तुतिः तुल्या निन्दा च आत्मसंस्तुतिश्च यस्य सः ॥ २४ ॥

म० टी०—सम इति । समे दुःखसुखे द्वेषरागशून्यतयानात्मधर्मतयाऽनृततया च यस्य स समदुःखसुखः

कस्मादेवं यस्मात्स्वस्थः स्वस्मिन्नात्मन्येव स्थितो द्वैतदर्शनशून्यत्वात् । अत एव समानि हेयोपादेयभावरहितानि लोष्ठाश्मकाञ्चनानि यस्य स तथा । लोष्ठः पांसुपिण्डः । अत एव तुल्ये प्रियाप्रिये सुखदुःखसाधने यस्य हितसाधनत्वाहितसाधनत्वबुद्धिविषयत्वाभावेनोपेक्षणीयत्वात् । धीरः धीमान् धृतिमान् वा । अत एव तुल्ये निन्दात्मसंस्तुती दोषकीर्तनगुणकीर्तने यस्य स गुणातीत उच्यत इति द्वितीयगतेनान्वयः ॥ २४ ॥

शं० टी०—ननु देहेन्द्रियादेः स्वस्थत्वदशायामयं गुणैः स्वनिष्ठातो न विचाल्यते, परंतु दुःख आध्यात्मिके चाधिभौतिके च निन्दाद्यनर्थे च संप्राप्ते गुणैर्निष्ठायाश्चालितः खेदमोहादिकं भजत्येवेत्याशङ्कायां—न। बाह्यसुखदुःखादीनां निन्दास्तुत्यादीनां च विषयोऽनात्मैव न त्वहमात्मा निर्विशेषो निराकारश्चिदेकरस इति धीनैश्चल्येन बाह्यसुखदुःखाद्यवस्थायामपि स्वात्मन्येव तिष्ठति, न त्वनात्मन्यहंममेतिबुद्ध्याध्यासं मूढवत्करोतीत्याह—समेति द्वाभ्याम्। यत्र शोभनानि हृष्टानि खानि भवन्ति तत्सुखं, यत्र दुष्टानि खानि भवन्ति तद्दुःखम्। समे दुःखसुखे यस्य स समदुःखसुखः समचित्तः। सुखदुःखयोः समत्वं नाम चित्तस्येष्टानिष्टभावनावैधुर्यमेव तदेव समचित्तत्वम्। परे इव तद्भोक्तर्यहमित्यध्याससंबन्धरहित इत्यर्थः। तत एव स्वस्थः सर्वावस्थासु सर्वदा स्वस्मिन्नेव परे ब्रह्मणि तदात्मना तिष्ठतीति ब्रह्मविदेक एव स्वस्थ इत्युच्यते। तत एव जन्मादिदुःखैराध्यात्मिकादिदुःखैश्च नाभिभूयते। तदन्ये त्वस्वस्था एव भवन्ति बहिर्मुखास्तत एव जन्मादिदुःखैराध्यात्मिकदुःखैश्चानात्मधर्मैरन्यैश्चाधिभौतिकादिभिरभिभूयन्ते। सति विक्षेपे ब्रह्मात्मना स्थितवत्तेरप्रच्युतत्वमेव स्वस्थत्वं न तु धैर्येण तत्सहिष्णुत्वम्। तत एव तुल्यप्रियाप्रियः—प्रियमिष्टमप्रियमनिष्टं तुल्ये प्रियाप्रिये यस्य स तुल्यप्रियाप्रियः उभयत्र सम इत्यर्थः। ननु प्रियाप्रिययोः सुखदुःखयोश्च विदुषः समत्वं न संभवति, अत्यन्तमधुरमतिकटु च द्रव्यं भुञ्जतश्चण्डातपाऽनातपयोस्तिष्ठतश्च विदुषोऽपीष्टानिष्टत्वोपलब्धेर्दुर्वारत्वात्तदनुभूत्या विषमबुद्धिः स्यादेवेति चेत्सत्यं, सुखदुःखयोः प्रियाप्रिययोः प्राप्तयोः सतोर्विदुषोऽपि विषमबुद्धिः स्यादेव ग्राह्यभेदाद्ग्रहणभेदोपपत्तेः। स्तथापि ब्रह्मनिष्ठस्य विषमबुद्धिर्न संभवति कारणाभावात्। विषमबुद्धेः खलु कारणं बुद्धेर्विषमपदार्थसंयोगः। सत्येवैतस्मिन्निष्टानिष्टत्वज्ञानं संपद्यते। सत्येवेष्टानिष्टत्वज्ञाने विषमबुद्धिः स्यान्नासति। नहि चिरकालनित्यनिरन्तरसमाध्यभ्यासबलेन ब्रह्माकारतामापद्य बुद्धिवृत्तौ सर्वदा ब्रह्मण्येव निश्चलतया संस्थितायां बुद्धेर्विषयैर्विषमैः संयोगः संभवति। तदसंभवे त्विष्टानिष्टत्वज्ञानं संभावयितुं न शक्यते। तदभावे विदुषो ब्रह्मनिष्ठस्य विषमबुद्धिश्च न संभवति ततः सुखदुःखयोः प्रियाप्रिययोश्च विदुषः समत्वं न विरुद्धम्। ननु बलवति विक्षेपकारणे प्रसक्तेऽपि बुद्धेर्ब्रह्मात्मनावस्थितिः कथमुपपद्यत इति चेदभ्यासातिशय एव तत्र कारणमिति ब्रूमः। नत्वौषधं, नापि मन्त्रः, न च लययोगश्च। अनभ्यासवशादेव सतामपि बहिर्मुखत्वं नत्वविवेकतः। अभ्यासेन तु कौन्तेयेत्युक्तत्वाच्छ्रद्धाभक्तिपूर्वकं समाध्यभ्यासेन बाह्यानालम्बिनी ब्रह्मनिष्ठा सिध्यति। सर्वत्राप्यभ्यास एव बलवत्कारणम् 'अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः' इति स्मृतेः। यदुक्तं तुल्यप्रियाप्रिय इति प्रियाप्रिययोः समत्वं तद्विस्पष्टयति—समलोष्टाश्मकाञ्चन इति। समानि प्रीत्यप्रीत्योरविषयाणि लोष्टाश्मकाञ्चनानि यस्य सः समलोष्टाश्मकाञ्चनः। यद्वा समानि प्रत्यग्दृष्ट्या समभावं गतानि ब्रह्मात्मना दृष्टानि लोष्टाश्मकाञ्चनानि यस्य स समलोष्टाश्मकाचनः—सर्वत्र ब्रह्मबुद्धिरित्यर्थः। विदुषः सुखदुःखप्रियाप्रियादिषु सर्वत्र समदर्शनसिद्धौ हेतुमाह—धीर इति। आभासवासनया बहिर्मुखायमानां धियं राति निगृह्णाति स्वाकारेणैव स्थापयतीति धीरः—स्वनिष्ठाऽव्यभिचरितबुद्धिवृत्तिरित्यर्थः। तत एव तुल्यनिन्दात्मसंस्तुतिः निन्दा दूषणमात्मनो देहादेर्गुणकीर्तनं स्तुतिरात्मसंस्तुतिः, तुल्ये अनात्मगोचरे निन्दात्मसंस्तुती यस्य स तुल्यनिन्दात्मसंस्तुतिः। अनात्मैकगोचरयोर्निन्दास्तुत्योराविषयीभूतस्वरूप इत्यर्थः। सुखदुःखप्रियाप्रियादिषु समत्वं विदुषो जीवन्मुक्तत्वे परप्रत्यक्षं लिङ्गमिति सूचितं भवति ॥२४॥

श्री० टी०–अपि च–समेति । समे सुखदुःखे यस्य । यतः स्वस्थः स्वरूप एव स्थितः अत एव समानि लोष्टाश्मकाञ्चनानि यस्य । तुल्ये प्रियाप्रिये सुखदुःखहेतुभूते यस्य । धीरो धीमान् । तुल्या निन्दा च आत्मसंस्तुतिश्च यस्य सः ॥ २४ ॥

स० टी०–समे दुःखसुखे यस्यानात्मधर्मतयाऽनृते ॥ द्वैतदर्शनशून्यत्वात्स्वस्मिन्नेव स्थितो यतः ॥ १ ॥ हेयादेयत्वशून्यानि लोष्टाश्मादीनि यस्य सः ॥ तुल्ये प्रियाप्रिये यस्य साधने सुखदुःखयोः ॥ २ ॥ उपेक्षणीयभावेन हिताहितविकल्पनाः ॥ यस्य ध्वस्ता अतोऽसौ स्याद्धीमान्धैर्ययुतो बुधः ॥ ३ ॥ अत एवात्मनस्तुल्ये निन्दासम्यक्स्तुती उभे ॥ यस्य दोषगुणादीनां सम्यग्बोधेन बाधनात् ॥ ४ ॥ ईदृशो ब्रह्मविद्धीरो गुणातीतः स उच्यते ॥ ६ ॥ २४ ॥

भा० टी०–किंच–समे इति । समे रागद्वेषानुत्पादकतया स्वीयत्वाभिमानानास्पदे दुःखसुखे यस्य स समदुःखसुखः स्वस्मिन्नविक्रिये आत्मनि स्थितः स्वरूपान्न कदापि प्रच्युतः । समानि अहेयोपादेयानि लोष्टादीनि यस्य स, यतस्तुल्ये समे प्रियाप्रिये यस्य स धीरो धीमान् । अत एव तुल्ये निन्दात्मसंस्तुती यस्य स गुणातीत उच्यते इति परेणान्वयः ॥ २४ ॥

प० टी०–अपि च–समदुःखसुखेति । समे दुःखसुखे यस्य । यतः स्वस्थः स्वरूप एव स्थितः । समानि लोष्टाश्मकाञ्चनानि यस्य । शेषं स्पष्टम् ॥ २४ ॥

रा० टी०–आचारान्तरं चाह–समेति । प्रायेण हेयतया दुःखसमं वैषयिकं सुखं यस्य स समदुःखसुखः । गुणातीत इत्यनुषज्जते । स्वस्थः प्रायेण निर्विकारः । हेयत्वेन लोष्टाश्मसमं काञ्चनं यस्य स समलोष्टाश्मकाञ्चनः । प्राय इति सर्वत्र योज्यम् । हेयत्वेनाप्रियतुल्यं प्रियं यस्य स तुल्यप्रियाप्रियः । हेयत्वेन निन्दया तुल्या आत्मनः स्वस्य संस्तुतिर्यस्य स तथा । समत्वादिकं केन स्यादित्यत उक्तं धीर इति । धैर्येणेत्यर्थः । यद्वा विष्णुभजनादिविषये समदुःखसुख इत्यादि योज्यम् । किमुक्तं भवति–विष्णुभजनादौ दुःखसत्त्वे तत्त्यागे सुखसत्त्वेऽपि विष्णुभजनादिकं सममेकप्रकारमेव कार्यमित्युक्तं भवति । एवमग्रेऽपि अनुष्ठाने लोष्टाश्माद्यनभिमतप्राप्तिः तत्त्यागे काञ्चनाद्यभिमतं प्रयच्छतीति विष्णुभजनादिकं न त्याज्यम् । लौकिकपुमर्थप्राप्तिहानावपि विष्णुभजनादि न त्याज्यमित्यर्थः । अनुष्ठानेऽननुष्ठाने प्रियाप्रिययोः प्राप्तावपि विष्णुभजनादौ तुल्य एव । सदानुष्ठेयमेवेत्यर्थः । तथानुष्ठानाननुष्ठानयोः क्रमान्निन्दात्मस्तुत्योः प्राप्तौ सत्यामपि विष्णुभक्त्यादौ तुल्य एव । न त्याज्यं विष्णुभक्त्यादीत्यर्थः । तत्र हेतुर्धीरः धीमान्विष्णुमाहात्म्यज्ञानवान्स्वस्थः विष्णुधर्मादचल इति ॥ २४ ॥

## मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः ॥
## सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ २५ ॥

त० टी०–किंच–मानापमानयोरिति । स्तुतिनिन्दाप्रयुक्तयोर्मानापमानयोस्तत्कल्पितयोर्मित्रारिपक्षयोरात्मनस्तत्स्पर्शाभावात्समचित्तः, सर्वानैहिकामुष्मिकार्थानारम्भान् क्रियाकलापांस्त्यक्तुं शीलमस्येति सर्वारम्भपरित्यागी, य एवंभूतः स गुणातीत उच्यते ॥ २५ ॥

म० टी०–मानेति । मानः सत्कारः आदरापरपर्यायः, अपमानस्तिरस्कारोऽनादरापरपर्यायः, तयोस्तुल्यः हर्षविषादशून्यः । निन्दास्तुती शब्दरूपे, मानापमानौ तु शब्दमन्तरेणापि कायमनोव्यापारविशेषाविति भेदः । अत्र पकारवकारयोः पाठविकल्पेऽप्यर्थः स एव । तुल्यो मित्रारिपक्षयोः-मित्रपक्षस्येवारिपक्षस्यापि द्वेषाविषयः स्वयं तयोरनुग्रहनिग्रहशून्य इति वा । सर्वारम्भपरित्यागी–आरभ्यन्त इत्यारम्भाः कर्माणि तान् सर्वान् परित्यक्तुं शीलं यस्य स तथा, देहयात्रामात्रव्यतिरेकेण सर्वकर्मपरित्यागीत्यर्थः । उदासीनवदासीन इत्याद्युक्तप्रकाराचारो गुणातीतः स उच्यते । यदुक्तमुपेक्षकत्वादि तद्विद्योदयात्पूर्वं यत्नसाध्यविद्या-

धिकारिणा साधनत्वेनानुष्ठेयमुत्पन्नायां तु विद्यायां जीवन्मुक्तस्य गुणातीतस्योक्तं धर्मजातमयत्नसिद्धं लक्षणत्वेन तिष्ठतीत्यर्थः ॥ २५ ॥

शं० टी०—गुणातीतोऽयमिति विदुषो गुणातीतत्वविज्ञानाय लिङ्गान्तरं किमाचार इतिप्रश्नस्योत्तरं च वदन् जीवन्मुक्तलक्षणमुपसंहरति—**मानेति** । मान उपचारैर्बहूकरणम्, अपचारैर्लघूकरणमवमानस्तयोरुभयोस्तुल्यः स्वप्रारब्धवशात्तयोर्विषयभूते देहे आत्मत्वभावनाभावादुभयत्राप्यविक्रिय इत्यर्थः । पूजावमानयोर्मुखविकासवैवर्ण्यादिविकाररहितत्वेन समचित्तत्वं जीवन्मुक्तस्य लिङ्गम् । यद्यपि सर्वं ब्रह्मैव पश्यतो ब्रह्मविदः प्रियाप्रियमित्रामित्रादिभेददृष्टिर्न संभवति, तथापि यदिष्टमिव भुज्यते तत्प्रियमिति यदनिष्टमिवोदास्यते तदप्रियमिति । यस्तु ब्रह्मविच्चर्यां दृष्ट्वाऽनुमोदते स मित्रपक्षः, यस्तु नानुमोदते सोऽरिपक्षः इति लोकदृष्ट्या संभवति, तयोर्मित्रारिपक्षयोः स्वबुद्धिदोषेणैव मित्रामित्रभावं गतयोरुभयोस्तुल्यः समदर्शी सर्वत्र समदर्शनमेव जीवन्मुक्तस्य परप्रत्यक्षं लिङ्गम् । किंच सर्वारम्भपरित्यागी ममामुना भवितव्यमिति फलकामनयाऽऽरभ्यन्त इत्यारम्भाः कर्माणि दृष्टादृष्टफलविषयकाणि श्रौतानि स्मार्तान्युपासनालक्षणानि च यानि कान्याश्रमोचितानि च शारीरव्यतिरिक्तानि लौकिकान्यपि च कर्माणि सर्वारम्भा इति सर्वपदेन गृह्यन्ते । ब्रह्मभावापन्नतयाऽवाप्तसकलकामत्वात्तान्सर्वारम्भान् साध्यशून्यत्वबुद्ध्या परित्यक्तुं शीलमस्यास्तीति सर्वारम्भपरित्यागी । नहि ब्रह्मभावापन्नस्याप्तकामस्य श्रोत्रियस्याकामहतस्य ब्रह्मविदः कर्मणा साध्यमस्ति यस्मिन्सति कर्मणः कर्तव्यता स्यात्तदभावात्सर्वारम्भपरित्यागो युक्त एव । ननु कर्मसाध्याश्चोपास्तिसाध्याश्च सार्वभौमादिब्रह्मान्ता आनन्दविशेषाः शतोत्तरगुणिताः सन्त्येव विदुषोऽप्याशास्या इति चेन्न, नित्यनिरतिशयानपायिब्रह्मानन्दरसानुभूतेर्विदुषस्तदाशाऽसंभवात्तेषां क्रियाजन्यत्वेनानित्यत्वादल्पत्वादसत्त्वाच्च विद्वदाशास्यत्वानुपपत्तेः । एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्तीति न्यायेन तेषामपि ब्रह्मानन्दान्तर्भूतत्वाद्ब्रह्मानन्दावाप्त्या शते पञ्चाशन्न्यायेन तदवाप्तेश्च संभवाद्ब्रह्मविदो महात्मनः सर्वात्मभावापन्नस्य न प्राप्तव्यशेषोऽस्ति । नहि सार्वात्म्यसिद्धिः प्राप्तव्यशेषश्चैकस्य संभवति । तस्माद्ब्रह्मविदः सर्वकर्मसंन्यासो युक्त एवेति सिद्धम् । एतेन किमाचार इत्यस्य प्रश्नस्य पूर्णवृत्त्या सर्वत्रौदासीन्यं विना न किंचिदस्याचार इत्युत्तरं दत्तम् । निष्कर्मत्वं विदुषो जीवन्मुक्तत्वे परप्रत्यक्षं लिङ्गमिति च सूचितं भवति । गुणातीतः समदुःखत्वादिलक्षणलक्षितो यः स एव गुणातीतः । गुणेषु देहेन्द्रियादिषु प्रतिबिम्बप्रतिच्छायापरदेहेष्विवात्मभावमुत्सृज्य गुणकार्यविलक्षणे तद्धर्मकर्माद्यस्पृष्टे स्वस्वरूपे परे ब्रह्मणि तदात्मना स्थित्वा प्रकाशं च प्रवृत्तिं च मोहं च योऽतिक्रामति स गुणातीत इत्युच्यते । गुणानां गुणकार्याणामविषय इति कृत्वा जीवन्मुक्तो ब्रह्मविद्यतिस्तल्लक्षणज्ञैरयं गुणातीत इति निगद्यत इत्यर्थः ॥ २५ ॥

श्री० टी०—अपि च—**मानापमानयोरिति** । माने अपमाने च तुल्यः मित्रपक्षे अरिपक्षे च तुल्यः । सर्वान् दृष्टादृष्टार्थानारम्भानुद्यमान् परित्यक्तुं शीलं यस्य स एवंभूताचारयुक्तो गुणातीत उच्यते ॥ २५ ॥

स० टी०—मानः सत्कार इत्युक्त आदरापरनामकः ॥ अपमानस्तिरस्कारोऽनादरापरसंज्ञकः ॥ १ ॥ तयोर्हर्षविषादाभ्यामसंस्पृष्टतया समः ॥ निन्दास्तुती तु शब्दैकस्वरूपे परिकीर्तिते ॥ २ ॥ शब्दं विनापि व्यापारविशेषः कायचित्तयोः ॥ मानापमानावित्युक्ताविति भेदस्तयोर्द्वयोः ॥ ३ ॥ तुल्यो द्वेषाद्यनाक्रान्तो यस्तु मित्रारिपक्षयोः ॥ आरम्भाः सर्वकर्माणि त्यक्तुं शीलं च यस्य सः ॥ ४ ॥ देहयात्रार्थमेवास्य कर्माभासो न चापरम् ॥ यथोक्ताचारसंपन्नो गुणातीतः स उच्यते ॥ ५ ॥ यावत्प्रयत्नसाध्यं स्याद्गुणातीतत्वसाधनम् ॥ तावन्मुमुक्षुणा नित्यमनुष्ठेयमिहादरात् ॥ ६ ॥ उत्पन्नायां तु विद्यायां जीवन्मुक्तस्य सन्मतेः ॥ अयत्नसिद्धं तस्योक्तं गुणातीतत्वलक्षणम् ॥ ७ ॥ २५ ॥

भा० टी०—मानेति। मानः सत्कारोऽपमानस्तिरस्कारस्तयोर्मानापमानयोस्तुल्यः समो निर्विकारः। परदृष्ट्या यौ मित्रशत्रू तयोः पक्षयोस्तुल्यो न कस्यचित्पक्षं भजतीत्यर्थः। दृष्टादृष्टार्थानि कर्माण्यारभ्यन्त इत्यारम्भास्तान्सर्वारम्भान् त्यक्तुं शीलं यस्येति देहधारणमात्रनिमित्तव्यतिरेकेण सर्वारम्भपरित्यागीत्यर्थः। एतादृशो यः स गुणातीतः उच्यते। सर्वारम्भपरित्यागीत्येतदन्तं यावद्यत्नसाध्यं तावद्गुणातीतत्वसाधनं विरक्तेन मुमुक्षुणाऽनुष्ठेयम्। स्थिरीभूतं तु जीवन्मुक्तस्य गुणातीतस्य स्वभावभूतत्वादयत्नसिद्धं लक्षणं भवति ॥२९॥

प० टी०—अपि च—मानापमानयोस्तुल्य इति। सर्वान् दृष्टानारम्भानुद्यमानपि त्यक्तुं शीलं यस्य। तथाविधो गुणातीत उच्यते ॥ ३९ ॥

श० टी०—तथा मानापमानयोः प्राप्तावपि विष्णुभक्त्यादौ तुल्य एव। न त्याज्यं तदित्यर्थः। कृताकृतौ चारिपक्षमित्रपक्षयोः सत्त्वेऽपि विष्णुभक्त्यादि कार्यमेवेत्यर्थः। पूर्वं नेङ्गत इति सामान्यतोऽवैष्णवकर्मारम्भत्यागोक्तावपि प्रयोजनविशेषापेक्षयापि नावैष्णवकर्मारम्भवानित्याह—सर्वारम्भपरित्यागीति। केनचित्प्रयोजनेनाप्यवैष्णवसर्वकर्मारम्भमकुर्वन्नित्यर्थः। यद्वा नेङ्गत इत्यल्पावैष्णवकर्मत्यागः, अत्र तु अतिदीर्घावैष्णवकर्मत्याग इति न पुनरुक्तिः ॥ २९ ॥

**मां च योऽव्यभिचारेण भक्तियोगेन सेवते ॥**
**स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ २६ ॥**

त० टी०—तदेवं गुणातीताचारमुक्त्वेदानीं कथं चैतान्गुणानतिवर्तते इतिप्रश्नस्योत्तरं गुणातिक्रमणासाधारणहेतुमाह—मां चेति। न केवलं गुणात्मविवेकमात्रेण गुणातिक्रमणं संभवति, अनादिकालप्रवृत्तस्य दृढबन्धनस्य समर्थनिवर्तकमन्तरेण सर्वथा निवृत्त्यसंभवात्—किंतु मां चेति। चकारोऽवधारणार्थः। मामेव सर्वज्ञं निरस्तसमस्तदोषगन्धं परमकारुणिकं सर्वेश्वरमाश्रिताभयप्रदं भगवन्तं वासुदेवमव्यभिचारेणैकान्त्येन भक्तियोगेन यः सेवते स एतान् दुरतिक्रमान्सत्त्वादीन् गुणान्समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मणो भावो ब्रह्मभूयमपहतपाप्मत्वादिगुणाष्टकत्वं सार्वज्ञ्यं च तेन सर्वदाऽवस्थानं तस्मै कल्पते योग्यो भवति। अव्यभिचारेणेत्यनेन मद्भक्तस्य मदितरदेवभजनं व्यभिचारस्तेन भक्तियोगेन तु यः सेवते स पापिष्ठतया न गुणेभ्यो विमुच्यते संसारी भवतीति सूचितम्। तथा च श्रुतिः—"यो वै स्वां देवतामतियजति परस्वायै देवतायै च्यवते न परां प्राप्नोति पापीयान्भवति" इति। ब्रह्माण्डकौर्मयोः "ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम्। ते वै पाषण्डिनो ज्ञेया नरकार्हा नराधमाः ॥" नारदपञ्चरात्रे च 'यो मोहाद्विष्णुमन्येन हीनदेवेन दुर्मतिः। साधारणं सकृद्ब्रूते सोऽन्त्यजो नान्त्यजोऽन्त्यजः॥२६॥

म० टी०—अधुना कथमेतान गुणानतिवर्तते इति तृतीयप्रश्नस्य प्रतिवचनमाह—मामिति। चस्त्वर्थः। मामेवेश्वरं नारायणं सर्वभूतान्तर्यामिणं मायया क्षेत्रज्ञतामागतं परमानन्दघनं भगवन्तं वासुदेवमव्यभिचारेण परमप्रेमलक्षणेन भक्तियोगेन द्वादशाध्यायोक्तेन यः सेवते सदा चिन्तयति स मद्भक्तः एतान् प्रागुक्तान् गुणान् समतीत्य सम्यगतिक्रम्याद्वैतदर्शनेन बाधित्वा ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवति। सर्वदा भगवच्चिन्तनमेव गुणातीतत्वोपाय इत्यर्थः ॥ २६ ॥

शं० टी०—कथं त्वेतांस्त्रीन् गुणानतिवर्तते इति पृष्टस्य तृतीयप्रश्नस्योत्तरमाह—मामिति। चशब्दस्त्वर्थः। यस्तु ब्रह्मविद्यतिस्तीव्रमोक्षेच्छया वासनाकृतं बाह्यं सर्वं परित्यज्यात्यन्तवैराग्येण तद्बुद्धित्वादिसाधनसंपत्त्या च युक्तो भूत्वा मां प्रत्यगभिन्नं निर्विशेषं निराभासं निराकारमखण्डचिदेकरसं परिपूर्णं परं ब्रह्म भक्तियोगेन—ध्येयाकारेणाखण्डात्मना चित्तस्य विषयानुल्लेखिनः परिणामो भक्तिरखण्डाकारवृत्तिः।

तदुक्तम् 'मत्कथाश्रुतिमात्रेण मयि सर्वगुहाशये। मनोगतिरविच्छिन्ना यथा गङ्गाम्भसोऽम्बुधौ ॥ अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे । लक्षणं भक्तियोगस्य निर्गुणस्य ह्युदाहृतम्' इत्युक्तलक्षणा या भक्तिः सैव योगः कैवल्यसिद्धौ परमोपायस्तेनाव्यभिचारेण—प्रत्ययान्तरेण व्यवच्छेदो व्यभिचारः क्वचिदपि तद्रहितेन नित्यनिरन्तरसमाधिना सेवते। विषयग्रहणविमुखया निर्मलया निश्चलया चिदाकारापन्नया तैलधारावदविच्छिन्नया वृत्त्या व्युत्थानाव्युत्थानयोर्बहिरन्तश्च परिपूर्णं सर्वोपाधिविनिर्मुक्तं निष्कलं निष्क्रियं शान्तमनन्तं गगनोपममानन्दघनं मां परं ब्रह्म सर्वमिदमहं च ब्रह्मैवेति स्वं च विश्वं च सदाकारमेव पश्यन् यो वेत्ति सर्वदाऽनुसंधत्त इत्यर्थः। एवं चिरकालनित्यनिरन्तरब्रह्मनिष्ठायामेव प्रतिष्ठितः स यतिः सदाकाराकारितान्तःकरणतया सर्वदा सर्वं ब्रह्मैव पश्यन् स्वयमेतान्पूर्वोक्तलक्षणान् गुणान्सत्त्वादीन् तत्कार्येण प्रपञ्चेन सहातीत्यातिक्रम्य प्रकृतिं प्रकृतिकार्यं च विश्वं सर्वं ब्रह्मण्यधिष्ठाने सन्मात्रत्वेन प्रविलाप्यैवंगुणात्ययं कृत्वा—गुणात्ययो नामाधिष्ठानयाथात्म्यसंदर्शनेनारोपितगुणतत्कार्ययोराभासतः प्रतीयमानयोरधिष्ठानमात्रत्वेनावगाहनशीलया चिदाकारवृत्त्या पुनरहमिदमद इत्यग्रह एव तं कृत्वा ब्रह्मीभूतसर्वप्रपञ्चो ब्रह्मवित्तमो ब्रह्मभूयाय ब्रह्मभावाय जीवन्नेव ब्रह्मात्मनावस्थानाय कल्पते शक्तो भवति। 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्युक्तन्यायेन स्वस्मिन्सर्वत्र ब्रह्ममात्रदर्शनलक्षणायां भगवत्प्रतिपत्तौ ब्रह्मनिष्ठायां यः प्रतिष्ठितो भवति स एव गुणमयीं गुणतत्कार्यतद्व्यवहाररूपां मायां चैतत्प्रत्ययसंततिमतीत्य विदेहकैवल्यं सुखं प्राप्नोति नान्य इति तात्पर्यार्थः। एतेन सर्वमिदमहं च ब्रह्मैवेति पूर्णवृत्त्या सदा सर्वत्र ब्रह्मदर्शनमेव प्रत्ययान्तरानन्तरितं सत्त्वादिगुणतत्कार्यातिक्रमणोपाय इति सूचितं भवति ॥२६॥

**श्री० टी०**—कथं चैतांस्त्रीन् गुणानतिवर्तत इत्यस्य प्रश्नस्योत्तरमाह—**मां चेति**। च शब्दोऽवधारणार्थः। मामेव परमेश्वरं श्रीनारायणमव्यभिचारेण एकान्तभक्तियोगेन यः सेवते स एतान् गुणान् समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभावाय मोक्षाय कल्पते योग्यो भवति ॥ २६ ॥

**स० टी०**—कथं गुणानतिक्रामेदित्यस्योत्तरमुच्यते ॥ मां परमेश्वरं सर्वभूतानां हृदये स्थितम् ॥ १ ॥ भगवन्तं परानन्दघनं नारायणं विभुम् ॥ नित्यमव्यभिचारेण परप्रेमैकलक्ष्मणा ॥ २ ॥ दृढेन भक्तियोगेन यश्चिन्तयति सर्वदा ॥ स मद्भक्तो गुणानेतान्मत्प्रसादात्तत्त्ववधीः ॥ ३ ॥ अद्वैतदर्शनेनैव बाधित्वात्मानि कल्पितान् ॥ ब्रह्मभूयाय मोक्षाय समर्थो भवति स्वयम् ॥ ४ ॥ भगवच्चिन्तनं नित्यं गुणातीतत्वसाधनम् ॥ मुख्यं तस्मात्सदा धीमांश्चिन्तयेत्कृष्णमीश्वरम् ॥ ५ ॥ भ्रमावर्तागारं प्रचुरभयभारं श्रमपदं ह्यसारं संसारं जनिमृतिघनाधारमुदधिम् ॥ गुणानामाकारं गहनगतिमुत्तर्तुमधुना परां भक्तिं कृष्णे श्रयत कृतिनो मोक्षजननीम् ॥ ६ ॥ २६ ॥

**भा० टी०**—प्रश्नद्वयं समाधायेदानीं कथमेतान् त्रीन् गुणानतिवर्तते इति तृतीयप्रश्नस्य प्रतिवचनमाह—**मामिति**। चः पूर्वोक्तगुणातीतलक्षणस्य मुमुक्षुणा प्रयत्नसाध्यस्य समुच्चयार्थः। मामीश्वरं नारायणं सर्वभूतहृदयाश्रितं यो यतिः कर्मी वा अव्यभिचारेण व्यभिचारशून्येन निष्कामेण परमप्रेमलक्षणेन भजनं भक्तिः सैव युज्यतेऽनेनेति योगस्तेन भक्तियोगेन तत्त्वज्ञानोत्पादकेन सेवते—विषयचिन्तां विहाय सदानुसंदधाति, स भगवदनुग्रहकृतसम्यग्ज्ञानसंपन्नो जीवन्नेवैतान् गुणान्यथोक्तान् समतीत्य सम्यगतिक्रम्य ब्रह्मभूयाय ब्रह्मभवनाय मोक्षाय कल्पते समर्थो भवतीत्यर्थः ॥ २६ ॥

**प० टी०**—कथं चैतान् गुणानतिवर्तत इत्यस्य प्रश्नोत्तरमाह—**मामिति**। मामीश्वरमव्यभिचारेणैकान्तभक्तियोगेन यः सेवते, स एवैतान् गुणान् सम्यक्प्रकारेणातीत्य ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति ॥ २६ ॥

रा० टी०—एवं गुणातीतलक्षणमाचारं चोक्त्वा कथं गुणानतिवर्तत इति प्रश्नस्योत्तरमाह—मां चेति। अव्यभिचारेण भक्तियोगेन नित्यभक्त्याख्योपायेन मां च सेवते । गुणान्सत्त्वादिगुणैस्तदभिमानिश्रीदेव्यादिभिः कृतबन्धं समतीत्य ब्रह्मभूयाय—ब्रह्मशब्दोऽत्र चित्प्रकृतिपरः चित्प्रकृतिवद्भूयं भवनं ब्रह्मभूयम्; सा यथा विष्णुप्रिया तथा गुणातीतोऽपि विष्णुप्रियो भवतीत्यर्थः । यद्वा ब्रह्मणि चित्प्रकृतौ भूयाय भावाय चित्प्रकृतिप्राप्तये कल्पते शक्तो भवति ॥ २६ ॥

**ब्रह्मणो हि प्रतिष्ठाऽहममृतस्याव्ययस्य च ॥**
**शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च ॥ २७ ॥**

इति श्रीभगवद्गीतासूपनिषत्सु गुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

त० टी०—वासुदेवानन्यभक्त्यैव ब्रह्मभावयोग्यतायां हेतुमाह—ब्रह्मण इति । हि यस्मात् ब्रह्मणो ब्रह्मत्वस्यापहतपाप्मत्वसार्वज्ञ्यादिगुणस्य प्रतिष्ठा अव्यभिचार्याश्रयः, तथाऽव्ययस्यामृतस्य मोक्षस्य च तथा शाश्वतस्य च धर्मस्य मोक्षसाधनस्य शमदमादेः तथैकान्तिकस्य सुखस्य परमानन्दस्य चाश्रयोऽहं यस्मादेवंविधोऽहं तस्मान्ममैकान्तभक्तस्यैव मद्भजनेन गुणात्ययस्ततो ब्रह्मभावप्राप्तिरिति भावः ॥ २७ ॥

सत्त्वादिगुणवृत्तिस्थो जीवो संसृतिमृच्छति । हरेरनन्यया भक्त्या मुच्यते गुणसंसृतेः ॥
कृपया भक्तहितकृदेतदर्थं स्वयं प्रभुः । गुणलक्षणकार्यादि अध्यायेऽस्मिन्समादिशत् ॥
इति श्रीभगवद्गीताटीकायां जगद्विजयिश्रीकेशवकाश्मीरिभट्टाचार्यविरचितायां
तत्त्वप्रकाशिकायां चतुर्दशोऽध्यायः ॥ १४ ॥

म० टी०—अत्र हेतुमाह—ब्रह्मण इति । ब्रह्मणस्तत्पदवाच्यस्य सोपाधिकस्य जगदुत्पत्तिस्थितिलयहेतोः प्रतिष्ठा पारमार्थिकं निर्विकल्पकं सच्चिदानन्दात्मकं निरुपाधिकं तत्पदलक्ष्यमहं निर्विकल्पको वासुदेवः प्रतितिष्ठत्यत्रेति प्रतिष्ठा कल्पितरूपरहितमकल्पितं रूपम् अतो यो मामनुपाधिकं ब्रह्म सेवते स ब्रह्मभूयाय कल्पत इति युक्तमेव । कीदृशस्य ब्रह्मणः प्रतिष्ठाहमित्याकाङ्क्षायां विशेषणानि—अमृतस्य विनाशरहितस्य, अव्ययस्य विपरिणामरहितस्य च, शाश्वतस्यापक्षयरहितस्य च, धर्मस्य ज्ञाननिष्ठालक्षणधर्मप्राप्यस्य, सुखस्य परमानन्दरूपस्य । सुखस्य विषयेन्द्रियसंयोगजत्वं वारयति—ऐकान्तिकस्याव्यभिचारिणः सर्वस्मिन्देशे काले च विद्यमानस्य ऐकान्तिकसुखरूपस्येत्यर्थः । एतादृशस्य ब्रह्मणो यस्मादहं वास्तवस्वरूपं तस्मान्मद्भक्तः संसारान्मुच्यत इति भावः । तथा चोक्तं ब्रह्मणा भगवन्तं श्रीकृष्णं प्रति 'एकस्त्वमात्मा पुरुषः पुराणः सत्यः स्वयंज्योतिरनन्त आद्यः । नित्यो क्षरोऽजस्रसुखो निरञ्जनः पूर्णोऽद्वयो मुक्त उपाधितोऽमृतः' इति । अत्र सर्वोपाधिशून्य आत्मा ब्रह्म त्वमित्यर्थः । शुकेनापि स्तुतिमन्तरेणैवोक्तम् 'सर्वेषामेव वस्तूनां भावार्थो भवति स्थितः । तस्यापि भगवान् कृष्णः किमतद्वस्तु रूप्यताम् ॥' इति । सर्वेषामेव कार्यवस्तूनां भावार्थः सत्तारूपः परमार्थो भवति कार्याकारेण जायमाने सोपाधिके ब्रह्मणि स्थितः कारणसत्तातिरिक्तायाः कार्यसत्ताया अनभ्युपगमात् । तस्यापि भवतः कारणस्य सोपाधिकस्य ब्रह्मणो भावार्थः सत्तारूपोऽर्थो भगवान् कृष्णः सोपाधिकस्य निरुपाधिके कल्पितत्वात् । कल्पितस्य चाधिष्ठानानतिरेकात् भगवतः कृष्णस्य च सर्वकल्पनाधिष्ठानत्वेन परमार्थसत्यनिरुपाधिब्रह्मरूपत्वात् । अतः किमतद्वस्तु । तस्माच्छ्रीकृष्णादन्यद्वस्तु पारमार्थिकं किं निरूप्यताम्? तदेवैकं पारमार्थिकं नान्यत्किमपीत्यर्थः । तदेतदिहाप्युक्तं ब्रह्मणो हि प्रतिष्ठाहमिति । अथवा त्वद्भक्तस्त्वद्भावमाप्नोतु नाम, कथं नु ब्रह्मभावाय कल्पते ब्रह्मणः सकाशात्तवान्यत्वादित्याशङ्क्याह—ब्रह्मणो हीति ।

ब्रह्मणः परमात्मनः प्रतिष्ठा पर्याप्तिरहमेव, नतु मद्भिन्नं ब्रह्मेत्यर्थः । तथाऽमृतस्यामृतत्वस्य मोक्षस्य चाव्ययस्य सर्वथानुच्छेद्यस्य च प्रतिष्ठाहमेव । मय्येव मोक्षः पर्यवसितो मत्प्राप्तिरेव मोक्ष इत्यर्थः । तथा शाश्वतस्य नित्यमोक्षफलस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य च पर्याप्तिरहमेव । ज्ञाननिष्ठालक्षणो धर्मो मय्येव पर्यवसितो न तेन मद्भिन्नं किंचित्प्राप्यमित्यर्थः । तथा ऐकान्तिकस्य सुखस्य च पर्याप्तिरहमेव परमानन्दरूपत्वान्न मद्भिन्नं किंचित्सुखं प्राप्यमस्तीत्यर्थः । तस्माद्युक्तमेवोक्तं मद्भक्तो ब्रह्मभूयाय कल्पत इति ॥ २७ ॥

पराकृतनमद्बन्धं परं ब्रह्म नराकृति । सौन्दर्यसारसर्वस्वं वन्दे नन्दात्मजं महः ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीश्रीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां प्रकृतिगुणत्रयविभागयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

**शं० टी०**–ननु गुणतत्कार्यव्यपोहमात्रेण ब्रह्मविद्ब्रह्म भवितुं नार्हति ब्रह्मविदोऽहमर्थत्वेन ज्ञातृत्वाद्ब्रह्मण इदमर्थत्वेन ज्ञेयत्वाच्च ज्ञातुर्ज्ञेयभावो न संभवति प्रत्यक्षविरोधादित्याशङ्कायाम् । न । यथा लोके अयमहमित्यत्राहंशब्देदंशब्दार्थयोः शब्दोपाधितो ज्ञातृज्ञेयरूपेण भेदे प्रतीयमानेऽपि विचार्यमाणे तयोरर्थत एकत्वमुपपद्यते नात्र प्रत्यक्षविरोधो दृश्यते तद्वदत्रापि । किंच "सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्त" इति, "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति च श्रुतिर्ब्रह्मण एव नामरूपव्याकरणोपाधौ ज्ञातृरूपेणावस्थितत्वं प्रतिपादयत्यतो ज्ञातुर्विदुष उपाध्युपरमे ब्रह्मभाव उपयुज्यते, घटोपाध्यभावे घटाकाशस्य महाकाशत्वं यथा तद्वत् "नान्योऽतोऽस्ति विज्ञाता" "अविज्ञातं विज्ञातृ" इति विज्ञातृब्रह्मणोरभेदश्रवणाच्च ब्रह्मणः प्रतिष्ठात्वाच्च प्रत्यग्रूपस्य विदुषो ब्रह्मभाव उपपद्यत इति बोधयितुमाह–ब्रह्मण इति । अमृतस्य "एतदमृतमभयमेतद्ब्रह्म" इति श्रवणादमृतस्यामरणधर्मस्य अविनाशिनः जन्मरहितस्यैवाविनाशित्वं युक्तम् । ततोऽमृतस्येत्यनेनाद्यन्तविकाराभावः सूचितः।अव्ययस्य व्ययरहितस्याऽविकारिण इत्यनेन वृद्धिविपरिणामाभावः सूचितः । शाश्वतस्य नित्यस्येत्यनेन आगन्तुकास्तित्वापक्षयाभावः सूचितः । चद्वयं समुच्चयार्थम् । धर्मस्याविद्यया जन्ममरणादिदुःखप्रवाहे पात्यमानः पुरुषो ध्रियतेऽनेनेति धर्मो ज्ञानं तस्य धर्मस्य धर्मावगम्यस्येत्यर्थः । सुखस्यानन्दरूपस्यैकान्तिकस्यात्यन्तमिदमेवमेवेति निश्चीयतेऽनेनेत्यन्त एकश्चासावन्तश्चेत्येकान्त एकप्रत्ययस्तेनावगम्यत इत्यैकान्तिकं तस्यैकान्तिकस्य सर्वत्राव्यभिचरितसत्ताकस्य परिपूर्णस्य ब्रह्मणो निर्विशेषस्य हि यस्मादहमहमर्थः प्रत्यगात्मा सर्वदृश्यज्ञाता प्रतिष्ठा प्रतितिष्ठत्यनेनेन ज्ञातृस्वरूपेण नामरूपव्याकरणाय प्रवर्तते इति प्रतिष्ठा "तदेवानुप्राविशत्" इतिश्रुतेः । प्रत्यगात्मस्वरूपेणोपाधौ स्थित्वा परं ब्रह्मैव बुद्ध्यादिसर्वदृश्यजातं जानाति प्रकाशयति च तेनात्मनो ब्रह्मत्वं न व्यभिचरति । यथा दीपरूपेणार्थं प्रकाशयतोऽग्नेर्दीपरूपस्याग्नित्वं न व्यभिचरति तद्वत्ततो ज्ञातुरात्मन उपाध्यभावे ब्रह्मत्वं युक्तम् । ज्ञातैवात्मा विद्वान् तस्माज्ज्ञाता विद्वान् ब्रह्मैव भवतीत्यर्थः । यद्वा निरुक्तलक्षणस्य निर्विशेषस्य परस्य ब्रह्मणोऽहमात्मा प्रतिष्ठा स्वभावस्थितिहेतुत्वात्प्रत्यगात्मना खलु परं ब्रह्म स्वभावस्थितिं प्राप्नोति । ब्रह्मणः सत्त्वाचित्त्वानन्दरूपत्वपरिपूर्णत्वाद्वितीयत्वादिकं बुद्ध्युपाधिकेन प्रत्यगात्मनैव हि चेतनेन सिध्यति । नतु स्वतो निर्विशेषत्वात्ततोऽहमर्थोऽस्य प्रतिष्ठा भवति ब्रह्मव्यतिरिक्तचेतनाभावात् "अयमात्मा ब्रह्म" इतिश्रवणाच्च प्रत्यगात्मन उपाध्यभावे ब्रह्मत्वं युक्तम् । तस्माद्विदुषो ब्रह्मत्वं सिद्धम् ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां चतुर्दशोऽध्यायः ॥ १४ ॥

**श्री० टी०**–तत्र हेतुमाह–ब्राह्मणो हीति । हि यस्माद्ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहम् । यथा घनीभूतः प्रकाश एव सूर्यमण्डलं तद्वदेवेत्यर्थः । तथाऽव्ययस्य नित्यस्य अमृतस्य मोक्षस्य च नित्य-

मुक्तत्वात् । तथा तत्साधनस्य शाश्वतस्य च धर्मस्य शुद्धसत्त्वात्मकत्वात् । तथा ऐकान्तिकस्य अखण्डितस्य सुखस्य च प्रतिष्ठाऽहं परमानन्दैकरूपत्वात् । अतो मत्सेविनो मद्भावस्यावश्यं भावित्वाद्युक्तमेवोक्तं ब्रह्मभूयाय कल्पत इति ॥ २७ ॥

कृष्णाधीनगुणासङ्गप्रसञ्जितभवाम्बुधिम् ॥ सुखं तरति तद्भक्त इत्यभाणि चतुर्दशे ॥

इति श्रीधरस्वामिविरचितायां भगवद्गीताटीकायां सुबोधिन्यां चतुर्दशोऽध्यायः ॥ १४ ॥

स० टी०–हरिभक्तिर्दृढा प्रेम्णा गुणातीतत्वसाधनम् ॥ कुत एतदपेक्षायां हेतुमाह जगत्पतिः ॥ १ ॥ ब्रह्मणः सविकल्पस्य सर्वशक्तेर्महेशितुः ॥ श्रुतौ तत्पदवाच्यस्य जगद्धेतोरहं यतः ॥ २ ॥ प्रतिष्ठा वास्तवं तत्त्वं निर्विकल्पकमद्वयम् ॥ चिदानन्दघनं सत्यं निरुपाधिकमक्षयम् ॥ ३ ॥ अहं तत्पदलक्ष्यं श्रीवासुदेवः स्वयंप्रभुः ॥ अतो मां सेवते यः स ब्रह्मभूयाय कल्पते ॥ ४ ॥ ब्रह्मणः कीदृशस्याहं प्रतिष्ठा तच्छृणु स्फुटम् ॥ नाशशून्यस्य सत्यस्य कूटस्थस्य चिदात्मनः ॥ ५ ॥ नित्यस्य तत्त्वविज्ञाननिष्ठाप्राप्यस्य वस्तुनः ॥ परमानन्दरूपस्य सर्वदाऽव्यभिचारिणः ॥ ६ ॥ ईदृशस्य स्वरूपं मां चिन्तयन्पारमार्थिकम् ॥ संसारान्मुच्यते धीरो मद्भक्तो मय्यवस्थितः ॥७॥ यद्वा त्वद्भावमाप्नोतु त्वद्भक्तस्त्वत्परायणः ॥ ब्रह्मत्वयोग्यः स कथं ब्रह्मान्यत्वात्तवेति चेत् ॥ ८ ॥ पर्याप्तिरहमेवास्मि ब्रह्मणः परमात्मनः ॥ न मद्भिन्नं परं ब्रह्म सम्यक्पश्य त्वमात्मना ॥ ९ ॥ तथाऽमृतस्य मोक्षस्यानुच्छेद्यस्य च सर्वथा ॥ प्रतिष्ठाऽहं स मय्येव मोक्षो मत्प्राप्तिरेव हि ॥ १० ॥ नित्यमोक्षफलस्यास्य धर्मस्याप्यहमेव च ॥ पर्याप्तिर्ज्ञाननिष्ठाख्यो धर्मो मय्येव तिष्ठति ॥ ११ ॥ न तेन किंचिन्मद्भिन्नं प्राप्यं धर्मेण वै सुखम् ॥ सुखस्यैकान्तिकस्यापि पर्याप्तिरहमेव च ॥ १२ ॥ परमानन्दरूपत्वान्न मद्भिन्नं सुखं क्वचित् ॥ किंचित्प्राप्यं यतो मत्तः पृथग्दुःखं च बाधितम् ॥१३॥ तस्माद्युक्तियुतं प्रोक्तं मद्भक्तो मत्परायणः॥ ब्रह्मभूयाय मोक्षाय समर्थो भवतीति च ॥१४॥ तस्मान्मुमुक्षुभिर्धीरैः प्रेमभक्त्याहमीश्वरः ॥ यदाश्रितस्तैर्वैते गुणातीतत्वभागिनः ॥ १५ ॥ २७ ॥

सत्त्वादीनां गुणानां जनिमृतिगहने दुस्तरेऽस्मिन्भवाब्धौ कार्याकारेण नित्यं परिणतवपुषां पातहेतुत्वमुक्त्वा ॥ तेभ्यो मोक्षं स्वबोधात्स्वपदरतधियां लक्षणादि प्रदर्श्य स्वीयां निष्ठां जगौ यो विमलमतिमतां नौमि तं कृष्णमीड्यम्

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ गुणातीतत्वनिष्ठोऽयं पूर्तिं यातश्चतुर्दशः ॥

टीकाश्लोकसंख्या ॥ १६४ ॥ आदितष्टीकाश्लोकसंख्या ॥ ४००४ ॥

भा० टी०–योऽव्यभिचारेण भक्तियोगेन मां सेवते स गुणान्समतीत्य ब्रह्मभूयाय कल्पते इत्यत्र हेतुमाह–**ब्रह्मणो हीति** । हि यस्माद् ब्रह्मणः परमात्मनोऽहं प्रत्यगात्मा प्रतिष्ठा–प्रतितिष्ठत्यस्मिन्निति प्रतिष्ठा । यत् ब्रह्म प्रत्यगात्मनि प्रतितिष्ठति तद्विशिनष्टि–अमृतस्याविनाशिनः, अव्ययस्याविकारिणः, शाश्वतस्य नित्यस्यापक्षयरहितस्य–तेन न पौनरुक्त्यं, धर्मस्य धर्मज्ञानस्येत्यर्थः । सुखस्य ज्ञानयोगधर्मप्राप्यस्यानन्दरूपस्य । इन्द्रियसंबन्धोत्थं सुखं व्यावर्तयितुमाह–ऐकान्तिकस्याव्यभिचारिणः अमृतादिस्वभावस्य परमात्मनः प्रत्यगात्मा प्रतिष्ठा यस्मात्तस्मात्सम्यग्ज्ञानेन स परमात्मेति निश्चीयते तदेद्ब्रह्मभूयाय कल्पते इत्युक्तम् । यया चेश्वरशक्त्या भक्तानुग्रहादिप्रयोजनाय ब्रह्म प्रवर्तते सा शक्तिः ब्रह्मैवाहं शक्तिशक्तिमतोरभेदादित्यभिप्रायः । यद्वा ब्रह्मशब्दवाच्यत्वात् सविकल्पकं ब्रह्म ब्रह्मशब्देनाभिधीयते तस्य ब्रह्मणो निर्विकल्पकोऽहमवाच्यः प्रतिष्ठाश्रयः । सविकल्पकं ब्रह्म विशिनष्टि–अमृतस्य मरणधर्मरहितस्याव्ययस्य व्ययरहितस्य किंच शाश्वतस्य च नित्यस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य सुखस्य च जनितस्यैकान्तिकस्यैकान्तनियतस्य च प्रतिष्ठाऽहमिति वर्तते । अतो मत्सेवया युक्तैव ब्रह्मभावप्राप्तिरित्यर्थः । हि यस्माद्ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभूतं ब्रह्मैवाहं यथा घनीभूतप्रकाश एव सूर्यमण्डलं तद्वदित्यर्थः । तथाऽव्ययस्यामृतस्य नित्यस्य

मोक्षस्य नित्यमुक्तत्वात् । तथा तत्साधनस्य शाश्वतस्य च धर्मस्य शुद्धसत्त्वात्मकत्वात् । तथैकान्तिकस्य सुखस्य च प्रतिष्ठाहं परमानन्दरूपत्वात्–इत्यपरे । त्वद्भक्तस्त्वद्भावमाप्नोतु नाम, कथं तु ब्रह्मभावाय कल्पते ब्रह्मणः सकाशात्त्वान्यत्वादिति तत्राह–ब्रह्मणः परमात्मनः प्रतिष्ठा पर्याप्तिरहमेव, नतु मद्भिन्नं ब्रह्मेत्यर्थः । तथाऽमृतस्याव्यस्य प्रतिष्ठाहमेव मय्येव मोक्षः पर्यवसितः मत्प्राप्तिरेव मोक्ष इत्यर्थः । तथा शाश्वतस्य नित्यस्य मोक्षफलस्य धर्मस्य ज्ञाननिष्ठालक्षणस्य च पर्याप्तिरहमेव । ज्ञाननिष्ठालक्षणो धर्मो मय्येव पर्यवसितस्ततो न तेन मद्भिन्नं किंचित्प्राप्यमित्यर्थः । तथा ऐकान्तिकस्य सुखस्य च पर्याप्तिरहमेव परमानन्दत्वात्, न मद्भिन्नं किंचित्सुखं प्राप्यमस्तीत्यर्थः–इति केचित् । अन्ये तु वासिष्ठोक्तं ज्ञानभूमिसप्तकं प्रकाशमित्यादि श्लोकैर्दर्शयन्ति । तथाहि ' ज्ञानभूमिः शुभेच्छाख्या प्रथमा समुदाहृता । विचारणा द्वितीया तु तृतीया तनुमानसा ॥ सत्त्वापत्तिश्चतुर्थी स्यात्ततो संसक्तिनामिका । पदार्थाभावनी षष्ठी सप्तमी तुर्यगा स्मृता ' इति । तत्र यथोक्तसाधनसंपन्नमुमुक्षुता प्रथमा, श्रवणमननविचारात्मिका द्वितीया, निदिध्यासनरूपा तृतीया, एताः साधनभूमयः । ब्रह्मसाक्षात्काररूपा चतुर्थी फलभूता । अस्यां योगी कृतार्थोऽपि जीवन्मुक्तिसुखं पुष्कलं नानुभवति । परास्तिस्रो जीवन्मुक्तेरवान्तरभेदाः । तत्रापि पञ्चम्यामसंसक्तिनामिकायां स्थितो योगी ब्रह्मविद्वरः स्वयमेवोत्तिष्ठते । षष्ठ्या पदार्थाभावन्यां स्थितो ब्रह्मविद्वरीयान् परप्रयत्नेन व्युत्तिष्ठते । सप्तम्यां तुर्यगायां ब्रह्मविद्वरिष्ठः न स्वतः परतो वा व्युत्तिष्ठति । तत्र नित्यसमाधीस्थोऽन्त्यभूमिगः प्रकाशमिति श्लोकेनोक्तः, उदासीन इत्यनेनोपान्त्यभूमिगः, समदुःखसुखः इति पञ्चम्यां स्थितः, मानापमानयोरिति चतुर्थ्यां, मां चेति तृतीयायां स्थितो योगी उक्तः । विषयप्रदर्शनद्वारा विचारणाख्यां द्वितीयां भूमिमाह–ब्रह्मणो हीति । ब्रह्मणो वेदस्य प्रतिष्ठा तात्पर्येण पर्यवस्थानमहमेव । अमृतस्य कर्मब्रह्मोपदर्शनद्वाराऽमृतसाधनस्याव्ययस्यानादित्वादनन्तत्वाच्चापौरुषेयत्वेनाप्रामाण्यशङ्काकलङ्कशून्यस्य स्वतःप्रमाणभूतस्येत्यर्थः । एतेनोपक्रमोपसंहारादितात्पर्यालोचनया वेदाविरुद्धतर्कोपकरणया कृत्स्नस्य वेदस्य तात्पर्यप्रदर्शनकामेन निर्णेतव्यमिति विचारणाख्या द्वितीया भूमिरुक्ता । हेतुफलोपदर्शनमुखेन शुभेच्छाख्यां प्रथमां भूमिमाह–शाश्वतस्येति । काम्यधर्मवत्फलदानेन नाशाभावात् भगवत्यर्पितो नित्यो धर्मः शाश्वतः विविदिषादिपारंपर्येण मोक्षाख्यशाश्वतफलत्वात् । तस्य च प्रतिष्ठा परमं प्राप्यमहमेव । तथा सुखस्यैकान्तिकस्य मोक्षसुखस्य च प्रतिष्ठा अहमेव । सेयं प्रथमा भूमिरुक्ता । अत्र परां परां भूमिमारोढुमशक्तस्य पूर्वा पूर्वा भूमिरुपदिश्यते इति तदेतद्यत्किंचित्कल्पनं सर्वज्ञाना मार्गप्रदर्शकानामाचार्याणां न शोभतेऽत एतदनुक्त्या तेषां न्यूनता नापादनीया । तदनेन चतुर्दशाध्यायेन सर्वमुत्पद्यमानं क्षेत्रक्षेत्रज्ञसंयोगाद्यथोत्पद्यते यस्मिन्गुणे च यथा सङ्गः ये वा गुणाः यथा वा बध्नन्ति गुणेभ्यश्च मोक्षणं यथा स्यात् मुक्तस्य च यल्लक्षणं तत्सर्वं प्रतिपादयता तत्त्ववित्प्राप्यं प्रत्यगभिन्नं ब्रह्म प्रदर्शितम् ॥ २७ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकाया चतुर्दशोऽध्यायः ॥ १४ ॥

प० टी०–अथ मनुष्यवेषधारित्वेन मूढानां स्वेश्वरत्वं देहनिरासार्थमाह–**ब्रह्मण इति** । चिदानन्दमात्ररूपस्य ब्रह्मणोऽहं प्रतिष्ठा प्रतिमा घनीभावः, यथा घनीभूतं तेज एव सूर्याकारं भवति यथा च घनीभूतः परिमल एव कर्पूराकारो भवति तद्वदित्यर्थः । किंभूतस्य ब्रह्मणः? अव्ययस्य नित्यस्यामृतस्य मोक्षस्य नित्यमुक्तत्वात् । तथा तत्साधनस्य शाश्वतस्यानश्वरफलदस्य धर्मस्य शुद्धसत्त्वात्मकत्वात् । तथैकान्तिकस्याखण्डस्य सुखस्य च प्रतिष्ठाऽहं परमानन्दरूपत्वात् । अतो मत्सेविनो मद्भावस्यावश्यंभावित्वाद्युक्तमुक्तं ब्रह्मभूयाय कल्पत इति । तदुक्तमध्यात्ममीमांसायामारम्भे–' कृष्णाकारेण साक्षादिह हि विजयते

सूत्रसंज्ञः परात्मा ज्योतिर्विश्वप्रकाशं व्रजति दिनकराकारतां यद्वदत्र । यत्स्वे गात्रेऽथ वक्रेऽर्जुनजननिकृते-ऽदर्शयद्विश्वरूपं तं नत्वा स्वानुभूतिप्रदमुपनिषदां हार्दमर्थं ब्रवीमि ॥ इति ॥ २७ ॥

अथाध्यायतात्पर्यम् ।

एकोपादानकत्वेऽप्यतनुविधमभूद्यैर्गुणैर्विश्वमेते बध्नन्त्यज्ञानजन्तून्न च मदनुचरांस्तोषलोभप्रमादैः ।
स्वीकुर्वन् शुद्धसत्त्वं जयति तदितरो यः स मामेति सत्यं प्रोक्तः सम्यक् चतुर्भिः समधिकदशमेऽसौ गुणातीतयोगः॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां गुणातीतयोगो नाम चतुर्दशोऽध्यायः ॥ १४ ॥

रा० टी०—ननु गुणातीतस्य भगवत्प्राप्त्यादिकमेव वाच्यं लक्ष्मीप्राप्तिः किमर्थमुच्यते इत्यतस्तत्प्राप्तौ मत्प्राप्तिरेव भवति तस्या मत्स्थत्वादिति भावेनाह—ब्रह्मण इति । ब्रह्मणो महालक्ष्म्याः अव्ययस्यामृतस्य च मुक्तवर्गस्य शाश्वतस्याक्षयफलस्य निष्कामधर्मस्य ऐकान्तिकस्य अस्मादिदमधिकमिति गणने एकमेवान्ते यस्य तदेकान्तिकं तस्य दुःखासंभिन्नस्य सुखस्य मोक्षस्येत्यर्थः । प्रतिष्ठा आधारः । अतो मदवियोगिनीं लक्ष्मीं प्राप्तो मामेव प्राप्तो भवति । गुणातीतो लक्ष्मीसमीपं प्राप्य तदनुगृहीतो हरिं पश्चादाप्नोतीति परंपरा-द्योतनायैवमुक्तिरिति ज्ञेयम् ॥ २७ ॥

इति श्रीमद्गीतार्थसंग्रहे श्रीमद्राघवेन्द्रयतिकृते चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः ।

**श्रीभगवानुवाच—ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम् ॥**
**छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित् ॥ १ ॥**

त० टी०—पूर्वाध्याये पुरुषस्य मायागुणमयसंसारबन्धं प्रपञ्च्यान्ते मां च योऽव्यभिचारेण भक्ति-योगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते इत्यनेन भगवदनन्यभक्तियोगेन गुणातिक्र-मपूर्वकं ब्रह्मभावयोग्यतोक्ता । इदानीं भजनीयं यद्भगवत्स्वरूपं तस्यानन्तकल्याणगुणरूपभावयोगा-त्स्वशक्तिभूताभ्यां क्षराक्षरपदार्थाभ्यामतिश्रैष्ठ्यात्पुरुषोत्तमतां वक्तुमस्याध्यायस्यारम्भः । तत्र तावद्ब्र-ह्मभावयोग्यस्याक्षरपुरुषस्य स्वांशत्वं निर्देष्टुं तस्यानाद्यचेतनप्रकृतिमयबन्धनिवृत्तिहेतुर्भगवद्भक्तिर्ज्ञानं वाऽविरक्तस्य न संभवतीत्यसङ्गशस्त्रेण बन्धच्छेदनाय वैराग्यार्थं छेद्यं बन्धभूतं प्रकृतिमयसंसारमश्व-त्थवृक्षाकारेण निरूपयन् श्रीभगवानुवाच—उर्ध्वमूलमिति सार्द्धश्लोकाभ्याम् । उर्ध्वं भगवद्धाम गन्तुर्भगवद्भक्तस्य सर्वलोकातिक्रमणे सावरणब्रह्माण्डोपरिवर्तमानं त्रिगुणात्मकप्रकृत्यावरणमेव मूलमा-दिर्यस्य संसारवृक्षस्येत्यूर्ध्वमूलम् । अधःशाखं ततोऽर्वाचीनाः सत्यलोकप्रभृतिचतुर्दशलोकाः शाखा इव फलाश्रया शाखा यस्येत्यधःशाखमश्वत्थं नश्वरं सम्यग्ज्ञानात्प्राक् प्रवाहरूपेणाव्ययं नित्यं प्राहुः श्रुतयः "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इत्याद्याः । छन्दांसि ऋग्यजुःसामलक्षणानि पर्णानीव पर्णानि यस्य यथा पत्रैर्वृक्षो वर्धते जीवानां समाश्रयणीयश्च भवति, तथा "वायव्यं श्वेत-मालभेत भूतिकामः" "स्वर्गकामो यजेत" इत्येवमादिवेदप्रतिपादितैः काम्यकर्मभिरयं संसारवृक्षो वर्धते, छायास्थानीयैः कर्मफलैः सकामानां जीवानां समाश्रयणीयश्चेत्यतः छन्दांस्येव पर्णानीत्युक्तम् । यस्त-मेवं प्रतिपादितं संसारवृक्षं वेद स वेदवित् । त्रिगुणप्रकृतिमूलः संसारवृक्षः, शाखास्थानीयाः कर्मफ-लभोगभूमयो ब्रह्मलोकादयश्चतुर्दशलोकाः, तद्वृद्धिहेतवः पर्णस्थानीया वेदास्तत्फलभोक्तारो ब्रह्मादयो

जीवसमूहा इति संसारवृक्षः स्वरूपेणानित्यः प्रवाहरूपेण नित्यश्च भगवद्भक्तिज्ञानं च तच्छेदनोपाय इत्येतावान्वेदार्थस्तं यो वेद स सर्ववेदार्थविदित्यर्थः ॥ १ ॥

म० टी०—पूर्वाध्याये भगवता संसारबन्धहेतून् गुणान् व्याख्याय तेषामत्ययेन ब्रह्मभावो मोक्षो मद्भजनेन लभ्यत इत्युक्तम् 'मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते' इति । तत्र मनुष्यस्य तव भक्तियोगेन कथं ब्रह्मभाव इत्याकाङ्क्षायां स्वस्य ब्रह्मरूपताज्ञापनाय सूत्रभूतोऽयं श्लोको भगवतोक्तः 'ब्रह्मणो हि प्रतिष्ठाहममृतस्याव्ययस्य च । शाश्वतस्य च धर्मस्य सुखस्यैकान्तिकस्य च' इति । अस्य सूत्रस्य वृत्तिस्थानीयोऽयं पञ्चदशोऽध्याय आरभ्यते । भगवतः श्रीकृष्णस्य हि तत्त्वं ज्ञात्वा तत्प्रेमभजनेन गुणातीतः सन् ब्रह्मभावं कथमाप्नुयाल्लोक इति । तत्र ब्रह्मणो हि प्रतिष्ठाहमित्यादिभगवद्वचनमाकर्ण्य मम तुल्यो मनुष्योऽयं कथमेवं वदतीति विस्मयाविष्टमप्रतिभया लज्जया च किंचिदपि प्रष्टुमशक्नुवन्तमर्जुनमालक्ष्य कृपया स्वस्वरूपं विवक्षुः (श्रीभगवानुवाच) तत्र विरक्तस्यैव संसाराद्भगवत्तत्त्वज्ञानेऽधिकारो नान्यथेति पूर्वाध्यायोक्तं परमेश्वराधीनप्रकृतिपुरुषसंयोगकार्यं संसारं वृक्षरूपकल्पनया वर्णयति वैराग्याय प्रस्तुतगुणातीतत्वोपायत्वात्तस्य—उर्ध्वमिति । ऊर्ध्वमुत्कृष्टं मूलं कारणं स्वप्रकाशपरमानन्दरूपत्वेन नित्यत्वेन च ब्रह्म । अथवा ऊर्ध्वं सर्वसंसारबाधेऽप्यबाधितं सर्वसंसारभ्रमाधिष्ठानं ब्रह्म तदेव मायया मूलमस्येत्यूर्ध्वमूलम् । अध इत्यर्वाचीनाः कार्योपाधयो हिरण्यगर्भाद्या गृह्यन्ते । ते नानादिक्प्रसृतत्वाच्छाखा इव शाखा अस्येत्यधःशाखम् । आशुविनाशित्वेन न श्वोऽपि स्थातेति विश्वासानर्हमश्वत्थं मायामयं संसारवृक्षमव्ययमनाद्यनन्तदेहादिसंतानाश्रयमात्मज्ञानमन्तरेणानुच्छेद्यमनन्तमव्ययमाहुः श्रुतयः स्मृतयश्च । श्रुतयस्तावत् "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इत्याद्याः कठवल्लीषु पठिताः अवाञ्चो निकृष्टाः कार्योपाधयो महदहंकारतन्मात्रादयो वा शाखा अस्येत्यवाक्शाख इत्यधःशाखपदसमानार्थं, सनातन इत्यव्ययपदसमानार्थम् । स्मृतयश्च 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः । बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एतद्ब्रह्मवनं चैव ब्रह्माऽऽचरति साक्षिवत् ॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना । ततश्चात्मगतिं प्राप्य तस्मान्नावर्तते पुनः ॥" इत्यादयः । अव्यक्तमव्याकृतं मायोपाधिकं ब्रह्म तदेव मूलं कारणं तस्मात्प्रभवो यस्य स तथा । तस्यैव मूलस्याव्यक्तस्यानुग्रहादतिदृढत्वादुत्थितः संवर्धितः । वृक्षस्य हि शाखाः स्कन्धादुद्भवन्ति । संसारस्य च बुद्धेः सकाशान्नानाविधाः परिणामा भवन्ति । तेन साधर्म्येण बुद्धिरेव स्कन्धस्तन्मयस्तत्प्रचुरोऽयम् इन्द्रियाणामन्तराणि छिद्राण्येव कोटराणि यस्य स तथा । महान्ति भूतान्याकाशादीनि पृथिव्यन्तानि विविधाः शाखा यस्य विशाखः स्तम्भो यस्येति वा । आजीव्य उपजीव्यः । ब्रह्मण परमात्मनाऽधिष्ठितो वृक्षो ब्रह्मवृक्षः । आत्मज्ञानं विना छेत्तुमशक्यतया सनातनः । एतत् ब्रह्मवनमस्य ब्रह्मणो जीवरूपस्य भोग्यं वननीयं संभजनीयमिति वनं ब्रह्म साक्षिवदाचरति न त्वेतत्कृतेन लिप्यत इत्यर्थः । एतत् ब्रह्मवनं संसारवृक्षात्मकं छित्त्वा च भित्त्वाचाहं ब्रह्मास्मीत्यतिदृढज्ञानखड्गेन समूलं निकृत्येत्यर्थः । आत्मरूपां गतिं प्राप्य तस्मादात्मरूपान्मोक्षान्नावर्तत इत्यर्थः । स्पष्टमितरत् । अत्र च गङ्गातरङ्गनुद्यमानोत्तुङ्गतत्तीरतिर्यङ्निपतितमर्धोन्मूलितं मारुतेन महान्तमश्वत्थमुपमानीकृत्य जीवन्तमियं रूपककल्पनेति द्रष्टव्यम् । तेन नोर्ध्वमूलत्वाधःशाखत्वाद्यनुपपत्तिः । यस्य मायामयस्याश्वत्थस्य छन्दांसि छादनात्तत्त्ववस्तुप्रावरणात् संसारवृक्षरक्षणाद्वा कर्मकाण्डानि ऋग्यजुःसामलक्षणानि पर्णानीव पर्णानि, यथा वृक्षस्य परिरक्षणार्थानि पर्णानि भवन्ति तथा संसारवृक्षस्य परिरक्षणार्थानि कर्मकाण्डानि धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात्तेषाम् । यस्तं यथाव्याख्यातं समूलं संसारवृक्षं मायामयमश्वत्थं वेद जानाति स वेदवित्

कर्मब्रह्माख्यवेदार्थवित्स एवेत्यर्थः । संसारवृक्षस्य हि मूलं ब्रह्म हिरण्यगर्भादयश्च जीवाः शाखास्थानीयाः। स च संसारवृक्षः स्वरूपेण विनश्वरः प्रवाहरूपेण चानन्तः । स च वेदोक्तैः कर्मभिः सिच्यते, ब्रह्मज्ञानेन च छिद्यत इत्येतावानेव हि वेदार्थः । यश्च वेदार्थवित्स एव सर्वविदिति समूलवृक्षज्ञानं स्तौति स वेदविदिति ॥ १ ॥

शं० टी०—सत्त्वं रजस्तम इत्यादिना सत्त्वादिगुणानां ज्ञानतत्फलप्रतिबन्धकत्वेन ज्ञानिनो व्यपोह्यानां स्वरूपं कार्यं च तद्वृत्तं फलं च गुणातिक्रमणं कृतवतो लक्षणं फलं च सम्यक् प्रतिपाद्याध्यायान्ते गुणातिक्रमणोपायाविवक्षया मां च योऽव्यभिचारेण भक्तियोगेन सेवत इति ब्रह्मानुसंधानं गुणात्ययसाधनत्वेनोक्तम् । ते च गुणाः कातिचित् पुंसो मुमुक्षोः कीदृशं ब्रह्म कथं तदनुसंधानमित्याकाङ्क्षायां क्षराक्षरविलक्षणं पुरुषोत्तमाख्यं परं ब्रह्म तदनुसंधानं तत्र महतां प्रवृत्तिं तत्प्रवृत्तिफलं च प्रतिपादयितुं पञ्चदशाध्याय आरभ्यते। तत्रादौ मुमुक्षोः संसारे जुगुप्सावैराग्यसंन्यासादिमोक्षसाधनसिद्धये संसारं वृक्षत्वेन वर्णयति—**श्रीभगवानुवाच ऊर्ध्वमिति** । ऊर्ध्वमूलमव्यक्तमहदादेरपि परममहत्त्वेनातिसूक्ष्मत्वेन प्रकाशकत्वेन सर्वास्पदत्वेन सर्वव्यापकत्वेन सर्वकारणत्वेन च परं ब्रह्मोर्ध्वमित्युच्यते । सर्वोत्तमत्वाद्ब्रह्मण ऊर्ध्वमिति व्यपदेशः । ऊर्ध्वमुच्छ्रितमुत्कृष्टतमं यत्परं ब्रह्म तदेव मायाशबलं मूलं बीजं यस्य स ऊर्ध्वमूलः संसारवृक्षः श्रुतिप्रसिद्धः । "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इति । "ऊर्ध्वमूलमवाक्शाखं वृक्षं यो वेद संप्रति" इति च श्रुतेः । यथा वटस्य बीजमव्यक्तमतिसूक्ष्ममविज्ञेयमपारशक्तिसंपन्नं च तथा जगद्बीजमव्यक्तं ब्रह्माप्यतिसूक्ष्ममविज्ञेयमपारशक्तिसंपन्नं च भवति। तत एवातिविस्तरोऽतिविचित्रः संसारवृक्षस्तम् । अधःशाखम् "अव्यक्तान्महन्महतोऽहंकारोऽहंकारात्पञ्चतन्मात्राणि पञ्चतन्मात्रेभ्य पञ्चमहाभूतानि" इतिश्रवणान्महदादिविकाराः सर्वे प्रकृतेरधस्थत्वादध इत्युच्यन्ते । अधोऽधःशब्दवाच्या महदादयः शाखा इव शाखा यस्य सोऽयमधःशाखः। महदङ्कुरोऽहंकारः स्कन्धः पञ्चतन्मात्राणि शाखाः पञ्चमहाभूतान्युपशाखा अस्य भवन्तीत्यर्थः । यस्य महदादयः शाखा भवन्ति तमधःशाखमश्वत्थं मायाकार्यत्वेन श्वो न तिष्ठतीत्यश्वत्थः क्षणभङ्गुरोऽनित्य इत्यर्थः । तमेतं क्षणप्रध्वंसिनमश्वत्थं संसारवृक्षमव्ययं व्ययो नाशस्तद्रहितमव्ययं नित्यमिति प्राहुः । प्ररोचनोक्तिप्रमोहिताः कामिनो मीमांसकाः 'न कदाचिदनीदृशं जगत्' इति—जगन्नित्यमिति वदन्तीत्यर्थः । छन्दांसि संसारवृक्षस्यानित्यत्वदुःखरूपत्वव्यामोहकत्वानर्थकारित्वादिदोषजातं छादयन्ति " ध्रुवा द्यौर्ध्रुवा पृथिवी दक्षिणावन्तो अमृतत्वं भजन्ते । स्वर्गे लोके न भयं किंचनास्ति । स्वर्गलोकामृतत्वं भजन्ते । एष वः पुण्यः सुकृतो ब्रह्मलोकः " इत्यादिप्ररोचनवाक्यैर्गूहयन्तीति छन्दांसि ऋग्यजुःसामादीनि यस्य संसारवृक्षस्य मायामयस्य पर्णानीव पर्णानि भवन्ति यथा पर्णानि सर्वतो वृक्षदोषमावृत्याऽक्षतं रक्षन्ति तथा वेदाः सपुराणेतिहासाः कर्मोपासनयोगागमतन्त्रक्रियापराः सर्वे कर्मतत्साधनतत्फलप्रकाशनेनानित्यत्वदुःखरूपत्वादिदोषं छादयन्तो यं संसारवृक्षं वर्धयन्तीत्यर्थः। तमेतं प्रतिपादितलक्षणं वेदपलाशं धर्माधर्मप्रसवं जन्ममरणादिदुःखैकफलं संसारवृक्षं समूलं यो वेद सम्यग्विजानाति स वेदविद्वेदार्थविदित्यर्थः । नन्वनृतजडदुःखात्मकस्य स्वगुणैर्व्यामोहकतया जन्माद्यनर्थहेतो संसारवृक्षस्य वेदनेन विदुषः कथं वेदार्थवित्त्वं सिद्ध्यतीति चेदुच्यते—यस्माद्बीजादुत्पन्नो यो वृक्षः स तु तद्रस एव भवति यथा तिक्तरसान्निम्बबीजादुत्पन्नो निम्बवृक्षस्तिक्तरसात्मक एव भवति नान्यथा । सोऽयं न्यायः सर्वत्रापि प्रसिद्धः । एवं चिदेकरसाद्ब्रह्मणः सकाशादुत्पन्नः संसारवृक्षश्चिद्रस एव भवति । ततः " सर्वं खल्विदं ब्रह्म " इत्यादिश्रुतिभिः संसारवृक्षः स्वबीजरसात्मक एव भवति वृक्षत्वान्निम्बवृक्षवदित्यादियुक्तिभिश्च तदुदितस्वानुभवेन च इमं संसारवक्षं चिदेकरसं कारणब्रह्ममात्रमेव यः शुद्धात्मा पण्डितो

वेद स वेदार्थविदेव स्यात् "सर्वे वेदा यत्पदमामनन्ति" इति न्यायेन सर्ववेदार्थो ब्रह्म तद्विद्ब्रह्मविदेव भवति "कस्मिन् भगवो विज्ञाते सर्वमिदं विज्ञातं भवति" इति न्यायेन सर्वज्ञश्च भवति । सर्वज्ञस्य तस्य कर्तव्यं च वक्ष्यति—स सर्वविद्भजति मामिति । अतः कारणज्ञानेन कार्यस्य वृक्षस्य कारणमात्रत्वविज्ञानाद्विदुषो वेदार्थवित्त्वं सिध्यतीत्यर्थः ॥ १ ॥

**श्री० टी०**—वैराग्येण विना ज्ञानं नच भक्तिरतः स्फुटम् ॥ वैराग्योपस्कृतं ज्ञानमीशः पञ्चदशेऽदिशत् ॥ पूर्वाध्यायान्ते मां च योऽव्यभिचारेण भक्तियोगेन सेवत इत्यादिना परमेश्वरमेकान्तभक्त्या भजतस्तत्प्रसादलब्धज्ञानेन ब्रह्मभावो भवतीत्युक्तम् । न चैकान्तभक्तिर्ज्ञानं चाऽविरक्तस्य संभवतीति वैराग्यपूर्वकं ज्ञानमुपदेष्टुकामः प्रथमं तावत्सार्धश्लोकाभ्यां संसारस्वरूपं वृक्षरूपकालंकारेण वर्णयन् श्रीभगवानुवाच—ऊर्ध्वमूलमिति । ऊर्ध्वमुत्तरः क्षराक्षराभ्यामुत्कृष्टः पुरुषोत्तमो मूलं यस्य तम् । अध इति ततोऽर्वाचीनाः कार्योपाधयो हिरण्यगर्भादयो गृह्यन्ते । ते तु शाखा इव शाखा यस्य तं विनश्वरत्वेन श्वः प्रभातपर्यन्तमपि न स्थास्यतीति विश्वासानर्हत्वादश्वत्थं प्राहुः । प्रवाहरूपेणाविच्छेदादव्ययं च प्राहुः । "ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातन इत्याद्याः श्रुतयः । छन्दांसि वेदाः यस्य पर्णानि धर्माधर्मप्रतिपादनद्वारेण छायास्थानीयैः कर्मफलैः संसारवृक्षस्य सर्वजीवाश्रयणीयत्वापादनात् पर्णस्थानीया वेदाः । यस्तमेवंभूतमश्वत्थं वेद स एव वेदार्थवित् । संसारवृक्षस्य मूलमीश्वरः श्रीनारायणः । ब्रह्मादयस्तदंशाः शाखास्थानीयाः । स च संसारवृक्षो विनश्वरः प्रवाहरूपेण नित्यश्च । वेदोक्तैः कर्मभिः सेव्यतामापादितश्चेत्येतावानेव हि वेदार्थः । अत एव विद्वान्वेदविदिति स्तूयते ॥ १ ॥

**स० टी०**—अविद्याकामाद्यैर्दृढतरसुमूलैरुपचितं फलैर्दुःखाकारैर्निबिडमजरं भ्रान्तिबहुलम् ॥ द्रुमं संसाराख्यं विषमगतिमुच्छेत्तुमचिरात्क्षमा यत्पादाब्जे रतिरनुदिनं नौमि तमजम् ॥ १ ॥ क्षरं मायाकार्यं चरमचरमुच्चावचमिदं महामायाशक्त्यक्षरमपि तदध्यस्तमखिलम् ॥ चिदानन्दे यस्मिन्परमपुरुषे ब्रह्मणि विभौ तमीशानं कृष्णं श्रुतिहृदयमीडेऽनवरतम् ॥ २ ॥ पूर्वाध्याये गुणान्बन्धहेतूनुक्त्वा हरिः पुनः ॥ तेभ्यस्तत्त्वधिया मोक्षं सा मद्भक्त्येति चावदत् ॥ ३ ॥ भगवत्तत्त्वविज्ञाने विरक्तस्याधिकारिता ॥ नान्यस्येत्यर्जुनं प्राह निमित्तीकृत्य केशवः ॥ ४ ॥ सर्वेषां प्राणिनां कर्मफलं ज्ञानफलं विदाम् ॥ ईशायत्तमतः सर्वैरुपास्यो भगवान् हरिः ॥ ५ ॥ मां च योऽव्यभिचारेणेत्यतः संप्रोक्तवान्स्वयम् ॥ मद्भक्त्या प्राप्तविज्ञाना गुणातीताः परं पदम् ॥ ६ ॥ प्रयान्तीति हरिः प्रोच्य सम्यग्ज्ञानैकसाधनम् ॥ वैराग्यं तत्समुत्पत्तिः सारासारविवेचनात् ॥ ७ ॥ अतस्तदर्थं संसारस्वरूपं वस्तु चाद्वयम् ॥ विवक्षुर्वृक्षरूपेण संसारं वर्णयत्यजः ॥ ८ ॥ ब्रह्मणो हि प्रतिष्ठेति श्लोकः सूत्रात्मकः स्मृतः ॥ वृत्तिस्थानीय एतस्याध्याय आरभ्यतेऽधुना ॥ ९ ॥ सर्वभूतहितैषित्वाद्विशेषादर्जुनप्रियः ॥ अपृष्टोऽपि स्वयं प्राह भगवान्सात्वतां पतिः ॥ १० ॥ वैराग्यं तत्त्वविज्ञानसाधनं पुष्कलं मतम् ॥ संसाराद्बन्धनागारान्मुमुक्षोरिति वीक्ष्य च ॥ ११ ॥ तत्सिद्ध्यै प्राह भगवान्वृक्षरूपकमादितः ॥ उत्कृष्टं कारणं ब्रह्म स्वप्रकाशं चिदद्वयम् ॥ १२ ॥ यद्वोर्ध्वं सर्वसंसारबाधेऽपि यदबाधितम् ॥ मायया सर्वसंसारभ्रमाधिष्ठानमद्वयम् ॥ १३ ॥ ब्रह्म मूलं तदेवास्येत्यूर्ध्वमूलस्तमीदृशम् ॥ अधो हिरण्यगर्भाद्या अर्वाचीना उपाधयः ॥ १४ ॥ सर्वतः प्रसृतत्वात्ते शाखा इव यतोऽस्य तम् ॥ आशुनाशितयात्यन्तविश्वासानर्हभावतः ॥ १५ ॥ श्वोऽपि प्रभातपर्यन्तं स्थातुं योग्यो न चास्त्ययम् ॥ मायामयं तमश्वत्थं संसारतरुमव्ययम् ॥ १६ ॥ अनाद्यनन्तदेहादिसंतानाश्रयमामृतम् ॥ तत्त्वज्ञानं विनोच्छेद्याभावादाहुस्तमव्ययम् ॥ १७ ॥ ऊर्ध्वमूलोऽर्वाक्शाख एषोऽश्वत्थः सनातनः ॥ इत्याद्याः श्रुतयस्तद्वत्स्मृतयोऽपि सहस्रशः ॥ १८ ॥ अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः ॥

बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ १९ ॥ महाभूतविशाखश्च विषयैः पत्रवाँस्तथा ॥ धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ २० ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः ॥ एतद्ब्रह्मवनं चैव ब्रह्माचरति साक्षिवत् ॥२१॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना ॥ ततश्चात्मगतिं प्राप्य तस्मान्नावर्तते पुनः ॥ २२ ॥ मायोपाधिकमव्यक्तं मूलं तस्मात्समुद्भवः ॥ यस्य संसारवृक्षस्येत्याद्यर्थाः स्मृतयः स्मृताः ॥ २३ ॥ वृक्षरूपकविन्यासैरुपमेयं विवक्षिता ॥ श्रीमद्गङ्गातरङ्गैर्यस्तुद्यमानस्तरुर्महान् ॥ २४ ॥ तत्तीरे ह्युन्नतेऽत्यन्तवायुनोन्मूलितो बलात् ॥ तिर्यङ्निपतितो जीवञ्छाखापत्रादिभिर्वृतः ॥ २५ ॥ तमेवोपमानीकृत्याश्वत्थं जीवन्तमक्षतम् ॥ पुराणे च श्रुतौ गीतास्वियं रूपककल्पना ॥ २६ ॥ तेनोर्ध्वमूलभावादेर्नानुपपत्तिरण्वपि ॥ यस्य मायामयस्यास्याश्वत्थस्याच्छादनात्तरोः ॥ २७ ॥ तत्त्वप्रावरणाद्वा संसारतरुरक्षणात् ॥ छन्दांसि कर्मकाण्डानि पर्णानीव भवन्ति वै ॥ २८ ॥ यथा वृक्षस्य पर्णानि रक्षणार्थानि सन्त्युत ॥ तथा संसारवृक्षस्य कर्मकाण्डानि सर्वतः ॥ २९ ॥ ऋग्यजुःसामरूपाणि रक्षणार्थानि सन्त्यपि ॥ धर्माधर्मादितद्धेतुफलभासकता यतः ॥ ३० ॥ छन्दसामस्ति तस्मात्तत्पर्णत्वं तत्र दर्शितम् ॥ मायामयं तमश्वत्थं यथाव्याख्यातमेव यः ॥३१॥ समूलमभिजानाति शास्त्रतो गुरुतः स्वतः ॥ कर्मब्रह्मात्मवेदार्थवित्स एवास्ति वेदवित् ॥ ३२ ॥ मूलं संसारवृक्षस्य शुद्धं ब्रह्म स्वमायया । शाखा हिरण्यगर्भाद्या जीवाः सन्ति सहस्रशः ॥ ३३ ॥ स च संसारवृक्षोऽस्ति स्वरूपेण विनश्वरः ॥ प्रवाहरूपेण तथाऽनाद्यनन्ततयाऽव्ययः ॥ ३४ ॥ वेदोक्तैः कर्मभिर्जीवैः सेव्यते स च सर्वदा ॥ छिद्यते ब्रह्मबोधेन साक्षात्कारात्मना स च ॥ ३५ ॥ इत्येतावान् हि वेदार्थः संगृहीतो यथार्थतः ॥ न संसारतरोरस्मात्समूलादागमार्थतः ॥ ३६ ॥ ज्ञेयोऽणुमात्रोऽप्यन्योऽस्ति ह्यवशिष्टोंऽत एव हि ॥ समूलं वेत्ति संसारवृक्षं यः स च वेदवित् ॥ ३७ ॥ यश्च वेदार्थवित्प्राज्ञः स एवास्तीह सर्ववित् ॥ इत्थं समूलवृक्षस्य ज्ञानं स्तौति हरिः स्वयम् ॥ ३८ ॥ १ ॥

भा० टी०—यस्मान्मदधीनं कर्मिणां कर्मफलं ज्ञानिनां ज्ञानफलं च 'फलमत उपपत्तेः' 'ततो ह्यस्य बन्धविपर्ययौ' इतिन्यायाभ्यामतो भक्तियोगेन मां सेवन्ते ते मत्प्रसादाज्ज्ञानप्रातिक्रमेण गुणातीता मोक्षं गच्छन्तीति आत्मनस्तत्त्वमेव सम्यक् जानन्ति ते तेन ज्ञानेन गुणातीताः सन्तः मुक्तिं गच्छन्तीति किमु वक्तव्यमित्यतोऽर्जुनेनापृष्टमप्यात्मनस्तत्त्वं विवक्षुर्भगवानुवाच—ऊर्ध्वमूलमित्यादि । तत्रादौ वृक्षरूपककल्पनया वैराग्यार्थं संसारस्वरूपं वर्णयति। भगवत्तत्त्वज्ञाने संसाराद्विरक्तस्यैवाधिकारात् । यत्तु केचित्पूर्वाध्यायेन भगवता संसारबन्धहेतून् गुणान् व्याख्याय तेषामत्ययेन ब्रह्मभावो मोक्षो मद्भजनेन लक्ष्यत इति मां चेत्यादिनोक्तं तत्र मनुष्यस्य तव भक्तियोगेन कथं ब्रह्मभाव इत्याकाङ्क्षायां स्वस्य ब्रह्मरूपताज्ञापनाय सूत्रभूतो ब्रह्मणोहीति श्लोको भगवतोक्तः, अस्य सूत्रस्य वत्तिस्थानीयोऽयं पञ्चदश आरभ्यते। भगवतः श्रीकृष्णस्य हि तत्त्वं ज्ञात्वा तत्प्रेमभजनेन गुणातीतः सन् ब्रह्मभावं कथमाप्नुयात् लोक इति। तत्र ब्रह्मणो हि प्रतिष्ठाहमित्यादिभगवद्वचनमाकर्ण्य मत्तुल्यो मनुष्योऽयं कथमेवं वदतीति विस्मयाविष्टमप्रतिभया लज्जया च किमपि प्रष्टुमशक्नुवन्तमर्जुनमालक्ष्य कृपया स्वस्वरूपं विवक्षुः श्रीभगवानुवाचेत्यवतारयन्ति तन्नादर्तव्यम्। अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन्। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते। मूढोऽयं नाभिजानाति लोको मामजमव्ययम्। मामुपेत्य पुनर्जन्म दुःखालयमशाश्वतम्। नाप्नुवन्ति महात्मानः संसिद्धिं परमां गताः ॥ मया ततमिदं सर्वं जगदव्यक्तमूर्तिना। मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ॥ न मे विदुः सुरगणाः प्रभवं न महर्षयः। अहमादिर्हि देवानां महर्षीणां च सर्वशः ॥ अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते। इत्यादिबहुशः श्रुतवतः, परं ब्रह्म परं धाम पवित्रं परमं भवान्। नहि ते भगवन्व्यक्तिं विदुर्देवा न दानवाः ॥

त्वमक्षरं परमं वेदितव्यं त्वमस्य विश्वस्य परं निधानम् । त्वमव्ययः शाश्वतधर्मगोप्ता सनातनस्त्वं पुरुषो मतो मे ॥ अनन्त देवेश जगन्निवास त्वमक्षरं सदसत्तत्परं यत् । त्वमादिदेवः पुरुषः पुराणस्त्वमस्य विश्वस्य परं निधानम् ॥ वेत्तासि वेद्यं च परं च धाम त्वया ततं विश्वमनन्तरूप इत्याद्युक्तवतो विश्वरूपं दृष्टवतश्चार्जुनस्य एवमभिप्रायवर्णनानौचित्यात् । ऊर्ध्वं कालतः सूक्ष्मत्वात् कारणत्वात् नित्यत्वान्महत्वाच्चोच्छ्रितमुत्कृष्टं मायाशक्तिमत् ब्रह्ममूलम् अस्य सोऽयं संसार ऊर्ध्वमूलस्तमधः सर्वकारणान्मायाशक्तिमतो ब्रह्मणो निकृष्टा महदहंकारतन्मात्रादयः शाखाः यस्य सोऽधःशाखास्तं श्वोऽपि न स्थास्यतीत्यश्वत्थः क्षणभङ्गुरस्तमश्वत्थं मायामयं संसारवृक्षम् अव्ययं संसारमायाया अनादिकालप्रवृत्तत्वादनाद्यनन्तदेहादिसंतानाश्रयः तत्त्वज्ञानमन्तरेणानुच्छेद्यो यः सोऽव्ययः संसारवृक्षस्तं प्राहुः श्रुतिस्मृतिवादाः कथयन्ति । तथाहि "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः" इत्यादिश्रुतिवादाः । 'अव्यक्तमूलप्रभवस्तस्यैवानुग्रहोत्थितः। बुद्धिस्कन्धमयश्चैव इन्द्रियान्तरकोटरः ॥ महाभूतविशाखश्च विषयैः पत्रवांस्तथा । धर्माधर्मसुपुष्पश्च सुखदुःखफलोदयः ॥ आजीव्यः सर्वभूतानां ब्रह्मवृक्षः सनातनः । एतद्ब्रह्मवनं चैव ब्रह्मवृक्षस्य तस्य तत् ॥ एतच्छित्त्वा च भित्त्वा च ज्ञानेन परमासिना । ततश्चान्त्यगतिं प्राप्य तस्मान्नावर्तते पुनः" इत्यादयः स्मृतिवादाः । आजीव्यः उपजीव्यः ब्रह्माधिष्ठितत्वात् ब्रह्मवृक्षः । ज्ञानं विना च्छेत्तमशक्यत्वेनानादित्वाच्च सनातनश्चिरन्तनः । तच्च ब्रह्मणः परस्यात्मनो वनं वननीयं संभजनीयमत्र हि सर्वं प्रतिष्ठितं तस्य वृक्षस्य संसाराख्यस्य तदेव सारभूतम्, अथवास्य वृक्षस्यानवच्छिन्नस्य संसारमण्डलस्य तदेव ब्रह्मवनमिव वनं वननीयं संभजनीयं, नहि ब्रह्मातिरिक्तं संसारस्यास्पदमस्ति ब्रह्मैवाविद्यया संभवतीत्यभ्युपगमादित्यर्थः । तस्मात् ब्रह्मगतिरूपान्मोक्षात् । स्पष्टमन्यत् । असेव्यफलमश्नुतां वीनां सुपर्णानां जीवानामज्ञानामयो गतिर्यस्मिन्नसौ अव्ययः न विद्यते व्ययो यस्मादित्यव्ययः "तयोरन्यः पिप्पलम्" इति श्रुतेरित्यर्थः । अनेन सुज्ञैरसेव्यफलत्वं ध्वन्यते । यद्वा पक्षिसामान्यवाचक-वि-शब्देन पक्षिविशेषा हंसा लक्ष्यन्ते तेषामयः प्रचारस्तद्रहितः। नहि हंसा अश्वत्थे व्याप्रियन्ते संन्यासिनो वा जगद्विषय इति कल्पना तु श्रुत्याद्यननुगुणा सर्वज्ञानां न शोभते इत्यत आचार्यैर्न प्रदर्शिता । अत्र ऊर्ध्वमूलमधःशाखं मिथ्याभूतं जले प्रतिबिम्बितं पुनः पुनः परिदृश्यमानत्वादव्ययमैन्द्रजालिकोपदर्शितमेतादृशं वाश्वत्थं संसारवृक्षस्य मिथ्यात्वबोधनायोपमानीकृत्येयं रूपककल्पना । तेनोर्ध्वमूलस्याधःशाखस्य क्षणभङ्गुरस्य मायामयस्याव्ययस्याश्वत्थस्यैवाभावाद्रूपकासङ्गतिरिति न शङ्कनीयम् । केचित्तु गङ्गातरङ्गतुद्यमानोत्तुङ्गतत्तीरं तिर्यक् निपतितः प्रबलतरपवनोन्मूलितः कतिपयमूलव्याप्तपातालः ऊर्ध्वस्थितबहुमूलो भूमिस्थकतिपयशाखः उपरिस्थितबहुशाखः अधोमूलबलेन स्थितत्वात् अव्ययस्तादृशमश्वत्थमुपमानीकृत्येयं रूपककल्पनेति वर्णयन्ति । यस्य संसारवृक्षस्य छादनात् रक्षणात् छन्दांसि ऋग्यजुःसामलक्षणानि पर्णानीव पर्णानि यथा वृक्षस्य परिरक्षणार्थानि पर्णानि तथा कर्मकाण्डानि छन्दांसि धर्माधर्मतद्धेतुफलप्रकाशनार्थत्वात संसारवृक्षस्य परिरक्षणार्थानीत्यर्थः । छादनं प्रावरणमित्यर्थे तु अर्थवादयुक्तानां छन्दसां तन्निष्ठदोषप्रावरणार्थत्वं बोध्यम् । तं यथोक्तं संसारवृक्षं भङ्गुरं मायामयं साधिष्ठानं यो वेद जानाति स वेदवित् वेदार्थज्ञः । समूले संसारवृक्षे सर्वं ज्ञेयमन्तर्भवतीति तस्य ज्ञाता वेदार्थवित्त्वात् सर्वज्ञो भवतीति समूलसंसारवृक्षज्ञानं यत्नेन संपाद्यमिति बोधनाय तज्ज्ञानं स्तौति ॥ १ ॥

**प० टी०**—पूर्वाध्यायान्ते मां च योऽव्यभिचारेणेत्यादिना मामीश्वरमेकान्तभक्त्या भजतस्तदनुग्रहलब्धज्ञानेन गुणत्रयविस्तारोपरमद्वारा ब्रह्मीभावो भवतीत्युक्तं तत्र न हि विषयिणां वैराग्यमन्तरेणैकान्तभक्तिरुदेत्यतो गुणत्रयविचित्रविस्तारात्मकस्थूलप्रपञ्चस्य वृक्षदृष्टान्तेन कुठारवद्वैराग्यनाश्यत्वं दर्शयन्नथर्वोपनिषदुक्तं संसारवृक्षं सार्धश्लोकद्वयेन रूपकालंकारेण वर्णयन् भगवानाह—ऊर्ध्वमूलमिति ।

ऊर्ध्वः सर्वोत्कृष्टः क्षराक्षरातीतः पुरुषो मूलकारणं यस्य । अथार्वाचीनाः कार्योपाधयो हिरण्यगर्भप्रभृतयः शाखा यस्य तम् । श्वः प्रबोधोत्तरकालं न तिष्ठतीत्यश्वत्थं प्राहुः । प्रबोधस्य दुःसाध्यत्वादव्ययं प्रवाहरूपेण चिरकालावस्थायिनम् । अथ वृक्षसाधर्म्यमाह छन्दांसीति । यस्य प्रपञ्चवृक्षस्य छन्दांसि वेदाः पर्णानि प्रवृत्तिमार्गेण धर्माधर्मप्रतिपादकानि छायास्थानीयानि भवन्ति तदनुवर्तिनामापातरमणीयत्वेन विश्रमजनकत्वात्, एवं यः पुरुषस्तमश्वत्थं वेद स एव वेदवित् । अयमर्थः । वेदे तावदुपक्रमे मन्त्रात्मकविभागेन विषयैषिणां फलप्रलोभनेन प्रपञ्चवृक्षस्य प्रशंसनं कृतम् । उपसंहारे तूपनिषद्विभागेन मुमुक्षूणां वैराग्योपदेशैस्तस्य दुःखरूपत्वेनोपरमः प्रशंसितोऽस्तीति वेदविदित्यनेन वेदतात्पर्यज्ञ इति सूचितम् । यद्वा अनेन श्लोकेन स्थूलप्रपञ्चरूपः शिरःपाण्यादिलक्षणः पुरुषविधः स्थूलशरीररूपो विराड्वृक्षत्वेन वर्ण्यते । स च लौकिकवृक्षवदधोमूलोर्ध्वशाखो नास्ति किं तूर्ध्वमूलमधःशाखं प्राहुः । ऊर्ध्वं मूलमादिकारणं सूक्ष्मदेहरूपं हिरण्यगर्भाख्यं यस्य, अथेन्द्रादिदेवोत्पत्तिहेतवो हस्तपादादिरूपाः शाखा यस्य, यतो गुणप्रवृद्धा विषयप्रवाला इत्यग्रे प्रोक्तमतश्छन्दांसि वासना एव संसारतरोः पर्णान्याश्छादनस्थानीयानि । दुःखरूपेऽपि संसारतरुः फलवासनाभिः सुखरूप इवावभासत इत्यर्थः । श्रुतिरपि—"अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं विश्वरूपम् । तस्याऽऽसत सप्त ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना" इति । भाष्यम्—तस्य विराजश्चमसः शिरोदेशे ऊर्ध्वबुध्नः ऊर्ध्वं बुध्नः "महद्यशः" इति श्रुतेः यशः परात्मस्वरूपं निहितं निगूढतया स्थापितमस्तीत्यत्र प्रमाणमाह तस्येति । तस्य तीरे समीपे सप्तर्षय आसते स्थितिं गच्छन्ति व्यापारं कुर्वन्ति ते सप्तर्षयः—ज्ञानेन्द्रियाणि द्वे नेत्रे द्वे श्रुती द्वे नासे सप्तमी रसनेति तत्र वागष्टमी कर्मेन्द्रियमेषां प्रवर्तकः सूत्रात्मा तत्समीपे तत्प्रकाशेन प्रवर्तत इत्यर्थः । तदेवाह—ब्रह्मणेति । किंभूता वाग् ब्रह्मणा कृत्वा संविदाना संवदन्ती । तथाथर्ववल्लीषु । "ऊर्ध्वमूलोऽवाक्शाख एषोऽश्वत्थः सनातनः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते । तस्मिंल्लोकाः श्रिताः सर्वे तदु नात्येति कश्चन" इति । अत्र शुक्रं शबलं ब्रह्म तदु तत् कश्चन नात्येत्यतिलङ्घ्य न गच्छति तदन्तत एव तिष्ठति । शेषं प्राग्व्याख्यातम् ॥ १ ॥

रा० टी०—त्रयोदशाध्याये संसारहेतुभूतं प्रकृतिमहदहंकारादि तत्त्वजातरूपं क्षेत्रशब्दितं जगत्स्वरूपमुक्तं, य एनं वेत्ति पुरुषमित्यादिना भगवदादिज्ञानरूपस्तदत्ययोपायश्चोक्तः, तद्द्वयमत्र दर्शयति । ननु पूर्वाध्याय एव तद्द्वयं दर्शितमिति चेन्न । तत्र संहारहेत्वेकदेशगुणानामेव प्रवृत्तिर्दर्शिता । अत्र पुनः समग्रं संसारहेतुप्रकृत्यादिजगत्स्वरूपं प्रदर्श्य तदत्ययेच्छामुत्पाद्य तत्साधनजिज्ञासुं प्रति प्रागुक्ततदत्ययसाधनप्रपञ्चनात् । अत एव पूर्वानन्तर्यमस्य । तदत्ययसाधनप्रपञ्चनं प्रसङ्गादेव भगवन्महिमानं च दर्शयतीति ज्ञेयम् । जगत्स्वरूपं तावदाह—ऊर्ध्वेत्यादिसार्धश्लोकद्वयेन । ऊर्ध्वशब्द उन्नतवाची सन् विष्णुचिदचित्प्रकृतिपरोऽत्र ज्ञेयः । विष्णोः सर्वोत्तमत्वात्, परतन्त्रेषु चित्प्रकृतेः सर्वोत्तमत्वादचित्प्रकृतेरचेतनेषूत्तमत्वात् । ऊर्ध्वाः विष्णुचिदचित्प्रकृतयो वृक्षस्य मूलानीव मूलानि यस्य सविकाराव्यक्तादिप्रागुक्तपञ्चविंशतितत्त्वात्मकस्य जगदाख्यवृक्षस्य तमूर्ध्वमूलम् । श्व एकरूपेण न तिष्ठतीति व्युत्पत्त्या अश्ववच्चञ्चलत्वेन तिष्ठतीति वाऽश्वत्थनामकम् । "सुपि स्थः" इति कः "आतो लोप इटि च" इत्याकारलोपः । तस्य तकारः । जगदाख्यं चिदचिदात्मकं वृक्षम् । तत्रायं विवेकः । प्रसिद्धवृक्षस्य धरादेवीवत् विष्णुर्जगद्वृक्षस्य पृथङ्मूलम् । अचित्प्रकृतिः सत्त्वादित्रिगुणात्मिका वृक्षस्य मृत्परिणामितया मूलम् । त्रिमूलो हि जगद्वृक्षो जडप्रकृतिरपि त्रिगुणात्मकत्वान्मूलत्रयात्मना त्रिभिर्गुणैः परिणमिता । चित्प्रकृतिस्तु तदधिष्ठातृत्वान्मूलभागवज्ज्ञातव्येति । अधःशब्दो नीचवाची । विष्ण्वादिप्रागुक्तत्रितयापेक्षयाधः नीचाः पञ्चभूतसहिताः महदहंकारबुद्ध्योऽष्टौ

पदार्थाः साभिमानिनः शाखा इव शाखाः यस्य तथा तम् । अव्ययं सर्वथानुच्छिद्यमानम् । पूर्वकल्पे यथा स्थितं तथैव कल्पान्तरेऽपि स्थितं प्रवाहतोऽनादिनित्यमिति यावत् । प्राहुः प्राज्ञा इत्यर्थः । लोके पर्णोत्पत्तावेव फलोदयदर्शनात् । छन्दसां काममोक्षरूपफलहेतुत्वात् । यस्य जगदाख्यवृक्षस्य छन्दांसि वेदवाक्यजातानि अभिमानिसहितानि पर्णानीव पर्णानि आहुः । एतेन जगद्वृक्षः काममोक्षरूपद्विफल इत्युक्तं भवति। यस्तं जगद्वृक्षं वेद स वेदवित् वेदार्थज्ञ इत्यर्थः ॥ १ ॥

**अधश्चोर्ध्वं प्रसृतास्तस्य शाखाः गुणप्रवृद्धा विषयप्रवालाः ॥**
**अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥**

**त० टी०**—एवं मूलशाखाऽवयवनिरूपणेन संसारवृक्षं निरूप्य पुनरवान्तरशाखानिर्देशेन निरूपयति-**अधश्चेति** । तस्योर्ध्वमूलस्याधःशाखस्य संसारवृक्षस्याऽधश्चोर्ध्वं च शाखाः प्रसृता विस्तारं प्राप्ताः सन्ति । तत्र पापकर्मभिः पश्वादियोनिमारभ्य नरकान्तं प्राप्ता ये जीवास्तेऽधःशाखास्थानीयाः- ये सुकृतिनस्ते ऊर्ध्वं प्रसृताः प्रकर्षेण देवगन्धर्वादियोनिप्रभृतिसत्यलोकान्तं प्राप्तास्ते उपरि शाखास्थानीयाः । ताश्च शाखा गुणप्रवृद्धाः गुणैः सत्त्वादिभिर्जलसेचनैरिव प्रवृद्धाः प्रकर्षेण वृद्धिं प्राप्ताः। विषयप्रवालाः शब्दा विषया एव प्रवाला इव प्रवाला यासां ताः । उभयत्र शाखाप्रस्तारे हेतुमाह- **अधश्च मूलान्यनुसंततानीति** । चशब्दादूर्ध्वं च मूलानीति । ऊर्ध्वं प्रकृत्यादीनि अधो देवादिभ्योऽर्वाक्तत्तद्विषयभोगवासनालक्षणानि धर्माधर्मप्रवृत्तिहेतुभूतान्यनुसंततानि विरूढानि । कथंभूतानि-कर्मानुबन्धीनि । कर्म शुभाशुभमनुबद्धं पश्चाज्जनयितुं शीलं येषां तानि भवन्ति । क्व भवन्तीत्यत आह-मनुष्यलोके मनुष्यश्चासौ लोकश्च तस्मिन् । अनादिभोगवासनाया मनुष्ययोनिषु तत्प्राप्तिसाधनैः कर्मभिरूर्ध्वाधोलोकेषु भोगं भुञ्जतां जीवानां कर्मक्षये तत्तद्भोगवासनाभिर्मनुष्यलोकं प्राप्तानां पुनस्तत्तद्भोगसाधनेषु कर्मसु प्रवृत्तिर्भवति । तत्रैव कर्माधिकारात् । मनुष्यत्वे कृतानां कर्मणामेव सर्वलोकप्राप्तिहेतुत्वादित्यर्थः ॥ २ ॥

**म० टी०**—तस्यैव संसारवृक्षस्यावयवसंबन्धिन्यपरा कल्पनोच्यते—**अधश्चेति** । पूर्वं हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्ताः । इदानीं तु तद्गतो विशेष उच्यते । तेषु ये कपूयचरणा दुष्कृतिनस्तेऽधः पश्वादियोनिषु प्रसृताः विस्तारं गताः । ये तु रमणीयचरणाः सुकृतिनस्ते ऊर्ध्वं देवादियोनिषु प्रसृताः । अतोऽधश्च मनुष्यत्वादारभ्य विरिञ्चिपर्यन्तम् ऊर्ध्वं च तस्मादेवारभ्य सत्यलोकपर्यन्तं प्रसृतास्तस्य संसारवृक्षस्य शाखाः । कीदृश्यस्ताः? गुणैः सत्त्वरजस्तमोभिर्देहेन्द्रियविषयाकारपरिणतैर्जलसेचनैरिव प्रवृद्धाः स्थूलीभूताः। किंच विषयाः शब्दादयः प्रवालाः पल्लवा इव यासां संसारवृक्षशाखानां तास्तथा शाखाग्रस्थानीयाभिरिन्द्रियवृत्तिभिः संबन्धाद्रागाधिष्ठानत्वाच्च । किंच अधश्च चशब्दादूर्ध्वं च मूलान्यवान्तराणि तत्तद्भोगजनितरागद्वेषादिवासनालक्षणानि मूलानीव धर्माधर्मप्रवृत्तिकारकाणि तस्य संसारवृक्षस्यानुसंततानि अनुस्यूतानि । मुख्यं तु मूलं ब्रह्मैवेति न दोषः । कीदृशान्यवान्तरमूलानि? कर्म धर्माधर्मलक्षणमनुबद्धुं पश्चाज्जनयितुं शीलं येषां तानि कर्मानुबन्धीनि। कुत्र? मनुष्यलोके मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मणयादिविशिष्टो देहो मनुष्यलोकस्तस्मिन् बाहुल्येन कर्मानुबन्धीनि । मनुष्याणां हि कर्माधिकारः प्रसिद्धः ॥ २ ॥

**शं० टी०**—शुद्धात्मन एवेश्वरप्रसादवतः कारणज्ञानेन कार्यस्य वृक्षस्य कारणमात्रत्वविज्ञानाद्ब्रह्मवित्त्वं विदेहमुक्तिश्च सिध्यति । मलिनात्मनस्तु संसारवृक्षस्वरूपं सम्यग्विज्ञायासद्बुद्ध्या ततो विरक्तवत एव ज्ञानं मोक्षश्च सिध्यतीति बोधयितुं पुनः संसारवृक्षं विशिनष्टि—**अध इति** । तस्योक्तलक्षणस्य संसारवृक्षस्य

शाखा उपशाखास्थानीयाः पापपुण्यकर्मफलभूता देहाः अधश्चोर्ध्वं प्रसृताः। मनुष्यादिस्थावरान्तमधः-शब्दार्थः। मनुष्यान्ठ्याप्य ब्रह्मलोकपर्यन्तमूर्ध्वशब्दार्थः। अधःस्थावरपर्यन्तमूर्ध्वं च ब्रह्मलोकपर्यन्तमपि प्रसृताः, सर्वतो व्याप्ता इत्यर्थः। वाक्यस्यास्यायमभिप्रायः—क्षणिकस्यास्य देहस्य ध्वंसे सति पुरुषस्य मुक्तिः स्वयमेव सेत्स्यति, किं पुंप्रयत्नेनेति न मन्तव्यम्। संचितकर्माणि पुण्यपापलक्षणान्यनन्तानि विचित्राणि विचित्रफलकानि च यानि तान्येव 'नाभुक्तं क्षीयते कर्म' इति न्यायेनास्मिन् देहे नष्टेऽपि स्थावरादिब्रह्मलोकपर्यन्तं तत्र तत्र पुरुषस्य शरीराणि संभावयन्ति। ततः पुंप्रयत्नं विना न मुक्तिः स्वतः सिध्यतीति। ननु तत्कर्मफलानुभवान्ते देहाः स्वयमेव क्षीयन्ते, ततः स्वयमेव मुक्तिः स्यादेवेत्याशङ्कायां—न। पुनःपुनः क्रियमाणकर्मभिर्वर्धन्त इति सूचयितुमाह—गुणप्रवृद्धा इति। गुणैः सत्त्वादिगुणविकारैः कामक्रोधलोभादिभिस्तत्कारणकैः पापपुण्यादिभिश्च प्रवृद्धाः प्रकर्षेण वृद्धिं प्राप्ताश्च भवन्ति। कामादिभिः कर्मादिभिश्चोपर्युपरि प्रवर्धन्ते इत्यर्थः। उपर्युपरिप्रवृद्धेः कारणमाह—विषयप्रवाला इति। विषयाः शब्दादयो भोग्यपदार्थाः प्रवाला अङ्कुराः शाखाभ्य इव येभ्यः संभवन्ति ते विषयप्रवाला भवन्ति। शाखाः प्रवालानिव देहास्तत्र तत्र शब्दस्पर्शरूपरसादिभोग्यानिन्द्रियसंनिकर्षद्वारा संभावयन्तस्तेषु रागं द्वेषं कामं क्रोधं लोभं च समुद्भाव्य पुनःपुनः कर्माणि कारयन्तीत्यभिप्रायः। कामादीनां कर्मणां च सिद्धेः कारणमाह—अधश्चेति। कर्मानुबन्धीनि—यानि काम्यनित्यनैमित्तिकप्रतिषिद्धानि नानाविधशरीरारम्भकाणि तान्येव कर्माण्यनुबध्नन्ति स्वोत्पत्तेरनन्तरमेव कारयन्तीति कर्मानुबन्धीनि। कामकर्मसमुत्पत्तेः कारणानि मूलानि पूर्वस्मादवान्तराणि संसारकारणानि विषयवासनाः कर्मवासना इति यावत्। अधोऽधश्च शरीरेषु चकारादूर्ध्वशरीरेषु लिङ्गाख्येष्वनुसंततानि प्राणिकर्मानुरूपेण सर्वतो व्याप्तानि भवन्ति, मनुष्यलोके प्राणिवर्गे सर्वत्र विषयेषु कामान् जनयन्त्यः कर्माणि कारयन्त्यो भोगवासनालिङ्गेषु सातत्येन तिष्ठन्ति। ततो वासनाः कामान् जनयन्ति, कामाः कर्माण्युच्चावचानि कारयन्ति, कर्माणि सर्वतः पुनः पुनः शरीराण्युत्पादयन्त्येवं वासनाभिः कामादिभिः पुण्यपापादिकर्मभिश्च सर्वतः शरीरपरंपराभिवर्धते, न क्वचिदपि क्षीयते। ततः संसारवृक्षारूढानां विषयसुखाशापाशबद्धानां जननमरणदुःखप्रवाहपातं विना न कथंचित् न क्वचिन्न कदाचिदपि मोक्षः सिध्यतीत्यर्थः। एतेन कर्मोपासनाफलेषु स्वर्गसत्यलोकवैकुण्ठादिषु तत्सुखेषु चानित्यत्वबुद्ध्या, असत्यत्वबुद्ध्या च मुमुक्षोर्वैराग्यसिद्धये मायोपहितब्रह्मणः सकाशादुत्पन्नस्य संसारवृक्षस्य स्कन्धशाखोपशाखात्वेन वर्णितानां महदादिमायाकार्योपाधिकानां हिरण्यगर्भविराडादीनां गुणत्रयोपाधिकानां ब्रह्मविष्ण्वादीनामिन्द्रादीनां च मायिकत्वमनित्यत्वं सूचितम्। कर्मोपास्तितत्साधनतत्फलप्रतिपादकानां वेदवाक्यानां संसारवृक्षपर्णत्ववर्णनेन मुमुक्षोर्वटाश्वत्थपर्णवदुपेक्षणीयत्वं च सूचितं भवति ॥ २ ॥

श्री० टी०—किंच—अधश्चेति। हिरण्यगर्भादयः कार्योपाधयो जीवाः शाखास्थानीयत्वेनोक्तास्तेषु च ये दुष्कृतिनस्तेऽधःपश्वादियोनिषु प्रसृताः विस्तारं गताः। सुकृतिनश्चोर्ध्वं देवादियोनिषु प्रसृतास्तस्य संसारवृक्षस्य शाखाः। किंच गुणैः सत्त्वादिवृत्तिभिः जलसेचनैरिव यथायथं प्रवृद्धाः वृद्धिं प्राप्ताः। किंच विषयाः रूपादयः प्रवालाः पल्लवस्थानीयाः यासां ताः प्रशाखास्थानीयाभिः इन्द्रियवृत्तिभिः संयुक्तत्वात्। किंच अधश्च चशब्दादूर्ध्वं च मूलानि अनुसंततानि विरूढानि मुख्यं मूलमीश्वर एक एव। इमानि त्ववान्तरमूलानि तत्तद्भोगवासनालक्षणानि। तेषां कार्यमाह—मनुष्यलोके कर्मानुबन्धीनि कर्म एवानुबन्धि अनन्तरभावि येषां तानि। ऊर्ध्वाधोलोकेषु यदुपभुक्तं तत्तद्भोगवासनाभिर्हि कर्मक्षये मनुष्यलोकं प्राप्तानां तत्तदनुरूपेषु कर्मसु प्रवृत्तिर्भवति। अस्मिन्नेव हि कर्माधिकारो नान्येषु लोकेषु। ततो मनुष्यलोके इत्युक्तम् ॥ २ ॥

**स० टी०**–एवं वेदार्थवित्त्वेन समूलतरुवेदिनम् ।। स्तुत्वा तस्यैव संसारवृक्षस्य कल्पनाऽपरा ॥ १ ॥ वैराग्यायोच्यते ह्यङ्गसंबन्धिन्यक्षरासये ॥ पूर्वं हिरण्यगर्भाद्याः कार्योपाधितया तरोः ॥ २ ॥ शाखास्थानीयभावेन प्रोक्ता अत्राधुना त्वयम् ॥ विशेषस्तद्गतोऽन्योऽपि वैराग्यायोच्यते स्फुटम् ॥ ३ ॥ कपूयचरणा ये ते पापाः पश्वादियोनिषु ॥ सुविस्तारं गता ये तु धर्मात्मानस्त ऊर्ध्वगाः ॥ ४ ॥ देवादियोनिषु प्राप्ता विस्तारमत एव हि ॥ अधश्चातो मनुष्यत्वादारभ्यार्वाक्तृणावधि: ॥ ५ ॥ ऊर्ध्वं च तत आरभ्य सत्यलोकान्तमास्तृताः ॥ शाखाः संसारवृक्षस्य कीदृश्यस्ता गुणैस्त्रिभिः ॥ ६ ॥ देहेन्द्रियाद्याकारेण सम्यक्परिणतैश्च तैः ॥ स्थूलीभूताः प्रवृद्धास्ताः सेचनैरिव पाथसाम् ॥ ७ ॥ विषया रञ्जकत्वेन शब्दाद्याः पल्लवा इव ॥ यासां संसारवृक्षस्य शाखानां तास्तथेरिताः ॥ ८ ॥ अधश्च शब्दादूर्ध्वं च मूलान्यवान्तराण्यपि ॥ तत्तद्भोगजरागादिवासनालक्षणानि वै ॥ ९ ॥ धर्माधर्मप्रवृत्तेश्च कारकाणि समन्ततः ॥ तस्य संसारवृक्षस्यानुस्यूतानि भवन्त्यतः ॥ १० ॥ मुख्यं तु मूलं ब्रह्मैवेत्यतो दोषो न कश्चन ॥ तान्यवान्तरमूलानि कीदृशानीति कथ्यते ॥ ११ ॥ धर्माधर्मात्मकं कर्मानुबद्धं परिणामतः ॥ येषां जनयितुं शीलमधिकारिजने भुवि ॥ १२ ॥ तानि कर्मानुबन्धीनि तत्रायं भाव ईशितुः ॥ संसारवासनानां च धर्माधर्माख्यकर्मणाम् ॥ १३ ॥ बीजाङ्कुरवदन्योन्यजन्महेतुतया सदा ॥ तत्कृतो जन्ममृत्यादिसंतानात्मात्यनर्थदः ॥ १४ ॥ संसारतरुरुच्छेद्यो ज्ञानेन परमासिना ॥ नोपेक्ष्यो दीर्घरोगोऽयं सज्जनैः सन्मुमुक्षुभिः ॥ १५ ॥ २ ॥

**भा० टी०**–तस्यैव वृक्षस्यावयवसंबन्धिनी प्रागुक्तादन्यां कल्पनामाह–अधश्चेति । मनुष्यलोकमारभ्यावीचिपर्यन्तमधः, तत एवारभ्य सत्त्वलोकपर्यन्तमूर्ध्वं यस्य संसारवृक्षस्य शाखा इव शाखाः कर्मोपास्तिफलानि नानाविधानि 'यथाकर्म यथाश्रुतम्' इत्युक्तत्वात् प्रसृताः प्रकर्षेण व्याप्ताः, गुणैरुपादानभूतैः सत्त्वादिभिः प्रवृद्धाः प्रकर्षेण स्थूलीकृताः विषयाः शब्दादयः प्रवालाः पल्लवशाखाग्रोद्भूताङ्कुरस्थानीयाः यासां शाखानां ताः विषयप्रवालाः संसारवृक्षस्य परमं मूलमुपादानं पूर्वमूर्ध्वमुक्तमथेदानीं कर्मफलजनितरागद्वेषादिवासनामूलानीव मूलानि धर्माधर्मप्रवृत्तिकारणान्यवान्तरभावीनि तानि देवाद्यपेक्षया अधः मूलानि प्रसृतानि संततानि अनुप्रविष्टानि–सर्वेष्वनुगततयाऽनवच्छिन्नानि । मूलानि विशिनष्टि–कर्मानुबन्धीनि कर्म धर्माधर्मलक्षणमनुबन्धः पश्चाद्भावि येषां–येषामुद्भवात्पश्चात्कर्माणि भवन्तीत्यर्थः । तानि कर्मानुबन्धीनि । क्वेत्यपेक्षायामाह–मनुष्यलोके लोक्यत इति लोकः प्राणिनिकायः मनुष्यश्चासौ लोकश्चेत्यधिकृतो ब्राह्मण्यादिविशिष्टो देहो मनुष्यलोकः तस्मिन्मनुष्यस्य लोके भूलोके इति वा । विशेषतो मनुष्याणां कर्माधिकारस्य प्रसिद्धत्वात् ॥२॥

**प० टी०**–अथ तस्य शाखाविस्तारमाह–अधश्चोर्ध्वमिति । अधो देवपितृमनुष्यलोकाद्या ऊर्ध्वं महर्जनस्तपोलोकमुख्याः शाखाः प्रसृताः विस्तृताः सन्ति । किंभूताः? गुणप्रवृद्धा यथायोग्यं सत्त्वरजस्तमोभिर्जलसेकादिभिरिव प्रवृद्धा वृद्धिं प्राप्तास्तथा विषया रूपरसादय एव प्रवालाः पल्लवाश्च प्रसृताः सन्ति । अधः पाताले मूलानि यक्षरक्षांस्यनु संततानि सम्यक् तानि विस्तृतानि, मनुष्यलोके तु कर्मानुबन्धीनि कर्माधीनानि तेषामेव कर्माधिकारित्वान्मनुष्यलोके कर्म कृत्वेतरलोकेषु तत्फलं भुञ्जत इत्यर्थः ॥ २ ॥

**रा० टी०**–तस्य जगदाख्यवृक्षस्य शाखाः शाखास्थानीयाः महदाद्याः अष्टौ पदार्थाः चिदचिद्रूपाः अधः स्वापेक्षयाऽपकृष्टकार्यभूतशरीरादौ स्वापेक्षयोत्कृष्टोर्ध्वशब्दोक्ते कारणभूताव्यक्ते च सूक्ष्मरूपेण प्रसृताः व्याप्ताः । किंरूपाः शाखा इत्यत उक्तं गुणप्रवृद्धा इत्यादि । गुणैः सत्त्वादिभिः प्रवृद्धाः गुणानामर्वाचीनमूलत्वात्तादृशमूलैरेव प्रवृद्धे वृक्षे शाखानां प्रवृद्धिर्दृष्टेति भावः । विषयप्रवालाः तात्कालिकसुखहेतुत्वसाम्यात् शब्दाद्याः विषया एव प्रवालाः पल्लवा यासां ताः विषयप्रवालाः । मूलानि ऊर्ध्वपदेन प्रकृतानि विष्णो

रूपाणि जडाजडप्रकृती सत्त्वरजस्तमांसि च अधः जगदाख्यवृक्षस्य अधोभागेषु च शाखास्वपीति यावत्। अनुसंततानि व्यातानि। कीदृशानि मूलानीत्यत उक्तं कर्मानुबन्धीनीति। मनुष्यलोके कर्माणि अपेक्ष्य फलदातृत्वात्कर्मानुबन्धीनि इति। तथा चोक्तम्—ब्रह्मास्य पृथङ्मूलं प्रकृतिः समूलं सत्त्वादयोऽर्वाचीन-मूलं भूतानि शाखाः छन्दांसि पत्राणि देवनृतिर्यश्चश्च शाखाः पत्रेभ्यो हि फलं जायते। मात्रा शिफाः मुक्तिः फलममुक्तिः फलम् "मोक्षो रसो मोक्षो रसः" इत्यादिश्रुतेः॥ २॥

**न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा[१]॥**
**अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्त्वा॥ ३॥**

**त० टी०**—एवंभूतं संसारवृक्षं केचिदेव जानन्ति नतु सर्वे इत्याह—न रूपमिति। योऽयं संसारवृक्षो वर्णितः अस्य रूपमिह संसारे स्थितैर्जीवैर्यथा वर्णितं तथा नोपलभ्यते। तथाऽस्य वृक्षस्यान्तो विनाशोऽपि गुणमयवस्तुष्वसङ्गकृत इति नोपलभ्यते। तथा गुणसङ्ग एवास्यादिरिति नोपलभ्यते। तथा प्रतिष्ठत्यस्मिन्निति प्रतिष्ठा अनात्मन्यात्मबुद्धिरेवास्य प्रतिष्ठा सा च नोपलभ्यते। अथवाऽन्तोऽवसानमादिरिति आरभ्य प्रवृत्त इति संप्रतिष्ठा सम्यक् प्रतिष्ठा मध्यावस्था संप्रतिष्ठत्य-स्मिन्निति संप्रतिष्ठा निवासोऽस्येति न केनचिदुपलभ्यते। एवंभूतोऽयं संसारवृक्षो दुरुच्छेद्यो-ऽनर्थकरश्चैनं श्रेयोऽर्थी निशितास्त्रेण छित्त्वा परमार्थं वस्त्वन्विच्छेदित्याह—अश्वत्थमेन-मिति सार्धेन। अश्वत्थमेनं यथोक्तं सुविरूढमूलं सुष्टु विरूढानि विरोहं प्राप्तानि दृढानि मूलानि यस्य तमेनं दुरुच्छेद्यम् असङ्गशस्त्रेण गुणमयविषयभोगस्पृहानिरासेन पुत्रवित्तलोकाद्ये-षणानुद्भवरूपेण भगवद्भक्तिदृढीकृतेन विवेकाभ्यासनिशितेन छित्त्वा तत्संबन्धं विहायेत्यर्थः॥ ३॥

**म० टी०**—यस्त्वयं संसारवृक्षो वर्णितः—नेति। इह संसारे स्थितैः प्राणिभिरस्य संसारवृक्षस्य यथाव-र्णितमूर्ध्वमूलत्वादि तथा तेन प्रकारेण रूपं नोपलभ्यते स्वप्नमरीच्युदकमायागन्धर्वनगरवन्मृषात्वेन दृष्टन-ष्टस्वरूपत्वात् तस्य। अत एव तस्यान्तोऽवसानं नोपलभ्यते। एतावता कालेन समाप्तिं गमिष्यतीति अपर्यन्तत्वात्। न चास्यादिरुपलभ्यते। इत आरभ्य प्रवृत्त इति अनादित्वात्। न च संप्रतिष्ठा स्थितिर्म-ध्यमस्योपलभ्यते। आद्यन्तप्रतियोगिकत्वात्तस्य। यस्मादेवंभूतोऽयं संसारवृक्षो दुरुच्छेदः सर्वानर्थकरश्च तस्मात् अनाद्यज्ञानेन सुविरूढमूलमत्यन्तबद्धमूलं प्रागुक्तमश्वत्थमेनमसङ्गशस्त्रेण सङ्गः स्पृहा असङ्गः सङ्गविरोधि वैराग्यं पुत्रवित्तलोकैषणात्यागरूपं तदेव शस्त्रं रागद्वेषमयसंसारविरोधित्वात्, तेनासङ्गशस्त्रेण दृढेन परमात्मज्ञानौत्सुक्यदृढीकृतेन पुनः पुनर्विवेकाभ्यासनिशितेनाच्छित्त्वा समूलमुद्धृत्य वैराग्यशमदमादिसंपत्त्या सर्वकर्मसंन्यासं कृत्वेत्येतत्॥ ३॥

**शं० टी०**—यद्यप्यधीतविदितसर्ववेदवेदार्थाः पुरुषाः पण्डिता अप्यविद्याकामपरतन्त्रा भूत्वा प्ररोचनोक्ति-भिः संसारवृक्षफलेषु दृष्टेष्वदृष्टेषु च स्वर्गादिषु तत्सुखेषु च रम्यत्वबुद्ध्या नित्यत्वबुद्ध्या च मोहिताः सन्तश्चा-न्यानुद्भ्रामयन्तः स्वयं च भ्रमन्ति। तथाप्यत्र यः शुद्धात्मा विचक्षणः सूक्ष्मबुद्धिर्मुमुक्षुर्भवति तेन "तद्यथेह कर्मचितो लोकः क्षीयते। श्वोभावा मर्त्यस्य यदन्तकैतत्। श्रेयश्च प्रेयश्च मनुष्यमेतस्तौ संपरी-त्य विविनक्ति धीरः" इत्यादिश्रुतिभिः, इदं सर्वं मिथ्या मायाकार्यत्वादिन्द्रजालवदित्यादि-युक्तिभिश्च सदसद्विचार्य तदुदितवैराग्यखड्गेन संसारवृक्षं छित्त्वा सर्वं संन्यस्य मोक्षाय यत्नः कर्तव्य इति बोधयति—**न रूपमिति** द्वाभ्याम्। यद्यपि संसारवृक्षस्य पामरदृष्ट्योक्तरीत्या विशिष्टपर्णपुष्पफलादि-

१ न च संप्रविष्टः इति राघवेन्द्रधृतः पाठः।

मत्तया रमणीयत्वेनाश्रयणीयत्वं प्रतीयते, तथापि पण्डितैः सूक्ष्मबुद्धिभिः इहास्मिन्नर्थे सम्यग्विचार्यमाणे "ध्रुवा द्यौ ध्रुवा पृथिवी" इति "स्वर्गलोका अमृतत्वं भजन्ते" इत्यादिप्ररोचनश्रुत्या यथारूपं स्वरूपं नित्यत्वेन सुखरूपत्वेन च वर्णितं भवति तथा तेन प्रकारेण नोपलभ्यते । ननु ध्रुवा द्यौरित्यन्तरिक्षादेर्नित्यत्वं श्रूयते कथं नित्यत्वं नोपलभ्यत इति चेद्वाक्यशेषेण ध्रुवेण हविषेति क्षणिकस्य हविषोऽपि ध्रुवत्वश्रवणात्तन्न्यायेनान्तरिक्षादीनामपि ध्रुवत्वमौपचारिकमिति ज्ञापितं भवति। यत्सावयवं तदनित्यमित्यादियुक्तिबलेन "त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रम्" इति "यथा स्वप्नप्रपञ्चोऽयम्" इत्यादिश्रुतिस्मृतिन्यायेन च संसारवृक्षस्य स्वप्नार्थवदनियतसत्ताकत्वात् ज्ञेयत्वाज्जन्मलयादिमत्त्वाच्चास्य प्रत्यक्षेणोपलभ्यमानस्य नित्यत्वं सुखरूपत्वं चाप्रामाणिकमित्यर्थः । एतेन स्वर्गादेर्नित्यत्वं नित्यसुखत्वं च बुद्धिभ्रम इति सिद्धम् । ननु संसारवृक्षस्यानित्यत्वं दुःखरूपत्वमिति यदि निश्चयस्तर्हि तस्याभ्रच्छायावत्क्षणिकत्वात्किंचित्कालं दुःखं सोढ्वा तदपाये सुखं भोक्तुं शक्यत इत्याशङ्कायामाह—नान्त इति । अस्य जननमरणदुःखप्रवाहसान्तत्येनाजस्रं वर्तमानस्यादिस्तत्प्रवृत्तेरादिमत्त्वं नोपलभ्यते अनादित्वादविद्यातत्कार्यप्रवृत्तेरित्यर्थः । तत एव प्रतिष्ठा च—प्रतिष्ठा मध्ये स्थितिरपि नोपलभ्यते—अयमस्यादिरिदमस्य मध्यमिति ज्ञातुं न शक्यत इत्यर्थः । तथैवान्तश्चास्य पर्यवसानमपि नोपलभ्यते । इदमत्र समाप्तमिति समाप्तिरपि न विज्ञायत इत्यर्थः । ननु तर्हि मुमुक्षोः सदसद्विवेकिनः किं कर्तव्यमित्याकाङ्क्षायां 'श्वः कार्यमद्यकुर्वीत' इतिन्यायेन सर्वं संन्यस्य मोक्षाय यतितव्यमिति बोधयितुमाह—अश्वत्थमिति । अनेकजन्मसमाराधितेश्वरप्रसादवता मुमुक्षुणा विपश्चिता असङ्गशस्त्रेण सज्जते विषयेषु पुमाननेनेति सङ्गो वैषयिको रागस्तदभावोऽसङ्गो विरागस्तीव्रमोक्षेच्छया सदसद्विवेकविज्ञानेन च समुत्पन्नं वैराग्यं तदेव शस्त्रं तेन दृढेन पुनर्विषयेषु दोषदर्शनेन विषयाणां बन्धकत्वबुद्धिजनितभयेन च तीव्रमोक्षेच्छया च मुहुर्मुहुः कृतविवेकबलेनापि दृढतमोऽयं तेन दृढेनासङ्गशस्त्रेण अश्वत्थं सुविरूढमूलं सुतरामेरण्डतैललेपेन तत्पात्रवत्सर्वतो विरूढानि विशिष्य व्याप्तानि मूलानि विविधविषयवासनाजालानि यस्य तं सुविरूढमूलम् । अनेककोटिब्रह्मकल्पनानुस्यूतनानाविधवासनापटलजटिलमश्वत्थं संसारवृक्षं मूलं छित्त्वा पुत्रादिसर्वैषणाभ्यो व्युत्थाय सर्वसंन्यासं कृत्वेत्यर्थः ।। ३ ।।

**श्री० टी०—किंच—न रूपमस्येति** । इह संसारे स्थितैः प्राणिभिः अस्य संसारवृक्षस्य तथोर्ध्वमूलत्वादिप्रकारेण रूपं नोपलभ्यते । नचान्तः अवसानमपर्यन्तत्वात् । नचादिरनादित्वात् । नच संप्रतिष्ठा स्थितिः कथं तिष्ठतीति न चोपलभ्यते । यस्मादेवंभूतोऽयं संसारवृक्षो दुरुच्छेद्यः, अनर्थकरश्च तस्मादेनं दृढेन वैराग्येण शस्त्रेण छित्त्वा तत्त्वज्ञाने यतेतेत्याह—**अश्वत्थमेनमिति** सार्धेन । एनमश्वत्थं सुविरूढमूलमत्यन्तं बद्धमूलं सन्तमसङ्गः सङ्गराहित्यं अहंममतात्यागस्तेन दृढेन शस्त्रेण सम्यग्विचारवता छित्त्वा पृथक्कृत्य ।।३ ।।

**स० टी०**—यस्त्वयं वर्णितो वृक्षः संसाराख्योऽस्य जन्तुभिः ।। संसारेऽस्मिन्स्थितैर्वेदे यथावर्णितमद्भुतम् ।। १ ।। रूपं तेन प्रकारेण नोपलभ्यत ऐश्वरम् ।। दृष्टनष्टस्वरूपत्वात्तस्य मायामयस्य च ।।२।। स्वप्नमायामरीच्यम्भोगन्धर्वनगरादिवत् ।। अतो नास्यावसानं च कथंचिदुपलभ्यते ।। ३ ।। एतावताऽसौ कालेन समाप्तिं यास्यतीति वा ।। अपर्यन्ततयाऽप्यस्य तथादिर्नोपलभ्यते ।। ४ ।। प्रवृत्त इत आरभ्येत्यनादित्वेन केनचित् ।। संप्रतिष्ठा स्थितिर्नापि मध्यमस्योपलभ्यते ।। ५ ।। तस्याद्यन्तनिरूप्यत्वाद्यस्मादेवमयं तरुः ।। संसाराख्यो दुरुच्छेदः सर्वानर्थकरस्ततः ।। ६ ।। अनाद्यविद्ययात्यन्तबद्धमूलं पुरेरितम् ।। एनमश्वत्थनामानं संसारतरुमव्ययम् ।। ७ ।। वैराग्याख्येन शस्त्रेण रागद्वेषविरोधिना ।। दृढीकृतेन ब्रह्मैक्यज्ञानौत्सुक्यात्पुनःपुनः।।८।।विवेकाभ्यासतीक्ष्णेन छित्त्वोद्धृत्य समूलतः ।। वैराग्यात्षट्कसंपत्त्या कृत्वा संन्यासमादरात्।।९।। ३।।

**भा० टी०**—" को अद्धा वेद क इह प्रवोचत् कुत आजाता कुत इयं विसृष्टिः । अर्वाग्देव

अस्य विसर्जनेनाथा को वेद यत आबभूव " इत्यादिश्रुतिबोधितं संसारस्यानिर्वचनीयत्वं वदन्नास्य ज्ञानायोग्यतत्वं युक्तमपि तुच्छेदायेति बोधयति–नेति। अस्य वर्णितस्य संसारवृक्षस्य रूपमिह शास्त्रे यथा वर्णितं तथा नैवोपलभ्यते। इह संसारे स्थितैः प्राणिभिरूर्ध्वमूलत्वादि यथा वर्णितं तथा नोपलभ्यते इति वा। दृष्टनष्टस्वरूपत्वेन स्वप्नमरीच्युदकमायागन्धर्वनगररज्जुरगशुक्तिरूप्यद्विचन्द्रसमत्वात्। एवं च यथा सत्त्वासत्त्वाभ्यामनिर्वाच्यत्वात्स्वप्नादिकममेयं तथायं संसारोऽपीति भावः। अमेयत्वादेवास्य संसारस्यान्तः कदायं समाप्यत इति परिसमाप्तिर्नोपलभ्यते ज्ञानं विनाऽनन्तत्वात्। तथैत आरभ्यायं प्रवृत्त इत्यादिरस्य न चोपलभ्यते कैश्चिन्न गम्यतेऽनादित्वात्। न च संप्रतिष्ठा संस्थितिः मध्यमस्य केनचिदुपलभ्यते आद्यन्तज्ञानाधीनत्वात् अस्य। तस्मादेनं यथोक्तमश्वत्थं संसारवृक्षं सर्वानर्थकरं सुष्ठु विरूढानि विरोहं गतानि सुदृढानि मूलान्यविद्याकामकर्मवासनारूपाणि यस्य तं सुविरूढमूलत्वाद्दुरुच्छेदमसङ्गशस्त्रेण सङ्गस्य पुत्रवित्तलोकैषणादिरूपस्य परित्यागोऽसङ्गः स एव शस्त्रं संसारवृक्षच्छेदनसाधनं तेन दृढेन परमात्माभिमुख्यनिश्चयदृढीकृतेन पुनः पुनर्विवेकाभ्यासशिलापादिततैक्ष्ण्येन छित्त्वा संसारवृक्षं समूलमुत्कृत्य ततः पदं तत्परिमार्गितव्यमित्यपरेणान्वयः॥ ३॥

प० टी०–अथ तस्य दुर्ज्ञेयत्वमाह–न रूपमस्येति द्वाभ्याम्। इह संसारेऽस्य स्थूलप्रपञ्चतरो रूपं स्वरूपं तथा लौकिकदृष्ट्या नोपलभ्यते यथा ज्ञानदृष्ट्येत्यर्थः। दिव्यं ददामि ते चक्षुः इत्युक्तत्वात् च। परमस्यान्तः पर्यवसानं तथा प्रतिष्ठा स्थितिरादिराविर्भावश्च नोपलभ्यते। अथास्योपरमप्रकारमाह–अश्वत्थमिति। एनं निरूपितप्रकारं सुविरूढमूलं प्रकारान्तरेणानुच्छेद्यमश्वत्थं दृढेन तीक्ष्णेनासङ्गशस्त्रेण वैराग्यकुठारेण छित्त्वा॥ ३॥

रा० टी०–अस्य जगद्वृक्षस्य रूपं यथा स्थितं तथेहलोके नोपलभ्यते विकारित्वादिति भावः। जगतो जन्मसंहारकर्तृत्वहेतुनाद्यन्तपदोक्तो विष्णुः संप्रविष्टश्च जगद्वृक्षमनुप्रविष्टोऽपि नोपलभ्यते। नान्तो न चादिः न च संप्रविष्टः उपलभ्यत इति वाक्यत्रयेणानुपलम्भोक्तिरादरार्था। अस्त्वेवं जगद्वृक्षस्वरूपं ततः किमित्यत आह–अश्वत्थमिति। सुविरूढमूलं प्रबलविष्ण्वादिबहुमूलकम्, एनं प्रागुक्तमश्वत्थनामकं जगद्वृक्षमसङ्गशस्त्रेण सङ्गराहित्यसहितेन ज्ञानासिना छित्त्वा मूलभूतो विष्णुः प्रकृत्यादिजगतो विलक्षणः जगच्चावान्तरभेदयुक्तं परतन्त्रं प्रवाहतोऽव्ययमित्यादिरूपेण विविच्य ज्ञात्वेत्यर्थः। उक्तज्ञानरूपच्छेदनं तस्य कार्यमिति भावः॥ ३॥

**ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः॥**
**तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी॥ ४॥**

त० टी०–तत इति। ततस्तदनन्तरं तत्पदं परिमार्गितव्यमन्वेषणीयं, किं तत्पदं यस्मिन्पदे गताः प्राप्ता भूयः पुनर्न निवर्तन्ते संसाराय नावर्तन्ते। ननु "गौरनाद्यन्तवती जनित्री भूतभाविनी" इति श्रुतेरनाद्यनन्ताया भगवच्छक्तेर्देव्या मायायाः संसारवृक्षस्य मूलभूतायाः कथं निवृत्तिरनिवृत्तेः कथमपुनरावृत्तिरित्याशङ्क्य तन्निवृत्त्यसाधारणमुपायं शृण्वित्याह–तमेवेति। संसारमूलानादिमायानिवृत्तयेऽपुनरावृत्तये च तमेव चाद्यं कृत्स्नस्यादिभूतं पुरुषं शरणं प्रपद्येत्। कोऽसौ पुरुषस्तं लक्षयति–यतो यस्मात्पुरुषाद्गुणमयसंसारप्रवृत्तिः पुराणी पुरातनी प्रसृता वितता, यच्छक्तिगुणप्रवाहे पतितो जीवः संसरति। तत्प्रपत्तिं विना न मुच्यते। तच्चोक्तं पूर्वमेव 'दैवी ह्येषा गुणमयी मम माया दुरत्यया। मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इति तस्माद्भगवच्छरणा अपुनरावृत्तिपदं गच्छन्ति॥ ४॥

**म० टी०—तत इति ।** ततो गुरुमुपसृत्य ततोऽश्वत्थादूर्ध्वं व्यवस्थितं तद्वैष्णवं पदं वेदान्तवाक्यविचारेण परिमार्गितव्यं मार्गयितव्यमन्वेष्टव्यं "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति श्रुतेः । तत्पदं श्रवणादिना ज्ञातव्यमित्यर्थः । किं तत्पदं यस्मिन् पदे गताः प्रविष्टा ज्ञानेन न निवर्तन्ति नावर्तन्ते भूयः पुनः संसाराय । कथं तत् परिमार्गयितव्यमित्याह—यः पदशब्देनोक्तस्तमेव चाद्यमादौ भवं पुरुषं येनेदं सर्वं पूर्णं तं पुरिषु पूर्षु वा शयानं प्रपद्ये शरणं गतोऽस्मीत्येवं तदेकशरणतया तदन्वेष्टव्यमित्यर्थः । तं कं पुरुषं यतो यस्मात् पुरुषात् प्रवृत्तिः मायामयसंसारवृक्षप्रवृत्तिः पुराणी चिरंतन्यनादिरेषा प्रसृता निःसृतैन्द्रजालिकादिव मायाहस्त्यादि तं पुरुषं प्रपद्य इत्यन्वयः ॥ ४ ॥

**शं० टी०—**एवं सदसद्विवेकसमुद्भूतवैराग्यतीव्रमोक्षेच्छावेगेन पराक्प्रवाहायमानमन्तःकरणं प्रत्यगभिमुखीकृत्य मोक्षैककामो यतिरात्मज्ञानैकतत्परो भवेदित्याह—**तत इति ।** ततः 'संन्यस्य श्रवणं कुर्यात्' इतिन्यायेन सद्गुरोः सन्निधौ पदं परतत्त्वं परिमार्गितव्यं श्रुतियुक्तिभिः सम्यग्विचारणीयमित्यर्थः । यद्वा षष्ठ्यर्थस्तसिः । ततस्तस्य संसारवृक्षस्य यत्पदं प्रवृत्तिमूलकारणं परं ब्रह्म तदेव परिमार्गितव्यं ब्रह्मवित्सन्निधौ सम्यग्विचार्य विज्ञातव्यमित्यर्थः । तज्ज्ञानस्य फलमाह—यस्मिन्निति । परमेश्वराचार्यप्रसादसंपन्ना यतयो महात्मानः श्रवणमननादिसंजातविज्ञानेन यस्मिन्निर्विशेषे चिदेकरसे ब्रह्मणि गताः स्वात्मभावं गताः ब्रह्मतां प्राप्ताः सन्तो भूयः पुनः संसाराय न निवर्तन्ते पुनः शरीरत्वाय न कल्पन्त इत्यर्थः । सदसद्विवेकवैराग्याभ्यां मोक्षेच्छया च सर्वं संन्यस्य ज्ञानसिद्ध्यै श्रवणादि कुर्वतो यतेरेवं भवितव्यमित्याह—**तमेवेति ।** यतो यस्माज्जगज्जन्मादिहेतोरीश्वरात्पुराणी चिरन्तन्यनादिकालीनेयं संसारवृक्षप्रवृत्तिः प्रसृता सर्वतः प्राणिनां प्रवृत्ता । ह्यर्थश्चकारः । योऽस्य संसारवृक्षस्य बीजभूतः पदशब्देनोक्तस्तमाद्यमादौ भवमाद्यं मायया सृष्ट्यर्थं सगुणभावं प्राप्तं भक्तवत्सलं पुरुषं परमेश्वरमेव हि शरणं प्रपद्ये । हिशब्दस्तत्परत्वावधारणदार्ढ्यार्थः । "तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इतिश्रवणात्संसारबन्धमोक्षाय परमेश्वरमेव हि शरणं गच्छामीतीश्वरैकशरणेन मुमुक्षुणा श्रवणादि कर्तव्यमित्यर्थः ॥ ४ ॥

**श्री० टी०—तत इति ।** ततस्तस्य मूलभूतं तत्पदं वस्तु वैष्णवं पदं परिमार्गितव्यमन्वेष्टव्यम् । कीदृशम् ? यस्मिन्गता यत्पदं प्राप्ताः सन्तो भूयो न निवर्तन्ति न आवर्तन्त इत्यर्थः । अन्वेषणप्रकारमाह—यत एषा पुराणी चिरन्तनी संसारप्रवृत्तिः प्रसृता विस्तृता तमेव चाद्यं पुरुषं प्रपद्ये शरणं व्रजामीत्येवमेकान्तभक्त्याऽन्वेष्टव्यमित्यर्थः ॥ ४ ॥

**स० टी०—**ततो गुरुमुपागम्य तस्मात्संसारवृक्षतः ॥ ऊर्ध्वं व्यवस्थितं विष्णोः पदं श्रुतिशिरोगिराम् ॥ १ ॥ श्रवणादिविचारेण ज्ञातव्यं तज्जया धिया ॥ किं तत्पदं यदाचार्यमुपेत्य ज्ञेयमादरात् ॥ २ ॥ यस्मिन्पदे प्रविष्टाश्च तत्त्वज्ञानेन सज्जनाः । पुनः संसारदुःखाय नावर्तन्ते कदाचन ॥ ३ ॥ परिमार्गयितव्यं तत्कथमित्युच्यते शृणु ॥ पदशब्देन यः प्रोक्तस्तमेवादौ भवं परम् ॥४॥ येन पूर्णमिदं सर्वं शयानं पूर्षु पूरुषम् ॥ तं प्रपद्ये यतः सर्वकारणात्पुरुषात्परात् ॥ ५ ॥ मायामयस्य वृक्षस्य संसाराख्यस्य सर्वथा ॥ प्रवृत्तिः प्रसृताऽनादिः सैनै(? रैषै)न्द्रजालिकादिव ॥६॥ तमेव शरणं यामि मुमुक्षुः सन्नहं त्विति ॥ तदेकशरणत्वेन ज्ञातव्यं तत्पदं हरेः ॥ ७ ॥ ४ ॥

**भा० टी०—**ततः संसारवृक्षच्छेदनात् पश्चाद्यत्सकलवेदान्तप्रसिद्धं सच्चिदानन्दघनं यद्विष्णोः परमं पदं तत्परिमार्गितव्यमन्विष्य ज्ञातव्यमित्यर्थः "सोऽन्वेष्टव्यः स विजिज्ञासितव्यः" इति श्रुतेः । किं तदिति तत्राह—यस्मिन्पदे गताः प्रविष्टा भूयः पुनर्न निवर्तन्ते संसाराय नावर्तन्ते "न स पुनरावर्तते न स पुनरावर्तते" इति श्रुतेः । तत्कथं परिमार्गितव्यमित्याकाङ्क्षायामाह—तमिति । यः

यच्छब्देनोक्तस्तमेवादौ भवमाद्यं पुरुषं पूर्णं प्रपद्ये शरणं गतोऽस्मीत्येवं तच्छरणतया परिमार्गितव्य-मित्यर्थः । तथाच श्रुतिः " यो वै ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै । तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये । परीत्य भूतानि परीत्य लोकान्परीत्य सर्वाः प्रदिशो दिशश्च । उपस्थाय प्रथमजामृतस्यात्मनात्मानमभिसंविवेश " इत्याद्या । सर्वेषु भूतेष्वहमस्मि सर्वाणि भूतानि च मयि सन्तीति परिज्ञाय । एवमग्रेऽपि प्रथमजां वाचमृतस्य श्रीविष्णोरात्मानं स्वरूपम-भिसंविवेश आश्रितवानित्यर्थः । कोऽसौ पुरुष इति तत्राह—यतो यस्मान्मायामयस्य संसारवृक्षस्य प्रवृत्तिः प्रसृता निःसृता ऐन्द्रजालिकादिव मायामयवृक्षप्रवृत्तिः । इतः आरभ्य प्रवृत्ता इति तु वक्तुं न शक्यत इत्याशयेनाह—पुराणी चिरन्तनी । यत्तु संसारिणां मोक्षप्रवृत्तिसिद्धये स्वयमसंसार्यपि भग-वान्साक्षात्कर्तव्यं प्राप्यं चाविद्यातीतमात्मानं स्वस्यापि प्राप्य स्थानत्वेनाऽऽकारेण प्रकटयति—तमेवेति । यतः यत्र अपुराणी नूतनेति तन्नोपादेयं, 'मत्तः परतरं नान्यत् किंचिदस्तिधनञ्जय । ब्रह्मणो हि प्रतिष्ठाहं शाश्वतस्यामृतस्य च । नान्तो न चादिः' इत्यादिभगवद्वचनाननुरूपत्वात् ॥ ४ ॥

प० टी०—किं कर्तव्यमित्याह—तत इति । ततस्तस्मात्संसारतरोः परमुत्कृष्टं मूलभूतं यत्पदं स्थानं प्रागुक्तं विष्णोः परमं पदं परब्रह्माख्यं तत्परितः सर्वत्र स्थितं मार्गितव्यम् । सुषुम्नाविवरोपलक्षितेन मार्गेण बोद्धव्यम् । तत्किं पदम् ? यस्मिन् गताः प्रविष्टाः सन्तो भूयो न निवर्तन्ते परावृत्तिं न प्राप्नुवन्ति । अथ किमाकारेण प्रविष्टा इत्याह—तमेवेति । तमेवाद्यं ज्यायांसं दृश्यजातस्य मूलभूमिरूपं प्रपद्ये शरणं व्रजामि । तं कम् ? यतः पुराण्यनादिप्रवाहरूपा प्रपञ्चप्रवृत्तिः प्रसृता विस्तृता तमधिकरणरूपमित्यर्थः । अथ क्रमेण श्रुतयश्च तत्र असङ्गशस्त्रेण दृढेन छित्त्वेत्यत्र आश्वलोपनिषदुक्ता श्रुतिः—"न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति" इति । भाष्यम्—एके योगिनस्त्यागेन परेणोत्कृष्टेन वैराग्येणामृतत्वं मोक्षमानशुः प्रापुः । परं तु न कर्मणा फलाभिसन्धिकृतेन । न प्रजया "नापुत्रस्य लोकोऽस्ति" इति श्रुतेः । धनेन तुलापुरुषादिषु व्ययीकृतेन । अथ तत्किं नामामृतत्वं यद्यतयः संन्यासिनो विशन्ति? कथं ज्ञात्वा विशन्ति नाकं स्वर्गम् ?अलौकिकगुहायां हृदयाकाशे निहितं निधिवद्गोपितमपि विभ्राजतेऽर्थप्रकाशकत्वेन शोभते । ततः पदं तत्परिमार्गितव्यमित्यत्र शातपथी श्रुतिः—"तदप्येते श्लोकाः अणुः पन्था विततः पुराणोमाङ्स्पृष्टोऽनुवित्तो मयैव । तेन धीरा अपि-यन्ति ब्रह्मविद उत्क्रम्य स्वर्गं लोकमितो विमुक्ताः । तस्मिञ्छुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च । एष पन्था ब्रह्मणा हानुवित्तस्तेनैति ब्रह्मवित्तैजसः पुण्यकृच्च" इति । भाष्यम्—तत्रार्थे श्लोका वेदोपजीव्या मन्त्रा अपि सन्तीति याज्ञवल्क्यो वदति । ते कथम् । अणुः सूक्ष्मः सुषुम्नोपलक्षितः पन्था मार्गोऽस्ति विततो विशिष्टतरः पुराणोऽनादिसिद्धः मां स्पृष्टः मया प्राप्त अनन्तरं मयैवानुवित्तमनुष्ठितं तेन मार्गेण कृत्वा धीरा अभ्यासयोगिनः ब्रह्मविद उदूर्ध्वं क्रम्य स्वर्गं लोकं भ्रूमध्यं यान्ति गच्छन्ति । किं भूता इतःप्रपञ्चाद्विमुक्ताः । तस्मिन्नाडीसंदर्भमाह—शुक्लमित्यादि । एष पन्था अयं मार्गो न केवलं मयैवानुष्ठितः किं तु ब्रह्मणाप्यनु-वित्तोऽनुष्ठितस्तेन ब्रह्मविद्वेदार्थवेत्ता पुण्यकृदनुष्ठाता तैजसः प्रकाशात्मा एति प्राप्नोति नान्यः ॥ ४ ॥

रा० टी०—ततः परं परापरतत्त्वविषयविमर्शादनन्तरं तत् ऊर्ध्वादिपदेन प्रकृतं ब्रह्म परिमार्गितव्य-मन्वेषणीयं श्रवणादिना विषयीकर्तव्यम् । जगद्वैलक्षण्यज्ञाने सत्येव तत्स्वरूपमन्वेष्टुं शक्यत इति भावः । यस्मिन्गताः भूयः पुनर्न निवर्तन्ते न गर्भयातनां प्राप्नुवन्ति । तदिति पूर्वेणान्वयः । जगद्वृक्षच्छेदनो-पायमाह—तमेव चेति । येयं पुराणी चिरन्तनी संसारप्रवृत्तिः यतः प्रसृता विस्तृता तमेव चाद्यं प्राथ-

मिकं पुरुषं विष्णुं प्रपद्ये प्रपद्येत व्यत्ययात् । 'तमेवाद्यं प्रपद्येत यदंशाभासको ह्ययं जीवराशिः' इति वचनात् । जगद्वृक्षच्छेदनार्थमिति योऽयम ॥ ४ ॥

**निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ॥**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैर्गच्छन्त्यमूढाः पदमव्ययं तत् ॥ ५ ॥**

**त० टी०**—पुनः कथंभूतास्तत्पदं गच्छन्तीति तान्विशिनष्टि—**निर्मानमोहा इति**। मानः गर्वपर्यायोऽहंकारः, मोहोऽनात्मन्यात्माभिमानः, निर्गतौ मानमोहौ येभ्यस्ते निर्मानमोहाः । जितौ सङ्गदोषौ रागद्वेषौ यैस्ते जितसङ्गदोषाः । अध्यात्मनित्याः आत्मनि यज्ज्ञानं तदध्यात्मं तस्मिन्नित्यरताः, विनिवृत्तान्यकामाः, सुखदुःखसंज्ञैः सुखदुःखकारणत्वात्सुखदुःखनामकैः शीतोष्णादिभिर्द्वन्द्वैर्विमुक्ताः, अत एवामूढा आत्मानात्माविवेकरहितास्तदव्ययं पदं गच्छन्ति । पूर्वाध्याये उक्तं ब्रह्मभावाख्यं पदं प्राप्य निरावरणज्ञानमात्मस्वरूपं गच्छन्ति प्राप्नुवन्तीत्यर्थः ॥ ५ ॥

**म० टी०**—परिमार्गणपूर्वकं वैष्णवं पदं गच्छतामङ्गान्तराण्याह—**निर्मानेति** । मानोऽहङ्कारो गर्वः, मोहस्त्वविवेको विपर्ययो वा, ताभ्यां निष्क्रान्ता निर्मानमोहाः, तौ निर्गतौ येभ्यस्ते वा । तथा अहङ्काराविवेकाभ्यां रहिता इति यावत् । जितसङ्गदोषाः प्रियाप्रियसन्निधावपि रागद्वेषवर्जिता इति यावत् । अध्यात्मनित्याः परमात्मस्वरूपालोचनतत्पराः, विनिवृत्तकामाः विशेषतो निरवशेषेण निवृत्ताः कामा विषयभोगा येषां ते विवेकवैराग्यद्वारा त्यक्तसर्वकर्माण इत्यर्थः । द्वन्द्वैः शीतोष्णक्षुत्पिपासादिभिः सुखदुःखसंज्ञैः सुखदुःखहेतुत्वात् सुखदुःखनामकैः सुखदुःखसङ्गैरिति पाठान्तरे सुखदुःखाभ्यां सङ्गः संबन्धो येषां तैः सुखदुःखसङ्गैः द्वन्द्वैर्विमुक्ताः परित्यक्ताः, अमूढाः वेदान्तप्रमाणसंजातसम्यग्ज्ञाननिवारितात्माज्ञाना स्तदव्ययं यथोक्तं पदं गच्छन्ति ॥ ५ ॥

**शं० टी०**—एवमविद्याकामकर्मभिः संसारचक्रे भ्राम्यमाणानां ब्राह्मणानां मुमुक्षूणामीश्वरप्रसादसंप्राप्तसदसद्विवेकविज्ञानसंजाततीव्रवैराग्यसंन्यस्तसर्वकर्मतत्साधनानां श्रवणादिजन्यज्ञानेन जगत्कारणं निर्विशेषं परं ब्रह्म स्वात्मना ज्ञातव्यमित्युपदिश्य तेषामेव विज्ञातात्मस्वरूपाणां यतीनां 'स सर्वविद्भजति माम्' इति वक्ष्यमाणन्यायेन समुत्पन्नज्ञानस्य तत्फलसिद्धेश्च प्रतिबन्धायमानानात्मतद्धर्माध्यासरहितत्वाय सर्वदा ब्रह्मद्रष्ट्रैवावस्थातव्यमिति बोधयितुमेवंलक्षणसंपन्ना एव यतयो विदेहमुक्तिं गच्छन्तीत्याह—**निर्मानेति** । मानोऽभिमानो देहेन्द्रियादिष्वहमित्यभिनिवेशलक्षणोऽहंकारस्तत्कारणं मोहोऽज्ञानमावृतिलक्षणोऽनात्मन्यात्मत्वधीहेतुस्तावुभौ मानमोहौ स्वरूपज्ञानेनात्मन्येवात्मभावापत्त्या च ताभ्यां मानमोहाभ्यां निर्गतास्ते निर्मानमोहाः श्रवणादिसमुत्पन्नेनायमहमस्मीतिविज्ञानेनात्मन्येवात्मत्वधीव्यवस्थया चानात्मन्यहंभावशून्या इत्यर्थः । मानमोहयोर्वक्ष्यमाणाविद्याकामादेश्च निःशेषनिवृत्तौ कारणमाह—अध्यात्मनित्या इति । अध्यात्ममात्मज्ञानं सर्वत्र ब्रह्ममात्रदर्शनलक्षणं तत्रैव नित्या निरता आत्मारामा ये ते ह्यध्यात्मनित्याः सर्वमिदमहं च ब्रह्मैव—इति स्वस्मिन्सर्वत्र च ब्रह्मप्रत्ययदार्ढ्याय निरन्तरं ब्रह्मनिष्ठायामेव परिनिष्ठिता इत्यर्थः । तत एव विनिवृत्तकामाः काम्यन्ते विषया एभिरिति कामाः वासनाः । वासनया खलु विषयान् कामयते, ततो वासनानां कामत्वव्यपदेशः । निरन्तरं ब्रह्मनिष्ठयान्तःकरणसकाशाद्विशिष्य निवृत्ताः कामा बाह्यवासना येषां ते विनिवृत्तकामाः । निरन्तरसमाधिनिष्ठा निर्दग्धाहमादिसर्ववासनाग्रन्थय इत्यर्थः । सर्ववासनानाशस्य फलमाह—जितेति । इन्द्रियाणां मनसश्च विषयैः संसर्गः सङ्गः स एव कामसंकल्पादिदोषहेतुत्वाद्दोष इत्युच्यते। ध्यानश्रवणदर्शनादिभिश्चित्तस्येन्द्रियाणां च सति विषयसंसर्गे कामसंकल्पादयो दोषा जायन्ते, ततो

भोक्तृभोगाद्यध्यासस्ततः प्रवृत्तिस्ततः प्रत्यग्दर्शनविच्छित्तिस्ततो 'ध्यायतो विषयान् पुंसः' इत्युक्तानर्थपरंपरापत्तिस्ततस्तदभावाय जितो वर्जितः सङ्गदोषो यैस्ते जितसङ्गदोषाः बहिःप्रावण्यरहिता इत्यर्थः। यतो नित्यमध्यात्मनित्यास्तत एव निर्मानमोहास्तत एव विनिवृत्तकामास्ततः एव जितसङ्गदोषास्तत एव सुखदुःखसंज्ञैः सुखमिति दुःखमिति संज्ञा संज्ञानं येभ्यो जायते तानि सुखदुःखसंज्ञानि शीतोष्णप्रियाप्रियशत्रुमित्रादीनि द्वन्द्वानि तैर्द्वन्द्वैः सुखदुःखसंज्ञैर्विमुक्ताः गुणातीता इत्यर्थः। यत एवंलक्षणा अत एवामूढाः अहंममेदमिति भेदप्रत्ययवन्तो मूढास्तद्विलक्षणास्त्वमूढाः निःशेषनिवृत्ताविद्याः ब्राह्मणाः "अमौनं च मौनं च निर्विद्याथ ब्राह्मणः" इत्युक्तलक्षणा यतयो ब्रह्मविदः—अव्ययं न केनापि व्येति नश्यतीत्यव्ययम् "नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम्" इति श्रुतेः अव्ययमित्युक्त्या निर्विशेषब्रह्मव्यतिरिक्तानां व्ययः सूचितस्तेन मुमुक्षूणां निर्विशेषमेव परं ब्रह्म ज्ञातव्यं वक्तव्यमिति ज्ञापितं भवति। यत्सर्ववेदान्तप्रसिद्धं यत्प्राप्य मुक्ता न निवर्तन्ते तदव्ययं शाश्वतं नित्यशुद्धबुद्धमुक्तस्वभावं सच्चिदानन्दैकरसमद्वितीयं पदं परं ब्रह्म गच्छन्ति। उपाधिविच्छित्त्याभासपरिच्छित्तिं परित्यज्य पूर्णत्वं गच्छन्तीत्यर्थः॥ ५॥

**श्री० टी०**—तत्प्राप्तौ साधनान्तराणि दर्शयन्नाह—**निर्मानेति**। निर्गतौ मानमोहौ अहंकारमिथ्याभिनिवेशौ येभ्यस्ते, जितः पुत्रादिसङ्गरूपो दोषो यैस्ते, अध्यात्मे आत्मज्ञाने नित्याः परिनिष्ठिताः विशेषेण निवृत्तः कामो येभ्यस्ते, सुखदुःखहेतुत्वात् सुखदुःखसंज्ञानि शीतोष्णादीनि द्वन्द्वानि तैर्विमुक्ताः, अत एवामूढाः निवृत्ताविद्याः सन्तस्तदव्ययं पदं वैष्णवं गच्छन्ति॥ ५॥

**स० टी०**—परिमार्गणपूर्वं च गच्छतां वैष्णवं पदम्॥ ज्ञानस्याङ्गान्तराण्याह भगवान्करुणानिधिः॥ १॥ मानो गर्वस्तथा मोहोऽविवेको वा विपर्ययः॥ तौ निर्गतावुभौ येभ्यस्ते ताभ्यां वर्जिता बुधाः॥ २॥ भोग्येषु शोभनाध्यासः सङ्गो दोषः स एव सः॥ जितो यैस्तत्तदाप्तौ ये रागद्वेषविवर्जिताः॥ ३॥ परमात्मस्वरूपैक्यालोचनैकपरायणाः॥ अथवाऽऽचार्यवेदान्तनारायणरताः सदा॥ ४॥ विशेषेण निवृत्ताश्च कामा येषां ससाधनाः॥ वैराग्यादिगुणद्वारा त्यक्तकर्माण एव वा॥ ५ सुखदुःखैकहेतुत्वात्सुखदुःखाभिधैस्तु ये॥ शीतोष्णक्षुत्पिपासाद्यैर्द्वन्द्वैर्मुक्ता विशेषतः॥ ६॥ अविद्ययाऽऽवृता मूढास्तद्भिन्ना मोहवर्जिताः॥ श्रुतिमौलिप्रमाणोत्थसम्यग्ज्ञानेन नाशितः॥ ७॥ आत्माज्ञानाख्यमोहो यैस्ते गच्छन्त्यव्ययं पदम्॥ ८॥ ५॥

**भा० टी०**—कथंभूतास्तत्पदं गच्छन्तीत्याकाङ्क्षायां परिमार्गणपूर्वकं तद्वैष्णवं पदं गच्छतां लक्षणान्याह:—**निर्मानमोहा इति**। अमूढाः मोहेनानाद्यज्ञानेन रहिताः सम्यग्ज्ञानवन्तः तद्यथोक्तमावृत्तिरहितं वैष्णवं पदं मोक्षाख्यं गच्छन्ति मुक्ता भवन्ति। मानोऽहंकारो मोहोऽविवेकस्तौ निर्गतौ येभ्यः अत एव जितसङ्गदोषा जितः पुत्रादिसङ्ग एव दोषो यैः। यतः इति वा। शत्रुमित्रादिसन्निधावपि द्वेषप्रीतिवर्जिता इति भाष्यटीकाकृतः। अत एव यतो वाध्यात्मनित्याः अध्यात्मनि परमात्मस्वरूपालोचने नित्यास्तत्पराः "ब्रह्मसंस्थोऽमृतत्वमेति" "तन्निष्ठस्य मोक्षोपदेशात्" इतिश्रुतिसूत्राभ्याम्। अत एव यतो वा विनिवृत्तकामा विशेषतो वासनारहिताः निवृत्ताः कामा विषयाभिलाषा येषां ते। विनिवृत्तकामानां परत्ववेद्यलक्षणमाह—द्वन्द्वैः प्रियाप्रियादिभिः सुखदुःखसंज्ञैः विमुक्ताः स्वयमेवानायासेनैव परित्यक्ता एतादृशैर्लक्षणैः संपन्ना अमूढा वैष्णवं पदं गच्छन्त्यतः तत्पदप्राप्तिमिच्छतामेतानि तत्प्राप्त्यङ्गानि यत्नेनाभ्यसनीयानीति भावः॥ ५॥

**प० टी०**—अथ "इतो विमुक्ताः" इति श्रुत्यर्थं प्रकटयन्नाह—**निर्मानमोहा इति**। निर्गतौ मानमोहावहंकारमिथ्याभिनिवेशावेभ्यः। जितः पुत्रादिसङ्गदोषो यैस्ते। अध्यात्मज्ञाने निष्ठाः परिनिष्ठिताः। विशेषेण

निवृत्तः कामो येभ्यस्ते । सुखदुःखसंज्ञा शीतोष्णादीनि तैर्विमुक्ता एवंविधास्तदव्ययं पदं गच्छन्ति नान्ये ॥ ५ ॥

रा० टी०—भगवत्प्रतिपत्तौ साधनान्तराण्याह—**निर्मानेति** । मानमोहाभ्यां अहंकारमिथ्याज्ञानाभ्यां निर्गतास्ताभ्यां हीना इति यावत् । जितविषयसङ्गदोषाः, अध्यात्मनित्याः अध्यात्मज्ञाने भगवच्छ्रवणादौ निरताः । विशेषतो निवृत्तविषयतृष्णाः । सुखदुःखहेतुतया सुखदुःखसंज्ञैः द्वन्द्वैर्लाभालाभजयाजयादिरूपैर्विमुक्ताः । अमूढा रजस्तमस्स्वभावशून्याः । अव्ययं तत्पदं भगवत्स्वरूपं गच्छन्ति ॥ ५ ॥

**न तद्भासयते सूर्यो न शशाङ्को न पावकः ॥**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥**

त० टी०—तदेव पदं विशिनष्टि—**न तदिति** । तत्पदं प्रकृतिवियुक्तात्मस्वरूपं सूर्यो न भासयते न प्रकाशयति, न शशाङ्कः, न पावकोऽग्निरपि, यथा प्राकृतं सर्वं वस्तु दिवा सूर्यो भासयति, सूर्यास्तमये निशि चन्द्रः भासको भवति, उभयोरप्यभावेऽग्निरपि प्रकाशको दृष्टः । तदात्मस्वरूपं न कोऽपि प्रकाशयितुं समर्थः । तत्र हेतुगर्भितविशेषणम्—**तद्धामेति** । धाम ज्योतीरूपं ज्योतीरूपत्वादित्यर्थः । सूर्यादयस्तु जडमेव प्रकाशयन्ति, नतु स्वयंप्रकाशमिति भावः । प्राकृतज्योतिर्व्यावर्तयति—**परममिति** । तमसः परमित्यर्थः "आदित्यवर्णं तमसः परस्तात्" इति श्रुतेः । अत एव यद्गत्वा प्राप्य न निवर्तन्ते पुनः संसारिणो न भवन्तीत्यर्थः । एतत्परमधामपदार्थस्य परमात्मसाधारण्यात्तदैक्यभ्रान्तिः स्यात्तां वारयति—**ममेति** । तत्परमं धाम न परं ब्रह्म, नापि ततः स्वतन्त्रमत्यन्तभिन्नं, किंतु मम मदीयशक्तिरूपांश इत्यर्थः ॥ ६ ॥

म० टी०—तदेव गन्तव्यं पदं विशिनष्टि—**न तदिति** । यद्वैष्णवं पदं गत्वा योगिनो न निवर्तन्ते तत्पदं सर्वावभासनशक्तिमानपि सूर्यो न भासयते । सूर्यास्तमयेऽपि चन्द्रो भासको दृष्ट इत्याशङ्क्याह—न शशाङ्कः । सूर्याचन्द्रमसोरुभयोरप्यस्तमयेऽग्निः प्रकाशको दृष्ट इत्याशङ्क्याह—न पावकः । भासयत इत्युभयत्राप्यनुषज्यते । कुतः सूर्यादीनां तत्र प्रकाशनासामर्थ्यमित्यत आह—तद्धाम ज्योतिः स्वयंप्रकाशमादित्यादिसकलजडज्योतिरवभासकं परमं प्रकृष्टं मम विष्णोः स्वरूपात्मकं पदम् । न हि यो यद्भास्यः स स्वभासकं तं भासयितुमीष्टे । तथा च श्रुतिः—" न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति " इति । एतेन तत्पदं वेद्यं न वा । आद्ये वेद्यभिन्नवेदितृसापेक्षत्वेन द्वैतापत्तिर्द्वितीये त्वपुरुषार्थत्वापत्तिरित्यपास्तम् । अवेद्यत्वे सत्यपि स्वयमपरोक्षत्वात् । तत्रावेद्यत्वं सूर्याद्यभास्यत्वेनात्रोक्तं, सर्वभासकत्वेन तु स्वयमपरोक्षत्वं यदादित्यगतं तेज इत्यत्र वक्ष्यति । एवमुभाभ्यां श्लोकाभ्यां श्रुतेर्दलद्वयं व्याख्यातमिति द्रष्टव्यम् ॥ ६ ॥

शं० टी०—ननु ब्रह्मविष्ण्वादिलोकप्राप्तानामिव निर्विशेषब्रह्मभावं प्राप्तानामपि पुनरावृत्तिः किं न स्यादित्याशङ्कायाम् "न स पुनरावर्तते न स पुनरावर्तते" इति दहराद्युपासनं कृतवतः क्रमेण मुक्तिं गच्छतः सगुणोपासकस्यैव पुनरावृत्त्यभावः श्रूयते, किमु वक्तव्यमुपाधिविलये साक्षान्निर्विशेषमेव परं ब्रह्म सच्चिदानन्दैकरसं स्वात्मभावेन प्राप्तवतां ब्रह्मविदां पुनरावृत्तिर्नास्तीतीममर्थं बोधयितुमर्थाद्ब्रह्मणः सूर्याद्यभास्यत्वं स्वयंज्योतिष्ट्वं तस्यैव निजस्वरूपत्वं च बोधयति—**न तदिति** । तत्पूर्वोक्तं मुक्तोपसृप्यं धाम परं ज्योतिःस्वरूपं पदशब्दार्थं परं ब्रह्म परमज्योतिष्ट्वात्सर्वप्रकाशनशक्तिसंपन्नः सहस्रांशुरपि सूर्यो न भासयते न प्रकाशयितुं शक्नोतीत्यर्थः । " न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः"

इति श्रुतेः । न शशाङ्कश्चन्द्रोऽपि भासयते पावकोऽग्निरपि न भासयते चक्षुरादीनां मनसश्च ब्रह्मानवभासकत्वे इदमुपलक्षणं न चक्षुरादीनामपि भास्यं ब्रह्मेत्यर्थः । "न तत्र चक्षुर्गच्छति" "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैः" इति च श्रुतेः । एतेन बहिर्भौतिकस्य भास्करादेश्चक्षुरादेश्चान्तर्बुद्ध्यादेश्चाभास्यत्वे ब्रह्मणस्त्वभौतिकत्वमतिसूक्ष्मतमत्वं सर्वान्तरत्वमन्यानवभास्यत्वं सर्वप्रकाशकत्वमदृश्यत्वमजडत्वमप्रमेयत्वं निरवयवत्वं निष्क्रियत्वं निर्विकारत्वं नित्यशुद्धत्वं च सिद्धम् । " न सन्नासन्न सदसत् " इति, " तस्मात्तमः संजायते " इति, " सूक्ष्मात्सूक्ष्मतरम् " इति, " एष त आत्मा सर्वान्तरः " इति, " न तत्र सूर्यो भाति " इति, " तस्य भासा सर्वमिदं विभाति " इति, " अत्रायं पुरुषः स्वयंज्योतिः " इति, " स्वप्रकाशानन्दघनम् " इति, " अदृश्यमव्यवहार्यम् " इति, " साक्षी चेता केवलः " इति, " अप्रमेयं ध्रुवम् " इति, " निष्कलं निष्क्रियम् " इति, " चिद्रूप एवाविकारो ह्युपलब्धा " इति, " नित्यं शुद्धं बुद्धं मुक्तं सत्यं [सूक्ष्मं] परिपूर्णमद्वयं सदानन्दचिन्मात्रम् " इत्यपि च श्रुतेः । एवं परमज्योतिषो ब्रह्मणः सूर्याद्यभास्यत्वेन अभौतिकत्वादिलक्षणसंपत्तिं सूचयित्वा यदुपक्रान्तं तत्प्रतिपादयति—यद्गत्वेति । निर्मानमोहत्वादिमुक्तलक्षणलक्षिता महात्मानो यतयो यदभौतिकत्वादिलक्षणं धाम परमज्योतिःस्वरूपं पदशब्दार्थं परं ब्रह्म गत्वा तद्भावं प्राप्य न निवर्तन्ते पुनरहंममेतिसंसाराय नावर्तन्त इत्यर्थः । यदादित्यादीनामभास्यं यद्भावापन्नानामपुनरावृत्तिः यदपूर्वमनपरमनन्तरमबाह्यमखण्डानन्दैकरसमद्वितीयं तद्धाम परं ज्योतिर्मम विष्णोर्नैजं तत्त्वममायिकं स्वरूपमित्यर्थः । ननु " सोम्येमाः सर्वाः प्रजाः सत आगम्य न विदुः सत आगच्छामहे " इति सत्संपन्नानामपि पुनरावृत्तिः श्रूयते, कथं यद्गत्वा न निवर्तन्त इति सत्संपन्नानां पुनरावृत्त्यभावः प्रतिपाद्यत इति चेत्सत्यं सत्संपन्नानामपि श्रुत्या यद्यपि सतः पुनरावृत्तिरुच्यते, तथापि तत्र विशेषोऽस्ति स उच्यते । "प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्" इति विद्वदविदुषोरुभयोरपि सत्संपत्तौ समानायामप्यविद्याकामादिसंसारबीजविशिष्टस्त्वविद्वान् सत्संपद्यापि संसारहेतोरविद्यादेर्विद्यमानत्वात्तद्वेगेन सतः पुनरुत्क्रामति । तथाच श्रुतिः—"तेनैष आत्मा निष्क्रामति चक्षुषो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति सविज्ञानो भवति सविज्ञानमेवान्ववक्रामति । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । ....अविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वान्येषां वा भूतानाम्" इति, "तदेव सक्तः सह कर्मणैति लिङ्गं मनो यत्र निषक्तमस्य " इति, "कामान् यः कामयते मन्यमानः स कामभिर्जायते तत्र तत्र" इति, "पुण्यः पुण्येन कर्मणा भवति पापः पापेन" इति, 'नाभुक्तं क्षीयते कर्म' इत्यादिस्मृतिश्च । ततोऽविद्याकामादिबलेन शेषकर्मानुभूत्यै अविद्याकामादिमन्तोऽनात्मज्ञाः सत्संपद्यापि पुनरावर्तन्ते यथा सुषुप्तेः न तथा ब्रह्मवित्तमो यतिरावर्तते । सदेकत्वविज्ञानाग्निना अविद्याकामादेर्निःशेषदाहादुपाधिविलये स्वस्वरूपमेव निर्विशेषं नित्यशुद्धं परं ब्रह्म प्राप्तवतो ब्रह्मविदः पुनर्व्युत्थानहेतोरभावाद्ब्रह्मात्मनावस्थितिं विना पुनरुत्क्रमणं न संभवति यथा अविद्यादिमतः । तथा श्रुतिः—"गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति । योऽकामो निष्काम आप्तकाम आत्मकामः न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन् ब्रह्माप्येति । पर्याप्तकामस्य कृतात्मनस्त्विहैव सर्वे प्रविलीयन्ति कामाः" इति, "यथा नद्यः स्यन्दमाना समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम् " इति च कूटस्थत्वादात्मनो निर्गमागमायोगाच्च । यथा महाऽऽकाशस्यैव सतो घटाकाशस्य घटोपाधिना भिन्नवत्प्रतीयमानस्य घटनाशे स्वरूपेण महाकाशात्मनावस्थितिं विना पुनरावृत्तिर्न संभवति, तथा ब्रह्मण एव सत आत्मनोऽप्यविद्योपाधिना भिन्नवत्प्रतीतस्योक्तरीत्या अविद्यातत्कार्यविनाशे स्वरूपेण ब्रह्मात्मनावस्थितिं विना पुनरावृत्तिर्न संभवति

कूटस्थत्वात् क्रियाश्रयत्वानुपपत्तेर्यतस्ततः सम्यग्दर्शनेन ब्रह्मनिष्ठया चाविद्यादिविनाशादुपाधिविलये निर्विशेषनित्यशुद्धब्रह्मभावं गतानां महात्मनां नास्ति पुनरावृत्तिरिति सिद्धम् ॥ ६ ॥

**श्री० टी०**—तदेव गन्तव्यं पदं विशिनष्टि—**न तदिति** । तत् पदं सूर्यादयो न प्रकाशयन्ति । यत्प्राप्य न निवर्तन्ते योगिनः तद्धाम स्वरूपं परमं मम । अनेन सूर्यादिप्रकाशाविषयत्वेन जडत्वशीतोष्णादिदोषप्रसङ्गो निरस्तः ॥ ६ ॥

**स० टी०**—गन्तव्यं तत्पदं भूयो विशिनष्टि हरिः स्वयम् ॥ यद्वैष्णवं पदं गत्वा निवर्तन्ते न योगिनः ॥ १ ॥ तत्पदं नैव सर्वावभासको भानुरुत्तमः ॥ प्रकाशयति नापीन्दुर्न वा वह्निः स्वयंप्रभम् ॥ २ ॥ भासकत्वं कुतो नास्ति सूर्यादीनामितीर्यते ॥ स्वयंप्रकाशं तद्धाम सूर्यादिजडतेजसाम् ॥ ३ ॥ प्रकाशकतयोत्कृष्टं मम विष्णोः परं पदम् ॥ नहि स्वभासकं भास्य ईष्टे भासयितुं जडः ॥ ४ ॥ न तत्र सूर्यो भातीति श्रुत्याप्येवमुदीरितम् ॥ अवेद्यत्वे सति ज्योतिरपरोक्षं पदं मम ॥ ५ ॥ तत्रावेद्यत्वमर्काद्यभास्यत्वेनात्र कीर्तितम् ॥ सर्वावभासकत्वेनापरोक्षत्वमपीरितम् ॥ ६ ॥ अयमत्राशयो विष्णोः श्रीमद्भगवतो हरेः ॥ चक्षुर्योग्यं हि यद्वस्तु तदनुग्राहकेण तत् ॥ ७ ॥ भास्यं सूर्येण न तथा नीरूपत्वादिदं पदम् ॥ मनोग्राह्यं हि यद्वस्तु मनोऽनुग्राहकेण तत् ॥ ८ ॥ भास्यं चन्द्रेण नेदं तु तथा चिन्त्यत्वहेतुना ॥ यद्वाचां गोचरं वस्तु वागनुग्राहकेण तत् ॥ ९ ॥ भास्यं स्यात्पावकेनापि न तथेदमवाच्यकम् ॥ यन्मनसा न मनुत इत्यादिश्रुतिभिः स्वयम् ॥ १० ॥ चिदानन्दघनं सत्यं निर्विशेषमनामयम् ॥ सर्वावभासकं सर्वाभास्यं प्राप्यं च योगिनाम् ॥ ११ ॥ यत्प्रतिपादितं सम्यक् तद्धाम परमं मम ॥ अपरं वृत्तिरूपं स्याज्ज्ञानं निर्विषयं परम् ॥ १२ ॥ राहोः शिर इतीवात्रोपचारात्स्यान्ममेत्यपि ॥ तज्ज्योतिः स्वप्रकाशाख्यं मदभिन्नं परं पदम् ॥ १३ ॥ यं न प्रकाशयति भानुरपीन्दुरग्निः स्वज्योतिषा सकलभासकमप्रमेयम् ॥ यं प्राप्य संसृतिनिधौ न पतन्ति धीरास्तं सर्वभूतहृदयं हरिमाश्रयेऽहम् ॥ १४ ॥ ६ ॥

**भा० टी०**—ननु गच्छन्तीत्यस्यासन्निहितं देशान्तरं गत्वा प्राप्नुवन्तीत्यर्थ उत सन्निकृष्टं तमसावृतघटमिवावरणनिवृत्त्या प्राप्नुवन्तीति । नाद्यः, येन सर्वमिदं ततमित्याद्युक्तिविरोधात् । द्वितीये सूर्यादिप्रकाशे सत्यपि कुतो न प्रकाशत इति तत्राह—**न तदिति** । यद्वा तच्चेत्पदं वेद्यं तर्हि कर्तुः कर्मणोऽन्यत्वावश्यकत्वात् द्वैतापत्तिरवेद्यं चेदपुरुषार्थत्वात् प्रेप्सितत्वासिद्धिरित्याशङ्क्यां सूर्याद्याभास्यत्वेनावेद्यमपि धाम तेजोरूपं सर्वावभासकत्वादतन्निरासे सति स्वयमेव प्रकाशत इति पुरुषार्थत्वान्नाप्रेप्सितमिति निरसितुं तदेव पदं पुनर्विशिनष्टि—**नेति** । तद्धाम तेजोरूपं सूर्याद्यवभासकं सूर्यादयो न प्रकाशयन्ति तत्प्रकाश्यानां तत्प्रकाशकत्वायोगात् । शशाङ्कश्चन्द्रः । पावकोऽग्निः । तथाच श्रुतिः—"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।" यद्वैष्णवं पदं गत्वा प्राप्य न निवर्तन्ते यच्च सूर्यादिभिर्नावभास्यते तद्धाम स्वप्रकाशरूपं सर्वावभासकं परमं प्रकृष्टं सर्वोत्तमं मम श्रीविष्णोः । षष्ठी तु "तद्विष्णोः परमं पदम्" "आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन" इतिश्रुत्यनुरोधेन राहोः शिर इतिवदौपचारिकसंबन्धविवक्षया । "एकमेवाद्वितीयम् । विज्ञानमानन्दं ब्रह्म । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति" इत्यादिश्रुतेः । केचित्तु तत्रावेद्यत्वं सूर्याद्यभास्यत्वेनात्रोक्तं सर्वभासकत्वेन तु स्वयमपरोक्षत्वं यदादित्यगतं तेज इत्यत्र वक्ष्यति । एवमुभाभ्यां श्लोकाभ्यां श्रुतेर्दलद्वयं व्याख्यातमिति द्रष्टव्यमिति वर्णयन्ति । सूर्यो न भासयते इत्यनेन रूपादिहीनत्वेन चक्षुराद्ययोग्यत्वात् सर्वेषां बाह्येन्द्रियाणां निवृत्तिः न शशाङ्क इत्यनेन मनोऽनुग्राहकचन्द्रनिषेधेन मनसः । न पावक इति वाचो निवृत्तिः ।

"न चक्षुषा गृह्यते । यन्मनसा न मनुते । यद्वाचानभ्युदितम्" इतिश्रुतेरित्यन्येषां व्याख्याने तु लक्षणादोषो द्रष्टव्यः ॥ ६ ॥

प० टी०—अथ पदं विशिनष्टि—न तदिति । तत्पदं परं ब्रह्म सूर्यः शशाङ्कः पावकोऽग्निर्वा न भासयते न प्रकाशयति । "यद्भासा सर्वमिदं विभाति" इति श्रुतेः सूर्यादीनामपि तत्प्रकाशभास्यत्वात् । यद्य गत्वा प्राप्य योगिनो न निवर्तन्ते न परावर्तन्ते तन्मम परं धामेति ज्ञेयम् ॥ ६ ॥

रा० टी०—कीदृशं तत्पदं यत्प्राप्तिः पुरुषार्थ इत्यत आह—न तदिति । तत्पदं सूर्यादिर्न प्रकाशयति । यद्गत्वा यत्स्वरूपं प्राप्य न निवर्तन्ते संसारं न यान्ति परमं तन्मम धाम रूपमित्यर्थः ॥ ६ ॥

**ममैवांशो जीवलोके जीवभूतः सनातनः ॥**
**मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥**
**शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ॥**
**गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥**

त० टी०—ननु यदि परमधामशब्दोदितोऽनवच्छिन्नज्ञानोऽसंसार्यात्मा तदंशश्चेत्तर्हि संसारे वर्तमानः परिच्छिन्नज्ञानो जीवाख्यः कस्यांशः, स्वतन्त्रः परतन्त्रो वेत्याशङ्क्याह—ममैवांश इति । योऽयं जीवलोके वर्तमानो जीवभूतः प्राणोपाधियुक्तः स ममैवांशः शक्तिरूपांश एव, नतु स्वतन्त्रः 'अपरेयमितस्त्वन्यां प्रकृतिं विद्धि मे पराम् । जीवभूताम्' इत्युक्तत्वात् । शक्तेः शक्तिमतः स्वरूपभेदेऽपि पृथक्स्थित्यभावाद्भेदाभेदस्यैव संभवात्पूर्वं सप्रमाणं निरूपितत्वाच्च । केचित्तु जीवः स्वरूपेण ब्रह्मैव, जीवत्वमस्याविद्योपाधिकृतं सूर्यस्य जले प्रतिबिम्बत्वमिव घटावच्छिन्नाकाश इव च । जलघटाद्युपाध्यपाये बिम्बरूपसूर्यमहाकाशतापत्तिमात्रत्ववत् अविद्योपाध्यपाये निरुपाधिब्रह्मस्वरूपतापत्तिमात्रमेवावशिष्यते इत्याहुः, तन्निरासयति—सनातन इति । न हि प्रतिबिम्बोऽवच्छिन्नो वा सनातनो भवति प्रमाणाभावात् । प्रतिबिम्बो नानादिः उपाधिजत्वात्, सूर्यादिप्रतिबिम्बवत् । किंच सावयव एव जलदर्पणाद्युपाधौ प्रतिबिम्बदर्शनान्न निरवयवे उपाधौ प्रतिबिम्बो दृष्टः श्रुतोऽनुभूयते वा । प्रकृतेऽप्यविद्यारूपस्य बुद्धिरूपस्य वोपाधेर्निरवयवत्वात् कथं तत्र प्रतिबिम्बत्वकल्पनं, बुद्धेः सावयवत्वाङ्गीकारे "अणुर्वा ह्येष आत्मा चेतसा वेदितव्यो यस्मिन्प्राणः पञ्चधा संविवेश, उत्क्रान्तिगत्यागतीनां, नाणुरतच्छ्रुतेरिति चेन्नेतराधिकाराद्" इत्याद्यणुत्वप्रतिपादकेषु श्रुतिसूत्रेषूपाध्यणुत्वनिरूपितजीवाणुत्वमिति प्रतिपादितसिद्धान्तभङ्गेन जीवस्य प्रतिबिम्बत्वं कथंचिदप्यनुपपन्नम् । उपाधेर्निरवयवत्वे प्रतिबिम्बत्वानुपपत्तिः । सावयवत्वेऽणुत्वप्रतिपादकश्रुतिसूत्रविरोधाद्भ्रान्तिपरिकल्पित एव जीवप्रतिबिम्बवाद इत्यलं विस्तरेण । स जीवोऽनादिकर्मवशतया विषयभोगवासनानुविद्धः प्रकृतौ प्रकृतिकार्येऽहङ्कारे लीनतया स्थितानि पुनस्तत्तत्कर्मानुरूपं कालेन प्रादुर्भावितानि मनः षष्ठं येषां तानि श्रोत्रादीन्द्रियाणि भोगसाधनार्थं कर्षति गृह्णाति । जीवभूत इत्येकवचनं जात्यभिप्रायकं, बहुत्वस्य वाक्यशतैर्निरूपितत्वात् ॥ ७ ॥ कदा कर्षति कृष्ट्वा च किं करोति इत्यपेक्षायामाह—शरीरमिति । यद्यदा शरीरान्तरमवाप्नोति यद्यस्माच्च शरीरादुत्क्रामति तदा ईश्वरो देहेन्द्रियस्वामी एतानीन्द्रियाणि गृहीत्वा संयाति सम्यगागच्छति प्राप्नोति । क इव वायुराशयात्पुष्पचन्दनकस्तूर्यादेः सकाशाद्गन्धानिव ॥ ८ ॥

म० टी०—ननु यद्गत्वा न निवर्तन्त इत्ययुक्तं यदि गच्छन्ति तर्ह्यावर्तन्त एव स्वर्गवत् । अथ नावर्तन्ते तर्हि न गच्छन्ति । तेन गत्वेति न निवर्तन्त इति च परस्परविरुद्धम् । 'सर्वे क्षयान्ता निचयाः पतनान्ताः

समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम्' इति हि शास्त्रे लोके च प्रसिद्धम् । अनात्मप्राप्तिः पुनरावृत्तिपर्यवसाना न त्वात्मप्राप्तिरिति चेत् न, सुषुप्तौ "सता सोम्य तदा संपन्नो भवति" इति श्रुतिप्रतिपादितायाअप्यात्मप्राप्तेः पुनरावृत्तिपर्यन्तत्वदर्शनात् । अन्यथा सुषुप्तस्य मुक्तत्वेन पुनरुत्थानं न स्यात् । तस्मादात्मप्राप्तौ गत्वेति नोपपद्यते । तस्यौपचारिकत्वेऽप्यनिवृत्तिर्नोपपद्यत इत्येवं प्राप्ते ब्रूमः । गन्तुर्जीवस्य गन्तव्यब्रह्माभिन्नत्वाद्गत्वेत्यौपचारिकम् । अज्ञानमात्रव्यवहितस्य तस्य ज्ञानमात्रेणैव प्राप्तिव्यपदेशात् । यदि ब्रह्मणः प्रतिबिम्बो जीवस्तदा यथा जलप्रतिबिम्बितसूर्यस्य जलापाये बिम्बभूतसूर्यगमनं ततो नावृत्तिश्च, यदि च बुद्ध्यवच्छिन्नो ब्रह्मभागो जीवस्तदा यथा घटाकाशस्य घटापाये महाकाशं प्रति गमनं ततोऽनावृत्तिश्च, तथा जीवस्याप्युपाध्यपाये निरुपाधिस्वरूपगमनं ततोऽनावृत्तिश्चेत्युपचारादुच्यते । तयोः एकस्वरूपत्वाद्भेदभ्रमस्य चोपाधिनिवृत्त्या निवृत्तेः । सुषुप्तौ तु अज्ञाने स्वकारणे भावनाकर्मपूर्वप्रज्ञासहितस्यान्तःकरणस्य जीवोपाधेः सूक्ष्मरूपेणावस्थानात्तत एवाज्ञानात्पुनरुद्भवः संभवति । ज्ञानादज्ञाननिवृत्तौ तु कारणाभावात् कुतः कार्योदयः स्यादज्ञानप्रभवत्वादन्तःकरणाद्युपाधीनाम् । तस्माज्जीवस्याहं ब्रह्मास्मीति वेदान्तवाक्यजन्यसाक्षात्कारादहं न ब्रह्मेत्यज्ञाननिवृत्तिर्गत्वेत्युच्यते । निवृत्तस्य चानाद्यज्ञानस्य पुनरुत्थानाभावेन तत्कार्यसंसाराभावो न निवर्तन्त इत्युच्यत इति न कोऽपि विरोधः । जीवस्य तु पारमार्थिकं स्वरूपं ब्रह्मैवेत्यसकृदावेदितम् । तदेतत् सर्वं प्रतिपाद्यत उत्तरेण ग्रन्थेन । तत्र जीवस्य ब्रह्मरूपत्वादज्ञाननिवृत्त्या तत्स्वरूपं प्राप्तस्य ततो न प्रच्युतिरिति प्रतिपाद्यते—ममैवांश इति श्लोकार्धेन । सुषुप्तौ तु सर्वकार्यसंस्कारसहिताज्ञानसत्त्वात्ततः पुनः संसारी जीवस्येति मनःषष्ठानीति श्लोकार्धेन प्रतिपाद्यते । ततस्तस्य वस्तुतोऽसंसारिणोऽपि मायया संसारं प्राप्तस्य मन्दमतिभिर्देहतादात्म्यं प्रापितस्य देहाद्व्यतिरेकः प्रतिपाद्यते—शरीरमित्यादिना श्लोकार्धेन । श्रोत्रं चक्षुरित्यादिना तु यथायथं स्वविषयेष्विन्द्रियाणां प्रवर्तकस्य तस्य तेभ्यो व्यतिरेकः प्रतिपाद्यते । एवं देहेन्द्रियादिविलक्षणमुत्क्रान्त्यादिसमये स्वात्मरूपत्वात् किमिति सर्वे न पश्यन्तीत्याशङ्कायां विषयविक्षिप्तचित्ता दर्शनयोग्यमपि तं न पश्यन्तीत्युत्तरमुच्यते—उत्क्रामन्तमित्यादिना श्लोकेन । तं ज्ञानचक्षुषः पश्यन्तीति विवृतं यतन्तो योगिन इति श्लोकार्धेन । विमूढा नानुपश्यन्तीत्येतद्विवृतं यतन्तोऽपीतिश्लोकार्धेनेति पञ्चानां श्लोकानां संगतिः । इदानीमक्षराणि व्याख्यास्यामः—ममैवेति । ममैव परमात्मनोंऽशः निरंशस्यापि मायया कल्पितः सूर्यस्येव जले, नभस इव च घटे मृषाभेदवानंश इवांशो जीवलोके संसारे, स च प्राणधारणोपाधिना जीवभूतः कर्ता भोक्ता संसारीति मृषैव प्रसिद्धिमुपागतः सनातनो नित्यः उपाधिपरिच्छेदेऽपि वस्तुतः परमात्मस्वरूपत्वात् अतो ज्ञानादज्ञाननिवृत्त्या स्वस्वरूपं ब्रह्म प्राप्य ततो न निवर्तत इति युक्तम् । एवंभूतोऽपि सुषुप्तात् कथमावर्तत इत्याह—मनः षष्ठं येषां तानि श्रोत्रत्वक्चक्षुरसनघ्राणाख्यानि पञ्च इन्द्रियाणि इन्द्रस्यात्मनो विषयोपलब्धिकरणतया लिङ्गानि जाग्रत्स्वप्नभोगजनककर्मक्षये प्रकृतिस्थानि प्रकृतावज्ञाने सूक्ष्मरूपेण स्थितानि पुनर्जाग्रद्भोगजनककर्मोदये भोगार्थं कर्षति कूर्मोऽङ्गानीव प्रकृतेरज्ञानादाकर्षति विषयग्रहणयोग्यतयाऽविर्भावयतीत्यर्थः । अतो ज्ञानादनावृत्तावप्यज्ञानादावृत्तिर्नानुपपन्नेति भावः ॥ ७ ॥ कस्मिन् काले कर्षतीत्युच्यते—शरीरमिति । यत् यदा उत्क्रामति बहिर्निर्गच्छति ईश्वरो देहेन्द्रियसंघातस्य स्वामी जीवः तदा यतो देहादुत्क्रामति ततो मनःषष्ठानीन्द्रियाणि कर्षतीति द्वितीयपादस्य प्रथममन्वयः, उत्क्रमणोत्तरभावित्वाद्गमनस्य । न केवलं कर्षत्येव किंतु यत् यदा च पूर्वस्माच्छरीराच्छरीरान्तरमवाप्नोति तदैतानि मनःषष्ठानीन्द्रियाणि गृहीत्वा संयात्यपि सम्यक् पुनरागमनराहित्येन गच्छत्यपि । शरीरे सत्येवेन्द्रियग्रहणे दृष्टान्तः—आशयात् कुसुमादेः स्थानात् गन्धान् गन्धात्मकान् सूक्ष्मानंशान् गृहीत्वा यथा वायुर्याति तद्वत् ॥ ८ ॥

शं० टी०–एवं संसारवृक्षस्वरूपं ज्ञात्वा विरक्तस्य सदसद्विवेकिनो मोक्षैककामनया संन्यस्तसर्वकर्मणो यतेः सद्गुरुप्रसादजन्यज्ञानेन ब्रह्मावाप्तिमपुनरावृत्तिं च प्रतिपाद्याधुना अकृतश्रवणानामेव यतीनामनात्मन्यात्मत्वभ्रमविशेषनिवृत्तये ब्रह्मण एवाविद्योपाधिवशाज्जीवत्वमिति बोधयितुं जीवस्य ब्रह्मांशत्वमात्मनो देहेन्द्रियादिव्यतिरिक्तत्वमविक्रियत्वमसंसारित्वं च प्रतिपादयति–ममैवेति त्रिभिः। ममैव निर्विशेषस्य चिदेकरसस्य ब्रह्मणोंश इवांशोऽविद्यया कल्पितो भागः जीवलोके संसारे, यद्वा जीवेन लोक्यते अनुभूयत इति जीवलोकः क्षेत्रं तत्र जीवभूतः नामरूपव्याकरणाय क्षेत्रज्ञतां गतः प्रमाता भूत्वा तिष्ठतीत्यर्थः। ननु निरवयवस्य निर्विशेषस्य परस्य ब्रह्मणोंशो जीव इत्यंशांशित्वकल्पना न युज्यते, सांशत्वे सावयवत्वमनित्यत्वं सद्वितीयत्वं च स्यात् "निष्कलं निष्क्रियम्" इति "एकमेवाद्वितीयम्" इत्यादिश्रुतिविरोधश्च स्यादिति चेत्त्वमत्र प्रष्टव्यः। त्वया किं ब्रह्मणोऽन्य कश्चिज्जीवोऽस्तीत्युच्यते, उत ब्रह्मण एव जीवत्वमुच्यते, किंवा जीव एव नास्तीत्युच्यते। न तृतीयः तवैवाहमस्मीति पुरो विद्यमानस्याभावप्रसङ्गात्। तदिष्टापत्तिरेवेति चेन्न, प्रत्यक्षविरोधापत्तेः। आद्ये सचेतनो वा किमचेतनो वेति। न द्वितीयः अहं ममेदमिति तवैव ज्ञानाभावप्रसङ्गात् सुषुप्तिवत्सदा सर्वत्र व्यवहारलोपप्रसङ्गाच्च। नाद्यः "साक्षी चेता केवलः" इति ब्रह्मण एव चेतनत्वश्रवणात्तदतिरिक्तस्य चेतनत्वायोगात्। तर्हि ब्रह्मण एव जीवत्वमिति चेन्न, सर्वस्यापि प्राणिमात्रस्य ब्रह्मैवाहमिति पूर्णत्वासंसारित्वज्ञानप्रसङ्गात् संसाराभावप्रसङ्गाच्च। तथात्वे प्रत्यक्षादिसर्वप्रमाणविरोधप्रसङ्गात्। तर्ह्यविद्यया ब्रह्मण एव जीवत्वमिति चेत्त्वमायुष्मान् भव। अयमेवार्थो गत्यन्तरमपश्यता भगवताऽप्युच्यते 'ममैवांशो जीवलोके जीवभूतः' इति। ननु ब्रह्मण एवास्त्वविद्यया जीवत्वं तथापि निरवयवस्यैकस्यैव ब्रह्मणः कथमंशांशिभाव उपपद्यत इति चेदविद्योपाधितः संभवति, यथा निरवयवस्यैकस्यैव महाकाशस्य घटोपाधिवैशिष्ट्याद्घटाकाशत्वं कल्पयित्वा घटाकाशो महाकाशांश इत्येकस्यैव महाकाशस्यांशांशिभावः कल्पित उपपद्यते तद्वद्ब्रह्मणोऽप्येकस्याप्यविद्याप्रत्युपस्थापितबुद्ध्याद्युपाधिवैशिष्ट्यात्तदवच्छिन्नस्यांशत्वं कल्पयित्वा जीवो ब्रह्मांश इति ब्रह्मण एकस्यैवांशांशिभावः कल्पित उपपद्यते न तु वस्तुनोऽस्तीत्युच्यते। तथात्वे त्वदुदीरितो दोषः प्रसज्येत श्रुतिविरोधश्च स्यात्ततदभावान्न काचिदप्यनुपपत्तिर्यतस्ततो ब्रह्मण एव उपाधिविशिष्टस्य जीव इति व्यपदेशः यथाग्नेरेव स्नेहाक्तवर्तियोगेन दीप इति व्यपदेशस्तद्वत्। नन्वसङ्गस्य ब्रह्मणः कथमुपाधिसंबन्धः कथं वाविकारित्वमिति चेदुच्यते यथाऽसङ्गस्यैव शङ्खस्य नेत्रस्थपीतिम्ना संबन्ध आध्यासिकस्तेनैव पीतः शङ्ख इति पीतत्वं च सिध्यति तद्वद्ब्रह्मणोऽप्युपाधिना संबन्ध आध्यासिकस्तेनैवात्मा करोति भुङ्क्ते इति संसारित्वं च सिध्यत्यात्मन आध्यासिकं तन्न वास्तवम् "ध्यायतीव लेलायतीव" इति श्रवणात्। इममेवाध्यासिकं संसारमात्मनः प्रतिपादयति प्रकृतिस्थानि कर्षतीतिश्लोकद्वयस्याप्यन्वयानुरूपेणैकमत्येनार्थो वर्णनीयः। सनातनः ब्रह्मत्वात्सनातनो नित्यस्तत एवेश्वरः देहेन्द्रियादेः प्रवृत्तिहेतुत्वात्तत्स्वामी जीवः। चस्त्वर्थोऽपिवार्थः। यत्तु यदा तु वा उत्क्रामत्युपात्तदेहान्निष्क्रामति तदा मनःषष्ठानि मनः षष्ठं येषां तानि मनःषष्ठानीन्द्रियाणीति चक्षुरादीनि वागादीनि इन्द्रियाणीति। प्राणानामप्युपलक्षणं प्राणांश्च। प्रकृतिस्थानि त्याज्यदेहनिष्ठानि कर्षत्याकर्षति प्राप्तव्यशरीरे विषयोपभोगार्थं गृह्णातीत्यर्थः। एतच्छरीरादन्यच्छरीरं यत् यदाऽवाप्नोति तदा वायुराशयात् पुष्पस्थानात् गन्धानिव कुसुमावयवानतिसूक्ष्मानिव एतानि मनःप्राणोभयेन्द्रियाणि गृहीत्वा संयाति शरीरान्तरं गच्छतीति द्वयोरर्थः॥ ७॥ ८॥

श्री० टी०–ननु च त्वदीयं धाम प्राप्ताः सन्तो यदि न निवर्तन्ते तर्हि "सति संपद्य न विदुः सति संपद्यामहे" इत्यादिश्रुतेः सुषुप्तिप्रलयसमये त्वत्प्राप्तिः सर्वेषामस्तीति को नाम संसारी स्यादित्याशङ्क्य

संसारिणं दर्शयति–ममेति पञ्चभिः। ममैवांशो योऽयमविद्यया जीवभूतः सनातनः सर्वदा संसारित्वेन प्रसिद्धः, असौ सुषुप्तिप्रलययोः प्रकृतौ लीनतया स्थितानि मनः षष्ठं येषां तानीन्द्रियाणि पुनर्जीवलोके संसारे भोगार्थमाकर्षति। एतच्च कर्मेन्द्रियाणां प्राणस्य चोपलक्षणार्थम्। अयं भावः–सत्यं सुषुप्तिप्रलययोरपि मदंशत्वात्सर्वस्यापि जीवमात्रस्य मयि लयादस्त्येव मत्प्राप्तिः, तथाप्यविद्ययावृतस्य सानुशयस्य सप्रकृतिके मयि लयो न तु शुद्धे। तदुक्तम्–अव्यक्ताव्यक्तयः सर्वाः प्रभवन्तीत्यादिना। अतश्च पुनः संसाराय निर्गच्छन्नविद्वान् प्रकृतौ लीनतया स्थितानि स्वोपाधिभूतानीन्द्रियाण्याकर्षति। विदुषां तु शुद्धस्वरूपप्राप्तेर्नावृत्तिरिति ॥ ७ ॥ तान्याकृष्य किं करोतीत्यत्राह–शरीरमिति। यद्यदा शरीरान्तरं कर्मवशादवाप्नोति, यतश्च शरीरादुत्क्रामति ईश्वरो देहादीनां स्वामी तदा पूर्वस्माच्छरीरादेतानि गृहीत्वा तच्छरीरान्तरं सम्यग्याति। शरीरे सत्यपीन्द्रियग्रहणे दृष्टान्तः–आशयात्स्वस्थानात् कुसुमादेः सकाशात् गन्धान् गन्धवतः सूक्ष्मानंशान् गृहीत्वा यथा वायुर्गच्छति तद्वत् ॥ ८ ॥

स० टी०–यद्गत्वा न निवर्तन्त इत्ययुक्तं कुतः शृणु ॥ यदि गच्छन्त्यवश्यं ते निवर्तन्ते स्वरादिवत् ॥ १ ॥ नावर्तन्तेऽथ चेत्तर्हि न गच्छन्त्येव कुत्रचित् ॥ गत्वेति न निवर्तन्त इत्यन्योन्यविरुद्धता ॥ २ ॥ सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ॥ संयोगा विप्रयोगान्ता मरणान्तं हि जीवितम् ॥ ३ ॥ आगत्यन्ता गतिः सर्वा प्रसिद्धा लोकशास्त्रयोः ॥ अनात्मप्राप्तिरेवास्त्यावृत्तिपर्यवसानिका ॥ ४ ॥ नत्वात्मप्राप्तिरिति चेन्मैवं सुप्तौ सता सह ॥ ऐक्यं प्राप्तस्य जीवस्य पुनरावृत्तिदर्शनात् ॥ ५ ॥ सता सोम्य तदेत्यादौ श्रुत्यैवं प्रतिपादनात् ॥ अन्यथा तु सुषुप्तस्य मुक्तत्वे पुनरुत्थितिः ॥ ६ ॥ न स्यात्तस्मात्परात्माप्तौ गत्वेत्यपि न संभवेत् ॥ तस्यौपचारिकत्वेऽप्यनिवृत्तिर्नोपपद्यते ॥ ७ ॥ इत्येवमत्र शङ्कायां समाधानमितीर्यते ॥ गन्तुर्जीवस्य गन्तव्यब्रह्माभिन्नतयैव हि ॥ ८ ॥ नित्यप्राप्ततया तस्माद्गत्वेत्यत्रौपचारिका ॥ अज्ञानमात्रमेवास्य व्यवधानं परात्मनः ॥ ९ ॥ ज्ञानेन तन्निवृत्त्यैव तत्प्राप्तिर्व्यपदिश्यते ॥ सुप्तावज्ञानसत्त्वेन पुनरावृत्तिरिष्यते ॥ १० ॥ तद्दृष्टान्तेन नावृत्तिरत्र शङ्क्या कदाचन ॥ इत्येवाशयवानाह भगवान्प्रत्यगद्वयः ॥ ११ ॥ ममैव परमेशस्य शुद्धस्य परमात्मनः ॥ निरंशस्यापि मायाख्यशक्त्यंश इव कल्पितः ॥ १२ ॥ सूर्यस्येव जले व्योम्न इव कुम्भे च भेदवान् ॥ मृषैवांश इवांशोऽस्मिन्संसारे प्राणधारणात् ॥ १३ ॥ मृषैव कर्ता भोक्तेति प्रसिद्धिं समुपागतः ॥ वस्तुतो नित्य एवास्ति परिच्छेदेऽप्युपाधिना ॥ १४ ॥ परमात्मस्वरूपत्वात्तत्र भेदस्तु कल्पितः ॥ अतो गन्तुर्हि जीवस्य ब्रह्माभिन्नतयास्य च ॥ १५ ॥ अज्ञानकल्पिता प्राप्तिर्ज्ञानात्प्राप्तिरिवोच्यते ॥ ज्ञानाज्ञानकृते प्राप्त्यप्राप्ती कण्ठमणेरिव ॥ १६ ॥ ब्रह्मभूतस्य जीवस्य न स्वतः संभवेद्गतिः ॥ यद्यस्ति ब्रह्मणो जीवः प्रतिबिम्बस्तदा यथा ॥ १७ ॥ प्रतिबिम्बितसूर्यस्य सलिले सलिलात्यये ॥ बिम्बभूतार्कगमनं ततो नावृत्तिरस्य च ॥ १८ ॥ यदि बुद्ध्यवच्छिन्नोऽत्र ब्रह्मांशो जीव उच्यते ॥ तदा यथा घटव्योम्नो घटापायेऽम्बरं प्रति ॥ १९ ॥ गमनं चाप्यनावृत्तिस्तथा जीवस्य बोधतः ॥ बुद्ध्याद्युपाध्यपाये स्वं निरुपाधि वपुः प्रति ॥ २० ॥ गमनं पुनरावृत्त्यभावश्च प्रोच्यते तदा ॥ ब्रह्मैक्यज्ञानतो जीवभेदबाधाद्गतिर्मृषा ॥ २१ ॥ जीवत्वब्रह्मभेदादि कल्पितं मायया परे ॥ तत्त्वज्ञानेन तद्बाधे जीवो ब्रह्मैव केवलम् ॥ २२ ॥ तस्माद्वेदान्तवाक्योत्थसाक्षात्काराद्विदात्मनः ॥ अहं ब्रह्मेति जीवस्याज्ञाननाशो गतिः स्मृता ॥ २३ ॥ बाधे ह्यनाद्यविद्यायाः पुनर्जन्म कुतो भवेत् ॥ तत्कार्यसंसृतेर्बाधान्नावर्तन्ते वचस्त्विति ॥ २४ ॥ कथं तर्ह्यस्य संसारव्यवहार इतीर्यते ॥ मनःषष्ठं भवेद्येषां तानि श्रोत्रादि पञ्च च ॥ २५ ॥ इन्द्रस्यात्मन आमोक्षं साधनानीन्द्रियाणि च ॥ विषयोपलब्धौ जाग्रत्स्वप्नयोः कर्मणो लये ॥ २६ ॥ भोग-

प्रदस्य सुप्तौ तु तान्यज्ञाने स्वकारणे ॥ स्थितानि सूक्ष्मरूपेण पुनर्जाग्रत्फलप्रदे ॥ २७ ॥ कर्मण्युद्भव आत्मायमज्ञानात्तानि कर्षति ॥ विषयज्ञानसिद्ध्यर्थमाविर्भावयतीति दिक् ॥ २८ ॥ अतोऽनात्मधिया-मात्माज्ञानादावृत्तिरेव हि ॥ तत्त्वज्ञानादनावृत्तिरेवं ब्रह्मविदां स्वयम् ॥ २९ ॥ यद्गत्वा न निवर्तन्ते युक्तियुक्तं वचस्त्विति ॥ ३० ॥ ७ ॥ कदा कर्षति जीवोऽयमिन्द्रियाणीति चेच्छृणु ॥ देहेन्द्रियादिसंघात-स्वामी जीवो यदा बहिः ॥ १ ॥ निर्गच्छति तदा देहाद्यस्मादुत्क्रामतीत्यतः ॥ मनःषष्ठानीन्द्रियाणि कर्षतीत्यन्वयोऽस्ति हि ॥ २ ॥ उत्क्रान्त्युत्तरभावित्वाद्गमनस्य यतस्ततः ॥ न केवलं कर्षत्येव किंतु पूर्वशरीरतः ॥ ३ ॥ यदाप्नोत्यपरं देहं तदैतानीन्द्रियाणि सः ॥ गृहीत्वा मनसा सार्धं गच्छत्यागमनो-ज्झितः ॥ ४ ॥ शरीरे सति दृष्टान्त इन्द्रियग्रहणे ह्ययम् ॥ पुष्पादेः स्थानतः सूक्ष्मानंशान्गन्धात्म-कान्यथा ॥ ५ ॥ गृहीत्वा पवनो याति तद्वज्जीवोऽपि तान्यतः ॥ ६ ॥ ८ ॥

भा० टी०—ननु यद्गत्वा न निवर्तन्त इति नोपपद्यते गतेरागत्यन्तत्वात् । तदुक्तम्—'सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः । संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ' इत्याशङ्क्याह—**ममैवेति** । जीवलोके संसारे जीवभूतो भोक्ता कर्तेति प्रसिद्धः । मम परमात्मन एवांशोऽवयवो नान्यस्य, अत एव सनातनः पुरातनः । एवं च यथा जलसूर्यकः सूर्यांशकः जलनिमित्तापाये सूर्यं प्राप्य न निवर्तते, यथा वा घटाद्युपाधिपरिच्छिन्नो घटाद्याकाश आकाशांशः सन् घटादिनिमित्तापाये आकाशं प्राप्य नावर्तते तद्वज्जीवोऽपि मदंशः मां गत्वा पुनरावृत्तिशून्य एवेत्यतो युक्तमेव यद्गत्वा न निवर्तन्त इति । तथाचाविद्याकृतोपाधिपरिच्छिन्न एकदेशोंऽश इव कल्पितस्तत्त्वज्ञानेनाविद्यापगम उपाधेर्निमित्तभूतस्यापगमात् स्वस्वरूपेणावतिष्ठते न तु निरवयवस्य मुख्योऽवयवः संभवति सावयवत्वे च विनाशप्रसङ्गोऽनिष्टः स्यात् । यदि परस्यांशत्वेन कल्पितो जीवो वस्तुतः परमात्मैव तर्हि कथं संसरत्युत्क्रामति वेत्यपेक्षायामाह—**मन इति** । मनःषष्ठानि श्रोत्रादीनीन्द्रियाणि प्रकृतिस्थानि स्वस्वप्रकृतौ कर्णशष्कुल्यादौ स्थाने स्थितानि कर्षति आकर्षति यदा पूर्वशरीराच्छरीरान्तरं प्राप्नोतीत्युत्तरेण संबन्धः । यस्त्वेवंभूतोऽपि सुषुप्तात्कथमावर्तत इत्यत आह—मनः षष्ठं येषां तानि श्रोत्रादीनि पञ्चेन्द्रियाणि इन्द्रस्यात्मनो विषयोपलब्धिकरणतया लिङ्गानि जाग्रत्स्वप्नभोगजनककर्मक्षये प्रकृतिस्थानि प्रकृतावज्ञाने सूक्ष्मरूपेण स्थितानि पुनर्जाग्रद्भोगजनककर्मोदये भोगार्थं कर्षति कूर्मोऽङ्गानीव प्रकृतेरज्ञानादाकर्षति विषयग्रहणयोग्यतयाऽऽविर्भावयतीत्यर्थः।अतो ज्ञानादनावृत्तावप्यज्ञानादावृत्तिर्नानुपपन्नेति भाव इति व्याख्यानम्, तत्त बह्वध्याहारसापेक्षमुत्तरश्लोकाननुबद्धं, कस्मिन्काले कर्षतीत्युच्यत इति स्वग्रन्थाननुगुणं चात उपेक्ष्यम् । एवमन्येषामपि कुकल्पना भाष्यविरुद्धा नोपादेया ॥ ७ ॥ कस्मिन्काले कर्षतीत्यपेक्षायां स्वस्थाने स्थितानामिन्द्रियाणां जीवेनाकर्षणस्य कालमाह—**शरीरमिति** । पाठक्रमादर्थक्रमो बलीयानितिन्यायेनेश्वरो देहादिसंघातस्वामी जीवो यत् यदाप्युत्क्रामति शरीराद्बहिर्निर्गच्छति तदा मनःषष्ठानीन्द्रियाणि कर्षतीति श्लोकस्य द्वितीयः पादोऽर्थवशात्प्राथम्येन संबध्यते । यदा च पूर्वस्माच्छरीराच्छरीरान्तरं प्राप्नोति तदा एतानि मनःषष्ठेन्द्रियाणि गृहीत्वा संयाति सम्यग्गच्छति । तत्र दृष्टान्तः—आशयात्पुष्पादेः स्थानाद्गन्धान् गृहीत्वा यथा वायुः पवनः संयाति तद्वत् ॥ ८ ॥

प० टी०—ननु सुषुप्तौ सर्वेषां ब्रह्मप्राप्तौ सत्यां कथं पुनः परावृत्तिरित्याशङ्क्याह—**ममैवेति पञ्चभिः** । ममैवांशो योऽयमविद्यया जीवभूतः सनातनः सर्वदा संसारित्वेन प्रसिद्धः स मन एव षष्ठं येषां तानि पञ्च ज्ञानेन्द्रियाणि सुषुप्तौ कर्षत्याकर्षयति । श्रुतिरपि—" तानि यदा गृह्णात्यथ हैतत्स्वपिति नाम तद्गृहीत एव प्राणो भवति गृहीता वाग्गृहीतं चक्षुर्गृहीतं श्रोत्रम् " इत्यादिः । स्पष्टार्थम् । किंभूतानीन्द्रियाणि प्रकृतिस्थानि प्रकृतौ तिष्ठन्ति तानि स्वोपाधिभूतानि । अयमर्थः—अविद्यावृतत्वेन सानुशयस्य जीवस्य सप्र-

कृतिके मयि लयोऽतः पुनरावृत्तिः । निरस्ताविद्यस्य जीवस्य शुद्धे मयि लयोऽतो मुक्तिः । 'अव्यक्ताद्व्यक्तयः सर्वाः' इत्यादि पूर्वमेवोक्तम् ॥ ७ ॥ अथ जीवस्य शरीरान्तरप्राप्तिं दृष्टान्तेनाह—शरीरमिति । यद्यदा पूर्वस्माच्छरीरादुत्क्रामति यदा च शरीरान्तरं प्राप्नोति तदेश्वर इन्द्रियचालकोऽन्तर्यास्येतानीन्द्रियाणि गृहीत्वैव सम्यक् प्रकारेण याति । क इव? आशयाद्वायुर्गन्धानिव आशयाद्गन्धाश्रयीभूतात्पुष्पादेः सकाशाद्गन्धान् गन्धवतः सूक्ष्मानंशान् गृहीत्वा वायुर्यथा याति तथा सत्यपि शरीरेऽर्थग्राहकाण्यध्यात्मरूपाणीन्द्रियाणि गृहीत्वा याति । आत्मा तु सर्वत्रानुस्यूतस्तस्य गमनागमनं न संभवति किं तु तदंशीभूतसूक्ष्मभूतेन्द्रियप्राणावस्थात्मकं लिङ्गशरीरमेव गच्छत्यागच्छतीत्यर्थः ॥ ८ ॥

रा० टी०—जगद्वृक्षच्छेदार्थं ब्रह्मादिप्रतिपत्त्यैवालं किं भगवत्प्रतिपत्त्येत्यत आह—ममैवेति । जीवलोके ब्रह्मादिजीवशरीरे सनातनोऽनादिनित्यः जीवभूतः जीवरूपो ममैव भिन्नांशः । न तु मत्स्यादिवत्स्वरूपांशः भिन्नोऽपि सूर्यस्य खद्योत इव किंचित्सादृश्यमात्रेणांश इत्युच्यते । अतो ब्रह्मादीनां मदंशाभासत्वेन तेषां ब्रह्मादीनामशक्तत्वात्तेषां प्रतिपत्तिं विना भगवत्प्रतिपत्तिरेव कार्येति भावः । जीवानामंशाभासत्वे क्वचिदपि कार्ये शक्तिर्न स्यादित्यतोऽस्तीत्याह—मन इति । प्रकृतिस्थानि प्रकृतिकार्यशरीरस्थानि मनःषष्ठानि श्रोत्रादिपञ्चेन्द्रियाणि ममांशो जीवभूतः विषयान्प्रति कर्षति प्रवर्तयति स्थितिदशायां देहावाप्तिवेलायां तु मूलकारणात् । उत्क्रान्तौ तु शरीरात्कर्षति ॥ ७ ॥ किं स्वसामर्थ्येन नेत्याह—शरीरमिति । ईश्वरः शरीरं जीवशरीरं यदाप्नोति तदैव जीवस्तत्प्रेरितः सन्कर्षतीत्यर्थः । स्वातन्त्र्येण तु ईश्वर एव सर्वाणीन्द्रियाणि विषयान्प्रति प्रयुङ्क्ते । तदाह सूत्रे—'ज्योतिराद्यधिष्ठानं तु' इत्यादि । तथा यच्च यदाप्युत्क्रामतीश्वरः जीवमादायेति योज्यम् । तदैतानि इन्द्रियाणि सूक्ष्मेन्द्रियांशान् आशयात्पुष्पादिस्थानात् गन्धानिव गन्धवतः पुष्पाद्यवयवानिव भागशो गृहीत्वा संयाति लोकान्तरमित्यर्थः । नचाग्निं वागप्येतीत्यादि विरोधः तस्य भागविषयत्वात् । अग्न्यादिगतिश्रुतेरिति चेन्न 'भाक्तत्वात्' इति सूत्रात् । अत एव गन्धानिवेति दृष्टान्तोक्तिः । अन्यथा वायुनानेकेष्वाकृष्यमाणेषु गन्धान् गन्धवतः पुष्पाद्यवयवानित्युक्तिर्न स्यात् । सर्वेन्द्रियप्रेरणस्यापीशाधीनत्वान्न तेषां प्रतिपत्तिर्जगद्वृक्षच्छेदनशक्तेति भावः । यद्वा यद्यदा जीवः शरीरमाप्नोति तदेश्वरः एतानि गृहीत्वा शरीरं संयाति जीवः यदोत्क्रामति च तदेश्वरः एतानि गृहीत्वा लोकान्तरं संयातीति योजना ॥ ८ ॥

**श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ॥**
**अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥**

त० टी०—तानीन्द्रियाणि यदर्थं गृहीत्वा गच्छति तद्दर्शयति—श्रोत्रमिति । श्रोत्रादिघ्राणान्तानि पञ्चज्ञानेन्द्रियाणि चकराभ्यां षष्ठं मनः कर्मेन्द्रियाणि प्राणं चाधिष्ठाय विषयान् शब्दादीनुपसेवते उपभुङ्क्ते ॥ ९ ॥

म० टी०—तान्येवेन्द्रियाणि दर्शयन् यदर्थं गृहीत्वा गच्छाति तदाह—श्रोत्रमिति । श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च, चकारात् कर्मेन्द्रियाणि प्राणं च मनश्च षष्ठमधिष्ठायैव आश्रित्यैव विषयान् शब्दादीनयं जीव उपसेवते भुङ्क्ते ॥ ९ ॥

शं० टी०—इन्द्रियाणि संगृह्य शरीरान्तरं गत्वा तत्र किं करोतीत्याकाङ्क्षायामाह—श्रोत्रमिति । श्रोत्रं चक्षुः स्पर्शनं त्वगिन्द्रियम् । चकारः समुच्चयार्थः । रसनं जिह्वां घ्राणमपि । एवोऽप्यर्थः । चकारात्कर्मेन्द्रियाण्यपि मनः षष्ठमन्तरिन्द्रियं चकाराद्बुद्धिमहंकारं चाधिष्ठायोपादाय भोगसाधनानि कृत्वा स्वयमयं जीवः क्षेत्रज्ञ

आत्मा शरीरे वर्तमानः सन् विषयान् शब्दादीनुपसेवते उपलभते "एतस्मिन् बुद्धान्ते रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च" इति श्रवणादिन्द्रियार्थसन्निकर्षात्समुत्पद्यमानां पुण्यपापक्रियामिन्द्रियाण्यर्थांश्च पश्यतीत्यर्थः। अत्र शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीति शरीरादुत्क्रमणतत्संक्रमणप्रतिपादनेनात्मनो जीवस्य सूक्ष्मशरीरविशिष्टत्वं हेयोपादेयात् स्थूलाद्भिन्नत्वं च प्रतिपादितम्। मनःषष्ठानीन्द्रियाणि कर्षति गृहीत्वा संयातीत्युक्त्या ग्राह्यग्राहकयोर्भेदस्य प्रत्यक्षत्वाद्बुद्धिमात्रोपाधिमत्त्वमिन्द्रियेभ्यो मनसोऽपि भिन्नत्वं च प्रतिपादितम्। श्रोत्रं चक्षुरित्यादिना श्रोत्रादीन्द्रियाणि मनो बुद्धिं चोपादाय विषयानुपलभत इत्युक्त्या चोपलब्धुरुपादेयेभ्यश्चोपलब्धेभ्यश्च भिन्नत्वस्य प्रत्यक्षत्वादिन्द्रियेभ्य इन्द्रियार्थेभ्यो मनसो बुद्धेश्च भोगायतनाद्देहादपि च व्यतिरिक्तत्वमेव सम्यक्प्रतिपादितम्। एतेन "चक्षुषः साक्षी श्रोत्रस्य साक्षी वाचः साक्षी मनसः साक्षी बुद्धेः साक्षी प्राणस्य साक्षी तमसः साक्षी सर्वस्य साक्षी ततोऽविक्रियः" इत्यादिश्रुतिप्रसिद्धमात्मनः सर्वसाक्षित्वमेवाविक्रियत्वं च सूचितं भवति ॥ ९ ॥

श्री० टी०—तान्येवेन्द्रियाणि दर्शयन् यदर्थं गृहीत्वागच्छति तदाह—**श्रोत्रमिति**। श्रोत्रादीनि बाह्येन्द्रियाणि मनश्चान्तःकरणमधिष्ठायाश्रित्य शब्दादीन्विषयानयं जीव उपभुङ्क्ते ॥ ९ ॥

स० टी०—तान्येव दर्शयन्नाह यदर्थं याति तत्तथा ॥ श्रोत्रादिपञ्चकं चैव प्राण कर्मेन्द्रियाण्यपि ॥ १॥ षष्ठं च मन आश्रित्य शब्दस्पर्शादिगोचरान् ॥ अयं देहेन्द्रियस्वामी भुङ्क्ते भ्रान्तिवशाद्यतः ॥ २ ॥ देहेन्द्रियादिषु स्वत्वाध्यासादेवात्मनो मृषा ॥ सुखदुःखादिभोक्तृत्वं न त्वस्य परमार्थतः ॥ ३ ॥ ९ ॥

भा० टी०—कानि पुनस्तानि किमर्थं च तानि गृहीत्वा संयातीति चेत्तत्राह—**श्रोत्रमिति**। श्रोत्रं चक्षुः स्पर्शनं च त्वगिन्द्रियं रसनं घ्राणमेव च चकारात्प्राणादिसमुच्चयः मनः षष्ठं प्रत्येकमिन्द्रियेण सह अधिष्ठाय देहस्थोऽयं जीवो विषयान् शब्दादीन् उपसेवते भुङ्क्ते ॥ ९ ॥

प० टी०—अथ शरीरान्तर्वर्तमानदशायामात्मनो विषयोपभोगप्रकारमाह—**श्रोत्रमिति**। अयमात्मा मनः अधिष्ठाय स्वाश्रयमात्रेण प्रवर्त्य तत्तद्ग्राहकोपलक्षिताञ्शब्दादीन् विषयानुपसेवतेऽहंकाराध्यासेन सेवते। श्रुतिरपि—"अन्यत्रमना अभूवन्नादर्शमन्यत्रमना अभूवन्नाश्रौषमिति मनसा ह्येव पश्यति मनसा शृणोति" इत्यादिः। स्पष्टार्थम् ॥ ९ ॥

रा० टी०—इन्द्रियेषु प्रवर्तकत्वेन स्थितस्य हरेरिन्द्रियद्वारा विषयभोगमाह—**श्रोत्रमिति**। अधिष्ठायैवेत्यन्वयः। प्रवर्तकः सन्नेवेत्यर्थः। विषयान् शब्दादीन् ॥ ९ ॥

## उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम् ॥
## विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

**त० टी०—एवं देहे वर्तमानमपि सर्वविषयभोक्तारमपि जीवं केचिदेव पश्यन्ति, नतु सर्वे इत्याह—उत्क्रामन्तमिति। उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तं स्थितं वाऽपि तस्मिन्नेव देहे शब्दादीन्विषयान्भुञ्जानं वा गुणान्वितं सत्त्वादिगुणपरिणामविशेषदेवमनुष्याद्याकारसंयुक्तं विमूढा आत्मानात्मविवेकानर्हा नानुपश्यन्ति देहादिविलक्षणं न विजानन्ति। देवमनुष्यादिदेहरूपमेवात्मानं जानन्ति। शास्त्राचार्योपलब्धं ज्ञानमेव चक्षुर्येषां ते ज्ञानचक्षुषस्ते तु देहेन्द्रियादिविविक्ताकारं पूर्वोक्तं ज्योतीरूपमेव पश्यन्ति ॥ १० ॥**

म० टी०—उत्क्रामन्तमिति। एवं देहगतं दर्शनयोग्यमपि देहात् उत्क्रामन्तं देहान्तरं गच्छन्तं पूर्वस्मात्, स्थितं वापि तस्मिन्नेव देहे भुञ्जानं वा शब्दादीन् विषयान् गुणान्वितं सुखदुःखमोहात्मकैर्गुणैरन्वितम्।

एवं सर्वास्ववस्थासु दर्शनयोग्यमप्येनं विमूढा दृष्टादृष्टविषयभोगवासनाकृष्टचेतस्तयात्मानात्मविवेकायोग्या नानुपश्यन्ति । अहो कष्टं वर्तत इत्यज्ञाननुक्रोशति भगवान् । ये तु प्रमाणजनितज्ञानचक्षुषो विवेकिनस्त एव पश्यन्ति ॥ १० ॥

**श्रं० टी०**—एवं देहेन्द्रियमनोबुद्ध्यादिभ्यो भिन्नमविक्रियमकर्तारमेवात्मानं स्वं सर्वसाक्षित्वेन स्थितं महात्मानो ब्रह्मविदः सर्वदा पश्यन्त्यब्रह्मविदो मूढा न पश्यन्तीत्याह—**उत्क्रामन्तमिति** । आद्यो वाशब्द इवार्थः, द्वितीयस्त्वप्यर्थः । उपाधावुत्क्रामति पिण्डादिकार्यमुद्दिश्य गच्छति सति ध्यायतीव लेलायतीवेति-न्यायेन स्वयमुत्क्रामन्तं गच्छन्तमिव प्रतीयमानं स्थिते सति स्थितमिव भुञ्जाने सत्यपि भुञ्जानमिव गुणा-न्विते गुणैः सत्त्वादिगुणविकारैः सुखदुःखकामक्रोधमोहभयादिभिरन्विते सति स्वयमपि गुणान्वितमिव प्रतीयमानं स्वभावेन निष्कलं निष्क्रियं निर्विकारं निर्विकल्पं चिदेकरसमानन्दघनमात्मानं स्वमविक्रियमेव ज्ञानचक्षुषः ज्ञानं प्रत्यग्भावापन्नशुद्धबुद्धिवृत्तिस्तदेव चक्षुः रूपादिग्रहणे चक्षुरिव स्वरूपग्रहणे येषां ते ज्ञान-चक्षुषः शुद्धात्मानो यतयः पश्यन्ति । आहारादिषु सर्वेष्वपि कर्मसु सर्वदा स्वमात्मानं निष्कलं निष्क्रियं नित्यशुद्धं सर्वोपाधिविनिर्मुक्तं परिपूर्णमेव पश्यन्तीत्यर्थः । विमूढाः दृष्टादृष्टविषयाशावशीभूतात्मानो दुर्विदग्धा बहिर्मुखाः सदसद्विवेकवैराग्यसंन्यासशमदमादिसाधनसंपत्त्या तीव्रमोक्षेच्छया च सद्गुरूपसत्त्या च सम्यक्संपादितविशेषज्ञानाभावादहमेवेदं सर्वमित्येतद्वाक्यार्थानुरूपमात्मानं न पश्यन्ति । किंतु कर्ता भोक्ता सुखी दुःखी हतोऽहं म्रिये ममेदं नष्टमित्येवात्मानं संसारिणं पश्यन्तीत्यर्थः ॥ १० ॥

**श्री० टी०**—ननु च कार्यकरणसंघातव्यतिरेकेणैवंभूतमात्मानं सर्वेऽपि किं न पश्यन्ति तत्राह—**उत्क्रा-मन्तमिति** । उत्क्रामन्तं देहाद्देहान्तरं गच्छन्तं तस्मिन्नेव देहे स्थितं वा विषयान् भुञ्जानं वा गुणान्वित-मिन्द्रियादियुक्तं जीवं विमूढा नानुपश्यन्ति नालोकयन्ति । ज्ञानमेव चक्षुर्येषां ते विवेकिनः पश्यन्ति ॥ १० ॥

**स० टी०**—एवं देहगतं जीवं दर्शनार्हमपि स्फुटम् ॥ देहान्तरं च गच्छन्तं पूर्वस्माद्धेतुतस्तथा ॥ १ ॥ तस्मिन्नेव स्थितं वापि देहे भुञ्जानमादरात् ॥ शब्दादीन् विषयान् युक्तं सुखदुःखादिभिर्गुणैः ॥ २ ॥ एवं सर्वास्ववस्थासु दर्शनार्हं हि साक्षिणम् ॥ विषयाकृष्टचित्तत्वाद्देहाद्यध्यासतो जडाः ॥ ३ ॥ मोहा-क्रान्ता न पश्यन्ति स्वात्मानं तद्विलक्षणम् ॥ अहो कष्टं किलेत्यज्ञाननुक्रोशति माधवः ॥ ४ ॥ ये तु प्रमाणजज्ञानचक्षुषस्ते विवेकिनः ॥ पश्यन्तीत्यतिपुण्याढ्यान्स्तौति श्रीहरिरुत्तमान् ॥ ५ ॥ १० ॥

**भा० टी०**—शरीरमित्यादिश्लोकेन देहाद्व्यतिरेकमात्मनोऽभिधाय श्रोत्रमित्यादौ श्रोत्रादिप्रवर्तकस्तेभ्यो भिन्न इति तस्य भेद उक्तस्तर्हि तमुत्क्रान्त्यादि कुर्वन्तं देहादिव्यतिरिक्तं स्वस्वरूपं किमिति सर्वे न पश्यन्ति इति चेत्तत्राह—**उत्क्रामन्तमिति** । एवं देहादुत्क्रामन्तं पूर्वोपात्तदेहं परित्यजन्तं स्थितं देहे तिष्ठन्तं वापि भुञ्जानं शब्दादींश्चोपलभमानं वा गुणान्वितं सुखदुःखमोहसंज्ञकैर्गुणैरनुगतं संयुक्तमेवंभूतमप्येवमत्य-न्तदर्शनगोचरतां प्राप्तं विमूढा दृष्टादृष्टविषयभोगबलाकृष्टचेतस्तयानेकधा मूढा मोहिता नानुपश्यन्त्यहो कष्टं वर्तत इति अनुक्रोशति भगवान् । तर्ह्यात्मानं के कथं पश्यन्तीति तत्राह—ज्ञानं न्यायानुगृहीतशास्त्रजन्य-मात्मदर्शनसाधनं चक्षुर्येषां ते प्रमाणजनितज्ञानचक्षुषो विविक्तदृष्ट्या एनं सर्वविलक्षणं सर्वाधिष्ठानं सर्व-सत्तास्फूर्तिप्रदं पश्यन्ति साक्षात्कुर्वन्ति ॥ १० ॥

**प० टी०**—अथैतदेव प्रकटयन्नाह—**उत्क्रामन्तमिति** । विमूढास्तु परमात्मानं प्रायो नष्टमिव मन्यन्ते, वेत्यथ वा, उत्क्रामन्तमितो देहाद्गच्छन्तं मन्यते । तदुक्तम्—'हृदयाकाशमात्रस्य विनाशे देहनाशतः । व्यर्थं भूतानि शोचन्ति नष्ट आत्मेति शङ्कया' इति । तथा देहाकारेण स्थितं भुञ्जानं गुणान्वितं वानु-वेलं पश्यन्ति । अथ ज्ञानरूपं चक्षुर्येषां ते तत्त्वदर्शिनः स्वगृहं प्रति नीयमानस्य घटस्य तदावृताका-

शवलिङ्गदेहावृतमात्मानमुत्क्रामन्तमनुवेलं पश्यन्ति। तथा भ्रमत्कुलालचक्रकीलकवत्स्थितं पश्यन्ति। तथा प्रतिमारूपदेवतादर्शितनैवेद्यवद्भुञ्जानं पश्यन्ति। तथा काश्मीरोदरप्रतिफलितजपाकुसुमारुण्ययोगवत्सत्त्वादिगुणान्वितं पश्यन्ति। तथाचोत्क्रान्तावात्मनो व्यापकत्वाद्गमनागमनं न संभवति किं तु लिङ्गदेहाधिष्ठितं मन एव गच्छतीति पूर्वं व्याख्यातमेव। श्रुतिरपि—"यत्ते यमं वैवस्वतं मनो जगाम दूरकम्। तत आवर्तयामसीह क्षयाय जीवसे" इति। भाष्यम्—तत्र पूर्वं सनातिनाम्नो राज्ञश्चत्वारः सुबन्ध्वादयः सहोदराः पुरोहिता आसंस्तेषु सुबन्धुः कैश्चिद् द्वेषिभिर्विप्रैराभिचारकेण हतस्ते पुनर्जीवयितुं त्रयो बन्धव इमं मन्त्रं पठन्ति—यत्त इति। भो सुबन्धो यत्ते मनो दूरकं दूरं यथा भवति तथा वैवस्वतं सूर्यस्य पुत्रं यमं प्रति जगाम तत्ते मन इह मृतशरीर आवर्तयामसि पुनरावर्तयिष्यामि कस्मै प्रयोजनाय क्षयाय पुनरिह वसतये तथा जीवसे चिरकालजीवनाय॥ १०॥

रा० टी०—जीववदशुभभागोऽप्यस्ति किमित्यतः शुभानेव भुङ्क्ते इति वदन्कुतो नोपलभ्यत इति शङ्कां निराह—उत्क्रामन्तमिति। गुणान्वितं शुभयुक्तमेवेत्यर्थः। विमूढा इत्यनुपलम्भे हेतूक्तिः॥ १०॥

**यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम्॥**
**यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः॥ ११॥**

**त० टी०—तस्य पुनर्दुर्दर्शतामुपपादयति—यतन्त इति। योगिनो ध्यानादिभिरुपायैर्यतन्तः यत्नं कुर्वन्तः केचिदेनमात्मानमात्मनि देहेऽवस्थितं देहाद्विविक्तरूपं पश्यन्ति। अकृतात्मानो मत्प्रपत्तिमन्तरेण स्वज्ञानाभिमानेनाशोधितान्तःकरणा अत एवाचेतसः तत्त्वावलोकनानर्हचेतस एनमात्मानं न पश्यन्ति॥ ११॥**

म० टी०—पश्यन्ति ज्ञानचक्षुष इत्येतद्विवृणोति—यतन्त इति। आत्मनि स्वबुद्धौ अवस्थितं प्रतिफलितमेनमात्मानं यतन्तो ध्यानादिभिः प्रयतमाना योगिन एव पश्यन्ति। चोऽवधारणे। यतमाना अप्यकृतात्मानो यज्ञादिभिरशोधितान्तःकरणाः अत एवाचेतसो विवेकशून्या नैनं पश्यन्तीति विमूढा नानुपश्यन्तीत्येतद्विवरणम्॥ ११॥

शं० टी०—ननु ये तु संसिद्धाः प्रबुद्धाः शुद्धात्मानस्त एवात्मानं सर्वोपाधिविनिर्मुक्तं केवलं पश्यन्ति नत्वन्ये इत्याशङ्कायां न, ये तु मत्प्रसादसंपत्त्या यतयो योगनिष्ठा भवन्ति तेऽपि पश्यन्ति नत्वन्य एवंलक्षणा इत्याह—यन्तत इति। शास्त्राचार्यात्मेश्वरप्रसादसंपन्ना भूत्वा सदसद्विवेकतीव्रवैराग्यशमदमादिसाधनसंपत्त्या यतन्तः श्रवणमननादिभिर्ज्ञानसिद्ध्यै प्रयत्नवन्तः सन्तस्तेन लब्धज्ञाना ये यतयो योगिनो भवन्ति "लक्ष्येकतां समासाद्य निर्विकारतयाऽऽत्मनि। मनसो निश्चलत्वेन स्थितिर्योग इतीर्यते" इत्युक्तलक्षणस्तीव्रमोक्षेच्छावैराग्याभ्यां बहिःप्रावण्यवैमुख्येन चित्तस्यात्मन्यविकारात्मना स्थितिरूपो योगो येषां ते योगिनः स्वात्मन्येवाहितचित्ता भवन्ति तेऽपि चात्मनि बुद्धाववस्थितं बुद्ध्यादिप्रकाशकमात्मानं पश्यन्त्ययमेवाहमिति स्वात्मना साक्षात्कृत्य स्वमकर्तारमभोक्तारमसंसारिणमेव पश्यन्तीत्यर्थः। मत्प्रसादरहिता ये तु यतन्तः श्रवणमननादिभिरात्मसाक्षात्कारसिद्धये बहुधा प्रयत्नं कुर्वन्तः शृण्वन्तः श्रावयन्तोऽप्यकृतात्मानः अकृतो बाह्यवासनाभिर्विषयकर्मशास्त्रादिगोचराभिरवशकृतो बहिरेव प्रवाहायमान आत्मा चित्तं येषां ते अकृतात्मानः अविद्यास्मितारागद्वेषाभिनिवेशविशिष्टास्तत एवाचेतसो विवेकशून्या बहिर्मुखा न पश्यन्त्ययमेवाहमस्मीत्यात्मानं निर्विशेषं परं ब्रह्म स्वात्मत्वेन न जानन्तीत्यर्थः॥ ११॥

श्री० टी०—दुर्ज्ञेयश्चायं यतो विवेकिष्वपि केचिदेव पश्यन्ति केचिन्न पश्यन्तीत्याह—यतन्त इति।

यतन्तः ध्यानादिभिः प्रयतमाना योगिनः केचिदेनमात्मानमात्मनि देहेऽवस्थितं विविक्तं पश्यन्ति । शास्त्राभ्यासादिभिः प्रयत्नं कुर्वाणा अपि अकृतात्मानः अविशुद्धचित्ताः अत एवाचेतसो मन्दमतय एनं न पश्यन्ति ॥ ११ ॥

स० टी०—विवृणोति तदेवेशो विभागेन यथायथम् ॥ ध्यानाद्यैर्यतमाना ये त एनं साक्षिणं परम् ॥१॥ पश्यन्ति योगसंपन्नाः स्वबुद्धौ प्रतिबिम्बितम् ॥ यतमाना अपि श्रौतैर्यज्ञादिभिरशोधितम् ॥ २ ॥ चित्तं येषामतस्ते तु नैनं पश्यन्ति साक्षिणम् ॥ यतो विवेकशून्यास्ते मोहाक्रान्ताः सुरागिणः ॥ ३ ॥११॥

भा० टी०—न्यायानुगृहीतशास्त्रेऽनिशं श्रवणादिना यत्नं कुर्वतामपि केचित्पश्यन्ति केचिन्नेति तत्र को हेतुरित्यपेक्षायामाह—यतन्त इति । यतन्तः केचिद्यत्नं कुर्वन्तो योगिनश्च समाहितचित्ता एनं प्रकृतमात्मानमात्मनि स्वस्यां बुद्धाववस्थितं पश्यन्त्ययमहमस्मीत्युपलभन्ते यतन्तोऽपि शास्त्रादिप्रमाणैर्यत्नं कुर्वन्तोऽप्यकृतात्मानस्तपसेन्द्रियजयेन च दुश्चरितादनुपरता अशुद्धान्तःकरणा अचेतसोऽविवेकिन एनमात्मानमुक्तविशेषणं न पश्यन्ति यत्नसाम्येऽप्यात्मदर्शने तददर्शने च चित्तशुद्धेस्तदशुद्धेश्च हेतुत्वमिति भावः ॥ ११ ॥

प० टी०—अथ ज्ञानचक्षुषोऽपि द्वेधानुभविनः शास्त्रविज्ञानवन्तश्चेति दर्शयति—यतन्त इति । स्वरूपप्राप्त्यर्थं यतन्तः प्रयत्नं कुर्वन्तो योगिन एवमात्मानमात्मनि देहान्तर्हृदयाकाशेऽवस्थितं पश्यन्ति । तथाऽकृतात्मानोऽनधिगततत्त्वार्था अत एवाचेतसोऽल्पबुद्धयः शास्त्रपठनादिभिरुपायैर्यतन्तोऽप्येनं न पश्यन्ति॥११॥

रा० टी०—यत्ने कृतेऽप्यनुपलम्भः कथमित्यत आह—यतन्त इति । योगिनो ज्ञानोपायानुष्ठातारो यतन्तो यतमानाः ज्ञानं प्राप्यैनं पश्यन्ति । अशुद्धबुद्धयो यतमाना अपि अचेतसो अविवेकिनो नैनं पश्यन्तीत्यर्थः ॥ ११ ॥

**यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ॥**
**यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥**

त० टी०—एवं मुक्तबद्धोभयविधक्षेत्रज्ञस्वरूपं मच्छक्तिरूपांशविभूतिरित्युक्तमिदानीं सर्वशक्तिमत्स्वरूपमुपदेष्टुं तावत्सर्वजगच्छ्रेयोहेतुभूतादित्यचन्द्राग्न्यादीनामपि स्वविभूतित्वमाह—यदादित्येति चतुर्भिः । अखिलं जगदवभासयते यदादित्यगतमादित्ये स्थितं तेजः, यच्च रात्रौ चन्द्रमसि यच्चाग्नौ तत्तेजो मामकं मदीयमेव विभूतिभूतं विद्धि । तत्तदधिकारार्थं तत्तदाराधनप्रसन्नेन मयैव दत्तमिति जानीहि ॥ १२ ॥

म० टी०—इदानीं यत् पदं सर्वावभासनक्षमा अप्यादित्यादयो भासयितुं न क्षमन्ते यत्प्राप्ताश्च मुमुक्षवः न पुनः संसाराय प्रवर्तन्ते । यस्य च पदस्योपाधिभेदमनुविधीयमाना जीवा घटाकाशादय इवाकाशस्य कल्पितांशा मृषैव संसारमनुभवन्ति तस्य पदस्य सर्वात्मत्वसर्वव्यवहारास्पदत्वप्रदर्शनेन ब्रह्मणो हि प्रतिष्ठाहमिति प्रागुक्तं विवरीतुं चतुर्भिः श्लोकैरात्मनो विभूतिसङ्क्षेपमाह भगवान्—यदिति । "न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" इति श्रुत्यर्थं प्राग्व्याख्यातं न तद्भासयते सूर्य इत्यादिना "तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति" इति श्रुत्यर्थमनेन व्याख्यायते । यदादित्यगतं तेजश्चैतन्यात्मकं ज्योतिर्यच्चन्द्रमसि यच्चाग्नौ स्थितं तेजो जगदखिलमवभासयते तत्तेजो मामकं मदीयं विद्धि । यद्यपि स्थावरजङ्गमेषु समानं चैतन्यात्मकं ज्योतिस्तथापि सत्त्वोत्कर्षेणादित्यादीनामुत्कर्षात्तत्रैवाविस्तरां चैतन्यज्योतिरिति तैर्विशेष्यते—यदादित्यगतमित्यादि । यथा तुल्येऽपि मुखसंनिधाने काष्ठ-

कुड्यादौ न मुखमाविर्भवति । आदर्शादौ च स्वच्छे स्वच्छतरे च तारतम्येनाविर्भवति तद्वत् । यदादित्यगतं तेज इत्युक्त्वा पुनस्तत्तेजो विद्धि मामकमिति तेजोग्रहणात् यदादित्यादिगतं तेजः प्रकाशः परप्रकाशसमर्थं सितभास्वरं रूपं जगदखिलं रूपवद्वस्तु अवभासयते, एवं यच्चन्द्रमसि यच्चाग्नौ जगदवभासकं तेजस्तन्मामकं विद्धीति विभूतिकथनाय द्वितीयोऽप्यर्थो द्रष्टव्यः । अन्यथा तन्मामकं विद्धीत्येतावत् ब्रूयात् तेजोग्रहणमन्तरेणैवेति भावः ॥ १२ ॥

शं० टी०—यस्माद्यत्नवतामप्यकृतात्मनां मत्प्रसादाभावादात्मसाक्षात्काराभावस्तस्मान्मुमुक्षोर्मत्प्रसादसिद्ध्यै मदुपास्तिरवश्यं कर्तव्या । सर्वत्र मद्बुद्ध्या मदुपास्तिं कुर्वतां रागादिदोषा न भवन्ति । तेन चित्तप्रसादो ज्ञानं च सिध्यतीति बोधयितुं स्वस्य सार्वात्म्यं प्रतिपादयति—**यदिति चतुर्भिः** । आदित्यगतम्—आदित्यस्य बहिरन्तश्च सर्वतो व्याप्य वर्तमानं यत्तेजोऽखिलं जगत् भासयते, तथा यच्चन्द्रमसि तेजः जगद्भासयते, तथा यदग्नौ तेजः जगद्भासयते तत्तेजो मामकं विद्धि । यदग्ने रोहितं रूपमितिन्यायेनाऽऽदित्यादीनां तेजोव्यतिरेकेण पृथक्स्वरूपाभावात्तेजोमात्रत्वमेवेति सिद्धम् । सूर्यचन्द्राग्न्यात्मकं तेजो मामकमित्यत्र राहोः शिर इतिवत् मच्छब्दतेजःशब्दार्थयोरेकत्वमेव तेन सूर्यचन्द्रादयस्त्वहमेव मम विभूतित्वात्तत्र मद्बुद्धिः कर्तव्येति बोधितं भवति ॥ १२ ॥

श्री० टी०—तदेवं न तद्भासयते सूर्य इत्यादिना पारमेश्वरं परं धामोक्तं, तत्प्राप्तानां चापुनरावृत्तिरुक्ता । तत्र च संसारिणोऽभावमाशङ्क्य संसारिस्वरूपं देहादिव्यतिरिक्तं दर्शितम् । इदानीं तदेव पारमेश्वररूपमनन्तशक्तित्वेन निरूपयति—**यदेत्यादिचतुर्भिः** । आदित्यादिषु स्थितं यदनेकप्रकारं तेजो विश्वं प्रकाशयति तत्सर्वं तेजो मदीयमेव जानीहि ॥ १२ ॥

स० टी०—समस्तस्यापि सूर्याद्याः क्षमाः सन्तोऽवभासने ॥ यत्पदं न क्षमन्तेऽद्धा तेऽपि भासयितुं मनाक् ॥ १ ॥ यत्पदं विमलं प्राप्ता नावर्तन्ते मुमुक्षवः ॥ यदज्ञानादमी जीवाः संसरन्ति भवाम्बुधौ ॥२ ॥ तस्येदानीं पदस्यैव सर्वात्मत्वं विभूतिभिः ॥ सर्वस्य व्यवहारस्याप्यास्पदत्वं समासतः ॥ ३ ॥ विवरीतुं चतुर्भिश्च विभूतिं प्राह मापतिः ॥ यदादित्याश्रयं ज्योतिश्चैतन्यात्मकमुज्ज्वलम् ॥ ४ ॥ यच्चन्द्रे यत्स्थितं चाग्नौ तेजो भासयतेऽखिलम् ॥ तत्तेजो वैष्णवं विद्धि मदीयं सर्वभासकम् ॥ ५ ॥ तच्चैतन्यात्मकं ज्योतिर्जङ्गमेषु स्थिरेषु च ॥ समं यद्यपि सर्वेषु तथाप्यर्कादितेजसाम् ॥ ६ ॥ सत्त्वोत्कर्षेण तत्रैवाविस्तरां ज्योतिरैश्वरम् ॥ यथा तुल्येऽपि कुड्यादौ सन्निधाने मुखस्य च ॥ ७ ॥ नाविर्भवति वक्त्रं तद्दर्पणादौ तु निर्मले ॥ स्वच्छत्वतारतम्येनाविर्भवत्येवमेव तत् ॥ ८ ॥ यदादित्यादिगं तेजः सितभास्वरमेव वा ॥ समस्तं रूपवद्वस्तु स्फुटं भासयते जगत् ॥ ९ ॥ मदीयं वैष्णवं तत्त्वं विद्धि ध्येयं मुमुक्षुभिः ॥ विभूतिकथनायैवमर्थो भगवतो मतः ॥ १० ॥ १२ ॥

भा० टी०—यत्पदं सर्वावभासकमादित्यादिकं ज्योतिर्नावभासयते, यत्प्राप्ताश्च मुमुक्षवः पुनः संसाराभिमुखा न निवर्तन्ते यस्य च पदस्यानुविधीयमाना जीवा घटाकाशादयो यथाऽऽकाशस्यांशास्तथांश इवांशा बुद्ध्याादितादात्म्याध्यासेन मृषैवोत्क्रान्त्यादिकं प्राप्नुवन्तीति न तद्भासयते सूर्य इत्यादिनोक्तम् । इदानीं तस्य पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं विवक्षुश्चतुर्भिः श्लोकैर्विभूतिसंक्षेपमाह—**यदिति** । यदादित्यगतं सूर्याश्रयं तेजो दीप्तिः प्रकाशः अखिलं सर्वं जगद्भासयते प्रकाशयति, यत्समस्तावभासकं चन्द्रमसि तेजो वर्तते, यच्चाग्नौ तत्तेजो मामकं मदीयं विद्धि जानीहि । यद्वा ब्रह्मणः सर्वज्ञत्वेन चिद्रूपत्वमत्र विवक्षितम् । तथाचायमर्थः यदादित्यगतं तेजश्चैतन्यात्मकं जोतिः, यच्चन्द्रमसि, यच्चाग्नौ वर्तते तत्तेजो मामकं विद्धि । ननु चैतन्यज्योतिषः सर्वत्राविशेषात् कथमिदं विशेषणं यदादित्यगतमित्यादि, नैष दोषः । चैतन्यज्योतिषः

सर्वत्र तुल्यत्वेऽपि कचिदेव सत्त्वाधिक्यप्रयुक्ताभिव्यक्त्या विशेषणोपपत्तेः । यथा हि लोके तुल्येऽपि मुखसंस्थाने न काष्ठकुड्यादौ मुखमाविर्भवति, आदर्शादौ तु स्वच्छे स्वच्छतरे स्वच्छतमे च तारतम्येनाविर्भवतीति तद्वत् ॥ १२ ॥

प० टी०--अथ न तद्भासयते सूर्यः इत्यादीनां विभूतीनामपि प्रमाणान्तरागोचरस्यात्मनो दर्शकत्वमनभिमतं, किं पुनः शास्त्राभ्यासप्रयत्नस्येति सूचयन् सूर्यादीनां स्वप्रकाश्यत्वं दत्तसामर्थ्यवत्त्वं च निरूपयन्नाह--यदिति । दिवा त्रैलोक्यप्रकाशकमादित्यगतं यत्तेजस्तथा रात्रौ चन्द्रस्य ज्योत्स्नारूपमग्नेर्दीपरूपं यत्तेजस्तन्मामकं मदीयं विद्धि जानीहि । " योऽसावादित्यः पुरुषः सोऽसावहम् " इतिश्रुतेः । तैत्तिरीयकेऽपि--"यास्ते अग्ने सूर्ये रुच उद्यतो दिवमातन्वन्ति रश्मिभिः । ताभिः सर्वाभिरुचे जनाय नस्कृधि" । भाष्यम्--भो अग्ने सर्वेश्वर उद्यतः सदोदितस्य ते तव या रुचो दीप्तयः सूर्ये वर्तमानाः सत्यो रश्मिभिः किरणैर्दिवं स्वर्गमातन्वन्ति व्याप्नुवन्ति, ताभिः सर्वाभिः रुग्भिर्नोऽस्मभ्यं जनाय रुचे दीप्तये कुरु । तद्ब्राह्मणेऽपि " शूषो ह वै वार्ष्णेय आदित्येन समाजगाम " इति । शूषः शोषणशक्तिमांस्तेजोरूपया विभूत्या वार्ष्णेयः कृष्ण आदित्येन समाजगामेति स्पष्टम् ॥ १२ ॥

रा० टी०--अधश्च मूलान्यनुसंततानीति यत्सर्वान्तर्यामित्वरूपं विज्ञानमुक्तं, यच्चोर्ध्वशब्देन सर्वोत्तमत्वमुक्तं, तद्द्वयमध्यायशेषेण प्रपञ्चयति--यदादित्येत्यादिना । तेजः जगत्प्रकाशनशक्तिः मामकं मदीयं मदधीनमित्यर्थः " तमेव भान्तमनुभाति सर्वम् " इत्यादेः । 'अनुकृतेस्तस्य च' इति सूत्रात् ॥ १२ ॥

**गामाविश्य च भूतानि धारयाम्यहमोजसा ॥**
**पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः १३ ॥**

**त० टी०--सर्वजगदाधारभूतायाः पृथिव्या आधारकत्वशक्तिरपि मदीयैवेत्याह--गामाविश्येति । गां पृथ्वीमाविश्य चराचराणि भूतानि ओजसा स्वाभाविकबलेनाहमेव धारयामि । तथा रसात्मकः अमृतमयः सोमो भूत्वा अहमेव सर्वा ओषधीः पुष्णामि ॥ १३ ॥**

म० टी०--किंच--गामिति । गां पृथिवीं पृथिवीदेवतारूपेणाविश्य ओजसा निजेन बलेन पृथिवीं धूलिमुष्टितुल्यां दृढीकृत्य भूतानि पृथिव्याधेयानि वस्तून्यहमेव धारयामि । अन्यथा पृथीवी सिकतामुष्टिवद्विशीर्येताधो निमज्जेद्वा " येन द्यौरुग्रा पृथिवी च दृह्ळा " इति मन्त्रवर्णात् । " स दाधार पृथिवीम् " इति च हिरण्यगर्भभावापन्नं भगवन्तमेवाह । किं च रसात्मकः सर्वरसस्वभावः सोमो भूत्वा ओषधीः सर्वा व्रीहियवाद्याः पृथिव्यां जाताः अहमेव पुष्णामि पुष्टिमतीः रसस्वादुमतीश्च करोमि ॥ १३ ॥

शं० टी०--किंच--गामिति । अहमीश्वर एवौजसाऽपरिमितमायाशक्तिबलेन गां भूमिं जलं स्वस्नेहसंभावितचिक्कणत्वबलेन भित्तिमिवाविश्य सर्वतो व्याप्य भूतानि स्थावरजङ्गमानि सर्वाणि धारयामि । यथा वायुः स्वशक्त्या मेघमण्डलं प्रविश्य जलानि धारयति तद्वदित्यर्थः । यद्यप्यतीन्द्रियत्वाद्वायुर्मेघमण्डले न दृश्यते तथापि योगिदृष्ट्या युक्त्या च विचार्यमाणे वायुव्यतिरेकेण मेघस्य पृथक्स्वरूपं न विद्यते, एवमयोग्यादौ व्याप्यस्य व्यापकेऽन्तर्भावदर्शनं च तद्वच्छक्तिद्वारा मद्व्याप्ताया भूमेर्मद्व्यतिरेकेण पृथक् स्वरूपं न विद्यते, ततो भूम्यां सर्वत्र मद्बुद्धिः कर्तव्येत्यर्थः । रसात्मकोऽमृतरसात्मकः पयःस्वरूपो वा यः सोमः स एव भूत्वा चन्द्रस्वरूपेण स्थितः सन्नहं व्रीहियवगोधूमाद्या वृक्षलतातृणगुल्माद्याश्च सर्वौषधीः पुष्णामि पुष्टिमतीः करोमीत्यर्थः । एतेन चन्द्रोऽपि चन्द्रामृतरसपुष्टाः सर्वा ओषधयोऽपि मम विभूतिस्तत्र मद्बुद्धिः कर्तव्येति सूचितं भवति ॥ १३ ॥

श्री० टी०–किंच–गामाविश्येति । गां पृथ्वीमोजसा बलेनाधिष्ठाय अहमेव चराचराणि भूतानि धारयामि । अहमेव रसमयः सोमो भूत्वा व्रीह्याद्योषधीः सर्वाः संवर्धयामि ॥ १३ ॥

स० टी०–पृथ्वीमाविश्य नैजेन बलेनाखिलधारिणा ॥ धूलिमुष्टिसमां पृथ्वीं दृढीकृत्याहमीश्वरः ॥१॥ पृथ्व्याधेयानि वस्तूनि धारयामि समन्ततः ॥ अन्यथा सिकतामुष्टिवद्विशीर्येत भूरियम् ॥ २ ॥ अतो मद्बलमाविष्टं पृथिव्यां येन भूरियम् ॥ गुर्व्यधो न पतत्येव न विदीर्येत खण्डशः ॥ ३ ॥ अतो महीं प्रविश्यैव भगवान्देवतात्मना ॥ बिभर्तीत्यत्र मानं हि स दाधारेति च श्रुतिः ॥ ४ ॥ यवाद्या ओषधीः सर्वा मह्यां जाता अहं हरिः ॥ रसस्वभावः सोमोऽहं भूत्वा पीयूषमण्डलः ॥ ५ ॥ रसस्वादुमतीस्ताश्च करोम्यखिलपालकः ॥ ६ ॥ १३ ॥

भा० टी०–किं च–गामिति । यद्बलं कामरागविवर्जितमैश्वरं जगद्विधारणाय पृथिव्यामाविष्टं, येन गुर्वी पृथ्वी नाधः पतति, नापि सिकतामुष्टिवज्जलोपरिस्थितापि विशीर्यते । तथाच मन्त्रवर्णः–"येन द्यौरुग्रा पृथिवी च दृढा" इति "स दाधार पृथिवीम्" इति च । तेनौजसा बलेन गां पृथिवीमाविश्य प्रविश्य भूतानि चराचराणि धारयामि । किंच रसात्मकः सर्वरसस्वभावः सोमो भूत्वा स्वात्मरसावेशेन पृथिव्या जाता ओषधीः सर्वाः व्रीहियवाद्याः पुष्णामि पुष्टिमती रसस्वादवतीश्च करोमि ॥ १३ ॥

प० टी०–अथ चन्द्राग्न्योरन्नान्नादस्वरूपेण स्वदत्तसामर्थ्यमनुवदन्त्याः सामवेदश्रुतेस्तात्पर्यमाह–गामाविश्येति द्वाभ्याम् । अहं रसात्मको रसरूपया विभूत्या सोमो भूत्वा गां पृथिवीमाविश्य सर्वा ओषधीर्धान्यफलवतीः पुष्णामि वर्धयामि । तत ओजसान्नादिसामर्थ्येन भूतानि धारयामि पोषयामि "ओषधीभ्योऽन्नमन्नात्पुरुषः" इति श्रुतेः ॥ १३ ॥

रा० टी०–अहमिति । अहं गां भूमिमाविश्य ओजसा स्वशक्त्या भूतानि धारयामि । अमृतरसात्मकः सौम्यत्वात्सोमनामा सोमगः सन्सर्वा ओषधीः सस्यादीनि पुष्णामि वर्धयामि च ॥ १३ ॥

**अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ॥**
**प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥**

त० टी०–किंच–अहमिति । अहं सर्वेश्वरो वैश्वानरो जाठराग्निर्भूत्वा प्राणिनां देहमाश्रितः सन् तैर्भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि । "अयमग्निर्वैश्वानरोऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इति श्रुतेः । तत्र यद्दन्तैश्चूर्णीकृत्य भक्ष्यतेऽपूपमोदकादि तद्भक्ष्यं, यत्तु दन्तावघातं विनैव जिह्वयाऽवलोड्य निगीर्यते यवागूसक्तुपायसादि तद्भोज्यं, यच्च केवलं जिह्वया रसास्वादेन निगीर्यते तद्द्रवीभूतं द्रव्यं गुडमध्वादि तल्लेह्यं, यत्तु दन्तैर्निष्पीड्य रसांशं निगीर्यावशिष्टं त्वगष्ट्यादि त्यज्यते तच्चोष्यं, यथाऽऽम्रेक्षुदण्डादीति ॥ १४ ॥

म० टी०–किंच–अहमिति । अहमीश्वर एव वैश्वानरो जाठरोऽग्निर्भूत्वा "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इत्यादिश्रुतिप्रतिपादितः सन् प्राणिनां सर्वेषां देहमाश्रितः अन्तः प्रविष्टः प्राणापानाभ्यां तदुद्दीपकाभ्यां संयुक्तः संधुक्षितः सन् पचामि पाक्तिं नयामि प्राणिभिर्भुक्तमन्नं चतुर्विधं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति । तत्र यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यतेऽपूपादि तद्भक्ष्यं, चर्व्यमिति चोच्यते । यत्तु केवलं जिह्वया विलोड्य निगीर्यते सूपौदनादि तद्भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन निगीर्यते किंचिद्द्रवीभूतगुडरसालाशिखरिण्यादि तल्लेह्यम् । यत्तु दन्तैर्निष्पीड्य रसांशं निगीर्यावशिष्टं त्यज्यते यथेक्षुदण्डादि तच्चोष्यमिति भेदः । भोक्ता यः सोऽग्निर्वैश्वानरो यद्भोज्यमन्नं स सोमस्तदेतदुभयमग्नीषोमौ सर्वमिति ध्यायतोऽन्नदोषलेपो न भवतीत्यपि द्रष्टव्यम् ॥ १४ ॥

**शं० टी०–किंच–अहमिति ।** "अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इति श्रुत्युक्तो यो जाठरोऽग्निः स एव भूत्वाहं वैश्वानररूपेण प्राणिनां सर्वेषां देहमाश्रितः "तस्य मध्ये महानग्निर्विश्वार्चिर्विश्वतोमुखः" इति "नाभ्यामुपरि तिष्ठति" इति च श्रवणात्प्राणिनामुदरे स्थित्वा प्राणापानसमायुक्तः प्राणापानाभ्यामुच्छ्वासनिश्वासरूपाभ्यां पाकसहकारिभ्यां प्रज्वाल्यमानः सन् भक्ष्यभोज्यलेह्यचोष्यभेदेन चतुर्विधं प्राणिभिर्भुक्तमन्नं पचामि । यद्वा प्राणिनामिति सामान्योक्त्या सर्वैरपि प्राणवद्भिर्भुज्यमानमन्नम् । अद्यत इत्यन्नं पार्थिवमाप्यं तैजसं वायव्यं चैवंरूपेण चतुर्विधं पचामि । मनुष्यादीनां पार्थिवं, चातकादीनामाप्यं, वालखिल्यादीनां तैजसं, सर्पादीनां वायव्यं, एवंलक्षणं तत्तत्प्राणिजठरे स्थित्वा तैरशितमन्नं पक्वं करोमीत्यर्थः । एतेनाग्निस्वरूपेण मयाऽऽपादतलमस्तकं व्याप्तानां प्राणिनां मद्व्यतिरेकेण पृथक्स्वरूपाभावात्तेषु मया व्याप्तेषु प्राणिषु सर्वत्र मद्बुद्धिः कर्तव्येति सूचितं भवति ॥ १४ ॥

**श्री० टी०–किंच–अहमिति ।** अहं वैश्वानरो जाठरो भूत्वा प्राणिनां देहस्यान्तः प्रविश्य प्राणापानाभ्यां तदुद्दीपकाभ्यां सहितः प्राणिभिर्भुक्तं भक्ष्यं भोज्यं लेह्यं चोष्यं चेति चतुर्विधमन्नं पचामि । तत्र यद्दन्तैरवखण्ड्यावखण्ड्य भक्ष्यतेऽपूपादि तद्भक्ष्यम् । यत्तु केवलं जिह्वया विलोड्य निगीर्यते पायसादि तद्भोज्यम् । यत्तु जिह्वायां निक्षिप्य रसास्वादेन क्रमशो निगीर्यते द्रवीभूतं गुडादि तल्लेह्यम् । यत्तु दंष्ट्रादिभिः निष्पीड्य रसांशं निगीर्यावशिष्टं त्यज्यते इक्षुदण्डादि तच्चोष्यमिति ( चतुर्विध )भेदः ॥ १४ ॥

**स० टी०–**जाठरोऽग्निरहं भूत्वा सर्वेषां प्राणधारिणाम् ॥ देहमन्तः प्रविष्टश्च तदुद्दीपकभावतः ॥ १ ॥ प्राणापानाख्यवायुभ्यां संयुक्तः संश्चतुर्विधम् ॥ भुक्तं प्राणिभिरन्नं तत्पाकं संपादयाम्यजः ॥ २ ॥ यद्दन्तैरवखण्ड्यान्नं भक्ष्यते भक्ष्यमेव तत् ॥ केवलं जिह्वया यत्तु विलोड्यान्नं निगीर्यते ॥ ३ ॥ सूपौदनादि तद्भोज्यं यत्तु निक्षिप्य जिह्वया ॥ निगीर्यते द्रवीभूतं रसास्वादेन खाण्डवम् ॥ ४ ॥ तल्लेह्यं शिखरिण्यादि रसालादि तथैव च ॥ यत्तु दन्तैः सुनिष्पीड्य रसांशं विनिगीर्य च ॥ ५ ॥ त्यज्यतेऽप्यवशिष्टं तच्चोष्यं चेति चतुर्विधम् ॥ भोक्ता वैश्वानरो वह्निर्भोज्यमन्नं च चन्द्रमाः ॥ ६ ॥ अग्नीषोमौ तदुभयं सर्वमित्येव शाश्वतः ॥ ध्यायतोऽन्नगतैर्दोषैर्न लेपो भवतीत्यपि ॥ ७ ॥ श्रीमद्भगवतो वाक्याद्द्रष्टव्यमिति मङ्गलम् ॥ ८ ॥ १४ ॥

**भा० टी०–किंच–अहमिति ।** अहं परमात्मा वैश्वानर उदरस्थोऽग्निर्भूत्वा प्राणिनां प्राणवतां देहमाश्रितः शरीरं प्रविष्टः प्राणापानाभ्यामुद्दीपकाभ्यां समायुक्तः भोज्यं भक्ष्यं चोष्यं लेह्यं चेति चतुर्विधमन्नं पचामि पक्तिं करोमि । तत्र यत्पायसादि केवलं जिह्वया विलोड्य निगीर्यते तत् भोज्यं, यत्त्वपूपादि दन्तैरवखण्ड्यावखण्ड्य भक्ष्यते तद्भक्ष्यं, यत्त्विक्षुदण्डादि दंष्ट्राभिर्निष्पीड्य सारांशं निगीर्यावशिष्टं त्यज्यते तच्चोष्यं, यद्द्रवीभूतं गुडादि जिह्वायां निक्षिप्य रसास्वादितं निगीर्यते तल्लेह्यम् । तथाच श्रुतिः–"अयमग्निर्वैश्वानरो योऽयमन्तः पुरुषे येनेदमन्नं पच्यते" इत्याद्या । भोक्ता वैश्वानरोऽग्निरग्नेर्भोज्यमन्नं सोमशब्देनोदितमेवं भोक्तृभोज्यरूपं सर्वं जगदग्नीषोमात्मना भुक्तिकाले ध्यायतो भोक्तुरन्नकृतो दोषो न भवतीति प्रासङ्गिकं सफलं ध्यानं द्रष्टव्यम् ॥ १४ ॥

**प० टी०–**अथाग्नौ दत्तं सामर्थ्यमाह–**अहमिति ।** प्राणिनां सर्वदेहिनां देहमाश्रितो जाठरो वैश्वानरोऽग्निर्भूत्वा प्राणापानाभ्यां भस्त्रावायुभ्यामिव समायुक्तो दीप्तीकृतः संश्चतुर्विधमन्नं लेह्यपेयचोष्यभक्ष्यादिकं पचामि पाकं नयामि । श्रुतिरपि सामवेदे–" हाउ ३ अहमन्नं ३ अहमन्नादः ३ अहं विधास्य ३ " इत्यादिः । भाष्यम्–तत्र हाउ स्तोमाक्षरम् । तदुक्तम्–'औ हो इति च संबुद्धौ विकल्पे हाउ कीर्तितम्' इति । अत्र मनुष्यदेवात्मविभागेनान्नत्रयमन्नादत्रयमस्तीति त्रिरावृत्त्या विकल्पार्थौ निरूपितः, विधास्यो धर्ता ।

अथैतदर्थज्ञापिका शातपथी श्रुतिरस्ति—"अथ यत्किं चेदमार्द्रं तद्रेतसोऽसृजत तदु सोम एतद्वा इदं सर्वमन्नं चैवान्नादश्च सोम एवान्नमग्निरन्नादः" इति। भाष्यम्—सृष्टिक्रमकथनानन्तरं यत्किंचेदं सर्वमार्द्रं शुक्रशोणितोद्भवं प्राणिजातं तद्रेतसः शुक्रादसृजत सृष्टवान्। अथ रेतसः स्वरूपमाह—तदिति। तदु तदेतावत्सर्वं रेतः सोमे वर्तते एवं रेतसः कारणमन्नमन्नादश्च भवति। तथा च सोम एवान्नमग्निरन्नादश्च। तैत्तिरीयकेऽपि—"यः कामयेतान्नवानन्नादः स्यामित्यग्निनैवान्नमवरुन्धे सोमेनान्नाद्यमन्नवानेवान्नादो भवति" इति। भाष्यम्—यः पुरुषोऽहमन्नवानन्नादश्च स्यामिति कामयेत सोऽग्निनाग्न्युपासनयान्नमवरुन्धे आक्रमति पाकं नयति, सोमेन चान्नाद्यं प्राप्नोत्येवमन्नवानेवान्नादो भवतीत्यर्थः। तथा भृगुवल्ल्यामपि—"अथैतत्साम गायन्नास्ते" इत्येतत्सर्वं श्रुतिरहस्यं भगवतैव प्रकटीकृतम् ॥ १४ ॥

रा० टी०—किंच—अहमिति। अहं विश्वनरसंबन्धितया वैश्वानरनामा जाठरवैश्वानराग्निस्थः सन् प्राणिनां देहमाश्रितः प्राणापानाभ्यां मुख्यप्राणरूपाभ्यां सम्यग्युक्तः भक्ष्यभोज्यलेह्यपेयभेदेन चतुर्विधमन्नं पचामि जीर्णं करोमि ॥ १४ ॥

**सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च ॥**
**वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥ १५ ॥**

त० टी०—एवं जगद्यात्रानिर्वाहकादित्यचन्द्रादीनां स्वविभूतित्वमभिधायेदानीं सर्वचेतनाचेतनवस्तुजातस्य भगवदायत्तत्वं स्वस्य च स्वतन्त्रत्वं सर्वधीप्रवर्तकत्वं सर्ववेदवेद्यत्वमाचार्यत्वं चाह—सर्वस्य चेति। सर्वस्य ब्रह्मादिप्राणिमात्रस्य हृदि सम्यगन्तर्यामिरूपेण निविष्टः, अतो मत्त एव हेतोः सर्वस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति। ज्ञानं विषयेन्द्रियसंयोगजो यथावस्तुविषयानुभवः। अपोहनं च स्मृतिज्ञानयोः प्रमोषो मत्त एव भवति। वेदैश्च सर्वैरहमेव वेद्यः। इन्द्राग्निसूर्यमित्रावरुणवाय्वादिप्रतिपादकैरपि वेदैरहमेव वेद्यः मम सर्वात्मत्वात्। तथा च श्रुतयः—"सर्वे वेदा यत्पदमामनन्ति नामानि सर्वाणि यमाविशन्ति सर्वे वेदा यत्रैकीभवन्ति" इत्याद्याः। अत एवोक्तं महाभारते 'एतमेके वदन्त्यग्निं मरुतोऽन्ये प्रजापतिम्। इन्द्रमेके परे प्राणमपरे ब्रह्म शाश्वतम् ॥ ज्योतींषि शुक्लानि च यानि लोके त्रयो लोका लोकपालास्त्रयी च। त्रयोऽग्नयश्चाहुतयश्च पञ्च सर्वे देवा देवकीपुत्र एव ॥ नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती। वासुदेवपरा वेदा वासुदेवपरा मखाः। वेदे रामायणे चैव पुराणे भारते तथा। आदावन्ते च मध्ये च हरिः सर्वत्र गीयते' इत्यादिवाक्यान्यप्यनुसन्धेयानि। वेदान्तकृत् वेदानां नानाविधार्थप्रतिपादनपराणां परस्परं विरुद्धार्थतया संशये जाते अन्तकृत् अविरोधप्रकारेण निर्णयकर्ता सर्वगुरुर्वेदान्तसंप्रदायप्रवर्तकोऽहमेव। "नमो वेदान्तवेद्याय गुरवे बुद्धिसाक्षिणे" इति श्रुतेः। वेदविच्चाहमेव। सर्ववेदाविरुद्धार्थविदहमेव। नतु मत्तोऽन्यः स्वतन्त्रः कश्चिज्ज्ञातुं समर्थः। मन्निर्णीतार्थं मत्प्रसादान्मदभिधायिनं वेदं यो वेद सोऽपि वेदवित्। अतोऽन्यथा वेदार्थं यो वक्ति न स वेदविदिति भावः ॥ १५ ॥

म० टी०—किंच—सर्वस्येति। सर्वस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्याहमात्मा सन् हृदि बुद्धौ संनिविष्टः "स एष इह प्रविष्टः" इति श्रुतेः। "अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि" इति च। अतो मत्त आत्मन एव हेतोः प्राणिजातस्य यथानुरूपं स्मृतिः। एतज्जन्मनि पूर्वानुभूतार्थविषया-वृत्तिर्योगिनां च जन्मान्तरानुभूतार्थविषयापि। तथा मत्त एव ज्ञानं विषयेन्द्रियसंयोगजं भवति। योगिनां च देशकालविप्रकृष्टविषयमपि। एवं कामक्रोधशोकादिव्याकुलचेतसामपोहनं च स्मृतिज्ञानयोरपायश्च

मत्त एव भवति। एवं स्वस्य जीवरूपतामुक्त्वा ब्रह्मरूपतामाह—वेदैश्च सर्वैरिन्द्रादिदेवताप्रकाशकैरपि अहमेव वेद्यः सर्वात्मत्वात् " इन्द्रं मित्रं वरुणमग्निमाहुरथो दिव्यः स सुपर्णो गरुत्मान्। एकं सद्विप्रा बहुधा वदन्त्यग्निं यमं मातरिश्वानमाहुः " इति मन्त्रवर्णात् " एष उ ह्येव सर्वे देवाः " इति च श्रुतेः। वेदान्तकृत् वेदान्तार्थसंप्रदायप्रवर्तको वेदव्यासादिरूपेण। न केवलमेतावदेव वेदविदेव चाहं कर्मकाण्डोपासनाकाण्डज्ञानकाण्डात्मकमन्त्रब्राह्मणरूपसर्ववेदार्थविच्चाहमेव। अतः साधूक्तं ब्रह्मणो हि प्रतिष्ठाहमित्यादि ॥ १५ ॥

शं० टी०—एवं जाठराग्निस्वरूपेणेश्वरेण व्याप्तानां सर्वप्राणिनामीश्वरविभूतित्वेनेश्वरमात्रत्वे सिद्धेऽपि भ्रमप्रमादाभ्यामप्ययं शिष्टोऽयं भ्रष्टोऽयं शूद्रोऽयं पुल्कस इति भेदबुद्धिरीश्वरोपासकैर्मुमुक्षुभिर्न कर्तव्येति तेषां सर्वत्र परमेश्वरत्वबुद्धिदार्ढ्याय पुनरपि सर्वेषां प्राणिनां स्वव्याप्त्या स्वमात्रत्वं स्वोपास्त्या शुद्धात्मनां ज्ञानं तद्विपरीतानामज्ञानं च मत्त एव सिध्यतीति प्रतिपादयति—**सर्वस्येति**। ममैवांशो जीवलोके जीवभूत इति ईश्वरो जीवकलया प्रविष्ट इत्युक्तरीत्या सर्वस्य च ब्रह्मादिस्तम्बान्तस्य प्राणिजातस्य। चकारः संनिवेशस्य सर्वसमत्वसूचनार्थः। हृदि बुद्धिगुहायामहं परमात्मा क्षेत्रज्ञरूपेण संनिविष्टः संनिहितो भूत्वा तिष्ठाम्यतः प्राणिवर्गः सर्वो ह्यहमेवेत्यर्थः। एतेन भेददृष्टेरनवकाश इति सूचितम्। एवं सर्वं परमेश्वर एवेति सर्वत्र तद्बुद्ध्या परमेश्वरोपास्तिं कुर्वतां तामकुर्वतां च फलमाह—मत्त इति। मत्तः परमेश्वरादेव मदुपास्त्या शुद्धात्मनां शास्त्राचार्यानुग्रहात्स्मृतिः 'स आत्मा तत्त्वमसि' इति श्रीगुरुभिर्यो निर्विशेषस्त्रिविधपरिच्छेदशून्य आत्मा त्वमिति बोधितः स एवाहमिति तस्मिन्नेवात्मनि स्वात्मत्वस्मृतिः, सर्वमिदमहं च ब्रह्मैवेति सर्वस्य स्वस्य च ब्रह्ममात्रत्वज्ञानं च भवति। मदुपास्तिविहीनानां मलिनबुद्धीनां रागादिदोषदुष्टानां मत्त एवेश्वरात्तदपोहनं तयोः स्मृतिज्ञानयोरपोहनमसंभवश्च भवति। किंच वेदान्तकृत् " यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै " इति श्रवणाद्ब्रह्मणे वेदान्तानुग्रहकर्ताहमेव। यद्वा लोके शिष्येभ्य आचार्यरूपेण वेदान्तार्थप्रकाशनकर्ताहमेव। वेदवित् वेदार्थं ब्रह्म निर्विशेषं मदनुग्रहाद्गुर्वनुग्रहाच्च यः स्वात्मना वेत्ति स वेदवित् ब्रह्मवेत्ताहमेव। सर्वस्य चाहं हृदि सन्निविष्ट इति सर्वस्य प्राणिमात्रस्यात्मव्याप्त्या स्वमात्रत्वे सिद्धे वेदान्तकृद्वेदविदेव चाहमिति विशेषोक्तिर्मूढानाममूढानां च वेदान्तोपदेष्टरि गुरौ च ब्रह्मविद्यपि च परमेश्वरत्वबुद्धिरवश्यं कर्तव्येति बोधनार्था। यदादित्यगतं तेज इत्यादिना मुमुक्षूपासार्थं स्वविभूतौ प्रतिपादितायां सत्यामिदमेव परमेश्वरस्य पारमार्थिकं रूपमिति प्राते स्वयाथात्म्यं बोधयितुमाह—**वेदैरिति**। 'सर्वे वेदा यत्पदमामनन्ति' इति न्यायेन सर्वैर्ऋगादिभिर्वेदान्तैर्वेद्यः " सत्यं ज्ञानमनन्तं ब्रह्म। विज्ञानमानन्दं ब्रह्म। आनन्दो ब्रह्म। तदेतद्ब्रह्मापूर्वमस्थूलमनण्वह्रस्वमप्राणममुखमश्रोत्रमवागमनोऽतेजस्कमचक्षुष्कम्। अनामगोत्रम्। अशब्दमस्पर्शमरूपमव्ययम्। निष्कलं निष्क्रियं शान्तम्। नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रं शान्तं चतुर्थं मन्यन्ते स आत्मा स विज्ञेयः। तत्त्वमसीत्यादिभिर्ज्ञातव्यो यो निर्विशेषनित्यशुद्धबुद्धमुक्तस्वभावः सच्चिदानन्दैकरसोऽद्वितीयः परमात्मा स एवाहं परमार्थतो नैवैष उक्तलक्षणो मायोपाधिक इत्यर्थः ॥ १५ ॥

श्री० टी०—किंच—**सर्वस्येति**। सर्वस्य प्राणिजातस्य हृदि सम्यगन्तर्यामिरूपेण प्रविष्टोऽहम्। अतश्च मत्त एव हेतोः प्राणिमात्रस्य पूर्वानुभूतार्थविषया स्मृतिर्भवति। ज्ञानं च विषयेन्द्रियसंयोगजं भवति। अपोहनं च तयोः प्रमोषो भवति। वेदैश्च सर्वैस्तत्तद्देवतादिरूपेणाहमेव वेद्यः। वेदान्तकृत् तत्संप्रदायप्रवर्तकश्च ज्ञानदो गुरुरहमित्यर्थः। वेदविदेव च वेदार्थविदहमेव ॥ १५ ॥

स० टी०—ब्रह्मादिस्थावरान्तस्य प्राणिजातस्य सर्वतः ॥ आत्मैव सन्प्रविष्टोऽहं बुद्धौ सर्वावभासकः ॥ १ ॥ मत्त आत्मन एवातः प्राणिजातस्य च स्मृतिः ॥ एतज्जन्मनि पूर्वानुभूतार्थविषया च सा

॥ २ ॥ जन्मान्तरानुभूतार्थविषयाप्यस्ति योगिनाम् ॥ विषयेन्द्रियसंयोगजन्यं ज्ञानं तथाऽऽत्मनः ॥ ३ ॥ दिक्कालविप्रकृष्टैकविषयं चापि योगिनाम् ॥ मत्त एव तयोः कामक्रोधाद्याकुलचेतसाम् ॥ ४ ॥ पापकर्मानुरोधेन विनाशः स्मृतिबोधयोः ॥ उक्त्वैवं जीवभावेन प्रविष्टं सर्वमानसे ॥ ५ ॥ आत्मानं ब्रह्मरूपेण दर्शयत्यधुना हरिः ॥ वेदैः सर्वैरपीन्द्रादिदेवताभासकैरपि ॥ ६ ॥ अहमेवाखिलात्मत्वाद्वेद्यः सर्वेश्वरेश्वरः ॥ एष उह्येव सर्वे वै देवा इत्यादिवेदतः ॥ ७ ॥ वेदव्यासादिरूपेण वेदान्तार्थप्रवर्तकः ॥ संप्रदायात्मना तद्वद्वेदवेत्ताहमेव च ॥ ८ ॥ काण्डत्रयात्मकं वेदं सरहस्यं समन्त्रकम् ॥ अर्थतः सर्ववित्त्वाच्च सम्यग्वेद्म्यहमेव च ॥ ९ ॥ ब्रह्मणो हि प्रतिष्ठाहमित्यादीतः समीरितम् ॥ १० ॥ १५ ॥

भा० टी०—एवं तत्पदस्य सर्वात्मत्वं सर्वव्यवहारास्पदत्वं विवक्षुर्विभूतिवर्णनमुसंहरन्संकोचं परित्यजति। सर्वस्य ब्रह्मादिस्थावरान्तस्य प्राणिजातस्य हृदि सन्निविष्टः जीवात्मनान्तर्यामितया च बुद्धौ सन्निविष्टत्वं बुद्धितादाम्यापन्नत्वं तद्गुणदोषाणामशेषेण द्रष्टृत्वं च। "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि। यो विज्ञाने तिष्ठन्‌....विज्ञानमन्तरः" इत्यादि श्रुतेरतो बुद्धौ चिदाभासरूपेण स्थितत्वात्, तन्मध्यस्थगुणदोषद्रष्टृत्वाच्च। मत्तः आत्मनः सर्वप्राणिनां स्मृतिर्जन्मान्तरादावनुभूतस्य परामर्शः, देशकालस्वभावविप्रकृष्टस्याप्यनुभवो ज्ञानं तदपोहनं च यथा पुण्यकर्मणा पुण्यकर्मानुरोधेन ज्ञानस्मृती भवतः, तथा पापकर्मणां पापकर्मानुरूपेण स्मृतिज्ञानयोरपोहनमपगमनं च तत्सर्वं कर्माध्यक्षात् मत्त एव भवतीत्यर्थः। अतः कारणात्सर्वैर्वेदैः कर्मकाण्डादिलक्षणैश्चकारात्स्मृतीतिहासपुराणादिभिश्चाहमेव परमात्मा सर्वरूपो वेद्यो वेदितव्योऽहमेव वेदान्तकृत् वेदान्तार्थसंप्रदायकृत् सर्ववेदार्थविच्चाहमेव ॥ १५ ॥

प० टी०—अथ न केवलमन्नान्नादिविभूतिरूपेण देहमात्रे तिष्ठामि किं तु साक्षित्वादपीत्याह—सर्वस्येति। अहं सर्वस्य प्राणिजातस्य हृद्याकाशे संनिविष्टोऽन्तर्यामित्वेन प्रविष्टः। कुतो ज्ञातमित्याह—मत्त इति। यतो मत्तः सकाशात्पूर्वानुभूतार्थविषया स्मृतिर्भवति, ततो ज्ञानं विषयेन्द्रियसंयोगजं वर्तमानमपोहनं च तयोः प्रमोषः, अथोपसमीपे ऊह्यते तर्क्यते यत्पूर्वं दृष्टमासीत्तदेवेदमित्याकारेण। अथैतदनुभवरूपज्ञानाभावेऽन्यमुपायमाह—वेदैरिति। सर्ववेदैः संहिताब्राह्मणारण्यकरूपैरहमेवातद्व्यावृत्त्या वेद्यो ज्ञातव्योऽस्म्येवकारेण क्षुद्रदेवताव्युदासः। परं तु न साक्षात्कर्तव्य इत्याह—वेदान्तकृदिति। वेदान्तानुपनिषदः करोतीति वेदान्तकृद्। उप समीपेऽर्वागेव निषीदन्ति पर्यवस्यन्तीत्युपनिषदस्तदेव कथयति—नेति नेति। न ह्यस्मात्परमस्तीत्यादिवाक्यैस्तथा च वेदान्तेष्वहमेव निमित्तीभूत इत्यर्थः। अथैतद्वेदवाक्योक्तपरमरहस्योपदेष्टा परमगुरुरहमेवास्मीत्याह—वेदविदिति। यद्वाहमेव वेदविन्न तु वेदो मां वेत्ति। "येनेदं सर्वं विजानाति तं केन विजानीयाद्" इति श्रुतेः ॥ १५ ॥

रा० टी०—किंच सर्वस्य हृदि सन्निविष्टोऽहम्। मत्त एव च स्मृतिः अनुभवरूपं ज्ञानं अपोहनं विपर्ययश्च भवति। अहमेव परममुख्यवृत्त्या सर्वैश्च वेदैः वेद्यः। वेदान्तकृद्वेदानामन्तो निर्णयो यस्मात्स वेदान्तो ब्रह्मसूत्रसन्दर्भः। तस्य व्यासरूपेण कर्ता वेदवित्तत्त्वतो वेदार्थज्ञानवानहमेवेत्यर्थः। मां विधत्तेऽभिधत्ते मामित्यादेः ॥ १५ ॥

**द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ॥**
**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥**

त० टी०—अहमेव वेदवित् वेदान्तकृच्च न मत्तोऽन्यः कश्चिदतोऽहमेव सर्ववेदवेदान्तसारं बच्मि—द्वाविमाविति त्रिभिः। इमौ द्वौ पुरुषौ लोके जगति। ज्ञेयाविति शेषः। इमौ कौ? क्षरश्चाक्षर

एव चेति । तावेवार्थतो व्याचष्टे—क्षरः सर्वाणीति । सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि जडत्वात्परिणामित्वात् क्षरः पुरुषो नश्वरः । अन्नमयः पुरुषश्चेतनाधिष्ठितो देहः क्षरशब्दार्थः । एकवचनं चात्र प्राकृतत्वाविशेषाज्जात्यभिप्रायकम् । अत एव क्षरः सर्वाणि भूतानीति विवृतम् । कूटस्थः कूटे प्रकृतिकार्यभूतशरीरसमुदाये स्थितोऽपि परिणामनाशरहितो नित्यः कूटस्थः पुरुषः अक्षरशब्दवाच्य इत्यर्थः । अत्राप्येकवचनं स्वयं ज्योतीरूपत्वेन सामान्याभिप्रायकमेव । 'आचार्यप्रोक्ता या जातिः सा नित्या साऽजराऽमरा' इति सनत्सुजातोक्तेः ॥ १६ ॥

**म० टी०**—एवं सोपाधिकमात्मानमुक्त्वा क्षराक्षरशब्दवाच्यकार्यकारणोपाधिद्वयवियोगेन निरुपाधिकं शुद्धमात्मानं प्रतिपादयति कृपया भगवानर्जुनाय त्रिभिः श्लोकैः—द्वाविति । द्वाविमौ पृथग्राशीकृतौ पुरुषौ पुरुषोपाधित्वेन पुरुषशब्दव्यपदेश्यौ लोके संसारे । कौ तावित्याह—क्षरश्चाक्षर एव च । क्षरतीति क्षरो विनाशी कार्यराशिरेकः पुरुषः । न क्षरतीत्यक्षरो विनाशरहितः । क्षराख्यस्य पुरुषस्योत्पत्तिबीजं भगवतो मायाशक्तिर्द्वितीयः पुरुषः । तौ पुरुषौ व्याचष्टे स्वयमेव भगवान्—क्षरः सर्वाणि भूतानि समस्तं कार्यजातमित्यर्थः । कूटस्थः कूटो यथार्थवस्त्वाच्छादनेनायथार्थवस्तुप्रकाशनं वञ्चनं मायेत्यनर्थान्तरम् । तेनावरणविक्षेपशक्तिद्वयरूपेण स्थितः कूटस्थः भगवान्मायाशक्तिरूपः कारणोपाधिः संसारबीजत्वेनानन्त्यादक्षर उच्यते । केचित्तु क्षरशब्देनाचेतनवर्गमुक्त्वा कूटस्थोऽक्षर उच्यत इत्यनेन जीवमाहुः । तन्न सम्यक् । क्षेत्रज्ञस्यैवेह पुरुषोत्तमत्वेन प्रतिपाद्यत्वात् । तस्मात् क्षराक्षरशब्दाभ्यां कार्यकारणोपाधी उभावपि जडाविवोच्येते इत्येव युक्तम् ॥ १६ ॥

**शं० टी०**—विचक्षणानां युक्तिकुशलानां सूक्ष्मबुद्धीनामेव मुमुक्षूणां शुद्धात्मनां विवेकवैराग्यसिद्धये संसारवृक्षत्वेन वर्णयित्वा, तदारूढानामविवेकिनामविरक्तानां मूढानां पतनं विना न कदापि च मोक्षफलं सिध्यतीत्यतो विवेकोत्थितवैराग्यखड्गेनैनं वृक्षं छित्वा, सदसद्विविच्य परं तत्त्वं ज्ञातव्यमिति तज्ज्ञाने प्रवृत्तिसिद्धये ब्रह्मविदां ब्रह्मप्राप्तिं तत्प्राप्तिसाधनं तत्फलं च निरूप्याधुना तेषां ज्ञातव्यस्य ब्रह्मणः स्वरूपमतन्निरासपूर्वकं बोधयति त्रिभिः । तत्राद्येन परस्य ब्रह्मणः पुरुषोत्तमाख्यस्य यदपेक्ष्य पुरुषोत्तमत्वं तौ पुरुषौ प्रकृतितत्कार्यलक्षणावुपाधी निर्दिशति । यदपवादेन ब्रह्मणोऽसंसारित्वं निर्विशेषत्वं शुद्धत्वं नित्यमुक्तत्वमद्वितीयत्वं च सिध्यति तदाह—द्वाविमाविति । क्षरश्च—चकारः समुच्चयार्थः । क्षरः स्वकाले क्षरति नश्यतीति क्षरः नश्वरो महदादिस्थूलान्तः संसारलक्षणः कार्यवर्गः सर्वोऽपि एकः पुरुषः । अक्षरश्च—चः समुच्चयार्थः । पुरुषो द्वितीयः क्षरो यथा स्वकाले क्षरति तथा अयं न क्षरतीत्यक्षरः परमात्मविज्ञानेन विना न विनश्यति मूलप्रकृतिः संसारकारणलक्षणः पुरुषः । पुरुषस्यात्मन उपाधित्वेन द्वयोरपि क्षराक्षरयोः पुरुषत्वं, न तु वस्तुतः परिच्छिन्नत्वादनित्यत्वादसत्त्वाच्च । एवकारोऽत्रानुसंधातव्यः, अर्थानुसारित्वात् पदविनियोगस्य । ताविमौ क्षराक्षरौ द्वावेव पुरुषौ लोके संसारे पुरुषस्यात्मनः संसारित्वसिद्धये क्षराक्षरौ द्वावेव पुरुषौ पुरुषोपाधी नान्यस्ततः कश्चिदित्येवकारस्यार्थः । कौ तौ क्षराक्षरावित्याकाङ्क्षायामाह—क्षर इत्यादिना । भवन्तीति भूतान्याकाशादीनि भूम्यन्तानि देहेन्द्रियादीनि भूतकार्याणि च सर्वाणि क्षर इत्युच्यन्ते । अभिव्यक्तनामरूपात्मकं महदादिविकारजातं देहान्तं सर्वं क्षराख्यः पुरुष इत्यर्थः । महदादिपृथिव्यन्तः समष्टिव्यष्ट्यात्मकः स्थूलसूक्ष्मप्रपञ्चलक्षणकार्यराशिः कूट इत्युच्यते । सर्वोऽपि विकारमात्रः । तत्र कूटे स्वकार्ये सर्वत्र कारणत्वेन घटादिषु मृदिव बहिरन्तश्च सर्वतो व्याप्य तिष्ठतीत्यव्यक्तं प्रकृतिशब्दवाच्यं कूटस्थ इत्युच्यते । यद्वा पुत्रसन्ततेः पुत्रिकासन्ततेश्च मूलभूतः पुरुषः कूटस्थ इत्युच्यते । तद्वद्रजःकार्यसन्ततेस्तमःकार्यसन्ततेः सत्त्वकार्यसन्ततेश्च मूलभूता त्रिगुणात्मिका प्रकृतिः कूटस्थ इत्युच्यते ।

यद्वा कूटसाक्षीत्यत्र कूटशब्दः कपटवाची तत्र कूटे कपटे पुरुषस्य विपरीतभावाचरणे तिष्ठतीति कूटस्थो माया सैवाक्षर इत्युच्यते। क्षरश्चाक्षरश्चैतद्द्वयमेवात्मनः संसारित्वस्य कारणमेतन्निवृत्तिकारणं तु 'न सत्तन्नासदुच्यते' इति न्यायेन तयोर्निरसनमेव। एवं निरस्ताशेषविशेषे परे ब्रह्मण्येवात्मभावापत्त्या पुनरनात्माऽनालम्बनमेव विदेहमुक्तिकारणमिति पूर्वमेवोक्तं तन्न विस्मर्तव्यम् ॥ १६ ॥

श्री० टी०—इदानीं तद्धाम परमं ममेति यदुक्तं तत्स्वकीयं सर्वोत्तमत्वं दर्शयति—**द्वाविमाविति त्रिभिः**। क्षरश्चाक्षरश्चेति द्वाविमौ पुरुषौ लोके प्रसिद्धौ। तावेवाह—तत्र क्षरः पुरुषो नाम सर्वाणि भूतानि ब्रह्मादिस्थावरान्तानि शरीराणि अविवेकिलोकस्य शरीरेष्वेव पुरुषत्वप्रसिद्धेः। कूटः शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थः चेतनो भोक्ता। स तु अक्षरः पुरुष इत्युच्यते विवेकिभिः॥ १६॥

स० टी०—एवं सोपाधिकं रूपं प्रोक्त्वा श्रीहरिरात्मनः॥ कार्यकारणरूपेण यावुपाधी क्षराक्षरौ॥ १॥ तद्वियोगेन चात्मानं निरुपाधिकमद्वयम्॥ विवक्षुः सर्वशास्त्रार्थं राशीकृत्य त्रिधाऽधुना॥ २॥ त्रिभि श्लोकैर्जगन्नाथः प्राहातिकृपया स्फुटम्॥ पुरुषोपाधिभेदेन पृथग्राशीकृताविमौ॥ ३॥ वाच्यौ पुरुषशब्देन द्वौ हि संसारगोचरौ॥ क्षरतीति क्षरो नाशी राशिरेकोऽस्ति पूरुषः॥ ४॥ न क्षरत्यक्षरो नाशशून्यो विश्वस्य कारणम्॥ संसारिकामकर्मादिसंस्काराणां समाश्रयः॥ ५॥ श्रीमद्भगवतो माया शक्त्याख्यः पुरुषोऽपरः॥ पुरुषौ तौ च भगवान् व्याचष्टे स्वयमेव हि॥ ६॥ समस्तं कार्यजातं च क्षरः पुरुष उच्यते॥ तत्त्वस्याच्छादनेनैवातत्त्ववस्तुप्रकाशनम्॥ ७॥ कूटो मायावञ्चनं चेत्यनर्थान्तरमीरितम्॥ तेनावरणविक्षेपशक्तिद्वयात्मना स्थितः॥ ८॥ कूटस्थो भगवन्मायाशक्तिरूपो जगज्जनिः॥ अनन्तविश्वबीजत्वादक्षरोऽनादिपूरुषः॥ ९॥ १६॥

भा० टी०—एवं यदादित्यगतं तेज इत्यादिना भगवत ईश्वरस्य नारायणाख्यस्य विभूतिसंक्षेपवर्णनेन सोपाधिकं स्वरूपमुक्त्वाथेदानीं तस्यैव परमात्मनः क्षराक्षरोपाधिविभक्ततया निरुपाधिकस्य केवलस्य स्वरूपनिर्धारणाय सर्वमेवातीतानागताध्यायार्थजातं त्रिधा राशीकृत्याह—**द्वाविति**। क्षराक्षरोपाधिभ्यां परमात्मना च राशित्रयम्। इमौ प्रत्यक्षादिना लोकेऽनुभूयमानौ पुरुषौ द्वौ। कौ तौ पुरुषाविति तत्राह—क्षरश्चाक्षर एव चेति। क्षराक्षरशब्दार्थं स्वयमेवाह भगवान्—क्षरः सर्वाणि भूतानि सर्वं विकारजातं क्षरतीति क्षरो विनाशी कूटस्थः कूटो राशिरिव स्थितः। यद्वा कूटात्मनाऽनेकमायावञ्चनादिप्रकारेण स्थितः कूटस्थः। संसारबीजानन्त्यान्न क्षरतीत्यक्षरो भगवतो मायाशक्तिः क्षराख्यस्योत्पत्तिबीजमनेकसंसारिजन्तुकामकर्मादिसंस्काराश्रयोऽक्षर उच्यते। यत्त्वपरे कूटः शिलाराशिः पर्वत इव देहेषु नश्यत्स्वपि निर्विकारतया तिष्ठतीति कूटस्थश्चेतनो भोक्ता स तु अक्षरः पुरुष उच्यते विवेकिभिरिति वर्णयन्ति तन्नोपादेयं, क्षेत्रज्ञस्यैवेह पुरुषोत्तमत्वेन प्रतिपाद्यत्वात्। अन्यथा क्षेत्रज्ञं चापि मां विद्धीत्यनेनोत्तमः पुरुषस्त्वन्य इत्यस्य विरोधापत्तेः॥ १६॥

प० टी०—अथ वेदेन क्षराक्षरातीतत्वेन वेद्यं स्वकीयं सूत्रात्मरूपमाह—**द्वाविति**। इमावनुभूयमानौ द्वौ पुरुषौ लोके प्रसिद्धौ। तावाह—**क्षरश्चाक्षरेति**। तत्र सर्वाणि भूतानि शरीराणि नश्वरत्वात्क्षर इत्युच्यन्ते। कूटे स्थूलप्रपञ्चे तिष्ठति कूटस्थश्चेतनारूपः सोऽक्षर इत्युच्यते॥ १६॥

रा० टी०—एवं सर्वान्तर्यामित्वं प्रपञ्च्याधुना सर्वोत्तमत्वं प्रपञ्चयति—**द्वाविति**। इमौ प्रमाणप्रमितौ पुरुषौ चेतनौ लोके ईशितव्यवर्गे। द्वावेतौ कावित्यत आह—क्षरश्चेति। सर्वाणि भूतानिब्रह्मादिजीवराशिः। शरीरक्षरणहेतुना क्षर उच्यते। कूटस्थः कूटमाकाशं तद्वत् स्थितः पुरुषः अक्षरदेहत्वात्। श्रीरक्षर उच्यते। पुल्लिङ्गेनोच्यते स्त्री च पुंवच्छक्तिमती कचिदिति छांदोग्यभाष्योक्तेः॥ १६॥

**उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ॥**
**यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥**

**त० टी०**—तमेव चाद्यं पुरुषं प्रपद्ये इति यः प्राक् प्रपदनीय आद्यः पुरुष उक्तः यद्विवक्षया आदित्यादिविभूतयो निर्दिष्टास्तमेवाह—**उत्तम इति**। उत्तम उत्कृष्टतमः पुरुषस्तु क्षराक्षरशब्दनिर्दिष्टाभ्यां द्वाभ्यामन्यो विलक्षणः परमात्मेत्युदाहृतः। परमात्मा भूर्भुवःस्वराख्यं जगदिति। "परमात्मा च सर्वेषामाधारः परमेश्वरः" इत्यादिश्रुतिस्मृतिभ्यः। कोऽसौ परमात्मा य आत्मतया लोकत्रयमाविश्य बिभर्त्ति धारयति पालयति च। एवमप्यव्ययोऽविनाशी यत ईश्वरः सर्वलोकनियामकः। तस्माद्भर्तव्यान्नियम्याच विलक्षणः ॥ १७ ॥

**म०–टी०**—**उत्तम इति**। आभ्यां क्षराक्षराभ्यां विलक्षणः क्षराक्षरोपाधिद्वयदोषेणास्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः—उत्तम उत्कृष्टतमः पुरुषस्त्वन्यः अन्य एव अत्यन्तविलक्षण आभ्यां क्षराक्षराभ्यां जडराशिभ्यामुभयभासकस्तृतीयश्चेतनराशिरित्यर्थः। परमात्मेत्युदाहृतः अन्नमयप्राणमयमनोमयविज्ञानमयानन्दमयेभ्यः पञ्चभ्योऽविद्याकल्पितात्मभ्यः परमः प्रकृष्टोऽकल्पितो ब्रह्म पुच्छं प्रतिष्ठेत्युक्त आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः परमात्मेत्युक्तो वेदान्तेषु। यः परमात्मा लोकत्रयं भूर्भुवःस्वराख्यं सर्वं जगदिति यावत्, आविश्य स्वकीयया मायाशक्त्याऽधिष्ठाय बिभर्ति सत्तास्फूर्तिप्रदानेन धारयति पोषयति च। कीदृशः? अव्ययः सर्वविकारशून्यः ईश्वरः सर्वस्य नियन्ता नारायणः स उत्तमः पुरुषः परमात्मेत्युदाहृत इत्यन्वयः। "स उत्तमः पुरुषः" इति श्रुतेः ॥ १७ ॥

**शं० टी०**—एवं क्षराक्षरयोः कार्यकारणयोरुभयोः पुरुषशब्दवाच्यत्वं प्रतिपाद्य एताभ्यामेवोपाधिभ्यामुभाभ्यां भिन्नं तद्धर्मकर्माद्यस्पृष्टं नित्यशुद्धबुद्धमुक्तस्वभावं पदशब्दार्थं मुक्तोपसृप्यं परं तत्त्वं निर्दिशति—**उत्तम इति**। उत्तमः सर्वोत्कृष्टतमः "ज्यायानन्तरिक्षाज्ज्यायान् दिवः" इति, "ततो ज्यायांश्च पुरुषः" इति सर्वोत्कृष्टतमत्वश्रवणादात्मा स्वयमुत्तमः सत्तया स्फूर्त्या च महत्तमो निरतिशयवैभवः परिच्छेदरहित इति यावत्। तत एव सर्वतः परिपूर्णत्वात्पुरुष उत्तमस्त्वन्यः। उत्तमत्वे सति पुरुषत्वस्यात्मानन्यगामित्वसूचनार्थस्तुशब्दः। उत्तमत्वविशेषणविशिष्टः पुरुषस्त्वन्यः क्षराक्षरशब्दवाच्याभ्यां संसारसंसारकारणाभ्यामुभाभ्यां पुरुषाभ्यामन्यः परममहत्त्वेन चेतनत्वेन ज्ञातृत्वेन प्रकाशकत्वेन प्रकाशस्वरूपत्वेन चोत्कृष्टत्वादुत्तमत्वविशेषणविशिष्टः पुरुषोऽसंसारी प्रत्यगात्मा ताभ्यां पुरुषाभ्यामुक्तलक्षणो भिन्न एव भवति। यथा स्थावरजङ्गमाभ्यां तत्प्रकाशको ज्ञाता च भानुस्ताभ्यां भिन्नस्तद्धर्मकर्माद्यस्पृष्टश्च भवति, तथैवाहमज्ञ इति दुष्टो ममायमहंकारादिरिति स्वप्रकाशाभ्यामज्ञानतत्कार्याभ्यां ज्ञाता तत्प्रकाशकश्चात्मा भिन्न एवानुभूयते ततो ज्ञातृत्वेनातिसूक्ष्मत्वेनासङ्गत्वेन च ताभ्यां भिन्न एव सन् तद्धर्मकर्मादिभिश्च न स्पृश्यत इति ज्ञातव्य इत्यर्थः। ननु महतोऽप्यतिसूक्ष्मस्यापि च वायोः स्वभिन्नैर्दुष्टादुष्टद्रव्यैः संयोगे दुष्टादुष्टगन्धलेपो दृश्यते—दुर्गन्धिः सुगन्धिर्वायुरिति, तद्वदात्मनोऽपि पुरुषोत्तमस्य क्षराक्षरभिन्नत्वेऽपि तद्योगात्तद्धर्मकर्मादिलेपः स्यादित्याशङ्कायां—न। सावयवत्वाद्वायोः सर्वं संभवति निरवयवत्वाद्धिधर्मैरात्मा ताभ्यामपि परमत्वान्न तद्धर्मकर्मादिभिर्लिप्यत इति बोधयति—**परमात्मेति**। "अन्योऽन्तर आत्मा प्राणमयः" इत्यन्नमयादीनां कूटस्थान्तानां कोशानामात्मत्वश्रवणात्। आत्मशब्दवाच्याभ्यां क्षराक्षराभ्यां निरवयवत्वेनातिसूक्ष्मत्वेनान्तरत्वेन प्रत्यक्त्वेन ज्ञातृत्वेन भासकत्वेन व्यापकत्वेनासङ्गत्वेन च निरतिशयत्वादात्मा प्रत्यग्लक्षणः प्रकृतितत्कार्यैः स्प्रष्टुमशक्यत्वेन परम इत्युच्यते। परम

श्चासावात्मा च परमात्मेत्युदाहृतः " इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः । महतः परमव्यक्तमव्यक्तात्पुरुषः परः । पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः" इति, " दिव्यो ह्यमूर्तः पुरुषः स बाह्याभ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः " इति, " अतो ज्यायांश्च पूरुषः । पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि । " इत्यादिश्रुतिभिः प्रतिपादित इत्यर्थः । परमत्वचेतनत्वज्ञातृत्वप्रकाशकत्वादिधर्मैरुत्तमस्य पुरुषस्य यत् क्षराक्षराभ्यां संसारितद्धेतुभावापन्नाभ्यां पुरुषाभ्यामन्यत्वं प्रतिपादितं तदेव पुनर्विशेषणैर्विस्पष्टयति–यो लोकत्रयमिति । क्षराक्षराभ्यामात्मनो भिन्नत्वमेवाह–अव्यय इति । सुषुप्तिसमाध्योः क्रमात्तयोर्व्यये नाशे सत्यपि स्वयं न व्येतीत्यव्ययः । हेतुगर्भितमिदं विशेषणम् । आत्मा पुरुषाभ्यामन्यः अव्ययत्वात् यन्नैवं तन्नैवं यथा बुद्ध्यादिः सुषुप्तिसमाध्योस्तद्द्वयसाक्षितया विद्यमानत्वादात्मनो व्ययाभावात्ततो नित्यत्वेन ताभ्यामन्यत्वमुत्तमत्वं च सिद्धम् । किंच ईश्वरः स्वसन्निधिमात्रेण तयोर्व्यापृतिहेतुत्वादीश्वरः । हेतुगर्भितमिदं विशेषणम् । आत्मा ताभ्यां भिन्नः तत्प्रवृत्तिहेतुत्वाद्राजवत् स्वप्रवर्त्यप्रधानादिभ्यो राज्ञो यथा भिन्नत्वमुत्तमत्वं च तद्वदात्मनोऽपि स्वप्रवर्त्याभ्यां ताभ्यां भिन्नत्वमुत्तमत्वं च सिद्धम् । किंच यो लोकत्रयमाविश्य बिभर्ति लोक्यन्ते ज्ञायन्त इति लोकाः समष्टिव्यष्टिलक्षणाः स्थूलसूक्ष्मकारणदेहाः साभिमानिनः सावस्थास्तेषां त्रयं लोकत्रयं स्थूलसूक्ष्मकारणाख्यं शरीरत्रयं स्वाधारमाविश्य बहिरन्तश्च सर्वतो व्याप्य, बिभर्ति सत्तास्फूर्तिं च प्रयच्छन् धारयति । " व्यक्ताव्यक्तं भरते विश्वमीशः " इति श्रुतेः । आत्मा स्वधार्याल्लोकत्रयाद्भिन्नः आधारत्वात् चित्राधारकुड्यवदित्यात्मनस्ताभ्यां भिन्नत्वमुत्तमत्वं च सिद्धम् । यद्वा लोक्यन्ते दृश्यन्ते इति लोका जाग्रत्स्वप्नसुषुप्तयः साभिमानिभोग्यार्थास्तासां त्रयं लोकत्रयमाविश्य व्याप्य यो बिभर्ति प्रकाशयति " जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते " इति श्रुतेः । आत्मा स्वप्रकाश्याल्लोकत्रयाद्भिन्नः प्रकाशकत्वात्सूर्यवदित्यनुमानात् ' यो जागरमन्वभूवं यः स्वप्नमद्राक्षं यः सुखमस्वाप्सं सोऽहंतिष्ठामीतिप्रत्यभिज्ञाया विद्यमानत्वादात्मनः प्रकाशकस्य लोकत्रयाभिन्नत्वे श्रुतिरनुमानं प्रत्यक्षं च प्रमाणम् । आत्मनो लोकत्रयप्रकाशकत्वसिद्ध्या नित्यत्वं परममहत्त्वं चेतनत्वं प्रकाशस्वरूपत्वमकर्तृत्वमभोक्तृत्वमविक्रियत्वं च सिद्धम् । अव्ययत्वेनेश्वरत्वेन भर्तृत्वेन च क्षराक्षराभ्यां द्वाभ्यामपि पुरुषाभ्यामुत्कृष्टतमत्वादात्मनः पुरुषोत्तमत्वं सर्वप्रमाणसिद्धमिति भावः ॥ १७ ॥

**श्री० टी०**–यदर्थमेतौ लक्षितौ तमाह–उत्तम इति । एताभ्यां क्षराक्षराभ्यामन्यो विलक्षणस्तूत्तमः पुरुषः । वैलक्षण्यमेवाह–परमश्चासावात्मेति चोदाहृत उक्तः श्रुतिभिः । आत्मत्वेन क्षरादचेतनाद्विलक्षणः परमत्वेनाक्षराच्चेतनाद्भोक्तुर्विलक्षण इत्यर्थः । परमात्मत्वमेव दर्शयति–यो **लोकत्रयमिति** । य ईश्वर ईशनशीलः अव्ययश्च निर्विकार एव सन् लोकत्रयं कृत्स्नमाविश्य बिभर्ति पालयति ॥ १७ ॥

**स० टी०**–आभ्यां क्षराक्षराभ्यां यो निर्विकारो विलक्षणः ॥ तयोर्दोषैरसंस्पृष्टः शुद्ध इत्युच्यतेऽधुना ॥ १ ॥ य उत्कृष्टतमस्त्वाभ्यां स चात्यन्तविलक्षणः ॥ क्षराक्षराभ्यामुभयभासकत्वात्तृतीयकः ॥ २ ॥ अविद्याकल्पितेभ्योऽन्नमयादिभ्यस्तथोत्तमः ॥ आत्मा च सर्वभूतानां प्रत्यक्चेतन इत्यतः ॥ ३ ॥ परमात्मेति संप्रोक्तो वेदान्तेषु सदद्वयः ॥ य एव परमात्मेदं भूर्भुवःस्वरितित्रयम् ॥ ४ ॥ सर्वं जगत्स्वया शक्त्याधिष्ठायैव बिभर्त्यसौ ॥ सत्तास्फूर्तिप्रदानेन धारयत्यपि पोषकः ॥ ५ ॥ विकारशून्यः सर्वस्य नियन्ता परमेश्वरः ॥ स उत्तमो हि पूर्णाख्यः परमात्मेत्युदाहृतः ॥ ६ ॥ १७ ॥

**भा० टी०**–कार्यकारणाख्यौ राशी दर्शयित्वा ताभ्यां विलक्षणं राश्यन्तरं परमात्माख्यं दर्शयति–**उत्तम इति** । आभ्यां क्षराक्षराभ्यामन्यो विलक्षणः उपाधिद्वयदोषेणासंस्पृष्टो नित्यशुद्धबुद्धमुक्तस्वभावः

उत्तमः उत्कृष्टतमः पुरुषः अविद्यात्मभ्यो देहादिभ्यः परश्चासौ सर्वभूतानामात्मा च प्रत्यक्चेतन इत्यतः परमात्मेत्युदाहृतः वेदान्तेषु प्रतिपादितः। परमात्मानमेव विशिनष्टि—यो लोकत्रयं भूर्भुवःस्वराख्यं त्रिलोकीपक्षाश्रयेण समस्तं जगत् स्वकीयया मायया चैतन्यबलशक्त्या आविश्य प्रविश्य स्वरूपसद्भावमात्रेण बिभर्ति धारयति पोषयति प्रकाशयति न विद्यते व्ययो यस्य सोऽव्ययः ईश्वरः ईशनशीलो नारायणाख्यः परमेश्वर इत्यर्थः ॥ १७ ॥

प० टी०—अथ ताभ्यामतीतं पुरुषोत्तममाह—**उत्तम इति**। अन्यस्तद्विलक्षण उत्तमः पुरुषो भवति स एव परमात्मेत्युदाहृतः प्रोक्तः। य आसमन्तादाविश्य लोकत्रयं बिभर्ति "तत्सृष्ट्वा तदेवानुप्राविशत्" इति श्रुतेः। अव्ययो निर्विकारः सन्नीश्वरो नियन्ता सूत्रात्मा ॥ १७ ॥

रा० टी०—यदर्थं पुरुषद्वयनिरूपणं कृतं तदाह—**उत्तम इति**। क्षराक्षराभ्यामिति विपरिणाम्यानुषज्यते। उत्तमः पुरुषस्तु ताभ्यामन्यः। नत्वनयोरेकः पुरुषोत्तम इत्यर्थः। उक्तार्थे श्रुत्यादिसंमतिमाह परमेति। आत्मात्र चेतनः क्षराक्षरौ चेतनमात्रं उत्तमपुरुषस्तु परमचेतन इति। चेतनश्चेतनानां। ब्रह्माणि जीवाः सर्वेपीत्यादिश्रुतिषूदाहृत इत्यर्थः। अतस्ताभ्यामन्यः पुरुषोत्तम इति भावः। उक्तार्थे युक्तिमप्याह—य इति। यः भूर्भुवःस्वरितिलोकत्रयमाविश्य बिभर्ति धत्ते। यो यस्य धारणपोषणकर्ता स तस्मादुत्तमोऽन्यश्च दृष्ट इति भावः। किं लोकनाशे प्रविष्टस्यापि नाशोऽस्तीत्यत उक्तम्—अव्यय इति। तत्कथमित्यतोऽचिन्त्यशक्तित्वादित्याह—ईश्वर इति। एतेन क्षराक्षराभ्यामुत्तमोऽन्यः किंनामक इत्यपि शङ्का परास्ता ॥ १७ ॥

**यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ॥**
**अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥**

त० टी०—उक्तस्य पुरुषोत्तमशब्दस्य यो लोकत्रयमिति यच्छब्देनान्यत्र भ्रान्तिं वारयन्नात्मन्येव निर्वचनेन समन्वयमाह—**यस्मादिति**। यस्मात् क्षरं पुरुषं भोग्यभूतं सर्वभूतात्मकं जडमतीतोऽहम्, अक्षरात् कूटस्थाद्भोक्तुर्विज्ञानमयपुरुषादपि उत्तमः उत्कृष्टः, तस्यापीशनशीलत्वात्। "भोक्ता भोग्यं प्रेरितारं च। प्रधानक्षेत्रज्ञपतिर्गुणेशः" इत्यादिश्रुतिभ्यः। अतोऽहं लोके वेदे च पुरुषोत्तमः प्रथितः प्रख्यातोऽस्मि। अत्र लोक्यते दृश्यते वेदार्थोऽनेनेति लोक इतिहासपुराणादिर्विवक्षितः। तथा च वेदेतिहासपुराणादावित्यर्थः। "स उत्तमः पुरुषः" इति वेदे, इतिहासे च महाभारते सहस्रनामस्तोत्रे 'केशवः पुरुषोत्तमः' इति प्रसिद्धः। पुराणे तु 'विश्वं यतश्चैतद्विश्वहेतो नमोऽस्तु तस्मै पुरुषोत्तमाय' इति, इति वैष्णवे "पुराणपुरुषः प्रत्यक्चैतन्यः पुरुषोत्तमः" इति पाद्मे। नारदपञ्चरात्रे च "संसारसागरनिमग्नमनन्तदीनमुद्धर्तुमर्हसि हरे! पुरुषोत्तमोऽसि" इत्यादिषु प्रथितोऽस्मि ॥ १८ ॥

म० टी०—इदानीं यथाव्याख्यातेश्वरस्य क्षराक्षरविलक्षणस्य पुरुषोत्तम इत्येतत्प्रसिद्धनामनिर्वचनेन ईदृशः परमेश्वरोऽहमेवेत्यात्मानं दर्शयति भगवान् ब्रह्मणो हि प्रतिष्ठाहं तद्धाम परमं ममेत्यादिप्रागुक्तनिजमहिमनिर्धारणाय—**यस्मादिति**। यस्मात् क्षरं कार्यत्वेन विनाशिनं मायामयं संसारवृक्षमश्वत्थाख्यमतीतोऽतिक्रान्तोऽहं परमेश्वरः अक्षरादपि मायाख्यादव्याकृतादक्षरात् "परतः परः" इति पञ्चम्यन्ताक्षरपदेन श्रुत्या प्रतिपादितात् संसारवृक्षबीजभूतात् सर्वकारणादपि चोत्तम उत्कृष्टतमः, अतः क्षराक्षराभ्यां पुरुषोपाधिभ्यामध्यासेन पुरुषपदव्यपदेश्याभ्यामुत्तमत्वादस्मि भवामि लोके वेदे च प्रथितः प्रख्यातः पुरुषोत्तम इति 'स उत्तमः पुरुषः" इति वेद उदाहृत एव लोके च कविकाव्यादौ 'हरिर्यथैकः पुरुषोत्तमः स्मृतः,

इत्यादिप्रसिद्धम् । 'कारुण्यतो नरवदाचरतः परार्थान् पार्थाय बोधितवतो निजमीश्वरत्वम् । सच्चित्सुखैकवपुषः पुरुषोत्तमस्य नारायणस्य महिमा न हि मानमेति ।। केचिन्निगृह्य करणानि विसृज्य भोगमास्थाय योगममलात्मधियो यतन्ते । नारायणस्य महिमानमनन्तपारमास्वादयन्नमृतसारमहं तु मुक्तः ।। १८ ।।

शं० टी०—अव्ययत्वेश्वरत्वभर्तृत्वादिधर्मैः पुरुषोत्तमत्वसिद्धिप्रकारमेव विशदयन् तादृशी नामसिद्धार्थवत्ता मम वेदशास्त्रप्रसिद्धेति प्रतिपादनद्वारा स्वस्याविक्रियत्वमसंसारित्वं सच्चिदानन्दैकरसत्वमद्वितीयत्वं च सूचयति—**यस्मादिति**। यस्मान्नित्यत्वज्ञातृत्वादिधर्मैः क्षरं महदादिस्थूलान्तमुत्पत्तिलयादिविकारविशिष्टं कर्तृत्वभोक्तृत्वदिसंसारधर्मकं कार्यलक्षणं पुरुषमहमतीतोऽतिक्रान्तोऽस्मि—नित्यत्वादिधर्मैर्विलक्षणत्वेनोत्कृष्टत्वादुत्तमोऽस्मीत्यर्थः । तथा प्रकाशस्वरूपत्वप्रकाशकत्वाधारत्वादिधर्मैर्महत्त्वादक्षरात्संसारबीजादव्यक्तादपि चोत्तमोऽस्मि यस्मादतोऽस्मादेव लोके पुराणे वेदे च वेदेषु च पुरुषोत्तमः पुरुषाभ्यामुक्तलक्षणाभ्यां निष्कलत्वनित्यत्वनिर्गुणत्वचेतनत्वादिधर्मैरुत्तमत्वात्पुरुषोत्तम इति पुरुषतद्धर्मतत्कर्मतदवस्थासंबन्धलेशशून्यत्वान्नित्यशुद्धबुद्धमुक्तस्वभावः केवलसच्चिदानन्दैकरसः परमात्मेति प्रथितः प्रख्यातः। "महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषः । " इति, "पुरुषान्न परं किंचित् ।" इति, "अयमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरञ्जनो विभुरद्वय आनन्दः परः प्रत्यगेकरस" इति, " तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः " इत्यादिश्रुतिभिः । 'कार्यकारणसंबन्धरहितः केवलः शिवः' इत्यादिस्मृतिभिश्च प्रतिपादित इत्यर्थः । चित्रमतीत्य भित्तिस्तिष्ठतीत्यत्र युक्त्या सूक्ष्मबुद्ध्या च विचार्यमाणे भित्तिव्यतिरेकेण चित्रस्य स्वरूपं न दृश्यते—भित्तिसत्ताव्यतिरेकेण चित्रस्य पृथक्सत्ताभावात्तद्वत् क्षराक्षराख्यौ पुरुषावतीतोऽहमित्यत्र " विकल्पो नहि वस्तु । मायामात्रमिदं द्वैतम् । असत्त्वादन्यस्य" इत्यादिश्रुतिभिरिदं सर्वमसन्मायाकार्यत्वादिन्द्रजालवत्सर्वं सदेव सदनुवृत्तत्वान्मृदनुवृत्तघटादिवदित्यादियुक्तिभिश्च विचार्यमाणे परमात्मसत्ताव्यतिरेकेण तयोः पृथक्सत्ताभावात् " सर्वं ह्येतद्ब्रह्म " इत्यादिश्रुतिवाक्यबलाच्च पुरुषोत्तमाख्यं परं ब्रह्माद्वितीयमेव भवति ततः सर्वं ब्रह्मैवेति ज्ञातव्यमिति सिद्धम् ।। १८ ।।

श्री० टी०—एवंभूतं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति—**यस्मादिति** । यस्मात्क्षरं जडवर्गमतिक्रान्तोऽहं नित्यमुक्तत्वात् । अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वात् । अतो लोके वेदे च पुरुषोत्तम इति प्रथितः प्रख्यातोऽस्मि । तथाच श्रुतिः—" स वा अयमात्मा सर्वस्य वशी, सर्वस्येशानः, सर्वस्याधिपतिः, सर्वमिदं प्रशास्ति " इत्यादिः ।। १८ ।।

स० टी०—यथोक्तस्येश्वरस्यैव पुरुषोत्तम इत्यदः ।। प्रसिद्धं नाम तस्यास्य नाम्नो निर्वचनेन च ।। १ ।। ईदृशो वासुदेवोऽस्मि विशुद्धः परमेश्वरः ।। अहमेवेति भगवानात्मानं दर्शयत्यजः ।। २ ।। ब्रह्मणो हि प्रतिष्ठाहं तद्धाम परमं मम ।। इत्यादिपूर्वनिर्णीतस्वमहिम्नः प्रसिद्धये ।। ३ ।। क्षरं मायामयं यस्मात्कार्यत्वेन विनाशिनम् ।। संसारवृक्षमश्वत्थमतिक्रान्तोऽस्म्यहं हरिः ।। ४ ।। अक्षरादपि मायाख्यादव्याकृतपदाभिधात् ।। संसारवृक्षबीजाच्च सदोत्कृष्टतमोऽस्म्यहम् ।। ५ ।। क्षराक्षराभ्यां पुरुषोपाधिभ्यामुत्तमत्वतः ।। वेदे सर्वत्र विख्यातः स उत्तम इति श्रुतेः ।। ६ ।। पुरुषोत्तम इत्येवं भवामि परमेश्वरः ।। लोके च कविकाव्यादौ पुराणे भारते तथा ।। ७ प्रख्यातो वर्णितोऽहं श्रीपुरुषोत्तम इत्यपि ।। मद्भक्ता मां भजन्तीत्थं कवयः काव्यवर्णने ।। ८ ।। योगिनो ध्याननिष्ठायां यजन्ते पुरुषोत्तमम् ।। ९ ।। १८ ।।

भा० टी०—अत एव क्षराक्षराभ्यामुत्तम इति मम नाम्नो निर्वचनप्रसिद्धिरर्थवतीत्याह—**यस्मादिति** । यस्मात्क्षरं संसारमायावृक्षमश्वत्थाख्यमतीतोऽहमक्षरादपि तद्बीजभूतान्मायासंज्ञकादपि चोत्तमः उत्कृष्टतमः ऊर्ध्वतमो वाऽतः क्षराक्षराभ्यामुत्तमत्वाद्धेतोर्लोके कविकाव्यादौ वेदे च पुरुषोत्तमः प्रथितः प्रख्यातः ।

" हरिर्येकः पुरुषोत्तमः स्मृतः, " " स उत्तमः पुरुषः " इत्यादिलोकवेदप्रसिद्ध्या पुरुषोत्तम इति मां भक्तजना विदुः ॥ १८ ॥

प० टी०—ईदृशं पुरुषोत्तमत्वमात्मनो नामनिर्वचनेन दर्शयति—**यस्मादिति** । यस्मात्क्षरं जडमतिक्रान्तोऽहं नित्ययुक्तत्वात् । अक्षराच्चेतनवर्गादप्युत्तमश्च नियन्तृत्वात्, अतो लोके वेदे च पुरुषोत्तमो देहाभिमानिनो जीवस्य पुरुष इति संज्ञा तस्मादुत्तमः पुरुषोऽहमिति लोके प्रसिद्धः । अथ नहि निर्मूला प्रसिद्धिरिति न्यायेन " एतावानस्य महिमाऽतो ज्यायांश्च पूरुषः " इति वेदे च प्रथितः प्रख्यातः । तदुक्तमथर्ववेदेऽपि—" इन्द्रियेभ्यः परं मनो मनसः सत्त्वमुत्तमम् । सत्त्वादधि महानात्मा महतोऽव्यक्तमुत्तमम् । अव्यक्तात्तु परः पुरुषो व्यापकोऽलिङ्ग एव च । यं ज्ञात्वा मुच्यते जन्तुरमृतत्वं च गच्छति " इति । स्पष्टार्थम् ॥ १८ ॥

रा० टी०—स किं त्वत्तोऽन्य इत्यतोऽहमेवेति सप्रमाणकमाह—**यस्मादिति** । यस्मात्क्षरं चातीतः अक्षरादुत्तमोऽतः कारणात् लोके पौरुषेयग्रन्थे वेदे अपौरुषेयग्रन्थे च प्रथितः प्रसिद्धः पुरुषोत्तमोऽहमेवेत्यर्थः ॥ १८ ॥

**यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ॥**
**स सर्वविद्भजति मां सर्वभावेन भारत ! ॥ १९ ॥**

**त० टी०—एवमुक्तस्य पुरुषोत्तमत्वस्य ज्ञातुः फलमाह—यो मामिति । य एवमुक्तप्रकारेणासंमूढः संमोहो वस्तुयाथात्म्याविवेकस्तद्रहितोऽसंमूढः पुरुषत्रयविवेकज्ञानाश्रयः मां पुरुषोत्तमं जानाति स सर्ववित् सर्वं वेद्यं साधनफलविरोध्यादि वेदेत्यर्थः । भगवन्तं वासुदेवं पुरुषोत्तमत्वेन ज्ञाता सर्वज्ञो भवतीति भावः । " येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातं स्यात् । सर्वं ह पश्यः पश्यति " इत्यादिश्रुतेः । एवमेव 'यज्ज्ञात्वा नेह भूयोऽन्यज्ज्ञातव्यमवशिष्यते' इति प्रतिज्ञाय ते चेतनाचेतनात्मके पराऽपरे शक्ती अभिधाय 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' इत्युक्तत्वात् । अत एव सर्वभावेन मां भजति, सर्वप्रकारोदितेन मद्भजनेन वाङ्मनःकायकर्मभिर्वा सेवते हे भारत ! अन्यस्य मन्नियम्याक्षरपुरुषान्तर्गतत्वेन विद्वद्भजनीयत्वाभावात् । तथोक्तं महाभारते " रुद्रं समाश्रिता देवा रुद्रो ब्रह्माणमाश्रितः । ब्रह्मा मामाश्रितो राजन्नाहं कंचिदुपाश्रितः । ममाश्रयो न कश्चित्तु सर्वेषामाश्रयो ह्यहम् । ब्रह्माणं शितिकण्ठं च याश्चान्या देवताः स्मृताः । प्रतिबुद्धा न सेवन्ते यतः परिमितं फलम् " इति ॥ १९ ॥**

म० टी०—एवं नामनिर्वचनज्ञाने फलमाह—**य इति** । यो मामीश्वरं एवं यथोक्तनामनिर्वचनेन असंमूढः—मनुष्य एवायं कश्चित् कृष्ण इति संमोहवर्जितः जानात्ययमीश्वर एवेति पुरुषोत्तमं प्राग्व्याख्यातं स मां भजति सेवते सर्ववित् मां सर्वात्मानं वेत्तीति स एव सर्वज्ञः सर्वभावेन प्रेमलक्षणेन भक्तियोगेन हे भारत । अतो यदुक्तं ' मां च योऽव्यभिचारेण भक्तियोगेन सेवते । स गुणान्समतीत्यैतान् ब्रह्मभूयाय कल्पते ॥ ' इति तदुपपन्नम् । यच्चोक्तं ब्रह्मणो हि प्रतिष्ठाहमिति तदप्युपपन्नतरम् । ' चिदानन्दाकारं जलदरुचि सारं श्रुतिगिरां व्रजस्त्रीणां हारं भवजलधिपारं कृतधियाम् । विहन्तुं भूभारं विदधदवतारं मुहुरहो महो वारंवारं भजत कुशलारम्भकृतिनः ' ॥ १९ ॥

शं० टी०—एवं स्वमायातत्कार्यसंबन्धराहित्येन स्वस्य नित्यशुद्धबुद्धमुक्तस्वभावत्वं प्रतिपाद्य मामेवंलक्षणं यो विजानाति स मुक्तो भवतीत्याह—**यो मामिति** । जन्मानेकसहस्रेषु श्रद्धाभक्तिभ्यां सत्कर्माराधितपरमेश्वरप्रसादपात्रीभूतः शुद्धात्मा दैवसंपद्विशिष्टो यो मुमुक्षुरधिकारी शमदमसंन्यासादिसाधनसं-

पत्त्या कृतश्रवणादिजन्यज्ञानेनैवं प्रतिपादितलक्षणं नित्यत्वेश्वरत्वादिधर्मवत्त्वेन क्षराक्षरविलक्षणं पुरुषोत्तमं सर्वसंसारधर्मनिर्मुक्तं सदानन्दैकरसमद्वितीयं मां परमात्मानं जानात्ययमेवाहमिति स्वात्मना साक्षाद्विजानाति, स सर्ववित्सर्वं ब्रह्मैवेत्यपरोक्षतया सर्वं ब्रह्मैव वेत्तीति सर्ववित्सर्वज्ञस्तत एवासंमूढः देहेन्द्रियादिष्वहंममेति बुद्धिर्यस्य स संमूढस्तद्विलक्षणोऽसंमूढः देहादावहंभावममभावनिर्मुक्तः सन् सर्वभावेनाहमेवेदं सर्वमिति भावः सर्वभावस्तेन सर्वभावेन सार्वात्म्येन सर्वात्मभावापत्त्या मां भजति प्राप्नोति। पतितेऽस्मिन् देहे पूर्णात्मना तिष्ठतीत्यर्थः । यद्वा यो मुमुक्षुरसंमूढः विषयाशाग्रहग्रस्तः संमूढस्तद्विलक्षणोऽसंमूढः सर्वैषणाभ्यो व्युत्थितः सन् मामेवंलक्षणं पुरुषोत्तमं स्वात्मना जानाति स सर्ववित् सर्वभावेन सर्वं ब्रह्मैवेति सर्वत्र ब्रह्मैकदृष्ट्या मां भजति ज्ञानतत्फलप्रतिबन्धराहित्याय सदा मामनुसंधत्ते ब्रह्मज्ञानस्य तन्निष्ठायाः फलं निर्मानमोहत्वादिसाधनसंपत्त्या सर्वभावेन मां सदा भजमानस्तदव्ययं पदं गच्छतीति पूर्वमेवोक्तमिति बोद्धव्यम् ।। १९ ।।

श्री० टी०—एवंभूतेश्वरस्य ज्ञातुः फलमाह—**यो मामिति** । एवमुक्तप्रकारेणासंमूढो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति स सर्वभावेन सर्वप्रकारेण मामेव भजति । ततः सर्ववित् सर्वज्ञो भवति।। १९।।

स० टी०—नामनिर्वचनज्ञाने यथोक्ते फलमुच्यते ।। नामनिर्वचनेनैवं यथोक्तं मां महेश्वरम् ।। १ ।। संमोहवर्जितो योऽद्धा जानाति पुरुषोत्तमम् ।। यथैव पूर्वव्याख्यातं सर्वोत्तमतया सुधीः ।। २ ।। स च मां सर्ववित्प्राज्ञः सेवते सर्ववित्तमः ।। सर्वभावेन मत्प्रेमलक्षणेन निरन्तरम् ।। ३ ।। १९ ।।

भा० टी०—अधुना यथानिरुक्तमात्मानं ज्ञातुः फलमाह—य इति । मामीश्वरं सर्वात्मत्वसर्वव्यवहारास्पदत्वादिविशेषणोपेतं यथोक्तेन क्षराक्षरातीतत्वेन प्रकारेण योऽसंमूढः संमोहेन देहगेहादिष्वात्मात्मीयप्रत्ययेन वर्जितः सन् पुरुषोत्तमं जानाति अयमहमस्मीति साक्षात्पश्यति स सर्ववित् सर्वात्मब्रह्मज्ञानात्सर्वज्ञः सर्वभावेन सर्वत्रात्मवित्तया मां सर्वभूतस्थं पुरुषोत्तमं भजति ।त्वमप्युत्तमवंशोद्भवत्वादेतादृशज्ञानयोग्योऽसीति सूचयन्संबोधयति—भारतेति ।। १९ ।।

प० टी०—तज्ज्ञानस्य फलमाह—य इति। एवं निरुक्तप्रकारेणासंमूढो निश्चितमतिः सन् यो मां पुरुषोत्तमं जानाति स सर्वभावेन सर्वप्रकारेण मामेव भजति, ततः सर्ववित् सर्वज्ञो भवति।। १९ ।।

रा० टी०—तात्पर्यद्योतनायोक्तार्थज्ञानिनः फलमाह—**यो मामिति** । योऽधिकारी मामेवं क्षराक्षरोत्तमत्वेन वेदादिषु प्रथितत्वप्रकारेणासंमूढः सर्वोत्तमत्वं मिथ्याभूतमुच्यत इति मोहरहितः सन्पुरुषोत्तमं क्षराक्षरपुरुषाभ्यामुत्तमं जानाति स सर्ववित् सर्वशास्त्रार्थज्ञानी सर्वभावेन सर्वप्रकारेण मां भजति ।। १९ ।।

**इति गुह्यतमं शास्त्रमिदमुक्तं मयाऽनघ ! ।।**
**एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ! ।। २० ।।**

**इति श्रीभगवद्गीतासूपनिषत्सु पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ।। १५ ।।**

त० टी०—एवं वेदेतिहासपुराणादिसारार्थ उक्तः । इदानीमुक्तार्थं स्तुवन्नध्यायमुपसंहरति—इतीति । इत्यनेन प्रकारेण गुह्याद्गुह्यतममतिरहस्यमिदं शास्त्रं सर्वगीतार्थसंक्षेपरूपं मयोक्तं, यतो हे अनघ ! त्वं निष्पापतयोपदेश्य एव । एतन्मदुक्तं सर्वशास्त्रार्थगुह्यतममन्योऽपि कश्चिद्बुद्ध्वा बुद्धिमान्स्यात् परमश्रेयस्कामैरुपादेया या बुद्धिः सोपात्ता स्यात् । कृतकृत्यश्च कृतं कृत्यं येन पुनः कृत्यान्तरं यस्य नावशिष्येत्तथा स्यादित्यर्थः । हे भारत यद्यन्योऽप्येतन्मदुक्तं सम्यग्बुद्ध्वा कृतार्थो भवति, तर्हि त्वमुत्तमकुलप्रसूतो मच्छिष्यश्चैतद्बुद्ध्वा कृतार्थो भविष्यसीति किमुत वक्तव्यमिति भावः ।।२०।।

य एव वेदवेद्यश्च शास्त्रतत्त्वोपदेशकः ॥ क्षराक्षरपदार्थाभ्यां चिदचिद्भ्यां विलक्षणः ॥ १ ॥
सर्वगः परमात्मा च भास्करादिविभूतिमान् ॥ पुरुषोत्तमसञ्ज्ञो हि तं श्रीकृष्णं समाश्रये ॥ २ ॥
इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

म० टी०—इदानीमध्यायार्थं स्तुवन्नुपसंहरति—इतीति । इति अनेन प्रकारेण गुह्यतमं रहस्यतमं संपूर्णं शास्त्रमेव संक्षेपेणदमस्मिन्नध्याये मयोक्तं हे अनघ अव्यसन । एतद्बुद्ध्वाऽन्योऽपि यः कश्चिद्बुद्धिमानात्मज्ञानवान् स्यात् कृतं सर्वं कृत्यं येन न पुनः कृत्यान्तरं यस्यास्ति स कृतकृत्यश्च स्यात् । विशिष्टजन्मप्रसूतेन ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेत्, न त्वन्यथा कर्तव्यं परिसमाप्यते कस्यचिदित्यभिप्रायः । हे भारत त्वं तु महाकुलप्रसूतः स्वयं च व्यसनरहित इति कुलगुणेन स्वगुणेन चैतत् बुद्ध्वा कृतकृत्यो भविष्यसीति किमु वक्तव्यमित्याभिप्रायः ॥ २० ॥

'वंशीविभूषितकरान्नवनीरदाभात् पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने ॥ १ ॥
सदा सदानन्दपदे निमग्नं मनो मनोभावमपाकरोति ॥
गतागतायासमपास्य सद्यः परापरातीतमुपैति तत्त्वम् ॥ २ ॥
शैवाः सौराश्च गाणेशा वैष्णवाः शक्तिपूजकाः ॥
भवन्ति यन्मयाः सर्वे सोऽहमस्मि परः शिवः ॥ ३ ॥
प्रमाणतोऽपि निर्णीतं कृष्णमाहात्म्यमद्भुतम् ॥
न शक्नुवन्ति ये सोढुं ते मूढा निरयं गताः ॥ ४ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां भगवद्गीतागूढार्थदीपिकायां पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

शं० टी०—अशोच्यानन्वशोचस्त्वमित्यारभ्योपदिष्टगीताशास्त्रस्येदमुपलक्षणं कृत्वा पञ्चदशाध्यायलक्षणमिदं शास्त्रमतिरहस्यमेतदर्थं बुद्ध्वा पुमान् कृतार्थो भवतीति प्रतिपादयन्नध्यायमुपसंहरति—इतीति । इत्येवंप्रकारेण मयोक्तमिदमेतच्छास्त्रं निर्विशेषं परं तत्त्वं शास्ति बोधयतीति शास्त्रं पञ्चदशाध्यायरूपं गुह्यतमं ब्रह्मस्वरूपप्रतिपादनपरत्वादत्यन्तगोप्यं यस्मैकस्मैचिदनधिकारिणे दुष्टायासुरसंपत्तिमते न वक्तव्यं न श्रावयितव्यं च । यः कश्चित् ब्राह्मणादिः शुभाचारनिरतः सुशीलः सर्वैषणावैमुख्येन मोक्षैककामो भवति स एतत् पञ्चदशाध्यायरूपं शास्त्रं तत्प्रतिपादितमर्थं सद्गुरोरनुग्रहाद्बुद्ध्वा सम्यग्ज्ञात्वा बुद्धिमान् ब्रह्मैवाहमिति ज्ञानमेवात्र बुद्धिशब्दार्थस्तद्वान् ब्रह्मज्ञानसंपन्नस्तत्फलवांश्च स्यात् । कृतकृत्यश्च स्यात्—कृत्यं ब्राह्मणादेः शुद्धात्मनो यत् कर्तव्यमग्निहोत्राद्यश्वमेधान्तमौपासनादीशानबल्यन्तं यच्चान्यच्छ्रौतं स्मार्तं च कर्म तत्सर्वं कृतमनेन ब्रह्मविदेति कृतकृत्यः सर्वकर्मानुष्ठाता स्यात् । सर्वात्मनि ब्रह्मणि विज्ञाते विदुषा सर्ववेदशास्त्रपुराणेतिहासागमप्रसिद्धं सर्वं कृतं भवति तज्जन्यसुखं सर्वमनुभूतं च भवति, ब्रह्मानन्दे सर्वानन्दानामन्तर्भावात् "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति श्रुतेः । तस्माद्ब्रह्मविदेव कृतार्थ इति सिद्धम् ॥ २० ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीमच्छंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

१ पुराणपुरुषोत्तमयोगो नामेति अधिकः पाठः ।

श्री० टी०—अध्यायार्थमुपसंहरति—इतीति । इत्यनेन संक्षेपप्रकारेण गुह्यतममतिरहस्यं संपूर्णं शास्त्रमेव मयोक्तम् । न पुनर्विंशतिश्लोकमध्यायमात्रम् हे अनघ व्यसनशून्य ! अत एतन्मदुक्तं शास्त्रं बुद्ध्वा बुद्धिमान् सम्यग्ज्ञानी कृतकृत्यश्च स्याद्योऽपि कोऽपि, हे भारत ! त्वं कृतकृत्योऽसीति किं वक्तव्यमिति भावः ॥ २० ॥

संसारशाखिनं छित्त्वा स्पष्टं पञ्चदशे प्रभुः । पुरुषोत्तमयोगाख्ये परं पदमुपादिशत् ॥ १ ॥

इति श्रीसुबोधिन्यां टीकायां पञ्चदशोऽध्यायः ॥ १५ ॥

स० टी०—अध्यायार्थं स्तुवन्नेवमुपसंहरतीश्वरः ॥ अनेनैव प्रकारेण रहस्यतममुत्तमम् ॥ १ ॥ संपूर्णं शास्त्रमेवेदमध्यायेऽस्मिन्समासतः ॥ मया सर्वेश्वरेणोक्तं हे निर्दोषार्जुन प्रिय ॥ २ ॥ कथं शास्त्रत्वमेतस्मिन्नध्याय इति चेच्छृणु ॥ हितशासनतः प्रोक्तं शास्त्रत्वं तत्त्वदर्शिभिः ॥ ३ ॥ तदस्मिन्नखिलं प्रोक्तमध्याये हरिणा स्वयम् ॥ तत्कथं शृणु शास्त्रस्य प्रमेयं सर्वमत्र भोः ॥ ४ ॥ शास्त्रं हि द्विविधं प्रोक्तं हितशासनतत्परम् ॥ प्रवृत्तं च निवृत्तं च तत्रान्तिममिहोच्यते ॥ ५ ॥ जीवो ब्रह्म तयोरैक्यं तद्विज्ञानोपयोगिनः ॥ पदार्था यत्र कथ्यन्ते तन्निवृत्तमितीर्यते ॥ ६ ॥ निष्कामधर्मसंसिद्धबुद्धिशुद्धियुतः सुधीः ॥ अधिकारी निवृत्तेऽस्मिन् शास्त्रे तत्त्वावबोधके ॥ ७ ॥ वैराग्यं तत्र मुख्यं स्यात्तदादौ हरिणेरितम् ॥ संसारवृक्षविच्छेदि साधनं सुविवेकतः ॥ ८ ॥ अधिष्ठानात्मतत्त्वस्य नित्यत्वमवधेः स्मृतम् ॥ तत्राध्यस्तस्य विश्वस्य बाध्यत्वात्स्यादनित्यता ॥ ९ ॥ अनित्ये दोषबाहुल्यवीक्षणादरतिः सुखे ॥ नित्ये ब्रह्मसुखे मोक्षे रतिर्निर्दोषवस्तुनि ॥ १० ॥ यावदात्मापरिज्ञानं तावत्कर्मादिहेतुका ॥ संसृतिरक्षया नित्यं मृषापि स्यादनर्थदा ॥ ११ ॥ अनादिमध्यनिधना स्वप्नसृष्टिरिव भ्रमात् ॥ वैराग्यात्सविवेकात्स्यादस्या उच्छेदने क्षमः ॥ १२ ॥ विरक्तः सर्वकर्माणि संन्यस्य च गृहादिकम् ॥ अनन्यशरणो भूत्वा प्रपद्येत हरिं गुरुम् ॥ १३ ॥ यतः प्रवृत्तिरेतस्याः संसृतेरद्वयाद्धरेः ॥ तमेव शरणं गच्छेत्तदुच्छेदाय सन्मतिः ॥ १४ ॥ तत्प्रसादादुदेत्यस्य तत्त्वज्ञानं ससाधनम् ॥ येन यान्ति परं धाम यतो नावर्तते पुनः ॥१५॥ श्लोकैः पञ्चभिरित्युक्तं सामान्याच्छास्त्रमेयकम् ॥ तद्विशेषान्पुनर्विष्णुर्दर्शयामास विस्तरात् ॥ १६ ॥ तत्र गन्तव्यमेकेन पदं धामेति शब्दितम् ॥ स्वप्रकाशमनाभास्यं पुनरावृत्तिवर्जितम् ॥ १७ ॥ उक्त्वास्याज्ञानतोऽनादिजीवभावो विभोः स्मृतः ॥ अभिन्नोऽपीश्वराज्जीव उपाधेर्भेदवानिव ॥ १८ ॥ यावदज्ञानमेतस्य लिङ्गाद्यध्यासतो विभोः ॥ संसारचक्रे भ्रमणं सदा जन्मादिलक्षणे ॥१९॥ स्थूलं भोगालयं प्राप्य लिङ्गदेहैकसाधनः ॥ भुङ्क्ते भोगान्भ्रमाविष्टः सन्नभोक्ता विलक्षणः ॥ २० ॥ सर्वत्र साक्षिरूपेण व्याप्तौ भासयन्नपि ॥ ज्ञात्रादित्रिपुटीं नैनं पश्यन्त्यज्ञानमोहिताः ॥ २१ ॥ ये तु कृष्णपदाम्भोजध्याननिर्मलबुद्धयः ॥ ते पश्यन्ति पृथक्कृत्य देहादिभ्यश्च साक्षिणम् ॥ २२ ॥ अहो मोहस्य माहात्म्यं यत्स्वरूपमतिस्फुटम् ॥ पश्यन्तोऽपि न पश्यन्ति यतमाना अबुद्धयः ॥ २३ ॥ अहो हरिपदाम्भोजभक्तेर्माहात्म्यमुत्तमम् ॥ अनिच्छन्तोऽपि पश्यन्ति यत्स्वरूपं महत्तमाः ॥ २४ ॥ इत्येवं पञ्चभिः श्लोकैस्त्वंपदार्थं रमापतिः ॥ अभिधाय ततः श्लोकैश्चतुर्भिस्तत्पदार्थकम् ॥ २५ ॥ विभूतिकथनव्याजाद्दर्शयामास सिद्धये ॥ सर्वत्रातिस्फुटं तेजोऽप्यधिदैवादिगोचरे ॥ २६ ॥ सर्वाधारो निराधारः सर्वपोषक ईश्वरः ॥ प्राणादिप्रेरकत्वेन जीवने हेतुरेव च ॥ २७ ॥ सर्वकर्ता तथा पाता हर्ता सर्वत्रगो हरिः ॥ सर्वानुस्यूतरूपश्च सर्वाधिष्ठानमेव च ॥ २८ ॥ सर्वबुद्धिगतः साक्षी स्मृतिज्ञानफलप्रदः ॥ तन्नाशकोऽप्यलिप्तश्च देहिनां स्वस्वकर्मभिः ॥ २९ ॥ इन्द्रचन्द्रादिशब्दैश्च प्रतिपाद्यः स आगमे ॥ वेदान्तेषु स एवास्ति वेद्यो ज्ञातः पुमर्थकः ॥ ३० ॥ वेदान्तानां च साफल्यं तस्मिन्ज्ञाते परे पदे ॥ सर्ववेदगिरां

कर्ता शास्त्रयोनितया हरिः ॥ ३१ ॥ वेदवेत्ता स एवास्ति दैशिकादिस्वरूपधृक् ॥ ज्ञानं ज्ञेयं तथा ज्ञाता स एव न ततः पृथक् ॥ ३२ ॥ अभिधाय हरिः सम्यक् तत्पदार्थं पुनस्तयोः ॥ उपाधी दर्शयामास बाध्यौ तत्त्वंपदार्थयोः ॥ ३३ ॥ कार्योपाधिः क्षरः प्रोक्तो जीवसंसृतिकारणम् ॥ अक्षरः कारणोपाधिर्माया विश्वैककारणम् ॥ ३४ ॥ कार्यकारणरूपौ द्वावुपाधी च क्षराक्षरौ ॥ उक्त्वाखण्डार्थमात्मानं पुरुषोत्तमसंज्ञितम् ॥ ३५ ॥ दर्शयामास वेदान्तसिद्धान्तं हेतुपूर्वकम् ॥ सर्वाधिष्ठानभावेन स्थितोऽप्यच्युत एव यः ॥ ३६ ॥ मायातीतः स्वयं ज्योतिरुत्तमः सोऽक्षरात्क्षरात् ॥ पृथक्त्वेन यतोऽध्यस्तं न पृथक्त्वेन किंचन ॥ ३७ ॥ देहादयोऽप्यनात्मान आत्माभासतयाऽखिलाः ॥ भासमानास्ततो भिन्नः परमात्माऽद्वयो हरिः ॥ ३८ ॥ जीवत्वमीश्वरत्वं च तत्र मायाविजृम्भणम् ॥ स्वतः शुद्धोऽद्वयानन्दः पुरुषोत्तम ईरितः ॥३९॥ कार्यकारणभावात्सोऽत्यन्तभिन्नो निरञ्जनः ॥ सजातीयविजातीयभिदाशून्योऽस्ति निष्कलः ॥ ४० ॥ अखण्डार्थः स एवास्ति तत्त्वमस्यादिसद्गिराम् ॥ पुरुषोत्तमशब्देन प्रतिपाद्यः परः पुमान् ॥ ४१ ॥ यः साक्षी पुरुषः प्रोक्तः स एवोत्तम ईरितः ॥ तज्ज्ञानात्सर्वविज्ञानसिद्धिरत्र निराकुला ॥ ४२ ॥ वेदे सर्वत्र वेद्यत्वात्स एव प्रथितः पुमान् ॥ लोके काव्यपुराणादौ प्रतिपाद्यः स एव हि ॥ ४३ ॥ यस्तु संमोहशून्यः सन् वेद सम्यङ्नरोत्तमः ॥ स एव सर्ववित्सर्वानुस्यूतात्मावबोधतः ॥ ४४ ॥ स एव भगवद्भक्तः सदाऽनन्यधिया हरिम् ॥ भजते सर्वकृत्सर्वभूतानामुत्तमः पुमान् ॥ ४५ ॥ नातो गुह्यतमं शास्त्रं परं स्यात्संमतं सताम् ॥ हितशासनमेवेदं शास्त्रत्वेनात्र कीर्तितम् ॥ ४६ ॥ अतो भगवता सम्यगवाद्येतद्धितैषिणा ॥ इति गुह्यतमं शास्त्रमित्यादिं विजयं प्रति ॥ ४७ ॥ एतच्छास्त्रं यथोक्तं यः कश्चिद्बुद्ध्वातिपुण्यवान् ॥ आत्मज्ञानान्वितो भूत्वा कृतकृत्यो भवेन्नरः ॥ ४८ ॥ कृतं कृत्यं च येनासौ यस्य कृत्यान्तरं मनाक् ॥ नावशिष्टं श्रुतौ यद्यत्प्रतिपादितमुत्तमम् ॥ ४९ ॥ श्रेष्ठजन्मप्रसूतेन कर्तव्यं ब्राह्मणेन वै ॥ तत्सर्वं भगवत्तत्त्वे विदिते सुकृतं भवेत् ॥ ५० ॥ न त्वन्यथेह कस्यापि कृत्यं परिसमाप्यते ॥ त्वं तूत्कृष्टकुले जातः स्वयं व्यसनवर्जितः ॥ ५१ ॥ स्वगुणेन कुलोत्कृष्टयाचैतच्छास्त्रं यथार्थतः ॥ बुध्वैवं कृतकृत्यस्त्वं भविष्यसि न संशयः ॥ ५२ ॥ २० ॥

संगृह्यैवागमार्थं विजयरथगतः शास्त्रयोनी रमेशो
गीताख्ये शास्त्रसारे विततपदपरे विस्तृतं तत्त्वमुक्त्वा ॥
तत्राप्यत्यन्तसारं प्रकृतिविकृतितोऽत्यन्तभिन्नं रहस्यं
स्वीयं प्रोवाच योऽन्तस्तमहमतिमुदा संश्रये कृष्णमीड्यम् ॥ १ ॥

कृतं कृत्यं तेन श्रुतिशिखरसिद्धान्तममलं विविच्यादौ बुद्धस्त्रिभुवनगुरुर्येन मधुहा ॥
स सर्वज्ञो मुक्तो भजति सततं प्रेमकलया मुकुन्दं वन्द्योऽसौ भवति विबुधानामपि जनः ॥ २ ॥

समस्तवेदेषु तथैव भारते तथाद्यकाव्ये स्मृतिषूत्तमोत्तमः ॥
पुराणजालेऽपि हि वास्तवं पदं मुकुन्द एवास्ति सतां मतिस्त्वियम् ॥ ३ ॥
चेतः परित्यज्य विकल्पजालं रमस्व भो कृष्णपदारविन्दे ॥
नातः परं तत्त्वमिहास्ति किंचित्सद्भिर्विनिर्णीतमिदं मतं सत् ॥ ४ ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ संसाराख्यतनूच्छेदी पूर्तिं पञ्चदशो गतः ॥ टीकाश्लोकसंख्या ॥ २५९ ॥ आदित आरभ्य टीकाश्लोकसंख्या ॥ ४२६३ ॥

भा० टी०—एवमस्मिन्नध्याये भगवत्तत्वज्ञान मोक्षफलकमुक्तमुपसंहरन् तत्स्तौति—इतीति । इत्येतद्गुह्यतमं गोप्यं कर्मतत्त्वं गुह्यतरमुपासनातत्त्वमिदं तु परमात्मतत्त्वं गोप्यतममत्यन्तरहस्यं शास्त्रं समस्तस्य

गीताख्यशास्त्रस्य सर्वस्य वेदस्य चार्थोऽस्मिन्नध्याये संक्षेपेणोक्तः 'यस्तं वेद स वेदवित्', 'वेदैश्च सर्वैरहमेव वेद्यः' इति चातोऽस्याध्यायस्य सकलशास्त्ररूपत्वादिदं शास्त्रमुक्तं मया कथितं, हेऽनघाऽव्यसन निष्पापानघस्य त्वादृशस्यैवास्मिन् शास्त्रेऽधिकारित्वादिति भावः। एतच्छास्त्रं यथादर्शितार्थं बुद्ध्वा बुद्धिमान्स्यात्। नान्यथा। कृतकृत्यश्च कृतं कृत्यं येन स विशिष्टजन्मना ब्राह्मणेन यत्कर्तव्यं तत्सर्वं भगवत्तत्त्वे विदिते कृतं भवेदित्यर्थः। नचान्यथा कस्यचिदपि कर्तव्यता परिसमाप्यत इत्याशयः। तथाचोक्तं सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते। मनुरप्याह—'एतद्धि जन्मसामग्र्यं ब्राह्मणस्य विशेषतः। प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा' इति। यत एतत्परमार्थतत्त्वं मत्तः श्रुतवानस्यतः कृतार्थस्त्वं उत्तमवंशोद्भवत्वं सार्थकं कृतवानसीति ध्वनयन्संबोधयति भारतेति ॥ २० ॥

तदनेन पञ्चदशाध्यायेन वैराग्यार्थं संसारस्य मिथ्यात्वं निरूपयता भगवद्भक्तिलक्ष्यतत्त्वज्ञानानाममानित्वादिविशेषणोपेतानां प्राप्यं सूर्याद्यभास्यं पदं तदज्ञानेनोत्क्रान्त्यादिकं च निरूपयता आत्मनो देहात् व्यतिरिक्तत्वं तत्त्वेन शुद्धचित्तैकगम्यत्वं सर्वावभासकत्वं चिद्रूपत्वं सर्वज्ञत्वं सर्वात्मत्वं सर्वव्यवहारास्पदत्वं क्षराक्षरातीतत्वं च प्रतिपादयता तत्त्वज्ञानैकप्राप्यमखण्डैकरसत्वं प्रकाशितम्।

आधारं जगतां गतिं गतिमतां सूर्याद्यभास्यं सतां
सारं सारवतां गतागतवतां चिन्तामसंजानताम्।
संसारं विततां नतिं कृतवतां सर्वार्थदं देवतां
शौरिं सर्वततां परां भज सितां चेतो न चासाधुताम्॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां पञ्चदशोऽध्यायः ॥ १५ ॥

प० टी०—अथाध्यायार्थमुपसंहरति—इतीति। इत्यनेन संक्षेपप्रकारेण गुह्यतममतिरहस्यं संपूर्णं शास्त्रमेव मयोक्तं न पुनरध्यायमात्रं भोऽनघ शुद्धान्तःकरण एतद्बुध्वा सम्यग्ज्ञात्वा यः कोऽपि बुद्धिमांस्तत्त्वज्ञानवान् कृतकृत्यश्च स्यात्, किं पुनर्भवानित्यर्थः ॥ २० ॥

अथाध्यायतात्पर्यम्।

ब्रह्माख्यं मूलमूर्ध्वं शिरसि विजयतेऽर्वाक्कराङ्घ्र्यादिशाखा-
स्त्रैगुण्यैः पल्लवाः स्युर्विषयपरिणतिर्वासनाः पर्णजालम्।
वृक्षे स्थूले प्रपञ्चे पुरुषवरमुपाश्रित्य मूलं विदित्वा-
ऽसंगेनच्छिन्धि शेषं हरिरिति दशमे पञ्चयुक्ते जगाद ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां
पुरुषोत्तमयोगो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

रा० टी०—एतच्च न यस्मैकस्मैचिद्वाच्यमिति भावेनाह—इतीति। इति अधश्च मूलान्यनुसंततानीत्यादिनोक्तप्रकारेणेदं सर्वान्तर्यामित्वादिकं, यद्वा ऊर्ध्वमूलमित्यादिनोक्तप्रकारेणेदं जगद्वृक्षमूलत्वादिकं शास्त्रं शिक्षणीयं गुह्यतममतिगोप्यं मयोक्तम्। ततः किमित्यत आह—एतदिति। एतत्प्रागुक्तं सर्वं बुद्ध्वा बुद्धिमानपरोक्षज्ञानी स्यात्। कृतकृत्यो मुक्तश्च स्यादिति ॥ २० ॥

इति श्रीमद्भगवद्गीतार्थसंग्रहे श्रीराघवेन्द्रयतिकृते पञ्चदशोऽध्यायः ॥ १५ ॥

## अथ षोडशोऽध्यायः ।

**अभयं सत्वसंशुद्धिर्ज्ञानयोगव्यवस्थितिः ॥**
**दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥**

त० टी०—तदेवं भगवद्भावापत्तिलक्षणमोक्षप्राप्तिसाधनभूतभगवदनन्यभक्तेरन्तरङ्गसाधनतया क्षेत्रज्ञस्वरूपयाथात्म्यं तत्संसृतिहेतुः प्रकृतिगुणसंयोगश्च त्रयोदशे उक्तः । ततो गुणलक्षणबन्धनप्रकारस्तदत्ययप्रकारेण ब्रह्मभावप्राप्तिश्चतुर्दशेऽभिहिता । पञ्चदशे च संसारस्य वृक्षस्येव वैराग्यशितेन ज्ञानशस्त्रेण छेदनपूर्वकपरमपदप्राप्तिः, प्राप्तुः प्रत्यगात्मनो मुक्तस्य संसारिणश्च भगवदंशत्वं, भगवतश्चादित्यचन्द्राग्न्यादिविभूतिमत्त्वात् क्षराक्षरपुरुषद्वयवैलक्षण्येन पुरुषोत्तमत्वं, तथा पुरुषोत्तमत्वज्ञातुः सर्वज्ञत्वं भगवद्भक्तत्वं कृतकृत्यत्वं च वर्णितम् । इदानीमुक्तस्य गुह्यतमशास्त्रस्याधिकारिनिर्णयाय " अवजानन्ति मां मूढा " इत्युपक्रम्य " राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः । महात्मानस्तु मां पार्थ ! दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम्" इति नवमाध्याय उद्दिष्टयोर्हेयोपादेययोर्दैवासुरसंपदोर्विवरणभूतः षोडशाध्याय आरभ्यते । तत्र राक्षस्यासुर्योः संसरणहेतुत्वाविशेषादेकीकृत्यासुरीमेवेह परिहाराय निरूपयितुं तावन्मोक्षहेतुभूतामुक्तशास्त्राधिकारोपयुक्तामुपादेयां दैवीं संपदं श्लोकत्रयेण प्रदर्शयन् श्रीभगवानुवाच—अभयमिति । तत्रागन्तुकदुःखस्य हेतुदर्शनजमन्तर्दुःखं भयं तद्राहित्यमभयं, सत्त्वमन्तःकरणं तस्य संशुद्धिः रागद्वेषादिशून्यता, ज्ञानयोगव्यवस्थितिः आत्मज्ञानोपाये परिनिष्ठा, दानं स्वधर्मोपार्जितान्नादेः पात्रे प्रतिपादनं, दमोऽन्तःकरणस्य विषयप्रवणतानिवर्तनं, यज्ञो महायज्ञादिः, ब्रह्मयज्ञो जपयज्ञो वा, स्वाध्यायः भगवत्स्वरूपगुणलीलाविभूतिप्रतिपादकरहस्यादिपाठाभ्यासः, तपः उत्तराध्याये वक्ष्यमाणं सात्त्विकं शारीरादिकम्, आर्जवं मनोवाक्कायवृत्तीनां समत्वम् ॥ १ ॥

म० टी०—अनन्तराध्याये ' अधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके ' इत्यत्र मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमाना वासनाः संसारस्यावान्तरमूलत्वेनोक्तास्ताश्च दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचिताः । तत्र वेदबोधितकर्मात्मज्ञानोपायानुष्ठानप्रवृत्तिहेतुः सात्त्विकी शुभवासना दैवी प्रकृतिरित्युच्यते । एवं वैदिकनिषेधातिक्रमेण स्वभावसिद्धरागद्वेषानुसारिसर्वानर्थहेतुप्रवृत्तिहेतुभूता राजसी तामसी चाशुभवासनाऽऽसुरी राक्षसी च प्रकृतिरुच्यते । तत्र च विषयभोगप्राधान्येन रागप्राबल्यादासुरीत्वं हिंसाप्राधान्येन द्वेषप्राबल्याद्राक्षसीत्वमिति विवेकः । संप्रति तु शास्त्रानुसारेण तद्विहितप्रवृत्तिहेतुभूता सात्त्विकी शुभवासना दैवी संपत्, शास्त्रातिक्रमेण तन्निषिद्धविषयप्रवृत्तिहेतुभूता राजसी तामसी चाशुभवासना राक्षस्यासुर्योरेकीकरणेनासुरी संपदिति द्वैराश्येन शुभाशुभवासनाभेदम् " द्वया ह प्राजापत्या देवाश्चासुराश्च" इत्यादिश्रुतिप्रसिद्धं शुभानामादानायाशुभानां हानाय च प्रतिपादयितुं षोडशोऽध्याय आरभ्यते । तत्रादौ श्लोकत्रयेणादेयां दैवीं संपदं ( श्रीभगवानुवाच ) । शास्त्रोपदिष्टेऽर्थे संदेहं विनाऽनुष्ठाननिष्ठत्वं एकाकी सर्वपरिग्रहशून्यः कथं जीविष्यामीति भयराहित्यं वाऽभयम् । सत्त्वस्यान्तःकरणस्य शुद्धिर्निर्मलता । तस्याः सम्यक्ता भगवत्तत्त्वस्फूर्तियोग्यता सत्त्वसंशुद्धिः । परवञ्चनमायानृतादिपरिवर्जनं वा । परस्य व्याजेन वशीकरणं परवञ्चनम्, हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणं माया । अयथादृष्टकथनमनृतमित्यादि । ज्ञानं शास्त्रादात्मतत्त्वस्यावगमः । चित्तैकाग्रतया तस्य स्वानुभवारूढत्वं योगः, तयोर्व्यवस्थितिः सर्वदा तन्निष्ठता

ज्ञानयोगव्यवस्थितिः । यदा तु अभयं सर्वभूताभयदानसंकल्पपालनम्—एतच्चान्येषामपि परमहंसधर्माणामुपलक्षणम् , सत्त्वसंशुद्धिः श्रवणादिपरिपाकेणान्तःकरणस्यासंभावनाविपरीतभावनादिमलराहित्यम् , ज्ञानमात्मसाक्षात्कारः, योगो मनोनाशवासनाक्षयानुकूलः पुरुषप्रयत्नस्ताभ्यां विशिष्टा संसारिविलक्षणाऽवस्थितिर्जीवन्मुक्तिर्ज्ञानयोगव्यवस्थितिरित्येवं व्याख्यायते, तदा फलभूतैव दैवी संपदियं द्रष्टव्या । भगवद्भक्तिं विनान्तःकरणसंशुद्धेरयोगात्तया सापि कथिता । "महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥" इति नवमे दैव्यां संपदि भगवद्भक्तेरुक्तत्वाच्च भगवद्भक्तेरतिश्रेष्ठत्वादभयादिभिः सह पाठो न कृत इति द्रष्टव्यम् । महाभाग्यानां परमहंसानां फलभूतां दैवीं संपदमुक्त्वा ततो न्यूनानां गृहस्थादीनां साधनभूतामाह—दानं स्वस्वत्वपरित्यागपूर्वकं परस्वत्वतापादनमन्नादीनां यथाशक्ति शास्त्रोक्तः संविभागः, दमो बाह्येन्द्रियसंयमः । ऋतुकालाद्यतिरिक्तकाले मैथुनाद्यभावः । चकारोऽनुक्तानां निवृत्तिलक्षणधर्माणां समुच्चयार्थः । यज्ञश्च श्रौतोऽग्निहोत्रदर्शपूर्णमासादिः । स्मार्तो देवयज्ञः पितृयज्ञो भूतयज्ञो मनुष्ययज्ञ इति चतुर्विधः । ब्रह्मयज्ञस्य स्वाध्यायपदेन पृथगुक्तेः । चकारोऽनुक्तानां प्रवृत्तिलक्षणधर्माणां समुच्चयार्थः । एतत्त्रयं गृहस्थस्य । स्वाध्यायो ब्रह्मयज्ञः अदृष्टार्थमृग्वेदाद्यध्ययनरूपः यज्ञशब्देन पञ्चविधमहायज्ञोक्तिसंभवेऽप्यसाधारण्येन ब्रह्मचारिधर्मत्वकथनार्थं पृथगुक्तिः । तपस्त्रिविधं शारीरादि सप्तदशे वक्ष्यमाणं वानप्रस्थस्यासाधारणो धर्मः । एवं चतुर्णामाश्रमाणामसाधारणान् धर्मानुक्त्वा चतुर्णां वर्णानामसाधारणधर्मानाह—आर्जवं अवक्रत्वं श्रद्दधानेषु श्रोतृषु स्वज्ञातार्थासंगोपनम् ॥ १ ॥

शं० टी०—सत्त्वादिगुणत्रयातिक्रमणाय यन्निष्ठा कर्तव्या तस्य निर्विशेषस्य परस्य ब्रह्मणः स्वरूपं तद्वेदनप्रकारं ज्ञानं तत्फलं च विदेहकैवल्यं प्रतिपाद्याधुना यो मामेवमसंमूढो जानाति पुरुषोत्तममित्यसंमूढस्यैव पुरुषोत्तमस्वरूपवेदनाधिकार इत्यधिकारिणो योगिनो मुमुक्षोरसंमोहत्वसिद्धये दैवी संपत्संपादनीया त्वासुरसंपद्वर्जनीयेति संपदोरुभयोः स्वरूपप्रदर्शनाय षोडशाध्याय आरभ्यते । तत्रादौ तयोरुभयोः संपदोर्दैवसंपद एव मोक्षसाधनत्वेनोत्तमत्वादेतस्या एव मुमुक्षोरुपादेयत्वाच्च प्रथमं दैवीं संपदं प्रतिपादयितुं श्रीभगवानुवाच—**अभयमिति** । अभयं भयाभावः आध्यात्मिकाद्युपद्रवेषु प्राप्तेष्वपि मनसि भयराहित्यं परेषां भयानुत्पादनं वा सर्वशास्त्रज्ञतया निर्विचिकित्सं सर्वकर्मानुष्ठातृत्वं वा अभयशब्दार्थः । सत्त्वसंशुद्धिः सत्त्वस्यान्तःकरणस्य संशुद्धिः शुद्धता रागद्वेषलोभमोहासूयामत्सराहंकारादिदोषानाश्रयत्वं, ज्ञानयोगव्यवस्थितिः ज्ञानयोगः श्रवणमननादिस्तत्रैव मनसो विशिष्यावस्थितिर्व्यवस्थितिः सदा तदेकप्रावण्यं, दानमर्थिभ्यः श्रद्धया यथाशक्त्या अन्नाद्यर्थसमर्पणं, दमो दुर्वृत्तेर्बाह्यकरणानामुपरमश्चेतसो दण्डनं वा दमः, चकारः समुच्चयार्थः । यज्ञः श्रौतोऽग्निहोत्रदर्शपूर्णमाससोमयागादिः, चकारात् स्मार्तः स्थालीपाकादिश्च गृह्यते । स्वाध्यायः ब्रह्मयज्ञदेवयज्ञादीनामप्युपलक्षणं, तपः देवद्विजगुरुप्राज्ञपूजनादिशारीरं वाचिकं मानसिकं च वक्ष्यमाणं त्रिविधमपि, आर्जवं मनोवाक्कायकर्मसु सर्वत्र सदैकरूपता ॥ १ ॥

श्री० टी०—आसुरीं संपदं त्यक्त्वा दैवीमेवाश्रिता नराः । मुच्यन्त इति निर्णेतुं तद्विवेकोऽथ षोडशे ॥ पूर्वाध्यायान्ते एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत इत्युक्तम् । तत्र क एतत्तत्त्वं बुध्यते को वा न बुद्ध्यत इत्यपेक्षायां तत्त्वज्ञानेऽधिकारिणोऽनधिकारिणश्च विवेकार्थं षोडशाध्यायारम्भः । निरूपिते हि कार्यार्थेऽधिकारिजिज्ञासा भवति । तदुक्तं भट्टैः—'भारो यो येन वोढव्यः स प्रागान्दोलितो यदा । तदा कस्तस्य वोढेति शक्यं कर्तुं निरूपणम् ॥' इति । तत्राधिकारिविशेषणभूतां दैवीं संपदमाह—**अभयमिति त्रिभिः** । अभयं भयाभावः । सत्त्वस्य चित्तस्य संशुद्धिः सुप्रसन्नता, ज्ञानयोगे आत्मज्ञानोपाये व्यवस्थितिः परिनिष्ठा, दानं स्वभोज्यस्यान्नादेर्यथोचितं संविभागः, दमो बाह्येन्द्रियसंयमः,

यज्ञो यथाधिकारं दर्शपूर्णमासादिः, स्वाध्यायो ब्रह्मयज्ञादिर्जपयज्ञो: वा, तप उत्तराध्याये वक्ष्यमाणं शारीरादि, आर्जवमवक्रता ॥ १ ॥

**स० टी०**—रताः केचिद्योगे विजितकरणाः संयतधियः क्रियाजाले केचित्सुखलवरसास्वादनपराः ॥ रताः शास्त्राभ्यासे विशदमतयः केचिदजडा वयं तु श्रीकान्ताननवचनमास्वाद्य कृतिनः ॥ १ ॥ न विद्या येषां श्रीर्न शरणमपीषन्न च गुणाः परित्यक्ता लोकैरपि वृजिनयुक्ताः श्रुतिजडाः ॥ शरण्यं यं तेऽपि प्रसृतगुणमाश्रित्य सुजना विमुक्तास्तं वन्दे यदुपतिमहं कृष्णममलम् ॥ २ ॥ अधश्च मूलानीत्यादिनाध्यायेऽनन्तरे नृणाम् ॥ पूर्वकर्मानुसारेण व्यज्यमाना हि वासनाः ॥ ३ ॥ अवान्तराणि मूलानि संसृतेरित्युदीरितम् ॥ दैव्यासुरी राक्षसी च प्राणिप्रकृतयः पुरा ॥ ४ ॥ बन्धमोक्षाधिकारिण्यः सूचिता नवमे किल ॥ वेदबोधितकर्मात्मज्ञानोपायाद्यनुष्ठितौ ॥ ५ ॥ प्रवृत्तिहेतुः प्रकृतिर्दैवी सा शुभवासना ॥ निषेधशास्त्रमुल्लङ्घ्य रागद्वेषानुसारतः ॥ ६ ॥ सर्वानर्थनिबन्धिन्यां प्रवृत्तौ या प्रवर्तिनी ॥ राजसी तामसी सा च राक्षसी चासुरी स्मृता ॥ ७ ॥ तत्रापि रागप्राबल्याद्भोगप्राधान्यमाग्रहात् ॥ यया साऽत्रासुरी ज्ञेया हिंसा या प्राणिनां वृथा ॥ ८ ॥ सा भवेद्द्वेषप्राबल्याद्यया सा राक्षसीरिता ॥ इदानीं वेदविहितप्रवृत्तिजनका शुभा ॥ ९ ॥ दैवी सा सात्त्विकी संपन्मोक्षहेतुरिहोच्यते ॥ या शास्त्रातिक्रमेणैव तन्निषिद्धैकगोचरे ॥ १० ॥ प्रवृत्तिहेतुभूता सा राजसी तामसी नृणाम् ॥ द्वयोश्च राक्षस्यासुर्योरेकीकृत्यैव संपदोः ॥ ११ ॥ आसुरीत्वेन कथनं क्रियते हेयसाम्यतः ॥ आदानाय शुभानां चाशुभानां हानसिद्धये ॥ १२ ॥ हरिणा षोडशोऽध्याय आरभ्यत इहोत्तमः ॥ तत्र श्लोकत्रयेणादावुपादेयां सुवासनाम् ॥ १३ ॥ दैवीमाह कृपासिन्धुर्भगवान् शुभसंपदम् ॥ गुरुशास्त्रोपदिष्टेऽर्थे विना संदेहमादरात् ॥ १४ ॥ तदनुष्ठाननिष्ठत्वमभयं भयवर्जितम् ॥ अकिंचनोऽहमेकाकी जीविष्याम्यधुना कथम् ॥ १५ ॥ इति वास्तु भयं तेन राहित्यमभयं स्मृतम् ॥ सत्त्वस्यान्तःकरणस्य शुद्धिर्निर्मलतेरिता ॥ १६ ॥ ब्रह्मैक्यस्फूर्तियोग्यत्वं शुद्धौ सम्यक्त्वमीरितम् ॥ परवञ्चनमायादिपरिवर्जनमेव वा ॥ १७ ॥ व्याजेनैव वशीकारः परस्य परवञ्चनम् ॥ हृदये चान्यथा कृत्वा व्यवहारोऽन्यथा बहिः ॥ १८ ॥ मायानृतं तु कथितमयथादृष्टभाषणम् ॥ एतेषां वर्जनं सत्त्वसंशुद्धिरथवा स्मृता ॥ १९ ॥ तत्त्वस्यावगमः शास्त्राज्ज्ञानं तस्य यथार्थतः ॥ चित्तैकाग्र्यतया स्वानुभवारूढत्वमेव च ॥२०॥ योगस्तत्रैव निष्ठत्वं ज्ञानयोगव्यवस्थितिः ॥ अत्युत्तमा सुकृतिनामियं संपदुदीरिता ॥ २१ ॥ विना भगवतो भक्तिं नोदेतीयं कदाचन ॥ अतिश्रेष्ठतया भक्तेर्न पाठोऽत्राभयादिषु ॥२२॥ प्रधानां संपदं दैवीमुक्त्वाऽत्यन्तविवेकिनाम् ॥ आहेदानीं गृहस्थादेरपि साधारणां हरिः ॥२३॥ दानं स्वत्वास्पदान्नादेर्यथाशक्ति यथाविधि ॥ संविभागो दमो बाह्येन्द्रियसंयम ईरितः ॥ २४ ॥ अनुक्तानां स्वधर्माणां चकारौ स्तः समुच्चये ॥ यज्ञः श्रौतोऽग्निहोत्रादिः स्मार्तो दैवादिकोऽध्वरः ॥२५॥ स्वाध्यायो ब्रह्मयज्ञश्च विधिनाध्ययनात्मकः ॥ ऋगादीनां च वेदानां वक्ष्यमाणं तपस्तथा ॥२६॥ त्रिधा सप्तदशेऽध्याये शरीरादिषु शोधकम् ॥ आर्जवं श्रद्दधानेषु स्वज्ञातार्थप्रकाशनम् ॥ २७ ॥ १ ॥

**भा० टी०**—मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः। राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः। भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ इति दैव्यासुरी राक्षसी चेति प्राणिनां प्रकृतयो नवमेऽध्याये सूचिताः। अतीतानन्तराध्याये चाधश्च मूलान्यनुसंततानि कर्मानुबन्धीनि मनुष्यलोके इत्यत्र कर्मव्यङ्ग्या वासनाः संसारस्यावान्तर्मूलत्वेनोक्ताः। ता मनुष्यदेहे प्राग्भवीयकर्मानुसारेण व्यज्यमानाः सात्त्विकराजसतामसभेदेन दैव्यादिप्रकृतित्वेन विभक्ता आविश्चिकीर्षुर्द्वे आह। "द्वया ह प्राजापत्या देवाश्चासुराश्च" इत्यादिश्रुत्यनुसारेण राक्षसीमासुर्यामन्तर्भाव्य मोक्षहेतुभूताया दैव्याः प्रकृतेरुपा-

दानायेतरयोर्हानाय च श्रीभगवानुवाच—तत्रादावादानाय दैवीं संपदमाह—अभयमित्यादित्रिभिः। अभयमभीरुता—शास्त्रोपदिष्टेऽर्थे संदेहं विहायानुष्ठाननिष्ठता, एकाकी सर्वपरिग्रहशून्यः कथं भविष्यामीति भयरहितता वा, आत्मचिन्तनाय गिरिदर्यादिनिवासेऽपि भयाभाव इति वा। सत्त्वस्यान्तःकरणस्य शुद्धिः परस्य व्याजेन वशीकरणरूपस्य वञ्चनस्य हृदयेऽन्यथा कृत्वा बहिरन्यथा व्यवहरणरूपाया मायाया अयथादृष्टकथनात्मकस्यानृतस्य विप्रलम्भभ्रमादेश्च परिवर्जनं शुद्धस्वभावेन व्यवहार इत्यर्थः। ज्ञानं शास्त्रादाचार्याद्वात्मादिपदार्थानामवगमः। इन्द्रियाद्युपसंहारेणैकाग्रतयावगतानां स्वात्मसंवेद्यतापादनं योगस्तयोर्व्यवस्थितिः व्यवस्थानं तन्निष्ठता दानं यथाशक्ति अन्नादीनां संविभागः। दमश्च बाह्यकरणानामुपशमोऽन्तःकरणस्योपशमं शान्तिं वक्ष्यति। यज्ञश्च श्रौतोऽग्निहोत्रादिः। देवयज्ञः स्मार्तश्च पितृयज्ञो भूतयज्ञो मनुष्ययज्ञश्चेति त्रिविधः स्वाध्यायोऽदृष्टार्थे ऋग्वेदाद्यध्ययनं तदध्यापनं च ब्रह्मयज्ञः, तपो वक्ष्यमाणं शारीरादि, आर्जवं सर्वदा ऋजुत्वं, यत्तु सत्त्वानां दुष्टप्राणिनां व्याघ्रादीनां संशुद्धिः स्वभावपरित्यागो यस्मादितीदृशः प्रभावविशेषः अन्तःकरणशुद्धेः शान्तिरिति च वक्ष्यमाणत्वादिति तन्नादर्तव्यम्। उक्तान्तःकरणशुद्ध्यपेक्षया तदुपशमस्य विलक्षणतायाः सुवचत्वेन कुकल्पनानौचित्यात्। ज्ञानमात्मचिन्तनं, योगो नित्यकर्मयोगः, तयोर्व्यवस्थितिः रात्रौ ज्ञानं दिवा यथाकालं कर्मयोग इत्येवंलक्षणा व्यवस्था, दानं तेषां कर्मणामीश्वरेऽर्पणं पात्रे त्यागस्योत्तरत्र त्यागशब्देन गृहीतत्वात्। यदा त्वभयं सर्वभूताभयदानसंकल्पपरिपालनम्। एतच्चान्येषामपि परमहंसधर्माणामुपलक्षणं, सत्त्वसंशुद्धिः श्रवणादिपरिपाकेनान्तःकरणस्यासंभावनाविपरीतभावनादिमलराहित्यं ज्ञानमात्मसाक्षात्कारः योगो मनोनाशवासनाक्षयानुकूलः पुरुषप्रयत्नस्ताभ्यां विशिष्टा संसारविलक्षणावस्थितिर्जीवन्मुक्तिर्ज्ञानयोगव्यवस्थितिरित्येवं व्याख्यायेत, तदा फलभूतैव दैवी संपदियं द्रष्टव्येत्यादिव्याख्यानेषु सम्यग्विचार्य समीचीनभाष्यस्योपलक्षणार्थतयोपादेयमन्यत्तु हेयम्॥ १॥

प० टी०—पूर्वाध्यायान्ते 'एतद्बुध्वा बुद्धिमान् स्यात्कृतकृत्यश्च' इत्युक्तं तर्हि क एतद्बुद्ध्वा कृतकृत्यो भवत्यबुद्ध्वा च कः संसारी भवतीति विवेक्तुं देवासुरसंपत्तिकथनाय षोडशाध्यायप्रवृत्तिस्तत्र प्रथमं तत्त्वज्ञानाधिकारिणं निरूपयितुं भगवान् दैवीं संपत्तिमाह—अभयमिति त्रिभिः। अभयं भयराहित्यं, सत्त्वस्य चित्तशुद्धिः प्रसन्नता, ज्ञानयोग आत्मज्ञाने व्यवस्थितिः परिनिष्ठा, दानं स्वभोग्यस्यान्नादेर्यथोचितं संविभागः, दमो बाह्येन्द्रियसंयमः, यज्ञो यथाधिकारं दर्शपौर्णमासादिः, स्वाध्यायो ब्रह्मयज्ञादिभिर्जपयज्ञः, तपः शरीरादि त्रिविधं वक्ष्यमाणम्, आर्जवमवक्रता॥ १॥

रा० टी०—पूर्वाध्याये निर्मानमोहा इत्यादिना संक्षेपेणोक्तस्य पुमर्थयोर्ज्ञानमोक्षयोः साधनस्य यतन्तोऽप्यकृतात्मान इत्यादिना चोक्तस्य पुमर्थविरोधिनश्च देवासुरलक्षणरूपत्वात्तत्प्रपञ्चनमस्मिन्नध्याये क्रियत इति पूर्वसंगतिरध्यायभेदश्च ज्ञेयः। विरोध्युक्तिश्च साधनमनुतिष्ठता तत्त्यागोऽवश्यं कार्य इति भावेनेति बोध्यम्। तत्रादावभ्यर्हितत्वाद्देवलक्षणं तावदाह—अभयमित्यादि श्लोकत्रयेण। अभयं स्वतोऽन्यस्यान्यस्माच्च स्वस्य भयाभावः। 'यस्मान्नोद्विजते लोको लोकान्नोद्विजते च यः' इत्युक्तेः। सत्त्वसंशुद्धिः चित्तप्रसादः। ज्ञानयोगव्यवस्थितिः ज्ञानोपायनिष्ठता। दानं पात्रे द्रव्यादित्यागः। दम इन्द्रियनिग्रहः। यज्ञो ज्योतिष्टोमादिः, देवयज्ञपितृयज्ञादिर्वा। स्वाध्यायो वेदाध्ययनम्। तपो ब्रह्मचर्यादि। आर्जवं मनोवाक्कर्मस्वैकरूप्यम्॥१॥

**अहिंसा सत्यमक्रोधस्त्यागः शान्तिरपैशुनम्॥**
**दया भूतेष्वलोलुप्त्वं मार्दवं ह्रीरचापलम्॥ २॥**

त० टी०—किंच—अहिंसेति। अहिंसा प्राणिमात्रपीडावर्जनं, सत्यं यथादृष्टश्रुतार्थभाषणम्,

१ लोलुप्त्वं मधुसूदनश्रीधराद्यैर्धृतः पाठः

अक्रोधः अपराधकारिणि सन्निहितेऽप्यविकृतचित्तत्वं, त्यागः अन्याभिकाङ्क्षितस्य प्रियस्यापि वस्तुनो दातृत्वशक्तिः, शान्तिरिन्द्रियवृत्तिरोधनम्, अपैशुनं परोक्षे परदोषप्रकाशनवर्जनं, भूतेषु दया दुःखासहिष्णुता, अलोलुत्वम् अलोलुपत्वं पकारलोप आर्षः ज्ञानेन्द्रियाणां विषयेष्वचाञ्चल्यमित्यर्थः, मार्दवं कोमलहृदयत्वं, ह्रीरकार्यकरणे लज्जा, अचापलं प्रयोजनं विनाऽपि कर्मेन्द्रियाणां प्रवर्तनं चापलं तदभावोऽचापलमित्यर्थः ॥ २ ॥

म० टी०–प्राणिवृत्तिच्छेदो हिंसा तदहेतुत्वमहिंसा। सत्यमनर्थाननुबन्धि यथाभूतार्थवचनम्। परैराक्रोशे ताडने वा कृते सति प्राप्तो यः क्रोधस्तस्य तत्कालमुपशमनमक्रोधः। दानस्य प्रागुक्तेस्त्यागः संन्यासः। दमस्य प्रागुक्तेः शान्तिरन्तःकरणस्योपशमः। परस्मै परोक्षे परदोषप्रकाशनं पैशुनं तदभावोऽपैशुनम्। दया भूतेषु दुःखितेष्वनुकम्पा। अलोलुप्त्वमलोलुपत्वम्, इन्द्रियाणां विषयसंनिधानेऽप्यविक्रियत्वम्, मार्दवमक्रूरत्वं वृथापूर्वपक्षादिष्वपि शिष्यादिष्वप्रियभाषणादिव्यतिरेकेण बोधयितृत्वम्। ह्रीरकार्यप्रवृत्त्यारम्भे तत्प्रतिबन्धिका लोकलज्जा। अचापलं प्रयोजनं विनापि वाक्पाण्यादिव्यापारयितृत्वं चापलं तदभावः। आर्जवादयोऽचापलान्ता ब्राह्मणस्यासाधारणा धर्माः ॥ २ ॥

शं० टी०–किंच–अहिंसेति। हिंसा तीर्थेभ्योऽन्यत्र प्राण्यहिंसनं, सत्यं यथार्थभाषणं, अक्रोधो न क्रोधोऽक्रोधस्ताडनपीडनाद्यपकारेणाग्रहानुदयः, त्यागः नित्यं क्रियमाणकर्मणां श्रौतादीनामीश्वरार्पणबुद्ध्या फलत्यागः। शान्तिः अन्तःकरणस्य सर्वत्रोपरतिः, अपैशुनं परोक्षे परमर्मप्रकाशनं, दया भूतेषु दीनेष्वार्तान्धादिषु करुणा। अलोलुत्वं विषयसन्निधाविन्द्रियाणां विकारराहित्यं, मार्दवं चित्तस्य काठिन्यराहित्यं शीतलता, ह्रीर्लज्जा अकार्याचरणे चित्तस्य संकोचः–अप्रवृत्तिकारणम्, अचापलं मनस इन्द्रियाणां च निर्निमित्तव्यापारशून्यता ॥ २ ॥

श्री० टी०–किंच–अहिंसेति। अहिंसा परपीडावर्जनम्, सत्यं यथादृष्टार्थभाषणम्, अक्रोधस्ताडितस्यापि चित्ते क्षोभानुत्पत्तिः, त्याग औदार्यम्, शान्तिश्चित्तोपरतिः, पैशुनं परोक्षे परदोषप्रकाशनम्, तद्वर्जनमपैशुनम्, भूतेषु दीनेषु दया, अलोलुप्त्वं लोभाभावः अवर्णलोप आर्षः। मार्दवं मृदुत्वमक्रूरता, ह्रीः अकार्यप्रवृत्तौ लोकलज्जा, अचापलं व्यर्थक्रियाराहित्यम् ॥ २ ॥

स० टी०–अहिंसा प्राणिपीडादिवर्जनं सर्वथेरिता ॥ यथाभूतार्थवचनं सत्यं दोषाविवर्जितम् ॥१॥ आक्रोशे ताडने वान्यैः कृते क्रोधो य आगतः ॥ तस्योपशमनं सम्यगक्रोधो विक्रिया धियः ॥२॥ त्यागः संन्यास इत्युक्तः शान्तिश्चोपशमो धियः ॥ अपैशुनं परस्मै यत्पररन्ध्राप्रकाशनम् ॥ ३ ॥ दुःखितेष्वनुकम्पा स्वाद्दयालोलुत्वमत्र तु ॥ इन्द्रियाणां स्वविषयसन्निधानेऽप्यविक्रिया ॥ ४ ॥ मार्दवं मृदुताक्रौर्यं प्रियवाक्यादिशीलता ॥ ह्रीरकार्यनिवृत्त्याप्तौ तत्प्रतिबन्धिकात्र या ॥५॥ अचापलं वाक्पाण्यादेर्वृथाचेष्टाविवर्जनम् ॥ एते साधारणा धर्मा ब्राह्मणस्यार्जवादयः ॥ ६ ॥ २ ॥

भा० टी०–किंच–अहिंसेति। अहिंसा वृत्तिच्छेदादिना प्राणिनां पीडायाः वर्जनम् अहिंसनं, अप्रियानृताहितवर्जितं यथाभूतार्थभाषणं सत्यं, परैः कृतेनाक्रोशेन ताडनेन वा प्राप्तस्य क्रोधस्योपशमनमक्रोधः, त्यागः संन्यासः पूर्वं दानस्योक्तत्वात्। एतेनोपात्तवित्तादेः पात्रेऽर्पणं त्यागः इति प्रत्युक्तं, दानत्यागशब्दयोरुक्तार्थे एव प्रसिद्धेः। शान्तिरन्तःकरणस्योपशमः, परस्मै पररन्ध्रप्रकटीकरणं पैशुनं तदभावोऽपैशुनम्। दुःखितेषु भूतेषु कृपा दया। विषयसन्निधानेपीन्द्रियाणामविक्रियत्वमलोलुत्वं, मार्दवमक्रौर्यं, ह्रीरकार्येषु लोकलज्जा, असति प्रयोजने वाक्पाणिपादानामव्यापारयितृत्वमचापलम् ॥ २ ॥

प० टी०–अहिंसेति । अहिंसा परपीडानिवृत्तिः, सत्यं यथार्थभाषणम्, अक्रोधस्ताडितस्यापि चित्ताक्षोभः । तदुक्तम्–' क्रुद्धे स्मेरमुखावधारणमथाविष्टे प्रसादक्रमो व्याक्रोशे विनयोक्तिरात्मदुरितो-च्छेदोत्सवस्ताडने ' इति । त्याग औदार्यम्, शान्तिश्चित्तोपरतिः, अपैशुनं परापवादवर्जनम्, दीनेषु भूतेषु दया, अलोलुप्त्वम् अत्र वर्णलोपश्छान्दसः अलोलुपत्वं, मार्दवं मृदुत्वमक्रूरता, ह्रीरकार्यप्रवृत्तौ लोकलज्जा, अचापलं व्यर्थक्रियाराहित्यमेकत्रावस्थितिर्वा ॥ २ ॥

रा० टी०–अहिंसा परप्राणावियोजनम् । सत्यं यथार्थवचनम् । अक्रोधः परपीडाकरचित्तविकाराभावः । त्याग औदार्यम् । शान्तिः भगवन्निष्ठता । अपैशुनं परोपद्रवनिमित्तदोषाणां राजादेरकीर्तनम् । भूतेषु प्राणिषु दया परहितकरश्चित्तगतो धर्मविशेषः, परदुःखासहिष्णुत्वं वा । अलोलुत्वं विषयेषु रागाभावः । आत्महिंसकेष्वप्यविरोधो मार्दवम्, अक्रौर्यं वा । ह्रीरकार्यकरणे लज्जा । अचापलं स्थैर्यम् ॥ २ ॥

**तेजः क्षमा धृतिः शौचमद्रोहो नातिमानिता ॥**
**भवन्ति संपदं दैवीमभिजातस्य भारत ! ॥ ३ ॥**

त० टी०–किंच–तेज इति । तेजः प्रागल्भ्यं दुर्जनैरभिभवितुमशक्यत्वं, क्षमा सामर्थ्ये सत्यपि स्वापराधकारिणं क्रोधाकरणं, धृतिः आपद्यपि स्वधर्मादचलनेन कर्तव्यावधारणं, शौचं बाह्याभ्यन्तर-शोधनम्, अद्रोहो मनोवाक्कायैः परस्यानिष्टकर्तृत्वाभावः, नातिमानिता आत्मनि पूज्यत्वातिशयाभि-मानोऽतिमानिता तदभावो नातिमानिता, एते अभयादयो गुणा दैवीं संपदमभिजातस्य भवन्ति । देवा भगवदाज्ञानुवर्तिनस्तेषां संबन्धिनी संपद्दैवी भगवन्नियोगैकवृत्तिस्तामभिजातस्य तदाभिमुख्येन जातस्य तामभिलक्ष्य जातस्य भाविश्रेयस्कस्य पुंसो भवन्तीत्यर्थः ॥ ३ ॥

म०–टी०–तेजः प्रागल्भ्यं स्त्रीबालकादिभिर्मूढैरनभिभाव्यत्वम् । क्षमा सत्यपि सामर्थ्ये परिभवहेतुं प्रति क्रोधस्यानुत्पत्तिः । धृतिः देहेन्द्रियेष्ववसादं प्राप्तेष्वपि तदुत्तम्भकः प्रयत्नविशेषः येनोत्तम्भितानि करणानि शरीरं च नावसीदन्ति । एतत्त्रयं क्षत्रियस्यासाधारणम् । शौचमाभ्यन्तरम्, अर्थप्रयोगादौ मायानृ-तादिराहित्यं नतु मृज्जलादिजनितं बाह्यमत्र ग्राह्यं, तस्य शरीरशुद्धिरूपतया बाह्यत्वेनान्तःकरणवासना-त्वाभावात् । तद्वासनानामेव सात्त्विकादिभेदभिन्नानां दैव्यासुर्यादिसंपद्रूपत्वेनात्र प्रतिपिपादयिषितत्वात् । स्वाध्यायादिवत्केनचिद्रूपेण वासनारूपत्वे तदप्यादेयमेव । द्रोहः परजिघांसया शस्त्रग्रहणादि तदभावोऽद्रोहः । एतद्द्वयं वैश्यस्यासाधारणम् । अत्यर्थमानिताऽऽत्मनि पूज्यत्वातिशयभावनाऽतिमानिता तदभावो नातिमा-निता–पूज्येषु नम्रता । अयं शूद्रस्यासाधारणो धर्मः । " तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन " इत्यादिश्रुत्या विविदिषौपयिकतया विनियुक्ताः असाधारणाः साधारणाश्च वर्णा-श्रमधर्मा इहोपलक्ष्यन्ते । एते धर्मा भवन्ति निष्पद्यन्ते दैवीं शुद्धसत्त्वमयीं संपदं वासनासन्ततिं शरी-रारम्भकाले पुण्यकर्मभिरभिव्यक्तामभिलक्ष्य जातस्य पुरुषस्य " तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च । पुण्यः पुण्येन कर्मणा भवति पापः पापेन " इत्यादि श्रुतिभ्यः । हे भारतेति संबोधयन् शुद्धवंशो-द्भवत्वेन पूतत्वात्त्वमेतादृशधर्मयोग्योऽसीति सूचयति ॥ ३ ॥

शं० टी०–किंच तेज इति । तेजस्तेजस्त्वं बुद्धेः सूक्ष्मता प्रकाशाधिक्यं वा, क्षमा क्षान्तिरविकारित्वे-नागतोपद्रवसहिष्णुत्वं, धृतिर्धैर्यं सति विक्षेपे देहेन्द्रियमनोबुद्धीनां निश्चलत्वापादनशक्तिः, शौचमान्तरं बाह्यं च तत्र बाह्यं मृज्जलाभ्यां देहमलापनयनम् । आन्तरं सदसद्विवेकविज्ञानेन चित्तस्य दुर्वासनामलाप-नयनम्, अद्रोहः द्रोहः स्वापकारिणं हन्तुमिच्छा तदभावोऽद्रोहः, नातिमानिता च स्वस्यातिपूज्यत्वाभिनि-

वेशोऽतिमानस्तदभावो नातिमानः सोऽस्यास्तीति नातिमानी तस्य भावो नातिमानिता, स्वस्य प्रतिष्ठानपेक्षित्वं च। अभयादिनातिमानितान्ताः षड्विंशतिरेते सात्त्विका धर्माः । दैवीं संपदम्—तत्र सत्त्वं निर्मलत्वात्प्रकाशकमनामयमित्युक्तत्वाद्दीव्यते निर्मलत्वेन प्रकाशत इति देवः सत्त्वगुणस्तस्य संबन्धिनी दैवी संपत्समृद्धिरुत्कर्षस्तां दैवीं संपदमभिजातस्य पूर्वजन्मकृतपुण्याधिक्यात्सत्त्वाधिक्यमभि अनुसृत्य जातस्य यद्वा देवानां संपदं दैवीमभिजातस्य भविष्यत्परमपुरुषार्थस्य पुण्यपुरुषस्य भवन्ति संभवन्तीत्यर्थः ॥ ३ ॥

**श्री० टी०**—किंच—तेज इति । तेजः प्रागल्भ्यं, क्षमा परिभवादिषूत्पद्यमानेषु क्रोधप्रतिबन्धः, धृतिर्दुःखादिभिरवसीदतश्चित्तस्य स्थिरीकरणम्, शौचं बाह्याभ्यन्तरशुद्धिः, अद्रोहो जिघांसाराहित्यं, अतिमानिता आत्मन्यतिपूज्यत्वाभिमानस्तदभावो नातिमानिता । एतान्यभयादीनि षड्विंशतिप्रकाराणि दैवीं संपदमभिजातस्य भवन्ति । देवयोग्यां सात्त्विकीं संपदमभिलक्ष्य तदाभिमुख्येन जातस्य भाविकल्याणस्य पुंसो भवन्तीत्यर्थः ॥ ३ ॥

**स० टी०**—तेजः प्रागल्भ्यमाबालैर्मूढैरनभिभाव्यता ॥ क्षमा सत्यपि सामर्थ्येऽन्यापराधसहिष्णुता ॥१॥ धृतिर्देहेंद्रियेष्वेवमवसादं गतेष्वपि ॥ तदुत्तम्भकयत्नोऽस्ति येन देहेन्द्रियाणि च ॥ २ ॥ उत्तम्भितानि यत्नेन नावसीदन्ति देहिनाम् ॥ एतत्त्रयं क्षत्रियस्यासाधारणमितीरितम् ॥ ३ ॥ मायानृतादिराहित्यमर्थेषु शौचमान्तरम् ॥ एतन्मुख्यं यतो गौणं बाह्यं तन्मृज्जलादिजम् ॥ ४ ॥ योऽर्थेषु शुचिः स शुचिर्न मृद्वारिशुचिः शुचिः ॥ अद्रोहोऽन्यजिघांसाया वर्जनं चेति तद्वयम् ॥ ५ ॥ विशोऽसाधारणं प्रोक्तं शूद्रस्य नातिमानिता ॥ आत्मनोऽत्यन्तपूज्यत्वबुद्ध्यभाव इतीर्यते ॥ ६ ॥ शुद्धसत्त्वमयी दैवी संपत्तामभिलक्ष्य हि ॥ पुंसो जातस्य प्राक्पुण्यैरेते धर्मा भवन्त्यपि ॥ ७ ॥ तं विद्याकर्मणी एवं पुण्यः पुण्येन कर्मणा ॥ पापः पापेन चेत्यादिश्रुतिभ्योऽपि विनिश्चितम् ॥ ८ ॥ शुद्धवंशोद्भवत्वेन त्वं धर्मानीदृशान् शुभान् ॥ प्राप्तुं योग्योऽसि पूतत्वाद्भारतेति पदध्वनिः ॥ ९ ॥ ३ ॥

**भा० टी०**—किंच—तेज इति । तेजः प्रागल्भ्यं मूढैरभिभवितुमशक्यत्वं सत्यपि विक्रियाकारणक्रोशादौ विक्रियानुत्पत्तिः क्षमा । उत्पन्नाया विक्रियाया उपशमनमक्रोध इत्यक्रोधेनापौनरुक्त्यम् । धृतिर्धैर्यमन्तःकरणस्य वृत्तिविशेषो येनोत्तम्भितानि करणानि देहश्चावसादकारणे सत्यपि नावसीदन्ति । शौचं द्विविधं बाह्यमाभ्यन्तरं च । मृज्जलाभ्यां कृतमाद्यं, मायारागादिकालुष्याभावेन मनोबुद्ध्योर्नैर्मल्यमाभ्यन्तरम्। स्वाध्यायादिवत् बाह्यशौचस्यापि सात्त्विकवासनाधीनत्वेन बाह्यं शौचमत्र न ग्राह्यं, तस्य शरीरशुद्धिरूपतया बाह्यत्वेनान्तःकरणवासनात्वाभावादिति प्रत्युक्तम् । परजिघांसाभावोऽद्रोहः । आत्मनः पूज्यतातिशयभावनाऽतिमानिता, तदभावो नातिमानिता । एतान्यभयादीनि एतदन्तानि सात्त्विकीं प्रधानां दैवीं देवानां संपदमभिलक्ष्य जातस्य दैवविभूत्यर्हस्य भाविकल्याणस्य भवन्ति । त्वमपि उत्तमवंशोद्भवत्वात् दैवीसंपदमभिलक्ष्य जातोऽसीति सूचयन्नाह—भारतेति ॥ ३ ॥

**प० टी०**—तेज इति । तेजः प्रागल्भ्यम्, क्षमा परिभवादिषु क्रोधप्रतिबन्धः, धृतिश्चित्तस्थिरीकरणम्, शौचं बाह्यान्तरशुद्धिः, अद्रोहो द्वेषराहित्यम्, नातिमानिता स्वस्मिन् पूज्यताभिमानराहित्यम् । एतान्यभयादीनि षड्विंशतिलक्षणानि दैवीं संपदमभिलक्ष्य जातस्य निष्पन्नस्य भवन्ति ॥ ३ ॥

**रा० टी०**—तेज इति । तेजः परैरनभिभवः । क्षमा क्रोधाभावेन सह अपकर्तुरनपकृतिः । धृतिरनातङ्कः । शौचं मृत्तिकादिभिर्बाह्यशौचम् । भगवत्स्मृत्यादिनान्तरशौचम् । अद्रोहः परवृत्त्यननुरोधः । नातिमानिता अहंकारराहित्यम् । एते गुणाः दैवीं देवसंबन्धिनीं संपदमभिजातस्य प्राप्तस्य भवन्ति । अभिरयं

लक्षणेत्थंभूताख्यानेत्युक्तलक्षणार्थकप्रत्यर्थे वर्तते इति तस्य कर्मप्रवचनीयसंज्ञायाम् "कर्मप्रवचनीययुक्ते द्वितीया" इति द्वितीयोपपत्तिः। तथाचैत एव गुणाः मुमुक्षुणाऽवश्यमुपादेया इति भावः॥ ३॥

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च॥
अज्ञानं चाभिजातस्य पार्थ! संपदमासुरीम्॥ ४॥

त० टी०—एवमुपादेयां संपदमुक्त्वा हेयामासुरीं संपदं संक्षिप्यैकेन श्लोकेनाह—दम्भ इति। दम्भो धार्मिकत्वख्यापनाय किञ्चिद्धर्माचारः, दर्पो धनविद्यादिनिमित्तमौद्धत्यम्, अभिमानः अभिजात्यादिनिमित्त आत्मन्यतिश्रेष्ठत्वाभिनिवेशः, क्रोधः परपीडाहेतुरभिज्वलनात्मकश्चित्तविकारः, पारुष्यं रूक्षवदनेनाप्रियवाचित्वम्, अज्ञानं तत्त्वातत्त्वकृत्याकृत्यविवेकशून्यत्वं, चकारो भयसत्त्वाशुद्धयधृत्यादिदोषाणां समुच्चयार्थः। एते दोषा आसुरीं सम्पदमभिजातस्य भवन्ति। असुरा भगवदाज्ञाविपरीताचारशीलास्तेषां संबन्धिनी संपदासुरी तामभिलक्ष्य जातस्य तामेवाभिवर्त्तयितुं जातस्य भवन्तीत्यर्थः॥४॥

म० टी०—आदेयत्वेन दैवीं संपदमुक्त्वेदानीं हेयत्वेनासुरीं संपदमेकेन श्लोकेन संक्षिप्याह—दम्भ इति। दम्भो धार्मिकतयात्मनः ख्यापनं तदेव धर्मध्वजित्वम्। दर्पो धनस्वजनादिनिमित्तो महदवधीरणाहेतुर्गर्वविशेषः। अतिमान आत्मन्यत्यन्तपूज्यत्वातिशयाध्यारोपः "देवाश्च वा असुराश्चोभये प्राजापत्याः पस्पृधिरे ततोऽसुरा अतिमानेनैव कस्मिन्नु वयं जुहुयामेति स्वेष्वेवास्येषु जुह्वतश्चेरुस्तेऽतिमानेनैव पराबभूवुस्तस्मान्नातिमन्येत पराभवस्य ह्येतन्मुखं यदतिमानः" इति शतपथश्रुत्युक्तः। क्रोधः स्वपरापकारप्रवृत्तिहेतोरभिज्वलनात्मकोऽन्तःकरणप्रवृत्तिविशेषः। पारुष्यं प्रत्यक्षरूक्षवदनशीलत्वम्। चकारोऽनुक्तानां भावभूतानां चापलादिदोषाणां समुच्चयार्थः। अज्ञानं कर्तव्याकर्तव्यादिविषयविवेकाभावः। चशब्दोऽनुक्तानामभावभूतानामधृत्यादिदोषाणां समुच्चयार्थः। आसुरीमसुररमणहेतुभूतां रजस्तमोमयीं संपदमशुभवासनासंततिं शरीरारम्भकाले पापकर्मभिरभिव्यक्तामभिलक्ष्य जातस्य कुपुरुषस्य दम्भाद्या अज्ञानान्ता दोषा एव भवन्ति न त्वभयाद्या गुणा इत्यर्थः। हे पार्थेति संबोधयन्विशुद्धमातृकत्वेन (तदयोग्यत्वेन) तदयोग्यत्वं सूचयति॥ ४॥

शं० टी०—दैवीं संपदमभिजातस्याभयादयो मोक्षहेतवः सात्त्विका गुणाः प्रभवन्तीति प्रतिपाद्यासुरीं संपदमभिजातस्यैते गुणा भवन्तीत्याह—दम्भ इति। वेषभाषाचारादिभिः स्वस्य महत्त्वासिद्धये स्वेनैव कुलशीलविद्याचारमहत्त्वप्रकटनं दम्भः, विद्यारूपकुलधनकर्मादिनिमित्तश्चित्तोद्रेकः सतामवमानहेतुर्दर्पः, स्वस्मिन्नेवोत्कृष्टत्वबुद्धिरभिमानः, पराऽपकारनिमित्तो महानर्थसंपादने हेतुश्चित्तक्षोभः क्रोधः, परुषो निष्ठुरभाषा तस्य भावः पारुष्यं, चकारः समुच्चयार्थः। एवकारः स्वप्नेऽप्यस्य न मृदूक्तिरितीतरव्यवच्छेदार्थः। अज्ञानं सदसद्विवेकाभावः, चकारात्तत्कार्यं च। दम्भादयोऽज्ञानान्तः षडेते रजस्तमो धर्माः। आसुरीं संपदं 'रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम्' इति 'तमस्त्वज्ञानजं विद्धि मोहनं सर्वदेहिनाम्' इति चोक्तत्वाद्धोरं कर्म कारयितुं पुरुषस्यासून् प्राणानिन्द्रियाणि च रात्याकर्षतीत्यसुरः रजोगुणस्तमोगुणश्च तस्य संबन्धिन्यासुरी संपत्समृद्धिरुत्कर्षस्तामासुरीं संपदमभिजातस्य प्राग्भवीयपापाधिक्याद्रजस्तमोगुणोत्कर्षाधिक्यमभ्युद्यतस्य जातस्य, यद्वा असुराणां संपदासुरी संपत्तां संपदमासुरीमभिजातस्य दुरात्मनो भाव्यनर्थपात्रस्य पुरुषस्य भवन्ति संभवन्तीत्यर्थः॥ ४॥

श्री० टी०—आसुरीं संपदमाह—दम्भ इति। दम्भो धर्मध्वजित्वं, दर्पो धनविद्यादिनिमित्तश्चित्तस्योत्सेकः, अभिमानो व्याख्यातः, क्रोधः प्रसिद्धः, पारुष्यं निष्ठुरत्वम्, अज्ञानमविवेकः, आसुरीमित्युपलक्षणम्। असुराणां राक्षसानां च या संपत् तामासुरीमभिलक्ष्य जातस्यैतानि दम्भादीनि भवन्तीत्यर्थः॥४॥

स० टी०—आदेयत्वेन दैवीं च प्रोच्य संपदमासुरीम् ॥ हेयत्वेनाह संक्षिप्य श्लोकेनैकेन माधवः ॥ १ ॥ आत्मनो धार्मिकत्वेन ख्यापनं दम्भ उच्यते ॥ वित्तादिहेतुको गर्वो दर्प उत्सेकसंज्ञकः ॥ २ ॥ आत्मन्यत्यन्तपूज्यत्वातिशयारोपणं मृषा ॥ अभिमानः पराभूता असुरा येन स स्मृतः ॥ ३ ॥ क्रोधः स्वपरयोर्दुःखहेतुरत्यन्तनिष्फलः ॥ अभिज्वलनरूपो धीवृत्तिभेदोऽतितापदः ॥ ४ ॥ पारुष्यं रूक्षवदनशीलत्वं संमुखे नृणाम् ॥ चकारोऽनुक्तभावानां कुदोषाणां समुच्चये ॥ ५ ॥ कार्याकार्यादिविषयेऽविवेकोऽज्ञानमुच्यते ॥ चोऽनुक्तानामभावानां कुत्सितानां समुच्चये ॥ ६ ॥ रजस्तमोमयी दुष्टवासनासन्ततिर्मलैः ॥ शरीरारम्भकालेऽभिव्यक्ता तामभिलक्ष्य च ॥ ७ ॥ पुंसो जातस्य दम्भाद्या दोषा एते भवन्ति वै ॥ विशुद्धमातृकत्वेन त्वय्येतेषां न योग्यता ॥ ८ ॥ ४ ॥

भा० टी०—उपादेयां दैवीं संपदमुक्त्वा हेयामासुरीं तामाह—दम्भ इति । दम्भः धर्मध्वजित्वं, धार्मिकतया आत्मनः ख्यापनम् । दर्पः विद्यास्वाभिजनादिनिमित्तो महदवज्ञाहेतुरुत्सेको मदः । आत्मन्युत्कृष्टत्वारोपोऽभिमानः । क्रोधः परापकारप्रवृत्तिहेतुर्नेत्रादिविकारलिङ्गोऽन्तःकरणस्य वृत्तिविशेषः । परुषो निष्ठुरः काणं चक्षुष्मानित्यादिप्रत्यक्षरूक्षवाक्, परुषस्य भावः पारुष्यम् । अज्ञानं कर्तव्याकर्तव्यविषयविवेकाभावः। चकारावनुक्तानां चापल्याधृत्यादिदोषाणां समुच्चयार्थौ । आसुरीमसुराणां संपदमभिलक्ष्य जातस्य दम्भादीन्यज्ञानां तानि भवन्तीत्यनुषज्जते । पार्थेतिसंबोधयन्नासुर्यां संपद्यन्तर्गतौ स्त्रीस्वभावौ शोकमोहौ मोक्षार्थिना त्वयाऽवश्यं परित्याज्याविति ध्वनयति ॥ ४ ॥

प० टी०—अथासुरीं संपदमाह—दम्भ इत्यादितः । दम्भो धर्मध्वजित्वम्, दर्पो धनविद्यानिमित्तश्चित्तोत्सेकः, अभिमानोऽहंभावः, क्रोधः कोपातिशयः, पारुष्यं निष्ठुरत्वम्, अज्ञानमविवेकः ।आसुरीमित्युपलक्षणम् । असुराणां राक्षसानां संपत्तिस्तामभिलक्ष्य जातस्यैतानि दम्भादीनि भवन्ति ॥ ४ ॥

रा० टी०—त्यागायासुरलक्षणमाह—दम्भ इति । आत्माल्पत्वं ज्ञात्वापि महत्त्वप्रदर्शनं दम्भः । दर्पः सत्यपि भयकारणे मदात्तदभावदर्शनम् । अभिमानः प्रमाणातिक्रमः । क्रोधः परपीडाकरचित्तविकारः । पारुष्यं निष्ठुरत्वम् । आसुरीं संपदमभिजातस्येत्यस्य प्रागिवार्थः । तेन जातस्येत्यकर्मकत्वात्संपदामिति न द्वितीयानुपपत्तिदोषः ॥ ४ ॥

**दैवी संपद्विमोक्षाय निबन्धायासुरी मता ॥**
**मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ! ॥ ५ ॥**

त० टी०—उभयोः संपदोः कार्यभेदमाह—दैवी संपादिति । दैवी उक्तलक्षणा भगवदाज्ञानुवृत्तिरूपा संपद्विमोक्षाय संसाराद्विशेषेण मोक्षाय उक्ततत्त्वज्ञानद्वारेण भगवद्भावापत्तये भवति । आसुरी भगवदाज्ञाविपरीताचारवृत्तिर्निबन्धाय नितरां बन्धः संसारस्तस्मै नितरामासुरी राक्षसीयोनिषु पातायैव मता । शास्त्रज्ञैरिति शेषः । एवं श्रुत्वाऽहं कतरां संपदमभिजातोऽस्मीति संदिग्धचित्तमर्जुनमालक्ष्याश्वासयति—मा शुच इति । हिंसकधर्मक्षत्रियकुलजात आसुरीं संपदमभिजातः स्यामिति शङ्कया शोकं मा कृथाः । यतस्त्वं दैवीं संपदमभिलक्ष्य जातोऽसीति । एतदेव संबोधनेन बोधयति—हे पाण्डवेति । धार्मिकाग्रेसराणां भरतकुरुप्रभृतीनां कुले जातस्य पाण्डोस्तनयस्त्वमपि धार्मिक एव न त्वासुरप्रकृतिरिति भावः ॥ ५ ॥

स० टी०—अनयोः संपदोः फलविभागोऽभिधीयते—दैवीति । यस्य वर्णस्य यस्याश्रमस्य च या विहिता सात्त्विकी फलाभिसंधिरहिता क्रिया सा तस्य दैवी संपत् सा सत्त्वशुद्धिभगवद्भक्तिज्ञानयोगस्थितिपर्यन्ता सती संसारबन्धनाद्विमोक्षाय कैवल्याय भवति। अतः सैवोपादेया श्रेयोर्थिभिः । या तु यस्य शास्त्रनिषिद्धा

फलाभिसंधिपूर्वा साहङ्कारा च राजसी तामसी क्रिया तस्य सा सर्वाप्यासुरी संपत् । अतो राक्षस्यपि तदन्तर्भूतैव । सा निबन्धाय नियता संसारबन्धाय मता संमता शास्त्राणां तदनुसारिणां च । अतः सा हेयैव श्रेयोऽर्थिभिरित्यर्थः । तत्रैवं सत्यहं कया संपदा युक्त इति संदिहानमर्जुनमाश्वासयति भगवान्–मा शुचः अहमासुर्या संपदा युक्त इति शङ्कया शोकमनुतापं मा कार्षीः । दैवीं संपदमभिलक्ष्य जातोऽसि प्रागर्जित-कल्याणो भाविकल्याणश्च त्वमसि हे पाण्डव पाण्डुपुत्रेष्वन्येष्वपि दैवी संपत्प्रसिद्धा किं पुन-स्त्वयीति भावः ॥ ९ ॥

**शं० टी०**–द्वयोरपि संपदोः कार्यमाह–**दैवीति** । अभयं सत्त्वसंशुद्धिरित्यादिना या दैवी संपदुक्ता सा विमोक्षाय संसारबन्धमोक्षाय भवत्यतो दैवसंपद्युक्त एवासंमूढो ज्ञानाधिकारी भवति न त्वासुरसंपद्युक्त इति सूचयितुमासुरसंपत्तेर्बन्धकत्वमाह–निबन्धायेति । दम्भो दर्प इत्यादिना प्रोक्ता या आसुरसंपत् सा बन्धायैव भवतीति मता मया निश्चिता न क्वचिदपि मोक्षायेत्यर्थः । तर्ह्यहमासुरसंपत्तिमानुत दैवसंपत्ति-मान्वेति संदिह्यमानमर्जुनमालक्ष्य तत्संशयं परिहर्तुमाह–मा शुच इति । हे पाण्डव त्वं दैवीमेव संपदम-भिजातोऽसि । तद्युक्तः संसारान्मोक्ष्यसे मा शुचस्त्वमस्मिन्नर्थे चिन्तां मा कुर्वित्यर्थः ॥ ९ ॥

**श्री० टी०**–एतयोः संपदोः कार्यं दर्शयन्नाह–**दैवी संपदिति** । दैवी या संपत्तया युक्तो मयोक्ते तत्त्व-ज्ञानेऽधिकारी । आसुर्या संपदा युक्तस्तु नित्यं संसारीत्यर्थः । एतच्छ्रुत्वा किमहमत्राधिकारी न वेति संदेहव्या-कुलचित्तमर्जुनमाश्वासयति–हे पाण्डव मा शुचः शोकं मा कार्षीः, यतस्त्वं दैवीं संपदमभिजातोऽसि ॥९॥

**स० टी०**–अनयोः संपदोराह फलं सम्यग्विभागशः ॥ यस्याश्रमस्य वर्णस्य विहिता या च सात्त्विकी ॥ १ ॥ फलाभिसंधिरहिता क्रिया तस्यास्ति सा शुभा ॥ सत्त्वशुद्धीशभक्त्यात्मज्ञानयोगावसानिका ॥२॥ संसारबन्धनान्मोक्षे हेतुर्भवति सा यतः ॥ अतः श्रेयोऽर्थिभिर्दैवी संपाद्या संपदुत्तमा ॥ ३ ॥ यस्याः शा-स्त्रनिषिद्धायाः साहंकारा फलैषणा ॥ राजसी सा क्रिया सर्वाप्यासुरी राक्षसीयुता ॥ ४ ॥ संसारबन्धने हेतुः शास्त्राणां शास्त्रिणां मता ॥ अतः श्रेयोऽर्थिभिर्हेया राजसी तामसी क्रिया ॥ ५ ॥ कयाहं संपदा युक्तः संदिहानमितीश्वरः ॥ आश्वासयति विजयं मा कार्षीः शोकमर्जुन ॥ ६ ॥ त्वं प्रागर्जितकल्याणो भाविकल्याणसंश्रयः ॥ दैवीं यतोऽभिलक्ष्यैव जातोऽसि शुभसंपदम् ॥ ७ ॥ ९ ॥

**भा० टी०**–अनयोः संपदोः फलविभागमाह–**दैवीति** । दैवी संपत्संसारबन्धनात् विमोक्षायासुरी संपन्निबन्धाय नियमेन बन्धाय मताऽभिप्रेता । एवमुक्ते किमहं दैव्या संपदा युक्तः किंवाऽऽसुर्या युक्त इत्यालोचनरूपमर्जुनस्यान्तर्गतभावमुपलक्ष्याह–**मेति** । मा शुचः शोकं मा कार्षीः । दैवीं संपदमभिलक्ष्य जातोऽसि भाविकल्याणस्त्वमित्यर्थः । पाण्डवेति संबोधयन्नासुर्या संपद्यन्तर्गतौ शोकमोहावतिशूरस्य दैव्या संपदा युक्तस्य शोकादिविनिर्मुक्तस्य पाण्डोः पुत्रः दैवीं संपदमभिजातस्त्वमङ्गीकर्तुमयोग्योऽसीति द्योतयति ॥ ९ ॥

**प० टी०**–अथ तयोः संपदोः कार्यं दर्शयति–**दैवी संपदिति** । दैवी या संपत्तया युक्तो मयोपदिष्टे तत्त्वज्ञानेऽधिकारी स्यात् । आसुर्या संपदा युक्तो नित्यसंसारी । एतच्छ्रुत्वा किमहमत्राधिकारी न वेति संदिहानमर्जुनमाश्वासयन्नाह–हे पाण्डव त्वं मा शुचः शोकं मा कार्षीः यतस्त्वं दैवीं संपदमभिजातोऽसि ॥९॥

**रा० टी०**–दैवसंपदादेः फलं संदर्शयन्नर्जुनस्यासुरस्वभावशङ्कां वारयति–**दैवीति** । अभिजातोऽसि प्रागिवार्थः । जातस्य तव दैवीसंपल्लक्षणमित्यर्थः । वृक्षं प्रति विद्योतत इत्यत्र वृक्ष इव प्रद्योतस्येति । अतो मा शुचः शोकं मा कार्षीः निबन्धनं नीचस्थाने तमसि निवासः । विमोक्षाय विविधमोक्षायेत्युक्त्या मोक्षस्य नानात्वमुच्यते ॥ ९ ॥

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ॥
दैवो विस्तरशः प्रोक्त आसुरं पार्थ ! मे शृणु ॥ ६ ॥

त० टी०—ननु राक्षसीं प्रकृतिमासुर्यामन्तर्भाव्य दैव्यासुरसंपद्द्वयनिरूपणेन तद्वत्तया देवा असुराश्च निर्दिष्टाः स्यादेवम् "त्रयाः प्राजापत्या देवा मनुष्या असुरा" इति श्रुतौ मनुष्याः पृथङ्निर्दिष्टास्ते कस्याः कोटावन्तर्भवन्तीत्यत आह—द्वाविति । अस्मिँल्लोके देवासुरत्वसाधके कर्माधिकारके मनुष्यलोके भूतसर्गौ मनुष्यसर्गौ द्वौ द्विप्रकारौ भवतः । कौ ? दैव आसुरश्च । एवकारेणान्यसर्गव्यवच्छेदः । देवा असुराश्चेति द्विविधा एव मनुष्याः, राक्षसाश्चासुरान्तर्गता एवेत्यर्थः । प्राचीनशुभाशुभकर्मवशाद्भगवदाज्ञानुवर्तनाय तद्विपरीताचरणाय चोत्पत्तिकाल एव देवासुरस्वभावा मनुष्या जायन्ते इति भावः । तत्र शुभवासनावान् जन्मसमये भगवत्कटाक्षावलोकितश्चेत् शमदमदयाहिंसादिसात्त्विकवृत्तिनिष्ठो देव इति ज्ञेयः । अशुभवासनावान् जन्मसमये ब्रह्मरुद्राद्यवलोकितश्चेत् कामक्रोधलोभमोहहिंसामात्सर्यादिरजस्तमोवृत्तिस्थोऽधर्मपरायणोऽसुर इति ज्ञेयः । तथोक्तं मोक्षधर्मे—"जायमानं हि पुरुषं यं पश्येन्मधुसूदनः । सात्त्विकः स तु विज्ञेयः स वै मोक्षार्थचिन्तकः ॥ पश्यत्येनं जायमानं ब्रह्मा रुद्रोऽथवा पुनः । रजसा तमसा चैव मानसं समभिप्लुतम्" इति । विष्णुधर्मे शौनकेनाप्युक्तम् "द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च । विष्णुभक्तिपरो दैवो विपरीतस्तथाऽऽसुरः" इति । तत्र दैवो दैवीसंपदाश्रयो विस्तरशः प्रोक्तः सप्तमे नवमे द्वादशे । अमानित्वादिगुणवान् त्रयोदशे, गुणातीतलक्षणे चतुर्दशे, 'निर्मानमोहा' इत्यादिना पञ्चदशे च, अभयमित्यादिनाऽत्राप्युक्तः । आसुरम्—आसुराणां यथाप्रवृत्तिस्वभावस्तं मनुष्यसर्गं हे पार्थ ! मे मत्तः शृणु ॥ ६ ॥

म० टी०—ननु भवतु राक्षसी प्रकृतिरासुर्यामन्तर्भूता शास्त्रनिषिद्धक्रियोन्मुखत्वेन सामान्यात्कामोपभोगप्राधान्यप्राणिहिंसाप्राधान्याभ्यां क्वचिद्भेदेन व्यदेशोपपत्तेः । मानुषी तु प्रकृतिस्तृतीया पृथगस्ति "त्रयाः प्राजापत्याः प्रजापतौ पितरि ब्रह्मचर्यमूषुर्देवा मनुष्या असुरा" इति श्रुतेः । अतः साऽपि हेयकोटावुपादेयकोटौ वा वक्तव्येत्यत आह—द्वाविति । अस्मिँल्लोके सर्वस्मिन्नपि संसारमार्गे द्वौ द्विप्रकारावेव भूतसर्गौ मनुष्यसर्गौ भवतः । कौ तौ ? दैव आसुरश्च, न तु राक्षसो मानुषो वाऽधिकः सर्गोऽस्तीत्यर्थः । यो यदा मनुष्यः शास्त्रसंस्कारप्राबल्येन स्वभावसिद्धौ रागद्वेषावभिभूय धर्मपरायणो भवति स तदा देवः । यदा तु स्वभावसिद्धरागद्वेषप्राबल्येन शास्त्रसंस्कारमभिभूयाधर्मपरायणो भवति स तदाऽऽसुर इति द्वैविध्योपपत्तेः । न हि धर्माधर्माभ्यां तृतीया कोटिरस्ति । तथा च श्रूयते—"द्वया ह प्राजापत्या देवाश्चासुराश्च ततः कानीयसा एव देवा ज्यायसा असुरा" इति । दमदानदयाविधिपरे तु वाक्ये त्रयाः प्रजापत्या इत्यादौ दमदानदयारहिता मनुष्या असुरा एव सन्तः केनचित्साधर्म्येण देवा मनुष्या असुरा इत्युपचर्यन्त इति नाधिक्यावकाशः । एकेनैव द इत्यक्षरेण प्रजापतिना दमरहितान्मनुष्यान्प्रति दमोपदेशः कृतः, दानरहितान्प्रति दानोपदेशः, दयारहितान्प्रति दयोपदेशः, नतु विजातीया एव देवासुरमनुष्या इह विवक्षिताः मनुष्याधिकारत्वाच्छास्त्रस्य । तथा चान्ते उपसंहरति "तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्द द द इति दाम्यत दत्त दयध्वमिति तदेतत्त्रयं शिक्षेद्दमं दानं दयामिति" । तस्माद्राक्षसी मानुषी च प्रकृतिरासुर्यामेवान्तर्भवतीति युक्तमुक्तं द्वौ भूतसर्गाविति । तत्र दैवो भूतसर्गो मया त्वां प्रति विस्तरशो विस्तरप्रकारैः प्रोक्तः स्थितप्रज्ञलक्षणे द्वितीये, भक्तिलक्षणे द्वादशे, ज्ञानलक्षणे त्रयोदशे, गुणातीतलक्षणे चतुर्दशे, इह चाभयमित्यादिना । इदानीमासुरं

भूतसर्गं मे मद्वचनैर्विस्तरशः प्रतिपाद्यमानं त्वं शृणु हानार्थमवधारय सम्यक्तया ज्ञातस्य हि परिवर्जनं शक्यते कर्तुमिति । हे पार्थेति संबन्धसूचनेनानुपेक्षणीयतां दर्शयति ॥ ६ ॥

**शं० टी०**—ननु "राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः" इति, "दैवीं प्रकृतिमाश्रिताः" इति, प्रकृत्या नियताः स्वयेति च बह्वयः प्रकृतयः प्रोक्ताः, कथमेतासां निर्णय इत्याकाङ्क्षायां राक्षस्यासुर्यामेवान्तर्भवति दैव्यासुरीचेति प्रकृतिर्द्विप्रकारैव भवति । प्रकृत्या नियताः स्वयेति दैव्यासुरी चोच्यते न तदतिरिक्तोच्यत इति प्रकृतिद्वैविध्यमेव निदर्शयन्नासुरीमेव प्रकृतिं विशिष्य प्रतिपादयति, हेयांशे परिज्ञाते उपादेयांशस्तद्विलक्षणत्वेन ज्ञातुं शक्यत इति सूचयितुम्—**द्वाविति**। लोकेऽस्मिन् संसारमण्डले भूतसर्गौ भूतानां प्राणिनां सर्वेषां च सर्गौ सृज्यते संसृज्यते गन्धः पुष्पमिव प्राणिचित्तमनुबध्य तिष्ठतीति सर्गः स्वभावस्तौ सर्गौ प्रकृती दैव आसुरश्चेति द्वावेव नातिरिक्तोऽस्तीत्यर्थः। तयोः सर्गयोर्मध्ये अभयमित्यादिना दैवो भूतसर्गो विस्तरशो विस्तरेण प्रोक्तः नत्वासुरस्तं मुमुक्षोर्हेयत्वेन विज्ञातव्यं मे मया वक्ष्यमाणं शृण्विति ॥ ६ ॥

**श्री० टी०**—आसुरी संपत् सर्वात्मना वर्जयितव्येत्येतदर्थमासुरीं संपदं प्रपञ्चयितुमाह—**द्वाविति**। द्वौ द्विप्रकारौ भूतानां सर्गौ मे मद्वचनाच्छृणु। आसुरराक्षसप्रकृत्योरेकीकरणेन द्वावित्युक्तम्। अतो राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिता इत्यादिना नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः। स्पष्टमन्यत् ॥ ६ ॥

**स० टी०**—नन्वस्तु राक्षसी संपदासुर्यन्तर्गता समा ॥ मानुषी तु तृतीया सा हेयादेयाथवेति चेत् ॥ १ ॥ संसारमार्गे सर्वस्मिन्द्विप्रकारौ नृसर्गकौ ॥ दैव आसुर एवास्ति न तु राक्षसमानुषौ ॥ २ ॥ यो मनुष्यो यदा शास्त्रसंस्कारप्रबलत्वतः ॥ रागद्वेषौ तिरस्कृत्य भवेद्धर्मपरायणः ॥ ३ ॥ स तदा देव इत्युक्तो यदा तु द्वेषरागयोः ॥ प्राबल्याच्छास्त्रसंस्कारमभिभूय निषिद्धकृत् ॥ ४ ॥ स तदासुर इत्येवं द्वैविध्यस्योपपत्तितः ॥ नह्यत्र धर्माधर्माभ्यां तृतीया कोटिरस्ति वा ॥ ५ ॥ तत्र दैवो मया हि त्वा प्रत्युक्तो बहुविस्तरात् ॥ द्वितीये द्वादशे चैव स्थितधीभक्तलक्षणे ॥ ६ ॥ त्रयोदशे ज्ञानहेतौ गुणातीते चतुर्दशे ॥ इहाप्यभयमित्याद्यैर्लक्षणैरीरितो भृशम् ॥ ७ ॥ इदानीमासुरं भूतसर्गं मद्वचनैः शृणु ॥ विस्तरेणोच्यमानं त्वं हानार्थमवधारय ॥ ८ ॥ सम्यग्ज्ञातस्य शक्योऽस्ति कर्तुं हि परिवर्जनम् ॥ ९ ॥ ६ ॥

**भा० टी०**—निर्दयानां रक्षसां संपदमासुर्यामन्तर्भाव्य देवासुरलक्षणं सर्गद्वयमनुवदति—**द्वाविति**। द्वौ द्विसंख्याकौ भूतानां मनुष्याणां सर्गौ लोकेऽस्मिन्संसारे इत्यर्थः। कौ तावित्यत आह—प्रकृतावेव दैव आसुर एव च। तथाच सृज्यत इति सर्गो भूतान्येव सृज्यमानानि दैव्या संपदा युक्तानि दैवो भूतसर्ग इत्युच्यते। तान्येवासुर्या संपदा युक्तानि आसुरो भूतसर्ग इति। तथाच श्रुतिः—"द्वया ह प्राजापत्या देवाश्चासुराश्च" इति। उक्तयोरेव पुनरनुवादे प्रयोजनमाह—दैवो भूतसर्गोऽभयं सत्त्वसंशुद्धिरित्यादिना विस्तरशो विस्तरप्रकारैः प्रोक्तः कथितः, नत्वासुरोऽतस्तत्परिवर्जनार्थमासुरं भूतसर्गं मे मम वचनादुच्यमानं विस्तरशः शृणु अवधारय, श्रुत्वा च शोकमोहौ परित्यजेति ज्ञापनाय संबोधयति—पार्थेति ॥ ६ ॥

**प० टी०**—अथेयमासुरी संपत्सर्वथैव त्याज्येत्येतदर्थमासुरीं संपदं प्रपञ्चयितुमाह—**द्वाविति**। द्वौ द्विप्रकारौ भूतानां सर्गौ मे मत्तः शृणु। असुरराक्षसप्रकृत्योरेकत्वाद्द्वावित्युक्तम्। अतो 'राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः' इति नवमाध्यायोक्तप्रकृतित्रैविध्येनाविरोधः। स्पष्टमन्यत् ॥ ६ ॥

**रा० टी०**—ननु सर्गाणामतिबहुत्वाद्देवासुरयोरेवोक्तिः कथमित्यतः शुभाशुभफलाधिक्यादिभाक्त्वरूपपूर्वश्लोकोक्तोपाधिद्वयाविवक्षया द्वयोरेवोक्तिरिति भावेनाह—**द्वाविति**। दैव आसुरश्चेति द्वावेव प्राणिनां सर्गौ सृष्टिभूतसर्गौ प्राणिस्वभावावाविति वा। तदुभयजिज्ञासायामाह—दैव इति। शृण्विति विस्तरश इत्यनुषङ्गः ॥ ६ ॥

**प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ॥**
**न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥**

**त० टी०**—प्रतिज्ञातमासुरसर्गमेव विस्तरशो निरूपयति—**प्रवृत्तिमित्यादिद्वादशभिः श्लोकैः**। प्रवृत्तिं त्रिवर्गसाधनं प्रवृत्तिलक्षणं धर्मं, निवृत्तिं मोक्षसाधनं निवृत्तिलक्षणं धर्मं, चकाराभ्यामुभयविधधर्मप्रतिपादकमुभयविधं शास्त्रं च आसुरा आसुरीं संपदमभिजाता जना न विदुर्न जानन्ति । अत एव तेष्वासुरेषु शौचं प्रवृत्तिनिवृत्तिधर्मोपयोगिबाह्याभ्यन्तरं तथा आचारोऽपि येनाचारेण वैदिकेन सन्ध्यावन्दनादिना तच्छौचं जायते, स न विद्यते ' संध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्मसु । यदन्यत्कुरुते कर्म न तस्य फलभाग्भवेत् ' इति स्मृतेः । सत्यं च यथादृष्टश्रुतार्थभाषणं श्रुतिस्मृत्यात्मकं शास्त्ररूपं प्रमाणं वा तेषु न विद्यते । बन्धमोक्षज्ञानहीना अशौचा अनाचारा अनृतभाषिणः असुराः प्रसिद्धास्तथाविधा मनुष्या अप्यसुरा ज्ञेया इत्यर्थः ॥ ७ ॥

**म० टी०**—वर्जनीयामासुरीं संपदं प्राणिविशेषणतया तानहमित्यतः प्राक्तनैर्द्वादशभिः श्लोकैर्विवृणोति—**प्रवृत्तिमिति**। प्रवृत्तिं प्रवृत्तिविषयं धर्मं, चकारात्तत्प्रतिपादकं विधिवाक्यं च। एवं निवृत्तिं निवृत्तिविषयमधर्मं, चकारात्तत्प्रतिपादकं निषेधवाक्यं च असुरस्वभावा जना न जानन्ति । अतस्तेषु न द्विविधं शौचं नाप्याचारो मन्वादिभिरुक्तः । न सत्यं च प्रियहितयथार्थभाषणं विद्यते । शौचसत्ययोराचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानम्। अशौचाः अनाचाराः अनृतवादिनो ह्यसुरा मायाविनः प्रसिद्धाः ॥ ७ ॥

**शं० टी०**—तामेवासुरीं संपदं प्रतिपादयति द्वादशभिः । तत्राद्येन तेषां शीलमाह—**प्रवृत्तिमिति**। शास्त्रदृष्टे कर्तव्ये धर्मे प्रवृत्तिं च शास्त्रदृष्टानर्थहेतोरधर्मान्निवृत्तिं च आसुरा आसुरस्वभावा रजस्तमोगुणप्रधाना जना न विदुः धर्ममधर्मं च न जानन्तीत्यर्थः । ननु " सत्यं वद धर्मं चर " इत्यादिश्रुतौ विद्यमानायां कथं ते धर्ममधर्मं च न जानन्तीत्याशङ्कायां तेषां तत्राप्रमाणत्वबुद्ध्या विश्वासो नास्तीति सूचयितुमाह—**न शौचमिति**। कर्तव्याकर्तव्यार्थज्ञानशून्यत्वेन निषिद्धरतेषु तेषु शौचं बाह्यमाभ्यन्तरं च नास्ति । तथैव आचारोऽपि नास्ति । चकाराद्दयापि नास्ति । सत्यं यथार्थभाषणं च नास्ति । दयासत्यशौचाचाररहिता आसुरा इत्यर्थः ॥ ७ ॥

**श्री० टी०**—आसुरीं विस्तरतो निरूपयति—**प्रवृत्तिं चेत्यादिद्वादशभिः**। धर्मे प्रवृत्तिमधर्मान्निवृत्तिं च आसुरस्वभावा जना न जानन्ति । अतः शौचमाचारः सत्यं च तेषु नास्त्येव ॥ ७ ॥

**स० टी०**—आसुरी संपदाहेया द्वादशभिरिहोच्यते ॥ तानहमित्यतः पूर्वतनैः श्लोकैर्मुरारिणा ॥ १ ॥ प्रवृत्तिविषयं धर्मं चेन तद्बोधिकां श्रुतिम् ॥ एवं निवृत्तिविषयं चेन तद्बोधिकां श्रुतिम् ॥ २ ॥ नैवासुरस्वभावास्ते जानन्ति भ्रमशालिनः ॥ अतस्तेषु न शौचं वा नाप्याचारः स्मृतेर्मतः ॥ ३ ॥ यथार्थभाषणं सत्यं प्रियं पथ्यं न विद्यते ॥ अशौचाश्चाप्यनाचारास्तथैवानृतवादिनः ॥ ४ ॥ मायाविनः प्रसिद्धाश्च ह्यसुरा दूषणाकराः ॥ ५ ॥ ७ ॥

**भा० टी०**—ज्ञानं विना परिवर्जनासंभवादासुरीं संपदं प्राणिविशेषविषयत्वेन प्रदर्शयति--**प्रवृत्तिं चेति**। आसुराः जनाः प्रवृत्तिं प्रवृत्तिविषयं पुरुषार्थसाधनं चकारात्तद्बोधकं शास्त्रं च, निवृत्तिं निवृत्तिविषयमनर्थसाधनं तद्बोधकं शास्त्रं च न विदुः। न केवलमेतावदेव किंतु न शौचं नापि चाचारो न सत्यं तेषु आसुरेषु विद्यते, अशौचाः अनाचारा मायाविनोऽनृतवादिनो यत आसुराः अत इत्यर्थः । शौचसत्ययोः मन्वाद्युक्ताचारान्तर्भावेऽपि ब्राह्मणपरिव्राजकन्यायेन पृथगुपादानम् ॥ ७ ॥

प० टी०—अथासुरीं विस्तरशो निरूपयति—प्रवृत्तिमित्यादितो द्वादशभिः । असुरस्वभावा जना धर्मे प्रवृत्तिमधर्मे निवृत्तिमिति न जानन्ति । अतः शौचमाचारः सत्यं च तेषु नास्ति ॥ ७ ॥

रा० टी०—तदाह—प्रवृत्तिमित्यादिद्वादशश्लोकैः । आसुरा जनाः विहिते प्रवृत्तिं निषिद्धे निवृत्तिं च न विदुः । तेषु शौचाचारसत्यानि न विद्यन्ते । तात्पर्यद्योतनाय नञ्त्रयोक्तिः ॥ ७ ॥

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ॥**
**अपरस्परसंभूतं किमन्यत् कामहैतुकम् ॥ ८ ॥**

त० टी०—अत एव—असत्यमिति । यस्मात्तेषु दृष्टादृष्टसर्ववस्तुज्ञापकं श्रेयोबोधकं शास्त्रं न विद्यतेऽत एव ते असत्यमप्रतिष्ठमनीश्वरं च जगदाहुः । तत्र " सदेव सौम्येदमग्र आसीत्", "सत्त्वाच्चावरस्य", "भावे चोपलब्धेः", "ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्" इत्यादिभिः सत्यत्वेनोक्तमपि असत्यं कालत्रयेऽपि सत्ताशून्यं सत्यतया भानं भ्रान्त्येत्याहुः, न चासदेवेदमग्र आसीदिति श्रुतौ असद्व्यपदेशस्यापि विद्यमानत्वात्कथं सत्यमिति चेन्न " असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् " इति सूत्रेण अव्याकृततत्त्वरूपेण परिणामित्वरूपेण वा धर्मान्तरयोगेनासच्छब्दार्थस्य सूत्रकारेणैव निरूपितत्वात् । " तत्सदासीत् " इति वाक्यशेषे सत्यत्वाभिधानात् । तथा " सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः " " बुद्धिर्मनो महद्वायुस्तेजोऽम्भः खं मही च या । चतुर्विधं च यद्भूतं सर्वं कृष्णे प्रतिष्ठितम् । विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् " इत्यादिशास्त्रान्मदाधारकम्, अप्रतिष्ठं नास्ति परमात्मा ब्रह्म प्रतिष्ठा यस्य तदप्रतिष्ठमित्याहुः । तथा " यतो वा इमानि भूतानि जायन्ते " " अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते " अन्तःप्रविष्टः शास्ता जनानां सर्वात्मा " " ससुरासुरगन्धर्वं सयक्षोरगराक्षसम् । जगद्वशे वर्ततेऽदः कृष्णस्य सचराचरम्" इत्यादिशास्त्रान्मत्कार्यं मन्नियम्यं मदात्मकं मदधिष्ठितं च, अनीश्वरं न विद्यते ईश्वरः कर्ता शास्ताऽन्तरात्माऽधिष्ठाता वा यस्य तदनीश्वरमित्याहुः । तर्हि कुतो जगदुत्पत्तिं वदन्तीत्यत आह—अपरस्परसंभूतमिति । अपरश्च परश्चेत्यपरस्परं कामप्रयुक्तयोः स्त्रीपुरुषयोः संयोगात्संभूतं मनुष्यपश्वादि सर्वं जातमित्यर्थः । किमन्यत्कामहैतुकं कामहेतुकमेव कामहैतुकं स्त्रीपुरुषयोः कामात् किमन्यज्जगतः कारणं ? न किंचिदपि दृष्टमित्यर्थः । दृष्टार्थादन्यददृष्टं धर्माधर्मेश्वरादिकं कारणं न मन्यन्ते इति भावः ॥ ८ ॥

म० टी०—ननु धर्माधर्मयोः प्रवृत्तिनिवृत्तिविषययोः प्रतिपादकं वेदाख्यं प्रमाणमस्ति निर्दोषं भगवदाज्ञारूपं सर्वलोकप्रसिद्धं, तदुपजीवीनि च स्मृतिपुराणेतिहासादीनि सन्ति, तत्कथं प्रवृत्तिनिवृत्तितत्प्रमाणाद्यज्ञानं? ज्ञाने वा आज्ञोल्लङ्घिनां शासितरि भगवति सति कथं तदननुष्ठानेन शौचाचारादिरहितत्वं?—दुष्टानां शासितुर्भगवतोऽपि लोकवेदप्रसिद्धत्वादत आह—असत्येति । सत्यमबाधिततात्पर्यविषयं तत्त्वावेदकं वेदाख्यं प्रमाणं तदुपजीवि पुराणादि च नास्ति यत्र तदसत्यं, वेदस्वरूपस्य प्रत्यक्षसिद्धत्वेऽपि तत्प्रामाण्यानभ्युपगमाद्विशिष्टाभावः । अत एव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्थाहेतुर्यस्य तदप्रतिष्ठम् । तथा नास्ति शुभाशुभयोः कर्मणोः फलदातेश्वरो नियन्ता यस्य तदनीश्वरं ते आसुरा जगदाहुः बलवत्पापप्रतिबन्धाद्वेदस्य प्रामाण्यं ते न मन्यन्ते । ततश्च तद्बोधितयोर्धर्माधर्मयोरीश्वरस्य चानङ्गीकाराद्यथेष्टाचरणेन ते पुरुषार्थभ्रष्टा इत्यर्थः । शास्त्रैकसमधिगम्यधर्माधर्मसहायेन प्रकृत्यधिष्ठात्रा परमेश्वरेण रहितं जगदिष्यते चेत्कारणाभावात्कथं तदुत्पत्तिरित्याशङ्क्याह—अपरस्परसंभूतं कामप्रयुक्तयोः स्त्रीपुंसयोरन्योन्यसंयोगात् संभूतं जगत्कामहैतुकं कामहेतुकमेव कामहैतुकं कामातिरिक्तकारणशून्यम् । ननु धर्माद्यप्यस्ति कारणं?—नेत्याह—किम-

न्यत्? अन्यददृष्टं कारणं किमस्ति? नास्त्येवेत्यर्थः। अदृष्टाङ्गीकारेऽपि कचिद्गत्वा स्वभावे पर्यवसानात् स्वाभाविकमेव जगद्वैचित्र्यमस्तु दृष्टे संभवत्यदृष्टकल्पनानवकाशात्। अतः काम एव प्राणिनां कारणं नान्यददृष्टेश्वरादीत्याहुरिति लोकायतिकदृष्टिरियम्॥ ८॥

शं० टी०-स्वभावानुरूपं तेषां निश्चयमाह-असत्यमिति। दयातपःसत्यशौचरहितास्ते आसुरा जना यथा स्वयमसत्यपरास्तथा जगत्सर्वमप्यसत्यम् आहुः प्राहुः। वेदाः वेदोक्तधर्मास्तत्फलभूता लोकाश्च सर्वं मिथ्यैवेति वदन्तीत्यर्थः। ननु सुखदुःखादिभेदलक्षणं जगद्वैचित्र्यं दृश्यते यतस्तत्कारणं धर्माधर्मौ तन्मूलभूतो वेदश्च लोकाश्च सर्वं सत्यमित्यवगन्तुं शक्यत इत्यत आह—अप्रतिष्ठमिति। प्रतिष्ठत्यनयेति प्रतिष्ठा कारणं सुखदुःखादिवैचित्र्यहेतुभूतौ धर्माधर्मौ, न प्रतिष्ठास्येत्यप्रतिष्ठं प्राहुर्न धर्माधर्मनिमित्तकं जगद्वैचित्र्यं, किंतु वस्तुस्वभावादेव सुखदुःखादिवैचित्र्यमिति वदन्तीत्यर्थः। तथा अनीश्वरं च न यस्येश्वर उत्पत्तिकारणं तदनीश्वरं जगदाहुरित्यर्थः। नन्वीश्वरस्य जगदुत्पत्तिकारणत्वानङ्गीकारे कथं प्रजासर्ग इत्यत आह—अपरस्परसंभूतमिति। अपरश्च परश्च अपरस्परं मिथुनं तस्मात्संभूतमपरस्परसंभूतं प्राहुः। स्त्रीपुंसयोः संयोगाज्जगत्सर्वं जातमिति वदन्तीत्यर्थः। ननु तयोरपि प्रेरकं निमित्तकारणमीश्वरोऽभ्युपगन्तव्य इत्यत आह—कामहैतुकमिति। प्रजासर्गे काम एव हेतुर्यस्य तत्कामहेतुकं कामहेतुकमेव कामहैतुकम्। तयोः प्रेरणे प्रजासृष्टौ काम एव कारणं, किमन्यत्ततोऽन्यत्कारणं किमस्तीति प्राहुः। दृष्टं त्यक्त्वा अदृष्टस्य धर्मादेरीश्वरस्य वा कारणत्वकल्पना न युक्तेति वदन्तीत्यर्थः॥ ८॥

श्री० टी०-ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्तिं निवृत्तिं च कथं न विदुः? कुतो वा धर्माधर्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात्? कथं वा शौचाचारादिविषयामीश्वराज्ञामतिवर्तेरन्? ईश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यात्?—अत आह—असत्यमिति। नास्ति सत्यं वेदपुराणादिप्रमाणं यस्मिन् तादृशं जगदाहुः। वेदादीनां प्रामाण्यं न मन्यन्त इत्यर्थः। तदुक्तम्—'त्रयो वेदस्य कर्तारो भण्डधूर्तनिशाचराः' इत्यादि। अत एव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्था हेतुर्यस्य तत् स्वाभाविकं जगद्वैचित्र्यमाहुरित्यर्थः। अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः। तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्यत आह—अपरस्परसंभूतमिति। अपरश्च परश्चेत्यपरस्परम् अपरस्परतो अन्योऽन्यतः स्त्रीपुरुषमिथुनात् संभूतं जगत्। किमन्यत्कारणमस्य? नास्त्यन्यत्किंचित्। किं तु कामहैतुकं स्त्रीपुरुषयोः काम एव प्रवाहरूपेण हेतुरस्येत्याहुरित्यर्थः॥ ८॥

म० टी०-नन्वस्ति मानं वेदाख्यं धर्माधर्मावबोधकम्॥ निर्दोषं परमेशाज्ञारूपं लोके प्रसिद्धिमत्॥ १॥ तन्मूलकानि सन्तीतिहासस्मृतिमुखान्यपि॥ कथं प्रवृत्त्याद्यज्ञानं तेषां ज्ञानेऽप्यतिक्रमः॥ २॥ तवाज्ञायाः कथं दुष्टशासितुर्हीति चेच्छृणु॥ अबाधितार्थविषयं सत्यं तत्त्वावबोधकम्॥३॥ वेदस्मृतीतिहासार्षपुराणादिप्रमाणकम्॥ नास्ति यस्मिन्नसत्यं तद्वेदे सत्यपि तैः शठैः॥ ४॥ प्रामाण्येऽस्वीकृतेऽतश्च धर्माधर्मस्वरूपिणि॥ न प्रतिष्ठा व्यवस्थाया हेतुर्यस्य च तत्तथा॥ ५॥ नास्त्येवं फलदोऽपीशो नियन्ता यस्य तत्तथा॥ त आसुरा जगत्प्राहुः पापाधिक्यादिहेतुना॥ ६॥ वेदस्यापि प्रमात्वं ते न मन्यन्ते न चेश्वरम्॥ अतो यथेष्टाचरणात्ते यान्ति नरकं शठाः॥ ७॥ कथमीशमृते वैस्तु विश्वोत्पत्तिरिहेष्यते॥ शृणु स्त्रीपुंसयोर्योगादन्योन्यं कामयुक्तयोः॥ ८॥ संभूतं हि जगत्कामहेतुकं तन्न चान्यतः॥ अदृष्टकारणं चान्यन्नास्त्येवं दृष्टसंभवे॥ ९॥ नादृष्टकल्पना युक्ता ततः स्वाभाविकं जगत्॥ इति चार्वाकदुर्दृष्टिर्वेदेशाद्यपलापिनी॥ १०॥ सर्वानर्थकरी यस्मात्त्याज्या श्रेयोऽर्थिभिस्त्वतः॥ ११॥ ८॥

भा० टी०-किंच-असत्यमिति। असत्यं यथा वयमनृतप्रायास्तथेदं जगदप्यसत्यमबाधितप्रमाणशून्य-

त्वादनृतप्रायम्। अप्रतिष्ठं न विद्यते धर्माधर्मौ प्रतिष्ठा व्यवस्थाहेतुर्यस्य तत्तथा, धर्माधर्मसापेक्षोऽस्य शासितेश्वरो न विद्यते इत्यनीश्वरमाहुः। ननु धर्माधर्मतदध्यक्षाभावे जगदुत्पत्तिं कथमाहुरिति तत्राह—अपरस्परसंभूतं परापरशब्दावन्यशब्दपर्यायौ। कामप्रयुक्तयोः स्त्रीपुरुषयोरन्योन्यसङ्गाज्जातं, काम एवहेतुर्यस्य तत्कामहेतुकम्। किमन्यत्कामादन्यत् किंचिददृष्टं धर्मादिकारणान्तरं जगतो न विद्यते किं तु काम एव स्त्रीपुरुषयोः सङ्गहेतुः सर्वस्य जगतः कारणमिति लौकायतिकदृष्टिरियम्। यत्तु "अपरस्पराः क्रियासातत्ये" इति सुट्। बीजाङ्कुरवत्परस्परकारणीभूतानां धर्माधर्मवासनानां यत्सातत्यं तस्मात्संभूतं किमन्यल्लोकेस्ति? न किंचिदपि धर्माद्यपेक्षया उत्पद्यते, किं तु सर्वं कामहेतुकं स्त्रीपुरुषयोर्मिथुनीभावः कामस्तदुत्थस्वभावादेव जन्तुर्जायते न त्वदृष्टादि-इत्यन्ये। तदुपेक्ष्यम्। अप्रतिष्ठमित्यनेन पौनरुक्त्यापादकस्य क्लिष्टकल्पनस्यान्याय्यत्वात् ॥ ८ ॥

प० टी०—ननु वेदोक्तयोर्धर्माधर्मयोः प्रवृत्तिनिवृत्ती कथं न विदुः? कथं वा धर्माधर्मयोरनङ्गीकारे जगतः सुखदुःखादिव्यवस्था स्यात्? कथं वा शौचाचारविषयामीश्वराज्ञामतिवर्तेरन्नीश्वरानङ्गीकारे च कुतो जगदुत्पत्तिः स्यादित्याशङ्क्याह—**असत्यमिति**। तेऽसुरा जगदसत्यमप्रतिष्ठमनीश्वरं चाहुः। न विद्यते सत्यं ब्रह्म वेदादिशब्दब्रह्म—वेदादि यस्मिन् कुत्रापि प्रामाण्यं न मन्यन्त इत्यर्थः। अत एव नास्ति धर्माधर्मरूपा प्रतिष्ठा व्यवस्थितिर्यस्मिन्। स्वाभाविकं जगद्वैचित्र्यमाहुः। अत एव नास्तीश्वरः कर्ता व्यवस्थापकश्च यस्य तादृशं जगदाहुः। तर्हि कुतोऽस्य जगत उत्पत्तिं वदन्तीत्याह—अपरस्परसंभूतम्। अपरःशब्दः सकारान्तः। अपरश्च परश्च अपरस्परं स्त्रीपुंरूपं मिथुनं तस्मात्संभवतीति। किंभूतं कामहेतुकम्। कामः कन्दर्पो हेतुर्यस्य न तु सुप्रजार्थम्। अतो मिथुनादन्यत् किमस्य कारणं न किंचिदित्यर्थः। एतां लोकायतिकानां दृष्टिं दर्शनमवष्टभ्याश्रित्य नष्टो नाशकवानात्मा येषां मतेऽत एवाल्पबुद्धयो दृष्टान्तमात्रमतय उग्रं संसारभयावहं कर्म येषां ते तथा जगतः क्षयायाधःपाताय प्रभवन्त्युद्भवन्त्यत एवाहिताः। यद्वा 'प्रवृत्तिं च निवृत्तिं च' इत्यादिना ये स्वमार्गबहिर्भूतास्त एवासुरशब्देनोक्ता न तु लोकायतिकाः। यतो 'दम्भो दर्पोऽभिमानश्च' इत्यादिना आसुरलक्षणस्योक्तत्वाद्। एवं त आत्मवत्सर्वं जगदपि मन्यन्त इत्याह—असत्यमिति। असत्यं सत्यवादरहितं द्यूतवञ्चकाद्युपेतम्। अप्रतिष्ठं महत्त्वरहितं निर्लज्जत्वलोकापवादभयवर्जितम्। अनीश्वरमितीश्वरनिग्रहभयवर्जितम्। नापि कर्तृत्वसापेक्षं किं त्वपरस्परसंभूतमिति पूर्ववत्। कामहैतुकं चेति पित्रादिभक्तिरहितम् ॥ ८ ॥

रा० टी०—किंच—**असत्यमिति**। जगदसत्यम्। अत्र सत्यप्रतिष्ठेश्वरशब्दा विष्णुपराः। नञ्बहुव्रीहिः। जगद्विशरणकर्तृतया सत्यपदवाच्यविष्णुहीनमाहुः। स्थितिहेतुतया प्रतिष्ठापदोक्तविष्णुहीनमाहुः। अनीश्वरं स्वामिहीनमाहुः। जगत्सृष्ट्यादिकर्तारं ये न जानन्ति त इति चाहुरासुरजना इत्यनुषङ्गः। अपरस्परसंभूतमन्नाद्भवन्ति भूतानीति तृतीयोक्तदिशा परस्परसंभूतं न भवतीत्यर्थः। यद्वा जगदसत्यं सत्यं न—मिथ्येत्यर्थः। अत एव शुक्तिरूप्यवन्न प्रतितिष्ठतीत्यप्रतिष्ठं ज्ञानबाध्यम्। अनीश्वरं नियन्तृहीनम्। अपरस्परसंभूतं परेभ्यः संभवहीनम्। एकस्मादेकस्य जनिर्नेति यावत्। किं तर्हीतिप्रश्नस्योत्तरम्—अन्यदिति। सदसद्भ्यामिति शेषः। सदसद्विलक्षणमित्यर्थः। केन जायत इत्यत उक्तम्—कामहैतुकम्। कामहेत्वविद्यापरिणामरूपम् ॥ ८ ॥

**एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ॥**
**प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥ ९ ॥**

त० टी०—ततश्च—**एतामिति**। एतां तेषां नास्तिकानां दृष्टिं दर्शनमवष्टभ्याश्रित्य नष्टात्मानः

नष्टो देहातिरिक्त आत्मा येषां ते तथा, देहातिरिक्तात्मज्ञानाभावात्। अतोऽल्पबुद्धयः अल्पे नश्वरे प्रत्यक्षसिद्धे देहे पञ्चेन्द्रियविषये वा बुद्धिर्येषां तेऽल्पबुद्धयःआत्मानात्मविवेकाभावाद्विपरीतज्ञाना इत्यर्थः। उग्रकर्माणः उग्रं हिंसादिबहुलं कर्म येषां ते तथा। अत एवाहिता वैरिणः सन्तो जगतः क्षयाय प्रभवन्ति ॥ ९ ॥

म० टी०–इयं दृष्टिः शास्त्रीयदृष्टिवदिष्टैवेत्याशङ्क्याह–एतामिति । एतां प्रागुक्तां लोकायतिकदृष्टिमवष्टभ्यालम्ब्य नष्टात्मानो भ्रष्टपरलोकसाधनाः अल्पबुद्धयो दृष्टमात्रोद्देशप्रवृत्तमतयः उग्रकर्माणो हिंस्राः अहिताः शत्रवो जगतः प्राणिजातस्य क्षयाय व्याघ्रसर्पादिरूपेण प्रभवन्ति उत्पद्यन्ते। तस्मादियं दृष्टिरत्यन्ताधोगतिहेतुतया सर्वात्मना श्रेयोर्थिभिरवहेयैवेत्यर्थः॥ ९ ॥

शं० टी०–एवं तेषामासुराणां प्रत्यक्षैकमानवतां निश्चयमुक्त्वा निश्चयस्य कार्यमाह–एतामिति। प्रागुपदिष्टामेतां लोकायतिकदृष्टिमवष्टभ्याऽवलम्ब्य नष्टात्मानः कामक्रोधलोभमोहादिलक्षणेन रजस्तमोदोषेण नष्टस्तिरोहित आत्मा विवेकबुद्धिर्येषां ते नष्टात्मानस्तत एवाल्पबुद्धयः अल्पे तुच्छे स्रगादिविषयभोगे बुद्धिर्येषां तेऽल्पबुद्धयः। यद्वा अल्पे मलमांसास्थिमये देहे अहमितिबुद्धिर्येषां ते देहमात्रात्मदर्शिनः। अत एवोग्रकर्माणः उग्रं क्रूरं शास्त्रविरुद्धं देहपोषणैकप्रयोजनं परहिंसाप्रधानं कर्म येषां ते उग्रकर्माणः अत एवासुरास्तत एवाहिताः साधूनां शत्रवः स्वयं जगतो नाशाय जगतः स्थितिहेतुभूतवेदतदुक्तधर्मनाशायैव प्रभवन्ति समर्था भवन्ति न तु रक्षणायेत्यर्थः ॥ ९ ॥

श्री० टी०–किंच–एतामिति। एतां लोकायतिकानां दृष्टिं दर्शनमाश्रित्य नष्टात्मानो मलिनचित्ताः सन्तोऽल्पबुद्धयः दृष्टार्थमात्रमतयः अत एव उग्रं हिंस्रं कर्म येषां तेऽहिता वैरिणो भूत्वा जगतः क्षयाय प्रभवन्ति उद्भवन्तीत्यर्थः॥ ९ ॥

स० टी०–एतां दृष्टिं समालम्ब्य भ्रष्टामुष्मिकसाधनाः ॥ तुच्छेऽल्पविषये येषां मतिर्दृष्टावलम्बिनी ॥ १ ॥ हिंस्रास्ते शत्रवः प्राणिजातस्य क्षयहेतवे ॥ व्याघ्रसर्पादिरूपेणोत्पद्यन्ते दुष्टदृष्टयः ॥ २ ॥ हेयेयं दृष्टिरत्यन्तदुःखहेतुः सुखेप्सुभिः ॥ ३ ॥ ९ ॥

भा० टी०–एतामिति। एतामुदाहृतां लोकायतिकदृष्टिमवष्टभ्याश्रित्य नष्टात्मानो नष्टस्वभावा भ्रष्टपरलोकसाधना अल्पबुद्धयोऽल्पविषयविषयाल्पैव बुद्धिर्येषां ते दृष्टमात्रोद्देशप्रवृत्तमतय उग्रकर्माणः क्रूरकर्माणो हिंसात्मकाः जगतोऽहिताः शत्रवो जगतः क्षयाय प्रभवन्ति उद्भवन्ति। तथाचैतादृशदोषैर्दुष्टेयं दृष्टिः श्रेयोर्थिभिः सर्वथा नाश्रयणीयेति भावः॥ ९ ॥

प० टी०–एतामिति। एतां दृष्टिं दृष्टमात्रप्रतीतिमवष्टभ्याङ्गीकृत्य नष्टात्मानो विधिनिषेधवर्जिता अत एवाल्पबुद्धय उग्रकर्माणो जीवहिंसाद्यासुरतपोनिष्ठाः। तदुक्तम्–'स्रष्टारं सुखसंपदामपि वपुर्द्रष्टारमन्तर्गतं स्वात्मानं परिहाय मूढधिषणो देहात्मवादो जनः। पिण्डं पोषयति प्रतिक्षणपरद्रोहानृतैरेव तद्राद्धान्तैरपराद्धमस्ति किमहो बौद्धादिकानामिह' इति ॥ ९ ॥

रा० टी०–एतामिति। एतां दृष्टिमाश्रित्य नष्टात्मानः दुष्टचित्ताःअल्पज्ञानाः घोरकर्मनिरताः जगतः अहिताः शत्रवः क्षयायानिष्टप्राप्तये कलियुगादौ प्रभवन्ति ॥ ९ ॥

**काममाश्रित्य दुष्पूरं दम्भमानमदान्विताः ॥**
**मोहाद्गृहीत्वाऽसद्ग्राहान् प्रवर्तन्तेऽशुचिव्रताः ॥ १० ॥**

त० टी०–किंच—काममिति। दुष्पूरं दुःखेनापि पूरयितुमशक्यं काममाश्रित्य दम्भमानम-

**दैरन्विताः मोहादविवेकादसद्ग्राहान् अशुभनिश्चयान् गृहीत्वा उपादाय अशुचिव्रता अशुचीनि मद्यमांसादिविषयाणि व्रतानि येषां तथाभूताः क्षुद्रदेवताराधनादौ प्रवर्तन्ते ॥ १० ॥**

**म० टी०**—ते च यदा केनचित्कर्मणा मनुष्ययोनिमापद्यन्ते तदाह—**काममिति** । कामं तत्तद्दृष्टविषयाभिलाषं दुःष्पूरं पूरयितुमशक्यं दम्भेनाधार्मिकत्वेऽपि धार्मिकत्वख्यापनेन मानेन अपूज्यत्वेऽपि पूज्यत्वख्यापनेन मदेन उत्कर्षराहित्येऽप्युत्कर्षविशेषाध्यारोपेण महदवधीरणाहेतुनाऽन्विता असद्ग्राहान् अशुभनिश्चयान् अनेन मन्त्रेणेमां देवतामाराध्य कामिनीनामाकर्षणं करिष्यामः, अनेन मन्त्रेणेमां देवतामाराध्य महानिधीन्साधयिष्याम इत्यादिदुराग्रहरूपान् मोहादविवेकात् गृहीत्वा न तु शास्त्रात्, अशुचिव्रताः अशुचीनि श्मशानादिदेशोच्छिष्टत्वाद्यवस्थाद्यशौचसापेक्षाणि वामागमाद्युपदिष्टानि व्रतानि येषां तेऽशुचिव्रताः प्रवर्तन्ते यत्र कुत्राप्यवैदिके दृष्टफले क्षुद्रदेवताराधनादाविति शेषः । एतादृशाः पतन्ति नरकेऽशुचावित्यग्रिमेणान्वयः॥१०॥

**शं० टी०**—जगन्नाशाय कथं प्रभवन्तीत्यत आह—**काममिति** । दुष्पूरं वर्षशतकोट्यापि विषयभोगेन पूरयितुं तर्पयितुमशक्यत्वात् दुष्पूरं काममेकमेवाश्रित्य न तु धर्मम् । दम्भमानमदान्विताः दम्भो बहिर्धर्मिष्ठत्वचिह्नं, मानः स्वस्मिन्नेवोत्कृष्टत्वाभिनिवेशः, मदो विद्यैश्वर्यादिकृतश्चित्तविकारः विवेकनाशहेतुः । स्वयमेतैरन्विता आसुरा मोहादसति सद्बुद्धिर्मोहोऽविवेकस्तस्मादसद्ग्राहान् असदनर्थमेव ग्राहयन्ति संभावयन्तीत्यसद्ग्राहास्तान्निश्चयान् वेदशास्त्रविरुद्धान् गृहीत्वा अशुचिव्रताः अशुचीन्यमङ्गलकराणि नरकाद्यनर्थकारणानि व्रतानि नियमा येषां तेऽशुचिव्रता भूत्वा जगतो नाशाय प्रवर्तन्ते ॥ १० ॥

**श्री० टी०**—अपि च—**काममिति** । दुष्पूरं पूरयितुमशक्यं काममाश्रित्य दम्भादिभिर्युक्ताः सन्तः क्षुद्रदेवताराधनादौ प्रवर्तन्ते । कथम् ? असद्ग्राहान् गृहीत्वाऽनेन मन्त्रेणैतां देवतामाराध्य महानिधीन्साधयिष्याम इत्यादिदुराग्रहान् मोहमात्रेण स्वीकृत्य प्रवर्तन्ते । अशुचिव्रता अशुचीनि मद्यमांसादिविषयाणि व्रतानि येषां ते १०

**स० टी०**—केनचित्कर्मणा ते चेत्प्राप्नुवन्ति नराकृतिम् ॥ तदा भोगाभिलाषं तेऽत्यन्ताशक्यप्रपूरणम् ॥ १ ॥ आश्रित्याधार्मिकत्वेऽपि धार्मिकत्वभ्रमान्विताः ॥ अपूज्यत्वेऽपि पूज्यत्वख्यापनेन मदेन च ॥ २ ॥ उत्कर्षारोपणेनैव युक्ताश्चाशुभनिश्चयान् ॥ अनेनाराध्य मन्त्रेण देवतामहमादृताम् ॥ ३ ॥ आकर्षणं करिष्यामि कामिनीनामथाऽमुना ॥ निधींश्च साधयिष्यामीत्यादिरूपान्दुराग्रहान् ॥ ४ ॥ अविवेकाद्गृहीत्वा ते न तु शास्त्रात्कथंचन ॥ अशुचीनि श्मशानादिदुष्टदेशाश्रयाणि च ॥ ५ ॥ येषां व्रतान्यशौचादिसापेक्षाण्येव सन्ति ते ॥ दृष्टे फले प्रवर्तन्ते यत्र कुत्राप्यवैदिके ॥ ६ ॥ क्षुद्रदेवादिसेवादौ भोगमात्रैकलम्पटाः ॥ एतादृशाः पतन्त्येव नरके मलसंयुते ॥ ७ ॥

**भा० टी०**—तानेव दुराचारान् प्रकारान्तरेण विशिनष्टि—**काममिति** । ते च कामं तत्तद्दृष्टक्षुद्रविषयाभिलाषं दुःखेन पूरणं यस्याशक्यपूरणम् । अधार्मिकत्वेऽपि धार्मिकत्वख्यापनं दम्भः, अपूज्यत्वेऽपि पूज्यत्वाभिनिवेशो मानः, निकृष्टत्वेऽप्युत्कृष्टत्वारोपो महदवज्ञाहेतुर्मदः, तैरन्विता युक्ताः मोहादविवेकादसद्ग्राहानशुभनिश्चयान्—अनेन मन्त्रेणेमां देवतां वशीकृत्य कामिनीनामाकर्षणं शत्रुमारणं चावश्यं करिष्याम इत्यादिरूपान् दुराग्रहान् गृहीत्वाऽशुचिव्रताः अशुचीनि श्मशानादिदेशोच्छिष्टावस्थानाद्यशौचसापेक्षाणि वामागमाद्युपदिष्टानि व्रतानि येषां ते इहलोके प्रवर्तन्ते । एतादृशा आसुरा जना इहलोके सन्तीत्यर्थः ॥ १० ॥

**प० टी०**—अथान्यानप्याह—**काममिति** । दुःखेन पूरयितुमशक्यं काममभिलाषमाश्रित्याङ्गीकृत्य दम्भमानमदादिभिरुपायैरन्विताः सन्तः क्षुद्रदेवताराधनादौ प्रवर्तन्ते । किं कृत्वा ? असद्ग्राहान् गृहीत्वा सत्परं ब्रह्म गृह्णन्ति ते सद्ग्राहास्तदितरं स्वर्गादिसुखं गृह्णन्ति तेऽसद्ग्राहा ये मन्त्रास्तान् गृहीत्वाऽमुकमन्त्रेणैतां देवतामाराधयामीति संकल्पास्तथान्येऽशुचिव्रता मद्यमांसाद्याहार एव व्रतं नियमो येषां ते ॥ १० ॥

रा० टी०–काममिति । दुष्पूरं दुःखेन पूरणीयं काममिच्छामाश्रित्य दम्भमानमदैर्युक्ताः सन्तः मोहात् मिथ्याज्ञानस्वभावात् कुशास्त्राभ्यासजन्यविपरीतनिश्चयाद्गृहीत्वा आदायासदर्थान् ज्ञात्वेति वा । अशुचिव्रताः क्षुद्रभोगाय प्रवर्तन्ते ॥ १० ॥

**कामोपभोगपरमा एतावदितिनिश्चिताः ॥**
**चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः ॥ ११ ॥**

त० टी०–किंच–चिन्तामिति । जीवनस्य श्वस्तनस्याप्यनिश्चयाच्चिन्तां तु अपरिमेयामियत्तया मातुमशक्यां प्रलयान्तां मरणान्तामुपाश्रिताः सदा चिन्ताविष्टचित्ता इत्यर्थः । तथा कामोपभोगपरमाः । कामोपभोग एव परमः पुरुषार्थो येषां, पुनरेतावदिति निश्चिताः इतोऽधिकः पुरुषार्थो नास्तीति कृतनिश्चयाः ॥ ११ ॥

म० टी०–तानेव पुनर्विशिनष्टि–चिन्तेति । चिन्तामात्मीययोगक्षेमोपायालोचनात्मिकां अपरिमेयां अपरिमेयविषयत्वात् परिमातुमशक्यां प्रलयो मरणमेवान्तो यस्यास्तां प्रलयान्तां यावज्जीवमनुवर्तमानामिति यावत् । न केवलमशुचिव्रताः प्रवर्तन्ते, किं त्वेतादृशीं चिन्तां चोपाश्रिता इति । समुच्चयार्थश्चकारः । सदानन्तचिन्तापरा अपि न कदाचित्पारलौकिकचिन्तायुताः किं तु कामोपभोगपरमाः काम्यन्त इति कामाः दृष्टाः शब्दादयो विषयास्तदुपभोग एव परमः पुरुषार्थो न धर्मादिर्येषां ते तथा । पारलौकिकमुत्तमं सुखं कुतो न कामयन्ते तत्राह–एतावद्दृष्टमेव सुखं नान्यदेतच्छरीरवियोगे भोग्यं सुखमस्ति एतत्कायातिरिक्तस्य भोक्तुरभावादिति निश्चिताः एवंनिश्चयवन्तः । तथाच बार्हस्पत्यं सूत्रम् 'चैतन्यविशिष्टः कायः पुरुषः । काम एवैकः पुरुषार्थः' इति च ॥ ११ ॥

शं० टी०–किंच–चिन्तामिति । अपरिमेयां परिमातुमशक्यामियत्ताशून्यामित्यर्थः । प्रलयान्तां प्रलयश्चरमश्वासोऽन्तोऽवधिर्यस्यास्तां मरणावधिकां चिन्तां भोग्यसौष्ठवासौष्ठवसिद्ध्यसिद्ध्यालोचनरूपामाश्रिताः कामोपभोगपरमाः काम्यन्त इति कामा भोग्यपदार्थास्तेषामुपभोग एव परमः निरतिशयः पुरुषार्थः पुरुषत्वसिद्धेः फलं येषां ते कामोपभोगपरमाः । एतावदितिनिश्चिताः पुमान् जनित्वा मरणान्तं सम्यग्विषयाननुभुङ्क्त इति यत्त्वेतावदेव पुंजन्मनः फलं देहपातस्यैव मोक्षत्वान्नातः परमं फलमिति निश्चितं सिद्धान्तो येषां ते एतावदितिनिश्चिताः सन्तः कामभोगार्थमीहन्ते इत्युत्तरेणान्वयः ॥ ११ ॥

श्री० टी०–किंच–चिन्तामिति । प्रलयो मरणमेवान्तो यस्यास्ताम् अपरिमेयां परिमातुमशक्यां चिन्तामाश्रिताः । नित्यं चिन्तापरायणा इत्यर्थः । कामोपभोग एव परमो येषां ते । एतावदिति कामोपभोग एव परमः पुरुषार्थो नान्यदस्तीति कृतनिश्चयाः अर्थसंचयानीहन्त इत्युत्तरेणान्वयः । तथाच बार्हस्पत्यं सूत्रम्–“ काम एवैकः पुरुषार्थः ” इति, “ चैतन्यविशिष्टः कायः पुरुषः ” इति च ॥ ११ ॥

स० टी०–परिमातुं न शक्या या योगक्षेमादिगोचरा ॥ चिन्ता तां मरणान्तां च यावज्जीवमुपाश्रिताः ॥ १ ॥ दृष्टाः शब्दादयो भोगाः काम्यन्ते येऽतिरागिभिः ॥ तेषां तदुपभोगोऽस्ति पुरुषार्थो न चापरः ॥ २ ॥ एतावद्दृष्टमेवास्ति सुखं नान्यन्मृतेः परम् ॥ एतत्कायातिरिक्तस्य ह्यभावो भोक्तुरेव हि ॥ ३ ॥ इति निश्चयवन्तस्ते ये लोकायतिकाः शठाः ॥ ४ ॥ ११ ॥

भा० टी०–आसुरानेव विधान्तरेण पुनर्विशिनष्टि–चिन्तामिति । चिन्तां योगक्षेमोपायालोचनात्मिकामपरिमेयविषयत्वात् यस्याश्चिन्ताया इयत्ता न परिमातुं शक्यते सा परिमातुमशक्या तां प्रलयान्तां मरणपर्यन्तामुपाश्रिताः सदा चिन्तापरा इत्यर्थः । काम्यन्त इति कामाः शब्दादयस्तदुपभोगः परमपुरुषार्थो

येषां अयमेव परमः पुरुषार्थो यः कामोपभोगः पारत्रिकं तु सुखं नास्त्येवेत्येवं निश्चितात्मानः एतत्कायातिरिक्तस्य भोक्तुरभावात्। तथाच बार्हस्पत्ये सूत्रे "चैतन्यविशिष्टः कायः पुरुषः। काम एवैकः पुरुषार्थः" इति च ॥ ११ ॥

पु० टी०—किं च—चिन्तामिति। प्रलयो मरणमेवान्तः पर्यवसानं यस्यास्तां परिमातुमशक्यां चिन्तां मनोरथसंततिमुपाश्रिताः कामा विषयास्तेषामुपभोग एव परमात्यन्तिकं प्राप्यं येषां ते एतावान्पुरुषार्थ इति कृतनिश्चयाः। श्रुतिरपि—"स यावदप्येतेषामेकैकं न प्राप्नोत्यकृत्स्न एव तावन्मन्यते तस्यो कृत्स्नता" इति। भाष्यम्—तस्य पुरुषस्य, उ इति निर्धारणे, अकृत्स्नता सकलप्राप्तिराहित्यम्। तस्य कस्य? य एषां पूर्वोक्तानां विषयाणां मध्ये यावदेकैकं विषयं न प्राप्नोति तावदहमकृत्स्न एवेति मन्यतेऽहमप्राप्तसकलार्थ एवेति मन्यते ॥ ११ ॥

रा० टी०—किं च—कामेति। प्रलयान्तां मरणान्ताम्। अपरिमेयां परिमातुमशक्यां चिन्तामुपाश्रिताः कामोपभोगपरमाः काम्यमानवस्त्वनुभव एव परमो येषां ते विषयभोगैकरताः एतावदैहिकमेव फलं नान्यदामुष्मिकमस्तीति निश्चयवन्तः ॥ ११ ॥

**आशापाशशतैर्बद्धाः कामक्रोधपरायणाः ॥**
**ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान् ॥ १२ ॥**

त० टी०—अत एव—आशेति। आशा एव पाशास्तेषां शतैर्बद्धाः इतस्तत आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधमात्रपरमाश्रया आसुरा भवन्तीत्यर्थः। एतावता असुराणां लक्षणमुक्तमिदानीं तत्प्रवृत्तिमाह—ईहन्त इति। कामभोगार्थमन्यायेन चौर्यप्राणिवधादिनाऽर्थसंचयान् प्रति ईहन्ते चेष्टन्ते ॥ १२ ॥

म० टी०—त ईदृशा असुराः—आशेति। अशक्योपायार्थविषया अनवगतोपायार्थविषया वा प्रार्थना आशास्ता एव पाशा इव बन्धनहेतुत्वात् पाशास्तेषां शतैः समूहैर्बद्धा इव श्रेयसः प्रच्याव्येतस्तत आकृष्य नीयमानाः कामक्रोधौ परमयनमाश्रयो येषां ते कामक्रोधपरायणाः स्त्रीव्यतिकराभिलाषपरानिष्टाभिलाषाभ्यां सदा परिगृहीता इति यावत्। ईहन्ते कर्तुं चेष्टन्ते कामभोगार्थं न तु धर्मार्थमन्यायेन परस्वहरणादिना अर्थसंचयान् धनराशीन् संचयानिति बहुवचनेन धनप्राप्तावपि तत्तृष्णानुवृत्तेर्विषयप्राप्तिवर्धमानतृष्णात्वरूपो लोभो दर्शितः ॥ १२ ॥

शं० टी०—किं च—आशेति। आशापाशशतैर्बद्धाः आशा अप्राप्तार्थाभिलाषास्ता एव पाशा बन्धनरज्जवस्तेषां शतैर्बद्धाः। कामक्रोधपरायणाः आसुराः कामभोगार्थं कामानां स्रगादिविषयाणां भोगार्थमेव न तु दानार्थं नापि धर्मार्थं च। किं तु विषयानुभवायैव अन्यायेन शास्त्रविरुद्धेन मार्गेण कपटवञ्चनादिरूपेणार्थसंचयान् संपाद्यानीहन्ते कुर्वन्तीत्यर्थः ॥ १२ ॥

श्री० टी०—अत एव च—आशेति। आशा एव पाशास्तेषां शतानि तैर्बद्धाः इतस्तत आकृष्यमाणाः कामक्रोधौ परमयनमाश्रयो येषां ते कामभोगार्थमन्यायेन चौर्यादिनाऽर्थानां संचयान्राशीनीहन्ते इच्छन्ति ॥ १२ ॥

स० टी०—अशक्योपायविषया आशास्ता एव बन्धकाः ॥ पाशास्तेषां शतैर्बद्धाः श्रेयसः प्रच्युता जडाः ॥ १ ॥ साभिलाषपरानिष्टाभिलाषाभ्यां सदाऽऽवृताः ॥ चेष्टन्ते कामभोगार्थं धर्मार्थं न कथंचन ॥ २ ॥ कर्तुं ते वित्तराशींश्च परस्वहरणादिना ॥ ३ ॥ १२ ॥

भा० टी०—आसुरानेव पुनर्विशिनष्टि—आशेति। आशा अशक्योपायार्थविषया अनवगतोपायार्थविषया वा प्रार्थनास्ता एव बन्धनहेतुत्वात् पाशाः। आशापाशानां शतैर्बद्धा एव सन्तः श्रेयसः प्रच्याव्ये-

तस्तत आकृष्यमाणाः कामक्रोधपरायणाः कामक्रोधौ परमयनं आश्रयो येषां ते कामभोगार्थं कामभोगप्रयोजनाय न तु धर्मार्थमन्यायेन परस्वापहरणादिनार्थसंचयानर्थप्रचयान् ईहन्ते चेष्टन्ते ॥ १२ ॥

प० टी०—किं च—आशापाशशतैरिति । आशा एव पाशा बन्धनरज्जवस्तेषां शतानि तैर्बद्धाः । तदुक्तम्—'आशा नाम मनुष्यस्य काचिदाश्चर्यशृङ्खला । यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पङ्गुवत् ' इति । तथा कामक्रोधौ परमयनं गतिर्येषां ते कामभोगार्थं विषयभोगार्थमन्यायेन द्यूतचौर्यादिनाऽर्थसंचयान् द्रव्यसंग्रहानीहन्तेऽपेक्षन्ते ॥ १२ ॥

रा० टी०—आशेति । आशा एव पाशास्तेषां शतैर्बद्धाः कामक्रोधा एव परं अयनमेषां ते कामक्रोधपरायणाः । कामभोगार्थं काम्यविषयानुभवार्थं अन्यायेन चौर्यादिनाऽर्थसंचयान्द्रव्यसमूहानीहन्ते वाञ्छन्ति ॥ १२ ॥

**इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम् ॥**
**इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥**

**त० टी०—तेषामर्थतृष्णां तन्मनोरथकथनेन विवृणोति—इदमद्येति । इदं धनक्षेत्रादिकं मया बुद्धिबलसामर्थ्यवता स्वसामर्थ्येनैव लब्धं न दैवादिना, इदं च धनं मनोरथं मनोऽभिलषितं स्वपौरुषेण प्राप्स्ये । इदं धनं स्वसामर्थ्यसंचितं मम गृहेऽस्ति । इदमपि मदुपायसाध्यं पुनर्भविष्यति ॥१३॥**

म० टी०—तेषामीदृशीं धनतृष्णानुवृत्तिं मनोराज्यकथनेन विवृणोति—इदमिति । इदं धनं अद्य इदानीमनेनोपायेन मया लब्धम्, इदं तदन्यत् मनोरथं मनस्तुष्टिकरं शीघ्रमेव प्राप्स्ये, इदं पुरैव संचितं मम गृहेऽस्ति, इदमपि बहुतरं भविष्यत्यागामिनि संवत्सरे पुनर्धनम् । एवं धनतृष्णाकुलाः पतन्ति नरकेऽशुचावित्यग्रिमेणान्वयः ॥ १३ ॥

शं०टी०—अन्यायेनार्थसंपादनपराणामासुराणां हृदये संकल्पप्रकारमाह—इदमितित्रिभिः । स्पष्टार्थः ॥१३॥

श्री० टी०—तेषां मनोराज्यं कथयन्नरकप्राप्तिमाह—इदमद्येति चतुर्भिः । प्राप्स्ये प्राप्स्यामि मनोरथं मनसः प्रियम् । शेषं स्पष्टम् । एषां च त्रयाणां श्लोकानामित्यज्ञानविमोहिताः सन्तो नरके पतन्तीति चतुर्थेनान्वयः ॥ १३ ॥

स० टी०—ईदृशीं धनतृष्णानुवृत्तिं तेषां कुचेतसाम् ॥ विवृणोति मनोराज्यकथनेन हरिः स्वयम् ॥ १॥ इदं धनं मयाऽनेनोपायेनाप्तं च संप्रति ॥ मनस्तुष्टिकरं चान्यत्प्राप्स्ये शीघ्रमिदं पुरा ॥ २ ॥ संचितं मे गृहे चास्ति बहुवित्तमिदं पुनः ॥ भविष्यत्येव सुखदं ममागामिनि वत्सरे ॥ ३ ॥ एवं तृष्णाकुला मूढा वैतरण्यादिकेऽशुचौ ॥ पतन्ति नरके घोरे नाकल्पं निःसृतिस्ततः ॥ ४ ॥ १३ ॥

भा० टी०—विवेकविरोधिनामासुराणामभिप्रायमाह—इदमिति । इदं द्रव्यं गोहिरण्याद्यद्य इदानीं मया लब्धमिदमन्यत् मनोरथं मनस्तुष्टिकरं प्राप्स्ये प्राप्स्यामि, इदमस्ति पुरैव संचितम्, इदमपि मे पुनर्धनमागामिनि संवत्सरे भविष्यति तेनाहं धनी विख्यातो भविष्यामि ॥ १३ ॥

प० टी०—अथान्यायेनाप्यर्थलाभे केवलं मनोराज्यमेव कुर्वन्तीत्याह—इदमिति चतुर्भिः । मनोरथं मनसः प्रियशेषं प्राप्स्ये प्राप्स्यामि । शेषं स्पष्टम् । एषां त्रयाणां श्लोकानामित्यज्ञानविमोहिताः पतन्ति नरकेऽशुचाविति चतुर्थेनान्वयः ॥ १३ ॥

रा० टी०—चिन्ताप्रकारं दर्शयति—इदमित्यादिना त्रयेण । इदं धनम् अद्य मया लब्धम्, इदं मनोरथं प्राप्स्ये प्राप्स्यामि । इदं धनम् अस्ति, इदमपि धनं मे पुनर्भविष्यति ॥ १३ ॥

**असौ मया हतः शत्रुर्हनिष्ये चापरानपि ॥**
**ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान्सुखी ॥ १४ ॥**

**त० टी०**—किं च—**असाविति** । असौ मदीर्ष्युर्दुर्जयः शत्रुः सर्वसामर्थ्यवता मया हतः । एवमपरानपि शत्रूनहं शूरो हनिष्यामि । दुर्बला हि दैवादिकं समाश्रयन्ते नाहं तथा, यत ईश्वरोऽहम् । स्वाधीनोऽहमितरेषां नियन्ताऽस्मि । अहं भोगी स्वत एव प्राप्तसर्वभोगः । सिद्धोऽहं पुत्रमित्रभृत्यादिभिराज्ञानुवर्तिभिः स्वतोऽपि बलवान् सुखी सर्वव्याधिरहितः ॥ १४ ॥

**म० टी०**—एवं लोभं प्रपञ्च्य तदभिप्रायकथनेनैव तेषां क्रोधं प्रपञ्चयति—**असाविति** । असौ देवदत्तनामा मया हतः शत्रुरतिदुर्जयः, अत इदानीमनायासेन हनिष्ये च हनिष्यामी अपरान् सर्वानपि शत्रुन्, न कोऽपि मत्सकाशाज्जीविष्यतीत्यपेरर्थः । चकारान्न केवलं हनिष्यामि तान् किं तु तेषां दारधनादिकमपि ग्रहीष्यामीत्यभिप्रायः । कुतस्तवैतादृशं सामर्थ्यं त्वत्तुल्यानां त्वदधिकानां वा शत्रूणां संभवादित्यत आह—ईश्वरोऽहं न केवलं मानुषो येन मत्तुल्योऽधिको वा कश्चित् स्यात् । किमेते करिष्यन्ति वराकाः सर्वथा नास्ति मत्तुल्यः कश्चिदित्यनेनाभिप्रायेण ईश्वरत्वं विवृणोति—यस्मादहं भोगी सर्वैर्भोगोपकरणैरुपेतः सिद्धोऽहं पुत्रभृत्यादिभिः सहायैः संपन्नः स्वतोऽपि बलवानत्योजस्वी सुखी सर्वथा नीरोगः ॥ १४ ॥

**शं० टी०**—किं च—**असाविति** । ईश्वरो विद्याधनादिभिः समर्थः सिद्धः पुत्रैः पौत्रैः पशुभिर्धनधान्यैः संपन्नः कृतकृत्यः । शिष्टं स्पष्टम् ॥ १४ ॥

**श्री० टी०**—किंच—**असाविति** । सिद्धः कृतकृत्यः । स्पष्टमन्यत् ॥ १४ ॥

**स० टी०**—एवं प्रपञ्च्य तत्तृष्णां तदभिप्रायकीर्तनात् ॥ संप्रपञ्चयति क्रोधं तेषां श्रीहरिरव्ययः ॥ १ ॥ मयाऽसौ देवदत्ताख्यो हतः शत्रुः सुदुर्जयः ॥ हनिष्याम्यपरान्सर्वानद्य शत्रून्सुखेन च ॥ २ ॥ अपेरर्थस्तु मच्छत्रुः संश्च को जीवने क्षमः ॥ न केवलं हनिष्यामि किंतु तेषां धनादिकम् ॥ ३ ॥ गृहीष्यामीत्यभिप्रायश्चकारादत्र गम्यते ॥ कुतस्तवास्ति सामर्थ्यमीदृशं हि यतोऽपरे ॥ ४ ॥ त्वत्तुल्या अधिकाः किं न शत्रवस्तत्र चोच्यते ॥ न केवलं मनुष्योऽस्मि येन तुल्योऽधिकोऽथ वा ॥ ५ ॥ कश्चित्स्यादत एते किं करिष्यन्ति वराककाः ॥ सर्वथा नास्ति मत्तुल्यः कश्चिदत्रेश्वरोऽस्म्यहम् ॥ ६ ॥ विवृणोतीश्वरत्वं च तदभिप्रायतो हरिः ॥ यतोऽहं भोगसामग्रीयुतः सिद्धोऽहमित्यतः ॥ ७ ॥ पुत्रभृत्यादिभिर्युक्तः स्वतोऽपि बलवानहम् ॥ सर्वथाहं च नीरोगोऽत्यन्तपुण्यैरतो युतः ॥ ८ ॥ १४ ॥

**भा० टी०**—यथोक्ते मदभिप्राये प्रतिबन्धकः शत्रुरपि न संभवतीत्याह—**असाविति** । असौ देवदत्तो दुर्जयः शत्रुर्मया हतः हनिष्ये चापरानन्यान् वराकान् । ननु तपस्विनां सत्त्वे कथं सर्वेषां पराभवे तव सामर्थ्यमित्याशङ्क्य किमेते करिष्यन्ति तपस्विनो यतः सर्वथापि मत्तुल्यो नास्तीत्याह—ईश्वरोऽहम् । ऐश्वर्यातिरेकमेव प्रकटयति—भोगी सर्वभोगोपकरणवानहं सिद्धोऽहं पुत्रादिभिः संपन्नः बलवान न केवलं मानुषबलवान् सुखी चाहमेव ॥ १४ ॥

**प० टी०**—किं च—**असाविति** । असौ वर्तमानः शत्रुर्मया हतोऽपरान् भविष्यतोऽपि शत्रून् हनिष्ये । सिद्धार्थः कृतार्थः । तदुक्तम्—'मृषा मनोरथश्रेणीमाधुर्यान्मोहितो दिवा । रात्रौ स्वाप्नं सुखं भुञ्जन्नरो जयति जीवितम्' इति ॥ १४ ॥

**रा० टी०**—**असाविति** । असौ शत्रुर्मया हतः अपरानन्यानपि शत्रून् हनिष्ये च । अहमीश्वरः परमेश्वरः भोगी ऐहिकामुष्मिकभोगसंपन्नः सिद्धः कृतकृत्यः बलवान् समर्थः ॥ १४ ॥

**आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ॥**
**यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥**

**त० टी०**—किं च—आढ्य इति । आढ्यो धनधान्यसंपन्नः, अभिजनवानुत्तमकुले प्रसूतोऽहमेवास्मि । अतः कोऽन्योऽस्ति सदृशो मया, न कोऽपीत्यर्थः । ननु केचिद्यज्ञदानादिना कीर्तिमन्तो दृश्यन्ते श्रूयन्ते च तत्सादृश्यं स्यादत आह—यक्ष्य इति । यक्षपिशाचादीन् यक्ष्ये । दास्यामि स्तावकेभ्यो नटादिभ्यः । अतो यज्ञेन दानेनाप्यहमेव सर्वेषां कीर्तिमभिभूयोत्कृष्टो भविष्यामीत्यर्थः । ततश्च मोदिष्ये हर्षं प्राप्स्यामि सखीजनैः सह । इत्येवमाद्यज्ञानेन विमोहिता विविधं मोहं वृथा मनोरथरचनात्मकं भ्रमं प्रापिताः पतन्ति नरकेऽशुचावित्युत्तरेणान्वयः ॥ १५ ॥

**म० टी०**—ननु धनेन कुलेन वा कश्चित्त्वत्तुल्यः स्यादित्यत आह—आढ्य इति । आढ्यो धनी अभिजनवान् कुलीनोऽप्यहमेवास्मि । अतः कोऽन्योऽस्ति सदृशो मया न कोऽपीत्यर्थः । यागेन दानेन वा कश्चित्तुल्यः स्यादित्यत आह—यक्ष्ये यागेनाप्यन्यानभिभविष्यामि, दास्यामि धनं स्तावकेभ्यो नटादिभ्यश्च । ततश्च मोदिष्ये मोदं हर्षं लप्स्ये नर्तक्यादिभिः सहेत्येवमज्ञानेनाविवेकेन विमोहिताः विविधं मोहं भ्रमपरंपरां प्रापिताः ॥ १५ ॥

**शं० टी०**—किं च—आढ्य इति । आढ्यो बहुधनसंपन्नः अभिजनवाननूचानः यक्ष्ये प्रतिष्ठार्थं धनार्थं जीवनार्थं वा यागं करिष्यामि दास्यामि स्तावकेभ्यो नटविटादिभ्यो न तु श्रोत्रियेभ्यो बन्धुभ्यश्च मोदिष्ये दत्त्वा भुक्त्वा संतोषं प्राप्स्यामीत्येवमज्ञानविमोहिताः सदसद्विवेकाभावोऽज्ञानं तेन विविधं मोहिताः मोहं प्राप्ताः ॥ १५ ॥

**श्री० टी०**—किंच—आढ्य इति । आढ्यो धनादिसंपन्नः । अभिजनवान् कुलीनः । यक्ष्ये यागाद्यनुष्ठानेनापि दीक्षितान्तरेभ्यः सकाशान्महतीं प्रतिष्ठां प्राप्स्यामि । दास्यामि स्तावकेभ्यः । मोदिष्ये हर्षं प्राप्स्यामीत्येवमज्ञानेन विमोहिताः मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥

**स० टी०**—कश्चिद्धनेन किं न स्यात्त्वत्तुल्योऽत्र कुलेन वा ॥ इत्यत्राह धनी यस्मादहमेव न मत्समः ॥ १ ॥ कुलीनोप्यहमेवास्मि न कश्चिन्मत्समोऽपरः ॥ यागेन वाऽथ दानेन न कोऽप्यस्तीह मत्समः ॥ २ ॥ अन्यानभिभविष्यामि यागेनाहं तथापरान् ॥ दानेन स्तावकेभ्योऽहं धनं दास्यामि पुष्कलम् ॥ ३ ॥ हर्षं लप्स्ये ततोऽहं वै नर्तक्यादिभिरेव च ॥ इत्येवमविवेकेन प्रापिता बहुविभ्रमम् ॥ ४ ॥ १५ ॥

**भा० टी०**—पुनरप्यासुराणामभिप्रायं वर्णयति—आढ्य इति । आढ्यो धनेन । अभिजनवान् सत्पुरुषं श्रोत्रियत्वादिसंपन्नोऽहमस्मि, तस्मान्मया धनाढ्येन कुलीनेन सदृशस्तुल्योऽन्यः कोऽस्ति ? न कोऽपीत्यर्थः । किंच यागदानाभ्यां तत्फलेन चान्येभ्योऽधिको भविष्यामीत्याह—यक्षे यागेनाप्यन्यानभिभविष्यामि । दास्यामि नटस्तावकादिभ्यो । मोदिष्ये हर्षं चातिशयं यागदानफलं प्राप्स्यामि । दानादिना चापरानभिभविष्यामीत्येवमज्ञानेन विमोहिताः विविधं मोहिताः अविवेकभावमापन्नास्तथा चैतेषामभिप्रायोऽसाधीयान् कदापि नोपादेय इति भावः ॥ १५ ॥

**प० टी०**—किं च—आढ्य इति । आढ्यो धनसमृद्धः, अभिजनवान् कुलीनः, मया सदृशः कोऽस्ति कोऽपि नास्तीत्यर्थः । अथासामर्थ्येऽपि व्यर्थमनोरथानाह—यक्ष्ये इति । यक्ष्ये यागं करिष्ये, दास्यामि तुलाभारादिदानं करिष्ये, एवं लोकोत्तरकरणेन मोदिष्ये हर्षं प्राप्स्यामीत्यज्ञानेन विमोहिता मिथ्याभिनिवेशं प्रापिताः ॥ १५ ॥

रा० टी०–आढयेति । आढ्यः धनादिसंपन्नः अभिजनवान्कुलीनोऽस्मि । मया सदृशोऽन्यः कोऽस्ति? न कोऽपि । यक्ष्ये यागादिधर्माननुष्ठास्यामि । भूरिदक्षिणान्नादि दास्यामि । मोदिष्ये संतोषं प्राप्स्यामि इत्येवंरूपेणाज्ञानविमोहिताः ॥ १५ ॥

**अनेकचित्तविभ्रान्ता मोहजालसमावृताः ॥**
**प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥**

त० टी०–एवं ते किं फलं प्राप्नुवन्तीत्यपेक्षायामाह–अनेकेति । सर्वकर्मफलप्रदात्रीश्वरसाहाय्यमृते स्वस्यैव सामर्थ्यमवकल्प्यैतत्कुर्यामित्थं कुर्यामिदमनुभूयामित्यनेकचित्तविभ्रान्ता अनेकेषु विषयेषु चित्तं तेन विभ्रान्ता विक्षिप्ता एवं मोहरूपेण जालेन समावृताः सूत्रमयेन जालेनावृता मत्स्या इव कामभोगेषु प्रसक्ता अभिनिविष्टाः सन्तोऽशुचौ विण्मूत्रश्लेष्मादिपूर्णे रौरवादौ नरके पतन्ति ॥ १६ ॥

म०–टी०–अनेकेति । उक्तप्रकारैरनेकैश्चित्तैस्तत्तद्दुष्टसंकल्पैर्विविधं भ्रान्ताः, यतो मोहजालसमावृताः मोहो हिताहितवस्तुविवेकासामर्थ्यं तदेव जालमावरणात्मकत्वेन बन्धहेतुत्वात्, तेन सम्यगावृताः सर्वतो वेष्टिताः मत्स्या इव सूत्रमयेन जालेन परवशीकृता इत्यर्थः । अत एव स्वानिष्टसाधनेष्वपि कामभोगेषु प्रसक्ताः सर्वथा तदेकपराः प्रतिक्षणमुपचीयमानकल्मषाः पतन्ति नरके वैतरण्यादौ अशुचौ विण्मूत्रश्लेष्मादिपूर्णे ॥ १६ ॥

शं० टी०–एवं कामसंकल्पैर्विविधभावापन्नानां कामपराणां तत्प्रवृत्तेः फलमाह–अनेकेति । अनेकचित्तविभ्रान्ताः इदमद्य मया लब्धमित्येवंरूपैरनेकविधैश्चित्तविकारैर्विभ्रान्ता विविधं भ्रान्ताः, मोहजालसमावृताः मोहः सदसद्विवेकाभावः स एव जालं मत्स्यानामिवावरणात्मको नाशकश्च तेन सम्यगावृतास्तिरोहितविवेकास्तत एव कामभोगेषु विषयसेवायामेव प्रसक्ताः प्रकर्षेण सक्ताः परिनिष्ठितान् क्वचित्स्वधर्मे तत एवाशुचौ श्लेष्मपूयहृदादिरूपत्वादशुद्धे नरके रौरवादौ पतन्ति ॥ १६ ॥

श्री० टी०–एवंभूता यत्प्राप्नुवन्ति तच्छृणु–अनेकेति । अनेकेषु मनोरथेषु प्रवृत्तं चित्तमनेकचित्तं तेन विभ्रान्ता विक्षिप्ताः । तेनैव मोहमयेन जालेन समावृताः मत्स्या इव सूत्रमयेन जालेन यन्त्रिताः । एवं कामभोगेषु प्रसक्ताः अभिनिविष्टाः सन्तोऽशुचौ कश्मले नरके पतन्ति ॥ १६ ॥

स० टी०–तत्तद्दुष्टैकसंकल्पैरनेकैः प्रागुदीरितैः ॥ कामिनो विविधं भ्रान्ता मोहजालेन वेष्टिताः ॥१॥ हिताहिताविवेकाख्यावरणेनातिवेष्टिताः ॥ मत्स्या इव हि सौत्रेण जालेन विवशीकृताः ॥ २ ॥ स्वानिष्टसाधनेष्वेव कामभोगेषु तत्पराः ॥ प्रतिक्षणं वर्धमानकल्मषा नरकेऽशुचौ ॥ ३ ॥ पतन्ति श्लेष्मविण्मूत्रपूर्णे वैतरणीमुखे ॥ ४ ॥ १६ ॥

भा० टी०–एवमभिप्रायवन्तः आसुराः कृत्याकृत्यविवेकहीनाः कस्मिँल्लोके गच्छन्तीत्याकाङ्क्षायामाह–अनेकेति । अनेकचित्तविभ्रान्ताः उक्तप्रकारैरनेकैश्चित्तैस्तद्दुष्टसंकल्पैर्विभ्रान्ताः विविधं भ्रान्ताः मोहजालसमावृताः कार्याकार्यहिताहितसारासारहेयोपादेयाविवेको मोहः स एव जालमिवावरणात्मकत्वात् तेन सम्यगावृताः पक्षिण इव सूत्रमयेन जालेन बन्धनं गताः, प्रसक्ताः कामभोगेषु कामानां विषयाणामुपभोगेषु प्रकर्षेण सक्ता आसक्तिं गताः तत्रैव निषण्णाः एतादृशाः सन्तस्तेनोपचीयमानकल्मषा अशुचौ विण्मूत्रादिपूर्णे वैतरण्यादिरूपे नरके पतन्ति ॥ १६ ॥

प० टी०–किं च–अनेकेति । अनेकेषु व्यर्थमनोरथेषु प्रवृत्तं चित्तमनेकचित्तं तेन विशेषतो भ्रान्तास्तेषामुद्धारः कदापि नास्तीत्याह–मोहजालसमावृता इति । यथा सूत्रमयजालान्तः प्रविष्टानां मत्स्यानाम-

निर्गमस्तथा मोहजालसमावृतानां कामभोगेषु प्रकर्षेण सक्ता अशुचौ कलमषरूपे नरके पतन्ति । अत्रैतदुक्तं भवति–"तुल्या व्यवहृतिः सर्वा स्वप्नजागृदवस्थयोः । एकस्यावसरेऽन्यस्य यन्मिथ्यात्वं प्रतीयते" इति वैतथ्योपनिषदुक्तम् । श्रुतिभिः स्वाप्नव्यवहारदृष्टान्तेन जागृद्व्यवहारस्यापि मिथ्यात्वं दर्शितमासीदिदानीं तस्य स्वरूपेणैव मिथ्यात्वं मनोरथरूपत्वेन भगवता विस्तरेण प्रकटीकृतम् । तत्र मनोरथो द्वेधा संभावितोऽसंभावितश्च, तत्र दैनंदिनान्नपानादिविषयभोगमनोरथः संभावितः । सोऽपि दैवाधीनत्वात्साक्षिकः । असंभावितस्तु राज्यप्राप्त्यादिसकलभोगैर्मनोरञ्जनम् । एवमस्य मिथ्याभूतत्वं जानन्तोऽपि मनोरथपरंपरामातन्वन्ति तेषामुद्धारः कदापि नास्तीत्यर्थः । तदुक्तं टिप्पणिकासु–'स्वाप्नं सुखं दुःखमसत्यमेव तथापि तस्यानुभवस्तदानीम् । तथैव शुक्तौ रजतस्य मिथ्या मनोरथोत्थं तु विनाऽनुभूतिम् ॥ १ ॥ सर्वतस्तनुभृतामखिलोऽपि स्यान्मनोरथमयो व्यवहारः । युक्तितस्त्वनुभवादनुवेलं तन्मृषात्वमुदितं मुनिवर्यैः ॥ २ ॥' इति । तदुक्तं विष्णुपुराणे सौभर्याख्याने–' मनोरथानां न समाप्तिरस्ति वर्षायुतेनाप्यथवापि लक्षैः । पूर्णेषु पूर्णेषु पुनर्नवानामुत्पत्तयः सन्ति मनोरथानाम् ॥ १ ॥ पद्भ्याङ्गता यौवनतश्च जाता दारैश्च संयोगमिताः प्रसूताः । दृष्टाः सुतास्तत्तनयप्रसूतिं द्रष्टुं पुनर्वाञ्छति मेऽन्तरात्मा ॥ २ ॥ यज्जीवतो नैव मनोरथानामन्तोऽस्ति विज्ञातमिदं मयाद्य । मनोरथासक्तिपरस्य चित्तं न जायते वै परमार्थसंगति ॥ ३ ॥' इति ॥ १६ ॥

रा० टी०–एवं चिन्ताप्रकारमुक्त्वा तेषां फलमाह–अनेकेति । अनेकचिन्तायुक्तमनसा विशेषभ्रान्तिमन्तः पुत्रमित्रादिविषयमोहाख्यजालेन समावृताः विषयभोगेष्वतितरामासक्ताः सन्तः अशुचौ नरके पतन्ति ॥ १६ ॥

**आत्मसंभाविताः स्तब्धा धनमानमदान्विताः ॥**
**यजन्ते नामयज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥**

**श० टी०–यक्ष्य इत्यादिना यस्तेषां यज्ञदानाद्यभिमान उक्तः सोऽपि केवलं धर्मध्वजित्वाय न तु शास्त्रविधिविषय इत्याह—आत्मसंभाविता इति । आत्मनैव संभाविताः आत्मनैवात्मानं श्रेष्ठं मन्यमाना अत एव स्तब्धा अनम्राः । तत्र हेतुः–धनमानमदान्विताः । धनेन मानो गर्वः मदश्चोद्धर्षस्ताभ्यामन्विताः सन्तस्ते नामयज्ञैर्याज्ञिका दीक्षिता इति यष्टृत्वख्यापनाय ये यज्ञास्ते नामयज्ञाः, अथवा नामयज्ञैर्नाममात्रयज्ञैर्यज्ञाभासैर्यजन्ते । कथं? दम्भेन, न तु सात्त्विकश्रद्धया । अविधिपूर्वकं विधिहीनं यथा भवति तथेत्यर्थः ॥ १७ ॥**

म० टी०–ननु तेषामपि केषांचिद्वैदिके कर्मणि यागदानादौ प्रवृत्तिदर्शनादयुक्तं नरके पतनमिति नेत्याह–आत्मेति । सर्वगुणविशिष्टा वयमित्यात्मनैव संभाविताः पूज्यतां प्रापिता न तु साधुभिः कैश्चित् । स्तब्धा अनम्राः । यतो धनमानमदान्विताः धननिमित्तो यो मान आत्मनि पूज्यत्वातिशयाध्यासः तन्निमित्तश्च यो मदः परस्मिन् गुर्वादावप्यपूज्यत्वाभिमानस्ताभ्यामन्वितास्ते नामयज्ञैर्नाममात्रैर्यज्ञैर्न तात्त्विकैर्दीक्षितः सोमयाजीत्यादिनाममात्रसंपादकैर्वा यज्ञैरविधिपूर्वकं विहिताङ्गेतिकर्तव्यतारहितैर्दम्भेन धर्मध्वजितया न तु श्रद्धया यजन्ते । अतस्तत्फलभाजो न भवन्तीत्यर्थः ॥ १७ ॥

शं० टी०–ननु तेषामपि ब्राह्मणत्वेन श्रुताध्ययनाध्यापनसंभवाद्वेदोक्तकर्मानुष्ठानसंभवाच्च कथमेतेषां वैदिकानामशुचिनरकपात इत्याशङ्कायां–न । " श्रद्धयाग्निः समिध्यते " इति " यो वा एतदक्षरं गार्गि अविदित्वाऽस्मिँल्लोके जुहोति " इत्यादिश्रुत्युक्तलक्षणाभावात्तैरविधिना क्रियमाणयज्ञैर्यज्ञाभासैर्नेश्वरः प्रीयते तन्नियमोल्लङ्घनप्रवृत्तत्वात्तेषामासुराणां नरकप्रापणमेव सिद्धमिति प्रतिपादयति–आत्मेति द्वाभ्याम् । धनमा-

नमदान्विताः मानो गर्वः मदो मत्तता धनोत्कर्षसमुत्पन्नौ मानमदौ ताभ्यां समन्वितास्तत एवात्मसंभाविता आत्मना स्वेनैव न तु कचिदपि शिष्टैः संभाविताः बहुकृतास्तत एव स्तब्धा उद्धताः नम्रताशून्यास्ते आसुरा नामयज्ञैर्नाम्ना यज्ञैर्नतु वैदिकक्रियया लक्षणेन वा किंत्वाभासयज्ञैरविधिपूर्वकं नियतकालमन्त्रहोमर्त्विग्विवर्जितं दम्भेन स्वमहत्त्वप्रसिद्ध्यै यजन्ते नत्वीश्वरप्रीतिसिद्ध्यै ॥ १७ ॥

श्री० टी०—यक्ष्य इति च यस्तेषां मनोरथ उक्तः स केवलं दम्भाहंकारादिप्रधान एव न तु सात्त्विक इत्यभिप्रायेणाह—आत्मसंभाविता इति द्वाभ्याम् । आत्मनैव संभाविताः पूज्यतां नीताः न तु साधुभिः कैश्चित् । अत एव स्तब्धा अनम्राः । धनेन यो मानो मदश्च ताभ्यामन्विताः सन्तस्ते नाममात्रेण ये यज्ञास्ते नामयज्ञाः। यद्वा दीक्षितः सोमयाजीत्येवमादिनाममात्रप्रसिद्धये ये यज्ञास्तैर्यजन्ते। कथम् ? दम्भेन न तु श्रद्धया, अविधिपूर्वकं च यथा भवति तथा ॥ १७ ॥

स० टी०—तेषामपि हि केषांचिद्वैदिके शुभकर्मणि ॥ प्रवृत्तिर्यागदानादौ दृश्यतेऽतो न सांप्रतम् ॥ १॥ नरके पतनं तेषामित्याशङ्क्याह तत्र च ॥ सर्वैर्गुणैर्विशिष्टाः स्मो वयमित्यात्मनैव ते ॥ २ ॥ पूज्यतां प्रापिता मूढैर्न तु कैश्चित्सुसाधुभिः ॥ अनम्रा धनहेतुर्यो मानस्तद्धेतुको मदः ॥ ३ ॥ तेनान्विता मखैर्नाममात्रैरुक्ताङ्गवर्जितैः ॥ धर्मध्वजितया मूढा यजन्ते श्रद्धया न तु ॥ ४ ॥ अतो न फलभाजस्ते यागैरविधिपूर्वकैः ॥ किं तु संसृतिभाजस्ते क्रूराः क्रूरविचेष्टिताः ॥ ५ ॥ १७ ॥

भा० टी०—ननु तेषामपि केषांचिद्वैदिककर्माणि यागादौ प्रवृत्तिदर्शनात् कथं सर्वेषां वैतरण्यादौ पतनमिति चेत्तत्राह—आत्मसंभाविताः सर्वगुणविशिष्टा वयमित्यात्मनैवात्मनि संभाविताः पूज्यतां गताः न तु साधुभिः। स्तब्धाः अप्रणतात्मानोऽनम्राः धनमानमदान्विताः धननिमित्तो मानो मदश्च ताभ्यां धनमानमदाभ्याम् अन्विताः। इदं भाष्यमुपलक्षणं धनमाननिमित्तो यो मदस्तेनान्वित इत्यस्यापि। नामयज्ञैर्नाममात्रैर्यज्ञैस्ते यजन्ते, यतो दम्भेन धर्मध्वजितयाऽविधिपूर्वकं विहिताङ्गेतिकर्तव्यतापूर्वकं यथा न भवति तथेत्यर्थः ॥ १७॥

प० टी०—आत्मेति। आत्मना स्वेनैव संभाविताः पूज्यतां नीता नान्यैः कैश्चित्। तावतैव स्तब्धा अनम्राः धनमानाभ्यां मदो गर्वस्तेनान्विताः सन्तो दम्भेन यज्ञैर्यजन्ते न परमार्थबुद्ध्या । तथापि यज्ञफलं प्राप्स्यन्त्येवेति चेत्तत्राह—अविधिपूर्वकमिति। द्रव्यपात्राद्यशुद्धिरविधिस्तत्पूर्वकं कर्म फलाय न भवतीत्यर्थः ॥१७॥

रा० टी०—यागादि कुर्वतां कथं नरके पात इत्यत आह—आत्मेति । आत्मनैव स्वेनैव संभाविताः बहुमताः वयं पूज्या इति मन्यमाना इति यावत् । अत एव स्तब्धाः अनम्राः धननिमित्तगर्वदर्पाभ्याम् उपेतास्ते अविधिपूर्वकं दम्भेन स्वमहित्वप्रदर्शननिमित्तेन यज्ञैर्ज्योतिष्टोमादिभिर्यजन्ते नाम । न कृतार्थबुद्ध्या अतो नरकप्राप्तिस्तेषामिति भावः ॥ १७ ॥

**अहङ्कारं बलं दर्पं कामं क्रोधं च संश्रिताः ॥**
**मामात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥**

त० टी०—अविधिपूर्वकत्वं ( च ) स्वभाववैपरीत्यादित्याह—अहंकारमिति । अनात्मनि पाञ्चभौतिके आत्मत्वाभिमानोऽहङ्कारस्तं संश्रिताः । बलं परपीडाकरणसामर्थ्यं, दर्पं दर्पो नाम स्वस्य पूज्यत्वातिशयबुद्ध्याऽन्यानादरस्तं, कामं स्त्र्यादिभोगासक्तिं, क्रोधं स्वपरसंतापजननरूपमन्तर्ज्वलनमेतान् दोषान् संश्रिताः मामीश्वरमात्मपरदेहेषु तत्तद्बुद्धिसाक्षितया वर्तमानं प्रद्विषन्तो मच्छासनातिक्रमः प्रद्वेषस्तं कुर्वन्तः अभ्यसूयकाः सन्मार्गवर्तिनां सतां गुणेषु दोषारोपकाः ॥ १८ ॥

म० टी०—यक्ष्ये दास्यामीत्यादिसङ्कल्पेन दम्भाहङ्कारादिप्रधानेन प्रवृत्तानामासुराणां बहिरङ्गसाधन-

मपि यागदानादिकं कर्म न सिध्यति, अन्तरङ्गसाधनं तु ज्ञानवैराग्यभगवद्भजनादि तेषां दूरापास्तमेवे-त्याह--**अहंकारमिति** । अहमभिमानरूपो योऽहङ्कारः स सर्वसाधारणः । एतैस्त्वारोपितैर्गुणैरात्मनो महत्त्वा-भिमानमहंकारं तथा बलं परपरिभवनिमित्तं शरीरगतसामर्थ्यविशेषं दर्पं परावधीरणारूपं गुरुनृपाद्यति-क्रमकारणं चित्तदोषविशेषं काममिष्टविषयाभिलाषं क्रोधमनिष्टविषयद्वेषं, चकारात्परगुणासहिष्णुत्वरूपं मा-त्सर्यम् । एवमन्यांश्च महतो दोषान् संश्रिताः । एतादृशा अपि पतितास्तव भक्त्या पूताः सन्तो नरके न पतिष्यन्तीति चेन्नेत्याह--मामीश्वरं भगवन्तं आत्मपरदेहेषु आत्मनां तेषामासुराणां परेषां च तत्पुत्र-भार्यादीनां देहेषु प्रेमास्पदेषु तत्तद्बुद्धिकर्मसाक्षितया सन्तमतिप्रेमास्पदमपि दुर्दैवपरिपाकात् प्रद्विषन्तः ईश्वरस्य मम शासनं श्रुतिस्मृतिरूपं तदुक्तार्थानुष्ठानपराङ्मुखतया तदतिवर्तनं मे प्रद्वेषस्तं कुर्वन्तः । नृपाद्या-ज्ञालङ्घनमेव हि तत्प्रद्वेष इति प्रसिद्धं लोके । ननु गुर्वादयः कथं तान्नानुशासति तत्राह--अभ्यसूयकाः गुर्वा-दीनां वैदिकमार्गस्थानां कारुण्यादिगुणेषु प्रतारणादिदोषारोपकाः । अतस्ते सर्वसाधनशून्या नरक एव पतन्तीत्यर्थः । मामात्मपरदेहेष्वित्यस्यापरा व्याख्या--स्वदेहे परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते दम्भयज्ञेषु श्रद्धायाः अभावाद्दीक्षादिनात्मनो वृथैव पीडा भवति । तथा पश्वादीनामप्यविधिना हिंसया चैतन्यद्रोहमात्रमवशिष्यत इति । अपरा व्याख्या--आत्मदेहे जीवानाविष्टे भगवल्लीलाविग्रहे वासुदेवादिसमाख्ये मनुष्यत्वादिभ्रमान्मां प्रद्विषन्तः । तथा परदेहेषु भक्तदेहेषु प्रह्लादादिसमाख्येषु सर्व-दाऽऽविर्भूतं मां प्रद्विषन्त इति योजना । उक्तं हि नवमे--'अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहनीं श्रिताः ॥' इति । 'अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः' इति चान्यत्र । तथा च भजनीये द्वेषान्न भक्त्या पूतता तेषां संभवतीत्यर्थः ॥ १८ ॥

शं० टी०--किं च--**अहंकारमिति** । अहमेव कुलशीलसंपन्नः सर्वशास्त्रपारगः सर्वज्ञो धर्मिष्ठः सर्वोत्तम इति येन स्वमुत्कृष्टं मन्यते सोऽसावहंकारस्तं बलं कामरागजं दर्पं दृप्ततां कामं क्रोधं चकारान्मोहलो-भपारुष्यादिबुद्धिदोषान् संश्रिता आत्मपरदेहेषु परदेहे आत्मदेहेषु च मामात्मानं प्रत्यग्लक्षणं द्विषन्त-मन्तर्यामित्वमनङ्गीकृत्य मां द्विषन्तः यद्वा आत्मनो मम देहादिव्यतिरिक्तत्वं नित्यत्वं चैतन्यमात्रत्वमकर्तृ-त्वमभोक्तृत्वं चानङ्गीकृत्य प्रकर्षेण द्विषन्तः तत एवाभ्यसूयका आत्मनो देहव्यतिरिक्तत्वनित्यत्वैकत्वपूर्ण-त्वाविक्रियत्ववादिनां सत्पुरुषाणां गुणेषु दोषारोपकाः लोके य आसुरा बौद्धाचाराः प्रभवन्ति ॥ १८ ॥

श्री० टी०--अविधिपूर्वकत्वमेव प्रपञ्चयति--**अहंकारमिति** । अहंकारादिसंश्रिताः सन्तः आत्मपर-देहेषु स्वदेहेषु परदेहेषु च चिदंशेन स्थितं मां प्रद्विषन्तो यजन्ते । दम्भयज्ञेषु श्रद्धाया अभावात् आत्मनो वृथैव पीडा भवति । तथा पश्वादीनामपि अविधिना हिंसायां चैतन्यद्रोहमात्रमेवावशिष्यत इति प्रद्विषन्त इत्युक्तम् । अभ्यसूयकाः सन्मार्गवर्तिनां गुणेषु दोषारोपकाः ॥ १८ ॥

स० टी०--यक्ष्य इत्यादिसंकल्पैः प्रवृत्तानां विकर्मणि ॥ नास्ति रागादिधीशुद्धिहेतुः किं पुनरीश्वरे ॥ १ ॥ रतिर्वैराग्यबोधादि नास्तीत्याह जगत्पतिः ॥ आरोपितगुणैः स्वस्य महत्त्वाभिमतिं श्रिताः ॥ २ ॥ बलं शरीरसामर्थ्यं पराभिभवकारणम् ॥ परावधीरणारूपं दर्पं गुर्वाद्यतिक्रमम् ॥ ३ ॥ काममिष्टाभिलाषं च क्रोधं द्वेषमनिष्टके ॥ परैश्वर्यासहिष्णुत्वं मात्सर्यं चात्तथा परान् ॥ ४ ॥ संश्रिता महतो दोषान्नरकादि-भयावहान् ॥ ईदृशा अपि ते भक्त्या पूताः सन्ता न नारकीम् ॥ ५ ॥ यातनां ते गमिष्यन्तीत्याशङ्क्याह रमापतिः ॥ मां श्रीनारायणं तेषामासुराणां वपुष्यपि ॥ ६ ॥ परेषां चैव तत्पुत्रभार्यादीनां सुरागिणाम् ॥ प्रेमास्पदेषु देहेषु तत्तद्धीकर्मसाक्षिणम् ॥ ७ ॥ परप्रेमास्पदं श्रीमद्भगवन्तमधोक्षजम् ॥ दुर्दैवपरिपाकात

प्रद्विषन्तोऽभ्यसूयकाः ॥ ८ ॥ ममानुशासनाद्वेदस्मृतिरूपात्पराङ्मुखाः ॥ श्रुतिस्मृती ममैवाज्ञे ते उल्लङ्घ्य प्रवर्तते ॥ ९ ॥ आज्ञाभङ्गी मम द्वेषीत्यादिस्मृत्या तथेरितम् ॥ अतः श्रुत्यर्थवैमुख्यं प्रद्वेषो मम नापरः ॥१०॥ ननु गुर्वादयः शिष्टाः कथं तान्नानुशासति ॥ इत्यत्राहाभ्यसूयां ते कुर्वन्तः सज्जनेष्वपि ॥ ११ ॥ वेदमार्गे स्थितानां ते कारुण्यादिगुणेष्वपि ॥ प्रतारणादिदोषाणामारोपणस्वभावकाः ॥ १२ ॥ स्वदेहे परदेहेषु चिदंशेन स्थितं हि माम् ॥ प्रद्विषन्तो यजन्ते ते दम्भयज्ञेषु हिंसया ॥ १३ ॥ पश्वादेरयथाशास्त्रं साक्षाच्चिद्द्रोहकारिणः ॥ वृथा दीक्षादिना पीडां सहन्त्यर्थोऽस्तु वोत्तरे ॥ १४ ॥ यद्वात्मदेहे भगवल्लीलाविग्रह ईश्वरे ॥ वासुदेवसमाख्येऽस्मिन् मनुष्यत्वादिविभ्रमात् ॥ १५ ॥ द्विषन्तः परदेहेषु भक्तदेहेषु मां हरिम् ॥ प्रह्लादादिसमाख्येषु सदाविर्भूतमित्यपि ॥ १६ ॥ १८ ॥

भा० टी०—न केवलं दम्भेनाविधिपूर्वकं यजन्त इत्येतावदेवापि तु—अहंकारमिति । अहंकारं विद्यमानैरविद्यमानैश्च गुणैरात्मन्यध्यारोपितैरात्मनो विशिष्टत्वाभिमानमविद्याख्यं कष्टतमं सर्वदोषाणां सर्वानर्थप्रवृत्तीनां च मूलं तथा बलं पराभिभवनिमित्तं शरीरादिसामर्थ्यं कामरागान्वितं दर्पं धर्मातिक्रमहेतुमन्तःकरणाश्रयं दोषविशेषं कामं स्त्र्यादिविषयं क्रोधमनिष्टविषयं चादेतानन्यांश्च मात्सर्यादीन् महतो दोषान् संश्रिताः । किं च न केवलमहंकारादीनेव संश्रिताः किं तु तदाश्रयणेन मामीश्वरमात्मपरदेहेषु स्वदेहे परदेहेषु च तद्बुद्धिकर्मसाक्षिणं मां प्रद्विषन्तः श्रुतिस्मृतिरूपमच्छासनातिवर्तित्वं तदुक्तार्थानुष्ठानपराङ्मुखत्वं मद्द्वेषस्तं कुर्वन्तः दम्भेनाविधिपूर्वकं यजनं स्वदेहपीडनमहंकारादिकं मदवज्ञानं च श्रुतिस्मृतिप्रतिषिद्धं समाश्रिता मदाज्ञातिवर्तिन इत्यर्थः । ननु सत्कर्मस्थानामनुवृत्तिं किमिति न कुर्वन्तीति चेत्तत्राह—तेषां गुणेष्वभ्यसूयकाः समत्सरा दोषाविष्करणशीलाः ॥ १८ ॥

प० टी०—तदेव प्रपञ्चयति—अहंकारमिति । अहङ्कारादीन् संश्रिता आत्मपरदेहेषु चिदंशत्वेनावस्थितं मां द्विषन्तोऽविधिपूर्वकं यजन्तो मृषैव स्वदेहं क्लेशयन्ति । पश्वादिहिंसायां च परदेहगत एवोभययोनिमेव द्विषन्तोऽभ्यसूयकाः सन्मार्गवर्तिनां गुणदोषारोपकाः ॥ १८ ॥

रा० टी०—सर्वकर्मकारयितारं सर्वान्तर्यामिणं त्वां कुतो न यजन्त इत्यत आह—अहंकारमिति । अहंकारादिसंश्रिताः सन्तः आत्मदेहे परदेहेषु च नियामकतया स्थितं मां प्रद्विषन्तः । यदि ईश्वरः कारयितास्ति तर्हीदानीमकुर्वाणं मां कारयतु कुर्वाणं च विघातयतु इत्येवं भगवदपलापरूपप्रद्वेषं कुर्वन्तः । अभ्यसूयकाः निर्दोषे दोषान्वदन्तः । गुणपूर्णे गुणहीनतां वदन्तः यजन्त इत्यनुषज्यते ॥ १८ ॥

**तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ॥**
**क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥**

**त० टी०—एवमासुराणां प्रवृत्तिं स्वभावं चोक्त्वेदानीं तेषां नित्यसंसृतिरूपामधोगतिं फलमाह—तानिति द्वाभ्याम् । तान् मां साधूंश्च द्विषतः क्रूरानत्युग्रस्वभावान् संसारेषु जन्ममरणादिमार्गेषु तत्राप्यासुरीष्वेव योनिषु अजस्रं निरन्तरं क्षिपामि । तत्स्वभावानुगुणमुत्तरोत्तरं क्रूरबुद्धिमेव तेषां वर्धयामीत्यर्थः ॥ १९ ॥**

म० टी०—तेषां त्वत्कृपया कदाचिन्निस्तारः स्यादिति नेत्याह—तानिति । तान् सन्मार्गप्रतिपक्षभूतान् द्विषतः साधून् मां च क्रूरान् हिंसापरान् अतो नराधमान् अतिनिन्दितान् अजस्रं सन्ततमशुभान् अशुभकर्मकारिणः अहं सर्वकर्मफलदातेश्वरः संसारेष्वेव नरकसंसरणमार्गेषु क्षिपामि पातयामि । नरकगतांश्च आसुरीष्वेव अतिक्रूरासु व्याघ्रसर्पादियोनिषु तत्तत्कर्मवासनानुसारेण क्षिपामीत्यनुषज्यते । एतादृशेषु द्रोहिषु नास्ति ममे-

श्वरस्य कृपेत्यर्थः । तथा च श्रुतिः—"अथ[य इह]कपूयचरणाः अभ्याशो ह यत्ते कपूयां योनिमापद्येरन् श्वयोनिं वा शूकरयोनिं वा चण्डालयोनिं वा" इति । कपूयचरणाः कुत्सितकर्माणः अभ्याशो ह शीघ्रमेव कपूयां कुत्सितां योनिमापद्यन्त इति श्रुतेरर्थः । अत एव पूर्वपूर्वकर्मानुसारित्वान्नेश्वरस्य वैषम्यं नैर्घृण्यं वा । तथा च पारमार्षं सूत्रम् 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति' इति । एवं च पापकर्माण्येव तेषां कारयति भगवान् तेषु तद्बीजसत्त्वात् । कारुणिकत्वेऽपि तानि न नाशयति तन्नाशकपुण्योपचयाभावात् । पुण्योपचयं न कारयति तेषामयोग्यत्वात् । न हीश्वरः पाषाणेषु यवाङ्कुरान् करोति । ईश्वरत्वादयोग्यस्यापि योग्यतां संपादयितुं शक्नोतीति चेत्, शक्नोत्येव सत्यसंकल्पत्वात्, यदि संकल्पयेत् । न तु संकल्पयति आज्ञालङ्घिषु स्वभक्तद्रोहिषु दुरात्मस्वप्रसन्नत्वात् । अत एव श्रूयते ' एष उ ह्येव साधु कर्म कारयति तं यमुन्निनीषते, एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति । येषु प्रसादकारणमस्त्याज्ञापालनादि तेषु प्रसीदति । येषु तु तद्वैपरीत्यं तेषु न प्रसीदति सति कारणे कार्यं कारणाभावे कार्याभाव इति किमत्र वैषम्यम्? ' परात्तु तच्छ्रुतेः ' इति न्यायाच्च । अन्ततो गत्वा किंचिद्वैषम्यापादने महामायत्वाददोषः ॥ १९ ॥

शं० टी०—किंच—तानिति । मां द्विषतः स्वदेहपरदेहेषु मामात्मानं द्विषतस्तत एव क्रूरान् क्रूरकर्मणो दयासत्यशौचाचारशून्यानशुभानमङ्गलाचारनिरतानत एव नराधमान् तानासुरान्निरुक्तासुरसंपद्विशिष्टान् जनान् तत्कृतदुष्कर्मभिः संसारेषु संसारमार्गेषु । यद्वा संस्रियन्ते भुज्यन्त इति संसारा जननमरणादिखेदास्तेष्वनुभाव्येषु सत्सु तदनुभूत्यै आसुरीष्वेवातिक्रूरासु शुनकसूकरसर्पव्याघ्रादियोनिषु क्षिपामि तत्कर्मानुरूपामेव शुनकादियोनिमजस्रं पुनः पुनः प्रापयाम्यहमीश्वरो मदाज्ञाच्छेदिनो जनानित्यर्थः ॥ १९ ॥

श्री० टी०—तेषां च कदाचिदप्यासुरस्वभावप्रच्युतिर्न भवतीत्याह—तानिति द्वाभ्याम् । तानहं मां द्विषतः क्रूरान्संसारेषु जन्ममृत्युमार्गेषु तत्रापि आसुरीष्वेव अतिक्रूरासु व्याघ्रादियोनिषु अजस्रमनवरतं क्षिपामि, तेषां पापकर्मणां तादृशं फलं ददामीत्यर्थः ॥ १९ ॥

स० टी०—तेषां त्वत्कृपया जातु निस्तारः स्यादिहेति चेत् ॥ मैवं सन्मार्गशत्रूंस्तान्मां साधून्द्विषतः शठान् ॥ १ ॥ हिंस्रान्मुनिनिन्दिताचारान्नित्यं चाशुभकारिणः ॥ अहं सर्वेश्वरः कर्मफलदाता यथायथम् ॥ २ ॥ संसारेषु सदा दुःखमार्गेषु नरकेषु च ॥ पातयामि ततस्तांश्च व्याघ्रसर्पादियोनिषु ॥ ३ ॥ क्रूरास्वन्यासुरीष्वेव तत्तत्कर्मानुसारतः ॥ एतादृशेषु दुष्टेषु मत्कृपा नास्ति कर्हिचित् ॥ ४ ॥ १९ ॥

भा० टी०—उक्तविशेषणवतामासुराणां गतिमाह—तानिति । तान्सन्मार्गप्रतिपक्षभूतान् साधुद्वेषिणो द्विषन्तश्च मां क्रूरान् व्याघ्रादिक्रूरजन्तुतुल्यान् अजस्रं सततम् अशुभानशुभकर्मकारिणोऽतो नराधमान्नरेष्वतिनिकृष्टानहं धर्माधर्मफलप्रदाता परमेश्वरोऽधर्मदोषवत्वात्संसारेषु नरकसंसरणमार्गेषु आसुरीष्वेव क्रूरकर्मप्रायासु सिंहव्याघ्रादियोनिषु क्षिपामि संसारेऽस्मिँल्लोके इषवः परमर्मभेदकत्वात् संसारेषवः ते च ते नराधमाश्चेति विग्रहस्तु फलशून्यकुकल्पनालभ्यत्वादाचार्यैः परित्यक्तः ॥ १९ ॥

प० टी०—तेषां कदाचिदप्यासुरयोनिप्रच्युतिर्न भवतीत्याह—तानिति द्वाभ्याम् । तान् मां द्विषतः क्रूरान् नराधमान् मनुष्ययोनिष्वप्यधमान् संसारेषु जन्ममृत्युमार्गेषु तत्राप्यासुरीषु योनिषु व्याघ्रसर्पवृश्चिकादिहिंस्रयोनिष्वजस्रं निरन्तरं क्षिपामि ॥ १९ ॥

रा० टी०—नरके पतन्तीत्येतावदेव न तेषां फलं किंतु किंचित्कालं संसारमनुभूय पश्चान्नित्यनरकमपि मय्येव प्राप्नुवन्तीत्याह—तानिति द्वाभ्याम् । तान्प्रवृत्तिं चेत्यादिनोक्तान्द्विषतः क्रूरान् अत एवाशुभान्नराधमान्संसारेषु तत्राप्यासुरयोनिषु अजस्रं पुनः पुनः क्षिपामि स्थापयामि ॥ १९ ॥

**आसुरीं योनिमापन्ना मूढा जन्मनि जन्मनि ॥**
**मामप्राप्यैव कौन्तेय ! ततो यान्त्यधमां गतिम् ॥ २० ॥**

**त० टी०**–ततस्ते–आसुरीमिति । मूढा विवेकशून्या मच्छासनविपरीताचरणाश्रयां योनिमापन्नाः जन्मनि जन्मनि पुनः पुनस्तमोबहुलास्वेव जायमाना मां सर्वेश्वरं सर्वकर्मफलप्रदातारमप्राप्यैव गुरुशास्त्रोपदेशाभावेन अस्ति परमेश्वरो भगवान्वासुदेवः सर्वाराध्य इति ज्ञानमप्राप्यैव ततो मद्विषयाज्ञानादधमां श्वशूकरादियोनिरूपां गतिं फलं यान्ति प्राप्नुवन्ति ॥ २० ॥

**म० टी०**–ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति ? नेत्याह–आसुरीमिति । ये कदाचिदासुरीं योनिमापन्नास्ते जन्मनि जन्मनि प्रतिजन्म मूढास्तमोबहुलत्वेनाविवेकिनस्ततस्तस्मादपि यान्त्यधमां गतिं निकृष्टतमां गतिम् । मामप्राप्येति न मत्प्राप्तौ काचिदाशङ्काप्यस्ति, अतो मदुपदिष्टं वेदमार्गमप्राप्येत्यर्थः । एवकारस्तिर्यक्स्थावरादिषु वेदमार्गप्राप्तिस्वरूपायोग्यतां दर्शयति । तेनात्यन्ततमोबहुलत्वेन वेदमार्गप्राप्तिस्वरूपायोग्या भूत्वा पूर्वपूर्वनिकृष्टयोनितो निकृष्टतमामधमां योनिमुत्तरोत्तरं गच्छन्तीत्यर्थः । हे कौन्तेयेति निजसंबन्धकथनेन त्वमितो निस्तीर्ण इति सूचयति । यस्मादेकदा आसुरीं योनिमापन्नानामुत्तरोत्तरं निकृष्टतरनिकृष्टतमयोनिलाभो न तु तत्प्रतीकारसामर्थ्यमत्यन्ततमोबहुलत्वात्, तस्माद्यावन्मनुष्यदेहलाभोऽस्ति तावन्महताऽपि प्रयत्नेनासुर्याः संपदः परमकष्टतमायाः परिहाराय त्वरयैव यथाशक्ति दैवी संपदनुष्ठेया श्रेयोर्थिभिरन्यथा तिर्यगादिदेहप्राप्तौ साधनानुष्ठानायोग्यत्वान्न कदापि निस्तारोऽस्तीति महत् संकटमापद्येतेति समुदायार्थः । तदुक्तम् ' इहैव नरकव्याधेश्चिकित्सां न करोति यः । गत्वा निरौषधं स्थानं सरुजः किं करिष्यति ' इति ॥ २० ॥

**शं० टी०**–ननु शुनकादियोनिषु प्रवेशितानामपि तेषां बहुजन्मनामन्ते मोक्षः स्यादेवेत्याशङ्कायां न, इमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति । जायस्व म्रियस्वेति श्रवणाद्वेदविरुद्धाचारनिरतानां पापिष्ठानां तेषां पुनःपुनर्जननमरणे विना न कदाचिदपि मत्प्राप्तिरस्तीत्याह–आसुरीमिति । अनेकचित्तविभ्रान्ताः कामभोगप्रसक्ता अशुचिव्रता मूढाः स्वकीयदोषातिशयादेव जन्मनि जन्मनि प्रतिजन्माप्यासुरीमेव योनिमापन्नाः सन्तो मामप्राप्य–अत्र मामिति मच्छब्देन स्वप्राप्तिसाधनं लक्ष्यते–मां मत्प्राप्तियोग्यं मानवं देहमप्राप्यैव ततोऽप्यासुरयोन्यपेक्षयाऽधमां निकृष्टां वृक्षपाषाणादिरूपां वा पैशाचीं वा गतिं गम्यत इति गतिस्तनुं यान्ति । न तु तामेव पुनः शुनकादियोनिमपि प्राप्नुवन्तीत्यर्थः । प्रवृत्तिं च निवृत्तिं च जना न विदुरित्यारभ्य ततो यान्त्यधमां गतिमित्यन्तेन ग्रन्थेन रजस्तमोदोषदूषितान्तरङ्गाणामासुराणां या संपत्तस्याः फलमधोधःपतनं विना न कदाचिदपि श्रेयःप्राप्तिर्यस्मान्नास्ति तस्माद्बुद्धिमान् सदा सदसद्विवेकी पुरुषः पुरुषत्वसिद्धेः साफल्याय स्वयं विवेकभ्रंशहेतोर्दुर्योनिप्राप्तेः पूर्वमेवासुरसंपत्तेराविषयो भूत्वा सदा सदसद्विवेकवैराग्याभ्यां परमपुरुषार्थाय यतेतेति सूचितं भवति । तेनासुरसंपद्बन्धायैव न कचिन्मोक्षायेति सिद्धम् ॥२०॥

**श्री० टी०**–किंच–आसुरीमिति । ते च मामप्राप्यैवेत्येवकारेण मत्प्राप्तिशङ्का कुतस्तेषां मत्प्राप्त्युपायं सन्मार्गमप्यप्राप्य ततोऽप्यधमां कृमिकीटादियोनिं गतिं यान्तीत्युक्तम् । शेषं स्पष्टम् ॥ २० ॥

**स० टी०**–बहूनां जन्मनामन्ते ह्यासुराणां क्रमादपि ॥ नास्ति श्रेयोऽतिनिन्द्यत्वादित्याह भगवान्स्वयम् ॥ १ ॥ ये तु ज्ञात्वाऽऽसुरीं योनिमापन्नाः प्रतिजन्म ते ॥ मूढास्तमस आधिक्यादविवेकिन एव च ॥ २ ॥ तस्मादप्यधमां योनिं मामप्राप्यैव यान्ति ते ॥ अतो मदुपदिष्टं ते वेदमार्गं मनागपि ॥ ३ ॥ अप्राप्य नैव मद्भक्तावधिकारं प्रयान्त्यपि ॥ तस्माद्यावन्नृदेहेन संबन्धस्तावदेव हि ॥ ४ ॥ परिहृत्या-

सुरीं दुष्टां संपदं नरकावहाम् ॥ महतापि प्रयत्नेन दैवीं संपदमाश्रितः ॥ ५ ॥ भगवन्तं भजेत्प्राज्ञो यावन्मृत्युर्न चापतेत् ॥ तद्गते न कदाप्यस्ति निस्तारः संसृतेरिति ॥ ६ ॥ सूचितं हरिणा साक्षात्तदुक्तं न स्मृतावपि ॥ इहैव नरकव्याधेश्चिकित्सां न करोति यः ॥ ७ ॥ गत्वा निरौषधं स्थानं सरुजः किं करिष्यति ॥ ८ ॥ २० ॥

भा० टी०—ननु तेषामपि क्रमेण बहूनां जन्मनामन्ते श्रेयो भविष्यति ?—नेत्याह—आसुरीमिति । मूढा अविवेकिनो जन्मनि जन्मनि प्रतिजन्मासुरीं योनिमापन्नाः प्राप्ता मामीश्वरमप्राप्यैवानासाद्यैव मत्प्राप्तिशङ्काया अप्यभावात् । मच्छिष्टसाधुमार्गप्राप्तिमप्राप्येत्येवकारेण सूचितम् । तत आसुर्या योनितोऽप्यधमां निकृष्टां गतिं यान्ति तेषां श्रेयः कदापि न भविष्यतीति भावः । कौन्तेयेतिसंबोधयन् त्वं तु मत्पितृष्वसृपुत्रत्वान्मां प्राप्यासुर्यादियोनिषु गन्तुमयोग्योऽसीति मा शुच इति द्योतयति । यस्मादासुरीसंपदनर्थपरंपरारूपा सर्वपुरुषार्थपरिपन्थिनी तस्माद्दैवानुग्रहात् मानुषीं योनिमापन्नैः सर्वथैवेयं परिहरणीयेति समुदायार्थः ॥ २० ॥

प० टी०—अथासुरयोनिसंस्कारवशान्नीचनीचतरयोनिषूत्पद्यन्ते इत्याह—आसुरीमिति । आसुरीं योनिमापन्नाः प्राप्ता जन्मजन्मनि मूढा ज्ञानलवशून्या भवन्ति । अतो मामप्राप्याधमां गतिं यान्ति । श्रुतिरपीशावास्योपनिषत्सु—"आसुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः" इति । भाष्यम्—ये लोका आसुर्या नाम असुराणामंशभूता आसुर्यास्ते अन्धेन तमसा निबिडतराज्ञानेन वृता आच्छन्नाः सन्ति । अथ ते के ? ये आत्महन आत्मघातकाः पश्वादिहिंसारतास्ते प्रेत्य देहं त्यक्त्वा तान् पूर्वोक्तान् लोकानभिगच्छन्ति, यतः पुनर्निस्तारो नास्तीत्यर्थः ॥ २० ॥

रा० टी०—आसुरीमिति । ततो मूढाः तामसस्वभावाः जन्मनि जन्मनि अनेकजन्मसु आसुरीं योनिमापन्नाः मामप्राप्यैवाधमां नित्यनरकलक्षणां गतिं यान्ति ॥ २० ॥

## त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ॥
## कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ २१ ॥

त० टी०—एवमुक्तः सर्व आसुरभावः । इदानीं सर्वानर्थस्यासुरीसंपदश्च मूलं यत्परिहारेण सर्वानर्थः परिहृतो भवति, तत्त्रिविधं परित्यागार्थमाह—त्रिविधमिति । त्रिविधं त्रिप्रकारं नरकस्य नरकप्राप्तौ इदं द्वारमस्ति । किंभूतं ? आत्मनो नाशनं यद्द्वारं प्रविशन्नेव पुरुषो नश्यति सर्वपुरुषार्थरहितो भवति । किं तत्त्रिकं ? कामः क्रोधस्तथा लोभ इति । यस्मादात्मनो नाशनं नरकस्य द्वारं तस्मादेतत्कामादित्रयं त्यजेत् यत्नतः परिवर्जयेत् ॥ २१ ॥

म० टी०—नन्वासुरी संपदनन्तभेदवती कथं पुरुषायुषेणापि परिहर्तुं शक्येतेत्याशङ्क्य तां संक्षिप्याह—त्रिविधमिति । इदं त्रिविधं त्रिप्रकारं नरकस्य प्राप्तौ द्वारं साधनं सर्वस्या आसुर्याः संपदो मूलभूतं आत्मनो नाशनं सर्वपुरुषार्थायोग्यतासंपादनेनात्यन्ताधमयोनिप्रापकम् ? किं तदित्यत आह—कामः क्रोधस्तथा लोभ इति । प्राग्व्याख्यातम् । यस्मादेतत्त्रयमेव सर्वानर्थमूलं तस्मादेतत्त्रयं त्यजेत् । एतत्त्रयत्यागेनैव सर्वाप्यासुरी संपत्त्यक्ता भवति । एतत्त्रयत्यागश्च उत्पन्नस्य विवेकेन कार्यप्रतिबन्धः । ततः परं चानुत्पत्तिरिति द्रष्टव्यम् ॥ २१ ॥

शं० टी०—प्रतिपादितायास्त्वासुरसंपत्तेः सर्वस्वमत्रैव पर्यवसितमेतत्त्रितये परित्यक्ते प्रधानमल्लनिबर्हणन्यायेनाऽऽसुरी संपत्सर्वापि परित्यक्ता स्यात्ततो मुमुक्षोरवश्यमेतत्त्रितयं त्यक्तव्यम् । एतत्त्यक्त्वा स्वधर्मेण श्रेयःसाधनमनुतिष्ठतः पुंसः परमपुरुषार्थः सिध्यतीति प्रतिपादयति—त्रिविधमिति द्वाभ्याम् । नरत्वेनो-

त्कृष्टजन्मवतां नराणां निरतिशयमर्कं दुःखं यत्र तन्नरकं शुनकसूकरादिनीचयोनिः नरकमिति शकन्ध्वादिकं रूपं तस्य नरकस्य श्वादिनिकृष्टयोनिरूपस्य प्राप्तेः कामः क्रोधो लोभ इति त्रिविधं त्रिप्रकारकमेव द्वारं प्रवेशमार्गः नैवैतादृशं द्वारमन्यदस्तीत्यर्थः। ननु कामादीनां नीचयोनिप्राप्तिद्वारत्वमस्तु ततः का नो हानिरित्याशङ्कायामाह—**नाशनमिति** । जन्मान्तरानेककृतपुण्यातिशयान्मनुष्यत्वपुरुषत्वब्राह्मणत्ववेदाद्यधीतिमत्त्वविवेकित्वलक्षणं मोक्षसौधान्तमारूढस्यात्मनः स्वस्याधिकारिणो मुमुक्षोः कामादित्रयमेतत्पुरुषार्थस्य नाशकं भवति धर्माधर्मकर्तव्याकर्तव्यार्थानर्थबन्धमोक्षविवेकविज्ञानं नाशयतीत्यर्थः। नहि कामाकुलस्य क्रोधाविष्टस्य वा लोभग्रहग्रस्तस्य वा धर्माधर्मादेर्विवेकविज्ञानं भवति तदभावे पुरुषो विनश्यत्येव। मनुष्यत्वाद्युत्कृष्टमोक्षसाधनसंपत्त्या मोक्षसौधान्तमारूढोऽपि प्रमादेन तालारूढ इव कामादिभिरधः पातितः सन् निःशेषं विनश्यति। नह्युच्चात्पतितस्य स्वरूपनाशं विना किंचिच्छेषं सिध्यत्यत एवोच्यते नाशनमात्मन इति। यस्मादेवं कामादीनां प्रभावस्तस्मान्मुमुक्षुर्विवेकसंपन्नस्तत्स्वभावं ज्ञात्वा स्वाविनाशाय चण्डालमिव कामं कृष्णसर्पमिव क्रोधं मलमिव लोभं चैतत्त्रयं दूरतस्त्यजेन्न तेषां गोचरो भवेदित्यर्थः॥ २१॥

**श्री० टी०**—उक्तानामासुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्वथा वर्जनीयमित्याह—**त्रिविधमिति** । कामः क्रोधो लोभश्चेतीदं त्रिविधं नरकस्य द्वारम्। अत एवात्मनो नाशनं नीचयोनिप्रापकम्। तस्मादेतत्त्रयं सर्वात्मना त्यजेत्॥ २१॥

**स० टी०**—ननु वर्षशतेनापि परिहर्तुं न चासुरी॥ शक्यतेऽनन्तभेदाढ्येत्याशङ्क्याह समासतः॥ १॥ साधनं नरकप्राप्तौ त्रिप्रकारमिदं शृणु॥ आसुर्याः संपदो मूलं पुरुषार्थैकघातकम्॥ २॥ यस्मादेतत्त्रयं सर्वानर्थमूलमुदीरितम्॥ तस्मादेतत्त्रयत्यागात्त्यक्ता सर्वासुरी भवेत्॥ ३॥ उत्पन्नस्य त्रयस्यास्य विवेकेन विरागतः॥ कायस्य प्रतिबन्धो हि त्यागोऽनुत्पत्तिरेव च॥ ४॥ २१॥

**भा० टी०**—नन्वनन्तभेदवतीयमासुरी संपत्पुरुषायुषेणापि परिहर्तुमशक्येत्याशङ्क्य सर्व आसुरसंपद्भेदोऽनन्तोऽपि यस्मिन्नन्तर्भवति यत्परिहारेण परिहृतश्च भवति तत्सर्वानर्थमूलभूतं दर्शयति—**त्रिविधमिति** । त्रिविधं त्रिप्रकारमिदं नरकस्य नरकप्राप्तौ द्वारमात्मनो नाशनं यद्द्वारं प्रविशन्नेवात्मा नश्यति न कस्मैचित्पुरुषार्थाय योग्यो भवति। किं तत्? कामः क्रोधस्तथा लोभः इति त्रिविधं नरकस्य द्वारं नाशनमात्मनस्तस्मादेतत्कामादित्रयं श्रेयोर्थी त्यजेत्॥ २१॥

**प० टी०**—अथोक्तानामसुरदोषाणां मध्ये सकलदोषमूलभूतं दोषत्रयं सर्वथा वर्जनीयमित्याह—**त्रिविधमिति** । इदं प्रोच्यमानं नरकस्य निरयप्राप्तेर्द्वारं त्रिविधमस्ति। तत्किम्? कामः क्रोधस्तथा लोभः। तत्र कामनया विषयीक्रियतेऽसौ कामोऽभिलाषः तस्य प्रयत्नादप्राप्तौ क्रोधप्राप्तौ च प्राणादप्यधिकयत्नेन संरक्षणं लोभः, एतत्त्रयम्। किंभूतम्? आत्मनो नाशनमधमयोनिप्रापकं तस्मात्सर्वप्रयत्नेनैतत्त्रयं त्यजेत्॥ २१॥

**रा० टी०**—उक्तेषु पुमर्थविरोधिषु प्रधानदोषत्रयमवश्यं त्याज्यमित्याह—**त्रिविधमिति**। कामः क्रोधः लोभ इति इदं त्रिविधं नरकद्वारं नरकसाधनम्। अत एव आत्मनो नाशनमनर्थप्रापकम्। तस्मादेतत्त्रयं त्यजेत्। ततश्च कारणाभावान्नरकाणामप्राप्तिरिति भावः॥ २१॥

**एतैर्विमुक्तः कौन्तेय! तमोद्वारैस्त्रिभिर्नरः॥**
**आचरत्यात्मनः श्रेयस्ततो याति परां गतिम्॥ २२॥**

**त० टी०**—तत्त्यागमेव श्रेयोहेतुत्वेन स्तौति—**एतैरिति** । एतैः कामक्रोधलोभैस्तमोद्वारैस्तामिस्रान्धतामिस्रादिनरकस्य द्वारभूतैस्त्रिभिर्विमुक्तो विशेषतो मुक्तो नर आत्मनः श्रेयो मोक्षसाधनमाचरति मद्भक्तिज्ञानोपाये यतते। ततो ज्ञानभक्तिपरिपाकात्परां गतिं परमफलं मामेव याति॥२२॥

म० टी०—एतत्त्रयं त्यजतः किं स्यादिति तत्राह—**एतैरिति** । एतैः कामक्रोधलोभैस्त्रिभिस्तमोद्वारैर्नरकसाधनैर्विमुक्तो विरहितः पुरुष आचरत्यात्मनः श्रेयो यद्धितं वेदबोधितं हे कौन्तेय, पूर्वं हि कामादिप्रतिबद्धः श्रेयो नाचरति येन पुरुषार्थः सिध्येत् । अश्रेयश्चाचरति येन निरयपातः स्यात् । अधुना तत्प्रतिबन्धरहितः सन्नश्रेयो नाचरति श्रेयश्चाचरति । तत ऐहिकं सुखमनुभूय सम्यग्धीद्वारा याति परां गतिं मोक्षम् ॥२२॥

शं० टी०—एवं कामादीनामधर्मप्रवृत्तिहेतुतया नरकद्वारत्वं मुमुक्षुत्याज्यत्वं च प्रतिपाद्य चैतैर्विमुक्तः श्रेयःसाधननिष्ठो भूत्वा श्रेयः प्राप्नोतीत्याह—**एतैरिति** । नरो मुमुक्षुरधिकारी ब्राह्मणादिर्विद्वान् तमोद्वारैः तमसो नरकस्य द्वारैर्द्वारभूतैस्त्रिभिरेतैः कामक्रोधलोभैर्विमुक्तो विशिष्य निर्मुक्तः सन्नात्मनः स्वस्य श्रेयःसाधनं स्वाधिकारानुरूपं स्वाश्रमोचितं धर्मं वैदिकं वा श्रवणादिकं वा यदाऽऽचरति सम्यगनुतिष्ठति ततस्तेनैवानुष्ठानेन चित्तशुद्धिद्वारा समुत्पन्नात्मज्ञानेन परां गतिं विदेहमुक्तिं याति गच्छतीत्यर्थः ॥ २२ ॥

श्री० टी०—त्यागे च विशिष्टफलमाह—**एतैरिति** । तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्विमुक्तो नरः आत्मनः श्रेयःसाधनं तपोयोगादिकर्माचरति । ततश्च मोक्षं प्राप्नोति ॥ २२ ॥

स० टी०—किं स्यादेतत्त्रयत्यागात्पुंस एतच्छृणु स्फुटम् ॥ एतैः कामादिभिर्दोषैस्त्रिभिर्नरकसाधनैः ॥१॥ पुमान्विरहितः श्रेयो यद्धितं वेदबोधितम् ॥ आचरत्यात्मनः सम्यग्धीद्वारैति परां गतिम् ॥ २ ॥ कामादिप्रतिबद्धः प्राक् श्रेयो नाचरति स्वयम् ॥ अश्रेयस्त्वाचरत्येव येन स्यान्निरये स्थितिः ॥ ३ ॥ कामादिशून्यः पुरुषो नाश्रेयश्चरति ह्ययम् ॥ श्रेयः सम्यक्करत्येव ततो याति परां गतिम् ॥ ४ ॥ २२ ॥

भा० टी०—एतैर्विमुक्तो लौकिकसुखोपभोगपूर्विकां परां गतिं यातीत्याह—**एतैरिति** । एतैः कामादिभिस्त्रिभिस्तमसो नरकस्य दुःखमोहात्मकस्य द्वारैः श्रेयःप्रवृत्तिप्रतिबन्धकैर्विमुक्तो नर आत्मनः श्रेयःसाधनं मदाराधनादिकमाचरत्यनुतिष्ठति । ततस्तदाचरणात् लौकिकसुखं भुक्त्वा परां गतिं मोक्षमपि याति गच्छति । यः कामादिभिर्विमुक्तः स एव नरः सार्थकनरजन्मा च इतरे पशवो निरर्थकनरजन्मानश्चेति सूचयितुं नर इत्युक्तम् । त्वं तु कामादिविनिर्मुक्तायाः कुन्त्याः पुत्रत्वात्तैर्विमुक्तः सन् लौकिकं सुखं भुक्त्वा परां गतिं गन्तुं योग्योऽसीति द्योतयन्नाह—कौन्तेयेति ॥ २२ ॥

प० टी०—त्यागे च विशिष्टफलमाह—**एतैरिति** । तमसो नरकस्य द्वारभूतैरेतैस्त्रिभिः कामादिभिर्मुक्तो नर आत्मनः श्रेयःसाधनं तपोयोगाद्याचरति । ततः परां शान्तिं याति ॥ २२ ॥

रा० टी०—न केवलं कामादित्यागेन नरकाप्राप्तिः परमपुमर्थप्राप्तिश्चास्तीत्याह—**एतैरिति** । तमोद्वारैर्नरकहेतुभिस्त्रिभिरेतैः कामक्रोधलोभैर्विमुक्तो नरः आत्मनः श्रेयः पुमर्थसाधनमाचरति । ततः परां गतिं मोक्षं याति ॥ २२ ॥

**यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ॥**
**न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥**

त० टी०—उक्तस्य सर्वस्यासुरभावस्य कामादेस्त्रिविधस्य नरकद्वारस्य च परिवर्जनं श्रेयआचरणं च विधिनिषेधरूपशास्त्रज्ञानाधीनमिति वक्तुं तदनादरेणाचरणं सर्वश्रेयोबाधकमित्याह—**यः शास्त्रविधिमिति** । यच्छब्देन शास्त्रीयकार्यानुष्ठानाधिकारी सामान्यो गृह्यते । जीवानां हितं शास्ति बोधयतीति शास्त्रं वेदस्तदुपजीविस्मृतिपुराणेतिहासादि तत्संबन्धी विधिरित्युपलक्षणं निषेधस्य । तथा चैवं कुर्यादेवं न कुर्यादिति कर्तव्याकर्तव्यविषयो लिङ्गादिशब्दस्तमुत्सृज्योपेक्ष्य कामकारतः स्वेच्छया यो वर्तते गुणकार्येषु प्रवर्तते स सिद्धिं साधनसिद्धिं कर्माद्युपायं कुर्वन्नपि नाप्नोति । सिद्ध्यभावे न सुखमैहिकामुष्मिकं किमपि प्राप्नोति, न परां गतिं मुक्तिं प्राप्नोति ॥ २३ ॥

म० टी०—यस्मादश्रेयोनाचरणस्य श्रेयआचरणस्य च शास्त्रमेव निमित्तं तयोः शास्त्रैकगम्यत्वात् तस्मात्—यः शास्त्रेति। शिष्यतेऽनुशिष्यतेऽपूर्वोऽर्थो बोध्यतेऽनेनेति शास्त्रं वेदः तदुपजीविस्मृतिपुराणादि च तत्संबन्धी विधिर्लिङ्गादिशब्दः कुर्यान्न कुर्यादित्येवं प्रवर्तनानिवर्तनात्मकः कर्तव्याकर्तव्यज्ञानहेतुर्विधिनिषेधाख्यस्तं शास्त्रविधिं विधिनिषेधातिरिक्तमपि ब्रह्मप्रतिपादकं शास्त्रमस्तीति सूचयितुं विधिशब्दः। उत्सृज्य अश्रद्धया परित्यज्य कामकारतः स्वेच्छामात्रेण वर्तते विहितमपि नाचरति निषिद्धमप्याचरति यः स सिद्धिं पुरुषार्थप्राप्तियोग्यतामन्तःकरणशुद्धिं कर्माणि कुर्वन्नपि नाप्नोति न सुखमैहिकं, नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं वा ॥ २३ ॥

शं० टी०—एवं दम्भदर्पातिमानाद्यासुरसंपत्तिमतां वेदशास्त्रविधिमुल्लङ्घ्य तदुक्तधर्माधर्मानुदस्य तत्फलप्रदातारं चापीश्वरमनादृत्य यथेष्टं कामोपभोगेषु परस्वहरणादौ च प्रवृत्तानां पापिष्ठानां पुनरारोहवर्जितमधःपतनं प्रतिपाद्य स्वाज्ञानुल्लङ्घनाय पुनरपि य एवमेव प्रवर्तते सोऽप्यधोलोकमेव गच्छति, न मुक्तिवार्तां स्वप्नेऽपि विन्दतीत्युक्तमेवार्थं द्रढयति—य इति। यः श्रुताध्ययनसंपन्नो ब्राह्मणादिरधिकारी शास्त्रविधिं विधीयते अपूर्वोऽर्थो बोध्यतेऽनेनेति विधिः "अग्नीषोमीयं पशुमालभेत", "न कलञ्जं भक्षयेत्" इत्येवं कर्तव्याकर्तव्यार्थप्रकाशकं शास्त्रविधिं चोदनाविधिं निषेधं चोत्सृज्याविचार्य शास्त्रविधिमुपेक्ष्येत्यर्थः।कामकारतः कामनया यथेच्छं वर्तते शास्त्रनियममुल्लङ्घ्य स्वेच्छानुरूपं श्रद्धाविधुरं कर्मानुष्ठानं यः करोतीत्यर्थः। स कामायत्तप्रवृत्तिः पुरुषः सिद्धिमविधिना कृतत्वात्तैः कर्मभिश्चित्तशुद्धिं नाप्नोति। विध्युक्तस्यैव कर्मणः फलावश्यंभावित्वनियमात्तत एव स्वर्गीयं च सुखं न प्राप्नोति। कर्मणां मुक्तिसाधनत्वाभावात्परां गतिं मोक्षं चापि नाप्नोति। यथेच्छमविधिना कर्म कुर्वाणः स्वर्गापवर्गोभयभ्रष्टो भवतीत्यर्थः ॥ २३ ॥

श्री० टी०—कामादित्यागश्च स्वधर्माचरणं विना न भवतीत्याह—य इति। शास्त्रविधिं वेदविहितं धर्ममुत्सृज्य यः कामकारतो यथेच्छं वर्तते, स सिद्धिं तत्त्वज्ञानं न प्राप्नोति, न च सुखमुपशमं, न च परां गतिं मुक्तिं प्राप्नोति ॥ २३ ॥

स० टी०—शिष्यते बोध्यतेऽनेनापूर्वार्थ इति शास्त्रकम् ॥ वेदस्तदुपजीव्येतत्स्मृत्याद्यपि तदेव च ॥१॥ तत्संबन्धिविधिं यस्तु परित्यज्यातिनास्तिकः ॥ स्वेच्छामात्रेण विहितं न करोति निषिद्धकृत् ॥ २ ॥ स सिद्धिं चेतसः शुद्धिं पुमर्थप्राप्तियोग्यताम् ॥ नाप्नोति नैहिकं सौख्यं न स्वर्गं नापवर्गकम् ॥ ३ ॥ २३ ॥

भा० टी०—आसुर्याः संपदः परिवर्जनस्य श्रेयआचरणस्य च किं कारणमित्यपेक्षायामुभयं शास्त्रप्रमाणाच्छक्यं कर्तुं नान्यथाऽत उभयोः शास्त्रं कारणमिति बोधयितुं शास्त्रविधित्यागेऽनर्थमाह—य इति। शिष्यतेऽनुशिष्यते बोध्यतेऽनेनाज्ञातोऽर्थ इति शास्त्रं वेदस्तदुपजीविस्मृतीतिहासपुराणादि च तस्य विधिः कुर्यान्न कुर्यादिति कर्तव्याकर्तव्यज्ञानकारणं शास्त्रसंबन्धिविधिनिषेधाख्यस्तं यः शास्त्रविधिमुत्सृज्य विहाय कामकारतः स्वेच्छानुसारेण वर्तते कामस्य करणं कामकारस्तस्माद्धेतोः शास्त्रविधिमुत्सृज्येति वा संबन्धः। संसिद्धिं पुरुषार्थयोग्यतां चित्तशुद्ध्यादिलक्षणां नावाप्नोति नास्मिन्लोके सुखं नापि परां प्रकृष्टां गतिं स्वर्गं मोक्षं चाप्नोति ॥ २३ ॥

प० टी०—कामादित्यागश्च स्वधर्माचरणं विना न भवतीत्याह—य इति। शास्त्रविधिं वेदधर्ममुत्सृज्य यः कामकारतः स्वेच्छाचरणेन वर्तते स सिद्धिं तत्त्वज्ञानं न प्राप्नोति न सुखं तत्त्वज्ञानस्य फलरूपमात्मसुखं तत्फलरूपां परां गतिं मोक्षं न प्राप्नोति ॥ २३ ॥

रा० टी०—श्रेयःसाधनानुष्ठाने अज्ञानान्तरं विधातुं तदकरणे बाधकं तावदाह—य इति। यः शास्त्रोक्त-

विधानमुत्सृज्य कामकारतः स्वेच्छामात्रेण यत्र क्वचित्प्रवर्तते स सिद्धिं पुमर्थोपायं नावाप्नोति । सुखमैहिकं परां गतिं मोक्षं वा नाप्नोति ॥ २३ ॥

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ॥
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

इति श्रीभगवद्गीतासूपनिषत्सु देवासुरसंपद्विभागयोगो
नाम षोडशोऽध्यायः ॥ १६ ॥

त० टी०–फलितार्थमाह–तस्मादिति । यस्माच्छास्त्रानङ्गीकारिणां न किमपि फलं भवति, तस्मात् कार्याकार्यव्यवस्थितौ इदमित्थं वा कार्यमिदमित्थं वा न कार्यमित्यस्यां व्यवस्थायां ते तव दैवीप्रकृतिकस्य शास्त्रं वेदस्तदुपबृंहणस्मृतिपुराणेतिहासादिकं प्रमाणं निश्चायकम् । अतः शास्त्रविधानोक्तं विहितं प्रतिषिद्धं च धर्ममधर्मं च ज्ञात्वा इह कर्माधिकारे नरलोके स्ववर्णाश्रमोचितमेव युद्धादिकं कर्म कर्तुं त्वमर्हसि ॥ २४ ॥

आसुरीं संपदं हित्वा कामाद्यैः कारणैः सह । शास्त्रोक्तमेव कर्तव्यमित्यादिष्टं हि षोडशे ॥ १ ॥
इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां षोडशोऽध्यायः ॥ १६ ॥

म० टी०–यस्मादेवं–तस्मादिति । यस्माच्छास्त्रविमुखतया कामाधीनप्रवृत्तिरैहिकपारत्रिकसर्वपुरुषार्थायोग्यस्तस्मात्ते तव श्रेयोऽर्थिनः कार्याकार्यव्यवस्थितौ किं कार्यं किमकार्यमितिविषये शास्त्रं वेदतदुपजीविस्मृतिपुराणादिकमेव प्रमाणं बोधकं नान्यत् स्वोत्प्रेक्षाबुद्धवाक्यादीत्यभिप्रायः । एवं चेह कर्माधिकारभूमौ शास्त्रविधानेन कुर्यान्न कुर्यादित्येवं प्रवर्तनानिवर्तनारूपेण वैदिकलिङ्गादिपदेनोक्तं कर्म विहितं प्रतिषिद्धं च ज्ञात्वा निषिद्धं वर्जयन् विहितं क्षत्रियस्य युद्धादि कर्म त्वं कर्तुमर्हसि सत्त्वशुद्धिपर्यन्तमित्यर्थः । तदेवमस्मिन्नध्याये सर्वस्या आसुर्याः संपदो मूलभूतान् सर्वाश्रेयःप्रापकान् सर्वश्रेयःप्रतिबन्धकान्महादोषान् कामक्रोधलोभानपहाय श्रेयोऽर्थिना श्रद्दधानतया शास्त्रप्रवणेन तदुपदिष्टार्थानुष्ठानपरेण भवितव्यमिति संपद्द्वयविभागप्रदर्शनमुखेन निर्धारितम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यविश्वेश्वरसरस्वतीपादशिष्यश्रीमधुसूदनसरस्वतीविरचितायां
श्रीभगवद्गीतागूढार्थदीपिकायां दैवासुरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

शं० टी०–शास्त्रविधिनैव कर्मणां कर्तव्यत्वं निर्धारयन्नध्यायमुपसंहरति–तस्मादिति । यस्मादशास्त्रीयाणां कामैकनिबन्धनानां कर्मणां फलाभावो निश्चितस्तस्मात्ते मुमुक्षोः कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यार्थयोर्व्यवस्थापने इदमेवमनेन कर्तव्यमिदं तु न कर्तव्यमित्येवमनुष्ठेयाननुष्ठेयार्थनिर्णये श्रुतिस्मृतिलक्षणमेव शास्त्रं प्रमाणं तत्तदर्थप्रमापकं देशकालमन्त्रतन्त्रदेवताद्रव्यर्त्विगादिज्ञानस्य हेयद्रव्यज्ञानस्य च कारणमित्यर्थः । यत एवं ततः कर्मभूमौ कर्माधिकारी दैवसंपत्त्या परित्यक्तकामादिदोषस्त्वमधीतविदितवेदवेदार्थः सन् शास्त्रविधानोक्तं शास्त्रविधिदृष्टमेव कर्म ज्ञात्वा ममेदं शास्त्रीयं कर्म कर्तव्यमिति शास्त्रतो विज्ञायैव स्वीयं कर्म कर्तुमर्हसि नान्यथा कर्मफलवैगुण्यापत्तेरित्यनेन स्ववर्णाश्रमोचितं कर्म शास्त्रेण विज्ञाय मुमुक्षुणा कर्तव्यमिति सिद्धम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां षोडशोऽध्यायः ॥ १६ ॥

श्री० टी०—फलितमाह—तस्मादिति । इदं कार्यमिदमकार्यमित्यस्यां व्यवस्थायां ते तव शास्त्रं श्रुतिस्मृतिपुराणादिकमेव प्रमाणम् । अतः शास्त्रविधानोक्तं कर्म ज्ञात्वा इह कर्माधिकारे वर्तमानो यथाधिकारं कर्म कर्तुमर्हसि, तन्मूलत्वात्सत्त्वशुद्धिसम्यग्ज्ञानमुक्तीनामित्यर्थः ॥ २४ ॥

देवदैतेयसंपत्तिसंविभागेन षोडशे ॥ तत्त्वज्ञानेऽधिकारस्तु सात्त्विकस्येति दर्शितम् ॥ १ ॥

इति श्रीसुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां देवासरसंपद्विभागयोगो नाम षोडशोऽध्यायः ॥ १६ ॥

स० टी०—यस्माच्छास्त्रबहिर्भूतः कामाधीनप्रवृत्तिभाक् ॥ नैहिकामुष्मिकश्रेयोयोग्यस्तस्मात्त्वाधुना ॥ १ ॥ किं कार्यं किमकार्यं चेत्यत्र शास्त्रं हि बोधकम् ॥ श्रुतिस्मृतिपुराणादिप्रमाणं नात्मकल्पना ॥ २ ॥ इहाधिकारभूमौ त्वं ज्ञात्वा शास्त्रविधानतः ॥ कुर्यान्न कुर्यादित्येवं निषिद्धं विहितं तथा ॥ ३ ॥ निषिद्धं वर्जयन्कर्म विहितं क्षत्रियस्य यत् ॥ युद्धादिशुद्धिपर्यन्तं कर्तुं योग्योऽसि सर्वदा ॥ ४ ॥ तदेवमस्मिन्नध्याये आसुर्याः संपदोऽप्ययम् ॥ मूलभूतांस्त्रीन्कामादींस्त्यक्त्वा दैवीं समाश्रयेत् ॥ ५ ॥ तेनापवर्गसिद्धिः स्यान्नान्यथा चेत्युदाहृतम् ॥ ६ ॥ २४ ॥

दैवी संपद्विमोक्षं जनयति सुधियामासुरी दुःखहेतु-
र्ह्यासुर्यास्त्यागहेतुर्हरिचरणरतिर्नान्यथाऽतोऽप्यनन्यः ॥
स्वान्ते प्रेम्णैव कृष्णं स्मर भज सततं स्वात्मभूतं महेशं
मुक्तिस्तेनैव सिद्धा भवति हरिवचो मानमत्रानवद्यम् ॥ १ ॥
यद्यस्त्यपेक्षा तव दैवसंपदि बिभेषि चेदासुरसंपदस्तदा ॥
समाश्रय त्वं वसुदेवनन्दने रतिं मतिं भ्रान्तिमपोह्य सर्वतः ॥ २ ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ दैवासुरविभागोऽयं षोडशः पूर्णतां गतः ॥
टीकाश्लोकसंख्या ॥ १६८ ॥ आदितष्टीकाश्लोकसंख्या ॥ ४४३१ ॥

भा० टी०—यस्माच्छास्त्रविधिमुत्सृज्य कामचारतः प्रवृत्तानां पुरुषार्थहानिरनर्थावाप्तिश्च तस्मात्ते दैवीं संपदमभिजातस्य तव कार्याकार्यव्यवस्थितौ कर्तव्याकर्तव्यव्यवस्थायां शास्त्रं प्रमाणं ज्ञानसाधनमतः शास्त्रेण विधानं कुर्यादित्येवंलक्षणं शास्त्रविधानं तेनोक्तं स्वस्य क्षत्रियस्य यत्कर्म तदिह कर्माधिकारभूमौ कर्तुमर्हसि योग्योऽसि । इदं कर्तव्यमिदं नेति शासनं वेदाज्ञारूपं शास्त्रं तदतिक्रमे प्रायश्चित्तं विधानम् । शास्त्रं च विधानं च ताभ्यामुक्तमिति तूक्तविधानपदार्थस्य शास्यतेऽनेनेति व्युत्पत्त्या शास्त्रपदार्थेऽन्तर्भावमभिप्रेत्याचार्यैर्नोक्तम् । तदनेन षोडशाध्यायेन संपद्द्वयं निरूपयता सर्वस्याः आसुर्याः संपदो मूलभूतान् सर्वानर्थप्रापकान् सर्वार्थप्रतिबन्धकान् महादोषान् कामादीन् त्रीन्परित्यज्य तत्परिवर्जनं श्रेयआचरणकारणं शास्त्रविध्युलङ्घनं च विहाय श्रेयोर्थिना श्रद्दधानतया शास्त्रोपदिष्टार्थानुष्ठानपरेण भवितव्यमिति दर्शयता आसुर्याः परिवर्जनेन दैव्या उपादानेन च लभ्यमखण्डं मोक्षाख्यं ब्रह्म प्रकाशितम् ॥ २४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामिश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां षोडशोऽध्यायः ॥ १६ ॥

प० टी०—फलितमर्थमाह—तस्मादिति । इदं कार्यमित्यस्यां व्यवस्थायां ते तव श्रुतिस्मृतिरूपं शासनाच्छास्त्रं प्रमाणं नान्यत् । अतः शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि तन्मूलकत्वात्सत्त्वशुद्धिपूर्वकं तत्त्वज्ञानं ते भविष्यतीत्यर्थः ॥ २४ ॥

अथाध्यायतात्पर्यम् ।

दैवी संपद्विमुक्त्यै शमदमसमताक्षान्तिवैराग्यरूपा
कामक्रोधाभिमानानृतकपटमयी चासुरी बन्धहेतुः ।
उत्पत्तिर्दैवसंपद्यनुजनुरुदिता मामकानां जनाना
त्वं मा भैषीः किरीटिन्निति मधुरिपुणा षोडशे प्रोक्तमासीत् ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां
दैवासुरसंपत्तिविवेको नाम षोडशोऽध्यायः ॥ १६ ॥

रा० टी०–कुतः शास्त्रविध्यतिक्रमे संसिद्धिसुखाद्यभाव इति शङ्कां निरस्यन्नङ्गान्तरं विधत्ते–तस्मादिति । यस्मादिदं कार्यमिदमकार्यमिति व्यवस्थायां ते तव विवेकिनः शास्त्रं प्रमाणं तदतिक्रमे च दोषः तस्मादिहलोके शास्त्रविधानोक्तं कर्म कर्तुमर्हसि इति ॥ २४ ॥

इति श्रीमद्भगवद्गीतार्थसंग्रहे राघवेन्द्रयतिकृते षोडशोऽध्यायः ॥ १६ ॥

## अथ सप्तदशोऽध्यायः ।

**अर्जुन उवाच–ये शास्त्रविधिमुत्सृज्य यजन्ते श्रद्धयाऽन्विताः ॥**
**तेषां निष्ठा तु का कृष्ण! सत्त्वमाहो रजस्तमः ॥ १ ॥**

त० टी०–पूर्वाध्याये तत्त्वज्ञानाधिकारार्थं मुमुक्षुणा सत्त्वैकनिष्ठेन भाव्यमित्येतदर्थं हेयोपादेययोर्दैवासुरसंपदोर्विभागमुक्त्वा तयोर्हेयोपादेयज्ञानासाधारणं कारणं शास्त्रमेवोपादेयं, तदुक्तमेव कार्यं तद्विरुद्धं निषिद्धं चाधमगतिदं नाचरणीयमित्यन्ते निर्णीतम् । इदानीं सात्त्विकश्रद्धयाऽनुष्ठितस्यैव श्रेयोहेतुत्वं राजसतामसश्रद्धयाऽनुष्ठितस्यासुरत्वात्संसारहेतुत्वमिति श्रद्धाऽऽहारयज्ञतपोदानादेस्त्रैविध्यदर्शनाय सप्तदशाध्याय आरभ्यते । तत्र ये शास्त्रविधिं कुतश्चित्कारणाद्विहाय शिष्टाचारमात्रेण निषिद्धत्यागपूर्वकं श्रद्धया यज्ञादि कर्मानुतिष्ठन्ति तेषु शास्त्रविध्युपेक्षालक्षणस्यासुरधर्मस्य श्रद्धापूर्वकानुष्ठानलक्षणस्य दैवधर्मस्य च दर्शनात् किं तेऽसुरेष्वन्तर्भवन्ति देवेषु वेत्येककोटिं निश्चेतुमशक्नुवंस्तन्निर्णयबुभुत्सुरर्जुन उवाच–ये शास्त्रविधिमिति । ये केचिच्छास्त्रविधिमज्ञानादुत्सृज्य श्रद्धयाऽन्विताः सन्तो यजन्ते देवताराधनादौ प्रवर्तन्ते । अत्र ये शास्त्रविधिमुत्सृज्येत्यनेन ये दुःखबुद्ध्या आलस्याद्वा शास्त्रविधिमुत्सृज्य शास्त्रज्ञाने श्रममकृत्वा केवलं शिष्टाचारपरंपरावशेन श्रद्धयाऽन्विताः सन्तो देवताराधनादौ प्रवर्तमाना गृह्यन्ते, न तु ये शास्त्रं सम्यग् ज्ञात्वा बुद्धिपूर्वकं तमनादृत्य यथेष्टाचारेण वर्तमाना गृह्यन्ते । कुतः ? श्रद्धयाऽन्वितत्वविशेषणात् । आस्तिक्यबुद्धिर्हि श्रद्धेत्युच्यते । सा च यथेष्टाचारिणां न संभवति । तस्माद्ये शास्त्रविधिमुत्सृज्येत्यत्र पूर्वोक्ता ज्ञेया । तेषां का निष्ठा स्थितिः ? हे कृष्णेति सामान्यतः पृष्ट्वा किंशब्देन प्रश्नस्थं विशेषं स्वयमेव व्यनक्ति–सत्त्वमाहो रजस्तम इति । उक्तप्रकारेण देवपूजादौ ये प्रवृत्तास्तेषां सत्त्वादिषु का निष्ठा आश्रयः? सत्त्वं–ते सत्त्वाश्रयाः आहोस्वित् रजोनिष्ठा रजसि संश्रितास्तमःसंश्रिता वा इति विवेचनीयमिति भावः ॥ १ ॥

म० टी०–द्विविधाः कर्मानुष्ठातारो भवन्ति । केचिच्छास्त्रविधिं ज्ञात्वाऽप्यश्रद्धया तमुत्सृज्य कामकारमात्रेण यत्किंचिदनुतिष्ठन्ति ते सर्वपुरुषार्थायोग्यत्वादसुराः । केचित्तु शास्त्रविधिं ज्ञात्वा श्रद्धधानतया तदनु-

  

सारेणैव निषिद्धं वर्जयन्तो विहितमनुतिष्ठन्ति ते सर्वपुरुषार्थयोग्यत्वाद्देवा इति पूर्वाध्यायान्ते सिद्धम्। ये तु शास्त्रीयं विधिमालस्यादिवशादुपेक्ष्य श्रद्दधानतयैव वृद्धव्यवहारमात्रेण निषिद्धं वर्जयन्तो विहितमनुतिष्ठन्ति ते शास्त्रीयविध्युपेक्षालक्षणेनासुरसाधर्म्येण श्रद्धापूर्वकानुष्ठानलक्षणेन च देवसाधर्म्येणान्विताः किमसुरेष्वन्तर्भवन्तु किं वा देवेष्वित्युभयधर्मदर्शनादेककोटिनिश्चायकादर्शनाच्च संदिहानोऽर्जुन उवाच—ये इति। ये पूर्वाध्याये न निर्णीताः न देववच्छास्त्रानुसारिणः किं तु शास्त्रविधिं श्रुतिस्मृतिचोदनामुत्सृज्य आलस्यादिवशादनादृत्य नासुरवदश्रद्दधानाः किं तु वृद्धव्यवहारानुसारेण श्रद्धयान्विता यजन्ते देवपूजादिकं कुर्वन्ति तेषां तु शास्त्रविध्युपेक्षाश्रद्धाभ्यां पूर्वनिश्चितदेवासुरविलक्षणानां निष्ठा का कीदृशी तेषां शास्त्रविध्यनपेक्षश्रद्धापूर्विका च सा यजनादिक्रियाव्यवस्थितिः हे कृष्ण भक्ताघकर्षण, किं सत्त्वं सात्त्विकी। तथा सति सात्त्विकत्वात्ते देवाः। आहो इति पक्षान्तरे। किं रजस्तमः राजसी तामसी च। तथा सति राजसतामसत्वादसुरास्ते। सत्त्वमित्येका कोटिः, रजस्तमइत्यपरा कोटिरितिविभागज्ञापनायाहोशब्दः ॥ १ ॥

शं० टी०—एवं दैवासुरसंपद्विभागं तत्स्वरूपं तत्फलं चासुराणां ज्ञानानधिकारित्वबोधनायासुरसंपत्तिमतां कामसंकल्पगुणकर्माणि च फलं च विशिष्य प्रतिपाद्य मुमुक्षोः शास्त्रज्ञानेनैव कर्म कर्तव्यमिति निरूप्याधुना शास्त्रार्थानभिज्ञानामपि शास्त्रीयमेव कर्म कामकारं विना श्रद्धया कुर्वतामपि मुमुक्षूणां सात्त्विकेष्वेवाहारयज्ञतपोदानादिषु प्रतिष्ठितानां ज्ञानाधिकारः शमदमादिषट्कसंपत्त्या प्राप्तज्ञानेन मोक्षाधिकारश्च युज्यत इति बोधयितुं सप्तदशाध्याय आरभ्यते। तत्रादौ यः शास्त्रविधिमुत्सृज्येति तस्माच्छास्त्रं प्रमाणं त इति शास्त्रविधिं ज्ञात्वापि तमुत्सृज्य कामकारेण यः प्रवर्तते स आसुरस्तस्य न चित्तशुद्धिर्न च ज्ञानं नापि तत्फलं च सिध्यतीति श्रुत्वा शास्त्रार्थमजानतां कामकारं विनैव श्रद्धया कर्माणि कुर्वतां पुरुषाणां दैवी वाऽऽसुरी वा का वा संपत्तिः का गतिस्तेषामिति जिज्ञासुरर्जुन उवाच—य इति। ये सामान्याः पुरुषाः शास्त्रविधिं श्रुतिस्मृतिलक्षणं शास्त्रं तद्विधिं विधानं श्रौतस्मार्तसूत्राध्ययनतदर्थपरिज्ञानाभावादनुष्ठानविधिमुत्सृज्य।विज्ञाय श्रद्धया वृद्धव्यवहारसंदर्शनसमुत्पन्नयाऽऽस्तिक्यबुद्ध्या विनैव कामकारं वैदिकेषु नियतेषु कर्मस्वत्यन्तविश्वासेनान्विताः सन्तो वैदिकेन कर्मणा देवान् यजन्ते शास्त्रार्थमज्ञात्वाऽपि श्रद्धया भक्त्या च श्रौतं स्मार्तं च कर्म ये कुर्वन्तीत्यर्थः। तेषां श्रद्धया कर्माणि वैदिके प्रवृत्तानां पुरुषाणां निष्ठा स्थितिः का किंलक्षणा ? सत्त्वमाहो रजस्तम इति कारणेन कार्यं गृह्यते। तुशब्दः पूर्वव्यावृत्त्यर्थः। तेषां तु निष्ठा वृत्तिः सात्त्विकी वा उत राजसी किं तामसी वा कथ्यतामिति। अत्र सत्त्वशब्देन दैवसंपत्तिः रजस्तमःशब्देनासुरसंपत्तिर्विवक्षिता। दैवासुरसंपत्तेरधिकारविचारे प्रक्रान्तत्वात्तेषां संपद्दैवी वाप्युत आसुरी वेति प्रश्नार्थः। ननु यः शास्त्रविधिमुत्सृज्येत्यनेनैव वचनेन शास्त्रविधिमुत्सृज्य यः प्रवर्तते स आसुर इत्येतेषामप्यासुरत्वमुक्तमेव, पुनस्तेषां निष्ठा तु का कृष्णेत्यर्जुनस्य प्रश्नोऽनुपपन्न एवेति चेत्सत्यम्। यद्यपि शास्त्रविध्युत्सर्जनमुभयत्र सममेव तेषामेतेषां च, तथापि श्रद्धान्वितत्वविशेषणविशिष्टत्वात्तेषामेतेषां च विशेषो विद्यते। कामकारत इति तत्र कामकारत्वविशेषणविशेषोपपत्तेश्च शास्त्रविधिमुत्सृज्येति ज्ञात्वा शास्त्रोल्लङ्घनदोषविशेषाच्च तेषामेतेषां च भेदो विद्यत एव। ननु शास्त्रविध्युत्सर्जनमत्रापि च विद्यत एवेति चेन्न शास्त्रविध्युत्सर्जनपदेनात्र शास्त्रार्थापरिज्ञानं विवक्षितं न तु ज्ञात्वा विध्युल्लङ्घनम्। ननु तर्हि शास्त्रार्थानभिज्ञानां मूढानां कथं वैदिके कर्मणि प्रवृत्तिरितिचेदुच्यते—यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इतिन्यायेन ज्ञानकर्मवृद्धप्रवृत्तिसंदर्शनेन मूढानामपि श्रद्धावतां सद्बुद्धीनां वैदिककर्मप्रवृत्तिरुपपद्यते यतिभ्यो वृद्धेषु नमत्सु सत्सु बालानां नमनक्रिया यथा ततस्तेषामेतेषां च विशेषणभेदाद्भेदः सिध्यति, तत एवार्जुनेन पृष्टं तेषां निष्ठा तु का कृष्णेत्यतो न काचिदप्यत्रानुपपत्तिः ॥ १ ॥

श्री० टी०–उक्ताधिकारहेतूनां श्रद्धा मुख्या तु सात्त्विकी ॥ इति सप्तदशे गौणश्रद्धाभेदस्त्रिधोच्यते ॥ १ ॥ पूर्वाध्यायान्ते ‘ यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः । न स सिद्धिमवाप्नोति ’ इत्यनेन शास्त्रोक्तविधिमुत्सृज्य कामकारेण वर्तमानस्य ज्ञानेऽधिकारो नास्तीत्युक्तम् । तत्र शास्त्रविधिमुत्सृज्य कामकारं विना श्रद्धया वर्तमानानां किमधिकारोऽस्ति नास्ति वेति बुभुत्सया अर्जुन उवाच–य इति । अत्र च शास्त्रविधिमुत्सृज्य यजन्ते इत्यनेन शास्त्रार्थं बुद्ध्वा तमुल्लङ्घ्य वर्तमाना न गृह्यन्ते तेषां श्रद्धया यजनानुपपत्तेः । आस्तिक्यबुद्धिर्हि श्रद्धा । न चासौ शास्त्रज्ञानवतां शास्त्रविरुद्धेऽर्थे संभवति । तानेवाधिकृत्य त्रिविधा भवति श्रद्धा, यजन्ते सात्त्विका देवानित्याद्युत्तरानुपपत्तेश्च । अतो नात्र शास्त्रातिलङ्घिनो गृह्यन्ते । अपि तु क्लेशबुद्ध्या आलस्याद्वा शास्त्रार्थज्ञाने प्रयत्नमकृत्वा केवलमाचारपरंपरावशेन श्रद्धया क्वचिद्देवताराधनादौ प्रवर्तमाना गृह्यन्ते । अतोऽयमर्थः–ये शास्त्रविधिमुत्सृज्य दुःखबुद्ध्या आलस्याद्वा अनादृत्य केवलमाचारप्रामाण्येन श्रद्धयान्विताः सन्तो यजन्ते तेषां तु का निष्ठा का स्थितिः क आश्रयः । तामेव विशेषेण पृच्छति–किं सत्त्वम् आहो किं वा रजः अथवा तम इति । तेषां तादृशी देवपूजादिप्रवृत्तिः किं सत्त्वसंश्रिता रजःसंश्रिता वा तमःसंश्रिता वेत्यर्थः । श्रद्धायाः सात्त्विकत्वात् क्लेशबुद्ध्या आलस्येन च शास्त्रानादरस्य च राजसतामसत्त्वात्त्रेधा संदेहः । यदि सत्त्वभावसंश्रितास्तर्हि तेषामपि सात्त्विकत्वाद्यथोक्तात्मज्ञानेऽधिकारः स्यात्, अन्यथा नेति प्रश्नतात्पर्यार्थः ॥ १ ॥

स० टी०–स्वयंज्योतिर्ब्रह्म श्रुतिशिखरगीतं निरवधिं जगद्धामाद्वैतं प्रकृतिपुरुषान्तर्गतमजम् ॥ महेशाद्याराध्यं व्रजयुवतिभिः स्वाद्यममृतं महः श्रीकृष्णाख्यं सुखनिधिमहं नौमि सततम् ॥ १ ॥ त्रिविधाः कर्मकर्तारो भवन्ति पुरुषा भुवि ॥ केचिच्छास्त्रविधिं ज्ञात्वा श्रद्धाहीना विहाय तम् ॥ २ ॥ कामकारेण यत्किंचिदनुतिष्ठन्ति तेऽसुराः ॥ केचिच्छास्त्रविधिं ज्ञात्वा श्रद्दधानतयोत्तमाः ॥ ३ ॥ निषिद्धं वर्जयन्तो येऽनुतिष्ठन्ति यथाविधि ॥ ते पुरुषार्थयोग्यत्वाद्देवा इत्यपि बोधितम् ॥ ४ ॥ आलस्यादिवशाद्ये तूपेक्ष्य शास्त्रविधिं स्वयम् ॥ श्रद्दधानतया वृद्धव्यवहारैकदर्शनात् ॥ ५ ॥ निषिद्धं वर्जयन्तश्च कुर्वन्ति विहितं सदा ॥ शास्त्रीयोपेक्षणात्ते किं प्रविष्टा असुरेषु वा ॥ ६ ॥ श्रद्दधानतया किं वा देवेष्विति वितर्कयन् ॥ अर्जुनः संदिहानः सन्नुवाच श्रीहरिं प्रति ॥ ७ ॥ श्रुतिस्मृतिविधिं त्यक्त्वा य आलस्यादिना जनाः ॥ देवपूजादिकं वृद्धव्यवहारानुसारतः ॥ ८ ॥ श्रद्दधानतया नित्यं कुर्वन्त्यानन्दसागर ॥ देवासुरविभिन्नानां तेषां निष्ठाऽस्ति कीदृशी ॥ ९ ॥ किं सात्त्विकी वेदनिष्ठा राजसी वाथ तामसी ॥ १० ॥ १ ॥

भा० टी०–गीताभाष्यप्रकाशेन जगदुद्धारकौ परौ । वन्दे परस्परात्मानौ देवौ श्रीकृष्णशंकरौ ॥ यः शास्त्रविधिमुत्सृज्य ‘ तस्माच्छास्त्रं प्रमाणं ते ’ इतिभगवद्वाक्यात् ये शास्त्रविधिं परित्यज्य कामकारतः प्रवृत्तास्ते नास्तिकाः असुराः, ये तु शास्त्रविधिमनुरुध्य विहितानुष्ठानाय प्रतिषिद्धप्रहाणाय च श्रद्दधानतया प्रवृत्तास्ते आस्तिकाः सुरा इति ज्ञात्वा श्रद्धावतां शास्त्रानभिज्ञानां निष्ठां जिज्ञासुरर्जुन उवाच–ये इति । ये केचिदसुराणां देवानां च विशेषणैरविशेषिताः शास्त्रविधिं श्रुतिस्मृत्यादिशास्त्रविधानमुत्सृज्यालस्यादिनाऽपश्यन्तो वृद्धव्यवहारादेव श्रद्धया आस्तिक्यबुद्ध्याऽन्विताः संयुक्ताः सन्तः देवादीन्यजन्ति पूजयन्ति । ये तु किंचिच्छास्त्रविधिमुपलभमाना एवाश्रद्दधानतया तमुत्सृज्यायथाविधि देवादीन्पूजयन्ति तेऽत्र न गृह्यन्ते श्रद्धयान्विता इति विशेषणात् । तेषामेवंभूतानां निष्ठा तु का किं सत्त्वमवस्थानं श्रद्धायाः सात्त्विकत्वात् ? आहो रजः किं वा तमः क्लेशबुद्ध्या आलस्येन च शास्त्रादर्शनस्य राजसतामसत्वात् ? एतदुक्तं भवति–या तेषां देवादिविषया पूजा सा किं सात्त्विकी आहोस्विद्राजस्युत तामसीति ‘कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते ॥’ इति निरुक्तिमभिप्रेत्य सर्वत्र सत्तास्फू-

द्यादिना स्थितस्य परमात्मनस्तव किंचिदप्यविदितं न भवतीति सूचयन्संबोधयति—कृष्णेति । मम संशयापकर्षणेति वा संबोधनार्थः ॥ १ ॥

प० टी०—पूर्वाध्यायान्ते 'यः शास्त्रविधिमुत्सृज्य' इत्यादिना शास्त्रविधिमुल्लङ्घ्य प्रवृत्तस्य सिद्धिर्नास्तीत्युक्तं, तदेव पृच्छन्नर्जुन आह—ये शास्त्रविधिमिति । ये शास्त्रविधिं विधिनिषेधात्मकमुल्लङ्घ्य दुःखबुद्ध्याऽऽलस्याद्वाऽनादृत्य केवलं लौकिकाचारपरंपरया श्रद्धां विना यजन्ते तेषां का निष्ठा क आश्रयः सत्त्वमाहोस्विद्रजस्तमो वा । 'यजन्ते सात्त्विका देवान्' इत्यादिवत् फलोपधानं नैव वेति प्रश्नार्थः ॥ १ ॥

रा० टी०—चतुर्दशाध्याये नान्यं गुणेभ्यः कर्तारमित्यादिना सर्वोऽपि परिणामो गुणकृत इति सामान्यत उक्तस्यात्र सत्त्वादिगुणकृतानां श्रद्धानामाहारस्य तपःप्रभृतिकर्मणां च सदसद्रूपाणां भेदोक्त्या प्रपञ्चनं क्रियते । पूर्वत्र शास्त्रविधानोक्तं ज्ञात्वा कर्म कार्यमित्युक्ते लब्धावसरोऽर्जुनः शास्त्रविध्यज्ञानिनां का स्थितिरिति पृच्छति—य इति । ये जनाः शास्त्रविधिमुत्सृज्य अज्ञात्वा श्रद्धयान्विताः श्रद्धामात्रेण यजन्ते तेषां निष्ठा तु स्थितिस्तु का कीदृशी । तामेव विविच्याह—सत्त्वमित्यादिना । किं सात्त्विकी राजसी तामसी वा स्थितिरित्यर्थः । ते किं सात्त्विकाः राजसास्तामसा वेति यावत् ॥ १ ॥

**श्रीभगवानुवाच—त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ॥**
**सात्त्विकी राजसी चैव तामसी चेति तां शृणु ॥ २ ॥**

त० टी०—एवं पृष्टेऽर्जुनसंदेहमपनिनीषुस्तावच्छास्त्रज्ञानवतां तदनुकूलाचाराणामनेकजन्मानुष्ठिताकाम्यकर्मणां सात्त्विकानां तु श्रद्धा मोक्षोपयोगिनी भगवदाराधनविषयिकैकधैव भवति । शास्त्रज्ञानहीनानां मोक्षमार्गेऽनधिकृतानां सकामानां जीवानां गुणत्रयविभागेन श्रद्धात्रयविभागं श्रीभगवानुवाच—त्रिविधेति । देहिनां परमार्थज्ञानहीनानां प्रवृत्तिमात्रनिष्ठानां मनुष्याणां सर्वेषां श्रद्धा सात्त्विकी राजसी तामसी चेति त्रिविधा भवति । त्रैविध्ये हेतुः—सा स्वभावजेति । स्वभावः स्वकीयप्राचीनकर्मानुगुणो रुचिविशेषस्तस्माज्जाता स्वभावजा । जीवस्य यत्र रुचिविशेषस्तत्र श्रद्धा जायते । श्रद्धा नामायं ममेष्टं साधयेदिति विश्वासः, विश्वासपूर्विकैव साधने प्रवृत्तिर्भवति । रुचिश्रद्धाप्रयत्नानां निमित्तभूता अन्तःकरणरञ्जकाः सत्त्वादयो गुणाः कार्यैकगम्या अतस्त्रिविधा भवति । तामिमां त्रिविधां श्रद्धां वक्ष्यमाणां शृणु ॥ २ ॥

म० टी०—ये शास्त्रविधिमुत्सृज्य श्रद्धया यजन्ते ते श्रद्धाभेदाद्भिद्यन्ते । तत्र ये सात्त्विक्या श्रद्धयान्वितास्ते देवाः शास्त्रोक्तसाधनेऽधिक्रियन्ते तत्फलेन च युज्यन्ते । ये तु राजस्या तामस्या च श्रद्धयान्वितास्तेऽसुरा न शास्त्रीयसाधनेऽधिक्रियन्ते न वा तत्फलेन युज्यन्त इति विवेकेनार्जुनस्य संदेहमपनिनीषुः श्रद्धाभेदं श्रीभगवानुवाच—त्रिविधेति । यया श्रद्धयान्विताः शास्त्रविधिमुत्सृज्य यजन्ते सा देहिनां स्वभावजा, जन्मान्तरकृतो धर्माधर्मादिशुभाशुभसंस्कार इदानींतनजन्मारम्भकः स्वभावः । स त्रिविधः सात्त्विको राजसस्तामसश्चेति । तेन जनिता श्रद्धा त्रिविधा भवति सात्त्विकी राजसी तामसी च, कारणानुरूपत्वात्कार्यस्य । या त्वारब्धे जन्मनि शास्त्रसंस्कारमात्रजा विदुषां सा कारणैकरूपत्वादेकरूपा सात्त्विक्येव, न राजसी तामसी चेति प्रथमचकारार्थः । शास्त्रनिरपेक्षा तु प्राणिमात्रसाधारणी स्वभावजा । सैव स्वभावत्रैविध्यात्त्रिविधेत्येवकारार्थः । उक्तत्रिधात्रयसमुच्चयार्थश्चरमश्चकारः । यतः प्राग्भवीयवासनाख्यस्वभावस्याभिभावकं शास्त्रीयं विवेकविज्ञानमनादृतशास्त्राणां देहिनां नास्ति अतस्तेषां स्वभाववशात्त्रिधा भवन्तीं तां श्रद्धां शृणु । श्रुत्वा च देवासुरभावं स्वयमेवावधारयेत्यर्थः ॥ २ ॥

शं० टी०–कारणे ज्ञाते कार्यं बोधयितुं शक्यं न त्वज्ञाते सत्यतः कारणश्रद्धाभेदज्ञापनेन निष्ठाभेदं बोधयितुं श्रीभगवानुवाच–त्रिविधेति । देहिनां प्राणिनां श्रद्धा सात्त्विकी राजसी च तामसी चेति त्रिविधैव त्रिप्रकारा त्रिधैव भिन्ना भवतीत्यर्थः । श्रद्धायास्त्रैविध्यसिद्धौ कारणमाह–स्वभावजेति । 'आयुः कर्म च वित्तं च विद्या निधनमेव च । पञ्चैतानि विलिख्यन्ते गर्भस्थस्यैव देहिनः' इत्यनेन प्राग्भवीयपुण्यापुण्यादिसंस्कारः स्वभावः स्वेन सह भवतीति स्वभावस्तस्माज्जाता स्वभावजा । यद्वा स्वभावः सत्त्वरजस्तमोगुणात्मिका प्रकृतिस्तस्माज्जाता स्वभावजा तत एव सत्त्वादिगुणभेदाच्छ्रद्धाया अपि सात्त्विकी राजसी तामसी चेति भेद उपपद्यत इत्यर्थः । यत्प्रधानक्रियायां वर्तमानानां देहिनां निष्ठां त्वं पृच्छसि तां श्रद्धां मयोच्यमानां शृणु, श्रद्धासंभूतिप्रकारं शृण्वित्यर्थः ॥ २ ॥

श्री० टी०–अत्रोत्तरं श्रीभगवानुवाच–त्रिविधेति । अयमर्थः–शास्त्रतत्त्वज्ञानतः प्रवर्तमानानां परमेश्वरपूजाविषया सात्त्विकी एकविधैव श्रद्धा। लोकाचारमात्रेण तु प्रवर्तमानानां देहिनां या श्रद्धा सा तु सात्त्विकी राजसी तामसी चेति त्रिविधा भवति । तत्र हेतुः स्वभावजा । स्वभावः पूर्वकर्मसंस्कारस्तस्माज्जाता स्वभावजा। स्वभावमन्यथा कर्तुं समर्थं हि शास्त्रोक्तं विवेकज्ञानं तत्तु तेषां नास्ति। अतः केवलं पूर्वस्वभावेनैव भवतीति श्रद्धा त्रिविधा भवति तामिमां त्रिविधां श्रद्धां शृणु । तदुक्तम्–'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन इत्यादिना ॥ २ ॥

स० टी०–सात्त्विक्या श्रद्धया युक्ता देवाः शास्त्रोक्तसाधने ॥ अधिक्रियन्ते युज्यन्ते तत्फलेन च साधकाः ॥ १ ॥ राजस्या ये तु तामस्या श्रद्धया संयुताश्च ते ॥ नाधिक्रियन्ते शास्त्रीये युज्यन्ते तत्फलेन न ॥ २ ॥ इत्येवं हि विवेकेन स्वभक्तस्यार्जुनस्य च ॥ संदेहोच्छित्तये श्रद्धाभेदं श्रीश उवाच ह ॥ ३ ॥ शास्त्रोक्तविधिमुत्सृज्य यजन्ते श्रद्धया यया ॥ जन्मान्तरीयधर्मादिसंस्कारो योऽधुनातने ॥ ४ ॥ जन्मन्यारम्भकः सोऽयं स्वभावस्त्रिविधो नृणाम् ॥ सात्त्विको राजसश्चैव तामसश्चेति तेन सा ॥ ५ ॥ त्रिविधोत्पादिता श्रद्धा सात्त्विक्यादिभिदावती ॥ श्रद्धां तां त्वं शृणु श्रुत्वा स्वयमेवावधारय ॥ ६ ॥ देवासुरस्वभावेन सा यथा भवति त्रिधा ॥ ७ ॥ २ ॥

भा० टी०–प्रश्नानुरूपमुत्तरं श्रीभगवानुवाच–त्रिविधेति । त्रिविधा त्रिप्रकारा श्रद्धा भवति, ययाऽन्वितानां निष्ठां त्वं पृच्छसि सा देहिनां देहवतां जीवानां स्वभावजा जन्मान्तरकृतधर्माधर्मादिसंस्कारो मरणकालेऽभिव्यक्तः स्वभाव उच्यते। तस्माज्जाता जीवानां त्रिविधात् स्वभावात् जातत्वात् श्रद्धा त्रिविधा भवतीत्यर्थः । या तु अस्वभावजा असूनामभावोऽस्वभावः मरणमित्यर्थः । तस्मिन्समीपे सति जाता मरणसमये व्यस्तानां समस्तानां वा गुणानामुद्भवे जन्मान्तरे तत्संस्कारवशात् तत्तद्गुणाधिक एव भवतीति व्यवस्थाकारणमितीतरेषां व्याख्या । सा तु 'मुखमस्तीति वक्तव्यम्' इतिन्यायविजृम्भितत्वादुपेक्ष्या । श्रद्धायास्त्रैविध्यमाह–सात्त्विकी सत्त्वनिर्वृत्ता देवादिपूजाविषया, राजसी रजोनिर्वृत्ता यक्षरक्षःपूजाविषया, तामसी तमोनिर्वृत्ता प्रेतपिशाचादिपूजाविषया । एवं त्रिविधां तां श्रद्धां मयोच्यमानां शृणु ॥ २ ॥

प० टी०–ननु शास्त्रविधेरुल्लङ्घनं शास्त्रार्थमबुद्ध्वा बुद्ध्वा वा ? नाद्यो यजनासंभवान्नापरः श्रद्धानुत्पत्तेरास्तिक्यबुद्धिर्हि श्रद्धा, न चासौ शास्त्रज्ञानवतां शास्त्रविरुद्धे संभवतीति पर्यालोच्य भगवानाह–त्रिविधेति । देहिनां मनुष्याणां स्वभावजा श्रद्धा त्रिविधा भवति । प्राचीनसंस्कारः स्वभावस्तस्माज्जाता स्वभावजा स्वभावमन्यथाकर्तुं समर्थं शास्त्रोत्थज्ञानं तत्तु तेषां नास्त्यतः केवलं सत्त्वरजस्तमःप्रधानप्राचीनसंस्कारेण श्रद्धा त्रिविधा तां शृणु ॥ २ ॥

रा० टी०—ते त्रिविधा अपि सन्तीतिभावेन प्राक् यागाङ्गतया यष्टृविशेषणत्वेनोक्तश्रद्धां सात्त्विकत्वादिना विभज्य तदाश्रयेण तेषां सात्त्विकत्वादिस्वरूपमाह—त्रिविधेति द्वाभ्याम् । श्रद्धा आस्तिक्यनिष्ठा स्वभावजैवेत्यन्वयः । मनोवृत्तिश्रद्धाव्यावृत्तये स्वभावजैवेत्युक्तम् । तां त्रिविधां शृणु श्रुत्वा तत्र निष्ठां कुर्वित्यर्थः । तदन्वितैः क्रियमाणयजनप्रकारं शृण्वित्यर्थः ॥ २ ॥

**सत्त्वानुरूपा सर्वस्य श्रद्धा भवति भारत ! ॥**
**श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ॥ ३ ॥**

त० टी०—सत्त्वानुरूपेति । सत्त्वमन्तःकरणं तदनुरूपा सर्वस्य श्रद्धा भवति । सत्त्वादिगुणरञ्जितान्तःकरणभेदाच्छ्रद्धाभेदः । यद्यप्यन्तःकरणस्य सात्त्विकाहंकारकार्यत्वात् सात्त्विकत्वमेव, तथाऽपि तदाप्यायकान्नपानादेः सात्त्विकादित्रैविध्यात्त्रिविधं भवति । तथा च प्राचीनकर्मनिमित्तकत्वाज्जन्मत एव केषांचित्सत्त्वगुणप्रधानं, केषांचिद्रजःप्रधानं, केषांचित्तमःप्रधानं, सत्त्वमन्तःकरणं देवयक्षरक्षसां क्रमेण भवति । मनुष्याणां तु प्रायेण व्यामिश्रं, केषांचिदेकैकगुणप्रधानं सत्त्वं भवति । एवं च सर्वस्य पुरुषस्य सत्त्वानुरूपान्तःकरणरूपा श्रद्धा भवति । हे भारत ! सत्त्वप्रधानस्य सात्त्विकी, रजःप्रधानस्य राजसी, तमःप्रधानस्य तामसीति विवेकः । फलितमाह—श्रद्धामयोऽयं पुरुष इति । अयं मोक्षानधिकारी संसारी पुरुषः श्रद्धामयः श्रद्धाप्रधानः । प्राधान्ये मयट् स्त्रीमय इतिवत् । तस्माद्यो यच्छ्रद्धः स एव सः, यः पुरुषो यादृश्या श्रद्धया युक्तः स एव सः । सात्त्विक्यादिश्रद्धया युक्तः सात्त्विकादिरूप एव पुरुषो भवति । एवं श्रद्धयैव निष्ठाऽपि दर्शिता । एतेन तेषां निष्ठा तु का कृष्णेति प्रश्नस्योत्तरमुक्तम् । सत्त्वादिनिष्ठानां फलं तु 'ऊर्ध्वं गच्छन्ति सत्त्वस्था मध्ये तिष्ठन्ति राजसाः । जघन्यगुणवृत्तिस्था अधो गच्छन्ति तामसाः' इति चतुर्दशे उक्तम् ॥ ३ ॥

म० टी०—प्राग्भवीयान्तःकरणगतवासनारूपनिमित्तकारणवैचित्र्येण श्रद्धावैचित्र्यमुक्त्वा तदुपादानकारणान्तःकरणवैचित्र्येणापि तत्त्रैविध्यमाह—सत्त्वेति । सत्त्वं प्रकाशशीलत्वात्सत्त्वप्रधानत्रिगुणापञ्चीकृतपञ्चमहाभूतारब्धमन्तःकरणम् । तच्च क्वचिदुद्रिक्तसत्त्वमेव यथा देवानां, क्वचिद्रजसाभिभूतसत्त्वं यथा यक्षादीनां, क्वचिद्रजसाभिभूतसत्त्वं यथा प्रेतभूतादीनां, मनुष्याणां तु प्रायेण व्यामिश्रमेव। तच्च शास्त्रीयविवेकज्ञानेनोद्भूतसत्त्वं रजस्तमसी अभिभूय क्रियते । शास्त्रीयविवेकविज्ञानशून्यस्य तु सर्वस्य प्राणिजातस्य सत्त्वानुरूपा श्रद्धा सत्त्ववैचित्र्याद्विचित्रा भवति, सत्त्वप्रधानेऽन्तःकरणे सात्त्विकी, रजःप्रधाने तस्मिन् राजसी, तमःप्रधाने तु तस्मिंस्तामसीति । हे भारत महाकुलप्रसूत ज्ञाननिरतेति वा शुद्धसात्त्विकत्वं द्योतयति । यत्त्वया पृष्टं तेषां निष्ठा केति तत्रोत्तरं शृणु—अयं शास्त्रीयज्ञानशून्यः कर्माधिकृतः पुरुषः त्रिगुणान्तःकरणसंपिण्डितः श्रद्धामयः प्राचुर्येणास्मिन् श्रद्धा प्रस्तुतेति तत्प्रस्तुतवचने मयट्, अन्नमयो यज्ञ इतिवत् । अतो यो यच्छ्रद्धः या सात्त्विकी राजसी तामसी वा श्रद्धा यस्य स एव श्रद्धानुरूप एव स सात्त्विको राजसस्तामसो वा । श्रद्धयैव निष्ठा व्याख्यातेत्यभिप्रायः ॥ ३ ॥

शं० टी०—तदाह—सत्त्वेति । सत्त्वानुरूपा सत्त्वमिति रजस्तमसोरुपलक्षणम् । सत्त्वरजस्तमोगुणानामनुरूपा गुणत्रयभेदानुवृत्ता सर्वस्य प्राणिजातस्य श्रद्धा भवति पुण्यापुण्यकर्मवशादन्तःकरणविजृम्भितसत्त्वादिगुणभेदमाश्रित्यैव पुरुषाणां श्रद्धा भवति न तु पुरुषभेदमाश्रित्येत्यर्थः । ननु सत्त्वादिगुणानुगुण्येन प्राणिनां श्रद्धा भवतु प्रकृते किमायातमित्याकाङ्क्षायामाह—श्रद्धामय इति । अयमिति दृष्टव्यवहारो गृह्यते । अयं प्रत्यक्षः व्यवहारविषयः पुरुषः श्रद्धामयः अधिकृते पुरुषे श्रद्धाप्राचुर्येण दृश्यते, ततोऽयं श्रद्धामयः श्रद्धा-

प्रधानत्वाच्छ्रद्धामय इत्युच्यत इत्यर्थः । ननु पुरुषस्य श्रद्धामयत्वे सिद्धेऽपि का निष्ठेत्युक्तेः किमुत्तरमित्याकाङ्क्षायामाह–य इति । योऽधिकारी पुरुषः स्वधर्मनिष्ठो यच्छ्रद्धः यद्गुणसंभावितश्रद्धावान् भवति स पुरुषः स एव तद्गुण एव भवति । सत्त्वगुणसंभावितश्रद्धावान् सात्त्विकः रजोगुणसंभावितश्रद्धावान् राजसस्तमोगुणसंभावितश्रद्धावान् तामसो भवतीत्यर्थः । यद्यपि श्रद्धा सत्त्वस्यैव धर्मो न तु रजस्तमसोस्तथापि तयोः प्राधान्ये सत्यपि तत्र सत्त्वस्योपसर्जनत्वसंभवात्तद्वत्स्वपि तद्धर्माभासः श्रद्धाभासिकी संभवत्यत एवोच्यते यो यच्छ्रद्धः स एव स इति । एतेन सत्त्वरजस्तमोगुणसंभावितश्रद्धावतां तेषां निष्ठा क्रमात्सात्त्विकी राजसी तामसी चेत्युत्तरं सूचितं भवति । ततः सिद्धं सात्त्विकानां दैवी सपद्राजसतामसानां त्वासुरी संपदिति ।। ३ ।।

**श्री० टी०**–ननु च श्रद्धा सात्त्विक्येव सत्त्वकार्यत्वेन त्वयैव भगवता उद्धवं प्रति निर्दिष्टत्वात् । यथोक्तम् ' शमो दमस्तितिक्षेज्या तपः सत्यं दया स्मृतिः । तुष्टिस्त्यागोऽस्पृहा श्रद्धा ह्रीर्दया निर्वृतिर्धृतिः ' इत्येताः सत्त्वस्य वृत्तय इति । अतः कथं तस्यास्त्रैविध्यमुच्यते ? सत्यम्, तथाऽपि रजस्तमोयुक्तपुरुषाश्रयत्वेन रजस्तमोमिश्रत्वेन सत्त्वस्य त्रैविध्यात् श्रद्धाया अपि त्रैविध्यं घटत इत्याह–**सत्त्वानुरूपेति**। सत्त्वानुरूपा सत्त्वतारतम्यानुसारिणी सर्वस्य विवेकिनोऽविवेकिनो वा लोकस्य श्रद्धा भवति । तस्मादयं पुरुषः लौकिकः श्रद्धामयः श्रद्धाविकारः त्रिविधया श्रद्धया विक्रियत इत्यर्थः । तदेवाह यो यच्छ्रद्धः, यादृशी श्रद्धा यस्य स एव सः, तादृश्या श्रद्धया युक्त एव सः । यः पूर्वं सत्त्वोत्कर्षेण सात्त्विकश्रद्धया युक्तः पुरुषः स पुनस्तादृशः स्वसंस्कारेण सात्त्विकश्रद्धया युक्त एव भवति । यस्तु रजस उत्कर्षेण राजसश्रद्धायुक्तः स पुनस्तादृश एव भवति । यस्तु तमस उत्कर्षेण तामसश्रद्धया युक्तः स पुनस्तादृश एव भवति इति लोकाचारमात्रेण प्रवर्तमानेष्वेवं सात्त्विकराजसतामसश्रद्धाव्यवस्था । शास्त्रजनितविवेकज्ञानयुक्तानां तु स्वभावविजयेन सात्त्विक्येकैव श्रद्धेति प्रकरणार्थः ।। ३ ।।

**स० टी०**–प्राग्भवीयमनोनिष्ठवासनानां विचित्रता ।। निमित्तमस्ति श्रद्धाया वैचित्र्ये चेत्युदीरितम् ।।१।। इदानीं तदुपादानमनोवैचित्र्यतोऽपि च ।। श्रद्धावैचित्र्यमाहेशो महामायानियामकः ।।२।। सत्त्वं प्रकाशशीलत्वादन्तःकरणमुच्यते ।। क्वचिदुद्रिक्तसत्त्वं तद्यथास्ति त्रिदिवौकसाम् ।। ३ ।। क्वचिद्रजोऽभिभूतं तद्यक्षादीनां मनो यथा ।। क्वचित्तमोऽभिभूतं तद्यथा प्रेतादिदेहिनाम् ।। ४ ।। मनुष्याणां तु तत्सत्त्वं व्यामिश्रं प्रायशो भवेत् ।। तच्च शास्त्रीयबोधेनोद्भूतसत्त्वं रजस्तमः ।। ५ ।। क्रियते चाभिभूयैव तच्छून्यस्य तु तच्छृणु ।। सर्वस्य प्राणिजातस्य श्रद्धा सत्त्वानुसारिणी ।। ६ ।। सत्त्वप्रधाने मनसि सात्त्विकी पूर्वपुण्यजा ।। रजःप्रधाने तस्मिन्सा राजसी पूर्वकर्मजा ।। ७ ।। तमःप्रधाने तस्मिन्सा तामसीति त्रिधा स्मृता ।। का निष्ठेति त्वया पृष्टं यत्तत्रोत्तरमुच्यते ।। ८ ।। शास्त्रीयज्ञानशून्योऽयं कर्मण्यधिकृतः पुमान् ।। श्रद्धामयोऽस्य निष्ठापि व्याख्याता श्रद्धयैव हि ।। ९ ।। या यस्य सात्त्विकी श्रद्धा राजसी वाऽथ तामसी ।। श्रद्धानुरूप एवास्ति स पुमानिति निर्णयः ।। १० ।। ३ ।।

**भा० टी०**–प्राचीनकर्मोद्बोधिता त्रिविधा वासना स्वभावशब्दिता त्रिविधायाः श्रद्धायाः निमित्तमित्युक्तम् । इदानीं तस्या उपादानानुरूपत्वेन त्रैविध्यं ज्ञापयन् तन्मयस्य पुरुषस्य त्रैविध्यं ज्ञापयति–**सत्त्वानुरूपेति** । सर्वस्य प्राणिजातस्य सत्त्वानुरूपा सात्त्विकादिसंस्कारोपेतान्तःकरणानुरूपा त्रिविधसंस्कारोपेतचित्तोपादाना श्रद्धा त्रिविधा भवतीत्यर्थः । श्रद्धामयः श्रद्धाप्रायोऽयं पुरुषो जीवः । कथं ? यो यच्छ्रद्धः यस्य जीवस्य या श्रद्धा स यच्छ्रद्धः स एव सः श्रद्धानुरूप एव सः जीवः । श्रद्धायास्त्रैविध्यात्तन्मयो जीवोऽपि त्रिविध इत्यर्थः । यथा त्वं भरतवंशोद्भवत्वात् भारतस्तथेति संबोधनाशयः ।। ३ ।।

प० टी०—तामेवाह—सत्त्वानुरूपेति । सर्वस्य प्राणिनः श्रद्धा सत्त्वानुरूपा विशिष्टसंस्कारोपस्कृतान्तःकरणानुरूपा वक्तव्या, यत आस्तिक्यबुद्धिः सत्त्वमन्तरेण नोदयते । तथा सति गुणप्राधान्यवशात्त्रिविधा भवति । एवमयं पुरुषः संसारी श्रद्धामयस्त्रिविधया श्रद्धया विविक्त इति । तदाह—यो यच्छ्रद्धः यादृशी श्रद्धा यस्यासौ यच्छ्रद्धस्तादृश्या श्रद्धया युक्तः स एव सः ॥ ३ ॥

रा० टी०—अस्तु श्रद्धा त्रिविधा । तेषां का निष्ठेतिप्रश्नस्य किमुत्तरमित्यत आह—यो यच्छ्रद्धः स एव स इति । यो यजमानः सात्त्विकश्रद्धः स सात्त्विकः । यो राजसश्रद्धः स राजसः । यस्तामसश्रद्धः स तामस इत्यर्थः । कुत एवमित्यतस्तदुपपादनायोक्तं सत्त्वेति । सर्वस्य जन्तोः श्रद्धा सत्त्वानुरूपा जीवस्वरूपानुरूपा भवति 'सत्त्वं जीवः क्वचित्प्रोक्तः' इत्यादिवचनात् । श्रद्धायाः जीवस्वरूपानुरूपत्वात्तया तत्स्वरूपं ज्ञेयमित्यर्थः । श्रद्धायाः जीवानुरूपत्वमेव कुत इत्यत उक्तं श्रद्धेति । अयं पुरुषो जीवः श्रद्धामयः । तादात्म्यार्थे मयट्—श्रद्धास्वरूप इत्यर्थः ॥ ३ ॥

**यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ॥**
**प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ ४ ॥**

त० टी०—तदेवं श्रद्धया निष्ठा ज्ञेया । श्रद्धा तु सात्त्विकादिभेदभिन्ना देवादिपूजालिङ्गेन कार्येण लक्ष्येत्याह—यजन्त इति । सात्त्विकाः सत्त्वप्रचुरा जनाः समानशीलानेव देवान् यजन्ते, तेषां देवाराधनविषया श्रद्धा सात्त्विकीति ज्ञेया । राजसा रजःप्रचुरा जना समानशीलानेव यक्षरक्षांसि यजन्ते, तेषां राजसी श्रद्धा भवति । अन्ये तामसा जनाः समानशीलांस्तामसानेव प्रेतान् भूतगणांश्च यजन्ते, तेषां तामसी श्रद्धा भवतीत्यर्थः ॥ ४ ॥

म० टी०—श्रद्धा ज्ञाता सती निष्ठां ज्ञापयिष्यति । केनोपायेन सा ज्ञायतामित्यपेक्षिते देवपूजादिकार्यलिङ्गेनानुमेयेत्याह—यजन्त इति । जनाः शास्त्रीयविवेकहीनाः ये स्वाभाविक्या श्रद्धया देवान् वसुरुद्रादीन् सात्त्विकान् यजन्ते तेऽन्ये सात्त्विका ज्ञेयाः । ये च यक्षान् कुबेरादीन् रक्षांसि च राक्षसान् निर्ऋतिप्रभृतीन् राजसान् यजन्ते तेऽन्ये राजसा ज्ञेयाः । ये च प्रेतान् विप्रादयः स्वधर्मात्प्रच्युता देहपातादूर्ध्वं वायवीयं देहमापन्नाः उल्कामुखकटपूतनादिसंज्ञाः प्रेता भवन्तीति मनूक्तान् पिशाचविशेषान् वा, भूतगणांश्च सप्तमातृकादींश्च तामसान् ये यजन्ते तेऽन्ये तामसा ज्ञेयाः । अन्य इति पदं त्रिष्वपि वैलक्षण्यद्योतनाय संबध्यते ॥४॥

शं० टी०—एवं सत्त्वरजस्तमःसंभावितश्रद्धावतां पुरुषाणां सात्त्विकी राजसी तामसी च प्रकृतिरिति सूचयित्वा तेषां प्रकृत्यनुरूपाणि कर्माण्याह कर्मणा लिङ्गेन तेषां स्वभावो ज्ञातव्य इति सूचयितुम्—यजन्त इति । सात्त्विकाः श्रोत्रिया देवसंपत्तिमन्तो देवानग्न्यादीन् वैदिकेन कर्मणा यजन्ते सात्त्विक्या श्रद्धया । तदन्ये राजसास्तामसाश्चासुरसंपत्तिमन्तो राजस्या तामस्या च श्रद्धया यक्षरक्षांसि पिशाचान् भूतगणांश्च यजन्ते ॥ ४ ॥

श्री० टी०—सात्त्विकादिभेदमेव कार्यभेदेन प्रपञ्चयति—यजन्त इति । सात्त्विका जनाः सत्त्वप्रकृतीन् देवानेव यजन्ते पूजयन्ति । राजसास्तु रजःप्रकृतीन्यक्षान् राक्षसांश्च यजन्ते । एतेभ्योऽन्ये तु विलक्षणास्तामसा जनास्तामसानेव प्रेतान् भूतगणांश्च यजन्ते । सत्त्वादिप्रकृतीनां तत्तद्देवतानां तु पूजारुचिभिस्तत्तत्पूजकानां सात्त्विकत्वादि ज्ञातव्यमित्यर्थः ॥ ४ ॥

स० टी०—श्रद्धा ज्ञाता सती निष्ठां ज्ञापयिष्यति साऽपि तु ॥ ज्ञायतां कथमित्युक्तेऽनुमेया कार्यलिङ्गतः ॥ १ ॥ शास्त्रीयज्ञानहीना ये स्वाभाविक्या तया युताः ॥ श्रद्धया सात्त्विकान्देवान्यजन्ते

रुद्रमुख्यकान् ॥ २ ॥ ते जनाः सात्त्विका ज्ञेया ये तु यक्षांश्च राक्षसान् ॥ यजन्ते राजसांस्तेऽन्ये ज्ञातव्या राजसा जनाः ॥ ३ ॥ प्रेतान्पिशाचभेदान्ये मातृकादींश्च तामसान् ॥ यजन्ते भूतसंघांस्ते ज्ञातव्यास्तामसा जनाः ॥ ४ ॥ ४ ॥

**भा० टी०**—एवं श्रद्धायास्त्रैविध्येन पुरुषाणां त्रैविध्यं निरूप्य यथोक्तानां पुरुषाणां सत्त्वादिनिष्ठा कथं ज्ञातुं शक्येत्याकाङ्क्षापनुत्तये देवादिपूजारूपकार्येण लिङ्गेन साऽनुमेयेत्याशयेनाह—**यजन्त इति** । सात्त्विकाः सात्त्विकश्रद्धामयाः सत्त्वनिष्ठाः देवान्वस्वादीन् सात्त्विकान्यजन्ते पूजयन्ति । राजसाः कुबेरनिर्ऋतिप्रमुखान् यक्षरक्षांसि राजसान्यजन्ते । अन्ये तामसा जनाः प्रेतान् । विप्रादयः स्वधर्मात्प्रच्युता देहपातादूर्ध्वं वायवीयं देहमापन्ना उल्कामुखकटपूतनादिसंज्ञाः प्रेता भवन्तीति मनूक्तान् पिशाचविशेषान् वा भूतगणांश्च सप्तमातृकादींश्च तामसान्यजन्ते । एवं पूजात्रैविध्येन जीवानां निष्ठात्रैविध्यं ज्ञातव्यमित्यर्थः ॥ ४ ॥

**प० टी०**—यजन्ते सात्त्विका देवानिति । स्पष्टम् ॥ ४ ॥

**रा० टी०**—यो यच्छ्रद्ध इत्यत्र सात्त्विकादिश्रद्धः सात्त्विकादिरित्युक्तम् । तत्र सात्त्विकश्रद्धादिः किंकर्मवानिति जिज्ञासायां तां शृण्विति प्रतिज्ञातमाह—**यजन्त इति** । सात्त्विकाः सात्त्विकश्रद्धावन्तः शास्त्रविधानमजानन्तोऽपि सात्त्विकश्रद्धामात्रान्विता जना इति यावत्, देवान् यजन्ते । राजसा राजसश्रद्धावन्तः शास्त्रविधानमजानन्त इति सर्वत्र ज्ञेयं, यक्षरक्षांसि यजन्ते । तामसास्तामसश्रद्धावन्तः प्रेतादीन् यजन्ते । यद्यपि यागविधिषु ऐन्द्रं दधीत्यादिषु इन्द्रादिदेवता एवोद्देश्यतया श्रुताः इति राजसादिरपि तत्र श्रुतदेवतोद्देशेनैव यजनं करोति । तथापि तैरिष्टम् । यक्षराक्षसाः दीनत्वाद्देवनामानो ब्रह्मेन्द्रादिसनामकाः गृह्णन्तीति स्मृत्या तत्तन्नामकयक्षादीनामेव तत्तद्यज्ञभोक्तृत्वाद्यक्षरक्षांसि यजन्त इत्याद्युक्तमिति ज्ञेयम् । अत्र देवयाजिनां विष्णुभक्त्यादिमत्वान्मोक्ष एव फलम् । राजसानां तु स्वर्गप्रतिनिधित्वेन कल्पितः सांकल्पिकः स्वर्गः । तामसानां तु शिवपरिवारभूतादित्वप्राप्तिः फलं ज्ञेयम् । 'मोक्षः सांकल्पिकः स्वर्गो भूतादित्वं फलं क्रमात्' इति स्मृतेः ॥ ४ ॥

**अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ॥**
**दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥ ५ ॥**
**कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ॥**
**मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥ ६ ॥**

**त० टी०**—ननु शास्त्रविधिमुपेक्ष्य श्रद्धया यजतां श्रद्धात्रैविध्येन सात्त्विकादित्रैविध्यमुक्तं, तथाऽपि तेषां शास्त्रोपेक्षणादेवत्वं न भवति 'यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः' इत्यादिना सर्वपुरुषार्थहीनत्वकथनात् । नाप्यसुरत्वं तेषु दैवसाधर्म्यस्य तपोयज्ञादेर्दर्शनात् । तस्मात्कस्तेषां निश्चय इति चेत्तत्राह—**अशास्त्रविहितमिति** द्वाभ्याम् । अशास्त्रविहितं शास्त्रेण वेदेन तदनुकूलेन स्मृतिपुराणादिना च यन्न विहितमत एव घोरं प्राणिपीडाकरं तपो ये जनास्तप्यन्ते, उपलक्षणमिदं यज्ञादेः । तथाऽतिघोरं यज्ञं च ये कुर्वन्ति कथंभूता दम्भाहङ्कारसंयुक्ता दम्भो धार्मिकत्वख्यापनम्, अहङ्कार आत्मनः श्रैष्ठ्याभिमानस्ताभ्यां संयुक्ताः, कामरागबलान्विताः कामो विषयाभिलाषः, रागस्तदभिनिवेशः, बलं तत्प्राप्त्यर्थं प्रयत्नाग्रहस्तैरान्विताः सन्तः शरीरस्थमुपादानतया शरीरे स्थितं भूतग्रामं पृथिव्यादिभूतसमूहं कर्षयन्तः, वृथैवोपवासादिभिः कृशं कुर्वन्तः, अचेतसो विवेकहीना अन्तःशरीरस्थं मां च मदंशभूतं जीवं चैव कर्षयन्तोऽधमगतिप्रापणेन दुःखी कुर्वन्तस्तपोयज्ञादि कुर्वन्ति । ते आसुर-

निश्चयास्तानासुरनिश्चयान् परिहारार्थं विद्धि। असुरा हि मच्छासनमुल्लङ्घ्य यथेष्टाचारिणः मदाज्ञाविपरीताचारित्वात्तेषां सुखलवसंभावनाऽपि नास्ति, प्रत्युताजस्रदुःखे नरके पतन्ति। प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचावित्युक्तत्वात् ॥ ५ ॥ ६ ॥

म० टी०—एवमनादृतशास्त्राणां सत्त्वादिनिष्ठा कार्यतो निर्णीता। तत्र केचिद्राजसतामसा अपि प्राग्भवीयपुण्यपरिपाकात्सात्त्विका भूत्वा शास्त्रीयसाधनेऽधिक्रियन्ते। ये तु दुराग्रहेण दुर्दैवपरिपाकप्राप्तदुर्जनसङ्गादिदोषेण च राजसतामसतां न मुञ्चन्ति ते शास्त्रीयमार्गाद्भ्रष्टा असन्मार्गानुसरणेनेह लोके परत्र च दुःखभागिन एवेत्याह द्वाभ्याम्—अशास्त्रविहितमिति। अशास्त्रविहितं शास्त्रेण वेदेन प्रत्यक्षेणानुमितेन वा न विहितम्—अशास्त्रेण बुद्धाद्यागमेन बोधितं वा—घोरं परस्यात्मनः पीडाकरं तपस्तप्तशिलारोहणादि तप्यन्ते कुर्वन्ति ये जनाः, दम्भो धार्मिकत्वख्यापनम्, अहंकारोऽहमेव श्रेष्ठ इति दुरभिमानः ताभ्यां सम्यग्युक्ताः, योगस्य सम्यक्त्वमनायासेन वियोगजननासामर्थ्यं, कामे काम्यमानविषये यो रागस्तन्निमित्तं बलमत्युग्रदुःखसहनसामर्थ्यं तेनान्विताः, कामो विषयेऽभिलाषः, रागः सदा तदभिनिविष्टत्वरूपोऽभिष्वङ्गः, बलमवश्यमिदं साधयिष्यामीत्याग्रहः, तैरन्विता इति वा। अत एव बलवत् दुःखदर्शनेऽप्यनिवर्तमानाः कर्शयन्तः कृशीकुर्वन्तो वृथोपवासादिना शरीरस्थं भूतग्रामं देहेन्द्रियसंघाताकारेण परिणतं पृथिव्यादिभूतसमुदायमचेतसो विवेकशून्याः मां चान्तःशरीरस्थं भोक्तृरूपेण स्थितं भोग्यस्य शरीरस्य कृशीकरणेन कृशीकुर्वन्त एव मामन्तर्यामित्वेन शरीरान्तःस्थितं बुद्धितद्वृत्तिसाक्षीभूतमीश्वरमाज्ञालङ्घनेन कर्षयन्त इति वा। तानैहिकसर्वभोगविमुखान् परत्र चाधमगतिभागिनः सर्वपुरुषार्थभ्रष्टानासुरनिश्चयान् आसुरो विपर्यासरूपो वेदार्थविरोधिनिश्चयो येषां तान् मनुष्यत्वेन प्रतीयमानानप्यसुरकार्यकारित्वादसुरान्विद्धि जानीहि परिहरणाय। निश्चयस्यासुरत्वात्तत्पूर्विकाणां सर्वासामन्तःकरणवृत्तीनामासुरत्वम्। असुरत्वजातिरहितानां च मनुष्याणां कर्मणैवासुरत्वात्तानसुरान्विद्धीति साक्षान्नोक्तमिति च द्रष्टव्यम् ॥ ५ ॥ ६ ॥

श्री० टी०—राजसानां तामसानां चासुरमेव धर्मं प्रतिपादयति—अशास्त्रेति द्वाभ्याम्। दम्भो मन्त्रतन्त्रवेषभाषादिबाह्यपरिकराटोपः, अहंकारः कुलशीलविद्याश्रमादिभिरुत्कृष्टोऽहमित्यन्तःकरणाटोपस्ताभ्यां संयुक्ताः, कामरागबलान्विताः—कामाः ऐहिकामुष्मिकभोग्यपदार्थाः, रागस्तेषामुपभोगेच्छा, बलमिच्छावेगस्तैः सम्यगन्वितास्तत एवाचेतसोऽविवेकिनो ये मूढाः शरीरस्थं स्थूलशरीर उदरे चान्यत्र विद्यमानं भूतग्रामं स्थूलसूक्ष्मरूपप्राणिसमुदायम्। यद्वा प्राणेन्द्रियग्रामं कर्षयन्तोऽन्नरसाद्यभावेन शोषयन्तो मां चैवान्तःशरीरस्थमन्तःशरीरं बुद्धिः तत्र सर्वप्रकाशकतया विद्यमानं मां चापि प्रत्यग्रूपं कर्शयन्तो मनोबुद्धीन्द्रियाणामुपवासकृतातिश्रान्त्या प्रवृत्त्युपरमे सत्यात्मचैतन्यस्य स्फुरणं न भवति। तदभाव एवास्य प्रत्यगात्मनः कृशीकरणं तत्कुर्वन्तः सन्तो ये जनाः अशास्त्रविहितम् न अशास्त्रविहितं अशास्त्रविहितं घोरं पीडाकरं तपस्तप्यन्ते उपवासव्रतादिना कायशोषणं कामरागबलानुरूपया श्रद्धया ये कुर्वन्तीत्यर्थः। तानासुरनिश्चयान् आसुराणां निश्चयो येषां तानासुरनिश्चयान् विद्धि दुष्करव्रतानासुरान् विजानीहीत्यर्थः। एतेनाभासश्रद्धावतां राजसानां तामसानां चासुर्येव संपदिति सूचितम्। तेन सात्त्विकानां दैव्येव संपदिति सिद्धम् ॥ ५ ॥ ६ ॥

श्री० टी०—राजसतामसेषु पुनर्विशेषान्तरमाह—अशास्त्रविहितमितिद्वाभ्याम्। शास्त्रविधिमजानन्तोऽपि केचित्प्राचीनपुण्यसंस्कारेणोत्तमाः सात्त्विका एव भवन्ति। केचित्तु मध्यमा राजसा भवन्ति। अधमास्तु तामसा भवन्ति। ये पुनरत्यन्तं मन्दभाग्याः गतानुगत्या पाखण्डसङ्गेन च तदाचारानुवर्तिनः सन्तः अशास्त्रविहितं घोरं भूतभयंकरं तपस्तप्यन्ते कुर्वन्ति। तत्र हेतवः—दम्भाहंकाराभ्यां संयुक्ताः। तथा कामोऽभिलाषः, रागः आसक्तिः, बलमाग्रहः। एतैरन्विताः सन्तः तानासुरनिश्चयान् विद्धीत्युत्तरेणान्वयः ॥५॥

किंच–**कर्ष(र्श)यन्त इति**। शरीरस्थं प्रारम्भकत्वेन देहे स्थितं भूतानां पृथिव्यादीनां ग्रामं समूहं कर्ष(र्श)-यन्तः वृथैवोपवासादिभिः कृशं कुर्वन्तोऽचेतसोऽविवेकिनः मां च अन्तर्यामितया अन्तःशरीरस्थं देहमध्ये स्थितं मदाज्ञालङ्घनेनैव कर्ष(र्श)यन्तः सन्त एवं ये तपश्चरन्ति तानासुरनिश्चयानासुरोऽतिक्रूरो निश्चयो येषा तान् विद्धि ॥ ६ ॥

**स० टी०**–इत्यनादृतशास्त्राणां निष्ठोक्ता त्रिविधा नृणाम् ॥ केचित्पुण्यवशात्सन्ति सात्त्विकाः शास्त्रतत्पराः ॥ १ ॥ दुराग्रहेण ये त्वत्र दुर्दैवपरिपाकतः ॥ दुष्टसङ्गादिदोषेण न मुञ्चन्त्यासुरीं मतिम् ॥ २ ॥ ते शास्त्रीयाध्वनो भ्रष्टा असन्मार्गानुसारतः ॥ इहामुत्र च दुःखैकभाज एवेति कथ्यते ॥ ३ ॥ यन्न श्रुत्या न वा स्मृत्या विहितं तप आसुरम् ॥ यद्वा शास्त्रेण बुद्धयादिप्रणीतेनैव बोधितम् ॥ ४ ॥ घोरं स्वस्य परस्यापि कुर्वन्त्यत्यन्तदुःखदम् ॥ आत्मनो धार्मिकत्वस्य ख्यापनं दम्भ ईरितः ॥ ५ ॥ श्रेष्ठो-ऽहमेवमित्येवमहंकारो दुराग्रहः ॥ ताभ्यामत्यन्तसंयुक्ता यो रागः काम्यगोचरे ॥ ६ ॥ तन्निमित्तं बलं दुःखं सोढुं सामर्थ्यमित्यपि ॥ विषयाभिलाषः कामो रागोऽभिष्वङ्ग उच्यते ॥ ७ ॥ साधयिष्याम्यवश्यं चेत्याग्रहो बलमुच्यते ॥ तैर्युता बलवद्दुःखदर्शनेऽत्यनिवर्तिनः ॥ ८ ॥ ९ ॥ पृथ्व्यादिभूतसंघं ये देहस्थमविवेकिनः ॥ कृषीकुर्वन्त आत्मानं मां चैवान्तःशरीरगम् ॥ १ ॥ अन्तर्यामितया भोक्तृ-भावेन साक्षिभावतः ॥ मदाज्ञालङ्घनेनैते मां द्विषन्तो नराधमाः ॥ २ ॥ तान्पुमर्थात्परिभ्रष्टानिहामुत्राघ-भागिनः ॥ आसुरोऽतिविपर्यासो विरुद्धत्वेन च श्रुतेः ॥३॥ निश्चयो दुर्धियां येषां तान्मनुष्यस्वरूपतः ॥ प्रतीयमानानासुर्या क्रान्तान्विद्धयासुराञ्छठान् ॥ ४ ॥ सर्वथा हेय एवासौ दुष्ट आसुरनिश्चयः ॥ श्रेयो-ऽर्थिभिर्विपश्चिद्भिर्हरेरित्येवमाशयः ॥ ५ ॥ ६ ॥

**भा० टी०**–एवं कार्यतो निर्णीतानां सत्त्वादिनिष्ठानां मध्ये देवपूजादितत्परस्य सत्त्वनिष्ठस्य दौर्लभ्यं रजस्तमोनिष्ठानां बाहुल्यं च ज्ञापयितुमाह–**अशास्त्रेति**। अशास्त्रविहितं श्रुतिस्मृत्यादिरूपेण शास्त्रेण विहितं न भवति तत् शास्त्रं न भवतीत्यशास्त्रं तेन, बुद्धाद्यागमेन बोधितमिति वा। घोरं प्राणिनामात्मन-श्च पीडाकरं तपो ये जनास्तप्यन्ते निर्वर्तयन्ति। जनान्विशिनष्टि–दम्भाहंकारसंयुक्ताः दम्भो धर्मध्वजित्वम्, अहंकारोऽहमेव सर्वोत्तम इति दुरभिमानस्ताभ्यां सम्यग्युक्ताः। कामरागबलान्विताः–कामो विषयाभिलाषः, कामस्य कारणीभूतो विषयाभिरञ्जनात्मको रागः, कामरागाभ्यां कृतं बलं विषयसंपादनोत्साहस्तेनान्विताः, कामरागबलैरन्विता इति वा ॥ ५ ॥ रजोनिष्ठान् प्राधान्येन प्रदर्श्य तमोनिष्ठान् प्राधान्येन विशिनष्टि–**कर्शयन्त इति**। शरीरस्थं भूतग्रामं करणसमुदायरूपेण परिणतं कर्शयन्तः कृशीकुर्वन्तः यतोऽचेतसोऽविवे-किनो मूढाः मां चैव तत्कर्मबुद्धिसाक्षिभूतमन्तःशरीरस्थं कर्शयतो मदनुशासनातिक्रमणं कुर्वन्तो भोक्तृरूपे-णान्तःशरीरस्थम्। भोग्यस्य शरीरस्य कर्शणेन कृशीकुर्वन्त इति तु भोग्यस्य कृशीकरणेनापि निरवयवस्य भोक्तुः वास्तवं कार्श्यं न संभवतीत्यभिप्रेत्याचार्यैः नोक्तम्। य एवंविधास्तान् आसुरो निश्चयो येषां ते आसुरनिश्चयाः तान्परिहरणार्थं विद्धि विजानीहीति करुणानिधिर्भगवानुपदिशति ॥ ६ ॥

**प० टी०**–अथाविहितं कर्म दर्शयति–**अशास्त्रविहितमिति द्वाभ्याम्**। शास्त्रेणाविहितमननुज्ञातं घोरं भयावहं श्मशाने नग्नत्वेनानुष्ठीयमानं घोरसाधनादि ये जनास्तपस्तप्यन्तेऽनुतिष्ठन्ति। दम्भो धर्मध्वजि-त्वम्, अहंकारो गर्वस्ताभ्यां संयुक्ताः। कामोऽभिलाषो, राग आसक्तिर्बलमाग्रहस्तैरन्वितास्तानासुरनिश्चया-न्विद्धीत्युत्तरेणान्वयः ॥ ५ ॥ तदुदाहरति–**कर्शयन्त इति**। शरीरस्थं शरीरान्तर्गतं भूम्यादिभूतग्रामं प्राणा-चारोपवासादिभिः कर्शयन्तः कृशं कुर्वन्तः। च परं मामन्तर्यामित्वेन स्थितं दुःखसाक्षिणं कुर्वन्तोऽत एवाचे-तसो दैवप्राप्यमित्यजानन्तस्तानासुरनिश्चयानासुरोऽतिक्रूरो निश्चयो येषां ते तथाविधान् विद्धि ॥ ६ ॥

रा० टी०—न केवलं तामसानां भूतादित्वं तमःप्राप्तिरपीत्याह—अशास्त्रेत्यादि द्वाभ्याम् । ये जनाः शास्त्रादन्येन दुरागमादिना विहितं घोरं महाकष्टरूपं तपः दम्भाहंकारसंयुक्ताः कामरागबलान्विताः इच्छासक्त्याग्रहयुक्ताः सन्तस्तप्यन्ते कुर्वन्ति ॥ ५ ॥ किंच—कर्शयन्त इति । शरीरस्थं भूतग्रामं लक्ष्म्यादिदेवतासमुदायं मां चान्तर्नियामकत्वेन शरीरस्थं कर्शयन्तो ( कृशत्वेना )ल्पगुणत्वेन पश्यन्तोऽचेतसोऽविवेकिनः । तानासुरनिश्चयानसुरसंबन्धिनिश्चयान्विद्धि जानीहि । ते दैत्यरक्षःपिशाचा इत्यर्थः । तमःप्राप्तियोग्या इति भावः ॥ ६ ॥

**आहारस्त्वपि सर्वस्य त्रिविधो भवति प्रियः ॥**
**यज्ञस्तपस्तथा दानं तेषां भेदमिमं शृणु ॥ ७ ॥**

त० टी०—एवं परिहार्यमासुरत्वं प्रदर्श्य सात्त्विकानामुपादानार्थं राजसतामसानां परिहारार्थं यज्ञतपोदानानां गुणतस्त्रैविध्यं वक्तुं तावत् सात्त्विकादियज्ञादेरन्तःकरणनिमित्तत्वादन्तःकरणस्य शुद्धेस्तु "अन्नमयं हि सोम्य ! मनः आहारशुद्धौ सत्त्वशुद्धिः" इति श्रुत्या आहारशुद्धिमूलत्वनिश्चयादाहारस्य गुणतस्त्रैविध्यं वक्तुं प्रतिजानीते—आहारस्त्वपीति । न केवलं श्रद्धैव देहिनां त्रिविधा भवति । किंतु सर्वस्य जनस्य यस्तु आहारः प्रियो भवति, सोऽपि त्रिविध एव । सर्वस्य त्रिगुणात्मकत्वेन स्वस्वप्रकृत्यनुसारात्त्रिविधेष्वेवैकतमः प्रियः, नतु चतुर्थः कश्चिदित्यर्थः । तथा यज्ञास्तथा तपो दानं च त्रिविधं भवति । तेषामाहारादीनां भेदमिमं वक्ष्यमाणं शृणु ॥ ७ ॥

म० टी०—ये सात्त्विकास्ते देवा ये तु राजसास्तामसाश्च ते विपर्यस्तत्वादसुरा इति स्थिते सात्त्विकानामादानाय राजसतामसानां हानाय चाहारयज्ञतपोदानानां त्रैविध्यमाह—आहार इति । न केवलं श्रद्धैव त्रिविधा, आहारोऽपि सर्वस्य प्रियस्त्रिविध एव भवति सर्वस्य त्रिगुणात्मकत्वेन चतुर्थ्या विधायाः असंभवात् । यथा दृष्टार्थः आहारस्त्रिविधस्तथा यज्ञतपोदानान्यदृष्टार्थान्यपि त्रिविधानि । तत्र "यज्ञं व्याख्यास्यामो द्रव्यं देवतात्यागः" इति कल्पकारैर्देवतोद्देशेन द्रव्यत्यागो यज्ञ इति निरुक्तः । स च यजतिना जुहोतिना च चोदितत्वेन यागो होमश्चेति द्विविधः—उत्तिष्ठद्धोमा वषट्कारप्रयोगान्ता याज्यापुरोनुवाक्यावन्तो यजतयः, उपविष्टहोमाः स्वाहाकारप्रयोगान्ता याज्यापुरोनुवाक्यारहिताः जुहोतय इति कल्पकारैर्व्याख्यातो यज्ञशब्देनोक्तः । तपः कायेन्द्रियशोषणं कृच्छ्रचान्द्रायणादि । दानं परस्वत्वापत्तिफलकः स्वस्वत्वत्यागः । तेषामाहारयज्ञतपोदानानां सात्त्विकराजसतामसभेदं मया व्याख्यायमानमिमं शृणु ॥ ७ ॥

शं० टी०—एवं श्रद्धाभेदेन देवादियजनभेदेन शास्त्रीयाशास्त्रीयकर्मानुष्ठानेन च सात्त्विका राजसास्तामसा ज्ञातव्या इति सूचयित्वाऽधुना त्वाहारेण यज्ञेन तपसा दानेन च ते ज्ञातव्या इति सूचयितुमाहारयज्ञतपोदानादीनां सत्त्वादिगुणभेदेन त्रैविध्यं प्रतिपादयति सात्त्विकैर्मुमुक्षुभिः । सात्त्विका एवाहारादयश्चित्तशुद्धये कर्तव्या नत्वितर इति ज्ञापयितुं च—आहारस्त्विति । स्पष्टोऽर्थः ॥ ७ ॥

श्री० टी०—आहारादिभेदादपि सात्त्विकादिभेदं दर्शयितुमाह—आहारस्त्वित्यादित्रयोदशभिः । सर्वस्यापि जनस्य य आहारोऽन्नादिः स तु यथायथं त्रिविधः प्रियो भवति । तथा यज्ञतपोदानानि च त्रिविधानि भवन्ति । तेषां च वक्ष्यमाणमिमं भेदं शृणु । एतच्च राजसतामसाहारयज्ञादिपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृद्धौ यत्नः कर्तव्य इत्येतदर्थं कथ्यते ॥ ७ ॥

स० टी०—ये सात्त्विकास्ते देवाः स्यू राजसास्तामसास्तु ये ॥ तेऽसुराः सर्वथा त्याज्या ग्राह्या देवास्तु सात्त्विकाः ॥ १ ॥ इत्याहारतपोयज्ञदानत्रैविध्यमुच्यते ॥ त्रिविधोक्ता यथा श्रद्धा तथाहारस्त्रिधाऽस्त्यपि

॥ २ ॥ सर्वस्य प्राणिनो भोक्तः प्रियो यज्ञस्तपस्तथा ॥ देवतोद्देशतो द्रव्यत्यागो याग उदाहृतः ॥ ३ ॥ तपश्चान्द्रायणाद्युक्तं शरीरेन्द्रियशोषणम् ॥ दानं स्वस्वत्वत्यागोऽन्यस्वत्वापादनमीरितम् ॥४॥ तेषां चतुर्णां भेदं त्वं प्रोच्यमानं मया शृणु ॥ ५ ॥ ६ ॥

**भा० टी०**–तत्तदाहारेषु प्रीत्यतिरेकेण सात्त्विकत्वादिकं यज्ञादीनामपि सत्त्वादिगुणभेदेन त्रिविधत्वं च बुद्ध्वा सात्त्विका आहारादयो ग्राह्याः राजस्तामसाश्च परिवर्ज्या इति बोधयितुमारभते–**आहार इत्यादिना** । आह्रियते इत्याहारो भक्ष्यादिरूपः । सर्वस्य सात्त्विकादिभेदभिन्नस्य प्राणिजातस्य भोक्तुराहारोऽपि त्रिविधस्त्रिप्रकारः प्रियः इष्टो भवति, तथा यज्ञस्त्रिविधः तथा दानम् । तेषामाहारादीनामिमं वक्ष्यमाणं भेदं शृणु ॥ ७ ॥

**प० टी०**–अथ सात्त्विकादीनामाहारादिभेदमाह–**आहार इत्यादि**तस्त्रयोदशभिः । सर्वस्यापि जनस्य य आहारोऽन्नादिः स तु यथायथं त्रिविधः प्रियो भवति । तथा यज्ञतपोदानानि च त्रिविधानि भवन्ति । तेषां वक्ष्यमाणमिमं भेदं त्रिविधं शृणु ॥ ७ ॥

**रा० टी०**–श्रद्धाभेदात्सात्त्विकादिभेदः तत्तदीयसदसत्कर्मविवेकेन सात्त्विकादिस्वरूपविवेक उक्तः । आहारादिभेदेनापि तेषां विवेकं प्रतिज्ञापूर्वमाह–**आहारस्त्वित्यादि**सप्तभिः । सर्वस्येति सात्त्विकादिजनस्येत्यर्थः । यज्ञस्तपोदानं तथा त्रिविधमित्यर्थः । तेषामिति आहारादीनामित्यर्थः ॥ ७ ॥

**आयुःसत्त्वबलारोग्यसुखप्रीतिविवर्धनाः ॥**
**रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्त्विकप्रियाः ॥ ८ ॥**
**कट्वम्ललवणात्युष्णतीक्ष्णरूक्षविदाहिनः ॥**
**आहारा राजसस्येष्टा दुःखशोकामयप्रदाः ॥ ९ ॥**
**यातयामं गतरसं पूति पर्युषितं च यत् ॥**
**उच्छिष्टमपि चामेध्यं भोजनं तामसप्रियम् ॥ १० ॥**

**त० टी०**–तत्र तावदाहारभेदानाह त्रिभिः श्लोकैः–**आयुरिति** । आयुरादिवर्धना आहाराः सात्त्विकानां प्रिया भवन्ति । तत्रायुश्चिरजीवनं, सत्त्वमन्तःकरणं गुणो वा तस्य कार्यं ज्ञानं सत्त्वशब्देनोच्यते 'सत्त्वात्संजायते ज्ञानम्' इतिवचनात् । बलं स्वधर्मानुष्ठानसामर्थ्यम्, आरोग्यं रोगराहित्यं, सुखं चित्तप्रसादः, प्रीतिरभिरुचिस्तेषां विवर्धना विवृद्धिकराः । ते च रस्या मधुररसोपेताः, स्निग्धाः स्नेहयुक्ताः, स्थिराः शरीरे रसांशेन चिरकालस्थायिनः, हृद्या हृदयङ्गमाः, एवंविधा आहारा भक्ष्यभोज्यादिरूपाः सात्त्विकप्रिया भवन्ति । तथा–**कट्विति** । अतिशब्दः कट्वादिषु सप्तस्वपि योजनीयः । तथा चातिकटुर्निम्बादिः, अत्यम्लः, अतिलवणः, अत्युष्णः, अतितीक्ष्णो मरीच्यादिः, अतिरूक्षः स्नेहवर्जितः कङ्गुकोद्रवादिः, अतिविदाहिनः कण्ठोदरदाहकराः–एवंभूता आहारा राजसस्य इष्टाः प्रिया भवन्ति । ते च दुःखं तात्कालिकतापः, शोकः पश्चाद्भाविदौर्मनस्यम्, आमयो रोगः, एतान् प्रददतीति दुःखशोकामयप्रदाः । तथा–**यातयाममिति** । यातयामं बहुकालावस्थितं, गतरसं निर्गतस्वाभाविकरसं, पूति दुर्गन्धव्याप्तं, पर्युषितं रात्र्यन्तरितत्वेन रसान्तराविष्टम्, उच्छिष्टं गुरुतत्सदृशेभ्योऽन्येषां भुक्तावशिष्टम्, अमेध्यं यज्ञेश्वरानर्हमशुचि, एवंविधं

तमोमयं भोजनं तामसस्य पुरुषस्य प्रियं भवति। पुनरपि तमसो विवृद्धिकरम् । तस्माच्छ्रेयस्कामै राजसं तामसं च हित्वा सत्त्ववृद्धये सात्त्विकाहार एव सेवनीय इति भावः ।। ८–१० ।।

म० टी०–आहारयज्ञतपोदानानां भेदः पञ्चदशभिर्व्याख्यायते। तत्राहारभेदस्त्रिभिः–आयुरिति। आयुश्चिरजीवनं, सत्त्वं चित्तधैर्यं बलवति दुःखेऽपि निर्विकारत्वापादकं, बलं शरीरसामर्थ्यं स्वोचिते कार्ये श्रमाभावप्रयोजकम्, आरोग्यं व्याध्यभावः, सुखं भोजनानन्तराह्लाद, तृप्तिः प्रीतिर्भोजनकालेऽनभिरुचिराहित्यमिच्छौत्कट्यं तेषां विवर्धनाः विशेषेण वृद्धिहेतवः, रस्याः आस्वाद्याः मधुररसप्रधानाः, स्निग्धाः सहजेनागन्तुकेन वा स्नेहेन युक्ताः, स्थिराः रसाद्यंशेन शरीरे चिरकालस्थायिनः, हृद्याः हृदयंगमाः दुर्गन्धाशुचित्वादिदृष्टादृष्टदोषशून्याः, आहाराश्चर्व्यचोष्यलेह्यपेयाः, सात्त्विकानां प्रियाः–एतैर्लिङ्गैः सात्त्विका ज्ञेयाः सात्त्विकत्वमभिलषद्भिश्चैत आदेया इत्यर्थः ।।८।। कट्विति। अतिशब्दः कट्वादिषु सप्तस्वपि योजनीयः। कटुस्तिक्तः कटुरसस्य तीक्ष्णशब्देनोक्तत्वात्। तत्रातिकटुर्निम्बादिः, अत्यम्लोऽतिलवणोऽत्युष्णश्च प्रसिद्धः। अतितीक्ष्णो मरीचादिः, अतिरूक्षः स्नेहशून्यः कङ्गुकोद्रवादिः, अतिविदाही संतापको राजिकादिः, दुःखं तात्कालिकीं पीडां, शोकं पश्चाद्भाविदौर्मनस्यम्, आमयं रोगं च धातुवैषम्यद्वारा प्रददतीति तथाभिधा आहारा राजसस्येष्टाः। एतैर्लिङ्गै राजसा ज्ञेयाः सात्त्विकैश्चैत उपेक्षणीया इत्यर्थः ।। ९ ।। यातेति। यातयाममर्धपक्वं निर्वीर्यस्य गतरसपदेनोक्तत्वादिति भाष्यम्। गतरसं विरसतां प्राप्तं शुष्कं, यातयामं पक्वं सत्प्रहरादिव्यवहितमोदनादि शैत्यं प्राप्तं, गतरसमुद्धृतसारं मथितदुग्धादीत्यन्ये, पूति दुर्गन्धं, पर्युषितं पक्वं सद्रात्र्यन्तरितम्। चेन तत्कालोन्मादकरं धत्तूरादि समुच्चीयते। यदतिप्रसिद्धं दुष्टत्वेन उच्छिष्टं भुक्तावशिष्टम्, अमेध्यमयज्ञार्हमशुचि मांसादि। अपि चेति वैद्यकशास्त्रोक्तमपथ्यं समुच्चीयते। एतादृशं यद्भोजनं भोज्यं तत्तामसस्य प्रियं सात्त्विकैरतिदूरादुपेक्षणीयमित्यर्थः। एतादृशभोजनस्य दुःखशोकामयप्रदत्वमतिप्रसिद्धमिति कण्ठतो नोक्तम्। अत्र च क्रमेण रस्यादिवर्गः सात्त्विकः, कट्वादिवर्गो राजसः, यातयामादिवर्गस्तामस इत्युक्तमाहारवर्गत्रयम्। तत्र सात्त्विकवर्गविरोधित्वमितरवर्गद्वये द्रष्टव्यम्। तथा ह्यतिकटुत्वादिकरस्यत्वविरोधि तादृशस्यानास्वाद्यत्वात्। रूक्षत्वं स्निग्धत्वविरोधि। तीक्ष्णत्वविदाहित्वे धातुपोषणविरोधित्वास्थिरत्वविरोधिनि। अत्युष्णत्वादिकं हृद्यत्वविरोधि। आमयप्रदत्वमायुःसत्त्वबलारोग्यविरोधि। दुःखशोकप्रदत्वं सुखप्रीतिविरोधि। एवं सात्त्विकवर्गविरोधित्वं राजसवर्गे स्पष्टम्। तथा तामसवर्गेऽपि गतरसत्वयातयामत्वपर्युषितत्वानि यथासंभवं रस्यत्वस्निग्धत्वस्थिरत्वविरोधीनि। पूतित्वोच्छिष्टत्वामेध्यत्वानि हृद्यत्वविरोधीनि। आयुःसत्त्वादिविरोधित्वं तु स्पष्टमेव। राजसवर्गे दृष्टविरोधमात्रं, तामसवर्गे तु दृष्टादृष्टविरोध इत्यतिशयः ।। १० ।।

शं० टी०–आयुरिति। आयुषो ज्योग्जीवनस्य सत्त्वस्यान्तःकरणस्य तत्स्फूर्तेर्बलस्य देहेन्द्रियशक्तेरारोग्यस्य रोगानुदयस्य सुखस्य संतोषस्य प्रीतेश्चक्षुष्प्रीतेर्विवर्धनाः वर्धकाः रस्याः रसोपेता मधुराः स्निग्धाः स्नेहयुक्ताः स्थिरा सारवत्तराः हृद्या मनोरमा आहाराः सात्त्विकप्रियाः ।। ८ ।। कट्विति। अतिशब्दः कट्वादिभिः प्रत्येकं संबध्यते। अतिकटुरतितिक्तो निम्बादिः कटुकस्तिक्तशब्देनोच्यते अत्यम्लोऽतिलवणोऽत्युष्णः अतितीक्ष्णो बृहन्मरीचिः रूक्षो निःस्नेहः प्रियङ्ग्वादिः, विदाही सर्षपादिः, सद्योदुःखप्रदाः पश्चाच्छोकरोगप्रदा आहारा राजसस्येष्टाः ।। ९ ।। यातेति। यातयामं मन्दपक्वं, गतरसम् अतिपक्वम्, पूति दुर्गन्धि, पर्युषितं पुरातनं, उच्छिष्टं भोजनशेषं, अमेध्यमयज्ञशेषं, भोजनं तामसप्रियम् ।। १० ।।

श्री० टी०–तत्राहारत्रैविध्यमाह–आयुरितित्रिभिः। आयुर्जीवितम्, सत्त्वमुत्साहः, बलं शक्तिः, आरोग्यं रोगराहित्यं, सुखं चित्तप्रसादः, प्रीतिरभिरुचिः, आयुरादीना विवर्धनाः विशेषेण वृद्धिकरास्ते

च रस्या रसवन्तः स्निग्धाः स्नेहयुक्ताः स्थिरा देहे सारांशेन चिरकालावस्थायिनो हृद्या दृष्टमात्रा एव हृदयङ्गमाः–एवंभूता आहारा भक्ष्यभोज्यादयः सात्त्विकप्रियाः ॥ ८ ॥ तथा–**कट्विति** । अतिशब्दः कट्वादिषु सप्तस्वपि संबध्यते । अतिकटुर्निम्बादिः, अत्यम्लोऽतिलवणोऽत्युष्णश्च प्रसिद्धः। अतितीक्ष्णो मरीचादिः, अतिरूक्षः कङ्गुकोद्रवादिः, अतिविदाही सर्षपादिः । अतिकट्वादय आहारा राजसस्येष्टाः प्रियाः। दुःखं तात्कालिकं हृदयसंतापादि, शोकः पश्चाद्भावि दौर्मनस्यं, आमयो रोगः–एतान् प्रददति प्रयच्छन्तीति तथा ॥ ९ ॥ तथा–**यातयाममिति** । यातो यामः प्रहरो यस्य पक्वस्योदनादेस्तद्यातयामं शैत्यावस्थां प्राप्तमित्यर्थः। गतरसं निष्पीडितसारं, पूति दुर्गन्धं, पर्युषितं दिनान्तरपक्वम्, उच्छिष्टम् अन्यभुक्तावशिष्टम्, अमेध्यमभक्ष्यं कलञ्जादि–एवंभूतं भोजनं भोज्यं तामसस्य प्रियम् ॥ १० ॥

**स० टी०**–तत्राहारभिदामाह त्रिभिः श्लोकैर्जगत्पतिः ॥ चिरजीवनमायुः स्यात्सत्त्वं धैर्यं धियः स्मृतम् ॥ १ ॥ बलं शरीरसामर्थ्यं श्रमाभावप्रयोजकम् ॥ आरोग्यं व्याध्यभावः स्यादाह्लादो भोजनात्सुखम् ॥ ॥ २ ॥ भोजनावसरेऽत्यन्ताभिरुचिः प्रीतिरुच्यते ॥ तेषां षण्णां विशेषेण वृद्धिहेतव आदरात् ॥ ३ ॥ आस्वाद्याः स्नेहसंपन्नाः शरीरे स्थायिनश्चिरम् ॥ हृद्याः पूत्यशुचित्वादिशून्याश्च हृदयङ्गमाः ॥ ४ ॥ आहारा लेह्यचोष्याद्याः सात्त्विकानां प्रियाः सदा ॥ एतैर्लिङ्गैर्हि विज्ञेयाः सात्त्विकाः सत्त्वमीप्सुभिः ॥ ५ ॥ ॥ ८ ॥ कट्वादयस्तु चत्वारः प्रसिद्धा निम्बकादयः ॥ योजनीयोऽतिशब्दस्तु कट्वादिष्वपि सप्तसु ॥ १ ॥ मरीच्याद्यतितीक्ष्णोऽतिरूक्षः स्नेहविवर्जितः ॥ तापकोऽतिविदाही स्यादेते दुःखादिदायिनः ॥२॥ दुःखं तात्कालिकी पीडा शोकः पश्चाद्विभावि च ॥ दौर्मनस्यं तथा रोगं धातुवैषम्यहेतुकम् ॥ ३ ॥ ददतीति तथाहारा राजसस्य प्रियाः सदा ॥ सात्त्विकै राजसा एते उपेक्ष्याः सर्वथा यतः ॥४॥ ९ ॥ अर्धपक्वं विरसतां प्राप्तमाद्यपदद्वये ॥ अर्थोऽथवा यत्पक्वं सत्प्रहराद्यन्तरालतः ॥ १ ॥ शैत्यं प्राप्तं यातयाममुद्धृतसारमीरितम् ॥ पूति दुर्गन्धमित्युक्तं पर्युषितं निशान्तरम् ॥२॥ भुक्त्वाऽवशिष्टमुच्छिष्टममेध्यमक्रतूचितम् ॥ भोज्यमेतादृशं यत्तत्तामसस्य प्रियं सदा ॥ ३ ॥ उपेक्ष्यं सात्त्विकैर्दूराद्दुःखशोकामयप्रदम् ॥ सात्त्विकान्नविरोधित्वमुभयत्र समं यतः ॥ ४ ॥ राजसे दृष्टदोषोऽस्ति दृष्टादृष्टस्तु तामसे ॥ ५ ॥ १० ॥

**भा० टी०**–तत्र सात्त्विकप्रीतिविषयान् आहारानादावुदाहरति–**आयुरिति** । आयुश्चिरजीवनं, सत्त्वमन्तःकरणधैर्यवीर्योत्साहात्मकं, बलं कार्यकरणे शरीरसामर्थ्यम्, आरोग्यं नीरोगता, सुखमन्तराह्लादः दर्शनमात्रेण संतोषजन्यः, प्रीतिः परेषामभिसंपन्नानां दर्शनात्परमो हर्षोऽभिरुचिर्वा, यद्वा प्रीतिस्तृप्तिजन्या प्रसन्नता । आयुःसत्त्वबलारोग्यसुखप्रीतीनां विवर्धना विशेषेण वृद्धिकराः, रस्या रसोपेताः शर्करादयः, स्निग्धाः स्नेहवन्तो दुग्धादयः, स्थिराः देहे चिरकालस्थायिनः चिरतरशरीरोपकारहेतवः, हृद्याः दृष्टादृष्टदोषशून्याः हृदयप्रियाः–एवंविधा आहारा सात्त्विकस्य प्रिया इष्टाः। एतादृशाहारप्रीतिमन्तः सात्त्विका ज्ञेयाः। सात्त्विकत्वमभिलषद्भिश्चैते आदेया इत्यर्थः ॥८॥ राजसप्रियाहारानुदाहरति–**कट्विति** । अतिशब्दः कट्वादिषु सर्वेषु संबन्धनीयः। अतिकटुर्निम्बादिः, अत्यम्लं जम्बीरादि, अतिलवणं बहुक्षिप्तसैन्धवादि, अत्युष्णं मुखादिदाहकं, अतितीक्ष्णं मरीचादि, अतिरूक्षः स्नेहलेशेनापि रहितः कङ्गुकोद्रवादिः, अतिविदाही संतापकः सर्षपादिः, एवंविधा अतिकट्वादयो दुःखं तात्कालिकी पीडा, पश्चादुत्पन्नरोगे तज्जन्यं दौर्मनस्यं शोकः, आमयो रोगः, तान् प्रयच्छन्तीनि दुःखशोकामयप्रदा आहारा राजसप्रिया राजसस्येष्टा एतादृशाहारप्रीतिमन्तो राजसाः ज्ञातव्याः श्रेयोऽर्थिभिश्चैवंविधा आहाराः परिहरणीया इत्यर्थः ॥ ९ ॥ तामसप्रीतिविषयं भोजनमुदाहरति–**यातेति** । यातयामं मन्दपक्वं निर्वीर्यस्य गतरसपदेनोक्तत्वात् । यातो यामः प्रहरो यस्य पक्वस्योदनादेस्तद्यातयाममिति तु पाकानन्तरं किंचित्कालातिक्रान्त्या निर्वीर्यतां प्राप्तमत्र यातयाममुच्यते न तु याममात्रातिक्रान्त्या अत एवायातयामत्वं वेदानामपि विशे-

षणं संगच्छते इत्यभिप्रेत्याचार्यैर्न व्याख्यातम् । गतरसं रसविमुक्तं निर्वीर्यमोदनादि, पूति दुर्गन्धि लशुनपलाण्ड्वादि, पर्युषितं स्नेहानक्तं पक्वं सत् रात्र्यन्तरितं च—"अन्नं पर्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम्" इति याज्ञवल्क्यस्मृत्या स्नेहाक्तस्य चिरसंस्थितस्याप्यन्नस्य भक्ष्यत्वप्रतिपादनात् । उच्छिष्टं स्वपरभुक्तावशिष्टमपि चेति वैद्यकशास्त्रोक्तमपथ्यं समुच्चीयते । अमेध्यमपवित्रमयज्ञार्हं कलञ्जकलिङ्गादि—ईदृशं भोजनं तामसस्य प्रियमिष्टम् । एवंविधभोजनप्रीतिमन्तस्तामसा ज्ञेयाः श्रेयोर्थिभिश्च तामसं भोजनं हेयमित्यर्थः । तामसभोजनकृतदोषास्तु प्रसिद्धत्वात् असंख्यत्वाच्च नोक्ताः ॥ १० ॥

प० टी०—तत्र राजसतामसाहारपरित्यागेन सात्त्विकाहारयज्ञादिसेवया सत्त्ववृत्तौ यत्नः कर्तव्य इत्येतदर्थं निरूप्यते । तत्राहारत्रैविध्यमाह—**आयुरिति** त्रिभिः । आयुर्जीवितम्, सत्त्वमुत्साहः, बलं शक्तिः, आरोग्यं रोगराहित्यम्, सुखं चित्तप्रसादः, प्रीतिरभिरुचिः, आयुरादीनां विवर्धना वृद्धिकरास्ते च रस्याः सुरसाः स्निग्धाः स्नेहयुक्ता न रूक्षा इत्यर्थः । देहे रसांशेन चिरकालावस्थायिनो हृद्या दृष्टमात्रा एव हृदयंगमाः—एवंभूता आहारा भक्ष्यभोज्यादयः सात्त्विकस्य प्रियाः ॥८॥ **कट्वम्लेति** । तत्रातिशब्दः कट्वादिषु सप्तसु संबध्यते । अतिकटुर्निम्बादिः, अत्यम्लोऽम्लवेतसादिः, अतिलवणोऽत्युष्णश्च प्रसिद्धः, अतितीक्ष्णो मरीचादिः, अतिरूक्षः कङ्गुकोद्रवादिः, अतिविदाही सर्षपादिरेवमेत आहारा राजसप्रियाः ॥ ९ ॥ **यातयाममिति** । यातो यामो प्रहरो यस्य पक्वौदनादि शैत्यावस्थां प्राप्तम्, गतरसं निष्पीडितरसं, पूति दुर्गन्धि, पर्युषितं पूर्वेद्युः पक्वम्, उच्छिष्टमन्यभुक्तावशेषम्, अमेध्यमभक्ष्यं कलञ्जादि—एवंभूतं भोजनं तामसस्य प्रियम् ॥ १० ॥

रा० टी०—आहारभेदं तावत्त्रिभिराह—**आयुरित्यादिना** । आयुर्जीवनं, सत्त्वं साधुत्वं, सात्त्विकवस्तुसेवनेन चित्तशुद्धेः, बलं शक्तिः, आरोग्यं रोगराहित्यं, सुखं सकृदुपभोगेऽपि बहुकालीनं, प्रीतिरूपभोगकालीनं सुखम् । एतेषामायुरादीनां विवर्धनाः विशेषेण वृद्धिहेतवः, रस्याः रसयुक्ताः, स्निग्धाः स्नेहवन्तः, स्थिराः सेवनेन बहुकालगुणप्रदाः आज्यादयः । अनुभवे सति पश्चादपि भूयादितिमनोहारिणो हृद्याः । एते आहाराः—कर्मणि घञ्—भक्ष्यपदार्थाः, सात्त्विकानां सत्त्वगुणयुक्तानां प्रियाः । आयुरादिविवर्धना इतिविशेषणोक्त्या तद्विपरीतत्वे रस्यादीनामपि राजसत्वमेवेति ज्ञेयम् ॥ ८ ॥ **कट्विति** । कटु मरीचिकादिः, आम्लो जम्बीररसादिः, लवणं प्रसिद्धम् । अत्युष्णम्—अतिशब्दः सर्वत्र संबध्यते । उष्णं तीक्ष्णं सर्षपादि, रूक्षं स्वतो नीरसं, विदाहि विशेषेण दग्धं संतापकरं वा । एते आहाराः राजसस्येष्टाः प्रियाः । दुःखं, शोको दौर्मनस्यम्, आमयो रोगः एतत्त्रयप्रदाः । दुःखादिदत्त्वविशेषणोक्त्या तदभावे कट्वादीनां सात्त्विकत्वमेवेति ज्ञेयम् ॥९॥ **यातयाममिति** । यातयामं यामान्तरितपाकम् । पूर्वं स्वादु पश्चादन्यथाजातं रसं गतरसं, पूति दुर्गन्धं, पर्युषितं दिनान्तरितपक्वम्, अन्यभुक्तावशिष्टमुच्छिष्टम्, अमेध्यमपवित्रं भोजनम् । कर्मणि ल्युट् । भोज्यं यातयामादिभोज्यं वस्तु यत्तत्तामसप्रियम्—तादृशं वस्तु भोजनविषयतया तामसप्रियमित्यर्थः । स्वादुत्वादेः पुरुषभेदेन व्यवस्थितत्वेऽपि शुद्धभागवतस्वभावापेक्षया स्वादुत्वादिकं ध्येयम् ॥ १० ॥

**अफलाकाङ्क्षिभिर्यज्ञो विधिदृष्टो य इज्यते ॥**
**यष्टव्यमेवेति मनः समाधाय स सात्त्विकः ॥ ११ ॥**

त० टी०—इदानीमुक्तत्रिविधाहारसेविनां स्वभावानुगुणं सात्त्विकादिभेदेन यज्ञत्रैविध्यमाह त्रिभिः—**अफलाकाङ्क्षिभिरिति** । फलाकाङ्क्षारहितैः पुरुषैर्विधिदृष्टः वेदविहितमन्त्रद्रव्यसंस्कारादिभियुक्तः यष्टव्यमेवेति पुरुषोत्तमाराधनप्रयोजनत्वेनावश्यमेव यष्टव्यमिति मनः समाधाय दृढीकृत्य यो यज्ञ इज्यते स सात्त्विकः ॥ ११ ॥

**म० टी०**–इदानीं क्रमप्राप्तं त्रिविधं यज्ञमाह–**अफलेति** त्रिभिः । अग्निहोत्रदर्शपूर्णमासचातुर्मास्यपशुबन्धज्योतिष्टोमादिर्यज्ञो द्विविधः–काम्यो नित्यश्च । फलसंयोगेन चोदितः सर्वाङ्गोपसंहारेणैव मुख्यकल्पेनानुष्ठेयः काम्यः । फलसंयोगं विना जीवनादिनिमित्तसंयोगेन चोदितः सर्वाङ्गोपसंहारासंभवे प्रतिनिध्याद्युपादानेनामुख्यकल्पेनाप्यनुष्ठेयो नित्यः । तत्र सर्वाङ्गोपसंहारासंभवेऽपि प्रितिनिधिमुपादायावश्यं यष्टव्यमेव प्रत्यवायपरिहारायावश्यकजीवनादिनिमित्तेन चोदितत्वादिति मनः समाधाय निश्चित्य अफलाकाङ्क्षिभिरन्तःकरणशुद्ध्यर्थितया काम्यप्रयोगविमुखैर्विधिदृष्टो यथाशास्त्रं निश्चितो यो यज्ञ इज्यतेऽनुष्ठीयते स यथाशास्त्रमन्तःकरणशुद्ध्यर्थमनुष्ठीयमानो नित्यप्रयोगः सात्त्विको ज्ञेयः ॥ ११ ॥

**शं० टी०**–अफलेति । यष्टव्यमेवानेन ममेश्वरप्रीतिलक्षणः पुरुषार्थः सिध्यतीति मनः समाधाय मनसो नैश्चल्यमापाद्य श्रद्धाभक्तिभ्यामफलाकाङ्क्षिभिर्निष्कामैः श्रोत्रियैस्तन्त्रमन्त्रार्थवेदिभिर्विधिदृष्टो विध्युक्तनियमोपेतो यो यज्ञ इज्यते स सात्त्विको यज्ञ इत्यर्थः ॥ ११ ॥

**श्री० टी०**–यज्ञोऽपि त्रिविधः, तत्र सात्त्विकं यज्ञमाह–**अफलाकाङ्क्षिभिरिति**त्रिभिः । फलाकाङ्क्षारहितैः पुरुषैर्विधिना दृष्टः आवश्यकतया विहितो यो यज्ञ इज्यते अनुष्ठीयते स सात्त्विको यज्ञः । कथमिज्यते यष्टव्यमेवेति यज्ञानुष्ठानमेव कार्यं नान्यत्फलं साधनीयमित्येवं मनः समाधाय एकाग्रं कृत्वेत्यर्थः ॥११॥

**स० टी०**–त्रिविधं यज्ञमाहेशः क्रमप्राप्तमिहाधुना ॥ अनुष्ठेयो द्विधा यज्ञः काम्यो नित्यश्च तत्र तु ॥१॥ नित्यो यष्टव्यमेवेति प्रत्यवायजिहासया ॥ मनो निश्चित्य शुद्ध्यर्थतया काम्यपराङ्मुखैः ॥ २ ॥ यज्ञोऽनुष्ठीयते प्राज्ञैर्निश्चितो यो यथाविधि ॥ विज्ञेयः सात्त्विको यज्ञोऽनुष्ठितो धीविशुद्धये ॥ ३ ॥ ११ ॥

**भा० टी०**–एवमाहारत्रैविध्यं विभज्य क्रमप्राप्तं यज्ञत्रैविध्यं विभजन्नादावुपादेयं सात्त्विकं यज्ञमाह–**अफलेति** । अफलाकाङ्क्षिभिः फलाकाङ्क्षावर्जितैरग्निष्टोमादिः विधिदृष्टः शास्त्रचोदनादृष्टो यो यज्ञो यष्टव्यमेव यज्ञस्वरूपनिवर्तनमेव कर्तव्यमिति बुद्ध्या मनः समाधाय नानेन पुरुषार्थो मम कर्तव्य इति निश्चित्येज्यते निर्वर्त्यते स सात्त्विको यज्ञ उच्यते । स एव श्रेयोर्थिभिरुपादेय इत्यर्थः ॥ ११ ॥

**प० टी०**–अथ यज्ञोऽपि त्रिविधस्तत्र सोपाधिकं यज्ञमाह–**अफलाकाङ्क्षिभिरिति** त्रिभिः । 'कुर्वन्नेवेह कर्माणि' इत्यादिविधिना यष्टव्यमेवेति इष्टो यज्ञः फलाकाङ्क्षारहितैः पुरुषैर्मनः समाधाय शुद्धं कृत्वा य इज्यतेऽनुष्ठीयते स सात्त्विकः ॥ ११ ॥

**रा० टी०**–यज्ञभेदेन सात्त्विकादिभेदमाह–**अफलेति** । फलाकाङ्क्षारहितैर्यो यज्ञो विधिदृष्टो विधिज्ञानपूर्वकः यष्टव्यमेवेति मनः समाधाय इज्यते अनुष्ठीयते स सात्त्विक इत्यर्थः ॥ ११ ॥

## अभिसंधाय तु फलं दम्भार्थमपि चैव यत् ॥
## इज्यते भरतश्रेष्ठ ! तं यज्ञं विद्धि राजसम् ॥ १२ ॥

**त० टी०**–राजसयज्ञमाह–**अभिसंधायेति** । फलमभिसंधाय इदं मम स्यादित्युद्दिश्य तु यदिज्यते यजनं क्रियते, दम्भार्थं धार्मिकत्वख्यापनार्थमपीत्यपिशब्दाद्यशोऽर्थः, यस्तं यज्ञं राजसं विद्धि॥१२॥

**म० टी०**–**अभिसंधायेति** । फलं काम्यं स्वर्गादि अभिसंधाय उद्दिश्य न त्वन्तःकरणशुद्धिम् । तुर्नित्यप्रयोगवैलक्षण्यसूचनार्थः । दम्भो लोके धार्मिकत्वख्यापनं तदर्थमपि चैवेति विकल्पसमुच्चयाभ्यां त्रैविध्यसूचनार्थम् । पारलौकिकं फलमभिसंधायैवादम्भार्थत्वेऽपि पारलौकिकफलानभिसंधानेऽपि दम्भार्थमेवेति विकल्पेन द्वौ पक्षौ । पारलौकिकफलार्थमप्यैहलौकिकदम्भार्थमपीति समुच्चयेनैकः पक्षः । एवं दृष्टादृष्टफलाभिसंधिनान्तःकरणशुद्धिमनुद्दिश्य यदिज्यते यथाशास्त्रं यो यज्ञोऽनुष्ठीयते तं यज्ञं राजसं विद्धि हानाय । हे भरतश्रेष्ठेति योग्यत्वसूचनम् ॥ १२ ॥

शं० टी०–अभिसंधायेति । स्वर्गादिफलार्थं वा दम्भार्थं वा क्रियमाणो यज्ञो राजस इत्यर्थः ॥ १२ ॥

श्री० टी०–राजसं यज्ञमाह–अभिसंधायेति । फलमभिसंधाय उद्दिश्य तु यदिज्यते यज्ञः क्रियते दम्भार्थं च महत्त्वख्यापनार्थं तं यज्ञं राजसं विद्धि ॥ १२ ॥

स० टी०–स्वर्गादिफलमुद्दिश्य लोके दम्भार्थमेव वा ॥ चित्तशुद्धिमनुद्दिश्य दृष्टादृष्टफलेप्सुना ॥ १ ॥ यश्चानुष्ठीयते शास्त्रात्तं यज्ञं विद्धि राजसम् ॥ हानाय भरतश्रेष्ठ योग्योऽसि त्वं तु सात्त्विकम् ॥ २ ॥ काम्यो मुमुक्षुभिर्हेयः सर्वथेत्याशयो हरेः ॥ ३ ॥ १२ ॥

भा० टी०–राजसं यज्ञं ज्ञापयति–अभीति । अभिसंधाय तु फलं स्वर्गादिफलमुद्दिश्य दम्भार्थमपि चैव इह धार्मिकत्वख्यापनार्थं च यत् इज्यते यद्यजनं क्रियते, तं यज्ञं राजसं रजसा निर्वृत्तं परिहरणार्थं विद्धि जानीहि । भरतश्रेष्ठेति संबोधयन् राजसयज्ञे तव योग्यता नास्तीति सूचयति ॥ १२ ॥

प० टी०–राजसं यज्ञमाह–अभिसंधायेति । फलमभिसंधायोद्दिश्य दम्भार्थं महत्त्वख्यापनार्थं य इज्यते तं राजसं यज्ञं विद्धि ॥ १२ ॥

रा० टी०–अभीति । फलमभिसंधाय मे भूयादिति कामयमान एव अपि दम्भार्थमेव आत्ममहत्त्व-प्रदर्शनार्थमेव यदिज्यते तं यज्ञं राजसं विद्धि ॥ १२ ॥

## विधिहीनमसृष्टान्नं मन्त्रहीनमदक्षिणम् ॥
## श्रद्धाविरहितं यज्ञं तामसं परिचक्षते ॥ १३ ॥

त० टी०–तामसं यज्ञमाह–विधिहीनमिति । शास्त्रोक्तद्रव्यसंस्कारहीनमसृष्टान्नं पात्रेभ्यो न प्रतिपादितमन्नं यस्मिन् साङ्गमात्र?(स्तं साङ्गमन्त्र) हीनमदक्षिणं यथोक्तदक्षिणाहीनं श्रद्धाविरहितं यज्ञं तामसं परिचक्षते कथयन्ति ॥ १३ ॥

म०टी०–विधीति । यथाशास्त्रबोधितविपरीतम्, अन्नदानहीनं स्वरतो वर्णतश्च मन्त्रहीनं, यथोक्तदक्षिणा-हीनम्, ऋत्विग्द्वेषादिना श्रद्धारहितं तामसं यज्ञं परिचक्षते शिष्टाः । विधिहीनत्वाद्येकैकविशेषणः पञ्चविधः सर्वविशेषणसमुच्चयेन चैकविध इति षट् । द्वित्रिचतुर्विशेषणसमुच्चयेन च बहवो भेदास्तामसयज्ञस्य ज्ञेयाः । राजसे यज्ञेऽन्तःकरणशुद्ध्यभावेऽपि फलोत्पादकमपूर्वमस्ति यथाशास्त्रमनुष्ठानात् । तामसे यथाशास्त्रानुष्ठानान्न किमप्यपूर्वमस्तीत्यतिशयः ॥ १३ ॥

शं० टी०–विधिहीनमिति । स्पष्टोऽर्थः ॥ १३ ॥

श्री० टी०–तामसं यज्ञमाह–विधिहीनमिति । विधिहीनं शास्त्रोक्तविधिशून्यम्, असृष्टान्नं ब्राह्मणा-दिभ्यो न सृष्टं न निष्पादितमन्नं यस्मिँस्तम्, मन्त्रैर्हीनं, यथोक्तदक्षिणारहितं च श्रद्धाशून्यं यज्ञं तामसं परिचक्षते कथयन्ति शिष्टाः ॥ १३ ॥

स० टी०–विधिहीनं यथाशास्त्रावबोधितविपर्ययम् ॥ अन्नदानविहीनं च स्वरतो वर्णतस्तथा ॥ १ ॥ मन्त्रहीनं यथाशास्त्रदक्षिणाहीनमध्वरम् ॥ आस्तिक्यबुद्धिशून्यं तं तामसं कथयन्ति वै ॥ २ ॥ अयं पञ्च-विधो यज्ञस्त्याज्यः श्रेयोऽर्थिभिः सदा ॥ यथाशास्त्रमनुष्ठानाद्राजसेऽस्ति फलं मनाक् ॥ ३ ॥ तामसे त्वयथाशास्त्रानुष्ठानान्न फलं मनाक् ॥ ४ ॥ १३ ॥

भा० टी०–एवं फलाभिसंधिपूर्वकमनुष्ठीयमानत्वात् चित्तशुद्ध्यजनकत्वेऽपि यथाशास्त्रमनुष्ठीयमान-त्वात् स्वर्गादिफलोत्पादकं लोके धार्मिकत्वख्यातिकरं च राजसयज्ञमुक्त्वा, दृष्टादृष्टफलशून्यमयथाशास्त्रमनु-ष्ठीयमानं सर्वथा हेयं तामसं यज्ञमाह–विधीति । विधिहीनं यथाचोदितविपरीतं शास्त्रोक्तविधितो विपर्यये-

णानुष्ठीयमानम्, असृष्टान्नं ब्राह्मणेभ्यो न सृष्टं न निष्पादितमन्नं यस्मिंस्तं, मन्त्रहीनं स्वरतो वर्णतश्च मन्त्रैर्वियुक्तमदक्षिणं यथोक्तदक्षिणावर्जितं, श्रद्धया भक्त्याऽऽस्तिक्यलक्षणया विरहितं यज्ञं तामसं परिचक्षते शिष्टाः कथयन्ति ॥ १३ ॥

प० टी०–तामसमाह–विधिहीनमिति । विधिहीनं शास्त्रोक्तविधिशून्यम्, न सृष्टं निष्पादितं ब्राह्मणेभ्योऽन्नं यस्मिन् । मन्त्रैः स्वशाखोक्तैर्हीनम् । यथावद्दक्षिणारहितं श्रद्धया चैवंविधं तामसं परिचक्षते ॥ १३ ॥

रा० टी०–विधिहीनमिति । असृष्टान्नम् अन्नदानहीनम् । शिष्टं व्यक्तम् ॥ १३ ॥

**देवद्विजगुरुप्राज्ञपूजनं शौचमार्जवम् ॥**
**ब्रह्मचर्यमहिंसा च शारीरं तप उच्यते ॥ १४ ॥**

त० टी०–अथ तपसो गुणतस्त्रैविध्यं वक्तुं तस्य शरीरवाङ्मनोभिः साध्यत्वाच्छरीरादिभेदेन तावत्त्रैविध्यमाह त्रिभिः–देवद्विजेति । दीव्यति विश्वसर्गादिना क्रीडति, ब्रह्मरुद्रेन्द्रादीन्विजिगीषते वा, स्वभासा सर्वं [ जगत् ] प्रकाशयति देति देवो भगवानाञ्छ्रीपुरुषोत्तमः । गुरुस्तत्त्वोपदेशेनाज्ञाननाशकः । प्राज्ञो गुरुव्यतिरिक्तोऽन्योऽपि तत्त्वज्ञस्तेषां पूजनं शौचं मृज्जलाभ्यां स्नानेन शरीरशोधनम्, आर्जवं शरीरवाङ्मनसामकौटिल्यं, ब्रह्मचर्यमष्टविधमैथुनत्यागः । तथाऽऽहुः ' स्मरणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिर्वृत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमनुष्ठेयं मुमुक्षुभिः ' अहिंसा परपीडावर्जनं, चकारादस्तेयादिसमुच्चयः । एतच्छारीरं तप उच्यते ॥ १४ ॥

म० टी०–क्रमप्राप्तस्य तपसः सात्त्विकादिभेदं कथयितुं शारीरवाचिकमानसभेदेन तस्य त्रैविध्यमाह–देवेति त्रिभिः । देवा ब्रह्मविष्णुशिवसूर्याग्निदुर्गादयः, द्विजा: द्विजातयो ब्राह्मणाः, गुरवः पितृमात्राचार्यादयः, प्राज्ञाः पण्डिता विदितवेदतदुपकरणार्थाः–तेषां पूजनं प्रणामशुश्रूषादि यथाशास्त्रं, शौचं मृज्जलाभ्यां शरीरशोधनम् । आर्जवमकौटिल्यं भावसंशुद्धिशब्देन मानसे तपसि वक्ष्यति । शारीरं त्वार्जवं विहितप्रतिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तिशालित्वं, ब्रह्मचर्यं निषिद्धमैथुननिवृत्तिः, अहिंसा अशास्त्रीयप्राणिपीडनाभावः, चकारादस्तेयापरिग्रहावपि । शारीरं शरीरप्रधानैः कर्त्रादिभिः साध्यं न तु केवलेन शरीरेण–पञ्चैते तस्य हेतव इति हि वक्ष्यति । इत्थं शारीरं तप उच्यते ॥ १४ ॥

शं० टी०–शारीरादिभेदेन तपसस्त्रैविध्यमाह–देवेति त्रिभिः । देवा अग्न्यादयः द्विजाः श्रोत्रिया गुरवः पित्राचार्योपाध्यायाद्याः, प्राज्ञाः ब्रह्मविदः, प्राज्ञा इति द्विजातिभ्यः पृथग्ग्रहणं–प्राज्ञत्वमीश्वरप्रसादातिशयेन शतकोटिजन्मार्जितपुण्यविशेषातिशयलब्धेन जात्यन्तरीयाणामपि संभवति, धर्मव्याधादिषु तद्दर्शनात्–ततो जात्यन्तरीयाणामपि तेषां भक्त्या समाराध्यत्वबोधनार्थम् । तेषां पूजनं प्रणामशुश्रूषादिभिराराधनं, शौचं बाह्याभ्यन्तरशुद्धिः, आर्जवं कर्तव्ये कर्मणि साधुषु च सर्वत्र मनोवाक्कायकर्मणामेकरूपता, ब्रह्मचर्यमनिषिद्धकालरतिः, अहिंसा प्राण्यपीडनं–चशब्दः समुच्चयार्थः—तदेतत्सर्वं शरीरनिर्वर्त्यत्वाच्छारीरं तप उच्यते ॥ १४ ॥

श्री० टी०–तपसः सात्त्विकादिभेदं दर्शयितुं प्रथमं तावच्छरीरादिभेदेन तस्य त्रैविध्यमाह–देवद्विजेतित्रिभिः । प्राज्ञा गुरुव्यतिरिक्ताः अन्येऽपि तत्त्वविदः । देवब्राह्मणादिपूजनं शौचादिकं शारीरं शरीरनिर्वर्त्यं तप उच्यते ॥ १४ ॥

स० टी०—क्रमप्राप्तस्य तपसस्त्रैविध्यं प्राह मापतिः ॥ देवा ब्रह्महरीशाद्या द्विजाश्च ब्राह्मणा वराः ॥ १ ॥ आचार्यमुख्या गुरवः प्राज्ञा वेदविदो बुधाः ॥ तेषां प्रणामशुश्रूषाद्यागमोक्तं हि पूजनम् ॥ २ ॥ शरीरशोधनं शौचं मृज्जलाभ्यां तथाऽऽर्जवम् ॥ यथाशास्त्रं प्रवृत्त्यादौ वक्रत्वाभाव उच्यते ॥ ३ ॥ निषिद्धमैथुनाभावो ब्रह्मचर्यमहिंसनम् ॥ प्राणिनां पीडनाभावः शारीरं तप उच्यते ॥ ४ ॥ शरीरमुख्यैः कर्त्राद्यैः साध्यं तत्पञ्चहेतुभिः ॥ न केवलं शरीरेण कृतं शारीरमुच्यते ॥ ५ ॥ यतो वक्ष्यति भगवान् 'पञ्चैते तस्य हेतवः' ॥ ६ ॥ १४ ॥

भा० टी०—एवं हानादानार्थं यज्ञत्रैविध्यं विभज्य तपसः सात्त्विकादिभावं निरूपयितुं सर्वस्य तस्य त्रिविधं स्वरूपं प्रथममाह—देवेति त्रिभिः । देवाः ब्रह्मविष्णुशिवादयः, द्विजाः पूज्यत्वात् द्विजोत्तमाः, गुरवः पित्राचार्यादयः, प्राज्ञाः पण्डिताः विदितवेद्याः—तेषां प्रणामशुश्रूषादिना पूजनं, शौचं मृज्जलाभ्यां शरीरशोधनं, आर्जवम् ऋजुत्वं विहितनिषिद्धयोरेकरूपप्रवृत्तिनिवृत्तित्वं, ब्रह्मचर्यं प्रतिषिद्धमैथुनासमाचरणं, अहिंसा प्राणिनामपीडनम् । चकारोऽस्तेयादिसमुच्चयार्थः । शरीरनिर्वर्त्यं शारीरं शरीरप्रधानैः सर्वैरेव कर्त्रादिभिः साध्यं शारीरं तप उच्यते। 'अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् । विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम्॥ शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः। न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः॥' इति वक्ष्यमाणत्वात् १४

प० टी०—अथ कायवाङ्मनोविभागेन तपस्त्रैविध्यमाह—देवद्विजेति । प्राज्ञा गुरुव्यतिरिक्ता अन्येऽपि तत्त्वविदः । देवब्राह्मणादिपूजनशौचादिकं च शारीरं शरीरनिर्वर्त्यं तप उच्यते ॥ १४ ॥

रा० टी०—प्राक्प्रतिज्ञातं तपोभेदेन सात्त्विकादिभेदं दर्शयितुं शारीरादिभेदेन तत्त्रैविध्यं तावदाह—देवेति । देवादिपूजनं यथायोग्यं ध्येयम् । शौचं बाह्याभ्यन्तररूपम् । ब्रह्मचर्यमूर्ध्वरेतस्त्वम् । शारीरं शरीरसंबन्धि ॥ १४ ॥

**अनुद्वेगकरं वाक्यं सत्यं प्रियं हितं च यत् ॥**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ॥ १५ ॥**

त० टी०—वाङ्मयं तप आह—अनुद्वेगेति । परेषामुद्वेगं क्षोभं न करोतीत्यनुद्वेगकरं, सत्यं यथानुभूतार्थकथनं, प्रियं श्रोतुः प्रीतिकरं, हितं च परिणामे सुखावहं, यद्वाक्यं स्वाध्यायाभ्यसनं चैव वेदवेदान्ताध्ययनाभ्यासश्च वाङ्मयं वाग्विकारं तप उच्यते विवेकिभिः ॥ १५ ॥

म० टी०—अनुद्वेगेति अनुद्वेगकरं न कस्यचिद्दुःखकरं, सत्यं प्रमाणमूलमबाधितार्थं, प्रियं श्रोतुस्तत्कालश्रुतिसुखं, हितं परिणामे सुखकरम् । चकारो विशेषणानां समुच्चयार्थः । अनुद्वेगकरत्वादिविशेषणचतुष्टयेन विशिष्टं, न त्वेकेनापि विशेषणेन न्यूनं, यद्वाक्यं यथा—शान्तो भव वत्स, स्वाध्यायं योगं चानुतिष्ठ, तथा ते श्रेयो भविष्यतीत्यादि । तद्वाङ्मयं वाचिकं तपः शारीरवत्, स्वाध्यायाभ्यसनं च यथाविधि वेदाभ्यासश्च वाङ्मयं तप उच्यते । एवकारः प्राग्विशेषणसमुच्चयावधारणे व्याख्यातव्यः ॥ १५ ॥

शं० टी०—अनुद्वेगेति । अनुद्वेगकरम् अपरुषं, सत्यं यथार्थभाषणं, प्रियं मनःश्रवणानन्दकरं, हितं पुरुषार्थकारिवाक्यम् । अनुद्वेगकरं च, सत्यं, हितं, प्रियं चेति वाक्यचतुर्विधविशेषणसमुच्चयार्थश्चकारः । अनुद्वेगकरत्वसत्यत्वप्रियत्वहितत्वविशेषणचतुष्टयविशिष्टस्यैव वाक्यस्योच्चारितत्वे वाङ्मयतपस्त्वं सिध्यति—यथा उदात्तादिस्वरचतुष्टयानुवृत्तस्यैव वेदस्य वेदत्वं, नान्यथा, तद्वत्तन्नैवैकेन द्वाभ्यां वा त्रिभिर्वा विशेषणैर्वियुक्तस्योच्चारणेन तपस्त्वं संभवत्यतो मुमुक्षुर्विशेषणचतुष्टयविशिष्टमेव वचनं वदेदिति सिद्धम् । ब्रह्मयज्ञस्यापि वाङ्मये तपस्यन्तर्भाव इत्याह—स्वाध्यायाभ्यसनं चेति । प्राङ्मुखत्वपवित्रपाणित्वादिनियम-

विशिष्टं स्वाध्यायस्याभ्यसनमावृत्तिरपि तप एवेत्यर्थः । वाङ्मयं तदपि वाचा निर्वर्त्यमानत्वाद्वाङ्मयं तप उच्यते । चकारात् स्तोत्रपाठादिरपि वाङ्मयं तप एव भवतीत्यर्थः ॥ १९ ॥

**श्री० टी०**—वाचिकं तप आह—अनुद्वेगेति । उद्वेगं भयं न करोतीत्यनुद्वेगकरं वाक्यं सत्यं च श्रोतुः प्रियं च हितं च परिणामे सुखकरं, स्वाध्यायाभ्यसनं वेदाभ्यासश्च वाङ्मयं वाचा निर्वर्त्यं तपः ॥ १९ ॥

**स० टी०**—न कस्यचिद्दुःखकरं मानमूलमबाधितम् ॥ श्रोतुस्तत्कालसुखदं परिणामे सुखावहम् ॥ १ ॥ अनुद्वेगकरत्वादिविशेषणचतुष्टयम् ॥ समुचित्यैव यद्वाक्यं नैकेनापि विवर्जितम् ॥ २ ॥ यथा भो वत्स शान्तस्त्वं भव स्वाध्यायमाचर ॥ योगं तथाऽनुतिष्ठ त्वं निःश्रेयस्ते भविष्यति ॥ ३ ॥ यथाविद्यागमाभ्यासो वाङ्मयं तप उच्यते ॥ ४ ॥ १९ ॥

**भा० टी०**—शारीरं तप उक्त्वा वाक्प्रधानैः कर्त्रादिभिः साध्यं तदाह—अन्विति । अनुद्वेगकरमिति कस्याप्युद्वेगकरं दुःखजनकं न भवतीति तत्, सत्यं यथादृष्टार्थप्रतिपादकं, प्रियं दृष्टार्थं उच्चारणकाले श्रोतुः श्रुतिसुखं, हितमदृष्टार्थं परिणामपथ्यम् । विशेषणधर्माणामनुद्वेगकरत्वादीनां विशेष्येण वाक्येन समुचितानां परस्परसमुच्चयद्योतनार्थश्चकारः । सत्यप्रियहितानुद्वेगकरत्वानामन्यतमेन द्वाभ्यां त्रिभिर्वा हीनतारहितं सत्यत्वादिविशेषणचतुष्टयेन विशिष्टं वाक्यं, यथा—शान्तो भव वत्स, स्वाध्यायं योगं चानुतिष्ठ, तथा ते श्रेयो भविष्यतीति स्वाध्यायाभ्यसनं चैव प्राङ्मुखत्वं पवित्रपाणित्वमित्यादिविधानमनतिक्रम्य स्वाध्यायस्यावर्तनं च वाङ्मयं वाक् प्राचुर्येण प्रस्तुताऽस्मिन्निति वाङ्मयं वाक्प्रधानमित्यर्थः ॥ १९ ॥

**प० टी०**—अथ वाङ्मयं तप आह—अनुद्वेगकरमिति । परस्योद्वेगजनकं न भवति तथाविधं वाक्यं, सत्यं यथार्थभाषणम् । तदपि दुःखपर्यवसायि न भवतीत्याह—प्रियमिति । प्रियं च तद्धितं च—प्रियं सुश्राव्यं, परिणामे हितं च । तथा च मनुः—'सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम्' इति । स्वाध्यायाभ्यसनं स्वशाखाध्ययनाभ्यासः । एतद्वाङ्मयं तप उच्यते ॥ १९ ॥

**रा० टी०**—अन्विति । अनुद्वेगकरं परस्यातङ्को यथा न भवति तादृश्यं वाक्यम् , सत्यं यथार्थवाक्यमिति सर्वत्रान्वेति । प्रियं श्रवणसमये पुनः पुनः श्रवणेच्छाकरम् । हितं कालान्तरे सुखकरं च । स्वाध्यायाभ्यसनं च यत्तदिति शेषः । वाङ्मयं वागात्मकं तपः ॥ १९ ॥

**मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ॥**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ १६ ॥**

**त० टी०**—मानसं तप आह—मनःप्रसाद इति । मनःप्रसादः कामक्रोधादित्यागेन मनसः स्वच्छता, सौम्यत्वं मुखादिप्रसादहेतुरन्तस्तुष्टिः, मौनं वृथाऽऽलापवर्जनम् , आत्मविनिग्रहः मनसोऽसत्प्रवृत्तेरवष्टम्भनं, भावसंशुद्धिः भावस्य हृदयस्य संशुद्धिर्विषयभोगवासनारूपमालिन्याभावः, इत्येतन्मानसं तप उच्यते ॥ १६ ॥

**म० टी०**—मन इति । मनसः प्रसादः स्वच्छता विषयचिन्ताव्याकुलत्वराहित्यं, सौम्यत्वं सौमनस्यं सर्वलोकहितैषित्वं प्रतिषिद्धाचिन्तनं च, मौनं मुनिभाव एकाग्रतयाऽऽत्मचिन्तनं निदिध्यासनाख्यम् । वाक्संयमहेतुर्मनःसंयमो मौनमिति भाष्यम् । आत्मविनिग्रहः आत्मनो मनसो विशेषेण सर्ववृत्तिनिग्रहो निरोधः समाधिरसंप्रज्ञातः । भावस्य हृदयस्य शुद्धिः कामक्रोधलोभादिमलनिवृत्तिः पुनरशुद्ध्यनुत्पादराहित्येन सम्यक्त्वेन विशिष्टा सा भावशुद्धिः । परैः सह व्यवहारकाले मायाराहित्यं सेति भाष्यम् । इत्येतदेवंप्रकारं तपो मानसमुच्यते ॥ १६ ॥

शं० टी०—मन इति । मनःप्रसादः मनसो विषयेभ्यो विश्लिष्याविकारात्मनैकत्रावस्थानं प्रसादः । सौम्यत्वं उपकारिण्यपकारिण्यपीष्टेऽप्यनिष्टे च पक्षपातरहितत्वेन मनसोऽवस्थानं सौम्यत्वमक्रूरता वा । मौनं मुनेर्भावो मौनं सगुणस्य वा निर्गुणस्य वाप्यनुसंधानपरत्वं मौनं, ध्यानपरायण एव मुनिस्तद्भाव एव मौनं न तु वाङ्मात्रनिरोधः । अन्यथा पश्वादीनामपि तद्वत्तापत्तेः । आत्मविनिग्रह आत्मनो मनसो विनिग्रहो विषयेषु प्रवृत्तिनिरोधनं, भावसंशुद्धिः भाव्यतेऽर्थोऽनेनेति भावोऽन्तःकरणं तस्य रागद्वेषादिदोषसंश्लेषाभावापादनं भावसंशुद्धिरित्येतत् सर्वं मन एकसाध्यत्वान्मानसं तप उच्यते महर्षिभिरित्यर्थः ॥ १६ ॥

श्री० टी०—मानसं तप आह—**मनःप्रसाद इति** । मनसः प्रसादः स्वस्थता, सौम्यत्वमक्रूरता, मौनं मुनेर्भावः मननमित्यर्थः । आत्मनो मनसो विनिग्रहः विषयेभ्यः प्रत्याहारः, भावसंशुद्धिर्व्यवहारे मायाराहित्यम्—इत्येतन्मानसं तपः ॥ १६ ॥

स० टी०—मनःस्वच्छत्वमक्षोभ्यं सर्वलोकहितैषिता ॥ निदिध्यासनमैकाग्र्यं समाधौ चित्तनिग्रहः ॥ १ ॥ कामादिमलसंशान्त्या मायाराहित्यमाशिशोः ॥ भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥२॥१६॥

भा० टी०—एवं वाक्प्रधानं तप उक्त्वा मनःप्रधानं तदाह—**मन इति** । मनःप्रसादो मनसः शान्तिः, स्वच्छतापादनं चिन्ताव्याकुलत्वादिहीनतासंपादनमिति यावत् । सौम्यत्वं सुखादिप्रसादकार्यगम्यं सौमनस्यं, मौनं वाक्संयमस्य मनसः संयमपूर्वकत्वात् वाक्विषयो मनसः संयमो मौनं, सर्वतः सामान्यरूपो मनोनिरोध आत्मविनिग्रह इति विशेषः । ननु मुनेर्भावो मौनमेकाग्रतया आत्मचिन्तनं निदिध्यासनाख्यमिति मौनशब्दार्थः आचार्यैः कुतो न दर्शित इति चेत्त्वदुक्तमुनिभावस्य राजसत्वाद्यभावेन राजसतामसतपोभ्यामस्याग्रहणापत्तेरिति गृहाण । भावसंशुद्धिः परैर्व्यवहारकालेऽमायावित्त्वम् । यत्तु भावस्य हृदयस्य शुद्धिः कामक्रोधलोभादिमलनिवृत्तिः, पुनरशुद्ध्युत्पादराहित्येन सम्यक्त्वेन विशिष्टा सा भावसंशुद्धिरिति तन्नोपादेयमाचार्यैरनुक्तत्वात् । राजसे तामसे च तपस्येतादृशभावसंशुद्धेरसंभवाच्च । इत्येतत्तपो मानसं मनसा प्रधानेन निर्वर्त्यमुच्यते ॥ १६ ॥

प० टी०—अथ मानसं तप आह—**मन इति** । मनःप्रसादो मनसः स्वास्थ्यम्, सौम्यत्वमक्रूरता, मौनं मुनेर्भावो मननमित्यर्थः । आत्मविनिग्रहो विषयेभ्यः प्रत्याहारः, भावसंशुद्धिर्व्यवहारे मायाराहित्यमेतन्मानसं तपः । श्रुतिरपि " तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन " इति । भाष्यम्—तमेतमात्मानं वेदानुवचनेनोपनिषद्विभागेन विविदिषन्ति वेदितुं ज्ञातुमिच्छन्ति । तथा ब्रह्मचर्येण शारीरेण तपसा श्रद्धयाऽस्तिक्यबुद्ध्या, यज्ञेन सात्त्विकेन अत एवानाशकेन नश्वरफलाभिसंधिरहितेन ॥ १६ ॥

रा० टी०—मन इति । मनःप्रसादः विषयेष्वप्रयासेन प्रवृत्तिः, सौम्यत्वमक्रौर्यम्, मौनं मननशीलत्वम्, आत्मविनिग्रहः आत्मनि परमात्मनि मनसो विशिष्यावस्थानम्, भावे आशये संशुद्धिः नानाकामराहित्यम् । इत्येतन्मानसं तपः उच्यते ॥ १६ ॥

## श्रद्धया परया तप्तं तपस्तत्त्रिविधं नरैः ॥
## अफलाकाङ्क्षिभिर्युक्तैः सात्त्विकं परिचक्षते ॥ १७ ॥

**त० टी०—तदेवं शारीरादिभेदेनोक्तस्य त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह—श्रद्धयेति । परया प्रकृष्टया श्रद्धया आस्तिक्यबुद्ध्या तत्प्रकृतं त्रिविधं शरीरवाङ्मनोभिरित्युक्तम्, अफलाकाङ्क्षिभिः फलाकाङ्क्षारहितैः, युक्तैः समाहितैर्नरैर्यत्तपस्तप्तमनुष्ठितं तत्सात्त्विकं परिचक्षते कथयन्ति ॥१७॥**

**म० टी०**—शारीरवाचिकमानसभेदेन त्रिविधस्योक्तस्य तपसः सात्त्विकादिभेदेन त्रैविध्यमिदानीं दर्शयति—**श्रद्धयेति त्रिभिः** । तत्पूर्वोक्तं त्रिविधं शारीरं वाचिकं मानसं च तपः श्रद्धया आस्तिक्यबुद्ध्या परया प्रकृष्टया अप्रामाण्यशङ्काकलङ्कशून्यया फलाभिसंधिशून्यैर्युक्तैः समाहितैः सिद्ध्यसिद्ध्योर्निर्विकारैर्नरैरधिकारिभिस्तप्तमनुष्ठितं सात्त्विकं परिचक्षते शिष्टाः ॥ १७ ॥

**शं० टी०**—उक्तस्यैव तपसस्त्रिविधस्य सत्त्वादिगुणभेदेन त्रैविध्यमाह—**श्रद्धयेति** । युक्तैरेकाग्रचित्तैः परमेश्वरभक्तियुक्तैरत एवाफलाकाङ्क्षिभिर्नरैः परया श्रद्धया तप्तं तत्त्रिप्रकारकं तपः सात्त्विकं सत्त्वगुणसंभावितातिश्रद्धया निष्पादितत्वात्सात्त्विकमिति परिचक्षते कथयन्तीत्यर्थः ॥ १७ ॥

**श्री० टी०**—तदेवं शरीरवाङ्मनोभिर्निर्वर्त्यं त्रिविधं तपो दर्शितं, तस्य त्रिविधस्यापि तपसः सात्त्विकादिभेदेन त्रैविध्यमाह—**श्रद्धयेतित्रिभिः** । त्रिविधमपि तपः परया श्रेष्ठया श्रद्धया फलाकाङ्क्षाशून्यैर्युक्तैरेकाग्रचित्तैर्नरैस्तप्तं तत्सात्त्विकं कथयन्ति ॥ १७ ॥

**स० टी०**—शारीरादिकभेदेन प्रोक्तस्य त्रिविधस्य च ॥ तपसः प्रोच्यते भूयस्त्रैविध्यं सात्त्विकादिना ॥ १ ॥ सात्त्विके पुरुषे त्रेधा पूर्वोक्तं तप उच्यते ॥ राजसे तामसे यस्मात्तत्त्रैविध्यं न संभवेत् ॥ २ ॥ अतः सात्त्विकपुंस्युक्तं तपस्तत्त्रिविधं वचः ॥ राजसे तामसे प्रोक्तं तद्विरुद्धं सदा यतः ॥ ३ ॥ तत्पूर्वोक्तं तपः सम्यक् श्रद्धयाऽस्तिक्यरूपया ॥ बुद्ध्या प्रकृष्टयाऽऽशङ्काशून्यया शास्त्रगोचरे ॥ ४ ॥ फलाभिसंधिरहितैः शुद्धचित्तैः समाहितैः ॥ अनुष्ठितं मुनिश्रेष्ठाः सात्त्विकं कथयन्ति तत् ॥ ५ ॥ १७ ॥

**भा० टी०**—यथोक्तं कायिकादिभेदेन त्रिविधं तपस्तप्तं सात्त्विकादिभेदेन कथं त्रिविधं भवतीत्याकाङ्क्षायां तत्त्रैविध्यं प्रदर्शयन्नादौ सात्त्विकं तदाह—**श्रद्धयेति** । तत्पूर्वोक्तं कायिकवाचिकमानसभेदेन त्रिविधं श्रद्धया आस्तिक्यबुद्ध्या परयोत्कृष्टया भक्तियुक्तया अफलाकाङ्क्षिभिः फलाकाङ्क्षावर्जितैर्युक्तैः समाहितैः सिद्ध सिद्ध्योर्निर्विकारैर्नरैरनुष्ठातृभिः तप्तमनुष्ठितं सात्त्विकं परिचक्षते शिष्टाः कथयन्ति ॥ १७ ॥

**प० टी०**—अथ सात्त्विकादिभेदेन पुनस्त्रैविध्यमाह—**श्रद्धयेति** । तत्त्रिविधं शरीरवाङ्मनोविभागेन कथितं तपोऽफलाकाङ्क्षिभिस्तथा युक्तैरेकाग्रान्तःकरणैर्नरैस्तप्तमनुष्ठितं तत्सात्त्विकं परिचक्षते ॥ १७ ॥

**रा० टी०**—इदानीं सात्त्विकादितपोभेदेन सात्त्विकादिजीवभेदं प्रतिज्ञापूर्वमाह—**श्रद्धयेत्यादिभिस्त्रिभिः**। नरैस्तप्तं कृतं तपः यत् तत्त्रिविधमित्यर्थः । तत्कथमित्यत आह—**अफलेति** । युक्तैर्भगवदर्पणादियोगयुक्तैः तप्तं तप इत्यनुषज्यते ॥ १७ ॥

## सत्कारमानपूजार्थं तपो दम्भेन चैव यत् ॥
## क्रियते तदिह प्रोक्तं राजसं चलमध्रुवम् ॥ १८ ॥

**त० टी०**—राजसं तप आह—**सत्कारेति** । सत्कारः साधुकारः—साधुरयं तपस्वी श्रेष्ठ इत्यादि वाक्प्रशंसा, मानः प्रत्युत्थानाभिवादनादिपूजाद्रव्योपायनादीत्येतदर्थं सत्कारमानपूजार्थं दम्भेन च हेतुना यत्तपः क्रियते तदिह राजसमत एव चलमपायि तथाऽप्यध्रुवं किंचित्कालस्थायि, न यावज्जीवमित्यर्थः ॥ १८ ॥

**म० टी०**—**सत्कारैरिति** । सत्कारः साधुरयं तपस्वी ब्राह्मण इत्येवमविवेकिभिः क्रियमाणा स्तुतिः, मानः प्रत्युत्थानाभिवादनादिः, पूजा पादप्रक्षालनार्चनधनदानादिः, तदर्थं, दम्भेनैव च केवलं धर्मध्वजित्वेनैव च न त्वास्तिक्यबुद्ध्या यत्तपः क्रियते तद्राजसं प्रोक्तं शिष्टैः, इह अस्मिन्नेव लोके फलदं न पारलौकिकं चलमत्यल्पकालस्थायिफलम्, अध्रुवं फलजनकतानियमशून्यम् ॥ १८ ॥

**शं० टी०—सत्कारेति ।** सत्कारमानपूजार्थं सत्कारार्थं मानार्थं पूजार्थं च सत्कारः साधुरयं विद्वान् ब्राह्मण इति स्तुत्यर्थं, मानो बहुमानस्त्वभ्युत्थानादिस्तत्प्रयोजनार्थं, पूजा गन्धपुष्पदक्षिणाभिः स्वपूजा तदर्थं च दम्भेन वेषभाषादिप्रकाशनेन दाम्भिकैर्यत्तपः क्रियते तत्तप इहास्मिन् लोके एव फलप्रदं भवति, तच्चाध्रुवं देहमात्रोपयोगित्वादध्रुवम् तत्रापि चलं तात्कालिकफलं क्षणिकमेवंलक्षणं यत्तपस्तद्राजसमिति महर्षिभिः प्रोक्तमित्यर्थः ॥ १८ ॥

**श्री० टी०—**राजसं तप आह—**सत्कार इति ।** सत्कारः साधुकारः साधुरयमिति तापस इत्यादिवाक्पूजा, मानः प्रत्युत्थानाभिवादनादिर्दैहिकी पूजा, पूजाऽर्थलाभादिः—एतदर्थं दम्भेन च यत्तपः क्रियते अत एव चलमनियतमध्रुवं च क्षणिकं यदेवंभूतं तपस्तदिह राजसं प्रोक्तम् ॥ १८ ॥

**स० टी०—**तपस्वी ब्राह्मणः साधुरयमित्यविवेकिभिः ॥ क्रियमाणा स्तुतिः प्रोक्तः स सत्कारस्तदात्वये ॥ १ ॥ प्रत्युत्थानप्रणामादिर्मानः पूजार्चनादिकम् ॥ तदर्थं धार्मिकत्वादिख्यापनेनैव यत्तपः ॥ २ ॥ क्रियते राजसं प्रोक्तं तदत्रैव फलप्रदम् ॥ अत्यल्पकालस्थायित्वाचलं तद्व्यभिचारि च ॥ ३ ॥ १८ ॥

**भा० टी०—**सात्त्विकं तप उदाहृत्य राजसं तदुदाहरति—**सत्कार इति ।** सत्कारः साधुरयं तपस्वीत्येवंस्तुतिरूपः साधुकारः, मानो माननं प्रत्युत्थानाभिवादनादि, पूजा पादप्रक्षालनार्चनान्नधनाद्यर्पणादि, तदर्थं दम्भेन चैव नास्तिक्येन केवलधर्मध्वजित्वेन यत्तपः क्रियते तदिहास्मिन्नेव लोके सत्कारादिफलप्रदं राजसं प्रोक्तं कथितम् । चलं क्षणिकफलमध्रुवम् अनियतफलं, यद्वा चलं कादाचित्कफलं दाम्भिकोऽयमित्यपरिज्ञानकाले कस्मिंश्चित्सत्कारादिफलप्रदं न तु सर्वदेति यावत् । अत एवाध्रुवं सत्कारादिप्राप्तिपर्यन्तं स्थायि न तु सदैवेत्यर्थः ॥ १८ ॥

**प० टी०—सत्कार इति ।** सत्कारः साधुरयं तापस इति, मानः प्रत्युत्थानाभिवन्दनादिस्तदर्थम् । दम्भेन प्रसिद्धेन यत्कृतम् । चलमनित्यफलम्, अध्रुवं क्षणिकं तद्राजसं तपः ॥ १८ ॥

**रा० टी०—सत्कार इति ।** सत्कारो मनसा आदरः, मानो वाचा प्रशंसा, पूजा अर्चनम्, एतदर्थं दम्भेन च आत्मनो महत्त्वप्रदर्शनार्थं वा यत्तपः क्रियते तत्तप इहलोके राजसं प्रोक्तम् । चलं पातभयेन चलनहेतुः । अध्रुवं क्षयिष्णु ॥ १८ ॥

**मूढग्राहेणात्मनो यत्पीडया क्रियते तपः ॥**
**परस्योत्सादनार्थं वा तत्तामसमुदाहृतम् ॥ १९ ॥**

**त० टी०—**तामसमाह—**मूढग्राहेणेति ।** मूढा अविवेकिनस्तेषां ग्राहेण वृथाऽभिनिवेशेन आत्मनः स्वस्य पीडया यत्तपः क्रियते, परस्योत्सादनार्थमुच्छेदनार्थं वा क्रियते, तत्तामसमुदाहृतम् ॥ १९ ॥

**म० टी०—मूढेति ।** मूढग्राहेण अविवेकातिशयकृतेन दुराग्रहेण आत्मनो देहेन्द्रियसंघातस्य पीडया यत्तपः क्रियते परस्योत्सादनार्थं वा अन्यस्य विनाशार्थमभिचाररूपं वा तत्तामसमुदाहृतं शिष्टैः ॥ १९ ॥

**शं० टी०—मूढग्राहेणेति ।** मूढग्राहेण अर्थानर्थस्वरूपानभिज्ञो मूढस्तस्य ग्राहस्त्वहमेव बुद्धिमानित्यभिनिवेशो मूढग्राहस्तेनात्यन्तमूढबुद्ध्या स्वस्य पीडया कायक्लेशेन यदुक्तं त्रिविधं तपः क्रियते कायक्लेशमात्रैकप्रयोजनम । अथवा परस्योत्सादनार्थमाभिचारिकक्रियया शत्रुविनाशार्थं वा यत्करोति तत्तपस्तामसं तमःसंभावितश्रद्धानिष्पादितत्वात्तामसमिति मुनिभिरुदाहृतमित्यर्थः ॥ १९ ॥

**श्री० टी०—**तामसं तप आह—**मूढेति ।** मूढग्राहेणाविवेककृतेन दुराग्रहेणात्मनः पीडया यत्तपः क्रियते परस्योत्सादनार्थं वाऽन्यस्य विनाशार्थमभिचाररूपं तत्तामसमुदाहृतं कथितम् ॥ १९ ॥

स० टी०–मौढ्याहुराग्रहेणैव देहाद्यत्यन्तपीडया ॥ यत्तपः क्रियतेऽन्यस्य विनाशायाभिचारिकम् ॥ १ ॥ तत्तपस्तामसं शिष्टैः प्रोक्तं हेयं मुमुक्षुभिः ॥ २ ॥ १९ ॥

भा० टी०–एवं राजसं तप उक्त्वा तामसं तदाह–मूढेति । मूढग्राहेण अविवेकनिश्चयेन यद्येते तपश्चरन्ति तर्ह्यहमप्येतत्तपसोऽधिकं करिष्यामीत्येवमादिरूपेणात्मनः पीडया परस्योत्सादनार्थं वा एतादृशोऽयं कायिकवाचिकमानसतपोयुक्तोऽतोऽस्याज्ञापालनेनास्मदीयं कार्यं सर्वं सेत्स्यतीति बुद्धिं राजादीनामुत्पाद्य परस्य शत्रोर्नाशार्थं वा यत्तपः क्रियते तत्तामसमुदाहृतं शिष्टैः ॥ १९ ॥

प० टी०–मूढग्राहेणेति । मूढत्वे सति ग्राह आग्रहस्तेन, आत्मनः शरीरस्योपवासादिपीडया, परस्योत्सादनं जारणमारणोच्चाटनाद्याभिचारिकम्, तत्तामसम् ॥ १९ ॥

रा० टी०–मूढेति । मूढग्राहेणाविवेकदुराग्रहेण आत्मनः पीडया परस्य शत्रोरुत्सादनार्थं वा यत्तपः क्रियते तत्तामसम् ॥ १९ ॥

**दातव्यमिति यद्दानं दीयतेऽनुपकारिणे ॥**
**देशे काले च पात्रे च तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

**त० टी०–इदानीं प्रतिज्ञातेषु यज्ञादिष्ववशिष्टस्य दानस्य गुणतस्त्रैविध्यमाह त्रिभिः–दातव्यमिति । दातव्यमित्येव निश्चयेन न तु फलोद्देशेन यद्दानं दीयते, अनुपकारिणे प्रत्युपकाराकर्त्रे अयं मम प्रत्युपकारं करिष्यतीत्युद्देशाविषयायेत्यर्थः । देशे माथुरपुष्करकुरुक्षेत्रगङ्गादिक्षेत्रे, काले कार्तिकसहोमाघमासादौ, पात्रे च शमदमतितिक्षादियुक्ताय श्रोत्रियाय तद्दानं सात्त्विकं स्मृतम् ॥ २० ॥**

म० टी०–इदानीं क्रमप्राप्तस्य दानस्य त्रैविध्यं दर्शयति त्रिभिः–दातव्यमिति । दातव्यमेव शास्त्रचोदनावशादित्येवं निश्चयेन न तु फलाभिसंधिना यद्दानं तुलापुरुषादि दीयते अनुपकारिणे प्रत्युपकाराजनकाय, देशे पुण्ये कुरुक्षेत्रादौ, काले च पुण्ये सूर्योपरागादौ, पात्रे चेति चतुर्थ्यर्थे सप्तमी पात्रायेत्यर्थः । कीदृशायानुपकारिणे दीयते पात्राय च विद्यातपोयुक्ताय । ( पातीति पाता रक्षकस्तस्मै ) पात्रे रक्षकायेति वा । विद्यातपोभ्यामात्मनो दातुश्च पालनक्षम एव प्रतिगृह्णीयादिति शास्त्रात् । तदेवंभूतं दानं सात्त्विकं स्मृतम् ॥ २० ॥

शं० टी०–दानस्य त्रैविध्यमाह–दातव्यमितित्रिभिः । स्पष्टोऽर्थः ॥ २० ॥

श्री० टी०–पूर्वं प्रतिज्ञातमेव दानस्य त्रैविध्यमाह–दातव्यमिति । दातव्यमित्येवंनिश्चयेन यद्दानं दीयते अनुपकारिणे प्रत्युपकारासमर्थाय देशे कुरुक्षेत्रादौ काले ग्रहणादौ । पात्रे चेति देशकालादिसाहचर्यात्सप्तमी प्रयुक्ता । पात्रभूताय तपःश्रुतादिसंपन्नाय ब्राह्मणायेत्यर्थः । यद्वा पात्र इति चतुर्थ्येवैषा पात्रे ( इति तृजन्तं ) रक्षकायेत्यर्थः । स हि सर्वस्मादापद्गणादातारं पातीति । यदेवंभूतं दानं तत्सात्त्विकम् ॥ २० ॥

स० टी०–क्रमप्राप्तस्य दानस्य त्रैविध्यं दर्शयत्यजः ॥ दातव्यमेव शास्त्रोक्तमित्येवं निश्चयेन वै ॥ १ ॥ न तु फलाभिलाषेण यत्तुलापुरुषादिकम् ॥ प्रत्युपकारशून्याय कुरुक्षेत्रादिपावने ॥ २ ॥ देशे सूर्योपरागादौ काले पुण्येऽह्नि पर्वणि ॥ विद्यातपोभ्यां युक्ताय पात्राय च यथाविधि ॥ ३ ॥ दीयते श्रद्धया भक्त्या विष्णुप्रीत्यर्थमेव यत् ॥ तदेवं सात्त्विकं दानं प्रोक्तं सम्यक्फलप्रदम् ॥ ४ ॥ २० ॥

भा० टी०–एवं तपस्त्रैविध्यं विभज्य क्रमप्राप्तं दानत्रैविध्यं विभजन्नादौ सात्त्विकं दानमुदाहरति–दातव्यमिति । दातव्यमित्येवं मनः कृत्वा यद्दानं देयवस्तु दीयतेऽनुपकारिणे प्रत्युपकारासमर्थायापि निरपेक्षं दीयते पुण्य देशे कुरुक्षेत्रादौ काले संक्रान्त्यादौ पात्रे च यद्दानं समर्पणं षडङ्गविद्वेदपारगे इत्यादौ तद्दानं सात्त्विकं स्मृतम् । तथाच प्रथमदानशब्दः कर्मव्युत्पत्त्या देयवस्तुपरः । चकारानुकृष्टस्तु भावव्युत्पत्त्या समर्पण-

परः। तेन यो देयद्रव्यवाची द्वितीयान्तस्तत्संयोगात्संप्रदाने चतुर्थ्यपेक्षा। द्वितीयस्तु त्यागवाची प्रथमान्तः। तेन तत्र पात्रभूते पुंसि न चतुर्थ्यपेक्षा। 'कर्मणा यमभिप्रैति स संप्रदानम्' इति पारिभाषिक्याः संज्ञायाः अत्र कर्मविभक्त्यभावेनाप्रवृत्तेः। एतेन 'पात्रे चेति चतुर्थ्यर्थे सप्तमी। कीदृशायानुपकारिणे दीयते पात्राय च विद्यातपोयुक्ताय। पात्रे रक्षकायेति वा। विद्यातपोभ्यामात्मनो दातुश्च पालनक्षम एव प्रतिगृह्णीयादिति शास्त्रात्' इति कल्पनं व्यर्थमेवेति बोध्यम्॥ २०॥

प० टी०—अथ त्रिविधं दानमाह—दातव्यमिति त्रिभिः। अवश्यं दातव्यमेवेति नियमेन यद्दीयतेऽनुपकारिणे प्रत्युपकारासमर्थाय, काले ग्रहणादौ, देशे कुरुक्षेत्रादौ, पात्रे षडङ्गवेदपारगे। अत्र सप्तम्या चतुर्थी ज्ञेया। तपःश्रुतादिसंपन्नाय ब्राह्मणायेत्यर्थः। यदेवंभूतं दानं तत्सात्त्विकम्॥ २०॥

रा० टी०—प्राक्प्रतिज्ञातदानभेदेन सात्त्विकादिभेदमाह—दातव्यमित्यादित्रिभिः। दातव्यमित्यास्तिक्यबुद्ध्या दानं कर्मणि ल्युट्। दातव्यं वस्तु पुण्यदेशे पुण्यकालेऽनुपकारिणे उपकारमनपेक्ष्य सत्पात्रे च पात्राय दीयते इति यत् तद्दानं सात्त्विकम्॥ २०॥

**यत्तु प्रत्युपकारार्थं फलमुद्दिश्य वा पुनः॥**
**दीयते च परिक्लिष्टं तद्राजसमुदाहृतम्॥ २१॥**

त० टी०—राजसदानमाह—यत्त्विति। तुशब्दः पूर्वोक्तान्निष्कृष्टत्वद्योतनार्थः। प्रत्युपकारार्थं ममायमुपकरिष्यतीत्येवमर्थं, फलमैहिकामुष्मिकं वा पुनरुद्दिश्य यद्दीयते परिक्लिष्टं च एतावद्द्रव्यं मया कथं देयमिति चित्ते परिक्लेशयुक्तं यथा भवति तथा तद्दानं राजसमुदाहृतम्॥ २१॥

म० टी०—यत्त्विति। प्रत्युपकारार्थं कालान्तरे मामयमुपकरिष्यतीत्येवं दृष्टार्थं फलं वा स्वर्गादिकमुद्दिश्य यत्पुनर्दानं सात्त्विकविलक्षणं दीयते, परिक्लिष्टं च कथमेतावद्व्ययितमिति पश्चात्तापयुक्तं यथा भवत्येवं च यद्दीयते तद्दानं राजसं स्मृतम्॥ २१॥

शं० टी०—यदिति। परिक्लिष्टं लोभातिशयेनान्तःकरणक्लेशसंयुक्तं यत्तद्दानं राजसम्॥ २१॥

श्री० टी०—राजसं दानमाह—यत्त्विति। कालान्तरेऽयं मां प्रत्युपकारं करिष्यतीत्येवमर्थम्, फलं वा स्वर्गादिकमुद्दिश्य यत्पुनर्दानं दीयते, परिक्लिष्टं चित्तक्लेशयुक्तं यथा भवत्येवंभूतं तद्दानं राजसमुदाहृतं कथितम्॥ २१॥

स० टी०—कालान्तरे हि विप्रोऽयं मामित्युपकरिष्यति॥ इत्येवं दीयते यद्वा स्वर्गाद्युद्दिश्य यत्पुनः॥ १॥ पश्चात्तापयुतं दानं तच्छिष्टै राजसं स्मृतम्॥ २॥ २१॥

भा० टी०—सात्त्विकं दानमुक्त्वा राजसं तदाह—यत्त्विति। यत्तु प्रत्युपकारार्थं कालान्तरे त्वयं मां प्रत्युपकरिष्यतीत्येवं दृष्टार्थं फलमुद्दिश्यास्य दानस्यादृष्टस्वर्गादिफलं मे भविष्यतीति तद्वोद्दिश्य पुनर्दीयते च परिक्लिष्टं खेदसंयुक्तं कथमेतावद्व्ययितमिति पश्चात्तापयुक्तं यथा स्यादित्येवं च तद्राजसमुदाहृतम्॥ २१॥

प० टी०—राजसमाह—यत्त्विति। कालान्तरेणायमपि मां प्रत्युपकरिष्यतीति स्वर्गादिलोकमुद्दिश्य वा। परिक्लिष्टं क्लेशयुक्तं वा यद्दीयते तद्राजसं दानम्॥ २१॥

रा० टी०—यत्त्विति। परिक्लिष्टम्=अन्यायार्जितं द्रव्यम्॥ २१॥

**अदेशकाले यद्दानमपात्रेभ्यश्च दीयते॥**
**असत्कृतमवज्ञातं तत्तामसमुदाहृतम्॥ २२॥**

त० टी०—तामसदानमाह—अदेश इति। अत्रादेशकाले इत्यनेन पुण्यत्वविशिष्टदेशकालयोः

पर्युदासोऽभिप्रेतः, न केवलयोः, असंभवात् । तथा चादेशे म्लेच्छामेध्यादिसंसृष्टेऽशुद्धे इत्यर्थः । अकाले संक्रान्तिद्वादशीदर्शव्यतीपातादिपुण्यकालरहिते, अपात्रेभ्यश्च नटनर्तकमूर्खकर्षकादिभ्यः कथंचिद्देशकालादौ प्राप्तेऽपि असत्कृतं पादप्रक्षालनादिसत्काररहितम्, अवज्ञातं तिरस्कारवचनपूर्वकं यद्दानं दीयते तत्तामसमुदाहृतमुक्तम् ॥ २२ ॥

म० टी०–अदेशेति । अदेशे स्वतो वा दुर्जनसंसर्गाद्वा पापहेतावशुचिस्थाने, अकाले पुण्यहेतुत्वेनाप्रसिद्धे यस्मिन् कस्मिंश्चित्, अशौचकाले वा, अपात्रेभ्यश्च विद्यातपोरहितेभ्यो नटविटादिभ्यः यद्दानं दीयते देशकालपात्रसंपत्तावपि असत्कृतं प्रियभाषणपादप्रक्षालनपूजादिसत्कारशून्यमवज्ञातं पात्रपरिभवयुक्तं च तद्दानं तामसमुदाहृतम् ॥ २२ ॥

शं० टी०–अदेशेति । असत्कृतमर्घ्यपाद्यादिभिरनर्चितमवज्ञातमवमानप्रयुक्तं दानं यत्तत्तामसमिति मुनिभिरुदाहृतम् ॥ २२ ॥

श्री० टी०–तामसं दानमाह–अदेशेति । अदेशे अशुचिस्थाने, अकाले अशौचसमये अपात्रेभ्यो विटनटनर्तकादिभ्यो यद्दानं दीयते देशकालपात्रसंपत्तावपि असत्कृतं पादप्रक्षालनादिसत्कारशून्यम्, अवज्ञातं तिरस्कारयुक्तम् । एवंभूतं दानं तामसमुदाहृतम् ॥ २२ ॥

स० टी०–स्वतो वा दुष्टसंसर्गादशुचिस्थान एव हि ॥ अशौचकालेऽपात्रेभ्यो नटादिभ्यः प्रदीयते ॥ १ ॥ देशकालादिसंपत्तावपि सत्कारवर्जितम् ॥ पात्रेष्ववज्ञया युक्तं तद्दानं तामसं स्मृतम् ॥२॥ २२ ॥

भा० टी०–राजसं दानमुक्त्वा तामसं तदुदाहरति–अदेशेति । अदेशकालेऽपुण्यदेशे म्लेच्छाशुच्यादिसंकीर्णे, अकाले अपुण्यहेतुत्वेन प्रख्यातेऽशौचकाले संक्रान्त्यादिविशेषरहिते वा, अपात्रेभ्यश्च मूर्खनटतस्करादिभ्यो देशादिसंपत्तावपि प्रियवचनपादप्रक्षालनपूजादिसत्काररहितमवज्ञातं पात्रपरिभवयुक्तं च यद्दानं दीयते तद्दानं तामसमुदाहृतम् ॥ २२ ॥

प० टी०–तामसमाह–अदेशकालेति । अदेशेऽशुचिस्थले, अकाले सूतकादावपात्रेभ्यो विटनटादिभ्यो यद्दीयते । असत्कृतं सत्काररहितम् । अवज्ञातं पादप्रक्षालनादिरहितम् । तत्तामसम् ॥ २२ ॥

रा० टी०–अदेशेति । अदेशकाल इतिद्वन्द्वैकवद्भावः । अशुचिदेशकालयोः असत्कृतं नमस्कारादिसत्काररहितम्, अवज्ञातं अवज्ञाकरणयुक्तं यथा तथा अपात्रेभ्यः यद्दीयते तत्तामसमित्यर्थः ॥ २२ ॥

**ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः ॥**
**ब्राह्मणास्तेन वेदाश्च यज्ञाश्च विहिताः पुरा ॥ २३ ॥**

त० टी०–तदेवमाहारयज्ञादीनि मुमुक्षुभिः सात्त्विकान्युपादेयानि राजसतामसानि हेयानीत्येतदर्थं तेषां त्रैविध्यमुक्तम् । तत्र सात्त्विकाहारेण शुद्धसत्त्वानां सात्त्विकयज्ञादिष्वधिकृतानामनुष्ठातॄणामनुष्ठेयेषु सात्त्विकेष्वपि यज्ञतपोदानेषु देशकालद्रव्यमन्त्रक्रियादिकिंचिदङ्गवैगुण्येन प्रत्यवायापत्त्याऽदृष्टानुत्पत्तौ तन्नैष्फल्यं स्यादिति तद्वैगुण्यपरिहाराय परमकारुणिको भगवानङ्गपूरणत्वेन तत्साद्गुण्यकारणं परब्रह्मवाचकशब्दोच्चारणमुपदिशति–ॐ तत्सदितीति । ॐ तत्सदित्येवंरूपो ब्रह्मणः परमात्मनः पुरुषोत्तमस्य निर्देशः, निर्दिश्यते प्रतिपाद्यतेऽनेनेति निर्देशप्रतिपादकः शब्दो नामेत्यर्थः, त्रिविधस्त्रिप्रकारः स्मृतः, वेदवेदान्तविद्भिर्महर्षिभिर्ब्रह्मनामतया निर्दिष्ट इत्यर्थः । "ओमिति ॐ ब्रह्म" "तद्ब्रह्म ॐ सद्ब्रह्म" "ओमित्यनेनैवाक्षरेण परं पुरुषमभिध्यायीत" इत्यादिश्रुतिभिः "एकाक्षरं परं ब्रह्म प्राणायामः परं तपः । प्रणवाद्यास्तथा वेदाः प्रणवे पर्यवस्थिताः" ॥ "ॐमित्येकाक्षरं ब्रह्म व्याहरन्" इत्यादि-

स्मृतिभिश्च ओंकारो ब्रह्मनामतया निर्दिष्टः। "तत्त्वमसि, तदेवर्तं तदु सत्यमाहुः, तदेव ब्रह्म परमं कवीनाम्" इत्यादिश्रुतिभिः, "यत्तत्पदमनुत्तमं तद्ब्रह्म परमं धाम" इत्यादिस्मृतिभिश्च तच्छब्दस्य ब्रह्मनामतया निर्देशः स्मृतः। "सदेव सोम्येदमग्र आसीत्सन्मूलाः सोम्येमाः सर्वाः प्रजाः सत्प्रतिष्ठाः" इत्यादिश्रुत्या 'सदसत् क्षरमक्षरम्' इत्यादिस्मृत्या च सच्छब्दो ब्रह्मनामतया निर्दिष्टः। साद्गुण्यहेतुत्वेनैनं ब्रह्मनिर्देशं स्तौति तेन त्रिविधेन ब्रह्मणो निर्देशेन ब्राह्मणा वैदिकास्त्रैवर्णिका वेदाश्च यज्ञाश्च कर्तृकरणकर्मरूपाः पुरा पूर्वं सृष्ट्यादौ मदात्मकेन प्रजापतिना विहिताः, प्रवर्तिताः वैगुण्यपरिहारेण साद्गुण्यपूर्णीकृता इत्यर्थः। तस्मान्महाप्रभावोऽयं परमात्मनिर्देशो यज्ञादिवैगुण्यपरिहाराय नियततया स्मर्तव्य इति भावः॥ २३॥

म० टी०—तदेवमाहारयज्ञततोदानानां त्रैविध्यकथनेन सात्त्विकानि तान्यादेयानि राजसतामसानि तु परिहर्तव्यानीत्युक्तम्। तत्राहारस्य दृष्टार्थत्वेन नास्त्यङ्गवैगुण्येन पुण्ये फलाभावशङ्का। यज्ञतपोदानानां त्वदृष्टार्थानामङ्गवैगुण्यादपूर्वानुत्पत्तौ फलाभावः स्यादिति सात्त्विकानामपि तेषामानर्थक्यं प्राप्तं प्रमादबहुलत्वादनुष्ठातॄणाम्। अतस्तद्वैगुण्यपरिहाराय ओंतत्सदिति भगवन्नामोच्चारणरूपं सामान्यप्रायश्चित्तं परमकारुणिकतयोपदिशति भगवान्—ॐमिति। ओं तत्सदित्येवंरूपो ब्रह्मणः परमात्मनो निर्देशः निर्दिश्यतेऽनेनेति निर्देशः प्रतिपादकशब्दः नामेति यावत्। त्रिविधः तिस्रो विधा अवयवा यस्य स त्रिविधः स्मृतः वेदान्तविद्भिः। एकवचनात्त्र्यवयवमेकं नाम प्रणववत्। यस्मात्पूर्वैर्महर्षिभिरयं ब्रह्मणो निर्देशः स्मृतस्तस्मादिदानींतनैरपि स्मर्तव्य इति विधिरत्र कल्प्यते। वषट्कर्तुः प्रथमभक्ष इत्यादिष्विव वचनानि त्वपूर्वत्वादिति न्यायात्। यज्ञदानतपःक्रियासंयोगाच्चास्य तद्वैगुण्यमेव फलं नष्टाश्वदग्धरथवत् परस्पराकाङ्क्षया कल्प्यते। 'प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः' इति स्मृतेः, तथैव शिष्टाचाराच्च। ब्रह्मणो निर्देशः स्तूयते कर्मवैगुण्यपरिहारसामर्थ्यकथनाय—ब्राह्मणा इति त्रैवर्णिकोपलक्षणम्। ब्राह्मणाद्याः कर्तारः वेदाः करणानि यज्ञाः कर्माणि तेन ब्रह्मणो निर्देशेन करणभूतेन पुरा विहिताः प्रजापतिना तस्माद्यज्ञादिसृष्टिहेतुत्वेन तद्वैगुण्यपरिहारसमर्थो महाप्रभावोऽयं निर्देश इत्यर्थः॥ २३॥

शं० टी०—ननु देशकालपात्रद्रव्यमन्त्रतन्त्रादिस्वरूपं ज्ञात्वा यथाशास्त्रं वैदिकं कर्म श्रद्धाभक्तिविनयैः कर्तुं न शक्यते। तेन सर्वस्यापि वैदिकस्य कर्मणो वैगुण्यमेव प्रसज्यते। तत्र कथमित्याकाङ्क्षायाम् "विद्वान् यजते" इतिश्रवणाद्देशकालादिस्वरूपज्ञेन विदुषैव सर्वं कर्म विज्ञाय श्रद्धया कर्तव्यम्, तथापि यज्ञदानतपोव्रतादीनामतत्त्वज्ञेन क्रियमाणानामश्रद्धया वा भ्रमप्रमादादिना वा क्वचित्तन्त्रमन्त्रस्वरवर्णादिलोपेन वा वैगुण्ये प्राप्ते ॐतत्सदित्युक्त्या सर्वं सगुणं सफलं च भवतीति बोधयितुमयमुपदेशः क्रियते—ओमिति। "ओमिति ब्रह्म" इति "तत्त्वमसि" इति "सदेव सोम्य" इति च श्रवणात्। ओमिति तदिति सदिति च परस्य ब्रह्मणो निर्देशः—निर्दिश्यते वस्त्वनेनेति निर्देशो नाम, त्रिविधस्त्रिप्रकारः स्मृतो वेदान्तविद्भिरुद्दालकादिभिः। ॐतत्सादित्येतानि त्रीणि ब्रह्मणो नामान्युक्तानीत्यर्थः। एवं नामनिर्देशं कृत्वा नाम्नां महत्त्वमाह—ब्राह्मणा इति। पुरा सर्गादौ तेनोक्तेन नामत्रितयेन ब्राह्मणा ऋगादयो वेदाः श्रौतस्मार्ताश्च सर्वे यज्ञा विहिता निर्मितास्तेभ्यः समुत्पन्ना इत्यर्थः। एतेन पावनानां वेदादीनां जनिहेतुत्वात्तेषां त्रयाणामपि नाम्नां पवित्रत्वस्येयत्ता नास्तीति सूचितम्। ततस्तदुच्चारणं सर्वपापप्रायश्चित्ततममिति सिद्धम्॥ २३॥

श्री० टी०—ननु चैवं विचार्यमाणे सर्वमपि यज्ञतपोदानादि राजसतामसप्रायमेवेति व्यर्थो यज्ञादिप्रयास इत्याशङ्क्य तथाविधस्यापि सात्त्विकत्वापादनप्रकारं दर्शयितुमाह—ॐमिति। ॐतत्सदित्येवं त्रिविधो ब्रह्मणः परमात्मनो निर्देशो नामव्यपदेशः स्मृतः शिष्टैः। तत्र तावत् "ॐमिति ब्रह्म"

इत्यादिश्रुतिप्रसिद्धेरोमिति ब्रह्मणो नाम जगत्कारणत्वेनातिप्रसिद्धत्वात् अविदुषां परोक्षत्वाच्च तच्छब्दोऽपि ब्रह्मणो नाम। परमार्थसत्त्वसाधुत्वप्रशस्तत्वादिभिः सच्छब्दो ब्रह्मणो नाम। ("सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतेः।) अयं त्रिविधोऽपि नामनिर्देशो विगुणमपि सगुणीकर्तुं समर्थ इत्याशयेन स्तौति–तेन त्रिविधेन ब्रह्मणो निर्देशेन ब्राह्मणाश्च वेदाश्च यज्ञाश्च पूर्वं सृष्टयादौ विहिताः विधात्रा निर्मिताः सगुणीकृता वा। यद्वा यस्यायं त्रिविधो निर्देशस्तेन परमात्मना ब्राह्मणादयः पवित्रतमाः सृष्टाः। तस्मात्तस्यायं त्रिविधो निर्देशोऽतिप्रशस्त इत्यर्थः ॥ २३ ॥

स० टी०–एवमाहारमुख्यानां त्रैविध्यकथनेन च ॥ ग्राह्याणि सात्त्विकान्येव त्याज्यान्यन्यानि सर्वथा ॥ १ ॥ इत्युक्तं तत्र भोज्यस्य दृष्टार्थत्वेन केवलम् ॥ अङ्गवैगुण्यतो नास्ति फलाभावादिशङ्कनम् ॥ २ ॥ अदृष्टार्थस्य यज्ञादेरङ्गवैगुण्यतो भवेत् ॥ अपूर्वस्याप्यनुत्पत्तौ फलाभावेन कर्मिणाम् ॥ ३ ॥ सात्त्विकानामपि ह्येषामानर्थक्यं समागतम् ॥ प्रमादबहुलत्वाच्चानुष्ठातॄणामतो हरिः ॥ ४ ॥ वैगुण्यपरिहारार्थमों तत्सदिति च त्रिधा ॥ कीर्तनं भगवन्नाम्नः प्रायश्चित्ततयाऽधुना ॥ ५ ॥ अतिकारुणिकत्वेन साक्षादुपदिशत्यजः ॥ ओं तत्सदितिरूपोऽयं ब्रह्मणः परमात्मनः ॥ ६ ॥ नामनिर्देश आम्नातैश्चिन्तितस्त्रिविधः श्रुतौ ॥ यस्मादेवमतः सर्वैः स्मर्तव्यमधुनातनैः ॥ ७ ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ ८ ॥ स्तूयते ब्रह्मनिर्देशः कर्मवैगुण्यनाशकृत् ॥ त्रिधा निर्देशतो विष्णोः कर्तारो ब्राह्मणादयः ॥ ९ ॥ वेदाः सृष्टाः साधनाख्या यज्ञाः कर्मात्मकाः पुरा ॥ तस्माद्यज्ञादिसृष्टेश्च हेतुत्वेन हरेरयम् ॥ १० ॥ निर्देशः कर्मवैगुण्यपरिहारक्षमोऽस्त्यपि ॥ ११ ॥ २३ ॥

भा० टी०–एवमाहारादीनां सात्त्विकानामादानाय हानाय च राजसतामसानां तेषां त्रैविध्यमुक्तम्। इदानीं विहितानां यज्ञादिकर्मणां प्रमादावश्यंभावात् तत्प्रयुक्ते वैगुण्ये कथं परिहारः स्यादित्याकाङ्क्षायां तेषां साद्गुण्यकरणाय करुणानिधिर्भगवान् प्रायश्चित्तमुपदिशति–ॐतत्सदिति । एष निर्देशः निर्दिश्यतेऽनेनेति निर्देशो ब्रह्मणस्त्रिविधो नामनिर्देशः। "ॐमिति ब्रह्म" "तत्त्वमसि" "सदेव सोम्य" इत्यादिवेदान्तेषु ब्रह्मविद्भिः स्मृतश्चिन्तितः । यज्ञादिसाद्गुण्यसिद्ध्यर्थमवश्यमिदं प्रायश्चित्तमनुष्ठेयमिति बोधनाय निर्देशं स्तौति–ब्राह्मणाः कर्तारो द्विजाः वेदाः करणानि यज्ञाः कर्माणि पुरा पूर्वं प्रजापतिना तेन निर्देशेन विहिता निर्मिताः।तथा च कर्त्रादीनां त्रयाणामपि कारणभूतत्वादस्य वैगुण्यनिवारकत्वं युक्तमेवेति भावः ॥ २३ ॥

प० टी०–ननु चैवं विचार्यमाणे सर्वमपि यज्ञतपोदानादि राजसं तामसं वा विगुणत्वात्कृतमपि व्यर्थत्वमापद्येतेत्याशङ्क्य तस्य विगुणस्यापि सगुणत्वोपपादनप्रकारं दर्शयितुमाह–ॐमिति । ब्रह्मणः परमात्मनो निर्देशो नामव्यपदेशस्त्रिविधः स्मृतः। स कः? ॐतत्सदिति। एवं तेन त्रिविधेन ब्रह्मणा यज्ञकर्मकर्तारस्तथा वेदा विधिमार्गप्रवर्तकास्तथा यज्ञाः कर्मरूपाः पुरा पूर्वसृष्ट्यादौ विहिता निर्मिताः । तत्र ॐमिति ब्रह्मणो नाम । तदुक्तं छान्दोग्योपनिषत्सु–" अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथः"–तथा "ॐमित्येकाक्षरमुपासीतोम् " इति । तदुक्तम् ' नोद्गीथेन समं किंचिच्छोधकं जगति स्मृतम्। यं विनाम्नायवर्गोऽपि स्वकार्ये न प्रवर्तते ' इति । तथा सर्वानुक्रमकारः शाकलोऽपि ' प्रजापतिरोङ्कारः सर्वदैवत्यः पारमेष्ठ्यो ब्राह्मो दैव आध्यात्मिकः ' इति । भाष्यम्–प्रजापतिर्देवता ॐमिति शब्दः सर्वदेवतास्वभिधायकत्वेन सर्वदैवत्यः परमोत्कृष्टस्थाने तिष्ठतीति पारमेष्ठ्यो ब्राह्मो ब्रह्मदैवत्य आध्यात्मिकशरीरवर्तिप्रत्यगात्मनोऽभिधायको वेति। तथा ब्राह्मणेऽप्याम्नातम् " तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरन् तदेतदोम् " इति । भाष्यम्–' तदेव शुक्रं तद्ब्रह्म ' इत्यादिश्रुतेः। शुक्राणि शबलब्रह्माणि हिरण्यगर्भादीन्यभितोऽतपन् तपश्चक्रुः।

तेभ्योऽभितस्तप्तेभ्यस्तपः कुर्वाणेभ्यः सकाशाद् ये वर्णा अजायन्तेति स्पष्टम्। तथा च ॐमिति नामनिर्देशेन वेदा विहिताः, तदित्यनेन ब्राह्मणाः, सदित्यनेन यज्ञाः ॥ २३ ॥

रा० टी०—अफलाकाङ्क्षिभिरित्यादिना पूर्वं यज्ञतपोदानानां सात्त्विकत्वादिहेतवोऽसाधारणधर्मा उक्ताः। साधारणांस्तु वक्तुमनेककर्तृकचरितानुवादरूपपुराकल्पाख्यार्थवादमाह—ॐमित्यादिना। निर्दिश्यते अनेनेति निर्देशो नाम ब्रह्मणः त्रिविधः स्मृतः। ॐतं प्रविष्टमाश्रितम् इति यावत्। जगद्यत्र परे इति वा। ईश्वरो वा जगति प्रोतः प्रविष्ट इति वा व्युत्पत्त्या ॐमिति नाम हरेः। अवरक्षणकान्तिगतिप्रवेशेत्याद्यर्थस्यावतेष्टि-लोपश्चेतिसूत्रेण मन्प्रत्ययः। तस्य टिलोपे ज्वरत्वरेत्यूठि सार्वधातुक इति गुणे च ॐमिति रूपसिद्धेः। गुणैस्ततत्त्वाद्वा तदित्यस्य परोक्षवाचित्वाद्ब्रह्मणश्च वेदैकवेद्यतया परोक्षत्वात्तदिति नाम। निर्दोषसर्वशुभगुण-पूर्णत्वात्सदिति नामेति ज्ञेयम्। तेन ब्रह्मणा ब्राह्मणादयः पुरा सृष्टिकाले विहिताः सृष्टाः। वेदानां विधानं नाम अभिव्यक्तिर्ज्ञेया ॥ २३ ॥

**तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः ॥**
**प्रवर्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम् ॥ २४ ॥**

**त० टी०—एवं ब्राह्मणाद्युत्तमसृष्टौ तच्छ्रेयोहेतुतया समुदितस्य त्रिविधस्य ब्रह्मनाम्नः समन्वय उक्तः। इदानीमभीष्टसिद्ध्यर्थं कार्येषु त्रयाणामोङ्काराद्यवयवानां समन्वयप्रकार उच्यते। तत्रादावों-कारस्यान्वयमाह—तस्मादिति। यस्मादयं सर्ववेदादिभूतः परब्रह्मवाचकस्तस्मादोमित्युदाहृत्योच्चार्य ब्रह्मवादिनां त्रैवर्णिकानामोंकारोच्चारणानन्तरं विधानोक्ता विधिना दर्शिता यज्ञदानतपःक्रियाः सततं सर्वदा प्रवर्तन्ते प्रकर्षेण दोषाभावेन संपद्यन्ते ॥ २४ ॥**

म० टी०—इदानीमकारोकारमकारव्याख्यानेन तत्समुदायोङ्कारव्याख्यानवदोङ्कारतच्छब्दसच्छब्दव्या-ख्यानेन तत्समुदायरूपं ब्रह्मणो निर्देशं स्तुत्यतिशयाय व्याख्यातुमारभते चतुर्भिः। तत्र प्रथममोङ्कारं व्याचष्टे—तस्मादिति। यस्मात् "ॐमिति ब्रह्म" इत्यादिषु श्रुतिष्वोमिति ब्रह्मणो नाम प्रसिद्धं तस्मा-दोमित्युदाहृत्य ओङ्कारोच्चारणानन्तरं विधानोक्ताः विधिशास्त्रबोधिता ब्रह्मवादिनां वेदवादिनां यज्ञदानतपः-क्रियाः सततं प्रवर्तन्ते प्रकृष्टतया वैगुण्यराहित्येन वर्तन्ते। यस्यैकावयवोच्चारणादप्यवैगुण्यं किं पुनस्तस्य सर्वस्योच्चारणादिति स्तुत्यतिशयः ॥ २४ ॥

शं० टी०—इममेवार्थं प्रतिपादयन्नादौ प्रणवस्य विनियोगमाह—तस्मादिति। यस्मादेतन्नामत्रितयं ब्रह्म-वाचकत्वेन वेदादिजनकत्वेन च पवित्रतममिति मतं तस्मादोमित्युदाहृत्य कर्मारम्भे तदन्ते चोङ्कारमुच्चार्य ब्रह्मवादिनां ब्रह्म वेदांस्तदर्थं च वेदितुं शीलमेषामस्ति ते ब्रह्मवादिनो वेदवेदार्थपारगा ब्राह्मणास्तेषां ब्रह्मवा-दिनां विधानोक्ताः विध्युक्ता यज्ञदानतपःक्रियाः सर्वाः क्वचिदश्रद्धादिनाङ्गवैकल्येऽप्याद्यन्तयोरोमित्युच्चा-रणेन सततं यथोक्तलक्षणैः संपूर्णं यथा तथा प्रवर्तन्ते प्रकर्षेण वर्तन्ते प्रवर्तन्ते। प्रकृष्टाः साङ्गाः सात्त्विका भवन्तीत्यर्थः ॥ २४ ॥

श्री० टी०—इदानीं प्रत्येकमोंकारादीनां प्राशस्त्यं दर्शयिष्यन्नोङ्कारस्य तावदाह—तस्मादिति। यस्मा-देवं ब्रह्मणो निर्देशस्तस्मादोमित्युदाहृत्य उच्चार्य कृता वेदवादिनां यज्ञाद्याः शास्त्रोक्ताः क्रियाः सततं सर्वदा अङ्गवैकल्येऽपि प्रकर्षेण वर्तन्ते सगुणा भवन्तीत्यर्थः ॥ २४ ॥

स० टी०—अथोङ्कारादिनामास्य श्रीमद्भगवतो हरेः ॥ व्याख्यातुं वेदनिर्णीतनिर्देशस्तुतये पुनः ॥ १ ॥ आरभतेऽत्र भगवानोमित्यादौ वदत्यजः ॥ ओमिति ब्रह्मणो नाम प्रसिद्धं यत आगमे ॥ २ ॥ तस्मादा-

मित्युदाहृत्य विधिशास्त्रेण बोधिताः ॥ प्रकृष्टत्वेन वर्तन्ते यज्ञदानतपःक्रियाः ॥ ३ ॥ अङ्गवैगुण्यराहित्यात्सततं वेदवादिनाम् ॥ यस्यैकावयवोच्चार्यमाणे वैगुण्यसंक्षयः ॥ ४ ॥ किं पुनस्तस्य सर्वस्योच्चारणादिति संस्तुतिः ॥ ५ ॥ अहो हरेर्नाम महत्फलं श्रुतौ श्रुतं सदोंकार इति स्मृतं हृदि ॥ पुनाति यज्ञादिकृतं ह्यलक्षणं लुनाति पापौघमुदीरणात्सकृत् ॥ ६ ॥ २४ ॥

भा० टी०--तस्मादिति । यस्मादों तत्सदिति ब्रह्मणो निर्देशो यस्माच्च ब्राह्मणादीनां कारणं तस्मादोमित्युदाहृत्योच्चार्य ब्रह्मवादिनां वेदवादिनां यज्ञदानतपःक्रियाः विधानोक्ताः शास्त्रचोदिताः सततं सर्वदा प्रवर्तन्ते ॥ २४ ॥

प० टी०-यज्ञोपक्रान्तमर्थमाह-तस्मादिति । यस्मादेवं ब्रह्मणो निर्देशस्तस्मात्कारणादोमित्युदाहृत्योच्चार्य वेदविधानोक्तब्रह्मवादिनां मोक्षार्थिनां यज्ञदानतपसां क्रियाः सततं निरन्तरं प्रवर्तन्ते ॥ २४ ॥

रा० टी०-तस्मादिति । तस्मादोमित्यस्य भगवन्नामत्वात् ॐमित्युदाहृत्य ॐकारमुच्चार्य ब्रह्मवादिनां सततं यज्ञादिक्रियाः विधानोक्ताः विध्युक्ताः प्रवर्तन्ते । एतेनोक्तोंकारार्थधीपूर्वकं ॐमित्युच्चार्य ब्राह्मणैः सह विध्युक्तदिशाऽनुष्ठानं यज्ञादेः सात्त्विकत्वे हेतुरुक्तो भवति ॥ २४ ॥

**तदित्यनभिसंधाय फलं यज्ञतपःक्रियाः ॥**
**दानक्रियाश्च विविधाः क्रियन्ते मोक्षकाङ्क्षिभिः ॥ २५ ॥**

**त० टी०-एवं फलानुसंहितकर्मणामोंकारोच्चारणपूर्वकं साफल्यमुक्तमिदानीं निष्कामाणां मुमुक्षूणां यज्ञादिषु तदितिशब्दान्वयमाह-तदिति । पूर्वोक्तं श्रुत्यादिसिद्धं ब्रह्मणो नाम उदाहृत्येति पूर्वश्लोकादाहृत्य योजनीयं, तदुच्चार्य फलमनभिसंधाय फलाकाङ्क्षां विहाय मोक्षकाङ्क्षिभिर्वेदान्वितैर्यज्ञदानतपःक्रियाश्च विविधाः क्रियन्ते, केवलं तच्छब्दनिर्दिष्टपरमात्मोद्देशेन निर्वर्त्यन्ते इत्यर्थः ॥ २५ ॥**

म० टी०-द्वितीयं तच्छब्दं व्याचष्टे-तदिति तत्त्वमसीत्यादिश्रुतिप्रसिद्धम् । तदिति ब्रह्मणो नामोदाहृत्य फलमनभिसंधायान्तःकरणशुद्ध्यर्थं यज्ञतपःक्रिया दानक्रियाश्च विविधा मोक्षकाङ्क्षिभिः क्रियन्ते तस्मादतिप्रशस्तमेतत् ॥ २५ ॥

शं० टी०-एवमोंकारस्य कर्मसाद्गुण्यसंपादने विनियोगमुक्त्वा तत्पदस्य विनियोगमाह-तदितीति । उदाहृत्येति पदं पूर्वोक्तमनुवर्तते । मोक्षकाङ्क्षिभिर्मोक्षैककामैः । एतेन पूर्वोक्तानां कामित्वं सूचितम् । मुमुक्षुभिर्ब्राह्मणैः फलं कर्मजन्यमनभिसंधाय संकल्पाननपेक्ष्य चेश्वरार्पणबुद्ध्या चित्तशुद्धये कर्मारम्भादौ तदिति पदमुदाहृत्य समुच्चार्य यज्ञदानतपःक्रियाः श्रौतादयो यज्ञक्रियाः, शारीरादयस्तपःक्रियाः, कन्यागवादिभेदेन विविधा दानक्रियाश्च क्रियन्ते । श्रद्धाद्यङ्गलोपे सति तत्पदप्रयोगेन सगुणाः क्रियन्त इत्यर्थः ॥ २५ ॥

श्री० टी०-किंच द्वितीयं नाम प्रस्तौति—तदिति । तदित्युदाहृत्येति पूर्वस्यानुषङ्गः । तदित्युदाहृत्य शुद्धचित्तैर्मोक्षकाङ्क्षिभिः पुरुषैः फलाभिसंधिमकृत्वा यज्ञाद्याः क्रियाः क्रियन्ते अतश्चित्तशोधनद्वारेण फलसंकल्पत्याजनेन मुमुक्षुत्वसंपादकत्वात्तच्छब्दनिर्देशः प्रशस्त इत्यर्थः ॥ २५ ॥

स० टी०-तदिति ब्रह्मणो नाम प्रसिद्धं तत्त्वमादिके ॥ वेदवाक्ये समुच्चार्यानभिसंधाय तत्फलम् ॥ १ ॥ अन्तःकरणशुद्ध्यर्थं यज्ञदानतपःक्रियाः ॥ क्रियन्ते मोक्षमिच्छद्भिः प्रशस्ततममेव तत् ॥ २ ॥ श्रुतौ तदित्येव मुकुन्दनाम तत्परोक्षरीत्या परिवर्णितं परम् ॥ मुमुक्षुभिर्ध्येयमनन्यचेतसा तथैव वेद्यं भवमुक्तये धिया ॥ ३ ॥ २५ ॥

भा० टी०-ओमितिनाम्नो विनियोगमुक्त्वा तदित्यस्य विनियोगमाह-तदिति । फलमनभिसंधाय

मोक्षकाङ्क्षिभिः मुमुक्षुभिः यज्ञतपःक्रिया दानक्रियाश्च विविधाः क्षेत्रहिरण्यप्रदानादिलक्षणाः तदिति ब्रह्माभिधानमुच्चार्य क्रियन्ते निर्वर्त्यन्ते ॥ २५ ॥

प० टी०—अथ द्वितीयनामनिर्देशं स्तौति—तदिति । तदित्युदाहृत्येति पूर्वस्यानुषङ्गः । नामनिर्देशमुच्चार्य चित्तशुद्धयर्थं प्रवृत्तैर्मोक्षकाङ्क्षिभिः फलमनभिसंधाय यज्ञतपःक्रियास्तथा दानक्रियाश्च क्रियन्ते ॥ २५ ॥

रा० टी०—किंच—तदिति । तत्परोक्षं फलं स्वर्गाद्यनभिसंधाय मम स्यादित्यनिच्छन् । तथा तत् वेदैकगम्यतया परोक्षभूतं ब्रह्म अभिसंधाय ममास्पदं स्यादितीच्छन्यज्ञोऽग्निहोत्रादि तपः क्रियाः प्रागुक्तशारीरादितपोरूपक्रियाः दानक्रियाश्च विविधाः मोक्षकाङ्क्षिभिः क्रियन्त इत्युक्त्या वेदैकवेद्यतया तत्पदोक्तब्रह्मोद्देशेनेतरफलानुद्देशेन च क्रियमाणत्वरूपधर्मान्तरमपि यज्ञादेः सात्त्विकत्वादिहेतुरुक्तो भवति । तदिति ब्रह्मोद्दिश्य यज्ञादेः करणाच्च ब्रह्मणस्तदिति नामेति चोक्तं भवति ॥ २५ ॥

**सद्भावे साधुभावे च सदित्येतत् प्रयुज्यते ॥**
**प्रशस्ते कर्मणि तथा सच्छब्दः पार्थ युज्यते ॥ २६ ॥**

**त० टी०—इदानीं सच्छब्दान्वयप्रकारमाह—सद्भाव इति द्वाभ्याम् । सद्भावे वस्तुनोऽविद्यमानताशङ्काव्यावृत्तिः सद्भावस्तस्मिन्, तथा साधुभावे च असद्वृत्तत्वशङ्कायां सद्वृत्तत्वख्यापनं साधुभावस्तस्मिन्, सदित्येतत् श्रुतिस्मृतिसिद्धं ब्रह्मणो वाचकं पदं लोकवेदयोः प्रयुज्यते शिष्टैः । तथा प्रशस्ते माङ्गलिके विवाहोत्सवादौ कर्मणि सदिदं कर्मेति सच्छब्दो हे पार्थ प्रयुज्यते इत्यर्थः ॥२६॥**

म० टी०—तृतीयं सच्छब्दं व्याचष्टे द्वाभ्याम्—सद्भाव इति । "सदेव सोम्येदमग्र आसीत्" इत्यादिश्रुतिप्रसिद्धं सदित्येतद् ब्रह्मणो नाम सद्भावे अविद्यमानत्वशङ्कायां विद्यमानत्वे साधुभावे च असाधुत्वशङ्कायां साधुत्वे च प्रयुज्यते शिष्टैः । तस्माद्वैगुण्यपरिहारेण यज्ञादेः साधुत्वं तत्फलस्य च विद्यमानत्वं कर्तुं क्षममेतदित्यर्थः । तथा सद्भावसाधुभावयोरिव प्रशस्ते अप्रतिबन्धेन आशुसुखजनके माङ्गलिके कर्माणि विवाहादौ सच्छब्दो हे पार्थ युज्यते प्रयुज्यते । तस्मादप्रतिबन्धेनाशु फलजनकत्वं वैगुण्यपरिहारेण यज्ञादेः समर्थमेतन्नामेति प्रशस्ततरमेतदित्यर्थः ॥ २६ ॥

शं० टी०—एवमोन्तच्छब्दयोर्विनियोगमुक्त्वाऽथ सच्छब्दस्य विनियोगमाह—सद्भाव इति द्वाभ्याम् । सद्भावे विद्यमानस्य वस्तुनोऽस्तित्वं सद्भावस्तस्मिन् सद्भावे देवदत्तस्य पुत्रोऽस्तीत्येतस्मिन्नर्थे पण्डितैः सदित्येतत्पदं प्रयुज्यते । यद्वा सतो ब्रह्मणो भावः सद्भावस्तस्मिन् सर्वस्य ब्रह्मभावे विवक्षिते सदिदमिति सच्छब्दः प्रयुज्यते । साधुभावे च सद्वृत्तता साधुभावस्तस्मिन् विवक्षिते साधोः साधुभावे सद्भिः सन्नयमिति सच्छब्दः प्रयुज्यते । तथाच कर्मणः प्रशस्तत्वे विवक्षिते सदिदं कर्मेति सच्छब्दः प्रयुज्यत इत्यर्थः ॥२६॥

श्री० टी०—सच्छब्दस्य प्राशस्त्यमाह—सद्भाव इति द्वाभ्याम् । सद्भावे अस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्यस्मिन्नर्थे साधुभावे च साधुत्वे देवदत्तस्य पुत्रादि श्रेष्ठमित्यस्मिन्नर्थे सदित्येतत्पदं प्रयुज्यते । प्रशस्ते माङ्गलिके विवाहादिकर्मणि च सदिदं कर्मेति सच्छब्दो युज्यते प्रयुज्यते संगच्छत इति वा ॥ २६ ॥

स० टी०—सदेवेतिश्रुतौ नाम सदिति ब्रह्मणो हरेः ॥ तदसत्यत्वशङ्कायां सद्भावे सत्प्रयुज्यते ॥ १ ॥ तथा साधुत्वशङ्कायां साधुभावे प्रयुज्यते ॥ वैगुण्यपरिहारेण यज्ञादेः साधुतां क्षमम् ॥ २ ॥ प्रकर्तुं तत्फलस्यापि विद्यमानत्वमेव सत् ॥ प्रशस्ते च विवाहादौ सच्छब्दोऽतः प्रयुज्यते ॥ ३ ॥ सर्वमङ्गलहेतुत्वाद्यतो माङ्गलिकेऽखिले ॥ तस्मादप्रतिबन्धेन सुखहेतुतयाऽसकृत् ॥ ४ ॥ उच्चार्यमाणमाधत्ते फलं सन्नाम तद्धरेः ॥ अहो श्रीमद्धरेर्नाममहिमायं निरङ्कुशः ॥५॥ सदेव सौम्येदमितिश्रुतौ श्रुतं विना हरिं नैव विकारनामनी ॥ सदित्युदीर्यैव हरिं सुधीर्भजेदसत्सु सत्ताप्रदमध्वरादिषु ॥ ६ ॥ २६ ॥

भा० टी०–तृतीयनाम्नो विनियोगमाह द्वाभ्याम्–सदिति। सतः सद्भावे यथाऽविद्यमानस्य पुत्रस्य जन्म तथा साधुभावेऽसद्वृत्तस्यासाधोः सद्वृत्तिता साधुभावस्तस्मिन्साधुभावे च सदित्येतत् ब्रह्मणोऽभिधानं प्रयुज्यतेऽभिधीयते। तथा प्रशस्ते कर्मणि विवाहादौ च सच्छब्दः प्रयुज्यते। पृथापुत्रे त्वयि पार्थशब्दो यथेति सूचयन्नाह–पार्थेति॥ २६॥

प० टी०–अथ सच्छब्दस्य प्राशस्त्यमाह–सद्भाव इति। सद्भावेऽस्तित्वे देवदत्तस्य पुत्रादिकमस्तीत्येतस्मिन्नर्थे साधुभावे च साधुत्वे देवदत्तस्य पुत्रादि श्रेष्ठमित्येतस्मिन्नर्थे सदित्येतत्पदं प्रयुज्यते। तथा प्रशस्ते विवाहादिमाङ्गलिके कृत्ये सच्छब्दो युज्यते॥ २६॥

रा० टी०–किंच। साधुगुणोपेततया सच्छब्दार्थभगवज्ज्ञानपूर्वकतयाऽनुष्ठानमपि सात्त्विकत्वहेतुधर्मान्तरं यज्ञादेरितिभावेन सच्छब्दार्थमाह–सद्भाव इति। सद्भावे असतः सत्तारूपप्रजननार्थे साधुभावे साधुत्वे। प्रशस्ते कर्मणि शुभकर्मणि चेत्यर्थः॥ २६॥

**यज्ञे तपसि दाने च स्थितिः सदिति चोच्यते॥**
**कर्म चैव तदर्थीयं सदित्येवाभिधीयते॥ २७॥**

त० टी०–तस्मात्–यज्ञ इति। यज्ञे यज्ञकर्मणि या स्थितिः तपसि च या स्थितिर्दाने च या स्थितिर्निष्ठा सा सदित्युच्यते। सदसतोर्विनिर्णयं संगृह्याह–कर्म चैवेति। यस्य चैतन्नामत्रयं स परब्रह्मभूतो भगवानेवार्थः प्रयोजनमुद्देश्यो यस्य तत् तदर्थीयं कर्म पूजोपहारजन्मोत्सवाद्यङ्गतया तुलसीपुष्पाद्यवचयतदवरोपणमन्दिरनिर्माणमार्जनोपलेपनचित्रकरणविविधव्यञ्जनपाककरणगीतवाद्यनृत्यप्रदक्षिणप्रणामादिसर्वं सदित्येवाभिधीयते, सतः परमात्मनः प्राप्तिहेतुत्वात्। अत्रावधारणद्वयं तत्रैकमयोगव्यवच्छेदार्थकम्। द्वितीयमन्ययोगव्यवच्छेदार्थकं, तदर्थीयं कर्म सन्नेति न अपितु सदेव। तदर्थीयव्यतिरिक्तं कर्म सन्नेत्यर्थः। "यथेह कर्मचितो लोकः क्षीयते एवमेवामुत्र पुण्यचितो लोकः क्षीयते" इति श्रुत्या "त्रैविद्या मां सोमपाः पूतपापा" इत्युपक्रम्य "क्षीणे पुण्ये मर्त्यलोकं विशन्ति एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते" इत्यादिना भगवता स्वयमपि देवादिभक्तानां स्वर्गादिफलकर्मणां क्षयिष्णुत्वाभिधानात्। भगवदर्थस्य कर्मणस्तु 'मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि। सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादवाप्नोषि शाश्वतं पदमव्ययम्' इत्यादिना शाश्वताव्ययफलत्वप्रतिपादनात्। तदेवं भगवदर्थीयं यज्ञदानतपआद्यन्यदपि सर्वं कर्म परमात्माभिधानत्रयप्रयोगपूर्वकं सात्त्विकश्रद्धयाऽनुष्ठितं श्रेयस्करं भवतीति सिद्धम्॥ २७॥

म० टी०–यज्ञ इति। यज्ञे तपसि दाने च या स्थितिस्तत्परतयाऽवस्थितिर्निष्ठा सापि सदित्युच्यते विद्वद्भिः। कर्म चैव तदर्थीयं तेषु यज्ञदानतपोरूपेष्वर्थेषु भवं तदनुकूलमेव च कर्म। अथवा यस्य ब्रह्मणो नामेदं प्रस्तुतं तदेवार्थो विषयो यस्य तदर्थं शुद्धब्रह्मज्ञानं तदनुकूलं कर्म तदर्थीयं, भगवदर्पणबुद्ध्या क्रियमाणं कर्म वा तदर्थीयं सदित्येवाभिधीयते। तस्मात्सदिति नाम कर्मवैगुण्यापनोदनसमर्थं प्रशस्ततरम्। यस्यैकैकोऽवयवोऽप्येतादृशः किं वक्तव्यं तत् समुदायस्योंतत्सदिति निर्देशस्य माहात्म्यमिति संपिण्डितार्थः॥ २७॥

शं० टी०–किंच–यज्ञ इति। यज्ञे श्रौतादौ तपसि शारीरादौ दाने च कन्यादानादौ या स्थितिरवस्थानं सा च विद्वद्भिः सदित्युच्यते। यज्ञादीनामश्रद्धादिदोषोपपत्तौ साधुत्वसिद्धये सच्छब्दः प्रयुज्यत इत्यर्थः। तदर्थीयम्–अत्र तच्छब्देन लोकशास्त्रप्रसिद्धः परमेश्वरो गृह्यते। तदर्थीयं परमेश्वरार्थकं कर्म च

१ तदर्थोऽयमिति पाठः।

सदित्येवाभिधीयते। अश्रद्धादिदोषप्राप्तौ यज्ञादीनां साद्गुण्याय ॐ तत्सदिति ब्रह्मणो नामत्रयं प्रयुज्यत इत्युक्त्या सात्त्विक्या श्रद्धयैव मुमुक्षुभिर्यज्ञदानादि कर्म नियमेन कर्तव्यमिति पर्यवसितं नान्यथेत्यर्थः ॥ २७ ॥

**श्री० टी०**—किंच—यज्ञ इति। यज्ञादिषु च या स्थितिस्तात्पर्येणावस्थानं तदपि सदित्युच्यते। यस्य चेदं नामत्रयं स एव परमात्मा अर्थः फलं यस्य तत्तदर्थं कर्म पूजोपहारगृहाङ्गणपरिमार्जनोपलेपरङ्गमालिकादिक्रिया तत्सिद्धये यदन्यत्कर्म क्रियते उद्यानशालिक्षेत्रधनार्जनादिविषयं तत्कर्म तदर्थीयम्। तच्चातिव्यवहितमपि सदित्येवाभिधीयते। यस्मादेवमतिप्रशस्तमेतन्नामत्रयं तस्मादेतत्सर्वकर्मसाद्गुण्यार्थं कीर्तयेदिति तात्पर्यार्थः। अत्र चार्थवादानुपपत्त्या विधिः कल्प्यते 'विधेयं स्तूयते वस्तु' इति न्यायात्। अपरे तु प्रवर्तन्ते विधानोक्ताः क्रियन्ते मोक्षकाङ्क्षिभिरित्यादिवर्तमानोपदेशः समिधो यजतीत्यादिवद्विधितया परिणमनीय इत्याहुः। तत्तु सद्भावे साधुभावे चेत्यादिषु प्राप्तार्थत्वान्न संगच्छत इति पूर्वोक्तक्रमेण विधिकल्पनैव ज्यायसी ॥ २७ ॥

**स० टी०**—यज्ञे तपसि दाने च या निष्ठा तत्परात्मिका ॥ सा सदित्युच्यतेऽभिज्ञैस्तेष्वर्थेषु मखादिषु ॥ १ ॥ भवन्तदनुकूलं च कर्म सच्चाभिधीयते ॥ अथवा यस्य नामेदं ब्रह्मणः प्रस्तुतं परम् ॥ २ ॥ तदर्थो विषयो यस्य ब्रह्मज्ञानस्य तत्तथा ॥ ब्रह्मार्पणधिया कर्म क्रियमाणं विशुद्धये ॥ ३ ॥ तदर्थीयं सदित्येवं प्रशस्तमभिधीयते ॥ यस्यैकैकोऽप्यवयवः प्रशस्तो हीदृशो मतः ॥ ४ ॥ किं पुनस्तस्य सर्वस्य वाच्यं माहात्म्यमद्भुतम् ॥ ५ ॥ यज्ञादौ समुदीरणाद्भगवतो नामोन्तदित्यादिकं साद्गुण्यं कुरुते यदङ्गविकलं ध्येयं सदोपासकैः ॥ ज्ञेयं वेदविदां रहस्यमखिलं नामार्थतो यत्परं तच्छ्रीकृष्णमहोभिधं मम मतौ भूयाद्वचः स्वार्थतः ॥ ६ ॥ २७ ॥

**भा० टी०**—यज्ञ इति। यज्ञे यज्ञकर्मणि या स्थितिस्तथा तपसि या स्थितिः दाने च या स्थितिः सा च विद्वद्भिः सदित्युच्यते। तदर्थीयं यज्ञदानतपोर्थीयम् अथवा यस्याभिधानत्रयं प्रकृतं तदर्थीयमीश्वरार्थीयमित्येतत्सदित्येवाभिधीयते। तदेतद्यज्ञतपआदि कर्म असात्त्विकं विगुणमभक्तिपूर्वकमपि ब्रह्मणोऽभिधानत्रयेण सात्त्विकं सगुणं सभक्तिकं संपादितं भवत्यतोऽवश्यमों तत्सदिति ब्रह्मणोऽभिधानत्रयमुदाहृत्य यज्ञादि प्रवर्तनीयमिति प्रकरणार्थः ॥ २७ ॥

**प० टी०**—किं च—यज्ञ इति। यज्ञे तपसि दाने च स्थितिस्तात्पर्येणावस्थानं तदपि सदित्युच्यते। यस्य चेदं नामत्रयं स एव परमात्मेत्यर्थः। तथा तदर्थीयं यज्ञदानतपोनिमित्तं पूजोपहारगृहाङ्गणपरिमार्जनोपलेपनध्वजपताकादि तथोद्यानक्षेत्रधनार्जनादि यत्कर्म क्रियते तदपि सदित्येवाभिधीयते। यस्मादेवमतिप्रशस्तं नामत्रयं तस्मादेतत्सर्वकर्मसाद्गुण्यार्थं कीर्तयेदिति तात्पर्यार्थः। नायमर्थवादः, किं तु ब्रह्मणो नामनिर्देशस्यातिप्राशस्त्याद्विधिरेव कल्प्यते ॥ २७ ॥

**रा० टी०**—भगवन्निष्ठापूर्वकत्वमपि कर्मणः सात्त्विकत्वहेतुभूतं धर्मान्तरमितिभावेन निष्ठापि सच्छब्दार्थ इत्याह—यज्ञ इति। स्थितिर्निष्ठा। भगवानेभिरवश्यं फलं प्रयच्छतीतिबुद्धिरिति यावत्। किंच भगवद्विषयतयाऽनुष्ठानमपि धर्मान्तरमिति भावेनाह—कर्मेति। तदर्थोऽयं सच्छब्दार्थभगवदर्थोऽयम् ॥ २७ ॥

**अश्रद्धया हुतं दत्तं तपस्तप्तं कृतं च यत् ॥**
**असदित्युच्यते पार्थ न च तत्प्रेत्य नो इह ॥ २८ ॥**

**इति श्रीभगवद्गीतासूपनिषत्सु श्रद्धात्रयविभागयोगो**
**नाम सप्तदशोऽध्यायः ॥ १७ ॥**

त० टी०–तदेतत्सर्वं श्रद्धयैवानुष्ठेयमिति द्रढयितुमश्रद्धया कृतस्य नैष्फल्यं वदन्नध्यायमुपसंहरति–अश्रद्धयेति । अश्रद्धया होमदानतपःकृतं यच्चान्यदपि लौकिकं वैदिकं कर्म कृतं तत्सर्वमसदित्युच्यते । हे पार्थ तदश्रद्धया कृतं न प्रेत्य परलोकेऽपूर्वाजनकत्वात् नो इह लोके यशःसुखकरं न भवति, सद्भिर्निन्दितत्वात् "श्रद्धापूतं वदान्यस्य हतमश्रद्धयेतरत्" इति स्मृतेः । तस्माद्राजसतामसमासुरं कर्म विहाय सात्त्विकश्रद्धयैव सर्वं कर्म भगवत्प्रीत्यर्थमनुष्ठितमन्तःकरणशोधनहेतुतया ज्ञानभक्तिद्वारेण मोक्षहेतुर्भवतीतीह दर्शितम् ॥ २८ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां सप्तदशोऽध्यायः ॥ १७ ॥

म० टी०–यद्यालस्यादिना शास्त्रीयं विधिमुत्सृज्य श्रद्धानतयैव वृद्धव्यवहारमात्रेण यज्ञतपोदानादि कुर्वतां प्रमादाद्वैगुण्ये प्राप्ते ॐ तत्सदिति ब्रह्मनिर्देशेन तत्परिहारस्तर्ह्यश्रद्धानतया शास्त्रीयं विधिमुत्सृज्य कामकारेण यत्किंचिद्यज्ञादि कुर्वतामसुराणामपि तेनैव वैगुण्यपरिहारः स्यादिति कृतं श्रद्धया सात्त्विकत्वहेतुभूतयेत्यत आह–अश्रद्धयेति । अश्रद्धया यद्धुतं हवनं कृतमग्नौ दत्तं यत् ब्राह्मणेभ्यः यत्तपस्तप्तं यच्चान्यत्कर्म कृतं स्तुतिनमस्कारादि तत्सर्वमश्रद्धया कृतमसत् असाध्वित्युच्यते । अत ओंतत्सदिति निर्देशेन न तस्य साधुभावः शक्यते कर्तुं सर्वथा तदयोग्यत्वाच्छिलाया इवाङ्कुरः, तत्कस्मादसदित्युच्यते शृणु हे पार्थ ! चो हेतौ । यस्मात्तदश्रद्धाकृतं न प्रेत्य परलोके फलति विगुणत्वेनापूर्वाजनकत्वात्, नो इह नापीह लोके यशः साधुभिर्निन्दितत्वात्, अत ऐहिकामुष्मिकफलविकलत्वादश्रद्धाकृतस्य सात्त्विक्या श्रद्धयैव सात्त्विकं यज्ञादि कुर्यादन्तःकरणशुद्धये, तादृशस्यैव श्रद्धापूर्वकस्य सात्त्विकस्य यज्ञादेर्दैवाद्वैगुण्यशङ्कायां ब्रह्मणो नामनिर्देशेन साद्गुण्यं संपादनीयमिति परमार्थः । श्रद्धापूर्वकमसात्त्विकमपि यज्ञादि विगुणं ब्रह्मणो नामनिर्देशेन सात्त्विकं सगुणं च संपादितं भवतीति भाष्यम् । तदेवमस्मिन्नध्याये आलस्यादिनाऽनादृतशास्त्राणां श्रद्धापूर्वकं वृद्धव्यवहारमात्रेण प्रवर्तमानानां शास्त्रानादरेणासुरसाधर्म्येण श्रद्धापूर्वकानुष्ठानेन च देवसाधर्म्येण किमसुरा अमी देवा वेत्यर्जुनसंशयाविषयाणां राजसतामसश्रद्धापूर्वकं राजसतामसयज्ञादिकारिणोऽसुराः शास्त्रीयज्ञानसाधनानधिकारिणः सात्त्विकश्रद्धापूर्वकं सात्त्विकयज्ञादिकारिणस्तु देवाः शास्त्रीयज्ञानसाधनाधिकारिण इति श्रद्धात्रैविध्यप्रदर्शनमुखेनाहारादित्रैविध्यप्रदर्शनेन भगवता निर्णयः कृत इति सिद्धम् ॥ २८ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपादशिष्यमधुसूदनसरस्वतीविरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां श्रद्धात्रयविभागयोगविवरणं नाम सप्तदशोऽध्यायः ॥ १७ ॥

शं० टी०–श्रद्धाविधुरस्य कर्मणो निष्फलत्वमाह–अश्रद्धयेति । अश्रद्धया श्रौते स्मार्ते च कर्मणि यदग्नौ हुतं यदन्नोदकादिकं ब्राह्मणेभ्यो दत्तं यच्छारीरादिलक्षणं तपस्तप्तं यदन्यत् स्तोत्रमन्त्रजपादिकं कर्म कृतं भवति तत्सर्वमसन्निष्फलमेव भवति । तदेव विस्पष्टयति–नचेति । शरीरादिबहुप्रयासेन कृतं भक्तिश्रद्धाविधुरं यत्सर्वं कर्म प्रेत्य परलोकसुखाय न भवति नो इह ऐहिकसुखाय च न भवति, श्रद्धावैधुर्यान्मन्त्रादिलोपाच्च, तत्कर्म देवा अपि नानुमन्यन्ते नैव च शिष्टा अप्यतः श्रद्धाशून्यं कर्म निष्फलमेवेत्यर्थः । नन्वश्रद्धया देयमिति विधिबलादश्रद्धया कृतमपि कर्म दानादिफलवदेव स्यादिति चेत्सत्यं, यद्यप्यश्रद्धया देयमिति श्रूयते तथापि "केवलाघो भवति केवलादी" इति केवलादिनो महापापिष्ठतमत्वप्राप्तौ तन्निवृत्तये त्वश्रद्धया देयमिति दयया श्रुत्योच्यते न तु विधीयते 'यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः । अध्वगः क्षीणवृत्तिश्च' इत्यादिषु भिक्षुकेष्वन्येषु वा दोषवत्सु सत्सु न तेषु श्रोत्रियस्य श्रद्धा जायते । तथापि गृहस्थैकशरणानां तेषां गत्यन्तराभावादश्रद्धयापि च दातव्यमेवेत्युच्यते । 'अश्रद्धया देयं

ह्रिया देयम्' इति । 'यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः । वर्तन्ते गृहिणं तद्वदाश्रित्येतर आश्रमाः' इति न्यायेन । सर्वाश्रमिणां गृहस्थैकशरणत्वाद्दानमेव गृहस्थस्येति गृहिणो दानैकप्रधानत्वस्मरणाच्च यथाकथंचिदर्थिभ्यो श्रद्धया वा ह्रिया वा भिया वाऽवश्यं दातव्यमिति दानस्यावश्यकरणीयत्वं सूच्यते अश्रद्धया देयमित्यादिना । ततो नायं विधिः । अन्यथा 'अश्रद्धया देयम्' 'श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः' 'श्रद्धां कामस्य मातरम्' इति सर्वस्यापि कर्मणः श्रद्धाप्रधानत्वविधिवैयर्थ्यप्रसङ्गात् । तस्माच्छ्रौतं स्मार्तं च कर्म सर्वं श्रद्धयैव कर्तव्यमिति सिद्धम् ॥ २८ ॥

इतिश्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यां सप्तदशोऽध्यायः ॥ १७ ॥

**श्री० टी०**—इदानीं सर्वकर्मसु श्रद्धयैव प्रवृत्त्यर्थमश्रद्धाकृतं सर्वं निन्दति—**अश्रद्धयेति** । अश्रद्धया हुतं हवनं, दत्तं दानं, तप्तं निर्वर्तितं तपः । यच्चान्यदपि कृतं कर्म तत्सर्वमसदित्युच्यते । यतस्तत्प्रेत्य लोकान्तरे न फलति विगुणत्वान्नो इह न चास्मिँल्लोके फलति अयशस्करत्वात् ॥ २८ ॥

रजस्तमोमयीं त्यक्त्वा श्रद्धां सत्त्वमयीं श्रितः ॥ तत्त्वज्ञानेऽधिकारी स्यादिति सप्तदशे स्थितम् ॥ १ ॥

इति सुबोधिन्यां टीकायां श्रीधरस्वामिविरचितायां श्रद्धात्रयविभागयोगविवरणं नाम सप्तदशोऽध्यायः ॥ १७ ॥

**स० टी०**—एवं यज्ञादिकं कर्म विगुणं ह्यपि सात्त्विकम् ॥ सच्छ्रद्धापूर्वकं ब्रह्मनामत्रयप्रयोगतः ॥ १ ॥ सद्गुणं भवतीत्येवं हरिणा समुदीरितम् ॥ इदानीं श्रद्धया हीनं सर्वं यागादि निष्फलम् ॥ २ ॥ भवतीत्यत एवादौ श्रीमद्भगवता स्वयम् ॥ प्रधानत्वेन सच्छ्रद्धा यज्ञदानादिकर्मसु ॥ ३ ॥ स्तूयते निन्द्यते सर्वं श्रद्धाहीनं मखादिकम् ॥ यत्कृतं हवनं वह्नौ दत्तं पात्रेभ्य एव यत् ॥ ४ ॥ अनुष्ठितं तपो यच्च कृतं स्तुत्यादि कर्म यत् ॥ अश्रद्धया च तत्सर्वमसाध्वित्युच्यते कृतम् ॥ ५ ॥ तदश्रद्धाकृतं यस्मान्नामुत्रेह फलत्यपि ॥ अङ्गवैगुण्यतोऽपूर्वाजनकत्वेन हेतुना ॥६॥ नापीहास्ति यशो लोके निन्दितत्वाच्च साधुभिः ॥ अतो मुमुक्षुभिः श्रद्धा संपाद्या सात्त्विकी तया ॥ ७ ॥ यज्ञादिकर्म कर्तव्यं चित्तशुद्ध्यात्मलब्धये ॥ ८ ॥ २८ ॥

श्रद्धात्रैविध्यमादौ सकलमखतपोदानसाद्गुण्यहेतो-
रोन्तत्सन्नाम चोक्तं श्रुतिविततफलं ब्रह्मविद्याप्तिहेतुः ॥
श्रद्धाहीनं विनिन्द्यं सकलमपि कृतं येन संप्रोक्तमित्थं
तं श्रीकृष्णं गुरूणामपि परमगुरुं भूरिभावैर्नतोऽस्मि ॥ १ ॥
रजस्तमोदुःखनिदानमारात्त्यक्त्वा समाश्रित्य गुणं विशुद्धम् ॥
हरेः पदाम्भोजयुगं सदैव ध्यात्वैव मोक्षो भवपाशबन्धात् ॥ २ ॥
तत्राप्यसामर्थ्यवतां जनानां यज्ञादि साद्गुण्यकरं हि विष्णोः ॥
नामत्रयं दोषगणापहं तत्प्रोक्तं मुमुक्षुः सततं भजेत ॥ ३ ॥
अनादिनिर्णीतमिदं मतं यत्सर्वेषु यज्ञादिषु नाम विष्णोः ॥
प्रधानमस्तीत्यत एतदेव स्मृत्वा विमुच्येत विकल्पजालात् ॥ ४ ॥

इति भावप्रकाशे श्रीसदानन्दविदा कृते ॥ श्रद्धात्रैविध्यबोधोऽयं पूर्तिं सप्तदशो गतः ॥
टीकाश्लोकसंख्या ॥ १३९ ॥ आदितष्टीकाश्लोकसंख्या ॥ ४६७० ॥

**भा० टी०**—तत्र सर्वत्रास्तिक्यलक्षणायाः श्रद्धायाः प्रधानतया सर्वं तथैव संपाद्यते यस्मात्तस्मादश्रद्ध-

या हुतं हव्यहवनं कृतं दत्तं च ब्राह्मणेभ्यो यत्तपस्तप्तं यच्चान्यत्कर्म स्तुतिनमस्कारादि कृतं तत्सर्वमसदित्युच्यते सत्प्राप्तिमार्गादास्तिक्यलक्षणाद्बाह्यत्वात् असत्त्वमेव प्रतिपादयति । न च तद्बह्वायासमपि प्रेत्य मृत्वा फलाय नापीह यशोरूपफलाय साधुभिर्निन्दितत्वात् । हुतमित्युक्त्या विहिते कर्मणि श्रद्धावानधिकारी प्रतिषिद्धे तु श्रद्धारहितोऽपीति बोधितम् । एतेन निषेधलङ्घिनो नास्तिकस्य प्रत्यवायाभावप्रसङ्गो निरस्तः । ननु "यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति" इति श्रुत्या श्रद्धया कृतं वीर्यवत्तरं चेत् श्रद्धारहितमपि वीर्यवदित्यर्थात् बोधितमिति कथं भगवता प्रोक्तमसदित्युच्यत इति । नैष दोषः । यतः श्रुतिस्थश्रद्धापदं भक्तिरूपश्रद्धापरं स्मृतिस्थं तु विश्वासात्मकश्रद्धापरम् । एवं च नास्तिक्यबुद्ध्या कृतं सर्वं निरर्थकमेवातो नास्तिक्यं श्रेयोर्थिभिः सर्वथैव हेयमिति भावः । पृथापुत्रस्य तव तु कदापि तन्नोचितमिति सूचयन्संबोधयति—पार्थेति ॥ २८ ॥

तदनेन सप्तदशाध्यायेन श्रद्धादित्रैविध्यं निरूपयता शास्त्रानभिज्ञानामपि सात्त्विकश्रद्धावतां राजसतामसाहारादिपरिवर्जनेन सात्त्विकाहारादिसेवया सत्त्वैकशरणानां प्राप्तमपि यज्ञादिवैगुण्यं ब्रह्मनामनिर्देशेन परिहरतां परिशुद्धबुद्धीनां श्रवणादिना ब्रह्मात्मसाक्षात्कारो भवतीति प्रदर्शितम् ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यबालस्वामीश्रीपादशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा विरचितायां गीताभाष्योत्कर्षदीपिकायां सप्तदशोऽध्यायः ॥ १७ ॥

प० टी०—अथाश्रद्धाकृतं सर्वं निन्दति—**अश्रद्धयेति** । असद्भावेऽश्रद्धया हुतं होमः, दत्तं दानं, तप्तं निर्वर्तितं तपः यच्चान्यदपि पूर्वोक्तवत्कृतं तत्सर्वमसदित्युच्यते । यतः प्रेत्य लोकान्तरे न फलमिति विगुणत्वात् । नेह चास्मिन् लोके फलति अयशस्करत्वात् । तस्माद्रजस्तमःप्रधानां श्रद्धां त्यक्त्वा सत्त्वमयीं श्रद्धां श्रयेदित्यध्यायतात्पर्यम् ॥ २८ ॥

अथाध्यायतात्पर्यम् ।

प्राक्संस्कारानुरूपं विधिविधुरधियः श्रद्धया संयजन्ते दानाहारक्रियाद्यैस्त्रिविधगुणवशात्तत्फलं ते लभन्ते । तद्वैगुण्यं निहन्तुं प्रभवति तदोंतत्सदेषा त्रिवर्णी तेन ब्रह्मार्पणं स्यादिदमिति दशमे सप्तयुक्ते निरुक्तम् ॥ १ ॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां

श्रद्धाविवेको नाम सप्तदशोऽध्यायः ॥ १७ ॥

रा० टी०—यज्ञादेः सात्त्विकत्वहेतुभूतधर्मानुक्त्वा तदन्यथात्वेऽपि हेतुभूतधर्मानाह—**अश्रद्धयेति** । भगवच्छ्रद्धाऽभावेनेत्यर्थः । हुतमित्यादौ शास्त्रानुसारेणेति योज्यम् । भगवच्छ्रद्धां विना शास्त्रानुसारेणानुष्ठितमपि यद्धोमादिकं तदसदेवोच्यते । तत्प्रेत्य न च, इह च नो । ऐहिकामुष्मिकपुमर्थप्रदं नेत्यर्थः । अतो भगवच्छ्रद्धाभक्त्यादिपूर्वकमेवानुष्ठितहोमादीनि इहामुत्रफलप्रदानीति श्रद्धैव प्रयोजिकेति सैव त्रिविधा भवति श्रद्धेत्यादिना प्राधान्येनोक्तेति भावः । वस्तुतस्तु श्रद्धाऽभावे शास्त्रानुसारित्वमेव नेति ज्ञेयम् ॥ २८ ॥

इति श्रीगीतार्थसंग्रहे राघवेन्द्रयतिकृते सप्तदशोऽध्यायः ॥ १७ ॥

---

## अथ अष्टादशोऽध्यायः।



**अर्जुन उवाच–संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम् ॥**
**त्यागस्य च हृषीकेश पृथक्केशिनिषूदन ॥ १ ॥**

त० टी०–अथेदानीमलसानामल्पबुद्धीनां मुमुक्षूणामेकेनैवाध्यायेन सम्यग्ज्ञातेन सर्वगीताध्यायार्थावगतये सर्वगीतार्थं संक्षिप्य वक्तुमयमध्याय आरभ्यते। तत्र पूर्वाध्यायान्ते "कर्म चैव तदर्थीयं सदित्येवाभिधीयते" इत्यनेन परब्रह्मार्थस्यैव कर्मणः सत्त्वमुक्तं; तेन कर्मफलस्यैव त्यागो न तु कर्मण इति सूचितम्, 'सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्' इत्यनेन द्वादशेऽध्यायेऽपि कर्मफलस्यैव त्याग उक्तः। पञ्चमे तु 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इत्यने कर्मसंन्यास उक्तः। एवं सर्वकर्मसंन्यासं फलमात्रत्यागेन कर्मानुष्ठानं च परस्परविरुद्धं मुमुक्षवे सर्वज्ञो भक्तवत्सलो भगवान्कथमुपदिशेत्। तस्मात्संन्यासत्यागयोः स्वरूपैक्यं भेदो वेति संदेहेन तयोस्तत्त्वबुभुत्सयाऽर्जुन उवाच–संन्यासस्येति। महाबाहो केशिनिषूदनेति संबोधनाभ्यां शत्रुसंहारार्थं महान्तौ बाहू यस्य स तथा। दुर्जयमहासुरस्य केशिनः संहारकस्त्वं भक्तस्य ममापि शत्रून्नाशयिष्यसीति सूचितम्। हे हृषीकेशेत्यनेन सर्वेन्द्रियेश ममान्तःसर्वसंशयनिवारणक्षमेदानीमिमं (मे) संशयं छिन्धीत्याह–संन्यासस्य। संन्यासशब्दार्थस्य तत्त्वं स्वरूपयाथात्म्यं वेदितुमिच्छामि। त्यागस्य च तत्त्वं स्वरूपयाथात्म्यं पृथग्वेदितुमिच्छामि। अत्र 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोके तु परान्तकाले परामृतात् परिमुच्यन्ति सर्वे।' 'न कर्मणा न प्रजया न धनेन त्यागेनैकेनामृतत्वमानशुः' इत्यादिश्रुतिषु संन्यासस्त्यागश्च मोक्षसाधनतया विहितः। तथा "सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी"। "सर्वकर्मफलत्यागं ततः कुरु यतात्मवान्" इति पूर्वं भवताऽपि द्वौ विहितौ। किमेतौ संन्यासत्यागशब्दौ भिन्नार्थौ? उतैकार्थौ? यदि भिन्नार्थौ तर्हि पृथक्त्वेन वक्तव्यौ। यद्येकार्थौ तर्हि तदवान्तरभेदनिमित्तं वक्तव्यम्। यथाऽहमसंदिग्धं तत्स्वरूपं जानीयां तथा विविच्य ब्रूहीत्यभिप्रायः ॥ १ ॥

म० टी०–पूर्वाध्याये श्रद्धात्रैविध्येनाऽऽहारयज्ञतपोदानत्रैविध्येन च कर्मिणां त्रैविध्यमुक्तं सात्त्विकानामादानाय राजसतामसानां च हानाय। इदानीं तु संन्यासत्रैविध्यकथनेन संन्यासिनामपि त्रैविध्यं वक्तव्यम्। तत्र तत्त्वबोधानन्तरं यः फलभूतः सर्वकर्मसंन्यासः स चतुर्दशेऽध्याये गुणातीतत्वेन व्याख्यातत्वान्न सात्त्विकराजसतामसभेदमर्हति। योऽपि तत्त्वबोधात्प्राक् तदर्थं सर्वकर्मसंन्यासस्तत्त्वबुभुत्सया वेदान्तवाक्यविचाराय भवति सोऽपि "त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन" इत्यादिना निर्गुणत्वेन व्याख्यातः। यस्त्वनुत्पन्नतत्त्वबोधानामनुत्पन्नतत्त्वबुभुत्सूनां च कर्मसंन्यासः "स संन्यासी च योगी च" इत्यादिना गौणो व्याख्यातस्तस्य त्रैविध्यसंभवात्तद्विशेषं बुभुत्सुः अर्जुन उवाच–संन्यासस्येति। अविदुषामनुपजातविविदिषाणां च कर्माधिकृतानामेव किंचित्कर्मपरिग्रहेण किंचित्कर्मपरित्यागो यः स त्यागांशगुणयोगात् संन्यासशब्देनोच्यते। एतादृशस्यान्तःकरणशुद्ध्यर्थमविद्वत्कर्माधिकारिकर्तृकस्य संन्यासस्य केनचिद्रूपेण कर्मत्यागस्य तत्त्वं स्वरूपं पृथक् सात्त्विकराजसतामसभेदेन वेदितुमिच्छामि। त्यागस्य च तत्त्वं वेदितुमिच्छामि। किं संन्यासत्यागशब्दौ घटपटशब्दाविव भिन्नजातीयार्थौ किं वा ब्राह्मणपरिव्राजकशब्दाविवैकजातीयार्थौ। यद्याद्यस्तर्हि त्यागस्य तत्त्वं संन्यासात्पृथक् वेदितुमिच्छामि। यदि द्वितीयस्तर्ह्यवान्तरोपाधिभेदमात्रं वक्त-

व्यम् । एकव्याख्यानेनैवोभयं व्याख्यातं भविष्यति । महाबाहो केशिनिषूदनेति संबोधनाभ्यां बाह्योपद्रवनिवारणस्वरूपयोग्यताफलोपधाने प्रदर्शिते । हृषीकेशेत्यन्तरुपद्रवनिवारणसामर्थ्यमिति भेदः । अत्यनुरागात्संबोधनत्रयम् । अत्रार्जुनस्य द्वौ प्रश्नौ कर्माधिकारिकर्तृकत्वेन पूर्वोक्तयज्ञादिसाधर्म्येण संन्यासशब्दप्रतिपाद्यत्वेन च गुणातीतसंन्यासद्वयसाधर्म्येण त्रैगुण्यसंभवासंभवाभ्यां संशयः प्रथमस्य प्रश्नस्य बीजम् । द्वितीयस्य तु संन्यासत्यागशब्दयोः पर्यायत्वात् कर्मफलत्यागरूपेण च वैलक्षण्योक्तेः संशयः बीजम् ॥१॥

शं० टी०—सात्त्विक्या श्रद्धया समन्वितस्य सात्त्विकैर्यज्ञतपोदानादिभिः परिशुद्धात्मन एव ब्राह्मणादेर्ज्ञानाधिकार इति सूचयितुं श्रद्धया यज्ञतपोदानादीनां हेयत्वोपादेयत्वविज्ञानाय तेषां सात्त्विकत्वादिभेदं च विभज्य सम्यग्दर्शयित्वाऽधुना त्यागसंन्यासशब्दयोरेकार्यत्वं काम्यनिषिद्धयोरेव त्याज्यत्वं नित्यानां तु यज्ञदानादीनां मियमेन कर्तव्यत्वं त्यागस्य सात्त्विकत्वादिभेदं नैष्कर्म्यसिद्धिलक्षणज्ञानस्य कर्मणश्च कर्तुश्च बुद्धेर्धृतेश्च सुखस्य च सात्त्विकत्वं राजसत्वं तामसत्वं च ब्राह्मणादीनां कर्माणि च तैः प्रसन्नान्तःकरणस्य ज्ञानं तद्वतो यतेर्ज्ञाननिष्ठां च परमात्मस्वरूपवेदनप्रकारं ब्रह्मप्राप्तिं चैवमादिकं सर्वस्य गीताशास्त्रस्य सर्वोपनिषदां चार्थं सर्वं संगृह्यैकत्र प्रतिपादयितुमष्टादशाध्याय आरभ्यते । तत्रादौ 'मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा' इति, 'ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्पराः, इति, 'संन्यासयोगयुक्तात्मा' इति च 'त्यक्त्वा कर्मफलासङ्गम्' इति, 'सर्वकर्मफलत्यागम्' इति च तत्र तत्र कर्मसंन्यासकर्मफलत्यागौ प्रतिपादितौ । कर्मफलत्यागेन कर्मानुष्ठानं कर्मसंन्यासं चोक्तं स्मृत्वा एकस्मिन्नेवाश्रमे तयोरनुष्ठानानुपपत्तिं मन्यमानस्तदनुष्ठानप्रकारं ज्ञातुमिच्छुरर्जुन उवाच—**संन्यासस्येति** । संन्यासस्य संन्यासशब्दार्थस्य त्यागस्य त्यागशब्दार्थस्य च, चः समुच्चयार्थः । पृथग्विभज्य तत्त्वं याथार्थ्यं निश्चितमर्थं त्वत्तो वेदितुमिच्छामि । मयि सर्वाणि कर्माणि संन्यस्येति, योगसंन्यस्तकर्माणमिति, सर्वकर्मफलत्यागमिति च तत्र तत्र त्वयोक्तयोः संन्यासत्यागशब्दयोः प्रत्येकमर्थविशेषं विज्ञातुमिच्छामि । हे केशिनिषूदन केशिनामानं दैत्यं निषूदितवानिति हे केशिनिषूदनेतिसंबुद्धिः । गृहमेधिविषये यथा ब्रह्मचर्यशब्दस्य यथा वाऽहिंसाशब्दस्य चार्थविशेषस्तथा संन्यासशब्दस्य त्यागशब्दस्य चार्थविशेषो वक्तव्य इत्यर्थः ॥ १ ॥

श्री० टी०—न्यासत्यागविभागेन सर्वगीतार्थसंग्रहम् ॥ स्पष्टमष्टादशे प्राह परमार्थविनिर्णये ॥ १ ॥ अत्र च 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । संन्यासयोगयुक्तात्मा' इत्यादिषु कर्मसंन्यास उपदिष्टः, तथा 'त्यक्त्वा कर्मफलासङ्गं नित्यतृप्तो निराश्रयः । सर्वकर्मफलत्यागं ततः कुरु यतात्मवान् ॥' इत्यादिषु च फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टम् । न च परस्परं विरुद्धं सर्वज्ञः परमकारुणिको भगवानुपदिशेत् । अतः कर्मसंन्यासस्य तदनुष्ठानस्य चाविरोधप्रकारं बुभुत्सुरर्जुन उवाच—**संन्यासस्येति** । भो हृषीकेश सर्वेन्द्रियनियामक हे केशिनिषूदन केशिनाम्नो हि महतो हयाकृतेर्दैत्यस्य युद्धे मुखं व्यादाय भक्षयितुमागच्छतोऽत्यन्तं व्यात्ते मुखे वामबाहुं प्रवेश्य तत्क्षणमेव विवृद्धेन तेनैव बाहुना कर्कटिकाफलवत्तं विदार्य निषूदितवान् । अत एव हे महाबाहो इति संबोधनम् । संन्यासस्य त्यागस्य च तत्त्वं पृथग्विवेकेन वेदितुमिच्छामि ॥ १ ॥

स० टी०—अखण्डानन्दाब्धिं निगमशिरसां भावविषयं मुनीन्द्रैराराध्यं परमपदमीशानमकलम् ॥ विशुद्धया सद्भक्त्या सपदि सुजनैः प्राप्यममृतं मुकुन्दं वन्देऽहं भ्रमतिमिरविध्वंसिचरणम् ॥ १ ॥ शरण्यं सुखाद्यं सनकमुखसद्भिर्हृदि धृतं महायोगेशानं सुरनरजगद्धेतुममलम् ॥ चिदानन्दाकारं सकलरससारं हरिपदं सदा स्मारं स्मारं भवजलधिपारं सुकलये ॥ २ ॥ प्राग्विक्षिप्ततया प्रोक्तं विस्तरेण यतस्ततः ॥ शास्त्रार्थमुपसंहृत्याधुना संक्षेपतोऽखिलम् ॥ ३ ॥ अनायासेन बोधार्थमभिधातुमुपक्रमः ॥ गीताशास्त्रस्य

सर्वस्याध्यायेऽस्मिन्नर्थसंग्रहः ॥ ४ ॥ वेदार्थस्य च सर्वस्य वक्तव्योऽस्तीत्यतोऽर्जुनः ॥ श्रद्धात्रैविध्यतः पूर्वाध्याये यज्ञादिकर्मणाम् ॥ ५ ॥ त्रैविध्यमुक्तमाकर्ण्य संन्यासेऽप्यस्ति संभवः ॥ त्रैविध्यस्येति जिज्ञासुरुवाच श्रीहरिं प्रति ॥ ६ ॥ कर्माधिकारिणामेव किंचित्कर्मपरिग्रहात् ॥ किंचित्कर्मपरित्यागस्त्यागांशगुणयोगतः ॥ ७ ॥ संन्यासशब्दतः प्रोक्तस्तस्य चित्तविशुद्धये ॥ अविद्वत्कर्तृकस्यापि संन्यासस्य यथार्थतः ॥ ८ ॥ पृथक्त्वरूपमिच्छामि वेदितुं गुणभेदतः ॥ त्यागस्यापि स्वरूपं च सम्यगिच्छामि वेदितुम् ॥ ९ ॥ संन्यासत्यागशब्दौ किं भिन्नार्थौ वैकवाचकौ ॥ आद्यश्चेत्तर्हि संन्यासात्तत्त्वं त्यागस्य वै पृथक् ॥ १० ॥ इच्छामि बोद्धुमन्यश्चेदेकेनोभयनिर्णयम् ॥ द्वाभ्यां संबोधनाभ्यां च बाह्योपद्रववारणे ॥ ११ ॥ सामर्थ्यं दर्शयित्वान्तर्गतदोषनिवारणे ॥ हृषीकेशेति सामर्थ्यं भक्तानामिति दर्शितम् ॥ १२ ॥ हरावत्यनुरागाद्वा ज्ञेयं संबोधनत्रयम् ॥ १३ ॥ १ ॥

भा० टी०—नमः समाय सोमाय मखार्च्याय मखारये ॥ कृष्णायाकृष्णरूपाय विष्णवे शंभवे नमः ॥ १ ॥ पूर्वाध्यायैर्विस्तरेणेतस्ततो विक्षिप्ततयोक्तमर्थमुपनिषत्सु चेतस्ततो विस्तृतमर्थं सुखप्रतिपत्तये उपसंहृत्य वक्तुमयमध्याय आरभ्यते । अतीताध्यायेषूक्तस्य सर्ववेदार्थस्यास्मिन्नध्यायेऽवगम्यमानत्वात् । अर्जुनस्तु संन्यासत्यागशब्दार्थयोरेव विशेषं बुभुत्सुरुवाच—**संन्यासस्येति** । संन्यासस्य संन्यासशब्दार्थस्य त्यागस्य च त्यागशब्दार्थस्य च पृथगन्योन्यविभागतस्तत्त्वं याथात्म्यं वेदितुं ज्ञातुमिच्छामि । हे महाबाहो इति संबोधयन् तव बाहुतो जातैः क्षत्रियैः महाबाहुभिरिरसैर्बाह्वादिसाध्ये कर्मण्यधिकृतैरज्ञैश्च कृतस्य संन्यासस्य त्यागस्य च तत्त्वं पृथग्वेदितुमिच्छामीति ध्वनयति । सर्वेन्द्रियनियन्तुरन्तर्यामिणः सर्वज्ञस्य मदभिप्रायानुसारेणैतत् कथनं सुकरमिति द्योतयन्नाह—हृषीकेशेति । स्वजनसुखार्थं केश्यादिदुष्टनिषूदनस्य तव स्वभक्तस्य ममाप्यज्ञाननिषूदनं युक्तमेवेति सूचयन्संबोधयति—केशिनिषूदनेति ॥ १ ॥

प० टी०—अन्तर्यामिस्वरूपेण गुरुणा येन दर्शितम् । निजस्वरूपं तं वन्दे गोविन्दमजमद्वयम् ॥ १ ॥ पूर्वं पश्चिमाध्याये ‘ सर्वकर्माणि मनसा संन्यस्य ’ इति तथा ‘ संन्यासयोगयुक्तात्मा विमुक्तो मामुपैष्यसि ’ इत्यादिवाक्यैः कर्मसंन्यासः प्रशंसितोऽनन्तरं सर्वकर्मफलत्यागं ततः कुर्वित्यादिना फलमात्रत्यागेन कर्मानुष्ठानमुपदिष्टम् । तत्परस्परविरुद्धमिति संदेहे तयोस्तत्त्वं जिज्ञासुरर्जुनः पुनः पृच्छति स्म—**संन्यासस्येति** । भो हृषीकेश सर्वेन्द्रियेश स्वामिन् संन्यासस्य फलत्यागस्य च तत्त्वं रहस्यं पृथग्वेदितुं पृथक्प्रकारेण ज्ञातुमिच्छामि । केशिनाम्नो हयाकृतेर्दैत्यस्य युद्धे वर्तमानवामबाहुप्रसारप्रवेशनेन तं निषूदितवान् नाशितवानत एव महाबाहो इति संबुद्धिः । केश्यादिमहादैत्यदारणसमर्थस्य तवास्मत्संदेहापाकरणे कियानायास इत्यर्थः ॥ १ ॥

रा० टी०—पूर्वाध्यायेषु सर्वेषु ‘त्रैगुण्यविषया वेदा’ इत्यादिना यत्पुमर्थहेतुज्ञानसाधनं विप्रकीर्णतयोक्तं तदिह मन्दानां बुद्ध्यारोहाय संक्षिप्य निरूप्यते । तथा चतुर्दशाध्यायोक्तं त्रिगुणकार्यं चोच्यते । संन्यासश्चैव योगश्चेत्यादिना पञ्चमादौ संन्यासस्य त्यागाच्छान्तिरनन्तरमिति द्वादशे त्यागस्य च पुमर्थहेतुत्वमुक्तम् । तयोः स्वरूपनिर्णयाय पृच्छति—**संन्यासस्येति** । हे हृषीकेश सर्वेन्द्रियस्वामिन् । केशिनामकासुरमर्दन । संन्यासस्य त्यागस्य च पृथक् तत्त्वं स्वरूपं वेदितुं ज्ञातुमिच्छामि । द्वयोरपि शब्दयोरापाततोऽथैक्यप्रतीतेरिति भावः ॥ १ ॥

**श्रीभगवानुवाच—काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः ॥**
**सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥ २ ॥**

त० टी०—अथैतयोः स्वरूपैक्यं यथा स्यात्तथा वक्तुं तावदस्मिन्विषये मतान्तराणि दर्शयन् श्रीभगवानुवाच—काम्यानामिति । "स्वर्गकामो यजेत । पुत्रकामो यजेत । वायव्यं श्वेतमालभेत भूतिकामः" इत्यादिभिर्वाक्यैः सकाममधिकृत्य विहितानां पशुयागपुत्रेष्ट्यादीनां कर्मणां न्यासं त्यागमनुष्ठानं संन्यासं संन्यासशब्दार्थं कवयः केचित्पण्डिता विदुर्जानन्ति । तथाऽऽह मनुः—"मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया ।" इति नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वेषां कर्मणां फलत्यागं त्यागशब्दार्थं प्राहुर्विचक्षणा विवेकिनः । फलत्यागेनापि त्यागशब्दस्य मुख्यार्थत्वात् । ननु "अहरहः सन्ध्यामुपासीत । यावज्जीवमग्निहोत्रं जुहोति" इत्यादिषु फलश्रवणाभावाद्येषां फलमेव नास्ति कथं तत्त्यागवचनमिति चेन्न "धर्मेण पापमपनुदति । कर्मणा पितृलोकः" इत्यादिश्रुतिषु श्रवणात् तत्त्यागस्य संभवात् । किंच "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति श्रुतौ अविद्याशब्दनिर्दिष्टस्ववर्णाश्रमोचितकर्मणो मृत्युशब्दनिर्दिष्टप्रमादतरणोपायत्वरूपफलस्यापि सत्त्वात् । "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इति भवता वक्ष्यमाणत्वाच्च । तदत्यागे दोषाभावात् । काम्यकर्मणां तु "गतागतं कामकामा लभन्ते" इति संसरणहेतुत्वाभिधानान्न मृत्युतरणोपायसिद्धिहेतुत्वसंभावनाऽपीत्यलं विस्तरेण ॥ २॥

म० टी०—तत्रान्तिमस्य सूचीकटाहन्यायेन निराकरणायोत्तरम्—काम्यानामिति । काम्यानां फलकामनया चोदितानामन्तःकरणशुद्धावनुपयुक्तानां कर्मणामिष्टिपशुसोमादीनां न्यासं त्यागं संन्यासं विदुर्जानन्ति कवयः सूक्ष्मदर्शिनः केचित् । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन' इति वाक्येन वेदानुवचनशब्दोपलक्षितस्य ब्रह्मचारिधर्मस्य यज्ञदानशब्दाभ्यामुपलक्षितस्य गृहस्थधर्मस्य तपोऽनाशकशब्दाभ्यामुपलक्षितस्य वानप्रस्थधर्मस्य नित्यस्य नित्येहितेन पापक्षयेण द्वारेणात्मज्ञानार्थत्वं बोध्यते । न च विनियोगवैयर्थ्यं 'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इत्यनेनैव लब्धत्वादिति वाच्यम् । विनियोगाभावे हि सत्यपि नित्यकर्मानुष्ठाने ज्ञानं स्याद्वा न वा स्यात्, सति तु विनियोगे ज्ञानमवश्यं भवेदेवेति नियमार्थत्वात् । तस्मान्नित्यकर्मणामेव वेदने विविदिषायां वा विनियोगात् सत्त्वशुद्धिविविदिषोत्पत्तिपूर्वकवेदनार्थिना नित्यान्येव कर्माणि भगवदर्पणबुद्ध्याऽनुष्ठेयानि । काम्यानि तु सर्वाणि सफलानि परित्याज्यानीत्येकं मतम् । अपरं मतं सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः, सर्वेषां काम्यानां च प्रतिप्रदोक्तफलत्यागं सत्त्वशुद्ध्यर्थितया विविदिषासंयोगेनानुष्ठानं विचक्षणा विचारकुशलास्त्यागं प्राहुः । 'खादिरो यूपो भवति' 'खादिरं वीर्यकामस्य यूपं करोति' इत्यत्र यथैकस्य खादिरत्वस्य क्रतुप्रकरणपाठात् फलसंयोगाच्च क्रत्वर्थत्वं पुरुषार्थत्वं च प्रमाणभेदात् यथाऽग्निहोत्रेष्टिपशुसोमानां सर्वेषामपि शतपथपठितानां चोत्पत्तिविधिसिद्धानां तत्तत्फलसंयोगः प्रत्येकवाक्येन विविदिषासंयोगश्च यज्ञादिवाक्येन क्रियत इत्युपपन्नम् 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति न्यायात् । तदुक्तं संक्षेपशारीरके—यज्ञेनेत्यादिवाक्यं शतपथविहितं कर्मवृन्दं गृहीत्वा स्वोत्पत्त्याम्नानसिद्धं पुरुषविविदिषामात्रसाध्ये युनक्ति ॥' इति । तस्मात्काम्यान्यपि फलाभिसंधिमकृत्वाऽन्तःकरणशुद्धये कर्तव्यानि । न ह्यग्निहोत्रादिकर्मणां स्वतः काम्यत्वनित्यत्वरूपो विशेषोऽस्ति । पुरुषाभिप्रायभेदकृतस्तु विशेषः फलाभिसन्धित्यागे कुतस्त्यः । नित्यकर्मणां च प्रातिस्विकफलसद्भावम् 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्' इत्यत्र वक्ष्यति । नित्यानामेव विविदिषासंयोगेन काम्यानां कर्मणां फलेन सह स्वरूपतोऽपि परित्यागः पूर्वार्धस्यार्थः । काम्यानां नित्यानां च संयोगपृथक्त्वेन विविदिषासंयोगात्तदर्थं स्वरूपतोऽनुष्ठानेऽपि प्रातिस्विकफलाभिसंधिमात्रपरित्याग इत्युत्तरार्धस्यार्थः । तदेतद्वार्तिककृत:—'वेदानुवचनादीनामैकात्म्यज्ञानजन्मने । तमेतमिति वाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा

विविदिषार्थत्वं सर्वेषामपि कर्मणाम्। तमेतमिति वाक्येन संयोगस्य पृथक्त्वतः' इति। तदेवं सफलकाम्यकर्मत्यागः संन्यासशब्दार्थः। सर्वेषामपि कर्मणां फलाभिसंधित्यागस्त्यागशब्दार्थ इति न घटपटशब्दयोरिव संन्यासत्यागशब्दयोर्भिन्नजातीयार्थत्वं किं त्वन्तःकरणशुद्ध्यर्थकर्मानुष्ठाने फलाभिसंधित्याग इत्येक एवार्थ उभयोरिति निर्णीत एकः प्रश्नोऽर्जुनस्य ॥ २ ॥

शं० टी०—एतादृशमर्जुनप्रश्नतात्पर्यं विज्ञाय "संन्यासयोगाद्यतय इति" "त्यागेनैके अमृतत्वम्" इति श्रवणात् मयेदं संन्यस्तं त्यक्तमिति संन्यासत्यागशब्दयोर्लोके वेदे च विसर्ग एक एवार्थो न त्वर्थान्तरमस्ति, तथापि गृहिविषये तयोरर्थे केचिदन्यथा वर्णयन्ति तेषां मतमिमं वक्ष्यामि शृण्विति श्रीभगवानुवाच—काम्यानामिति। पुत्रकामो यजेत, स्वर्गकामो यजेत, पशुकामो यजेतेति एवं कामोपबन्धेन विहितानां काम्यानां ज्योतिष्टोमादिकर्मणां न्यासं परित्यागमेव गृहस्थस्य संन्यासमिति केचित्कवयो विद्वांसो विदुर्जानन्ति। काम्यकर्मपरित्याग एव मुमुक्षोर्गृहिणः संन्यास इति वदन्तीत्यर्थः। केचित्पदं सर्वत्रान्वेति। केचिद्विचक्षणाः पण्डिताः सर्वकर्मफलत्यागं सर्वेषां काम्यानामकाम्यानां नित्यनैमित्तिकानां च कर्मणां फलत्यागं फलमात्रस्य परित्यागं त्यागं संन्यासं प्राहुः। कामेन वाऽकामेन वा विधिना कर्तव्यत्वेन प्राप्तानि वैदिकानि कर्माण्यनुष्ठायेश्वरार्पणबुद्ध्या तत्फलपरित्याग एव गृहिणोऽधिकृतस्य संन्यासो न तु कर्मत्याग इति केचिद्वदन्तीत्यर्थः। ननु यः पशुकामः स्यात्स एतं प्राजापत्यमजं तूवरमालभेत स वा एतस्मै प्रजां पशून् प्रजनयति" इति काम्यकर्मणां यथा फलं श्रूयते, न तथा "अहरहः संध्यामुपासीत। सायं प्रातरग्निहोत्रं जुहोति। अहरहर्यजमानः स्वयमेवाग्निहोत्रं जुहोति" इत्यादिषु नित्यानां कर्मणां फलं श्रूयते। कथमविद्यमानस्य फलस्य त्याग उपपद्यते ब्रह्मचारिणो भार्यात्यागवदिति चेन्न 'कर्मणा पितृलोकः' इति 'धर्मेण पापमपनुदति' इति 'सर्व एते पुण्यलोका भवन्ति' इति 'अग्नीन्हुत्वा विधानेन यत्पुण्यं फलमाप्नुयात्' इति नित्यानामपि फलश्रवणात्। 'अनिष्टमिष्टं मिश्रं च' इति भगवतापि नित्यानां फलमुच्यते, ततोऽस्त्येव नित्यानामपि फलमन्यथा फलत्यागविधानायोगात्तस्माद्युक्तमेवोक्तं 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति। ततः सिद्धं गृहिणां कर्मफलत्याग एव त्यागः संन्यासो न तु सर्वकर्मत्याग इति ॥ २ ॥

श्री० टी०—तत्रोत्तरं श्रीभगवानुवाच—काम्यानामिति। "पुत्रकामो यजेत। स्वर्गकामो यजेत" इत्येवमादिकामोपबन्धेन विहितानां काम्यानां कर्मणां न्यासं परित्यागं संन्यासं कवयो विदुः—सम्यक्फलैः सह सर्वकर्मणामपि न्यासं संन्यासं पण्डिता विदुः जानन्तीत्यर्थः। सर्वेषां काम्यानां नित्यनैमित्तिकानां च कर्मणां फलमात्रत्यागं प्राहुस्त्यागं विचक्षणा निपुणाः न तु स्वरूपतः कर्मत्यागम्। ननु नित्यनैमित्तिकानां फलाश्रवणादविद्यमानस्य कथं त्यागः स्यात्? नहि वन्ध्यायाः पुत्रत्यागः संभवति। उच्यते, यद्यपि स्वर्गकामः पशुकाम इत्यादिवत् "अहरहः संध्यामुपासीत। यावज्जीवमग्निहोत्रं जुहोति" इत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्तयितुमशक्नुवन् विधिर्विश्वजिता यजेतेत्यादिष्विव सामान्यतः किमपि फलमाक्षिपत्येव। नचातिवगुरुमतश्रद्धया स्वसिद्धिरेवं विधेः प्रयोजनमिति मन्तव्यं, पुरुषप्रवृत्त्यनुपपत्तेर्दुष्परिहरत्वात्। श्रूयते च नित्यादिष्वपि फलम् "सर्व एते पुण्यलोका भवन्ति" इति "कर्मणा पितृलोकः" इति "धर्मेण पापमपनुदति" इत्येवमादिषु, तस्माद्युक्तमुक्तम् 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति। ननु फलत्यागेन पुनरपि निष्फलेषु कर्मस्वप्रवृत्तिरेव स्यात्तन्न सर्वेषामपि कर्मणां संयोगपृथक्त्वेन विविदिषार्थतया विनियोगात्। तथाच श्रुतिः—"तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति। अतः प्रतिपदोक्तं सर्वं फलं बन्धकत्वेन त्यक्त्वा विविदिषार्थं सर्वकर्मानुष्ठानं घटत एव। विविदिषा च नित्यानित्यवस्तुविवेकेन

निवृत्तदेहाभिमानतया बुद्धेः प्रत्यक्प्रवणता । तावत्पर्यन्तं च सत्त्वशुद्ध्यर्थं ज्ञानाविरुद्धं यथोचितमावश्यकं कर्म कुर्वतस्तत्फलत्याग एव कर्मत्यागो नाम न स्वरूपेण । तथाच श्रुतिः "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः" इति । ततः परं तु सर्वकर्मनिवृत्तिः स्वत एव भवति । तदुक्तं नैष्कर्म्यसिद्धौ–'प्रत्यक्प्रवणतां बुद्धेः कर्माण्युत्पाद्य शुद्धितः । कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥' इति । उक्तं च भगवता 'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ॥' इति । वसिष्ठेन चोक्तम् 'न कर्माणि त्यजेद्योगी कर्मभिस्त्यज्यते ह्यसौ । कर्मणो मूलभूतस्य संकल्पस्यैव नाशतः ॥' इति । ज्ञाननिष्ठाविक्षेपकत्वमालक्ष्य त्यजेद्वा । तदुक्तं भगवता भागवते–'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते ॥ ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वाऽनपेक्षकः । सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः ॥' इत्यादि । अलमतिप्रसङ्गेन प्रकृतमनुसरामः ॥ २ ॥

स० टी०–सूचीकटाहनीत्यादौ तत्रान्त्यस्योत्तरं हरिः ॥ उवाच शृणु काम्याना चोदितानां फलेप्सया ॥१॥ शुद्धावनुपयुक्तानां पशुसोमादिरूपिणाम् ॥ त्यागं जानन्ति संन्यासं कवयः सूक्ष्मदर्शिनः ॥२॥ अन्येऽनुष्ठीयमानानां सर्वेषामेव कर्मणाम् ॥ धीशुद्ध्यर्थं फलत्यागं प्राहुस्त्यागं विदां वराः ॥ ३ ॥ संयोगस्य पृथक्त्वेन सर्वेषामपि कर्मणाम् ॥ तमेतमितिवाक्येन बुभुत्सायां नियोगतः ॥ ४ ॥ वेदानुवचनादीनामैकात्म्यज्ञानजन्मने ॥ तमेतमितिवाक्येन नित्यानां वक्ष्यते विधिः ॥ ५ ॥ यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणाम् ॥ तमेतमितिवाक्येन संयोगस्य पृथक्त्वतः ॥ ६ ॥ इत्युक्तं वार्तिके तस्मादेवं सिद्धं विभागशः ॥ काम्यकर्मपरित्यागः संन्यास इति शब्दितः ॥ ७ ॥ फलाभिसंधिसंत्यागस्त्यागशब्दार्थको मतः ॥ धीशुद्ध्यर्थमनुष्ठाने कर्मणां फलवर्जनम् ॥ ८ ॥ उभयोरेक एवार्थः संन्यासत्यागशब्दयोः ॥ ९ ॥ २ ॥

भा० टी०–एवं पृष्टो ज्ञातार्जुनाभिप्रायः सर्वेष्वध्यायेषु तत्र तत्र निर्दिष्टौ संन्यासत्यागशब्दौ न विविक्तार्थावित्यतः प्रश्नौचित्यं मत्वा तन्निर्णयाय श्रीभगवानुवाच–काम्यानामिति । काम्यानां स्वर्गादिकामनाप्रयुक्तानामश्वमेधादीनां कर्मणां न्यासं परित्यागं संन्यासं संन्यासशब्दार्थमनुष्ठेयत्वेन प्राप्तानामनुष्ठानं कवयः पण्डिताः केचिद्विदुः विजानन्ति । नित्यनैमित्तिकानामनुष्ठीयमानानां सर्वकर्मणामात्मसंवन्धितया प्राप्तस्य फलस्य परित्यागः सर्वकर्मफलत्यागः तं त्यागं त्यागशब्दार्थं विचक्षणाः निपुणाः पण्डिताः कथयन्ति । ननु नित्यनैमित्तिकानां कर्मणां फलाभावात् वन्ध्यापुत्रस्य त्याग इव तेषां फलत्यागासंभवात् उक्तस्त्यागशब्दार्थो न युक्त इति चेदुच्यते–यद्यपि स्वर्गकामः पशुकाम इत्यादिवत्संध्यामुपासीत यावज्जीवमग्निहोत्रं जुहोतीत्यादिषु फलविशेषो न श्रूयते तथाप्यपुरुषार्थे व्यापारे प्रेक्षावन्तं प्रवर्तयितुमशक्नुवन् विधिर्विश्वजिन्न्यायेन किमपि फलमाक्षिपत्येव । श्रूयते च नित्यादिषु फलम् "सर्वे एते पुण्यलोका भवन्ति । कर्मणा पितृलोकः । धर्मेण पापमपनुदति" इत्येवमादिषु । वक्ष्यति च भगवान् 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् । भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥' इति । तस्माद्युक्तमुक्तं 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इति । नचैवमपि निष्फलेषु कर्मस्वप्रवृत्तिरेव प्राप्तेति वाच्यं, सर्वेषामपि कर्मणां संयोगपृथक्त्वेन "तमेतमात्मानं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इतिश्रुत्या विविदिषार्थतया विनियोगात् । तदुक्तं सुरेश्वराचार्यैः 'वेदानुवचनादीनामैक्यात्म्यज्ञानजन्मने । तमेतमितिवाक्येन नित्यानां वक्ष्यते विधिः ॥ यद्वा विविदिषार्थत्वं सर्वेषामपि कर्मणाम् । तमेतमितिवाक्येन संयोगस्य पृथक्त्वतः ॥' इति । तथाच चतुर्थाध्यायस्थं पारमर्षसूत्रं 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति । 'खादिरो यूपो भवति । खादिरं वीर्यकामस्य यूपं कुर्वीत' इत्यत्रैकस्य खादिरत्वस्योभयत्वे क्रत्वर्थत्वपुरुषार्थत्वरूपोभयात्मकत्वे वचनद्वयेन क्रतुशेषत्वफलशेषत्वसंयोगभेदावगमान्न नित्यानित्यसंयोगविरोधः । तथा सर्वेषां

कर्मणां स्वोत्पत्तिविधिसिद्धानां प्रत्येकं वाक्येन तत्तत्फलसंयोगः तमेतमितिवाक्येन विविदिषासंयोगश्च सिध्यत इति ॥ २ ॥

प० टी०–एतत्प्रश्नोत्तरं भगवानाह–काम्यानामिति । काम्यानीष्टसाधनानि ज्योतिष्टोमादीनि तेषां सम्यक् फलैः सह न्यासः परित्यागस्तं कवयः पण्डिताः संन्यासं विदुर्जानन्ति । तथा काम्यातिरिक्तानां सर्वेषां कर्मणां नित्यनैमित्तिकानामवान्तरफलत्यागं विचक्षणाः कुशलास्त्यागं प्राहुः । अत्रैतदुक्तं भवति । नित्यान्यकरणे प्रत्यवायसाधनानि संध्यावन्दनादीनि । नैमित्तिकानि पुत्रजन्माद्यनुबन्धीनि जातेष्ट्या-दीनि । प्रायश्चित्तानि पापक्षयसाधनानि चान्द्रायणादीनि । उपासनानि सगुणब्रह्मविषयमानसव्यापा-ररूपाणि शाण्डिल्यविद्यादीनि । एतेषां नित्यादीनां बुद्धिशुद्धिः परमप्रयोजनम्, उपासनानां तु तदैका-ग्र्यम् "विविदिषन्ति यज्ञेन" इत्यादिश्रुतेः 'तपसा कल्मषं हन्ति' इत्यादिस्मृतेश्च । नित्यनैमित्तिकयोरुपास-नानां चावान्तरफलं पितृलोकसत्यलोकप्राप्तिः "कर्मणा पितृलोको विद्यया देवलोको देवलोको वै लोकानाᳲ श्रेष्ठः" इति श्रुतेः । सर्वकर्मफलत्यागं प्राहुः ॥ २ ॥

श्री० टी०–अथाप्यस्ति विवक्षाभेदेन भेद इतिभावेनोत्तरमाह–काम्यानामिति । वैकल्पिककाम्यानां ज्योतिष्टोमादीनां स्वर्गादिफलानिच्छया विशेषणत्यागेन काम्यानां कर्मणां त्यागं नियतकाम्यानां कारी-र्यादीनां स्वरूपाकरणेन त्यागं संन्यासं ज्ञानिनो विदुः जानन्ति । विचक्षणाः कुशलाः सर्वकर्मणां भगव-त्प्रीत्यन्यफलत्यागं त्यागशब्दार्थमाहुरित्यर्थः ॥ २ ॥

**त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः ॥**
**यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ३ ॥**

त० टी०–पुनर्मतान्तरमाह–त्याज्यमिति । एके मनीषिणः सांख्याचार्या दोषवत् हिंसादोष-वत्त्वेन बन्धकमिति हेतोः सर्वं यज्ञादिकं कर्म मुमुक्षुणा त्याज्यमिति प्राहुः । तत्र यज्ञदानतपःकर्म न त्याज्यमिति चापरे पण्डिताः कर्मनिष्ठाः प्राहुः ॥ ३ ॥

म० टी०–अधुना द्वितीयप्रश्नप्रतिवचनाय संन्यासत्यागशब्दार्थस्य त्रैविध्यं निरूपयितुं तत्र विप्रतिपत्ति-माह–त्याज्यमिति । सर्वं कर्म बन्धहेतुत्वात् दोषवत् दुष्टम् । अतः कर्माधिकृतैरपि कर्म त्याज्यमेवेत्येके मनीषिणः प्राहुः । यद्वा दोषवत् दोष इव यथा दोषो रागादिस्त्यज्यते तद्वत्कर्म त्याज्यमनुत्पन्नबोधैरनुत्प-न्नविविदिषैः कर्माधिकारिभिरपीत्येकः पक्षः । अत्र द्वितीयः पक्षः कर्माधिकारिभिरन्तःकरणशुद्धिद्वारा विवि-दिषोत्पत्त्यर्थं यज्ञदानतपः कर्म न त्याज्यमिति चापरे मनीषिणः प्राहुः ॥ ३ ॥

शं० टी०–एवं संन्यासत्यागयोरर्थैकत्वेऽपि मतभेदेन काम्यकर्मत्यागस्य सर्वकर्मफलत्यागस्य च संन्या-सशब्दार्थत्वं प्रतिपाद्य पुनरपि त्यागशब्दस्य मतान्तरेणार्थान्तरं वर्णयति–त्याज्यमिति । एके केचन मनीषिणो विद्वांसः दोषवद्दोषो दूषणं निषेधलक्षणमस्यास्तीति दोषवद्दोषयुक्तं 'न कलञ्जं भक्षयेत् । न सुरां पिबेत्' इत्यादिशास्त्रप्रतिषिद्धं दुर्गतेर्दुर्योनेश्च प्रापकं कलञ्जभक्षणादिलक्षणं पातकं यत्तत्कर्म त्याज्यं त्यक्तव्यमिति प्राहुः । दोषवत्कर्मणस्त्याग एव त्यागो न तु काम्यानां नापि कर्मफलस्य च त्यागशब्दार्थस्तेषां दुर्गतिदुर्योनिप्रापकत्वाभावात्फलाभावे प्रेक्षावत्प्रवृत्त्यसंभवाच्च "यत्कर्म कुरुते तदभिसंपद्यते" इत्यादिश्रुति-विरोधप्रसङ्गाच्च । "यान्यनवद्यानि कर्माणि तानि सेवितव्यानि" इत्यदुष्टकर्मणां वैदिकानां कर्तव्यत्वश्रवणाच्च । तस्माद्दोषवत्कर्मत्याग एव त्यागः संन्यास इति केचिद्वदन्तीत्यर्थः । यद्वा मनीषिणः प्रकृतिविकृतिविलक्षण-मात्मानमसङ्गचिद्रूपं मन्तुं शीलं येषामस्ति ते मनीषिणः केचित्पण्डिताः सांख्याः–दोषवत् " न हिंस्यात्स-

र्वा भूतानि" इति प्राणिमात्रस्य हिंसानिषेधके श्रुतिवचने जाग्रति सति 'ब्राह्मणो न हन्तव्यः' इति निषेधो बुद्धिपूर्वकहिंसाया दोषाधिकत्वबोधनार्थ एव भवति, न तु बुद्धिपूर्विका भूतहिंसा दोषहेतुर्न कर्तव्येत्येवमर्थो भवति। तथात्वे त्वबुद्धिपूर्विकाया हिंसाया दोषाभावप्रसङ्गाद्विशेषविध्यनर्थत्वप्रसङ्गाच्च । ततो दोषाधिकत्वबोधकत्वमेव विशेषविधेरभ्युपगन्तव्यम् । तेनाग्नीषोमीयपशुहिंसायामपि बुद्धिपूर्वकत्वाद्दोषाधिकत्वमेव भवति । उभयत्रापि बुद्धिपूर्वकत्वाविशेषात्तर्ह्यग्नीषोमीयं पशुमालभेतेतिविधेर्व्यर्थत्वमेव स्यादिति चेन्न । प्रकारान्तरेणार्थवत्तासिद्धेः । रागतः प्राप्तामिषसेवाया अग्नीषोमीययजनव्याजेनावकाशप्रदानपरत्वाद्विधिः सार्थ एव भवति । यथा रागतः प्राप्तव्यवायस्य धर्मप्रजासंपत्त्यर्थं स्त्रियमुद्वहेदित्येषविधिः कर्माङ्गतया स्त्रीपरिग्रहविधानव्याजेनावकाशं प्रयच्छन्नर्थवान् भवति तद्वत् । यत एवमतः 'सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः' इति न्यायेन सर्वमपि कर्म द्रव्यसाध्यत्वेन हिंसाप्रधानत्वाद्दोषवदेव भवति । दोषवत्त्वेन बन्धकत्वाच्छ्रौतं स्मार्तं च वैदिकं कर्म सर्वमपि त्याज्यमेवेति सर्वकर्मत्यागमेव त्यागं प्राहुरित्यर्थः । ननु विहिताकरणे प्रत्यवायः स्यादिति चेन्न । दोषवत्कर्मानुष्ठाने ततोऽधिकतरः प्रत्यवायः स्यादित्याहुः । ततः कलञ्जभक्षणक्रियावत्सर्वस्यापि कर्मणो दोषवत्त्वेन तत्त्यागो न दोषायेति च ते मन्यन्त इत्यभिप्रायः । एवं सांख्यमतभेदेन त्यागशब्दस्यार्थभेदमुक्त्वा मीमांसकमतभेदेनाप्यर्थभेदं सूचयितुमाह—यज्ञेति । "अकृत्वा वैदिकं नित्यं प्रत्यवायी भवेन्नरः" इति "यावज्जीवमग्निहोत्रं जुहोति" इति "कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः" इति "सत्यं वद धर्मं चर" इति "सत्यान्न प्रमदितव्यं धर्मान्न प्रमदितव्यम्" इत्यादिश्रुतिभिः 'श्रौतं चापि तथा स्मार्तं कर्मालभ्य वसेद्द्विजः। तद्विहीनः पतत्येव ह्यालम्बरहितान्धवत् ॥' इत्यादिस्मृतिभिश्च वैदिककर्मणो नित्यस्यावश्यकरणीयत्वविधानादकरणे प्रत्यवायविधानाच्च ब्राह्मणस्य यज्ञदानतपः यज्ञो दानं तप इत्येवंलक्षणं वैदिकं कर्म न त्याज्यं न कदापि च त्यक्तव्यं, किंतु निरुक्तश्रुतिस्मृतिबलाद्यावज्जीवं कर्तव्यमेव 'एकाहं जपहीनस्तु संध्याहीनो दिनत्रयम् । द्वादशाहमनग्निश्च शूद्र एव न संशयः ॥ त्र्यहं संध्याविरहितो द्वादशाहं निरग्निकः । चतुर्वेदधरो विप्रः शूद्र एव न संशयः ॥ तस्मान्न लङ्घयेत्संध्यां सायं प्रातः समाहितः । उल्लङ्घयति यो मोहात्स याति नरकं ध्रुवम्' इति । संध्यापदमौपासनाग्निहोत्रादेरुपलक्षणम् "वीरहा वा एष देवानां योऽग्निमुद्वासयते" इत्यादिश्रुतिस्मृतिभ्योऽप्यग्निहोत्रादेः कर्मणः परित्यागे प्रत्यवायाधिक्यश्रवणाद्ब्राह्मणादीनां यज्ञदानादिकं वैदिकं कर्म नित्यं नियमेन कर्तव्यमेव । ननु द्रव्यसाध्यस्य यज्ञदानादेः कर्मणो हिंसावत्त्वेन दोषवत्त्वाद्दोषवतः कर्मणः कथमनुष्ठानमुपपद्येत इति चेदुच्यते—'ब्राह्मणो न हन्तव्यः' इत्येतद्वचनं क्रोधतः प्राप्तं ब्राह्मणवधं दोषाधिकत्वं वदन्निषेधयति, नतु बुद्धिपूर्वकहिंसामात्रे सर्वत्र दोषाधिकत्वं बोधयति, विशेषविधेः स्वविधेयमात्रविषयत्वात् । ब्राह्मणान् सर्वान् भोजयेद्देवदत्तं न भोजयेदित्यत्र निषेधस्य स्वविधेयमात्रविषयत्वदर्शनात्ततोऽग्नीषोमीयपशुहिंसादौ दोषाधिकत्वं बोधयितुं न शक्नोति स्वविधेयमात्रोपक्षीणत्वाद्विशेषस्य । नापि 'न हिंस्यात्सर्वा भूतानि' इत्ययं निषेधोऽपि यागीयपशुहिंसायां सामान्यतोऽपि दोषमासञ्जयितुं कल्पते सामान्यतो विशेषस्य बलीयस्त्वात् । 'अन्नं न प्रतिगृह्णीयात् प्राणैः कण्ठगतैरपि' इत्येतन्निषेधापेक्षया 'याचयेच्छ्रोत्रियस्यान्नम्' इत्येतस्य विधेर्बलीयस्त्वावगमात् । ब्राह्मणान् सर्वान्वारय, देवदत्तं भोजयेत्यत्र विशेषस्य बलीयस्त्वदर्शनाच्च सामान्यस्य तृणगुल्मच्छेदादौ सावकाशत्वाच्च । 'सावकाशनिरवकाशयोर्निरवकाशं बलीयः' इति निरवकाशस्य बलीयस्त्वस्मरणाच्च । ततो यागीयपशुहिंसायाः सामान्यतो विशेषतश्च दोषगन्धः संपादयितुं न शक्यते । किंच 'मधुपर्के च यज्ञे च पित्र्ये दैवे च कर्मणि । अत्रैव पशवो हिंस्या नान्यत्रेत्यब्रवीन्मनुः' इति 'अहिंसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति तीर्थेभ्यो यज्ञादिभ्योऽन्यत्र भूतान्यहिंसन्निति भूतहिंसानिषेधस्य यागीयव्यतिरिक्तहिंसाविषयत्वश्रवणान्निषेधाव्याप्तेः 'या-

चयेच्छ्रोत्रियस्यान्नं तदभावे जलं पिबेत्' इतिविध्युक्तायाः श्रोत्रियान्नादनक्रियाया निर्दुष्टत्वं पावकत्वं च यथा, तथा यागीयपशुहिंसाया अपि विध्युक्ताया निर्दुष्टत्वं पावनत्वं चावगम्यते। तथैव श्रूयते "धर्मेण पापमपनुदति। तस्माद्धर्मं परमं वदन्ति। तपसा कल्मषं हन्ति। ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसा' इति। तस्माद्ब्राह्मणादेर्यज्ञदानादिलक्षणं नित्यं वैदिकं कर्मावश्यकमनुष्ठातव्यमेव न कदा पित्याज्यम् किंतु 'न तु काम्यं समाचरेत्। न कलञ्जं भक्षयेत्' इत्यादिवचनात्काम्यं निषिद्धं चैतद्द्वयमेव त्याज्यमिति काम्यनिषिद्धत्याग एव त्यागो न तु कर्मफलत्यागस्त्याग इत्यपरे केचन मनीषिणो वैदिकशिरोमणयो मीमांसकाः प्राहुरित्यर्थः। ननु 'संन्यासस्य महाबाहो तत्त्वमिच्छामि वेदितुम्' इत्यर्जुनकृतप्रश्नस्य विषयो मुख्यसंन्यासो वा उत गौणसंन्यासो वा। आद्ये स विद्वत्संन्यासो वा किं विविदिषासंन्यासो वा। नाद्यः विद्वत्संन्यासस्य निरुक्तविकल्पासंभवात्तामसः परिकीर्तित इति वक्ष्यमाणतामसादिभेदानुपपत्तेश्च। सति विदुषः कर्मणि कर्तव्ये तत्संन्यासस्य विकल्पाः स्युः नासति। "तस्य कार्यं न विद्यते" इति "नैवास्ति किंचित्कर्तव्यम्" इति विदुषः सर्वकर्माभावश्रवणात्। ज्ञानयोगेन सांख्यानामिति ब्रह्मविदां यतीनां ज्ञाननिष्ठापरत्वविधानाच्च नास्ति विकल्पावकाशः। ननु यावज्जीवमग्निहोत्रं जुहोतीत्यादिविधिबलाद्विदुषोऽपि कर्म कर्तव्यमेवेति चेन्न, विधेर्मिथ्यात्वोपपत्तेः। 'मायामात्रमिदं द्वैतम्' इति द्वैतस्य सर्वस्य मायामात्रत्वेन मिथ्यात्वे सिद्धे तदन्तःपातिनः कर्मविधेरपि शुक्तिरजतवन्मिथ्यात्वेन बलासंभवात् स्वमिथ्यात्वदर्शिनं प्रति नियोक्तृत्वायोगात्। नहि मिथ्याभूतं रजतं स्वतत्त्ववेदिनं पुरुषमादानादौ प्रवर्तयितुं शक्नोति। तद्वन्मिथ्याभूतः कर्मविधिरपि विद्वांसं न प्रवर्तयितुं शक्नोतीत्यर्थः। न द्वितीयः। सर्वतो विरक्तस्य विदुषः कर्मणा साध्यमपश्यतः काम्यकर्मपरित्यागेन वा कर्मफलत्यागेन वा कर्मानुष्ठानानुपपत्तेः। चित्तशुद्ध्यै कर्म कर्तव्यमेवेति चेन्न। सर्वतो विरक्त्यतिरिक्तचित्तशुद्ध्यन्तराभावात्। विधिबलादीश्वरप्रीत्यै कर्म कर्तव्यमेवेति चेन्न 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' इति त्यागविधेस्ततोऽपि प्रबलत्वात्। 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता। मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते॥ जिज्ञासायां संप्रवृत्तो नाद्रियेत्कर्मचोदनाम्' इतीश्वरेणैव जिज्ञासोर्विध्युपेक्षाविधानात्। दूरेण ह्यवरं कर्मेति मुमुक्षोर्विरक्तस्य कर्मनिन्दापूर्वकं श्रवणपरत्वविधानाच्च। 'आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात्' इति विविदिषोः सर्वकर्मसंन्यासस्मरणात्ततो विविदिषोरपि कर्मसंबन्धासंभवेन निरुक्तविकल्पानामवकाशः संभवति। ततो गौण एव संन्यासो गृहिनिष्ठः प्रश्नस्य विषयो, न तु मुख्य इति सिद्धम्। जिज्ञासितो गौण एव सन्यास इत्यत्र प्रमाणं पूर्वोक्तगीतावचनान्येवेति बोद्धव्यम्॥ ३॥

श्री० टी०—अविदुषः फलत्यागमात्रमेव त्यागशब्दार्थो न कर्मत्याग इत्येतदेव मतान्तरनिरासेन दृढीकर्तुं मतभेदं दर्शयति—त्याज्यमिति। दोषवद्धिंसादिदोषवत्केवलं बन्धकमिति हेतोः सर्वमपि कर्म त्याज्यमित्येके सांख्याः प्राहुर्मनीषिण इति। अस्यायं भावः न हिंस्यात्सर्वा भूतानीति निषेधः पुरुषस्यानर्थहेतुर्हिंसेत्याह। "अग्नीषोमीयं पशुमालभेत" इत्यादिप्राकरणिको विधिस्तु हिंसायाः क्रतूपकारकत्वमाह। अतो भिन्नविषयत्वेन सामान्यविशेषन्यायागोचरत्वाद्बाध्यबाधकता नास्ति। द्रव्यसाध्येषु च सर्वेष्वपि कर्मसु हिंसादेः संभवात्सर्वमपि कर्म त्याज्यमेवेति। तदुक्तम् 'दृष्टवदानुश्रविकः स ह्यविशुद्धिक्षयातिशययुक्तः' इति। अस्यार्थः—उपायो ज्योतिष्टोमादिः सोऽपि दृष्टोपायवत्, गुरुपाठादनु श्रूयत इत्यनुश्रवो वेदस्तद्बोधितः। तत्राविशुद्धिर्हिंसा तया क्षयो विनाशः। अग्निहोत्रज्योतिष्टोमादिजन्यस्वर्गेषु तारतम्यं च वर्तते। परोत्कर्षस्तु सर्वान् दुःखीकरोति। अपरे तु मीमांसका यज्ञादिकं कर्म न त्याज्यमिति प्राहुः। अयं भावः—क्रत्वर्थापि सतीयं हिंसा पुरुषेणैव कर्तव्या। सा चान्योद्देशेनापि कृता पुरुषस्य प्रत्यवायहेतुरेव। यथाहि विधिर्विधेयस्य तदुद्देशेनानुष्ठानं विधत्ते तादर्थ्यलक्षणत्वाच्छेषत्वस्य न त्वेवं निषेधो निषेधस्य तादर्थ्यमपेक्षते प्रातिमात्रापेक्षितत्वात्। अन्यथा। ज्ञानप्रमादा-

दिकृते दोषाभावप्रसङ्गात् । तदेवं समानविषयत्वेन सामान्यशास्त्रस्य विशेषेण बाधान्नास्ति दोषवत्त्वमतो नित्यं यज्ञादिकर्म न त्याज्यमिति । अनेन विधिनिषेधयोः समानबलता वार्यते सामान्यविशेषन्यायं संपादयितुम् ॥ ३ ॥

स० टी०—अथ द्वितीयप्रश्नस्य परिहाराय केशवः ॥ संन्यासत्यागयोस्तत्त्वं वक्तुं त्रैविध्यमेव हि ॥ १ ॥ विप्रतिपत्तिमाहादौ त्याज्यमित्यादिना स्फुटम् ॥ बन्धहेतुतया सर्वं कर्म दुष्टमतो बुधैः ॥ २ ॥ त्याज्यमेके बुधाः प्राहुः कर्मण्यधिकृतैरपि ॥ इत्येकं मतमत्रोक्तं द्वितीयं प्राह केशवः ॥ ३ ॥ कर्माधिकारिभिः पुंभिर्धीशुद्ध्या बोधलब्धये ॥ यज्ञदानतपःकर्म न त्याज्यमिति चापरे ॥ ४ ॥ ३ ॥

भा० टी०—काम्यानि वर्जयित्वा नित्यनैमित्तिकानि फलाभिसंधिं विना कर्तव्यानीत्युक्तं पक्षं प्रतिपक्षनिरासेन द्रढयितुं विप्रतिपत्तिमाह—त्याज्यमिति । दोषोऽस्यास्तीति दोषवत् बन्धहेतुत्वात् सर्वमेव कर्म त्याज्यं त्यक्तव्यं दोषो रागादिर्यथा त्यज्यते तद्वत्त्याज्यमिति वा । एके मनीषिणो बुद्धिमन्तः पण्डिताः सांख्यदृष्टिमाश्रिता अधिकृतैः कर्मिभिरपि सर्वं कर्म त्याज्यमिति प्राहुः कथयन्ति । ननु अधिकृतानां कर्मिणां कर्मत्यागं प्रत्यवायजनकं कथं प्राहुरिति चेत्, हिंसादियुक्तकर्मत्यागे तेषामपि प्रत्यवायाभावं तदनुष्ठाने परं प्रत्यवायं चाभिप्रेत्येति गृहाण । परे मीमांसकदृष्टिमाश्रिता यज्ञदानतपःकर्म न त्याज्यम् 'अग्नीषोमीयं पशुमालभेत' इत्यादिविधिबोधितहिंसातिरिक्तहिंसानिषेधे 'न हिंस्यात्सर्वा भूतानि' इतिवाक्यस्य सार्थक्याद्विधिबोधितं कर्म न प्रत्यवायावहं प्रत्युत विहितत्याग एव प्रत्यवायावह इत्यतः सर्वं कर्म न त्यक्तव्यमिति प्राहुः । अधिकृतान् कर्मिण एवापेक्ष्यैते विकल्पाः न तु ज्ञाननिष्ठान् त्यक्तसर्वपरिग्रहान् । ज्ञानयोगेन सांख्यानां निष्ठा मया प्रोक्तेति कर्माधिकारविनिर्मुक्तान् संन्यासिनोऽपेक्ष्य । ननु कर्मयोगेन योगिनामित्यधिकृताः कर्म कुर्वन्तः पूर्वं विभक्तनिष्ठा अपि इह शास्त्रोपसंहारप्रकरणे यथा विचार्यन्ते तथा सांख्या अपि ज्ञाननिष्ठा विचार्यन्ताम् । एवं च संन्यासिनोऽपेक्ष्य न त्वेते विकल्पा इत्युक्तमनुपपन्नमिति चेन्न । गुणानां कर्म—"नैव किंचित्करोमि" इति कर्माण्यात्मन्यपश्यन्त इच्छादीनि च क्षेत्रधर्मत्वेनैव पश्यन्तो नियतं कर्म मोहात्परित्यजन्ति कायक्लेशदुःखभयाद्वा कर्मपरित्यजन्तीति वक्तुमशक्यत्वेन तेषां मोहदुःखनिमित्तत्यागानुपपत्तेः, 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । नवद्वारे पुरे देही नैव कुर्वन्न कारयन्' इत्यादिभिस्तत्त्वविदां संन्यासप्रकारस्योक्तत्वाच्च । ननूदाहृतवचने मनसेत्युक्तत्वात् न कायिकादीनां संन्यासः । सर्वकर्माणीति विशेषितत्वात् सर्वेषामिति चेन्न, मानसानामेव सर्वेषामिति तदर्थात् । कायादिव्यापाराणां कारणानि वर्जयित्वाऽन्यानि सर्वाणि कर्माणि मनसा संन्यस्येति तदर्थो ग्राह्य इति चेन्न, उक्तकुकल्पनया नैव कुर्वन्न कारयन्निति विशेषणानर्थक्यप्रसङ्गात् । ननु सर्वकर्मसंन्यासोऽयं मरिष्यतो भगवतोक्तो न जीवतः इति चेन्न, नवद्वारे पुरे देही आस्त इति विशेषणानुपपत्तेः । तस्मादुदाहृतवचनादिभिस्तत्त्वविदः संन्यासप्रकारस्योक्तत्वात् तेषां मोहादिनिमित्तत्यागानुपपत्तेश्च कर्मिणामनात्मज्ञानां कर्मफलत्यागस्तुत्यर्थं ये कर्मण्यधिकृता अनात्मविदो येषां च मोहात्कायक्लेशभयाच्च त्यागः संभवति त एव तामसास्त्यागिनो राजसाश्चेति निन्द्यन्ते 'मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ तुल्यनिन्दास्तुतिर्मौनी संतुष्टो येन केनचित् । अनिकेतः स्थिरमतिर्भक्तिमान्मे प्रियो नरः ॥' इत्यादिना चतुर्दशद्वादशादौ परमार्थसंन्यासिनो विशेषितत्वात्, ज्ञानस्य या परा निष्ठेति वक्ष्यमाणत्वाच्च । ज्ञाननिष्ठाः संन्यासिनो नेह विवक्षिताः किं त्वतत्त्वविदः संन्यासिनस्तामसत्वाद्यपेक्षया सात्त्विकत्त्वेन गुणेन स्तूयन्ते । न च 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति हेतुवचनेन मुख्य एवायं संन्यास इति भ्रमितव्यं त्यागाच्छान्तिरनन्तरमितिवत् हेतुवचनस्तुत्यर्थत्वादिति संक्षेपः ॥ ३ ॥

प० टी०–अथास्मिन्नर्थे मतान्तरमुपन्यस्यति–त्याज्यमिति । यज्ञे हिंसादिदोषवत्कर्म बन्धकं भवतीति त्याज्यमित्येके मनीषिणः सांख्या वदन्ति । तथाऽपरे मीमांसका "अग्नीषोमीयं पशुमालभेत" इत्यादिश्रुतिबलाद्यज्ञदानतपःकर्म न त्याज्यमिति वदन्ति ॥ ३ ॥

रा० टी०–सर्वकर्मफलत्यागमिति स्वोक्तत्यागस्वरूपावधारणाय प्रातीतिकीं विद्वन्मतविप्रतिपत्तिमुद्भावयति–त्याज्यमिति । एके मनीषिणो ज्ञानिनः दोषवत् बन्धकत्वदोषयुक्तं काम्यकर्म त्याज्यम् अकार्यमाहुः । अपरे च मनीषिणः यज्ञादि न त्याज्यमिति प्राहुः । तपः कृच्छ्रचान्द्रायणादिकर्म यज्ञाङ्गानि । यद्वा नित्यनैमित्तिकानि । मनीषिण इतिविशेषणात्प्राचीनपक्षेऽपि फलत्याग एवाभिमतो न स्वरूपत्यागः । अतो न मतयोर्विरोधः ॥ ३ ॥

**निश्चयं शृणु मे तत्र त्यागे भरतसत्तम ! ॥**
**त्यागो हि पुरुषव्याघ्र ! त्रिविधः संप्रकीर्तितः ॥ ४ ॥**

त० टी०–एवं मतान्तराण्युक्त्वा त्यागविषयं निर्णयमाह–निश्चयमिति । तत्रैवं वादिविप्रतिपन्ने त्यागे निश्चयं सर्वाविरुद्धपक्षं मे मत्तः शृणु । हे भरतसत्तम ! नहि त्यागः सर्वैरवगन्तुं शक्यः । हे पुरुषव्याघ्र ! हि यस्मात्त्यागस्त्रिविधस्तामसादिभेदेन संप्रकीर्तितस्तत्त्वविद्भिर्विवेकेन कथित इत्यर्थः ॥४॥

म० टी०–एवं विप्रतिपत्तौ निश्चयमाह–निश्चयमिति । तत्र त्वया पृष्टे कर्माधिकारिकर्तृके संन्यासत्यागशब्दाभ्यां प्रतिपादिते त्यागे फलाभिसंधिपूर्वककर्मत्यागे मे मम वचनान्निश्चयं पूर्वाचार्यैः कृतं शृणु हे भरतसत्तम । किं तत्र दुर्ज्ञेयमस्तीत्यत आह–हे पुरुषव्याघ्र पुरुषश्रेष्ठ हि यस्मात् त्यागः कर्माधिकारिकर्तृकः फलाभिसंधिपूर्वककर्मत्यागः त्रिविधस्त्रिप्रकारस्तामसादिभेदेन संप्रकीर्तितः । अथवा विशिष्टाभावरूपस्त्यागो विशेषणाभावाद्विशेष्याभावादुभयाभावाच्च त्रिविधः संप्रकीर्तित । तथाहि फलाभिसंधिपूर्वककर्मत्यागः सत्यपि कर्मणि फलाभिसंधित्यागादेकः । सत्यपि फलाभिसंधौ कर्मत्यागाद्द्वितीयः । फलाभिसंधेः कर्मणश्च त्यागात्तृतीयः । तत्र प्रथमः सात्त्विक आदेयः । द्वितीयस्तु हेयो द्विविधः–दुःखबुद्ध्या कृतो राजसः, विपर्यासेन कृतस्तामसः । एतावान् कर्माधिकारिकर्तृकस्त्यागोऽर्जुनस्य प्रश्नविषयः । तृतीयस्तु कर्मानधिकारिकर्तृको नैर्गुण्यरूपो नार्जुनप्रश्नविषयः । सोऽपि साधनफलभेदेन द्विविधः । तत्र सात्त्विकेन फलाभिसंधित्यागपूर्वककर्मानुष्ठानरूपेण त्यागेन शुद्धान्तःकरणस्योत्पन्नविविदिषस्यात्मज्ञानसाधनश्रवणाख्यवेदान्तविचाराय फलाभिसंधिरहितस्यान्तःकरणशुद्धौ सत्यां तत्साधनस्य कर्मणो वैतुष्ये जात इवावहननस्य परित्यागः । स एकः साधनभूतो विविदिषासंन्यास उच्यते । तमग्रे नैष्कर्म्यसिद्धिं परमामिति वक्ष्यति । द्वितीयस्तु जन्मान्तरकृतसाधनाभ्यासपरिपाकादस्मिञ्जन्मन्याद्वावेवोत्पन्नात्मबोधस्य कृतकृत्यस्य स्वत एव फलाभिसंधेः कर्मणश्च परित्यागः फलभूतः । स विद्वत्संन्यास इत्युच्यते । स तु यस्त्वात्मरतिरेव स्यादित्यादिश्लोकाभ्यां प्राग्व्याख्यातः । स्थितप्रज्ञलक्षणादिभिश्च बहुधा प्रपञ्चितः । यस्मादेवं त्यागस्य तत्त्वं दुर्ज्ञेयं त्वया चोक्तं तत्त्वं वेदितुमिच्छामीति, अतो मम सर्वज्ञस्य वचनाद्विद्धीत्यभिप्रायः । संबोधनद्वयेन कुलनिमित्तोत्कर्षः पौरुषनिमित्तोत्कर्षश्च योग्यतातिशयसूचनायोक्तः ॥ ४ ॥

शं० टी०–त्यागगुणेन मुख्यसंन्याससादृश्यसंभवाद्ब्रह्मिणः काम्यकर्मत्याग एव संन्यास इति, सर्वकर्मफलत्याग एव संन्यास इति, दोषवत्कर्मत्याग एव संन्यास इति, काम्यनिषिद्धकर्मपरित्याग एव संन्यास इति त्यागशब्दार्थे संन्यासं पण्डिताः स्वस्वमतानुसारेण बहुधा वर्णयन्ति । इत्येवं मतभेदेन त्यागशब्दस्यार्थभेदं प्रतिपाद्य स्वाभिमतमर्थं वक्तुं स्वमतसिद्धस्य त्यागस्याधिकारिभेदेन त्रैविध्यमाह–निश्चयमिति । उक्तरीत्या

च बहुधा विकल्पिते तत्र तस्मिन् त्वत्प्रश्नविषयभूते त्यागे त्यागशब्दार्थे संन्यासे मे निश्चयं मया निश्चितमर्थं मत्तः शृणु । श्रुतार्थप्रवृत्तिसिद्धये श्रोतारं स्तौति—हे भरतसत्तम हे पुरुषव्याघ्रेति । हि यस्मात्कारणात्त्यागं पण्डिता अपि बहुधा वर्णयन्ति तस्मात्त्यागो बुद्धिमतामपि दुर्विज्ञेयः । सर्वकर्मफलत्यागं ततः कुर्वित्यत्र नित्यानां नैमित्तिकानां च सर्वेषां कर्मणां फलमात्रपरित्याग एव यथा विवक्षितस्तथा मयि सर्वाणि कर्माणि संन्यस्य योगसंन्यस्तकर्माणमित्यादावपि कर्मसंन्यासपदस्य कर्मफलत्याग एवार्थो विवक्षितो भवति, न तु कर्मसंन्यासः कर्माधिकारे कर्मसंन्यासविधानायोगात् । य उक्तलक्षणस्त्यागः स एव त्रिविधस्तामसादिभेदेन त्रिप्रकार इति मुनिभिः संप्रकीर्तितो भवति तं मयोच्यमानं शृण्वित्यर्थः ॥ ४ ॥

श्री० टी०—एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह—निश्चयमिति । तत्रैवं विप्रतिपन्ने त्यागे निश्चयं मे वचनाच्छृणु । त्यागस्य लोकप्रसिद्धत्वात्किमत्र श्रोतव्यमिति माऽवमंस्था इत्याह—हे पुरुषव्याघ्र पुरुषश्रेष्ठ, त्यागोऽयं दुर्बोधः । हि यस्मादयं कर्मत्यागस्तत्त्वविद्भिस्तामसादिभेदेन त्रिविधः सम्यग्विवेकेन प्रकीर्तितः । त्रैविध्यं च 'नियतस्य तु संन्यासः कर्मणः' इत्यादिना वक्ष्यति ॥ ४ ॥

स० टी०—तत्र त्यागे त्वया पृष्टे कर्माधिकृतकर्तृके ॥ संन्यासत्यागशब्दाभ्यामृषिभिः प्रतिपादिते ॥१॥ निश्चयं मद्वचोभिस्त्वं पूर्वाचार्यैः कृतं शृणु ॥ कर्माधिकारिणो यस्मात्त्यागः सफलकर्मणः ॥ २ ॥ तामसादिकभेदेन त्रिःप्रकार उदाहृतः ॥ फलाभिसंधिसंत्यागो विद्यमानेऽपि कर्मणि ॥ ३ ॥ सात्त्विकोऽयं परित्याग उपादेयो मुमुक्षुभिः ॥ फलाभिसंधौ सत्येव कर्मत्यागस्तु राजसः ॥ ४ ॥ अज्ञानतो दूयोरेव प्रमादादिभिरेव यः ॥ त्यागः फलाभिसंधेश्च कर्मणश्च स तामसः ॥ ५ ॥ हेयत्वेन मतावेतौ त्यागौ राजसतामसौ ॥ मुख्यो यः कर्मसंन्यासो निस्त्रैगुण्यः स नेह वै ॥ ६ ॥ अर्जुनप्रश्नविषयो न वा तस्य विवेचनम् ॥ यतस्त्यागस्य दुर्बोधं तत्त्वं तस्मान्ममेशितुः ॥ ७ ॥ वाक्याद्विद्धीत्यभिप्रायः संबोधनद्वयेन तु ॥ कुलौत्कर्ष्यात्स्वकौत्कर्ष्याद्योग्यत्वं सूच्यतेऽर्जुने ॥ ८ ॥ ४ ॥

भा० टी०—एवं मतभेदेन संन्यासत्यागशब्दार्थयोस्तत्त्वं पृथगुक्त्वा स्वाभिमतं तयोरैक्यं दर्शयितुमाह—निश्चयमिति । तत्र त्यागे त्यागसंन्यासविकल्पे मे मम वचनान्निश्चयं शृणववधारय । त्यागसंन्यासवाच्यो योऽर्थः स एक एवेत्यभिप्रेत्याह—त्यागस्त्रिविधः त्रिप्रकारः तामसादिप्रकारैः संप्रकीर्तितः सम्यक्शास्त्रेषु कथितो हि यस्मात्त्यागसंन्यासशब्दवाच्योऽर्थोऽधिकृतस्य कर्मिणोऽनात्मज्ञस्य तामसादिभेदेन त्रिविधः शास्त्रेषु संप्रकीर्तितः सर्वशास्त्रज्ञादीश्वरादन्येन वक्तुमशक्यः तस्मादत्र दुर्विज्ञानेऽर्थे परमार्थशास्त्रार्थविषयमैश्वरं निश्चयमध्यवसायं शृणु । भरतानां क्षत्रियवराणां मध्ये सत्तम साधुतमेति संबोधयन् क्षत्रियवरैः कर्तव्ये त्यागे संन्यासे च मयोच्यमानं निश्चयं शृण्विति ध्वनयति । न केवलं क्षत्रियवरैरेव कर्तव्ये त्यागसंन्यासशब्दार्थे निश्चयो मयोच्यतेऽपि तु पुरुषश्रेष्ठैरन्यैरपि कर्माधिकृतैरज्ञैः कर्तव्ये तस्मिन्निति ध्वनयन् संबोधयति—पुरुषव्याघ्रेति ॥ ४ ॥

प० टी०—एवं मतभेदमुपन्यस्य स्वमतं कथयितुमाह—निश्चयमिति । तत्रैवं विप्रतिपन्ने त्यागे मे वचनान्निश्चयं शृणु । हि यस्मात् कारणाद्धो पुरुषव्याघ्र पुरुषार्थसाधनशील हीति निश्चयेन त्यागस्त्रिविधः संप्रकीर्तितस्तामसादिभेदेन सम्यक्प्रकारेणाग्रे निरूपितोऽस्ति ॥ ४ ॥

रा० टी०—अविरोधप्रकारं प्रतिज्ञापूर्वमुपपादयति—निश्चयमिति । तत्र विप्रतिपन्ने त्यागे विषये निश्चितं मतं मे सकाशात् शृणु श्रुत्वा निष्ठां कुरु । त्यागो हि फलत्यागः । कर्मणि ममतात्यागः । भगवति कर्तृत्वानुसंधानपूर्वं स्वस्य कर्तृत्वाभिमानत्याग इति त्रिविधः संप्रकीर्तित इत्येके । वक्ष्यमाणसात्त्विकादिभेदेनेत्यन्ये ॥ ४ ॥

*यज्ञदानतपःकर्म न त्याज्यं कार्यमेव तत् ॥
यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ॥ ५ ॥

त० टी०—कोऽसौ निश्चय इत्यत आह—यज्ञदानेतिद्वाभ्याम् । यज्ञदानतप इति वैदिकं कर्म मुमुक्षुणा न त्याज्यम्, अपि तु कार्यं कर्तव्यमेव तत् । यज्ञो दानं तपश्चैव मनीषिणां मननशीलानामनभिहितफलानां पावनानि मनःशुद्धिकराणि ॥ ५ ॥

म० टी०—कोऽसौ निश्चयो विप्रतिपत्तिकोटिभूतयोः पक्षयोर्द्वितीयः पक्ष इत्याह—यज्ञ इति द्वाभ्याम् । चो हेतौ । यस्मात् यज्ञदानतपांसि मनीषिणामकृतफलाभिसंधीनां पावनानि ज्ञानप्रतिबन्धकपापमलक्षालनेन ज्ञानोत्पत्तियोग्यतारूपपुण्यगुणाधानेन च शोधकानि । अकृतफलाभिसंधीनामेव यज्ञदानतपांस्येवं शोधकानि भवन्त्येव । उपाधिशुद्ध्यैवोपहितशुद्धिरत्राभिप्रेता । तस्मादन्तःकरणशुद्ध्यर्थिभिः कर्माधिकृतैर्यज्ञो-दानं तप इति यत् फलाभिसंधिरहितं कर्म तन्न त्याज्यं किंतु कार्यमेव तत् । अत्याज्यत्वेन कार्यत्वे लब्धेऽप्यत्यादरार्थं पुनः कार्यमेवेत्युक्तम् । यस्मात्कार्यं कर्तव्यतया शास्त्रविहितं तस्मान्न त्याज्यमेवेति वा ॥५॥

शं० टी०—यत्प्रतिज्ञातं मे निश्चयं शृणिवति तं स्वनिश्चयं प्रतिपादयति—यज्ञेति द्वाभ्याम् । यज्ञः श्रौतः स्मार्तश्च, दानं पात्रेष्वर्थसमर्पणं, तपः स्वाध्यायः, त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति । अध्ययनस्य धर्मस्कन्धत्वेन गृहिधर्मत्वश्रवणात् 'तपो हि स्वाध्यायः' इति स्वाध्यायस्य तपस्त्वश्रवणात्तपःशब्देनाध्ययनमुच्यते । एवं यज्ञदानतपोलक्षणं त्रिविधं नित्यं वैदिकं कर्म मुमुक्षोर्गृहिणो विरक्तस्य न त्याज्यं न कदाचित्त्यक्तव्यं किंतु नित्यत्वात्पुरुषार्थहेतुत्वादकरणे प्रत्यवायाच्च यज्ञोऽध्ययनं दानमिति । "अहरहः संध्यामुपासीत । उदिते सूर्ये प्रातर्जुहोति" इत्यादिश्रुत्युक्तं कर्म नित्यं मुमुक्षोः कार्यं श्रद्धाभक्तिभ्यां नियमेन कर्तव्यमित्यर्थः । उक्ते कर्मणि प्रवृत्तिसिद्धये फलमाह—यज्ञ इति । मनीषिणामधीतविदितवेदवेदार्थानां सदसद्विवेकवतां मुमुक्षूणां परमेश्वरार्पणबुद्ध्या कृतानि यज्ञो दानं तपः । चकारोऽत्र यज्ञदानादीनामुक्तानामनुक्तानां श्रौतानां स्मार्तानां च कर्मणां समुच्चयार्थः । एवकारो यज्ञदानादेर्वैदिकस्यैव कर्मणो वर्णाश्रमिणां विहितस्य पावनत्वनिर्धारणार्थः । यज्ञदानतपोलक्षणानि श्रौतानि स्मार्तान्येव कर्माणि पावनान्युपात्तसर्वदुरितक्षयकराणि सत्त्वशोधकानि तद्द्वारा ज्ञानस्य तत्फलस्य च कारणानीत्यर्थः ॥ ५ ॥

श्री० टी०—प्रथमं तावन्निश्चयमाह—यज्ञदानेति द्वाभ्याम् । मनीषिणां विवेकिनां पावनानि चित्तशुद्धिकराणि ॥ ५ ॥

स० टी०—कश्चासौ निश्चयस्तत्र द्वाभ्यामाह रमापतिः ॥ फलाभिसंधिहीनाना यज्ञदानतपांसि हि ॥१॥ शोधकान्यात्मविज्ञानप्रतिबन्धमलक्षयात् ॥ तस्माच्चित्तविशुद्ध्यात्मविज्ञानायाधिकारिभिः ॥ २ ॥ फलाभिसंधिहीनं यत्कर्म त्याज्यं न तद्बुधैः ॥ यस्माद्यज्ञादिकं कर्म कर्तव्यत्वेन चोदितम् ॥ ३ ॥ तस्मान्न त्याज्यमेवेति किं तु कार्यं प्रयत्नतः ॥ ४ ॥ ५ ॥

भा० टी०—प्रतिज्ञातं निश्चयं प्रदर्शयन् तत्र हेतुमाह—यज्ञ इति । यज्ञो दानं तप इत्येतत्त्रिविधं कर्म न त्याज्यं न त्यक्तव्यम् । व्यतिरेकेणोक्तमर्थमन्येन द्रढयति । कार्यमेव तत् त्रिविधं कर्म करणीयमेव । चो हेतौ । यस्माद्यज्ञदानतपांस्येव पावनानि विशुद्धिकराणि, पावनान्येवेति वा । मनीषिणां कुशलानां फलाभिसंधिरहितानाम् ॥ ५ ॥

प० टी०—तत्रादौ त्यागस्य स्वरूपं दर्शयति—यज्ञदानतप इति द्वाभ्याम् । यज्ञदानतपोरूपं कर्म न त्याज्यं किं तु तत्कार्यमेव । कुतः ? यज्ञो दानं तपश्च मनीषिणां ज्ञानवतां कर्तुं पावनानि चित्तशोधकानि ॥५॥

* यज्ञो दानं तपः कर्म—इति मधुसूदनीटीकासंमतः पाठः ।

रा० टी०–निश्चयं शृण्विति प्रतिज्ञातमाह–यज्ञेति । द्वन्द्वैकवद्भावः । कुतः कार्यमित्यत आह–यज्ञ इति । पावनानि पावित्र्यकरणानि अबन्धकानीतियावत् । यद्वा मनीषिणां ज्ञानिनां मुक्तावानन्दातिशयकराणि । अतः सर्वैरपि वर्णाश्रमोचितकर्माणि कार्याण्येवेति । यतीनामपि ज्ञानयज्ञविद्याभयदानब्रह्मचर्यादितपांसि च सन्त्येव । स्त्रीशूद्रादीनामपि विष्णुनामाध्ययनरूपो यज्ञः सत्यवचनमुपवासादि तपश्चास्त्येवेति भावः ॥ ५ ॥

## एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च ॥
## कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् ॥ ६ ॥

त० टी०–ननु "मोक्ष्यसे कर्मबन्धनैः" इति कर्मणां बन्धनत्वाभिधानात्कथमेषां पावनत्वमिस्यत आह–एतानीति । यानि यज्ञादीनि कर्माणि पावनान्युक्तानि एतान्यपि सङ्गमहमेवं करिष्यामीत्यभिनिवेशं त्यक्त्वा, फलानि च ममैतत्फलसाधनानीति फलोद्देशं विहाय केवलमीश्वराज्ञापालनात्मकतया कर्तव्यानि हे पार्थ, इति मे मम निश्चितमुत्तमं श्रेष्ठं मतम् ॥ ६ ॥

म० टी०–यदि यज्ञदानतपसामन्तःकरणशोधने सामर्थ्यमस्ति तर्हि फलाभिसंधिना कृतान्यपि तानि तच्छोधकानि भविष्यन्ति, कृतं फलाभिसंधित्यागेनेत्यत आह–एतानीति । तुशब्दः शङ्कानिराकरणार्थः । यद्यपि काम्यान्यपि शुद्धिमादधति धर्मस्वाभाव्यात्, तथापि सा तत्फलभोगोपयोगिन्येव न ज्ञानोपयोगिनी । तदुक्तं वार्तिककृद्भिः 'काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा । विड्वराहादिदेहेन न ह्यैन्द्रं भुज्यते फलम्' इति । ज्ञानोपयोगिनीं तु शुद्धिमादधति यानि यज्ञादीनि कर्माणि एतानि फलाभिसंधिपूर्वकत्वेन बन्धनहेतुभूतान्यपि मुमुक्षुभिः सङ्गमहमेवं करोमीति कर्तृत्वाभिनिवेशं फलानि चाभिसंधीयमानानि त्यक्त्वाऽन्तःकरणशुद्धये कर्तव्यानीति मे मम निश्चितम् । अत एव हे पार्थ कर्माधिकृतैः कर्माणि त्याज्यानि न त्याज्यानि चेति द्वयोर्मतयोर्न त्याज्यानीति मम निश्चितं मतमुत्तमं श्रेष्ठम् । यदुक्तं निश्चयं शृणु मे तत्रेति सोऽयं निश्चय उपसंहृतः । भगवत्पूज्यपादानामभिप्रायोऽयमीरितः । अनिष्णाततया भाष्ये दुरापो मन्दबुद्धिभिः ॥ ६ ॥

शं० टी०–यज्ञदानादिकर्मणां नित्यानां नियमेनावश्यकर्तव्यत्वं शोधकत्वं फलं चोक्त्वा तेषामनुष्ठानप्रकारमाह–एतानीति । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा कर्तव्यानीत्यत्र 'त्वन्ताथादि न पूर्वभाक्' इतिन्यायेन तुशब्दयोगादपिशब्दाचोक्तव्यतिरिक्तानि काम्यान्यपि कर्माण्यकामेन कर्तव्यान्येवान्यथात्वपिशब्दप्रयोगस्य व्यर्थता स्यादितिविद्वद्भिर्न मन्तव्यं, तथात्वे भगवद्वचनवैलक्षण्याभावप्रसङ्गात् । 'सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः' इत्यत्र सर्वपदेन पूर्वोक्तकाम्यकर्माणि गृहीत्वा सर्वेषां काम्यानामकाम्यानां च कर्मणां फलमात्रस्य परित्यागं प्राहुरित्युक्तमतभेद एवात्राप्युपन्यस्तः स्यात् । भगवतोऽपि तन्मतानुसारित्वे स्वातन्त्र्याभावप्रसङ्गात्, निश्चयं शृणु मे तत्रेति वचनव्याघातप्रसङ्गाद्यज्ञार्थात्कर्मणोन्यत्रेत्ययज्ञार्थस्य काम्यस्य बन्धकत्वविधानात्कृपणाः फलहेतव इति काम्यकर्मणो निन्दितत्वाच्च नैवात्र तेषां प्रसञ्जनमस्ति । तर्ह्यपिशब्दतुशब्दयोर्व्यर्थता स्यादिति चेदुच्यते । तुशब्दो नित्यानां काम्यव्यतिरिक्तत्वबोधनार्थः । अपिशब्दस्तु संभावनार्थः । एतच्छब्दः सन्निहितपरामर्शार्थः, तत एवैतानि पूर्वोक्तानि यज्ञदानादीनि तु नित्यानि न तु काम्यानि । तथापि काम्यवत्फलाभिसंधियुक्तानि चेद्बन्धायैव भवन्ति, न तु मुक्तये । ततस्तान्येतानि यज्ञदानादीनि नित्यानि सङ्गं सज्जतेऽनेनेति सङ्गः कामस्तं सङ्गं फलानि चोक्तानि वक्ष्यमाणानि चानिष्टादीनि त्यक्त्वा मुमुक्षुभिरीश्वरार्पणबुद्ध्या कर्तव्यानीति निश्चितं श्रुतियुक्तिभिर्निर्धारितं ममेश्वरस्य मतं सिद्धांतमुत्तमं चोक्ते-

भ्यो मतेभ्य उत्कृष्टतमं प्रत्यवायरहितत्वेन नरकाद्यनिष्टनिवृत्तिहेतुत्वात्स्वर्गगमागमक्लेशनिवर्तकत्वाच्चित्तशुद्धिद्वाराऽभीष्टमुक्तिहेतुत्वाच्च तेभ्यः श्रेष्ठतममित्यर्थः ॥ ६ ॥

श्री० टी०—येन प्रकारेण कृतान्येतानि पावनानि भवन्ति तं प्रकारं दर्शयन्नाह—एतानीति । यानि यज्ञादिकर्माणि मया पावनानीत्युक्तम्, एतान्येव कर्तव्यानि । कथम्? सङ्गं कर्तृत्वाभिनिवेशं त्यक्त्वा केवलमीश्वराराधनतया कर्तव्यानीति फलानि च त्यक्त्वा कर्तव्यानीति च निश्चितं मे मम मतम् । अत एवोत्तमम् ॥ ६ ॥

स० टी०—धीशोधनेऽस्ति सामर्थ्यं यदि यज्ञादिकर्मणाम् ॥ शोधकान्येव तर्हि स्युः कृतान्यपि फलेप्सुना ॥ १ ॥ कृतं फलाभिसंध्येकत्यागेनेत्येव चेच्छृणु ॥ धर्मस्वाभाव्यतः शुद्धिः काम्यानामपि संभवेत् ॥ २ ॥ तथापि कामिनां सा तत्फलभोगोपयोगिनी ॥ ज्ञानोपयोगिनी नास्ति तदुक्तं वार्तिके स्फुटम् ॥ ३ ॥ काम्येऽपि शुद्धिरस्त्येव भोगसिद्ध्यर्थमेव सा ॥ विड्वराहादिदेहेन नह्यैन्द्रं भुज्यते फलम् ॥ ४ ॥ ज्ञानोपयोगिनीं शुद्धिमादधत्यत्र यानि तु ॥ यज्ञादीन्येव कर्माणि बन्धकान्यपि कामिनाम् ॥ ५ ॥ मुमुक्षुभिः परित्यज्य कर्तृत्वाभिमतिं तथा ॥ अभिसंधीयमानानि त्यक्त्वा कर्मफलानि च ॥ ६ ॥ कर्तव्यानि धियः शुद्ध्यै इति मे निश्चितं मतम् ॥ अत एव हि हे पार्थ न त्याज्यानि मुमुक्षुभिः ॥ ७ ॥ कर्माधिकारिभिर्धीरैः कर्माणीत्युत्तमं मतम् ॥ ८ ॥ ६ ॥

भा० टी०—प्रतिज्ञातमर्थमुपसंहरति—एतानीति । एतानि यज्ञदानतपांसि ससङ्गस्य फलार्थिनो बन्धहेतवोऽपि कर्माणि मुमुक्षुभिः सङ्गं कर्तृत्वाभिनिवेशं फलानि च त्यक्त्वा परित्यज्य चित्तशुद्ध्यर्थं कर्तव्यानीत्येतन्निश्चितं मम परमेश्वरस्य वासुदेवस्य मतम् । यतो ममेदं निश्चितमत उत्तमं सर्वोत्कृष्टम् । उत्तमत्वान्मम निश्चितमिति वा । त्वया तु मत्संबन्धिना मदीयं निश्चितं मतमेवोपादेयमिति सूचनाय संबोधनं पार्थेति । यत्तु अपिशब्द एवंशब्दार्थ इति भाष्यविरुद्धमन्ये वर्णयन्ति तन्नादर्तव्यं, सति संभवे स्वार्थत्यागस्यान्याय्यत्वात् ॥ ६ ॥

प० टी०—केन प्रकारेण कृतानि पावनानि भवन्तीत्याह—एतानीति । एतानि यज्ञदानतपोरूपाणि कर्माणि सङ्गं त्यक्त्वा फलानि चैहिकामुष्मिकाणि त्यक्त्वा केवलमीश्वरार्पणतया कर्तव्यानीति मे मतं निश्चितमसंदिग्धम् । उत्तमत्वादेतदेवादरणीयमित्यर्थः ॥ ६ ॥

रा० टी०—यज्ञादि न त्याज्यं कार्यमेव तदित्युक्तमयुक्तं, त्याज्यं कर्मेत्युक्तमनीषिमतविरोधादित्यतः सङ्गादित्यागरूपविशेषणत्याग एव तेषामभिमतः । न स्वरूपत्याग इतिभावेन यज्ञादेः करणप्रकारमाह—एतानीति । प्रागुक्तयज्ञादिरूपकर्माणि ममताभिमानरूपस्नेहाख्यसङ्गं त्यक्त्वा स्वर्गादिफलानि च त्यक्त्वा कर्तव्यानि इति निश्चितं मे उत्तमं मतम् ॥ ६ ॥

## नियतस्य तु संन्यासः कर्मणो नोपपद्यते ॥
## मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ ७ ॥

त० टी०—'त्यागो हि पुरुषव्याघ्र! त्रिविधः संप्रकीर्तितः' इत्युक्तं त्रैविध्यमेव दर्शयति—नियतस्येति । काम्यस्य कर्मणो बन्धहेतुत्वेन दोषवत्त्वात्त्याग उपपद्यते । नियतस्य तु नित्यकर्तव्यतया विहितस्य महायज्ञादेस्तु कर्मणः संन्यासस्त्यागो नोपपद्यते । अन्तःकरणशुद्धिहेतुत्वेन मुमुक्षूपादेयत्वात् । एवं मोहात् कर्तव्याकर्तव्याविवेकात् तस्य नित्यस्य परित्यागस्तामसः परिकीर्तितः । "प्रमादमोहौ तमसो भवतोऽज्ञानमेव च" इति तमोजन्यमोहहेतुत्वेन तामसत्वमित्यर्थः ॥ ७ ॥

म० टी०–तदेवं "यज्ञदानतपः कर्म न त्याज्यमिति चापरे" इति स्वपक्षः स्थापितः । इदानीम् "त्याज्यं दोषवदित्येके कर्म प्राहुर्मनीषिणः" इति परपक्षस्य पूर्वोक्तत्यागत्रैविध्यव्याख्यानेन निराकरणमारभते–नियतस्येति । काम्यस्य कर्मणोऽन्तःकरणशुद्धिहेतुत्वाभावेन बन्धहेतुत्वेन च दोषवत्वाद् बन्धनिवृत्तिहेतुबोधार्थिना क्रियमाणस्त्याग उपपद्यत एव । नियतस्य तु नित्यस्य कर्मणः शुद्धिहेतुत्वेनादोषस्य संन्यासस्त्यागो मुमुक्षुणाऽन्तःकरणशुद्ध्यर्थिना नोपपद्यते, शास्त्रयुक्तिभ्यां तस्यान्तःकरणशुद्ध्यर्थमवश्यानुष्ठेयत्वात् । तथा चोक्तं प्राक्–"आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते" इति । ननु दोषवत्त्वं काम्यस्येव नित्यस्यापि दर्शपूर्णमासज्योतिष्टोमादेर्व्रीहिपश्वादिहिंसामिश्रितत्वेन साङ्ख्यैरभिहितम् । न च "व्रीहीनवहन्ति" "अग्नीषोमीयं पशुमालभेत" इत्यादिविशेषविधिगोचरत्वात् क्रत्वङ्गहिंसाया "न हिंस्यात् सर्वा भूतानि" इति सामान्यनिषेधस्य तदितरपरत्वमिति, सांप्रतं भिन्नविषयत्वेन विधिनिषेधयोरबाधेनैव समावेशसंभवात् । निषेधेन हि पुरुषस्यानर्थहेतुर्हिंसेत्यभिहितं न त्वक्रत्वर्था सेति । विधिना च क्रत्वर्था सेत्यभिहितं न त्वनर्थहेतुर्नेति । तथा च क्रतूपकारकत्वपुरुषानर्थहेतुत्वयोरेकत्र संभवात् क्रत्वर्थापि हिंसा निषिद्धैवेति हिंसायुक्तं दर्शपूर्णमासज्योतिष्टोमादि सर्वं दुष्टमेव । विहितस्यापि निषिद्धत्वं निषिद्धस्यापि च विहितत्वं श्येनादिवदुपपन्नमेव । यथा हि "श्येनेनाभिचरन्यजेत" इत्याद्यभिचारविधिना विहितोऽपि श्येनादिर्न हिंस्यात्सर्वाभूतानीति निषेधविषयत्वादनर्थहेतुरेव । तद्दोषसहिष्णोरेव च रागद्वेषादिवशीकृतस्य तत्राधिकारः । एवं ज्योतिष्टोमादावपि । तथा चोक्तं महाभारते–'जपस्तु सर्वधर्मेभ्यः परमो धर्म उच्यते । अहिंसया हि भूतानां जपयज्ञः प्रवर्तते' इति । मनुनापि 'जप्येनैव तु संसिध्येद्ब्राह्मणो नात्र संशयः । कुर्यादन्यन्न वा कुर्यान्मैत्रो ब्राह्मण उच्यते ॥' इति वदता मैत्रीमहिंसां प्रशंसता हिंसाया दुष्टत्वमेव प्रतिपादितम् । अन्तःकरणशुद्धिश्चोद्देशेन गायत्रीजपादिना सुतरामुपपत्स्यत इति हिंसादिदोषदुष्टं ज्योतिष्टोमादि नित्यं कर्म दोषासहिष्णुना श्येनादिकमिव कर्माधिकारिणापि त्याज्यमिति प्राप्ते ब्रूमः–न क्रत्वर्था हिंसाऽनर्थहेतुः, विधिस्पृष्टे निषेधानवकाशात् । तथाहि विधिना बलवदिच्छाविषयसाधनताबोधरूपां प्रवर्तनां कुर्वताऽनर्थसाधने तदनुपपत्तेः स्वविषयस्य प्रवर्तनागोचरस्यानर्थसाधनत्वाभावोऽप्यर्थादाक्षिप्यते । तेन विधिविषयस्य नानर्थहेतुत्वं युज्यते । न हि क्रत्वर्थत्वं साक्षाद्विध्यर्थः, येन विरोधो न स्यात्, किंतु प्रवर्तनैव । प्रवर्तनाकर्मभूता तु पुरुषप्रवृत्तिः पुरुषार्थमेव विषयीकुर्वती क्वचित् क्रतुमपि पुरुषार्थसाधनत्वेन पुरुषार्थभावमापन्नं विषयीकरोतीत्यन्यत् । पुरुषप्रवृत्तिश्च बलवदिच्छोपधानदशायां जायमाना न भाव्यस्यार्थहेतुतामाक्षिपति न वाऽनर्थहेतुतां प्रतिक्षिपति । किंतु यथाप्राप्तमेवावलम्बते, बलवदिच्छाविषये स्वत एव प्रवृत्तेः स्वर्गादौ विध्यनपेक्षणात् । अत एव विहितश्येनफलस्यापि शत्रुवधरूपस्याभिचारस्यानर्थहेतुत्वमुपपद्यत एव, फलस्य विधिजन्यप्रवृत्तिविषयत्वाभावात् । विधिजन्यप्रवृत्तिविषयं तु धात्वर्थरूपं करणं प्रवर्तनाऽवलम्बते । सा चानर्थहेतुं न विषयीकरोतीति विशेषविधिबाधितं सामान्यनिषेधवाक्यं रागद्वेषादिमूलाक्रत्वर्थलौकिकहिंसाविषयम् । तेन श्येनाग्नीषोमीययोर्वैषम्यादुपपन्नमदुष्टत्वं ज्योतिष्टोमादेः । विधिस्पृष्टस्यापि निषेधविषयत्वे षोडशिग्रहणस्याप्यनर्थहेतुत्वापत्तिर्नातिरात्रे षोडशिनं गृह्णातीति निषेधात् । तस्मान्न किंचिदेतदिति भाट्टं दर्शनम् । प्राभाकरं तु दर्शनं फलसाधने रागत एव प्रवृत्तिसिद्धेर्न नियोगस्य प्रवर्तकत्वम् । तेन श्येनस्य रागजन्यप्रवृत्तिविषयत्वेन विधेरौदासीन्यान्न तस्यानर्थहेतुत्वं विधिना प्रतिक्षिप्यते । अग्नीषोमीयहिंसायां तु क्रत्वङ्गभूतायां फलसाधनत्वाभावेन रागाभावाद्विधिरेव प्रवर्तकः । स च स्वविषयस्यानर्थहेतुतां प्रतिक्षिपतीति प्रधानभूता हिंसानर्थ ( भावेन ) जनयति न क्रत्वर्थेति न हिंसामिश्रत्वेन ज्योतिष्टोमादेर्दुष्टत्वमिति सममेव । एतावन्मात्रे तु विशेषः–"चोदनालक्षणोऽर्थो धर्मः" इत्यत्रार्थपदव्यावर्त्यत्वेनाधर्मत्वं श्येनादेः प्राभाकरमते । भाट्टमते तु श्येनफलस्यैवाभिचारस्यानर्थहेतुत्वादध-

र्मत्वं, श्येनस्य तु विहितस्य समीहितसाधनस्य धर्मत्वमेव। अर्थपदव्यावर्त्यत्वं तु कलञ्जभक्षणादेर्निषिद्धस्यैवेति फलतोऽनर्थहेतुत्वेन (तु) शिष्टानां श्येनादौ न धर्मत्वेन व्यवहारः। तदुक्तम् 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते। केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते' इति। तार्किकाणां तु दर्शनं कृतिसाध्यत्वमर्थहेतुत्वमनर्थाहेतुत्वं चेति त्रयं विध्यर्थः। तत्र क्रत्वर्थहिंसायां साक्षान्निषेधाभावात्प्रायश्चित्तानुपदेशाच्च कृतिसाध्यत्वार्थहेतुत्ववदनर्थाहेतुत्वमपि विधिना बोध्यत इति न तस्या अनर्थहेतुत्वम्। श्येनादेस्त्वभिचारस्य साक्षादेव निषेधात्प्रायश्चित्तोपदेशाच्चानर्थहेतुत्वावगमात्तावन्मात्रं तत्र विधिना न बोध्यत इत्युपपन्नं, श्येनाग्नीषोमीययोर्वैलक्षण्यम्। औपनिषदैस्तु भाट्टमेव दर्शनं व्यवहारे प्रायेणावलम्बितम्। तथा च भगवद्बादरायणप्रणीतं सूत्रम्—'अशुद्धमिति चेन्न शब्दात्' इति। ज्योतिष्टोमादिकर्म अग्नीषोमीयहिंसादिमिश्रितत्वेन दुष्टमिति चेत्, न। "अग्नीषोमीयं पशुमालभेत" इत्यादिविधिशब्दादित्यक्षरार्थः। जपप्रशंसापरं तु वाक्यं न क्रत्वर्थहिंसाया अधर्मत्वबोधकं, तस्य तत्रातात्पर्यात्। तथाच सांख्यानां विहिते निषिद्धत्वज्ञानमनर्थाहेतावनर्थहेतुत्वज्ञानं, धर्मे चाधर्मत्वज्ञानमनुष्ठेये चाननुष्ठेयत्वज्ञानं विपर्यासरूपो मोहः। तस्मान्मोहान्नित्यस्य कर्मणो यः परित्यागः स तामसः परिकीर्तितः। मोहो हि तमः॥ ७॥

**शं० टी०**—"निश्चयं शृणु मे तत्र" इत्युपक्रान्तं स्वसिद्धान्तमुक्त्वाऽधुना मुमुक्षोरविरक्तस्य कर्मसंन्यासं निषेधयन् "त्रिविधः संप्रकीर्तितः" इत्युक्तं त्यागस्य त्रैविध्यं प्रतिपादयति—**नियतस्येति**। नियतस्य श्रुतिस्मृतिविहितस्य संध्योपासनाग्निहोत्रादेः कर्मणः संन्यासः काम्यकर्मवत्परित्यागो मुमुक्षोरशुद्धचित्तस्य नोपपद्यते, नित्यस्य कर्मणः सत्त्वशोधकत्वादकरणे प्रत्यवायाच्चाज्ञस्य कर्मसंन्यासो न कर्तव्य इत्यर्थः। कर्मणस्तत्त्वमविज्ञायापातदृष्ट्या दोष इति त्यागोऽविवेकेन कृतश्चेत्कथमित्यत आह—**मोहादिति**। कृत्याकृत्यज्ञानाभावो मोहोऽविवेकस्तस्मान्मोहात्तस्य नियतस्य स्वानुष्ठानजन्यचित्तशुद्धिद्वारा मोक्षहेतुत्वेनोपादेयस्य नित्यस्य कर्मणः परित्यागस्तामसस्तमोगुणकार्यत्वात्तामस इति सद्भिः परिकीर्तितः। तमोगुणादेव मोहो वैचित्त्यमनिष्टादिकर्मफलाज्ञानं तस्मादेवोपादेयमपि नित्यं कर्म त्यजति, त्यक्त्वाऽकारणदोषजं फलं नरकं च प्राप्नोतीत्यर्थः। एतेनाज्ञस्यानिर्विण्णस्य च कर्मत्यागो न कर्तव्य इति सूचितं भवति॥ ७॥

**श्री० टी०**—प्रतिज्ञातं त्यागस्य त्रैविध्यमिदानीं दर्शयति—**नियतस्येति त्रिभिः**। काम्यस्य कर्मणो बन्धकत्वात् संन्यासो युक्तः। नियतस्य तु नित्यस्य पुनः कर्मणः संन्यासस्त्यागो नोपपद्यते सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात्। अतस्तस्य परित्यागः उपादेयेऽपि त्याज्यमित्येवंलक्षणान्मोहादेव भवेत्। स च मोहस्य तामसत्वात्तामसः परिकीर्तितः॥ ७॥

**स० टी०**—तदेवं कर्म न त्याज्यं स्वात्मनः स्थापितं मतम्॥ त्याज्यं दोषवदित्यादिपरपक्षनिराकृतम्॥ १॥ कर्तुमारभते त्यागत्रैविध्यमधुना हरिः॥ काम्यस्य दोषवत्त्वात्स्यात्त्यागः शुद्ध्यर्थिनां नृणाम्॥ २॥ नित्यस्य कर्मणः शुद्धिहेतुत्वेनानघस्य तु॥ चित्तशुद्ध्यर्थिनस्त्यागो मुमुक्षोर्नोपपद्यते॥ ३॥ धीशुद्ध्यै शास्त्रयुक्तिभ्यामनुष्ठेयं मुमुक्षुणा॥ काम्यस्येवास्य नित्यस्य दोषवत्त्वं न संभवेत्॥ ४॥ पावनत्वापरिज्ञानात्त्यागो नित्यस्य कर्मणः॥ अवश्यमेव कर्तव्यं यत्तन्नित्यमितीर्यते॥ ५॥ अज्ञानात्तत्परित्यागस्तामसः परिकीर्तितः॥ ६॥ ७॥

**भा० टी०**—स्वाध्यवसायमुक्त्वा त्यागस्य त्रैविध्यं दर्शयितुमारभते—**नियतस्येति**। नियतस्य नित्यस्य तु कर्मणः मुमुक्षोरज्ञस्याधिकृतस्य संन्यासः परित्यागो नोपपद्यते नोपपन्नो भवति नियतमवश्यकर्तव्यं त्यज्यते चेति विप्रतिषिद्धत्वात्। मोहात् पावनत्वापरिज्ञानात्तस्य नियतस्यावश्यकर्तव्यतया वेदविहितस्य परित्यागस्तामसः परिकीर्तितः। मोहश्च तमस्तन्निमित्तकत्वादित्यर्थः॥ ७॥

प० टी०–अथ त्यागत्रैविध्यमाह–नियतस्येति । काम्यस्य कर्मणो बन्धकत्वात्तत्संन्यासो युक्तः, नियतस्य नित्यस्य तु कर्मणः संन्यासस्त्यागो नोपपद्यते न युज्यते सत्त्वशुद्धिद्वारा मोक्षहेतुत्वात् । मोहादज्ञानात्तस्य नित्यस्य कर्मणो यस्त्यागः स तामसः परिकीर्तितः ।। ७ ।।

रा० टी०–स्वरूपत्यागो नेत्येतदुपपादयन् त्यागो हि त्रिविध इत्युक्तं प्रपञ्चयति–नियतस्य त्विति । वर्णाश्रमोचितस्य तु कर्मणः संन्यासस्त्यागो नोपपद्यते युक्तो न भवति, 'स्वयज्ञादीन्परित्यज्य निरयं यात्यसंशयम्' इति पाद्मे प्रत्यवायस्मरणात् । स्वरूपत्याग एव त्यागशब्दार्थो न सङ्गफलयोस्त्याग इति मिथ्याज्ञानाख्यमोहात्तस्य यज्ञादिकर्मणः परित्यागः तामसः परिकीर्तितः ।। ७ ।।

**दुःखमित्येव यत्कर्म कायक्लेशभयात्त्यजेत् ।।**
**स कृत्वा राजसं त्यागं नैव त्यागफलं लभेत् ।। ८ ।।**

त० टी०–राजसं त्यागमाह–दुःखमिति । कर्मफले वैराग्याभावात् केवलमनुष्ठाने दुःखमिति मत्वा यत्कर्म कायक्लेशभयात् त्यजेत् स त्यागकर्ता एतादृशं राजसं त्यागं कृत्वा नैव त्यागफलं लभेत् । यथावस्थितवस्तुज्ञानं शास्त्रीयत्यागफलं न प्राप्नुयादित्यर्थः ।। ८ ।।

म० टी०– पूर्वोक्तमोहाभावेऽपि–दुःखमिति । दुःखमिति अनुपजातान्तःकरणशुद्धितया कर्माधिकृतोऽपि दुःखमेवेदमिति मत्वा कायक्लेशभयान्नित्यं कर्म त्यजेदिति यत् स त्यागो राजसः । दुःखं हि रजः । अतः स मोहरहितोऽपि राजसः पुरुषस्तादृशं राजसं त्यागं कृत्वा नैव त्यागफलं सात्त्विकत्यागस्य फलं ज्ञाननिष्ठालक्षणं नैव लभेत् लभेत ।। ८ ।।

शं० टी०–राजसत्यागस्य लक्षणं फलं चाह–दुःखमिति । यथोक्तनियमेन यन्नित्यं कर्तव्यं तत्कर्म श्रमसाध्यत्वाद्दुःखं दुःखात्मकमायाससाध्यमित्येवं निश्चित्यालसत्वदोषेण कर्मणः कर्तव्यत्वं विजानन्नपि यः कायक्लेशभयाद्देहेन्द्रियादिक्लेशो भवत्यस्यानुष्ठानेनेति भयात्त्यजेत्त्यजति, स पुरुषो देहानुगतरागविशिष्टत्वाद्राजसं रजोदूषितबुद्धिदोषादागतं राजसं त्यागं कर्मसंन्यासं कृत्वापि त्यागफलं त्यागस्य कर्मसंन्यासस्य फलं चित्तशुद्धिं तज्जन्यज्ञानं तत्फलं मोक्षं च न लभेत् न लभते । किंतु स्ववञ्चनात्मकस्य राजसत्यागस्यानुरूपं विहिताकरणप्रत्यवायतः प्राप्तं फलं नरकमेव प्रतिपद्यत इत्यर्थः । एतेन 'न सुखाल्लभ्यते सुखम्' इतिन्यायेन स्वधर्मानुष्ठानक्लेशसहिष्णोरेव पुरुषार्थः सिध्यतीति सूचितम् ।। ८ ।।

श्री० टी०–राजसं त्यागमाह–दुःखमिति । यः कर्ताऽऽत्मबोधं विना केवलं दुःखमित्येवं ज्ञात्वा शरीरायासभयान्नित्यं कर्म त्यजेदिति यत्तादृशस्त्यागो राजसः, दुःखस्य राजसत्वात् । अतस्तं राजसं त्यागं कृत्वा राजसः पुरुषस्त्यागस्य फलं ज्ञाननिष्ठालक्षणं नैव लभत इत्यर्थः ।। ८ ।।

स० टी०–चित्तशुद्धिं विना यस्तु कर्मण्यधिकृतः पुमान् ।। दुःखमित्येव देहादावतिरागितया जड ।। १ ।। मत्वा कर्म त्यजेत्कायक्लेशभीत्याऽऽगमोदितम् ।। पूर्वोक्तमोहशून्योऽपि राजसः स च पूरुषः ।। २ ।। तादृशं राजसं त्यागं कृत्वात्मज्ञानयोग्यताम् ।। चित्तशुद्ध्या न चाप्नोति सात्त्विकत्यागजं फलम् ।। ३ ।। प्रत्युत त्यागतोऽवश्यं कर्तव्यस्यैव कर्मणः ।। प्रत्यवैति ततो मूढः संसृतिं नरकं व्रजेत् ।। ४ ।। अतो मुमुक्षुभिर्नित्यं न त्याज्यं धीविशोधकम् ।। किं तु कार्यं स्वकर्मेति श्रीहरेरयमाशयः ।। ५ ।। ८ ।।

भा० टी०–एवं तामसत्यागप्रकारमुक्त्वा राजसं तमाह–दुःखमिति । मोहाभावेऽपि दुःखमेवेति मत्वा यत्कर्म कायक्लेशभयात् शरीरदुःखभयात् त्यजेत्–यदित्यव्ययं वा, यस्त्यजेदित्यर्थः । स राजसं रजोनिर्वृत्तं

त्यागं कृत्वा त्यागस्य ज्ञानपूर्वकस्य सर्वकर्मत्यागस्य फलं मोक्षाख्यं नैव लभेत् । एवकारेणैतादृशत्यागवता मोक्षाशापि न कर्तव्येति सूचयति ॥ ८ ॥

प० टी०—राजसं त्यागमह—दुःखमिति । अथ कर्ता कर्म दुःखं दुःखसाध्यमिति मत्त्वा कायक्लेशभयाद्यस्त्यजेत् स राजसं त्यागं कृत्वा ज्ञानविन्निष्ठालक्षणं त्यागफलं नैव लभेत् ॥ ८ ॥

रा० टी०—दुःखमिति । दुःखं प्रतिकूलवेदनीयरूपदुःखकरणमित्येव कायक्लेशभयाच्च कर्म त्यजेदिति यत्स राजसत्यागः । तं राजसत्यागं कृत्वा त्यागफलं भगवत्प्रीतिरूपं नैव लभेत् ॥ ८ ॥

**कार्यमित्येव यत्कर्म नियतं क्रियतेऽर्जुन ! ॥**
**सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः ॥ ९ ॥**

त० टी०—सात्त्विकं त्यागमाह—कार्यमिति । कार्यं कर्तव्यमेवेति बुद्ध्या नियतमवश्यकर्तव्यतया विहितं नित्यनैमित्तिकं कर्म सङ्गं स्वकर्तृत्वाभिनिवेशं फलं चैव त्यक्त्वा यत्क्रियते स त्यागः सात्त्विको मतः । भगवदाराधनरूपतया सत्त्वशुद्धिद्वारा ज्ञानोत्पादक इत्यर्थः ॥ ९ ॥

म० टी०—कर्मत्यागस्तामसो राजसश्च हेयो दर्शितः । कीदृशः पुनरुपादेयः सात्त्विकस्त्याग इत्युच्यते—कार्यमिति । विध्युद्देशे फलाश्रवणेऽपि कार्यं कर्तव्यमेवेति बुद्ध्वा नियतं नित्यं कर्म सङ्गं कर्तृत्वाभिनिवेशं फलं च त्यक्त्वैव यत् क्रियतेऽन्तःकरणशुद्धिपर्यन्तं स त्यागः सात्त्विकः सत्त्वनिर्वृत्तो मत आदेयत्वेन संमतः शिष्टानाम् । ननु नित्यानां फलमेव नास्ति कथं फलं त्यक्त्वेत्युक्तम् । उच्यते—अस्मादेव भगवद्वचनान्नित्यानां फलमस्तीति गम्यते, निष्फलस्यानुष्ठानासंभवात् । तथा चाऽऽपस्तम्बः—'तद्यथाऽऽम्रे फलार्थे निमिते छायागन्धावनूत्पद्येते एवं धर्म चर्यमाणमर्था अनूत्पद्यन्ते' इत्यानुषङ्गिकं फलं नित्यानां दर्शयति । अकरणे प्रत्यवायस्मृतिश्च नित्यानां प्रत्यवायपरिहारं फलं दर्शयति 'धर्मेण पापमपनुदति । तस्माद्धर्मं परमं वदन्ति', 'येन केन च यजेतापि वा दर्विहोमेनानुपहतमना एव भवति', 'तदाहुर्देवयाजी श्रेयानात्मयाजीत्यात्मयाजीति ह ब्रूयात् । स ह वा आत्मयाजी यो वेदेदं मेऽनेनाङ्गं संस्क्रियत इदं मेऽनेनाङ्गमुपधीयते' इत्यादिश्रुतयश्च ज्ञानप्रतिबन्धकपापक्षयलक्षणं ज्ञानयोग्यतारूपपुण्योत्पत्तिलक्षणं चात्मसंस्कारं नित्यानां कर्मणां फलं दर्शयन्ति । तदभिसन्धिं त्यक्त्वा तान्यनुष्ठेयानीत्यर्थः । यदुक्तं त्यागसंन्यासशब्दौ घटपटशब्दाविव न भिन्नजातीयार्थौ, किंतु फलाभिसंधिपूर्वककर्मत्याग एव तयोरर्थ इति तन्न विस्मर्तव्यम् । तत्र सत्यपि फलाभिसंधौ मोहाद्वा कायक्लेशभयाद्वा यः कर्मत्यागः स विशेष्याभावकृतो विशिष्टाभावस्तामसत्वेन राजसत्वेन च निन्दितः । यस्तु सत्यपि कर्माणि फलाभिसंधित्यागः स विशेषणाभावकृतो विशिष्टाभावः सात्त्विकत्वेन स्तूयत इति विशेष्याभावकृते विशेषणाभावकृते च विशिष्टाभावत्वस्य समानत्वान्न पूर्वापरविरोधः । उभयाभावकृतस्तु निर्गुणत्वान्न त्रिविधमध्ये गणनीय इति चावोचाम । एतेन "त्यागो हि पुरुषव्याघ्र त्रिविधः संप्रकीर्तितः" इति प्रतिज्ञाय कर्मत्यागलक्षणे द्वे विधे दर्शयित्वा प्रतिज्ञाननुरूपां कर्मानुष्ठानलक्षणां तृतीयां विधां दर्शयतो भगवतः प्रकटमकौशलमापातितम् । न हि भवति त्रयो ब्राह्मणा भोजयितव्याः द्वौ कठकौण्डिन्यौ तृतीयः क्षत्रिय इति तद्वदिति परास्तम् । तिसृणामपि विधानां विशिष्टाभावरूपेण त्यागसामान्येनैकजातीयतया प्राग्व्याख्यातत्वात् । तस्माद्भगवदकौशलोद्भावनमेव महदकौशलमिति द्रष्टव्यम् ॥ ९ ॥

शं० टी०—फलमग्रे विवक्षन् सात्त्विकत्यागमाह—कार्यमिति । विध्युल्लङ्घनभीत्या मुमुक्षया च कार्यं ममेदमवश्यं कर्तव्यमित्येव । कर्तव्यताबुद्धेर्विकल्पान्तरनिषेधार्थ एवकारः । मयेदं कर्मेश्वरप्रीत्यै करणीयमेवेति दृढनिश्चयवता मुमुक्षुणा नियतं विध्युक्तं यन्नित्यं तत्कर्म, सङ्गं कर्तृत्वाभिनिवेशं कामं वा फलं च ।

श्च: समुच्चयार्थ:। यद्यपि "स्वर्गकाम: पशुकाम:" इतिवन्नित्यस्य कर्मण: फलं न श्रूयते, तथापि फलाभावे "अहरहः संध्यामुपासीत" इत्यादिकर्मविधेरुन्मत्तवाच इवानर्थक्यं स्यात्ततो यत्किंचित्फलं कल्पनीयमुपात्तदुरितक्षयलक्षणम्। तादृशफलं च फलकामनां च त्यक्त्वा परित्यज्येत्यर्थ:। ननु फलानपेक्षायां सत्यां पुंस: प्रवृत्तिरेव न स्यादिति चेन्न। साधोर्विध्युल्लङ्घननीत्यैव प्रवृत्तिसंभवात्, 'श्रुतिस्मृतिभ्यां सुजनो नियम्यते' इतिस्मृते:। वैऽधे दन्तधावने कृते मुखशुद्धिवद्विना फलकामनया कर्मणि कृते कर्तु: "आप: शुन्धन्तु मैनस:" "पापेभ्यो रक्षन्ताम्" इत्यादिमन्त्रक्रियाशक्तिबलेन सत्त्वशुद्धिलक्षणं फलमर्थात्स्वयमेव सिध्यति। तत्फलं मोक्षश्च। अतस्तत्र कामसंकल्पादि न कर्तव्यं, किंतु सङ्गं फलं च त्यक्त्वा। एवं नित्यं यत्कर्म कुरुते स त्याग: सात्त्विक: सत्त्वगुणनिष्पन्नत्वात्सात्त्विक इति मत: सतामिष्टत्वेनाभिमत:, कर्मफलभ्रंशाभावात्प्रत्यवायकृतानर्थाभावाच्च पूर्वोक्तत्यागद्वयापेक्षया सात्त्विककर्मफलत्याग: श्रेष्ठ इत्यर्थ:॥ ९॥

**श्री० टी०**—सात्त्विकं त्यागमाह—**कार्यमिति**। कार्यमित्येवं बुद्ध्वा नियतमवश्यकर्तव्यतया विहितं कर्मसङ्गं फलं च त्यक्त्वा क्रियत इति यत् स तादृशस्त्याग: सात्त्विको मत:॥ ९॥

**स० टी०**—तामसो राजसो हेय: कर्मत्यागश्च दर्शित:॥ कीदृश: पुनरादेय: सात्त्विकस्त्याग उच्यते ॥ १॥ अवश्यं कार्यमेवेति बुद्ध्या शास्त्रविधेर्वशात्॥ कर्तृत्वाभिनिवेशाख्यं सङ्गं त्यक्त्वा फलं तथा ॥ २॥ नित्यं नैमित्तिकं कर्म क्रियते सत्त्वशुद्धये॥ आदेयत्वेन शिष्टानां स त्याग: सात्त्विको मत: ॥ ३॥ ननु नास्त्येव नित्यानां फलं त्यक्त्वेति तत्कथम्॥ उक्तमित्यत्र च ब्रूम: श्रीमद्भगवतो हरे: ॥४॥ वाक्यादेव फलं तेषामस्तीत्येवं हि गम्यते॥ यतो न निष्फलस्यास्ति बुद्धिपूर्वमनुष्ठिति:॥ ५॥ कर्मणा पितृलोक: स्यादित्यादिश्रुतिवाक्यत:॥ अवश्यं फलमस्त्येवानुनिष्पादि च कर्मणाम्॥ ६॥ नित्यानामननुष्ठाने प्रत्यवायस्मृतिस्तथा॥ प्रत्यवायक्षयं तेषां फलं स्वं दर्शयत्यत:॥ ७॥ धर्मेण पापमित्यादिश्रुतयो दर्शयन्त्यपि॥ साक्षात्फलं धिय: शुद्धिर्नित्यानामानुषङ्गिकम्॥८॥ पितृलोकादिसंप्राप्ति: प्रत्यवायक्षयस्तथा॥ मोहाद्वा क्लेशभीत्या वा फलासङ्गे च सत्यपि॥ ९॥ नित्यकर्मपरित्याग: क्रियते योऽविपश्चिता॥ स त्यागस्तामसत्वेन राजसत्वेन निन्दित:॥ १०॥ फलाभिसंधिसंत्यागो यस्तु कर्मणि सत्यपि॥ स्तूयते सात्त्विकत्वेन स त्याग: सत्त्वशोधक:॥ ११॥ ९॥

**भा० टी०**—एवं राजसत्यागप्रकारमुक्त्वा सात्त्विकं तमाह—**कार्यमिति**। सङ्गं कर्तृत्वाभिनिवेशं फलं च त्यक्त्वा विहाय कार्यं कर्तव्यमित्येव नियतं नित्यं यत्कर्म क्रियते, स त्याग: सात्त्विको मत:। ननु नित्यानां विध्युद्देशे फलाश्रवणात् तेषां फलं त्यक्त्वेति कथमुक्तमिति चेत्, नित्यानां कर्मणां फलवत्त्वे भगवद्वचनं प्रमाणमिति गृहाण। अन्यथा भगवद्वचनमनर्थकं स्यात्। यद्वा विधिना कृतस्य कर्मण आनर्थक्ये विध्यानर्थक्यप्रसङ्गात् श्रौतफलाभावेऽपि कर्माधिकृतो ज्ञो नित्यं कर्मकृतमात्मसंस्कारं प्रत्यवायपरिहारं च फलं कर्तु: करोतीति कल्पयति तामपि कल्पनां निवारयति भगवान्—फलं त्यक्त्वेति। अयमेव त्यागश्चित्तशुद्धिहेतुरिति सूचनार्थमर्जुनेति संबोधनम्। ननु कर्मपरित्यागस्त्रिविधो मत इति त्यागस्य त्रैविध्यं प्रस्तुत्य सङ्गफलत्यागस्य तृतीयत्वेन कथनमयुक्तम्। यथा त्रयो ब्राह्मणा आगतास्तत्र सषडङ्गवेदविदौ द्वौ क्षत्रियस्तृतीय इति तद्वदिति चेन्नैष दोष:। कर्मसंन्यासस्य सङ्गफलत्यागस्य च त्यागसामान्येन राजसतामसत्वेन कर्मत्यागनिन्दया सङ्गफलत्यागस्य तृतीयत्वेन प्रदर्शनस्य सात्त्विकत्वेन स्तुत्यर्थत्वादित्येवमाचार्यै: प्रतिज्ञातं त्यागत्रैविध्यं त्रिभि: श्लोकै: प्रदर्शितम्। केचित्तु विशिष्टाभावरूपत्यागो विशेषणाभावाद्विशेष्याभावादुभयाभावाच्च त्रिविध: संप्रकीर्तित:। तथाहि फलाभिसंधिपूर्वककर्मत्याग: सत्यपि कर्मणि फलाभिसंधित्यागादेक:। सत्यपि फलाभिसंधौ कर्मत्यागात् द्वितीय:। फलाभिसंधे: कर्मणश्च त्यागात्तृतीय:। तत्र प्रथम: सात्त्विक आदेय-

त्वेनात्रैव विधित्सितः । द्वितीयस्तु दुःखबुद्ध्या कृतो राजसः । विपर्यासेन कृतस्तामसः । इति राजसताम-सभेदेन द्विविधोऽप्यत्रैव हेयत्वेन निन्दितः । तृतीयस्तु विदुषा कर्मानधिकारिणा विविदिषुणा च कर्तुं योग्यो द्विविधः । तत्राद्यः स्थितप्रज्ञलक्षणादौ प्राग्व्याख्यातः । द्वितीयस्तु "नैष्कर्म्यसिद्धिं परमाम्" इत्यत्र वक्ष्यत इति वर्णयन्ति । अस्मिन् पक्षे एकस्मिन्द्वयोरन्तर्भावं कृत्वा तृतीयः प्रदेशान्तरे प्रक्षिप्त इति प्रतिज्ञाया अनिर्वाहो भगवतो महदकौशलतापादको द्रष्टव्यः ॥ ९ ॥

प० टी०—सात्त्विकं त्यागमाह—कार्यमिति । कार्यमवश्यकर्तव्यत्वेन प्राप्तमित्येव मत्वा नियतं नित्यं कर्म सङ्गं फलं च त्यक्त्वा यत्क्रियते स त्यागः सात्त्विको मतः । अत्रैतदुक्तं भवति । वेदबोधितस्य कर्मणः प्रयोजनद्वयं दर्शितमस्ति स्वर्गादीष्टप्राप्तिः संसाराद्यनर्थपरिहारश्च । तत्रेष्टप्राप्तिर्मीनस्य बडिशामिषप्राप्तिरिव दुःखगर्भात्सुखेनावस्थानमेवानर्थपरिहारः । तथाचोभयोर्मध्येऽवश्यकत्वेन किमनुष्ठेयमिति विचारेऽनर्थपरिहार एवानुष्ठातुं श्रेयानिति भगवतो हार्दम् ॥ ९ ॥

रा० टी०—कार्यमिति । कार्यमवश्यं कर्तव्यमन्यथा प्रत्यवायादितिबुद्ध्या सङ्गं मदीयमिति स्नेहं स्वर्गादिफलं च त्यक्त्वैव नियतं वर्णाश्रमोचितं कर्म यत् क्रियते स त्यागः कर्मानुष्ठानसहितः सात्त्विको मतः ॥९॥

**न द्वेष्ट्यकुशलं कर्म कुशले नानुषज्जते ॥**
**त्यागी सत्त्वसमाविष्टो मेधावी छिन्नसंशयः ॥ १० ॥**

त० टी०—तदेवं सात्त्विकत्यागेनोत्पन्नज्ञानस्य मुमुक्षोर्वर्तनप्रकारमाह—न द्वेष्टीति । सत्त्वसमाविष्टो यदा सत्त्वेनात्मानात्मविवेकज्ञानहेतुना समाविष्टो व्याप्त अत एव मेधावी मेधा तत्त्वावधारणलक्षणा बुद्धिस्तद्वान् तत एव छिन्नसंशयः, देहात्मयाथात्म्यनिश्चयेन छिन्नसंदेहः । एवंभूतो यः सात्त्विकत्यागी स अकुशलं शरीरदुःखावहं शिशिरे प्रातःस्नानमेकादश्युपवासजागरणादिकं कर्म न द्वेष्टि प्रतिकूलबुद्ध्या न त्यजति । कुशले सर्वजनसामान्यप्रियत्वेनाभिमते ग्रीष्मेऽसकृत्स्नानजलक्रीडादिवास्वापारामाटनादौ नानुषज्जते प्रीत्यतिशयं न करोति । परिणामे सुखापादकं महदपि दुःखं सहते । संसारफलकं महदपि सुखं नेच्छतीत्यर्थः ॥ १० ॥

म० टी०—सात्त्विकस्य त्यागस्याऽऽदानाय सत्त्वशुद्धिद्वारेण ज्ञाननिष्ठां फलमाह—नेति । यस्त्यागी सात्त्विकेन त्यागेन युक्तः पूर्वोक्तेन प्रकारेण कर्तृत्वाभिनिवेशं फलाभिसंधिं च त्यक्त्वाऽन्तःकरणशुद्ध्यर्थं विहितकर्मानुष्ठायी स यदा सत्त्वसमाविष्टः सत्त्वेनात्मानात्मविवेकज्ञानहेतुना चित्तगतेनातिशयेन सम्यग्ज्ञानप्रतिबन्धकरजस्तमोमलराहित्येनासमन्तात् फलाव्यभिचारेणाविष्टो व्याप्तो भवति भगवदर्पितनित्यकर्मानुष्ठानात् पापमलापकर्षलक्षणेन ज्ञानोत्पत्तियोग्यतारूपपुण्यगुणाधानलक्षणेन च संस्कारेण संस्कृतमन्तःकरणं यदा भवतीत्यर्थः । तदा मेधावी शमदमसर्वकर्मोपरमगुरूपसदनादिसामवायिकाङ्गयुक्तेन मनननिदिध्यासनाख्यफलोपकार्यङ्गयुक्तेन च श्रवणाख्यवेदान्तवाक्यविचारेण परिनिष्पन्नं वेदान्तमहावाक्यकरणकं निरस्तसमस्ताप्रामाण्याशङ्कं चिदन्याविषयकमहं ब्रह्मास्मीति ब्रह्मात्मैक्यज्ञानमेव मेधा, तया नित्यं युक्तो मेधावी स्थितप्रज्ञो भवति, तदा छिन्नसंशयः अहं ब्रह्मास्मीति विद्यारूपया मेधया तदविद्योच्छेदे तत्कार्यसंशयविपर्ययशून्यो भवति, तदा च क्षीणकर्मत्वात् न द्वेष्ट्यकुशलं कर्माशोभनं काम्यं निषिद्धं वा कर्म न प्रतिकूलतया मन्यते, कुशले शोभने नित्ये कर्मणि नानुषज्जते न प्रीतिं करोति कर्तृत्वाद्यभिमानरहितत्वेन कृतकृत्यत्वात् । तथा च श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति । यस्मादेवं सात्त्विकस्य त्यागस्य फलं तस्मान्महताऽपि प्रयत्नेन स एवोपादेय इत्यर्थः ॥ १० ॥

शं० टी०—एवं तामसादित्यागत्रयस्वरूपं प्रतिपाद्य बहुजन्मस्वीश्वरार्पणबुद्ध्या फलाभिसंधिरहिततया सात्त्विकत्यागनिष्ठया सम्यगनुष्ठितैर्यज्ञदानादिकर्मभिः सम्यक्संस्कृतत्वेन विशुद्धान्तःकरणस्य शमदमादिसत्त्वगुणसंपन्नस्य सात्त्विकत्यागेनान्तःकरणपरिपाकसिद्धेः फलमाह—न द्वेष्टीति । सात्त्विकत्यागनिष्ठया भक्त्याऽनेकजन्मभिः समाराधितपरमेश्वरप्रसादसंपन्नस्त्यागी सात्त्विकत्यागनिष्ठः पुरुषः सत्त्वसमाविष्टः सत्त्वं रजस्तमस्तत्कार्यविनिर्मुक्त आत्मानात्मस्वरूपनिर्धारणसमर्थोऽन्तःकरणपरिपाकविशेषस्तेन समाविष्टः सम्यग्विशिष्टः स एव मेधावी ब्रह्मविद्गुरोः सकृदुपदेशमात्रेण ब्रह्मैवाहमिति संप्राप्तात्मतत्त्वविज्ञानस्तत एव छिन्नसंशयः छिन्नः स्वस्य कूटस्थासङ्गचिदात्मत्वविज्ञानेन विच्छिन्नः संशयः संचितागामिवर्तमानकर्मभिर्मम लेपोऽस्ति वा न वा, कर्तृत्वभोक्तृत्वादिलक्षणः संसार आत्मनो वाऽनात्मनो वा, मोक्षकारणं योगो वाप्युपास्तिर्वा कर्म वा ज्ञानं वा तन्निष्ठा वा, मोक्षः सालोक्यादिर्वा निर्विशेषात्मनावस्थानलक्षणो वाऽन्यो वा, इत्येवमादिर्यस्य स छिन्नसंशयः तत एवाकुशलं न लभ्यते कुशलं निःश्रेयसं येन तदकुशलं शरीरारम्भकत्वेनेदं संसारलक्षणं बन्धकमिति काम्यं कर्म च नरकहेतुत्वेनेदं दुःखकारणमिति निषिद्धमपि किमनेनेति न द्वेष्टि द्वेषोऽप्रीतिस्तामत्र न करोति । तमःकृतमोहाभावादिदं दुष्टं बन्धकं न कर्तव्यमिति बुद्धिं न करोतीत्यर्थः । कुशले कुशलसाधने यज्ञदानादौ कर्मणि नित्ये मोक्षकारणमिति नानुषज्जते । अनुषङ्गः प्रीतिस्तां न करोतीति मुक्तस्य मोक्षेच्छाऽसंभवे साधनापेक्षाभावात्तत्र कर्तव्यत्वबुद्धिं न करोति, किंतु 'दोषबुद्ध्योभयातीतो निषेधान्न निवर्तते । गुणबुद्ध्या च विहितं न करोति यथार्भकः' इति न्यायेन कुशलमकुशलं च कर्म सर्वं संन्यस्य ब्रह्मात्मना तिष्ठतीत्यर्थः । एतेन सर्वकर्मफलकामनात्यागपूर्वकमीश्वरार्पणबुद्ध्या सम्यगनुष्ठितैरेव यज्ञदानादिभिः सत्त्वशुद्धिः । शुद्धसत्त्वस्यैव सम्यग्ज्ञानं ब्रह्मात्मैकत्वविषयकमप्रतिबद्धं सम्यग्ज्ञानवत एव संशयादिविच्छित्तिः सर्वकर्मसंन्यासः तन्निष्ठा च सिध्यतीति बोधितं भवति । ततो ज्ञानकर्मणोः साध्यसाधनभाव इति सिद्धम् । यत्सर्वस्यापि गीताशास्त्रस्य सर्वस्यापि च वेदस्य तात्पर्यं तच्चाप्याविष्कृतं भवतीति वेदितव्यमित्यर्थः ॥ १० ॥

श्री० टी०—एवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह—न द्वेष्टीति । सत्त्वसमाविष्टः सत्त्वेन संव्याप्तः सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादिकं कर्म न द्वेष्टि । कुशले च सुखकरे कर्मणि निदाघे माध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति । तत्र हेतुः—मेधावी स्थिरबुद्धिः । यत्र परपरिभवादि महदपि दुःखं सह्यते स्वर्गादिसुखं च त्यज्यते तत्र कियदेतत्तात्कालिकं सुखं दुःखं चेत्येवमनुसंधानवानित्यर्थः । अत एव च्छिन्नः संशयो मिथ्याज्ञानं दैहिकसुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणं यस्य सः ॥१०॥

स० टी०—सात्त्विकस्त्याग आदेयः सत्त्वशुद्ध्यात्मलब्धये ॥ इत्युक्तं तत्फलं ज्ञाननिष्ठामाहाधुना हरिः ॥ १ ॥ यस्त्यागी सात्त्विकेनैव त्यागेन युत उत्तमः ॥ त्यक्त्वा फलाभिसंधिं च कर्तृत्वाभिनिवेशनम् ॥ २ ॥ धीशुद्ध्यै विहितं कर्म कुर्वन्भगवदर्पणम् ॥ तत्प्रसादात्तधीशुद्धिस्तया प्राप्याधिकारिताम् ॥ ३ ॥ सत्त्वेन तत्त्वविज्ञानहेतुभूतेन संयुतः ॥ वैराग्यसद्विवेकादियोग्यतापूर्वकेण च ॥ ४ ॥ असंदिग्धाविपर्यस्तवेदान्तवचसां सदा ॥ विचारेण सुनिष्पन्नाहं ब्रह्मास्मीति या मतिः ॥ ५ ॥ सा मेधा यस्तया नित्यं युक्तो मेधाव्युदारधीः ॥ मेधावित्वेन संछिन्नः संशयो यस्य मोहजः ॥ ६ ॥ स्वात्मावस्थानमेवास्ति परं मोक्षैकसाधनम् ॥ नैवान्यत्किंचिदित्येवं निश्चयेन प्रमात्मना ॥ ७ ॥ तदैव क्षीणकर्मत्वात्काम्यकर्माद्यशोभनम् ॥ प्रतिकूलतया नायं मन्यते स्वात्मनि स्थितः ॥ ८ ॥ कुशले शोभने नित्ये न करोति रतिं सुधीः ॥ कृतकृत्यतया तृप्तस्त्यक्तकर्तृत्वधीर्यतः ॥ ९ ॥ भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ १० ॥ त्यागस्य सात्त्विकस्यास्ति यस्मादेवं फलं ततः ॥ महताऽपि प्रयत्नेन स आदेयो मुमुक्षुणा ॥ ११ ॥ १० ॥

भा० टी०—एवं सात्त्विकं त्यागमुक्त्वा योऽधिकृतः सङ्गं फलाभिसंधिं च त्यक्त्वा कर्म करोति तादृशकर्मानुष्ठानेन संस्कृतात्मा सन् जन्मादिविक्रियारहितत्वेन निष्क्रियमात्मानमात्मत्वेन संबुद्धः सर्वकर्माणि मनसा संन्यस्य नैव कुर्वन्न कारयन्नासीनो नैष्कर्म्यलक्षणां ज्ञाननिष्ठां प्राप्नोतीत्येतत्पूर्वोक्तस्य कर्मयोगस्य प्रयोजनमाह—न द्वेष्टीति । यस्त्यागी पूर्वोक्तसङ्गफलत्यागवान् नित्यकर्मानुष्ठायी यदा सत्त्वसमाविष्टः सङ्गं फलाभिसंधिं च त्यक्त्वा कर्मानुष्ठानतः सङ्गफलाभ्यामकलुषीक्रियमाणं नित्यैश्च कर्मभिः संस्क्रियमाणं विशुद्धं समुद्भूतस्वमात्मानात्मविवेकविज्ञानहेत्वन्तःकरणं सत्त्वमत्र ग्राह्यं, तेन समाविष्टः संव्याप्तः संयुक्त इति यावत् । अत एव मेधावी ब्रह्मात्मज्ञानलक्षणा प्रज्ञा मेधा तद्वान् मेधावी । मेधावित्वादेव ब्रह्मात्मस्वरूपावस्थानमेव परं निःश्रेयससाधनं नान्यत् किंचिदित्येव निश्चयेन छिन्नोऽविद्याकृतः संशयो यस्य स श्छिन्नसंशयः " तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" । "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे " इति श्रुतेः स तदा अकुशलमशोभनं काम्यं निषिद्धं च कर्म न द्वेष्टि काम्यादिकर्मशरीरारम्भादिद्वारेण संसारकारणमतः किमनेनेत्येवं द्वेषं न करोति । कुशले चित्तशुद्ध्यादिद्वारा मोक्षहेतुत्वात् शोभने नित्ये कर्मणि नानुषज्जते सत्त्वशुद्धिज्ञानोत्पत्तितन्निष्ठाहेतुत्वेन मोक्षकारणमतोऽनेन मदीयं प्रयोजनं सेत्स्यतीत्यनुषङ्गमासक्तिं प्रीतिं न करोतीत्यर्थः । एवंभूतसात्त्विकपरित्यागनिष्ठस्य लक्षणमाह—सत्त्वसमाविष्टः—सात्त्विकत्यागी अकुशलं दुःखावहं शिशिरे प्रातःस्नानादि कर्म न द्वेष्टि कुशले च सुखकरे कर्मणि निदाघे मध्याह्नस्नानादौ नानुषज्जते प्रीतिं न करोति । तत्र हेतुः—मेधावी स्थिरबुद्धिः । यत्र परपरिभवादिमहद्दुःखमपि सह्यते स्वर्गादिसुखं च त्यज्यते तत्र कियदेतत्कालिकं सुखं दुःखं चैवमनुसंधानवान् इत्यर्थः । अत एव छिन्नः संशयो मिथ्याज्ञानं दैहिकसुखदुःखयोरुपादित्सापरिजिहीर्षालक्षणं यस्य स इत्यपरे । इतरे तु स तु त्यागी सात्त्विकत्यागकर्ता । तुशब्दस्तामसराजसत्यागकर्तृतो विशेषद्योतकः । अकुशलमविवेकिनं मोक्षकथानभिज्ञं देहाभिमानिनम् । अत एवान्तःकरणशुद्धिप्रयोजककर्माचरणासहिष्णुं किमर्थं वा एतत्कर्माचरसि किंवा पुत्रदारादिनिर्वाहकृत्कर्म त्यजसीत्येवमादि जल्पन्तं न द्वेष्टि धिक् त्वां परतो गच्छेत्येवमादिचेष्टाभावात् द्वेषं न करोतीत्यर्थः । तथा कर्मकुशले नित्यनैमित्तिककर्माचरणकुशले तन्मात्रासङ्गात्फलत्यागवति स्वसमाने नानुषज्जते । ' ददाति प्रतिगृह्णाति गुह्यमाख्याति पृच्छति । भुङ्क्ते भोजयते चैव षड्विधं प्रीतिलक्षणम् ' इत्युक्तमनुषङ्गं न करोति । ननु तस्योभयविधलिङ्गदर्शनात् संशय एव किं न स्यादित्यत उक्तम्—छिन्नसंशयः संशयरहितः । तत्रैव हेतुमाह—मेधावीति । स्वीकरणनिश्चयधारणावान् । कुतोऽयं निश्चयस्तस्येत्यत उक्तम्—असमाविष्ट इति । असमे क्षयिफलान्तरासदृशे निरतिशयानन्दरूपे फले आविष्टो लिप्सावान् अत ईदृग्लक्षणो योगी त्यागी ज्ञेय इति भाव इति वर्णयन्ति । एवममुख्यं सात्त्विकं त्यागमुक्त्वा मुख्यं तमाह—न द्वेष्टि सत्त्वेन सम्यगाविष्टो व्याप्तस्त्यागी मुख्यः सात्त्विकत्यागी संन्यासीत्यर्थः । अकुशलमसुखप्रदं कर्म त्रिषवणस्नानचतुर्गुणशौचभिक्षाटनादिप्रयासरूपं न द्वेष्टि । कुशले मिष्टान्नभक्षणादौ नानुषज्जते प्रीतिं न करोति । यद्वा कर्मकुशले सेवादिकर्मकुशले शिष्यादौ नानुषज्जते तत्राकुशलं वा तं न द्वेष्टि । एतेन रागद्वेषशून्यत्वमस्य दर्शितम् । तदपि कुत इत्यपेक्षायामाह—मेधावीति । ऊहापोहकुशलतया नित्यानित्यवस्तुविवेचनादौ प्रज्ञावान् । अनेन मोहात्तस्य परित्याग इत्युक्तात्तामसात्त्यागात् व्यावृत्तिः । मेधावित्वादेव छिन्नसंशयः । किं कर्माण्येवमुक्तिसाधनानि उत संन्यास एवेतिसंशयरहितः । अनेन कार्यमित्येवेत्युक्तादमुख्यसात्त्विकत्यागात् व्यावृत्तिरेव । त्यागीत्यनेन यज्ञो दानमित्युक्तादत्यागात् पूर्वार्धेन कायक्लेशभयात्त्यजेदित्युक्ताद्राजसात्यागात् व्यावृत्तिरित्यन्ये । आचार्योक्तव्याख्यानापेक्षयोदाहृतव्याख्यानत्रयेऽप्यधिकं स्वारस्यं चिन्त्यम् ॥ १० ॥

प० टी०–अथैवंभूतसात्त्विकत्यागपरिनिष्ठितस्य लक्षणमाह–न द्वेष्टीति । त्यक्तरजस्तमस्कः सत्त्वेन समाविष्टः प्रविष्ट एवंविधस्त्यागय्कुशलं देहपीडाकरं कर्म न द्वेष्टि एतदकार्यमिति न मनुते । तथा कुशले निदाघे मध्याह्नस्नानवद्देहसुखावहे कर्मणि नैव सज्जते, एतत्सुखकरमिति प्रीतिं न कुरुते । अनेन कायक्लेशभयात्त्यजेदित्यादिवद्रजोराहित्यं दर्शितम् । यतो मेधावी बुद्धिमान् दैहिकसुखदुःखे अमन्यमानोऽत एव मन्मतावलम्बनेन छिन्नसंशयः ॥ १० ॥

रा० टी०–सात्त्विकत्यागिनो विशेषणान्याह–न द्वेष्टीति । अकुशलं तात्कालिकसुखदं न किं तु कायक्लेशदुःखदं कर्म न द्वेष्टि । कुशले पूर्वार्जितपुण्यफले नानुषज्जते नेच्छति । सत्त्वसमाविष्टः सम्यक्सत्त्वगुणेन व्याप्तः मेधावी भगवत्तत्त्वज्ञानी छिन्नसंशयः परापरतत्त्वविषये भगवद्धर्मानुष्ठाने वा संदेहहीनः त्यागी भगवति सर्वकर्मसमर्पणवान्स सात्त्विकत्यागीत्यर्थः ॥ १० ॥

**न हि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः ॥**
**यस्तु कर्मफलत्यागी स त्यागीत्यभिधीयते ॥ ११ ॥**

त० टी०–ननु सत्त्वसमाविष्टः कुशलाकुशलयोः कर्मणोर्यदि प्रीतिद्वेषौ न करोति, तर्हि किमर्थं तदनुष्ठानं फलाभावात् । फलाभिसंधिनाऽनुष्ठितस्य च बन्धकत्वमसकृदुक्तमेव । तस्मान्मुमुक्षुणा सर्वमेव कर्म त्याज्यमित्याशङ्क्याह–न हीति । देहं बिभर्तीति देहभृत् तेन देहभृता उत्पन्नज्ञानेनानुत्पन्नज्ञानेन वा कर्माण्यशेषतस्त्यक्तुं नैव शक्यानि । देहनिर्वाहहेतूनां भोजनाच्छादनाद्यर्थककर्मणामवर्जनीयत्वात् । तस्माद्यस्तु कर्मफलत्यागी कर्मफलानपेक्षी स त्यागीत्यभिधीयते निरूप्यते ॥ ११ ॥

म० टी०–तदेवमात्मज्ञानवतः सर्वकर्मत्यागः संभाव्यते कर्मप्रवृत्तिहेत्वो रागद्वेषयोरभावादित्युक्तम् । संप्रत्यज्ञस्य कर्मत्यागासंभवे हेतुरुच्यते–नहीति । मनुष्योऽहं ब्राह्मणोऽहं गृहस्थोऽहमित्याद्यभिमानेनाबाधितेन देहं कर्माधिकारहेतुवर्णाश्रमादिरूपं कर्तृभोक्तृत्वाद्याश्रयं स्थूलसूक्ष्मशरीरेन्द्रियसंघातं बिभर्ति अनाद्यविद्यावासनावशाद्व्यवहारयोग्यत्वेन कल्पितमसत्यमपि सत्यतया स्वभिन्नमपि स्वाभिन्नतया पश्यन् धारयति पोषयति चेति देहभृदबाधितकर्माधिकारहेतुर्देहाभिमानस्तेन विवेकज्ञानशून्येन देहभृता कर्मप्रवृत्तिहेतुरागद्वेषपौष्कल्येन सततं कर्मसु प्रवर्तमानेन कर्माण्यशेषतः निःशेषेण त्यक्तुं हि यस्मान्न शक्यं न शक्यानि सत्यां कारणसामग्र्यां कार्यत्यागस्याशक्यत्वात् । तस्मात् यस्त्वज्ञोऽधिकारी सत्त्वशुद्ध्यर्थं कर्माणि कुर्वन्नपि भगवदनुकम्पया तत्फलत्यागी । तुशब्दस्तस्य दुर्लभत्वद्योतनार्थः । स त्यागीत्यभिधीयते गौण्या वृत्त्या स्तुत्यर्थमत्याग्यपि सन् । अशेषकर्मसंन्यासस्तु परमार्थदर्शिनैव देहभृता शक्यते कर्तुमिति स एव मुख्यया वृत्त्या त्यागीत्यभिप्रायः ॥ ११ ॥

शं० टी०–इदानीं नित्यनैमित्तिककर्मानुष्ठानेष्वधिकृतो देहात्मबुद्धिः पुरुषस्तस्याशेषकर्मपरित्यागस्याशक्यत्वात्कर्मफलत्यागेन कर्मानुष्ठान एवाधिकारो न तु कर्मत्याग इति प्रतिपादयति–न हीति । हि यस्मात्कारणाद्देहभृता देहमयमेवाहमिति स्वात्मना बिभर्तीति देहभृत् देहात्मबुद्धिरज्ञ एव कर्माधिकारी न त्वात्मज्ञस्तस्य कूटस्थमेवात्मानं सर्वदृश्यविलक्षणं पश्यतो विदुषो देहात्मत्वबुद्ध्यसंभवात्कर्माधिकारानुपपत्तेरहं कर्तेति कर्तृत्वाभिमानिनः । एवं देहाद्यहंबुद्धेः कर्मण्यधिकारस्ततो देहभृताऽनात्मज्ञेन अशेषतोऽशेषाणि नित्यनैमित्तिककाम्यप्रतिषिद्धान्यन्यान्यपि च कर्माणि त्युक्तुं संन्यसितुं न शक्यं तस्याकर्त्रात्मज्ञानाभावात् । यस्त्वकर्त्रात्मज्ञानवान् भवति तस्यैवाशेषकर्मसंन्यास उपपद्यते न त्वन्यस्य । तस्माद्यस्त्वनात्मज्ञः कर्मण्यधिकृतः सन् कर्मफलत्यागी भवति स एव त्यागी सर्वकर्मसंन्यासी निष्काम इत्यभिधीयते । सर्वेषामपि

कर्मणा तत्फलानां चेश्वरार्पितत्वे सत्यकर्मिसादृश्यसंभवादयं स्वयं नित्यकर्म्यप्यकर्मीति स्तूयते मुमुक्षुणामत्रैव सात्त्विकत्यागे प्रवृत्तिसिद्धये। यद्वा सात्त्विकत्यागस्वरूपं सात्त्विकत्यागनिष्ठस्य तन्निष्ठासंजातसत्त्वशुद्धिं तत्संभावितज्ञानं तत्फलं नैष्कर्म्यसिद्धिं च प्रतिपाद्याथ सदसद्विवेकशून्यानां पूर्वोक्तानां राजसतामसत्यागवतामाभासत्यागित्वं वस्तुतः कर्मत्वमनिष्टादिफलवत्त्वं च बोधयितुम् "यज्ञोऽध्ययनं दानम्" मित्यादिश्रुत्युक्तानां नित्यनैमित्तिककर्मणामीश्वरार्पणबुद्ध्या समनुष्ठितवतः सात्त्विकत्यागिन एव स्वधर्मानुष्ठानसमुत्पन्नचित्तशुद्ध्या संप्राप्तात्मयाथात्म्यविज्ञानस्य कुशलादिसर्वकर्मसंन्यासिनो कर्मित्वमनिष्टादिफलरहितत्वं च प्रतिपादयति—नहीति द्वाभ्याम्। कैश्चित्पण्डितैरेव बौद्धस्वभावैर्मोहात्सिकया तमोदूषितबुद्ध्या किमनेन कर्मणेत्यश्रद्धया सर्वस्यापि च कर्मणस्त्यागो राजसोऽश्रुतस्तामसः क्रियते तथा पण्डितैरेव कैश्चिदलसैर्देहसौख्येच्छुभिर्देहायाससाध्यं सर्वं कर्म दुःखमेवेति रजोदोषदूषितबुद्ध्या सर्वस्यापि कर्मणस्त्यागो राजसोऽश्रुत एव क्रियते तेषां राजसतामसत्यागिनां कर्मत्याग आभासिक एव न तु क्रियया सिध्यति। हि यस्मात्कारणाद्देहभृता देहं स्वभावत एव क्रियावत्प्राणेन्द्रियमनोबुद्ध्यादिकरणसंघातविशिष्टमयमेवाहमिति स्वस्वरूपत्वेन बिभर्तीति देहभृत् तेन देहात्मबुद्धिना पुरुषेण कर्माणि काले काले कर्तव्यत्वेनाप्रयत्नतः प्राप्तानि पुण्यान्यपुण्यान्यन्यानि चाशेषतोऽशेषेण त्यक्तुं संन्यसितुं न शक्यं, कर्म त्यक्तमित्याभासमात्रमेव कर्मत्यागो न तु वस्तुतः सिध्यति। कर्मकर्तृकारकव्यतिरिक्तात्मज्ञानाभावात्। स्वत एव चेष्टावद्देहात्मबुद्धित्वाच्च बुद्धिपूर्वकमबुद्धिपूर्वकं वाप्यपुण्यपुण्याचरणमस्त्येव। तस्मात्ते त्यागिनः सर्वकर्मसंन्यासिनो न भवन्तीत्यर्थः। तर्हि कः संन्यासीत्यत आह—यस्त्विति। तुशब्दोऽस्य तामसादिवैलक्षण्यबोधनार्थः। यस्तु कर्मफलत्यागी यज्ञदानादिकर्माणि कृत्वा पूर्वोक्तरीत्या सर्वकर्मफलत्यागं करोति स एव त्यागी संन्यासीत्यभिधीयते, निष्कर्मत्वसिद्धिप्रकारज्ञैः पण्डितैः स एव सर्वकर्मसंन्यासीत्युच्यते, न त्वितरे तामसत्यागादयः। आपातदृष्ट्या ते कर्मसंन्यासिनोऽपि सम्यग्विचार्यमाणे तु कर्मिण एव भवन्ति। विहिताकरणप्रत्यवायत्वाद्भ्रमप्रमादादिषु पुण्यापुण्यकर्मवत्त्वाच्च न तेषामशेषकर्मसंन्यासः संभवति। यत एवं ततः सर्वकर्माणि कृत्वा तानि तत्फलानि चेश्वरे त्यक्त्वा कामसंकल्पादिदोषशून्यत्वेन विशुद्धचित्ततया विज्ञातकूटस्थात्मस्वभावः सन् सर्वकर्माणि मनसेत्युक्तप्रकारेण कुशलानि अकुशलानि च सर्वाणि कर्माणि संन्यस्य निष्क्रियब्रह्मात्मना यस्तिष्ठति तस्यैव सर्वकर्मसंन्यासः सिध्यति कूटस्थासङ्गचिदात्मत्वविज्ञानवतः सर्वकर्मसंन्याससंभवाद्बहुजन्मसु सात्त्विककर्मानुष्ठानेन सत्त्वसमाविष्टस्य मेधाविनश्छिन्नसंशयस्य विदुषः कुशलाकुशलादिसर्वकर्मसंन्यासस्य प्रतिपादितत्वाच्च। अत उपक्रान्तस्यैव कर्मफलत्यागिनः स्वधर्मानुष्ठानसंभावितचित्तशुद्धिद्वारा संप्राप्तविज्ञानस्य सर्वकर्मसंन्यासित्वप्रतिपादनं युक्तमिति भाति। तथा प्रतिपादिते सत्यश्रद्धादुर्मेधाभ्यामीश्वरार्पणबुद्ध्या ये तु कर्म न कुर्वन्ति तेषां कल्पकोट्यापि चित्तशुद्धिर्ज्ञानं मोक्षश्च न सिध्यति। ये त्वकामनया श्रद्धाभक्तिभ्यामीश्वरप्रीत्यै वैदिकं कर्म कुर्वन्ति तेषां सत्त्वशुद्धिर्ज्ञानं नैष्कर्म्यं मोक्षश्च सिध्यति। अतो मोक्षैककामैर्विचक्षणैः सात्त्विकत्यागनिष्ठया स्वधर्मोऽनुष्ठातव्य इत्युपदेशः सेत्स्यति नान्यथेत्येव भाति ॥ ११ ॥

**श्री० टी०**—नन्वेवंभूतात्कर्मफलत्यागाद्वरं सर्वकर्मत्यागस्तथा सति कर्मविक्षेपाभावेन ज्ञाननिष्ठासुखं संपद्यते तत्राह—नेति। देहभृता देहात्माभिमानवता निःशेषेण सर्वाणि कर्माणि त्यक्तुं न हि शक्यम्। तदुक्तम्—'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्यादिना। तस्माद्यस्तु कर्माणि कुर्वन्नेव कर्मफलत्यागी स एव मुख्यत्यागीत्यभिधीयते ॥ ११ ॥

**स० टी०**—एवमात्मविदः सर्वकर्मत्यागोऽपि संभवेत् ॥ कर्मप्रवृत्तिहेत्वोश्चासंभवाद्द्वेषरागयोः ॥ १ ॥ अबाधिअज्ञस्य कर्मणां त्यागासंभवे हेतुरुच्यते ॥ ब्राह्मणोऽहं मनुष्योऽहमित्याद्याध्यासिकेन च ॥ २ ॥ अबाधि-

ताभिमानेन देहं वर्णाश्रमाश्रयम् ॥ कर्तृत्वाद्याश्रयं स्थूलसूक्ष्मसंघातमाग्रहात् ॥ ३ ॥ बिभर्त्यनाद्यविद्यादिवशादात्मतया स च ॥ देहभृत्तेन कर्माणि कर्मण्येवाधिकारिणा ॥ ४ ॥ विवेकज्ञानशून्येन रागद्वेषवता सदा ॥ त्यक्तुं निःशेषतो यस्मान्न शक्यानि कथंचन ॥५॥ सत्यां कारणसामग्र्यां कार्यत्यागोऽतिदुष्करः ॥ तस्मादज्ञोऽधिकारी यः कुर्वन्कर्माणि शुद्धये ॥६॥ फलाभिसंधिसंत्यागी तुशब्देनातिदुर्लभः ॥ स त्यागीत्युच्यते गौण्या वृत्त्या मुख्यस्तु तत्त्ववित् ॥ ७ ॥ ईश्वरानुग्रहात्कर्मफलत्यागितया सुधीः ॥ युज्यते तत्त्वबोधेन नान्यथेत्याशयो हरेः ॥ ८ ॥ ११ ॥

भा० टी०—तदेवं सात्त्विकत्यागवतः शुद्धचित्तस्य सर्वकर्मत्यागे मुख्यसंन्यासेऽधिकारं प्रदर्श्याधिकृतस्य देहाभिमानित्वेन देहभृतोऽज्ञस्याबाधितात्मकर्तृत्वविज्ञानतयाहं कर्तेति निश्चितबुद्धेरशेषकर्मपरित्यागस्याशक्यत्वात् कर्मफलत्यागेन विहितकर्मानुष्ठाने एवाधिकारो न त्याग इत्येतमर्थं दर्शयितुमाह—नहीति। हि यस्माद्देहभृता देहं स्वात्मत्वेन बिभर्ति धारयतीति देहभृत् देहाभिमानवान् तेनाज्ञेनाशेषतः निःशेषेण सर्वाणि कर्माणि त्यक्तुं संन्यसितुं न शक्यते। तस्माद्यस्त्वज्ञो देहभृदधिकृतो विहितानि कर्माणि कुर्वन् तत्फलत्यागी कर्मफलाभिसंधिमात्रसंन्यासी स त्यागीत्यभिधीयते। कर्म्यपि सन् त्यागीति स्तुत्यभिप्रायेणोक्तम्। तथाच परमार्थदर्शिना देहाभिमानशून्येनाशेषकर्मसंन्यासः शक्यते कर्तुमिति भावः ॥ ११ ॥

प० टी०—तदेवाह—न हीति। देहभृता देहाभिमानवता दैहिकव्यवहाराय करचरणव्यापारं कुर्वताऽशेषतः कर्माणि त्यक्तुं न हि शक्यम्। कायक्लेशभयात्कथं त्यक्तुं शक्यन्त इत्यर्थः। न हि कश्चित्क्षणमपीति पूर्वमेवोक्तम् ॥ ११ ॥

रा० टी०—पूर्वं कर्तव्यानीति मे पार्थेत्यत्र सङ्गफलत्याग एव त्यागशब्दार्थ इति स्वसिद्धान्तो निर्णीतः। अधुना त्याज्यं दोषवदितिपक्षस्य बीजखण्डनाय सर्वकर्मपरित्यागो वा विहितकर्मत्यागो वा न त्यागशब्दार्थः। येन त्याज्यं दोषवदित्यस्य सर्वकर्मत्यागोऽर्थ इत्युच्यत इतिभावेनाह—न हीति। अशेषतः कर्माणि त्यक्तुं न शक्यम् 'नहि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत्' इत्युक्तेः। नापि विहिताशेषत्यागः 'स्वयज्ञादीन्परित्यज्य निरयं यान्ति' इतिप्रत्यवायस्मरणादिति भावः। हि यस्मादशक्यं तस्माद्यस्तु कर्मफलत्यागी स एव त्यागीत्यभिधीयते। अतस्त्याज्यमिति पक्षस्यापि फलत्याग एवार्थ इति भावः ॥ ११ ॥

**अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥**
**भवत्यत्यागिनां प्रेत्य न तु संन्यासिनां क्वचित् ॥ १२ ॥**

त० टी०—ननु यथा देहपुष्ट्युदेशाभावेनापि कृतस्य दधिदुग्धमिष्टान्नादिभोजनस्य पुष्टिफलत्वदर्शनात् तथा विधिनाऽनुष्ठितकर्मणामिह फलोद्देशाभावेऽपि प्रेत्येष्टानिष्टं फलं स्यादेवातो मोक्षविरोधित्वान्मुमुक्षुणा हेयमेव सर्वं कर्मेति चेत् तत्राह—अनिष्टमिति। अनिष्टं नरकतिर्यगादिप्राप्तिफलम्, इष्टं दिव्यभोगप्राप्तिलक्षणं, मिश्रमिष्टानिष्टं मनुष्यसंबन्धिपुत्रपश्वन्नादीति त्रिविधं कर्मणः शुभाशुभस्य फलमत्यागिनां फलत्यागरहितानामेव प्रेत्य देहत्यागादूर्ध्वं देहान्तरे भवति। न तु संन्यासिनां सम्यक् त्यक्तफलानां क्वचिदपि मोक्षविरोधिफलं भवति। एवं च सात्त्विकानां पापाचारासंभवान्नानिष्टोत्पत्तिः। सुकृतानां तु भगवत्यर्पितत्वान्न तद्भोगोत्पत्तिरत एव मिश्रमपि न भवति। तस्मान्नोक्तशङ्काऽवकाशः ॥ १२ ॥

म० टी०—ननु देहभृतः परमात्मज्ञानशून्यस्य कर्मिणोऽपि कर्मफलाभिसंधित्यागित्वेन गौणसंन्यासिनः परमात्मज्ञानवतो देहाभिमानरहितस्य सर्वकर्मत्यागिनो मुख्यसंन्यासिनश्च कः फले विशेषो यद्बलेन गौण-

त्वमेकस्य यल्लाभेन च मुख्यत्वमन्यस्य, कर्मफलत्यागित्वं तु द्वयोरपि तुल्यमित्यन्यो विशेषो वाच्यः । उच्यते—अनिष्टमिति । अत्यागिनां कर्मफलत्यागित्वेऽपि कर्मानुष्ठायिनामज्ञानां गौणसंन्यासिनां प्रेत्य विविदिषापर्यन्त-सत्त्वशुद्धेः प्रागेव मृतानां पूर्वकृतस्य कर्मणः फलं शरीरग्रहणं भवति मायामयं फलगुतया लयमदर्शनं गच्छतीति निरुक्तेः । कर्मण इति जात्यभिप्रायमेकवचनं, एकस्य त्रिविधफलत्वानुपपत्तेः । तच्च फलं कर्मणस्त्रिविधत्वात् त्रिविधं पापस्यानिष्टं प्रतिकूलवेदनीयं नारकतिर्यगादिलक्षणं, पुण्यस्य इष्टमनुकूलवेदनीयं देवादिलक्षणं, मिश्रस्य तु पापपुण्ययुगलस्य मिश्रमिष्टानिष्टसंयुक्तं मानुष्यलक्षणमित्येवं त्रिविधमित्यनुवादो हेयत्वार्थः । एवं गौणसंन्यासिनां शरीरपातादूर्ध्वं शरीरान्तरग्रहणमावश्यकमित्युक्त्वा मुख्यसंन्यासिनां परमात्मसाक्षात्कारेणाविद्यातत्कार्यनिवृत्तौ विदेहकैवल्यमेवेत्याह—न तु संन्यासिनां क्वचित् । परमात्मज्ञानवतां मुख्यसंन्यासिनां परमहंसपरिव्राजकानां प्रेत्य कर्मणः फलं शरीरग्रहणमनिष्टमिष्टं मिश्रं च क्वचिद्देशे काले वा न भवत्येवेत्यवधारणार्थस्तुशब्दः, ज्ञानेनाज्ञानस्योच्छेदे तत्कार्याणां कर्मणामुच्छिन्नत्वात् । तथा च श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इति । पारमर्षं च सूत्रम्—'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इति परमात्मज्ञानादशेषकर्मक्षयं दर्शयति । तेन गौणसंन्यासिनां पुनः संसारः मुख्यसंन्यासिनां तु मोक्ष इति फले विशेष उक्तः । अत्र कश्चिदाह 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च' इत्यादौ कर्मफलत्यागिषु संन्यासिशब्दप्रयोगात् कर्मिण एवात्र फलत्यागसाम्यात् संन्यासिशब्देन गृह्यन्ते । तेषां च सात्त्विकानां नित्यकर्मानुष्ठानेन निषिद्धकर्माननुष्ठानेन च पापासंभवान्नानिष्टं फलं संभवति नापीष्टं काम्याननुष्ठानात्, ईश्वरार्पणेन फलस्य त्यक्तत्वाच्च । अत एव मिश्रमपि नेति त्रिविधकर्मफलासंभवः । अत एवोक्तम् 'मोक्षार्थी न प्रवर्तेत तत्र काम्यनिषिद्धयोः । नित्यनैमित्तिके कुर्यात्प्रत्यवायजिहासया' इति । स वक्तव्यः शब्दस्यार्थस्य च मर्यादा न निरधारि भवतेति । तथाहि—"गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः" इति शब्दमर्यादा । यथा "अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति" इत्यत्र अमावास्याशब्दः काले मुख्यः । तत्कालोत्पन्ने कर्मणि च गौणः 'य एवं विद्वानमावास्यायां यजते' इत्यादौ । तत्रामावास्यायामिति कर्मग्रहणे पितृयज्ञस्य तदङ्गत्वान्न फलं कल्पनीयमिति विधेर्लाघवमिति पूर्वपक्षितं कात्यायनेन—"अङ्गं वा समभिव्याहारात्" इति । गौणार्थस्य मुख्यार्थोपस्थितिपूर्वकत्वान्मुख्यार्थस्य चेहाबाधादमावास्याशब्देन काल एव गृह्यते । फलकल्पनागौरवं तूत्तरकालीनं प्रमाणवत्त्वादङ्गीकार्यमिति सिद्धान्तितं जैमिनिना—"पितृयज्ञः स्वकालत्वादनङ्गं स्यात्" इति । एवं स्थिते संन्यासिशब्दस्य सर्वकर्मत्यागिनि मुख्यत्वात् कर्मिणि च फलत्यागसाम्येन गौणत्वान्मुख्यार्थस्य चेहाबाधात्तस्यैव संन्यासिशब्देन ग्रहणमिति शब्दमर्यादया सिद्धम् । सत्यां कारणसामग्र्यां कार्योत्पाद इति चार्थमर्यादा । तथाहि ईश्वरार्पणेन त्यक्तकर्मफलस्यापि सत्त्वशुद्ध्यर्थं नित्यानि कर्माण्यनुतिष्ठतोऽन्तराले मृतस्य प्रागर्जितैः कर्मभिस्त्रिविधं शरीरग्रहणं केन वार्यते 'यो वा एतदक्षरं गार्ग्यविदित्वाऽस्माल्लोकात्प्रैति स कृपणः' इति श्रुतेः । अन्ततः सत्त्वशुद्धिफलज्ञानोत्पत्त्यर्थं तदधिकारिशरीरमपि तस्यावश्यकमेव । अत एव विविदिषासंन्यासिनः श्रवणादिकं कुर्वतोऽन्तराले मृतस्य योगभ्रष्टशब्दवाच्यस्य 'शुचीनां श्रीमतां गेहे योगभ्रष्टोऽभिजायते' इत्यादिना ज्ञानाधिकारिशरीरप्राप्तिरवश्यं भाविनीति निर्णीतं षष्ठे, यत्र सर्वकर्मत्यागिनोऽप्यज्ञस्य शरीरग्रहणमावश्यकं, तत्र किं वक्तव्यमज्ञस्य कर्मिण इति । तस्मादज्ञस्यावश्यं शरीरग्रहणमित्यर्थमर्यादया सिद्धं पराक्रान्तं चैकभविकपक्षनिराकरणे सूरिभिः । तस्माद्यथोक्तं भगवत्पूज्यपादभाष्यकृतं व्याख्यानमेव न्याय्यः । तदयमत्र निष्कर्षः—अकर्त्रभोक्तृपरमानन्दाद्वितीयसत्यस्वप्रकाशब्रह्मात्मसाक्षात्कारेण निर्विकल्पेन वेदान्तवाक्यजन्येन विचारनिश्चितप्रामाण्येन सर्वप्रकाराप्रामाण्यशङ्काशून्येन ब्रह्मात्मज्ञानेनात्माज्ञाननिवृत्तौ तत्कार्यकर्तृत्वाद्यभिमा-

नरहित: परमार्थसंन्यासी सर्वकर्मोच्छेदाच्छुद्धः केवल: सन्नाविद्याकर्मादिनिमित्तं पुन: शरीरग्रहणमनुभवति, सर्वभ्रमाणां कारणोच्छेदेनोच्छेदात् । यस्त्वविद्यावान् कर्तृत्वाद्यभिमानी देहभृत् स त्रिविध: रागादिदोषप्राबल्यात् काम्यनिषिद्धादियथेष्टकर्मानुष्ठायी मोक्षशास्त्रानधिकार्येक:। अपरस्तु य: प्राक् कृतसुकृतवशात् किंचित्प्रक्षीणरागादिदोष: सर्वाणि कर्माणि त्यक्तुमशक्नुवन्निषिद्धानि काम्यानि च परित्यज्य नित्यानि नैमित्तिकानि च कर्माणि फलाभिसंधित्यागेन सत्त्वशुद्ध्यर्थमनुतिष्ठन् गौणसंन्यासी मोक्षशास्त्राधिकारी द्वितीय: स: । ततो नित्यनैमित्तिककर्मानुष्ठानेनान्तःकरणशुद्ध्या समुपजातविविदिष: श्रवणादिना वेदनं मोक्षसाधनं संपिपादयिषु: सर्वाणि कर्माणि विधित: परित्यज्य ब्रह्मनिष्ठं गुरुमुपसर्पति विविदिषासंन्यासिसमाख्यस्तृतीय: । तत्राद्यस्य संसारित्वं सर्वप्रसिद्धम्। द्वितीयस्य त्वनिष्टमित्यादिना व्याख्यातम् । तृतीयस्य तु 'अयति: श्रद्धयोपेत:' इति प्रश्नमुत्थाप्य निर्णीतं षष्ठे । अज्ञस्य संसारित्वं ध्रुवं कारणसामग्र्या: सत्त्वात् । तत्तु कस्यचिज्ज्ञानाननुगुणं कस्यचिज्ज्ञानानुगुणमिति विशेष: । विज्ञस्य तु संसारकारणाभावात् स्वत एव कैवल्यमिति द्वौ पदार्थौ सूत्रितावस्मिन् श्लोके ॥ १२ ॥

**शं० टी०**—एवं तामसादित्यागवतामापाततोऽकर्मिणामपि कर्मित्वं सात्त्विकत्यागिनस्त्वकर्मित्वं च प्रतिपाद्य कर्मिणां कर्मफलमकर्मिणां तदभावं च प्रतिपादयति—**अनिष्टमिति** । अनिष्टं पापकर्मफलं नारकत्वं तिर्यक्त्वं वा, पुण्यकर्मफलमिष्टं देवत्वं, मिश्रमुभयमिश्रफलं मनुष्यत्वं च "पुण्येन पुण्यलोकं नयति" इत्यादिश्रुतिप्रसिद्धं त्रिविधं त्रिप्रकारकमपि कर्मफलमत्यागिनां कर्मतत्फलत्यागमकुर्वतां तामसादित्यागिनां प्रेत्य मरणादूर्ध्वं भवत्येव । वाचा त्यागेऽपि क्रियया कर्मणां त्यागाभावात्कृतानां कर्मणां फलावश्यंभावित्वाच्च त्रिविधं कर्मफलमत्यागिनां भवत्येव न तु संन्यासिनां, कर्मफलत्यागसंजातसत्त्वशुद्धिसंभावितात्मज्ञानेन संन्यस्ताकुशलादिसर्वकर्मणां यतीनां क्वचित्किंचिदपि संचितस्यागामिनो वाऽन्यस्य वा पुण्यापुण्यलक्षणस्य कर्मणो ज्ञानाग्निनिर्दग्धस्वरूपस्य फलं न भवति । 'सति कुड्ये चित्रकर्म' इतिन्यायेन स्वस्यैव सत्त्वाभावे फलदानासंभवादकर्मिणां विदुषां विदेहमुक्तिरेवेति सिद्धम् ॥ १२ ॥

**श्री० टी०**—एवंभूतस्य कर्मफलत्यागस्य फलमाह—**अनिष्टमिति** । अनिष्टं नारकित्वं, इष्टं देवत्वं, मिश्रं मनुष्यत्वं, एवं त्रिविधं पापस्य पुण्यस्य चोभयमिश्रस्य च कर्मणो यत्फलं प्रसिद्धं तत्सर्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्मसंभवात् । न तु संन्यासिनां क्वचिदपि भवति । संन्यासिशब्देनात्र फलत्यागसाम्यात्प्रकृता: कर्मफलत्यागिनोऽपि गृह्यन्ते । 'अनाश्रित: कर्मफलं कार्यं कर्म करोति य: । स संन्यासी च योगी च' इत्येवमादौ च कर्मफलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासंभवात् ईश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्मफलं न भवतीत्यर्थ: ॥ १२ ॥

**स० टी०**—ननु कर्मफलत्यागितया देहाभिमानिन: ॥ गौणसंन्यासिनो ज्ञानशून्यस्यापि च कर्मिण: ॥ १ ॥ देहाभिमानशून्यस्य मुख्यसंन्यासिनस्तथा ॥ त्यागित्वमुभयत्रापि तुल्यमस्तीति गम्यते ॥ २ ॥ तयो: फले विशेष: को यदलाभेन गौणता ॥ एकस्यान्यस्य यल्लाभे मुख्यत्वमिति चेच्छृणु ॥ ३ ॥ कर्मानुष्ठायिनां कर्मफलत्यागितयाऽपि च ॥ गौणसंन्यासिनां चित्तशुद्धे: प्रागेव कालत: ॥ ४ ॥ मृतानां प्राकृतस्यास्ति शरीरग्रहणं फलम् ॥ मायिकं फल्गुभावेनादर्शनं लयमेति यत् ॥ ५ ॥ एकत्वं कर्मणश्चेति जात्यभिप्रायत: स्मृतम् ॥ अन्यथा त्रिविधं तत्स्यात्कथमेकस्य कर्मण: ॥ ६ ॥ कर्मणास्त्रिविधत्वात्त्रिविधं फलमीरितम् ॥ पापस्यानिष्टमात्रं च तिर्यगादिकलक्षणम् ॥ ७ ॥ देवादिलक्षणं चेष्टं पुण्यस्य फलमीरितम् ॥ मिश्रस्य पापपुण्यात्मयुगलस्य नृलक्षणम् ॥ ८ ॥ इष्टानिष्टयुतं प्रोक्तं फलं हेयतयाऽखिलम् ॥ गौणसंन्यासिनामेवं देहपातादनन्तरम् ॥ ९ ॥ देहान्तरस्य ग्रहणमावश्यकमितीरितम् ॥ मुख्यसंन्या-

सिनां ब्रह्मसाक्षात्कारेण तद्विदाम् ॥ १० ॥ अविद्यादिनिवृत्तौ स्यात्कैवल्यात्मकनिर्वृतिः ॥ न देहग्रहणं तेषां क्वचित्कालेऽथवा दिशि ॥ ११ ॥ अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम् ॥ ज्ञानेनाज्ञानबाधे हि तत्कार्याणां च कर्मणाम् ॥ १२ ॥ उच्छिन्नत्वात्पुनर्देहग्रहणं संभवेत्कथम् ॥ क्षीयन्ते चास्य कर्माणीत्येवं श्रुत्याऽप्युदीरितम् ॥ १३ ॥ गौणसंन्यासिनां तेन संसारो हरिणेरितः ॥ मुख्यसंन्यासिनां मोक्षो विशेषोऽयं फले तयोः ॥ १४ ॥ अयमत्रास्ति निष्कर्षः पूर्वोक्तस्य विवेचनात् ॥ नित्यशुद्धपरानन्दप्रत्यगद्वैतवस्तुनः ॥ १५ ॥ साक्षात्कारेण वेदान्तवाक्यजन्येन भास्वता ॥ सुनिश्चितप्रमात्वेन तत्त्वज्ञानेन सर्वथा ॥ १६ ॥ अज्ञानध्वान्तबाधे तत्कार्यकर्तृत्वबाधनात् ॥ यः परमार्थसंन्यासिकर्मोच्छेदात्स निर्मलः ॥ १७ ॥ नाविद्याकामकर्मादिनिमित्तं त्रिविधं फलम् ॥ शरीरग्रहणं भूयोऽनुभवत्येव सर्वथा ॥ १८ ॥ कारणोच्छेदतः सर्वभ्रमाणां विनिवृत्तितः ॥ यस्त्वज्ञो देहभृत्सोऽयं त्रिविधो भवति क्षितौ ॥ १९ ॥ रागादिदोषप्राबल्याद्यथेष्टाचारसंमुखः ॥ कर्म काम्यनिषिद्धादि समाचरति मूढधीः ॥ २० ॥ एकोऽयं मोक्षशास्त्रे योऽनधिकार्यतिपामरः ॥ अपरः प्राकृतैः पुण्यैः किंचित्क्षीणमलः पुमान् ॥ २१ ॥ त्यक्त्वा काम्यं निषिद्धं च नित्यं नैमित्तिकं शुभम् ॥ फलाभिसंधिसंत्यागात्सत्त्वशुद्ध्यर्थमाचरन् ॥ २२॥ स चायं गौणसंन्यासी मोक्षशास्त्रेऽधिकारवान् ॥ अन्यो धीशुद्धिमासाद्य श्रवणादिपरायणः ॥ २३ ॥ विवेकी ब्रह्मविन्मार्गे प्रवृत्तोऽयं तृतीयकः ॥ तत्राद्यस्य महानर्थभाक्त्वं प्रत्यक्षमेव हि ॥ २४ ॥ द्वितीयस्याप्यनिष्टादिफलं त्रिविधं स्मृतम् ॥ तृतीयस्य पुरा षष्ठेऽध्याये संनिर्णयः कृतः ॥ २५ ॥ द्वितीयस्यापि सत्कर्मतारतम्याद्रतेरपि ॥ तारतम्यं स्मृतौ वेदे निर्णीतं च मनीषिभिः ॥ २६ ॥ संसारित्वं ध्रुवं देहाद्यभिमानिनि पूरुषे ॥ अविद्याकामकर्मादिसामग्र्याः संभवादिति ॥ २७ ॥ सा च संसारिताज्ञानानुगुणा कस्यचिद्भवेत् ॥ कस्यचिन्न तथेत्येवं विशेषस्तत्र शोधितः ॥ २८ ॥ तत्त्वज्ञस्य तु संसारकारणाभावतः स्वतः ॥ सिद्धं कैवल्यमेवास्तीत्यत्रार्थौ सूचितावुभौ ॥ २९ ॥ तावत्कर्मफलं नृणामविरतं संसारवारांनिधाविष्टानिष्टविमिश्रजन्मनिबिडं भ्रान्त्या कुलानां भवेत् ॥ यावत्सज्जनचञ्चरीकनिवहस्वाद्ये रसैकास्पदे श्रीमत्कृष्णपदाम्बुजेन मनसो वृत्ती रता षट्पदी ॥ ३० ॥ १२ ॥

भा० टी०—अमुख्यसंन्यासापेक्षया मुख्यसंन्यासस्य विशिष्टं प्रयोजनं किमित्याकाङ्क्षायामाह—अनिष्टमिति । अनिष्टं नरकतिर्यगादिलक्षणं, इष्टं देवादिलक्षणम्, मिश्रमिष्टानिष्टसंयुक्तं मनुष्यलक्षणं चैवं त्रिविधं त्रिप्रकारं कर्मणो धर्माधर्मलक्षणस्य फलं बाह्यानेककारकव्यापारनिष्पन्नत्वादनेकम्, अविद्याकृतत्वात् मिथ्याभूतमिन्द्रजालमायोपमं महामोहकरं प्रत्यगात्मोपसर्पीव—फल्गुतया लयमदर्शनं गच्छतीति फलशब्दनिर्वचनात् । तदेवं त्रिविधं फलमत्यागिनामज्ञानां कर्मिणामपरमार्थसंन्यासिनां प्रेत्य शरीरपातादूर्ध्वं भवति । फलाभिसंधिरहितानां कर्मणां देहपातादूर्ध्वं संचितादिकर्मानुरोधिफलस्यावश्यंभावादिति भावः । संन्यासिनां तु परमार्थसंन्यासिनां परमहंसपरिव्राजकानां केवलज्ञाननिष्ठानामुन्मूलिताविद्यादिसंसारबीजानां क्वचिद्देशे काले वा यथोक्तं फलं न भवति । अतः परमार्थतत्त्वविदः क्रियाकारकफलानामात्मन्यविद्याध्यारोपितत्वदर्शिन एवाशेषकर्मसंन्यासित्वं संभवति, न त्वज्ञस्याधिष्ठानादीनि क्रियाकर्तृणि कारकाण्यात्मत्वेन पश्यतोऽशेषकर्मसंन्यासित्वमिति भावः । यत्त्वपरे एवंभूतस्य कर्मफलत्यागस्य फलमाह—अनिष्टादिरूपं त्रिविधं फलमत्यागिनां सकामानामेव प्रेत्य परत्र भवति तेषां त्रिविधकर्मसंभवात्, न तु संन्यासिनां क्वचिदपि भवति । संन्यासिशब्देनात्र फलत्यागसाम्यात् प्रकृताः कर्मफलत्यागिनो गृह्यन्ते ‘ अनाश्रितः कर्मफलं कार्यं कर्म करोति यः । स संन्यासी च योगी च’ इत्येवमादौ च फलत्यागिषु संन्यासिशब्दप्रयोगदर्शनात् । तेषां सात्त्विकानां पापासंभवात् ईश्वरार्पणेन च पुण्यफलस्य त्यक्तत्वात् त्रिविधमपि कर्म फलं न भवती-

त्यर्थ इति वर्णयन्ति । तन्नोपादेयं संन्यासिशब्दस्य परमार्थसंन्यासिनि सर्वकर्मत्यागिनि मुख्यत्वात् कर्मिणि च फलत्यागसाम्येन गौणत्वात् मुख्यार्थस्य चेहाबाधात्तस्यैव संन्यासिशब्देन ग्रहणसंभवे गौणग्रहणस्य 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इति शब्दमर्यादाऽपरिज्ञानविजृम्भितत्वात । सत्यां कारणसामग्र्यां कार्योत्पाद इत्यर्थ मर्यादाऽज्ञानमूलकत्वाच्च ईश्वरार्पणेन त्यक्तकर्मफलस्यापि सत्त्वशुद्ध्यर्थं नित्यानि कर्माण्यनुतिष्ठतोऽन्तराले मृतस्य प्रागर्जितकर्मरूपकारणसामग्र्या त्रिविधशरीररूपकार्योत्पाद आवश्यक एवेति दिक् ॥ १२ ॥

प० टी०–एवंभूतस्य कर्मफलत्यागस्य फलमाह–**अनिष्टमिति** । अनिष्टं नारकित्वम्, इष्टं देवत्वम्, मिश्रं मनुष्यत्वम् । एवं त्रिविधं पापस्य पुण्यस्य मिश्रस्य च कर्मणो यत्फलं प्रसिद्धं तत्सर्वमत्यागिनां सकामानामेव प्रेत्य परत्र भवति, तेषां त्रिविधकर्मसंभवात् । न तु संन्यासिनां क्वचिदपि भवति । संन्यासशब्देनात्र फलत्यागिनो गृह्यन्ते 'अनाश्रितः कर्मफलं कार्यं कर्म करोति यः' इत्येवमादौ फलत्यागिषु संन्यासिप्रयोगदर्शनात् ॥ १२ ॥

रा० टी०–अत्यागिनिन्दापूर्वं त्यागिनं स्तौति–**अनिष्टमिति** । अनिष्टं नरकादि, इष्टं काम्यकर्मिणामिच्छाविषयीभूतं स्वर्गादि, मिश्रमिष्टानिष्टमेलनरूपं मानुषादि, कर्मणस्त्रिविधं फलमत्यागिनां कर्मफलमत्यजतां प्रेत्य मृत्वा देहान्निर्गत्य स्थितानां भवति । संन्यासिनां तु अनियतकाम्यानां फलत्यागिनां नियतानां स्वरूपत्यागिनां क्वचिदपि इह वा परत्र वा नास्ति । इष्टानिष्टादिरूपं कर्मणः फलमित्यनुषङ्गः । अत्र त्यागिनामितिवक्तव्ये संन्यासिनामित्युक्तिः त्यागिनो हि परार्थं कारीर्यादिनियतकाम्यं कुर्वन्ति, संन्यासिनस्तु तदपि नेत्येतावन्तं त्यागिभ्यो विशेषं सूचयितुं, फलेच्छाभावेन तेषु त्यागित्वस्यापि सत्यत्वात् । नत्विति । तुशब्देन त्यागिनां ज्ञानभक्त्यादिद्वारा अपरोक्षतो मुक्तावानन्दातिशयफलं भवतीति सूच्यते । उपपादितमेतत् त्यागाच्छान्तिरनन्तरमित्यत्र द्वादशेऽध्याये भाष्यादौ ॥ १२ ॥

**पञ्चैतानि[1] महाबाहो कारणानि निबोध मे ॥**
**सांख्ये कृतान्ते प्रोक्तानि सिद्धये सर्वकर्मणाम् ॥ १३ ॥**

**त० टी०**–त्रिविधं कर्मफलं सकामानामेव भवति, नतु त्यागिनामित्युक्तम् । तत्र विवेकाविवेकप्रयुक्तयोः कर्मण्यहङ्कारानहङ्कारयोरेव हेतुत्वप्रदर्शनाय कर्मसामान्यं प्रति कारणपञ्चकं प्रतिजानाति–**पञ्चैतानीति** । हे महाबाहो ! एतानि वक्ष्यमाणानि पञ्च कारणानि कर्मनिवर्तकानि मे मत्तो निबोध जानीहि । कर्मण्यहङ्कारनिवृत्तये विवेकार्थं मुमुक्षुणाऽवश्यं ज्ञातव्यानीति प्रशंसति । सांख्ये सम्यक् ख्यायन्ते निरूप्यन्ते विविच्यन्ते तत्त्वान्यस्मिन्निति सांख्यं तस्मिन् । कथंभूते कृतान्ते बन्धमोक्षहेतुतया हेयोपादेयविभागेन कृतोऽन्तः कर्माकर्मनिर्णयो यस्मिन् तत्कृतान्तं सांख्यशास्त्रं तस्मिन् । यद्वा सम्यक् ख्यायन्ते निरूप्यन्ते ज्ञातव्या जीवेश्वरमायादिपदार्था यस्मिन् तत्सांख्यं, कृतोऽन्तो बन्धमोक्षसाधनादिनिर्णयो यस्मिन् तत्कृतान्तं तस्मिन् सांख्ये कृतान्ते वेदान्तशास्त्रे सर्वकर्मणां सिद्धये बन्धकत्वाभावेन यथावत्तत्त्वज्ञानोत्पत्तये प्रोक्तानि प्रकर्षेण संशयाभावेनोक्तानि ॥ १३ ॥

म० टी०–तत्रात्मज्ञानरहितस्य संसारित्वे हेतुः कर्मत्यागासंभव उक्तः 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इति । तत्राज्ञस्य कर्मत्यागासंभवे को हेतुः? कर्महेतावधिष्ठानादिपञ्चके तादात्म्याभिमान इतीममर्थं चतुर्भिः लोकैः प्रपञ्चयति । तत्र प्रथमेनाधिष्ठानादीनि पञ्च वेदान्तप्रमाणमूलानि हेयत्वार्थमवश्यं ज्ञातव्यानी-

[1] पञ्चेमानीत्यपि पाठः ।

त्याह—पञ्चेति। इमानि वक्ष्यमाणानि पञ्च सर्वकर्मणां सिद्धये निष्पत्तये कारणानि निर्वर्तकानि हे महाबाहो, मे मम परमाप्तस्य सर्वज्ञस्य च वचनान्निबोध बोद्धुं सावधानो भव। न ह्यत्यन्तदुर्ज्ञानान्येतान्यनवहितचेतसा शक्यन्ते ज्ञातुमिति चेतःसमाधानविधानेन तानि स्तौति। महाबाहुत्वेन च सत्पुरुष एव शक्तो ज्ञातुमिति सूचयति स्तुत्यर्थमेव। किमेतान्यप्रमाणकान्येव तव वचनाज्ज्ञेयानि? नेत्याह—सांख्ये कृतान्ते प्रोक्तानि निरतिशयपुरुषार्थप्राप्त्यर्थं सर्वानर्थनिवृत्त्यर्थं च ज्ञातव्यानि। जीवः, ब्रह्म, तयोरैक्यं, तद्बोधोपयोगिनश्च श्रवणादयः पदार्थाः संख्यायन्ते व्युत्पाद्यन्तेऽस्मिन्निति सांख्यं वेदान्तशास्त्रं, तस्मिन्नात्मवस्तुमात्रप्रतिपादके किमर्थमनात्मभूतान्यवस्तूनि लोकसिद्धानि च कर्मकारणानि पञ्च प्रतिपाद्यन्त इत्यतः शास्त्रविशेषणं कृतान्त इति। कृतमिति कर्मोच्यते, तस्यान्तः परिसमाप्तिस्तत्त्वज्ञानोत्पत्त्या यत्र तस्मिन् कृतान्ते शास्त्रे प्रोक्तानि प्रसिद्धान्येव लोकेऽनात्मभूतान्येवात्मतया मिथ्याज्ञानारोपेण गृहीतान्यात्मतत्त्वज्ञानेन बाधसिद्धये हेयत्वेनोक्तानि। यदा ह्यन्यधर्म एव कर्मात्मन्यविद्ययाऽध्यारोपितमित्युच्यते तदा शुद्धात्मज्ञानेन तद्बाधात्कर्मणोऽन्तः कृतो भवति। अत आत्मनः कर्मासंबन्धप्रतिपादनायानात्मभूतान्येव पञ्च कर्मकारणानि वेदान्तशास्त्रे मायाकल्पितान्यनूदितानीति नाद्वैतात्ममात्रतात्पर्यहानिस्तेषां तदङ्गत्वेनैवेतरत्र प्रतिपादनात्। इहापि च सर्वकर्मान्तत्वं ज्ञानस्य प्रतिपादितम् 'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इति। तस्माज्ज्ञानशास्त्रस्य कर्मान्तत्वमुपपन्नम् ॥ १३ ॥

शं० टी०—ननु विदुषामपि संन्यासिनामकर्मित्वं न भवति। शिष्यादीनां तत्त्वोपदेशेन हितोपदेशेन वा पुण्यक्रियासंभवात्तथाऽऽहारादिषु क्वचिद्दुष्टान्नभक्षणेन वा संचारादिषु प्राणिपीडया वान्यथा वा पापक्रियासंभवाच्च तत्तत्क्रियाफलमिष्टानिष्टादिलक्षणं स्यादेवेति चेत्सत्यम्। महान्तो ब्रह्मविदो जीवन्मुक्ताः शिष्येभ्योऽन्येभ्यश्च वा साधुभ्यो ब्रह्मतत्त्वमुपदिशन्ति हितं च तेषां क्वचिदाहारादिषु दुष्टान्नसेवा च संभवति, भ्रमप्रमादादिना क्वचित्प्राणिपीडा च। तथापि निरन्तरब्रह्मनिष्ठासंपन्नसम्यग्ज्ञानेन निष्कलं निष्क्रियं नित्यकूटस्थासङ्गचिद्रूपमेव परं ब्रह्माहमिदमेवेति स्वात्मना साक्षात्कृतवतां सदा तदात्मनैव तिष्ठतामधिष्ठानादिभ्यः क्रियाकर्तृकारकादिभ्यो भिन्नमेवात्मानमकर्तारमभोक्तारमाकाशवदक्रियं परिपूर्णमेव सर्वदा पश्यतां परमहंसपरिव्राजकानां स्वतो भिन्नैरेवाधिष्ठानादिभिः क्रियमाणपुण्यपापादिक्रियालेशसंबन्धासंभवात्तन्निमित्तकेष्टानिष्टफलं कल्पयितुं न शक्यते इति बोधयितुमादौ कर्मनिष्पत्तेः कारणान्याह—पञ्चैतानीति द्वाभ्याम्। सांख्ये सम्यक् ख्यायते निरुच्यते आत्मानात्मनोस्तत्त्वं प्रकाश्यतेऽनेनेति सांख्यं वेदान्तशास्त्रं, तस्मिन् सांख्ये कृतान्ते 'निष्कलं निष्क्रियम्' इति, 'उपशान्तोऽयमात्मा' इति, 'शिवं शान्तम्' इति, 'स्वाभाविकी ज्ञानबलक्रिया च' इति, 'नवद्वारे पुरे देही नैव कुर्वन्न कारयन्' इति, 'नित्यः सर्वगतः स्थाणुः' इति, 'प्रकृत्यैव च कर्माणि' इति, 'प्रकृतेः क्रियमाणानि' इति, 'स्वभावस्तु प्रवर्तते' इत्येवं कृतः स्पष्टीकृत आत्मानात्मनोरन्तस्तत्त्वनिश्चयो यत्र तत्कृतान्तम्। यद्वा क्रियत इति कृतं विहितप्रतिषिद्धादिलक्षणं कर्म, तस्यान्तः समाप्तिर्येन 'न तेषां धर्माधर्मौ' 'त्यज धर्ममधर्मं च' इत्यादिशास्त्रेण, तत्कृतान्तम्। यद्वा कृतस्य कर्मणो वैदिकस्य नित्यनैमित्तिकादेः संन्यस्य श्रवणं कुर्यादित्यन्तः समाप्तिर्यच्छ्रवणनिमित्तं तत्कृतान्तं तस्मिन् कृतान्ते सर्वकर्मसमाप्तिकारणे सांख्ये वेदान्ते सर्वकर्मणां सिद्धये यावन्ति कर्माणि चलनात्मकानि तेषां सर्वेषां कर्मणां निष्पत्तये क्रियामात्रस्य सिद्ध्यै इत्यर्थः। एतानि वक्ष्यमाणानि पञ्चकारणानि प्रोक्तानि क्रियासंभूतिप्रकारविद्भिः ऋषिभिः कथितानि वक्ष्यामि। मे मम वचनान्निबोध अधिष्ठानादिस्वरूपं क्रियानिष्पत्तिप्रकारमात्मनोऽकर्तृत्वं च पण्डितानामपि दुर्विज्ञेयं मयोच्यमानं नितरां बुध्यस्व। क्रियानिष्पत्तिकारणसामग्रीमवबुद्ध्य कर्मणस्तत्कृतत्वानिश्चयेनात्मनि कर्तृत्वभ्रमं परित्यजेत्यर्थः ॥ १३ ॥

श्री० टी०—ननु कर्म कुर्वतः कर्मफलं कथं न भवेदित्याशङ्क्य सङ्गत्यागिनो निरहंकारस्य सतः कर्मफलेन लेपो नास्तीत्युपपादयितुमाह—**पञ्चेमानीति पञ्चभिः** । सर्वकर्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे वचनान्निबोध जानीहि । आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थमवश्यमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमाह—**सांख्य इति** । सम्यक् ख्यायते ज्ञायते परमात्माऽनेनेति सांख्यं तत्त्वज्ञानं तस्मिन्, कृतं कर्म तस्यान्तः समाप्तिरस्मिन्निति कृतान्तस्तस्मिन्वेदान्तसिद्धान्त इत्यर्थः । यद्वा संख्यायन्ते गण्यन्ते तत्त्वानि यस्मिन्निति सांख्यं, कृतः अन्तो निर्णयो यस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन्प्रोक्तानि । अतः सम्यङ्निबोधेत्यर्थः ॥ १३ ॥

स० टी०—तत्रात्मज्ञानशून्यस्य संसारित्वेऽस्ति कारणम् ॥ प्रोक्तं स्वकर्मणां त्यागासंभवो हरिणा स्वयम् ॥ १ ॥ न हि देहभृतेत्यत्रेदानीं तस्यैव देहिनः ॥ उच्यते कर्मणां त्यागासंभवे संसृतौ तथा ॥ २ ॥ तादात्म्याध्यासको हेतुरधिष्ठानादिपञ्चके ॥ इमं प्रपञ्चयत्यर्थं श्लोकैश्चतुर्भिरीश्वरः ॥ ३ ॥ इमानि वक्ष्यमाणानि पञ्च निर्वर्तकानि च ॥ सर्वेषां कर्मणां चैव निष्पत्त्यर्थं महाभुज ॥ ४ ॥ ममेश्वरस्य वचनाद्बोद्धुं भव समाहितः ॥ समाधानं विना ज्ञातुं न शक्यं त इमान्यपि ॥ ५ ॥ सर्वानर्थनिवृत्त्यर्थं ज्ञातव्यानि प्रमाणतः ॥ जीव ब्रह्म तयोरैक्यं तद्विज्ञानोपयोगिनः ॥ ६ ॥ श्रवणाद्याः पदार्थाश्च व्युत्पाद्यन्तेऽत्र शास्त्रके ॥ तत्सांख्यं नाम वेदान्तशास्त्रं तस्मिन्कृतक्षये ॥ ७ ॥ कृतमित्युच्यते कर्म तस्यान्तस्तत्त्वबोधतः ॥ स बोधो जायते येन स कृतान्तोऽस्ति तत्र च ॥ ८ ॥ प्रोक्तान्यनात्मभूतानि भ्रान्त्यात्मत्वेन लौकिकैः ॥ गृहीतान्यात्मबोधेन बाधसिद्ध्यर्थमेव हि ॥ ९ ॥ यतो हेयतयोक्तानि ज्ञातव्यानीत्यतो धिया ॥ अन्यधर्मोऽस्ति कर्मैतन्मायया प्रत्यगात्मनि ॥ १० ॥ आरोपितमतो बोधात्कर्मणोऽन्तः कृतो भवेत् ॥ अत एवात्मनः कर्मासंबन्धज्ञानसिद्धये ॥ ११ ॥ अविद्यारोपिता एव हेतवः पञ्च कर्मणाम् ॥ अनूदितास्ते वेदान्तशास्त्रे अद्वैतबोधके ॥ १२ ॥ अद्वैतमात्रतात्पर्यहानिर्नैवास्त्यतो यतः ॥ तदङ्गत्वेन तेषां च प्रतिपादनमागमे ॥ १३ ॥ फलवत्संनिधौ यत्तत्तदङ्गमफलं श्रुतम् ॥ इति न्यायेन चैतेषामङ्गत्वं ब्रह्मबोधने ॥१४॥१३॥

भा० टी०—एवं परमार्थसंन्यासिनां त्रिविधकर्मफलाभावमुक्त्वा परमार्थसंन्यासाधिकारकारणस्यात्मन्यकर्तृत्वज्ञानस्यावश्यकतां बोधयितुमाह—**पञ्चैतानीत्यादिना** । एतानि वक्ष्यमाणानि कारणानि निर्वर्तकानि निबोध मद्वचनाज्जानीहि । ज्ञात्वा च महाबाहुसाध्ये कायिके युद्धे कर्मणि कर्तृत्वाभिमानं परित्यजेति ध्वनयन्संबोधयति महाबाहो इति । तेषामवश्यज्ञातव्यताज्ञापनाय तानि स्तौति—**सांख्य इति** । त्वंपदार्थ आत्मा तत्पदार्थो ब्रह्म तयोरैक्यधीः तदुपयोगिनश्च शमदमादयो ज्ञातव्याः पदार्थाः संख्यायन्ते व्युत्पाद्यन्ते यस्मिन् वेदान्तशास्त्रे तत्सांख्यम् । सांख्यं विशिनष्टि—कृतान्ते । कृतस्य कर्मणोऽन्तः परिसमाप्तिर्यत्र तस्मिन्कृतान्ते 'यावानर्थ उदपाने सर्वतः संप्लुतोदके । तावान्सर्वेषु वेदेषु ब्राह्मणस्य विजानतः ॥ सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यते' इत्यात्मज्ञाने जाते सर्वकर्माणां निवृत्तेर्दर्शितत्वात् आत्मज्ञानार्थकस्य सांख्यस्यापि कृतान्तत्वं, तस्मिन्प्रोक्तानि सर्वेषां कर्मणां सिद्धये निष्पत्त्यर्थं कथितानीत्यर्थः । संख्या मोचकं ज्ञानं तत्संबन्धिनि तज्जनके सांख्येऽकृतान्तेऽकृतो वेदोऽपौरुषेयत्वात् तस्यान्ते वेदान्ते इत्यर्थस्तु प्रश्लेषं विनैवार्थसंभवमभिप्रेत्याचार्यैर्न प्रदर्शितः । यत्तु संख्यायन्ते गण्यन्ते तत्त्वान्यस्मिन्निति सांख्यं, कृतोऽन्तो निर्णयो यस्मिन्निति कृतान्तं सांख्यशास्त्रमेव तस्मिन्नित्यपरे वर्णयन्ति तन्नोपादेयम् । सांख्यशास्त्रे अधिष्ठानादीनां कारणत्वेनानुक्तत्वात् । भिन्नाः भोक्तार आत्मान इति प्रतिपादकस्य सांख्यशास्त्रस्य कर्तृत्वभोक्तृत्वशून्य एक एवात्मेति स्वसिद्धान्तविरुद्धस्य स्वोक्तेऽर्थे प्रमाणत्वेनोपन्यासायोगाच्च ॥ १३ ॥

प० टी०—ननु भुजिक्रियां कुर्वतस्तृप्तिर्भवतीत्यनुभवे कर्म कुर्वतः फलं कथं न भवेदित्याशङ्क्य सङ्गत्या-

गिनो निरहंकारस्य सतः कर्मलोपो नास्तीत्युपपादयितुमाह—पञ्चेमानीति । सर्वकर्मणां सिद्धये निष्पत्तये इमानि वक्ष्यमाणानि पञ्च कारणानि मे मत्तः सकाशान्निबोध जानीहि । आत्मनः कर्तृत्वाभिमाननिवृत्त्यर्थमेतानि ज्ञातव्यानीत्येवं तेषां स्तुत्यर्थमाह—सांख्य इति । किंभूतानि? सांख्ये कृतान्ते प्रोक्तानि । संख्यायन्ते परिगण्यन्ते तत्त्वानि यस्मिन्निति सांख्यं, कृन्तातः सिद्धान्तः, तस्मिन् वेदान्तसिद्धान्ते इत्यर्थः ॥ १३ ॥

रा० टी०—काम्यानामित्यत्रोक्तदिशा वैकल्पिककाम्यानां फलत्यागः, नियतकाम्यानां स्वरूपत्यागः, न तु संन्यासिनामित्यत्रोक्तदिशा परार्थमपि नियतकाम्यानामननुष्ठानमित्येतावन्मात्रं न संन्यासशब्दार्थः, किंतु कर्माणि कर्तृत्वाभिमानत्यागोऽपीति वक्तुं कर्मकारणानि प्रतिज्ञापूर्वमाह—पञ्चेत्यादित्रिभिः । एतानि वक्ष्यमाणानि कारणानि कर्मकारणानि मे सकाशात् निबोध बुध्यस्व । सांख्ये कृतान्ते सिद्धान्ते कपिलाख्यविष्णुकृतसांख्यनामकशास्त्रे सर्वकर्मसिद्ध्यर्थं प्रोक्तानि । श्रोतृविश्वासायैतदुक्तिः ॥ १३ ॥

**अधिष्ठानं तथा कर्ता करणं च पृथग्विधम् ॥**
**विविधाश्च पृथक्चेष्टा दैवं चैवात्र पञ्चमम् ॥ १४ ॥**

**त० टी०—तान्येवाह-अधिष्ठानमित्यादिचतुर्भिः । अधिष्ठानमधिष्ठीयते भोक्तृतया पुरुषेणास्मिन्नित्यधिष्ठानं पञ्चमहाभूतसङ्घातरूपं शरीरं, तथा कर्ता जीवपुरुषक्षेत्रज्ञादिशब्दाभिधेय आत्मा, तस्य कर्तृत्वं भोक्तृत्वं ज्ञातृत्वं च शास्त्रसिद्धम् "मन उत्क्रामन्मीलित इवाश्नन्पिबन्नास्ते" इतिश्रुतौ मनस उत्क्रान्त्यनन्तरमपि कर्तृत्वाभिधानात् "कर्ता शास्त्रार्थवत्त्वात्" इति सूत्राच्च । तथा "मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति" इत्यत्रापि । तथा भोक्तृत्वमपि "तयोरन्यः पिप्पलं स्वाद्वत्ति । "उत्क्रामन्तं स्थितं वाऽपि भुञ्जानं वा गुणान्वितम्" इत्यादिशास्त्रसिद्धम् । अत्र केचित्कर्ताऽचिज्जडग्रन्थिरहंकार इति वदन्ति, तदुदाहृतशास्त्रविरोधादुपेक्षणीयम् । पृथग्विधमनेकप्रकारं करणं वाक्पाण्यादिपञ्चेन्द्रियं, विविधाश्च पृथक्चेष्टाः प्राणापानादयो वायुव्यापाराः । दैवं चैवात्र पञ्चमम् । अत्र कारणसमुदाये पञ्चमं दैवं देवानामप्यन्तर्यामी परमात्मा कर्मनिष्पत्तौ प्रधानहेतुरित्यर्थः । "सर्वस्य चाहं हृदि संनिविष्टः । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इत्युक्तवक्ष्यमाणत्वात् । "परात्तु तच्छ्रुतेः" इति सूत्रकारनिर्णयाच्च ॥ १४ ॥**

म० टी०—प्रमाणमूलानि कर्मकारणानि पञ्चात्मनो कर्तृत्वसिद्ध्यर्थं हेयत्वेन ज्ञातव्यानीत्युक्ते कानि तानीत्यपेक्षायां तत्स्वरूपमाह द्वितीयेन—अधिष्ठानमिति । इच्छाद्वेषसुखदुःखचेतनाद्यभिव्यक्तेराश्रयोऽधिष्ठानं शरीरम् । तथा कर्ता । यथाधिष्ठानमनात्मा भौतिकं मायाकल्पितं स्वाप्नगृहरथादिवत्, तथा कर्ताऽहं करोमीत्याद्यभिमानवान् ज्ञानशक्तिप्रधानापञ्चीकृतपञ्चमहाभूतकार्योऽहङ्कारोऽन्तःकरणं बुद्धिर्विज्ञानमित्यादिपर्यायशब्दवाच्यस्तादात्म्याध्यासेनात्मनि कर्तृत्वादिधर्माध्यारोपहेतुरनात्मा भौतिको मायाकल्पितश्चेति तथा शब्दार्थः । स्थूलशरीरस्य लोकायतिकैरात्मत्वेन परिगृहीतस्याप्यन्यैः परीक्षकैरनात्मत्वेन निश्चयात्तद्दृष्टान्तेन तार्किकादिभिरात्मत्वेन परिगृहीतस्य कर्तुरप्यनात्मत्वनिश्चयः सुकर इत्यर्थः । करणं च श्रोत्रादि शब्दाद्युपलब्धिसाधनम् । चशब्दस्तथेत्यनुकर्षार्थः । पृथग्विधं नानाप्रकारं पञ्च ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि मनो बुद्धिश्चेति द्वादशसंख्यम् । करणवर्गे मनो बुद्धिश्चेति वृत्तिविशेषौ । वृत्तिमांस्त्वहंकारः कर्तैव । चिदाभासस्तु सर्वत्रैवाविशिष्टः । विविधा नानाप्रकाराः पञ्चधा दशधा वा प्रसिद्धाः । चशब्दस्तथेत्यनुकर्षार्थः । पृथक् असंकीर्णाः, चेष्टाः क्रियारूपाः क्रियाशक्तिप्रधानापञ्चीकृतपञ्चमहाभूतकार्याः क्रियाप्राधान्येन वायवीयत्वेन व्यपदिश्यमानाः प्राणापानव्यानोदानसमानाः नागकूर्मकृकलदेवदत्तधनञ्जयाख्याश्च तदन्तर्भूता एव । अत्र च सुषुप्तावन्तःकरणस्य

कर्तुर्लयेऽपि प्राणव्यापारदर्शनाद्भेदव्यपदेशाच्चान्तःकरणादत्यन्तभिन्न एव प्राण इति केचित्। क्रियाशक्तिज्ञानशक्तिमदेकमेव जीवत्वोपाधिभूतमपञ्चीकृतपञ्चमहाभूतकार्यं क्रियाशक्तिप्राधान्येन प्राण इति ज्ञानशक्तिप्राधान्येन चान्तःकरणमिति व्यपदिश्यत इत्याभियुक्ताः । 'स ईक्षां चक्रे कस्मिन्नहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत' इति श्रुतावुत्क्रान्त्याद्युपाधित्वं प्राणस्योक्तम्। तथा 'सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति मृत्यो रूपाणि ध्यायतीव लेलायतीव' इत्यादिश्रुतावुत्क्रान्त्याद्युपाधित्वं बुद्धेरुक्तम्। स्वतन्त्रोपाधिभेदे च जीवभेदप्रसङ्गः तस्मात् बुद्धिप्राणयोरेकत्वेनैवोत्क्रान्त्याद्युपाधित्वं युक्तं भेदव्यपदेशश्च शक्तिभेदात् । सुषुप्तौ च ज्ञानशक्तिभागलयेऽपि क्रियाशक्तिभागदर्शनमेकत्वेऽपि न विरुद्धमनुभवसिद्धत्वात्। दृष्टिसृष्टिनये सर्वलयेऽपि प्राणव्यापारवच्छरीरस्य सुषुप्तोऽयमित्येवंरूपेण परैः कल्पितत्वाच्च। तस्मादुभयथापि व्यपदेशभेद उपपन्नः। दैवं च अनुग्राहकदेवताजातम्। चशब्दस्तथेत्यनुकर्षणार्थः। अत्र कारणवर्गे पञ्चमं पञ्चसंख्यापूरणम्। एवशब्दस्तथाशब्देन संबध्यमानोऽनात्मत्वभौक्तिकत्वकल्पितत्वाद्यवधारणार्थः पञ्चानामपि । तत्र शरीरस्य कर्तृकरणक्रियाधिष्ठानस्य देवता पृथिवी। "यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं दिशः श्रोत्रं मनश्चन्द्रं पृथिवीं शरीरम्" इति श्रुतौ वागाद्यधिष्ठात्र्यग्न्यादिभिः सह शरीराधिष्ठातृत्वेन पृथिवीपाठात्। कर्तुरहंकारस्याधिष्ठात्री देवता। रुद्रः पुराणादिप्रसिद्धः। करणानां चाधिष्ठात्र्यो देवताः सुप्रसिद्धाः । श्रोत्रत्वक्चक्षुरसनघ्राणानां दिग्वातार्कप्रचेतोऽश्विनः। वाक्पाणिपादपायूपस्थानां वह्नीन्द्रोपेन्द्रमित्रप्रजापतयः। मनोबुद्ध्योश्चन्द्रबृहस्पती इति। पञ्चप्राणानां क्रियारूपाणां सद्योजातवामदेवाघोरतत्पुरुषेशानाः पुराणप्रसिद्धाः । भाष्ये दैवमादित्यादि चक्षुराद्यनुग्राहकमित्यधिष्ठानादिदेवतानामप्युपलक्षणम् ॥ १४ ॥

**शं० टी०**—तानि कानीत्याकाङ्क्षायामाह—**अधिष्ठानमिति**। अधिष्ठानं सुखदुःखभोगायतनं करणानामाश्रयो वा शरीरम्। तथाशब्दश्चार्थः—कर्ता च—कर्ता भोक्ताहमिति सर्वत्राहंमानी साभासाहंकारो विज्ञानात्मा। पृथग्विधं बाह्याभ्यन्तरभेदेन द्विधा विभक्तं करणं ज्ञानेन्द्रियाणि कर्मेन्द्रियाणि मनोबुद्धिश्चेति द्वादशविधं करणं च, पृथक् दशधा भिन्ना चोर्ध्वादिगतिभेदेन विविधा नानाप्रकारा चेष्टा वायुचेष्टाविशेषाः प्राणादयो नागादयश्च दश। अत्रैतेषु क्रियानिष्पत्तिकारणत्वेन प्रोक्तेष्वधिष्ठानादिषु चतुर्षु चकारस्त्वर्थः। एवकारोऽतिरिक्तव्यवच्छेदार्थः। पञ्चमं तु दैवमेव श्रोत्रादीन्द्रियप्रवर्तकं, दिग्वातार्कादिलक्षणं सर्वकर्मसिद्धिकारणं दैवमेव नान्यदस्तीत्यर्थः। यद्यपि पञ्चैतानीति पञ्चत्वसंख्ययैव कारणान्तराभावः सिध्यति, तथापि पुनरेवकारः पुरुषस्य मयेदं क्रियत इति दुष्टेऽप्यदुष्टेऽपि च कर्मणि कर्तृत्वभ्रमापनोदनार्थः। नन्वदृष्टेश्वरादीनामपि क्रियासिद्धिकारणत्वसंभवात्पञ्चैतानीति पञ्चसंख्यावधारणाभ्यामतिरेकव्यवच्छेदोऽनुपपन्न एवेति चेत्सत्यम्। 'बलाद्दैवेन नीयते' इति, "एष एव साधु कर्म कारयति" इति श्रवणादस्त्येवादृष्टेश्वरादेरपि कारणत्वं, तथापि—"यो दिक्षु तिष्ठन् दिग्भ्योऽन्तरः" इतीश्वरस्य दिगादीनामन्तर्यामित्वश्रवणात्तदन्तस्थतया तेष्वेव दिगाद्यधिदैवतेष्वन्तर्भावः। कर्त्राश्रयत्वाददृष्टस्य कर्तर्यन्तर्भावस्ततो न काचिदनुपपत्तिरतोऽधिष्ठानादीनामेव पञ्चानां सर्वकर्मनिष्पत्तिकारणत्वमिति सिद्धम् ॥ १४ ॥

**श्री० टी०**—तान्येवाह—**अधिष्ठानमिति**। अधिष्ठानं शरीरं, कर्ता चिज्जडग्रन्थिरहंकारः, पृथग्विधमनेकप्रकारं करणं चक्षुःश्रोत्रादि, विविधाश्च कार्यतः स्वरूपतश्च पृथग्भूताश्चेष्टाः प्राणापानादीनां व्यापाराः। अत्र चैतेष्वेव पञ्चमं दैवं च कारणं, चक्षुराद्यनुग्राहकमादित्यादिसर्वप्रेरकोऽन्तर्यामी वा ॥ १४ ॥

**स० टी०**—कानि तानीत्यपेक्षायां तत्स्वरूपमिहोच्यते ॥ इच्छाद्वेषाद्यभिव्यक्तेरधिष्ठानं शरीरकम् ॥१॥ दृष्टान्तार्थस्तथाशब्दो विज्ञेयोऽत्र मनीषिभिः ॥ यथाधिष्ठानमध्यस्तं शरीरं भौतिकं जडम् ॥ २ ॥

तथैवाहं करोमीति कर्ताहंकार आत्मनि ॥ कल्पितो मायया सूक्ष्मभूतकार्यतया जडः ॥ ३ ॥ यथा स्थूलशरीरस्य चार्वाकैरात्मताधिया ॥ गृहीतस्यापि वेदज्ञैरनात्मत्वेन निश्चयात् ॥ ४ ॥ तद्दृष्टान्तेन कर्तुश्च तार्किकैरात्मताधिया ॥ गृहीतस्याप्यनात्मत्वनिश्चयः सुकरो भवेत् ॥ ५ ॥ श्रोत्रादिकरणं चैव शब्दादिज्ञानसाधनम् ॥ दशेन्द्रियमनोबुद्धिरूपेणास्ति पृथग्विधम् ॥ ६ ॥ वृत्तिभेदे मनोबुद्धी अहंकारस्तु वृत्तिमान् ॥ क्रियाशक्तिप्रधानाश्च प्राणा नानाविधाः क्रियाः ॥ ७ ॥ दशधा पञ्चधा वापि प्राणापानादिरूपतः ॥ असंकीर्णाः क्रियारूपा भौतिकाः कल्पिताः परे ॥ ८ ॥ अनुग्राहकमर्कादि दैवं चक्षुर्मुखस्य च ॥ अत्र कारणवर्गे तत्पञ्चसंख्याप्रपूरकम् ॥ ९ ॥ तथेत्यनुकर्षणार्थश्चशब्दोऽस्ति स्थलत्रये ॥ तेनाध्यस्तत्वमेतेषां भौतिकत्वमनात्मनाम् ॥ १० ॥ प्रत्यगात्मन्यसङ्गेऽस्मिन्पञ्चानामीश्वरो जगौ ॥ ११ ॥ १४ ॥

भा० टी०—कानि तानीत्यपेक्षायामाह—**अधिष्ठानमिति** । अधिष्ठानं इच्छाद्वेषसुखदुःखज्ञानादीनामभिव्यक्तेराश्रयो देहः, तथा कर्ता उपाधिलक्षणो बुद्ध्याद्युपाध्यनुविधायी तद्धर्मानात्मनि पश्यन्नुपहित उपाधिप्रधानो भोक्ता, करणं च श्रोत्रादिशब्दाद्युपलब्धये पृथग्विधं नानाप्रकारं ज्ञानेन्द्रियाणि पञ्च कर्मेन्द्रियाणि पञ्च मनो बुद्धिश्चेति द्वादशसंख्यम् । विविधाश्च पृथक्चेष्टाः वायवीयाः प्राणापानाद्याः । अत्र चतुर्षु दैवमेव पञ्चमं चक्षुराद्यनुग्राहकमादित्यादिदैवम् सर्वप्रेरकोन्तर्यामीति त्वात्मनः कर्तृत्वव्यावृत्तये परमात्मनः कर्तृत्वप्रतिपादनमयुक्तमित्यभिप्रेत्याचार्यैर्न प्रदर्शितम् ॥ १४ ॥

प० टी०—तान्याह—**अधिष्ठानमिति** । अधिष्ठानं शरीरं, कर्ता जडग्रन्थिरहंकारः, पृथग्विधं बहुविधं करणं चक्षुरादि, विविधा अनेकप्रकाराश्चेष्टाः प्राणापानादिव्यापाराः । एतेष्वेव पञ्चमं दैवं चक्षुरादीनामधिदैवं सूर्यादिसर्वप्रेरकोऽन्तर्यामी वा ॥ १४ ॥

रा० टी०—प्रतिज्ञातमाह—**अधिष्ठानमिति** । अधिष्ठानं देहभूम्यादिः, कर्ता विष्णुः, पृथग्विधं करणम् इन्द्रियस्रुक्स्रुवादि । विविधा नानाप्रकारा पृथक् परस्परभिन्ना, चेष्टा हस्तादिक्रिया ध्यानरूपमानसक्रिया च प्रधानहोमादिक्रियाहेतुभूता कारकाश्रिता वान्तरक्रिया चेत्यर्थः । दैवमदृष्टं अत्र कर्मविषये पञ्चमं कारणम् । यद्वा कर्तृपदेन पराधीनकर्ता जीवः । दैवपदेन विष्णुः । कर्मणां कर्त्रादिकारकषट्कसाध्यत्वेऽपि इह कर्मापादानादेरनुक्तिः, असार्वत्रिकत्वात्तस्येति ज्ञेयम् ॥ १४ ॥

**शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः ॥**
**न्याय्यं वा विपरीतं वा पञ्चैते तस्य हेतवः ॥ १५ ॥**

त० टी०—इमान्येव सर्वकर्महेतव इत्याह—**शरीरेति** । शरीरवाङ्मनोभिस्त्रिभिरेतैर्यत्कर्म नरः प्रारभते निर्वर्तयति न्याय्यं शास्त्रविहितं धर्म्यं, विपरीतं वा शास्त्रनिषिद्धं वा । न्याय्यविपरीतयोर्मध्ये प्राणापानाद्यन्यत्सर्वमन्तर्भवति । तस्य सर्वविधस्य कर्मणः पञ्चैते यथोक्ता हेतवः कारणानि भवन्ति ॥ १५ ॥

म० टी०—स्वरूपमुक्त्वा तेषां पञ्चानां कर्महेतुत्वमाह तृतीयेन—**शरीरेति** । शारीरं वाचिकं मानसिकं च विधिप्रतिषेधलक्षणं त्रिविधं कर्म धर्मशास्त्रेषु प्रसिद्धम् । अक्षपादेन चोक्तम् 'प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः' इति । बुद्धिर्मनः । अतः प्राधान्याभिप्रायेणोच्यते शरीरेण वाचा मनसा वा यत्कर्म प्रारभते निर्वर्तयति नरः मनुष्याधिकारित्वाच्छास्त्रस्य । कीदृशं कर्म ? न्याय्यं वा शास्त्रीयं धर्मं, विपरीतं वा अशास्त्रीयमधर्मं यच्च निमिषितचेष्टितादि जीवनहेतुरन्यद्वा विहितप्रतिषिद्धसमं तत्सर्वं पूर्वकृतधर्माधर्मयोरेव

कार्यमिति न्याय्यविपरीतयोरेवान्तर्भूतम् । पञ्चैते यथोक्ता अधिष्ठानादयस्तस्य सर्वस्यैव कर्मणो हेतवः कारणानि ॥ १५ ॥

**शं० टी०**—उक्तमेवार्थं विस्पष्टयति—**शरीरेति** । नरो बाह्यदृष्ट्या कर्मकर्ता पुरुषः "शरीरवाङ्मनोभिः तत्कर्मणा करोति" इति श्रवणादत्र शरीरपदेन वाग्व्यतिरिक्तानीन्द्रियाणि गृह्यन्ते । शरीरेणेन्द्रियैर्वाचा मनसा च बुद्धिपूर्वकं न्याय्यं शास्त्रीयं वा विपरीतं प्रतिषिद्धं वा यत्कर्म प्रारभते करोति तस्य करणत्रयनिर्वर्त्यस्य कर्मणः विहितस्य निषिद्धस्य वान्यस्य वा सर्वस्याप्येते अधिष्ठानादयः पञ्च हेतवः कारणानि भवन्ति । ननु सर्वस्यापि कर्मणः करणत्रयसाध्यत्वे सिद्धे सत्यधिष्ठानादीनां कारणत्वोक्तिर्व्यर्थैवेति चेत्सत्यं, विहितं प्रतिषिद्धं च यत्क्रियते पुरुषेण तत्सर्वं करणत्रयेणैव सिध्यति, तथापि "यद्धि मनसा ध्यायति तद्वाचा वदति तत्कर्मणा करोति" इति न्यायेन बुद्धिपूर्वकस्यैव कर्मणः करणत्रयसाध्यत्वं नत्वबुद्धिपूर्वकस्य क्षुतजृम्भणादेस्तत्राप्युच्छ्वासनिःश्वासोन्मेषादेः स्वाभाविकक्रियात्वेन करणत्रयसाध्यत्वासंभवात्कर्त्रैकसाध्यायाः फलानुभूतिक्रियायास्तत्साध्यत्वायोगाच्च करणत्रयस्य चेष्टामात्रकारणत्वं न संभवति । तत एवोच्यते 'शरीरवाङ्मनोभिर्यत्कर्म प्रारभते नरः । तस्याप्येते पञ्च हेतवः' इति । तेन शरीरादीनां पृथक्करणत्वाभावात्तत्कृतकर्मणोऽप्येतान्येव कारणानीति सूचितं भवति । ततः पुरुषाद्दृष्टानुरूपेण सर्वकर्मनिष्पादकत्वं पुण्यापुण्यकर्मफलानुभावकत्वमनुभवितृत्वं चाधिष्ठानादीनामेवेति सिद्धम् ॥ १५ ॥

**श्री० टी०**—एतेषामेव सर्वकर्महेतुत्वमाह—**शरीरेति** । यथोक्तैः पञ्चभिः प्रारभ्यमाणं कर्म त्रिष्वेवान्तर्भाव्यं शरीरवाङ्मनोभिरित्युक्तं शारीरम् । वाचिकं मानसं च त्रिविधं कर्मेति प्रसिद्धेः । शरीरादिभिर्यद्यत्कर्म धर्म्यं वाऽधर्म्यं वा करोति नरस्तस्य सर्वस्य कर्मण एते पञ्च हेतवः ॥ १५ ॥

**स० टी०**—उक्त्वा स्वरूपं पञ्चानामेतेषां कर्महेतुताम् ॥ आहेदानीं जगन्नाथो भगवान्करुणानिधिः ॥१॥ देहेन मनसा वाचा निर्वर्तयति कर्म यत् ॥ शास्त्रीयं वाप्यशास्त्रीयं धर्माधर्मात्मकं नरः ॥ २ ॥ निमेषोन्मेषचेष्टादिनिमित्तं जीवनेऽस्ति यत् धर्माधर्मफलत्वेनैवाऽन्तर्भूतं तयोर्द्वयोः ॥ ३ ॥ न्याय्याद्वा विपरीताद्वा भिन्नं कर्म न किंचन ॥ सर्वस्य कर्मणश्चैते यथोक्ताः पञ्च हेतवः ॥ ४ ॥ अधिष्ठानादयो नैभ्यो भिन्नः कर्तास्ति कश्चन ॥ एभ्यो विलक्षणः साक्षी निष्क्रियो निर्विकल्पकः ॥ ५ ॥ कूटस्थः प्रत्यगात्मैव ज्ञेयो ब्रह्माद्वयात्मकः ॥ तेनैव सुमतिर्विद्वानन्यथा दुर्मतिर्नरः ॥ ६ ॥ यदज्ञानाल्लोकोऽचलवपुषि कूटस्थचिदणौ मृषाहंकर्तास्मीत्यपि तनुयुगाध्याससचिवात् ॥ प्रकल्प्यानर्थाब्धौ भ्रमति सततं भ्रान्तिगहने विमुक्तो यज्ज्ञानाद्भवति सुमतिर्नौमि तमजम् ॥ ७ ॥ १५ ॥

**भा० टी०**—पञ्चानां स्वरूपमुक्त्वा कर्महेतुत्वमाह—**शरीरेति** । यत्कर्म न्याय्यं वा धर्म्यं शास्त्रीयं, विपरीतं वाऽधर्म्यमशास्त्रीयम् । यच्चापि निमिषितचेष्टादिजीवनहेतुः, तदपि पूर्वकृतधर्मादेरेव कार्यमितिन्याय्यविपरीतयोर्ग्रहणेन ग्राह्यम् । यन्न्याय्यादिकर्म शरीरवाङ्मनोभिस्त्रिभिर्नरः प्रारभते निर्वर्तयति तस्य सर्वस्यैव कर्मणः पञ्चैते यथोक्ता अधिष्ठानादयो हेतवः कारणानि । ननु पञ्चैतानीत्यादिनाऽधिष्ठानादीनि सर्वकर्मणां निर्वर्तकान्युक्तानि, अत्र तु शरीरवाङ्मनोभिः कर्म प्रारभत इत्युक्तमतः पूर्वापरविरोध इति चेत्, नैष दोषः । शरीराद्यारभ्ये त्रिविधे कर्मणि पञ्चानामधिष्ठानादीनां हेतुत्वस्य विवक्षणात् । दर्शनश्रवणादि च जीवनलक्षणं त्रिविधकर्मण्येवान्तर्भवतीति त्रिधैव राशीकृतमुच्यते । ननु फलोपभोगकाले कारणान्तरापेक्षासंभवात्कथं पञ्चानामेवाधिष्ठानादीनां तत्र हेतुत्वमिति चेत्, अपेक्षितस्य सर्वस्यापि कारणस्यैतेष्वेवान्तर्भावात्पञ्चानां हेतुत्वं न विरुध्यते ॥ १५ ॥

**प० टी०**—एतेषामेव सर्वकर्महेतुत्वमाह—**शरीरेति** । नरः शरीरवाङ्मनोभिर्न्याय्यं धर्म्यं विपरीतमधर्म्यं वा यत्कर्म प्रारभते तस्य हेतव उक्ताः पञ्च ॥ १५ ॥

रा० टी०—तर्हि करणकारकं कुतो नोक्तमित्यतो वा कस्यैतानि करणानीत्यतो वाह—शरीरेति । अत्र शरीरमनोवाचामेव करणकारकत्वेनोक्त्या कर्मापादानादीनि न सार्वत्रिकाणीति सूचितम् ॥ १५ ॥

**तत्रैवं सति कर्तारमात्मानं केवलं तु यः ॥**
**पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः ॥ १६ ॥**

त० टी०—इदानीमधिष्ठानादिहेतुपञ्चकनिरूपणस्य प्रयोजनमाह—तत्रेति । तत्र एवं यथोक्ते न्याय्ये विपरीते वा कर्मणि अधिष्ठानादिहेतुके निश्चिते सति कस्मिंश्चिदपि कर्मणि कर्तारमात्मानं केवलमहमेव कर्तेति यः पश्यति जानाति, स अकृतबुद्धित्वात् अकृता शास्त्राचार्योपदेशसंस्काररहिता बुद्धिर्यस्य स तथाभूतत्वान्न पश्यति । यथाऽवस्थितात्मनः कर्तृत्वं परमेश्वरनियम्यशरीरेन्द्रियाधीनमिति न पश्यति, अतो दुर्मतिः दुष्टाऽयथार्थग्राहिणी मतिर्यस्य स विपर्ययज्ञानात्संसारे बन्धं प्राप्नोतीत्यर्थः ॥ १६ ॥

म० टी०—इदानीमेतेषामेव कर्मकर्तृत्वादात्मनो न कर्तृत्वमित्यधिष्ठानादिनिरूपणफलमाह—तत्रेति । तत्र कर्मणि प्रागुक्ते सर्वस्मिन् एवं सति अधिष्ठानादिपञ्चहेतुके सति तैर्निर्वर्त्यमान आत्मानं सर्वजडप्रपञ्चस्य भासकं सत्तास्फूर्तिरूपं स्वप्रकाशपरमानन्दमबाध्यं केवलमसङ्गोदासीनमकर्तारमविक्रियमद्वितीयं तु एव परमार्थतः । अविद्यया त्वधिष्ठानादौ प्रतिबिम्बितमादित्यमिव तोये तद्भासकमनन्यत्वेन परिकल्प्य तोयचलनेनादित्यश्चलतीतिवदधिष्ठानादिकर्मणोऽहमेव कर्तेति साक्षिणमपि सन्तं कर्तारं क्रियाश्रयं यः पश्यत्यविद्यया कल्पयति रज्जुमिव भुजङ्गं, स एवं पश्यन्नपि न पश्यत्यात्मानं तत्त्वेन स्वरूपाज्ञानकृतत्वादध्यासस्य । स भ्रान्त्या विपरीतमेव पश्यति न यथातत्त्वमित्यत्र को हेतुरत आह—अकृतबुद्धित्वात् । शास्त्राचार्योपदेशन्यायैरनुपजनितविवेकबुद्धित्वात् । नहि रज्जुतत्त्वसाक्षात्काराभावे भुजङ्गभ्रमं कश्चन बाधते । एवं शास्त्राचार्योपदेशन्यायैः परिनिष्ठितेऽहमस्मि सत्यं ज्ञानमनन्तमकर्त्रभोक्तृपरमानन्दमनवस्थमद्वयं ब्रह्मेति साक्षात्कारेऽनुपजनिते कुतो मिथ्याज्ञानतत्कार्यबाधः ? एतादृशं साक्षात्कारमेव गुरुमुपसृत्य वेदान्तवाक्यविचारेण कुतो न जनयतीत्यत आह—दुर्मतिः । दुष्टा विवेकप्रतिबन्धकपापेन मलिना मतिर्यस्य सः । अतोऽशुद्धबुद्धित्वान्नित्यानित्यवस्तुविवेकादिशून्यत्वेन तत्त्वज्ञानायोग्यत्वादकर्तारमपि कर्तारं केवलमप्यकेवलमात्मानमविद्यया कल्पयन्संसारी कर्माधिकारी देहभृदकृतबुद्धिः कर्मकर्तृषु तादात्म्याभिमानात्कर्मत्यागासमर्थः सर्वदा जननमरणप्रबन्धेनानिष्टमिष्टं मिश्रं च कर्मफलमनुभवति । एतेन यस्तार्किको देहादिव्यतिरिक्त आत्मानमेव कर्तारं केवलं पश्यति सोऽप्यकृतबुद्धित्वेन व्याख्यातः । अन्यस्त्वाह—आत्मा केवलो न कर्ता किंत्वधिष्ठानादिभिः संहतः सन् परमार्थतः कर्तैव । कर्तारमात्मानं केवलं पश्यन् दुर्मतिरिति केवलशब्दप्रयोगादिति । तन्न, परमार्थतः सर्वक्रियाशून्यस्यासङ्गस्यात्मनोऽधिष्ठानादिभिः संहतत्वानुपपत्तेः । जलसूर्यकादिवत्तु आविद्यकेन संहतत्वेन कर्तृत्वमपि तादृशमेव, अधिष्ठानादीनामप्याविद्यकत्वाच्च । केवलशब्दस्तु स्वभावसिद्धमात्मनोऽसङ्गाद्वितीयरूपत्वमनुवदति । कर्तृत्वदर्शिनो दुर्मतित्वहेतुत्वेनेत्यदोषः ॥ १६ ॥

शं० टी०—'प्रकृत्यैव च कर्माणि' इतिन्यायेन अधिष्ठानादिपञ्चकस्यैव प्राकृतस्य क्रियामात्रकारणत्वे सिद्धे फलितमाह—तत्रैवमिति । एवमधिष्ठानादीनामेव पञ्चानां सर्वकर्मनिर्वर्तकत्वनिष्कृष्टौ सत्यां यः अकृतात्माऽऽत्मानात्मतत्त्वविचारशून्यः पुरुषस्तत्र प्राकृतैरेवाधिष्ठानादिभिः कृते विहिते निषिद्धे वा कर्मण्यहमेतस्य कर्मणः कर्तेत्यकर्तारमेवात्मानं केवलं त्वेकमेकरसं निष्कलं निष्क्रियं निर्विशेषं कर्तारं पश्यति, मया स्नातं

भुक्तमागतं गतमिति दुष्टमदुष्टं कर्म कृतमिति वाऽकृतश्रवणादिः सन् य आत्मानं तत्तत्कर्मणां कर्तारमेव पश्यति मन्यत इत्यर्थः । स एवं निष्क्रिय एवात्मन्यकर्तरि स्वे कूटस्थासङ्गचिद्रूपे कर्तृत्वभोक्तृत्वाद्यन्यधर्मारोपयिता पुरुषः स्वयमकृतबुद्धिर्नित्यानिरन्तरश्रवणमननादिसंस्कारैः सुसंस्कृता निष्क्रियो नित्यशुद्धबुद्धमुक्तस्वभावोऽयमात्माहंपदार्थ इत्येवमाकारेण सम्यग्विषयीकृतात्मतत्त्वा बुद्धिर्यस्य स कृतबुद्धिः प्रबुद्धात्मतत्त्वस्तद्विपरीतस्त्वकृतबुद्धिश्च । तथा कृतश्रवणोऽपि सम्यङ्नापरोक्षीकृतात्मस्वरूपस्तस्य भावोऽकृतबुद्धित्वं तस्मादेव दुर्मतिरविद्याकार्यत्वेन दुष्टे देहेन्द्रियादावेवाहमिति मतिर्यस्य स दुर्मतिः । यद्वा रजस्तमोवासनात्मिकयाऽविद्यया दूषिता मतिर्यस्य स दुर्मतिः पशुवद्देहात्मबुद्धिरेव भवति, यतोऽनात्मानमेवाधिष्ठानादिकं सक्रियमात्मनं पश्यत्यहं कर्ता भोक्ता गच्छाम्यागच्छामि कुर्वे भुञ्ज इति । यथाभ्रेषु धावत्स्वधावन्तं चन्द्रं धावन्तं पश्यति, यथा नावि गच्छन्त्यामगच्छन्तं तरुं गच्छन्तं पश्यति मूढस्तरुमक्रियं बुद्ध्वापि सक्रियमेव पश्यति यथा, तथायमात्मानमकर्तारमेव श्रुत्वा मत्वा च पुनरपि कर्तारं भोक्तारमेव पश्यत्यतः स आत्मतत्त्वम् 'निष्कलं निष्क्रियं शान्तम्' इति, 'नित्यं शुद्धं बुद्धं मुक्तं सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानन्दचिन्मात्रम्' इति, 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' इतिश्रुतिस्मृत्याचार्यबोधितं न पश्यति न विजानातीत्यर्थः । नन्वयं पुरुष आत्मानमकर्तारमेव कर्तारं पश्यतीति यदुक्तं तदनुपपन्नमेव, सर्वप्रमाणविरोधादहं करोमीत्यहंभावस्य कर्तृधर्मस्य प्रत्यक्षत्वात् । न त्वयं देहधर्मः मृतदेहस्याहंभावाभावाद्गमनादिक्रियाभावाच्च । देहचेष्टा सर्वाप्यात्मकर्तृका सत्यात्मन्युपलभ्यमानत्वात्सति वायौ वृक्षचेष्टावदिति सर्वस्यापि कर्मण आत्मकर्तृकत्वमेवानुमीयते । "स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वम्" इति श्रूयते च । ततः कर्तृत्वमात्मधर्म एवेति चेत्सत्यं, कर्तृत्वमात्मनः श्रूयते मृतदेहस्य च तन्न दृश्यते । तथापि श्रुतियुक्तिभिर्विचार्यमाणे निरवयवस्य व्योमवदविक्रियस्यात्मनश्चलनक्रियाऽसंभवात्कर्तृत्वं न सिध्यति सुषुप्तावात्मनः कर्तृत्वाभावस्य सर्वप्रत्यक्षत्वात् । ननु सुषुप्तावात्मोपलम्भाभावात्तदसत्त्वे तत्कर्तृत्वाभावो युक्त एवेति चेन्न । 'सुखमहमस्वाप्सं न किंचिदवेदिषम्' इति सुषुप्तावात्मसद्भावस्य प्रत्यभिज्ञायमानत्वात्तदसत्त्वासिद्धेः । 'स्वप्नमहमद्राक्षम्' इति स्वस्य स्वप्नदर्शनवत्सुषुप्तिसुखस्यानुभूयमानत्वात्स्वप्न इव सुषुप्तावात्माऽस्त्येवाहंपदार्थस्तदसत्त्वे सुषुप्तितत्सुखज्ञानाभावप्रसङ्गात् । सुषुप्तितत्सुखज्ञातुः स्वस्य सद्भावोऽभ्युपगन्तव्यस्तत्र सत्यात्मसद्भावेऽप्यात्मनः कर्तृत्वं न दृश्यते । ननु सुषुप्तावप्यात्मनः सुखमस्वाप्समिति स्वापक्रियाकर्तृत्वमस्त्येवेति चेन्न । निरवयस्य क्रियानुपपत्तौ तिष्ठत्यास्त इत्यत्र यथा तथा स्वपितीति व्यपदेशमात्रमेव नात्र पुरुषव्यापारः संभवति करणाभावान्निरवयवत्वाच्चात्मनः । किंच "स्वमपीतो भवति" इति श्रवणात्तत्रात्मा स्वस्य निरुपाधिकस्वरूपप्राप्तिं प्रकाशयत्यस्वाप्समिति न तु बुद्ध्यादिवत्स्वपिति "असुप्तः सुप्तानभिचाकशीति । एष सुप्तेषु जगर्ति" इति च श्रुतेः । यत एवमतः कर्तृत्वमन्यधर्मः । एव न त्वात्मधर्मः 'निष्कलं निष्क्रियम्' इति, 'नायं हन्ति न हन्यते' इति, 'अनन्तश्चात्मा विश्वरूपो ह्यकर्ता' इति, 'वृक्ष इव स्तब्धः' इति, 'नित्यः सर्वगतः स्थाणुः' इत्यादिश्रुतिस्मृतिशतमात्मनः कर्तृत्वाभावमेव बोधयति । न किंचिदात्मा चेष्टते निरवयवत्वात्परिपूर्णत्वादित्यादियुक्तयश्चाक्रियत्वमेव साधयन्ति । तर्हि कस्य धर्मः कर्तृत्वमिति चेदुच्यते—पुनरपि सतां मुमुक्षूणामात्मनि कर्तृत्वभ्रमविच्छित्त्यै जाग्रत्स्वप्नयोर्देहे चान्यत्राहंममेत्यभिमानवतो विज्ञानात्मन एव साभासस्य कर्तृत्वं भोक्तृत्वं च जाग्रत्स्वप्नयोः खल्वहंममेत्यभिमानी विज्ञानात्मा सर्वाणि कर्माणि करोति, उभयत्रापि तस्यैव कर्तृत्वं विद्वत्प्रत्यक्षं सुषुप्तौ तदभावात्कर्तृत्वधर्मप्रतीत्यभावस्ततोऽन्वयव्यतिरेकाभ्यां विज्ञानात्मन एव कर्तृत्वं, यस्मादिदमहं करोमीत्यभिमानेन सामान्यं विशेषं च कर्म करोति । तथाच श्रुतिः—"विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च" इति, 'मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' इति सर्वप्रमाणैर्विज्ञानात्मन एव कर्तृत्वावधारणान्न त्वात्मा कर्ता भोक्तेति सिद्धम् ।

शरीरमास्थाय करोति सर्वमित्यत्र मायापरिमोहितात्मेति लिङ्गान्माययाऽन्यदिव "स एष आत्मा" इति, "ध्यायतीव लेलायतीव" इति च श्रवणाद्गजारूढे राजनि राजायं गच्छतीति गमनक्रियाकर्तृत्वं यथाऽऽरोपितं, तथा माययाऽविद्यया मूढैरात्मन्यारोपितं कर्म करोतीवेत्यनुवदति करोति सर्वमितिश्रुतिः, नतु सत्यमिति ब्रूते, तत्सत्यत्वे संसारित्वादात्मनो मोक्षाभावप्रसङ्गात्स्ववचनव्याघातप्रसङ्गाच्च । यतः स्वयमेव मोक्षं वक्ति 'विमुक्तश्च विमुच्यते' इति। तस्मादात्मनो न कर्तृत्वमिति व्यवस्थितम्। ननु 'तत्रैवं सति कर्तारमात्मानं केवलं तु' इति तुशब्दयोगात्केवलशब्दस्वारस्याच्चात्मनः केवलस्य तु कर्तृत्वाभावेऽप्युपाधिविशिष्टस्य कर्तृत्वमस्त्येवेति चेद्भवानत्र प्रष्टव्यः। आत्मन उपाधिवैशिष्ट्यसिद्धेः संबन्धः संयोग उच्यते उत समवायो वा ? आद्ये संयोगः सर्वत उच्यते, किमेकदेशेन वा ? न द्वितीयः, निरवयवस्य देशकल्पनायोगात्। नाद्यः, परिच्छिन्नस्योपाधेः पूर्णेन सह सर्वतः संयोगायोगान्निरवयवसावयवयोः संयोगासंभवाच्च। सत्यपि सर्वतः संयोगसंबन्धे त्वात्मनोऽपि जडत्वं जगदान्ध्यं च स्यात् । न द्वितीयः, समवायसमवायिनोर्द्वयोः संबन्धसिद्धौ समवायान्तरापेक्षायामनवस्थाप्रसङ्गात्तयोरयुतसिद्धत्वाभावाच्च न समवायः सिध्यति। "कर्मानुगान्यनुक्रमेण देही" इत्यात्मनो देहित्वश्रवणादुभयोर्देहदेहिनोरवयवावयविभावसंभवादस्त्येवायुतसिद्धत्वमिति चेन्न। यत्राऽवयवी तत्राऽवयव इतिवद्यत्रात्मा तत्र देह इति व्याप्त्यभावादयुतसिद्धत्वाऽसिद्धेः । तर्हि देहीति कथमिति चेदविद्यादशायामध्याससंबन्धेनात्मनो देहित्वसंभवाद्देहीत्युक्तिराध्यासिकी, न तु वास्तवी । संयोगसमवाययोरन्यतरसंबन्धाङ्गीकारेऽपि विशेषणनाशाद्विशिष्टस्यापि नाश इतिन्यायेनोपाधिनाशादात्मनोऽपि नाशप्रसङ्गादस्य नित्यत्वप्रतिपादकश्रुतिविरोधप्रसङ्गाच्च, संसारित्वमोक्षराहित्वाद्यनर्थप्रसङ्गाच्च। "न तदश्नाति किंचन। असङ्गो ह्ययं पुरुषः" इतिश्रवणादसङ्गस्य निरवयवस्यात्मनो निर्विशेषस्योपाधिना तद्धर्मेण तत्कर्मभिर्वा संबन्धः कल्पयितुं केनापि न शक्यते। तस्मादात्मनः क्रिया वा क्रियाश्रयत्वं वा क्रियाविषयत्वं वा कचित्कदाचित्किंचिदपि न संभवति। तत एवोच्यते भगवताऽविद्यां तत्कार्यं च मोचयित्वा भक्तान् रक्षितुमिच्छता सर्वज्ञेनात्मानं केवलं त्विति। तुशब्द आत्मन उपाधिभिन्नत्वदृढीकरणार्थः। सावयवं सक्रियमुपाधिं कर्तारं भोक्तारं च पश्यतु, न तु केवलं निष्कलं निष्क्रियमात्मानं प्रमादेनापि कर्तारं पश्येत्। निरवयवस्यासङ्गस्यात्मनः क्रियाश्रयत्वादेरसंभवाद्य एवंलक्षणमात्मतत्त्वं सद्गुरोर्मुहुः श्रुत्वा मत्वा चात्मानं पुण्यपापक्रियाकर्तारं भोक्तारं वा पश्यति स एव दुर्मतिरविवेकी न त्वजाविपाल इत्यर्थः ॥ १६ ॥

श्री० टी०—ततः किमत आह—**तत्रेति**। तत्र सर्वस्मिन्कर्मणि एते पञ्च हेतवः इत्येवं सति केवलं निरुपाधिकमसङ्गमात्मानं तु यः कर्तारं पश्यति शास्त्राचार्योपदेशाभ्यामसंस्कृतबुद्धित्वाद्दुर्मतिरसौ सम्यङ्न पश्यति ॥ १६ ॥

स० टी०—एतेषामेव कर्तृत्वं सर्वस्यापीह कर्मणः ॥ आत्मनो नास्ति कर्तृत्वमित्याह भगवान् हरिः ॥ १ ॥ तत्र कर्मणि पूर्वोक्ते सर्वस्मिन्पञ्चहेतुभिः ॥ निर्वर्त्यमाने सति य आत्मानं सर्वसाक्षिणम् ॥ २ ॥ स्वप्रकाशपरानन्दमबाध्यं केवलं परम् ॥ उदासीनमकर्तारमद्वितीयमविक्रियम् ॥ ३ ॥ वस्तुतोऽसङ्गिनं सन्तमधिष्ठानादिकर्मणः ॥ कर्ताहमिति चाध्यासात्कर्तारं हि क्रियाश्रयम् ॥ ४ ॥ पश्यत्यविद्यया रज्जुं भुजङ्गमिव मूढधीः ॥ महामोहावृतत्वेन पश्यन्नप्यन्यथामतिः ॥ ५ ॥ शास्त्राचार्योपदेशाभ्यामसंस्कृतमतिः कुधीः ॥ प्रतिबन्धकपापेन दुष्टा यस्य मतिः स च ॥ ६ ॥ न पश्यत्येव विभ्रान्तो ह्यन्यत्रान्यावभासतः ॥ अतोऽशुद्धमनस्कत्वादविवेक्यतिरागवान् ॥ ७ ॥ ज्ञानायोग्यतया सन्तमकर्तारमविक्रियम् ॥ कर्तारं विक्रियावन्तं कल्पयन्मायया परम् ॥ ८ ॥ संसारी देहभृत्कर्माधिकारी कर्मकर्तृषु ॥ तादात्म्याध्यासतः कर्म प्रकुर्वन्संसरत्यधः ॥ ९ ॥ एतेन तार्किको यस्तु देहादिभ्यो विलक्षणम् ॥ आत्मानं केवलं युक्त्या कर्तारं

पश्यतीतरः ॥ १० ॥ अकृतधीतया सोऽपि व्याख्यातोऽनात्मदर्श्यतः ॥ कर्तृत्वं कल्पिते सिद्धं देहादि-जडपञ्चके ॥ ११ ॥ प्रत्यगात्माऽक्रियः सिद्धो वाक्याद्भगवतो हरेः ॥ १२ ॥ सकलजडविकाराध्यासत-श्छिन्नेऽच्छे कुमतिरकृतबुद्धिः कल्पयन्कर्तृभावम् ॥ भ्रमति भवजलाब्धौ तर्कविद्योऽप्युपेक्ष्यस्त्विति वदति हरिर्यस्तं प्रपद्ये मुकुन्दम् ॥ १३ ॥ १६ ॥

भा० टी०—एवमधिष्ठानादीनां सर्वकर्मणि हेतुत्वमुक्त्वाऽविदुष आत्मन्यकर्तरि कर्तृत्वदृष्टिमनुवदति—तत्रेति। तत्रैवं सति एवं यथोक्तैः पञ्चभिः हेतुभिः सर्वस्मिन्कर्मणि निर्वर्त्ये सति केवलं शुद्धमसंहतमकर्तारमात्मानमात्मनोऽनन्यत्वेन कल्पितैरधिष्ठानादिभिः क्रियमाणस्य कर्मणोऽहमेव कर्तेति कर्तारं योऽकृतबुद्धित्वात् वेदान्ताचार्योपदेशन्यायैरसंकृतबुद्धित्वात् पश्यति अतः स दुर्मतिः नैव पश्यति। योऽपि देहातिरिक्तात्मवादी तार्किकादिः केवलमकर्तारं शुद्धमात्मानं कर्तारं पश्यति, असावप्यकृतबुद्धित्वान्न पश्यति आत्मनः कर्मणो वा तत्त्वम्। अतः दुर्मतिः कुत्सिता विपरीता दुष्टाऽजस्रं जननमरणप्राप्तिहेतुभूता मतिरस्येति स पश्यन्नपि न पश्यति। यथा तैमिरिकोऽनेकचन्द्रं, यथा वान्येषु धावत्स्वेवासनस्थितमात्मानं धावन्तं पश्यति तथाऽधिष्ठानादिषु क्रियाकर्तृषु तद्वतं स्वात्मानमकर्तारं कर्तारं पश्यति स दुर्मतिरित्यर्थः ॥ १६ ॥

प० टी०—ततः किमत आह—तत्रेति। तत्र सर्वस्मिन् कर्मण्येते पञ्च हेतव इत्येवं सति केवलं निरुपाधिमसङ्गमात्मानं यः कर्तारं पश्यति स शास्त्राचार्योपदेशाभ्यामकृतबुद्धित्वाद्दुर्मतिरसौ सम्यङ्न पश्यति ॥१६॥

रा० टी०—ततश्च किमित्यत आह—तत्रैवं सतीति। तत्र कर्मणीश्वरादिपञ्चकस्यैवं करणत्वे सति जीवस्य स्वातन्त्र्याभावेन केवलं परप्रेरणां विना स्वतः क्रियाहीनमात्मानं कर्तारं स्वातन्त्र्येण कर्मकर्तारं यस्तु पश्यति मन्यते सोऽकृतबुद्धित्वात् श्रवणाद्यसंस्कृतबुद्धित्वाद्दुर्मतिः दुष्टबुद्धिः सन्न पश्यति, तत्त्वविन्न भवतीत्यर्थः ॥ १६ ॥

**यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते ॥**
**हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यते ॥ १७ ॥**

**न० टी०—**एवमविवेकिन आत्मनः स्वतन्त्रकर्तृत्वज्ञातुरज्ञत्वं दुर्मतित्वं च निरूप्य निरहंकारस्य सुबुद्धित्वेन कर्मलेपाभावं निरूपयति—यस्येति। यस्य शास्त्राचार्योपदेशसंस्कृतान्तःकरणस्य पुरुषस्य अहंकृतो भावोऽहं कर्तेत्येवंरूपो भावोऽभिप्रायो न भवति। परमेश्वराधीनदेहेन्द्रियनिमित्तकर्तृत्वनिश्चयात्। अत एव बुद्धिर्यस्य न लिप्यते, ममेदं कर्म मदीयमिष्टं साधयेदितीष्टसाधनत्वेन तत्राभिनिवेशं न करोति। स एवंभूतो विविक्तात्मस्वरूप इमाँल्लोकान् प्राणिनो हत्वाऽपि न हन्ति, हननक्रियाऽऽश्रयो न भवति। यद्यप्येवंभूतस्य न हिंसादिकर्म संभवति, तथाऽपि कथंचित्स्यात्तर्हि अहं कर्तेति न मन्यते इत्यर्थः। तत एव न निबध्यते तत्कर्मफलानुभवाय तत्र तत्र न जायते इत्यर्थः ॥ १७ ॥

म० टी०—तदेवं चतुर्भिः श्लोकैः 'अनिष्टमिष्टं मिश्रं च त्रिविधं कर्मणः फलम्। भवत्यत्यागिनां प्रेत्य' इति चरणत्रयं व्याख्यातमिदानीं 'न तु संन्यासिनां क्वचित्' इति तुरीयं चरणमेकेन व्याचष्टे—यस्येति। यस्य पूर्वोक्तविपरीतस्य पुण्यैः कर्मभिः क्षपितेषु विवेकविरोधिपापेषु नित्यानित्यवस्तुविवेकादिसाधनचतुष्टयं प्राप्तवतः शास्त्राचार्योपदेशन्यायजनिताकर्त्रभोक्तृस्वप्रकाशपरमानन्दाद्वितीयब्रह्मात्मसाक्षात्कारस्याज्ञाने सकार्ये बाधिते न भवत्यहं कर्तेत्येवंरूपो भावः प्रत्ययः। यस्य भावः सद्भावः अहंकृतोऽहमिति व्यपदेशार्हो न, अहंकारबाधेन शुद्धस्वरूपमात्रपरिशेषादिति वा। अहंकृतोऽहंकारस्य भावः तत्तादात्म्यं यस्य न विवेकेन बाधितत्वादिति वा। बाधितानुवृत्तावपि एत एव पञ्चाधिष्ठानादयो मायया मयि सर्वात्मनि कल्पिताः सर्वकर्मणां कर्तारो

मया स्वप्रकाशचैतन्येनासङ्गेन कल्पितसंबन्धेन प्रकाश्यमानाः, अहं तु न कर्ता किंतु कर्तृतद्व्यापाराणां साक्षिभूतः क्रियाज्ञानशक्तिमदुपाधिद्वयनिर्मुक्तः शुद्धः सर्वकार्यकारणासंबद्धः कूटस्थनित्यो निर्द्वयः सर्वविकारशून्यः 'असङ्गो ह्ययं पुरुषः। साक्षी चेता केवलो निर्गुणश्च। अप्राणो ह्यमनाः शुभ्रो अक्षरात्परतः परः। अज आत्मा महान्ध्रुवः सलिल एको द्रष्टाऽद्वैतः। अजो नित्यः शाश्वतोऽयं पुराणः। निष्फलं निष्क्रियं शान्तं निरवद्यं निरञ्जनम्' इत्यादिश्रुतिभ्यः, 'अविकार्योऽयमुच्यते' 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहंकारविमूढात्मा कर्ताहमिति मन्यते॥' 'तत्त्ववित्तु न सज्जते' 'शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इत्यादिस्मृतिभ्यश्च। तस्मान्नाहं कर्तेत्येवं परमार्थदृष्टेः बुद्धिरन्तःकरणं यस्य न लिप्यते नानुशयिनी भवति, इदमहकार्षमेतत् फलं भोक्ष्य इत्यनुसंधानं कर्तृत्ववासनानिमित्तं लेपोऽनुशयः। स च पुण्ये कर्मणि हर्षरूपः पापे पश्चात्तापरूपः। ईदृशेन द्विविधेनापि लेपेन बुद्धिर्न युज्यते कर्तृत्वाभिमानबाधात्। तथा च ज्ञानिनं प्रकृत्य श्रुतिः—'एतमु हैवैते न तरत इत्यतः पापमकरवमित्यतः कल्याणमकरवमित्युभे उ हैवैष एते तरति नैनं कृताकृते तपतः। तदेतदृचाभ्युक्तम्। एष नित्यो महिमा ब्राह्मणस्य न वर्धते कर्मणा नो कनीयान्। तस्यैव स्यात् पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेनेति'। पापकेनेति पुण्यस्याप्युलक्षणम्। वर्धते कनीयानिति च पुण्यपापयोः परितोषपरितापाभिप्रायम्। एवं यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते, स पूर्वोक्तदुर्मतिविलक्षणः सुमतिः परमार्थदर्शी पश्यत्यकर्तारमात्मानं केवलं, स कर्तृत्वाभिमानाभावादनिष्टादित्रिविधकर्मफलभागी न भवतीत्येतावति शास्त्रार्थेऽहंकाराभावबुद्धिलेपाभावौ स्तोतुमाह—हत्वा हिंसित्वापि स इमाँल्लोकान्सर्वान् प्राणिनः न हन्ति हननक्रियायाः कर्ता न भवति अकर्तृस्वरूपसाक्षात्कारात्। न निबध्यते नापि तत्कार्येणाधर्मफलेन संबध्यते। अत्र नाहंकृतो भाव इत्यस्य फलं न हन्तीति। बुद्धिर्न लिप्यत इत्यस्य फलं न निबध्यत इति। अनेन च कर्मालेपप्रदर्शनेऽतिशयमात्रमुक्तं न तु सर्वप्राणिहननं संभवति। हत्वापीति कर्तृत्वाभ्यनुज्ञा बाधितकर्तृत्वदृष्ट्या लौकिक्या, न हन्तीति कर्तृत्वनिषेधः शास्त्रीयया परमार्थदृष्ट्येति न विरोधः। शास्त्रादौ नायं हन्ति न हन्यते इति सर्वकर्मासंस्पर्शित्वमात्मनः प्रतिज्ञाय न जायत इत्यादिहेतुवचनेन साधयित्वा वेदाविनाशिनमित्यादिना विदुषः सर्वकर्माधिकारनिवृत्तिः संक्षेपेणोक्ता। मध्ये च तेन तेन प्रसङ्गेन प्रसारिता, इह शास्त्रार्थैतावत्त्वप्रदर्शनायोपसंहृता—न हन्ति न निबध्यत इति। एवं चाविद्याकल्पितानामधिष्ठानाद्यनात्मकृतानां सर्वेषामपि कर्मणामात्मविद्यया समुच्छेदोपपत्तेः परमार्थसंन्यासिनामनिष्टादित्रिविधं कर्मफलं न भवतीत्युपपन्नम्। परमार्थसंन्यासश्चाकर्त्रात्मसाक्षात्कार एव। जनकादीनामेतादृशसंन्यासित्वेऽपि बलवत्प्रारब्धकर्मवशात् बाधितानुवृत्त्या परपरिकल्पनया वा कर्मदर्शनं न विरुद्धं परमहंसानामीदृशानां भिक्षाटनादिवत्। अत एव ज्ञानफलभूतो विद्वत्संन्यास उच्यते। साधनभूतस्तु विविदिषासंन्यासोऽनेवंविधोऽपि प्रथममुत्तरकाले ज्ञानोत्पत्तावेवंविधो भवतीति वक्ष्यते॥१७॥

शं० टी०—एवमनात्मकर्तृके कर्मण्यकर्तारमेवात्मानं मयेदं कृतमिति यः कर्तारं पश्यति स शतधा श्रुतश्रावितवेदान्तोऽप्यविदितात्मस्वरूपत्वेन दुर्मतिरिति प्रतिपाद्य, यस्तु श्रुत्याचार्येश्वरप्रसादसंपन्नः सततश्रवणमनननिदिध्यासादिसमुत्पन्नज्ञानेनात्मयाथात्म्यदर्शी विद्वाननात्मकर्तृके दुष्टे शिष्टे वा कर्मण्यात्मानमकर्तारमेव पश्यति स एव सुमतिः पण्डितोत्तमः शरीरयात्रादिलक्षणं वाऽन्यद्वा कर्म दुष्टमदुष्टं कृत्वापि स्वयमकर्तैव भवति न किंचिदप्युपाधिकृतेन कर्मणा लिप्यत इत्याह—यस्येति। ब्रह्मविदाचार्यप्रसादपात्रीभूतस्य वैदिकैरेव कर्मभिः सात्त्विकैर्बहुजन्माराधितपरमेश्वरानुग्रहवतः शुद्धात्मनः श्रवणादिजन्यज्ञानेन क्षीरनीरवदात्मानात्मनोः स्वरूपं ज्ञातृज्ञेयलक्षणं सम्यग्विभज्य तत्रात्मन्येवात्मभावमापद्य सदा तदात्मनैव विष्ठितो यस्य महात्मनो ब्रह्मवित्तमस्याधिष्ठानादिभिरेव स्ववेद्यैरविद्याकार्यैर्विहिते

प्रतिषिद्धे वान्यस्मिन् वा कर्मणि क्रियमाणे सति भावः भाव्यते अहमिति गृह्यतेऽनेनेति भावोऽन्तःकरणं ब्रह्मैवाहमिति स्वस्वरूपे ब्रह्मण्येवाहंभावमुपेत्य सदा तदात्मनैव वर्तमानोऽहमात्मको बुद्धिविशेषो नाहंकृतः कर्मकर्तर्युपाधावहंकरणमहंकृतं ब्रह्माकारतामुत्सृज्य कर्त्राकारेणाहमित्यवस्थानं न विद्यते यस्य भावस्य स नाहंकृतः अधिष्ठानादिलक्षण उपाधिरेव स्ववासनानुरूपेणेदं कर्म करोतीत्यहं तूपाधितत्कर्मणो-रुभयोः साक्षी तटस्थो निष्क्रिय एवास्मीति ब्रह्मात्मनैव स्थितः सन् चिरकालं नित्यनिरन्तरसमाध्यभ्यासबले-नाहारादिकर्मकालेऽपि कर्तर्यहंभावरहित इत्यर्थः। तथा यस्योक्तलक्षणस्य ब्रह्मविदो बुद्धिर्वृत्तिरूपा न लिप्यते मयेदं सुष्ठु दुष्टं च कर्म कृतमित्येवंभावनावती न भवति धर्मशीलस्य बुद्धिर्मयायं धर्मः कृतोऽमयधर्मः कृत इति तेन कर्मणा यथा लिप्यते धर्माधर्मसंस्कारवती भवति तथा मयेदं दुष्टमदुष्टं कृतमिति सामान्येन वा विशेषेण वा तत्संस्कारवती न भवति प्रतिच्छायावत्स्वभिन्नेनैवोपाधिना कृते कर्मण्यहं करोमि मयेदं कृतमिति प्रत्ययो ब्रह्मविद्बुद्धेर्नोदेति कर्तृतत्कर्मतादात्म्यसंबन्धाभावात्। येनाहमिदं करोमीति यत्कर्म क्रियते तद्बुद्धेरेव मयेदं कृतमिति कृतत्वभावनालेपश्च सिध्यति नान्यस्य बुद्धेः, यथा स्नानमहं करोमीति स्नानं कृतवतो देवदत्तस्य बुद्धेरेव मया स्नानं कृतमिति कृतत्वभावना तेन कर्मणा लेपश्च, न तु तटस्थयज्ञदत्तस्य बुद्धे-रस्ति तद्वत्। नन्वननुरूपदृष्टान्तोपन्यासेनेदं विपरीतमुच्यते, ब्रह्मविदः स्वदेहे तत्कृते च कर्मण्यहमिति मयेदं कृतमिति च प्रत्ययो न जायते इति विदुषोऽपि स्वदेहे स्नाते सत्यहमिति मया स्नात-मिति च प्रत्ययो जायत एव विद्वच्छरीरयोः परस्परविभागाभावादिति चेन्न। तयोर्ज्ञातृज्ञेयत्वलक्षणेन परस्पर-भिन्नस्वभावत्वादेकत्वानुपपत्तेः। सत्येकत्वे तथाविधः प्रत्ययः प्रसज्जेत। न हि देह एव विद्वान्नापि विद्वानेव हि देहो भवति। तयोर्ज्ञातृज्ञेयत्वधर्मेण घटतज्ज्ञातृवद्भिन्नस्वभावत्वाद्विभक्तत्वमेव युक्तं, नत्वेकत्वं प्रत्यक्षादि-प्रमाणविरोधात्। ततोऽधिष्ठानादिलक्षणोपाधौ वासनया तत्कर्मणि प्रवृत्ते सति तत्राहं करोमीत्यहंप्रत्ययो नोदेति कर्तृतादात्म्याभावात्। तत एव मयेदं कृतमिति तद्बुद्धेः कृतत्वभावना च तत्क्रियालेपश्च न संभवति। तत एवोच्यते 'यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते' इति। यदुक्तमननुरूपदृष्टान्तोपन्यासेनेति तन्न। विद्वच्छरीरयोर्ज्ञातृज्ञेयत्वधर्मेण विलक्षणतया परस्परभिन्नत्वे सति शरीरे तत्कृते च कर्मणि तद्भिन्नस्य विदु-षस्त्वहमिति मयेदं कृतमिति प्रत्ययानुत्पत्तौ युक्त एव दृष्टान्तः। एवं ब्रह्मविदः स्वस्योपाधितद्धर्मतत्कर्मसंब-न्धलेशाभावज्ञानमेवाप्रतिबद्धं नैष्कर्म्यसिद्धेः परमकारणमिति सूचयित्वा तादृशज्ञानसिद्धेः फलमाह—हत्वापीति। य एवमधिष्ठानादिभिरेव पञ्चभिरनात्मकैर्दृश्यभूतैः क्रियमाणे कर्मणि चेष्टामात्रे वाऽहंकार-ममकारशून्यो भवति स विद्वानिमान् त्रीन् लोकान् लोकस्थान् देवर्षिब्राह्मणादीन् सर्वप्राणिनो हत्वापि स्वह-स्तेन सर्वसंहारं कृत्वापि न हन्ति। न किंचिदपि हिनस्ति—स्वयं तद्धननक्रियायाः कर्ता न भवतीत्यर्थः। नन्विदमतिविरुद्धमुच्यते ब्रह्मवित्स्वयं लोकत्रयं हत्वापि न हन्तीति, येन यत्कर्म क्रियते स तस्य कर्मणः कर्ता भवन्नेव दृश्यते कुलालादिः। कथं ब्रह्मवित्स्वयं सर्वप्रपञ्चसंहारं कृत्वाप्यकर्तैव भवतीति? किमन्यं प्रयो-जयति वा स्वयमेव न करोति वा? नाद्यः, अन्यप्रयोगेऽपि राज्ञ इवैतस्यापि हननक्रियासंभवात्। न द्विती-यः, हत्वापीत्युक्तिविरोधप्रसङ्गात्। ततोऽस्त्येव हननक्रियाकर्तृत्वं विदुष इति चेत्सत्यं, यो यत्कर्म करोति कारयति वा स तस्य कर्मणः साक्षात् क्रमेण वा कर्तैव भवति। न तथायं विद्वान् स्वान्यत्करणजातं प्रयोज-यति, नापि स्वयं च करोति, किं तु मेघस्थश्चन्द्रो मेघकर्मणीव देहस्थो विद्वान् देहेन्द्रियादिभिः कृते कर्मणि कर्तेव दृश्यते। सम्यग्बुद्ध्या विचार्यमाणे मेघानामेव धावनक्रियाकर्तृत्वं, न तु चन्द्रस्य यथा, तथा देहेन्द्रियाद्यभि-मानिन एव विज्ञानात्मनो हननक्रियाकर्तृत्वं, न तु विदुषः। नहि कूटस्थासङ्गचिद्रूपेणैव तिष्ठतो विदुषस्त्वधिष्ठाना-दिभिः संयोगः समवायो वा संभावयितुं शक्यते, तदसंभवे तत्कर्तृके कर्मणि कर्तृत्वं च न संभवति। तत एवो-

च्यते परमेश्वरेण हत्वापि स इमाँल्लोकान्न हन्तीति। मूढदृष्ट्या चन्द्रवद्बहिःक्रियावानिव प्रतीयमानोऽपि वस्तुतो ब्रह्मविद्ब्रह्मभावापन्नत्वात् क्रियामात्रस्य तु कर्ता न भवति, तत एवाकर्तुर्ब्रह्मविदस्तत्कर्मफलसंबन्धं निषेधति न निबध्यत इति। यस्मान्निष्क्रियब्रह्मभावापत्त्या ब्रह्मवित्तम उपाधिसंबन्धरहितत्वेन स्वयमुपाधिकृतस्य कर्मणः पुण्यस्य पापस्यान्यस्य वा कर्ता न भवति, तस्मादेव न निबध्यते तत्कार्येण फलेन दुष्टेन वाप्यदुष्टेन च न संयुज्यते, कर्मणामन्यकर्तृकत्वात्। नैवान्यकर्तृककर्माण्यस्य लेपाय फलाय च भवति। नहि देवदत्तकृतेन कर्मणा यज्ञदत्तो लिप्यते बध्यते वा, तद्वन्मयेदं कृतमित्यात्मन्यविद्ययाऽध्यस्तं पूर्वमिदानीं वा न तदात्मनोऽविक्रियस्याकाशकल्पस्य लेपाय फलाय च भवति। नहि नीलं नभ इत्यज्ञैरारोपितेन नीलिम्ना नभो लिप्यते न नीलं च भवति। नापि चेदं जलमित्यध्यस्तजलेन मरुर्जलवान् भवत्यार्द्रश्च। तद्वदारोपितेन कर्मणा दुष्टेनाप्यदुष्टेन वात्मा निरवयवयः कूटस्थः क्रियावान्न भवति, नापि च तत्फलवान्। यस्मादेवं तस्मादात्मन्येवात्मतामापन्न आत्मविद्यतिः स्वस्याविक्रियात्मत्वदृष्ट्या मया कूटस्थेन पूर्वं चाधुना च नैव किंचित्कृतमिति मुहुर्मुहुः स्वयाथात्म्यविषयीकरणसमुत्पन्नविज्ञानबलात्संचितादिभ्यः सर्वेभ्यः कर्मभ्यो विनिष्क्रम्य तत्फलेन जन्मादिना दुःखादिना च न किंचित् स्पृश्यत इत्यर्थः। एतेन लोकत्रयस्थिताशेषप्राणिसंघातघाते कृते सत्यपि ब्रह्मविदस्तद्धननक्रिया च तत्कृतप्रत्यवायलेशश्च न संभवतीत्येवंलक्षणो ब्रह्मज्ञानस्य महिमा महाद्भुततरः संसारबन्धविच्छेदहेतुरिति ज्ञानस्य माहात्म्यं स्वाभाविकमेव स्तूयते—हत्वापि स इमाँल्लोकान्न हन्ति न निबध्यत इति। ननु नित्यनिरन्तरसमाधिनिष्ठानिर्दग्धसर्ववासनाग्रन्थेर्महात्मनः स्वात्मारामस्य स्वानन्दामृतरसपायिनो नित्यतृप्तस्य सर्वात्मदर्शिनो विदुषः प्रवृत्तिरस्तीति सूच्यते। प्रवृत्तिहेतोरविद्याकामादेः समाधिना निर्मूलितत्वात्। किंतु परावरैकत्वविज्ञाननिर्दग्धद्वैतदर्शनस्य ब्रह्मविद्यतेः क्वचिदाहारविहारादिलक्षणेन शरीरयात्रामात्रैकप्रयोजनेन कर्मणा दुष्टेन वाप्यदुष्टेन श्लेषो नास्तीत्युच्यते। तथैव श्रूयते 'तं विदित्वा न लिप्यते कर्मणा पापकेन' इति, 'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' इति ॥ १७ ॥

श्री० टी०—कस्तर्हि सुमतिः यस्य कर्मलेपो नास्तीत्युक्तमित्यपेक्षायामाह—यस्येति। अहमिति कृतोऽहं कर्तेत्येवंभूतो भावोऽभिप्रायो यस्य नास्ति। यद्वा अहंकृतोऽहंकारस्य भावः स्वभावः कर्तृत्वाभिनिवेशो यस्य नास्ति शरीरादीनामेव कर्मकर्तृत्वालोचनादित्यर्थः। अत एव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते स एवंभूतो देहादिव्यतिरिक्तात्मदर्शी इमाँल्लोकान्सर्वानपि प्राणिनो लोकदृष्ट्या हत्वाऽपि विविक्तया स्वदृष्ट्या न हन्ति। न च तत्फलैर्निबध्यते बन्धं न प्राप्नोति। किं पुनः सत्त्वशुद्धिद्वाराऽपरोक्षज्ञानोत्पत्तिहेतुभिः कर्मभिस्तस्य बन्धशङ्केत्यर्थः। तदुक्तम्—'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः। लिप्यते न स पापेन' इति ॥ १७ ॥

स० टी०—तदेवं चतुर्भिः श्लोकैर्गौणसंन्यासिनां फलम् ॥ अनिष्टादित्रिपाद्योक्तं व्याख्यातं हेतुभिः सह ॥ १ ॥ इदानीं तुर्यपादं तद्व्याचष्टे मुख्यतत्परम् ॥ पूर्वोक्तविपरीतस्य यस्य ब्रह्मविदः सतः ॥ २ ॥ शास्त्राचार्योपदेशाभ्यां संस्कृतात्मैक्यसन्मतेः ॥ स्वप्रकाशचिदानन्दाकर्त्रभोक्त्रात्मवेदिनः ॥ ३ ॥ सकार्ये बाधितेऽज्ञाने नास्त्येवाहंकृता मतिः ॥ अहं कर्तेतिरूपो यः प्रत्ययस्तस्य नास्तिता ॥ ४ ॥ नास्त्यहंकारतादात्म्यं यस्य शुद्धात्मदर्शिनः ॥ अधिष्ठानादयः पञ्च मायया मयि कल्पिताः ॥ ५ ॥ कर्तारः कर्मणां नाहं कर्तोदासीनभावतः ॥ किं तु साक्षितया तेषां व्यापृतेरवभासकः ॥ ६ ॥ इत्येवं यस्य शुद्धात्मम-तेर्नाहंकृतिर्जडे ॥ यस्यान्तःकरणं बुद्धिर्नैवानुशयिनी फले ॥ ७ ॥ अकार्षमिदमत्राहं भोक्ष्य एतत्फलं त्विति ॥ कर्तृत्ववासनाहेतुर्लेपो नानुशयात्मकः ॥ ८ ॥ स परमार्थदर्शीत्थं पश्यन्नात्मानमक्रियम् ॥ हिंसि-

त्वाप्यखिलाँल्लोकान्प्राणिनः कालधर्मिणः ॥ ९ ॥ हननक्रियायाः कर्ता न भवत्यनहंकृतिः ॥ न चाधर्मफलेनासौ संबध्यत उदारधीः ॥ १० ॥ अत्र नाहंकृतो भावो न हन्तीत्यस्ति तत्फलम् ॥ बुद्धिर्न लिप्यते त्वस्य न निबध्यत इत्यपि ॥ ११ ॥ अनेनातिशयोक्तेन कर्मालेपः प्रदर्शितः ॥ हत्वापीति तु लौकिक्या दृष्ट्या बाधितयेरितम् ॥ १२ ॥ शास्त्रीयया न हन्तीति न विरोधो मनागपि ॥ एवं मायाकृतं सर्वं बुद्ध्या कर्तृमुखं जगत् ॥ १३ ॥ मुख्यसंन्यासिनां नास्ति त्रिविधं कर्मणः फलम् ॥ स परमार्थसंन्यासो ब्रह्मबोधो न चापरः ॥ १४ ॥ ब्रह्मात्मैक्ये परिज्ञाते नष्टेऽज्ञाने सकार्यके ॥ स्वतः सिद्धोऽस्ति संन्यासः सर्वेषामेव कर्मणाम् ॥ १५ ॥ संन्यासित्वेऽपि पूर्वेषां जनकादिमहीक्षिताम् ॥ प्रारब्धकर्मणा तेषां लोकदृष्ट्या क्रियावताम् ॥ १६ ॥ स्वदृष्ट्या न क्रिया काचिन्न कर्ता कर्म वा क्वचित् ॥ भिक्षाटनादिकं कर्म यथा संन्यासिनां धिया ॥ १७ ॥ बाधितं सन्न बन्धस्य कारणं सर्वथा भवेत् ॥ तथा तत्त्वविदां सर्वं कर्म श्रौतं च लौकिकम् ॥ १८ ॥ गृहस्थानामपि स्वीयदृष्ट्या बाधितमेव सत् ॥ न बन्धकं यतस्तेषां प्रत्यगात्मनि केवले ॥ १९ ॥ सदा स्थितिर्न देहादौ जडवर्गे विनश्वरे ॥ अतो निरङ्कुशा तृप्तिः कृतकृत्यतया विदाम् ॥ २० ॥ यत्पादाम्बुजषट्पदीमतिरियं त्यक्त्वाऽखिलाहंकृतिं स्वात्मानन्दमृते न कुत्र विषये रन्तुं मनागीप्सति ॥ यद्बोधामृतपूरपूरितधियं काचित्क्रिया न स्पृशेत्तं श्रीकान्तमनर्थधामविधुरं नित्यं मुकुन्दं भजे ॥ २१ ॥ १७ ॥

भा० टी०—कः पुनः सुमतिः यः सम्यक् पश्यतीत्यपेक्षायामाह—यस्येति । यस्य शास्त्राचार्योपदेशन्यायसंस्कृतबुद्धित्वादहंकृतोऽहंकर्तेत्येवंलक्षणो भावो भावनाप्रत्ययः एते एव पञ्चाधिष्ठानादयोऽविद्ययात्मनि कल्पिताः सर्वकर्मणां कर्तारः, नाहम्, अहं तु तद्व्यापाराणां साक्षिभूतो 'अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः' केवलोऽविक्रियश्च इत्येवं पश्यतोऽहंकृतो भावो नास्तीत्यर्थः । बुद्धिर्यस्य न लिप्यते—बुद्धिरन्तःकरणं यस्यात्मन उपाधिभूता न लिप्यतेऽहमकार्षं तेनाहं नरकं गमिष्यामीति क्लेशशालिनी न भवतीत्यर्थः । स सुमतिः कृतबुद्धिः सम्यग्द्रष्टा इमान् प्रत्यक्षादिनानुभूयमानान् लोकान्प्राणिनो हत्वापि न हन्ति हननक्रियां न करोति, कर्तृत्वाभिमानरहितत्वात् । न निबध्यते—नापि तत्कार्येण हननक्रियाफलेन संबध्यते निर्लिप्तबुद्धित्वात् । भावः सद्भावः अहंकृतोऽहमिति व्यपदेशार्हो न, अहंकारबाधेन शुद्धस्वरूपमात्रपरिशेषात् । अहंकृतोऽहंकारस्य भावस्तत्तादात्म्यं यस्य न विवेकेन बाधितत्वादिति वेति केचित् । यस्य नाहंकृत इति समानाधिकरणे षष्ठ्यौ । ततश्च यस्य लिङ्गलक्षणस्योपाधेरहंकारात्मिकां वृत्तिमनुत्पादयतोऽहमध्यासशून्यस्य भावः सत्ता । यद्वाहमहंकृतिं करोतीत्यहंकृदन्तःकरणं यस्य संबन्धिनोऽहंकृतोऽन्तःकरणस्य न भावः न स्थितिः, अहंकृतिशून्यं यस्यान्तःकरणमित्यर्थः । तथाहमा कृतोऽहमध्यासमूलक इति यावत् । एवंविधो भावः पदार्थो ममेत्यध्यासरूपो यस्य लिङ्गात्मनो नास्तीत्युभयविधाध्यासशून्यत्वमुक्तं भवति । यस्य प्रमातुर्भावः प्रत्ययमात्रस्वरूप आत्मा नाहंकृतः—अहमिव कृतोऽहंकारतादात्म्यं प्रापितोऽहंकृतस्तथा न । यस्य बुद्धिर्न लिप्यते आत्मभावेन रञ्जिता न भवति, यस्य बुद्धेर्व्यतिरिक्तमात्मानं पश्यतो बुद्धिधर्माः कर्तृत्वादयो नात्मनि प्रतीयन्ते इति कर्त्रात्मवादितार्किकनिरासः । यस्य च आत्मधर्माश्चैतन्यादयो बुद्धौ न संसृज्यन्ते इति बुद्धिमेव चेतनां वदतो बौद्धस्य निरासः । चिदचितोरन्योन्यस्मिन्नन्योन्यधर्माध्यासो यस्य नास्तीत्यर्थ इत्यन्ये । यस्य बुद्धिः शास्त्राचार्यसमाहिता तैलधारेवाविच्छिन्ना न लिप्यते विजातीयप्रत्ययलेपं न प्राप्नोति स पश्यतीति स विद्वानिति पूर्वश्लोकस्य पश्यतिपदानुषङ्गेण योज्यम् । कथं पुनरयमेवंविध इति ज्ञेयमित्याशङ्क्य चेष्टालिङ्गकमनुमानमाह—हत्वापीति । हन्धातुनाऽत्र तदुपाया लक्ष्यन्ते, अवस्थितानिति चाध्याह्रियन्ते । ततश्च हिंसोपायभूतान्पाषाणप्रहरणादीनुपायान् कृत्वाऽवस्थितानिमान् लोकान् स्वयं न हन्ति अहंममाभिमानशून्यत्वात् इत्यर्थः ।

अतश्च न निबध्यते नास्य बन्धो जीवन्मुक्तत्वादितीतरे । हत्वापि न हन्ति न निबध्यत इति वाक्यशेषे हेतुत्वेन प्रतीयमानस्य यस्येत्यादेः, एतत्फलभूतेन प्रतीयमानस्य हत्वापीत्यादेश्च पूर्वपरानुगुण्येन व्याख्यानं कृतवतां सर्वज्ञानां मार्गप्रदर्शकानां भाष्यकृतामुदाहृतयत्किंचित्कल्पनाकरणेन न्यूनता नापादनीया । ननु यद्यपि स्तुतिरियं तथापि हत्वापि न हन्तीति विप्रतिषिद्धमुच्यमानं कथमुपपद्यत इति चेत् देहाद्यात्मबुद्ध्या हन्ताहमिति हि लोकैर्दृश्यते, नाहं कर्ता किं तु तद्व्यापारसाक्षी क्रियाज्ञानशक्तिमदुपाधिद्वयविनिर्मुक्तः शुद्धः सन् कार्यकरणासंबद्धोऽद्वितीयोऽविक्रिय इत्येवं हि विद्वान्पश्यति लौकिकीं पारमार्थिकीं च दृष्टिमाश्रित्य, तदुभयमुपपद्यत एवेति गृहाण । तथाच यः केवलमात्मानमकर्तारं कर्तारं पश्यति स दुर्मतिः । यस्तु यथाभूतमात्मानमकर्तारं पश्यति स सुमतिरिति द्वयोः संपिण्डितार्थः । ननु आत्मानं केवलं तु यः इति केवलपदप्रयोगात् अधिष्ठानादिविशिष्टः करोत्येव आत्मा । एवं विशिष्टस्य कर्तृत्वे सति केवलमात्मानं यः कर्तारं पश्यति स दुर्मतिरिति चेन्न, श्रुतिस्मृत्यादिभिरात्मनोऽविक्रियस्वभावत्वप्रतिपादनात् । तथा च श्रुतिः—"असङ्गो ह्ययं पुरुषः । साक्षी चेता केवलो निर्गुणश्च । अप्राणो ह्यमनाः शुद्धो ह्यक्षरात्परतः परः । अज आत्मा महान् ध्रुवः । निष्कलं निष्क्रियम् । ध्यायतीव लेलायतीव" इत्येवमाद्याः । स्मृतयश्च 'कथं स पुरुषः पार्थ कं घातयति हन्ति कम् । अविकार्योऽयमुच्यते । प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः । अहंकारविमूढात्मा कर्ताहमिति मन्यते ॥ शरीरस्थोऽपि कौन्तेय न करोति न लिप्यते' इत्येवमाद्याः । न्यायाश्च न तावदात्मा स्वतो विक्रियते निरवयवत्वादाकाशवत् , नापि परतोऽसङ्गस्याविकार्यस्य स्वतन्त्रस्य परतो विक्रियावत्त्वायोगात् । किंचात्मनो विक्रियावत्त्वाभ्युपगमे तस्य स्वनिष्ठाविक्रिया अधिष्ठानादिनिष्ठा वा । नाद्यः, श्रुत्यादिभिरात्मनोऽविक्रियत्वप्रतिपादनात् । न द्वितीयः, अन्यनिष्ठाविक्रियाऽन्यस्मिन्निति विप्रतिषिद्धत्वात् । अविद्यया गमितमपि नान्यनिष्ठत्वमन्यस्य, यथा रजतत्वं न शुक्तिकायां, यथा तलमलिनत्वं बालैर्गमितमविद्यया नाकाशस्य । तथाधिष्ठानादिविक्रियापि तेषामेव नात्मनस्तस्मादविक्रियस्यात्मनः केनचित्संहननं संहत्य वा कर्तृत्वं संभवतीति केवलत्वमात्मनः स्वाभाविकं केवलशब्दोऽनुवदति । नायं हन्ति न हन्यते इति प्रतिज्ञाय न जायत इत्यादिना हेतुवचनेनाविक्रियत्वमुक्त्वा वेदाविनाशिनमिति विदुषः कर्माधिकारनिवृत्तिं शास्त्रादौ संक्षेपत उक्त्वा तत्र तत्र प्रसङ्गं कृत्वा प्रसारितं 'न हन्ति न निबध्यते' इत्युपसंहराति । एवं सति देहभृत्त्वाभिमानानुपपत्तावविद्याकृताशेषकर्मसंन्यासोपपत्तेः परमार्थसंन्यासिनामनिष्टादि त्रिविधं कर्मणः फलं न भवतीत्युपपन्नम् । तद्विपर्ययश्चेतरेषां भवतीत्येतच्चापरिहार्यमित्येष गीताशास्त्रस्यार्थ उपसंहृतः । स एषः वेदार्थसारो निपुणमतिभिः पण्डितैः विचार्य प्रतिपत्तव्य इति ॥ १७ ॥

प० टी०—कस्तर्हि पश्यतीत्याह—यस्येति । अहमित्यहंकारेण कृतो निष्पादितो भावः स्वभावः कर्तृत्वाभिनिवेशो यस्य नास्ति, शरीरादीनामेव कर्मकर्तृत्वालोचनादित्यर्थः । अत एव यस्य बुद्धिर्न लिप्यते इष्टानिष्टबुद्ध्या कर्मसु न सज्जते, स एवंभूतो देहादिव्यतिरिक्तात्मदर्शी इमान् लोकान् सर्वान् प्राणिनो लोकदृष्ट्या हत्वापि विविक्ततया स्वदृष्ट्या न हन्ति, न च तत्फलैर्निबध्यते बन्धं न प्राप्नोति । किं पुनः सत्त्वशुद्धिद्वाराऽपरोक्षज्ञानोत्पत्तिहेतुभिस्तस्य बन्धाशङ्केत्यर्थः ॥ १७ ॥

रा० टी०—एवं कर्तृत्वाभिमानिनं विनिन्द्य स्वस्य कर्तृत्वानभिमानिनं स्तौति—यस्येति । यस्य पुंसः अहंकृतः मयायमर्थः कृत इति भाव आशयः अहंकृतो भावः स्वातन्त्र्यादिमानं नास्ति । यस्य बुद्धिर्न लिप्यते फलरागादिलिप्ता न भवति । सः स्वातन्त्र्यज्ञानहीनः इमाल्लोकान्हत्वापि न लिप्यते हननदोषयुक्तो न भवति । कुतः न हन्ति स्वातन्त्र्येण हन्मीतिबुद्धिं न करोतीति वा । न निबध्यते तत्फलं नाप्नोतीत्यर्थः । एतच्चेश्वरसार्वज्ञ्यस्वातन्त्र्यज्ञानी सन्नपि विश्वहननार्थं जातो रुद्रो यमो वा तद्विषयमिति

बोध्यम् । अन्यस्य त्वपरोक्षिणोऽपि दोषकृदेवेति वृत्रहत्यादिनेन्द्रादेरपि ईषद्दुन्योपीषदहंकारकृत एवेत्याकर एव व्यक्तम् । एवं कर्तृत्वाभिमान्यनभिमानिनोः सहेतुकं निन्दास्तुत्योरुक्त्या कर्मणि कर्तृत्वाभिमानत्यागोऽपि संन्यासशब्दार्थ इत्युक्तं भवति ॥ १७ ॥

**ज्ञानं ज्ञेयं परिज्ञाता त्रिविधा कर्मचोदना ॥**
**करणं कर्म कर्तेति त्रिविधः कर्मसंग्रहः ॥ १८ ॥**

**त० टी०**—कर्मण्यभिमानरहितः कर्मभिस्तत्फलैश्च न लिप्यते इत्युक्तं, सा निरभिमानता सत्त्वगुणवृद्ध्या भवत्यतः सत्त्वस्योपादानाय सत्त्वादिगुणकृतं ज्ञानादिभेदं वक्तुं तावत् कर्मविधेः कर्मणश्च त्रैविध्यमाह—ज्ञानमिति । तत्र ज्ञानं कर्मकर्तृविधिदेवताविषयं, ज्ञेयं ज्ञातव्यं साङ्गं कर्म, परिज्ञाता तस्य कर्मणो बोद्धा, एवं त्रिविधा कर्मचोदना प्रवर्तनोपदेशादिशब्दाभिधेयः कर्मविधिरित्यर्थः । "चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः" इतिभट्टैरुक्तत्वात् । तत्र ज्ञेयं कर्म त्रिविधं—करणं कर्म कर्तेति । साधकतमं करणं वाक्पाण्यादीन्द्रियं स्रुगादि च, कर्म कर्तुरीप्सिततमं कर्तुः क्रियया प्राप्यमाणं ज्योतिष्टोमादिकं, कर्ता क्रियानिर्वर्तकः स्वतन्त्रः, त्रिविधः कर्मसंग्रहः कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः करणकर्मकर्तेति त्रिविधो ज्ञेय इत्यर्थः ॥ १८ ॥

**म० टी०**—पूर्वमधिष्ठानादिपञ्चकस्य क्रियाहेतुत्वेनात्मनः सर्वकर्मासंस्पर्शित्वमुक्तम् । संप्रति तमेवार्थं ज्ञानज्ञेयादिप्रक्रियारचनया त्रैगुण्यभेदव्याख्यया च विवरीतुमुपक्रमते—ज्ञानमिति । ज्ञानं विषयप्रकाशक्रिया, ज्ञेयं तस्य कर्म, परिज्ञाता तस्याश्रयो भोक्तान्तःकरणोपाधिपरिकल्पितः । एतेषां त्रयाणां संनिपाते हि हानोपादानादिसर्वकर्मारम्भः स्यादत एतत् त्रयं सर्वेषां कर्मणां प्रवर्तकम् । तदेतदाह—त्रिविधा कर्मचोदनेति । चोदनेति प्रवर्तकमुच्यते । चोदनेति क्रियायाः प्रवर्तकं वचनमाहुरिति शाबरे । 'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति । भाट्टे च वचने क्रियाप्रवर्तकवचनत्वं यद्यपि चोदनापदशक्यतया प्रतीयते तथापि वचनत्वं विहाय प्रवर्तकमात्रमिह लक्ष्यते ज्ञानादिषु वचनत्वाभावात् । एवं च प्रेरणीयत्वं प्रेरकत्वं चानात्मन एव नात्मन इत्यभिप्रायः । तथा करणं साधकतमं बाह्यं श्रोत्राद्यन्तस्थं बुद्ध्यादि । कर्म कर्तुरीप्सिततमं क्रियया व्याप्यमानम् उत्पाद्यमाप्यं विकार्यं संस्कार्यं च । कर्ता च इतरकारकाप्रयोज्यत्वे सति सकलकारकाणां प्रयोक्ता क्रियाया निर्वर्तकश्चिदचिद्ग्रन्थिरूप इति त्रिविधस्त्रिप्रकारः, कर्म संगृह्यते समवैत्यत्रेति कर्मसंग्रहः कर्माश्रयः । चकारार्थादितिशब्दात् संप्रदानमपादानमधिकरणं च राशित्रयान्तर्भूतम् । एवं कारकषट्कमेव त्रिविधं क्रियाया आश्रयो नतु कूटस्थ आत्मेत्यर्थः । कर्मप्रेरकस्य कर्माश्रयस्य च कारकरूपत्वात्त्रैगुण्यात्मकत्वाच्चाकारकस्वभावो गुणातीतश्चात्मा सर्वकर्मासंस्पर्शीत्यभिप्रायः । अथवा ज्ञानं प्रेरणारूपं लिङादिशब्दजन्यं, ज्ञेयं तस्य ज्ञानस्य विषयत्वेन लिङादिशब्दस्वरूपं प्रेरकं, परिज्ञाता तस्य ज्ञानस्याश्रयः प्रेरणीय इत्येवं त्रिविधा कर्मचोदना कर्म क्रियापुरुषव्यापाररूपार्थी भावना, तद्विषया चोदना प्रेरणा विधिरूपा शाब्दी भावनेत्यर्थः । तथा करणं सेतिकर्तव्यताकं साधनं धात्वर्थः, कर्म भाव्यं स्वर्गादिफलं, कर्ता फलकामनावान् पुरुषः क्रियाया निर्वर्तक इत्येवं त्रिविधः कर्मसंग्रहः कर्मणः पुंव्यापाररूपस्यार्थभावनायाः संग्रहः संक्षेपः । तदेवमर्थभावनारूपपुंप्रयत्नस्य विधेयस्याभावाच्छब्दभावनारूपो विधिर्न शुद्धमात्मानं गोचरयति कारकाश्रयत्वाद्विधिविधेययोः । तदुक्तम् 'त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन' इति । कारकाणां च त्रैगुण्यरूपत्वमनन्तरमेव व्याख्यास्यत इत्यभिप्रायः । अत्र प्रसङ्गाद्विधिश्चिन्त्यते—प्रवृत्तिहेतुत्वेन प्रेरणा तावत्सर्वलोकानुभवसिद्धा । राज्ञा प्रेरितो बालेन प्रेरितो ब्राह्मणेन प्रेरितोऽहमिति हि प्रवर्तमाना वक्तारो

  

भवन्ति। सा च प्रवर्तना प्रवर्तकराज्ञादिनिष्ठा। तत्रोत्कृष्टस्य निकृष्टं प्रति प्रवर्तना आज्ञा प्रेषणेति चोच्यते। निकृष्टस्योत्कृष्टं प्रति प्रवर्तना याच्ञाऽध्येषणेति चोच्यते। समस्य समं प्रत्युत्कर्षनिकर्षौदासीन्येन प्रवर्तनाऽनुज्ञाऽनुमतिरिति चोच्यते। ते चाज्ञादयो ज्ञानविशेषा इच्छाविशेषा वा चेतनधर्मा एव लोके प्रसिद्धाः। वेदे तु विधिनाऽहं प्रेरितः करोमीति व्यवहर्तारो भवन्ति। तत्र स्वयमचेतनत्वादपौरुषेयत्वाच्च वैदिकस्य विधेर्न चेतनधर्मेणाज्ञादिना प्रेरकता संभवति। अतः स्वधर्मेणैव साऽभ्युपगन्तव्या गत्यन्तरासंभवात्। स एव च धर्मश्चोदना प्रवर्तना प्रेरणा विधिरुपदेशः शब्दभावनेति चोच्यते। तत्र केचिदलौकिकमेव शब्दव्यापारं कल्पयन्ति। अन्ये तु क्लृप्तेनैवोपपत्तौ नालौकिककल्पनां सहन्ते। प्रवर्तना हि प्रवृत्तिहेतुर्व्यापारः। विधिशब्दस्य चाख्यातत्वेन दशलकारसाधारणेनोपाधिना पुरुषप्रवृत्तिरूपार्थभावनां प्रति वाचकत्वं तज्ज्ञानहेतुत्वमिति यावत्। सा च ज्ञातैवानुष्ठातुं शक्यत इति तद्धीहेतोरपि शब्दस्य तद्धेतुत्वं परंपरया भवत्येव। तत्र विधिशब्दस्य पुरुषप्रवृत्तिरूपभावनाज्ञानहेतुर्व्यापारस्तद्वाचकशक्तिमत्तया विधिशब्दज्ञानम्। स एव च तस्य प्रवृत्तिहेतुर्व्यापार इति प्रवर्तनाभिधानीयकं लभते ज्ञानद्वारेणैव शब्दस्य प्रवृत्तिजनकत्वात्, ज्ञानजनकव्यापारातिरिक्तव्यापारकल्पने मानाभावात्। ज्ञानजनकश्च व्यापारस्तस्य स्वज्ञानं, शक्तिज्ञानं, शक्तिविशिष्टस्वज्ञानं च। तत्राद्ययोरन्यतरस्य शब्दभावनात्वम्। तृतीयस्य तु तत्र करणत्वमिति विवेकः। एवं स्थिते निष्कर्षः—विधिना स्वज्ञानं जन्यते प्रवर्तनात्वेनाभिधीयतेऽपीति विधिज्ञानमेव शब्दभावना। तस्यां च पुरुषप्रवृत्तिरूपार्थभावनैव भाव्यतयान्वेति। करणतया च प्रवृत्तिवाचकशक्तिमद्विधिज्ञानमेव। भावनासाध्यस्यापि फलावच्छिन्नां भावनां प्रति करणत्वं फलकरणत्वादेव यागस्येव स्वर्गभावनां प्रति न विरुध्यते। तथा च पुरुषः स्वप्रवृत्तिं भावयेत्। केनेत्यपेक्षायां पुरुषप्रवृत्तिवाचकशक्तिमत्तया ज्ञातेन विधिशब्देनेति करणांशपूरणम्। कथमित्याकाङ्क्षायामर्थवादैः स्तुत्वेतीतिकर्तव्यतांशपूरणम्। इयं गौः क्रय्येति लौकिके विधौ बहुक्षीरा जीवद्वत्सा रूपपत्या समांसमीनेत्यादिलौकिकार्थवादवत् ( समां समां प्रतिवर्षं प्रसूयते सा गौः )। नन्वाख्यातत्वेन विधिशब्दादुपस्थिता पुरुषप्रवृत्तिर्भाव्यतयान्वेतु। करणं तु कथमनुपस्थितमन्वेति? उच्यते—विधिशब्दस्तावच्छ्रवणेनोपस्थापितस्तस्य पुरुषप्रवृत्तिवाचकशक्तिरपि स्मरणेनोपस्थापिता। तदुभयवैशिष्ट्यं तन्निष्ठा ज्ञातता च मनसेति वाचकशक्तिमत्तया ज्ञातो विधिशब्द उपस्थित एव। अनेन यच्छक्नुयात्तद्भावयेदिति प्रतिशब्दं स्वाध्यायविधितात्पर्याच्छब्दातिरिक्तेनोपस्थितमपि शाब्दबोधे भासत एव। यथा ज्योतिष्टोमादि नामधेयं यथा वा लिङ्गविनियोज्यो मन्त्रः। तदुक्तमाचार्यैरुद्भिदधिकरणे "अनुपस्थितविशेषणा विशिष्टबुद्धिर्न भवति न त्वनभिहितविशेषणा" इति। एवमर्थवादानामुपस्थितिः श्रोत्रेण। प्राशस्त्यस्य तु तैरेव लक्षणया तदुभयनिष्ठज्ञाततायास्तु मनसेत्यर्थवादैः प्रशस्तत्वेन ज्ञात्वेतीतिकर्तव्यतांशान्वयोऽप्युपपन्न एव। ननु किं प्राशस्त्यं? न तावत् फलसाधनत्वं, तस्य यागेन भावयेत् स्वर्गमित्यर्थभावनान्वयवशेन विधिवाक्यादेव लब्धत्वात्। नान्यत्, प्रवृत्तावनुपयोगात्। उच्यते—बलवदनिष्टाननुबन्धित्वं प्राशस्त्यम्। तच्च नेष्टहेतुत्वज्ञानाल्लभ्यते, इष्टहेतावपि कलञ्जभक्षणादावनिष्टहेतुत्वस्यापि दर्शनात्। विहितश्येनफलस्य च शत्रुवधस्यानिष्टानुबन्धित्वं दृष्टम्। अतो यावत्साधनस्य फलस्य चानिष्टाहेतुत्वं नोच्यते तावदिष्टहेतुत्वेन ज्ञातेऽपि तत्र पुरुषो न प्रवर्तते। अत एवोक्तम् 'फलतोऽपि च यत्कर्म नानर्थेनानुबध्यते। केवलप्रीतिहेतुत्वात्तद्धर्म इति कथ्यते॥' इति। अतः स्वतः फलतो वानर्थाननुबन्धित्वरूपप्राशस्त्यबोधनेनार्थवादा विधिशक्तिमुत्तम्भयन्ति। क उत्तम्भः स्वतः फलतो वानर्थानुबन्धित्वशङ्कायाः प्रवृत्तिप्रतिबन्धिकाया विगमः। इदमेव च विधेः प्रवृत्तिजनने साहाय्यमर्थवादैः क्रियत इति विधिरर्थवादसाकाङ्क्षः। एवमर्थवादा अप्यभिधया गौण्या वा वृत्त्या भूतमर्थं वदन्तो-

ऽपि स्वाध्यायविध्यापादितप्रयोजनवत्त्वलाभाय विधिसाकाङ्क्षः । सोऽयं नष्टाश्वदग्धरथवत्संप्रयोगः । यथैकस्य दग्धस्य रथस्य जीवद्भिरश्वैरन्यस्य विद्यमानस्य रथस्याविद्यमानाश्वस्य संप्रयोगः परस्परस्यार्थवत्त्वाय तथार्थवादानां प्रयोजनांशो विधिना पूर्यते । विधेश्च शब्दभावनाया इतिकर्तव्यतांशोऽर्थवादैरिति । तदिदमुभयोः श्रवणे पूर्णमेव वाक्यमेकस्य श्रवणे त्वन्यस्य कल्पनया पूरणीयम् । यथा 'वसन्ताय कपिञ्जलानालभेत' इति विधावर्थवादांशोऽश्रुतोऽपि कल्प्यते । 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्याद्यर्थवादे विध्यंशः । तथा च सूत्रम् 'विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः' इति । विधिना स्तुतिसाकाङ्क्षेण प्रयोजनसाकाङ्क्षाणामर्थवादानामेकवाक्यत्वाद्विधीनां विधेयानां स्तुत्यर्थेन स्तुतिप्रयोजनेन स्तुतिरूपेण प्रयोजनसाकाङ्क्षेण लाक्षणिकेनार्थेन वानर्थक्याभावादर्थवादा धर्मे प्रमाणानि स्युरिति तस्यार्थः । ननु 'य एव लौकिकाः शब्दास्त एव वैदिकास्त एव चामीषामर्थाः' इति न्यायाद्विधिशब्दस्य लोके यत्र शक्तिर्गृहीता वेदेऽपि तदर्थकेनैव तेन भवितव्यम् । लोके च प्रेषणादौ पुरुषधर्मवाचित्वं क्लृप्तमिति वेदे शब्दभावनावाचित्वं कथमुपपद्यते । उच्यते—लोकवेदयोरैकरूप्यमेव । तथा हि—लोके प्रेषणादिकं न तेन तेन रूपेण विधिपदवाच्यम्, अननुगमेन नानार्थत्वप्रसङ्गात् । तद्वदेव भावनावाचित्वोपपत्तेश्च । किंतु प्रेषणाध्येषणानुज्ञास्वस्ति प्रवर्तनात्वमेकम् । तच्च शब्दव्यापारेऽपि तुल्यमिति तदेव लिङादिपदवाच्यम् । तच्च लौकिकशब्दे नास्त्येव । तत्र राजादीनामेव प्रवर्तकत्वात् । प्रवर्तकव्यापार एव हि (प्रेषणात्वेन इत्यादिना न विधिपदवाच्यं किंतु प्रवर्तनात्वेन वाच्यं) प्रवर्तना प्रवर्तकत्वं च राजादेरिव वेदस्याप्यनुभवसिद्धम् । ननु वेदेऽपि प्रवर्तनावानीश्वरः कल्प्यतां लोके राजादिवत् । तदुक्तम् 'विधिरेव तावद्गर्भ इव श्रुतिकुमार्याः पुंयोगे मानम्' इति । न, वेदस्यापौरुषेयत्वात् । न हि वेदस्य कर्ता पुरुषो लोके वेदे वा प्रसिद्धः । तत्कल्पने च तज्ज्ञानप्रामाण्यापेक्षया वेदप्रमाण्ये निरपेक्षत्वेन स्थितं स्वतःप्रामाण्यं भग्नं स्यात् । बुद्धवाक्येऽपि प्रामाण्यप्रसङ्गाच्च । ईश्वरवचनत्वे समानेऽपि बुद्धवाक्यं न प्रमाणं वेदवाक्यं तु प्रमाणमिति सुभगाभिक्षुकन्यायप्रसङ्गः । महाजनानामुभयसिद्धत्वाभावेन तत्परिग्राहापारिग्रहाभ्यामपि विशेषानुपपत्तेः । ईश्वरप्रेरणाया लोकवेदसाधारणत्वेन लोकेऽपि राजादीनां प्रेरकत्वं न स्यात् । ईश्वरप्रेरणायां स्थितायामेव राजादिरप्यसाधारणतया प्रेरक इति चेत्, हन्त सा तिष्ठतु न वा, किं त्विहाप्यसाधारणः प्रेरको वेद एव राजादिस्थानीय इत्यागतं मार्गे । ईश्वरप्रेरणायाः साधारणाया असाधारणप्रेरणासहकारेणैव प्रवर्तकत्वात् । किंच ईश्वरप्रेरणायां सर्वोऽपि विहितं कुर्यादेव न तु कश्चिदपि लङ्घयेत्, निषिद्धेऽपि चेश्वरप्रेरणास्त्येव । अन्यथा न कोऽपि तत्र प्रवर्तेतेति तदपि विहितं स्यात् । तथा चोक्तम् 'अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः । ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वा ॥' इति । तस्माद्राजादिरिव वेदोऽपि स्वप्रवर्तनां ज्ञापयन्निच्छोपहारमुखेन प्रवर्तयतीति सिद्धं लोकवेदयोरैकरूप्यम् । पूर्वमीमांसकानां स्वतन्त्रो वेदो ब्रह्ममीमांसकानां तु ब्रह्मविवर्तस्तत्परतन्त्रो वेद इति यद्यपि विशेषस्तथापि श्वसिततुल्यत्वेन वेदस्यापौरुषेयत्वमुभयेषामपि समानम् । अत्र च प्रवृत्त्यनुकूलव्यापारवत्त्वं प्रवर्तनात्वं सखण्डोऽखण्डो वोपाधिस्तस्मिन् विधिपदशक्येऽपि तदाश्रयविशेषोपस्थितिर्गवादितुल्यैव । अनुकूलव्यापारत्वं वा शक्यं प्रवृत्त्यंशस्त्वाख्यातत्वेन शक्त्यन्तरलभ्य एव । दण्डीत्यत्र संबन्धिनि मतुबर्थे प्रकृत्यर्थदण्डांशवत् । फलसाधनताबोध एव प्रेरणा तामेव कुर्वन् प्रेरको विधिः । अतः फलसाधनतैव प्रेरणात्वेन विधिपदशक्येति मण्डनाचार्याः । फलसाधनता चार्थभावनान्वयलभ्येत्युक्तं प्राक् । इममेव च पक्षं पार्थसारथिप्रभृतयः पण्डिताः प्रतिपन्नाः । औपनिषदानामपि केषांचिदिष्टसाधनतावादोऽनेनैव मतेनोपपादनीयः । इष्टसाधनत्वं स्वरूपेणैव लिङादिपदशक्यं न प्रेरणात्वेनेति तार्किकाः, तन्न । गौरवादन्यलभ्यत्वादनन्वयायोग्यत्वाच्च । इच्छाविषयसाधनत्वापेक्षया प्रवर्तनात्वमतिलघु इच्छातद्विषययोरप्रवेशात् । इच्छाज्ञानस्यापि प्रवृत्तिज्ञानवत् प्रवृत्तिहेतुत्वापातात्, वस्तुगत्या य

इच्छाविषयस्तत्साधनमिति शब्देन प्रतिपादयितुमशक्यत्वात् । साधनत्वमात्रस्यैव शक्यत्वे च तेनैव प्रत्ययेनोपस्थापितया प्रवृत्त्या सह श्रुत्या तदन्वयसंभवे पदान्तरोपस्थापितस्वर्गेण सह वाक्येन तदन्वयासंभवात् प्रवर्तनात्व एव पर्यवसानं श्रुत्या वाक्यस्य बाधात् । प्रत्ययश्रुतेः पदश्रुतितोऽपि बलीयस्त्वेन पशुना यजेतेत्यत्र प्रकृत्यर्थं पशुं विहाय प्रत्ययार्थेन करणेन सहैवैकत्वस्यान्वयादेकं करणं पशुरिति वचनव्यक्त्या क्रत्वङ्गत्वमेकत्वस्य स्थितं किमु वक्तव्यं पदान्तरसमभिव्याहाररूपाद्वाक्याद्बलीयस्त्वमिति । वाक्यार्थान्वयलभ्यत्वाच्च नेष्टसाधनत्वं पदार्थः । तथा हि प्रवर्तनाकर्मभूता पुरुषप्रवृत्तिरूपार्थभावना किं केन कथमित्यंशत्रयवती विधिनालम्बत्वेन प्रतिपाद्यत इत्युक्तं प्राक् । अपुरुषार्थकर्मिकायां च तस्यां प्रवर्तनानुपपत्तेरेकपदोपस्थापितमप्यपुरुषार्थं धात्वर्थं विहाय भिन्नपदोपात्तमन्यविशेषणमपि कामिपदसंबन्धेन साध्यतान्वययोग्यं स्वर्गमेव पुरुषार्थं साभाव्यतयालम्बते । इच्छाविषयस्यैव कृतिविषयत्वनियमात् । स्वर्गं कामयते स्वर्गकाम इति कर्मणि द्वितीयाया अन्तर्भूतत्वात् । यजतेरकर्मकत्वेन स्वर्गमित्युक्तेऽनन्वयाच्च । अत एव यत्र कामिपदं न श्रूयते तत्रापि तत्कल्प्यते । यथा प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्तीत्यादौ प्रतिष्ठाकामा रात्रिसत्रमुपेयुरित्यादि । एवं च लब्धभाव्यायां तस्यां समानपदोपस्थापितो धात्वर्थ एव करणतयान्वेति, भाव्यांशस्य कामिविषयेणावरुद्धत्वात् । सुब्विभक्तियोग्ये धात्वर्थनामधेये ज्योतिष्टोमादौ तृतीयाश्रवणात् । यत्रापि नामधेये द्वितीया श्रूयते तत्रापि व्यत्ययानुशासनेन तृतीयाकल्पनात् । तदुक्तं महाभाष्यकारैरग्निहोत्रं जुहोतीति तृतीयार्थे द्वितीयेति । अत एव तैः प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतस्तयोः प्रत्ययार्थः प्राधान्येन प्रकृत्यर्थो गुणत्वेनेति प्रत्ययार्थभावनां प्रति धात्वर्थस्य गुणत्वेन करणत्वमुक्तम् । आख्यातं क्रियाप्रधानमिति वदद्भिर्निरुक्तकारैरप्येतदेवोक्तम् । भावार्थाधिकरणे च तथैव स्थितम् । तेन सर्वत्र प्रत्ययार्थं प्रति धात्वर्थस्य करणत्वेनैवान्वयनियमः । अत एव गुणविशिष्टधात्वर्थविधौ धात्वर्थानुवादेन केवलगुणविधौ च मत्वर्थलक्षणा विधेर्विप्रकृष्टविषयत्वं च । यथा सोमेन यजेतेति विशिष्टविधौ सोमवता यागेनेति दध्ना जुहोतीति गुणविधौ दधिमता होमेनेति । नामधेयान्वये तु सामानाधिकरण्योपपत्तेर्धात्वर्थमात्रविधानाच्च न मत्वर्थलक्षणा न वा विधिविप्रकर्षः । तदेवं ज्योतिष्टोमेन यजेत स्वर्गकाम इत्यत्राख्यातार्थो भावयेदिति किमित्याकाङ्क्षायां कामिविषयं स्वर्गमिति विधिश्रुतेर्बलीयस्त्वादाकाङ्क्षाया उत्कटत्वाच्च । तथा च स्थितं षष्ठाध्याये । ततः केनेत्यपेक्षिते यागेनेति तृतीयान्तपदसमानाधिकरणत्वात् करणत्वेनैवान्वयनियमाच्च । किंनाम्नेत्यपेक्षिते ज्योतिष्टोमेनेति तन्नाम्नेत्यर्थः । शब्दादनुपस्थितोऽपि ज्योतिष्टोमशब्दो भासत एव शाब्दे बोधे श्रवणेनोपस्थापितस्तात्पर्यवशात् । नामधेयान्वये च न विभक्त्यर्थो द्वारं नञिवाद्यर्थान्वय इव । तेन मत्वर्थलक्षणामन्तरेणैव ज्योतिष्टोमशब्दवतेत्यन्वयलाभः । तथाच कविप्रयोगः 'हिमालयो नाम नगाधिराजः' इति, हिमालयनामवानित्यर्थः । एवमिह 'प्रभिन्नकमलोदरे मधूनि मधुकरः पिबति' इत्यादावगृहितसङ्गतिकैकपदवति वाक्ये मधुकरादिपदं स्वरूपेणैव भासते नामधेयवत् नार्थमुपस्थापयति प्रागगृहीतसङ्गतिकत्वात् । अत एव मधुकरशब्दवाच्य इत्यपि लक्षणया नान्वयः शक्यज्ञानपूर्वकत्वाल्लक्ष्यज्ञानस्य । स्वरूपतस्तु शब्दे भाते वाच्यवाचकसंबन्धः पश्चात्कल्प्यते संसर्गनिर्वाहायेति । तदयं वाक्यार्थः—ज्योतिष्टोमनाम्ना यागेन स्वर्गमिष्टं भावयेदिति । कथमित्यपेक्षिते श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्याभिः सामवायिकारादुपकारकाङ्गग्रामपूर्त्येति विकृतौ प्रकृतिवदित्युपबन्धेन नित्ये यथाशक्तीत्युपबन्धेन मुख्यालाभे प्रतिनिधायापीति यावन्न्यायलभ्यं तत्पूरणम् । एवं च यागस्य स्वर्गावच्छिन्नभावनाकरणत्वेन स्वर्गकरणत्वं करणत्वेन च साक्षात्कर्तृव्यापारविषयत्वरूपं कृतिसाध्यत्वं श्रुत्यर्थाभ्यां लभ्यत इति तदुभयमपि न लिङादिपदवाच्यम्, अप्राप्ते शास्त्रमर्थवदिति न्यायात् । अनन्वयाच्च, इष्टसाधनमिति समासे गुणभूतमिष्टपदं स्वर्गकाम इति समासान्तरगुणभू-

तेन स्वर्गपदेन कथमन्वियात् इष्टस्वर्गसाधनमिति । नहि राजपुरुषो वीरपुत्र इत्यत्र वीरपदराजपदयोरन्वयोऽस्ति पदार्थः पदार्थेनान्वेति नतु पदार्थैकदेशेनेति न्यायात् । करणविभक्त्यन्तज्योतिष्टोमादिनामधेयानन्वयप्रसङ्गादिदोषाश्चास्मिन् पक्षे द्रष्टव्याः । एतेनेष्टसाधनत्वमनिष्टासाधनत्वं कृतिसाध्यत्वमिति त्रयमपि विध्यर्थ इत्यपास्तम् । अतिगौरवादर्थवादानां सर्वथा वैयर्थ्यापत्तेश्च । अत एव कृतिसाध्यत्वमात्रं विध्यर्थ इत्यपि न भावनाकरणत्वेनार्थलभ्यत्वादित्युक्तेः । अलौकिको नियोगस्त्वलौकिकत्वादेव न विध्यर्थः । पराक्रान्तं चात्र सूरिभिः । तस्मादनन्यलभ्या लघुभूता च प्रेरणैव लिङादिपदवाच्येति स्थितम् । प्रवर्तकं तु ज्ञानं वाक्यार्थमर्यादालभ्यमन्यदेव सर्वेषामपि वादिनाम् । आख्यातार्थ एव च विशेष्यतया भासते न धात्वर्थो न नामार्थः स्वर्गकामो वेति चोक्तप्रायमेव । तेन च यागानुकूलकृतिमान् स्वर्गकाम इति तार्किकमतं पुरुषविशेष्यकवाक्यार्थज्ञानमपास्तम् । संक्षेपेण मतं भाट्टमिदमत्रोपपादितम् । यद्वक्तव्यमिहान्यत्तदनुसन्धेयमाकरात् ॥ १८ ॥

शं० टी०—एवं विहितप्रतिषिद्धादीनां कर्मणां सर्वेषामधिष्ठानादिपञ्चकैकनिर्वर्त्यत्वं, तत्कृते कर्मणि कर्तृत्वाभिमानिनो दुर्मतेः कर्मभिर्बद्धत्वं, कृतबुद्धेर्विदुषस्त्वकर्तुस्तद्रहितत्वं च प्रतिपाद्याथ निरुक्तलक्षणं निष्कर्मत्वज्ञानमेवाप्रतिबद्धं कैवल्यसिद्धेः परमकारणमित्यारुरुक्षोर्मोक्षैककामस्य तादृशज्ञानसिद्धेः कारणं सत्त्वशुद्धिस्तत्सिद्धेः कारणं तु कर्मैव सात्त्विकं तदेव कर्तव्यमिति बोधयितुं कर्मप्रवृत्तिहेतुं कर्माश्रयं च ज्ञानकर्मकर्तृबुद्ध्यादीनां सात्त्विकत्वराजसत्वादिभेदं च प्रतिपादयितुमुत्तरग्रन्थ आरभ्यते । यद्यपि सप्तदशे आहारादीनां सात्त्विकादिभेदः प्रतिपादितस्तथापि तत्र श्रद्धादीनामेव पञ्चानां सात्त्विकादिभेदः प्रतिपादितो न तु ज्ञानादीनाम् । तेषां सात्त्विकादिभेदे विज्ञाते हेयांशं राजसं तामसं च त्यक्त्वा सात्त्विके ज्ञानादौ प्रवृत्तस्य सत्त्वं शुध्यति । तेन ज्ञानं तत्फलं च सिध्यति । तदर्थमत्र चोदनायाः कर्माश्रयस्य च स्वरूपज्ञानादीनां गुणभेदेन भेदं च प्रतिपादयति द्वाविंशत्या । ज्ञानकर्मणोः साध्यसाधनभावमेव सर्ववेदार्थं गीतार्थं च दृढीकर्तुम्—**ज्ञानमिति** । ज्ञानमिष्टानिष्टादिरूपं द्रव्यगुणकर्मादिपदार्थजातम् । ज्ञायतेऽनेनेति ज्ञानं साधारणः सर्वपदार्थविषयको बोधः, ज्ञातव्यं द्रव्यगुणादिपदार्थजातं सर्वं ज्ञेयमित्युच्यते, परिज्ञाता ज्ञेयस्य ज्ञानस्य च ज्ञाता प्रमाता साभासो विज्ञानात्मा । इत्येवंप्रकारेण चोदना चोद्यते प्रवर्ततेऽनेनेति चोदना सामान्येन सर्वपदार्थानां हानोपादानादिक्रियाहेतुस्त्रिविधा त्रिप्रकारा प्रमाणप्रमेयप्रमातृलक्षणस्य यस्य संनिधिमात्रेण हानादिक्रिया जायते सा चोदना त्रिविधेत्यर्थः । एवं प्रवृत्तेः कारणस्य त्रैविध्यमुक्त्वा कर्माश्रयस्यापि त्रैविध्यमाह—**करणमिति** । क्रियतेऽनेनेति करणं बाह्यमाभ्यन्तरं च । श्रोत्रादिवागादिबुद्ध्यादिद्वादशविधं कर्मेप्सिततमं कर्तुराप्तिक्रियाविषयभूतं यद्वस्तु द्वितीयान्तं तत्कर्मेत्यर्थः । कर्ता करणानां प्रयोक्ता न तु स्वयं तत्प्रयोज्यः स्वतन्त्रः कर्ता विज्ञानात्मा । एवं कर्मसंग्रहः कर्म सम्यग्गृह्यतेऽस्मिन्निति कर्मसंग्रहः क्रियाश्रयः करणादिस्त्रिविधस्त्रिप्रकार इत्यर्थः । ननु संप्रदानादेः क्रियाश्रयत्वसंभवे कथं क्रियाश्रयस्य त्रैविध्यमिति चेन्न । संप्रदानादेः परंपरया विना साक्षात्क्रियाश्रयत्वासंभवात् । यथा कर्मणः साक्षात्क्रियाश्रयत्वं न तथा संप्रदानादेः संभवति ततो युक्तं क्रियाश्रयस्य त्रैविध्यमित्यर्थः ॥ १८ ॥

श्री० टी०—हत्वापि न हन्ति न निबध्यत इत्येतदेवोपपादयितुं कर्मचोदनायाः कर्माश्रयस्य च कर्मफलादीनां च त्रिगुणात्मकत्वान्निर्गुणस्यात्मनस्तत्संबन्धो नास्तीत्यभिप्रायेण कर्मचोदनां कर्माश्रयं चाह—**ज्ञानमिति** । ज्ञानमिष्टसाधनमेतदिति बोधः, ज्ञेयमिष्टसाधनं कर्म, परिज्ञाता एवंभूतज्ञानाश्रयः, एवं त्रिविधा कर्मचोदना चोद्यते प्रवर्त्यते अनयेति चोदना, ज्ञानादित्रितयं कर्मप्रवृत्तिहेतुरित्यर्थः । यद्वा चोदनेति विधिरुच्यते । तदुक्तं भट्टैः—'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति । ततश्चायमर्थः—उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्तत इति । तदुक्तम्—'त्रैगुण्यविषया वेदाः' इति । तथाच

करणं साधकतमं, कर्म च कर्तुरीप्सिततमम् । कर्ता क्रियानिर्वर्तकः । कर्म संगृह्यते अस्मिन्निति कर्मसंग्रहः करणादित्रिविधं कारकं क्रियाश्रय इत्यर्थः । संप्रदानादिकारकत्रयं तु परंपरया क्रियानिर्वर्तकमेव केवलं न तु साक्षात् क्रियाया आश्रयः । अतः करणादित्रितयमेव क्रियाश्रय इत्युक्तम् ॥ १८ ॥

**स० टी०**—क्रियाहेतुतया प्रोक्तमधिष्ठानादिपञ्चकम् ॥ कर्मासंस्पर्शिता तद्वदात्मनस्तद्विदस्तथा ॥ १ ॥ प्रोच्येदानीं तमेवार्थं ज्ञानज्ञेयादिभेदतः ॥ त्रैगुण्यभेदाद्व्याख्यातुं समुपक्रमते हरिः ॥ २ ॥ वस्तुभानक्रियाज्ञानं ज्ञेयं तस्यास्ति कर्म च ॥ तस्याश्रयः परिज्ञाता भोक्ता बुद्ध्याद्युपाधिकः ॥ ३ ॥ त्रयाणां संनिपातेन प्रारम्भः सर्वकर्मणाम् ॥ अत एतत्त्रयं प्राह सर्वकर्मप्रवर्तकम् ॥ ४ ॥ चोदनेति क्रियायाश्च प्राहुरत्र प्रवर्तकम् ॥ चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः ॥ ५ ॥ इत्येवं शाबरे भाष्ये चोदनानिर्णयः कृतः ॥ एवं च प्रेरणीयत्वं प्रेरकत्वमनात्मनः ॥ ६ ॥ नात्मनश्चेत्यभिप्रायस्त्रिविधेत्युक्तितो हरेः ॥ बाह्यं श्रोत्रादिकरणं तत्साधकतमं स्मृतम् ॥ ७ ॥ अन्तःस्थं तच्च बुद्ध्यादिकरणं द्विविधं स्मृतम् ॥ क्रियया व्याप्यमानं यत्कर्तुरत्यन्तमीप्सितम् ॥ ८ ॥ तत्कर्मात्रोच्यते तच्चोत्पाद्याप्यादि चतुर्विधम् ॥ स्वतन्त्रः कारकैरन्यैरप्रयोज्यः स्वयं हि यः ॥ ९ ॥ समस्तकारकाणां च कर्ता स स्यात्प्रयोजकः ॥ निर्वर्तकः क्रियायाश्च चिदचिद्ग्रन्थिरूपधृक् ॥ १० ॥ कर्म संगृह्यते चास्मिन्समवैतीति संग्रहः ॥ कर्माश्रयोऽस्ति त्रिविधश्चार्थादिति प्रयोगतः ॥ ११ ॥ संप्रदानमपादानमाधारश्च त्रयं त्रिषु ॥ अन्तर्भूतमनेनोक्तं कारकषट्कगा क्रिया ॥ १२ ॥ न त्वात्मानि क्रियातीते स कूटस्थो यतस्त्विति ॥ कर्माश्रयस्य कर्मानुप्रेरकस्य च सर्वतः ॥ १३ ॥ कारकात्मतया तद्वत्त्रैगुण्यात्मतया तथा ॥ अकारकस्वभावोऽयं गुणातीतोऽक्रियोऽचलः ॥ १४ ॥ सर्वकर्माद्यसंस्पर्शीत्यभिप्रायो हरेर्विभोः ॥ १५ ॥ १८ ॥

**भा० टी०**—आत्मनः कर्तृत्वं फलसंबन्धित्वं च नास्तीत्युक्तं तदेवोपपादयितुं कर्मणां प्रवर्तकमाह—**ज्ञानमिति** । ज्ञायतेऽनेनेति करणव्युत्पत्त्याऽविशेषेण सर्वविषयं ज्ञानमात्रमुच्यते । तथा ज्ञेयमपि सामान्येनैव ज्ञातव्यं सर्वमुच्यते । तथा परिज्ञाताऽविद्याकल्पितोपाधिप्रधानो भोक्तेत्येवं त्रिविधा कर्मचोदना कर्मणां प्रवर्तकं त्रिविधमित्यर्थः । करणं क्रियतेऽनेनेति बाह्यं श्रोत्राद्याभ्यन्तरं बुद्ध्यादि, कर्मेप्सिततमं कर्तुः क्रियया व्याप्यमानम् । कर्ता स्वतन्त्रः, स्वातन्त्र्यं च कारकाप्रयोज्यस्य तत्प्रयोक्तृत्वम् । अविद्याकल्पितोपाधिप्रधानो व्यापारयिता—इति त्रिविधः कर्मसंग्रहः संगृह्यतेऽस्मिन्निति संग्रहः कर्मणस्त्रिषु समवेतत्वात् । अयं त्रिविधः कर्मसंग्रहः । ज्ञानादीनां हि त्रयाणां संनिपाते हानोपादानोपेक्षाप्रयोजनः सर्वकर्मारम्भो भवतीति ज्ञानादिरूपा त्रिविधा कर्मचोदनोच्यते । ततश्च पञ्चभिरधिष्ठानादिभिरारब्धं वाङ्मनःकायाश्रयभेदेन त्रिधा राशीभूतं त्रिषु करणादिषु संगृह्यत इति करणादिरूपस्त्रिविधः कर्मसंग्रह उच्यते इति भावः । अत्र भाष्यस्यास्य सामान्यरूपत्वात् तदविरोधेन व्याख्यानान्तराण्यपि निर्दुष्टान्युपादेयानि ॥ १८ ॥

**प० टी०**—'ब्रह्मण्याधाय कर्माणि सङ्गं त्यक्त्वा करोति यः' इत्यादि पूर्वोक्तमस्ति, तदेवोपपादयितुं कर्मचोदनायाः कर्माश्रयस्य च कर्मफलानां त्रिगुणात्मकत्वान्निर्गुणस्यात्मनस्तत्संबन्धो नास्तीत्यभिप्रेत्याह—**ज्ञानमिति** । ज्ञानमिष्टसाधनमिति बोधः, ज्ञेयमिष्टसाधनं कर्म, परिज्ञाता एवंभूतज्ञानाश्रयः, । एवं त्रिविधा कर्मचोदना चोद्यते प्रवर्त्यतेऽनयेति चोदना ज्ञानादित्रयं कर्मप्रवृत्तिहेतुरित्यर्थः । यद्वा चोदनोपदेशः । तदुक्तम्—'चोदना चोपदेशश्च विधिश्चैकार्थवाचिनः' इति । ततश्चायमर्थः—उक्तलक्षणं त्रिगुणात्मकं ज्ञानादित्रयमवलम्ब्य कर्मविधिः प्रवर्तत इति ज्ञानं करणं साधकतमं कर्म च कर्तुरभीप्सिततमम् । कर्ता च क्रियानिर्वर्तकः । कर्म संगृह्यतेऽस्मिन्निति कर्मसंग्रहः ॥ १८ ॥

रा० टी०—ननु जीवस्य स्वतः कर्तृत्वाभावे यजेतेत्यादिविधीनां वैयर्थ्यं स्यात् जडेश्वरमुक्तानां तद्विषयत्वादित्यत आह—ज्ञानमिति । विधिश्चोदना प्रेरणेति पर्यायः । कर्मचोदना यजेतेत्यादि कर्मसु प्रेरणा । ज्ञानं ज्ञेयं परिज्ञातेतीतिशब्दो योज्यः । त्रिविधा ज्ञानादिरूपेण त्रिविधा । ज्ञानं विधिविषयं ज्ञेयं चेष्टाप्रयत्नरूपप्रवृत्तिलक्षणमधिष्ठानादिलक्षणं पुरुषार्थलक्षणं च । परिज्ञाता तु सर्वज्ञसर्वप्रेरकेश्वरसंनिहितो जीवराशिः । तत्रितयनिमित्तं कर्म चोदना प्रवर्तत इति । 'दधित्रपुसं प्रत्यक्षो ज्वरः' इत्यादाविव निमित्तनिमित्तिनोरभेदोपचारेण निमित्तत्रैविध्येन नैमित्तिकचोदनापि त्रिविधेत्युपचर्यते । यजेतेत्यादिश्रौतस्मार्तविधौ सति स्वप्रवृत्तिविषयप्रेरणाज्ञानं भवति । ततश्चेच्छाप्रयत्नरूपप्रवृत्तिरात्मसंनिहितेश्वरप्रेरणया पुमर्थमुद्दिश्य कर्माणि जीवस्य भवति । इति विधिज्ञानादेः कर्मचोदनायाश्च निमित्तनिमित्तिभावो ध्येयः । न च स्वतः कर्तृत्वाभावात्पराधीनकर्तृजीवस्य विधिज्ञानद्वारा कथं प्रवृत्त्याद्यर्थं विधिविषयत्वमिति शङ्क्यम् । अपराधीनकर्तृत्वस्य विधिविषयतायां प्रयोजकत्वेन क्वाप्यनुपलम्भेनान्वयव्यतिरेकाभ्यां पराधीनकर्तृशक्तिकस्यैव विधिविषयत्वावश्यंभावात् । जडेश्वरमुक्तानां विध्यविषयत्वेन प्रमाणभूतविधेर्वैयर्थ्यायोगाच्च । पराधीनकर्तुरेव परिशेषप्रमाणेऽपि विधिविषयत्वस्यावश्यकत्वाच्च । तस्माज्जीवे विध्यविषयेभ्यो जडेश्वरमुक्तेभ्यो व्यावृत्तस्य स्वसंबन्धितया विधिज्ञानस्य तज्जन्यायाः फलतत्साधनेच्छायाः साधनविषयकृतेश्चानुभवसिद्धत्वात् । तस्य च ज्ञानादेः न ऋते त्वदित्यादिश्रुतिभिरीश्वराधीनत्वेऽप्यस्वतन्त्रकर्तृत्वमात्रेण विधिविषयत्वं कर्मफलभाक्त्वं च युक्तम् । तदुक्तं गीताभाष्ये—अकर्तृत्वेऽपि विधिद्वारा ईश्वरप्रसादादिच्छोत्पत्त्योक्तकारणैः कर्मद्वारा पुरुषार्थो भवतीति न प्रवृत्तिविधिवैयर्थ्यमिति । यद्वा दैवं चैवेति पूर्वत्र दैवपदेनेश्वरस्य कर्मसु प्रेरकत्वमुक्तं, तत्प्रेरणास्वरूपमुच्यते—ज्ञानमिति । कर्मचोदना कर्मसु जीवानामीश्वरप्रेरणा ज्ञानं ज्ञेयं परिज्ञातेति त्रिविधा । ज्ञानज्ञेयपरिज्ञातृरूपत्रिविधभगवत्स्वरूपेत्यर्थः । विशेषबलाद्धर्मधर्मिभावः । तस्येयं प्रेरणेत्याद्युक्तिश्च युक्तेति भावः । पूर्वोक्तपञ्चकर्मकारणानि संक्षिप्याह—करणमिति । करणम् इन्द्रियस्रुक्स्रुवादि । अधिष्ठानपदोक्तदेहादिकमदृष्टं च । कर्म हस्तादिचेष्टा कर्तृपदेन जीवेश्वरावुभावपि ग्राह्याविति त्रिविधः कर्मसंग्रहः कर्मकरणसंग्रहः पञ्चकारणानां संक्षेप इति ॥ १८ ॥

**ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः ॥**
**प्रोच्यते गुणसंख्याने यथावच्छृणु तान्यपि ॥ १९ ॥**

त० टी०—अथोपादेयसात्त्विकज्ञानकर्मकर्तृस्वरूपज्ञापनाय तेषां सात्त्विकादिभेदं वक्तुं प्रतिजानीते—ज्ञानमिति । ज्ञायतेऽनेनेति ज्ञानं सर्वकर्मविषयं, कर्म कर्त्रानुष्ठेयं, कर्ता तस्यानुष्ठाता, करणाद्यन्यत्कारकमत्रैवान्तर्भूतमिति सत्त्वादिगुण (भेद) तस्त्रिधैव प्रोच्यते । क्व ? गुणसंख्याने—गुणाः सत्त्वादयः सम्यक् ख्यायन्ते स्वरूपतः कार्यतश्च यस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं, तस्मिन् तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावच्छृणु अवधारय ॥ १९ ॥

म० टी०—इदानीं ज्ञानज्ञेयज्ञातृरूपस्य करणकर्मकर्तृरूपस्य च त्रिकद्वयस्य त्रिगुणात्मकत्वं वक्तव्यमिति तदुभयं संक्षिप्य त्रिगुणात्मकत्वं प्रतिजानीते—ज्ञानमिति । ज्ञानं प्राग्व्याख्यातम् । ज्ञेयमप्यत्रैवान्तर्भूतं ज्ञानोपाधिकत्वाज्ज्ञेयत्वस्य । कर्म क्रिया त्रिविधः कर्मसंग्रह इत्यत्रोक्ता । चकारात् करणकर्मकारकयोरत्रैवान्तर्भावः क्रियोपाधिकत्वात् कारकत्वस्य । कर्ता क्रियायाः निर्वर्तकः । चकारात् ज्ञाता च । कर्तुः क्रियोपाधिकत्वेऽपि पृथक् त्रैगुण्यकथनं कुतार्किकभ्रमकल्पितात्मत्वनिवारणार्थम् । ते हि कर्तैवात्मेति मन्यन्ते । गुणाः सत्त्वरजस्तमांसि सम्यक् कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं कापिलम् तस्मिन्, ज्ञानं क्रिया च कर्ता

च गुणभेदतः सत्त्वरजस्तमोभेदेन त्रिधैव प्रोच्यते । एवकारो विधान्तरनिवारणार्थः । यद्यपि कापिलं शास्त्रं परमार्थब्रह्मैकत्वविषये न प्रमाणं, तथाप्यपरमार्थगुणगौणभेदनिरूपणे व्यावहारिकं प्रामाण्यं भजत इति वक्ष्यमाणार्थस्तुत्यर्थं गुणसंख्याने प्रोच्यत इत्युक्तम् । तन्त्रान्तरेऽपि प्रसिद्धमिदं न केवलमस्मिन्नेव तन्त्र इति स्तुतिः । यथावत् यथाशास्त्रं शृणु श्रोतुं सावधानो भव तानि ज्ञानादीनि । अपिशब्दात्तद्भेदजातानि च गुणभेदकृतानि । अत्र चैवमपौनरुक्त्यं द्रष्टव्यं चतुर्दशेऽध्याये तत्र सत्त्वं निर्मलत्वादित्यादिना गुणानां बन्धहेतुत्वप्रकारो निरूपितो गुणातीतस्य जीवन्मुक्तत्वनिरूपणाय । सप्तदशे पुनः "यजन्ते सात्त्विका देवान्" इत्यादिना गुणकृतत्रिविधस्वभावनिरूपणेनाऽऽसुरं रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादिसेवया दैवः सात्त्विकः स्वभावः संपादनीय इत्युक्तम् । इह तु स्वभावतो गुणातीतस्यात्मनः क्रियाकारकफलसंबन्धो नास्तीति दर्शयितुं तेषां सर्वेषां त्रिगुणात्मकत्वमेव न रूपान्तरमस्ति येनात्मसंबन्धिता स्यादित्युच्यते इति विशेषः ॥ १९ ॥

**शं० टी०**—यद्विवक्षितं सत्त्वादिगुणभेदेन ज्ञानादीनां त्रैविध्यं तदेव विशदयति—**ज्ञानमिति** । गुणसंख्याने गुणाः सत्त्वादयस्तत्कार्याणि च सम्यक्ख्यायन्ते प्रतिपाद्यन्ते यत्र तद्गुणसंख्यानं सांख्यशास्त्रं तस्मिन्गुणसंख्याने कापिले शास्त्रे । ज्ञानमुक्तलक्षणं पदार्थबोधः, कर्म च श्रौतस्मार्तादिलक्षणं, कर्ता कर्मनिर्वर्तकश्चेत्येतत्त्रयं गुणभेदतः सत्त्वादिगुणभेदेन त्रिधैव त्रिविधमेव भवति । ज्ञानादीनां सत्त्वादिगुणकृतत्रैविध्यव्यतिरेकेण विधान्तराभावनिर्धारणार्थ एवकारः । चकारौ समुच्चयार्थौ । घटः पट इत्यादिज्ञानस्य तामसज्ञान एवान्तर्भावात् । ज्ञायतेऽनेनेति ज्ञानं साधारणं सत्त्वादिगुणभेदात्सात्त्विकं राजसं तामसमिति त्रिधैव भवति । तथैव कर्मापि कर्तापि त्रिधैव भवतीति कापिलादिभिः प्रोच्यत इत्यर्थः । यथावद्यथाशास्त्रं सांख्यशास्त्रे यथा प्रोक्तं तथा गुणभेदेन भिन्नानि ज्ञानादीन्यपि मया च वक्ष्यमाणानि शृणु, श्रुत्वा सारग्रहणेऽतितत्परो भवेत्यर्थः ॥ १९ ॥

**श्री० टी०**—ततः किमत आह—**ज्ञानमिति** । गुणाः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन्, ज्ञानं च कर्म च क्रिया कर्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते । तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावच्छृणु । त्रिधैवेत्येवकारो गुणत्रयोपाध्यतिरेकेणात्मनः स्वतःकर्मादिप्रतिषेधार्थः । चतुर्दशेऽध्याये तत्र सत्त्वं निर्मलत्वादित्यादिना गुणानां बन्धकत्वप्रकारो निरूपितः । सप्तदशेऽध्याये यजन्ते सात्त्विका देवानित्यादिना गुणकृतत्रिविधस्वभावनिरूपणेन रजस्तमःस्वभावं परित्यज्य सात्त्विकाहारादिसेवया सात्त्विकः स्वभावः संपादनीय इत्युक्तम् । इह तु क्रियाकारकफलादीनामात्मसंबन्धो नास्तीति दर्शयितुं सर्वेषां त्रिगुणात्मकत्वमुच्यत इति विशेषो ज्ञातव्यः ॥ १९ ॥

**स० टी०**—ज्ञानादिकत्रिकस्याथ करणादित्रिकस्य च ॥ वक्तव्यं त्रिगुणात्मत्वमित्युपक्रमते हरिः ॥ १ ॥ ज्ञानं प्रागेव व्याख्यातं ज्ञेयमन्तर्गतं त्विह ॥ ज्ञानोपाधिकता यस्माज्ज्ञेयत्वस्य ततस्तथा ॥ २ ॥ कर्मशब्दात्क्रिया ग्राह्या चकारादुभयोरपि ॥ अन्तर्भावः क्रियायां स्यात्करणस्य च कर्मणः ॥ ३ ॥ क्रियोपाधिकता यस्मात्कारकत्वस्य सर्वथा ॥ निर्वर्तकक्रियायाश्च कर्ता ज्ञाता च चात्तथा ॥ ४ ॥ गुणाः सत्त्वादयः सम्यक् ख्यायन्तेऽस्मिन् हि कापिले ॥ शास्त्रे त्रिधैव भेदेन सत्त्वादेः प्रोच्यते यतः ॥ ५ ॥ यथाशास्त्रं शृणु श्रोतुं सावधानो भवेति च ॥ यद्यपि कापिलं शास्त्रं ब्रह्मैकत्वनिरूपणे ॥ ६ ॥ अप्रमाणं तथाप्यत्र गुणगौणनिरूपणे ॥ व्यावहारिकप्रामाण्यं भजते चेत्यदोषकृत् ॥ ७ ॥ १९ ॥

**भा० टी०**—क्रियाकारकफलानामात्मसंबन्धो नास्ति इति दर्शयितुं तेषां सर्वेषां त्रिगुणात्मकत्वात् सत्त्वरजस्तमोगुणभेदेन त्रैविध्यप्रतिपादनमारभ्यते—**ज्ञानमिति** । कर्मशब्देन क्रिया ग्राह्या वक्ष्यमाणानुरोधात् । ननु कर्तुरीप्सिततमं कर्मेति पारिभाषिकं कर्मकारकं, कर्ता च क्रियाणां निर्वर्तकः, गुणभेदतः सत्त्वादिगुणि-

भेदेन त्रिधैव गुणसंख्याने प्रोच्यते। अवधारणं गुणव्यतिरेकेण विविधान्तरं ज्ञानादिषु नास्तीति निर्धारणार्थम्। गुणाः सत्त्वादयः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्तेऽस्मिन्निति गुणसंख्यानं कापिलशास्त्रं यद्यपि परमार्थब्रह्मैकत्वविषये विरुध्यते, तथापि तेषां कापिलानां गुणगौणव्यापारनिरूपणेऽभियुक्तत्वात् तच्छास्त्रमपि वक्ष्यमाणस्तुत्यर्थत्वेनोपादीयते। वक्ष्यमाणार्थस्य तन्त्रान्तरेऽपि प्रसिद्धिकथनं स्तुतिः। तानि ज्ञानादीनि अपिशब्दात्तद्भेदजातानि च गुणभेदकृतानि शृणु वक्ष्यमाणेऽर्थे मनःसमाधानं कुर्वित्यर्थः॥ १९॥

प० टी०—ततः किमत आह—ज्ञानमिति। गुणाः सम्यक्कार्यभेदेन ख्यायन्ते प्रतिपाद्यन्ते यस्मिन्निति गुणसंख्यानं सांख्यशास्त्रं तस्मिन्, ज्ञानं च कर्म च कर्ता च प्रत्येकं सत्त्वादिगुणभेदेन त्रिधैवोच्यते। तान्यपि ज्ञानादीनि वक्ष्यमाणानि यथावच्छृणु। त्रिधैवेत्येवकारेण गुणत्रयोपाधिव्यतिरेकेणात्मनः स्वतः कर्मादिप्रतिषेधार्थम्॥ १९॥

रा० टी०—सात्त्विकज्ञानकर्मादेः मुक्तिहेतुत्वात्तदनुष्ठानाय सत्त्वादिगुणनिमित्ताञ्ज्ञानादिभेदान्प्रतिज्ञापूर्वमाह—ज्ञानमिति। सत्त्वादिगुणभेदतः ज्ञानादिकं प्रत्येकं त्रिविधम्। गुणसंख्याने गुणाः संख्यायन्ते यत्र तस्मिन्वैदिकसांख्यशास्त्रे प्रोच्यते। तान्यपि यथावद्यथास्थितं शृणु॥ १९॥

**सर्वभूतेषु येनैकं भावमव्ययमीक्षते॥**
**अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्॥ २०॥**

त० टी०—तत्र ज्ञानस्य सत्त्वादिगुणतस्त्रैविध्यमाह—सर्वभूतेष्विति त्रिभिः। सर्वभूतेषु देवमनुष्यपश्वादिषु जातिस्वभावतो विभक्तेषु परस्परं व्यावृत्तेषु एकं ज्ञानैकस्वरूपत्वेन विशेषवर्जितं भावमात्मवस्तु अविभक्तं देवमनुष्यादिवर्णाश्रमादिविभागरहितमव्ययं व्ययशीलेषु शरीरेषु व्ययरहितं परिणामशून्यं कूटस्थमित्यर्थः, अन्तर्यामिणं भगवन्तं वा कर्मानुष्ठानवेलायां येन ज्ञानेन पश्यति तज्ज्ञानं सात्त्विकं विद्धि॥ २०॥

म० टी०—एवं ज्ञानस्य कर्मणः कर्तुश्च प्रत्येकं त्रैविध्ये ज्ञातव्यत्वेन प्रतिज्ञाते प्रथमं ज्ञानत्रैविध्यं निरूपयति त्रिभिः श्लोकैः। तत्राद्वैतवादिनां सात्त्विकं ज्ञानमाह—सर्वेष्विति। सर्वेषु भूतेषु अव्याकृतहिरण्यगर्भविराट्संज्ञेषु बीजसूक्ष्मस्थूलरूपेषु समष्टिव्यष्ट्यात्मकेषु। सर्वेष्वित्यनेनैव निर्वाहे भूतेष्वित्यनेन भवनधर्मकत्वमुच्यते। तेनोत्पत्तिविनाशशीलेषु दृश्यवर्गेषु, विभक्तेषु परस्परव्यावृत्तेषु नानारसेषु अव्ययमुत्पत्तिविनाशादिसर्वविक्रियाशून्यमदृश्यमविभक्तमव्यावृत्तं सर्वत्रानुस्यूतमधिष्ठानतया बाधावधितया च एकमद्वितीयं भावं परमार्थसत्तारूपं स्वप्रकाशानन्दमात्मानं येनान्तःकरणपरिणामभेदेन वेदान्तवाक्यविचारपरिनिष्पन्नेनेक्षते साक्षात्करोति तन्मिथ्याप्रपञ्चबाधकमद्वैतात्मदर्शनं सात्त्विकं सर्वसंसारोच्छित्तिकारणं ज्ञानं विद्धि। द्वैतदर्शनं तु राजसं तामसं च संसारकारणं न सात्त्विकमित्यभिप्रायः॥ २०॥

शं० टी०—तत्र ज्ञानस्य त्रैविध्यं प्रतिपादयन्नादौ बहुजन्मभिः सत्त्ववृत्त्या सर्वकर्मफलपरित्यागपूर्वकमीश्वरार्पणबुद्ध्या समनुष्ठितसात्त्विककर्मसमुत्पादितं यच्छुद्धसत्त्वं सकृच्छ्रवणमात्रेण तत्त्वावधारणशक्तं तस्मादुत्पन्नस्यात्मैकत्वदर्शनलक्षणस्य सात्त्विकज्ञानस्य लक्षणमाह—सर्वभूतेष्विति। विभक्तेषु नामरूपजातिगुणक्रियाविशेषैराविद्यकैः परस्परभिन्नेषु सर्वभूतेषु सर्वेष्वव्यक्तादिस्थूलान्तेषु भूतेषु शरीरेषु स्थावरेषु जङ्गमेषु च सर्वत्र घटमठादिष्वाकाशवदविभक्तं निरवयवत्वान्निर्विशेषत्वाच्च विभागवर्जितमखण्डात्मना सर्वतः परिपूर्णमत एकमेकरूपं तदीयधर्मकर्मादिभिरस्पृष्टमत्यन्तविशुद्धं चिदेकरसमव्ययं भूतेषु नश्यत्सु सत्सु स्वयमविनश्यन्तं भूतानामाविर्भावतिरोभावागमनिर्गमादिषु स्वयमाविर्भावतिरोभावागमनिर्गमादिधर्मनिर्मुक्तमविक्रियात्मनैकरूपेण सर्वदा तिष्ठन्तं नित्यं शाश्वतमित्यर्थः। एवंलक्षणं भावं—नामरूपादिकं सर्वं भाव्यते यत्र येन

वा स भावः प्रत्यगात्मा तं सच्चिदानन्दैकरसमात्मानं स्वं येन शुद्धसत्त्वसंभावितेन "दिव्यो ह्यमूर्तः पुरुषः" इति, "अशरीरं शरीरेषु" इत्यादिश्रुतिवाक्यार्थश्रवणमात्रात्समुत्पन्नेन ज्ञानेनाखण्डाकारवृत्त्या कृतबुद्धिर्विद्वानीक्षते पश्यति सर्वमिदमहं च ब्रह्मैवेति, स्वं च सर्वं च ब्रह्मैवेति पश्यति तज्ज्ञानमद्वैतात्मविषयकं द्वैतभ्रमविध्वंसकं सात्त्विकं बहुजन्मार्जितपुण्यपुञ्जपरिपाकसमुदितशुद्धसत्त्वसमुत्पन्नत्वात्सात्त्विकं विद्धि । तदेव विदेहमुक्तिकारणमिति विजानीहीत्यर्थः ॥ २० ॥

**श्री० टी०**—तत्र ज्ञानस्य सात्त्विकादित्रैविध्यमाह—**सर्वभूतेष्विति** त्रिभिः । सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु परस्परं व्यावृत्तेषु अविभक्तमनुस्यूतमेकमव्ययं निर्विकारं भावं परमात्मतत्त्वं येन ज्ञानेनेक्षते आलोचयति तज्ज्ञानं सात्त्विकं विद्धि ॥ २० ॥

**स० टी०**—हेयोपादेयरूपेण पुराध्यायत्रये गुणाः ॥ निरूपिता इहेदानीमात्मनस्तैरसङ्गिनः ॥ १ ॥ गुणातीतस्य संबन्धः स्वाभाव्यान्नास्ति कारकैः ॥ इति तेषां गुणात्मत्वं पुनरत्र निरूप्यते ॥ २ ॥ ज्ञानत्रैविध्यमेवादौ त्रिभिः श्लोकैरिहोच्यते ॥ अद्वैतवादिनां ज्ञानं सात्त्विकं हरिणेर्यते ॥ ३ ॥ आब्रह्मस्थावरान्तेषु सर्वभूतेष्वनेकधा ॥ दृश्यवर्गेषु चान्योन्यव्यावृत्तेषु विनाशिषु ॥ ४ ॥ जन्मादिविक्रियाशून्यमव्यावृत्तमदृश्यकम् ॥ अधिष्ठानतया बाधावधिमात्मानमक्षरम् ॥ ५ ॥ स्वप्रकाशं परानन्दं येन ज्ञानेन पश्यति ॥ तन्मिथ्यादृश्यबाधेन चिदद्वैतात्मदर्शनम् ॥ ६ ॥ सात्त्विकं सर्वसंसारोच्छित्तिहेतुमवेहि भोः ॥ राजसं तामसं द्वैतदर्शनं बन्धकारणम् ॥ ७ ॥ हेयं ग्राह्यं तु सत्त्वोत्थं ज्ञानं मोक्षैकसाधनम् ॥८ ॥२०॥

**भा० टी०**—तत्र ज्ञानस्य त्रैविध्यं विभजन्नादौ तस्य सात्त्विकत्वमाह—**सर्वभूतेष्विति** । सर्वभूतेष्वव्यक्तादिस्थावरान्तेषु विभक्तेषु देहादिभेदेन विभागवत्सु एकमद्वितीयं, भावं परमार्थवस्तु सच्चिदानन्दरूपम्, अव्ययं स्वात्मना धर्मेण वा न व्येतीत्यव्ययं, कूटस्थं नित्यम्, विभक्तं अप्रतिदेहं विभागशून्यं व्योमवन्निरन्तरं, येन ज्ञानेनोपनिषत्सिद्धान्तजन्येनाद्वैतवादी पश्यति तदद्वैतात्मदर्शनं सम्यक् ज्ञानं सात्त्विकं विद्धि विजानीहि ॥ २० ॥

**प० टी०**—अथ सात्त्विकं ज्ञानमाह—**सर्वभूतेष्विति** । सर्वेषु भूतेषु ब्रह्मादिस्थावरान्तेषु विभक्तेषु नामरूपकर्मभिः परस्परं व्यावृत्तेष्वविभक्तमनुस्यूतं घटपटादिष्वाकाशमिवैकमद्वितीयमव्ययं निर्विकारं भावं सद्रूपं परमात्मतत्त्वं येनेक्षत आलोचयति तज्ज्ञानं सात्त्विकं विद्धि । सात्त्विकादिसंपादनमाहारादिकं पूर्वं प्रोक्तमेव । श्रुतिरपि शातपथी—"यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्" इति । भाष्यम्—"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मा मात्रासंसर्गस्त्वस्य भवति"इति पूर्वश्रुत्यात्मनोऽविनाशित्वं, वृत्तीनां च तदाश्रयवर्तित्वमुक्तं तदेव द्रढयति । एतमात्मानं यद्वा प्रकारान्तरेणेन्द्रियादिना न पश्यति, किं त्वात्मनैवात्मानं पश्यति । अथ तथात्वेनात्मानं पश्यन्नप्येतत्पुरोवर्तिपदार्थवद्दृष्टव्यमित्याकारेण न पश्यति, हि यस्मात्कारणादात्मद्रष्टुः पुरुषस्य दृष्टेर्विपरिलोपो न विद्यते । कुतः ? अविनाशित्वाद् । एकपदार्थज्ञाने नष्टे सति पदार्थान्तरज्ञानं भवति । प्रकृते द्वितीयस्याभावाद्दृष्टेर्विपरिलोपो विपर्यासो न संभवति । यतस्तद्द्वितीयं तस्माद्द्वितीयं—तद्द्वितीयं नास्ति । यत्—तदात्मनः सकाशाद्विभक्तं यत्पश्येत्तस्मादात्मातिरिक्तं न किमपि पश्येदित्यर्थः ॥ २० ॥

**रा० टी०**—प्रतिज्ञातं ज्ञानत्रैविध्यं तावदाह—**सर्वेत्यादित्रयेण** । विभक्तेषु परस्परं भिन्नेषु तारतम्योपेतेषु च सर्वभूतेषु भवन्ति विद्यन्त इति भूतानि जीवाः प्रकृत्यादिजडानि च । सर्वेषु जीवेषु जडेषु च तदाधारकत्वेन तेभ्यो भिन्नत्वेनेति सप्तम्यभिप्रायः । भावं सदा विद्यमानं विष्णुमेकं प्रधानं सर्वोत्तममिति

यावत् । अविभक्तं सर्वत्र स्थितावपि अधिष्ठानभेदनिमित्तभेदहीनम् । "न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि" इतिसूत्रोक्तदिशा सर्वत्र निर्दोषाशेषसद्गुणतया ऐक्येन स्थितामिति यावत् । अव्ययं स्वतोऽधिष्ठानव्ययेन च व्ययहीनम् । येन ज्ञानेनेक्षते विषयीकरोति तज्ज्ञानं सात्त्विकं विद्धि जानीहीति ॥ २० ॥

**पृथक्त्वेन तु यज्ज्ञानं नानाभावान् पृथग्विधान् ॥**
**वेत्ति सर्वेषु भूतेषु तज्ज्ञानं विद्धि राजसम् ॥ २१ ॥**

**त० टी०**–राजसं ज्ञानमाह–पृथक्त्वेनेति । तुशब्दः पूर्वोक्तान्निकृष्टत्वद्योतनार्थः । पृथक्त्वेन दृश्यमानेषु ब्राह्मणादिषूत्तमाधमतया प्रतीयमानेषु भूतेषु नानाभावाज्जीवात्मनः पृथग्विधान् तत्तद्देहयोगादुत्तमाधमान् सुखिदुःखिनः यज्ज्ञानं वेत्ति येन ज्ञानेन पुरुषो जानाति तज्ज्ञानं राजसं विद्धि॥२१॥

**म० टी०**–पृथगिति । तुशब्दः प्रागुक्तसात्त्विकव्यतिरेकप्रदर्शनार्थः । पृथक्त्वेन भेदेन स्थितेषु सर्वभूतेषु देहादिषु नानाभावान् प्रतिदेहमन्यानात्मनः पृथग्विधान् सुखदुःखित्वादिरूपेण परस्परविलक्षणान् येन ज्ञानेन वेत्तीति वक्तव्ये यज्ज्ञानं वेत्तीति करणे कर्तृत्वोपचारादेधांसि पचन्तीतिवत् कर्तुरहंकारस्य तद्वृत्त्यभेदाद्वा, तज्ज्ञानं विद्धि राजसमिति पुनर्ज्ञानपदमात्मभेदज्ञानमनात्मभेदज्ञानं च परामृशति । तेनात्मनां परस्परं भेदस्तेषामीश्वराद्भेदस्तेभ्य ईश्वरादन्योन्यतश्चाचेतनवर्गस्य भेद इत्यनौपाधिकभेदपञ्चकज्ञानं कुतार्किकाणां राजसमेवेत्यभिप्रायः ॥ २१ ॥

**शं० टी०**–येनात्मनामनेकत्वं पश्यति तद्राजसमित्याह–पृथक्त्वेनेति । तुशब्दः पूर्वस्मादस्य वैलक्षण्यबोधनार्थः । नानाविधमलिनवासनया विशिष्टः पुरुषः सर्वेषु भूतेषु देवर्षिमनुष्यादिशरीरेषु पृथक्त्वेन प्रतिशरीरं भिन्नत्वेन स्वभावत एव नानाभावाननेकान् क्षेत्रज्ञान् पृथग्विधान् सुखदुःखादिभेदेन परस्परविलक्षणान् । अत्र ज्ञानस्य करणत्वमेव न तु कर्तृत्वं संभवति । ततः यद्येन ज्ञानेन वेत्ति पश्यति घटमठादिषु स्थितानामाकाशानामनेकत्वं तदीयवक्रत्वादिधर्मैर्वक्रत्वादिमत्त्वं यथा पश्यति तथा देवमनुष्यादिशरीरेषु स्वत एव जीवात्मनामनेकत्वं जन्ममरणादिविकारविशिष्टत्वं सुखादिभाक्त्वं च येन विजानाति तज्ज्ञानमयथाग्राहकत्वाद्राजसम् । यज्ञदानादिकर्मसंभावितरजोदोषविशिष्टान्तःकरणवृत्तित्वाच्च राजसं बन्धस्यैव कारणं न तु मुक्तेरित्यर्थः ॥ २१ ॥

**श्री० टी०**–राजसं ज्ञानमाह–पृथक्त्वेनेति । पृथक्त्वेन तु यज्ज्ञानं इत्यस्यैव विवरणं सर्वेषु भूतेषु देहेषु नानाभावान्वस्तुत एवानेकान् क्षेत्रज्ञान् पृथग्विधान् सुखी दुःखीत्यादिरूपेण विलक्षणान्येन ज्ञानेन वेत्ति तज्ज्ञानं राजसं विद्धि ॥ २१ ॥

**स० टी०**–तुशब्दः सात्त्विकज्ञानाद्भिन्नत्तीदं हि राजसम् ॥ भेदेन सर्वभूतेषु स्थितेषु देहनामसु ॥ १ ॥ प्रतिदेहं विभिन्नांश्च प्रत्यगात्मान आन्तरान् ॥ सुखित्वादिकरूपेण परस्परविलक्षणान् ॥ २ ॥ येन ज्ञानेन जानाति तज्ज्ञानं विद्धि राजसम् ॥ ज्ञानं वेत्तीति करणे कर्तृत्वं ह्यौपचारिकम् ॥ ३ ॥ यथैधांसि पचन्तीति प्रयोगोऽस्ति तथैव तत् ॥ अन्योन्यमात्मनां भेदस्तेषां भेदस्तथेश्वरात् ॥ ४ ॥ भेदोऽचेतनवर्गस्य तेभ्य ईशात्तथा मिथः ॥ इत्यनौपाधिको भेदस्तार्किकाणां च पञ्चधा ॥ ५ ॥ संमतो राजसत्वेन तज्ज्ञानं हेयमेव हि ॥ ६ ॥ २१ ॥

**भा० टी०**–एवमद्वैतवादिनां सात्त्विकमुपादेयमुक्त्वा तार्किकाणां तद्राजसं हेयमाह–पृथक्त्वेनेति । तुशब्दः संसारोच्छित्तिहेतुभूतात्पूर्वोक्तात्सात्त्विकात् ज्ञानात् तदुच्छित्त्यहेतुभूतस्य प्रत्युत तत्कारणस्य वैलक्षण्यद्योतनार्थः । पृथक्त्वेन प्रतिशरीरमन्यत्वेन हेतुना पृथग्विधान् भिन्नलक्षणान् नानाभावान्

भिन्नात्मनः सर्वेषु भूतेषु यज्ज्ञानं वेत्ति जानाति। ज्ञानस्य कर्तृत्वासंभवात् येन ज्ञानेन वेत्तीत्यर्थः। एधांसि पचन्तीतिवत् करणे कर्तृत्वोपचारादेवं प्रयोगः। तज्ज्ञानं राजसं रजोनिर्वृत्तं विद्धि। यत्पृथक्त्वेन स्थितेषु भूतेष्विति तु दूरान्वयदोषेणाध्याहारदोषेण च ग्रस्तत्वादाचार्यैरुपेक्षितम् ॥ २१ ॥

पू० टी०—राजसमाह—पृथक्त्वेनेति। सर्वेषु भूतेषु देहेषु नानाभावान् क्षेत्रज्ञानहं सुख्यहं दुःखीत्यादिप्रतीत्या वस्तुत एव पृथग्विधान् येन ज्ञानेन वेत्ति तद्राजसज्ञानं विद्धि ॥ २१ ॥

रा० टी०—पृथगिति। यज्ज्ञानं सर्वभूतेषु पृथक्त्वेन वेत्ति सर्वजीवजडानि अन्तर्भेदयुतत्वेन विषयीकरोति इत्यस्यैव व्याख्या—नानेत्यादि। नानाभावान्नानाप्रकारभूतजीवजडरूपपदार्थान्पृथग्विधान्परस्परं भिन्नान्नीचोच्चतया स्थितांश्च वेत्ति विषयीकरोति। विष्णोरन्यत्र यथार्थमिति यावत्। उपलक्षणमेतत्। संदिग्धतया भगवत्स्वरूपविषयकं चातज्ज्ञानं राजसमित्यर्थः। तुशब्देन वायमर्थो ग्राह्यः। तेनेश्वरादन्यत्र यथार्थज्ञानस्य सात्त्विकत्वात्कथं राजसत्त्वमिति निरस्तं बोध्यम्। ईश्वरविषये संशयरूपत्वस्याधिकस्यापि भावात् ॥ २१ ॥

## यत्तु कृत्स्नवदेकस्मिन्कार्ये सक्तमहैतुकम्* ॥
## अतत्त्वार्थवदल्पं च तत्तामसमुदाहृतम् ॥ २२ ॥

त० टी०—तामसं ज्ञानमाह—यत्त्विति। तुशब्दस्तस्मादप्यतिनिकृष्टं द्योतयति। यज्ज्ञानमेकस्मिन्कार्ये एकस्मिन्नान्यस्मिन्। क्षुद्रदेवताप्रेतभूतगणाद्याराधनरूपे कर्मणि अतितुच्छेऽपि कृत्स्नफलवत्सक्तमेतदेव मम सर्वाभीष्टप्रदमिति अहैतुकं हेतुरहितं निर्युक्तिकं यतोऽतत्त्वार्थवत् शास्त्रसिद्धतत्त्वार्थशून्यम्, अत एवाल्पं च अल्पविषयत्वादल्पफलकं तज्ज्ञानं तामसमुदाहृतम् ॥ २२ ॥

म० टी०—यदिति। तुशब्दो राजसाद्भिनत्ति। बहुषु भूतकार्येषु विद्यमानेष्वेकस्मिन् कार्ये भूतविकारे देहे प्रतिमादौ वा अहेतुकं हेतुरुपपत्तिस्तद्रहितमन्येषां भूतकार्याणामात्मत्वाभावे कथमेकस्य तादृशस्यात्मत्वमित्यनुसंधानशून्यं, कृत्स्नवत् परिपूर्णवत्सक्तम्—एतावानेवात्मा ईश्वरो वा नातः परमस्तीत्यभिनिवेशेन लग्नम्। यथा दिगम्बराणां सावयवो देहपरिमाण आत्मेति। यथा वा चार्वाकाणां देह एवात्मेति। एवं पाषाणदार्वादिमात्र ईश्वर इत्येकस्मिन् कार्ये सक्तम्। अहेतुकत्वादेवातत्त्वार्थवत्—न तत्त्वार्थालम्बनम्। अल्पं च नित्यत्वविभुत्वाग्रहात्। ईदृशं नित्यविभुदेहातिरिक्तात्मतद्व्यतिरिक्तेश्वरग्राहितार्किकज्ञानविलक्षणमनित्यपरिच्छिन्नदेहाद्यात्माभिमानरूपं चार्वाकादीनां यज्ज्ञानं तत्तामसमुदाहृतं तामसानां प्राकृतजनानामीदृशज्ञानदर्शिभिः ॥ २२ ॥

शं० टी०—तामसं ज्ञानत्वलक्षणमाह—यदिति। तुशब्दोऽस्य ज्ञानस्योभयविलक्षणत्वद्योतनार्थः। एकस्मिन् कार्ये भूतकार्ये देहे प्रतिमादौ वा कृत्स्नवत्परिपूर्णवत्सक्तमात्मा परमेश्वरश्च स्वयं स्वरूपेणैतावान् देहपरिमाणक एवात्मा प्रतिमापरिमाण एवेश्वरो नैतद्व्यतिरिक्तोऽस्तीति निश्चययुक्तम्। यद्वा कृत्स्नवत् एष घट एष पट इति कृत्स्नपदार्थनिश्चयो यथा तथा कार्ये देहे प्रतिमादौ वा सक्तम्। एष देह एवात्माहमिति, एष पाषाणादिरेवेश्वर इति निश्चययुक्तमहेतुकं देहस्यैवात्मत्वनिश्चये प्रतिमादेरेवेश्वरत्वनिर्धारणे च हेतुस्तदभावादहेतुकम्। ननु देह एवात्मा अहमर्थत्वादित्यादियुक्तिरस्त्येवेति चेन्न, स्वप्नमहमद्राक्षमित्यादौ व्यभिचारदर्शनाद्देहदाहे त्वात्मदाहप्रसङ्गाच्च। न देहस्यात्मत्वसाधको हेतुरस्ति नापि प्रतिमादेरीश्वरत्वसाधको हेतुरस्ति। ननु प्रतिमाद्याकार ईश्वरः कामान् प्रयच्छति तत एष प्रतिमादिरेवेश्वरः कामप्रदत्वादित्यादियुक्तिरस्त्येवेति चेन्न, अश्वत्थस्याप्यारोग्यप्रदत्वदर्शनात्तत्रातिव्याप्तिः स्यात्। किंतु तत्र भक्त्याराधितः परमेश्वरः सर्वगतस्तत्र

* अहेतुकम्—पाठान्तरम्

स्थितः सन्कामान् प्रयच्छति न तु प्रतिमादिस्तस्य नाशे ईश्वरस्यापि नाशप्रसङ्गात् । ततो देहप्रतिमादेरात्मेश्वरत्वसाधकयुक्तिर्नास्ति । अत एवातत्त्वार्थवदबाधितार्थस्तत्त्वार्थः स यस्य ज्ञानस्य नास्ति तदतत्त्वार्थवदयथार्थविषयकमत एवाल्पम्—अल्पविषयत्वेनाल्पफलत्वेन चाल्पं निकृष्टमित्यर्थः । यदेवंलक्षणं ज्ञानं तत्तामसं बहुजन्मभिस्तामसयज्ञदानादिकर्मानुष्ठानसंप्राप्ततमोगुणकार्यत्वात्तामसमिति कपिलादिभिरुदाहृतमुच्यत इत्यर्थः । जन्मानेकशतैः समनुष्ठितसात्त्विकयज्ञदानादिसत्कर्मपरिपाकसमुत्पन्नं सात्त्विकं ज्ञानं मोक्षायैव भवति, राजसं तु स्वर्गाद्यभ्युदयाय निरुक्तलक्षणं, तामसं ज्ञानं तु केवलं मूढव्यवहारगोचरं जननमरणदुःखप्रवाहायैव भवति, न तु स्वर्गाय नाप्यपवर्गायेति सूचितं भवति ॥ २२ ॥

**श्री० टी०**—तामसं ज्ञानमाह—यत्त्विति । एकस्मिन्कार्ये देहे प्रतिमादौ वा कृत्स्नवत्परिपूर्णवत्सक्तमेतावानेवात्मा ईश्वरो वेत्यभिनिवेशयुक्तम्, अहैतुकं निरुपपत्तिकम्, अतत्त्वार्थवत् परमार्थावलम्बनशून्यम् । अत एवाल्पं तुच्छमल्पविषयत्वादल्पफलत्वाच्च । यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥

**स० टी०**—भूतकार्येषु बहुषु विद्यमानेष्वनेकधा ॥ एकस्मिन्भौतिके देहे प्रतिमादौ विकारके ॥ १ ॥ अन्येषां भूतकार्याणामात्मत्वाभावतः कथम् ॥ एकस्य तादृशस्यात्मभाव इत्यविचारतः ॥ २ ॥ परिपूर्णवदासक्तमेतावानीश्वरोऽल्पकः ॥ आत्मा वातः परं नास्तीत्येवं चाभिनिवेशतः ॥ ३ ॥ दिगम्बरमते यद्वत्सावयवतया मतः ॥ आत्मा देहपरीमाणश्चार्वाकाणां यथा वपुः ॥ ४ ॥ एवं पाषाणदार्वादिमात्र ईशोऽपि संमतः ॥ इत्येकस्मिंस्तदासक्तमहेतुकतयैव च ॥ ५ ॥ तत्त्वार्थालम्बनं नास्ति विभुत्वाद्यग्रहात्तथा ॥ अल्पं चाल्पविषयत्वादत्यन्ताल्पफलत्वतः ॥ ६ ॥ एवं यन्नास्तिकादीनां ज्ञानं तत्तामसं बुधैः ॥ प्राकृतानां विमूढानां हेयत्वेन ह्युदाहृतम् ॥ ७ ॥ २२ ॥

**भा० टी०**—राजसं ज्ञानमुदाहृत्य तामसं तदाह—यत्त्विति । तुशब्दो राजसाद्वैलक्षण्यद्योतनार्थः । यत्तु ज्ञानमेकस्मिन्कार्ये देहे बहिर्वा प्रतिमादौ कृत्स्नवत् समस्तवत् परिपूर्णवत् एतावानेवात्मा ईश्वरो नातः परमस्तीति । यथा चार्वाकादीनां शरीरानुवर्तिदेहपरिमाणो जीवः, ईश्वरो वा पाषाणदार्वादिमात्र इत्येवमभिनिवेशयुक्तं यतोऽहेतुकमुपपत्तिशून्यमहेतुकत्वादतत्त्वार्थवत् यथाभूतोऽर्थस्तत्त्वार्थः सोऽस्य ज्ञेयभूतोऽस्तीति तत्त्वार्थवत् न तत्त्वार्थवदतत्त्वार्थवत्, तत एवाल्पं चाल्पविषयत्वादल्पफलत्वाद्वा तत्तामसानां प्राणिनामविवेकिनां परिदृश्यमानमीदृशं ज्ञानं हेयं तत्तामसमुदाहृतम् ॥ २२ ॥

**प० टी०**—तामसमाह—यत्त्विति । एकस्मिन् कार्ये देहे प्रतिमादौ वा सक्तम् एतावानीश्वर एवेत्यभिनिवेशयुक्तम् । अहैतुकं निरुपपत्तिकम्, अतत्त्वार्थवत् परमार्थावलम्बनशून्यम् । अत एवाल्पं तुच्छम् । यदेवंभूतं ज्ञानं तत्तामसमुदाहृतम् ॥ २२ ॥

**रा० टी०**—यत्त्विति । कार्यशब्दोऽत्र संसारिणं मुक्तत्वेन क्रियमाणत्वहेतुना जीवपरः । कृत्स्नशब्दो ब्रह्मपरो जगत्परश्च । अयमर्थः । एकस्मिन्कार्ये जीवे कृत्स्नवद्ब्रह्मवत् यज्ज्ञानं सक्तम् । कोऽर्थः ब्रह्म यथा स्वात्मानं विषयीकरोति । तथा जीवं ब्रह्मेति यज्ज्ञानं विषयीकरोतीत्यर्थः । जीवे ब्रह्माभेदविषयकं यज्ज्ञानं तत्तामसमिति यावत् । तथा एकस्मिन्कार्ये जीवे कृत्स्नवज्जगद्वद्यज्ज्ञानं सक्तं प्रपञ्चं यथा विषयीकरोति प्रपञ्चोऽयमिति । तथा जीवं यज्ज्ञानं विषयीकरोति जीवं जगदात्मकत्वेन विषयीकुर्वद्यज्ज्ञानं तत्तामसमिति यावत् । तथा एकस्मिन्कार्ये जीवे कृत्स्नवद्यज्ज्ञानं सक्तम्—एकमेव जीवं कृत्स्नजगदात्मकत्वेन यद्विषयीकरोति । एकजीवकल्पितं जगदिति यज्ज्ञानं विषयीकरोतीति त्रिधार्थः । किंच यज्ज्ञानमहैतुकं युक्तिशून्यम्, अतत्त्वार्थवदसत्यविषयकं सदसद्विलक्षणाद्यविद्यमानाकारकल्पनायुक्तमिति यावत् । अल्पं बहुलाज्ञानयुतत्वेन धर्मेणाल्पज्ञानसदृशं च यत्तत्तामसम् । अत्र ब्रह्मवदिति जीव इति च वाच्ये कृत्स्नवदित्युक्तिः

जगतोऽपि ग्रहणाय । तेनाकार्यत्वादिकृत्स्नगुणपरिपूर्णत्वेन कृत्स्नपदोक्तब्रह्मणा कार्यत्वादिना तदधीनस्य जीवस्याभेदज्ञानं मिथ्याज्ञानत्वात्कथं न तामसमिति तामसत्वोपपादनायेति । कार्य इत्येव वाच्ये एकस्मिन्नित्युक्तिः एकजीवमतस्य संग्रहायेति । अत्र यद्यप्येकस्मिन्कार्यशब्दिते जीवे कृत्स्नवदकार्यत्वादिगुणपरिपूर्णब्रह्मवज्जगद्वच्च यज्ज्ञानं सक्तमित्यस्य चैकं जीवं ब्रह्मात्मकत्वेन जगदात्मकत्वेन च विषयीकारि यज्ज्ञानमित्यर्थः । तादृशं च ज्ञानमहैतुकम् । अतत्त्वार्थमल्पं च भवत्येवेति पुनरहैतुकमित्याद्युक्तिः पुनरुक्तिरेव । तथाप्यहैतुकज्ञानादित्रितयं प्रत्येकमेकैकं तामसं, पूर्वार्धोक्तमिथ्याज्ञानरूपविशेषणसहितमतितामसमिति वक्तुमिति ज्ञेयम् । यद्वा सामानाधिकरण्येन पदानां विशेषणविशेष्यभावः । एवं च कार्ये जीवे कृत्स्नवज्जगद्वद्यत्सक्तम् । एकस्मिन्कार्ये जीवे कृत्स्नवद्ब्रह्मवद्यत्सक्तं, यदहैतुकं यच्चातत्त्वार्थकल्पनायुक्तं, यच्चाल्पं, तानि सर्वाण्यपि षड्विधाऽज्ञानानि प्रत्येकं तामसानीति योजना । अतो न पुनरुक्तिशङ्कावकाश इति ॥२२॥

**नियतं सङ्गरहितमरागद्वेषतः कृतम् ॥**
**अफलप्रेप्सुना कर्म यत्तत्सात्त्विकमुच्यते ॥ २३ ॥**

**त० टी०**—एवं कर्मानुष्ठातुर्ज्ञानांशेन गुणतस्त्रैविध्यं प्रदर्श्येदानीं कर्मण एव गुणतस्त्रैविध्यमाह—**नियतमिति** । नियतं नित्यकर्तव्यतया विहितं, सङ्गरहितम्—सङ्गोऽहमस्य कर्ता फलभोक्तेत्यभिनिवेशस्तद्रहितम्, अरागद्वेषतः कृतं—रागोऽनेन लोकपूजास्तुत्यादि प्राप्स्यामीति प्रीतिविशेषः, द्वेषः शत्रुमरणाद्यनिष्टचिन्तनं, ताभ्यां न कृतमिति । अफलप्रेप्सुना स्त्रीपुत्रधनादिफलाभिलाषरहितेन कर्त्रा यत्कृतं कर्म तत्सात्त्विकमुच्यते ॥ २३ ॥

**म० टी०**—तदेवमौपनिषदानामद्वैतात्मदर्शनं सात्त्विकमुपादेयं मुमुक्षुभिः, द्वैतदर्शिनां तु नित्यविभुपरस्परविभिन्नात्मदर्शनं राजसम्, अनित्यपरिच्छिन्नात्मदर्शनं च तामसं हेयमुक्तम् । संप्रति त्रिविधं कर्मोच्यते—**नियतमिति** । नियतं यावदङ्गोपसंहारासमर्थानामपि फलावश्यंभावव्याप्तम् नित्यमिति यावत् । सङ्गोऽहमेव महायाज्ञिक इत्याद्यभिमानरूपोऽहङ्कारापरपर्यायो राजसो गर्वविशेषस्तेन शून्यं सङ्गरहितम् । यावदज्ञानं तु कर्तृत्वभोक्तृत्वप्रवर्तनोऽहङ्कारोऽनुवर्तत एव सात्त्विकस्यापि । तद्रहितस्य तु तत्त्वविदो न कर्माधिकार इत्युक्तमसकृत् । रागो राजसन्मानादिकमनेन लप्स्य इत्यभिप्रायः, द्वेषः शत्रुमनेन पराजेष्य इत्यभिप्रायस्ताभ्यां न कृतमरागद्वेषतः कृतम् । अफलप्रेप्सुना फलाभिलाषरहितेन कर्त्रा यत् कृतं कर्म यागदानहोमादि तत् सात्त्विकमुच्यते ॥ २३ ॥

**शं० टी०**—सत्त्वादिगुणभेदात्कर्मणस्त्रैविध्यं प्रतिपादयन्नादौ मुमुक्षूणामनुष्ठेयं सात्त्विकं कर्माह—**नियतमिति** । नियतं श्रुतिस्मृतिभ्यामवश्यकर्तव्यत्वेन विहितं यज्ञतपोदानलक्षणं सङ्गरहितं—सङ्गः कर्तृत्वाभिनिवेशोऽहंकारस्तच्छून्यमनहंकारम्,अरागद्वेषतः सुखसाध्यत्वे तत्फलसाधनत्वे वा कर्मणि रागः दुःखसाध्यत्वे दुःखफलसाधनत्वे वा कर्मणि द्वेषश्च जायते रागश्च द्वेषश्च रागद्वेषौ न रागद्वेषौ यस्येष्टानिष्टयोः कर्मणोः समबुद्धेरसावरागद्वेषः । तृतीयार्थे तसिः । तेनारागद्वेषेण सात्त्विकेनाफलप्रेप्सुना निष्कामेण कर्त्रा कृतं यत्तत्कर्म सात्त्विकं सत्त्वशुद्धिकारणमिति महर्षिभिः प्रोच्यते ॥ २३ ॥

**श्री० टी०**—इदानीं त्रिविधं कर्माह—**नियतमितित्रिभिः** । नियतं नित्यतया विहितं, सङ्गरहितमभिनिवेशशून्यं, अरागद्वेषतः पुत्रादिप्रीत्या वा शत्रुद्वेषेण वा यत्कृतं न भवति फलं प्राप्तुमिच्छतीति फलप्रेप्सुस्तद्विलक्षणेन निष्कामेण कर्त्रा यत्कृतं कर्म तत्सात्त्विकमुच्यते ॥ २३ ॥

**स० टी०**—अद्वैतदर्शिनां ज्ञानमुपादेयमुदीरितम् ॥ तार्किकाणां तथा हेयं भेदज्ञानमनर्थदम् ॥ १ ॥

तामसं दुष्टमत्यन्तं हेयं संसृतिकारणम् ।। इत्युक्तं त्रिविधं कर्म प्रोच्यते हरिणाऽधुना ।। २ ।। नित्यमावश्यकं कर्म गर्वासक्तिविवर्जितम् ।। अनेनाहमिदं लप्स्ये राग इत्याशयः स्मृतः ।। ३ ।। अनेनारिं पराजेष्ये द्वेष इत्याशयस्तथा ।। ताभ्यां न कृतमित्युक्तमरागद्वेषतः कृतम् ।। ४ ।। फलाभिलाषशून्येन कर्त्रा कर्मेह यत्कृतम् ।। यागदानादिशास्त्रीयं तत्सात्त्विकमुदाहृतम् ।। ५ ।। २३ ।।

**भा० टी०**—एवं ज्ञानत्रैविध्यं विभज्य कर्मत्रैविध्यं विभजन्नादौ सात्त्विकं कर्मोदाहरति—**नियतमिति** । नियतं नित्यमवश्यकर्तव्यतया विहितं, सङ्गरहितमासक्तिवर्जितमभिनिवेशशून्यम्, अरागद्वेषतः कृतं—रागो विषयप्रेप्सा कारणभूता रञ्जननामिका चित्तवृत्तिः तत्प्रयुक्तेन द्वेषप्रयुक्तेन च कृतं रागद्वेषतः कृतं तद्विपरीतमरागद्वेषतः कृतं फलं प्रेप्सतीति फलप्रेप्सुः फलतृष्णः तद्विपरीतेनाफलप्रेप्सुना कर्त्रा यत्कर्म कृतं तत्सात्त्विकमुच्यते । फल्गु च लीयते चेति फलं क्रियया प्राप्यमनात्मवस्तु तदन्यदफलमनागन्तुकं परिपूर्णमविनाशि आत्मतत्त्वं तत्प्रेप्सुना कृतं "विविदिषन्ति यज्ञेन" इति श्रुत्या आत्मलाभार्थं यज्ञादेर्विनियोगादित्यन्ये । आचार्यैस्तु कामेप्सुनेत्युत्तरानुरोधिक्लिष्टकल्पनाग्रस्तोऽयं पक्ष इत्यभिप्रेत्योपेक्षितः ।। २३ ।।

**प० टी०**—इदानीं त्रिविधं कर्माह—**नियतमितित्रिभिः** । नियतं नित्यतया विहितं, सङ्गरहितमभिनिवेशशून्यम्, अरागद्वेषतः कृतं पुत्रप्रीत्या तदभ्युदयार्थं शत्रुद्वेषात्तदपकर्षार्थं यन्न भवति । फलं प्राप्तुमिच्छतीति फलप्रेप्सुः तद्विलक्षणेन कृतं कर्म सात्त्विकमुच्यते ।। २३ ।।

**रा० टी०**—प्राक् प्रतिज्ञातं गुणकृतकर्मत्रैविध्यमाह—**नियतमित्यादि त्रिभिः** । हरेः सर्वोत्तमत्वज्ञानभक्तिपूर्वकं तदर्पणबुद्ध्या क्रियमाणस्ववर्णाश्रमोचितं हिं नियतमित्युच्यते । मयि सर्वाणीत्यादौ भगवत्सर्वोत्तमत्वज्ञानतद्भक्तिपूर्वकं तदर्पणबुद्ध्या कर्मकरणस्य विधानात् । ये मे मत इत्यादौ तस्यैवमुक्तिहेतुत्वोक्तेः यत्करणे फलप्राप्तिः यदकरणे च प्रत्यवायः तस्यैव नियतत्वात्, सङ्गरहितं मदीयतास्नेहहीनं, कीर्त्यादौ रागादिहानतः अकीर्त्यादौ द्वेषत्यागतः कृतं फलप्राप्तीच्छाहीनेन कृतं यत्तत्कर्म सात्त्विकमुच्यत इत्यर्थः ।। २३ ।।

## यत्तु कामेप्सुना कर्म साहङ्कारेण वा पुनः ।।
## क्रियते बहुलायासं तद्राजसमुदाहृतम् ।। २४ ।।

**त० टी०**—राजसं कर्माह—**यत्त्विति** । यत्तु कामेप्सुना फलकामनायुक्तेन साहङ्कारेण च । वेति चार्थे । मत्समो याज्ञिकः ज्ञाता वा कोऽन्य इति गर्वयुक्तेन कर्त्रा यत्कर्म क्रियते पुनर्बहुलायासम्—उपक्रमात्समाप्तिपर्यन्तमत्यायासावहं तद्राजसमुदाहृतं विवेचकैः ।। २४ ।।

**म० टी०**— **यदिति** । तुः सात्त्विकाद्भिनत्ति । कामेप्सुना फलकामेन कर्त्रा साहङ्कारेण प्रागुक्तसङ्गात्मकगर्वयुक्तेन च । वाशब्दः समुच्चये । पुनरित्यनियतं यावत्कामनं काम्यावृत्तेः । बहुलायासं सर्वाङ्गोपसंहारेण क्लेशावहं यत्काम्यं कर्म क्रियते तद्राजसमुदाहृतम् । अत्र सर्वैर्विशेषणैः सात्त्विकसर्वविशेषणव्यतिरेको दर्शितः ।। २४ ।।

**शं० टी०**—राजसं कर्माह—**यत्त्विति** । तुशब्दो वैलक्षण्यार्थः । वा चार्थः । पुनरप्यर्थः । कामेप्सुना काम्यत इति कामः कर्मफलं तमाप्तुमिच्छता कामेप्सुना साहंकारेणापि च अहमिदं कर्म करोमि फलायेत्यभिनिवेशोऽहंकारस्तद्रहितः सात्त्विकः पूर्वोक्तस्त्वयं राजसस्तेनापि च युक्तत्वात्साहंकारोऽहमिदं करोमीत्यभिमानाडम्बरयुक्तस्तेन साहंकारेणापि च कर्त्रा बहुलायासं बाहुभ्यां नदीतरणे यथा तथा बहुलो महानायासः श्रमो यस्मिन्कर्मण्याचमनादौ भवति तद्बहुलायासं यत्तु कर्म क्रियते तत्कर्म राजसं फलकामनया चाहंकारेणापि रजःकार्येण युक्तेनाधिकारिणा क्रियमाणत्वाद्राजसं तत्कर्मेति मुनिभिरुदाहृतमित्यर्थः ।।२४।।

श्री० टी०—राजसं कर्माह—यत्त्विति । यत्तु कर्म कामेप्सुना फलं प्राप्तुमिच्छता साहंकारेण वा मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवं निरूढाहंकारयुक्तेन च क्रियते, यच्च पुनर्बहुलायासमतिक्लेशयुक्तं तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

स० टी०—फलकामेन कर्त्रा यद्गर्वयुक्तेन वा कृतम् ॥ यावत्तत्कामना काम्यावृत्तेरनियतं पुनः ॥ १ ॥ सकलाङ्गोपसंहारात्क्लेशदं काम्यमध्रुवम् ॥ क्रियते कर्म यत्तत्तु राजसं समुदाहृतम् ॥ २ ॥ सर्वैर्विशेषणैरत्र सात्त्विकाद्दर्शिता भिदा ॥ ३ ॥ २४ ॥

भा० टी०—सात्त्विकं कर्मोक्त्वा राजसं तदुदाहरति—यत्त्विति । सात्त्विकाद्वैलक्षण्यद्योतकस्तुः । कामेप्सुना फलेप्सुना साहंकारेण वा पुनः मत्समः कोऽन्यः श्रोत्रियोऽस्तीत्येवमहंकाराभिनिवेशेन । तत्त्वज्ञानवतो निरहंकारस्य कर्मकर्तृत्वमपेक्ष्य साहंकारेणेति न भ्रमितव्यं, तस्य कर्मण्यनधिकृतत्वात् । किं तु मत्सदृशोऽन्यः श्रोत्रियो नास्तीत्यभिमानरहितोऽनात्मविदपि लोके निरहंकार इत्युच्यमानो यस्तमपेक्ष्य साहंकारेण वा पुनरित्युच्यते । बहुलायासं महता आयासेन क्लेशेन निर्वर्त्यं यत् कर्म क्रियते तद्राजसमुदाहृतम् ॥ २४ ॥

प० टी०—राजसमाह—यत्त्विति । कामेप्सुना फलप्राप्तिमिच्छता साहंकारेण मत्समः कोऽन्यः श्रोत्रियोऽस्तीति निगू(?रू)ढाहंकारेण कर्त्रा बहुलायासमतिक्लेशं यथा भवति तथा यत्कृतं तद्राजसम् ॥ २४ ॥

रा० टी०—यत्त्विति । यत्तु कामेप्सुना फलप्राप्तीच्छावता कर्तृत्वाभिमानसहितेन च । पुनःशब्दः समुच्चये । बह्वायासयुक्तं च क्रियते तत्कर्म राजसमुदाहृतम् ॥ २४ ॥

**अनुबन्धं क्षयं हिंसामनवेक्ष्य[1] च पौरुषम् ॥**
**मोहादारभ्यते कर्म तत्तामसमुदाहृतम्[2] ॥ २५ ॥**

त० टी०—तामसकर्माह—अनुबन्धमिति । कृते कर्मण्यनु पश्चाद्बध्यतेऽनिच्छयाऽपि कर्मफलभोगायापद्यते इत्यनुबन्धः दुःखविषादादिस्तं, क्षयं द्रव्यबलादिनाशः(?शं), हिंसां प्राणिपीडां, पौरुषं स्वस्य कर्मनिवर्तनसामर्थ्यं च अनवेक्ष्य अपर्यालोच्य मोहात्सर्वकर्मसिद्धिहेतुपरमेश्वरायत्तत्वज्ञानाभावात् यत्कर्म आरभते[3] तत्तामसमुदाहृतम् ॥ २५ ॥

म० टी०—अनुबन्धमिति । अनुबन्धं पश्चाद्भाव्यशुभं, क्षयं शरीरसामर्थ्यस्य धनस्य सेनायाश्च नाशं, हिंसां प्राणिपीडां, पौरुषमात्मसामर्थ्यं च अनपेक्ष्य अपर्यालोच्य मोहात्केवलाविवेकादेवारभ्यते यत्कर्म, यथा दुर्योधनेन युद्धं, तत्तामसमुच्यते ॥ २५ ॥

शं० टी०—तामसं कर्माह—अनुबन्धमिति । अनुबन्धः उत्तरभाव्यनर्थस्तत्कर्मणः फलभूतस्तमनुबन्धं पश्चाद्भाव्यनर्थं, क्षयं यस्मिन्कर्मणि क्रियमाणे धनक्षयो वा बलक्षयो वा पुण्यक्षयो वा आयुःक्षयो वान्यस्य वा क्षयस्तं क्षयं, हिंसां प्राणिपीडां, कर्मनिर्वाहे स्वसामर्थ्यं च पौरुषमेव तत्सर्वमप्यनवेक्ष्य बुद्धिबलेनाविचार्य बालवन्मोहादविवेकाद्यत्कर्मारभ्यते तत्कर्म संमोहो विवेकाभावस्तमोगुणस्तेन कार्यत इति तामसमित्युच्यत इत्यर्थः ॥ २५ ॥

श्री० टी०—तामसं कर्माह—अनुबन्धमिति । अनुबध्यते इत्यनुबन्धः पश्चाद्भावि शुभाशुभम् , क्षयं वित्तव्ययं, हिंसां परपीडां च पौरुषं स्वसामर्थ्यं वा अनवेक्ष्य अपर्यालोच्य केवलं मोहादेव यत्कर्मारभ्यते तत्तामसमुच्यते ॥ २५ ॥

---

१ अनपेक्ष्येति पाठः । २ यत्र तामससमुच्यत इति म. पाठः । ३ आरभत इति त. टी. पाठः ।

स० टी०–पश्चाद्भाव्यशुभं देहसामर्थ्यस्य धनस्य च ॥ विनाशं प्राणिनां पीडामात्मसामर्थ्यमेव च ॥ १ ॥ अपर्यालोच्य मोहाद्यत्केवलादविवेकतः ॥ आरभ्यते जडैः कर्म तत्तामसमुदाहृतम् ॥ २ ॥ २५॥

भा० टी०–राजसं कर्मोदाहृत्य तामसं तदाह–अनुबन्धमिति । अनुबध्यत इत्यनुबन्धः पश्चाद्भावि वस्तु तं, क्षयं शक्त्यर्थादेर्नाशं, हिंसां प्राणिपीडां च पौरुषं पुरुषकारमारब्धसमाप्तिसामर्थ्यमित्येतान्यनुबन्धादीन्यनवेक्ष्यापर्यालोच्य मोहादविवेकाद्यत्कर्म प्रारभ्यते तत्तामसमुदाहृतम् ॥ २५ ॥

प० टी०–तामसमाह–अनुबन्धमिति । अनुबध्यत इत्यनुबन्धस्तं भावि शुभाशुभं, क्षयं व्ययं, हिंसां स्वपरपीडनं, पौरुषं स्वसामर्थ्यं चानपेक्ष्याविगणय्य केवलं मोहादेव यत्कर्मारभ्यते तत्तामसम् ॥ २५ ॥

रा० टी०–अनुबन्धमिति । अनुबन्धं कर्मान्तरमेवानुबध्यमानं, क्षयं नाशं, हिंसां परपीडां च अनवेक्ष्य पौरुषमात्मनः कर्म सामर्थ्यं चानवेक्ष्य अविमृश्य मोहादहं कर्तेति मिथ्याज्ञानाद्यत्कर्मारभ्यते तत्तामसमुच्यत इत्यर्थः ॥ २५ ॥

**मुक्तसङ्गोऽनहंवादी धृत्युत्साहसमन्वितः ॥**
**सिद्ध्यसिद्ध्योर्निर्विकारः कर्ता सात्त्विक उच्यते ॥ २६ ॥**

त० टी०–ज्ञेयेषु त्रिष्ववशिष्टं कर्म कर्तुस्त्रैविध्यमाह–मुक्तसङ्ग इति त्रिभिः । मुक्तसङ्गः फलाभिलाषरहितः, अनहंवादी कर्तृत्वाभिमानरहितः, धृत्युत्साहसमन्वितः धृतिः कर्मारभ्य यावत्समाप्ति-दुःखादिप्राप्तावनुद्वेगः, उत्साह उद्युक्तचित्तत्वं ताभ्यां समन्वितः आरब्धस्य कर्मणः सिद्ध्यसिद्ध्योर्निर्विकारोऽविकृतचित्तः । एवंभूतः कर्ता सात्त्विक उच्यते ॥ २६ ॥

म० टी०–इदानीं त्रिविधः कर्तोच्यते–मुक्तेति । मुक्तसङ्गस्त्यक्तफलाभिसंधिः, अनहंवादी कर्ताहमिति वदनशीलो न भवति स्वगुणश्लाघाविहीनो वा, धृतिर्विघ्नाद्युपस्थितावपि प्रारब्धापरित्यागहेतुरन्तःकरणवृत्तिविशेषः, धैर्यमुत्साह इदमहं करिष्याम्येवेतिनिश्चयात्मिका बुद्धिर्धृतिहेतुभूता ताभ्यां संयुक्तः धृत्युत्साहसमन्वितः, कर्मणः क्रियमाणस्य फलस्य सिद्धावसिद्धौ च हर्षशोकाभ्यां हेतुभ्यां यो विकारो वदनविकासम्लानत्वादिस्तेन रहितः सिद्ध्यसिद्ध्योर्निर्विकारः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागेण, अत एवंभूतः कर्ता सात्त्विक उच्यते ॥ २६ ॥

शं० टी०–गुणभेदेन कर्तृभेदं वदन्सात्त्विककर्तारमाह–मुक्तसङ्ग इति । मुक्तसङ्गः मुक्तो मनसा संत्यक्तः सङ्गः फलाभिसंधिलक्षणः कामो येन स मुक्तसङ्गः निष्काम इत्यर्थः । अनहंवादी संकल्पेऽप्यहमिदं करोमीति वदनशीलो न भवतीत्यनहंवादी । अनहंमानित्वेऽपीदमुपलक्षणम् । धृत्युत्साहसमन्वितः धृतिः अर्थव्ययदेहायासादौ धैर्यमुत्साहश्चिकीर्षावेगस्ताभ्यां सम्यगन्वितः । सिद्ध्यसिद्ध्योरारब्धस्य कर्मणः सिद्धावसिद्धौ च निर्विकारः सम्यगीश्वरार्पितनियन्तृत्वादीश्वरेच्छेति हर्षविषादशून्य इत्यर्थः । एवं सत्त्वगुणसंपन्नो यः कर्ता कर्मणां स सात्त्विक इति ऋषिभिरुच्यत इत्यर्थः । एवंगुणविशिष्टत्वं सात्त्विकस्य लक्षणमिति सूचितं भवति ॥ २६ ॥

श्री० टी०–कर्तारं त्रिविधमाह–मुक्तसङ्ग इति त्रिभिः । मुक्तसङ्गस्त्यक्ताभिनिवेशः, अनहंवादी गर्वोक्तिरहितः, धृतिर्धैर्यम्, उत्साह उद्यमः ताभ्यां समन्वितः संयुक्तः, आरब्धस्य कर्मणः सिद्धावसिद्धौ च निर्विकारो हर्षविषादशून्यः, एवंभूतः कर्ता सात्त्विक उच्यते ॥ २६ ॥

स० टी०–इदानीं त्रिविधः कर्ता प्रोच्यते हरिणा त्रिभिः ॥ फलाभिसंधिशून्यो योऽहंकर्तेति मतिं विना ॥ १ ॥ संत्यक्तस्वगुणश्लाघोऽनहंवादीति वेरितः ॥ विघ्नाद्युपस्थितौ सत्यां प्रारब्धात्यागकारणम्

॥ २ ॥ चित्तवृत्तिविशेषो हि धृतिर्धैर्यमितीर्यते ॥ अवश्यं साधयिष्यामीत्येवं धीर्निश्चयात्मिका ॥ ३ ॥ धृतिकारणमुत्साहस्ताभ्यां संयुक्त उत्तमः ॥ कर्मणः क्रियमाणस्य सिद्ध्यसिद्ध्योः फलस्य यः ॥ ४ ॥ विकारो हर्षशोकाभ्यां विकासाद्यात्मको मुखे ॥ तेन शून्यश्च शास्त्रेण प्रयुक्तो न तु रागवान् ॥ ५ ॥ एवंभूतो महाभाग्यः कर्ता सात्त्विक उच्यते ॥ ६ ॥ २६ ॥

भा० टी०–अधुना कर्तृत्रैविध्यं विभजन्नादौ सात्त्विकं कर्तारमाह–मुक्तेति । मुक्तसङ्गो मुक्तः परित्यक्तः सङ्गः फलाभिसंधिर्येन स अनहंवादी नाहं वदनशीलः कर्ताहमेतादृशगुणसंपन्नः सर्वोत्तम इति वदनशीलो न भवति, धृतिर्विघ्नाद्युपस्थानेऽपि कार्यादेर्धारणं धैर्यमिति यावत्, उत्साह उद्यमस्ताभ्यां सम्यगन्वितः । कदापि कथमपि धृत्युत्साहरहितो न भवतीत्यर्थः । सिद्ध्यसिद्ध्योः क्रियमाणस्य कर्मणः फलसिद्धौ तदसिद्धौ च निर्विकारः हर्षविषादशून्यः केवलं शास्त्रप्रमाणप्रयुक्तो न फलरागादिना यः कर्ता स सात्त्विक उच्यते ॥ २६ ॥

प० टी०–अथ त्रिविधं कर्तारमाह–मुक्तसङ्ग इत्यादित्रिभिः । मुक्तसङ्गस्त्यक्ताभिनिवेशः, अनहंवादी गर्वश्लाघारहितः, धृतिर्धैर्यमुत्साहोऽनुद्वेगस्ताभ्यां समन्वितः सिद्धावसिद्धौ निर्विकारो हर्षविषादरहितः एवंभूतः कर्ता सात्त्विकः ॥ २६ ॥

रा० टी०–प्राक् प्रतिज्ञातं गुणकृतकर्तृत्रैविध्यमाह–मुक्तेत्यादित्रिभिः । मुक्तसङ्गः फलस्नेहहीनः सर्वस्य भगवदधीनत्वनिश्चयादेवाहं कर्तेति न वदतीत्यनहंवादी । आत्मकर्तृत्वाभिमानहीन इति यावत् । धृतिः कर्मण्यवर्जनीयदुःखसहनम्, उत्साहः कर्मकातरता ताभ्यां समन्वितः सिद्ध्यसिद्ध्योर्निर्विकारः फलस्य सिद्धावसिद्धौ वा हर्षविषादहीनः स कर्ता सात्त्विक उच्यत इत्यर्थः ॥ २६ ॥

**रागी कर्मफलप्रेप्सुर्लुब्धो हिंसात्मकोऽशुचिः ॥**
**हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥**

त० टी०–राजसकर्तारमाह–रागीति । रागोऽस्यास्तीति रागी इन्द्रियार्थेषु प्रीतिमान्, कर्मफलप्रेप्सुः प्रकर्षेण कर्मफलाकाङ्क्षी, लुब्धः आवश्यकेऽपि द्रव्यव्ययं कर्तुमशक्तः प्रत्युत परस्वाभिलाषी, हिंसात्मकः परवृत्तिहरणं हिंसा तदात्मकस्तत्स्वभावः, अशुचिः कर्मापेक्षितशौचवर्जितः कर्मफललाभालाभयोर्हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

म० टी०–रागीति । रागी कामाद्याकुलचित्तः, अत एव कर्मफलप्रेप्सुः कर्मफलार्थी, लुब्धः परद्रव्याभिलाषी धर्मार्थे स्वद्रव्यत्यागासमर्थश्च, स्वाभिप्रायप्रकटनेन परवृत्तिच्छेदनं हिंसा तदात्मकस्तत्स्वभावः, स्वाभिप्रायाप्रकटने तु नष्कृतिक इति भेदः, अशुचिः शास्त्रोक्तशौचहीनः, सिद्ध्यसिद्ध्योः कर्मफलस्य हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ २७ ॥

शं० टी०–राजसकर्तारमाह––रागीति । रागी कर्मफलापेक्षत्वात्तत्साधनेषु कर्मसु रागोऽस्यास्तीति रागी । यद्वा रागो विषयभोगेच्छा सोऽस्यास्तीति रागी, तत एव कर्मफलप्रेप्सुः कर्मणां फलं पुत्रकलत्रधनादिसंपत्तिं स्वर्गं च प्राप्तुमिच्छुः, स्वेन्द्रियतर्पणशीलत्वाल्लुब्धः परस्वाभिलाषी देवपितृयज्ञादौ धनत्यागासहिष्णुर्वा लुब्धः, हिंसात्मकः परपीडनशीलः, अशुचिः शास्त्रोक्तशौचरहितः, कर्मणः सिद्ध्यसिद्ध्योर्लाभालाभयोर्वा हर्षशोकान्वितो यः कर्मणां कर्ता स राजसः उक्तलक्षणै रजोगुणैर्विशिष्टत्वाद्राजस इति मुनिभिः परिकीर्तित इत्यर्थः । रागित्वादि राजसस्य लक्षणमिति सूचितं भवति ॥ २७ ॥

श्री० टी०–राजसं कर्तारमाह–रागीति । रागी पुत्रादिप्रीतिमान्कर्मफलप्रेप्सुः कर्मफलकामी, लुब्धः

परस्वाभिलाषी, हिंसात्मको मारकस्वभावः, अशुचिर्विहितशौचशून्यः, लाभालाभयोर्हर्षशोकाभ्यामन्वितः, कर्ता राजसः परिकीर्तितः ॥ २७ ॥

**स० टी०**–कामाद्याकुलचित्तो यः फलार्थी कर्मणः सदा ॥ परद्रव्याभिलाषी स्वं तीर्थेऽपि त्यक्तुमक्षमः ॥ १ ॥ स्वाशयोद्घाटनेनान्यवृत्तिच्छेदनशीलवान् ॥ शास्त्रोक्तशौचरहितः सिद्ध्यसिद्ध्योः फलस्य च ॥ २ ॥ हर्षशोकान्वितः कर्ता राजसः परिकीर्तितः ॥ ३ ॥ २७ ॥

**भा० टी०**–सात्त्विककर्तारमुदाहृत्य राजसं तमाह–रागीति । रागी रागवान्, कर्मफलप्रेप्सुः कर्मफलपशुस्वर्गाद्यर्थी, लुब्धः परद्रव्येषु संजाततृष्णः तीर्थादौ स्वद्रव्यापरित्यागी च, हिंसात्मकः वृत्तिच्छेदादिना परपीडाकरस्वभावः, अशुचिर्बाह्यान्तःशौचवर्जितः, इष्टप्राप्तावनिष्टवियोगे च हर्षः अनिष्टप्राप्ताविष्टवियोगे च शोकः ताभ्यां हर्षशोकाभ्यामन्वितो युक्तः तस्यैव कर्मणः संपत्तिविपत्त्योर्जाताभ्यां हर्षशोकाभ्यामन्वितः इति वा एवंविधो यः कर्ता स राजसः परिकीर्तितः ॥ २७ ॥

**प० टी०**–राजसमाह–रागीति । रागी पुत्रादिप्रीतिमान्, कर्मफलप्रेप्सुः कर्मफलकामी, लुब्धः स्वर्गसुखलम्पटः सन् हिंसात्मको हिंसायामात्मा मनो यस्याशुचिः शौचरहितः लाभालाभयोर्हर्षशोकाभ्यामन्वितः कर्ता राजसः ॥ २७ ॥

**रा० टी०**–रागीति । रागी कीर्त्यादिकामः । कर्मफलप्राप्तीच्छावान् । लुब्धः कर्मण्यपेक्षितद्रव्यव्ययहीनः । हिंसात्मकः हिंसास्वभावः । अशुचिः द्रव्यादिषु शुद्धिहीनः । कार्यसिद्ध्यसिद्ध्योः हर्षशोकान्वितः स कर्ता राजसः ॥ २७ ॥

**अयुक्तः प्राकृतः स्तब्धः शठो नैष्कृतिकोऽलसः ॥**
**विषादी दीर्घसूत्री च कर्ता तामस उच्यते ॥ २८ ॥**

**त० टी०**–तामसं कर्तारमाह–अयुक्त इति । अयुक्तः अनवहिततया कर्मानुष्ठानायोग्यः, प्राकृतः कर्तव्यविवेकहीनः, स्तब्ध आरब्धेऽपि कार्ये शिथिलः, शठः वञ्चनपरः, नैष्कृतिकः परवृत्तिच्छेदनाभिप्रायेण धर्मादि प्रदर्श्य स्वार्थसाधकः, अलसः आवश्यकेऽपि कर्मण्यनुद्यमशीलः, दीर्घसूत्री च एकद्विदिवसेन साध्यं यत्तन्मासेनापि न साधयति । एवंभूतो यः कर्ता स तामस उच्यते ॥२८॥

**म० टी०**–अयुक्त इति। अयुक्तः सर्वदा विषयापहृतचित्तत्वेन कर्तव्येष्वनवहितः, प्राकृतः शास्त्रासंस्कृतबुद्धिर्बालसमः, स्तब्धो गुरुदेवतादिष्वप्यनम्रः, शठः परवञ्चनार्थमन्यथा जानन्नप्यन्यथावादी, नैष्कृतिकः स्वस्मिन्नुपकारित्वभ्रममुत्पाद्य परवृत्तिच्छेदनेन स्वार्थपरः, अलसः अवश्यकर्तव्येष्वप्यप्रवृत्तिशीलः, विषादी सततमसंतुष्टस्वभावत्वेनानुशोचनशीलः, दीर्घसूत्री निरन्तरशङ्कासहस्रकवलितान्तःकरणत्वेनातिमन्थरप्रवृत्तिर्यदद्य कर्तव्यं तन्मासेनापि करोति न वेत्येवंशीलश्च कर्ता तामस उच्यते ॥ २८ ॥

**शं० टी०**–तामसकर्तारमाह—अयुक्त इति । अयुक्तोऽस्थिरचित्तश्चञ्चल इत्यर्थः । प्राकृतः पामरः कार्याकार्यज्ञानविहीन इत्यर्थः । स्तब्धोऽनम्रः महत्सु विनयशून्य इत्यर्थः । शठो गूढविप्रियकारी सर्ववञ्चक इत्यर्थः । नैकृतिकः निकृतिर्मनोवाक्कायैः परतिरस्करणं तत्प्रवणोऽनैकृतिकः परावमानीत्यर्थः । अलसो मन्दः कार्येष्ववश्यकर्तव्येष्वपि प्रवृत्तिरहितः श्रद्धाशून्य इत्यर्थः । विषादी क्लिष्टचित्तः इष्टे वस्तुनि लब्धेऽपि तृप्तिरहितत्वादीषदपि संतोषरहित इत्यर्थः । दीर्घसूत्री च सद्यः कर्तव्यमपि कार्यं पक्षेण मासेन वा यः

१ असमाहितचेता–पा० छि० पु० ।

करोति स दीर्घसूत्री चिरकारीत्यर्थः । य एवंलक्षणः कर्मकर्ता स तामसस्तमोदोषेण जडबुद्धित्वात्तामस इत्युच्यते । अयुक्तत्वादिकं तामसस्य लक्षणमिति सूचितं भवति ॥ २८ ॥

श्री० टी०—तामसं कर्तारमाह—**अयुक्त इति** । अयुक्तोऽनवहितः, प्राकृतो विवेकशून्यः, स्तब्धोऽनम्रः, शठः शक्तिगूहनकारी, नैष्कृतिकः परावमानी, अलसोऽनुद्यमशीलः, विषादी शोकशीलः, यदद्य वा श्वो वा कार्यं तन्मासेनापि न संपादयति यः स दीर्घसूत्री, एवंभूतः कर्ता तामसः उच्यते। कर्तृत्रैविध्येनैव ज्ञातुरपि त्रैविध्यमुक्तं भवति । कर्मत्रैविध्येन च ज्ञेयस्यापि त्रैविध्यमुक्तं वेदितव्यम् । बुद्धेस्त्रैविध्येन करणस्यापि त्रैविध्यमुक्तं भविष्यति ॥ २८ ॥

स० टी०—विषयाकृष्टचित्तत्वात्कर्तव्येष्वसमाहितः ॥ शास्त्रासंस्कृतबुद्धित्वाद्बालतुल्योऽतिपामरः ॥ १ ॥ अनम्रो गुरुदेवादौ परवञ्चनतत्परः ॥ स्वस्मिन्नौत्कृष्ट्यमुत्पाद्य परवृत्तिविघातकः ॥ २ ॥ अवश्यमेव कर्तव्येऽप्यप्रवृत्तिस्वभावकः ॥ सदा संतुष्टशीलत्वादनुशोचनतत्परः ॥ ३ ॥ सदा शङ्कासहस्रेण ग्रस्तचित्ततयाऽलसः ॥ अतिमन्दप्रवृत्तिः श्वो वाद्यकार्यं करोति न ॥ ४ ॥ मासेनापि य एवं स्यात्कर्ता प्रोक्तः स तामसः ॥ ५ ॥ २८ ॥

भा० टी०—एवं राजसं कर्तारमुदाहृत्य तामसं तमाह—**अयुक्त इति** । अयुक्तो विषयेषु विक्षिप्तचित्तत्वादसमाहितः, प्राकृतोऽत्यन्तासंस्कृतबुद्धिर्बालिशः, स्तब्धः कस्मैचिद्दण्डवन्न नमति सर्वदाऽनम्रो मन्दस्वभावः, शठः शक्तिगूहनकारी मायावी, नैकृतिकः परविच्छेदनपरः, अलसः कर्तव्येष्वप्रवृत्तिशीलः, विषादी सर्वदा खिन्नस्वभावः, दीर्घं सूत्रयितुं शीलमस्येति दीर्घसूत्री कर्तव्यानां दीर्घप्रसारणस्वभावः—एवं क्रियमाणे सत्यनिष्टमिदं कथंचिदापद्येत, यदा पुनरेवं क्रियते तदा त्वनिष्टमेव संभावनोपनीतमित्येवं शङ्कासहस्रव्याप्तचित्तत्वेनातिमन्थरप्रवृत्तिशीलः यदद्य श्वो वा कर्तव्यं तन्मासेनापि न करोति एवंविधो यः कर्ता स तामस उच्यते ॥ २८ ॥

प० टी०—तामसमाह—**अयुक्त इति** । अयुक्तो नियमरहितः, प्राकृतो विवेकशून्यः, स्तब्धोऽविनीतः, शठो मायावी, नैष्कृतिकः पररन्ध्रसूचकः, अलसः किंचिन्न करोति, विषादी क्लेशव्ययादिना पश्चात्तापी, सूचनात्सूत्रं दीर्घं सूत्रं यस्मिन् देशकालाद्यनेकविधां सूचनां कृत्वाद्य श्वः परश्वः कर्तव्यमिति विलम्बयति स तामसः कर्ता ॥ २८ ॥

रा० टी०—**अयुक्त इति** । अयुक्तः भगवदर्पणादियोगरहितः । प्रकृष्टो अकृतः प्राकृतः 'भगवद्भक्तिसामर्थ्यात्प्रकृष्टो न कृतो हि यः । स प्राकृतः' इति स्मृतेः । स्तब्धः आत्मसंभावनया काप्यनम्रः । शठः गूढद्वेषेण कर्मकारी । नैकृतिको नीचकर्मकृत् । प्राप्तकालेऽपि कर्मण्युदासीनोऽलसः । विषादी सर्वव्यापारोपरतिहेतुमनोदौर्बल्यवान्, प्राप्तेऽपि कर्मकाले पश्चात्कुर्यामिति ध्यायन्वा । परकृतदोषं दीर्घकालकृतमप्यनुचितं सूचयन्वा दीर्घसूत्री । स तामसः कर्तेत्यर्थः ॥ २८ ॥

**बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु ॥**
**प्रोच्यमानमशेषेण पृथक्त्वेन धनञ्जय ॥ २९ ॥**

त० टी०—एवमनुष्ठेयस्य कर्मणो ज्ञानतः स्वरूपतः कर्तृतश्च गुणतस्त्रैविध्यमुक्तमिदानीं सर्वव्यवहारासाधारणकारणभूताया बुद्धेर्धृतेश्च गुणतस्त्रैविध्यं वक्तुं प्रतिजानीते—**बुद्धेरिति** । बुद्धिरध्यवसायरूपा या तस्या धृतेश्च उद्वेगहेतौ प्राप्तावपि चित्तवृत्तेः स्थैर्यं धृतिस्तस्याश्च सत्त्वादिगुणतस्त्रिविधं भेदमशेषेण निःशेषेण हे धनंजय ! पृथक्त्वेन मया प्रोच्यमानं यथावत्त्वं शृणु ॥ २९ ॥

**म० टी०**–तदेवं 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इति व्याख्यातम् । संप्रति धृत्युत्साहसमन्वित इत्यत्र सूचितयोर्बुद्धिधृत्योस्त्रैविध्यं प्रतिजानीते–**बुद्धेरिति** । बुद्धेरध्यवसायादिवृत्तिमत्त्या धृतेश्च तद्वृत्तेः सत्त्वादिगुणतस्त्रिविधमेव भेदं मया त्वां प्रति त्यक्तालस्येन परमाप्तेन प्रोच्यमानमशेषेण निरवशेषं पृथक्त्वेन हेयोपादेयविवेकेन शृणु श्रोतुं सावधानो भव । हे धनञ्जयेति दिग्विजये प्रसिद्धं महिमानं सूचयन् प्रोत्साहयति । अत्रेदं चिन्त्यते–किमत्र बुद्धिशब्देन वृत्तिमात्रमभिप्रेतं किंवा वृत्तिमदन्तःकरणम् ? प्रथमे ज्ञानं पृथङ्न वक्तव्यम् । द्वितीये कर्ता पृथङ्न वक्तव्यः, वृत्तिमदन्तःकरणस्यैव कर्तृत्वात् । ज्ञानधृत्योः पृथक्कथनवैयर्थ्यं च । न चेच्छादिपरिसंख्यार्थं तत् । वृत्तिमदन्तःकरणत्रैविध्यकथनेन सर्वासामपि तद्वृत्तीनां त्रैविध्यस्य विवक्षितत्वात् । उच्यते–अन्तःकरणोपहितश्चिदाभासः कर्ता । इह तूपहितान्निष्कृष्य उपाधिमात्रं करणत्वेन विवक्षितं, सर्वत्र करणोपहितस्य कर्तृत्वात् । यद्यपि च "कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा-धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव" इति श्रुत्यनूदितानां सर्वासामपि वृत्तीनां त्रैविध्यं विवक्षितं, तथापि धीधृत्योस्त्रैविध्यं पृथगुक्तं ज्ञानशक्तिक्रियाशक्त्युपलक्षणार्थं न तु परिसंख्यार्थमिति रहस्यम् ॥२९॥

**शं० टी०**–कर्तृवत्करणस्यापि त्रैविध्यं सूचयितुं बुद्ध्यादेस्त्रैविध्यं बोधयितुमाह–**बुद्धेरिति** । यया पदार्थतत्त्वमध्यवसाय कार्ये पुमान्प्रवर्तते तस्या बुद्धेः अन्तःकरणवृत्तिविशेषस्य धृतेश्च वृत्तिविशेषस्य । चकारः समुच्चयार्थः । एवकारोऽन्यव्यवच्छेदार्थः । पृथक्प्रत्येकं गुणतः सत्त्वादिगुणभेदेन त्रिविधं भेदमशेषेण साकल्येन मयोच्यमानं शृणु । यद्यपि पूर्वं ज्ञानस्य त्रैविध्यं प्रतिपादितं, तथापि ज्ञानं वृत्तिसामान्यं बुद्धिस्तु वृत्तिविशेषः धृतिरपि वृत्तिविशेष एव ततो न पुनरुक्तिप्रसङ्गः ॥ २९ ॥

**श्री० टी०**–इदानीं बुद्धेर्धृतेश्चापि त्रैविध्यं प्रतिजानीते–**बुद्धेरिति** । स्पष्टोऽर्थः ॥ २९ ॥

**स० टी०**–ज्ञानं कर्म च कर्ता च तदेवं त्रयमीरितम् ॥ इदानीं प्रतिजानीते त्रैविध्यं बुद्धिधैर्ययोः ॥ १ ॥ बुद्धेरध्यवसायादिवृत्तिमत्त्या धृतेस्तथा ॥ सत्त्वादिगुणतो भेदं त्रिविधं त्वां प्रति स्फुटम् ॥ २ ॥ प्रोच्यमानं मयाप्तेन हेयादेयविवेकतः ॥ सावधानो भव श्रोतुं साकल्येन धनञ्जय ॥ ३ ॥ बुद्ध्युपाधिश्चिदाभासः कर्ता प्रोक्तः पुरात्र तु ॥ करणत्वेन निष्कृष्योपाधिमात्रं विवक्षितम् ॥ ४ ॥ २९ ॥

**भा० टी०**–एवं ज्ञानस्य बुद्धिवृत्तेः, कर्मणः क्रियायाः, कर्तुः बुद्ध्युपहितस्य च त्रैविध्यमुक्त्वा वृत्तिमत्या बुद्धेस्तद्वृतेश्च धृत्याख्यायास्त्रैविध्यं वक्तुमारभते–**बुद्धेरिति** । बुद्धेर्वृत्तिमत्या धृतेश्च तद्वृतेर्गुणतः सत्त्वादिगुणतस्त्रिविधभेदं मया प्रोच्यमानं कथ्यमानमशेषेण निःशेषतः पृथक्त्वेन हेयोपादेयविवेकतः शृणु श्रोतुं सावधानो भव । दिग्विजये मानुषं दैवं च प्रभूतं धनं यया बुद्ध्या धृत्या च त्वं जितवानसि सा त्वयाऽन्यैश्च धनादिसमस्तपुरुषार्थसिद्धये विजयहेतुभूता उपादेयेति बोधनाय मया प्रोच्यमानं बुद्धेर्धृतेश्च त्रिविधं भेदं शृण्विति द्योतनाय संबोधयति–धनंजयेति ॥ २९ ॥

**प० टी०**–अथ बुद्धेर्धृतेश्च त्रैविध्यमाह–**बुद्धेरिति** । स्पष्टार्थम् ॥ २९ ॥

**रा० टी०**–एवं ज्ञानकर्मकर्तॄणां गुणकृतं त्रैविध्यं निरूप्याधुना बुद्धेः धृतेश्च गुणतस्त्रैविध्यं प्रतिज्ञापूर्वमाह–**बुद्धेरित्यादिभिः सप्तभिः** । गुणतः सत्त्वादिगुणभेदतो निमित्तात्त्रिविधमेव बुद्धेर्भेदं धृतेश्च भेदं पृथक्त्वेन मया प्रोच्यमानमशेषेण शृणु । श्रुत्वा निष्ठां कुरु ॥ २९ ॥

**प्रवृत्तिं च निवृत्तिं च कार्याकार्ये भयाभये ॥**
**बन्धं मोक्षं च या वेत्ति बुद्धिः सा पार्थ ! सात्त्विकी ॥ ३० ॥**

**त० टी०**–तत्र त्रिविधबुद्धिमध्ये प्रथमं सात्त्विकीं बुद्धिमाह–**प्रवृत्तिं चेति** । प्रवृत्तिं त्रिवर्गसाधनभूतं

धर्मं, निवृत्तिं मोक्षसाधनभूतं धर्ममथवा प्रवृत्तिः स्ववर्णाश्रमोचिते धर्मे, निवृत्तिः परोचिते धर्मे कार्याकार्ये इदमस्मिन् देशे काले च कार्यं कर्तव्यमिदमस्मिन् देशे काले च न कर्तव्यमिति। भयाभये असत्कार्ये प्रवृत्तिर्भयं, सत्कार्ये प्रवृत्तिरभयं, बन्धं बन्धोपायं विषयाभिमुख्यं, मोक्षं मोक्षोपायं विषयवैराग्यं, च या वेत्ति हे पार्थ ! सा बुद्धिः सात्त्विकी। बुद्धेः करणत्वेन यया वेत्तीति वक्तव्ये तस्या वेदनासाधारणहेतुत्वात् कर्तृविवक्षया साध्वसिः छिनत्तीतिवत् या वेत्तीत्यविरुद्धम् ॥ ३० ॥

म० टी०—तत्र बुद्धेस्त्रैविध्यमाह त्रिभिः—प्रवृत्तिमिति। प्रवृत्तिं कर्ममार्गं, निवृत्तिं संन्यासमार्गं, कार्यं प्रवृत्तिमार्गे कर्मणां करणम्, अकार्यं निवृत्तिमार्गे कर्मणामकरणं, भयं प्रवृत्तिमार्गे गर्भवासादिदुःखं, अभयं निवृत्तिमार्गे तदभावं, बन्धं प्रवृत्तिमार्गे मिथ्याज्ञानकृतं कर्तृत्वाद्यभिमानं, मोक्षं निवृत्तिमार्गे तत्त्वज्ञानकृतमज्ञानतत्कार्याभावं च या वेत्ति करणे कर्तृत्वोपचारात् यया वेत्ति कर्ता बुद्धिः सा प्रमाणजनितनिश्चयवती हे पार्थ ! सात्त्विकी। बन्धमोक्षयोरन्ते कीर्तनात्तद्विषयमेव प्रवृत्त्यादि व्याख्यातम् ॥ ३० ॥

शं० टी०—सत्त्वबुद्धेर्लक्षणमाह—प्रवृत्तिमिति। प्रवृत्तिं च श्रुतिस्मृतिभ्यां विहितं धर्मं, निवृत्तिं ताभ्यां निषिद्धमधर्मं च कार्याकार्ये कार्यं देशकालादेरानुकूल्ये कर्तव्यं प्रातिकूल्ये त्यक्तव्यमकार्यम्। भयाभये भयं भयकारणमनर्थम्, अभयं भयाभावकारणमनर्थाभावम्, बन्धं बन्धहेतुं मोक्षं मोक्षहेतुं च बुद्धेर्ज्ञानकर्तृत्वासंभवात्करणार्थता। यया बुद्ध्या पदार्थतत्त्वनिश्चयकारिण्या धर्मादिकं पुरुषोऽधिकारी विजानाति सा बुद्धिः सात्त्विकी। यद्वा बन्धं मोक्षं चेत्यत्र बन्धमोक्षयोरेव प्रतिपाद्यत्वेन प्रवृत्त्यादिपदानां तद्विशेषणत्वेनान्वयो युक्तः, प्रवृत्तिं—प्रवृत्तिः सत्त्वबुद्धेः कारणभूतः कर्ममार्गः यत्र प्रवृत्तः शुद्धात्मा सन्मोक्षाय कल्पते तां प्रवृत्तिं च, निवृत्तिं च—निवृत्तिर्निष्कर्मत्वमार्गः संन्यासो यत्र प्रवृत्तः संसारबन्धान्मुक्तो भवति तां निवृत्तिं च। चत्रयं समुच्चयार्थम्। कार्याकार्ये कार्यमारुरुक्षोः कर्माणि विषये काले काले यत्कर्तव्यं तत्कार्यम्, तथाऽकार्यमारूढस्य यदकर्तव्यं त्यक्तव्यं तदकार्यं ते चोभे कार्याकार्ये। भयाभये यस्माद्बिभेति तद्भयमज्ञानं संसारकारणं यस्मादभयं भयाभावः सिध्यति तदभयं ज्ञानं मोक्षकारणं ते चोभे भयाभये बन्धमध्यासलक्षणमज्ञानकार्यं मोक्षमध्यासाभावलक्षणं ज्ञानकार्यं च यया बुद्ध्या शुद्धात्मा विचक्षण एतत्सर्वं क्षीरनीरवद्विभज्य विजानाति अज्ञस्येदं साधनं तज्ज्ञस्येदं साधनमारुरुक्षोरिदं कर्तव्यमारूढस्येदं त्यक्तव्यमिदमज्ञानमिदं ज्ञानमयं बन्धोऽयं मोक्ष इति स्वाधिकारानुरूपेण साध्यसाधनभेदं बन्धं मोक्षं च सम्यग्यया वेत्ति पुरुषः सा बुद्धिः सात्त्विकी बहुजन्मसुकृतपरिपाकसमुत्पन्नशुद्धसत्त्वकार्यत्वात्सात्त्विकीति बुधैरुच्यते इत्यर्थः। एतेन सात्त्विक्येव बुद्धिर्मुमुक्षोः प्रयत्नेन संपादनीयेति सूचितं भवति ॥ ३० ॥

श्री० टी०—तत्र बुद्धेस्त्रैविध्यमाह—प्रवृत्तिं चेति त्रिभिः। प्रवृत्तिं च धर्मे, निवृत्तिं चाधर्मे यस्मिन् देशे काले च यत्कार्यमकार्यं च भयाभये कार्याकार्यनिमित्तावर्थानर्थौ कथं बन्धः कथं वा मोक्ष इति या बुद्धिरन्तःकरणं वेत्ति सा सात्त्विकी। यया पुमान् वेत्तीति वक्तव्ये करणे कर्तृत्वोपचारः काष्ठानि पचन्तीतिवत् ॥ ३० ॥

स० टी०—तत्रादौ भगवानाह बुद्धेस्त्रैविध्यमादरात् ॥ प्रवृत्तिं कर्ममार्गं च बन्धहेतुतया मतम् ॥ १ ॥ निवृत्तिं कर्मसंन्याससमार्गं मोक्षैकसाधनम् ॥ प्रवृत्तिमार्गे करणं कर्मणामधिकारिणः ॥ २ ॥ निवृत्तौ कर्मणां त्यागः प्रवृत्तौ भयमामृतम् ॥ निवृत्तावभयं बन्धं प्रवृत्तौ भ्रान्तिजं नृणाम् ॥ ३ ॥ मोक्षं निवृत्तिमार्गे वै तत्त्वज्ञानप्रसादजम् ॥ वेत्ति बुद्धिर्यथावद्या सात्त्विकी सा मतिः स्मृता ॥ ४ ॥ या वेत्तीत्यत्र करणे कर्तृत्वमुपचारतः ॥ यया वेत्ति प्रमाणोत्थबुद्ध्या कर्तेति चार्थतः ॥ ५ ॥ प्रवृत्तावस्ति कर्तव्यं विधिकिंकरता यतः ॥ तत्रास्ति भयमत्यन्तं बन्धस्तत्र दृढो भवेत् ॥ ६ ॥ निवृत्तौ नास्ति कर्तव्यं विध्यादेरप्यभावतः ॥ अभयं तत्र शान्तस्य मोक्षः स्यादात्मनि स्थितिः ॥ ७ ॥ ३० ॥

भा० टी०—तत्र बुद्धेस्त्रैविध्यं विभजन्नादौ सात्त्विकीं बुद्धिमुदाहरति—प्रवृत्तिमिति । प्रवृत्तिं च निवृत्तिं च यस्मिन्वाक्ये बन्धमोक्षावुच्येते तस्मिन्नेव प्रवृत्तिनिवृत्त्योरुक्तत्वात् । कर्ममार्गस्य बन्धहेतुत्वात् निवृत्तिमार्गस्य मोक्षहेतुत्वात् च प्रवृत्तिनिवृत्ती कर्मसंन्यासमार्गावित्यवगम्यते । तथाच प्रवृत्तिः प्रवर्तनं बन्धहेतुः कर्ममार्गः, निवृत्तिः संन्यासहेतुर्मोक्षमार्गः, प्रवृत्तिं शास्त्रविहितविषयां निवृत्तिं तत्प्रतिषिद्धविषयामित्यपि बोध्यम् । कार्याकार्ये कर्तव्याकर्तव्ये देशकालाद्यपेक्षया दृष्टादृष्टार्थानां कर्मणां करणाकरणे । बिभेत्यस्मादिति भयं भयकारणं तद्विपरीतमभयमभयकारणं भयं चाभयं च भयाभये । भयं दुःखमभयं सुखमिति तु सात्त्विक्या बुद्धेर्दुःखानुभवस्यायोग्यत्वं, भयं प्रवृत्तिमार्गे अभयं निवृत्तिमार्गे इति विवक्षायामध्याहारदोषं चाभिप्रेत्याचार्यैर्न व्याख्यातम् । बन्धं सहेतुकं मोक्षं च सहेतुकं या वेत्ति सा बुद्धिः सात्त्विकी, करणे कर्तृत्वोपचारात्प्रथमा । सात्त्विक्या बुद्ध्या युक्तायाः पृथायाः पुत्रस्त्वमपि तथैव भवितुं योग्योऽसीति सूचनार्थं पार्थेति संबोधनम् ॥ ३० ॥

प० टी०—तत्र प्रथमं बुद्धेस्त्रैविध्यमाह—प्रवृत्तिं चेति त्रिभिः । शास्त्रविहितविषयां देशकालोचितां च धर्मे प्रवृत्तिं निवृत्तिमधर्मे देशकालानुसारं वयोवृत्तानुसारं वा कार्यमकार्यमिति अकार्ये भयं कार्येऽभयं बन्धं संसारबन्धं मोक्षमुद्धारप्रकारं च या वेत्ति सा बुद्धिः सात्त्विकी ॥ ३० ॥

रा० टी०—बुद्धेर्भेदमाह—प्रवृत्तिमित्यादित्रिभिः । प्रवृत्तिं संसारहेतुप्रवृत्तिहेतुं धर्मं च । कार्याकार्यं कर्तव्यमकर्तव्यं च । तन्निमित्तभयाभये बन्धमोक्षप्रकारं च या बुद्धिर्वेत्ति सा सात्त्विकीत्यर्थः । कर्तृत्वोपचाराद्या वेत्तीत्युक्तं । यया वेत्ति पुमानित्यर्थः ॥ ३० ॥

**यया धर्ममधर्मं च कार्यं चाकार्यमेव च ॥**
**अयथावत् प्रजानाति बुद्धिः सा पार्थ ! राजसी ॥ ३१ ॥**

त० टी०—राजसीं बुद्धिमाह—ययेति । यया पूर्वोक्तं धर्ममधर्मं च कार्यमवश्यकर्तव्यमकार्यमुपेक्षणीयं च देशकालादिषु यथावन्न जानाति हे पार्थ ! सा बुद्धिः राजसी ॥ ३१ ॥

म० टी०—ययेति । धर्मं शास्त्रविहितं, अधर्मं शास्त्रप्रतिषिद्धं, अदृष्टार्थमुभयं कार्यं चाकार्यं च दृष्टार्थमुभयमयथावदेव प्रजानाति यथावन्न जानाति, किं त्विदमित्थं न वेति चानध्यवसायं संशयं वा भजते यया बुद्ध्या सा राजसी बुद्धिः । अत्र तृतीयानिर्देशादन्यत्रापि करणत्वं व्याख्येयम् ॥ ३१ ॥

शं० टी०—राजसीं बुद्धिमाह—ययेति । धर्मं विहितमधर्मं प्रतिषिद्धं च कार्यं चाकार्यं च देशकालादेरानुकूल्ये प्रातिकूल्ये च कर्तव्याकर्तव्ये कर्मणि चकारादर्थानर्थानेतान्सर्वानयथावदयथार्थवद्यावदर्थानिर्णयेनासाकल्येन संदेहेन यया बुद्ध्या प्रजानाति पुरुषः सा बुद्धिः राजसी रजोगुणसंपन्नत्वाद्राजसीत्युच्यते ॥ ३१ ॥

श्री० टी०—राजसीं बुद्धिमाह—ययेति । अयथावत्संदेहास्पदत्वेनेत्यर्थः । स्पष्टमन्यत् ॥ ३१ ॥

स० टी०—शास्त्रेण विहितं धर्मं चाधर्मं शास्त्रनिन्दितम् ॥ दृष्टार्थं वाप्यदृष्टार्थं करणाकरणे तथा ॥ १ ॥ बुद्धिः यथावन्न विजानातीदमित्थं वा न वेति च ॥ अनिश्चयं संशयं वा यया बुद्ध्या भजत्यसौ ॥ २ ॥ बुद्धिः सा राजसी यत्नाच्छोधनीया मुमुक्षुभिः ॥ ३ ॥ ३१ ॥

भा० टी०—सात्त्विकीं बुद्धिमुक्त्वा राजसीं तामाह—ययेति । यया बुद्ध्या धर्मं शास्त्रचोदितम् अधर्मं च तत्प्रतिषिद्धं कार्यं च कर्तव्यमकार्यमेव चाकर्तव्यम् अयथावत् न यथावत्प्रजानाति सर्वतो निर्णयेन न प्रजानाति सा बुद्धिः पार्थ, राजसी । पृथापुत्रस्य तव नेयं युक्तेति संबोधनाशयः ॥ ३१ ॥

प० टी०—राजसीमाह—ययेति । अयथावत् संदेहास्पदत्वेनेत्यर्थः । स्पष्टमन्यत् ॥ ३१ ॥

रा० टी०–ययेति । धर्मादिकं यया बुद्ध्या अयथावत्प्रजानाति नियमेन यथावन्न जानाति । किंचिद्यथावत्किंचिदयथावज्जानातीति यावत् । याथार्थ्यनियमहीना या बुद्धिः सा राजसीत्यर्थः ॥ ३१ ॥

**अधर्मं धर्ममिति या मन्यते तमसाऽऽवृता ॥**
**सर्वार्थान् विपरीतांश्च बुद्धिः सा पार्थ! तामसी ॥३२॥**

त० टी०–तामसीं बुद्धिमाह–अधर्ममिति । या तमसाऽऽवृता तमोव्याप्ता सती अधर्मं धर्मं, धर्मं चाधर्ममिति मन्यते, सर्वार्थान् विपरीतांश्च मन्यते परतत्त्वमपरमपरतत्त्वं च परं, बद्धं जीवं मुक्तं, मुक्तं परमेश्वरं मायावच्छिन्नं परिच्छिन्नं प्रत्यगात्मानं विभुम्, अनन्तकल्याणगुणमीश्वरं निर्विशेषं, वेदान्तवेद्यं प्रमाणाविषयं, सत्यं विश्वमसत्यं, स्वभावतो जगद्भिन्नाभिन्नं ब्रह्म केवलभिन्नमभिन्नं चेत्येवं सर्वान्पदार्थान् विपरीतान्विपर्ययेण मन्यते सा तामसीत्यर्थः ॥ ३२ ॥

म० टी०–अधर्ममिति । तमसा विशेषदर्शनविरोधिना दोषेणावृता या बुद्धिरधर्मं धर्ममिति मन्यते, अदृष्टार्थे सर्वत्र विपर्यस्यति । तथा सर्वार्थान् सर्वान् दृष्टप्रयोजनानपि ज्ञेयपदार्थान् विपरीतानेव मन्यते सा विपर्ययवती बुद्धिस्तामसी ॥ ३२ ॥

शं० टी०–तामसीं बुद्धिमाह–अधर्ममिति । धर्ममधर्मं कार्यमकार्यमर्थमनर्थं च यया तमसा तमोगुणेनावृतयाऽस्पष्टप्रकाशया बुद्ध्या सर्वार्थान् वैपरीत्येन मन्यते गृह्णाति पुरुषः सा तामसी बुद्धिरित्यर्थः ॥ ३२॥

स० टी०–तमसा दोषरूपेण मतिर्याच्छादिता सती ॥ अधर्मं धर्ममित्येवं मन्यते विपरीतगा ॥ १ ॥ विपर्यस्यति सर्वत्र विशेषादर्शनाद्यया ॥ दृष्टप्रयोजनान्सर्वान्पदार्थान्मन्यतेऽन्यथा ॥ २ ॥ विपर्ययवती बुद्धिस्तामसी सात्यनर्थदा ॥ ३ ॥ ३२ ॥

श्री० टी०–तामसीं बुद्धिमाह–अधर्ममिति । विपरीतग्राहिणी बुद्धिस्तामसीत्यर्थः । बुद्धिरन्तःकरणं पूर्वोक्तं, ज्ञानं तु तद्वृत्तिः, धृतिरपि तद्वृत्तिरेव । यद्वा अन्तःकरणस्य धर्मिणो बुद्धिरप्यध्यवसायलक्षणाद् वृत्तिरेव । इच्छाद्वेषादीनां तद्वृत्तीनां बहुत्वेऽपि धर्माधर्मभयाभयसाधनत्वेन प्राधान्यादेतासां त्रैविध्यमुक्तम् । उपलक्षणं चैतदन्यासाम् ॥ ३२ ॥

भा० टी०–राजसीं बुद्धिमुक्त्वा तामसीं तामाह–अधर्ममिति । अधर्मं प्रतिषिद्धं धर्मं विहितमिति या मन्यते जानाति तमसाऽविवेकेनावृता वेष्टिता सती सर्वार्थानेव ज्ञेयपदार्थान् विपरीतांश्च विपरीतमेव विजानाति सा बुद्धिस्तामसी पार्थ! तव नेयमुचितेति संबोधनाशयः ॥ ३२ ॥

प० टी०–तामसीमाह–अधर्ममिति । या तमसाऽज्ञानेनावृता सत्यधर्ममेव धर्मं पश्यति यथा लक्षशो गोमक्षिकामारणेनैकोऽश्वः सुखी स्यादिति मन्यते, यद्वा पौंश्चल्येन परसंतुष्टिर्धर्म इति मन्यते, सर्वार्थान् पुत्रमित्रादीन् विपरीतान् प्रतिकूलकर्तॄन् पश्यति सा तामसी । अत्र बुद्धिरव्यवसायात्मिकान्तःकरणवृत्तिर्न तु निश्चयात्मिका यतः सैकविधा न त्रिधा । तदुक्तम् 'व्यवसायात्मिका बुद्धिरेकेह कुरुनन्दन' इति । तर्हि कथमन्येषामिच्छाद्वेषादीनामनुद्देश इति चेत्सत्यम् । धर्माधर्मप्रवृत्तौ बुद्धेर्धृतेर्वा प्राधान्यमिति ज्ञेयम् ॥ ३२ ॥

रा० टी०–अधर्ममिति । या च बुद्धिरधर्मं धर्ममिति मन्यते । नैतावन्मात्रं किंतु तमसाऽवृता अज्ञानेनावृता सती सर्वार्थान्विपरीतान् यैराकारैरर्थाः वर्तन्ते ततो विपरीतैरसत्यत्वानीश्वरत्वापराधीनत्वक्षणिकत्वादिप्रकारैश्च मन्यते सा बुद्धिस्तामसीत्यर्थः ॥ ३२ ॥

**धृत्या यया धारयते मनःप्राणेन्द्रियक्रियाः ॥**
**योगेनाव्यभिचारिण्या धृतिः सा पार्थ! सात्त्विकी ॥३३॥**

**त० टी०**—इदानीं धृतेस्त्रैविध्ये प्रथमां सात्त्विकीं धृतिमाह—धृत्येति । अव्यभिचारिण्या नित्यसमाध्यनुगतया यया धृत्या योगेन सात्त्विकविषये चित्तैकाग्र्येण मनसः प्राणस्येन्द्रियाणां च क्रियाश्चेष्टाः पुमान् धारयते धृतिः सा पार्थ ! सात्त्विकी ज्ञेयेत्यर्थः ॥ ३३ ॥

**म० टी०**—इदानीं धृतेस्त्रैविध्यमाह—धृत्येति त्रिभिः । योगेन समाधिनाऽव्यभिचारिण्याऽविनाभूतया समाधिव्याप्तया यया धृत्या प्रयत्नेन मनसः प्राणस्येन्द्रियाणां च क्रियाश्चेष्टा धारयते—उच्छास्त्रप्रवृत्तेर्निरुणाद्धि, यस्यां सत्यामवश्यं समाधिर्भवति, यया च धार्यमाणा मनआदिक्रियाः शास्त्रमतिक्रम्य नार्थान्तरमवगाहन्ते धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

**शं० टी०**—धृतेरपि त्रैविध्यं वदन् सात्त्विकीं धृतिमाह—धृत्येति । योगेन ब्रह्मणि चित्तैकाग्र्यलक्षणेन समाधिना अव्यभिचारिण्या अविनाभूतया धृत्या धारणात्मिकया धीवृत्त्या यया मनःप्राणेन्द्रियक्रियाः मनसः प्राणानामिन्द्रियाणां चक्षुरादीनां च क्रियाः या याश्चेष्टाः बहिःप्रवृत्तिरूपास्ताः सर्वा धारयते ब्रह्मनिष्ठो धारयति नियच्छति ब्रह्मणि चित्तैकाग्रतायां स्थिरायां सत्यां मनःप्राणेन्द्रियक्रियाः सर्वाः स्वयमेव स्थिरा भवन्ति, तेनैकाग्रताधारणाशक्त्योर्योगाव्यभिचारित्वं मनःप्राणेन्द्रियक्रियाधारकत्वं च सहैव सिध्यति, अत एवोच्यते योगेनाव्यभिचारिण्या । यया धृत्या मनःप्राणेन्द्रियक्रिया धारयते सा धृतिर्धारणाशक्तिः सात्त्विकी शुद्धसत्त्वगुणसंभूतत्वात्सात्त्विकीत्युच्यते मुनिभिरित्यर्थः । पुण्यकर्मपरिपाकवशात्संप्राप्तशुद्धसत्त्वस्य पुरुषस्य ज्ञानं सात्त्विकं बुद्धिः सात्त्विकी धृतिरपि सात्त्विकी मनः प्राणेन्द्रियवृत्तयोऽपि सात्त्विक्य एव भवन्ति । ज्ञानादीनां सात्त्विकत्वं नाम बाह्यानालम्बनमेव ततो मुमुक्षोः सत्त्वशुद्धिरेव संपादनीयेति सिद्धम् ॥ ३३ ॥

**श्री० टी०**—इदानीं धृतेस्त्रैविध्यमाह—धृत्येतित्रिभिः । योगेन चित्तैकाग्र्येण हेतुना व्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणस्येन्द्रियाणां च क्रिया धारयते नियच्छति सा धृतिः सात्त्विकी ॥ ३३ ॥

**स० टी०**—धृतेरिदानीं त्रैविध्यं प्राहोदारधियां गतिः ॥ समाधिना विनाभूतरूपया तत्र लग्नया ॥ १ ॥ यया धृत्या प्रयत्नेन प्राणस्य मनसः क्रियाः ॥ इन्द्रियाणां तथा चेष्टा निरुणद्धि कुमार्गतः ॥ २ ॥ यस्य सत्यामवश्यं हि समाधिर्जायते सताम् ॥ धार्यमाणा यया धृत्या मनःप्राणेन्द्रियक्रियाः ॥ ३ ॥ नैव शास्त्रमतिक्रम्याऽवगाहन्तेऽन्यगोचरम् ॥ सा धृतिः सात्त्विकी पार्थ महत्पुण्यवतां भवेत् ॥ ४ ॥ ३३ ॥

**भा० टी०**—एवं बुद्धेस्त्रैविध्यं विभज्य धृतेस्त्रैविध्यं विभजन्नादौ सात्त्विकीं धृतिमाह—धृत्येति । धृत्या यया योगेन समाधानेनाव्यभिचारिण्या नित्यसमाध्यनुगतया मनःप्राणेन्द्रियाणां क्रियाश्चेष्टा उच्छास्त्रमार्गप्रवृत्तीर्धारयति—धृत्या हि धार्यमाणा उच्छास्त्रविषया न भवन्ति । एतदुक्तं भवति—उक्तक्रिया धार्यमाणा योगेन ब्रह्मणि समाधानेनैकाग्र्येणाव्यभिचारिण्या धृत्या धारयतीत्येवंलक्षणा या धृतिः सा पार्थ सात्त्विकी ॥ ३३ ॥

**प० टी०**—अथ धृतेस्त्रैविध्ये सात्त्विकीं धृतिमाह—धृत्येति । योगेन चित्तैकाग्र्येण हेतुनाऽव्यभिचारिण्या विषयान्तरमधारयन्त्या यया धृत्या मनसः प्राणानामिन्द्रियाणां च क्रिया धारयते नियच्छति सा धृतिः सात्त्विकी ॥ ३३ ॥

**रा० टी०**—प्रतिज्ञातं धृतेस्त्रैविध्यमाह—धृत्येत्यादित्रिभिः । अव्यभिचारिण्या विहितविषयया योगेन भगवद्भक्तियोगेन युक्तयेति शेषः । यया धृत्या मनसः प्राणस्येन्द्रियाणां च क्रिया धारयते । सा धृतिः सात्त्विकीत्यर्थः ॥ ३३ ॥

## यया तु धर्मकामार्थान् धृत्या धारयतेऽर्जुन ! ॥
## प्रसङ्गेन फलाकाङ्क्षी धृतिः सा पार्थ ! राजसी ॥ ३४ ॥

**त० टी०**—राजसीमाह—**यया त्विति** । फलाकाङ्क्षी पुरुषः प्रसङ्गेनात्मनः कर्तृत्वाभिनिवेशेन यया धृत्या धर्मकामार्थान् धर्मं काममर्थं च धारयते प्राप्यतया धारयतेऽवधारयति न तु तद्विलक्षणं मोक्षाख्यं कदाचिदपि हे पार्थ ! सा धृती राजसी ॥ ३४ ॥

**म० टी०**—**ययेति** । तुः सात्त्विक्या भिनत्ति । प्रसङ्गेन कर्तृत्वाद्यभिनिवेशेन फलाकाङ्क्षी सन् यया धृत्या धर्मं काममर्थं च धारयते नित्यं कर्तव्यतयाऽवधारयति न तु मोक्षं कदाचिदपि धृतिः सा पार्थ राजसी ॥ ३४ ॥

**शं० टी०**—राजसी धृतिमाह—**ययेति** । तुशब्दोऽन्यव्यावृत्त्यर्थः । यया तु धृत्या पुरुषो धर्मकामार्थान् धर्ममर्थं कामं च प्राधान्येन धारयते धरति न विमुञ्चति प्रसङ्गेन धर्मादीनां प्रसक्तौ संपादनकाले फलाकाङ्क्षी भवति सा धर्मादीनां धात्री धृतिः राजसी ॥ ३४ ॥

**श्री० टी**—राजसीं धृतिमाह—**यया त्विति** । यया तु धृत्या धर्मार्थकामान् प्राधान्येन धारयते न मुञ्चति तत्प्रसङ्गेन फलाकाङ्क्षी च भवति सा राजसी धृतिः ॥ ३४ ॥

**स० टी०**—कर्तृत्वाभिनिवेशेन फलाकाङ्क्षी च सन् यया ॥ धर्ममर्थं तथा कामं नित्यं कार्यतया जनः ॥ १ ॥ धृत्यावधारयत्यच्छं न तु मोक्षं कदाचन ॥ सा धृती राजसी पार्थ संसारैकफलप्रदा ॥२॥३४॥

**भा० टी०**—सात्त्विकीं धृतिमुक्त्वा राजसीं तामाह—**ययेति** । यया तु धृत्या धर्मार्थकामान् धारयते मनसि नित्यकर्तव्यतारूपान् अवधारयति न तु शुद्धब्रह्ममोक्षाख्यमिति ध्वनयन्नाह—हे अर्जुनेति । प्रसङ्गेन यस्य यस्य धर्मादेर्धारणप्रसङ्गस्तेन तेन प्रसङ्गेन फलाकाङ्क्षी प्रकर्षेण सङ्गः कर्तृत्वाभिनिवेशस्तेनेति केचित् । प्रसङ्गेन धर्मादेः संबन्धेनेत्यन्ये । आचार्यैस्तु प्रसिद्धार्थपरित्यागे विनिगमकविरहमभिप्रेत्यैवं न व्याख्यातम् । यः पुरुषः प्रसङ्गेन फलाकाङ्क्षी सन् यया धृत्या धर्मादीन्धारयते तस्य सा धृतिः हे पार्थ ! राजसी ॥ ३४ ॥

**प० टी०**—राजसीमाह—**ययेति** । यया धृत्या धर्मकामार्थान् प्राधान्येन धारयति न विमुञ्चति तत्प्रसंगेन च फलाकाङ्क्षी च भवति सा राजसी धृतिः ॥ ३४ ॥

**रा० टी०**—**ययेति** । यया धृत्या धर्मकामार्थान्धारयते । प्रसङ्गेन प्रकृष्टेन कर्मणि मदीयतास्नेहेन फलाकाङ्क्षी धृतिः सा राजसीत्यर्थः ॥ ३४ ॥

## यया स्वप्नं भयं शोकं विषादं मदमेव च ॥
## न विमुञ्चति दुर्मेधा धृतिः सा पार्थ ! तामसी ॥ ३५ ॥

**त० टी०**—तामसीं धृतिमाह—**ययेति** । यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकमिष्टवियोगनिमित्तदर्शनजं विषादं खेदं मदं विरुद्धविषयानुभवजन्यं हर्षम्—एतान् दुर्मेधा दुष्टा निषिद्धार्थधारणावती मेधा बुद्धिर्यस्य स पुरुषो न विमुञ्चति सदा तत्रैव निष्ठां करोतीत्यर्थः । धृतिः सा पार्थ ! तामसी भवतीति संबन्धः ॥ ३५ ॥

**म० टी०**—**ययेति** । स्वप्नं निद्रां भयं त्रासं शोकमिष्टवियोगनिमित्तं संतापं, विषादमिन्द्रियावसादं, मदमशास्त्रीयविषयसेवोन्मुखत्वं च यया न विमुञ्चत्येव किंतु सदैव कर्तव्यतया मन्यते दुर्मेधाः विवेकासमर्थः, धृतिः सा पार्थ तामसी ॥ ३५ ॥

**शं० टी०**–तामसीं धृतिमाह–**ययेति** । दुष्टा तमोदोषदूषिता मेधा बुद्धिर्यस्य स दुर्मेधाः दुर्भगः पुरुषः यया धृत्या स्वप्नं निद्रां भयं शोकं विषादं च मदमेव सदा धारयते न तु कचिदपि मुञ्चति सा निद्रादीनां धात्री धृतिस्तामसीत्युच्यते । सर्वव्यवहारहेतोर्बुद्धेस्त्रैविध्ये सिद्धे तद्वारभतानां श्रोत्रादिकरणानामपि सात्त्विकत्वादिभेदसद्भावः सूचितः ॥ ३९ ॥

**श्री० टी०**–तामसीं धृतिमाह–**ययेति** । दुष्टा अविवेकबहुला मेधा यस्य सः दुर्मेधाः पुरुषः यया धृत्या स्वप्नादीन्न विमुञ्चति पुनः पुनरावर्तयति । स्वप्नोऽत्र निद्रा सा धृतिस्तामसी ॥ ३९ ॥

**स० टी०**–निद्रां त्रासं च संतापं स्वकीयेष्टवियोगजम् ॥ इन्द्रियाद्यवसादं च भोगासक्तिकरं मदम् ॥१॥ न विमुञ्चति किं त्वेतत्कर्तव्यत्वेन मन्यते ॥ निर्विवेको यया धृत्या सा धृतिः पार्थ तामसी ॥ २ ॥ ३९ ॥

**भा० टी०**–राजसीं धृतिं व्युत्पाद्य तामसीं तां व्युत्पादयति–**ययेति** । दुर्मेधाः दुष्टा कुत्सिता मेधा बुद्धिर्यस्य स दुर्बुद्धिर्यया धृत्या स्वप्नं निद्रां भयं त्रासं शोकं प्रियवियोगनिमित्तं संतापं विषादं विषण्णतामिन्द्रियखिन्नत्वं विषयसेवामात्मनो बहुमन्यमानो मत्त इव यो मदमेव च मनसि नित्यमेव कर्तव्यरूपतया कुर्वन्न विमुञ्चति धारयत्येव सा धृतिः पार्थ ! तामसी ॥ ३९ ॥

**प० टी०**–तामसीमाह–**यया स्वप्नमिति** । दुष्टाऽविवेकबहुला मेधा यस्यासौ दुर्मेधाः पुरुषो यया धृत्या स्वप्नं स्वप्नस्थपदार्थदर्शनेन भविष्यं चिन्तयति तथा भयं शोकं विषादं मदं च न विमुञ्चति स्थिरीकरोति सा तामसी धृतिः ॥ ३९ ॥

**रा० टी०**–**ययेति** । यो दुर्मेधाः दुष्टबुद्धिः पुरुषः यया धृत्या स्वप्नमतीव निद्रां भयं शोकं दुःखं विषादं मनोदौर्बल्यं मदं च स्वप्नाद्युपलक्षितं सर्वं निषिद्धं भगवद्द्वेषादि न विमुञ्चति सा तामसीत्यर्थः ॥ ३९ ॥

## सुखं त्विदानीं त्रिविधं शृणु मे भरतर्षभ ! ॥
## अभ्यासाद्रमते यत्र दुःखान्तं च निगच्छति ॥ ३६ ॥

**त० टी०**–एवं ज्ञानकर्मकर्तृबुद्धिधृतीनां त्रैविध्यं निरूपितमिदानीं सर्वजीवाभिलषितस्य सुखस्य गुणतस्त्रैविध्यं वक्तुं प्रतिजानीते–**सुखं त्वित्यर्धेन** । पूर्वोक्ता ज्ञानकर्मादयो यदर्थकास्तत्सुखं तु इदानीं मे मम वचनात्त्रिविधं शृणु, हेयोपादेयज्ञानार्थमवधारय । तत्र सात्त्विकं सुखमाह सार्धेन—**अभ्यासादिति** । यत्र यस्मिन्सुखे अभ्यासाच्चिरकालावर्तनाद्रमते अबाधितां रतिं प्राप्नोति दुःखान्तं च निगच्छति, दुःखस्यान्तं च नितरां गच्छति न तु विषयसुख इव दुःखोदर्कं प्राप्नोति ॥ ३६ ॥

**म० टी०**–एवं क्रियाणां कारकाणां च गुणतस्त्रैविध्यमुक्त्वा तत्फलस्य सुखस्य त्रैविध्यं प्रतिजानीते श्लोकार्धेन–**सुखमिति** । सात्त्विकं सुखमाहार्धेन च मे मम वचनात् शृणु हेयोपादेयविवेकार्थं व्यासङ्गान्तरनिवारणेन मनः स्थिरीकुरु । हे भरतर्षभेति योग्यता दर्शिता । यत्र समाधिसुखे अभ्यासादतिपरिचयात् रमते परितृप्तो भवति नतु विषयसुख इव सद्य एव । यस्मिन् रममाणश्च दुःखस्य सर्वस्याप्यन्तमवसानं नितरां गच्छति नतु विषयसुख इवान्ते महद्दुःखम् ॥ ३६ ॥

**शं० टी०**–एवं गुणभेदेन कर्तॄणां करणानां कर्मणां च त्रैविध्यमुक्त्वा कर्मफलस्य सुखस्यापि त्रैविध्यं वदन् सात्त्विकसुखस्य स्वरूपमाह द्वाभ्याम्–**सुखं त्विति** । स्पष्टार्थः ॥ ३६ ॥

**श्री० टी०**–सुखस्य त्रैविध्यं प्रतिजानीते अर्धेन–**सुखमिति** । स्पष्टार्थः । तत्र सात्त्विकं सुखमाह–**अभ्यासादिति सार्धेन** । यत्र यस्मिन्सुखे अभ्यासादतिपरिचयाद्रमते न तु विषयसुख इव सहसा रतिं प्राप्नोति, यस्मिन् रममाणश्च दुःखस्यान्तमवसानं नितरां गच्छति प्राप्नोति ॥ ३६ ॥

स० टी०–क्रियाणां कारकाणां च गुणात्त्रैविध्यमीरितम् ॥ त्रैविध्यं प्रतिजानीते तत्फलेऽप्यधुना सुखे ॥ १ ॥ हेयादेये विवेकाय वचनान्मे शृणु स्फुटम् ॥ सुखं त्रिविधमत्यन्तं सावधानेन चेतसा ॥ २ ॥ सार्धेन सात्त्विकं प्राह सुखमानन्दवारिधिः ॥ सावधानः सुखे यत्राभ्यासात्परिचयाद्रतिम् ॥ ३ ॥ प्रपद्यते तथा यत्र रममाणोऽनुभूतितः ॥ सर्वदुःखोपशमनं नितरां गच्छति स्वयम् ॥ ४ ॥ ३६ ॥

भा० टी०–एवं क्रियाणां कारकाणां च गुणतस्त्रिविधो भेद उक्तः । अथेदानीं फलस्य च सुखस्य त्रिविधं भेदं वक्तुमारभते–सुखमिति । सुखं तु इदानीं त्रिविधं मे मम वचनाच्छृणु अवधारय । त्रिविधस्यापि सुखस्य सामान्यलक्षणमाह–अभ्यासादावृत्तेर्यत्र सात्त्विकादिसुखे रमते यत्र रममाणश्च दुःखस्यान्तमवसानं च निगच्छति निश्चयेन प्राप्नोति । भरतर्षभेति संबोधयन् सुखस्य त्रैविध्यं मम वचनाच्छ्रुत्वा सात्त्विकं सुखमनुभवितुं योग्योऽसीति सूचयति । तत्र सात्त्विकं सुखमाह–सार्धेन । यत्र यस्मिन्सुखेऽभ्यासदतिपरिचयाद्रमते न तु विषयसुख इव सहसा रतिं प्राप्नोतीत्यपरे । भाष्यस्य समानतया न तद्विरोधः ॥३६॥

प० टी०–अथ त्रिविधं सुखमाह–सुखमिति द्वाभ्याम् । इदानीं त्रिविधं सुखं मे मत्तः शृणु । तत्र सात्त्विकं सुखमाह–अभ्यासादिति । यत्र यस्मिन् सुखेऽभ्यासान्निरन्तरानुसंधानाद्रमते रममाणो दुःखान्तं दुःखावसानं निगच्छति नितरां प्राप्नोति ॥ ३६ ॥

रा० टी०–प्रतिज्ञापूर्वं गुणतः सुखस्य त्रैविध्यमाह–सुखं त्विति । यत्र यस्मिन्सुखे चिरकालमभ्यासात्पुनः पुनः रमते, दुःखान्तं दुःखनाशं च नितरां गच्छति प्राप्नोति तत्सुखं त्रिविधमित्यर्थः । यद्वा पूर्वार्धमेव प्रतिज्ञापरम् । उत्तरार्धम्–॥ ३६ ॥

**यत्तदग्रे विषमिव परिणामेऽमृतोपमम् ॥**
**तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम् ॥ ३७ ॥**

त० टी०–तदेव विशिनष्टि–यत्तादिति । यत्तत्किमपि अग्रे वैराग्यासनयमनियमोपवासज्ञानध्यानाद्युपासनारम्भे बह्वायाससाध्यत्वाद्विषमिवातिदुःखमिव भवति । परिणामे वैराग्यादिपूर्वकोपासनपरिपाके अमृतोपममतिप्रियं भवति । यत आत्मबुद्धिप्रसादजम्–आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादो रजस्तमःकार्यकामलोभमोहत्यागेन स्वच्छतया निरतिशयानन्दरूपेऽवस्थानं ततो जातं सुखं सात्त्विकं प्रोक्तं तद्विद्वद्भिः ॥ ३७ ॥

म० टी०–तदेव विवृणोति–यदिति । यत् अग्रे ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासनिर्वाह्यत्वाद्विषमिव द्वेषविषावहं भवति । परिणामे ज्ञानवैराग्यादिपरिपाके त्वमृतोपमं प्रीत्यतिशयास्पदं भवति । आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादो निद्रालस्यादिराहित्येन स्वच्छतयाऽवस्थानं ततो जातमात्मबुद्धिप्रसादजं, नतु राजसमिव विषयेन्द्रियसंयोगजं, न वा तामसमिव निद्रालस्यादिजम् । ईदृशं यदनात्मबुद्धिनिवृत्त्यात्मबुद्धिप्रसादजं समाधिसुखं तत्सात्त्विकं प्रोक्तं योगिभिः । अपर आह–अभ्यासादावृत्तेर्यत्र रमते प्रीयते यत्र च दुःखावसानं प्राप्नोति तत्सुखम् । तच्च त्रिविधं गुणभेदेन । शृण्विति तत्पदाध्याहारेण पूर्णस्य श्लोकस्यान्वयः । यत्तदग्र इत्यादिश्लोकेन तु सात्त्विकसुखलक्षणमिति । भाष्यकाराभिप्रायोऽप्येवम् ॥ ३७ ॥

शं० टी०–यदिति । यद्ब्राह्मं सुखं निरन्तरं नित्यप्राप्तमप्यग्रे स्वसिद्धेः पूर्वं स्वसिद्धिसाधनस्य विषवत्स्वीकर्तुं दुष्करत्वात्स्वयमपि विषमिव प्राप्तुमनुभवितुं चाशक्यमेव भवति, यतः स्वसाधनं सदसद्विवेको दुर्लभो मुमुक्षुत्वं ततो दुर्लभं वैराग्यं ततो दुर्लभं शमादिसंपत्तिस्ततो दुर्लभा संन्यासस्ततोऽपि दुर्लभः श्रद्धैकमूलः श्रवणादिस्ततो दुर्लभः मुक्तेरसाधारणकारणं तज्जन्यं ज्ञानमपरोक्षमतीव दुर्लभतरं तत्परिपाक-

हेतुः समाधिर्दुर्लभतमस्तत एव स्वसिद्धिसाधनस्य समाध्येकमूलस्य ज्ञानस्य प्राच्योदीच्याङ्गैस्तीव्रमोक्षेच्छैककारणैः सह दुष्प्रापत्वात्स्वयमपि तद्वद्दुष्प्रापं भोक्तुमशक्यं च भवतीत्यर्थः। नन्वेवं सति यतीनां मोक्षसुखापेक्षावतां का गतिरित्यकाङ्क्षायामाह—**परिणामेति**। सद्गुरोश्चेश्वरस्यानुग्रहात्सिद्धस्य तत्प्राप्तिसाधनस्य ज्ञानस्य नित्यनिरन्तरं समाधिना परिणामे परिपक्वत्वे सिद्धे सत्यममृतोपमं भवति, यथा कालकूटापायेन प्राप्तममृतं देवानां जरामृत्युनिवर्तकं भवति, तथा करणदोषापायेन प्राप्तं तद्ब्राह्मं सुखमपि यतीनां महात्मनां जन्ममरणदुःखप्रवाहविध्वंसकत्वादमृततुल्यं परमानन्दकरं च भवति। ततो ब्रह्मविद्भिः परमहंसैर्मोक्षसुखानुभूतिकामैः साधनशुद्धिसिद्धावेव प्रयत्नः कर्तव्यो न तु साध्यसिद्धये, साधने सिद्धे साध्यं स्वयमेव सिध्यति। यथा चक्षुःसौष्ठवे सिद्धे पूर्णचन्द्रदर्शनाह्लादः सिध्यति, तद्वद्यत्सुखमात्मबुद्धिप्रसादजं यया बुद्ध्या ज्ञानेनात्मा सच्चिदानन्दैकलक्षणोऽयमहमस्मीति साक्षात्क्रियते, तस्या एव बुद्धेः प्रसादश्चिरकालनित्यनिरन्तरसविकल्पकनिर्विकल्पकसमाध्यभ्यासातिशयेन रजसो रजःकार्याणां च रागद्वेषलोभमोहदम्भदर्पहर्षविषादासूयाहंकरादीनां तमसश्च तमःकार्याणां संशयासंभावनाविपरीतभावनाजाड्यालस्यप्रमादादीनां च सम्यग्भावप्रतिबन्धकानां निःशेषनिवृत्त्या समुत्पन्नः शुद्धस्फटिकवद्दर्पणवदवभासमानो यः स्वच्छत्वगुणः शुद्धसत्त्वाभिधानस्तस्माज्जायते चक्षुषो दोषनिवृत्त्या पूर्णचन्द्रिकावद्बुद्धिवृत्तेः स्वयमेवाविर्भवतीत्यात्मबुद्धिप्रसादजमित्युच्यते। न तु विषयसुखवज्जायते, जन्यत्वे त्वनित्यत्वपरिच्छिन्नत्वसातिशयत्वादिदोषप्रसङ्गान्मुमुक्षूणामनाशास्यत्वोपपत्तेश्च। ततश्चक्षुषो नैर्मल्यापत्त्या रूपवद्बुद्धिवृत्तेः शुद्धसत्त्वापत्त्याऽप्रयत्नेन स्वयमेव विषयीभवति, नित्यसिद्धत्वात्स्वरूपसुखस्य। ननु ब्रह्मविदां ब्राह्मं सुखमतिक्लेशसाध्यं, विषयसुखं त्वतिसुलभं सुखार्थिभिस्तदेवानुभोक्ष्यामिति चेद्भवानत्र प्रष्टव्यः। किं वैषयिकं सुखं विषयधर्मो वा करणधर्मो वा कर्मधर्मो वा भोक्तृधर्मो वा देशधर्मो वा कालधर्मो वाऽप्यज्ञानधर्मो वा ज्ञानधर्मो वात्मधर्मो वा स्वयं व्यापाराभावस्वरूपं वा दुःखाभावस्वरूपं वेति ? नाद्यः, विषयसन्निधाने पूर्वक्षण इवोत्तरक्षणे सुखादर्शनाद्व्यञ्जकाभावात् व्यङ्ग्यानुदय इति चेन्न, दूरदृष्टत्वे पूर्वक्षणेऽपि सुखानुदयप्रसङ्गात्तादृगिष्टविषयासिद्धेश्च। न द्वितीयः, विषयव्यवधाने सुखादर्शनात्। नापि तृतीयः, सुखस्य पुण्यकर्मकार्यत्वेन तद्धर्मत्वानुपपत्तेस्तथात्वे धर्म्युत्पत्त्युत्तरक्षण एव सुखोदयप्रसङ्गात्। न चतुर्थः, भोक्तुः सर्वदा विक्षेपदर्शनात्। नापि पञ्चमः, सुखार्थिनः स्वर्गगमनाभावप्रसङ्गात्स्वर्गस्थानामपि दुःखश्रवणाच्च। नापि षष्ठः, शीतातपवत्सार्वत्रिकत्वप्रसङ्गात्। नाप्यज्ञानधर्मः, वस्तुनो भोग्यत्वाज्ञाने सुखादर्शनात्। नापि ज्ञानधर्मः, वस्तुरम्यत्वज्ञानेऽपि विरक्तस्य सुखानुदयात्। सुखं करणव्यापाराभावस्वरूपं न भवति स्वप्ने सुखादर्शनात् करणव्यापारवति भोजनादौ सुखदर्शनाच्च। नापि च दुःखाभावस्वरूपं, दुःखाभाववति मृत्पिण्डे सुखादर्शनात्। अचेतनत्वात्तत्र तदभिव्यक्त्यभाव इति चेन्न, दुःखाभाववत्यां बुद्ध्यस्फूर्तौ सुखादर्शनाद्यदुक्तं मूढतमेन दुखाभावः सुखमिति तन्न सुखस्य भावत्वेनाभावरूपत्वानुपपत्तेः। नैवैतेन पशुकल्पेन सौषुप्तिकसुखमनुभूतं निर्विषयमत एवोक्तं दुखाभावः सुखमिति। तर्हि सुखमात्मन एव धर्म इति चेन्न, सुखमात्मनः स्वरूपं न तु धर्मः, धर्मत्वे धर्मनाशादात्मनोऽपि नाशप्रसङ्गात्। ननु स्वरूपत्वेऽपि सुखस्य क्षणिकत्वात्स्वरूपभूतसुखनाशे त्वात्मनोऽपि नाश एवेति चेन्न, "आकाशवत्सर्वगतश्च नित्यः" इत्यात्मनो नित्यत्वश्रवणात्तत्स्वरूपभूतसुखस्यापि नित्यत्वसिद्धेः। ननु सुखं यथात्मनः स्वरूपं तथा दुःखमप्यात्मन एव स्वरूपं भवतु सुख्यहं दुःख्यहमिति सुखदुःखप्रत्यययोरेकविषयत्वदर्शनादिति चेन्न, मृतोऽस्मीतिवत् दुःख्यहमितिप्रत्ययस्य संमोहकार्यत्वेन मिथ्यात्वोपपत्तेः। न हि पुत्रे मृते मृतोऽहमस्मीति वक्तुर्मरणमस्ति मोहादारोपणं विना, तद्वद्दुःख्यहमिति दुःखित्वप्रत्ययस्यात्मनि मोहादारोपितत्वान्मिथ्यात्वमेव। दुःखस्यात्मनः स्वरूपत्वे सुषुप्तावुपलभ्येत सुखमहमस्वाप्समिति सुखोपलब्धिवत्तदुपलम्भाभावात् दुःखमात्मनः स्व-

रूपं न भवति। सुखमेवात्मस्वरूपं सुखस्यैवात्मस्वरूपत्वे सुखमहमस्वाप्समिति प्रत्यक्षं प्रमाणम्। आत्मा सुखस्वरूपः सुषुप्तौ सुखमात्रोपलम्भात्समाधिवदित्यनुमानं च। सच्चिदानन्दमात्रमेकरसं बुद्धसुखस्वरूप आत्मा "सद्घनोऽयं चिद्घन आनन्दघनः" इति श्रुतिश्च। मुमुक्षुप्रवृत्त्यन्यथानुपपत्तिप्रसूतार्थापत्तिररि च प्रमाणम्। तर्हि दुःखं कस्य स्वरूपमिति चेदनात्मन एव स्वरूपमिति ब्रूमः, अनृतजडदुःखात्मकत्वमनात्मनः सर्वप्रसिद्धेः। अतोऽन्यदार्तमिति नाल्पे सुखमस्तीति। तदेतज्जडं मोहात्मकम् "अन्तवत्तुच्छम्" इत्यादिश्रुतिप्रसिद्धेश्च। ननु सुखस्यात्मरूपत्वे सिद्धे विषयसुखमिति व्यपदेशः कथमिति चेदुच्यते। पुण्यकर्मवशात्पुरुषस्येष्टपदार्थसांनिध्ये सत्यन्तःकरणे सत्त्वमाविर्भवति, तत्रानन्दस्वरूप आत्मा प्रतिबिम्बति, प्रतिबिम्बात्मानन्दस्फूर्तिरेव विषयसांनिध्याद्विषयसुखमित्युच्यते। पुण्यतारतम्यात्सत्त्वतारतम्यं, सत्त्वतारतम्यात्प्रतिबिम्बस्फूर्तेश्च तारतम्यं, तेन सुखस्यापि तरतमभावः। तत एव श्रूयते "एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति" इति। ततो विषयसुखमाभासिकं महान्तो ब्रह्मविदो नापेक्षन्ते पूर्णानन्दामृतरसपायिनः। नन्वात्मन आनन्दस्वरूपत्वात्परिपूर्णत्वाच्च सदा सर्वत्र सर्वेषामयत्नतः सुखानुभूतिः स्वयमेव स्यादिति चेन्न, वृत्तिशुद्धिसापेक्षत्वादात्मस्वरूपोपलब्धेः। यद्वद्राकाचन्द्रचन्द्रिकायाः परिपूर्णत्वेऽपि तद्दर्शनाह्लादश्चक्षुःसौष्ठवमपेक्षते, तद्वदात्मानन्दानुभूतिरपि बुद्धिप्रसादमपेक्षते। तत एवोच्यते भगवताप्यात्मबुद्धिप्रसादजमिति। एवमात्मबुद्धिप्रसादजं नित्यं निरन्तरं निरपेक्षं निरतिशयं निरवधिकं यद्ब्राह्मं सुखं तत्सात्त्विकं सत्त्वाविर्भूत्या आविर्भूतत्वात्सात्त्विकमिति महर्षयो वदन्तीत्यर्थः ॥ ३७ ॥

**श्री० टी०**—कीदृशं तत्—**यत्तदिति**। यत्तत्किमपि अग्रे प्रथमं विषमिव मनःसंयमाधीनत्वाद्दुःखावहमिव भवति, परिणामे त्वमृतसदृशम्। आत्मविषया बुद्धिरात्मबुद्धिस्तस्याः प्रसादेन रजस्तमोमलत्यागेन स्वच्छतयाऽवस्थानं ततो जातं यत्सुखं तत्सात्त्विकं प्रोक्तं योगिभिः ॥ ३७ ॥

**स० टी०**—तदेव विवृणोतीशः सुखं ब्रह्मप्रसादजम् ॥ ज्ञानवैराग्यसद्ध्यानसमाध्यारम्भ एव यत् ॥ १ ॥ अत्यन्तायाससाध्यत्वाद्विषवद्द्वेषकृद्भवेत् ॥ ज्ञानादिपरिपाके तु प्रीतेरतिशयास्पदम् ॥ २ ॥ निद्रालस्यादिराहित्याद्बुद्धिर्या स्वच्छतां गता ॥ तस्या आत्मावलम्बिन्याः प्रसादाज्जातमान्तरम् ॥ ३ ॥ तत्समाधिसुखं प्रोक्तं सात्त्विकं योगवित्तमैः ॥ ४ ॥ ३७ ॥

**भा० टी०**—सुखस्य त्रैविध्यं विभजन्नादौ सात्त्विकं सुखमाह—**यत्तदिति**। यत्सुखमग्रे पूर्वं प्रथमसन्निपाते ज्ञानवैराग्यध्यानसमाध्यारम्भेऽत्यन्तायासपूर्वकत्वाद्विषमिव दुःखात्मकमिव भवति परिणामे ज्ञानादिपरिपाकेऽमृतोपमं तत्सुखं सात्त्विकं प्रोक्तं विद्वद्भिः कथितम्। आत्मनो बुद्धिरात्मबुद्धिरात्मबुद्धेः प्रसादो नैर्मल्यं सकार्यरजस्तमोमलत्यागेन सलिलवत्स्वच्छतयाऽवस्थानं ततो जातमात्मबुद्धिप्रसादजम्, आत्मविषया आत्मालम्बना बुद्धिर्वा आत्मबुद्धिस्तत्प्रसादात्प्रकर्षाद्वा जातम् ॥ ३७ ॥

**प० टी०**—तथा—**यदिति**। यदग्रे प्रारम्भे मनःप्रत्यावृत्तिकरणेन विषमिव दुःखमिव लगति, परिणामे त्वमृतोपमं परमानन्दसदृशं भवति, यच्चात्मबुद्धिप्रसादजमात्मविषया व्यवसायात्मिका बुद्धिस्तया यः प्रसादः प्रसन्नता ततो जातं तत्सात्त्विकं सुखम् ॥ ३७ ॥

**रा० टी०**—**यत्तदिति** श्लोकश्च सात्त्विकसुखोक्तिपरः। यत्प्रसिद्धं सुखमग्रे पूर्वं विषमिव आयाससाध्यत्वात्। परिणामे विपाके अमृतसदृशम्। आत्मबुद्धिप्रसादजम्—आत्मनो विष्णोः प्रसादादनुग्रहाज्जातं बुद्धेः प्रसादाच्च। बुद्धेः प्रसादो नाम स्वतो विषयेष्वप्रवृत्तिः, ततो जातं च यत्तत्सुखं सात्त्विकमित्यर्थः ॥ ३७ ॥

**विषयेन्द्रियसंयोगाद्यत्तदग्रेऽमृतोपमम् ॥**
**परिणामे विषमिव तत्सुखं राजसं स्मृतम् ॥ ३८ ॥**

**त० टी०**–राजसं सुखमाह–विषयेन्द्रियेति । विषयाणामिन्द्रियाणां च संयोगाद्यत्तल्लोकप्रसिद्धं स्त्रीप्रसङ्गादिजन्यं सुखमग्रेऽनुभवकाले अमृतोपममममृततुल्यं भवति, मनइन्द्रियादिसंयमक्लेशाभावात् । परिणामे विषमिव इहामुत्रापि दुःखजनकत्वात्तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

**म० टी०**–विषयेति । विषयाणामिन्द्रियाणां च संयोगाज्जातं, न त्वात्मबुद्धिप्रसादात् यत्तद्यदतिप्रसिद्धं स्रक्चन्दनवनितासङ्गादिसुखमग्रे प्रथमारम्भे मनःसंयमादिक्लेशाभावादमृतोपमम्, परिणामे त्वैहिकपारत्रिकदुःखावहत्वाद्विषमिव–तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

**शं० टी०**–राजसं सुखमाह–विषयेति । विषयेन्द्रियसंयोगाद्विषयाणामिन्द्रियाणां च संसर्गाज्जायमानं यद्वैषयिकं सुखमग्रे पूर्वं स्वानुभूतिकाले स्वानुषेविनः पुरुषस्यामृतोपमं सुधाकल्पं सद्भूयो भूयो विवर्धत इति न्यायेन स्वविषयकाण्येवाविद्याकामकर्माणि प्रवर्धयति, परिणामे स्वकार्यफलकाले स्वानुषक्तं पुरुषं विषमिव हन्ति 'स्वकार्येण योजयित्वा सकामभिर्जायते तत्र तत्र' इति न्यायेन नानायोनिषु पातयित्वा मुहुर्मुहुर्मृत्युं गमयतीत्यर्थः । यदेवंलक्षणं वैषयिकं सुखं तद्राजसं रजोगुणेन कामेन संभावितत्वाद्राजसमिति मुनिभिः स्मृतमुक्तमित्यर्थः ॥ ३८ ॥

**श्री० टी०**–राजसं सुखमाह–विषयेन्द्रियेति । विषयाणामिन्द्रियाणां च संयोगाद्यत्तत्प्रसिद्धं स्त्रीसङ्गादिसुखममृतमुपमा यस्य तादृशं भवत्यग्रे प्रथमं, परिणामे तु विषतुल्यं, इहामुत्र च दुःखहेतुत्वात् । तत्सुखं राजसं स्मृतम् ॥ ३८ ॥

**स० टी०**–विषयेन्द्रियसंबन्धाद्यदत्यन्तप्रसिद्धिमत् ॥ स्रक्चन्दनस्त्रीसङ्गादिसुखं स्यात्प्रथमे क्षणे ॥१॥ धीसंयमादिसंक्लेशाभावादमृतवन्नृणाम् ॥ परिणामे तु दुःखानामाकरत्वाद्विषोपमम् ॥ २ ॥ इहामुत्रातिसंस्कारजननद्वारतः सदा ॥ संसृतिश्रमदं तच्च सुखं राजसमीरितम् ॥ ३ ॥ ३८ ॥

**भा० टी०**–सात्त्विकं सुखमुदाहृत्य राजसं तद्व्युत्पादयति–विषयेति । यत्सुखं विषयेन्द्रियसंयोगात् जायतेऽग्रे प्रथमे क्षणेऽमृतोपमममृतसदृशं, परिणामे तदुपभोगान्ते विषमिव बलवीर्यरसप्रज्ञादिहानिहेतुत्वादधर्मतज्जनितनरकादिहेतुत्वाच्च विषतुल्यं–तत्सुखं हेयं राजसं स्मृतम् ॥ ३८ ॥

**प० टी०**–राजसमाह–विषयेति । यद्विषयेन्द्रियसंयोगादग्रे प्रारम्भेऽमृतोपमं, परिणामे विरसत्वाद्विषोपमं मत्स्यग्रस्तबडिशामिषमिव तत्सुखं राजसम् ॥ ३८ ॥

**रा० टी०**–विषयेति । विषयेन्द्रियसंयोगाच्छब्दादिविषयाणां श्रोत्रादीन्द्रियाणां संयोगेनोत्पन्नविषयानुभवेन जायमानं यत्तत्प्रसिद्धं सुखमग्रे प्रथमममृतसदृशं विपाके विषमिव दुःखावहत्वात् । तत्सुखं राजसमित्यर्थः ॥ ३८ ॥

## यदग्रे चानुबन्धे च सुखं मोहनमात्मनः ॥
## निद्रालस्यप्रमादोत्थं तत्तामसमुदाहृतम् ॥ ३९ ॥

**त० टी०**–तामसं सुखमाह–यदग्र इति । यत्सुखमग्रेऽनुभवकाले अनुबन्धे परिणामे चात्मनो मोहनं सर्ववस्तुयाथात्म्यज्ञानभ्रंशकं भवति । तदेव दर्शयति–निद्रालस्यप्रमादोत्थम् । निद्रालस्ये प्रसिद्धे, प्रमादः कर्तव्यानवधानं, तेभ्य उत्तिष्ठति उद्भवति तथाभूतं तत्तामसमुदाहृतम् ॥ ३९ ॥

**म० टी०**–यदिति । अग्रे प्रथमारम्भे च अनुबन्धे परिणामे च यत्सुखमात्मनो मोहकरम् । निद्रालस्ये प्रसिद्धे, प्रमादः कर्तव्यार्थावधानमन्तरेण मनोराज्यमात्रम् । तेभ्य एवोत्तिष्ठति न तु सात्त्विकमिव बुद्धिप्रसादजं, न वा राजसमिव विषयेन्द्रियसंयोगजं, तन्निद्रालस्यप्रमादोत्थं तामसं सुखमुदाहृतम् ॥ ३९ ॥

**शं० टी०**—तामसं सुखमाह—**यदग्र** इति । अग्रे स्वोत्पत्तिकाले चानुबन्धे च परिणामकालेऽवसानेऽप्यात्मनः सदसद्विवेकहेतोर्बुद्धेर्मोहनं मोहकारकं विवेकशक्तितिरोधायकं, निद्रालस्यप्रमादोत्थं—निद्रा प्रसिद्धा, आलस्यं बुद्धिजाड्यं, प्रमादो बुद्धिपारवश्यमेतेभ्यः समुत्पन्नं यत्सुखं तत्तामसं तमोगुणनिष्पन्नत्वात्तामसमिति ऋषिभिरुदाहृतमित्यर्थः ॥ ३९ ॥

**श्री० टी०**—तामसं सुखमाह—**यदिति** । अग्रे प्रथमक्षणे अनुबन्धे च पश्चादपि यत्सुखमात्मनो मोहकरम् । तदेवाह—निद्रा चालस्यं च प्रमादश्च कर्तव्यार्थावधानराहित्येन मनोराज्यम्—एतेभ्य उत्तिष्ठति यत्सुखं तत्तामसमुदाहृतम् ॥ ३९ ॥

**स० टी०**—आद्यक्षणे तथा पश्चात्परिणामेऽपि यत्सुखम् ॥ अविवेककरं स्वस्य निद्रादिभ्यः समुत्थितम् ॥ १ ॥ अत्यन्तानर्थहेतुत्वात्तत्सुखं तामसं स्मृतम् ॥ २ ॥ ३९ ॥

**भा० टी०**—राजसं सुखमुक्त्वा तामसं तदुदाहरति—**यदिति** । यत्सुखमग्रे च प्रथमे क्षणेऽनुबन्धे चावसानोत्तरकाले; चाभ्यां प्रथमक्षणादुत्तरावस्थासु अनुबन्धात्पूर्वावस्थासु चात्मनो मोहनं मोहकरं निद्रालस्यप्रमादेभ्यः समुत्तिष्ठतीति निद्रालस्यप्रमादोत्थं तत्सुखं हेयं तामसमुदाहृतम् ॥ ३९ ॥

**प० टी०**—तामसमाह—**यदग्र इति** । अग्रे प्रथमे क्षणे अनुबध्यतेऽनेनेत्यनुबन्धः परिणामस्तस्मिन्नात्मनोऽन्तःकरणस्य मोहनं व्यामोहकम् । तस्यावस्थानियममाह—निद्रा, आलस्यं, प्रमादोऽनवधानता । निद्रायां सुषुप्तिसुखं स्वाप्नविषयभोगसुखं वालस्येऽङ्गविमर्दोद्भवं प्रमाद उन्मत्तावस्था—तत्रोत्पन्नं यत्सुखं तत्तामसमुदाहृतम्, उदाहरणत्वेन निरूपितम् ॥ ३९ ॥

**रा० टी०**—**यदिति** । यत्सुखमग्रे चानुबन्धे च पश्चात् । विपाककाल इति यावत् । आत्मनः स्वस्य मोहनं मोहकरं पारवश्यकृत् निद्रालस्यप्रमादैरुत्थितं उत्पन्नम् । आलस्यं शरीरमान्द्यम् । प्रमादः अधर्मे बुद्धिः । तत्सुखं तामसमित्यर्थः ॥ ३९ ॥

## न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः ॥
## सत्त्वं प्रकृतिजैर्मुक्तं यदेभिः स्यात्त्रिभिर्गुणैः ॥ ४० ॥

**त० टी०**—इदानीमुक्तं त्रैगुण्यप्रकरणमुपसंहरन्सर्वस्य प्राकृतस्य त्रैविध्यं संक्षिप्य दर्शयति—**न तदस्तीति** । प्रकृतिर्भगवतो मायाख्या शक्तिस्तत्संभवैरेभिः सत्त्वादिभिस्त्रिभिर्गुणैर्मुक्तं हीनं यत्सत्त्वं प्राणिजातं स्यात् तत् पृथिव्यां मनुष्यादिषु पुनर्दिवि स्वर्गे देवेषु वाऽन्येषु सुतलादिष्वपि नास्तीत्यर्थः ॥ ४० ॥

**म० टी०**—इदानीमनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति भगवान्—**नेति** । सत्त्वरजस्तमसां साम्यावस्था प्रकृतिस्ततो जातैर्वैषम्यावस्थां प्राप्तैः प्रकृतिजैः, न तु साक्षाद्गुणानां प्रकृतिजत्वमस्ति तद्रूपत्वात् । तस्माद्वैषम्यावस्थैव तदुत्पत्तिरुपचारात । अथवा प्रकृतिर्माया तत्प्रभवैस्तत्कल्पितैः प्रकृतिजैरेभिस्त्रिभिर्गुणैर्बन्धनहेतुभिः सत्त्वादिभिर्मुक्तं हीनं सत्त्वं प्राणिजातमप्राणि वा यत् स्यात् तत्पुनः पृथिव्यां मनुष्यादिषु दिवि देवेषु वा नास्ति, क्वापि गुणत्रयरहितमनात्मवस्तु नास्तीत्यर्थः ॥ ४० ॥

**शं० टी०**—क्रियाकारकफलानां विभज्य त्रिगुणात्मकत्वं प्रतिपाद्याविभागेन सर्वं त्रिगुणात्मकमेवेत्याह—**न तदिति** । पृथिव्यां भूलोके वाशब्दात्पाताले दिवि स्वर्गे वा देवेषु ब्रह्मादिषु वा । पुनःशब्दो वार्थः । प्रकृतिजैः प्रकृतिसमुत्पन्नैरेभिरुक्तलक्षणैस्त्रिविधैर्गुणैः सत्त्वादिभिर्मुक्तं परित्यक्तमस्पृष्टं यत्स्यात्तद्भवेत्तत्सत्त्वं द्रव्यं प्राणि वा त्रिलोक्यां नास्ति त्रिगुणात्मकमायाकार्यत्वाज्जगत्सर्वमपि त्रिगुणात्मकमेवेत्यर्थः ॥ ४० ॥

**श्री० टी०**—अनुक्तमपि संगृह्णन्प्रकणार्थमुपसंहरति—**न तदस्तीति**। एभिः प्रकृतिसंभवैः सत्त्वादिभिस्त्रिभिर्गुणैर्मुक्तं हीनं सत्त्वं प्राणिजातमन्यद्वा यत्स्यात्तत्पृथिव्यां मनुष्यलोकादिषु दिवि देवेषु च क्वापि नास्तीत्यर्थः ॥ ४० ॥

**स० टी०**—अनुक्तमपि संगृह्णन्नर्थं प्रकृतमीश्वरः ॥ उपसंहरतीदानीं गुणातीतो जगत्पतिः ॥ १ ॥ प्रकृतिर्यैश्वरी माया तयैव परिकल्पितैः ॥ सत्त्वादिभिर्गुणैरेभिस्त्रिभिर्बन्धनहेतुभिः ॥ २ ॥ हीनं सत्त्वं प्राणिजातं स्यादप्राण्यथ वेह यत् ॥ मनुष्यादिषु भूमौ वा देवेषु त्रिदिवेऽथ वा ॥ ३ ॥ पाताले वाथ कुत्रापि नास्त्येवेति विनिश्चितम् ॥ गुणत्रयविहीनं हि नास्त्यनात्ममयं जगत् ॥ ४ ॥ यतो मायाकृतं विश्वं त्रिगुणात्मकमेव हि ॥ ५ ॥ ४० ॥

**भा० टी०**—क्रियाकारकफलानां प्रत्येकं सात्त्विकादिभेदेन त्रैविध्यमुक्त्वा किंचिदेभिस्त्रिभिर्गुणैर्मुक्तमपि भविष्यतीत्याकाङ्क्षापनुत्तयेऽनुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति—**नेति**। न तदस्ति पृथिव्यां वा मनुष्यादि सत्त्वं प्राणिजातमन्यद्वाऽप्राणिजातं स्थावरादि दिवि देवेषु वा पुनः प्रकृतिजैः प्रकृतितो जातैः एभिस्त्रिभिर्गुणैः सत्त्वादिभिः मुक्तं परित्यक्तं यत्स्यात्तन्नास्तीत्यर्थः। अदिवीति परलोकत्वसादृश्यादब्राह्मण इतिवत्। पातालादिपरमितीतरे। आचार्यैस्तु तृतीयवाशब्दाभावात्पृथिवीविवरात्मकस्य पातालस्यापि पृथिवीशब्देन संग्रहसंभवात् प्रयोजनशून्यक्लिष्टकल्पनाया अयुक्तत्वाच्चैवं न व्याख्यातम्। तथाच क्रियाकारकफललक्षणः सर्वोऽपि संसारः सत्त्वरजस्तमोगुणात्मकोऽविद्यापरिकल्पितः समूलोऽनर्थः आत्मज्ञानेनाविद्यानिवृत्त्या निवर्तितव्य इति भावः ॥ ४० ॥

**प० टी०**—अथानुक्तमपि संगृह्णन् प्रकरणार्थमुपसंहरति—**न तदस्तीति**। यदेभिः सत्त्वादिभिस्त्रिभिर्गुणैर्मुक्तं सत्त्वं प्राणिजातं तत्तादृशं पृथिव्यां मनुष्येषु नास्ति, दिवि देवेष्वपि नास्ति। यावच्छरीरजातं तावत्त्रिगुणात्मकमेवास्तीत्यर्थः ॥ ४० ॥

**रा० टी०**—सर्वजीवानां गुणत्रयबद्धत्वेन त्रैविध्यमाह—**न तदस्तीति**। यत्सत्त्वं जीवजातं प्रकृतिजैरेभिस्त्रिभिः सत्त्वादिगुणैर्मुक्तं स्यात्, तत्सत्त्वं पृथिव्यां दिवि देवेषु वा। पुनःशब्दः समुच्चये। नास्ति। मुक्तव्यावृत्त्यर्थं पृथिव्यामित्याद्युक्तिः। तत्रायं विवेकः सात्त्विकराजसतामसभेदेन जीवास्त्रिविधाः। सात्त्विकादयोऽपि प्रत्येकं त्रिविधाः। पितृगन्धर्वपूर्वकाः सात्त्विकतामसाः। मुनयः सात्त्विकराजसाः। देवाः सात्त्विकसात्त्विकाः। सात्त्विकसात्त्विकेष्वपि बृहस्पत्यादयः सात्त्विकसात्त्विकतामसाः। इन्द्रः सात्त्विकसात्त्विकराजसः। ब्रह्मादिरुद्रावसानाः सात्त्विकसात्त्विकसात्त्विकाः। तेष्वपि रुद्रः सात्त्विकसात्त्विकसात्त्विकतामसः। ब्रह्माणीभारत्यौ तादृग्राजस्यौ। ब्रह्मवायू तु सात्त्विकसात्त्विकसात्त्विकसात्त्विकावेवेति। मध्यमोत्तमनराः राजसाः। तेऽपि प्रत्येकं त्रिविधाः। तेषु विप्रादिपुल्कसान्ताः ये भागवताः ते राजससात्त्विकाः। राजससात्त्विकेष्वपि विप्रा राजससात्त्विकसात्त्विकाः। क्षत्रियास्तु स्वल्परजोयुक्ततया राजसराजससात्त्विकाः। वैश्यास्तु समसत्त्वरजोयुक्ततया राजसराजससात्त्विकाः। शूद्रास्तु तमसोऽल्पसत्त्वेन रजोधिकेन युक्ततया तामसराजससात्त्विकाः। राजससात्त्विकसात्त्विकविप्रेष्वपि ये शुद्धसत्त्वात्मकास्ते परमहंसशब्दिताः शिखायज्ञोपवीतहीनाः एकदण्डिनः। किंचिद्रजोयुक्तसत्त्ववन्तो हंसशब्दिताः यज्ञोपवीतवन्तः एकदण्डिनः शिखाहीनाः। ततोऽधिकरजोयुक्तसत्त्ववन्तः त्रिदण्डिनः। शिखायज्ञोपवीतवन्तो ग्रामैकरात्रिचराः बहूदकसंज्ञकाः। ततोऽप्यधिकरजोयुक्तसत्त्ववन्तस्त्रिदण्डिनः शिखायज्ञोपवीतवन्तो यावज्जीवं पुत्रदत्ताशनाः कुटीचकाः। तामसा अपि सात्त्विकादिभेदेन त्रिविधाः। तत्र नराधमाः सात्त्विकतामसाः। दैत्यभृत्या राजसतामसाः। महादैत्यास्तामसतामसा इति ॥ ४० ॥

**ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप! ॥**
**कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः ॥ ४१ ॥**

**त० टी०**—तदेवं श्रेयस्कामानां श्रेयसे ज्ञानकर्मकर्त्रादीनां सात्त्विकोपादानायेतरयोः परिहाराय सात्त्विकादिविवेकज्ञापनपूर्वकं त्रिलोकवर्तिप्राणिजातस्य त्रैगुण्यमेव प्रतिपादितमिदानीं सर्वस्य त्रिगुणात्मकत्वे सति राजसतामसपरिहारेण सात्त्विकज्ञानकर्मादिनिष्ठस्यापि अनित्यापायि सातिशयं स्वर्गादिसंबन्धि स्रक्चन्दनारामविहारदिव्यविमानसोमपानाप्सरोविहाराद्येव फलं स्यान्न तु नित्यानपायिनिरतिशयसुखरूपं मोक्षाख्यं फलं, तस्मात् कथं मोक्षो भवेदित्यपेक्षायां स्वस्ववर्णाश्रमाधिकारानुसारेण वेदविहितानि सात्त्विकानि कर्माण्येव परपुरुषाज्ञापालनबुद्ध्या फलकर्तृत्वाभावेनानुष्ठितानि तत्प्रसादजन्यज्ञानभक्तिद्वारेण भगवत्प्राप्तिलक्षणमोक्षफलकानि भवन्तीति प्रतिपादयितुं कर्माधिकारिणां ब्राह्मणादीनां स्वभावानुगुणानि सत्त्वादिगुणभिन्नानि कर्माणि वृत्तिभिः सह विवेक्तुं प्रतिजानीते—ब्राह्मणेति । ब्राह्मणक्षत्रियविशामिति त्रयाणां समासकरणं द्विजत्वेन वेदाध्ययनयज्ञाद्यधिकारज्ञापनार्थम् । शूद्राणां चेति समासात्पृथक्करणमेकजातितया वेदाध्ययनाद्यधिकारबहिर्भूतत्वज्ञापनार्थम् । वेदाध्ययनस्योपनयनसंस्कारतन्त्रत्वात् "तं होपनिन्ये अधीहि भगव इति होपससाद" इति श्रुतेः । शूद्रस्य तु "न शूद्रे पातकं किंचिन्न च संस्कारमर्हति । शूद्रश्चतुर्थो वर्ण एकजातिः" इति तन्निषेधात् । साक्षाद्वेदाध्यननिषेधोऽपि "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रस्य समीपे नाध्येतव्यम् । अथास्य वेदमुपश्रृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणम्, उदाहरणे जिह्वाच्छेदः, धारणे शरीरभेदः" इति श्रुतिस्मृतिभ्यां शूद्रस्य वेदश्रवणनिषेधादध्ययननिषेधः सुतरां सिद्धः, अध्ययनस्य श्रवणपूर्वकत्वात् । हे परन्तप ! ब्राह्मणादीनां कर्माणि प्रकर्षेण विभक्तानि इतरेतरविभागेन स्थितानि । कैः स्वभावप्रभवैर्गुणैः । तथा हि ब्राह्मणस्य स्वभावप्रभवो रजस्तमोऽभिभवेनोद्रिक्तः सत्त्वगुणः, क्षत्रियस्य स्वभावप्रभवस्तमःसत्त्वाभिभवेनोद्रिक्तो रजोगुणः, वैश्यस्य स्वभावप्रभवस्तमउपसर्जन उद्रिक्तो रजोगुणः, शूद्रस्य स्वभावप्रभवस्तु रजउपसर्जन उद्रिक्तस्तमोगुणः । एवमेतैः स्वभावप्रभवैर्गुणैश्चतुर्णां वर्णानां प्रविभक्तानि कर्माणि शास्त्रेषु प्रतिपादितानि मया वक्ष्यमाणानि त्वमवधारयेत्यर्थः ॥ ४१ ॥

**म० टी०**—तदेवं सत्त्वरजस्तमोगुणात्मकः क्रियाकारकफललक्षणः सर्वः संसारो मिथ्याज्ञानकल्पितोऽनर्थश्चतुर्दशाध्यायोक्त उपसंहृतः । पञ्चदशे च वृक्षरूपककल्पनया तमुक्त्वा 'अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढेन छित्वा । ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ।' इत्यसङ्गशस्त्रेण विषयवैराग्येण तस्य छेदनं कृत्वा परमात्माऽन्वेष्टव्य इत्युक्तम् । तत्र सर्वस्य त्रिगुणात्मकत्वे त्रिगुणात्मकस्य संसारवृक्षस्य कथं छेदोऽसङ्गशस्त्रस्यैवानुपपत्तेरित्याशङ्कायां स्वस्वाधिकारविहितैर्वर्णाश्रमधर्मैः परितोष्यमाणात् परमेश्वरादसङ्गशस्त्रलाभ इति वदितुमेतावानेव सर्ववेदार्थः परमपुरुषार्थमिच्छद्भिरनुष्ठेय इति च गीताशास्त्रार्थ उपसंहर्तव्य इत्येवमर्थमुत्तरं प्रकरणमारभ्यते । तत्रेदं सूत्रम्—ब्राह्मणेति । त्रयाणां समासकरणं द्विजत्वेन वेदाध्ययनादितुल्यधर्मत्वकथनार्थम् । शूद्राणामिति पृथक्करणमेकजातित्वेन वेदानधिकारित्वज्ञापनार्थम् । तथा च वसिष्ठः—'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां त्रयो वर्णा द्विजातयो ब्राह्मणक्षत्रियवैश्यास्तेषाम्—'मातुरग्रेऽधिजननं द्वितीयं मौञ्जिबन्धने । अत्रास्य माता सावित्री पिता त्वाचार्य उच्यते' इति । तथा प्रतिविशिष्टं चातुर्वर्ण्यं स्थानविशेषाच्च—"ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत' इत्यपि निगमो भवति ।

गायत्र्या ब्राह्मणमसृजत, त्रिष्टुभा राजन्यं, जगत्या वैश्यं, न केनचिच्छन्दसा शूद्रमित्यसंस्कारो विज्ञायते इति । 'शूद्रश्चतुर्थो वर्ण एकजातिः' इति च गौतमः । हे परन्तप शत्रुतापन तेषां चतुर्णामपि वर्णानां कर्माणि प्रकर्षेण विभक्तानि इतरेतरविभागेन व्यवस्थितानि । कैः ? स्वभावप्रभवैर्गुणैः, ब्राह्मण्यादिस्वभावस्य प्रभवैर्हेतुभूतैर्गुणैः सत्त्वादिभिः । तथाहि ब्राह्मणस्वभावस्य सत्त्वगुण एव प्रभवः प्रशान्तत्वात् । क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः ईश्वरस्वभावत्वात् । वैश्यस्वभावस्य तमउपसर्जनं रजः ईहास्वभावत्वात् । शूद्रस्वभावस्य रजउपसर्जनं तमः मुढस्वभावत्वात् । अथवा मायाख्या प्रकृतिः स्वभावः तत उपादानात् प्रभवो येषां तैः । प्राग्भवीयः संस्कारो वर्तमाने भवे स्वफलाभिमुखत्वेनाभिव्यक्तः स्वभावः स निमित्तत्वेन प्रभवो येषामिति वा । शास्त्रस्यापि पुरुषस्वभावसापेक्षत्वाच्छास्त्रेण प्रविभक्तान्यपि गुणैः प्रविभक्तानीत्युच्यन्ते । 'आख्यातानामर्थं बोधयतामधिकारिशक्तिः सहकारिणी' इति न्यायात् । तथा हि गौतमः—'द्विजातीनामध्ययनमिज्यादानं, ब्रह्मणस्याधिकाः प्रवचनयाजनप्रतिग्रहाः । पूर्वेषु नियमस्तु । राज्ञोऽधिकं रक्षणं सर्वभूतानां न्यायदण्डत्वं, वैश्यस्याधिकं कृषिवणिक्पाशुपाल्यं कुसीदं च । शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः शौचमाचमनार्थे पाणिपादप्रक्षालनमेवैके श्राद्धकर्म भृत्यभरणं स्वदारवृत्तिः परिचर्योत्तरेषाम्' इति । अत्र साधारणा असाधारणाश्च धर्मा उक्ताः । पूर्वेषु अध्ययनेज्यादानेषु नियमः अवश्यकर्तव्यत्वं नतु प्रवचनयाजनप्रतिग्रहेषु वृत्त्यर्थत्वादित्यर्थः । वणिक् वाणिज्यं, कुसीदं वृद्ध्यै धनप्रयोगः । उत्तरेषामिति श्रेष्ठानां द्विजातीनामित्यर्थः । वसिष्ठोऽपि 'षट्कर्माणि ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहश्चेति । त्रीणि राजन्यस्याध्ययनं यज्ञो दानं च शस्त्रेण च प्रजापालनं स्वधर्मस्तेन जीवेत् । एतान्येव त्रीणि वैश्यस्य कृषिवणिक्पाशुपाल्यं कुसीदं च । तेषां परिचर्या शूद्रस्य' इति । आपस्तम्बोऽपि—'चत्वारो वर्णा ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयान् । स्वकर्म ब्राह्मणस्याध्ययनमध्यापनं यज्ञो याजनं दानं प्रतिग्रहणं दायाद्यं शिलोञ्छायान्यच्चापरिगृहीतम् । एतान्येव क्षत्रियस्याध्यापनयाजनप्रतिग्रहणानीति परिहाय युद्धदण्डाधिकानि । क्षत्रियवत् वैश्यस्य दण्डयुद्धवर्जं कृषिगौरक्ष्यवाणिज्याधिकम् । परिचर्या शूद्रस्येतरेषां वर्णानाम्' इति । मनुरपि—'अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशत् ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया' इति । एवं चतुर्णामपि वर्णानां गुणभेदेन कर्माणि प्रविभक्तानि ॥ ४१ ॥

**शं० टी०**—एवं सर्वस्यापि जगतो गुणत्रयात्मकत्वे सिद्धे गुणत्रयातिक्रमणं कृतवत एव मुक्तिरिति गुणानत्येतुमिच्छोर्मुमुक्षोस्तदतिक्रमसिद्धेः परमकारणं ज्ञानं तत्सिद्धेः कारणं सत्त्वशुद्धिस्तत्कारणं तु कर्मैव तदेवावश्यं कर्तव्यमिति वैदिकानां कर्मणां सर्वेषां कर्तव्यतायां प्राप्तायां ब्राह्मणादीनां मुमुक्षूणां येषां येषां स्वस्वगुणानुरूपेण यानि यानि कर्माणि विभक्तानि भवन्ति तैस्तैस्तानि तान्येव कर्तव्यानि न त्वितराणीति नियमं दर्शयति—ब्राह्मणेति । ब्राह्मणाश्च क्षत्रियाश्च विशश्च तेषां ब्राह्मणक्षत्रियविशामित्यत्र जात्या विषमत्वेऽपि उपनयनाध्ययनयजनादिकर्मभिराश्रमेण च समत्वाद्धर्मतः समानानां समासकरणमविरुद्धम् । शूद्राणां चेति पृथक्करणं जात्या धर्मेण क्रियया च विषमत्वान्न विरुद्धम् । एवं तेषां ब्राह्मणादीनां शूद्राणां च नियमेन कर्तव्यानि कर्माणि स्वभावप्रभवैः स्वभावः प्रकृतिस्तत्प्रभवैर्गुणैः सत्त्वादिभिः प्रविभक्तानि प्रकर्षेण विभक्तानि गुणवतां गुणभेदेन कर्माण्यपि भिन्नानि गुणैरसंकीर्णत्वेन व्यवस्थापितानि भवन्तीत्यर्थः । यद्वा स्वभावप्रभवैः ब्राह्मणस्वभावः केवलसत्त्वगुणप्रभवः, क्षत्रियस्वभावः सत्त्वमिश्रितरजः

प्रभवः, वैश्यस्वभावः रजोमिश्रिततमःप्रभवः, शूद्रस्वभावः केवलतमःप्रभवः, एवं सत्त्वादिगुणभेदेन तत्तद्गुणवतां ब्राह्मणादीनां शूद्राणां च कर्तव्यानि कर्माण्यपि भिद्यन्त इत्यर्थः । यद्वा " ब्राह्मणोऽस्य मुखमासीत् " इतिश्रुत्युक्तप्रकारेण चत्वारो वर्णाः ब्राह्मणक्षत्रियवैश्यशूद्रास्तेषां पूर्वः पूर्वो जन्मतः श्रेयानितिन्यायेन च भव एव भावो जननं स्वः स्वकीयो भावः स्वभावः । यद्वा स्वेषां भावः स्वभावः मुखबाह्वादिभ्यो जननं प्रभवः कारणं येषां तैः स्वभावप्रभवैः स्वजन्मनिमित्तकैर्गुणैरुत्तमत्वमध्यमत्वनिकृष्टत्वातिनिकृष्टत्वैरुपलक्षितानां ब्राह्मणक्षत्रियवैश्यशूद्राणां नियमेन कर्तव्यानि यानि कर्माणि तानि जन्मत उत्कृष्टत्वादिभेदेन विभक्तानि शास्त्रेण विभज्य विहितानीत्यर्थः ॥ ४१ ॥

श्री० टी०—ननु च यद्येवं सर्वमपि क्रियाकारकफलादिकं प्राणिजातं च त्रिगुणात्मकमेव कथं तर्हि अस्य मोक्ष इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनात्तत्प्रसादलब्धज्ञानेनेत्येवं सर्वगीतार्थसारं संगृह्य प्रदर्शयितुं प्रकणान्तरमारभते—ब्राह्मणेत्यादि यावदध्यायसमाप्ति । हे परंतप शत्रुतापन ! ब्राह्मणानां क्षत्रियाणां विशां च शूद्राणां च कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि । शूद्राणां समासात्पृथक्करणं द्विजत्वाभावेन वैलक्षण्यात् । विभागोपलक्षणमाह—स्वभावः सात्त्विकादिः प्रभवति प्रादुर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः । यद्वा स्वभावः पूर्वजन्मसंस्कारस्तस्मात्प्रादुर्भूतैरित्यर्थः । तत्र सत्त्वप्रधाना ब्राह्मणाः, सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियाः, तमउपसर्जनरजःप्रधाना वैश्याः, रजउपसर्जनतमःप्रधानाः शूद्राः ॥ ४१ ॥

स० टी०—तदेवं सर्वसंसारो मिथ्याज्ञानप्रकल्पितः ॥ गुणत्रयात्मकोऽनर्थः क्रियाकारकलक्षणः ॥ १ ॥ उक्तश्चतुर्दशाध्याये पुनस्तत्रोपसंहृतः ॥ तथा पञ्चदशे वृक्षरूपकेणापि वर्णितः ॥ २ ॥ शितेनासङ्गशस्त्रेण भोगवैराग्यरूपिणा ॥ तस्य संछेदनं कृत्वाऽन्वेष्टव्यं पदमीरितम् ॥ ३ ॥ सर्वस्य त्रिगुणात्मत्वे संसाराख्यतरोः कथम् ॥ छेदोऽप्यसङ्गशस्त्रेण संभवेत्रिगुणात्मनः ॥ ४ ॥ असङ्गशस्त्रं वैराग्यं तस्याप्यनुपपत्तितः ॥ एवं प्राप्ते हरिः प्राह साधनं श्रुतिसंमतम् ॥ ५ ॥ स्वस्वाधिकारविहितैर्धर्मैर्वर्णाश्रमोदितैः ॥ परितोष्यमाणादीशाद्वैराग्यप्राप्तिरञ्जसा ॥ ६ ॥ ततो वेदान्तवाक्योत्थसम्यग्धीजन्ममात्रतः ॥ सकार्याज्ञानमाबाध्य कृतकृत्योऽभिजायते ॥ ७ ॥ एतावान्सर्ववेदार्थोऽप्यनुष्ठेयो मुमुक्षुभिः ॥ तथैव गीताशास्त्रार्थ उपसंहारमर्हति ॥ ८ ॥ इत्येवमर्थमारम्भसंदर्भस्योत्तरस्य च ॥ त्रयाणां हि द्विजत्वेन स्वाध्यायाध्ययनादिना ॥ ९ ॥ तुल्यधर्मत्वबोधार्थं समासकरणं कृतम् ॥ शूद्राणामेकजातित्वात्स्वाध्यायानधिकारिता ॥१०॥ अस्तीति ज्ञापनार्थाय यत्पृथक्करणं कृतम् ॥ तेषां चतुर्णां वर्णानां परस्परविभागतः ॥ ११ ॥ व्यवस्थितानि कर्माणि स्वभावप्रभवैर्गुणैः ॥ तत्र सत्त्वगुणो विप्रस्वभावस्यास्ति कारणम् ॥ १२ ॥ प्रशान्तत्वात्तथाभूपस्वभावस्य रजोगुणः ॥ सत्त्वोपसर्जनो यस्मादीश्वरत्वं नृपे भवेत् ॥ १३ ॥ तमो गौणरजो वैश्यस्वभावस्यास्ति कारणम् ॥ तस्यापीहास्वभावत्वाद्रजोमुख्यत्वमस्त्यतः ॥ १४ ॥ रजो गौणतमः शूद्रस्वभावस्यास्ति कारणम् ॥ तस्य मूढस्वभावत्वादित्येवं गुणनिर्णयः ॥ १५ ॥ मायाख्या प्रकृतिर्यद्वा स्वभावः सर्वगः स्मृतः ॥ तत एवास्त्युपादानाद्येषां प्रभव इत्यपि ॥ १६ ॥ प्राग्भवीयोऽपि संस्कारो वर्तमानभवेऽथ वा ॥ स्वफलाभिमुखत्वेनाभिव्यक्तः प्रभवः स च ॥ १७ ॥ स्वभावः कारणं येषां तैर्विभक्तानि वा गुणैः ॥ आगमेनैव कर्माणि प्रविभक्तानि यद्यपि ॥ १८ ॥ तथाप्यस्त्येव शास्त्रस्य तत्स्वभावाद्यपेक्षता ॥ १९ ॥ ४१ ॥

भा० टी०—एवं क्रियादिलक्षणस्य संसारस्य त्रिगुणात्मकत्वप्रतिपादकेन चतुर्दशसप्तदशाध्यायोक्तोऽर्थ उपसंहृतः । पञ्चदशे चोर्ध्वमूलमधःशाखमित्यादिनाऽविद्यापरिकल्पितं संसारं वृक्षरूपेणाभिधाय ' असङ्ग-

शस्त्रेण दृढेन छित्वा । ततः पदं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः' इत्युक्तम् । पूर्वोक्तशध्यायेषु च स्वस्वाधिकारविहितैर्वर्णाश्रमधर्मैर्निष्कामैरुपासनासमुचितैराराधितात्परमेश्वराल्लब्ध्वाऽसङ्गशस्त्रः आसुर्या राक्षस्या च संपदा विनिर्मुक्तः दैव्या तया संपन्नः प्रत्यगभिन्नब्रह्मविचारतत्परः संसारवृक्षमसङ्गशस्त्रेण दृढेन छित्वा ब्रह्मज्ञानेन विमुच्यत इत्युक्तम् । तमिमं सर्वं गीताशास्त्रार्थमुपसंहर्तुं, एतावानेव सर्वो वेदस्मृत्यर्थः पुरुषार्थमिच्छद्भिरनुष्ठेय इति बोधनाय ब्राह्मणेत्यादिप्रकरणमारभते—ब्राह्मणेति । ब्राह्मणाश्च क्षत्रियाश्च विशश्च ब्राह्मणक्षत्रियविशः तेषामुपनयनसंस्कारवत्त्वे सति वेदाधिकारित्वं सममिति ब्राह्मणादित्रयाणां समासकरणं शूद्राणामुपनयनवर्जितत्वे सति वेदानधिकारित्वमभिप्रेत्य पृथक् निर्दिशति । शूद्राणां च कर्माणि शमदमादीनि प्रविभक्तानि इतरेतरविभागेन व्यवस्थितानि । कैरित्यपेक्षायामाह—स्वभावप्रभवैर्गुणैः । ईश्वरस्य त्रिगुणात्मिका प्रकृतिः स्वभावः सः प्रभवः कारणं येषां तैर्गुणैः । यद्वा स्वभावस्य प्रभवास्तैस्तथा च ब्राह्मणस्वभावस्य सत्त्वगुणः प्रभवः कारणम्, तथा क्षत्रियस्वभावस्य सत्त्वोपसर्जनं रजः प्रभवः, वैश्यस्वभावस्य तमउपसर्जनं रजः प्रभवः, शूद्रस्वभावस्य रजउपसर्जनं तमः प्रभवः—शान्त्यैश्वर्येहामूढस्वभावदर्शनाच्चतुर्णाम् । अथवा जन्मान्तरकृतसंस्कारः प्राणिनां वर्तमानजन्मनि स्वकार्याभिमुखत्वेनाभिव्यक्तः स्वभावः सः प्रभवो येषां तैः प्रकृत्युद्बोधितैर्गुणैः स्वकार्यानुरूप्येण ब्राह्मणादीनां शमादीनि कर्माणि प्रविभक्तानि । शास्त्रेणापि ब्राह्मणादीनां सत्त्वादिगुणविशेषापेक्षयैव शमादीनि कर्माणि प्रविभक्तानि, न तु गुणानपेक्ष्येति शास्त्रविभक्तान्यपि तानि गुणविभक्तान्युच्यन्ते । क्षत्रियस्वभावजं शत्रुतापनरूपं कर्म त्यक्तुमशक्यमङ्गीकर्तुं योग्योऽसीति सूचयति परंतपेतिसंबोधनेन ॥ ४१ ॥

**प० टी०**—यद्येवं प्राणिजातं त्रिगुणात्मकं तर्ह्यस्य कथं मोक्ष इत्यपेक्षायां स्वस्वाधिकारविहितैः कर्मभिः परमेश्वराराधनावाप्तज्ञानेन मोक्ष इति सकलगीतार्थं संगृह्य दर्शयितुं प्रकारान्तरमारभते—ब्राह्मणेति । हे परंतप शत्रुतापन, ब्राह्मणादीनां चतुर्णां वर्णानां कर्माणि प्रविभक्तानि प्रकर्षेण विभागतो विहितानि । विभागोपलक्षणमाह—स्वभावप्रभवैर्गुणैरिति । स्वभावः सात्त्विकादिः प्रभवत्याविर्भवति येभ्यस्तैर्गुणैरुपलक्षणभूतैः । यद्वा स्वभावः पूर्वजन्मसंस्कारस्तस्मात्प्रादुर्भूतैः । तत्र सत्त्वप्रधाना ब्राह्मणाः, सत्त्वोपसर्जनरजःप्रधानाः क्षत्रियाः,तमउपसर्जनरजःप्रधाना वैश्याः, रजउपसर्जनतमःप्रधानाः शूद्राः । तदुक्तम् ' चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः ' इति ॥ ४१ ॥

**रा० टी०**—इदानीं ब्राह्मणाद्यधिकारिगुणकृतकर्माणि भिन्नानि सन्तीत्याह—ब्राह्मणेति । त्रैवर्णिकानामिव द्विजन्मत्वं नेति द्योतनाय शूद्राणामिति पृथङ्निर्देशः । स्वभावप्रभवैः ब्राह्मणादितत्तत्स्वभावानुबन्धिभिः । सत्त्वादिगुणैः कर्माणि प्रविभक्तानि तानि मे शृण्विति भावः ॥ ४१ ॥

**शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च ॥**
**ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजम् ॥ ४२ ॥**

**त० टी०**—तत्र ब्राह्मणानां स्वभावप्रभवाणि कर्माण्याह—शम इति । शमो बाह्येन्द्रियसंयमः, दमो मनोनियमनं, तपः शास्त्रीयव्रतोपवासनियमैः शरीरतापनं, शौचं शास्त्रीयकर्मयोग्यतापादनं बाह्याभ्यन्तरं, तत्र बाह्यं मृज्जलादिना, आभ्यन्तरं रागद्वेषशून्यत्वं, क्षान्तिर्बहपकृतस्याप्यविकृतचित्तत्वम्, आर्जवं भावकौटिल्यराहित्यं शरीरवाङ्मनोभिः समानाचरणमित्यर्थः, ज्ञानं परावरतत्त्वयाथात्म्यबोधः, विज्ञानं परस्परविरुद्धानां वाक्यानामविरोधेन महावाक्यार्थावबोधः, आस्तिक्यं वेदतदनुकूलस्मृतिपुराणेतिहासपञ्चरात्राद्युक्तार्थस्य कृत्स्नस्य सत्यतानिश्चयः—एतद्ब्राह्मणस्य स्वभावजं कर्म ॥ ४२ ॥

१ ब्राह्मं कर्मेति पाठः ।

म० टी०—तत्र ब्राह्मणस्य स्वाभाविकगुणकृतानि कर्माण्याह—शम इति । शमोऽन्तःकरणोपरमः, दमो बाह्यकरणोपरमः प्रागुक्तः, तपः शारीरादिदेवद्विजगुरुप्राज्ञेत्यादावुक्तं, शौचमपि बाह्याभ्यन्तरभेदेन प्रागुक्तं, क्षान्तिः क्षमा आक्रुष्टस्य ताडितस्य वा मनसि विकारराहित्यं प्राग्व्याख्यातं, आर्जवमकौटिल्यं प्रागुक्तं, ज्ञानं साङ्गवेदतदर्थविषयं, विज्ञानं कर्मकाण्डे यज्ञादिकर्मकौशल्यं ब्रह्मकाण्डे ब्रह्मात्मैक्यानुभवः, आस्तिक्यं सात्त्विकी श्रद्धा प्रागुक्ता । एतच्छमादिनवकं स्वभावजं सत्त्वगुणस्वभावकृतं ब्रह्मकर्म ब्राह्मणजातेः कर्म । यद्यपि चतुर्णामपि वर्णानां सात्त्विकावस्थायामेते धर्माः संभवन्ति तथापि बाहुल्येन ब्राह्मणे भवन्ति सत्त्वस्वभावत्वात्तस्य । सत्त्वोद्रेकवशेन त्वन्यत्रापि कदाचिद्भवन्तीति शास्त्रान्तरे साधारणधर्मतयोक्ताः । तथा च विष्णुः—'क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः । अहिंसा गुरुशुश्रूषा तीर्थानुसरणं दया ॥ आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् । अनभ्यसूया च तथा धर्मः सामान्य उच्यते ॥' इति । सामान्यश्चतुर्णामपि वर्णानां, तथा प्रायेण चतुर्णामप्याश्रमाणामित्यर्थः । तथा बृहस्पतिः—'दया क्षमाऽनसूया च शौचानायासमङ्गलम् । अकार्पण्यमस्पृहत्वं सर्वसाधारणानि च ॥ परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा । आपन्ने रक्षितव्यं तु दयैषा परिकीर्तिता ॥ बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते क्वचित् । न कुप्यति न वा हन्ति सा क्षमा परिकीर्तिता ॥ न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि । नान्यदोषेषु रमते साऽनसूया प्रकीर्तिता ॥ अभक्ष्यपरिहारश्च संसर्गश्चाप्यनिर्गुणैः । स्वधर्मे च व्यवस्थानं शौचमेतत्प्रकीर्तितम् ॥ शरीरं पीड्यते येन सुशुभेनापि कर्मणा । अत्यन्तं तन्न कर्तव्यमनायासः स उच्यते ॥ प्रशस्ताचरणं नित्यमप्रशस्तविसर्जनम् । एतद्धि मङ्गलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः ॥ स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना । अहन्यहनि यत्किंचिदकार्पण्यं हि तत्स्मृतम् ॥ यथोत्पन्नेन संतोषः कर्तव्यो ह्यर्थवस्तुना । परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्तिता ॥' इति । एत एवाष्टावात्मगुणत्वेन गौतमेन पठिताः—'अथाष्टावात्मगुणाः दया सर्वभूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गलमकार्पण्यमस्पृहा' इति । तथा महाभारते—'सत्यं दमस्तपः शौचं संतोषो ह्रीः क्षमाऽऽर्जवम् । ज्ञानं शमो दया ध्यानमेष धर्मः सनातनः ॥ सत्यं भूतहितं प्रोक्तं मनसो दमनं दमः । तपः स्वधर्मवर्तित्वं शौचं संकरवर्जनम् ॥ संतोषो विषयत्यागो ह्रीरकार्यनिवर्तनम् । क्षमा द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥ ज्ञानं तत्त्वार्थसंबोधः शमश्चित्तप्रशान्तता । दया भूतहितैषित्वं ध्यानं निर्विषयं मनः ॥' इति । देवलः—'शौचं दानं तपः श्रद्धा गुरुसेवा क्षमा दया । विज्ञानं विनयः सत्यमिति धर्मसमुच्चयः' इति । तथा—'व्रतोपवासनियमैः शरीरोत्तापनं तपः । प्रत्ययो धर्मकार्येषु तथा श्रद्धेत्युदाहृता ॥ नास्ति ह्यश्रद्दधानस्य कर्मकृत्यप्रयोजनम् । यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः ॥ धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते । विनयं द्विविधं प्राहुः शश्वद्दमशमाविति ॥' इति । शेषं व्याख्यातप्रायमिति वचनानि न लिखितानि । याज्ञवल्क्यः—'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् । अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥' इति । इयं च सर्वा दैवी संपत् प्राग्व्याख्याता ब्राह्मणस्य स्वाभाविकी इतरेषां नैमित्तिकीति न विरोधः ॥ ४२ ॥

शं० टी०—तेषां जातिनियमेन विभक्तानि तानि कर्माणि कानीत्यत आह—शम इति । शमश्चित्तस्योपरमः दृष्टादृष्टविषये सर्वत्र निःशेषभोगाशानिवृत्तिः, दम इन्द्रियाणामुपरमः निषिद्धार्थेष्वप्रवृत्तिः, तपः सप्तदशे प्रोक्तं शारीरादित्रिविधं तपः, शौचं बाह्याऽऽभ्यन्तरा च शुद्धिः, अनृतस्य परान्नस्य च त्यागेन वक्त्रस्य जिह्वायाश्च शुद्धिः, प्रतिग्रहत्यागेन पाणिशुद्धिः, विहितब्रह्मचर्येण कच्छशुद्धिः, रागद्वेषादिदोषत्यागेन मनःशुद्धिः, विहिताचरणेन क्रियाशुद्धिरिति षोढा शौचम् । क्षान्तिः क्षमा निन्दाक्रोशताडनादिप्रसक्तावपि चित्तविकारानुदयः, आर्जवं सर्वदा करणत्रयस्यैकरूपत्वं, ज्ञानं सम्यगधीतवेदशास्त्राणां पदवाक्यार्थ-

ज्ञानं, विज्ञानं तदनुष्ठानानुष्ठापनक्षमं निरङ्कुशं शास्त्रार्थतत्त्वनिश्चयः, आस्तिक्यमास्तिकत्वमिदमवश्यं कर्तव्यमनेनेश्वरः प्रीयत इति कर्मणि कर्मफले च श्रद्धा । चकारोऽनुक्तयोराचार्यवेदेश्वरेषु भयभक्त्योः समुच्चयार्थः । एवकार एतदेव ब्राह्मणस्य मुमुक्षोः कर्तव्यं कर्मेत्यवधारणार्थः । स्वभावजं केवलसत्त्वप्रकृतितो मुखादुत्पत्तितो वा प्राप्तं ब्राह्मं ब्राह्मणजातेरर्हं कर्तव्यं कर्मेदं शास्त्रेण विहितमित्यर्थः । यद्यपि त्रैवर्णिकानां मुमुक्षूणां सर्वेषां शमाद्यास्तिक्यान्तं कर्म मोक्षसाधनत्वेन सममेव भवति तथापि केवलं सत्त्वप्रभवाना ब्राह्मणानां गुडस्य माधुर्यवन्निरुक्तं कर्म स्वाभाविकं नियतं च भवति तदितरेषां तु यत्नसाध्यमिति बोधयितुं ब्राह्मं कर्मेत्युक्तम् । तेन ब्राह्मणानामेव सत्त्वाधिक्याच्छमादिसंपत्तिस्तदेकसाध्ये ज्ञाने तत्फले मोक्षे चाधिकारो न त्वितरेषामिति सूचितं भवति । ततो मोक्षस्य संनिकृष्टं ब्राह्मणजन्म प्राप्तवद्भिः पण्डितैः क्षिप्रं मोक्षाय यतितव्यमिति सिद्धम् ॥ ४२ ॥

**श्री० टी०**—तत्र ब्राह्मणस्य स्वाभाविकानि कर्माण्याह— **शम इति** । शमश्चित्तोपरमः, दमो बाह्येन्द्रियोपरमः, तपः पूर्वोक्तं शारीरादि, शौचं बाह्याभ्यन्तरं, क्षान्तिः क्षमा, आर्जवमवक्रता, ज्ञानं शास्त्रीयम्, विज्ञानमनुभवः, आस्तिक्यमास्ति परलोक इति निश्चयः—एतच्छमादि ब्राह्मणस्य स्वभावाज्जातं कर्म ॥४२॥

**स० टी०**—तत्र ब्राह्मणकर्माणि स्वाभाविकगुणेन वै ॥ कृतान्याह कृपासिन्धुः सर्वकर्मफलप्रदः ॥ १ ॥ शमोऽन्तःकरणे शान्तिर्बाह्येन्द्रियशमो दमः ॥ तपःस्वधर्मवर्तित्वं प्रागुक्तं वा त्रिधा तपः ॥ २ ॥ बाह्याभ्यन्तरभेदेन शौचं द्विविधमीरितम् ॥ क्षान्तिर्द्वन्द्वसहिष्णुत्वमार्जवं समचित्तता ॥ ३ ॥ ज्ञानं स्यात्साङ्गवेदार्थविषयं सत्त्वभागजम् ॥ विज्ञानं कर्मकाण्डे स्यात्कौशलं यज्ञकर्मसु ॥ ४ ॥ ब्रह्मकाण्डेऽपि वेदान्तनिर्णयेऽतिप्रगल्भता ॥ ज्ञानं वेदान्तविषयं प्रोक्तं चैव महर्षिभिः ॥ ५ ॥ यत्पुनर्वैदिकीनां च लौकिकीनां च सर्वशः ॥ धारणं सर्वविद्यानां विज्ञानमिति कीर्त्यते ॥ ६ ॥ इत्यर्थ ऋषिभिः प्रोक्तः कर्मप्रस्ताव एतयोः ॥ आस्तिक्यं सात्त्विकी श्रद्धा ब्रह्मात्मैक्यादिदर्शने ॥ ७ ॥ एतच्छमादिनवकं शुद्धसत्त्वगुणोद्भवम् ॥ कर्म ब्राह्मणजातेस्तत्सत्त्वोद्रेकवशेन वै ॥ ८ ॥ चतुर्णामपि वर्णानां सत्त्वोद्रेकेण यद्यपि ॥ संभवन्ति गुणा एते तथापि ब्राह्मणे त्वमी ॥ ९ ॥ शुद्धसत्त्वस्वभावत्वाद्बाहुल्येन भवन्ति ते ॥ साधारणतयाप्युक्ता धर्मा एते यतो नृणाम् ॥१०॥ "क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः ॥ अहिंसा गुरुशुश्रूषा शास्त्रानुसरणं दया ॥ ११ ॥ आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् ॥ अनभ्यसूया च तथा धर्मः सामान्य उच्यते" ॥१२॥ तथापि ब्राह्मणानां तु स्वभावात्संपदीरिता ॥ आगन्तुकीतरेषां स्याद्विशेषोऽयं विचार्यताम् ॥ १३ ॥ शमदमतपआदि ब्रह्मकर्माणुमात्रं न हि शरणमिहास्ति ब्रह्मबन्धोर्ममाद्धा ॥ अशरणशरणं श्रीकृष्ण एवास्तु नित्यं शरणमिह भवाब्धौ मज्जतो भ्रान्त्यगाधे ॥ १४ ॥ ४२ ॥

**भा० टी०**—कानि पुनस्तानि कर्माणीत्यपेक्षायां तानि व्युत्पादयितुमादौ ब्राह्मणस्य कर्माणि दर्शयति—**शम इति** । शमः अन्तःकरणोपरमः, दमः बाह्यकरणोपरमः, तपः यथोक्तं, शारीरादिशौचं बाह्याभ्यन्तरभेदेन प्राग्व्याख्यातम् । क्षमा क्षान्तिः आक्रुष्टस्य ताडितस्य वा मनसि विकारराहित्यम्, आर्जवम् ऋजुत्वं, ज्ञानं शास्त्रीयम्—आत्मादिपदार्थज्ञानं, विज्ञानं शास्त्रार्थस्यानुभवारूढतापादनं, आस्तिक्यमास्तिकस्वभावः आगमोक्तार्थेषु श्रद्दधानता, ब्रह्मकर्म ब्राह्मणजातेः कर्म स्वभावजं स्वभावप्रभवेन गुणेन सत्त्वगुणेन प्रविभक्तमित्यर्थः ॥ ४२ ॥

**प० टी०**—तत्र ब्राह्मणस्य स्वाभाविकानि कर्माण्याह—**शमो दम इति** । शमश्चित्तोपरमः, दमश्चेन्द्रियोपरमः, तपः पूर्वोक्तं शारीरादि, शौचं बाह्याभ्यन्तरतः, क्षान्तिः क्षमा, आर्जवमवक्रता, ज्ञानं शास्त्रीयं, विज्ञानमनुभवः, आस्तिक्यमास्ति परलोक इति निश्चयः । एतद्ब्राह्मणस्य स्वभावसिद्धं कर्म ॥ ४२ ॥

रा० टी०—तत्र चतुर्वर्णकर्माणि क्रमात्त्रिभिराह—शम इत्यादिभिः। शमो भगवन्निष्ठा। दम इन्द्रियनिग्रहः। तपो ब्रह्मचर्यादि। शौचं बाह्याभ्यन्तरशुद्धिः। क्षान्तिः क्रोधानुत्पत्तिः। आर्जवं मनोवाक्कायकर्मणामवैपरीत्यम्। ज्ञानं सामान्यतः। विज्ञानं विशेषतः। आस्तिक्यं धर्मादावस्त्यनेन प्रयोजनमिति भावना। एतत्सर्वं स्वभावजं सहजं ब्राह्मं ब्राह्मणसंबन्धि कर्मेति ॥ ४२ ॥

**शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाऽप्यपलायनम् ॥**
**दानमीश्वरभावश्च क्षात्रं कर्म[1] स्वभावजम् ॥ ४३ ॥**

त० टी०—क्षत्रियस्य स्वभावजं कर्माह—शौर्यमिति। शौर्यं पराक्रमः महत्तरानपि रिपून् हन्तुं निःशङ्कतया प्रवर्तनस्वभावत्वमित्यर्थः। तेजः परैरनभिभवयोग्यत्वे सति पराभिभवनसामर्थ्यं, धृतिः युद्धादिकर्मण्यारब्धे आपद्यपि अवसादशून्यत्वं, दाक्ष्यं सर्वक्रियासाधनचातुर्यं, युद्धे चाप्यपलायनं मरणे ज्ञातेऽपि परेभ्योऽपराङ्मुखत्वं, दानमर्थिभ्यस्तत्तदर्थत्यागः, ईश्वरभावः प्रजापालनार्थमुत्पथगामिनां नियमनसामर्थ्यम्, एतत् क्षात्रं क्षत्रियस्य स्वभावजं कर्म ॥ ४३ ॥

म० टी०—क्षत्रियस्य गुणस्वभावकृतानि कर्माण्याह—शौर्यमिति। शौर्यं विक्रमो बलवत्तरानपि प्रहर्तुं प्रवृत्तिः, तेजः प्रागल्भ्यं परैरधर्षणीयत्वं, धृतिर्महत्यामपि विपदि देहेन्द्रियसंघातस्यानवसादः, दाक्ष्यं दक्षभावः सहसा प्रत्युत्पन्नेषु कार्येष्वव्यामोहेन प्रवृत्तिः, युद्धे चाप्यपलायनमपराङ्मुखीभावः, दानमसंकोचेन वित्तेषु स्वस्वत्वपरित्यागेन परस्वत्वापादानं, ईश्वरभावः प्रजापालनार्थमीशितव्येषु प्रभुशक्तिप्रकटीकरणं च। क्षत्रकर्म क्षत्रियजातेर्विहितं कर्म स्वभावजं सत्त्वोपसर्जनरजोगुणस्वभावजम् ॥ ४३ ॥

शं० टी०—एवं ब्राह्मं कर्मोक्त्वा क्षात्रं कर्माह—शौर्यमिति। शूरस्य भावः शौर्यं पराक्रमो वीराणामपि संहरणसामर्थ्यं, तेजः प्रागल्भ्यं बलवतामपि दुर्धर्षत्वं, धृतिर्विपदि चित्तस्य वैकल्यराहित्यं धैर्यं, दाक्ष्यं दक्षस्य भावो दाक्ष्यं प्रातिकूल्यशतेऽपि स्वकार्यनिर्वाहसामर्थ्यं च, युद्धे त्वपलायनं प्राणान्तेऽप्यपराङ्मुखत्वं, दानं पात्रेभ्यो वित्तसमर्पणं, ईश्वरभाव ऐश्वर्यं प्रभावातिशयेन सर्वनियन्तृत्वं धर्मेण प्रजापरिपालनमित्यर्थः। चकारोऽपिश्चोक्तसमुच्चयार्थः। शौर्याद्यैश्वर्यान्तं सर्वं कर्म स्वभावजं सत्त्वमिश्ररजःप्रकृतितो बाह्वोरुत्पत्तितो वा प्राप्तं क्षात्रं क्षत्रियजातेरर्हं कर्तव्यं शास्त्रेण विहितमित्यर्थः ॥ ४३ ॥

श्री० टी०—क्षत्रियस्य स्वाभाविकानि कर्माण्याह—शौर्यमिति। शौर्यं पराक्रमः, तेजः प्रागल्भ्यम्, धृतिर्धैर्यं, दाक्ष्यं कौशलं, युद्धे चाप्यपलायनमपराङ्मुखता, दानमौदार्यम्, ईश्वरभावो नियमनशक्तिः, एतत्क्षत्त्रियस्य स्वभावजं कर्म ॥ ४३ ॥

स० टी०—क्षत्त्रियस्य स्वभावोत्थकर्माण्याहाधुना हरिः ॥ शौर्यं पराक्रमस्तेजः प्रागल्भ्यं चान्यदुःसहम् ॥ १ ॥ धृतिर्महत्यां विपदि देहाद्यनवसादनम् ॥ उपस्थितेषु कार्येषु दाक्ष्यं सम्यक्प्रवृत्तिता ॥ २ ॥ युद्धेऽपराङ्मुखीभावो दानं पात्रेषु शास्त्रतः ॥ असंकोचेन वित्तेषु स्वस्वत्वत्यागपूर्वकम् ॥ ३ ॥ परस्वत्वापादनं स्यादीश्वरे भावदर्शनम् ॥ प्रजारक्षार्थमैश्वर्यादीशितव्येषु जन्तुषु ॥ ४ ॥ उद्घाटनं प्रभोः शक्तेः क्षत्त्रियस्य स्वभावजम् ॥ विहितं क्षत्त्रियाख्याया जातेः कर्म गुणानुगम् ॥ ५ ॥ ४३ ॥

भा० टी०—ब्राह्मणस्य कर्मोदाहृत्य क्षत्त्रियस्य तदाह—शौर्यमिति। शौर्यं शूरस्य भावो विक्रमो बलवत्तरानपि प्रहर्तुं प्रवृत्तिः, तेजः प्रागल्भ्यं परैरधर्षणीयत्वं, धृतिः धारणं यया धृत्यात्मिकया चित्तवृत्त्या सर्वावस्थासु देहेन्द्रियसंघातस्यानवसादो भवति। दक्षस्य भावो दाक्ष्यं सहसा प्रत्युपस्थितेषु कार्येषु अव्यामोहेन बोधकौशल्यं, युद्धे चाप्यपलायनं शत्रुभ्योऽपराङ्मुखत्वं चकारात्पराङ्मुखस्याहननम्। दानं देयेषु वस्तुषु

---

१ क्षत्रकर्म—पाठः।

मुक्तहस्तता, ईश्वरभावश्च ईश्वरस्य भाव ईशितव्यान् प्रति प्रभुशक्तिप्रकटीकरणम् । अनुक्तसमुच्चयार्थश्चः । क्षात्रं क्षत्रियजातेर्विहितं कर्म स्वभावजं स्वभावप्रभवेन सत्त्वोपसर्जनरजोगुणेन प्रविभक्तमित्यर्थः ॥ ४३ ॥

प० टी०—अथ क्षत्रियाणामाह—शौर्यमिति । शौर्यं पराक्रमः, तेजः प्रागल्भ्यम्, धृतिर्धैर्यम्, दाक्ष्यं दक्षत्वं कौशलमित्यर्थः । युद्धेऽपलायनमपराङ्मुखता, दानमौदार्यम्, ईश्वरभावो नियामकत्वशक्तिरेतत्क्षत्त्रकर्म ॥ ४३ ॥

रा० टी०—शौर्यमिति । शौर्यमभीरुत्वं । तेजः शरीरगतवर्चोविशेषः । धृतिर्धैर्यं । दाक्ष्यं पाटवं । युद्धे चाप्यपलायनं भीत्या युद्धादनिवर्तनम् । दानं गोभूतिलहिरण्यादेः पात्रे प्रतिपादनम् । ईश्वरभावो दण्डनादिकर्तृत्वम् । ' प्रसह्य वित्ताहरणं शारीरो दण्ड एव च । अशिष्टानां शासनं च तथैवार्थविनाशनम् । एष ईश्वरभावः स्यान्न कार्यः क्षत्त्रियेतरैः ' इति स्मृतेः । एतत्सर्वं स्वभावजं क्षत्त्रियसंबन्धि कर्मेत्यर्थः । अत्र ब्राह्मणधर्माः शमादयोऽपि तेभ्यः किंचिदूना क्षात्त्रधर्मेष्वपि ग्राह्याः । शमादेर्ब्राह्मणकर्मतोक्तिस्तु क्षत्त्रियधर्माद्यपेक्षयाऽऽधिक्यविवक्षयैव । येषु चक्रवर्तिषु विप्रेभ्योऽधिकशमादयस्तेऽत्र न विवक्षिताः । किंतु तदन्य एवेति ज्ञेयम् । क्षत्त्रधर्मा अपि विप्रादिषु क्रमादूना ज्ञेयाः ॥ ४३ ॥

## कृषिगौरक्ष्यवाणिज्यं वैश्यकर्म स्वभावजम् ॥
## परिचर्यात्मकं कर्म शूद्रस्यापि स्वभावजम् ॥ ४४ ॥

त० टी०—वैश्यशूद्रयोः कर्माह—कृषीति । कृषिरन्नोत्पादनार्थं भूमिकर्षणं, गोरक्षस्य भावो गौरक्ष्यं पशुपालनमित्यर्थः । वाणिज्यं वणिजः कर्म क्रयविक्रयलक्षणम्, अनेन कुसीदलक्षणं च ग्राह्यम्, एतद्वैश्यस्य स्वभावजं कर्म । परिचर्यात्मकं पूर्वोक्तवर्णत्रयाणां शुश्रूषात्मकं कर्म शूद्रस्यापि स्वभावजम् । एतैरेव त्रयाणां वर्णानां नित्यकर्तव्यतया वेदविद्भिर्मन्वादिभिर्विहितानि अन्यान्यध्ययनयज्ञादीनि तान्यप्यनुष्ठेयतया गृह्यन्ते इति ज्ञेयम् । तत्राध्ययनयज्ञदानानि त्रयाणां साधारणानि, ब्राह्मणस्याध्यापनादीनि त्रीण्यधिकानीति विवेकः । तथाऽऽह मनुः—" अध्यापनमध्ययनं यजनं याजनं तथा । दानं प्रतिग्रहं चैव ब्राह्मणानामकल्पयत् ॥ प्रजानां रक्षणं दानमिज्याध्ययनमेव च । विषयेष्वप्रसक्तिं च क्षत्रियस्य समादिशत् ॥ पशूनां रक्षणं दानमिज्याध्ययनमेव च । वणिक्पथं कुसीदं च वैश्यस्य कृषिमेव च ॥ एकमेव तु शूद्रस्य प्रभुः कर्म समादिशत् । एतेषामेव वर्णानां शुश्रूषामनसूयया ॥ " इति । शमदमादयस्तु यद्यपि सर्वेषां मुमुक्षूणां साधारणास्तथाऽपि ब्राह्मणस्य सत्त्वोद्रिक्तस्वभावत्वाद्विशिष्योक्ताः । कदाचिदन्यत्रापि सत्त्वोद्रेकवशात्ते भवन्तीति शास्त्रादेव ज्ञायते । तथोक्तं विष्णुस्मृतौ—" क्षमा सत्यं दमः शौचं दानमिन्द्रियसंयमः । अहिंसा गुरुशुश्रूषा तीर्थानुसरणं तथा ॥ आर्जवं लोभशून्यत्वं देवब्राह्मणपूजनम् । अनभ्यसूया च तथा धर्मः सामान्य उच्यते " इति ॥ ४४ ॥

म० टी०—कृषीति । कृषिरन्नोत्पत्त्यर्थं भूमेर्विलेखनं, गोरक्षस्य भावो गौरक्ष्यं पाशुपाल्यं, वाणिज्यं वणिजः कर्म क्रयविक्रयादिलक्षणं, कुसीदमप्यत्रान्तर्गमनीयं, वैश्यकर्म वैश्यजातेः कर्म स्वभावजं तमउपसर्जनरजोगुणस्वभावजम् । परिचर्यात्मकं द्विजातिशुश्रूषात्मकं कर्म शूद्रस्यापि स्वभावजं रजउपसर्जनतमोगुणस्वभावजम् ॥ ४४ ॥

शं० टी०—वैश्यशूद्रयोः कर्माह—कृषीति । कृषिः कर्षणं, गौरक्ष्यं गाः रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं, पशुपालनं वाणिज्यं वणिजः कर्म वाणिज्यं क्रयविक्रयलक्षणमेतात्रिविधं कर्म स्वभावजं रजोमिश्रतमःप्रकृ-

तित ऊर्वोरुत्पत्तितो वा प्राप्तं वैश्यं विशो जातेरर्हं कर्तव्यं शास्त्रेण विहितमित्यर्थः। परिचर्यात्मकं त्रैवर्णिकानां शुश्रूषालक्षणं स्वभावजं केवलतमःप्रकृतितः पद्भ्यां जन्मतो वा प्राप्तं शूद्रस्य कर्तव्यं कर्म 'शुश्रूषा शूद्रस्य' इति शास्त्रेणोक्तमित्यर्थः। ननु ब्राह्मणक्षत्रियविशां नियमेन कर्तव्यानि कर्माणि वक्ष्यामीत्युपक्रम्य शमो दम इति शौर्यं तेज इति प्राकृत एव धर्म उपदिश्यते, न तु वैदिकं कर्म नियमेन कर्तव्यं येन कृतेनेश्वरः प्रीयते। न हि शमशौर्यकृष्यादिकर्मणाऽनुष्ठितेनेश्वरः प्रीयते, कथमिदं विपरीतं कर्मोपदिश्यत इति चेत्सत्यं, शमादिकं शौर्यादिकं च कर्म संध्यादिवदनुष्ठेयं न भवति, नापीदमीश्वरप्रीतये च भवति, तथापि विशेष उच्यते, 'अहरहः संध्यामुपासीत। सायं प्रातरग्निहोत्रं जुहोति। यज्ञोऽध्ययनं दानम्' इति द्विजातीनामध्ययनमिज्यादानमिति ब्राह्मणादीनां नियमेन नित्यं कर्तव्यं कर्म यथा शास्त्रेणैवोक्तं, तथा 'शमेन शान्ताः शिवमाचरन्ति। दमेन दान्ताः किल्बिषमवधुन्वन्ति। तपसा किल्बिषं हन्ति' इति। राज्ञोऽधिकं रक्षणं सर्वभूतानां न्यायदण्डत्वं बिभृयात्संग्रामे संस्थानमनिवृत्तिश्चेति। कृषिवाणिज्ये च स्वयंकृते कुसीदं चेति। शूद्रश्चतुर्थो वर्ण एकजातिस्तस्यापि सत्यमक्रोधः परिचर्या चेतरेषामित्येतान्यपि कर्माण्यनुष्ठेयत्वेन शास्त्रेणैवोक्तानि भवन्ति। किंत्वयमत्र विशेषः—ब्राह्मणादीनां संध्योपासनाग्निहोत्रादिरविभक्तो वर्णाश्रमधर्मः। शमशौर्यकृष्यादिस्तु प्रत्येकं विभक्तो जातिधर्मः। ततो जातिवर्णाश्रमनिमित्तकौ द्वावप्येतौ धर्मौ नित्यौ श्रौतस्मार्तकर्मवत्प्रधानावेव भवतो न तु तयोरङ्गाङ्गिभावः सिध्यति। उभावपि शास्त्रेण नियतत्वान्मुमुक्षूणां नियमेनानुष्ठातव्यावेव। नैवात्र किंचिद्विपरीतमस्ति गृहीतुं बोधयितुं वा। ततो जातिधर्मे नियमेन वर्तमानैर्ब्राह्मणादिभिः स्वस्ववर्णाश्रमार्हं कर्म वैदिकं नित्यमनुष्ठातव्यं नान्यथा। कर्मणः प्रधानस्यैकदेशानुष्ठानेन साकल्यासंभवान्न तत्फलं सिध्यति। न हि श्रौतस्मार्तयोरन्यतरानुष्ठानेन संस्कारसाकल्यं सिध्यति तद्वत्। ततः स्वधर्मे शमादौ शौर्यादौ सदा वर्तमानैरेव ब्राह्मणक्षत्रियादिभिः संध्याग्निहोत्रादि नित्यं कर्म नियमेन कर्तव्यमिति सिद्धम् ॥ ४४ ॥

**श्री० टी०**—वैश्यशूद्रयोः कर्माह—**कृषीति**। कृषिः कर्षणं, गाः रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पाशुपाल्यमित्यर्थः। वाणिज्यं क्रयविक्रयादि, एतद्वैश्यस्य स्वभावजं कर्म। त्रैवर्णिकपरिचर्यात्मकं शूद्रस्यापि स्वभावजं कर्म ॥ ४४ ॥

**स० टी०**—भूमेर्विलेखनं सस्यनिष्पत्त्यर्थं कृषिः स्मृता ॥ गौरक्ष्यं पाशुपाल्यं स्याद्वाणिज्यं क्रयविक्रयौ ॥ १ ॥ वैश्यजातेरिदं कर्म गुणनिष्ठस्वभावजम् ॥ द्विजशुश्रूषणं कर्म शूद्रस्यापि स्वभावजम् ॥ २ ॥ ४४ ॥

**भा० टी०**—क्षात्रं कर्म व्युत्पाद्य वैश्यशूद्रयोस्तद्दर्शयति—**कृषिरिति**। कृषिर्भूमेर्विलेखनं, गां रक्षतीति गोरक्षः तस्य भावो गौरक्ष्यं पाशुपाल्यं, वाणिज्यं क्रयविक्रयादिलक्षणं वणिक्कर्म, कृषिगौरक्ष्यवाणिज्यं वैश्यजातेः कर्म स्वभावजं स्वभावप्रभवेन तमउपसर्जनरजोगुणेन प्रविभक्तम्। परिचर्यात्मकं द्विजातिशुश्रूषास्वभावं कर्म शूद्रस्य शूद्रजातेरपि स्वभावजं स्वभावप्रभवेन रजउपसर्जनतमोगुणेन प्रविभक्तमित्यर्थः ॥ ४४ ॥

**प० टी०**—अथ वैश्यशूद्रयोराह—**कृषीति**। कृषिर्लाङ्गलादिभिर्भूमिकर्षणं, गा रक्षतीति गोरक्षस्तस्य भावो गौरक्ष्यं पशुपालनम्, वाणिज्यं क्रयविक्रयादि, एतद्वैश्यस्य। तथा त्रिवर्गस्य परिचर्यात्मकं सेवनात्मकं शूद्रस्य ॥ ४४ ॥

**रा० टी०**—**कृषिरिति**। कृषिः कर्षणेन जीवनं, गवां पालनं वाणिज्यं वार्तया जीवनम्। अत्रापि क्षत्रियादूनाः शमादयोऽपि वैश्यकर्ममध्ये ग्राह्याः। परिचर्यात्मकं त्रैवर्णिकसेवारूपम्। अत्रापि वैश्यादूनशमादिकं च ग्राह्यम् ॥ ४४ ॥

**स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः ॥**
**स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ ४५ ॥**

**त० टी०**—एवं नियतस्वस्ववर्णाश्रमादिकर्मणः पुरुषार्थोपायत्वमित्याह—स्वे स्वे इति। स्वे स्वे यथोदितवर्णाश्रमोद्देशेन विहिते कर्मणि अभिरतः सम्यगनुष्ठानपरः नरो मनुष्यः संसिद्धिं सम्यग्ज्ञानयोग्यतां लभते। ननु तर्हि स्वकर्मनिरताः प्रायः सर्वेऽपि दृश्यन्ते, सम्यग्ज्ञानिनः कथं न भवन्ति? भवन्ति चेत्कश्चिदपि संसारी न स्यादिति चेत्तत्राह—स्वकर्मणि निरतो नितरां रतः श्रद्धयाऽनुष्ठानं कुर्वन् यथा येन प्रकारेण सिद्धिं ज्ञाननिष्ठां विन्दति लभते तत्तत्प्रकारं शृणु॥ ४५॥

**म० टी०**—तदेवं वर्णानां स्वभावजा गौणाख्या धर्मा अभिहिताः। अन्येऽपि धर्माः शास्त्रेष्वाम्नाताः। तदुक्तं भविष्यपुराणे—'धर्मः श्रेयः समुद्दिष्टं श्रेयोऽभ्युदयलक्षणम्। स तु पञ्चविधः प्रोक्तो वेदमूलः सनातनः॥ वर्णधर्मः स्मृतस्त्वेक आश्रमाणामतः परम्। वर्णाश्रमस्तृतीयस्तु गौणो नैमित्तिकस्तथा॥ वर्णत्वमेकमाश्रित्य यो धर्मः संप्रवर्तते। वर्णधर्मः स उक्तस्तु यथोपनयनं नृप॥ यस्त्वाश्रमं समाश्रित्य अधिकारः प्रवर्तते। स खल्वाश्रमधर्मः स्याद्भिक्षादण्डादिको यथा॥ वर्णत्वमाश्रमत्वं च योऽधिकृत्य प्रवर्तते। स वर्णाश्रमधर्मस्तु मौञ्ज्याद्या मेखला यथा॥ यो गुणेन प्रवर्तेत गुणधर्मः स उच्यते। यथा मूर्धाभिषिक्तस्य प्रजानां परिपालनम्॥ निमित्तमेकमाश्रित्य यो धर्मः संप्रवर्तते। नैमित्तिकः स विज्ञेयः प्रायश्चित्तविधिर्यथा॥' इति। अधिकारोऽत्र धर्मः। चतुर्विधं धर्ममाह हारीतः—'अथाश्रमिणां पृथग्धर्मो विशेषधर्मः समानधर्मः कृत्स्नधर्मश्च' इति। पृथगाश्रमानुष्ठानात्पृथग्धर्मो यथा चातुर्वर्ण्यधर्मः। स्वाश्रमविशेषानुष्ठानात् विशेषधर्मो यथा नैष्ठिकयायावरानुज्ञायिकचातुराश्रम्यसिद्धानाम्। सर्वेषां यः समानो धर्मः, स समानधर्मो नैष्ठिकः कृत्स्नधर्म इति। नैष्ठिको ब्रह्मचारिविशेषः, यायावरो गृहस्थविशेषः, आनुज्ञायिको वानप्रस्थविशेषः, चातुराश्रम्यसिद्धो यतिविशेषः। सर्वेषामिति वर्णानामाश्रमाणां च। तत्राद्यो यथा महाभारते—'आनृशंस्यमहिंसा चाप्रमादः संविभागिता। श्राद्धकर्मातिथेयं च सत्यमक्रोध एव च॥ स्वेषु दारेषु संतोषः शौचं नित्याऽनसूयता। आत्मज्ञानं तितिक्षा च धर्मः साधारणो नृप' इति। सर्वाश्रमसाधारणस्तु प्रागुदाहृतः। निष्ठा संसारसमाप्तिस्तत्प्रयोजनो नैष्ठिकः। मोक्षहेत्वात्मज्ञानोत्पत्तिप्रतिबन्धकप्रत्यवायपरिहाराय निष्कामकर्मानुष्ठानं कृत्स्नधर्म इत्यर्थः। आश्रमाश्च शास्त्रेषु चत्वार आम्नाताः। यथाह गौतमः—'तस्याश्रमविकल्पमेके ब्रुवते ब्रह्मचारी गृहस्थो भिक्षुर्वैखानसः' इति। आपस्तम्बः—'चत्वार आश्रमाः गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमिति। तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छति' इति। वसिष्ठः—'चत्वार आश्रमा ब्रह्मचारिगृहस्थवानप्रस्थपरिव्राजकास्तेषां वेदमधीत्य वेदौ वेदान्वाऽविशीर्णब्रह्मचर्यो यमिच्छेत्तमावसेत्' इति। एवं तेषां पृथग्धर्मा अप्याम्नाताः। तथा फलमप्यज्ञानामाम्नातम्। यथाह मनुः—'श्रुतिस्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः। इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्' इति। अनुत्तमं सुखमिति यथाप्राप्ततत्तत्फलोपलक्षणार्थम्। आपस्तम्बः—'सर्ववर्णानां स्वधर्मानुष्ठाने परमपरिमितं सुखं ततः परिवृत्तौ कर्मफलशेषेण जातिं रूपं वर्णं बलं वृत्तं मेधां प्रज्ञां द्रव्याणि धर्मानुष्ठानमिति प्रतिपद्यन्ते' इति। गौतमः 'वर्णा आश्रमाश्च स्वधर्मनिष्ठा प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते विष्वञ्चो विपरीता नश्यन्ति' इति। अत्र शेषशब्देन भुक्तज्योतिष्टोमादिकर्मातिरिक्तं चित्रादिकर्मानुशयशब्दितमुच्यते, नतु पूर्वकर्मण एकदेश इति स्थितम्—'कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च' इत्यत्र। भट्टैरप्युक्तम्—'गौतमीयेऽपि तच्छेषस्तस्माच्चित्राद्यपेक्षया' इति। विष्वञ्चः सर्वतोगामिनो यथेष्टचेष्टाः विपरीता नरकादौ जन्म प्रतिपद्य विनश्यन्ति कृमिकीटादिभावेन सर्वपुरुषार्थेभ्यो भ्रश्यन्त इत्यर्थः। हारीतः—'काम्यैः केचिद्यज्ञदानैस्तपोभिर्लब्ध्वा लोकान्पुनरायान्ति जन्म। कामैर्मुक्ताः सत्ययज्ञाः सुदानास्तपोनिष्ठाश्चाक्षयान्यान्ति लोकान्' इति। अत्र कामनासदसद्भावनिबन्धनः फलभेदो दर्शितः

भविष्यपुराणे—' फलं विनाप्यनुष्ठानं नित्यानामिष्यते स्फुटम् । काम्यानां स्वफलार्थं तु दोषघातार्थमेव तु ॥ नैमित्तिकानां करणे त्रिविधं कर्मणां फलम् । क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ॥ अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्वते । नित्यां क्रियां तथा चान्ये अनुषङ्गफलं विदुः ॥ ' इति । अन्ये आपस्तम्बादयः— ' तद्यथा आम्रे फलार्थे निमिते ' इत्यादिवचनैरानुषङ्गिकफलतां नित्यकर्मणो विदुः। श्रुतिश्च 'त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव । द्वितीयो ब्रह्मचर्याचार्यकुलवासी । तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्' इति गृहस्थवानप्रस्थब्रह्मचारिण उक्त्वा ' सर्व एते पुण्यलोका भवन्ति ' इति तेषामन्तःकरणशुद्ध्यभावे मोक्षाभावमुक्त्वा शुद्धान्तःकरणानामेषामेव परिव्राजकभावेन ज्ञाननिष्ठया मोक्षमाह—' ब्रह्मसंस्थोऽमृतत्वमेति ' इति । तदेवं स्थिते ब्रह्मचारी गृहस्थो वानप्रस्थो वा मुमुक्षुः फलाभिसंधित्यागेन भगवदर्पणबुद्ध्या—स्वे इति । स्वे स्वे तत्तद्वर्णाश्रमविहिते न तु स्वेच्छामात्रकृते कर्मणि श्रुतिस्मृत्युदिते अभिरतः सम्यगनुष्ठानपरः संसिद्धिं देहेन्द्रियसंघातस्याशुद्धिक्षयेन सम्यग्ज्ञानोत्पत्तियोग्यतां लभते नरः वर्णाश्रमाभिमानी मनुष्यः, मनुष्याधिकारित्वात् कर्मकाण्डस्य । देवादीनां वर्णाश्रमाभिमानित्वाभावाद्युक्त एव तद्धर्मेष्वनधिकारः । वर्णाश्रमाभिमानानपेक्षे तूपासनादावधिकारस्तेषामप्यस्तीति साधितं देवताधिकरणे । ननु बन्धहेतूनां कर्मणां कथं मोक्षहेतुत्वम् ? उपायविशेषादित्याह—स्वकर्मनिरतः सिद्धिमुक्तलक्षणां यथा येन प्रकारेण विन्दति तच्छृणु, श्रुत्वा तं प्रकारमवधारयेत्यर्थः ॥ ४९ ॥

**शं० टी०**—एवं ब्राह्मणादीनां नियमेन कर्तव्यानि शमादीनि कर्माणि तदुपलक्षितानि ' यज्ञो दानं तपः कर्म न त्याज्यं कार्यमेव तत् ' इति श्रौतानि स्मार्तानि चोपदिश्य सत्त्वशुद्ध्यै तेषामीश्वरार्पणबुद्ध्या कर्तव्यत्वं बोधयितुं प्रवृत्तिसिद्धये फलं प्ररोचयति—**स्व इति** । नरो ब्राह्मणादिर्मुमुक्षुरधिकारी पुरुषः स्वे स्वे शमो दम इत्यादिना विभज्य प्रदर्शिते स्वकीये कर्मणि शमादौ श्रौतस्मार्ते चाभिरतो नियमेन परिनिष्ठितो यथाविधि समनुष्ठितसत्कर्मसंक्षालितप्रतीपसर्वपापपटलः सन् संसिद्धिं सत्त्वशुद्धिं सकृदुपदेशमात्रेणात्मतत्त्वावगत्याविर्भावयोग्यतालक्षणां विन्दति । ननु बहुभिर्ब्राह्मणादिभिरजस्रं कर्म क्रियते, न तेषां तत्कर्मानुष्ठानेन सत्त्वशुद्धिरुक्तलक्षणा दृश्यते, कथं कर्मण्यभिरतः सत्त्वशुद्धिं लभत इत्याकाङ्क्षायाम् ' यो वा एतदक्षरं गार्ग्यविदित्वा अस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति' इति न्यायेन पूर्वोक्तशमाद्यभावेन कामसंकल्पाहंकाराभिनिवेशेन च कर्माण्यनुतिष्ठतः सत्त्वशुद्धिर्न सिध्यतीति बोधयितुमाह—**स्वकर्मेति** । मुमुक्षुर्ब्राह्मणादिरुक्तशमदमादिसंपन्नः स्वकर्मनिरतः स्वस्य श्रुतिस्मृतिभ्यां विहिते वैदिके कर्मणि निरतो निष्ठितः, सिद्धिं सत्त्वशुद्धिं यथा येन प्रकारेण विन्दति तं प्रकारं शृणु श्रुत्वा तथानुष्ठाने मतिं कुर्वित्यर्थः ॥ ४९ ॥

**श्री० टी०**—एवंभूतस्य ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह—**स्वे स्व इति** । स्वस्वाधिकारविहिते कर्मणि अभिरतः परिनिष्ठितो नरः संसिद्धिं ज्ञानयोग्यतां लभते । कर्मणां ज्ञानप्राप्तिप्रकारमाह—स्वकर्मेतिसार्धेन । स्वकर्मपरिनिष्ठिता यथा येन प्रकारेण तत्त्वज्ञानं लभते तं प्रकारं शृणु ॥ ४९ ॥

**स० टी०**—तदेवं स्वस्ववर्णे यो विहितं कर्म शास्त्रतः ॥ अनुतिष्ठति तस्यास्ति सम्यक्सिद्धिर्महात्मनः ॥ १ ॥ अवान्तरफलं चैव स्वस्वकर्मानुतिष्ठताम् ॥ स्वर्गादि भवतीत्येवं पुराणे वैष्णवे स्मृतम् ॥ २ ॥ प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम् ॥ स्थानमैन्द्रं क्षत्रियाणां संग्रामेष्वनुवर्तिनाम् ॥ ३ ॥ वैश्यानां मारुतं स्थानं स्वधर्ममनुवर्तिनाम् ॥ गान्धर्वं शूद्रजातीनां परिचर्यानुवर्तिनाम् ॥ ४ ॥ एवं धीशुद्ध्यभावे तत्फलं धर्मानुसारिणाम् ॥ फलाभिसंधिसंत्यागादीशार्पणधिया कृतम् ॥ ५ ॥ चित्तशुद्ध्यात्मबोधेन मोक्षहेतुः स्वकर्म तत् ॥ अतस्त्यक्त्वा फलासक्तिमीश्वरार्पणचेतसा ॥ ६ ॥ कर्म कर्तव्यमित्याह स्वयं

श्रीपरमेश्वरः ॥ यथोक्तलक्षणे स्वे स्वे तत्तद्वर्णे तथाऽऽश्रमे ॥ ७ ॥ विहिते वैदिके स्मार्ते कर्मण्यभिरतः पुमान् ॥ यथाशास्त्रमनुष्ठानपरोऽहंकारवर्जितः ॥ ८ ॥ कर्मानुष्ठानतः सिद्धिं चित्ताशुद्धिपरिक्षयात् ॥ विज्ञानोत्पत्तियोग्यत्वं लभतेऽधिकृतो नरः ॥ ९ ॥ वर्णाश्रमाभिमानित्वान्मनुष्योऽत्राधिकारवान् ॥ न देवादिर्यतस्तेषां देवादीनां न चास्त्यसौ ॥ १० ॥ वर्णाश्रमाभिमानोऽतो नास्ति कर्माधिकारता ॥ वर्णाश्रमाभिमानानपेक्षे ब्रह्मावबोधने ॥ ११ ॥ तेषामप्यधिकारोऽस्तीत्युक्तं शारीरके स्फुटम् ॥ नन्वेषां बन्धहेतूनां मोक्षकारणता कथम् ॥ १२ ॥ कर्मणामिति चेदित्थमुपायान्तरतः शृणु ॥ यथोक्तलक्षणां सिद्धिं येनोपायेन विन्दति ॥ १३ ॥ तच्छृणु त्वं तमाकर्ण्य प्रकारमवधारय ॥ १४ ॥ ४९ ॥

**भा० टी०**–एतेषां जातिविहितानां कर्मणां सम्यगनुष्ठितानां मोक्षापेक्षामन्तरेण विहितत्वादेवानुष्ठानात्स्वर्गप्राप्तिः फलम् "सर्व एते पुण्यलोका भवन्ति", "वर्णा आश्रमा स्वधर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुःश्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते", "यस्तु सम्यक्करोत्येतं गृहस्थः परमं विधिम् । तद्वर्णबन्धमुक्तोऽसौ लोकानाप्नोत्यनुत्तमान् ॥ यस्त्वेतां नियतं चर्यां वानप्रस्थश्चरेन्मुनिः । स दहत्यग्निवद्दोषाञ्जयेल्लोकांश्च शाश्वतान् ॥ मोक्षाश्रमं यश्चरते यथोक्तं शुचिः सुसंकल्पितबुद्धियुक्तः । अनिन्धनं ज्योतिरिव प्रशान्तं स ब्रह्मलोकं श्रयते द्विजातिः॥" इत्यादिश्रुतिस्मृतिपुराणेभ्यः । एतेषामेव मोक्षापेक्षया सम्यगनुष्ठितानां यत्फलं तद्वक्तुमारभते–**स्वे स्व इति** । स्वे स्वे यथोक्तभेदे कर्मण्यभिरतः तत्परोऽधिकृतः पुरुषः संसिद्धिं स्वकर्मानुष्ठानादशुद्धिक्षये सति कायेन्द्रियमनसां ज्ञाननिष्ठायोग्यतालक्षणां लभते प्राप्नोति । कथं लभते इत्यपेक्षायामाह–स्वकर्मनिरतः । यथा येन प्रकारेण सिद्धिमुक्तलक्षणां विन्दति लभते तत्तथा शृणु ॥ ४९ ॥

**प० टी०**–अथ ब्राह्मणादिकर्मणो ज्ञानहेतुत्वमाह–**स्वे स्वे कर्मणीति** सार्धेन । स्वे स्वे वर्णोचितकर्मण्यभिरतः श्रद्धया प्रवृत्तः सन्नरः संसिद्धिं लभते । स्वकर्मनिरतः पुरुषो यथा येन प्रकारेण सिद्धिं प्राप्नोति तन्मया वक्ष्यमाणं शृणु ॥ ४९ ॥

**रा० टी०**–अस्त्वेवं ब्राह्मणादिकर्म प्रविभक्तं ततः किमित्यत आह–**स्वे स्व इति** । प्रागुक्तब्राह्मणादिस्वकीये कर्मण्यभिरतः स्वस्वकर्मणा भगवदाराधनं कुर्वन्नरः संसिद्धिं मुक्तिं ज्ञानद्वारा लभते प्राप्नोति । एतदेव सम्यग्विशदयितुं प्रतिजानीते–स्वकर्मेति । विन्दति लभते । तत्तं प्रकारं शृणु इति ॥ ४९ ॥

## यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ॥
## स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ४६ ॥

**त० टी०**–तमेवाह–**यत इति** । यतः सर्वज्ञात्सर्वशक्तेर्भगवतो हेतोर्भूतानां ब्रह्मादिकीटान्तानां प्राणिनां प्रवृत्तिरुत्पत्तिश्चेष्टा वा भवति, येनैकेन सर्वमिदं जगत्ततं व्याप्तं, स्वकर्मणा स्वाभाविकेन वैदिकेन लौकिकेनापि तमभ्यर्च्य फलकर्तृत्वसमर्पणेन पूजयित्वा मानवः तत्प्रसादात् सिद्धिं तत्त्वज्ञाननिष्ठालक्षणां विन्दति लभते ॥ ४६ ॥

**म० टी०**–यतो मायोपाधिकचैतन्यानन्दघनात्सर्वज्ञात्सर्वशक्तेरीश्वरादुपादानात् निमित्ताच्च सर्वान्तर्यामिणः प्रवृत्तिरुत्पत्तिर्मायामयी स्वाप्नरथादीनामिव भूतानां भवनधर्मणामाकाशादीनां येन चैकेन सद्रूपेण स्फुरणरूपेण च सर्वमिदं दृश्यजातं त्रिष्वपि कालेषु ततं व्याप्तं स्वात्मन्येवान्तर्भावितं कल्पितस्याधिष्ठानानतिरेकात् । तथा च श्रुतिः–"यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद्ब्रह्मेति" इति । अत्र यत इति प्रकृतौ पञ्चमी । यतो येनेति चैकत्वं विवक्षितम् । "आनन्दो ब्रह्मेति व्यजानात् । आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते ।" इति च तस्य निर्णयवाक्यम् ।

'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इत्यादिश्रुत्यन्तराच्च मायोपाधिलाभः। "यः सर्वज्ञः सर्ववित्" इत्यादिश्रुत्यन्तरात्सर्वज्ञत्वादिलाभः। एवं च श्रौत एवायमर्थो भगवता प्रकाशितः 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्' इति। तमन्तर्यामिणं भगवन्तं स्वकर्मणा प्रतिवर्णाश्रमं विहितेनाभ्यर्च्य तोषयित्वा तत्प्रसादादैकात्म्यज्ञाननिष्ठायोग्यतालक्षणां सिद्धिमन्तःकरणशुद्धिं विन्दति मानवः। देवादिस्तूपासनामात्रेणेति भावः॥ ४६॥

**शं० टी०**—'ब्रह्मार्पणं ब्रह्महविः' इति 'कर्ता क्रियाणां स स युज्यते क्रतुः। स एव तत्कर्मफलं च तस्य। स्रुगादि यत्साधनमप्यशेषम्। हरेर्न किंचिद्व्यतिरिक्तमस्ति॥' इत्येतच्छ्रुतिस्मृत्युक्तरीत्या मुख्याधिकारिणो विदुषः कर्तृकर्मतत्साधनस्रुक्स्रुवचरुपुरोडाशाग्न्यादिषु ब्रह्मदृष्ट्याऽव्याहतया कर्माण्यनुतिष्ठत इष्टानिष्टत्वमित्रामित्रत्वदुष्टादुष्टत्वादिविषमबुद्धिः क्रमेण विनश्यति। तन्नाशाद्रागद्वेषादिदोषा नश्यन्ति। तन्नाशादहंममेत्यभिमाना दोषा नश्यन्ति। तेषां रजस्तमोदोषाणां सर्वेषां क्रमेण निःशेषविनाशे सत्त्वं स्वयमेव प्रसीदतीति बोधयितुं सर्वस्य सगुणब्रह्ममात्रत्वज्ञानवतः पण्डितस्य तथा तदाराधनमेव कुर्वतः सत्त्वशुद्धिः सिध्यतीत्याह—**यत इति**। 'जन्माद्यस्य यतः', 'यतो वा इमानि भूतानि जायन्ते' इत्युक्तप्रकारेण यतो यस्मान्मायोपाधिकाद्ब्रह्मणः सकाशाद्भूतानामाकाशादीनां तत्कार्याणां च प्रवृत्तिरुत्पत्तिर्मृत्सकाशाद्घटादिवद्यस्मादिदं सर्वं समुत्पन्नमित्यर्थः। किंच येन कारणभूतेन ब्रह्मणा तत्कार्यमिदं जगत्सर्वं ततं व्याप्तं मृदा घटवद्बहिरन्तश्च पूर्णं भवति तं सर्वात्मकं परमात्मानं स्रुक्स्रुवाग्निहोत्रमन्त्रतन्त्रादिषु सर्वत्र ब्रह्मदृष्टिर्भूत्वा मानवोऽधिकारी विद्वान् स्वकर्मणा श्रौतस्मार्तादिना सात्त्विकेनाभ्यर्च्य श्रद्धाभक्तिभ्यां नियमेनेष्ट्वा सर्वत्र ब्रह्मदृष्टिं च कृत्वा सिद्धिं सत्त्वशुद्धिलक्षणां विन्दति—सत्त्वशुद्धिं तत्फलभूतां ज्ञानसिद्धिं च प्राप्नोतीत्यर्थः। यतः प्रवृत्तिर्येन सर्वमितिविशेषणद्वयं सर्वत्र ब्रह्मदृष्टिकर्तव्यताबोधनार्थमेवेत्यवगम्यते। अधिकारिणां मध्यमादिभेदे तु "यः सर्वेषु भूतेषु तिष्ठन्सर्वेभ्यो भूतेभ्योऽन्तरः" इत्यादिश्रुत्युक्तरीत्या यतो यस्माद्भूतानां ब्रह्मादिस्तम्बान्तानां प्रवृत्तिश्चेष्टा सिध्यति—यः सर्वं प्रवर्तयतीत्यर्थः। सर्वं जगदिदं येन ततं व्याप्तं यः सर्वात्मक इत्यर्थः। तमग्नीन्द्रादित्यादिदेवतारूपेण वर्तमानं सर्वनियन्तारं परमेश्वरं स्वकर्मणाऽभ्यर्च्य श्रद्धाभक्तिभ्यामग्न्यादिदेवान्सर्वान्परमेश्वरबुद्ध्या इष्ट्वा तदनुग्रहेण मानवो मुमुक्षुरधिकारी ब्राह्मणादिः सिद्धिं सत्त्वशुद्धिं तत्फलभूतां ज्ञानसिद्धिं च क्रमेण विन्दतीत्यर्थः॥ ४६॥

**श्री० टी०**—तमेवाह—**यत इति**। यतोऽन्तर्यामिणः परमेश्वराद्भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति, येन च कारणात्मना सर्वमिदं विश्वं ततं व्याप्तं, तमीश्वरं स्वकर्मणाऽभ्यर्च्य पूजयित्वा सिद्धिं लभते मनुष्यः॥ ४६॥

**स० टी०**—मायोपाधिकचैतन्यानन्दैकघनरूपतः॥ सर्वज्ञात्सर्वशक्तेः श्रीपरमेश्वरतो यतः॥ १॥ उपादानान्निमित्ताच्च सर्वान्तर्यामिणः सतः॥ मायामयी समुत्पत्तिर्भूतानां जनिधर्मिणाम्॥ २॥ खादीनां भौतिकानां च कल्पितानां मृषात्मनाम्॥ सत्तास्फुरणरूपेण येन चैकेन सर्वथा॥ ३॥ दृश्यजातमिदं सर्वं सदा व्याप्तमसङ्गिना॥ नातिरेकोऽस्त्यधिष्ठानात्कल्पितस्य मनागपि॥ ४॥ यतो वेत्यादिवाक्योक्तो दार्शितोऽर्थ इह स्फुटम्॥ तमन्तर्यामिणं विष्णुं स्ववर्णाश्रमकर्मणा॥ ५॥ तोषयित्वाऽऽत्मविज्ञानोत्पत्तियोग्यत्वलक्षणाम्॥ तत्प्रसादाद्धि यः शुद्धिसिद्धिं तां लभते नरः॥ ६॥ वर्णाश्रमं यमविकृत्य धियो विशुद्ध्यै धर्मः श्रुतौ विहित ईशसमर्चनाख्यः॥ तेनेश्वरं यमधिकारिजनः समर्च्य प्राप्नोति सिद्धिमनिशं तमहं प्रपद्ये॥ ७॥ ४६॥

**भा० टी०**—तमेव प्रकारं दर्शयति—**यत इति**। यतः यस्मात् जगज्जनकादन्तर्यामिणो भूतानां प्राणिनां

प्रवृत्तिरुत्पत्तिश्चेष्टा वा स्यात्, येनश्वेरेण सर्वं कृत्स्नमिदं ततं व्याप्तं कार्यस्य कारणसत्तातिरिक्तसत्ताकत्वाभावात् । तं परमात्मानं स्वकर्मणा प्रतिवर्णं पूर्वोक्तेन अभ्यर्च्य सम्यक् पूजयित्वा आराध्य मानवोऽधिकृतो मनुष्यः सिद्धिं केवलज्ञाननिष्ठायोग्यतालक्षणां विन्दति लभते ॥ ४६ ॥

प० टी०—यत इति । यतो यस्मादन्तर्यामिरूपाद्भूतानां देहानां चेष्टा भवति । येन कारणात्मनेदं दृश्यमानं सर्वं ततं विस्तारितं तमीश्वरं कर्मणा वर्णाश्रमोचितेनाभ्यर्च्याराध्य मानवः सिद्धिं विन्दति लभते । अस्मिन्नर्थे पूर्वं बह्व्यः श्रुतय उपन्यस्ताः सन्ति ॥ ४६ ॥

रा० टी०—यत इति । यतो यस्माद्भगवतो भूतानां प्राणिनां प्रवृत्तिश्चेष्टा भवति । येन च भगवता इदं सर्वं चराचरात्मकं जगत्ततं व्याप्तं तं भगवन्तं स्वकर्मणा समभ्यर्च्य शमदमादिपूर्वकं पूजयित्वा सिद्धिं मोक्षं विन्दति लभते मानवः मनुष्यो ब्राह्मणादिरित्यर्थः ॥ ४६ ॥

**श्रेयान् स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ॥**
**स्वभावनियतं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ ४७ ॥**

**त० टी०—यतः परमेश्वराराधनलक्षणधर्मस्य तत्प्रसादात् सिद्धिहेतुत्वमतः सर्वजनस्य तथाविधः स्वधर्म एव श्रेयस्कर इत्याह—श्रेयानिति । स्वधर्मः स्वेनोपादातुं योग्यः परमात्माराधनरूपो धर्मः विगुणः किंचिदङ्गविहीनोऽपि स्वनुष्ठितात्सम्यगनुष्ठितादपि परधर्मात् श्रेयान् प्रशस्यतरः । यतः स्वभावनियतं पूर्वोक्तस्वभावेन नियतं नियमेनोक्तं कर्म युद्धादिकं कुर्वन्नपि किल्बिषं न प्राप्नोति ॥ ४७ ॥**

म० टी०—यतः स्वधर्म एव मनुष्याणां भगवत्प्रसादहेतुरतः—श्रेयानिति । परधर्मात्सम्यगनुष्ठितादपि श्रेयान् प्रशस्यतरः स्वधर्मो विगुणोऽसम्यगनुष्ठितोऽपि । तस्मात् क्षत्त्रियेण सता त्वया स्वधर्मो युद्धादिरेवानुष्ठेयो न परधर्मो भिक्षाटनादिरित्यभिप्रायः । ननु स्वधर्मोऽपि युद्धादिर्बन्धुवधादिप्रत्यवायहेतुत्वान्नानुष्ठेय इति नेत्याह—स्वभावनियतं पूर्वोक्तं शौर्यं तेज इत्यादि स्वभावजं युद्धादि कर्म कुर्वन् किल्बिषं पापं बन्धुवधादिनिमित्तं न प्राप्नोति । तथा च प्राग्व्याख्यातं सुखदुःखे समे कृत्वेत्यत्र विहितज्योतिष्टोमाङ्गपशुहिंसाया इव विहितयुद्धाङ्गबन्धुहिंसाया अपि प्रत्यवायहेतुत्वाभावात् । तथा चोक्तमधस्तात् ॥ ४७ ॥

शं० टी०—ननु ब्राह्मणस्य भिक्षणे निमित्तमाचार्यो यज्ञो विवाह इति मुमुक्षोश्चित्तशुद्धिं तत्फलं वाऽऽमुमिच्छतो यज्ञादेः प्रतिग्रहद्रव्यैकसाध्यत्वात्प्रतिग्रहस्यैव पापहेतुत्वात् प्रतिगृहीतद्रव्येण क्रियमाणयागापेक्षया ब्रह्मचारिवदप्रतिगृह्य शुद्धवृत्त्याऽवस्थानमेव तस्य शोधकं निष्पापकं च भवति । तथा हिंसाप्रधानत्वाद्युद्धस्य तत्साध्येन द्रव्येण क्रियमाणराजसूयादियागाद्यनुष्ठानापेक्षया शुद्धिकामस्य क्षत्त्रियस्य प्रतिग्रहभीरुब्राह्मणवच्छुद्धवृत्त्याऽवस्थानमेव शोधकं निष्पापं च भवतीत्याशङ्कायामाह—श्रेयानिति । परधर्मात्परो जात्या वर्णेन वाऽऽश्रमेण वा स्वस्माद्भिन्नः स्वविलक्षणस्तस्य धर्मादाचारात्स्वनुष्ठितादङ्गलोपराहित्येन सम्यगाचरितात् विगुणोऽपि स्वलक्षणपौष्कल्यहीनोऽपि दोषवानपि ब्राह्मणस्य क्षत्त्रियस्य वाऽन्यस्य वा स्वधर्म एव श्रेयान् श्रेष्ठो निःश्रेयसस्य साधनं भवति, न तु सम्यगनुष्ठितोऽपि परधर्मस्तस्याविहितत्वादित्यर्थः । तदेव विस्पष्टयति—स्वभावेति । ब्राह्मणस्याधिकारः प्रवचनयाजनप्रतिग्रहाः । न दोषो हिंसायामाहवेऽन्यत्रेत्येवं स्वभावनियतं स्वभावस्तत्तज्जातिस्तमुद्दिश्य नियतं शास्त्रेण विहितं कर्म प्रतिग्रहं तदुपार्जितद्रव्येण यागाद्यनुष्ठानं च ब्राह्मणः, युद्धादिलक्षणं कर्म तदुपार्जितद्रव्येण यागाद्यनुष्ठानं च क्षत्त्रियः कुर्वन्किल्बिषं चित्तशुद्धिप्रतिबन्धकं नाप्नोति । स्वजातेः स्ववर्णस्य स्वाश्रमस्य विहितधर्मानुष्ठानेन पुरुषः पापी न भवतीत्यर्थः ॥ ४७ ॥

श्री० टी०—स्वकर्मणेतिविशेषणस्य फलमाह—श्रेयानिति । विगुणोऽपि स्वधर्मः सम्यगनुष्ठितादपि पर-

धर्माच्छ्रेयाञ्छ्रेष्ठः । न च बन्धुवधादियुक्ताद्युद्धादेः स्वधर्माद्भिक्षाटनादिपरधर्मः श्रेष्ठ इति मन्तव्यम्, यतः स्वभावेन पूर्वोक्तेन नियतं नियमेनोक्तं कर्म कुर्वन्किल्बिषं नाप्नोति ॥ ४७ ॥

स० टी०—यतः स्वधर्म एवास्ति भगवत्तोषकारणम् ॥ अतो वरेण्यः स्वो धर्मोऽसम्यक्त्वेनाप्यनुष्ठितः ॥ १ ॥ परधर्मादविहितात्सम्यक्त्वेनाप्यनुष्ठितात् ॥ क्षत्रियेण सता तस्मात्स्वधर्मो भवताऽधुना ॥ २ ॥ संग्रामादिरनुष्ठेयो न तु भिक्षादिरन्यगः ॥ ननु युद्धं स्वधर्मोऽपि बन्धुहिंसादिपापकृत् ॥ ३ ॥ कथं मयाऽस्त्यनुष्ठेय इत्याशङ्क्याह मापतिः ॥ पूर्वोक्तं शौर्यमुख्यं यत्क्षत्रियस्य स्वभावजम् ॥४॥ युद्धादि कर्म कुर्वन्न पापं हिंसादिदोषजम् ॥ शास्त्रप्राततयाऽऽप्नोति वैधी हिंसा न पापदा ॥ ५ ॥ ज्योतिष्टोमाङ्गपश्वादिहिंसाया इव शास्त्रतः ॥ युद्धाङ्गबन्धुहिंसायाः प्रत्यवाये न हेतुता ॥ ६ ॥ ४७ ॥

भा० टी०—यतः स्वकर्मणा परमात्मानमभ्यर्च्य सिद्धिं लभते तस्मात्—श्रेयानिति । स्वो धर्मः स्वधर्मो विगुणोऽसम्यगनुष्ठितोऽपि परधर्मात्स्वनुष्ठितात्सम्यगनुष्ठितात् श्रेयान्प्रशस्यतरः । ननु युद्धादिलक्षणं स्वधर्मं कुर्वन्नपि हिंसानिमित्तं पापं प्राप्नोति, तत्कथं स्वधर्मः श्रेयानिति तत्राह—स्वभावनियतं कर्म । 'शौर्यं तेजो धृतिर्दाक्ष्यं युद्धे चाप्यपलायनम्' इत्यादि कर्म स्वभावजं कुर्वन् किल्बिषं नाप्नोति । यथा विषजः कृमिः विषकृतं दोषं न प्रतिपद्यते, तथाऽयमाधिकृतः पुरुषो दोषवदपि स्वभावनियतं कुर्वन् पापं नाप्नोतीत्यर्थः। तदुक्तं 'श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् । स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इति । एतेन तर्हि दोषरहितमेव भिक्षाटनादि सर्वैरनुष्ठीयताम्, अतो न पापप्राप्त्याशङ्केति न शङ्कनीयम् । तर्हि पापप्राप्तिशङ्कां परिहर्तुमकर्मनिष्ठैव सर्वैः कुतो न संपाद्यत इति शङ्कापि न कर्तव्या। 'नहि कश्चित्क्षणमपि जातुतिष्ठत्यकर्मकृत्' । 'नहि देहभृता शक्यं त्यक्तुं कर्माण्यशेषतः' इत्यनात्मज्ञेनाकर्मनिष्ठतायाः संपादयितुमशक्यत्वात् ॥ ४७ ॥

प० टी०—अथ स्वधर्मं प्रशंसन्नाह—श्रेयानिति । सम्यगनुष्ठितादपि परधर्मात्सकाशाद्विगुणो लौकिकदृष्ट्या गुणरहितोऽपि स्वधर्मः श्रेयान् श्रेयस्करः । यथा हिंसाप्रधानत्वेन विगुणोऽपि क्षात्त्रधर्मः परधर्माद्ब्राह्मणधर्मादुत्कृष्टादपि श्रेयान्। यतः स्वभावेन पूर्वोक्तेन स्वधर्मे नियतं नियमेनोक्तं कर्म कुर्वन् किल्बिषं पातकं न प्राप्नोति ॥ ४७ ॥

श० टी०—स्वधर्मनिरतत्वमावश्यकमित्येतदुपपादयति—श्रेयानिति । विगुणोऽङ्गहीनोऽपि स्वधर्मः सम्यगनुष्ठितात्परधर्माच्छ्रेयान्पुमर्थसाधनम् । विगुणः कथं श्रेयानित्यत आह—स्वभावेति । किल्बिषं वैगुण्यकृतदोषं नाप्नोति । वैगुण्यशङ्कया स्वधर्मत्यागो न कार्यः ॥ ४७ ॥

**सहजं कर्म कौन्तेय ! सदोषमपि न त्यजेत् ॥**
**सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः ॥ ४८ ॥**

त० टी०—ननु यदि कर्मणो ज्ञानोत्पत्तिरेवान्ततः फलं चेत्तर्हि हिंसादिदोषयुक्तं कर्म परित्यज्य ज्ञानाभ्यास एव यत्नः कर्तव्यः, किमनेन हेयेन कर्मणेति चेत्तत्राह—सहजमिति । हे कौन्तेय ! सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत् । हि यस्मात् सर्वारम्भाः सर्वे परमेश्वराराधनव्यतिरिक्ता आरम्भाः कर्मज्ञानयोगाद्युपाया दोषेणावृताः । कथम्? धूमेनाग्निरिव । यथा शीततमोनाशकोऽपि अग्निरार्द्रेन्धनसंयोगजन्यधूमावृतो न सम्यग्ज्वलति प्रकाशते च, तथा कर्मानुष्ठानमन्तरेण सत्त्वशुद्ध्यभावेन यथार्थतत्त्वज्ञानं न स्यात् । असंभावनाविपरीतभावनादोषानिवृत्तेः । तस्मात्स्वभावविहितं कर्म फलकर्तृत्वत्यागेन यथाशक्ति अनुष्ठाय निर्मलेऽन्तःकरणे सति निखिलप्रमादं विहाय तत्त्वज्ञाननिष्ठा स्वयमेव संपद्येत । "अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते" इति श्रुतेः । तस्मात्स्वाधिकारयोग्यकर्मणा परमात्मानमभ्यर्च्य ज्ञाननिष्ठालक्षणां सिद्धिं प्राप्नोतीति सिद्धम् ॥४८॥

म० टी०—यस्मादेवं विहितहिंसादेर्न प्रत्यवायहेतुत्वं, परधर्मश्च भयावहः, सामान्यदोषेण च सर्वकर्माणि दुष्टानि, तस्मादज्ञो वर्णाश्रमाभिमानी—सहजमिति। हे कौन्तेय! सहजं स्वभावजं कर्म सदोषमपि विहितहिंसायुक्तमपि ज्योतिष्टोमयुद्धादि न त्यजेदन्तःकरणशुद्धेः प्राग्भवानन्यो वा। नह्यनात्मज्ञ कश्चित्क्षणमपि कर्माण्यकृत्वा स्थातुं शक्नोति । न च परधर्माननुतिष्ठन्नपि दोषान्मुच्यते । सर्वारम्भाः स्वधर्माः परधर्माश्च सर्वे हि यस्मात् दोषेण त्रिगुणात्मकत्वेन सामान्येनावृताः व्याप्ताः सदोषा एव । तथा च प्राग्व्याख्यातम्—'परिणामतापसंस्कारैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः' इति । तस्मादगत्याऽनात्मज्ञः कर्माणि कुर्वन् विषजकृमिरिव विषं सहजं कर्म युद्धादि त्रिगुणात्मकत्वेन सामान्येन बन्धुवधादिनिमित्तत्वेन विशेषेण च सदोषमपि न त्यजेत् सर्वकर्मत्यागासमर्थत्वात् । सर्वकर्मत्यागसमर्थस्तु शुद्धान्तःकरणस्त्यजेदेवेत्यभिप्रायः ॥ ४८ ॥

शं० टी०—ब्राह्मणस्य क्षत्रियस्य वा स्वधर्मस्याग्निष्टोमादेर्युद्धस्य च बहिर्दोषवत्प्रतीयमानत्वेऽपि विध्युक्तत्वेन निर्दुष्टत्वात्तदनुष्ठानं मुक्तय एव भवति, न तु बन्धायेति बोधयित्वा पुनरपि यागो वा संग्रामो हिंसाप्रधानत्वेन दोषवानेव भवतीति कथं कर्तुं शक्यत इत्याशङ्क्य सर्वथाऽपि न कर्तव्येत्युक्तमेवार्थं दृढयितुमाह—सहजमिति। सहजं 'कर्मणा जायते द्विजः' इतिन्यायेन सहजन्मना द्वितीयेन जायत इति सहजं जातितः प्राप्तं, जातिं वर्णं च निमित्तीकृत्य शास्त्रेण विहितं कर्म स्वधर्ममित्यर्थः । सदोषमप्युक्तरीत्या दोषयुक्तमप्यारुरुक्षुर्मोक्षेच्छुर्ब्राह्मणादिर्न त्यजेन्न संन्यसेदित्यर्थः । ननु दोषवत्कर्मणोऽनुष्ठानान्निर्दुष्टस्य परधर्मस्याश्रयणं युक्तमेवेति चेद्भवानत्र प्रष्टव्यः—कर्तव्यस्य कर्मणस्त्यागः दुष्टत्वबुद्ध्या वा, किमसाधनत्वबुद्ध्या वा, किमसत्त्वबुद्ध्या वा, परधर्मस्त्वदुष्टः स आश्रयणीय इति वा ? नाद्यः, विहितस्य परित्यागे प्रत्यवायप्रसङ्गात् । न द्वितीयः, अविरक्तस्यासाधनत्वबुद्ध्यनुत्पत्तेः विरक्तस्य त्यक्तव्ये कर्मणि गुणदोषविचारासंभवाच्च । न तृतीयः, अनात्मज्ञस्य कर्मतत्साधनफलेष्वसत्त्वबुद्ध्यनुत्पत्तेः । नापि चतुर्थः, परधर्मस्यापि कर्मत्वेन दोषवत्त्वाव्यभिचारादिति । कुटीचकस्याप्यविरक्तस्य शिखायज्ञोपवीतादिमत्त्वेन कर्मित्वात्तत्कर्मणोऽपि साधनसाध्यत्वेन दोषवत्त्वमेव निश्चित्य सर्वैर्वर्णाश्रमिभिः क्रियमाणं कर्म दोषवदेव " न हिंस्यात्सर्वा भूतानि " इतिश्रुत्या भूतहिंसाया निषिद्धत्वात्सर्वस्यापि कर्मणो वैदिकस्य कुशसमिदादिद्रव्यसाध्यत्वेन हिंसाप्रधानत्वात् सर्ववर्णाश्रमिभिः क्रियमाणं कर्म सर्वमपि हिंसाप्रधानत्वेन दोषयुक्तमेव भवतीति सर्वस्यापि कर्मणो दोषवत्त्वं दर्शयितुमाह—सर्वारम्भाहीति । यद्वा ' काममय एवायं पुरुषः ' इति, ' यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ' इति, 'रजो रागात्मकं विद्धि तृष्णासङ्गसमुद्भवम् । तन्निबध्नाति कौन्तेय कर्मसङ्गेन देहिनम् ' इतिन्यायेन कर्मणः सर्वस्यापि कामसंकल्पादिरजोगुणकार्यत्वेन दोषवत्त्वात्सर्वाण्यपि कर्माणि दोषवन्त्येवेत्युच्यन्ते—सर्वेति । हि यस्मात्कारणात्सर्वारम्भा आरभ्यन्ते क्रियन्त इत्यारम्भाः सर्ववर्णाश्रमिभिः क्रियमाणानि कर्माणि सर्वाण्यपि हिंसादोषेण रजोदोषेण वाऽऽवृता व्याप्ता धूमेनाग्निरिव । यथा अग्नेः स्वोत्पत्तौ धूमेन विना भावाभावस्तथा वैदिकस्य कर्मणोऽपि हिंसया कामेन वा विना भावाभावात्सर्वमपि कर्म दोषवदेव । यस्मादेवं तस्मात्परधर्मोऽपि दोषवानेव भवति । परधर्माचरणेन स्वाभाविक एको दोषः, स्वधर्मत्यागकृतो द्वितीयश्च, अविहिताचरणं तृतीयः, ईश्वराज्ञोल्लङ्घनं चतुर्थश्चापतति । तस्मादारुरुक्षोरविरक्तस्य मोक्षैककामस्य जातिं वर्णमाश्रमं च निमित्तीकृत्य श्रुतिस्मृतिभ्यां विहितं कर्म सदोषमपि सत्त्वशुद्धयेऽवश्यं कर्तव्यम् । स्वधर्माचरणेनैव शुद्धात्मा ब्राह्मणादिर्मुक्तिं गच्छति । तथाच स्मृतिः—' वेदोदितं स्वकं कर्म नित्यं कुर्यादतन्द्रितः । तद्धि कुर्वन्यथाशक्ति प्राप्नोति परमां गतिम् ' इति । यत एवं ततो वर्णाश्रमिणां मुमुक्षूणां बन्धमुक्तये स्वधर्म एव कर्तव्य इति सिद्धम् ॥ ४८ ॥

श्री० टी०—यदि पुनः सांख्यदृष्ट्या स्वधर्मे हिंसालक्षणं दोषं मत्वा परधर्मं श्रेष्ठं मन्यसे, तर्हि सदो-

षत्वं परधर्मेऽपि तुल्यमित्याशयेनाह—**सहजमिति** । सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत्, हि यस्मात् सर्वेऽप्यारम्भा दृष्टादृष्टार्थानि सर्वाण्यपि कर्माणि दोषेण केनाचिदावृता व्याप्ता एव, यथा सहजेन धूमेनाग्निरावृतस्तद्वत् । अतो यथाग्नेर्धूमरूपं दोषमपाकृत्य प्रताप एव तमःशीतादिनिवृत्तये सेव्यते, तथा कर्मणोऽपि दोषांशं विहाय गुणांश एव सत्त्वशुद्धये सेव्यत इत्यर्थः ॥ ४८ ॥

**स० टी०**—यतो विहिताहिंसादेः प्रत्यवाये न हेतुता ॥ भीतिदः परधर्मश्च सर्वं कर्म कलङ्कवत् ॥ १ ॥ तस्मादज्ञोऽधिकारी यो वर्णाश्रममतिः पुमान् ॥ स्वभावजं त्यजेन्नैव कर्म दोषान्वितं ह्यपि ॥ २ ॥ ज्योतिष्टोमादिकं यद्वत्तथा युद्धादिकर्म च ॥ अन्तःकरणशुद्धेः प्रागभवान्वान्योऽथवा जनः ॥ ३ ॥ नान्यः कश्चित्क्षणं जातु विना कर्मेह तिष्ठति ॥ समुत्पन्नं यतः कर्म सर्वेषां जन्मना सह ॥ ४ ॥ न चान्यधर्मानुष्ठायी दोषान्मुच्यत आग्रही ॥ स्वधर्माः परधर्माश्च सर्वारम्भपदेरिताः ॥ ५ ॥ यस्मात्त्रैगुण्यदोषेण सामान्येनावृताः किल ॥ विकारतापसंस्कारैर्गुणवृत्तिविरोधतः ॥ ६ ॥ दुःखमेव जगत्सर्वं कर्मजन्यं विवेकिनः ॥ केवलं मूढबुद्धीनां सुखवद्भासते जगत् ॥ ७ ॥ तस्मादगत्या नात्मज्ञः कुर्वन्कर्माणि शाश्वतः ॥ तिष्ठेत्त्यागासमर्थश्च यतोऽसौ सर्वकर्मणाम् ॥ ८ ॥ कर्मत्यागसमर्थस्तु शुद्धान्तःकरणः पुमान् ॥ स वेदान्तविचारार्थं सर्वं विक्षेपकं त्यजेत् ॥ ९ ॥ करोतु कर्माणि स मा करोतु वा मुकुन्दपादाब्जरसग्रहः सुधीः ॥ गृहे वने वा निवसन्भ्रमोज्झितो मुकुन्द एवास्ति स यो हि तद्रतिः ॥ १० ॥ ४८ ॥

**भा० टी०**—**सहजमिति** । अतः सहजं जन्मनैवोत्पन्नं स्वभावजं कर्म न त्यजेत् । कुन्तीपुत्रेण त्वया युद्धे अपलायनादि सहजं कर्म न त्याज्यमिति संबोधनाशयः । दोषवत्सहजमपि कर्म परित्यज्य निर्दोषमन्यदीयं कर्म कुतो नाश्रयणीयमित्याशङ्क्य दोषरहितस्य कर्मण एवाभावादित्याह—**सर्वारम्भाः** । हि यस्मादारभ्यन्त इत्यारम्भाः सर्वकर्माणि त्रिगुणात्मकत्वात्सहजेन धूमेनाग्निरिवावृताः व्याप्ताः सदोषा इत्यर्थः । तथाच सहजस्य स्वधर्माख्यस्य कर्मणः परित्यागेन परधर्मानुष्ठानेऽपि सर्वकर्मणां दोषवत्त्वाद्दोषान्नैव मुच्यते, भयावहश्च परधर्मः । न च शक्यतेऽज्ञेनाशेषतः कर्म त्यक्तुं यतस्तस्मान्न त्यजेदित्यर्थः ॥ ४८ ॥

**प० टी०**—तदेवाह—**सहजमिति** । भो कौन्तेय ! सहजं स्वभावविहितं कर्म सदोषमपि न त्यजेत् । हि यस्मात् कारणात् सर्वारम्भाः सर्वकर्माणि दोषेण लौकिकेनावृता व्याप्ताः सन्ति । अत्र दृष्टान्तमाह—**धूमेनेति** । यथा प्रकाशके होमार्हे वाग्नौ धूमलक्षणो दोषोऽस्ति, तथाप्यग्निः "अग्निमीळे" इत्यादिश्रुतिभिः स्तूयमानः सेव्यत एव, तथैव ब्राह्मणादिधर्मेषु दैन्यनिष्क्रियत्वगोपीडनाधिकार्यरूपा दोषाः सन्ति तथापि शास्त्रविहितत्वात्त एवानुष्ठेया नान्य इत्यर्थः ॥ ४८ ॥

**रा० टी०**—त्रैगुण्यदोषस्य सर्वत्रावर्जनीयत्वादित्याह—**सहजमिति** । हि यस्मात्सर्वारम्भाः सर्वकर्माणि धूमेनाग्निरावृत इव दोषेणावृता एव । ततः सदोषमपि सहजं कर्म न त्यजेदिति ॥ ४८ ॥

**असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः ॥**
**नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ ४९ ॥**

**त० टी०**—तदेवं स्वकर्मणाऽऽराधितपरमपुरुषस्य तत्त्वज्ञाननिष्ठालक्षणा सिद्धिरुक्ता । इदानीं तस्या अपि यत्फलं स्यात्तन्निर्दिशति—**असक्तबुद्धिरिति** । असक्ता सर्वत्रासक्तिशून्या बुद्धिर्यस्य सः, जितात्मा वशीकृतमनाः, यतो विगतस्पृहो विशेषेण गता दूरीभूता स्पृहा फलविषया इच्छा यस्य स संन्यासेन "सङ्गं त्यक्त्वा फलं चैव स त्यागः सात्त्विको मतः" इत्युक्तलक्षणेन नैष्कर्म्यसिद्धिं कर्मनिवृत्तिलक्षणां परमां प्रकृष्टां पूर्वोक्तसिद्धेर्ज्ञाननिष्ठाया अपि फलभूतां सर्वोत्कृष्टां श्रीभगवत्स्वरूपमङ्गलविग्रहविषयकश्रीगङ्गाप्रवाहवदनवच्छिन्नस्मृतिसंतानरूपां परां भक्तिमधिगच्छति प्राप्नोति ॥ ४९ ॥

म० टी०—कः पुनः सर्वकर्मत्यागसमर्थः ? यो नित्यानित्यवस्तुविवेकजनेहामुत्रार्थभोगवैराग्येण शमदमादिसंपन्नः कर्मजां सिद्धिमशुद्धिपरिक्षयद्वारा मुमुक्षुः शुद्धब्रह्मात्मैक्यजिज्ञासां प्राप्तः स स्वेष्टमोक्षहेतुब्रह्मात्मैक्यज्ञानसाधनवेदान्तवाक्यश्रवणादि कर्तुं सर्वविक्षेपनिवृत्त्या तच्छेषभूतं सर्वकर्मसंन्यासं श्रुतिस्मृतिविहितं कुर्यादेव । "तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्येत्" इति श्रुतेः 'सत्यानृते सुखःदुखे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्' इति स्मृतेश्च । उपरतस्त्यक्तसर्वकर्मा भूत्वाऽऽत्मानं पश्येदात्मदर्शनाय वेदान्तवाक्यानि विचारयेदिति श्रुत्यर्थः । एतादृश एव "ब्रह्मसंस्थोऽमृतत्वमेति" इति श्रुत्या धर्मस्कन्धत्रयविलक्षणत्वेन प्रतिपादितः परमहंसपरिव्राजकः परमहंसपरिव्राजकं कृतकृत्यं गुरुमुपसृत्य वेदान्तवाक्यविचारसमर्थो यमुद्दिश्य 'अथाऽतो ब्रह्मजिज्ञासा' इत्यादिचतुर्लक्षणमीमांसा भगवता बादरायणेन समारम्भि । कीदृशोऽसावित्याह—असक्तबुद्धिरिति । सर्वत्र पुत्रदारादिषु सक्तिनिमित्तेष्वपि असक्तबुद्धिः अहमेषां ममैत इत्यभिष्वङ्गरहिता बुद्धिर्यस्य सः । यतो जितात्मा विषयेभ्यः प्रत्याहृत्य वशीकृतान्तःकरणः । विषयरागे सति कथं प्रत्याहरणं तत्राह—विगतस्पृहः । देहजीवितभोगेष्वपि वाञ्छारहितः सर्वदृश्येषु दोषदर्शनेन नित्यबोधपरमानन्दरूपमोक्षगुणदर्शनेन च सर्वतो विरक्त इत्यर्थः । य एवं शुद्धान्तःकरणः 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति वचनप्रतिपादितां कर्मजामपरां सिद्धिं ज्ञानसाधनवेदान्तवाक्यविचाराधिकारलक्षणां ज्ञाननिष्ठायोग्यतां प्राप्तः स संन्यासेन शिखायज्ञोपवीतादिसहितसर्वकर्मत्यागेन हेतुना तत्पूर्वकेन विचारेणेत्यर्थः । नैष्कर्म्यसिद्धिं निष्कर्म ब्रह्म तद्विषयं विचारपरिनिष्पन्नं ज्ञानं नैष्कर्म्यं तद्रूपां सिद्धिं परमां कर्मजाया अपरमसिद्धेः फलभूतामधिगच्छति साधनपरिपाकेण प्राप्नोति । अथवा संन्यासेनेतीत्थंभूतलक्षणे तृतीया । सर्वकर्मसंन्यासरूपां नैष्कर्म्यसिद्धिं ब्रह्मसाक्षात्कारयोग्यतां नैर्गुण्यलक्षणा सिद्धिं परमां पूर्वस्याः सिद्धेः सात्त्विक्याः फलभूतामधिगच्छतीत्यर्थः ॥ ४९ ॥

शं० टी०—ज्ञानकर्मणोः साध्यसाधनभावं सर्वशास्त्रप्रसिद्धं बोधयितुमेवमारुरुक्षोर्मोक्षैककामस्य कर्तव्यस्य कर्मणो दोषवत्त्वेऽपि चित्तशुद्धेरन्यासाध्यत्वेनावश्यकरणीयत्वं, श्रुतिस्मृतिभ्यां विहितत्वेन निर्दुष्टत्वं, श्रेयःसाधनत्वं, तेन सात्त्विकेन कर्मणा बहुजन्मभिः समाराधितपरमेश्वरप्रसादाच्चित्तशुद्धिं च प्रतिपाद्य सात्त्विक्यैव बुद्ध्या सात्त्विकेन च कर्मणा समाराधितपरमेश्वरप्रसादात्सम्यक्सत्त्वशुद्धिं प्राप्तवतः सद्गुरोः सकृदुपदेशमात्रेण संप्राप्तात्मज्ञानस्यारूढस्य संन्यासयोगेन ब्रह्मप्राप्तिं निर्दिशति—असक्तेति । असक्तबुद्धिः सर्वत्र विषयान्तरे कर्मान्तरे देशान्तरे लोकान्तरे देवतान्तरे च भोक्तुं कर्तुं स्थातुं प्राप्तुमुपासितुं च असक्ताऽननुरक्ता तत्तद्विषयैः संबन्धरहिता बुद्धिर्यस्य सोऽसक्तबुद्धिः—सर्वदृश्यमिथ्यात्वं निश्चित्य सर्वत्र विषयमात्रे सम्यग्विरक्त इत्यर्थः । सर्वमिथ्यात्वनिश्चयेन विषयाऽननुषक्तबुद्धित्वेऽपि चलचित्तस्य ज्ञाननिष्ठासंभवाद्विदुषो वश्यात्मत्वेन भवितव्यमित्याह—जितात्मेति । जितस्तीव्रवैराग्येण श्रद्धापूर्वकचिरकालिकनित्यनिरन्तरसत्प्रत्ययावृत्त्यभ्यासेन निर्जितो ब्रह्मण्येव स्थिरतां गमित आत्मा मनो यस्य स जितात्मा वशीकृतचित्त इत्यर्थः । असक्तबुद्धित्वे जितात्मत्वेऽपि च सिद्धे शरीरसौख्यापेक्षावतः परिग्रहवतश्च योगिनो ज्ञाननिष्ठा न सिध्यत्यतस्तद्राहित्येन भवितव्यमित्याह—विगतस्पृह इति । देहात्परिग्रहाच्च विशिष्य गता विगता देहपरिग्रहक्षेमविषया स्पृहाऽपेक्षा यस्य स विगतस्पृहः—काले प्रारब्धप्रापितान्नभोजी कौपीनकन्थादण्डकुण्डिकामात्रधारी च भवेदित्यर्थः । एवमुक्तसाधनसंपन्नः सम्यग्विदितात्मतत्त्वस्तीव्रमुमुक्षुरारूढः संन्यासेन सति ब्रह्मणि स्वात्मना विदिते नितरामासः संन्यासः समाधिर्निरन्तरब्रह्मनिष्ठा तेन संन्यासेन निरन्तरज्ञाननिष्ठया । यद्वा, 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्युक्तलक्षणं ब्रह्मैवाहमिति स्वस्य ब्रह्माकारेण नितरामितरभावापत्तिराहित्येनावस्थानं येन सिध्यति स संन्यासः—सम्यग्ज्ञानमहमेवाधस्तादहमुपरिष्टादहमेवेदं सर्वमित्येवंलक्षणं—तेन संन्यासेन

स्वयाथात्म्यविज्ञानेन नैष्कर्म्यसिद्धिं न यत्र कर्म तन्निष्कर्म निष्क्रियं परं ब्रह्म "निष्कलं निष्क्रियं शान्तम्" इतिश्रुतेः। निष्कर्मणो भावो नैष्कर्म्यं ब्रह्मभावस्तत्प्राप्तिर्नैष्कर्म्यसिद्धिर्निर्विशेषब्रह्मात्मनावस्थितिलक्षणा तां नैष्कर्म्यसिद्धिं परमां ब्रह्मभावापत्तेरुत्तमसिद्धयन्तराभावादनुत्तमां—सर्वा अण्यणिमादिसिद्धयः सालोक्यादिसिद्धयो वा भेदप्रत्ययहेतुत्वेन मोहकतया पुरुषं संसारयन्ति। नैष्कर्म्यसिद्धिस्तु स्वसिद्धिकारणेन सम्यग्दर्शनेन द्वैततत्प्रत्ययहेतुभूताज्ञानध्वान्तविध्वंसनं कारयित्वा संसाराद्विनिवर्त्य ब्रह्मविदं स्वाराज्यसाम्राज्यसुखे संस्थापयत्यतः परमत्वं युक्तं नैष्कर्म्यसिद्धेः। तामेतां नैष्कर्म्यसिद्धिं ब्रह्मविद्यातिः संन्यासेन निरन्तरब्रह्मनिष्ठासंभावितसम्यग्दर्शनेनैवाधिगच्छति, नत्वन्येनेति सिद्धम्। यद्वा नैष्कर्म्यसिद्धिं नैष्कर्म्यं निर्विशेषब्रह्मभावस्तत्प्राप्तिर्नैष्कर्म्यसिद्धिस्तां संन्यासेन 'अहंकारं बलं दर्पम्' इति वक्ष्यमाणलक्षणेनाहमादित्यागेनाधिगच्छति। यद्वा 'स्वकर्मणा तमभ्यर्च्य' इतिन्यायेन मुमुक्षोः सात्त्विकस्य सात्त्विकैर्बुद्धिश्रद्धादिभिर्युक्तस्य सात्त्विकेनैव कर्मणा वैदिकेनानेकजन्मभिः समाराधितपरमेश्वरानुग्रहात्समुपात्तसत्त्वशुद्धेस्ततः सकृदुपदेशमात्रेण संप्राप्तात्मतत्त्वविज्ञानस्य पण्डितस्य तु "ते ह स्म पुत्रैषणायाश्च" इत्युक्तप्रकारेण सर्वकर्मसंन्यास एवाधिकारो न कथंचिदपि कर्मणीति बोधयितुमेवंलक्षणस्यैव संन्यासयोग्यत्वमित्यधिकारिलक्षणानि वदन् परिपक्वान्तःकरणस्य नैष्कर्म्यसिद्धिं प्रतिपादयति—**असक्तबुद्धिरिति**। असक्तबुद्धिः सर्वत्र पुत्रमित्रकलत्रधनादिष्वसक्ता सक्तिर्मोहादनुरक्तिस्तद्रहितत्वादसक्ता रागममतादिदोषनिर्मुक्ता बुद्धिर्यस्य सोऽसक्तबुद्धिः सर्वतः सम्यग्विरक्त इत्यर्थः। तात्कालिकवैराग्ये सत्यप्यस्थिरात्मनः पश्चाद्रागादयो विषयप्रवृत्तिस्तया पातित्यं च स्यादतस्तदभावेन भवितव्यमित्याह—**जितात्मेति**। जितो निर्जितस्तीव्रमुमुक्षया मुहुर्मुहुर्विषयदोषसंदर्शनेन तदुदिततीव्रवैराग्येण तेषु बन्धकत्वबुद्धया भयेन चासत्त्वज्ञानेन च सम्यग्विषयवैमुख्यं गमित आत्मा मनो यस्य स जितात्मा वशीकृतचित्त इत्यर्थः। तीव्रमोक्षेच्छादिभिर्जितात्मत्वे सिद्धेऽपि औषधवदशनमाचरेदित्युक्तलक्षणाभावे देहसौख्यापेक्षावतो ज्ञानतत्फलासंभवात्संन्यासे नाधिकारोऽतस्तदभावेन भवितव्यमित्याह—**विगतस्पृह इति**। देहसौख्यात्परिग्रहसामीचीन्याद्विशिष्य गता स्पृहा आशा यस्य स विगतस्पृहो देहभरणापेक्षारहित इत्यर्थः। एवंलक्षणलक्षितः शुद्धात्मा सद्गुरुप्रसादाद्विज्ञातात्मस्वरूपो मुमुक्षुर्विद्वान् नैष्कर्म्यसिद्धिं श्रौतस्मार्तादिसर्वकर्मभ्यो निर्गतो यः स निष्कर्मा तस्य भावो नैष्कर्म्यं विहितप्रतिषिद्धादिसर्वकर्मसंबन्धराहित्येनावस्थानं नैष्कर्म्यं कर्मतद्विध्योरविषयत्वं तस्य प्राप्तिर्नैष्कर्म्यसिद्धिस्तां परमां परमपुरुषार्थस्य मोक्षस्य हेतुभूतज्ञाननिष्ठासाधनत्वात् परमां नैष्कर्म्यसिद्धिं—संन्यासेन हि विहितानां कर्मणां ससाधनानां विधिना परित्यागः संन्यासः—तेन संन्यासाश्रमेण यतिधर्मेणैव गच्छति। न तु ब्रह्मचर्याश्रमेण, नापि गार्हस्थ्येन, नापि च वानप्रस्थ्येन नैष्कर्म्यं सिध्यति। अतो ब्रह्मविदो नैष्कर्म्यं संन्यासेनैव प्राप्तव्यमिति सिद्धम् ॥ ४९ ॥

श्री० टी०—ननु कथं कर्मणि क्रियमाणे दोषांशप्रहाणेन गुणांश एव संपत्स्यत इत्यपेक्षायामाह—असक्तेति। असक्ता सङ्गशून्या बुद्धिर्यस्य, जितात्मा निरहंकारः, विगतस्पृहो विगता स्पृहा फलविषयेच्छा यस्मात्सः—एवंभूतेन 'स त्यागः सात्त्विको मतः' इत्येवं पूर्वोक्तेन कर्मासक्तितत्फलयोस्त्यागलक्षणेन संन्यासेन नैष्कर्म्यसिद्धिं सर्वकर्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति। यद्यपि सङ्गफलयोस्त्यागेन कर्मानुष्ठानमपि नैष्कर्म्यमेव कर्तृत्वाभिनिवेशाभावात्। तदुक्तम्—'नैव किंचित्करोमीति युक्तो मन्येत तत्त्ववित्' इत्यादिश्लोकचतुष्टयेन। तथाप्यनेनोक्तलक्षणेन संन्यासेन परमां नैष्कर्म्यसिद्धिम् 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी' इत्येवंलक्षणां पारमहंस्यापरपर्यायां प्राप्नोति ॥ ४९ ॥

स० टी०—यो विवेकादिसामग्र्या संपन्नः सन् विशुद्धधीः ॥ सत्त्वाशुद्धिक्षयद्वारा मुमुक्षुः संयतेन्द्रियः

॥ १ ॥ शुद्धब्रह्मैक्यजिज्ञासां प्राप्तो वेदान्तसद्गिराम् ॥ श्रवणाद्यादरात्कर्तुं निर्विक्षेपतया सदा ॥ २ ॥ तच्छेषभूतं संन्यासं श्रुत्यादिविहितं चरेत् ॥ स कीदृशोऽस्ति जिज्ञासुरित्यत्राह जगद्गुरुः ॥ ३ ॥ सर्वत्र पुत्रदारादौ ममेत्यासङ्गकारणे ॥ अहमेषां ममैते चेत्यभिष्वङ्गविवर्जिता ॥ ४ ॥ बुद्धिर्यस्य यतस्तेन स्ववशे स्थापितं मनः ॥ विषयेभ्योऽपि सर्वेभ्यः प्रत्याहृत्य विवेकतः ॥ ५ ॥ सति रागे कथं चेतः प्रत्याहरणमाचरेत् ॥ तत्राह सर्वदृश्येषु भोगजालेषु सर्वशः ॥ ६ ॥ दोषदृष्ट्या विरक्तः सञ्जातो यो विगतस्पृहः ॥ नित्यबोधपरानन्दरूपे मोक्षे च तत्परः ॥ ७ ॥ स एवं पुरुषश्रेष्ठो विचारैकपरायणः ॥ निष्कर्मब्रह्मतज्ज्ञानं नैष्कर्म्यं तत्स्वरूपिणीम् ॥ ८ ॥ सिद्धिं साधनसंपत्त्या प्रकृष्टां फललक्षणाम् ॥ संन्यासेनैव तत्पूर्वविचारेणाधिगच्छति ॥ ९ ॥ यद्वा संन्यासरूपां तां सिद्धिं नैर्गुण्यलक्षणाम् ॥ उत्कृष्टां पूर्वसात्त्विक्याः सिद्धेः फलस्वरूपिणीम् ॥ १० ॥ ब्रह्मात्मैक्यपरानन्दसाक्षात्कारैकयोग्यताम् ॥ प्राप्नोतीत्यर्थ एवास्तु चेत्थंभावे तृतीयया ॥ ११ ॥ ४९ ॥

**भा० टी०**—ज्ञाननिष्ठायोग्यतालक्षणायाः कर्मजायाः सिद्धेः फलभूतां ज्ञाननिष्ठालक्षणां नैष्कर्म्यसिद्धिमाह—**असक्तेति** । सर्वत्र सक्तिनिमित्तेषु पुत्रदारादिष्वसक्तबुद्धिरसक्ता सङ्गरहिता बुद्धिरन्तःकरणं यस्य स यतो जितो वशीकृत आत्मान्तःकरणं यस्य स जितात्मा, अत एव विगता स्पृहा देहजीवनभोगेषु तृष्णा यस्मात्स य एवंभूत आत्मज्ञः स नैष्कर्म्यसिद्धिं—निर्गतानि कर्माणि यस्मात् निष्क्रियात्मसंबोधात् स निष्कर्मा तस्य भावो नैष्कर्म्यं तच्च तत्सिद्धिश्च सा, नैष्कर्म्यस्य निष्क्रियात्मस्वरूपावस्थानलक्षणस्य सिद्धिर्निर्वृत्तिरिति वा, तां परमां कर्मजायाः सिद्धेः प्रकृष्टां सद्योमुक्त्यवस्थानरूपां संन्यासेन सम्यक्दर्शनेन तत्पूर्वकेण वा सर्वकर्मसंन्यासेनाधिगच्छति प्राप्नोति । तदुक्तम् 'सर्वकर्माणि मनसा संन्यस्यास्ते सुखं वशी । नवद्वारे पुरे देही नैव कुर्वन्न कारयन्' इति ॥ ४९ ॥

**प० टी०**—अथ स्वधर्माचरणेऽपि गुणदोषविवेकमाह—**असक्तबुद्धिरिति** । असक्ता सर्वत्र गृहादिषु सङ्गशून्या बुद्धिर्यस्य, जितात्मा निरहंकारः, विगतस्पृहः कर्मफलानपेक्षः पुरुषः पूर्वोक्तेन कर्मासक्तिसात्त्विकत्यागलक्षणेन संन्यासेन नैष्कर्म्यसिद्धिं सर्वकर्मनिवृत्तिलक्षणां सत्त्वशुद्धिमधिगच्छति ॥ ४९ ॥

**रा० टी०**—स्वकर्मनिरतः सिद्धिं विन्दतीत्यत्रापेक्षितधर्मान्तराण्याह—**असक्त इति** । सर्वशब्दादिविषयेषु असक्तबुद्धित्वे हेतुर्जितात्मेति । वशीकृतमनस्कः वैषयिकसुखे क्षुद्रामुष्मिकसुखे चापगतेच्छः । परमां संपूर्णां नैष्कर्म्यसिद्धिं नैष्कर्म्याय मोक्षाय सिद्धिमुपायसिद्धिं प्रारब्धान्यसर्वानिष्टकर्मनाशाख्यां सिद्धिं वा, संन्यासेन काम्यकर्मत्यागेन सर्वकर्मणां भगवति समर्पणेन वाऽधिगच्छति प्राप्नोति ॥ ४९ ॥

## सिद्धिं प्राप्तो यथा ब्रह्म तथाऽऽप्नोति निबोध मे ॥
## समासेनैव कौन्तेय ! निष्ठा ज्ञानस्य या परा ॥ ५० ॥

**त० टी०**—अधुना नैष्कर्म्यलक्षणा सिद्धिः, प्रेमलक्षणा भक्तिर्भगवत्प्राप्त्यन्तरङ्गहेतुरिति वक्तुं तस्याः प्राप्तिप्रकारमुपदिशति—**सिद्धिमिति** । ज्ञाननिष्ठाफलरूपां नैष्कर्म्यसिद्धिमनवरतध्याननिष्ठालक्षणां परां भक्तिं यथा येन प्रकारेण प्राप्तः सन् ब्रह्म प्राप्नोति तथा समासेन संक्षेपेण वक्ष्यमाणं प्रकारं मे मद्वचनान्निबोध निश्चयेन जानीहि । यथा सिद्धिं प्राप्तो ब्रह्म प्राप्नोतीति प्रतिज्ञातां ब्रह्मप्राप्त्यसाधारणोपायभूतां पराभक्तिं विशिनष्टि—**निष्ठा ज्ञानस्य या परेति** । या ज्ञानोत्तरभाविनी परा भक्तिः सा ज्ञानस्य परा निष्ठा उत्तमावस्थितिः फलमिति यावत् । स्वरूपतो विषयतश्च निरतिशयत्वात् ज्ञान्यग्रेसराणां सनकादिप्रह्लादादीनाम् । तथोक्तं श्रीभागवते भगवता स्वयमेव । "एतावा-

न्योग आदिष्टो मच्छिष्यैः सनकादिभिः । सर्वतो मन आकृष्य मय्यद्धावेश्यते यथा" इति, "या प्रीतिरविवेकानां विषयेष्वनपायिनी । त्वामनुस्मरतः सा मे हृदयान्नापसर्पतु" इति वैष्णवे प्रह्लादोक्तेश्च ॥५०॥

म० टी०—प्रागुक्तसाधनसंपन्नस्य सर्वकर्मसंन्यासिनो ब्रह्मज्ञानोत्पत्तौ साधनक्रममाह—सिद्धिमिति । स्वकर्मणेश्वरमाराध्य तत्प्रसादजां सर्वकर्मत्यागपर्यन्तां ज्ञानोत्पत्तियोग्यतारूपां सिद्धिमन्तःकरणशुद्धिं प्राप्तो यथा ब्रह्म प्राप्नोति येन प्रकारेण शुद्धमात्मानं साक्षात्करोति तथा तं प्रकारं निबोध मे मद्वचनादवधारयानुष्ठातुम् । किमतिविस्तरेण ? नेत्याह—समासेन । संक्षेपेणैव न तु विस्तरेण हे कौन्तेय । तदवधारणे किं स्यादित आह—निष्ठा ज्ञानस्य या परा । ज्ञानस्य विचारपरिनिष्पन्नस्य निष्ठा परिसमाप्तिः यदनन्तरं साधनान्तरं नानुष्ठेयमस्ति । परा श्रेष्ठा सर्वान्त्या वा साक्षान्मोक्षहेतुत्वात् । तां सिद्धिं प्राप्तस्य ब्रह्मप्राप्तिरूपां ज्ञाननिष्ठां परां संक्षेपेण निबोधेत्यर्थः ॥ ५० ॥

शं० टी०—ज्ञानकर्मणोः साध्यसाधनभावं सूचयितुं सात्त्विककर्मानुष्ठानसंभाविता सत्त्वशुद्धिरुक्ता । ततः संप्राप्ततत्त्वविवेकज्ञानारूढस्य यतेर्विदेहकैवल्यसिद्धिकारणस्य ज्ञानस्याप्रतिबद्धत्वसिद्धये नियमेन क्रमेण कर्तव्यां ज्ञाननिष्ठां सप्रकारां ज्ञानफलं च निरूपयितुमाह—सिद्धिमिति । सत्त्वशुद्ध्या सम्यग्विदितात्मतत्त्वो मुमुक्षुरारूढः संन्यासेन सिद्धिं नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण तत्तत्साधनानुष्ठानपूर्वकज्ञाननिष्ठासिद्धिक्रमेण परिपक्वज्ञानेन ब्रह्माप्नोति ब्रह्मभावं गच्छति । विदुषो ब्रह्माप्तिर्नाम संशयासंभावनाविपरीतभावनादिविकल्पराहित्येन सम्यगपरोक्षीकृते स्वात्मनि नित्यशुद्धबुद्धमुक्तसच्चिदानन्दैकरसे निर्विशेषेऽद्वितीये परे ब्रह्मणीदमेवाहमिति आत्मत्वबुद्धिकरणमेव । यथाऽऽरोपितदोषेण स्वमन्यथा गृहीत्वा देवदत्तस्तन्निवृत्त्या देवदत्त एवाहमिति स्वात्मनि स्वबुद्धिं करोति । एवं स्वाज्ञानेन स्वं ब्रह्म विस्मृत्य गुरुप्रसादादवाप्तविज्ञानेन तन्निवृत्त्या स्वात्मनि ब्रह्मणि स्वबुद्धिं करोति । तत्र स्वबुद्धिकरणमेव विदुषो ब्रह्मप्राप्तिर्न तु धनवत्प्राप्तिरुच्यते । देशतः कालतः स्वरूपतश्च प्राप्तव्यस्य ब्रह्मणो व्यवधानाभावात् । 'अयमात्मा ब्रह्म' इतिन्यायेनाप्तुर्विदुषः स्वरूपत्वान्नित्याप्तस्य वस्तुनः पुनराप्तिकल्पनायोगात् । अतो विस्मृतकण्ठाभरणस्यावमर्शनेनास्तित्वावधारणं यथा प्राप्तिः, तथाऽज्ञानेनान्यथा गृहीते स्वात्मनि ब्रह्मणि विचारजन्यज्ञानेन पुनः स्वभावावधारणमेवाप्तिः । एवं ब्रह्मविद्यथा येन ब्रह्मनिष्ठासिद्धिप्रकारेण विशुद्धबुद्ध्या ब्रह्माप्नोति, तथा तं ज्ञाननिष्ठासिद्धिप्रकारं समासेन संक्षेपेणैव न तु विस्तरेण, विशुद्धबुद्धेः सूक्ष्मग्राहिणो बहुगाथानुपयोगात्, स्वल्पग्रन्थेन तं प्रकारं मे निबोध नितरां बुद्ध्यस्व, बुद्ध्वा तदनुष्ठानपरो भव । श्रुतेर्बोधस्य च फलमनुष्ठानमेव, अन्यथाऽऽपणवार्तावदुपदेशो निरर्थक इत्यर्थः । तत्खलु सम्यग्ज्ञानं विदेहमुक्तेः परमकारणं, या परा निरतिशयपरिपाकलक्षणा निष्ठा परिसमाप्तिर्विकारनिर्मुक्ता निश्चला स्थितिः । कस्य निष्ठेत्यत आह—ज्ञानस्येति । 'न जायते म्रियते' इत्यारभ्य 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।....प्रथितः पुरुषोत्तमः ॥' इत्यन्तेन निर्विशेषविषयकेण ग्रन्थेन यादृश आत्मा निर्विशेषो नित्यशुद्धबुद्धमुक्तस्वभावः परः प्रत्यगेकरसोऽद्वितीयः सम्यङ्निरूपितस्तद्विषयं ज्ञानं यादृशम् । यादृशज्ञानेनाहमेवेदं सर्वमिदं सर्वमहमिति ब्रह्मविद्यतिः सर्वात्मकं दृश्यसंबन्धरहितं चिदेकरसमाकाशवत्परिपूर्णमद्वितीयमात्मानं पश्यति । तादृशज्ञानसिद्ध्यै कार्या या परा निष्ठा सा येन प्रकारेण सिध्यति तं प्रकारं मत्तो निबोधेत्यर्थः । ननु मुमुक्षोरात्मज्ञानमेव न सिध्यति कुतस्तन्निष्ठा परा सिध्येत् ? कथं ज्ञानस्यासिद्धिरिति चेदुच्यते । यदाकारं ज्ञेयं तदाकारमेव भवति तज्ज्ञानम् । नरश्चेज्ज्ञेयस्तज्ज्ञानं च नराकारमेव भवति, पशुश्चेत्पश्वाकारं, नान्यथा । निराकारस्त्वात्मा, न ह्यात्मन आकारोऽस्ति । 'न सत्तन्नासदुच्यते' इति दृश्यत्वनिषेधात्सदसद्विलक्षणस्य वस्तुनोऽप्रसिद्धत्वादनाकारत्वाच्च विषयत्वानुपपत्तेः । आकारवत्ता त्वात्मनस्तदा सिध्येद्यद्यात्मा युष्मत्प्रत्ययार्थः स्यात् । न ह्ययं

युष्मत्प्रत्ययार्थो भवति, "अस्थूलमनण्वह्रस्वम्" इत्यात्मनः सर्वदृश्यवैलक्षण्यश्रवणात् । ननु "तं देवा ज्योतिषां ज्योतिः" इति, " अत्रायं पुरुषः स्वयंज्योति " इत्यात्मनो ज्योतिःस्वरूपत्वं श्रूयते, कथमरूपत्वमिति चेन्न । 'अस्थूलम्' इति, 'यत्तदद्रेश्यम्' इति रूपवद्द्रव्यत्वनिषेधे सत्यरूपिद्रव्यत्वापत्त्या जडत्वापत्तौ सत्यां श्रुत्या तन्निरस्यते–प्रकाशस्वरूप आत्मेति, न तु सूर्यादिवत् ज्योतिःस्वरूप आत्मेत्युच्यते । तथात्वे सत्यात्मनो भौतिकत्वज्ञेयत्वजडत्वानित्यत्वादिदोषः प्रसज्येत । सूर्यादिवदप्रयत्नेन विषयत्वं च स्यात्, तदयुक्तम् "दिव्यो ह्यमूर्तः पुरुषः" इत्यमूर्तत्वश्रवणात् । "न संदृशे तिष्ठति रूपमस्य" इति आत्मनो निर्विषयत्वमेव श्रूयते । विषयभूते हि वस्तुनि ज्ञानस्य तदात्मना परिणामो न त्वविषयभूते परिणामः संभवति । ननु "स आत्मा स विज्ञेयः" इत्यात्मा निर्विशेषः श्रूयते। श्रुतार्थाकारेण ज्ञानस्य परिणाम उपपद्यत एवेति चेन्न । 'एष वन्ध्यासुतो याति' इत्यादि श्रुतार्थाकारज्ञानप्रसङ्गात्तादृशज्ञानस्य मनोराज्यवन्मिथ्यात्वोपपत्तेश्च । न हि श्रुतं श्रावितं वा, मनसा भावितं वा वस्तु तद्विषयकं ज्ञानं च सत्यं भवति, प्रमाणान्तरेण च बाध्यते । यत एवमत आत्मविषयकं ज्ञानमेव न संभवति। तदसंभवे विदुषः कथं तन्निष्ठा सिध्यतीति चेन्न । प्रत्यक्षादिप्रमाणगम्यत्वादात्मसत्तायास्तज्ज्ञानासंभवासिद्धेः । कुत्रचित्प्रत्यक्षं प्रमाणं कुत्रचिदनुमानं कुत्रचिच्छास्त्रं कुत्रचिदर्थापत्तिः । आत्मविषये त्वेतत्सर्वं प्रमाणमेव भवति तदुच्यते–देहेन्द्रियादयोऽधिष्ठातृमन्तः, स्वतो जडत्वे सति इष्टानिष्टप्रवृत्तिनिवृत्तिमत्त्वात्, यन्नैवं तन्नैवं यथा शकटः; तदधिष्ठाताऽऽत्मा देहादिभ्यो भिन्नः नियामकत्वाद्रथिकवदित्याद्यनुमानेन 'नान्तःप्रज्ञं न बहिःप्रज्ञम्' इत्यादिशास्त्रेण चात्मावगन्तुं शक्यते पण्डितैः । यथा चाद्यैकादशी शिवरात्रिरिति शास्त्रेणोक्तमङ्गीकृत्योपोष्यते, तथा विदुषा 'नान्तःप्रज्ञमित्यादिना प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा' इत्यन्तेन शास्त्रेण सकलदृश्यसंबन्धं निषिध्यार्पितं केवलमात्मतत्त्वं स्वात्मनाऽवगन्तव्यम्, उभयोः शास्त्रप्रतिपाद्यत्वाविशेषात् । ननु " नान्तःप्रज्ञम् " इति श्रुत्युक्तार्थस्य निर्विशेषत्वेनोपलब्ध्यभावाद्वन्ध्यापुत्रवदसत्त्वमेवेति चेदेकादश्या अपि विशेषाकारादर्शनात्स्वरूपेण तत्तुल्यत्वादननुष्ठेयत्वप्रसङ्गात् । तत उभयोरपि शास्त्रैकगम्यत्वं तदुक्तत्वेनाभ्युपगम्यत्वं च सममेव । नन्वेकादशीवदात्मसद्भावः शास्त्रेणाङ्गीक्रियत एवेति चेत्तत्र यथा निश्चयेन प्रवृत्तिस्तथा नाहं देहादिरिति निश्चयेनानात्मन्यहंभावं परित्यज्य ब्रह्मैवाहमिति तूष्णीं स्थीयतां, न पुनर्विकल्प्यतामिदमेव प्रामाणिकस्य प्रमाणस्य च फलम् । नन्वस्माकं शास्त्रं प्रमाणमेव, तथाप्यविषयत्वादात्मनस्तदनुभवाभावात्प्रवृत्त्यभाव इति चेत्तर्हि एकादश्याः प्रत्यक्षत्वं तदनुभूत्या प्रवृत्तिरित्यज्ञतमत्वं स्वीयं प्रकटितम् । पण्डितानां शुद्धबुद्धीनामेव मुमुक्षूणां मोक्षशास्त्रे तत्प्रतिपादितार्थे च विश्वासो दृढप्रत्ययः प्रवृत्तिश्च सहस्रकोटिजन्मार्जितपुण्यपुञ्जपरिपाकवशादीशप्रसादादेव सिध्यति, नान्यथा युक्तिकोटिभिरशुद्धात्मनाम् । यदुक्तम् ' अविषयत्वादप्रसिद्धत्वाच्चात्मनस्तदनुभवाभावात्प्रवृत्त्यभावः ' इति–अत्रोच्यते । न तावदयमात्मा स्वयमेकादशीवदेकान्तेनाविषयः, अस्मत्प्रत्ययार्थत्वेन नित्यापरोक्षत्वात्प्रकाशस्वरूपत्वात्सर्वप्रकाशकत्वाच्च प्रत्यगात्मप्रसिद्धेः । न ह्यात्मा यस्य कस्यचित्कदाचिदप्रसिद्धो भवति ज्ञातव्यः प्राप्तव्यो वा। सत्यप्रसिद्धत्वे आत्मनो लौकिको वैदिकश्च व्यवहारस्तव न सिध्येत् । सर्वेषामात्मानमुद्दिश्यैवेष्टानिष्टयोः प्रवृत्तिर्निवृत्तिश्च दृश्यते, न त्वनात्मानं देहं प्राणं वा बुद्धिं वान्यं वा । मर्त्यः खल्वात्मसुखायैव देहस्यारोग्यमिच्छति, बुद्धेः सौष्ठवमाहारस्योपशमं च प्राणनिरोधं योगं च करोति, भार्यामुद्वहते, देवान् यजते, हरिं भजति । ततो देहादिविलक्षणं आत्मा प्रसिद्ध एवास्मत्प्रत्ययार्थः । न हि नाहमस्मीति कदाऽपि यस्य कस्यापि प्रत्ययोऽस्ति । स्वप्नमहमद्राक्षम्, सुखमहमस्वाप्सम्, अहं जागर्मीत्यवस्थात्रयेऽपि सर्वैरहमस्म्येवेत्यात्मसत्तायाः सदानुभूयमानत्वादात्मनो ज्ञेयत्वानुपपत्तेः सर्वदृश्यभिन्नत्वप्रसिद्धेश्च । न हि स्वमेकं साक्षादनुभवतः पण्डितस्य स्वसत्तासिद्धेः प्रमाणमपेक्ष्यते । सर्वेषां प्रमाणानां प्रामाण्यं यतः सिद्ध्यति तं सर्व-

प्रमाणप्रामाण्यसिद्धिकारणं स्वप्रकाशमात्मानं किंतु प्रकाशयेत्। नह्यचेतनं चेतनं प्रकाशयति स्वसत्त्वं स्वस्यैव प्रत्यक्षम्। ततः प्रत्यक्षं प्रमाणम्। व्यवहारान्यथानुपपत्तिप्रसूतार्थापत्तिश्च प्रमाणम्। एवं प्रत्यक्षादिप्रमाणसिद्धस्यात्मनो वन्ध्यापुत्रवदसत्त्वं तज्ज्ञानस्य मनोराज्यवत्सगुणध्यानवन्मिथ्याविषयत्वं प्रमाणान्तरबाध्यत्वं च संभावयितुं न शक्यते। तथात्वे तव त्वज्ज्ञानस्य चाभावत्वप्रसङ्गात्। ततो ज्ञातृत्वेनास्मत्प्रत्ययार्थत्वेन सर्वव्यवहारकारणत्वेन परमप्रेमास्पदत्वेन च प्रसिद्धत्वादात्मा नायमत्यन्ताविषयो भवति, किंतु स्वच्छत्वान्निर्मलत्वात्सूक्ष्मत्वाच्च बुद्धिरात्मचैतन्यव्याप्त्या, सूर्यप्रकाशव्याप्त्या स्फटिकः सूर्यवद्यथा, तथात्मवदवभासते। तादृशबुद्धिव्याप्त्या मनआदिस्थूलान्तं सर्वमात्मवदवभासते। तेन देहेन्द्रियप्राणमनोबुद्ध्यादिष्वनात्मस्वहमित्यात्मबुद्धिः सर्वेषां मनुष्योऽहं ब्राह्मणो यतिरिति, द्रष्टा श्रोता काणः खञ्जोऽहमिति, क्षुधितः पिपासितोऽहमिति, कर्ता भोक्ताऽहं सुखी दुःखीत्येवमारोपितैरनात्मतत्प्रत्ययैः शैवालैर्जलमिव मेघपटलैश्चन्द्रवत्तिरोहिततया विस्पष्टं न प्रकाशते। शतधा श्रुत्वा मत्वाऽप्यनाद्यविद्यावासनया पण्डिता अपि बहिरन्तःपरिपूर्णमप्यात्मानमतिसूक्ष्ममतीन्द्रियमनवगाह्य जडमारोपितमेव स्थूलमनात्मानमात्मत्वेन गृह्णन्ति, नत्वात्मानम्। ततोऽनाद्यविद्यारोपितानामन्तर्बुद्ध्यादीनां बहिर्घटपटादीनां तत्प्रत्ययानां च "सर्वमिदमहं ब्रह्मैव" इति सर्वत्र प्रत्यग्दृष्ट्या ब्रह्मैकविषयया निरास एव कर्तव्यः। संततब्रह्मप्रत्ययावृत्त्या विपरीतप्रत्ययानां निःशेषनिवृत्तौ सत्यां, शैवालनिवृत्तौ स्वच्छं सुखकरं जलमिव, मेघापाये पूर्ण आनन्दकरश्चन्द्र इव, स्वच्छः शान्तश्चिद्घन आनन्दघन आत्मा ज्ञानचक्षुषः सम्यग्विषयो भवति। यत एवं ततः आत्मावरकानात्मप्रत्ययनिरसन एव प्रयत्नः कर्तव्यस्तीव्रमुमुक्षया विदुषा, न त्वात्मा कीदृशः? किंलक्षणः? कथं तिष्ठति? कुत्रास्ते? कथं प्राप्यः? इत्यात्मसद्भावे तत्प्रातिवेदने च। तस्याहमर्थत्वेन स्वतः सिद्धत्वान्नित्यप्राप्तत्वाच्च। कालदिगादेर्निराकारस्यापि च ज्ञानं शास्त्राचार्योपदेशाभ्यां सिध्यति। अद्यैकादशीयं प्राचीति। किमुत स्वस्वरूपत्वेन सिद्धस्यात्मनो ज्ञानं शास्त्राचार्योपदेशेन सिध्यतीति? आत्मज्ञानेनैव हि स्वं च परं च विजानात्यहं ममेदमिति। यः स्वप्नमद्राक्षं, यः सुखमस्वाप्सं, सोऽहं जागर्मीत्यनुभूयमानस्य स्वस्य देहेन्द्रियादिभिन्नत्वं स्वप्ने सुषुप्तौ बुद्ध्यादिभिन्नत्वं ज्ञातृत्वं च सर्वत्र ज्ञात्वाऽप्यात्मा कस्तज्ज्ञानं कथमिति वक्तुं पण्डितस्य न युक्तम्। यस्य प्रकाशेनेदं सर्वं बहिरन्तर्विजानाति तज्ज्ञानं न सिध्यतीति वचनमतीव साहसम्। "एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञः" इति क्षेत्रं क्षेत्रधर्मजातं च सर्वं यो विजानाति सोऽहमात्मेत्यात्मज्ञानं यतेः शुद्धात्मनः परमेश्वरप्रसादात्सुलभतममेव। यस्मादेवं तस्मादात्मा सुप्रसिद्धस्तज्ज्ञानमप्यात्मेश्वरप्रसादात्सुलभतममेवेति कृत्वा शुद्धात्मनो यतेः सद्गुरूपदेशात्संप्राप्तस्यैवात्मज्ञानस्यानात्मवासनाकृतविपरीतप्रत्ययानिःशेषनिवृत्त्या अप्रतिबद्धत्वसिद्धये मुमुक्षोर्ज्ञाननिष्ठा संपादनीयेत्युच्यते भगवता—निष्ठा ज्ञानस्य या परेति। ननु मुमुक्षोर्ज्ञाननिष्ठा संपादनीयेत्युच्यते। ज्ञाननिष्ठा नाम ज्ञाने ज्ञानस्वरूपे ब्रह्मणि चित्तस्य नैश्चल्येन स्थितिर्वा किं ज्ञानाभ्याससमाप्तिर्वा? नाद्यः, चञ्चलत्वान्मनसो ब्रह्मणि स्थित्यसंभवात्। द्वितीये ज्ञानस्य ज्ञानहेतोर्वेदान्तशास्त्राभ्यासस्य परिसमाप्तिर्वा उत ज्ञानस्य प्रत्ययावृत्तेः परिसमाप्तिर्वा? नाद्यः, केवलग्रन्थस्य शुष्कतर्कवदावृत्त्या क्लेशं विना प्रयोजनादर्शनात्। न द्वितीयः, तत्त्वमसीति तत्त्वंपदार्थशोधनपूर्वकं वाक्यार्थश्रवणमात्रेणैवाहं ब्रह्मास्मीति विदुषो ब्रह्मात्मप्रत्यये संपद्यमाने पुनः पुनस्तदावृत्तेः फलादर्शनात्। अहं ब्रह्मास्मीतिसंपन्नज्ञानस्यैव ब्रह्मात्मप्रत्ययस्य दार्ढ्याय पुनः पुनरावृत्तिः कर्तव्येति चेन्न, पट्टाभिषेकेणैव संप्राप्तराजत्वस्य नृपतेः पुनः पुनः राजाऽहमित्यावृत्तिवच्छ्रुतियुक्तिभिः सम्यक्शोधितयोस्तत्त्वंपदार्थयोरेकत्वाववोधकवाक्यार्थश्रवणमात्रेणाहं ब्रह्मैवेति ब्रह्मात्मभावापन्नस्य यतेः पुनः पुनर्ब्रह्मैवाहमिति प्रत्ययावृत्त्या पुनरुपाधिकृतपरिच्छित्तिं विना फलान्तरदर्शनादराज्ञ आवृत्तिक्रियया राजत्वमिव अब्रह्मणो ब्रह्मत्वमावृत्तिक्रियया कल्प्यं च स्यात्। घटोऽयमित्युपदेशमात्रेण घटविषयकं ज्ञानं झटिति

 

यथा जायते, तथैव तत्त्वमसीत्युपदेशमात्रेणाहं ब्रह्मेति ब्रह्मात्मत्वापादकं ज्ञानं शुद्धात्मनो जायते एव, नात्र पुनः पुनः प्रत्ययावृत्तिरपेक्ष्यते। नहि चक्षुःसंनिकर्षमात्रेण घटज्ञाने जाते घटोऽयं घटोऽयमिति तज्ज्ञानदार्ढ्याय मुहुर्मुहुरावृत्तिरपेक्षिता भवति, प्रमाणप्रमेयसंबन्धमात्रैकसाध्यत्वात्प्रमायाः, न त्वावृत्तिसाध्यत्वमस्ति, वस्तुतन्त्रत्वाज्ज्ञानस्य, न पुरुषतन्त्रत्वम्। अतो ज्ञानाभ्यासो निष्प्रयोजन एवेति चेत्सत्यं, प्रमाणप्रमेयसंबन्धमात्रजन्यमेव ज्ञानं वस्तुतन्त्रं, न तु पुरुषतन्त्रं, नापि क्रियातन्त्रं; तथापि स्वोत्पत्तौ प्रमाणसौष्ठवमपेक्षते। वास्तवमपि ज्ञानं सति प्रमाणसौष्ठवे समीचीनं जायते, नत्वसौष्ठवे। यथा चक्षुषः काचकामलादिदोषेण तैमिरिकत्वे चन्द्रानेकत्वज्ञानमवास्तवमेव जायते, वस्तुनो विस्पष्टत्वेऽपि। तस्यैव निरन्तरौषधसेवया तद्दोषनिवृत्त्या निर्मलत्वे सिद्धे वास्तवमेव चान्द्रं ज्ञानं विस्पष्टं तद्दर्शनाह्लादश्च सिध्यति। तथैवानाद्यविद्यावासनाकृतैः सत्त्वरजस्तमोदोषैर्दूषिते सत्यन्तःकरणे समुत्पद्यमानैरहमिदमद इत्याद्यनात्मप्रत्ययैर्व्यवधीयमानमात्मतत्त्वं न विस्पष्टं भाति। तस्यैवान्तःकरणस्य चिरकालनित्यनिरन्तरसमनुष्ठितसमाधियोगेन सजातीयप्रत्ययावृत्तिलक्षणेन निरुक्तदोषाणां तत्कार्याणां च निःशेषनिवृत्त्या केवलशुद्धसत्त्वभावापत्तौ सर्वमिदमहं च ब्रह्मैवेत्यद्वैतात्मविज्ञानं सर्वदृश्यसंबन्धनिर्मुक्तमप्रतिबद्धं च जायते। ततो ज्ञानपरिपाकैकप्रयोजनत्वात्प्रत्ययावृत्तेः, सत्यामेव ज्ञानपरिपाकसिद्धौ, उक्तलक्षणं सम्यग्ज्ञानं कैवल्यपदावसानकमखण्डानन्दानुभावकं च सिध्यति। तथा च श्रुतिः—"समाधिनिर्धूतमलस्य चेतसो निवेशितस्यात्मनि यत्सुखं भवेत्" इति, 'आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिः' इति, 'अभ्यासात्पक्वविज्ञानः कैवल्यं लभते नरः' इति च, 'नास्ति ज्ञानात्परं किंचित्पवित्रं पापनाशनम्। तदभ्यासादृते नास्ति संसारोच्छेदकारणम्' इति। ज्ञानस्य परिपाको नाम चिरकालनित्यनिरन्तरसमभ्यस्यमानसजातीयप्रत्ययावृत्त्या सम्यग्ज्ञानोत्पत्तिप्रतिबन्धकानां सत्त्वरजस्तमोगुणानां तत्कार्याणां चाहमिदमद इष्टमनिष्टमित्यादिविपरीतप्रत्ययानां रागद्वेषमोहादिविकाराणां च निःशेषनिवृत्त्या समुत्पद्यमानोऽन्तःकरणस्य केवलशुद्धसत्त्वभाव एव प्रसादलक्षणः। यस्मिन्सति सर्वमिदमहं च ब्रह्मैवेति स्वस्मिन्सर्वत्र ब्रह्मत्वधीव्यवस्थापकं परावरैकत्वविज्ञानं विकल्पनिर्मुक्तं वृत्तिव्यापारसमाप्तिलक्षणं संभवति। तदेतज्ज्ञानं नित्यनिरन्तरसजातीयप्रत्ययावृत्त्येकगम्यं, नत्वयं घट इति वत्सकृदुपदेशमात्रगम्यं, नापि राजत्वज्ञानवत्पट्टबन्धक्रियामात्रगम्यं च भवति। तत्र ज्ञेयस्य स्थूलत्वेन तज्ज्ञानस्यापि स्थूलत्वान्निष्प्रतियोगिकत्वाल्लौकिकत्वाच्च प्रत्ययावृत्तिर्नापेक्ष्यते। "सूक्ष्मात्सूक्ष्मतरं नित्यम्" इति, "तं दुर्दर्शं गूढमनुप्रविष्टम्। गुहाहितं गह्वरेष्ठं पुराणम्" इति श्रवणादत्र तु ज्ञेयं वस्तु परमसूक्ष्ममलौकिकं शैवालपटलैर्जलवदविद्यातत्कार्यैस्तिरोहितं भवति। ततस्तज्ज्ञानं, चक्षुः सूर्यालोकमिव, स्वविषयावरकवारणं सत्प्रत्ययावृत्तिलक्षणमपेक्षते। नैतेन ब्रह्मभावः कल्पितो भवति। नाहं मनुष्य इत्यत्रात्मनो मनुष्यत्वमपोह्यते, नत्वहमर्थत्वं कल्प्यते, नापि ब्रह्मभावः कल्प्यते। अहमर्थत्वस्य स्वतःसिद्धत्वात् 'अयमात्मा ब्रह्म' इति, 'क्षेत्रज्ञं चापि मां विद्धि' इति ब्रह्मभावस्य श्रुतिस्मृतिप्रसिद्धत्वात्। सति तयोर्भेदे कथमद्वैतं सिध्येत्? "एकमेवाद्वितीयं ब्रह्म। नेह नानास्ति किंचन"। "एको रुद्रो न द्वितीयाय तस्थुः" इत्यादिश्रुतिभिरद्वैतमेव प्रतिपाद्यते। ततस्तयोर्घटाकाशमहाकाशयोरिव ब्रह्मात्मनोरभिन्नत्वं स्वतःसिद्धं, न तु क्रियया कल्पयितुं शक्यम्। किं तु सत्प्रत्ययावृत्त्यानादिवासनया प्रतीयमानविपरीतप्रत्ययापनोदनमात्रमेव क्रियते ब्रह्मविदा स्वस्य पूर्णत्वज्ञानदार्ढ्याय। यथा स्थूलमपि रत्नज्ञानं स्वदार्ढ्यार्थं नित्यपरिशीलनमपेक्षते, यथा रविबिम्बज्ञानं स्थूलमपि सर्वेषामपरोक्षत्वाय चिरकालनित्यनिरन्तराभ्यासमपेक्षते, तथैव ब्रह्माभिन्नत्वज्ञानमतिसूक्ष्मं सप्रतिपक्षं च किमुत स्वस्याप्रतिबद्धत्वसिद्धये सत्प्रत्ययावृत्तिमपेक्षत इति? "तस्याभिध्यानाद्योजनात्तत्त्वभावात्" इति, "तस्याभिध्यानात्तृतीयं देहभेदः" इति, "निष्कलं ध्यायमानः" इति, "ध्यात्वा मुनिर्गच्छति भूतयोनिम्" इत्यादिश्रुति-

भिरुत्पन्नात्मज्ञानस्याप्रतिबद्धत्वसिद्धये सजातीयप्रत्ययावृत्तिलक्षणः समाधिः कर्तव्यत्वेन श्राव्यते "तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः" इति । यत एवमतः सार्वात्म्यसिद्धये द्वैतप्रत्ययापनोदकः सत्प्रत्ययावृत्तिलक्षणो ज्ञानाभ्यासः कृतश्रवणस्य विदितात्मतत्त्वस्य मुमुक्षोर्यतेः सहकारिसाधनैस्तद्बुद्धित्वादिभिरद्वेष्टृत्वादिभिश्च वक्ष्यमाणैश्च संपन्नस्यावश्यं कर्तव्य इति षष्ठाध्याये निरूपितमेवार्थं पुनर्द्रढयितुमुच्यते भगवता—'निबोध मे । समासेनैव कौन्तेय निष्ठा ज्ञानस्य या परा' इति । यदुक्तं ज्ञानहेतोर्वेदान्तशास्त्रस्यावृत्त्या शुष्कतर्कवत् क्लेशं विना प्रयोजनाभावादिति तन्न, वेदान्तावृत्त्येकलभ्यत्वादात्मज्ञानस्य तदावृत्तेः सफलत्वोपपत्तेः । न हि मुमुक्षोर्यतेः स्तोत्रमन्त्रजपादिभिर्ज्ञानं सिध्यति विनाऽजस्रवेदान्तविचारेण । "संन्यस्य श्रवणं कुर्यात्" इति, "श्रोतव्यो मन्तव्यः" इत्युपनिषदमावर्तयेदिति निरन्तरविचारस्यैव कर्तव्यत्वश्रवणात् । 'आवृत्तिरसकृदुपदेशात्' इति, 'शमादिसहितस्तावदभ्यसेच्छ्रवणादिकम्' इति, "आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया" इति, 'तत्त्यागी पतितो भवेत्' इति विचारस्य नियमेन कर्तव्यत्वं तत्त्यागे प्रत्यवायश्च स्मर्यते । ततः प्रणवजपादिकमङ्गं कृत्वा विचारमङ्गिनं कृत्वा यावत्सम्यगात्मविज्ञानं नोदेति तावदजस्रं वेदान्तावृत्त्यैव नियमेन भवितव्यं, तदेकप्रयोजनं स्यात्संन्यासस्य । यदा ज्ञानं विज्ञानं च सिध्यति तदाऽऽवृत्तिस्त्यक्तव्या । तथाच 'ग्रन्थमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः । पलालमिव धान्यार्थी त्यजेद्ग्रन्थमशेषतः' इत्यतो जिज्ञासोर्निरन्तरावृत्तिः कर्तव्येति सिद्धम् । यदपि चोक्तं चञ्चलत्वान्मनसो ज्ञानस्वरूपे ब्रह्मणि स्थित्यसंभवादिति तन्न, तदेकसाध्यत्वादात्मयाथात्म्यावधृतेः । निश्चलबुद्धिवृत्तेः सम्यग्विषयभूतस्यैव मण्यादेः स्वरूपावधारणा दृश्यते, न तु चञ्चलवृत्तेर्विषयभूतस्य । तद्वत्समाहितबुद्ध्या सम्यग्विषयीकृतस्यैव ब्रह्मणो याथात्म्यावधारणं तत्रात्मत्वबुद्धिकरणं तत्फलं च सिद्ध्यति, नान्यथा । अतो मनसः स्थैर्यं समाधिना प्रयत्नेन संपादनीयं मुमुक्षोर्विज्ञाततत्त्वस्य यतेः 'समाहितो भूत्वाऽऽत्मन्येवात्मानं पश्यति' 'सर्वमात्मानं पश्यति' इति समाहितबुद्धेरेवात्मयाथात्म्यवेदनं तत्रात्मत्वबुद्धिकरणं सार्वात्म्यदर्शनं च श्रूयते यतः, ततः केवलश्रुतिमात्रेण यतेरात्मन्येवात्मत्वसिद्धिः सार्वात्म्यसिद्धिश्च न सिध्यति, ततस्तदर्थैवैषा कृतश्रवणस्य ज्ञाननिष्ठोच्यते सर्वज्ञेनेश्वरेण—निष्ठा ज्ञानस्येति ॥ ५० ॥

**श्री० टी०**—एवंभूतस्य परमहंसस्य ज्ञाननिष्ठया ब्रह्मभावप्रकारमाह—**सिद्धिं प्राप्त** इतिषड्भिः । नैष्कर्म्यसिद्धिं प्राप्तः सन् यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा तं प्रकारं संक्षेपेणैव मे वचनान्निबोध ॥ ५० ॥

**स० टी०**—पूर्वोक्तसाधनैः सर्वैः संपन्नस्य विवेकिनः ॥ मुमुक्षोर्ब्रह्मविज्ञानसाधनक्रम उच्यते ॥ १ ॥ ब्रह्म स्वकर्मणेशमाराध्य सिद्धिं तस्य प्रसादजाम् ॥ चित्तशुद्धिं परिप्राप्तो विज्ञानोत्पत्तियोग्यताम् ॥ २ ॥ ब्रह्म येन प्रकारेण प्रत्यगद्वयचिद्घनम् ॥ साक्षात्करोति संशुद्धमात्मानं परमं सुखम् ॥ ३ ॥ मम वाक्यात्प्रकारं तं कर्तुं त्वमवधारय ॥ संक्षेपेणैव कौन्तेय न तु विस्तरशः पुनः ॥ ४ ॥ तस्यावधारणे यत्स्यात्तच्छृणु त्वं समाहितः ॥ निष्पन्नस्य विचारेण ज्ञानस्याज्ञानघातिनः ॥ ५ ॥ निष्ठा परिसमाप्तिर्यां प्राप्य कार्यं न किंचन ॥ साक्षान्मोक्षैकहेतुत्वात्सर्वान्त्या या परा स्मृता ॥ ६ ॥ तां त्वं संक्षेपतः श्रुत्वा तत्परो भव सर्वदा ॥ ७ ॥ ५० ॥

**भा० टी०**—पूर्वोक्तेन स्वकर्मानुष्ठानेनेश्वराभ्यर्चनरूपेण जनितां केवलज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तस्योत्पन्नात्मविवेकविज्ञानस्य केवलात्मज्ञाननिष्ठा नैष्कर्म्यलक्षणा प्रकृष्टा सिद्धिर्येन क्रमेण भवति तं श्रावयितुमाह—**सिद्धिमिति** । सिद्धिं स्वकर्मणेश्वरमभ्यर्च्य तत्प्रसादजां कायादीनां ज्ञाननिष्ठायोग्यतालक्षणां सिद्धिं प्राप्तः यथा येन प्रकारेण ज्ञाननिष्ठारूपेण ब्रह्म परमात्मानं प्राप्नोति तथा तं प्रकारं ज्ञाननिष्ठाप्राप्तिक्रमं मे मम वचनान्निबोध त्वं निश्चयेनावधारय । किं विस्तरेण? नेत्याह—समासेनैव संक्षेपेणैव । यं

प्रकारमाश्रित्य मातृगर्भेण न संबध्यते तन्निबोधेति द्योतनार्थं कौन्तेयेति संबोधनम् । प्रतिज्ञातां ब्रह्मप्राप्ति-मिदंतया दर्शयितुमाह—निष्ठेति । या ब्रह्मप्राप्तिर्ज्ञानस्यात्मज्ञानस्य परा निष्ठा परा परिसमाप्तिः 'अव्यक्तो-ऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' । 'क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत' । 'न जायते म्रियते वा' । 'सदेव सोम्येदमग्रआसीदेकमेवाद्वितीयम्' । 'सत्यं ज्ञानमनन्तं ब्रह्म' । 'तत्त्वमसि' इत्यादिभगवद्वाक्यैरुपनिषद्वाक्यै-श्चोक्तः 'कूटस्थत्वमसङ्गत्वम्' इत्यादिन्यायाच्च प्रदर्शितो य आत्मा तस्य ज्ञानं तु न साकारवस्तुविषयकज्ञानव-द्भवितुमर्हति, आत्मन आकारवत्त्वस्यानिष्टत्वात् । "न संदृशे तिष्ठति रूपमस्य । न चक्षुषा पश्यति कश्चिदे-नम्" । "अशब्दमस्पर्शमरूपम्" इत्यादिश्रुतेः । 'आदित्यवर्णो भारूपः स्वयंज्योतिः' इत्यादिवाक्यानि तु द्रव्य-गुणाद्याकारप्रतिषेधे आत्मनस्तमोरूपत्वे प्राप्ते तत्प्रतिषेधार्थानि । नन्वेवं तर्हि कथं निराकारस्यात्मनो ज्ञानम्? यतो यद्विषयं भवति यज्ज्ञानं तत्तदाकारम् । ज्ञानात्मनोश्चोभयोर्निराकारत्वेन कथमात्मज्ञानस्य पौनःपुन्येना-नुसंधानात्मिका भावना निष्ठेति चेदुच्यते—आत्मज्ञानमित्यात्मविषयं ज्ञानं न विधीयते, चैतन्यस्वरूपस्यात्मनः सुप्रसिद्धत्वेनाज्ञातत्वाभावात् । नहि यस्य चैतन्याभासता बुद्ध्यादिदेहान्ते आत्मत्वभ्रान्तिकारणं तस्याज्ञा-तत्वं शक्यं वक्तुम् । तस्मान्नामरूपाद्यनात्माध्यारोपणनिवृत्तिरेव प्रयत्नेन कार्या, बाह्याकारभेदनिवृत्तेरेवात्मस्वरू-पावलम्बने कारणत्वात् । नात्मचैतन्यविज्ञानं तस्यात्यन्तप्रसिद्धत्वात् । नन्वत्यन्तप्रसिद्धं सुविज्ञेयमासन्नतम-मात्मभूतमप्यप्रसिद्धं दुर्विज्ञेयमतिदूरमन्यदिव ब्रह्म सर्वेषां कथं प्रतिभातीति चेत्, अविद्याकल्पितनामरूपवि-शेषाकारापहृतबुद्धित्वेनाविवेकित्वात्तेषामिति गृहाण । बाह्याकारनिवृत्तबुद्धीनां विवेकिनां तु लब्धगुर्वात्मप्र-सादानां नातःपरं सुप्रसिद्धं सुविज्ञेयं स्वासन्नमस्ति । तथा चोक्तम्—'प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम्' इति । एतेन निराकारत्वादात्मवस्तु नो बुद्धिरुपैत्यतो दुःसाध्या सम्यक्ज्ञाननिष्ठेति केषांचित्पण्डितंमन्या-नामुक्तिरपास्ता । गुरुसंप्रदायवतां श्रुतवेदान्तानां बहिर्विषयेष्वनासक्तबुद्धीनां सम्यक्प्रमाणेषु कृतश्रमाणा चैतन्यात्मव्यतिरेकेण वस्त्वन्तरस्यानुपलब्धेर्लौकिकग्राह्यग्राहकद्वैतवस्तुनि सद्बुद्धेरत्यन्तदुःसंपाद्यत्वात् । तदु-क्तम्—'यस्यां जाग्रति भूतानि सा निशा पश्यतो मुनेः' इति । ज्ञानमप्यत्यन्तं प्रसिद्धमेव सुखादिवदभ्युपगन्तव्यम् । येषां निराकारं ज्ञानमप्रत्यक्षं तेषामपि ज्ञानवशेनैव ज्ञेयावगतेर्दर्शनात् ज्ञेयवज्ज्ञानस्य जिज्ञासानुपपत्तेश्च । तथाच ज्ञानस्य ज्ञातुश्चात्यन्तप्रसिद्धत्वादात्मज्ञाने यत्नो न कर्तव्यः किंत्वनात्मन्यात्मबुद्धिनिवृत्तावे-वेति संक्षेपः ॥ ५० ॥

प० टी०—एवंभूतस्य परमहंसस्य ज्ञाननिष्ठया ब्रह्मभावनाप्रकारमाह—सिद्धिमिति षड्भिः । नैष्क-र्म्यसिद्धिं प्राप्तः यथा येन प्रकारेण ब्रह्म प्राप्नोति तथा मे मत्तो निबोध संक्षेपेण जानीहि, या वक्ष्यमा-णा ज्ञानस्य परा सर्वोत्कृष्टा निष्ठा मर्यादा ॥ ५० ॥

रा० टी०—प्रतिज्ञापूर्वं नैष्कर्म्यसिद्धिसाधनं विवृण्वंस्तदनन्तरफलमाह—सिद्धिमिति । या नैष्कर्म्याय सिद्धिः ज्ञानस्य परिनिष्ठा तां नैष्कर्म्यसिद्धिं येन प्रकारेण प्रवर्तमानः प्राप्तो भूत्वा अपरं ब्रह्म लक्ष्मीमाप्नोति तं प्रकारं संक्षेपतो मे निबोध बुध्यस्व ॥ ५० ॥

**बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च ॥**
**शब्दादीन् विषयांस्त्यक्त्वा रागद्वेषौ व्युदस्य च ॥ ५१ ॥**

त० टी०—प्रतिज्ञातं प्राप्तिप्रकारमेवाह—बुद्ध्येत्यादिपञ्चभिः । विशुद्धया यथाऽवस्थितपराव-रतत्त्वविषयया सात्त्विक्या बुद्ध्या युक्तो धृत्या सात्त्विक्या आत्मानं मनो नियम्य अनात्मनः प्रत्याहारे-णात्मप्रवणीकृत्य च शब्दादीन् विषयांस्त्यक्त्वा तत्संसर्गं विहाय तद्विषयौ रागद्वेषौ च व्युदस्य तत्रेष्टा-निष्टबुद्धिमकृत्वेत्यर्थः । इत्यादीनाम् " ब्रह्मभूयाय कल्पते " इति तृतीयश्लोकेनान्वयः ॥ ५१ ॥

म० टी०—सेयं ज्ञाननिष्ठा सप्रकारोच्यते—बुद्ध्येति । विशुद्धया सर्वसंशयविपर्ययशून्यया बुद्ध्याऽहं ब्रह्मास्मीति वेदान्तवाक्यजन्यया बुद्धिवृत्त्या युक्तः सदा तदन्वितः धृत्या धैर्येणात्मानं शरीरेन्द्रियसंघातं नियम्य उन्मार्गप्रवृत्तेर्निवार्यात्मप्रवणं कृत्वा । चशब्देन योगशास्त्रोक्तं साधनान्तरं समुच्चीयते । शब्दादीन् शब्दस्पर्शरूपरसगन्धान् विषयान् भोगेन बन्धहेतून्, सामर्थ्यात् ज्ञाननिष्ठार्थशरीरस्थितिमात्रप्रयोजनानुपयुक्तानानिषिद्धानपि त्यक्त्वा शरीरस्थितिमात्रार्थेषु च तेषु रागद्वेषौ व्युदस्य परित्यज्य । चकारादन्यदपि ज्ञानविक्षेपकं परित्यज्य । विविक्तसेवीत्यत्र स्यादित्यध्याहृतेन ब्रह्मभूयाय कल्पत इत्यनेन वान्वयः ॥ ५१ ॥

श्री० टी०—तत्तन्नियतसाधनानुष्ठानपूर्वकं निष्ठां कुर्वतो ब्रह्मविदो ब्रह्मप्राप्तिमाह—बुद्ध्येतित्रिभिः । बुद्धिरध्यवसायात्मिका । अध्यवसायस्तु "सत्यं ज्ञानमनन्तं ब्रह्म"। "अयमात्मा ब्रह्म" इतिन्यायेन ब्रह्मणः सत्यज्ञानानन्दरूपत्वनिश्चयः आत्मनो ब्रह्माभिन्नत्वनिश्चयः । 'विकल्पो न हि वस्तुनि' इतिन्यायेन प्रत्यगभिन्ने परे ब्रह्मणि, मरौ जलवद्व्योम्नि नैल्यवत्, देहादिसर्वदृश्यप्रपञ्चस्य कल्पितत्वनिश्चयः। एवंलक्षणाध्यवसायवती बुद्धिरत्र विवक्षिता, स्वात्मनि ब्रह्मण्यारोपितानात्मप्रत्ययनिरसने प्रवृत्तत्वाद्विदुषः। सा च विशुद्धा श्रुतियुक्तिभिर्निश्चितार्थतया संशयविपर्ययनिर्मुक्ता। तया विशुद्धया बुद्ध्या युक्तः सम्यगविनाभूतः सन् ब्रह्मनिष्ठायां प्रवृत्तो ब्रह्मविद्यतिर्धृत्या सात्त्विक्योक्तयाऽऽत्मानं चित्तं बहिःप्रवृत्तेर्नियम्य चित्तस्य बहिःप्रावण्यं निरुध्य, चकारात्प्राणेन्द्रियक्रियाः सर्वाः सम्यङ्नियम्य शब्दादीन् शब्दस्पर्शरूपादीन् विषयान् त्यक्त्वा, विषयानुसंधानमकृत्वेत्यर्थः । यद्यपि बहिरन्तःकरणनिरोधे कृते सति विदुषः स्वतो विषयसंबन्धो न संभवति, तथाप्यवशात्प्राप्तानामप्यनुसंधानं न करोतीत्यर्थः । रागद्वेषौ व्युदस्य च भिक्षाकालेऽपि प्राप्तेष्वर्थेष्विष्टेषु रागमनिष्टेषु द्वेषं च व्युदस्य परित्यज्येत्यर्थः । यद्वा व्युत्थानदशायां दृष्टेषु श्रोत्रियेषु हितकारिषु साधुषु वा रागस्तद्विपरीतेषु द्वेषस्तावुभौ व्युदस्य, चकारात्समाधिविघ्नकारणं मोहमालस्यं जाड्यं प्रमादं च परित्यज्येत्यर्थः ॥ ५१ ॥

श्री० टी०—तदेवाह—बुद्ध्येति । उक्तेन प्रकारेण विशुद्धया पूर्वोक्तया सात्त्विक्या बुद्ध्या युक्तो धृत्या सात्त्विक्या आत्मानं कार्यकरणसंघातं तामेव बुद्धिं नियम्य निश्चलं कृत्वा शब्दादीन्विषयांस्त्यक्त्वा तद्विषयौ रागद्वेषौ च व्युदस्य बुद्ध्या विशुद्धया युक्तः । इत्यादीनां ब्रह्मभूयाय कल्पत इति तृतीयेनान्वयः ॥५१॥

स० टी०—सप्रकारोच्यते सेयं ज्ञाननिष्ठा महाफला ॥ ब्रह्मैवास्मीति वेदान्तवाक्यनिष्पन्नया धिया ॥ १ ॥ सर्वसंदेहविभ्रान्तिशून्ययाऽतिविशुद्धया ॥ युक्तो धैर्येण देहादिसंघातं विनियम्य च ॥ २ ॥ निवार्योन्मार्गतो ब्रह्मतत्त्वेऽवस्थाप्य चिद्घने ॥ ज्ञाननिष्ठाविरुद्धांश्च त्यक्त्वा शब्दादिगोचरान् ॥ ३ ॥ शरीरस्थितिमात्रार्थे रागद्वेषौ विहाय च ॥ ज्ञानविक्षेपकं सर्वं संत्यज्येति चकारतः ॥ ४ ॥ ५१ ॥

भा० टी०—ब्रह्मप्राप्तेः ब्रह्मज्ञानस्य परस्याः निष्ठायाः समारोपिताऽतद्धर्मनिवृत्तिद्वारा ब्रह्मणि परिसमाप्तेः सुसंपाद्यायाः प्रतिज्ञातं क्रमं दर्शयति—बुद्ध्येति । बुद्ध्या व्यवसायात्मिकया । व्यवसायश्च ब्रह्मात्मज्ञानादेव मोक्षः स चावश्यं संपादनीय इति निश्चयः । विशुद्धया मायारहितया युक्तः संपन्नः, धृत्या धैर्येणात्मानं कार्यकरणसंघातं नियम्य वशीकृत्य षष्ठाध्यायादावुक्तानामनुक्तानां च साधनानां समुच्चयार्थश्चकारः । शब्दः आदिर्येषां तान् शब्दादीन्विषयान् त्यक्त्वा सामर्थ्याच्छरीरस्थितिमात्रान् केवलान्भुक्त्वा ततोऽधिकान् सुखार्थांस्त्यक्त्वेत्यर्थः । विषयमात्रत्यागे देहस्थित्यनुपपत्त्या ज्ञाननिष्ठाया असिद्धिप्रसङ्गात् । शरीरस्थित्यर्थत्वेन प्राप्तेषु च रागद्वेषौ व्युदस्य परित्यज्य, चकारादन्यदपि ज्ञाननिष्ठाविक्षेपकं मात्सर्यादि परित्यज्य, विविक्तसेवी स्यादित्यध्याहृतेन ब्रह्मभूयाय कल्पत इत्यनेन वा संबन्धः ॥ ५१ ॥

प० टी०—तामेवाह—बुद्ध्येति । एवंभूतः पुरुषो ब्रह्मभूयाय कल्पत इति तृतीयेनान्वयः । किंभूतो

विशुद्धया व्यवसायात्मिकया बुद्ध्या युक्तो धृत्या सात्त्विकयाऽऽत्मानं बुद्धिं नियम्य निश्चलां कृत्वा शब्दादीन् विषयान् परगोष्ठीदर्शनादींस्त्यक्त्वा तद्विषयौ रागद्वेषौ स्वस्तुतिनिन्दाप्रयुक्तौ व्युदस्य त्यक्त्वा ॥ ५१ ॥

रा० टी०—प्रतिज्ञातमाह—बुद्धयेति । विशुद्धया विषयेष्वसक्तया बुद्ध्या युक्तः । धृत्या धैर्येण स्तम्भनशक्त्या आत्मानं मनो नियम्य विषयेभ्यो निवर्त्य च शब्दादीन् विषयाँस्त्यक्त्वा तदनुभवेच्छां विहायेति यावत् । यस्य यद्रागद्वेषौ यौ रागद्वेषौ तौ च त्यक्त्वा । व्युदस्येति पाठे न तु क्लेशः ॥ ५१ ॥

**विविक्तसेवी लघ्वाशी यतवाक्कायमानसः ॥**
**ध्यानयोगपरो नित्यं वैराग्यं समुपाश्रितः ॥ ५२ ॥**

**त० टी०—विविक्तसेवी ।** एकान्तदेशसेवनशीलः, लघ्वाशी शुद्धमितभोजी, यतवाक्कायमानसः वशीकृतशरीरेन्द्रियमनाः, ध्यानयोगपरो नित्यं अहरहः प्रतिसवनं ध्याननिरतः, तद्विरोधिपरिहाराय वैराग्यं समुपाश्रितः सम्यगुपाश्रितः सन् ॥ ५२ ॥

म० टी०—विविक्तेति । विविक्तं जनसंमर्दरहितं पवित्रं च यदरण्यगिरिगुहादि तत्सेवितुं शीलं यस्य स चित्तैकाग्र्यसंपत्त्यर्थं तद्विक्षेपकारिरहित इत्यर्थः । लघ्वाशी लघु परिमितं हितं मेध्यं चाशितुं शीलं यस्य स, निद्रालस्यादि चित्तलयकारिरहित इत्यर्थः । यतानि संयतानि वाक्कायमानसानि येन सः, यमनियमासनादिसाधनसंपन्न इत्यर्थः । ध्यानयोगपरो नित्यं चित्तस्यात्माकारप्रत्ययावृत्तिर्ध्यानं, आत्माकारप्रत्ययेन निर्वृत्तिकतापादनं योगः, नित्यं सदैव तत्परस्तयोरनुष्ठानपरो न तु मन्त्रजपतीर्थयात्रादिपरः कदाचिदित्यर्थः । वैराग्यं दृष्टादृष्टविषयेषु स्पृहाविरोधि चित्तपरिणामं समुपाश्रितः सम्यङ्निश्चलत्वेन नित्यमाश्रितः ॥ ५२ ॥

शं० टी०—किंच—विविक्तसेवीति । विविक्तसेवी विविक्तान् विजनानेव देशानरण्यनदीपुलिनगिरिकन्दरगुहादीन् चित्तप्रसादतदेकाग्रतासिद्ध्यर्थं सेवितुं शीलमस्यास्तीति विविक्तसेवी सर्वदा भवेन्निदिध्यासुर्यतिः । तथा लघ्वाशी च स्याल्लघु यथा तथाऽशितुं शीलमस्यास्तीति लघ्वाशी, लघ्वशनशीलस्यैव नैश्चल्येन समाधिनिष्ठासंभवात् । यद्वा लघु गुरुत्वरहितद्रव्यमश्नीयादिति लघ्वाशी । लघुपदं हितमितमेध्यानामप्युपलक्षणं, तेन लघु हितं मितं मेध्यं चान्नमश्नीयान्निदिध्यासुर्यतिरिति सिद्धम् । यतवाक्कायमानसश्च भवेत्—यतानि संयतानि सम्यङ् निरुद्धानि बाह्यप्रवृत्तेः सम्यग्विमुखीकृतानि वाक्कायमानसानि येन स यतवाक्कायमानसः, विषयचिन्तनेन मनः स्थूलमेव भवति, न तु तनुत्वं गच्छति, वासना च प्रवर्धते, मनोनाशाय वासनाक्षयाय क्रियमाणः समाधिर्गजस्नानवन्निष्फल एव भवति । ततः सदा विषयचिन्तारहितेन भवितव्यम् । तथा वाक्प्रवृत्त्या त्वमहमिदमद इत्यादिविपरीतप्रत्यया न विनश्यन्ति द्वैतमेव प्रवर्धते, रोगिणोऽपथ्येन रोगवृद्धिवत् । ततः सदा मौनेन भवितव्यम् । कायेन कर्मसु प्रवृत्त्या कर्तृतादात्म्यं कर्मवासना च । समाधिकाले कायचलनेन मनसश्चेन्द्रियाणां च चलनं समाधिविघ्नश्च भवति यतः, ततो वासनाक्षयाय मनोनाशाय च प्रवृत्तस्य यतेर्विषयाननुसंधानेन मौनेन नैष्कर्म्येण च सर्वदा भवितव्यमित्युच्यते—यतवाक्कायमानस इति । एतत्सिद्धये हेतुमाह—वैराग्यमिति । दृश्ये मिथ्यात्वबुद्ध्या तुच्छत्वबुद्ध्या च भोक्तुमनुसंधातुं च विषयेभ्यो विगतो निर्गतो राग इच्छा यस्य स विरागस्तस्य भावो वैराग्यं सर्वत्रेच्छाराहित्यं नित्यमविच्छिन्नं समुपाश्रितः सन् । एवं शुद्धबुद्धित्वादिसाधनयुक्तो ब्रह्मविद्यतिर्नित्यं निरन्तरम् । नित्यमिति विशेषणं देहलीदीपन्यायेनोभयत्र संबध्यते । नित्यपदं निदिध्यासोरनुष्ठानान्तराभावसूचनार्थम् । ततः सर्वदा ध्यानयोगपरः—ध्यानं च योगश्च ध्यानयोगौ तत्र परो ध्यानयोगपरः प्रत्यगभिन्ने सच्चिदानन्दैकरसे निर्विशेषेऽद्वि-

तीये परे ब्रह्मण्यधिष्ठाने आरोपितनामरूपादिविजातीयप्रत्ययतिरस्कारपूर्वकं बहिरन्तः सर्वत्र ब्रह्ममात्रैकविषयाणां सत्प्रत्ययानां प्रत्यग्भावापन्नया वृत्त्या निरन्तरतैलधारावदविच्छिन्नया यत्प्रवाहीकरणं तद्ध्यानम् । विजातीयप्रत्ययानन्तरितानां केवलसत्प्रत्ययानामेव चिरकालनित्यनिरन्तराभ्यासवशाद्विक्षेपकाणां वासनानां संक्षये सति तनुतां गताया बुद्धिवृत्तेर्ब्रह्मणि ब्रह्माकारेण निवातस्थलदीपवद्यो निश्चलीभावः स एव योगः, तयोर्ध्यानयोगयोरुक्तलक्षयोर्नित्यं परः सन् तद्ध्यानयोगनिष्ठासंपन्न एव यतिः परिपक्वज्ञानो भवतीत्यर्थः ॥ ५२ ॥

श्री० टी०–किंच–विविक्तेति । विविक्तसेवी शुद्धदेशावस्थायी, लघ्वाशी मितभोजी । एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा नित्यं सर्वदा ध्यानेन यो योगो ब्रह्मसंस्पर्शस्तत्परः सन् ध्यानाद्यविच्छेदार्थं पुनः पुनर्दृढं वैराग्यं सम्यगुपाश्रितो भूत्वा ॥ ५२ ॥

स० टी०–विविक्तं जनसंदोहशून्यं गिरिगुहादिकम् ॥ पवित्रं सेवितुं शीलं यस्य लघ्वशितं तथा ॥१॥ यतानि यस्य वाक्कायमानसानि समन्ततः ॥ विक्षेपलयसामग्रीशून्यो युक्तो यमादिभिः ॥ २ ॥ ब्रह्मात्मप्रत्ययावृत्तिर्ध्यानं योगस्तथाऽऽत्मनि ॥ एकाग्रीकरणं वृत्तेस्तयोरेव परः सदा ॥ ३ ॥ न तु मन्त्रजपादौ यस्तत्परः सन्कदाचन ॥ दृष्टादृष्टेषु भोगेषु वैतृष्ण्यं नित्यमाश्रितः ॥ ४ ॥ ५२ ॥

भा० टी०–ततः–विविक्तेति । विविक्तदेशसेवी वनगिरिगुहानदीपुलिनादीन्विविक्तान् जनसमुदायशून्यान् देशान्सेवितुं शीलमस्येति विविक्तदेशसेवी । एतादृशस्य चित्तं विक्षेपकाभावादेकाग्रं सत्प्रसन्नं भवति। निद्रादिदोषनिबन्धनचित्ताप्रसादनिवृत्त्यर्थमाह–लघ्वाशी । हितमितमेध्याशनशीलः । यतानि वशीकृतानि वाक्कायमानसानि यस्य स ज्ञाननिष्ठः यतवाक्कायमानसः । एवमुपरतसर्वकरणः सन् ध्यानयोगपरः–ध्यानमात्मस्वरूपचिन्तनं मनस आत्मस्वरूपविषय एकाग्रीकरणं योगः, ध्यानयोगौ परत्वेन कर्तव्यौ यस्य स नित्यं सदैव ध्यानयोगपरः । मन्त्रजपप्रदक्षिणाप्रणामाद्यन्यकर्तव्याभावप्रदर्शनार्थं नित्यग्रहणम् । ध्यानयोगपरत्वसिद्ध्यर्थमाह–वैराग्यं विरागभावं दृष्टादृष्टेष्टविषयेषु वैतृष्ण्यं समुपाश्रितः सम्यक् निश्चलत्वेन नित्यमेवाश्रितः ॥ ५२ ॥

प० टी०–किं च–विविक्तेति । विविक्तं विवेकहेतुभूतमेकान्तस्थलं सेवते, तथा लघ्वाशी सात्त्विकप्रमितान्नभोजी । एतैरुपायैर्यतवाक्कायमानसः संयतवाग्देहचित्तो भूत्वा ध्यानेन चित्तैकाग्र्येण तादात्म्येन यो जीवब्रह्मयोगस्तत्परो भूत्वा वैराग्यं पुनर्विषयविक्षेपराहित्यं सम्यङ्नैष्ठिकत्वेनोपाश्रितः ॥ ५२ ॥

रा० टी०–विविक्तेति । विविक्तसेवी जनसंमर्दहीनदेशवासी, लघ्वाहारवान्, यतवाक्कायमानसः सद्विषय एव नियमितवागादिः, नित्यं ध्यानरूपोपायपरः, वैराग्यं समुपाश्रितः ॥ ५२ ॥

**अहंकारं बलं दर्पं कामं क्रोधं परिग्रहम् ॥**
**विमुच्य निर्ममः शान्तो ब्रह्मभूयाय कल्पते ॥ ५३ ॥**

त० टी०–अहंकारमिति । अहंकारमनात्मन्यात्माभिमानं, बलमनात्मवस्तुविषयं देहेन्द्रियसामर्थ्यं, तन्निमित्तं दर्पं गर्वं, कामं प्रारब्धवशाद्यदृच्छाप्राप्तेष्वपि विषयेषु स्वीकारेच्छा, तत्प्रतिबन्धके क्रोधं, परिग्रहं वस्त्रान्नादेः सङ्ग्रहं विमुच्य विशेषेण त्यक्त्वा निर्ममः देहसंबन्धिषु ममताशून्यः, अत एव शान्तः सर्वविक्षेपवर्जितः । एवंभूतो ध्याननिष्ठो ब्रह्मभूयाय कल्पते । ब्रह्मणो भावो ब्रह्मभूयं तस्मै ब्रह्मभूयाय ब्रह्मवद्दोषास्पृष्टस्वभावतयाऽवस्थानाय कल्पते योग्यो भवति ॥ ५३ ॥

म० टी०–अहंकारमिति । अहंकारं महाकुलप्रसूतोऽहं महतां शिष्योऽतिविरक्तोऽस्मि नास्ति द्वितीयो

मत्सम इत्यभिमानं, बलमसदाग्रहं न तु शारीरं तस्य स्वाभाविकत्वेन त्यक्तुमशक्यत्वात्। दर्पं हर्षजन्यं मदं धर्मातिक्रमकारणम् 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मृतेः। कामं विषयाभिलाषम्। 'वैराग्यं समुपाश्रितः' इत्यनेनोक्तस्यापि कामत्यागस्य पुनर्वचनं यत्नाधिक्यार्थम्। क्रोधं द्वेषम्। परिग्रहं शरीरधारणार्थमस्पृहत्वेऽपि परोपनीतं बाह्योपकरणं विमुच्य त्यक्त्वा शिखायज्ञोपवीतादिकमपि, दण्डमेकं कमण्डलुं कौपीनाच्छादनं च शास्त्राभ्यनुज्ञातं स्वशरीरयात्रार्थमादाय परमहंसपरिव्राजको भूत्वा निर्ममो देहजीवनमात्रेऽपि ममकाररहितः। अत एवाहंकारममकाराभावादपगतहर्षविषादत्वात् शान्तश्चित्तविक्षेपरहितो यतिर्ज्ञानसाधनपरिपाकक्रमेण ब्रह्मभूयाय ब्रह्मसाक्षात्काराय कल्पते समर्थो भवति ॥ ५३ ॥

श्रीं० टी०—एवं बहुकालं निरन्तरसमाधिनिष्ठामेव कुर्वतो ब्रह्मविद्यतेः समाध्यग्निनिर्दग्धाशेषवासनाग्रन्थेर्निःशेषनिवृत्तविपरीतभावस्य सम्यक्परिपक्वविज्ञानसिद्धेः फलमाह—अहंकारमिति। चिरकालनित्यनिरन्तरसमनुष्ठितसमाधिनिष्पन्नसम्यग्ज्ञानेन देहादिद्वैतप्रपञ्चस्य स्वव्यतिरिक्तत्वाभासत्वात्सत्त्वधीपूर्वकमधिष्ठाने स्वात्मनि ब्रह्मणीदमेवाहमस्मीति स्वात्मना विदिते ब्रह्मण्येवात्मत्ववासनादार्ढ्यादनात्मनि देहादावहंकारमहंकरणमनात्मन्यहमिति बुद्धिं विमुञ्चति ब्रह्मवित्यतिः। नह्यज्ञवदात्मतत्त्वज्ञः सर्वाधिष्ठानं नित्यं शुद्धं बुद्धं मुक्तं चिदेकरसं परिपूर्णं परं ब्रह्म स्वस्वरूपत्वेन विज्ञायारोपितमसत्तुच्छमहमित्यवलम्बते, किंतु प्रतिच्छायावदाभासरूपेण प्रतीयमानेऽप्यस्मिन् देहेऽहंभावं परित्यजति। तत्रात्मत्वधीहेतोरज्ञानस्याधिष्ठानयाथात्म्यसंदर्शनेन विनष्टत्वात्ततः 'कारणनाशात्कार्यनाशः' इतिन्यायेन ब्रह्मवित्तत्राहंभावं न करोतीत्यर्थः। किंच बलं त्वमहमिदमद इत्यारोपितपदार्थग्रहणकारणमविद्यावासनाकृतं वृत्तिवेगलक्षणं विमुञ्चति। नित्यनिरन्तरसमाधिनिष्ठयाऽनाद्यविद्यावासनासंक्षये सति तत्कृतं बलं वेगलक्षणमन्तःकरणस्थं परित्यजति। पूर्वं वासनाबलादन्तःकरणं परिपूर्णमपि ब्रह्मस्वरूपमतिक्रम्य यथा प्रपञ्चं गृह्णाति, तथा समाधिना वासनासंक्षयात् विशिष्य नामरूपादिग्रहणं न करोति, किंत्वाभासप्रपञ्चं त्यक्त्वा सर्वत्र ब्रह्मैव पश्यति। व्युत्थानाव्युत्थानयोः सर्वदा ब्रह्मण्येव तिष्ठतीत्यर्थः। एतेन विदुषस्त्वहमिति भावेनेदमितिवासनाद्यभावः सूचितः। दर्पं च—कृतार्थोऽहमिति ब्रह्मविदहमित्यभिनिवेशलक्षणोऽन्तःकरणविकारो दर्पस्तं च विमुञ्चति, स्वकारणेऽज्ञानेऽहंकारे च समाधिना विनष्टे सति। 'कारणनाशात्कार्यनाशः' इतिन्यायेन स्वयमेव दर्पो विनश्यतीत्यर्थः। तथैव कामं क्रोधं च विमुञ्चति। संप्राप्तपदार्थभोगेच्छा कामः, स्वापकारिणं हन्तुमुद्योगः क्रोधः, तौ परित्यजति। स्वकारणस्य रजसः समाधिना निर्मूलितत्वाद्विनिर्मलान्तःकरणतया सम्यगप्रतिबद्धात्मविज्ञानेन अहमेवेदं सर्वमिति सर्वात्मभावं प्राप्तस्याहं भोक्तेदं भोग्यमिति, अयं हन्ताऽहं हन्य इति विपरीतभावनाभावात्स्वमात्रत्वात्सर्वत्र रागद्वेषयोरनवकाशापत्तौ 'निमित्तापाये नैमित्तिकस्याप्यपायः' इतिन्यायेन कामक्रोधौ स्वयमेव विनाशं प्राप्तावित्यर्थः। तत एव परिग्रहं शरीररक्षणार्थत्वेन प्राप्तो यः परिग्रहः कौपीनकाषायकन्थादिस्तं चापि विमुञ्चति। एवम् 'अहंकारं बलं दर्पं कामं क्रोधं परिग्रहं' च यद्बहिरन्तश्च विकल्पकारणं तत्सर्वं विमुच्य 'न दण्डं न कमण्डलुं न शिखां न यज्ञोपवीतं नाच्छादनं चरति परमहंसः' इत्युक्तरीत्या देहमात्रावशिष्टः परमहंसो भूत्वा। ननु शरीरस्थितिहेतोः काषायकन्थादेः परित्यागे शीतवातादिभिर्विकल्प एव संभवति, कथं निर्विकल्पत्वं ब्रह्मविदुत्तमस्य परमहंसस्येत्याशङ्क्य। न। देहादावहंममेत्यभिमानत एव शीतादिकृतविक्षेपो, न तु निरभिमानस्येति। तदसंभवे हेतुमाह—निर्मम इति। स्वकारणस्याहंकारस्य विनष्टत्वान्निःशेषेण गतो निर्गतो देहे ममभावो यस्य स निर्ममः परदेह इव स्वदेहे ममतारहित इत्यर्थः। "स्ववपुः कुणपमिव दृश्यते यतस्तद्वपुरपध्वस्तम्" इति श्रवणाद्ब्रह्मण्येवात्मत्वप्रत्ययवता महात्मना ब्रह्मविदाऽनात्मत्वेन त्यक्ते शवकल्पे शरीरे त्वहंभावो ममभावश्च न क्रियते। तन्निमित्तकत्वात्सर्वविकल्पस्य। विदुषस्तदभावात्तदभाव इति सूचयितुमेव निर्मम इत्यु-

क्तम् । यत एवं चिरकालनित्यनिरन्तरसमाधियोगनिर्धूताहंकारममकाराद्यविद्यावासनाप्रपञ्चो यो ब्रह्मविद्यतिः स सर्वेभ्यो गुहाग्रन्थिभ्यो विमुक्तो भवति । तत एव शान्तः निरिन्धनाग्निवदुपशान्तान्तःकरणसर्वविकारस्तत एव प्रसन्नान्तःकरणतया संप्राप्तात्मयाथात्म्यविज्ञानो ब्रह्मभूयाय ब्रह्मभावाय—ब्रह्मभावो नाम सच्चिदानन्दैकरसब्रह्मात्मनाऽवस्थानम्—तस्मै कल्पते ब्रह्माकारेण तिष्ठतीत्यर्थः । एतेनात्यन्तश्रद्धया चिरकालं नित्यं निरन्तरं समाधिनिष्ठामेवैकां नियमेन समनुतिष्ठतस्तन्निष्ठयाऽहमादिसर्ववासनाग्रन्थिविच्छित्तिं सम्यक्कृतवतस्तद्विच्छित्त्या सम्यगात्मप्रसादं लब्धवतस्तल्लब्ध्वा संसिद्धात्मयाथात्म्यविज्ञानेनाहमेवेदं सर्वमिति सर्वमात्मानमेव पश्यतो ब्रह्मविदो ब्रह्मभावः सिध्यतीति सूचितम् ॥ ५३ ॥

**श्री० टी०—किंच—अहंकारमिति ।** ततश्च विरक्तोऽहमित्याद्यहंकारं, बलं दुराग्रहं, दर्पं योगबलादुन्मार्गप्रवृत्तिलक्षणं, प्रारब्धवशात्प्राप्यमाणेष्वपि विषयेषु कामं क्रोधं परिग्रहं च विमुच्य विशेषेण त्यक्त्वा बलादापन्नेषु निर्ममः सन् शान्तः परामुपशान्तिं प्राप्तो ब्रह्मभूयाय ब्रह्माहमितिनैश्चल्येनावस्थानाय कल्पते योग्यो भवति ॥ ५३ ॥

**स० टी०—**महाकुलप्रसूतोऽहं विरक्तोऽन्यो न मत्समः ॥ इत्येवमभिमानं च बलमत्रासदाग्रहम् ॥ १ ॥ न शारीरं यतस्तस्य स्वाभाविकतया जनैः ॥ त्यागः कर्तुमशक्योऽस्ति दर्पं हर्षं च दुर्मदम् ॥ २ ॥ धर्मातिक्रमणे हेतुं तदुक्तं च स्मृतौ स्फुटम् ॥ हृष्टो दृप्यति दृप्तः सन्नतिक्रामति धर्मतः ॥ ३ ॥ कामं भोगाभिलाषं च क्रोधं द्वेषं परिग्रहम् ॥ बाह्योपकरणं सर्वं यद्यद्विक्षेपकारणम् ॥ ४ ॥ परित्यज्याखिलानेतान् देहधारणमात्रके ॥ ममत्वरहितः शान्तश्चित्तविक्षेपवर्जितः ॥ ५ ॥ ज्ञानसाधनसामग्रीपरिपाकक्रमेण च ॥ ब्रह्मभावाय यतिराट् समर्थो भवति स्वयम् ॥ ६ ॥ अहंकारादिषट्कं च सम्यग्वैराग्यवैभवात् ॥ तथा विवेकसामग्र्या वेदान्तानां विचारणात् ॥ ७ ॥ नैरन्तर्येण सत्सङ्गद्वाराऽभ्यासादिवैभवात् ॥ त्यक्तुं शक्यं भवेद्यस्मान्नान्यथाऽतो विवेकवान् ॥ ८ ॥ भगवत्पदमालम्ब्य सतां सङ्गेन सर्वदा ॥ अभ्यसेद्ब्रह्मवस्त्वैक्यं श्रीहरेरयमाशयः ॥ ९ ॥ ५३ ॥

**भा० टी०—किंच—अहंकारमिति ।** देहादिष्वहंकरणमहंकारस्तं देहे आत्मत्वाभिमानं, बलं कामरागादिप्रयुक्तं सामर्थ्यं नेतरच्छरीरादिसामर्थ्यं स्वाभाविकत्वेन तत्त्यागस्याशक्यत्वात् । दर्पो हर्षानन्तरभावी धर्मातिक्रमहेतुः 'हृष्टो दृप्यति दृप्तो धर्ममतिक्रामति' इति स्मरणात् तं च, काममिच्छाम् । वैराग्यशब्देन लब्धस्यापि कामत्यागस्य पुनर्वचनं तस्मिन्नधिकयत्नः कर्तव्य इति बोधनाय प्रकृष्टत्वख्यापनार्थम् । इच्छितपदार्थालाभप्रयुक्तं क्रोधं, परिग्रहमिन्द्रियमनोगतदोषत्यागेऽपि शरीरधारणप्रसङ्गेन धर्मानुष्ठाननिमित्तेन वा प्राप्तं बाह्यपरिग्रहं च विमुच्य परित्यज्य परमहंसपरिव्राजको भूत्वा देहजीवनमात्रेऽपि विगतममभावो निर्ममोऽत एव शान्तः उपरतः संहृतायासो यतिर्ज्ञाननिष्ठो ब्रह्मभूयाय ब्रह्मभवनाय ब्रह्मणोऽनुसंधानपरिपाकपर्यन्तजाय साक्षात्काराय कल्पते समर्थो भवति ॥ ५३ ॥

**प० टी०—**अथ विक्षेपकारणोन्मूलनप्रकारमाह—**अहंकारमिति ।** अहमेताद्दग्विरक्तोऽस्मीत्यहंकारं, बलं दुराग्रहं, दर्पं योगबलादुन्मार्गप्रवृत्तिलक्षणं, प्रारम्भे(?)कामं क्रोधं परिग्रहं च विमुच्य विशेषेण मुक्त्वा बलात्कारेण प्राप्तेषु निर्ममो ममताशून्यः शान्तः परामुपशान्तिं प्राप्त एवंभूतो योगी ब्रह्मभूयाय ब्रह्माहमस्मीति नैश्चल्येनावस्थानाय कल्पते योग्यो भवति ॥ ५३ ॥

**रा० टी०—अहंकारमिति ।** अहंकारं स्वकर्तृत्वाभिमानं, बलं स्वसमर्थताभिमानं, दर्पं भीतिहेतोरदृष्टिम्, कामं विषयाभिलाषम्, क्रोधं परिग्रहं च विमुच्य निर्ममः कर्मणि मदीयताबुद्धिहीनः, शान्तः हेतुभिरप्यनुत्थितकोपः ब्रह्मभूयाय ब्रह्मणि स्थितिर्ब्रह्मभूयं तस्मै सर्वदा ब्रह्ममनस्कत्वायेत्यर्थः, कल्पते समर्थो भवति ॥ ५३ ॥

**ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति ॥**
**समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ॥ ५४ ॥**

**त० टी०**—इदानीं यस्य ब्रह्मभावयोग्यतोक्ता तस्य ब्रह्मभावप्राप्तस्य लक्षणं तत्फलं चाह—ब्रह्मभूत इति । आविर्भूतानवच्छिन्नज्ञानधर्मात्मस्वरूपानुभूतिस्तत एव प्रसन्नात्मा बाह्यविषयनिरपेक्षप्रसादयुक्त आत्मा चित्तं यस्य स तथा । तत्र लिङ्गम्—न शोचति । किंचिन्नष्टं वस्तु न शोचति । न वा अप्राप्तं किंचित् काङ्क्षति, आत्मानुभवसंतुष्टतया समलोष्टाश्मकाञ्चनदृष्टिरित्यर्थः । अत एव सर्वेषु भूतेषु समः स्वस्य स्तुतिपूजाकर्तृषु निन्दापकारकर्तृषु च मित्रारिभाववर्जितः । एवं ज्ञानसिद्धिं प्राप्तो मद्भक्तिं लभते परां—मद्विषयां निरतिशयप्रीतिलक्षणां परामव्यभिचारिणीं मत्साक्षात्कारासाधारणकारणभूतां भक्तिं लभते । पराभक्तिलाभ एव ज्ञानस्य परा निष्ठा फलमित्यर्थः । तथोक्तं श्रीभागवते—"आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे । कुर्वन्त्यहैतुकीं भक्तिमित्थंभूतगुणो हरिः । सनन्दनादयो ये च ब्रह्मभावनया युताः" इति विष्णुपुराणोक्तब्रह्मभावनावतां सनन्दनादीनामपि "हरिः शरणमित्येव नित्यं तेषां मुखे वचः" इति भागवतमाहात्म्ये अहर्निशभगवत्स्मरणस्य पराभक्तिलक्षणस्य प्रतिपादनात् । एवं विशुद्धबुद्ध्यादियोगपूर्वकप्रशान्तस्य ब्रह्मभूतस्यापि पराभक्तिलाभकथनेनोक्तसाधनप्रक्रियां विना सर्वभूतसमत्वलक्षणब्रह्मभावयोग्यता न भवति । उक्तब्रह्मभावं विना पराभक्तिर्न लभ्यते, तस्मात् पराभक्तेः क्षेत्रज्ञस्वरूपयाथात्म्यज्ञानोत्तरभावित्वं निश्चीयते ॥ ५४ ॥

**म० टी०**—केन क्रमेण ब्रह्मभूयाय कल्पत इति तदाह—ब्रह्मेति । ब्रह्मभूतः अहं ब्रह्मास्मीतिदृढनिश्चयवान् श्रवणमननाभ्यासात् प्रसन्नात्मा शुद्धचित्तः शमदमाद्यभ्यासात् । अत एव न शोचति नष्टं न काङ्क्षत्यप्राप्तम् । अत एव निग्रहानुग्रहयोरनारम्भात् समः सर्वेषु भूतेषु आत्मौपम्येन सर्वत्र सुखं दुःखं च पश्यतीत्यर्थः । एवंभूतो ज्ञाननिष्ठो यतिर्मद्भक्तिं मयि भगवति शुद्धे परमात्मनि भक्तिमुपासनां मदाकारचित्तवृत्त्यावृत्तिरूपां परिपक्वनिदिध्यासनाख्यां श्रवणमननाभ्यासफलभूतां लभते । परां श्रेष्ठामव्यवधानेन साक्षात्कारफलाम् 'चतुर्विधा भजन्ते माम्' इत्यत्रोक्तस्य भक्तिचतुष्टयस्यान्त्यां ज्ञानलक्षणामिति वा ॥ ५४ ॥

**शं० टी०**—एवं विशुद्धबुद्धित्वादिसहकारिसाधनसंपत्त्या समनुष्ठितध्यानयोगनिष्ठासमुत्पन्नसम्यग्ज्ञानेन ब्रह्मभावं गतवतो महात्मनो जीवन्मुक्तस्य कृतार्थस्य यतेः स्थितिमाह श्लोकार्धेन—ब्रह्मभूत इति । निरुक्तसाधनसंपत्त्या समनुष्ठितसमाधिनिष्ठाविध्वस्तरजस्तमस्तत्कार्यरागद्वेषाद्यहंकारममकाराद्यशेषमलतया प्रसन्नः केवलशुद्धसत्त्वभावापन्नः सर्वत्र ब्रह्ममात्रग्रहणेन प्रशान्तो विपरीतप्रत्ययनिर्मुक्त आत्मान्तःकरणं यस्य स प्रसन्नात्मा समाधिनिष्ठापरिपक्वविज्ञानः । तत एव दृश्यसंबन्धं परित्यज्य ब्रह्मभूतः—सद्घनं चिद्घनमानन्दघनं यत्परं ब्रह्म एतदेवाहमिति तद्भावं गतो जीवन्मुक्तो ब्रह्मवित्तमो न शोचति शोकं न करोति, शोकहेतोरनर्थस्याभावात् । लोके यं कंचनानर्थमात्मनो दृष्ट्वा मूढः शोचति, तदभावान्नायं शोचति । न हि सर्वं स्वमेव पश्यतो विदुषः संभवत्यर्थान्तरमनर्थाय, यद्दृष्ट्वाऽयं शोचेत्—"द्वितीयाद्वै भयं भवति" इति द्वैतस्यैव भयहेतुत्वं श्रूयते दृश्यते च स्वव्यतिरिक्तस्यैव भयकारणत्वं दुःखकारणत्वं च । ततः स्वयमेव सर्वत्र चिदेकरसं प्रशान्तं वृद्धिक्षयादिवर्जितमानन्दघनमद्वितीयं च पश्यतोऽनर्थहेतोरन्यस्यादर्शनाद्ब्रह्मवित्तमः शोकनिमित्ताभावान्न शोचतीत्यर्थः । नन्वाभासरूपेण विदुषोऽप्युपाधिरस्त्येव, तद्वैकल्यवैगुण्ययोः शोकनिमित्तयोः संभवात्कथं विद्वान्न शोचतीति चेन्न । देहे ममताभावस्य प्रतिपादितत्वाद्देहे ह्यहंममेत्यभिमानवत एव तद्वैकल्यवैगुण्ययोः शोकः संभवति, किंतु ब्रह्मैवाहं न तु देह

इति निरभिमानस्य सर्वात्मन्येव तयोरविषये ब्रह्मण्यात्मभावापत्त्या तदात्मना निरूढवृत्तेर्विदुषः प्रतिच्छायावदुपाधेरसत्त्वात्तन्निमित्तकः शोको न संभवति । तथा च श्रुतिः "किमिच्छन्कस्य कामाय" इति, "मत्वा धीरो हर्षशोकौ जहाति" इति, "कः शोक एकत्वमनुपश्यतः" इति च । न काङ्क्षति च निरुक्तलक्षणो ब्रह्मविद्यतिर्न किंचिदर्थान्तरं कामयते । सर्वो ह्यप्राप्तमर्थं कामयते, न तथास्य ब्रह्मविदः प्राप्तव्यमर्थान्तरमस्ति यत्कामयेत ममेदं भूयादिति । "अहमन्नमहमन्नमहमन्नमहमन्नादोऽहमन्नादोऽहमन्नादः" इति, 'अहं मनुरभवं सूर्यश्च' इतिन्यायेन स्वस्यैव भोक्तृभोग्यात्मनाऽवस्थितत्वात्स्वव्यतिरिक्तवस्त्वन्तराभावाच्च अहमेवेदं सर्वमिति सर्वात्मभावापत्त्या सर्वस्यापि वस्तुनः स्वात्मत्वेन प्राप्तत्वाच्च कामनैव न संभवति, तत एव न काङ्क्षति । "सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिता" इति ब्रह्मभावापन्नस्य यतेः सर्वकामाप्तिश्रवणादवाप्तसर्वकामस्य कामयितृत्वासंभवात्कामं क्रोधमिति कामस्य परित्यक्तत्वाच्च ब्रह्मवित्कचित्किंचिदपि न काङ्क्षतीत्यर्थः । ज्ञानस्य सम्यक्त्वसिद्धये विशुद्धबुद्धित्वादिसाधनसंपत्त्या ज्ञाननिष्ठां कुर्वतोऽतत्त्यागपूर्विका ब्रह्मप्राप्तिरेव सूचिता न तु निष्ठया संप्राप्तज्ञानस्वरूपम् । तेन वस्तुतत्त्वनिर्धारणप्रकारो निर्धारितवस्तुप्राप्तिश्च जिज्ञासोर्विज्ञातव्यम् । तदेतत्सर्वं संक्षेपेण प्रतिपादयति सार्धेन—**सम** इति । विशुद्धबुद्धित्वादिभिस्तद्बुद्धित्वादिभिश्च ज्ञाननिष्ठासहकारिसाधनैः सम्यक्संपन्नः समदर्शनपरः सम्यग्ज्ञानसिद्ध्यै ज्ञाननिष्ठायां प्रवृत्तो ब्रह्मविद्यतिः 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्' इति, 'सर्वभूतेषु येनैकम्' इत्युक्तप्रकारेण भूतेष्वाकाशादिस्थूलान्तेषु भूतकार्येषु च ब्रह्मादिस्तम्बान्तशरीरेषु सर्वेषु सर्वत्र परां ज्ञाननिष्ठापरिपाकजन्यत्वात्संशयविपर्ययादिदोषनिर्मुक्तत्वादप्रतिबद्धत्वात्परमार्थबोधकत्वाच्च परा प्रकृष्टा तां परां मद्भक्तिम्—विषयाकारं भजति इति भक्तिर्ज्ञानं निष्ठापरिपाकजं मम सर्वभूतात्मभूतस्य निर्विशेषस्यापरिच्छिन्नस्य सर्वोपाधिविनिर्मुक्तस्य चिदेकरसस्य परस्य ब्रह्मणो भक्तिर्मद्भक्तिस्तां लभते । नित्यनिरन्तरसमाधिनिष्ठयान्तःकरणस्य शुद्धसत्त्वभावापत्तौ सर्वत्र मत्स्वरूपमात्रग्राहकमद्वैतविषयं ज्ञानं ब्रह्मवित्प्राप्नोतीत्यर्थः ॥ ५४ ॥

**श्री० टी०**—ब्रह्माहमित्येवं नैश्चल्येनावस्थानस्य फलमाह—**ब्रह्मभूत** इति । ब्रह्मभूतो ब्रह्मण्यवस्थितः प्रसन्नचित्तो नष्टं न शोचति न चाप्राप्तं काङ्क्षति देहाद्यभिमानाभावात् । अत एव सर्वेष्वपि भूतेषु समः सन् रागद्वेषादिकृतविक्षेपाभावात् सर्वभूतेषु मद्भावनालक्षणां परां मद्भक्तिं लभते ॥ ५४ ॥

**स० टी०**—येन क्रमेण ब्रह्मात्मभावयोग्यो भवेन्मुनिः ॥ तदाह ब्रह्मभूतश्च ब्रह्मास्मीति सुनिश्चितः ॥ १ ॥ श्रवणादेः सदाभ्यासात्प्रसन्नात्मा विशुद्धधीः ॥ शमाद्यभ्यासतो नष्टमिष्टं वस्तु न शोचति ॥ २ ॥ नाप्राप्तं काङ्क्षति स्वस्थः सर्वभूतेषु यः समः ॥ आत्मौपम्येन सर्वत्र सुखं दुःखं च पश्यति ॥ ३ ॥ ज्ञाननिष्ठः पुमानेवं मयि शुद्धे परात्मनि ॥ उपासनां मदाकारधीवृत्त्या वृत्तिरूपिणीम् ॥ ४ ॥ श्रवणादेः सदाऽभ्यासफलभूतामनुत्तमाम् ॥ निदिध्यासनसंसिद्धां साक्षात्कारफलां पराम् ॥ ५ ॥ मद्भक्तिं लभते धीरश्चतुर्थीं ज्ञानलक्षणाम् ॥ ६ ॥ ५४ ॥

**भा० टी०**—**ब्रह्मभूत** इति । अनेन क्रमेण ब्रह्मभूतः ब्रह्मभवनसमर्थत्वात् ब्रह्मभूतः प्रसन्नात्मा प्रसन्नः कर्तृत्वादिविनिर्मुक्तः आविर्भूतानन्द आत्मा प्रत्यगात्मा यस्य स लब्धात्मप्रसादः न शोचति किंचिदर्थवैकल्यमात्मनो वैगुण्यं चोद्दिश्य न शोचति न संतप्यते, न काङ्क्षति अप्राप्तं वस्तु । ब्रह्मभूतस्य शोकाकाङ्क्षयोरनुपपन्नत्वात्तस्य स्वभावोऽनूद्यते न शोचति न काङ्क्षतीति । न हृष्यतीति वा पाठः । रमणीयं प्राप्य न प्रमोदते तस्य मिथ्यात्वेन निश्चयादित्यर्थः । सर्वेषु भूतेषु समः सुखं दुःखं वा आत्मौपम्येन सममेव पश्यतीत्यर्थः । नत्वात्मसमदर्शनमिह ग्राह्यं भक्त्या मामभिजानातीति तस्य वक्ष्यमाणत्वात् । य एवंभूतः स मद्विषयां भक्तिं 'आर्तो जिज्ञासुरर्थार्थी ज्ञानी च' इत्यत्रोक्तां चतुर्थीं ज्ञानलक्षणां 'तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्युक्तां परामनुत्तमां लभते प्राप्नोति ॥ ५४ ॥

प० टी०—तथाविधत्वस्य फलमाह—ब्रह्मभूत इति । ब्रह्मण्यवस्थितः प्रसन्नचितः सन् न शोचति । न चाप्राप्तं काङ्क्षति देहाभिमानाभावात् । अत एव सर्वेषु भूतेषु समो न केवलं तारतम्यवर्जितः, किं तु परामुत्कृष्टां मद्भक्तिं लभते सर्वभूतेषु मद्भावनया भजते ॥ ५४ ॥

श्री० टी०—ततः किमित्यत आह—ब्रह्मभूत इति । ब्रह्मणि स्थितमनस्कः लक्ष्मीं प्राप्तः प्रसन्नात्मा स्वत एव विषयेष्वप्रवृत्तमनाः न शोचति न काङ्क्षति । सर्वेषु भूतेषु समः परां भक्तिं लभते ॥ ५४ ॥

**भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥**
**ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ॥ ५५ ॥**

त० टी०—ततश्च "भक्तिरेवैनं वर्धयति, भक्तिरेवैनं दर्शयति, भक्तिवशः पुरुषो भक्तिरेव भूयसी" इति श्रुत्युक्तं भक्तेर्भगवद्दर्शनासाधारणकारणत्वं तद्वशीकरणत्वं चाह—भक्त्येति । ततस्तया भक्त्या यावान् यादृशगुणशक्तिविभूतिमानहं यश्च सच्चिदानन्दविग्रहः सर्वज्ञः सर्वकारणं सर्वान्तर्यामी देशकालवस्तुपरिच्छेदशून्यः सर्वव्यापकोऽपि सर्वदोषास्पृष्टः सकलचेतनाचेतनभिन्नाभिन्नस्वभावस्तं मां तत्त्वतः संशयविपर्ययराहित्येनाभिजानाति, साक्षादनुभवति । ततो मां तत्त्वतो ज्ञात्वा तदनन्तरं मयि विशते निरतिशयानन्दं मामनुभवन्निरतिशयानुरागेण सर्वदा मां परिचरन्नभिनिविष्टो मयि वर्तते, कदाचिन्मदृष्टयगोचरो न भवति । तद्भक्त्या वशीभूतोऽहमपि कदाचित्तद्दृष्टयगोचरो न भवामीत्यर्थः । "यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति । तस्याहं न प्रणश्यामि स च मे न प्रणश्यति" इत्युक्तरीत्या सर्वदा मद्दर्शनपरिचर्यया मदविनाभावेन मय्येव वर्तते । न च मत्तः कदाचिद्वियुज्यते इति भावः ॥५५॥

म० टी०—ततश्च भक्त्या निदिध्यासनात्मिकया ज्ञाननिष्ठया मामद्वितीयमात्मानमभिजानाति साक्षात्करोति । यावान् विभुर्नित्यश्च यश्च परिपूर्णसत्यज्ञानानन्दघनः सदा विध्वस्तसर्वोपाधिरखण्डैकरस एकस्तावन्तं चाभिजानाति । ततो मामेवं तत्त्वतो ज्ञात्वा अहमस्म्यखण्डानन्दाद्वितीयं ब्रह्मेति साक्षात्कृत्य विशते अज्ञानतत्कार्यनिवृत्तौ सर्वोपाधिशून्यतया मद्रूप एव भवति । तदनन्तरं बलवत्प्रारब्धकर्मभोगेन(ण) देहपातानन्तरं नतु ज्ञानानन्तरमेव । क्त्वाप्रत्ययेनैव तल्लाभे तदनन्तरमित्यस्य वैय्यर्थ्यापातात् । "तस्मात्तस्य तावदेव चिरं यावन्न विमोक्षेऽथ संपत्स्ये" इति श्रुत्यर्थ एवात्र दर्शितो भगवता । यद्यपि ज्ञानेनाज्ञानं निवर्तितमेव दीपेनेव तमस्तस्य तद्विरोधिस्वभावत्वात्, तथापि तदुपादेयमहंकारदेहादि निरुपादानमेव यावत्प्रारब्धकर्मभोगमनुवर्तते दृष्टत्वादेव । नहि दृष्टेऽनुपपन्नं नाम। तार्किकैरपि हि समवायिकारणनाशाद्द्रव्यनाशमङ्गीकुर्वद्भिर्निरुपादानं द्रव्यं क्षणमात्रं तिष्ठतीत्यङ्गीकृतम् । नित्यपरमाणुसमवेतद्व्यणुकनाशे त्वसमवायिकारणनाशादेव द्रव्यनाशः । समवायिनिरूपितकारणनाशत्वमुभयोरनुगतमिति नाननुगमः । ये त्वसमवायिकारणनाशमेव सर्वत्र कार्यद्रव्यनाशकमिच्छन्ति तेषामाश्रयनाशस्थले क्षणद्वयमनुपादानं कार्यं तिष्ठति । एवं च तत्रैव प्रतिबन्धकसंनिपाते बहुकालावस्थितिः केन वार्यते । प्रारब्धकर्मणश्च प्रतिबन्धकत्वं श्रुतिसिद्धं, अन्तःकरणदेहाद्यवस्थित्यन्यथानुपपत्तिसिद्धं च । एवं शिष्यसेवकाद्यदृष्टमपि तत्प्रतिबन्धकं तदभावमपेक्ष्य च पूर्वसिद्ध एवाज्ञाननाशस्तत्कार्यमन्तःकरणादिकं नाशयतीति न पुनर्ज्ञानापेक्षा । तदुक्तम् 'तीर्थे श्वपचगृहे वा नष्टस्मृतिरपि परित्यजन्देहम् । ज्ञानसमकालमुक्तः कैवल्यं याति हतशोकः ॥' इति । न जानामीत्यादिप्रत्ययस्तु तस्य निवृत्ताज्ञानस्याप्यज्ञाननाशजनितादनुपादानात् साक्षादात्माश्रयादेवाज्ञानसंस्काराात्तत्त्वज्ञानसंस्कारनिवर्त्यादन्तःकरणस्थित्यवधेरिति विवरणकृतः । अहं ब्रह्मास्मीतिचरमसाक्षात्कारानन्तरमहं ब्रह्म न भवामि न जानामीत्यादिप्रत्ययो नास्त्येव । यदि परं घटं न जानामीत्यादिप्रत्ययः स्यात्तदुपपादनाय चेयं संस्कार-

कल्पनेति नानुपपन्नम् । अज्ञानलेशपदेनाप्ययमेव संस्कारो विवक्षितः । नहि सावयवमज्ञानं, येन कियन्नश्यति कियत्तिष्ठतीति वाच्यं, अनिर्वचनीयत्वात् । एकदेशाभ्युपगमे तु तन्निवृत्त्यर्थं पुनश्चरमं ज्ञानमपेक्षितमेव । तच्च मृतिकाले दुर्घटमिति तत्त्वज्ञानसंस्कारनाश्यता तस्याभ्युपेया । ततश्च संस्कारपक्षान्न कोऽपि विशेष इति पूर्वोक्तैव कल्पना श्रेयसी । ईदृशजीवन्मुक्त्यपेक्षया च प्राग्भगवतोक्तम् 'उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इति, स्थितप्रज्ञलक्षणानि च व्याख्यातानि । तस्मात्साधूक्तं विशते तदनन्तरमिति ॥ ५५ ॥

शं० टी०– एवं चिरकालं नित्यनिरन्तरसमभ्यस्तज्ञानयोगेन विपरीतप्रत्ययहेतूनामनाद्यविद्यावासनानां तत्कार्याणां च विपरीतप्रत्ययानां निःशेषसंक्षये सति विकल्पं सर्वं परित्यज्य सर्वत्र समदर्शनलक्षणं ज्ञानं प्राप्तवतो ब्रह्मविद्यतेस्तज्ज्ञानोत्पन्नं वस्तुतत्त्वनिश्चयं प्रतिपादयंस्तादृङ्निश्चयवतो ब्रह्मप्राप्तिं दर्शयति–भक्त्येति । भक्त्या बहिरन्तः सर्वत्र वस्तुमात्रावगाहिन्या निर्विकल्पया प्रत्यग्दृष्ट्या सम्यगधिष्ठानसंदर्शनजन्यज्ञानेन ब्रह्मविद्यतिर्मां परं ब्रह्माभिजानात्यभितः सर्वत आभिमुख्येन विकल्पराहित्यं यथा तथा साक्षात्कृतस्य वस्तुनस्तत्त्वं विनिश्चिनोति, सामान्यतो विशेषतश्चाधिगतस्य वस्तुनस्तत्त्वनिर्धारणं करोतीत्यर्थः । निर्धारणप्रकारमेवाह–यावानिति । अव्यक्तमहदादितत्कार्योपाधियोगादहं यावान् मायाकल्पितोपाधिभेदैरहं यादृशोऽस्मि समष्टिस्थूलसूक्ष्मकारणोपाधिभिर्विराड् हिरण्यगर्भ ईश्वर इति, व्यष्टिस्थूलसूक्ष्मकारणोपाधिभिर्विश्वस्तैजसः प्राज्ञ इति, गुणत्रयोपाधितो ब्रह्मा विष्णुरीश्वर इत्यवान्तरवृत्तिभिर्देवास्तिर्यञ्चो मनुष्या इत्युपाधिभेदैर्यादृग्रूपः प्रतीतोऽस्मीत्यर्थः । स्वयमविकृतमेव सदधिष्ठानमारोपितनामरूपाण्यनुकरोति, यथा रज्जुरविकारिण्येवारोपितसर्पशिरःपुच्छाद्याकारेण भाति ग्रहीतुर्ग्रहणदोषेण, मरुरेवारोपितजलप्रवाहतरङ्गादिरूपेण प्रतीयते, तथाऽधिष्ठानभूतमविक्रियमेव परं ब्रह्माप्यारोपितनामरूपाण्यनुकुर्वन्नानेव प्रतीयते । तथैव श्रूयते स्मर्यते च–"इन्द्रो मायाभिः पुरुरूप ईयते । एकः सन् बहुधा विचचार । एक एव हि भूतात्मा भूते भूते व्यवस्थितः । स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा भवति नवधा चैव पुनश्चैकादशः स्मृतः' इति, 'बहुरूप इवाभाति मायया बहुरूपया । नित्यः सर्वगतोऽप्यात्मा कूटस्थो दोषवर्जितः ॥ एकः सन् भिद्यते भ्रान्त्या मायया न तु तत्त्वतः' इति । य एवं मायापरिकल्पितोपाधिविशेषैः परिच्छिन्न इव धर्मीव कर्मीव गुणीव प्रतीतः स एवाहं श्रुत्यनुगतयुक्त्या समाहितबुद्ध्या च परिशील्यमान उपाधितद्धर्मतत्कर्मतद्गुणतद्विकाररहितोऽपरिच्छिन्नो नित्यो निर्विशेषो मुक्तोपसृप्य एक एवाविक्रियोऽस्मीत्याह–यश्चास्मि तत्त्वत इति । "अथात आदेशो नेति नेति । यत्र नान्यत्पश्यति । यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुःश्रोत्रम् । अस्थूलमनण्वह्रस्वमदीर्घम्" इत्यादिश्रुत्यनुकूलैर्नेतिनेतिवाक्यैरारोपितनामरूपादेरपवादे क्रियमाणे तन्निषेधावधिभूतं युक्तिशतैरप्यनपोह्यमपवदितुरात्मभूतमहेयमनुपादेयं निर्विशेषं निराभासं निराधारं निराकारं निरवद्यं निरञ्जनं निष्कलं निष्क्रियं शान्तमनन्तमनाद्यन्तं नित्यशुद्धबुद्धमुक्तस्वभावमखण्डानन्दैकरसं परं तत्त्वं यदस्ति, ततः पारमार्थिकस्वरूपेण कालत्रयेऽपि प्रमाणान्तराबाधितसत्तावत्तया स्थितो नित्यः शाश्वतो योऽहमेक एवाद्वितीयोऽस्मि सच्चिदानन्दैकलक्षणस्तं मां परं ब्रह्माभिजानाति "सर्वात्मा यं हि सर्वं नैवोतोऽद्वयो ह्ययमात्मैकल एव । नह्ययमोतो नानुज्ञाताऽसङ्गत्वादविकारित्वादसत्त्वादन्यस्य । एकमेवाद्वितीयं ब्रह्म । नेह नानास्ति किंचन । सर्वं यदयमात्मा" । "भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं विविधं ब्रह्ममेतत् । ज्ञानं विशुद्धं विमलं विशोकमशेषतो भाति निरस्तसङ्गम्" इति । "इदं सर्वं ब्रह्ममात्रं ब्रह्मण्यारोपितत्वाच्छुक्तिरजतवत्" इत्यादिश्रुतिस्मृतियुक्तिभिः समाहितबुद्ध्या च सम्यक्परिशील्य भ्रमकृतं विकल्पं परित्यज्य सर्वमिदमहं च ब्रह्मैवेत्यभिजानाति विनिश्चिनोतीत्यर्थः । श्रुतियुक्तिगुरूक्तिस्वानुभवैः पूर्वं यदनेकधा भातं तत्केवलमविक्रियं निर्विशेषं परं ब्रह्मैवेति सामान्यविशेषाभ्यां सविकल्पनिर्विकल्पकाभ्यामवगतस्वरूपं वस्त्वेकमेव निर्विशेषं नान्यदस्तीति तत्त्वतः परमार्थस्वरूपेण चिन्मात्रकेण मां परं

ब्रह्मैवं प्रत्यग्दृष्ट्या सर्वतः सम्यग्विषयीकृतं सदेकरसतया ज्ञात्वाऽवधार्य रज्जोः स्वरूपसंदर्शनेन यत्सर्पात्मना भातं तद्रज्जुरेव केवलेति करगृहीताया रज्जोः कैवल्यमिव । 'ब्रह्मैवेदममृतं पुरस्ताद्ब्रह्मपश्चाद्ब्रह्म दक्षिणतश्चोत्तरेण अधश्चोर्ध्वं प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठम्' इत्येवं दृष्ट्या ज्ञाननिष्ठापरिपक्वया 'सर्वं ब्रह्मैव केवलम्' इति ब्रह्मणः कैवल्यं निश्चित्य सर्वमिदमहं च ब्रह्मैवेति सर्वस्य च स्वस्य च ब्रह्ममात्रत्वं सम्यगनुभूयेत्यर्थः । 'ज्ञानादेव तु कैवल्यम्' 'नान्यः पन्था विद्यतेऽयनाय' इत्युक्तरीत्या ज्ञानादेव मुक्तिर्नान्यथा इति श्रुत्यनुगतं स्वनिश्चयमाह—तत इति । तदनन्तरं—यदैवं विज्ञानं वस्तु तत्त्वनिश्चयात्मकं निरूढमप्रतिबद्धं जायते—तदनन्तरमेव प्रबोधस्थूलदेहप्राप्त्योरिव ब्रह्मवेदनतत्प्राप्त्योरन्तरालाभावात्सम्यग्ज्ञानोत्तरक्षण एव ब्रह्मनिष्ठो यतिस्ततस्तेनैव ब्रह्मात्मैकत्वविज्ञानेन विशते, अहं ब्रह्मास्मीति स्वात्मना साक्षात्कृते निर्विशेषे चिदेकरसे परे ब्रह्मण्यानन्दात्मन्येतदेवाहमस्मीत्यहंबुद्धिं प्रवेशयति । स्थूले स्वस्वरूपे निद्रयाऽन्यथाभावं गतः पुरुषः प्रबोधेन तन्निवृत्तौ सत्यां तत्राहंबुद्धिं यथा करोति तथा स्वाज्ञानेन विपरीतभावं गतो विद्वान् विवेकविज्ञानेन तन्निवृत्तौ सत्यां स्वात्मन्येव ब्रह्मणि एतदेवाहमिति तत्राहंबुद्धिं करोति, न तु देवदत्तो गृह इव ब्रह्मणि प्रविशति, ब्रह्मणः परिपूर्णत्वान्निरवयवत्वेन संकोचव्याकोचशून्यत्वादाप्तुः स्वरूपत्वान्नित्याप्तत्वाच्च प्रवेश्यत्वायोगात् । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते । ब्रह्मैव सन् ब्रह्माप्येति । ब्रह्म वेद ब्रह्मैव भवति । तमेवं विद्वानमृत इह भवति" इति विदुष उत्क्रमणराहित्येन ब्रह्मात्मनाऽवस्थितस्येहैव ब्रह्मप्राप्तेः श्रूयमाणत्वाद्गन्तृत्वगन्तव्यगमनक्रिया न संभवन्ति, किंतु 'एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते' इति श्रवणाददृश्यत्वादिलक्षणलक्षिते प्रत्यस्तमिताशेषविशेषे अजरेऽमृतेऽभयेऽपूर्वेऽनपरेऽनन्तरेऽबाह्ये नित्यानन्दाखण्डैकरसेऽद्वितीये परे ब्रह्मण्यहंबुद्धिं प्रतिष्ठापयति श्रुत्याचार्येश्वरात्मप्रसादसंपत्त्या कृतार्थो ब्रह्मवित्तमो यतिः सविशेषं परित्यज्य निर्विशेषब्रह्मात्मना सुखं तिष्ठतीत्यर्थः ॥५५॥

**श्री० टी०**—ततश्च—भक्त्या मामिति । तया च परया भक्त्या तत्त्वतो मामभिजानाति । कथंभूतम्? यावान् सर्वव्यापी यश्चास्मि सच्चिदानन्दघनस्तथाभूतम् । ततश्च मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं तस्य ज्ञानस्याप्युपरमे सति मां विशते परमानन्दरूपो भवतीत्यर्थः ॥ ५५ ॥

**स० टी०**—निदिध्यासनरूपिण्या भक्त्याऽऽत्मज्ञाननिष्ठया ॥ मामद्वितीयमात्मानं सम्यक्साक्षात्करोति सः ॥ १ ॥ यावान्विभुश्च नित्यश्च यश्चानन्दघनोऽद्वयः ॥ सत्यज्ञानवपुः सर्वोपाधिशून्यः सदाऽमलः ॥ २ ॥ अखण्डैकरसः शुद्धस्तावन्तं मां च तत्त्वतः ॥ अभिजानाति सर्वज्ञस्ततो मां स यथार्थतः ॥ ३ ॥ ज्ञात्वाहमस्म्यखण्डैकानन्दब्रह्मेति सद्धिया ॥ साक्षात्कृत्य निवृत्त्यात्मा ज्ञानस्य सकलस्य च ॥ ४ ॥ सर्वोपाधिविनिर्मुक्तो मद्रूपः केवलो भवेत् ॥ प्रारब्धकर्मभोगेन देहपातादनन्तरम् ॥ ५ ॥ कैवल्याख्यं परं धाम मामेव विशते मुनिः ॥ यद्यपि ज्ञानसंप्राप्तिसमये भगवद्वपुः ॥ ६ ॥ ज्ञानी तथापि प्रारब्धकर्माभासेन तद्वपुः ॥ नराकारतया भाति व्यवहारेऽज्ञदेहवत् ॥ ७ ॥ प्रारब्धकर्मणि क्षीणे त्यक्त्वा मायामयं वपुः ॥ चिदानन्दपदे स्वात्मतत्त्वे तद्रूप एव सन् ॥ ८ ॥ तिष्ठतीति हरेरेवं तात्पर्यमिह गम्यते ॥ यद्यपि ब्रह्मबोधेनाज्ञानं सर्वं निवर्तितम् ॥ ९ ॥ दीपेनेव तमस्तस्य तद्विरोधिस्वभावतः ॥ तथापि तदुपादेयं देहादिब्रह्मवेदिनः ॥ १० ॥ निरुपादानमेवानुवर्तते निजकर्मणा ॥ दृष्टत्वादेव दृष्टे नानुपपन्नं मनागपि ॥ ११ ॥ तार्किकैरपि हेतोश्च विनाशात्समवायिनः ॥ निरुपादानकं द्रव्यं क्षणमात्रं हि तिष्ठति ॥ १२ ॥ इत्येवं स्वीकृतं तद्वदस्माकमपि संभवेत् ॥ तत्रापि कल्पनाऽनादितया योग्यः क्षणः किल ॥ १३ ॥ शरीरादिस्थितेरेवमिष्यतेऽतोऽप्यदोषता ॥ यैरप्यज्ञानलेशोऽत्र स्वीकृतस्तैरपि स्फुटम् ॥ १४ ॥ देहादिस्थितिसिद्ध्यर्थं निर्वाह्यं तत्कथंचन ॥ आभासमात्रदेहादावहंकारोऽपि तादृशः ॥ १५ ॥ नहि तेन विना तज्ज्ञदेहादि-

स्थितिसंभवः ॥ न वा तेनाप्यहंकाराभासेनात्मविदः क्षतिः ॥ १६ ॥ तदुक्तं जानकीनाथं राघवं प्रति सद्वचः ॥ वसिष्ठेनापि निर्वाणे पाषाणाख्यायिकास्थले ॥ १७ ॥ अहंभावं विना देहस्थितिस्तज्ज्ञाज्ञयोरिह ॥ आधेयस्य निराधारा न संस्थेहोपपद्यते ॥१८॥ अहंभावपिशाचोऽयमज्ञानशिशुना विना ॥ अविद्यमान एवान्तःकल्पितस्तेन सुस्थितः ॥ १९ ॥ अज्ञानमपि नास्त्येव प्रेक्षितं यन्न लभ्यते ॥ विचारिणा दीपवता स्वरूपं तमसो यथा ॥ २० ॥ किल सत्यामविद्यायामज्ञतोदेति शाश्वती ॥ बुद्धिमोहात्मिका यक्षी निर्देहैव यथा निशि ॥ २१ ॥ एवं स्थिते कुतः सर्गः कुतो विद्या क चाज्ञता ॥ ब्रह्म शान्तं घनं सर्वं काहंकारादयः स्थिताः ॥ २२ ॥ अहंभावस्य संशान्तिरेषाऽसौ कथिता तव ॥ अहंभावः परिज्ञातः पिशाच इव शाम्यति ॥ २३ ॥ चित्राग्निदाहो विज्ञातो यथा दाह्येषु निष्फलः ॥ तथाहंभावसर्गादि ज्ञातं निष्फलतामियात् ॥ २४ ॥ एवं तत्त्वविदां दृष्ट्या नास्त्यहंकार एव च ॥ अतो नित्यविमुक्तः सन्मुच्यते संनिवर्तते ॥ २५ ॥ इत्येवं श्रीहरेर्भावो गम्यते वेदवाक्यतः ॥ २६ ॥ ५५ ॥

भा० टी०—ततश्च—भक्त्येति । ज्ञानलक्षणया भक्त्या मामभिजानाति यावानहमुपाधिकृतविस्तारभेदो यश्चास्मि विध्वस्तसर्वोपाधिभेद उत्तमः पुरुष आकाशवदसङ्गो निर्विकारस्तं मामद्वैतचैतन्यमात्रैकरसमजमजरमभयमनिधनं भक्त्या तत्त्वतोऽभिजानाति, ततो मामेवं तत्त्वतो ज्ञात्वा तदनन्तरं मामेव विशते प्राप्नोति । अत्र ज्ञानप्रवेशक्रिये भिन्ने न विवक्षिते, भेदोक्तिस्त्वौपचारिकी बोध्या । ब्रह्मप्राप्तिस्तु ज्ञानान्नातिरिच्यते, क्षेत्रज्ञं चापि मां विद्धीति ब्रह्मात्मनोरभेदस्योक्तत्वात् । भक्त्या निदिध्यासनात्मिकया मामद्वितीयमात्मानमभिजानाति साक्षात्करोति । तदनन्तरं बलवत्प्रारब्धकर्मभोगेन देहपातानन्तरं नतु ज्ञानानन्तरमेव । क्त्वाप्रत्ययेनैव तल्लाभे तदनन्तरमित्यस्य वैय्यर्थ्यापातादिति केचित् । इतरे तु विशत्यात्मानि स्वसिद्धयेऽनिर्वचनीयसंबन्धेनेति विशत्सर्वानर्थमूलमज्ञानं तस्मै तत्साविलासमुन्मूलयितुं ज्ञात्वाऽपरोक्षीकृत्य तदनन्तरम्—अन्तरं भेदस्तच्छून्यं शाश्वतं पदमव्ययमाप्नोतीत्युत्तरश्लोकस्थानुषङ्गेन व्याख्येयमिति वदन्ति । तत्तत्त्वतो याथात्म्येन ज्ञात्वा साक्षात्कृत्य ततो व्याप्तः ब्रह्मभावं गतो भवतीत्यर्थः । "ब्रह्म वेद ब्रह्मैव भवति" इति श्रुतेः । यद्वा तत इति कारणब्रह्मभावापत्तिः सार्वात्म्यरूपा प्रथममुक्ता । अनन्तरं कारणभावापत्तेरनुपदमेव तद्ब्रह्म तत्पदाभिधेयं शुद्धं ब्रह्म विशते दर्पणाद्यपाये प्रतिबिम्बो बिम्बमिव प्रविशतीत्यर्थ इत्यन्ये । तदेतद् व्याख्यानत्रयमपि सर्वज्ञैराचार्यैः ध्यानयोगपरो नित्यमित्यत्र निदिध्यासनस्योक्तत्वात्, भक्तिं लभत इत्यस्य परामितिविशेषणस्य च वैय्यर्थ्यं तच्छब्देनाप्रस्तुतपरामर्शस्यानुषङ्गाध्याहारादिक्लेशव्याप्तायाः कुकल्पनायाश्चानौचित्यमभिप्रेत्य सक्तत्वादुपेक्ष्यम् । तथाचायमर्थः "आचार्यवान्पुरुषो वेद" इतिश्रुत्या शास्त्रानुसार्याचार्योपदेशेन ज्ञानोत्पत्तिः, तस्य च परिपाके असंभावनादिप्रध्वंसे हेतुभूतमुपदेशस्यैव सहकारिकारणं बुद्धिविशुद्धत्वादि अमानित्वादिगणं चापेक्ष्य तस्मादेवोपदेशाज्जनितस्य क्षेत्रज्ञपरात्मैकत्वज्ञानस्य कारकभेदबुद्धिनिबन्धनसर्वकर्मसंन्याससहितस्य स्वात्मानुभवरूपेण स्वात्मन्येव सर्वकल्पनारहितस्य यदवस्थानं सा ज्ञानस्य परा निष्ठेत्युच्यते । सेयं ज्ञाननिष्ठा आर्तादिभक्तित्रयापेक्षया परा चतुर्थी भक्तिरित्युक्त्वा तया परया भक्त्या भगवन्तं तत्त्वतोऽभिजानाति, यदनन्तरमेवेश्वरक्षेत्रज्ञभेदबुद्धिरशेषं ततो निवर्तते । क्त्वाप्रत्ययेनोक्तमानन्तर्यमव्यवहितं, न तु किंचिद्व्यवधानयुक्तमिति बोधनायानन्तरमित्युक्तमिति ॥ ५५ ॥

प० टी०—ततश्च—भक्त्येति । तया सर्वात्मकत्वभावनरूपया भक्त्याऽहं यावान् विश्वव्यापी यश्च परमानन्दस्वरूप एवंभूतं मामभितः स्थावरजङ्गमेष्वनुवर्तमानं जानाति, ततश्च मां तत्त्वतश्चित्संविद्रूपेण ज्ञात्वा तदनन्तरं तत्त्वज्ञानोपरमे मां विशते मदाकारो भवति ॥ ५५ ॥

रा० टी०—ततश्च किमित्यत आह—भक्त्येति । अहं यावान्देशकालगुणैर्यावान्व्याप्तोऽस्मि । यश्च

यन्नामा यद्रूपश्चास्मि । तादृशं मां प्रागुक्तया परमभक्त्या तत्त्वतः अभि स्वयोग्यतानुसारेण जानाति । तेनापि किमित्यत आह—तत इति । भक्तिबलात्तत्त्वतो मां ज्ञात्वा तदनन्तरं मां विशते मदनुप्रविष्टो भवति मुक्तो भवतीत्यर्थः ॥ ५५ ॥

**सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः ॥**
**मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम् ॥ ५६ ॥**

त० टी०—एवं वर्णाश्रमोचितनियतकर्मणां फलकर्तृत्वाभिसंधानरहितानां नैष्कर्म्यसिद्धिप्राप्तिद्वारेण भगवत्प्राप्तिफलकत्वमुक्तम् । इदानीं नैष्कर्म्यसिद्ध्यभावे कर्मकर्तुः किं फलं स्यादित्यपेक्षायामाह—सर्वकर्माणीति । सर्वकर्माणि वैदिकलौकिकानि विधिहीनान्यपि सदा कुर्वाणोऽनुतिष्ठन् मद्व्यपाश्रयः अहं सर्वेश्वर एव व्यपाश्रयः समाश्रयणीयो न त्वन्यो देवः फलं वा यस्य स मत्प्रसादात् शाश्वतमनादिमव्ययं परिणामशून्यं नित्यं पदं मद्धाम प्राप्नोति ॥ ५६ ॥

म० टी०—ननु योऽनात्मज्ञोऽशुद्धान्तःकरणः सोऽन्तःकरणशुद्धिपर्यन्तं सहजं कर्म न त्यजेत् । यस्तु शुद्धान्तःकरणः स नैष्कर्म्यसिद्धिं संन्यासेनाधिगच्छतीत्युक्तम् । संन्यासश्च ब्राह्मणेनैव कर्तव्यो न क्षत्रियवैश्याभ्यामिति प्रागुक्तं भगवता 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः' इत्यत्र । तत्र शुद्धान्तःकरणेन क्षत्रियादिना किं कर्माण्यनुष्ठेयानि किंवा सर्वकर्मसंन्यासः कर्तव्यः ? नाद्यः—'आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ॥' इत्यादिना योगमन्तःकरणशुद्धिमारूढस्य कर्मानुष्ठाननिषेधात् । न द्वितीयः । 'स्वधर्मे निधनं श्रेयः परधर्मो भयावहः' इत्यादिना ब्राह्मणधर्मस्य सर्वकर्मसंन्यासस्य क्षत्रियादिकं प्रति निषेधात् । नच कर्मानुष्ठानकर्मत्यागयोरन्यतरमन्तरेण तृतीयः प्रकारोऽस्ति । तस्मादुभयोरपि प्रतिषिद्धत्वेन गत्यन्तराभावेन चावश्यकर्तव्ये प्रतिषेधातिक्रमे कर्मत्याग एव श्रेयान् बन्धहेतुपरित्यागेन मोक्षसाधनपौष्कल्यात्, न तु कर्माण्यनुष्ठेयानि चित्तविक्षेपहेतुत्वेन मोक्षसाधनज्ञानप्रतिबन्धकत्वादित्यभिप्रायमर्जुनस्यालक्ष्याह भगवान्—सर्वेति । यः पूर्वोक्तैः कर्मभिः शुद्धान्तःकरणः सोऽवश्यं भगवदेकशरणः भगवदेकशरणतापर्यन्तत्वात् अन्तःकरणशुद्धेः । एतादृशश्चेत् ब्राह्मणः संन्यासप्रतिबन्धरहितः सर्वकर्माणि संन्यस्यतु नाम । संसारविमोक्षस्तु तस्य भगवदेकशरणस्य भगवत्प्रसादादेव । एतादृशश्चेत् क्षत्रियादिः संन्यासानधिकारी स करोतु नाम कर्माणि, किंतु मद्व्यपाश्रयः अहं भगवान् वासुदेव एव व्यपाश्रयः शरणं यस्य स मदेकशरणो मय्यर्पितसर्वात्मभावः संन्यासानधिकारात् सर्वकर्माणि सर्वाणि कर्माणि वर्णाश्रमधर्मरूपाणि लौकिकानि प्रतिषिद्धानि वा सदा कुर्वाणो मत्प्रसादान्ममेश्वरस्यानुग्रहात् अवाप्नोति हिरण्यगर्भवन्मद्विज्ञानोत्पत्त्या शाश्वतं नित्यं पदं वैष्णवमव्ययमपरिणामि । एतादृशो भगवदेकशरणः करोत्येव न प्रतिषिद्धानि कर्माणि, यदि कुर्यात्तथापि मत्प्रसादात्प्रत्यवायानुत्पत्त्या मद्विज्ञानेन मोक्षभाग्भवतीति भगवदेकशरणतास्तुत्यर्थं सर्वकर्माणि सर्वदा कुर्वाणोऽपीत्यनूद्यते ॥ ५६ ॥

शं० टी०—स्वकर्मणा तमभ्यर्च्येत्यारभ्य विशते तदनन्तरमित्यन्तेन ग्रन्थेन मुमुक्षोरीश्वरार्पणबुद्ध्या समनुष्ठितकर्मभिरेव सत्त्वशुद्धिः, शुद्धात्मन एव ज्ञानं, ज्ञानवत एव मोक्ष इति ज्ञानकर्मणोः साध्यसाधनभावं सर्वशास्त्रप्रसिद्धं निर्धारयितुं कर्मभिश्चित्तशुद्धिं शुद्धात्मनो ज्ञानं तस्य फलं मोक्षं च क्रमेण प्रतिपाद्याधुना त्वारुरुक्षोर्गृहिणश्चारूढस्य च यतेश्चोभयोर्मोक्षैककामनयोर्नित्यं नियमेन कर्तव्यार्थनिर्णयायोत्तरग्रन्थ आरभ्यते । तत्रादौ ज्ञानं मोक्षफलकं चित्तशुद्धिं विना न सिध्यति, चित्तशुद्धिश्च स्वकर्मभिरेवेश्वरार्पणबुद्ध्या कृतैर्न तु कामनया, आरुरुक्षोरीश्वरप्रीत्यै कर्मैवावश्यं कर्तव्यमिति बोधयितुं मत्प्रीत्यै कर्माणि कुर्वाणो

मत्प्रसादान्मुक्तिं प्राप्नोतीत्याह—**सर्वेति** । मद्व्यपाश्रयः योऽहम् "अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ" इत्युक्तलक्षणः सर्वभूतः सर्वात्मकः परमेश्वरः स एव व्यपाश्रयो भवमुक्त्यै स्वकर्मभिराराधनीयो यस्य स मद्व्यपाश्रयः स्वाराध्येषु देवेष्वग्न्यादिषु योगे यागीयेषु चरुपुरोडाशस्रुगादिषु च सर्वत्र मद्भावनायुक्तो भूत्वा मुमुक्षुः सर्वकर्माणि सर्वाणि श्रौतानि स्मार्तानि च नित्यानि नैमित्तिकानि च कर्माणि विध्युक्तानि मत्प्रीत्यै श्रद्धया भक्त्या च कुर्वाणः सन् मत्प्रसादान्मम भक्त्याऽनेकजन्मसु समनुष्ठितकर्मभिः संतोषितस्य परमेश्वरस्य प्रसादोऽनुग्रहस्तस्मात्सत्त्वशुद्धिं ज्ञानं च लब्ध्वा अव्ययं वृद्धिक्षयवर्जितं न्यूनाधिकभाववर्जितं सदैकरूपं शाश्वतं नित्यं पदं मोक्षाख्यं प्राप्नोति कर्मभिः संतुष्टेश्वरानुग्रहान्मुक्तिं विन्दतीत्यर्थः ॥ ५६ ॥

श्री० टी०—स्वकर्मभिः परमेश्वराराधनादुक्तं मोक्षप्रकारमुपसंहरति—**सर्वकर्माणीति** । सर्वकर्माणि नित्यनैमित्तिकानि काम्यानि च कर्माणि पूर्वोक्तक्रमेण सर्वदा कुर्वाणः सन् मद्व्यपाश्रयः अहमेव व्यपाश्रय आश्रयणीयो न तु स्वर्गादिफलं यस्य सः मत्प्रसादाच्छाश्वतमनादि अव्ययं नित्यं सर्वोत्कृष्टं वैष्णवं पदं प्राप्नोति ॥५६॥

स० टी०—अज्ञो धीशुद्धिपर्यन्तं सहजं कर्म न त्यजेत् ॥ शुद्धान्तःकरणो यस्तु नैष्कर्म्यं सोऽधिगच्छति ॥ १ ॥ संन्यासेनेति पूर्वोक्तं संन्यासो ब्राह्मणेन वै ॥ कर्तव्यो नान्यवर्णेनेत्युक्तं भगवता पुरा ॥ २ ॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः ॥ चित्तशुद्धिमतस्तत्र किं कर्मकरणं वरम् ॥ ३ ॥ नृपादेर्वाथ संन्यास इत्यत्राह जगत्पतिः ॥ पूर्वोक्तैः कर्मभिर्यस्तु शुद्धान्तःकरणः पुमान् ॥ ४ ॥ सोऽवश्यं भगवत्कृष्णपादैकशरणो भवेत् ॥ श्रीमद्भगवतः पादसरोजे भक्तिरुत्तमा ॥ ५ ॥ चित्तशुद्धेः फलं श्रेष्ठं ततो ज्ञानाद्विमुक्तता ॥ ईदृशो ब्राह्मणश्चेत्स्यात्परवैराग्यसंयुतः ॥ ६ ॥ स सर्वं कर्म संन्यस्य भगवच्छरणं व्रजेत् ॥ तस्य संसारतो मोक्षः स्याद्भगवत्प्रसादतः ॥ ७ ॥ ईदृशः क्षत्रियादिश्चेत्संन्यासेऽधिकृतो न सः ॥ स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ८ ॥ इति ब्राह्मणधर्मस्य संन्यासस्य च कर्मणाम् ॥ क्षत्रियादिं प्रति श्रीमद्विष्णुनैव निषेधतः ॥ ९ ॥ संन्यासानधिकारात्स कुर्वाणः सन्सदैव च ॥ सर्वकर्माणि वर्णादिधर्मरूपाणि मत्परः ॥ १० ॥ भगवान्वासुदेवोऽहं कृष्ण एव व्यपाश्रयः ॥ शरणं यस्य नित्यं स मदेकशरणो महान् ॥ ११ ॥ मय्येवार्पितसर्वात्मभावोऽसौ मदनुग्रहात् ॥ हिरण्यगर्भवत्सम्यङ्मद्विज्ञानजनेस्ततः ॥ १२ ॥ नित्यकूटस्थं स्वं ज्योतिःपदं प्राप्नोति वैष्णवम् ॥ १३ ॥ ५६ ॥

भा० टी०—एवं शुद्धान्तःकरणस्य संन्यासाधिकारिणो ब्रह्मप्राप्तिक्रममभिधायानात्मज्ञस्याशुद्धान्तःकरणस्य संन्यासानधिकारिणो ब्रह्मप्राप्तिसाधनं भगवद्भक्तियोगं तत्र तत्र प्रतिपादितं शास्त्रार्थोपसंहारप्रकरणे शास्त्रार्थनिश्चयदार्ढ्याय स्तौति—**सर्वेति** । सर्वाणि नित्यनैमित्तिकादीनि प्रतिषिद्धान्यपि सदा कुर्वाणोऽनुतिष्ठन्नपि मद्व्यपाश्रयोऽहं वासुदेव ईश्वरो व्यपाश्रय आश्रयणीयो यस्य स मद्व्यपाश्रयो मय्यर्पितसर्वात्मभावः मत्प्रसादात् ममेश्वरस्य प्रसादात् शाश्वतं नित्यमव्ययमपक्षयशून्यं पदं वैष्णवमवाप्नोति । निषिद्धान्यप्याचरन् शाश्वतं पदमव्ययमवाप्नोतीत्युक्त्या पापस्यापि मोक्षफलहेतुत्वं स्यादित्याशङ्कानिरासाय मद्व्यपाश्रयः मत्प्रसादादित्युक्तम् । तथाच येन भक्तियोगेन प्रसादितादीश्वरात्सर्वकर्माण्यनुतिष्ठतोऽपि वैष्णवपदप्राप्तिस्तस्य माहात्म्यं किं वक्तव्यमिति भावः ॥ ५६ ॥

प० टी०—अथ बुद्ध्या विशुद्धयेत्याद्युक्तमोक्षप्रकारस्यातिप्रयाससाध्यत्वात्सुगमं प्रकारमाह—**सर्वकर्मेति** । सदा निरन्तरं मद्व्यपाश्रयः, अहमेवाश्रय आश्रयणीयो नतु स्वर्गादिफलं यस्य स सर्वकर्माणि नित्यनैमित्तिकादीनि कुर्वाणोऽपि सन् मत्प्रसादान्नित्यं सर्वोत्कृष्टं च पदं स्थानमवाप्नोति । श्रुतिरपि ऋक्संहितासु—"अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये यं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम्" इति । भाष्यम्—अहमेव स्वयमिदं ब्रह्माख्यं वस्तु वदामि, इदं ब्रह्म स्वयमेवास्मीति वदा-

मीत्यर्थः । देवेभिर्देवैरिन्द्रादिभिर्जुष्टं सेवितम् । उतापि मानुषेभिर्मनुष्यैः सेवितम् । अथ तदेव प्रकटयन्नाह—ईदृग्वस्त्वात्मकोऽहं स्वां मायामधिष्ठाय धृतमानुषवेषा(?)सती यं कामये यं पुरुषं रक्षितुमहं वाञ्छामि तं पुरुषमुग्रं कृणोमि सर्वेभ्योऽभ्यधिकं रुद्रं करोमि रुद्रपदवीं प्रापयामि । तमेव ब्रह्माणं स्रष्टारं करोमि तमेव ऋषिमतीन्द्रियद्रष्टारं करोमि । तमेव सुमेधां शोभनप्रज्ञं ज्ञानिनं करोमि ॥ ५६ ॥

रा० टी०—पुनरन्तरङ्गसाधनान्युक्त्वा शास्त्रार्थमुपसंहरति—**सर्वेति** । यद्वा यतः प्रवृत्तिर्भूतानामित्यत्र-स्वकर्मणा तमभ्यर्च्येत्युक्तं, तत्र कर्मकरणं विशिष्य फलं व्यनक्ति—**सर्वेति** । मद्व्यपाश्रयः मय्येव समर्पयन्नेव सर्वाणि विहितानि कर्माणि सदा कुर्वाणः मत्प्रसादाच्छाश्वतं पदमव्ययं मत्स्वरूपमवाप्नोति शाश्वतमव्ययमिति कूटस्थतयाऽऽद्यन्तहीनमित्यर्थः । अत्र अपिशब्दो नैकमपि कर्म अतदाश्रयेण कार्यमित्यर्थसूचनाय ॥ ५६ ॥

**चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः ॥**
**बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव ॥ ५७ ॥**

त० टी०—तस्मात्पूर्वोक्तप्रकारेण वैराग्यादि कर्तुं न शक्नोषि चेत्त्वमप्येवं कुर्वित्याह—**चेतसेति** । चेतसा मत्तन्त्रकर्तृत्वविचारेण सर्वाणि कर्माणि लौकिकानि वैदिकानि स्वभावप्राप्तानि च फलकर्तृत्वोद्देश्यदेवतासहितानि मयि संन्यस्य सम्यगर्प्य मत्परः अहमेव परः प्राप्यः प्रापकश्च यस्य सः बुद्धियोगं व्यवसायात्मिकबुद्ध्या सर्वसंबन्धमुपाश्रित्य सर्वात्मना मामेव सर्वश्रेयोहेतुं श्रेयोरूपं च निश्चित्य सततं मच्चित्तो भव इत्येवमनुसंधानं कुरुष्वेत्यर्थः ॥ ५७ ॥

म० टी०—यस्मान्मदेकशरणतामात्रं मोक्षसाधनं न कर्मानुष्ठानं कर्मसंन्यासो वा तस्मात् क्षत्रियस्त्वम्—**चेतसेति** । चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयीश्वरे संन्यस्य 'यत्करोषि यदश्नासि' इत्युक्तन्यायेन समर्प्य मत्परः अहं भगवान् वासुदेव एव परः प्रियतमो यस्य स मत्परः सन् बुद्धियोगं पूर्वोक्तसमत्वबुद्धिलक्षणं योगं बन्धहेतोरपि कर्मणो मोक्षहेतुत्वसंपादकमुपाश्रित्य अनन्यशरणतया स्वीकृत्य मच्चित्तः मयि भगवति वासुदेव एव चित्तं यस्य न राजनि कामिन्यादौ वा स मच्चित्तः सततं भव ॥ ५७ ॥

शं० टी०—तेषामेवानुकम्पार्थमहमज्ञानजं तमः नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वतेत्युक्तो बुद्धेरात्मतत्त्वप्रकाशनलक्षणो यो मत्प्रसादस्तेनैकलभ्यो मोक्षो यस्मात्तस्मात् मत्परो भवेत्याह—**चेतसेति** । कर्मणा संतुष्टेश्वरानुग्रहादेव मुक्तिरिति ज्ञानं चेतस्तेन चेतसा विवेकबुद्ध्या त्वं मत्परः अहमेव परः परमपुरुषार्थः प्राप्यं वस्त्विति बुद्धिर्यस्य स मत्परस्तीव्रमुमुक्षुः सन्नित्यर्थः । मत्प्रसादसिद्धये 'कर्ता भोक्ता जनार्दनः' इति न्यायेन सर्वकर्माणि श्रौतानि स्मार्तानि च सर्वाणि कर्माणि कृतानि मयि परमेश्वरे संन्यस्य कर्माणि कर्मफलानि च मह्यं समर्प्येत्यर्थः । बुद्धियोगं बुद्धेर्मय्येव योगः स्थितिस्तमुपाश्रित्य सततं मद्भजनपरो भूत्वेत्यर्थः । यद्वा 'भूतानि विष्णुर्भुवनानि विष्णुः' इतिन्यायेन सर्वत्र परमेश्वरत्वबुद्धिर्बुद्धियोगस्तं सततमाश्रित्य । यद्वा 'न्यायार्जितधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः' इति गृहिणोऽपि वेदान्तविचारस्य कर्तव्यत्वस्मरणात्कर्माणि कुर्वन्सन् बुद्धियोगः ज्ञानसिद्धिहेतुः श्रवणमननादिस्तं बुद्धियोगमुपाश्रित्य सर्वदा वेदान्तार्थविचारपरो भूत्वा सततं मच्चित्तः मय्येव सर्वमये परमात्मनि चित्तं यस्य स मच्चित्तः ज्ञानसिद्ध्यै तत्फलसिद्ध्यै च सर्वदा मच्छरणो भवेत्यर्थः ॥ ५७ ॥

श्री० टी०—यस्मादेवं तस्मात्—**चेतसेति** । सर्वकर्माणि चेतसा मयि संन्यस्य समर्प्य मत्परः अहमेव

१ अपाश्रित्येति पाठः ।

परः प्राप्यः पुरुषार्थो यस्य सः व्यवसायात्मिकया बुद्ध्या योगमाश्रित्य सततं कर्मानुष्ठानकालेऽपि 'ब्रह्मार्पणं ब्रह्महविः' इतिन्यायेन मय्येव चित्तं यस्य सः तथाभूतो भव ॥ ९७ ॥

स० टी०—यस्मान्मदेकशरणभावो मोक्षस्य साधनम् ॥ न कर्मकरणं नापि कर्मसंन्यास एव वा ॥१॥ तस्माद्विवेकबुद्ध्या त्वं दृष्टादृष्टार्थकान्यपि ॥ सर्वकर्माणि मय्याद्ये वासुदेवे समर्प्य च ॥ २ ॥ यत्करोषि यदश्नासीत्युक्तन्यायेन मत्परः ॥ भगवान्वासुदेवोऽहं यस्य प्रियतमः परः ॥ ३ ॥ स मत्परस्त्वं पूर्वोक्तं समताबुद्धिलक्षणम् ॥ योगं ह्यनन्यशरणतया स्वीकृत्य सर्वदा ॥ ४ ॥ वासुदेवे भगवति यस्य चित्तं मयीश्वरे ॥ नान्यत्र राजनि रुयादौ समाचित्तः सदा भव ॥ ५ ॥ हृत्खे रूढमनाविलं रसपदं हासप्रकाशोज्ज्वलं कारुण्यादिगुणौघशैत्यशरणं शान्त्यान्वितं छायया ॥ अज्ञानार्कजतापघर्मशमनं सज्ज्ञातकैरर्थितं ब्रह्मानन्दसुवर्षणोन्मुखमहं कृष्णाख्यमेघं श्रये ॥ ६ ॥ ९७ ॥

भा० टी०—यतो भक्तियोगस्यैवं माहात्म्यं तस्मान्मत्प्रसादार्थं भवता मदाराधने प्रयतितव्यमित्याह—चेतसेति । चेतसा विवेकबुद्ध्या सर्वकर्माणि दृष्टादृष्टार्थानि मयि संन्यस्य 'यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् । यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्' इत्युक्तन्यायेन समर्प्य मत्परोऽहं वासुदेव एव परः प्रकृष्टः प्राप्यो यस्य न तु स्वर्गादिः स मत्परः सन् बुद्धियोगं समाहितबुद्धित्वं सिद्ध्यसिद्धिजन्याभ्यां हर्षविषादाभ्यामक्षुभितबुद्धित्वमुपाश्रित्यानन्यशरणत्वेनाङ्गीकृत्य मच्चित्तो मय्येव चित्तं यस्य स त्वं सततं सर्वदा मच्चित्तो भव ॥ ९७ ॥

प० टी०—यस्मादेवं तस्मात्त्वमपि तथा भवेत्याह—चेतसेति । चेतसा सह सर्वकर्माणि मयि संन्यस्य समर्प्य मत्परः अहमेव परः परमो यस्य तथाविधः सततं भव ततश्च व्यवसायात्मिकबुद्धियोगमुपाश्रित्य मच्चित्तः मदाकारं चित्तं यस्य तथाविधो भवेत्यनेन विशते तदनन्तरमित्येव पर्यायेणोक्तमित्यर्थः ॥ ९७ ॥

रा० टी०—यदि भगवदाश्रयेण विहितकर्म कुर्वतो मुक्तिस्तर्हि त्रैविद्यस्यापि सा स्यात् । तस्यापि विहितकर्मकरणभगवदर्पणयोः सत्त्वेन भगवदाश्रयत्वादित्यत आह—चेतसेति । चेतसा सर्वाणि कर्माणि मयि संन्यस्य मत्परः अहमेव परः सर्वोत्तम इति भावो यस्य स मत्परः भव । किंच बुद्धियोगं बुद्धेर्योगं प्रत्याहारादिरूपमुपायमाश्रित्य मच्चित्तः मय्येव निरुद्धचित्तः सततं भवेत्युक्त्या त्रैविद्यस्यैवंरूपत्वाभावान्न तस्य मुक्तिशङ्केति भावः ॥ ९७ ॥

## मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि ॥
## अथ चेत्त्वमहङ्कारान्न श्रोष्यसि विनङ्क्ष्यसि ॥ ५८ ॥

त० टी०—एवं मदुक्तार्थे विश्वस्तो यत् प्राप्स्यसि तच्छृणु—मच्चित्त इति । उक्तप्रकारेण मच्चित्तः सन् सर्वकर्माणि कुर्वन्नपि सर्वाणि दुर्गाणि दुस्तराणि सांसारिकाणि दुःखानि मत्प्रसादादेव तरिष्यसि । विपक्षे दोषमाह—अथ चेदिति । यदि पुनस्त्वमहङ्कारादहमेव कर्तव्याकर्तव्यं सर्वं जानामीत्यभिमानान्मदुक्तमेव तन्न श्रोष्यसि पुरुषार्थाद्भ्रश्यसे । यतः सर्वस्य हिताहितज्ञाता प्रशास्ता च मदन्यः कश्चिन्न विद्यते ॥ ५८ ॥

म० टी०—ततः किं स्यादिति तदाह—मच्चित्त इति । मच्चित्तस्त्वं सर्वदुर्गाणि दुस्तराणि कामक्रोधादीनि संसारदुःखसाधनानि मत्प्रसादात् स्वव्यापारमन्तरेणैव तरिष्यसि अनायासेनैवातिक्रमिष्यसि । अथ चेत् यदि तु त्वं मदुक्ते विश्वासमकृत्वाऽहंकारात्पण्डितोऽहमिति गर्वान्न श्रोष्यसि मद्वचनार्थं न करिष्यसि ततो विनङ्क्ष्यसि पुरुषार्थाद्भ्रष्टो भविष्यसि कामकारेण संन्यासाद्याचरन् ॥ ५८ ॥

श्रीं० टी०—वेदान्तार्थविचारपरत्वस्य त्वदेकशरणत्वस्य किं फलमिति चेदुच्यते शृणु—मच्चित्त इति ।

मच्चित्तः सर्वदा ध्येयत्वेन सर्वत्र विषयत्वेन वाहमेव परमात्मा चित्ते यस्य सः। यद्वा सर्वात्मनि मय्येव चित्तं यस्य स मच्चित्तः सदा मदेकचित्तः संस्त्वं मत्प्रसादान्मदनुग्रहप्राप्तात्मविज्ञानात्सर्वदुर्गाणि सर्वाणि दुर्गाणि दुःखेनातिगन्तुमशक्यानि दुर्गाणि दुस्तराण्यविद्याकामकर्माणि। यद्वा सत्त्वरजस्तमांसि सकार्याणि जन्मजरामृत्युदुःखप्रवाहकारणानि तरिष्यसि, तानि तीर्त्वा विदेहमुक्तिसुखं प्राप्स्यसीत्यर्थः। एतेनेश्वरार्थं कर्म कुर्वाण एव तरति न त्वकुर्वाण इति सूचितं भवति। ननु कर्मणां द्रव्यसाध्यत्वेन हिंसाप्रधानत्वात्साधूनां हिंसाप्रधानकं कर्म कर्तुं न शक्यते, तत्रापि स्वजनवधलक्षणं युद्धं तु सुतरां कर्तुं न शक्यत एवेति सांख्यमतमनुस्मृत्याहंकारेण स्वधर्मवैमुख्यं न कर्तव्यमिति मुमुक्षोः स्वधर्मप्रवृत्तिमेव दृढीकर्तुमाक्षेपपूर्वकं स्वधर्मनिष्ठामेवार्जुनमङ्गीकारयति सार्धद्वयेन—**अथेति**। अथशब्दः पक्षान्तरारम्भार्थः। त्वमहंकाराच्छास्त्रान्तरज्ञानकृताभिनिवेशाच्चेतसा सर्वकर्माणीत्युक्तं मद्वचनं न श्रोष्यसि चेद्विधिमुल्लङ्घ्य यदि कर्म न करिष्यसीत्यर्थः। ततो विनङ्क्ष्यसि विनाशमेष्यसि 'अकृत्वा वैदिकं कर्म द्विजः पतनमृच्छति' इतिन्यायेन स्वधर्मत्यागात्पातित्यं प्राप्स्यसि। विध्युल्लङ्घनमेको दोषः, स्वधर्मत्यागो द्वितीयः, परधर्माश्रयस्तृतीयः, पुरुषार्थभ्रंशश्चतुर्थः, एवमनर्थपरंपरा स्यादित्यर्थः ॥ ५८ ॥

**श्री० टी०**—ततो यद्भविष्यति तच्छृणु—**मच्चित्त इति**। मच्चित्तः सन् मत्प्रसादात्सर्वाण्यपि दुर्गाणि दुस्तराणि सांसारिकाणि दुःखानि तरिष्यसि। विपक्षे दोषमाह—अथ चेद्यदि पुनस्त्वमहंकाराज्ज्ञातृत्वाभिमानान्मदुक्तमेतन्न श्रोष्यसि तर्हि विनङ्क्ष्यसि पुरुषार्थाद्भ्रश्यसि ॥ ५८ ॥

**स० टी०**—मच्चित्तस्त्वं हि सर्वाणि दुस्तराणि समुद्रवत् ॥ संसारदुःखदायीनि कामक्रोधादिकान्यपि ॥ १ ॥ मत्प्रसादात्सुखेनैव स्वव्यापारं विना पि च ॥ अतिक्रमिष्यसि प्रत्यग्ब्रह्मज्ञानमुखेन च ॥ २ ॥ यदि तु त्वं मदुक्तेऽर्थे निःसंदिग्धेऽपि मौढ्यतः ॥ अविश्वासादहंकारात्पण्डितोऽस्मीति गर्वतः ॥ ३ ॥ न श्रोष्यसि वचो मत्तः श्रुत्वाऽपि न करिष्यसि ॥ विनङ्क्ष्यसि तदा सम्यक्पुरुषार्थात्परिच्युतः ॥ ४ ॥ कामकारेण यत्किंचित्कुर्वन्नाप्नोति शोभनम् ॥ ५ ॥ अज्ञानार्कसुतापितं भवमरौ धावन्तमर्थोज्झितं तृष्णातृट्परितापितेन्द्रियगणं भोगाम्बुकामाकुलम् ॥ व्यर्थक्रोधमरुप्रतप्तसिकतादग्धागमाध्वाङ्घ्रिकं दीनं त्वां शरणागतं यदुपते मा मामुपेक्षस्व भोः ॥ ६ ॥ ५८ ॥

**भा० टी०**—ततः किमित्यपेक्षायामाह—**मच्चित्त इति**। मच्चित्तः सर्वदुर्गाणि संसारहेतुभूताज्ञानादीनि मत्प्रसादात्तरिष्यसि अतिक्रमिष्यसि। व्यतिरेके दोषमाह—अथ चेद्यदि मदुक्तमहंकारात् पण्डितेन मया स्वबुद्ध्या यद्विचारितं तदेव सम्यक् इत्यभिमानान्न श्रोष्यसि न हिष्यसि ततस्त्वं विनङ्क्ष्यसि विनाशं गमिष्यसि पुरुषार्थात् भ्रष्टो भविष्यसि ॥ ५८ ॥

**प० टी०**—अतो यद्भविष्यति तच्छृणु—**मच्चित्त इति**। प्रागुक्तरीत्या मच्चित्तस्त्वं मत्प्रसादात् सर्वदुर्गाणि आधिदैविकादीनि सर्वदुःखानि तरिष्यसि। अथ विपक्षे दोषमाह—**अथेति**। अथ चेद्यदि त्वमहंकाराज्ज्ञातृत्वाभिमानान्मदुक्तमेतन्न श्रोष्यसि, तर्हि विनङ्क्ष्यसि पुरुषार्थाद्भ्रश्यसे, अधमां योनिं प्राप्स्यसि। अत्र भगवतो हार्दं तु—कुरुकुलदलने खेदं वेदोच्छेदे ह निर्वेदम्। यन्मनुषेऽधमजनुषे दत्से धनुषे तिलाञ्जलिं यस्मादिति(?) ॥ ५८ ॥

**रा० टी०**—भगवच्चित्तस्य फलमाह—**मच्चित्त इति**। मच्चित्तो मय्येव निरुद्धमनस्कः। सर्वाणि दुर्गाणि दुस्तराणि दुःखेन तर्तव्यानि कष्टानि मत्प्रसादात्तरिष्यसि। एवं स्वविहितवृत्त्या भगवदाराधनस्य परधर्मत्वाद्युद्धाख्यस्वविहितकर्म भगवत्प्रीत्यर्थमेवावश्यं कार्यमित्येतावता प्रबन्धेन प्रतिपादितम्। तदकरणेऽनिष्टमाह—अथ चेदिति। अर्थान्तरे अथशब्दः। अहं न योत्स्यामीत्यहंकारात् युध्यस्वेति मदीयवचनं त्वं न

श्रोष्यसि चेत् श्रुत्वा न करोषि चेत्, विनङ्क्ष्यसि पुरुषार्थहीनो भविष्यसि। मद्वचनाकरणे विनाश इत्यभ्युपेत्योक्तम्॥ ५८॥

**यदहङ्कारमाश्रित्य न योत्स्य इति मन्यसे॥**
**मिथ्यैष व्यवसायस्ते प्रकृतिस्त्वां नियोक्ष्यति॥ ५९॥**

**त० टी०**—किंचाहं स्वतन्त्रो बन्धुवधार्थं त्वन्नियोगं कथं करिष्यामीति त्वया न मन्तव्यमित्याह—यदिति। यद्यद्यहंकारमात्मनि स्वातन्त्र्याभिमानमाश्रित्य मदुक्तमनादृत्य न योत्स्ये युद्धं न करिष्यामीति मन्यसे व्यवस्यसे तर्ह्येष ते व्यवसायो मिथ्यैव स्यात्। यतः प्रकृतिस्त्वां नियोक्ष्यति प्रकृतिस्त्रिगुणमयी मन्नियम्या रजोगुणरूपेण परिणता सती रजःप्रधानक्षत्रियजातावुद्भवं त्वां युद्धे प्रवर्तयिष्यत्येवेत्यर्थः॥ ५९॥

**म० टी०**—त्वं च—यदिति। अहङ्कारं धार्मिकोऽहं क्रूरं कर्म न करिष्यामीति मिथ्याभिमानमाश्रित्य न योत्स्ये युद्धं न करिष्यामीति मन्यसे यत् मिथ्या निष्फल एष व्यवसायो निश्चयस्ते, तव यस्मात्प्रकृतिः क्षत्रजात्यारम्भको रजोगुणस्वभावस्त्वां नियोक्ष्यति प्रेरयिष्यति युद्धे॥ ५९॥

**शं० टी०**—तथापि नाहं योत्स्य इति चेन्न तव संकल्पो व्यर्थ एव भविष्यति। स्वभावादपि कर्म कर्तव्यमेव स्यादिति स्वयमपि सांख्यमतावष्टम्भेन कर्मणोऽवश्यकर्तव्यतां प्रतिपादयति—यदिति। दोषवत्कर्म न कर्तव्यमेवेत्यहंकारमविवेककृतं पाण्डित्याभिमानमाश्रित्य "ये युध्यन्ते प्रधनेषु" इति वेदोक्तं धर्ममविज्ञायावैदिकमताश्रयेण न योत्स्य इति यदि मन्यसे, स एष ते तव व्यवसायो निश्चयः शास्त्रविरुद्धो मिथ्याकाशगमनेच्छावन्निरर्थक एव भवति। कथं मे संकल्पो निरर्थक इत्यत आह—प्रकृतिरिति। तेजःशौर्यधैर्यदक्षत्वाभिमानादिगुणोत्पत्तिहेतुः क्षत्रत्वयोनिः रजोगुणमयी प्रकृतिः क्षात्रियस्वभावस्त्वामस्वतन्त्रमस्वाधीनं नियोक्ष्यत्यधिक्षेपासहिष्णुत्वलक्षणं गुणमुत्पाद्य युद्धं कारयिष्यतीत्यर्थः॥ ५९॥

**श्री० टी०**—कामं विनङ्क्ष्यामि, न तु बन्धुभिर्युद्धं करिष्यामीति चेत्तत्राह—यदिति। मदुक्तमनादृत्य केवलमहंकारमवलम्ब्य युद्धं न करिष्यामीति त्वं यन्मन्यसे अध्यवस्यसि, एष ते व्यवसायो मिथ्यैव अस्वतन्त्रत्वात्तव। तदेवाह—प्रकृतिस्त्वां रजोगुणरूपेण परिणता सती नियोक्ष्यति युद्धे प्रवर्तयिष्यत्येव॥ ५९॥

**स० टी०**—धार्मिकोऽहं न च क्रूरं कर्म हिंसादिलक्षणम्॥ करिष्यामीति मिथ्याभिमानमाश्रित्य केवलम्॥ १॥ युद्धं नैव करिष्यामीत्येवं त्वं यदि मन्यसे॥ एष ते निश्चयो मिथ्या निष्फलः सर्वथा यतः॥ २॥ रजोगुणस्वभावस्त्वां क्षत्रियत्वनिबन्धनः॥ अत्यन्तधार्मिकं क्रूरे प्रेरयिष्यति संगरे॥ ३॥ अतो मिथ्याग्रहं त्यक्त्वा मद्वचः शरणं कुरु॥ ४॥ ५९॥

**भा० टी०**—स्वतन्त्रोऽहं परोक्तं न करिष्यामीति त्वया न मन्तव्यं, परतन्त्रत्वात् तवेत्याशयेनाह—यदिति। यच्चैतत्त्वमहंकारं मिथ्याभिमानमाश्रित्य न योत्स्ये युद्धं न करिष्यामीति मन्यसे निश्चयं करोषि, एष ते व्यवसायोऽहं स्वतन्त्रोऽनर्थहेतुभूतं युद्धं न करिष्यामीति निश्चयो मिथ्याभ्रममूलको निष्फलः, यतः प्रकृतिः क्षात्रियस्वभावस्त्वां क्षत्रियं नियोक्ष्यति बलात्कारेण युद्धे प्रेरयिष्यति॥ ५९॥

**प० टी०**—कामं विनङ्क्ष्यामि नतु बन्धुभिः संयोत्स्य इति चेदित्याह—यदिति। यद्यदि मदुक्तमनादृत्य केवलमहंकारमवलम्ब्य युद्धं न करिष्यामीति मन्यसे, तर्ह्येष व्यवसायश्चित्तोद्वेगो मिथ्या निरर्थक एव। यतः प्रकृतिस्त्वां नियोक्ष्यति प्रवर्तयिष्यत्येव। तस्या अपि मदधीनत्वादिति भावः॥ ५९॥

**रा० टी०**—मदुक्ताकरणमशक्यं च तवेत्याह—यदिति। मिथ्यैव वृथैव ते निश्चयः। कुतः? प्रकृतिरिति। ईश्वरेच्छा त्वां नियोक्ष्यति प्रेरयति॥ ५९॥

**स्वभावजेन कौन्तेय ! निबद्धः स्वेन कर्मणा ॥**
**कर्तुं नेच्छसि यन्मोहात्करिष्यस्यवशोऽपि तत् ॥ ६० ॥**

**त० टी०—तदेवोपपादयति—स्वभावजेनेति** । हे कौन्तेय ! यत्स्वधर्मभूतं युद्धाख्यं नियतं कर्म मोहात्कर्तुं नेच्छसि—तत्स्वभावजेन स्वभावः पूर्वकर्मनिबन्धनसत्त्वादिगुणवृत्तिरूपः; तस्माज्जातेन राजसेन क्षत्रियत्वप्रयोजकेन पूर्वोक्तेन शौर्याख्येन स्वेन कर्मणा निबद्धो यन्त्रितः अवशोऽपि शत्रूणामवाच्यवादानसहमानस्त्वं स्वयमेव करिष्यसि ॥ ६० ॥

**म० टी०—प्रकृतिं विवृणोति—स्वभावनेति** । स्वभावजेन पूर्वोक्तक्षत्रियस्वभावजेन शौर्यादिना स्वेनानागन्तुकेन कर्मणा निबद्धो वशीकृतस्त्वं हे कौन्तेय! यद्बन्धुवधादिनिमित्तं युद्धं मोहात् स्वतन्त्रोऽहं यथेच्छामि तथा संपादयिष्यामीति भ्रमात् कर्तुं नेच्छसि, तदवशोऽपि अनिच्छन्नपि स्वाभाविककर्मपरतन्त्रः परमेश्वरपरतन्त्रश्च करिष्यस्येव ॥ ६० ॥

**शं० टी०—**अहं करोमि नाहं करोमीति चाभिमानी बद्ध एव भवति, न तु मुक्तः, अमुक्तस्याशेषकर्मत्यागासंभवात् । अतः स्वाभाविकेन कर्मणा निबद्धस्य तव कर्मत्यागः कर्तुं न शक्यते । यदविवेकात्त्यक्तुमिच्छसि तदेव प्रकृतिवशो भूत्वा करिष्यसि । ततः प्रकृतिबद्धस्य प्राप्तं कर्म कर्तव्यमेवेत्याशयेनाह—**स्वभावेति** । जन्मान्तरीयपुण्यापुण्यकर्मसंस्कारो वर्तमानजन्मनि प्रवृत्तिनिवृत्तिसुखदुःखादिसिद्धिहेतुः स्वभाव इत्युच्यते प्रकृतिगुणविशेषः । तस्माज्जायत इति स्वभावजं तेन स्वाभाविकेन स्वेन स्वकीयेन क्षात्रेण 'शौर्यं तेजो धृतिः' इत्युक्तेन कर्मणा निबद्धः संसृष्टस्त्वं मोहाद्युद्धादेः स्वधर्मत्वाज्ञानाद्यत्स्वजातितः प्राप्तं कर्म कर्तुं नेच्छसि ममेदं न कर्तव्यमिति त्यक्तुमिच्छसि, तदेव कर्म अवशः स्वप्रकृतेर्वशो भूत्वा करिष्यस्येवास्वतन्त्रत्वात्प्रकृत्या बलात्कारेण चोदितः सन्करोष्येव न तु त्यक्तुं शक्नोषि । ततः कर्तव्यत्वेन प्राप्तं स्वीयं शास्त्रीयं कर्म विदुषाऽवश्यं कर्तव्यमित्यर्थः ॥ ६० ॥

**श्री० टी०—किंच—स्वभावजेनेति** । स्वभावः क्षत्रियत्वे हेतुः पूर्वकर्मसंस्कारस्तस्माज्जातेन स्वकीयेन कर्मणा शौर्यादिना पूर्वोक्तेन निबद्धो यन्त्रितस्त्वं मोहाद्यत्कर्म युद्धलक्षणं कर्तुं नेच्छासि अवशोऽपि तत्कर्म करिष्यस्येव ॥ ६० ॥

**स० टी०—**प्रकृतिं विवृणोतीशः सर्वतोऽपि बलीयसीम् ॥ यस्माच्छौर्यादिना स्वेन यथोक्तेनात्मकर्मणा ॥ १ ॥ वशीकृतस्त्वं कौन्तेय क्षत्रियत्वैकहेतुना ॥ यद्युद्धं बन्धुहिंसादिनिमित्तमविवेकतः ॥ २ ॥ स्वतन्त्रोऽहं यथेच्छामि करिष्यामि तथेति च ॥ भ्रमान्नेच्छसि कर्तुं त्वमनिच्छन्नपि कर्म तत् ॥ ३ ॥ स्वभावपरतन्त्रः सन्नीश्वराधीन एव च ॥ करिष्यस्येव तस्मात्त्वं मा कार्षीराग्रहं वृथा ॥४॥ त्यक्त्वाऽऽग्रहं कृष्णपदारविन्दभक्तिं पुरस्कृत्य सदा स्वकर्म ॥ कुर्वञ्जनो नैति पराभवं श्रीमुकुन्दधामैति न संशयोऽत्र ॥५॥६०॥

**भा० टी०—प्रकृतिपारतन्त्र्यं विशदयति—स्वभावजेनेति** । स्वभावजेन शौर्यादिना यथोक्तेन स्वेन स्वकीयेन कर्मणा निबद्धः निश्चयेन बद्धः यन्मोहादविवेकात्कर्तुं नेच्छसि, तदवशोऽपि परवश एव करिष्यसि । यस्माच्चैवं तस्मात्कुन्तीपुत्रस्य क्षत्रियशिरोमणेरस्मत्संबन्धिनस्तव युद्धवैमुख्यं नोचितमिति सूचयन्संबोधयति—हे कौन्तेयेति ॥ ६० ॥

**प० टी०—किं च—स्वभावजेनेति** । स्वभावः क्षत्रियत्वप्रापकः पूर्वकर्मसंस्कारस्तस्माज्जातेन स्वकीयेन कर्मणा शौर्यादिना पूर्वोक्तेन निबद्धो नियन्त्रितः सन् यदि—मोहादित्युपलक्षणं—कर्म कर्तुं नेच्छसि तथाप्यवशः सन् कर्म करिष्यस्येव—'प्राक्संस्कारपरंपरापरिणतं प्रायो मनः प्राणिनां कस्तस्य प्रकृतिं निरस्य

सहजां कर्ताऽन्यथा स्यान्नरः । दौर्गन्ध्यं लशुनादिकस्य सहजं यत्नात्समुत्सारयन् सौरभ्यं वितनोति कः सुरभिता कर्पूरमुख्यस्य वा' इति । तदेवं सांख्यमीमांसकादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं च निरूप्य युद्धानादरो निषिद्धः ॥ ६० ॥

रा० टी०—ईश्वरेच्छाया जीवनियमे निमित्तत्वादिकं दर्शयन्नुक्तं विवृणोति—स्वभावजेनेति । स्वभावः संस्कारस्तज्जातेन स्वेन कर्मणा निबद्धः । हे कौन्तेय यत्कर्म मोहाद्बन्धुस्नेहमोहात्कर्तुं नेच्छसि, तत्कर्मावशोऽपि स्वानधीनोऽपि भगवदिच्छाधीनोऽपि सन्करिष्यसि ॥ ६० ॥

**ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन ! तिष्ठति ॥**
**भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायया ॥ ६१ ॥**

त० टी०—तदेवं सांख्यमतानुकूलं प्रकृतिपारतन्त्र्यं स्वभावाधीनं च कर्मकर्तृत्वमुक्तम् । इदानीम् "अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरम् एष ते आत्माऽन्तर्याम्यमृतः, एतदक्षरस्य प्रशासने गार्गि ! सूर्याचन्द्रमसौ विधृतौ तिष्ठतः" इत्यादिश्रुतिनिर्णीतं सर्वस्य प्राणिनः परमेश्वराधीनत्वमाह—ईश्वर इति । ईश्वरः सर्वचेतनाचेतननियमनशीलो भगवान्वासुदेवः सर्वभूतानां हृद्देशे हे अर्जुन ! तिष्ठति । किं कुर्वन् ? सर्वभूतानि मायया निजशक्त्या भ्रामयन् तत्तदनादिबीजभूतकर्मानुसारेण शुभाशुभकर्मसु प्रवर्तयन् । कथंभूतानि? यन्त्रारूढानि प्रकृतिपरिणामदेहेन्द्रियरूपं यन्त्रमारूढान्यारोपितानि यथा दारुमययन्त्रमारूढानि कृत्रिमाणि पक्षिमृगादिभूतानि सूत्रबद्धानि सूत्रधारो लोके भ्रामयति तद्वदित्यर्थः ॥ ६१ ॥

म० टी०—स्वभावाधीनतामुक्त्वेश्वराधीनतां विवृणोति—ईश्वर इति । ईश्वर ईशनशीलो नारायणः सर्वान्तर्यामी 'यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयति' । 'यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्यादिश्रुतिसिद्धः सर्वभूतानां सर्वेषां प्राणिनां हृद्देशेऽन्तःकरणे तिष्ठति सर्वव्यापकोऽपि तत्राभिव्यज्यते सप्तद्वीपाधिपतिरिव राम उत्तरकोसलेषु । हेऽर्जुन हे शुक्ल शुद्धान्तःकरण, एतादृशमीश्वरं त्वं ज्ञातुं योग्योऽसीति द्योत्यते । किं कुर्वन्तिष्ठति भ्रामयन् इतस्ततश्चालयन् सर्वभूतानि परतन्त्राणि मायया छद्मना यन्त्रारूढानीव सूत्रसंचारादियन्त्रमारूढानि दारुनिर्मितपुरुषादीन्यत्यन्तपरतन्त्राणि यथा मायावी भ्रामयति तद्वदित्यर्थशेषः ॥ ६१ ॥

शं० टी०—प्रकृत्यधीनस्य स्वातन्त्र्याभावात् स्वाभाविकं कर्म त्यक्तुं न शक्यते । किंतु कर्तव्यमेवेत्युक्त्वाऽधुनेश्वराधीनस्य कर्म त्यक्तुं न शक्यं, तत्प्रेरणया प्राप्तं कर्म कर्तव्यमेवेति कर्मणोऽवश्यं कर्तव्यत्वं बोधयितुमाह—ईश्वर इति । ईश्वरः ईशनशीलः सर्वलोकनियन्ता परमेश्वरः सूत्रधारी यन्त्रारूढानि दारुमयप्रतिमा यथा तथा सर्वभूतानि ब्रह्मादिस्तम्बान्तानि वासनात्मिकया मायया विक्षेपशक्त्या भ्रामयन् स्वस्वकर्मसु प्रवर्तयन् हृद्देशे हृदये बुद्धिगुहायां तिष्ठति । यद्वा "एष एव साधु कर्म कारयति यम्" इति "यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो यं सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयति" इति श्रवणाद्यन्त्रारूढानि यन्त्राणि शरीराणि तेष्वात्मत्वाभिमानेनाधिष्ठितानि भूतानि प्राणिनो भ्रामयन् तत्तत्कर्मसु प्रवर्तयन् ईश्वरः सर्वभूतानां हृद्देशे तिष्ठति, अतस्तत्प्रेरणया प्राप्तं कर्म तत्परतन्त्रस्य त्यक्तुं न शक्यते । ततो 'यथा नियुक्तोऽस्मि तथा करोमि' इति मुमुक्षोः कर्तव्यतया प्राप्तं कर्मावश्यं करणीयमित्यर्थः ॥ ६१ ॥

**श्री० टी०**—तदेवं श्लोकद्वयेन सांख्यादिमतेन प्रकृतिपारतन्त्र्यं स्वभावपारतन्त्र्यं कर्मपारतन्त्र्यं चोक्तम्। इदानीं स्वमतमाह—**ईश्वर इति**द्वाभ्याम्। सर्वभूतानां हृदयमध्ये ईश्वरोऽन्तर्यामी तिष्ठति। किं कुर्वन्? सर्वाणि भूतानि मायया निजशक्त्या भ्रामयन् तत्तत्कर्मसु प्रवर्तयन् यथा दारुयन्त्रमारूढानि कृत्रिमाणि भूतानि सूत्रधारो लोके भ्रामयति तद्वत्। यद्वा यन्त्राणि शरीराणि आरूढानि भूतानि देहाभिमानिनो जीवान् भ्रामयन्नित्यर्थः। तथाच श्वेताश्वतराणां मन्त्रः—"एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा। कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केवलो निर्गुणश्च" इति। अन्तर्यामिब्राह्मणं च "य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति यमात्मा न वेद यस्यात्मा शरीरं एष ते आत्माऽन्तर्याम्यमृतः" इत्यादि॥६१॥

**स० टी०**—स्वभावाधीनतामुक्त्वेश्वराधीनत्वमुच्यते॥ हरिरीशनशीलो यो नाराणपदाभिधः॥ १॥ सर्वान्तर्यामिता यस्य प्रसिद्धा बहुधा श्रुतौ॥ तिष्ठन्पृथिव्यां यस्तस्या आन्तरो यं न वेद सा॥ २॥ यस्य पृथ्वी शरीरं यस्तामन्तर्यमयत्यजः॥ यच्च किंचिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा॥ ३॥ अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः॥ इत्यादिश्रुतिवाक्यानि सन्ति श्रीपरमेश्वरे॥ ४॥ स सर्वव्यापकोऽपीशः सर्वेषां प्राणिनां विभुः॥ अन्तःकरणदेशेऽतिनिर्मले तिष्ठतीत्यसौ॥ ५॥ सार्वभौमो यथा रामो महाराजो रघूत्तमः॥ उत्तराकोसलायां वै तिष्ठतीति तथैव च॥ ६॥ व्यापकोऽपि परेशानो हृद्यभिव्यज्यते विभुः॥ शुद्धान्तःकरणत्वात्त्वमीदृशं परमेश्वरम्॥ ७॥ ज्ञातुं योग्य इति स्पष्टं सूच्यतेऽर्जुनशब्दतः॥ किं कुर्वंस्तिष्ठतीशान इत्यत्राह स्वयं विभुः॥ ८॥ भ्रामयंश्चालयन्सर्वभूतानीश इतस्ततः॥ दारुनिर्मितपुँरुयादीन्यवशानि यथा नरः॥ ९॥ यन्त्रारूढानि मायावी भ्रामयँस्तिष्ठतीतरः॥ मायया छद्मना तद्वत्सर्वभूतानि सर्वतः॥ १०॥ स यन्त्राधिष्ठितानीव भ्रामयँस्तिष्ठतीश्वरः॥ यद्वा मायामयं यन्त्रं शरीरद्वितयं जडम्॥ ११॥ तत्रारुह्याभिमानेन प्राणिजातं हि तिष्ठति॥ तत्सर्वं भगवानीशो मायया भ्रामयन् जगत्॥ १२॥ तिष्ठतीति स्वतन्त्रः सन्निर्लेपो निरुपद्रवः॥ तदुक्तं सर्वविद्यानां पारगैरपि योगिभिः॥ १३॥ देहादिपञ्जरं यन्त्रं तदारोहोऽभिमानता॥ विहितप्रतिषिद्धेषु प्रवृत्तिर्भ्रमणं भवेत्॥ १४॥ अविद्याकामकर्मादिसामग्री सकला जडा॥ जीवोऽप्यज्ञतया भ्रान्त्या परतन्त्रो जडानुगः॥ १५॥ न किंचित्कर्तुमस्त्यस्य सामर्थ्यं च स्वतन्त्रतः॥ अतः श्रीभगवानेवालुप्तशक्तिर्महेश्वरः॥ १६॥ समस्तं स्ववशे कृत्वा लोकं लोकेश्वरैः सह॥ मायया भ्रामयन्स्वामी तिष्ठति प्राणिनां हृदि॥ १७॥ समस्तानुपपत्तीनां परिहाराय सर्वथा॥ माययेति स्वयं प्रोक्तं श्रीमद्भगवतेत्यपि॥ १८॥ हृदि गतममलाभादिलाभं सर्वलाभं रविशशिनयनाभं श्याममेघोज्ज्वलाभम्॥ श्रुतिविषयरसाभं पद्मनाभं सुनाभं सकलमुनिनताभं नौमि कृष्णं रमाभम्॥ १९॥ समस्तलोककर्तारं गोप्तारं सर्वदेहिनाम्॥ सर्वविश्वनियन्तारं मुकुन्दं हृदिगं श्रये॥ २०॥ ६१॥

**भा० टी०**—स्वभावपारतन्त्र्यमुक्त्वेदानीमन्तर्यामिपारतन्त्र्यमाह—**ईश्वर इति**। ईश्वरः ईशनशीलः नारायणः सर्वभूतानां सर्वप्राणिनां हृद्देशे तिष्ठति, सर्वत्र स्थितोऽपि हृदयेऽभिव्यक्ततया तिष्ठति "अहश्च कृष्णमहरर्जुनं च" इतिश्रुतौ अर्जुनशब्दस्य शुक्लशब्दपर्यायतया प्रयोगदर्शनात् शुक्लान्तरात्मस्वभावो विशुद्धान्तःकरणोऽर्जुनस्तं संबोधयन्नर्जुनस्य तवाविवेकेन निबन्धनं स्वस्वातन्त्र्याध्यारोपणं नोचितं, किंतु ईश्वरप्रेरितः सर्वं करोमीति परिज्ञानमिति सूचयति। किं कुर्वन् तिष्ठतीत्याकाङ्क्षायामाह—भ्रामयन् भ्रमणं कारयन् सर्वभूतानि यन्त्रारूढानि यन्त्राण्यारूढान्यधिष्ठितानीव यथा मायावी दारुकृतपुरुषादीनि यन्त्रारूढानि मायया छद्मना भ्रामयंस्तिष्ठति, तद्वदीश्वरो यन्त्रसदृशशरीरारूढानि भूतानीत्यर्थः॥ ६१॥

**प० टी०**—इदानीं मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरमिति स्वमतमुद्दिश्य स्वाश्रयवर्तित्वं चाह—

ईश्वर इति। भो अर्जुन! सर्वभूतानां हृद्देशे ईश्वरोऽन्तर्यामित्वेन तिष्ठति। किं कुर्वन्? सर्वभूतानि जीवान् यन्त्राणि शरीराण्यारूढान्यधिष्ठितानि मायया स्वशक्त्या भ्रामयन् संनिधिमात्रेण व्यापारयन्, न तु स्वयमित्यर्थः। श्रुतिरपि कण्वशाखारण्यके "यो वै स संवत्सरः प्रजापतिः षोडशकलोऽयमेव स योऽयमेवंवित्पुरुषस्तस्य वित्तमेव पञ्चदश कला आत्मैवास्य षोडशी कला स वित्तेनैवाऽऽच पूर्यतेऽप च क्षीयते तदेतन्नभ्यं यदयमात्मा प्रधिर्वित्तं तस्माद्यद्यपि सर्वज्यानिं जीयत आत्मना चेज्जीवति प्रधिनाऽगादित्याहुः" इति। भाष्यम्—य इति पूर्वोक्तः संवत्सरः कालरूपः षोडशकलः प्रजापतिरयमपि तन्निदिध्यासनात्तद्रूप एव। पूर्वोक्त एवंवित्पुरुषः सोऽपि षोडशकलः प्रजापतिस्तस्य वित्तं पञ्चपञ्चसूक्ष्मभूतेन्द्रियप्राणात्मकं लिङ्गदेहं ता एव पञ्चदशकला आत्मैवास्य षोडशी कला स प्रागुक्तेन वित्तेन पूर्यतेऽपक्षीयते च—प्रवृत्तिमार्गेण पूर्यते, निवृत्तिमार्गेणापक्षीयते च उपरमं प्राप्नोति, तदा षोडशी कलाऽवशिष्टा भवति। तत्र तदेतन्नभ्यं नाभौ भवं नाभ्यम्। अत्र छान्दसः प्रयोगो नभ्यमिति। यद्वा मध्यप्रदेशोपस्थितं स्थिरं वस्तु विवक्षितम्। तेन नभसि हृदयाकाशेऽवस्थितं नभ्यम्। तत्किम्? यदयमात्मा "अजस्य नाभावध्येकमर्पितम्" इति श्रुतेः। अयमर्थः—यथा कुलालचक्रस्य मध्यछिद्रे स्थितः कीलकश्चक्रचलनेऽपि न चलति तदेव नभ्यं, तथा वित्तं प्राङ्निरूपितलिङ्गदेहं प्रधिः चक्रपरिधिवद्बाह्यपरिधिस्थानीयम्। तस्माद्वित्ताद्यद्यपि सर्वज्यानिं सर्वस्वहानिं जीयते प्राप्नोति, तथाप्यात्मना चेत्संपद्यते तदा जीवति जीवन्मुक्तो भवति। अथ प्रधिना शरीरेण चेत्संपद्यते तदागाद् गमनागमनं करोति ॥ ६१ ॥

रा० टी०—नन्वीश्वरेच्छायाः प्रवर्तकत्वे ईश्वरः प्रवर्तको नेतिशङ्कामीश्वरस्वरूपं दर्शयन्परिहरति—ईश्वर इति। ईश्वरः यन्त्रारूढानि यन्त्राणि शरीराणि तदारूढानि तत्रस्थानि भूतानि प्राणिनः मायया स्वरूपभूतेच्छया भ्रामयन्नानाकर्मसु प्रवर्तयन्सर्वभूतानां हृद्देशे तिष्ठति ॥ ६१ ॥

**तमेव शरणं गच्छ सर्वभावेन भारत ! ॥**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥ ६२ ॥**

त० टी०—नन्वेवं चेत्तर्हि मायायास्तत्प्रयोजकस्य च नित्यत्वात्कस्यापि कदाऽपि संसारनिवृत्तिर्न स्यात्कथं मोक्षाशेति चेत्तत्राह—तमेवेति। सर्वभूतानां भ्रामको मायाया अपि नियन्ता वात्सल्यकारुण्यसौहार्दादिगुणपारवश्येन त्वत्सारथ्यमङ्गीकृत्य त्वद्धितं चिकीर्षुस्त्वत्प्रशासिता, तमेव सर्वभावेन सर्वात्मना शरणं गच्छ, तदुक्तं सर्वं निर्मायिकत्वेन कुरुष्व। हे भारतेति संबोधनेन भरतवंश्येन त्वया सर्वशत्रुनिग्रहेण स्वकीर्तिख्यापनमुचितमिति सूचितम्। तस्मान्मदुक्तप्रकारेण युद्धाख्यं स्वधर्मं कुर्वन् तत्प्रसादात्तस्य ममानुग्रहात् परां शान्तिं निःशेषाऽविद्यानिवृत्तिपूर्वकपरमानन्दरूपां भगवद्भावापत्तिं शाश्वतं प्रकृतिकालकर्मसंबन्धशून्यं नित्यैकरसं स्थानं परमपदविष्णुपदादिशब्दाभिधेयं धाम प्राप्स्यसि ॥ ६२ ॥

म० टी०—ईश्वरः सर्वभूतानि परतन्त्राणि प्रेरयति चेत्प्राप्तं विधिप्रतिषेधशास्त्रस्य सर्वस्य पुरुषकारस्य चानर्थक्यमित्यत्राह—तमेवेति। तमेवेश्वरं शरणमाश्रयं संसारसमुद्रोत्तरणार्थं गच्छाऽऽश्रय सर्वभावेन सर्वात्मना मनसा वाचा कर्मणा च हे भारत! तत्प्रसादात्तस्यैवेश्वरस्यानुग्रहात्तत्त्वज्ञानोत्पत्तिपर्यन्तात् परां शान्तिं सकार्याविद्यानिवृत्तिं स्थानमद्वितीयस्वप्रकाशपरमानन्दरूपेणावस्थानं शाश्वतं नित्यं प्राप्स्यसि ॥ ६२ ॥

शं० टी०—आरुरुक्षोश्चित्तशुद्धयै कर्मैव कर्तव्यमिति निर्धारयितुमेवं नयेन भयेन च कर्मणः कर्तव्यत्वमेव संपाद्याधुना तस्यैव मोक्षैककामस्य तदेकशरणतया स्वकर्मणा तदाराधनं कुर्वतस्तत्प्रसादाज्ज्ञानं मोक्षश्च सिध्यत्यतस्तत्प्रीत्यै कर्म कुर्वन् तमेव शरणं याहीत्याह—तमेवेति। हे भारत! स्वकर्मणा तदाराधनपरो

भूत्वा त्वं सर्वभावेन नारायण एवेदं सर्वमिति सर्वत्रात्मभावः सर्वभावस्तेन सर्वभावेन सर्वत्र परमेश्वरत्वबुद्ध्या सर्वात्मानं तमेव परमेश्वरं शरणं गच्छ 'संसारसागरे मग्नं मामुद्धर जगत्प्रभो' इति संसारदुःखनिवृत्त्यै तमेवाश्रय, तदेकशरणो भूत्वा तत्प्रसादात्तस्यैवेश्वरस्य प्रसादादनुग्रहात्समुत्पन्नात्मविज्ञानात्परां दृश्यालम्बनरहितत्वात्प्रकृष्टां परमानन्दानुभूतिहेतुत्वाद्वा परां शान्तिं वृत्त्युपरतिं सर्वत्र समदृष्टिं वा प्राप्स्यसि, शाश्वतं नित्यं सर्वदा चिदानन्दैकरसरूपेणाविक्रियात्मना तिष्ठतीति स्थानं स्वस्वरूपं कूटस्थासङ्गचिदात्मकं परं ब्रह्म प्राप्स्यसि, विदेहमुक्तिसुखं गमिष्यसीत्यर्थः ॥ ६२ ॥

श्री० टी०—तमिति । यस्मादेवं सर्वे जीवाः परमेश्वरपरतन्त्रास्तस्मादहंकारं परित्यज्य सर्वभावेन सर्वात्मना तमीश्वरमेव शरणं गच्छ । ततस्तस्यैव प्रसादात्परमामुपशान्तिं स्थानं च पारमेश्वरं शाश्वतं नित्यं प्राप्स्यसि ॥ ६२ ॥

स० टी०—ईश्वरः सर्वभूतानि परतन्त्राणि मायया ॥ प्रेरयत्येव चेत्प्राप्तमानर्थक्यं श्रुतेः स्मृतेः ॥ १ ॥ विध्यादिप्रतिपादिन्याः पौरुषस्य तथैव च ॥ इत्यत्राह तमेवेशं शरणं गच्छ सर्वथा ॥ २ ॥ संसारजलधेः पारोत्तरणार्थं तमाश्रय ॥ मनसा कर्मणा वाचा सर्वभावेन भारत ॥ ३ ॥ तस्येश्वरस्य श्रीविष्णोः कल्याणगुणवारिधेः ॥ अनुग्रहात्परब्रह्मज्ञानोत्पत्त्यवधेः पराम् ॥ ४ ॥ सकार्याज्ञानबाधाख्यां शान्तिं स्थानं परं पदम् ॥ स्वप्रकाशपरानन्दात्मनावस्थानमक्षरम् ॥ ५ ॥ नित्यकूटस्थमद्वैतं निर्मलं प्राप्स्यसि स्वयम् ॥ अतो विध्यादिशास्त्रस्य पौरुषस्य च सर्वथा ॥ ६ ॥ इदमेव हि सार्थक्यं यदीशशरणं व्रजेत् ॥ न स्वातन्त्र्यात्क्वचित्किंचित्प्राप्नोतीह फलं नरः ॥ ७ ॥ ईश्वरानुग्रहादेव सर्वं सर्वस्य जायते ॥ ईश्वरानुग्रहे तस्माद्यतितव्यं मुमुक्षुभिः ॥ ८ ॥ यथा प्रसन्नो भगवान्पश्येदेनं कटाक्षतः ॥ सर्ववेदेषु शास्त्रेषु पुराणे भारते तथा ॥ ९ ॥ सर्वं विहाय कर्तव्यमिदमेव सुनिश्चितम् ॥ वासुदेवैकशरणः सर्वं प्राप्नोति शोभनम् ॥ १० ॥ अतस्तमेव शरणं गच्छेत्याह रमापतिः ॥ ११ ॥ ईशत्वेन हरिं भजस्व निगमप्रोक्तेन मार्गेण भो दासं तस्य समाश्रयस्व सुमनोभक्त्या भयेनादरात् ॥ सख्यं सौहृदमाश्रयस्व नृहरेः प्रेम्णा गुरुत्वेन च स्वात्मानं प्रकटीकरोति भजतामेवं स बुद्धौ हरिः ॥ १२ ॥ ६२ ॥

भा० टी०—यस्मादीश्वर एव तत्तत्कर्मफलप्रदाता भ्रामयति तस्मात्तमेव ईश्वरं शरणमाश्रयं संसारार्तिहरणार्थं सर्वभावेन सर्वात्मना मनसा वाचा कर्मणा च गच्छ आश्रय । हे भारतेति संबोधयन् उत्तमवंशोद्भवस्त्वं योग्योऽसीति द्योतयति । तत्प्रसादात्तस्य सम्यगाराधितस्येश्वरस्य प्रसादादनुग्रहात् परां प्रकृष्टां शान्तिमविद्योपशमरूपां सर्वानर्थनिवृत्तिस्थानं च मुक्तास्तिष्ठन्ति यस्मिन्निति स्थानं मम विष्णोः परमं पदं शाश्वतं सदैकरसमवाप्स्यसि ॥ ६२ ॥

प० टी०—एवमन्वयव्यतिरेकाभ्यां प्रकृतेस्तदनुरूपसंस्काराणां वा ईश्वराधीनत्वात्सर्वत्र स एव शरणमिति ज्ञात्वा मदुक्तमनुसरेत्याह—तमेवेति । तमेव मामीश्वरमन्तर्यामिणं सर्वभावेन सर्वात्मना शरणं व्रज । तत्प्रसादात्परामुत्कृष्टां शान्तिं निर्वृतिं शाश्वतं नित्यं स्थानं च प्राप्स्यसि । तदुक्तम्—'स्थूलं वपुः परिधिरान्तरमस्य सूक्ष्मं देवालयं तदिह देवगतिः परात्मा । तत्पूजनोपकरणान्यखिलेन्द्रियाणि कृत्वा तमेव शरणं व्रज जीव नान्यम् ॥' इति ॥ ६२ ॥

रा० टी०—यस्मादेवमीश्वर एव स्वतन्त्रः जीवास्तदधीनास्तस्मादहंकारमुत्सृज्य तमेवेश्वरं सर्वभावेन सर्वप्रकारेण शरणं गच्छ याहि । मां शरणं याहीति वक्तव्ये ईश्वरस्तिष्ठति तं शरणं याहीति परोक्षनिर्देशः कृष्णस्येश्वरत्वनिश्चयार्थत्वाभिप्रायेण 'निश्चयार्थः स तु ज्ञेयो यत्रात्मैव परोक्षतः । उच्यते' इति

स्मृतेः। तत्प्रसादादीश्वरप्रसादात्परां शान्तिं बुद्धेर्भगवन्निष्ठतां, शाश्वतं स्थानं वैकुण्ठादिलोकं प्राप्स्यसीति। वैकुण्ठादिस्थानस्य शाश्वतत्वं च चित्प्रकृत्यात्मकत्वात्। 'श्रीरेव लोकरूपेण विष्णोस्तिष्ठति' इत्यादेः ॥६२॥

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ॥**
**विमृश्यैतदशेषेण यथेच्छसि तथा कुरु ॥ ६३ ॥**

**त० टी०**—इदानीं प्रसादं दर्शयितुमुपदेशमुपसंहरन्नुपदिष्टार्थं स्तौति—इतीति। इत्येवमुक्तप्रकारेण ते तुभ्यं हितैषिणा परमकारुणिकेन मया मुमुक्षूपादेयं ज्ञानमाख्यातमुपदिष्टम्। कथंभूतम्? गुह्याद्गुह्यतरं कर्मज्ञानभक्तियोगविषयमतिरहस्यमेतन्मदुपदिष्टं गीताशास्त्रमशेषेण विमृश्य पर्यालोच्य तदनन्तरं स्वाधिकारानुरूपं यथेच्छसि तथा कुरु। कर्मज्ञानभक्तिषु यदेकं हिततरं मन्यसे तदेवानुतिष्ठेत्यर्थः ॥६३॥

**म० टी०**—सर्वगीतार्थमुपसंहरन्नाह—इतीति। इति अनेन प्रकारेण ते तुभ्यमत्यन्तप्रियाय ज्ञानमात्ममात्रविषयमोक्षसाधनं गुह्याद्गुह्यतरं परमरहस्यादपि संन्यासान्तात् कर्मयोगाद्रहस्यतरं तत्फलभूतत्वात् आख्यातं समन्तात् कथितं मया सर्वज्ञेन परमाप्तेन। अतो विमृश्य पर्यालोच्य एतन्मयोपदिष्टं गीताशास्त्रमशेषं सामस्त्येन सर्वैकवाक्यतया ज्ञात्वा स्वाधिकारानुरूपेण यथेच्छसि तथा कुरु, न त्वेतदविमृश्यैव कामकारेण यत्किंचिदित्यर्थः। अत्र चैतावदुक्तम्—अशुद्धान्तःकरणस्य मुमुक्षोर्मोक्षसाधनज्ञानोत्पत्तियोग्यताप्रतिबन्धकपापक्षयार्थं फलाभिसंधिपरित्यागेन भगवदर्पणबुद्ध्या वर्णाश्रमधर्मानुष्ठानं, ततः शुद्धान्तःकरणस्य विविदिषोत्पत्तौ गुरुमुपसृत्य ज्ञानसाधनवेदान्तवाक्यविचाराय ब्राह्मणस्य सर्वकर्मसंन्यासः, ततो भगवदेकशरणतया विविक्तदेशसेवादि ज्ञानसाधनाभ्यासाच्छ्रवणमनननिदिध्यासनैरात्मसाक्षात्कारोत्पत्त्या मोक्ष इति। क्षत्रियादेस्तु संन्यासानधिकारिणो मुमुक्षोरन्तःकरणशुद्ध्यनन्तरमपि भगवदाज्ञापालनाय लोकसंग्रहाय च यथाकथंचित्कर्माणि कुर्वन्तोऽपि भगवदेकशरणतया पूर्वजन्मकृतसंन्यासादिपरिपाकाद्वा हिरण्यगर्भन्यायेन तदनपेक्षणाद्वा भगवदनुग्रहमात्रेणैव तत्त्वज्ञानोत्पत्त्याऽग्रिमजन्मनि ब्राह्मणजन्मलाभेन संन्यासादिपूर्वकज्ञानोत्पत्त्या वा मोक्ष इति। एवं विचारिते च नास्ति मोहावकाश इति भावः ॥ ६३ ॥

**शं० टी०**—'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यारभ्य 'सिद्धिं प्राप्तो यथा ब्रह्म तथाप्नोति निबोध मे' इत्यन्तेन कर्मभिः समाराधितेश्वरप्रसादाच्चित्तशुद्धिस्ततो ज्ञानं ततो मोक्ष इत्युक्तमेवार्थं दृढीकर्तुं पुनः संक्षेपेणोपन्यस्येदानीमुपक्रान्तं शास्त्रमुपसंहरति—इतीति। 'नत्वेवाहं जातु नासम्' इत्यारभ्य 'स्थानं प्राप्स्यसि शाश्वतम्' इत्येतदन्तं ज्ञानं ब्रह्मात्मैकत्वज्ञानोत्पत्तिकारणमेतद्गीताशास्त्रं गुह्याद्गोपनीयान्मणिमन्त्रादेरणिमादिसिद्धिहेतोरपि प्रयत्नेन संवरणीयत्वाद्गुह्यतरं परमरहस्यं ज्ञानशास्त्रं मुमुक्षवे शुद्धात्मने शरणं गताय ते तुभ्यं मया सर्वज्ञेन परमकारुणिकेनावाप्तसर्वकामेनेश्वरेणाख्यातं ज्ञानतत्सिद्धिसाधनप्रकाशकं मोक्षशास्त्रं समग्रमुपदिष्टम्। ज्ञानस्य तत्साधनसंपत्तेश्च बोधकमेतद्गीताशास्त्रं पदवाक्यप्रमाणनिपुणस्त्वमशेषेण सर्वमवमृश्य साधनं साध्यं तत्सिद्धिप्रकारं स्वाधिकारं च सम्यगालोच्य, सत्त्वशुद्धेरभावे साधने कर्मणि, तत्सद्भावे सत्यात्मविज्ञाननिष्ठायां च स्वस्य योग्यत्वं निश्चित्य यथेच्छसि यथा कर्तुमिच्छसि तथा कुरु तथा वर्तस्व। स्वतृप्तिवत्स्वाधिकारस्य स्वज्ञेयत्वात्परबुद्धेरप्रत्यक्षत्वाच्च स्वाधिकारं स्वयमेव निश्चित्य कर्मणि ज्ञाने वा यत्राधिकारस्तत्र तिष्ठेत्यर्थः ॥ ६३ ॥

**श्री० टी०**—सर्वगीतार्थमुपसंहरन्नाह—इतीति। इति अनेन प्रकारेण ते तुभ्यं सर्वज्ञेन परमकारुणिकेन मया ज्ञानमाख्यातमुपदिष्टम्। कथंभूतम्? गुह्यात् गोप्याद्रहस्यमन्त्रयोगादिज्ञानादपि गुह्यतरम्। एतन्मयोपदिष्टं गीताशास्त्रमशेषतो विमृश्य पर्यालोच्य पश्चाद्यथेच्छसि तथा कुरु। एतस्मिन्पर्यालोचिते सति तव मोहो निवर्तिष्यत इति भावः ॥ ६३ ॥

स० टी०–इदानीं सर्वगीतार्थमाहेदमुपसंहरन् ॥ इत्यनेन प्रकारेण तुभ्यं प्रेमास्पदाय च ॥ १ ॥ ज्ञानमात्मैक्यविषयं मोक्षसाधनमान्तरम् ॥ यदेवात्यन्तसङ्गोप्यादपि गोप्यतरं महत् ॥ २ ॥ कर्मसंन्यास-पर्यन्तात्कर्मयोगादपीरितात् ॥ रहस्यतरमस्तीदं तत्फलत्वादनुत्तमम् ॥ ३ ॥ सर्वज्ञेनेश्वरेणाप्ततमेनागम-हेतुना ॥ आसमन्तान्मया साक्षात्कथितं परमेष्ठिना ॥ ४ ॥ एतन्मयोपदिष्टं त्वां गीताशास्त्रमशेषतः ॥ पर्यालोच्य धिया शुद्धया साकल्येन विवेकतः ॥ ५ ॥ एकवाक्यतया ज्ञात्वा स्वाधिकारानुरूपतः ॥ श्रेयोमार्गं विनिश्चित्य यथेच्छसि तथा कुरु ॥ ६ ॥ एतदुक्तं भवत्यत्र गीताशास्त्रार्थसंग्रहे ॥ नरस्याशुद्धचि-त्तस्य मुमुक्षोर्मोक्षसाधनम् ॥ ७ ॥ कर्मयोगो यथाशास्त्रं फलासङ्गविवर्जितः ॥ ईशार्पणधिया सम्यक्कृतः सत्त्वविशुद्धिकृत् ॥ ८ ॥ ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः ॥ कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ॥ ९ ॥ इति स्मृत्या तथा श्रुत्या तमेतमितिवाक्यतः ॥ निष्कामः कर्मयोगोऽसौ प्रथमं साधनं मतम् ॥१०॥ ततः शुद्धधियः सम्यग्वैराग्यादियुतस्य च ॥ सम्यग्विविदिषोत्पत्तावाचार्यमुपसृत्य च ॥११॥ ज्ञानसाधनवेदान्तगीर्विचाराय शास्त्रतः ॥ समस्तकर्मसंन्यासो ब्राह्मणस्य विधीयते ॥ १२ ॥ ततः कृष्णै-कशरणतया पूर्वोक्तसाधनैः ॥ अमानित्वादिभिर्नित्यं श्रवणादिपरस्य च ॥ १३ ॥ ब्रह्मात्मैक्यावबोधस्य साक्षात्कारस्य सन्मतेः ॥ प्रादुर्भावेन मोक्षोऽस्ति सिद्ध इत्येव निर्णयः ॥ १४ ॥ क्षत्रियादेस्तु संन्यासा-नधिकारितया तथा ॥ मुमुक्षोश्चेतसः शुद्धौ जातायां तदनन्तरम् ॥ १५ ॥ ईशाज्ञापालनार्थं च लोक-संग्रहसिद्धये ॥ यथाकथंचित्कर्माणि कुर्वतोऽपि विरागिणः ॥ १६ ॥ कृष्णैकशरणत्वेन पूर्वजन्मकृतादपि ॥ संन्यासादेः परब्रह्मज्ञानं कृष्णप्रसादतः ॥ १७ ॥ जायते तेन सिद्धः स्यान्मोक्षस्तस्येति निर्णयः ॥ एवं विचारिते शास्त्रे पौर्वापर्यानुरोधतः ॥ १८ ॥ नास्ति गूढावकाशोऽणुमात्रमित्याशयो हरेः ॥ १९ ॥ सकलनिगमसारं मोक्षदानेऽत्युदारं भ्रमतिमिरविदारं संसृतिद्रोः कुठारम् ॥ दृढमतिसवितारं ब्रह्मविद्याविहारं निखिलगुणविचारं नौमि लक्ष्म्यैकदारम् ॥ २० ॥ ६३ ॥

भा० टी०–शास्त्रमुपसंहर्तुमिच्छन्नाह–इतीति । इत्येतत्ते तुभ्यं ज्ञायतेऽनेनेति ज्ञानं गीताशास्त्रं गुह्यात् गोप्यात् गुह्यतरमतिशयेन गोप्यं रहस्यं मया सर्वज्ञेनाप्ततमेन शास्त्रयोनिना आख्यातं कथितम् । एतद्य-थोक्तशास्त्रमशेषेण समस्तं विमृश्य विमर्शनमालोचनं कृत्वा यथेच्छसि तथा कुरु, नत्वेतत्साकल्येनावि-मृश्यैवेत्यर्थः ॥ ६३ ॥

प० टी०–अथ सर्वगीतार्थमुपसंहरन्नाह–इतीति । इत्येवं प्रकारेण ते तुभ्यं मया करुणार्णवेन ज्ञान-मात्मविवेकरूपमाख्यातम् । किंभूतम् ? गुह्यान्मन्त्रादिरहस्यादपि गुह्यं गोप्यतमम् । एतदशेषेण पूर्वापरवा-क्यानुसंधानपूर्वकं विमृश्य विचार्य यथेच्छसि मोक्षमार्गमपेक्षसे तथैवोक्तमुपायं कुरु ॥ ६३ ॥

रा० टी०–एवं भगवानर्जुनस्यातिगोप्यं तत्त्वमुपदिश्य तदनुवादपूर्वं तूष्णीं स्थितमर्जुनमाक्षिपति–इतीति । गुह्याद्गुह्यतरमतिगोप्यमिति प्रागुक्तप्रकारेण ज्ञानं ज्ञेयं तुभ्यं मया आख्यातम् । एतदशेषेण विमृश्य विचार्य यथेच्छसि तथा कुर्वित्याक्षेपः ॥ ६३ ॥

**सर्वगुह्यतमं भूयः शृणु मे परमं वचः ॥**
**इष्टोऽसि मे दृढमतिस्ततो वक्ष्यामि ते हितम् ॥ ६४ ॥**

त० टी०–अतिगम्भीरस्य गीताशास्त्रस्याशेषेण विमर्शनक्लेशपरिहाराय स्वयमेव कृपया तत्सारं संगृह्य ग्राहयितुं दृढीकरोति–सर्वगुह्यतममिति । पूर्वं गुह्यतरमुक्तमिदानीं तस्मादन्येभ्योऽपि गुह्य-तरेभ्यो गुह्यतममतिरहस्यं परमं प्रकृष्टं मे वचः भूयस्तत्र तत्रोक्तमपि त्वदनुग्रहार्थं पुनर्वक्ष्यमाणं

श्रृणु । नन्वतिरहस्यं कुतः कथयसि । तत्राह—यतस्त्वं मे ममेष्टः प्रियोऽसि दृढमतिर्विश्वासयुक्तस्ततस्ते हितं वक्ष्यामि ॥ ६४ ॥

म० टी०—अतिगम्भीरस्य गीताशास्त्रस्याशेषतः पर्यालोचनक्लेशनिवृत्तये कृपया स्वयमेव तस्य सारं संक्षिप्य कथयति—सर्वेति । पूर्वं हि गुह्यात् कर्मयोगात् गुह्यतरं ज्ञानमाख्यातम्, अधुना तु कर्मयोगात्तत्फलभूतज्ञानाच्च सर्वस्मादतिशयेन गुह्यं रहस्यं गुह्यतमं परमं सर्वतः प्रकृष्टं मे मम वचो वाक्यं भूयः तत्र तत्रोक्तमपि त्वदनुग्रहार्थं पुनर्वक्ष्यमाणं शृणु । न लाभपूजाख्यात्याद्यर्थं त्वां ब्रवीमि । किं तु इष्टः प्रियोऽसि मे मम दृढमतिशयेन इति यतस्ततस्तेनैवेष्टत्वेन वक्ष्यामि कथयिष्याम्यपृष्टोऽपि सन्नहं ते तव हितं परमं श्रेयः ॥ ६४ ॥

शं० टी०—एवमारुरुक्षोरारूढस्य च कर्तव्यांशं निर्धार्य ज्ञानतत्फलसिद्धेश्चित्तशुद्धिरेवासाधारणकारणं, चित्तशुद्धौ सिद्धायां ज्ञानसिद्धिः सुलभतरा, तदभावे ज्ञानं ज्ञाननिष्ठा संन्यासश्च न फलति, साधनदार्ढ्येनैव भवितव्यमतश्चित्तशुद्ध्यै कर्मैवारुरुक्षोरीश्वरार्पणबुद्ध्या सम्यक्कर्तव्यमिति दृढतरमुपदेष्टुमुपदेष्टव्यं स्तौति मुमुक्षोः श्रद्धयाऽत्रैव प्रवृत्तिसिद्ध्ये—सर्वेति । सर्वाणि यानि गुह्यानि गोप्यान्यणिमादिसिद्धिसाधनानि मन्त्रौषधादीनि तेभ्यो मोक्षसुखैकसाधनत्वेन गुह्यतरं ज्ञानतत्सिद्धेः कारणत्वादीश्वरैकशरणत्वेन कर्माचरणं गुह्यतममत्यन्तरहस्यं तद्बोधकं मम वचनमपि सर्वगुह्यतममेव । किंच परमं परमपुरुषार्थसाधनत्वात्परममुत्कृष्टं मे मम वचो वचनं 'मत्कर्मपरमो भव' इति 'मत्कर्मकृन्मत्परमः' इति तत्र तत्रोक्तमपि भूयः पुनरपि दार्ढ्यायोच्यमानं शृणु, श्रद्धया श्रुत्वा तत्परो भवेत्यर्थः । नन्वस्य वचनस्य सर्वगुह्यतमत्वे कथमुपदेश उपयुज्यत इत्यत आह—इष्ट इति । यतः पितुः पुत्रवत् त्वं मदंशत्वान्मे ममेष्टः प्रियोऽसि ततस्तस्मादेव हेतोस्ते तव इत्येवं वक्ष्यमाणलक्षणं दृढं फलाव्यभिचारि पूर्वोक्तमपि दृढं यथा तथा हितं हितसाधनं वक्ष्याम्युपदेक्ष्यामि श्रृणित्यर्थः ॥ ६४ ॥

श्री० टी०—अतिगम्भीरं गीताशास्त्रमशेषतः पर्यालोचयितुमशक्नुवतः कृपया स्वयमेव तस्य सारं संगृह्य कथयति—सर्वगुह्यतममितित्रिभिः । सर्वेभ्योऽपि गुह्येभ्यो गुह्यतमं मे वचः तत्र तत्रोक्तमपि भूयः पुनरपि वक्ष्यमाणं शृणु । पुनः पुनः कथने हेतुमाह—दृढमत्यन्तं मे मम त्वमिष्टः प्रियोऽसीति मत्वा । तत एवंहेतोस्ते हितं वक्ष्यामि । यद्वा त्वं ममेष्टोऽसि, मया वक्ष्यमाणं च दृढं सर्वप्रमाणोपेतमिति निश्चित्य ततस्ते वक्ष्यामीत्यर्थः । दृढमतिरिति केचित्पठन्ति ॥ ६४ ॥

स० टी०—अतिगम्भीरभावस्य गीताशास्त्रस्य सर्वतः ॥ पूर्वापरपरामर्शबुद्धिक्लेशनिवृत्तये ॥ १ ॥ कृपया स्वयमेवेशः सारं संक्षिप्य तस्य च ॥ कथयत्यात्मसिद्धान्तं भगवान्करुणानिधिः ॥ २ ॥ कर्मयोगात्पुरागुह्याज्ज्ञानं गुह्यतरं स्मृतम् ॥ इदानीं कर्मयोगाच्च तत्फलात्तत्त्वबोधतः ॥ ३ ॥ सर्वस्मादपि संगोप्याद्रहस्यमतिदुर्लभम् ॥ प्रकृष्टं सर्वतो वाक्यं ममाप्तस्येश्वरस्य च ॥ ४ ॥ तत्र तत्रोक्तमप्येतत्पुनस्ते प्रीतिकाम्यया ॥ वक्ष्यमाणं श्रृणु त्वं भोः किमर्थं ते ब्रवीम्यहम् ॥ ५ ॥ न लाभपूजाख्यात्यादिसिद्धये किंतु मे हरेः ॥ प्रियोऽस्यातिशयेनेति यस्मात्तेनैव हेतुना ॥ ६ ॥ कथयिष्याम्यपृष्टोऽपि श्रेयस्ते परमं ह्यहम् ॥ ७ ॥ भक्तिर्हरौ प्रेमघनातिदुर्लभा न गुह्यसिद्धान्त इतःपरं नृणाम् ॥ आश्रित्य तां मोक्षपदं करे स्थितं न तां विना श्रेय उपैति कश्चन ॥ ८ ॥ ६४ ॥

भा० टी०—अतिगम्भीरस्य गीताशास्त्रस्य पौर्वापर्येण विमर्शनद्वारा प्रतिपत्तुमसमर्थं प्रति स्वयमेव करुणानिधिः श्रीभगवान्वासुदेवस्तस्य सारं संगृह्य कथयति, तथा भूयोऽपि मयोच्यमानं सर्वगुह्यतमं सर्वगुह्येभ्योऽत्यन्तरहस्यमुक्तमप्यसकृत् भूयः पुनः मे मम परमं प्रकृष्टं वचो वाक्यं शृणु । यत्तु पूर्वं गुह्यात्कर्मयोगात् गुह्यतरं ज्ञानमाख्यातम्, अधुना तु कर्मयोगात् तत्फलभूतज्ञानयोगाच्च सर्वस्मादतिशयेन गुह्यतममिति

तु नादर्तव्यम् । पूर्वस्मिन्श्लोके ज्ञानं करणव्युत्पत्त्या गीताशास्त्रपरमिति व्याख्यातत्वात् । 'इदं तु ते गुह्यतमं प्रवक्ष्याम्यनसूयवे' इत्यादौ ज्ञानस्य गुह्यतमत्वाभिधानायाऽत्र ज्ञानादपि गुह्यतममन्यदित्यभिधानस्यानुचितत्वाच्च । किमर्थं पुनः पुनः आवयसीति चेत्, न भयान्नाप्यर्थकारणाद्वा वक्ष्यामि, किं तु दृढमव्यभिचारेणात्यन्तं मे मम इष्टः प्रियोऽसि तत्तस्मात्कारणाद्वक्ष्यामि कथयिष्यामि ते तव हितं परं ज्ञानप्राप्तिसाधनं, तद्धि सर्वहितानां हिततमम् ॥ ६४ ॥

प० टी०—अथोक्तप्रकारेणोपायं कर्तुमशक्तमर्जुनं प्रति परमकारुणिकः परमात्मा संक्षेपेण सर्वगीतार्थसारं वक्तुमुपक्रमते—सर्वगुह्यतममिति त्रिभिः । सर्वेभ्योऽपि परमं गुह्यतमं वक्ष्यमाणं मे वचः शृणु । न स्वसंगोपासीनस्य परमात्मनस्तव मयि कथमेतावानममतानुबन्ध इत्याह—इष्ट इति । यतस्त्वं दृढमतिर्दृढसंकल्प इति मे इष्टोऽभीष्टः संमतोऽसि ततस्तेन कारणेन ते हितमुपकारं वक्ष्यामि ॥ ६४ ॥

रा० टी०—तत्त्वसारमुपसंहृत्य साधनसारकथनमुपसंहर्तुं प्रतिजानीते—सर्वेति । चतुर्दशादौ साधनसारस्योक्तत्वाद्भूय इत्युक्तम् । पुनरित्यर्थः । सर्वसाधनेषु गोप्यतमं मे परमं वचः शृणु मे इष्टोऽसि । दृढमिति निश्चयः । ततस्ते हितं वक्ष्यामि उपसंहाररूपेण कथयिष्यामीत्यर्थः ॥ ६४ ॥

**मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु ॥**
**मामेवैष्यसि सत्यं ते प्रतिजाने प्रियोऽसि मे ॥ ६५ ॥**

त० टी०—तदेवाह—मन्मना भवेति । मयि भगवति पुरुषोत्तमे चेतसः शुभाश्रये मनो यस्य स मन्मनास्तथा भव, पराभक्तिलक्षणं सर्वदा मद्ध्यानं कुर्वित्यर्थः । तत्साधनमाह—मद्भक्तो भवेति । मद्भक्तिं कुर्वित्यर्थः । सा च भगवदर्था क्रियैव । "सुरर्षे विहिता शास्त्रे हरिमुद्दिश्य या क्रिया । सैव भक्तिरिति प्रोक्ता यया भक्तिः परा भवेत्" इति वचनात् । तामेवोपदिशति—मद्याजीति । द्रव्ययज्ञास्तपोयज्ञा इत्यादिनोक्तैः पञ्चयज्ञैः अभिगमनोपादानेज्यास्वाध्याययोगैः पञ्चकालोक्तमद्भजनैर्वा मत्पूजनशीलो भवेत्यर्थः । तत्र द्रव्ययज्ञो विभवे सति सर्वसमृद्धिमदुपचारैर्मदाराधनं, निष्किंचनानां यथाशक्ति पत्रपुष्पफलादिभिर्यथोपलब्धैरतिप्रीत्या भगवदाराधनं, तपोयज्ञश्च स्वधर्मक्षुत्पिपासाशीतोष्णादिसहनं, योगयज्ञश्च यमनियमासनादिनियमपूर्वकसगर्भप्राणायामैश्चेतसो जयाभ्यासः, स्वाध्याययज्ञश्च यथाधिकारमुपनिषद्गीतासहस्रनामादिस्तोत्रपाठरूपः, ज्ञानयज्ञश्च श्रुताधीतोपनिषद्गीताद्यर्थस्य मननकथनरूपः । अथ कृतस्य यजनस्य वैगुण्यपरिहारार्थमाह—मां नमस्कुरु । मां सर्वेश्वरं सर्वशक्तिं वात्सल्यकारुण्यादिगुणार्णवं नियमेन नित्यमष्टाङ्गैः प्रणमेत्यर्थः । एतत्साधनभक्तेः फलमुक्तं विष्णुधर्मे "अश्वमेधसहस्राणां सहस्रं यः समाचरेत् । नासौ तत्फलमाप्नोति मद्भक्त्या यदवाप्नुयात्" इति । एवं पञ्चविधमदाराधनेन निरन्तरध्याननिष्ठो भूत्वा मत्साक्षात्कारेण ब्रह्मरुद्रादिभिर्दुराराध्यं परमप्राप्यं परमानन्दघनं मामेवैष्यसि प्राप्स्यसि, एतत्सत्यं न प्रलम्भनमिति ते तुभ्यं प्रतिजाने प्रतिज्ञां करोमि । यतस्त्वं मे प्रियोऽसि, प्रियस्य प्रलम्भनमनुचितमिति भावः । अत एव महाभारते ध्यानस्यैव परमश्रेयोहेतुत्वं श्रीव्यासेन निर्णीतम् "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणः सदा" इति । मोक्षधर्मे मेधाविनाऽपि तथैव निश्चितं "सोऽहं त्वहिंस्रः सत्यात्मा कामक्रोधविवर्जितः । जितेन्द्रियः शमी भूत्वा मृत्युं जेष्याम्यमर्त्यवत् । अन्तर्बहिश्च यत् किंचिन्मनोव्यासङ्गकारणम् । तत्सर्वं संपरित्यज्य ध्यानेऽभ्यस्येन्मनः सदा । मनसश्चेन्द्रियाणां च कृत्वैकाग्र्यं समाधितः । तावत्स्थास्यामि नियतो यावत्संक्षयमागतम् ।

विमुक्तविषयासङ्गं सन्निरुध्य मनो हृदि । यदा यात्युन्मनीभावं तदा निर्वाणमृच्छति । कामक्रोधभयेनेह तमसाऽऽवृतचेतसः । पिशुनाश्च कृतघ्नाश्च नास्तिका भिन्नवृत्तयः । एतन्मूढा न पश्यन्ति मोक्षद्वारमपावृतम् । अश्वमेधसहस्राणि वाजपेयशतानि च । ध्यानयोगस्य माहात्म्यं कलां नार्हन्ति षोडशीम् " इति । अत एवमुक्ते सर्वगुह्यतमे त्वद्धिते परमे मद्वचसि त्वं सर्वात्मना श्रद्दधानो यथोक्तमनुतिष्ठेति भावः ॥ ६५ ॥

म० टी०—तदेवाह—मन्मना इति । मयि भगवति वासुदेवे मनो यस्य स मन्मनाः भव सदा मां चिन्तय । द्वेषेण कंसशिशुपालादिरपि तथाऽत आह—मद्भक्तः प्रेम्णा मय्यनुरक्तः, मद्विषयेणानुरागेण सदा मद्विषयं मनः कुर्विति विधीयते । त्वद्विषयोऽनुराग एव केन स्यादित्यत आह—मद्याजी मां यष्टुं पूजयितुं शीलं यस्य स सदा मत्पूजापरो भव । पूजोपकरणाभावे तु मां नमस्कुरु—कायेन वाचा मनसा च प्रह्वीभवनेनाराधय । इदं चार्चनं वन्दनं चान्येषामपि भागवतधर्माणामुपलक्षणम् । तथा चोक्तं श्रीभागवते 'श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् । अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम् । इति पुंसाऽर्पिता विष्णौ भक्तिश्चेन्नवलक्षणा । क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम् ॥' इति । एतच्च भक्तिरसायने व्याख्यातं विस्तरेण । एवं सदा भागवतधर्मानुष्ठानेन मय्यनुरागोत्पत्त्या मन्मनाः सन् मां भगवन्तं वासुदेवमेव एष्यसि प्राप्स्यसि वेदान्तवाक्यजनितेन मद्बोधेन । त्वं चात्र संशयं मा कार्षीः, सत्यं यथार्थं ते तुभ्यं प्रतिजाने—सत्यामेव प्रतिज्ञां करोम्यस्मिन्नर्थे । यतः । प्रियोऽसि मे, प्रियस्य प्रतारणा नोचितैवेति भावः । सत्यन्ते प्रारब्धकर्मणामन्ते सति मामेष्यसीति वा । अनुवादापेक्षया विश्वासदार्ढ्यप्रयोजनं प्रथमं व्याख्यातमेव श्रेयः । अनेन यत्पूर्वमुक्तं 'यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इति तद्व्याख्यातं मच्छब्देनेश्वरत्वप्रकटनात् ॥ ६५ ॥

शं० टी०—वक्ष्यामीति यत्प्रतिज्ञातं तमेव गुह्यतमं भागवतं कर्मयोगं साङ्गमुपदिशति—मन्मना इति । मद्याजी मद्यजनशीलो भव, मन्मनाः मय्येव मनो यस्य स मन्मना मच्चित्तो भव, मद्भक्तः मामेव भजतीति मद्भक्तो मद्भजनो भव, मां नमस्कुरु नमस्कारमपि मह्यमेव कुरु । यद्वा मद्याजी वेदोक्तैरेव स्वकर्मभिरौपासनाद्यश्वमेधान्तैर्मामेव परमेश्वरं यष्टुमाराधयितुं शीलमस्यास्तीति मद्याजी भव, स्वकर्मभिर्मामेव यज मत्प्रीतये सर्वाणि कर्माणि कुर्वित्यर्थः । पुत्रादिकामनयैव परमेश्वरस्याराधनं कृतवतः परमपुरुषार्थासंभवात्कामराहित्येन भवितव्यमित्याशयेनाह—मन्मना इति । मयि मोक्षस्वरूप एव मनो यस्य स मन्मना मोक्षैककामो भव, न तु पुत्रकामः पशुकामो राष्ट्रकामः स्वर्गकामो मल्लोककामश्च भवेत्यर्थः । स्वकर्मभिः परमेश्वरमेवाराधयतः क्रतुष्वग्नये स्वाहेत्यग्न्यादिषु देवतान्तरत्वबुद्धौ सत्यां परमेश्वरभक्तिर्विच्छिद्यते, ततः सर्वत्र मद्बुद्धिः कर्तव्येत्याशयेनाह—मद्भक्त इति । 'ब्रह्मा नारायणः शिवश्च नारायणः' इति 'तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः' इति परमेश्वरस्यैव सर्वदेवतात्मकत्वश्रवणात्सर्वदेवतात्मकं मामेकमेव भजतीति मद्भक्तो भव—वह्न्यादिषु सर्वत्र मद्बुद्ध्या सर्वात्मकं मामेकमेव भजेत्यर्थः । फलेषु कामत्यागेनाग्न्यादिष्वीश्वरत्वबुद्ध्या च रागद्वेषादिदोषा न संभवन्ति । तथाप्यहं ब्राह्मणो याजी पण्डित इत्याद्यभिमानलक्षणं कालुष्यं चित्तप्रसत्तिप्रतिबन्धकं त्वयि तन्निवर्तयितुमाह—मामिति । 'ईश्वरो जीवकलया प्रविष्टो भगवानिति' 'वासुदेवः सर्वम्' इति न्यायेन देहाभिमाननिवृत्तये सर्वभूतात्मकं मां सर्वत्र नमस्कुरु न तु केवलदारुपाषाणादिरूपमित्यर्थः । एवं साधनसंपत्त्या स्वकर्मणा मदाराधनतत्परस्त्वं मत्प्रसादाच्चित्तशुद्धिं प्राप्य संप्राप्तात्मतत्त्वविज्ञानः सन् मामेव त्रिविधपरिच्छेदशून्यं सच्चिदानन्दैकरसं परं ब्रह्मैष्यसि मद्भावं प्राप्स्यसि । सत्यं ब्रवीमि नात्र संदेहः कर्तव्यः । ते तवाहमस्मिन्नर्थे प्रतिजाने प्रमाणं करोमि, यस्मान्मे मम त्वमुत्तमभक्त्या प्रियोऽसि,

तस्मात्तव मद्भावापत्तौ संशयो नास्तीति प्रतिज्ञां करोमीत्यर्थः। श्रद्धाभक्तिभ्यां स्वकर्मभिर्मदाराधनमेव कुर्वाणो निरुक्तसाधनसंपन्नो मुमुक्षुः सत्त्वशुद्धिसंभावितात्मविज्ञानेन मद्भावं याति, नास्त्यत्र संशय इति भगवति प्रतिज्ञां कृतवति सति कस्य ब्राह्मणस्य प्रामाणिकस्य योनिबीजशुद्धिमतो विश्वासो न स्यात्? अत आरुरुक्षोर्मोक्षैककामस्याकामनयेश्वरप्रीत्यै कर्मैवावश्यं कर्तव्यमिति सिद्धम्॥ ६५॥

**श्री० टी०**—तदेवाह—**मन्मना इति**। मन्मना भव, मच्चित्तो भव, ममैव भक्तो भव। मद्याजी मद्यजनशीलो भव। मामेव नमस्कुरु। एवं वर्तमानस्त्वं मत्प्रसादाल्लब्धज्ञानेन मामेवैष्यसि प्राप्स्यसि। अत्र च संशयं मा कार्षीः। त्वं हि मे प्रियोऽसि, अतः सत्यं यथा भवत्येवं तुभ्यमहं प्रतिजाने प्रतिज्ञां करोमि॥ ६५॥

**स० टी०**—तदेवाह कृपासिन्धुः स्वभक्तायार्जुनाय च॥ वासुदेवे भगवति मयि यस्य मनः स च॥ १॥ सदा मां चिन्तयात्यर्थं मद्भक्तो भव सर्वदा॥ प्रेम्णा मय्यनुरक्तः सन्मद्विषयं मनः कुरु॥ २॥ मामेव श्रीपतिं यष्टुं शीलं यस्य तथा भव॥ मय्येवात्यनुरागेण मत्पूजातत्परो भव॥ ३॥ पूजोपकरणाभावे मामेव त्वं नमस्कुरु॥ कायेन मनसा वाचा प्रह्वीभावेन मां भज॥ ४॥ एवं च भगवद्धर्मानुष्ठानेन मयीश्वरे॥ अनुरागोद्भवेनैव भवेद्भागवतोत्तमः॥ ५॥ एवं भागवतो भूत्वा भगवन्तं स मां हरिम्॥ प्राप्स्यसि श्रुतिगीर्जन्यबोधेनात्मानमद्वयम्॥ ६॥ त्वमत्र संशयं दुष्टं मा कार्षीर्मद्वचस्यतः॥ सत्यामेव प्रतिज्ञां ते ह्यस्मिन्नर्थे करोम्यहम्॥ ७॥ यतः प्रियोऽसि मे तस्मान्न प्रियस्य प्रतारणा॥ उचितातोऽतिविश्वासं मदुक्तेऽर्थे सदा कुरु॥ ८॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥ ९॥ इत्यत्रोक्तस्य यच्छब्दप्रतिपाद्यस्य वस्तुनः॥ मच्छब्देनात्र कथनं कृतं भगवता स्वयम्॥ १०॥ स एव भगवान्कृष्णो वासुदेवाभिधो विभुः॥ अर्च्यो ध्येयस्तथा ज्ञेयः शरण्य इति निश्चितम्॥ ११॥ नातः परतरं किंचिच्छ्रेयःसाधनमिष्यते॥ समस्तेषु च वेदेषु पुराणादिषु वा स्मृतौ॥ १२॥ ६५॥

**भा० टी०**—किं तदित्यपेक्षायामाह—**मन्मना इति**। मन्मना मयि भगवति वासुदेवे मनो यस्य स मच्चित्तो भव—सर्वदा मामेव चिन्तय। मद्भक्तो मच्छ्रवणकीर्तनादिमद्भजनो भव। मद्याजी मद्यजनशीलो भव। मां नमस्कुरु नमस्कारमपि मामेव कुरु। तत्रैवं वर्तमानो मयि वासुदेवे एव समर्पितसाध्यसाधनप्रयोजनो मामेवैष्यसि आगमिष्यसि मदभेदज्ञानं प्राप्स्यसि। अस्मिन्नर्थे सत्यं ते तव प्रतिजाने सत्यां प्रतिज्ञां करोमि, यतः प्रियोऽसि मे। तथा च मम भगवतः सत्यप्रतिज्ञत्वं बुद्ध्वा मद्भक्तेरवश्यंभावि मत्प्राप्तिफलत्वमवधार्य मच्छरणैकपरायणो भवेति वाक्यार्थः॥ ६५॥

**प० टी०**—तत्किमित्याह—**मन्मना इति**। यदान्तर्दृष्टिर्भवसि तदा मन्मना अहमेव मनसि यस्यासौ मन्मना न विषयान्तरम्। चित्तभित्तौ चित्रन्यस्तमिव मां कुर्वित्यर्थः। बाह्यदृष्टौ भक्तो भव नवप्रकारभक्तियुक्तो भव। कर्मणि क्रियमाणे मद्याजी मद्यजनशीलो भव। तत्र कर्माङ्गदेवतास्वन्तर्यामित्वेन स्थितं मामेव नमस्कुरु। अनेनोपायेन मामेवैष्यसि प्राप्स्यसीति न प्ररोचनामात्रं, किं तु सत्यं यथा तथा प्रतिजाने प्रतिज्ञां करोमि, यतस्त्वं मद्रूपत्वान्मे प्रियोऽसि परमप्रेमास्पदमसि॥ ६५॥

**रा० टी०**—तदाह—**मन्मना इति**। यतो मे प्रियोऽसि, अतो मन्मनस्त्वादिसाधनसारचतुष्टयेन मामेवैष्यसि प्राप्स्यसि। ते सत्यं प्रतिजाने अवश्यं मत्प्राप्तिर्भवतीति प्रतिज्ञां करोमि, नात्र संदेहः कार्य इति भावः॥ ६५॥

**सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज॥**
**अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः॥ ६६॥**

त० टी०-एवं भगवदुपदिष्टे सर्वशास्त्रगुह्यतमसिद्धान्ते सर्वात्मना स्वानन्यभजने श्रद्दधानमपि धर्मविन्मन्वादिमहर्षिविहितयज्ञदानतपःस्वाध्यायाग्निहोत्रमहायज्ञाद्यनुष्ठाने कर्तव्ये यथोक्तं केवलभगवद्भजनं नोपपद्येत तत्परित्यागे च विहितधर्मत्यागजन्यपापापत्तिप्रसङ्गेन भजनभङ्गः स्यात् । किंच "यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् । एतान्यपि तु कर्माणि सङ्गं त्यक्त्वा फलानि च । कर्तव्यानीति मे पार्थ ! निश्चितं मतमुत्तमम् । पुनः "स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः" इत्येवमादिवचनैस्तेषामवश्यकर्तव्यताया भगवता स्वयमपीह विहितत्वात् कथं तत्त्यागो युज्येत ? अत्यागे च भगवति मनोनिवेशनपूर्वकं तदैकान्त्यभजनं न स्यादन्यकर्मादौ प्रवृत्तत्वात् । एवं च किं हेयं किमुपादेयमित्यनिश्चयात् संदेहव्याकुलचित्तमर्जुनमालोच्य श्रीभगवान्वासुदेवस्तत्संदेहमपाकुर्वन् स्वस्य निरङ्कुशेश्वरत्वं च ख्यापयन् स्वशरणागतस्य सर्वपापक्षयकर्तृत्वेन स्वप्रपत्तिमेव द्रढयति-सर्वधर्मानिति । सर्वान् धर्मान्यज्ञदानतपोऽग्निहोत्रदर्शपौर्णमासादीन्नित्यनैमित्तिकान्साधनाङ्गफलसहितान्परित्यज्य एतैरेव मे श्रेयो भविष्यतीति तेष्वादरं विहाय तदनुष्ठानं कुर्वन्नकुर्वन्वा तत्करणाकरणयोर्गुणदोषबुद्धिमकृत्वेत्यर्थः । मामेकं शरणं व्रज मां निखिलहेयगन्धशून्यं भगवन्तं ज्ञानशक्तिबलैश्वर्यतेजोवीर्यवात्सल्यकारुण्यदयाक्षमाद्यनन्तकल्याणगुणार्णवं सर्वनियन्तारं सर्वफलप्रदातारं सच्चिदानन्दमूर्तिमेकमतिशयसाम्यशून्यं ब्रह्मरुद्रेन्द्रादिवन्द्यं सर्वमुमुक्षूपास्यं शरणं शरण्यं प्राप्यं रक्षकं च विज्ञाय मदानुकूल्यसंकल्पाद्याचरणाध्यवसायेन कर्मदेवादिनिरपेक्षाद्भगवदनुग्रहादेवाहं कृतार्थो भविष्यामीति विश्वासपूर्वकं स्वस्य स्वतन्त्रकर्तृत्वाभिमानं विहाय स्वहिताहितं सर्वं मदधीनं निश्चित्य प्रेमप्रकर्षेण गङ्गाप्रवाहवदनवच्छिन्नचिन्तनेन प्रपद्यस्वेत्यर्थः । न चैवं सर्वधर्मानादरेण मम पापसंबन्धः स्यादिति शङ्कनीयमित्याह-अहं त्वां सर्वपापेभ्यो मोक्षयिष्यामीति । अहं स्वतन्त्रः सर्वेश्वरः स्वभक्तिमार्गसंरक्षणाय स्वीयाराधनधर्मप्रवर्तनाय स्वेच्छयैव भक्तानुग्रहाय यदुकुलेऽवतीर्णः मयि भक्त्यतिशयान्नित्यनैमित्तिककर्मानादरकारिणं मदेकशरणं त्वां सर्वपापेभ्योऽनेकजन्मस्वकृत्यकरणकृत्याकरणजनितानि बहुपापानि इह च प्रायश्चित्ताद्यकरणात्स्ववर्णाश्रमोचितधर्मानादरणाच्च बन्धुवधादिनिमित्ताच्च जायमानानि प्राक्तनभविष्यद्वर्तमानानि पापानि तेभ्यः सर्वेभ्यो मोक्षयिष्यामि स्वसामर्थ्यादेव । अतो मा शुचः प्रायश्चित्ताकरणात्स्वधर्मानादराद्बन्धुवधाच्च यानि मे पापानि तानि कथं तरिष्यामीति शोकं मा कृथाः । नचैवं "न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते । नियतस्य तु संन्यासः कर्मणो नोपपद्यते । मोहात्तस्य परित्यागस्तामसः परिकीर्तितः" इत्यादिस्वधर्माचरणावश्यकत्वप्रतिपादकस्ववचनविरोध इति वाच्यं, यथोक्तभक्तिहीनानां तदधिकारयोग्यतापादनाय तेषां नियतत्वेनाङ्गीकार्यत्वात् । "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन" इति श्रुत्या तेषां विविदिषायामेवोपयोगस्य निर्णीतत्वात् जिज्ञासोत्पादनेन तेषामुपक्षीणत्वात् । तथोक्तं श्रीभागवतैकादशे "निवृत्तं कर्म सेवेत प्रवृत्तं मत्परस्त्यजेत् । जिज्ञासायां संप्रवृत्तो नाद्रियेत् कर्मचोदनाम् । तावत् कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथाश्रवणादौ वा श्रद्धा यावन्न जायते" इति । अन्यथा "न वेदयज्ञाध्ययनैर्न दानैर्न च क्रियाभिर्न तपोभिरुग्रैः । एवंरूपः शक्य अहं नृलोके द्रष्टुं त्वदन्येन कुरुप्रवीर ! ॥ नाहं वेदैर्न तपसा न दानेन न चेज्यया । शक्य एवंविधो द्रष्टुं दृष्टवानसि मां यथा ॥ भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ! । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परन्तप ॥ मत्कर्मकृन्मत्परमो मद्भक्तः सङ्गवर्जितः । निर्वैरः सर्वभूतेषु यः स मामेति पाण्डव ॥" इति पारमेश्वररूपदर्शनं प्रति यज्ञदानादीनामकिंचित्करत्वमभिधायानन्यभक्तेरेव तद्धेतुत्वकथनपूर्वकं स्वकर्मकर्तुर्निर्वैरस्य स्वभ-

त्तस्यैव स्वप्राप्त्यभिधायकवाक्यवृन्दविरोधः कथं न शङ्क्यते बुधैः। किंच "भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे ॥ यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः। तदा देवमविज्ञाय दुःखस्यान्तं निगच्छति" इत्यन्वयव्यतिरेकवाक्याभ्यां निःशेषदुःखकर्मसंशयनिवृत्तिहेतुत्वेन परमात्मज्ञानस्यैव हेतुत्वाभिधानात्तस्य च पूर्वोक्तानन्यभक्तेरेव हेतुत्वात्। "शृण्वन्तोऽपि बहवो यं न विद्युः नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनुं स्वाम्। न स शक्यः सुरैर्द्रष्टुं न चान्यैरपि सत्तम!। यस्य प्रसादं कुरुते स वै तं द्रष्टुमर्हति" इति श्रुतिस्मृतिभ्यां भगवत्प्रसादस्यैव तद्दर्शनहेतुत्वात्। प्रसादविषयोऽपि तदनन्यभक्त एव। "नास्य भक्तात्प्रियतरो लोके कश्चन विद्यते। अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज! ॥ साधुभिर्ग्रस्तहृदयो भक्तैर्भक्तजनप्रियः। नाहमात्मानमाशासे मद्भक्तैः साधुभिर्विना ॥ श्रियमात्यन्तिकीं ब्रह्मन् येषां गतिरहं परा। न मे प्रियश्चतुर्वेदी मद्भक्तः श्वपचः प्रियः ॥ तस्मै देयं ततो ग्राह्यं स च पूज्यो यथा ह्यहम्" इति महाभारतश्रीभागवतरेवाखण्डादिषूक्तभगवद्वचनेभ्यः। तथा धर्मविदग्रेसरेण याज्ञवल्क्येनाप्युक्तम् "इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम्। अयं तु परमो धर्मो यद्योगेनात्मदर्शनम्" इत्यादिश्रुतिस्मृतिपुराणादिवाक्यैर्भगवदनन्यभक्तिरेव परमो धर्म इति सिद्धम्। तस्माद्यथोक्तभक्तिहीनो मत्प्रपत्तिशून्यः यथेष्टाचारेण स्ववर्णाश्रमोचितधर्मत्यागी मदाज्ञाविरुद्धाचरणात् पतितः स्यात्। नतु मदनन्यशरणो मद्भक्त्यावेशाद्यज्ञादिकर्म कुर्वन्नुपेक्षको वा कदाऽपि (न) कथमपि पुरुषार्थाद्भ्रश्यते मदनुग्रहात्। तथा मोक्षधर्मे नारायणीयाख्याने भगवदनन्यशरणस्य प्रपत्त्यैव सर्वपापक्षयपूर्वकं सर्वपुरुषार्थावाप्तिरभिहिता। तथाहि "अनेनैव प्रपन्नस्य भगवन्तं सनातनम्। तस्यानुबन्धाः पाप्मानः सर्वे नश्यन्ति तत्क्षणात् ॥ कृतान्यनेन सर्वाणि तपांसि तपतां वर। सर्वतीर्थाः सर्वयज्ञाः सर्वदानानि तत्क्षणात् ॥ कृतान्यनेन मोक्षश्च तस्य हस्ते न संशयः। यद्येन कामकामेन संसाध्यं साधनान्तरैः ॥ मुमुक्षुणा यत्सांख्येन योगेनापि च भक्तितः। प्राप्यते परमं धाम यतो नावर्तते यतिः ॥ तेन तेनाप्यते तत्तन्न्यासेनैव महामुने। परमात्मा च तेनैव साध्यते पुरुषोत्तमः। या वै साधनसंपत्तिः पुरुषार्थचतुष्टये। तया विना तदाप्नोति नरो नारायणाश्रयः" इति पुण्डरीकाख्याने च "अश्वमेधशतैरिष्ट्वा वाजपेयशतैरपि। नाप्नुवन्ति च सुगतिं नारायणपराङ्मुखाः। ये नृशंसा दुरात्मानः पापाचाररतास्तथा। तेऽपि यान्ति परं धाम नारायणपदाश्रयाः" इत्यन्वयव्यतिरेकाभ्यां भगवदनन्यशरणानामेव परमपदप्राप्त्यभिधानं, नतु केवलयज्ञादिकर्मनिष्ठानामिति निर्णीतम्। अत्र नृशंसत्वादिविशेषणानि प्रपत्तिपूर्वकालानीति बोध्यम्। तथोक्तं सात्वततन्त्रे "दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकः पुरा। समाश्रयेदादिदेवं श्रद्धया शरणं हि यः। निर्दोषं विद्धि तं जन्तुं प्रभावात्परमात्मनः" इति। अपिशब्देन यद्येवंविधा दुराचारिणोऽपि भगवन्तं प्रपद्य सर्वदोषनिरासेन परं धाम प्राप्नुवन्ति चेत्तर्हि सदाचारनिष्ठा ज्ञानवैराग्ययुक्ता भगवदनन्यशरणास्तदाराधनेतरकर्मोपेक्षकास्तत्पदं प्राप्नुयुरिति किमु वक्तव्यमिति कैमुत्यं दर्शितमित्यलं विस्तरेण ॥ ६६ ॥

म० टी०—अधुना तु 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति'। 'तमेव सर्वभावेन शरणं गच्छ' इति यदुक्तं तद्विवृणोति—सर्वेति। केचिद्वर्णधर्माः केचिदाश्रमधर्माः केचित्सामान्यधर्मा इत्येवं सर्वानपि धर्मान् परित्यज्य विद्यमानानविद्यमानान्वा शरणत्वेनानादृत्य मामीश्वरमेकमद्वितीयं सर्वधर्माणामधिष्ठातारं फलदातारं च शरणं व्रज, धर्माः सन्तु न सन्तु वा किं तैरन्यसापेक्षैः भगवदनुग्रहादेव त्वन्यनिरपेक्षादहं कृतार्थो भविष्यामीति निश्चयेन परमानन्दघनमूर्तिमनन्तं श्रीवासुदेवमेव भगवन्तमनुक्षणभावनया भजस्व, इदमेव

परमं तत्त्वं नातोऽधिकमस्तीति विचारपूर्वकेण प्रेमप्रकर्षेण सर्वानात्मचिन्ताशून्यया मनोवृत्त्या तैलधारावदविच्छिन्नया सततं चिन्तयेत्यर्थः। अत्र मामेकं शरणं व्रजेत्यनेनैव सर्वधर्मशरणतापरित्यागे लब्धे सर्वधर्मान् परित्यज्येति निषेधानुवादस्तु तत्कार्यकारितालाभाय यज्ञायज्ञीये साम्नि 'ऐरं कृत्वोद्गेयम्' इत्यत्र 'न गिरा गिरेति ब्रूयात्' इतिवत्। तथाच ममैव सर्वधर्मकार्यकारित्वान्मदेकशरणस्य नास्ति धर्मापेक्षेत्यर्थः। एतेनेदमपास्तं सर्वधर्मान् परित्यज्येत्युक्ते नाधर्माणां परित्यागो लभ्यते, अतो धर्मपदं कर्ममात्रपरमिति। नह्यत्र कर्मत्यागो विधीयते अपि तु विद्यमानेऽपि कर्मणि तत्रानादरेण भगवदेकशरणतामात्रं ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां साधारण्येन विधीयते। तत्र सर्वधर्मान् परित्यज्येति तेषां स्वधर्मादरसंभवेन तन्निवारणार्थम्। अधर्मे चानर्थफले कस्याप्यादराभावात्तत्परित्यागवचनमनर्थकमेव शास्त्रान्तरप्राप्तत्वाच्च। तस्माद्वर्णाश्रमधर्माणामभ्युदयहेतुत्वप्रसिद्धेर्मोक्षहेतुत्वमपि स्यादिति शङ्कानिराकरणार्थमेवैतद्वच इति न्याय्यम्। नच सर्वधर्माधर्मपरित्यागोऽत्र विधीयते, संन्यासशास्त्रेण प्रतिषेधशास्त्रेण च लब्धत्वादेव। न चेदमपि संन्यासशास्त्रं, भगवदेकशरणताया विधित्सितत्वात्। तस्मात्सर्वधर्मान् परित्यज्येत्यनुवाद एव। सर्वेषां तु शास्त्राणां परमं रहस्यमीश्वरशरणतैवेति। तत्रैव शास्त्रपरिसमाप्तिर्भगवता कृता, तामन्तरेण संन्यासस्यापि स्वफलापर्यवसायित्वात्, अर्जुनं च क्षत्रियं संन्यासानधिकारिणं प्रति संन्यासोपदेशायोगात्। अर्जुनव्याजेनान्यस्योपदेशे तु—वक्ष्यामि ते हितं त्वा मोक्षयिष्यामि सर्वपापेभ्यस्त्वं माशुच इति चोपक्रमोपसंहारौ न स्याताम्, तस्मात्संन्यासधर्मेष्वप्यनादरेण भगवदेकशरणतामात्रे तात्पर्यं भगवतः। यस्मात्त्वं मदेकशरणः सर्वधर्मानादरेण अतोऽहं सर्वधर्मकार्यकारि त्वा त्वां सर्वपापेभ्यो बन्धुवधादिनिमित्तेभ्यः संसारहेतुभ्यो मोक्षयिष्यामि प्रायश्चित्तं विनैव 'धर्मेण पापमपनुदति' इति श्रुतेर्धर्मस्थानीयत्वाच्च मम। अतो मा शुचः युद्धे प्रवृत्तस्य मम बन्धुवधादिनिमित्तप्रत्यवायात् कथं निस्तारः स्यादिति शोकं मा कार्षीः। 'भाष्यकारैर्निरस्तानि दुर्मतानीह विस्तरात्। ग्रन्थव्याख्यानमात्रार्थी न तदर्थमहं यते॥ 'तस्यैवाहं ममैवासौ स एवाहमिति त्रिधा। भगवच्छरणत्वं स्यात्साधनाभ्यासपाकतः॥ विशेषो वर्णितोऽस्माभिः सर्वो भक्तिरसायने। ग्रन्थविस्तरभीरुत्वाद्दिङ्मात्रमिह कथ्यते'॥ तत्राद्यं मृदु यथा—'सत्यपि भेदापगमे नाथ तवाहं न मामकीनस्त्वम्। सामुद्रो हि तरङ्गः क्वचन समुद्रो न तारङ्गः॥' द्वितीयं मध्यं यथा—'हस्तमुत्क्षिप्य यातोऽसि बलात् कृष्ण किमद्भुतम्। हृदयाद्यदि निर्यासि पौरुषं गणयामि ते॥' तृतीयमवधिमात्रं यथा—'सकलमिदमहं च वासुदेवः परमपुमान् परमेश्वरः स एकः। इति मतिरचला भवत्यनन्ते हृदयगते व्रज तान् विहाय दूरात्॥' इति दूतं प्रति यमवचनम्। अम्बरीषप्रह्लादगोपीप्रभृतयश्चास्यां भूमिकायामुदाहर्तव्याः। अस्मिन् हि गीताशास्त्रे निष्ठात्रयं साध्यसाधनभावापन्नं विवक्षितमुक्तं च बहुधा। तत्र कर्मनिष्ठा सर्वकर्मसंन्यासपर्यन्तोपसंहृता 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र। संन्यासपूर्वकश्रवणादिपरिपाकसहिता ज्ञाननिष्ठोपसंहृता 'ततो मां तत्त्वतो ज्ञात्वा विशते तदन्तरम्' इत्यत्र। भगवद्भक्तिनिष्ठा तूभयसाधनभूतोभयफलभूता च भवतीत्यन्त उपसंहृता 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज' इत्यत्र। भाष्यकृतस्तु सर्वधर्मान्परित्यज्येति सर्वकर्मसंन्यासानुवादेन मामेकं शरणं व्रजेति ज्ञाननिष्ठोपसंहृतेत्याहुः। भगवदभिप्रायवर्णने के वयं वराकाः? वचो यद्गीताख्यं परमपुरुषस्यागमगिरां रहस्यं तद्व्याख्यामनतिनिपुणः को वितनुताम्। अहं त्वेतद्बाल्यं यदिह कृतवानस्मि कथमप्यहेतु स्नेहानां तदपि कुतुकायैव महताम्॥६६॥

**शं० टी०**—एवमारुरुक्षोर्मोक्षार्थमीश्वरैकशरणत्वेन कर्तव्यः कर्मयोग एवेति निर्धार्य त्वारूढस्याविर्भूतात्मविज्ञानस्याप्रतिबद्धत्वसिद्धये सर्वकर्मसंन्यासपूर्वकं ज्ञाननिष्ठैव कर्तव्येति निर्धारयितुमाह—**सर्वधर्मानिति**। नन्वस्य वचनस्य कर्मप्रकरणान्तःपातित्वात्कर्मिपरत्वमेव, न त्वकर्मिपरत्वमिति चेन्न। सर्वधर्मानिति सर्वकर्म-

संन्यासश्रवणान्नह्यारुरुक्षोर्मुमुक्षोर्गृहिण: सर्वकर्मसंन्यास उपयुज्यते 'ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम्। सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतस:' इति, 'सर्वकर्मबहिष्कृत:' इति 'तद्विहीन: पतत्येव ह्यालम्बरहितान्धवत्' इति स्मरणात्सर्वकर्मपरित्यागे दुर्ब्राह्मणत्वपतितत्वादिदोषापत्ते:। ननु मामेकं शरणं व्रजेतीश्वरभजनात्मकस्य कर्मणो विहितस्यात्यक्तत्वादुक्तदोषा न संभवन्तीति चेन्न। स्वकर्मणा तमभ्यच्र्येति स्मरणान्नामकीर्त्यादिलक्षणस्य कर्मण: श्रुतिस्मृत्यविहितत्वात्स्वधर्मत्वानुपपत्तेर्विहितत्यागाविहितकरणदोषौ च प्रसज्येयातां, श्रेयान्स्वधर्मो विगुण इति विगुणस्यापि स्वधर्मस्य श्रेष्ठत्वस्मरणात्। 'नियतं कुरु कर्म त्वं कर्मज्यायो ह्यकर्मण:' इति, कर्मण्येवाधिकारस्त इति, न कर्मणामनारम्भादिति, नहि संन्यसनादेव सिद्धिं समधिगच्छतीति, तस्मादसक्त: सततं कार्यं कर्म समाचरेति, मत्कर्मकृन्मत्परम इति, यज्ञदानतप: कर्म न त्याज्यं कार्यमेव तदिति, उपनयनं वेदाध्ययनं फलवन्ति च कर्माणीति, दारं कृत्वाग्नीनाधाय कर्माण्यारभन्त इति, पाणिग्रहणादिगृह्यं परिचरेत्, इति, उदिते सूर्ये प्रातर्जुहोति, यावज्जीवमग्निमहोत्रं जुहोतीत्यादि श्रुतिस्मृतिकोटिभिर्ब्राह्मणादेर्वैदिकस्यैव कर्मण: स्वधर्मत्वेन कर्तव्यत्वविधानात्। ननु सर्वधर्मान् परित्यज्येत्यत्र लक्षणया सर्वकर्मफलत्याग एवोच्यते, न तु कर्मपरित्यागस्तत: कर्मप्रकरणाङ्गत्वमेवास्य वचनस्येति चेन्न, संबन्धानुपपत्तिभ्यां लक्षणेतिन्यायेनाऽत्रार्थानुपपत्त्यभावाल्लक्षणाऽप्रसक्ते:। मुख्यस्य गत्यन्तराभावे खलु लक्षणा, गत्यन्तराभावाभावाल्लक्षणा नात्र प्रसज्यते। कथं गत्यन्तरमिति चेदुच्यते 'लोकेऽस्मिन् द्विविधा निष्ठा पुरा प्रोक्ता मयानघ। ज्ञानयोगेन सांख्यानां कर्मयोगेन योगिनाम्' इति योगिनामारुरुक्षूणां कर्मिणां कर्मयोगेन निष्ठा, सांख्यानामारूढानां संन्यासिनां ब्रह्मविदां ज्ञानयोगेन निष्ठेति निष्ठाद्वयमुपक्रम्य नियतं कुरु कर्मत्वमिति कर्मयोगमारभ्य प्रतिजाने प्रियोऽसि मे इत्यन्तेन ग्रन्थेनारुरुक्षोर्नियमेन कर्तव्यतया कर्मयोगं साङ्गं सफलं च निर्धार्याथ सांख्यानां ब्रह्मविदां सर्वकर्मसंन्यासिनामारूढानां यस्त्वात्मरतिरेव स्यादित्यारभ्य सर्वकर्माणि मनसेति, योगारूढस्य तस्यैवेति, योगी युञ्जीत सततमात्मानं रहसि स्थित इति, ध्यानयोगपरो नित्यमिति, ब्रह्मभूयाय कल्पत इति, ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यन्तेन ग्रन्थेन सर्वकर्मसंन्यासपूर्वकं नियमेन कर्तव्यतया ज्ञाननिष्ठां सफलां निर्धार्यान्ते तामेव निष्ठामुक्तलक्षणां साङ्गां सफलामुपसंहरति—**सर्वधर्मेति**। यतस्ततो नास्य वचनस्य कर्मप्रकरणान्त:पातित्वं कर्मिपरत्वं च सिध्यति। नन्वारूढस्यापि यते: सर्वकर्मसंन्यासो न युक्त:, किं तु यत्किंचित् स्मार्तेन कर्मणा भवितव्यमेवेति न शङ्कनीयं, तृतीयाध्याये श्रीभाष्यकृद्भिरेवैषा शङ्का परिहृता तत्र द्रष्टव्या, ग्रन्थविस्तरभयान्नात्र मीमांस्यते। जन्मान्तरानेकशतेषु श्रद्धाभक्तिभ्यां समनुष्ठितैरीश्वरप्रसादैकप्रयोजनै: श्रौतस्मार्तकर्मभिर्नि:शेषनिर्धूताशेषपापौघतया विशुद्धान्त:करणस्त्वं सम्यग्विज्ञातात्मरूपो भूत्वोत्पन्नज्ञानस्याप्रतिबद्धत्वसिद्धये ज्ञाननिष्ठां कर्तुकाम: सन्नादौ प्रयोजनरहितानसद्विषयान्निष्ठाप्रतिबन्धकत्वेन दुष्टांश्च सर्वधर्मान् सर्वे च ते धर्माश्च तान् श्रौतानि स्मार्तानि च सर्वाण्यपि च कर्माणि ससाधनानि परित्यज्य। ननु कर्मणां शास्त्रोक्तानामसद्विषयत्वमप्रयोजनवत्त्वं चानुपपन्नं "ब्राह्मणा विविदिषन्ति यज्ञेन दानेन" इति यज्ञदानादीनां फलवत्ता श्रवणात्। स्वकर्मणा तमभ्यर्च्येति कर्मणामीश्वराराधनात्मकत्वादस्त्येव सद्विषयत्वं फलत्वं चेति चेत्सत्यमस्त्येव कर्मणामीश्वराराधनात्मकत्वं चित्तशुद्ध्येकप्रयोजनत्वं च। तथापि तदज्ञविषयं कर्तृत्वादिकारकभेदबुद्धिनिबन्धनत्वान्नात्मैकत्वदर्शिनो विदुष: कर्मोपयुज्यते। ज्ञानकर्मणो: परस्परविरोधिनो: सहभावायोगाच्चित्तशुद्धिं तत्फलं ज्ञानं च प्राप्तवतस्तै: प्रयोजनमपश्यतो ब्रह्मविदस्तत्परित्यागो युक्त एव भवति "सत्यानृते सुखदु:खे वेदानिमं लोकममुं च परित्यज्यात्मानमन्विच्छेत्" इति, "स्वाध्यायं च सर्वकर्माणि संन्यस्य" इति विदुष: सर्वकर्मपरित्यागश्रवणात्। ननु कर्मणेश्वर: प्रीयते, तत्प्रीत्यै कर्म कर्तव्यमेवेति चेन्न ब्रह्मनिष्ठया परमेश्वरस्य ततोऽधिकतरप्रीत्युत्पत्ते: "जीवेशा-

त्वाभासेन करोति" इति श्रवणान्ममाभासिकं मायिकमसत्यस्वरूपं परित्यज्य माया तत्कार्यसंबन्धरहितं नित्यं निरन्तरं निराभासं निष्कलं निष्क्रियं शान्तमनन्तमनाद्यन्तं सच्चिदानन्दैकरसं प्रमाणान्तराबाध्यं परिपूर्णमद्वैतं परं ब्रह्म मामेकमेवायमुपास्त इति यथार्थदर्शिनि सत्यवादिनि सत्यनिष्ठे ब्रह्मविदि परमेश्वरस्याधिकतरप्रीतिसंभवान्मम वैभवमयं निर्वहतीति यथा राज्ञः शूरतमे तद्वत्। 'प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः' इत्युक्तत्वात् ब्रह्मविदि परमा प्रीतिः परमेश्वरस्य युक्ता, पितुः पुत्रादौ गुणाधिक्ये प्रीत्याधिक्यं दृश्यते तद्वत्। ततः सिद्धं परमेश्वरस्य निर्गुणं नित्यममायिकं स्वरूपं प्राप्तुमिच्छया श्रवणमनननिदिध्यासनादावेव श्रद्धया नियमेन प्रवृत्तेषु सत्यनिष्ठेषु सत्सु मुमुक्षुषु परमा प्रीतिरिति। ननु सर्वधर्मान् परित्यज्येति धर्मस्यैव परित्यागो विधीयते, न त्वधर्मस्यातस्तत्र प्रवृत्तिः प्रसज्जत एवेति चेन्न। 'न कलञ्जं भक्षयेत्' इति पूर्वमेव परित्यक्तस्य कलञ्जभक्षणादेरधर्मस्योत्तरकाले प्रसक्त्यसंभवाद्ब्रह्मचर्य एव परित्यक्तस्य पर्युषितान्नभोजनस्य गार्हस्थ्ये यथा प्रवृत्तिर्न प्रसज्यते तद्वत्तथापि त्यजधर्ममधर्मं चेति, न तेषां धर्माधर्माविति वचनात्सर्वधर्मपदेनाधर्मोऽपि गृह्यते, ततो धर्ममधर्मं च परित्यज। यद्यपि अर्जुनस्य संन्यासोऽनुपयुक्तस्तथापि मुमुक्षुं ब्राह्मणं विषयीकृत्योच्यते सर्वधर्मान्परित्यज्येति ज्ञानकर्मणोस्तमस्तेजसोरिव परस्परप्रतियोगित्वेनैकाश्रयत्वानुपपत्तिं निर्धार्य भगवता। ततः सर्वधर्मान्परित्यज्य विधिना संन्यस्य मामेकम् "अयमात्मा ब्रह्म। तत्त्वमसि" इत्यादिश्रुतिभिर्ब्रह्मात्मनोरेकत्वप्रतिपादनात् "अस्थूलमनण्वह्रस्वम्" इति, "सर्वं ह्येतद्ब्रह्म" इत्यादिश्रुतिभिरारोपितस्य जगतोऽपवादपूर्वकं सर्वस्य ब्रह्ममात्रत्वनिरूपणात् "एकमेवाद्वितीयं ब्रह्म। एक एव हि भूतात्मा। एक एव रुद्रो न द्वितीयाय तस्थुः" इत्यादिश्रुतिभिर्ब्रह्मण एकत्वावधारणादेकं सजातीयविजातीयस्वगतभेदरहितं नित्यशुद्धबुद्धमुक्तस्वभावमपूर्वमनपरमनन्तरमबाह्यमखण्डं चिदेकरसमद्वितीयं मां परं ब्रह्म शरणं व्रज, सर्वमिदमहं च ब्रह्मैवेति प्रत्यग्दृष्ट्याऽनुसंधेहि। साधकस्यैवाभ्यासदशायां 'बुद्ध्या विशुद्धया युक्तो धृत्यात्मानं नियम्य च। शब्दादीन्विषयांस्त्यक्त्वा' इत्यादिदेशकालदृष्टिस्थापनादिनियमः, न तु सर्वमिदमहं च ब्रह्मैवेति प्रत्यग्दृष्ट्या स्वं च सर्वं चारोपितनामरूपाद्यग्रहणपूर्वकं ब्रह्मैव पश्यतो ब्रह्मवित्तमस्यातो गच्छन् तिष्ठन्नपविशन् शयानो वान्यथा वा स्थितः सन् सर्वदा सर्वत्र मामेकमेव परं ब्रह्मानुसंधेहि। एवं दृष्टं स्पृष्टं श्रुतं मतं विज्ञातं च सर्वं सर्वदा ब्रह्मैव पश्यन्तं त्वामहं परमात्मा स्वात्मत्वेन सम्यग्विज्ञातश्चक्षुषो रूपवद्वृत्तेर्बहिरन्तश्च सर्वत्रोपलभ्यमानः सन् सर्वपापेभ्यः— अत्र पापशब्देन पुण्यपापात्मकानि कर्माणि गृह्यन्ते, तेभ्यः पापेभ्यः पापकार्येभ्यो जन्मजरामृत्युबन्धेभ्यो मोक्षयिष्यामि जन्मादिबन्धनिर्मुक्तं करिष्यामीत्यर्थः। यद्वा पापानि कर्माणि, पापपदेन तत्कारणभूताश्चाविद्याकामाश्च गृह्यन्ते। सर्वेभ्यः पापेभ्योऽविद्याकामकर्मभ्यः संततजराजन्ममृत्युदुःखप्रवाहहेतुभ्यः सम्यङ्मोचयिष्यामि—नित्यः कूटस्थोऽसङ्गचिद्रूपः परिपूर्ण एवाहमिति नित्यकूटस्थासङ्गचिन्मात्रस्वरूपस्य स्वात्मनो याथात्म्यप्रकाशनेनारोपितदेहेन्द्रियादिसर्वदृश्यतद्धर्मतत्कर्मतदवस्थासंबन्धरहितमेवात्मानमाकाशवदसङ्गमविक्रियं परिपूर्णमेकरसमेव सदा सर्वत्र ग्राहयित्वा, सर्वत्र स्वमात्रग्रहणेनाविद्यां वासनात्मिकां कामांश्च कर्माण्यपि सर्वाणि निर्मूल्य, विपरीतभावं निःशेषं विध्वस्य, पूर्णश्चिदानन्द एक एवाहमस्मीति वृत्तिमप्रतिबद्धां कारयित्वा, सर्वदा मुक्तोऽहमिति मुक्तमेवात्मानं भावयिष्यामि। एवमात्मानमविद्यातत्कार्यबन्धनिर्मुक्तं निर्विशेषब्रह्मात्मना स्थितं साक्षादपरोक्षीकृत्य जीवन्नेव मुक्तस्त्वं मा शुचः। तत्र "को मोहः कः शोक एकत्वमनुपश्यतः" इति स्वात्मैकत्वं पश्यतो विदुषः शोकाभावश्रवणात्सर्वमात्मानमेव पश्यन्मुक्तस्त्वं, शोकं मा कार्षीः। स्वातिरिक्तमनर्थकारणमर्थान्तरं पश्यत एव मूढतमस्य शोको नत्वहमेवेदं सर्वमिति स्वमेव सर्वं पश्यतो विदुषः शोककारणं संभवति, तदभावात्त्वं मा शुच इत्यर्थः। यद्वा अशोच्यानन्वशोचस्त्वमित्युपक्रान्तं शोका-

पनोदनमुपसंहरति भगवान्मा शुचस्त्वमिति । अद्वैतं पश्यतश्चात्मनोऽकर्तृत्वं च पश्यतस्तव शोको न युक्त इत्युपक्रान्तशोकापनोदनमेवानूद्यते, न तु विदुषः शोकं संभाव्य तस्यापनोदः क्रियते 'तत्र को मोहः कः शोकः' इत्यादिश्रुतिविरोधप्रसङ्गात् 'न शोचति न काङ्क्षति' इत्युक्तस्ववचनव्याघातप्रसङ्गाच्चोपसंहारार्थकमेवेदं वचनमिति युक्तम् । एवं निर्विशेषमेव परं ब्रह्म स्वात्मना समधिगतमनुसंदधतो विदुषस्तदनुसंधानफलं सम्यग्ज्ञानं तत्फलं विदेहकैवल्यं च 'ज्ञात्वा विशते तदनन्तरम्' इति पूर्वमेव निरूपितं, न पुनरत्र निरूपितव्यं भवति, यस्माज्ज्ञानकर्मणोः साध्यसाधनभाव एवात्र सम्यङ्निरूपितः सर्वज्ञेनेश्वरेण, तस्मात्सिद्धं कर्मकाण्डस्य ब्रह्मकाण्डस्य च मोक्षकारणत्वम् ॥ ६६ ॥

श्री० टी०—ततोऽपि गुह्यतममाह—सर्वेति । मद्भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्यं त्यक्त्वा मदेकशरणो भव । एवं वर्तमानः कर्मत्यागनिमित्तं पापं स्यादिति मा शुचः, शोकं मा कार्षीः । यतस्त्वा त्वां मदेकशरणं सर्वपापेभ्योऽहं मोचयिष्यामि ॥ ६६ ॥

स० टी०—पूर्वोक्तभक्तियोगस्य प्रारम्भस्य विरोधिनः ॥ पापाख्यप्रतिबन्धाये ऽनेकजन्मार्जिता मलाः॥ १॥ तद्विनिर्मुक्तपुंसः स्याद्भक्तियोगेऽधिकारिता ॥ आनन्त्याच्चैव पापानां भक्त्यारम्भविरोधिनाम् ॥ २ ॥ तत्प्रायश्चित्तरूपैस्तु धर्मैर्नानाविधैरपि ॥ अल्पकालकृतैस्तेषां पापानां दुस्तरत्वतः ॥ ३ ॥ इत्येवमात्मनो भक्तियोगारम्भेऽप्ययोग्यताम् ॥ आलोच्य शोचतो जिष्णोः शोकं चापनुदन्हरिः ॥ ४ ॥ आहानुग्रहवात्सल्यवारिधिः पार्थसारथिः ॥ सर्वधर्मान् श्रुतिप्रोक्तप्रायश्चित्तात्मकान्बहून् ॥ ५ ॥ कृच्छ्रचान्द्रायणेष्ट्यादींस्तत्तत्पापानुरूपिणः ॥ नानाविधांस्त्वया धर्मान्स्वल्पकालानुयायिनः ॥ ६ ॥ दुरनुष्ठानरूपांश्च परित्यज्यैत्र सर्वशः ॥ निर्विघ्नभक्तियोगस्य सम्यगारम्भसिद्धये ॥ ७ ॥ मामेकमीश्वरं सर्वसाधारणगुणाश्रयम् ॥ शरण्यं करुणासिन्धुं शरणागतवत्सलम् ॥ ८ ॥ तवास्मीति धिया शुद्धया प्रपद्यस्व सुखास्पदम् ॥ शरणं हे हरे कृष्ण मां गृहाण स्वसेवकम् ॥ ९ ॥ अनन्यशरणत्वान्मे त्वमेव शरणं भव ॥ इत्येवमनुसंधाय सर्वं कृत्यं विहाय माम् ॥ १० ॥ आश्रयस्व ततोऽहं त्वा पापेभ्योऽत्यन्तशोकिनम् ॥ भक्त्याऽऽरम्भविरोधिभ्यो मोक्षयिष्यामि मा शुचः ॥ ११ ॥ सकलमपि विहाय भ्रान्तिजालं श्रमाढ्यं व्रज हरिशरणं श्रीब्रह्मविद्याप्तिहेतुम् ॥ भजनमपि हरेः श्रीकृष्णचन्द्रप्रसादात्स्वयमिह सुजनस्य प्रेमयुक्तं सुसिद्ध्येत् ॥ १२ ॥ यद्वा श्लोकद्वयस्याह तात्पर्यं भगवान्हरिः ॥ ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ॥ १३ ॥ तमेव शरणं गच्छेत्येवं प्रागीरितस्य च ॥ धर्माः केचन वर्णानां केचिदाश्रमवासिनाम् ॥ १४ ॥ केचित्सामान्यधर्माश्च वेदस्मृतिगिरेरिताः ॥ विद्यमानांश्च तान्धर्मान्समस्तान्सफलानपि ॥ १५ ॥ अविद्यमानान्वा शास्त्रविहितानपि सर्वशः ॥ संसारेऽस्मिन् हि ये पूर्वं शरणत्वेन संमताः ॥ १६ ॥ आसंस्तांस्त्वमनादृत्य मामीश्वरमजं विभुम् ॥ आनन्दं सर्वधर्माणामधिष्ठातारमक्षरम् ॥ १७ ॥ धर्माणां फलदातारमुदारं शरणं व्रज ॥ धर्माः सन्तु न वा सन्तु किमेतैः परतन्त्रकैः ॥ १८ ॥ भगवद्वासुदेवस्यानुग्रहादेव सर्वथा ॥ कृतार्थोऽहं भविष्यामीत्येवं निश्चित्य चेतसा ॥ १९ ॥ वासुदेवमनन्तं श्रीपरमानन्दविग्रहम् ॥ करुणासागरं सर्वकल्याणगुणसंश्रयम् ॥ २० ॥ कृतज्ञं दीनबन्धुं मां भगवन्तमनुक्षणम् ॥ भक्तिभावनया सारं भजस्व सततं हरिम् ॥ २१ ॥ इदमेव परं तत्त्वं नातोऽधिकमिति स्वयम् ॥ विचारपूर्वकेणैवं प्रेमाधिक्येन सर्वथा ॥ २२ ॥ चिन्तय त्वं मनोवृत्त्या संत्यक्तानात्मचिन्तया ॥ तैलधारावदच्छिन्नरूपयाऽत्यन्तशुद्धया ॥ २३ ॥ मदेकशरणस्यास्य नास्ति धर्माद्यपेक्षणम् ॥ सर्वेषामपि शास्त्राणां रहस्यं परमं त्विदम् ॥ ॥ २४ ॥ यदीशशरणत्वं स्यात्पुण्यसंततिहेतुकम् ॥ अत्रैव गीताशास्त्रस्य समाप्तिर्हरिणा कृता ॥ २५ ॥ भगवच्छरणत्वेन विना सर्वस्य कर्मणः ॥ संन्यासस्य फले नास्ति स्वतः पर्यवसायिता ॥ २६ ॥

मदेकशरणो यस्मात्त्वं धर्मानप्युपेक्ष्य तान् ॥ मच्चिन्तनपरो नित्यं तिष्ठस्यनन्यमानसः ॥ २७ ॥ अतोऽहं सर्वधर्माणां कार्यकारितयेश्वरः ॥ संसारानर्थहेतुभ्यः सर्वपापेभ्य एव च ॥ २८ ॥ बन्धुहिंसादिजन्येभ्यो मोक्षयिष्यामि मा शुचः ॥ मम युद्धे प्रवृत्तस्य स्वकुलाचार्यघातिनः ॥ २९ ॥ निस्तारोऽतः कथं मे स्यान्मा कार्षीरिति शोचनम् ॥ प्रायश्चित्तं विनैवाहं धर्मस्थानीय ईश्वरः ॥ ३० ॥ पापान्धतमसस्त्वां वै मोक्षयिष्यामि भास्करः ॥ संदेहो नात्र कर्तव्यो मानमौलौ वचस्यतः ॥ ३१ ॥ निगमविहितधर्मास्तद्विरुद्धानधर्माञ्जनिमृतिभयमूलांस्तज्जभोगानुपेक्ष्य ॥ भवमृतिभयसिंधौ पोतभूतं शरण्यं हरिपदमकरन्दं चित्तमित्राश्रयस्व ॥ ३२ ॥ सर्वधर्मान्परित्यज्येत्यत्र भाष्यकृतां मतम् ॥ समस्तकर्मसंन्यासानुवादेनैव युक्तिभिः ॥ ३३ ॥ मामेकं शरणं चेति ज्ञाननिष्ठोपसंहृता ॥ श्रीमद्भगवतेत्येवं संमतं साधुसंमतम् ॥ ३४ ॥ अत्रायमाशयो भाति श्रीमद्भाष्यकृतां सताम् ॥ गीतासु सर्ववेदार्थं संगृह्य करुणानिधिः ॥ ३५ ॥ प्रोक्तवाञ्छ्रीरमानाथो बोधसौकर्यसिद्धये ॥ उक्तमष्टादशाध्यायैरुपसंहृतवान्मतम् ॥ ३६ ॥ सर्वधर्मान्परित्यज्येत्यत्र श्लोके रमापतिः ॥ ज्ञाननिष्ठा ह्युपक्रान्ता मुख्यागमविदां मता ॥ ३७ ॥ तत्राधिकारसिद्ध्यर्थं कर्मनिष्ठेरिता परा ॥ तयाऽधिकारे सिद्धेऽपि भगवद्भक्तिरुत्तमा ॥ ३८ ॥ अन्तरङ्गतया प्रोक्ता तृतीया ज्ञानसाधनम् ॥ यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ ॥ ३९ ॥ तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ इति ब्रह्मैक्यजिज्ञासोर्भक्तिः स्यात्साधनं परम् ॥ ४० ॥ प्रधानानुगुणं न्याय्यमित्यतोऽन्ते हरिः स्वयम् ॥ उपसंहृतवान्ज्ञाननिष्ठामेव ससाधनाम् ॥ ४१ ॥ तत्रापि प्रथमे पादे सर्वधर्मपदेन च ॥ धर्माधर्मद्वयं प्रोक्तं त्याज्यत्वेनात्र संमतम् ॥ ॥ ४२ ॥ तेनोपसंहृतः कर्मसंन्यासो ज्ञानसाधनम् ॥ चित्तशुद्धिं विना नासौ सा न कर्म विना भवेत् ॥ ॥ ४३ ॥ तेनोपसंहृता कर्मनिष्ठापि सफला परा ॥ पादे द्वितीये भगवत्तत्त्वधीरुपसंहृता ॥ ४४ ॥ भगवद्भक्तिसहिता पुरुषार्थैकजन्मभूः ॥ उत्तरार्धेन मुख्याया निष्ठायाः फलमीरितम् ॥ ४५ ॥ अविद्यायाः सकार्याया निवृत्तिश्चेत्यतो हरिः ॥ प्रतिश्रुत्य जगादेमं श्लोकं गुह्यतमं परम् ॥ ४६ ॥ इत्येवं गूढतात्पर्यमविदित्वाऽन्यथाऽन्यथा ॥ कल्पयित्वा मतं स्वीयं दूषणोद्घाटनं कृतम् ॥ ४७ ॥ कैश्चिद्यत्तत्र साधूक्तमित्यलं बहुनाऽधुना ॥ तत्त्वज्ञानैकसूर्याणां श्रीमद्भाष्यकृतां पुरः ॥ ४८ ॥ अस्मदादिजनः स्वल्पः स खद्योतायते न किम् ॥ अन्ये त्वेवं व्यवस्थां च प्राहुरत्रोपसंहृतौ ॥ ४९ ॥ साध्यसाधनभावेन गीताशास्त्रे विवक्षितम् ॥ निष्ठात्रयं भगवताध्यायेऽस्मिन्नुपसंहृतम् ॥ ५० ॥ तत्र संन्यासपर्यन्ता कर्मनिष्ठोपसंहृता ॥ स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ॥ ५१ ॥ इत्यत्र सफला सांगा श्रीमद्भगवता स्वयम् ॥ संन्यासपूर्ववेदान्तश्रवणादिनिरन्तरा ॥ ५२ ॥ सफला च सहोपायैर्ज्ञाननिष्ठोपसंहृता ॥ ततो मां तत्त्वतो ज्ञात्वा विशतेऽत्रेति विष्णुना ॥ ५३ ॥ भगवद्भक्तिनिष्ठा तु मेढीभूता द्वयोरपि ॥ सैवान्ते वासुदेवेन सम्यगेवोपसंहृता ॥ ५४ ॥ सर्वधर्मान्परित्यज्येत्यत्रैवात्यन्तपावनी ॥ यस्य देवे पराभक्तिरितिश्रुत्या हरेर्विभोः ॥ ५५ ॥ परा भक्तिः परब्रह्मज्ञाने मुख्यतयेरिता ॥ सर्वोपायेन भगवान् शरण्यो भक्तवत्सलः ॥ ५६ ॥ आराध्य इति तात्पर्यं सर्ववेदविदां सताम् ॥ आराधिते हरौ मोक्षहेतुर्ज्ञानमवान्तरम् ॥ ५७ ॥ भवत्येव फलं तस्मादाराध्यो हरिरीश्वरः ॥ इत्यस्यामपि निर्णीतव्यवस्थायां मनागपि ॥५८॥ विरोधो नास्ति भगवद्भाष्यकारानुयायिनाम् ॥ निर्विवादा हरेर्भक्तिर्ज्ञानमोक्षप्रदायिनी ॥ ५९ ॥ सर्वोपरि वरीवर्ति सिद्धमित्येव मङ्गलम् ॥ क च निगमशिरोवाग्वेद्यवैकुण्ठवाणी क च परिमितबुद्धिर्मादृशः कर्मवश्यः ॥ हरिपदशरणा ये दुर्लभं नास्ति तेषां किमपि जगति कृत्यं ज्ञेयमाप्यं विचार्यम् ॥ ६० ॥ विषयविषयिभावभ्रान्तिशून्यं विशुद्धं सकलनिगमवाणीभावगम्यं ह्यगम्यम् ॥ हृदि सकलजनानामीशितारं निविष्टं यदुपतिमभिवन्दे सर्वविज्ञानसारम् ॥ ६१ ॥ ६६ ॥

भा० टी०–परमेश्वरयजनात्मकं कर्मयोगं, तन्निष्ठायाः परमरहस्यमीश्वरशरणतालक्षणं भक्तियोगं चोपसंहृत्याथेदानीमुभयफलभूतं सम्यग्दर्शनं सर्ववेदान्तप्रतिपादितं तत्र तत्र विस्तरेण प्रोक्तमुपसंहरति–सर्वेति । सर्वधर्मान् सर्वे च ते धर्माश्च सर्वधर्मास्तान् । धर्मशब्देनात्राधर्मोऽपि गृह्यते, नैष्कर्म्यस्य विवक्षितत्वात् "नाविरतो दुश्चरितान्नाशान्तो नासमाहितः, नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात्" 'त्यज धर्ममधर्मं च' इत्यादिश्रुतिस्मृतिभ्यः सर्वधर्मान् सर्वाणि कर्माणि परित्यज्य संन्यस्य मामेकं सर्वात्मानं समं सर्वभूतस्थमीश्वरमच्युतं गर्भजन्मजरावर्जितमहमेवैतादृशः परमात्मेत्येवमेकं शरणं व्रज, न मत्तोऽन्यदस्तीत्यवधारयेत्यर्थः । अहं त्वामेव निश्चितबुद्धिं सर्वपापेभ्यः सर्वेभ्यो धर्माधर्मबन्धनरूपेभ्यो मोक्षयिष्यामि स्वात्मभावप्रकाशकरणेन । उक्तं च दशमे–'नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वता' इति, अतो मा शुचः शोकं मा कार्षीरित्यर्थः । यत्तु कश्चित्प्रललाप 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र कर्मनिष्ठा कर्मसंन्यासपर्यन्तोपसंहृता । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरमित्यत्र संन्यासपूर्वकश्रवणादिपरिपाकसहितज्ञाननिष्ठोपसंहृता, अधुना तु 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुनतिष्ठति । तमेव शरणं गच्छ सर्वभावेन' इति यदुक्तं तद्विवृण्वन् भगवद्भक्तिनिष्ठामुभयसाधनत्वादुभयफलभूतत्वाच्चान्ते उपसंहरति–सर्वधर्मानिति । सर्वान् वर्णाश्रमादिधर्मानविद्यमानान् विद्यमानान्वा परित्यज्य शरणत्वेनानादृत्य मामीश्वरमेकमद्वितीयं सर्वधर्माणामधिष्ठातारं फलदातारं च शरणं व्रज । धर्माः सन्तु न सन्तु वा, किं तैरन्यसापेक्षैः? भगवदनुग्रहादेव अन्यनिरपेक्षादहं कृतार्थो भविष्यामीति निश्चयेन परमानन्दघनमूर्तिमनन्तं श्रीवासुदेवमेव भगवन्तमनुक्षणभावनया भजस्व । इदमेव परमं तत्त्वं नातोऽधिकमस्तीति विचारपूर्वकेण प्रेमप्रकर्षेण सर्वानात्मचिन्ताशून्यया मनोवृत्त्या तैलधारावदविच्छिन्नया सततं चिन्तयेत्यर्थः । अत्र मामेकं शरणं व्रजेति सर्वशरणतापरित्यागे लब्धे सर्वधर्मान्परित्यज्येति निषेधानुवादस्तत्कार्यकारितालाभाय यज्ञायज्ञीये साम्नि "ऐरं कृत्वोद्गेयम्" इत्यत्र "न गिरा गिरेति ब्रूयात्" इतिवत् । तथाच ममैव सर्वधर्मकारित्वान्मदेकशरणस्य नास्ति धर्मापेक्षेत्यर्थः । एतेनेदमपास्तं सर्वधर्मान्परित्यज्येत्युक्ते नाधर्माणां परित्यागो लभ्यतेऽतो धर्मपदं कर्मपरमिति । नह्यत्र कर्मत्यागो विधीयतेऽपि तु विद्यमानेऽपि कर्मणि तत्रानादरेण भगवदेकशरणतामात्रं ब्रह्मचारिगृहस्थवानप्रस्थभिक्षूणां साधारण्येन विधीयते । तत्र सर्वधर्मान्परित्यज्येति तेषां स्वधर्मादरसंभवेन तन्निवारणार्थम् । अधर्मे चानर्थफले कस्याप्यादराभावात् त्यागवचनमनर्थकमेव, शास्त्रान्तरप्राप्तत्वाच्च । तस्माद्वर्णाश्रमधर्माणामभ्युदयहेतुत्वप्रसिद्धेर्मोक्षहेतुत्वमपि स्यादेव....न चेदमपि संन्यासज्ञास्त्रं, भगवदेकशरणताया विधित्सितत्वात् । तस्मात्सर्वधर्मान्परित्यज्येत्यनुवाद एव । सर्वेषां तच्छास्त्राणां परमरहस्यमीश्वरशरणतैवेति तत्रैव परिसमाप्तिर्भगवता कृता । तामन्तरेण संन्यासस्यापि स्वफलापर्यवसायित्वात् । अर्जुनं च क्षत्रियं संन्यासानधिकारिणं प्रति संन्यासोपदेशायोगात् । अर्जुनव्याजेनान्यस्योपदेशे तु वक्ष्यामि ते हितं, त्वां मोक्षयिष्यामि सर्वपापेभ्यः, त्वं मा शुचः इत्युपक्रमोपसंहारौ न स्याताम् । तस्मात्संन्यासधर्मेष्वप्यनादरेण भगवदेकशरणतामात्रे तात्पर्यं भगवतः । यस्मात्त्वं मदेकशरणः सर्वधर्मानादरेणातोऽहं सर्वधर्मकार्यकारी त्वा त्वां सर्वपापेभ्यो बन्धुवधादिनिमित्तेभ्यः संसारहेतुभ्यो मोक्षयिष्यामि प्रायश्चित्तं विनैव "धर्मेण पापमपनुदति" इतिश्रुतेर्धर्मस्थानीयत्वाच्च मम । अतो मा शुचः युद्धे प्रवृत्तस्य मम बन्धुवधादिनिमित्तप्रत्यवायात्कथं निस्तारः स्यादिति शोकं मा कार्षीरित्यादि । तन्नादर्तव्यं, श्रीमतां सर्वज्ञानां भगवदात्मत्वात्, भगवदभिप्रायविदां भगवतां भाष्यकृतामभिप्रायापरिज्ञानविजृम्भितत्वात् । तथाहि सप्तदशाध्यायान्तगीताशास्त्रार्थोपसंहारात्मकेऽस्मिन्नध्याये प्रतिपादितेन कर्मादिना एतदध्यायान्तसमस्तशास्त्रोपसंहारो नोपपद्यते । नहि 'स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः' इत्यत्र कर्मनिष्ठानिरू-

पणस्य समाप्तिर्दृश्यते 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। चेतसा सर्वकर्माणि मयि संन्यस्य मत्परः॥' इत्युक्तत्वात्तस्मात्तत्र तत्र प्रतिपादितं कर्मयोगं भक्तियोगं ज्ञानं चास्मिन्नध्याये संग्रहेणोपपाद्य सर्वशास्त्रान्ते उपसंहरतीत्येव युक्तम्। अन्यथा 'बुद्धियोगमुपाश्रित्य मच्चित्तः सततं भव। मच्चित्तः सर्वदुर्गाणि मत्प्रसादात्तरिष्यसि' इत्यत्र भक्तियोग उपसंहृत इत्यपि कुतो न स्यात्। तस्मात्कर्मयोगादिप्रतिपादनपरिसमाप्तावेव यथासंभवमुपसंहारवर्णनं युक्तं, न तु यत्रकुत्रचित्। 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ नहि ज्ञानेन सदृशं पवित्रमिह विद्यते। इदं तु ते गुह्यतमं, नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति' इत्यादिना प्रतिपादितायाः समस्तवेदान्ततात्पर्यभूतायाः कर्मयोगभक्तियोगफलभूतायाः संन्यासपूर्विकायाः ज्ञाननिष्ठायाः उपसंहारस्य शास्त्रान्ते कर्तव्यत्वावश्यकत्वेन सर्वधर्मान्परित्यज्येत्यनेन सर्वकर्मसंन्यासस्य स्पष्टतया प्रतीयमानत्वेन च तादृशज्ञाननिष्ठोपसंहारस्य युक्ततामभिप्रेत्याचार्यैः सैवास्मिन्श्लोके उपसंहृता। ईश्वराभिप्राय ईश्वरेणैव ज्ञायते न तु वराकैरस्मदादिभिः। विष्णुशिवयोरेकात्मत्वं परमात्मत्वं च श्रुतिस्मृतीतिहासपुराणादिसिद्धम्। तमेव शरणं गच्छेत्यस्य विवरणमनेन क्रियत इत्यपि न। असंदिग्धार्थस्य संदिग्धार्थेन विवरणायोगात्। सर्वधर्मान्परित्यज्येति तु तत्र तत्रार्जुनं निमित्तीकृत्य संन्यासपूर्वकज्ञाननिष्ठाप्रतिपादनमिवार्जुनस्य क्षत्रियत्वादुक्तसंन्यासद्वारा ज्ञाननिष्ठायामनधिकारेऽपि तं पुरस्कृत्याधिकारिभ्यस्तस्योपदिदिक्षितत्वान्न विरुध्यतेऽर्जुनं निमित्तीकृत्य लोकोपकाराय भगवतः प्रवृत्तिरिति संमतम्। अन्यथा क्षत्रियस्यार्जुनस्य श्रोतुर्यस्मिन्नधिकारस्तस्यैव वक्तव्यत्वे संन्यासपूर्विकायाः ज्ञाननिष्ठायाः वर्णनमनर्थकं स्यात्। वस्तुतोऽर्जुनस्य स्वविग्रहस्य सर्वज्ञत्वेनोपदेशानर्थक्यं च भवेत्। अपि च तं प्रति सर्वधर्मपरित्यागकथनं भगवतः पूर्वापरविरुद्धम् 'कर्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूर्मा ते संगोऽस्त्वकर्मणि॥ कर्मणैव हि संसिद्धिमास्थिता जनकादयः। न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते। स्वेस्वे कर्मण्यभिरतः संसिद्धिं लभते नरः। स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु। स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः। श्रेयान्स्वधर्मो विगुणः। सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्। सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। स्वभावजेन कौन्तेय' इत्यादिना तत्रतत्र कर्मापरित्यागमत्याग्रहेण प्रतिपाद्यात्रैवं कथने परस्परविरोधस्य स्पष्टत्वात्। एतेन सर्वधर्मान्परित्यज्य शरणत्वेनानादृत्य धर्माः सन्तु न सन्तु वा किं तैरित्यादिवर्णनमपास्तम्। 'यज्ञदानतपः कर्म न त्याज्यं कार्यमेव तत्। यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्। मत्कर्मकृन्मत्परमः। स्वकर्मणा तमभ्यर्च्य' इत्यादिवचनानां विरोधस्यास्मिन्नश्रुतकल्पनेऽपि तुल्यत्वात्। कर्माधिकृतेनाज्ञेन वेदविहितं धर्ममनादृत्य मद्रूपोपासनं कार्यमिति सर्वस्मिन्गीताशास्त्रे क्वाप्यनुक्तत्वेन तदुपसंहारवर्णनस्यानुचितत्वात्। "अन्धं तमः प्रविशन्ति येऽविद्यामुपासते ततो भूय इव ते तमो य उ विद्यायाꣳ रताः" 'मामनुस्मरयुध्य च,' 'श्रुतिस्मृती ममैवाज्ञे ते उल्लङ्घ्य प्रवर्तते। आज्ञाभङ्गो मम द्रोहो मद्भक्तोऽपि न वैष्णवः॥ वर्णाश्रमाचारवता पुरुषेण परः पुमान्। विष्णुराराध्यते पन्था नान्यस्तत्तोषकारणम्॥ तस्मात्सदाचारवता पुरुषेण जनार्दनः। आराध्यते स्ववर्णोक्तधर्मानुष्ठानकारिणा॥' इत्यादि श्रुतिस्मृतिभ्यः कर्मसमुच्चितोपासनायां वैशिष्ट्यबोधनाच्च। यत्र तु कर्मणो निन्दा पुराणादिषु श्रूयते, न सा भगवदाराधनलक्षणस्य निष्कामकर्मणो वेदविहितस्य नियतस्य, अपि तु भगवत्पराङ्मुखेनानुष्ठानस्य सकामस्य। तस्मादर्जुनेन सर्वकर्मत्यागः कर्तव्य इति भगवतो नाभिप्रेतं, किंतु त्यागाधिकारिभिः कर्ममात्रं संन्यस्याहमेव भगवान्स वासुदेवः न तु मत्तोऽन्योऽस्तीति ज्ञाननिष्ठा सम्यक् संपादनीयेति, वक्ष्यामि ते हितं त्वां, मोक्षयिष्यामि सर्वपापेभ्यस्त्वं मा शुच इति चोपक्रमोपसंहारात्। 'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया। उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः' इत्यादिवत् अर्जुनव्याजेनान्यस्योपदेशेऽपि न विरुध्यते।

यदपि सर्वपापेभ्यः बन्धुवधादिनिमित्तेभ्यः—इत्यादि तदपि साहसमात्रं, 'धर्म्याद्धि युद्धाच्छ्रेयोऽन्यत्क्षत्रियस्य न विद्यते' इत्यादौ अग्नीषोमीयपशुहिंसावत् युद्धे शत्रुहननरूपायाः विहिताया हिंसायाः पापजनकत्वाभावस्यात्याग्रहेण स्वेनैव स्थापितत्वात्। यदप्यत्रेत्यादि तदपि बालविमोहनमात्रम्, उक्तयुक्त्या मामेकं शरणं व्रजेत्यत्राचार्योक्तार्थस्यैव विवक्षितत्वात्। मामेकं शरणं व्रज स्वधर्माचरणादिना मामेवाराधय न तु देवतान्तरमित्यर्थस्यापि संभवेन सर्वधर्मत्यागस्य लाभायोगाच्च। यदप्येतेनेदमपास्तमित्यादि तदपि तुच्छमेव 'नाविरतो दुश्चरितात्, त्यज धर्ममधर्मं च' इति भाष्योदाहृतश्रुतिस्मृत्यनवलोकनविजृम्भितत्वात्। तथाच—सर्वस्याप्यज्ञस्य कामिनो विषयरागवशात् अधर्माचरणं दृश्यते, शरीरस्थितिमात्रविषयकामनया तदाचरणं संन्यासाधिकारिणोऽपि संभाव्य तत्परित्यागवचनस्य श्रुतिस्मृत्यनुरोधेन सार्थक्यम्। अधर्मेऽनर्थफले कस्याप्यादरो नास्तीति वक्तुमशक्यं, लोके तदादरस्योपलभ्यमानत्वात्, अन्यथा 'न सुरां पिबेत्। न कलञ्जं भक्षयेत्' इत्यादिनिषेधवाक्यानां वैयर्थ्यं स्यात्। तस्मादत्रार्जुनं निमित्तीकृत्याधिकारिभ्यो वेदविहितः कर्मत्यागो गीताशास्त्रे उपपाद्य तदन्ते उपसंह्रियते, भगवदेकशरणतायाः तमेव शरणं गच्छेत्यनेनोक्तत्वात्। मन्मना भव मद्भक्तो मद्याजीत्यनेन भक्तियोगस्य कर्मयोगस्य चोपसंहृतत्वात्। यत्तु संन्यासशास्त्रेण प्रतिषिद्धशास्त्रेण च लब्धत्वान्नात्र सर्वधर्मत्यागो विधीयते इति तत्र विधिनिषेधरूपेण वेदेन प्राप्तत्वात्। तदर्थप्रतिपादकस्मृतीतिहासपुराणानां वैयर्थ्यप्रसङ्गादित्यास्तां तावत्। एवमन्येषामपि कुकल्पना भाष्यविरुद्धाः सम्यग् विचार्य निराकर्तव्याः॥ गोभाराहरणार्थिना सुविहता वेदार्थनाशे रता येनाद्यं जगतां निदानममलं शास्त्रस्य योनिं विभुम्। यत्कारुण्यकटाक्षतोऽभिलषितं पूर्णं समाप्यद्भुतं तं वन्दे परमामृतं शिवमहं कृष्णं गुरूणां गुरुम्॥ ६६॥

प० टी०—अतो गुह्यतममाह—सर्वधर्मानिति। मद्भक्त्यैव सर्वं भविष्यतीति दृढविश्वासेन विधिकैङ्कर्यं त्यक्त्वा मामेकमद्वितीयं शरणं व्रज मदेकशरणो भव। एवं वर्तमानस्य कर्मत्यागभवं पापं भविष्यतीत्याह—मा शुच इति। शोकं मा कार्षीर्यतोऽहं त्वां मदेकशरणं सर्वपापेभ्यो मोचयिष्यामि, यथा घनैकशरणस्य चातकस्य घनादेवाभीष्टसिद्धिरित्यर्थः। अनेन स्वसामर्थ्यातिशयो दर्शितः। एतदर्थेऽस्माभिः पूर्वं व्याख्यातम्। "अहमेव स्वयमिदं वदामि" इति श्रुतिरपि (श्लो. ९६) दर्शिता। यद्वा पूर्वश्लोके सेव्यसेवकभावत्वेन मन्मना भवेत्यादयो मत्प्रापकाश्चत्वारो धर्माः प्रोक्ताः, तान् सर्वधर्मान् परित्यज्यार्वागेवमुक्त्वा ततो मामेकमखण्डैकरसं शरणं व्रज मज्ज्ञानात्सकलविकाररहित्येन मदाकारतां भज। एवं जाते सत्यहमात्मैव अयमहमिति भेदभावनोद्भूतेभ्यः पापेभ्यो दुःखहेतुभ्यो मोचयिष्यामि, तदुक्तम्—'दग्धाखिलविकारश्चेद् ब्रह्मज्ञानाग्निना मुनिः। वर्तमानः श्रुतेर्मूर्ध्नि नैव स्याद्विधिकिंकरः' इति मा शुचः—अनन्तरं शोकः क्वास्तीत्यर्थः। तदुक्तम्—'स्वान्तैकान्तमुपागते यदुपतौ शान्त्या समं क्रीडितुं निर्यातं बहिरन्तरङ्गगतिभिस्तत्राष्टभिः सात्त्विकैः। प्राणापानगती मनागुपरते स्वानन्दपूर्णं मनः श्रुत्वा गानमनाहतध्वनिभवं न त्वं न चाहं जगत्॥ १॥' एतदर्थे—"यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः" इति श्रुतिः पूर्वं सभाष्या दर्शिता॥ ६६॥

रा० टी०—कथं मन्मनस्त्वादिकमित्यत उक्तम्—सर्वधर्मानिति। अन्यसर्वधर्मान्परित्यज्य मन्मनाः मद्भक्तो मद्याजीत्येवम्। पूर्वशेषोऽयम्। मन्मना भवेत्यादिना किमुक्तं भवतीत्यतस्तस्योपसंहाररूपेण व्याख्या क्रियते—मामेकं शरणं व्रजेति। मन्मनस्त्वादेरेव शरणागतिरूपत्वात्। उक्तं हि—'सर्वोत्तमत्वविज्ञानपूर्वं तत्र मनः सदा। सर्वाधिकप्रेमयुक्तं सर्वस्यात्र समर्पणम्। अखण्डा त्रिविधा पूजा तद्वत्यैव स्वभावतः। रक्षतीत्येव विश्वासस्तदीयोऽहमिति स्मृतिः॥ शरणागतिरेषा स्याद्विष्णौ मोक्षफलप्रदा' इति। यद्वा सर्वधर्मान्परित्यज्येति सर्वधर्मफलानि परित्यज्येत्यर्थः। अन्यथा युद्धविधिविरोधः स्यात्। यद्वाऽवैष्णवसर्वधर्मान्प-

रित्यज्येत्यर्थः। अनादिजन्मकृतप्रतिबन्धकसत्त्वात्कथं मामेव एष्यसीत्युक्तिरित्यत आह—अहं त्वेति। त्वा त्वामनादिजन्मकृतपापेभ्यः मोक्षयिष्यामि विनिर्मुक्तं करिष्यामि। मा शुचः संसारभयाच्छोकं मा कार्षीः॥६६॥

**इदं ते नातपस्काय नाभक्ताय कदाचन ॥**
**न चाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति ॥ ६७ ॥**

त० टी०—एवं सर्वशास्त्रस्य सारभूतं गीताशास्त्रमुपदिश्येदानीमस्य शास्त्रस्योपदेशाधिकारिनियममाह—इदमिति। इदं कर्मज्ञानभक्तिविषयं गुह्यतमं शास्त्रं तुभ्यं मया कृपयोपदिष्टं, ते त्वया अतपस्काय वाङ्मयमानसशारीरेतित्रिविधतपोरहिताय, तपः स्वधर्मवर्तित्वं तद्रहितायेति वा न वाच्यं नोपदेष्टव्यं, तपोयुक्ताय अभक्ताय गुरावीश्वरे च भक्तिशून्याय कदाचन न वाच्यं, न चाशुश्रूषवे वाच्यं भक्तायापि अशुश्रूषवे परिचर्यामकुर्वते न च वाच्यं, न च मां योऽभ्यसूयति मां भगवन्तं वासुदेवं दोषारोपेण यः पश्यति दोषगन्धास्पृष्टस्वरूपे दिव्याप्राकृतानन्तगुणे ब्रह्माद्यचिन्त्यनित्यैश्वर्येऽपि दोषमारोपयतीत्यर्थः तस्मै तपस्विने भक्ताय शुश्रूषवेऽपि कदाचन न वाच्यं, तपस्विने भक्ताय शुश्रूषवेऽनसूयवे श्रीकृष्णेऽनुरागयुक्ताय वाच्यमित्यर्थः॥ ६७॥

म० टी०—समाप्तः शास्त्रार्थः। शास्त्रसंप्रदायविधिमधुना कथयति—इदमिति। इदं गीताख्यं सर्वशास्त्रार्थरहस्यं ते तव संसारविच्छित्तये मयोक्तं नातपस्काय असंयतेन्द्रियाय न वाच्यं कदाचन कस्यामप्यवस्थायामिति पर्यायत्रयेऽपि संबध्यते। तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय न वाच्यं कदाचन। तपस्विने भक्तायापि अशुश्रूषवे शुश्रूषां परिचर्यामकुर्वते च न वाच्यं कदाचन। चशब्दो 'वाच्यं' 'कदाचन' इति पदद्वयाकर्षणार्थः। न च मां योऽभ्यसूयति मां भगवन्तं वासुदेवं मनुष्यमसर्वज्ञत्वादिगुणकं मत्वा अभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेनेश्वरत्वमसहमानो द्वेष्टि यः तस्मै श्रीकृष्णोत्कर्षासहिष्णवे तपस्विने भक्ताय शुश्रूषवेऽपि न वाच्यम्। कदाचनेत्यनुकर्षणार्थश्चकारः। तपस्विने भक्ताय शुश्रूषवे श्रीकृष्णानुरक्ताय च वाच्यमित्यर्थः। एकैकविशेषणाभावेऽप्ययोग्यताप्रतिपादनार्थाश्चत्वारो नकाराः। मेधाविने तपस्विने वेत्यन्यत्र विकल्पदर्शनात् शुश्रूषा गुरुभक्तिभगवदनुरक्तियुक्ताय तपस्विने तद्युक्ताय मेधाविने वा वाच्यम् मेधातपसोः पाक्षिकत्वेऽपि भगवदनुरक्तिगुरुभक्तिशुश्रूषाणां नियम एवेति भाष्यकृतः॥ ६७॥

शं० टी०—एवमारुरुक्षोरारूढस्य चोभयोरात्यन्तिकसंसारदुःखोपशान्तये नियमेन कर्तव्यांशं विभज्य दर्शयित्वा तत्फलमप्युपपाद्य ज्ञानकर्मणोर्मोक्षसाधनत्वावधारणेन सर्वेषामपि वेदानां सकलाया अपि गीतायाश्च निर्विशेषब्रह्मपरत्वमेव सूचयित्वा इति ते ज्ञानमित्युपक्रान्तं शास्त्रमुपसंहृत्याधुना शास्त्रप्रवर्तकानामस्य मोक्षशास्त्रस्य संप्रदायप्रवर्तने नियममाह—इदमिति। इदं मोक्षशास्त्रं ते त्वया अतपस्काय "ऋतं तपः सत्यं तपः" इत्यादिश्रुत्युक्तं तपो न यस्यास्ति सोऽतपस्कस्तस्मै अतपस्काय वेदोक्तकर्मानुष्ठानविहीनाय न वाच्यं कदाचन नोपदेष्टव्यमित्यर्थः। स्वधर्मनिष्ठायाप्यभक्ताय यस्य देवे परा भक्तिरितिन्यायेन गुरौ देवे भक्तिरहितस्त्वभक्तस्तस्मा अभक्ताय कदाचन न वाच्यम्। तपस्विने भक्तिमतेऽप्यशुश्रूषवे गुरुशुश्रूषामकुर्वते कदाचन न वाच्यं, किंतु विशेषणद्वयवते गुरोः शुश्रूषां कुर्वत एव वाच्यम्। चकारान्मेधाविने ग्रन्थतदर्थधारणशक्तिमत एव वाच्यं, न तु पूर्वोक्तविशेषणवतेऽपि मेधाशून्याय कदाचन वाच्यम्। तथा चतुर्विशेषणवतेऽपि यो मां वासुदेवं प्राकृतं मनुष्यं मत्वाऽभ्यसूयति निन्दति तस्मै तु न कदाचन वाच्यम्। यद्वा मां निर्विशेषं परं ब्रह्माभ्यसूयति ब्रह्मणो निर्विशेषत्वं केवलत्वं सजातीयादिभेदरहितत्वमद्वितीयत्वं चायुक्तमिति विदेहकैवल्यमपि लोकशास्त्रविरुद्धमित्यत्रैव ब्रह्मप्रतिज्ञायुक्तेत्यद्वैतमद्वैतशास्त्रं विदेहकैवल्यं चासहमानो यो निन्दति

तस्मै चतुर्वेदिनेऽपि शतक्रतवेऽपि च सगुणभक्तिमतेऽपि चाद्वैतद्वेषिणे कथंचिदपि नोपदेष्टव्यम्। उपदेष्टव्यस्याद्वैतशास्त्रत्वादद्वैते प्रीतिमत एवोपदेष्टव्यं, न तु ज्ञानशास्त्रतदर्थासहिष्णव इत्यर्थः । चकारान्मुमुक्षवे यथारोग्यकामिन एव दिव्यौषधं, तथा मोक्षेच्छावत एव ज्ञानशास्त्रमुपदेष्टव्यं नान्यस्मा इति सिद्धम् ॥६७॥

श्री० टी०—एवं गीतार्थतत्त्वमुपदिश्य तत्संप्रदायप्रवर्तने नियममाह—**इदमिति**। इदं गीतार्थतत्त्वं ते त्वयाऽतपस्काय स्वधर्मानुष्ठानहीनाय न वाच्यं, न चाभक्ताय गुरौ ईश्वरे च भक्तिशून्याय कदाचिदपि न वाच्यम्। न चाशुश्रूषवे परिचर्यामकुर्वते श्रोतुमनिच्छते वा वाच्यम्। मां परमेश्वरं योऽभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै च न वाच्यम् ॥ ६७ ॥

स० टी०—समाप्तः सर्वशास्त्रार्थः शास्त्रस्यैवाधुना हरिः ॥ संप्रदायविधिं प्राह सर्वज्ञो भगवानिति ॥ १ ॥ इदं समस्तशास्त्रार्थरहस्यं ब्रह्मसंमितम् ॥ गीताख्यं तव संसारबन्धविच्छित्तये मया ॥ २ ॥ सर्वज्ञेनेरितं सम्यग्ज्ञानसाधनमुत्तमम् ॥ नासंयतेन्द्रियायोक्तं तपःशून्याय कर्हिचित् ॥ ३ ॥ वाच्यं यस्मात्तपोहीने निष्फलं स्यादुदीरितम् ॥ तपस्विनेऽपि नो वाच्यं भक्तिहीनाय केशवे ॥ ४ ॥ सद्गुरौ भक्तिहीनाय न वाच्यं कर्हिचित्तथा ॥ कस्यांचिदप्यवस्थायां भक्तायापि तपस्विने ॥ ५ ॥ न चाशुश्रूषवे वाच्यं परिचर्यामकुर्वते ॥ यो मां श्रीवासुदेवं हि भगवन्तमधोक्षजम् ॥ ६ ॥ स्वप्रशंसादिदोषाध्यारोपणेन ममेशताम् ॥ अजानन्प्रत्युत द्वेष्टि मन्दभाग्यतयाऽधमः ॥ ७ ॥ शुश्रूषवेऽपि भक्ताय गुरावपि तपस्विने ॥ न तस्मै जातु वाच्यं श्रीकृष्णोत्कर्षासहिष्णवे ॥ ८ ॥ सर्वे धर्मा अतिक्रान्ता न कुर्युस्तादृशं महत् ॥ अनर्थजालं यद्वच्छ्रीकृष्णासूया करोत्यघम् ॥ ९ ॥ यतो वेदान्तसिद्धान्तरहस्यं मुनिसंमतम् ॥ श्रीकृष्णाख्यं परं धाम सदानन्दघनं परम् ॥ १० ॥ अतो यस्य हृषीकेशे कृष्णे भगवतीश्वरे ॥ अवज्ञास्ति न सोऽत्यज्ञः संभाष्योऽपि कदाचन ॥ ११ ॥ कृष्णं कमलपत्राक्षं नार्चयिष्यन्ति ये नराः ॥ जीवन्मृतास्तु ते ज्ञेया न संभाष्याः कदाचन ॥ १२ ॥ किं पुनर्ब्रह्मविद्याया जनन्यो भगवद्गिरः ॥ तस्मै वाच्या सुधीमद्भिर्निरपेक्षैरितीरितम् ॥ १३ ॥ तपस्विने च भक्ताय गुरुशुश्रूषवे सते ॥ श्रीकृष्णे चानुरक्ताय वाच्यं शास्त्रमिदं परम् ॥ १४ ॥ विशेषणानां सर्वेषामस्त्यपेक्षेति सिद्धये ॥ चत्वारोऽत्र नकाराः श्रीहरिणा संप्रयोजिताः ॥ १५ ॥ एकस्यापि ह्यभावेन योग्यता प्रतिबद्ध्यते ॥ अतो विचार्य गीताख्यं शास्त्रं श्राव्यं मुमुक्षवे ॥ १६ ॥ ६७ ॥

भा० टी०—एवं सप्तदशाध्यायान्तगीताशास्त्रार्थं सर्वं प्रतिपत्तिसौकर्यार्थमस्मिन्नध्याये विस्तरेणोपसंहृत्यान्ते मन्मना भवेति द्वाभ्यां पुनः स्वशास्त्रदार्ढ्याय संक्षेपतस्तस्योपसंहारं कृत्वाथेदानीं शास्त्रसंप्रदायविधिमाह—**इदमिति**। इदं शास्त्रं संसारविच्छित्तिहेतुभूतं तव हिताय मयोक्तम्। अतपस्काय उक्तशारीरादितपोरहिताय न वाच्यं कदाचन—कस्यांचिदप्यवस्थायामपि—सर्वैः संबध्यते। तपस्विनेऽप्यभक्ताय गुरौ देवे च भक्तिरहिताय कदाचन न वाच्यं विशेषणद्वययुक्तायाप्यशुश्रूषवे शुश्रूषावर्जिताय कदापि न वाच्यम्। यो मां वासुदेवं मनुष्यं प्राकृतं मत्वाऽभ्यसूयति आत्मप्रशंसादिदोषाध्यारोपणेन मत्स्वरूपानभिज्ञो ममेश्वरत्वं न सहते तस्मै ममेश्वरत्वासहिष्णवेऽतपस्विनेऽभक्ताय शुश्रूषवेऽपि कदाचन न वाच्यम्। तपस्विने भक्ताय शुश्रूषवेऽनसूयवे शास्त्रं वाच्यमिति प्रतिषेधसामर्थ्याद्गम्यते। तत्र मेधाविने तपस्विने वा इति स्मृत्यन्तरे मेधावितपस्विनोर्विकल्पदर्शनात्। शुश्रूषाभक्तियुक्ताय भगवत्यसूयारहिताय तपस्विने वाच्यम्। शुश्रूषाभक्त्यनसूयासहिताय मेधाविने वा वाच्यम्। शुश्रूषाभक्तिवियुक्ताय तपस्विने मेधाविने वापि न वाच्यम्। भगवत्यसूयायुक्ताय समस्तगुणवतेऽपि न वाच्यम्। गुरुशुश्रूषाभक्त्यनसूयायुक्ताय तपस्विने मेधाविने वा वाच्यमित्येष शास्त्रसंप्रदायविधिः ॥६७॥

प० टी०—एवं गीतार्थतत्त्वमुपदिश्य तत्संप्रदायप्रवर्तने नियममाह—**इदमिति**। इदं गीतातत्त्वं ते त्वया-

तपस्काय स्वधर्मानुष्ठानहीनाय न वाच्यं, न वाभक्ताय परमेश्वरभक्तिशून्याय, न चाशुश्रूषवे परिचर्यामकुर्वते। तथा यो मां परमेश्वरमभ्यसूयति मनुष्यदृष्ट्या दोषारोपेण निन्दति तस्मै न वाच्यम्। श्रुतिरपि नैरुक्ती— "विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि। असूयकायानृजवेऽयताय न मा ब्रूया अवीर्यवती स्याम्" इति। भाष्यम्—विद्या औपनिषदध्यात्मविद्या एतद्रूक्तं ब्राह्मणं ब्रह्मनिष्ठं प्रतीत्याभिमुख्येन समक्षं जगाम प्राप्ता। तत्किं मा इति मां त्वं गोपाय। वक्ष्यमाणाय पुरुषायेति चतुर्थ्या द्वितीयोक्ता। तं पुरुषं प्रति गुप्तं कुरु न कथयेत्यर्थः। यतोऽहं ते शेवधिर्निरवधिरस्मि। चतुर्विधपुरुषार्थसाधनत्वात्। यथा निधिर्गुप्तः क्रियत इत्यर्थः। किंलक्षणायेत्याह। असूयकाय निन्दकाय। अनृजवे सदावक्राय। अयताय नियमशून्याय। मामात्मविद्यां न ब्रूया न कथय। एवं सति यदि ब्रूषे तर्ह्यवीर्यवती स्याम्। त्वय्यपि सामर्थ्यं न स्थास्यतीत्यर्थः॥ ६७॥

रा० टी०—गीताशास्त्रेऽनधिकारिनिरासेन लक्षणयाऽधिकारिणमाह—इदमिति। इदं गीताशास्त्रं तपोहीनाय ते त्वया न वाच्यम्। अशुश्रूषवे सेवामकुर्वते न वाच्यम्। तपोहीनोपदेशादप्यशुश्रूषोरुपदेशो महादोषकर इति सूचनायात्र चशब्दः 'समुच्चयेऽथवाधिक्ये न्यूनत्वे चः प्रयुज्यते' इत्युक्तेः। चश्चकार इत्यर्थः। अशुश्रूषूपदेशादप्यभक्ताय कदाचन कदापि न वाच्यमित्युक्तिः अल्पमात्रतपःशुश्रूषावतो भक्तिमतः कदाचिदुपदेशेऽपि भक्तिहीनायोपदेशे महान्दोष इति सूचनाय। मां योऽभ्यसूयति तस्मै न वाच्यमित्यत्रापि चशब्दः तपोहीनादित्रितयोपदेशादप्यसूयावत उपदेशे दोषाधिक्यज्ञापनार्थः। एतेन तपःप्रभृतिगुणयुक्तोऽधिकारीति सूचितम्॥ ६७॥

**य इदं परमं गुह्यं मद्भक्तेष्वभिधास्यति॥**
**भक्तिं मयि परां कृत्वा मामेवैष्यत्यसंशयः॥ ६८॥**

त० टी०—एवमुक्तदोषरहितेभ्यो भगवद्भक्तेभ्यो यो ददाति तस्य फलमाह—य इदमिति। यः कश्चिद्गीतासंप्रदायप्रवर्तक इदं मदुक्तं परमं गुह्यमतिरहस्यत्वात्सर्वत्र प्रकाशनानर्हमतो मद्भक्तेषु मयि भगवति वासुदेवे भक्तियुक्तेषु योऽभिधास्यति अभितो ग्रन्थतोऽर्थतश्च स्थापयिष्यति, पूर्वश्लोकेऽभक्तस्य निषेधेन भक्तस्यैवार्थतो ग्रहणेऽपि पुनर्भक्तग्रहणात् तपआद्यभावेऽपि मद्भक्तिमात्रेणाप्यस्य शास्त्रस्य संप्रदानपात्रता भवति। भक्तेरेव तदधिकारापादनत्वमिति सूचितम्। कथमभिधास्यति तत्राह—भक्तिं मयि परां कृत्वेति। गीताकर्तुर्भगवतो गरीयसः परमप्रीत्यर्थं मया भक्तेभ्यो दीयते, नतु केनचिदुपाधिनेति निश्चित्य यो वक्ष्यति स मामेवैष्यत्यत्र संशयो न कर्तव्यः। अथवा यो मद्भक्तेभ्योऽभिधास्यति स मयि परां प्रेमलक्षणां भक्तिं कृत्वा तया मामाराध्य मामेवैष्यति। अवधारणेनोक्तार्थसिद्धौ सत्यां पुनरसंशयवचनं यथा यज्ञादिकर्मनिष्ठो भक्तिहीनज्ञाननिष्ठो वाऽन्यदेवान्तवत्फलं प्राप्नोति, न तथा मद्भक्त इति दार्ढ्यायेति भावः॥ ६८॥

म० टी०—एवं संप्रदायस्य विधिमुक्त्वा तस्य कर्तुः फलमाह—य इति। यः संप्रदायस्य प्रवर्तकः इदमावयोः संवादरूपं ग्रन्थं परमं निरतिशयपुरुषार्थसाधनं गुह्यं रहस्यार्थत्वात् सर्वत्र प्रकाशयितुमनर्हं मद्भक्तेषु मां भगवन्तं वासुदेवं प्रत्यनुरक्तेषु अभिधास्यति अभितो ग्रन्थतोऽर्थतश्च धास्यति स्थापयिष्यति। भक्तेः पुनर्ग्रहणात् पूर्वोक्तविशेषणत्रयराहित्यस्यापि भगवद्भक्तिमात्रेण पात्रता सूचिता भवति। कथमभिधास्यति तत्राह—भक्तिं मयि परां कृत्वा भगवतः परमगुरोः शुश्रूषैवेयं मया क्रियत इत्येवं कृत्वा निश्चित्य योऽभिधास्यति स मामेवैष्यति मां भगवन्तं वासुदेवमेष्यत्येव अचिरान्मोक्ष्यत एव संसारादत्र संशयो न

कर्तव्यः । अथवा मयि परां भक्तिं कृत्वाऽसंशयो निःसंशयः सन्मामेष्यत्येवेति वा मामेवैष्यति नान्यमिति यथाश्रुतमेव वा योज्यम् ॥ ६८ ॥

**शं० टी०**—तपस्वित्वं भक्तिमत्त्वं शुश्रूषत्वमद्वैते प्रीतिमत्त्वं मुमुक्षुत्वं चाधिकारिणः शुद्धात्मत्वे ज्ञानशास्त्रोपदेशयोग्यत्वे च लिङ्गमित्यधिकारिलक्षणमुक्त्वा, निरुक्तलक्षणलक्षितेभ्य एवाधिकारिभ्यो ज्ञानशास्त्रमुपदेष्टुः फलमाह—य इति । यः श्रोत्रियो ब्रह्मनिष्ठो यतिर्मद्भक्तेषु मामेव परमेश्वरं संसारमोक्षस्थितिबन्धहेतुं मोक्षेच्छया स्वकर्मभिराराधयन्तो ये भजन्ति ते मद्भक्तास्तेषु तपस्विने भक्तायेति पूर्वमुक्त्वा मद्भक्तेष्विति पुनर्भक्तिग्रहणम् "तं ह देवमात्मबुद्धिप्रकाशं मुमुक्षुर्वै शरणमहं प्रपद्ये" इति, "अमृतस्यैष सेतुः" इति शिवप्रसादेन विना न सिद्धिरिति मोक्षस्येश्वरप्रसादैकलभ्यत्वश्रवणान्मुमुक्षूणामीश्वरैकशरणत्वेन भवितव्यं, परमेश्वरैकशरणैरेव कृतं श्रवणादिकं फलत्यतस्तत्रैव दृढा भक्तिः कर्तव्येति ज्ञापनार्थं मद्भक्तेषु मदेकशरणेषु पूर्वोक्तविशेषणवत्सु च । अत्र विषयसप्तमी । मद्भक्तानात्मतत्त्वजिज्ञासूनुद्दिश्येत्यर्थः । परमं परमपुरुषार्थसाधनं गुह्यं गोप्यमयोग्येष्वप्रयोक्तव्यमिदं गीताख्यं ज्ञानमयं शास्त्रमभिधास्यति परमकरुणयैवोपदेक्ष्यति, न तु शुश्रूषाद्यपेक्ष्य ग्रन्थं तदर्थं च यथा गृह्णीयुस्तथा व्याख्यास्यतीत्यर्थः । ननु ब्रह्मनिष्ठस्य विदेहकैवल्यार्थिनः शिष्येभ्यो गीताशास्त्रोपदेशो नोपयुज्यते, ज्ञाननिष्ठातत्फलप्रतिबन्धकत्वात् "ब्रह्मसंस्थोऽमृतत्वमेति" 'प्रमादं वै मृत्युमहं ब्रवीमि' इतिश्रुत्या स्मृत्या च ब्रह्मविदो बहिर्मुखत्वं मुक्तिप्रतिबन्धकं निषिध्यत इति चेद्भवानत्र प्रष्टव्यः—तत्त्वोपदेष्टा साधको वा सिद्धो वा संसिद्धो वेति । नाद्यः । साधकस्यात्मयाथात्म्यविज्ञानाभावाद्वाक्यार्थोपदेशमात्रं विना निर्विचिकित्सं तत्त्वोपदेशानुपपत्तेः । यथा शास्त्रेण लक्षणेन स्वरूपेण च वज्रमणिं विज्ञातवत एव मणितत्त्वोपदेश उपपद्यते, न तु शास्त्रमात्राध्येतुर्नापि लक्षणं श्रुतवतो नापि चापातदर्शनवतः सिध्यति तद्वत् । नापि तृतीयः, सप्तमीं भूमिकामधिरुह्य प्रपञ्चं विस्मृत्य परप्रयत्नाच्छारीरं कर्म कुर्वत उपदेशायोगात्पारिशेष्यात्सिद्धस्यैवोपदेशयोग्यत्वम् । ननु सिद्धस्यापि बहिःप्रवृत्त्या ज्ञानं प्रतिबध्येतेति चेन्न, मुमुक्षुभ्यः शिष्येभ्यस्तत्त्वमस्यादिवाक्यार्थोपदेशेनात्मज्ञानं दृढमेव भवति । ततः शिष्येभ्यो मुमुक्षुभ्यः सिद्धेनोपदेष्टव्यम्, अन्यथा त्वाचार्याभावप्रसङ्गाच्छास्त्रानर्थक्यप्रसङ्गान्मुमुक्षूणामगतित्वप्रसङ्गाच्च । ततः 'स्वयं तीर्णः परान् तारयति' इतिन्यायेन सिद्धः स्वयं मुक्तोऽन्यान् शरणागतान् मुमुक्षून् बन्धान्मोचयति, तदेव फलमैहिकज्ञानसंपत्तेर्विदुषः । ननु तदेतत्सत्यं, तथापि मूढानामुपदेशप्रवृत्त्या द्वैतवासना प्रवर्धते, तया विपरीतप्रत्ययवृद्धिः, तया सर्वात्मत्वज्ञानं प्रतिबद्धयते, तेन मोक्षश्च । कथमात्महानिं विद्वानङ्गीकृत्योपदेक्ष्यतीत्यत आह—भक्तिमिति । 'पुङ्खानुपुङ्खविषयेषु च तत्परोऽपि ब्रह्मावलोकननिरूढमना हि योगी । संगीततालपरिनृत्यवशं गतापि मौलिस्थकुम्भपरिरक्षणधीर्नटीव' इतिन्यायेन परोपदेशे प्रवृत्तोऽपि सिद्धो यतिर्मयि सर्वात्मन्यद्वितीये परे ब्रह्मण्यारोपितं सर्वदृश्यं चिरकालनित्यनिरन्तरसमाध्यभ्यासबलेन सन्मात्रतया गृह्णातीति परा प्रकृष्टा तामुत्तमां भक्तिं सर्वत्र सन्मात्रग्राहिणीं प्रत्यग्दृष्टिं कृत्वा । सदा सर्वत्र सर्वं ब्रह्मैव पश्यन्, निःशेषविनष्टद्वैतभावो विद्वान्मामेवाद्वितीयं निर्विशेषं परं ब्रह्मैष्यति प्राप्स्यति, न तूत्क्रमणं नापि लोकान्तरं नापि देशान्तरं नैव च देहान्तरं यास्यति । अत्र संशयो न कर्तव्यः । ब्रह्मविदो यतेः सिद्धस्य कचित्परोपदेशे प्रवृत्तस्य ब्रह्मप्राप्तौ शङ्कामेवकारेणैव निरस्य तस्यापि दार्ढ्यार्थमसंशय इत्युक्तम् । तेन सिद्धं ब्रह्मवियतिः सिद्धः कचित्परोपदेशे प्रवृत्तोऽपि स्वयं सर्वत्र ब्रह्मदृष्टिममुञ्चानो ब्रह्मभावमेव गच्छति, नास्त्यत्र संशय इति ॥ ६८ ॥

**श्री० टी०**—एतैर्दोषैर्विरहितेभ्यो गीताशास्त्रोपदेष्टुः फलमाह—य इति । मद्भक्तेष्वभिधास्यति मद्भक्तेभ्यो यो वक्ष्यति, स मयि परां भक्तिं करोति, ततो निःसंशयः सन्मामेव प्राप्नोतीत्यर्थः ॥ ६८ ॥

स० टी०—संप्रदायविधिं प्रोच्य तत्कर्तुः फलमुच्यते ॥ य आवयोरिमं ग्रन्थं संवादात्मकमद्भुतम् ॥१॥ रहस्यार्थतया गुह्यं सत्पुरुषार्थसाधनम् ॥ वक्तुं योग्यं न सर्वत्र मद्भक्तेष्वभिधास्यति ॥ २ ॥ मां श्रीमद्वासुदेवाख्यं भगवन्तं जगद्गुरुम् ॥ हरिं प्रत्यनुरक्तेषु योऽभितो ग्रन्थतोऽर्थतः ॥ ३ ॥ स्थापयिष्यति मद्भक्त्या संप्रदायप्रवर्तकः ॥ भगवद्वासुदेवस्य समस्तजगतां गुरोः ॥ ४ ॥ शुश्रूषैव मयापीयं क्रियते मनसा गिरा ॥ इत्येवं निश्चयाकारां भक्तिं कृत्वा मयीश्वरे ॥ ५ ॥ योऽभिधास्यति सोऽत्यन्तप्रियं मामेव चिद्घनम् ॥ भगवन्तं जगन्नाथं वासुदेवमधोक्षजम् ॥ ६ ॥ एष्यत्येवाशु संसारान्मुच्यते नात्र संशयः ॥ भगवद्भक्तिमात्रेण पात्रतां याति मानवः ॥ ७ ॥ इति सूचयितुं भक्तेरुपादानं पुनः कृतम् ॥ ८ ॥ ६८ ॥

भा० टी०—एवं संप्रदायस्य विधिमुक्त्वा शास्त्रसंप्रदाने प्रवृत्त्यर्थं तस्य कर्तुः फलमाह—य इति । इमं यथोक्तं केशवार्जुनयोः संवादरूपं ग्रन्थम् । इदमितिपाठस्त्वाचार्यैरव्याख्यातत्वादनादरणीयः । य इमं निःश्रेयसार्थत्वात्परमं प्रकृष्टं गुह्यं गोप्यं रहस्यार्थविषयत्वात् । मद्भक्तेषु मयि भक्तिमत्सु योऽव्यापकोऽभिधास्यति ग्रन्थतोऽर्थतश्चाध्यापयिष्यति। यथा मयि वासुदेवे नित्यभक्ते त्वयि मया ग्रन्थतोऽर्थतश्च स्थापितस्तथा मद्भक्तेषु यो ग्रन्थमिमं स्थापयिष्यति, स भक्तिं मयि परां कृत्वा भगवतः परमगुरोः शुश्रूषा मया क्रियत इत्येवं कृत्वा मामेवैष्यति नान्यं, मुक्तो भविष्यत्येवेत्यर्थः। अत्र संशयो न कर्तव्यः। मद्भक्तेष्विति भक्तेः पुनर्ग्रहणं भक्तिमात्रेण शास्त्रसंप्रदाने पात्रं भवतीति गम्यते, भक्तिं परामद्वैतलक्षणामुपासनां कृत्वेति तु गीताशास्त्रप्रदानलक्षणभक्तेः फलं वक्तुं प्रवृत्तस्येतरभक्तिफलकथनमनुचितमित्यभिप्रेत्याचार्यैर्न व्याख्यातम् ॥ ६८ ॥

प० टी०—एतैर्दोषैर्विरहितेभ्यो भक्तेभ्यो गीताशास्त्रोपदेष्टुः फलमाह—य इति । य आचार्य इदं परमं गुह्यं गोप्यं गीतार्थतत्त्वं मद्भक्तेषु जिज्ञासया प्राप्तेषु सत्स्वभिधास्यति वक्ष्यति साभिप्रायं निरूपयिष्यति, स मयि जगदीश्वरे परामव्यभिचारिणीं भक्तिं कृत्वाऽसंशयः सन् मामेव प्राप्नोति । आत्माख्यदक्षिणादातुः किमन्यत् फलं वाच्यमित्यर्थः । श्रुतिरपि ऋग्वेदे—" आविरभून्महि माघोनमेषां विश्वं जीवन्तमसो निरमोचि । महिज्योतिः पितृभिर्दत्तमागादुरुः पन्था दक्षिणाया अदर्शि " इति । अत्र रावणभाष्यम्—एषामाचार्याणां माघोनं महि आविरभूत् । इन्दति जानातीति व्युत्पत्त्या मघोन इन्द्रस्य परमात्मन इदं माघोनं महि महत्त्वमाविरभूत् । कुत इत्याह—महीति । महित्वं ज्योतिर्ज्ञानं च पितृभिरस्माभिर्दत्तं सदागात् प्राप्तं तेष्वाचार्येषु परिणतं, येन ज्योतिषा विश्वं जीवं सर्वं जगत् तमसोऽज्ञानान्निरमोचि निर्मोचितम् । अथ कथमस्माभिस्तेभ्य एवार्पितमित्याह—तैः उरुर्निरवधिकफलो दक्षिणायाः पन्था मार्गोऽदर्शि दृष्टः । मोक्षार्थिभ्य आत्माख्यदक्षिणाया मार्गस्य फलं निरवधिकमिति ज्ञातमित्यर्थः । अत एव सावधिकफला दक्षिणामग्रिमश्रुत्याह—उच्चादिवीति ॥ ६८ ॥

रा० टी०—गीताशास्त्रस्य व्याख्यानं फलोक्त्या प्रशंसति—य इत्यादिद्वाभ्याम् । परमं गुह्यमतिगोप्यमिदं गीताशास्त्रं योऽधिकारी मद्भक्तेषु मम भक्तेभ्योऽभिधास्यति उपदेक्ष्यति स इति योज्यम् । मयि परां भक्तिं कृत्वा मामेवैष्यति प्राप्स्यति । असंशयः नास्ति संशयः ॥ ६८ ॥

**न च तस्मान्मनुष्येषु कश्चिन्मे प्रियकृत्तमः ॥**
**भविता न च मे तस्मादन्यः प्रियतरो भुवि ॥ ६९ ॥**

त० टी०—मामेवैष्यतीत्युक्तं तत्र हेतुमाह—न चेति । मद्भक्तेषु यो गीताशास्त्राभिधायकस्तस्मादन्यो मनुष्येषु मध्ये कश्चिन्मे मम प्रियकृत्तमः अतिशयेन प्रियकृन्नास्ति वर्तमानकाले, न च मे तस्मादन्यः कश्चित्प्रियतरो भुवि अस्मिँल्लोके भविता भविष्यति ॥ ६९ ॥

ग० टी०—किंच—नेति । तस्माद्भक्तेषु शास्त्रसंप्रदायकृतः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मे

मम प्रियकृत्तमः अतिशयेन प्रियकृत् मद्विषयप्रीत्यतिशयवान्नास्ति वर्तमाने काले, नापि प्रागासीत्तादृक् कश्चित्। न च कालान्तरे भविता भविष्यति। ममापि तस्मादन्यः प्रियतरः प्रीत्यतिशयविषयः कश्चिदप्यासीन्न अधुना च भुवि लोकेऽस्मिन्नास्ति। न च कालान्तरे भवितेत्यावृत्त्या योज्यम् ॥ ६९ ॥

**शं० टी०**–एवं करुणयैव मुमुक्षुभ्यो गीताशास्त्रं तदर्थं चोपदिशन्तं स्तौति–**न चेति**। यो ब्रह्मवित्यतिर्मुमुक्षुभ्यो निरुक्तविशेषणवद्भ्यो गीतां तदर्थं चोपदिशति, तस्माद्गीताशास्त्रोपदेष्टुर्यतेरन्यः प्रियकृत्तमः मे प्रियमिष्टं मत्प्राप्तेरन्तरङ्गसाधनं श्रवणमननध्यानादिकं नित्यं प्रयत्नेन ये कुर्वन्ति ते प्रियकृतस्तेभ्यः सर्वेभ्योऽप्युत्तमः प्रियकृत् प्रियकृत्तमः। मनुष्येषु स्तोत्रमन्त्रजपपूजादिबहिरङ्गसाधनपरेषु कश्चिन्नास्ति, बहिरङ्गसाधनपरेभ्योऽन्तरङ्गसाधनपराः मम प्रियास्तेभ्यः सर्वेभ्यः प्रियो गीतार्थोपदेष्टा। यतः स्वयं तीर्णः परेषामपि तारणाय प्रवृत्तस्ते तु स्वतरण एव प्रवृत्तास्तस्मादयमेव प्रियकृत्तमो नान्यः कश्चिदिदानीमित्यर्थः। इतः परमपि मे मम तस्मान्मम भक्तेभ्यो गीताशास्त्रोपदेष्टुरन्यः प्रियतरः प्रियकृत्तरो भुवि भूलोके न भविता च न भविष्यति। संसारदुःखसागरनिमग्नान् मद्भक्तान् मुमुक्षून् दययैव ज्ञानशास्त्रार्थोपदेशेन यो ब्रह्मवित्यतिः समुद्धरति स एव कालत्रयेऽपि मम परमेश्वरस्य प्रियकृत्तम इति तात्पर्यार्थः॥६९॥

**श्री० टी०**–किंच–**न चेति**। तस्मान्मद्भक्तेभ्यो गीताशास्त्रव्याख्यातुः सकाशादन्यो मनुष्येषु मध्ये कश्चिदपि मम प्रियकृत्तमोऽत्यन्तं परितोषकर्ता नास्ति, नच कालान्तरे भविता भविष्यति ममापि तस्मादन्यः प्रियतरोऽधुना भुवि तावन्नास्ति न च कालान्तरेऽपि भविष्यतीत्यर्थः ॥ ६९ ॥

**स० टी०**–तस्मान्मय्यनुरक्तेषु संप्रदायप्रवर्तकात् ॥ पुरुषादपरः कश्चित्तेषु मध्ये ममेशितुः ॥ १ ॥ न चैवातिशयेनास्ति प्रियकृत्सांप्रतं कचित् ॥ नापि कश्चित्पुरा तादृगासीद्वा पुरुषोत्तमः ॥ २ ॥ न च कालान्तरे कश्चिद्भविष्यति नरोत्तमः ॥ तस्मात्कश्चिन्ममाप्यन्यो नासीत्प्रियतरो भुवि ॥ ३ ॥ वर्तमानेऽधुना नास्ति न वाप्यग्रे भविष्यति ॥ ४ ॥ ६९ ॥

**भा० टी०**–ननु सर्वेषां मुक्तिसाधनानां ध्यानस्य श्रेष्ठत्वात्तन्निष्ठस्य मुमुक्षोः कुत एतच्छास्त्रसंप्रदाने प्रवृत्तिरित्याशङ्क्याह–**न चेति**। न च तस्माच्छास्त्रसंप्रदायकृतो मनुष्येषु मद्भक्तिमत्सु वर्तमानेषु मध्ये कश्चिन्मे प्रियकृत्तमोऽतिशयेन प्रीतिकृत्ततोऽन्यो नास्त्येव नाप्यतीतेष्वेतादृक् कश्चित् आसीदिति शेषः। तस्मादेतच्छास्त्रसंप्रदानकर्तुरन्यो द्वितीयो भुवि लोकेऽस्मिन्कालान्तरेऽपि न च भविता न भविष्यतीत्यर्थः। ध्यानकर्तुः श्रेष्ठत्वेऽपि एतच्छास्त्रसंप्रदानकर्तुरन्यस्य कालत्रयेऽपि श्रेष्ठतमत्त्वाभावादेतच्छास्त्रसंप्रदाने प्रवृत्तिरुचितैवेति भावः ॥ ६९ ॥

**प० टी०**–अथैतमेवाभिप्रायमाह–**न च तस्मादिति**। तस्मान्मदुक्तं गुह्यमात्मतत्त्वं मद्भक्तेभ्यो दातुः पुरुषात्सकाशादन्यः कश्चिदपि मे प्रियकृत्तमो न चास्ति न वर्तते। कालान्तरेऽप्येतादृक्प्रियकरो भुवि न भविता। अनेन बहुजननकृतसुकृतसामग्रीसंनाहव्यतिरेकेणैतादृग्वक्ता न भविष्यतीति तस्य दुर्लभत्वमुक्तम्। तथा सर्वभजनापेक्षयेदं भजनं मम परमप्रीतये भवतीत्यर्थः ॥ ६९ ॥

**रा० टी०**–**न चेति**। तस्माद्गीताव्याख्यातुः मनुष्येषु कश्चिन्मे प्रियकृत्तमः न चास्ति नैवास्ति। तस्मादन्यो मे प्रियतमो भविता च न, नाऽभूदिति च ज्ञेयम्। अत्र मनुष्येष्वित्युक्त्या देवानां फलाधिक्यं सूचयति ॥ ६९ ॥

**अध्येष्यते च य इमं धर्म्यं संवादमावयोः ॥**
**ज्ञानयज्ञेन तेनाहमिष्टः स्यामिति मे मतिः ॥ ७० ॥**

त० टी०—एवमध्यापकस्य फलमुक्त्वा अध्येतुः फलमाह—अध्येष्यत इति । आवयोर्वासुदेवार्जुनयोरिमं धर्म्यं धर्मादनपेतं संवादं सर्वशास्त्रार्थनिर्णयं यश्चाध्येष्यते यथोक्तार्थविशिष्टं सद्गुरोः सम्यगवधार्यार्थानुसंधानसहितं नियमेन पठिष्यति, तेन पुंसा ज्ञानयज्ञेन चतुर्थाध्यायोक्तसर्वयज्ञेषु 'न हि ज्ञानेन सदृशं पवित्रमिह विद्यते । सर्वकर्माखिलं पार्थ ज्ञाने परिसमाप्यते । श्रेयान् द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परन्तप' इति विशिष्टतयोक्तेन अहमिष्टः पूजितः स्यामिति मे मतिर्मम निश्चयः । यद्यपि ज्ञानयज्ञस्त्वर्थविचारेणैव भवति तथाऽपि यो मद्भक्तः केवलपाठमात्रेणापि मां स्तौति सोऽपि स्वमाहात्म्यं शृण्वतो मम प्रियो भवति । यथा लोके कश्चिदल्पबुद्धिरपि कस्यचिन्महाजनस्य यथाबुद्धि माहात्म्यं वाङ्मात्रेणापि ख्यापयति स तस्य प्रियो भवति, तथा गीतापाठमात्रकृदपि ममैश्वर्यगुणसूचकोऽयमिति मे प्रियो भवतीत्यर्थः ॥ ७० ॥

म० टी०—अध्यापकस्य फलमुक्त्वाऽध्येतुः फलमाह—अध्येष्यत इति । आवयोः संवादमिमं ग्रन्थं धर्म्यं धर्मादनपेतं योऽध्येष्यते जपरूपेण पठिष्यति ज्ञानयज्ञेन ज्ञानात्मकेन यज्ञेन चतुर्थाध्यायोक्तेन द्रव्ययज्ञादिश्रेष्ठेनाहं सर्वेश्वरः तेनाध्येत्रा इष्टः पूजितः स्यामिति मे मतिर्मम निश्चयः । यद्यप्यसौ गीतार्थमबुध्यमान एव जपति तथापि तच्छृण्वतो मम मामेवासौ प्रकाशयतीति बुद्धिर्भवति । अतो जपमात्रादपि ज्ञानयज्ञफलं मोक्षं लभते सत्त्वशुद्धिज्ञानोत्पत्तिद्वारा । अर्थानुसंधानपूर्वकं पठतस्तु साक्षादेव मोक्ष इति किं वक्तव्यमिति फलविधिरेवायं नार्थवादः । 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप' इति हि प्रागुक्तम् ॥ ७० ॥

शं० टी०—श्रद्धया भक्त्या च नित्यं यो मुमुक्षुर्गीतापारायणं करोति तस्य फलमाह—अध्येष्यत इति । तव च मम चावयोः संवादं संज्ञापरूपं धर्म्यं धर्मस्य मोक्षैककारणस्य ज्ञानस्य सिद्धिहेतुत्वाद्धर्मादनपेतं धर्म्यमिमं ग्रन्थं गीताशास्त्रं यश्च मुमुक्षुर्ब्राह्मणादिः श्रद्धया भक्त्या चार्थज्ञानपूर्वकमध्येष्यते नित्यं नियमेन पठिष्यतीत्यर्थः । तेनार्थज्ञानपूर्वकं गीताप्रवृत्तिं कुर्वता मद्भक्तेनाहं परमेश्वरः सततं ज्ञानयज्ञेन ज्ञानमात्मैकत्वविषयं ज्ञानमेव यज्ञो ज्ञानयज्ञस्तेन ज्ञानयज्ञेन इष्टः आराधितः स्यां भवेयम् । गीतापठनस्यार्थज्ञानपूर्वकत्वाद्ब्रह्मण एव तदर्थत्वात्तदनुसंधानेन यत्फलं कैवल्यलक्षणं तत्क्रमेण गीताध्येता प्राप्नोतीत्यर्थः ॥ ७० ॥

श्री० टी०—पठतः फलमाह—अध्येष्यत इति । आवयोः कृष्णार्जुनयोः इमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां भवेयमिति मे मतिः । यद्यप्यसौ गीतार्थमबुद्ध्यमान एव केवलं जपति तथापि मम तच्छृण्वतो मामेवासौ प्रकाशयतीति बुद्धिर्भवति । यथा लोके यदृच्छयाऽपि कश्चित्कदाचित्कस्यचिन्नाम गृह्णाति तदासौ मामेवायमाह्वयतीति मत्वा तत्पार्श्वमागच्छति तथाहमपि तस्य सन्निहितो भवेयम् । अत एव अजामिलक्षत्रबन्धुप्रमुखानां कथंचिन्नामोच्चारणमात्रेण प्रसन्नोऽस्मि, तथैवास्यापि प्रसन्नो भवेयमित्यर्थः ॥ ७० ॥

स० टी०—फलमध्यापकस्योक्त्वा फलमध्येतुरुच्यते ॥ य आवयोरिमं ग्रन्थं संवादात्मकमादरात् ॥ १ ॥ स्वधर्मादनपेतं च पठिष्यति जपात्मना ॥ ज्ञानात्मकेन यज्ञेन तुर्याध्यायेरितेन वै ॥ २ ॥ द्रव्ययज्ञादिश्रेष्ठेन सर्वयज्ञेश्वरो ह्यहम् ॥ तेनाध्येत्राऽतिपुण्येन पूजितः स्यामितीशितुः ॥ ३ ॥ ममास्ति निश्चयस्तेन कृतकृत्योऽस्ति मत्प्रियः ॥ यद्यप्यसौ जपत्येवाबुद्ध्यमानोऽर्थमाशयम् ॥ ४ ॥ तच्छृण्वतस्तथापीति भवत्येवं मतिर्मम ॥ प्रकाशयति मामेवाध्येताऽयमिति धीपतेः ॥ ५ ॥ ज्ञानयज्ञफलं तस्माज्जपमात्रादपीरितम् ॥ चित्तशुद्ध्यात्मविज्ञानद्वारा मोक्षमुदारधीः ॥ ६ ॥ प्राप्नोति भगवद्गीताशास्त्राध्येता न संशयः ॥ पठतोऽर्थानुसंधानपूर्वकं पुरुषस्य तु ॥ ७ ॥ साक्षादेव भवेन्मोक्ष इति किं वाच्यमित्ययम् ॥ साक्षात्फल-

विधेरेवोद्देशो नास्यार्थवादता ॥ ८ ॥ श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः परंतप ॥ इत्येवं पूर्वमेवोक्तमतो नित्यं मुमुक्षुभिः ॥ ९ ॥ अत्यादरेण गीताख्यं शास्त्रमध्येयमित्यलम् ॥ १० ॥ ७० ॥

भा० टी०—एवमेतच्छास्त्रसंप्रदानकर्तुरध्यापकस्य फलमुक्त्वाऽध्येतुस्तदाह—अध्येष्यते इति । योऽध्येता धर्म्यं धर्मादनपेतमिममावयोः संवादमध्येष्यते च पठिष्यति तेन अध्येत्रा ज्ञानयज्ञेनाहमिष्टः स्यां 'श्रेयान्द्रव्यमयाद्यज्ञाज्ज्ञानयज्ञः' इति सर्वयज्ञेभ्यः श्रेष्ठतमत्वेनाभिहितस्य देवतादिविषयज्ञानयज्ञस्य फलं कैवल्यं तत्तुल्यं देवताद्यात्मत्वमस्य फलं भवतीत्यर्थः । तेनाध्येत्रा ज्ञानयज्ञफलतुल्यफलेनाध्ययनेनाहमिष्टः पूजितः स्यां भवेयमिति मे मम मतिर्निश्चयः । फलविधिरेवायं न त्वर्थवादः ॥ ७० ॥

प० टी०—अथ गीताशास्त्रस्य पठनफलमाह—अध्येष्यते चेति । आवयोः कृष्णार्जुनयोरिमं धर्म्यं धर्मादनपेतं संवादं योऽध्येष्यते जपरूपेण पठिष्यति, तस्य जपयज्ञफलेन भवितव्यम् । परं तु तेन पुंसा सर्वयज्ञेभ्यः श्रेष्ठेन ज्ञानयज्ञेनाहमिष्टः स्यां ज्ञानयज्ञेन संतर्पितो भवेयमिति मे मतिर्मम संमतम् । यद्यप्यसौ गीतार्थमबुद्ध्वाजपि (?ऽपि जपति) तथापि मत्प्रसादकर एव । यतो गीतारूपछन्दर्षिदेवतायुतो मालामन्त्रः । तत्र छन्दांस्यनुष्टुबादीनि, ऋषिर्वेदव्यासः, देवता श्रीकृष्णस्तत्र मन्त्रशब्दार्थस्तु——मन्तारं त्रायतेऽसौ मन्त्र इति व्युत्पत्त्या जपमात्रेणैव सिद्धिदो भवति, नहि तत्र मन्त्रार्थो मृग्यते । तथा च यद्देवताको मन्त्रस्तेन मन्त्रेण सा देवता प्रीयते । प्रकृते तु चित्तशुद्धिद्वाराहं प्रीतः सन् स्वरूपं दर्शयामीत्यर्थः ॥ ७० ॥

रा० टी०—गीताध्ययनमपि फलकथनेन प्रशंसति—अध्येष्यते चेति । धर्म्यं धारकत्वाद्धर्मो भगवान् । तदीयं धर्म्यम् । धर्मसाधनमिति वा । इममावयोः संवादं गीताप्रबन्धं यः अध्येष्यते च पठिष्यति च । तेन पुंसा ज्ञानयज्ञेन ज्ञानाख्ययज्ञेनाहमिष्टः पूजितः स्यां भवेयं, इति मे मतिः ॥ ७० ॥

**श्रद्धावाननसूयश्च शृणुयादपि यो नरः ॥**
**सोऽपि मुक्तः शुभाँल्लोकान्प्राप्नुयात्पुण्यकर्मणाम् ॥ ७१ ॥**

**त० टी०—इदानीमन्यस्य पठतो योऽन्यः शृणोति तस्य फलमाह—श्रद्धावानिति । यः कश्चिन्नरः अन्यस्य विदुषो वोच्चैः पठतः सकाशात् केवलं शृणुयादपि । कथंभूतः? श्रद्धावान् साक्षाद्भगवद्गीतत्वान्महाफलमिति विश्वासवान् । पुनरनसूयश्च—सम्यङ्न पठति, अयं पठितुमनर्ह इति दोषारोपमकुर्वन् यः शृणुयात्सोऽपि पापैर्मुक्तः पुण्यकर्मणामश्वमेधादिपुण्यकर्मकृतां शुभाँल्लोकान् पुण्यफलभोगभोग्यान्प्राप्नुयात् ॥ ७१ ॥**

म० टी०—प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलं कथयति—श्रद्धेति । यो नरः कश्चिदपि अन्यस्योच्चैर्जपतः कारुणिकस्य सकाशात् श्रद्धावान् श्रद्धायुक्तः, तथा किमर्थमयमुच्चैर्जपत्यबद्धं वा जपतीति दोषदृष्ट्याऽसूयया रहितोऽनसूयश्च केवलं शृणुयादिमं ग्रन्थम्—अपिशब्दात् किमुतार्थज्ञानवान्—सोऽपि केवलाक्षरमात्रश्रोतापि मुक्तः पापैः शुभान् प्रशस्तान् लोकान् पुण्यकर्मणामश्वमेधादिकृतां प्राप्नुयात् । ज्ञानवतस्तु किं वाच्यमिति भावः ॥ ७१ ॥

शं० टी०—प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरिदानीं फलमाह—श्रद्धावानिति । विचाराध्ययनयोरनधिकारी योऽपि—यश्च नरो नरमात्राकारवान् मूढो वा वृद्धो वा स्त्रीजनो वा, अन्वहं श्रद्धावान् वक्तरि गीतायामपि परमेश्वरे च श्रद्धाभक्तिसंपन्नस्तथानसूयुरसूयादिदोषरहितो भूत्वा नित्यमिदं गीताशास्त्रं शृणुयात्, सोऽपि श्रोतापि ज्ञानाज्ञानकृतेभ्यः पापेभ्यो मुक्तः सन् पुण्यकर्मणामश्वमेधादियागकर्तॄणां ये लोकास्तान् शुभान् अत्यन्तसुखकरान् प्राप्नुयात् । नित्यं गीताश्रवणमात्रेण सत्यादिपुण्यलोकान् प्राप्नोतीत्यर्थः ॥ ७१ ॥

श्री० टी०—अन्यस्य जपतो योऽन्यः कश्चिच्छृणोति तस्यापि फलमाह—श्रद्धावानिति । यो नरः श्रद्धायुक्तः केवलं शृणुयादपि । श्रद्धावानपि कश्चित्किमर्थमुच्चैर्जपति अबद्धं जपतीति वा दोषदृष्टिं करोति तद्व्यावृत्त्यर्थमाह—अनसूयश्च । असूयारहितो यः शृणुयात् सोऽपि सर्वैः पापैर्मुक्तः सन् अश्वमेधादिपुण्यकृतां लोकान्प्राप्नुयात् ॥ ७१ ॥

स० टी०—फलं प्रवक्तुरध्येतुश्चोक्त्वा श्रोतुः फलं हरिः ॥ इदानीं कथयत्यद्धा करुणारससागरः ॥ १ ॥ यः कश्चन मनुष्योऽपि जपतोऽन्यस्य कस्यचित् ॥ उच्चैर्दयानिधेः पुंसः सकाशाच्छ्रद्धयाऽन्वितः ॥ २ ॥ उच्चैर्जपत्यबद्धं वा किमर्थमिति दोषदृक् ॥ असूया तद्विहीनः सन्केवलं शृणुयादिमम् ॥ ३ ॥ ग्रन्थमत्रापिशब्दात्तु किमुतार्थावबोधवान् ॥ केवलाक्षरमात्रस्य श्रोतापि त्यक्तकिल्बिषः ॥ ४ ॥ लोकान्प्रशस्तानाप्नोति सोऽश्वमेधादियाजिनाम् ॥ किं वाच्यं भगवद्गीताशास्त्रार्थविद इत्यलम् ॥ ५ ॥ ७१ ॥

भा० टी०—प्रवक्तुरध्येतुश्च फलमुक्त्वा श्रोतुरपि फलं कथयति—श्रद्धावानिति । श्रद्धावान् श्रद्दधानोऽनसूयश्च—पौरुषेयत्वात् श्रुतितो निकृष्टमिदमिति दोषदृष्टिरसूया—तद्रहितः सन्निमं ग्रन्थं यो नरो यः कश्चिच्छृणुयादपि । नरशब्देनैतच्छ्रवणेनापि यो हीनो नासौ नरः किंतु पशुरिति सूचयति । सोऽपि मुक्तः पातकाद्रहितः पुण्यकर्मणामग्निहोत्राश्वमेधादिपुण्यकर्मवतां लोकान् शुभान् प्रशस्तान् प्राप्नुयात् । अपिशब्दात् किमुतार्थज्ञानवान् ॥ ७१ ॥

प० टी०—अथ श्रवणफलमाह—श्रद्धावानिति । यो नरः श्रद्धायुक्तः सन् केवलं शृणुयादपि कश्चित्किमर्थमयमुच्चैर्जपत्यबद्धं वेति दोषदृष्ट्या शृणोति तन्निवृत्त्यर्थमाह—अनसूयश्चेति । असूयारहितः शृणुयात्सोऽपि सर्वैः पापैर्मुक्तः सन्नश्वमेधादिपुण्यकृतां लोकान् प्राप्नुयात् ॥ ७१ ॥

रा० टी०—गीताश्रवणमपि फलोक्त्या प्रशंसति—श्रद्धावानिति । अस्मादस्ति मे फलमित्यास्तिक्यबुद्धिमान् । अनसूयः असूयादिदोषरहितश्च नरः इममावयोः संवादं शृणुयाच्चेदपि । सोऽपि मुक्तः सन्पुण्यकर्मणां शुभान्लोकानवाप्नुयात् । अत्र सोऽपि श्रवणं कुर्वन्नपि मुक्तः । किमु तदध्येतेत्युक्त्या श्रवणं कुर्वतोऽपि तदध्येतुर्मुक्तावधिकसुखमिति सूचितम् । तथा तस्मादपि व्याख्यातुर्मनुष्यस्याधिकं सुखम् । ततो देवानामिति ज्ञातव्यम् ॥ ७१ ॥

**कच्चिदेतच्छ्रुतं पार्थ ! त्वयैकाग्रेण चेतसा ॥**
**कच्चिदज्ञानसंमोहः प्रणष्टस्ते धनंजय ! ॥ ७२ ॥**

**त० टी०—एतद्गीताशास्त्रस्य वक्तुरध्येतुः श्रोतुश्च फलमुक्तम् । इदानीं यावच्छिष्यस्याज्ञानं न नश्येत्तावद्गुरुणा शिष्यः पुनरुपदेष्टव्य इति गुरुधर्मं शिक्षयन्सर्वज्ञोऽपि भगवानर्जुनं मोहनिवृत्तिं पृच्छति—[ कच्चिदिति । ] कच्चिदिति प्रश्ने । एतन्मयोक्तं गुह्यतममज्ञाननाशनं गीताशास्त्रं हे पार्थ ! त्वयैकाग्रेणाविक्षिप्तेन चेतसा श्रुतं किं, सद्युक्तिभिरवधारितम् ? तेन तवाज्ञानसंमोहः अज्ञानहेतुको विपर्ययः प्रणष्टः कच्चित् हे धनञ्जय ? येन संमूढः सन् योत्स्यामीत्युक्तवान्स यदि न नष्टः स्यात्तर्हि पुनरुपदेक्ष्यामीति भावः ॥ ७२ ॥**

म० टी०—शिष्यस्य ज्ञानोत्पत्तिपर्यन्तं गुरुणा कारुणिकेन प्रयासः कार्य इति गुरोर्धर्मं शिक्षयितुं सर्वज्ञोऽपि पुनरुपदेशापेक्षा नास्तीति ज्ञापनाय पृच्छति—कच्चिदिति । कच्चिदिति प्रश्ने । एतन्मयोक्तं गीताशास्त्रमेकाग्रेण व्यासङ्गरहितेन चेतसा हे पार्थ ! त्वया किं श्रुतमर्थतोऽवधारितम्? कच्चित्—किं अज्ञानसंमोहो अज्ञाननिमित्तः संमोहो विपर्ययः अज्ञाननाशात् प्रनष्टः प्रकर्षेण पुनरुत्पत्तिविरोधित्वेन नष्टस्ते तव हे धनंजय ? यदि स्यात् पुनरुपदेशं करिष्यामीत्यभिप्रायः ॥ ७२ ॥

**शं० टी०**—शास्त्रार्थे सम्यग्ज्ञाते शिष्यः कृतार्थ एव स्यात्, अज्ञाते तु प्रकारान्तरेण बोधयित्वा तदज्ञान-विपरीतग्रहणादिदोषमपास्य तस्य कृतार्थता संपादनीया—अयमाचार्यस्य धर्म इत्युपदेष्टॄणां सूचयितुमर्जुनस्य स्वबोधितार्थग्रहणं तदग्रहणं च विज्ञातुमिच्छया पृच्छति श्रीभगवान्—**कच्चिदिति**। हे पार्थ तत्त्वजिज्ञासुना त्वया एतन्मयोपदिष्टमात्मतत्त्वप्रकाशकवाक्यजातमेकाग्रेण सावधानेन चेतसा श्रुतं कच्चित्किं ?—मयोक्तं सर्वं सावधानेन गृहीतं न गृहीतं वा वक्तव्यमित्यर्थः। एवमुपदेशं पृष्ट्वा तत्कार्यं पृच्छति—कच्चिदिति। ते तवाज्ञानसंमोहः अज्ञानमात्मतत्त्वावरकं तिमिरवदावरणलक्षणं तन्निमित्तकः संमोहो विपरीतग्रहः नष्टो नाशं गतः कच्चित् ? मयोक्तवचनजन्यज्ञानेन तत्र बुद्धिभ्रमो नष्टः किं न वेत्यर्थः ॥ ७२ ॥

**श्री० टी०**—सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह—**कच्चिदिति** । कच्चिदितिप्रश्नार्थे । अज्ञानसंमोहः तत्त्वाज्ञानकृतो विपर्ययः । स्पष्टमन्यत् ॥ ७२ ॥

**स० टी०**—विज्ञानोत्पत्तिपर्यन्तं शिष्यस्यानुगतस्य च ॥ सम्यक्प्रयासः कर्तव्यो गुरुणा करुणाब्धिना ॥१॥ इति शिक्षयितुं सम्यग्गुरोर्धर्मं कृपानिधिः ॥ सर्वज्ञोऽपि स्वयं शिष्यं पृच्छति स्वानुगं जयम् ॥ २ ॥ एतन्मयोक्तं गीताख्यं शास्त्रं हे पार्थ चेतसा ॥ व्यासंगान्तरशून्येन किं त्वया श्रुतमर्थतः ॥ ३ ॥ अवधारितमेतत्किं मोहोऽज्ञाननिमित्तकः ॥ अज्ञाननाशतो नष्टः प्रकर्षेणैव किं तव ॥ ४ ॥ यदर्थोऽयं ममायास उपदेष्टृतया तथा ॥ तवापि श्रवणायासः स किं नष्टो धनंजय ॥ ५ ॥ यदि स्यादुपदेशं ते करिष्यामि पुनर्ह्यहम् ॥ ६ ॥ ७२ ॥

**भा० टी०**—तं तु प्रयत्नमास्थाय सर्वप्रकारेण शिष्यः कृतार्थः कर्तव्य इत्याचार्यधर्मं दर्शयितुमुपदिष्टार्थाग्रहणे ज्ञाते पुनर्ग्राहयिष्याम्युपायान्तरेणेत्यभिप्रायवान् शिष्यस्य शास्त्रार्थग्रहणं विवित्सुः पृच्छति—**कच्चिदिति**। कच्चिदिति प्रशस्तप्रश्नार्थे । एकाग्रेण चेतसा चित्तेन त्वया एतन्मयोक्तं श्रुतं श्रवणेनावधारितं किंवा प्रमादेन नावधारितम् ? अज्ञानसंमोहः अज्ञाननिमित्तः संमोहः अविवेकस्वभावः कच्चिदिति किं तेऽज्ञाननाशात्प्रनष्टः प्रकर्षेण पुनरुत्पत्तिविरोधित्वेन नष्टः ? यदर्थोऽयं तव शास्त्रश्रवणायासो मम चोपदेष्टृत्वायासः प्रकृतः । हे पार्थेति संबोधयन् स्त्रीस्वभावशोकमोहनिवर्तकमेतत्त्वयैकाग्रेण चेतसा श्रुतमिति सूचयति । यदि त्वया न श्रुतं स्यात्तर्हि पुनर्मया वक्तव्यं, पृथापुत्रेण प्रेमास्पदेन त्वया यावन्नावधारितं तावन्मया पुनः श्रावणीयमिति वा संबोधनाशयः । मदाज्ञया लोकोद्धारार्थं त्वया स्त्रीस्वभावौ शोकमोहावङ्गीकृतौ । लोकोद्धारोपायस्य च मया प्रोक्तस्यैतस्य त्वयैकाग्रेण मनसा श्रुतत्वादिदानीं तौ विहाय स्वस्वभावमाविर्भावयेति पार्थेतिसंबोधनस्य गूढाभिसंधिः । धनंजयेति संबोधयन् यदि ते मोहः प्रनष्टस्तर्हि धनंजयो भव, नोचेत्पुनस्तन्नाशाय यत्प्रष्टव्यं तत्पृच्छेति सूचयति । गूढाभिसंधिपक्षे 'वीरोऽनन्तो धनंजयः' इत्यत्रोक्तेन धनंजयेन स्वनाम्ना संबोधयन् मदवतारस्य तवाज्ञाननिमित्तकमोहाभावान्मदाज्ञया लोकोपकारायाङ्गीकृतोऽज्ञानसंमोहः कच्चित्प्रनष्टः—अज्ञाननिमित्तकसंमोहप्रणाशनसामर्थ्यं मदुपदेशस्यास्ति कच्चिदिति ध्वनयति ॥ ७२ ॥

**प० टी०**—सम्यग्बोधानुत्पत्तौ पुनरुपदेक्ष्यामीत्याशयेनाह—**कच्चिदिति**। अज्ञानसंमोहस्ते प्रनष्टः कच्चिदिति प्रश्नार्थविपर्ययः । स्पष्टमन्यत् ॥ ७२ ॥

**रा० टी०**—एतावानुपदेशः अरण्यरुदितवज्जातो न भवति किलेतिभावेन पृच्छति—**कच्चिदिति** । किमित्यर्थेऽव्ययमेतत् । हे पार्थ त्वयैकाग्रेण चेतसा एतन्मदुक्तं गीताप्रमेयं श्रुतं किम् ? अज्ञानोत्थः संमोहः कच्चित्ते प्रणष्टः ? ॥ ७२ ॥

**अर्जुन उवाच–नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाऽच्युत ! ॥
स्थितोऽस्मि गतसंदेहः करिष्ये वचनं तव ॥ ७३ ॥**

त० टी०–एवं पृष्टः स्वकृतार्थतामर्जुन उवाच—नष्ट इति । य आत्मविषयो मोहोऽन्यथाज्ञानजो विपर्ययोऽभूत्स नष्टः । तत्र हेतुमाह–त्वत्प्रसादादिति । मोहनाशे गमकमाह–स्मृतिर्लब्धेति । यथाऽवस्थिततत्त्वज्ञानमवाप्तं, तच्च पूर्वजन्मन्यासीन्नररूपनारायणसखित्वात् । पूर्वसिद्धमेवेह जन्मनि विनष्टं पुनर्भगवत्कृपया लब्धमतः स्मृतिर्लब्धेत्युक्तम् । मम ज्ञानं च्युतं, त्वं तु सदैकरसज्ञान इत्यभिप्रायेण संबोधयति—हे अच्युतेति । एतेन त्वत्प्रसादात्सत्यज्ञानानन्दस्वरूपमजहद्गुणशक्तिकं सर्वनियन्तारं सर्वस्य भवाभवहेतुं परमात्मानं साक्षाद्भगवन्तं वासुदेवं त्वां जानामीति सूचितम् । स्मृतिलाभस्य "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति श्रुत्युक्तं संदेहनिवृत्तिरूपं फलमाह–स्थितोऽस्मि गतसंदेह इति । गता मुक्ताः संदेहाः संशया आत्मपरमात्मस्वरूपगुणसंबन्धमोक्षप्राप्तिसाधनविषया यस्य सोऽहं स्थितोऽस्मि, निश्चितत्वदुक्तशास्त्रार्थो निःसंशयोऽस्मीत्यर्थः । तथा हि 'न त्वेवाहम्' इत्यादिनाऽऽत्मनित्यत्वनानात्वाविनाशित्वनिश्चयादनित्यत्वैकत्वविनाशित्वसंशयो नष्टः । तत 'एषा तेऽभिहिता साङ्ख्ये' इत्यारभ्य यावदध्यायसमाप्ति पूर्वोक्तात्मज्ञानप्राप्तिसाधनतया कर्मयोगज्ञानयोगभक्तियोगाः संक्षिप्य दर्शिता ज्ञाताः । तत्र कर्मज्ञानाधिकारिविशेषानिश्चयजातमत्संदेहनिरासपूर्वकासंगकर्मानुष्ठानतन्माहात्म्यकर्माकर्मादिज्ञानं, तदनासक्त्या नैष्कर्म्यकर्मणि ब्रह्मदृष्टिर्यज्ञभेदस्तज्ज्ञानमाहात्म्यमात्मनोऽकर्तृत्वानुसंधानेन कर्मानुष्ठानसंन्यासयोरैक्यं, देहेन्द्रियमनोनियमनेन ध्यानयोगनिष्पत्त्या सर्वत्र समात्मस्वरूपानुसंधानायाभ्यासवैराग्यभगवद्भक्तियोगनिष्ठेति तृतीयादिषष्ठाध्यायान्तेन साधनसंशयो गतः । ततो भजनीयभगवत्पदार्थतद्भक्तिनिरूपणोपयुक्तचिदचिल्लक्षणपरापरप्रकृतिद्वयविभागः स्वस्य तत्स्वामित्वसर्वात्मत्वसर्वकारणत्वसर्वपरमत्वं गुणमायया जगन्मोहकत्वं स्वाश्रितानां ततो मोचकत्वं भक्ताभक्तादिभेदतत्फलकथनेनात्मनः सर्वमुमुक्षूपास्यत्वं परमफलरूपत्वं भक्तिमाहात्म्यानन्तविभूत्यैश्वर्यं ब्रह्मेशानदेवर्ष्यादिसुरासुरनरदुर्दर्शदिव्याप्राकृताद्भुतैश्वररूपदर्शनं भक्त्यैकलभ्यं भक्तसुलभत्वं भक्तसंसारोद्धारकत्वं भक्तप्रियमिति सप्तमादिद्वादशाध्यायान्तेन निश्चयाद्भगवद्विभूतिगुणैश्वर्यभक्तलक्षणभक्तिप्राप्तिविषयकसंशयो गतः । ततः परापरप्रकृती एव क्षेत्रक्षेत्रज्ञशब्दवाच्ये तयोर्भगवच्छक्तित्वेन स्वरूपेण भिन्नत्वेऽपि पृथक्स्थितिप्रवृत्त्यनर्हतया तत्तादात्म्यं क्षेत्रस्वरूपकथनपूर्वकं क्षेत्रज्ञस्वरूपज्ञानोपायममानित्वादिविंशकं ज्ञानशब्दवाच्यं तत्स्वरूपं तु सदसद्विलक्षणं स्वयंप्रकाशं नित्यमेव । तथाविधस्य सदसद्योनिजन्मसु प्रकृत्युद्भवसत्त्वादिगुणसङ्गः कारणं, तस्याणुपरिमाणकत्वेन देहाद्यावरणे धर्मभूतज्ञानेन सर्वक्षेत्रप्रकाशकत्वं, तद्बन्धकगुणानामुत्पत्तौ स्वस्य हेतुत्वं तल्लक्षणबन्धकत्वप्रकारतत्कार्यभेदगुणातीतलक्षणगुणातिक्रमणप्रकारो गुणातीतस्य ब्रह्मभावप्राप्तिरिति त्रयोदशचतुर्दशाध्यायाभ्यां निश्चयात् । क्षेत्रक्षेत्रज्ञभूतयोः प्रकृतिपुरुषयोः परमात्मना केवलभेदो वैक्यं वेति संबन्धविषयः, पुरुषस्य पारमार्थिकं स्वरूपं कीदृशं ? कथं संसारः ? कथं वा मोक्षः ? कीदृशो मोक्षः ? इति स्वरूपविषयश्च संशयो गतः । ततो ब्रह्मभावप्राप्त्यर्हस्य पुरुषस्य बन्धनिरासहेतुवैराग्यार्थं संसारस्याश्वत्थरूपकेण ज्ञानासिना छेदनपूर्वकपरमपुरुषप्रपत्त्या मानमोहादित्यागेन परमपदप्राप्तिः । प्रपद्यस्य प्राप्यभूतस्य परमात्मनः सर्वचेतनाचेतनात्मत्वसर्वप्रकाशकत्वसर्वजीवनहेतुत्ववेदवेद्यत्ववेदान्ताचार्यत्वसर्ववेदार्थवेत्तृत्वक्षराक्षरपुरुषद्वयातीतत्वेन पुरुषोत्तमत्वं, तथा ज्ञातुः सर्वज्ञत्वं कृतकृत्यत्वमिति पञ्चदशेन

निश्चयादनादिसंसारस्य कथं केन साधनेन वा निवृत्तिः स्यात्, परमात्मा किंस्वरूपः कीदृशगुणशक्त्यैश्वर्यवानिति संशयो गतः। तथा उक्ततत्त्वाधिकार्यनधिकारिनिर्णयाय हेयोपादेयदैवासुरसंपद्द्वयविभागनिरूपणं, दैव्याः संपदो मोक्षहेतुत्वम्, आसुर्याः कामक्रोधलोभमूलकत्वेन नित्यासुरभाववृद्ध्या अधमगतिनारक्यादियोनिप्राप्तिफलम्। ततो हेयोपादेयप्रदर्शनार्थं सत्त्वादिगुणत्रयविभागेन श्रद्धाऽऽहारयज्ञतपोदानविभाग इति षोडशाद्यध्यायद्वयेन निश्चयः। तेन तत्त्वज्ञानस्य कोऽधिकारी को वाऽनधिकारी किं हेयं किमुपादेयमिति संदेहो नष्टः। ततोऽन्तिमेऽस्मिन्नध्याये सर्वाध्यायोक्तार्थं संगृह्य ग्राहयितुं तावत्पराभक्त्यनधिकारिणामविशुद्धबुद्धियुक्तानां यज्ञदानतपआदिकर्मनिष्ठयैव श्रेयो, नान्यथा। विशुद्धबुद्ध्यादियुक्तस्य विगतकामक्रोधरागद्वेषस्य ब्रह्मभूतस्य पराभक्तिलाभः, तयैव त्वत्स्वरूपगुणैश्वर्ययाथात्म्यज्ञानेन त्वत्प्राप्तिः, सर्वजीवानां त्वन्नियम्यत्वं, तव स्वतन्त्रत्वं, निरङ्कुशैश्वर्यवत्त्वम्। अतस्त्वदाज्ञानुवर्तिनोऽनन्यशरणस्य निरतिशयप्रेम्णा त्वां भजतो निष्कामस्य स्वेच्छया किंचित् कर्म कुर्वतोऽकुर्वतो वा न किंचित् पापस्पर्शस्त्वत्प्राप्तिसंदेहश्चेति त्वद्वचनान्निश्चिततत्त्वो निर्गतसंदेहो निर्भयोऽस्मि। अतस्त्वच्छासने यावज्जीवं स्थितोऽस्मि, युद्धादिविषयं सर्वं त्वद्वचनं करिष्ये, परमगुरोर्भगवतस्तवाज्ञापालनमेव करिष्ये इत्यर्थः। अत्र मामेकं शरणं व्रजेति शरणागतावेव शास्त्र(स्य)समापनात् "शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्" इत्युपक्रमेऽपि प्रपन्नशब्देन शरणागतस्यैवोपदेश्यत्वज्ञापनात् "निवासः शरणं सुहृत्" इति मध्येऽपि उपास्यस्य सर्वशरणत्वाभिधानाच्छरणागतिपरमेवेदं गीताशास्त्रमित्यवगम्यते। सा च षड्विधा "आनुकूल्यस्य संकल्पः प्रातिकूल्यस्य वर्जनम्। रक्षिष्यतीति विश्वासो गोप्तृत्ववरणं तथा॥ आत्मनिक्षेपकार्पण्ये षड्विधा शरणागतिः" इति नारदपञ्चरात्रवचनात्। तत्रानुकूल्यादिपञ्चाङ्गानि, आत्मनिक्षेपोऽङ्गी। तथा च "सर्वभूतस्थितं यो मां भजत्येकत्वमास्थितः" इत्यादिनाऽऽनुकूल्यसंकल्पाख्यः प्रथमोऽङ्गो दर्शितः। हेयतया आसुरीसंपत्प्रतिपादनम्। अन्यत्रापि निर्वैरत्वादिप्रतिपादनं प्रातिकूल्यवर्जनाख्यो द्वितीयोऽङ्गो दर्शितः। "योगक्षेमं वहाम्यहम्" इति विश्वासाख्यस्तृतीयोऽङ्गो दर्शितः। "पिताऽसि लोकस्य चराचरस्य" इत्यादिना "प्रसीद देवेश! जगन्निवास" इत्यन्तेन गोप्तृत्ववरणाख्यश्चतुर्थोऽङ्गो दर्शितः। "दिशो न जाने न लभे च शर्म प्रसीद देवेश जगन्निवास!। नहि प्रजानामि तव प्रवृत्तिम्" इति कार्पण्यरूपः पञ्चमोऽङ्गो दर्शितः। आत्मात्मीयस्य सर्वस्य विधिश्रद्धया भगवत्यर्पणमात्मनिक्षेपः; स च "तमेव चाद्यं पुरुषं प्रपद्ये मामेकं शरणं व्रज" इति षष्ठोऽङ्गो दर्शितः। अवशिष्टो ज्ञानकर्मभक्तिप्रतिपादको ग्रन्थः प्रपत्तृप्रपदनप्रपत्तव्यस्वरूपगुणाङ्गैश्वर्यप्रतिपादनेन तत्रैव परम्परया संबध्यते इति विवेकः। अथवोपास्यस्वरूपमुपासकस्वरूपं तदुपासनस्वरूपं तदुपासनफलं तद्विरोधिस्वरूपमित्यर्थपञ्चकं निरूपितम्। तत्र सप्तमाध्यायादिषु तत्र तत्र सर्वज्ञसर्वकारणसर्वनियन्तृभक्तवात्सल्यादिगुणार्णवं भगवत्तत्त्वमुपास्यस्वरूपमुक्तम्। १। तत्प्राप्तृतया तत्र तत्र जीवक्षेत्रज्ञाक्षरपुरुषादिशब्दवाच्यं ज्ञानं ज्ञातृप्रतिशरीरभिन्नमसंख्यकं भगवदधीनं बन्धमोक्षार्हं नित्यमित्युपासकस्य स्वरूपं निर्णीतम्। २। तत्प्राप्तिसाधनं कर्मज्ञानभक्तिप्रपत्तिगुर्वनुवृत्तिभेदात् पञ्चविधं तदुपासनं तत्र तत्र निर्दिष्टम्। ३। निःशेषाविद्यानिवृत्त्या परमानन्दस्वरूपतत्साधर्म्यभगवद्भावादिशब्दाभिधेयं मोक्षाख्यं तदुपासनजं तत्कृपाफलम्। ४। एतच्चतुष्टयस्य प्रतिबन्धकं कामक्रोधरागद्वेषादिकमासुरीसंपच्च विरोधस्वरूपमित्यर्थपञ्चकमेव गीतायां श्रीभगवतोपदिष्टमिति बोध्यम्। ५। तदुक्तं भगवता आद्याचार्येण श्रीनिम्बादित्येन—"उपास्यरूपं तदुपासकस्य च कृपाफलं भक्तिरसस्ततः परम्। विरोधिनो रूपमथैतदाप्तेर्ज्ञेया इमेऽर्था अपि पञ्च साधुभिः" इति॥ ७३॥

म० टी०—एवं पृष्टः कृतार्थत्वेन पुनरुपदेशानपेक्षतामात्मनः अर्जुन उवाच—नष्ट इति । नष्ट उच्छिन्नो मोहः अज्ञानकृतो विपर्ययः । तन्नाशकमाह—स्मृतिर्लब्धा त्वत्प्रसादान्मया । यस्मात्त्वदुपदेशादात्मज्ञानं लब्धं सर्वसंशयानाक्रान्ततया प्राप्तमतः सर्वप्रतिबन्धशून्येनात्मज्ञानेन मोहो नष्ट इत्यर्थः । हे अच्युत ! आत्मत्वेन निश्चितत्वात् वियोगायोग्य । "स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः" इति श्रुत्यर्थमनुभवन्नाह—स्थितोऽस्मि गतसंदेहः निवृत्तसर्वसंदेहः स्थितोऽस्मि युद्धकर्तव्यतारूपे त्वच्छासने । यावज्जीवं च करिष्ये वचनं तव—भगवतः परमगुरोराज्ञां पालयिष्यामीति प्रयाससाफल्यकथनेन भगवन्तमर्जुनः परितोषयामास । अनेन गीताशास्त्राध्यायिनो भगवत्प्रसादादवश्यं मोक्षफलपर्यन्तं ज्ञानं भवतीति शास्त्रफलमुपसंहृतं "तद्धास्य विजज्ञौ" इतिवत् ॥ ७३ ॥

शं० टी०—एवं पृष्टवन्तं भगवन्तं प्रति कार्यकथनेन कारणसिद्धिरुक्तप्रायेति मत्वा भगवदुपदेशजन्यज्ञानफलं वक्तुमर्जुन उवाच—नष्ट इति । जन्मजरामरणदुःखप्रवाहकारणं सर्वानर्थहेतुर्दुरन्तो मोहः स्वाज्ञानसंभवः शार्वरवत्सर्वोऽपि हे अच्युत कूटस्थभगवन् त्वत्प्रसादात् त्वदुपदेशजन्यज्ञानान्नष्टः स्वरूपेणादर्शनं गत इत्यर्थः । एवं भगवदुपदिष्टवाक्यजातस्य तदर्थस्य च ग्रहणं कार्यप्रकाशनेनैव ज्ञापयित्वा तत्प्रसादसिद्धायाः स्वाज्ञानतत्कार्यनिवृत्तेः फलमाह—स्मृतिरिति । अविद्याकृतकर्तृत्वभोक्तृत्वादिसर्वसंसारनिर्मुक्तो नित्यकूटस्थोऽसङ्गचिद्रूपो निष्कलो निष्क्रियः शान्तो य आत्मा सर्ववेदान्तप्रसिद्धः स एवाहमस्मीति स्वात्मतत्त्वविषया स्मृतिर्लब्धा, यथा प्रमादाद्विस्मृतार्थस्याप्तवाक्येन स्मृतिस्तथा त्वत्प्रसादान्मया लब्धा भवति । सर्वहृदयग्रन्थीनां निर्मूलनकारणं यतस्ततो गतसंदेहः गतोऽभावं गतः संदेहः स्वजनवधो दोषः कर्तुं शक्यते वा न वा, मत्कृतेन कर्मणा लेपोऽस्ति वा न वा, कर्तृत्वमात्मनोऽस्ति वा न वेत्येवमादिद्विकोटिकः स्वतत्त्वनिर्धारणविषये यस्य सोऽहं गतसंदेहः । गतसंदेह इत्यनेन विपरीतभावस्य तत्कारणस्य च निःशेषनिवृत्तिः सूचिता । सति विपरीतभावे तत्कारणसद्भावे च संदेहनिवृत्त्यसंभवादतः संदेहनाशात्सर्वविकल्पनाशः सिद्धो भवति । एवं त्वदुपदेशजनितविज्ञानेन सर्वानर्थबीजे मोहे सकारणे विनष्टे सति संप्राप्तात्मयाथात्म्यविज्ञानोऽहं गतसंदेहः सन्नक्षोभ्यस्वभावेन स्थितोऽस्म्यविद्यातत्कार्यतद्धर्मतत्कर्मतदवस्थानिर्मुक्ता विक्रियात्मस्वरूप एव । इतःपरं मम न किंचिज्ज्ञातव्यं प्राप्तव्यं वापीषदस्ति, तथापि मद्गुरोरीश्वरस्य तव वचनं करिष्ये । नन्वविद्यासंबन्धनिर्मुक्तेनार्जुनेन करिष्ये वचनं तवेति यदुक्तं तदयुक्तमेव, मुक्तस्य कर्तव्याऽसंभवान्ममेदमीश्वरस्य वचनं कर्तव्यमिति करणमज्ञधर्मो, न तु तत्त्वज्ञधर्मः तज्ज्ञस्यायमीश्वरोऽहं तद्वचनं करिष्य इति भेदज्ञानासंभवात् । नह्यहमेवेदं सर्वमिति सर्वमात्मानमेव विजानतो विदुषस्त्वयमीश्वर इति तस्येदं वचनमहं करिष्य इति भेदज्ञानं संभावयितुं शक्यते, कार्यशेषो वा "तस्य कार्यं न विद्यते" इति विदुषः कृत्यनिषेधात् । "नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित्" इति कृत्यशेषवतोऽज्ञत्वस्मरणाच्च । ततो ज्ञानित्वं कर्मित्वं चैकस्य न संभवति, परस्परविरुद्धं सम्राट्त्वं भिक्षुत्वं चैकस्य यथा तद्वत् । यद्यर्जुनस्य कर्तव्यशेषस्तर्हि ज्ञत्वमेव न संभवति । ननु नष्टो मोहः स्मृतिर्लब्धेत्यज्ञाननिवृत्तिर्ज्ञानप्राप्तिश्च कण्ठरवेणोक्ता, अतोऽस्त्येव ज्ञत्वमिति चेन्न करिष्ये वचनं तवेत्येवमपि कण्ठरवेणैवोक्तत्वादज्ञत्वमपि संभवति । नन्विष्टोऽसि मे दृढमिति हितबुद्ध्या दयया च मद्याजी भवेति भगवतोक्तहितवचनकरणं तज्ज्ञस्याप्यर्जुनस्य युक्तमेवेति चेन्न । तदारुरुक्षुविषयत्वादारूढस्यास्यानुपयुक्तेः । मद्यजनमारुरुक्षोः कर्तव्यमित्युक्तकर्माचरणमर्जुनस्यारूढस्यानुपयुक्तमेवेति चेत्त्वयोक्तं सत्यम् । ब्रह्मविद आरूढस्य कर्मानुपयुक्तमेव तथाप्याधिकारिकत्वादर्जुनस्य तदुपपद्यते । यथा जनकाश्वपतिप्रभृतीनां मुक्तानामप्याधिकारिकाणां लोकसंग्रहचिकीर्षया कर्माचरणं तद्वदर्जुनस्याप्याधिकारिकस्य लोकहिताय कर्माचरणमविरुद्धमेव 'लोकसंग्रहमेवापि संपश्यन् कर्तुमर्हसि । यद्यदाचरति

श्रेष्ठः' इति भगवता पूर्वं यदुक्तं तन्मनसि निधायोच्यते करिष्ये वचनं तवेति। इन्द्रांशत्वादर्जुनस्येन्द्रादिवदाधिकारिकत्वं तज्ज्ञत्वं लोकहितार्थं कर्मित्वं चाविरुद्धं, ततो युक्तमेवोक्तं करिष्ये वचनं तवेति । यद्वा भगवत्प्रसादान्निःशेषविनष्टमोहत्वाल्लब्धात्मस्मृतित्वाच्चार्जुनः प्राप्तारूढभावः सन् स्वोत्पन्नज्ञानस्य परिपाकसिद्ध्यै समाधिं कर्तुमिच्छया भगवदुक्तं बाह्यं सर्वं परित्यज्य मां परं ब्रह्मैवाजस्रमनुसंधेहीत्येतदर्थावबोधकं 'सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज' इति चरमवचनं हृदिस्थमनुवदति करिष्ये वचनं तवेति। सन्निहितत्वादस्योपदेशस्य परमसिद्धान्तत्वाद्विद्वत्कृत्यत्वाच्च विदुषः स्वस्याग्रे कर्तव्यं वदति करिष्ये वचनं तवेति। अतो न कश्चिदत्र विरोध इति सिद्धम् ॥ ७३ ॥

**श्री० टी०**—कृतार्थः सन्नर्जुन उवाच—**नष्ट इति**। आत्मविषयो मोहो नष्टः यतोऽयमहमस्मीतिस्वरूपानुसंधानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा। अतः स्थितोऽस्मि युद्धायोपस्थितोऽस्मि। गतो धर्मविषयः संदेहो यस्य सोऽहं तवाज्ञां करिष्य इति ॥ ७३ ॥

**स० टी०**—एवं पृष्टः कृतार्थत्वादुपदेशानपेक्षताम् ॥ आत्मनो मन्यमानः सन्नुवाचेदं वचोऽर्जुनः ॥ १ ॥ मोहोऽज्ञाननिमित्तो यः स उच्छिन्नो विपर्ययः ॥ आत्मतत्त्वैक्यविषया स्मृतिश्च त्वदनुग्रहात् ॥ २ ॥ लब्धा मयाऽच्युत श्रीमत्पदाम्भोजाश्रयेण वै ॥ यल्लाभात्सर्वग्रन्थीनां विप्रमोक्षः स्वयं भवेत् ॥ ३ ॥ अनेन सर्वशास्त्रार्थविज्ञानफलमुत्तमम् ॥ एतावदेव हरिणा दर्शितं चार्जुनेन च ॥ ४ ॥ यदज्ञानजसंमोहनाश आत्मावबोधनात् ॥ निवृत्तसंशयो युद्धकर्तव्यादिस्वकर्मणि ॥ ५ ॥ त्वच्छासने स्थितश्चास्मि यावज्जीवमहं तव ॥ भगवद्वासुदेवस्य सद्गुरोर्वचनं सदा ॥ ६ ॥ करिष्ये श्रीमदाज्ञां च पालयिष्यामि सर्वदा ॥ पार्थः प्रयाससाफल्यकथनेनैव माधवम् ॥ ७ ॥ सम्यक्क तोषयामास शिष्यवृत्तिं प्रदर्शयन् ॥ अनेन गीताशास्त्रस्याध्येतुर्भगवतो हरेः ॥ ८ ॥ प्रसादान्मोक्षपर्यन्तं ज्ञानं स्यादित्युदीरितम् ॥ अन्ते शास्त्रफलं सम्यग्ज्ञानजं चोपसंहृतम् ॥ ९ ॥ तत्त्वज्ञाने समुत्पन्ने नष्टेऽज्ञाने सकार्यके ॥ स्वरूपेऽवस्थितिं लब्ध्वा कृतकृत्यो भवेद्बुधः ॥ १० ॥ ततः परं न तस्यास्ति कृत्यं श्रौतं च लौकिकम् ॥ कृत्यहेतोरविद्याया विनष्टत्वात्तथापि तु ॥ ११ ॥ श्रीहरेः श्रीगुरोर्वेदमौलेश्चाज्ञानुपालनम् ॥ स्वभावादेव तज्ज्ञानां भवतीत्यपि सूचितम् ॥ १२ ॥ यावदायुस्त्रयो वन्द्या वेदान्तो गुरुरीश्वरः ॥ भावाद्वैतं सदा कुर्यात्क्रियाद्वैतं न कर्हिचित् ॥ १३ ॥ अद्वैतं त्रिषु लोकेषु नाद्वैतं गुरुणा सह ॥ इत्यादिवाक्यसिद्धोऽर्थो दर्शितोऽत्रार्जुनेन वै ॥ १४ ॥ ७३ ॥

**भा० टी०**—भगवदनुग्रहात्स्वस्य कृतार्थताकथनेन भगवन्तं परितोषयिष्यन्नर्जुन उवाच—**नष्ट इति**। नष्टो मोहोऽज्ञानजन्यः समस्तसंसारहेतुः सागर इव दुस्तरः नष्टः नाशं गतः, स्मृतिश्च त्वत्प्रसादान्मया लब्धा अच्युत। अभिन्नत्वात्स्वस्वरूपात्कदाप्यप्रच्युतः जरामरणादिवर्जितः कर्तृत्वभोक्तृत्वादिविनिर्मुक्त इत्यात्मतत्त्वविषया सर्वग्रन्थ्यादिविप्रमोक्षहेतुभूता स्मृतिर्लब्धेति सूचयन्संबोधयति—अच्युतेति । स्वयंज्योतिषि प्रत्यगभिन्ने ब्रह्मण्यविद्याश्रमं विद्याऽपनयति, नाविदितं प्रकाशयतीति बोधयितुं स्मृतिर्लब्धेत्युक्तम्। अज्ञानसंमोहनाशः आत्मस्मृतिप्रतिलाभश्चेत्येतावदेव सर्वशास्त्रज्ञानफलमित्यनेन प्रश्नप्रतिवचनेन निश्चितं दर्शितम्। एतादृशस्य सर्वशास्त्रार्थज्ञानफलस्य संप्राप्तौ तवोपदेशस्य सामर्थ्यमस्तीति लोकोपकारः सम्यक् त्वया संपादित इति गूढाभिसंधिः। आत्मज्ञाने सति सर्वग्रन्थ्यादिविप्रमोक्षश्च श्रुतौ उक्तः। तथाच श्रुतिः—"भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे" "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इत्याद्याः। अथेदानीं धर्मतत्त्वे आत्मतत्त्वे च गतसंदेहः मुक्तसंशयः त्वच्छासने स्थितोऽस्मि, तव वचनमहं करिष्ये, त्वत्प्रसादात्कृतार्थस्य मम न किंचित्कर्तव्यमस्तीत्यभिप्रायः ॥ ७३ ॥

प० टी०—कृतार्थः सन्नर्जुन उवाच—नष्ट इति । आत्माविषयो मोहो नष्टः । यतः अयमहमस्मीति स्वरूपानुसंधानरूपा स्मृतिस्त्वत्प्रसादान्मया लब्धा, अतः स्थितोऽस्मि युद्धायोत्थितोऽस्मि । गतः स्वधर्मविषये संदेहो यस्य सोऽहं तवाज्ञां करोमि ॥ ७३ ॥

रा० टी०—इति पृष्टस्योत्तरमाहार्जुनः—नष्ट इति । नष्टो मोहः प्रथमाध्यायोक्तो विपरीतज्ञानलक्षणो मोहो नष्टः । त्वत्प्रसादान्मया स्मृतिर्लब्धा । नारायणद्विट्तदनुबन्धिनिग्रहः परमो धर्मोऽवश्यं कार्य एवेत्यादिस्मृतिर्मम जाताऽस्ति । गतसंदेहः युद्धे स्थितोऽस्मि । यथेच्छसि तथा कुर्विति भगवत्कृताक्षेपपरिहाराय भगवन्तमनुसरति—करिष्ये वचनं तवेति ॥ ७३ ॥

**सञ्जय उवाच—इत्यहं वासुदेवस्य पार्थस्य च महात्मनः ॥**
**संवादमिममश्रौषमद्भुतं रोमहर्षणम् ॥ ७४ ॥**

त० टी०—तदेवं सर्वं श्रीकृष्णार्जुनसंवादं धृतराष्ट्रायावेद्य स्वयमनुसंदधानः सञ्जय उवाच—इतीति । इत्येवमुक्तप्रकारेण वासुदेवस्य पार्थस्य च महात्मन इत्युभयोर्विशेषणम् । अद्भुतमाश्चर्यरूपमत एव रोमहर्षणं रोमाञ्चकरं संवादं यथोक्तमहमश्रौषं श्रुतवानस्मि ॥ ७४ ॥

म० टी०—समाप्तः शास्त्रार्थः । कथासंबन्धमिदानीमनुसंदधानः सञ्जय उवाच—इतीति । अद्भुतं चेतसो विस्मयाख्यविकारकरं लोकेष्वसंभाव्यमानत्वात् । लोमहर्षणं शरीरस्य रोमाञ्चाख्यविकारकरं तेनातिपरिपुष्टत्वं विस्मयस्य दर्शितम् । स्पष्टमन्यत् ॥ ७४ ॥

शं० टी०—एवमर्जुनस्याविद्यातत्कार्यभ्रममार्जनायोपक्रान्तस्य ज्ञानशास्त्रस्य तदर्थस्य च परिसमाप्तिं ज्ञात्वा तच्छ्रवणतदर्थानुभवसंजातात्मानन्दरसातिरेकेण स्वगुरोरनुग्रहं स्वतृप्तिं चाविष्कर्तुं कथासंदर्भमवतारयितुं च संजय उवाच—इतीति । "सर्वभूताधिवासं यद्भूतेषु च वसत्यधि" इतिश्रुतलक्षणलक्षितत्वाद्वासुदेवः सर्वज्ञः परमेश्वरस्तस्य वासुदेवस्य महात्मनो महानुभावस्य पार्थस्य चार्जुनस्य इत्युक्तप्रकारकं संवादं प्रश्नप्रतिवचनरूपमिमं गीताग्रन्थमद्भुतमत्यन्तविस्मयकरं रोमहर्षणमश्रुतपूर्वत्वेनातिगम्भीरत्वेनामेयार्थत्वेनातिलोकत्वेनाद्भुतरसत्वेन च रोमाञ्चावहं तयोः संवादमहमश्रौषं श्रुतवानस्मि ॥ ७४ ॥

श्री० टी०—तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसंदधानः संजय उवाच—इतीति । रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥

स० टी०—शास्त्रार्थोऽयं समाप्तोऽथ कथासंबन्धमुत्तमम् ॥ इदानीं संजयः प्राह धृतराष्ट्रनृपं प्रति ॥ १ ॥ इतिशब्दः समाप्तौ स्याच्छास्त्रार्थस्येरितस्य च ॥ रोमाञ्चनकरं बुद्धेर्विस्मापकतयाऽद्भुतम् ॥ २ ॥ लोके संभाव्यमानत्वात्स्पष्टमन्यत्तथाऽर्थतः ॥ ३ ॥ ७४ ॥

भा० टी०—परिसमाप्तः कृष्णपार्थसंवादात्मकः शास्त्रार्थः । अथेदानीं कथासंबन्धप्रदर्शनार्थं संजय उवाच—इतीति । इत्येवं वासुदेवस्य सर्वात्मनः सर्वज्ञस्य सर्वेश्वरस्य पार्थस्य पृथापुत्रस्य च महात्मनोऽक्षुद्रस्वभावस्य भगवदनुगृहीतस्य सम्यग्वादं संवादं गुरुशिष्यवचनेन प्रश्नप्रतिवचनाभिधानमिमं त्वां प्रत्युक्तमद्भुतमत्यन्तविस्मयकरं, रोमाणि हृष्यन्ति पुलकीभवन्त्यनेनेति रोमहर्षणं, हर्षनिमित्तकरोमाञ्चकरमश्रौषं श्रुतवानस्मि । अतिधन्यो वसुदेवो यद्गृहे स्वयं भगवानवतीर्णः, पृथा च धन्या यस्याः पुत्रः परमभागवतो भगवदनुगृहीतः प्रतिक्षणं भगवता संवदमानः । त्वं त्वत्यन्ताधन्यो यस्य पुत्रो दुर्योधनः कृष्णपराङ्मुखस्तद्भक्तद्रोही चेति वासुदेवपार्थेतिशब्दाभ्यां ध्वनितम् ॥ ७४ ॥

प० टी०—तदेवं धृतराष्ट्रं प्रति श्रीकृष्णार्जुनसंवादं कथयित्वा प्रस्तुतां कथामनुसंदधानः संजयः

प्राह–इत्यहमिति । अद्भुतमपूर्वाश्चर्यकरमत एव रोमहर्षणं रोमाञ्चकरं संवादमश्रौषं श्रुतवानहम् । स्पष्टमन्यत् ॥ ७४ ॥

रा० टी०–एकान्ते संजातः कृष्णार्जुनसंवादः कथं त्वया ज्ञात इति धृतराष्ट्रहृद्गतशङ्कां निराह संजय इत्याह–इत्यहमिति । इतिपदेन प्रथमाध्यायाद्युक्तस्य सर्वस्य परामर्शः । महानात्मा मनो यस्य तस्य महात्मनः । अद्भुतं प्राक्कुत्रापि न श्रुतमाश्चर्यं रोमाञ्चकरम् ॥ ७४ ॥

**व्यासप्रसादाच्छ्रुतवानेतद्गुह्यमहं परम् ॥**
**योगं योगेश्वरात् कृष्णात्साक्षात् कथयतः स्वयम् ॥ ७५ ॥**

**त० टी०–असन्निकृष्टस्य व्यवहितस्य संवादस्यात्मनः श्रवणयोग्यतायां हेतुमाह–व्यासप्रसादादिति । दिव्यचक्षुःश्रोत्रादिलाभरूपाद्व्यासप्रसादादेतद्गुह्यं गोप्यं परं सर्वोत्कृष्टं परमपुरुषार्थोपायं योगेश्वरात् कृष्णात्स्वयमेवेश्वररूपेण कथयतः साक्षादहं श्रुतवानस्मि, नतु परम्परया । अहो मे भाग्यमित्यभिप्रायः ॥ ७५ ॥**

म० टी०–व्यवहितस्यापि भगवदर्जुनसंवादस्य श्रवणयोग्यतामात्मन आह–व्यासेति । व्यासदत्तदिव्यचक्षुःश्रोत्रादिलाभरूपात् व्यासप्रसादात् इमं परं गुह्यं योगं योगाव्यभिचारिहेतुं संवादं योगेश्वरात् कृष्णात् स्वयं स्वेन पारमेश्वरेण रूपेण कथयतः साक्षादेवाहं श्रुतवानस्मि न परंपरयेति स्वभाग्यमभिनन्दति। अत्रेममिति पुल्लिङ्गपाठो भाष्यकारैर्व्याख्यातः । एतदिति नपुंसकलिङ्गपाठस्यैव योगशब्दसामानाधिकरण्येन व्याख्यनामिदमिति तद्व्याख्यातारः ॥ ७५ ॥

शं० टी०–कथमश्रौषीरित्याकाङ्क्षायां स्वगुरोः प्रसादादित्याह–व्यासेति । व्यासप्रसादाद्वेदानां शास्त्राणां पुराणानां च विस्तरकरणाद्व्यासस्तस्य मद्गुरोः श्रीकृष्णद्वैपायनस्य प्रसादादनुग्रहात्तज्जनितज्ञानशक्तेरेवैतत् । एतच्छब्दस्य विधेयप्राधान्येन लिङ्गनिर्देशः । एतदेवं मोक्षैकसाधनत्वात्परमत्यन्तं गुह्यं गोपनीयं रहस्यमित्यर्थः । योगं ज्ञानयोगमहं श्रुतवानस्मि । कस्य मुखाच्छ्रुतमित्याकाङ्क्षायां–योगेश्वरादिति । योगानां हठादीनां तत्फलसिद्धेश्च कारणत्वाद्योगेश्वरः । यद्वा योगो मायायोगः सृष्ट्यादिस्तत्कर्तृत्वाद्योगेश्वरः । यद्वा योगो ज्ञानयोगः आत्यन्तिकसंसारदुःखनिवृत्तिकारणं तत्सिद्धिर्यस्य प्रसादात्स योगेश्वरस्तस्माद्योगेश्वरात्साक्षाच्छ्रीकृष्णादेव स्वयं स्वमुखेनैव कथयत एतं ज्ञानयोगमहं श्रुतवानस्मि । अहो मम भाग्यमहो गुरुप्रसाद इति स्वतृप्तिमाविष्कृतवानित्यर्थः ॥ ७५ ॥

श्री० टी०–आत्मनस्तच्छ्रवणे संभावनामाह–व्यासप्रसादादिति । भगवता व्यासेन दिव्यं चक्षुःश्रोत्रादि मह्यं दत्तम् । अतो व्यासस्य प्रसादादेतदहं श्रुतवानस्मि । किं तदित्यपेक्षायामाह–परं योगम् । परत्वमाविष्करोति–योगेश्वराच्छ्रीकृष्णात्स्वयमेव साक्षात्कथयतः श्रुतवानिति ॥ ७५ ॥

स० टी०–दूरदेशस्थितस्यापि संवादस्य तयोर्द्वयोः ॥ श्रवणे योग्यतामाह स्वात्मनः संजयोऽधुना ॥ १ ॥ चक्षुःश्रोत्रादिकरणं दिव्यं व्यासेन वेधसा ॥ प्रदत्तं संजयायादौ युद्धारम्भे यतस्ततः ॥ २ ॥ व्यासप्रसादतो गुह्यं संवादं योगसाधनम् ॥ स्वयं स्वेनेश्वरेणैव रूपेणात्यन्ततेजसा ॥ ३ ॥ साक्षात्कथयतोऽहं वै श्रुतवानस्मि नान्यतः ॥ इति हर्षतमं प्राप्तः स्वभाग्यमभिनन्दति ॥ ४ ॥ संजय इत्यहोभाग्यं मदीयं यत्परेश्वरात् ॥ योगेश्वराद्भगवतः श्रीकृष्णाच्छ्रुतवानहम् ॥ ५ ॥ ७५ ॥

भा० टी०–व्यवहितस्त्वं कथं श्रुतवानित्यपेक्षायामाह–व्यासेति । व्यासप्रसादात् लब्धदिव्येन्द्रियोऽहमिमं संवादं गुह्यमतिरहस्यं परं योगार्थत्वात् अयं संवादोऽपि योगस्तं चित्तवृत्तिनिरोधस्य योगस्याङ्गत्वाद्वा

  

एष योगस्तं श्रुतवान् योगेश्वरात् कृष्णात्साक्षात्स्वयं कथयतः न तु परंपरातः । योगानामीश्वरादित्युक्त्या व्यवहितेन मया येन योगसामर्थ्येन श्रुतं तत् तस्यैव योगेश्वरस्य सामर्थ्यं न तु ममेति सूचयति कृष्णादित्यनेन कृष्णप्रसाद एव कृष्णद्वैपायनप्रसादो न त्वन्य इति ध्वनयति ॥ ७५ ॥

प० टी०—अथात्मन ईदृशश्रवणासंभावनामाह—व्यासेति । मत्सेवया प्रसन्नेन भगवता व्यासेन मह्यमलौकिकं मच्चक्षुःश्रवणादिकं दत्तं तेनाहं श्रुतवानस्मि । किं तदित्याह—परं योगम् । परत्वमेवाह—योगेश्वराच्छ्रीकृष्णात्स्वरूपं स्वयमेव वा साक्षात्स्वमुखेनार्जुनं प्रति कथयतः श्रुतवान् । तदुक्तं महाभारते भीष्मपर्वणि संजयेन धृतराष्ट्रं प्रति—' नमस्तस्मै भवत्पित्रे पाराशर्याय धीमते । यस्य प्रसादाद्दिव्यं मे प्रज्ञाविज्ञानमुत्तमम् ॥ दृष्टिश्चातीन्द्रिया राजन् दूराच्छ्रवणमेव हि । परचित्तस्य विज्ञानमतीतानागतस्य च ॥ व्युत्थितोत्पत्तिविज्ञानमाकाशे च गतिः सदा । अस्त्रैरसङ्गो युद्धे च वरदानान्महात्मनः ॥ प्रत्यक्षं यन्मया दृष्टं दृष्टं योगबलेन च । शृणु तत्पृथिवीपाल मा च शोके मनः कृथाः ' ॥ ७५ ॥

रा० टी०—व्यासेति । व्यासेन हि संजयस्य कुरुक्षेत्रे युद्धसमाप्तिपर्यन्तं तत्र प्रवृत्तस्य सर्वस्यापि दर्शनश्रवणे तव स्यातामिति दिव्यदृष्टिदानाद्व्यासप्रसादादित्युक्तम् । योगं पुमर्थोपायं योगेश्वरात्सर्वोपायानामीश्वरात् स्वयमेव कथयतः कृष्णात् साक्षादन्याव्यवधानेन श्रुतवानित्यन्वयः ॥ ७५ ॥

**राजन्संस्मृत्य संस्मृत्य संवादमिममद्भुतम् ॥**
**केशवार्जुनयोः पुण्यं हृष्यामि च मुहुर्मुहुः ॥ ७६ ॥**

त० टी०—तदेव विशदयति—राजन्निति । केशवार्जुनयोरिमं पुण्यं श्रवणमात्रेण पापहरं पुण्योत्पादनमद्भुतं संवादं संस्मृत्य मुहुर्मुहुर्वारंवारं हृष्यामि हर्षं प्राप्नोमि ॥ ७६ ॥

म० टी०—राजन्निति । पुण्यं श्रवणेनापि सर्वपापहरं केशवार्जुनयोरिमं संवादमद्भुतं न केवलं श्रुतवानस्मि, किंतु संस्मृत्य संस्मृत्य, संभ्रमे द्विरुक्तिः । मुहुर्मुहुर्वारंवारं हृष्यामि च हर्षं प्राप्नोमि च, प्रतिक्षणं रोमाञ्चितो भवामीति वा ॥ ७६ ॥

शं० टी०—श्रुत्वा किं कृतवानसीत्याकाङ्क्षायां संतुष्यामीत्याह—राजन्निति । पुण्यं पुण्यकरं पावनं श्रवणपठनाभ्यां ज्ञानाज्ञानकृतसर्वपापविध्वंसकं केशवार्जुनयोः संवादमुक्तलक्षणमिमं गीताख्यं ग्रन्थं श्रुतं मुहुर्मुहुश्च स्मृत्वा स्मृत्वा हृष्यामि । किं मया जन्मान्तरशतेषु पुण्यं कृतं, किं तप्तं, किं दत्तं, किं हुतं, किं दृष्टं वा न जाने, येन तयोरिदं संवादलक्षणं गीताशास्त्रं मया श्रुतमित्यर्थः ॥ ७६ ॥

श्री० टी०—किंच—राजन्निति । हृष्यामि रोमाञ्चितो भवामि, हर्षं प्राप्नोमीति वा । स्पष्टमन्यत् ॥७६॥

स० टी०—पुण्यं श्रवणमात्रेण सर्वपापहरं शुभम् ॥ कश्च प्रजापतिः प्रोक्त ईशः श्रीशंकरः स्मृतः ॥ १ ॥ तयोरपि पिताऽऽचार्यः स्वामी चात्मेति केशवः ॥ तदुक्तं हरिवंशे श्रीशंभुना केशवं प्रति ॥२॥ क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् ॥ आवां तवाङ्गसंभूतौ तस्मात्केशवनामवान् ॥ ३ ॥ शुद्धसंपत्समायुक्तः सद्विद्याधिकृतोऽर्जुनः ॥ संवादो यस्तयोः साक्षात्तमिमं परमाद्भुतम् ॥ ४ ॥ न केवलमहं सम्यक् श्रुतवानस्मि विस्मयात् ॥ किं तु संस्मृत्य संस्मृत्य द्विरुक्तिरिति संभ्रमे ॥ ५ ॥ वारंवारं परं हर्षमवाप्नोमि प्रतिक्षणम् ॥ रोमाञ्चितो भवामीह प्राप्तोऽहं विस्मयावधिम् ॥ ६ ॥ ७६ ॥

भा० टी०—किंच—राजन्निति । इममेव केशवार्जुनयोः संवादमद्भुतं पुण्यं श्रवणमात्रेणापि पापहरं श्रुत्वा, संस्मृत्य संस्मृत्य पुनः पुनः स्मृत्वा मुहुर्मुहुः प्रतिक्षणं हृष्यामि रोमाञ्चितो भवामि, हर्षं प्राप्नोमीति

वा । तयोः संवादं श्रुतवान् त्वमपि वैरं विहाय कृष्णभक्तिमत्यादरेणाङ्गीकुर्वन्नत्यन्तदीप्तिमानत्यन्तहृष्टो वास्तवो राजा भवेति बोधयन् संबोयति–हे राजन्निति ॥ ७६ ॥

प० टी०–अथ व्यासप्रसादसामर्थ्यमेवानुवदति–राजन्निति । राजन् धृतराष्ट्र इममद्भुतं केशवार्जुनयोः संवादं संस्मृत्य सकृच्छ्रुतमपि स्मरणारूढं कृत्वा पुनर्यथावत्संस्मृत्य मयि निष्पन्नोऽयं गीतार्थसंग्रह इति हृष्यामि रोमाञ्चितो भवाम्येतावतैव कृतकृत्योऽस्मीति हर्षं प्राप्नोमि ॥ ७६ ॥

रा० टी०–तच्छ्रवणेन स्वस्य जातं तात्कालिकं फलमाह–राजन्निति । हे राजन् ! धृतराष्ट्रस्य संबोधनम् । पुण्यं पारत्रिकं सुखहेत्वदृष्टकरम् ॥ ७६ ॥

**तच्च संस्मृत्य संस्मृत्य रूपमत्यद्भुतं हरेः ॥**
**विस्मयो मे महान्राजन् ! हृष्यामि च पुनः पुनः ॥ ७७ ॥**

**त० टी०–अथार्जुनाय दर्शितं विश्वरूपमनुसंदधान आह–तच्चेति । यदर्जुनाय प्रकाशितमत्यद्भुतमैश्वरं हरे रूपं मया साक्षात्कृतं तच्च संस्मृत्य संस्मृत्य हे राजन् ! संस्मरतो मे महान् विस्मयो जायते, पुनः पुनश्च हृष्यामि रोमाञ्चितो भवामि ॥ ७७ ॥**

म० टी०–यद्विश्वरूपाख्यं सगुणं रूपमर्जुनाय ध्यानार्थं भगवान् दर्शयामास तदिदानीमनुसंदधान आह–तच्चेति । तदिति विश्वरूपम् । हे राजन्मम महान्विस्मयोऽत एव हृष्यामि चाहम् । स्पष्टमन्यत् ॥७७॥

शं० टी०–विश्वरूपसंदर्शनजां तृप्तिं वर्णयति–तच्चेति । हरेः स्वसाक्षात्कारमात्रेणाविद्यां तत्कार्यं च हरति स्वस्मिन्नेव तिरोभावयतीति हरिः । सच्चिदानन्दस्वरूपः परमेश्वरस्तस्य 'अनन्तबाहुं शशिसूर्यनेत्रम्' इत्युक्तलक्षणं तच्च रूपं विश्वरूपमपि अत्यद्भुतं महाश्चर्यकरं पुनः पुनश्च संस्मृत्य संस्मृत्य स्मृत्वा स्मृत्वा हृष्यामि, धन्योऽहं धन्योऽहं कृतकृत्योऽहमिति संतोषसागरे मज्जामीत्यर्थः ॥ ७७ ॥

श्री० टी०–किंच–तच्चेति । तदिति विश्वरूपं निर्दिशति । स्पष्टमन्यत् ॥ ७७ ॥

स० टी०–यत्पूर्वं विश्वरूपाख्यं सगुणं रूपमद्भुतम् ॥ अर्जुनाय हरिः साक्षाद्दर्शयामास सर्ववित् ॥१॥ आहानुसंदधानः सन्निदानीं ध्येयमैश्वरम् ॥ तच्चेति विश्वरूपं भो राजन्संस्मृत्य चेतसा ॥ २ ॥ स्मारं स्मारं महानस्ति विस्मयो मे पुनः पुनः ॥ अत एव महाभाग्यफलं हर्षं गतोऽस्म्यहम् ॥ ३ ॥ ७७ ॥

भा० टी०–यत्तु विश्वरूपं सगुणमर्जुनाय भगवान्ध्यानार्थं दर्शितवान् । तच्च हरेरत्यद्भुतं रूपं संस्मृत्य संस्मृत्य मे महान् विस्मयो भवति हृष्यामि च पुनः पुनः । हरेः 'यद्वा जयेम यदि वा नो जयेयुः' इत्यर्जुनसंशयस्य विश्वरूपप्रदर्शनेन हरणे प्रवृत्तस्य सर्वोपसंहरणं प्रदर्शयतः विश्वरूपं श्रुत्वापि त्वं तु द्रोहं परित्यज्य संध्यर्थमुद्यतः सन् न सज्जस इत्याश्चर्यमिति ध्वनयन्नाह–हे राजन्निति ॥ ७७ ॥

प० टी०–किं च–तच्चेति । तच्चाद्भुतं हरे रूपं विश्वरूपमुभयवाक्यैः श्रुतं न च दृष्टम् । तथाविधमपि प्रथममक्षरतः संस्मृत्य पुनरर्थं च संस्मृत्य मे महान् विस्मयो भवति । अहो कथमर्जुनस्य भाग्यं यद्देवैरपि द्रष्टुमशक्यं परमात्मनः समष्टिरूपं साक्षात्कृतवांस्तथा सकलागमागोचरोऽपि परमात्मा कृपया परमार्थिकं स्वरूपं दर्शितवानिति सविस्मयत्वेनाद्भुतरसस्याविर्भावेन रोमहर्षाद्यष्टसात्विकोद्रेकशाली पुनः पुनर्भवामीत्यर्थः । तदेवं विश्वरूपदर्शने–'द्रोणं च भीष्मं च जयद्रथं च कर्णं तथान्यानपि योधवीरान् । मया हतांस्त्वं जहि मा व्यथिष्ठाः' इत्यादिभगवद्वाक्यानि, तथा 'अमी च त्वां धृतराष्ट्रस्य पुत्राः.....संदृश्यन्ते चूर्णितैरुत्तमाङ्गैः' इत्यर्जुनवाक्यानि च त्वया मन्मुखाच्छ्रुतान्येव ॥ ७७ ॥

रा० टी०–तदिति । तच्च रूपं विश्वरूपरूपम् ॥ ७७ ॥

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ॥
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥ ७८ ॥

इति श्रीभगवद्गीतासूपनिषत्सु संन्यासयोगो
नामाऽष्टादशोऽध्यायः ॥ १८ ॥

त० टी०—एवं चेश्वरेश्वरकृष्णपराङ्मुखस्वपुत्रसैन्यविजयादिदुराशा ते वृथैवेत्याह—यत्रेति । यत्र यस्मिन् पक्षे योगेश्वरः योगोऽघटितघटनापटीयस्त्वसामर्थ्यं राज्यैश्वर्यादिप्राप्त्युपायो वा योगस्तस्येश्वरो निवर्तको नियामको वा सर्वकर्मसिद्धीनामपीश्वरः सर्वकर्मफलप्रभुः सर्वज्ञोऽचिन्त्यशक्तिर्भगवान् कृष्णः स्वाश्रितदुःखकर्षकस्तिष्ठति, यत्र पार्थस्तत्पितृस्वस्रीयो धनुर्धरो गाण्डीवधन्वाऽर्जुनो वर्तते तत्रोभयाधिष्ठिते धर्मराजपक्षे श्रीः राज्यलक्ष्मीः, विजयः शत्रुविनाशः, भूतिः सर्वसंपत् ऐश्वर्यं वा, नीतिर्न्यायोऽपि तत्रैव । ध्रुवा निश्चितेति सर्वत्रान्वेतव्यम् । इति मे मम मतिर्निश्चयबुद्धिः । तस्मात्स्वपुत्रविजयाशां त्यक्त्वा श्रेयस्कामनया श्रीभगवदाश्रितैर्लक्ष्मीविजयाद्यर्हैः पाण्डवैः सह राज्याद्यर्पणेन सन्धिं विधाय स्वीयानां संरक्षणं कुर्विति भावः ॥ ७८ ॥

स्वतन्त्रः सर्वफलदः सर्वोपास्यो हि यो हरिः ॥ कर्तृत्वं सर्वजीवानां तत्तन्त्रमिति निश्चयात् ॥ १ ॥
श्रेयस्कामो मुमुक्षुर्वा तमेव शरणं व्रजेत् ॥ स्वाभिमानं परित्यज्य ह्येतदन्ते दृढीकृतम् ॥ २ ॥
संसाराम्बुधिमग्नानां स्वभक्तकृपया हरिः ॥ चकार गीतानावं तं वन्दे सर्वगरीयसम् ॥ ३ ॥

हंसस्वरूपं सनकादिकेभ्यस्तत्त्वोपदेशाय विधाय शुद्धम् ॥
तत्त्वं परं भागवतं च धर्मं सत्संप्रदायार्थमुपादिशद्यः ॥ ४ ॥
श्रीवासुदेवो भगवान्स एव भक्ताय पार्थाय तु भारते वै ॥
मोहापहं शास्त्रमुवाच गीतां सर्वेश्वरं तं शरणं प्रपद्ये ॥ ५ ॥
व्याख्यातमादौ तदद भ्रबोधादाचार्यवर्येण हरिप्रियेण ॥
निम्बार्कनाम्नाऽतिगभीरबोधं श्रीनारदानुग्रहभाजनेन ॥ ६ ॥
तत्पादचिन्ताप्रतिबुद्धबुद्धिना भट्टेन श्रीकेशवसंज्ञकेन ॥
तदर्थबोधाय तदाश्रितानां संक्षिप्य चैतद्विवृतं सुबोधम् ॥ ७ ॥

इति श्रीभगवद्गीताटीकायां तत्त्वप्रकाशिकायां धरामण्डलविजयिश्रीभारतिकेशवकाश्मीरिभट्टाचार्यवर्यविरचितायामष्टादशोऽध्यायः ॥ १८ ॥

म० टी०—एवं च सति स्वपुत्रे विजयादिसंभावनां परित्यजेत्याह—यत्रेति । यत्र यस्मिन् युधिष्ठिरपक्षे योगेश्वरः सर्वयोगसिद्धीनामीश्वरः सर्वज्ञः सर्वशक्तिर्भगवान् कृष्णो भक्तदुःखकर्षणस्तिष्ठति नारायणः, यत्र पार्थो धनुर्धरः यत्र गाण्डीवधन्वा तिष्ठत्यर्जुनो नरः, तत्र नरनारायणाधिष्ठिते तस्मिन् युधिष्ठिरपक्षे श्रीः राज्यलक्ष्मीः, विजयः शत्रुपराजयनिमित्त उत्कर्षः, भूतिरुत्तरोत्तरं राजलक्ष्म्या विवृद्धिर्ध्रुवाऽवश्यंभाविनीति सर्वत्रान्वयः । नीतिर्नयः । एवं मम मतिर्निश्चयः । तस्माद्वृथा पुत्रविजयाशां त्यक्त्वा भगवदनुगृहीतैर्लक्ष्मीविजयादिभाग्भिः पाण्डवैः सह संधिरेव विधीयतामित्यभिप्रायः ॥ ७८ ॥

वंशीविभूषितकरान्नवनीरदाभात्पीताम्बरादरुणबिम्बफलाधरोष्ठात् ।
पूर्णेन्दुसुन्दरमुखादरविन्दनेत्रात् कृष्णात्परं किमपि तत्त्वमहं न जाने ॥ १ ॥
काण्डत्रयात्मकं शास्त्रं गीताख्यं येन निर्मितम् ।
आदिमध्यान्तषट्केषु तस्मै भगवते नमः ॥ २ ॥

श्रीगोविन्दमुखारविन्दमधुना मिष्टं महाभारते
गीताख्यं परमं रहस्यमृषिणा व्यासेन विख्यापितम् ।
व्याख्यातं भगवत्पदैः प्रतिपदं श्रीशङ्कराख्यैः पुन
र्विस्पष्टं मधूसूदनेन मुनिना स्वज्ञानशुद्ध्यै कृतम् ।। ३ ।।
इह योऽस्ति विमोहयन् मनः परमानन्दघनः सनातनः ।
गुणदोषभृदेष एव नस्तृणतुल्यो यदयं स्वयं जनः ।। ४ ।।
श्रीरामविश्वेश्वरमाधवानां प्रसादमासाद्य मया गुरूणाम् ।
व्याख्यानमेतद्विहितं सुबोधं समर्पितं तच्चरणाम्बुजेषु ।। ५ ।।

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीविश्वेश्वरसरस्वतीपूज्यपादशिष्यश्रीमधुसूदनसरस्वती-
विरचितायां श्रीभगवद्गीतागूढार्थदीपिकायां संन्यासयोग-
प्रतिपादनं नामाष्टादशोऽध्यायः ।। १८ ।।

**शं० टी०**–किमतः परं वक्तव्यमस्ति ? मम निश्चयं शृण्वित्याह–यत्रेति । योगेश्वरः योगास्तेजोबलपौरुषविद्याराज्यजयधनधान्यपुत्रपौत्राद्यभ्युदयानां घटनास्तेषामीश्वरः । यद्वा "विद्याविद्ये ईशते यस्तु सोऽन्यः" इति श्रवणात् युज्यते आभ्यामिति योगौ विद्याविद्ये ईशितुं शीलमस्यास्तीति योगेश्वरः । यद्वा युज्यते समाधीयते चित्तमेतेष्विति योगाः ऐहिकामुष्मिकसुखविशेषाः कर्मसाध्या उपास्तिसाध्याश्च, तेषां प्रदाने शक्त ईश्वरो योगेश्वरः । यद्वा योगो ज्ञानयोगः कर्मयोगो वा तयोः फलसिद्धेरीश्वराधीनत्वाद्योगेश्वरः । "संसारमोक्षस्थितिबन्धहेतुः" इतिश्रुतेः । एवंलक्षणः परमात्मा श्रीकृष्णो यत्र यस्मिन्पक्षे तिष्ठति, धनुर्धरो धनुर्विद्यापारगोऽतिरथो गाण्डीवधन्वाऽर्जुनः यत्र यस्मिन् पक्षे तिष्ठति, तत्र तस्मिन् पक्ष एव ध्रुवा अव्यभिचारिणी नीतिः शास्त्रदृष्टा मर्यादा तिष्ठति, धर्मस्तत्रैव तिष्ठतीत्यर्थः । 'यतो धर्मस्ततो जयः' इति न्यायेन विजयोऽपि तत्रैव तिष्ठतीत्यर्थः । श्रीर्ध्रुवा निश्चला राज्यलक्ष्मीस्तत्रैव तिष्ठति । भूतिर्गजतुरगधनधान्यादिसंपत्तिस्तत्र तस्मिन्नेव पक्षे ध्रुवा निश्चला तिष्ठतीति मम मतिर्निश्चयः । त्वमतः पुत्राणां जयाशां परित्यजेत्यर्थः । गुरुभ्रात्रादिहिंसालक्षणं घोरं कर्माहं कृत्वा पापी स्यां, तेन नरकं यास्यामीत्यनात्मकर्तृके कर्मण्यकर्तारमेवात्मानं कर्तारं भोक्तारं मत्वा मोहेन शोचतोऽर्जुनस्य मोहसागरे निमग्नस्योद्धरणमात्मयाथात्म्यविज्ञानेन विना नान्येन सिध्यति, आत्मयाथात्म्यविज्ञानं च तत्त्वंपदार्थयोः शोधितयोरेकत्वप्रतिपादनेन विना न सिध्यत्यतस्तयोः शोधनं कर्तव्यमिति 'न त्वेवाहं जातु नासम्' इत्यारभ्य प्रथमषट्केण त्वंपदार्थं शोधयित्वा, द्वितीयेन तत्पदार्थं च शोधयित्वा, तृतीयेन तयोरेकत्वं प्रतिपाद्य कर्तृत्वभोक्तृत्वाद्यविद्यातत्कार्यसंबधरहितं सर्वसंसारधर्मनिर्मुक्तमात्मतत्त्वं बोधयित्वा तस्यैव बोधस्याप्रतिबन्धत्वसिद्धये ज्ञाननिष्ठामुपदिश्य तत्परिपक्वज्ञानेन 'भक्त्या मामभिजानाति यावान् यश्चास्मि तत्त्वतः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम्' इत्यात्मयाथात्म्यावधारणं, तेन ब्रह्मप्राप्तिश्च प्रतिपादिता । ततः सर्वस्या अपि गीतायाः प्रतिपाद्यं प्रत्यगभिन्नं परं ब्रह्मैव । तज्ज्ञानमेव मोक्षसाधनमिति पर्यवसितम् । तथैव सर्वस्या अपि गीतायाः श्रवणं कृतवतोऽर्जुनस्योक्तिरप्यनुभवारूढा 'नष्टो मोहः स्मृतिर्लब्धा' इति ज्ञानेनाज्ञाननिवृत्तिं तत्फलभूतमात्मलाभं च बोधयति। अतः सिद्धं ज्ञानमेव मोक्षस्य परमकारणमिति । तथा च श्रुतिः "ज्ञानादेव तु कैवल्यम्" । "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति, 'एषा तेऽभिहिता सांख्ये' इति ज्ञानयोगमुपदिश्य स्वेनोपदिष्टज्ञानसंपादने पुरुषस्य प्रज्ञामान्द्यमालक्ष्य 'बुद्धिर्योगे त्विमां शृणु' इति कर्मयोगमुपक्रम्य 'बुद्धौ शरणमन्विच्छ', 'योगः कर्मसु कौशलम्' इति ज्ञानयोगं च पुनः प्रस्तुत्य 'ज्ञानयोगेन सांख्यानां कर्मयोगेन

योगिनाम्' इति तयोर्विषयभेदव्यवस्थां कृत्वा, राजसतामसत्यागनिन्दापूर्वकं सात्त्विकत्यागस्यैव श्रेष्ठत्वमुक्त्वा, तच्चापि परमेश्वरप्रीत्यै कर्तव्यमिति निश्चित्य, कर्मनिष्ठया परिशुद्धचित्तस्य ज्ञानं प्राप्तवतो ज्ञाननिष्ठा विहिता। ततः कर्मयोगो ज्ञानयोगस्य साधनमेव भवति, नतु साक्षान्मोक्षकारणमित्येव सिद्धान्तितं भवति। अत्र गीतायां ज्ञानकर्मयोगयोरेव द्वयोरुपक्रमोपसंहारदर्शनाद्योगान्तरस्य न प्राधान्यं प्रतीयते। अमानित्वाद्वेष्टृत्वशुद्धबुद्धित्वादयो यथा ज्ञानतत्फलसिद्धिसाधनानि, तथा मुमुक्षुत्वनिष्ठावत्त्वसात्त्विकश्रद्धाभक्तिमत्त्वादयः कर्मफलसिद्धिसाधनानीति सिद्धं सर्वमनवद्यम् ॥ ७८ ॥

कालकूटसमो दोषो यस्य कण्ठे लवायते।
गुणोऽपि वा कलामात्रो यस्य भूषायते सतः ॥
तमहं पुरुषं वन्देऽविद्यादोषहरं परम् ॥ १ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमदानन्दात्मसरस्वतीभगवत्पादपूज्यशिष्यश्रीशंकरानन्दसरस्वतीकृतौ गीतातात्पर्यबोधिन्यामष्टादशोऽध्यायः ॥ १८ ॥

**श्री० टी०**–अतस्त्वं स्वपुत्राणां राज्यादिशङ्कां परित्यजेत्याशयेनाह–यत्रेति। यत्र येषां पाण्डवानां पक्षे योगेश्वरः श्रीकृष्णो वर्तते, यत्र च पार्थो गाण्डीवधनुर्धरः, तत्रैव श्रीः राज्यलक्ष्मीः, तत्रैव च विजयः, तत्रैव च भूतिरुत्तरोत्तराभिवृद्धिश्च, नीतिर्नयोऽपि तत्रैव। ध्रुवा निश्चितेति सर्वत्र संबध्यते। इति मम मतिर्निश्चयः। अत इदानीमपि तावत्सपुत्रस्त्वं श्रीकृष्णं शरणमुपेत्य पाण्डवान्प्रसाद्य सर्वस्वं च तेभ्यो निवेद्य पुत्रप्राणरक्षणं कुर्विति भावः ॥ ७८ ॥

भगवद्भक्तियुक्तस्य तत्प्रसादात्मबोधतः। सुखं बन्धविमुक्तिः स्यादिति गीतार्थसंग्रहः ॥ १ ॥

तथाहि, 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया। भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ॥' इत्यादौ भगवद्भक्तेर्मोक्षं प्रति साधकतमत्वश्रवणात् तदेकान्तभक्तिरेव तत्प्रसादोत्थज्ञानावान्तरव्यापारमात्रयुक्ता मोक्षहेतुरिति स्फुटं प्रतीयते। ज्ञानस्य च भक्त्यवान्तरव्यापारत्वमेव युक्तम्। 'तेषां सततयुक्तानां भजतां प्रीतिपूर्वकम्। ददामि बुद्धियोगं तं येन मामुपयान्ति ते॥ मद्भक्त एतद्विज्ञाय मद्भावायोपपद्यते' इत्यादिवचनात्। न च ज्ञानमेव भक्तिरिति युक्तम् 'समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्। भक्त्या मामभिजानाति यावान्यश्चास्मि तत्त्वतः ॥' इत्यादौ भेदेन निर्देशात्। नचैवं सति "तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इत्यादिश्रुतिविरोधः शङ्कनीयः, भक्त्यवान्तरव्यापारत्वाज्ज्ञानस्य। नहि काष्ठैः पचतीत्युक्ते ज्वालानामसाधनत्वमुक्तं भवति। किंच "यस्य देवे पराभक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः"। "देहान्ते देवः परं ब्रह्म तारकं व्याचष्टे"। "यमेवैष वृणुते तेन लभ्यः" इत्यादिश्रुतिस्मृतिपुराणवचनान्येवं सति समञ्जसानि भवन्ति। तस्माद्भगवद्भक्तिरेव मोक्षहेतुरिति सिद्धम्।

तेनैव दत्तया मत्या तद्गीताविवृतिः कृता। स एव परमानन्दस्तया प्रीणातु माधवः ॥ २ ॥
परमानन्दपादाब्जरजःश्रीधारिणाऽधुना। श्रीधरस्वामियतिना कृता गीतासुबोधिनी ॥ ३ ॥
स्वप्रागल्भ्यबलाद्विलोड्य भगवद्गीतातदन्तर्गतं तत्त्वं प्रेप्सुरुपैति किं गुरुकृपापीयूषदृष्टिं विना।
अम्बु स्वाञ्जलिना निरस्य जलधेरादित्सुरन्तर्मणीनावर्तेषु न किं निमज्जति जनः सत्कर्णधारं विना ॥४॥

इति श्रीमन्महाभारते शतसाहस्र्यां संहितायां वैयासिक्यां भीष्मपर्वणि श्रीमद्भगवद्गीतासूपनिषत्सु ब्रह्मविद्यायां योगशास्त्रे श्रीकृष्णार्जुनसंवादे योगशास्त्रनिर्णयसंन्यासादितत्त्वनिर्णये सुबोधिन्यां टीकायां श्रीधरस्वामिकृतायां मोक्षयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

स० टी०–एवं च सति पुत्रे स्वे जयस्याशां बलीयसीम् ॥ त्यज त्वं सर्वथा राजन्भगवन्तं हरिं स्मर ॥ १ ॥ यस्मिन्यौधिष्ठिरे पक्षे योगमायेश्वरो हरिः ॥ समस्तयोगसिद्धीनां योगस्याप्यथ योगिनाम् ॥ २ ॥ ईश्वरो भगवान्कृष्णः सर्वज्ञः सर्वशक्तिमान् ॥ भक्तदुःखहरः श्रीशो विभुर्नारायणोऽच्युतः ॥३॥ तिष्ठत्यात्मीयरूपेण गृहीत्वा पाण्डुनन्दनान् ॥ यत्र गाण्डीवधन्वा च तिष्ठत्यषोऽर्जुनो नरः ॥ ४ ॥ तस्मिन्यौधिष्ठिरे पक्षे नरनारायणाश्रिते ॥ श्री राज्यलक्ष्मीर्विजयः शत्रुहानिनिमित्तकः ॥ ५ ॥ समुत्कर्षस्तथा भूतिः श्रीविशेषोऽतिविस्तरः ॥ राज्यलक्ष्म्या विवृद्धिश्चेत्यवश्यंभाविनी ध्रुवा ॥ ६ ॥ ध्रुवेत्यस्यान्वयो ज्ञेयः सर्वत्रैवाविशेषतः ॥ नीतिर्नयो यथाशास्त्रमेवं मे निश्चयो नृप ॥ ७ ॥ तस्मात्त्वं सर्वथा राजन् वृथा पुत्रजयाशिषम् ॥ त्यक्त्वा श्रीभगवत्कृष्णानुगृहीतैश्च पाण्डवैः ॥ ८ ॥ लक्ष्म्यादिभागिभिः साकं संधिरेव विधीयताम् ॥ इत्यभिप्राय एवास्य संजयस्यात्र गम्यते ॥ ९ ॥ यतो धर्मस्ततः कृष्णो यतः कृष्णस्ततो जयः ॥ इत्युक्तरीत्या धर्माद्या संपद्यस्माद्बलीयसी ॥ १० ॥ तस्या एव जयस्तस्मादासुर्यास्तु पराजयः ॥ महामोहोद्भवा संपन्नाश्या दैन्या सुसंपदा ॥११॥ सा धर्ममूलिका यस्मात्कृष्णपक्षावलम्बिनी ॥ आसुरी कृष्णविमुखा बलहीनतयाऽधमा ॥ १२ ॥ अतो धर्मं समाश्रित्य कृष्णपादरतो भवेत् ॥ तेनैव संसृतेः पुंसो निस्तारः सुलभः स्वयम् ॥ १३ ॥ इत्येवं रूपकस्योपसंहारो मुनिना कृतः ॥ अतः सर्वं सुसंपन्नं कृष्णपादानुरागिणाम् ॥ १४ ॥ नैवास्ति दुर्लभं किंचित्तत्कटाक्षैकभागिनाम् ॥ सिद्धमित्येवशास्त्रीयं रहस्यं सर्वमङ्गलम् ॥ १५ ॥ ७८ ॥

स्वाभाविकानवधिकातिशयेऽशनौजस्तेजोऽवबोधबलधैर्यगुणैकवार्धिः ॥
वेदान्तवाक्यपरिशीलनतत्त्वनिष्ठैर्ध्येयाङ्घ्रिरक्षरपदोऽवतु नो मुकुन्दः ॥ १ ॥
शुद्धो बुद्धो विमुक्तः श्रुतिशिखरगिरां मुख्यतात्पर्यभूमि-
र्यस्माज्जातं समस्तं जगदिदममृताद्व्याप्य सर्वं स्थितो यः ॥
यस्यांशांशावतारैः सुरनरवनजै रक्षितं सर्वमेत-
त्तं भूमानं मुकुन्दं हृदि गतममलं कृष्णमेव प्रपद्ये ॥ २ ॥
अत्यन्तगम्भीरमतीव विस्तृतं निर्मथ्य वेदाब्धिमिदं विनिर्मितम् ॥
सुधारसं शास्त्रमगाधगोचरं सुबोधनिष्ठं किल येन तं श्रये ॥ ३ ॥
यदुपतिमभिरामं सर्वविश्रामधामाभयपददमकामं वामदेवादिरामम् ॥
सकलसुरललामं श्याममारामसूर्तिं भवजलधिविरामं नौमि कृष्णं सरामम् ॥ ४ ॥
क शास्त्रं गीताख्यं हरिमुखसरोजाद्विगलितं क चास्माकं बुद्धिर्विषयविषपङ्के निपतिता ॥
तथापि श्रीकान्तप्रचुरगुणलक्ष्मीविरचितं कटाक्षं स्वच्छाच्छं ह्यनुसृतवतां किं न सुलभम् ॥५॥
इदं गीताशास्त्रं परमपुरुषार्थैकनिलयं त्रिकाण्डं वेदार्थं सकलमिह संगृह्य कथितम् ॥
स्वयं श्रीकृष्णेन श्रुतिविशदतत्त्वेन विभुना जपाद्ध्यानाज्ज्ञानाच्छ्रुतमपि फलत्येव सुधियाम् ॥ ६ ॥
कृतिभिरपि कृतं यन्न प्रशंसन्ति लोके किमु मितमतिनेहाहं प्रवृत्तस्तथापि ॥
मम भवतु कथंचित्कृष्णपादेऽनुरागस्त्विति मनसि निधाय क्षन्तुमर्हन्ति सन्तः ॥ ७ ॥
नरत्वमापद्य सपद्यनामयं विरम्य भोगेभ्य इदं विलोक्यताम् ॥
तदाशयं कृष्णमशेषसाक्षिणं स्वयं विदित्वा कृतिनः कृतैरलम् ॥ ८ ॥
गीताशास्त्रमगाधमच्छहृदयश्रीमन्मुकुन्दानना-
म्भोजान्निःसृतमात्मतत्त्वमतिभिर्व्याख्यातमत्यादरात् ॥

गद्यैस्तद्धृदयं विलोडय सुगमैः पद्यैः सदानन्दवि-
चक्रे तद्विवृतिं स्वमङ्गलकृते भावप्रकाशाभिधाम् ॥ ९ ॥
गीताभावप्रकाशः श्रीसदानन्देन निर्मितः ॥
श्रीमत्कृष्णपदाम्भोजसेवामुद्दिश्य केवलम् ॥ १० ॥
दीनबन्धुः कृपासिन्धुः सुखाराध्यो जगत्पतिः ॥
प्रीयतां तेन भगवान् श्रीकृष्णो भक्तवत्सलः ॥ ११ ॥
मुनिगुणवसुचन्द्रे विक्रमादित्यराज्याच्छुभफलवति वर्षे माघमासे सितेंऽशे ॥
पशुपतितिथिसंधौ चन्द्रवारे सुलग्ने विवृत इति निबन्धः सिद्ध ईशप्रसादात् ॥ १२ ॥
इति श्रीमद्भगवद्गीताभावप्रकाशे सारस्वतवंशावतंसश्रीसदानन्दविदुषा विरचिते
गीतार्थनिष्ठात्रयोपसंहारवर्णनं नामाष्टादशोऽध्यायः ।
टीकाश्लोकसंख्या ॥ ६८९ ॥ आदितष्टीकाश्लोकसंख्या ॥ ९२९९ ॥

भा० टी०—द्वयोरपि कृष्णार्जुनयोः नरनारायणयोः संवादस्य प्रामाण्यार्थं जयाशाशातनार्थं च परममुत्कर्षं दर्शयति—यत्रेति । यत्र यस्मिन्पक्षे योगेश्वरो योगानां कर्मयोगादीनामघटितघटनापटीयसीनां मायाशक्तीनां चेश्वरः कृष्णः 'कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः । तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इत्युक्तः सच्चिदानन्दघनोऽघाकर्षणश्च यत्र यस्मिन्पक्षे, यत्र च पार्थोऽर्जुनो धनुर्वरो गाण्डीवधन्वाऽस्ति, तत्र तस्मिन्पाण्डवानां पक्षे श्रीः लक्ष्मीः, विजयः परम उत्कर्षः, विभूतिः गजादिरूपेण श्रियो विस्तारः, ध्रुवाऽव्यभिचारिणीति सर्वत्र संबन्धनीयम्, नीतिः नयः—एतत्सर्वं तस्मिन्पक्षेऽस्तीति मम मतिः निश्चयः॥७८॥

तदनेनाष्टादशाध्यायेन समस्तगीताशास्त्रार्थं विस्तरतः संक्षेपतश्चोपसंहरता एतत्संप्रदायप्रवर्तकादेरनायासेन सर्वशास्त्रज्ञानफलं कैवल्यं भवतीति प्रकाशितम्। निष्कामकर्मणां परमेश्वराराधनलक्षणेन शुद्धचित्तस्य भक्तिवशीकृतपरमेश्वरस्य लब्धतत्प्रसादस्य तत्त्वज्ञानाधिकारिणः तत्त्वसाक्षात्कारात्केवलादन्यनिरपेक्षान्मोक्ष इति गीताशास्त्रार्थसंग्रहः । तथाहि—' ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ।···नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ।····ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति', 'गच्छन्त्यपुनरावृत्तिं ज्ञाननिर्धूतकल्मषाः', 'इहैव तैर्जितः सर्गो येषां साम्ये स्थितं मनः', 'अभितो ब्रह्मनिर्वाणं वर्तते विदितात्मनाम्', 'ज्ञानवान्मां प्रपद्यते', 'ज्ञानं विज्ञानसहितं यज्ज्ञात्वा मोक्ष्यसेऽशुभात्', 'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते' इत्यादिना तत्त्वज्ञानस्यैव मोक्षानन्यसाधनत्वेनोक्तत्वात् 'पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया' इत्यत्र भक्तिपदं तु ज्ञानलक्षणभक्तिपरम्, 'चतुर्विधा भजन्ते माम्····आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥ तेषां ज्ञानी नित्ययुक्त एकभक्तिर्विशिष्यते' इत्यत्र ज्ञानलक्षणायाः भक्तेरुक्तत्वात । अन्यथा ज्ञानलभ्यो भक्तिलभ्य इत्युक्ते परस्परविरोधः स्यात् । 'भक्त्या मामभिजानाति' इत्यादौ भेदनिर्देशस्तु 'ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः । तेषामादित्यवज्ज्ञानं प्रकाशयति तत्परम् ' इत्यादिवत् बोध्यः । यत्रापि भक्तिपदं ज्ञानेतरसाधनभक्तिपरं, तत्रापि ज्ञानद्वारेति व्याख्येयं, ज्ञानस्य श्रुतियुक्तिसिद्धमोक्षानन्यसाधनत्वस्य त्यागायोगात् । तथाच श्रुतयः—' ब्रह्म वेद ब्रह्मैव भवति', 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे', 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन', 'अभयं वै जनक प्राप्तोऽसि', तदात्मानमेवावेदहं ब्रह्मास्मीति', 'तस्मात्तत्सर्वमभवत्तत्र को मोहः कः शोक एकत्वमनुपश्यतः', 'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि', 'श्रुतꣳह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवाञ्छोकस्य पारं तारयतु', 'तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान्सनत्कुमारः', 'तमेव वि-

दित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनाय', 'ज्ञानादेव तु कैवल्यम्', 'ऋते ज्ञानान्न मोक्षः' इत्येवमाद्या अज्ञानपरिकल्पितस्य संसारस्य ज्ञानेनैव निवृत्तिर्युक्ता, न तु कर्मणा, उपास्तिक्रियया वा, तथा सति मोक्षस्यानित्यत्वं, सातिशयत्वं च प्रसज्येत इत्यन्यत्र विस्तरः । एतेनोपासनायाः साक्षान्मोक्षसाधनत्वं ज्ञानस्य चावान्तरव्यापाररूपत्वं च वदतामपरेषामुक्तिर्निरस्ता । वेदान्तडिण्डिमेषु मोक्षानन्यसाधनत्वेन प्रसिद्धस्य तत्त्वज्ञानस्यावान्तरव्यापाररूपत्वप्रदर्शनानौचित्यात् । अन्यथा मुख्यफलस्याप्यवान्तरव्यापारत्वकल्पनायाम् ' स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ' इत्युक्तत्वात्कर्मैव साक्षान्मोक्षसाधनं भक्तिर्ज्ञानं चावान्तरव्यापार इत्यपि कुतो न स्यादित्यास्तां तावत् ॥

आज्ञया भाष्यकाराणां तैर्दत्ताभिः सुयुक्तिभिः । आपातरम्यव्याख्याना मया निरसनं कृतम् ॥१॥
जयरामाख्यकृतिभिः शास्त्राभिज्ञैः सुसाधुभिः । विरक्तैरतिरक्तैश्च रामे कृष्णे शिवेऽद्वये ॥ २ ॥
प्रेरितः कृतवान् गीताभाष्यस्योत्कर्षदीपिकाम् । सद्भिर्विलोक्यतां सम्यक् प्रमादः क्षम्यतां बुधैः ॥३॥
क्षेत्रादन्यमनादिमध्यनिधनं सत्त्वादिसत्ताप्रदं लभ्यं संसृतिवृक्षच्छेदनपरैर्युक्तैः सतां संपदा ।
सद्यज्ञाविदिधूतमानसमलैर्गीताख्यशास्त्रार्थगैर्वन्दे स्वात्मसुखाप्तये शिवमहं कृष्णं परं केवलम् ॥४॥
कृत्या धनपतेः कृष्णः प्रीयतां परमेश्वरः । शिवाख्यः कृष्णसंज्ञश्च शिवः सर्वेश्वरेश्वरः ॥ ५ ॥
रामेष्वहीन्दुसंवत्सरस्य प्रभवसंज्ञिनः । फाल्गुने कृष्णपञ्चम्यां वृषे सिद्धा गुरावियम् ॥ ६ ॥

इति श्रीपरमहंसपरिव्राजकाचार्यश्रीबालस्वामिशिष्यदत्तवंशावतंसरामकुमारसूनुधनपतिविदुषा सारस्वतेन विरचितायां गीताभाष्योत्कर्षदीपिकायामष्टादशोऽध्यायः ॥ १८ ॥

प० टी०—अतः परं तव पुत्राणां जीवनसंदेहः, किं पुना राज्यप्राप्तिरिति मनसा विचार्य पाण्डवेभ्यः सर्वस्वं दत्त्वा श्रीकृष्णं शरणं गत्वा प्राणसंरक्षणं कार्यमित्याशयेनाह—यत्रेति । यत्र येषां पक्षे योगमायेश्वरः कृष्णो वर्तते । टिप्पणिकासु—कर्षणेन मनोभूमेर्निर्वृत्तिः फलमाप्यते । कृष्णनाम्ना समाम्नातस्तस्मात्त्वं देव ईदृशः॥' इति । यत्र च तत्पक्षपातसाधितसकलपुरुषार्थः पार्थो धनुर्धरो गाण्डीवधन्वा परमेश्वरस्य विभूतिर्वर्तते तत्रैव श्रीराज्यलक्ष्मीस्तत्रैव विजयस्तत्रैव भूतिरुत्तरोत्तरैश्वर्यं तत्रैव ध्रुवाचला नीतिर्नयमार्गः । न त्वन्यायिनां तव पुत्राणां लाक्षागृहे गरदानभ्रातृजायावस्त्राहरणादिकूटकारिणामिति मे मतिर्निश्चयः । तदुक्तं भारते आदिपर्वणि धृतराष्ट्रं प्रति संजयेन 'तव पुत्रा दुरात्मानः प्रतप्ताश्चैव मन्युना । लुब्धा दुर्वृत्तभूयिष्ठा न तान् शोचितुमर्हसि ॥' इति । तथारण्यकेऽपि 'द्रौपदीहरणे भग्नो युधि राजा जयद्रथः । शिवं प्रसाद्य तपसा ययौ च जयमर्जुनात् ॥ इति राजा ब्रवीदेवं नेति देवस्तमब्रवीत् । ऋतेऽर्जुनं महाबाहुर्देवैरपि दुरुत्सहम् ॥ यमाहुरजितं देवं शङ्खचक्रगदाधरम् । प्रधानं शास्त्रविदुषं तेन कृष्णेन रक्षितम् ॥' इति ॥ ७८ ॥

अथ संजयस्य धृतराष्ट्रस्य च हार्दं व्यावर्ण्यते ।

यो लाक्षावेश्मदाहाद्दतिविषमविषाद्विप्रशापाद्वनान्ते
दुष्टद्यूतात्सभायां युवतिपरिभवात्संजुगोप स्वभक्तान् ॥
दूतः सूतश्च भूत्वा स युधि निजजने किं करिष्यत्युपेक्षां
सत्येवं तावकानां त्रिगुणहतधियां जीवितेच्छाऽधुनापि ॥ १ ॥
उपनिषदुपदेशतीक्ष्णबाणैर्हृदि वसतोऽपि जघान यः सपत्नान् ॥
स्वचरणशरणस्य पाण्डुसूनोः स च किमु न प्रभवेन्निहन्तुमेतान् ॥ २ ॥
कृष्णोऽखिलप्रलयहेतुरचिन्त्यशक्तिः शत्रुषु तेन तनयेषु कियान् पुमर्थः ॥
पार्थस्य वा निहतमारणके तु पुण्यं पुण्यैर्यशो भवति संजय नार्जवेन ॥ ३ ॥

रणे म नास्ति चेच्छरणमागतैः किं भवेत्ततोऽपि यदि जीवनं किमु तदच्युतोक्तिर्मृषा ॥
अथाऽपि यदि जीव्यते परमतो मृतिर्भूभुजामिदं मनसि चिन्तयन् कुरुपिताऽथ तूष्णीमभूत् ॥४॥

अथाध्यायतात्पर्यम्—

अध्यायैर्यश्च सप्ताधिकदशभिरभिप्राय उक्तः क्रमेण
संन्यासत्यागपूर्वस्त्रिविधमतिधृतिज्ञानकर्तृक्रियादिः ॥
ब्रह्मप्राप्तेरुपायः पुनरपि गदितोऽष्टादशे संग्रहार्थं
पार्थस्तेनोदतिष्ठन्ननु समरकृते त्यक्तसंदेहजातः ॥ १ ॥

जगति समवतीर्णामत्र साक्षादपर्णां सदसि द्रुपदकन्यां कुर्वतां वस्त्रशून्याम् ॥
रणभुवि निहतानामप्यभूदुद्धतानां यदुपतिविमुखानां रौरवः कौरवाणाम् ॥ १ ॥
रणशिरसि शरौघैर्धार्तराष्ट्रानमोघैस्तदनुगजनभीष्मद्रोणकर्णांश्च हत्वा ॥
कलितविजयलक्ष्मीर्यादवेशोपदेशादधिगतपरमार्थः पार्थ आसीत्कृतार्थः ॥ २ ॥

छन्दःसंदर्भगर्भप्रभुगहनगिरामृग्यजुःसामसीमा—
मीमांसामांसलान्तःकरणपरिणमत्संगतीनां गतिः क ॥
कास्माकं धीरधीरा तदपि रचयितुं भाष्यमुद्योगभाजां
प्रागल्भ्यं डिम्भवाचामिव कुतुकरताः क्षन्तुमर्हन्तु सन्तः ॥ ३ ॥

अभिप्रायः प्रायः सकलनिगमानामधिगतः सुधीभिर्यैर्ये स्युर्भगवदनुकम्पाश्रयवशात् ॥
चिरं सान्द्रानन्दानुभवरसिकास्तत्र सुजनाः सुविश्रान्तिं यान्ति प्रसभमपरे नेह विवृतौ ॥४॥
गभीराभिप्रायान् सुगमवचनैरुद्धृतवतां कवीनां स्वग्रन्थे भवति बहुविस्तारणभयम् ॥
कृते सूत्रप्राये दुरधिगमता दूषणमतः सविस्तारः श्लाघ्यः शमयति हि यः संशयभरम् ॥५॥
विदित्वा वेदार्थं दशवदनवाणीपरिणतं शतश्लोकव्याख्यां परमरमणीयामकरवम् ॥
ततो गीताभाष्यं निखिल निगमार्थैकनिलयं विधिज्ञार्यः सूर्यो नृहरिकरुणापाङ्गशरणः ॥६॥
गोदोदक्तटपूर्णतीर्थनिकटे पार्थाभिधानं पुरं तत्र ज्योतिषिकान्वये समभवच्छ्रीज्ञानराजाभिधः ॥
तत्सूनुर्निगमागमार्थनिपुणः सूर्याभिधानः कविः कृष्णप्रेरणया तदर्पणधिया गीतार्थभाष्यं व्यधात् ॥७॥

इति श्रीमद्दैवज्ञपण्डितसूर्यविरचितायां भगवद्गीताटीकायां परमार्थप्रपायां सकल-
गीतार्थसंग्रहे ब्रह्मार्पणसंन्यासयोगो नामाष्टादशोऽध्यायः ॥ १८ ॥

**रा० टी०**—युद्धकरणनिश्चयं श्रुतवतो राज्ञः कुत्र जयादिरिति हृद्गतशङ्कां निराह संजयः—**यत्रेति**। यत्र सेनायां योगीश्वरः सर्वोपायवतां स्वामी, तत्र श्रीः राज्यलक्ष्मीर्भूतिः संपत् नीतिर्न्यायः ध्रुवा निश्चलेति मम मतिः निश्चय इत्यर्थः ॥ ७८ ॥

अशेषगुणपूर्णाय दोषदूराय विष्णवे । नमः श्रीप्राणनाथाय भक्ताभीष्टप्रदायिने ॥ १ ॥
इति श्रीकृष्णगीताभाष्याद्युक्तार्थसंग्रहः । राघवेन्द्रेण यतिना कृतः सज्जनसंविदे ॥ २ ॥

इति श्रीमत्सर्वतन्त्रस्वतन्त्रसुधीन्द्रपूज्यपादशिष्येण राघवेन्द्रेण कृते श्रीमद्गीतार्थसंग्रहे
अष्टादशोऽध्यायः ॥ १८ ॥

---

इति तत्त्वप्रकाशिकाद्यष्टटीकोपेता
श्रीमद्भगवद्गीता समाप्ता ।

# 'गुजराती' मुद्रणालयस्थानि क्रय्यसंस्कृतपुस्तकानि ।

१ श्रीमद्भगवद्गीता Bhagavat-Geeta with 7 commentaries- मूल्यं मार्गव्ययः
प्रथमो गुच्छः आनन्दगिरिकृतटीकासंवलितशांकरभाष्य-जयतीर्थविरचितटीकासंवलितानन्दतीर्थीय (माध्व) भाष्य-रामानुजभाष्य-पुरुषोत्तमजीप्रकाशितामृततरङ्गिणी-नीलकण्ठीसमेता । मञ्जुलैरायसाक्षरैर्मुद्रिता । पृष्ठान्यष्टशतपरिमितानि सुचिक्कणानि । मूल्यम् रू. ... ... ... ६-०-० ०-७-०

२ श्रीमद्भगवद्गीता Bhagavat-Geeta with 8 other commentaries-द्वितीयो गुच्छः । प्रथमषट्कम्-निम्बार्कमतानुयायिश्रीकेशवकाश्मीरिभट्टाचार्यपादप्रणीता-'तत्त्वप्रकाशिका' श्रीमधुसूदनसरस्वतीकृता-'गूढार्थदीपिका' श्रीशङ्करानन्दप्रणीता-'तात्पर्यबोधिनी' श्रीधरस्वामिकृता-'सुबोधिनी' श्रीसदानन्दविरचितः-'भावप्रकाशः' श्रीधनपतिसूरिविरचिता-'भाष्योत्कर्षदीपिका' दैवज्ञपण्डितश्रीसूर्यविरचिता 'परमार्थप्रपा' पूर्णप्रज्ञमतानुसारिश्रीराघवेन्द्रकृतः-'अर्थसंग्रहः' इत्येताभिर्व्याख्याभिः सहितायाः श्रीमद्भगवद्गीतायाः प्रथमादिषडध्यायात्मकं प्रथमं खण्डम् । अत्र श्लोकाः स्थूलतमाक्षरैष्टीकाश्च स्थूलाक्षरैर्मुद्रिताः, वृद्धा मा क्लिशिषतेति । पत्रसंख्या सार्धपञ्चशतानि । मू. रू. ... ... ... ... ३-१२-० ०-६-०

द्वितीयो गुच्छः । द्वितीयं षट्कम् । षष्ठादिद्वादशाध्यायान्तम् । तत्त्वप्रकाशिकाद्यष्टटीकोपेतम् । मू. रू. ... ... ... ... ... ... ... ... २-१२-० ०-४-०

३ उत्तरगीता Uttara-Geeta with a commentary-गौडपादीयदीपिकाख्यव्याख्यायुता । भगवत्पादश्रीशंकराचार्याणां परमगुरुभिः श्रीशुकाचार्याणां च शिष्यैः श्रीगौडपादाचार्यैः प्रणीतेयं व्याख्येत्येतावत्कथनमलमस्या महिमानमवगमयितुम् । मूल्यम् रू. ... ... ०-३-० ०-०-६

४ श्रीमद्वाल्मीकिरामायणम् । बालकाण्डम् Valmiki Ramayana with 3 well-known commentaries, Bal Kanda सर्वतन्त्रस्वतन्त्रप्रतिभेन शब्देन्दुशेखरादिनानानिबन्धप्रणेत्रा श्रीमन्नागेशभट्टेन स्वशिष्यस्य सतो जीविकाप्रदातुः शृङ्गवेरपुराधीशस्य वीरमणेः श्रीरामराजस्य नाम्ना प्रणीतया रामायणतिलकाख्यया टीकया, पण्डितश्रीवंशीधर-शिवसहायाभ्यां प्रणीतया रामायणशिरोमण्याख्यया टीकया, श्रीगोविन्दराजप्रणीतया भूषणाख्यया टीकया च सह मुद्रयितुमारब्धमस्माभिः श्रीमद्वाल्मीकिरामायणम् । तच्च सप्तभिः खण्डैः समापयिष्यामः । तत्रेदं प्रथमं खण्डम् । मूल्यम् रू. ... ... ... ... ... ३-०-० ०-५-०

अयोध्याकाण्डम् । Ayodhya Kanda द्वितीयखण्डम्-उर्ध्वनिर्दिष्टटीकात्रयोपेतम् । मू. रू. ... ... ... ... ... ... ... ५-०-० ०-७-०

अरण्यकाण्डम् । Aranya Kanda तृतीयखण्डम् । उपरिनिर्दिष्टटीकात्रयोपेतम् । मूल्यम् रू. ... ... ... ... ... ... ... ... ... २-१२-० ०-६-०

५ स्तोत्रमुक्ताहारः-Stotra-muktahar containing 256 Stotras
अस्मिन् २५६ स्तोत्राणि संगृहीतानि । मूल्यम् रू. ... ... ... ... ०-८-० ०-२-०

६ संस्कारमयूखः-Samskar Mayukha मीमांसकनीलकण्ठभट्टसुतशंकरभट्टकृतः । मू. रू. ... ... ... ... ... ... ... ... ... ०-१२-० ०-१-०

७ मनुस्मृतिः-Manu Smriti कुल्लूकभट्टकृतटीकया, ग्रन्थान्तरेषु मनुनाम्नोल्लिखितैरिदानींतनमनुस्मृतिपुस्तकेष्वनुपलभ्यमानैः श्लोकैः, पद्यानां वर्णानुक्रमकोशेन, विषयानुक्रमेण च सहिता । सूक्ष्मेक्षिकया संशोधिता च । मू. रू. ... ... ... ... ... ... १-८-० ०-३-०

८ विदुरनीतिः-Vidura-Niti with a commentary संस्कृतटीकोपेता नीतिशास्त्राभ्यासिनां विद्यार्थिनामतीवोपयोगिनी । मू. रू. ... ... ... ... ०-४-० ०-१-०

९ वेदान्तरहस्यम्-Vedanta Rahasya वेदान्तवागीशभट्टाचार्यविरचितम् । अत्राद्वैतमतसिद्धान्तो निरूपितः । उपपत्तिश्च प्रदर्शिता । भाषाऽतिसरला प्रौढा च । मूल्यम् रू. ... ०-१-० ०-०-६

१० विशिष्टाद्वैतमतविजयवादः-Vishishtadvaita-Mata-Vijaya-Vada नरहरिपण्डितकृतः । अत्र विशिष्टाद्वैतमते परेषामाक्षेपान्निराकृत्य विशिष्टाद्वैत एवोपनिषदां तात्पर्यं व्यवस्थापितम् । मूल्यम् रू. ... ... ... ... ... ... ०-१-० ०-०-६

| | मूल्यं | मार्गव्ययः |
|---|---|---|
| ११ रघुवंशमहाकाव्यम्—Raghuvamsha Mallinatha's commentary श्रीकालिदासकृतम् । मल्लिनाथकृतसंजीविन्याख्यटीकासहितम् । मू. रू. ... ... | ०-१०-० | ०-३-० |
| रघुवंशमहाकाव्यं-मल्लिनाथकृतटीकोपेतम् । सर्गाः १-५ ... ... ... ... | ०-४-० | ०-१-० |
| १२ कुमारसंभवं महाकाव्यम्-Kumar Sambhav with 3 known commentaries कविवरश्रीकालिदासविरचितमिदं सप्तमसर्गपर्यन्तं मल्लिनाथकृतसंजीविन्या चारित्र्यवर्धनकृतशिशुहितैषिण्या च संवलितं तत आसमाप्ति सीतारामकृतसंजीविन्याऽलंकृतं सुललितैरायसाक्षरैर्मुद्रितमतीव दर्शनीयमस्ति । मूल्यम् रू. ... ... ... ... | १-४-० | ०-२-० |
| १३ कारिकावली सिद्धान्तमुक्तावलीसहिता-Karikavalee with Siddhanta-Muktavali and other notes न्यायवैशेषिकदर्शनयोर्व्युत्पित्सूनां कृते प्रणीतेषु प्रकरणग्रन्थेषु सिद्धान्तमुक्तावलीसमुद्भासिता कारिकावली मूर्धाभिषिक्तेत्यत्र न विदुषां वैमत्यं किंतु तत्र दीधितिकृदुपसृतया विवेकसरण्या संक्षेपतः सूक्ष्मतमानामर्थानामुपनिबद्धतया प्रायः खिद्यन्ति नव्याश्छात्राः, इति तेषामुपकारायास्माभिः प्रायः सर्वेषु विषमस्थलेष्वतिविस्तृतां सरलां सुबोधां च टिप्पनीं पण्डित-जीवरामशास्त्रिभिः कारयित्वा तया सहेयं दृढतरेषु सुचिक्कणेषु पत्रेषु स्थूलाक्षरैर्मुद्रिता। सार्धशताभ्यधिकपत्रयुतामपीमां सर्वसौलभ्यायाल्पीयसा मूल्येन वितरामः । मू. रू. | ०-७-० | ०-१-० |
| १४ वैशेषिकदर्शनम्—Vaisheshika Darshana with several commentaries श्रीशंकरमिश्रकृत-वैशेषिकसूत्रोपस्कार—जयनारायणतर्कपञ्चाननभट्टाचार्यप्रणीत—विवृति-चन्द्रकान्तभट्टाचार्यप्रणीत-भाष्यसहितम् । मू. रू. ... ... | २-०-० | ०-३-० |
| १५ वादार्थसंग्रहः—Vadartha Samgraha (प्रथमो भागः) अत्र शेषकृष्णकृतं स्फोटतत्त्वनिरूपणं, श्रीकृष्णमौनिकृता स्फोटचन्द्रिका, गोडबोलेकृतः प्रातिपदिकसंज्ञावादः, वाक्यवादः, हरियशोमिश्रकृता वाक्यदीपिकेति पञ्च ग्रन्थाः संकलिताः । पण्डितानां प्रौढच्छात्राणां च बहुतरमुपकारकः । मू. रू. ... ... ... ... ... ... ... | ०-६-० | ०-०-६ |
| वादार्थसंग्रहः (द्वितीयोभागः)-अत्र भवानन्दसिद्धान्तवागीशकृतं षट्कारकविवेचनम्, जयरामभट्टाचार्यकृतः कारकवादः समासवाद[illegible]वेति चत्वारो ग्रन्थाः सन्ति । मू. रू. ... | ०-६-० | ०-०-६ |
| १६ महाभागवतम्—Maha Bha[illegible]a देवीपुराणम् । मू. रू. ... ... | २-०-० | ०-३-० |
| १७ तैत्तिरीयोपनिषत्—Taitt[illegible]iya[illegible]hat श्रीमच्छंकरभगवत्पादकृतभाष्येणानन्दगिरिकृतटीकायुतेन तैत्तिरीयविद्या[illegible]ता । मू. रू. ... ... ... | १-०-० | ०-२-० |
| १८ दशरूपकम्—Dasha Rupak[illegible] धनञ्जयविरचितमवलोकसहितं पञ्चनदीयपण्डितसुदर्शनाचार्यप्रणीतप्रभाख्यव्याख्यासहितं च । [illegible] रू. ... ... ... | १-०-० | ०-२-० |
| १९ ब्रह्मसूत्रवृत्तिः-Brahma Sutra Vritti अद्वैतमञ्जरी । भगवत्पाद(आद्यशंकराचार्य) शिष्यकृता । मू. रू. .. ... ... ... ... ... ... | ०-१२-० | ०-२-० |
| २० चन्द्रालोकः—Chandraloka with a commentary श्रीपीयूषवर्ष जयदेवकविविरचितोऽलंकारग्रन्थः । पायगुण्डोपाह्व वैद्यनाथ (बाळंभट्ट) विरचितरमाख्यव्याख्यासहितः मू. रू. | ०-८-० | ०-१-० |
| २१ महाभारतविराटपर्व—Mahabharata - Virata Parvan with eight commentaries नीलकण्ठकृतभारतभावदीप-अर्जुनमिश्रकृतदीपिका—चतुर्भुजमिश्रकृतप्रकाश—सर्वज्ञनारायणकृतभारतार्थप्रकाश-विमलबोधकृतदुर्घटार्थप्रकाशिनी—रामकृष्णकृतविरोधार्थभञ्जनी—विषमपदविवरण—वादिराजतीर्थविरचितलक्षाभरणेत्यष्टटीकोपेतं विपुलपाठभेदसहितं च । मू. रू.... ... ... ... ... ... ... ... ... | ३-८-० | ०-६-० |
| २२ चन्द्रकान्त Chandrakanta (Hindi) ( वेदान्त ज्ञानका मुखग्रन्थ ) प्रथम भाग. यह वह ग्रन्थ है कि, जो नितान्त निर्भ्रान्त वेदान्त सिद्धान्तका एकांत प्रतिपादक "चन्द्रकान्त" मणि बम्बई प्रान्तके प्रसिद्ध साप्ताहिक 'गुजराती' पत्रके मुख्य-आद्य संपादक गुजराती भाषाके सुविख्यात लेखक, अनेक ग्रन्थोंके निर्माता देशभक्तधुरीण, सारासारविवेकप्रवीण, वैश्यकुलभूषण श्रीमान् शेठ इच्छाराम सूर्यराम देसाईके शुद्ध हृदयमें देदीप्यमान प्रबोधरत्न-भाण्डागारका चमचमाता हुआ एक अमूल्य रत्न है. किं. रू. ... ... | २-८-० | ०-४-० |

'गुजराती' मुद्रणालयाधिपतिः । कोट सर्कल सामुन बिल्डिंग-मुंबई.

